TO

W. S. ATKINSON ESQR, M.A.

THIS BOOK IS DEDICATED

IN ACKNOWLEDGEMENT OF THE INTEREST
SHEWN BY HIM IN THE ADVANCE-
MENT OF BOTH ANCIENT AND
MODERN LEANING IN BENGAL,
AND IN TOKEN OF THE
ESTEEM, ADMIRATION
AND AFFECTION,

*OF IIIS FRIEND*

TARANATHA TARKAVÁCHASPATI

# सिद्धान्तकौमुदी

## पूर्व्वार्द्धम्।

महामहोपाध्यायश्रीभट्टोजिदीक्षितविरचितम्।

राजकीयविद्यामन्दिरव्याकरणाध्यापकश्रीतारानाथ-
तर्कवाचस्पतिभट्टाचार्य्येण संकलितया सरलाख्यया
व्याख्यया समलङ्कृतम्।

तेनैव प्रकाशितम्

नूतनसंस्कृतयन्त्रे पुनर्मुद्रितम्।

---

# SIDDHA'NTA KAUMUDI

BY

## BHATTOJI DIKSHITA

IN TWO VOLS.—VOL. I.

EDITED WITH A COMMENTARY

BY

TA'RA'NA'THA TARKA·VA'CHASPATI
Professor of Grammar, Govt. Sanskrit College.

---

Second Edition.

*CALCUTTA* :

AGENTS.

Pandit Jibananda Vidyasagara B. A.
*Govt. Sanskrit College, Calcutta.*
Bajaba Balajee Nene Esq. Poona
Messrs Trubner & Co. London.

1870.

# द्वितीयविज्ञप्तिः ।

इतः पूर्वं १९२० मितसंवत्सरे मत्सङ्कलितसरलया सहप्रकाशितायाः सिद्धान्तकौमुद्याः ७५० सार्द्धसप्तशतसंख्यकपुस्तकानि संस्कृत्य मया मुद्रितानि तानि च समादरपूर्वकं पाठकगणैर्गृहीतत्वात् त्रिवर्षकालमध्ये निःशेषितानि संबभूवुः। तत्र पाठकानां विद्योत्साहिनामीदृक् समादरो भविष्यतीति मम मनसि प्रत्याशा नासीत्। इदानीन्तु विद्योत्साहिनां तां जिघृक्षामनुभूततया व्यपतातिशयकालस्य द्वितीयवारमुद्रणाय मया प्रावर्त्ति।

तथा प्रवृत्तेन मया पूर्वमुद्रितपुस्तके यत् किञ्चित् स्खलितम् तत् संशोध्य सरलायाश्च सुगमतायै क्वचित् क्वचित् परिवर्त्तनेन क्वचिच्चाव्याख्यातांशव्याख्यया बहुलकलेवरताविधानेन द्वितीयवारमेषा मुद्रिता। पठनपाठनसौकर्याय चात्र कौमुद्यां सरलायाञ्च कार्य्यविशेषार्थं सूत्रप्रतीकमात्रं यद्यत् प्रदर्शितम् तत्तत्सूत्रस्य विशेषज्ञानार्थं सिद्धान्तकौमुद्यां प्रदर्शितविशेषाधिकरणपृष्ठसंख्या अङ्केन सूचिता। कौमुद्यां प्रदर्शितगणसूत्राणाञ्च (ग०) इत्यनेन चिह्नभेदेन सूचना च कृता।

पाणिनेरस्तित्वकालविषये पूर्वमुद्रितपुस्तके एव उपक्रमे प्रायेण सर्वमुक्तं तदतिरेकेण तस्य व्यासादितोऽर्वाचीनताप्रदर्शनाय किञ्चिदधिकमत्राभिधीयते शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ४, १, १०२ सूत्रे शरद्वतो नाम्नः, द्रोणपर्वतजीवन्तादित्यादिसूत्रे ४, १, १०४ द्रोणनाम्नः, कलापिवैशम्पायनान्तेवासिभ्यः ४, २, १०४ इति सूत्रे व्यासशिष्यवैशम्पायनस्य तदन्तेवासिविशेषस्य च कलापिनः नाम्नः, कलापिनोऽण् ४,२,१०८ इति सूत्रे, वैशम्पायनशिष्यकलापिनाम्नः, पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोरिति ४, ३, ११० सूत्रे पाराशर्य्यस्य व्यासस्य नाम्नश्च कीर्त्तनात् तस्य वैशम्पायनशिष्यादिभ्योऽर्वाचीनत्वं प्रतीयते। न च द्रोणपर्वतेत्यादिसूत्रवृत्तौ ५०१ पृष्ठे कौमुद्याम् अनादिरिह द्रोण इत्युक्तत्वात् न द्रोणशब्दस्य भारताचार्य्यद्रोणपरतेति शक्यम् वक्तुम् सूत्रेषु तत्तच्छब्दार्थानामनादित्वकल्पने प्रमाणाभावात्। किञ्च पाराशर्य्येत्यादिसूत्रे पाराशर्य्येण व्यासेन प्रोक्तस्य भिक्षुसूत्रस्यैवाध्येतरि णिनिप्रत्ययविधानात् अन्यव्यासेन कृतस्य भिक्षुसूत्रस्याभावात् बादरायणपरताया एव तस्यौचित्यम्।

तेनैव च ब्रह्मप्रतिपादकानि अथातो ब्रह्मजिज्ञासेत्यादीनि वेदान्तसूत्राख्यानि भिक्षुसूत्राणि प्रोक्तानि नेतरेण व्यासेन तथानुपलम्भात्। तत्सूत्राध्ययन-कथनेनैव ततोऽस्य वक्तृकालादुत्तरोत्पन्नत्वप्रतीतिः सूचितैव। एवं सूत्रपाठानुसारेण तस्य व्याघ्रादितोऽर्वाचीनतानिर्णयः। गणपाठे च बहुनामर्वाचीनानां सात्यकिप्रभृतीनां नामकीर्त्तनात् तस्य ततोऽर्वाचीनत्वं सुव्यक्तमेव तानि च गणपाठवाक्यानि विस्तरभयात् नात्रोद्धृतानि सरलामध्ये एव विस्तरेण प्रदर्शितानि तेषु तेषु बहुनामर्वाचीनानां नामोल्लेखात् पाणिनेस्तेभ्योऽर्वाचीनत्वं सुव्यक्तमेव।

श्रीयुक्तमोक्षमूलरेण विदुषा प्रणीतेऽप्यगाणिनीतिसूत्रे पात्यमङ्कां सङ्ग्राह्य स्वग्रन्थे अस्मद्देशीयान् प्रति यत् कटाक्षणाक्षिप्तं तस्य समाधानमितः पूर्व्वं मत्सङ्कलिताशुबोधव्याकरणसुखबन्ध एव कृतं तत एव तदुपगन्तव्यमित्यतोऽत्र किञ्चिन्नोक्तम्।

सिद्धान्तकौमुद्यां व्युत्क्रमेणैव अष्टाध्यायीस्थसूत्राणि उदाहरणानुसारेण निहितानि तानि सूत्रपाठे यथाक्रमेण पाणिनि न पठितानि तत्क्रमेणैव तत्स्थाने निवेशितानि तेन च सूत्राणां पूर्वापरत्वज्ञानम्, अनुवृत्त्यनुकर्षणोत्कर्षणावधारणज्ञानञ्च सुसाध्यं भविष्यति। तानि सूत्राणि च कौमुद्यां यत्र यत्र पृष्ठे उदाहृतानि तदन्ते अङ्कद्वारा तत्पृष्ठसङ्ख्या च सूचयितव्या इत्यलं विस्तरेण।

संवत् १९२७।

श्रीतारानाथतर्कवाचस्पतेः।

कलिकाता गवर्णमेण्टसंस्कृतपाठशालास्थस्य।

# पाणिनीयागमकालादिनिर्णयः।

पुरा किल कात्यायननामा मुनिः सप्तलक्षश्लोकात्मकं बृहत्कथाभिधानं ग्रन्थं निर्माय काणभूतये श्रावयामास। सोमदेवभट्टेन तत एव सारांशं समुद्धृत्य कथासरित्सागराख्यो ग्रन्थो निरमायि। तत्रैषाख्यायिका समधिगम्यते। यथा

नन्दराजराज्यकाले उपवर्षपण्डितस्य कात्यायनापरपर्य्यायो वररुचिर्व्याडिः पाणिनिश्चेति त्रयो मुख्याश्छात्रा बभूवुः। तेषु पाणिनिरल्पबुद्धितया सब्रह्मचारिभिर्वादे पराजितो निर्वेदमापन्नो महादेवमाराध्य तत्सकाशादधीत्य च कृतविद्यस्तत्प्रसादात् सूत्रपाठगणपाठधातुपाठलिङ्गानुशासनात्मकं चतुर्धा विभक्तं व्याकरणागमं निर्माय उपवर्षादिसमीपे प्रकाशयामास॥ अथ तद्ग्रन्थकौशलमुपलभ्य वररुचिना तदवशिष्टांशपरिपूरणेन संक्षेपार्थविवरणरूपं वार्त्तिकं चक्रे। व्याडिना च तत्तदुक्तार्थेषु न्यायप्रदर्शनार्थं लक्षश्लोकात्मकः संग्रहाभिधो ग्रन्थो निरमायि। अथ समुदितेषु तेषूत्कृष्टग्रन्थेषु तत्कालप्रचलितानामैन्द्रादिव्याकरणानामनादृततया क्रमेण लोपो बभूव। तत आरभ्य पाणिनीयप्रस्थानस्यैव पठनपाठनप्रचारः प्रवर्त्तते।

तेषु शालातुरग्रामाभिजनः पाणिनिर्दाक्षीगर्भसम्भवः प्रागुक्तग्रन्थचतुष्टयात्मकं व्याकरणं शिक्षाग्रन्थं च चकार। वररुचिः कौशाम्बीनगरवासिनः सोमदत्ताभिधाद्विप्रात् वसुदत्तायामुत्पद्य उपवर्षान्निखिलविद्यामभ्यस्य बृहत्कथादीन् बहून् ग्रन्थान् कृत्वा नन्दराजस्य धीसचिवतामापेदे। व्याडिस्तु वेतसाख्यपुरे करम्भविप्रादुत्पन्नः संग्रहाख्यादीन् ग्रन्थान् निर्ममे।

विक्रमादित्यज्येष्ठभ्रातृभर्तृहरिप्रणीतवाक्यपदीयग्रन्थे चाख्यायिकान्तरमुपलभ्यते। यथा

कालवशेन लोकानामालस्यदोषसमुल्लासात् बहुविस्तारे व्याडिप्रणीते संग्रहग्रन्थेऽनादरमुपगतस्य, पाणिनीयदर्शनस्य क्रमेण लुप्तप्रायतामुपगतस्य च भगवता पतञ्जलिना संग्रहनिबन्धसारांशसङ्कलनेन सूत्रवार्त्तिकव्याख्यानछलेन संग्रहोक्तान् सर्वान् न्यायान् प्रदर्शयता महाभाष्यं निरमायि । अथ क्रमेण पुनरपि लोकानामालस्यदोषसमुन्मेषात् पाणिनीयदर्शनं लुप्तप्राय-मभूत् । मूलव्याकरणागमस्तु दाक्षिणात्येषु पुस्तकमात्रे स्थितः चित्रकूटस्य* गिरेरेकदेशे रावणनाम्ना केनचिद्विदुषा विलिख्य स्थापितश्च आसीत् तत एव समानीय केनचित् विप्रवरेण रक्षसा वसुरातचन्द्राचार्यादिभ्यो दत्ते वसुरातादिभिरपि भर्तृहरिप्रभृतिशिष्येषु प्रचारितः । तदुपदेशाच्च भर्तृह-रिणा महाभाष्यं व्याख्याय तत्तात्पर्यज्ञापिकाः कारिकाः स्वयं निर्माय ब्रह्म-वाक्यपदकाण्डभेदेन त्रिकाण्डं वाक्यप्रदीपापरनामकं वाक्यपदीयं निब-बन्धे । तत्रत्यवाक्यकाण्डशेषात् कतिचित् पद्यान्यत्र समुद्ध्रियन्ते । यथा

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् ।
संप्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते ।
कृतेऽथ पातञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ।
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ।
तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः ।
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
कालेन दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ।
तदेवमुत्पन्नकल्पो जातो व्याकरणागमः ।
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ।
न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।
प्रणीतो गुरुणास्माकमयमागमसंग्रहः ।
भ्रष्टस्याम्नायचारस्य वैयाकरणगामिनः ।
नूनमुत्तमयाम्नाय पर्वतादागमं स्वकम् ।
त्रिकूटस्य ।

आचार्यंशसुरातेन न्यायमार्गान् विचिन्त्य च ।
प्रणीतो विधिवच्चायं मम व्याकरणागमः ।
वर्षाणि गुरुनिर्देशाद् भाष्याम्नायाविलुप्तये ।
काण्डत्रयक्रमेणायं निबन्धः परिकीर्तितः ॥

अयं ख्यातश्चैतत् वाक्यपदीयं पुण्यराजहेलाराजपण्डिताभ्याम् । तद्व्याख्यान एव पूर्वैर्वर्णितः पर्वताधिगमवृत्तान्तः समुद्धृतः ।

स च भाष्यकारचन्द्रगुप्तराज्यसमयात् पश्चात्, भर्तृहरिकालात् पूर्वकाले प्रादुर्बभूवेति प्रतिभाति यथा राजाऽमनुष्यपूर्वेति सूत्रव्याख्यायां भाष्यकारेण चन्द्रगुप्तसभेतिप्रत्युदाहरणदानात् भर्तृहरिकालात्तस्य प्राचीनतायाश्च वाक्यपदीये स्पष्टं प्रतीयमानत्वाच्च ।

स च मुनिर्गोनर्दतीरे तपस्यतः कस्यचिन्मुनेरञ्जलेः पतित इत्याख्यायिका शकन्ध्वादिष्विति सूत्रव्याख्यायां शेखरादावुपलभ्यते । अयञ्च पतञ्जलिर्योगशास्त्रकारिपतञ्जलितो भिन्न इति प्रतीयते तस्मात्तस्य 'एतेन योगः प्रत्युक्तः' इति शारीरकसूत्रे व्यासेन दूषितत्वेन पतञ्जलिसूत्रोपरि तेनैव भाष्यकरणेन च तस्य व्यासतः प्राचीनतावगतेः, महाभाष्ये चन्द्रगुप्तकालोल्लेखाद्भाष्यकर्तुस्ततोऽर्वाचीनताप्रतीतेश्च नैकत्वमनयोरिति प्रतिभाति ।

एवं सूत्रवार्त्तिकभाष्याणामुत्पत्तिं प्रकारञ्च प्रदर्श्याधुना तदुत्पत्तिकालास्तावन्निर्णीयन्ते ।

आरभ्य भवतोजन्म यावन्नन्दाभिषेचनम् ।
एतद्वर्षसहस्रन्तु शतं पञ्चदशोत्तरमिति

भागवते १२ स्कन्धे २ अध्याये परीक्षितं प्रति शुकेनोक्तत्वात् परीक्षितो जन्मानन्तरं १५१० मितवर्षेषु गतेषु नन्दराज्यमिति निश्चीयते अत्र पञ्चपद-सामानाधिकरण्यानुरोधेन शतमित्यस्य शतानीत्यर्थः एकत्वं छान्दसमेतच्च स्कान्दैकवाक्यत्वाल्लभ्यम् । 'तेनैव ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणामिति' सप्तर्षीणां प्रतिनक्षत्रं शतवर्षात्मकभोगकालमुक्त्वा 'ते त्वदीये द्विजाः' काले अधुना चाश्रिता मघा इति' 'यदा देवर्षयः सप्त मघासु विचरन्ति हि तदा प्रवृत्तस्तु कलिरिति' च भागवते १२ स्कन्धे २ अध्याये सप्तर्षीणां मघास्थिति काले कलिप्रवृत्तेः, परीक्षितः समयेऽपि तत्रैव स्थितेरुक्तत्वात् कलेः शतवर्ष-

कालमध्ये परीक्षितोऽभूदिति निश्चीयते । ततश्च कलेः प्रायेणाशीतिशतेषु गतेषु परीक्षितो जन्म ततः १५१० मितवर्षेषु गतेषु नन्दाभिषेचनम् । इत्थञ्च नवनन्दानां राज्यकालश्च शतवर्षात्मकः । एवञ्च कलेः १६९० मितवर्षेष्वतीतो नन्दराज्यपरमावधिरित्यनुमीयते स एव कालः स्कान्दे निम्नोक्तः । यथा

ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये ।
भविष्यं नन्दराज्यञ्च चाणक्यो यान् हनिष्यतीति ।

अस्यार्थः द्विसहस्रेषु द्विसहस्रवर्षमध्ये निर्द्धारणसप्तमी दशाधिकशतत्रये स्थिते सतीति शेषस्तथा च सत्यधिकषोडशशतवर्षेषु कलेर्गतेष्वित्यर्थलाभः । नन्दराज्यमित्यस्य नन्दानां राज्यमित्यर्थः उत्तरवाक्ये यानिति बहुवचननिर्द्देशात् एतच्च प्रागुक्तवक्ष्यमाणभागवतैकवाक्यत्वाल्लभ्यते ।

शाकेषु नवशैलेन्दुराम ३१७९ योगे कलेर्गतादित्युक्तदिशा अधुनातीत १७८५ शाकवर्षेषु ३१७९ मितवर्षयोगे ४९६४ मितवर्षाः कलेरतीता इत्यनुमीयते तत्र प्रागुक्त १६९० मितवर्षवियोगे ३२७४ मितवर्षाः साम्प्रतं नन्दराज्यपरमावधिकालादतीता इत्यनुमीयते तेषाञ्च राज्यकालो भागवते शतवर्षं इति वक्ष्यते तस्मादितः पूर्व्वं प्रागुक्त ३२७४ वर्षावधि ३२७४ वर्षपर्यन्तं नन्दराज्यमासीत्ततश्चन्द्रगुप्तराज्यम् ।

अन्ये तु ततोपि त्रिसहस्रेषु दशाधिकशतत्रये इति स्कान्दे पाठं प्रकल्प्य त्रिसहस्रवर्षमध्ये दशाधिकशतत्रये स्थिते सतीति व्याख्याय २६९० मितवर्षेषु कलेर्गतेषु नन्दराज्यमासीत्ततः शतवर्षान्ते चन्द्रगुप्तराज्यमिति तथाच प्रागुक्तकालात् सहस्रवर्षान्ते तयोः राज्यकालाविति मन्यन्ते । एतच्च यद्यपि इंलण्डीयभाषेतिहासग्रन्थानुसारि तथापि भागवतविरोधभिया प्रमाणपरतया नाद्रियते इत्यवधेयम् ।

तदानीमेव पाणिनिवररुचिव्याडिभिः प्रागुक्ता ग्रन्था निर्म्मिताः । एतेषां प्रायश एतावत्कालवर्त्तित्वमन्यथापि प्रतीयते । विज्ञानेश्वरयोगिकृतायां मिताक्षरायां ग्रन्थे पावादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः इत्युक्त्वा तद्ग्रन्थस्य १९२१ वर्षीयसंवदभिधशकप्रवर्त्तकविक्रमादित्यकालिकतावसीयते तस्याञ्च याज्ञवल्क्यविवृतौ ''व्यवहाराध्याये व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह,, इति वचनव्याख्यायां सहेति कृतोयानिर्द्देशात्तेषामप्राधान्यं

शब्दस्तोऽप्राधान्ये इति २११८ अत्रत्यादित्वेन पठितिनिषुक्तस्य प्रमाणत्वेनो-त्तेखात्तस्य ततः प्राचीनता। ततोऽपि प्राचीनेषु मेधातिथिप्रणीत-महाभाष्ये यथावदिति पदव्याख्याने तदर्हमिति ५।१।११७ वतिप्रत्ययइति विग्र-हादपि ततः प्राचीनता पाणिनीयस्य। पिताम्बरायाञ्चासहायमेधा-तिथिप्रभृतीनां व्याख्यानमेव चतुरत्रविनिमुक्ता मेधातिथेस्ततः प्राची-नतावगमेन ततोऽपि प्राचीनता पाणिनेः सूपपन्ना। तथा भर्तृहरि-प्रणीतवाक्यपदीयोक्तरलोकेभ्योऽपि ततः प्राचीनतायाः महाभाष्यस्य विनिश्चयात् ततोऽपि पाणिनेः प्राचीनताऽवसीयते। भाष्यकारस्य चन्द्र-गुप्तराज्यावर्वाचीनकालतायाः प्राग्दर्शितत्वात् ततोऽपि प्राचीनता तद्व्या-ख्यातसूत्रवार्त्तिककारादेरिति फलितम्।

नन्दानां राज्यकालस्य शतवर्षात्मक एव भागवते १२स्कन्धे १ अध्याये दर्शितः

महानन्दिसुतो राजन्! शूद्रागर्भसमुद्भवः।
महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत्॥
तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः।
य इमां भोक्ष्यन्ति महीं राजानश्च शतं समा इत्युक्त्वा
नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति।
तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ॥
स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति।

अत्र नवनन्दानां शतवर्षं राज्यकालमभिधाय चाणक्यनामाद्विजो नन्दान् निहत्य मौर्याणामाद्यं चन्द्रगुप्तं राज्येऽभिषेक्ष्यतीत्युक्तम्। तेषाञ्च राज्य-कालः चन्द्रगुप्तादिपुत्रपौत्रादीन् दशवंशविस्तारानभिधाय तत्रैवोक्तः 'मौर्यास्त्वेते दश नृपाः सप्तत्रिंशच्छतं समा इति, एवञ्च नन्दराज्य कालात् सप्तत्रिंशदधिकशतवर्षेषु चन्द्रगुप्तादिमौर्यराज्यकालस्तथा च पाणि-निप्रभृतिसमुत्पत्तेरनन्तरं शतवर्षेषु अर्थात् इतः प्राक् २१७५ वर्षसमये मतान्तरे २१७५ समये वा चन्द्रगुप्तराज्यमासीत तदानीं कियत्कालानन्तरं वा पतञ्जलिकृतभाष्यसमुद्भवः भाष्ये प्रायुक्तमत्युदाहरणात्तथा निश्चीयते।

एवं सूत्रवार्त्तिकभाष्याणामुत्पत्तिकालेष्ववधृतेषु तद्व्याख्यानप्रकरणादि

ग्रन्थानामुल्लिखितानामवधारणमनाहत्यैव ग्रन्थग्रन्थकर्तृणामभिधानादिकं किञ्चित् प्रदर्श्यते ।

| | | |
|---|---|---|
| महाभाष्यव्याख्या | भर्तृहरिकृता | |
| वाक्यपदीयम् | भर्तृहरिकृतम् | न्यायप्रदर्शनपूर्वकभाष्यतात्पर्यवर्णनम् |
| वाक्यपदीयव्याख्या | हेलाराजकृता | पुण्यराजकृता च |
| काशिका वृत्तिः | वामनापरनाम जयादित्यकृता | पाणिनीयसूत्रक्रमानुसारेण सोदाहरणा व्याख्या |
| न्यासापरनामा पदमञ्जरी, हरदत्तमिश्रकृता | | इष्ट्युपसंख्यानव्यतिरेकेण सूत्राक्षरैरेव सकलशब्दसाधनम् |

मम्मटभट्टकृतकाव्यप्रकाशेऽनेकस्थानेषु माघकाव्यपद्यानां धृततया माघस्य ततः प्राचीनत्वावगमेन तस्मिन् काव्ये च 'अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना शब्दविद्येव' इत्युक्तत्वात् ततोऽपि प्राचीनता वृत्तिन्यासयोरि' त्यनुमीयते । कैयटेनापि बहुस्थानेषु 'इति वृत्तिग्रन्थः' इत्युक्तमतस्ततोऽपि प्राचीनता तस्याः ।

| | | |
|---|---|---|
| पञ्जिका | जिनेन्द्रकृता | काशिकावृत्तिव्याख्या |
| भाष्यप्रदीपः | कैयटकृतः | महाभाष्यव्याख्या |
| भाष्यप्रदीपोद्द्योतः | नागेशभट्टकृतः | भाष्यप्रदीपविवरणम् |
| भाष्यप्रदीपविवरणम् | ईश्वरानन्दकृतम् | भाष्यप्रदीपव्याख्या |
| प्रक्रियाकौमुदी | रामचन्द्राचार्यकृता | प्रक्रियानुसारेण पाणिनिसूत्राणि यथास्थानमुद्धृत्य सोदाहरणं व्याख्यातानि |
| टीकाप्रक्रियाकौमुदी | श्रीकृष्णकृता | |
| प्रसादः | विठ्ठलकृतः | मूलव्याख्या |
| तत्त्वचन्द्रः | जयन्तकृतः | प्रसादव्याख्या सोदाहरणा |
| माधवीयवृत्तिः | माधवाचार्यकृता | अष्टाध्यायीसूत्रव्याख्या |
| सिद्धान्तकौमुदी | भट्टोजिदीक्षितकृता | प्रक्रियानुसारिसूत्रोद्धरणपूर्विका सोदाहरणा सूत्रवृत्तिः |

| | | |
|---|---|---|
| प्रौढमनोरमा | भट्टोजिदीक्षितकृता | सिद्धान्तकौमुदीव्याख्या |
| शब्दरत्नम् | हरिदीक्षितकृतम् | प्रौढमनोरमाव्याख्या |
| भावप्रकाशः | वैद्यनाथकृतः | प्रौढमनोरमाव्याख्या |
| शब्देन्दुशेखरः | नागेशभट्टकृतः | सिद्धान्तकौमुदीव्याख्या |
| चिदस्थिमाला | वैद्यनाथकृता | शब्देन्दुशेखरव्याख्या |
| तत्त्वबोधिनी | ज्ञानेन्द्रसरस्वतीकृता | सिद्धान्तकौमुदीव्याख्या |
| शब्दकौस्तुभः | भट्टोजिदीक्षितकृतः | सूत्रानुसारेण भाष्याद्युक्तार्थेषु युक्तिप्रदर्शनपूर्वकं व्याख्यानम् |
| प्रभा | वैद्यनाथकृता | शब्दकौस्तुभव्याख्या |
| गूढार्थदीपिनी | सदाशिवपण्डितकृता | सूत्रक्रमानुसारिसूत्रव्याख्या |
| मध्यकौमुदी | वरदराजकृता | सिद्धान्तकौमुदीसारांशः |
| लघुकौमुदी | वरदराजकृता | ततोऽपि सारांशः |
| वैयाकरणसर्वस्वम् | भरणीधरकाशीनाथकृतम् | सोदाहरणा सूत्रानुसारिव्याख्या कारिकादिसहिता भाष्यवार्त्तिकापेक्षितांशसहिता च |
| एषा सरला | मत्कृता | सिद्धान्तकौमुदीव्याख्या |

---

## प्रकरणग्रन्थनामादि ।

| | | |
|---|---|---|
| वैयाकरणभूषणम् | कौण्डभट्टकृतम् | शब्दशक्तिनिरूपणम् |
| वैयाकरणभूषणदर्पणः | हरिवल्लभकृतः | वैयाकरणभूषणटीका |
| मञ्जूषा | नागेशभट्टकृता | शब्दशक्तिनिरूपणम् |
| कला | वैद्यनाथकृता | मञ्जूषाव्याख्या |
| परिभाषावृत्तिः | सीरदेवकृता | परिभाषाव्याख्या |
| परिभाषेन्दुशेखरः | नागेशभट्टकृतः | परिभाषाव्याख्या |
| परिभाषाकाशिका | वैद्यनाथकृता | परिभाषाव्याख्या |

| | | |
|---|---|---|
| धातुपाठप्रदीपः | मैत्रेयरक्षितकृतः | धातुपाठव्याख्या |
| शब्दार्थरत्नम् | संस्कृतम् (मुद्रितम्) | व्याकरणविद्याप्रदर्शनम् |

---

पाणिनीयसूत्रपाठस्याष्टाध्यायीति संज्ञा तत्राष्टावध्यायाः द्वात्रिंशत्पादाः ३९६५ मितानि सूत्राणि । तत्र च वैदिकलौकिकसाधुशब्दव्युत्पादनं वैदिकशब्दानामुदात्तादिस्वरविधानञ्च । किन्तु एकैकस्मिन् प्रकरणे एकजातीयकार्याण्युपदिष्टानि तेन पठनपाठनादौ विशृङ्खलतामुपलभ्य प्रक्रियाकौमुदीसिद्धान्तकौमुद्यादिषु प्रक्रियानुसारेण अपेक्षितस्थाने सूत्राण्युद्धृत्य व्याख्याय चोदाहरणादिना विशदीकृतानि ।

भ्वादिदशगणीयधातवोऽर्थसहिता धातुपाठे भगवता पाणिनिना पठिताः सिद्धान्तकौमुद्यां सर्व एव तत्रत्या धातवोऽर्थसहिता उद्धृताः ।

अष्टाध्यायीसूत्रोल्लिखितस्वरादिगणानां ज्ञापनाय भगवता पाणिनिनैव गणपाठो ग्रन्थोरचितस्तत्र च अष्टाध्यायीसूत्रानुपदिष्टकार्यविशेषार्थं क्वचित्क्वचित् सूत्राण्यपि निर्दिष्टानि तेषां गणसूत्रेति संज्ञा ।

शब्दानां पुंस्त्वादिलिङ्गबोधनार्थं लिङ्गानुशासनमपि भगवता कृतं तत्रत्य सूत्राणि च सिद्धान्तकौमुद्यामन्तेऽभिनिवेशितानि । तत्कृतः वर्णोच्चारणशिक्षाभिधोऽप्यपरो ग्रन्थोऽस्ति ।

वार्त्तिके तु अष्टाध्यायीसूत्रानुपदिष्टाधिकांशपरिपूरणेन सूत्रतात्पर्य्यव्याख्यानम् ।

शाकटायनेनोणादिसूत्राण्युक्तानि तानि उज्ज्वलदत्तेन व्याख्यातानि ।

एतदुपवर्ण्या अपि गोवर्द्धनक्षपणकादिकृता वृत्तयः सन्तीत्युज्ज्वलदत्तीया दवगन्तव्यम् ।

महाभाष्ये सूत्रवार्त्तिकव्याख्यानपूर्वकं शब्दशक्तिनिरूपणेन युक्तिप्रदर्शनम् । तत्र प्रथमाध्यायस्य प्रथमपादे नवाह्निकानि तत्रैवाध्याये शब्दानुशासनस्य विषयप्रयोजनादीन्युक्तानि स एवाध्यायः प्रथमाध्यायसंज्ञाभाक् ।

---

# अथ टीकोपक्रमणिका।

---

स्मारं स्मारं सरस्वत्याः पादपद्मं मुदा हृदा।
सिद्धान्तकौमुदीव्याख्यां सरलाख्यां समारभे ॥ १ ॥

सूत्रवार्त्तिकभाष्याणां कारकान् मुनिसत्तमान्।
पाणिन्यादीन् नमस्कृत्य तद्व्याख्यातृगणांस्तथा ॥

वात्स्यवंश्यबुधोत्तंसकालिदाससुसंभुवा।
इयं विरच्यते यत्नात् श्रीतारानाथशर्म्मणा ॥ २ ॥ युग्मम्।

शब्देन्दुशेखरं वीक्ष्य निरीक्ष्य तत्त्वबोधिनीम्।
गूढार्थान् विशदीकुर्वे विलोक्य च मनोरमाम् ॥ ३ ॥

क्वचित्तेषां पङ्क्तिं क्वचिदपि च तत्तद्वचनतो
गृहीत्वा सारांशं विषमपदबोधाय विवृतिम्।
तनोम्येतां तत्त्वं विविदिषुजनानामतिमुदे
क्षमध्वं विद्वांसः स्खलनमिह यन्मे निजगुणात् ॥ ४ ॥

सिद्धान्तकौमुदीग्रन्थः काठिन्याद् दुर्गमोऽभवत्।
सरलायाः समायोगात् लोकेऽद्य सरलायताम् ॥ ५ ॥

अप्रकाशेव जाताद्य काठिन्यघनसंवृता।
कौमुदी सरलावात्यासम्बन्धात् विमलायताम् ॥ ६ ॥

एकैककाण्डेष्वेकैककार्य्यसिद्धिविधायकैः।
पाणिनिः सङ्कृतैः सूत्रैरष्टाध्यायीं विनिर्म्ममे ॥ १ ॥
पदादिसिद्धैर्य्यद्यत्र कार्य्यं तेषामपेक्षितम्।
तत्रत्यैवोद्धृतं सूत्रं तेन वृत्तौ व्यतिक्रमः ॥ २ ॥
सूत्राक्षरेण सूत्राणां भिन्नपङ्क्तौ निवेशनम्।
अध्यायपादसूत्राणां संख्याङ्कस्थापनं ततः ॥ ३ ॥
अध्यायसंख्या प्रथमात्, पादसंख्या द्वितीयतः,।
तृतीयाद्, अङ्कतो ग्राह्या सूत्रसंख्येति निर्णयः ॥ ४ ॥
भट्टोजिदीक्षितकृता सूत्राधो वृत्तिरूपिणी।
मध्यमाक्षरसंस्थाना कौमुदी सरलोपरि ॥
भाष्येष्टिवार्त्तिकसुखप्रमाणादिसमन्विता।
उपपत्तियुता मध्ये स्याप्योदाहरणान्विता ॥५॥ युग्मम्।
कात्यायनमुनिकृतं वार्त्तिकं मध्यभागतः।
पुष्पाकारेणाङ्कनीयं चिह्नेनाङ्कविवर्ज्जितम् ॥ ६ ॥
भाष्यस्थेष्ट्युपसंख्यानादिकं यद्यत् समुद्धृतम्।
वृत्तौ तत्तत्पदोल्लेखात्तस्याश्चिह्नेन मुद्रणम् ॥ ७ ॥
रेखान्तराला सरला कौमुदीनीचभागतः।
सूक्ष्माक्षरेणाङ्कनीया सत्कृताङ्कैश्च चिह्निता ॥ ८ ॥
व्याख्याव्याख्येययोरेकसंख्याङ्कात्तत्र निश्चयः।
आदिमाक्षरमात्रेण प्रमाणे सर्व्वसंग्रहः ॥ ९ ॥
यथा ऋ० इतिचिह्नेन ऋग्वेदोऽवधार्य्यताम्।
एवमन्तैनैकदेशात् समुदायस्य संग्रहः ॥ १० ॥

# सिद्धान्तकौमुदी ।

मुनित्रयं (१) नमस्कृत्य तदुक्तीः परिभाव्य च (२)
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते (३) ॥

अ इ उ ण् । १ । ऋ ऌ क् । २ । ए ओ ङ् । ३ । ऐ औ च् । ४ । ह य व र ट् । ५ । ल ण् । ६ । ञ म ङ ण न म् । ७ । झ भ ञ् । ८ । घ ढ ध ष् । ९ । ज ब ग ड द श् । १० । ख फ छ ठ थ च ट त व् । ११ । क प य् । १२ । श ष स र् । १३ । ह ल् । १४ ।

---

(१) वेदशास्त्रार्थावगन्तारो मुनयस्तेषां पाणिनिकात्यायनपतञ्जलीनां त्रयम् उपपदविभक्तितः कारकविभक्तेर्बलवत्त्वाद्द्वितीया न तु नमःशब्दयोगे चतुर्थी ।

(२) परिभाव्य परिचिन्त्य चौरादिकस्य भुवश्चिन्तार्थकस्य ल्यपि रूपम् ।

(३) व्याकरणं विदन्तीति वैयाकरणास्तत्सिद्धान्तस्य कौमुदीव प्रकाशिका । प्रकाशकत्वेन, दुरूहग्रन्थान्तरेभ्यो श्रमे जायमानस्य क्लेशतापस्य निवारकत्वेन च कौमुदीसाम्यम् । करिष्यमाणाया अपि कौमुद्याः

इति माहेश्वराणि (४) सूत्राणि अणा°दिसंज्ञार्थानि (५)।

---

वृत्त्या सन्निधापिततया इयमितीदृशा निर्देशः। विरच्यते इति भवि-ष्यत्सामीप्ये वर्त्तमानप्रयोगः। शब्देन्दुशेखरः।

(४) महेश्वरादधिगतानि माहेश्वराणि 'येनाक्षरसमाम्नायमधिगम्य महे-श्वरात्। कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः' इत्युक्तेः 'नृत्ता-वसाने नटराजराजो ननाद ढक्कां नव पञ्च वारान्। उद्धर्त्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्'। 'अत्र सर्वत्र सूत्रेषु वर्णा अन्त्याश्चतुर्दश। धात्वर्थं समुपादिष्टाः पाणिन्यादीष्टसिद्धये' इति चोक्तेः। धात्वर्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् अतएवानुबन्धकरणाय चतुर्दशवर्णानामुपदेश इति। शब्देन्दु०।

(५) चतुर्दशसूत्र्या अणा°दय एकचत्वारिंशत् संज्ञा अष्टाध्याय्यां व्यव-हृताः। यथा—

एकस्मात् ङञणवटा द्वाभ्यां षश्चिभ्य एव कणमाः स्युः।
ज्ञेयौ चयौ चतुर्भ्योऽरः पञ्चभ्यः शलौ षड्भ्यः इति काशिका।

अस्यार्थः। अण्° एङ् यञ् छव् अट्। इत्येकादिकाः पञ्च: ५। अण् भष् इति षान्तौ २। अक् इक् उक्। इति कान्ताः ३। अण् इण् यण् इति णरणान्ताः ३। अम् यम् ङम्। इतिमान्ताः ३। इति नव ९। अच् इच् एच् ऐच्। इति चान्ताः ४। यय् मय् झय् खय् इति यान्ताः ४। इत्यष्टौ ८। यर् झर् खर् चर् शर्। रान्ताः ५। अश् हश् वश् झश् जश् बश्। शान्ताः ६। अल् हल् वल् रल् झल् शल्। लान्ताः ६। इति द्वादश १२ मिलिता एकचत्वारिंशत्॥ वैयटमतानुरोधेन रप्रत्याहारस्य, चयप्रत्याहारस्य च 'चयोद्वितीया' इति वार्त्तिकपाठे सत्त्वात् त्रिचत्वारिंशत्।

एषु सूत्रेषु संहिताया अविवक्षिततया न संहिताकार्यम् अनु-करण-त्वात् सौत्रत्वाद्वा न वर्णेभ्यो विभक्त्युत्पत्तिः कारप्रत्ययोऽपि न शाङ्कत्वात्।

॥ श्रीः ॥

तत्त्वबोधिनीसमाख्यव्याख्यासंवलिता

# सिद्धान्तकौमुदी

नाम

## भट्टोजिदीक्षितप्रणीता पाणिनीयव्याकरणसूत्रवृत्तिः ।



अत्र

श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानेन्द्रसरस्वतीविरचितोत्तरकृदन्तान्तं तत्त्वबोधिनीव्याख्या, स्वरवैदिक्योः श्रीमज्जयकृष्णकृता सुबोधिनी, पाणिनीयशिक्षा, गणपाठः, धातुपाठः, लिङ्गानुशासनं च, अकाराद्यनुक्रमेण कौमुदीगताष्टाध्यायीसूत्राणां पृष्ठाङ्कसूत्राङ्कसूची, वार्तिक गणसूत्र-परिभाषाणां समुच्चितसूची, धातूनां पृष्ठाङ्कसूची, उणादिसूत्राणां सूची, फिट्सूत्राणां सूचीति, कोशपञ्चकस्य च संग्रहः ।



गाडगिळेत्युपाह्वैः वे. शा. सं. रा. रा. केशवतनूजदिनकरशास्त्रिभिस्तथा पणशीकरोपाह्वलक्ष्मणतनुजनुषा वासुदेवशर्मणा च

संशोधिता ।



सा च

मुम्बय्यां

जावजी दादाजीनां

निर्णयसागराख्यमुद्रणयन्त्रालयाधिपतिना तुकाराम जावजी इत्यनेन

स्वीयेऽङ्कनालये मुद्रयित्वा प्राकाश्यं नीता ।

शकाब्दाः १८२०, खीस्ताब्दाः १८९९.

मूल्यं रूप्यकचतुष्टयम् ।

एषामन्त्या इतः लण्सूत्रेऽकारश्च (६) हकारादिष्वकार (७) उच्चारणार्थः॥

## हलन्त्यम्।१।३।३।

हलिति (८) सूत्रेऽन्त्यमित्स्यात्॥

## आदिरन्त्येन सहेता।१।१।७१।

अन्त्येनेता (९) सहित आदिर्मध्यगानां स्वस्य च संज्ञा

---

(६) इत् भवतीति विपरिणामेनान्वयः अनन्त्यत्वात् पृथगुक्तिः। लण्सूत्रस्थमकारमादाय उरण् रपर इति (१।१।५१) सूत्रे रप्रत्याहारग्रहणम् ऋलृवर्णयोः स्थाने जायमानोऽण् रपरः रप्रत्याहारपरस्तेन ऋस्थाने अर् आर् इर् उर् इत्यादि, लृस्थाने अल् आल् इत्यादि भवति रप्रत्याहारेण रलयोर्ग्रहणस्य कैयटमतेनापि वक्ष्यमाणत्वम्। शब्देन्दुशेखरे तु रप्रत्याहारस्य प्रत्याख्यानेनान्यरीतिराद्दतेत्याकरे स्पष्टम्।

(७) हकारादिष्वकारस्यानुनासिकत्वप्रतिज्ञानेन उपदेशेऽजित्यनेन तस्येत्संज्ञा।

(८) हल्प्रत्याहारासिद्धौ अन्त्यहल इत्करणासंभवेन आदिरन्त्येन सहेतेति सूत्रेण इत्संज्ञायुक्तान्त्यवर्णेन सहितस्याद्यवर्णस्यैव मध्यगानां स्वस्य च संज्ञात्वकथनात् हल्सूत्रस्थलकारस्य चाद्यापि इत्करणाप्रसक्तेरन्योन्याश्रयदोषभिया सूत्रावरमावृत्त्य पठित्वा वाक्यभेदेन योजयन्नाह हलितीति अत्र उपदेशे इत्यतदन्मात्रमनुवर्त्तते। एवं च हयवरडादिदशसूत्र्या पठितानां वर्णानां समुदायस्य हल्सूत्रस्यान्त्यवर्णेन इता लकारेण सह हलितिसंज्ञा ततस्तन्मध्यवर्त्तिटाद्यनुबन्धानामित्त्वसिद्धये हलन्त्यमित्यत्र उपदेशे इति इदिति चानुवर्त्त्यापि व्याख्यास्यते।

(९) सुट्प्रत्याहारेण स्वौजसमौटामिव अनन्त्येन इता टाटकारेण सप्पर्यन्तस्य ग्रहणनिवारणायान्त्येनेति विशेषणम्। तत्त्वबोधिनी।

स्यात् । इति हल्संज्ञायाम् । हलन्त्यम् । (१०)उपदेशेऽन्त्यं हल् इत्स्यात् । उपदेश आद्योच्चारणम् । ततोऽण् अजित्यादि संज्ञासिद्धौ ॥

## उपदेशेऽजनुनासिक इत् । १ । ३ । २ ।

उपदेशेऽनुनासिकोऽच् इत् स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः (११) । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा (१२) । प्रत्याहारेष्वितां (१३) न ग्रहणम् अनुनासिक इत्यादिनिर्देशात् (१४) । नह्यत्र ककारे परेऽच्-

---

आद्यन्तयोरनिर्देशे तद्घटितसमुदायालाभात्तदर्थमेवान्त्यग्रहणं तथा च आद्यन्ताभ्यामवयवाभ्यां स्वघटितः समुदाय आदिग्नः संज्ञेति । शब्देन्दु० ।

(१०) हलित्यस्योक्तार्थस्य करणेऽपि 'न विभक्तौ तुस्माः' इत्यपवाददर्शनेन हलन्त्यमित्यस्य सामान्यविषयकत्वावश्यकतया पुनः सामान्यसूत्रस्यैवारम्भः ।

(११) पाणिनीयाः पाणिनिना प्रोक्ता वर्णाः प्रतिज्ञायते इति प्रतिज्ञा प्रतिज्ञाविषय आनुनासिक्यं येषां तथाभूताः इत्यर्थः । शब्देन्दु० ।

(१२) रप्रत्याहारसिद्धये लण्सूत्रस्थाकारस्यानुनासिकत्वप्रतिज्ञानात् अनन्त्येनापि इता अकारेण सहितो रः, रलयोः संज्ञेत्युक्तं प्राक् ।

(१३) रलयोरिव तन्मध्यवर्त्तिटकारस्य ग्रहणमापद्यतात् प्रत्याहारेष्वितामिति ।

(१४) उपदेशेऽजनुनासिक इदित्यादिसूत्रे शेषः तथा च यदि प्रत्याहारे इतामपि ग्रहणमभिप्रेतं स्यात्तदा ककारस्याज्मध्यपतितत्वेन तस्मिन् परे पूर्वस्येकोऽनुनासीतीकारस्य यण्प्रसङ्गः स्यात् न च तथा सूत्रे निरदिशत् । अतस्तत्सूत्रे यणोऽकरणमुक्तार्थज्ञापकमिति भावः ।

कार्यं (१५) दृश्यते । आदिरन्त्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन (१६) व्यवह्रियन्ते ॥

## ऊकालो (१७) ऽज् ह्रस्वदीर्घप्लुतः । १ । २ । २७ ।

उश्च ऊश्च ऊ(३)श्च वः वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स च (१८) प्रत्येकमुदात्तादिभेदेन त्रिधा ॥

## उच्चैरुदात्तः । १ । २ । २९ ।

ताल्वादिषु (१९) सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । आ ये (२०) ॥

---

(१५) इकोयणचीति सूत्रेण कृतम् अचि कार्य्यमच्कार्य्यं यणादिरूपम् ।

(१६) प्रत्याह्रियन्ते संक्षिप्य गृह्यन्ते वर्णा अनेनेति प्रत्याहारशब्दो योगरूढः । तत्त्व० ।

(१७) ऊकाले च कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्ध्या कालादयो नोक्ताः । शब्देन्दु० ।

(१८) स च अत्र अकारादिस्वररूपो ह्रस्वदीर्घप्लुतभेदेन त्रिविधोऽपि पुनस्त्रिधा अत्र विशेषोऽग्रे वक्ष्यते ।

(१९) श्रुतिकृतमुदात्तत्वमुपांशुप्रयोगेऽव्याप्तं श्रुतिप्रकर्षस्याव्यवस्थितत्वादतः स्थानकृतं तदिति, उच्चैरित्यधिकरणशक्तिप्रधानम् अधिकरणत्वं चोच्चारणं प्रति, तत्र ताल्वादीनां सभागत्व एवेति चाशयेनाह ताल्वादीति । प्रयत्नप्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति तदा स उदात्तः, एवमधोभागेऽनुदात्त इति । शब्देन्दु० ।

(२०) आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न आगहि । ऋ० अ० १ । व० ३७ निपाता आद्युदात्ता इत्याकार उदात्तः । मरुच्छब्दस्य प्रातिपदिकतया फिषोऽन्त उदात्त इति सूत्रे (फिट्

**नीचैरनुदात्तः। १। २। ३०।**

स्पष्टम्। अर्वाङ् (२१)॥

**समाहारः स्वरितः। १। २। ३१।**

उदात्तानुदात्तत्वे वर्णधर्म्मौ समाह्रियेते यस्मिन् सोऽच् स्वरित-संज्ञः स्यात्।

**तस्यादित उदात्तमर्द्धह्रस्वम्। १। २। ३२।**

ह्रस्वग्रहणमतन्त्रम् (२२) स्वरितस्यादितोऽर्द्धमुदात्तम्बोध्यम् उत्तरार्द्धन्तु परिशेषादनुदात्तम्। तस्य चोदात्तस्वरित-परत्वे (२३) श्रवणं स्पष्टम्। अन्यत्र (२४) तूदात्तश्रुतिः

---

प्रातिपदिकम्) तस्यान्तोदात्तत्वविधानेनान्तोदात्तता ततः परस्य जसः सुप्रया' अनुदात्तौ सुप्पिताविति (३। १। ४) अनुदात्तत्वे त्यदाद्यत्वे शीभावे आद्गुणे च सति एकादेश उदात्तेनोदात्त इति (८। २। ५) सूत्रेण एकार उदात्तः। तत्त्व०।

(२१) अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः। त्रिबन्धुरो मघवा विश्वसौभगः शन आवक्षद् द्विपदे चतुष्पदे ऋ०। अ० २। अ० व० २७। अर्वन्तमञ्चतीत्यर्वाङ् अञ्चतेः सुप्युपपदे क्विप् ऋ गतावित्यस्मात् वनिपि गुणे च निष्पन्नोऽर्वन्शब्दः धातोरिति (६। १। १६२) सूत्रेणान्तोदात्तः वनिपः पित्त्वेन अनुदात्तौ सुप्पिताविति (३। १। ४) सूत्रेण अनुदात्तत्वम् अञ्चतेरकारोऽपि धातोरिति सूत्रेणान्तोदात्तः उपपदमतिङिति सूत्रेण समासे कृते समासस्येति (६। १। २२३) समासस्वरेण निघातात् अनुदात्तं पदमेकवर्जमिति (६। १। १५८) सूत्रेणाकारस्यानुदात्तता। तत्त्व०।

(२२) अतन्त्रमविवक्षितं स्वशास्त्रसंकेतितत्वरूपेणाबोधकत्वात् किं त्वर्द्धमात्ररूपार्थबोधकम्। शब्देन्दु०।

(२३) उदात्तस्वरितौ परौ यस्मात् तदुदात्तस्वरितपरं तस्य भावस्तत्त्वं तस्मिन् सति पूर्वस्य स्वरितस्य यदुत्तरार्द्धमनुदात्तं तस्य स्पष्टं श्रवणम्।

(२४) अन्यत्र उदात्तस्वरितपरत्वाभावे।

प्रातिशाख्ये (२५) प्रसिद्धा। क वोऽश्वा रथानां न, येऽराः शतचक्रं योऽह्य इत्यादिष्वनुदात्तः (२६) अग्निमीळे

---

(२५) वैदिकमात्रशब्दानुशासनरूपं व्याकरणम् प्रातिशाख्यं तत्र। यथा

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः।

तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वा।

अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत्।

उदात्तं नोच्यते किञ्चित् स्वरितं वाक्षरं परमिति। अनयोरथा पूर्वयोरुदात्तानुदात्तयोः एकत्वाक्षरे समावेशे सति स्वरितो भवति। तस्य स्वरितस्य उदात्तात् स्वतन्त्रोच्चारितोदात्तात् तदपेक्षयेत्यर्थः अर्द्धमात्रा उदात्ततरेति बोध्यम् एतच्च ह्रस्वस्वरिताभिप्रायम् अर्द्धमेवोदात्ततरमिति तु ह्रस्वदीर्घोभयाभिप्रायमतएव तदन्ते एवकारः श्रावितः। परः उत्तरार्द्धः अनुदात्तः स च शेषः स्वरितोत्तरार्द्धरूपोऽनुदात्तोऽपि चेत् यदि ततः परमुदात्तं स्वरितं वा अक्षरं नोच्यते तदा उदात्तश्रुतिरुदात्तस्येव श्रुतिर्यस्य तादृशः स्यात्। अयं भावः। स्वरितोत्तरार्द्धस्यानुदात्ततया ततः परमुदात्तवर्णा-न्तरस्य उदात्तपूर्वार्द्धकस्वरितवर्णान्तरस्य वा श्रवणे अनुदात्तात्परमुदात्त-स्वरस्य स्पष्टं प्रतिभानम् उदात्तस्वरितपरत्वाभावे अनुदात्तान्तरपरत्वे किञ्चिदनुत्तरत्वे चानुदात्तस्याप्युदात्तवत् श्रवणमिति।

(२६) उदात्तपरत्वस्वरितोदाहरणमाह क्वेति किमोऽदिति तित् स्वरित-मिति (६।१।१८५) सूत्रेण स्वरितं व इति' 'अनुदात्तं सर्वमपदादा-विति'सूत्रेणानुदात्तम् अश्वा इति अशेः क्वनिनि नित्स्वरेणाद्युदात्तं ततश्च वः अश्वा इत्यनयोः संहितायाम् 'एकादेश उदात्तेनोदात्त' इति सूत्रेण ओकार उदात्तः। ततश्च (क्वेति स्वरितोत्तरार्द्धानुदात्तस्य तस्यार्द्धस्य वो इत्युदात्तपरत्वात् 'स्पष्टश्रवणं। अदात्तपरदीर्घ-स्वरितोदाहरणमाह येऽरा इति अत्र ये अरा इत्यनयोर्द्व-योरपि प्रातिपदिकत्वेन 'फिषोन्त उदात्त' इति फिट्सूत्रेणान्तोदा-त्तता ततश्च अरा इत्याद्यस्याकारस्य परिशेषादनुदात्तता एवञ्च ये इत्यस्य अरा इत्याद्येनाकारेणैकादेशे "स्वरितो वानुदात्ते पदादावि"ति (८।२।६) सूत्रेण पक्षे स्वरितता ततश्च ये इति

पुरोहितमित्यादावुदात्तश्रुतिः (२७)। स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥

---

दीर्घस्वरितस्य दा इत्युदात्तपरतया स्पष्टश्रवणम् । एवमुदात्तपरयोर्ह्रस्व-दीर्घस्वरितयोरुदाहरणमुक्त्वा स्वरितपरं स्वरितमुदाहरति योऽह्व इति । य इति प्रातिपदिकस्य 'फिषोऽन्त उदात्त' इति फिट्सूत्रेणान्तोदात्तता अह्व इति अत्र व्याप्तावित्यस्मात् कर्म्मणि क्यति 'तित् स्वरित'मिति सूत्रेण स्वरितम् । ततो य इति यकारस्य अह्व इत्यकारे परे यणि उभये आद्गुणे च कृते उदात्तेनैकादेशात् 'एकादेश उदात्तेनोदात्त' इत्योकार उदात्तः । ततः अह्व इत्यत्र ह्व इतिभागस्य तित्स्वरेण स्वरितत्वे कर्त्तव्ये शेषनिघातात् आद्याकारस्यानुदात्तता 'अनुदात्तं पदमेकवर्ज्ज'मिति सूत्रात् ततश्च यो इत्युदात्तेन ओकादेशेन सह अह्व इत्याद्यस्याकारस्यैकादेशे कृते 'स्वरितो वानुदात्ते पदादा'विति सूत्रेणानुदात्ते अकारे परे यो इत्यस्य स्वरितता । एवञ्च यो इति स्वरितपरः ह्व इति स्वरित इति न उदात्तश्रुतिः ।

(२७) अग्निमीळे पुरोहितमित्यादि ऋग्वेदस्य प्रथमा ऋक् ।

ईळे इत्येतत् समस्तमपि पदमनुदात्तम् 'तिङ्ङतिङः' इति (८।१।२८) सूत्रेण अतिङन्तादग्निशब्दात् परस्य ईळ इति तिङन्तस्य निघातस्य विधानात् । अग्निम् ईळे इतिपदयोः संहिताकाले तु मानुगतस्य ईकारस्य स्वरितत्वम् । 'उदात्तादनुदात्तस्य स्वरित' इति (८।४।६६) सूत्रेण उदात्तात् परस्याऽनुदात्तस्य स्थाने स्वरितः स्यादित्यर्थकेनानुदात्तस्य ईकारस्यस्थाने स्वरितादेशात् । ततः परस्य ळे इत्यस्यैकारस्य तिङ्प्रत्ययरूपस्य स्वरितात् 'संहितायामनुदात्ताना'मिति (१।२।३९) सूत्रेण ऐकश्रुत्यं प्रचयनामकम् ततश्च ईळे इति द्वयोरपि स्वरितत्वे सत्येव एकश्रुतेरविभागेन श्रुतेः स्वरितता ततश्चायं स्वरितपरः स्वरित इति नोदात्तश्रुतिः । किन्तु ळे इति स्वरितः पुर इत्याद्याकारोकाररूपानुदात्तपरतयोदात्तश्रुतिः पुरःशब्दस्य फिट्सूत्रेणान्तोदात्तत्वस्य विधानेन शेषनिघातादाद्याकारस्यानुदात्तत्वात् ।

## मुखनासिकावचनो (२८) ऽनुनासिकः ।१।१।८।

मुखसहितनासिकयोच्चार्य्यमाणोऽनुनासिकसंज्ञः स्यात्। तदित्थम् अइउऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। लृवर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्।

## तुल्यास्यप्रयत्नं (२९) सवर्णम् ।१।१।९।

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यन्तन्मिथः सवर्णसंज्ञं स्यात्। अकुहविसर्जनीयानाङ्कण्ठः। इचुयशानान्तालु। ऋटुरषाणाम्मूर्द्धा। लृतुलसानान्दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानान्नासिका च (३०)। एदैतोः (३१) कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वा-

---

(२८) मुखसहिता नासिका मुखनासिका उच्यतेऽनेनेति वचनं मुखनासिकावचनमस्येति विग्रहः ।

(२९) आस्ये भवमास्यं यत् यलोपः ओष्ठात् प्रभृति कण्ठमूलात् प्राक् ताल्वादि आस्यमित्यर्थः। प्रकृष्टो यत्नः प्रयत्न आभ्यन्तर एव, न बाह्यः। आस्यतुल्यत्वानुक्तौ तप्तैत्यत्र 'झरो झरि सवर्णे' इति पकारलोपः स्यात् पकारतकारयोः उभयोरपि अल्पप्राणत्वादिना बाह्यसमानप्रयत्नत्वेन साम्यात्। तुल्यप्रयत्नत्वानुक्तौ वाक्श्च्योततीत्यत्र झरोझरीति सूत्रेण शकारलोपः स्यात् शकारचकारयकाराणां तालुरूपतुल्यस्थानेन साम्यात् अतउभयोपादनम् ।

(३०) नासिका चेति चकारेण स्वस्ववर्गोच्चारणानुकूलं ताल्वादि समुच्चीयते।

(३१) एदैतोरित्यत्र तपरकरणमसन्देहार्थं न तु तत्कालस्य ग्रहणार्थं तेन प्लुतस्यापि संग्रहः ।

रस्य। इति स्थानानि (३२)। प्रयत्नो (३३) द्विधा आभ्यन्तरो बाह्यश्च आद्यश्चतुर्धा स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् (३४)। तत्र स्पृष्टम्प्रयतनं (३५) स्पर्शानाम्, ईषत्स्पृष्टमन्तःस्थानाम्, विवृतमूष्मणां स्वराणाञ्च ह्रस्वस्यावर्णस्य प्रयोगे

---

(३२) अत्र मूलं पाणिनीयशिक्षा सा च यथा

कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू।
स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः।
जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः।
ए ऐ तु कण्ठतालव्यावो औ कण्ठौष्ठजौ स्मृतौ।
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च।
हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्।
औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्॥ शब्देन्दु०।

(३३) तुल्यास्यप्रयत्नमिति सूत्रे प्रशब्देन विलक्षणयत्नबोधेऽपि लोके यत्नप्रयत्नयोः पर्यायतेति ध्वनयन्नाह प्रयत्नो द्विधेति क्वचित्यत्नो द्विधेत्येव पाठः। शब्देन्दु०।

(३४) एतेषामाभ्यन्तरत्वं वर्णोत्पत्तेः प्रागभावित्वात् तथाहि नाभिप्रदेशात् प्रयत्नविशेषप्रेरितः प्राणो वायुः ऊर्द्धमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वोत्पत्तिः तत्रोत्पत्तेः प्राक् जिह्वाग्रोपाग्रमध्यमूलानि वर्णोत्पत्तिस्थानं ताल्वादि यदा सम्यक् स्पृशन्ति तदा स्पृष्टतादि. ईषत्स्पर्शे ईषत्स्पृष्टता, समीपावस्थाने संवृतता, दूरावस्थाने विवृतता। अतएव इचुयशानां तालव्यत्वाविशेषेऽपि चवर्गे उच्चारयितव्ये जिह्वाग्रादीनां तालुस्थानेन सम्यक्स्पर्शः, यकारे ईषत्स्पर्शः, शकारे, समीपे-इवर्णे तु दूरेऽवस्थानम्।

(३५) स्पृष्टं प्रयतनमिति प्रपूर्वकात् यतेर्नपुंसके भावे ल्युट् अत्र प्रयत्नमित्यपपाठः प्रयत्नशब्दस्य नियतपुंस्त्वस्य शास्त्रसम्मतत्वात्।

संवृतं प्रक्रियादशायान्तु विवृतमेव (३६) एतच्च सूत्रकारेण ज्ञापितम्। तथा हि।

अ अ (३७)। ८। ४। ६८।

विवृतमनूद्य संवृतोऽनेन विधीयते। अस्य (३८) चाष्टाध्यायीं सम्पूर्णाम्प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव। तथाच सूत्रम्

---

स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतमित्यनन्तरं शिक्षायाम्।
अचोऽस्पृष्टाः यणस्त्वीषत्, नेमस्पृष्टाः शलः स्मृताः।
शेषाः स्पृष्टा हलःप्रोक्ता इत्यादि।
अत्र अचः अस्पृष्टाः स्पर्शाभावरूपविवृतत्ववन्तः यणस्त्वीषत् अस्पृष्टा इत्यनुषज्यते तेन ईषदस्पृष्टा ईषद्विवृता इत्यर्थः। नेम-इत्यर्द्धे तेन शलः ईषद्विवृतं यणमपेक्ष्य अधिकविवृतत्ववन्त इत्यर्थः। शब्देन्दु०।

(३६) विवृतत्वमिति प्रतिज्ञेयं तेन दण्डाढकादौ दीर्घसिद्धिरन्यथा संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घाकारेण सावर्ण्याभावात् 'अकः सवर्णे दीर्घ' इत्यस्याप्रवृत्तिरिति भावः। शब्देन्दु०।

(३७) तस्य प्रयोगे संवृतत्वे मानमाह अ अ इति अनयोः संवृतत्वविवृतत्व-रूपप्रयत्नभेदेन सवर्णाभावान्न दीर्घः। अत्रोद्देश्ये विवृते अकारे सवर्णग्रहणं जातिनिर्देशो वा नास्ति व्याख्यानात्। शब्देन्दु०। तत्राद्यो विवृतो द्वितीयस्तु संवृतः 'अनुवाद्यमनुक्त्वैव न विधेयमुदी-रयेदि'त्युक्तेस्तथा च विवृतस्थाने संवृतं स्यादिति सूत्रार्थः अ अ इति सुपामिति विभक्तेर्लुक्।

(३८) अस्येति अ अ इति सूत्रे उद्देश्यस्य विवृतस्य अकारस्येत्यर्थः। एत-त्सूत्रस्याष्टाध्याया अन्तिमसूत्रतया पूर्वत्रासिद्धमित्यस्याधिकारार्थक-तया तत्राप्यन्वयेन च उपान्तिमसूत्रपर्यन्तशास्त्रं प्रति असिद्धत्वात् शास्त्रदृष्ट्या विवृतत्वं न तु प्रयोगे इति भावः।

## पूर्वत्रासिद्धम्।८।२।१।

अधिकारोऽयं (३८) तेन सपादसप्ताध्यायीं प्रति त्रिपादी असिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात्।

---

(३८) यद्ययं पूर्वत्रासिद्धमिति स्वतन्त्रविधिः स्यात्तर्हि त्रिपादी पूर्वं प्रत्यसिद्धेत्येव लभ्येत न तु त्रैपादिकं पूर्वं प्रति परमसिद्धमिति लभ्येत तथाच महानिष्टमित्यत आह अधिकार इति। मनो०।

अयमभिसन्धिः। 'विप्रतिषेधे परं कार्य्य'मिति शास्त्रेण पूर्व्वापरसूत्राभ्यामेकविषये उभयकार्य्यप्रसङ्गे उत्तरशास्त्रस्यैव प्राबल्येन पूर्व्वशास्त्रप्रतिरोधात् परशास्त्रीयमेव कार्य्यं भवतीति प्रतिपादनेन अष्टमाध्यायप्रथमपादान्तसप्ताध्यायीशास्त्राणामपि अविशेषादष्टमाध्यायशेषत्रिपाद्यपेक्षया पूर्व्वतया बाध्यत्वप्रसक्तौ 'पूर्व्वत्रासिद्ध'मिति सूत्रं प्रवृत्तं तस्य चायमर्थः पूर्व्वत्र अष्टमाध्यायीयद्वितीयपादावधिके अष्टमाध्यायीयप्रथमपादसहितसप्ताध्यायीरूपशास्त्रे पूर्व्वशास्त्रं प्रतीत्यर्थः 'इतराभ्योऽपि दृश्यन्ते' इति सूत्रेण सम्बन्धसामान्यार्थकषष्ठ्यन्तात् त्रल्प्रत्ययेन तथाबोधनात् असिद्धमप्रवृत्तमनिष्पन्नं भवति निष्पन्नत्वेऽपि अनिष्पन्नत्वारोप इति भावः। तथाच अनयोरेकवाक्यतया सामान्यतः प्रवृत्तस्य 'विप्रतिषेधे' इत्यादि शास्त्रस्य त्रिपादीभिन्नविषयत्वं कल्प्यते एतच्च 'पूर्व्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'ति न्यायान्तरेण ज्ञापितम्। ततश्च मनोरथ इत्यादिप्रयोगसिद्धिः अन्यथा मनस् इति स्थिते 'ससजुषोरु'रिति (८।२।६६) सूत्रेण सकारस्य रुत्वे कृते 'अतो रोरप्लुतादप्लुते' इति (६।१।११३) 'हशि चे'ति (६।१।११४) सूत्राभ्यामप्लुताकारात् परस्य रोः स्थाने उत्वस्य विधानेऽपि तस्य षष्ठाध्यायीयसूत्रतया पूर्व्वत्वेन ततः परस्य अष्टमाध्यायीयस्य रोरीति (८।३।१४) सूत्रस्य परत्वेन बाधकतया रथ इति रकारे परे रुलोपः स्यात्। एवमन्यत्राप्यतिप्रसङ्ग ऊहनीयः। पूर्व्वत्रासिद्धमिति सूत्रेण तु रोः स्थाने

वाह्य (४०) प्रयत्नस्त्वेकादशधा विवारः संवारः ( ४१ ) श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ।

खयां यमाः खयः ᳵक ᳶपौ विसर्गः शर एव च ।
एते श्वासानुप्रदाना (४२) अघोषाश्च विवृण्वते (४३) ।

---

उभयोत्पत्तौ बाधकमपि रोरीति परं शास्त्रमसिद्धतया न प्रतिबन्धकम् । परशास्त्रे असिद्धत्वरूपाभावारोपेण च तन्निमित्तबुद्धेरभाव आदेशबुद्ध्यभावो लभ्ये जातस्वबुद्ध्यभावस्य जायमान, कार्य्यत्वादेश एव स्थानिबुद्धा प्रवर्त्तते इत्यादिशब्देन्दुशेखरोक्तरीत्यात्मातिप्रसङ्गादिकं वारणीयम् । इदञ्च सूत्रमधिकारार्थकं तेन यथा त्रिपादी पूर्व्वं प्रति असिद्धा अनिष्पन्ना एवं त्रिपाद्यामपि तत्तत्सूत्रेषु पूर्व्वत्रासिद्धमित्यधिकारेणानुवृत्तेरन्वयेन सर्व्वाण्येव उत्तरोत्तरसूत्राणि स्वस्वपूर्व्वशास्त्रविहितकार्य्योत्पत्तौ असिद्धानि अप्रतिबन्धकानीति सूत्रार्थः । तेन प्रशानित्यादौ 'नलोपः प्रातिपदिकान्तस्ये'ति (८ । २ । ७) सूत्रेण न नलोपप्रसङ्गः ततः परेण 'मो नो धातोरि'ति (८ । २।६४ ) सूत्रेण धातोर्मकारस्थाने नकारविधानेऽपि तच्छास्त्रस्य स्वपूर्व्वं प्रति असिद्धत्वात् तद्विहितकार्य्येऽपि स्थानिबुद्धा मकाररूपकार्य्यबुद्ध्यभावारोपादिति दिक् ।

(४०) वर्णोत्पत्तिपश्चाद्भावित्वेन तेषां वाह्यप्रत्ययत्नत्वम् । एकादशविधत्वं तु कैयटमतानुसारेण भाष्ये तु उदात्तादिस्वराणां प्रयत्नत्वप्रत्याख्यानादष्टविधत्वमेव व्यवस्थापितमिति ध्येयम् ॥ तत्त्व० ।

(४१) गलविलस्य सङ्कोचात् विवारः तस्यैव, विकाशात् संवारःतौ, च संवृतविवृतरूपाभ्यामाभ्यन्तरप्रयत्नाभ्यां भिन्नावेव तयोः समीपदूरावस्थानात्मकत्वादिति । तत्त्व ० ।

(४२) श्वासः अनुप्रदानं वाह्यप्रयत्नो येषां ते तथा ।

(४३) विवृण्वते कण्ठमित्यध्येषाम्वयस्तेन विवृतत्वप्रयत्नवन्त इत्यर्थः । तत्त्व० ।

कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः।

अयुग्मा वर्गयमगा (४४) यणश्चाल्पासवः (४५) स्मृताः वर्गेष्वाद्यानाञ्चतुर्णाम्पञ्चमे परे मध्ये यमो नाम पूर्व्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः। पलिक्क्नी। चख्ख्नतुः। अग्ग्निः। घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः। तत्र वर्गाणाम्प्रथमद्वितीयाः खयस्तथा तेषामेव यमाः जिह्वामूलीयोपध्मानीयौ विसर्गः शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च। अन्येषान्तु संवारो नादो घोषश्च। वर्गाणाम्प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः अन्ये (४६) महाप्राणा इत्यर्थः (४७)। वाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्य (४८) परीक्षायामुपयोक्ष्यन्त इति बोध्यम्।

---

(४४) अयुग्मा वर्गयमगा वर्गगा यमगाश्च अयुग्माः यथायोग्यं प्रथमतृती-

(४५) यपञ्चमाः प्रथमतृतीयाश्च। अल्पासवः अल्पप्राणा अतएव तदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवतीति। शब्देन्दु०।

(४६) अयुग्मादीनामल्पप्राणत्वप्रतिपादनेन तदन्येषामचामनुक्तानां हलां च महाप्राणत्वलाभ इत्याह अन्ये इति।

(४७) तेषु च वाह्यप्रयत्नेषु विवारसंवारौ उक्तौ, श्वासोत्पादकः श्वासः ध्वनिविशेषकारका नादघोषाघोषाः, प्राणनक्रियाल्पत्वकारकः, अल्पप्राणः तन्महत्त्वकारकःमहाप्राण इति विवेचनीयम्।

(४८) आन्तरतम्येति तथा च अघोषस्य महाप्राणस्य सकारस्य स्थाने तादृशएव थकारः, घोषवतो नादवतो महाप्राणस्य हकारस्य च स्थाने तादृशाएव घादयो भवन्ति 'स्थानेऽन्तरतम' इति सूत्रेण तथाप्रतिपादनात्। तुल्यास्यप्रयत्नमित्यत्र प्रयत्नेन विशेषणादाभ्यन्तरा

कादयो मावसानाः (४८) स्पर्शाः। यरलवा अन्तःस्थाः। शषसहा ऊष्माणः। अचः स्वराः। ≍क ≍प इति कपाभ्यां (५०) प्रागर्द्धविसर्गसदृशौ जिह्वामूलीयो (५१) पाध्मानीयौ। अं अः इत्यचः परावनुस्वारविसर्गौ(५२)। इति स्थानप्रयत्नविवेकः। ॰ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्॰। अकारहकारयोरिकारशकारयोः ऋकारषकारयोः लृकारसकारयोश्च सावर्ण्यं प्राप्ते।

---

णामेव सावर्ण्योपयोगिता अन्यथा शकारछकारयोरपि बाह्यप्रयत्नसाम्येन सावर्ण्यं स्यादिति भावः॥

(४८) कादय इति लोकप्रसिद्धपाठापेक्षं चतुर्दशसूत्र्यां कादिमावसानत्वाभावात्। मनो०।

(५०) कपाभ्यामिति खफाभ्यामित्यपि बोध्यम् साहस्यसन्नारणे लेखने चेति द्रष्टव्यम्। मनो०।

(५१) जिह्वामूलीयोपाध्मानीयानां स्थानबाह्यप्रयत्नकथनं तु स्वरूपनिर्णयायैव न तु सावर्ण्यतारतम्यपरीक्षोपयोगीति ध्येयम्। शब्देन्दु०।

(५२) एतेषां स्पर्शादिनामव्युत्पत्तिस्तु जिह्वाग्रादिभिः ताल्वादिस्थानस्य सम्यक्स्पर्शेनोच्चारणात् स्पर्शा इत्युच्यन्ते। स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति अन्तःस्थाः। अन्तःस्थशब्दस्य क्वचिदादन्तोऽपि "अन्तःस्थाभिश्च संयुत"मिति पिचाकाङ्क्तेः। ऊष्मा वायुस्तत्प्रधानतयोच्चारणात् ऊष्माणः। उदात्तादिस्वरवत्त्वेन, स्वेनैव, राजमानत्वेन च स्वराः। जिह्वामूलीयौ कण्ठभवौ कस्य वर्णाराश्रित्योच्चारणात् जिह्वामूलीयः 'जिह्वामूले तु कुः प्रोक्त' इति पूर्वोक्तेः 'अयोगवाहा विज्ञेया आश्रयस्थानभागिन' इत्युक्तेश्च नास्ति योगः अक्षरसमाम्नायसूत्रेषु येषां ते अयोगास्तथापि वाहयन्ति सत्प्रयत्नकार्यं निर्वाहयन्तीति वाहाः अयोगाश्च ते वाहाश्चेति अयोगवाहा अनुस्वारविसर्ग-

नाज्झलौ। १। १। १०।

अकारसहितोऽच् आच् (५३) स च हल् चेत्येतौ मिथस्सवर्णौ न स्तः। तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु यणादिकं न, अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणक- (५४) शास्त्रबलादच्त्वं (५५) स्यात्। तथाहि।

---

जिह्वामूलीयोपध्मानीया इत्यर्थः उः उवर्णः पः पकार एतौ आध्मायेते उच्चार्येते अनेनेति उपध्मानमोष्ठः तदुद्भवपफान्वयेणोच्चारणात् उपध्मानीयः।

(५३) चतुर्दशसूत्र्या पठितवर्णानां मध्ये अचां हल्वर्णेन सावर्ण्ये प्राप्ते नाज्झलाविति सूत्रं प्रवृत्तं तत्र आकारसहितोऽच् आजित्युक्तं तत्रायमभिसन्धिः अक्षरसमाम्नायमध्ये आकारस्य पाठाभावेऽपि अणुदित् सवर्णस्य चानेन अच्पदेन आकारस्यापि ग्रहणसम्भवेन विश्वपाभिरित्यत्र होढ इति ढत्वप्रसङ्गः ग्राहकशास्त्रेण अणुदित् सवर्णस्येति सूत्रेण हकारेण आकारस्यापि ग्रहणात् नाज्झलाविति निषेधस्य अक्षरसमाम्नायपठितवर्णमात्रविषयत्वादाकारस्य तत्पठितत्वाभावेन निषेधाविषयत्वात् आकारप्रश्लेषे तु आकारेण सह हलः सावर्ण्यनिषेधेन होढइति हकारेण सावर्ण्यात् आकारस्यग्रहणं प्रश्लेषज्ञापकस्तु कालसमयवेलास्विति सूत्रे वेलास्विति निर्देशः अन्यथा इण्मध्यवर्त्तिहकारेण आकारस्यापि ग्रहणात् वेलास्विति सकारस्य इणः परतया षत्वप्रसङ्गेन तथा निरदेक्ष्यत्। आ च अच्चेति समाहारे चवर्गान्तत्वात् टच्प्रसङ्गः। अच् हल् चेति समाहारानन्तरम् आचेति पुनः समाहारे आकारेण सहाचामपि सावर्ण्यनिषेधप्रसङ्ग इत्यतः सहितमध्यपदलोपी तत्पुरुष आश्रितः। शब्देन्दु०।

(५४) शब्देन्दुशेखरे ग्राहकमिति पाठः अन्यत्र तु ग्रहणकमिति पाठः।

(५५) अच्त्वमच्पदवाच्यत्वं स्यादित्यत्र प्रत्याहारघटकेष्वपि ग्राहकशास्त्रप्रवृत्तिरिति मते इति बोध्यम्। शब्देन्दु०।

अणुदित् सवर्णस्य (५६) चाऽप्रत्ययः। १। १। ६९।

प्रतीयते विधीयत इति प्रत्ययः। अविधीयमानोऽण् उदिच्च (५७) सवर्णस्य संज्ञा स्यात्। अत्राण्, परेण (५८) णकारेण। तदेवम् अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतएवम् ऌकारोऽपि। एचो द्वादशानाम्। एदैतोरोदौतोश्च न मिथः सावर्ण्यम् ऐऔजिति-सूत्रारम्भसामर्थ्यात्। तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम्। नाज्झलाविति निषेधो यद्यपि (५९) आक्षर समाम्नायिकानामेव तथापि हकारस्याऽऽकारो न सवर्णः

---

दीर्घादीनामिव हकारादीनामवर्णादिवाच्यत्वे अभ्युपगम्यमानेऽच्त्वं स्यात् प्रत्याहारे तद्वाच्यवाच्ये निरूढलक्षणास्वीकारादिति।

तत्त्व०।

(५६) अणुदिच्च सवर्णबोधकताऽनेन विधीयते तथा च सवर्णस्य बोधक इति शेषः। आदेशादौ सवर्णग्रहणवारणाय अप्रत्यय इति।

शब्देन्दु०।

(५७) उदिच्चेति अत्र अविधीयमानो न सम्बध्यते चुना श्चु, चुःकुहोरि-त्यादौ आदेशे उदित्करणसामर्थ्यात् तेनाविधीयमानोऽच् उदिच्च विधी-यमानोऽपि सवर्णस्य बोधक इति वाक्यार्थः। तत्त्व०।

(५८) अत्र पाठकशास्त्रे परेण णकारेण सर्वत्रान्यणकारेण अणसंज्ञा व्यवह्रियते व्याख्यानतो विशेषप्रतिपत्तेरिति भावः एवमिणपीति बोध्यम्।

(५९) यद्यपीति वर्णानामुपदेशस्तावत् उपदेशोत्तरकाला इत्संज्ञा, तदुत्तर-काला आदिरन्त्येनेति प्रत्याहारसंज्ञा, तदुत्तरकाला अणुदिदिति-सवर्णसंज्ञे’ति भाष्योक्तरीत्यैतेन समुदितेन वाक्येनान्यत्र सवर्णग्रहणं भवति नचात्र शकारसिकारः सावर्ण्येन व्यवह्रियते नाज्झलाविति सूत्रभाष्योक्तवाक्यापरिसमाप्तत्वात्। अयं भावः। आदिरन्त्येनेति

तत्राऽऽकारस्य प्रश्लिष्टत्वात् तेन विश्वपाभिरित्यत्र ह्रोढ इति ढत्वन्न (६०) भवति। अनुनासिकाऽननुनासिकभेदेन यवला द्विधा (६१) तेनाऽनुनासिकाऽननुनासिकास्ते द्वयोर्द्वयोः संज्ञा।

**तपरस्तत्कालस्य। १। १। ७०।**

तः परो यस्मात्सः, तात्परश्च (६२) उच्चार्य्यमाणः समकालस्यैव संज्ञा स्यात्। तेन अत् इत्, उत् इत्यादयः षण्णां षण्णां संज्ञा। ऋदिति (६३) द्वादशानाम्।

---

प्रत्याहारसिद्धौ नाज्झलावित्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णसंज्ञाबोध्यनिश्चये अणुदित्यनेनैतावतां ग्रहणमापादनीयम् अन्यथा बाधकसंभावनया तुल्यास्येति सूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहादणुदिदितिसूत्रजशक्तिग्रहासम्भवः नचैतद्वाक्यार्थबोधात् प्राक् तन्निश्चय इति। शब्देन्दु०।

(६०) ह्रोढ इति। हकारेणाऽऽकारग्रहणे यद्यदनिष्टं भवति तत्सर्वस्याप्युपलक्षणम् तेन वेलास्वित्यत्र षत्वं पृथगायुरित्यत्र षत्वं च न भवति अन्यथा तदुभयं स्यादिति भावः।

(६१) अमोऽनुनासिका नऽह्नाविति शिक्षोक्तेर्यवलानामनुनासिकत्वादिति बोध्यम्।

(६२) अतो भिस इत्यादौ तपरकरणात् सहिवहोरोदवर्णस्येत्यत्र तात्परकरणात् भाष्ये तथाव्याख्यानाच्च तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषसमासावित्यभिप्रेत्याह तात्परश्चेति तत्र अतोभिस इत्याद्योदाहरणम् वृद्धिरादैजित्यन्त्योदाहरणम् तेन ऐचस्तात्परकरणात् क्रमेणैकत्वं गङ्गौघइत्यादौ द्विमात्र एव ऐच्, नतु कदाचित् त्रिमात्र इति मनोरमाद्यनुसारिणः।

(६३) ऋदिति ऋॢवर्णयोर्मिथःसावर्ण्यविधानेन तपरत्वेऽपि ऌकारग्रहणादिति भावः।

वृद्धिरादैच् (६४)। १। १। १।

आत्, ऐच्च वृद्धिसंज्ञः स्यात्।

अदेङ्गुणः (६५)। १। १। २।

अत्, एङ् च गुणसंज्ञः स्यात्।

भूवादयो (६६) धातवः। १। ३। १।

क्रियावाचिनो ६७) भ्वादयो धातुसंज्ञाः स्युः।

प्राग्रीश्वरान्निपाताः (६८)। १। ४। ५६।

इत्यधिकृत्य।

(६४) वृद्धिः आत् ऐजित्यसमस्तं पदत्रयं तेन समाहारद्वन्द्वे न टच्प्रसङ्गः आत् ऐच्च वृद्धिः वृद्धिपदवाच्य इत्यर्थः। वृद्धिशब्दस्य विधेयत्वेऽपि प्रथमपाठो मङ्गलार्थः। आइत्यकृत्वा आदिति तपरकरणमसन्देहार्थं कृष्णैकत्वं गङ्गौघ इत्यादौ त्रिमात्रव्यावृत्त्यर्थञ्चैचस्तात्परकरणादिति वक्तव्यम्।

(६५) अदिति तपरकरणं पूर्व्वार्थमुत्तरार्थञ्च तेन तरतीत्यादौ सर्व्वदा अकार एव नतु कदाचिदाकारोऽपि तात्परस्य एङः करणाच्च प्रेजते परोक्षतीत्यादौ सर्व्वदा द्विमात्र एव एङ् नतु क्वचित् त्रिमात्रोऽपि।

(६६) भूश्च वाश्चेति भ्वौ आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषे आदी तौ आदी येषामिति बहुव्रीहिः भूप्रभृतयो क्रियावाचित्वेन वासदृशा धातव इत्यर्थः। मनो०।

(६७) साइश्यञ्च क्रियावाचित्वेनेत्यभिप्रेत्याह क्रियेति क्रियावाचिनः किं? याः पश्यतीत्यत्र धातुत्वं मा भूत् सति हि तस्मिन् आतो धातोरित्यालोपः स्यात्। भ्वादयः किं हिरुक् पृथगित्याद्यव्ययानां शिश्ये इति भावार्थतिङन्तानाञ्च मा भूत्। सौत्राणां स्तम्भ्वादीनामुदित्करणेन धातुत्वं ज्ञाप्यत इति बोध्यम्। मनो०।

(६८) अधिरीश्वरे (१। ४। ९७) रीश्वरपदयुक्तसूत्रवाक्यात् तत्सूत्र-

**चादयोऽसत्त्वे। १। ४। ५७।**

अद्रव्यार्था (६९) श्चादयो निपातसंज्ञाः स्युः।

**प्रादयः। १। ४। ५८।**

अद्रव्यार्थाः प्रादयस्तथा।

**उपसर्गाः क्रियायोगे (७०)। १। ४। ५९।**

**गतिश्च (७१)। १। ४। ६०।**

प्रादयः क्रियायोगे उपसर्गसंज्ञागतिसंज्ञाश्च स्युः।

मभिव्याप्येत्यर्थः रीति सन्ध्यचरग्रहणं तु ईश्वरे तोसुन्कसुनाविति (२ । ४ । १३) सूत्राभिव्याप्तिवारणाय। प्रथमं निपाताः सन्तः पश्चाद्-गतिसंज्ञकाः भविष्यन्तीति द्योतनाय प्राक् निपाता इत्यभिहितम्।

(६९) असत्त्वे इति पर्युदासो लाघवादित्यभिप्रेत्याह अद्रव्येति विशेष्यतया द्रव्यभिन्नार्था इति तदर्थः तेन क्रियाविशिष्टद्रव्यवाचिनां विप्रादि-घटकव्यादीनां नाप्रसङ्गः। लोभं नयन्ति पशु मन्यमाना इत्यादौ पशु सम्यगर्थकं गतिकारकेत्यादिना समासः द्रव्यार्थत्वे पशुम्मन्यमाना इत्येव स्यात्। लिङ्गसंख्यान्वितं द्रव्यम्। चादयः किम्। स्वरादिपठितानाम-सत्त्ववाचित्वे आद्युदात्तत्वं मा भूदिति।

(७०) यदर्थे प्रादीनामन्वयस्तं प्रत्येवोपसर्गतेति द्योतनाय योगग्रहणम् तेन निर्गतः सेचको यस्मादिति निःसेचका इत्यादौ न षत्वम्। शब्देन्दु०।

(७१) गतिश्चेति चकार उपसर्गसंज्ञासमावेशार्थस्तेन प्रतिप्रणीतमित्यादौ गतित्वात् गतिर्गताविति (८।१।७०) सूत्रेण प्रेति गतिपरे प्रतीति-गतेरनुदात्तत्वं प्रेत्यस्योपसर्गत्वात् णत्वञ्च सिद्ध्यति। प्रादय इति गतिश्चेति योगविभागस्तु क्रियायोगाभावेऽपि तेषां निपातत्वाय एत-स्मिन्नेवोपसर्गप्रतिरूपकस्य निपातत्वमुक्तं चाद्यन्तर्गणसूत्रेणेति द्रष्टव्य-मिति।　　शब्देन्दु०।

प्र परा (७२) अप सम् अनु अव निस् निर् दुस् दुर् (७३) वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप एते प्रादयः।

## नवेति (७४) विभाषा। १। १। ४४।

निषेधविकल्पयोर्विभाषा संज्ञा स्यात्।

(७२) प्रपरेत्यादावनुकार्यानुकरणयोरभेदविवक्षया न सुबुत्पत्तिः।

(७३) निस् दुस् इति सान्तौ निसस्तपतावनासेवने इति (८। ३। १०२) सूत्रे निस इति निर्देशात् निष्टप्तं दुष्टप्तमित्युदाहृत्य इदुदुपधस्य चाप्रत्ययस्य इति षत्वविधायकसूत्रे इदुदुपधस्य सकारस्य यो विसर्जनीय इति भाष्योक्तेश्च। निरःकुष इति (७।२।४६।) इदुदोरविकरणे इति च निर्देशात् रान्तावपि। मनो०।

(७४) नवेति। इतिशब्दः काकाक्षिन्यायेनोभाभ्यां सम्बध्यते नेति निषेधो वेति विकल्पो विभाषायाः संज्ञीत्यर्थः। अत्र इतिशब्दानभिधाने स्वं रूपं शब्दस्येति परिभाषणात् शब्दमात्रं नवाशब्दरूपं विभाषासंज्ञि स्यात् तथा च विभाषा श्वेरिति सूत्रे श्विधातुस्थाने विभाषा-पदसंज्ञिनवाशब्दादेशापत्तिः। सति तु इतिशब्दपरत्वे शब्दपर-स्यापि नवाशब्दस्यार्थपरत्वलाभः। इतिशब्दस्य स्वाभाव्यं हि शब्द-परस्यापि अर्थपरत्वकारित्वम्, अर्थपरस्य च शब्दपरत्वकारित्वमिदमेव तस्यार्थविपर्यासकारित्वमतएव गवित्ययमाहेत्यादावर्थपरस्यापि शब्द-परत्वकारित्वमनुकरणादिषु दृश्यते। तथा च विभाषापदेन निषेधः विकल्पश्चाभिधीयते। विकल्पशास्त्रस्य च त्रिविधा प्रवृत्तिः क्वचिदप्राप्ते विकल्पविधानं क्वचिच्च प्राप्तस्याप्यभावांशमात्रविधानं क्वचिच्च प्राप्तविषय-कनिषेधपुरःसरं सामान्यमुखेन प्राप्ताप्राप्तोभयविषये पाक्षिकप्राप्ति-विधानम्। तत्र विभाषापदघटितसूत्रे सामान्यप्राप्तनिषेधपूर्वकमेव प्राप्ताप्राप्त विषये सामान्यमुखेन पाक्षिकविधानमित्येतदर्थं नवेति

## स्वं रूपं शब्दस्याऽशब्दसंज्ञा।१।१।६८।

शब्दस्य स्वं रूपं संज्ञि (७५) शब्दशास्त्रे या संज्ञा तां विना

## येन विधिस्तदन्तस्य।१।१।७२।

विशेषणं तदन्तस्य संज्ञा स्यात्। स्वस्य च रूपस्य।(७६

विभाषेति सूत्र प्रवृत्तम्। तथाच विभाषा श्वेरिति सूत्रे विभाषापदेन निषेधो विकल्पश्च क्रमेणोपस्थापितौ तत्र स्वपि-वचीत्यादिना कित्सु नित्यप्राप्तं संप्रसारणं प्रथमं निषेधोविषयी-करोति ततः लिटौत्यनुवृत्तौ किदकित्साधारणरूपेण उपस्थितं संप्रसारणं विकल्पो विषयीकरोति एवञ्च विभाषादिपदघटितता-वत्सूत्रेष्वेव एवंरूपेण निषेधपूर्वकविकल्पबोधनमित्यतः संज्ञासूत्र-प्रवृत्तम्।

(७५) रूपं बोध्यमित्याह संज्ञीति। राज्ञो यदित्यादौ व्युत्पत्त्योपस्थापितस्य नृपतिरूपार्थस्य राजपदेन बोधसम्भवेऽपि तदर्थस्य प्रातिपदिकत्वा-भावेन ततः प्रत्ययानुत्पत्तिवारणेऽपि राजार्थकापरशब्दात् यत्प्रत्यय-निरासार्थमाह स्वं रूपमिति। उपसर्गे घोः किरित्यादौ स्वरूपग्रहण-वारणाय अशब्दसंज्ञेति। कर्म्मसंज्ञादेरर्थसंज्ञात्वेन शब्दसंज्ञात्वा-भावात् कर्म्मण्यणिति सूत्रे स्वरूपग्रहणमाशङ्क्य व्याचष्टे शब्दशास्त्रे या संज्ञा तां विनेति अशब्दसंज्ञेत्यस्यार्थः। तथा च शब्दशास्त्रेणैव कर्म्मसंज्ञाविधानात् तस्यापि शब्दसंज्ञात्वान्न तत्र स्वरूपग्रहणमिति।

(७६) येनेति यद्विशेषणविशिष्टतया विधिर्विधानं तद्विशेषणं तदन्तस्य संज्ञा, स्वं रूपमितिसूत्रस्थं स्वं रूपमित्यनुवर्त्त्य षष्ठ्यन्तविपरिणामे-नान्वयात् स्वस्य रूपस्य च संज्ञेत्यर्थः। तेन एरजिति (३।३।५६) सूत्रेण इवर्णान्तस्य चिप्रभृतेरिव इप्रभृतेश्च ग्रहणात् चयः अयः इत्यादिवत् प्रत्ययः इत्यादेरपि सिद्धिः।

# प्रस्तावना-



भो भोः कुलक्रमागतानेकानवद्यहृद्यप्रतिपद्यमानविद्याधरीकृतविद्याधरा अनवरतमुखचापकोटिमध्यविनिःसृतवाग्बाणप्रतिकृतप्रत्यर्थितीर्थाः अभीष्टसाधनकल्पद्रुमायमानविद्यावितरणाः पदवाक्यप्रमाणपारावारीणवर्या धीराः, विदितमेवात्रभवतां निखिलमहीवर्तुलमुखतिलकायमानो वैयाकरणसिद्धान्तकौमुदीनामा ग्रन्थो भाष्याब्धिं निर्मथ्याखिलजनोपकृतये श्रीमता विद्वत्कुलाभरणेन भट्टोजिदीक्षितेन विनिर्मितो वेदाङ्गविन्मनस्तोषमुपजनयतीति।

अस्मिंश्च ग्रन्थे बह्वो विवृतयो विलसन्ति मनोरमा-बृहच्छब्देन्दुशेखर-लघुशब्देन्दुशेखरप्रभृतयो महाभाष्याशयवर्णनपरमतविदारणमूलयोजनपरायणाः। सतीष्वप्येतासु काठिन्याद्विस्तराच्च सर्वेषां पठनपाठनयोर्नोपकारो भवतीति विचिन्त्य तेषां व्याकरणतत्त्वबोधाय श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानेन्द्रसरस्वतीचरणास्तत्त्वबोधिनीनाम्नीं व्याख्यां चक्रुः। श्रीमज्जयकृष्णपण्डिताश्च स्वरवैदिकप्रकरणं सुबोधिन्यालंचक्रुः।

सेयं व्याख्या काश्यादौ मुद्रणविधिना प्राकाश्यं नीतापि क्वचिदशुद्धतया क्वचिन्मूलटीकापाठसंकीर्णतया क्वचित्पाठरहिततया अविन्यस्तसुलभवाच्याक्षरतया महामूल्यतया च पठनपाठनादौ विदुषां मनःक्लेशं जनयतीत्यनुभूय शुद्धमुद्रणकलया पाठासंकीर्णतयाऽभ्रष्टपाठतया घटितबालजनातिसुलभवाच्याक्षरतया च विद्वज्जनमनस्तापं परिहरेदिति निर्धार्य पुनर्मुद्रणविधौ बद्धः परिकरः।

दूरीकृतसकलदोषे मुद्रणविधिकल्पोपेतेऽस्मिन् ग्रन्थे मूलपाठप्रतीकज्ञानाय टीकायां स्थूलाक्षरविन्यासः कृतः। 'साङ्गोपाङ्गो हि ग्रन्थः परमोपकारी' इति निश्चित्य अकाराद्यनुक्रमेण कौमुदीगताष्टाध्यायीसूत्राणां पृष्ठाङ्कसूत्राङ्कसूची, वार्तिकगणसूत्रपरिभाषाणां समुच्चितसूची, धातूनां पृष्ठाङ्कसूची, उणादिसूत्र-फीट्सूत्रसूच्यौ चेति कोशपञ्चकस्याप्यत्र संग्रहोऽकारि। इयं व्याख्याऽतीव समीचीना मूलग्रन्थलापनेऽथापि क्वचिच्छिष्टविशिष्टपदार्थज्ञानसाधनमप्यध्ययनाध्यापनयोरुपकुर्यादित्यत्रष्टिप्पणमपि प्रदत्तम्। सपरिशिष्टोऽयं ग्रन्थः कियदावश्यताक इति सर्वत्र सुप्रसिद्धमेवेति नार्थो बहुधा लेखनेन।

अस्य ग्रन्थस्य सर्वापेक्षत्वमभिप्रेत्य मूल्यमत्यल्पं ( ४ ) स्थापितम्। आशासे च पठनपाठनसाधनप्रधानोऽयं ग्रन्थ इति विद्वद्वर्यग्राहकाः कृतादरा भवेयुरिति शम्।

न शास्त्रवरुणालयोऽत्र सुगमो ह्यपारत्वतो
निसर्गकरुणालयास्तु कृतिनो गुणाढ्यत्वतः।
क्षितावखिलविन्न कश्चुतिरपीह पुंधर्मिका
नतिः सकलमार्जनीति रचयामि विज्ञेषु ताम्॥

यद्यपराधः पुंसो धर्मो ग्रन्थस्य शोधने प्रथितः।
मार्ष्टुं ज्ञांस्तं याचति दिनकरशर्माऽसकृत्क्षमध्यमिति॥

*समासप्रत्ययविधौ (७७) प्रतिषेधः *। *उगिद्वर्णग्रहणवर्जम् * (७८)॥

**विरामोऽवसानम्।१।४।११०।**

वर्णाना-(७९) मभावोऽवसानसंज्ञः स्यात्।

**परस्सन्निकर्षः संहिता।१।४।१०९।**

वर्णानामतिशयितः (८०) सन्निधिः संहितासंज्ञः स्यात्।

**सुप्तिङन्तम्पदम्।१।४।१४।**

सुबन्तन्तिङन्तञ्च (८१) पदसंज्ञं स्यात्।

---

(७७) तेन द्वितीया श्रितादीतिसूत्रे श्रितादिना समुपाश्रितादेर्न ग्रहणं तथा च कष्टं श्रित इति वाक्ये कष्टश्रितइतिवत् कष्टं समुपाश्रित इति विग्रहे न समासः।

(७८) तदन्तग्रहणे प्रत्ययविशेषस्य उगिद्ग्रहणवर्ज्जमिति प्रतिप्रसवात् अतिभवतीत्यादौ उगितश्चेति सूत्रेण ङीप् भवत्येव।

(७९) शब्दानुशासनप्रस्तावादाह वर्णानामिति उच्चारणाभाव इत्यर्थः स च व्याख्यानात् किञ्चिद्वर्णोच्चारणानन्तरकालिक एव गृह्यते वर्णवत् अभावस्यापि बुद्धिकृतं पौर्व्वापर्य्यमस्त्येव। शब्देन्दु०।

(८०) परशब्दो नान्यार्थः अन्यत्वस्य व्यभिचरितत्वादाह अतिशयित इति स्वभावसिद्धार्द्धमात्रातिरिक्तकालव्यवधानेन रहितस्तदर्थस्तेन तद्व्यवधानेन वाक्योच्चारणे संज्ञा न प्रवर्त्तते इति भावः। सन्निकर्षश्च प्रायः परेण क्वचित् पूर्व्वेणापि अतएवावसानकार्य्याणां संहिताधिकारे पाठः सन्निकर्षस्य सामीप्यम्। शब्देन्दु०।

(८१) सुपः पकारेण सहितो ङकारेण च सुप्तिङौ प्रत्याहारौ व्याख्यानात्। प्रत्ययग्रहणे तदन्तग्रहणानुमितेः शब्दस्वरूपविशेष्यमादाय

**हलोऽनन्तराः संयोगः । १ । १ । ७ ।**

अज्भिर (८२) व्यवहिता हलः संयोगसंज्ञाः स्युः ।

**ह्रस्वं लघु । १ । ४ । १० ।**

**संयोगे गुरु । १ । ४ । ११ ।**

संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ।

**दीर्घञ्च । १ । ४ । १२ ।**

इति संज्ञाप्रकरणम् (८३) ।

---

तदन्तग्रहणस्य विहितत्वेऽपि पुनरन्तपदोपादानं संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति ज्ञापनायेति बोध्यम् ।

(८२) आनन्तर्यं व्यवधानाभावो व्यवधानञ्च विजातीयेनेत्याशयेनाह अज्भिरिति । भाष्ये अचु इत्यादौ कुत्वदर्शनेन अग्भिरिति कुत्वसम्भावनायामपि असन्देहार्थं तदकरणमिति बोध्यम् । हल इति बहुवचनं सौत्रं यद्वा हलौ च हलश्च इत्येकशेषः तेन द्वयोरपीति शिक्षेत्यत्र गुरोश्च हलइत्यप्रत्ययः सिद्ध्यति ।

(८३) प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनीनां संज्ञानां प्रकरणम् इति यथाश्रुतमित्यर्थः तेनाम्रेडितप्रगृह्यसंज्ञाद्यनुपन्यासेऽपि न क्षतिः । न चरत्वाद्युपन्यासश्च प्रासङ्गिक इति । शब्देन्दु०

## इको गुणवृद्धी।१।१।३।

गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते (१) तत्र इक इति षष्ठ्यन्तं पदमुपतिष्ठते।

## अचश्च।१।२।२८।

ह्रस्वदीर्घप्लुतशब्दैः-यत्र अज्विधीयते तत्र अच (२) इति षष्ठ्यन्तं पदमुपतिष्ठते।

---

(१) अनुवादे इयं परिभाषा न प्रवर्त्तते इत्याशयेनाह विधीयेते इति तेन अतो गुणे इति (६।१।९७) सूत्रे वृद्धिर्यस्याचामादिस्तद्वृद्ध-मिति (१।१।७३) सूत्रे च गुणवृद्ध्योरनुवाद्यत्वान्न तत्र इक इत्यस्योपस्थितिः। इक इत्यनुकरणं सान्तं नपुंसकं. पदमित्यस्यापकृष्टस्य विशेषणम्॥ यत्र च गुणवृद्ध्योः स्थानिविशेषनिर्द्देशस्तत्रापीयं न प्रवर्त्तते साकाङ्क्षस्यैव परिभाषया पूरणात्तत्र च साकाङ्क्षत्वाभावात्। सति सम्भवे च इक इत्यस्य सामानाधिकरण्येनैवान्वयो न वैयधिकरण्येन तेन इगन्तस्याङ्गस्य गुणवृद्धी भवत इत्येव वाक्यार्थो भविष्यति मिदेर्गुण इति मृजेर्वृद्धिरित्यादौ च सामानाधिकरण्यासम्भवात् मिदिमृज्योरवयवस्येक इति सम्बन्ध इति बोध्यम्।

(२) अच इति सान्तं नपुंसकमनुकरणञ्च। अत्रापि पूर्व्ववत् सति सम्भवे समानाधिकरण्येनैवान्वयस्तेन ह्रस्वो नपुंसके इति (१।२।४७) सूत्रे अजन्तप्रातिपदिकस्यैव ह्रस्वो न तूपधायास्तथाच श्रीपमित्यादिसिद्धिः अविद्धिस्य सुवाक् कुलमित्यादौ सुवाचउपधाह्रस्वस्य। शमा-मष्टानां दीर्घः श्यनीति (७।३।७४) सूत्रे तु सामानाधिकरण्या-सम्भवात् शमानामच इति वैयधिकरण्येनान्वयः॥ अत्र च ह्रस्वादि-शब्दैरज्विधीयते इत्यभिधानात् अज्मात्रविधाने नेयं प्रवर्त्तते तेन त्यादादीनाम इति दिव उदिति अष्टन आ विभक्तावित्यादौ अज्

**आद्यन्तौ टकितौ । १ । १ । ४६ ।**

टित्कितौ (३) यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ।

**मिदचोऽन्त्यात्परः । १ । १ । ४७ ।**

अच इति निर्द्धारणे षष्ठी । अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो (४) मित्स्यात् ।

---

विधानेऽपि न अच इतिषष्ठ्यन्तपदस्योपस्थितिः तेषु ह्रस्वादिशब्दैर्विधानाभावादिति बोध्यम् ।

(३) वचनात्परस्य यथासंख्येनान्वयस्य प्रत्येकसम्बन्धात् टित्किताविद्युक्तम् आर्द्धधातुकस्येड्वलादेरिति सूत्रे इटः टित्करणात् वलादेराद्यावयवत्वं शाच्छासाह्वाव्यावेपां युगिति युकः कित्करणाच्च धातोरन्तावयवत्वम् । इदञ्च षष्ठी स्थानेयोगेत्यस्य पुरस्तादपवादकम् । चरेट इत्यादयः टितस्तु प्रत्ययाः परा एव, प्रत्ययः परश्चेति सूत्राभ्यां प्रत्ययानां परत्वप्रतिपादनात् तथाच एतदपेक्षया तत्सूत्रस्य परवर्त्तित्वात् तस्य बाधकत्वमिति द्रष्टव्यम् अतएव यत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेयं प्रवर्त्तते इत्याह यस्योक्ताविति आद्यन्ताविमौ यच्छब्दार्थोऽवयवीति भावः ॥

(४) इयं बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्रवृत्तयोः स्थानेयोगत्वप्रत्ययपरत्वयोरपवादिका अमनुमोर्मित्करणसामर्थ्यात् 'तृह इडिति-निर्देशाच्च । यस्य समुदायस्य विहितस्तस्याचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यान्तावयव इत्यर्थः । यथांसि भिनत्तीत्यादौ नुमश्नमोर्मित्करणादन्त्याचः परत्वेन तदन्तावयवत्वम् । निर्द्धारणषष्ठ्या बहुत्वस्यौत्सर्गिकत्वेऽपि अच इति जात्येकवचनम् । आद्यन्तौ टकिताविति पूर्वसूत्रे समस्तस्याप्यन्तपदस्य एकदेशे स्वरितत्वप्रतिज्ञाबलेन स्वरितत्वात् तस्य च स्वरितेनाधिकार इति सूत्रेणाधिकारसम्बन्धेनानुवृत्तिरित्याशयेनाह अन्तावयव इति ।

**षष्ठी स्थानेयोगा।१।१।४९।**

अनिर्द्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा (५) बोध्या। स्थानञ्च प्रसङ्गः॥

**स्थानेऽन्तरतमः।१।१।५०।**

प्रसङ्गे सति सदृशतमः (६) आदेशः स्यात्। यत्रानेकविध-(७) मान्तर्यन्तत्र स्थानत आन्तर्यम्बलीयः।

---

(५) स्थानेऽर्न प्रसङ्गेन योगो यस्या इति विग्रहे निपातनादेत्वम् इति भाष्यानुयायिनः। तेन इगुच्चारणप्रसङ्गे यणुच्चारणीय इति इको यणचीतिसूत्रस्यार्थः सम्पद्यते। अनिर्द्धारित' सम्बन्धविशेषो ययेति सा तथा। तथाविशेषणाच्च सम्बन्धविशेषार्थिका षष्ठी न स्थानेयोगा अतएव 'शास इदङ्हलोरि'ति (६। ४। ३४) सूत्रे शासइत्यवयवार्थत्वेन निर्द्धारितत्वात् न स्थानषष्ठी किन्तु अधिकारादनुवृत्ताया उपधाया एव स्थानित्वमिति द्रष्टव्यम्।

(६) सादृश्यञ्च स्थानतोऽर्थतः गुणतः प्रमाणतश्च संभवति। तत्र स्थानतः सदृशो यथा तालुस्थानेकारस्य तालुस्थानो यकारः सदृशः। अर्थतो यथा तृज्वत् क्रोष्टुरिति ७।१।९५। सूत्रे क्रोष्टुशब्दस्य स्थाने क्रोष्टृ-शब्दः आदेशः अर्थतः समः। गुणतः (प्रयत्नात्) यथा नादवतो घोष-वतो महाप्राणस्य संवृतकण्ठस्य हकारस्य सदृशस्तादृश एव घका-रादिः। प्रमाणतो यथा अदसोऽसेर्दादुदोम इतिसूत्रे अदःशब्दात् परस्य ह्रस्वस्य स्थाने ह्रस्वोकारः, दीर्घस्य च स्थाने दीर्घोकारः काल-रूपप्रमाणसाम्यादिति अमुम्, अमू इत्यादिरूपभेदसिद्धिः। सदृशतम इति तमपा विशेषणाच्च 'झयो होऽन्यतरस्या'मिति सूत्रेण हकारस्थाने क्रियमाणे सवर्णे महाप्राणत्वमात्रसाम्येन न वर्गद्वितीयखकारादिवर्णः न वा नादवत्त्वमात्रसाम्येन वर्गतृतीयो गकारादिर्भवति किन्तूभय-धर्मवत्त्वेन साम्यात् घकारादिरेव भवतीति द्योतितम्॥

(७) यत्रानेकविधमिति॥ तेन 'अदेङ्गुण'इत्यभिधानेन अकारस्य गुणसंज्ञि-

**तस्मिन्निति (८) निर्द्दिष्टे पूर्वस्य। १। १। ६६।**

सप्तमीनिर्द्देशेन विधीयमानं कार्य्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम्।

**तस्मादित्युत्तरस्य (९)। १। १। ६७।**

पञ्चमीनिर्द्देशेन क्रियमाणङ्कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम्।

---

त्वात् तस्सत्यरूपप्रमाणसाम्येन चेता तोतेत्यादौ इदुतोः स्थाने न अकारः किन्तु स्थानिसाम्यादेकारौकाराविति बोध्यम्।

(८) तस्मिन्निति, उत्तरत्र सूत्रे तस्मादिति च पदं सप्तम्यन्तपञ्चम्यन्तानुकरणम् सप्तम्यन्तपदार्थकं पञ्चम्यन्तपदार्थकञ्च न तु स्वतन्त्रतच्छब्दरूपसर्व्वनामनिर्द्देशस्तथासति 'तस्मिन्नणि च युष्माकास्माकाविति (४। ३। २) तस्माच्छसो नः पुंसीति (६। १। १०३) सूत्रयोरेव प्रवर्त्तेयातां, तयोरेव तच्छब्दघटितसप्तम्यन्तपञ्चम्यन्तपदवत्त्वात् नान्यत्र तथा च सर्व्वत्र विप्लवापत्तिः। सप्तमीविभक्तिस्तु सप्तम्यन्तमात्राणां तच्छब्दार्थत्वमिति द्योतनाय॥ तद्बोध्यस्य चार्थस्य निर्द्दिष्ट इत्यनेन सामानाधिकरण्यम् इतिशब्दः पुनस्तस्य तदर्थपरत्वं द्रढयति निःशब्दो नैरन्तर्य्यें दिशि रुच्चारणे एवञ्च सप्तम्यन्ताव्यवहितोच्चारिते उपस्थितस्य पूर्व्वस्य कार्य्यं भवतीति वाक्यार्थः।

(९) तस्मादिति पूर्व्वसूत्रात् निर्द्दिष्टइत्यस्यानुवृत्त्या विभक्तिविपरिणामेन निर्द्दिष्टादित्यर्थः तत्तत्सूत्रे च या पञ्चमी श्रूयते सा दिग्योगलक्षणैव तेन चानियतदिक्शब्दाध्याहारे प्रसक्ते परशब्दस्यैव तत्र तत्र सूत्रेऽध्याहार इत्याह उत्तरस्येति तथाच तस्मादिति निर्द्दिष्टात् अव्यवहितोच्चारितात् परस्येत्यर्थः फलितइत्याह पञ्चमीनिर्द्देशेनेत्यादि।

**अलोऽन्त्यस्य। १। १। ५२।**

षष्ठीनिर्दिष्टस्यान्त्यस्याल: (१०) आदेशः स्यात्।

**ङिच्च(११)। १। १। ५३।**

अयमप्यन्त्यस्यैव स्यात्। सर्वस्येत्यस्यापवादः।

**आदेः परस्य (१२)। १। १। ५४।**

परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। अलोऽन्त्यस्येत्यस्यापवादः।

**अनेकाल्शित्सर्वस्य (१३)। १। १। ५५।**

स्पष्टम्। अलोऽन्त्यसूत्रापवादः। अष्टाभ्य औशित्यादौ आदेः परस्येत्येतदपि परत्वादनेन बाध्यते।

---

(१०) षष्ठ्यन्तनिर्दिष्टस्य विधीयमानं कार्य्यमन्त्यस्य अलः स्थाने भवतीत्यर्थः यथा त्यदादीनामः इत्यादौ अन्त्यस्य दकारादेः स्थाने अः स्यादिति। अल् इति प्रत्याहारग्रहणं किं पदस्येत्यधिकृत्य विधीयमानं कार्य्यमन्त्यमात्रस्थाने मा भूदित्येतदर्थकम्।

(११) इयमपि 'अनेकाल् शिदित्यस्या'पवादिका तेन गवाक्षमित्यादौ न सर्व्वादेशः 'अवङ् स्फोटायनस्ये'ति सूत्रे अवङो ङित्त्वेनान्त्यस्याचः स्थाने जायमानत्वात्।

(१२) परस्येति व्यावृत्त्या पाठम्। तेन परस्य यत्किञ्चित्पदोत्तरस्य विधीयमानं कार्य्यं परस्यादेराद्यवयवस्य स्थाने भवतीत्यर्थः यथा उदः स्थास्तम्भोः पूर्व्वस्येति सूत्रे उदुत्तरयोः स्थास्तम्भोराद्यवयवस्य सकारस्यैव स्थाने पूर्व्वसवर्णतया थकारादेशः।

(१३) अतोभिस ऐसित्यादौ अनेकाल्त्वात् सर्व्वादेशे रामैरिति इदमः शित्यादौ शित्त्वात् सर्व्वादेशे इह इतइत्यादि च सिध्यति।

# स्वरितेना- (१४) धिकारः । १ । ३ । ११ ।

स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् ।

परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः (१५) । असिद्धं

---

(१४) स्वरितेनेति । इत्थम्भावे तृतीया स्वरितत्वप्राप्योऽधिकार इत्यर्थः स्वरितत्वञ्च दोषविशेषजन्यमजुच्चत्वसाधारणाश्रयम्, अधिक्रियमाणपदघटकाजाश्रितं वा बोध्यम् तच्चानुनासिकत्ववत् प्रतिज्ञयैव निर्णीयते अधिकारस्य कियद्दूरमित्यत्रासति बाधके व्याख्यानमेव शरणम् । शब्देन्दु० ।

(१५) परनित्येति । परात् विप्रतिषेधे पूर्व्वबाधकात् परशास्त्रात् नित्यं कृताकृतप्रसङ्गि बलवत् । तत्राकृतप्राभावकल्पनापेक्षया कृतप्राभावकस्यैवाभावकल्पनं युक्तमिति तस्य बलीयस्त्वे बीजं तथा च तद्विपरीतस्य अनित्यस्य कृतप्राभावकतया कृताकृतयोरुभयत्र प्रसङ्गाभावाद्दुर्बलत्वम् । अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये अन्तर्भूतानि अङ्गानि निमित्तानि यस्य तदन्तरङ्गं तदीयनिमित्तसमुदायानन्तर्गताङ्गकबहिरङ्गात् परात् नित्याच्च बलीयः । तस्य बलवत्त्वे बीजं बहिरङ्गासिद्धत्वमेव तच्च वक्ष्यते । अपवादो विशेषशास्त्रं परनित्यान्तरङ्गेभ्यो बलीयान् वचनप्राबल्यादिति विवेकः ।

परान्नित्यं बलीयो यथा । तुदादिभ्य इत्यादिना विहितः शकारः तुदतीत्यादौ परमपि लघूपधगुणं नित्यत्वात् बाधते । परादन्तरङ्गं यथा । उभये देवमनुष्या इत्यादौ परमपि प्रथमचरमेत्यादिना जसि विकल्पं बाधित्वा सर्व्वादीनीति प्रवर्त्तते तस्यान्तरङ्गत्वात् उभयशब्दस्य स्वतादात्म्येनैव सर्व्वनामसंज्ञानिमित्तत्वात् उभये इत्यादौ तु बहिरङ्गजस्विभक्तिमपेक्ष्यैव विकल्पविधेः प्रवृत्तेरतोऽन्तरङ्गं परत्वपरिकल्पात् बलीयः । परादपवादो यथा परमपि अनेकाल्शित्सर्व्वस्येति सर्व्वादेशं बाधित्वा ङिच्चेत्यन्तादेशः । यथा अस्थिदधीत्यादिना-जातोऽनङ् ङित्त्वात् दध्न इत्यादावन्तादेशः ।

(१६) बहिरङ्गमन्तरङ्गे। अकृतव्यूहाः (१७) पाणिनीयाः। निमित्तं विनाशोन्मुखन्दृष्ट्वा तत्प्रयुक्तङ्कार्य्यन्न कुर्वन्तीत्यर्थः।

इति परिभाषाप्रकरणम्।

नित्यादन्तरङ्गं यथा ग्रामणिनी कुले इत्यादौ। नित्यमपि इकोऽचीति नुमं बाधित्वा ह्रस्वो नपुंसक इति ह्रस्वः। कृते तु नुमि अनजन्तत्वात् ह्रस्वो न स्यात्। अन्तरङ्गादपवादो यथा दैत्यारिः श्रीश इत्यादौ परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वात् आद्गुणे, इको यणचीति च प्राप्ते अपवादत्वात् सवर्णदीर्घः। तथा निन्ये इत्यादौ अन्तरङ्गत्वादियङि प्राप्ते एरनेकाचोऽसंयोगपूर्व्वस्येत्याद्यपवादबलात् यण्। इयांस्तु विशेषः अपवादो यद्यन्यत्र चरितार्थ स्तर्हि परान्तरङ्गाभ्यामेव बाध्यते। तथाहि ङिच्चेति अनन्यार्थ ङकारयुक्तेष्वनङादिषु चरितार्थत्वात् तातङि न प्रवर्त्तते किन्तु परेणानेकाल्शिदित्यनेनैव बाध्यते तेन जीवतात् भवतादित्यादौ सर्व्वादेशः। तथा सर्व्वे इह ग्रामे इत्यमित्यादौ सर्व्व-इ-इह, ग्राम-इ-इत्यमिति स्थिते अन्तरङ्गेण आद्गुणेन सवर्णदीर्घरूपापवादो बाध्यते तस्य समानाश्रयेऽन्यत्र दैत्यारिः श्रीश इत्यादौ चरितार्थत्वात्।

(१६) असिद्धमिति। अन्तरङ्गबहिरङ्गे व्याख्याते अन्तरङ्गे कर्त्तव्ये तत्कालप्राप्तिकं बहिरङ्गमसिद्धमित्यर्थः। पट्व्या मृद्व्या इत्यादौ पटु ई-आ मृदु-ई-आ इति स्थिते अन्तरङ्गत्वात् पूर्व्वं पूर्व्वयणादेशः परयणादेशस्य बहिरङ्गतया तदानीमसिद्धत्वान्न ईकारस्याचत्वव्याघातः।

(१७) न कृतो विशिष्टः ऊहस्तर्को निमित्तविनाशेऽपि कार्य्यस्थितिरूपो यैस्ते अकृतव्यूहाः अकृतकार्य्या इति फलितार्थः। निमित्तमिति तत्प्रयुक्तं जातमपि कार्य्यं न कुर्व्वन्ति नोच्चारयन्तीत्यर्थः। यथा निषेदुषीत्यादौ अन्तरङ्गत्वात् प्राप्तमपि वसोरिटं भाविना संप्रसारणेन वसादित्वं नंक्ष्यतीत्यालोच्य न कुर्व्वन्तीति। शब्देन्दु०।

---

## इको यणचि ।६।१।७७।

इकः स्थाने यण् स्यादचि संहितायां (१) विषये। सुधी उपास्य इति स्थिते। स्थानत (२) आन्तर्यादीकारस्य यकारः। सुध्य् उपास्य इति स्थिते।

## अनचि च।८।४।४७।

अचः परस्य (३) यरो द्वे वा स्तो न त्वचि। इति धकारस्य द्वित्वम्।

(१) कार्यनिमित्तयो रतिशयितः सन्निधिर्यदा विवक्ष्यते तद्विषय इत्यर्थः। तद्विवक्षानियमस्तु

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥

इत्युक्तदिशावसेयः। अत्र एकपद इत्यनेनैवेष्टसिद्धौ समासग्रहणमलुक्समाससंग्रहार्थम्। धातूपसर्गयोरेकपदत्वाभावेन पृथगुक्तिः।

(२) प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणा कथमन्यथा यू स्त्र्याख्याविति त्वादिभ्य इत्यादिनिर्द्देशः स्यात्। तथा च तत्तज्ज्ञापकबलात् इक्पदेन (इ १८ उ १८। ऋ १२। लृ १२) षट्षष्टिर्गृह्यते यण्पदेन च (य २ व २ ल २ र १) सप्त गृह्यन्ते एवञ्चैतेषां विषमत्वात् यथासंख्यसुपदेशः समानामित्युक्तदिशा यथासंख्यग्रहणासम्भवेन स्थानत एवान्तर्य्यादादेश इत्याशयेनाह स्थानत इति। मनो०।

(३) अचो रहाभ्यां द्वे इति (८।४।४६) सूत्रात् अच इति द्वे इति च यरोऽनुनासिकेऽनुनासिको वेति सूत्राच्च यर इति, वेति च पदमनुवर्त्त्य यथायोग्यं योजयन्नाह अच इति माहात्म्यमित्यादौ द्वित्वनिरासाय अचः परस्येत्युक्तम्। अनचीत्यस्य अज्भिन्नार्थकत्वपरत्वे लाघवात् हलीत्येवाभिदध्यात् तथा च नञः प्रसह्यप्रतिषेधपरतया अवसानेऽपि वाक् वाक इत्यादौ द्वित्वं भवत्येवेत्याशयेनाह न त्वचीति।

## स्थानिवदादेशोऽनल्विधौ।१।१।५६।

आदेशः (४) स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ (५)। अनेनेह यकारस्य स्थानिवद्भावेनाऽच्त्वमाश्रित्याऽनचि चेति द्वित्वनिषेधो न शङ्क्योऽनल्विधाविति तन्निषेधात्।

(४) आदेशे स्वरूपभेदात् स्थानिप्रयुक्तकार्याणामप्रवृत्तौ विधिनिषेधरूपतत्तत्कार्यनिर्व्वाहार्थमतिदेशोऽयम् तत्र आदिश्यते इत्यादेश उत्पद्यमानसामान्यपर इत्याशयेनाह आदेश इति।

(५) न तु स्थान्यलाश्रयेति। स्थान्यवयवीभूतोयोऽल् चतुर्दशसूत्रीस्थाकारादिरूपस्तदाश्रयकस्तत्प्रयुक्तो यो विधिस्तस्मिन् कर्त्तव्ये न स्थानिवदित्यर्थः। आश्रयणञ्च प्रयोज्यत्वं तच्च तेन, तस्मात्, तस्य, तस्मिन्, इत्यादिरूपेण अलन्तर्गताकारादिवर्णप्रयुक्तं यत् किञ्चित् कार्य्यं विधीयते तत् सर्व्वमादेशे न प्रवर्त्तते इति भावः। भाष्ये तु प्रातिपदिकार्थे निर्द्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्येत्यभिधाय अलमाश्रयते अलाश्रयः अलाश्रयो विधिरल्विधिरित्युक्तम्। तत्र अला व्यवधाने स्थानिवद्भावाभावो यथा व्यूढोरस्केनेत्यादौ अड्व्यवायेऽपि णत्वविधानेन सकारस्य इस्यानिकविसर्गस्थानिकतया अतिदेशात् स्थानिवत्त्वप्राप्तौ न णत्वम्। तस्मात् यथा। द्यौरित्यादौ औकारस्य वकारस्थानिकतया हल्त्वमाश्रित्य हल्ङ्यादिभ्य इति न सुलोपः। तस्य यथा। द्युभ्यामित्यादौ उकारस्य वस्थानिकतया स्थानिवत्त्वेन हल्त्वमाश्रित्य व्योर्लोपो वलीति न उकारलोपप्रसङ्गः। तस्मिन् यथा। क इष्ट इत्यादौ यजेः संप्रसारणे इष्टेतिपदसिद्धेरिकारस्य यस्थानिकतया यरूप हल्त्वमाश्रित्य हशि चेति उत्वं न। अन्यते च तथाव्याख्याने तत्तत् कार्य्यातिप्रसङ्गः स्यादिति विवेच्यम्। अत्र स्थान्यवयवाश्रयेति विशेषणात् रामायेत्यादौ सुपि चेति दीर्घः सिध्यति अतो दीर्घो यञीति (७।३।१०१) सूत्रात् यञीति पदमनुवर्त्त्य दीर्घे कर्त्तव्ये यञा-

## अचः परस्मिन् पूर्वविधौ।१।१।५७।

अतिदेशार्थमिदम्। परनिमित्तोऽजादेशः (६) स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्त्तव्ये। इति यणः स्थानिवद्भावे (७) प्राप्ते।

दित्वमाश्रितं शास्त्रकारैः यकारस्य इहादेशावयवएव न स्थान्यवयवः ङेर्य इति सूत्रेण ङेस्थाने यादेशात्।

(६) अचः स्थाने आदेशः अजादेशः अच इति षष्ठ्यन्तपदस्य पूर्वसूत्रादादेशपदमनुवर्त्त्यान्वयः कार्यः। पूर्वपरयोरवधिसाकाङ्क्षत्वेन श्रुतत्वात् अचइत्यस्यैव विभक्तिविपरिणामेनान्वय इत्याशयेनाह अचः पूर्वत्वेनेति। अत्र अजादेश इति विशेषणात् आगत्येत्यादौ परनिमित्तकस्य वा ल्यपीत्यनुनासिकलोपस्य तत्पूर्वह्रस्वस्य तुकि कर्त्तव्ये न स्थानिवत्त्वं बाधकं तस्याजादेशत्वाभावात्। परस्मिन्निति करणान्न दीध्ये इत्यादौ इट एत्वे कृतेऽपि अजादेशतया पूर्वकार्य्यं प्रति स्थानिवत्त्वेन यीवर्णयोर्दीधीवेव्योरिति न इवर्णपरे अन्तलोपः एत्वरूपाजादेशस्य परं निमित्तमनाश्रित्यैव विधानात्। पूर्वविधाविति विशेषणाच्च नैधेय इत्यादौ ढक्प्रत्ययोपपत्तिः अन्यथा धाञः किप्रत्यये आतो लोपे निष्पन्ननिधिशब्दस्य द्व्यच्कत्वेऽपि परनिमित्तकाऽऽकारलोपस्य स्थानिवत्तया त्र्यच्कत्वप्रसङ्गेन द्व्यच इति इतश्चानिञ इति (४।१।१२१,१२२) सूत्राभ्यां द्व्यच्कादिदन्ताद्विहितस्य ढक्प्रत्ययस्य तत्राप्रवृत्तिस्तस्य च पूर्वविधित्वाभावेन न तत्राजादेशस्यानिवत्त्वमिति द्रष्टव्यम्। अत्र स्थानिनि सति यद्भवति यन्न भवति वा तदादेशेऽपि तद्भवति न भवति वेति भावाभावयोरुभयोरप्यतिदेशो लक्ष्यानुरोधात्। पटयति लघयतीति णिचि टिलोपे कृते अतउपधाया इति वृद्धिरूपकार्य्ये कर्त्तव्ये परनिमित्तकस्य टिलोपरूपाजादेशस्य स्थानिवत्त्वान्न ततः पूर्वकार्य्यमित्युदाहार्य्यम्।

स्थानिवद्भावे इति सुध्युपास्य इत्यादौ परनिमित्तकस्याजादेशयका-

**न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु (८)।१।१।५८।**

पदस्य चरमावयवे, द्विर्वचनादौ च कर्त्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। इति स्थानिवद्भावनिषेधः।

---

रस्य द्वित्वविधानरूपपूर्व्वविधानं प्रति स्थानिवत्त्वेन अनचीतिनिषेध प्रसङ्गे इत्यर्थः।

(८) पदान्ते यथा कानि सन्ति कौ स्त इत्यादौ अस्तेरल्लोपस्य परनिमित्ततया पूर्व्वयणावादेशविधिं प्रति स्थानिवत्त्वे प्राप्ते अनेन न पदान्तेत्यादिना निषेधः। एवमुत्तरत्रापि। द्विर्वचने सुद्ध्युपास्य इत्यादि। अत्र द्वित्वे कर्त्तव्ययणो न स्थानिवत्त्वम्। वरे यायावर इति यातेर्यङन्ताद्वरच् अल्लोपयलोपौ आलोपे कर्त्तव्ये अल्लोपो न स्थानिवत्। यलोपे यातिः। यातेर्यङन्तात् क्तिन् अल्लोपयलोपौ अल्लोपस्य स्थानिवत्त्वादातो लोपः स चाल्लोपः यलोपे न स्थानिवदिति पुनर्यलोपः। स्वरे चिकीर्षकः। करोतेः सनन्तात् ण्वुल् अतोलोपः स च लितीति स्वरे कर्त्तव्ये स्थानिवत्। सवर्णे शिण्ढि। शिषः श्न म धातोः षकारस्थाने डकारे कृते तस्मिन् परे लुप्ताकारस्य श्नमो नकारस्थाने सवर्णविधाने कर्त्तव्ये श्नमोऽल्लोपः न स्थानिवत्। अनुस्वारे शिंषन्ति। श्नमोऽल्लोपः न स्थानिवत्। दीर्घे प्रतिदीव्नः अल्लोपो न स्थानिवत् जशि ग्धिः। अदेः क्तिनि छन्दसि घस्लादेश उपधालोपः स च जश्त्वे न स्थानिवत्। चरि जक्षतुः। उपधालोपश्चरि कर्त्तव्ये न स्थानिवत्। अत्र च प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशएव न स्थानिवदित्युक्ता योऽन्यत्रआदेश स्थानिवदेवासाविन्युक्तं भाष्ये। तेन किर्य्योः गिर्य्योरित्यत्र परनिमित्तकयणरूपाजादेशस्य स्थानिवत्त्वात् न दीर्घः। वाय्वोः अध्वर्य्वोरित्यत्र परनिमित्तकयणरूपाजादेशस्यस्थानिवत्त्वात् लोपो व्योर्वलीति न यलोपइति। सौत्रत्वात् वरे इत्यस्यालुक्

**झलां जश् झशि। ८। ४। ५३।**

इति धकारस्य दकारः।

**अदर्शनं लोपः। १। १। ६०।**

प्रसक्तस्यादर्शनं (९) लोपसंज्ञं स्यात्।

**संयोगान्तस्य लोपः। ८। २। २३।**

संयोगान्तं (१०) यत्पदं तदन्तस्य लोपः स्यात्। इति यलोपे प्राप्ते। यणः प्रतिषेधो वाच्यः (११)। यणो मयो द्वे वाच्ये। मय इति पञ्चमी यण इति षष्ठीति पक्षे (१२)

(९) अदर्शनमित्यत्र स्थानेऽन्तरतम इत्यतः स्थाने इत्यनुवर्त्तते प्रसक्ते सति तदर्थस्तदेतदाह प्रसक्तस्येति दर्शिशब्दोऽत्र सामान्यवचनः श्रानस्यावर्ज्जनीयतया तत्सामग्र्यान्तर्गता उच्चारणलता सैयसत्ता नञा निषिध्यते इयांस्तु विशेषः प्रत्ययलोपे शास्त्रतोऽर्थतश्च प्रसक्तोच्चारणस्य लोपविधानेन तस्य तस्मिन्निति विषये लोपानुत्पत्तेरेवान्वाख्यानं प्रत्ययलक्षणार्थमिति बोध्यम्। शब्देन्दु०।

(१०) नश्चापदान्तस्येत्यादि सूत्रे अपदान्ते इतिभागे संयोगान्तलोपानिर्देशात् संयोगान्तं यत्पदमित्युक्तम् तेन गोमान् गोमन्तावित्यादौ तल्लोपालोपौ द्रष्टव्यौ।

(११) संयोगान्तस्य लोपे यणः प्रतिषेधोवाच्यो व्याख्येयः झलो झलीत्यतोऽपिमसूत्रात् झलइत्यस्यापकर्षणेन संयोगान्तस्य झलएव लोपोनान्यस्येति व्याख्येयम् यम् यद्वा यणादिकं वहिरङ्गं संयोगान्तलोपरूपे अन्तरङ्गे कर्त्तव्ये तस्य वहिरङ्गतया असिद्धेर्न लोपइति व्याख्यानाभावः।

(१२) इति पक्षेइति यणःपरस्य मयः, मयः परस्य च यणो द्वेधा स्त इति पक्षद्वयस्यापि भाष्ये स्थितत्वादिति भाव।

यकारस्यापि द्वित्वं तदिह धकारयकारयो द्वित्वविकल्पाच्च त्वारि(१३)रूपाणि। एकधमेकयं, द्विधं द्वियं, द्वियमेकधं, द्विध मेकयम्। सुद्ध्युपास्यः। मध्वरिः। धात्त्रंशः (१४)। लाक्कृतिः।

## नादिन्याक्रोशे पुत्रस्य। ८।४।४८।

पुत्रशब्दस्य न द्वे स्त आदिनि शब्दे परे आक्रोशे गम्यमाने। पुत्रादिनी त्वमसि पापे!। आक्रोशे किं तत्त्वकथने द्विर्वचनं भवत्येव। तत्परे च (१५) पुत्त्रपुत्रादिनी त्वमसि पापे! "वा हतजग्धयोः" (१६)। पुत्त्रहती। पुत्रहती। पुत्त्रजग्धी। पुत्रजग्धी।

## त्रिप्रभृतिषु(१७) शाकटायनस्य। ८।४।५०।

(१३) चत्वारीति पुनर्द्वित्वमसिद्धमेकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्त्तते इति एकः पूर्व्वपरयोरिति सूत्रे भाष्ये सिद्धान्तितत्वात् अन्यथा द्वित्वानामानन्त्यापत्तिः न च झरो झरीतिहलौ यमामिति च लोपेन निर्वाहः लोपस्य वैकल्पिकत्वादिति। मनो०

तथा च त्रिधं त्रियमित्यादि नाधिक्यशङ्का। एतच्च धकारयकारघटितमेव। सकारयकारयोरपि द्वित्वे अष्टौ रूपाणीति द्रष्टव्यम् तस्य प्रकृतेऽनुपयोगात् न विभागः।

(१४) धात्त्रंश इति अत्र रेफस्य द्वित्वं न द्वित्वप्रकरणे अचो रहाभ्यां द्वे इति साक्षाच्छ्रुतेन रहोर्निमित्तभावेन कार्य्यत्वबाधनादिति। मनो०

(१५) आदिनि यः पुत्रशब्दस्तस्मिन् परेऽपि पुत्रादिनीतिशब्दपरे पुत्र-शब्दस्य न द्वे स्त इत्यर्थः। तत्त्व०।

(१६) हतजग्धयोः परतः पुत्रशब्दस्यैव द्वित्वं नान्यस्येति नियमार्थमिदं वार्त्तिकम्।

(१७) त्रिप्रभृतिष्विति वर्णानां सजातीयानामेव ग्रहणं परस्परसाहच-

त्रयादिषु वर्णेषु संयुक्तेषु वा न द्वित्वम्। इन्न्द्रः—इन्द्रः। राष्ट्ट्रम्—राष्ट्रम्।

**सर्वत्र शाकल्यस्य। ८। ४। ५१।**

द्वित्वन्न। अर्कः। ब्रह्मा।

**दीर्घादाचार्य्याणाम्। ८। ४। ५२।**

द्वित्वन्न। दात्रम्। पात्रम्।

**अचो रहाभ्यां द्वे। ८। ४। ४६।**

अचः पराभ्यां (१८) रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। हर्य्यनुभवः। नह्य्यस्ति।

**हलो यमां यमि लोपः। ८। ४। ६४।**

हलः परस्य यमो लोपः स्याद्वा यमि (१९)। इति लोपपक्षे

र्थात् न च तथाऽचः सम्भवन्ति इत्यतः संयुक्तेष्वित्यक्तम् सप्तमी निर्द्धारणे। अत्र अचो रहाभ्यामित्यतोऽच इत्यनुवर्त्तते त्रिप्रभृतिवर्ण-मध्ये अचः परस्य यरो द्वे वा न स्त इत्यर्थः तेन इन्द्रः राष्ट्रमित्यत्र नकारषकारयोः प्राप्तद्वित्वस्यैव विकल्पः। शब्देन्दु०।

(१८) अच इति श्रुतत्वात् व्याख्यानाच्च रहाभ्यां सम्बध्यते तस्मादित्युत्तर-स्येत्येतद्व्यमाहाचः पराभ्यामिति यरोऽनुनासिकेऽनुनासिको वेत्य-तः यर इत्यस्य वेत्यस्य चानुवृत्तेरिति भावः। अच इति किं किं ह्नुते इत्यत्र मा भूदित्येतदर्थकम्।

(१९) वा यमीति। झयो हो ऽन्यतरस्यामित्यत (८। ४। ६२) वेत्यनु-वृत्तेस्तथार्थः हल इति किं मध्वा इत्यत्राचः परस्य मा भूत् मध्वा-

द्वित्वाभावपक्षे चैकयं रूपन्तुल्यं लोपारम्भफलन्तु आदित्यो देवताऽस्येति आदित्यं हविः। यमां यमीति यथासंख्यविज्ञा नान्नेह। माहात्म्यम्।

**एचोऽयवायावः। ६। १। ७८।**

एचः क्रमाद् अय्, अव्, आय्, आव्, एते स्युरचि।

**तस्य लोपः। १। ३। ९।**

तस्य इतो(२०) लोपः स्यात्। इति यवयोर्लोपो न, उच्चारण-सामर्थ्यात्। एवञ्च, इत्संज्ञापीह न भवति। हरये। विष्णवे। नायकः पावकः।

**वान्तो यि प्रत्यये। ६। १। ७९।**

यकारादौ (२१) प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गोर्विकारो गव्यम्। गोपयसोर्यत्। नावा तार्य्यं नाव्यम्। नौवयोधर्म्मेत्यादिना यत्। * गोर्यूतौ छन्दस्युपसंख्यानम् *।

---

मिति किं तर्क्यंत्यत्र ककारस्य मा भूत् यमीति किं रामाभ्यामित्यत्र यकारस्य मा भूत्। आदित्यशब्दात् शेषार्थण्यान्ताद्देवतार्थे यणः यस्येति चेति (६।४।१४८) अल्लोपे अनेन यलोप इति। शब्देन्दु०।

(२०) तस्येति उपदेशेऽजनुनासिक इदिति (१।३।२) सूत्रादिदित्यस्य सम्ब-न्धतदा परामर्शादाह तस्य इत इति तथा च हलन्त्यमिति सूत्रेण अयादीनां यकारादिलोपप्रसक्तावाह उच्चारणसामर्थ्यादिति।

(२१) येन विधिरित्यस्याऽपवादभूतया तस्मादुङ्यीति (६।२।७४) सूत्रादौ आवश्यकया यस्मिन् विधिस्तदादावल्ग्रहण इति वार्त्तिक लड्डकपरि-भाषया लब्धमर्थमाह यकारादाविति। शब्देन्दु०।

। अध्वपरिमाणे च । गव्यूतिः । ऊतियूतीत्यादिना यूतिशब्दो निपातितः। वान्त इत्यत्र(२२) वकारात् गोर्यूता-वित्यत्र छकाराद्वा पूर्वभागे लोपो व्योरिति लोपेन वकारः प्र-श्लिष्यते। तेन श्रूयमाणवकारान्त आदेशः स्यात्। वकारो न लुप्यत इति यावत्।

## धातोस्तन्निमित्तस्यैव। ६। १। ८०।

यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव (२३) नान्यस्य। लव्यम् अवश्यलाव्यं (२४) तन्निमित्तस्यैवेति (२५) किम्। ओयते (२६)। औयत।

(२२) हलि सर्व्वेषामित्यनेन लोपः शाकल्यस्येत्यनेन वा गव्यूतिरित्यत्र वलोपः स्यादत आह वान्त इत्यत्रेति वृत्तान्त इति वृक्षन्दृशोति स्थिते उक्त-सूत्राभ्यां वकारलोपात् सूत्रवार्त्तिकयोस्तथात्वरसन्निवेशेऽपि लुप्त-वकारश्रवणात् वाक्यार्थबोध इत्याह श्रूयमाणेति।

(२३) धातोरित्यस्याभावे प्रातिपदिकमात्रविषयो नियमः स्यात्तथा च गव्य-मित्यत्र न स्यात् ओयत इत्यत्र च स्यात् तदभावे सामान्यतो निय-मापादनन्तु एवकारवैयर्थ्यापत्तेरयुक्तम् तन्निमित्तस्य चेद्धातोरेवेति नियमे तु वायव्यमित्यत्र न स्यात् अतस्तन्निमित्तस्यैवेत्येवकारः।

(२४) लव्यं अवश्यलाव्यमित्यत्र गुणवृद्ध्योर्यद्यन्निमित्ततया यादिप्रत्ययनि-मित्तकत्वम्।

(२५) तन्निमित्तस्यैवेति किमिति। वान्तो यिप्रत्यये इत्यनेनैवेष्टसिद्धौ एतत् सूत्रमेव किमर्थमिति प्रश्नः।

(२६) ओयतेइति आङ्पूर्व्वकात् वेञः कर्म्मणि लटि यकि यजादित्वात् संप्रसारणे दीर्घे च कृते आङा सह आद्गुणे ओयत इति सिद्धम् तत्र ओकारस्य यन्निमित्तकत्वाभावात् न अवादेशः। धातूपसर्गयोः कार्य्यस्य

## क्षय्यजय्यौ शक्यार्थे(२७)। ६। १। ८१।

यान्तादेशनिपातनार्थमिदम्। क्षेतुं शक्यं क्षय्यम्। जेतुं शक्यम् जय्यम्। शक्यार्थे किम्। क्षेतुं जेतुं योग्यं क्षेयं पापञ्जेयम्मनः।

## क्रय्यस्तदर्थे (२८)। ६। १। ८२।

तस्मै प्रकृत्यर्थायेदन्तदर्थं क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम्। क्रेयमन्यत्। क्रयणार्हमित्यर्थः।

## लोपः शाकल्यस्य। ८। ३। १९।

अवर्णपूर्व्वयोः (२९) पदान्तयोर्यवयोर्वा लोपोऽशि परे।

---

वहिरङ्गत्वात् वान्तादेशे कर्त्तव्ये गुणोऽसिद्ध इत्यनुशयेनाह औयतेति अत्र तस्मादेव धातोः कर्म्मणि लङि अड़ागमे आटश्चेति वृद्धौ अटा सह आद्गुण इति गुणे कृते औकारस्य धात्ववयवत्वेऽपि यनिमित्तत्वाभावात् न आवादेशः असति तु अस्मिन् सूत्रे वान्तोयीत्यादिना स्यादिति सूत्रारम्भ इति भावः। अत्रावयोरनुदाहरणार्थमेते इत्यन्ये।

(२७) क्षय्यजय्याविति चि क्षये जि जये इत्यनयोरेव ग्रहणं व्याख्यानात्।

(२८) क्रयार्थे वस्तुनि क्रय्यइति निपात्यत इत्यर्थो व्याख्यानात्। तदर्थ इति प्रत्ययार्थे गुणभूतस्यापि क्रयस्य तदा परामर्शः। अर्थेन सह नित्यसमासो विशेष्यलिङ्गता चेत्युक्तेराह प्रकृत्यर्थायेति। स्वयं धान्यादि दत्त्वा यत्र तन्मूल्यं गृह्णाति तत्र धान्यं क्रय्यं यत्र तु द्रव्यं दत्त्वा परकीयधान्यं गृह्णाति तत्र धान्यं क्रेयं मूल्यरूपद्रव्यं तु न क्रय्यं नापि क्रेयं किन्तु धान्यादिकमेव तथा शक्तिस्वभावादत्र भाष्यस्वरसोऽपीति शब्देन्दु०।

(२९) अत्र भोभगोअघोपूर्व्वयोरप्यनुवृत्तिसम्भवेऽपि ओतो गार्ग्यस्येति

पूर्वत्रासिद्धमिति लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धिः। हर-एहि-हरयेहि। विष्णा इह-विष्णाविह। श्रिया उद्यतः-श्रियायुद्यतः। गुरा उक्तः-गुरावुक्तः। कानि सन्ति कौ स्त इत्यत्राल्लोपस्य स्थानिवत्त्वेन यणावादेशौ प्राप्तौ न पदान्तेति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः।

## एकः पूर्वपरयोः। ६। १। ८४।

इत्यधिकृत्य।

## आद्गुणः। ६। १। ८७।

अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्। संहितायाम्। उपेन्द्रः। रमेशः। गङ्गोदकम्।

## उरण्(३०) रपरः। १। १। ५१।

ऋ इति त्रिंशतः संज्ञेत्युक्तन्तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते। तत्रान्तरतम्यात्(३१) कृष्णर्द्धिरित्यत्रार्, तवल्कार इत्यत्राल्। अचो रहाभ्यामिति पक्षे द्वित्वम्(३२)।

सूत्रेण ओकारान्तात् परयोर्नित्यलोपकृपविशेषविधानादाह अवर्णपूर्वयोरिति। व्योरित्यस्यैवानुवृत्तावपि अक्षरसमाम्नाये वकारस्यैव प्रथमपाठादाह यवयोरिति अत्र अवर्णेति किम् गौर्यत्र पदान्तयोरिति किं हरये।

(३०) उरितिपदं षष्ठ्यन्तेन सप्तम्येन सिद्धम्। अण् किं रीङ् ऋतइति रीङि कृते मात्रीयतीत्यादौ रपरत्वं मा भूत्।

(३१) आन्तरतम्यादिति ऋदित्वस्य ऋकारेण रेफद्वारा, ऌवित्वस्य ऌकारेण लकारद्वारा च स्थानिसाम्यादित्यर्थः।

(३२) पक्षे द्वित्वमिति दृस्थानिनः ऋधेर्धकारस्य द्वित्वमित्यर्थः।

# कौमुदीस्थविषयक्रमः—



**परिशिष्टानि**—पाणिनीयशिक्षा १ गणपाठः २ धातुपाठः ३ लिङ्गानुशासनं ४ चेति ।

## झरो झरि सवर्णे। ८। ४। ६५।

हलः परस्य (३३) झरो लोपो वा स्यात्सवर्णे झरि। द्वित्वाभावे लोपे सत्येकधम्। असति (३४) लोपे, द्वित्वलोपयोर्वा द्विधम्। सति द्वित्वे लोपे चासति त्रिधम्(३५)। कृष्णर्धिः-कृष्णर्द्धिः-कृष्णर्द्द्धिः। यण इति पञ्चमी मय इति षष्ठीति पक्षे ककारस्य द्वित्वं लस्य तु अनचि चेति तेन तवल्कार इत्यत्र रूपचतुष्टयम्।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम्॥

## वृद्धिरेचि। ६। १। ८८।

आदेचि (३६) परे वृद्धिरेकादेशः स्यात् गुणापवादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्य्यम्। कृष्णौत्कण्ठ्यम्।

## एत्येधत्यूठ्सु। ६। १। ८९।

(३३) हलो यमां यमि लोपइत्यतो हलइति लोप इति च झयो होऽन्यतरस्यामित्यतः अन्यतरस्यामिति पदमनुवर्त्य योजयन्नाह हलःपरस्येति। अत्र हल इत्यनेन मत्तमित्यादौ तस्य, झर इत्यनेन शार्ङ्गमित्यादौ ङस्य, झरीत्यनेन प्रियपञ्चाामित्यादौ चस्य, सवर्णे इत्यनेन च तर्प्तेत्यादौ पस्य न लोपप्रसङ्ग इति द्रष्टव्यम्।

(३४) असतीति द्वित्वाभावे इत्यप्यनुषज्यते द्वित्वलोपयोरभावे इत्यर्थः।

(३५) त्रिधमिति यणो मयइति सूत्रान्तरेण पुनर्द्वित्वकरणे तु चतुर्द्धमिति बोध्यम्।

(३६) आद्गुण इत्यत आदिति पदमनुवर्त्त्याह आदेचीति।

अवर्णादेजाद्यो (३७) रेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। पररूपगुणापवादः। उपैति। उपैधते। प्रष्ठौहः। एजाद्योः किम्। उपेतः। मा भवान् प्रेदिधत्। पुरस्ता-(३८) दपवादन्यायेनेयं वृद्धिः एङि पररूपस्यैव बाधिका नत्वोमाङोश्चेत्यस्य। तेनावैहीति वृद्धिरसाधुरेव। * अक्षा-दूहिन्यामुपसंख्यानम् *। अक्षौहिणी (३९) सेना। * स्वादीरेरिणोः *। स्वैरम्। स्वेनेरितुं (४०) शीलमस्येति स्वैरी। स्वैरिणी। * प्रादूहोढोढ्येषैष्येषु (४१) *।

---

(३७) आद्गुण इत्यत आदिति वृद्धिरेचीत्यत एचीतिपदयोरनुवर्त्तनेऽपि योग्यत्वादेचीत्यस्य एत्येधत्योरेव विशेषणं नोठः असम्भवादित्याशयेनाह एजाद्योरिति।

(३८) पुरस्तादिति। पुरस्तादपवादा अनन्तरानेव विधीन् बाधन्ते नोत्तरा-निति न्यायः अवश्यं स्वेपरस्मिन् बाधनीये सन्निकृष्टतया प्रथमं बुद्ध्या-रूढत्वात् अपेक्षाजतान् सन्निकृष्टानेव बाधन्ते न तु ततो विप्रकृष्टानि-त्यर्थः। ओमाङोश्चेत्यस्य एङि पररूपापेक्षया विप्रकृष्टत्वादिति भावः।

(३९) ऊहः समूहोऽस्या अस्तीति ऊहिनी अक्षाणां रथचक्राणां लक्षणया रथानामूहिनी अक्षौहिणी परिमाणविशेषविशिष्टायां सेनायां रूढ-त्वात् पूर्वपदात् संज्ञायामिति णत्वम्। अक्षाणामूहस्तदुत्तरमिनौ कृते तु अक्षोहिनी(णी)त्येव स्यात् तत्रान्तरङ्गत्वेन गुणेन वृद्धिबाधा-दिति द्रष्टव्यम्।

(४०) ईरितुमपहस्य फलमाह। ईरितुं शीलं यस्येति सुप्यजाताविति णिनिः उपपदसमासे स्वैरीति स्त्रियां ङीपि तु पूर्वभागमीरिन्-शब्दमादाय वृद्धिः।

(४१) एषवदेषयादेशयोश्चानव्ययएव पाठ्यत्वेन प्रेष्य गतदत्वादौ एषेरस्तान्तात् त्यपि न वृद्धिरिति द्रष्टव्यम्।

प्रौहः। प्रौढः। अर्थवद्ग्रहणेनानर्थकस्य (४२) ग्रहणं न्वेति-सूत्रे राजेः पृथक् भ्राजिग्रहणात्तेन ऊढग्रहणे क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशः। प्रौढवान्। प्रौढिः। इष इच्छायां तुदादिः। इष गतौ दिवादिः। इष् आभीक्ष्ण्ये क्र्यादिः। एषां घञि ण्यति च एष एष्य इति रूपे तत्र पररूपे (४३) प्राप्तेऽनेन वृद्धिः। प्रैषः। प्रैष्यः। यस्तु ईष उञ्छे। यश्च ईष गतिहिंसादर्शनेषु तयोर्दीर्घोपधत्वात्। ईषः। ईष्यः। तत्राद्गुणे। प्रेषः प्रेष्यः। *ऋते च तृतीयासमासे*। सुखेन ऋतः सुखार्त्तः। तृतीयेति किम्। परमर्त्तः। *प्रवत्सतरकम्बलवसनार्णदशानामृणे*। प्रार्णं वत्सतरार्णमित्यादि। ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम्। दशार्णोदेशः। नदी च दशार्णा। ऋणशब्दो दुर्गभूमौ जले च।

## उपसर्गादृति (४४) धातौ। ६। १। ९१।

(४२) अनर्थकस्येति उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसम्भवे त्यागायोगादिति भावः।

(४३) पररूपे प्राप्ते पूर्व्वं धातुःसाधनेन युज्यते पश्चादुपसर्गेणेति भाष्योक्तसिद्धान्तादिति भावः एतत्सामर्थ्यादेव उपसर्गकार्य्यात् पूर्व्वमेव प्रत्ययादिसाधनकार्य्यप्रवृत्तिस्तेन प्रत्यय इत्यादिरूपसिद्धिः। शब्देन्दु०।

(४४) ऋकारादिधातोरभावेन ऋतीति तपरकरणं यद्यपि व्यर्थं तथापि वा सुपीति परसूत्रे एतस्यानुवृत्तौ उप ऋकारीयतीत्यादौ वृद्धिवारणार्थतया सार्थकम्।

अवर्णान्तादुपसर्गादृकारादौ (४५) धातौ परे वृद्धिरेकादेशः स्यात्। उपार्च्छति।

अन्तादिवच्च। ६। १। ८५।

योऽय-(४६)मेकादेशः स पूर्व्वस्यान्तवत्परस्यादिवत् स्यात्। इति रेफस्य पदान्तत्वे

खरवसानयोर्विसर्जनीयः। ८। ३। १५।

खरि अवसाने च रेफस्य विसर्जनीयः स्यात्पदान्ते। इति विसर्गे प्राप्ते। अन्तवद्भावेन पदान्तस्य (४७) न विसर्गः उभयथर्क्षु कर्त्तरि चर्षिदेवतयोरित्यादिनिर्द्देशात्। उपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धि-विधानार्थम्। तेन ऋत्यक इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति।

वा सुप्यापिशलेः। ६। १। ९२।

(४५) यस्मिन् विधिस्तदादेरिति परिभाषासत्त्वादाह ऋकारादेरिति।

(४६) अन्तादीत्यत्र पूर्व्वपरयोरित्यनुवर्त्तते अन्तादिशब्दाभ्यां यथाक्रममन्वयात् पूर्व्वस्य परस्य च तद्घटितसमुदायस्यान्तादिभ्यां वर्णाभ्यां प्रातिपदिकत्वसुबन्तत्वादिव्यवहाराः कृतैकादेशस्य भवन्ति न तु तद्धर्ममात्र-दत्तय इत्यर्थः फलितमाह योऽयमिति। तेन रामावित्यादौ औकारस्य परादित्वेन पदत्वसिद्धिरिति। शब्देन्दु०।

(४७) पदान्तस्येति अन्तादिवच्चेति सूत्रेण पदान्तत्वेऽपि उभयथर्क्ष्वित्यादि सूत्रनिर्देशरूपज्ञापकबलान्न विसर्ग इत्यर्थः।

अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ(४८)परे वृद्धिर्वा स्यात्। आपिशलिग्रहणं पूजार्थम्। प्रर्षभीयति—प्रार्षभीयति। सावर्ण्याल्लृवर्णस्य ग्रहणं प्रल्कारीयति-प्राल्कारीयति। तपरत्वाद्दीर्घे न। उप ऋकारीयति—उपर्कारीयति।

## एङि पररूपम्। ६।१।९४।

आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात्। प्रेजते उपोषति। इह वा सुपीत्यनुवर्त्य वाक्यभेदेन व्याख्येयं तेन एङादौ सुब्धातौ वा। उपेडकीयति—उपैडकीयति। प्रोघीयति—प्रौघीयति। * एवे (४९) चानियोगे *। नियोगोऽवधारणम्। क्वेव भोक्ष्यसे। अनवकॢप्तावेवशब्दः। अनियोगे किम्। तवैव।

## अचोऽन्त्यादि टि। १।१।६४।

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात्। * शकन्ध्वादिषु (५०) पररूपं वाच्यम् *। तच्च टेः। शकन्धुः कर्कन्धुः। कुलटा। सीमन्तः केशवेशे। सीमान्तोऽन्यः। मनीषा।

(४८) सुब्धाताविति सुबन्तप्रकृतिके धातावित्यर्थः। अत्रापि धातावित्यनुवर्त्य वाक्यभेदेन व्याख्येयं तेन प्रर्षभीयतीत्यादौ ऋत्यक इति न प्रकृतिभाव उपसर्गादिति पञ्चम्यास्वरसादिति मूलएवाग्रे स्पष्टं वक्ष्यते।

(४९) नावकॢप्तौ यदा ह्येवः पररूपस्य गोचरः।
एवस्तु विषयो ह्येर्नियमेऽयं यदा भवेदिति। मनो०।

(५०) शकन्ध्वादिष्विति तत्सिद्धयतुगुणं पररूपं वाच्यमित्यर्थः तदेतदाह तच्च टेरिति शकानां देशानामन्धुः कूपः शकन्धुः। कर्काणां राज्ञामन्धुः कर्कन्धुः। बदरीवाची तु कर्कन्धूशब्दो दीर्घान्तकूप्रत्ययसाध्यः। अटतीत्यटा कुलादटा कुलटा। ईष उञ्छे ईष गत्या-

लाङ्गलीषा । पतञ्जलिः । सारङ्गः पशुपक्षिणोः । सारा-ङ्गोऽन्यः । आकृतिगणोयम् । मार्त्तण्डः । * ओत्वोष्ठयोः (५१) समासे वा * । स्थूलोतुः—स्थूलौतुः । बिम्बोष्ठः—बिम्बौष्ठः । समासे किम् । तवौष्ठः ।

**ओमाङोश्च । ६ । १ । ९५ ।**

ओमि आङि च पररूपमेकादेशः स्यात् । शिवायोन्नमः । शिव-एहि—शिवेहि ।

**अव्यक्तानुकरणस्यात इतौ । ६ । १ । ९८ ।**

ध्वने (५२) रनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूप-मेकादेशः स्यात् । पटत् इति—पटिति । * एकाचो न * । श्रदिति ।

**नाम्रेडितस्यान्त्यस्य तु वा । ६ । १ । ९९ ।**

---

दिषु आर्य्यां गुरोश्च हलन्तत्वप्रत्यये स्त्रीत्वादाप् ईषा मनस ईषा मनीषा हलस्य ईषा हलीषा लाङ्गलस्य ईषा लाङ्गलीषा ईषा लाङ्गलदण्डः । पतन्नञ्जलिर्यस्मिन् नमस्कार्य्यत्वादसौ पतञ्जलिरिति । तत्त्व० । अञ्जलेः पतितः इति विग्रहे मयूरव्यंसकादित्वात् समासे तत्रोत्तर-निपातनात् साधुः स च ऋषिः गोनर्द्दीये सन्ध्याकरणसमये कस्यचिदृषेरञ्जलेः पतित इत्यैतिह्यम् । मृताण्डादागत इत्यपि मार्त्तण्डः । शब्देन्दु० ।

(५१) अवर्णस्य ओत्वोष्ठयोश्च एकत्र समासे स्थितावेवेदम् प्रवर्त्तते तेन इमसृतौष्ठप्रसक्ते इत्यादौ न विकल्पः अत्र इमसृत इति ओष्ठ-प्रश्च इति च समासद्वयम् ।

(५२) अव्यक्तशब्दं स्वाचष्टे ध्वनेरिति अनुकरणस्य अस्फुटाकारादिवर्णस्य ।

आम्रेडितस्य प्रागुक्तन्न स्यात्। अन्यस्य तु तकारमात्रस्य वा स्यात्। *डाचि बहुलं द्वे भवत* इति बहुलवचनाद्द्वित्वम्।

तस्य परमाम्रेडितम्। ८।१।२।

द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात्। पटत्पटेति।

झलाञ्जशोऽन्ते। ८।२।३९।

पदान्ते झलाञ्जशः स्युः। पटत्पटदिति।

अकः सवर्णे दीर्घः। ६।१।१०१।

अकः सवर्णेऽचि परे दीर्घएकादेशः स्यात्। दैत्यारिः। श्रीशः। विष्णूदयः। अचि (५३) किम्। कुमारी शेते। नाज्झलाविति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यामागनिष्पत्तेः। अकः किम्। हरये। अकोऽकि दीर्घइत्येव सुवचम्। *ऋति सवर्णे ऋ वा*। होतॄकारः—होतृकारः। *ऌति सवर्णे (५४) ॡ वा*। होतॢकारः। पक्षे ऋकारः सावर्ण्यात्। होतृकारः। ऋति ऋ वा ऌति ॡ वेत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम्।

---

(५३) इकोयणचीति इत्यस्मात्सूत्रादचीति पदमनुवर्त्त्य योजितं तत्प्रयोजनमाह अचीत्यादिना।

(५४) ऋति ॠ वा ऌति ॡ वेत्याकारके वार्त्तिकपाठे स्थिते अकःसवर्णे दीर्घइति सूत्रस्थसवर्णपदमनुवर्त्त्य योजयन् पठति सवर्णे इत्यादि। दधि ऋकारइत्यादौ तद्वारणाय सवर्णे इति विशेषणम्।

आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा अभितोऽज्भक्तिः† परा । द्वितीयस्य तु मध्ये द्वौ लकारौ । शेषं प्राग्वत् । इहोभयत्रापि ऋत्यक इति पाक्षिकः प्रकृतिभावो वक्ष्यते ।

## एङः पदान्तादति (५५) । ६ । १ । १०९ ।

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ।

## सर्वत्र विभाषा गोः । ६ । १ । १२२ ।

लोके वेदे (५६) चैङन्तस्य गोरति वा प्रकृतिभावः स्यात् पदान्ते । गोअग्रम्—गोऽग्रम् । एङन्तस्य किम् । चित्रग्वग्रम् । पदान्ते किम् । गोः ।

† अभितः उभयतः अज्भक्तिः अजभागस्यापरामात्रा ।

(५५) एङः पदान्तादिति । ङसिङसोश्चेति पृथक्सूत्रारम्भसामर्थ्यादस्य पदान्तत्वे लब्धेऽपि पुनस्तद्ग्रहणं सर्वत्र विभाषा गोरित्याद्युत्तरार्थमिह तु स्पष्टार्थमिति द्रष्टव्यम् ।

(५६) यजुष्युरइत्यादिप्रक्रमात् छन्दस्येवेदं संभाव्येत अत उक्तं सर्वत्रेति तद्व्याचष्टे लोके वेदे चेति । प्रकृत्यान्तःपादमित्यादि (६।१।११५) सूत्रात् प्रकृत्येति पदमनुवर्त्त्याह प्रकृतिभावइति प्रकृत्या स्वभावेन अविकृतरूपेण भावोऽवस्थानमित्यर्थस्तथाच प्रकृतिभावे न पूर्वरूपं नापि अवादय इति भावः । एङः पदान्तादतीत्यतः एङित्यनुवर्त्त्य तदन्तस्य गोरिति व्याख्येयम् तेन चित्रग्वग्रमित्यत्र नेति स्वयं वक्ष्यति लक्षणप्रतिपदोक्तयोर्मध्ये प्रतिपदोक्तस्यैव ग्रहणनियमेन हे चित्रगोऽत्रागच्छेत्यादौ न तस्य सम्बोधनमात्रे लक्षणसाध्यत्वेऽपि प्रतिपदोक्तत्वाभावात् पदान्तादित्यस्यानुवृत्त्या विपरिणामेनान्वयः ।

**अवङ् स्फोटायनस्य (५७)। ६। १। १२३।**

अतीति निवृत्तम्। अचि परे (५८) पदान्ते गोरवङ् वा स्यात्। गवाग्रम्। पदान्ते किम्। गवि। व्यवस्थितविभाषया (५९) गवाक्षः।

**इन्द्रे च [नित्यम्]। ६। १। १२४।**

गोरवङ् स्यादिन्द्रे। गवेन्द्रः। अथ प्रकृतिभावः।

**प्लुतप्रगृह्या अचि नित्यम् (६०)। ६। १। १२५।**

प्लुताः प्रगृह्याश्च वक्ष्यन्ते तेऽचि नित्यम्प्रकृत्या स्युः। एहि कृष्ण ३ अत्र गौश्चरति (६१)। हरी एतौ। नित्यमिति

---

(५७) सर्व्वत्र विभाषेत्यतः विभाषानुवृत्तिसम्भवेऽपि स्फोटायनग्रहणं पूजार्थं स्फोटोऽयनं यस्य स स्फोटायनः स्फोटप्रतिपादकोवैयाकरणविशेषः अत्रापि एङन्तस्य गोरिति व्याख्येयम् तेन चित्रग्वग्रमित्यत्र नेति बोध्यम्।

(५८) अचि पर इति इकोयणचीत्यतोऽच्यतीतिपदानुवृत्तिः अतीति च निवृत्तं तत्र व्याख्यानमेव शरणं तेन गवेश इत्यादि सिध्यति।

(५९) व्यवस्थितेति विभाषाया भावाभावविषयकतया क्वचिद्विषयविशेषे भावमात्रविषयकत्वं भाष्यकारादिभिर्व्यवस्थाप्यते क्वचिच्च तद्व्यवस्थापने उभयविषयकत्वमत्र च भाष्यकृता व्यवस्थापनात् भावमात्रविषयत्वम्। गवां किरणानामक्षीव अक्ष्णोऽदर्शनादित्यच्प्रत्यये गवाक्ष इति सिद्धम् अयं शब्दः वातायने रूढः पुंस्त्वं लोकात्।

(६०) नित्यमिति। इन्द्रे चेति सूत्रे सामर्थ्यादेव नित्यत्वलाभादिह तदनुवृत्तिसंभवेऽपि पुनस्तद्ग्रहणम् बाधकविषयेऽपि प्रकृत्यर्थताद्योतनाय।

(६१) एहि कृष्ण ३ अत्रेति वाक्यद्वयमादायोदाहरणन्तु दुराकृते च

किम्। हरी एतावित्यादावयमेव प्रकृतिभावो यथा स्यात् इकोऽसवर्ण इति ह्रस्वसमुच्चितो मा भूत्।

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च। ६।१।१२७।

पदान्ता (६२) इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा। अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्त्तव्य इति भाष्ये स्थितम्। चक्रि-अत्र-चक्री-अत्र-चक्र्यत्र। पदान्ता इति किं गौर्यौ। न समासे*। वाप्यश्वः। *सिति च*। पार्श्वम् (६३)।

## ऋत्यकः (६४)। ६।१।१२८।

ऋति परेऽकः प्राग्वत्। ब्रह्म ऋषिः-ब्रह्मा ऋषिः-ब्रह्मर्षिः। पदान्ता इत्येव आर्च्छत्। समासेऽप्ययं प्रकृतिभावः। सप्त-ऋषीणां-सप्तर्षीणाम्।

---

वाक्यस्य टेरिति सूत्रयोरेकवाक्यतया वाक्यस्य टेरेव ह्रुतस्य (संबोध्यस्य) प्लुतत्वविधानात् वाक्यमध्यपातिनः पदस्य वाक्यटित्वाभावादतः केनचित् तदुदाहरणत्वेन प्रदर्शितम् कृष्ण एहीत्यादि अनुदाहरणमेव कृष्णेत्यस्य दूराहूतस्यापि वाक्यटित्वाभावात्।

(६२) एङः पदान्तादित्यतः पदान्तादित्यनुवर्त्त्य विभक्तिवचनयोर्विपरिणामेनाह पदान्ता इति अपदान्ते यणश्चरितार्थतया पुनर्ह्रस्वयणोर्विधानसामर्थ्याद्विकल्पलाभ इत्याशयेनाह वेति।

(६३) पार्श्वमिति पर्शूनां समूहः पार्श्वम् इति विग्रहे सिद्धत्वात् प्रकृतिभावाभावात् पार्श्वमिति सिद्धम्।

(६४) ऋत्यक इति सवर्णार्थमनिगर्थञ्चेदं सूत्रं तेन शोभनाकारः ब्रह्मा ऋषिरित्यादौ विकल्पेन प्रकृतिभावः। आर्च्छदिति आटो भात्वमयम-

## वाक्यस्य(६५) टेः प्लुतउदात्तः। ८। २। ८२।

इत्यधिकृत्य।

## प्रत्यभिवादे(६६)ऽशूद्रे। ८। २। ८३।

अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात्। अभिवादये (६७) देवदत्तोऽहम् भो आयुष्मानेधि देवदत्त ३। "स्त्रियान्न"। अभिवादये गार्ग्यहं भो आयुष्मती भव गार्गि!। नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते नेह आयुष्मानेधि। "भोराजन्यविशाञ्चेति वाच्यम् (६८)"। आयुष्मानेधि भो३ः। आयुष्मानेधीन्द्रवर्म्म ३ न्। आयुष्मानेधीन्द्रपालित ३।

---

त्वेन पदान्तत्वाभावान्न प्रसङ्गः। समासेऽपीति व्याख्यानादिति भावः। सप्तर्षीणामित्यत्र दिक्संख्ये संज्ञायामिति समासः।

(६५) प्लुतप्रगृह्याणां प्रकृतिभावप्रसङ्गे सूत्रत्वात् प्रकृतिभावविधायकं सूत्रद्वयमुपन्यस्य प्रथमोपस्थितत्वात् प्लुतं निरूपयितुमाह वाक्यस्येति।

(६६) प्रणामादिभिराशिषं वाञ्छमानो गुर्व्वादिर्यत् प्रतिसंभाषते स प्रत्यभिवादः न त्वाशीर्वचनमात्रं शूद्रे आशीर्व्वादरूपप्रत्यभिवादाभावेन अशूद्रे इति विशेषणस्य वैयर्थ्यापत्तेः अतएव अशूद्रे इति किं कुशल्यसि तुषजकेत्युक्तम् शब्देन्दुशेखरे।

(६७) अभिवादये प्रणामेन आशीर्व्वादं वाचयामीत्यर्थः आयुष्मानित्यस्य विधेयतया न सम्बोधनान्तता एधीति भवेत्यादेरुपलक्षणम्।

(६८) भोःशब्दस्य राजन्यवैश्यवाचकनाम्नाश्च टेः प्लुतेत्यर्थः तत्र भोःशब्दस्याप्राप्ते इतरयोस्तु नामत्वेन प्राप्ते नियमार्थमिति बोध्यम्।

दूराद्धूते (९८) च। ८। २। ८४।

दूरात्सम्बोधनं यद्वाक्यन्तस्य टेः प्लुतः स्यात्। सक्तून् पिब देवदत्त ३।

हैहेप्रयोगे हैहयोः। ८। २। ८५।

एतयोः प्रयोगे दूराद्धूते यद्वाक्यन्तत्र हैहयोरेव प्लुतः स्यात्। हे ३ राम। राम है ३।

गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्। ८। २। ८६।

दूराद्धूते यद्वाक्यन्तस्य ऋद्भिन्नस्याऽनन्त्यस्यापि गुरोर्वा प्लुतः स्यात्। दे ३ वदत्त। देवद ३ त्त। देवदत्त ३। गुरोः किम्। वकारात् परस्याकारस्य मा भूत्। अनृतः किम्। कृष्ण ३॥ एकैकग्रहणं पर्यायार्थम्। इह प्राचामिति योगो विभज्यते। तेन सर्वः प्लुतो विकल्प्यते।

अप्लुतवदुपस्थिते। ६। १। १२९।

उपस्थितोऽनार्ष इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवद्भवति। अप्लुतकार्यं यणादिकङ्करोति। सुश्लोक३इति। सुश्लोकेति। वत् किम् अप्लुत इत्युक्ते प्लुत एव निषिध्येत तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणान्न स्यात्। अग्नी ३ इति।

(९८) यावति दूरे स्वाभाविकप्रयत्नोच्चारितं वर्णं सम्बोध्यमानो न शृणोति किन्तु अधिकप्रयत्नमपेक्षते तावद् दूरं दूरादाह्वानञ्च दूरबोधनस्या-

## इ ३ चाक्रवर्म्मणस्य। ६।१।१३०।

इ३प्लु तोऽचि परेऽप्लु तवद्वा स्यात्। चिनु हीति-(७०) चिनु हि ३ इति। चिनुहि ३ इदं-चिनुहीदम्। उभयत्र (७१) विभाषेयम्।

## ईदूदेद् द्विवचनं प्रगृह्यम्।१।१।११।

ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। हरी एतौ विष्णू इमौ। गङ्गे अमू। पचेते (७२) इमौ। मणी(७३)वोष्ट्रस्येति तु इवार्थे वाशब्दो वशब्दो वा बोध्यः।

ष्युपलक्षणं न तु सम्बोधनमात्रं तेन आगच्छतु भवान् देवदत्त३ः इत्येवं प्रथमान्तपरभागेऽपि स्यादेवेति शब्देन्दु०।

(७०) चिनु हीति। मया किं कर्त्तव्यमिति पृष्टे चिनु हीति प्रतिवचनम् विभाषा पृष्टप्रतिवचने हेरिति सूत्रेण हिः प्लुतः अत्र इतीति इद-मिति च भागः वाक्यान्तरं तेन हेरितीकारस्य वाक्यटित्वात् प्लुतत्वम्।

(७१) उभयत्रेति उपस्थिते प्राप्ते, अनुपस्थिते च अप्राप्ते, उदाहरणद्वयेन तदाह। प्रथमम् इतीति द्वितीयम् इदमिति।

(७२) एदन्तग्रहणस्य फलान्तरमाह पचेते इति। संज्ञाविधौ प्रत्ययग्र-हणे तदन्तग्रहणं नास्तीति परिभाषया द्विवचनपदेन न द्विवचनान्त-ग्रहणं तेन गौर्य्यौरथ्येति विग्रहे गौर्य्यथेत्यत्र द्विवचनान्तत्वेऽपि न प्रगृह्यसंज्ञाप्रसङ्गः।

(७३) मणी इति 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम'ेति महाभारत-वाक्यम्। वाशब्द इति 'वा स्यात् विकल्पोपमयोरेवार्थे च समुच्चये' इत्यभिधानात् वशब्द इति 'वं प्रचेतसि जानीयादिवार्थे च तदव्यय-मि'ति मेदिन्युक्तेः।

अदसो मात्। १। १। १२।

अस्मात् परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। मात्किम्। अमुकेऽत्र। असति मादृग्रहणे एकारोप्यनुवर्त्तेत ‡।

शे। १। १। १३।

अयमप्रगृह्यः स्यात्! अस्मे (७४) इन्द्राबृहस्पती।

निपात (७५) एकाजनाङ्। १। १। १४।

एकोऽज् निपात आङ्वर्जः प्रगृह्यः स्यात्। अ अपक्रम् इ-विस्मये। इ इन्द्रः उ उमेशः। अनाङित्युक्तेरङिदाकारः प्रगृह्य एव। आ एवन्नु मन्यसे। आ एवङ्किल (७६) तत्। ङित्तु न प्रगृह्यः। ईषदुष्णम् ओष्णम्। वाक्यस्मरणयोरङित्। अन्यत्र ङिदिति विवेकः।

---

‡ एतोऽनुवृत्तौ अमुके इत्यस्य प्रगृह्यता स्यात् तद्वारणाय मादिति।

(७४) अस्मे अस्मभ्यमित्यर्थः श्यमःशे आदेशः शित्त्वात् सर्व्वादेशः।

(७५) अनाङिति पर्य्युदासादेव लब्धे निपाते पुनर्निपातग्रहणमुत्तरार्थमिह तु स्पष्टार्थं कृतम्। आ एवमिति पूर्व्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतकोयमाकारः। पूर्व्वमित्थं नामंस्था इदानीमेवं मन्यसे इत्यर्थः। मनो०।

(७६) आ एवं किलेति स्मरणद्योतकोऽयमाकारः। तथाच भाष्यम्।

ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः।
एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित्॥

अत्राङित्त्वस्यैव तात्पर्य्यं लाघवात् प्रकृतोपयोगाच्च। अन्यस्य ङित्त्वमर्थसिद्धमित्याशयेन तदेतदाह वाक्ये ति। मनो०।

ओत्। १। १। १५।

ओदन्तो(७७) निपातः प्रगृह्यः स्यात्। अहो ईशाः।

सम्बुद्धौ(७८)शाकल्यस्येतावनार्षे ।१।१।१६।

सम्बुद्धिनिमित्तकओकारो वा प्रगृह्योऽवैदिके (७९) इतौ परे। विष्णो इति। विष्णइति-विष्णविति। अनार्षइति किम्। ब्रह्मबन्धवित्यब्रवीत्।

उञः। १। १। १७।

उञ इतौ वा प्रागुक्तम्। उइति-विति।

ऊँ। १। १। १८।

उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात्। ऊँइति।

मय उञो वो वा। ८। ३। ३३।

मयः परस्य उञो वो वा स्यादचि। किमु-उक्तम्-किमुवुक्तम्। वस्यासिद्धत्वान्नानुस्वारः (८०)।

(७७) निपात इत्यनुवृत्तमोदित्यनेन विशेष्यतइत्याह ओदन्तो निपातइति।

(७८) संबुद्धौ किम् अहो इतीत्यत्र मा भूत्। अत्र परत्वात् ओदिति सूत्र-बाधेन विभाषया प्रगृह्यसंज्ञा स्यात्।

(७९) ऋषिर्वेदस्तत्रोक्त आर्षस्तद्भिन्नोऽनार्षोऽवैदिकइत्याशयेनाहावैदिकइति।

(८०) मोऽनुस्वार इति सूत्रस्य ( ८। ३। २३ ) त्रिपाद्यन्तर्गतत्वेऽपि तदपेक्षया वविधायकैतत्सूत्रस्य त्रिपाद्यां परवर्त्तितया पूर्व्वशास्त्रं प्रति चोत्तरशास्त्रस्यासिद्धत्वाभिधानेन तत्कार्य्यस्याप्यसिद्धत्वान्नानुस्वारः।

## ईदूतौ च सप्तम्यर्थे।१।१।१९।

सप्तम्यर्थे पर्यवसन्नमीदूदन्तमप्रगृह्यं स्यात्। सोमो गौरी (८१) अधिश्रितः। मामकी तनू इति। सुपां सुलुगिति सप्तम्या लुक्। अर्थग्रहणं किम्। वृत्तावर्थान्तरोपसंक्रान्ते मा भूत्। वाप्यामश्वो वाप्यश्वः।

## अणोऽप्रगृह्यस्यानुनासिकः।८।४।५७।

अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात्। दधिँ दधि। अप्रगृह्यस्य किम्। अग्नी॥ इत्यच्सन्धिः।(८२)।

---

(८१) लौकिकोदाहरणासद्भावेनोभयत्र वैदिकोदाहरणमाह सोमइत्यादि गौरीशब्दः सप्तम्यर्थमात्रपर्य्यवसन्नः सुपां सुलुगिति सप्तम्या लुक् अधिश्रयणक्रियायां गौरीपदबोध्याधिकरणत्वान्वयः गौर्य्यधिकरणे लक्षणायां मानाभावः। वाप्यश्व इत्यादौ तु सु प्सु पेति समासरूपवृत्तौ वापीशब्दस्यैव तदधिकरणे लाक्षणिकत्वमित्यनयोर्भेदः।

(८२) अच्सन्धिरिति अत्र कुत्वं षत्वं वा न कृतं स्पष्टप्रतिपत्त्यर्थमेवमेवानुस्मारस्याच्त्वादित्यादिनिर्देश इति द्रष्टव्यम्।

स्तोः(१) श्चुना श्चुः । ८ । ४ । ४० ।

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। हरिश् शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय।

शात्। ८। ४। ४४।

शात्परस्य (२) तवर्गस्य चुत्वन्न स्यात्। विश्नः। प्रश्नः।

ष्टुना ष्टुः। ८। ४। ४१।

स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे।

न पदान्ताट्टोरनाम्। ८। ४। ४२।

अनामिति लुप्तषष्ठीकम्पदम्। पदान्ताट्टवर्गात्परस्याऽनामः

---

(१) स्तोरिति समाहारद्वन्द्वे सौत्रं पुंस्त्वं श्चुना श्चुरित्यपि तथा। एवं परत्र ष्टुनेत्यादौ सर्व्वत्र। सहयुक्तेऽप्रधाने इत्यादिसूत्रे सहयोगं विनापि तृतीयाया वक्ष्यमाणत्वात् श्चुनेति तृतीया नासङ्गता। इत्तौ योगइति एतच्चाध्याहारलभ्यम् तद्द्योतिका तु तृतीयैव। स्थान्यादेशयोर्यथासंख्य-नियमेऽपि निमित्तकार्य्यिणोर्न तथात्वं सति तु तयोरपि यथासंख्यकत्वे शकारयोगे शकारः चवर्गयोगे चवर्गइत्यर्थः स्यात् तथासति शादिति सूत्रस्य शकारात् परस्य तवर्गस्य स्थाने चवर्गादेशनिषेधकस्य वैय-र्थ्यापत्तिः। योगश्च निमित्तस्य पूर्व्वत्र परत्र वा स्थितौ भवति तत्र पूर्व्वस्थिते यत्नः याच्ञेत्यादि परस्थिते हरिश्शेते इत्यादि।

(२) शादिति न पदान्तादित्यतः नेति तोःसीत्यतश्च तोरित्यनुवर्त्याह शात् परस्य तवर्गस्येति। जश्त्वमित्यादेरसंदिग्धत्वार्थकतयोदाहरणत्वासम्भ-वेनान्त्यवर्गे नकारे परे उदाहरणमाह विश्नइति।

स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। पदान्तात्किम्। ईट्टे। टोः किम्। सर्पिष्टमम्(३)। * अनाम्नवतिनगरीणामिति वाच्यम् *। षण्णां। षण्णवतिः। षण्णगर्यः।

## तोः षि। ८। ४। ४३।

तवर्गस्य षकारे परे न ष्टुत्वम्। सन् षष्ठः। झलाञ्जशोऽन्ते ४८५०। वागीशः। चिद्रूपम्।

## यरोऽनुनासिकेऽनुनासिको वा। ८। ४। ४५।

यरः पदान्त (४) स्यानुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः—एतद्मुरारिः। स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो (५) विधिरयं रेफे न प्रवर्त्तते। चतुर्मुखः। प्रत्यये भाषायां नित्यम्। * तन्मयं चिन्मयम् (६)। कथं तर्हि मदोदग्राः ककुद्मन्त इति, यवादिगणे दकारनिपातनात्(७)।

---

(३) सर्पिष्टममित्यत्र ह्रस्वात्तादौ तद्धिते इति षत्वम्।

(४) पदान्तस्येति किं वेद्मि क्षुभ्नातीत्यादौ न, तत्र यरः पदान्तत्वाभावात्।

(५) स्पर्शे चरितार्थ इति प्रसिद्धप्रयोगाभिप्रायेण,-कमल्-मुरारिः इत्यव् नेते-त्यादौ लवयोः यथाकथञ्चित् प्रवृत्तिरित्याशयेनाह रेफे न प्रवर्त्तते इति तेन लवयोरपि क्वचित् प्रवृत्तिरिति सूचितम्। प्राञ्चस्तु स्पर्शस्यैवेति नियमेन स्पर्शभिन्नेषु नानुनासिकविधिस्तेन रेफ इत्यस्योपलक्षणत्वान्न लवयोरपि ग्रहणम्।

(६) चिन्मयमिति स्वार्थिकः तत्प्रकृतिवचने इति मयट् चिन्मात्रमिति क्वाचित्कः पाठः स्वार्थिकस्य मात्रच्प्रत्ययस्य पाणिनीयमतेऽभावात् तन्निर्वाहस्तु मयूरव्यंसकादित्वात् समासेनेव। प्रन्देन्दु०।

(७) निपातनादिति यवादिगणे ककुद्मानिति प्रकृतिप्रत्ययसमुदायः पठ्यत इतिमतेनेदम्।

## तोर्लि। ८। ४। ६०।

तवर्गस्य लकारे परे परसवर्णः स्यात्। तल्लयः विद्वाँल्लिखति। नकारस्याऽनुनासिको लकारः।

## उदः स्थास्तम्भोः पूर्वस्य। ८। ४। ६१।

उदः परयोः(८) स्थास्तम्भोः पूर्व्वसवर्णः स्यात्। आदेः परस्य (२८सू०)। उत्थानम्। उत्तम्भनम्। अत्राऽघोषस्य(९) महाप्राणस्य सस्य तादृश एव थकारः। तस्य झरो झरीति (४३सू०) पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणन्न तु खरि चेति(६२सू०) चर्त्वं,चर्त्वं प्रति थकारस्याऽसिद्धत्वात्(१०)। उत्थानम्। उत्थ्तम्भनम्।

## झयो होऽन्यतरस्याम्। ८। ४। ६२।

झयः परस्य(११)हस्य पूर्व्वसवर्णो वा स्यात्। घोषवतो(१२)

---

(८) तस्मादित्युत्तरस्येति (२८सू०) परिभाषालभ्यमर्थमाह उदःपरयोरिति।

(९) अघोषस्येति समनियतत्वेनान्यतमपदग्रहणे सर्व्वस्यैव प्राप्ततया श्वासविवारयोस्त्यागेऽपि न न्यूनता।

(१०) थकारस्यासिद्धत्वादिति एतत्सूत्रस्य परत्वात् खरि चेति (६२सू०) पूर्व्वं प्रत्यसिद्धतया तत्कार्य्यस्याप्यसिद्धत्वमिति भाव इति प्राञ्चः। भाष्यमते त्वत्रापि चर्त्वमिति बोध्यम्। शब्देन्दु०।

(११) झय इति पञ्चमीमभिप्रेत्याह झयः परस्येति पूर्व्वसूत्रात् पूर्व्वस्येति पदमनुवर्त्त्याह पूर्व्वसवर्ण इति।

(१२) घोषवत इति समनियतत्वेनार्थे लभ्यत्वेऽपि स्वरूपप्रतिपादनाय घोषनादसंवारत्नय ग्रहणम् न दोषावहम्।

नादवतः, संवृतकण्ठस्य, महाप्राणस्य हस्य तादृशो वर्गचतुर्थ एवादेशः । वाग्घरिः । वाग्हरिः ।

### शश्छोऽटि । ८ । ४ । ६३ ।

झयःपरस्य शस्य छो वा स्यादटि । दस्य श्चुत्वेन जकारे कृते ।

### खरि च । ८ । ४ । ५५ ।

खरि झलाञ्चरः स्युः । इति जकारस्य चकारः । तच्शिवः । तच्छिवः । * छत्वममीति वाच्यम् * । तच्श्लोकेन । तच्छ्लोकेन । अमि किम् वाक्श्च्योतति ।

### मोऽनुस्वारः । ८ । ३ । २३ ।

मान्तस्य पदस्या(१३)ऽनुस्वारः स्याद्धलि । अलोऽन्त्यस्य (२८५०) । हरिंवन्दे । पदस्येति किं गम्यते ।

### नश्चापदान्तस्य झलि । ८ । ३ । २४ ।

नस्य मस्य चापदान्तस्य (१४) झल्यनुस्वारः । यशांसि । आक्रंस्यते । झलि किं मन्यसे ।

### अनुस्वारस्य ययि परसवर्णः । ८ । ४ । ५८ ।

(१३) उञि च पद इत्यतः पदइत्यनुवर्त्त्य त्रिपादिस्थमय्य हलि सर्व्वेषामित्यतः हलीत्यनुवर्त्त्याह पदस्येति हलीति च इति किं त्वमत्र किमत्र ।

(१४) नश्चापदान्तस्येति अपदान्तस्य किं राजन् पाहि ।

श्रीः ।

## तत्त्वबोधिनीव्याख्यासंवलिता

# सिद्धान्तकौमुदी ।

---

### संज्ञाप्रकरणम् ।

**मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च । वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥ १ ॥**

**अइउण् १ । ऋलृक् २ । एओङ् ३ । ऐऔच् ४ । हयवरट् ५ । लण् ६ ।**

ॐ ॥ नत्वा विश्वेश्वरं साम्बं कृत्वा च गुरुवन्दनम् । सिद्धान्तकौमुदीव्याख्या क्रियते **तत्त्वबोधनी** ॥ १ ॥ विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नंश्चिकीर्षितं प्रतिजानीते—**मुनित्रयमि**त्यादिना । त्रयोऽवयवा यस्येति तत्त्रयम्, 'संख्याया अवयवे तयप्' 'द्वित्रिभ्यां तयस्य–' इत्ययच् । मन्तारो वेदशास्त्रार्थतत्त्वावगन्तारो मुनयः । 'मनेरुच्च' इत्यौणादिकसूत्रेण मनेरत उकारो मनेः पर इन् प्रत्ययश्च । गुणस्तु नेह भवति । किदित्यनुवर्तनात्तत्परकरणाद्वा । तेषां पाणिनिकात्यायनपतञ्जलीनां त्रयं मुनित्रयम् । ननु 'स्वयंभुवे नमस्कृत्य' इत्यत्रेवेहापि 'नमः स्वस्ति–' इत्यादिना चतुर्थी स्यात् । मैवम् । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति वक्ष्यमाणत्वात् 'नमस्करोति देवान्' इतिवद्द्वितीयाया एव युक्तत्वात् । किंच जहत्स्वार्था वृत्तिः इति पक्षे नमःशब्दस्यात्र निरर्थकत्वात् तद्योगे चतुर्थी न भवति । अर्थवद्ग्रहणपरिभाषायाः प्रवृत्तेः । 'स्वयंभुवे नमस्कृत्य' इत्यत्र तु स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थीति मूल एव स्फुटीभविष्यति । न चैवं 'नमः स्वस्ति–' इति सूत्रे नमःपदं व्यर्थमिति शङ्क्यम् । हरये नमः इत्यत्र हरिमनुकूलयितुमित्यर्थेऽविवक्षिते संबन्धसामान्ये षष्ठ्यां प्राप्तायां तदपवादतया तस्यावश्यकत्वात् ॥—**तदुक्तीरि**ति । तेषां पाणिन्यादीनामुक्तीः । सूत्रवार्तिकभाष्याणीत्यर्थः । तस्य मुनित्रयस्योक्तीरिति व्याख्यानेऽपि समुदायेन सूत्रं वार्तिकं भाष्यं वा नोक्तमिति समुदायिनां मुनीनामेवोक्तीरिति पर्यवस्यति ॥—**परिभाव्ये**ति । पर्यालोच्येत्यर्थः । न च परिपूर्वस्य भवतेस्तिरस्कारार्थत्वात्कथमत्र ज्ञानार्थतेति शङ्क्यम् । परीत्यस्य भावीति चुरादिणिजन्तेन योगात् । केचिदत्र भवतिना योगमभ्युपेत्याहुः । 'परौ भुवोऽवज्ञाने' इति सूत्रे परौ भुव इत्यस्याऽवज्ञान इति विशेषणात्र तिरस्कारार्थत्वनियमः । 'मनसा परिभाव्य कंचित्' इत्यादि श्रीहर्षप्रयोगाच्च । अत एवात्राप्रयुक्तत्वदोषशङ्कापि नास्तीति । अन्ये तु 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इति कोशात्परिपूर्वकाद्भवतेर्घञन्तादेव तिरस्कारप्रतीतिर्नान्यस्मादित्याशङ्कैवात्र नास्तीत्याहुः । तन्मन्दम् । परिभूय परिभवतीत्यतोऽपि तिरस्कारप्रतीतेः ॥—**वैयाकरणेति** । व्याकरणमधीयते विदन्ति वा वैयाकरणास्तत्सिद्धान्तानां कौमुदी प्रकाशिकेत्यर्थः । निर्दुष्टसकलजनानन्दकत्वसाम्येन कौमुदीप्रयोगः । करिष्यमाणाया अपि कौमुद्या बुद्ध्या संनिधापितत्वादियमित्यङ्गुल्या निर्देशः ॥—**विरच्यत** इति । मयेति शेषः । रच प्रतियत्ने । प्रतियत्नो गुणाधानम् । विपूर्वादस्माद्वर्तमानसामीप्ये भविष्यदर्थे वर्तमानप्रत्ययः ॥—**अइउण्** । णानुबन्धोऽण्संज्ञार्थः ॥—**ऋलृगि**ति ककारस्त्वक्इक्उक्संज्ञार्थः ॥—**एओङि**ति ङकार एङ्संज्ञार्थः ॥—**ऐऔजि**ति चकारस्त्वच्इच्एच्ऐच्संज्ञार्थः । वर्णानामसंदिग्धत्वेन बोधनाय संहिताया अविवक्षणादेतेष्वसंधिः । स्वराणां चादिषु पाठात् 'चादयोऽसत्त्वे' इति निपातसंज्ञायां 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावाच्च संधिरित्यन्ये । स्यादेतत् । अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां

---

१ परिभाव्य—विचार्येत्यर्थः तिरस्कृत्येत्यर्थश्च । आद्ये स्वग्रन्थस्य समूलत्वमन्त्येऽगतार्थत्वं च बोध्यम् । नच 'परिभावस्तिरस्क्रिया' इति कोशस्य विचारार्थप्रतिबन्धकता युक्ता, कोशस्य नामलिङ्गानुशासनत्वेनार्थव्यवस्थापकत्वाभावादिति ।
२ सिद्धान्तेति—इत्थमत्रानुबन्धचतुष्टयम् । वैयाकरणसिद्धान्ता विषयः, तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावश्च संबन्धः । ३ अइउण्—अत्र कारप्रत्ययो बाहुलकान्न भवतीति केचित् । वस्तुतस्तु तत्र निर्देशपदानुवृत्तेर्न भवति । निर्देशश्च वर्णप्रतिपादनम्, स इह नास्ति किंतु आनुपूर्वीसंपादनमात्रे तात्पर्यम् ।

सृष्टम्। अङ्कितः। अञ्चितः। कुण्ठितः। शान्तः। गुम्फितः। कुर्वन्तीत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे तस्यासिद्धत्वान्न णत्वम्।

**वा पदान्तस्य। ८। ४। ५९।**

पदान्तस्याऽनुस्वारस्य यथि परे परसवर्णो वा स्यात्। त्वङ्करोषि—त्वं करोषि। सँय्यन्ता—संयन्ता। सँव्वत्सरः-संवत्सरः। यँल्लोकम्-यंलोकम्। अत्राऽनुस्वारस्य पक्षेऽनुनासिका यवलाः।

**मो राजि समः क्वौ (१५)। ८। ३। २५।**

क्विबन्ते राजतौ परे समो मस्य मएव स्यात्। सम्राट्।

**हे मपरे वा। ८। ३। २६।**

मपरे (१६) हकारे मस्य मएव स्याद्वा। ह्मल ह्मल सञ्चलने। किम्ह्मलयति—किंह्मलयति। * यवलपरे (१७) यवला वेति वक्तव्यम्*।

**यथासंख्यमनुदेशः समानाम्। १। ३। १०।**

---

(१५) सम इति। राजीति किं संयत्। सम इति किम् इदं राट् क्वाविति किं सं रेजे मकारस्य मकारभावोऽनुस्वारनिवृत्त्यर्थः।

(१६) मपरे इति बहुव्रीहिः। उदाहरणेन तदेवाह किम्ह्मलयतीति।

(१७) यवलाः परे यस्मात् स यवलपरस्तस्मिन् हकारे मस्य यवलाभवन्तीत्यर्थः।

समसम्बन्धी(१८)विधि र्यथासंख्यं (१९) स्यात् । किंह्यः—कियँह्यः । किंह्मलयति कियँह्मलयति । किंह्लादयति, किल्ँह्लादयति ।

**नपरे नः । ८ । ३ । २७ ।**

नपरे हकारे मस्य नः स्याद्वा । किंह्नुते । किन्ह्नुते ।

**ङ्णोः कुक्टुक् शरि । ८ । ३ । २८ ।**

ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्टुकोरसिद्धत्वाज्जश्त्वन्न । *चयो द्वितीयाः (२०) शरि पौष्करसादेरिति वाच्यम्* । प्राङ्क्षष्ठः प्राङ्ख्—षष्ठः—प्राङ्षष्ठः । सुगण्ट् षष्ठः सुगण्ठ् षष्ठः सुगण् षष्ठः ।

**डः सि धुट् । ८ । ३ । २९ ।**

---

(१८) समसंबन्धीति । समकर्म्मकं विधानमिति तु नोक्तं तथासति यत्रोद्दिष्टसमेषु समानं विधानं पाघ्रादिषु पिबादीनां प्रियस्थिरादिषु च प्रस्थादीनां तत्रैव यथाक्रमं प्रवृत्तिः स्यात् दृश्यते तु अनुवाद्ययोरपि यथासंख्यता समूलकृतजीवेषु हनकृषपहृइत्यादिषु । समानामिति किं लक्षणेत्थंभूतेत्यत्र सूत्रे चत्वारोलक्षणादयोऽर्थाः प्रत्यादयस्तु त्रयएव तत्र सर्व्वेषां सर्वत्र कर्म्मप्रवचनीयसंज्ञा यथा स्यात् ।

(१९) यथेति येनैव क्रमेण पदानां स्थानं पदार्थोपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधसम्बन्धस्तेषामित्यर्थः ।

(२०) चयइति शरि परे चय्प्रत्याहारस्थाने स्वस्ववर्गद्वितीया भवन्ति पौष्करसादेराचार्य्यस्य मते इति वाच्यम् पुष्करे तीर्थविशेषे सीदतीति पुष्करसद् तस्यापत्यमितीञि द्विपदवृद्धौ पौष्करसादिस्तस्येत्यर्थः ।

डात्परस्य सस्य(२१) धुट् वा स्यात्। षट्त्सन्तः षट्सन्तः।

**नश्च। ८। ३। ३०।**

नकारान्तात्सस्य (२२) धुट् वा स्यात्। सन्त्सः। सन्सः।

**शि तुक्। ८। ३। ३१।**

नस्य पदान्तस्य शे परे तुग्वा स्यात्। शश्छोऽटीति (१२५०) छत्वविकल्पः। पक्षे झरो झरीति (४२५०) च लोपः। सञ्छम्भुः-सञ्च्छम्भुः-सञ्च्शम्भुः-सञ्शम्भुः।

ञ्छौ ञ्चछा ञ्चशा ञशाविति चतुष्टयम्।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्।

**ङमो ह्रस्वादचि ङमुण्नित्यम्। ८। ३। ३२।**

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात् (२३) परस्याचो नित्यं ङमुडागमः स्यात्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः।

---

(२१) डः सीति। सीति सप्तमी षष्ठ्यर्थे तदाह सस्येति पदइत्यनुवर्त्तमानस्य सम्बन्धितया डकारेणान्वयः।

(२२) नकारान्तादिति उञि च पदे इत्यतः पदे इत्यनुवृत्तं पञ्चम्या विपरिणम्यते अपदान्तनकारस्याऽनुस्वारविधानात् पदान्तादित्यर्थलभ्यं वा।

(२३) पदे इत्यनुवृत्तं सामानाधिकरण्यानुरोधेन पञ्चम्या विपरिणमय्याह तस्मादिति तथाच ङम इति पदं ङमन्तपरं सौत्रत्वात् पदार्थैकदेशे ङमि ह्रस्वादित्यस्यान्वयः। ततश्च ङम् इति प्रथमं ह्रस्वादिति विशेषणसम्बन्धमनुभूय पश्चात् पदे विशेषणत्वेनान्वेति

समः सुटि। ८। ३। ५।

समो रुः स्यात् सुटि। अलोऽन्त्यस्य (२८४०)।

अत्रानुनासिकः पूर्वस्य तु (२४) वा।८।३।२।

अत्र रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात्।

अनुनासिकात्परोऽनुस्वारः। ८। ३। ४।

अनुनासिकं (२५) विहाय रोः पूर्वस्मात् परो ऽनुस्वारागमः स्यात्। खरवसानयोर्विसर्जनीयः (४६४०)।

विसर्ज्जनीयस्य सः। ८। ३। ३४।

खरि(२६) विसर्जनीयस्य स स्यात्। एतदपवादेन वा शरीति (७२४०) पाक्षिके विसर्गे प्राप्ते। *सम्पुङ्कानां सो वक्तव्यः (२७)*। संस्स्कर्त्ता-सँस्स्कर्त्ता। समो वा लोपमेके इति भाष्यम्। लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं

---

ङम इति पञ्चमीवचनात् अचीति सप्तमी षष्ठ्यर्थे तदाह अच इति ङमन्तं पदमिति किम् अमितीत्यादौ मा भूत्।

(२४) अत्र रुप्रकरणएवास्य सम्बन्धो नत्वग्रे ढलोपेइत्यादाविति सूचनार्थं, परस्य नित्यं सत्वम् पूर्वस्य तु वानुनासिकइतिद्योतनार्थं च इह तुशब्दः प्रयुक्त इति द्रष्टव्यम्।

(२५) अनुनासिकादिति ल्यब्लोपे पञ्चमीत्याह अनुनासिकं विहायेति।

(२६) मण्डूकप्लुत्या खरवसानयोरित्यतः खरीत्यनुवर्त्त्याह खरीति अवसानस्यानुवृत्तौ विसर्गविधेर्निर्विषयत्वापत्तेस्तत्परित्यागः।

(२७) सो वक्तव्य इति समः सुटीति, पुमः खय्यम्परे इति, नश्छव्यप्रशा-

रूपद्वयं त्रिसकारन्तूक्तमेव। तत्रानचि चेति (३२पृ०) सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम् अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयानामकारोपरि (२८) शर्षु च पाठस्योपसंख्यातत्वेनाऽनुस्वारस्याप्य (२९) च्त्वात्। अनुनासिकवतां त्रयाणां "शरः खय" इति ⁑ कद्वित्वे षट्। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश। एषामष्टादशानां तकारस्य द्वित्वे वचनान्तरेण (३०) पुनर्द्वित्वे तु एकतं द्वितं त्रितमिति चतुश्चत्वारिंशत्। अणोऽनुनासिकत्वे ऽष्टोत्तरशतम्।

## पुमः (३१) खय्यम्परे। ८।३।६।

अम्परे खयि पुम्शब्दस्य रुः स्यात्। व्युत्पत्तिपक्षे(३२)ऽप्रत्यय

---

निति च सूत्रत्रये सकारः प्रश्लिष्यते तथाच तैः सूत्रैः सएव विधीयते नतु रुत्वेन सकारस्यासिद्धतया रुत्वाभावेन विसर्गाप्रवृत्तिरिति भावः।

(२८) अकारोपरीति इकारोपरीतिपाठे तु पयःसु यशःस्वित्यादौ इण्परत्वेन षत्वप्रसङ्ग इति भावः।

(२९) अनुस्वारस्यापीति अपिना विसर्गादेः संग्रहः नचैषामच्त्वे हरिं नमति विष्णुः करोतीत्यादौ यण्प्रसङ्गः त्रिपादीस्थत्वेन यणादिकं प्रत्यनुस्वारविसर्गादीनामसिद्धेः।

⁑ शरः परस्य खयो द्वे स्तः इति ८।४।४७ सूत्रस्थवार्त्तिकार्थः।

(३०) एकस्मिन् लक्ष्ये एकलक्षणस्य सकृदेव प्रवृत्तेर्नियमादाह वचनान्तरेणेति तेन अचो रहाभ्यामिति (३८पृ०) द्वित्वे कृतेऽपि यणोमय इति (३६पृ०) द्वित्वकरणे न बाधकमिति भावः।

(३१) पुमइति संयोगान्तलोपे कृतेऽवशिष्टस्यानुकरणमिदम् अम्परे इति बहुव्रीहिः।

(३२) व्युत्पत्तिपक्षे इति उणादीनामव्युत्पन्नत्वं व्युत्पन्नत्वञ्चेत्युभयमप्याकरे स्थितं

स्येति षत्वपर्युदासात्+क⌒पयोः प्राप्तौ, अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ । *संपुङ्कानामिति सः(११९०)। पुंस्कोकिलः । पुंस्सुतः-पुँस्सुतः । अम्परे किम् । पुंक्षीरम् । खयि किम् । पुंदासः । *ख्याजादेशे न *। पुंख्यानम् ।

नश्छव्यप्रशान् । ८ । ३ । ७ ।

अम्परे छवि नकारान्तस्य पदस्य रुः स्यात् । न तु प्रशान्-शब्दस्य। विसर्गः सत्वं श्चुत्वम् । शार्ङ्गिँश्छिन्धि शार्ङ्गिंश्छिन्धि । चक्रिँस्त्रायस्व चक्रिंस्त्रायस्व । पदस्य किम् हन्ति । अम्परे किम् । सन्त्सरुः खड्गमुष्टिः । अप्रशान् किम् प्रशान्तनोति ।

नॄन् (३३) पे । ८ । ३ । १० ।

नॄनित्यस्य रुः स्याद्वा पकारे परे ।

कुप्वोः+क≍पौ च । ८ । ३ । ३७ ।

तत्र व्युत्पत्तिपक्षे प्रकृतिप्रत्ययविभागसद्भावेन पूञो डुम्सुनिति डुम्-सुनि कृते सिद्धस्य पुम्स् इति शब्दस्य सान्तप्रत्ययान्ततया इदुदुपधस्य चाप्रत्ययस्येति सूत्रे प्रत्ययावयवभिन्नस्य रोः स्थाने षत्वविधानेनात्र तस्याप्रवृत्तेः कुप्वोः+क≍पाविति सूत्रेण विधेययोः+क⌒पयोः प्रसङ्ग इति भावः । अव्युत्पत्तिपक्षे त्विति तत्पक्षे प्रकृतिप्रत्ययविभा-गाभावादिति भावः षत्वेति इदमनुनासिकपक्षे, अनुस्वारपक्षे तु कुप्वो-रित्यस्यैव प्राप्तिरनुस्वारव्यवधानेन इदुपधत्वाभावात् ।

(२२) नॄनिति द्वितीयान्तानुकरणं सौत्रत्वात् षष्ठ्या लुक्, सौत्रत्वादेव न-लोपो न । एवं कानित्यत्रापि । पद्धत्यत्राकार उच्चारणार्थः ।

कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपाध्मानीयौ स्तः चाद्विसर्गः (३४)। येन (३५) नाप्राप्तइति न्यायेन विसर्जनीयस्य सइत्यस्यापवादोऽयम् नतु शर्परे विसर्जनीय-इत्यस्य (७२४०)। तेन वासःचौममित्यादौ विसर्ग एव। नॄ⌒पाहि। नॄं⌒पाहि—नॄँःपाहि—नॄँःपाहि—नॄन् पाहि।

## कान् (३६) आम्रेड़िते। ८। ३। १२।

कान्नकारस्य रुः स्यादाम्रेड़िते परे। संपुङ्कानामिति सः। (६६४०) यद्वा (३७)।

## कस्कादिषु च। ८। ३। ४८।

एभ्विण (३८) उत्तरस्य विसर्गस्य षःस्यादन्यस्य तु+क⌒पयो

---

(३४) चाद्विसर्ग इति शर्परेइति ८।३।३५सूत्रात्तदनुकर्षस्वकारेणेति भावः।

(३५) येन नेति येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकइति न्यायेनेत्यर्थः। येनेत्यादेर्यत्कर्त्तृकावश्यप्राप्तौ यो विधिरारभ्यते इत्यर्थः नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् प्राप्तेइति भावे क्तः। तदप्राप्तियोग्य-विषयेऽचारितार्थ्यादि हि बाधकत्वे बीजम्। शब्देन्दु०।

(३६) कानिति कान्कानितिवाच्ये आम्रेड़ितग्रहणं यत्र द्विरुक्तिस्तत्रैव तेन कान् ? कान् पश्यसीत्यादौ न, अत्र प्रथमकिंशब्दस्य प्रश्नार्थकत्वात् द्वितीयस्य कुत्सितार्थकत्वाच्च कान् ? कुत्सितान् पश्यसीति तदर्थस्ते नानयोर्न द्वित्वरूपता।

(३७) संपुंकानामिति, वार्त्तिके संकान्ग्रहणं त्यक्तुं शक्यमित्याशयेनाह यद्वेति पुंग्रहणन्त्वावश्यकमेवान्यथानुनासिकपक्षे इण्परत्वेन षत्वापत्तिः

(३८) एभ्विणइति गणे कृतसत्वषत्वानामेव पाठादिति भावः। कस्कः कौत

रपवादइति सः। काँस्कान् कांस्कान्। कस्कः। कौतस्कुतः। सर्पिष्कुण्डिका। धनुष्कपालम्। आकृतिगणोऽयम्।

**संहितायाम् (३९)। ६। १। ७२।**

इत्यधिकृत्य।

**छे च। ६। १। ७३।**

ह्रस्वस्य (४०) छे परे तुगागमः स्यात्संहितायाम्। चुत्वस्यासिद्धत्वाज्जश्त्वेन दः। ततश्चर्त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः। तस्य चर्त्वेन चः। चुत्वस्यासिद्धत्वाच्चोः कुरिति(१६५पृ०) कुत्वं न। शिवच्छाया स्वच्छा (४१)।

**आङ्माङोश्च। ६। १। ७४।**

एतयोश्छे परे तुक् स्यात्। पदान्ताद्वेति (७१पृ०) विकल्पापवादः। आच्छादयति। मा च्छिदत्।

**दीर्घात्। ६। १। ७५।**

---

कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्कः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बर्हिष्पलम् यजुष्पात्रम् अयस्कान्तः तमस्काण्डः मेदस्पिण्डः भास्करः अहस्करः। आकृतिगणोऽयम्।

(३९) संहितायामिति स्वारसिकार्धमात्राविलम्बेनोच्चारणं संहिता तत आधिक्ये नैवैतदधिकारस्यास्य प्रवृत्तिरिति द्रष्टव्यम्।

(४०) ह्रस्वस्य पिति कृति तुगित्यतः ह्रस्वस्येति पदं तुक्पदं चानुवर्त्त्यं ह्रस्वस्येति तुगागम इति च।

(४१) स्वशब्दे उपपदे छ्यतेः के स्वच्छशब्दो निर्मले रूढः।

दीर्घाच्छे परे तुक् स्यात्। दीर्घस्यायं (४२) तुक् न तु ह्रस्य सेनासुराच्छायेति (२६८६०) ज्ञापकात्। चेच्छिद्यते।

**पदान्ताद्वा। ६। १। ७६।**

दीर्घात् (४३) पदान्तात् छेपरे तुग् वा स्यात्। लक्ष्मीछाया-लक्ष्मीच्छाया।

हल्सन्धिप्रकरणम्।

---

(४२) दीर्घादिति षष्ठ्यर्थे पञ्चमी तदाह दीर्घस्यायमिति पञ्चम्यन्तार्थकत्वे तुकः कित्त्वेन छकारोत्तरत्वमेव स्यात् तथाच सुराच्छायेति निर्देशो न स्यादिति भावः।

(४३) दीर्घात् पदान्तादित्यस्य दीर्घस्य पदान्तस्येत्यर्थः।

विसर्जनीयस्य (१) (६६पृ०) सः। विष्णुस्त्राता।

## शर्परे विसर्ज्जनीयः। ८। ३। ३५।

शर्परे (२) खरि विसर्जनीयस्य विसर्ज्जनीयो न त्वन्यत् (३)। कःत्सरुः। घनाघनः क्षोभणः। इह यथायथं सत्वं जिह्वामूलीयश्च न।

## वा शरि।। ८। ३। ३६।

शरि परे विसर्ज्जनीयस्य विसर्ज्जनीय एव वा स्यात्। हरिः शेते-हरिश्शेते। *खर्परे शरि वा विसर्गलोपो वक्तव्यः *। रामः-स्थाता—राम-स्थाता। हरिः-स्फुरति—हरिस्फुरति पक्षे विसर्गे सत्वे च त्रैरूप्यम्। कुप्वोः+क ≍पौ च (६८पृ०) क+करोति—कः करोति। क+खनति—कःखनति। क≍पचति—कः पचति।

## सोऽपदादौ। ८। ३। ३८।

विसर्ज्जनीयस्य सः स्यादपाद्योः (४) कुप्वोः परयोः। *पाश

---

(१) विसर्जनीयस्येति प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शन
च्चारितम्।

(२) शर्परे इति बहुव्रीहिः विशेष्यस्य अवध्यवधिमतोः साजात्यात् वि
र्जनीयाभिन्नः खरेवेत्याह खरीति।

(३) विसर्गस्य विसर्गविधौ फलमाह न त्वन्यदिति अन्यदेव विद्धयो
इत्यादि।

(४) अपदादाविति। सौत्रत्वादेकवचनान्तत्वेऽप्यवहृतयोः कुप्वोर्विशेष
त्वादाद्यपदाद्योरिति।

**ञमङणनम् ७ । झभञ् ८ । घढधष् ९ । जबगडदश् १० । खफछठथचटतव् ११ । कपय् १२ । शषसर् १३ । हल् १४ ।** इति माहेश्वराणि[1] सूत्राण्यणादिसंज्ञार्थानि ॥

एषामन्त्या[2] इतः । लण्सूत्रेऽकारश्च[3] । हकारादिष्वकार उच्चारणार्थः[4] । **हलन्त्यम् ।१।३।३।** हलिति सूत्रेऽन्त्यमित्स्यात् । **आदिरन्त्येन[5] सहेता ।१।१।७१।** अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । इति

---

लाभात्पृथगाकारादयो नोपदिष्टास्तथा ऋऌवर्णयोरपि सावर्ण्यादृकारोपदेशेनैवोभयसिद्धेः किं पृथगुपदेशेन । न च जातिपक्षे ऋऌवर्णयोः पृथगुपदेश आवश्यकस्तयोर्भिन्नजातित्वादिति वाच्यम् । सावर्ण्यादेवैकजात्युपदेशे जात्यन्तरस्यापि लाभात् । ऋऌवर्णयोः प्रत्येकं त्रिंशतः संज्ञासिद्धये 'अणुदित्सवर्णस्य–' इति सूत्रे अण्ग्रहणस्य जातिपक्षेप्यावश्यकत्वादिति चेत् । अत्राहुः–ऋऌवर्णयोः सावर्ण्यस्यानित्यतां ज्ञापयितुमुभयोरुपदेशः, तत्फलं तु कॢप्ता शिखा यस्य कॢप्तशिखः, तस्य दूरात्संबोधने कॢ३प्तशिखेति प्लुतः । ऋऌवर्णयोः सावर्ण्यस्य नित्यत्वे तु 'अनृतः' इति पर्युदासादृकारस्येव ऌकारस्यापि प्लुतो न स्यात्–इति । समाधानान्तरमपि 'ओर्गुणः' इत्यत्र दर्शयिष्यते ॥—**हयवरट्** । टोऽनुबन्धोऽट्संज्ञार्थः । हकारोपदेशस्तु अट्अश्हश्हण्ग्रहणेषु हकारग्रहणार्थः । अर्हेण । 'अड्व्यवायेऽपि' इति णत्वम् । देवा हसन्ति । 'भोभगो–' इति रोर्यत्वम् । देवो हसति । 'हशि च' इत्युत्वम् । लिलिहिढ्वे लिलिहिढ्वे । 'विभाषेटः' इति वा ढः ॥—**लण्** । णकारोऽनुबन्धोऽण्इण्यण्संज्ञार्थः । नन्वणिति क्वचित्पूर्वणकारेण गृह्यते क्वचित्तु परेण णकारेण । इणिति तु परणकारेणैव । तथा च निःसंदेहार्थमनुबन्धान्तरमेव कर्तुमुचितम् । सत्यम् । 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्' इति परिभाषाज्ञापनाय पुनर्णकारानुबन्ध इति स्थितमाकरे ॥—**ञमङणनम्** । मकार इह अम्यम्ङम्ञम्संज्ञार्थः ॥—**झभञ्** । ञकारो यञ्संज्ञार्थः ॥—**घढधष्** इति षकारस्तु झष्भष्संज्ञार्थः ॥—**जबगडदश्** इति शोऽनुबन्धोऽश्हश्वश्झश्जश्बश्संज्ञार्थः ॥—**खफछठथचटतव्** इति सूत्रे वकारस्तु छव्संज्ञार्थः ॥—**कपय्** इति यकारो यय्मय्झय्खय्चय्संज्ञार्थः ॥—**शषसर्** इति रेफस्तु यर्झर्खर्चर्शर्संज्ञार्थः ॥—**हल्** इति लकारः अल्हल्वल्रल्झल्शल्संज्ञार्थः । पुनर्हकारोपदेशस्तु वल्रल्झल्शल्षु हकारग्रहणार्थः । रुदिहि स्वपिहि 'रुदादिभ्यः सार्वधातुके' इति वलादिलक्षण इट् । लिहित्वा लेहित्वा 'न क्त्वा सेट्' इति निषेधं बाधित्वा 'रलो व्युपधाद्–' इति वा कित्वम् । अदाग्धाम् । घत्वस्यासिद्धत्वेऽपि हकारस्य झल्त्वात् 'झलो झलि' इति सलोपः ॥ 'अलिक्षत्' । 'शलः–' इति क्सः । ननु पुनर्हकारोपदेशस्यावश्यकत्वेऽपि शर्मध्य एव हकारं पठित्वा 'अलोन्त्यस्य' 'हलोऽनन्तराः संयोगः' 'झलो झलि' 'शल इगुपधा–' इत्यादि सूत्राणि यावन्ति लानुबन्धानि तानि 'अरोन्त्यस्य' 'हरोऽनन्तराः' इत्येवंरूपेण रेफानुबन्धान्येव च कृत्वा 'हल्' इति पृथक् सूत्रं त्यज्यताम् । मैवम् । तथाहि सति हरिर्हसति हरिर्हरिरित्यादि न सिध्येत् । 'खरवसानयोर्विसर्जनीयः' 'वा शरि' इत्यादिप्रसङ्गात् । अतो 'हल्' इति सूत्रमावश्यकमेव । एवं च 'हलिति सूत्रेन्त्यम्–' इति वक्ष्यमाणग्रन्थोऽपि स्वरसतः संगच्छते ॥—**अणादिसंज्ञार्थानी**ति । अणादिसंज्ञा अर्थः प्रयोजनं येषां तानीति विग्रहः । अणादिसंज्ञाभ्य इमानि इत्यस्वपदविग्रहो वा । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च' इति वक्ष्यमाणत्वात् ॥—**एषामन्त्या इत** इति । एषां सूत्राणामन्त्या णादयो 'हलन्त्यम्' इत्यनुपदवक्ष्यमाणेनेत्संज्ञका इत्यर्थः ॥—**लण्सूत्रेऽकारश्चे**ति । अनन्त्यत्वात्पृथगुक्तिः । वचनविपरिणामेन इदिति संबध्यते । इत्संज्ञा चास्य 'उपदेशेऽजनुनासिक इत्' इत्यनेन । एवं च णादिभिरिद्भिः 'आदिरन्त्येन–' इति वक्ष्यमाणेन प्रत्याहारग्रहणात् 'अणादिसंज्ञार्थानि' इति यदुक्तं तत्संगच्छत इति भावः ॥—**अकार उच्चारणार्थ** इति । न तु लण्सूत्रस्थाकार इव प्रयोजनार्थः ॥—**हलन्त्यम्** । अन्तेऽवसाने भवमन्त्यम् । दिगादित्वाद्यत् । 'उपदेशेऽजनुनासिक इत्' इत्यत उपदेशे इति इदिति चात्रानुवर्तते । 'आदिरन्त्येन–' इति सूत्रेण सहान्योन्याश्रयमाशङ्क्य आवृत्त्या तं परिहरति ॥—**हलिति सूत्रेऽन्त्यमि**ति । हलि अन्त्यमिति विग्रहे 'सप्तमी' इति योगविभागात् 'सुप्सुपा' इति वा समास इति भावः । यद्वा षष्ठीतत्पुरुषोऽयं, 'हलिति सूत्रस्यान्त्यमित्स्यात्' इति व्याख्यानसंभवात् ॥—**आदिरन्त्येन सहेता** । अन्त्येनेति किम् । सुडिति प्रत्याहारस्तृतीयैकवचनावयवेन मा भूदिति **काशिकाकृत्** । यद्यपि टकारान्तसंघस्य टाटकारोप्यन्तो भवति, तथाप्यन्त्येनेति ग्रहणसामर्थ्यादन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेनैव प्रत्याहारः, नहि टाटकारे 'हलन्त्यम्' इतीत्संज्ञा प्रवर्तते । न चैवं रप्रत्याहारासिद्धिः ।

---

१ माहेश्वराणीति—महेश्वरादागतानीत्यर्थः । एतेन श्रुतितुल्यमूलत्वं वेदाङ्गत्वं प्रमाणत्वं च सूचयति । महेश्वरेण प्रोक्तानीति वार्थः । २ संज्ञार्थत्वमुपपादयति—एषामिति । ३ अकारश्चेति—तेन रप्रत्याहारसिद्धिः । इदं प्राचामनुरोधेन, पाणिनेस्तु नायमभिप्रायः, यदि हि तथाभिप्रैष्यत् तर्हि 'अतो ल्रान्तस्य' इति सूत्रे लग्रहणं नाकरिष्यत् । 'उरण्' इतिसूत्रे लपरोऽपि विधेय इति सिद्धमुपल्कारीयतीति रूपम् । ध्वनितं चेदं तुल्यास्येतिसूत्रे भाष्ये । ४ हलादिसंज्ञार्थ इति तु न भ्रमितव्यम्, पुनःपुनरुच्चारणवैयर्थ्यात् । ५ आदिरन्त्येनेति—इदं सूत्रमनित्यम्, 'अचिश्नुधातु–' इतिसूत्रे इण इत्येव सिद्धे य्वोरिति निर्देशात् इत्युक्तं बृहच्छब्देन्दुशेखरे ।

कल्पककाम्येष्विति(५) वाच्यम् *। पयस्पाशम्। यशस्कल्पम्। यशस्कम्। यशस्काम्यति। अनव्ययस्येति (६) वाच्यम्*। प्रातः कल्पम्। काम्ये रोरेवेति वाच्यम्*। नेह। गीः-काम्यति।

इणः (७) षः। ८। ३। ३९।

इणः परस्य विसर्गस्य षकारः स्यात्पूर्वविषये। सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति।

नमस्(८) पुरसोर्गत्योः। ८। ३। ४०।

गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः। नमस्करोति। साक्षात्प्रभृतित्वात् (१७४पृ०) कृञो योगे विभाषया गतिसंज्ञा। तदभावे नमःकरोति। पुरोऽव्ययमिति(१७३पृ०) नित्यं

(५) पाशकल्पेत्यादि सत्त्वप्रदर्शनार्थं नतु परिगणनार्थमन्यस्यासम्भवादिति बोध्यम्।

(६) अनव्ययस्येति अव्ययीभावातिरिक्ताव्ययभिन्नस्येत्यर्थस्तेन उपपयस्काम्यतीत्यादौ सत्वम्। शब्देन्दु ०।

(७) इण इति। सर्पिष्पाशमित्यादौ इदुदुपधस्येत्यनेन(७४पृ०)प्रत्ययस्यतया षत्वाप्राप्तौ तत्साधनाय गीष्पाशं दोष्पाशमित्यादौ षत्वार्थञ्चेदं सूत्रं प्रवृत्तम्। अत्रानव्ययस्येति अपदादाविति काम्ये रोरिति च संबध्यते। तेन उच्चैः कल्पम्, दोः पाश, गी:काम्यतीत्यादौ न षत्वम्। अतएवात्र प्रकरणे सर्वत्र सत्वमेव विधेयं तस्यैव इण उत्तरत्वे विसर्गस्थानिकत्वानेन षत्वमिति भाष्ये स्पष्टम्। शब्देन्दु ०।

(८) नम इत्यादि अत्र अपदादाविति न संबध्यते व्याख्यानात् तेन नमस्करोतीत्युदाहरणसङ्गतिः।

गतिसंज्ञा। पुरस्करोति। अगतित्वान्नेह। पूः पुरौ पुरः प्रवेष्टव्याः।

## इदुदुपधस्य (९) चाप्रत्ययस्य। ८। ३। ४१।

इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः। निष्प्रत्यूहम्। आविष्कृतम्। दुष्कृतम्। अप्रत्ययस्य किम्। अग्निः करोति। वायुः करोति। एकादेशशास्त्रनिमित्तकस्य (१०) न षत्वम् कस्कादिषु (६९पृ०) भ्रातुष्पुत्रशब्दस्य पाठात्। तेनेह न मातुःकृपा। मुहुसः प्रतिषेधः। मुहुःकामा।

## तिरसोऽन्यतरस्याम्। ८। ३। ४२।

तिरसः (११) सो वा स्यात् कुप्वोः। तिरस्कर्त्ता। तिरःकर्त्ता।

## द्विस्त्रिश्चतुरिति कृत्वोऽर्थे। ८। ३। ४३।

कृत्वोऽर्थे वर्त्तमानानामेषां विसर्गस्य षकारो वा स्यात् कुप्वोः।

(९) इदुदुपधस्येति इदुतौ उपधे यस्य समुदायस्य तस्यावयवीभूतस्य विसर्गस्य ष इत्यर्थः अप्रत्यय इति पर्य्युदासो लाघवात् प्रत्ययपदञ्च प्रत्ययसम्बन्धिपरं तथा च प्रत्ययसम्बन्धिभिन्नस्येति विसर्गविशेषणम्। तेन कविभिः कृतमित्यादौ इदुपधस्यापि विसर्गस्य प्रत्ययसम्बन्धित्वात् न षत्वं सम्बन्धित्वञ्च अवयवित्वेन स्थानित्वेन चेत्यन्यदेतत्।

(१०) एकादेशेति एकादेशशास्त्रनिमित्तेतः (१०२पृ०) परकृस्थानिकत्वेन विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोध्यम्। इदुदिति तपरकरणं किं गीःकाम्यति पूःकाम्यतीत्यादौ दीर्घोपधे मा भूत्।

(११) तिरस इति गतिसंज्ञकमात्रस्यैव न ग्रहणं तेन अन्तर्द्धावेव तिरसो गतित्वेन (३२४पृ०) पराभवार्थकतिरस्कारप्रयोगेऽपि भवत्येव।

द्विष्करोति—द्विःकरोति इत्यादि। क्त्वोऽर्थे (७२२सू०) किम्। चतुष्कपालः (१२)।

## इसुसोः (१३) सामर्थ्ये। ८। ३। ४४।

एतयोर्विसर्गस्य षः स्याद्वा कुप्वोः। सर्पिष्करोति—सर्पिः करोति। धनुष्करोति—धनुः करोति। सामर्थ्यमिह व्यपेक्षा (१४)। सामर्थ्ये किम्। तिष्ठतु सर्पिः पिब त्वमुदकम्।

## नित्यं समासेऽनुत्तरपदस्थस्य। ८। ३। ४५।

इसुसोर्विसर्गस्यानुत्तरपदस्थस्य समासे नित्यं षः स्यात् कुप्वोः

---

(१२) चतुष्कपाल इति चतुर्भिः कपालैः संस्कृत इति अत्रापि इदुदुपधस्येति नित्यं षत्वम्।

(१३) इसुसोरिति। प्रातिपदिकावयवावेतौ गृह्येते तेन पेचुः काष्ठैः, सख्युः पाकः, कविभिः कृतमित्यादौ न प्रसङ्गः तत्तत्स्थाने इसुसोः प्रातिपदिकावयवत्वाभावात्।

(१४) सामर्थ्यमन्वयबोधयोग्याकाङ्क्षेत्याह व्यपेक्षेति तत्रायं विशेषः 'अधात्वभिहितं समानाधिकरणमसमर्थवद्भवती'त्युक्तेः सर्पिःपवित्रमित्यादौ न षत्वं तयोः समानाधिकरण्येन सामर्थ्येऽपि असमर्थतुल्यत्वात् सर्पिष्पीयते इत्यादौ तु षत्वं स्यादेव तयोः सामानाधिकरण्येऽपि धातुसमभिव्याहृतप्रत्ययार्थेन सामानाधिकरण्यात् अधात्वभिहितमित्यनेन तत्पर्युदासात्। सर्पिर्धनुःशब्दावव्युत्पन्नावेव 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति भाष्योक्तेः चतुष्पादो गर्भिण्येति (३६३सू) सूत्रनिर्देशरूपज्ञापकादपि उणादीनामव्युत्पत्तिपक्षः पाणिनेरभिमतोऽन्यथा तच्छब्दानामुणादिप्रत्ययान्ततया तदुत्तरविसर्गस्य प्रत्ययसम्बन्धित्वात् सकारप्रवृत्तेरेवासम्भवे कुतस्तराम् सूत्रे षत्वनिर्देशसम्भावनेति द्रष्टव्यम्।

परयोः। सर्पिष्कुण्डिका। अनुत्तरपदस्थस्य किम्। परमसर्पिः कुण्डिका। कस्कादिषु (६८४०) सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थो व्यपेक्षायां नित्यार्थश्च।

अतः (१५) कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। ८। ३। ४६।

अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात् करोत्यादिषु परेषु नतूत्तरपदस्थस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रम्। अयः सहिता कुशा अयस्कुशा। अयस्कर्णी। अतः किम् गीःकारः। अनव्ययस्य किम्। स्वःकामः। समासे किम्। यशःकरोति। अनुत्तरपस्थस्य किम्। परमयशःकारः।

अधः शिरसी पदे। ८। ३। ४७।

एतयोर्व्विसर्गस्य सादेशः स्यात्पदशब्दे परे। अधस्पदम्। शिरस्पदम्। समासइत्येव। अधः पदम्। शिरः पदम्। अनुत्तरपदस्थस्येत्येव। परमशिरःपदम्। कस्कादिषु (६८४०) च। भास्करः (१६)। इति विसर्गसन्धिः।

---

(१५) अतइति कृशब्देन तदादिग्रहणम् तेन कृधातुनिष्पन्नकृदन्तशब्दमात्रस्य ग्रहणम् समासे तस्यैव घटकत्वसम्भवात् अतइति तपरकरणं किं भाः कार इत्यादौ मा भूत्।

(१६) तपरकरणे भास्करस्य कथं स इत्याशङ्क्य कस्कादित्वात्सत्वमित्याह भास्कर इति।

स्वौजसमौडिति (८६पृ०) सुप्रत्यये शिवस् अर्च्य इति स्थिते।

**ससजुषो रुः। ८। २। ६६।**

पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात्(४६पृ०)। जश्त्वापवादः।

**अतो रोरप्लुतादप्लुते। ६। १। ११३।**

अप्लुतादतः परस्य रोरुत् स्यादप्लुतेऽति। भोभगो अघो इति (७८पृ०) प्राप्तस्य यत्वस्यापवादः। उत्त्वं प्रति रुत्वस्यासिद्धत्वन्तु न भवति रुत्वमनूद्य उत्त्वविधेः सामर्थ्यात्।

**प्रथमयोः पूर्व्वसवर्णः। ६। १। १०२।**

अकः (१) प्रथमद्वितीययोरचि परे पूर्व्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते।

**नादिचि। ६। १। १०४।**

अवर्णादिचि परे न पूर्व्वसवर्णदीर्घः। आद्गुणः(४२पृ०)(२)। एङः पदान्तादति(५०पृ०)। शिवोऽर्च्यः। अत इति तपरः किम्। देवा

---

(१) प्रथमयोरिति प्रथमाशब्दः प्रथमाद्वितीयासमुदाये गौणः द्विवचनं तु समुदायापेक्षया। इकोयणचीति सूत्रात् (३२पृ०) अचीति' अकः सवर्णे दीर्घ इत्यतः (४९पृ०) अक इति, दीर्घ इति च, एकः पूर्व्वपरयोरिति (४२पृ०) सूत्रस्यानुवर्त्त्य योजयन्नाह अकइत्यादि। अचीति किं हरिः कविः। अकइति किम् गावौ नावौ। हरी इत्यादाविव हर्य्योरित्यत्रापि पूर्व्वसवर्णदीर्घवारणाय प्रथमयोरित्युक्तम्।

(२) अपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिरिति न्यायात् नादिचीति दीर्घरूपापवादे निषिद्धे उत्सर्गस्य आद्गुणइत्यस्य प्रवृत्तिरित्याह आद्गुणइति

अत। अतीति तपरः किम्। ख आगन्ता। अप्लुतात्किम्। एहि सुस्रोत३ः (३) अत्र स्नाहि। प्लुतस्यासिद्धत्वादतः परोऽयम्। अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। तपरकरणस्य तु न सामर्थ्यं दीर्घनिवृत्त्या चरितार्थत्वात्। अप्लुते किम्। तिष्ठतु पय अ३ग्निदत्त। गुरोरनृत इति (५४४०) प्लुतः।

## हशि च। ६। १। ११४।

अप्लुतादतः परस्य रोरुत् स्याद्धशि। शिवो वन्द्यः। रोरि- (७६६०) त्युकारानुबन्धग्रहणान्नेह प्रातरत्र। ध्मातर्गच्छ। देवास् इह इति स्थिते। रुत्वम्।

## भोभगो अघो अवर्णपूर्वस्य योऽशि।८।३।१७।

एतत्पूर्वस्य रोर्यादेशः स्यादशि परे। असन्धिः सौत्रः (४)। लोपः शाकल्यस्य(४१४०)। देवा इह। देवायिह। अशि किम्। देवाः सन्ति। यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात्। न ह्ययमल्विधिः (२२४०) (५) रोरितिसमुदायरूपाश्रयणात्। भोस् भगोस् अघोस् इति सकारान्ता निपाताः। तेषां रोर्यत्वे कृते

(३) सुस्रोतःशब्दः कस्यचित् संज्ञा तत्सम्बुद्धौ दूराद्धूते चेति (५४४०) प्लुतः।

(४) सूत्रे कृतः सौत्रः एतच्च भगोऽघोशब्दयोरोकारान्ततामतेन सति तु सान्तत्वमते असन्धिरेव न्याय्य इति बोध्यम्।

(५) रोरुकारस्यानुबन्धतया रेफमात्रविधानेन तदेव विसर्गस्थानि, तथा चानल्विधिरिति निषेधात् स्थानिवद्भावमशक्याह नह्ययमिति

**व्योर्लघुप्रयत्नतरः शाकटायनस्य। ८। ३। १८।**

पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे। यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः।

**ओतो गार्ग्यस्य। ८। ३। २०।**

ओकारात्परस्य पदान्तस्य लघुप्रयत्नस्य यकारस्य (६) नित्यं लोपः स्यात्। गार्ग्यग्रहणं पूजार्थम्। भो अच्युत। अलघुप्रयत्नपक्षे भोयच्युत। पदान्तस्य किम् तोयम्।

**उञि च पदे। ८। ३। २१।**

अवर्णपूर्व्वयोः पदान्तयोर्यवयोर्वा लोप उञि परे। स उ एकाग्निः। पदे किम्। तन्त्रयुतम् (७)। वेञः संप्रसारणे रूपम्। यदि तु प्रतिपदोक्तो निपात उञिति गृह्यते। तर्हि उत्तरार्थं (८) पदग्रहणम्।

**हलि सर्वेषाम्। ८। ३। २२।**

---

तथाच अपहीदित्यत्र पहोऽलिटि दीर्घस्य स्थानिवद्भावेन इटईटीति यथा प्रवर्त्तते एवमिहापि विसर्गस्य रुत्वेन यत्वं प्रवर्त्तते इति भावः।

(६) ओतइति सूत्रे व्योर्लघुप्रयत्नतरइत्यतः व्योरित्यस्यानुवृत्तिसम्भवेऽपि ओतःपरस्य वकारस्याभावाद्यकारमात्रस्यानुवृत्तिर्व्याख्यानादित्याशयेनाह यकारस्येति।

(७) तन्त्रे उतमिति छेदः वेञः संप्रसारणादुतमिति सिद्धं भूतपूर्व्वञकारमादाय उञयमिति बोध्यम्।

(८) उत्तरार्थमिति व्यवहितेऽपि ङमो ह्रस्वादित्यत्र(६५ पृ०)अनुवृत्त्यर्थं तत्।

भोभगोअघोअपूर्वस्य लघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्व्वेषां मतेन। भो देवाः। भो लक्ष्मि। भो विद्वद्वृन्द। भगो नमस्ते। अघो याहि। देवा नम्याः। देवा यान्ति। हलि किम्। देवायिह।

रोऽसुपि (९)। ८। २। ६९।

अह्नो रेफादेशः स्यान्नतु सुपि। रोरपवादः। अहरहः। अहर्गणः। असुपि किम्। अहोभ्याम्। अत्राहन्निति (१८३७) रुत्वम्। *रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्*। अहो रूपम्। गतमहो रात्रिरेषा। एकदेशविकृतस्यानन्यत्वात् अहोरात्रः। अहो रथन्तरम्। *अहरादीनाम्पत्यादिषु वा रेफः*। विसर्गापवादः (१०)। अहर्पतिः। गीर्पतिः। धूर्पतिः। पक्षे विसर्गोपाध्मानीयौ।

रो रि। ८। ३। १४।

रेफस्य रेफे परे लोपः स्यात्।

ढ्रलोपे पूर्वस्य दीर्घोऽणः॰। ६। ३। १११।

ढरेफौ लोपयतीति(११)तथा तस्मिन्वर्णे अर्थाड्ढकाररेफात्मके

---

(९) रोऽसुपीति यदि पर्य्युदासस्तदा सुब्भिन्नस्य तत्सदृशस्य प्रत्ययस्यैव स्यात् नत्वहर्पतिरित्यादौ तस्मात् नञः प्रसज्यप्रतिषेधपरत्वाह नतु सुपीति।

(१०) विसर्गापवाद इति रेफस्यानुवाद्यतया तस्यैव तद्भावविधानं विसर्गनिवृत्त्यर्थमिति द्रष्टव्यम्।

(११) ढ्रलोप इति तत्पुरुषे षष्ठ्याद्यापत्तेरित्यादावश्यके रलोपे पूर्व्वाणो दीर्घ-

परे पूर्व्वस्याऽणो दीर्घः स्यात्। पुनारमते। हरीरम्यः। शम्भूराजते। अणः* किम्। तृढः। वृढः। तृह हिंसायाम्। वृह उद्यमने। पूर्व्वग्रहणमनुत्तरपदेऽपि पूर्व्वमात्रस्यैव दीर्घार्थम्। अजर्घाः (१२)। लीढः। मनस् रथ इत्यत रुत्वे कृते हशि चेत्युत्वे (७८ष्ठ०) रो रीति (८०ष्ठ०) लोपे च प्राप्ते।

## विप्रतिषेधे (१३) परङ्कार्य्यम्।१।४।२।

तुल्यबलविरोधे परङ्कार्य्यं स्यात्। इति लोपे प्राप्ते पूर्व्वत्रासिद्धमिति (१२ष्ठ०) रोरीत्यस्यासिद्धत्वादुत्वमेव। मनोरथः।

---

पत्तिर्बङ्कुशौहौ व्यधिकरणत्वादसाधुत्वापत्तिरतोव्याचष्टे ढरेफौ लोपयतीति। कर्म्मण्यणि उपपदसमासः। ढ इत्यकार उच्चारणार्थः॥

अत्राणु* पूर्व्वेण णकारेण व्याख्यानात्।

(१२) अजर्घा इति गृधेर्यङ्लुकि लङः सिपि शब्लुकि द्वित्वे सिपरेऽभावपक्षे लघूपधगुणे ऋटि इतश्चेतीकारलोपे (७१५ष्ठ०) हल्ङ्यादिलोपे (१११ष्ठ०) च भष्भावः जश्त्वम्। दश्चेति (७०१२१ष्ठ०) दकारस्थाने रुत्वपक्षे रो रीति (८०ष्ठ०) रकारलोपेऽनेन सूत्रेण दीर्घः।

(१३) विप्रतिपूर्व्वात् कर्म्मव्यतिहारे वर्त्तमानात् सेधो घञि परस्परविरोधार्थको विप्रतिषेधः। तत्र नित्यस्यावश्यकत्वात् अन्तरङ्गस्य शापकादिना प्राबल्यात्, अपवादस्य वचनप्रामाण्यात्, तेषामेव परशास्त्रं प्रति बाधकतया तद्भिन्न एवास्य विषय इति ध्वनयन्नाह तुल्यबलेति परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय (३०ष्ठ०) इत्युक्तेर्नित्यादीनामेव बलवत्त्वान्न तद्विषयेऽस्य प्रवृत्तिरिति भावः। अत्रेदं बोध्यम्। परस्मिन् कार्य्ये कृते यदि पूर्व्वस्यापि निमित्तमस्ति तदा क्वचित् तदपि भवति क्वचिन्न न भवतीत्यत्र लक्ष्यानुरोधात् व्यवस्था। तत्र भिन्न—

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।६।१।१३२।

अककारयोरेतत्तदोर्यः (१४) सुस्तस्य लोपः स्याद्धलि नतु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः (१५) किम् । एषको रुद्रः । अनञ्समासे किम् असश्शिवः । हलि किम् । एषोऽत्र ।

## सोऽचि लोपे चेत्पादपूरणम् ।६।१।१३४।

स इत्यस्य (१६) सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत ।

कीत्यत्र परत्वात् धिभावे कृतेऽपि पश्चादकच् । तदुक्तमभियुक्तैः पुनःप्रसङ्गविज्ञानात् सिद्धमिति । त्वं तुङ्कतादित्यत्र तु परत्वात् पूर्व्वं तातङि कृतेऽपि स्थानिवद्भावेन पश्चात् हुझल्भ्य (३१०९१०)इति धित्वं न 'सकृद्गतौ विप्रतिषेधेन यद्बाधितं तद्बाधितमेवे'ति न्यायात् ।

(१४) एतत्तदोरर्थगतसंख्याभिधायी यः सुरित्यर्थः तेन परमसइत्याद्युत्तरपदेऽपि तद्गतसंख्याभिधायित्वात् हलि परे सुलोपः । अन्यथा पञ्चम्यन्तताकरणे परमतदिति समुदायस्य प्रातिपदिकतया तत्प्रकृतित्वाभावान्न सुलोपप्रसङ्गः । एतज्ज्ञापकञ्च अनञ्समास इति सूत्रएव नञ्समासपर्य्युदासकरणम् ।

(१५) अकोः किं साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः । अकोरिति निषेध एव तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति परिभाषां ज्ञापयति तेन एतत्तदोर्ग्रहणेनैव साकच्कयोर्ग्रहणात् सुलोपप्रसक्तेरकोरिति निषेध इति बोध्यम् ।

(१६) स इति तच्छब्दस्य प्रथमैकवचनान्तस्यानुकरणमित्याह स इत्यस्येति ।

हलसंज्ञायाम् । **॥ हलन्त्यम् ।१।३।३।** उपदेशेऽन्त्यं हल् इत्स्यात् । उपदेश आद्योच्चारणम् । ततोऽणजित्यादिसंज्ञासिद्धौ । **॥ उपदेशेऽजनुनासिक इत् ।१।३।२।** उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा । प्रत्याहारेष्वितां न ग्रहणम् अनुनासिक इत्यादि निर्देशात् । नह्यत्र ककारे परेऽच्कार्यं दृश्यते । आदिरन्त्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते । **॥ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।१।२।२७।** उश्च ऊश्च ऊ३ श्च वः । वां काल इव कालो यस्य सोऽच्

---

लण्सूत्रस्थावर्णस्यानुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि इता प्रत्याहारात्तत्सिध्यति इति काशिकाकाराशयः । निष्कर्षस्त्विह 'स्वौजसमौट्–' इति सूत्रे दर्शयिष्यते । विस्तरस्तु शब्दकौस्तुभेऽनुसंधेयः । इतेति किम् । रप्रत्याहारो यथा स्यात् । स ह्यनुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि गृह्यते इत्युक्तम्, न चैतदितेत्यस्य विरहे लभ्यत इति शब्दकौस्तुभे स्थितम् । आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती संज्ञा मध्यगेषु विश्राम्यति' न त्वाद्यन्तयोः संज्ञास्वरूपान्तर्भावेन तयोः पारार्थ्यनिर्णयादित्याशयेनाह—**मध्यगानामिति** ।—**स्वस्य चेति** । 'स्वं रूपम्' इत्यनुवर्तत इति भावः । स्वं रूपं चादेरेव गृह्यते नान्त्यस्य । 'अन्त्येन' इत्यप्रधानतृतीयानिर्देशात् । सर्वनाम्न उत्सर्गतः प्रधानपरामर्शित्वात् । ननु स्वमित्यस्यानुवृत्तौ 'कः संज्ञी' इत्याकाङ्क्षायाः शान्तत्वादवयव्याक्षेपो न स्यात् । तथा च 'इको यणचि' इत्यादाविकारस्य स्थाने चकारः स्यादकारे परे इत्येवमर्थः स्यात् । मैवम् । आदेरेव संज्ञित्वे तु 'आदिरन्त्येन' इति संज्ञाकरणस्यैव वैयर्थ्यापत्तेः । किंच अण्अक्अच्अम्अशादीनां पृथग्निर्देशोऽपि व्यर्थः स्यात्, सर्वत्राकारस्यैव संज्ञित्वादिति दिक् । शब्दकौस्तुभे तु—आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धेऽन्त्यव्यावृत्त्यर्थमिदं सूत्रम्–इति स्थितम्॥ —**उपदेशेऽन्त्यं हलिति** । उपदेशे किम् । अग्निचित् सोमसुद् इति काशिका, अत्रेत्संज्ञायां लोपः स्यात् । न च तुको वैयर्थ्यम् । आगत्येत्यादौ चरितार्थत्वात् । न च क्विपः पित्त्वस्य वैयर्थ्यम् । अग्निचितावित्यादौ चरितार्थत्वात्–इति हरदत्तः । अन्त्यं किम् । मनिनो मकारस्य मा भूत् । सत्यां हीत्संज्ञायामन्त्यादचः परः स्यात् । वेश्म सद्म 'सर्वधातुभ्यो मनिन्' । हलिति किम् । भू सत्तायां भविता । न च प्रयोजनाभावान्नेत्त्वमिति वाच्यम् । सत्यामित्संज्ञायाम् 'ऊदितः' इति इड्विकल्पापत्तेः । अन्ये तु चिरिणोति जिरिणोति । इह धातोरन्त्यस्य मा भूत् । सत्यामित्संज्ञायामिदित इति नुम् स्यादित्याहुः ॥ —**आद्योच्चारणमिति** । आद्योच्चारणविषयीभूतो यः शब्दस्तस्यान्त्यं हलित्स्यादिति फलितोऽर्थः ॥—**उपदेशेऽजनु–**॥ उपदेशनमुपदेशः । भावे घञ् । उपदेशे किम् । अभ्र आँ अपः । समुच्चयार्थद्योतकोऽत्राङ् । 'आङोऽनुनासिकश्छन्दसि' इत्याकारोऽनुनासिकः । यद्यप्यत्र 'उञ ऊँ' इत्यत्रेवानुनासिकविधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम् । अच् किम् । मनिनो मकारस्य मा भूत् । नच 'हलन्त्यम्' इत्यन्त्यग्रहणसामर्थ्यादनन्त्यस्य मकारस्य न भवेदिति वाच्यम् । अलच्प्रत्ययादावतिप्रसङ्गवारणेन तस्य चरितार्थत्वात् । अनुनासिक इति किम् । 'ईक्ष दर्शने' । ईक्षितः । सत्यां हीत्संज्ञायां 'श्वीदितो निष्ठायाम्' इतीण् न स्यात् । यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वादनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमिति ध्वनयितुं नेहोपन्यस्तम् । नन्वेवं 'यरोऽनुनासिके–' इत्यत्र यरः पदान्तस्यानुनासिकशब्दे परे अनुनासिकशब्दः स्यादित्यर्थः प्रसज्येत 'स्वं रूपम्–' इति परिभाषोपस्थानात् संज्ञाकरणे तु 'अशब्दसंज्ञा' इति निषेधान्नायं दोष इति वाच्यम् । उक्तपरिभाषाया भाष्ये प्रत्याख्यानात् । 'उपान्मन्त्रकरणे' 'पुच्छभाण्डचीवराण् णिङ्' 'डमुण् नित्यम्' इत्यादिनिर्देशेन 'स्वं रूपम्' इति परिभाषाया अनुपस्थितिकल्पनात्सूत्रमतेपि दोषाभावात् । ननूक्तनिर्देशाश्रयणे प्रतिपत्तिगौरवमिति चेद्, अत एव निष्प्रयोजनमित्यनुक्त्वा मन्दप्रयोजनमित्युक्तम् । प्रतिज्ञायत इति प्रतिज्ञा । 'आतश्चोपसर्गे' इति कर्मण्यङ् । अनुनासिकस्य भाव आनुनासिक्यम् 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ् । प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः । केचित्तु–प्रतिज्ञानं प्रतिज्ञा सा अस्यास्तीति प्रतिज्ञम् । अर्शआद्यच् । प्रतिज्ञमानुनासिक्यमेषाम् इति विगृह्णन्ति । यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टः, तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ॥—**पाणिनीया इति** । पाणिनिना प्रोक्तं पाणिनीयं, 'वृद्धाच्छः,' तदधीयते विदन्ति वा पाणिनीयाः, 'तदधीते–' इत्यणः 'प्रोक्ताल्लुक्' इति लुक् । ननु रलयोरिति न्यूनं टकारस्यापि मध्यगत्वादत आह—**प्रत्याहारेष्विति** ॥ —**अनुनासिक इत्यादीति** । आदिशब्देन 'पापाणके कुत्सितैः' 'एङः पदान्तादति' इत्यादिग्राह्यम् ॥—**प्रत्याहारशब्देनेति** । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति प्रत्याहारः, 'करणाधिकरणयोश्च' इति ल्युटि प्राप्ते 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादधिकरणे घञ् ॥ यद्यपि योगमात्रमकारादिसंज्ञास्वतिप्रसक्तम्, तथापि योगरूढिरिति भावः ॥—**ऊकालोच् ह्रस्वदीर्घप्लुत** इति । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । ऊ इति त्रयाणां प्रश्लेषेण निर्देश इत्याह—**उश्च ऊश्च**

---

१ उश्च ऊश्चेति—कुक्कुटरुते उकारस्य प्रसिद्धत्वादकारादयो नोक्ताः सूत्रकारेण ।

सेमामविड्ढि प्रभृतिम्। इह ऋक्पाद एव गृह्यतइति वामनः। अविशेषाच्छ्लोकपादोऽपीत्यपरे। सैष दाशरथी-रामः। लोपे चेदिति किम्। स इच्छते। स एवमुक्त्वा। सत्येवेत्यवधारणान्तु स्यश्छन्दसि बहुलमिति पूर्वसूत्राद्बहुल-ग्रहणानुवृत्त्या लभ्यते। तेनेह न। सोऽह(उ०५।११८०)माजन्म-शुद्धानाम्।

इति स्वादिसन्धिः।

---

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १। २। ४५।**

धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वार्थवच्छब्दरूपं (१) प्रातिपदिकसंज्ञं स्यात्।

**कृत्तद्धितसमासाश्च। १। २। ४६।**

कृत्तद्धितान्तौ समासश्च प्रातिपदिकसंज्ञाः स्युः। पूर्व्वसूत्रेण सिद्धे (२) समासग्रहणन्नियमार्थम्। यत्र सङ्घाते पूर्व्वो

---

(१) स्वादिविधौ प्रातिपदिकाधिकारात्तत्संज्ञामेव प्रथममाह अर्थवदिति अर्थवदित्यनुगुणं विशेष्यमध्याहरति शब्दरूपमिति अधातुरप्रत्यय इति पुंलिङ्गनिर्द्देशस्तु परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्युक्तेः (२८०४०)। एतत्सूत्रे परसूत्रे चार्थवत्त्वमेतत्संज्ञाफलीभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वम् अन्यथा धातुरिति पर्य्युदासेन व्याख्यानाद्वाऽर्थवत्त्वे सदृशग्रहणेन सिद्धे उत्तरसूत्रे कृदादीनामनर्थकानामसिद्धेश्चार्थवत्त्वग्रहणं व्यर्थं स्यात्। अहन्निति धातौ, अकार्ष्टेत्यादिप्रत्ययान्ते च एतत्साध्यविभक्त्यनपेक्षत्वेऽपि तदितरानपेक्षत्वमस्त्येवेति अधातुरप्रत्यय इति तत्पर्य्युदासः एकदेशवर्णेऽर्थबोधजनकत्वाभावान्नातिप्रसङ्गः। अत्र प्रत्ययपदं प्रत्ययप्रत्ययान्तपरं तन्मात्रस्यैवोभयग्रहणादित्याह प्रत्ययं प्रत्ययान्तञ्चेति। अतएव भाष्ये 'न लोके केवलेन प्रत्ययेनार्थोऽवगम्यते केन तर्हि सप्रकृतिकेने'त्युक्तम्। हरिणाप्युक्तम्। 'धात्वादीनां विशुद्धानां लौकिकार्थो न विद्यते। कृत्तद्धितानामर्थश्च केवलनामलौकिकः। प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते' इति। भू सत्तायामित्यादौ कर्म्मण्यणित्यादौ चार्थकथनन्तु अलौकिकार्थकथनमात्रं प्रक्रियादशायामिति वेदितव्यम्।

(२) 'ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले। देवदत्तादयो वाक्ये

भागः पदं (३) तस्य चेद्भवति तर्हि समासस्यैवेति। तेन वाक्यस्य न।

प्रत्ययः। ३। १। १।

आपञ्चमपरिसमाप्तेरधिकारो (४)ऽयम्।

परश्च (५)। ३। १। २।

अयमपि तथा।

ङ्याप्प्रातिपदिकात्। ४। १। १।

---

तथैव सुर्निरर्थका' इत्युक्तेरखण्डवाक्यस्यापि बोधकत्वात्तस्यापि प्रातिपदिकत्वापत्त्या तदुत्तरं स्वादिप्रसङ्ग इति तन्निवारणायेदं नियमसूत्रमित्याह पूर्व्वसूत्रेणेति। 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति न्यायादेव प्रत्ययान्तत्वलाभात् कृत्तद्धितादीनामपि प्रत्ययत्वात् पूर्व्वसूत्रेण संज्ञासिद्धेरिति भावः।

(३) पदमिति स्वातन्त्र्येण प्रयोगार्हमर्थवदित्यर्थः। अनुकरणस्यानितिपरस्य प्रयोगासत्त्वेऽपि इतिपरस्य पृथक्प्रयोगार्हत्वात् गवित्ययमाहेत्यादौ न प्रसङ्गः अनुकरणस्य शब्दमात्रपरत्वात्।

(४) अधिकार इति संज्ञाधिकार इत्यर्थः संज्ञात्वावगमस्तु व्याख्यानात् विकरणागमादीनां तु न संज्ञा, प्रत्यय इति महासंज्ञया स्वस्वप्रकृत्यन्वितार्थप्रत्यायकस्यैव संज्ञात्वात् प्रकृत्यर्थत्वञ्च धातुपाठकोषादौ तत्सम्बन्धि बोधितत्वम्। अतएव गच्छवधाद्यादेशानां न संज्ञा तेषां स्थान्यर्थेनैवार्थवत्त्वात् न तु स्वार्थोऽस्ति अतएव कोषादौ तदर्थाकथनम्। तदर्थमेव भाष्ये स्वीयमर्थं प्रत्याययतीति प्रत्ययशब्दविग्रहे स्वीयपदोपादानम्।

(५) परश्चेति दिग्योगलक्षणे पञ्चम्याः परः पूर्व्वो वेत्यनियमेनाध्याहारे प्रसक्ते परएवेतिनियमार्थमिदं सूत्रम् तथा प्रकृत्यर्थमात्रविवक्षया

ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्यापञ्चमपरिसमाप्तेरधिकारः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात्। ङ्याब्भ्याम्माभूदित्येवमर्थम्।

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्यांभ्यस्ङसिभ्यां भ्यस्ङसोसाम्ङ्योस्सुप्। ४। १। २।**

ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाःस्युः। सुङसोरुकारेकारौ जशटङपाश्चेतः।

**विभक्तिश्च। १। ४। १०४।**

सुप्तिङौ विभक्तिसंज्ञौ स्तः। तत्र सुऔजसित्यादीनां सप्तानान्त्रिकाणाम्प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः।

**सुपः। १। ४। १०३।**

सुपस्त्रीणि (६) त्रीणि वचनानि एकैकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः।

केवलप्रकृतेः पचपठेत्यादेः प्रयोगो मा भूदिति प्रत्ययः परो भवत्येवेति नियमार्थं च। तेन केवला प्रकृतिः प्रत्ययो वा न प्रयोक्तव्य इति सिद्धम्।

(६) तिङस्त्रीणित्रीणीत्यतः त्रीणित्रीणीतिपदं तान्येकवचनद्विवचनबहुवचनान्येकश इति सूत्रञ्च तामोतिपद विहायानुवर्त्त्येह त्रीणीत्यादि। सुप इति सुप् प्रत्याहारात् षष्ठी। एकश एकैकमित्यर्थः।

द्व्येकयोर्द्विवचनैकवचने। १। ४। २२।

द्वित्वैकत्वयो (७) रेतौ स्तः।

बहुषु (८) बहुवचनम्। १। ४। २१।

बहुत्वे एतत्स्यात्। रुत्वविसर्गौ। रामाः।

सरूपाणामेकशेष एकविभक्तौ। १। २। ६४।

एकविभक्तौ यानि सरूपाण्येव (६) दृष्टानि तेषामेक एव (१०)

(७) द्व्येकयोरिति। द्व्येकशब्दौ संख्यापरौ न तु संख्येयपरावित्याह द्वित्वैकत्वयोरिति लौकिकप्रयोगे त्वादशतः संख्याः संख्येय इति भाष्योक्तेः संख्येयपरत्व एव साधुत्वम्। क्वचिदेकत्वावोधनेऽपि उत्सर्गत एकवचनं प्रयोक्तव्यं तेन पचतिकल्पमित्यादौ अव्ययेभ्यश्च व्यर्थैकवचनप्रयोगसिद्धिरिति कृत्तद्धितेति सूत्रभाष्ये स्पष्टमभिहितम्। शब्देन्दु०।

(८) बहुष्विति। त्रित्वादिपरार्द्धान्तसंख्याव्यापकधर्मविशेषो बहुत्वं तत्परो बहुशब्दो। बहुवचनं तु आश्रयगतं बहुत्वं धर्मं आरोप्य कृतम् दारा इत्यादौ च वाचकशब्दस्यैव बहुत्वं वाच्ये आरोप्यते स चारोपः इह्लोकव्यवहारानुसारादेवेति नातिप्रसङ्गः। भर्तृदारयोरग्नेजसोरित्यादि समासे तु नारोपो मानाभावात् द्व्येकयोरितिनिर्द्देशाच्च। एतेनैकस्मिन्नपि गुरवः समागता इत्यादि समर्थितम्। शब्देन्दु०।

(६) सरूपाण्येवेति इद्वोयूना तल्लक्षणश्चेदेव विशेष इत्यतः (४४४पृ०) एवकारोऽपकृष्यत इत्याह सरूपाण्येवेति एवेतिकरणात् जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्नैकशेषः श्यामृश्यसादावेकरूप्येऽपि औजसादौ विरूपत्वात्।

(१०) एकशेषस्यायमनैमित्तिकोऽतोऽन्तरङ्गत्वात् सुबुत्पत्तेः पूर्व्वमेवेति तद्विषये च द्वन्द्वप्राप्तिरिति बोध्यम्। एकशेषशब्दार्थश्च इतरनिवृत्तिपूर्व्व-

शिष्यते। प्रथमयोः पूर्व्वसवर्णः (७७सू०)। नादिचि (७७सू० वृद्धिरेचि (४२सू०)। रामौ।

**चुटू। १। ३। ७।**

प्रत्ययाद्यौ (११) चुटू इतौ स्तः। इति जस्य इत्संज्ञा।

**न विभक्तौ (१२) तुस्माः। १। ३। ४।**

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। इति सकारस्य नेत्त्वम्।

**अतो गुणे। ६। १। ९७।**

कमेकमात्रावस्थानं तदाह एक एवेति। शिष्यते इति शेषोऽवस्थानं तस्य सिद्धतया अन्यनिवृत्तिरेव विधेया तत्र शिष्यमाणं लुप्यमानार्थाभिधायीतिन्यायेन श्रूयमाणपदादन्यैव बोधः। धातुषु तु नास्य प्रवृत्तिरेकनिष्ठानेकव्यापाराणामिवानेकनिष्ठानामपि तेषामेकधातुतो बोधने बाधकाभावात् एकादिदशान्तसंख्यावाचिनामेकशेषद्वन्द्वौ न भवतोऽनभिधानात् विंशत्यादौ त्विष्ट एवैकशेष इति। शब्देन्दु०।

(११) आदिर्ञिटुडव इत्यत आदिरिति (३४२सू०) षः प्रत्ययस्येत्यतः (२१८सू०) प्रत्ययस्येत्यनुवर्त्त्य योजयन्नाह प्रत्ययाद्याविति। तेन वाचाट इत्यत्र आटचः नेत्त्वम्। टस्य प्रत्ययाद्याविति किं चागमादौ मा भूत्।

(१२) न विभक्ताविति हलन्त्यमित्यस्य (४सू०)निषेधोऽयम्। अनित्यमिदं तेन किमोऽदिति अतस्तकारेत्त्वात् क्वेति सिद्धम्। एतच्च प्राग्दिशीयत्वेन विभक्तिसंज्ञस्यापि इदमस्थमोर्मकारस्य ग्रहणार्थमुदित्करणात् ज्ञाप्यते इति विशेष्यम्। तत्र रामात् पचेरन्नित्यादौ तोः, रामम् पचध्वमित्यादौ मस्य नेत्त्वम्।

अपदान्ताद (१३) कारादुणे परतः पररूपमेकादेशः स्यात्। इति प्राप्ते परत्वात्पूर्वसवर्णदीर्घः। अतो गुणे इति हि पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति (१४) न्यायेनाकः सवर्णे दीर्घ (४६पृ०) इत्यस्यैवापवादो नतु प्रथमयोरित्यस्यापि (७७पृ०)। रामाः।

एकवचनं सम्बुद्धिः। २। ३। ४९।

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्।

एङ् (१५) ह्रस्वात्सम्बुद्धेः। ६। १। ६९।

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। सम्बुद्ध्याक्षिप्तस्याङ्गस्य (१६) ङ्ह्रस्वाभ्यां विशेषणान्नेह। हे कतरत् (१७) कुलेति। हे राम। हे रामौ। हे रामाः। एङ्ग्रहणं

(१३) उस्यपदान्तादित्यतः(उ० १७पृ०) अपदान्तादिति एङि पररूपमित्यतः (४७पृ०) पररूपञ्चानुवर्त्त्याङ्गापदान्तादित्यादि।

(१४) नोत्तरानिति अनन्तरापेक्षया उत्तरान् व्यवहितानित्यर्थः व्याख्यातञ्चैतत् प्राक् (४४पृ०)।

(१५) एङित्यादि। हल्ङ्याद्भ्य इत्यतः (१११पृ०)हलिति लोपो व्योरित्यतो (४२१पृ०) लोप इति चानुवर्त्त्य विभक्तिविपरिणामेनान्वयः कार्य्यः।

(१६) संबुद्ध्या क्षिप्तस्येति। संबुद्धेः प्रत्ययत्वेन 'यस्मात् स विहितस्तदादे'रिति परिभाषोपस्थापितस्येत्यर्थः। भाष्ये प्रत्यये गृह्यमाणे यस्मात् स विहित इत्याद्युपतिष्ठते इति परिभाषार्थो दर्शितः।

(१७) कतरदिति अत्र न हल्लोपः प्रकृत्यकारस्यादृङि परे लोपेनापहाराद्ध्रस्वपरत्वाभावादिति भावः

किम्। हे हरे। हे विष्णो। अत्र हि परत्वान्नित्यत्वाच्च सम्बुद्धिगुणे कृते ह्रस्वात्परत्वं (१८) नास्ति।

**अमि पूर्व्वः। ६। १। १०७।**

अकोऽम्यचि (१९) परतः पूर्व्वरूपमेकादेशः स्यात्। रामम्। रामौ।

**लशक्वतद्धिते (२०)। १। ३। ८।**

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः। इति शसः शस्ये-त्संज्ञा।

**तस्मा (२१) च्छसो नः पुंसि। ६। १। १०३।**

(१८) परत्वं नास्तीति। तथाच सूत्रे एङ्ग्रहणं कर्त्तव्यमिति भावः किञ्च लक्ष्मीसहितवाचकशब्दसम्बोधने ह्रस्वपार्थमेङ्ग्रहणमावश्यकम्। अतएव 'इमां किमाचामय से न चक्षुषी'इति नैषधीयप्रयोगे से इति पृथक् पदं सम्बोधनान्तं हे लक्ष्मीसहिते दमयन्तीत्यर्थात् एतच्च निग-रणचलनार्थेभ्यश्चेति सूत्रे मनोरमायामभिहितम्।

(१९) प्रथमयोरिति (७७सू०) पूर्व्वसवर्णदीर्घे प्राप्ते ह्रस्वरूपपूर्व्वरूपार्थोऽयमा-रम्भः। अतएव पूर्व्वसवर्ण इत्यनुवृत्त्यैव सिद्धे पूर्व्वग्रहणं दीर्घरूपवा-रणाय। इकः सवर्णे (४९सू०) इत्यतोऽक इति इको यणचीत्यतः (४२सू०) अचीति पदद्वयानुवृत्त्याऽकोऽम्यचीत्यादि। अमोऽवयवेऽचीत्यर्थः तेन न मकारसहितस्य पूर्व्वरूपम्।

(२०) अतद्धिते किं प्राणिस्थादात इति लच् (६८०सू०) चूडालः। लोमादिभ्यः श· (६८१सू०) लोमश इत्यादौ लादीनामित्त्वं न।

(२१) तस्मादिति तच्छब्देन सन्निहितः पूर्व्वसवर्णदीर्घ एव परामृश्यते न तु दीर्घमात्रं तेन गा· पश्येत्यादौ न नत्वम्।

पूर्व्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः स्यात् पुंसि।

## अट्कुप्वाङ्नुम्व्यवायेऽपि। ८।४।२।

अट्, कवर्गः, पवर्गः, आङ्, नुम्, च एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्याम्परस्य (२२) नस्य णः स्यात्समानपदे। पदव्यवायेऽपीति(४८२पृ०)निषेधम्बाधितुम् आङ्ग्रहणम्। नुम्-ग्रहणमनुस्वारोपलक्षणार्थम्। तन्नाकर्त्तुं शक्यम् अयोग(२३)वाहानामट्सूपदेशस्योक्तत्वात् (६७पृ०)। इति णत्वे प्राप्ते।

## पदान्तस्य। ८।४।३७।

पदान्तस्य नस्य णत्वन्न (२४) स्यात्। रामान्।

## यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्। १।४।१३।

यः प्रत्ययो यस्मात् क्रियते तदादि शब्दरूपन्तस्मिन् प्रत्यये परेऽङ्गसंज्ञं स्यात्। भवामि भविष्यामीत्यादौ विकरणविशिष्टस्याऽङ्गसंज्ञार्थन्तदादिग्रहणम्। विधिरिति किम्

(२२) रषाभ्यां नो णः इति (१०६पृ०) सूत्रमनुवर्त्त्याह रषाभ्यामिति। बाधितुमिति तेन पर्य्याणद्धमित्यादावुपसर्गरूपोपपदसमासेऽपि णत्वम्।
(२३) अयोगेति ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीयाः अट्स्विति अकारोपरीत्युक्तं प्राक् तेन बृंहणं बृंहणमित्यादौ णत्वम्।
(२४) न भाभूपूकमिगमीत्यादितः (७०२००पृ०) नेत्यनुवर्त्त्याह णत्वं नेति।

स्त्री इयती।(२५)प्रत्यये किम्। प्रत्ययविशिष्टस्य(२६) ततोऽप्यधिकस्य वा मा भूत्!

**अङ्गस्य। ६। ४। १।**

इत्यधिकृत्य।

**टाङसिङसामिनात्स्याः (२७)। ७। १। १२।**

अकारान्तादङ्गाट्टादीनाङ्क्रमादिनादय आदेशाः स्युः। णत्वम्। रामेण।

**सुपि च।(२८)। ७। ३। १०२।**

यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात्। रामाभ्याम्।

---

(२५) इयतीति इदंशब्दात् वतुपि किमिदम्भ्यां वो घ इति(६६८पृ०)घादेशे आयनेयीनीयियः फढखछघां प्रत्ययादीनामिति(२१८पृ०)घस्येयादेशे इदं किमोरीश्की (४७२पृ०) इतीशि यस्येति चेति (१२९पृ०) ईकारलोपे ङीपीयतीति सिद्धम् तत्र इयाश्रयवेकारपरतः स्त्रीशब्दस्येयङाद्यापत्तिः विधिग्रहणे तु नैष दोष इयप्रत्ययस्य स्त्रीशब्दादविधानादिति भावः।

(२६) प्रत्ययविशिष्टस्याङ्गसंज्ञायां वव्रश्चेत्यादिसिद्धिः उरदित्यादेशस्य (३०२५पृ०) परनिमित्तत्वाभावेन अचः परस्मिन्निति (२४पृ०) स्थानिवत्त्वाप्रवृत्त्या न संप्रसारणे संप्रसारणमिति(१६१पृ०)निषेधाभावात् अभ्यासस्य पुनरपि संप्रसारणं स्यात्। अधिकस्य तथात्वे देवदत्त ओदनमपचदित्यादौ देवदत्तशब्दोत्तरं सुपं निमित्तीकृत्य लङ् पर्यन्तस्याङ्गत्वात् तस्य लङ्परत्वेन देवत्यस्मात् पूर्व्वमडापत्तिः अङ्गसंज्ञायां प्रत्ययनिमित्तत्वाभावेन लङादिनिरूपिताङ्गस्यत्वर्थस्य दुर्लभत्वादिति भावः।

(२७) टाङसीति। अतोभिस ऐस्इत्यतः (८२पृ०) अत इत्यनुवर्त्तते।

(२८) सुपि चेति अतोदीर्घो यञीत्यनुवर्त्तते (३०८पृ०) यञीति वाच्यत्वात्त दादिविधिरित्याह यञादाविति।

क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा । **उच्चैरुदात्तः**[1] ।१।२।२९। ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । आये । **नीचैरनुदात्तः** ।१।२।३०। स्पष्टम् । अर्वाङ्[2] । **समाहारः स्वरितः** ।१।२।३१। उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञः स्यात् । **तस्यादित उदात्तमर्धह्रस्वम्** ।१।२।३२। ह्रस्वग्रहणमतन्त्रम् । स्वरितस्यादितोऽर्धमुदात्तं बोध्यम् । उत्तरार्धं तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा । 'क्व' वोऽश्वाः' । 'रथानां न येऽ३ राः' । 'शतचक्रं योऽ३ ह्यः' । इत्यादिष्वनुदात्तः । 'अग्निमीळे' इत्यादावुदात्तश्रुतिः । स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा । **मुखनासिकावचनोऽनुनासिकः** ।१।१।८। मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम् । अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश[3] भेदाः । लृवर्णस्य[4] द्वादश । तस्य दीर्घाभावात् । एचामपि द्वादश । तेषां ह्रस्वाभावात् । **तुल्यास्यप्रयत्नं सवर्णम्** ।१।१।९। ताल्वादि[5]स्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । अकुह[6]विसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः[7] । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च ।

---

ऊ३श्चेति ॥—**वः वामिति** । त्रयाणां सवर्णदीर्घे कृते जसि परतो यणि वः, आमि तु वाम् ॥—**वां काल इव कालो यस्येति** । फलितार्थकथनमिदं । विग्रहस्तु वः कालो यस्येति बोध्यः । ऊशब्देन स्वोच्चारणकालो लक्ष्यते । अच् किम् । संयोगस्य माभूत् । प्रतक्ष्य, प्ररक्ष्य, कषयोरेकमात्रत्वेन ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति–' इति तुक् स्यात् ॥—**आये** इति । 'निपाता आद्युदात्ताः' इत्याकार उदात्तः, यच्छब्दस्तु 'फिषः' इत्यन्तोदात्तः, ततः परस्य जसः सुप्त्वादनुदात्तत्वं, त्यदाद्यत्वे पररूपत्वे शीभावे आद्गुणे च सति 'एकादेश उदात्तेन–' इत्येकार उदात्तः ॥—**अर्वाङिति** । अर्वन्तमञ्चतीति अर्वाङ् । 'ऋत्विक्–' आदिना अञ्चतेः सुप्युपपदे क्विन् 'ऋ गतौ' इत्यस्मात् 'स्नामदिपद्यर्ति–' इत्यादिना वनिपि गुणे च निष्पन्नोऽर्वन्शब्दो धातुस्वरेणाद्युदात्तः । वनिपः पित्त्वेनाद्युदात्तत्वात् । अञ्चतेरकारोऽपि धातुस्वरेण नित्स्वरेण वा उदात्तः, 'उपपदमतिङ्' इति समासे कृते 'समासस्य' इति स्वरेण तदपवादभूतेन 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरेण वा अञ्चतेरकार उदात्तः । वनो नलोपे सवर्णदीर्घे च कृते 'एकादेश उदात्तेन–' इत्याकार उदात्त इति 'अनुदात्तं पदमेकवर्जम्' इति शेषनिघातादाद्याकारोऽत्रानुदात्तः । एतच्च संभवाभिप्रायेणोक्तम् । वेदभाष्ये तु 'अर्वाङ् अभिमुखः' इति स्थितम् ॥—**अतन्त्रमिति** । अविवक्षितमित्यर्थः ॥—**तस्य चोदात्तस्वरितपरत्व** इति ॥ उदात्तस्वरितौ परौ यस्मात्तदुदात्तस्वरितपरं, तस्य भावस्तत्त्वं तस्मिन् सति उदात्तो वा स्वरितो वा परश्चेत्पूर्वस्य स्वरितस्य यदुत्तरार्धमनुदात्तं तस्य श्रवणं स्पष्टमित्यर्थः ॥—**अन्यत्रेति** । उदात्तस्वरितपरत्वाभावे ॥—**क्वेति** । 'किमोत्' 'तित्स्वरितम्' ॥—**व** इति । 'अनुदात्तं सर्वमपादादौ' इत्यधिकारादनुदात्तः ॥—**अश्वा** इति । अशेः क्वनि नित्स्वरेणाद्युदात्तं, संहितायां तु 'एकादेश उदात्तेनोदात्तः' इत्योकार उदात्तः । उदात्तपरत्वे ह्रस्वस्वरितस्योदाहरणमुक्त्वा दीर्घस्वरितोदाहरणमाह ॥—**रथानां न येऽ३राः** इति । पदद्वयमपि फिट्स्वरेणान्तोदात्तमेकादेशस्तु पक्षे स्वरितः, 'स्वरितो वानुदात्ते पदादौ' इत्युक्तेः । स्वरितपरत्वे उदाहरणमाह—**शतचक्रमिति** ॥—**य** इति । फिट्स्वरेणान्तोदात्तः, ततः परस्य सकारस्य रुत्वे उत्वे कृते आद्गुणे च उदात्तेनैकादेशादोकार उदात्तः ॥—**अह्य** इति । स्वरितान्तत्वादकारस्य शेषनिघातत्वे ओकारेण सह एकादेशे च कृते 'स्वरितो वानुदात्ते पदादौ' इत्योकारः स्वरितः ॥ कथमह्यस्य स्वरितान्तत्वमिति चेत्, अत्राहुः । 'अह व्याप्तौ' इत्यस्मात्कर्मणि ण्यत्, 'तित्स्वरितम्', वृद्ध्यभावस्तु संज्ञापूर्वकविधेरनित्यत्वादिति ॥—**अग्निमीळ** इति । ईकारः स्वरितः, ळे इति तु प्रचयापरपर्याया एकश्रुतिरिति च स्वरप्रक्रियायां मूल एव स्फुटीभविष्यति ॥—**मुखनासिका–** ॥ मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यादत आह—**मुखसहितेति** ॥—**नासिकयोच्चार्येति** । फलितार्थकथनमिदम्, उच्यतेऽनेनेति वचनं मुखनासिका वचनमस्येति विग्रहः ॥—**तुल्यास्य–** ॥ आस्ये भवमास्यं, 'शरीरावयवाद्यत्' इत्यभिप्रेत्याह—**ताल्वादीति** ॥—**आभ्यन्तरेति** । एतच्च प्रशब्दबलाल्लभ्यते । ओष्ठात्प्रभृति प्राक् काकलकादास्यम् ॥ तुल्यास्यं किं, तप्तम् । अत्र पकारस्य तकारे परे 'झरो झरि' इति लोपो मा भूत् ॥ प्रयत्नग्रहणं किं, वाक्-

---

१ उच्चैरिति—नात्र श्रुतिकृतमुच्चैस्त्वम्, किन्तु स्थानकृतम्, उपांशुप्रयोगेऽव्याप्तेः । २ अर्वाङिति—अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमेतत् । ३ अष्टादशेति—यद्यपीदं न जातिपक्षे, तस्या एकत्वात् । व्यक्तिपक्षेऽपि न, व्यक्तीनामानन्त्यात् । तथापि लोकवेदयोः प्रयुज्यमानानां शास्त्रीयकार्योपयोगिनां तद्व्याप्यधर्मवतामष्टादशत्वमेवेति भावः । ४ लृवर्णस्येति—विवृतस्येत्यर्थः, तेन ॡलृति लृवेति विहितवर्णान्तरस्य दीर्घत्वेऽपि न क्षतिः, तस्येषत्स्पृष्टत्वात् । ५ ताल्वादीति—सूत्रस्थास्यशब्दस्य तद्धितान्तत्वप्रकटीकरणाय कण्ठं विहाय तालुग्रहणम् । ६ अकुहेति—हशब्देनात्र पञ्चमान्तस्थाविहीनस्य ग्रहणम्, तत्सहितस्य शिक्षायामुरस्यत्वस्योक्तत्वात् । ७ दन्ता इति—दन्तशब्देनात्र तत्समीपवर्ती देशो लक्ष्यते, अतो भग्नदन्तस्याप्युच्चारणं भवत्येव ।

**अतो भिस ऐस्। ७।१।९।**

अकारान्तादङ्गाद्भिस ऐस् स्यात्। (२९४०) अनेकाल्त्वात्सर्वादेशः। रामैः।

**ङेर्य्यः। ७।१।१३।**

अतोऽङ्गात्परस्य ङेरित्यस्य यादेशः स्यात्। रामाय। इह स्थानिवद्भावेन यादेशस्य सुप्त्वात्सुपि चेति दीर्घः। सन्निपातलक्षणोविधिरनिमित्तं तद्विघातस्येति (२९) परिभाषा तु नेह प्रवर्त्तते कष्टाय क्रमणे (७०२२९४०) इतिनिर्द्देशेन तस्या-नित्यत्वज्ञापनात्। रामाभ्याम्।

**बहुवचने झल्येत्। ७।३।१०३।**

झलादौ बहुवचने सुपि परे अतोऽङ्गस्य एकारः स्यात्। रामेभ्यः। बहुवचने किम्। रामः रामस्य। झलि किम्। रामाणाम्। सुपि किम्। पचध्वम्। जयत्वम्।

**वाऽवसाने। ८।४।५६।**

अवसाने झलां चरो (३०) वा स्युः। रामात्—रामाद्। द्वित्वे रूपचतुष्टयम्। रामाभ्याम्। रामेभ्यः। रामस्य।

---

(२९) सन्निपातः संश्लेषः लक्षणं निमित्तं यस्य तादृशो यो विधिः स तं सन्निपातं विहन्तीति तद्विघातस्तस्यानिमित्तमुपजीव्यबाधायोगादित्यर्थः।

(३०) झलां जशिन्यतो (२६४०) झलामिति अभ्यासे चर् चेत्यतश्चरिति (७०११४०) चानुवर्त्त्येह झलां चरो वा स्युरिति।

यस्य द्वित्वपक्षे खरि चेति (९२सू०) चर्त्वेऽप्यान्तरतम्यात्स एव न तु तकारः अल्पप्राणतया प्रयत्नभेदात्। अतएव सः सीति (७०७६सू०) तादेश आरभ्यते।

## ओसि च। ७। ३। १०४।

ओसि परे अतोऽङ्गस्य एकारः स्यात्। रामयोः।

## ह्रस्वनद्यापो नुट्। ७। १। ५४।

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्याऽऽमो (३१) नुडागमः स्यात्।

## नामि। ६। ४। ३।

नामि परेऽजन्ताङ्गस्य दीर्घः (३२) स्यात्। रामाणाम्। सुपि चेति(८२सू०) दीर्घो यद्यपि परस्तथापीह न प्रवर्त्तते सन्निपातपरिभाषाविरोधात्। नामीत्यनेन त्वारम्भसामर्थ्यात् परिभाषा बाध्यते। रामे। रामयोः। सुपि एत्त्वे कृते।

## अपदान्तस्य मूर्द्धन्यः (३३)। ८। ३। ५५।

(३१) आमि सर्व्वनाम्नः सुडित्यतः (८७सू०) आमीत्यनुवर्त्त्य विभक्तिं विपरिणमय्याह आम इति।

(३२) ढ्लोपे दीर्घ इत्यतो (८०सू०) दीर्घ इत्यनुवर्त्त्य अचश्चेति (२५सू०) परिभाषया अजन्तस्योपस्थितेराह अजन्ताङ्गस्येत्यादि अङ्गस्येति किं चर्म्मणाम्, वर्म्मणामित्यादौ मा भूत्।

(३३) सूत्रे अपदान्तस्य ष इत्यनेनैव सिद्धे मूर्द्धन्यग्रहणम् इणः षीध्वमित्यत्र (७०२६सू०) धकारस्थाने ढकारमूर्द्धन्यविधानार्थम्।

आपादपरिसमाप्तेरधिकारोऽयम्।

इण्कोः। ८। ३। ५७।

इत्यधिकृत्य।

आदेशप्रत्यययोः। ८। ३। ५९।

षष्ठेः साड़ःषइति (१४९४०) सूत्रात्स इति षष्ठ्यन्तम्पदमनुवर्त्तते। इण् कवर्गाभ्यां परस्यासपदान्तस्यादेशस्य प्रत्ययावयवस्य(३४) च यः सकारस्तस्य मूर्द्धन्य आदेशः स्यात्। विवृताघोषस्य (३५)सस्य तादृश एव षः। रामेषु। इण्कोः किम् रामस्य। आदेशप्रत्यययोः किं सुपीः। सुपिसौ। सुपिसः। अपदान्तस्य किम्। हरिस्तत्र। एवं कृष्णमुकुन्दादयः।

सर्व्वादीनि (३६) सर्वनामानि। १। १। २७।

---

(३४) प्रत्ययशब्दएव तदवयवपरो व्याख्यानात् सातेः (७१०९०) षत्वनिषेधज्ञापकाच्चेत्याह प्रत्ययावयवस्येति। यदि चोभयावयवो व्यह्यते तदा तिष्ठ्यामित्यादेशावयवे प्रसङ्गः। यदि प्रत्ययरूपः सकार इत्युच्यते तदा रामेष्वित्यत्र न स्यादतः एकापि षष्ठी विषयभेदाद्भिद्यते इति भावः।

(३५) विवृताघोषस्येति विवृतत्वमाभ्यन्तरः प्रयत्नः अघोषो वाह्यस्तदुभयत्र तदर्थस्तत्वाद्य ढकारवारणाय स्थकारवारणायान्यत्।

(३६) सर्व्वादीनीति। तद्गुणसंविज्ञानो बहुव्रीहिः हलि सर्व्वेषामिति लिङ्गात् सर्व्वआदिरवयवो येषां तानीति विग्रहः भक्तावयवभेदः आरोपितावयवगतसंख्यः समुदायः समासार्थः तस्य समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात् तदवयवेषु प्रवर्त्तमाना सर्व्वनामसंज्ञा अविशेषात् सर्व्वशब्देऽपि प्रवर्त्तते इति बोध्यम्। सर्व्वनामानीत्यत्र पूर्व्वपदात् संज्ञायामिति (४१५९०) न णत्वं निपातनादिति भाष्ये स्थितम्।

सर्व्वादीनि शब्दरूपाणि सर्व्वनामसंज्ञानि स्युः। तदन्तस्यापीयं संज्ञा द्वन्द्वे चेति (१०२सू०) (३७) ज्ञापकात्। तेन परमसर्व्वेति तत्र, परमभवकानित्यत्राकच्च (३८) सिद्ध्यति।

**जसः शी (३९)। ७। १। १७।**

अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात्। अनेकाल्त्वात्सर्व्वादेशः (२८सू०) (४०)। न चाऽव्वर्णाश्नित्यादाविव (१६१सू०) नानुबन्धकृतमनेकाल्त्वमिति वाच्यम् सर्वादेशत्वात्प्राग् इत्संज्ञाया (४१) एवाभावात्। सर्व्वे।

**सर्वनाम्नः स्मै। ७। १। १४।**

अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात्। सर्वस्मै

---

(३७) द्वन्द्वे चेत्ययं निषेधः समुदायस्यैव न त्ववयवस्य द्वन्द्वे इति प्रथमार्थे सप्तमी द्वन्द्वः सर्व्वनामसंज्ञो न भवतीति सूत्रार्थः न हि तदन्तविधिं विना समुदाये संज्ञाप्रवृत्तिरस्ति या निषिध्येतेति भावः।

(३८) अकच्चेति। कुत्सित इति (७०६सू०) सूत्रोक्तभाष्यरीत्या संख्याकारकाभ्यां पूर्णार्थस्येतरान्वयसम्भवेन सुबन्तादेव तद्धितोत्पत्तेर्नियमात् सर्व्वनामप्रकृतिकसुबन्तार्थगतकुत्साविवक्षायां सर्व्वनामावयवे प्रागकजिति सूत्रार्थात् तदन्तस्य संज्ञाभावे तदसिद्धिरिति भावः। शब्देन्दु०।

(३९) जसः शीति दीर्घोच्चारणमुत्तरार्थं तेन वारिणी इत्यादिसिद्धिः।

(४०) अनेकाल्त्वादिति न तु शित्त्वात्, प्रत्ययादिलक्षणादेव लशक्वतद्धिते इति (९०सू०) शित्त्वसिद्धेः, प्राक् च तस्यासिद्धेः।

(४१) इत्संज्ञाया इति। स इत्यत्रोपदेशकालएवेत्संज्ञा शीभावस्य तु सर्व्वादेशत्वानन्तरं स्थानिवत्त्वेन प्रत्ययत्वे सिद्धे लशक्वतद्धित इति प्रत्ययाद्यादेशस्य तु संज्ञेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः।

ङसिङ्योः स्मात्स्मिनौ। ७। १। १५।

अतः सर्वनाम्नो ङसिङ्योरेतौ स्तः। सर्वस्मात्।

आमि सर्वनाम्नः सुट्। ७। १। ५२।

अवर्णान्ता (४२) त्सर्वनाम्नो विहितस्यामः सुडागमः स्यात्। एत्त्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः। सर्वादयश्च पञ्चत्रिंशत्। सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् (त्व) त्व नेम सम सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम् इति। उभशब्दो द्वित्वविशिष्टस्य वाचकः। अतएव नित्यं द्विवचनान्तः। तस्येह (४३) पाठस्तु उभकावित्यकजर्थः न च कप्रत्ययेनेष्टसिद्धिः द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादाविवायच्प्रसङ्गात् (४४)। तदुक्तमुभयोऽन्यत्रेति अन्यत्रेति द्विवचनपरत्वाभावे।

---

(४२) अवर्णान्तादिति अवर्णान्तादङ्गात्परस्येत्यर्थः तेन येषां तेषामित्यादावामोऽवर्णान्तसर्व्वनामपरत्वाभावेऽपि नाप्रसङ्गः।

(४३) सर्व्वादिषूभशब्दपाठो व्यर्थः सर्व्वनामकार्य्याणां शीप्रभृतीनां द्विवचनेऽसम्भवादित्याशङ्क्याह तस्येहेति।

(४४) अयच्प्रसङ्गादिति उभादुदात्तो नित्यमित्यत्रोभादुदात्त इति(६६८पृ०) योगो विभज्यते अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थेऽयच् स्यात्। उभयो मणिः। उभशब्दाद्वृत्तिविषये नित्यमयच् स्यात् स्वार्थे।

उभयशब्दस्य द्विवचनन्नास्तीति कैयटः। अस्तीति हरदत्तः। तस्मात्(४५)जस्ययजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया प्रथमचरमेति (१०२पृ०) विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति। उभये। डतरडतमौ प्रत्ययौ। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नास्ति सुप्तिङन्तमिति (२२पृ०) ज्ञापकात्। तथापीह तदन्तग्रहणं केवलयोः संज्ञायाः प्रयोजनाभावात्। अन्यतरा(४६) न्यतमशब्दावव्युत्पन्नौ स्वभावाद्द्विबहुविषये निर्द्धारणे वर्त्तेते। तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा। त्वत्वेतिद्वावप्यदन्तावन्यपर्यायौ। एक(४७)उदात्तोऽपरोऽनुदात्त इत्येके। एकस्तान्त इत्यपरे। नेम इत्यर्द्धे। समः सर्वपर्यायः। तुल्यपर्यायस्तु नेह गृह्यते यथासंख्यमनुदेशः समानामिति (६२पृ०)ज्ञापकात्। अन्तरं बहिर्योगेतिगणसूत्रेऽपुरीति (४८) वक्तव्यम्। अन्तरायाम्पुरि।

---

तेन उभयपक्षविनीतनिद्रा इत्यादौ यथा नित्योऽयच् एवं कप्रत्ययेऽपि स्यादिति भावः। अकाच कृते तु अयचो न प्रसङ्गः यत्र द्विवचनं न श्रूयते तत्रैवायजिति व्याख्यानात्। मनो०।

(४५) तस्मात् उभयशब्दात्। जसीति अवयवद्वयारब्धसमुदाये बहुत्वविवक्षायाम् जसः प्राप्तिरितिरित्यर्थ।

(४६) डतरप्रकरणेनैव सिद्धे गणेऽन्यतरशब्दपाठो व्यर्थोऽत आहान्यतरेति किंयत्तद्भ्य एव (७११पृ०) डतरडतमयोर्विधानान्नान्यशब्दात्तत्प्रसङ्ग इति भावः।

(४७) एक उदात्त इति एतं त्वमये इत्युदात्तस्य, उत त्वः पश्यन्नित्यनुदात्तस्य च दर्शनादिति भावः एकः प्रथम इति। मनो०।

(४८) अपुरीति पूःशब्दस्य विशेष्यत्वे नेत्यर्थं ध्वनयन् स्त्रियामुदाहरति अन्तरायामिति प्राकाराद्बाह्यायामित्यर्थः।

पूर्व्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। १। १। ३४।

एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञागणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे पूर्व्वाः। स्वाभिधेयापेक्षोऽवधिनियमो (४९) व्यवस्था। व्यवस्थायां किम्। दक्षिणा गाथकाः (५०) कुशला इत्यर्थः। असंज्ञायां किम् उत्तराः कुरवः (५१)।

स्वमज्ञातिधनाख्यायाम्। १। १। ३५।

ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। स्वे स्वाः आत्मीया इत्यर्थः। आत्मान इति वा। ज्ञातिधनवाचिनस्तु स्वाः ज्ञातयोऽर्थो वा।

(४९( पूर्व्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः दिशः सपत्नी भव दक्षिणस्या इत्यादावपि व्यवस्थास्त्येव प्रसिद्धत्वात्तु नावधिवाची शब्दः प्रयुज्यते आधुनिकसंङ्केतस्यैव संज्ञात्वेन दिक्षु च तादृशसंज्ञाविरहेण असंज्ञायामिति न निषेधप्रसङ्गः। अतएव वेदे प्रसिद्धदेवगणविशेषे विश्वशब्दस्याधुनिकसंकेताभावात् विश्वेषां देवानामित्यादिप्रयोगः। अत्र सूत्रे विभाषा जसीति (१०२पृ०)सूत्रमनुवर्त्तते।

(५०) दक्षिणा गाथका इति इहापुकस्मात् कुशला इत्यवध्यन्वयसम्भवेऽपि तन्नियमो नास्तीति भावः।

(५१) उत्तराः कुरव इति सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दो वर्त्तते इत्यस्तीह व्यवस्था किन्त्वाधुनिकसङ्केतोऽयमिति निषेधः। एवमधरे ताम्बूलरागः। उत्तरे यज्ञः उत्तराग्निरस्तः इत्यादि ङिङसोः प्रत्युदाहर्त्तव्यम्। अत्रेदं बोध्यं परापरशब्दयोर्देशान्तरनिष्ठत्वमेव शक्यार्थत्वस्य च शतौ

अन्तरं बहिर्योगोपसंव्यानयोः । १ । १ । ३६ ।

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा साजसि वा स्यात् । अन्तरे अन्तरा वा गृहाः बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः परिधानीया इत्यर्थः ।

पूर्व्वादिभ्यो नवभ्यो वा । ७ । १ । १६ ।

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्—पूर्व्वात् । पूर्वस्मिन्—पूर्वे । एवम्परादीनामपि । शेषं सर्ववत् । एकशब्दः संख्यायान्नित्यैकवचनान्तः (५२) ।

न बहुव्रीहौ (५३) । १ । १ । २९ ।

बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । त्वकम्पिता यस्य स त्वत्कपितृकः । अहकम्पिता यस्य य मत्कपितृकः । इह समासात्प्रागेवालौकिके प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते । अन्यथा लौकिके विग्रहवाक्य इव तत्राप्यकच प्रव-

प्रतिवादिनि च तथा 'तेन तथा परेषां युधि' चेत्यादि, अथापरे प्रत्यवतिष्ठन्ते इत्यादिश्च प्रयोगः सङ्गच्छते न च लाक्षणिकत्वे उपसर्ज्जनत्वं स्वार्थविशिष्टार्थान्तरसंक्रमस्यैव तथात्वात् तस्य च समासादि वृत्तावेव सम्भवात् !

(५२) 'एकोऽल्पार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽपि संख्यायाञ्च प्रयुज्यते' इत्युक्तेरेकशब्दो नानार्थस्तत्र संख्यायामेवैकवचनान्तताऽन्यत्र तु यथेष्टता तेन एके एकेषामित्यादि ।

(५३) न बहुव्रीहाविति । कृते तु बहुव्रीहौ निषेधो व्यर्थ उपसर्जनीभूताश्च न सन्तीत्य इति (१०१पृ०)वार्त्तिके वक्ष्यमाणत्वा दत आह चिकीर्षिते इति विषयसप्तम्याश्रयणादयमर्थो लभ्यते इति भावः ।

त्येत स च समासेऽपि श्रूयेत अतिक्रान्तो भवकन्तमतिभवकानिति वत्। भाष्यकारस्तु (५४) त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रम्प्रत्याचख्यौ। यथोत्तरं मुनीनां प्रामाण्यम् (५५)। "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" (५६)। महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात्। अतः संज्ञाकार्यमन्तर्गणकार्यञ्च(५७)तेषान्न भवति। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय। अतिकतरं कुलम्। अतितत्।

## तृतीयासमासे (५८)।१।१।३०।

अत्र सर्वनामता न स्यात्। मासपूर्वाय। तृतीयासमासार्थवाक्येऽपि न। मासेन पूर्वाय।

---

(५४) अज्ञाते कुत्सिते वाऽर्थे अव्ययसर्व्वनाम्नामकच् प्राक् टेरित्यकचि (७०६पृ०) त्वकत्पितृक इति। तद्धितार्थे के तु त्वत्कपितृक इति, तत्र न बहुव्रीहाविति निषेधात् त्वत्कपितृक इत्येव सूत्रकारमतं भाष्यकृता तु त्वकत्पितृक इत्यादिप्रयोगस्येष्टापत्त्या एतत्सूत्रं प्रत्याचख्ये इत्याह भाष्यकारस्त्विति।

(५५) स्मृतिद्वयप्रामाण्याद्विकल्पोऽस्त्वत आह उत्तरोत्तरमिति तथाच भाष्यकारस्य सर्व्वोत्तरत्वात्तदुक्तव्यवस्थैव ग्राह्येति भावः।

(५६) उपसर्जनीभूतास्त्विति उपसर्जनत्वमितरविशेषणत्वेनार्थोपस्थापकत्वम्।

(५७) अन्तर्गणकार्य्यमिति अद्ड्डतरादिभ्यः इति(१४०पृ०)त्यदादीनाम इत्यादि च (११५पृ०)कार्य्यम्। तत्रातिसर्व्वायेत्यादौ सामान्यसर्व्वनामकार्य्यं, अतिकतरत् अतितदित्यादौ विशेषतत्कार्य्यमद्डाकारादेशौ नेति विवेकः।

(५८) तृतीयासमासे इति अत्र पूर्व्वसदृशेति(३३८पृ०)सूत्रविहितः समासो गृह्यते

द्वन्द्वे च । १ । १ । ३१ ।

द्वन्द्वे उक्ता संज्ञा न। वर्णाश्रमेतराणाम्। समुदायस्यायं निषेधो न त्ववयवानाम्। पूर्व्वपरावराणाम्। नचैवन्तदन्तविधिना सुट्प्रसङ्गः। सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात् (८७पृ०)।

विभाषा जसि । १ । १ । ३२ ।

जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्त्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात्। वर्णाश्रमेतरे वर्णाश्रमेतराः। शीभावमात्रे व विभाषेत्युक्तम् अतो नाकच् किन्तु कप्रत्यय एव। वर्णाश्रमेतरकाः।

प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च । १ । १ । ३३ ।

एते जसः कार्य(५८) म्प्रत्युक्तसंज्ञा वा स्युः। प्रथमे प्रथमाः। इत्यादि। शेषं रामवत्। तयप्प्रत्ययस्ततस्तदन्ता ✣ ग्राह्याः। द्वितये द्वितयाः। नेमे नेमाः। शेषं सर्ववत्। *विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्*। द्वितीयस्मै-

प्रतिपदोक्तत्वात् न तु कर्त्तृकरणयोः क्ततीति तेन त्वयका क्ततमित्यादौ न निषेधस्तत्र त्वकतृक्ततमित्येव प्रयोगः।

(५८) प्रथमचरमेत्यादि अत्र सूत्रे नेति न सम्बध्यते प्रथमादिष्वसम्भवात् अतोऽत्यनुवृत्तेरर्थात् शीभाव एव विकल्पस्तदाह जस्कार्य्यं प्रतीति-

✣ संख्याया अवयवे तयबिति (६६८पृ०) तयपः प्रत्ययत्वादाह तदन्ता इति।

एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकानुस्वारस्य । इति स्थानानि ॥ यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यश्चतुर्धा । स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयत्नं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । विवृतमूष्मणां स्वराणां च । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । एतच्च सूत्रकारेण ज्ञापितम् । तथा हि । ⧗ अ अ इति ।८।४।६८। विवृतमनूद्य संवृतोऽनेन विधीयते । अस्य चाष्टाध्यायीं संपूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव । तथा च सूत्रम् । ⧗ पूर्वत्रासिद्धम् ।८।२।१। अधिकारोऽयम् । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् । बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खयां यमाः खयः ≍क≍पौ विसर्गः शर एव च । एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥ कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः । अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥ वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः । पलिक्क्नीः । चख्ख्नतुः । अग्ग्निः । घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः । तत्र वर्गाणां प्रथमद्वितीयाः खयस्तथा तेषामेव यमाः जिह्वामूलीयोपध्मानीयौ विसर्गः शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च । अन्येषां तु संवारो नादो घोषश्च । वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः । अन्ये महाप्राणा इत्यर्थः । बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यम् ॥ कादयो मावसानाः स्पर्शाः । यरलवा अन्तस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ≍क≍पाविति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ । इति

---

श्चोतति इति शस्य लोपो न ॥—**अमङणनानामिति** ॥—**नासिका चेति** । चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते । एदैतोरित्यादौ तपरत्वमसंदेहार्थं, न तत्कालग्रहणार्थम् । तेन प्लुतस्यापि संग्रहः ॥—**चतुर्धेति** । निष्कर्षपक्षे तु पञ्चधा । ऊष्मणामीषद्विवृतप्रयत्नाभ्युपगमात् ॥—**स्पृष्टेषत्स्पृष्टेति** । एतेषामाभ्यन्तरत्वं वर्णोत्पत्तिप्राग्भावित्वात् । तथाहि—नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः । तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता, ईषद्यदा स्पृशन्ति तदा ईषत्स्पृष्टता, समीपावस्थानमात्रे संवृतता, दूरत्वे विवृतता । अत एव इचुयशानां तालव्यत्वाविशेषेपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्तव्ये सम्यक् स्पर्शः, यकारे ईषत्स्पर्शः शकारेकारयोस्तु दूरेऽवस्थितिरित्याद्यनुभवं शिक्षाकारोक्तिं चानुसृत्य विवेचनीयम् । विवारसंवारादयस्तु वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्त इति बाह्या इत्युच्यन्ते, गलबिलस्य संकोचात्संवारः तस्यैव विकासाद्विवारः, एतौ च संवृतविवृतरूपाभ्यामाभ्यन्तराभ्यां भिन्नावेव । तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम् ॥—**अ अ** ॥ 'सुपाम्–' इति विभक्त्योर्लुक् । आद्यो विवृतः द्वितीयस्तु संवृतस्तदाह— **विवृतमनूद्येति** विवृतस्य स्थान इत्यर्थः ॥—**विवृतत्वमस्त्येवेति** । तेन दण्डानयनमित्यादौ सवर्णदीर्घः सिध्यतीति भावः ॥—**पूर्वत्रासिद्धम्** । यद्ययं स्वतन्त्रो विधिः स्यात्तर्हि त्रिपादी पूर्वं प्रत्यसिद्धेत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यात्, तथा च प्रशानित्यत्र 'मो नो धातोः' इति नत्वस्य सिद्धत्वान्नलोपः स्यात् । नत्वविधेः संबुद्धौ चरितार्थत्वात् । तथाऽनड्वानित्यत्र संयोगान्तलोपस्य सिद्धत्वान्नलोपः स्यात्, नुम्विधेस्तु संबुद्धौ चरितार्थत्वादत आह—**अधिकारोऽयमिति** । त्रिपाद्यां विहितं कार्यमिति कार्यासिद्धिपक्षे तु अमू अमूमित्यादि न सिध्येदिति भावः ॥ यथा चैतन्न सिध्यति तथाऽदःशब्दव्याख्यावसरेऽस्माभिरुपपादयिष्यते ॥—**एकादशधेति** । यद्यपि भाष्येऽष्टावुक्ताः, उदात्तादयस्तु नोक्ताः तथापि कैयटोक्तिमनुसृत्यैकादशोक्ता इति बोध्यम् ॥—**खयां यमा इति**। बालबोधनाय बाह्यप्रयत्नाः कैश्चित्सुगमोपायेनोपनिबद्धाः । तद्यथा, 'खरो विवाराः श्वासा अघोषाश्च, हशः संवारा नादा घोषाश्च, वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः, वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः' इति ॥—**एते श्वासानुप्रदाना** इति । श्वासप्रयत्नका इत्यर्थः ॥—**विवृण्वते कण्ठमिति** । विवार एषां प्रयत्न इति भावः ॥—**अन्ये त्विति** । हशो, हशां यमा, अनुस्वारश्च । नादभागिनो, नादप्रयत्नवन्त इत्यर्थः ॥—**अयुग्मा इति** । प्रथमतृतीयपञ्चमा वर्गेष्वयुग्माः ॥—**वर्गयमगा इति** । वर्गगा यमगाश्चेत्यर्थः ॥—**अल्पेति** । अल्पासवोऽल्पप्राणाः, 'पुंसि भून्म्यसवः प्राणाः' इत्यमरः ॥—**अनुपयुक्ता इति** । अन्यथा कखगघादीनां परस्परं सावर्ण्यं न स्यादिति भावः ॥ —**आन्तरतम्यपरीक्षायामिति** । परीक्षा च अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः, घोषवतो नादवतो महाप्राणस्य हस्य तादृशो वर्गचतुर्थ इत्यादिना मूले एव स्फुटीभविष्यति ॥—**कादय इति** । लोकप्रसिद्धपाठापेक्ष-

---

१ अअ इति—एकस्य विवृतत्वादपरस्य संवृतत्वात्संध्यभावः । २ बाह्येति—बाह्यत्वं च वर्णोत्पत्त्यनन्तरभावित्वेन बहिर्भूतकार्यकरणत्वेन च । ३ पूर्वसदृश इति—सादृश्यं च प्रयत्नैक्येन ।

द्वितीयायेत्यादि। एवन्तृतीयः। अर्थवद्ग्रहणान्नेह। पटु-जातीयाय (६०)।

## जराया जरसन्यतरस्याम्। ७।२।१०१।

जराशब्दस्य जरस् वा स्यादजादौ (६१) विभक्तौ। पदाङ्गाधिकारे तस्य तदन्तस्य च अनेकाल्त्वात्सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा (६२) भवन्ति। एकदेशविकृतस्यानन्यत्वात् जरशब्दस्य जरस्। निर्ज्जरसौ। निर्ज्जरसः। इनादीन् बाधित्वा परत्वाज्जरस्। निर्जरसा। निर्जरसे। निर्जरसः। पक्षे हलादौ च रामवत्। वृत्तिकृता तु पूर्वविप्रतिषेधेन इनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसादिति रूपं न तु निर्ज्जरसा निर्ज्जरस इति केचिदित्युक्तम्। तथा भिसि निर्ज्जरसैरिति

(६०) ङसीय इति(६७०सू०)संप्रसारणञ्चेति (६७१सू०) तीयः तस्यार्थवत्त्वादनर्थकस्यैकदेशस्य न ग्रहणमित्याह पटुजातीयायेति प्रकारवचने जातीयरिति(७०५सू०)जातीयप्रत्ययैकदेशे न प्रसङ्गः इति भावः।

(६१) जराया इति अष्टन आ विभक्ताविस्यतो(१६३सू०)विभक्ताविति अचि रञ्चत इत्यतो(१२२सू०)ऽचीत्यनुवर्त्त्य यस्मिन् विधिस्तदादावल्ग्रहणे इति परिभाषासत्त्वादाह अजादाविति विभक्तौ किं जराया इदं जारमित्यादौ न अचि किं निर्जराभ्यामित्यादौ न।

(६२) नन्विदमपूर्व्वं वचनमतः सोपसर्गस्य सर्व्वस्य स्थाने जरसादेश इत्याशङ्क्याह निर्दिश्यमानस्येति। ननु तदन्तविधिनापि जरान्तं यदङ्गं तत्रैव निर्दिश्यमानजराशब्दस्थाने जरसादेशेन भवितव्यं नात्रेत्यत आह एकदेशेति।

रूपान्तरमुक्तम्। तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्येत्येव रूपमिति स्वीकृतमेतच्च भाष्यविरुद्धम् (६३)।

**पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु। ६। १। ६३।**

पाद, दन्त, (६४) नासिका, मास, हृदय, निशा असृज, यूष, दोष, यकृत्, शकृत्, उदक, आस्य, एषां पदादय आदेशाः स्युः शसादौ वा (६५)। यत्तु आसनशब्दस्य आसन्नादेश इति काशिकायामुक्तन्तत्प्रामादिकम् (६६)। पादः। पादौ। पादाः। पादम्। पादौ। पदः-पादान्। पादेन-पदा इत्यादि।

**सुडनपुंसकस्य (६७)। १। १। ४३।**

(६३) भाष्यविरुद्धमिति भाष्यकृता टाङसीति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशञ्च विधाय नादेशे परे आङि चाप इत्यत्राङीति योगं विभज्य एत्त्वमुक्त्वा साधितं तथाच निर्जरमिन निर्जरमादित्यत्र कृतस्तरामिनस्य अ तञ्च सम्भव इति भाष्यविरोधादुपेक्ष्यम्। अतएव सूत्रे भाष्ये स्पष्टमुक्तं निर्जरैरिति भवितव्यमिति।

(६४) शस्प्रभृतयो निमित्ततयोपात्ताः पदाद्यादेशानुरूपान् प्रकृतिविशेषानाक्षिपन्तीत्याशयेनाह पाददन्तेति।

(६५) अनुदात्तस्य चर्दुपधस्यान्यतरस्यामित्यतः (उ०।८०३५०) अन्यतरस्यामित्यनुवर्त्त्याह शसादौ वेति।

(६६) प्रामादिकमिति आस्ये इकस्य वर्त्तिकामभीके इति मन्त्रे मुखादिन्यर्थ औचित्यात् इकस्य चित् वर्त्तिकामन्तरास्यादिति मन्त्रान्तरसंवादाच्च वाख्यातञ्च तथैव वेदभाष्ये इति। मनो०।

(६७) स्त्रीपुंसयोरिति वक्तव्ये अनपुंसकस्येति कथनं ज्ञापयति प्रसज्य

सुट् प्रत्याहारः। स्वादिपञ्चकवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीवस्य।

स्वादिष्वसर्वनामस्थाने। १। ४। १७।

कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वम्पदसंज्ञं स्यात्।

यचि भम्। १। ४। १८।

यकारादिष्वजादिषु च कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वम्भसंज्ञं स्यात्।

आकडारादेका संज्ञा। १। ४। १।

इत ऊर्द्ध्वं कडाराः कर्म्मधारय इत्यतः (२।२।३८) प्रागेकस्यैकेव संज्ञा ज्ञेया। या परानवकाशा (६८) च। तेन शसादावचि भसंज्ञैव न पदत्वम्। अतो जश्त्वन्न। दतः। दता। जश्त्वम् दद्भ्यामित्यादि। मासः। मासा। भ्यामि रुत्वे यत्वे च

१०५ पृष्ठस्य १४ पङ्क्तेरधस्तात् त्रुटितमिदम्।

भस्य। ६। ४। १२९—

अधिकारोऽयम्—

कैयटः।

६८) या परेति उभयोः सावकाशत्वे विप्रतिषेधे परैव निरवकाशत्वे सैव।

भस्यावयवोऽसर्वनामस्थानयजादिस्वादिपरो(६९)योऽन् तस्याकारस्य लोपः स्यात् ।

## रषाभ्यां नो णः समानपदे (७०) । ८ । ४ । १ ।

एकपदस्थाभ्यां रेफषकाराभ्याम्परस्य नः णः स्यात् । पूष्णः । पूष्णा । पूर्वस्मादपि विधौ स्थानिवद्भाव इति (२४पृ०) पक्षे तु अड् व्यवाय (८१पृ०) इत्येवात्र णत्वम् । पूर्वत्रासिद्धे (७१) न स्थानिवदिति तु इह नास्ति तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषेधात् ।

## न लोपः प्रातिपदिकान्तस्य । ८ । २ । ७ ।

नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे । प्रातिपदिकसंज्ञकं यत्पदन्तदन्तस्य नकारस्य लोपः स्यात् । नलोपस्यासिद्धत्वा दीर्घमेत्त्वमैस्त्वञ्च न । पूषभ्याम् । पूषभिः पूषभ्य इत्यादि ।

(६९) भस्येत्यधिकाराद्दाह यजादिस्वादिपर इति यकाराजादिप्रत्ययपरोऽजादिस्वादिपरश्चेत्यर्थः ।

(७०) पदे इतीयतैव एकपदत्वलाभे समानग्रहणं ज्ञापयति समासे नायं विधिरपीति विशेषे प्रवर्त्तते इति ।

(७१) पूर्वत्रासिद्धे इति एतच्च न्यायसिद्धम् त्रिपाद्या असिद्धत्वेन तत्रत्ये कार्य्ये अचः परस्मिन् (२४पृ०) इतिप्रति प्रसवा प्रवृत्तेः । तस्य दोष इति तस्य पूर्वत्रासिद्धे नेत्यादिकस्य दोषस्तथाच स्थलत्रये स्थानिवद्भावेनैव तस्य दोषो वक्तव्य इत्यर्थः । तत्र संयोगादिलोपे । चक्र्यत्र इत्यचः परस्मिन्निति यणादेशस्य स्थानिवत्त्वेन स्कोः संयोगाद्योरिति (१६६पृ०) न कलोपः । लत्वे निगाल्यते । अत्र परनिमित्तकस्य णिज्लोपस्य स्थानिवत्त्वेन अचि विभाषेति (७।१५५पृ०) गिरो रो लः । णत्वे माषवपनीत्यत्र

विभाषा ङिश्योः। ६।४।१३६।

अङ्गावयवोऽसर्वनामस्थानपरो योऽन् तस्याऽकारस्य लोपो वा स्यात् ङिश्योः परयोः। यूष्णि यूषणि। पक्षे रामवत्। पद्दन्निति सूत्रे प्रभृतिग्रहणम्प्रकारार्थम्। तथा च। औङः श्यामपि दोषन्नादेशो भाष्ये ककुद्दोषणी इत्युदाहृतम्। तेन पदङ्घ्रिश्चरणोऽस्त्रियां स्वान्तं हृन्मानसम्मन इति सङ्गच्छते। आसन्यम्प्राणमूचुरिति च। आस्ये भवः आसन्यः। दोष्-शब्दस्य नपुंसकत्वमतएव भाष्यात्। तेन दक्षिणन्दोर्निशाचर इति सङ्गच्छते। भुजवाहू प्रवेष्टो दोरिति साहचर्यात्पुंस्त्व-मपि। दोषन्तस्य तथाविधस्य भजत इति। द्वयोरह्नोर्भवो द्व्यह्नः।

संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ। ६।३।११०।

संख्यादिपूर्वस्याह्नस्याहन्नादेशो वा स्यात् ङौ। द्व्यह्नि-द्व्यहनि द्व्यह्ने। विगतमहः व्यह्नः। व्यह्नि व्यहनि व्यह्ने। अह्नः सायः। सायाह्नः। सायाह्नि सायाहनि सायाह्ने। इत्यदन्ताः। विश्वपाः।

दीर्घाज्जसि च ६।१।१०५।

यस्येति(१२६७) चेत्यल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्त-त्वाभावात् न णत्वम् उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैवेति णत्वविषये नियमात्।

दीर्घाज्जसि इचि च (७२) परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात्। वृद्धिः। विश्वपौ। सवर्णदीर्घः। विश्वपाः। यद्यपीह औङि नादिचीत्येव (७७पृ०) सिद्धं जसि तु सत्यपि पूर्व्वसवर्णदीर्घे क्षतिर्नास्ति। तथापि गौर्यौ गौर्य इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्।

**आतो धातोः। ६। ४। १४०।**

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात्। अलोऽन्त्यस्य (२८पृ०)। विश्वपः। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। धातोः किम्। हाहान्। टा सवर्णदीर्घः। हाहा। ङे वृद्धिः। हाहै। ङसिङसोर्दीर्घः। हाहाः२। ओसि वृद्धिः हाहौः। ङौ आद्गुणः (४२पृ०)। हाहे। शेषं विश्वपावत्। आत इति योगविभागादधातोरप्याकारलोपः क्वचित्। अः। क्तः। इत्यादन्ताः। हरिः। प्रथमयोःपूर्व सवर्णः (७७पृ०) हरी।

**जसि च। ७। ३। १०९।**

ह्रस्वान्तस्याङ्गस्य (७३) गुणः स्याज्जसि परे। हरयः।

**ह्रस्वस्य गुणः। ७। ३। १०८।**

(७२) चकारात् नादिचीत्यतो (७७पृ०) नेतीति इचीति च प्रथमयोरिति (७७पृ०) सूत्रस्थानुवर्त्तन्त इचीत्यादि।

(७३) जसि चेत्यत्र ह्रस्वस्य गुण इत्यनुवर्त्तते ह्रस्वान्तस्येत्यादि।

ह्रस्वस्य गुणः स्यात्सम्बुद्धौ (७४)। एङ्ह्रस्वादिति(८६पृ०)सम्बुद्धि-लोपः। हे हरे। हरिम्। हरी। हरीन्।

**शेषो घ्यसखि। १। ४। ७।**

अनदीसंज्ञौ (७५) ह्रस्वौ याविवर्णोवर्णौ तदन्तं सखिवर्जं घिसंज्ञं स्यात्। शेषः किम्। मत्यै। एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम् (७६)। ह्रस्वौ किम्। वातप्रम्ये। यू किम्। मात्रे।

**आङो नाऽस्त्रियाम् (७७)। ७। ३। १२०।**

घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा। अस्त्रियाङ्किम्। मत्या।

**घेर्ङिति (७८)। ७। ३। १११।**

घिसंज्ञस्य ङिति सुपि गुणः स्यात्। हरये। घेः किम्। सख्ये। ङिति किम्। हरिभ्याम्। सुपि किम्। पट्वी। घेर्ङितीति गुणे कृते।

(७४) ह्रस्वस्येति सम्बुद्धौ चेत्यतः(१२७पृ०)संबुद्धावित्यनुवर्त्त्याह संबुद्धाविति।

(७५) यू स्त्र्याख्यावित्यतो(११६पृ०)यू इत्यनुवर्त्त्य शेषपदार्थमाहानदीसंज्ञाविति।

(७६) स्पष्टार्थमिति कडाराः कर्मधारये(३६५पृ०)इत्येतत्पर्यन्तस्य दुर्ज्ञेयत्वात् स्पष्टतया तल्लाभार्थमित्यर्थः।

(७७) आङो नेति। अत्र घेरित्यतो (११०पृ०)घेरित्यनुवर्त्तते ना पुंसीति तु नोक्तम् अमुना कुलेनेत्यत्र उत्वस्यासिद्धतया इकोऽचीति (१४२पृ०) नुमोऽप्रसङ्गेन पुंस्त्वाभावेन नाकाराप्रवृत्तौ तद्रूपासिद्धिरिति बोध्यम्।

(७८) घेर्ङितीति। सुपि चेत्यतः (९२पृ०) सुपीत्यनुवर्त्तते तेन पट्वीत्यादौ ङीबादीनां ङित्त्वेऽपि सुप्त्वाभावान्न प्रसङ्गः।

**ङसिङसोश्च । ६ । १ । ११० ।**

एङो (७९) ङसिङसोरतिपरे पूर्व्वरूपमेकादेशः स्यात् । हरेः । हरेः । हर्य्योः हरीणाम् ।

**अच्च घेः (८०) । ७ । ३ । ११९ ।**

इदुद्भ्यामुत्तरस्य ङेरौ स्यात् घेरन्तादेशश्चाकारः । हरौ । हर्य्योः । हरिषु । एवं श्रीपत्यग्निरविकव्यादयः ।

**अनङ् सौ (८१) । ७ । १ । ९३ ।**

सख्युरङ्गस्यानङादेशः स्यादसम्बुद्धौ सौ परे । ङिच्चेत्यन्तादेशः (२६पृ०) ।

**अलोऽन्त्यात् पूर्व्व उपधा । १ । १ । ६५ ।**

अन्त्यादलः पूर्व्वो वर्ण उपधासंज्ञः स्यात् ।

**सर्व्वनामस्थाने चाऽसम्बुद्धौ । ६ । ४ । ८ ।**

(७९) ङसोरिति एङः पदान्तादतीति (५०पृ०) सूत्रम् अमिपूर्व्वः (६०पृ०) इत्यतः पूर्व्व इति चानुवर्त्त्याह एङ इत्यादि ।

(८०) अच्च घेरिति । इदुद्भ्यामिति (७३पृ०) औदिति च (११२पृ०) सूत्रद्वयमनुवर्त्त्य योजयन्नाह इदुद्भ्यामित्यादि ।

(८१) अनङ् साविति सख्युरसम्बुद्धाविति (१११पृ०) सूत्रमनुवृत्तं तेन चासम्बुद्धाविति पर्य्युदासात् सूत्रे साविति प्रथमैकवचनपरम् न तु सप्तमीबहुवचनपरम् । अनङित्यत्र नकारोपरि अकारस्यानुनासिकत्वप्रतिज्ञानादित्त्वम् ।

नान्तस्योपधाया दीर्घः (८२) स्यादसम्बुद्धौ सर्व्वनामस्थाने।

**अपृक्त एकाल् प्रत्ययः। १। २। ४१।**

एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्।

**हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्। ६। १। ६८।**

हलन्तात्परन्दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते। हल्ङ्याब्भ्यः किम्। ग्रामणीः। दीर्घात् किम्। निष्कौशाम्बिः। अतिखट्वः। सुतिसीति किम्। अभैत्सीत्। तिपा सहचरितस्य ग्रहणात्सिचोग्रहणन्नास्ति। अपृक्तमिति किम्। बिभर्त्ति। हल्किम्। बिभेद। प्रथमहल्किम्। राजा। नलोपो न स्यात्‡ संयोगान्तलोपस्यासिद्धत्वात्। सखा। हे सखे।

**सख्युरसम्बुद्धौ। ७। १। ९२।**

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्व्वनामस्थानं णिद्वत्(८३)स्यात्।

**अचो ञ्णिति। ७। २। ११५।**

ञिति णिति च परेऽजन्ताऽङ्गस्य वृद्धिः(८४)स्यात्। सखायौ।

---

(८२) सर्व्वनामेति। ढ्लोपे इत्यतो (८०पृ०) दीर्घ इति नोपधाया इति (१६२पृ०) सूत्रस्थानुवर्त्त्याह नान्तस्येत्यादि।

‡ संयोगान्तलोपेन सुनोपमाधक्य तस्यासिद्धत्वात् नलोपासिद्धिमाह नलोपोनेति।

(८३) गोतो णिदित्यतो (१२५पृ०) णिदित्यनुवर्त्त्याह णिद्वदिति।

(८४) मृजेर्वृद्धिरित्यतो (उ०१२२पृ०) वृद्धिरित्यनुवर्त्त्याह वृद्धिरिति।

सखायः। सखायम्। सखायौ। (१०८पृ०) घिसंज्ञाऽभावान्न तत्कार्य्यम्। सख्या। सख्ये।

**ख्यत्यात्परस्य (८५)। ६। १। ११२।**

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्याम्परस्य ङसिङसोरत उत् स्यात्। सख्युः। सख्युः।

**औत्। ७। ३। ११८।**

इदुद्भ्यां (८६) परस्य ङेरौत् स्यात्। तकाराऽनुवृत्तिरुच्चारार्था। सख्यौ। शेषं हरिवत्। शोभनः सखा सुसखा सुसखायौ सुसखायः। अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः। समुदायस्य सखिरूपत्वाभावादसखीति(८७)निषेधाऽप्रवृत्तेर्घिसंज्ञा। सुसखिना। सुसखये। ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् ख्यत्यादित्युत्त्वं न। सुसखेः। सुसखौ। इत्यादि। एवमतिशयितः सखा। अतिसखा। परमः सखा यस्येति विग्रहे। परमसखा। परमसखा-

(८५) ख्यत्यादिति ख्यत्येत्यकारपर उच्चारणार्थः ऋत उदित्यतः(१२२पृ०)उदिति एङः पदान्तादतीत्यतः (५०पृ) अतीति ङसिङसोश्चेति (११०पृ०) सूत्रस्थानुवर्त्यातीति विभक्तिं विपरिणमय्याह ङसिङसोरतउदिति।

(८६) इदुद्भ्यामिति (१२२पृ०) अनुवर्त्याह इदुद्भ्यामिति उदुपहणास्य व्यर्थत्वाशङ्कायामाहोत्तरार्थेति औतो विभक्तित्वेऽपि न विभक्तौ तुस्मा (८८पृ०) इत्यस्यानित्यतायाः प्रागुक्तत्वात् सुखसुखार्थमेवोच्चारणाच्च तकारस्येत्त्वम्।

(८७) असखीति निषेधाप्रवृत्तेरिति शेषोघ्यसखीति (१०९पृ०) सूत्रस्य सखीति निषेधस्याविषयत्वादित्यर्थः।

स्थानप्रयत्नविवेकः । * **ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्** ॥ अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते । **नाऽऽज्झलौ** ।१।१।१०। आकारसहितोऽच् आच्, स च हल् चेत्येतौ मिथः सवर्णौ न स्तः । तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न । अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । तथा हि । **अणुदित्सवर्णस्य चाऽप्रत्ययः** ।१।१।६९। प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् । अत्राण् परेण णकारेण ॥ कु चु टु तु पु एते उदितः । तदेवम् अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं लृकारोऽपि । एचो द्वादशानाम् । एदैतोरोदौतोश्च न मिथः सावर्ण्यम् । ऐऔजिति सूत्रारम्भसामर्थ्यात् । तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम् । नाज्झलाविति निषेधो यद्यप्याक्षरसमाम्नायिकानामेव तथापि हकारस्याऽऽकारो न सवर्णः । तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन विश्वपाभिरित्यत्र होढ इति ढत्वं न भवति । अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा । **तपरस्तत्कालस्य** ।१।१।७०। तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् । तेन अत् इत् उत् इत्यादयः षण्णां षण्णां संज्ञा । ऋदिति द्वादशानाम् । **वृद्धिरादैच्** ।१।१।१।

---

मिदं, चतुर्दशसूत्र्यां मावसानत्वायोगात् ॥—**कपाभ्यां प्रागिति** । एतच्चोपलक्षणं खफाभ्यां प्रागित्यपि बोध्यम् ॥—**अर्धविसर्गेऽति** । सादृश्यमुच्चारणे लेखने च बोध्यम् ॥—**ऋलृवर्णयोरिति** । 'ऋत्यकः' इति प्रकृतिभावः । विग्रहस्तु आ च लृवर्णश्च ऋलृवर्णौ तयोरित्येके ॥ मनोरमायां तु आ च श्रा च ऋलौ तौ च तौ वर्णौ चेत्यादि स्थितम् ॥—**नाज्झलौ** ॥—**आकारसहित इति** । 'कालसमयवेलासु' इत्यादिनिर्देशा आकारप्रश्लेषे लिङ्गम् ॥—**यणादिकमिति** । शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः । इह असेधदित्यादौ 'हो ढः' इति ढत्वं नेत्यपि सुवचम् । इण इति सस्य षत्वमपि नेति तु न सुवचम्, ढत्वं प्रति तस्यासिद्धत्वादिति दिक् ॥—**अन्यथेति** । 'नाज्झलौ' इत्यस्यानारम्भे ॥—**ग्रहणकशास्त्रबलादिति** । अयं भावः । दीर्घादीनामिव हकारादीनामप्यकारवाच्यत्वेऽभ्युपगते ह्यच्त्वं स्यात्, प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमादिति ॥—**अविधीयमानोऽणिति** ॥ तेन 'इदम इश्' इत्यत्र त्रिमात्र इकारो न भवति ॥ **उदिच्चेति** । इह अविधीयमान इति न संबध्यते, उदित्करणसामर्थ्यात् । तेन विधीयमानोऽप्युदित्सवर्णान्गृह्णात्येव । 'कुहोश्चुः' जगाद जघटे ॥—**परेण णकारेणेति** । व्याख्यानतो विशेषप्रतिपत्तेः । 'उपसर्गादृति' 'ऋत उत्' इत्यादौ तपरकरणलिङ्गाच्च । यदि पूर्वेण स्यात्तर्हि तपरत्वमिहानर्थकं स्यात्, ऋकारस्यानण्त्वेन सवर्णाग्राहकत्वात् । एवं च 'तपरत्वाद्दीर्घे न, उप ऋकारीयति' इत्यादिवक्ष्यमाणग्रन्थोऽपि संगच्छते ॥—**एवम् लृकारोऽपीति** । त्रिंशतः संज्ञेत्यनुषज्यते । एतच्च न्यायसाम्यादुक्तम् । वस्तुत लृकारस्य ऋकारग्राहकत्वं न कुत्राप्युपलभ्यते ॥—**सूत्रारम्भसामर्थ्यादिति** । सति तु सावर्ण्ये एकारेण ऐकारग्रहणादोकारेण चौकारग्रहणात् 'ऐऔच्' इति सूत्रारम्भो वृथा स्यादिति भावः ॥—**नापादनीयमिति** । तेन ग्लावं ग्लाव इत्यत्र 'औतोम्शसोः' इति न प्रवर्तत इति मूल एव स्फुटीभविष्यति ॥—**यद्यपीति** । ग्रहणकशास्त्रस्यावाप्यनिष्पत्तेरिति भावः । एतच्च 'अकः सवर्णे दीर्घः' इत्यत्र व्युत्पादयिष्यामः । अक्षराणां समाम्नाय उपदेशसूत्राणि तत्र भवा आक्षरसमाम्नायिकाः 'बह्वचोन्तोदात्ताद्'—इति ठक् ॥ —**होढ इति ढत्वं न भवतीति** । यद्यप्याकारप्रश्लेषाभावे संयोगान्तलोप एव प्राप्नोति न तु ढत्वं तस्यासिद्धत्वात्, अतोऽत्र 'संयोगान्तलोपो न भवति' इति वक्तुमुचितम्, तथापि 'कार्यकालं संज्ञापरिभाषम्' इति पक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषायाः प्रवृत्तेरन्तरङ्गे ढत्वे कर्तव्ये बहिरङ्गः संयोगान्तलोपोऽसिद्धः इति मत्वेदमुक्तमित्येके । अन्ये तु 'संज्ञापूर्वको विधिरनित्यः' इति लोपस्य वारणं कथंचित्कर्तुं शक्यमित्याशयेन ढत्वं नेत्युक्तमित्याहुः । विश्वपाभिरित्यत्रेत्युपलक्षणं, विश्वपाः विश्वपाभ्यामित्यादावपि न भवति । 'हो ढः' इत्युपलक्षणं, पृथगायुरित्यादौ 'झयो हः–' इत्याकारस्य घकारो नेति दिक् । यदि तु 'विवृतमूष्मणाम्' इत्यत्र 'ईषत्स्पृष्टम्' इत्यत ईषदित्यनुवर्त्य स्वराणां चेत्यत्र निवर्त्य ईषद्विवृतमूष्मणां विवृतं स्वराणामिति प्रयत्नभेदो व्याख्यायते, तदा 'नाज्झलौ' इति सूत्रं त्यक्तुं शक्यमित्याकरे स्थितम् ॥—**अननुनासिकास्ते इति** । येत्वाक्षरसमाम्नायिका अणस्त एव सवर्णानां संज्ञा भवन्तीति भावः ॥ एवं च रेफो हकारश्च अण्प्रत्याहारान्तर्गतोऽपि न कस्यचित्संज्ञा तत्सवर्णस्यान्यस्याभावादित्यवगन्तव्यम् ॥ —**स च तात्परश्चेति** । तच्छादिना उभयं विवक्षितमिति भावः ॥—**वृद्धिरादैच्** ॥ आच्च ऐच्चेति इतरेतरयोगद्वन्द्वः, 'सुपां सुलुक्–' इति औङः सुलुग्वा । यद्वा । समाहारद्वन्द्वः । न चैवं 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टच् स्यादिति

---

१ तः पर इति—एतस्योदाहरणम् 'अतोभिस ऐस्' इति, उत्तरस्य 'वृद्धिरादैच्' इति । २ समकालस्यैवेति—एवकारस्तु न्यायसिद्धबाध्यबाधकभावानुवादकः । इदं च सूत्रं विभक्तितकारे न प्रवर्तते 'उपसर्गादृति' इति तपरकरणात्, तेन 'आद्गुणः' इत्यादौ न दोषः, 'ऋतेरप्' इत्यत्र तु दकार एवेति न दोषः । ३ वृद्धिरिति—वृद्धिशब्दस्य ग्रन्थादौ पाठो मङ्गलार्थः ।

यावित्यादि। गौणत्वेऽप्यनङ्णित्त्वे प्रवर्त्तेते। सखीमति-क्रान्तोऽतिसखिः लिङ्गविशिष्टपरिभाषाया अनित्यत्वाच्च (२८२पृ०) टच्। हरिवत् द्वृड़ानङ्णित्त्वे न भवतः गोस्त्रियो-रिति (१२२पृ०) ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्।

## पतिः समास एव (८८)। १। ४। ८।

पतिशब्दः समास एव घिसंज्ञः स्यात्। पत्या। पत्ये। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु। भूपतिना। भूपतये। कतिशब्दो नित्यं बहुवचनान्तः (८९)।

## बहुगणवतुडति (९०) संख्या। १। १। २३।

एते संख्यासंज्ञाः स्युः।

(८८) पतिः समास एवेति। शेषो घ्यसखीति सूत्रात् (१०९पृ०) घीत्यनुवर्त्त्याह घिसंज्ञ इति। एवकारः साधुत्वावधारणार्थः स्मृतिपुराणेषु पतये सखि-नेत्यादिप्रयोगस्यासाधुत्वेऽपि त्रिशङ्क्वाद्ययाज्ययाजनादाविव तत्तत्प्र-योक्तॄणां माहात्म्येनैव दोषाभावस्तेषामिव तपोबलात् दध्ययनकालेऽ-स्माक न दोषः स्वातन्त्र्येणासाधूनामुच्चारणेऽस्माकं दोष इति नदी-संज्ञासूत्रभाष्ये स्पष्टम्। शब्देन्दु०।

(८९) कतिशब्द इति किमः संख्यापरिमाणे इत्यत्र(६६८पृ०)बहुत्वसंख्याव-च्छिन्नसंख्येयविशेषप्रश्न एव डतिप्रत्यय इति भाष्ये उक्तत्वादिति भावः।

(९०) बहुगणयोर्नियतविषयगतपरिच्छेदहेतुत्वाभावेनासंख्यात्वादतिदेशार्थं बहुगणेति सूत्रं त्रित्वादिव्यापकधर्मविशेषो बहुत्वादि तस्मिन्नेवा-र्थेऽतिदेशो न संघवैपुल्यार्थे इति बोध्यम् अत्र वतुसाहचर्यात् तद्धित एव डतिर्नतु पातेर्डतिरित्युणादिकोऽपीति बोध्यम्।

डति च (८१)। १। १। २५।

डत्यन्ता संख्या षट्संज्ञा स्यात्।

प्रत्ययस्य (८२) लुक्श्लुलुपः। १। १। ६१।

लुक्, श्लु, लुप् एतैः शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्।

षड्भ्यो लुक् (८३)। ७। १। २२।

षड्भ्यः परयोर्ज्जश्शसोर्लुक् स्यात्।

प्रत्ययलोपे (८४) प्रत्ययलक्षणम्। १। १। ६२।

प्रत्यये लुप्तेऽपि तदाश्रितं कार्य्यं स्यात्। इति। जसि चेति (१०८सू०) गुणे प्राप्ते।

न लुमताऽङ्गस्य। १। १। ६३।

लुक्श्लुलुप् एते लुमन्तः। लुमता शब्देन लुप्ते तन्निमित्तम-

(८१) डति चेति ष्णान्ताः षडित्यतः (१६२सू०) षडिति बहुगणेत्यतः (११२सू०) संख्येति चानुवर्त्याह संख्येति।

(८२) प्रत्ययस्येति अदर्शनं लोपः (३६सू०) इत्यतोऽदर्शनमनुवर्त्याह प्रत्ययस्यादर्शनमिति लोपात् पृथक् संज्ञा प्रत्ययालक्षणार्था।

(८३) षड्भ्य इति। जश्शसोः शिरित्यतो(१३८सू०)जश्शसोरित्यनुवर्त्तते। इदञ्च गौणे न प्रवर्त्तते इति भाष्ये स्थितम्।

(८४) प्रत्ययलोप इति प्रत्ययस्यानुवृत्त्या लाभेऽपि पुनर्ग्रहणं तदवयवे यथा न स्यादिति। लक्षणभित विशेषाभिधानात् प्रत्ययनिमित्तकमेव कार्य्यं न तु प्रत्ययस्थानिकमिति विशेषोऽवगन्तव्यः।

ङ्कार्य्यं न स्यात्। कति२। कतिभिः। कतिभ्यः २। कतीनाम्। कतिषु। अस्मद्युष्मत्संख्यास्त्रिषु सरूपाः (६५)। त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २।

त्रेस्त्रयः। ७। १। ५३।

त्रिशब्दस्य त्रयादेशः स्यादामि। त्रयाणाम्। परमत्रयाणाम्। गौणत्वे तु नेति केचित्। प्रियत्रीणाम्। वस्तुतस्तु प्रियत्रयाणाम्। त्रिषु। द्विशब्दो द्विवचनान्तः।

त्यदादीनामः (६६)। ७। २। १०२।

एषामकारोऽन्तादेशः स्याद्विभक्तौ। (६७४पृ०)द्विपर्य्यन्तानामेवेष्टिः (६७)। द्वौ२। द्वाभ्यां३। द्वयोः२। द्विपर्य्यन्तानामिति किम्। भवान्। भवन्तौ। भवन्तः। संज्ञायाम्, उपसर्ज्जनत्वे च नात्वम् सर्व्वाद्यन्तर्गणकार्य्यत्वात्। ;द्विर्नाम कश्चित्। द्विः। द्वी। द्वयः। द्वावतिक्रान्तोऽतिद्विः। हरिवत्। प्राधान्ये तु परमद्वौ इत्यादि। औडुलोमिः। औडुलोमी। उडुलोमाः)। लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः*। बाह्वादीञो (४६८पृ०)ऽपवादः। औडुलोमिम्। औडुलोमी। उडुलोमान्।

(६५) सरूपा इति लिङ्गविशेषबोधककार्य्यानुत्पत्त्या अविशिष्टा। पदान्तरसन्निधानं विनास्मदादे लिङ्गविशेषावबोधकत्वविरहात्।

(६६) त्यदादीनाम इति। अष्टन आ विभक्तावित्यतो (१६२पृ०) विभक्तावित्यनुवर्त्तते आदेशे स्ववर्णग्रहणाभावादाकार इति।

(६७) इष्टिर्भाष्यकारादीनामिच्छा।

इतीदन्ताः। वातप्रमीरिति उणादिसूत्रेण (उ०४।२४०)माङ्ई-प्रत्ययः कित् (९८)। वातम्प्रमिमीते इति वातप्रमीः। दीर्घाज्जसि च(१०७पृ०)। वातप्रम्यौ। वातप्रम्यः। हे वातप्रमीः। अमि-पूर्व्वः (९०पृ०)। वातप्रमीम्। वातप्रम्यौ। वातप्रमीन्। वात-प्रम्या। वातप्रमीभ्याम्। वातप्रम्ये। वातप्रम्यः २। वात-प्रम्योः। वातप्रम्याम्। दीर्घत्वान्न नुट्। ङौ तु सवर्णदीर्घः। वातप्रमी। वातप्रमीषु। एवं ययीपप्यादयः। यान्त्यनेनेति ययीर्मार्गः। पाति लोकमिति पपीः सूर्य्यः। यापोः किद्वे चेति (उ०४।२४) ईप्रत्ययः। क्विबन्तवातप्रमीशब्दस्य तु अमि शसि ङौ च विशेषः। वातप्रम्यम्। वातप्रम्यः। वातप्रम्यि। एरनेकाच इति (११८पृ०) वक्ष्यमाणो यण् प्रधीवत्। बह्वः श्रेयस्यो यस्य स बहुश्रेयसी(९९)। दीर्घङ्यन्तत्वाद्धल्ङ्याविति (११पृ०) सुलोपः।

## यू स्त्र्याख्यौ (१००) नदी। १।४।३।

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। प्रथमलिङ्गग्रह-णञ्च। *। पूर्व्वस्त्र्याख्यस्योपसर्ज्जनत्वेऽपि नदीत्वं वक्तव्य-मित्यर्थः।

(९८) किदिति। तेन आतो लोप इटि चेति (७९४पृ०) आलोपः।
(९९) बहुश्रेयसीति ईयसश्चेति (४२६पृ०) न कप्। ईयसोबहुव्रीहेर्नेति वाच्यमिति (४२७पृ०) नोपसर्ज्जनह्रस्व इति द्रष्टव्यम्।
(१००) यू स्त्र्याख्याविति। ईच ऊच अविभक्तिकत्वेन निर्द्देशात् यूइति। स्त्रियाविति वक्तव्ये स्त्र्याख्याविर्युक्तिर्नित्यस्त्रीत्वकथनार्थम्।

अम्बार्थ(१०१) नद्योर्ह्रस्वः। ७। ३। १०७।

अम्बार्थानान्नद्यन्तानाञ्च ह्रस्वः स्यात् सम्बुद्धौ। हे बहुश्रेयसि। शसि बहुश्रेयसीन्।

आण्नद्याः। ७। ३। ११२।

नद्यन्तात्परेषां ङितामाडा(१०२)गमः स्यात्।

आटश्च (१०३)। ६। १। ९०।

आटोऽचि परे वृद्धिरेकादेशः स्यात्। बहुश्रेयस्यै। बहुश्रेयस्याः२। नद्यन्तात्परत्वान्नुट्। बहुश्रेयसीनाम्।

ङे (१०४) राम्नद्याम्नीभ्यः। ७। ३। ११६।

नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात्। इह परत्वादाटा नुट् बाध्यते (१०५)। बहुश्रेयस्याम्। शेषमीप्रत्ययान्तवातप्रमीवत्। अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः।

(१०१) अम्बेति ह्रस्वस्य गुणः सम्बुद्धौ चेत्यतः (१२७पृ०)सम्बुद्धावित्यनुवर्त्तते। इह ह्रस्वग्रहणसामर्थ्यात् गुणो न प्रवर्त्ततेऽन्यथा गुण इत्येवोच्येत।

(१०२) घेर्ङितीत्यतो (१०९पृ०) ङितीत्यनुवर्त्त्य विभक्तिं विपरिणमय्याह ङितामिति।

(१०३) आटश्चेति। इकोयणचीत्यतोऽचीति (३२पृ०)वृद्धिरेचीत्यतो वृद्धिरिति (४३पृ०) चानुवर्त्त्याहाचि परे इत्यादि।

(१०४) ङेरिति सप्तम्येकवचनं न तु ङेर्य (९२पृ०) इतिवच्चतुर्थ्येकवचनं त्रिचतुरोः, स्त्रियामिति (१२२पृ०)निर्देशात्।

(१०५) आटा नुट् बाध्यते इति कृते तु आटि पश्चात् न प्रवर्त्तते सकृद्गतिन्यायादिति बोध्यम्।

प्रोषयत्नङ्गश्रेयसीवत् । कुमारीमिच्छन् कुमारीवाचरन्वा ब्राह्मणः। कुमारी (१०६)। क्यजन्तादाचारक्विवन्ताद्वा कर्त्तरि क्विप्। हल्ङ्याबिति (१११पृ०) सुलोपः।

अचि (१०७) श्नुधातुभ्रुवां य्वोरियङुवङौ। ६। ४। ७७।

श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाऽङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। ङिच्चेति(२८पृ०)अन्तादेशः। आन्तरतम्यात् (२७पृ०) एरियङ् ओरुवङ्। इतीयङि प्राप्ते ।

एर(१०८)नेकाचोऽसंयोगपूर्वस्य। ६। ४। ८२।

धात्ववयवसंयोगपूर्व्वो न भवति यद्वर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे। इति यण्। कुमार्य्यौ। कुमार्य्यः। हे कुमारि। अमि शसि च। कुमार्य्यम्। कुमार्य्यः। कुमार्य्यै। कुमार्य्याः २। कुमारी-

---

(१०६) कुमारीति क्विवन्तं प्रति ङ्यन्तस्योपसर्जनत्वेऽपि न ह्रस्वः गोस्त्रियोरुपसर्जनस्येति(३२२पृ०)सूत्रे तद्धितलुगुपसर्जनस्यैव ह्रस्वविधानात् एतस्याप्रधानत्वमात्रं नतूपसर्जनत्वं केनचित् सूत्रेण विहितमिति विशेषः तेन हरितक्याः फलेति वाच्ये तद्धितलुप्यपि हरितक्या अप्रधानत्वेऽपि न ह्रस्वः।

(१०७)अचीति। य्वोरिति धातोरेव विशेषणं योग्यत्वात्तत श्नुभ्रुवोरित्यायेनाह इवर्णोवर्णान्तधातोरिति।

(१०८) एरिति इको यणचीत्यतो(३२पृ०)यणिति अचि श्नु धात्वित्यतोऽचीति धातुमात्रं च योग्यत्वादनुवर्त्तते इत्याह धात्ववयवइति ।

णाम्। कुमार्य्याम्। कुमार्य्योः। प्रधीः(१०९)। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यः। उन्नयतीत्युन्नीः। धातुना संयोगस्य विशेषणादिह स्यादेव यण्। उन्न्यौ उन्न्यः। हे उन्नीः। उन्न्यम्। ङेराम्। उन्न्याम्। एवं ग्रामणीः (११०)। अनेकाचः किम्। नीः। नियौ। नियः। अमि शसि च परत्वादियङ्। नियम्। नियः। ङेराम्। नियाम्। असंयोगपूर्व्वस्य किम्। सुश्रियौ। यवक्रियौ। गति (१११) कारकेतरपूर्व्वपदस्य यण् नेष्यते। शुद्धधियौ। परमधियौ। कथं (११२) तर्हि दुर्धियौ वृश्चिकभियेत्यादि। उच्यते। दुःस्थिता (११३) धीर्य्येषामिति विग्रहे दुरित्यस्य धीशब्दम्प्रति गतित्वमेव नास्ति। यत्क्रियायुक्ताः प्रादयस्तम्प्रत्येव गत्युपसर्गसंज्ञाः। वृश्चिक-

(१०९) प्रधीरिति प्रकृष्टं ध्यायतीति कर्त्तरि क्विप् प्रधीरिति प्रकृष्टा धीर्यस्येति विग्रहे तु धीशब्दस्य नित्यस्त्रीत्वात् प्रथमलिङ्ग्रहणञ्चेति (११६९०) तस्या नदीत्वमादाय यथासम्भवं कार्य्यमिति विवेकः।

(११०) अग्रग्रामाभ्यां नयतेरिति णत्वम्।

(१११) गतीति गतिकारकपूर्व्वपदकभिन्नस्य न भवतीति नियम्यते इत्याह शुद्धधियाविति शुद्धा धीर्यस्येति विग्रहे भावक्विबन्तधीशब्दस्य सत्त्वरूपतया तद्विशेषणस्य शुद्धत्वस्य असत्त्वभूतार्थक्रियाविशेषणत्वाभावेनाकारकत्वात् न यण्। शुद्ध ध्यायतीति वाक्ये तु स्यादेवेति विवेकः। प्रकृष्टं ध्यायतीति वाक्ये तु प्रकर्षः ध्यानक्रियाया एवेति यणिति बोध्यम्।

(११२) कथमिति दुष्टं ध्यायतीति वृश्चिकाद्बिभेतीति विग्रहाभिप्रायेण शङ्का।

(११३) दुःस्थितेति दुःशब्दोपात्तदुष्टत्वं स्थितावेव विशेषणं न तु धीशब्दार्थे इति तत्क्रियाया अगतित्वमिति भावः।

शब्दस्य बुद्धिकृतमपादानत्वं नेह (११४) विवक्षितम्। वृश्चिक-सम्बन्धिनो (११५) भीः वृश्चिकभीरित्युत्तरपदलोपो वा।

## न भूसुधियोः (११६)। ६। ४। ८५।

एतयोर्यण् न स्यादचि सुपि। सुधियौ। सुधियः इत्यादि। सखायमिच्छति सखीयति ततः क्विप्। अल्लोपयलोपौ। अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते। क्वौ लुप्तं न स्थानिवत्। एकदेशविकृतस्याऽनन्यतयाऽनङ्गित्त्वे। सखा। सखायौ। सखायः। हे सखीः। अमि पूर्व्वरूपात्(६०पृ०)परत्वाद्यणि प्राप्ते। ततोऽपि परत्वात्सख्युरसम्बुद्धाविति (१११पृ०) प्रवर्त्तते। सखायम्। सखायौ। शसि यण्। सख्यः। सह खेन वर्त्तत इति सखः। तमिच्छतीति। सखीः। सुखमिच्छतीति। सुखीः। सुतमिच्छतीति। सुतीः। सख्यौ। सुख्यौ। सुत्यौ। ख्यत्या-दिति (११२पृ०) दीर्घस्याऽपि ग्रहणादुकारः। सख्युः। सुख्युः। सुत्युः। लूनमिच्छतीति लूनीः। क्षाममिच्छतीति क्षामीः। प्रस्तीममिच्छतीति प्रस्तीमीः। एषां ङसिङसोर्यण्। नत्व-मत्वयोरसिद्धत्वात् ख्यत्यात्(११२पृ०)इत्युत्त्वम्। लून्युः। क्षाम्युः।

(११४) नेहेति। ततश्च सम्बन्धसामान्यषष्ठ्येव समासः।

(११५) वृश्चिकसम्बन्धिनीति पूर्व्वपदोत्तरभागलोपः शाकपार्थिवादित्वादिति भावः।

(११६) न भूसुधियोरिति सन्निकृष्टतया प्रथमोपस्थितत्वात् एरनेकाच इति (११८पृ०) ओः सुपीति (१२३पृ०) एतावेवेदं बाधते।

प्रधीभ्यः। शुष्कीयते। शुष्कीः (११७)। पक्वीः। इयङ्। शुष्कियौ। शुष्कियः। ङसिङसोः शुष्किय इत्यादि। इति ईदन्ताः। शम्भुर्हरिवत्। एवं विष्णुवायुभान्वादयः।

तृज्वत् क्रोष्टुः (११८)। ७। १। ९५।

क्रोष्टुस्तृजन्तेन तुल्यं वर्त्तते असम्बुद्धौ सर्व्वनामस्थाने परे क्रोष्टुशब्दस्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः।

ऋतो ङि सर्व्वनामस्थानयोः। ७। ३। ११०।

ङौ सर्व्वनामस्थाने च परे ऋदन्ताऽङ्गस्य गुणः (११९)स्यात्। इति प्राप्ते।

ऋदुशनस्पुरुदंशोऽनेहसाञ्च। ७। १। ९४।

(११७) शुष्कीरिति शुषःकः पचो व इति निष्ठातस्य कत्ववत्वे। धातोः संयोगपूर्व्वकाद्व यणिति (११८सू०)त्यात्मपरत्वाभावेन न उदिति बोध्यम्।

(११८) क्रुश आह्वाने रोदने चेत्यस्मात् सितनिगमीत्यादिना (उ०१८७सू०) औणादिके तुनि क्रोष्टुशब्दः तृचि तु क्रोष्टृशब्दः द्वावपि शृगालवाचकौ द्वयोरप्यविशेषेण सर्व्वत्र प्रयोगे प्रसक्ते असम्बुद्धिसर्व्वनामस्थाने स्त्रियाञ्च तृजन्त एव तृतीयादावचि तु उभयमन्यत्र आमादौ तुन्नन्त एवेति प्रयोगनियमार्थं त्रिसूत्री प्रवर्त्तते। क्रोष्टुरिति प्रथमैकवचनम्। प्राधान्यात् व्याख्यानाच्च रूपातिदेशार्थं वत्करणमिति बोध्यम्। सर्व्वनामस्थाने चासम्बुद्धाविति (११०सू०) इत्यस्मिन्नान्वेति व्याख्यानात्।

(११९) ऋत इति ह्रस्वस्य गुण इत्यतो (१०८सू०) गुण इत्यनुवर्त्तते तपरकरणमनुकरणदीर्घॠकारवारणार्थम्।

ऋदन्तानामुशनसादीनाञ्चाऽनङ्(१२०)स्यादसम्बुद्धौ सौपरे।

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्। ६। ४। ११।

अबादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सर्व्वनामस्थाने परे (१२१) नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य भवत्येव। समर्थस्ते उद्गातार इति भाष्यप्रयोगात्। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टारम्। क्रोष्टारौ। क्रोष्टून्।

विभाषा तृतीयादिष्वचि। ७। १। ९७।

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे।

ऋत उत् (१२२)। ६। १। १११।

ऋदन्तात्ङसिङसोरतिपरे उकार एकादेशः स्यात्। रपरत्वम्।

रात्सस्य। (१२३) ८। २। २४।

(१२०) अनङ् साविति सूत्रं (११०पृ०) सख्युरसम्बुद्धौ(११२पृ०) इत्यतोऽसम्बुद्धाविति चानुवर्त्त्य व्याचष्टेऽनङिति।

(१२१) ढ्लोपे दीर्घ इत्यतो(८०पृ०)दीर्घ इति नोपधाया इत्यतः(१६२पृ०) उपधाया इति सर्व्वनामस्थाने चासम्बुद्धाविति(१११पृ०)सूत्रञ्चानुवर्त्तते।

(१२२) ऋत उदिति। ङसिङसोश्चेति(११०पृ०)सूत्रम्, एङः पदान्तादतीत्यतः (५०पृ०) अतीति चानुवर्त्तते।

(१२३) रादिति। सूत्रं संयोगान्तलोपेनैव सिद्धे रात्सस्यैवेति नियमार्थं पुमान् स्त्रियेति (४४५पृ०) निर्देशात् रादेव सस्येति विपरीतनियमो न।

आत् ऐच वृद्धिसंज्ञः स्यात् । **अदेङ् गुणः** ।१।१।२। अत् एङ् च गुणसंज्ञः स्यात् । **भूवादयो धातवः** ।१।३।१। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः । **प्राग्रीश्वरान्निपाताः** ।१।४।५६। इत्यधिकृत्य । **चादयोऽसत्त्वे** ।१।४।५७। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः । **प्रादयः** ।१।४।५८। अद्रव्यार्थाः प्रादयस्तथा । **उपसर्गाः क्रियायोगे** ।१।४।५९। **गतिश्च** ।१।४।६०। प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः ॥ प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप । एते प्रादयः । **न वेति विभाषा** ।१।१।४४। निषेधविकल्पयोर्विभाषा संज्ञा स्यात् । **स्वं रूपं शब्दस्याऽशब्दसंज्ञा** ।१।१।६८।

---

वाच्यम् । समासान्तविधेरनित्यत्वात् । तत्र च प्रमाणं समासेषु वक्ष्यामः । अथ वा । 'आद्' इत्यसमस्तमेवास्तु । वृद्धिशब्दस्तन्त्रेणावृत्त्या वा योजनीयः । अयस्मयादित्वेन भत्वाज्जोः कुत्वं ॥ ऐजिह द्विमात्र एव, तात्परत्वात्, तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न । वृद्धिप्रदेशा 'वृद्धिरेचि' इत्यादयः ॥—**अदेङ् गुणः** ॥ तपरकरणमिह सरूपार्थम् । तेन गङ्गोदकमित्यत्र त्रिमात्रो न । तरतीत्यत्र त्वकार एव, न तु कदाचिदाकारः । न च प्रमाणत आन्तर्येण नियमसिद्धिः । रपरत्वे कृते एकस्याध्यर्धमात्रत्वाद् अपरस्यार्धतृतीयमात्रत्वात् । गुणप्रदेशास्तु 'आद्गुणः' 'अतो गुणे' इत्यादयः ॥—**भूवादय** इति । भूश्च वाश्च भूवाविति द्वन्द्वः, आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः, आदिश्च आदिश्च आदी, भूवौ आदी येषामिति विग्रहः, भूप्रभृतयो वासदृशाः, सादृश्यं च क्रियावाचकत्वेनेत्यभिप्रेत्याह—**क्रियावाचिन** इति ॥ क्रियावाचिन इति किं, याः पश्यसीत्यादौ धातुत्वं माभूत् । सति हि तस्मिन् 'आतो धातोः' इत्याकारलोपः स्यादिति स्थितं मनोरमायाम् । भ्वादयः किं, हिरुक् पृथग् इत्याद्यव्ययानां शिश्ये इति भावार्थतिङन्तस्य च मा भूत् । स्तम्भ्वादीनामुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते । चुलुम्पादीनां 'बहुलमेतन्निदर्शनम्' इति गणसूत्रेण संग्रहः ॥—**प्राग्रीश्वरात्** ॥ रेफविशिष्टग्रहणं किम्, 'ईश्वरे तोसुन्कसुनौ' इत्यस्य व्याप्तिन्यायेनावधित्वं मा भूत् । यदि तु प्रत्यासत्त्यैव 'अधिरीश्वरे' इत्यस्यावधित्वसिद्धिरित्युच्यते, तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्तु ॥—**चादयः** ॥ अद्रव्यार्थाः किं, पशुः । लिङ्गसंख्यान्वितं द्रव्यम् । इह तु स्यादेव—'लोधं नयन्ति पशुमन्यमानाः' । पशु इति सम्यगर्थे ॥—**गतिश्च** ॥ उपसर्गसंज्ञासमावेशार्थश्चकारः । अन्यथा 'आ कडारात्—' इति पर्यायः स्यात् । तत्फलं तु प्रणेयमित्यादौ 'उपसर्गादसमासे—' इति णत्वं 'गतिकारक—' इति कृदुत्तरपदप्रकृतिस्वरसिद्धिश्चेति दिक् ॥—**निस्निर्दुस्दुर्** इति । 'उपसर्गस्यायतौ' इति निर्दुरोर्लत्वम्, निलयते दुलयते । निसो दुसश्च रुत्वस्यासिद्धत्वाल्लत्वाभावः, निरयते दुरयते ॥—**न वेति विभाषा** ॥ नेति प्रतिषेधो वेति विकल्पस्तदाह—**निषेधविकल्पयो**रिति । 'विभाषा श्वेः' इत्यादिषु प्रतिषेधविकल्पावुपतिष्ठेते, तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तते, शुशाव शिश्वायेत्यत्राप्राप्तौ विकल्पः, शुशुवतुः शिश्वियतुरित्यादौ तु 'वचिस्वपि—' इति नित्यप्राप्ताविति विवेकः ॥ अत्रेदं बोध्यम्, इतिशब्दः काकाक्षिन्यायेनोभाभ्यां संबध्यते, स च पदार्थविपर्यासकृत्, तेन निषेधो विकल्पश्च नवाशब्दार्थः संज्ञी, विभाषाशब्दार्थो विकल्पः संज्ञा ॥ उभयत्र विभाषार्थं चेदं सूत्रम्, प्राप्तविभाषायामप्राप्तविभाषायां च नास्योपयोगः । प्राप्तविभाषायां भावांशस्य सिद्धत्वेन विभाषाश्रुत्या पक्षे भवतीति भावांशमनूद्य पक्षे न भवतीत्यभावांशमात्रकरणात्, अप्राप्तविभाषायां तु अभावांशस्य सिद्धत्वेन पक्षे न भवतीत्यभावांशमनूद्य पक्षे भवतीति भावांशमात्रकरणात् । 'विभाषा श्वेः' इत्युभयत्र विभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव संप्रसारणविकल्पः स्यात्, कित्सु यजादित्वाद् 'वचिस्वपि—' इति नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव प्रवृत्तिः स्यात्, न तु पित्सु । न च पित्सु विधिमुखेन कित्सु तु निषेधमुखेनेत्युभयथापि प्रवृत्तिरस्त्विति वाच्यम्, वैरूप्यलक्षणवाक्यभेदप्रसंगात् । संज्ञाकरणे तु श्रुतक्रमानुरोधेन नेति प्रतिषेधः प्रथमं कित्सु प्रवर्तते, ततः किदकिद्रूपे सर्वस्मिन् लिटि एकरूपं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव प्रवर्तते' ॥ इतीति किं, घुसंज्ञावत् 'स्वं रूपम्—' इति वचनाच्छब्दस्य संज्ञा मा भूत्, तथाहि सति 'विभाषा श्वेः' इत्यस्य नवाशब्दः श्वयतेरादेश इत्यर्थः स्यात् । इतिशब्दे तु सति अर्थः संज्ञीति लभ्यते । तथाहि—लोके ह्यर्थप्रधानः शब्दः, 'गौरित्ययमाह' इत्यादौ तु शब्दरूपपरः संपद्यते, व्याकरणे तु 'स्वं रूपम्—' इति परिभाषणात्स्वरूपपरत्वमौत्सर्गिकम् । इतिशब्दसमभिव्याहारे त्वर्थपरतेति विशेषः ॥ इदमेवेतिशब्दस्य पदार्थविपर्यासकत्वं नाम । संज्ञा त्वर्थस्यैव न तु विभाषाशब्दस्येति व्याख्यानस्य 'हृक्रोरन्यतरस्याम्' इत्यादौ वैरूप्योद्धारः फलम् । उभयत्रविभाषा हि तत्सूत्रम्, अभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थस्य करोतेरकर्मकत्वाच्च 'गतिबुद्धि—' इत्यादिना अणौ कर्तुर्णौ कर्मत्वे प्राप्ते अर्थान्तरे चाप्राप्ते तदारम्भात् । उदाहृतं च भाष्ये 'प्राप्ते तावद् अभ्यवहारयति सैन्धवान् अभ्यवहारयति सैन्धवैः, विकारयति सैन्धवैः,

१ रीश्वरादिति—ल्यब्लोपे पञ्चमीयम्, रीश्वरशब्दं अभिव्याप्येत्यर्थः । २ निषेधेति—केचित्तु अर्थस्य संज्ञात्वं न दृष्टचरम्, अनेकविधिवाक्येषु विकल्पवाचिपदलक्षणागौरवग्रस्तं चेति इतिशब्दसंबन्धसामर्थ्याद्विभाषेत्युपस्थितार्थाक्षिप्ततद्वाचकशब्दमात्रस्य संज्ञात्वमिति वदन्ति ।

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रेफस्य विसर्गः। क्रोष्टुः। आमि परत्वात्तृज्वद्भावे प्राप्ते* नुमचिरतृज्वद्भावेभ्यो नुट् पूर्व्वविप्रतिषेधेन (१२४)*। क्रोष्टूनाम्। क्रोष्टरि। क्रोष्ट्रोः। पक्षे हलादौ च शम्भुवत्। हूहूः। हूह्वौ। हूह्वः। हूहूम्। हूह्वौ। हूहूनित्यादि। अतिचमूशब्दे तु नदीकार्य्यं विशेषः। शेषन्तु क्विबन्तवातप्रमीवत्। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्। अतिचम्वाम्। खलपूः।

## ओः सुपि (१२५)। ६। ४। ८३।

धात्ववयवसंयोगपूर्व्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादजादौ सुपि। गतिकारकेतर पूर्व्वपदस्य यण् नेष्यते। खलप्वौ। खलप्व इत्यादि। एवं सुल्वादयः। अनेकाचः किम्। लूः। लुवौ। लुवः। धात्ववयवेति किम्। उल्लूः। उल्ल्वौ। उल्ल्वः। असंयोगपूर्व्वस्य किम्। कटप्रुवौ। कटप्रुवः। गतीत्यादि किम्। परमलुवौ। सुपि किम्। लुलुवतुः। सुभ्रूः। न भूसुधियोः(१२७)। सुभुवौ। सुभुवः।

---

(१२४) नुमचिरेति। इकोऽचीति(१४२पृ०)नुम्, अचि र ऋत इति(१२२पृ०) रः तृज्वद्भावश्चेति (१२१पृ०) परत्वात् प्राप्ता अपि नुटा बाध्यन्ते पूर्व्वविप्रतिषेधेन पूर्व्वेणैव नुटा परेषां विप्रतिषेधात् बाधात् तद्बाधं कृत्वा नुटा भवितव्यमित्यर्थः।

(१२५) ओः सुपीति। एरनेकाच इति(१८८पृ०) सूत्रमेरिति पदं विहाय सानुवृत्तिकमनुवर्त्तते इत्याशयेनाह धात्ववयवेत्यादि।

वर्षाभ्वश्च(१२६)। ६। ४। ८४।

अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ। वर्षाभ्वः। दृन्भ-तीति दृन्भूः(१२७)। अन्दूदृन्भू जम्बू कफेलू कर्कन्धूर्दिधिषूरित्यु-णादिसूत्रेण (उ०१८८९पृ०)व्युत्पादितः। दृन्भ्वौ। दृन्भ्वः। दृन्भ्वम्। दृन्भ्वौ। दृन्भून्। शेषं हूहूवत्। हन्निति नान्ते हिंसार्थेऽव्यये भुवः क्विप्। हन्भूः। हन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः*। हन्भ्वौ। हन्भ्व इत्यादि। खलपूवत्। करभ्वौ। करभ्वः। दीर्घपाठे तु कर एव कारः। स्वार्थिकः प्रज्ञाद्यण्। कारभ्वौ। कारभ्वः। पुनर्भूर्योगिकः पुंसि। पुनर्भ्वावित्यादि। दृणभ-काराभूशब्दौ स्वयंभूवत्। इत्यूदन्ताः। धाता। हे धातः। धातारौ। धातारः। ऋवर्णान्नस्य णत्वं वाच्यम्*। धातॄणा-मित्यादि। एवं नप्त्रादयः। उद्गातारौ। पिता। व्युत्पत्ति-पक्षेऽपि नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः। पितरौ। पितरः। पितरम्। पितरौ। शेषन्धातृवत्। एवञ्जामातृ-भ्रात्रादयः। ना। नरौ। नरः। हे नः।

नृ च (१२८)। ६। ४। ६।

नृइत्येतस्य नामि वा दीर्घः स्यात्। नृणाम्—नॄणाम्। इति

(१२६) वर्षाभ्वश्चेति। न भूसुधियो रिति(१२०पृ०)निषेधे पुनर्विधानार्थं तत्सूत्रस्थं मानुवृत्तिकं सकलं पदमनुवर्त्त्याह यणित्यादि। चकारोऽनुक्तसमुच्चयार्थः तेन हन्करपुनःपूर्वस्येति वार्त्तिकोक्ततत्तत्पूर्वोऽपि भूशब्दोग्राह्यः।

(१२७) दृन्भूरिति अस्यौणादिकतया धातुत्वाभावेन नोवङ्प्रसङ्गः।

(१२८) नृ चेति। नृ इति लुप्तषष्ठीकं नामीति सूत्रं(८४पृ०)मानुवृत्तिकं छन्द-स्युभयथेत्यतः उभयथेति(६।४।५सू०)चानुवर्त्त्याह नृइत्यस्य नामीत्यादि।

ॠदन्ताः। कॄ तॄ अनयोरनुकरणे प्रकृतिवदनुकरणमिति वैकल्पिकाऽतिदेशादित्त्वे रपरत्वम्। कीः। किरौ। किरः। तीः। तिरौ। तिरः। इत्यादि गीर्वत्। इत्वाभावपक्षे तु ऋदुशन इति (१२१सू०) ऋतो ङीति (१२१सू०) च तपरकरणादनङ्गुणौ न। कॄः। क्रौ। क्रः। कॄम्। क्रौ। कॄन्। क्रा। क्रे। इत्यादि। इति ॠदन्ताः। गम्लृ शक्लृ अनयोरनुकरणेऽनङ्। गमा। शका। गुणविषये तु लपरत्वं गमलौ। गमलः। गमलम्। गमलौ। गमॄन्। गम्ला। गम्ले। ङसिङसोस्तु। ऋत उदिति (१२२सू०) उत्त्वे लपरत्वे संयोगान्तस्य (२६सू०) लोपः। गमुल्। शकुल्। इत्यादि। इति ऌदन्ताः। सेः। सयौ। सयः। स्मृतेः। स्मृतयौ। स्मृतयः। इत्येदन्ताः।

## गोतो णित्। ७। १। ९०।

गोशब्दात्परं सर्वनामस्थानं (१२८) णिद्वत्स्यात्। गौः। गावौ। गावः।

## औतोऽम्शसोः। ६। १। ९३।

आ ओत इति छेदः। ओकारादम्शसोरचि परे आकार एकादेशः स्यात्। शसा साहचर्यात् सुबेव अम् गृह्यते नेह।

(१२८) इतोऽत्सर्वनामस्थाने इत्यतः (१६१सू०) सर्वनामस्थाने इत्यनुवर्त्य विभक्तिं विपरिणमय्याह सर्वनामस्थानमिति।

अचिनवम्(१३०)। असुनवम्। गाम्। गावौ। गाः। गवा। गवे। गोः। इत्यादि। ओतो णिदिति वाच्यम्*। विहित विशेषणाच्च*। तेन। सुद्यौः। सुद्यावौ। ओकारान्ताद्विहितं सर्व्वनामस्थानमिति व्याख्यानान्नेह। हे भानो! भानवः। उः शम्भुः स्मृतो येन सः स्मृतोः। स्मृतावौ स्मृतावः। स्मृताम्। स्मृतावौ। स्मृताः। इत्यादि। इत्योदन्ताः।

## रायो हलि (१३१)। ७। २। ८५।

रैशब्दस्याऽऽकारोन्तादेशः स्याद्धलि विभक्तौ। राः। अचि (१०)आयादेशः। रायौ। रायः। रायम्। रायौ। रायः। राया। राभ्यामित्यादि। इत्यैदन्ताः। ग्लौः। ग्लावौ। ग्लावः। ग्लावम्। ग्लावौ। ग्लावः। इत्यादि। ओतोऽम्-शसोरिति (१२५सू०) इह न प्रवर्त्तते। ऐऔ (१सू०) च सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात्।

इत्यजन्ताः पुंलिङ्गाः।

---

(१३०) अचिनवमिति चिनोतेः नोर्गुणे ओकारान्ततया तत्परस्य लङोऽमो-ऽपि परे णा भूदिति।

(१३१) रायो हलीति। अष्टन आ विभक्तावित्यतः (१६२सू०) विभक्ता-वित्यनुवर्त्ताह हलि विभक्ताविति। हलादावित्यर्थः।

रमा।

औङ आपः।७।१।१८।

आबन्तादङ्गात्परस्यौङः शी (१) स्यात्। औङित्यौकार-विभक्तेः संज्ञा प्राचाम्। रमे। रमाः।

सम्बुद्धौ च।७।३।१०६।

आप एकारः (२) स्यात्सम्बुद्धौ। एङ्ह्रस्वादिति (८८पृ०) सम्बुद्धिलोपः। हे रमे। हे रमे। हे रमाः। रमाम्। रमे। रमाः। स्त्रीत्वान्नत्वाभावः।

आङि चापः (३)।७।३।१०५।

आङि ओसि च परे आबन्तस्याऽङ्गस्य एकारः स्यात्। रमया। रमाभ्याम्। रमाभिः।

याडापः।७।३।११३।

आपः परस्य ङिद्वचनस्य (४) याडागमः स्यात्। वृद्धिरेचि (४२पृ०)। रमायै। सवर्णदीर्घः। रमायाः २। रमयोः रमा-णाम्। रमायाम्। रमयोः। रमासु। एवं दुर्गादयः।

---

(१) औङ आप इति। जसः शीत्यतः (६४पृ०) शीतिपदमनुवर्त्त्याह शीति।

(२) बहुवचने झल्येदित्यतः (६२पृ०) एदिति आङि चाप इत्यतः, आप इति चानुवर्त्त्याह आप एकार इति।

(३) आङि चाप इति चकारेण ओसि चेत्यतः ओसीति (६४पृ०) बहुवचने झल्येदित्यतः, (६२पृ०) एदिति चानुवर्त्त्याह ओसि चेत्यादि।

(४) घेर्ङितीत्यतो (१०६पृ०) ङितीत्यनुवर्त्त्य विभक्तिं विपरिणमय्याह ङिद्वचनस्येति।

## सर्वनाम्नः स्याड्ढ्रस्वश्च। ७। ३। ११४।

आबन्तात् सर्वनाम्नः परस्य ङितः स्याट् (५)स्यादापश्च ह्रस्वः। याटोऽपवादः। सर्वस्यै। सर्वस्याः २। एकादेशस्य(६)पूर्वान्तत्वेन ग्रहणात् आमि सर्वनाम्न इति(६७पृ०)सुट्। सर्वासाम्। सर्वस्याम्। सर्वयोः। सर्वासु। एवं विश्वादय आबन्ताः।

## विभाषा(७)दिक्समासे बहुव्रीहौ। १। १। २८

अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै उत्तरपूर्वायै। दिङ्नामान्यन्तराले इति (४११पृ०) (८) प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह। योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै इत्यर्थः। अपूरीतुरक्तेः(६८पृ०) नेह अन्तरायै नगर्य्यै।

## विभाषा द्वितीयातृतीयाभ्याम्। ७। ३। ११५।

(५) याडापइत्यत आप तस्य तत्सूत्रेऽनुवृत्तङितश्चानुकर्षणादाह आबन्तादिति ङित इति च।

(६) आबन्तस्य गणे पाठाभावात् कथं सर्वनामत्वमित्याशङ्क्याह एकादेशस्येति टापा सहादन्तसर्वनाम्नैकादेशस्येत्यर्थः। ग्रहणात् सर्वनामशब्देन ग्रहणात्। लिङ्गविशिष्टपरिभाषया सर्वनामत्वमित्येव तु न्यायः।

(७) विभाषेति। सर्वादीनि सर्वनामानीत्यतः (६५पृ०) सर्वनामानीत्यनुवर्त्त्य योग्यतया योजयन्नाह सर्वनामतेति।

(८) दिक्समास इति दिक्शब्दमुद्दिश्य विहितःसमासो दिक्समासो न त्वन्यविध इति दर्शयितुमाह दिङ्नामान्यन्तराले इति।

आभ्यां ङितः (९) स्याडापश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यम् तीयस्य ङित्सूपसंख्यानात् (१०२पृ०)। द्वितीयस्यै-द्वितीयायै द्वितीयस्याः २ द्वितीयायाः २। द्वितीयस्यां—द्वितीयायाम्। शेषं रमावत्। एवन्तृतीया। अम्बार्थनद्योर्ह्रस्वः (११७पृ०)। हे अम्ब। हे अक्क। हे अल्ल। असंयुक्ता(१०) ये डलकास्तद्वताम्न ह्रस्वः। हे अम्बाले। हे अम्बाडे। हे अम्बिके। जरा। जरसौ। शीभावात्परत्वाज्जरस्। आमि नुटः परत्वाज्जरस्। जरसामित्यादि। पक्षे हलादौ च रमावत्। इह पूर्व्वविप्रतिषेधेन शीभावं कृत्वा सन्निपातपरिभाषाया अनित्यताञ्चाश्रित्य जरसी इति केचिदाहुस्तन्निर्मूलम्। यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य औङ आपः (१२७पृ०)आङि चापः (१२७पृ०)याडापः(१२७)ह्रस्वनद्यापः(८४पृ०)ङेराम् इति (११७पृ०) च पञ्चाऽपि विधयः प्राप्ताः एवं नम्‌निशृप्रलम्, तथाऽप्यनल्विधावित्युक्तेः (३३पृ०)भवन्ति आ आविति प्रश्लिष्य आकाररूपस्यैवापः सर्व्वत्र ग्रहणात्। एवं हल्ङ्यादि(१११पृ०)सूत्रेऽपि आ आप् ङी ई इति प्रश्लेषादतिखट्वः निष्कौशाम्बिरित्यादिसिद्धेर्दीर्घग्रहणं (११) प्रत्याख्येयम्। न चैवमप्यतिखट्वायेत्यत स्याश्रयमाकारत्वं

(९) घेर्ङितीत्यतो (१०९पृ०) ङितीत्यनुवर्त्त्य षष्ठ्या विपरिणमय्य च याडाप इत्यतः (१२७पृ०)आप इति, सर्व्वनाम्नः स्याट् ह्रस्वश्चेत्यतः(१२८पृ०) स्याडिति ह्रस्व इति चानुवर्त्त्याह ङित इत्यादि।

(१०) अम्बार्थं द्व्यक्षरं यदीति भाष्योक्तेर्द्व्यक्षरस्यैवाम्बार्थस्य ग्रहणं नान्येषामित्याशयेन फलितमाहासंयुक्ता इति।

(११) दीर्घग्रहणं ङ्याप्स्थानिकोदीर्घभिन्न आदेशो 'न स्थानिवदित्यर्थके ङ्याब्ग्रहणेऽदीर्घ इति १।१।५६सूत्रस्थे। वार्त्तिके इति बोध्यम्।

स्थानिवद्भावेनापवश्चाश्रित्य याट् स्यादिति वाच्यम् । आबन्तं यदङ्गन्ततः परस्य याड्विधानात् उपसर्ज्जनस्त्रीप्रत्यये (१२) तदादिनियमात् । पद्दन्निति (१०४ष्ट०) नासिकाया नस् । नसः । नसा । नोभ्यामित्यादि । पक्षे सुटि च रमावत् । निशायाः निश् । निशः । निशा ।

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । ८ । २ । ३६ ।**

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते (१३) च । षस्य जश्त्वेन डकारः । निड्भ्याम् । निड्भिः । सुपि डःसीति(६४ष्ट०)पक्षे धुट् चर्त्वम् चर्त्वस्याऽसिद्धत्वात् (६४ष्ट०)च यो द्वितीया इति(६४ष्ट०)टतयोष्ठथौ (१४) न, न पदान्ताट्टोरिति (५८ष्ट०) न ष्टुत्वम् । निट्त्सु । निट्सु ।

---

(१२) उपसर्जनेति । अङ्गसंज्ञायां यस्मात् प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणमिति नियमेऽपि स्त्रीप्रत्यये तदादिविधिनियमाभावादतिखट्व-शब्दस्याबन्तत्वेन याट्प्रसङ्ग इत्याशङ्क्य उपसर्जनेत्यादिकमुक्तं तथा च स्त्रीप्रत्यये चानुपसर्जने न इति अनुपसर्जने स्त्रीप्रत्यय एव तदा-दिनियमप्रतिषेधो न तूपसर्जनेऽपीत्यर्थो वार्त्तिकस्येति भावः ।

(१३) झलेति झलो झलीत्यतो (७४०ष्ट०)झलीति स्कोःसंयोगाद्योरन्ते चेत्यतः (१६२ष्ट०) अन्त इति चानुवर्त्त्य योग्यत्वात्पदस्येवान्त इत्याह झलो-त्यादि । अत्र राजग्रहणेनैव भ्राजलाभेऽपि भ्राजग्रहणमर्थवद्ग्रहणे नानर्थकस्येति परिभाषाद्योतनाय । तथाच भ्राजघटकराजभागस्या-नर्थकत्वान्न राजग्रहणेन तल्लाभः सार्थकराजशब्दस्यैव ग्रहणादिति बोध्यम् ।

(१४) टतयोष्ठथाविति धुड़भावपक्षे टकारस्य ठकारः धुट्पक्षे तु तकारस्य थकार इति विवेकः ।

षढोः कः सि। ८। २। ४१।

षस्य ढस्य च कः स्यात्सकारे परे। इति तु न भवति (१५) जश्त्वं प्रत्यसिद्धत्वात्। केचित्तु (१६) व्रश्चादिसूत्रे दादेर्धातो रिति (१४६पृ०) सूत्राद्धातोरित्यनुवर्त्तयन्ति। तन्मते जश्त्वेन जकारे। निज्भ्याम्। निज्भिः। जश्त्वं चुत्वं षत्वम्। निक्षु। चोःकुरिति (१६५पृ०) कुत्वम् न भवति जश्त्वस्या सिद्धत्वात्। मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः *। शसादौ वा। पृतः। पृता। पृत्सु। पक्षे सुटि च रमावत्। गोपा विश्वपावत्। मतिः प्रायेण हरिवत्। स्त्रीत्वान्नत्वाभावः। मतीः। नात्वम्। मत्या।

ङिति (१७) ह्रस्वश्च। १। ४। ६।

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे। आण्नद्याः(११७पृ०)। मत्यै-मतये। मत्याः मतेः २। नदीत्वपक्षे औदिति ङेरौत्त्वे प्राप्ते।

---

(१५) न भवतीति जश्त्वात् प्राक् षकारस्य स्थाने इत्यर्थः कृते तु जशि प्राप्तिरेव नास्ति अनल्विधौ (२२पृ०) इत्युक्तेरितिभावः।

(१६) केचित्त्विति। दादेर्धातोरिति(१४ पृ०)धातुपदस्य एकाचो बशोभषित्यत्र (१४६पृ०) अनुवर्त्तनीयतया मध्ये विच्छेदोऽनुचित इति भावः।

(१७) ङितीति अत्र वाक्यद्वयमाद्ये यू स्त्र्याख्यौ नदीति (११६पृ०) चस्त्रीति, इयङुवङ् स्थानाविति, वेति च (१२५पृ०)तत्तत्सूत्रादनुवर्त्तते अन्ये तु यू इति, स्त्र्याख्याविति, वेति चानुवर्त्तत इत्याशयेनाह इयङित्यादि।

इदुद्भ्याम् (१८)। ७। ३। ११७।

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्। पक्षे अच्च घेः (११०पृ०)। मत्याम् मतौ। एवं श्रुतिस्मृतिबुद्ध्यादयः।

त्रिचतुरोः स्त्रियान्तिसृचतसृ। ७। २। ९९।

स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो (१९) विभक्तौ परतः।

अचि र ऋतः। ७। २। १००।

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्त्वानामपवादः। तिस्रः २। तिसृभिः। तिसृभ्यः २। आमि नुमचिरेति (१२२पृ०) नुट्।

न तिसृचतसृ (२०)। ६। ४। ४।

एतयोर्नामि दीर्घो न स्यात्। तिसृणाम्। तिसृषु। स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः। इत्यादि मतिवत्। आमि प्रियत्रयाणामिति

---

(१८) इदुद्भ्यामोदच्च घेरित्येकमेव सूत्रं योगविभागेन त्रिधा विभज्य सूत्रत्रयं कल्पितम् तेन ङेरामित्यतो (११७पृ०) नदीति, ङेरिति, आमिति च, पदत्रयमनुवर्त्त्याह नदीसंज्ञकाभ्यामित्यादि।

(१९) त्रिचतुरोरित्यत्र अष्टन आ विभक्ताविल्यतो (१६३पृ०) विभक्तावित्यनुवर्त्तते स्त्रियामित्यस्य विवरणं स्त्रीलिङ्गयोरिति स्त्रीनिष्ठसंख्याबोधकयोरित्यर्थः तेन त्रिचतुःशब्दयोः पुंनपुंसकत्वेऽपि समुदायस्य स्त्रीबोधकत्वेनाऽङ्गतयाऽनादेशः आदेशस्यावयवस्य स्त्रीत्वबोधकत्वे इति बोध्यम्।

(२०) तिसृचतसृ इति लुप्तषष्ठी द्विवचनं पदं नामीति (६४पृ०) सानुवृत्तिकमनुवर्त्तते तदाह नामि दीर्घ इति।

**शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना । ⧗ येन विधिस्तदन्तस्य ।१।१।७२। विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य । # समासप्रत्ययविधौ प्रतिषेधः । # उगिद्वर्णग्रहणवर्जम् । ⧗ विरामोऽवसानम् ।१।४।११०॥ वर्णानामभावोऽवसानसंज्ञः स्यात् । ⧗ परः संनिकर्षः संहिता ।१।४।१०९। वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात् । ⧗ सुप्तिङन्तं पदम् ।१।४।१४। सुबन्तं तिङन्तं च पदसंज्ञं स्यात् । ⧗ हलोऽनन्तराः**

विकारयति सैन्धवान् । अप्राप्ते तु हरति भारं देवदत्तः, हारयति भारं देवदत्तं, हारयति भारं देवदत्तेन, करोति कटं देवदत्तः, कारयति कटं देवदत्तं, कारयति कटं देवदत्तेनेति दिक् ॥—**स्वं रूपं शब्दस्य**—॥ 'अग्नेर्ढक्' आग्नेयम् । 'आङो यमहनः' आयच्छते, आहते । इह अग्नि, आङ्, यम्, हन्, एत एव संज्ञिनः ॥ नन्वग्न्यादिवाच्यादङ्गारादेर्ढगादिप्रत्ययो न संभवतीति स्वरूपादेव स्यात् 'प्रातिपदिकात्–' इत्याद्यधिकाराच्च किमनेन सूत्रेणेति चेत् । सत्यम् । अग्न्यादिशब्दपर्यायेभ्यो वह्न्यादिभ्यो मा भूदिति सूत्रस्यारम्भः ॥ नन्वत्र रूपग्रहणं विनापि स्वशब्देन रूपमेव ग्रहीष्यते । प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च । अर्थो हि प्रतीतौ संबन्धग्रहणमपेक्षते, पर्यायैरपि प्रत्यायनात्साधारणः, पदज्ञानजन्यबोधविषयत्वाद्बहिरङ्गः, अनुकरणदशायामप्रतीतेरनियतोपस्थितिकश्चेति किमनेन रूपग्रहणेन । उच्यते । इह शास्त्रे अर्थोऽपि विवक्षितो रूपवदिति ज्ञापनार्थं रूपग्रहणं । तेन 'अर्थवद्ग्रहणे नानर्थकस्य' इत्युपपन्नं भवति ॥ तत्रोक्तज्ञापकादर्थो प्राह्यः, स्वमितिवचनात्स्वरूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम् । तेन काशे कुशे इत्यत्र 'शे' इत्ययं प्रगृह्यसंज्ञो न भवति । 'प्राद्वूहोढ–' इत्यत्र तु 'ऊढग्रहणेन क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशः' इत्यन्यत्र विस्तरः ॥ अशब्दसंज्ञेति किम् । 'उपसर्गे घोः किः' दाधाभ्यो यथा स्यात्, घुधातोः शब्दार्थकान्मा भूत् । न च 'दाधा घु–' इति घुसंज्ञाकरणसामर्थ्यादेव दाधाभ्यः किः स्यादिति वाच्यम् । 'घुमास्था–' इत्यादिना आत ईत्वादिविधौ संज्ञाकरणस्यावश्यकतया सामर्थ्योपक्षयात् ॥ इह शब्दस्य संज्ञा शब्दसंज्ञेति न षष्ठीसमासः, 'कर्म करण–' मित्यादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः । किंतु शब्दः शब्दशास्त्रं तत्र संज्ञा शब्दसंज्ञेति सप्तमीसमासस्तदाह—**शब्दशास्त्रे या संज्ञे**ति ॥—**येन विधिः**—॥ विधिरित्यत्र 'उपसर्गे घोः किः' इति कर्मणि किः प्रत्ययः । येनेति करणे तृतीया, न तु कर्तरि । तस्याः कृद्योगषष्ठ्या बाधात् । न च 'उभयप्राप्तौ कर्मणि' इति नियमेन निर्वाहः, कर्मण उक्तत्वेनोभयप्राप्त्यभावात् । तथा चात्र करणे तृतीयैव । करणं च परतन्त्रं, कर्त्रधिष्ठितस्यैव करणत्वात् । एवं चेह तृतीयया पारतन्त्र्यं लक्ष्यते । न च 'एरच्' इत्यादौ इकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव संभवति, किंतु वैवक्षिकम् । तेन विशेषणमप्रधानम् । तदात्मान्तस्य संज्ञेति फलितं तदेतदाह—**विशेषणं तदन्तस्ये**ति ॥—**स्वस्य चे**ति । 'स्वं रूपम्' इत्यनुवृत्तेरेतल्लभ्यते । 'एरच्' इकारान्तादिकाररूपाच्च धातोरच् । चयः, जयः, अयः ॥—**समासप्रत्ययविधावि**ति । कृष्णं श्रितः कृष्णश्रितः, 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः,' द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते वा तत्पुरुषः । नेह—कृष्णमुपाश्रितः । 'नडादिभ्यः फक्' नडस्य गोत्रापत्यं नाडायनः । नेह—सूत्रनडस्यापत्यं सौत्रनाडिः, अनुशतिकादित्वादुभयपदवृद्धिः ॥—**उगिद्वर्णे**ति । उगिद्वर्णग्रहणं वर्जयित्वा, उगिद्वर्णग्रहणवर्जं, 'द्वितीयायां च' इति णमुल् ॥ महान्तमतिक्रान्ता अतिमहती, महच्छब्दस्य गौरादित्वेऽप्युपसर्जने 'षिद्गौर–' इति ङीषोऽप्रवृत्तेः 'उगितश्च' इत्युगिदन्तात् ङीप् ॥ 'अत इञ्' दाक्षिः । न चेह सामर्थ्यात्तदन्तविधिः, अस्यापत्यमिः काम इत्यत्र चरितार्थत्वात् । न चैवमिञो ञित्त्वं व्यर्थमिति वाच्यम् । 'बाह्वादिभ्यश्च' इत्यत्र यथायथं वृद्ध्याद्युदात्ताभ्यां चरितार्थत्वात् । नन्वेवमपि औपगविरित्यादावेव 'अत इञ्' स्यात्, न तु दाक्षिरित्यादौ, अकारस्येहानर्थकत्वादिति चेन्न । वर्णग्रहणे अर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः ॥—**विरामोऽवसानम्** ॥ विरमणं विरामः, भावे घञ् ॥ शब्दानुशासनप्रस्तावादाह—**वर्णाना**मिति । संज्ञाप्रदेशाः 'वावसाने' इत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यमस्त्येव । यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानां, यद्वा विरम्यतेऽनेनेति विरामः, बाहुलकात्करणे घञ् । यदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते, सोऽन्त्यवर्णः अवसानसंज्ञ इत्यर्थः । अस्मिंस्तु पक्षे 'खरवसानयोः' इत्येकापि सप्तमी विषयभेदाद्भिद्यते–खरि परे रेफस्य विसर्गः, अवसाने च परे रेफे स्थानिनीति ॥—**सुप्तिङन्तं पदम्** ॥ अत्रान्तग्रहणम् 'अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापनार्थम् । तेन 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति न द्विवचनान्तस्य प्रगृह्यत्वम् । अन्यथा कुमार्योरगारं कुमार्यगारमित्यत्र प्रकृतिभावः स्यात् ॥ कथं तर्हि प्रातिपदिकसंज्ञायां कृत्तद्धिताभ्यां तदन्तग्रहणमिति चेत् । अत्राहुः—'कृत्तद्धित–' इति सूत्रे अर्थवद्ग्रहणमनुवर्तते तत्सामर्थ्यात्तदन्तग्रहणमिति ॥—**हलोनन्तराः संयोगः** ॥ लघ्वर्थमेकाक्षरायां संज्ञायां कर्तव्यायां संयोग इति महासंज्ञाकरणमन्वर्थसंज्ञाज्ञापनार्थं संयुज्यन्तेऽस्मिन्समुदाये वर्णा इति । तेनात्र समुदाये वाक्यपरिसमाप्तिर्न तु

---

१ अभाव इति—शब्दानां नित्यत्वेन उच्चारणाभाव इत्यर्थः । २ सुप्तिङन्तमिति—ननु अन्तशब्दस्यापि स्वातन्त्र्येण पदसंज्ञा क्रियते फलं तु आचारक्विपि 'अतो गुणे' इति पररूपाभाव इति वाच्यम्, न, अन्ततील्यस्यानभिधानात् ।

विशेषः। प्रियास्तिस्रो यस्येति विग्रहे तु प्रियतिसा। प्रियतिस्रौ। प्रियतिस्रः। प्रियतिस्रमित्यादि। प्रियास्तिस्रो यस्य तत्कुलम्। प्रियत्रि। स्वमोर्लुका लुप्तत्वेन(११४पृ०)प्रत्ययलक्षणाभावान्न तिस्रादेशः। न लुमतेति(११४पृ०)निषेधस्याऽनित्यत्वपक्षे प्रियतिसृ। रादेशात्पूर्व्वविप्रतिषेधेन नुम्। प्रियतिसृणी। प्रियतिसृणि। तृतीयादिषु (१४२पृ०)वक्ष्यमाणपुंवद्भावविकल्पात्पर्य्यायेण नुम्रभावौ। प्रियतिस्रा प्रियतिसृणा इत्यादि। द्वेरत्वे सत्याप्। द्वे २। द्वाभ्याम् ३। द्वयोः २। गौरी। गौर्य्यौ गौर्य्यः। नदीकार्य्यम् हे गौरि। गौर्य्यै। इत्यादि। एवं वाणीनद्यादयः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणादनङि(११०पृ०) णिद्वद्भावे(१११पृ०)च प्राप्ते। विभक्तौ (२१) लिङ्गविशिष्टाग्रहणम्। सखी। सख्यौ। सख्यः इत्यादि गौरीवत्। अङ्यन्तत्वान्न *सुलोपः। लक्ष्मीः। शेषङ्गौरीवत्। एवन्तरीतन्त्र्यादयः। स्त्री हे स्त्रि।

**स्त्रियाः। ६। ४। ७९।**

स्त्रीशब्दस्य इयङ्(२२)स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः।

**वाम्शसोः। ६। ४। ८०।**

अमि शसि च स्त्रिया इयङ् वा स्यात्-स्त्रियाम्। स्त्रीम्।

---

(२१) विभक्तिनिमित्तके कार्य्ये लिङ्गविशिष्टपरिभाषाया अप्रवृत्तिम् एतत्सूत्रभाष्ये ...युवोरनाकाविति सूत्रभाष्ये पठितमिति बोध्यम्।

* लक्ष्मेर्मुट् चेति (उ४१२पृ०) ईप्रत्ययान्तत्वात् न ङीबन्तता।

(२२) अचि श्नुधात्वित्यादिसूत्रात् (११८पृ०) इयङेवानुवर्त्तते स्त्रीशब्दस्येकारान्तत्वादचीत्यप्यनुवर्त्तते एवेत्याहेयङिति।

स्त्रियौ । स्त्रियः—स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः २ । स्त्रियोः परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रियोः । स्त्रीषु । स्त्रियमतिक्रान्तः । अतिस्त्रिः अतिस्त्रियौ ।

गुणनाभावौत्त्वनुड्भिः (२३) परत्वात् पुंसि बाध्यते ।

क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥ १

जसि च (१०८पृ०)। अतिस्त्रयः हे अतिस्त्रे । अतिस्त्रियौ । अतिस्त्रयः । वाम्शसोः(११२पृ०)। अतिस्त्रिम्—अतिस्त्रियम् । अतिस्त्रियौ । अतिस्त्रियः—अतिस्त्रीन् । अतिस्त्रिणा । घेर्ङिति (१०९पृ०) । अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् । अच्च घेः (११०पृ०) । अतिस्त्रौ ।

(२४) ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।

इयादेशोऽचि नाऽन्यत्र स्त्रियाः पुंस्युपसर्ज्जने ॥ २

अतिस्त्रि । क्लीबे तु नुम् । अतिस्त्रिणी । अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिणे । ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात् (१४२पृ०) पक्षे प्राग्वद्रूपम् । अतिस्त्रये अतिस्त्रिणे अतिस्त्रेः २ अतिस्त्रिणः २ । अतिस्त्रिणोः अतिस्त्रियोरित्यादि ।

---

(२३) गुणनेत्यादि । जसि चेति(१०८पृ०) घेर्ङितीति च(१०९पृ०)गुणः आङो नेति(१०९पृ०) नाभावः अच्च घेरित्यौत्त्वं (११०पृ०) ह्रस्वनद्यापोनुडिति (६४पृ०)नुट्चैतैः कार्य्यैः परत्वात्स्त्रीयत्वात् स्त्रीशब्दस्य इयादेशो बाध्यते इत्यन्वयः । इकोऽचीति(१४२पृ०)नुमा चकारात् स एव बाध्यते इत्यर्थः ।

(२४) पूर्व्वकारिकोक्तबाधविषयं परिहृत्येयादेशविषयमाह ओस्याविति अजादौ यइयादेशोविहितः स उपसर्जने उपसर्ज्जनतया पुंसि विद्यमानस्य स्त्रीशब्दस्य ओसादिषु चतुर्ष्वेव भवति नान्यत्र गुणादिभिस्तेषु इयङो बाधनादिति भावः ।

स्त्रियान्तु प्रायेण पुंवत्। श्रिः। अतिस्त्रीः। अतिस्त्रियौ। ङिति ह्रस्वश्चेति (१३१६०) ह्रस्वान्तत्वप्रयुक्तो विकल्पः। अस्त्रीति तु(२५) इयङुवङ्स्थानावित्यस्यैव पर्युदासः तत्सम्बन्धस्यैव चानुवृत्तेः। दीर्घस्यायं निषेधो नतु ह्रस्वस्य। अतिस्त्रियै-अतिस्त्रये अतिस्त्रियाः-अतिस्त्रेः २। अतिस्त्रीणाम्। अतिस्त्रियाम्-अतिस्त्रौ। श्रीः। श्रियौ। श्रियः।

## नेयङुवङ्स्थानावस्त्री। १। ४। ४।

इयङुवङोः(२६) स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्त्री नतु स्त्री। हे श्रीः। श्रियौ। श्रियै-श्रिये। श्रियाः-श्रियः।

## वामि। १। ४। ५।

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्त्री नतु

(२५) ङिति ह्रस्वश्चेति सूत्रे ह्रस्वेवर्णविषयेऽप्यस्त्रीत्यस्य सम्बन्धात् स्त्रीशब्दावयवभिन्नेवर्णान्तादित्यर्थलाभात् न तत्र प्राप्तिरित्याशङ्क्याह अस्त्रीति त्विति। तत्र बीजमाह तत्सम्बन्धस्यैवेति।

(२६) नेयङिति अत्र स्थितिरुपलक्षणरूपा तेन हे श्रीरित्यादौ निषेधान्न ह्रस्वः अत्रेयङोऽस्थितावपि अजादौ तत्सत्त्वात्। सा च बाधकाविषय एवेति बोध्यम् तेन प्रकृष्टा धीः प्रधीरित्यादौ एरनेकाच इत्यपवादेन (११८७०) बाधकेन इयङो बाधेऽपि न निषेधस्तदवयवस्य इयङाश्रयत्वात् तथाच नदीकार्य्यविषयेऽङ्गे बाधकाबाधितेयङादिस्थितिर्यस्य कचिदपि दृष्टा तस्य तदवयवस्य च निषेध इति फलितमत एव प्रकृष्टा धीः प्रधीरित्यत्रावयवधीशब्दस्य नदीत्वं तदुक्तं भाष्ये इयङादिप्रतिषेधे यण्स्थानप्रतिषेधोऽपि प्राप्नोति अवयवस्येयङादिस्थानत्वादिति आध्यै प्रध्यै इति सिद्धन्तु अङ्गरूपग्रहणाद् यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणं न चेदमङ्गस्येयुवाविति।

स्त्री। श्रीयाम्-श्रियाम्। श्रियि-श्रियाम्। प्रधीशब्दस्य तु(२७) वृत्तिकारादीनां मते लक्ष्मीवद्रूपम् पदान्तरं विनापि स्त्रियां वर्त्तमानत्वं नित्यस्त्रीत्वमिति स्वीकारात् लिङ्गान्तरानभिधायकत्वन्तदिति कैयटमते पुंवद्रूपम् (२८)। प्रकृष्टा धीरिति विग्रहे तु (२९) लक्ष्मीवत्। अमि शसि च। प्रध्यम्। प्रध्यः इति विशेषः। सुष्टु धीर्य्यस्याः सुष्टु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीः श्रीवत् (३०) मतान्तरे

---

(२७) प्रधीशब्दस्येति प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः तत्र च कैयटोक्तनित्यस्त्रीत्वाभावेन नदीत्वाप्राप्त्या भाष्यासङ्गतिरतः स्त्रीविषयावेव यौ यू नित्यमिति भाष्ये एवकारोभिन्नक्रमे नित्यमेव यौ यू स्त्रीविषयावित्यर्थः नित्यमित्यस्य तु पदान्तरं विनापीत्यर्थः खलपूकटप्रूग्रामणीप्रभृतिशब्दानां क्रियाशब्दतया पुंसि मुख्या वृत्तिः पुंसां शक्तत्वाद्भयरहितत्वाच्च तद्धर्मत्वौचित्यात् अतस्तेषां पदान्तरं विना न स्त्रीबोधकत्वं ध्यानादिकं तु स्त्रीपुंससाधारणमिति पदान्तरं विनाऽपि तथात्वमिति विवेकः।

२८) पुंवद्रूपमिति उक्तविग्रहे स्वोक्तनित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामपि नदीत्वाभावादिति भावः।

२९) प्रकृष्टा धीरिति विग्रहे इति एतत्पदघटितविग्रह इत्यर्थस्तेन प्रकृष्टा धीर्यस्या इति बहुव्रीहेरपि संग्रहस्तस्यापि तत्पदघटितत्वात् उभयसमासस्थले मतद्वयेऽपि स्त्रीवृत्तित्वे लक्ष्मीवदिति प्रथमलिङ्गग्रहणञ्च (११६१०) इत्यवयवस्य नदीत्वात् नेयङिति निषेधस्य भाष्योक्तरीत्याऽप्रवृत्तेरिति भावः

३०) श्रीवदिति स्त्रियामिति शेषः। विशिष्टस्येयङुवस्थानत्वेन ङिदामो विकल्पस्यान्यत्र निषेधस्य च प्राप्तेः। पुंसि त्वोदनबहुव्रीहौ न नदीत्वं नेयङित्यवयवस्य निषेधात् समुदायस्य चाप्राप्तेरिति भावः।

पुंवत् (३१)। सुष्ठु धीरिति विग्रहे तु (३२) श्रीवदेव। ग्रामणीः पुंवत् ग्रामनयनस्योत्सर्गतः पुन्धर्म्मतया पदान्तरं विनापि स्त्रियामप्रवृत्तेः। एवंखलप्वादेरपि पुन्धर्म्मत्वमौत्सर्गिकम्बोध्यम्। धेनुर्म्मतिवत्।

**स्त्रियाञ्च(३३)। ७। १। ९६।**

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते।

**ऋन्नेभ्यो ङीप्। ४। १। ५।**

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात्। क्रोष्ट्री। क्रोष्ट्र्यौ। क्रोष्ट्र्यः। वधूर्गौरीवत्। भूः श्रीवत्। हे सुभ्रूः। कथन्तर्हि (३४) हा पितः क्वासि हे सुभ्रु इति भट्टिः। प्रमाद (३५) एवायमिति बहवः। खलपूः पुंवत्। पुनर्भूः। दृन्-

---

(३१) मतान्तरे पुंवदिति सुष्ठु ध्यायतीति विग्रहे इति शेषः कैयटमते तस्य लिङ्गान्तराभिधायितया नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामपि नदीत्वं नास्तीति भावः।

(३२) सुष्ठु धीरिति विग्रहे इति ईदृशपदघटितविग्रहे इत्यर्थस्तेन पूर्व्ववत् बहुव्रीहेरपि संग्रहस्तथा च बहुव्रीहाववयवस्य, कर्म्मधारये समुदायस्य, नेयङिति निषेधस्य ङिदामोर्विकल्पस्य च प्राप्तिरिति भावः।

(३३) अत्र तृज्वत् क्रोष्टुरिति १२१पृ०)सूत्रमेवानुवर्त्तते न तु सर्व्वनामस्थान इत्यपि तथात्वे सूत्रवैयर्थ्यापत्तेः।

(३४) कथमिति नेयङित्यनेनावयवस्य समुदायस्य च नदीत्वनिषेधात् प्रश्नः।

(३५) प्रमाद इति विरहपीड़ितस्य रामस्यैवानवधानलक्षणः प्रमादो न तु कवेः स च काव्ये विरहपोषकतया गुणायैव कविना तथा निबद्ध इति विभावनीयम्।

करेति (१२४पृ०) यण्। उवङो बाधनान्नेयङुवङिति निषेधो न। हे पुनर्भु। पुनर्भ्वम्। पुनर्भ्वौ। पुनर्भ्वः।

**एकाजुत्तरपदे णः। ८। ४। १२।**

एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्व्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य(२६)नस्य नित्यं णत्वम् स्यात्। आरम्भसामर्थ्यान्नित्यणत्वेसिद्धे पुनर्णग्रहणं स्पष्टार्थम्। यणं बाधित्वा परत्वान्नुट्। पुनर्भूणाम्। वर्षाभूः। भेकजातौ नित्यस्त्रीत्वाऽभावात्। हे वर्षाभूः। कैयटमते। मतान्तरे तु हे वर्षाभु। पुनर्नवयान्तु हे वर्षाभु। भेक्यांपुनर्न्नवायां स्त्री वर्षाभूर्द्दर्दुरे पुमानिति यादवः। वर्षाभ्वश्च (१२४पृ०)। वर्षाभ्वौ। वर्षाभ्वः। स्वयम्भूः पुंवत्।

**न षट्स्वस्रादिभ्यः। ४। १। १०।**

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः।

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।
याता मातेति (२७) सप्तैते स्वस्रादय उदाहृताः॥ १

अप्तृन्निति (१२२पृ०) दीर्घः। स्वसा। स्वसारौ। स्वसारः। माता पितृवत्। शसि। मातॄः। द्यौर्गोवत्। राः पुंवत्। नौर्ग्लौवत्। इत्यजन्ताः स्त्रीलिङ्गाः।

---

(२६) प्रातिपदिकान्तनुम्विभक्तिषु चेत्यतः (४८२पृ०) प्रातिपदिकान्तादेरनुवर्त्तनेन विभक्तिविपरिणामेन चाह प्रातिपदिकान्तेत्यादि।

(२७) स्वस्रादिगणे मातृशब्दो ननान्द्रादिसाहचर्य्यात् स्वसम्बन्धिकार्थपरतया स्वजननीवाचको ग्राह्यः नतु परिच्छेत्तृवाचकः।

**अतोऽ(१)म्। ७। १। २४।**

अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात्। अमि पूर्व्वः (९०पृ०)। ज्ञानम्। एङ्ह्रस्वादिति(८८पृ०)हल्मात्रलोपः। हे ज्ञान।

**नपुंसकाच्च। ७। १। १९।**

क्लीबात्परस्यौङः शी (२) स्यात्। भसंज्ञायाम्।

**यस्येति (३) च। ६। ४। १४८।**

भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे। इत्यकारलोपे प्राप्ते। औङः श्याम्प्रतिषेधो वक्तव्यः •। ज्ञाने।

**जश्शसोः शि। ७। १। २०।**

क्लीबादनयोः शि स्यात्।

**शि सर्व्वनामस्थानम्। १। १। ४२।**

शि इत्येतदुक्तसंज्ञं स्यात।

**नपुंसकस्य झलचः। ७। १। ७२।**

(१) अत इति अधिकृतस्याङ्गस्य विशेषणं स्वमोर्नपुंसकादिति(१४२पृ०)चानुवर्त्तते अयञ्चाम् लुको, बाधको येन नाप्राप्ते' इति न्यायात्।

(२) जसः शीति(८६पृ०)सूत्रात् शीति औङ आप इत्यत (१२०पृ०) औङिति चानुवर्त्त्याह औङः शीति।

(३) यस्येतीति इश्च अश्च यं तस्य ईत् इकार तस्मिन् भस्येत्यधिकारः (६। ४। १२९पृ०) तेन नर्लाङ्घत इत्यतः (३३४पृ०)तद्धितोऽनुकृष्यते इत्याह भस्येत्यादि।

झलन्तस्याऽजन्तस्य च क्लीवस्य नुमागमः(४)स्यात्सर्व्वनामस्थाने परे। उपधादीर्घः (११०पृ०)। ज्ञानानि। पुनस्तद्वत्। शेषं रामवत्। एवन्धनवनफलादयः।

**अद्ड्डतरादिभ्यः पञ्चभ्यः। ७। १। २५।**

एभ्यः क्लीवेभ्यः स्वमोरद्ड् डादेशः (५) स्यात्।

**टेः (६)। ६। ४। १४३।**

डिति परे भस्य टेर्लोपः स्यात्। वावसाने(६३पृ०)। कतरत् कतरद्। कतरे। कतराणि। भस्येति किम्। पञ्चमः(७)। टेर्लुप्तत्वात् (८) प्रथमयोरिति(७७पृ०)पूर्व्वसवर्णदीर्घः, एङ्ह्रस्वादिति (८६पृ०)। सम्बुद्धिलोपश्च न भवति। हे कतरत्। पुनस्तद्वत्। शेषम्पुंवत्। कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमशब्दस्य तु अन्यतममित्येव। एकतरात्प्रतिषेधो वक्तव्यः *। एकतरम्। सोरमादेशे कृते सन्निपातपरिभाषया न जरस्।

---

(४) इदितोनुमित्यतो(७३पृ०)नुमिति उगिदचां सर्व्वनास्थाने इत्यतः (१५६पृ०)सर्व्वनामस्थान इति चानुवर्त्त्याह नुमागम इत्यादि।

(५) अदडेति सूत्रे स्वमोर्नपुंसकादिति (१४२पृ०) अनुवर्त्ततेऽत्र दकारस्य टुत्वं संयोगान्तलोपश्च स्वरूपभेदभिया न कृतम्।

(६) टेरिति अल्लोपोऽन इत्यतो (१०५पृ०)लोप इति ति विंशतेर्डितीत्यतो (४१०पृ०) डितीति चानुवर्त्तते भस्येत्यधिकारः ६।४।१२९।

(७) पञ्चम इत्यत्र डटि मुडागमे याजादित्वाभावेन भत्वाभावान्न टिलोपः किन्तु पदत्वान्नलोप एवेति भावः।

(८) अद्डो डित्करणफलमाह टेरिति टादेशमात्रे कृते पूर्व्वसवर्णदीर्घाभावेन एङ् ह्रस्वादिति (१०८पृ०) संबुद्धिलोपः स्यादिति भावः।

अजरम्। अजरसी। अजरे। परत्वाज्जरसि कृते झलन्तत्वान्नुम्।

## सान्त (९) महतः संयोगस्य।६।४।१०।

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे। अजरांसि-अजराणि। अमि लुकोऽपवादममन्भावस्तं बाधित्वा परत्वाज्जरस्। ततः सन्निपातपरिभाषया न लुक् ‡। अजरसम्। अजरम्। अजरसी। अजरे। अजरांसि, अजराणि। शेषम्पुंवत्। पद्दन्निति (१०५पृ०) हृदयोदकास्यमांसानां हृद् उदन् आसन् मांस्। हृन्दि। हृदा। हृद्भ्यामित्यादि। उदानि। उद्ना। उदभ्यामित्यादि। आसानि। आस्ना। आसभ्यामित्यादि। मांसि। मासा। मांभ्यामित्यादि। वस्तुतस्तु प्रकृतिग्रहणं प्रकारार्थमित्युक्तम् (१०७पृ०) अतएव भाष्ये मांस्पचन्या(१०)उखाया इत्युदाहृतम्। अयस्मयादित्वेन (१।४।२०पृ०) भत्वात्संयोगान्तलोपो न। पद्दन्नित्यत्र हि छन्दसीत्यनुवर्त्तितं वृत्तौ। तथापि अपो भीत्यत्र (१८२पृ०)

---

(९) सान्तेति लुप्तषष्ठीकं पृथक् पदं संयोगविशेषणम् नोपधाया इति(१६०पृ०) सर्व्वनामस्थाने चासम्बुद्धाविति (११०पृ०) चानुवर्त्तते उपधाग्रहणञ्चेदं पूर्व्वमात्रोपलक्षणं न तु पारिभाषिकं तस्यासम्भवादत एवानेहांसि शिरांसीत्यादिसिद्धिः।

‡ जरसोऽदन्तत्वाभावात् स्वमोरिति (१४२पृ०) नामोलुक्।

(१०) पच्यतेऽस्यामित्याधारे ल्युटि पचनी मांसस्य पचनीति विग्रहे समासे ङसो लुका लुप्तत्वात् प्रत्ययलक्षणं नेति बोध्यम्। पद्दन्नित्यादिसूत्रे (१०५पृ०)प्रकृतिशब्दस्य प्रकारार्थतया मांसशब्दस्य मांसादेश इति भाव·।

मासश्छन्दसीति वार्त्तिके (११) छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचिदिति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम् ।

**ह्रस्वो नपुंसके प्रातिपदिकस्य । १ । २ । ४७ ।**

क्लीवे प्रातिपदिकस्याऽजन्तस्य ह्रस्वः (१२) स्यात् । श्रीपं ज्ञानवत् । श्रीपाय । अत्र सन्निपातपरिभाषया (१३) आतो धातोरिति (१०८७०) आकारलोपो न ।

**स्वमोर्नपुंसकात् (१४) । ७ । १ । २३ ।**

क्लीवादङ्गात्परयोः स्वमोर्लुक् स्यात् । वारि ।

**इकोऽचि (१५) विभक्तौ । ७ । १ । ७३ ।**

इगन्तस्य क्लीवस्य नुमागमः स्यादचि विभक्तौ । वारिणी । वारीणि । न लुमतेति(११४९०)निषेधस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः । हे वारि हे वारे । आङो ना(१०९७०) । वारिणा ।

---

(११) मासश्छन्दसीति (७।४।४८सू०) मासस्तकारः स्यात् भादौ प्रत्यये छन्दसीत्यर्थः यथा माद्भिः शरद्भिर्दुरोदरमित्यादि ।

(१२) ह्रस्व इति । ह्रस्वपदेन ह्रस्वविधानादचश्चेति(२५)परिभाषया उपस्थितस्य तस्य च प्रातिपदिकविशेषणत्वात्तदन्तविधेश्चाजन्तस्येति लाभः ।

(१३) सन्निपातेति अवर्णनिमित्तो याद्देशः कथमवर्णलोपे निमित्तं स्यादिति भावः ।

(१४) स्वमोरिति षड्भ्यो लुगित्यतो(११४९०)लुगित्यनुवर्त्तते अयञ्च लुक् त्यदाद्यत्वस्य किमः कादेशस्य च बाधकः ।

(१५) इदितोनुमित्यतः (७ ३२९०) नुमिति पदमनुवर्त्याह नुमागम इति विभक्ताविति किं मधुनो मद्यस्येदं माधवमित्यत्रापि मा भूत् ।

**संयोगः ।१।१।७।** अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः । **ह्रस्वं लघु ।१।४।१०। संयोगे गुरु ।१।४।११।** संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् । **दीर्घं च ।१।४।१२।** दीर्घं गुरुसंज्ञं स्यात् ॥ इति संज्ञाप्रकरणम् ॥

---

## परिभाषाप्रकरणम् ।

**इको गुणवृद्धी ।१।१।३।** गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते । **अचश्च ।१।२।२८।** ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्राऽच इति षष्ठ्यन्तं पदमुपतिष्ठते । **आद्यन्तौ टकितौ ।१।१।४६।** टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । **मिदचोऽन्त्यात्परः ।१।१।४७।** अच इति निर्धारणे

---

गुणवृद्ध्यादिसंज्ञावत्प्रत्येकं, तथाहि सति दध्वद्भिर्त्यत्र बकारसंनिधौ दकारस्य संयोगत्वात्संयोगान्तलोपः स्यात्, निर्यायादित्यत्र यकारः संयोग इति 'वान्यस्य संयोगादेः' इत्येत्वं स्यात्, सिद्धान्ते तु 'अचोरहाभ्याम्–' इति द्वित्वे सत्यपि तस्यासिद्धत्वादेत्वमत्र न भवति ॥ हल इति जातौ बहुवचनं, 'जात्याख्यायामेकस्मिन् बहुवचनम्–' इति वचनात्, तेन द्वयोरपि संयोगसंज्ञा भवतीति शिक्षेत्यादौ 'गुरोश्च हलः' इत्यप्रत्ययः सिध्यति । यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण संज्ञेति स्थितमाकरे । यदि तु बहूनामेव स्यात्तर्हि गोमान् करोति इत्यत्र मतुपस्तकारस्य संयोगान्तलोपो न स्यादिति दिक् ॥ हलः किम् । तितउभ्यामत्र 'तनोतेर्डउः सन्वच्च' इति डउप्रत्ययः सन्वद्भावाद्वित्वं 'सन्यतः' इति इत्वं च, व्यस्तोच्चारणसामर्थ्याद्गुणाभावः, यदि त्वचोरप्यनन्तरयोः संयोगसंज्ञा स्यात्तर्हि इह 'संयोगान्तस्य–' इत्युकारलोपः स्यात् ॥ अनन्तरा इति किम् । पनसम् । यदीह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि 'स्कोः–' इति सलोपः स्यात् ॥ ॥ इति तत्त्वबोधिन्यां संज्ञाप्रकरणम् ॥

**परिभाषा—इको गुणवृद्धी** ॥ यत्र साक्षात्स्थानी न निर्दिष्टः 'सार्वधातुकार्धधातुकयोः' 'सिचि वृद्धिः–' इत्यादौ तत्रैवेयं परिभाषा प्रवर्तते, न च 'अचो ञ्णिति' इत्यादौ, स्थानिनिर्देशात् ॥—**गुणवृद्धिशब्दाभ्यामि**ति । एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते । तेनेह न 'त्यदादीनामः' इमम् 'दिव औत्' द्यौः ॥—**विधीयेते** इति । यत्र त्वनुवादो 'वृद्धिर्यस्याचामादिः–' इत्यादौ तत्रेक इति नोपतिष्ठते, अनुवादे परिभाषाणामनुपस्थितेरिति भावः । 'अनुवादे परिभाषाणाम्' इत्यस्यानूद्यमानविशेषणेष्वित्यर्थः । अनुपस्थितौ लिङ्गं फलं च 'उदीचामातः स्थाने–' इत्यत्र स्फुटीकरिष्यते ॥—**षष्ठ्यन्तमि**ति । सूत्रे षष्ठ्यन्तस्यानुकरणात् शब्दस्वरूपपरतया नपुंसकत्वात्सोर्लुकि 'अत्वसन्तस्य'–इति दीर्घो नेति भावः ॥—**पदमि**ति । तच्च संभवति सामानाधिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण संबध्यते । 'मिदेर्गुणः' 'मृजेर्वृद्धिः' इत्यादौ तु सामानाधिकरण्यासंभवात् मिदिमृज्योरवयवस्येक इति संबध्यते ॥—**अचश्च** ॥—**ह्रस्वदीर्घे**त्यादि । एतच्च, 'ऊकालोज्झस्वदीर्घप्लुतः' इति सूत्राद्ध्रस्वदीर्घप्लुत इत्यनुवर्त्य ह्रस्वो दीर्घः प्लुत इति योऽजिति योजनया लभ्यते । ह्रस्वेत्यादि किं, 'दिव उत्' द्युभ्याम् 'अष्टन आ विभक्तौ' अष्टौ । 'अष्टाभ्य औश्' इत्यत्र कृतात्वनिर्देशाज्ज्ञापकाज्जश्शसोर्विषये प्रवर्तमानस्य 'अष्टनः–' इत्यात्वस्याचस्थानिकत्वे सति नैतत्सिध्येदिति दिक् ॥—**षष्ठ्यन्तं पदमि**ति । तच्च सति संभवे सामानाधिकरण्येनैव संबध्यते, न वैयधिकरण्येन, तेन 'ह्रस्वो नपुंसके–' इत्यजन्तप्रातिपदिकस्यैव ह्रस्वः, श्रीपम् । नेह—सुवाग् ब्राह्मणकुलम् ॥ 'शमामष्टानां दीर्घः–' इत्यत्र तु सामानाधिकरण्यासंभवात् शमादीनामच इति संबध्यते, तेन शाम्यतीत्यादि सिद्धम् । 'वाक्यस्य टेः प्लुतः'–इत्यत्र सामानाधिकरण्यसंभवेऽपि टेर्ग्रहणसामर्थ्यात् टेरवयवस्याचः प्लुत इति व्याख्यायते । अन्यथा 'अलोऽन्त्यस्य' 'अचश्च' इति परिभाषाभ्यामेहि कृष्णेत्यादिवाक्यान्त्यस्याचः प्लुतसिद्धौ किमनेन टेर्ग्रहणेन । तेन आयुष्मानेधीन्द्रवर्म३न् इत्यादि सिध्यतीति दिक् ॥—**आद्यन्तौ टकितौ** ॥ भविता, आर्धधातुकस्येट् । पाययति, 'शाच्छासाह्वा–' इत्यादिना युक् ॥ पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः । 'प्रत्ययः' 'परश्च' इत्यनेन तु परत्वादयं बाध्यते । तेन 'चरेष्टः' 'गापोष्टक्' इत्यादयः परा एव भवन्ति ॥—**मिदचोऽन्त्यात्परः** ॥ स्थानेयोगत्वस्य 'परश्च' इति परत्वस्य चायमपवादः ॥ यशांसि, वनानि, 'नपुंसकस्य झलचः' इति नुम् । रुणद्धि, 'रुधादिभ्यः श्नम्' ॥ ननु पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्यापवादोऽस्त्विति चेन्न । बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इतीहाभ्युपगमात्, अन्यथा श्नमो मित्करणं व्यर्थं स्यात् । न च श्रवणार्थ एव मकारः स्यादिति वाच्यं, 'तृणह इम्' इति निर्देशात् ॥—**अचां मध्ये** इति । सूत्रे जात्यभिप्रायेण 'अचः' इत्येकवचनमिति भावः ॥ अचां मध्य इति किम् । मुञ्चति, लुम्पति । अन्त्यादचः परो मित्स्यात् इति प्राचो व्याख्यायां नै-

---

१ संज्ञाप्रकरणमिति—'अ अ' इत्याद्युपन्यासस्तु प्रासङ्गिक इति भावः । २ अवयवाविति—अवयवत्वे हि 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषोपतिष्ठते । अस्याश्च 'देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं भवति' इति लौकिकन्यायो मानम् । अत एव नेटीति निषेधश्चरितार्थः ।

घेर्ङितीति (१०९सू०) गुणे प्राप्ते। वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो (१६) नुम् पूर्वविप्रतिषेधेन। वारिणे। वारिणः। वारिणोः। नुमचिरेति (१२२सू०) नुट्, नामीति (८४सू०) (१७) दीर्घः। वारीणाम्। वारिणि। वारिणोः। हलादौ हरिवत्।

## तृतीयादिषु भाषितपुंस्कम्पुंवद्गालवस्य। ७। १। ७४।

प्रवृत्तिनिमित्तैक्ये (१८) भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि। अनादये–अनादिने। इत्यादि। शेषं वारिवत्। पीलुर्वृक्षस्तत्फलम्पीलु तस्मै पीलुने। अत्र न पुंवत् प्रवृत्तिनिमित्तभेदात् (१९)।

---

(१६) वृद्ध्यौत्त्वेति। अतिसखीनीत्यत्र सख्युरसम्बुद्धाविति(१११सू०)णित्त्वाद्वृद्धिः वारिणीत्यत्र अच्च घेरिति (११०सू०) औत्त्वं, प्रियक्रोष्टुनीत्यत्र तृज्वद्भावः वारिणे इत्यत्र घेर्ङितीति (१०९सू०) गुणश्च प्राप्तस्ते चान्यत्र चरितार्थतया सावकाशत्वात् नुमा बाध्यन्ते इति भावः।

(१७) नुमनुटोः स्वरूपे विशेषाभावेऽपि नुमोऽङ्गावयवतया नामीति न दीर्घोऽतो दीर्घार्थमेव नुटा नुमो बाधनाय नुमचिरेत्याद्यारम्भः।

(१८) भाषितः पुमान् येनेति विग्रहे पीलुशब्देऽतिप्रसङ्गः फलवाचकस्य तस्यैव वृक्षवाचित्वे पुंस्त्वादतः भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्तरूपे इत्येवं विग्रहस्तत्र अर्शआदित्वादचि शब्दपरत्वमित्याशयेन व्याचष्टे प्रवृत्तिनिमित्तैक्ये इति तथाच तुल्यार्थबोधकत्वे सति पुंस्त्वबोधकत्वं तथात्वमिति फलितम् इकोयणचीत्यतो (२१सू०) अचीत्यनुवर्त्तते। पुंवदिति ह्रस्वनुमोरभावातिदेशः।

(१९) प्रवृत्तिनिमित्तभेदादिति पीलुशब्दस्य वृक्षे प्रवृत्तौ तद्बोधक-

अस्थिदधि (२०) सक्थ्यक्ष्णामनङुदात्तः। ७।१।७५।

एषामानङ् स्याट्टादावचि स चोदात्तः। अल्लोपोऽनः (१०५४०)। दध्ना। दध्ने। दध्नः २। दध्नोः २ दध्नाम्। दध्नि दधनि शेषं वारिवत्। एवमस्थिसक्थ्यक्षि। तदन्तस्याप्यनङ्। अतिदध्ना। सुधि। सुधिनी। सुधीनि। हे सुधि-सुधे। सुधिया-सुधिना। सुधियाम्-सुधीनाम्। प्रध्या-प्रधिना। मधु। मधुनी। मधूनि। हे मधो हे मधु। एवमम्ब्वादयः। सानुशब्दस्य स्नुर्वा। स्नूनि सानूनि। प्रियक्रोष्टु। प्रियक्रोष्टुनी। तृज्वद्भावात्पूर्वविप्रतिषेधेन (१४१४०) नुम्। प्रियक्रोष्टूनि। टादौ पुंवत्पक्षे-प्रियक्रोष्टा-प्रियक्रोष्टुना। प्रियक्रोष्ट्रे-प्रियक्रोष्टवे। अन्यत्र तृज्वद्भावात् पूर्वविप्रतिषेधेन नुमेव। प्रियक्रोष्टुना। प्रियक्रोष्टुने। नुमचिरेति (१२२४०) नुट्। प्रियक्रोष्टूनाम्। सुलु। सुलुनी। सुलूनि। पुनस्तद्वत्। सुलुना-सुल्वा। धातृ। धातृणी। धातॄणि। हे धातः-हे धातृ। धात्रा-धातृणा। एवं ज्ञातृकर्त्रादयः।

एच इग्घ्रस्वादेशे। १।१।४८।

आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात्। प्रद्यु।

---

तायाम् वृक्षत्वव्याप्यजातिरेव निमित्तं फले तु फलत्वव्याप्यजातिरित्यनयोर्भेदादित्यर्थः। पीलुशब्दात् विकारार्थे अण् तस्य च फले-लुगिति (४।३।१६३स्०) लुगिति तस्य फलवाचकता।

(२०) अस्थिदधीति अस्थिसाहचर्यात् प्रकरणाच्च दधीति नपुंसकमेव ग्राह्यं नतु धाञः किप्रत्ययसिद्धमिति बोध्यम्।

प्रद्युनी। प्रद्यूनि। प्रद्युनेत्यादि। इह न पुंवत्। यदिगन्तं(२१) प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात्। एवमग्रेऽपि। प्ररि। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतस्याऽनन्यत्वाद्रायो हलीति(१२६पृ०) आत्वम् प्रराभ्याम्। प्रराभिः। नुमचिरेति(१२२पृ०) नुण्णत्वे प्रराणामिति माधवः। वस्तुतस्तु सन्निपातपरिभाषया नुण्णत्वञ्च। नामीति(८४पृ०) दीर्घस्यारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम्। प्ररीणाम्। सुनु। सुनुनी। सुनूनि। सुनुना। सुनुने इत्यादि*।

इत्यजन्ता नपुंसकलिङ्गाः।

(२१) यदिगन्तमित्यादि एतच्च माधवमते प्राचीनमते तु प्रकृष्टस्वर्गत्वादिरूपनिमित्तैक्यात् प्रद्योशब्दो भाषितपुंस्कः स एव क्लीबे इगन्त इति न तयोर्भेदः अन्यथा सुधीशब्दादिष्वपि न स्यात् दीर्घान्तस्यैव भाषितपुंस्कत्वेन क्लीबस्य च ह्रस्वतया तयोर्भेदादिति सूक्ष्ममीक्षणीयमिति तत्त्वबोधिन्याद्यनुसारिणः। तत्त्व०।

हो ढः। ८। २। ३१।

हस्य ढः स्याज्झलि (१) पदान्ते च। हल्ङ्याबिति (१११पृ०) सलोपः। पदान्तत्वात् हस्य ढः। जश्त्वचर्त्वे। लिट्—लिड्। लिहौ। लिहः। लिहम्। लिहौ। लिहः। लिहा। लिड्भ्याम्। लिट्सु—लिट्त्सु।

दादेर्धातोर्घः। ८। २। ३२।

उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च। उपदेशे किम्। अधोगित्यत्र यथा स्यात्। दामलिहमात्मन इच्छति दामलिह्यति। ततः क्विपि दामलिट्। अत्र मा भूत्।

एकाचो बशो भष् झषन्तस्य स्ध्वोः। ८। २। ३७।

धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशःस्थाने भष् स्यात्सकारे, ध्वशब्दे, पदान्ते च। एकाचो धातोरिति सामानाधिकरण्येनाऽन्वये तु इह न स्यात् गर्द्दभमाचष्टे गर्द्दभयति। ततः क्विपि णिलोप गर्द्दप्। झलीति निवृत्तं स्ध्वोर्ग्रहणसामर्थ्यात्तेनेह न। दुग्धम्। दोग्धा। व्यपदेशिवद्भावेन (२)

(१) झलो झलीत्यतो(७४०पृ०)झलीति स्कोः संयोगाद्योरन्ते चेत्यतोः(१६६पृ०) अन्ते इति चानुवर्त्य पदस्य(८। १। १६सू०)अधिकारादाह झलीत्यादि तत्र झलि परतः पूर्व्वस्य पदान्ते विद्यमानस्य च हस्येत्यर्थः एवमन्यत्रापि पदान्त इति पदस्य व्याख्या बोध्या।

(२) ननु धातोरवयव इति वैयधिकरण्येनान्वये क्विबन्तदुहेर्दोदेरिति

धात्ववयवत्वाद्भष्भावः जश्त्वचर्त्वे । धुक् (३) । धुग् । दुहौ । दुहः । षत्वचर्त्वे । धुक्षु

वा (४) द्रुहमुहष्णुहष्णिहाम् । ८ । २ । ३३ ।

एषां हस्य वा घः स्याज्झलि पदान्ते च । पक्षे ढः । ध्रुक्-ध्रुग् ध्रुट्-ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम् ध्रुड्भ्याम् । ध्रुक्षु ध्रुट्सु ध्रुट्त्सु । एवं मुहष्णुहष्णिहाम् ।

इग्यणः सम्प्रसारणम् । १ । १ । ४५ ।

यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात् ।

वाह (५) ऊठ् । ६ । ४ । १३२ ।

भस्य वाहः सम्प्रसारणमूठ् स्यात् ।

घत्वेन झषन्तत्वेऽपि भष्भावो न स्यात् दुघिति समुदायस्य यः पूर्व्वभाग एकाच् दुइतिभागस्तस्य झषन्तत्वाभावात् अन्त्यभागस्य च उघित्यस्य एकाचः झषन्तत्वेऽपि न तत्र बशः सम्भवदत्याघद्याह व्यपदेशिवद्भावेनेति विशिष्टोऽपदेशो मुख्यव्यवहारो व्यपदेशः सोऽस्यास्तीति व्यपदेशी तेन तुल्यमित्यर्थः भष्भाव इति क्विपः प्राक् प्रवृत्तायां धातुसंज्ञायां निरपवादत्वेनावश्यकत्वाद्दादेरिति घादेशे कृते झषन्तत्वाद्धातोरिति भावः ।

(३) धुगिति अत्वसन्तस्येति(१८२पृ०)सूत्रेऽधातोरिति निषेधेन क्विबन्तस्याप्यप्रधानक्रियावाचितया धातुत्वादिति भावः । एकाच· किं दामलिट् । बशः किं क्रोत्स्यति । झषन्तस्य किं दास्यतीत्यादौ मा भूत् ।

(४) द्रुहेर्दादित्वात् प्राप्ते अन्येषामप्राप्ते इत्युभयत्र विभाषेयम् ।

(५) वाह इति वधोः संप्रसारणमित्यत्र(१८७पृ०)संप्रसारणमनुवर्त्तमूठोविशेषणं तेनाल्लोऽन्त्यस्येति (२८पृ०)न प्रवर्त्तते ।

सम्प्रसारणाच्च (६)। ६। १। १०८।

सम्प्रसारणादचि पूर्व्वरूपमेकादेशः स्यात्। एत्येधत्यूठ्सु(४१पृ०)। विश्वौहः। विश्वौहेत्यादि। छन्दस्येव (७) ण्विरिति पक्षे णिजन्तादि्वच्।

चतुरनडुहोरामुदात्तः। ७। १। ९८।

अनयोराम् स्यात्सर्व्वनामस्थाने (८) परे स चोदात्तः।

सावनडुहः (९)। ७। १। ८२।

अस्य नुम् स्यात्सौ परे। आत् ( ) इत्यकारादवर्णात्परोऽयं(१०)नुम्।

अतो विशेषविहितेनाऽपि नुमाऽम् न बाध्यते। अमा(११)

(६) संप्रसारणाच्चेति अत्र अमि पूर्व्वरूपइत्यतः (९०पृ) पूर्व्वरूप इति इकोयणचीत्यतो(२२पृ०)अचीति चानुवर्त्तते एकः पूर्व्वपरयोः (४२पृ०) इत्यधिकारः।

(७) छन्दस्येवेति। वहश्चेति (३।२।६४सू०)सूत्रे भजो ण्विः, छन्दसि सहः (३।२।६२।६३सू०) इत्यतोर्ण्विप्रत्ययस्य छन्दसीत्यस्य चानुवृत्तेरिति-भावः। अकारान्तोपपद एव वाहः साधुरिति कैयटादयस्तेन भुवं वहतीत्यादौ भुवाडित्यादिः प्रयोगोऽसाधुरिति। भाष्ये तु प्रष्ठौह आगतः प्रष्ठवाड् रूप्यमिति प्रयोगात् लोकेऽपि वहः क्विबिति द्योतनाय पक्ष इत्यस्वरसः सूचितः।

(८) इतोऽत् सर्व्वनामस्थाने इत्यतः(१६९पृ०)सर्व्वनामस्थान इत्यनुवर्त्तते।

(९) साविति। आच्छीनद्योर्नुमित्यतः(१९६पृ०)आदित्यधिकारात् नुमित्यनुवर्त्तते।

(१०) आदित्यधिकारादिति। याडाप(७१६पृ०)सोयुड्वि (७२८पृ०)विशेष-विहितेन नुमा अम् बाध्यतामित्याशङ्काहावर्णात् पर इति उप-जीव्योपजीवकभावेनाविरोधात् बाध्यबाधकभावो नास्तीति भावः।

(११) अमा चेति अम् सर्व्वनामेति(१४९पृ०)विशेषविहितेनापीत्यर्थः। पुनः-प्रसङ्गविज्ञानात् समावेशादुभयमपि भवतीत्यर्थः। अमा चेति आकारा-

च नुम् न बाध्यते। सोर्लोपः। नुम्-(१२)-विधिसामर्थ्याद्वसुस्त्रंस्विति दत्वन्न। संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न। अनड्वान्।

**अम् सम्बुद्धौ। ७। १। ९९।**

चतुरनडुहोरम् स्यात्सम्बुद्धौ। आमोऽपवादः। हे अनड्वन्। अनड्वाहौ। अनड्वाहः। अनडुहः। अनडुहा।

**वसु स्रंसु ध्वंस्वनडुहान्दः। ८। २। ७२।**

सान्तवस्वन्तस्य (१३) स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि। सान्तेति किं विद्वान्। पदान्ते इति किं स्रस्तम्। ध्वस्तम्।

**सहेः साडः सः। ८। ३। ५६।**

साड्रूपस्य सहेः सस्य मूर्द्धन्यादेशः।-तुराषाट्। तुराषाड्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि। तुरं सहते इत्यर्थे छन्दसि सह इति (३।२।६३सू०)ण्विः। लोके तु साहयतेः क्विप्। अन्येषामपीति (६।३।१३७सू०)पूर्व्वपदस्य दीर्घः।

---

द्विपाठे बह्वनड्वांहीत्यत्र परत्वादामि कृते पुनःप्रसङ्गविज्ञानात् नपुंसकस्य झलच (१२९पृ०) इति नुम् नामा बाध्यते इत्यर्थः।

(१२) नुम्विधिसामर्थ्यादिति सर्व्वथाविकृतेन नुमा भवितव्यं न तु दत्व-संयोगान्तलोपनिमित्तेनेति भावः। किन्तु पदान्तरवर्णसन्निधाने सन्धिकार्य्यं स्यादेव तेन अनड्वांस्तवेत्यादौ नश्छव्यप्रशान् इत्यतः (६८पृ०) रुत्वमिति बोध्यम्।

(१३) वस्विति प्रत्ययस्तेन तदन्तं ग्राह्यं समजुषोरित्यतः (७७पृ०)सेत्यनुवृत्तं वस्वन्तस्य विशेषणं तदेतदाह सान्तवस्वन्तस्येति पदान्तइत्युक्तिः भाष्यादि व्याख्यानात्।

### दिव औत् । ७ । १ । ८४ ।

दिविति प्रातिपदिकस्यौत्स्यात्सौ(१४)परे ।अल्विधित्वेन (२३पृ०) (१५) स्थानिवत्त्वाभावाद्धल्ङ्यादिलोपो (१११पृ०) न । सुद्यौः । सुदिवौ । सुदिवः । सुदिवम् । सुदिवौ ।

### दिव उत् । ६ । १ । १३१ ।

दिवोऽन्तादेश उकारः स्यात्पदान्ते (१६) । सुद्युभ्याम् । सुद्युभिः । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ ।

### षट्चतुर्भ्यश्च । ७ । १ । ५५ ।

षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात् । णत्वं द्वित्वञ्च । चतुर्णाम् ।

### रोः सुपि । ८ । ३ । १६ ।

सप्तमीबहुवचने रोरेव (१७) विसर्ज्जनीयो नान्यरेफस्य । षत्वं षस्य द्वित्वे प्राप्ते ।

(१४) दिव औदिति यावत्सुडुह इत्यतः(१४८पृ०)सावित्यनुवर्त्तते तपरकरणं सुखसुखार्थम् ।

(१५) अल्विधित्वेनेति स्थानिवदादेशोऽनल्विधावित्यत्रालोऽन्त्यविधिरल्विधिरिति पञ्चम्यन्ततत्पुरुषस्याप्याश्रयणीयतायाः (२३पृ०) प्रागुक्तत्वादिति ।

(१६) पदान्तात् ( ६।१।७६सू० ) इत्यतुवृत्तस्य विभक्तिविपरिणामेनान्वयादाह पदान्ते इति ।

(१७) रोरेवेति अत्र विपरीतनियमस्तु न भवति हलोऽनन्तराः संयोग इत्यत्रासुप्यपि विसर्गनिर्देशप्रापनादिति भावः ।

शरोऽचि। ८। ४। ४९।

अचि परे शरो न द्वे स्तः। चतुर्षु। प्रियचत्वाः। हे प्रियचत्वः प्रियचत्वारौ। गौणत्वे तु नुट् नेष्यते। प्रियचतुराम्। प्राधान्ये तु स्यादेव। परमचतुर्णाम्। कमलङ्कमलां वा आचक्षाणः। कमल्। कमलौ। कमलः। षत्वं कमल्षु।

मो नो धातोः। ८। २। ६४।

धातोर्मस्य नः स्यात्पदान्ते। नत्वस्याऽसिद्धत्वान्नलोपो न। प्रशाम्यतीति। प्रशान्। प्रशामौ। प्रशामः। प्रशान्भ्यामित्यादि।

किमः कः। ७। २। १०३।

किमः कः स्याद्विभक्तौ (१८)। अकच्सहितस्याप्ययमादेशः। कः। कौ। के। कम्। कौ। कान्। इत्यादि। सर्ववत्।

इदमो मः। ७। २। १०८।

इदमो मस्य मः स्यात्सौ परे। त्यदाद्यत्वापवादः।

इदोऽय् पुंसि। ७। २। १११।

---

(१८) अष्टम्या विभक्ताविल्यतो (१६२५०) विभक्तावित्यनुवर्त्तते। तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायादाह अकच्सहितस्येति। अन्यानपेक्षत्वेन अन्तरङ्गतयाऽकच एव प्राक् प्रवृत्तेस्तत्सहितस्यैवायमादेश इति बोध्यम्।

इदम इदः स्यानेऽय् स्यात् सौ (१९) पुंसि। सोर्लोपः। अयम्। त्यदाद्यत्वम्पररूपत्वञ्च।

दश्च। ७। २। १०९।

इदमो दस्य मः स्याद्विभक्तौ (२०)। इमौ। इमे। त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः (२१)।

अनाप्यकः। ७। २। ११२।

अककारस्येदम इदोऽन् स्यादापि विभक्तौ। आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः (२२)। अनेन।

(१९) इदोऽय् पुंसीत्यत्र तदोः सः सावित्यतः (१६७४) सावित्यनुवर्त्तते।

(२०) दश्चेति तदोः सः सावित्यतः सावित्यस्यैवापकर्षसम्भवेऽपि इदोऽयित्यनेन सावयादेशात् दस्यासम्भवात् दूरस्थितमपि अष्टन आ विभक्ता-वित्यतो (१६२४०) विभक्ताविति पदमनुवर्त्तते इत्याह विभक्ताविति।

(२१) उत्सर्ग इति तेन तदोः सः साविति सूत्रभाष्ये अनन्त्ययोरिति किं, हे स इति भो अच्युत इति सम्बुद्ध्युदाहरणं न विरुध्यते इति भावः। नास्तीत्यत्र मलन्तु प्रचुरप्रयोगेष्वदर्शनमेवाङ्कः।

इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदोरूपम्।

अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादिति।

वचनादेवंविधस्यार्थस्याभिमुखीकरणानर्हत्वादित्येतदेव मूलमिति? यत्त्वाङ्कः तदापततः सन्निकृष्टादिशब्दानामिव इदमादीनामपि सम्बोध्यपरत्वे बाधकाभावात् विप्रकृष्टस्यापि बुद्ध्या सन्निधा-पितस्य बहुशः सम्बोधनदर्शनाञ्च तथाच भट्टिः हे पितः क्वासि हे सुभ्रु बह्वेवंविललाप स इति।

(२२) प्रत्याहार इति ननु केवलं टापि, विभक्ताविति विशेषणात् तच्च अष्टन आ विभक्तावित्यतो (१६२४०) ऽनुवृत्तम्। मनो०।

**षष्ठी । अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । षष्ठी स्थानेयोगा ।१।१।४९। अनिर्धारितसंबन्धविशेषा षष्ठी स्थानेयोगा बोध्या । स्थानं च प्रसङ्गः । स्थानेऽन्तरतमः ।१।१।५०। प्रसङ्गे सति सदृशतम आदेशः स्यात् । यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः । तस्मिन्निति निर्दिष्टे पूर्वस्य ।१।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् । तस्मादित्युत्तरस्य ।१।१।६७। पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् । अलोऽन्त्यस्य ।१।१।५२। षष्ठीनिर्दिष्टोऽन्त्यस्याल**

---

तस्सिध्येत् । 'शे मुचादीनाम्' इत्यत्रान्त्यस्याचोऽसंभवेन मित्परिभाषाया अनुपस्थितिप्रसङ्गात् ॥ अन्ये तु 'अचोऽन्त्यात्परो मित्स्यादिति व्यत्यासेन योजयित्वा प्राचो व्याख्यानमपि कथंचित् समर्थयन्ते ॥ पूर्वसूत्रादन्त इत्यनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञानादतो व्याचष्टे—**अन्तावयव** इति । तेन वारीणीत्यादावङ्गस्य नान्तत्वेन दीर्घः सिद्धः । परादित्वे स न सिध्येत् । अभक्तत्वे तु वहंलिह इत्यत्र 'वहाभ्रे लिहः' इति खशि 'अरुर्द्विषत्–' इति मुमि मोऽनुस्वारो न स्यादपदान्तत्वादिति भावः ॥ यत्तु कैश्चिदुक्तमभक्तत्वे वारीणीति दीर्घो न स्यादिति ॥ तत् 'तदादिग्रहणं स्यादिनुमर्थम्' इति अङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम् ॥—**षष्ठी स्थानेयोगा** । स्थानेन योगोऽस्या अस्तीति विग्रहः, निपातनादेत्वम्, षष्ठ्याः संबन्धमात्रवाचित्वेऽपीह शास्त्रे या षष्ठी सा स्थानेयोगा बोध्या ॥ किमविशेषेण, नेत्याह—**अनिर्धारितसंबन्धविशेषे**ति । अनिर्धारितेति किम् । 'ऊदुपधाया गोहः' 'शास इदङ्हलोः' इत्यादावुपधासंनिधानेनावयवषष्ठीत्वे निर्णीते गोहः शास इत्यादौ मा भूत् । सति हि तत्रापि स्थानेयोगत्वे गोहिशासिस्थाने धातुमात्रस्योपधायाश्च स्थाने ऊदितौ स्यातामिति दिक् ॥—**स्थानं च प्रसङ्ग** इति । न चास्य प्रसङ्गार्थकत्वे विवदितव्यम् । 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्युक्ते दर्भाणां प्रसङ्ग इति प्रतीतेः ॥ एवं च 'इको यणचि' इत्यादाविगुच्चारणप्रसक्तौ यणुच्चारणीय इत्याद्यर्थः संपद्येत ॥—**स्थाने—सदृशतम** इति । अर्थात्प्राप्यमाणानां मध्य एव । अत एव गङ्गोदकमित्यत्र त्रिमात्र ओकारो न ॥ इह स्थाने इत्यनुवर्तमाने पुनः स्थानग्रहणादन्योऽपि वाक्यार्थः संमतः । ताल्वादिरूपे स्थाने योऽन्तरतमस्तत्प्रयुक्तान्तर्यवानिति यावत् । स तु प्राप्यमाणानां मध्ये स्यादिति, तदेतदाह—**यत्रानेकविधमि**ति । स्थानार्थगुणप्रमाणतश्चतुर्विधमित्यर्थः ॥ स्थानतो यथा—दध्यत्र । तालुस्थानस्येकारस्य तालुस्थानो यकारः । अर्थतो यथा—वातण्ड्ययुवतिः, वतण्डशब्दाद् 'वतण्डाच्च' इति गोत्रापत्ये यञ् । तस्य लुक् । शार्ङ्गरवादित्वान्ङीन् । वतण्डी चासौ युवतिश्चेति विग्रहे 'पोटायुवति–' इत्यादिना समासः, 'पुंवत्कर्मधारय–' इत्यतिदिश्यमानः पुंशब्दो वतण्डापत्यवाचिनो वतण्डीशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति । न तु वतण्डादिः । गुणतो यथा—वाग्घरिः । घोषवतो महाप्राणस्य तादृश एव घकारः । प्रमाणतो यथा—अमुम् अमू अमून्, 'अदसो सेः–' इत्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः ॥ तमब्ग्रहणं किम् । वाग्घरिरित्यत्र 'झयो होऽन्यतरस्याम्' इति पूर्वसवर्णे क्रियमाणे महाप्राणत्वसाम्येन द्वितीयो नादवत्त्वसाम्येन तृतीयश्च मा भूत् । किंतु नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति ॥—**बलीय** इति । तेन चेता स्तोतेत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः ॥—**तस्मिन्निति**—सप्तम्यन्तानुकरणमिदम् । निःशब्दो नैरन्तर्यपरः । दिशिरुच्चारणक्रियः । अचि यणित्युक्ते व्यवहितेऽव्यवहिते च सति प्राप्तमव्यवहिते एवेति पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति नियम्यते । अव्यवहितस्येति तु फलितार्थकथनम् ॥ पूर्वस्यैवेति किं, दध्युदकम् । अत्रोकारस्य मा भूत् ॥ अव्यवहितस्यैवेति किम्, अग्निचिदत्र सोमसुदत्र । व्यवधानं चात्र वर्णकृतमेव निषिध्यते, न तु कालकृतम् संहिताधिकारज्ञापकात्, अन्यथा निर्दिष्टग्रहणादेवासंहितायां यणाद्यप्रसङ्गात्किं तेन संहिताधिकारेणातो व्याचष्टे—**वर्णान्तरेणे**ति । एवं च संहिताधिकारबहिर्भूतविधयः कालव्यवायेऽपि संभवन्तीति । तेनाग्राविष्णू इत्यादाववग्रहेऽपि 'आनङ् ऋतो द्वन्द्वे' 'देवताद्वन्द्वे च' इत्यादिना उत्तरपदे परतो विहिता आनङादयो भवन्तीति दिक् ॥—**तस्मादि**ति । उत्तरस्येति किम् । 'तिङतिङः' इति निघात उत्तरस्यैव यथा स्यात्, अग्निमीडे । नेह—ईडे अग्निम् ॥—**अव्यवहितस्ये**ति । एतच्च निर्दिष्टग्रहणानुवृत्त्या लभ्यते । उत्संस्थानं उत्संस्तम्भनमित्यादौ 'उदस्था–' इति पूर्वसवर्णो न प्रवर्तते —**अलोऽन्त्यस्य** ॥ स्थानषष्ठीनिर्दिष्टस्य य उच्यते सोऽन्त्यस्यालः स्थाने स्यादित्यर्थः ॥ 'त्यदादीनामः' सः, यः ॥ स्थानषष्ठीति किम् । आर्धधातुकस्येड् तृच ऋकारात्पूर्वो मा भूत् । इदं च 'षष्ठी स्थाने' इत्यनुवृत्त्या लभ्यते । अल इति किम् । 'पदस्य' इत्यधिकृत्य विधीयमानं 'वसुस्रंसु–' इति दत्वं परमानडु-

---

१ प्रसङ्ग इति—प्रसङ्गश्च सति संभवे अर्थवत एव, अर्थप्रत्यायनार्थं शब्दप्रयोगात् । एवं चैरुरित्यादेस्तेस्तुरित्यर्थः फलति, तेन सर्वे सर्वपदादेशा इति सिद्धम् । २ स्थानेऽन्तर इति—षष्ठीत्यनुवृत्त्या यत्र स्थाने—षष्ठी तत्रेदमिति बोध्यम् । ३ सदृशतम इति—अर्थात्प्राप्यमाणानां मध्ये इत्यर्थः । ४ अल इति—इदं षष्ठ्यन्तमेव, अन्त्यस्येति साहचर्यात् । तथाच नियमद्वयमत्र फलितम् अल एवेति, अन्त्यस्यैवेति च । एवं अल्समुदायोत्तरं स्थानषष्ठ्यस्या लिङ्गमिति बोध्यम् । विस्तरस्तु बृहच्छेखरे द्रष्टव्यः ।

## हलि लोपः। ७। २। ११३।

अककारस्येदम इदो लोपः स्यादापि हलादौ। नानर्थके(२३)ऽलोन्त्यविधिरनभ्यासविकारे।

## आद्यन्तवदेकस्मिन् (२४)। १। १। २१।

एकस्मिन् क्रियमाणङ्कार्य्यमादाविव (२५) अन्त इव स्यात्। आभ्याम्।

## नेदमदसोरकोः। ७। १। ११।

अककारयोरिदमदसोर्भिस ऐस् (२६) न स्यात्। एभिः।

---

(२३) हलि लोपः इति सूत्रभाष्ये अलोऽन्त्यस्येति (२९ पृ०) परिभाषया इदोऽन्त्यस्य लोपः स्यादित्याशङ्क्य नानार्थके इत्यादि परिभाषा सूचिता। अनर्थके अलोऽन्त्यस्येति विधिर्न इति तदर्थः तथाच इदंशब्दस्यावयवे इदशब्देऽर्थवत्त्वाभावान्नालोऽन्त्यस्येति परिभाषाप्रवृत्तिरिति भावः। पिपर्त्तीत्यादौ भृञामिदिति (उ० २९ पृ०) अर्त्तिपिपर्त्योश्चेति (उ० २८ पृ०) इत्वं सर्वाभ्यासस्य स्यात् द्वित्वाभावे केवलस्यार्थवत्त्वेऽपि सति द्वित्वे समुदायस्यैव तथात्वमित्याशङ्कायामाहानभ्यासविकारे इति।

(२४) आद्यन्तवदिति सत्यन्यस्मिन् यस्मात् पूर्वोऽन्यो नास्ति स आदिः तथा यस्मात् परोऽन्यो नास्ति सोऽन्त इति अन्यसत्त्व एव आद्यन्तव्यवहारो लोके प्रसिद्धः सच एकस्मिन्नसहाये न सम्भवतीति तत्राद्यन्तव्यपदिष्टानि कार्य्याणि न स्युरतोऽयमतिदेशारम्भः। भाष्ये तु आद्यन्तवदित्यस्य व्यपदेशिवदेकस्मिन्निति सूत्रमुक्तं विशिष्टोऽपदेशो व्यपदेशो मुख्यव्यवहारः सोऽस्मिन्नस्तीति व्यपदेशी मुख्य इति यावत्। तेन तुल्यमेकस्मिन्नसहायेऽपि कार्य्यं स्यादिति तदर्थः।

(२५) एकस्मिन्नित्युपमेये सप्तमीदर्शनादुपमानस्यापि सप्तम्यन्ततायाः आवश्यकतया अत्र सप्तम्यन्तादिवार्थे वतिरिति फलितमाकारादाविवेति।

(२६) अत्र अतो भिस ऐसित्यतो (६१९) भिस ऐस् इत्यनुवर्त्तते।

एभिः । अत्वं नित्यत्वात् (२७) कृते पश्चाद्धलि लोपः । अस्मै । आभ्याम् । एभ्यः । अस्मात् । आभ्याम् । एभ्यः । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु । ककारयोगे तु । अयकम् । इमकौ । इमके । इमकम् । इमकौ । इमकान् । इमकेन । इमकाभ्याम् । इमकैः ।

## इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । २ । ४ । ३२ ।

अन्वादेशविषयस्येदमोऽनुदात्तोऽश् आदेशः स्यात्तृतीयादौ । अश्वचनं (२८) साकच्कार्थम् ।

## द्वितीयाटौःस्वेनः । २ । ४ । ३४ ।

द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे । किञ्चित्कार्य्यं (२९) विधातुमुपात्तस्य कार्य्यान्तरं विधातुम्पुनरुपादानमन्वादेशः । यथाऽनेन व्याकरणमधीतम् एनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलम् एनयोः प्रभूतं

(२७) इद ए इति स्थिते अभावात् पूर्व्वं परत्वात् अमादेशः स्यादत आह नित्यत्वादिति परनित्यादीनामुत्तरोत्तरबलीयस्त्वात्(३०ष्ठ०)परबाधः । कृते तु अभावे न अमादेशो हलि लोपेन बाधात् बाधकाबाधितकृतप्रसङ्गस्यैव नित्यत्वादिति भावः ।

(२८) इदमोऽनुदात्तमात्रविधानेनैव हलि लोपेनाभ्यामित्यादिरूपसिद्धेरश्ग्रहणं किमर्थमित्याशङ्क्याहाश्वचनमिति ।

(२९) किञ्चित्कार्य्यमिति अपूर्व्वं विधातुं बोधयितुमित्यर्थः ज्ञापनरूपस्यैवात्र विधानस्यामेवाचारत्र प्रवर्त्तनाविषयपर्य्यन्तस्येति बोध्यम् ।

स्वमिति। एनम्। एनौ। एनान्। एनेन। एनयोः। गणयतेर्क्विप्। सुगण्। सुगणौ। सुगणः। सुगण्ट्सु—सुगण्ट्त्सु—सुगण्सु। क्विप्। अनुनासिकस्य (२०) क्विझलोरिति (७०२२५पृ०) दीर्घः। सुगाण्। सुगाणौ। सुगाणः। सुगाण्सु। परत्वादुपधादीर्घः हल्ङ्याब्भ्य इति(१११पृ०) सुलोपः। ततो नलोपः। राजा।

## न ङिसम्बुद्ध्योः। ८। २। ८।

नस्य लोपो न स्यात् ङौ सम्बुद्धौ च। हे राजन्। ङौ तु छन्दस्युदाहरणम्। सुपां सुलुगिति (७५१७४पृ०)ङेर्लुक्। निषेधसामर्थ्यात्प्रत्ययलक्षणम्(२१)। परमे व्योमन्। ङावुत्तरपदे प्रतिषेधो वक्तव्यः॰। चर्म्मणि तिला अस्य चर्म्मतिलः। ब्रह्मनिष्ठः। राजानः। राजानम्। राजानौ। अल्लोपोऽनः(१०५पृ०)। स्नत्वम्। नचाल्लोपः (२२) स्थानिवत्, पूर्व्वत्रासिद्धे तन्निषेधात्।

(२०) अनुनासिकस्येति दीर्घे कर्त्तव्ये अल्लोपणिलोपयोर्न स्थानिवत्त्वं दीर्घविधौ (३५पृ०)तन्निषेधात् क्वौ विधिं प्रति च तन्निषेधादित्यपि द्रष्टव्यम्।

(२१) प्रत्ययलक्षणमिति लुका लुप्ताया अपि सप्तम्या न ङिसंबुद्ध्योरिति नलोपनिषेधलक्षणता न लुमतेति (११४पृ०) निषेधस्यानित्यत्वकल्पनादिति भावः।

(२२) न चाल्लोप इति। अचः परस्मिन् पूर्व्वविधाविति सूत्रे(२४पृ०)परनिमित्तकाजादेशः पूर्व्वविधौ स्थानिवदित्यर्थके पूर्व्वविधिशब्देन पूर्व्वस्मादपि विधिरिति पञ्चमीसमासाश्रयणपक्षे अजादिप्रत्ययनिमित्तकस्याल्लोपस्य पूर्व्वस्मात् चवर्गात् अकारात् तवर्गनकारस्य श्चुत्वविधौ कर्त्तव्ये स्थानिवत्त्वेन श्चुत्वं न स्यादित्याशङ्कार्थः। समाधत्ते पूर्व्वत्रासिद्धे इत्यादि।

नापि (३३) बहिरङ्गतयाऽसिद्धः यथोद्देशपक्षे (३४) षाष्ठी- परिभाषाम्प्रति णत्वस्यासिद्धतयाऽन्तरङ्गाभावे परिभाषाया अप्रवृत्तेः। अज्ञोर्ज्ञः (३५)। राज्ञः। राज्ञा।

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति। ८।२।२।**

सुब्विधौ (३६) स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च

---

(३३) नापीति। णत्वापेक्षयाऽल्लोपस्य बहिरङ्गत्वं याद्यजादिप्रत्ययसापेक्षत्वादिति बोध्यम् असिद्ध इत्यत्राल्लोप इत्यनुषज्यते। तथाच तस्या- सिद्धत्वेन न णत्वप्रसङ्ग इत्याशङ्कार्थः।

(३४) यथोद्देशेति। सूत्राणां सपरिकराणामुद्देशमनतिक्रम्य यथोद्देशं तत्पक्षे उद्देशक्रमेणैव कार्य्योत्पत्तिक्रमपक्षे न तु कार्य्यकालपक्षे इत्यर्थः षाष्ठीमिति षष्ठाध्याये वाह ऊठिति सूत्रभाष्ये ज्ञापितां षाष्ठीम् असिद्धं बहिरङ्गमन्तरङ्गे इत्येतां परिभाषां प्रति णत्व- स्यासिद्धत्वात् पूर्व्वत्रासिद्धमिति(१२४०)शास्त्रेण असिद्धत्वबोधनात्। स्तोः श्चुना श्चुरिति (५९४०) सूत्रस्याष्टमाध्यायीयतया तदपेक्षया षाष्ठ्याः परिभाषायाः पूर्व्वत्वेन पूर्व्वत्रासिद्धमिति शास्त्रस्य तत्रापि प्रवृत्तेः सूत्र इव तत्परिकरेऽपि पूर्व्वापरत्वतौल्यात् तस्य चासिद्धत्वेऽन्तरङ्गस्यैवा- भावात् कथमसिद्धमित्यादिपरिभाषायाः प्रवृत्तिरिति भावः।

(३५) अज्ञोर्ज्ञ इति अनयोर्योगे लोकवेदप्रसिद्धतादृशध्वनेर्लिपिविशेषस्य चानुवादकमभियुक्तवचनमिदं नत्वक्षरान्तरविधायकं तेन तज्ज्ञान- मित्यादौ श्चुत्वसिद्धिरिति। शब्देन्दु०।

(३६) सुब्विधावित्यत्र सुपा विधिः सुपोविधिरित्यादिरीत्या सर्व्वविभ क्त्यन्तावयवकः समासोभाष्येऽभिहितः। पूर्व्वत्रासिद्धमित्येव सिद्धे अन्यत्र निरासफलको नियमोऽयं पञ्चपञ्चनखभक्षणवदित्याह नान्यत्रेति। तत्र सुपःस्थाने विधौ यथा राजभिरित्यादौ भिस- ऐस्त्वं न। सुपि विधौ राजभ्यां राजभ्य इत्यादौ दीर्घत्व- मेत्वञ्च न। स्वरविधौ पञ्चार्मं दण्डिमित्यादौ नलोपस्यासिद्धतया

नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वञ्च न। राजभिः। राज्ञे। राजभ्याम्। राजभ्यः। राज्ञः। राज्ञाम्। राज्ञि राजनि। प्रतिदीव्यतीति प्रतिदिवा। प्रतिदिवानौ। प्रतिदिवानः। अस्य भविषयेऽल्लोपे कृते।

## हलि च (३७)। ८। २। ७७।

रेफवकारान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि। न चाऽल्लोपस्य स्थानिवत्त्वं दीर्घविधौ तन्निषेधात् (३८)। वहिरङ्गपरिभाषा तूक्तन्यायेन (३९) न प्रवर्त्तते। प्रतिदीव्नः। प्रतिदीव्नेत्यादि। यज्वा। यज्वानौ। यज्वानः।

## न संयोगाद्वमन्तात्। ६। ४। १३७।

---

अर्म्मे चावर्णमिति(६।२।९०सू०)अवर्णान्तपूर्व्वपदस्य नाद्युदात्तत्वम्। संज्ञाविधौ पञ्च दश वा ब्राह्मणा इत्यादौ नलोपस्यासिद्धतया ष्णान्ता षडिति (१६२पृ०) षट्सज्ञायां न षट्स्वस्रादिभ्य इत्यादिना (३८पृ०)ङीप्टापो र्निषेधः। सति तु सिद्धत्वे नान्तत्वाभावेन षट्संज्ञाविरहात् तत्प्रसङ्गः। कृति तुग्विधौ वृत्रहभ्यामित्यादौ नलोपस्याऽसिद्धतया ह्रस्वस्य पिति कृतीति(उ०३०५पृ०)न तुक्। अत्र कृतीति विशेषणात् सन्धिकार्य्ये तुक् भवत्येव तेन वृत्रहच्छत्रमित्यादौ छे चेति (७०पृ०)तुक्। राजाश्व इत्यादिपदेन राजीयति राजायते इत्यादि ग्राह्यम् तत्र नलोपस्य सिद्धतया ईत्वदीर्घ सवर्णदीर्घैकादेशा भवन्तीति बोध्यम्।

(३७) अत्र र्व्वोरुपधाया दीर्घ इक इति (१८५पृ०) सूत्रं, सिपि धातोरित्यतो (उ०१२१पृ०) धातो रिति चानुवर्त्तते।

(३८) तन्निषेधादिति न पदान्तद्विर्वचनेत्यादि (३५पृ०) स्थानिवत्त्वनिषेधात्।

(३९) उक्तन्यायेन षष्ठाध्यायीयायास्तस्या अष्टमाध्यायीयैतत्सूत्रापेक्षया पूर्व्वत्वात् पूर्व्वत्रासिद्धमिति न्यायेन यथोद्देशपक्षे षाष्ठीं परिभाषां प्रतीत्यादौ दर्शितेनेत्यर्थः।

वकारमकारान्तसंयोगात्परस्याऽनोऽकारस्य लोपो न स्यात्। यज्वनः। यज्वना। यज्वभ्यामित्यादि। ब्रह्मणः। ब्रह्मणा। ब्रह्मभ्यामित्यादि।

## इन्हन्पूषार्य्यम्णां शौ। ६।४।१२।

एषां शावेवोपधाया दीर्घो नान्यत्र(४०)। इति निषेधे प्राप्ते।

## सौ च। ६।४।१३।

इन्नादीनामुपधाया दीर्घः स्यादसम्बुद्धौ (४१) सौ परे। वृत्रहा। हे वृत्रहन्। एकाजुत्तरपद इति (१२८४सू०) णत्वम्। वृत्रहणौ। वृत्रहणः। वृत्रहणम्। वृत्रघ्नौ।

## हो हन्तेर्ञ्णिन्नेषु। ७।३।५४।

ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात्।

## हन्तेः (४२)। ८।४।२२।

उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात्। प्रहण्यात्।

## अत्पूर्व्वस्य। ८।४।२२।

हन्तेरत्पूर्व्वस्यैव नस्य णत्वं नान्यस्य। प्रघ्नन्ति। योगविभा-

(४०) इन्हन्निति। सर्व्वनामस्थाने चासम्बुद्धावित्यनेनैव (११०सू०) दीर्घसिद्धौ परिसङ्ख्यारूपनियमार्थमिदं सूत्रमित्याह शावेवेति नान्यत्रेति च।

(४१) अत्र सर्व्वनामस्थाने चासम्बुद्धावित्यतोऽसम्बुद्धाविति(१११सू०)पदमनुवर्त्तते।

(४२) हन्तेरत्पूर्व्वस्येत्येकमेव सूत्रं योगं विभज्य व्याचष्टे हन्तेरिति।

णसामर्थ्यादनन्तरस्य विधिर्वा प्रतिषेधो वेति न्यायस्बाधित्वा एकाजुत्तरपदे इति (१२८१०) (४३) णत्वमपि निवर्त्तते (४४)। नकारेपरे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत्। हतघ्नः। हतघ्ना। इत्यादि। यत्तु हतघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तम्। तद्भाष्यवार्त्तिकविरुद्धम्। एवं शार्ङ्गिन्यशस्विन्नर्यमन्पूषन्। यशस्विन्निति विन्प्रत्यये इनोऽनर्थकत्वेऽपि इन्हन्नित्यत ग्रहणम्भवत्येव "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिम्प्रयोजयन्तीति,, (४५) वचनात्। अर्यम्णि अर्यमणि। पूष्णि पूषणि।

**मघवा बहुलम्। ६। ४। १२८।**

मघवन्शब्दस्य (४६) वा तृ इत्यन्तादेशः स्यात्। ऋ इत्।

**उगिदचां (४७) सर्व्वनामस्थानेऽधातोः। ७। १। ७०।**

(४३) अत्पूर्व्वस्येति उपसर्गादित्यस्य निवृत्त्या णत्वमात्रस्यायं नियम इत्याहैकाजुत्तरेति।

(४४) अपिर्भिन्नक्रमे एकाजुत्तरपदेऽत्यपीत्यर्थः अपिना प्रातिपदिकान्तेत्यस्य (४८२ पृ०) कुमति चेत्यस्य (४८३ पृ०) च संग्रहः बाध्यसामान्यचिन्तया सर्व्वबाध इति भावः।

(४५) अनिनस्मन्निति राज्ञेत्यर्थवता साम्नेत्यनर्थकेन दण्डीत्यर्थवता वाग्मीत्यनर्थकेन सुपया इत्यर्थवता सुस्रोता इत्यनर्थकेन सुशर्म्मेत्यर्थवता प्रथिमेत्यनर्थकेन तदन्तग्रहणमित्युदाहार्य्यम्।

(४६) मघवेति अर्वणस्त्रसावित्यतः (१६१ पृ०) तृ इत्यनुवर्त्तते तस्याभावषष्ठ्ये सूत्रे मघवेति पदं तच्च लुप्तषष्ठीकमित्याह मघवन्शब्दस्येति।

(४७) उगिदचामिति अञ्चतिग्रहणं नियमार्थम् उगितो धातोश्चेद्भवति उगित्कार्य्यं तर्ह्यञ्चतेरेवेति।

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे। उपधादीर्घः। मघवान्। इह दीर्घे कर्त्तव्ये संयोगान्तलोपस्यासिद्धत्वन्न भवति बहुलग्रहणात्। तथाच श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत् सूत्रम्प्रत्याख्यातमाकरे। "हविर्जक्षिति निःशङ्को मखेषु मघवानसाविति" भट्टिः। मघवन्तौ। मघवन्तः। हे मघवन्। मघवन्तम्। मघवन्तौ। मघवतः। मघवता। मघवद्भ्यामित्यादि। तृत्वाभावे। मघवा। छन्दसीवनिपौ (४८) चेति वनिबन्तम्मध्योदात्तंछन्दस्येव (४९)। अन्तोदात्तन्तु लोकेऽपीति विशेषः। मघवानौ। मघवानः। सुटि राजवत्।

## श्वयुवमघोनामतद्धिते। ६।४।१३३।

अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे सम्प्रसारणं स्यात्। सम्प्रसारणाच्च (१४८९०)। आद्गुणः (४२९०)। मघोनः। अन्नन्तानाङ्किम्। मघवतः। मघवता। स्त्रियां मघवती। अतद्धिते किम्। माघवनम्। मघोना। मघवभ्यामित्यादि। शुनः। शुना। श्वभ्यामित्यादि। युवन्शब्दवस्योत्वे कृते।

---

(४८) छन्दसीति मत्वर्थे ईवनिपौ स्तः छन्दसीत्यर्थः। ई सुमङ्गलीरियं वधूः। वनिप् मघवानमीमहे इत्युदाहरिष्यते स्वयमेव मूलकृता वैदिकप्रकरणे।

(४९) छन्दस्येवेति।

सर्वथास्तु मघोनस्तु न शिष्यं छान्दसं हि तत्।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनादिति॥

वनिबन्तं मध्योदात्तं मघवन् शब्दविषयकमिति भाष्ये उक्तम्। मनो०।

**न सम्प्रसारणे सम्प्रसारणम्। ६। १। ३७।**

सम्प्रसारणे परतः पूर्व्वस्य यणः सम्प्रसारणं न स्यात्। इति यकारस्य नेत्वम्। अतएव ज्ञापकादन्त्यस्य यणः पूर्व्वं सम्प्रसारणम्। यूनः। यूना। युवभ्यामित्यादि। अर्व्वा। हे अर्व्वन्।

**अर्व्वणस्त्रसावनञः। ६। ४। १२७।**

नञा रहितस्यार्व्वन्नन्तस्याऽङ्गस्य तृ इत्यन्तादेशः स्यान्न तु सौ(५०)। उगित्त्वान्नुम्। अर्व्वन्तौ। अर्व्वन्तः। अर्व्वन्तम्। अर्व्वन्तौ। अर्व्वतः। अर्व्वता। अर्व्वद्भ्यामित्यादि। अनञः किम्। अनर्व्वा (५१) यज्ववत्।

**पथिमथ्यृभुक्षामात्। ७। १। ८५।**

एषामाकारोऽन्तादेशः स्यात्सौ परे। आ आदिति प्रश्लेषेण शुद्धाया एव व्यक्तेर्व्विधानान्नानुनासिकः।

**इतोत्सर्व्वनामस्थाने। ७। १। ८६।**

पथ्यादेरिकारस्याकारः स्यात्सर्व्वनामस्थाने परे।

**थोन्थः। ७। १। ८७।**

(५०) असाविति पर्य्युदासे सुब्भिन्ने सुप्सदृशे विभक्तिरूपेऽणप्रत्यये स्याच्च-तस्यार्व्वतीयमित्यादि न स्यादतः प्रतिषेधपरतयाह न तु साविति।

(५१) अनञः किमिति अनञ इत्यस्य कः शब्दो व्यावर्त्त्य इति प्रश्नः। अन-र्व्वेति यज्वन्शब्दसदृशोऽनर्व्वन्शब्दो व्यावर्त्त्य इत्युत्तरमेवम् सर्व्वत्र।

पथिमथोरस्य थादेशः स्यात् सर्व्वनामस्थाने परे। पन्थाः। पन्थानौ। पन्थानः। पन्थानम्। पन्थानौ।

**भस्य टेर्लोपः। ७। १। ८८।**

भसंज्ञस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा। पथिभ्यामित्यादि। एवम्मन्थाः। ऋभुक्षाः। स्त्रियान्नान्तलक्षणे ङीपि भत्वाट्टिलोपः। सुपथी नगरी। अनृभुक्षी सेना। आत्वन्नपुंसके न भवति न लुमतेति (११४पृ०) प्रत्ययलक्षणनिषेधात्। सुपथि वनम्। सम्बुद्धौ नपुंसकानान्नलोपो वा वाच्यः *। हे सुपथिन् हे सुपथि। नलोपः सुप्स्वरेति(१५६पृ०)नलोपस्याऽसिद्धत्वाद्ध्रस्वस्य गुणो न। द्विवचने भत्वाट्टिलोपः। सुपथी। शौ सर्वनामस्थानत्वात्। सुपन्थानि। पुनरपि। सुपथि। सुपथी। सुपन्थानि। सुपथा। सुपथे। सुपथिभ्यामित्यादि।

**ष्णान्ता षट्। १। १। २४।**

षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। षड्भ्यो लुक्। (११४पृ०)पञ्च २। संख्या किम्। विप्रुषः। पामानः। शतानि सहस्राणीत्यत्र सन्निपातपरिभाषया न लुक् सर्व्वनामस्थान सन्निपातेन कृतस्य नुमस्तद्विघातकत्वात्। पञ्चभिः। पञ्चभ्यः२। षट्चतुर्भ्यश्चेति(१५०क०)नुट्।

**नोपधायाः। ६। ४। ७।**

नान्तस्योपधाया दीर्घः स्यान्नामि परे। नलोपः‡। पञ्चानाम्। पञ्चसु। परमपञ्चानाम्। गौणत्वे तु न लुग्नुटौ।

---

‡ स्वादिष्विति (१०५पृ०) पदत्वे न लोप इति (१०६पृ०) सूत्रेण।

आदेशः स्यात् । **ङिच्च ।१।१।५३।** अयमप्यन्त्यस्यैव स्यात् । सर्वस्येत्यस्यापवादः । **आदेः परस्य ।१।१।५४।** परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । 'अलोऽन्त्यस्य' इत्यस्यापवादः । **अनेकाल् शित्सर्वस्य ।१।१।५५।** स्पष्टम् । अलोऽन्त्यसूत्रापवादः । अष्टाभ्य औशित्यादावादेः परस्येत्येतदपि परत्वादनेन बाध्यते । **स्वरितेनाधिकारः**

द्वयामित्यादावन्त्यस्य पदस्य मा भूत् ॥—**ङिच्च** ॥—**अयमपीति** ॥ 'अवङ् स्फोटायनस्य' गवाग्रम् 'अनङ् सौ' सखा ॥—**परस्य यदिति** ॥ 'तस्मादित्युत्तरस्याऽऽदेः' इति न सूत्रितम्, आदेरित्यंशस्य सर्वादेशबाधकत्वापत्तेः । सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति ॥—**आदेर्बोध्यमिति** ॥ आदेरलो बोध्यमित्यर्थः । अल इति ह्यनुवर्तते ॥—**अनेकाल्**—'अस्तेर्भूः' बभूव ॥ ननु 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यनेकालादेशस्य सर्वादेशत्वं सिध्यति, तत्किमनेनानेकाल्ग्रहणेन । न च 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यादिति शङ्क्यम् । 'ङिच्च' इत्यस्य नियमार्थत्वाभ्युपगमात् । उच्यते । अनेकाल्ग्रहणाभावे रामैरित्यादावैसादेशः, 'आदेः परस्य' इति मकारस्यैव स्थाने स्यान्न तु सर्वस्य स्थाने इति दिक् ॥ शित उदाहरणम् 'इदम इश्' इतः ॥—**इत्यादाविति** । आदिशब्देन 'अतो भिसः–' इत्यादि गृह्यते ॥—**परत्वादिति** । अत एव 'आदेः परस्य' इति पृथक् क्रियत इत्युक्तम् ॥ ननु 'अनेकाल् शित् सर्वस्य' इत्यतः प्रागेव 'तस्मादित्युत्तरस्यादेः' इति पठ्यताम्, किमनेन पृथक् सूत्रकरणेन । न चैवं 'तस्मिन्निति निर्दिष्टे–' इत्यतो निर्दिष्टग्रहणं नात्रानुवर्तेतेति वाच्यम्, तस्यापि सूत्रस्य प्राक् पठने बाधकाभावेन निर्दिष्टग्रहणानुवृत्तिसिद्धेः । मैवम् । ब्राह्मणा अष्टौ इत्यत्र अष्टाभ्यः पूर्वयोरपि जश्शसोरौश्प्रसंगात् । यथाश्रुतसूत्राभ्युपगमे तु 'उत्तरस्य' इत्यंशः प्रवर्तत एवेति नायं दोषः प्रसज्जत इति ॥ अत्र केचिन्निष्कर्षमाहुः,—'अनेकाल् शित्–' सूत्रात् प्रागेव वर्णलाघवाय 'तस्मादित्युत्तरस्यादेः' इति सूत्रिते परत्वात्सर्वादेशेन आदेरित्यंशवदविशेषादुत्तरस्येत्यंशस्यापि बाधितत्वाद्वाक्यसंस्कारपक्षे ब्राह्मण अम् अष्टन् अस् इसि स्थिते 'अष्टाभ्य औश्' इत्यस्य दिग्योगे पञ्चमीत्वाद् व्याप्तिन्यायेन अष्टनोऽङ्गात्पूर्वयोरपि जश्शसोरौश् स्यात् । व्याप्तिन्यायस्तु 'प्राग्रीश्वरान्निपाताः' इति पठितेऽपि प्रत्यासत्तिन्यायेन 'अधिरीश्वरे' इति सूत्रावधिकत्वसिद्धौ 'ईश्वरेतोऽसुन्कसुनौ' इति सूत्रावधिकत्वनिराकरणाय रेफविशिष्टग्रहणं कुर्वता सूत्रकृतैव ज्ञापितः । ततश्च सर्वादेशेन 'उत्तरस्य' इत्यस्याबाधनार्थं निर्दिष्टग्रहणानुवृत्त्यर्थं च 'तस्मिन्निति–' इति सूत्रात्परत्र कृते तु 'आदेः' इत्यस्य सर्वादेशबाधकत्वं स्यात् । तथा च 'अतो भिस ऐस्' इत्याद्यादेश आदेरेव स्यात्, 'अनेकाल्–' सूत्रस्य 'अस्तेर्भूः' इत्यादौ चरितार्थत्वात् । यथान्यासे तु 'उत्तरस्य,' इत्यंशः प्रवर्तत एवेत्यष्टाभ्यः परयोरेव जश्शसोरौश् स्यात्, न तु पूर्वयोः । 'तस्मादित्युत्तरस्यादेः' इति न सूत्रितम् इत्यादिमनोरमाग्रन्थस्यापि अयमेवाशय इति ॥ अन्ये तु यथाश्रुतसूत्रनिराकरणपरतयैव मनोरमां योजयन्ति । तद्यथा—न सूत्रितमित्यस्य 'अनेकाल्शित्–' सूत्रात्प्राङ् न सूत्रितमिति नार्थः । आदेरित्यंशस्य सर्वादेशबाधत्वापत्तेरित्याद्यग्रिमग्रन्थविरोधात् । किंतु तद्ग्रन्थानुकूल्याय 'स्वं रूपम्–' इति सूत्रात्प्राङ् न सूत्रितमित्यर्थोऽभ्युपेयः । एवं च 'अनेकाल्–' सूत्रात् प्राक् सूत्रिते तु नास्त्येव दोष इति मनोरमाग्रन्थाशयः । एवं स्थिते निर्दिष्टग्रहणानुवृत्तिलाभाय 'तस्मिन्निति निर्दिष्टे–' सूत्रं 'तस्मादित्युत्तरस्यादेः परस्य' इत्यस्मात्प्रागेव पठनीयम् । अष्टनोऽङ्गात्पूर्वयोरप्यौश् स्यादित्युक्तदोषस्तु इत्थं परिहरणीयः । 'तस्मादित्युत्तरस्यादेः' इत्यत्र 'आदेः' इति पृथग्वाक्यम् । तत्र 'उत्तरस्य' इत्यनुवर्तते । सा च स्थानषष्ठी, 'षष्ठी स्थाने' इत्यस्य प्राप्तेः । तत्र चायमर्थः, पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसंबन्धी, उत्तरस्य स्थाने यद्विधीयते तदादेर्भवतीति । इत्थं वाक्यभेदेन व्याख्यानाश्रयणात् 'अनन्तरस्य' इति न्यायेन 'आदेः' इत्यंश एव सर्वादेशेन बाध्यते, न तूत्तरस्येत्यंशोऽपि, इति नास्त्येव पूर्वोक्तदोषः । वाक्यभेदेन व्याख्यानं तु 'उत्तरस्यादेः' इत्यसमस्तन्यासकरणेन ज्ञाप्यते । अन्यथा 'उत्तरादेरिति न सूत्रितम्' इति वदेत् । किंच 'अष्टाभ्य औश्' इत्यस्य दिग्योगे पञ्चमीत्वेन पूर्वपरसाधारणतया अष्टनोऽङ्गाज्जश्शसोरित्युक्तेऽपि अष्टनोऽङ्गसंज्ञानिमित्तभूतौ यौ जश्शसौ तावेव शीघ्रोपस्थितिकावित्यष्टन्शब्दादुत्तरयोरेव औश् स्यात्, न तु पूर्वयोरिति दिक् ॥—**स्वरितेनाधिकारः** ॥ अत्रेत्थंभूतलक्षणे तृतीया । अधिकारो विनियोगः । कियद्दूरमधिकार इत्यत्र तु व्याख्यानमेव शरणम् । यथा आ सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः, न तु प्रागभ्यासविकारेभ्य एवेत्यादि ॥ यद्वा स्वरित इति सप्तम्यन्तं स्वरिते दृष्टे अधिकारो निवर्तत इत्यर्थः । कः स्वरितोऽधिकारार्थः, कश्च तन्निवृत्त्यर्थ इत्यत्र तु व्याख्यानमेव शरणम् ॥ नन्वेवं व्याख्यानादेवानुवृत्त्यननुवृत्ती स्तः किमनेन सूत्रेणेति चेदत्राहुः । अर्थान्तरसंग्रहायेदं सूत्रं कृतम् । तथाहि । अधिकः कारो अधिकारः, अधिकं कार्यं गौणेऽपि शास्त्रप्रवृत्तिरित्यर्थः । तथा च गौणमुख्यन्यायो यत्र नेष्यते अपादानाधिकरणादौ, तत्र स्वरितः पाठ्यः ॥ किंच अधिकः कारः कृतिरियं यत्पूर्वः सन् परं बाधते । तथा च 'नुमचिरतृज्वद्भावेभ्यो नुट्–' इत्यादि वक्ष्यमाणपूर्वविप्रतिषेधाः सर्वे संगृहीता भवन्ति । तत्र

---

१ परस्येति—अत्र परस्येत्यावर्तते, तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेयमुपतिष्ठते, तेन 'नित्यं ङितः' इत्यादौ न दोषः ।

प्रियपञ्चा। प्रियपञ्चानौ। प्रियपञ्चानः। प्रियपञ्चाम्। एवं सप्तन् नवन् दशन्।

## अष्टन आ विभक्तौ। ७।२।८४।

अष्टन आत्वं स्याद्धलादौ (५२) विभक्तौ।

## अष्टाभ्य औश्। ७।१।२१।

कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात्। अष्टभ्य इति वक्तव्ये(५३) कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति वैकल्पिकं चेदमष्टन आत्वम् अष्टनो (५४) दीर्घादिति (६।१।१७२) सूत्रे दीर्घग्रहणाज्ज्ञापकात्। अष्टौ२। परमाष्टौ। अष्टाभिः। अष्टाभ्यः२। अष्टानाम्। अष्टासु। आत्वाभावे। अष्ट२। इत्यादि पञ्चवत्। गौणत्वे त्वात्वाभावे राजवत्। शसि प्रियाष्टः। इह पूर्व्वस्मादपि विधावल्लोपस्य( )स्थानिवद्भावान्न

(५२) रायोहलीत्यतो(१२६७०)हलीत्यपकृष्याह हलादाविति तदकरणे अष्टानामित्यादि न सिद्ध्यति तत्र परत्वात् नित्यत्वाच्च नुटः प्रागात्वे कृते अनान्तत्वेन षट्संज्ञाऽभावात् नुटोऽप्रवृत्तेः। कृते तु नुटि हलादिपरत्वेनात्वमिति बोध्यम्।

(५३) ननु हलीत्यपकर्षेऽपि जश्शसोर्हलादित्वाभावेन कथं कृताकारतेत्यत आह अष्टभ्य इति वक्तव्ये इति। तथाच कृतात्वस्यैवेदमनुकरणं नतु लक्षणसम्पन्नं तथासति अनन्तरोक्तज्ञापकेन तस्यैव वैकल्पिकत्वलाभार्थमष्टभ्य इत्येव ब्रूयादिति भावः।

(५४) अष्टन इति। दीर्घान्तादष्टनः परा असर्व्वनामस्थानविभक्तिरुदात्ता स्यादित्यर्थः तेन शसि अष्टौ भिसि अष्टाभिरित्यस्योदात्तता दीर्घात् किमष्टभिरिति मध्योदात्तम्। तत्त्व०।

ष्टुत्वम् कार्य्यकालपक्षे वहिरङ्गस्याऽल्लोपस्याऽसिद्धत्वाद्वा। प्रियाष्ट्ना। इत्यादि। जश्शसोरनुमीयमानमात्वं प्राधान्य एव(५५) नतु गौणतायाम्। तेन प्रियाष्ट्नो इत्यादावेव वैकल्पिकमात्वम्। प्रियाष्टाभ्याम्। प्रियाष्टाभिः। प्रियाष्टाभ्यः २ प्रियाष्टासु।

प्रियाष्ट्नो राजवत्सर्वं हाहावच्चापरं हलि।

भष्भावः। जश्त्वचर्त्वे। भुत्—भुद्। बुधौ। बुधः।

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च। ३।२।५९।**

एभ्यः क्विन् स्यात्। अलाक्षणिकमपि किञ्चित्कार्य्यं निपातनाल्लभ्यते निरुपपदाद्युजेः क्विन् स्यात्कनाविति।

**कृदतिङ्। ३।१।९३।**

सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्।

**वेरपृक्तस्य। ६।१।६७।**

अपृक्तस्य वस्य लोपः स्यात्। कृत्तद्धितेति प्रातिपदिकत्वात्स्वादयः।

**युजेरऽसमासे। ७।१।७१।**

(५५) प्राधान्य एवेति औत्त्वं हि लुगनुटाविव प्राधान्य एव भवति नतु गौणत्वे अष्टाभ्य इति बहुवचननिर्द्देशात् तथाच औत्त्वविधौ कृतात्वनिर्द्देशबलेनानुमीयमानमात्वं प्राधान्य एवेति भावः।

युजेः (५६) सर्व्वनामस्थाने नुम् स्यादसमासे। सुलोपः संयोगान्तस्य लोपः।

## क्विन्प्रत्ययस्य कुः। ८। २। ६२

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते। नस्य कुत्वेनानुनासिको ङकारः। युङ्। नश्चापदान्तस्येति (६२ पृ०) नुमोऽनुस्वारः परसवर्णः तस्याऽसिद्धत्वाच्चोः कुरिति कुत्वं न। युञ्जौ। युञ्जः। युञ्जम्। युञ्जौ। युजः। युजेत्यादि। असमासे किम्।

## चोः कुः। ८। २। ३०।

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च। इति कुत्वम्। क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वात्। सुयुक् सुयुग्। सुयुजौ। सुयुजः। युजेरिति धातुपाठपठितेकारविशिष्टस्याऽनुकरणं नत्विका निर्द्देशः। तेनेह न युज्यते समाधत्ते इति युक्। युज समाधौ दैवादिक आत्मनेपदी। संयोगान्तस्य लोपः। खन्। खञ्जौ। खञ्जः। इत्यादि। व्रश्चेति(१२०पृ०)षत्वम्। जश्त्वचर्त्वे। राट्-राड्। राजौ। राजः। राट्सु—राट्त्सु। एवं विभ्राट्। देवेट्। देवेजौ। विश्वसृट्। इह यजिसृज्योः कुत्वं नेति क्नीवे (१८४पृ०)वक्ष्यते। परिमृट्। षत्वविधौ राजिसाह-चर्य्यात् टुभ्राजृ दीप्ताविति फणादिरेव गृह्यते। नतु राजृ भ्राजृ दीप्ताविति तस्य कुत्वमेव। विभ्राक् विभ्राग्भ्यामित्यादि।

(५६) अत्र उगिदचां सर्व्वनामस्थाने इत्यतः (१५८पृ० सर्व्वनामस्थान इति इदितोनुम्धातोरि(७०२२पृ०)नुमिति चानुवर्त्तते।

परौ व्रजेः षः पदान्ते* । परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्तविषये षत्वञ्च । परित्यज्य सर्व्वं व्रजतीति परिव्राट् । परिव्राजौ । परिव्राजः ।

## विश्वस्य (५७) वसुराटोः । ६ । ३ । १२८ ।

विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वं वसु यस्य स विश्वावसुः । राड़िति पदान्तोपलक्षणार्थम् । चर्त्वमविवक्षितम् । विश्वाराट्—विश्वाराड् । विश्वराजौ । विश्वराजः । विश्वाराड्भ्यामित्यादि ।

## स्कोः संयोगाद्योरन्ते च । ८ । २ । २९ ।

पदान्ते (५८) झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् । भ्रट्—भ्रड् । सस्य श्चुत्वेन शः । तस्य जश्त्वेन जः । भ्रज्जौ । भ्रज्जः । ऋत्विगित्यादिना(१६४पृ०)ऋतावुपपदे यजेः क्विन् क्विन्नन्तत्वात्कुत्वम् । ऋत्विक्—ऋत्विग् । ऋत्विजौ । ऋत्विजः । रात्सस्येति(१२२पृ०)नियमान्न संयोगान्तस्य लोपः । ऊर्क्—ऊर्ग् (५९) । ऊर्ज्जौ । ऊर्ज्जः । त्यदाद्यत्वं पररूपञ्च ।

---

(५७) विश्वस्येत्यत्र ढ्लोपे दीर्घ इत्यतो (८०पृ०)दीर्घ इत्यनुवर्त्तते ।

(५८) स्कोरित्यत्र पदस्येत्यधिकारः झलो झलीत्यतो(७४०पृ०)झलीत्यनुवर्त्तते संयोगेति लुप्तषष्ठीकं पदं झलन्ताभ्यां विशिष्यते इत्याह पदान्ते झलि चेति झलि किं भ्रष्टः । भ्रज्जतीति भ्रट् व्रश्चेत्यादिना(१२०पृ०)षत्वम् ।

(५९) ऊर्गिति । ऊर्ज्ज बलप्राणनयोरित्यस्मात् चुरादेः क्विपि णिलोपः स च चोः कुत्वे न स्थानिवत्, पदान्तविधित्वात् पूर्व्वत्रासिद्धत्वाच्च ।

## तदोः(६०) सः सावनन्त्ययोः। ७। २। १०६।

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात् सौ। स्यः। त्यौ। त्ये। त्यम्। त्यौ। त्यान्। सः। तौ। ते। परमसः। परमतौ। परमते। द्विपर्य्यन्तानामित्येव। नेह। त्वम्। नच तकारोच्चारणसामर्थ्यान्नेति वाच्यम्। अतित्वमिति गौणे चरितार्थत्वात्। संज्ञायां गौणत्वे चात्वमत्वे न। अतित्यद्। अतित्यदौ। अतित्यदः। यः। यौ। ये। एषः। एतौ। एते। अन्वादेशे तु। एनम्। एनौ। एनान्। एनेन। एनयोः २।

## ङेप्रथमयोरम्। ७। १। २८।

युष्मदस्मद्भ्यां परस्य ङे (६१) इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात्।

## मपर्य्यन्तस्य। ७। २। ९१।

इत्यधिकृत्य।

(६०) तदोरित्यत्र त्यदादीनाम इत्यतः (११५ष्ठ) त्यदादीनामित्यनुवर्त्तते त्यदादीनां किमातपः दारक इत्यादौ न। तदोः किं यदिति अनन्त्ययोः किं हे स। अत्र परत्वात् त्यदाद्यत्वं बाधित्वा पूर्व्वमनन्त्यस्य दकारस्य सकारे कृते हल्ङ्यादिना (११४ष्ठ०) सुलोपे च रुत्वविसर्गौ स्यातां तथाच हे स इति सविसर्गं रूपं स्यादिति भावः।

(६१) ङेप्रथमयोरित्यत्र युष्मदस्मद्भ्यां ङसोऽश् इत्यतो (१७२ष्ठ) युष्मदस्मद्भ्यामित्यनुवर्त्तते ङे इति लुप्तषष्ठीकं पृथक्पदं प्रथमायश्च प्रथमा द्वितीयासमुदाये गौण इत्याशयेनाह ङे इत्येतस्येत्यादि।

त्वाहौ (६२) सौ। ७। २। ९४।

युष्मदस्मदोर्मपर्य्यन्तस्य त्व अह इत्येतावादेशौ स्तः सौ परे।

शेषे (६३) लोपः। ७। २। ९०।

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य (६४) लोपः स्यात्। अतो गुणे (८८पृ०) (६५)। अमि पूर्व्वः। (९०पृ०) त्वम्। अहम्। ननु त्वं स्त्री अहं स्त्री इत्यत त्व अम्, अह अम् इति स्थिते अमि पूर्व्वरूपत्वं परमपि बाधित्वाऽन्तरङ्गत्वाट्टाप् प्राप्नोति। सत्यम्। 'अलिङ्गे युष्मदस्मदी' तेन स्त्रीत्वाभावान्न टाप्। यद्वा शेषइति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया (६६)तेन मपर्य्यन्ताच्छेषस्य अद् इत्यस्य लोपः स्यात्। स च परो-

---

(६२) त्वाहाविति त्वमावेकवचने इत्यनेनैव(१७०पृ०)युष्मदस्मदादेशसिद्धावपि युवां युष्मान् वा अतिक्रान्त इति वाक्ये अतित्वमित्यादौ त्वादेशसिद्ध्यर्थमिदं सूत्रं तादृशस्थले युष्मद एकार्थवाचित्वाभावेन तत्सूत्रेणादेशासम्भवादिति बोध्यम्।

(६३) प्रागुक्तात्वयत्वातिरिक्तविभक्तिरिह शेषशब्दार्थ इत्याहात्वयत्वेति।

पञ्चम्याश्च चतुर्थ्याश्च षष्ठ्याः प्रथमयोरपि
यान्यद्विवचनान्यत्र शेषे लोपो विधीयते इति काशिका।

(६४) अलोऽन्त्यस्येति (२९पृ०) परिभाषालभ्यमाहान्त्यस्येति।

(६५) त्वादयोऽकारान्ता इति वृत्त्यनुसारेणाह अतो गुण इति वस्तुतस्तु भाष्ये हलन्तास्ते इति स्थितम्।

(६६) अधिकरणत्वविवक्षयेति यदि शेष इति विभक्तिविशेषणं स्यात् तर्हि व्यर्थमेव स्यात् आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसम्भवात् परिशेषात् तदतिरिक्तविषय एव लोप इति लाभात् अतः शेषशब्दार्थमन्यमेवेह मन्यामहे इति भावः।

पर्यन्तस्याङ्गे अतो गुणे(८८पृ०) इति (६७) प्रवर्त्तते। अदन्तत्वा
भावान्न टाप्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्।

**युवावौ द्विवचने। ७। २। ९२।**

द्वयोरुक्तौ(६८) युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ।

**प्रथमायाश्च द्विवचने भाषायाम्। ७। २। ८८।**

इह युष्मदस्मदोराकारोऽन्तादेशः स्यात्। औङीत्येव सुव-
चम्। भाषायां किम्। युवं वस्त्राणि। युवाम्। आवाम्।
मपर्यन्तस्य किम् (६९)। साकच्कस्य मा भूत्। युवकाम्।
आवकाम्। त्वया मयेत्यत्र च त्वया म्येति (७०) मा भूत्।
युवकाभ्यामावकाभ्यामिति च न सिध्येत्।

(६७) अतो गुणे इति। वर्णादाङ्गं बलीय इत्येतत् समानविषये एव,
इह तु शेषे लोपे विभक्तिर्निमित्तं, पररूपे त्वकार इति विभिन्नविष
यत्वादस्य प्रवृत्तिरिति बोध्यम्।

(६८) द्वयोर्वचनं बोधनं तत्र समर्थयोरित्यर्थे द्विवचनशब्दो गौण इत्याह द्वयो-
रुक्तावित्ति तत्फलन्तु गौणेऽप्यादेश इति मूलोदाहरणे स्पष्टम्।

(६९) मपर्यन्तस्य किमिति अधिकारसूत्रमेव किमर्थमिति प्रश्नः।

(७०) ननु समुदायादेशस्वीकारेऽपि ओकारमकारभकारादौ, सुपि सर्व-
नाम्नामकच् प्राक् टेरित्यत्र(१०६पृ०) सुबन्तस्य टेः प्रागकजिति व्यवस्थाया
युष्मद्विषये त्वयकेत्यादिविषये वक्ष्यमाणत्वात् अन्तरङ्गत्वात् युवामिति
सिद्धान्तरमकज् भविष्यतीति न तत्र दोष इत्यत आह त्वया म्येति।
त्वमयोर्हलन्तत्वपक्षे योऽचीति(१०७पृ०) यादेशे तयोः संयोगात् तथारूपा-
पत्तिरिति भावः। मन्यत्रापि योऽचीत्यनुक्तावप्ये इति सूत्रकल्पनेन
एकारादेशे अयादेशे च तत्सदृशसिद्धिरत आह युवकाभ्यामिति सर्वा-

**यूयवयौ जसि । ७ । २ । ९३ ।**

स्पष्टम् । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । इह शेषे लोपोऽन्त्यलोप इति पक्षे अयःशी प्राप्तः अङ्गकार्य्ये (७१) कृते पुनर्नाङ्गकार्य्यमिति न भवति, ङेप्रथमयोरित्यत्र (१६७४०)मकारान्तरं प्रश्लिष्य अम् मान्तएवावशिष्यते नतु विक्रियत इति व्याख्यानाद्वा ।

**त्वमावेकवचने । ७ । २ । ९७ ।**

एकवचनस्योक्तौ युष्मदस्मदोर्म्मपर्य्यन्तस्य त्वमौ स्तो विभक्तौ ।

**द्वितीयायाञ्च । ७ । २ । ८७ ।**

युष्मदस्मदोराकारः स्यात् । त्वाम् । माम् । युवाम् । आवाम् ।

**शसो न । ७ । १ । २९ ।**

नेत्यविभक्तिकम् युष्मदस्मद्भ्यां परस्य शसो नकारः स्यात्यो-

---

देशस्योकारे साकृकयोरपि स्थाने युवाद्यादेशापत्तौ तद्रूपासिद्धिरिति भावः । हलन्ताः त्वाद्यादेशा इति पक्षे सर्व्वादेशे त्वयेत्याद्यसिद्धिश्च मपर्य्यन्तानभिधाने स्यादित्यपि बोध्यम् । भाष्ये तु मपर्य्यन्तस्यानभिधानेन किञ्चिच्छेषसहितयोरेव तयोर्मपर्य्यन्तस्थाने आदेश इत्याश्रया यत्र निरवशेषस्तत्र युष्मयते अस्मयते इत्यादौ नादेशइति फलान्तरमभिहितम् ।

(७१) अङ्गवृत्ते पुनर्वृत्तावविधिरिति परिभाषामयतो दर्शयति अङ्गकार्य्ये इति अङ्गे अङ्गाधिकारे इत्तं वर्त्तनं यस्य तदङ्गवृत्तं शास्त्रं तस्मिन् कृते अङ्गे वृत्ते पुनरन्यस्य प्रवृत्तौ प्राप्तायामविधिरप्रवृत्तिरिति

ऽपवादः। आदेः परस्य (२८४०) (७२)। संयोगान्तलोपः। युष्मान्। अस्मान्।

## योऽचि। ७। २। ८९।

अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः। त्वया। मया।

## युष्मदस्मदोरनादेशे। ७। २। ८६।

अनयोराकारः स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः।

## तुभ्यमह्यौ ङयि। ७। २। ९५।

अनयोर्मपर्य्यन्तस्य तुभ्यमह्यौ स्तो ङयि। अमादेशः। शेषे लोपः(१६८४०)। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्। युवाभ्याम्। आवाभ्याम्।

## भ्यसो भ्यम्। ७। १। ३०।

भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात्। आद्ये शेषे लोपोऽन्त्यलोप एव तत्राऽङ्गवृत्तपरिभाषया एत्वं न। अभ्यम् तु पक्षद्वयेपि साधुः। युष्मभ्यम्। अस्मभ्यम्।

## एकवचनस्य च। ७। १। ३२।

---

तदर्थः तथाच जसः स्थानेऽमप्रवृत्तौ न पुनः तस्य स्थाने शीप्रवृत्तिरिति भावः।

(७२) आदेः परस्येति (२८४०) परिभाषया शस आदेरकारस्य स्थाने नकारादेशे तेन संयुक्तस्य न्स् इत्यस्य अन्तलोपः।

आभ्यां पञ्चम्येकवचनस्य अत् स्यात्। त्वत्। मत्। ङसे च्चेति सुवचम्। युवाभ्याम्। आवाभ्याम्।

**पञ्चम्या अत्। ७। १। ३१।**

आभ्यां पञ्चम्या भ्यसोऽत् स्यात्। युष्मत्। अस्मत्।

**तवममौ ङसि। ७। २। ९६।**

अनयोर्मपर्य्यन्तस्य तवममौ स्तो ङसि।

**युष्मदस्मद्भ्यां ङसोऽश्। ७। १। २७।**

तव। मम। युवयोः। आवयोः।

**साम आकम्। ७। १। ३३।**

आभ्याम्परस्य साम आकम् स्यात्। भाविनः (७३) सुटो निवृत्त्यर्थं ससुट्कनिर्द्देशः। युष्माकम्। अस्माकम्। त्वयि। मयि। युवयोः। आवयोः। युष्मासु। अस्मासु।

समस्यमाने (७४) द्व्येकत्ववाचिनी युष्मदस्मदी।

(७३) आकमादेशात् पूर्व्वं योऽचीति (१७१९०) यत्वेन भाव्यं ततश्च शेषे लोपा भावात्। अवर्णान्तादिहितस्य सुटोऽप्रसक्त्या सामइति ससुट्कनिर्द्देशः कथमित्याशङ्क्याह भाविन इति कृते हि शेषे लोपेऽकारान्तात् प्राप्तः सुट् ससुट्कस्य स्यानित्त्वेन निर्द्देशान्निवर्त्तते इति भावः।

(७४) द्विवचनैकवचनयोरर्थपरत्वोक्तेः फलं दर्शयति समस्यमाने इत्यादि। पञ्चकं प्रातिपदिकार्थ इति पक्षे संख्याया अपि प्रातिपदिकार्थत्वा-दाह द्व्येकत्ववाचिनी इति अर्थपरत्वाश्रयणसामर्थ्यादेव भूतपूर्व्व गतेरपि द्वित्वैकत्वसंख्याया ग्रहणेन युवावादेशइति भावः।

**।१।३।११। स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् । परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ असिद्धं बहि[1]रङ्गमन्तरङ्गे । अकृतव्यूहाः पाणिनीयाः । निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः ॥ इति परिभाषाप्रकरणम् ॥**

---

## अच्संधिप्रकरणम् ।

**इको यणचि ।६।१।७७। इकः स्थाने यण् स्या[2]दचि संहितायां विषये । सुधी उपास्य इति स्थिते । स्था[3]नत आन्तर्यादीकारस्य यकारः । सुध्य् उपास्य इति जाते । अनचि च ।८।४।४७। अचः परस्य यरो द्वे वा स्तो न**

---

स्वरितपाठेनैव गतार्थत्वादित्यादि ॥—**परनित्येति** । पराद् नित्यं यथा—'तुदादिभ्यः शः' तुदति । 'रुधादिभ्यः श्नम्' रुणद्धि, परमपि लघूपधगुणं बाधित्वा नित्यत्वात् शश्नमौ ॥ तथा धिनवाव, धिनवाम । परमपि 'लोपश्चास्यान्यतरस्यां म्वोः' इत्युकारलोपं बाधित्वा नित्यत्वात् 'आडुत्तमस्य—' इत्याट् ॥ परादन्तरङ्गं यथा—उभये देवमनुष्याः । इह 'प्रथमचरम—' इति परमपि विकल्पं बाधित्वा 'सर्वादीनि—' इति सर्वनामसंज्ञा, विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात् । तथा—स्रवतेः 'णिश्रि—' इति चङि द्वित्वे उपधागुणादन्तरङ्गत्वादुवङ्, असुस्रुवत् ॥ परादपवादो यथा—परमपि 'अनेकाल्—' इति सर्वादेशं बाधित्वा 'ङिच्च' इत्यन्तादेशः, । दध्ना, दध्ने । 'अस्थिदधि—' इत्यनङ् ॥ नित्यादन्तरङ्गं यथा—ग्रामणिनी कुले । नित्यमपि 'इकोऽचि—' इति नुमं बाधित्वा 'ह्रस्वो नपुंसके—' इति ह्रस्वः । कृते तु नुमि अनजन्तत्वाद् ह्रस्वो न स्यात् ॥ अन्तरङ्गादपवादो यथा,—दैत्यारिः, श्रीशः । परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वादाद्गुणे यणि च प्राप्तेऽपवादत्वात्सवर्णदीर्घः । तथा उन्न्यौ, उन्न्यः सुल्वौ, सुल्वः इत्यत्रान्तरङ्गत्वादियङि उवङि च प्राप्तेऽपवादत्वात् 'एरनेकाचः—' इति, 'ओः सुपि' इति च यण् ॥ यद्यपवादोऽन्यत्र चरितार्थः तर्हि परान्तरङ्गाभ्यां बाधत एव, तथा हि—'ङिच्च' इत्येतदनन्यार्थङकारयुक्तेष्वनङादिषु चरितार्थत्वात्तातङि न प्रवर्तते, किंतु परेण 'अनेकाल्शित्—' इत्यनेन बाध्यते । जीवतात्, भवतात् ॥ अयजे इन्द्रम्, ग्रामे इह, सर्वे इत्थम् । अत्र अयजइ इन्द्रम्, ग्रामइ इह, सर्वइ इत्थमिति स्थिते अन्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते । तस्य समानाश्रये दैत्यारिः श्रीश इत्यादौ चरितार्थत्वात् ॥—**असिद्धमि**ति तेन पचावेदमित्यादौ 'एत ऐ' इत्यैत्वं न ॥—**अकृतव्यूहा** इति । अकृतकार्या इत्यर्थः ॥ एवं तर्हि सर्वस्य शास्त्रस्य वैयर्थ्यं स्यात् अत आह—**निमित्तं विनाशोन्मुखं दृष्ट्वे**ति । लोकसिद्धार्थकथनमेतत् । यद्वा अक्षरार्थेनाप्येतत्कथनम् । ऊह्यते तर्क्यते इत्यूहः कार्यं, विशिष्टो य ऊहो विनाशोन्मुखनिमित्तकं कार्यम्, अकृतो व्यूहो यैस्ते अकृतव्यूहा इति ॥ यद्यपि 'कृतमपि शास्त्रं निवर्तयन्ति' इति परिभाषान्तरं पठ्यते फलं च तुल्यं, तथापि अकृतव्यूहा इत्येव लघु । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति भावः ॥—**न कुर्वन्ती**ति । यथा निषेदुषीमित्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः ॥ ॥ इति तत्त्वबोधिन्यां परिभाषाप्रकरणम् ॥

**अच्संधिः** ॥—**इको यणचि** ॥ प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा । 'यू स्त्र्याख्यौ' 'त्वादिभ्यः' इति च निर्देशात् । तेन इक्शब्देन षट्षष्टिर्गृह्यन्ते, यण्शब्देन चत्वारः । भाव्यमानस्याणः सवर्णाग्राहकत्वात् । एवं चेह यणि तद्वाच्यवाच्ये लक्षणा तु न शङ्क्यैव, भाव्यमानस्याणः सवर्णग्राहकत्वाभावेन यण्वाच्ययकारादिवाच्यानामभावात् । अतो नास्ति यथासङ्ख्यम् ॥ न च लक्ष्यार्थबोधात्पूर्वभाविनं शक्यार्थज्ञानमादाय यथासंख्यमस्त्विति वाच्यम् । एवमपि तृतीयचतुर्थाभ्यामृकारलकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गात् । तस्मादिह 'स्थानेऽन्तरतमः' इति सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्यानुपदं वक्ष्यति—'स्थानत आन्तर्यात्' इति ॥—**अची**ति । कस्मादचि पर इत्याकाङ्क्षायामर्थादिक इति संबध्यते ॥—**संहितायां विषय** इति । दध्यत्रेत्यादौ कार्यिनिमित्तयोर्यदा अतिशयितसंनिधिर्विवक्ष्यते तदैवं यण् भवतीति भावः ॥—**अनचि च** ॥ 'यरोनुनासिके—' इति सूत्राद्यरो वेति चानुवर्तते । 'अचो रहाभ्याम्—' इति सूत्रादचो द्वे इति च तदाह—**अचः परस्ये**त्यादि । एवं चात्र वाग्रहणानुवृत्त्यैवेष्टसिद्धेः 'त्रिप्रभृतिषु शाकटायनस्य' 'सर्वत्र शाकल्यस्य' 'दीर्घादाचार्याणाम्' इति च सूत्रत्रयं नारम्भणीयमिति भावः ॥ अच इति किम् । तादात्म्यमित्यादौ मस्य द्वित्वं मा भूत् ॥ 'अनचि' इति यदि पर्युदासः स्यात्ततो 'नञिव युक्तमन्यसदृशे तथा ह्यर्थगतिः' इति न्यायादज्भिन्नेऽच्सदृशे वर्णे हलीत्यर्थः स्यात्ततो लाघवात् हलीत्येव वदेत्, तस्माद् प्रसज्यप्रतिषेध इति ब्रवीति ॥ —**न त्वची**ति ।

---

१ बहिरङ्गमिति—परस्परापेक्षया व्याप्यनिमित्तकमन्तरङ्गं व्यापकनिमित्तकं च बहिरङ्गमित्युत्सर्गः । विलम्बोपस्थितिकत्वं च बहिरङ्गस्यासिद्धत्वे बीजम् । २ स्यादिति—कार्यशब्दवादे इदम् । ३ स्थानत इति—इदं च व्यक्तिपक्षे, जातिपक्षे तु यथासङ्ख्येनापि निर्वाहः । 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्तु एतदसिद्ध्या दूषित इति भावः ।

समासार्थोऽन्यसंख्यश्चेत् स्तो युवावौ त्वमावपि (७५) ॥ १ ॥
सुजस्ङेङस्सु, परतः आदेशाः स्युस्सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके ।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥ ३ ॥
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ॥ ४ ॥

त्वां मां वा अतिक्रान्त इति विग्रहे । अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम्२ । अतिमाम्२ । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् अतिमह्यम् । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वभ्यम् । अतिमभ्यम् । ङसिभ्यसोः । अतित्वत् । अतिमत् । भ्यामि प्राग्वत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् (७६) । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वयोः । अतिमयोः । अतित्वासु । अतिमासु । युवामावां वा अतिक्रान्त

(७५) त्वाहादिभिः परत्वेन युवावयोर्बाधनेऽपि तेभ्यः परौ त्वमौ कथं तैर्बाध्येयातामित्याशङ्क्याह त्वमावपीति । विप्रतिषेधे परमित्यत्र (८।पृ०) परग्रहणस्येष्टविषयेऽकार प्रश्लेषेण पूर्व्वार्थकत्वात्तथेति भावः ।

(७६) अतित्वाकमिति प्राञ्चस्तु यस्यामः सङ्घ्ये भावी तस्यैवाम आकमा भवितव्यं नच तद्गौणत्वे भवतीति तत्राकम् न प्रवर्त्तते तथाच तत्र अतित्वयाम् अतिमयामित्येव रूपमित्याहुः ।

इति विग्रहे। सुजस्ङेङस्सु प्राग्वत्। औ अम् औट्सु अतियुवाम्। अत्यावाम्। अतियुवान्। अत्यावान्। अतियुवया। अत्यावया। अतियुवाभ्याम् ३। अत्यावाभ्याम् ३। अतियुवाभिः। अत्यावाभिः। भ्यसि अतियुवभ्यम्। अत्यावभ्यम्। ङसिभ्यसोः। अतियुवत्। अत्यावत्। ओसोः। अतियुवयोः। अत्यावयोः। अतियुवाकम्। अत्यावाकम्। अतियुवयि। अत्यावयि। अतियुवासु। अत्यावासु। युष्मानस्मान्वाऽतिक्रान्त इति विग्रहे। सुजस्ङेङस्सु प्राग्वत्। औमौट्सु। अतियुष्माम्। अत्यस्माम्। अतियुष्मान्। अत्यास्मान्। अतियुष्मया। अत्यस्मया। अतियुष्माभ्याम् ३। अत्यस्माभ्याम् ३। अतियुष्माभिः। अत्यस्माभिः। भ्यसि। अतियुष्मभ्यम्। अत्यस्मभ्यम्। ङसिभ्यसोः। अतियुष्मत्। अत्यस्मत्। ओसोः। अतियुष्मयोः। अत्यस्मयोः। अतियुष्माकम्। अत्यस्माकम्। अतियुष्मयि। अत्यस्मयि। अतियुष्मासु अत्यस्मासु।

पदस्य (७७)। ८।१।१६।

पदात् (७८)। ८।११७।

अनुदात्तं सर्व्वमपादादौ ८।१।१८।

इत्यधिकृत्य (७९)।

---

(७७) अपदान्तस्य मूर्द्धन्य इति (८।३।५५ सू०) विशेषनिर्द्देशात्ततः प्राक् पदस्येत्यधिकारः।

(७८) कुत्सने च सुप्यगोत्रादित्यतः (८।१।६९ सू०) प्राक् पदादित्यधिकारः।

(७९) अनुदात्तं सर्व्वमपादादाविति पदत्रयस्य आपादसमाप्तेरधिकारः।

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ।८।१।२०।**

पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वान्नावित्यादेशौ स्तौ सानुदात्तौ।

**बहुवचनस्य वस्नसौ।८।१।२१।**

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः। वान्नावोरपवादः।

**तेमयावेकवचनस्य।८।१।२२।**

उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्तेमे एतौ स्तः।

**त्वामौ द्वितीयायाः।८।१।२३।**

द्वितीयैकवचनान्तयोस्त्वामाएतौ स्तः।

श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म्म सः।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥ १।
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः॥
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः २।

पदात्परयोः किम्।वाक्यादौ मा भूत्। त्वां पातु माम्पातु। अपादादौ किम्। वेदैरशेषैः संवेद्योऽस्मान् कृष्णः सर्वदाऽवतु। स्थग्रहणात् (८०) श्रूयमाणविभक्तिकयोरेव। नेह।

---

(८०) स्थपदग्रहणादिति तिष्ठतिरिहाहानौ समये तिष्ठ सुधीवेतिवत् (समयं मा हासीरिति तदर्थः) तथाच षष्ठ्यादीन् अजहतोरेव तयोरेते आदेशा इत्यर्थः।

इति ‡ युष्मत्पुत्रो ब्रवीति। इत्यस्मत्पुत्रो ब्रवीति। समानवाक्ये निघात (८१) युष्मदस्मदादेशा वक्तव्याः। एकतिङ् वाक्यं तेनेह न। ओदनम्पच तव (८२) भविष्यति। इह तु स्यादेव। शालीनान्ते ओदनन्दास्यामीति। एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः। अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति धाता तव भक्तोऽस्तीति वा। तस्मै ते नम इत्येव।

## न चवाहाहैवयुक्ते। ८। १। २४।

चादिपञ्चकयोगे नैते आदेशाः स्युः। हरिस्त्वां माञ्च रक्षतु। कथं त्वां मां वा न रक्षेदित्यादि। युक्तग्रहणात् (८३) साक्षा-

‡ प्रत्युदाहरणे पदात् परत्वसम्पत्तये उभयत्रादौ इतिशब्दः।

(८१) उदात्तादिहननपूर्व्वमनुदात्तकरणं निघातः। आमन्त्रितस्य चेति (८। १। १९) सूत्रेण पदात्परस्यापादादिस्थस्य सम्बोधनस्यानुदात्तता स्यादित्यर्थकेन संबोधनान्तस्य निघातो विहितः। यथा ब्रूहि देवदत्तेत्यादौ ब्रूहीतिपदात् परस्य देवदत्तेति सम्बोधनस्यानुदात्ततारूपो निघातः। तत्र ब्रूहीतिपदं समानवाक्यमेव नतु भिन्नवाक्यं तथात्वे विभिन्नवाक्यस्थतया तस्मात् परत्वेऽपि नादेशप्रसङ्गः अतएवोक्तं हरिणा

संबोधनपदं यच्च तत् क्रियाया विशेषणम्।
व्रजानि देवदत्तेति निघातोऽत्र तथासति।

(८२) एवं युष्मदाद्यादेशा अपि समानवाक्य एव ओदनं पचेति पचपदस्य भिन्नवाक्यतया ततः परस्य युष्मदादेःस्थाने नादेश इति प्रत्युदाहरति तवेति तथाच तस्य समानवाक्यान्तर्गतपदात् परत्वाभावेन नादेशः।

(८३) तृतीययापि युक्तत्वलाभसम्भवे युक्तग्रहणं व्यर्थमित्याशङ्क्य सार्थकयति युक्तग्रहणादिति साक्षादिति यत्र युष्मदस्मद्गतसमुच्चयादीन् चादयो द्योतयन्ति तत्रैव साक्षाद्योगः हरोहरिश्च त्वत्र तु हरिगतसमुच्चयद्योतकत्वान्न ताभ्यां साक्षाद्योग इतिबोध्यम्।

योगेऽयं निषेधः। परम्परासम्बन्धे तु आदेशः स्यादेव हरो हरिश्च मे स्वामी।

## पश्यार्थैश्चानालोचने। ८। १। २५।

अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः। चेतसा त्वां समीक्षते। परम्परासम्बन्धेऽप्ययं निषेधः। भक्तस्तव रूपं ध्यायति। आलोचने तु भक्तस्त्वा पश्यति चक्षुषा।

## सपूर्व्वायाः प्रथमाया विभाषा। ८। १। २६।

विद्यमानपूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽपेयते आदेशा वा स्युः। भक्तस्त्वमप्यहन्तेन हरिस्त्वान्त्रायते स माम् त्वा मेति वा।

## साऽऽमन्त्रितम् (८४)। २। ३। ४८।

सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात्।

## आमन्त्रितम्पूर्व्वमविद्यमानवत्। ८। १। ७२।

स्पष्टम्। अग्ने! तव (८५) देवास्मान् पाहि। अग्ने! नयअग्ने! इन्द्रवरुणाः। इह युष्मदस्मदोरादेशःतिङन्तनिघात आम

(८४) संबोधने चेत्यत (२।३।४७) संबोधने इत्यनुवर्त्तते चेतिपदेन प्रथमोपस्थाप्यते।

(८५) अग्ने तवेति देवास्मानित्यत्र च युष्मदाद्यादेशो न। अग्ने नयेत्यत्र तिङतिङः इत्यादिना(८।१।२८)नयेत्यत्र तिङन्तनिघातो न। अग्ने इन्द्रवरुणेत्यादौ आमन्त्रितस्य चेति(८।१।१९)इन्द्रेति सम्बोधननिघातो नेति विवेकः।

न्त्रितनिघातश्च न। सर्व्वदा रक्ष देव! न इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं रक्षेत्येतदाश्रित्यादेशः। एवं इमं मे गङ्गेयमुने इति मन्त्रे यमुने इत्यादिभ्यः प्राचीनामन्त्रिताविद्यमानवद्भावेपि मेशब्दमेवाश्रित्य सर्व्वेषान्निघातः।

**नामन्त्रिते समानाधिकरणे सामान्यवचनम्। ८।१।७३।**

विशेष्यम् समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत् स्यात्। हरे! दयालो! नःपाहि अग्ने तेजस्विन्(८६) सुपात् सुपाद्। सुपादौ। सुपादः। सुपादम्। सुपादौ।

**पादः पत्। ६।४।१३०।**

पाच्छब्दान्तं यदङ्गम्भन्तदवयवस्य पाच्छब्दस्य पदादेशः स्यात्। सुपदः। सुपदा। सुपाद्भ्यामित्यादि। अग्निं मथ्नाति इत्यग्निमत्—अग्निमद्। अग्निमथौ। अग्निमथः। अग्निमद्भ्यामित्यादि। ऋत्विगादिसूत्रेण(१६४४०)अञ्चेः सुप्युपपदे क्विन्।

**अनिदितां हलउपधायाःक्ङिति। ६।४।२४**

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च। उगिदचामिति(१५८४०)नुम्। संयोगान्तस्य(३६४०)लोपः। नुमो नकारस्य क्विन्प्रत्ययस्य कुरिति(१६५४०)कुत्वेन ङकारः। प्राङ्। अनुस्वारपरसवर्णौ। प्राञ्चौ। प्राञ्चः। प्राञ्चम्। प्राञ्चौ।

---

(८६) अग्ने तेजस्विन्नित्यत्र पदात् परत्वात् तेजस्विन्नित्यस्य आमन्त्रितस्य चेत्याष्टमिकनिघातः।

**अचः (८७)। ६। ४। १३८।**

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात्।

**चौ। ६। ३। १३८।**

लुप्ताकारनकारेऽञ्चतौ परे पूर्व्वस्याऽणो दीर्घः (८८) स्यात्। प्राचः। प्राचा। प्राग्भ्यामित्यादि। प्रत्यङ्। प्रत्यञ्चौ। प्रत्यञ्चः। प्रत्यञ्चम्। प्रत्यञ्चौ। अच इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्त्तते अकृतव्यूहा इति(१११७०)परिभाषया। प्रतीचः। प्रतीचा। अमुमञ्चतीति विग्रहे। अदस् अच् इति स्थिते।

**विष्वग्देवयोश्च (८९) टेरद्र्यञ्चतौ वप्रत्यये। ६। ३। ९२।**

अनयोः सर्व्वनाम्नश्च टेरद्र्यादेशः स्याद्वप्रत्ययान्तेऽञ्चतौ परे। अदद्रि अच् इति स्थिते यण्।

**अदसोऽसेर्दादु दो मः। ८। २। ८०।**

(८७) भस्येत्यधिकारः अल्लोपोऽन इत्यतो(१०५)ऽल्लोप इत्यनुवर्त्तते अङ्गाव-यवोऽसर्व्वनामस्थानयाजादिस्वादिपरोयोऽञ्चतिस्तस्याकारस्य लोपः स्यादित्यर्थः। तत्त्व०।

(८८) ढ्रलोप इत्यतो(८०पृ०)ऽणोदीर्घ इत्यनुवर्त्तते।

(८९) चकारेण त्या सर्व्वनाम्न इत्यतः (१८४पृ०) सर्व्वनाम्न इत्यनुवृत्तं समुच्चीयते। अप्रत्यय इति पाठे अविद्यमानः वेरष्टकस्येत्यनेन(१६४पृ०) लुप्तः क्विन्क्विबादिः प्रत्ययो यस्मात् अप्रत्ययस्तदन्तेऽञ्चतावित्यर्थः।

अदसोऽसान्तस्य (९०) दात्परस्य उदूतौ स्तो दस्य मश्च। उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः। आन्तरतम्याद्ध्रस्व (९१) व्यञ्जनयोर्ह्रस्वौ दीर्घस्य च दीर्घः। अमुमुयङ्। अमुमुयञ्चौ। अमुमुयञ्चः। अमुमुमञ्चम्। अमुमुयञ्चौ। अमुमुईचः। अमुमुईचा। अमुमुयग्भ्यामित्यादि। मुत्वस्याऽसिद्धत्वान्न यण्। अन्त्यबाधेऽन्त्यसदेशस्येति (९२) परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते। अदमुयङ्। असेः सकारस्य स्थाने यस्य अः स असिरिति व्याख्यानात् त्यदाद्यत्वविषयएव मुत्वम् मान्यतेति पक्षे अदद्र्यङ्। उक्तञ्च (९३)

> अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्।
>
> केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यत इति॥

विष्वग्देवयोः किम्। अश्वाची। अञ्चतौ किम् विष्वग्युक्।

(९०) असेरितीकार उच्चारणार्थ इति द्योतयन्नाहासान्तस्येति। असेरिति किम् अमुमात्मन इच्छति अदस्यतीत्यादौ मा भूत्। दात्परस्य किम् अमुया अमुयोरित्यत्र यकारात् परस्य मा भूत्।

(९१) ह्रस्वेति व्यञ्जनस्यार्द्धमात्रतया ह्रस्व ईषत्सदृशो दीर्घस्तु द्विमात्रत्वादत्यन्तासदृश इति भावः। अमुमुयङित्यत्रादसोद्रेऽरिति वक्ष्यमाणवार्त्तिकेनोभयोर्मत्वम्।

(९२) अदस इति षष्ठी नावयवे किन्तु स्थाने एवञ्चालोऽन्त्यस्येति परिभाषो पतिष्ठते तथाच अदसः सकारस्याकारव्यवधानेन दात्परत्वाभावात् दात्परस्य चाकारस्यानन्त्यत्वात् अन्त्यस्येत्यस्य बाधे गङ्गायां घोषइत्यादौ तीरबाधे तत्समीपस्येवान्त्यसदेशस्यान्त्यसमीपस्य ग्रहणमिति भावः। तच्च०

(९३) उक्तञ्चेति वार्त्तिककृतेति शेषः क्वचित्तथैव पाठः। लत्ववत् कृपो रो ल इत्यनेन(७८०पृ०)चलीकॢप्यते इत्यादौ ऋकारॡकारयोर्यथा लत्वं तथेत्यर्थः।

वप्रत्यये किम् विष्वगञ्चनम्। वप्रत्ययग्रहणं ज्ञापयति। अन्यत्र धातुग्रहणे तदादिविधिरिति। तेनाऽयस्कारः। अतः कृक-मीति(७६४०)सः। उदङ्। उदञ्चौ। उदञ्चः। अयादावचि।

## उद ईत्। ६। ४। १३९।

उच्छब्दात्परस्य लुप्तनकारस्याऽञ्चतेर्भस्याकारस्य ईत् स्यात्। उदीचः। उदीचा। उदग्भ्यामित्यादि।

## समः समि। ६। ३। ९३।

वप्रत्ययान्तेऽञ्चतौ परे। सम्यङ्। सम्यञ्चौ। सम्यञ्चः। समीचः। समीचा।

## सहस्य सध्रिः। ६। ३। ९५।

वप्रत्ययान्तेऽञ्चतौ परे। सध्र्यङ्।

## तिरसस्तिर्यलोपे। ६। ३। ९४।

अलुप्ताऽकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात्। तिर्यङ्। तिर्यञ्चौ। तिर्यञ्चः। तिर्यञ्चम्। तिर्यञ्चौ। तिरश्चः। (९४) तिरश्चा। तिर्यग्भ्यामित्यादि।

## नाञ्चेः पूजायाम्। ६। ४। ३०।

पूजार्थस्याऽञ्चतेरुपधाया नस्य लोपो न स्यात्। अलुप्तनकार-

(९४) भविषये अचः(१७९४०)इत्यनेनाकारलोपात् तिर्यादेशाभावे तिरश्च इत्यादिरूपसिद्धिः।

त्वान्न नुम्। प्राङ्। प्राञ्चौ। प्राञ्चः। नलोपाऽभावाद्-कारलोपो न। प्राञ्चः। प्राचा। प्राङ्भ्याम्। प्राङ्क्षु प्राङ्षु। एवं पूजार्थे प्रत्यङ्ङादयः। क्रुञ्च कौटिल्याल्पीभावयोः। अस्य ऋत्विगादिना (१६४पृ०) नलोपाभावेऽपि निपात्यते। क्रुङ्। क्रुञ्चौ। क्रुञ्चः। क्रुङ्भ्यामित्यादि। चोः कुः। पयोमुक् पयोमुग्। पयोमुचौ। पयोमुचः। व्रश्चेति(१२०पृ०)षत्वम्। स्कोरिति(१६६पृ)सलोपः। जश्त्वचर्त्वे। सुवृट्-सुवृड्। सुवृश्चौ। सुवृश्चः। सुवृट्सु सुवृट्त्सु। मह पूजायाम्। वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च*। एते निपात्यन्ते शतृवच्चैषां कार्यं स्यात्। उगित्त्वान्नुम्। सान्तमहत इति(१४१पृ०)दीर्घः। मह्यते पूज्यते। महान्। महान्तौ। महान्तः। हे महन्। महतः। महता। महद्भ्यामित्यादि।

## अत्वसन्तस्य चाधातोः। ६। ४। १४।

अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य (८५) चासंबुद्धौ सौ परे। परन्नित्यञ्च नुमम्बाधित्वा वचनसामर्थ्यादादौ दीर्घः। ततो नुम्। धीमान्। धीमन्तौ। धीमन्तः। हे धीमन्। शसादौ महद्वत्। धातोरप्यत्वन्तस्य दीर्घः। गोमन्तमिच्छति, गोमानिवाचरति वा क्यजन्तादाचार-

(८५) सर्वनामस्थानेचासम्बुद्धावित्यतो(११०पृ०) ऽसम्बुद्धाविति, सौ चेत्यतः (१५८पृ०) साविति, ढ्लोप इत्यतो(८०पृ०) दीर्घ इति, नोपधाया इत्यत (१६२पृ०)उपधाया इति चानुवर्त्तते। अत्वधातोरिति योगो विभज्यते तत्सामर्थ्यादनन्तरस्यैवासन्तस्य प्रतिषेधो नत्वत्वन्तस्येत्याह धातुभिन्नासन्तस्येति।

**त्वचि। इति धकारस्य[1] द्वित्वम्। ॥ स्थानिवदादेशोऽनल्विधौ[2] ।१।१।५६। आदेशः स्थानिवत्स्यान्न तु स्थान्यला-श्रयविधौ। अनेनेह यकारस्य स्थानिवद्भावेनाच्त्वमाश्रित्यानचि चेति द्वित्वनिषेधो[3] न शङ्क्योऽनल्विधाविति तन्निषेधात्। ॥ अचः परस्मिन्पूर्वविधौ ।१।१।५७। अल्विध्यर्थमिदम्। परनिमित्तोऽजादेशः[4] स्थानिवत्स्यात्स्थानिभू-**

---

एवं चावसानेऽपि द्वित्वं भवति। वाक्, वाक् ॥—**स्थानिवदादेशो—**॥ आदेशे कृते स्वरूपभेदात्स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते। 'अस्तेर्भूः'। आर्द्धधातुके विवक्षिते धात्वादेशो धातुवत्, तेन 'अचो यत्' इत्यादिधातुप्रत्ययाः। भव्यं, बभूव ॥ 'किमः कः' अङ्गादेशोऽङ्गवत्। तेन इनादेशदीर्घैस्भावाः, केन, काभ्यां, कैः ॥ आदेशग्रहणं किमर्थं, स्थानिवदित्येतावतैव संबन्धिशब्दमहिम्ना तल्लाभात्। यथा 'पितृवदधीते' इत्युक्ते 'पुत्रः' इति गम्यते इति चेदत्राहुः। द्विविध आदेशः प्रत्यक्ष आनुमानिकश्चेति। 'अस्तेर्भूः' इत्यादिः प्रत्यक्षः। 'तेस्तुः' इत्यादिस्त्वानुमानिकः। 'एरुः' इत्यत्र हि इकारेणेकारान्तस्थानी अनुमीयते, उकारेण चोकारान्त आदेशः। तथा च 'तेस्तुः' इति फलितोऽर्थः, तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं, न त्वानुमानिकस्य स्यात्। आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः, तेन पचत्वित्यादेस्तिङन्तत्वात् पदसंज्ञा सिध्यतीति। ननु 'एरुः' इत्यादि यथाश्रुतमेवास्तु, एकदेशविकृतस्यानन्यत्वात्पदत्वं भविष्यतीति चेन्न। अर्थवत्येव स्थान्यादेशभावविश्रान्तेर्वाच्यत्वात्तस्यात्र प्रसङ्गासंभवात्। तथाहि। 'षष्ठी स्थानेयोगा' इत्युक्तम्। स्थानं च प्रसङ्गः। स चार्थवतः, अर्थप्रत्ययार्थं शब्दप्रयोगाद्। यद्यपि च्लेः सिजादावसंभवीदं, तथापि सति संभवे अर्थप्रयुक्त एव प्रसङ्गो ग्राह्य इत्यनेनैवादेशग्रहणेन ज्ञाप्यते। उक्तं च 'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते' इति। पदमिहार्थवत्। पद्यतेऽनेनेति व्युत्पत्तेः। यद्यपि सर्वविकारे सुतरां नित्यत्वानुपपत्तिः। तथापीह विकार एव नास्तीति तात्पर्यम्। एतच्च शब्दकौस्तुभे स्पष्टम् ॥ अनल्विधाविति किम्। यश्चाला विधिः, यश्चालः परस्य विधिः, यश्चालो विधिः, यश्चालि विधिस्तत्र मा भूत्। तत्राला विधौ यथा—व्यूढोरस्केन, अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य 'अड्व्यवाय—' इति णत्वं प्राप्तम्। अलः परस्य यथा—द्यौः, पन्थाः, इह हल्ङ्याब्भ्यो दीर्घादिलोपो न। अलो विधौ—द्युकामः, 'लोपो व्योर्वलि' इति लोपो न। न चोत्त्वविधिसामर्थ्याल्लोपो न भवेदिति शङ्क्यम्, द्युयानमित्यादौ तस्य सावकाशत्वात्। अलि विधौ। यजेः क्तः क इष्टः। 'हशि च' इत्युत्त्वं न। न चेह स्थानिवद्भावेन जातेप्युत्वे आद्गुणेऽवादेशे च कृते 'हलि सर्वेषाम्' इति नित्यलोपेन क इष्ट इति रूपं सिध्यत्येवेति वाच्यम्। कयिष्ट इति रूपान्तरासिद्धिप्रसङ्गात्। सिधान्ते तु 'भोभगोअघोअपूर्वस्य—' इति यस्य लोपविकल्पे क इष्टः, कयिष्ट इति रूपद्वयमभ्युपगम्यते। अल् चेह स्थान्यवयव एव गृह्यते, तेन रामायेत्यादौ 'सुपि च' इति दीर्घः सिध्यति, तद्विधौ हि यञादित्वमाश्रितम्। यञ् चादेशावयवो न तु स्थान्यवयवः। तथारुदिताभित्यादौ 'रुदादिभ्यः—' इति वलादिलक्षण इट् च सिध्यति। तदेतदाह—**न तु स्थान्यलाश्रय** इति। आश्रयणं चेह यथाकथंचिन्न तु प्राधान्येनैवेत्याग्रहः। तेन प्रपठ्येत्यत्र वलादिलक्षण इण् न ॥—**अचः परस्मिन्पूर्वविधौ** ॥ अचः किम्। आगत्य, 'वा ल्यपि' इत्यनुनासिकलोपस्तुकि कर्तव्ये न स्थानिवत् ॥ परस्मिन् किम्। आदीध्ये, नित्यत्वादिट एत्वम्, तच्च न परनिमित्तम्, तेन 'यीवर्णयोः—' इति लोपे कर्तव्ये तन्न स्थानिवत् ॥ पूर्वविधौ इति किं, नैधेयः, निपूर्वाद्धाञः 'उपसर्गे घोः किः', 'आतो लोपः', 'द्व्यचः', 'इतश्चानिञः' इति ढक्। आकारस्य स्थानिवत्त्वे तु त्र्यच्त्वव्यपदेशेन द्व्यच्त्वं विरुद्धत्वाद्बाध्येत। नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते। नन्वेवमपि विधिग्रहणं व्यर्थम्, पूर्वस्येति षष्ठ्या कार्ये कर्तव्ये इत्यर्थस्याक्षेप्तुं शक्यत्वादिति चेन्न। पूर्वस्य विधिः, पूर्वस्माद्विधिः, इति समासद्वयलाभार्थं विधिग्रहणम्। यद्यप्यत्र पञ्चमीसमासपक्षो मूले नोक्तः, तथापि 'पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अड्व्यवाय इत्येवात्र णत्वम्' इति 'पद्दन्—' आदिप्रघट्टके स्वीकृत एव सः ॥—**अल्विध्यर्थमिदमि**ति। तेन वव्रश्चेत्यत्र वस्य संप्रसारण न, उरदत्वस्य स्थानिवत्त्वेन संप्रसारणतया 'न संप्रसारणे—' इति निषेधात्। न चोदरत्वं परनिमित्तं नेति वाच्यम्, अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात् ॥ पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षे तु प्रयोजनम्—तन्वन्ति, तन्वते। इह यणादेशस्य स्थानिवद्भावान्नेट्। अत्र हि तनित्यङ्गं निमित्तं, तच्च स्थानिभूतादुकारात्पूर्वमिति ॥ नन्विदं न प्रयोजनं, बहिरङ्गस्य यणोऽसिद्धत्वादिडागमस्यात्राप्रसक्तेः। न च 'नाजानन्तर्ये—' इति निषेधः। यत्रान्तरङ्गे बहिरङ्गे वाचोरानन्तर्यमिति हरदत्तादिमते निषेधप्रवृत्तावपि उत्तरकार्ये यत्राच आनन्तर्यमाश्रितं तत्र बहिष्ट्वप्रकॢप्तिर्नेति

---

१ धकारस्येति—ननु द्वित्वे पूर्वधस्थाने जश्त्वनिष्पन्नदस्यापि, लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः। विकारभेदेन लक्ष्यभेदस्यानङ्गीकारात्। २ स्थानिवदिति—ननु 'अन्यत्रान्यंशब्दः प्रयुज्यमानो विनापि वति तदर्थं गमयति' इति न्यायात् 'स्थान्यादेशोऽनल्विधौ' इत्येव सूत्र्यताम्, किं वत्ग्रहणेनेति वाच्यम्, न, उत्तरत्राभावातिदेशार्थं स्पष्टार्थं चात्र तस्य सत्त्वात्। ३ द्वित्वनिषेध इति—प्रसज्यप्रतिषेधाश्रयणादयमपि शास्त्रीयं कार्यं भवत्येवेति भावः। ४ अजादेश इति—अच एव आदेश इत्यर्थः, तेनाज्झलादेशो न स्थानिवत्। अत एव मरुतमाचष्टे मारयतीत्यादिसिद्धिरिति स्पष्टं भाष्ये।

क्विबन्ताद्वा कर्त्तरि क्विप्। उगिदचामिति (१५८४०) सूत्रेऽञ्-ग्रहणं नियमार्थम् धातोश्चेदुगित्कार्य्यन्तर्ह्यञ्चतेरेवेति। तेन स्रत्- ध्वत् इत्यादौ न। अधातोरिति तु अधातुभूतपूर्व्वस्यापि नुमर्थम्। गोमान्। गोमन्तौ। गोमन्त इत्यादि। भातेर्डवतुप्। भवान्। भवन्तौ। भवन्तः। शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घो भवतीति भवन्।

## उभे अभ्यस्तम्। ६। १। ५।

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते(८६) अभ्यस्तसंज्ञे स्तः।

## नाभ्यस्ताच्छतुः। ७। १। ७८।

अभ्यस्तात्परस्य शतुर्नुम् न (८७) स्यात्। ददत् ददद्। ददतौ। ददतः।

## जक्षित्यादयः षट्। ६। १। ६।

षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः। जक्षत्-जक्षद्। जक्षतौ। जक्षतः। एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्। दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम्। दीध्यत्। वेव्यत्। गुप्-गुब्। गुपौ। गुपः। गुब्भ्यामित्यादि।

(८६) समुदिते इति न प्रत्येकमित्यर्थस्तेन नेनिजतीत्यादौ अभ्यस्तानामादिरिति आद्युदात्तत्वं न प्रत्येकं पर्यायेण अपि तु समुदितस्यैवेति बोध्यम्।

(८७) व्यवहितोऽपि नुम् प्रतिषिध्यते अन्येषामप्रसक्तेरित्याशयेनाह नुम् नेति

त्यदादिषु दृशोऽनालोचने (९८) कञ्च। ३।
२। ६०।

त्यदादिषूपपदेष्वज्ञानार्थाद् दृशेर्धातोः कञ् स्याच्चात् क्विन्।

आ सर्व्वनाम्नः। ६। ३। ९१।

सर्व्वनाम्न आकारोऽन्तादेशः स्याद् दृग्दृशवतुषु (९९)। कुत्वस्यासिद्धत्वात् व्रश्चेति (१२०४)षः। तस्य जश्त्वेन डस्तस्य कुत्वेन गः। तस्य चर्त्वेन पक्षे कः। तादृक्-तादृग्। तादृशौ। तादृशः। षत्वापवादत्वात्कुत्वेन खकार (१००) इति कैयटमते। हरदत्तादिमते तु चर्त्वाभावपक्षे खएव श्रूयते। न तु गः जश्त्वं प्रति कुत्वस्यासिद्धत्वात् (१०१) दिगादिभ्यो यदिति (५७८४०) निर्द्देशान्नासिद्धत्वमिति बोध्यम्। व्रश्चेति षत्वम्। जश्त्वचर्त्वे। विट् विड्। विशौ। विशः। विशम्।

---

(९८) कञन्तस्याजन्ततया हलन्तप्रकरणे नोदाहरणं। आलोचनं ज्ञानमात्रम्। अनालोचने किं तं पश्यतीति तदृशः कर्म्मण्यण्। तादृशादयस्तु रूढिशब्दाः असताप्यवयवार्थेन व्युत्पाद्यन्ते अतएवाज्ञानार्थाद् दृशेरित्यवयवार्थकथनं सङ्गच्छते भाष्ये तु कर्मकर्त्तरि व्युत्पत्तिर्दर्शिता तमिवेमं पश्यन्ति जनाः स इवायं पश्यति ज्ञानविषयीभवतीत्यर्थः।

९९) दृग्दृशवतुष्विति (४७२४) सूत्रमेवानुवर्त्त्याह दृग्दृशेति।

(१००) खकार इति अघोषमहाप्राणादिप्रयत्नसाम्यादिति भावः।

(१०१) असिद्धत्वादिति शस्थानिकजश्त्वस्यैव कुत्वापवादत्वं नतु खस्थानिकस्यापीति भावः।

नशेर्वा। ८। २। ६३।

नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते। नक्—नग् नट्—नड्। नशौ। नशः। नग्भ्यां—नड्भ्यामित्यादि।

स्पृशोऽनुदके क्विन्। ३। २। ५८।

अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात्। घृतस्पृक् घृतस्पृग्। घृतस्पृशौ। घृतस्पृशः। क्विन्प्रत्ययो यस्माद्बहुव्रीह्याश्रयणात्(१०२) क्विप्यपि कुत्वं स्पृक्। षडगकाः (१०३) प्राग्वत्। ञिधृषा प्रागल्भ्ये अस्मात् ऋत्विगादिना(१६४पृ०)क्विन्। द्वित्वमन्तोदात्तत्वञ्च निपात्यते। कुत्वात् पूर्वं झष्टत्वेन ड;ग;क; धृष्णोतीति। दधृक्—दधृग्। दधृषौ। दधृषः। दधृग्भ्यामित्यादि। रत्नानि मुष्णातीति—रत्नमुट्-रत्नमुड्। रत्नमुषौ। रत्नमुषः। षड्भ्यो लुक् (११४पृ०)। षट्—षड्। षड्भिः। षड्भ्यः२। षट्चतुर्भ्यश्चेति(१५०पृ) नुट्। अनामिति(५६पृ०)पर्युदासान्न ष्टुत्वनिषेधः। यरोऽनुनासिक इति(६०पृ०)विकल्पं बाधित्वा प्रत्यये नित्यमिति (६०पृ०)नित्यवचनान्नित्यमनुनासिकः। षण्णाम्। षट्सु—षट्त्सु। तदन्तविधिः। परमषट् परमषण्णाम्। गौणत्वे तु प्रियषषः। प्रियषषाम्। रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषोरुरिति (११पृ०)रुत्वम्।

र्वोरुपधाया दीर्घ इकः। ८। २। ७६।

---

(१०२) क्विन्प्रत्ययस्य कुरिति (१६५पृ०) इत्यत्र क्विन् प्रत्ययो यस्मादिति बहुव्रीहेराश्रयणादित्यर्थः।

(१०३) षडगकाः इति विषयविशेषे षत्वडत्वगत्वकत्वानि यथा भवन्ति तथैवापीत्यर्थः।

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते। पिपठीः। पिपठिषौ। पिपठिषः। पिपठीर्भ्याम्। वा शरीति (७२पृ०)वा विसर्जनीयः।

## नुम्विसर्ज्जनीयशर्व्यवायेऽपि। ८। ३। ५८।

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्द्धन्यादेशः स्यात्। ष्टुत्वेन पूर्व्वस्य षत्वम् (१०४)। पिपठीःषु—पिपठीष्षु प्रत्येकमितिव्याख्यानादनेकव्यवधाने षत्वन्न। निंस्स्व (१०५)। निंक्ष्वे। नुम्ग्रहणन्नुम्स्थानिकाऽनुस्वारोपलक्षणार्थमिति व्याख्यानात्तेनेह न। सुहिंसु। पुंसु (१०६)। अतएव (१०७) न शर्ग्रहणेन गतार्थता। रात्सस्येति(१२२)सलोपे विसर्गः। चिकीः। चिकीर्षौ। चिकीर्षः। रोः सुपीति(१५०पृ०)नियमान्न विसर्गः।

(१०४) ष्टुत्वेन पूर्व्वस्येति। पिपिठीष्षु इत्यत्र सनः सस्य पदान्ततया पदान्तस्येति(८१पृ०)निषेधात् ष्टुत्वेनैव षत्वम् एतच्च रुत्वविसर्गयोः कृतयोरपि वा शरीति(७२पृ०)विकल्पपक्षे सकारादेश इति पक्षे बोध्यम् तद्व्यवधानेऽपि सुपः सकारस्य इण्कोरिति(८५पृ०)षत्वं नुम्विसर्जनीयशर्व्यवाये इति विधानादिति भावः।

(१०५) निंस्स्वेत्यादावाद्यसकारस्य नुम्मात्रव्यवधानेऽपि आदेशप्रत्यययोरिति(८५पृ०)नियमेन तदुभयत्वाभावात् न षत्वम्, अन्यस्य प्रत्ययत्वेऽपि नुमा शरा चोभाभ्यां व्यवधानान्न षत्वमिति भावः।

(१०६) सुहिंसु पुंस्वित्यादावनुस्वारसत्त्वेऽपि तस्य नुम्स्थानिकत्वाभावान्न षत्वमिति भावः।

(१०७) अतएव नुम्स्थानिकस्यैवानुस्वारस्य ग्रहणादेवेत्यर्थः तेन शर्ग्रहणेनैवायोगवाहानां शर्षूपसंख्यातया ग्रहणसम्भवेऽपि नुमिति पृथग्निर्द्देशो नुम्भिन्नस्थानिकनिवारणार्थ इति विभावनीयम्।

चिकीर्षु। दमेर्डोस् डित्त्वसामर्थ्याट्टिलोपः षत्वस्याऽसिद्धत्वा-द्रुत्वविसर्गौ। दोः। दोषौ। दोषः। पद्दन्निति(१०४सू०)वा दोषन्। दोष्णः-दोषः। दोष्णा-दोषा। विश् प्रवेशने सन्नन्तात् क्विप् षत्वस्यासिद्धत्वात्(१०८)संयोगान्तलोपः। व्रश्चेति(१२०सू०) षः। जश्त्वचर्त्वे। विविट्-विविड्। विविक्षौ। विविक्षः। स्कोरिति(१६६सू०) कलोपः। तट्-तड्। तक्षौ। तक्षः। गोरट् गोरड्। गोरक्षौ। गोरक्षः। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु स्कोरिति न प्रवर्त्तते णिलोपस्य स्थानिवद्भावात्। पूर्व्वत्रासिद्धे न स्थानिवदिति तु इह नास्ति तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति(    )निषेधात्। तस्मात्संयो-गान्तलोप एव। तक्-तग्। गोरक्-गोरग्। स्कोरिति कलोपं प्रति कुत्वस्यासिद्धत्वात् संयोगान्तलोपः। पिपक्-पिपग्। एवं विवक् दिधक्। पिस गतौ सुष्ठु पेसतीति सुपीः। सुपिसौ। सुपिसः। सुपिसा। सुपीर्भ्याम्। सुपीष्षु-सुपीःषु। एवं सुतूः। तुस खण्डने। विद्वान्। विद्वांसौ विद्वांसः। हे विद्वन्। विद्वांसम्। विद्वांसौ।

वसोः सम्प्रसारणम्। ६। ४। १३१।

वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। पूर्वरूपत्वम् षत्वम्। विदुषः। विदुषा। वसुस्रंस्विति(१४८सू०)दत्वम्। विद्वद्भ्यामि-त्यादि। सेदिवान्। सेदिवांसौ। सेदिवांसः। सेदिवांसम्। अन्त-

(१०८) असिद्धत्वादिति इतरथा स्कोः संयोगाद्योरिति कलोपः स्यादिति भावः।

रङ्गोऽपीड़ागमः संप्रसारणविषये न प्रवर्त्तते अकृतव्यूहा इति (३।१०) परिभाषया । सेदुषः । सेदुषा । सेदिवद्भ्यामित्यादि । सान्तमहत इत्यत्र (१४।१०) सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते न तु धातोः महच्छब्दसाहचर्य्यात् । सुष्ठु हिनस्तीति । सुहिन्(१०८) । सुहिंसौ । सुहिंसः । सुहिन्भ्याम् । सुहिन्सु-सुहिन्त्सु । ध्वत्—ध्वद् । ध्वसौ । ध्वसः । ध्वद्भ्याम् । एवं स्रत् ।

## पुंसोऽसुङ् । ७ । १ । ८९ ।

सर्व्वनामस्थाने (११०) विवक्षितेऽसुङ् स्यात् । उकार उच्चारणार्थः बहुपुंसीत्यत्र उगितश्चेति(२०८४।०)ङीबर्थकृतेन(१११)पूञोडुम्सुनिति(उ४२४।०)प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुंसः । पुंसा । पुंभ्याम् । पुम्भिः । पुंसु । ऋदुशनइति(१२१।०)अनङ् । उशना । उशनसौ । उशनसः । अस्य सम्बुद्धौ वानङ् नलोपश्च वा वाच्यः * । हे उशनन् हे उशन हे उशनः । उशनोभ्यामित्यादि । अनेहा । अनेहसौ । अनेहसः । हे अनेहः । अनेहोभ्यामित्यादि ।

(१०८) सुहिन्निति संयोगान्तलोपस्यासिद्धतया नोपधादीर्घ इति बोध्यम् ।

(११०) इतोऽत्सर्व्वनामस्थाने इत्यतः(१६१।०)सर्व्वनामस्थाने इत्यनुवर्त्तते । विवक्षित इति तेन परमपुमानित्यत्र परत्वादसुङि कृते समासान्तोदात्तत्वं भवदसुङ एवाकारस्य भवति परसप्तमीग्रहणे तु नैतत्सिद्धेरात् सर्व्वनामस्थानोत्पत्तेः प्रागेव पुंशब्दोकारस्योदात्तत्वे कृते स्थानधर्म्मिणोऽचः स्थाने तद्धर्म्मिणोऽनुदात्तादेशस्यैव प्रसङ्गः स्यात्तत्र परसप्तमीं विहाय विवक्षितार्थिका सप्तमीत्यभिहितम् ।

(१११) पातेर्डुम्सुनिति सूत्रे(उ४पा०१७७सू०)पूञ इति पाठान्तरसत्त्वादाह पूञ इति ।

वेधाः। वेधसौ। वेधसः। हे वेधः। वेधोभ्यामित्यादि। अधातोरित्युक्तेः(१८२पृ०)न दीर्घः। सुष्ठु वस्ते। सुवः। सुवसौ। सुवसः। पिण्डं ग्रसते ग्लसते। पिण्डग्रः। पिण्डग्लः। ग्रसु ग्लसु अदने।

## अदस औ: सुलोपश्च। ७। २। १०७।

अदस औकारोऽन्तादेशः(११२)स्यात्सौ परे सुलोपश्च। तदोः सः सावि(१६७पृ०)दस्य सः। असौ। औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वञ्च। प्रतिषेधसन्नियोग (११३) शिष्टमुत्वन्तदभावे न प्रवर्त्तते। असकौ। असुकः (११४)। त्यदाद्यत्वं पररूपं वृद्धिः। अदसोऽसेरिति(१७८पृ०)मत्वोत्वे। अमू। जसः शी(८६पृ०)। आद्गुणः (४२पृ०)।

## एत ईद्बहुवचने। ८। २। ८१।

अदसो दात्परस्यैत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ (११५)।

(११२) तदोः सः सावित्यतः (१६७पृ०)सावित्यनुवर्त्तते। अदस इति षष्ठी। अलोऽन्त्यस्येति (२८पृ०)अभिधानादाद्यान्तादेश इति।

(११३) प्रतिषेधस्य साकच्कस्य औत्वाभावप्रतिषेधस्य यः सन्नियोगः नियामकयाक्तं तेन शिष्टं विहितमुत्वं तदभावे औत्वप्रतिषेधाभावे औत्वपक्षे इति यावत् न प्रवर्त्तते तथाच असकाविति रूपसिद्धिः।

(११४) असुक इति औत्वाभावे त्यदाद्यत्वं मादुत्वञ्च। 'स्त्रियान्तु असुकेति एवञ्च असुकी स्त्री असुकोजनः असुकशर्म्मेत्यादिप्रयोगोऽसाधुरेव सत्वेन सुत्वस्य बाधादिति भावः।

(११५) पारिभाषिकबहुवचनग्रहणे जसि अमी इति न सिद्ध्येत् एकारस्य बहुवचनसम्बन्धत्वाभावादतो व्याचष्टे बह्वर्थोक्ताविति।

अमी । पूर्व्वत्रासिद्धमिति(१२४०)विभक्तिकार्य्यम् प्राक्, पश्चादुत्वमेव । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायान्नाभावः ।

**न मु ने । ८ । २ । ३ ।**

नाभावे कर्त्तव्ये(११६)कृते च (११७) मुभावो नासिद्धः स्यात् । अमुना । अमूभ्याम् ३ । अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् । अमुष्मिन् । अमीषु ।

इति हलन्ताः पुंलिङ्गाः ।

---

(११६) न मु ने इत्यत्र ने इति विषयसप्तमीत्याह नाभावे कर्त्तव्ये इति अन्यथा घेः परत्वाभावात् नाभावो न स्यादिति भावः ।

(११७) ननु कृते नाभावे सुपि चेति(८२पृ०)दीर्घः स्यात् दीर्घं प्रति मुत्वस्यासिद्धत्वादत आह कृते चेति सन्निपातपरिभाषया दीर्घो न भवतीति समाधेयमिति भावः ।

## नहो धः। ८। २। ३४।

नहो हस्य धः स्यात् झलि(१) पदान्ते च। उपानत्-उपानद्। उपानहौ। उपानहः। उपानद्भ्याम्। उपानत्सु। उत्पूर्व्वात् ष्णिह प्रीतावित्यस्मादृत्विगादिना (३६४सू०) क्विन्निपातनात्तलोपषत्वे क्विन्नन्तत्वात्कुत्वेन हस्य घः जश्त्वचर्त्वे। उष्णिक्-उष्णिग्। उष्णिहौ। उष्णिहः। उष्णिग्भ्याम्। उष्णिक्षु। द्यौः। दिवौ। दिवः। द्युषु। गीः गिरौ। गिरः। एवं पूः। चतुरश्चतस्रादेशः। चतस्रः २। चतसृणाम्। किमः कादेशे टाप्। का। के। काः। सर्व्वावत्।

## यः सौ। ७। २। ११०।

इदमो दस्य यः (२) स्यात्सौ। इदमो मः (१५१सू०)। इयम्। त्यदाद्यत्वं टाप् दश्चेति (१५२सू०) मः। इमे इमाः। इमाम्। इमे इमाः। अनया। हलि लोपः (१५३सू०)। आभ्याम् ३। आभिः। अस्यै। अस्याः। अनयोः २। आसाम्। अस्याम्। आसु। अन्वादेशे तु। एनाम्। एने। एनाः। एनया। एनयोः २। ऋत्विगादिना सृजेः क्विन् अमागमश्च निपातितः। स्रक् स्रग्। स्रजौ। स्रजः स्रग्भ्याम्। स्रक्षु। त्यदा

---

(१) नहो ध इत्यत्र झलो झलीत्यतो (३०४सू०) झलीति पदस्येति दूरस्थं (८। १। १६) सूत्रम्, स्कोः संयोगाद्योरन्ते चेत्यतः (१६६सू०) अन्ते इति चानुवर्त्तते अलोऽन्त्यस्येत्यनेन (२८सू०) हस्येतिलाभः झलि परे पदान्ते विद्यमानस्य हस्येत्यर्थः।

(२) इदोऽय् पुंसीति (१५१सू०) पुंसीति विशेषग्रहणात् क्लीबे च सोर्लुका लुप्तत्वे न प्रत्ययलक्षणाभावात् परिशेषात् स्त्रियामेव यत्वम्।

द्यत्वं टाप्। स्या। त्ये। त्याः। एवन्तद् यद् एतद्। वाक्-वाग्। वाचौ। वाचः। वाग्भ्याम्। वाक्षु। अप्शब्दो नित्यं बहुवचनान्तः। अप्तृन्निति (१२२पृ०)दीर्घः। आपः अपः।

## अपो भि। ७। ४। ४८।

अपस्तकारः (३) स्यादादौ प्रत्यये परे। अद्भिः। अद्भ्यः २। अपाम् अप्सु। दिक् दिग्। दिशौ। दिशः। दिग्भ्याम्। दिक्षु। त्यदादिष्विति (१८४पृ) दृशेः क्विन्विधानादन्यत्राऽपि कुत्वं दृक्-दृग्। दृशौ। दृशः। त्विट्-त्विड्। त्विषौ। त्विषः। त्विड्भ्याम्। त्विट्सु। सह जुषते इति सजूः। सजुषौ। सजुषः। सजूर्भ्याम्। सजूष्षु-सजूःषु। षत्वस्यासिद्धत्वाद्रुत्वम्। आशीः। आशिषौ। आशिषः। आशीर्भ्याम्। असौ (४)। त्यदाद्यत्वं टाप् औङः शी। उत्वमत्वे। अमू। अमूः। अमूम्। अमू। अमूः। अमुया। अमूभ्याम्। अमूभिः। अमुष्यै। अमूभ्याम्। अमूभ्यः। अमुष्याः २। अमुयोः २। अमूषाम्। अमुष्याम्। अमूषु।

इति हलन्ताः स्त्रीलिङ्गाः।

---

( ३ ) अलोऽन्त्यस्येति (२९पृ०) परिभाषया पकारस्थाने तकारादेशः।

( ४ ) अत्राविलत्व ः।दस औ सुलोपश्चेति (१८९पृ०) विशेषविधानात् औत्वमेव नतु त्यदाद्यत्वटापौ।

**तावचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवद्भावे प्राप्ते । ॥ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु ।१।१।५८। पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् ।**

---

कैयटमते तदभावात् । न चैवमपीपचमिति प्रयोजनं भवत्येव, इह हि अन्तेरकारस्य चङकारस्य च 'अतो गुणे' इति पररूपे तस्य च परादिवद्भावाज्झग्रहणेन ग्रहणे सति 'सिजभ्यस्त–' इति जुस् प्राप्नोति, णिलोपस्य एकादेशस्य वा स्थानिवद्भावाच्च भवतीति वाच्यम् । वेत्तेर्हि लङ्येवानन्तरो झिः संभवतीति तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात् । न च सिचा साहचर्यात् लुङ एव ग्रहणमस्त्विति शङ्क्यम् । 'विप्रतिषेधे परम्–' इति परसाहचर्यस्य बलीयस्त्वात् । न चैवमपि 'अदभ्यस्तात्' इत्यदादेशस्य निवारणाय पञ्चमीसमासपक्ष आवश्यक इति वाच्यम् । चङकारस्यान्तेरकारेण च 'अतो गुणे' इति पररूपे कृते झस्याभावाददादेशाप्रसक्तेः । अत्र त्वेकादेशस्य परादिवद्भावाज्झग्रहणेन ग्रहणं न भवति, अल्विधौ अन्तादिवद्भावाप्रवृत्तेः । अन्यथा अयजे इन्द्रमित्यादौ सवर्णदीर्घो दुर्वार एव स्यात् । अस्तु वा परादिवद्भावस्तथापि झकारस्यात्स्यादित्यदादेशे कर्तव्येऽन्तादेशो न स्थानिवदल्विधित्वात् । तस्मादत्र पञ्चमीसमासपक्षो निरर्थक एव चेदत्राहुः । पञ्चमीसमासप्रयोजनतया अपीपचन्नित्युदाहरतो भगवतस्तु नेह साहचर्यं नियामकतया संमतम् । 'द्वित्रिश्चतुर्–' इति सूत्रे कृत्वोऽर्थग्रहणज्ञापकात् साहचर्यं न सर्वत्राश्रीयते । एवं च भवतेर्यङ्लुकि अभ्यस्ताश्रयस्य जुसः प्रवृत्त्या अबोभूवुरिति रूपं सिध्यति, आत इति नियमस्य सिचः परत्वमाश्रित्य यो जुस्प्राप्तस्तन्मात्रपरतया माधवादिभिर्व्याख्यातत्वात् । अत एव 'अभ्यस्ताश्रयो जुस्, नित्यत्वाद् वुक्, अबोभूवुः' इति मूले यङ्लुङन्तेषूक्तम् । तथा चापीपचन्नित्येतत्सिद्धये पञ्चमीसमासपक्ष आश्रयणीय इति ॥ अन्ये त्वाहुः—पञ्चमीसमासपक्षप्रयोजनतया भाष्ये 'बेभिदिता, माथितिकः' इत्यस्याप्युदाहृतत्वान्न तस्य वैयर्थ्यशङ्का कार्या । यद्यपि यङोऽकारस्य लोपस्य स्थानिवद्भावं विनापि 'एकाच उपदेशेऽनुदात्तात्' इति विहितविशेषणाश्रयणादेव इण्निषेधाप्रवृत्तौ भिदेर्यङन्तात्तृचि बेभिदितेति रूपं सुसाधं, तथापि माथितिक इत्यादिसिद्ध्यर्थं स पक्षोऽभ्युपगन्तव्यः । न च मथितं पण्यमस्य माथितिक इत्यत्रापि 'तदस्य पण्यम्' इति ठकि इकादेशे च कृते 'यस्येति च' इत्यकारलोपात् 'इसुसुक्तान्तात्–' इति इकः स्थाने प्रसज्यमानो यः कादेशः सोऽप्यल्लोपस्य स्थानिवद्भावं विनैव सुपरिहरः, 'ठस्येकः' इत्यत्र 'स्थान्यादेशयोरकार उच्चारणार्थः' इत्यभ्युपगमे अल्विधित्वेन स्थानिवद्भावाप्रवृत्त्या ठस्थानिक इकादेशष्ठो न भवतीति कादेशाप्रसक्तेर्माथितिक इति रूपसिद्धौ किमनेन पञ्चमीसमासपक्षाश्रयणेनेति वाच्यम् । मथितयतेः क्विपि टिलोपणिलोपयोर्वेरपृक्तलोपे च मथित्, तेन चरति माथितिक इत्यत्र 'चरति' इति ठकि तस्येकादेशसिद्धये तत्पक्षस्यावश्यकत्वात् । न ह्यत्र स्थानिवद्भावं विनापि इकादेशापवादः कादेशः सुपरिहरः, नाप्येतादृशकल्पनायां मानाभावः शङ्क्यो, माथितिक इति भाष्योदाहरणस्यैव मानत्वादिति । स्यादेतत् । पूर्वत्वस्य सावधित्वेन संनिहितस्यैवावधित्वमुचितं, संनिहितं चेह त्रयं स्थानी आदेशो निमित्तं च, तत्र तावत् स्थानी न अवधिः । तस्यादेशेनापहारात् । नाप्यादेशनिमित्ते । वेयाकरण इत्यत्रैकारस्यायादेशापत्तेरित्याशङ्क्याह—**अचः पूर्वत्वेन दृष्टस्येति** । पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः ॥—**न पदान्त**—॥ पदान्तादीनां चरन्तानां द्वन्द्वः, ततो विधिशब्देन कर्मषष्ठ्यन्तस्य समासः । विधिशब्दश्च भावसाधनो विधानं विधिरिति, स च द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं संबध्यते ॥—**पदस्य चरमावयव** इति । वृक्षं वेतीति वृक्षवीः, वृक्षं वातीति वृक्षवाः । तमाचष्टे वृक्षवयति, ततो विच् वृक्षव् । इह 'लोपो व्योर्वलि' इति वलोपो न, टिलोपस्य णिलोपस्य वा स्थानिवत्त्वात् । न च सुबन्ताण्णिजिति हरदत्तादिमते अन्तर्वर्तिसुपा पदत्वात् 'न पदान्त–' इति निषेधः शङ्क्यः । विधेयस्य लोपस्य पदानवयवत्वात् । पदान्तस्य स्थाने विधौ नेति व्याख्याने तु 'न पदान्त–' इति स्थानिवत्त्वनिषेधाद्वलोपः स्यादेवेत्यादि मनोरमायां स्थितम् ॥ —**द्विर्वचनादौ चे**ति । यलोपादय आदिशब्दार्थः । वरे इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयं, सहविवक्षाभावेऽपि निपातनाद् द्वन्द्वः सप्तम्यलुक् च । अथोदाहरणानि ॥—**पदान्ते**[1]–कानि सन्ति, कौ स्तः । इह यणावादेशयोः कर्तव्ययोः श्नसोरल्लोपो न स्थानिवत् । न चेकारौकारयोः स्थानिभूतादचः पूर्वत्वविरहादेवाल्लोपो न स्थानिवदिति वाच्यम् । 'वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते' इति पक्षे स्थानिभूतादचः पूर्वत्वस्य सत्त्वात् ॥ यद्वा गोचः गोचेत्यादावोकारस्यावङि कर्तव्ये 'अचः–' इत्यल्लोपो न स्थानिवदिति उदाहार्यम् ।अत्र हि लोपस्यान्यकारात्पूर्वत्वेन दृष्टत्वादोकारस्य ॥—**द्विर्वचने**—सुद्ध्युपास्यः । 'नाजानन्तर्ये' इति निषेधाद्बहिरङ्गपरिभाषात्र न प्रवर्तते, स्थानिवद्भावनिषेधसामर्थ्याच्च । एवं क्वचिदन्यत्राप्यूह्यम् ॥—**वरे**–यायावरः । यातेर्यङन्ताद् 'यश्च यङः' इति वरच् । 'अतो लोपः,' स च 'आतो लोप इटि च' इत्यालोपे कर्तव्ये न स्थानिवत् ॥ **यलोपे**—यातिः । यातेर्यङन्तात् क्तिच्, 'अतो लोपः' यलोपः । अल्लोपस्य स्थानिवत्त्वादातो लोपः यलोपः । न च पुनरालोपः शङ्क्यः । चिणो लुङ्न्यायेनालोपस्यासिद्धत्वात्स्थानिवद्भावाच्च । ननु यदि यलोपविधिं प्रति स्थानिवत्त्वनिषेधस्तर्हि

---

१ पदान्तेति—अत्र पदचरमावयवसाधकः प्रतिबन्धकश्च स्थानिवद्भावो निषिध्यते, तत्राद्ये उदाहरणं कानि सन्ति इत्यादिना मूल एव स्फुटम्, द्वितीये तु राजानो यन्ति इत्यूह्यम् ।

स्वमोर्लुक्(१४२पृ०)। दत्वम्। स्वनडुत्-स्वनडुद्। स्वनडुही। चतुरन-डुहोरित्याम्(१४८पृ०)। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्। दिव उत्(१५०पृ०)। विमलद्यु अहः। अन्तर्व्वर्त्तिनीं विभक्तिमाश्रित्य पूर्वपद(१)स्येवोत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायाम्। उत्तरपदत्वे (२) चापदादिविधौ प्रतिषेध इति प्रत्ययलक्षणान्न। विमलदिवी। विमलदिवि। अपदादिविधौ किम्। दधिसेचौ। इह षत्वनिषेधे कर्त्तव्ये पदत्वमस्त्येव। चकारस्य कुत्वे तु न। वाः। वारी। अझलन्तत्वान्न नुम्। वारि। चत्वारि। न लुमतेति(११४पृ०)कादेशो न। (३)किम्। के। कानि। इदम्। इमे। इमानि। अन्वादेशे (४) नपुंसके एनद्वक्तव्यः *। एनत्। एने। एनानि। एनेन। एनयोः २। ब्रह्म। सम्बुद्धौ नपुंसकानान्न वा वाच्यः *। हे ब्रह्मन् हे ब्रह्म। ब्रह्मणी। ब्रह्माणि। रोऽसुपि(८०पृ०)। अहर्भाति। विभाषाङिश्योः(१०७पृ०)। अह्नी अहनी। अहानि।

## अहन्। ८। २। ६८।

अहन्नित्यस्य रुः स्यात्पदान्ते। अहोभ्याम्। अहोभिः। इह अहःअहोभ्यामित्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपे

(१) पूर्व्वपदस्येवेति पूर्व्वपदस्य पदत्वाभावे राजपुरुषः वाग्मीश इत्यादौ नलोपकुत्वयोरसम्भवः।

(२) उत्तरपदत्वइति उत्तरभागस्य पदत्वे पदव्यपदेशे कर्त्तव्ये प्रत्ययलक्षणं न।

(३) किमः कः(१५१पृ०)इति सूत्रेणेति शेषः।

(४) अन्वादेशे इतीदमस्येव व्याख्यानात् तस्य लुका लुप्तत्वेऽपि वचनबलात् प्रत्ययलक्षणादेनादेशः।

प्राप्ते अहन्नित्यावर्त्तंय नलोपाभावन्निपात्य द्वितीयेन रुर्विधेय: । तदन्तस्याऽपि रुत्वरुत्वे दीर्घाण्यहानि यस्मिन्दीर्घाहा निदाघ:। इह हल्ङ्यादिलोपे(१११पृ)प्रत्ययलक्षणेन असुपीति (८०पृ०)निषेधाद्रुत्वाभावे रुस्तस्यासिद्धत्वान्नान्तलक्षणा उपधादीर्घ: । सम्बुद्धौ तु हे दीर्घाहो निदाघ: । दीर्घाहाणौ । दीर्घाहाण: । दीर्घाह्ना । दीर्घाहोभ्याम् । दण्डि । दण्डिनी । दण्डीनि । स्रग्वि । स्रग्विणी । स्रग्वीणि । वाग्मि । वाग्मिनी । वाग्मीनि । बहुवृत्रहु । बहुवृत्रघ्नी । बहुवृत्रहाणि । बहुपूषाणि । बह्वर्य्यमाणि । असृज: पदान्ते कुत्वं सृजे:(१६४पृ०)क्विनो विधानात् । विश्वसृडादौ न सृजिदृशोरिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात् । यद्वा व्रश्चादिसूत्रे(१२०पृ०)सृजियज्यो: पदान्ते षत्वं कुत्वापवाद: । स्रग्ऋत्विक्शब्दयोस्तु निपातनादेव कुत्वम् । असृक्शब्दस्तु असृतेरौणादिक ऋज्प्रत्यये बोध्य: । असृक् असृग् । असृजी । असृञ्जि । पद्दिति (१०४पृ०)वा असन् । असानि । असृजा अस्ना । असृग्भ्याम् असभ्यामित्यादि । ऊर्क्-ऊर्ग् । ऊर्ज्जी । ऊर्ञ्जि । नरजानां संयोग: । बहूर्ज्जि नुम्प्रतिषेध:* । अन्त्यात्पूर्वो वा नुम् * । बहूर्ञ्जि—बहूर्ग्जि वा कुलानि । त्यत्-त्यद् । त्ये । त्यानि । तत्-तद् । ते । तानि । यद्-यत् । ये । यानि । एतत्-एतद् । एते । एतानि । अन्वादेशे तु एनत् । बेभिद्यते: क्विप् । बेभित्-बेभिद् । बेभिदी । शावल्लोपस्य स्थानिवत्त्वात् अझलन्तत्वान्न नुम् अजन्तलक्षणस्तु नुम्न स्वरविधौ (३५पृ०) स्थानिवत्त्वाभावात्! बेभिदि ब्राह्मणकुलानि चेच्छिदि ।

गोवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः(५)।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥
स्वमसुप्सु नव, षट् भादौ(६)षट्के, स्युस्त्रीणि जश्शसोः।
चत्वारि शेषे (७) दशके रूपाणीति विभावय ॥ १ ॥

तथाहि। गामञ्चतीति विग्रहे। ऋत्विगादिना(१६४पृ०)क्विन्। गतौ नलोपः। अवङ्स्फोटायनस्येत्यवङ्(५१पृ०)। गवाक्-गवाग्। सर्वत्र विभाषेति(५०पृ०)प्रकृतिभावे। गोअक्-गोअग्। पूर्वरूपे। गोक्-गोग्। पूजायान्नस्य कुत्वेन ङः। गवाङ् गोअङ् गोङ्। अम्यपि एतान्येव नव। औङः शी भत्वादच इति(१७६पृ०) अलोपः। गोची। पूजायान्तु। गवाञ्ची गोअञ्ची गोञ्ची। जश्शसोः शिः शेः सर्वनामस्थानत्वान्नुम्। गवाञ्चि गोअञ्चि गोञ्चि। गतिपूजनयोस्त्रीण्येव। गोचा गवाञ्चा गोञ्चा गोअञ्चा। गवाग्भ्याम् गोअग्भ्याम् गोअग्भ्याम्। गवाङ्भ्याम् गोअङ्भ्याम् गोङ्भ्याम्। इत्यादि। सुपि तु ङान्तानां पक्षे ङ्णोः(६४पृ०)कुगिति कुक्। गवाङ्क्षु गोअङ्क्षु गोङ्क्षु गवाङ्षु गोअङ्षु गोङ्षु गवाक्षु गोअक्षु गोक्षु। नचेह चयो द्वितीया इति(६४पृ०)पक्षे ककारस्य खकारेण षमाभाधिक्यं शङ्क्यम् षत्वस्यासिद्धत्वात्। कुक्पक्षे तु तस्याऽसिद्धत्वाज्जश्त्वाभावपक्षे चयो द्वितीयादेशात्त्रीणि रूपाणि वर्द्धन्त एव।

---

(५) अर्चायां पूजायां नलोपाभावेन गतौ च तल्लोपेन रूपभेदादित्यर्थः।

(६) भादौ भ्यामिभ्यामादौ षट्के प्रत्येकं षट् भेदास्तेन ३६। नव त्रीणीत्य-नयोरपि प्रत्येकं नव त्रीणीत्यर्थः।

(७) शेषे उक्तातिरिक्ते स्वाद्येकादशकभिन्ने औ औट् ङादौ दशके प्रत्येकं चत्वारीति मिलितानि नवाधिकं शतम् १०९।

ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात्।
रूपाण्यष्टाचिंशतानि (८) पूर२७भवन्तीति मनीषिभिः ॥ १ ॥
तिर्य्यक्। तिरश्ची। तिर्य्यञ्चि। पूजायान्तु। तिर्य्यङ्।
तिर्य्यञ्ची। तिर्य्यञ्चि। यकृत्। यकृती। यकृन्ति। पद्दन्निति
(१०४९०)वा यकन्। यकानि। यक्ना-यकृता। शकृत्। शकृती।
शकृन्ति। शकानि। शक्ना—शकृता। ददत्। ददती।

वा नपुंसकस्य। ७।१।७९।

अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात् सर्व्वनामस्थाने। ददन्ति—ददति। तुदत्।

आच्छीनद्योर्नुम्। ७।१।८०।

---

(८) अष्टाचिंशतानीति सप्तविंशत्यधिकपञ्चशतानीत्यर्थः। तथाहि सौ मवानामन्त्यस्य द्वित्वे १८। औङि चतुर्णां मध्ये पूजायां त्रयाणां अकारद्वित्वे षट् गतौ त्वेकमिति सप्त। तयोः प्रत्यह्युत्वान्नानुसिकत्वम्। जश्शसोः द्वित्वविकल्पानुनासिकाननुनासिकत्वभेदात् प्रत्येकं १२ इति मिलिताः २४। अमि सुवत् १८। टायां ङस्यादिषट्के चाजादौ त्रयाणां पूजार्थे अद्वित्वविकल्पात् षट् अनुनासिकाननुनासिकत्वाभ्याम् १२। गत्यर्थे नकारलोपेन द्वित्वाभावात् केवलानुनासिकाननुनासिक विकल्पात् द्वे इति प्रत्येकम् १४। ङेविभक्तौ तु अनुनासिकत्वाभावात् ततोऽर्द्धम् ७। भ्याम्भ्यस्पञ्चके जभयानां द्वित्वात् प्रत्येकं १२। द्वित्वा भावपक्षे। १०। नलोपपक्षे तु गभयानां द्वित्वविल्पात् ।२४। इति ।४८। भिसि भप्राग्वर्णगयोर्द्वित्वात्। २४। सुपि गत्यर्थे त्रयाणाम् ककारषकारयोर्द्वित्वे उकारस्यानुनासिकत्वे च २४। एवं पूजार्थे कुक्पक्षे षण्णां ङषयोर्द्वित्वे अनुनासिकत्वे च ४८। कुगभावे त्रयाणां ङकारद्वित्वे अनुनासिकत्वे १२ इति मिलिताः ८४। सर्व्वसमष्टिः ५२७

अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः। तुदन्ती-तुदती। तुदन्ति। भात्। भान्ती-भाती। भान्ति। पचत्।

## शप्श्यनोर्नित्यम्। ७। १। ८१।

शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नुम् स्याच्छीनद्योः परतः। पचन्ती। पचन्ति। दीव्यत्। दीव्यन्ती। दीव्यन्ति। स्वब्-स्वप्। स्वपी। नित्यात्परादपि नुमः प्राक् अप्तृन्निति(१२२पृ०) दीर्घः प्रतिपदोक्तत्वात्। स्वाम्पि। निरवकाशत्वं प्रतिपदोक्तत्वमिति पक्षे तु प्रकृते तद्विरहान्नुमेव। स्वम्पि। स्वपा। अपो भिः(१८२पृ०)। स्वद्भ्याम्। स्वद्भिः। अत्तीत्यादिना धनेरुस् रुत्वम्। धनुः। धनुषी। सान्तेति(४७पृ०)दीर्घः। नुम्विसर्जनीयेति(१८१पृ०) षत्वम्। धनूंषि। धनुषा। धनुर्भ्याम्। एवञ्चक्षुर्हविरादयः। पिपठिषतेः क्विप् र्वोरिति (१८५पृ०) दीर्घः। पिपठीः। पिपठिषी। अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुंन, स्वर विधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नुम् न। पिपठिषि। पिपठीर्भ्यामित्यादि। पयः। पयसी। पयांसि। पयसा। पयोभ्यामित्यादि। सुपुम्। सुपुंसी। सुपुमांसि। अदः। विभक्तिकार्य्यम् उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्।

इति हलन्ता नपुंसकलिङ्गाः।

---

## स्वरादिनिपातम(१)व्ययम्। १। १। ३७।

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः। स्वर् १। अन्तर् २। प्रातर् ३। पुनर् ४। सनुतर् ५। उच्चैस् ६। नीचैस् ७। शनैस् ८। ऋधक् ९। ऋते १०। युगपत् ११। आरात् १२ पृथक् १३। ह्यस् १४। श्वस् १५। दिवा १६। रात्रौ १७। सायम् १८। चिरम् १९। मनाक् २०। ईषत् २१। जोषम् २२। तूष्णीम् २३। बहिस् २४। अवस् २५। समया २६। निकषा २७। स्वयम् २८। वृथा २९। नक्तम् ३०। नञ् ३१। हेतौ ३२। इद्धा ३३। अद्धा ३४। सामि ३५। वत् ३६।

---

(१) स्वरादिनिपातमिति समाहारद्वन्द्वः। स्वरादीनाह स्वरित्यादि। स्वरिति स्वर्गे परलोके च। १। अन्तरिति मध्ये। २। प्रातरिति प्रत्यूषे। ३। पुनरित्यप्रथमे विशेषे च। ४। सनुतरित्यन्तर्द्धाने। ५। स्वराद्याः पञ्चरेफान्ताः। सान्तत्वे स्वर्यातीत्यादि न सिद्ध्येत्। उच्चैस् महति ६। निचैस् अल्पे। ७। शनैस् क्रियामान्द्ये। ८। ऋधक् सत्ये वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये। ९। ऋते वर्ज्जने। १०। युगपत् एककाले। ११। आरात् दूरसमीपयोः। १२। पृथक् भिन्ने। १३। ह्यस् अतीतेऽहनि। १४। श्वस् अनागतेऽहनि। १५। दिवा दिवसे। १६। रात्रौ निशि। १७। सायम् निशामुखे। १८। चिरम् बहुकाले। १९। मनाक्। २०। ईषत्। २१। इमावल्पे। जोषम् सुखे मौने च॥ २२। तूष्णीम् मौने। २३। बहिस्। २४। अवस्। २५। इमौ बाह्ये। समया समीपे मध्ये च। २६। निकषा अन्तिके। २७। स्वयम् आत्मनेत्यर्थे। २८। वृथेति व्यर्थे। २९। नक्तम् रात्रौ। ३०। नञ् निषेधे। ३१। हेतौ निमित्ते। ३२। इद्धा प्रकाश्ये। ३३। अद्धा स्फुटावधारणयोः तत्त्वातिशययोरित्येके। ३४। सामि अर्द्धजुगुप्सितयोः। ३५। वत् तेन तुल्यं क्रिया चेत् वतिरित्यादिसूत्रे(६५१पृ०)विहितो-

ब्राह्मणवत् क्षत्रियवत्। सना ३७। सनत् ३८। सनात् ३९। उपधा ४०। तिरस् ४१। अन्तरा ४२। अन्तरेण ४३। ज्योक् ४४। कम् ४५। शम् ४६। सहसा ४७। विना ४८। नाना ४९। स्वस्ति ५०। स्वधा ५१। अलम् ५२। वषट् ५३। श्रौषट् ५४। वौषट् ५५। अन्यत् ५६। अस्ति ५७। उपांशु ५८। क्षमा ५९। विहायसा ६०। दोषा ६१। मृषा ६२। मिथ्या ६३। मुधा ६४। पुरा ६५। मिथो ६६। मिथस् ६७। प्रायस् ६८। मुहुस् ६९ प्रवाहुकम् ७०। प्रवाह्लिका ७१। आर्य्यहलम् ७२।

---

वतिप्रत्ययो गृह्यते इत्युदाहरणेन दर्शयति ब्राह्मणवदित्यादि। नतु स्वरादिवत् पृथक्पदमेवञ्च प्रत्ययत्वेन प्रकृत्युत्तरत्वेनैव प्रयोगः इति द्रष्टव्यम् ३६। सना। ३७। सनत्। ३८। सनात्। ३९। नित्ये। उपधा भेदे। ४० तिरस् अन्तर्द्धौ तिर्य्यगर्थे परिभवे च। ४१। अन्तरा मध्ये विनार्थे च। ४२। अन्तरेण वर्ज्जने। ४३। ज्योक् काल भूयस्त्व प्रश्नशीघ्रार्थसंप्रत्ययेषु। ४४। कम् वारिमूर्द्धनिन्दासुखेषु। ४५। शम् सुखे। ४६। सहसा आकस्मिकाविमर्शयोः। ४७। विना वर्ज्जने। ४८। नाना अनेकविनार्थयोः। ४९। स्वस्ति मङ्गले। ५०। स्वधा पितृदाने। ५१। अलम् भूषणपर्य्याप्तिशक्तिवारणनिषेधेषु। ५२। वषट्। ५३। श्रौषट्। ५४। वौषट्। ५५। हविर्दाने। अन्यत् अन्यार्थे। ५६। अस्ति सत्तायाम्। ५७। उपांशु अप्रकाशोच्चारणरहस्ययोः। ५८। क्षमा क्षान्तौ। ५९। विहायसा वियदर्थे। ६०। दोषा रात्रौ। ६१। मृषा। ६२। मिथ्या। ६३। वितथे। मुधा व्यर्थे। ६४। पुरा अविरते चिरातीते भविष्यदासन्ने च। ६५। मिथो। ६६। मिथस् रहःसहार्थयोः। ६७। प्रायस् बाहुल्ये। ६८। मुहुस् पुनरर्थे। ६९। प्रवाहुकम् समकाले अर्द्धार्थे च ७०। प्रवाह्लिका प्राग्दाग्दरम्। ७१। आर्य्यहलम्

अभीक्ष्णम् ७३ । साकम् ७४ । सार्द्धम् ७५ । नमस् ७६ । हिरुक् ७७ । धिक् ७८ । अथ ७९ । अम् ८० । आम् ८१ । प्रताम् ८२ । प्रशान् ८३ । प्रतान् ८४ । मा ८५ । माङ् ८६ । आकृतिगणोयम् ।

---

बलात्कारे । शाकटयनस्तु आर्थ्ये प्रतिबन्धे कृतम् प्रतिषेधविवादयो रित्याह । ७२ । अभीक्ष्णम् पौनःपुन्ये । ७३ । साकम् । ७४ । सार्द्धम् । ७५ । सहार्थे । नमस् नतौ ।७६। हिरुक् वर्ज्जने ।७७। धिक् निन्दाभर्त्सनयोः । ७८ । अथ मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु ७९ । अम् शैघ्र्येऽल्पे च। ८०। आम् अङ्गीकारे ॥ किमेत्तिङव्ययघादाम्व (५।४।११सू०) इत्यादिविहितोप्याम् गृह्यते इत्येके किन्तराम् प्राह्णेतरामित्यादि।८१। प्रताम् ग्लानौ।८२।प्रशाम् सामर्थ्ये । ८३ । प्रतान् विस्तारे ।८४। मा । ८५। माङ् ।८६। शङ्कानिषेधयोः। आकृतिगणइति तेनान्येऽपि ज्ञेयाः । तथाहि कामम् स्वाच्छन्द्ये । प्रकामम् अतिशये । भूयस् पुनरर्थे । साम्प्रतम् न्याय्ये । परम् किन्त्वर्थे साक्षात् प्रत्यक्षे । साचि तिर्य्यगर्थे । सत्यम् अङ्गीकारे । मङ्क्षु शैघ्र्ये संवत् वर्षे । अवश्यम् निश्चये । सपदि शैघ्र्ये । बलवत् अतिशये । प्रादुस् आविस् प्रकाशे । अनिशम् नित्यम् नित्यदा सदा अजस्रम् सन्ततम् एते सातत्ये । उषा रात्रौ । रोदसी द्यावापृथिव्योः । ओम् अङ्गीकारे ब्रह्मणि च भूर् पृथिव्याम् । भुवर् अन्तरिक्षे । झटिति झक् तरसा शैघ्र्ये । सुष्ठु प्रशंसायाम् । दुष्ठु कष्टे । सु पूजायाम् । कु कुत्सितेषदर्थयोः। अहह आश्चर्य्यखेदेच। अञ्जसा तत्त्वशीघ्रयोः। मिथु द्वावित्यर्थे । आजक् शैघ्र्ये । चिराय चिररात्राय चिरस्य चिरम् चिरेण चिरात् एते चिरार्थकाः । अलम् विनाशे । आनुषक् आनुपूर्व्ये । अम्नक् कृतभावे अभ्रम् शीघ्रसाम्प्रतिकयोः । स्थाने युक्ते । वरम् ईषदुत्कर्षे । शुदि शुक्लपक्षे । वदि कृष्णपक्षे । एवं सह सलं प्राह्णमित्यादयोऽपि प्राह्णाः । ४० ।

(२) च१। वा२। ह३। अह४। एव५। एवम्६। नूनम्७। शश्वत्८। युगपत्९। भूयस्१०। कूपत्११। सूपत्१२। कुवित्१३। नेत्१४। चेत्१५। चण्१६। कच्चित्१७। यत्र१८। नह१९। हन्त २०। माकिम् २१। माकीम्२२। नकीम् २३। नकिम्२४। नकिर् २५। माङ् २६। नञ्२७। यावत् २८। तावत्२९। त्वै३०। द्वै३१। रै३२। श्रौषट्३३। वषट् ३४। स्वाहा३५। स्वधा३६। वौषट् ३७। तुम्३८। तथाहि३९।

---

(२) च समुच्चयादिषु। १। वा वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये इत्यर्थेषु। २। ह प्रसिद्धौ। ३। अह पूजायाम्। ४। एव अवधारणेऽनवक्लृप्तौ च।५। एवम् उक्तपरामर्शे। ६। नूनम् निश्चये वितर्के च।७। शश्वत् पौनःपुन्ये नित्ये सहार्थे च।। युगपत् ऐककाल्ये। ९। भूयस् पुनरर्थे आधिक्ये च। १०। कूपत् सूपत् एतौ प्रश्ने प्रशंसायाञ्च।११। १२। कुवित् भूर्य्यर्थे प्रशंसायाञ्च।१३। नेत् शङ्काप्रतिषेधसमुच्चयेषु।१४। चेत् यद्यर्थे। १५। चण् णित् चेदर्थे समुच्चयादौ त्वननुबन्धः। १६। कच्चित् इष्टप्रश्ने। १७। यत्र अनवक्लृप्त्यमर्षगर्हाश्चर्य्येषु। यथा नावकल्पयामि न मर्षये गर्हे आश्चर्यं वा यत्र भवान् वृषलं याजयेदित्यादि। १८। नह प्रत्यारम्भे। १९। हन्त हर्षविषादानुकम्पावाक्यारम्भेषु २०। माकिम् माकीम् नकीम् नकिम् नकिर् एते वर्ज्जने। २१-२५। माङ्नञौ स्वरादिपठितार्थौ इह पाठस्तु निपातत्वार्थः तेन निपाता आद्युदात्ता इति स्वरविशेष एवमन्यत्रापि बोध्यम्। २६। २७। यावत्तावत् एतौ साकल्ये। २८। २९। त्वै विशेषवितर्कयोः। ३०। द्वै वितर्के अत्र न्वै इति पाठान्तरम्। ३१। रै दाने अनादरे च। ३२। श्रौषट् वषट् स्वरादिपठितार्थौ। ३३।३४। स्वाहा देवताभ्यो दाने। ३५। स्वधा वौषट् व्याख्यातौ।३६। ३७। तुम् तुङ्कारे यथा गुरुं तुङ्कृत्य हुङ्कृत्येति प्रयोगः। ३८। तथाहि निदर्शने। ३९। खलु निषेधे वाक्यालङ्कारे

खलु ४०। किल ४१। अथ ४२। सुष्ठु ४३। स्म ४४। आदह ४५। उपसर्गस्वरविभक्तिप्रतिरूपकाश्च। अवदत्तम् अहंयुः अस्तिक्षीरा ४६। अ ४७। आ ४८। इ ४९। ई ५०। उ ५१ ऊ ५२। ए ५३। ऐ ५४। ओ ५५। औ ५६। पशु ५७। शुकम् ५८। यथा ५९ कथाच ६०। प्याट् ६१। पाट् ६२। अङ्ग ६३। है ६४। हे ६५। भोः ६६। अये ६७। द्य ६८। विषु ६९। एकपदे ७०। युत् ७१। आतः ७२। चादिरप्याकृतिगणः (२)।

निश्चये च। ४०। किल वार्त्तायामलीके च। ४१। अथ स्वरादिषूक्तार्थः। ४२। सुष्ठु स्वरादिषु व्याख्यातार्थः ४३। स्म अतीते पादपूरणे च। ४४। आदह उपक्रमहिंसाकुत्सनेषु। ४५।

अवदत्तमित्यादीन्युदाहरणानि तत्रावशब्दस्योपसर्गप्रतिरूपकतयानुपसर्गत्वात् अच उपसर्गात्त इत्यनेन( )तकारो न भवति। अहमिति सुबन्तप्रतिरूपकम् तेन न विभक्तिलोपः। एतेन गेये केन विनीतौ वामिति पाठेऽपि युवामित्यर्थे वानित्यव्ययं द्रष्टव्यम्। अस्तीति तिङन्तप्रतिरूपकम् एवम् अस्मि अहमित्यर्थे तेन त्वामस्मि वच्मीत्यादि सिध्यति आहेत्युवाचेत्यर्थे आसेति बभूवेत्यर्थे इवास यत्र इति कु० ४६। स्वरप्रतिरूपकाण्याह। अ संबोधने अधिक्षेपे निषेधे च। ४७। आ वाक्यस्मरणयोः। ४८। इ सम्बोधनजुगुप्साविस्मयेषु। ४९। ई उ ऊ ए ऐ ओ औ एते संबोधने। ५०-५६। पशु सम्यगर्थे। ५७। शुकम् शैघ्र्ये। ५८। यथा कथाच अनादरे। ५९। ६०। प्याडादयः सप्त संबोधने।६१-६७। द्य हिंसाप्रातिलोम्ययोः पादपूरणे च। ६८। विषु नानार्थे।६९। एकपदे अकस्मादित्यर्थे।७०। युत् कुत्सायाम्।७१। आतः इतोपीत्यर्थे। ७२।

(२) आकृतिगण इति तेनान्येऽपि सन्तीत्यर्थः। ते च यथा। यत्तत् हेतौ आहोस्वित् विकल्पे सीम् सर्वतोभावे। कम् पादपूरणे। शुकम् अति-

इति स्थानिवद्भावनिषेधः। **झलां जश् झशि** ।८।४।५३। स्पष्टम्। इति धकारस्य दकारः। **अदर्शनं लोपः**। १।१।६० प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्। **संयोगान्तस्य लोपः** ।८।२।२३। संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्। इति यलोपे प्राप्ते ॥ * **यणः प्रतिषेधो वाच्यः** ॥ * **यणो मयो द्वे वाच्ये** ॥ मय इति पञ्चमी यण इति

---

कथं वाय्वोरिति, उच्यते। 'असिद्धं बहिरङ्गम्–' इति यणोऽसिद्धत्वान्न यलोपः। न च 'नाजानन्तर्ये' इति निषेधः, उत्तरकार्ये अच आनन्तर्यं यत्र तत्रैव तदभ्युपगमात्। किं चात्र 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति वार्तिकमस्ति। तेनान्यः स्थानिवदिति भवतीति न दोषः ॥—**स्वरे**—चिकीर्षकः। ईकारस्य 'लिति' इत्युदात्तत्वे कर्तव्ये सन्नस्याऽतो लोपो न स्थानिवत्। न च 'लिति' इत्यारम्भसामर्थ्यं, कारक इत्यादौ सावकाशत्वात् ॥—**सवर्णानुस्वारयोः**। शिण्ढि। श्नसोरल्लोपो न स्थानिवत्। यद्यप्यनुस्वारो न स्थानिभूतादचः पूर्व इति तस्य परसवर्णे कर्तव्येऽल्लोपस्य स्थानिवत्त्वप्रसङ्ग एव नास्ति, तथापि स्थानिद्वारानुस्वारोऽपि दृष्ट इत्यस्त्येव तत्प्रसङ्ग इत्याहुः। ननु सवर्णग्रहणमात्रेणानुस्वारोऽप्याक्षेप्तुं शक्यत इति किमनेन पृथगनुस्वारग्रहणेन। सत्यम्। पृथग्ग्रहणाभावे यत्र परसवर्णस्तत्रैवेति संभाव्येत। तथा च यत्र न परसवर्णप्रसङ्गः शिंषन्तीत्यादौ तत्र स्थानिवद्भावं निषेद्धुमनुस्वारग्रहणम्। एवं यत्र वरे अजादेशस्य प्रसङ्गो नास्ति यातिरित्यादौ तत्र यलोपे स्थानिवद्भावं निषेद्धुं वरेग्रहणात्पृथग्यलोपग्रहणमिति ज्ञेयम् ॥—**दीर्घे**—प्रतिदीव्ना, प्रतिदीव्ने। 'हलि च' इति दीर्घे कर्तव्ये अल्लोपो न स्थानिवत्। यणादेशस्तु स्थानिवद्भवत्येव। 'लोपाजादेश एव न स्थानिवत्' इति उक्तत्वात्। तेन 'हलि च' 'उपधायां च' इति दीर्घाप्रवृत्त्या किर्योः गिर्योः विव्यतुरित्यादि सिद्धम् ॥—**जशि**—सग्धिश्च मे। अदनं ग्धिः। तत्र अदेः क्तिनि 'बहुलं छन्दसि' इति घस्लादेशः, 'घसिभसोर्हलि–' इत्युपधालोपः 'झलो झलि' इति सलोपः। 'झषस्तथोः–' इति धत्वं, घस्य 'झलां जश् झशि' इति जश्त्वे कर्तव्ये उपधालोपो न स्थानिवत्। 'समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सः। समाना ग्धिः सग्धिः। न चात्र सलोपे धत्वे च कर्तव्ये पूर्वस्मादपि इति स्थानिवद्भावात्सग्धिरिति रूपं न स्यादिति शङ्क्यम्। पञ्चमीसमासपक्षस्यानित्यत्वात्। तच्च 'निष्ठायां सेटि' इति लिङ्गात्। तथाहि। तत्र 'सेटि' इति पदं न तावदनिड्व्यावृत्त्यर्थम्, णिजन्तात्तदसंभवात्। ननु संज्ञपितः पशुरित्यत्र 'यस्य विभाषा' इति इण्निषेधे संभवत्येवानिट्त्वं, 'संनीवन्त–' इति विकल्पितेट्कत्वादिति चेन्न। 'यस्य विभाषा' इत्यत्र 'एकाचः' इत्यनुवृत्तेः। अन्यथा दरिद्रित इति इण् न स्यात्तत्र 'तनिपतिदरिद्रातिभ्यः–' इति वार्तिकेन सनो विकल्पितेट्कत्वात्। तस्मात्कालावधारणार्थं सेड्ग्रहणम्। इटि कृते णिलोपो न तु ततः प्रागिति। अन्यथा कारितमित्यादौ णिलोपे कृते 'एकाच उपदेशे–' इति इण्निषेधः स्यादिति। यदि तु पूर्वस्माद्विधौ स्थानिवत्त्वं तर्हि णिचा व्यवधानान्निषेधप्राप्तिरेव नास्तीति 'सेटि' इत्यनर्थकं सत्तस्यानित्यतां ज्ञापयति इति स्थितम् ॥ ननु जश्त्वविधौ यदि स्थानिवत्त्वनिषेधस्तर्हि पटयतीत्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वं स्यात्। मैवम्। 'इष्ठवत्' इत्यतिदिष्टया भसंज्ञया पदसंज्ञाया बाधाज्जश्त्वाप्रवृत्तेः ॥—**चरि**—जक्षतुः। जक्षुः। घसेर्लिटि अतुस् उस् च, 'गमहन–' इत्युपधालोपः, 'खरि च' इति चर्त्वे प्रति न स्थानिवत्। भाष्ये तु 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः। तद्रीत्या तु सलोपे धत्वे च कर्तव्ये स्थानिवद्भावशङ्कैव नास्तीति बोध्यम् ॥—**अदर्शनं लोपः**। अत्र दृशिर्ज्ञानसामान्यवचनः, दर्शनं ज्ञानम्, तदिह शब्दानुशासनप्रस्तावाच्छब्दविषयकं सत् श्रवणं संपद्यते। तच्च श्रोतृव्यापारस्तन्निषेधोऽश्रवणम् ॥ नन्वेवं 'लोपो व्योर्वलि' इत्यादौ वकारयकारौ न श्रोतव्याविति श्रोतृव्यापार एव निषिध्येत प्रयोक्तृव्यापार उच्चारणमनिषिद्धं स्यात्। अत्राहुः। असति श्रवणे उच्चारणमनर्थकमेवेति सामर्थ्याच्छ्रवणनिषेधे तद्धेतुभूतमुच्चारणमपि निषिद्धं भवतीति ॥—**प्रसक्तस्येति**। इह 'स्थाने' इत्यनुवर्तनादेतल्लभ्यते। प्रसक्तस्येति किं, दधिमध्वित्यादौ तुगागमो मा भूत्। अस्ति हि तत्र क्विपोऽदर्शनं, तच्च लोप इति प्रसक्तविशेषणाभावे प्रत्ययलक्षणेन तुक् स्यादेवेति दिक् ॥—**संयोगान्तस्य**।—**तदन्तस्येति**। 'अलोऽन्त्यस्य' इति परिभाषयेति भावः ॥ यद्यपि विशेषणेन तदन्तविधिलाभात् 'संयोगस्य' इत्येव सूत्रयितुमुचितं तथापि 'प्रत्येकं संयोगसंज्ञा' इति पक्षे 'दृषत्करोति' इत्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणमिति मनोरमायां स्थितम् ॥ 'संयोग' इति महासंज्ञाकरणसामर्थ्यादेकस्य संयोगसंज्ञा न भविष्यतीति अन्तग्रहणमिह त्यक्तुं शक्यम् ॥—**यणः प्रतिषेध** इति। वाचनिकमिदम् ॥ यद्वा वाच्यो व्याख्येयः। व्याख्या च द्वेधा 'झलो झलि' इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयत इति अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा। न च षाष्ठी परिभाषा त्रैपादिकमन्तरङ्गं लोपं न पश्यतीति वाच्यम्। कार्यकालपक्षाभ्युपगमात्। न च 'नाजानन्तर्ये' इति निषेधः। उत्तरकालप्रवृत्ते लोपे अजानन्तर्याभावात्। तदुक्तम्। 'संयोगान्तलोपे यणः प्रतिषेधः'। 'न वा झलो लोपात्'। 'बहिरङ्गल-

---

१ निषेध इति—द्विर्वचनग्रहणादिति भावः। २ जशिति—सौत्रत्वाज्जशः शस्य जत्वं ग्रश्चेति षत्वं वा न भवति। ३ दकार इति—स्थानत आन्तर्यादिति भावः। ४ प्रसक्तस्येति—शास्त्रतोऽर्थतो वेति भावः।

तद्धितश्चाऽसर्व्वविभक्तिः। १। १। ३८।

यस्मात्सर्व्वा (४) विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात्। परिगणनं कर्त्तव्यम्। तसिलादयः (५) प्राक् पाशपः शस्प्रभृतयः (६) प्राक्समासान्तेभ्यः। अम् (७)। आम् (८)। कृत्वोर्थाः (९)। तसिवती (१०)। नानाञाविति (११)। एवं न। पचतिकल्पम्पचतिरूपम्।

अये। अनुकम् वितर्के। अट् अन्तःकरणे आभिमुख्ये च। व पादपूरणे इवार्थे च। टिक्का आनन्दे। चटु चाटु प्रिये वाक्ये। कुम् भर्त्सने। इव सादृश्ये। अद्यत्वे इदानीमित्यर्थे। एवम् अरे जात्वदादयोपि ग्राह्याः। अत्रेदमवधेयं स्वरादिचादीराकृतिगणत्वाविशेषेऽपि येषां निपातस्वरस्तेते चादिषु अन्ये स्वरादिषु उभयस्वरभाजस्तूभयत्र पठिता इत्येतत् सर्व्वम् मनोरमायां स्थितम्।

(४) सर्व्वेति वचनत्रयमित्यर्थः विन्वादेर्गादेकवचनमेवोत्पद्यते इति भावः।

(५) पञ्चम्यास्तसिल् ५। ३। ७। इत्यारभ्य याप्ये पाशप् ५। ३। ४७ इत्यत प्राक् ये तद्धितप्रत्यया विहितास्ते इत्यर्थः।

(६) बह्वल्पार्थाच्छस् ५। ४। ४२ सू०। इत्यारभ्य समासान्ताः ५। ४। ६८ इति सूत्रात् प्राक् डाचपर्य्यन्ता ये विहितास्ते इत्यर्थः।

(७) अमु च्छन्दसीति ५। ४। १२ सूत्रेण विहितोऽम्।

(८) किमेत्तिङव्ययघादाम्‌ ५। ४। ११ इत्यादि सूत्रेण विहित आम्।

(९) संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति ४। ४। १७ सूत्रेण विहितः कृत्वसुच् तदर्थाः सुजादयश्च।

(१०) तेनैका दिक् तसिश्चेति ४। ३। ११। १२। सूत्राभ्यां विहितस्तसिः। तेन तुल्यं क्रिया चेत् वतिरित्यादि ५। १। ११५। सूत्रैर्विहितो वतिः।

(११) विनञ्भ्यां नानाञाविति ५। २। २७ सूत्रविहितौ नानाञाविव्यर्थः।

### कृन्मेजन्तः। १। १। ३९।

कृद्यो मान्त (१२) एजन्तश्च तदन्तमव्ययं स्यात्। स्मारंस्मारम्। जीवसे (१३)। पिबध्यै (१४)।

### क्त्वातोसुन्कसुनः। १। १। ४०।

एतदन्तमव्ययं स्यात्। कृत्वा। उदेतोः (१५)। विसृपः (१६

### अव्ययीभावश्च। १। १। ४१।

अधिहरि।

### अव्ययादाप्सुपः। २। ४। ८२।

अव्ययाद्विहितस्यापः सुपश्च लुक् (१७) स्यात्। तत्र शालायाम्। यथ। विहितविशेषणान्नेह। अत्युच्चैसौ। अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति। तथापि न गौणे। आब्ग्रहणं (१८) व्यर्थमलिङ्गत्वात्।

---

(१२) कृद्यो मान्त इति। कारयामासेत्यादावामः कृत्त्वादव्ययत्वमिति भाष्यम्।

(१३) जीवसे इति तुमर्थे सेसेनसेऽसेनित्यादि ३।४।६ सूत्रेण असेन्प्रत्ययः।

(१४) पिबध्यै इत्यपि तेनैव सूत्रेण शध्यैप्रत्ययः।

(१५) उदेतोरिति उत्पूर्व्वकादिणधातोः भावलक्षणे स्थेणइत्यादि। ३।४।१६ सूत्रेण तोसुन्प्रत्ययः।

(१६) विसृपइति सृपितृदोः कसुनिति ३।४।१७ सूत्रेण विहितः कसुन्।

(१७) ण्यक्षत्रियार्षञितोयूनि लुगित्यतो (५४२९०) लुगित्यनुवर्त्तते।

(१८) अव्ययादापोलुग्वचनानर्थक्यं लिङ्गाभावादिति वार्त्तिकमर्थतोदर्शयति आब्ग्रहणमिति।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति ॥

श्रुतिः लिङ्गकारकसंख्याभावपरा (१९)।

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा (२०) ॥ १ ॥

वगाहः। अवगाहः। पिधानम्। अपिधानम्।

इत्यव्ययानि।

---

(१९) अलिङ्गत्वे आथर्वणश्रुतिविरोधमाशङ्क्याह लिङ्गकारकसंख्याभावपरेति। इह विभक्तिवचनशब्दौ कारकसंख्यापरौ अन्यथान्यतरवैयर्थ्यापत्तेरिति भावः। उपक्रमोपसंहाराभ्यामस्याः श्रुतेर्ब्रह्मपरत्वेऽपि भाष्यकारवचनप्रामाण्यादेवाव्ययपरत्वमिति बोध्यम्।

(२०) यथा वाचा निशा दिशेत्यादि परिगणनार्थं दिङ्मात्रमिहोपात्तम्।

इति सरलाख्यायां कौमुदीव्याख्यायामव्ययप्रकरणम्।

# सिद्धान्तकौमुदी।

## स्त्रीप्रत्ययप्रकरणम्।

### स्त्रियाम्। ४। १। ३।

अधिकारोयं समर्थानामिति (४८८६) यावत्।

### अजाद्यतष्टाप्। ४। १। ४।

अजादीनाम्(१) अकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात्। अजाद्युक्तिर्ङीषोङीपश्च बाधनाय। अजा। अतः खट्वा। अजादिभिः स्त्रीत्वस्य विशेषणान्नेह। पञ्चाजी (२) अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम्। अजा। एडका। अश्वा। चटका। मूषिका। एषु जातिलक्षणो ङीष् प्राप्तः

(१) अजाद्यत इति षष्ठी वाच्यवाचकभावसम्बन्धस्तदर्थः स्त्रियामित्य धिकारलब्धस्य धर्मप्रधाननिर्देशात् स्त्रीत्वे इत्यर्थस्तदेतदाह अजादीनामित्यादि। कस्माद्भवतीत्याकाङ्क्षायां सन्निधानादजादिभ्य इत्यर्थाल्लभ्यत इति बोध्यम्। टाबादीनां पकारः स्वरार्थः। तद्यथा अजा एडका कोकिला चटका मूषिका अश्वा बाला होडा पाका वत्सा मन्दा विलाता पूर्वापहाणा अपरापहाणा क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा मध्यमा। अजादिराकृतिगणः।

(२) पञ्चाजीति। अत्र हि समासेऽजशब्दस्यापि समाहारनिष्ठं स्त्रीत्वं

बाला । वत्सा । होढा । मन्दा । विलाता । एषु वयसि प्रथम इति (२१८ष्ठ०) ङीप् प्राप्तः । सम्भस्त्राजिनशणपिण्डेभ्यः फलात् (ग०)। सम्फला । भस्त्रफला (३) । ङ्यापोरिति (४६८ष्ठ०) ह्रस्वः । सदच् (४) काण्डप्रान्तशतैकेभ्यः पुष्पात् (ग०) । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । शूद्रा चाऽमहत्पूर्वा जातिः (ग) । पुंयोगे तु शूद्री (५) । अमहत्पूर्वा किम् । महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेऽपि कोकिला जातावपि । मूलान्नञः (ग०) । अमूला । ऋन्नेभ्यो (१२७ष्ठ०) ङीप् । कर्त्री । दण्डिनी ।

## उगितश्च । ४ । १ । ६ ।

उगिदन्तात्प्रातिपदिकात् स्त्रियां ङीप् स्यात् । भवन्ती । पचन्ती । शप्श्यनोरिति (१८७ष्ठ०) नुम् । उगिदचामिति (१५८ष्ठ) सूत्रेऽञ्ग्रहणेन धातोश्चेदुगित्कार्य्यं तर्ह्यञ्चतेरेवेति नियम्यते तेनेह न । उखास्रत् । क्विप् । अनिदितामिति (१७८ष्ठ०) नलोपः । पर्णध्वत् । अञ्चतेस्तु स्यादेव । प्राची । प्रतीची ।

समुदायरूपसमासवाच्यं न तज्जशब्दमात्रवाच्यमिति न टापः प्रसङ्ग इति भावः ।

(३) भस्त्रेव फलानि यस्या इति भस्त्रफला ओषधिः ।

(४) वर्जित सतनञ्पूर्वकक्विबन्ताञ्चतिसामान्यग्रहणम् ।

(५) शूद्रा चेत्यत्र जातिरित्यभिधानात् जातिलक्षणङीप एवापवादो न तु पुंयोगलक्षणस्यापीत्याह पुंयोगे त्विति एतच्चोपलक्षणं महाशूद्रीत्यपि भवत्येव ।

## वनो र च (६)। ४। १। ७।

वन्नन्तात्तदन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् स्यात्। रश्चा-न्तादेशः। वन्निति ङ्वनिप्क्वनिप्वनिपां सामान्यग्रहणम्। प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्। तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते। सुत्वानमतिक्रान्ता अतिसुत्वरी। अतिधीवरी। शर्व्वरी। वनो न हश (७) इति वक्तव्यम्। हशन्ताद्धातोर्व्विहितो योवन् तदन्तात्तदन्तान्ताच्च प्रतिपदिकात् ङीप् रश्च नेत्यर्थः। ओणृ अपनयने वनिप् विड्वनोरिति(उ०३२८३०)आत्वम्। अवावा ब्राह्मणी। राजयुध्वा। बहुव्रीहौ वा॰। बहुधीवरी—बहुधीवा। पक्षे डाप् वक्ष्यते।

## पादोऽन्यतरस्याम्। ४। १। ८।

पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकात् ङीप् वा स्यात्। द्विपदी-द्विपद्।

## टाबृचि (८)। ४। १। ९।

ऋचि वाच्यायां पादन्ताट्टाप् स्यात्। द्विपदा ऋक्। एकपदा।

(६) वनोर चेति सार्थकस्यैव वनोग्रहणात् अवोमोल्यादौ न प्रसङ्ग। इदञ्च सूत्रं न ङीब्विधायकं ऋन्नेभ्योङीबित्यनेनेव(१७पृ०)तत्सिद्धेः किन्तु तत्सूत्रविहितङीपोऽनुवादेन रत्वमात्रविधायकमिति बोध्यम्।

(७) वनो न हश इति सूत्रमबहुव्रीह्यर्थम् उदाहरणेन तदाह वा॥ति।

(८) टाबृचीति सूत्रं अकारान्तपदशब्देन विपक्षेऽपि ऋचि वाच्यायां द्विपदी त्रिपदीत्यादिप्रयोगनिवारणाय। तत्त्व०।

न षट्स्वस्रादिभ्यः(१२८०) । पञ्च । चतस्रः । पञ्चेत्यत्र (९) नलोपे कृतेऽपि ष्णान्ता षडिति(१६२पृ०)षट्संज्ञां प्रति (१५६पृ०) नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वात् न षट्स्वस्रादिभ्य इति(न टाप् ।

**मनः (१०) । ४ । १ । ११ ।**

मन्नन्तान्न ङीप् । सीमा सीमानौ ।

**अनो बहुव्रीहेः । ४ । १ । १२ ।**

अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा । बहुयज्वानौ ।

**डाबुभाभ्यामन्यतरस्याम् । ४ । १ । १३ ।**

सूत्रद्वयोपात्ताभ्यां डाप् वा स्यात् । सीमा । सीमे सीमानौ । दामा । दामे दामानौ । न पुंसि दामेत्यमरः । बहुयज्वा । बहुयज्वे बहुयज्वानौ ।

**अनउपधालोपिनोऽन्यतरस्याम् । ४ । १ । २८ ।**

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् स्यात् । पक्षे डाब्ङीब्निषेधौ । बहुराज्ञी । बहुराज्ञ्यौ बहुराजे बहुराजानौ ।

---

(९) न षडिति सूत्रे ङीपइव टापोऽपि निषेधइत्याह पञ्चेत्यत्रेत्यादिना । असिद्धत्वादिति तथाच सुप्स्वरादिषु टापोऽपरिगणनात् टापं प्रत्यसिद्धत्वमिति टापि प्रसक्ते न षडित्यादिना टापोऽपि निषेध इति भावः । अयञ्च निषेधः प्रियपञ्चा द्रौपदीत्यादौ गौणे न प्रवर्त्तते तदन्तस्य स्त्रीत्वेऽपि पञ्चनृषब्दस्य स्त्रीत्वाभावादिति बोध्यम् ।

(१०) मनइति, अन उपधेत्यादि चैते सूत्रे टाब्ङीपोरुभयोरपि नि-

**प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः। ७। ३। ४४।**

प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे स आप् सुपः परो न चेत्। सर्विका। कारिका। अतः किं नौका। प्रत्ययस्थात्किम्। शक्नोतीति शका। असुपः किम् बहुपरिव्राजका (११) नगरी। कात्किम् नन्दना। पूर्वस्य किम् परस्य मा भूत्। कटुका (१२)। तपरः किम् राका। आपि किम् कारकः। मामक (१३) नरकयोरुपसंख्यानम् *। मामिका। नरान् कायतीति नरिका। त्यक्त्यपोश्च *। दाक्षिणात्यिका। इहत्यिका।

**न यासयोः। ७। ३। ४५।**

यत्तदोरस्येत्त्वं न स्यात्। यका। सका। यकाम्। सकाम्। त्यकनश्च निषेधः*। अधित्यका। उपत्यका। आशिषि वुनश्च न*। जीवका। भवका। उत्तरपदलोपे न*। देवदत्तिका।

---

षेधके, तेन सीमभ्यां बहुपद्मभ्यां बहुधीयभ्यामित्यादौ डाब्ङीपोर-भावेऽपि नलोपेऽदन्ततया न टाप्प्रसङ्ग इति बोध्यम्। शब्देन्दु०।

(११) बहुपरिव्राजकेति बहुव्रीहौ उत्तरपदस्य सुपो लुक्यपि प्रत्ययलक्षणे-नापः सुबन्तात्परत्वमिति न तत्त्वप्रसङ्ग असुप इति निषेधादिति भावः।

(१२) कटुकेति टापा सह सवर्णदीर्घात् पूर्वं वर्णादाङ्गस्य बलीयस्त्वादपवा-दत्वाच्च प्रत्ययस्थककारात् परस्थिताकारस्य नेत्त्वं स्यादिति भावः।

(१३) मामकेति तवकममकावेकवचने इति(५६८२०) ममकादेशस्याप्रत्ययत्वा-दप्राप्ते विधानम्।

देवका(१४)। क्षिपकादीनाञ्च न(१५)*। क्षिपका। ध्रुवका। कन्यका। चटका। तारका ज्योतिषि(ग०)। अन्यत्र तारिका। वर्णका तान्तवे(ग०)। अन्यत्र वर्णिका। वर्त्तका शकुनौ प्राचाम्(ग०)। उदीचान्तु वर्त्तिका। अष्टका पितृदैवत्ये(ग०)। अष्टिकान्या। सूतिकापुत्रिकावृन्दारिकाणां वेति वक्तव्यम् *। इह वा अ इति छेदः। कात्पूर्व्वस्य वाऽकारादेश इत्यर्थः। तेन पुत्रिका-शब्दे ङीन (१६) इवर्णस्य पक्षेऽकारः। अन्यत्रेत्त्वबाधनार्थ-मकारस्यैव पक्षेऽकारः। सूतिका—सूतकेत्यादि।

## उदीचामातः स्थाने य क पूर्व्वायाः। ७। ३।४६।

यकपूर्व्वस्य स्त्रीप्रत्ययाऽऽकारस्य स्थाने योऽकारस्तस्य कात्पूर्व्व-स्येद्वा स्यादापि परे। केऽण इति(४०४पृ०)ह्रस्वः। आर्य्यका आर्यिका चटकका चटकिका। आतः किं साङ्काश्ये भवा साङ्का-श्यिका (१७)। यकेति किम् अश्विका। स्त्रीप्रत्ययेति (१८)

---

(१४) ठाजादावूर्द्धं द्वितीयादच इति(७०७पृ०)सूत्रेण दत्तभागलोपात् देवकेति

(१५) क्षिपका ध्रुवका चरका सेवका करका चटका अवका लहका अलका कन्यका ध्रुवका एडका। आकृतिगणः।

(१६) ङीन इति शार्ङ्गरवादित्वात् (२५१पृ०)जातस्य ङीन इत्यर्थः।

(१७) अर्थगतं स्त्रीत्वमाकारे आरोप्य यकपूर्व्वकस्त्रीत्वबोधकाकारस्येति व्या-ख्यातं तेन सांकाश्यिकेत्यत्र न विकल्पस्तत्राकारस्य प्रत्ययावयवत्वेन स्त्रीत्वाबोधकत्वादिति भावः।

(१८) स्त्रीप्रत्ययेति किमिति। यकपूर्व्वाया इति स्त्रीलिङ्गनिर्द्देशः किमर्थ इति प्रश्नः।

**धद्धीति पक्षे धकारस्यापि द्वित्वम् । तदिह धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ॥ एकधमेकयम् । द्विधं द्वियम् । द्विधमेकयम् । एकधं द्वियम् । सुद्ध्युपास्यः । मद्ध्वरिः । धात्त्रंशः । लाकृतिः । नादिन्याक्रोशे पुत्रस्य ।८।४।४८। पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । आक्रोशे किम् । तत्त्वकथने द्विर्वचनं भवत्येव । पुत्त्रादिनी सर्पिणी ॥*तत्परे च॥ पुत्रपुत्रादिनी त्वमसि पापे ॥*वा हतजग्धयोः॥ पुत्त्रहती । पुत्रहती । पुत्त्रजग्धी पुत्रजग्धी । त्रिप्रभृतिषु शाकटायनस्य ।८।४।५०। त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् । इन्न्द्रः । इन्द्रः । राष्ट्ट्रम् । राष्ट्रम् । सर्वत्र शाकल्यस्य ।८।४।५१। द्वित्वं न । अर्कः ब्रह्मा । दीर्घादाचार्याणाम् ।८।४।५२। द्वित्वं न । दात्रम् । पात्रम् । अचो रहाभ्यां द्वे ।८।४।४६। अचः पराभ्यां**

---

क्षणत्वाद्वा' इति ॥—**चत्वारि रूपाणी**ति । इह धकारस्य द्वित्वे जश्त्वे च कृते 'पूर्वत्रासिद्धीयमद्वित्वे' इति जशोऽसिद्धत्वाभावेन लक्ष्यभेदात्पुनर्दकारे द्वित्वप्रवृत्तौ रूपाधिक्यमस्ति ॥ अत्र केचिदाहुः । 'उकारात्परस्य यरो द्वित्वे कृते पुनस्तूकारात्परस्य यरो द्वित्वं न भवति, निमित्तभेदाभावादित्याशयेनेदमुक्तमिति' । तेषां तुदादिगणे वव्रश्चेत्यत्र उरदत्वस्य 'अचः परस्मिन्–' इति स्थानिवद्भावात् 'न संप्रसारणे–' इति 'वस्योत्वं न' इति समाधानग्रन्थो मूलस्थो विरुध्येत, तन्निमित्तस्य लिटो भेदाभावादिति दिक् ॥ अन्ये तु धकारस्य जश्त्वे कृते 'पूर्वत्रासिद्धीयमद्वित्वे' इति जशोऽसिद्धत्वाभावाद्दकारे पुनर्द्वित्वं भवत्येव, व्यक्तिभेदात् । अत एव सय्ँय्यन्तेत्यादौ परसवर्णद्वित्वं भाष्यकृता उदाहृतम् । षट्सन्त इत्यत्र सकारद्वित्वसिद्धये 'पूर्वत्रासिद्धीयमद्वित्वे' इति मनोरमायामप्युक्तम् ॥ एवं यकारेऽपि द्वित्वस्य पुनः प्रवृत्तौ क्षत्यभावः । आष्टमिकद्विर्वचनस्य स्थाने द्विर्वचनरूपत्वात्स्थान्यादेशव्यक्त्योश्च भेदात् ॥ यत्तूक्तं मनोरमायाम् 'एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्तते' इति 'एकः पूर्वपरयोः' इति सूत्रे भाष्ये सिद्धान्तितत्वात्कथं पुनर्द्वित्वप्रवृत्तिः । अन्यथा द्वित्वानन्त्यापत्तेरित्यादि । तदनवधाननिबन्धनं, तत्राधानादिशास्त्रदृष्टान्तेन क्वचिदेवैकस्मिन्प्रयोगे गुणादिशास्त्रस्यानुष्ठापकत्वं स्यान्न प्रयोगान्तर इत्याशङ्क्य ज्योतिष्टोमादिशास्त्रदृष्टान्तेन प्रयोगान्तरेऽपि गुणादिशास्त्रप्रवृत्तेरेव सिद्धान्तितत्वात् । न तु सकृच्छास्त्रप्रवृत्तेः ॥ आनन्त्यापत्तिरपि प्रकृते न दोषः । सा हि अनन्तकार्यसहितप्रयोगस्याशक्यत्वात्तच्छास्त्रकर्तव्यस्य परिनिष्ठितप्रयोगस्याभावात्तच्छास्त्रस्याननुष्ठापकत्वापत्त्या दोषः । प्रकृते तु नास्ति, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्ति द्वित्वप्रयोगसहितस्य परिनिष्ठितत्वेन तेनैव शास्त्रस्य कृतार्थत्वात् । 'लिटि धातोः–' इति द्वित्वस्य तु नित्यत्वादानन्त्यापत्तेः क्वचिद्विश्रान्तौ कल्पनीयायां लाघवात्प्रथमप्रवृत्तावेव विश्रान्तिकल्पनादभ्यासग्रहणं प्रत्याख्यातम् । अत एव 'सर्वस्य द्वे' इत्यस्यापि पुनःपुनः प्रवृत्तिरित्याहुः ॥ नन्वत्र 'इकोऽसवर्णे–' इति शाकल्यमतेन रूपान्तरमस्त्विति चेन्मैवं, समासे तन्निषेधात् । न च नित्यसमास एव तन्निषेध इति वाच्यं । 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इति वार्तिकस्थनित्यग्रहणस्य भाष्ये प्रत्याख्यातत्वात् ॥ मनोरमायां तु जश्त्वेन दकारे कृते तस्य द्वित्वं नेत्याद्याशयेन सकारद्वित्वेनाष्टौ विसर्गद्वित्वेन षोडशेत्युक्तम् ॥—**द्विधमि**ति । यद्यपि धस्य जश्त्वेन दकारे धद्वयं नास्ति, तथापि भूतपूर्वगतिमाश्रित्यैवमुक्तम् ॥—**सुद्ध्युपास्य** इति । 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः ॥ नन्विह यणेव दुर्लभः, सुधीशब्दस्य ध्यायतेः संप्रसारणेन निष्पन्नत्वेन 'संप्रसारणाच्च' इति पूर्वरूपापत्तेरिति चेन्मैवम् । 'संप्रसारणपूर्वत्वे समानाङ्गग्रहणम्' इति वार्तिकोक्तेः । न चैवमपि 'न भूसुधियोः' इति यण्निषेधः शङ्क्यः । आङ्गत्वेन प्रत्यये परत एव तन्निषेधस्य प्रवृत्तेः । 'सुपि' इत्यनुवर्त्य सुपि परत एव यण्निषेधाच्च ॥—**धात्त्रंश** इति । अत्र रेफस्य द्वित्वं न, द्वित्वप्रकरणे 'रहाभ्याम्' इति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधनात् । सुद्ध्युपास्य इत्यादौ तु स्थानित्वेन निमित्तत्वमिको न बाध्यते 'तस्मादित्युत्तरस्य' 'वाग्घ्रृतुपित्रुषसः–' इत्यादिनिर्देशात् ज्ञापकात् । तकारस्य तु द्वित्वं भवत्येव । तच्च वेत्यतो रूपद्वयम् ॥—**नादिनि**–॥ स्त्रीष्वाक्रोशः प्रायेण प्रवर्तत इति स्त्रीलिङ्गमुदाहरति—**पुत्रादिनी**ति । इह 'सुप्यजातौ–' इति णिनिः ॥—**तत्परे चे**ति । आदिनि यः पुत्रशब्दस्तस्मिन् परेऽपि पुत्रशब्दस्य न द्वे स्त इत्यर्थः ॥—**वा हते**ति । द्वित्वस्य वैकल्पिकत्वे वार्तिकमिदं नारम्भणीयमित्येके ॥ अन्ये तु हतजग्धयोः परतः पुत्रशब्दस्यैव 'अनचि च' इति द्वित्वं नान्येषामित्यादि नियमसंभवात् तदर्थमारम्भणीयमेवेदमित्याहुः ॥—**पुत्रहती**ति । पुत्रो हतो यया सा । 'अस्वाङ्गपूर्वपदाद्वा' इति ङीष् । एवं पुत्रो जग्धो यया सा पुत्रजग्धी ॥—**अचो रहाभ्याम्**—॥ अचः

---

१ पुत्रशब्दस्येति—अवयवषष्ठीयम्, 'यरोऽनुनासिक'–इत्यतो यरोऽनुवर्तनात् । आदिनीति च प्राधान्याद्यर एव विशेषणम् । एतेन पुत्रादिनीत्यत्र उभयत आश्रयणेऽन्तादिवद्भावाभावात्पुत्रशब्दस्यादिनीशब्दपरत्वं दुर्लभमित्यपास्तं वेदितव्यम् । २ पुत्तहतीति—अत्र केचित्, 'पूर्वसूत्रे 'आदिनी' इति लुप्तसप्तमीकं स्त्रीलिङ्गम् इति पूर्वसूत्रसाहचर्यात् हतजग्धयोरपि स्त्रीत्वे एव एतत्सूत्रप्रवृत्तिरिति नियम्य, 'अनचि च' इति सूत्रेणैव द्वित्वस्य पाक्षिकत्वे लब्धे नेदं सूत्रं कर्तुमुचितमिति' परमतं निराकुर्वन्ति ।

क्विप् शुभं यातीति शुभंया अज्ञाता शुभंया शुभंयिका। धात्वन्तयकोस्तु (१९) नित्यम्। सुनयिका (२०)। सुपाकिका।

**भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्व्वाणामपि (२१)। ७।३।४७।**

स्वेन्यन्तं लुप्तषष्ठीकम्पदम्। एषामत इद्वा स्यात् तदन्तविधिनैव सिद्धे नञ् पूर्व्वाणामपीति स्पष्टार्थम्। भस्त्राग्रहणमुपसर्ज्जनार्थम्। अन्यस्य (२२) तूत्तरसूत्रेण सिद्धम्। एषा द्वा एतयोस्तु (२३) सपूर्व्वयोर्न्नेत्त्वम् अन्तर्व्वर्त्तिनीं (२४) विभक्ति-

(१९) धात्वन्तेति धात्वन्तयकारककारपूर्व्वस्याकारस्य इत्त्वं भवतीति शेषः।

(२०) सु शु नयो यस्याः सु शु पाको यस्याः इति विग्रहे शैषिके कपि केऽण इति ४०४इ स्त्रसे यकारस्य स्त्रीबाधकत्वादिष्यम्।

(२१) भस्त्रैषेति अत्र आतः स्थाने इत्यनुवर्त्तते तच्च योग्यत्वात् भस्त्राज्ञाऽजास्वानामेव विशेषणं प्रत्ययस्थादित्यतः (७११९०) अत इति अनुवर्त्तते अपिना नञ् भिन्नपूर्व्वाणामविद्यमानपूर्व्वाणाञ्च संग्रहः।

(२२) अन्यस्यानुपसर्ज्जनस्य। उत्तरसूत्रेणाभाषितपुंस्काच्चेत्यनेन (२१४९०)।

(२३) एतयोरिति। भस्त्राज्ञाऽजास्वानां सपूर्व्वाणामपीत्त्वं भवत्येव तत्र टापः कप्रत्ययात् परत्वात् सुप परत्वाभावेन असुप इति निषेधाप्रवृत्तेश्चेति बोध्यम। तच्च ०।

(२४) अन्तर्व्वर्त्तिनीमिति न, एतद्‌सु इति स्थिते अकचि कृते अकृते वा नञ्तत्पुरुषे त्यदाद्यत्वात् प्राक् सुपो लुक् ततः अकचि सामासिके वा कपि कृते पुनर्विधिप्राप्तात् सुपि त्यदाद्यत्वे टाप् स च समासात् पूर्व्वोत्पन्नः सुपः पर इति न तत्र प्रवृत्तिः। बहुव्रीहौ तु प्रियैतत्का प्रियैतकदित्येव रूपमिति तत्रापि न प्रवृत्तिरिति भावः।

माश्रित्याऽसुप इति निषेधात्। अनेषका (२५)। परमैषका। अद्बके। परमद्बके। स्वशब्दग्रहणं संज्ञोपसर्ज्जनार्थम्। इह हि आतःस्थाने इत्यनुवृत्तम् स्वशब्दस्यातो विशेषणम् नतु ङ्योरसम्भवात् (२६) नाप्यन्येषामव्यभिचारात्। स्वशब्दस्त्वनुपसर्ज्जनमात्मीयवाची अकजर्हः (२७) अर्थान्तरे तु न स्त्री। संज्ञोपसर्ज्जनीभूतस्तु कप्रत्ययान्तत्वाद्(२८)भवत्युदाहरणम्। एवञ्चात्मीयायाम् स्विका। परमस्विकेति नित्यमेवेत्वम् (२९)। निर्भस्त्रिका-निर्भस्त्रका। एषका एषिका। कृतषत्वनिर्द्देशान्नेह विकल्पः। एतिके। एतिकाः। अजका-अजिका। ज्ञका-ज्ञिका। द्विके-द्वके। निःस्विका—(३०) निःस्वका।

## अभाषितपुंस्काच्च। ७। ३। ४८।

(२५) अज्ञाता एषा एषका न एषका अनेषकेत्येव विग्रहः न तु अज्ञाता अनेषेति तथासति अनेतकदित्येव स्यादिति बोध्यम्।

(२६) असम्भवादिति ङ्यतदोरकारस्य आकारस्थानिकत्वाभावादिति भावः।

(२७) अकजर्ह इति तेन तदकारस्य नाकारस्थानिकत्वमिति नेत्त्वप्रसङ्ग इति भावः।

(२८) कप्रत्ययान्तत्वादिति तत्रान्तर्वर्त्तिन्या विभक्त्या न सुपः परत्वं के व्यवधानादिति भावः।

(२९) नित्यमेवेति अकचि कृतेऽकारस्याऽकारस्थानिकत्वाभावेनैतत्सूत्राप्रवृत्तेः प्रत्ययस्थादित्यादिना नित्येत्त्वसिद्धिरिति भावः।

(३०) निःस्विकेति स्वः स्या निष्क्रान्तेति विग्रहस्तेन स्वशब्दस्य संज्ञारूपत्वेप्युपसर्ज्जनत्वात् समासान्तह्रस्वे टापि अज्ञातादौ कप्रत्यये केऽणइ (१०४५०)ह्रस्वः ततः टाप्।

एतस्माद्विहितस्यातःस्थानेऽत इद्वा स्यात्। गङ्गिका-गङ्गका। बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम्। अज्ञाता अखट्वा अखट्विका। शैषिके कपि तु विकल्प (३१) एव।

## आद्राचार्य्याणाम्। ७। ३। ४८।

पूर्व्वसूत्रविषये आद्वा स्यात्। गङ्गाका। उक्तपुंस्कात्तु। शुभ्रिका।

## अनुपसर्ज्जनात्। ४। १। १४।

अधिकारोऽयम्। यूनस्तिः (२४२पृ०) इत्यभिव्याप्य अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति।

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः। ४। १। १५।

अनुपसर्ज्जनं यट्टिदादि(३२)तदन्तं यददन्तं प्रातिपदिकन्ततः

(३१) अविद्यमाना खट्वा यस्या इति विग्रहे शेषाद्विभाषेति(४२५पृ०)पाक्षिक कबभावे उपसर्ज्जनत्वे अखट्वशब्दादापि अज्ञातादौ के सुपो लुकि केऽण (४०८पृ०) इति ह्रस्वे पुनष्टापि अभाषितपुंस्काद्विहिताऽकारस्थानिकाका-राभावेन विकल्पस्य तत्राप्रवृत्तावत्र्गतो नित्यमित्वम्। शैषिककप्पक्षे तु न, खट्वा सु इत्यवस्थायां कपि सुपो लुकि प्रत्ययलक्षणेन अखट्वाभागस्य सुबन्तत्वेऽपि कबन्तस्यैव समाससंज्ञया प्रातिपदिकतया तद्घटकाऽखट्वाभा गस्याप्रातिपदिकत्वात् गोस्त्रियोरिति (३२२पृ०) न ह्रस्वः। केऽण इति ह्रस्वस्य न कपीति(४ ४पृ०) निषेधाच्च न ह्रस्वः। किन्तु आपोऽन्यतर-स्यामिति (४२६पृ०)ह्रस्वे अकारस्याऽकारस्थानिकत्वात् भाषितपुंस्कत्वा-भावेन विकल्प इति भावः।

(३२) टिदादयः प्रत्ययास्तेन तदन्तं गृह्यते तत्रानुवर्त्तमानस्य प्रातिपदिकस्य

स्त्रियां ङीप् स्यात् । कुरुचरी । उपसर्जनत्वान्नेह । बहुकुरुचरा । नदट् । नदी । वक्ष्यमाणेत्यत्र टित्त्वादुगित्त्वाच्च(३३) ङीप् प्राप्तः । यासुटो (३४) ङित्त्वेन लाश्रयमनुबन्धकार्य्यं नादेशानामिति ज्ञापनान्न भवति । श्नः(३५) शानचः शित्त्वेन क्वचिदनुबन्धकार्य्येऽप्यनल्विधाविति निषेधज्ञापनाद्वा । सौपर्णेयी (३६) । ऐन्द्री (३७) । औत्सी (३८) । ऊरुद्व-

---

विशेषणम् अजाद्यत इत्यतः (२०८पृ०) अत इत्यनुवर्त्तते इत्याह यष्टिदादीत्यादि । टित्त्वं प्रायः प्रत्ययगतम् क्वचित् प्रातिपदिकगतं प्रातिपदिकावयवप्रकृतिगतञ्च । तत्र प्रत्यये आरोप्य टिदादीत्युक्तम् तत्र नामप्रकृतिगतम् नदट् इति प्रत्ययगतम् कुरुचरोति धातु प्रकृतिगतं स्तनन्धयीति अत्र धेटधातोष्टकारस्यानन्यप्रयोजनतया ङीबर्थत्वमेव व्यवस्थापितमाकरे

(३३) टित्त्वादुगित्त्वाच्चेति लटश्चकारटकारेत्त्वात् तत्स्थानिकस्य शानचोऽपि स्थानिवत्त्वेन तदनुबन्धवत्त्वात् तत्र ङीप् स्यादित्याक्षेपः ।

(३४) समाधत्ते यासुटइति आशीर्लिङो ङित्त्वेन तदादेशयासुटोऽपि ङित्त्वे प्राप्तेऽपि यासुट् परस्मैपदेषूदात्तो ङिच्चेति (७०१६पृ०) पुनर्ङित्त्वविधानमेव आदेशानाम् स्थान्यनुबन्धकार्य्याभावे ज्ञापकमिति भावः ।

(३५) श्नाप्रत्ययस्य शित्त्वेन तदादेशस्य शानचः शित्त्वसिद्धावपि हलः श्नः शानज्झाविति (७०१६५पृ०) सूत्रे शानचः शित्करणमपि तज्ज्ञापकमित्याह श्न इत्यादि ।

(३६) सुपर्णीशब्दात् स्त्रीभ्यो ढगिति (५०६पृ०) ढकि आयनेयीत्यादिना (२०८पृ०) ढस्य एयादेशः ।

(३७) इन्द्रो देवतास्या इति वाक्ये सास्य देवतेत्यण् (५२०पृ०) इन्द्रस्येयमिति वा वाक्ये तस्येदमित्यण् (५८२पृ०)। अजादिस्त्वाह चर्थात् तद्धित एवाण् तेन कर्म्मण्यण् (७०२२३पृ०)इत्यणि कुम्भकारेत्येव भवतीति बोध्यम् ।

(३८) उत्से भवा औत्सी उत्सादिभ्योऽञ् (४६०पृ०) इत्यञि सिध्यति ।

यवी। ऊरुदघ्नी। ऊरुमात्री (३९)। पञ्चतयी (४०)। आक्षिकी (४१)। लावणिकी (४२)। यादृशी (४३)। इत्वरी (४४)। ताच्छीलिके णेऽपि (४५)। चौरी। नञ्स्नञ्-ईकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्॰। स्त्रैणी (४६)। पौंस्नी। शाक्तीकी (४७)। आढ्यङ्करणी (४८)। तरुणी। तलुनी।

## यञश्च। ४। १। १६।

यञन्तात् स्त्रियां ङीप् स्यात्। अकारलोपे कृते।

(३९) प्रमाणे द्वयसज्दघ्नञ्मात्रच इति (६६७पृ०) प्रत्ययाः अत्र मात्रशब्दादारभ्य अयचस्वकारेण मात्रजिति प्रत्याहारस्तेन उभयीत्यादिसिद्धिः शब्देन्दु०।

(४०) पञ्चावयवा यस्या इति वाक्ये संख्याया अवयवे तयबिति (६६८पृ०) तयप्।

(४१) अक्षैर्दीव्यतीति वाक्ये तेन दीव्यतीति (६४पृ०) ठकि ठस्येकादेशः।

(४२) लवणं पण्यमस्या इति वाक्ये तदस्य पण्यमित्यर्थे (६१४पृ०) लवणाट्ठञिति (६१४पृ०) ठञ्।

(४३) त्यदादिषु दृशोऽनालोचने कञ्चेति (१८४पृ०) कञि आ सर्वनाम्नः (१८५पृ०) इत्याकारादेशः।

(४४) इण्नशजिसर्तिभ्यः क्वरबिति (उ३७४पृ०) क्वरप्।

(४५) शील मित्यधिकारे (६१६पृ०) छत्रादिभ्यो ण इति (६१६पृ०) णप्रत्ययेऽपि अणकार्यं भवतीत्यर्थः तेन चुराशीलमस्या इति वाक्ये ताच्छीलिके णप्रत्यये चौरीति।

(४६) स्त्रीपुंसयोर्नञ्स्नञाविति (४८१पृ०) सूत्रेण स्त्रियाः नञ् पुंसः स्नञ्।

(४७) शक्तिः प्रहरणमस्या इति वाक्ये प्रहरणमिति (६१५पृ०) अधिकारे शक्तियष्ट्योरीकक् (६१६पृ०) इतीकक्।

(४८) आढ्यसुभगेत्यादिना ३। २। ५६। सूत्रेण ख्युन् युवोरनाकावौ (५२४पृ०) इत्यनादेशे अरुर्द्विषदित्यादिना (उ३२०पृ०) मुम्।

## हलस्तद्धितस्य। ६। ४। १५०।

हल उत्तरस्य तद्धितयकारस्योपधाभूतस्य(४९) लोपः स्यादीतिपरे। गार्गी। अनपत्याधिकारस्थान्न ङीप्। द्वीपे भवा द्वैप्या। अधिकारग्रहणान्नेह देवस्याऽपत्यन्दैव्या। देवाद्यञञाविति४८६पृ०हि यञ् प्राग्दीव्यतीयो न त्वपत्याधिकारपठितः।

## प्राचां ष्फस्तद्धितः। ४। १। १७।

यञन्तात् ष्फो वा स्यात् स्त्रियां सच तद्धितः।

## षः प्रत्ययस्य। १। ३। ६।

प्रत्ययस्यादिः (५०) षइत्स्यात्।

## आयनेयीनीयियः फढखछघाम्प्रत्ययादीनाम् ।७।१।२।

प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः। तद्धितान्तत्वात्प्रातिपदिकत्वम्। षित्त्वसामर्थ्यात् (५१)ष्फेणोक्तेऽपि स्त्रीत्वे षिद्गौरेति(२२७पृ०)वक्ष्यमाणो ङीष्। गार्ग्यायणी।

(४९) सूर्य्यगस्त्येत्यादितः(२२८पृ०) यउपधाया इति, यस्येति चेत्यत(१२९पृ०) ईतीति चानुवर्त्तते।

(५०) उपदेशेऽजनुनासिक इदित्यत (४पृ०) इदिति आदिर्ञिटुडव इत्यतः (७०४२पृ०) आदिरिति चानुवर्त्तते।

(५१) स्त्रियां यञ्विधानेन यञन्ताद्विहितष्फस्यापि स्त्रीत्वबोधकत्वात् उक्तार्थानामप्रयोग इत्यप्रयोगे प्राप्ते आह षित्त्वसामर्थ्यादिति द्विर्बद्धं सुबद्धं भवतीति न्यायेन तस्य प्रयोग इति भावः।

## सर्व्वत्र लोहितादिकतन्तेभ्यः। ४। १। १८।

लोहितादिभ्यः कतशब्दान्तेभ्यो (५२) यञन्तेभ्यो नित्यं ष्फः स्यात्। लौहित्यायनी। कात्यायनी।

## कौरव्यमाण्डूकाभ्याञ्च। ४। १। १९।

आभ्यां ष्फः स्यात्। क्रमेण टाब् ङीपोरपवादः (५३)। कुर्व्वादिभ्यो ण्यः (५१६सू॰) कौरव्यायनी। ढक् च मण्डूकात् (५०६सू॰) इत्यण्। माण्डूकायनी। आसुरेरुपसंख्यानम्*। आसुरायणी।

## वयसि प्रथमे। ४। १। २०।

प्रथम (५४) वयोवाचिनोऽदन्तात् स्त्रियां ङीप् स्यात्। कुमारी। वयस्यचरम इति वाच्यम्*। वधूटी। चिरण्टी। वधूटचिरण्टशब्दौ यौवनवाचिनौ। अतः किम्। शिशुः। कन्याया न। कन्यायाः कनीन चेति (५०५सू॰) निर्द्देशात्।

---

(५२) लोहित संशित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋष त्रप्ष तनु तरुक्ष तलुक्ष तण्ड वतण्ड कपि कत कुरु कत। गर्गाद्यन्तर्गणः (५०१सू॰) शकन्ध्वादित्वात् पररूपादेशात् कतन्तेति।

(५३) कौरव्यशब्दस्य योपधत्वाज्जातिलक्षणङीबभावे टाप् मण्डूकशब्दे जातित्वात् ङीप् प्राप्तस्तयोरपवादः।

(५४) प्राणिनां कालकृतावस्था वयः तस्मिन् प्रवृत्तिनिमित्तीभूतइत्यर्थ इत्याह वयोवाचिन इति आयुषस्त्रीन् चतुरो वा भागान् प्रकल्पयन्ति शास्त्रकृतः। यथा पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्त्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हतीत्यादौ भागत्रयस्य।

द्विगोः । ४ । १ । २१ ।

अदन्ताद्द्विगोर्ङीप् स्यात् । त्रिलोकी । अजादित्वात् त्रिफला (५५) । त्र्यनीका सेना ।

अपरिमाण (५६) विस्ताचितकम्बल्येभ्यो न तद्धितलुकि । ४ । १ । २२ ।

अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्ङीप् न स्यात्तद्धितलुकि सति । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक् । अध्यर्द्धेति (६१२४०) लुक् । द्वौ बिस्तौ पचतीति द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । परिमाणात्तु । द्व्याढकी । तद्धितलुकि किम् समाहारे पञ्चाश्वी ।

काण्डान्तात् क्षेत्रे । ४ । १ । २३ ।

क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे (५७) प्रमाणमस्याः । द्विकाण्डा क्षेत्रभक्तिः । प्रमाणे

---

आद्ये वयसि नाधीतं द्वितीये नार्ज्जितं धनम् । तृतीये न तपस्तप्तं चतुर्थे किं करिष्यतीत्यादौ भागचतुष्कस्य कल्पनम् । तत्र प्रथमभागएवेत्याह प्रथमे इति ।

(५५) अजादेराकृतिगणतया त्रिफलेत्यादौ टाप् ।

(५६) अपरिमाणेति परितः सर्व्वत आरोहतः परिणाहतश्च मीयते इति परिमाणम् तद्भिन्नमपरिमाणम् सुवर्णबिस्तो हेम्नोऽक्षे इति आचितं दशभाराः स्युरिति कम्बल्यमूर्णापलशतमिति बिस्तादीनामुक्तानामेऽपि पृथगुपादानमन्येषां निरासार्थम् ।

(५७) षोड़शहस्तप्रमाणो दण्डः काण्डम् ।

द्वयसजिति(११७८०)विहितस्य मात्रचः प्रमाणे लो द्विगोर्नित्य-मिति (५८) लुक्। प्रोते किं द्विकाण्डी रज्जुः।

### पुरुषात्प्रमाणेऽन्यतरस्याम्।४।१।२४।

प्रमाणे यः पुरुषस्तदन्ताद्द्विगोर्ङीप् वा स्यात्तद्धितलुकि। द्वौ पुरुषौ (५९) प्रमाणमस्याः। सा द्विपुरुषी द्विपुरुषा वा परिखा।

### ऊधसोऽनङ्।५।४।१३१।

ऊधोऽन्तस्य बहुव्रीहे (६०) रनङादेशः स्यात् स्त्रियाम्। इत्यनङि कृते डाबङ्गीब्निषेधेषु प्राप्तेषु (६१)।

### बहुव्रीहेरूधसो ङीष्।४।१।२५।

ऊधोऽन्ताद्बहुव्रीहेर्ङीप् स्यात् स्त्रियाम्। कुण्डोध्नी। स्त्रियाम् किम् कुण्डोधो धेनुकम्। इहानङपि न तद्विधौ स्त्रियामित्युपसंख्यानात्।

(५८) प्रमाणार्थे ये तद्धितास्ते द्विगुसमासात् लःलुप्ता नित्यं भवन्तीत्यर्थः।

(५९) प्रमाणसामानाधिकरण्यात् पुरुषशब्दः पञ्चारत्निमात्रपरिमाणपरः पञ्चारत्निः पुरुषइत्युक्तेः।

(६०) बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः (४१४९०) बहुव्रीहावित्यनुवर्त्य विभक्ति-विपरिणामेनान्वयः।

(६१) डाबुभाभ्यामिति (२१०९०) वैकल्पिको डाप् अनउपधालोपिनोऽन्य-तरस्यामिति (२१०९०) वैकल्पिको ङीप् ऋन्नेभ्य इत्यनेन (१७२९०) प्राप्तस्य ङीपः अनो बहुव्रीहेरिति (२१०९०)अनेन निषेधश्च प्राप्त इति विवेकः।

संख्याऽव्ययादेर्ङीप्।४।१।२६।

ङीषोऽपवादः। द्विघ्नी। अत्यूघ्नी बहुव्रीहेरित्येव ऊधोऽतिक्रान्ता अत्यूधाः।

दामहायनान्ताच्च।४।१।२७।

संख्यादे (६२) र्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप् स्यात्। दामान्ते डाप्प्रतिषेधयोः प्राप्तयोः हायनान्ते टापि प्राप्ते वचनम्। द्विदाम्नी। अव्ययग्रहणाननुवृत्तेरुद्दामा वडवेत्यत्र डाब्निषेधावपि पक्षे स्तः। द्विहायनी बाला। त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्*। वयोवाचकस्यैव हायनस्य ङीप् णत्वञ्चेष्यते। त्रिहायणी। चतुर्हायणी। वयसोऽन्यत्र। द्विहायना त्रिहायना चतुर्हायना शाला।

नित्यं संज्ञाच्छन्दसोः।४।१।२९।

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप् स्यात् संज्ञाच्छन्दसोः। सुराज्ञी नाम नगरी। अन्यत्र पूर्वेण विकल्प एव। वेदे। शतमूर्ध्नी।

केवलमामकभागधेयपापापरसमानाऽऽर्यकृतसुमङ्गलभेषजाच्च।४।१।३०।

(६१) संख्याव्ययादेरित्यत्र संख्याग्रहणस्य समासान्तर्गतत्वेऽपि स्वरितत्वप्रतिज्ञानाद् व्याख्यानाच्च एकदेशस्यापि अनुवृत्तिरित्याशयेनाह संख्यादेरिति।

रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः । नह्य्यस्ति । **हलो यमां यमि लोपः ।८।४।६४।** हलः परस्य यमो लोपः स्याद्वा यमि । इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यम् । लोपारम्भफलं तु आदित्यो देवता-ऽस्येत्यादित्यं हविरित्यादौ ॥ यमां यमीति यथासंख्यविज्ञानान्नेह । माहात्म्यम् । **एचोऽयवायावः ।६।१।७८।** एचः क्रमादय् अव् आय् आव् एते स्युरचि । **तस्य लोपः ।१।३।९।** तस्येतो लोपः स्यात् । इति यवयोर्लोपो न । उच्चारणसामर्थ्यात् । एवं चेत्संज्ञापीह न भवति । हरये । विष्णवे । नायकः । पावकः । **वान्तो यि प्रत्यये ।६।१।७९।** यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गोर्विकारो गव्यम् । गोपयसोर्यदिति यत् । नावा तार्यं नाव्यम् । नौवयोधर्मेत्यादिना यत् ॥ * **गोर्यूतौ छन्दस्युपसंख्यानम्** ॥ * **अध्वपरिमाणे च** ॥ गव्यूतिः । ऊति-यूतीत्यादिना यूतिशब्दो निपातितः ॥ वान्त इत्यत्र वकाराद्गोर्यूताविलत्र छकाराद्वा पूर्वभागे लोपोव्योर्वलीति लोपेन वकारः प्रश्लिष्यते । तेन श्रूयमाणवकारान्त आदेशः स्यात् । वकारो न लुप्यत इति यावत् । **धातोस्तन्निमित्तस्यैव ।६।१।८०।** यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य । लव्यम् । अवश्यलाव्यम् ।

---

किम् । हुते इत्यादौ नकारस्य माभूत् ॥—**हलो यमां यमि**—॥ हलः किम् । न्याय्यम् । इह यकारादीनां यकारादौ परे यथासंभवमुदाहरणान्युच्यन्ते । सुद्ध्यपास्यः, मध्वरिः । अत्र यणो मय इति मयः परस्य यस्य वस्य च द्वित्वे कृते अनेन लोपः । दुर्लभः । दुर्लुडुवे । कुर्मः । अत्र तु 'अचो रहाभ्याम्–' इति लस्य नस्य मस्य द्वित्वे च कृते लोपः । प्रत्य-ङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । अत्र 'अनचि च' इति ङमो द्वित्वे सत्यनेन ङकारणकारनकाराणां लोपः ॥—**लोपः स्याद्वेति** । 'झयो हः–' इति सूत्रादन्यतरस्यामित्यनुवर्तत इति भावः ॥—**लोपारम्भफलं त्विति** ।—**आदित्यो देवता** ॥ आदित्यशब्दात् 'दित्यदित्या–' इति ण्यप्रत्यये 'यस्येति च' इत्यकारलोपे अनेन च यलोपे आदित्यमित्येकयका-रकं रूपं सिध्यति नान्यथा इति भावः । न च 'आपत्यस्य च तद्धिते नाति' इत्यनेन यलोपे कृते एकयकारकं सिध्य-तीति वाच्यम् । अदितौ जात आदित्य इत्यादिविवक्षायां तस्याप्रवृत्तेः ॥—**यथासंख्यविज्ञानादिति** । उक्तोदाह-रणेषु लोपारम्भफलाभावाद्रेफस्य रेफे परत उदाहरणाभावाच्च यथासंख्यसूत्रमिह नोपन्यस्तम् ॥—**माहात्म्यमिति** । अत्र मलोपो नेत्यर्थः । 'हलो यरां सवर्णे लोपः' इति तु न सूत्रितम् । मूर्ध्नः शार्ङ्गमित्यादौ रेफात्परस्य लोपापत्तेः ॥—**एचः क्रमादिति** । नन्वत्रैव यथासंख्यसूत्रं वक्तुमुचितम् । प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमेऽपि लक्ष्यार्थ-बोधात्पूर्वभावि शक्यार्थज्ञानमादाय यथासंख्यत्वस्यावश्यं वक्तव्यत्वात् । अन्यथा एचां क्रमेणायवायावो न सिध्येरन् ॥ मैवम् । अन्तरतमत्वेनापि तत्सिद्धेः । तथाहि । एचः संध्यक्षराणि । ततश्च संवृताकारतालव्यस्य एकारस्य संवृताकारता-लव्योऽय्, संवृताकारोष्ठ्यस्य तादृश एव अव्, ऐचोश्चोत्तरभूयस्त्वादैकारे इकारः अध्यर्धमात्रः, अकारस्त्वर्धमात्र एव । एवमौकारेऽप्युकारोऽध्यर्धमात्रः, अकारस्त्वर्धमात्रः । एवं च विवृताकारतालव्यस्य ऐकारस्य विवृताकारतालव्य आय् । विवृ-ताकारौष्ठ्यस्य विवृताकारौष्ठ्य आव् ॥—**वान्तो यि प्रत्यये** ॥ यीति किम् । गोभ्याम् । नौभ्याम् ॥ प्रत्यये किम् । गोया-नम् ॥—**यकारादाविति** । 'येन विधिः–' इति सूत्रस्यापवादभूतेन 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्तिकेनाय-मर्थो लभ्यते ॥—**ओदौतोरिति** । पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादिति भावः ॥—**अध्वेति** । भाषार्थमिदम् । गोर्यूतौ लोकेऽपि वान्तादेशः स्यात्समुदायेन अध्वनः परिमाणं गम्यते चेदित्यर्थः । 'गव्यूतिः स्त्री क्रोश-युगम्' इत्यमरः ॥—**निपातित** इति । क्तिन्नन्तत्वेनेत्यर्थः । ननु गव्यं नाव्यमित्यत्र भत्वेनापदत्वाद्वलोपाभावेऽपि गव्यूति-रित्यत्र 'हलि सर्वेषाम्' इति, 'लोपः शाकल्यस्य' इति वा लोपः स्यादत आह—**वान्त इत्यत्रेति** ॥—**वकारो न लुप्यत** इति । एवं च 'हलि सर्वेषाम्' इति सूत्रे 'व्योः' इत्यनुवृत्तावपि वकारं परित्यज्य यस्य लोपः स्यादिति व्याख्यास्यमानं संगच्छते । एतच्च तत्रैव स्फुटीकरिष्यते ॥—**धातोस्तन्निमित्तस्यैव** ॥ पूर्वेण सिद्धे नियमार्थमिदम् । अत्र च पूर्व-सूत्रमनुवर्तते एच इति च । तच्छब्देन यादिप्रत्ययः परामृश्यते योग्यत्वान्न तु संनिहितोऽपि धातुः । नहि स्वस्यैवः स्वयं निमित्तं भवति । एवकारस्त्विष्टतोऽवधारणार्थः । अन्यथा हि तन्निमित्तस्यैचो यदि भवति तर्हि धातोरेवेति वि-परीतनियमः संभाव्येत । ततश्च बाभ्रव्य इत्यत्र न स्यात् । धातोस्त्वतन्निमित्तस्यापि स्यादोयत इत्यादौ, तदेत-त्सकलमभिप्रेत्याह—**यादौ प्रत्यये परे धातोरेचश्चेद् वान्तादेश** इत्यादि ॥—**लव्यमिति** । लुनातेरचो यत्, 'सार्वधातुकार्धधातुकयोः' इति गुणः ॥—**अवश्यलाव्यमिति** । 'ओरावश्यके' इति ण्यत् । 'मयूरव्यंसका-

---

१ एचोऽयवेति—'इचोऽचि यणयवायावः' इति सूत्रयितुमुचितम्, वान्तो यीत्यादौ तु न दोषः, तत्र वान्तौ यीति पाठेन ओकारौकारयोरेवावावौ स्यातामिति । २ लोपो व्योरिति—ननु अत्र सूत्रे भाष्यकृता वकारस्य प्रत्याख्यातत्वेन कथं वलोप इति चेद्, न, लौकिकोदाहरणाभावेन प्रत्याख्यानेऽपि शास्त्रीयेऽप्रत्याख्यातत्वात् । अत एव 'अतो ल्रान्तस्य' इति सूत्रे भाष्ये वकारो लुप्तनिर्दिष्ट इत्युक्तं संगच्छते ।

एभ्यो नवभ्यो नित्यं ङीप् स्यात् संज्ञाच्छन्दसोः। अथोत इन्द्रकेवलीर्विशः। मामकी। भागधेयी (६३)। पापी। अपरी। समानी। आर्यकृती। सुमङ्गली। भेषजी। अन्यत्र केवला इत्यादि। मामकग्रहणान्नियमार्थम् अणन्तत्वादेव सिद्धे; तेन लोकेऽसंज्ञायां मामिका।

## अन्तर्वत्पतिवतोर्नुक्। ४। १। ३२।

एतयोः स्त्रियां नुक् स्यात्। ऋन्नेभ्यो(१२७१०)ङीप्। गर्भिण्या-जीवद्भर्तृकायाश्च प्रकृतिभागौ निपात्येते। तत्राऽन्तरस्त्यस्या-ङ्गर्भ इति विग्रहे अन्तःशब्दस्याधिकरणशक्तिप्रधानतयाऽस्तिसा-मानाधिकरण्याभावादप्राप्तो मतुप् निपात्यते। पतिवत्नी-त्यत्र तु वत्वन्निपात्यते। अन्तर्वत्नी। पतिवत्नी। प्रत्युदाहरणं तु। अन्तरस्त्यस्यां शालायाङ्घटः। पतिमती पृथिवी।

## पत्युर्नो यज्ञसंयोगे। ४। १। ३३।

पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे। वशिष्ठस्य पत्नी तत्कर्तृक (६४) यज्ञस्य फलभोक्त्रीत्यर्थः दम्पत्योः सहाधि-कारात्।

## विभाषा सपूर्वस्य। ४। १। ३४।

(६३) भागशब्दात् स्वार्थिके धेयप्रत्यये क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इत्युक्तेः संज्ञाशब्दत्वाद्वा स्त्रीत्वम्।

(६४) सूत्रे संयोगपदं सम्बन्धपरम् स्त्रियाः सम्बन्धश्चात्र यज्ञफलभोक्तृत्व-मेवेत्याह तत्कर्तृकेति।

पतिशब्दान्तस्य सपूर्व्वस्य प्रातिपदिकस्य नो वा स्यात्। गृहस्य पतिः। गृहपतिः-गृहपत्नी। अनुपसर्ज्जनस्येतीहोक्तार्थमनुवृत्तमपि न पत्युर्विशेषणम् किन्तु तदन्तस्य तेन बहुव्रीहावपि दृढ़पत्नी-दृढपतिः। वृषलपत्नी वृषलपतिः। अथ वृषलस्य पत्नीति व्यस्ते (६५) कथमिति चेत् पत्नीव पत्नीत्युपचारात् (६६)। यद्वा आचारक्विबन्तात्कर्त्तरि क्विप्। अस्मिंश्च पक्षे। पत्नियौ। पत्नियः। इतीयङ्विषये विशेषः। गवाम्पतिः स्त्री।

## नित्यं सपत्न्यादिषु (६७)।४।१।३५।

पूर्वविकल्पापवादः। समानस्य सभावोऽपि निपात्यते समानः पतिर्य्यस्याः। सा सपत्नी। एकपत्नी वीरपत्नी।

(६५) व्यस्ते इति विभाषा सपूर्व्वस्येत्यत्र(२२४पृ०)यत्रसंयोग इति न संबध्यते इति वृषलपत्नीति सपूर्वस्येत्यनेन सिद्धिरिति तत्र शङ्कामकृत्वा वृषलत्वेन यत्रसम्बन्धाभावेन कथं वृषलस्य पत्नीति व्यस्तवाक्ये एव प्रश्नः कृतः।

(६६) उपचारात् विवाहितस्त्रीत्वरूपसाधारणगुणयोगात्।

(६७) समान एकवीर पिण्ड श्व भ्रातृ भद्र पुत्र इत्येते समानादयस्तत्र समानस्य सभावनिपातनाय समानादिपूर्व्वस्येत्यनुक्त्वा सपत्न्यादिष्वित्युक्तम् सपत्नीशब्दस्य समानस्वामिकस्त्रीविशेषस्यैव बोधकतया समानस्वामिकदासीभूम्यादौ न प्रयोगः किन्तु समानपतिरित्येव प्रयोगः। समानत्वस्य सादृश्यगर्भकयता भेदघटितत्वेऽपि प्रकृते एकार्थतापरता पत्नीभेदकृतसम्बन्धभेदमादाय वा पत्नी भेद इति सादृश्यगर्भकत्वेऽपि न क्षतिः।

पूतक्रतोरै च। ४। १। ३६

अस्य स्त्रियामै आदेशो ङीप् च। इयमिसूत्री पुंयोग एवे-ष्यते। पूतक्रतोः स्त्री पूतक्रतायी। यया तु क्रतवः पूताः पूतक्रतुरेव सा।

वृषाकप्यग्निकुसितकुसिदानामुदात्तः। ४। १। ३७।

एषामुदात्त ऐ आदेशः स्यात् ङीप् च। वृषाकपेः स्त्री वृषा-कपायी। हरविष्णू वृषाकपी इत्यमरः। वृषाकपायी श्री-गौर्याविति च। अग्नायी। कुसितायी। कुसिदायी। कु-सिदशब्दो ह्रस्वमध्यो नतु दीर्घमध्यः।

मनोरौ वा। ४। १। ३८।

मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा। ताभ्यां सन्नि-योगशिष्टो(६८) ङीप् च। मनोः स्त्री मनावी-मनायी-मनुः।

वर्णादनुदात्तात्तोपधात्तो नः। ४। १। ३९।

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिप-दिकाद्वा ङीप् स्यात्तकारस्य नकारादेशश्च। एनी-एता। रोहिता-रोहिणी। वर्णानां तणतिनितन्तानामिति(६९) फिट्

(६८) सन्नियोगशिष्टत्वेति तेन ऐकारौकाराभावे ङीप् निवर्त्तते इत्याशयः।

(६९) वर्णानामिति (उः ५। ५। ५४। १०सू०) अतः योषः णि तःप्रभिः पूर्वादिति तणतिनितान्तानां क्रमेणोदाहरणानि।

सूत्रेणाद्युदात्तः(७०)। तेरण्या च शबल्येति टत्त्वम् । त्रीण्ये-तान्यस्याः(७१) इति बहुव्रीहिः । अनुदात्तात् किम् श्वेता । घृतादीनाञ्च (७५५४पृ०२२सू०) इत्यन्तोदात्तोऽयम् । अतइत्येव । शितिः स्त्री । पिशङ्गादुपसंख्यानम्* । पिशङ्गी-पिशङ्गा-असित-पलितयोर्न* । असिता पलिता । छन्दसि क्रमेके* (७२) । असिक्नी । पलिक्नी । अवदातशब्दस्तु न वर्णवाची किन्तु विशुद्धवाची तेन अवदाता इत्येव ।

## अन्यतो ङीष् । ४ । १ । ४० ।

तोपधभिन्नाद् (७३) वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात् स्त्रियां ङीष् स्यात् । कल्माषी । सारङ्गी । लघावन्ते(७४)

---

(७०) आद्युदात्तइति अनुदात्तं पदमेकवर्ज्जमिति (५२८पृ०) शेषनिघातेना-न्तानुदात्तत्वात् सूत्रप्रवृत्तिरिति भावः ।

(७१) त्रीणीति एतानि कर्बुराणि अवयवानीत्यर्थस्तेन शुक्लादीनां गुण-वाचकत्वेन पुंस्त्वेऽपि न क्षतिः । तत्रैतशब्दस्योपसर्ज्जनत्वेऽपि न त-दन्तमुपसर्ज्जनमिति द्रष्टव्यम् पूर्व्वपदात् संज्ञायामिति (४१५पृ०)णत्वम् त्रिषु स्थानेषु एतेति विग्रहस्तु न्याय्यस्तत्रापि णत्वमिति बोध्यम् ।

(७२) उत्सर्गसमानदेशा अपवादा भवन्तीति न्यायेन वर्णादनुदात्तादिति सूत्रेण प्राप्तम् असितपलितयोर्ङीपं नकारञ्च बाधित्वा क्नादेशविधा-नात् नादेशसमानविषय एव क्नादेश इति लाभात् ङीबपि प्रवर्त्तते इत्याशयेनाह असिक्नी पलिक्नीति ।

(७३) सन्निधानात् तोपधस्यैव प्रतियोगितयान्वयादाह तोपधभिन्नादिति । ङित्त्वं स्वरविशेषार्थम् ।

(७४) लघौ एकस्मिन् अन्ते द्वयोश्च लघ्वोः परतो बहुषोबह्वच्कस्य गुरु रुदात्तः स्यादित्यर्थः असिति अचः संज्ञेति प्राञ्चः ।

द्वयोश्च बह्वचो गुरुरिति (उ५५४०८पृ०) मध्योदात्तावेतौ । अनुदात्तान्तात् किम् कृष्णा । कपिला (७५) ।

## षिद्गौरादिभ्यश्च (७६) । ४ । १ । ४१ ।

षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् । नर्त्तकी । गौरी । अन-

(७५) कृष्णशब्दस्य द्व्यच्कत्वेन बह्वच्कत्वाभावात् कपिलशब्दस्य बह्वच्कत्वेऽपि गुरुयुक्तत्वाभावात् लघावन्ते इत्यस्याप्रसक्तेरुत्सर्गतः प्रातिपदिकस्वरेणान्तोदात्ततेति भावः ।

(७६) गौरशब्दस्य तोपधभिन्नवर्णवाचित्वेऽपि प्रातिपदिकस्वरेणोत्सर्गतः कृष्णेतिवदन्तोदात्ततया अन्यतो ङीषित्यस्याप्रसक्तेर्गणे पाठः । गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य पुट तूण द्रुण द्रोण हरिण काकण पटर उणक आमलक कुवल बिम्ब बदर कर्कर तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल पाण्डश आढक आनन्द आश्वत्थ सृपाट आपच्चिक शष्कुल सूर्म्म सूर्प सूच यूष यूथ सूप मेथ बल्लक धातक सल्लक मालक मालत साल्वक वेतस वृस अतस उभय भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुही अनड्वाही एषणा (करणे) देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि गोतम पारक अयःस्थूण भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन पोतन पातन पानठ आस्तरण अधिकरण अधिकार आग्रहायणी प्रत्यवरोहिणी सेचन सुमङ्गलात् (संज्ञायाम्) अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड षण्ड ऊर्द गुर्द शम सूद आर्द ह्रद पाण्ड भाण्ड लोहाण्ड कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् सोम सौधर्म रोहिणी (नक्षत्रे) रेवती (नक्षत्रे) विकल निष्कल पुष्कल कटात् (श्रोणिवचने) । पिप्पल्यादयश्च (२२८पृ०) गौरादिः ।

डुही। अनडुाही। पिप्पल्यादयश्च (७७) *। आकृतिगणोऽयम्।

**सूर्य्यतिष्यागस्त्यमत्स्यानां यउपधायाः। ६। ४। १४९।**

अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्य्याद्यवयवः। मत्स्यस्य ङ्याम्*। सूर्य्यागस्त्ययोश्छे च ङ्याञ्च*। तिष्यपुष्ययोर्नक्षत्राऽणि यलोप इति वाच्यम्*। मत्सी। मातरि षिच्चेति (५३२पृ०) षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष्। दंष्ट्रा।

**जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणा(७८)स्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु। ४। १। ४२।**

एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद्वृत्त्यादिष्वर्थेषु ङीष् स्यात्। जानपदी वृत्तिश्चेत्। अन्या तु जानपदा। उत्सादित्वात्(४९०पृ०)अञन्तत्वेन टिड्ढेति (२१५पृ०) ङीप्याद्युदात्तः। कुण्डी अमत्रञ्चेत्। कुण्डान्या। कुडिदाहे गुरोश्च हलः (७०४५१पृ०) इत्यप्रत्ययः। यस्तु अमृते जारजः कुण्ड

(७७) पिप्पली हरितकी कोशातकी शमी वरी शरी पृथिवी क्रोष्ट्री मातामही पितामही। आकृतिगणः।

(७८) अनुच्छेदा जीविका वृत्तिः। आवपनम् आ उप्यते धान्यमस्मिन् धान्यस्थापानपात्रम्। श्राणा पक्का।

इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव। अमत्रे हि स्त्रीविषयत्वाभावादप्राप्तो ङीष् विधीयते नतु नियम्यते। गोणी आवपनश्चेत्। गोणान्या। स्थली अकृत्रिमा चेत्। स्थलान्या। भाजी श्राणा चेत्। भाजान्या। नागी स्थूला चेत्। नागान्या। गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम्। सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम्। काली वर्णश्चेत् (७९)। कालान्या (८०)। नीली अनाच्छादनश्चेत्। नीलान्या। नील्या रक्ता शाटीत्यर्थः। नील्या अन्वक्तव्यः* (५,२४ष्ट०) इत्यन्। अनाच्छादनेऽपि न सर्वत्र किन्तु। नीलादोषधौ*। नीली। प्राणिनि च*। नीली गौः। संज्ञायां वा*। नीली-नीला। कुशी अयोविकारश्चेत्। कुशान्या। कामुकी मैथुनेच्छा (८१) चेत्। कामुकान्या (८२)। कबरी केशानां सन्निवेशविशेषः। कबरान्या चित्रेत्यर्थः।

## शोणात्प्राचाम्। ४। १। ४३।

शोणी शोणा।

## वोतो गुणवचनात् (८३)। ४। १। ४४।

(७९) वर्णश्चेत् वर्णविशिष्टा चेदित्यर्थः गुणिनिष्ठास्त तद्वतीत्यनयोक्तं वर्णविशिष्टपरता।

(८०) कालान्या क्रौर्यगुणयुक्तेत्यर्थः।

(८१) मैथुनेच्छा तद्विशिष्टेत्यर्थः अर्शआदित्वादच्प्रत्ययेन सिद्धमिति भावः।

(८२) कामुकान्या मैथुनेच्छातिरिक्ताभिलाषवतीत्यर्थः।

(८३) गुणवचनादिति। सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेय-

उदन्ताद्गुणवाचिनो वा ङीष् स्यात्। मृद्वी—मृदुः। उत किम्। शुचिः। गुणेति किम्। आखुः। खरुसंयोगोपधान्न *। खरुः पतिंवरा (८४) कन्या। पाण्डुः।

## बह्वादिभ्यश्च (८५)। ४। १। ४५।

एभ्यो वा ङीष् स्यात्। बह्वी-बहुः। कृदिकारादक्तिनः *। रात्रिः रात्री। सर्वतोऽक्तिन्नर्थादित्येके *। शकटी शकटिः।

---

चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुण इत्युक्त गुणवचनादिति भाष्यमतमित्येकदेशिनः। भाष्यकृता तु एतस्याव्याख्यानात् बहुविशेषणवैयर्थ्याच्चैकदेशिवचनेन न गुणवाचित्वनिर्णयः किन्तु समासकृत्तद्धितान्तसर्वनामजातिसंख्यासंज्ञातिरिक्तशब्दो गुणवचन इति भाष्यप्रदीपोद्योतोक्त एव गुणवचनोऽत्र चाहुः तत्राप्ययं विशेषः वैशेषिकप्रसिद्धगुणवाचिनां विशेषणतया गुणबोधकानामेव ग्रहणं तथाच शुक्लादिशब्दानां गुणवचनानामेव गुणिपरत्वे एव गुणवचनता न तु रूपादिपदानां तेषां गुणवचनत्वेऽपि गुणिवचनत्वाभावात् शब्दस्वाभाव्यादेव तत्र निर्णयः।

(८४) पतिंवरा पतिलाभाय उत्कण्ठितेत्यर्थः।

(८५) बहुशब्दस्य संख्यावाचितया निरुक्तगुणवचनत्वाभावेन बह्वादिभ्य इति पृथगुक्तिः।

बहु पद्धति अञ्चति अङ्कति अंहति शकटि शक्ति (शस्त्रे) शारि वारि राति राधि शाधि अह्नि कपि यष्टि मुनि इतः (प्राण्यङ्गात्) चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज चन्द्रभागा (नद्याम्) कल्याण उदार पुराण अहन् क्रोड़ नख खुर शिखा बाल शफ गुद। आकृतिगणोयम् तेन भग गल राग इत्यादिग्रहणम्।

अक्तिन्नर्थात् किम्। अजननिः। क्तिन्नन्तत्वादप्राप्ते विध्यर्थ-म्पद्धतिशब्दो गणे पठ्यते। हिमकाषिहतिषु चेति (४।६।९४) पद्भावः।

## पुंयोगादाख्यायाम्। ४। १। ४८।

या पुमाख्या (८६)पुंयोगात् स्त्रियां वर्त्तते ततो ङीप् स्यात्। गोपस्य स्त्री गोपी। पालकान्तान्न॰। गोपालिका। अश्व-पालिका। सूर्य्याद्देवतायाञ्चाप्वाच्यः॰। सूर्य्यस्य स्त्री देवता सूर्य्या। देवतायां किम्। सूरी कुन्ती मानुषीयम्।

## इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्य्याणामानुक्। ४। १। ४९।

एषामानुगागमः स्यात् ङीप् च। इन्द्रादीनां पञ्चानाम्मातुला-चार्य्ययोश्च पुंयोग एवेष्यते। तत्र ङीपि सिद्धे आनुगागम-मात्रं विधीयते। इतरेषाम्नुणामुभयम्। इन्द्राणी। हिमारण्ययोर्म्महत्त्वे॰। महद्धिमम् हिमानी अरण्यानी। यवाद्दोषे॰। दुष्टो यवो यवानी। यवनाल्लिप्याम्॰। यव-नानां लिपिर्यवनानी। मातुलोपाध्याययोरानुक् वा॰। मातुलानी मातुली। उपाध्यायानी उपाध्यायी। या तु स्वयमेवाध्यापिका तत्र वा ङीप् वाच्यः। उपाध्यायी उपा-ध्याया। आचार्य्यादणत्वञ्च॰। आचार्य्यस्य स्त्री आचा-

---

(८६) पुमाख्येति पुंस्येव यः प्रसिद्धः शब्दः तस्य पुंयोगात् पुंसि प्रवृत्ति निमित्तयोगाद्धेतोः स्त्रियां वर्त्तमानत्वम् न्याय्यं पुत्रतयज्ञफलभोक्तृ-त्ववत् तद्वाचकशब्दभाक्त्वौचित्यादिति भावः।

र्थ्यानी। पुंयोग इत्येव आचार्य्या स्वयं व्याख्यात्री। अर्य्यक्षत्रियाभ्यां वा *। स्वार्थे। अर्य्याणी अर्य्या स्वामिनी वैश्या वेत्यर्थः। क्षत्रियाणी क्षत्रिया। पुंयोगे तु। अर्य्यी क्षत्रियी। कथं ब्रह्माणीति (८७) ब्रह्माणमानयति जीवयतीति कर्म्मण्यण् (उ२२३४०)।

## क्रीतात्करणपूर्व्वात् (८८)। ४। १। ५०।

क्रीतान्ताददन्तात्करणादेः स्त्रियां ङीष् स्यात्। वस्त्रक्रीती। क्वचिन्न। धनक्रीता।

## क्तादल्पाख्यायाम् (८९)। ४। १। ५१।

करणादेः क्तान्ताददन्तात् स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये। अभ्रलिप्ती द्यौः। अल्पाख्यायां किम् चन्दनलिप्ताङ्गना।

## बहुव्रीहेश्चान्तोदात्तात्। ४। १। ५२।

बहुव्रीहेः क्तान्तादन्तोदात्त'ददन्तात् स्त्रियां ङीष् स्यात्। जातिपूर्व्वादिति वक्तव्यम्*। तेन बहुनञ्सुकालसुखा

(८७) ब्रह्माणीवत् इन्द्राण्यादीनामपि सिद्धिसम्भवेऽपि सूत्रे इन्द्रादिग्रहणं पुंयोगे इन्द्रीत्यादिवारणाय।

(८८) करणादित्यनेनैव सिद्धे पूर्व्वग्रहणेन गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरित्यस्या अनित्यता ज्ञाप्यते तेन धनेन क्रीतेत्यादौ धनक्रीतेत्यादिसिद्धिरेतदाह क्वचिन्नेति।

(८९) करणपूर्व्वादित्यनुवर्त्तते समुदायद्योत्यमल्पत्वं तच्च क्रियागतं करणगतं वा।

तन्निमित्तस्यैवेति किम् । ओयते । औयत । **क्षय्यजय्यौ शक्यार्थे ।६।१।८१।** यान्तादेशनिपातनार्थमिदम् । क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । शक्यार्थे किम् । क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः । **क्रय्यस्तदर्थे । ६।१।८२।** तस्मै प्रकृत्यर्थायेदं तदर्थम् । केतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थः । **लोपः शाकल्यस्य ।८।३।१९।** अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे ॥ पूर्वत्रासिद्धमिति लोपशास्त्रस्यासिद्धत्वान्न स्वरसंधिः । हर एहि । हरयेहि । विष्ण इह । विष्णविह । श्रिया उद्यतः । श्रियायुद्यतः । गुरा उत्कः गुरावुत्कः ॥ कानि सन्ति कौ स्त इत्यत्रास्तेरल्लोपस्य स्थानिवत्त्वेन यणावादेशौ प्राप्तौ नपदान्तेतिसूत्रेण पदान्तविधौ तन्निषेधान्न स्तः । **एकः पूर्वपरयोः ।६।१।८४।** इत्यधिकृत्य । **आद्गुणः ।६।१।८७।** अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्संहितायाम् । उपेन्द्रः । रमेशः । गङ्गोदकम् । **उरण् रपरः । १।१।५१।** ऋ इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । तत्रान्तरतम्यात्कृष्णर्द्धिरित्यत्राऽर् । तवल्कार इत्यत्राऽल् । अचो रहाभ्यामिति पक्षे द्वित्वम् । **झरो झरि सवर्णे ।८।४।६५।** हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि । द्वित्वाभावे लोपे सत्येकधम् । असति लोपे द्वित्वलोपयोर्वा द्विधम् । सति द्वित्वे लोपे चासति त्रिधम् । कृष्णर्धिः । कृष्णर्द्धिः । कृष्णर्द्ध्धिः ॥ यण इति पञ्चमी मय इति षष्ठीति पक्षे ककारस्य द्वित्वम् । लस्य त्वनचि चेति । तेन तवल्कार इत्यत्र रूपचतुष्टयम् ॥ द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि । तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ॥ **वृद्धिरेचि ।६।१।८८।** आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

---

दयश्च' इति समासः । 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः ॥ लव्यमित्यादौ पूर्वसूत्रेणैव सिद्धे नियमसूत्रमिदं व्यर्थमित्याक्षिपति—**तन्निमित्तस्यैवेति किमिति** ॥ एकदेशाक्षेपेऽपि सूत्रस्यैवायमाक्षेपः पर्यवसन्नः ॥—**ओयत** इति । आङ्पूर्वाद् वेञः कर्मणि लट्, यगात्मनेपदे, यजादित्वात्संप्रसारणम् । पूर्वरूपम् । 'अकृत' इति दीर्घः । आद्गुणस्य परादिवद्भावेन धातोरेचत्वेऽपि यादिप्रत्ययनिमित्तकत्वं नास्तीति भावः ॥—**औयत** इति । वेञः कर्मणि लङ्, यगादि प्राग्वत् । 'आडजादीनाम्' 'आटश्च' इति वृद्धिः ॥—**क्षय्यमिति** ॥ 'शकि लिङ् च' इति चात्कृत्याः ॥—**क्षेयमिति** । 'अर्हे कृत्यतृचश्च' इति यत् ॥—**प्रकृत्यर्थायेति** । प्रकृत्यर्थो द्रव्यविनिमयः ॥—**लोपः शाकल्यस्य** ॥ अवर्णपूर्वयोः किम् । दध्यत्र । मध्वत्र ॥—**अशि पर** इति । एतच्च 'भोभगो–' इति सूत्रादनुवर्तते ॥ अशि किम् । वृक्षव् करोति । अत्र लोपो मा भूत् । न चात्र टिलोपस्य स्थानिवद्भावेन निर्वाहः । 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यभ्युपगमात् । न चैवमपि 'हलि सर्वेषाम्' इति नित्यं लोपः स्यादिति शङ्क्यम् । तत्र 'अशि' इत्यनुवर्त्य अशा हलो विशेषणात् । 'लोपो व्योर्वलि' इति लोपस्तु न शङ्कनीय एव । स्थानिवत्त्वान्नेति 'न पदान्त–' इति सूत्र एवोक्तत्वात् ॥—**हर एहीति** । 'ओमाङोश्च' इति पररूपं प्राप्तम् ॥—**तन्निषेधादिति** । न च स्थानिवत्त्वनिषेधेऽपि 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यल्लोपस्यासिद्धत्वाद्यणावादेशौ स्त एवेति वाच्यम् । पदद्वयाश्रयत्वेन तयोरेव बहिरङ्गत्वात् । 'नाजानन्तर्ये' इति निषेधाच्च ॥—**उरण् रपरः** ॥—अनुवादे 'षष्ठी स्थानेयोगा' इति परिभाषाया अनुपस्थितावपि स्थानेग्रहणं ततोऽनुवर्तत इत्याशयेनाह—**तत्स्थाने योऽणिति** । 'स्थानेऽन्तरतमः' इत्यतोऽपि स्थानेग्रहणमिहानुवर्तते । तेन प्रसङ्गावस्थायामेवाण् रपरो भवति । तदेतदाचष्टे—**रपरः सन्नेव प्रवर्तत** इति ॥ उः किम् । 'ईयति' । गेयम्, देयम् ॥ अण् किम् । रीङादीनां रपरत्वं मा भूत् । 'रीङृतः' । मात्रीयति । रिङ् क्रियते ॥—**आन्तरतम्यादिति** । रेफशिरस्कस्य अरित्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः ॥—**पक्षे द्वित्वमिति** । ऋधेर्धस्येति भावः ॥—**झरो झरि**—॥ 'हलो यमाम्–' इत्यतो हल इत्यनुवर्तते तदाह—**हलः परस्येति** ॥ हलः किम् । प्रत्तम् ॥ झर इति किम् । शार्ङ्गम् ॥ झरीति किम् । प्रियपञ्चाम् । अल्लोपोऽत्र पूर्वत्रासिद्धे स्थानिवन्न भवतीति चकारस्य ञकारे परे लोपः स्यात् ॥ सवर्ण इति किम् । तर्प्ता । सवर्णग्रहणसामर्थ्याद्यथासंख्यमत्र न भवति । तेन शिण्ढीत्यत्र डस्य विकल्पेन लोपः सिध्यतीति दिक् ॥—**लोपो वेति** । 'झयो हः–' इति सूत्रादन्यतरस्यामित्यनुवृत्तेः ॥—**असति लोप** इति । द्वित्वाभावे इत्यनुषज्यते । 'द्वित्वलोपयोरसतोरित्यर्थः ॥—**त्रिधमिति** । 'यणो मयः' इति लक्षणान्तरेण पुनर्द्वित्वे चतुर्धमिति बोध्यम् ॥—**वृद्धिरेचि** ॥ पूर्वसूत्रादादित्यनुवर्तते तदाह—**आदेचीति** ॥

---

१ क्षय्यजय्यौ इति—क्षि क्षये, जि जये इत्यनयोरेव ग्रहणम्, न तु क्षीष् हिंसायां, क्षैजै क्षये इत्यनयोः, व्याख्यानात् । २ प्रकृत्यर्थायेति—तदर्थग्रहणसामर्थ्यात्तच्छब्देन गुणीभूतस्यापि प्रकृत्यर्थस्य ग्रहणम्, नतु प्राधान्यात्प्रत्ययार्थस्य । ३ अवर्णपूर्वयोरिति—ओकारांशत्यागे 'ओतो गार्ग्यस्य' इत्येतस्य बाधकत्वं बीजम् इत्यवधेयम् । ४ कानि सन्तीति—इदं च वाक्यसंस्कारपक्षे । ५ एक इति—यद्यपि 'आद्गुण' इत्यादौ गुणस्य विधेयत्वेन एकवचनस्य विवक्षितत्वात् पूर्वपरयोरेक एव आदेशो भवेत्, तथापि न्यायसिद्धस्यार्थस्य सुखावगमार्थं भगवता एकग्रहणं कृतमित्यनुगन्तव्यम् । ६ रपर इति—अवयववाचिना परशब्देन षष्ठ्यर्थे बहुव्रीहिः, नतु व्यवस्थावाचिना पञ्चम्यर्थे, तथा सति वम्रे इत्यादौ हलादिःशेषानापत्तिः । ७ योऽणिति—अत्राण् पूर्वेणैव, न परेण, प्रशास्तॄणामिति निर्देशात् ।

दिपूर्व्वान्न। ऊरुभिन्नो (८०)। नेह बहुकृता। जातान्ताव्न। दन्तजाता। पाणिगृहीती भार्य्यायाम्। पाणिगृहीताऽन्या।

## अस्वाङ्गपूर्व्वपदाद्वा (८१)। ४। १। ५३।

पूर्व्वेण नित्ये प्राप्ते विकल्पोऽयम्। सुरापीती-सुरापीता। अन्तोदात्तात् किम्। वस्त्रच्छन्ना। अनाच्छादनात् (७६ सू०) इत्युदात्तनिषेधः (८२)। अतएव पूर्व्वेणापि न ङीष्।

## स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधात्। ४। १। ५४।

असंयोगोपधमुपसर्ज्जनं यत् स्वाङ्गन्तदन्तादन्तात्प्रातिपदिकाद्वा ङीष्। केशानतिक्रान्ता अतिकेशी-अतिकेशा (८३)। चन्द्रमुखी-चन्द्रमुखा। संयोगोपधात्तु सुगुल्फा। उपस-

(८०) ऊरुभिन्नोत्यत्र जातिकालसुखादिभ्यः परा निष्ठेति (४२८ सू०) परनिपातः। जातिकालसुखादिभ्यो नाच्छादनात् क्त इति (७६ सू०) अन्तोदात्तता।

(८१) न स्वाङ्गमस्वाङ्गं पूर्व्वञ्च तत् पदञ्चेति पुनरस्वाङ्गेन कर्म्मधारयः। तथा चास्वाङ्गभूतात् पूर्व्वपदात् परं यत् क्तान्तं तदन्तबहुव्रीहेरित्यर्थः अस्वाङ्गपूर्व्वपदादित्यस्य जातिपूर्व्वादित्यर्थपरत्वं वार्त्तिके उक्तमन्यथा बहुलनञ्सुकालसुखादिपूर्व्वकक्तान्तस्य अस्वाङ्गपूर्व्वकतया तत्र विकल्पेन ङीषापत्तेः।

(८२) निषेध इति अनाच्छादनेऽनेनेति आच्छादनं वस्त्रादि तत्पूर्व्वकत्वादित्यादि।

(८३) बहुव्रीहेरुपसर्ज्जनत्वेनानुवृत्त्यैव तल्लाभे पुनरुपसर्ज्जनग्रहणं तत्पुरुषादिसंग्रहार्थमित्याशयेनोदाहरति अतिकेशीति।

र्जनात् किम् शिखा (९४)। [शोभना शिखा। सुशिखा] स्वाङ्गान्शिखा।

अद्रवम्मूर्त्तिमत्स्वाङ्गं (९५) प्राणिस्थमविकारजम्।

सुखेदा द्रवत्वात्। सुज्ञाना अमूर्त्तत्वात्। सुमुखा शाला अप्राणिस्थत्वात्। सुशोफा विकारजत्वात्।

अतत्स्थन्तत्र दृष्टञ्च (९६)—

सुकेशी सुकेशा वा रथ्या अप्राणिस्थस्याऽपि प्राणिनि दृष्टत्वात्।

तेन (९७) चेत्तत्तथा युतम्।

सुस्तनी सुस्तना वा प्रतिमा प्राणिवत्प्राणिसदृशे स्थितत्वात्।

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च। ४। १। ५५।

(९४) शिखेत्येव प्रत्युदाहरणं शोभनेत्यादि सुशिखान्तं प्रक्षिप्तम् विशिष्टेऽदन्तत्वाभावेनैवाप्राप्तेः। शब्देन्दु०।

(९५) स्वाङ्गशब्दस्यावयववाचित्वे सुमुखी शालेति स्यात् द्वाररूपमुखस्य शालाङ्गत्वात् केशानाञ्च रथ्यानङ्गतया सुकेशी रथ्येति न स्यादित्यतः स्वाङ्गशब्दस्य पारिभाषिकार्थपरतां दर्शयति अद्रवमित्यादि।

(९६) रथ्यार्थत्तकेशानामिदानीं प्राणिस्थत्वाभावात् द्वितीयलक्षणमाह अतत्स्थमित्यादि। प्रथमलक्षणे प्राणिस्थत्वमुपलक्षणं यदा कदाचित् प्राणिस्थितस्येऽपि तत्सम्भवात् एवञ्च तस्योपलक्षणपरतायामिदं तात्पर्य्यग्राहकमिति न लक्षणान्तरमिति तु नव्याः। शब्देन्दु०।

(९७) प्रतिमागतस्तनादेः कदाचिदपि प्राणिस्थत्वोक्तेर्लक्षणान्तरमाह तेन चेदित्यादि। अप्राणिनोऽपि तत् स्वाङ्गं चेत् यदि तेन तज्जातीयेन वस्तुना प्राणी यथा संबद्धस्तथाऽप्राण्यपि सम्बद्धस्तदेत्यर्थः।

एभ्यो वा ङीष् स्यात्। आद्ययो (९८) र्बह्वज्लक्षणो निषेधो बाध्यते पुरस्तादपवादन्यायात्। क्रोडादीनामस्वाङ्गत्वात्तु असंयोगोपधादिति (३३९) पर्युदासे प्राप्ते वचनं मध्येऽपवादन्यायात्। सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः। तुङ्गनासिकी-तुङ्गनासिका इत्यादि। नेह। सहनासिका। अनासिका। अत्र वृत्तिः। अङ्गगात्रकण्ठेभ्यो वक्तव्यम्। स्वङ्गी-स्वङ्गेत्यादि। एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित्। भाष्याद्यनुक्तत्वादप्रमाणमिति (९९) प्रमाणिकाः। अत्र वार्त्तिकानि। पुच्छाच्च। सुपुच्छी सुपुच्छा। कबरमणिविषशरेभ्यो नित्यम्। कबरश्चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरी इत्यादि। उपमानात्पक्षात् पुच्छाच्च। नित्यमेव। उलूकपक्षी शाला। उलूकपुच्छी सेना।

## न क्रोडादि (१००)। बह्वचः। ४।१।५६।

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याणक्रोडा। अश्वानामुरःक्रोडा (१०१)। आकृतिगणोऽयम्। सुजघना।

(९८) आद्ययोर्नासिकोदरयोर्बह्वच्कत्वेन न क्रोडादिबह्वच इति वक्ष्यमाणनिषेधे प्राप्ते पुरस्तादपवादोऽनन्तरान् विधीन् बाधते इति न्यायेन तन्निषेधो बाधितः। मध्येऽपवादस्तु पूर्वानेव बाधक इति विवेकः।

(९९) अप्रमाणमिति तेन सुगात्रीत्यादिरसाधुरेवेति भावः।

(१००) क्रोड नख खुर गोखा उखा शिखा बाल शफ गुद। क्रोडादिराकृतिगणः। तेन भग गल घोणा इत्यादयोऽपि ग्राह्याः।

(१०१) उरः क्रोडाशब्दः स्वभाविकटाबन्तः।

सहनञ्विद्यमानपूर्व्वाच्च।४।१।५७।

सहेत्यादित्रिकपूर्व्वान्न ङीष्। सकेशा। अकेशा। विद्यमाननासिका।

नखमुखात्संज्ञायाम्।४।१।५८।

ङीष् न स्यात्। शूर्पणखा (१०२)। गौरमुखा। संज्ञायां किम् ताम्रनखी कन्या।

दिक्पूर्व्वपदान्ङीप्।४।१।६०।

दिक्पूर्व्वपदात् स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेशः स्यात्। प्राङ्मुखी। आद्युदात्तं पदम्।

वाहः।४।१।६१।

वाहन्तात्प्रातिपदिकात् ङीष् स्यात् छन्दसि। ङीषेवानुवर्त्तते न ङीप्। दित्यवाट् चमे दित्यौही चमे।

सख्यशिश्वीति(१०३)भाषायाम्।४।१।६२।

इतिशब्दः प्रकारे भाषायामित्यस्यानन्तरं द्रष्टव्यः। छन्दस्यपि क्वचित्। सखी। अशिश्वी। आ धेनवो धुनयन्तामशिश्वी।

---

(१०२) शूर्पणखेत्यस्य संज्ञात्वेन पूर्व्वपदात् संज्ञायामिति (४१५पृ०) णत्वं ताम्रनखीत्यत्र तदभावान्नेति विवेकः।

(१०३) न विद्यते शिशुर्यस्याः सा अशिश्वी। अशिश्वी शिशुना विनेत्यमरः।

## जातेरस्त्रीविषयादयोपधात्। ४।१।६३।

जातिवाचि (१०४) यत्र च स्त्रियां नियतमयोपधन्तत: स्त्रियां ङीष् स्यात्।

आकृतिग्रहणा जाति: (१०५)—

अनुगतसंस्थानव्यङ्ग्यर्थ: । तटी (१०६)।

---

(१०४) अयं ङीपादिकार्यासम्भवेन जातिरूपार्थबाधकशब्दपरत्वमिह जातेरित्यस्येत्याह जातिवाचि यदिति विषयशब्दोऽत्रानन्यभावपरस्तदाह नच स्त्रियां नियतमिति।

(१०५) भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं, नित्यमेकमनेकानुगतं सामान्यमिति च जातिलक्षणं शुक्लादिगुणस्य नित्यत्वैकत्वादिमत तत्र तत्रातिव्याप्तमत आहाकृतिग्रहणेति ग्रहणमिति करणे ल्युट् सामान्यत्वात् नपुंसकम्। आकृतिरवयवसन्निवेश: ग्रहणं बोधकरणं यस्या. सा अनुगतकाकारव्याङ्ग्या जातिरित्यर्थ. ईदृशाकारो गौरित्याकारदर्शनादेव तद्बोधइति भाव.। बाल्याद्यवस्थाभेदभिन्नानेकदेहेष्वनुगतदेवदत्तत्वादेराकारव्यङ्ग्यत्वेऽपि न जातित्वम् समानकालिकानेकव्यक्तिष्वनुगतसंस्थानव्यङ्ग्यत्वस्यैव जातित्वकल्पनात्। किञ्च देवदत्तादिदेहस्यावस्थाभेदेऽपि भेदाप्रत्ययात् सएवायमिति प्रत्यभिज्ञानात् तज्जातीयोऽयमित्यप्रतीतेश्चैकत्वमेवेति तत्र न प्रसङ्ग:।

(१०६) तटीति अनुगतसंस्थानव्याङ्ग्यमेतत जलसमीपदेशविशेषाहि तटं तस्य च जातित्वं तटेष्वनुगताकारवत्त्वात्। एतञ्च तटं त्रिलिङ्गं: प्रामादिको भाष्ये 'अमर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदु'रिति लक्षणान्तरेऽसर्वलिङ्गत्वोक्त्या जातिवाचकानां नियतलिङ्गत्वस्वीकारात् तदेकवाक्यतया दृश्याप्युक्तम् लिङ्गानाञ्च न सर्वभागिति। सर्वशब्दस्य सापेक्षत्वेऽपि भाष्यप्रामाण्य त् भत्रोविधिरिति (१३८९०) क्विप्रत्यय: समासश्च भवतीति द्रष्टव्यम्। एतश्च उभयलक्षणाभिप्रायेण असर्वलिङ्गामित्यनेनैकव.क्यत्वादिति सच्छमीयमीयम्। तथाच शुक्ला-

लिङ्गानाञ्च न सर्व्वभाक्। सकृदाख्यातनिर्ग्राह्या (१०७)। असर्व्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम्। वृषली। सत्यन्तङ्किम् शुक्ला। सकृदित्यादि किम् देवदत्ता।

गोत्रञ्च (१०८) चरणैः सह।

अपत्यप्रत्ययान्तः शाखाध्येतृवाची (१०९) च शब्दो जातिकार्यं(११०)लभत इत्यर्थः। औपगवी। कठी। बह्वृची। ब्राह्मणीत्यत्र तु शार्ङ्गरवादि(२४१पृ०)पाठान्ङीष् बाध्यते। जातेः किं मुण्डा। अस्त्रीविषयात्किम्। बलाका। अयोपधात्किम् क्षत्रिया। योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रति-

दिगुणानामनेकत्वे नानुगताकारप्रतीतिविषयत्वेऽपि नियतलिङ्गत्वाभावान्न जातित्वम् गुणिलिङ्गास्तु तद्वतीति तेषां त्रिलिङ्गत्वात्। शब्देन्दुः।

(१०७) अवयवसंस्थानस्य वृषलादिष्विव ब्राह्मणादिष्वविशेषात् वृषलत्वादिजातिर्न स्यादतो लक्षणान्तरमाह सकृदाख्यातेत्यादि। सकृतेकवारं यस्यां कस्याञ्चिद्व्यक्तौ ब्राह्मणोऽयं वृषलोऽयमित्युपदेशेन निर्ग्राह्या निश्चयेन याह्येत्यर्थः।

(१०८) मुख्यजातिमभिधाय जातिकार्य्यकारिपारिभाषिकजातिमाह गोत्रञ्चेत्यादि। गोत्रं पुत्रपौत्रप्रभृतिवंशपरम्परा चरणो वेदशाखा।

(१०९) वेदशाखाया नियतस्त्रीविषयत्वात् जातिकार्य्याप्रसक्तावाह शाखाध्येतृवाचीति यद्यपि स्त्रीणामध्ययननिषेधात्तदध्येतृत्वं नास्ति तथापि तद्गोत्रतया तद्वाचिताऽनधीयमानेऽपि माणवके तत्तच्छाखात्ववदिति द्रष्टव्यम्।

(११०) जातिकार्य्यं ङीष्पुंवद्भावादिकं लभत इत्यनेन तत्कार्य्यकारितया पारिभाषिकमौपचारिकं वा जातित्वमिति दर्शितमिति भावः।

षेधः। हयी। गवयी। मुकयी। हलस्तद्धितस्येति (२।८४०) लोपः। मानुषी। मत्स्यस्य ङ्याम्। मत्सी।

पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च। ४।१।६४।

पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् स्यात्। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोबाली। ओषधिविशेषे रूढा एते।

इतोमनुष्यजातेः। ४।१।६५।

ङीष् स्यात्। दाक्षी। योपधादपि। उदमेयस्याऽपत्यम् औदमेयी। मनुष्येति किम्। तित्तिरिः (१११)।

ऊङुतः। ४।१।६६।

उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्। कुरूः। कुर्वादिभ्यो ण्यः (५।८४०) तस्य स्त्रियामवन्तीत्यादिना (५।२।४०) लुक्। अयोपधात्किम् अध्वर्युः (११२)। अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्। रज्ज्वादिपर्युदासादुवर्णान्तेभ्यः (११३)एव। अलाब्वा (११४)। कर्कन्ध्वा। अनयो

(१११) स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगा इत्यभिधानात् तित्तिरिशब्दस्य स्त्रीत्वम्।

(११२) अध्वर्युशाखाध्यायिनंयोद्दत्रा।

(११३) अप्राणिजातेश्चेत्यत्र ऊत इति नानुवर्तते भाष्ये अलाबूकर्कन्धुशब्दयोर्दीर्घयोरपि उदाहरणादत आह उवर्णान्तेभ्य इति।

(११४) अलाबू कर्कन्धूश्चेति नोङ्धात्वोरिति (६।१।१७५ सू०)पद्यादिषु

दीर्घान्तत्वेपि नोङ्धात्वोरिति(६।१।१७५सू०) विभक्त्युदात्तत्वप्रतिषेधऊङः फलम्। प्राणिजातेस्तु कृकवाकुः। रज्ज्वादेस्तु रज्जुः। हनुः।

## बाह्वन्तात्संज्ञायाम्।४।१।६७।

स्त्रियामूङ् स्यात्। भद्रबाहूः। संज्ञायाङ्किम्। वृत्तबाहुः।

## पङ्गोश्च।४।१।६८।

पङ्गूः। श्वशुरस्योकाराकारलोपश्च*(११५)। चादूङ्। पुंयोगलक्षणस्य ङीषोऽपवादः। लिङ्गविशिष्टपरिभाषया स्वादयः। श्वश्रूः।

## ऊरूत्तरपदादौपम्ये।४।१।६९।

उपमानवाचि (११६) पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकन्तस्मादूङ् स्यात्। करभोरूः।

## संहितशफलक्षणवामादेश्च।४।१।७०।

अनौपम्यार्थं सूत्रम्। संहितोरूः। सैव शफोरूः। शफौ

दात्तत्वनिषेधात् तृतीयान्तोदाहरणं तद्विभक्त्युदात्तत्वप्रदर्शनार्थं तस्यैवोङ्विधानफलत्वात्।

(११५) श्वशुरः श्वश्रू इति (४४७सू०) निर्देशादत्र श्वशुरशब्दान्त्याकारस्यैव लोपः।

(११६) उत्तरपदाश्रिमं पूर्वपदं सापेक्षतया उपमानपदमेवेत्याशयेनाह उपमानवाचि पूर्वपदमिति अतएव करभोपमोरुरित्यादौ न।

खुरौ ताविव संश्लिष्टत्वादुपचारात् (११७)। लक्षणशब्दादपि आदित्वादच्। लक्षणोरूः। वामोरूः। सहितसहाभ्यां चेति वक्तव्यम्*। हितेन सह सहितौ ऊरू यस्याः सा सहितोरूः। सहेतेइति (११८) सहौ ऊरू यस्याः सा सहोरूः। यद्वा विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः।

## संज्ञायाम्।४।१।७२

कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात्। कद्रूः। कमण्डलूः (११९)। संज्ञाया किम्। कद्रुः। कमण्डलुः। अच्छन्दोऽर्थं वचनम् (१२०)।

## शार्ङ्गरवाद्यञो(१२१)ङीन्।४।१।७३।

(११७) शफशब्दार्थसाधारणस्य संश्लिष्टत्वस्य ऊरुपदार्थे आरोपादित्यर्थः।

(११८) सहेते इत्यस्य कर्माकाङ्क्षायां श्रममित्यस्याध्याहारस्तेनातिशयितरमणीयावित्यर्थः।

(११९) कद्रूः सर्पमाता कमण्डलूश्चतुष्पाज्जातिविशेषः। अतएव चतुष्पाद्भ्यो ढञित्यत्र (५०९७०) कामण्डलेय इत्युदाहरिष्यति।

(१२०) अच्छन्दोऽर्थमिति वेदे तु संज्ञायामसंज्ञायाञ्च कद्रुकमण्डल्वोश्छन्दसीत्यनेन (४।१।७१) ऊङ् भवतीति भावः।

(१२१) शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय आनिचेय आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकस काव्य शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड भोगवत् गौरिमत् (एतौ संज्ञायाम्) नृ नर शार्ङ्गरवादिः।

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्। शार्ङ्गरवी। वैदी। जातेरित्यनुवृत्तेः पुंयोगे ङीषेव। नृनरयोर्वृद्धिश्चेति गणसूत्रम्। नारी।

यङश्चाप् (१२२)। ४। १। ७४।

यङन्तात् स्त्रियां चाप् स्यात्। यङ्ष्यङोः सामान्यग्रहणम्। आम्बष्ठ्या। कारीषगन्ध्या। षाद्यञश्चाप् वाच्यः *। पौतिमाष्या।

आवट्याच्च। ४। १। ७५।

अस्माच्चाप् स्यात्। यञश्चेति(२१७४०)ङीपोऽपवादः। अवटशब्दो गर्गादिः। आवट्या।

तद्धिताः। ४। १। ७६।

आपञ्चमसमाप्तेरधिकारोऽयम्।

यूनस्तिः। ४। १। ७७।

युवन्शब्दात्तिप्रत्ययः स्यात् स च तद्धितः। लिङ्गविशिष्टपरिभाषया (१२३) सिद्धे तद्धिताधिकार उत्तरार्थः। युवतिः।

(१२२) चापश्चित्त्वम् स्वरार्थं पित्त्वन्तु याडाप इत्यादौ सामान्यग्रहणार्थम्।

(१२३) लिङ्गविशिष्टेति अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्यनेन (८४पृ०) प्रत्ययान्तभिन्नस्य प्रातिपदिकसंज्ञाभिधानेन टाबादीनां प्रत्ययत्वेन तदन्तानामप्राप्तेऽपि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया प्रातिपदिकत्ववत् तिप्रत्ययान्तस्य तथात्वं भविष्यतीति

अर्थम्। कृष्णैकत्वम्। ७८ एत्येधत्यूठ्सु ।६।१।८९। अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। पररूपगुणापवादः। उपैति। उपैधते। प्रष्ठौहः। एजाद्योः किम्। उपेतः। मा भवान्प्रेदिधत्। पुरस्तादपवादन्यायेनेयं वृद्धिरेङि पररूपमित्यस्यैव बाधिका न त्वोमाङोश्चेत्यस्य। तेनावैहीति वृद्धिरसाधुरेव। * अक्षादूहिन्यामुपसंख्यानम् ॥ अक्षौहिणी सेना ॥ * स्वादीरेरिणोः ॥ स्वैरः। स्वेनेरितुं शीलमस्येति स्वैरी। लिङ्गविशिष्टपरिभाषया स्वैरिणी ॥ * प्रादूहोढोढ्येषैष्येषु ॥ प्रौहः। प्रौढः ॥ अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ॥ 'अश्वेतिसूत्रे राजेः पृथग् आजिग्रहणाज्ज्ञापकात्' तेन ऊढग्रहणेन क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशः। प्रोढवान्। प्रौढिः ॥ इष इच्छायां तुदादिः। इष गतौ दिवादिः। इष आभीक्ष्ण्ये क्र्यादिः। एषां घञि ण्यति च एषः एष्यः इति रूपे। तत्र पररूपे प्राप्तेऽनेन वृद्धिः। प्रैषः। प्रैष्यः ॥ यस्तु ईष उञ्छे। यश्च ईष गतिहिंसादर्शनेषु। तयोर्दीर्घोपधत्वात् ईषः। ईष्यः। तत्राद्गुणे प्रेषः। प्रेष्यः ॥ * ऋते च तृतीयासमासे ॥ सुखेन ऋतः सुखार्तः। तृतीयेति किम्। परमर्तः ॥ * प्रवत्सतरकम्बलवसनार्णदशानामृणे ॥ प्रार्णम्। वत्सतरार्णमित्यादि ॥ ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम्। दशार्णो देशः। नदी च दशार्णा। ऋणशब्दो दुर्गभूमौ जले च। ७९ उपसर्गादृति धातौ ।६।१।९१।

---

कृष्णैकत्वमिति ॥ कृष्णेति सबोधने पृथक् पदम्। एवं देवेत्यपि। इत्थं चात्र षष्ठीसमासत्वमभ्युपेत्य 'पूरणगुण–' इति निषेधमाशङ्क्य 'संज्ञाप्रमाणत्वात्' इत्यादिनिर्देशेन 'गुणेन निषेधोऽनित्यः' इति केषांचिद्व्याख्यानं नात्यन्तावश्यकमिति बोध्यम् ॥—एत्येधत्यूठ्सु। अत्र एचीत्यनुवर्तते। तच्च एत्येधत्योर्विशेषणं न तूठः। असंभवात् ॥ 'आद्गुणः' इत्यत आदित्यनुवर्तत एवातो व्याचष्टे—अवर्णादेजाद्योरिति ॥—प्रष्ठौह इति। प्रष्ठं वहतीति प्रष्ठवाट्। 'वहश्च' इति ण्विः। ततः शसि 'वाह ऊठ्'। गुणापवादतया अनेन वृद्धिः ॥—प्रेदिधदिति। प्रपूर्वस्यैधतेर्ण्यन्तस्य लुङि रूपं, 'न माङ्योगे' इत्याडागमाभावः ॥—पुरस्तादिति। 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्' इति न्यायेनेत्यर्थः ॥—अक्षादिति। आदित्यनुवर्तते अचीति च। तेन पूर्वपरयोर्वर्णयोरेव भवति। एवमन्यत्राप्यूह्यम् ॥—अक्षौहिणीति। ऊहः समूहः सोऽस्त्यस्याः सा ऊहिनी। अक्षाणामूहिनीति विग्रहः। परिमाणविशेषविशिष्टा सेना अक्षौहिणी। 'पूर्वपदात्संज्ञायाम्–' इति णत्वम्। अक्षाणामित्यस्य ऊहशब्देन समासे तत इनौ तु अक्षोहिणीत्येव भवति '। न तु तत्र वृद्धिः। अन्तरङ्गेण गुणेन बाधात्। अपवादभूताया अपि वृद्धेरूहिनीशब्देन समासे चरितार्थत्वात्। यथोक्तं प्राक्। 'यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यते' इति ॥—स्वादीरेरिणोः। 'ईरेरिण्योः' इति क्वचित्कोऽपपाठः। स्वैरीति णिन्यन्तस्यात्रियां वृद्ध्यभावप्रसङ्गात् ॥ इरिन्ग्रहणस्य फलमाह—स्वेन इरितुमिति ॥ यदा स्वीर इति घञन्तेन स्वशब्दस्य समासे 'स्वादीरे–' इति वृद्धौ कृतायां मत्वर्थीय इनिः। यदा वा मत्वर्थीयेनिप्रत्ययान्तेन ईरिन्शब्देन स्वशब्दस्य समासः, तदापि तदेकदेश ईरशब्दोऽस्त्येवेति पृथगीरिन्ग्रहणं व्यर्थं स्यादिति भावः ॥—स्वैरीति। 'सुप्यजातौ–' इति णिनिः, उपपदसमासः ॥—स्वैरिणीति। ङीपः प्रागभागमीरिन्शब्दमादाय वृद्धिः। केचित्तु लिङ्गविशिष्टपरिभाषयात्र वृद्धिरित्याहुः। तन्निष्फलमिति भावः ॥—नानर्थकस्येति। उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसंभवे त्यागायोगादिति भावः ॥—प्रैष्य इति। एषसाहचर्यादेष्योऽप्यनव्ययं गृह्यते, तेन ण्यन्तादिषेः क्त्वो ल्यपि पररूपमेव, न तु वृद्धिः, प्रेष्य गतः ॥ लघूपधगुणमाशङ्क्याह—तयोर्दीर्घोपधत्वादिति ॥—प्रवत्सतरेति। इह केचिद्वत्सशब्दं वत्सरशब्दं च प्रक्षिपन्ति तद्भाष्यादावदृष्टत्वादुपेक्ष्यम् ॥—वत्सतरार्णमिति। तकारमकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि। रेफात्परस्य तु 'अचो रहाभ्याम्–' इति द्वित्वे 'यणो मयः–' इति वचनान्तरेण पुनर्द्वित्वे एकणं द्विणं त्रिणमिति द्वादश। 'खयः शरः' इति सकारद्वित्वे चतुर्विंशतिः ॥ न चेह 'शरोऽचि' इति द्वित्वनिषेधः शङ्क्यः। तस्य सौत्रद्वित्वमात्रविषयत्वात्। अत एव 'खयः शरः' इति वार्तिकस्य 'वत्सरः' 'अप्सराः' इत्युदाहरणं भाष्ये दत्तम्। न च वदेः सरप्रत्यये परतश्चर्त्वे कृते तस्यासिद्धत्वात्सस्य खयः परत्वं नेति शङ्क्यम्। 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेः। अत एव मनोरमायां 'षट्सन्तः' इत्यत्र टकारात्परस्य सस्य द्वित्वं स्वीकृतमिति दिक् ॥—उपसर्गादृति–॥ उपसर्गात्किम्। खट्वर्च्छति ॥ ऋति किम्। उपेतः। तपरकरणमुत्तरार्थम्। इह दीर्घॠकारादेर्धातोरसंभवेन व्यावर्त्यालाभात् ॥ धातौ किम्। उपर्कारः '॥ नन्वत्र उपेत्युपसर्ग एव न भवति क्रियायोग एवोपसर्गत्वात्, उपगत ऋकार इति विग्रहे क्रियायोगत्वसंपादनेऽपि 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति ऋकारं प्रति अनुपसर्ग एव, तथा चाक्तेऽपि धातुग्रहणे ऋकारादिधातावेव वृद्धिर्भविष्यत्युपसर्गेण धातोराक्षेपात्र लब्धेति चेत्सत्यम्। अत एव योगविभागेन पुनर्विधानार्थमित्यनुपदं वक्ष्यतीति न काप्यनुपपत्तिः ॥—

---

१ ऊठि चेति—एकीयमतेन भ्वादिषु पठितस्य 'ऊठ उपघाते' इत्यस्य न ग्रहणम्, किंतु आगमस्यैवात्र ग्रहणम्, अष्टाध्यायीस्थत्वेन प्रत्यासन्नत्वात्, प्रसिद्धत्वात्, 'ऊठिषु' इति इका निर्देशाभावाच्च। २ उपसर्गादृतीति—न च गतेर्ऋतीत्येव सूत्र्यतामिति वाच्यम्, अर्च्छछतीत्यादौ दोषात्।

अनुपसर्जनादित्येव। बहवो युवानो यस्यां सा बहुयुवा। युवतीति तु यौतेः शत्रन्तात् ङीपि बोध्यम्।

इति स्त्रीप्रत्ययाः।

---

किं तस्य तद्धितसंज्ञया तद्धितसंज्ञाफलीभूतस्य कृत्तद्धितसमासाश्चेति (८४पृ०) प्रत्यायान्तस्यापि प्रातिपदिकसंज्ञात्वस्योक्तपरिभाषयैव सिद्धेरिति भावः। उत्तरार्थ इति अस्त्रियोरन्तर्यग्योः (४।१।७८) इत्याद्यर्थः इह करणन्तु स्पष्टार्थं लिङ्गविशिष्टपरिभाषाया अनित्यताद्योतनार्थञ्च।

---

प्रातिपदिकार्थ (१) लिङ्गपरिमाणवचनमात्रे प्रथमा । २ । ३ । ४६ ।

नियतोपस्थितिकः(२)प्रातिपदिकार्थः मात्रशब्दस्य प्रत्येकं (२)

---

(१) स्वौजसमौडिति (८६४०) विहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमाह प्रातिपदिकार्थेति । प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः । तथाच सर्व्वसिद्धत्वादस्मिन् शास्त्रे तासां संज्ञानामनभिधानेऽपि न क्षतिरिति विभावनीयम् ।

(२) स्वार्थोद्रव्यञ्च लिङ्गञ्च संख्या कर्म्मादिरेव च ।
अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमाः ।

इत्युक्तदिशा यदि पञ्चकं प्रातिपदिकार्थस्तदा लिङ्गवचनयोः प्रातिपदिकार्थतया तद्ग्रहणमनर्थकं प्रातिपदिकार्थ इत्यनेनैव सिद्धेः मात्रग्रहणाच्च कर्म्मादिव्यवच्छेदो न स्यात् कर्म्मादीनामपि प्रातिपदिकार्थानतिरेकात् त्रिकपक्षे तु लिङ्गग्रहणमनर्थकमेवेत्याशङ्क्य विवक्षितं दर्शयति नियतोपस्थितिक इति । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन उपस्थितिः स तदर्थः शक्यार्थ इति यावत् सिंहोमाणवक इत्यादौ शक्यार्थमादाय प्रथमाविभक्तेरुत्पत्त्यनन्तरं पदान्तरसमभिव्याहारेण तात्पर्य्यादिवशात् लक्ष्यार्थ बोधे क्षत्यभावादिति लक्ष्यार्थस्य नियतोपस्थितिकत्वाभावेऽपि न क्षतिः । तटादिशब्दानान्तु तत्तत्प्रत्ययसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गं नियतोपस्थितिकमिति न तद्बोध्य लिङ्गस्यात्र प्रातिपदिकार्थशब्देन ग्रहणमिति भावः । तथाच प्रातिपदिकार्थत्वे एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथेत्यनेकपक्षाणां सत्त्वात् द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तय इत्युक्तेश्च द्वित्वादीनां विभक्तिवाच्यत्वपक्षे प्रातिपदिकस्य द्योतकतया द्योत्यार्थमादायैव स्वार्थोद्रव्यमित्याद्यभिहितमिति द्रष्टव्यम् ।

(३) प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येवेत्येवम्पदघटितवाक्ये सङ्गत्यं

योगः प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये(४)परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात्। उच्चैः (५)। नीचैः। कृष्णः (६)। श्रीः। ज्ञानम्। अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्य। तटः (७)। तटी। तटम्। परिमाणमात्रे द्रोणो व्रीहिः। द्रोणरूपं यत्परिमाणं (८) तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण

सकादित्वात् (२६६सू०) प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रमिति सिद्धम् द्वन्द्वान्ते श्रूयमाणस्यैवकारार्थकमात्रशब्दस्य प्रत्येक सम्बन्धात् प्रातिपदिकार्थमात्र इत्यादि क्रमेणान्वयः।

(४) मात्रपदेन कर्माद्याधिक्ये प्रथमा न भवेत् किन्तु लिङ्गपरिमाणवचनानां पृथग्ग्रहणात् तदाद्याधिक्ये एव भवेदित्याह लिङ्गमात्राद्याधिक्ये इति आदिपदेन परिमाणमात्राधिक्यं वचनमात्राधिक्यं चेत्यस्य ग्रहणम्। प्रातिपदिकार्थमात्रबोधेऽपि लिङ्गपरिमाणादिबोधासम्भवादाधिक्ये इत्युक्तम्।

(५) उच्चैरित्यादौ पदत्वेन रुत्वविसर्गार्थं प्रथमोत्पत्तिलोपौ। तथा ग्रामं उच्चैस्तव स ग्राम उच्चैस्ते स्वमित्यादौ सप्तम्या इति (१७सू०) सूत्रेण सुप्प्रथमापूर्वकत्वादिकल्पनं तेऽत्यादेश इत्यपि द्रष्टव्यम्।

(६) कृष्णो वासुदेवो ननु नीलगुणविशिष्टस्य त्रिलिङ्गतया नियतलिङ्गत्वाभावात्।

(७) तट इत्येतच्च तटशब्दस्य सर्वलिङ्गभाक्त्वेऽपि जातित्वमनङ्गीकृत्यैताममरकोषकाराणां मतं इति द्रष्टव्यम्।

(८) परिमाणशब्दस्य परिच्छेदकरूपपरिमाणसामान्यपरः न तु "ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः। आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः" इत्युक्तपारिभाषिकपरिमाणपर इति बोध्यम्। द्रोणरूपपरिमाणस्य प्रातिपदिकार्थत्वे तस्य च व्रीह्यादौ परिच्छेदकपरि-

विशेषणम्। प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः। वचनं (९) संख्या। एकः। द्वौ। बहवः। इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ (१०) वचनम् (११)।

---

च्छेदकभावेनान्वयो नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात् सम्भवतीति प्रथमार्थ एव परिमाणमित्यभिहितम् पाचकादिशब्दे प्रकृत्यर्थधात्वर्थस्य प्रत्ययार्थे भेदेनाऽन्वयेऽपि इन्द्रो देवतास्येति वाक्ये सास्य देवतेति (५३०पृ०) तद्धितार्थदेवताया इन्द्रादिभिरभेदेनाप्यन्वयस्य दृष्टचरत्वादत्रापि तथान्वय इति नाधिककल्पनेति भावः।

(९) वचनं संख्येति वाच्यवाचकयोरभेदाध्यवसायेन तथैव पूर्व्वाचार्य्याणां व्यवहारः।

(१०) उक्तार्थत्वादिति उक्तार्थानामप्रयोग इति न्यायेनाप्रयोगप्राप्तौ प्रातिपदिकप्रतिपादितसंख्यान्तराभावाच्च तदप्राप्तिस्तथाच अनन्विताथकविभक्तिप्रयोगापेक्षयाऽनुवादकविभक्तिप्रयोगस्य न्याय्यत्वात् न द्व्यादिशब्देभ्यः सर्व्वविभक्तिरिति भावः।

(११) परे तु अत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च गृह्यते स च मुख्यइवारोपिततदाश्रयोऽपि अतएव लिङ्गग्रहणं सार्थक मन्यथा स्वमोर्नपुंसकादित्यादि (१४२पृ०) शास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यम्। एवञ्च प्रातिपदिकार्थ इत्यस्य अलिङ्गा अव्ययाः लिङ्गप्रवृत्तिनिमित्तकाः पुमादयश्चोदाहरणमन्ये सर्व्वेपि शब्दाः लिङ्गाधिक्य इत्यादेरुदाहरणानीति प्राहुः। शब्देन्दु०। अत्रेदमभिधीयते स्वार्थो विशेषणं द्रव्यं विशेष्यं लिङ्गं स्त्रीत्वादि संख्या एकत्वादि कारकं कर्म्मादि इति पञ्चकमपि प्रातिपदिकार्थः दधि मध्वित्यादौ विनापि विभक्तिं प्रातिपदिकादेव तत्तदर्थप्रतीतेः हरौ हरा हरं हरेणेत्यादौ विभक्त्यर्थविशेषबोधेऽपि विभक्तीनां द्योतकत्वेनैवोपयोग इति भाष्यकाराशयः। कैयटस्तु संख्यान्तचतुष्कं प्रातिपदिकार्थ इति मन्यते। अन्वयव्यतिरेकाभ्यां संख्याकारकादे-

## सम्बोधने च (१२) । २ । ३ । ४७ ।

इह प्रथमा स्यात् । हे राम ।

### प्रथमा (१३) ।

विभक्त्यर्थत्वनियमात्त्रिकमेवेति वृत्तिकारः । संख्याकर्मादयस्तु विभक्तिवाच्या लिङ्गन्तु टाबादिवाच्यमिति द्विकमेवेत्यन्ये । जातेरेवाकृत्यपरपर्य्यायाया अन्वयव्यतिरेकाभ्यां प्रातिपदिकार्थत्व व्यक्तिभानन्तु आक्षेपादित्येकमेवेति केचित् ।

(१२) सम्बोधने इति सम्बोधनाधिक्येऽप्राप्तावस्यारम्भः । प्रथमार्थः सम्बोधनं सम्बोधनञ्च प्रवर्त्तनाविषयबोधनादिफलकाभिमुख्यं तदुक्तं हरिणा

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।

प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते इति

अत्र क्रियासु विनियुज्यते इत्युक्तेः अजानि देवदत्तेत्यादावपि जानी हीतिपदाध्याहारेण सङ्गतिः । सिद्धस्येत्युक्तेश्च संबोधनस्यानुवाद्यत्वविषयता न तु साध्यविषयता तेन राजा भव युध्य स्व, इन्द्रशत्रुर्वर्द्धस्वेत्यादौ राजादेर्न सम्बोध्यता । संबोधनञ्च प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणं राम मां पाहीत्यादौ रामसम्बन्धिसंबोधनविषयो मत्कर्म्मकं रक्षणमिति बोधः । संबोधनस्य क्रियाया अविशेषणत्वे संबोधनपदस्य भिन्नवाक्यान्तर्गतत्वात् "समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति (१७६४०) वार्त्तिकात् अजानि देवदत्तेत्यादौ निघातस्य, अत्र राम नः पाहीत्यादौ नसादेशस्य च नानुपपत्तिरित्युक्तम् प्राक् । प्रपञ्चितञ्चैतदस्माभिः शब्दार्थरत्ने ।

(१३) अत्रेदं बोध्यम् कर्म्मादिषु शक्तिषु लकाराकृदादिभिरभिहितेषु तत्समानाधिकरणे प्रथमैव तिङसमानाधिकरणे प्रथमेति अभिहिते प्रथमेति च वार्त्तिकोक्तेः । प्रकृतिविकृतिस्थले तु उभयोरपि तिङा

कारके (१४)। १। ४। २३।

इत्यधिकृत्य।

कर्त्तुरीप्सिततमं (१५) कर्म्म। १। ४। ४९।

कर्त्तुः क्रियया व्याप्तुमिष्टतमङ्कारकं कर्म्मसंज्ञं स्यात्।

अभिहितार्थत्वात् प्रथमा। परन्तु तत्र तिङा प्रकृतेरेव संख्यानुवादेन संख्यानूद्यते न तु विकृतेरपि यथोक्तं हरिणा प्रकृतेर्विकृतेर्वापि यत्नोक्तत्वं द्वयोरपि। वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु वाचकस्तिङादिशब्दः प्रकृतेः संख्यां गृह्णाति अनुवदतीत्यर्थः। अत्र यत्नेत्युक्ते क्वचिदुक्तत्वाभावे नामार्थएव प्रथमेति सूचितम् तेन नौका भूत्वा वृक्षो निम्नां गतइत्यादौ नौकाया नामार्थे एव प्रथमेति बोध्यम्। उद्देश्यविधेयभावस्थले तूभाभ्यामेवोक्तार्थतया प्रथमा। संख्याविशेषसम्बन्धस्तु विवक्षावशादुभयोरेव पर्यायेण भवति तेन एको वृक्षः पञ्च नौका भवतीत्यादिवत् न नियमः किन्तु वेदाः प्रमाणं भवति भवन्ति वेत्यादि प्रयोगइति। प्रथमा।

(१४) कारके इति। करोति कर्त्तृत्वादिव्यपदेशानिति कारकशब्दः क्रियावचनस्तथा च क्रियायामित्यर्थः एवं चेतः परमधिकरिष्यमाणानां क्रियायामेवान्वयः कारकाणां साधनत्वेन साध्यक्रियायां साधनापेक्षणात्

(१५) कर्त्तुरित्यादि। कर्त्राप्तुमिष्यमाणं कर्म्मेत्यर्थः धातूपात्तव्यापाराश्रयः कर्त्तेति (२६८९०)वक्ष्यते आप्तिश्च सम्बन्धः स च कर्त्तृविशेषणीभूतक्रियारूपव्यापारद्वारकएवोपस्थितपरित्यागेनानुपस्थितकल्पने मानाभावात् एवञ्च कर्त्रा स्वनिष्ठक्रियारूपव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणं कर्म्मेत्यर्थः तदेतदाह कर्त्तुः क्रियया व्याप्तुमिति। क्रियया धातूपात्तव्यापारेण व्याप्तुं धातूपात्तफलद्वारा सम्बन्धुं फलव्यापारयोर्धातूपात्तत्वन्तु फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता इत्यनेन सिद्धम्। तच्च कर्म्म सप्तविधम् यथोक्तं हरिणा।

कर्तुः किम्। माषेष्वश्वं बध्नाति। कर्मणा ईप्सिता माषा न तु

निर्वर्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम्।
तत्रेप्सिततमं कर्म्म चतुर्द्धान्यत्तु कल्पितम्।
औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्व्वकमिति।

तत्र निर्वर्त्यादीनां लक्षणादिकमपि तेनैवोक्तं यथा।

यदसज्जायते सद्वा जन्मना यत्प्रकाशते।
प्रकृतेस्तु विवक्षायां विकार्य्यं केचिद् यथा।
तन्निर्वर्त्यं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम्।
प्रकृत्युच्छेदसंभूतं किञ्चित् काष्ठादिभस्मवत्।
किञ्चित् गुणान्तराधानात् सुवर्णादिविकारवत्।
क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते।
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते इति
सती वा विद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते इति च

तदयं लक्षणनिष्कर्षः।

प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वं निर्वर्त्यत्वम् यथा घटं करोतीत्यादौ घटादेः क्रियाजन्योत्पत्तिमत्त्वात् निर्वर्त्यत्वम्। प्रतीयमानप्रकृतिविकृतिभावत्वे सति क्रियानिर्वाह्यविशिष्टावस्थोत्पत्तिरूपान्यतरफलवत्त्वं विकार्य्यत्वम् यथा सुवर्णं कुण्डलं करोतीत्यादौ सुवर्णस्य पूर्व्वरूपविशिष्टावस्थाफलवत्त्वात् कुण्डलस्य चोत्पत्तिमत्त्वादुभयोरपि विकार्य्यत्वम्। क्रियाकृतासाधारणधर्म्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति क्रियाजन्यफलवत्त्वे नोद्देश्यत्वम् प्राप्यत्वं यथा ग्रामं गच्छतीत्यादौ ग्रामादेः कर्त्तृसाधारणसंयोगरूपफलवत्त्वेऽपि क्रियाकृतस्वासाधारणविशेष फलस्यासत्त्वेन ताहृशफलप्रकारकबोधाविषयत्वात् प्राप्यत्वम्। निर्वर्त्यविकार्य्ययोस्तु क्रियाजन्योत्पत्त्यादिफलस्य कर्म्मात्मनिष्ठतया

कर्त्तुः। तमब्ग्रहणं किम्। पयसा (१६) ओदनं भुङ्क्ते। कर्म्मेत्यनुवृत्तौ (१७) कर्म्मग्रहणमाधारनिवृत्त्यर्थम्। अन्यथा गेहं प्रविशतीत्यत्रैव स्यात्।

अनभिहिते। २। ३। १।

इत्यधिकृत्य।

कर्म्मणि द्वितीया। २। ३। २।

अनुक्ते कर्म्मणि द्वितीया स्यात्। हरिं भजति (१८)। अभि-

असाधारणत्वेन तद्वक्त्वान्नातिप्रसङ्ग इति बोध्यम्। कर्त्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वम् औदासीन्यं यथा ग्रामं गच्छन् तृणं स्पृशती-त्यादौ तृणादेरनुद्देश्यत्वेऽपि क्रियाजन्यसंयोगरूपफलवत्त्वेनोदासीन कर्म्मता। द्विष्टसाधनत्वे सति क्रियाजन्यफलवत्त्वं द्वेष्यत्वं यथा अन्नं बुभुक्षुर्विषं भुङ्क्ते इत्यादौ विषस्य तथात्वम्। कारकविशेषसंज्ञा-न्तरेणाविवक्षितत्वे सति कर्म्मोपकारकत्वम् संज्ञान्तरैरनाख्यातत्वम् यथा गां पयो दोग्धीत्यादौ गवादेः कारकान्तरसंज्ञाया अविवक्षया दुग्धोपयोगितया च कर्म्मत्वम् व्यक्तीभविष्यति चेदमुपरिष्टात्। (२५२पृ॰)कारकान्तरसंज्ञापूर्व्वकत्वमन्यपूर्व्वकत्वं यथा हरिर्जलधि-मधिशेते इत्यादौ जलधेराधारसंज्ञकतया प्राप्तत्वेऽपि अधिशीङ्स्थासा-मित्यादिना(२६०पृ॰)कर्म्मसंज्ञया कर्म्मत्वम्।

(१६) पयसेति भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वविवक्षायां तस्यै-वेप्सिततमत्वात् पयः पिबतीति स्यादेव इह तु तथा विवक्षाविरहेण ओदनभोजनं प्रति तस्याङ्गतया करणत्वमात्रं विवक्षितमिति न तस्य कर्म्मत्वमित्येके। सहार्थे तृतीयेति तु न्याय्यम् तस्याप्रधानत्वात् तमपा बोधयितुमशक्यत्वात्।

(१७) कर्म्मेत्यनुवृत्तावित्यस्य अधिशीङ्स्थासां कर्म्मेति(२६०पृ॰)सूत्रादित्यादिः।

(१८) हरिमिति भजनक्रियया हरौ प्रीतेरुत्पादात् प्रीतिविशिष्टतया

हिते (१९) तु कर्म्मणि प्रातिपदिकार्थमात्रइति प्रथमैव। अभिधानन्तु प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्। हरिः सेव्यते। कृत्। लक्ष्म्या सेवितः। तद्धितः। शतेन क्रीतः शत्यः। समासः। प्राप्त आनन्दो यं स प्राप्तानन्दः (२०)। क्वचिन्निपा-

क्रियाव्याप्यत्वेन हरेः कर्म्मत्वं हरिनिष्ठप्रीत्यनुकूल एकदेवदत्ताभिन्नाश्रयको वर्त्तमानो व्यापार इति निष्कृष्टार्थबोधः। क्रियाप्रधानमाख्यातमितिसिद्धान्तेन सर्व्वत्रैव क्रियामुख्यविशेष्यकताङ्गीकारात् तथाबोधः। विस्तरस्तु शब्दार्थरत्नेऽस्माभिरभिहितस्तत्रैव द्रष्टव्य इत्यत्र बाहुल्यभिया विरतम्।

(१९) अभिहिते त्विति प्रधानक्रियापेक्षितप्रत्ययेनाभिहिते इत्यर्थस्तेन पक्वमोदनं भुङ्क्ते इत्यादौ पचिक्रियानिरूपितकर्म्मशक्तेरुक्तत्वेऽपि न प्रथमा यथोक्तम् हरिणा प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्। शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते इति। ओदनस्य पचिभुजिक्रियापेक्षया द्वे एव कर्म्मशक्ती तत्र प्रधानक्रियापेक्षितशक्तेरनभिधानान्न प्रथमेति बोध्यम्। अधिकमुक्तं प्रथमार्थनिरूपणे(२४७,४८,पृ०)। इदन्तु बोध्यं बहुपटुरित्यादौ बहुच्प्रत्ययेनोक्तार्थत्वाद्यथा कल्पबादयो न प्रवर्त्तन्ते तथा क्रियते घट इत्यादौ तिङोक्तार्थत्वात् न द्वितीया भविष्यतीति अनभिहितइति सूत्रस्यानवश्यकत्वेऽपि सख्याया विभक्त्यर्थत्वपक्षे सूत्रस्यावश्यकता तथाहि कर्म्मणि द्वितीयेत्यस्यानभिहिते कर्म्मणि यद्देकत्वं तत्र द्वितीयैकवचनमिति सूत्रार्थः स्वीकार्य्यः। तत्सूत्रानारम्भे तु कर्म्मणि यद्देकत्वं तत्र द्वितीयैकवचनमिति हि सूत्रार्थः संपद्यते तथा सति कृतः कट इत्यादौ क्तेन कर्म्ममात्रोक्तावपि तद्देकत्वस्य क्तेनानुक्ततया तत्र द्वितीयैकवचनम् दुर्व्वारं स्यात् परत्वेन प्रथमासमर्थनन्तु कर्त्तव्यः कटइत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठ्या दुर्व्वारत्वापत्तेरकिञ्चित्करम्।

(२०) आनन्दकर्त्तृकप्राप्तिकर्म्मीभूतः समासार्थः।

तेनाभिधानम्। यथा, विषवृक्षोऽपि संवर्द्ध्य स्वयञ्छेत्तुमसाम्प्रतम् (२१)। साम्प्रतमित्यस्य हि युज्यत इत्यर्थः।

**तथा युक्तञ्चानीप्सितम् (२४)। १।४।५०।**

ईप्सिततमवत् क्रियया युक्तमनीप्सितमपि कारककर्म्मसंज्ञं स्यात् (२२)। ग्रामङ्गच्छन् (२३) तृणं स्पृशति। ओदनं बुभुक्षुर्विषं भुङ्क्ते।

**अकथितञ्च (२४। १। ४। ५१।**

(२१) परे तु अत्र तुमुनः साधुत्वायेष्यत इति पदाध्याहार आवश्यकः अन्यथा क्रियार्थोपपदत्वाभावाच्छकादियोगाभावाच्च तुमुनुत्पत्तिर्दुर्लभा स्यात्। एवञ्च तस्याध्याहारे इच्छार्थयोगे तुमुन् सुलभः। तथाच विषवृक्षोऽपि सम्वर्द्ध्य छेत्तुमिष्यते इति यत्तदसाम्प्रतमन्याय्यमित्यर्थः सम्पद्यते एवं चाध्याहृततिङाभिधानात्तत्र द्वितीयाप्रसक्तिरित्यनुदाहरणमेवैतत्। एतेन क्रमादमुं नारद इत्यबोधि स इत्यप्यनुदाहरणम् तत्र नारद इति श्रीकृष्णीयज्ञानाकारानुकरणं नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इत्यर्थः एवञ्चेतिशब्देन तादृशार्थस्योक्ततया न द्वितीयेति तत्र प्रातिपदिकार्थे प्रथमैवेति द्रष्टव्यमित्याहुः। शब्देन्दु०।

(२२) अनीप्सितमिति ईप्सितादन्यदिति पर्य्युदासात् यदुपेक्ष्यं यच्च द्वेष्यं तदुभयमित्यर्थः तच्च द्वयं सप्रधाविभागसमये (२४६पृ०) दर्शितम्। युक्तं क्रिययेति शेषः समभिव्याहृतधात्वर्थप्रधानव्यापारजन्यधात्वर्थफलेन युक्तमित्यर्थः। पराधीनतया विषभोजने तु विषस्य क्रियाफलाश्रयत्वेनोद्देश्यत्वात् कर्त्तुरीप्सिततममित्यादिना (२४८पृ०) कर्म्मत्वम्।

(२३) अनीप्सितस्य द्वैविध्यमुदाहरणेन दर्शयति ग्रामं गच्छन्नित्यादिना यथा ईप्सितस्य ग्रामादेः क्रियाजन्यसंयोगयोगस्तथाऽनीप्सिततृणादेरपीति भावः। तथा च ग्रामं गच्छतस्तृणस्पर्शन नान्तरीयकमिति तस्यानीप्सितत्वम्। उपेक्ष्यत्वञ्च इच्छाद्वेषयोरभाव इति बोध्यम्।

(२४) अकथितमिति। अपादानादिविशेषैरविवक्षितमित्यर्थः।

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । उपार्च्छति । प्रार्च्छति । **अन्तादिवच्च** ।६।१।८५। योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात्। इति रेफस्य पदान्तत्वे । **खरवसानयोर्विसर्जनीयः** ।८।३।१५। खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते । इति विसर्गे प्राप्ते । अन्तवद्भावेन पदान्तरेफस्य न विसर्गः । उभयथर्क्षु कर्तरि चर्षिदेवतयोरित्यादिनिर्देशात्[1] ॥ उपसर्गेणैव[2] धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानार्थम् । तेन ऋत्यक इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति । **वा सुप्यापिशलेः** ।६।१।९२। अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा स्यात् । आपिशलिग्रहणं पूजार्थम् । प्रार्षभीयति । प्रर्षभीयति । सावर्ण्यात्लृवर्णस्य ग्रहणम् ॥ प्राल्कारीयति । प्रल्कारीयति । तपरत्वाद्दीर्घे न । उपऋकारीयति । उपर्कारीयति । **एङि पररूपम्** ।६।१।९४। आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति । इह वासुपीत्यनुवर्त्य वाक्यभेदेन[3] व्याख्येयम् ॥ तेन एङादौ सुब्धातौ वा ॥ उपेडकीयति । उपैडकीयति । प्रोघीयति । प्रौघीयति ॥ * एवे[4] चानियोगे ॥ नियोगोऽवधारणम् । क्वेव भोक्ष्यसे । अनवक्लृप्तावेवशब्दः[5] । अनियोगे किम् । तवैव । **अचोऽन्त्यादि टि** ।१।१।६४। अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् ॥ * **शकन्ध्वादिषु पररूपं वाच्यम्** ॥ तच्च टेः ॥ शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तः केशवेशे । सीमान्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः । सारङ्गः पशुपक्षिणोः । साराङ्गोऽन्यः ॥ आकृतिगणोऽयम् ॥ मार्तण्डः[6] ॥ * **ओत्वोष्ठयोः[7] समासे वा** ॥ स्थूलोतुः ।

---

**अन्तादिवच्च** ॥ इह 'एकः पूर्वपरयोः' इत्यनुवर्तते यथासंख्यं चाश्रीयते इत्यभिप्रेत्याह—**पूर्वस्यान्तवदि**ति । स्थानिवत्सूत्रेणैव गतार्थमिदम् । न चाल्विध्यर्थमिदमस्त्विति शङ्क्यम् । अस्याप्यल्विधावनिष्टत्वात् । अन्यथा अयजे इन्द्रमित्यत्र सवर्णदीर्घापत्तेः ॥—**न विसर्ग** इति । एतच्च सुखार्त इत्यादावपि बोध्यम् ॥—**सुब्धाताविति** । सुबन्तावयवके इत्यर्थः । सुबन्तस्य धातोरसंभवात् । यद्यपि ऋज गतावित्यादीनां क्विपि धातुत्वं सुबन्तत्वं च संभवति, तथापि न तादृशेषु तपरत्वव्यावर्त्यत्वं प्रसिद्धं नामधातुष्वेव तत्संभवतीति त एवेह गृह्यन्ते इति भावः ॥—**प्रार्षभीयती**ति । 'शरोऽचि' इति वक्ष्यमाणेन द्वित्वनिषेधः ॥—**एङि पररूपम्** । 'एङ्येङ्' इत्येव सिद्धे परग्रहणमुत्तरार्थम् । रूपग्रहणं तु स्पष्टार्थम्, 'अमि पूर्ववदेङि परः' इत्येव सिद्धेः ॥—**प्रेजत** इति । एजृ दीप्तौ, कम्पनार्थस्तु परस्मैपदी । प्रेजति ॥—**नियोगोऽवधारणमि**ति । निर्धारणमित्यर्थः । तदुक्तम्—'अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः । एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्' इति ॥ अस्यार्थः—अनवक्लृप्तौ अनिश्चये यदा एवकारो दृष्टः स पररूपस्य विषयः । यस्तु नियमे निर्धारणे यदा दृष्टः स वृद्धिविषय इति ॥ ये तु नियोगे त्वयैव गच्छेति प्राचो ग्रन्थे स्थितस्य प्रत्युदाहरणस्यानुगुणतया नियोजनं नियोगो व्यापार इति व्याचक्षते । तेषां 'यदैव पूर्वे ज्वलने शरीरं, ममैव जन्मान्तरपातकानाम्' इति लौकिकप्रयोगाः, 'तपस्तपःकर्मकस्यैव' 'लङः शाकटायनस्यैव' इत्यादिसौत्रप्रयोगाश्च न सिध्येयुः । उदाहृतवृत्तिश्लोकविरोधश्च स्यात् । अवधारणमिति व्याकुर्वतां तु सर्वेष्टसिद्धिः ॥—**अचोऽन्त्यादि टि** ॥ अच इति निर्धारणे षष्ठी । जातावेकवचनं तदाह—**अचां मध्य** इति ॥—**शकन्ध्वादिष्वि**ति । शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । अत एवाह—**तच्च टेरि**ति । यदि तु आदित्यधिकारादकारस्यैवेष्येत तर्हि मनीषा पतञ्जलिरिति न सिध्येत् ॥ केचित्तु मनःपतच्छब्दयोः पृषोदरादित्वादन्त्यलोपे अकारस्यैव पररूपमाहुः ॥ शकानां देशविशेषाणामन्धुः कूपः शकन्धुः । कर्कोणां राजविशेषाणामन्धुः कर्कन्धुः । अटतीत्यटा, पचाद्यचि टाप् । कुलस्य अटा कुलटा, यदि तु कुलम् अटतीति विगृह्यते तदा कर्मण्यणि ङीपि कुलाटीति स्यात् ॥ ईष उञ्छे, ईष गत्यादिषु । आभ्यां 'गुरोश्च हलः' इत्यप्रत्यये ईषा । मनसा ईषा मनीषा । हलस्य ईषा हलीषा ॥ ईषा लाङ्गलदण्डः ॥ पतन्तः अञ्जलयोऽस्मिन् पतञ्जलिः ॥—**मार्तण्ड** इति । पररूपेणानेन मृतण्ड इति सिद्धं, तत अण्यादिवृद्धिः । 'परामार्ताण्डमास्यत्' 'पुनर्मार्ताण्डमाभरत्' इत्यादिषु तु दीर्घश्छान्दस इति भावः ॥ केचिदत्र सवर्णदीर्घमाहुः पूर्वोक्तवैदिकप्रयोगास्तेषामनुकूलाः ॥—**ओत्वोष्ठयोः समासे वा** । अकारस्य ओत्वोष्ठयोश्च एकत्र समासे स्थितौ सत्यामिदं प्रवर्तते । नेह । वृषलसुतौष्ठव्रणस्त

---

१ निर्देशादिति—यत्तु कर्तरि चर्षीत्यादौ गुणस्य पदद्वयाश्रितत्वेन बहिरङ्गत्वाद्रेफाभावादेव न विसर्गः इति, तन्न, पदद्वयसंबन्धिवर्णद्वयाश्रितत्वेन गुणस्येव पदद्वयसंबन्धि रेफखरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्यापि बहिरङ्गत्वात् । परनिमित्तकत्वं तु उभयोः समम् । २ उपसर्गेणैवेति—तत्संज्ञायाः क्रियायोगनिमित्तत्वात्, इति भावः । अतएव यदर्थे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वनियमेन प्रत्यासत्त्या च ऋकारादिनिमित्तोपसर्गत्वस्य ग्रहणाच्च प्रभूतः ऋद्धः प्रर्द्ध इत्यत्र नातिप्रसङ्ग इति बोध्यम् । ३ वाक्यभेदेनेति—एतच्च वृत्तौ स्पष्टम्, भाष्ये तु न दृश्यते । ४ एवे चेति—एतद्वार्तिकारम्भसामर्थ्यादेव सूत्रे धाताविति मण्डूकप्लुत्यानुवर्तितम् । ५ अनवक्लृप्ताविति—क्वेन भोक्ष्यसे इत्युक्ते स्थलसंकीर्णत्वादिना नास्ति संभवस्तव भोजनस्येति गम्यते । अन्ये तु त्वं भोक्ष्यसे इति न संभावये इत्यर्थ इति व्याचख्युः । ६ मार्तण्ड इति—मृताण्डादागतो मार्तण्डः इति अण्विषये एव पररूपमिति बृहच्छेखरे स्पष्टम् । ७ ओत्वोष्ठयोरिति—ननु अत्र प्रत्यासत्तिन्यायेन ओत्वोष्ठोत्तरपदकसमास एवास्य प्रवृत्तिः सुवचा, तथा

अपादानादिविशेषैरविवक्षितङ्कारकं (२५) कर्म्मसंज्ञं स्यात्।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्म्मयुक् स्यादकथितन्तथा स्यान्नीहृकृष्वहाम्॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनाञ्चतुर्णाङ्कर्म्मणा यद् युज्यते तदेवाऽकथितङ्कर्म्मेति परिगणनङ्कर्त्तव्यमित्यर्थः। गान्दोग्धि (२६) पयः। बलिं याचते (२७) वसुधाम्। अविनीतं विनयं याचते। तण्डुलानोदनम्पचति (२८)। गर्गान् शतं

एवञ्च पूर्व्वविधिविषयप्रसक्तिपूर्व्वकं तदविवक्षायां पूर्व्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति बोध्यम्। अपादानत्वादिविवक्षायां पञ्चम्याद्येव गोर्दुग्धं दोग्धीति बलेर्धनं याचते इति व्रजे गां रुणद्धीत्यादि।

(२५) कारकमिति क्रियाजनकं क्रियान्वितं वेत्यर्थः तेन ब्राह्मणस्य पुत्रं पृच्छतीत्यादौ ब्राह्मणस्य न कर्म्मत्वम्। कर्म्मयुक् कर्म्मणा क्रियया युज्यते सम्बध्नातीति कर्म्मयुक् कर्म्म क्रिया तत्परात्मये इत्यमरोक्तेः। तथा च कर्म्मणा क्रियया सह संबध्यमानं कारकमपादानादिविशेषैरकथितं कर्म्मसंज्ञं भवतीत्यर्थः।

(२६) अन्तःस्थितद्रवद्रव्यविभागानुकूलो व्यापारो दुहेरर्थः तत्र गोरपादानत्वाविवक्षायामनेन कर्म्मत्वमेवमन्यत्रापि। तद्विवक्षायां पञ्चमी गोः पयस्यन्वयविवक्षायां षष्ठी तस्याश्च न क्रियायामन्वयः अनभिधानात् षष्ठ्यन्तस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्यौत्सर्गिको व्युत्पत्तेश्च।

(२७) स्वत्वनिवृत्तिस्वत्वोत्पत्त्यनुकूलव्यापारो देहीत्याद्यभिलापरूपो याचेरर्थः बलेः स्वत्वे निरूपकतयान्वयः पूर्व्वविषयस्य कस्याप्यभावादेवाविवक्षेति बलेः कर्म्मत्वम्।

(२८) विक्लित्त्यनुकूलव्यापारपूर्व्वकोत्पत्त्यनुकूलव्यापारः पचेरर्थः तण्डुलान्विक्लेदयन् ओदनं निर्वर्त्तयतीति भाष्ये पच्यर्थविवरणदर्शनात् तथाचैतत्।

दण्डयति (२६)। व्रजमवरुणद्धि (३०) गाम्। माणवकं पन्थानम्पृच्छति (३१)। वृक्षमवचिनोति (३२) फलानि। माणवकन्धर्म्मंब्रूते (३३) शास्ति वा (३४)। शतञ्जयति (३५) देवदत्तम्। सुधां चीरनिधिम्मथनाति (३६)। देवदत्तं शतं मुष्णाति † ग्राममजां नयति (३७) हरति (३८)

---

(२६) शासनानुकूलस्वसंप्रदानकदानानुकूलव्यापारो दण्डयतेरर्थः।

(३०) निर्गमप्रतिरोधपूर्व्वकयत्किञ्चिदधिकरणकस्थित्यनुकूलो व्यापारो रुधेरर्थः। व्रजे गौस्तिष्ठति तां निर्गमप्रतिबन्धेन स्थापयतीति संप्रत्ययात्। अधिकरणत्वाविवक्षयाऽनेन व्रजस्य कर्म्मत्वम्।

(३१) जिज्ञासाविषयार्थज्ञानानुकूलः केन पथा गन्तव्यमित्याद्यभिलाषादिरूपो व्यापारः प्रच्छेरर्थः ज्ञानविषयत्वेन पथः कर्म्मत्वम् तज्ज्ञानाश्रयत्वात् माणवकस्य कर्म्मत्वम्।

(३२) विभागपूर्व्वकादानं चिञोऽर्थः वृक्षात् फलान्यादत्ते इत्यर्थात् अपादानत्वाविवक्षायां कर्म्मत्वम्।

(३३) ज्ञानानुकूलः शब्दप्रयोगः ब्रुवेरर्थः।

(३४) प्रवृत्तिजनकज्ञानानुकूलः शब्दप्रयोगः धर्म्मं कुर्व्वित्यादिविधिविषयोपदेशरूपः शास्तेरर्थः।

(३५) अभिभवपूर्व्वकं ग्रहणं जयतेरर्थः।

(३६) विलोड़नपूर्व्वकोत्थापनं मन्थतेरर्थः।

प्रवञ्चनपूर्व्वकं ग्रहणंमुषेरर्थः

(३७) संयोगानुकूलव्यापारानुकूलोव्यापारोनयतेरर्थः।

(३८) बलादग्रहणपूर्व्वकदेशान्तरनयनं हरतेरर्थः।

दुह्याजित्यादिकं तु प्राचामनुरोधेन एषनेकेषां द्विव्यापारार्थबोधकतयेप्सितनमत्वेनैव द्विकर्मत्वसिद्धेरेकव्यापारार्थकाएव भाष्ये सङ्गीतायथा

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्व्वविधौ।

ब्रुविशासिगुणेन च यत् सचते तदकीर्त्तितमाचरितं कविनेति।

कर्षति वहति वा। अर्थनिबन्धनेयं संज्ञा। बलिम्भिक्षते वसुधाम्। माणवकन्धर्म्मम्भाषते अभिधत्ते वक्तीत्यादि। कारकं किम्। माणवकस्य पितरम्पन्थानं पृच्छति। अकर्मक (३८) धातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ॥ कुरून् स्वपिति। मासमास्ते। गोदोहमास्ते। क्रोशमास्ते।

---

तथाच दुहादीनामेकव्यापारार्थकतया पूर्व्वेणाप्राप्ते ऽपूर्व्वविधानमितरेषान्तु द्विव्यापारार्थकतया पूर्व्वेण सिद्धत्वान्नाकथितत्वमिति भावः। उपयोगनिमित्तमिति प्रधानकर्म्मोपयोगीत्यर्थः। ब्रुविशासिगुणेन ब्रुविशास्योर्निरुक्तार्थे गुणीभूतेन ज्ञानेन यत् सचते संबध्नाति तज्ज्ञानवत्त्वेनोद्देश्यं यत् तदकथितं कर्मेत्यर्थस्तेन माणवकादेः शासनाद्यर्थगुणीभूतज्ञानवत्त्वेनोद्देश्यत्वेन सम्प्रदानत्वप्राप्तौ तदविवक्षायामनेन कर्मत्वमिति बोध्यमधिकं मत्कृतशब्दार्थरत्ने द्रष्टव्यम्।

(३८) अकर्मकेति धातोरर्थौ व्यापारः फलञ्च। तत्र फलसमानाधिकरणव्यापारबोधकोऽकर्मकः फलव्यधिकरणव्यापारबोधकः सकर्मकः

फलव्यापारयोरेकनिष्ठतायामकर्मकः।

धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृत इति हर्य्युक्तेः

अस्ति भवतीत्यादौ सर्व्वत्रैव सत्ताकालसम्बन्धयोस्तदनुकूलव्यापारयोश्च बोधस्तत्रोभयोः कर्तृनिष्ठत्वादकर्मकत्वम् पचति गच्छतीत्यादौ विक्लित्तिसंयोगादिजनकव्यापारयोरुभयनिष्ठत्वात् सकर्मकत्वम् एवञ्च मासमास्ते इत्यादौ सर्व्वत्राकर्मकधातूनां सकर्मकव्याख्यादिगभितस्वार्थपरतायास्तात्पर्य्यमाहकमिदं सूत्रं तदुक्तं हरिणा

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।
सर्व्वैरकर्मकैर्योगे कर्मत्वमुपजायते इति।
अतस्तैः कर्मभिर्युक्तो धातुर्ध्वैरकर्मकः।
स्यात् कर्मणि भावे च निमित्तत्वाय कल्पते इति च।

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणा मणिकर्त्ता स णौ।१।४।५२।**

**गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणाञ्चाणौ (४०)यः कर्त्ता स णौ कर्मसंज्ञः स्यात्।**

---

अस्यायं भावः मासमास्ते इत्यादौ धातोरेव सम्बन्धपूर्वकास-नादौ आसनादिकरणकसम्बन्धे या निरूढ़लक्षणाया ज्ञापकमेतद्वा-र्त्तिकम् तत्र धात्वाद्यार्थलक्षणायां प्रधानक्रियाया अकर्मकत्वात् दुह्यादिषु पठाभावाच्च गौणकर्मण्यपि लकारसम्भवेन भाव एव ल-कारस्तेन मासमास्यत इत्येव प्रयोगः द्वितीयार्थलक्षणायान्तु प्रधान-क्रियायाः सकर्मकतया कालादेस्तत्कर्मत्वेन मुख्यकर्मण्येव लकारस्तेन मास आस्यते इति प्रयोग इति विवेकः। अत्र लस्येत्यभि-धानात् तद्योगे न तेभ्यः षष्ठीति द्योतितमिति मनोरमायां स्पष्टम्। तथा कालादिकर्मका अकर्मका भवन्तीति भाष्योक्तेस्तेषामकर्मकतया गतिबुद्ध्यादिसूत्रेण तेषां प्रयोज्यकर्त्तुः कर्मसंज्ञा भवतीत्यन्यत्र विस्तरः। अत्र देशः कुरुपाञ्चालादिनाम्ना प्रसिद्धः भूभागः न तु ग्रामादिरूपै-कदेशमात्रं तेन ग्रामं स्वपितीति न प्रयोगः। अध्वा गन्तव्यदेशः। कालो मुहूर्त्तमासादिः। भावो धात्वर्थ इति बोध्यम्।

(४०) अणौ यः कर्त्तेति। अनुत्पन्ने णिचि अणिजन्तधातुवाच्यां क्रियां प्रति यः कर्त्ता स ण्यन्तधातुवाच्यां क्रियां प्रति कर्मसंज्ञः स्यादि-त्यर्थः। नियमार्थमिदम् सूत्रमिति प्राञ्चः।

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते इति

गुणक्रियायां विशेषणक्रियायामण्यन्तक्रियायां स्वातन्त्र्यात् कर्त्तृ-त्वात् प्रेषणे ण्यन्तक्रियायां कर्मतां गतोऽपि कर्त्ता नियमात् कर्म-

मनूनगमयत् (४१) स्वर्गं वेदार्थं स्वानवेदयत्।
आशयच्चामृतन्देवान्वेदमध्यापयद्विधिम्॥ १॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः। १।

गतीत्यादि किम् पाचयत्योदनन्देवदत्तेन (४२)। अण्यन्ताना-ङ्किम् गमयति देवदत्तो यज्ञदत्तन्तमपरः प्रयुङ्क्ते गमयति

---

संज्ञाया धातुविशेषयोगे एव विधानात् पाचयति देवदत्तेन यज्ञदत्त-इत्यादौ स्वधर्मेणैव तृतीययैव अभिधीयते इत्यर्थः। अन्ये तु अप-वादमेवेदं विधानम्।

परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च।

प्रयोज्यस्यास्तु कर्त्तृत्वं गत्यादेर्विधितोऽन्यथेत्याहुः।

तेषामयमाशयः कर्मापेक्षया कर्त्तृसंज्ञायाः परत्वात् णिजन्तप्रकृती-भूतधातूपस्थाप्यक्रियायां स्वातन्त्र्येणान्तरङ्गत्वात् कर्त्तुरेव सर्वकार-कप्रयोजकतयोपजीव्यतया उपजीव्यजातीयतया कर्मसंज्ञा अप्राप्तौ गत्यादियोगे विधीयते नान्ययोगे इति।

(४१) मनूनिति स्वर्गकर्मकगमनानुकूलो हरिकर्त्तृकोऽतीतो व्या-पार इत्यादिक्रमेण बोधः।

(४२) अत्रेदं बोध्यं मनूनामनेन कर्मत्वे कृते कर्मणा एवेप्सितमः स्वर्गो न तु कर्त्तुरिति स्वर्गादेः कर्मत्वानुपपत्तावपि गतिबुद्धीत्यादिना विहित-कर्मत्वस्य णयन्तसापेक्षतया बहिरङ्गत्वात् ततः पञ्चमेनागमनाधात्व-र्थव्यापारस्यान्तरङ्गतया स्वातन्त्र्येण च तस्य कर्त्तृत्वात् तत्प्रयुक्तमेव स्वर्गादेः कर्मत्वमिति बोध्यम् एवञ्चोभयोरपि कर्मत्वे धातुविशेष-सहकारेण पर्यायेणोभयोरेव लादिविधानं यथोक्तं भाष्यकृता।

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।

अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मण इति।

द्विकर्मणां द्विव्यापारार्थकधातुसमुदायानाम् प्रधानकर्मणि प्रधान-व्यापारव्याप्यकर्मण्याख्येये वाच्ये लादयो भवन्ति। दुहादीनां पुनर्द्वि-

देवदत्तेन यज्ञदत्तं विष्णुमित्रः। नीवह्योर्न* (४३)। नाययति वाहयति वा भारं भृत्येन। नियन्तृ (४४) कर्त्तृकस्य वहेरनिषेधः*। वाहयति रथं वाहान् सूतः। आदिखाद्योर्न (४५)*। आदयति (४६) खादयति वान्नं वटुना।

व्यापारार्थकत्वपक्षेऽप्रधाने अप्रधानव्यापारकर्म्मणि लादीनाङ्करित्यनुषज्यते। ण्यन्तद्विकर्म्मकाणां पुनः कर्म्मसंज्ञां प्राप्तस्य कर्त्तुश्च कर्त्तत्वेव कर्त्तृरूपकर्म्मणीत्यर्थः। तत्राप्ययं विशेषः।

बुद्धिभक्षार्थयोः शब्दकर्म्मणाञ्च निजेच्छया।

प्रयोज्यकर्म्मण्याख्येये ण्यन्तानां लादयो मता इति।

दुह्यादीनामपि विशेषोऽस्ति यथा

गौणे कर्म्मणि दुह्यादेः प्रधाने नीहृकृष्वहामिति।

अतएव मूलकारेणैते दुह्याजित्यादिप्राचीनवाक्ये तथा स्यात् नीहृकृष्वहामिति गणभेदेन पाठः। एवञ्च दुहादीनां षोडशानां मध्ये द्विव्यापारार्थकबोधकानां दण्डिमन्थादीनां पाठः गौणकर्म्मणि लकारादिविधानार्थमन्यथा प्राधानकर्म्मण्याख्येये लादीनाङ्करित्युक्तेरविशेषात् प्रधानकर्म्मण्येव मन्थादिभ्यो लकाराद्यापत्तिर्न च तथा युक्तं गर्गाः शतं दण्ड्यन्तामिति भाष्यप्रयोगे देवासुरैरमृतमम्बुनिधिर्मसन्थे इति भारविप्रयोगे च गौणे कर्म्मण्येव लादिदर्शनात्।

(४३) नीवह्योरिति अनयोः प्रापणार्थत्वेन गत्यनुकूलव्यापारस्य च प्रापणतया तन्मध्ये गतेरपि प्रवेशात् गत्यर्थकतया प्राप्तौ निषेधः।

(४४) नियन्ता पशुप्रेरकमात्रं न तु सारथिरेव तेन वाहयति बलीवर्द्दान् यवानिति प्रयोगः सङ्गच्छते। तत्त्व०।

(४५) आदिखाद्योः प्रत्यवसानार्थतया प्राप्तौ निषेधः प्रत्यवसानं भक्षणम्।

(४६) आदयतीति निगरणचलनार्थेभ्यश्चेति (७२२६३पृ०) न परस्मैपदनियमः अदेः प्रतिषेध इति (७२६५पृ०) तस्य प्रतिषेधात् तेनात्र अकर्त्रभिप्राये विषात् कर्त्तरीति (७५पृ०) परस्मैपद कर्त्रभिप्राये तु आत्मनेपदं भवत्येव

भक्षेरहिंसार्थस्य(४७) न॰ । भक्षयत्यन्नं वटुना । अहिंसार्थस्य किम् भक्षयति बलीवर्द्दान् शस्यम् । जल्पति प्रभृतीनामुपसंख्यानम्* । जल्पयति (४८) भाषयति पुत्रन्देवदत्तः । दृशेश्च* । दर्शयति हरिम्भक्तान् । सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणन्न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते तेन स्मरतिजिघ्रतीत्यादीनान्न । स्मारयति घ्रापयति देवदत्तेन । शब्दायतेर्न्न (४९) * । शब्दायति देवदत्तेन । धात्वर्थसंगृहीतकर्म्मकत्वेनाकर्म्मकत्वात्प्राप्तिः । येषान्देशकालादिभिन्नङ्कर्म न सम्भवति तेऽत्राकर्मकाः न त्वविवक्षित (५०) कर्म्माणोऽपि । तेन (५१) मासमासयति देवदत्तमित्यादौ कर्मत्वं भवति । देवदत्तेन पाचयतीत्यादौ तु न ।

---

खादयतीत्यत्र तु निगरणेत्यादिना (७२६३सू॰) परस्मैपदनियमात् उभयथापि परस्मैपदमिति विवेकः ।

(४७) अहिंसार्थस्य अहिंसाङ्गस्य हिंसाप्रयोजनकभिन्नस्येत्यर्थः परकीयद्रव्यादिभक्षणे हि परोऽपि हिंसितोभवतीति तत्स्वामिनएवात्र हिंसा ग्राह्या एवञ्च भक्षेर्भक्षणविशेषार्थकतया प्राप्तौ निषेधइति द्रष्टव्यम् प्रत्युदाहरणेन तद्दर्शयति भक्षयति बलीवर्द्दान् शस्यमिति ।

(४८) पुत्रोधर्म्मं जल्पति कथयति देवदत्तो जल्पयति धर्म्मं तं पुत्रमित्यर्थः ।

(४९) धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।

प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रियेत्युक्तेः ।

शब्दायतेर्गृहीतकर्म्मकतयाऽकर्म्मकत्वेन प्राप्तौ निषेधः ।

(५०) नत्वविवक्षितेति अविवक्षा द्वेधा तदन्वययोग्यधात्वर्थत्यागात् सत्त्वे च च तस्मिन्नर्थे तत्र सम्बन्धित्वेनान्वयाविवक्षणादित्यवधेयम् । पाचयतीत्यादौ अविवक्षितकर्म्मकत्वे नाकर्म्मकत्वेऽपि णयन्तेन कर्त्तुः कर्मता ।

(५१) तेनेति मासमासयतीत्यादौ यथा कर्म्मत्वं तथोक्तं प्राक् (२५५पृ॰) ।

## हृक्रोरन्यतरस्याम् (५४) । १ । ४ । ५३ ।

हृक्रोरणौ यः कर्त्ता स णौ वा कर्मसंज्ञः स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा कटम् । अभिवादि (५३)दृशो-रात्मनेपदे वेति वाच्यम् * । अभिवादयते दर्शयते देवम्भक्तं भक्तेन वा ।

## अधिशीङ्स्थासाङ्कर्म्म । १ । ४ । ४६ ।

अधिपूर्व्वाणामेषामाधारः कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ।

## अभिनि (५४) विशश्च । १ । ४ । ४७ ।

अभिनीत्येतत्सङ्घातपूर्व्वस्य विशतेराधारः कर्म स्यात् । अभि निविशते सन्मार्गम् । परिक्रयणे संप्रदानमिति (२७६४०)सूत्रा-

(५२) हृक्रोरिति अभ्यवपूर्व्वस्य हरतेर्भक्षणार्थतया विकारार्थकरोतेश्चाक-र्मकतया च प्राप्तेऽर्थान्तरे चाप्राप्ते उभयत्र विभाषेयं तथाचोक्तार्थे प्राप्तं नित्यविधानं निषिध्य सर्व्वार्थकतद्धातुयोगे विकल्पविधानम् एतच्च न वेति विभाषेति सूत्रे भाष्यकारेण दर्शितं तेन कलत्रताऽभ्य वहारार्थकस्योदाहरानुक्तावपि न क्षतिः तथा च अभ्यवहारयति सैन्धवैः सैन्धवान् वा तृणं, सैन्धवैः सैन्धवान् वा विकारयतीति ।

(५३) अभिवादयतेश्चुरादेरप्राप्तौ दृशेश्च प्राप्तौ आत्मनेपदविषये विकल्पः ।

(५४) नेरल्पाच्कत्वेन पूर्व्वनिपाते कर्त्तव्ये विपरीतोच्चारणं विशिष्टसंघात-ग्रहणार्थं तेन प्रत्येकं विपर्य्ययेण वा योगे न । अतएव निविशते यदि शूकशिखा पदे इत्यादि । अधिशीङ्स्थासामित्यतः आधार इत्यनु-वर्त्तते ।

दित्व मण्डूकप्लुत्यान्यतरस्यां ग्रहणमनुवर्त्त्य व्यवस्थित (५५) विभाषाश्रयणात् क्वचिन्न । पापेऽभिनिवेशः ।

उपान्वध्याङ्वसः । १ । ४ । ४८ ।

उपादिपूर्व्वस्य वसते (५६) राधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः । अभुक्त्यर्थस्य (५७) न ° । वने उपवसति । उभ (५८) सर्व्वतसोः

(५५) व्यवस्थितेति समर्थसूत्रे अर्थेऽभिनिविष्टानमिति भाष्यप्रयोगएव व्यवस्थाकल्पने मानमिति भावः । अन्ये तु एतद्भाष्यप्रयोगादभिनिविशत्यानुपूर्व्व्यां यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिः । अभिनिवेशश्चात्मस्थलक्षितार्थकत्वे तु न स्यात् यथा या या संज्ञा तत्र यत्राभिनिविशत-इत्यादौ तदानुपूर्व्व्यां श्रवणेऽपि न कर्म्मत्वम् । अभिनिविशते सन्मार्गमित्यादौ सन्मार्गविषयक आग्रहइत्यर्थ इति प्राहुः ।

(५६) लुग्विकरणादलुग्विकरण बलीयइति न्यायेन वस निवासे इति भौवादिकएवात्र गृह्यते न तु वस आच्छादने इत्यादादिकस्तस्य ग्नूप्विकरणस्य लुप्तत्वादित्याशयेन श्तिपा निर्द्दिशति वसतेरिति ।

(५७) वसेरश्यर्थस्य प्रतिषेधइति वार्त्तिकमर्थतो व्याचष्टे अभुक्त्यर्थस्येति । मशकार्थो धूमइत्यादिवत् अर्थशब्दोनिवृत्तिपरस्तथा च भुजिर्भोजनमर्थो निवर्तनीयोऽर्थोयस्येति शाक्ये एकार्थशब्दलोपेन भोजननिवृत्तिरूपार्थकस्य नेति वार्त्तिकार्थ इति भावः । गत्यर्थाकर्म्मकेत्यादिसूत्रवृत्तौ (उ०२९६पृ०)हरिदिनमुपोषित इत्युदाहरिष्यमाणस्य तु वसेः स्थितिरेवार्थो भोजननिवृत्तिस्तु आर्थिकीति बोध्यम् । उपोष्य रजनीमेकामित्यादौ कालाध्वनोरत्यन्तसंयोगे इति(२९८पृ०)द्वितीयेति ध्येयम् ।

( ५८) एवं कारकद्वितीयां निरूप्य तत्प्रसङ्गादुपपदविभक्तिमाह उभेत्यादि । उपपदविभक्तीनां संबन्धोऽर्थः विधिप्य तत्तदर्थानुक्तेः षष्ठ्यपवाद-

कार्य्या धिक्‌ (५८) पर्य्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते १। उभयतः कृष्णं गोपाः। सर्व्वतः कृष्णम्। धिक् कृष्णाभक्तम्। उपर्य्युपरि लोकं हरिः। अध्यधि लोकम्। अधोऽधो (६०) लोकम्। अभितः परितः समयानिकषाहाप्रतियोगेऽपि। अभितः कृष्णम्। परितः कृष्णम्। ग्रामं समया निकषा वा। हा कृष्णाभक्तम् तस्य शोच्यतद्दूत्यर्थः। बुभुक्षितन्न प्रति भाति किञ्चित्।

## अन्तराऽन्तरेण युक्ते। ४। ३। ४।

आभ्यां योगे (६१) द्वितीया स्यात् अन्तरा त्वाम्मां हरिः। अन्तरेण हरिन्न सुखम्।

त्वेन तत्प्रत्ययानार्थकत्वौचित्याच्च। उभयशब्दनिष्ठं प्रकृतित्वमुभयशब्दे आरोप्य तदभिहितम् उभशब्दस्यानुकरणत्वेनात्र नायजिति द्रष्टव्यम्। वस्तुतः उभशब्दात् तसिलि वृत्तिमात्रे उभशब्दादयज्विधानादयजिति बोध्यम्।

(५८) धिक्‌ इति अनुकरणत्वात् सुपो न लुक्। परे तु धिगित्येव पठन्ति तत्र विभक्त्यभावश्चिन्त्यः। धिक्‌शब्दो निन्दार्थकः।

(६०) उपर्य्यादिशब्दानां सामीप्ये एव उपर्य्यध्यधसः सामीप्य(७३६पृ०) इति द्वित्वविधानात् तदर्थे एव द्योत्ये द्वितीया तेन पर्य्युपरि बहूनां चरन्ती-श्वरबुद्धय इत्यादौ न द्वितीयेति बोध्यम्। अभितः परित इत्यत्र पर्य्य-भिभ्याञ्चेति(६८१पृ०)तसिल् तत्राद्यस्योभयत इत्यर्थोऽन्यस्य सर्व्वत इत्यर्थः।

(६१) अवधित्वरूपः सम्बन्धः मध्यत्वान्वयी मध्यार्थकान्तराशब्दयोगे द्वितीयार्थः तस्यैव सम्बन्धत्वेन बोधे षष्ठीसम्भवेन तदपवादिकतया द्वितीया या अनेन विधानेन तन्त्रस्यार्थकत्वौचित्यात् हर्य्यादिपदात् नहि-

स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासे किम् । तवौष्ठः । ॥ ओमाङोश्च ।६।१।९५। ओमि आङि चात्परे पररूपमेकादेशः स्यात् । शिवायोंनमः । शिव एहि शिवेहि । ॥ अव्यक्तानुकरणस्यात इतौ ।६।१।९८। ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात् । पटत् इति पटिति ॥ * एकाचो न ॥ श्रदिति । ॥ नाम्रेडितस्यान्त्यस्य तु वा ।६।१।९९। आम्रेडितस्य प्रागुक्तं न स्यादन्त्यस्य तु तकारमात्रस्य वा स्यात् ॥ डाचि बहुलं द्वे भवत इति बहुलवचनाद्वित्वम् । ॥ तस्य परमाम्रेडितम् ।८।१।२। द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । पटत्पटेति । ॥ झलां जशोऽन्ते ।८।२।३९। पदान्ते झलां जशः स्युः । पटत्पटदिति । ॥ अकः सवर्णे दीर्घः। ६।१।१०१। अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । अचि किम् । कुमारी शेते । नाज्झलाविति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः । अकः किम् । हरये ॥ 'अकोकि' इत्येव सुवचम् ॥ * ऋति सवर्णे ऋ वा ॥ होतृकारः । होतॄकरः ॥ * ऌति सवर्णे ऌ वा ॥ होत्लृकारः । पक्षे ऋकारः सावर्ण्यात् । होतॄकारः । ऋति ऋ वा ऌति ऌ वेत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम् । आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा । अभितोऽज्भक्तेरपरा । द्वितीयस्य तु मध्ये द्वौ

---

इति ॥—**शिवेही**ति । ननु शिव आ इहीत्यत्र सवर्णदीर्घे कृते पश्चादाद्गुणे च सिद्धमिष्टं तत्किमाङ्ग्रहणेन । सत्यम् । 'पूर्वं धातुरुपसर्गेण युज्यते' इति दर्शनेन धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं गुणे कृते वृद्धिः स्यात्, तन्मा भूदित्याङ्ग्रहणम् ॥—**अव्यक्तानुकरणस्यात इतौ** ॥ यद्यपि 'अतो गुणे' इति पूर्वसूत्रादत इत्यनुवर्त्यातोग्रहणमिह त्यक्तुं शक्यं, तथापि पूर्वसूत्रे अत इति तपरकरणाद्ध्रस्वाकारस्य ग्रहणमिह तु शब्दाधिकारपक्षाश्रयणाद् अच्छब्दस्य ग्रहणमिति व्याख्याने क्लेशः स्यादिति पुनरत्रातोग्रहणं कृतम् ॥ अव्यक्तशब्दं व्याचष्टे—**ध्वनेरि**ति ॥—**अनुकरणस्ये**ति । परिस्फुटाकारादिवर्णस्येति भावः । तस्य चानुकरणत्वं किंचित्साम्येन बोध्यम् । पररूपस्यास्य नित्यत्वेऽपि संहितायामविवक्षितायां तदभावादाह—**पटत् इती**ति ॥—**नाज्झलावि**त्यादि । अयं भावः—विधेयभेदे वाक्यभेदात्संभवन्त्यामेकवाक्यतायां तदयोगात् 'तुल्यास्यप्रयत्नम्–' इत्यस्य 'नाज्झलौ' इत्यस्य च एकवाक्यत्वलाभाय 'अज्झल्भिन्नं तुल्यास्यप्रयत्नं सवर्णम्' इत्यर्थोऽभ्युपेयते । 'अज्झल्भिन्नम्' इत्यत्र परस्परनिरूपिततुल्यत्वविशिष्टास्यप्रयत्नकौ यावज्झलौ तदुभयभिन्नत्वं विवक्षितम् । तथा च 'यो ह्रस्वदीर्घाद्यात्मको वर्णो येन वर्णेन तादृशेन तुल्यास्यप्रयत्नस्तदुभयं मिथः सवर्णं भवति' । तथा—'येन हला तुल्यास्यप्रयत्नकं यद्धल् तन्मिथः सवर्णं स्यात्' यश्च दीर्घप्लुतात्मको वर्णो येन हला तुल्यास्यप्रयत्नस्तदुभयमपि मिथः सवर्णम्' इत्यर्थः फलितः ॥ ततश्चानेन सूत्रद्वयेन सवर्णसंज्ञायां सिद्धायाम् ''अणुदित्सवर्णस्य–' इति ग्राहकशास्त्रं प्रवर्तते, न तु ततः प्राक् । अतो 'नाज्झलौ' इत्यनेन अक्षरसमाम्नायिकानामेव सावर्ण्यं व्युदस्यते, न तु सर्वेषाम् । तेनात्र दीर्घशकारयोः सावर्ण्यमस्त्येवेति तद्वारणाय 'अकः सवर्णे–' इत्यत्राचीत्यनुवर्तनं युक्तमिति ॥ यदा तूष्मणामीषद्विवृतत्वं परिकल्प्य 'नाज्झलौ' इति सूत्रं प्रत्याख्यायते, तदेह सवर्णसूत्रे अचीति नानुवर्तनीयम् ॥ हे पिपासो इत्यादौ 'गुरोरनृतः–' इत्याकारस्य प्लुते कृते ततः परस्य सस्य इणः परत्वेन षत्वं स्यात्, 'नाज्झलौ' इत्यत्राकारप्रश्लेषेण दीर्घहकारयोः सावर्ण्याभावेऽपि प्लुताकारस्य हकारसवर्णत्वेन इण्त्वादित्याशङ्क्य तत्समाधानार्थमाश्च आश्चेति द्वन्द्वं कृत्वा सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यते इति क्लिष्टव्याख्यानमपि नाश्रयणीयम् । विश्वपाभिरित्यादौ ढत्वादेरप्यप्रसक्तेः । स्वराणामूष्मणां च प्रयत्नभेदेन सावर्ण्याभावादिति सुगमोऽयं पन्थाः ॥—**अकोऽकीत्येवे**ति । 'अकोऽकि दीर्घः' इत्येवेत्यर्थः ॥—**सुवचमि**ति । यथासंख्यसंबन्धेन दध्यत्रेत्यादावतिप्रसङ्गाभावात् ॥ ऋ इति त्रिंशतः संज्ञेत्युक्तत्वाद् होतॢकार इत्यत्र ऋकारस्य ऋकारपरत्वमस्त्येवेत्यप्रसङ्गाभावादीकारशकारयोः सावर्ण्ये सत्यप्यचीत्यनुवर्तनं विनैव समीहितरूपसिद्धेश्चेति भावः ॥ 'ऋति ऋ वा' 'ऌति ऌ वा' इति वार्तिकं सूत्रस्थेन सवर्णपदेन योजयित्वा पठति—**ऋति सवर्णे** इत्यादि ॥ नन्वेवम् 'अकः सवर्णे–' इति सवर्णपदाकरणे वार्तिकयोः सवर्णग्रहणं कर्तव्यम् । सूत्रे तु 'अकोऽकि–' इति कर्तव्यमिति विपरीतगौरवात्कथम् 'अकोऽकीत्येव सुवचम्' इत्युक्तमिति चेदत्राहुः । भाष्यकारैरेतद्वार्तिकद्वयस्य प्रत्याख्यानात्रास्त्येव गौरवमिति ॥ प्रत्याख्याने तूपपत्तिः—ऌकारान्तेषु विचारयिष्यते ॥—**वर्णद्वयं द्विमात्रमि**ति । एतेन दीर्घं

---

च 'दन्त्योष्ठयो वः स्मृतो बुधैः' इत्यादि प्रयोगा न संगच्छन्ते इति वाच्यम् । न । इन्द्रे चेतिसूत्रस्थभाष्यानुरोधेन ओत्वोष्ठशब्दघटितोत्तरपदेऽपि एतत्सूत्रप्रवृत्तेरङ्गीकारात् ।

१ परं रूपमिति—इदं च अलोऽन्त्यस्येत्यन्त्यस्य न भवति, 'नानर्थके–' इति तन्निषेधात् । २ पटत्पटदिति—एवं श्रदित्यत्रापि बोध्यम् । ननु तत्रैव कुतो न स्मारितमिति चेत्, शिंशपाचोद्यमेतत् सर्वोपकारकतया प्रकरणान्ते स्मारणम् । ३ अभित इति—द्वौ रेफाविलनुषज्यते, तच्च द्वितीयान्तम्, अभितःपदयोगात् ।

कर्म्मप्रवचनीयाः (६२)। १। ४। ८३।

इत्यधिकृत्य।

अनुर्लक्षणे। १। ४। ८४।

लक्षणे (६३) द्योत्येऽनुरुक्तसंज्ञः स्यात्। गत्युपसर्गसंज्ञा(२०४०) पवादः (६४)।

कर्म्मप्रवचनीययुक्ते द्वितीया। २। ३। ८।

एतेन योगे द्वितीया स्यात्। जपमनु प्रावर्षत्। हेतुभूतजपोपलक्षितं(६५) वर्षणमित्यर्थः। परापि (६६) हेतौ तृतीया-

---

तीया उपपदविभक्तेः कारकविभक्तेर्गरीयस्त्वात् तत्राध्याहृतक्रियापेक्षितया प्रथमाया एव प्राप्तेरिति द्रष्टव्यम्।

(६२) कर्म्म क्रियां प्रोक्तवन्त इति कर्म्मप्रवचनीयाः कर्त्तरि भूते चानीयर्-प्रत्ययः तेन संप्रति क्रियां न कथयन्ति नापि द्योतयन्ति किन्तु क्रियानिरूपितसम्बन्धविशेषं द्योतयन्ति यथोक्तं हरिणा।

क्रियाया द्योतकोनायं सम्बन्धस्य न वाचकः।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदक इति।

अधिपरी अनर्थकावित्यादेः (२६५पृ०)तदभावेऽपि योग्यतया तथात्वम्

(६३) लक्षण इतितत्सम्बन्धे लक्ष्यलक्षणभावेऽनुना द्योत्ये इत्यर्थः।

(६४) अपवाद इति तद्द्योत्यसंबन्धस्य क्रियान्वयाद्गतित्वप्राप्तावयमपवादः तेन गतिर्गताविति(८। १। ७०सू०) अनेनानीर्न निघात इति बोध्यम्

(६५) अनुद्योत्यं लक्षणत्वञ्च ज्ञानजन्यज्ञानविषयत्वं जपज्ञानेन हि कालविशेषविशिष्टा वृष्टिर्ज्ञाप्यते तेन जपाभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोध इत्याह हेतुभूतेत्यादि।

(६६) कर्मप्रवचनीयसंज्ञावकाशो हेतुत्वाविवक्षायां, तद्विवक्षायां तु हृतीया-

ऽनेन बाध्यते लक्षणेत्थम्भूतेत्यादिना (२६५पृ०) सिद्धे पुनःसंज्ञा (६७) विधानसामर्थ्यात्।

## तृतीयार्थे (६८)।१।४।८५।

अस्मिन् द्योत्येऽनुरुक्तसंज्ञः स्यात्। नदीमन्ववसिता सेना। नद्या सह सम्बद्धेत्यर्थः। षिञ् बन्धने क्तः।

## हीने।१।४।८६।

हीने द्योत्येऽनुःप्राग्वत्। अनु (६९) हरिं सुराः हरेर्हीना इत्यर्थः।

## उपोऽधिके च।१।४।८७।

अधिके हीने च द्योत्ये उपेत्यव्ययम्प्राक्संज्ञः स्यात्। अधिके सप्तमी (७०) वक्ष्यते। हीने उप हरिं सुराः।

वकाश इत्यनयोर्विषयविशेषसमावेशेन प्रकृते हेतुत्वविवक्षया परस्या एव तृतीयायाः प्राप्तिः स्यादित आह परापीति।

(६७) पुनःसंज्ञेति पुनःसंज्ञाकरणबोधितद्वितीयाविधानसामर्थ्यादित्यर्थः अन्यथा तद्विधानं व्यर्थं स्यादिति भावः।

(६८) तृतीयार्थे इत्यत्र तृतीयाशब्देन तृतीयानिमित्तं सहयुक्ते (२७२पृ) इत्यत्लोपःत्तोऽनन्तरत्वात् सहशब्दो लक्ष्यते तदर्थे साहित्ये द्योत्य इत्यर्थः साहित्यरूपः सम्बन्धोऽनुद्योत्यो द्वितीयार्थस्तदाह नद्येति।

(६९) हीने इति शब्दशक्तिस्वाभाव्यात् उत्कृष्टादेव द्वितीया नत्वपकृष्टादित्याशयेनोदाहरति अनु हरिमिति।

(७०) सप्तमीति यस्मादधिक (२१४पृ०) मित्यनेनेति शेषः।

**लक्षणेत्थम्भूताख्यानभाग (७१) वीप्सासु प्रतिपर्य्यनवः। १। ४। ९०।**

एष्वर्थेषु विषयभूतेषु (७२) प्रत्यादयश्कर्मप्रवचनीयसंज्ञाः स्युः। लक्षणे। वृक्षम्प्रति (७३) परि, अनु वा विद्योतते विद्युत्। इत्थम्भूताख्याने भक्तो विष्णुम्प्रति परि, अनु वा। भागे लक्ष्मीर्हरिम्प्रति परि, अनु वा हरेर्भाग इत्यर्थः। वीप्सायाम् वृक्षं वृक्षं प्रति (७४) परि, अनु वा सिञ्चति। अत्रोपसर्गत्वाभावान्न षत्वम्। एष किम् परिषिञ्चति।

**अभिरभागे। १। ४। ९१।**

भागवर्ज्जे लक्षणादावभिरुक्तसंज्ञः स्यात्। हरिमभिवर्त्तते। भक्तो हरिमभि। देवन्देवमभि सिञ्चति। अभागे किम्? यदत्र ममाभिष्यात्तद्दीयताम्।

**अधिपरी अनर्थकौ। १। ४। ९३।**

(७१) इत्थं भूतः कञ्चित्प्रकारं प्राप्तः स आख्यायतेऽनेनेति इत्थम्भूताख्यानं प्रकारविशेषनिरूपकं, भागशब्देन च अर्थ्याद्यजन्तेन तत्स्वामी उच्यते

(७२) वीप्साया द्विर्वचनबोध्यत्वमाशङ्क्याह विषयभूतेष्विति तथा च वीप्साया द्विर्वचनबोध्यत्वेऽपि प्रत्यादीनां तत्र द्योतकतेति भावः।

(७३) वृक्षमिति वृक्षप्रकाशेन विद्युद्विद्योतनदेशज्ञानाद्वृक्षो लक्षणम्।

(७४) वृक्षं वृक्षमित्यादौ द्विर्वचनबलात् वृक्षादेर्व्यापकतासम्बन्धेनान्वयः प्रत्यादिभिर्निर्णीयते तथा च तेषां सम्बन्धपरिच्छेदकत्वमिति भावः। वृक्षादीनां सेचनकर्मत्वेऽपि तस्येनाविवक्षायामनेन द्वितीया।

उक्तसंज्ञौ स्तः । कुतोऽभ्यागच्छति । कुतः पर्य्यागच्छति गतिसंज्ञाबाधाद्(७५) गतिर्गताविति(८।१।७०सू०)निघातो न ।

## सुः पूजायाम् । १ । ४ । ९४ ।

सु सिक्तम् । सु स्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किं सुषिक्तं किन्तवात्र । आक्षेपोऽयम् ।

## अतिरतिक्रमणे च । १ । ४ । ९५ ।

अतिक्रमणे (७६) पूजायाञ्चातिः कर्मप्रवचनीयसंज्ञः स्यात् अति देवान् कृष्णः ।

## अपिः (७७) पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु । १ । ४ । ९६ ।

एषु द्योतेऽप्यपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः सम्भावनायां (७८) लिङ् तस्या एव विष-

(७५) गतिसंज्ञाबाधादिति धात्वर्थमात्रद्योतकत्वेन क्रियायोगात् गतित्वेऽपि विशिष्य द्योतकत्वाभावात् अनर्थकत्वव्यवहार इति भावः ।

(७६) अतिक्रमणमुचिताधिकानुष्ठानम् । चकारात् पूर्व्वसूत्रस्थं पूजायामित्यनुकृष्यते अति देवानित्यस्य देवेभ्योऽधिको देवपूज्यो वा कृष्ण इत्यर्थः ।

(७७) अपिरिति । पदस्याप्रयुज्यमानपदान्तरस्यार्थः पदार्थः सर्पिषोऽपीत्यादौ बिन्दुरित्यादिरप्रयुज्यमानपदस्यार्थोऽपिना द्योत्यत इति बोध्यम् ।

(७८) सम्भावना उत्कटकोटिका शङ्का कर्मप्रवचनीयत्वेन तद्द्योत्यसम्बन्धमाह तस्या एवेति सम्भावनाया एवेत्यर्थः कर्त्तृदौर्लभ्येति प्रकृताभिप्रायं सर्पिषोऽपि पिबेत्यादौ कर्म्मदौर्लभ्यत्वस्यापि संग्राह्यत्वात् ।

यभूते भवने कर्त्तृदौर्लभ्यप्रयुक्तदौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते सर्पिषइति षष्ठी तु अपिशब्दबलेन गम्यमानस्य विन्दोरवयवावयविभावसम्बन्धे। इयमेव ह्यपि शब्दस्य पदार्थद्योतकता नाम। द्वितीया तु नेह प्रवर्त्तते सर्पिषो विन्दुना योगो न त्वपिने (७९) त्युक्तत्वात्। अपि स्तुयाद्विष्णुम् (८०) सम्भावनं शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिः। अपि स्तुहि। अन्ववसर्गः कामचारानुज्ञा (८१)। धिग्देवदत्तमपि स्तुयाद्वृषलम् (८२) गर्हा। अपि सिञ्च अपि(८३) स्तुहि समुच्चयः।

---

विन्दोर्दौर्लभ्यप्रयुक्तदौर्लभ्यसंबन्धस्य द्योतकोऽपिः। एवञ्च सर्पिरवयवविन्दुदौर्लभ्यप्रयुक्ता तत्कर्त्तृका संभावनाविषयः सत्तेति बोधः।

(७९) न त्वपिनेति विन्दुना योगेऽपि अपिद्योत्यसम्बन्धेनानन्वय एवेति न द्वितीया। कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव तद्युक्तत्वं प्रकृते च अपिद्योत्यसम्बन्धस्य विन्दुः प्रतियोगी न सर्पिरिति भावः। यदा तु स्पष्टप्रतिपत्तयेऽपिद्योत्यस्यापि विन्दोःप्रयोगस्तदाऽपि उपपदविभक्तेः कारकविभक्तिर्गरीयसीत्युक्तेर्द्वितीयां बाधित्वैव स्यादिति क्रियाकर्त्तृत्वेन प्रथमैवेति दिक्।

(८०) अपि स्तुयादिति अवाङ्मनसगोचरं विष्णुमपीत्यनेन शक्त्युत्कर्षाविष्करणार्था अत्युक्तिरसम्भाव्यार्थसम्भावनं [संभावनापदस्येदृशार्थकत्वे व्याख्यानमेव शरणमिति द्रष्टव्यम्। अशक्याया अपि विष्णुस्तुतेः शक्यत्वसंभावनेऽन्यस्तुतेर्निश्चयेन कर्त्तुं शक्यत्वादर्थायातः शक्त्युत्कर्षः।

(८१) कामचारः यथेच्छं स्तुहि वा यथेष्टं कुर्विति यावत्।

(८२) क्रियागतगर्हात्वमपिद्योत्यम् तदेव धिगित्यादिनाऽनूद्यते।

(८३) अपिद्वयेन मिलितेन समुच्चयद्योतनात् प्रत्येकं संज्ञायामुभयत्रापि पत्वाभाव इति बोध्यम्।

## कालाध्वनोरत्यन्तसंयोगे (८४)।२।३।५।

इह द्वितीया स्यात्। मासङ्कल्याणी। मासमधीते। मासं गुड़धानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्। मासस्य द्विरधीते क्रोशस्यैकदेशे पर्व्वतः।

। द्वितीया (८५)

## स्वतन्त्रः (८६) कर्त्ता।१।४।५४।

(८४) अत्यन्तसंयोगो निरन्तरसंबन्धस्तेन गुणक्रियाभ्यामभावेन च तादृशसंबन्धसम्भवेन मासं भोजनं तदभावो वेत्यादिप्रयोगः संगच्छते। तथाच गुणादिभिः कालाध्वनोरत्यन्तसम्बन्धे प्रत्यासत्त्या कालाध्वशब्दाभ्यां द्वितीयेत्यर्थः। मासमधीते इत्यादौ वृत्तिस्ययावदवयवसंबन्धरूपा व्याप्तिर्द्वितीयार्थः।

(८५) अत्रेदं बोध्यम्। फलभागित्वेनैव कर्म्मणः कर्म्मव्यपदेशभागितया फलस्यापि व्यपदेशिवद्भावपरिभाषया कर्म्मत्वस्वीकारात् फलस्य च धातूपस्थाप्यतया प्रातिपदिकत्वाभावेन तत्र द्वितीयादिसत्त्वेरभावेऽपि तद्विशेषणीभूतप्रातिपदिकशब्दात् द्वितीया तेन। स्तोकं पचतीत्यादिसिद्धिरतएव धात्वर्थविक्लित्तिफलरूपक्रियाया विशेषणस्य स्तोकादेः क्रियाविशेषणत्वमिति व्यवहारः। इति द्वितीया।

(८६) स्वतन्त्र इति शप्श्यनादिप्रत्ययसमभिव्याहृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वमितरव्यापारानधीनव्यापारवत्त्वम् वा स्वातन्त्र्यं बोध्यम् कर्म्मबोधकप्रत्ययसमभिव्याहारे फलस्यैव प्रधानतया बोध तिङादिस्वीकर्त्तृमते कर्म्मादिव्यावृत्त्यर्थं शप्श्यनादिसमभिव्याहृतेति। णिजन्तस्थले प्रयोज्यस्य स्वातन्त्र्यवारणाय प्रधानव्यापारेति। हरिणा तु

क्रियायां स्वातन्त्र्येण विवक्षितो (८७) ऽर्थः कर्त्ता स्यात्।

**साधकतमं करणम्। १। ४। ४२।**

क्रियासिद्धौ प्रकृष्टोपकारकं (८८) करणसंज्ञं स्यात्। रामेण बाणेन हतो वाली। गङ्गायां घोषः।

---

स्वातन्त्र्यं विशेषेणोदर्शितो यथा।
धातूपात्तक्रिये नित्यं कारके कर्त्तृतेष्यते इति सामान्यतोऽभिधाय।
प्राधान्यतः शक्तिलाभात् प्रागभावापादनादपि।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात्।
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात्।
आरादप्युपकारत्वात् स्वातन्त्र्यं कर्त्तुरिष्यत इति

अस्यायमर्थः इतरव्यापारात् प्रागपि प्राधान्येनात्मशक्तेः कर्त्तृव्यापारस्य सत्त्वात् तथाच इतरव्यापारानधीनव्यापारवत्त्वादित्यर्थः इतरकारकाणाञ्च व्यापारप्रवृत्तिनिवृत्त्योश्च कर्त्तुरेव प्रयोजकत्वात् दात्रादेः कुठारादिवत् कर्त्तुः प्रतिनिध्यसम्भवात् कारकान्तराप्रयोगेऽपि कर्त्तुः प्रयोगात् आरात् साक्षाद्धातूपात्तफलजनकव्यापारवत्त्वाच्च स्वातन्त्र्यं कर्त्तुरिति।

(८७) विवक्षितइति कर्म्मकरणादेरपि तत्तद्व्यापारस्य धातुनाभिधाने कर्त्तृत्वमिति द्योतनाय।

निष्पत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवास्ति कारके।
व्यापारभेदापेक्षायां करणत्वादिसम्भव इति।

हरिणा विवक्षावशात् सर्व्वेषां कर्त्तृत्वस्य स्वीकारात् भाष्यकता तु पर्य्याप्तं करणाधिकरणकर्म्मणामेव कर्त्तृत्वं निदर्शितमपादानादीनां कर्त्तृत्वानिदर्शनायेत्युक्तत्वात् करणाधिकरणकर्म्मणामेव विवक्षया कर्त्तृत्वमिति विवेकः।

(८८) प्रकृष्टत्वञ्च स्वव्यापाराव्यवधानेन फलोत्पादकत्वं यथोक्तं हरिणा

## कर्त्तृकरणयोस्तृतीया (८९)। २। ३। १८।

अनभिते कर्त्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली। प्रकृत्यादिभ्य (९०) उपसंख्यानम्*। प्रकृत्या (९१)

---

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतमिति।

विवक्ष्यते इत्यनेन विवक्षया अन्यस्यापि तथात्वं भवतीति सूचितं तदप्युक्तं तेनैव

वस्तुतस्तदनिर्द्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येष प्रयोगो दृश्यते यत इति।

प्रत्युदाहरणं तु गङ्गाया आधारत्वस्य विवक्षायामेव तस्य च कर्त्तृकर्म्म-व्यवहितक्रियाधारत्वेन व्यवधानेन फलोत्पादकत्वात् न साधकतमत्वमिति भावः। आधारस्य यथा कर्त्तृकर्म्मद्वारा क्रियाधारत्वं तथाऽग्रे (३०७पृ०) वक्ष्यते।

(८९) कर्त्तृकरणयोरिति तृतीयायाः अर्थः कर्त्तृत्वकरणत्वशक्तिमान् जन्य-जनकभावः सम्बन्ध इति बोध्यम् करणशक्तिमत्त्वञ्च व्यापारवत्त्वमेव तेन हेतौ न प्रसङ्गः।

अनाश्रिते तु व्यापारे कारणं हेतुरिष्यते।
द्रव्यादिविषयो हेतुः करणं चरितक्रियमिति।

हरिणा हेतोर्व्यापारानाश्रयत्वोक्त्या व्यापाराश्रयस्यैव करणतोक्तेति द्रष्टव्यम्। उदाहरणे तु रामकर्त्तृकबाणकरणकप्राणवियोजनफलाश्रयो वालीति बोधः।

(९०) प्रकृत्यादिभ्य इति इदञ्च यथायोगं सर्व्वविभक्त्यपवादः आकृतिगणोऽयं तेन नाम्ना सुतीक्ष्णश्चरितेन दान्त इत्यादि सिद्धम्।

(९१) प्रकृत्येति चारुरभिरूपः क्रियाया अश्रवणेन कर्त्तृकरणत्वासम्भवात् षष्ठीह प्राप्ता तदपवादेन गम्यमानकरोतिक्रियाकरणत्वात् तृतीया तथाच

चारुः। प्रायेण (८२) याज्ञिकः। गोत्रेण (८३) गार्ग्यः। समेनैति (८४) विषमेणैति। द्विद्रोणेन (८५) धान्यं क्रीणाति। सुखेन दुःखेन यातीत्यादि।

## दिवः कर्म्म च।१।४।४३।

दिवः (८६) साधकतमङ्कर्मसंज्ञं स्यात् चात् करणसंज्ञम्। अक्षैरक्षान् वा दीव्यति।

---

रूतौ करणान्तरव्युदासाय प्रकृत्यादेरेव करणत्वम् विवक्षितं तेन स्वभावेनायमभिरूपः कृतः मलालङ्कारादिनेति प्रकृतवाक्यार्थः।

(८२) प्रायेणेति गम्यमानज्ञानक्रियां प्रति करणत्वम् आचारादिबाहुल्येन याज्ञिकोऽयं ज्ञात यत इत्यर्थः।

(८३) गोत्रेणेति गार्ग्योऽस्य गोत्रमित्यर्थः प्रथमात्र प्राप्ता गोत्रेणायं गार्ग्योज्ञायते इत्यर्थः।

(८४) समेनैतीति समगेतीत्याद्यर्थे समविषमाभ्यां द्वितीया प्राप्ता तयोस्तात्र गमने करणत्वाभ्युपगमेन तृतीयेति बोध्यम्।

(८५) द्विद्रोणेनेति द्वयोर्द्रोणयोः समाहारः द्विद्रोणं पात्रादित्वात् स्त्रीत्वाभावः द्रोणद्वयसम्बन्धि धान्यमित्यर्थः अत्र षष्ठी प्राप्ता द्विद्रोणपरिमितधान्यार्थे मूल्ये द्विद्रोणस्य क्रियां प्रति करणत्वमिति तृतीया।

(८६) दिव इति उभयसंज्ञयोः समावेशः। तेन दिवः साधकतमस्य शक्तिद्वययोगो बोध्यतेऽतः अक्षैर्देव्यत इत्यादौ तृतीयापरत्वेऽपि सकर्म्मकत्वात् अकर्म्मकप्रयुक्तपरस्मैपदाभावः तृतीययैव शक्तिद्वयबोधनेन अकर्म्मत्वाभावात्। यदाऽक्षाणां कर्म्मत्वविवक्षा तदाऽक्षान् दीव्यतीत्यादि साधु तदभिप्रायेणैव अक्षाणां देवितेत्यादौ तृतीयातः परत्वात् कृद्योगे षष्ठी। मनसादेवीत्यादौ मनसः करणत्वेऽपि तृतीययैव कर्म्मत्वबोधनात् कर्म्मण्यणि अनुकसमास। मनसादेवरित्यादौ

अपवर्गे तृतीया। २। ३। ६।

अपवर्गः फलप्राप्तिः (९७)स्तस्यां द्योत्यायाङ्कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। अह्ना क्रोशेन वाऽनुवाकोऽधीतः फलप्राप्तिः किम्। मासमधीतो नायातः (९८)।

सहयुक्तेऽप्रधाने। २। ३। १९।

सहार्थेन (९९) युक्तेऽप्रधाने तृतीया स्यात्। पुत्रेण सहागत पिता (१००)। एवं साकंसार्द्धंसमंयोगेऽपि। विनापि (१०१ तद्योगं तृतीया वृद्धो यूनेत्यादि (४४४पृ०) दर्शनात्।

---

छेत्तृतृतीया तेन पश्चाद्यजन्तदेवशब्देन समास इति विवेकः। यति द्वयस्वीकारेऽपि लकारादिना एकस्मिन्नपि उक्तेऽत्र प्रथमैव न तृतीयेति बोध्यम्।

(९७) फलप्राप्तिरिति तस्याश्च सत्यां प्रयोजनभावादेव न क्रियाप्रवृत्तिरि फलप्राप्तिशब्देन तत्पूर्वकस्त्यागउच्यते त्यागश्च च फलप्राप्तिर्ध्यें ति फलप्राप्तिरेवार्थसम्बन्धादपवर्गशब्दवाच्या।

(९८) नायात इत्यनेन फलप्राप्तिरेवापवर्गवाच्येति स्फुटमुक्तम्।

(९९) पृथग्विनानानाभिः (२९७पृ०) इतिवत् सहेनेत्येव सिद्धे युक्तपदग्रं विशेषं विनापि तदर्थकयोगे भवतीत्येतदर्थमित्याह सहार्थेनेति।

(१००) सहार्थः साहित्यं तच्च समभिव्याहृतक्रियादिसमानकालताद क्रियादिमत्त्वं क्वचित्तु समदेशक्रियावत्त्वं तेन मासवपनकालेएक छेत्रे तिलवापे तिलैः सह माषान् वपतीति प्रयोगः। ि रस्यागमनसम्बन्धः गमधातुबोध्यः पुत्रस्य तृतीयाबोध्य प्रधानतया ततस्तृतीया यथा चास्याप्रधानता तथा शब्दार्थ टस्माभिःप्रपञ्चितम्।

(१०१) क्वचित्सहशब्दयोगं विनापि भवतीत्याह विनापीति।

ऌकारौ। शेषं प्राग्वत्। इहोभयत्रापि ऋत्यक इति पाक्षिकः प्रकृतिभावो वक्ष्यते। **एङः पदान्तादति** ।६।१।१०९। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव। विष्णोऽव। **सर्वत्र विभाषा गोः** ।६।१।१२२। लोके वेदे च गोरति वा प्रकृतिभावः स्यात्पदान्ते। गोअग्रम्, गोऽग्रम्। एङन्तस्य किम्। चित्रग्वग्रम्। पदान्ते किम्। गोः। **अवङ् स्फोटायनस्य** ।६।१।१२३। अतीति निवृत्तम्। अचि परे पदान्ते गोरवङ् वा स्यात्। गवाग्रम्। पदान्ते किम्। गवि। व्यवस्थितविभाषया गवाक्षः। **इन्द्रे च**[1] ।६।१।१२४। गोरवङ् स्यादिन्द्रे। गवेन्द्रः॥

---

## अथ प्रकृतिभावः।

**प्लुतप्रगृह्या अचि नित्यम्** ।६।१।१२५। प्लुताः प्रगृह्याश्च वक्ष्यन्ते तेऽचि नित्यं प्रकृत्या स्युः। एहि कृष्ण ३ अत्र गौश्चरति। हरी एतौ। नित्यमिति[2] किम्। हरी एतावित्यादावयमेव प्रकृतिभावो यथा स्यादिकोऽसवर्णे इति ह्रस्वसमुच्चितो माभूत्। **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ।६।१।१२७। पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या

---

प्राप्ते ह्रस्वऋकारो ह्रस्वऌकारश्च विधीयत इति प्राचो व्याख्यानमाकरविरुद्धमिति ध्वनितम्॥—**एङः पदान्तात्**—॥ अयवोरपवादः। 'ङसि ङसोश्च' इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टप्रतिपत्तये इहैव कृतमिति मनोरमायां स्थितम्॥ केचित्तु 'पदान्तात्' इत्येतदिहाप्यावश्यकमेवान्यथाऽपदान्तादपि स्यात्। 'ङसिङसोश्च' इति सूत्रं तु 'सुप्संबन्धिन्यति परतः पूर्वरूपं चेन्ङसिङसोरेवाति परे' इति नियमार्थं स्यात्। तत्फलं तु हरयः, गुरवः, इः स्मृतो यैस्ते स्मृतयः, इत्यादौ पूर्वरूपाप्रवृत्तिरित्याहुः॥ एङः किम्। दध्यत्र॥ पदान्तात्किम्। चयनम्। लवनम्। अचिनवम्॥ अति किम्। हरयिह। विष्णविह॥ तपरः किम्। वायवायाहि॥—**सर्वत्र विभाषा**—॥ यद्यपीह 'छन्दसि' इति न प्रकृतम्, तथापि 'यजुष्युरः–' इत्यादिप्रक्रमात् छन्दस्येव संभाव्येत। अतः 'सर्वत्र' इत्युक्तम्। तद्व्याचष्टे—**लोके वेदे** चेति। इह एङ् इत्यनुवर्त्य एङन्तस्य गोरिति व्याख्येयम्॥—**प्रकृतिभाव** इति। एतच्च 'प्रकृत्यान्तःपादम्–' इति सूत्रात्प्रकृत्येत्यनुवृत्त्या लभ्यते। 'नान्तः पादम्' इति पाठे तु 'सर्वत्र विभाषा–' इति सूत्रेण पूर्वरूपमेव विभाषाया निषिध्येत इत्यवधेयम्। निषेधविकल्पे विधिविकल्पः फलित इत्याशयेन पूर्वरूपमेव विकल्प्यत इति मनोरमायां स्थितम्॥—**अवङ् स्फोटायनस्य**॥ स्फोटोऽयनं परायणं यस्य सः स्फोटप्रतिपादनपरो वैयाकरणः। तस्य स्फोटायनस्य। अत्रापि एङन्तस्य गोरिति व्याख्येयम्॥ अगित्येव सूत्रयितुमुचितम्॥ विभाषानुवृत्तेः स्फोटायनग्रहणं पूजार्थम्॥—**अतीति निवृत्तमिति**। अन्यथा गवेशः, गवोद्वः इत्यादि न सिध्येदिति भावः॥—**अचि पर** इति। अत्राचीत्यनुवर्तते। 'अतीति तु निवृत्तम्' इत्यत्र व्याख्यानमेव शरणम्॥—**गवाक्ष** इति। गवां किरणानाम् अक्षीवेति विग्रहः। 'अक्ष्णोऽदर्शनात्' इत्यच् समासान्तः। वातायने रूढोऽयम्। पुंस्त्वं लोकात्॥—**इन्द्रे च**॥ आरम्भसामर्थ्यान्नित्यमिदम्। इदं च सूत्रं त्यक्तुं शक्यम्। अन्यार्थं स्वीकृतेन व्यवस्थितविभाषाश्रयणेनैव इष्टसिद्धेरित्याहुः॥ 'प्लुतप्रगृह्याः–' इति सूत्रादव्यवहितपूर्वः **'अथ प्रकृतिभावः'** इति पाठो मूलपुस्तकेषु प्रायेण दृश्यते स चापपाठ एव 'सर्वत्र' विभाषा गोः' इति प्रकृतिभावस्य प्रागेवारब्धत्वादित्येके॥ अन्ये तु 'अवङ् स्फोटायनस्य' 'इन्द्रे च' इति सूत्रद्वयं प्रकृतिभावप्रकरणपठितमपि तद्बहिर्भूतमित्यवश्यं वक्तव्यं, ताभ्यां तदविधानात्। न च 'अवङ्–' सूत्रस्य प्रकृतिभावापवादत्वेनोत्सर्गापवादरूपत्वात् तत्प्रकरणस्थत्वं सूपपादमित्यवङादेशानुवृत्त्यर्थं तदनन्तरं पठितस्य 'इन्द्रे च' इति सूत्रस्यापीति वाच्यम्। पूर्वरूपापवादत्वस्यापि 'अवङ्–' सूत्रस्य सुवचत्वात्। एतत्प्रकरणपाठस्य गोशब्दानुवृत्त्यर्थतया चरितार्थत्वात्। एवं च स्वलेख्यप्रकृतिभावप्रकरणाद्बहिस्तत् सूत्रद्वयं लिखितं तदनुकूलत्वेन 'सर्वत्र विभाषा–' इति सूत्रमपि तत्रैवेति स्थितस्य गतिर्बोध्येत्याहुः॥

**प्लुतप्रगृह्याः**—॥ प्रकृतिभावं प्रति प्लुतो नासिद्धः, प्लुतमनूद्य प्रकृतिभावविधानसामर्थ्यात्। अचि किम्। जानु उ जानू। उञः प्रगृह्यत्वेऽपीह सवर्णदीर्घः॥ अचीत्यनुवर्तमाने पुनरच्ग्रहणमादेशनिमित्ते एवाचि प्रकृतिभावः। तेन इहाप्येकादेशः स्यादेव—जानु उ अस्य रुजति, जानू अस्य रुजति। इह 'मय उञः–' इति पाक्षिके वकारे तु जान्वस्य रुजति॥—**एहि कृष्णे**ति। 'दूराद्धूते च' इति प्लुतः। प्राचां तु—कृष्ण ३ एहि—इति उदाहृतम्। तदसत्। 'वाक्यस्य टेः–' इत्यधिकारात्॥—**ह्रस्वसमुच्चितो मा भूदि**ति। अयं भावः—हरी ईशावित्यादौ 'प्लुतप्रगृह्याः–' इत्येतत्सावकाशं, चक्रि अत्रेत्यत्र तु 'इकोऽसवर्णे–' इति, ततश्च हरी एतावित्यत्र परत्वाद् ह्रस्वसमुच्चितः स्यात्। नित्यग्रहणे तु कृते

---

१ इन्द्रे च इति—क्वचिद्भाष्यपुस्तके चशब्दरहितः पाठो दृश्यते। २ नित्यमिति किमिति—वाग्रहणनिवृत्तेरेव नित्यत्वलाभ इति प्रश्नः।

येनाङ्गविकारः। २। ३। २०।

येनाङ्गेन(१०२) विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात्। अक्ष्णा (१०३) काणः। अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः। अङ्गविकारः किम् अक्षि काणमस्य।

इत्थम्भूतलक्षणे। २। ३। २१।

किञ्चित्प्रकारं (१०४) प्राप्तस्य लक्षणे तृतीया स्यात्। जटाभिस्तापसः। जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः।

संज्ञोऽन्यतरस्यां कर्मणि। २। ३। २२।

सम्पूर्व्वस्य जानातेः कर्मणि तृतीया वा स्यात्। पित्रा पितरं वा सञ्जानीते।

हेतौ। २। ३। २३।

---

(१०२) येनेति सर्व्वनाम्ना प्रकृत्यर्थभूतोऽवयवो गृह्यते सन्निधानात् स चार्थाद्विकृतएव यद्विकृतेनावयवेन शरीरी विकृतो भवति तदेतदाह येनाङ्गेन विकृतेनेति अङ्गविकारइत्यत्र अङ्गशब्दोऽर्शआद्यजन्ततया अङ्गिपरो व्याख्यानादिति ध्येयम्।

(१०३) अक्ष्णेति अवयवधर्म्मस्य अवयविन्यारोपात् तदवच्छिन्ने व्यवहार इति बोध्यम्। वेयतोऽपि दर्शनसामर्थ्यरूपं काणत्वम् तद्धीनत्वमन्धत्वमिति विवेकः।

(१०४) इत्थं शब्दः प्रकारवाची प्राप्त्यर्थाद्भुवः कर्त्तरि क्तः ततः इत्थंशब्देन भूतशब्दस्य समासः लक्षणशब्दः करणसाधन कर्म्मषष्ठ्यन्तेन इत्थंभूतशब्देन समास इत्याह किञ्चिदिति गम्यमानज्ञानकरणत्वस्याविवक्षाया मेवैतल्लक्षणेन तृतीयेति बोध्यम्।

हेत्वर्थे तृतीया स्यात्। द्रव्यादिसाधारणं निर्व्यापार-(१०५) साधारणञ्च हेतुत्वम्। करणत्वन्तु क्रियामात्रविषयं व्यापार-नियतञ्च। दण्डेन घटः (१०६)। पुण्येन दृष्टो हरिः फल-मपीह(१०७)हेतुः। अध्ययनेन वसति। गम्यमानापि(१०८) क्रिया विभक्तौ प्रयोजिका। अलं श्रमेण। श्रमेण साध्यं नास्तीत्यर्थः। इह साधनक्रियां प्रति श्रमः करणम्। शतेन-शतेन वत्सान् पाययति पयः। शतेन परिच्छिद्येत्यर्थः। अशिष्टव्यवहारे (१०९) दाणः प्रयोगे चतुर्थ्यर्थे तृतीया *। दास्या(११०)संयच्छते कामुकः। धर्म्मे तु भार्य्यायै संयच्छति।

। तृतीया।



(१०५) निर्व्यापारेति करणन्तु व्यापारवद्धेत्वित्युक्तम्(२७०पृ०)एवञ्च करणशक्ति-भिन्नैव हेतुशक्तिस्तृतीयार्थः।

(१०६) दण्डव्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वम् पुण्ये क्रिया जनकत्वेऽपि निर्व्यापारत्वादकरणत्वमिति विवेकः।

(१०७) फलमपीति स्वेच्छाजनकेच्छाविषयत्वेन फलस्य हेतुत्वम्।

(१०८) गम्यमानापीति अध्याहृतपदजन्यबोधविषयोपि न तद्वाच्यमाणतद्वाच-कपदजन्यबोधविषय एवेति भावः।

(१०९) अशिष्टानां संकीर्णानां यो व्यवहारः क्रिया तद्बोधकदाणःप्रयोगे प्रत्या-सत्त्या यत्सम्बन्धेन व्यवहारस्य संकीर्णत्वं तद्वाचकपदात् चतुर्थ्यर्थे तृतीयेत्यर्थः।

(११०) दास्येति दास्योसंप्रदानकं रतिफलकं दानमिति बोधः।

## कर्मणा यमभिप्रैति स सम्प्रदानम्।१।४।३२।

दानस्य कर्मणा यमभिप्रैति (१११) स सम्प्रदानसंज्ञः स्यात्।

## चतुर्थी (११२) सम्प्रदाने।२।३।१३।

विप्राय गान्ददाति। अनभिहितइत्येव। दानीयो विप्रः। क्रियया(११३)यमभिप्रैति सोऽपि सम्प्रदानम्*। पत्ये शेते।

(१११) कर्त्ता दानक्रियाकर्म्मणा यमभिप्रैति तत्कर्मवत्त्वेन इच्छति अयं गवादिमान् भवत्वित्युद्दिशतीति यावत् तत्कारकं सम्प्रदानसंज्ञकं स्यादित्यर्थः। दानञ्चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्व्वकं परस्वत्वापादानं पुनर्ग्रहणे तु रजकस्य वस्त्रं ददातीत्येव स्यात् ददात्यर्थस्य गौणत्वेऽपि संप्रदानं भवत्येव खण्डिकोपाध्यायः शिष्याय चपेटं ददातीति भाष्यप्रयोगात्। संप्रदानञ्च त्रिविधम्

अनिराकरणात् कर्त्तुस्त्यागाङ्गकर्म्मणेप्सितम्
प्रेरणानुमतिभ्याञ्च लभते संप्रदानतामिति।

हरिणा अनिराकरणप्रेरणानुमतिरूपविभाजकहेतुत्रयस्य निर्द्देशेन भेदत्रयस्य प्रतिपादनात्। तत्रानिराकर्त्तृ संप्रदानं देवाय वस्त्रं ददातीत्यादौ देवादि तस्य कर्त्तुः प्रवृत्त्यप्रतिबन्धेनानिराकरणात्। प्रेरकं संप्रदानं द्वितीयं याचकाय धनं ददातीत्यादौ याचकादि देहीत्याद्यभिलापादिना कर्त्तुःप्रेरणात्। अनुमन्तृ संप्रदानं तृतीयं गुरवे गां ददातीत्यादौ गुर्वादि तस्य प्रार्थनाव्यतिरेकेणापि अनुमतिमात्रेण प्रेरणादिति विवेकः।

(११२) तादर्थ्यचतुर्थ्यैव सिद्धे चतुर्थी सूत्रं रुच्यर्थानामित्यादि(२७६पृ०)सूत्रविषये चतुर्थ्यर्थम्। वस्तुतस्तादर्थ्याविवक्षायामपि चतुर्थ्यर्थम्।

(११३) कृत्रिमाकृत्रिमयोर्मध्ये कृत्रिमे कार्य्यसंप्रत्यय इति न्यायेन कर्म्मणेति कर्म्मशब्दस्य पारिभाषिककर्म्मसंज्ञापरत्वं न तु क्रियापरत्वमित्या-

यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा *। पशुना (११४)रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः।

## रुच्यर्थानां प्रीयमाणः। १। ४। ३३।

रुच्यर्थानां (११५) धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात्। हरये रोचते भक्तिः। अन्यकर्तृकोऽभिलाषो रुचिः। हरिनिष्ठप्रीतेर्भक्तिः कर्त्री। प्रीयमाणः किम् देवदत्ताय रोचते मोदकः पथि।

---

* यजेन क्रिययेत्यादिवार्त्तिकारम्भः क्रिययाभिप्रेयमाणं संप्रदानसंज्ञं स्यात् स्वक्रिया यत्क्रियोद्देश्यिका तत् संप्रदानमिति फलितार्थः भवति च पत्ये शेते इत्यादौ पत्नीशयनं पतिशयनफलकमिति पत्युः संप्रदानता अत्र क्रियाऽकर्मिकैवेति सम्प्रदायविदः। तन्तद्भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शन इत्यादौ तु नानेन संप्रदानता किन्तु क्रियार्थोपपदस्य च कर्मणि स्थानिन (२८९०) इत्यनेन तत्र चतुर्थी तेन दर्शयन्नित्यस्य सकर्मकत्वेऽपि न क्षतिरिति बोध्यम्।

(११४) पशुनेति कर्म्म तृतीयार्थः संप्रदानं द्वितीयार्थः। एतच्च दानार्थकयजधातुविषयमिव पूजार्थकस्य तु पशोः करणत्वमेव। इदञ्चछान्दसमिति कैयटः।

(११५) रुचिरर्थो येषां ते रुच्यर्थास्तेषां प्रीयमाणः प्रीणनकर्म्मैव संप्रदानसंज्ञं स्यात्। अन्यकर्त्तृकत्वस्यायमर्थः। प्रीत्यनुकूलत्वसमानाधिकरणव्यापारो रुचेरर्थः समवायेन प्रीत्याश्रयः संप्रदानमत्र। अभिलष्यतेस्तु प्रीतिव्यधिकरणव्यापारबोधकतया न रुच्यर्थत्वमिति न तत्र सम्प्रदानत्वमेतच्च कर्म्म संज्ञाप्राप्तौ अनेन तस्य बाधः यथोक्तं हरिणा

हेतुत्वे कर्म्मसंज्ञायां शेषत्वे चापि कारके।

रुच्यर्थादिषु शास्त्रेण सम्प्रदानत्वमुच्यते इति

प्रत्युदाहरणे पथः प्रीत्यधिकरणत्वाभावात् न सम्प्रदानता।

**श्लाघह्नुङ्स्थाशपां (११६) ज्ञीप्स्यमानः। १। ४। ३४।**

एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात्। गोपी स्मरात् कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा। ज्ञीप्स्यमानः किम् देवदत्ताय श्लाघते पथि।

**धारेः (११७) उत्तमर्णः। १। ४। ३५।**

धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात्। भक्ताय धारयति मोक्षं हरिः। उत्तमर्णः किम् देवदत्ताय शतं धारयति ग्रामे।

**स्पृहेरीप्सितः। १। ४। ३६।**

स्पृहयतेः (११८) प्रयोगे इष्टः सम्प्रदानं स्यात। पुष्पेभ्यः स्पृहयति। ईप्सितः किम् पुष्पेभ्यो वने स्पृहयति। ईप्सितमात्रे

---

(११६) बोधविषयगुणवत्त्वप्रतिपादकशब्दप्रयोगः श्लाघतेरर्थः बोधविषयइतरादर्शनयोग्यदेशस्थापनं ह्नुतेरर्थः स्वाभिप्रायबोधनानुकूलस्थितिस्तिष्ठतेरर्थः स्वाभिप्रायबोधनानुकूलशपथकरणं शपतेरर्थः कृष्णाय श्लाघते इत्यादौ कृष्णं बोधयितुं गुणवत्त्वेन स्तौतीत्यर्थः एवं सर्वत्र कृष्णं बोधयितुं निह्नवादिकं बोध्यम्।

(११७) धारेरिति अवस्थित्यनुकूलव्यापारो धारेरर्थः स्थित्याश्रयसम्बन्धी सम्प्रदानम्। अवश्यदेयत्वस्योत्तमर्णोद्देश्यत्वेन देयं यस्येति व्युत्पत्त्या अवस्थितद्रव्यदानोद्देश्य उत्तमर्ण इति फलितार्थः अवश्यदेयत्वेन मोक्षस्यापि ऋणत्वं विवक्षितमिति बोध्यम्।

(११८) इच्छामात्रं स्पृहा तद्विषयः सम्प्रदानम्।

इयं संज्ञा। प्रकर्षविवक्षायान्तु परत्वात्कर्म्मसंज्ञा। पुष्याणि स्पृहयति।

क्रुधद्रुहेर्ष्यासूयार्थानां (११९) यम्प्रति कोपः। १। ४। ३७।

क्रुधाद्यर्थानाम्प्रयोगे यम्प्रति कोपस्स उक्तसंज्ञः स्यात्। हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति। यम्प्रति कोपः किम् भार्य्यामीर्ष्यति मैनामन्यो द्राक्षीदिति। क्रोधोऽमर्षः। द्रोहोऽपकारः। ईर्ष्या अक्षमा। असूया गुणेषु दोषाविष्करणम्। द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्तेऽतो विशेषणं सामान्येन यम्प्रति कोप इति।

क्रुद्रुहोरुपसृष्टयोः कर्म। १। ४। ३८।

सोपसर्गयोरनयोर्यम्प्रति कोपस्तत्कारकङ्कर्म्मसंज्ञं स्यात्। क्रूरमभिक्रुध्यति अभिद्रुह्यति।

राधीक्ष्योर्यस्य विप्रश्नः (१२०)। १। ४। ३९।

---

(११९) वधाद्यनुकूलश्चित्तवृत्तिविशेषः कोपः प्रवृद्धः कोपः क्रुधेरर्थः। दुःखजनकक्रियारूपापकारजन्यश्चित्तवृत्तिविशेषः द्रुहेरर्थः। उत्कर्षनिरोधिकर्म्मारोपानुकूलश्चित्तवृत्तिविशेषः ईर्ष्यतेरर्थः आचारादिगुणविशेषे दम्भकृतत्वाद्यारोपानुकूलश्चित्तवृत्तिविशेषः असूयतेरर्थः। धात्वर्थस्तलीभूतकोपस्य यत् विषयः स संप्रदानमित्यर्थः।

(१२०) प्रश्नविषयशुभाशुभपर्य्यालोचनं राधीक्ष्योरर्थस्तादृशशुभाशुभसम्बन्धी सम्प्रदानसंज्ञः स्यादित्यर्थः।

एतयोः कारकं सम्प्रदानं स्यात् यदीयो विविधः प्रश्नः क्रियते। कृष्णाय राध्यति ईक्षते वा पृष्टो गर्गः शुभाशुभं पर्य्यालोचयतीत्यर्थः।

## प्रत्याङ्भ्यां श्रुवः पूर्व्वस्य कर्त्ता।१।४।४०।

आभ्याम्परस्य शृणोतेर्य्योगे पूर्व्वस्य प्रवर्त्तनारूपव्यापारस्य कर्त्ता (१२१) सम्प्रदानं स्यात्। विप्राय गां प्रतिशृणोति आशृणोति वा विप्रेण मह्यन्देहीति प्रवर्त्तितस्तत्प्रतिजानीत इत्यर्थः।

## अनुप्रतिगृणश्च।१।४।४१।

आभ्यां गृणातेः कारकं पूर्व्वव्यापारस्य (१२१) कर्त्तृभूतमुक्तसंज्ञं स्यात्। होतेऽनुगृणाति प्रतिगृणाति वा होता प्रथमं शंसति तमध्वर्य्युः प्रोत्साहयतीत्यर्थः।

## परिक्रयणे सम्प्रदानमन्यतरस्याम्।१।४।४४।

नियत (१२३) कालम्भृत्या स्वीकरणं परिक्रयणन्तस्मिन् साधकतमङ्कारकं सम्प्रदानसंज्ञं वा स्यात्। शतेन शताय (१२४)

(१२१) प्रवर्त्तनाजन्याभ्युपगमः प्रतिश्रुवआश्रुवश्चार्थः पूर्व्वस्य धात्वर्थघटकविशेषणव्यापारस्य प्रवर्त्तनायाः कर्त्ता संप्रदानसंज्ञ इत्यर्थः।

(१२२) शंसनविषयहर्षानुकूलव्यापाररूपप्रोत्साहनं प्रतिगृणातेरनुगृणातेश्चार्थः पूर्व्वस्य व्यापारस्य शंसनस्य कर्त्ता संप्रदानसंज्ञं स्यादित्यर्थः।

(१२३) द्रव्यदानेनात्यन्तस्वीकारः क्रयः परिशब्दस्तत्समीपवाचकः अनियतकालात् क्रयात् नियतकालत्वेन तस्य न्यूनतेत्याशयेनाह नियतेति।

(१२४) शतायेति करणस्यैव सम्प्रदानतया बोधः शतव्यापारस्याप्र दानरूप एव शतं दत्त्वा क्रीत इत्याकारकबोधात्।

वा परिक्रीतः। तादर्थ्ये (१२५) चतुर्थी वाच्या॰। मुक्तये हरिं भजति। क्लृपि सम्पद्यमाने (१२६) च॰। भक्तिर्ज्ञानाय कल्पते सम्पद्यते जायते वा इत्यादि। उत्पातेन ज्ञापिते च॰। वाताय कपिला विद्युत्। हितयोगे च॰ (१२७) ब्राह्मणाय हितम्।

**क्रियार्थोपपदस्य च कर्मणि स्थानिनः। २। ३। १४।**

क्रियार्था क्रिया (१२८) उपपदं यस्य तस्य स्थानिनोऽप्रयुज्य-

(१२५) तस्मै कार्यायेदं तदर्थं तस्य भावस्तादर्थ्यं तत्तद्धितेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तात् सम्बन्ध एव तादर्थ्यं स चोपकार्योपकारकभावरूपः यदा तु तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी। सम्बन्धस्य हितत्वेऽपि षष्ठ्येव विशेषणपदादेव चतुर्थी बोध्या न तु विशेष्यात् तस्य कर्तृकारकादिसंज्ञया बाध्यत्वात्।

(१२६) क्लृपीति क्लृपेर्भावे क्विप् सम्पद्यमानेऽभूतस्य प्रादुर्भावोऽर्थः क्लृप्यर्थकधातुयोगे यः सम्पद्यते तत्र चतुर्थी विकारवाचकपदाच्चतुर्थीत्यर्थः। एतच्च प्रकृतिविकृतिभावेन भेदविवक्षायामेव चतुर्थी तदाभेदविवक्षायां भक्तिर्ज्ञानं कल्पते इत्यादौ परत्वात् प्रथमैव। जनिकर्तुः प्रकृतिरित्यपादानत्वं चेत् विवक्ष्यते तदाऽपादानत्वमेव भक्तेर्ज्ञानं जायते इत्यादि। अत्र च क्लृपीत्यर्थपरं तदाह सम्पद्यत इति। भक्तिर्ज्ञानाय कल्पते इत्यादिप्रयोगस्य तादर्थ्यचतुर्थ्यैव सिद्धावपि परिणामप्रकारबोधार्थं सूत्रमिति बोध्यम्।

(१२७) चकारात् सुखयोगेऽपीत्यर्थः चतुर्थीतदर्थार्थबलिहितसुखरक्षितैरिति(२४१पृ०) सूत्रे सुखयोगे चतुर्थ्याः समासविधानात् ज्ञापकादिति बोध्यम्।

(१२८) क्रिया अर्थः फलं यस्य सा क्रियार्था तेन च तुमुन्वाचक लभ्यते एवञ्च क्रिया-

मानस्य तुमुनः कर्म्मणि चतुर्थी स्यात्। फलेभ्यो याति। फलान्याहर्त्तुं यातीत्यर्थः। नमस्कुर्मो नृसिंहाय नृसिंहमनुकूलयितुमित्यर्थः। एवं स्वयम्भुवे नमस्कृत्येत्यादावपि।

**तुमर्थाच्च (१२९) भाववचनात्। २। ३। १५।**

भाववचनाश्चेति (३।३।११) सूत्रेण (१३०) यो विहितस्तदन्ताच्चतुर्थी स्यात्। यागाय याति यष्टुं यातीत्यर्थः।

**नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च। २। ३। १६।**

---

फलकार्थकवाचकमित्यर्थः तदुपपदं यस्य तत् क्रियार्थक्रियावाचकोपपदकमित्यर्थः। स्थानिशब्दश्चाप्रयुज्यमानवाची व्याकरणशास्त्रे प्रसिद्धः क्रियार्थोपपदत्वञ्च तुमुनादेरेवेत्याशयेन व्याचष्टे क्रियार्था क्रियेति। फलेभ्य इत्यत्र फलकर्मकाहरणफलकं यानमिति बोधः यथा वाक्यार्थबोध्यैकदेशप्रयोगस्थले प्रविश पिण्डीमित्यादौ पिण्डीमितिपदस्य सम्पूर्णवाक्यार्थबोधने शक्तिः तथाऽस्य फलपदस्य आहरणफलकार्थे शक्तिः स्थानिन इति शास्त्रवचनादिति भावः। पिण्डीमित्यादौ अप्रयुज्यमानभक्षणक्रियाकर्म्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति अयमेवार्थाध्याहारः। नमस्कुर्म इत्यत्र नम स्कर्मेत्यादिना न चतुर्थी तस्याउपपदविभक्तित्वेन कारकविभक्तिद्वितीयापेक्षया दुर्बलतया बाधात्।

(१२९) तुम्शब्देन तदर्थो लक्ष्यते तेन तुम् तुमर्थोऽर्थो यस्येति तुमर्थस्तुमर्थार्थ इत्यर्थः।

(१३०) भाववचनाश्चेति सूत्रेणेति भावे ये घञादयः उच्यन्ते ते क्रियार्थक्रियायामुपपदे भविष्यति काले स्युरिति तत्सूत्रार्थः। तुमुनादेश्च समानकर्त्तृकत्वद्योतनात् एतच्चतुर्थ्यामसमानार्थकतया परार्थक्रियायां न प्रयोगः। अत्र च समानकर्त्तृकत्वबोधनात्तादर्थ्ये चतुर्थ्या नेष्टसिद्धिः।

एभिर्योगे चतुर्थी स्यात् । हरये नमः । उपपदविभक्तेः कारकविभक्तिर्बलीयसी । नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्य्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलम्प्रभुः समर्थः शक्त इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः तस्मै तस्य वा प्रभवति स एषां ग्रामणीरिति निर्देशात् । तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम् । इन्द्राय वषट् । चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायाम्परामपि चतुर्थी चाशिषीति(२॰६८०)षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् ।

**मन्यकर्मण्यनादरे विभाषाऽप्राणिषु । २ । ३ । १७ ।**

प्राणिवर्ज्जे मन्यतेः कर्म्मणि चतुर्थी वा स्यात्तिरस्कारे(१२१) न त्वान्तृणं मन्ये तृणाय वा । श्यना निर्देशात्तानादिकयोगे न । न त्वान्तृणम्मन्वे । अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्ज्जेष्विति वाच्यम्* । तेन न त्वान्नावमन्नं वा मन्ये इत्यत्राप्राणित्वेऽपि न चतुर्थी । न त्वां शुने श्वानं वा मन्ये इत्यत्र प्राणित्वेऽपि भवत्येव ।

(१२१) अनादर इति आदराभावमात्रं न नञोऽर्थोऽपितु अधर्म्मादाविव प्रतिपक्षवाचित्वात्तिरस्कार एवार्थ इत्याशयेनाह तिरस्कारेति । मन्यतेः कर्म्मणि विशेषण एव चतुर्थी तेन उद्देश्यीभूतास्तीति भावः । तिरस्कारश्चात्र नापकृष्टत्वाद्युपमानरूपः किन्तु अपकृष्टतानिरूपितोपमेयत्वाभावरूप एवोपमेये स्फुटते व्याख्यानात् तत्प्रतीतिश्च नञ्समभिव्या-

स्युर्ह्रस्वश्च वा । अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम् । चक्रि अत्र । चक्र्यत्र । पदान्ता इति किम् । गौर्यौ ॥ * न समासे ॥ वाप्यश्वः ॥ * सिति च ॥ पार्श्वम् । **ऋत्यकः** ।६।१।१२८। ऋति परेऽकः प्राग्वत् । ब्रह्म ऋषिः ब्रह्मर्षिः । पदान्ता इत्येव । आर्च्छत् । समासेऽप्ययं प्रकृतिभावः । सप्तऋषीणाम् । सप्तर्षीणाम् । **वाक्यस्य टेः प्लुत उदात्तः** ।८।२।८२। इत्यधिकृत्य । **प्रत्यभिवादेऽशूद्रे** ।८।२।८३। अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् स चोदात्तः । अभिवादये देवदत्तोऽहम् । भो आयुष्मानेधि देवदत्त३ ॥ * **स्त्रियां न** ॥ अभिवादये गार्ग्यहम् । भो आयुष्मती भव गार्गि ॥ नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते । नेह । आयुष्मानेधि ॥ * **भोराजन्यविशां वेति वाच्यम्** ॥ आयुष्मानेधि भो३ः । आयुष्मानेधीन्द्रवर्म३न् । आयुष्मानेधीन्द्रपालित३ । **दूराद्धूते च** ।८।२।८४। दूरात्संबोधने यद्वाक्यं तस्य टेः प्लुतः स्यात् । सक्तून्पिब देवदत्त ३ । **हैहेप्रयोगे हैहयोः** ।८।२।८५। एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात् । हे ३ राम । राम है ३ । **गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्** ।८।२।८६। दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात् । दे ३ वदत्त । देवद ३ त्त । देवदत्त ३ । गुरोः किम् । वकारात्परस्याकारस्य माभूत् । अनृतः किम् । कृष्ण३ । एकैकग्रहणं पर्यायार्थम् । इह प्राचामिति योगो विभज्यते । तेन सर्वः प्लुतो विकल्प्यते । **अप्लुतवदुपस्थिते** ।६।

---

तत्सामर्थ्यात् परमपि बाधत इति ॥—**चक्र्यत्रे**ति । इह 'स्कोः–' इति कलोपो न, यणः कार्यकालपक्षे बहिरङ्गपरिभाषया असिद्धत्वात् स्थानिवद्भावाच्च । 'पूर्वत्रासिद्धे न स्थानिवत्' इति तु नास्ति । 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वक्ष्यमाणत्वात् ॥—**पार्श्वमि**ति । पर्शूनां समूहः । 'पर्श्वा णस् वक्तव्यः' इति णस् । ओर्गुणस्तु न 'सिति च' इति पदत्वस्य भत्वापवादत्वात् ॥—**ऋत्यकः** ॥ **ब्रह्म ऋषिरि**ति ॥ ननु 'ऋत्यस्य' इत्येव सूत्रमस्तु । दधि ऋच्छतीत्यादौ 'इकोऽसवर्णे' इत्यनेनैव प्रकृतिभावः सिद्धः । मैवम् । होतृऋकार इत्यत्र प्रकृतिभावार्थमग्ग्रहणस्यावश्यकत्वात् ॥ एतेन 'अकोऽसवर्णे–' इत्येवमेव सूत्रमस्त्विति शङ्काया निरवकाश एव, उक्तदोषानिवृत्तेः । सप्तऋषीणामित्यत्र 'न समासे' इति निषेधापत्तेश्च ॥ 'न समासे' इति निषेधवार्तिकं हि 'इकोऽसवर्णे–' इति सूत्र एव, न तु 'ऋत्यकः' इत्यत्रेति सिद्धान्तः । अत एवाह—**समासेऽप्ययमि**ति । एवं च 'ऋऌवर्णयोः' इति पूर्वोक्तो निर्देशः संगच्छते ॥—**प्रत्यभिवादे**—॥ इह प्रत्यभिवादशब्देन आशीर्वचनमुच्यते ॥ अशूद्रे किम् । अभिवादये तुषजकोऽहं । भो आयुष्मानेधि तुषजक ॥—**आयुष्मानेधी**ति । अस्तेः सेर्हिः । 'घ्वसोः–' इति एत्वम् 'हुझल्भ्यो हेर्धिः' 'श्नसोरल्लोपः' ॥—**नामगोत्रं वे**ति । गोत्रस्योदाहरणम्—अभिवादये गार्ग्योऽहम् । भो आयुष्मानेधि गार्ग्य ३ इत्यूह्यम् ॥—**दूराद्धूते च** ॥ हूतमाह्वानं तच्च संबोधनमात्रोपलक्षणमित्याह—**दूरात्संबोधन** इति । उपलक्षणतया व्याख्यानस्य फलमुदाहरति—**सक्तून् पिबे**त्यादि ॥—**गुरोरनृतः**—॥—**अनन्त्यस्यापी**ति । अत्र वदन्ति । यद्यप्यन्त्यस्य गुरोः प्लुतार्थोऽपिशब्द इति व्याख्यायेत तर्हि गुरुस्थानिकप्लुतानामेव पर्यायता स्यात्तथा च 'दूराद्धूते–' इति लक्षणान्तरेण लघोष्टेः स्थाने विहितेन प्लुतेन सह युगपत् प्रयोगः प्रसज्येत । तस्मादपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थ इत्येव व्याख्यातव्यं टेरिति प्रकृतत्वादिति ॥—**दे३वदत्ते**ति । वाक्यत्वसंपत्तये अस्यादिरेहीति शब्दो बोध्यः॥ एवमग्रेऽपि ॥—**सर्वः प्लुतो विकल्प्यत** इति । एतेन 'द्वैपायनो विरहकातर आजुहाव । पुत्रेति' इति भागवतं व्याख्यातम् । प्लुतस्य वैकल्पिकत्वात् ॥ 'आर्षप्रयोगः' इति श्रीधराचार्योक्तिस्तु नादर्तव्या । विस्तरस्त्वत्र मनोरमायामनुसंधेयः ॥—**यणादिकं करोती**ति । अत्र नव्याः । यद्येवमग्नी इति विष्णू इति इत्यत्र प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादनेन यणादिकार्यं स्यात्, ततश्च वत्करणप्रयोजनं यणादिकमेव स्यात्, तस्मात् 'प्लुतकार्यं प्रकृतिभावं न करोतीत्यर्थः' इति प्राचां व्याख्यैव ज्यायसी । एवं च 'इको यणचि' इत्यत्र इग्ग्रहणस्य वैयर्थ्यशङ्कापि नास्ति । तथा हि—तत्रेग्ग्रहणाभावेऽपि 'ह्रस्वस्य पिति कृति तुक्' 'दीर्घात्' इत्यतो ह्रस्वदीर्घपदानुवृत्त्या तयोर्यण्विधानाच्च व्यञ्जनस्य भविष्यति । प्लुतस्य तु प्रकृतिभावेनैव भवितव्यमेव । अयादयोऽपवादाः हरय इत्यादौ । उपेन्द्रः कृष्णैकत्वमित्यादौ तु 'आद्गुणः' 'वृद्धिरेचि' इति बाधके भवि-

---

१ सामर्थ्यादेवेति—एवकारोऽवश्याश्रयणीयतामस्य सूचयति । चकारेण प्रकृतिभावानुकर्षणेऽपि ऋत्यक इत्यत्र तदनुवृत्तिर्न स्यात्, चानुकृष्टत्वात् । तदर्थं ह्रस्वविधानसामर्थ्यस्यावश्यकत्वे चकारो व्यर्थ इति भावः । २ प्रत्यभिवादे इति—नमस्कारादिना आशिषं वाच्यमानो गुर्वादिर्यत्प्रतिसंभाषते स प्रत्यभिवादो, नाशीर्वादमात्रम्, अशूद्रे इति निषेधात् । ३ नाम गोत्रं वेति—एतच्च न्यायसिद्धम्, 'असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत्' इति मनुस्मृतेः । अत्र नामशब्दो गोत्रस्याप्युपलक्षकः । नाम च न बोधकशब्दमात्रम्, किंतु 'द्व्यक्षरं चतुरक्षरं वा' इत्यादि स्मृत्युक्तं संस्कारजं बोध्यम् ।

**गत्यर्थकर्म्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।२।३।१२।**

अध्वभिन्ने गत्यर्थानाङ्कर्म्मणि एते स्तश्चेष्टायाम्। ग्रामं ग्रामाय वा गच्छति। चेष्टायाङ्किम् (१३२) मनसा हरिं व्रजति। अनध्वनीति किम् पन्थानङ्गच्छति(१३३)। गन्त्राधिष्ठिते(१३४) अध्वन्येवायन्निषेधः यदातूत्पथात्पन्थानमेवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव। उत्पथेन पथे गच्छति।

।चतुर्थी।

**ध्रुवमपायेऽपादानम् (१३५)।१।४।२४।**

---

हार एव तृणायेत्यस्य तृणतुल्यमपि न मन्ये इत्यर्थः "तृणाग्र मत्वा रघुनन्दन" इत्यादौ तु नञोऽश्रवणेऽपि तदध्याहारेण बोधः इत्यन्ये।

(१३२) चेष्टायां किमिति धात्वर्थस्य क्रियारूपत्वेन चेष्टात्वात् प्रश्नः। शारीरक्रियायाएव ग्रहणमित्युत्तरम्।

(१३३) पन्थानमिति अध्वशब्दस्यार्थपरत्वात् प्रसक्तौ प्रत्युदाहरणम्।

(१३४) गन्त्राधिष्ठितइति शब्दप्रयोगसमानकालगन्तृव्यापारजन्यफलाश्रये इत्यर्थः अध्वपदेन गन्तृप्राप्योऽर्थ उच्यते उत्पथादित्यस्य उत्पथं परित्यज्येत्यर्थः। इष्यते इति न त्वाक्रान्त इत्यर्थस्तेन गन्त्रनधिष्ठितत्वान्न चतुर्थीनिषेधः। तथाच उत्पथेन गन्तुमशक्तः पथे गन्तुं प्रवर्त्तते इत्यर्थः। चतुर्थी।

(१३५) ध्रुवमिति अपायो विभागजनकव्यापारस्तदनाश्रयोऽपादानमित्यर्थः इयञ्च पञ्चमी विभागार्थकधातुयोगएव साधुः। विभागश्च न वास्तवसम्बन्धपूर्व्वको न वा वास्तवएव किन्तु बुद्धिकल्पितसम्बन्धपूर्व्वको बुद्धि-

अपायो विश्लेषस्तस्मिन् साध्ये यद्ध्रुवमवधिभूतङ्कारकन्तदपादानं स्यात् ।

## अपादाने पञ्चमी । २ । ३ । २८ ।

कल्पितस्य "माथुराः पाटलिपुत्रेभ्य आढ्यतरा" इत्यादेः बुद्धिकल्पित विभागाश्रयणेनैव भाष्ये पञ्चमीसमर्थनात् । ध्रुवमिति कर्त्तृवारणाय तथाच अपायविषये यत्कारकं विश्लेषक्रियाजनकं तदपादानमिति फलितोऽर्थः ध्रुवत्वञ्च प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं तच्चावधित्वं तदेतदाह अवधिभूतमिति अत्र सोदाहरणा विषयविशेषा हरिणा दर्शिता यथा ।

अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात् तदपादानमुच्यते ।
पततो ध्रुवएवाश्वो यस्मादश्वात् पतत्यसौ ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ।
मेषान्तरक्रियापेक्षमवधित्वं पृथक्पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्त्तृत्वञ्च पृथक्पृथगिति ।

कुड्यात्पततोऽश्वात् मेत्रः पततीत्यादौ कुड्यावधिकपतनाश्रयाश्वावधिकं मैत्रादिनिष्ठं पतनमिति बोधः । अत्रायं विशेषः अवधेः पञ्चम्यर्थत्वे प्रकृत्यर्थस्य तत्राभेदेन विशेषणत्वम् पतनादिक्रियायान्तु सम्बन्धितया पञ्चम्यर्थस्य विशेषणत्वमिति । तच्चापादानं त्रिविधम्

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियञ्चेति त्रिधापादानमिष्यते इति हर्य्युक्तेः ।

निर्दिष्टः श्रूयमाणोविषयो यस्य तत् श्रूयमाणस्वापेक्षित क्रियमित्यर्थः यथा वृक्षात् पर्णं पततीत्यादौ अपादानविषयीभूतं पतनं श्रूयमाणम् । द्वितीयम् उपात्तः गृहीतः धात्वन्तरार्थघटकीभूत इति यावत् विषयो यस्येति व्युत्पत्त्या स्वविषयक्रियाघटितश्रूयमाणक्रियान्तर-

ग्रामादायाति। धावतोऽश्वात्पतति। कारकञ्चिम्। वृक्षस्य पर्णं पतति। जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् (१६)*। पापाज्जुगुप्सते विरमति। धर्मात्प्रमाद्यति।

---

निश्चयः यथा मेघात् विद्योतते विद्युदित्यादौ निःसरणपूर्वकविद्योतनार्थकविद्योततियोगे मेघादेस्तदेकदेशनिःसरणाद्यपादानत्वम्। अपेक्षितक्रियं तृतीयं यथा कुतो भवानिति प्रश्नवाक्ये पाटलिपुत्रादित्युत्तरवाक्ये च कुतइति पाटलिपुत्रादित्यनयोरपेक्षितगमनादिक्रियापेक्षत्वात् अपेक्षितक्रियापादानत्वम्। पतधातोरकर्म्मकत्वे वृक्षात् पत्रं पततीत्यादौ वृक्षावधिकविभागपूर्वकः पत्रवृत्तिः संयोग इति बोधः। तस्य सकर्म्मकत्वे वृक्षात् भूमिं पततीत्यादौ वृक्षावधिकविभागपूर्वकभूमिवृत्तिसंयोगानुकूलो व्यापार इति बोधः। परस्परस्मान्मेषावपसरत इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात् कर्त्तृत्वम् परस्परपदोपात्तयोश्च विभागाश्रयत्वादपादानत्वमिति विवेकः। विभागपूर्वकं पृष्ठतो गमनमपक्रमणेरर्थः। आत्मानम् आत्मना वेत्सीत्यादौ अन्तःकरणाद्युपाधिभेदेनौपाधिकभेदविवक्षया यथा कर्मत्वकर्त्तृत्वकरणत्वादिव्यवस्था पनं तथा गजद्वयोपाधिभेदकृतो मेषयोरुभयसमावेश इति न किञ्चिदधिककल्पनेति बोध्यम्। ग्रामादायातीत्यादौ विभागपूर्वकोत्तरदेशसंयोगानुकूलव्यापारस्य धात्वर्थतया विभागान्वयसम्भवादपादानत्वम् स्यन्दतेस्तु स्यन्दनमात्रार्थकतया वृक्षो स्यन्दते इत्येव प्रयोगः। चलतेस्तु विभागपूर्वकचलनविवक्षायाम् आसनाच्चलित इति प्रयोगः। वृक्षं त्यजतीत्यादौ विभागस्य बोधनेऽपि तस्य व्यापारव्यधिकरणत्वेन कर्मतया कर्मसंज्ञयैव बाधः। स्वार्गाद्धीयते पुरुष इत्यादौ स्वार्थस्यैव धात्वर्थप्रधानव्यापाराश्रयत्वेऽपि अपादानेऽचाहीयरुहोरिति (१२ वा०) ज्ञापकात् कर्मत्वाभावात् ओहाक्धातुयोगे कर्त्तुरपादानत्वम् पुरुषस्य च कर्मत्वविवक्षया कर्मत्वात्तकारेणोक्ततेति विवेकः।

(१२६) जुगुप्सेत्यादि। अनिष्टसाधनताज्ञानाधीना निन्दा जुगुप्सा। तत्य-

## भीत्रार्थानां (१३७) भयहेतुः। १। ४। २५।

भयार्थानान्त्राणार्थानाञ्च प्रयोगे भयहेतुरपादानं स्यात्। चौराद् बिभेति। चौरात्त्रायते। भयहेतुः किम्। अरण्ये बिभेति त्रायते वा।

## पराजेरसोढः (१३८)। १। ४। २६।

पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात्। अध्ययनात्पराजयते ग्लायतीत्यर्थः। असोढः किम्। शत्रून् पराजयते अभिभवतीत्यर्थः।

## वारणार्थानामीप्सितः। १। ४। २७।

प्रवृत्तिविघातो (१३९) वारणं वारणार्थानां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात्। यवेभ्यो गां वारयति ईप्सितः किम् यवेभ्यो गां वारयति क्षेत्रे।

---

भावानुकूलव्यापारोविरामः। इष्टानिष्टसाधनयोस्तद्विपरीतत्वधिया तत्र प्रवृत्तिनिवृत्ती प्रमादः सर्व्वत्र च विषयतया ज्ञानकल्यादौ अन्वयी अपादानसंज्ञः स्यादित्यर्थः।

(१३७) भीत्रार्थानामिति भाव्यनिष्टस्यप्रतीकारासामर्थ्यज्ञानं भयम् अनिष्टवारणं त्राणं तत्र भयं भयैकदेशोऽनिष्टं तद्धेतुरपादानमित्यर्थः।

(१३८) सोढुमशक्योऽसोढः अत्र कृत्यसाध्यधीहेतुकतद्विषयकोत्साहाभावः पराजयस्तत्रोत्सहनाशक्योऽपादानमित्यर्थः शत्रून् पराजयतीत्यादौ त्वभिभवार्थकत्वान्नास्य विषयः।

(१३९) प्रवृत्तिविघातोनिवृत्तिस्तदनुकूलव्यापारोवारणं तत्र निवृत्तिविषयोऽपादानं यवादिभक्षणस्येप्सितत्वेन यवस्यापीप्सितत्वादपादानत्वसिद्धिरिति बोध्यम्।

## अन्तर्द्धौ येनादर्शनमिच्छति । १ । ४ । २८ ।

व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति (१००) तदुपादानं स्यात् । मातुर्निलीयते कृष्णः । अन्तर्द्धौ किम् चौरान्न दिदृक्षते । इच्छतिग्रहणं (१४१) किम् अदर्शनेच्छायां सत्यां सत्यपि (१४२) दर्शने यथा स्यात् । देवदत्तात् यज्ञदत्तो निलीयते ।

## आख्यातोपयोगे । १ । ४ । २९ ।

नियमपूर्व्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात् । उपाध्यायादधीते । उपयोगे किम् नटस्य गाथां शृणोति ।

## जनिकर्त्तुः प्रकृतिः (१४३) । १ । ४ । ३० ।

जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते ।

## भुवः प्रभवः । १ । ४ । ३१ ।

---

(१४०) अन्यकर्तृकस्वकर्मकादर्शनेच्छया तदनुकूलव्यापारो व्यवहितदेशस्थित्यादिरूपोऽन्तर्द्धानं तद्घटकमदर्शनं यत्कर्तृकमिच्छति तदपादानमित्यर्थः ।

(१४१) इच्छतिग्रहणं किमिति अन्तर्द्धौ यत्कर्तृकदर्शनस्याभावस्तदपादानमित्यर्थोऽस्त्विति प्रश्नः ।

(१४२) सत्यपीर्थः अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशात् दर्शने सत्यपीत्यर्थः अन्यथा यत्र दर्शनाभावएव तत्रैव स्यादिति भावः ।

(१४३) प्रकृतिरुपादानकारणं ब्रह्म च मायाशबलमुपादानकारणं प्रकृतिश्च दृष्टान्तानुपरोधादिति शारीरकसूत्रात् विभाषेत्यत्र(२९२४०) योगविभागेन सिद्धे उपादानतयापादानस्य बोधार्थं तृतीयानिरासार्थञ्चेदं वचनम् ।

भवनम्। भूकर्तुः (१४४) प्रभवस्तथा। हिमवतो गङ्गा प्रभवति तत्र प्रकाशत इत्यर्थः। ल्यब्लोपे (१४५) कर्मण्यधिकरणे च*। प्रासादात्प्रेक्षते। आसनात्प्रेक्षते। प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः। श्वशुराज्जिह्रेति श्वशुरं वीक्ष्येत्यर्थः। गम्यमानापि (१४६) क्रिया कारकविभक्तीनां निमित्तमित्युक्तम् (२८५पृ०)। कस्मात्त्वं नद्याः। यतश्चाध्वकालनिर्माणं (१४७) तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी च वक्तव्या*। वनात् ग्रामो योजनं योजने वा कार्त्तिक्या आग्रहायणी मासे।

## अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। २। ३। २९।

एतैर्योगे पञ्चमी स्यात्। अन्येत्यर्थग्रहणम् (१४८)। इत-

(१४४) जनिकर्तुरित्यतः कर्तुरिति पदं समस्तमपि स्वरितत्वेनानुवर्त्यैव भूकर्तुरिति प्रभवः प्रथमप्रकाशः अयतः भिन्नस्य प्रथममुपलम्भ इति यावत् "प्रभवो जनने मूले जन्महेतौ पराक्रमे स्थानस्य चादिमस्थाने" इति विश्वकोशात्। प्रकाशते इत्यस्य तु योगे न तत्र प्रथमप्रकाशार्थाभावादिति बोध्यम्।

(१४५) ल्यब्लोप इति ल्यबन्ततया श्रवणाभावेऽपीत्यर्थः कर्माधिकरणे प्रत्यासत्त्याऽश्रूयमाणस्यैव ल्यबन्तस्यैवेति बोध्यम्।

(१४६) गम्यमानापीति विशिष्य तद्वाचकशब्देनानुपस्थाप्यमानापीत्यर्थः अपेक्षितक्रियमिदमित्युक्तं (२८५पृ०) प्राक्।

(१४७) यतो यदवधित्वेनाध्वनः कालस्य च निर्माणं परिच्छेदस्तत इत्यर्थः। एवञ्च देशकालयोः परिच्छेदावधिभूतवाचकात् पञ्चमी स्यादित्यर्थः।

(१४८) अन्येत्यर्थे ग्रहणं भेदार्थकशब्दमात्रग्रहणमितरग्रहणन्तु प्रपञ्चार्थं

रग्रहणमपञ्चार्थम्। अन्यो भिन्न इतरो वा कृष्णात्। आरात्(१४९)वनात्। ऋते(१५०)कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः शब्दो (१५१) दिक्शब्दः तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति। चैत्रात्पूर्व्वः फाल्गुनः। अवयववाचियोगे तु न(१५२)तस्य परमाम्रेडितमिति(४८पृ०निर्द्देशात्। पूर्व्वं कायस्य। अञ्चूत्तर पदस्य (१५३) तु दिक्शब्दत्वेऽपि षष्ठ्यतसर्थेति(२८५पृ०)षष्ठीं बाधितुं(१५४)पृथग्ग्रहणम्। प्राक्

---

विस्तरतः प्रदर्शनार्थम्। वस्तुत इतरग्रहणं निपातभिन्नस्य भेदार्थकस्य ग्रहणार्थं तेन घटात् भिन्नइत्यादाविव घटः पटो नेत्यादौ नञा भेदबोधनेऽपि तस्य निपातत्वात् न तद्योगे पञ्चमी। पृथक्शब्दस्य स्वरादित्वात् निपातनत्वाभावेन तद्योगे पञ्चमीप्राप्तावपि पृथग्वि-नेत्यादिना(२९२पृ०)विकल्प इति बोध्यम्।

(१४९) "आरात् दूरसमीपयोः" तेनैतद्योगे दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति (२९६पृ०)प्राप्तां पाक्षिकीं षष्ठीं बाधित्वानेन पञ्चमी।

(१५०) ऋते इति 'फलति पुरुषाराधनमृते" इत्यादौ तु ततोऽन्यत्रापि दृश्यते (२६२पृ०)इत्युक्तेः यावदादियोगे नदीं यावदिदं वनमित्यादिवत् ऋतेयोगेऽपि द्वितीयेति बोध्यम्।

(१५१) दिशि दृष्टइति शब्दपर्य्यन्तग्रहणात् रूढ्या दिग्विशेषस्यैव वाचका एव पूर्व्वादयो गृह्यन्ते न तु ऐन्द्रीककुभादयः।

(१५२) नेति न पञ्चमीत्यर्थस्तञ्चोदाहरणेन ज्ञापयन्नाह पूर्व्वं कायस्येति अवयवे पूर्व्वत्वञ्च प्रथमकालोत्पत्तिकत्वमेवेति बोध्यम्।

(१५३) अञ्चूत्तरेति दिक्शब्दसाहचर्य्यात् दिग्वाचकस्यैवास्य ग्रहणं नतन्यार्थकस्य तेन सध्राङ् देवदत्तेनेत्यादौ न।

(१५४) बाधितुमिति परत्वात् प्राप्तामपि पुरस्तादपवादेन बाधितुमित्यर्थः।

प्रत्यग् वा ग्रामात्। आच्। दक्षिणा(१५५)ग्रामात्। आहि। दक्षिणाहि ग्रामात्। अपादाने पञ्चमीति सूत्रे कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगात् प्रभृतियोगे (१५६) पञ्चमी। भवात्प्रभृति आरभ्य वा (१५७) सेव्यो हरिः। अपपरिबहिरिति(३२९पृ०)समासविधानात् ज्ञापकात्(१५८)बहिर्योगे पञ्चमी (१५९)। ग्रामाद्बहिः।

## अपपरी वर्जने।१।४।८८।

एतौ वर्जने कर्म्मप्रवचनीयौ स्तः।

---

(१५५) दक्षिणेत्यादि दक्षिणस्यामित्यर्थे दक्षिणादाजिति(६९६पृ०)आहि च दूर ६९७पृ०) इत्याजाहौ। षष्ठ्यतसर्थेत्यस्यापवादः।

(१५६) प्रभृतियोगे प्रभृत्यर्थकशब्दयोगेइत्यर्थः अन्यथा उदाहरणे आरभ्य वेत्युक्तिरसंगता स्यात् प्रभृतीत्यस्यावधिमादायेत्यर्थकत्वेनारभ्येत्यस्याप्येतदर्थकता। अवधौ च पञ्चम्यन्तार्थस्याभेदेनान्वयः तद्विशेषणत्वेऽपि न द्वितीया प्रभृत्यर्थयोगे पञ्चमीति भाष्यप्रयोगरूपज्ञापकात्। आरभ्येत्यस्य गृहीत्वेत्याद्यर्थकत्वेऽवधिमारभ्येत्यादौ द्वितीयैवेति विवेकः।

(१५७) भवादिति भवकालावधिके मरणान्तकाले भवकालमादाय वा सेव्य इति बोधः।

(१५८) ज्ञापकादिति पञ्चम्यन्तेन समासविधानरूपज्ञापकादित्यर्थः। अयं भावः अत्र सूत्रे परस्परसाहचर्य्यात् तत्रापपरी वर्ज्जनार्थौ कर्म्मप्रवचनीयावेव तद्योगे पञ्चम्यपाङ्परिभिरिति(२९१पृ०)वचनात् अपपरिनिमित्तक पञ्चम्यैव समासः सिद्धस्तत्साहचर्य्यात् बहिर्योगेऽपि पञ्चम्यैव समासो-युक्तोऽतः तद्योगे असति पञ्चमीविधाने कथं पञ्चमीसमास इत्याक्षेपात् तद्योगे पञ्चमीति गम्यते इति।

(१५९) पञ्चमीति पञ्चम्यपीत्यर्थः तेन करस्य करभो बहिरित्यादौ षष्ठ्यपि साधुरिति बोध्यम्।

## आङ् मर्य्यादावचने। १। ४। ८९।

आङ् मर्य्यादायामुक्तसंज्ञः स्यात्। वचनग्रहणादभिविधावपि (१६०)।

## पञ्चम्यपाङ्परिभिः। २। ३। १०।

एतैः कर्म्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अप हरेः परि हरेः संसारः। परिरत्र वर्ज्जने (१६१)। लक्षणादौ तु हरिम्परि। आ मुक्तेः संसारः। आ सकलात् ब्रह्म।

## प्रतिः प्रतिनिधिप्रतिदानयोः। १। ४। ९२।

एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात्।

## प्रतिनिधिप्रतिदाने (१६२) च यस्मात्। २। ३। ११।

(१६०) उच्यतेऽनेनेति वचनं मर्य्यादायाश्वचनं मर्य्यादाबोधकमित्यर्थः अत्र-धीभूताया मर्य्यादायाः सापेक्षतया स्वप्रतियोग्यनुयोगिनोरुभयोरप्याकाङ्क्षितत्वात् अभिव्याप्तेरपि तद्बोधे बोधादित्याशयेनाह वचनग्रहणादिति। तथा च अवधिमात्रं विवक्षितमित्युभयोः संज्ञेति भावः।

(१६१) लक्षणाद्यर्थकपरिशब्दयोगे द्वितीयाविधानात् अत्र पञ्चमीविधौ वर्ज्जनार्थकापशब्दसाहचर्य्यात् वर्ज्जन एव परिर्ग्राह्य इति भावः। हरिं परि परि हरेरित्युभयत्र हरिं वर्ज्जयित्वेत्यर्थः।

(१६२) प्रतिनिधीयते इति प्रतिनिधिः सदृशः कर्म्मणि किप्रत्ययान्तः तुल्यमत्यस्य वस्तुनः प्रतिदानं प्रत्यर्पणं भावल्युडन्तं। यस्मादिति पञ्चम्यें

अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। प्रद्युम्नः कृष्णात्प्रति। तिलेभ्यः प्रति यच्छति माषान्।

## अकर्त्तर्य्यृणे पञ्चमी। २। ३। २४।

कर्त्तृवर्ज्जितं (१९३) यदृणं हेतुभूतन्ततः पञ्चमी स्यात्। शताद्बद्धः। अकर्त्तरि किम् शतेन (१९४) बन्धितः।

## विभाषा गुणेऽस्त्रियाम्। २। ३। २५।

गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्याज्जाड्येन वा बद्धः। गुणे किम् धनेन कुलम्। अस्त्रियाङ्किम्। बुद्ध्या-मुक्तः। विभाषेति योगविभागात् (१९५) अगुणे स्त्रियाञ्च क्वचित्। धूमाद्ग्निमान्। नास्ति घटोनुपलब्धेः (१९६)।

---

पञ्चमी प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्म्मप्रवचनीययुक्तात् पञ्चमीत्यर्थः। अत्र यस्मादिति निर्द्देशलिङ्गात् तद्योगे क्वचित् पञ्चम्यपि साधुरिति ज्ञापितं तेन कृष्णस्य कृष्णाद्वा प्रतिनिधिरित्यादौ उभयी विभक्तिरिति बोध्यम्।

(१९३) कर्त्तृवर्ज्जितं कर्त्तृसंज्ञारहितमित्यर्थः कृत्यत्वान्न स्वरूपसन्निमित्तं न तु वाच्यकोटिनिविष्टं तद्बोधकशब्दाभावेऽपि स्यादेवेति भावः।

(१९४) हेताविव्यस्यानुवर्त्तनात् हेतुभूतमित्युक्तम् शतेनेत्यत्र शतस्य प्रयोजककर्त्तृतया तत्प्रयोजको हेतुश्चेति(उ१८९पृ०)हेतुत्वसत्त्वेऽपि कर्त्तृसंज्ञया बाध इति भावः।

(१९५) योगविभागादिति बाहुलकं प्रकृतेस्तदनुदृष्टेरिति वार्त्तिकप्रयोगात् योगविभागाश्रयणमिति भावः।

(१९६) धूमादिपदस्य तज्ज्ञाने लाक्षणिकत्वे तत्र गुणत्वसम्भवेनादोषेऽपि स्त्रियामित्यस्य व्यभिचारं दर्शयति अनुपलब्धेरिति।

**१।१२९। उपस्थितोऽनार्ष इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवद्भवति । अप्लुतकार्यं यणादिकं करोतीत्यर्थः । सुश्लोक३ इति। सुश्लोकेति । वत्किम् । अप्लुत इत्युक्तेऽप्लुत एव विधीयेत प्लुतश्च निषिध्येत । तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात् । अग्नी ३ इति । ई३ चाक्रवर्मणस्य ।६।१।१३०। ई३ प्लुतोऽचि परेऽप्लुतवद्वा स्यात् । चिनु हि ३ इति । चिनुहीति । चिनु हि ३ इदम् । चिनुहीदम् । उभयत्र विभाषेयम् । ईदूदेद्द्विवचनं प्रगृह्यम् ।१।१।११। ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ । मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः । अदसो मात् ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र । असति माद्ग्रहणे एकारोऽप्यनुवर्तेत । शे ।१।१।१३। अयं प्रगृह्यः स्यात् । अस्मे इन्द्राबृहस्पती । निपात एकाजनाङ् ।१।१।१४। एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात् । इ विस्मये । इ इन्द्रः । उ वितर्के । उ उमेशः । अनाङित्युक्तेरङिदाकारः प्रगृह्य एव । आ एवं नु मन्यसे । आ एवं किल तत् । ङित्तु न प्रगृह्यः । ईषदुष्णम् । ओष्णम् । ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः । एतमातं ङितं**

ष्यतः ।) यथा सत्यपि इग्ग्रहणे श्रीशइत्यादौ सवर्णदीर्घत्वं बाधकम् । अतो नार्थ इग्ग्रहणेन ॥ तथापि एहि करभोरु३ इति सुतनु३ इति चिनुहि३ अत्रेत्यादौ 'अप्लुतवदुपस्थिते' 'ई३ चाक्रवर्मणस्य' इति प्रकृतिभावनिषेधेऽपि आभ्यां यणादिकार्याऽविधानात् प्लुतस्यास्य यण् न स्यात् । ह्रस्वदीर्घपदाननुवृत्तौ तु व्यञ्जनस्य स्यात् । तस्मादिग्ग्रहणं व्यर्थमिति न शक्यते शङ्कितुमित्याहुः ॥ अन्ये त्विग्ग्रहणस्य प्रयोजनान्तरमप्याहुः । इको यणेव क्वचिद्यथा स्यात् यदन्यत् प्राप्नोति तन्मा भूत् । किंचान्यत् प्राप्नोति 'इकोऽसवर्णे–' इति शाकल्यम् । एवं च यदुक्तं 'न समासे' 'सिति च' इति तदनेन संगृहीतं भवतीति ॥—**चिनुहीति** । चिन्विति लोडन्तम् । हीत्यव्ययम् । अनन्त्यस्यापि 'प्रश्नाख्यानयोः' इत्यनेन प्लुतः ॥—**उभयत्र विभाषेयमिति** ॥ इतिशब्दे परतः पूर्वेण प्राप्ते अन्यत्राप्राप्ते चारम्भादिति भावः ॥—**ईदूदेदन्तमिति** । अत्र विशेषणेन तदन्तविध्याश्रयणं किम् । पचेते इमाविति यथा स्यात् । हरी विष्णू इत्यादिष्वेकादेशस्य परादिवद्भावाश्रयेण इकारादीनां द्विवचनत्वादीदूदेद्रूपं द्विवचनमित्युक्तेऽपि प्रगृह्यत्वं सिध्यतीति बोध्यम् ॥—**द्विवचनमिति** । 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' 'सुप्तिङन्तम्–' इत्यन्तग्रहणाज्ज्ञापकात्तेन कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति सिद्धम् । द्विवचनान्तं प्रगृह्यं स्यादिति व्याकुर्वतः प्राचस्तु नेदं सिध्येत् ॥—**हरी एताविति** । इह ह्रस्वसमुच्चितप्रकृतिभावो न, 'प्लुतप्रगृह्याः–' इत्यत्र नित्यग्रहणादित्युक्तम् ॥ अत्र वृत्तिकारेण 'मणीवादीनां प्रतिषेधो वक्तव्यः' इति पठित्वा मणीव रोदसीव जंपतीवेत्युदाहृतम् । तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटादयः । एवं स्थिते 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति भारतप्रयोगं समर्थयते—**इवार्थे इति** ॥—**वशब्द इत्यादि** । 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्' इति मेदिनी । 'व वा यथा तथैवैवं साम्ये–' इत्यमरः । 'कादम्बखण्डितदलानि व पङ्कजानि' इत्यादिप्रयोगदर्शनाच्चेति भावः ॥—**अदसो मात्** ॥ इह एकारो नानुवर्तते, असंभवादित्यभिप्रेत्याह—**ईदूताविति** ॥ अदसः किम् । शम्यत्र, वाम्यत्र ॥ ननूकारानुवृत्तिर्व्यर्था, स्त्रियां फले वा अमू आसाते इत्यत्र पूर्वेणैव सिद्धेः मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वादत आह—**रामकृष्णाविति** । पुंसि पूर्वेण न सिध्यत्यौकारान्तत्वादिति भावः ॥ 'अदसो माद्' इति सूत्रं प्रति मुत्वमीत्वं च नासिद्धम् आरम्भसामर्थ्यात् ॥—**अमुकेऽत्रेति** ॥ स्त्रीलिङ्गद्विवचनस्य तु पूर्वसूत्रेण प्रगृह्यत्वे प्रकृतिभाव एव । अमुके अत्र ॥—**एकारोऽप्यनुवर्तेतेति** । तथा च एकारानुवृत्तितात्पर्यग्रहफलकं माद्ग्रहणमिति भावः ॥—**शे** ॥ छान्दसमपीदं संदंशन्यायार्थमुक्तमित्याहुः ॥—**अस्मे** इति । अस्मभ्यमित्यर्थः, 'सुपां सुलुक्–' इति भ्यसः शे आदेशः । 'शेषे लोपः' ॥—**निपात एका**—॥ निपातः किम् । अततेर्डः । अः । हे अ आगच्छ । अत्र प्रगृह्यसंज्ञा मा भूत् ॥ एकग्रहणाभावे 'येन विधिः–' इति सूत्रात्तदन्तलाभे प्रेदमित्यत्र स्यादत उक्तम् 'एक–' इति । 'एकाज्' इति तु न बहुव्रीहिः, उक्तातिप्रसक्तादवस्थ्यात् । अतः 'पूर्वकालैक–' इति कर्मधारय एव ॥ ननु 'निपातोऽजनाङ्' इत्युक्ते हलन्तस्य सत्यपि प्रगृह्यत्वे प्रयोजनाभावादजन्ते प्राप्ते अज्ग्रहणसामर्थ्यादज्रूपस्यैव निपातस्य प्रगृह्यत्वसिद्धेः किमेकग्रहणेन । न च पुरोऽस्तीत्यादौ हलन्तस्य संज्ञायां सत्यां प्रकृतिभावात् 'अतो रोः–' इति रोरुत्वे न स्यादतोऽज्ग्रहणसामर्थ्यमुपक्षीणमित्येकग्रहणमावश्यकमिति वाच्यम् । प्रगृह्यसंज्ञां प्रति रुत्वस्यासिद्धतया रेफान्तस्यैतस्य प्रगृह्यसंज्ञाभावेन दोषाप्रसक्तेः । न च सान्तस्य कृता प्रगृह्यसंज्ञा एकदेशविकृतन्यायेन रेफान्तस्यापि स्यादेवेति प्रकृतिभावादुत्वाभावप्रसक्तस्तदवस्थ इति वाच्यम् । प्रगृह्यसंज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्यासिद्धत्वात् प्रकृतिभावाप्रवृत्तेः । सकारान्तस्य तु न किंचिदपि सिद्धकाण्डस्थप्रयोजनं प्राप्नोति यत्प्रकृतिभावेन व्यावर्त्येत । न चाज्ग्रहणसामर्थ्यादजन्तस्यैव प्रपराऽपेत्यादिनिपातस्य प्रगृह्यसंज्ञा स्यान्न त्वज्रूपनिपातस्येति वैपरीत्यशङ्कानिवारणार्थमेकग्रहणमिति वाच्यम् । अनाङ्ग्रह-

पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्। २। ३। ३२।

एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये (१९७)च। अन्यतरस्यां ग्रहणं समुच्चयार्थम्पञ्चमीद्वितीये चाऽनुवर्त्तिते। पृथक् रामेण रामात् रामं वा। एवं विना नाना।

करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्ववचनस्य। २। ३। ३३।

एभ्योऽद्रव्यवचनेभ्य.(१९८)करणे तृतीयापञ्चम्यौ स्तः। स्तोकेन स्तोकाद्वा मुक्तः। द्रव्ये तु स्तोकेन विषेण हतः।

दूरान्तिकार्थेभ्यो द्वितीया च। २। ३। ३५।

एभ्यो द्वितीया स्यात्। चात्पञ्चमीतृतीये (१९९) स्तः। प्रति-

---

(१९७) पञ्चमी मण्डूकप्लुत्या द्वितीया तु सन्निधानादनुवर्त्ततेऽस्याशयेनाह पञ्चमीद्वितीये चेति।

(१९८) अद्रव्येति द्रव्यवचनभिन्नेभ्य इत्यर्थः द्रव्यस्थात सर्वनामपरामर्शयोग्यं लिङ्गनिरूपितविशेष्यताश्रयो वा तथाच स्तोकादयः शुक्लादिशब्दवत् धर्म्म-वचना धर्मिवचनाश्च। करणत्वञ्चैतेषां परम्परया। ईदृशार्थएव तेषां साधुत्वं सूत्रबलादिति भावः। अतएव लगुत्तरपदइत्यत्र कैयटेन करणे किं स्तोकं पचतीति क्रियाविशेषणे कर्म्मणि मा भूत् असत्व-भूतफलसमानाधिकरणविशेषणत्वात् स्तोकशब्दस्यासत्ववचनत्वमि-त्युक्तम्। शब्देन्दु०।

(१९९) दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामित्यतः (२९६पृ०) समुच्चयार्थकान्यतर-स्यांग्रहणानुवृत्त्यैव पञ्चमीलाभेऽपि चकारोऽव्यवहिततृतीयासमुच्चयार्थ इत्याह चात् पञ्चमीतृतीये इति। पञ्चमी।

पदिकार्थमात्रे विधिरयम्। ग्रामस्य दूरन्दूरात् दूरेण वा। अन्तिकम् अन्तिकात् अन्तिकेन वा। असत्ववचनस्येत्यनुवृत्तेर्नेह। दूरः पन्थाः।

। पञ्चमी ।

---

**षष्ठी शेषे।२।३।५०।**

कारकप्रातिपदिकार्थव्यतिरिक्तः (१७०) स्वस्वामिभावादिः सम्बन्धः शेषस्तत्र षष्ठी स्यात्। राज्ञः पुरुषः। कर्म्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव। सताङ्गतम्। सर्पिषो

(१७०) उक्तादन्यः शेषः कर्म्मादयश्च प्रातिपदिकार्थान्ताउक्तास्तेषु च द्वितीयादीनां विधानात्तदन्यत्र षष्ठीत्याशयेन व्याचष्टे कारकेत्यादि। षष्ठ्यर्थसम्बन्धस्य सम्बन्धत्वेनैव भानमिति कारकादीनामपि सम्बन्धत्वेन भाने षष्ठ्येवेत्याह सम्बन्धमात्रविवक्षायामिति सम्बन्धत्वेन भाने इत्यर्थः।

सम्बन्धश्च क्रियामूलक एव यथोक्तं हरिणा

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्व्वकः।

अश्रुतायां श्रुतायां वा क्रियायामभिधीयते इति।

तत्र राज्ञः पुरुषइत्यादौ सेवनादिक्रियाया अश्रुतायाः कर्त्तृत्वादिना उपकार्य्योपकारकभावः, मातुः स्मर्य्यते इत्यादौ तु श्रुतायाएव स्मरणादिक्रियायाः कर्म्मत्वेन तथेति विवेकः। अतएव सूत्रे अन्यादिपदमनुक्त्वा तन्मूलकत्वद्योतनार्थं शेषपदमुक्तम्।

कर्म्मादिकारकेषु च शेषत्वविवक्षायां यथा षष्ठी तथाऽग्रे वक्ष्यति। (२९६पृ०) प्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेष्यत्वात् राज्ञः पुरुषइत्यादौ राजनिरूपितसेवकत्वरूपसम्बन्धवान् पुरुषइति बोधः राज्ञः सेव्यत्वविवक्षायां पुरुषस्य राजेत्यपि भवत्येव तत्र च पुरुषनिरूपितसेव्यत्वसम्बन्धवान् राजेति बोधः एवञ्च सम्बन्धस्योभयनिष्ठत्वेऽपि प्रतियोगिपदादेव षष्ठीना अनुयोगिपदादित्यवगन्तव्यम्। यथोक्तं हरिणा

जानीते। मातुः स्मरति। एधोदकस्योपस्कुरुते। भजे शम्भोश्चरणयोः। फलानान्तृप्तः।

## षष्ठी हेतुप्रयोगे। २। ३। २६।

हेतुशब्दप्रयोगे हेतौ (१७१) द्योत्ये च षष्ठी स्यात्। अन्नस्य हेतोर्वसति।

## सर्व्वनाम्नस्तृतीया च। २। ३। २७।

सर्व्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च। केन हेतुना वसति कस्य हेतोः, निमित्तपर्य्याय(१७२) प्रयोगे सर्व्वासाम्प्रायो दर्शनम्*। किन्निमित्तं वसति केन निमित्तेन कस्मै निमित्तायेत्यादि। एवङ्किङ्कारणम्। को हेतुः। किम्प्रयोजनमित्यादि। प्रायग्रहणादसर्व्वनाम्नः प्रथमाद्वितीये न स्तः। ज्ञानेन निमित्तेन हरिः सेव्यः ज्ञानाय निमित्तायेत्यादि।

## षष्ठ्यतसर्थप्रत्ययेन (१७३)। २। ३। ३०।

द्विष्ठोऽप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानस्तु प्रधानेऽप्युपयुज्यते इति।

(१७१) हेतौ (२। ३। २३सू०) हेतावित्यनुवर्त्त्येह हेताविति हेतुशब्दस्यान्वये विवक्षितइत्यर्थः तेनान्नं हेतुं यस्येत्यादौ तथान्वयाभावात् न षष्ठीति बोध्यम् हेतुवाचिकैव षष्ठीति सूत्रार्थः।

(१७२) निमित्तेति तेभ्यस्तत्समानाधिकरणशब्देभ्यश्चेत्यर्थः किं निमित्तमिति प्रथमान्तं द्वितीयान्तञ्चेति बोध्यम्।

(१७३) दक्षिणोत्तराभ्यामतसुजित्यस्य (६८५पृ०) योऽर्थः दिक्देशकालरूपः सोऽर्थो यस्य प्रत्ययस्य तेन योगेइत्यर्थः।

एतद्योगे षष्ठी स्यात् । दिक्शब्देति (२८८१) पञ्चम्यपवादः (१७४)। ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरि, उपरिष्टात्।

एनपा द्वितीया । २ । ३ । ३१ ।

एनबन्तेन योगे द्वितीया स्यात् । एनपेति योगविभागात् षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण ।

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् । २ । ३ । ३४ ।

एतैर्योगे षष्ठी स्यात्पञ्चमी (१७५) च । दूरं निकटं ग्रामस्य ग्रामाद्वा ।

ज्ञोऽविदर्थस्य करणे । २ । ३ । ५१ ।

जानातेरज्ञानार्थस्य (१७६) करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो जानम् (१७७) ।

(१७४) पञ्चम्यपवाद इति तेन ततः पश्चात् स्यते भाष्यते वेत्यादिभाष्य-प्रयोगात् पश्चाच्छब्दयोगेऽपि पञ्चमी भवतीति गम्यते तथा च नेयं तदपवादिका तेन तस्य पश्चादित्यपि प्रयोगो भवतीति बोध्यम् । प्रत्ययग्रहणं किम् श्रूयमाण एवातसर्थे भवति न तु लुप्तेऽपि तेन प्राग् ग्रामादित्यादौ पञ्चम्येवेति बोध्यम् ।

(१७५) षष्ठ्यां प्राप्तायां सूत्रेऽन्यतरस्यांग्रहणं पञ्चमीसमुच्चयार्थं तेन विप्रकृष्टापि पञ्चमी समुच्चीयते न तु सन्निहिते अपि द्वितीयातृतीये व्याख्यानादित्याह पञ्चमी चेति ।

(१७६) ज्ञोविदर्थस्येति सूत्रे अविदर्थस्येति च्छेदः व्याख्यानात् ।

(१७७) सर्पिष इति जानातेः प्रवृत्तिरर्थः सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः ।

अधीगर्थ(१७८)दयेशां कर्म्मणि। २। ३। ५२।

एषां कर्म्मणि शेषे षष्ठी स्यात्। मातुः स्मरणम्। सर्पिषो दयनमीशनं वा।

कृञः प्रतियत्ने। २। ३। ५३।

कृञः कर्म्मणि शेषे षष्ठी स्यात् गुणाधाने। एधोदकस्योपस्करणम्

रुजार्थानाम्भाववचनानामज्वरेः। २। ३। ५४।

भावकर्त्तृकाणां (१७९) ज्वरिवर्ज्जितानां रुजार्थानां कर्म्मणि शेषे षष्ठी स्यात्। रोगस्य चौरस्य (१८०) रुजा। अज्वरिस-

(१७८) अधीगर्थः स्मृतिः अधिशब्दोच्चारणमिङिकाद्यधिशब्दं न व्यभिचरतीति द्योतनाय। कर्म्मणि किं मातुर्गुणस्मरणमित्यत्र शेषषष्ठीसमासो भवत्येव। एतत्प्रकरणेन षष्ठीप्रसङ्गेण प्रतिपदविधाना षष्ठी न समस्यते(२४४५०) इति निषेधः तथाच शेषे इत्यस्य सर्व्वत्रानुवर्त्तनेऽपि समासनिवृत्त्यर्थमेवैषां सूत्राणां प्रवृत्तिरित्याकारे स्पष्टमिहापि समासयोग्यताप्रदर्शनार्थं सर्व्वत्र कृदन्तशब्देनोदाहरणमित्यनुसन्धेयम्।

कारकव्यपदिष्टे च श्रयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये इति।

हरिणा स्पष्टमिदमुक्तं प्रतिपद सकृत्प्रत्ययप्रयोगे न तु परं कृद्योगे।

(१७९) रुजा व्याधिरर्थो येषां तेषां रुजार्थानां धातूनां भाववाचकत्वाव्यभिचारात् भावशब्देनात्र घञादिवाच्यः सिद्धरूपो भाव उच्यते स कर्त्ता-निवचनः बाहुलकात् कर्त्तरि ल्युट् प्रकाशयेत् न निर्णीत नहि भावो वक्ता संभवति तस्मात् प्रत्ययस्य साधुत्व निर्वाहायैव वचिरिह प्रयुक्तः। तथाचायमर्थः भावो वचनः कर्त्ता एषां ते भाववचना इति तदेतदाह भावकर्त्तृकाणामिति।

(१८०) चौरस्येति कर्म्मणः शेषत्वविवक्षया षष्ठी, रोगस्येत्यत्र रुजा-

न्तापयोरिति वाच्यम्*। रोगस्य चौरज्वरः (१८१) चौरस-न्तापो वा रोगकर्तृकचौरसम्बन्धिज्वरादिकमित्यर्थः।

आशिषि नाथः। २। ३। ५५।

आशीरर्थस्य नाथतेः शेषे कर्म्मणि षष्ठी स्यात्। सर्पिषो नाथ-नम् (१८२)। आशिषीति किम् माणवकनाथनम् तत्सम्ब-न्धिनी याच्ञेत्यर्थः।

जासिनिप्रहण (१८३) नाटक्राथपिषां हिंसा याम्। २। ३। ५६।

हिंसार्थानामेषां शेषे कर्म्मणि षष्ठी स्यात्। चौरस्योज्जा-सनम्। निप्रौ संहतौ विपर्य्यस्तौ व्यस्तौ वा। चौरस्य निप्र-हणनम् प्रणिहननं निहननम् प्रहणनं वा। नट अवस्यन्दने चुरादिः। चौरस्योन्नाटनञ्चौरस्य क्राथनं वृषलस्य पेषणम्। हिंसायाङ्किं धानापेषणम्।

व्यवहृपणोः समर्थयोः। २। ३। ५७।

---

* शेषे षष्ठी। ...

शब्दयोगे कर्त्तृकर्म्मणोः कृतीति(१००पृ०)षष्ठीति विवेकः। भावकर्त्तृकाणां किं श्लेष्मणश्चौररुजा इत्यत्र शेषषष्ठी तेन समासः।

(१८१) अज्वरीति निषेधात् चौरज्वर इत्यत्र रुजार्थानामित्यस्याप्रवृत्तौ शेषषष्ठी तेन समास इति भावः।

(१८२) सर्पिषोनाथनमिति सर्पिर्मे भूयादित्याशासनमित्यर्थः।

(१८३) निप्रोपसृष्टोहनोनिप्रहणः। शब्दपरत्वेऽपि सौत्रत्वात् हन्तेरत्पूर्व्वस्येति (१५८पृ०) णत्वम्।

शेषे कर्म्मणि षष्ठी स्यात्। द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता (१८४)। शतस्य व्यवहरणम् पणनं वा। समर्थयोः किम् शलाकाव्यवहारः गणनेत्यर्थः। ब्राह्मणपणनं स्तुतिरित्यर्थः।

## दिवस्तदर्थस्य (१८५)। २। ३। ५८।

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्म्मणि षष्ठी स्यात्। शतस्य दीव्यति। तदर्थस्य किम् ब्राह्मणन्दीव्यति स्तौतीत्यर्थः।

## विभाषोपसर्गे। २। ३। ५९।

पूर्व्वयोगाऽपवादः। शतस्य शतं वा प्रतिदीव्यति।

## प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने। २। ३। ६१।

देवतासम्प्रदानकेऽर्थे वर्त्तमानयोः प्रेष्य(१८६) ब्रुवोः कर्मणो

(१८४) समपर्य्यायसंशब्देन समासे समशब्दस्य शकन्ध्वादित्वात् पररूपे वा कृते समर्थयोरिति सिद्धं तदेतदाह अनयोस्तुल्यार्थतेति तथाच क्रयविक्रयव्यवहाररूपार्थकयोरेवेत्यर्थः।

(१८५) तदर्थस्येति तच्छब्देन व्यवहृपणौ परामृश्येते द्यूतक्रयविक्रयव्यवहारेषु तौ दिवस्तुल्यार्थावित्याह द्यूतार्थस्य क्रयविक्रयेति। इह शेषे इति न संबध्यते व्याख्यानात् उत्तरसूत्रे विकल्पारम्भसामर्थ्याच्च अन्यथा षष्ठ्यां विकल्पितायां शेषे विभक्त्यन्तरस्याप्राप्त्या कथंय विकल्पारम्भः स्यादित्याशयेन समासयोग्यताभावं ध्वनयन् तिङन्तेनोदाहरति शतेन दीव्यतीति।

(१८६) प्रेष्येति इष्यतेर्दैवादिकात् लोट्मध्यमपुरुषैकवचनं, तत्साहच-

हविर्विशेषस्य वाचकाच्छब्दात् षष्ठी स्यात्। अग्नये छागस्य हविषोवपाया: मेदस: प्रेष्य अनुब्रूहि वा।

**कृत्वोर्थप्रयोगे कालेऽधिकरणे। २। ३। ६४।**

कृत्वोर्थानां (१८७) प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात्। पञ्चकृत्वोऽह्नो भोजनम्। द्विरह्नो भोजनम्। शेषे किम् द्विरहन्यध्ययनम्।

**कर्त्तृकर्मणो: कृति। २। ३। ६५।**

कृद्योगे कर्त्तरि कर्म्मणि च षष्ठी स्यात्। कृष्णस्य कृति:। जगत: कर्त्ता कृष्ण:। गुणकर्म्मणि वेष्यते*। नेताऽश्वस्य स्रुघ्नं स्रुघ्नस्य वा।* कृति किम् (१८८)। तद्धिते मा भूत्। कृतपूर्वी कटम् (१८९)।

---

र्यात् ध्रुविरपि तदन्त एव गृह्यते अतएवेह शेषग्रहणं न संबध्यते तिङन्तेन सह समासाप्रसक्ते:।

(१८७) कृत्वसुचोर्थ इवार्थोयेषां ते कृत्वोर्था: प्रत्यया: सुजादय:। शेषे किमिति दिवस्तदर्थस्येत्यादिना (२९९पृ०) विच्छेदादधिकरणकारक एव षष्ठीविधानं युक्तं किं शेषग्रहणेनेति प्रश्न:। द्विरहनीत्यादिदृष्टिप्रयोगप्रामाण्यात् मण्डूकप्लुत्यानुवृत्ति: स्वीकार्य्येत्युत्तराशय:।

(१८८) कृति किमिति इह कर्त्तृकर्म्मभ्यां क्रिया आक्षिप्यते तद्वाची तु धातुरेव धातोश्च द्विविधा एव प्रत्यया: तिङ: कृतश्चेति तत्र तिङ्प्रयोगे न लोकेत्यादिना (३०२पृ०) षष्ठीनिषेधेन परिशेषात् कृत्येवेदं सूत्रं प्रवर्त्तिष्यतेऽत: किं कृतीति विशेषाभिधानेनेति प्रश्न:।

(१८९) कृतपूर्व्वी कटमिति अत्र करोतिक्रियापेक्षमनभिहितं कर्म्मत्वं कटस्यास्त्येवेति तत: षष्ठी मा भूदित्येतदर्थं तद्धितान्तादिव्यावृत्तये कृ-

## उभयप्राप्तौ कर्म्मणि। २। ३। ६६।

उभयोः प्राप्तिर्यस्मिन्(१८०)इति तत्र कर्म्मण्येव षष्ठी स्यात्।
आश्चर्य्यो गवान्दोहोऽगोपेन। स्त्रीप्रत्यययोरकाकारयोर्ना

---

नेति वक्तव्यमिति भावः। अत्र कर्त्तृसाहचर्य्यात् कर्म्मापि धात्वर्थ भेदेनान्वयेव गृह्यते तेन स्तोकं पाचक इत्यादौ क्रियाविशेषणरूपे- अभेदान्वयिनि कर्म्मणि न षष्ठीति। शब्देन्दु०।

अत्रेदं बोध्यम् कृतपूर्व्वी कटं भुक्तपूर्व्वी ओदनमित्यादिभाष्यकारप्रयो गाद्दृश्यन्ते तत्र च कृतं पूर्व्वमनेनेति विग्रहे सह सुपेति।(३१८पृ०)समास पूर्व्वादिनि (६७६पृ०) रित्यत इनेरनुवृत्तिमता सपूर्व्वाच्चेति (६७६पृ०) सूत्रेण इनिर्जायते तत्र यदि कृतमिति कर्म्मणि क्तः स्यात् तदा तस्य कटादिकर्म्मरूपविशेषणतया सापेक्षत्वेन पूर्व्वादिपदेन समासो न स्यात् एकत्रविशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयायोगात् न वृत्तिसम्भवः भाष्यप्रामाण्याच्च तत्र वृत्तौ सत्यामेषा रीतिराकलनीया तथाहि प्रथमं कर्म्माविवक्षयाऽकर्म्मकत्वेन भावे क्तप्रत्यये विहिते तदन्तेन पूर्व्वादीनां सह सुपेति समासे कृते तत्पूर्व्वकात् पूर्व्वशब्दा- दिनिप्रत्ययो भवति। पश्चाच्च कर्त्तृकृतक्रियायाः कर्म्माकाङ्क्षायां कटादिकर्म्मणोऽन्वयः एतदेव हरिणा दर्शितं यथा

अकर्म्मकत्वे सत्येव क्तान्ते भावाभिधायिनि।
पश्चात् क्रियावता कर्त्रा योगो भवति कर्म्मणा।
अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः।
क्रिया सम्बध्यते तद्वत् कृतपूर्व्वादिषु स्थितेति।

गमनकर्त्तृवाचकगतादिमध्यपातिनी गमनक्रिया कर्त्तृविशेषणत्वेनो- पस्थिता यथा अविग्रहा असत्त्वबोधा तथा कृतपूर्व्वकर्त्तृबोधककृत- पूर्व्वमध्यपातिन्यपीति तदर्थः। प्रपञ्चितश्चैतदस्माभिः शब्दार्थरत्ने।

(१८०) उभयोः प्राप्तिर्यस्मिन्निति तेनैकनिर्णयसत्सम्भावे ओदनस्य पाकः ब्रा-

यन्नियमः* (१८१)। भेदिका विभित्सा वा रुद्रस्य जगतः। शेषे (१८२) विभाषा*। स्त्रीप्रत्यय इत्येके। विचित्रा जगतः कृतिर्हरेर्हरिणा वा। केचित् अविशेषेण (१८३) विभाषामिच्छन्ति। शब्दानामनुशासनमाचार्य्येणाचार्य्यस्य वा।

## क्तस्य च वर्त्तमाने। २। ३। ६७।

वर्त्तमानार्थस्य क्तस्य योगे षष्ठी स्यात्। न लोकस्येति (३०२पृ०) निषेधस्यापवादः। राज्ञाम्मतोबुद्धः पूजितो वा।

---

शब्दानां प्रादुर्भाव इत्यादौ विभिन्नक्रियायाः कर्त्तृकर्म्मणोः षष्ठीप्राप्तौ नायं नियमः इति भावः। प्राप्तिपदेन चोभयप्रयोग एवायं नियम इति ध्वनितम्। उभयशब्देन कर्त्तृकर्म्मणी परामृश्येते। पूर्व्वसूत्रेण प्राप्ते नियमार्थमिदमिति ध्वनयन्नाह कर्मण्येवेति।

(१८१) स्त्रीप्रत्यययोरिति स्त्रियां क्तिन् (७४४८पृ०) इत्यधिकारविहितयोरित्यर्थः नायं नियम इति एतयोर्योगे उभयप्राप्तौ कर्म्मण्येव न कर्त्तरीति यो नियम उक्तः स न भवति अपि तु कर्त्तर्य्यपि भवतीत्यर्थः। भेदनं भेदिका धात्वर्थं निर्द्देशे ण्वुलिति (४७४५३पृ०) ण्वुल्।

(१८२) शेषे इति कर्त्तर्य्येव विभाषा न तु कर्म्मणीति ध्वनयन्नुदाहरति विचित्रेत्यादि अत्रैते संग्रहश्लोकाः प्राचीनैरुक्ता यथा

षष्ठी संभाविता यत्र युगपत् कर्त्तृकर्म्मणोः।
अस्त्रीविहितकृद्योगे कर्म्मण्येव न कर्त्तरि।
तव्यादीनां प्रयोगे च द्वयोरेव हि नेष्यते।
कर्त्तुर्विभाषया केश्चित् कर्म्मणोऽपि तथेष्यते इति।
प्रधाने नियता षष्ठी गुणे तूभयथा भवेत्।
प्रधाने प्रत्ययाश्चेत् स्युः षष्ठीं कुर्य्यात्तदा गुणे इति च।

(१८३) अविशेषेणेति स्त्रीप्रत्ययभिन्नेऽपि कृन्मात्रे इत्यर्थः।

**विधाद्वाक्यस्मरणयोरङित् । ⧗ ओत् ।१।१।१५। ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः । ⧗ संबुद्धौ शाकल्यस्येतावनार्षे ।१।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । विष्ण इति । विष्णविति । अनार्षे इति किम् । ब्रह्मबन्धवित्यब्रवीत् । ⧗ उञः ।१।१।१७। उञ इतौ वा प्रागुक्तम् । उ इति । विति । ⧗ ऊँ ।१।१।१८। उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात् । ऊँ इति । ⧗ मय उञो**

णस्य वैयर्थ्यापत्तेः 'व्याहरति मृगः' इत्यादिनिर्देशविरोधाच्चोक्तशङ्काया अप्रवृत्तेः । किंच 'निपातोऽजनाङ्' इत्युक्तेऽप्यनाङिति प्रतिषेधसामर्थ्यान्निपातस्य विशेषणत्वाभ्युपगमात्तदन्तविध्यप्रवृत्त्या निपातरूपो योऽच् स प्रगृह्य इत्यर्थलाभादजूपस्यैव निपातस्य प्रगृह्यत्वं सिद्धमिति नास्त्येव प्रयोजनमेकग्रहणस्य । नन्वेवमपि समुदायनिवृत्त्यर्थमेकग्रहणमावश्यकमेव । अन्यथा अ इ उ अपेहीत्यत्रैकाज्द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यान्नावयवानामिति चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति चेन्न । अजित्येकत्वस्य विवक्षयैव समुदायनिराससंभवात्समुदायसंज्ञया अवयवानामननुग्रहेणैकाज्द्विर्वचनन्यायस्याप्यप्रवृत्तेः । एकस्मिन्निपाते संज्ञाविधानसंभवेन निपातसमुदायस्य निपातग्रहणेनाग्रहणाच्च । अत्राहुर्भाष्यकाराः । अच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति 'वर्णग्रहणेषु व्यक्तिसंख्या न विवक्ष्यते किं तु जातिरेव निर्दिश्यते' इति । तेन 'हलन्ताच्च' इति सनः कित्वात् दम्भ इत्वे धिप्सतीत्यादि सिद्धम् । हल्ग्रहणस्य व्यक्तिपरत्वे तु योऽत्रेकः समीपे हल् नकारो न ततः परः सन्, यस्माच्च परः सन् भकारान्नासाविक्समीप इति कित्वं न स्यात् ततश्च नलोपो न स्यात् । वस्तुतस्तु अपृक्तसंज्ञायामेकग्रहणमुक्तार्थज्ञापकमित्याश्रित्य प्रकृतसूत्रे एकाज्ग्रहणं त्यक्तुं शक्यम् । अत एव मनोरमायामनाङिति पर्युदासादेवाजूपनिपाते लब्धे निपातग्रहणमुत्तरार्थं स्पष्टप्रतिपत्त्यर्थमिहैव कृतमिति निपातग्रहणस्यैव प्रयोजनमुक्तं न त्वेकाज्ग्रहणस्य ॥ अत्र नव्याः । यदुक्तं मनोरमायामनाङिति पर्युदासादित्यादि तच्चिन्त्यम् । 'ओत्' सूत्रे भाष्यकारैः प्रसज्यप्रतिषेधस्यैवाङ्गीकृतत्वात् । न च लक्ष्यभेदाभावात्प्रौढिवादमात्रं भाष्यमिति वाच्यम् । अस्मादेव भाष्यवचनाल्लक्ष्यभेदोऽप्यस्तीति सुवचत्वात् । तथाहि । अततेर्डः अः, 'अकारो वासुदेवः स्यात्' इति वचनाद्रूढिशब्दो वा । अनेन अशब्देन सह 'आङ्मर्यादाभिविध्योः' इति आङोऽव्ययीभावे सवर्णदीर्घे 'अव्ययीभावश्च' इति नपुंसकत्वाद्ध्रस्वत्वे सोरम्यमि पूर्वे च कृते अमितिरूपं भाष्यकृत्संमतम् । तथा इणो निष्ठायामितः, वेञस्तु निष्ठायां संप्रसारणे उतः, 'अम् इतः एतः, अम् उतः ओतः' इत्यासमुद्रक्षितिवत्समासे रूपं च तत्संमतम् । तत्र पर्युदासपक्षे अमि पूर्वो गुणश्च न सिध्यति । अशब्दस्याङ्भिन्नत्वात्स्थानिवद्भावेन निपातत्वाच्च प्रगृह्यत्वात् । प्रसज्यप्रतिषेधाश्रये तु सिध्यति तस्याङ्त्वेन प्रगृह्यत्वनिषेधात् । न चैतादृशप्रयोगोऽप्रामाणिक इति वक्तुं युक्तम् । प्रकृतभाष्यस्यात्र प्रमाणत्वात् । अन्यथा हि भाष्यकारेङ्गितमात्रावलम्बनेन तत्र प्राचां ग्रन्थानामधिक्षेपाय भवतां प्रवृत्तयो व्याहन्येरन्नित्याद्याहुः॥—**आङ्वर्जे** इति । प्रतिषेधपक्षे तु प्रगृह्यः स्यादित्येतदुत्तरमिदं द्रष्टव्यम् । वर्ज्यत इति वर्जः वृजेर्ण्यन्तात्कर्मणि घञ् । वर्जनीय इत्यर्थः । आङो न भवतीति यावत् ॥—**आ एवमिति**। पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः, पूर्वमित्थं नामंस्थाः इदानीं त्वेवं मन्यस इत्यर्थः ॥—**आ एवं किलेति** । स्मरणद्योतकोऽयमाकारः ॥—**वाक्यस्मरणयोरि**त्यादि । अत्रायमाशयः ॥ 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' इति भाष्यस्यैाङित्त्वलक्षण एव तात्पर्यं, लाघवात् । अन्यस्य ङित्वं त्वर्थसिद्धम् । 'ईषदर्थे' इत्यादिस्त्वेकदेशानुवादः । एवं च अभ्रआँ अप इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्वात् 'आङोऽनुनासिकश्छन्दसि' इति प्रवर्तत इति ॥—**ओत्** ॥ निपात इति किम् । देवोऽसि, वायवायाहि ॥—**संबुद्धौ**—॥ ऋषिर्वेदः 'तदुक्तमृषिणा' इत्यादौ तथा दर्शनादित्यभिप्रेत्याह—**अवैदिक** इति । संबुद्धौ किम् । अहो इति । अत्र परत्वाद्विकल्पो मा भूत् । न च 'ओत्' इति सूत्रस्य निरवकाशत्वं शङ्क्यम् । अहो ईशा इत्यादौ तस्य सावकाशत्वात् । इताविति किम् । पटोऽत्र ॥—**उञः** ॥ 'निपात एकाच्–' इति नित्यं प्राप्ते विभाषेयम् ॥ शाकल्यस्येतौ प्रगृह्यमिति चात्रानुवर्तते तदाह—**इतौ वा प्रागुक्तमिति** । इह 'उञ ऊँ' इत्येकमेव सूत्रं योगविभागेन व्याख्यातम् । एकसूत्रत्वे तु 'उञ इतौ ऊँ शाकल्यस्य' इत्यर्थात् ऊँ इतीत्येव रूपं शाकल्यमते सिध्यति । अन्येषां तु मते नित्यं प्रगृह्य इति उइतीत्येवं रूपं सिध्यति, वितीति रूपं तु न सिध्यत्येवेति ज्ञेयम् ॥—ऊँ ॥—**अनुनासिक** इति । तेनास्मिन् परे 'यरोऽनुनासिके–' इति विकल्पः । यदेतन्ँ इति पठसि यदेतद्ँ इति वा । एतदर्थमेवात्रानुनासिकग्रहणम् । अन्यथा 'यरो अम्यनुनासिको वा' इत्येवावक्ष्यत् । 'यरो अमि अम्वा' इत्येवावक्ष्यदित्युक्तौ तु यथासंख्यप्रवृत्त्या अम्मयं तन्नेत्यादिसिद्धावपि चिन्मयं एतन्मुरारिरिति न सिध्येत् । 'कृन्मेजन्तः' 'ङमुण्नित्यम्' इत्यादि निर्देशाश्रयणे तु प्रतिपत्तिगौरवम् । वस्तुतस्तु 'यरोऽनुनासिके अम्वा'

---

१ वाक्येति—वाक्यशब्देन वाक्यार्थगतमन्यथात्वमुच्यते, अन्यथात्वं चानभिमतत्वमेव । २ उञ इति—नायं प्रत्याहारः, तथा सति उञ्ग्रहणमेव कार्यम्, हल्सु विशेषाभावात् । तस्मादूञ्ग्रहणसामर्थ्यान्निपातोऽयम् ।

अधिकरणवाचिनश्च । २ । ३ । ६८ ।

क्तस्य योगे षष्ठी स्यात् । इदमेषामासितम् (१९४) ।

न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ।

एषां प्रयोगे षष्ठी न स्यात् । लादेशाः (१९५)। कुर्वन् (१९६) कुर्वाणः सृष्टिं हरिः । उः । हरिं दिदृक्षुः (१९७) अलङ्करिष्णुर्वा । उकः । दैत्यान् घातुको हरिः । कमेरनिषेधः (१९८)। लक्ष्म्याः कामुको हरिः । अव्ययम् । जगत् सृष्ट्वा । सुखं कर्त्तुम् । निष्ठा (१९९)। विष्णुना हता दैत्याः । दैत्यान् हतवान्

(१९४) इदमेषामिति कर्त्तरि षष्ठी सकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणोर्द्वयोरप्यनभिहितत्वात् षष्ठी इदमेषां भुक्तमोदनस्येत्यादि । उभयप्राप्ताविति तु मध्येऽपवादन्यायेन कर्तृकर्मणोः कृतीत्यस्यैव नियमो नान्यस्येति बोध्यम् ।

(१९५) ल इति लकारादीनां सामान्यग्रहणं तेषाञ्च साक्षात्प्रयोगे न सम्भवतीति तदादेशा एव गृह्यन्ते इत्याह लादेशा इति उदाह्रियन्ते इति शेषः । आदेशशब्देन च तत्कार्यकारका अपि गृह्यन्ते तेन सोमं पपिः दर्दिरित्यादौ आदृगमहनजनः किकिनौ लिट् चेति (उ०२७५ पृ०) किप्रत्यययोगेऽपि निषेधः तत्र अभ्यासादिरूपलिट्कार्यातिदेशात् ।

(१९६) कुर्वन्निति शत्रनुप्रत्याहारघटकस्तु नायं यतः शशब्दस्य तद्घटकत्वेऽपि शत्रिति समुदायस्य तदनन्तर्गतत्वात् लिडादेशवत्सादेशस्तत्कार्यकारिकिकिनोः संग्रहार्थं लग्रहणस्यावश्यकतया तेनैव शतृनिषेधसिद्धिः ।

(१९७) सूत्रे उ उक इति भेदमुदाहरणेन ज्ञापयन्नाह दिदृक्षुरिति ।

(१९८) कमेरिति उकान्तस्येति शेषः इदञ्च भाषायामेवेति भाष्यकारः ।

(१९९) निष्ठेति निष्ठायोगे कर्मणि षष्ठी सर्वथा निषिद्धा कर्त्तरि तु विषय-

विष्णुः। खलर्थः। ईषत्करः प्रपञ्चो हरिणा। तन्निति(२००) प्रत्याहारः शतृशानचाविति(उ२६५पृ०)तृशब्दादारभ्य (उ२६६पृ०) तृणो नकारात्। शानन्। सोमम्पवमानः। चानश्। आत्मानम्मण्डयमानः। शतृ। वेदमधीयन्। तृन्। कर्त्ता लोकान्। द्विषः शतुर्वा (२०१)*। मुरस्य मुरं वा द्विषन्। सर्वोऽयङ्कारकषष्ठ्याःप्रतिषेधः। शेषे षष्ठी (१०२) तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः।

## अकेनोर्भविष्यदाधमर्ण्ययोः। २। ३। ७०।

भविष्यत्यकस्य (२०३) भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्। सतः पालकोऽवतरति। व्रजङ्गामी। शतन्दायी।

---

विशेषे सम्भवति अतोऽत्र कर्म्मणः सम्बन्धविवक्षयापि न षष्ठीसमासः यथोक्तं हरिणा

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते।

शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते इति।

(२००) पूङ्यजोः शानन्निति (उ२६७पृ०) शानन् ताच्छील्यवयोवचनशक्तिषु चानशिति (उ२६७पृ०)चानश् इङ्धार्य्योः शत्रकृच्छ्रिणीति (उ२६८पृ०) शतृ। तृन्निति (उ२६८पृ०)तृन्। सूत्रे जिघृक्षितप्रत्याहारग्रहणाय तृनामित्यत्र णत्वं न कृतमिति बोध्यम्।

(२०१) द्विष इति द्विषोऽमित्रे इति(उ२६८पृ०)विहिते शतरि वा षष्ठीत्यर्थः।

(२०२) शेषे षष्ठी तिति शाब्दबोधे वैलक्षण्यमिति भावः एवञ्चाश्चर्य्यो गवां दोहोऽगोपेनेत्यादौ शेषत्वविवक्षायां कर्त्तर्य्यपि षष्ठी भवत्येवेति बोध्यम्।

(२०३) आधमर्ण्येऽकस्याविहितत्वादाह भविष्यत्यकस्येति इनस्तूभयोर्विधानादाह भविष्यदाधमर्ण्यार्थेनस्येति। यद्यपि भविष्यत्यको न श्रूयते तथापि भविष्यति गम्यादय इत्यधिकारे (उ४३१पृ०) विहितः तुमुन्ण्वुलाविति(उ४३२पृ०)अकस्यासौ स्थलेव गृह्यते इत्याशयेनोदाहरति

## कृत्यानां (२०४) कर्त्तरि वा। २। ३। ७१।

षष्ठी वा स्यात्। मया मम वा सेव्यो हरिः। कर्त्तरीति किम् गेयो माणवकः साम्नाम्। भव्यगेयेति(७१।५पृ०)कर्त्तरि यद्विधानादनभिहितङ्कर्म्म। अत्र योगोविभज्यते। कृत्याना-मुभयप्राप्ताविति नेति (२०५) चानुवर्त्तते। तेन नेतव्या व्रजङ्गावः कृष्णेन। ततः कर्त्तरि वा। उक्तोऽर्थः।

## तुल्यार्थैरतुलोपमाभ्यान्तृतीयाऽन्यतरस्याम्। २। ३। ७२।

तुल्यार्थैर्योगे तृतीया(२०६)वा स्यात्पक्षे षष्ठी। तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। अतुलोपमाभ्यां किम्। तुला उपमा वा कृष्णस्य नास्ति।

सतः पालकः इति यत्तु कालसामान्ये ण्वुलभिहितमस्य नायं निषेधकः. तेन ओदनस्य पाचकः पुत्रस्य दर्शकइत्यादौ स्यादेवेति भावः।

(२०४) कृत्यानामिति कर्त्तृकर्म्मणोरिति(३००पृ०)नित्ये प्राप्ते विभाषा कर्त्तृ-ग्रहणाच्च कर्म्मणि विकल्पेनिवृत्त्यर्थम्।

(२०५) नेतीति निषेधोऽयं कर्त्तरि कर्म्मणि चानुभयप्राप्तिविषयइति कैयटादयः। व्रजमित्यत्र गुणकर्म्मणि वेष्यत इति(३००पृ०) विकल्पस्तु न कृत्यातिरिक्ते चरितार्थस्य तस्य दोग्धव्या गावः पयः कृष्णेनेत्यादौ गुण-कर्म्मण उक्तत्वेन प्रधाने चरितार्थेनानेन परत्वाद्बाधात्। तथा च गुणकर्म्मणि वेष्यत इति तूभयप्राप्तिरहितस्थले विशेषस्तु संप्राङ्क-श्लोकेषु(३०२पृ) प्रागुक्तेषु द्रष्टव्यः।

(२०६) शेषषष्ठ्यां प्राप्तायां विकल्पेन तृतीया अनेन विधीयते। तुल्यार्थैस्तु-ल्यार्थैरतणनातुलोपमाभ्यामिति पर्य्युदास उपपद्यते इति तु युक्तम्

चतुर्थी (२०७) चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः। २। ३। ७३।

एतदर्थैर्योगे चतुर्थी वा स्यात् पक्षे षष्ठी आशिषि। आयुष्यं चिरञ्जीवितम् कृष्णाय कृष्णस्य वा भूयात्। एवम्मद्रम्भद्रं कुशलन्निरामयं सुखं शम्, अर्थः प्रयोजनं हितम्पथ्यम्भूयात्। आशिषि किम्। देवदत्तस्यायुष्यमस्ति। व्याख्यानात् (२०८) सर्व्वत्रार्थग्रहणं भद्रभद्रपर्य्यायत्वादन्यतरो न पठनीयः।

। षष्ठी।

---

आधारोऽधिकरणम्। १। ४। ४५।

कर्तृकर्मद्वारा (२०९) तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यात्।

---

अतएव च पर्य्युदासात्तत्र सादृश्यबोधकस्यानव्ययस्यैव ग्रहणम् तेन इवादीनां सादृश्यबोधकत्वेऽपि न तद्योगेऽस्य प्रवृत्तिरिति बोध्यम्। तुल्यां यदारोहति दन्तवाससेति, स्फुटोपम भूतिसितेन शम्भुनेत्यादौ तु सहार्थे तृतीयेति मल्लिनाथः।

(२०७) आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकात् तद्द्वारायुष्यादियोगे चतुर्थीषष्ठ्याविल्यर्थः। अतएवैतदर्थकचतुर्थ्यन्तेन सुखहितादिभिर्न समासः उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात्। अतएव च हुखेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्युक्तमाकरे।

(२०८) व्याख्यानादिति अर्थशब्दः प्रयोजनवाची पृथक् निर्दिष्टमित्यायुष्यादिशब्दानामर्थपरत्वकल्पनमिति भावः। षष्ठी

(२०९) आध्रियतेऽस्मिन्निति अधिकरणार्थकघञि आधारशब्दः सिद्धः स-

**सप्तम्यधिकरणे च। २। ३। ३६।**

अधिकरणे सप्तमी स्यात्। चकारात्(२१०)दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा (२११)। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छास्ति। सर्व्वस्मिन्नात्मास्ति। वनस्य दूरेऽन्तिके वा। दूरान्तिकार्थेभ्य इति(२८३पृ०) विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः। क्तस्येन्वि

आधारः कस्येत्याकाङ्क्षायां कारके इत्यधिकारात् क्रियाया एवेति लभ्यते क्रियायाः साक्षादाधारयोश्च कर्त्तृकर्म्मणोस्तत्संज्ञैव परया एतस्या बाधात् परम्परया तद्द्वारा क्रियाया आधार इह ग्राह्य इत्याह कर्त्तृकर्म्मद्वारेति। स्पष्टमुक्तं हरिणा

कर्त्तृकर्म्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।

उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति।

भूतले घट इत्यादौ सर्व्वत्रास्तीति पदाध्याहारेण शाब्दबोधः। मूले इत्थं कपिसंयोगीत्यादौ अस्तिक्रियाध्याहारे तस्याः स्वकर्त्तृकपिसंयोगित्वद्वारा मूलवृत्तित्वादाधारत्वम् विशिष्टवृत्तस्य मूलवृत्तित्वबोधेऽन्यत्रावयवे तद्विशिष्टवृत्त्याभावाप्रतीतेः कपिसंयोगे तदवच्छेदकत्वं फलतीति बोध्यम्।

(२१०) चकारादिति दूरान्तिकार्थकेभ्यः प्रातिपदिकार्थ एव सप्तमीति बोध्यम्।

(२११) त्रिधेति उप समीपे श्लेषः सम्बन्ध उपश्लेषस्तत्कृतमौपश्लेषिकम् एकदेशावच्छेदेन श्लेषस्य समीपमुपश्लेषं तत्कृतमौपश्लेषिकमिति वा सकलावयवव्यापकमभिव्यापकं तदतिरिक्तं सर्व्वम् वैषयिकम्। सर्व्वत्राधिकरणशक्तिमान् अधिकरणसप्तम्यर्थः। तत्रौपश्लेषिके, कर्त्तृद्वाराधारे कटे आस्ते इति, कर्म्मद्वारा तु स्थाल्यां पचतीति। वैषयिके, मोक्षे इति अभिव्यापके सर्व्वस्मिन्नित्युदाहरणविवेकः।

यजस्य(२१२)कर्म्मण्युपसंख्यानम्*। अधीती(२१३)व्याकरणे। अधीतमनेनेति विग्रहे इष्टादिभ्यश्चेति (६७६पृ०) कर्त्तरीनिः। साध्वसाधुप्रयोगे (२१४) च*। साधुः कृष्णो मातरि। असाधुर्मातुले। निमित्तात्कर्म्मयोगे*। निमित्तमिह(२१५) फलं योगः संयोगसमवायात्मकः।

(२१२) क्तस्येति इन्विषयस्य इनोविषयस्य इन्प्रकृतेः क्तस्य क्तान्तस्य कर्म्मणीत्यर्थः इन्प्रकृतेरिति व्याख्यानाच्च कृतपूर्व्वी कटमित्यादौ कटरूपकर्म्मणि न तत्र सपूर्व्वाच्चेति, (६७६पृ०) सूत्रेण इन्विधानेनेनः सपूर्व्वकपूर्व्वशब्दस्यैव प्रकृतित्वात्। अत्र कर्मशब्देन कालाध्वादिव्यतिरिक्तमेव गृह्यते व्याख्यानात् तेन मासमधीती व्याकरणे इत्यादौ मासादौ नेति कैयटः।

(२१३) अधीतीति न कर्म्मणि क्तः तथात्वे तस्याभिहिततया सप्तम्यनुपपत्तेः किन्तु भावे। अन्यत् कृतपूर्वी कटमित्यादेरिवात्रोह्यम्।

(२१४) साध्वसाध्विति शेषषष्ठ्यपवादोऽयम् यत्रार्च्चा न विवक्षिता किन्तु तत्त्वकथनमात्रं तत्रापि सप्तम्यर्थं वार्त्तिकेऽत्र साधुग्रहणम्। साधुनिपुणाभ्यामर्च्चायामप्रतेरिति(२१२पृ०)सूत्रे साधुग्रहणं त्वर्च्चायां प्रतियोगे सप्तमीनिवृत्त्यर्थमिति विवेकः। तत्सूत्रे अर्च्चाग्रहणं निपुणार्थमित्यपि केचित्।

(२१५) निमित्तमिहेति यदि तु कारणमित्युच्यते तदा जाड्येन बद्धइत्यादावपि स्यादिति भावः। फलञ्च क्रियाफलमेवञ्च फलं सप्तम्यर्थः। चर्म्मणीत्यादौ चर्म्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधीनेच्छाविषयत्वात्। कर्म्मसंबन्धस्य स्वरूपस्यैव निमित्तम् तत्र द्वीपिचर्म्मणोर्गजस्तत्रयोश्च रवयवावयविभावात् समवायः इतरयोश्च संयोगइति विवेकः। मुक्ताफलाय करिणमित्यादौ क्रियार्थोपपदस्येत्यादिना (२८०पृ०)चतुर्थी मुक्ताफलमाहर्त्तुं हन्तीत्यर्थविवक्षणात्।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥

हेतौ तृतीयात्र प्राप्ता तन्निवारणार्थम्। सीमा अण्डकोशः पुष्कलको गन्धमृगः। योगविशेषे किम् वेतनेन धान्यं लुनाति।

## यस्य च भावेन भावलक्षणम्। २। ३। ३७।

यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी (२१६) स्यात्। गोषु दुह्यमानासु गतः। अर्हाणां कर्त्तृत्वेऽनर्हाणामकर्त्तृत्वे

(२१६)यस्येति भावः क्रिया यस्य भावेन भावस्य क्रियान्तरस्य लक्षणं परिच्छेदकरणं तद्वाचकशब्दात् चकारात् तद्विशेषणीभूतभाववाचकपदाच्च सप्तमीति सूत्रार्थः। तथाहि निर्ज्ञातकालादिक्रिया अनिर्ज्ञातकालादिक्रियायाः परिच्छेदकत्वात् लक्षणं भवति। तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति यथा गोषु दुह्यमानास्वागत इति। काचिच्च स्वाधारकालाव्यवहितोत्तरकालेन यथा गोषु धोक्ष्यमाणास्वागत इत्यादौ काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन यथा गोषु दुग्धास्वागत इत्यादौ। तत्र च क्रियासम्बन्धित्वस्य सर्वत्र कारके सत्त्वेऽपि मानात् क्रियाधारयोः कर्तृकर्मणोरेव ग्रहणं व्याख्यानादिति बोध्यम्। तथाच ज्ञापकत्वं सप्तम्यर्थस्तस्य क्रियायामेवान्वयः लक्ष्यलक्षणभावः शाब्दबोध एवैतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य भूयोदर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति ध्येयम् अन्यथा उदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते। अतएव इदन्त्वमानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं यत्र शब्दप्रयोगस्तत्रैव प्रवर्त्तते इत्यत्रैव तात्पर्यं भाष्ये वर्णितम्।

तद्वैपरीत्ये (२१७) च * । सत्सु (२१८) तरत्सु असन्त आसते असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्तस्तरन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति ।

## षष्ठी चानादरे (२१९) । २ । ३ । ३८ ।

अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य सन्न्यस्त (२२०) वानित्यर्थः ।

---

(२१७) तद्वैपरीत्ये अर्हाणामकर्त्तृत्वेऽनर्हाणां कर्त्तृत्वे चेति द्वयं ग्राह्यमत एवोदाहरणे वाक्यचतुष्टयम् । तथाच यस्यां क्रियायां ये उचितास्तेऽर्हाः तेषां कर्त्तृत्वे विवक्षिते सति तत्र सप्तमी वाच्या एवं यस्यां क्रियायां येषामनुचितं कर्त्तृत्वं तेषां कर्त्तृत्वे तयोरकर्त्तृत्वे च तथेत्यर्थः ।

(२१८) सत्स्वित्याद्यं सन्तोहि तरणक्रियार्हाः कर्त्तारश्च । असत्स्वित्यादि द्वितीयम् असतां तरणमनुचितं तदकर्त्तृत्वञ्च तिष्ठत्स्वित्यनेनोच्यते । तृतीयं सत्सु तिष्ठत्स्विति । सतां तरणमुचितं तेषामकर्त्तृत्वं तिष्ठत्स्वित्यनेन गम्यते । चतुर्थम् असतां तरणमनुचितं तेषां कर्त्तृत्वञ्च तरत्स्विति द्रष्टव्यम् । बोधस्तु तरणक्रियाकर्त्तृसत्सम्बन्धि असत्कर्त्तृकासनमित्येवं रीत्या सर्व्वत्रोह्यः ।

(२१९) अनादरे इति विषयसप्तमी यस्य च भावेनेत्याद्यनुवर्त्तते तथाच यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तम्येव । अनादराधिक्ये अनादरे गम्यमाने सति तु षष्ठीसप्तम्याविति निष्कृष्टार्थः फलित इत्याशयेनानादराधिक्यइत्यादि । लक्ष्यलक्षणभावः षष्ठ्यादेरर्थः एतत्समभिव्याहारे अनादरपूर्व्वकत्वार्थे धातोर्लक्षणा षष्ठ्यादि तत्र तात्पर्य्यग्राहकम् अनादरस्य प्रत्यासत्त्या षष्ठ्यादिप्रकृत्यर्थविषयएव ।

(२२०) प्राव्राजीदित्यस्याख्यातान्ततया क्रियाप्राधान्येनैव बोधनियमेऽपि संन्यस्तवानितिविवरणं गुणप्रधानभावभेदेऽपि समानविषयकत्वेन ।

स्वामीश्वराधिपति(२२१)दायादसाक्षिप्रतिभूप्रसूतैश्च।२।३।३९।

एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायाम्पाक्षिकसप्तम्यर्थं वचनम्। गवां गोषु वा स्वामी। गवां गोषु वा प्रसूतः गा एवानुभवितुं जात इत्यर्थः।

आयुक्तकुशलाभ्यां चासेवायाम्।२।३।४०।

आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्ये(२२२)ऽर्थे। आयुक्तो व्यापारितः। आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवायाङ्किम्। आयुक्तो गौः शकटे ईषद्युक्त इत्यर्थः।

यतश्च निर्द्धारणम्।२।३।४१।

जातिगुणक्रियासंज्ञाभिः(२२३)समुदायादेकदेशस्य पृथक्करणं

---

(२२१) स्वाम्यर्थेति वक्तव्ये स्वाम्यादिशब्दस्वरूपग्रहणं पर्यायशब्दान्तरनिवारणार्थम्।

(२२२) तात्पर्ये इति आसेवापदस्य तत्रैव वृत्तिरिति भावः। तात्पर्यञ्चेह तदेकव्यापारता।

(२२३) जातिगुणक्रियासंज्ञाभिरिति विशेषणे तृतीया अन्वयश्चास्य समुदाये एकदेशे च तथा च जात्यादिविशिष्टस्यैकदेशस्य यतः स्वघटितजात्यादिविशिष्टसमुदायात् निर्द्धारणं पृथक्करणं स्वेतरसमुदायव्यावृत्तधर्मकरणकं तद्वाचकात् षष्ठीसप्तम्यौ स्त इत्यर्थः। यत इति किम् यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वबोधनं तत एव मा भूत् षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि सम्भवात्। तथा च स्वघटितसमुदायावधिकस्वेतरसमुदायव्यावृत्तधर्मकरणकपृथक्करणरूपन-

यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां (२२४) नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावन् शीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः।

**पञ्चमी विभक्ते। २। ३। ४२।**

विभागो विभक्तं निर्धार्यमाणस्य यत्र भेद एव (२२५) तत्र पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः।

र्धारणविषयत्वरूपोऽवयवावयविभावरूपश्च सम्बन्धो विभक्त्यर्थः। शब्देन्दु०

(२२४) नृणामिति नृसमुदायावधिकविप्रेतरव्यावृत्त श्रेष्ठत्वकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो विप्रः श्रेष्ठ इति बोधः संसर्गघटककरणस्य समभिव्याहृतश्रेष्ठत्वादिकमेव ग्राह्यम्। उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनं तिरोहितावयवभेदविवक्षायान्त्वेकवचनं तच्चासाधु इति कारके इति सूत्रभाष्ये स्पष्टम्। कारके इत्यत्र निर्धारणे सप्तम्यां कारकेष्विति ब्रूयादिति हि तदाशयः। द्वन्द्वः सामासिकस्य चेत्यादौ समूहार्थे ठक् समाससमूहमध्ये इत्यर्थ-इति बोध्यम्। शब्देन्दु०।

(२२५) यतश्च निर्धारणमित्यनुवर्तते विभागोऽत्र भेदः तत्र निर्धारणे सर्वत्र यथाकथञ्चित् भेदस्य सत्त्वेऽपि विभक्तग्रहणसामर्थ्यात् यत्र भेदएव न तु केनाप्युपाध्यादिरूपेणाभेदस्तत्रैवास्य प्रवृत्तिरित्याह भेदएवेति न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः। अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव तत्र च अवधिमत्त्वसम्बन्धेन पाटलिपुत्रस्यान्वयः तेन पाटलिपुत्रावधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः। न ह्यत्र निर्धारणावधेर्निर्धार्यमाणस्य च गोषु कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति प्रत्युत शब्दोपात्तयोर्धर्मयोर्विरोध एव।

वो वा ।८।३।३३। मयः परस्य उञो वो वा स्यादचि । किमु उक्तम् । किम्वुक्तम् । वस्यासिद्धत्वान्नानुस्वारः । ईदूतौ च सप्तम्यर्थे ।१।१।१९। सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात् । सोमो गौरी अधिश्रितः । मामकी तनू इति । सुपां सुलुगिति सप्तम्या लुक् । अर्थग्रहणं किम् । वृत्तावर्थान्तरोपसंक्रान्ते माभूत् । वाप्यामश्वो वाप्यश्वः । अणोऽप्रगृह्यस्यानुनासिकः ।८।४।५७। अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात् । दधिँ । दधि । अप्रगृह्यस्य किम् । अग्नी ॥ इत्यच्संधिः ॥

---

## अथ हल्संधिः ।

स्तोः श्चुना श्चुः ।८।४।४०। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय । शात् ।८।४।४४। शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः । प्रश्नः । ष्टुना

---

इत्येव सूत्रयितुं युक्तमित्याहुः ॥ प्रगृह्यमित्यनुवर्तनादाह—**प्रगृह्यश्चेति** । ननु दीर्घोच्चारणसामर्थ्यादेव प्रकृतिभावसिद्धौ किमनेन प्रगृह्यत्वेनेति चेदत्राहुः । प्रगृह्याप्रगृह्ययोर्द्वयोरप्युञोरादेशापत्तौ प्रगृह्यादेशे प्रकृतिभावादिष्टसिद्धावपि अप्रगृह्यादेशस्यानुनासिको वकारः स्यात्तद्वारणाय प्रगृह्यत्वाश्रयणमिति । आदेशस्यास्य स्थानिवत्त्वेनोञ्त्वादुञ इति प्रगृह्यत्वविकल्पे प्राप्ते नित्यार्थं तदाश्रयणमित्यन्ये । यदि तु प्रगृह्यमित्यस्य स्थानिविशेषणत्वं स्वीकृत्य 'प्रगृह्यस्योञः ऊँ इत्ययमादेश' इति व्याख्यायते, तदा दीर्घोऽनुनासिकोक्तिवत्प्रगृह्यश्चेत्युक्तिरपि स्वरूपकथनमेवेति बोध्यम् । ऊँ इत्यत्र यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्ततश्च विति ऊँ इति एते द्वे रूपे स्यातां, तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सिद्धे त्रीणि रूपाणि सिध्यन्तीति कैयटस्तदाह—**अयमादेशो वा स्यादिति** ॥—**वस्यासिद्धत्वादिति** । अत एवेदं वत्वं त्रिपाद्यां विधीयते प्रकृतिभावमात्रबाधनार्थत्वे हि 'इको यण्–' इत्यनन्तरं 'मय उञो वा' इत्येवावक्ष्यत् यणं चान्ववर्तयिष्यत् ॥—**ईदूतौ च**—॥ ईदूताविति किम् । प्रियः सूर्ये प्रियो अभाभवाति । अभिशब्दात्परस्याः सप्तम्याः 'सुपां सुलुग्–' इत्यादिना डा आदेशः । पदकारैः प्रगृह्यत्वेषु इतिशब्दप्रयोगस्य नियमितत्वेन इहापि पदकाले इतिशब्दप्रयोगप्रसङ्गः स चानिष्ट इति बोध्यम् । सप्तमीग्रहणं किम् धीती । मती । सुष्टुती । धीत्या, मत्या, सुष्टुत्या, इति प्राप्ते तृतीयैकवचनस्य पूर्वसवर्ण ईकारः । ततः 'अकः सवर्णे दीर्घः' इत्येकादेशः । न लिह 'सुपां सुलुग्–' इति लुग्, ह्रस्वश्रवणापत्तेः ॥—**सोमो गौरी** इति । वातप्रमी अत्र ययी असक्त इत्याद्युदाहरणे सत्यप्युकारान्तस्य लौकिकोदाहरणाभावाद् उभयोरपि वेद एवोदाहरणमुक्तम् ॥—**मामकी तनू** इति । यद्यप्यत्र संहितायां प्रगृह्यप्रयोजनं नास्ति, तथापि 'मामकी इति' 'तनू इति' इति पदकाले तदस्त्येव, 'स्वायां तनू ऋत्विये नाधमानाम्' इत्यत्र संहिताकालेऽप्यस्ति, तथापि 'ऋत्यकः' इति पाक्षिकप्रकृतिभावेनाप्येतत्सिद्धं छन्दसि रूपान्तरस्यापादयितुमशक्यत्वादिति बोध्यम् ॥—**सप्तम्या लुगिति** । यदि धीत्यादाविव विभक्तेः पूर्वसवर्णे कृते सवर्णदीर्घ एकादेश इति व्याख्यायते । तदा एकादेशं बाधित्वा परत्वादाम्त्वाच्च 'आण्नद्याः' इत्याट् ङेराम् च स्यादिति भावः ॥—**अर्थग्रहणं किमिति** । वाप्यश्व इत्यादावपि सप्तम्यर्थोऽस्त्येवेति नार्थोऽर्थग्रहणेनेति प्रश्नः ॥—**अर्थान्तरोपसंक्रान्त** इति । वाप्यश्व इत्यत्र यो वापीशब्दः स सु वाप्यधिकरणद्रव्ये उपसंक्रान्तः, सोमो गौरी इत्यत्र गौरीशब्दस्तु सप्तम्यर्थमात्रे पर्यवसन्नः न तु तदधिकरणद्रव्ये वृत्त्यभावादिति भेदः ॥—**अणोऽप्रगृह्यस्या**—॥ अण इति किम् । कर्तृ हर्तृ ॥—**अच्संधिरिति** । कुत्वं श्चुत्वं चात्र न कृतं स्पष्टप्रतिपत्त्यर्थम् । अत एवानुस्वारस्याप्यच्त्वादित्यादिनिर्देशोऽप्युपपन्नः ॥—इति तत्त्वबोधिन्यामच्संधिः ॥

**अथ हल्संधिः** ॥—**स्तोः श्चुना श्चुः** ॥ स्तोरिति समाहारद्वन्द्वः, सौत्रं पुंस्त्वम् । एवं श्चुः ष्टुरित्यपि बोध्यम् ।—**श्चुनेति** । 'सह युक्ते–' इति सूत्रे 'विनापि तद्योगं तृतीया' इति वक्ष्यमाणत्वात्तृतीया ॥—**योगे** इति । एतदध्याहारलभ्यम् । अत्र स्थान्यादेशयोर्यथासंख्यम् । निमित्तकार्यिणोर्न 'शात्' इति ज्ञापकात् । यथासंख्यसूत्रमिह नोपन्यस्तं 'स्थानेऽन्तरतमः' इत्यनेनापि इष्टसिद्धेर्नात्यन्तावश्यकत्वम् ॥—**हरिश्शेत** इति । 'वा शरि' इति पाक्षिकत्वाद्विसर्जनीयस्य सत्वस्य शेन योगे शः, चवर्गयोगे रामश्चिनोति; तवर्गस्य तु चवर्गयोगे सच्चिदित्यादि, शेन योगे तु तच्छिव इत्याद्युदाहरिष्यति ॥—**शात्** ॥ नेति तोरिति चानुवर्तते तदाह—**तवर्गस्येत्यादि** । जश्त्वमित्यादिव्याख्यातनिर्देशे निःसंदिग्धत्वेन बोधनाय 'व्रश्च–' इति षत्वं जश्त्वं च न कृतं, तथा श्चुत्वमपि न कृतमिति परिहारसंभवाद्वर्गान्त्यमेवोदाहरति ॥—**विश्नः प्रश्न** इति । विच्छ गतौ, प्रच्छ ज्ञीप्सायाम्, 'यजयाच–' इत्यादिना नङ् । 'छ्वोः शूड्–' इति छस्य शत्वम् । नङो ङित्वाद्गुणाभावः । प्रच्छेस्तु 'प्रश्ने चासन्न–' इति निर्देशात्संप्रसारणाभावः ॥ ननु ञमङणनानां नासिकास्थानाधिक्या-

---

१ अण इति—नायमण् परणकारेण, तथा सति अप्रगृह्यस्येति पर्युदासेन हल्यप्रवृत्तौ अज्ग्रहणमेव कुर्यात् इति केचिदाहुः ।

२ योगे इति—संयोगे इत्यर्थः, सत्या, भामा इति वत योग इत्युक्तिः । संयोगश्चाव्यवहितयोरेव ।

## साधुनिपुणाभ्यामर्च्चायां सप्तम्यप्रतेः ।२।३।४३।

आभ्यां योगे सप्तमी स्यादर्च्चायान्न तु प्रतेः प्रयोगे (२२६) मातरि साधुर्निपुणो वा। अर्च्चायाङ्किम्। निपुणो राज्ञो भृत्यः। इह तत्कथने तात्पर्य्यम्। अप्रत्यादिभिरिति (२२७) वक्तव्यम्*। साधुर्निपुणो वा मातरं प्रति पर्य्यनु वा।

## प्रसितोत्सुकाभ्यान्तृतीया च। २। ३। ४४।

आभ्यां योगे तृतीया स्याच्चात्सप्तमी। प्रसितः(२२८) उत्सुको वा हरिणा हरौ वा।

## नक्षत्रे च लुपि। २। ३। ४५।

नक्षत्रे प्रकृत्यर्थे यो लुप् संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्त्तमाने तृतीयासप्तम्यौस्तोऽधिकरणे २२९)। मूलेना(२३०) वाहयेद्देवीं श्रवणेन विसर्ज्जयेत्। मूले श्रवणे इति वा। लुपि किम् पुष्ये शनिः।

(२२६) साधुशब्दप्रयोगे तु अर्च्चनां विनापि सप्तमी भवत्येवेति साध्वसाधुप्रयोगे चेति वार्त्तिकादित्युक्तम् (२०८पृ०)। प्राक्

(२२७) अप्रत्यादीत्यादिना लक्षणेत्थम्भूतेत्यादिसूत्रोपात्तार्थौ पर्य्यनू प्राप्तौ।

(२२८) "तत्परे प्रसितासक्तौ,, इत्युक्तेरुत्सुकसाहचर्य्याच्चासक्तार्थक एव प्रसितो गृह्यते न तु प्रकर्षेण सितः शुभ्रः प्रसित इत्येषोऽपीति बोध्यम्।

(२२९) अधिकरणे इत्यस्यानुवृत्तिः किम् अद्य पुष्य इत्यादौ मा भूत् अननुवर्त्तने प्रातिपदिकार्थएव स्यात्।

(२३०) मूलेनेति नक्षत्रेण युक्तः काल(५।२।४पृ०) इत्यण् लुबविशेष(५।२।४पृ०) इति लुप्।

**सप्तमीपञ्चम्यौ कारकमध्ये । २ । ३ । ७ ।**

शक्तिद्वयमध्ये (२३१) यौ कालाध्वानौ ताभ्यामेते स्तः । अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्येऽयं कालः । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः । अधिकशब्देन (२३२) योगे सप्तमीपञ्चम्याविष्येते तदस्मिन्नधिकमिति (११६४सू०) यस्मादधिकमिति च सूत्रनिर्देशात् । लोके लोकाद्वाधिको हरिः ।

**अधिरीश्वरे । १ । ४ । ९७ ।**

स्वस्वामिसम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात् ।

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी । २ । ३ । ९ ।**

(२३१) कालाध्वनोरत्यन्तसंयोगे (२६८सू०) इत्यतः कालाध्वनोरित्यनुवर्त्तते तच्च पञ्चम्या विपरिणम्यते मध्यस्यावधिद्वयसापेक्षतया षष्ठीद्विवचनान्तेन समासः कर्तृरूपकारकस्यैकत्वे भेदनिबन्धनमध्यव्यपदेशासम्भवात् कारकशब्देन तच्छक्तिर्गृह्यत इत्येतत्सर्वं मनसि कृत्वाह शक्तिद्वयमध्ये इत्यादि । तथाच कर्तृत्वादिशक्तिरेव कारकं सा च क्रियाभेदेन भिन्नेति भावः । अवध्यवधिमतोः सजातीययोरेव सापेक्षत्वनियमेन कालाध्वनोः शक्तिमध्ये प्रवेशासम्भवेऽपि शक्तिशब्दस्य तदाधारकालादिपरतया तन्मध्ये प्रवेश इति द्रष्टव्यम् स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः शक्तिद्वयमध्यवर्त्तित्वं त्वाधिकमिति बोध्यम् ।

(२३२) अधिकशब्देनेति कर्तृक्तप्रत्ययान्ताध्यारूढस्य समानार्थकेनाधिकश-

अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्। उप परार्द्धे (२३३) हरेर्गुणाः परार्द्धादधिकाइत्यर्थः। ऐश्वर्य्ये तु स्वस्वामिभ्यां पर्य्यायेण सप्तमी। अधि भुवि रामः अधि रामे भूः। सप्तमी शौण्डै((२५१पृ०)पृ०)रिति समासपक्षे (२३४) तु रामाधीना। अषड्क्षेत्यादिना (७१८पृ०)ख०।

**विभाषा कृञि।१।४।९८।**

अधिः करतौ प्राक्संज्ञो वा स्यादीश्वरार्थे। यदत्र मामधिकरिष्यति (२३५) विनियोक्ष्यतइत्यर्थः। इह विनियोक्तु-

र्तृत्वेन, न तु कर्मत्वमत्ययान्ताध्याहृतस्य सप्तान्तार्थत्वेन, तेन। लोकेऽधिको हरिरित्यादौ लोके इत्यत्रैव हर्य्यादेर्न सप्तम्यादिरिति बोध्यम्।

(२३३) उप परार्द्धे इति उपोऽधिके चेति(२१४पृ०)कर्मप्रवचनीयसंज्ञा। अधिरीश्वरे इत्यत्र(३१४पृ०)यस्येश्वरवचनमित्यत्र(३१४पृ०) चोभयत्रापीश्वरशब्दौ ईश्वरत्वेश्वरोभयपरौ ततश्च यस्येत्यनेन यत्स्वत्वि धनादिकं निर्द्दिश्यते तस्मात् ईश्वरवाचकात् सप्तमी, यस्य च धनादेः स्वामित्वं निर्द्दिश्यते तस्मादपि धनादिवाचकात् सप्तमीति सूत्रार्थः। तत्र पर्य्यायेण भवतीत्याह ऐश्वर्य्ये तु स्वस्वामिभ्यां पर्य्यायेण सप्तमीति। अन्यतरस्मादुत्पन्नयैव सप्तम्या इतरनिष्ठसम्बन्धस्याप्यभिधानात् उक्तार्थानामप्रयोगइति न्यायात् न युगपदुभाभ्यां सप्तमीति भावः।

(२३४) समासपक्षे इति विभक्त्यर्थेऽव्ययीभावे तु अधिरामभिति स्यादेवेति द्योतनाय तुशब्दः।

(२३५) यो मामधिकरिष्यति विनियोक्ष्यते तस्य विनियोक्तुरीश्वरत्वं गम्यत इत्यर्थः।

रीश्वरत्वञ्चस्यते। अगतित्वात्तिङि चोदात्तवतीति(७६१२२४०) (२३६) निघातो न।

। सप्तमी।

इति विभक्त्यर्थाः।

---

(२२६) तिङि चोदात्तेति उदात्तवति तिङि परे गतिर्निहन्यत इति सूत्रार्थः अत्र च करिष्यतीति तिङन्तउदात्तवान् तत्परेऽधेर्न निघातः। तिङ्ङतिङ इत्यस्य(७६१२४०) तु निपातै र्यद्यदित्यादिना(७६१२४०) निषेधान्निघात इत्यर्थः मामित्यत्र द्वितीया तु कर्मणि द्वितीयेत्यनेनैव (२५०४०) सिद्धेति भावः।

## समर्थः (१) पदविधिः। २।१।१।

(१) समर्थः पदविधिरिति। समर्थः संबद्धार्थः संसृष्टार्थ इति यावत्। सामर्थ्यञ्च द्विविधम् व्यपेक्षालक्षणमेकार्थीभावश्च। तत्र स्वार्थपर्यवसायिपदानामाकाङ्क्षादिवशात् यः परस्परं सम्बन्धः सा व्यपेक्षा। राज्ञः पुरुष इत्यादौ वाक्ये सत्यामाकाङ्क्षायां यो यो यस्मिन् सन्निहितो योग्यश्च स तेन तेन सम्बध्यते यथा राज्ञः पुरुषोऽश्वश्च राज्ञो देवदत्तस्य च पुरुषः ऋद्धस्य राज्ञोऽश्वो धनञ्चेत्यादि वृत्तौ तु नैवम् वृत्तीनामेकार्थीभावात्। एकार्थीभावश्च विशेष्यविशेषणभावावगाहिशाब्दबोधोपस्थितिजनकत्वम्। तथाच राजपुरुषादिशब्देन विशिष्टैकार्थबोधकतया न तदेकदेशे ऋद्धादेरन्वयः पुरुषांशे विशेषणतयोपस्थितस्य च नाश्वादिसम्बन्धिता राजादीनाम्। अभिताम्ययाश्च निराकाङ्क्षतया न देवदत्तादेः स्वामितया पुरुषादावन्वय इति द्रष्टव्यम्। देवदत्तस्य गुरुकुलमित्यादौ देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः सम्बन्धरूपस्थितगुरुद्वारक एव षष्ठ्यर्थः यथोक्तं हरिणा

समुदायेन सम्बन्धो येषां गुरुकुलादिना।

संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह॥इति।

यद्वा सम्बन्धिशब्दार्थस्य पदार्थैकदेशत्वेऽपि भवत्येव केषाञ्चित् सम्बन्धान्वयः तदुक्तं तेनैव

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।

वाक्यवत् सा व्यपेक्षापि वृत्तावपि न हीयते॥

अतएव वार्त्तिककृता सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यते इति वक्तव्यमिति सामान्यतो वृत्तिमतो विशेषणस्य स्वातन्त्र्येण प्रयोगाभावमभिधाय अगुरुकुलपुत्रादीनां वक्तव्यमित्यनेन गुरुकुलगुरुपुत्रादीनां विशेषणत्वेऽपि पृथक्प्रयोगाय नञा पर्युदासः कृतः। समानाधिकरणविशेषणस्य तु समानाधिकरणसमर्थवृत्तेरनेन सर्वथा स्वातन्त्र्येण सामर्थ्याभावात् प्रयोगाभावः भङ्ग्याऽभिहितः। एतन्मूलकमेव प्राचां नाथा

सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन ।
सापेक्षं तद्विजानीयादसमस्तविशेषणम् ।
प्रतियोगिपदाद्यत् यदन्यत् कारकादपि ।
वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते इति

अत्रायं विशेषः भवति प्रधानस्य सापेक्षत्वेऽपि समासवृत्त्युक्तेः प्रधानस्य वृत्त्युपस्थाप्यविशेष्यस्य राजपुरुषादेः सुन्दरादिविशेषणापेक्षायामपि समासः । समासे चावयवशक्त्यैव तत्तत्पदार्थोपस्थित्या विशेष्यविशेषणभावाद्यभ्युपगमे सापेक्षत्वादौ समासाभावादिकं वाचनिकं कल्प्यम् तथान्याप्यधिककल्पना स्यादतः समुदायशक्तिकल्पनम् यथोक्तं हरिणा

बहूनां वृत्तिधर्म्माणां वचनैरेव साधने ।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ।
चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्त्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितमिति ।

यथाहि द्वन्द्वादिविग्रहवाक्ये चकारादि प्रयुज्यते समस्ते तु न तत्र वचनैरेव तन्निषेधः कल्पनीयः समुदायशक्तिपक्षे तु उक्तार्थानामप्रयोग इत्युक्तन्यायादेव सिद्धम् । नामार्थयोरभेदान्वयः क्लृप्तः स च राजपदादुपस्थापितराजादेः पुरुषे स्वस्वामिभावसम्बन्धेनान्वये परित्यक्तः स्यात् । सम्बन्धलक्षणायान्तु किमपराद्धम् विशिष्टलक्षणया । प्रकृति प्रत्ययार्थयोः प्रत्ययार्थः प्रधानमिति नियमश्च क्लृप्तः स च प्राप्तानन्दादौ भज्येत आनन्दकर्त्तृकप्राप्तिकर्मत्वार्थबोधस्योभयसम्मतत्वेन कर्त्तृविहितक्तान्तार्थस्य कर्तुर्विशेष्यतौचित्येन प्रकृते तद्वैपरीत्यात् आनन्दसम्बन्धादिलक्षणास्वीकारे समुदायशक्तिपक्ष एव प्रवेशः । तथा प्राप्त आनन्दो यमिति विग्रहे आनन्दादौ अत्यन्तादिविशेषणयोगवत् समासे महारथाय वृत्तस्य न विशेषणयोग इति वाचनिकत्वकल्पनाऽधिकाऽऽपद्यते, नन्तन्यायसिद्धा इत्यादिबहुविप्रतिपत्तेरतः समुदाये शक्तिरित्यन्यत्र विस्तरः । वार्त्तिककृता तु अनर्थं कश्चित् नञ्समासस्याऽसमर्थसमासस्य गमकस्य साधुत्वं वक्तव्यमित्युक्तत्वात् असूर्य्यं पश्यादौ

पदसम्बन्धी यो (२) विधिः स समर्थाश्रितो बोध्यः।

**प्राक् (३) कडारात्समासः। २। १। ३।**

कडाराः कर्म्मधारयइत्यत.(२६१ सू०)प्राक् समासइत्यधिक्रियते।

**सह सुपा। २। १। ४।**

सहेति योगो (४) विभज्यते। सुबन्तं समर्थेन सह समस्यते। योगविभागस्येष्टसिद्ध्यर्थत्वात् (५) कतिपयतिङन्तोत्तरपदोऽयं

---

असमर्थेन नञा बाणेन हतमारीचो राम इत्यादौ बाणादेर्विग्रहार्थस्य गमकहत्तेः सापेक्षत्वेऽपि तदर्थबोधकतयैव समास इति द्रष्टव्यम्।

(२) पदस्य पदयोः पदानां वा विधिः पदविधिरिति वचनविशेषस्याविवक्षितत्वं द्योतयन्नाह पदसम्बन्धीति। तत्र पदेति किम् वर्णाश्रये कार्य्येऽसमर्थेऽपि यथा स्यात् तथा च तिष्ठतु दधि आनयात्वमित्यत्र दध्यानयेति पदयोः सामर्थ्याभावेऽपि वर्णाश्रयं यणादिकं भवत्येव। सूत्रे समर्थपदं लाक्षणिकमिति द्योतयन्नाह समर्थाश्रित इति समर्थेति किं पश्यति कृष्णं श्रितोरामिमित्यादौ समासो मा भूत् वस्त्रं कृष्णस्य अपत्यं देवदत्तस्येत्यादौ च मा भूत् कृष्णशब्दादपत्यार्थकत्तद्धित। इयञ्च परिभाषा समासकृत्तद्धितादिवृत्तिमात्रे प्रवर्त्तते इति बोध्यम्।

(३) प्राक् काडरादिति सूत्रे प्राक् पदमावर्त्तनीयं तेन पूर्व्वं समासमंज्ञा ततोऽवान्तरसमाससंज्ञा भवतीत्यर्थः। एवञ्चाव्ययीभावादेः समासेपीति भावः। अनेकपदानामेकीभवनं समास इति निष्कृष्टार्थः।

(४) सहेति सूत्रं समासविधानार्थमधिकारार्थञ्च तथा च अतएव सहेति सुपेति च पदद्वयमधिक्रियमाणं बोध्यम्। अत्र सहेति योगो विभज्यते सुवामन्त्रिते(५४०सू०)इत्यतश्च सुवित्यनुवर्त्तते तथाच सुबन्तं समर्थेन सह समस्यते इति प्रथमयोगार्थः। तेन समर्थेन सुबन्तेन तिङन्तेन नाम्ना धातुना सुपा च समासइत्यर्थः संपद्यते। तत्राद्यं भूतपूर्व्वं, द्वितीयमनुव्यचलत्, तृतीयं पुनहती, गतिकारकोपपदानां कृद्भिः सह

समासः स च छन्दस्येव (६) पर्य्यभूषयत् (७)। अनुव्यचलत् सुपा सह (८) समस्यते। समासत्वात्प्रातिपदिकत्वम्।

## सुपोधातुप्रातिपदिकयोः। २। ४। ७१।

एतयोरवयवस्य सुपो लुक् स्यात। भूतपूर्व्वे चरडिति(६८८पृ०)निर्द्दे

समासवचनं प्राक्कडारात्समासरित्युक्तेः(२७८पृ०)नाम्नैवात्र समासः। चतुर्थ्यां कटप्रू रित्यादि। समर्थः समर्थेन सह समस्यते इति द्वितीययोगार्थ तेन तिङन्तेन समर्थेन समर्थतिङन्तस्य समासः यथा पिवतखादत अश्नीतपिवतेत्यादि। तिङन्तस्य सुबन्तेन समर्थेन च समासो यथा एहीडादयः। स्फुटीभविष्यति तत्तत्प्रकरणे चेदमुपरिष्टात् (४५०पृ०) यथा च योगविभागेनोक्तषड्विधसमासलाभस्तथा हरिणोक्तम्

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।
सुबन्तेनेति च प्रोक्तः समासः षड्विधोबुधैरिति।

इत्येतमर्थमपि निधायाह सहेति योगोविभज्यते इति योगोयोजनमन्वयबोधोपयोग्यासत्तिपरिकल्पनमिति यावत् विभज्यते भेद्यते विश्लेष्यते अवान्तरानुपूर्व्वीविशेषेण भिन्नतया कल्प्यते इत्यर्थः एवं सर्व्वत्र योगविभागार्थ उन्नेयः।

(५) इष्टसिद्ध्यर्थेत्यादिति तेन सोऽकं करोति क्वानुः स्मरतीत्यादौ न निशेषस्वपद्गीसमासाविति बोध्यम्।

(६) छन्दस्येवेति तेन लौकिके नोपसर्गस्य तिङन्तेन समासस्तथात्वे प्रकुरुते इत्यादौ कृत्तद्धितसमासाश्चेत्यनेन(८४पृ०)प्रातिपदिकसंज्ञाविधानात् ततः सुबाद्यापत्तिः नपुंसकत्वेन स्वमोर्लुगिति(१४२पृ०)लुक्समर्थनेऽपि ह्रस्वापत्तिः प्राकुर्व्वन्नित्यादौ नलोपापत्तिश्चेति दूषणामावहतीति बोध्यम्।

(७) पर्य्यभूषयदित्यादौ वेदे स्वरविशेषार्थम् समासात्तोकारः ह्रस्वो नपुंसक इत्यादिना (१४२पृ०)।

(८) आद्ययोगलभ्यार्थमनद्य सहार्थं संयोज्य व्याचष्टे सुपा सह समस्यत इति

प्रात्पूर्वनिपातः। पूर्व्वं भूतः भूतपूर्व्वः। इवेन समासे विभक्त्यलोपश्च* (९)। जीमूतस्येव।

**अव्ययीभावः (१०)। २। १। ५।**

अधिकारोऽयम्।

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु। २। १। ६।**

अव्ययमिति योगो (११) विभज्यते। अव्ययं समर्थेन सह समस्यते सोऽव्ययीभावः।

**प्रथमानिर्द्दिष्टं समासउपसर्ज्जनम्। १। २। ४३।**

समासशास्त्रे (१२) प्रथमानिर्द्दिष्टमुपसर्ज्जनसंज्ञं स्यात्।

---

(९) इवेनेति इवेन समासे विभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वञ्चेति वार्त्तिकोक्तस्वरार्थमेवेदम्। समासमध्यपातिसुपोऽनेन लोपनिषेधः समासान्तसुपस्तु अस्याव्ययान्तत्वेनोपसर्ज्जनत्वेन चाव्ययत्वादेव लुगिति बोध्यम्।

(१०) न व्ययमव्ययं भवतीति भवतेः कर्त्तरि णः। इदञ्च सूत्रं संज्ञार्थमधिकारार्थञ्च।

(११) योगोविभज्यते इति तेन अपदिशमित्यादिर्सिद्धिः। समीपादयस्तु उदाहरणावसरे यथासम्भवं व्याख्यास्यन्ते (२२३पृ०)।

(१२) सूत्रे समासपदं समासविधायकशास्त्रपरमन्यथा कष्टं श्रित इत्यादौ विग्रहे श्रितादिपदानामेव प्रथमान्ततया पूर्व्वनिपातापत्तेरित्याशयेनाह समासशास्त्रे इति।

**उपसर्ज्जनं पूर्व्वम् (१३) । २ । २ । ३० ।**

उपसर्ज्जनम्प्राक् प्रयोज्यम् ।

**एकविभक्ति चाऽपूर्व्वनिपाते । १ । २ । ४४ ।**

विग्रहे (१४) यन्नियतविभक्तिकन्तदुपसर्ज्जनसंज्ञं स्यात् । न तु तस्य पूर्वनिपातः (१५) ।

**गोस्त्रियोरुपसर्ज्जनस्य । १ । २ । ४८ ।**

उपसर्ज्जनं यो गोशब्दः स्त्रीप्रत्ययान्तश्च(१६)तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अव्ययीभावश्चेति (२०४पृ०) अव्ययत्वम् ।

**नाव्ययीभावादतोऽम् त्वपञ्चम्याः । २ ।४ । ८३**

(१३) पूर्व्वमिति अप्रधानमुपसर्ज्जनमिति शास्त्रान्तरैकवाक्यतया यं प्रति यदुपसर्ज्जनं तत्तस्मात् पूर्व्वस्मिन् प्रयोज्यमित्यर्थः ।

(१४) विग्रह इति अनुवर्त्तमानेन समासपदेन विग्रहो लक्ष्यते इति भावः ।

(१५) न तु तस्येति अनन्तरोक्तः पूर्व्वनिपातोऽनेन न निषिध्यते किन्तु ह्रस्वाद्यर्थमिदं सूत्रमिति भावः । निष्कान्तः निष्क्रान्तेत्यादिक्रमेण निष्क्रान्तादिशब्दस्यानियतविभक्तिकत्वेऽपि कौशाम्बीशब्दस्य नियतलिङ्गतयोपसर्ज्जनत्वात् निष्कौशाम्बिरित्यत्र ह्रस्व इति बोध्यम् ।

(१६) गोस्त्रियोरिति उपसर्ज्जनमिह शास्त्रीयं ग्राह्यं न त्वप्रधानमात्रं तेन कुमारीवाचरति विग्रहत्यादिवाक्ये आचारक्विबन्ते कुमारीशब्दे न प्रसङ्गः । अत्र स्त्रीशब्दस्य स्त्राधिकारोक्तटाबादिप्रत्ययान्तपरतयाऽतिलक्ष्मीरित्यादौ नेत्याशयेनाह स्त्रीप्रत्ययान्तश्चेति । भाष्ये उत्तरपदभूतयोः गोस्त्रियोरित्यभिधानात् समासस्यान्तएवेदं प्रवर्त्तते तेन राजकुमारीपुत्र इत्यादौ समासमध्ये नेति बोध्यम् ।

**ष्टुः** ।८।४।४१। स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे । **न पदान्ताट्टोरनाम्** ।८।४।४२। अनामिति लुप्तषष्ठीकं पदम् । पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् ॥ * **अनाम्नवतिनगरीणामिति वाच्यम्** । षण्णाम् । षण्णवतिः । षण्णगर्यः । **तोः षि** ।८।४।४३। तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः । **झलां जशोऽन्ते** ।८।२।३९। वागीशः । चिद्रूपम् । **यरोऽनुनासिकेऽनुनासिको वा** ।८।४।४५। यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः । एतद्मुरारिः । स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । चतुर्मुखः ।

---

दृगोष्वाद्यैश्चतुर्भिः सह तुल्यस्थानत्वाभावेन सावर्ण्याभावात् 'स्तोः श्चुना–' इति तुशब्देन नकारो न गृह्यते किं तु स्ववर्गीयाश्चत्वार एवेति विश्नः प्रश्न इत्यत्र श्चुत्वाप्रसक्तेः किमनेन निषेधेनेति चेदत्राहुः । 'शात्' इति निषेधाल्लिङ्गादेव 'तुल्यास्यप्रयत्नम्–' इत्यास्यग्रहणेन नासिकास्थानभिन्नं ताल्वादिस्थानं गृह्यते तत्स्थानं तु तुल्यमेवेति तुशब्देन पञ्चमस्यापि ग्रहणात् श्चुत्वप्रसक्तौ निषेधोऽयमावश्यकः । एवं च 'तोर्लि' इति तुशब्देन नकारस्यापि ग्रहणाद् विद्वाँल्लिखति इत्यादि सिध्यति । न च निमित्तकार्यिणोर्यथासंख्यनिरासज्ञापकसित्युक्तत्वात्तेनैव चार्थवत्त्वे कथमुक्तार्थे ज्ञापकं भवेदिति वाच्यम् । तुशब्देन नकारग्रहणे सिद्धे हि यथासंख्यनिवृत्तिरनेन ज्ञापनीयेत्युभयज्ञापने बाधकाभावात् । नापि 'तुल्यास्य–' इत्यत्र यत्किंचित्स्थानतुल्यत्वविवक्षायां वर्गेषु पञ्चापि वर्णाः परस्परं सवर्णा भवेयुरित्युक्तोदाहरणे श्चुत्वप्रसक्तौ 'शात्' इत्यारम्भ आवश्यक इत्येतज्ज्ञापकाश्रयणं किमर्थमिति वाच्यम् । तथा हि सति ञमङणनानां परस्परसावर्ण्यापत्त्या त्वं नयसीत्यादौ 'अनुस्वारस्य ययि परसवर्णः' 'वा पदान्तस्य' इत्यनुस्वारस्य ञादयोऽपि स्युः । ताल्वादिस्थानसाम्याभावेऽपि नासिकारूपस्य यत्किंचित्स्थानस्य तुल्यत्वात् । नापि तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां ञादीनां परस्परसावर्ण्यं न भवेत्, तेषां नासिकास्थानसाम्येऽपि ताल्वादिस्थानसाम्याभावेन न्यूनस्थानकत्वात् । ततश्च त्वं नयसीत्यादिषु नातिप्रसङ्गः, स्ववर्गीयैः सह तु ञादीनां सावर्ण्यं स्यादेव । नासिकास्थानाधिक्येऽपि तदन्यूनस्थानकत्वात्तेषामिति विद्वाँल्लिखतीत्यादीष्टं सिध्यति, वर्गाद्यानां तु नासिकास्थानाभावे न्यूनस्थानकत्वात्पञ्चमेन च सावर्ण्याभावेऽपि न क्षतिरिति ज्ञापकाश्रयणं विनैवेष्टसिद्धिरिति वाच्यम् । हे गौरि एहीत्यादौ सवर्णदीर्घापत्तेः । 'इकोऽसवर्णे–' इति शाकल्यप्रकृतिभावानापत्तेश्च । इकारान्न्यूनस्थानकत्वेन तत्सवर्णत्वादेकारस्य । 'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ ततोऽपि च' इति वचनात्प्रयत्नभेदेन सावर्ण्याभावमभ्युपगम्योक्तानिष्टवारणेऽपि तद्वस्तु तद्वन्नमित्यत्र 'तोर्लि' इति परसवर्णविधिना दकारस्य वकारापत्तेः । वकारस्य ओष्ठस्थानाधिक्येऽपि दन्तस्थानसाम्येन लकारान्न्यूनस्थानकत्वात् । यदि तु 'वकारस्य दन्तोष्ठम्' इति समाहारनिर्देशाद् ओष्ठस्थानदन्तस्थानभिन्नमेव दन्तोष्ठस्थानमिति वकारस्य लकारसावर्ण्याभावात्तद्वस्त्वित्यादौ नातिप्रसङ्ग इति ब्रूषे, तर्हि 'लुग्वा दुह–' इत्यादिना दन्त्ये तङि विधीयमानो यः क्सस्तस्य लुक् अदुह्वहीत्यत्र न स्यात्, किं तु अदुग्धेत्यादावेव स्यात् । तथा पिपूर्तः पिपुरतीत्यादौ विधीयमानम् 'उदोष्ठ्यपूर्वस्य' इत्युत्वं सुस्वूर्षतीत्यादौ न स्यादुक्तरीत्या वकारस्यौष्ठ्यत्वाभावात् । न च वस्यौष्ठ्यत्वे दन्त्यत्वे च सति 'सेक्सृप्–' इति षोपदेशलक्षणे स्विदादीनां पृथग्ग्रहणं व्यर्थं स्यात् तेषामपि दन्त्यान्तसादित्वादिति भ्रमितव्यम् । 'दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपी'–त्यादेर्मूल एव वक्ष्यमाणत्वात् ॥ ये तु पाणिनिशिक्षायां यमानुस्वारयोरेव नासिकास्थानत्वकथनादन्येषां स्थानं नासिका न भवति किं त्वनुनासिकत्वं गुण एव, नासिकाव्यापारेणोच्चार्यमाणत्वमात्रेण नासिकास्थानत्वकथने त्वकारादीनामप्युक्तरीत्या नासिकास्थानमिति स्थाननिरूपणे तेषां तदकथनाभ्यूनतेत्यादि वदन्ति । तेषामत्रोक्तज्ञापकाश्रयणं विनैवेष्टसिद्धिः ॥ अन्ये त्वकारादीनां नासिकया सर्वदानुच्चारणादनुनासिकत्वं गुणः 'सत्वे निविशतेऽपैति–' इत्यादिलक्षणलक्षितत्वात् । ञमङणनानां त्वनुनासिकत्वं नापैति सर्वदैव उच्चारणादिति न गुणः किं तु यमानुस्वारयोरिव स्थानमेव नासिकेति स्थाननिरूपणे ञमङणनानां नासिका चेत्युक्तं नत्वकारादीनां नासिका चेति ॥ यत्तूक्तम्, तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां तद्वस्त्वित्यादौ 'तोर्लि' इति दकारस्य वकारप्रसङ्ग इति ॥ तदापाततः । 'तोर्लि' इत्यत्र लकारद्वयनिर्देश इति स्वीकृत्य लकाररूपे लकारे परे परसवर्ण इति व्याख्यायामुक्तदोषाप्रसक्तेरित्याहुः ॥—**ष्टुना ष्टुः** ॥ इहापि कार्यिनिमित्तयोर्यथासंख्यं न, 'तोः षि' इति ज्ञापकात् ॥—**सर्पिष्टममिति** । 'ह्रस्वात्तादौ तद्धिते' इति षत्वम् ॥ —**यरो**–॥ पदान्तस्येति किम् । वेद्मि । क्षुभ्नाति ॥—**स्पर्शे चरितार्थ** इति । प्रसिद्धप्रयोगाभिप्रायेणेदमुक्तम् । कमल् मुरारिः, वृक्षव् नेता इत्यादौ लकारवकारयोरनुनासिकप्रवृत्तौ बाधकाभावात् ।—स्पर्शस्यैवेष्यते इति प्राचीनग्रन्थानुरोधेन स्पर्शभिन्नेषु अनुनासिकविधिर्न प्रवर्तते अनभिधानादिति वा योज्यम् ॥—**रेफे न प्रवर्तत** इति । यद्यपि व्यक्तिः पदार्थ इति पक्षे लक्ष्यभेदे लक्षणभेदाद् अस्यां व्यक्तौ लक्षणस्याचरितार्थत्वाद्रेफेऽपि प्रवृत्तिर्दुर्वारैव, तथापि लक्ष्यानुरोधेन जातिपक्षमाश्रित्येदमुक्तम् ॥—**दकारनिपातनादि**ति । ननु यवादिगणे ककुदित्येव पठ्यते न तु ककुद्मन्त इति मतुब्विशिष्टम् ।

---

१ स्थानप्रयत्नाभ्यामिति—एतच्च स्थानेऽन्तरतम—इत्येतस्य सप्तम्यन्तपाठपक्षे । वस्तुतस्तु अनुस्वारस्येति सूत्रात्सवर्णग्रहणमनुवर्त्य सवर्णेऽनुनासिक इति व्याख्येयम् ।

अदन्तादव्ययीभावात्सुपो न लुक् तस्य तु पञ्चमीं विना अमादेशश्च स्यात् (१७)। दिशयोर्मध्यमपदिशम्। क्लीवाव्ययं त्वपदिशं दिशोर्मध्यं विदिक् स्त्रियामित्यमरः।

## तृतीयासप्तम्योर्बहुलम्। २। ४। ८४।

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात्। अपदिशम् अपदिशेन। अपदिशम् अपदिशे। बहुलग्रहणात्सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः। विभक्तीत्यादे(१८)रयमर्थः। विभक्त्यर्थादिषु वर्त्तमानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः। विभक्तौ तावत्। हरौ (१९) इत्यधिहरि। सप्तम्यर्थस्यैवात्र द्योतकोऽधिः। हरि ङि अधि इत्यलौकिकं विग्रहवाक्यम्। अत्र निपातेनाभिहितेऽप्यधिकरणे वचन (२०) सामर्थ्यात्सप्तमी।

## अव्ययीभावश्च। २। ४। १८।

(१७) नाव्ययीभावादिति अत्वापञ्चम्या इति प्रतिषेधोऽम एव न तु लुक इति द्योतयितुं तुशब्दः। तथाच अदन्तादव्ययीभावात् परस्य पञ्चमीभिन्नस्य सुपो लुक् न अम् च पञ्चम्यास्तु लगमावुभावपि नेत्यर्थः।

(१८) अव्ययं विभक्तीत्यादिसूत्रे विभक्त्यादिशब्देन तदर्थो लक्ष्यते वचनशब्दस्तु कर्म्मसाधनं प्रत्येकं संबोध्यते तेन विभक्त्यादिरूपार्थलाभस्तत्र वर्त्तमानं तदर्थद्योतकमव्ययं समर्थेन सुबन्तेन सह समस्यते इति सूत्रार्थस्तदाह विभक्त्यादिष्विति। अत्र च तदुत्तरविभक्त्यर्थाद्यन्तर्भावेणैकार्थीभावः।

(१९) नित्यसमासेऽस्वपदघटितवाक्यस्यैव विग्रहत्वौचित्यात् हरौ अधीत्यपहाय हरावित्युक्तम्।

(२०) वचनेति सूत्रे वचनेष्वत्यस्य तदर्थपरतया प्रत्यासत्त्या यद्विभक्त्यर्थवाचकाव्ययेन सुबन्तस्य समाससम्भवस्तद्विभक्त्यैव तत्सुबन्तस्य ग्रहणमिति भावः।

अयंनपुंसकं स्यात्। ह्रस्वो नपुंसके प्रातिपदिकस्य(१४२४०)। गोपायतीति गाः पातीति वा गोपाः तस्मिन्नित्यधिगोपम्। समीपे। कृष्णस्य समीपमुपकृष्णम्। समया (२१) ग्रामम् निकषा लङ्काम् आराद्वनादित्यत्र तु नाव्ययीभावः अभितः परित इति(२६२४०)अन्यारादिति(२८८४०)द्वितीयापञ्चम्योर्विधानसामर्थ्यात्। मद्राणां समृद्धिः सु (२२) मद्रम्। यवनानां व्यृद्धिः दुर्य्यवनम्। विगता ऋद्धिः (२३) व्यृद्धिः। मक्षिकाणामभावो (२४) निर्म्मक्षिकम्।

---

(२१) समयानिकषाराच्छब्दा अधिकरणशक्तिप्रधाना इति तेषां सामीप्यमात्रवाचित्वाभावान्न तैः समासः तेषां हि समीपे इत्यर्थकता विभक्त्यर्थसामीप्यादिमात्रवृत्त्यव्ययस्यैव सुबन्तेन समासः प्रकृते तूपशब्दस्तन्मात्रवाची कृष्णसामीप्यमिति बोधादिति नातिप्रसङ्गः। उपदशादौ तूपस्य समीपवर्त्तिपदार्थबोधकतया सामीप्यमात्रवाचित्वाभावान्नाव्ययीभावः।

(२२) वचनग्रहणात् समृद्ध्यादिद्योतकत्वेऽव्ययीभावः सुशब्दस्त्वत्र समृद्ध्यादिद्योतकः।

(२३) विगता ऋद्धिरित्यस्य ऋद्धेरभावएवेत्यर्थस्तस्य नार्थाभावरूपत्वम् तद्वृद्धेरेव तत्प्रतियोगित्वात् बोधस्तु यवननिष्ठर्द्धिप्रतियोगिकाभावइति न गतार्थता।

(२४) अर्थविरोधी अभावः अर्थाभावः अत्यन्ताभाव एव अन्योन्याभावस्य तु सर्व्वत्र प्रतियोगितावच्छेदकेनैव विरोधादित्याशयेन सूत्रेऽर्थपदमुपात्तम् अयञ्च समास उत्तरपदार्थाभावद्योतकः नञनञ्साधारण्येन भवति। नञ्तत्पुरुषस्तु नञेव अन्योन्याभावबोधकः सर्व्वत्र-क्वचिदभावबोधकोऽपीत्यनयोर्विशेषः। अतएव निर्मक्षिकम् अपापमित्यादिवत् अनुपलब्धइत्यादीनामभावबोधकत्वेऽपि न क्षतिः। वस्तुतो नाशपर्य्यायात्ययस्य पृथग्ग्रहणात् प्रागभावनिवारणार्थं विद्यमानपदार्थप्रतियोगिताद्योतनार्थञ्चार्थग्रहणं तेन प्रागभावाभि

हिमस्यात्ययोनिर्हिमम् (२५)। अत्ययो ध्वंसः। निद्रा सम्प्रति(२६) न युज्यते इत्यतिनिद्रम्। हरिशब्दस्य(२७) प्रकाशः इतिहरि। विष्णोः पश्चादनुविष्णु। पश्चाच्छब्दस्य तु नायं समासः ततः पश्चात् (२८) स्रंस्यत इति भाष्यप्रयोगात्। योग्यता(२९)वीप्सापदार्थानतिवृत्तिसादृश्यानि यथा-

---

प्रायेण कपालेऽघटमित्यादिर्न प्रयोगः न वाऽपदार्थस्य शशशृङ्गादेरभावबोधनाय निःशशशृङ्गमित्यादिरेषामलीकतयार्थत्वाभावेन तत्प्रतियोगिकाभावाप्रसिद्धेः।

(२५) अतेरतिशयार्थत्वात् ध्वंसार्थत्वाभावेनातिहिममित्यनुक्त्वा निर्हिममित्युक्तम्।

(२६) सम्प्रतिशब्द इदानीमित्यर्थे स चाधिकरणशक्तिप्रधानत्वात् क्रियापदेनैवान्वयी तन्निषेधोऽपि तदान्वितक्रियाया एवोचित इत्याशयेनाह सम्प्रति न युज्यते इति तेनासम्प्रतीति मौलप्रयोगेऽपि युजिक्रियान्तर्भावेणैव नञ्समास इति बोध्यम्।

(२७) शब्दप्रादुर्भावइत्यस्य शब्दविषयकप्रकाशार्थेनाव्ययेन समासइतिना। उदाहरणे स्वरूपपरेण हरिशब्देन प्रकाशार्थकेतिशब्दस्य समासः।

(२८) सति च पश्चाच्छब्देनाव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपात स्यादित्यपि द्रष्टव्यं तेन सर्वपश्चादिति न भाष्यप्रयोगासङ्गतिः। एतद्भाष्यप्रयोगादेवैतत्सूत्रे तत्तदर्थबोधकपदघटिततया गृहीताव्ययेन तत्तदर्थकेन न समास इति गम्यते तत्र च पश्चाच्छब्दस्येव स्वार्थपरस्याव्ययस्य घटकत्वाभावाव्ययीभाव इति बोध्यम्।

(२९) यथापदं व्याचष्टे योग्यतेत्यादि पदार्थानतिवृत्तिरनतिक्रमः। प्रतिशब्दमिति वृत्तौ वीप्साभावात् न द्विर्वचनम्। तथा च यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्साबोधकत्वाभावात् समासाप्राप्त्या वाक्यं साधु। वृत्तौ तु समासेन वीप्सायाद्योतितत्वात् उक्तार्थानामप्रयोगइति न द्विर्वचनमिति बोध्यम्।

र्थः। अनुरूपम् रूपस्य योग्यमित्यर्थः। अर्थमर्थम्प्रति प्रत्यर्थम् प्रतिशब्दस्य वीप्सायाङ्कर्म्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्योगे द्वितीयागर्भं वाक्यमपि। शक्तिमनतिक्रम्य (३०) यथाशक्ति। हरेः सादृश्यं सहरि। वक्ष्यमाणेन सहस्य सः। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् (३१)। चक्रेण युगपदिति विग्रहे।

## अव्ययीभावे चाकाले। ६। ३। ८१।

सहस्य सः स्यादव्ययीभावे न तु काले। सचक्रम्। काले तु सहपूर्व्वाह्णम्। सदृशः सख्या ससखि। यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि (३२) सादृश्ये यथा स्यादित्येवमर्थम्। क्षत्राणां सम्पत्तिः, सक्षत्रम्। ऋद्धेराधिक्यम्(३३)

(३०) शक्तिमनतिक्रम्येति परावरयोगे चेति(३४६१सू०)सूत्रेण परेण पूर्व्वस्यावरेण परस्य च योगे गम्यमाने क्त्वा स्यादित्यर्थकेन क्त्वाप्रत्ययः परावरयोगश्चात्र बोद्धस्तत्र गम्यमाने इत्युक्तत्वादशाब्दत्वेऽपि न क्षतिः-

(३१) आनुपूर्व्यं क्रियाकृतम् अनुज्येष्ठं प्रणमतीत्यादौ करणत्वेनाप्यन्वयात् परिनिष्ठितविभक्त्या समासमभिप्रेत्याह ज्येष्ठस्यानुपूर्व्येणेति आनुपूर्व्यं क्रमः पूर्व्वं क्रमेणेत्यनुपूर्व्वं स्वार्थे ष्यञि आनुपूर्व्यम्। अत्र सूत्रे आनुपूर्व्यमिति निर्द्देशात् एतदर्थकतया स्वीकृतेनाप्यनुना। व्ययेन समास एव। युगपदादिशब्दयोगे तु न समासः तेनानुपूर्व्यमितिवत् युगपच्चक्रमित्यादिर्न प्रयोग इति द्रष्टव्यम्।

(३२) गुणभूते इति व्याख्यानादित्यवधेयं यदि सादृश्ये इति नोच्येत तर्हि यत्र सादृश्यं प्रधानतयावगम्यते तत्रैव स्यात् अव्ययीभावेऽव्ययार्थप्राधान्यस्यौत्सर्गिकत्वादिति भावः।

समृद्धिः। अनुरूप (२४) आत्मभावः सम्पत्तिरिति भेदः तृणमप्यपरित्यज्य (२५) सतृणमत्ति साकल्येनेत्यर्थः। (२६) अन्ते (२७)। अग्निग्रन्थपर्य्यन्तमधीते साग्नि।

## यथाऽसादृश्ये। २। १। ७।

असादृश्ये (२८) एव यथाशब्दः समस्यते। तेनेह न। यथा

---

(२४) अनुरूपो योग्य आत्मनः समस्यमानोत्तरपदस्य भावः प्रवृत्तिनिमित्तं तद्वाच्यस्य वर्णाश्रमाद्युचितधर्मो वा सम्पत्तिः स च आत्मत्वादिरित्यर्थः। क्षत्रमित्यस्य क्षत्रियाणां योग्यं क्षत्रियत्वमित्यर्थः।

(२५) तृणमपीति साकल्यबोधकसहाव्ययेन समासः समासस्य नित्यत्वादस्वपदविग्रहः। अपरित्यज्येति परावरयोगे चेति (७०४६१४०) क्त्वा तद्योगश्च बोध्यः।

(२६) सतृणमत्तीत्यादौ तृणेन सह भुङ्क्ते इति बोधोत्तरं यत्तृणानि भक्षयेत् स कथम् यत् परित्यजेदिति प्रतीतेः सकलं भोज्यमत्तीत्यत्रैव तात्पर्य्यमिति भावः।

(२७) अन्त इति इदानीमेतावान् प्रदेशोऽध्येय इति संकल्पेन यावतोपन्यस्य परिग्रहस्तावतः समाप्तिरिहान्तशब्देनोच्यते तत्समाप्तिश्च साकल्येऽध्ययने भवतीति साकल्यात् पृथगुक्तिः। अग्निग्रन्थसत्प्रतिपादकग्रन्थपरः स च अन्तार्थकाव्ययेन नित्यं समस्यते इति सूत्रार्थः। तस्य च नित्यसमासत्वादस्वपदविग्रहं दर्शयति अग्निग्रन्थपर्य्यन्तमिति। बहु-व्रीहौ द्वितीयान्तमन्य एवान्यपदार्थः। अधीते इत्यस्य तु न समासान्तर्भावो मानाभावात् किन्तूदाहरणार्थत्वेन दिङ्मात्रतयोपदेशः। अन्त्यत्वं साहित्यञ्च समासार्थस्तेन अन्त्याग्निग्रन्थसहितमिति बोधः।

(२८) यथा असादृश्ये इति चेदसदृशार्थाव्यये इति। यथा हरिस्तथा हर इत्यादौ यथातथाशब्दस्य सादृश्यार्थकत्वेऽपि न पूर्वेण समासः तस्य इत्युक्ते नियमेन प्रतियोग्याकाङ्क्षादर्शनात् सादृश्यप्रतियोगिवाचकेनैव तद्बोधकाव्ययेन समासविधानेऽप्यनेन निषेधात्।

हरिस्तथा हरः । हरेरुपमानत्वं यथाशब्दो द्योतयति (३९ तेन सादृश्ये इति वा यथार्थे इति वा प्राप्तन्निषिध्यते ।

**यावदवधारणे (४०) । २ । १ । ८ ।**

यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम् ।

**सुप् प्रतिना मात्रार्थे । २ । १ । ९ ।**

शाकस्य (४१) लेशः शाकप्रति । मात्रार्थे किम् वृक्षं प्रति विद्योतते विद्युत् ।

**अक्षशलाकासंख्याः परिणा । २ । १ । १० ।**

(३९) द्योतयतीति सामान्यस्य भेदको यो विशेषस्तद्रूपे प्रकारे थालि यथातथाशब्दौ सिद्धौ तेन यद्विशेषवान् हरिस्तद्विशेषवान् हरस्तथा च हर्यभिन्नो हर इति बोधयद्यत्तच्छब्दाभ्यां तयोरेकत्वावगमेऽप्यर्थादुपमानत्वप्रतीतिरिति भावः । सादृश्यशब्देनोपमानत्वमेव गृह्यते यास्तूक्ते प्रकारशब्देन सादृश्यस्य ग्रहणेऽपि यत्सादृश्यवान् हरिस्तत्सादृश्यवान् हर इत्येव बोधः स्यान्न तु हरिसदृशो हर इति नोपमानत्वमतो न समास इति ध्येयम् । भाष्यानुसारिणस्तु यथाऽसादृश्ये इति सूत्रस्य यथाशब्दः सुबन्तेन समस्यते सादृश्ये द्योत्ये नेत्यर्थमुक्त्वा यथाशक्ति यथाबलमित्युदाहृत्य यथार्थत्वेन प्राप्तेऽपि यथाशब्दघटित समासार्थता तदारम्भस्येत्याहुः । शब्देन्दु०

(४०) यावदिति सङ्ख्यादिनेयत्तापरिच्छेदोऽवधारणं तद्बोधकं यावदित्यव्ययं समर्थेन समस्यते इत्यर्थः । अवधारणे किं यावद्दत्तं तावद्भुक्तं तन्नावधारयामीत्यर्थः । विग्रहवाक्ये यावच्छब्दस्तद्धितान्त इत्यस्वपदविग्रहः ।

(४१) सुबिति पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थमिति द्योतयन्नाह शाकस्येत तेनात्र शाकस्यानव्ययत्वेऽपि समासशास्त्रे प्रथमानिर्दिष्टतया पूर्वनिपातः ।

दूरतव्यवहारे पराजये एवायं समासः। अक्षेण विपरीतं वृत्तम् (४२) अक्षपरि। शलाकापरि। एकपरि।

**विभाषा। २। १। ११।**

अधिकारोऽयम्। एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम्। सह सुपेति(१।८४०)तु (४३) न नित्यसमासः अव्यग्रमित्यादि(२२।७८)समासविधानात् (४४) ज्ञापकात्।

**अपपरिबहिरञ्चवः पञ्चम्या। २। १। १२।**

अपविष्णु संसारः। अप विष्णोः। परिविष्णु परि विष्णोः। बहिर्वनम् बहिर्वनात्। प्राग्वनम् प्राग्वनात्।

**आङ् मर्य्यादाभिविध्योः। २। १। १३।**

एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः। आमुक्ति संसारः आ मुक्तेः। आबालं हरिभक्तिः आ बालेभ्यः।

---

(४२) पराजयं द्योतयितुं विपरीतं वृत्तमित्युक्तं जये यथा वर्त्तितव्यं तथा न वृत्तमित्यर्थः एकपरीत्यस्य एकेन विपरीतं वृत्तमित्यर्थः। तथाहि पञ्चभिः कपर्द्दैः पञ्चिका नाम द्यूतमस्ति तत्पातने यदि सर्व्वे उत्ताना अवाञ्चो वा पतितास्तदा पातयिता जयति अन्यथा जीयते तत्र विपरीतवर्त्तने अक्षादेः कर्त्तृतया तृतीया। समासे परेरेव तदर्थः वैपरीत्यञ्च जयापेक्षयेति बोध्यम्।

(४३) सह सुपेति त्विति विस्पष्टपटुरित्यत्र विस्पष्टं पटुरिति भाष्ये विग्रहदर्शनान्न नित्यत्वमिति बोध्यम्।

(४४) समासविधानादिति सहसुपेति समासात् शब्देनैवाव्ययीभावादिसंज्ञाविधानसिद्धौ पुनस्तैः समाससंज्ञाविधानं तदनित्यताज्ञापकमिति भावः।

### लक्षणेनाभिप्रती(४५) आभिमुख्ये।२।१।१४

आभिमुख्यद्योतकौ अभिप्रती चिह्नवाचिना सह प्राग्वत् अभ्यग्नि शलभाः पतन्ति अग्निमभि। प्रत्यग्नि अग्निं प्रति

### अनुर्यत्समया।२।१।१५।

यं पदार्थं(४६) समया द्योत्यते तेन लक्षणभूतेनाऽनुः समस्यते सोऽव्ययीभावः। अनुवनमशनिर्गतः। वनस्य (४७) समीपं गतइत्यर्थः।

### यस्य चायामः।२।१।१६।

यस्य दैर्घ्यमनुना द्योत्यते तेन लक्षणभूतेनानुः समस्यते। अनुगङ्गं (४८) वाराणसी गङ्गाया अनु। गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः।

---

(४५) लक्षणेनेति अभिप्रती अभिमुख्यस्याग्न्यादेर्बोधकत्वसम्बन्धेनान्वयस्य च द्योतकौ उदाहरणे अग्निव्याप्यं शलभकर्तृकमग्न्यभिमुखं पतनमिति बोधः। वाक्ये तु कर्मप्रवचनीयद्योत्यसम्बन्धेन अन्वयिनो द्वितीयेत्युदाहरति अग्निमभीति। लक्षणेनेति किं ग्रामं प्रति गतः ग्रामादागत इत्यस्य तमेव प्रतिनिवृत्त इत्यर्थकतया कर्मत्वान्न लक्षणता। स्रुघ्नं प्रतीत्यत्राभिमुख्याभावेन लक्षणत्वेऽपि न समासइति बोध्यम्।

(४६) लक्षणेनेत्यनुवर्त्तते समयेत्यधिकरणशक्तिप्रधानं यदिति सामान्येन नपुंसकं द्वितीयान्तञ्चेत्याशयेनाह यं पदार्थमित्यादि।

(४७) वनादेर्लक्षणत्वञ्च समीपद्वारा समीपेन वनेनाशनिर्देशो ज्ञाप्यते इति तस्य लक्षणत्वमिति बोध्यम्।

(४८) दैर्घ्यसदृशदैर्घ्यविशिष्टत्वमनयोर्बोध्यं तथाबोधे च गङ्गादेर्ज्ञापकत्वाल्ल

## तिष्ठद्गुप्रभृतीनि (४९) च। २। १। १७।

एतानि निपात्यन्ते। तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु दोहनकालः। आयतीगवम्। इह शत्रादेशः पुंवद्भाव विरहः समासान्तश्च निपात्यते।

## पारेमध्ये षष्ठ्या वा। २। १। १८।

पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते। एदन्तत्वञ्चान-योर्निपात्यते। पक्षे षष्ठीतत्पुरुषः। पारेगङ्गादानय गङ्गा-पारात्। मध्ये गङ्गात् गङ्गामध्यात्। महाविकल्पेन वाक्य-मपि। गङ्गायाः पारात्। गङ्गाया मध्यात्।

## सङ्ख्या वंश्येन। २। १। १९।

वंशो (५०) द्विधा विद्यया जन्मना च तत्र भवो वंश्यः तद्वा-

---

च्यत्वम् तथाच वाराणस्याः स्वरूपेण ज्ञातत्वेऽपि दैर्घ्यविशेषवै-शिष्ट्येन न ज्ञातत्वमिति गङ्गया तद्बोध इति बोध्यम्।

(४९) तिष्ठद्गुप्रभृतीनीत्यत्र चकारस्यावधारणार्थतया तेषां समासान्तरप्र-वेशो नास्ति। अत्र तिष्ठद्गु जपन् सन्ध्यामित्यादौ आइति पृथक् पद-मिति। शब्देन्दु०

तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूय-मानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम्। संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम्। दुःषमम् निःषमम् अपसमम् आयतीसमम् प्रौढम् पापसमम् पुण्य-समम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् अपरदक्षिणम् सम्प्रति असम्प्रति इच्प्रत्ययःसमासान्तः एते तिष्ठद्गुप्रभृतयः।

(५०) संख्येत्यादिसूत्रवी समानाधिकरणविषया। एकस्वभावः सन्तान-

चिना सह संख्या वा समस्यते। द्वौ मुनी वंश्यौ द्विमुनि व्याकरणस्य त्रिमुनि। विद्या (५१) तद्वतामभेदविवक्षायाम् त्रिमुनि व्याकरणम्। एकविंशतिभारद्वाजम् (५२)।

## नदीभिश्च। २। १। २०।

नदीभिः (५३) संख्या प्राग्वत्। समाहारे (५४) चायमिष्यते। सप्तगङ्गम्। द्वियमुनम्।

## अन्यपदार्थे च संज्ञायाम्। २। १। २१।

अन्यपदार्थे (५५) विद्यमानं सुबन्तन्नदीभिः सह नित्यं सम-

---

प्रबन्धो वंशो विद्याजन्मकृतोद्विविधस्तत्र विद्यया समानस्वभावविषये द्विमुनीति मुनीपाणिनिकात्यायनौ। त्रिमुनीति पतञ्जलिसहितौ तौ

(५१) त्रिमुनि व्याकरणमिति सामानाधिकरण्यानुपपत्तिमाशङ्क्याह विद्येति तथाच बहुव्रीहौ त्रिमुनि व्याकरणम् अव्ययीभावे व्याकरणस्य त्रिमुनीति प्रयोगः स्वरभेदस्त्वेष एवेति भावः।

(५२) जन्मना वंशभेदे उदाहरति एकविंशतीति एकविंशतिर्भारद्वाजा-वंश्या इति विग्रहः।

(५२) नदीभिश्चेति बहुवचनग्रहणात् न संज्ञारूपनदीग्रहणं नापि स्वरूप-ग्रहणं किन्तु नदीत्यर्थग्रहणं तेन सामान्यविशेषनदीवाचकशब्दमा-त्रेऽस्य प्रवृत्तिः।

(५३) समाहारे चेति(३५५ पृ०)सूत्रे एवकारार्थकश्चकारः समाहारान्यव्यव-च्छेदकस्तेन द्विगोरपवादोऽयमव्ययीभावः।

(५५) अन्यपदार्थे इति संख्येति निवृत्तं नदीभिरित्यनुवर्त्तते सुबन्तं नदी-भिः सह नित्यं समस्यते इत्यर्थः। अन्यपदार्थे किं कृष्णवेण्णी संज्ञायां किं शीघ्रगङ्गो देश इत्यत्र मा भूत्।

* प्रत्यये भाषायां नित्यम् । तन्मात्रम् । चिन्मयम् । कथं तर्हि मदोदग्राः ककुद्मन्त इति । यवादिगणे दकारनिपातनात् । **तोर्लि** ।८।४।६०। तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लयः । विद्वाँल्लिखति । नकारस्याऽनुनासिको लकारः । **उदः स्थास्तम्भोः पूर्वस्य** ।८।४।६१। उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् । आदेः परस्य । उत्थानम् । उत्तम्भनम् । अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः । तस्य झरो झरीति पाक्षिको लोपः । लोपाभावपक्षे तु थकारस्यैव श्रवणं न तु खरि चेति चर्त्वम् । चर्त्वं प्रति थकारस्याऽसिद्धत्वात् । **झयो होऽन्यतरस्याम्** ।८।४।६२। झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः । वाग्घरिः । वाग्हरिः । **शश्छोऽटि** ।८।४।६३। पदान्तात् झयः परस्य शस्य छो वा स्यादटि । दस्य श्चुत्वेन जकारे कृते । **खरि च** ।८।४।५५। खरि परे झलां चरः स्युः । इति जकारस्य चकारः । तच्छिवः । तच्शिवः । * छत्वममीति वाच्यम् । तच्श्लोकेन । तच्छ्लोकेन । अमि किम् । वाक् श्च्योतति । **मोऽनुस्वारः** ।८।३।२३। मान्तस्य पदस्यानुस्वारः स्याद्धलि । अलोऽन्त्यस्य । हरिं वन्दे । पदस्येति किम् । गम्यते । **नश्चापदान्तस्य झलि** ।८।३।२४। नस्य मस्य चापदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । झलि किम् । मन्यते । **अनुस्वारस्य ययि परसवर्णः** ।८।४।५८। स्पष्टम् । अङ्कितः । अञ्चितः । कुण्ठितः । शान्तः । गुम्फितः । कुर्वन्तीत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम् । **वा पदान्तस्य** ।८।४।५९। पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि । त्वंकरोषि । सँय्यन्ता । संयन्ता । सँव्वत्सरः । संवत्सरः । यँल्लोकम् । यंलोकम् । अत्रानुस्वारस्य पक्षेऽनुनासिका यवलाः । **मोराजि**

---

तथा च यरोऽनुनासिको दुर्वारः । न च यरोऽनुनासिकप्रवृत्तौ झयन्तत्वाभावेन 'झयः' इति मतुपो मकारस्य वत्वाप्रसक्त्या यवादिगणे कुकदिति पाठो निरर्थकः स्यादिति वाच्यम् । अनुनासिकविधेरसिद्धत्वेन झयन्तत्वानपायात् गणे तत्पाठस्य सार्थक्यादिति चेदत्राहुः । यद्यत्र ककुद्दकारस्य नकार इष्टः स्यात्तर्हि गणे कुकनित्येव पठेन्न तु ककुदिति । मतुपः प्रकृतिभूतककुच्छब्दस्य नान्तत्वनिपातनेऽपि अन्यत्र दकारान्तप्रयोगस्य निर्बाधत्वात्तस्माद्यरोनुनासिकोऽत्र न प्रवर्तते इति ॥ अन्ये त्वाहुः । 'यचि भं तसौ मत्वर्थे' इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यं, तसाविति द्विवचननिर्देशस्तु दतयोः समाहारद्वन्द्वं कृत्वा इतरेतरयोगद्वन्द्वे कृते समुपपद्यत इति ॥—**उदः स्था**—॥ 'अनुस्वारस्य ययि—' इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य संबध्यते । एकदेशे स्वरितत्वप्रतिज्ञानादित्यभिप्रेत्याह—**पूर्वसवर्णः स्यादि**ति ॥—**शश्छोटि** ॥ इह पदान्तादित्यनुवर्त्य पदान्ताज्झय इति व्याख्येयं, तेनेह न, 'मधवश्चोतन्त्यभितो विरप्शम्' । विपूर्वाद्रपेरौणादिकः शः ॥—**छत्वममी**ति । 'शश्छोटि' इति सूत्रं 'शश्छोमि' इति पठनीयमित्यर्थः ॥—**तच्छ्लोकेने**ति । तच्छ्मश्रुणेत्याद्यप्युदाहर्तव्यम् ॥—**मोनु**— ॥ 'हलि सर्वेषाम्' इत्यतो हलीत्यनुवर्तते 'पदस्य' इति च तदाह—**मान्तस्ये**त्यादि । हलि किम् । त्वमत्र किमत्र ॥—**नश्चापदान्तस्य**—॥ अपदान्तस्य किम् । राजन् पाहि ॥—**आक्रंस्यत** इति । 'आङ उद्गमने' इति तङ् । 'स्नुक्रमोः इति—' नेट् ॥—**अनुस्वारस्य**—॥ अत्र ययीति स्पष्टार्थम् । अचि परे अनुस्वाराभावात् । शलि तु परसवर्णोऽनुस्वारान्तरतमो न संभवतीति कुण्डं रथेनेत्यत्रेव दंशनमित्यादावपि परसवर्णविध्यप्रवृत्तेः । अत्र वदन्ति । ईषद्विवृतमूष्मणां विवृतं स्वराणामिति भाष्यमते ययीत्यस्यापार्थकत्वम् । सूत्रकारमते तदावश्यकमेव । अन्यथा दंशनमित्यादावनुस्वारान्तरतमः परसवर्णोऽनुनासिक ईकारः स्यात् । ईकारशकारयोस्तन्मते सावर्ण्यस्य सत्त्वात् । तथा कुण्डं शेते इत्यादावनुस्वारस्य 'वा पदान्तस्य' इति स्यादिति ॥—**अङ्कित** इति । 'अङ्क पदे लक्षणे च' इति चुरादिण्यन्तात् क्तः । 'निष्ठायां सेटि' इति णिलोपः । परसवर्णेन ङः । 'अकि लक्षणे' इत्यस्माद्वा क्तः । नुमोऽनुस्वारे परसवर्णेन ङः ॥—**अञ्चित** इति । 'अञ्चेः पूजायाम्' इति निष्ठायामिट् । 'नाञ्चेः—' इति नलोपनिषेधः ॥—**कुण्ठित** इति । 'कुठि प्रतिघाते' क्तः । नुमोऽनुस्वारे परसवर्णेन णः ॥—**शान्त** इति । 'शम उपशमे' क्तः । 'वा दान्तशान्त—' इति निपातनादिडभावः । 'अनुनासिकस्य क्वि—' इति दीर्घः । मस्यानुस्वारे परसवर्णेन नकारः ॥—**गुम्फित** इति । 'गुम्फ ग्रन्थे' क्तः । मस्यानुस्वारे परसवर्णेन मः ॥—**मो राजि समः क्वौ** ॥ राजीति किम् । संपत् ॥ सम इति किम् । इदं राट् ॥ क्वाविति किम् । संराजितुं, संराजित-

१ पूर्वसवर्णेति—यदि तु हस्य सवर्ण इत्येवोच्येत तदा रेफोष्मणां सवर्णविरहात् हस्य ह एव स्यात् तथा च सूत्रं निरर्थकं स्यात्, अतः सामर्थ्यात् पूर्वग्रहणमनुवर्त्यते । २ मोराजीति—नच नराजीत्येवोच्यताम्, अनुस्वारनिषेधेनैवेष्टसिद्धेः इति वाच्यम्, 'हे मपर—' इति सूत्रविषये प्रशाम् झलयतीत्यादौ 'मोनो धातोः' इति नत्वबाधनार्थत्वात् । निषेधो हि अनन्तरस्येति न्यायेनानुस्वारस्यैव स्यात् ।

स्यते संज्ञायाम् । विभाषाधिकारेऽपि वाक्येन संज्ञानवगमात् (५६) इह नित्यसमासः । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् ।

**समासान्ताः (५७) । ५ । ४ । ६८ ।**

इत्यधिकृत्य ।

**अव्ययीभावे शरत्प्रभृतिभ्यः । ५ । ४ । १०७ ।**

शरदादिभ्यष्टच् स्यात् समासान्तो (५८) ऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । शरद् (५९) विपाश्

(५६) संज्ञाऽनवगमात् संज्ञिनो देशविशेषस्यानवगमात् नित्यसमास इति नित्यसमासस्सद्घ इत्यर्थः साकल्यस्य समाससमानार्थकवाक्याभाववत्त्वेन । समासघटकपदानां विग्रहवाक्ये वेति बोध्यम् ।

(५७) साधारणसमासान्तानामेकस्मिन् प्रकरणे वक्ष्यमाणत्वेऽपि अव्ययीभावेऽसाधारणसमासान्तान् निर्दिष्टुमुपक्रमते समासान्ता इति अत्र समासान्तघटकं समासपदं तत्सम्बन्ध्यलौकिकविग्रहवाक्यपरमेवमव्ययीभावादिपदान्यपि तत्पराणि तथाचालौकिकविग्रहवाक्ये समाससंज्ञासमकालमेव समासान्त इति सिद्धान्तः । अन्तशब्दश्च चरमावयववाची स च समुदाय एव तेनोपशरदमित्यादौ नाव्ययीभावादित्यादिनाम् (३२८ पृ०) अमुलोपाभावौ सिद्धौ । अन्यथा पूर्वभागस्याव्ययीभावत्वेनाव्ययत्वात् तस्य चादन्तत्वाभावेन सुलोपापत्तिरिति बोध्यम्

(५८) अव्ययीभावे उत्तरपदतया वर्त्तमानं यच्छरदादिप्रकृतिकं सुबन्तं तदन्तात् टच् स च समाससमानार्थकविग्रहवाक्यान्तावयव इत्यर्थः । राजाहःसखिभ्यष्टजित्यत (३८२ पृ०) टजित्यनुवर्त्तते । एवञ्च अनश्चेति (३३४ पृ०) सूत्रे अन्नन्तादव्ययीभावादित्युक्तिस्तु फलितार्थपरतया कथञ्चिदेवेति । शब्देन्दु०

(५९) शरदादिकं पठति शरदित्यादि अत्र झयन्तानां पाठोऽनित्यटजर्थ-

अनस् मनस् उपानह् दिव् हिमवत् अनडुह् दिश् दृश् विश् चेतस् चतुर् त्यद् तद् यद् कियत् जराया जरस् च। उपजरसम्। प्रतिपरसमनुभ्योऽक्ष्णः। यस्येति(१२८४०)च। प्रत्यक्षम् (६०)। अक्ष्णः परमिति विग्रहे समासान्तविधानसामर्थ्यादव्ययीभावः। परोक्षे लिडिति(७८४०)निपातनात्परस्योकारादेशः। परोक्षम्(६१)। परोक्षा क्रियेत्यादि तु अर्शआद्यचि। समक्षम्। अन्वक्षम्।

**अनश्च। ५। ४। १०८।**

अन्नन्तादव्ययीभावाट्टच् स्यात्।

**नस्तद्धिते। ६। ४। १४४।**

नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते। उपराजम्। अध्यात्मम्।

**नपुंसकादन्यतरस्याम्। ५। ४। १०९।**

अन्नन्तं यत् क्लीबन्तदन्तादव्ययीभावाट्टच् वा स्यात्। उपचर्मम् उपचर्म।

स्तेन झयइत्यनेन शरदादौ न विकल्पेन टच्। अत्र गणे हिवक् विद् सद् इत्यधिकास्त्रयः क्वचित् दृश्यन्ते।

(६०) प्रत्यक्षमिति लक्षणेनाभिप्रती इत्यनेन (२२०४०) समासः अक्षिशब्देन इन्द्रियमात्रं लक्ष्यते इन्द्रियाणाञ्च ज्ञानं प्रत्येव हेतुत्वात् प्रत्यक्षशब्देन इन्द्रियसन्निकर्षोत्पन्नं ज्ञानमुच्यते विषयादौ तु परोक्षादिवत् अर्श-आद्यजन्ततया तस्य प्रवृत्तिः।

(६१) परोक्षशब्देन तद्विपरीतमिन्द्रियाजन्यं ज्ञानमुच्यतइति विशेषः अक्ष्णोर्योग्यं समक्षम् अक्ष्णः पश्चादन्वक्षमिति विवेकः।

नदी (६२) पौर्णमास्याग्रहायणीभ्यः। ५। ४। ११०।

वा टच् स्यात्। उपनदम् उपनदि। उपपौर्णमासम् उप-पौर्णमासि। उपाग्रहायणम् उपाग्रहायणि।

झयः। ५। ४। १११।

झयन्तादव्ययीभावाट्टच् वा स्यात्। उपसमिधम् उपसमित्।

गिरेश्च सेनकस्य। ५। ४। ११२।

गिर्य्यन्तादव्ययीभावाट्टच् वा स्यात्। सेनकग्रहणम्पूजार्थम्। उपगिरम् उपगिरि।

इत्यव्ययीभावः।

---

(६२) नदीति इह स्वरूपस्यैव ग्रहणं न संज्ञायाः नदीसंज्ञकस्यापि पौर्णमासीशब्दस्य पृथग्निर्द्देशात्। पौर्णमासीशब्दस्तु स्वरूपपरो-मार्थपरस्तद्विशेषाग्रहायण्याः पृथग्निर्द्देशादिति बोध्यम्।

तत्पुरुषः। २। १। २२।

अधिकारोऽयम्। प्राग्बहुव्रीहेः।

द्विगुश्च। २। १। २३।

द्विगुरपि तत्पुरुषसंज्ञः स्यात्। इदं सूत्रं त्यक्तुं शक्यम् संख्यापूर्वो द्विगुश्चेति पठित्वा चकारबलेन(१)संज्ञासमावेशस्य सुवचत्वात्। समासान्तः (२) प्रयोजनम्। पञ्चराजम्।

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः। २। १। २४।

द्वितीयान्तं(३)श्रितादिप्रकृतिकैः(४)सुबन्तैः सह समस्यते वा स च तत्पुरुषः। कृष्णं श्रितः कृष्णश्रितः। दुःखमतीतः

---

(१) चकारबलेनेति संख्यापूर्वो द्विगुश्चेत्यस्य संख्यापूर्वो द्विगुः स्यात् चकारात् तत्पुरुष इत्यर्थलाभसम्भवादिति भावः।

(२) द्विगोस्तत्पुरुषसंज्ञायाः फलमाह समासान्त इति स च टजादिरित्यर्थः।

(३) प्रत्ययग्रहणे तदन्तग्रहणमिति न्यायात् द्वितीयापदं द्वितीयान्तपरमित्याशयेनाह द्वितीयान्तमिति अत्र च समासप्रत्ययविधौ तदन्तविधित्वाभावात् कष्टं परमश्रित इत्यादौ श्रिताद्यन्तेन न समास इति बोध्यम्।

(४) श्रितातीतादीनां सुबन्तत्वासम्भवेन सम्बोधनान्ततया कथित् तथात्वेऽपि लक्षणाप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणनियमेन श्रितादिशब्दप्रकृत्यैव समासः स्यादित्याशयेनाह श्रितादिप्रकृतिकैरिति सह सुपेति (२।१।४।)अधिकारात्तदर्थलाभ इति भावः।

दुःखातीतः। गम्यादीनामुपसंख्यानम् (५) *। ग्रामङ्गमी ग्रामगमी। अन्नं बुभुक्षुः अन्नबुभुक्षुः।

स्वयं क्तेन। २। १। २५।

द्वितीयेति न (६) संबध्यतेऽयोग्यत्वात्। स्वयंकृतस्यापत्यम् स्वायंकृतिः (७)।

खट्वा क्षेपे। २। १। २६।

खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते निन्दायाम्। खट्वारूढो जाल्मः (८)। नित्यसमासोऽयम्। न हि वाक्येन निन्दा गम्यते।

सामि (९)। २। १। २७।

सामिकृतम्।

कालाः। २। १। २८।

---

(५) श्रितादिषु गमिगाम्यादीनामुपसंख्यानान्तरात् ग्रामं गामीति वाक्ये ग्रामगामीति समासः।

(६) स्वयमित्यात्मनेत्यर्थकं कर्तृशक्तिप्रधानं तेनास्यायोग्यत्वात् न द्वितीयासम्बन्ध इत्याह द्वितीयेति नेति।

(७) असमासे तु स्वयं कार्त्तिरिति स्यात्। तथैकस्वर्यमपि समासफलम्।

(८) जाल्मइति तत्र तस्य केवलरूढत्वं प्रतीयतेऽतो न वाक्येन तदर्थावगमः प्रकरणादिना योगरूढ एव तथाबोधसम्भवेऽपि केवलरूढे तदसम्भव एवेति भावः।

(९) सामिपदोऽर्द्धवाची सामीत्येतत् क्तान्तेन सह समस्यते इत्यर्थः।

## कर्त्तृकरणे कृता बहुलम्। २। १। ३२।

कर्त्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः। कृद्ग्रहणे(१८) गतिकारकपूर्व्वस्यापि ग्रहणम्। नखनिर्भिन्नः। कर्त्तृकरणे इति किम् भिक्षाभिरुषितः हेतावेषा तृतीया। बहुल (२०) ग्रहणं सर्वोपाधिव्यभिचारार्थम्। तेन दात्रेण लूनवानित्यादौ न। कृतेति किम् (२१)। काष्ठैः पचतितराम् (२२)।

## कृत्यैरधिकार्थवचने। २। १। ३३।

स्तुतिनिन्दाफलकमर्थवाद (२३) वचनमधिकार्थवचनन्तत्र कर्त्तरि करणे च तृतीया कृत्यैः सह प्राग्वत्। वातच्छेद्यन्तृणम् काकपेया (२४) नदी।

---

(१८) यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र तत्पूर्वकस्यापि ग्रहणमपि यत्नात् तदसमभिव्याहारे केवलस्यापीत्यर्थः।

(२०) बहुलेति तेन क्वचित् न समस्यते क्वचित्तु विभक्त्यन्तरमपि समस्यते। तत्र न समस्यते इत्यस्योदाहरणमाह दात्रेणेति अन्यविभक्तिसमासे तु पादहारकइत्याद्युदाहरणम्।

(२१) कृतेति किमिति सह सुपेत्यधिकारे(२१८पृ॰)तिङन्तेनाप्रसङ्गात् कर्त्राद्यान्वितप्रधानार्थक्रियाबोधककृदन्तेनैव समासो भविष्यतीति किं कृद्ग्रहणेनेति प्रश्नः।

(२२) पचतितरामित्यस्य तद्धितान्ततया सुबन्तत्वात् तद्योगे समासप्रसङ्ग इत्युत्तरम्।

(२३) अर्थवादः आरोपितोऽर्थः। पूर्वसूत्रस्यैव प्रपञ्चार्थं न तु नियमार्थम्।

(२४) काकपेयेति। शक्यार्थे कृत्यः। पूर्णत्वेन स्तुतिः। वातच्छेद्यमित्यत्र तु दुर्बलत्वेन निन्देति विवेकः।

## अन्नेन व्यञ्जनम्। २। १। ३४।

संस्कारद्रव्यवाचकं तृतीयान्तमन्नेन (२५) प्राग्वत्। दध्ना ओदनो दध्योदनः। इहान्तर्भूतो (२६) सेकक्रियाद्वारा सामर्थ्यम्।

## भक्ष्येण (२७) मिश्रीकरणम्। २। १। ३५।

गुडेन धानाः गुडधानाः। मिश्रणक्रियाद्वारा सामर्थ्यम्।

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः। २। १। ३६।

चतुर्थ्यन्तार्थाय (२८) यत् तद्वाचिनार्थादिभिश्च चतुर्थ्यन्तं वा

---

(२५) अन्नशब्देन न स्वरूपग्रहणं व्याख्यानात् नापि यौगिकार्थग्रहणं किन्तु योगाद्रूढिर्बलीयसीत्युक्तेरोदनपर्य्यायग्रहणमिति बोध्यम्।

(२६) अन्तर्भूतेति तां विना दध्नः संस्कार्य्यत्वेन प्रतीतावसंस्कारकत्वानुपपत्तेरिति भावः। भाष्ये तु युक्तार्थसंप्रत्ययाच्च सामर्थ्यमित्युक्तं तथाच दध्ना युक्तो योऽर्थउपसेकादिस्तत्संप्रत्ययादिति तदर्थः।

(२७) खरं विशदमभ्यवहार्य्यं भक्ष्यमित्युक्तेः कठिनं विविक्तावयवं खाद्यं यत्तद्भक्ष्यं तद्वाचिना मिश्रीकरणवाचि तृतीयान्तं समस्यते इति सूत्रार्थः मिश्रणद्वारैव तयोः सामर्थ्यम्।

(२८) सूत्रे तस्मै इदं तदर्थमित्यर्थकं तदर्थपदं तत्र तच्छब्देन सन्निकृष्टत्वात् चतुर्थ्यन्तपरामर्शसम्भवेऽपि चतुर्थ्यन्तार्थो लभ्यते ततस्तादर्थ्ये चतुर्थी भवेन बहु नित्यसमासनियमादित्याशयेनाह चतुर्थ्यन्तार्थायेति एतच्च यदित्यनेन सम्बध्यते तथाच चतुर्थ्यन्तार्थाय फलाय यद्दार्व्वादि तद्वाचि सुबन्तेन अर्थादिशब्दैश्च चतुर्थ्यन्तं वा समस्यते इति सूत्रार्थः।

प्राग्वत्। तदर्थेन प्रकृतिविकृतिभावएव बलिरक्षितग्रह (२९) णात् ज्ञापकात्। यूपाय दारु यूपदारु। नेह रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीसमासाः (३०)। अर्थेन नित्यसमासो विशेष्यलिङ्गता (३१) चेति वक्तव्यम्॰। द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थम्पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्।

## पञ्चमी भयेन। २।१।३७।

चौराद्भयम् चौरभयम्। भयभीत (३२) भीतिभीभिरिति वाच्यम्॰। वृकभीतः।

## अपेतापोढमुक्तपतितापत्रस्तैरल्पशः। २।१।३८।

एतैः सहाल्प (३३) म्पञ्चम्यन्तं समस्यते स तत्पुरुषः।

---

(२९) बलिरक्षितग्रहणादिति हितसुखग्रहणं तु न ज्ञापकं तद्योगे चतुर्थी चाशिषीत्यनेन (१०६पृ०) चतुर्थीविधानात् ताभ्यां तादर्थ्ये चतुर्थ्या असम्भवाच्चेति बोध्यम्।

(३०) षष्ठीसमासादिति स्वरविशेषात् शाब्दबोधे सम्बन्धत्वरूपेण बोधेन वैलक्षण्याच्चेति भावः।

(३१) अर्थशब्दस्य नित्यपुंस्त्वेन परवल्लिङ्गमित्यस्य (२९०पृ०) बाधायाह विशेष्यलिङ्गता चेति एतद्वेशात्र विधेयं न तु नित्यत्वं चतुर्थ्यैव तदर्थस्योक्तत्वात्तदप्रयोगेऽर्थशब्देन विग्रहाप्रसक्तेः।

(३२) भयभीतेत्यादि निर्गतजुगुप्सोपरतादीनामुपलक्षणम् तेन ग्रामनिर्गतः योगोपरतः अधर्मजुगुप्सितइत्यादिसिद्धिः।

(३३) अल्पमिति कानिचिदेव पञ्चम्यन्तानि समस्यन्ते न सर्वाणीत्यर्थस्तेन

सुखापेतः। कल्पनापोढः। चक्रमुक्तः। स्वर्गपतितः। तरङ्गापत्रस्तः। अल्पशः किम्। प्रासादात्पतितः।

स्तोका (३४) न्तिकदूरार्थकृच्छ्राणि क्तेन। २।१।३९।

स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। कृच्छ्रादागतः। पञ्चम्याः स्तोकादिभ्य (४५१पृ०) इत्यलुक्।

षष्ठी। २।२।८।

राज्ञः पुरुषः राजपुरुषः।

याजकादिभिश्च (३५)। २।२।९।

एभिः षष्ठ्यन्तं समस्यते। तृजकाभ्यां कर्त्तरीत्यस्य (२४७पृ०) प्रतिप्रसवोऽयम्। ब्राह्मणयाजकः देवपूजकः। गुणात्तरेण तरलोपश्चेति वक्तव्यम् *। तरबन्तं यद्गुणवाचि तेन सह समासस्तरलोपश्च न निर्द्धारणे इति पूरणगुणेति (२४४पृ०) च निषेधस्य प्रतिप्रसवोऽयम्। सर्व्वेषां श्वेततरः सर्व्वश्वेतः। सर्व्वेषां

प्रासादात् पतित इत्यादौ नेति बोध्यम् सङ्गतासङ्गतसम्बन्धाभावेऽपि अस्मादेव ज्ञापकात् निपातनाद्वा अलमिति मम।

(३४) स्तोकेति अत्र स्तोकार्थोऽल्पशब्द एव न तु लेशादयो व्याख्यानात्।

(३५) याजक पूजक परिचारक परिषेचक स्नापक अध्यापक उत्सादक उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक। इति याजकादयः।

भक्तकरः सर्व्वमहान्। तद्योगा (३६) षष्ठी समस्यतइति वाच्यम्*। इध्मनो व्रश्चनः इध्मव्रश्चनः।

**न निर्द्धारणे। २। २। १०।**

निर्द्धारणे या षष्ठी सा न समस्यते। नृणां(३७) द्विजः श्रेष्ठः। प्रतिपदविधाना (३८) षष्ठी न समस्यतइति वाच्यम् *। सर्पिषो ज्ञानम्।

**पूरणगुण (३९) सुहितार्थसदव्ययतव्यसमानाधिकरणेन। २। २। ११।**

(३६) तद्योगेति। कर्त्तृकर्म्मणोः कृतीत्युक्तेः (२००पृ०) षष्ठ्यैव कर्म्मत्वबोधनात् कर्म्मषष्ठ्यां समासाभावाशङ्कायामिदं सूत्रं प्रवृत्तम् उदाहरणेन तदेव सूचयति इध्मव्रश्चनइति कर्म्मषष्ठ्या समासः।

(३७) नृणामिति निर्द्धारणषष्ठी। यस्मान्निर्द्धार्य्यते यच्च निर्द्धार्य्यते यश्च निर्द्धारणहेतुरेतत्त्रितयसन्निधाने सत्येव षष्ठी तत्रैवायं निषेधइति द्विवचने विभज्येति सूत्रे कैयटः। ततश्च पुरुषोत्तमइत्यादौ त्रितयसन्निधानाभावात् न निर्द्धारणविभक्तिः किन्तु सम्बन्धसामान्ये षष्ठीति तया समासः। अतएव हलादिः शेषइति सूत्रे हलामादिरिति षष्ठीसमास इति भाष्ये उक्तम्।

(३८) प्रतिपदविधानेति पदं पदं प्रति प्रतिपदं सर्व्वेषु पदेषु न तु तद्योगमात्रे विधानं यस्यास्तादृशी षष्ठी ज्ञोऽविदर्थस्येत्यादि (२८६पृ०) चतुर्द्दशसूत्रेष्वष्टसूत्र्यामनुवर्त्तितशेषपदायां विहिता या षष्ठी सा न समस्यते इति वार्त्तिकार्थः।

(३९) गुणेति गुणशब्देनेह यः केवलगुणवाची यच्च गुणवाची सन् गुणोपसर्ज्जनद्रव्यवाची यच्च गुणबोधकप्रकृतिकभावप्रत्ययान्तः तत्त्रितयमपि गृह्यते व्याख्यानात् तदेतदुदाहरणेनाह काकस्य कार्ष्ण्यमिति।

**समः क्वौ ।८।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् । हे मपरे वा ।८।३।२६। मपरे हकारे परे मस्य म एव स्याद्वा । ह्मल ह्मल चलने । किम् ह्मलयति । किं ह्मलयति ॥ * यवलपरे यवला वेति वक्तव्यम् । यथासंख्यमनुदेशः समानाम् ।१।३।१०। समसंबन्धी विधिर्यथासंख्यं स्यात् । किँय्ह्यः । किंह्यः । किँव्ह्वलयति । किंह्वलयति । किलँह्लादयति । किंह्लादयति । न परे नः ।८।३।२७। नपरे हकारे मस्य नः स्याद्वा । किन्ह्नुते । किं ह्नुते । ङ्णोः कुक्टुक् शरि ।८।३।२८। ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्टुकोरसिद्धत्वाज्जश्त्वं न ॥ * चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् ॥ प्राङ्ख्षष्ठः । प्राङ्क्षष्ठः । प्राङ् षष्ठः । सुगण्ठ्षष्ठः । सुगण्ट्षष्ठः । सुगण्षष्ठः । डः सि धुट् ।८।३।२९। डात्परस्य सस्य धुड्वा स्यात् । षट्त्सन्तः । षट्सन्तः । नश्च ।८।३।३०। नकारान्तात्सस्य धुड्वा । सन्त्सः । सन्सः । शि तुक् ।८।३।३१। नस्य पदान्तस्य शे परे तुग्वा स्यात् । शश्छोटीति छत्वविकल्पः । पक्षे झरो झरीति चलोपः । सञ्च्छंभुः । सञ्च्शंभुः । सञ्छंभुः । सञ्शंभुः । ञ्छौ ञ्चछा ञ्चशा ञ्शाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् । ङमो ह्रस्वादचि ङमुण्नित्यम् ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याऽचो नित्यं ङमुडा-गमः स्यात् ।**

---

व्यम् ॥ मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं तदाह—**म एव स्यादिति** ॥—**सम्राडिति** । राजृ दीप्तौ । संपूर्वादस्मात् 'सत्सूद्विष–' इत्यादिना क्विप् । 'व्रश्च–' आदिना षत्वं जश्त्वचर्त्वे ॥—**हे मपरे वा** ॥—मपर इति बहुव्रीहिः ॥—**यवलेति** । यवलाः परा यस्माद्यवलपरस्तस्मिन्हकारे परे मस्य यवला भवन्तीत्यर्थः ॥—**यथासंख्यमनुदेशः**—॥अनु दिश्यत इति अनुदेशः । पश्चादुच्चार्यत इत्यर्थः ॥ समानामिति संबन्धे षष्ठी । तदाह—**समसंबन्धी विधिरिति** । समकर्मकं विधानमिति तु नोक्तं, तथा हि सति यत्रोद्देशेषु समेषु समानां विधानं पाघ्रादिषु पिबादीनां प्रस्थादीनां तत्रैव यथाक्रमं प्रवृत्तिः स्यात् । इष्यते तु अनुवाद्ययोरपि यथासंख्यत्वम् । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इत्यत्र यथा ॥ समानामिति किम् । 'लक्षणेत्थंभूता–' इत्यत्र लक्षणादयश्चत्वारोऽर्थाः प्रत्यादयस्तु त्रयः, तत्र सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा यथा स्यात् ॥—**नपरे**—॥ अयमपि बहुव्रीहिरेव ॥ हे इति अनुवर्तते तदाह—**नपरे हकारे** इति ॥—**ङ्णोः**—॥—**चयो द्वितीया** इति । एतच्च 'नादिन्याक्रोशे–' इति सूत्रे भाष्ये स्थितम् । अत एव मनोरमायां 'डः सि–' इति सूत्रे तुडित्युच्यमाने 'चयो द्वितीयाः–' इति पक्षे थकारापत्तिरुक्ता । यदि तु 'ङ्णोः–' इति सूत्रस्थं स्यात् तर्हि तुडित्येव सुवचं स्यात् । तुटोऽसिद्धत्वेन 'चयो द्वितीयाः–' इत्यस्याप्रवृत्तेः ॥—**पौष्करसादेरिति** । पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् । तस्यापत्यं पौष्करसादिराचार्यः । बाह्वादित्वादिञ् अनुशतिकादित्वादुभयपदवृद्धिः ॥—**डः सि धुट्** ॥ उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वादित्यभिप्रेत्याह—**सस्येति** । सीति सप्तमीनिर्देशस्तु लाघवार्थः ॥—**षट्त्सन्त** इति । धुटश्चर्त्वेन तकारः । 'चयो द्वितीयाः–' इति तस्य थो न, चर्त्वस्यासिद्धत्वात् । अत एव धुडभावे षट्सन्त इत्यत्र टस्य ठो न भवति ॥ नन्वेवमपि 'डः सि धुग्' इति धुग्विधीयतां डकारस्य सकारे परे धुगिति व्याख्यानसंभवात् किमनेन धुटः परादित्वाभ्युपगमेन ॥ मैवम् । पूर्वान्तत्वे तु 'न पदान्ताट्टोरनाम्' इति निषेधाप्रवृत्त्या धकारस्य ष्टुत्वप्रसङ्गात् । अत एव वक्ष्यमाणस्तुगिहैव न कृतः । डस्य तुकि ष्टुत्वे तस्यासिद्धत्वेन 'चयो द्वितीया–' इत्यस्यापि प्रसङ्गाच्च ॥ इह धुड्विकल्पेन रूपद्वये सति टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश रूपाणि । 'खयः शरः' इति द्वित्वे द्वात्रिंशत् ॥ 'शरोऽचि' इति निषेधोऽत्र न प्रवर्तते । तस्य सौत्रद्वित्वमात्रविषयत्वस्योक्तत्वात् ॥ न च चर्त्वस्यासिद्धत्वात् खयः परत्वमेव नास्तीति शङ्क्यम्, । 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेः ॥—**शि तुक्** ॥ शीति सप्तमी पूर्वत्र कृतायाः न इति पञ्चम्याः षष्ठीं कल्पयतीत्याह—**नस्येति** ॥—**च लोप** इति । 'झरो झरि' इत्यत्र सवर्णग्रहणसामर्थ्याद् यथासंख्यं न प्रवर्तत इति भावः ॥—**सञ्च्छंभुरिति** । इह श्चुत्वतुकोरसिद्धत्वमाश्रित्य 'नश्छवि–' इति रुत्वं नाशङ्क्यं, छत्वस्यासिद्धत्वात् ॥—**चतुष्टयमिति** । अत्र तुकः श्चुत्वे 'चयो द्वितीयाः–' इति पक्षे चस्य छत्वे शस्यापि छत्वविकल्पात् सञ्छ्छंभुः सञ्छ्शंभुरिति रूपद्वयवृद्धिर्बोध्या । न च शस्य छत्वपक्षे शर्परत्वाभावात् 'चयो द्वितीयाः–' इति पक्षे चस्य छो नेति शङ्क्यं, 'शश्छोटि' इति छत्वस्यासिद्धत्वादित्याहुः ॥—**ङमो ह्रस्वात्**—॥ ङम् प्रत्याहारः, संज्ञायां च कृतं टित्वं सामर्थ्यात्संज्ञिभिः संबध्यते । तेन यथासंख्यं ङुट्–णुट्–नुटः प्रवर्तन्ते ॥ नित्यग्रहणं विस्पष्टार्थं, 'हे मपरे–' इति 'मय उञो वो वा' इति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात् ॥ नन्विह नित्यग्रहणाभावे 'हे मपरे वा' इति वाग्रहणमुत्तरसूत्रेषु पञ्चस्वप्यनुवर्तते वा नवेति शङ्का स्यादिति चेत्सत्यम् । अत एव विस्पष्टार्थमित्युक्तं न तु व्यर्थमिति ॥—**तस्मात्परस्याच** इति । ननु ङम इत्यस्य षष्ठ्यन्ततामाश्रित्याचि परे पूर्वस्यैव विधीयतां को दोष इति चेत् । मैवम् । तथाहि सति ङमन्तस्य पदस्य पूर्वावयवः स्यादि-

---

१ समानामिति—साम्यं तु संख्यया, व्याख्यानात् । तच्च वाचकशब्दकृतं बहुधा, यथा 'स्यतासी लृलुटोः' इत्यादौ । क्वचिदर्थकृतमपि, यथा 'परस्मैपदानाम्' इत्यादौ ।

पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते। पूरणे। सतां षष्ठः। गुणे। काकस्य कार्ष्ण्यम्। ब्राह्मणस्य शुक्लाः। यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणम्। अनित्योऽयं गुणेन निषेधः तदशिष्यं संज्ञाप्रमाणत्वादिति निर्देशात्। तेनार्थगौरवं बुद्धिमान्द्यमित्यादि सिद्धम्। सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः। तृतीया (४०) समासस्तु स्यादेव स्वरे विशेषः। सत्। द्विजस्य कुर्वन् कुर्वाणो वा किङ्करः (४१) इत्यर्थः। अव्ययम्। ब्राह्मणस्य कृत्वा। पर्व्वोक्तरसाहचर्य्यात् कृदव्ययमेव गृह्यते। तेन तदुपरीत्यादि सिद्धमिति रक्षितः। तव्यः। ब्राह्मणस्य कर्त्तव्यम्। तव्यता तु भवत्येव। स्वकर्त्तव्यम्। स्वरे भेदः। समानाधिकरणे। तक्षकस्य (४२) सर्पस्य। विशेषणा (४३) समासस्त्विह बहुल-

---

(४०) तृतीयेति तत्र करणत्वेन भानं षष्ठीसमासे तु सम्बन्धत्वेनेति विशेषस्यान्तिप्रयोजनकतया स्वरकृतमेव विशेषमप्याह स्वरे इति तृतीया कर्मणीति (उ॰ ७ १पृ॰) पूर्व्वपदप्रकृतिस्वरत्वम् षष्ठीसमासे त्वन्तोदात्त इति भेदः।

(४१) द्विजस्येति षष्ठी न कुर्व्वन्नित्यपेक्षया न लोकेत्यादिना (२०१पृ॰) निषेधात् किन्तु शेषे इत्याह किङ्कर इति।

(४२) तक्षकस्येति परिनिष्ठितविभक्त्या समास इति पक्षे। अत्र परत्वात् समानाधिकरणसमासं बाधित्वा षष्ठीसमासः प्राप्तः स निषिध्यते।

(४३) षष्ठीसमासनिषेधेऽपि विशेषणसमासो दुर्वार इति निषेधफलाभाव इत्याशङ्क्याह वि॰षणेति स च विशेषणं विशेष्येणेति समासः। बहुलग्रहणादिति कर्त्तृकरणे कृता बहुलमित्यत्र (३४०पृ॰) बहुलग्रहणात् क्वचिदन्यस्यापि लाभादित्यर्थः। इदमुपलक्षणम् स्वरकृतवैलक्षण्यावस्थापितं ध्वं कर्म्मधारये पूर्व्वपदप्रकृतिस्वरः षष्ठीसमासे त्वन्तोदात्त इति विशेषस्य सत्त्वात्। प्रथमान्तपदेनैव समास इति पक्षे तु षष्ठ्यन्ततक्षयो-

ग्रहणाच्च गोधनो(४४)रित्यादिषु पोटायुवतीत्यादीनां(१६१९०) विभक्त्यन्तरे चरितार्थानाम्परत्वाद्बाधकः षष्ठीसमासः प्राप्तः सोऽप्यनेन वार्य्यते।

## क्तेन च पूजायाम्। २। २। १२।

मतिबुद्धीति(४५) सूत्रेण(७२६१२५०)विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते। राज्ञां मतो बुद्धः पूजितो वा। राजपूजित इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः।

## अधिकरणवाचिना च। २। २। १३।

क्तेन षष्ठी न समस्यते। इदमेषामासितं गतम्भुक्तं वा।

## कर्म्मणि च। २। २। १४।

उभयप्राप्तौ कर्म्मणीति(३०१९०) (४६)या षष्ठी सा न समस्यते। आश्चर्य्यो गवान्दोहोऽगोपेन।

---

णाभावएव। एतच्च भाष्यवृत्त्युदाहृतप्रयोगविषयमेव बोध्यम् तेना यस्य पदस्यार्थैइत्यर्थकः अन्यपदार्थे इति सूत्रप्रयोगः संगच्छते तथाच नीलोत्पलस्य गन्धइत्यादिसिद्धिः। शब्देन्दु०।

(४४) फलान्तरमप्याह गोर्धेनोरिति षष्ठीसमासे गुणप्रवृत्तिनिमित्तकत्वेना प्रधानत्वात् धेनोः पूर्व्वनिपातोविशेषणसमासे तु गोरिति भेदइति भावः। आदिना भोज्यस्रेटस्रेत्यादिसंग्रहः।

(४५) पूजायामित्यस्य व्याख्यानात् मतिबुद्ध्यादिसूत्रपरत्वमाह मतीत्यादि इदं सूत्रं कारकसम्बन्धयोरुभयोरपि बोधकसज्ञा सम सनिषेधकम्।

(४६) कर्म्मणि चेति सूत्रे क्तेनेति न सम्बध्यते पूजायां प्रतिषेधानर्थक्यात् तदाह कर्म्मणीति तथा च चशब्दइतोत्यर्थे एवं च कर्म्मणीतिपदघटित-

## तृजकाभ्यां कर्त्तरि। २। २। १५।

कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः। अपां स्रष्टा। व्रजस्य भर्त्ता। ओदनस्य पाचकः। कर्त्तरि किम् इक्षूणां भक्षणमिक्षुभक्षिका (४७)। पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः। भूभर्त्ता। कथन्तर्हि घटानां निर्म्मातुस्त्रिभुवनविधातुश्च कलह इति। शेषषष्ठ्या समास इति कैयटः।

## कर्त्तरि च। २। २। १६।

कर्त्तरि षष्ठ्याऽकेन न समासः। भवतः शायिका। नेह तृजनुवर्त्तते तद्योगे कर्त्तुरभिहितत्वेन कर्त्तृषष्ठ्या अभावात्।

## नित्यं क्रीड़ाजीविकयोः। २। २। १७।

एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका(४८)। क्रीड़ाविशेषस्य संज्ञा। संज्ञायामिति(१५३पृ०)ण्वुल्

---

सूत्रेण या षष्ठी सा न समस्यत इत्यर्थः क्तान्तयोगे चोभयप्राप्त्यभावात् कर्म्मण्येव क्तेनेत्यस्य नातुवर्त्तिरिति भावः। अत्रेदं बोध्यम् उभयप्राप्ताविति सूत्रे(२०१पृ०)क्तस्योऽर्थप्रयोग इत्यत.(२००पृ०) प्रयोगशब्दस्यानुवर्त्तनात् कर्त्तृकर्म्मणोरुभयोरेव प्रयोगस्थले उभयप्राप्तियोग्यकलकमभिहारे या कर्म्मणि षष्ठी सा न समस्यते इत्यर्थ। एतच्च अथ शब्दानुशासनमित्यस्य व्याख्यायां आचार्य्यस्य वस्तुत. कर्म्मः मत्वेऽपोहानुपादानेन कर्म्मणि चेति न निषेधावकाश इत्येवं तत्त्वम्य शेषा भाष्येण सिद्धम्।

(४७) इक्षुभक्षिकेति। अत्र कर्म्मषष्ठ्या समास कर्त्तृप्रयोगाभावेनोभयप्राप्तित्वस्याप्रवृत्तेः कर्म्मणि चेति(२४६पृ०)निषेधो नेति भावः। भक्षिकेति धात्वर्थनिर्द्देशे ण्वुल्।

(४८) भञ्जनं भञ्जिका उद्दालकस्य श्लेष्मातकस्य पुष्पाणि भज्यन्ते यस्यां

जीविकायाम् दन्तलेखकः । तत्र क्रीड़ायां विकल्पे(४९) जीविकायां तुजकाभ्याङ्कर्त्तरीति निषेधे च प्राप्ते वचनम् ।

पूर्व्वापरा(५०) धरोत्तरमेकदेशिनैकाधिकरणे ।२।२।१।

अवयविना सह पूर्वादयः समस्यन्ते एकत्व (५१) संख्याविशिष्टश्चेदवयवी षष्ठी । (५२) समासापवादः । पूर्वङ्कायस्य पूर्वकायः । अपरकायः । एकदेशिना किम् पूर्व्वं नाभेः(५३)

---

क्रीडायां वा उद्दालपुष्पभञ्जिका । संज्ञायां ण्वुलित्येव पाठः भावे ण्वुलिति पाठस्तु प्रमादिकउदाहरणेऽधिकरणस्यैव जीविकाया बोध्यत्वेन तत्र भावार्थकत्वाभावात् । अतएव धात्वर्थनिर्द्देशे इत्यनेनैव सिद्धे संज्ञायामित्यस्याधिकरणार्थत्वमिति न गतार्थता ।

(४९) क्रीड़ायां विकल्पइति विभाषाधिकारात् वैकल्पिकसमासे प्राप्ते इत्यर्थः

(५०) षष्ठीसमासप्रसङ्गात्तदपवादमेकदेशिसमासमाह पूर्व्वापरेति एकदेशो ऽवयवे रूढस्ततो मत्वर्थीयइनिः अवयवित्वस्यावयवाकाङ्क्षायामुपस्थितत्वात् पूर्व्वादयएवावयवा इति बोध्यम् ।

(५१) अधिकरणं द्रव्यमेकत्वविशिष्टद्रव्ये वर्त्तमानेनावयववाचिनेति वाक्यार्थः फलितस्तदाहैकत्वेति ।

(५२) पूर्व्वकायइत्यादेः कर्म्मधारयेणैव गतार्थतामाशङ्क्याह षष्ठीति तथाच अवयवावयविनोर्भेदविवक्षायां षष्ठ्या कायस्य पूर्व्वमिति विग्रहः कायपूर्व्वमित्यनिष्टप्रयोगनिवारणार्थमिदं सूत्रमिति भावः । द्विवलक्षणपञ्चमी तु अतएव ज्ञापकात् अवयववाचिनि न प्रवर्त्तते इति न बह्वभावाशङ्का ।

(५३) पूर्व्वंनाभेः कायस्येति नाभेर्यः पूर्व्वो भागः स कायस्यावयवइत्यर्थस्तेन नाभेरवयवित्वाभावात् पूर्व्वशब्दयोगे पञ्चमी तथाचात्र पूर्व्वस्य भागस्य नाभिरवधिर्नत्वेकदेशीति षष्ठ्या न समास इति भावः ।

कायस्य। एकाधिकरणे किम्। पूर्वश्छात्राणाम्। सर्वोऽप्येकदेशोऽह्ना समस्यते संख्याविसायेति (१०७पृ०) ज्ञापकात् मध्याह्नः। सायाह्नः। केचित्तु सर्व्वएकदेशः कालेन समस्यते नत्वह्नैव ज्ञापकस्य सामान्यापेक्षत्वात्। तेन मध्यरात्रः "उपारताः पश्चिमरात्रगोचरा"इत्यादि सिद्धमित्याहुः।

## अर्द्धन्नपुंसकम्। २। २। २।

समांशवाच्यर्द्धशब्दो नित्यं क्लीबे प्राग्वत्। एक(५४)विभक्त्यावषष्ठ्यन्तवचनम् *। एकदेशिसमासविषयकोयमुपसर्ज्जनसंज्ञानिषेधः। तेन पञ्चखट्वी(५५)त्यादि सिध्यति। अर्द्धं पिप्पल्याः अर्द्धपिप्पली। क्लीबे किम् ग्रामार्द्धः। द्रव्यैक्यएव। अर्द्धम्पिप्पलीनाम्।

## द्वितीयतृतीयचतुर्थतुर्य्याण्यन्यतरस्याम्। २। २। ३।

एतान्येकदेशिना सह प्राग्वद्वा। द्वितीयम्भिक्षाया द्वितीयभिक्षा। एकदेशिना किम् द्वितीयम्भिक्षाया भिक्षुकस्य। अन्यतरस्यां ग्रहणसामर्थ्यात्पूरणगुणेति (२४६पृ०) निषेधं बाधित्वा पक्षे षष्ठीसमासः। भिक्षाद्वितीयम्।

---

(५४) पिप्पल्या नियतविभक्तिकत्वेऽप्येकविभक्ति चापूर्व्वनिपात(१२१पृ०)इत्यनेनोपसर्ज्जनत्वात् ह्रस्वत्वप्राप्त्यभावाद् एकविभक्त्याविति।

(५५) पञ्चानां खट्वानां समाहार इत्यादौ खट्वाशब्दस्य षष्ठ्यन्तत्वेऽपि एकदेशिवाचकत्वाभावादुपसर्ज्जनत्वात् ह्रस्वेङीविधानात् पञ्चखट्वीत्यादीति।

## प्राप्तापन्ने च द्वितीयया । २ । २ । ४ ।

पक्षे द्वितीयाश्रितेति (२२६४०) समासः । प्राप्तो जीविका प्राप्तजीविकः (५६) जीविकां प्राप्तः जीविकाप्राप्तः आपन्न जीविकः जीविकापन्नः । इह सूत्रे द्वितीयया च इति छित्त्वा अकारोऽपि विधीयते । तेन प्राप्ता जीविकां स्त्री प्राप्तजीविका । आपन्नजीविका ।

## कालाः (५७) परिमाणिना । २ । २ । ५ ।

अन्यथाऽस्वस्तत्वेऽदन्तत्वाभावेन ङीपोऽप्रवृत्तेस्तथाद्रूपात्सिद्धिरिति भावः । तथाच तथासङ्क्षेपे पञ्चखट्टीति भाष्योदाहरणमेव प्रमाणम् ।

(५६) प्राप्तजीविक इति गोस्त्रियो (२२२४०) रित्युपसर्जनह्रस्वः । द्विगुप्राप्तापन्नेत्यादिना(२६१४०) परवल्लिङ्गनिषेधः स्वरभेदात् बहुव्रीहिणा न गतार्थता । किञ्च प्राप्तसुखादितत्पुरुषादौ बहुव्रीहिस्वीकारे निष्ठान्तस्य जातिकालसुखादिभ्यश्चेति (४२९४०) परनिपातविधानात् परनिपातापत्तिरतस्तन्निरासायेदं सूत्रमिति द्रष्टव्यम् । प्राप्तापन्नेचेति चकारेण विधेयसमुच्चयार्थेनाकारप्रश्लेषानुमानादाह अ इति छित्त्वेति अत्र च आ इति च्छेदोऽपि द्रष्टव्य स्तेन च आ अः स्यादिति सूत्रार्थः अन्यथाकारस्य स्थान्यपेक्षायां द्वितीयायाएव सन्निधानात्तदन्त्याकारस्यैव स्थानित्वेन कल्पनाप्रसक्तौ प्राप्तापदस्य आकारस्थाने अकारानुपपत्तिः ।

(५७) काला इति बहुवचनात् कालविशेषवाचका गृह्यन्ते । परिमीयते परिच्छिद्यते येन तत्परिमाणं परिच्छेदकं तद्वान् परिच्छेद्यस्तदाह परिच्छेद्यवाचिनेति तथाच कालाः परिमाणिना समस्यते नतु परिमाणी कालैरिति सूत्रार्थः । कालस्य तु परिच्छेदकत्वं क्रियाद्वारैव मासजातादिव्यवहारे जननक्रियाकालान्तरालभावी मासादि र्जातादिकं पुरुषमपि परिच्छिनत्ति तेन सुखादिजाते न मास-

परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते। मासो जातस्य यस्य स मासजातः। द्व्यहजातः द्वयोरह्नोः समाहारो द्व्यहः द्व्यहो जातस्येति विग्रहः। उत्तरपदेन (५८) परिमाणिना द्विगोः सिद्धये बहुनान्तत्पुरुषस्योपसंख्यानम् *। द्वे अहनी जातस्य यस्य स द्व्यह्नजातः। अह्नोऽह्न इति (१८२ सू०) वक्ष्यमाणोऽह्नादेशः। पूर्व्वत्र तु (५९) न संख्यादेः समाहार इति (१८४ सू०) तन्निषेधः।

## सप्तमी शौण्डैः। २। १। ४०।

सप्तम्यन्तं शौण्डादिभिः (६०) प्राग्वद्वा। अक्षेषु शौण्डः अक्षशौण्डः। अधिशब्दोऽत्र(६१) पठ्यते। अध्युत्तरपदादिति (७८८ सू०) खः। ईश्वराधीनः।

जातादिव्यवहारः। इदञ्च सूत्रं जातस्य मास इति विग्रहे जातमास इत्यनिष्टप्रयोगनिवारणार्थम् बहुव्रीहिणा गतार्थता तु न शङ्क्या मासो जातोऽस्येत्यादितो मासस्यैव जननप्रतीतेर्न त्वन्यपदार्थस्य। इत्थं विग्रहयोस्तुल्यार्थत्वेऽपि सूत्रभाष्यप्रामाण्यादत्र न तथाकल्पनमतएव न मासस्य प्रधानताऽपि तु जातस्यैवेति द्योतनाय यस्य सइत्युक्तम्।

(५८) उत्तरपदेनेति वार्त्तिकमेतत्पूर्व्वविषयमेव तद्धितार्थेति सूत्रस्थत्वे एतस्य पाठेऽप्येतद्विषयएव भाष्यकृतोदाहरणात्।

(५९) पूर्व्वत्र त्विति द्व्यहजात इत्यत्रेत्यर्थः।

(६०) सप्तमीति अधिकरणकारकस्य कर्त्तृकर्मद्वारा क्रियान्वयाच्छौण्डादिभिः सामर्थ्यम् क्रिया चात्राक्षिरन्या वेत्यत्र नाग्रहः।
शौण्ड धूर्त्त कितव व्याड प्रवीण संवीत अन्तर् अधि पटु पण्डित कुशल चपल निपुण। इत्येते शौण्डादयः। शौण्डादिभिरिति बहुव्रचनमित्युक्तेर्गणग्रहणार्थं बहुवचनम्।

(६१) अधिशब्दइति आधेयप्रधानइति शेषः अधिकरणप्रधानस्य अव्ययी-

## सिद्धशुष्कपक्वबन्धैश्च। २।१।४१।

एते सप्तम्यन्तं प्राग्वत्। साङ्काश्यसिद्धः। आतपशुष्कः स्थालीपक्वः। चक्रबन्धः।

## ध्वाङ्क्षेण क्षेपे। २।१।४२।

ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम्। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः तीर्थकाकइत्यादि (६२)।

## कृत्यै (६२) र्ऋणे। २।१।४३।

सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वत् आवश्यके। मासे देयमृणम्। ऋणग्रहणान्नियोगोपलक्षणार्थं पूर्वाह्णे गेयं साम

## संज्ञायाम्। २।१।४४।

सप्तम्यन्तं सुपा प्राग्वत् संज्ञायाम्। वाक्येन संज्ञानवगमा

भावएव। अन्तःशब्दोऽत्र पठ्यते स चाधिकरणप्रधानः मध्ये इत्यर्थक तद्योगेऽवयविनः आधारत्वविवक्षायां सप्तमी यथा वृक्षे शाखेति तथा च वनेऽन्तरित्यर्थे वनान्तर्वसतीति प्रयोगः। यस्तु अधिकरणत्व मात्रवृत्तिरन्तःशब्दस्तेनान्तःशब्देनाव्ययीभावएव अन्तर्वणमित्यादि।

(६२) ध्वाङ्क्षेणेत्यर्थपरं द्योतयन्नुदाहरति तीर्थकाकइति क्षेपोहि निन्दा काकादिसादृश्यं तत्प्रयोजकमित्यतइवशब्देन विग्रहः।

(६२) कृत्यैरिति प्रत्ययमात्रं गृह्यते व्याख्यानात्। ऋणपदन्त्वावश्यक परमित्यभिसन्धायाह नियोगोपलक्षणार्थमिति। तत्पुरुषे कृति बहुल (४६०पृ०)मित्यलुक् स्वरविशेषार्थं समासस्वीकारइति बोध्यम्।

नित्यसमासोऽयम्(६४)। अरण्येतिलकाः। वनेकशेरुकाः। हलदन्तात्सप्तम्या (६।३।९) इत्यलुक्।

## क्तेनाहोरात्रावयवाः। २। १। ४५।

अह्नो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत्। पूर्वाह्णकृतम्। अपररात्रकृतम्। अवयवग्रहणम् किम्। अह्नि दृष्टम्।

## तत्र। २। १। ४६।

तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत्। तत्रभुक्तम्।

## क्षेपे। २। १। ४७।

सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायाम्। अवतप्ते नकुलस्थितं तव तदेव (६५)।

## पात्रेसमितादयश्च (६६)। २। १। ४८।

(६४) नित्यसमासोऽयमिति तेन पुरुषोत्तमशब्दस्यापि संज्ञाशब्दत्वेन तत्रापि नित्यसमासतया पुरुषेषूत्तम इति विग्रहस्यानुचितत्वमेवेति द्रष्टव्यम्।

(६५) नकुलेन स्थितं नकुलस्थितमवतप्ते नकुलस्थितमिति वाक्ये तदेव समासरूपमपि तथैवेत्यर्थः। गतिकारकोपपदानां कृद्ग्रहणेन ग्रहणमिति परिभाषया नकुलस्थितशब्दस्यापि कृदन्तत्वात् तत्पुरुषे कृति बहुलमिति (६।३।१४) सप्तम्या अलुक्। अत्र अवस्थितत्वप्रतिपत्त्या निन्दा गम्यते इति बोध्यम्।

(६६) पात्रेसमित पात्रेबहुल उदुम्बरमशक उदुम्बरकृमि कूपकच्छप अवटकच्छप कूपमण्डूक कुम्भमण्डूक उदपानमण्डूक नगरकाक नगरवायस

एते निपात्यन्ते चेपे। पात्रेसमिताः। भोजनसमये एव सङ्गताः न तु कार्य्ये। गेहेशूरः। गेहेनर्द्दी। आकृतिगणोऽयम्। चकारोऽवधारणार्थः। तेनैषां समासान्तरे घटकतया प्रवेशो न। परमाः पात्रेसमिताः।

## पूर्व्वकालैकसर्व्वजरत्पुराणनवकेवलाः (६७) समानाधिकरणेन। २। १। ४९।

विशेषणं विशेष्येणेति सिद्धे पूर्व्वनिपातनियमार्थं(६८)सूत्रम्। एकशब्दस्य दिक्संख्ये संज्ञायामिति(३५५पृ०)नियमबाधनार्थञ्च(६९)पूर्व्वं स्नातः पश्चादनुलिप्तः। स्नातानुलिप्तः। एकनाथः। सर्व्वयाज्ञिकाः। जरन्नैयायिकाः। पुराणमीमांसकाः। नवपाठकाः। केवलवैयाकरणाः।

---

मातरिपुरुष पिण्डीशूर पितरिशूर गेहेशूर गेहेनर्द्दिन् गेहेक्ष्वेडि गेहेविजिति गेहेव्याड़ गेहेमेहिन् गेहेदाहिन् गेहेदृप्त गेहेधृष्ट गर्भेतृप्त आखनिकवक गोष्ठेशूर गोष्ठेविजिती गोष्ठेक्ष्वेड़ गोष्ठेपटु गोष्ठेपण्डित गोष्ठेप्रगल्भ कर्णेटिरिटिरा कर्णेचुरचुरा पात्रेसमितादयः। आकृतिगणोऽयम्।

(६७) अत्र पूर्वकालशब्दोऽर्थपरोऽन्ये षट् स्वरूपपराः पूर्व्वः कालो यस्य स पूर्व्व कालः लक्षणया तद्वाचकः शब्दः प्रत्यासत्त्या परकालिकवस्तुवाचिना समस्यते एवमन्येऽपीति।

(६८) नियमार्थमिति एषां विशेषणत्वानैयत्येऽपि एषामेव विशेषणत्वार्थम्।

((६९) नियमबाधनार्थञ्चेति तेन सुख्याद्यर्थकैकशब्दस्य नात्र ग्रहणमिति भावः। नवशब्दस्य पुराणसाहचर्य्यात् नूतनार्थकतयैकशब्दस्यैव नियमबाधकः।

(७०) नियमार्थमिति विशेषणं विशेष्येणेत्यनेनैव(३६९पृ०)सिद्धे तत्प्रकृते संज्ञा-

गमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सच्च्युतः । **समः सुटि** ।८।३।५। समो रुः स्यात् सुटि । अलोऽन्त्यस्य । **अत्रानुनासिकः पूर्वस्य तु वा** ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात् । **अनुनासिकात्परोऽनुस्वारः** ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः[1] स्यात् । खरवसानयोर्विसर्जनीयः । **विसर्जनीयस्य सः** ।८।३।३४। खरि विसर्जनीयस्य सः स्यात् । एतदपवादे वाशरीति पाक्षिके विसर्गे प्राप्ते । * **संपुंकानां सो वक्तव्यः**[2]। संस्स्कर्ता । सँस्स्कर्ता । * **समो वा लोपमेके**[3] **इति भाष्यम्** । लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम् । द्विसकारं तूक्तमेव । तत्रानचि चेति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम् । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वेनानुस्वारस्याप्यच्त्वात्[4] । अनुनासिकवतां त्रयाणां शरःखय इति कद्वित्वे षट् । अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश । एषामष्टादशानां तकारस्य द्वित्वे वचनान्तरेण[5] पुनर्द्वित्वे च एकतं द्वितं त्रितमिति चतुष्पञ्चाशत् । अणोऽनुनासिकत्वेऽष्टोत्तरशतम् । **पुमः खय्यम्परे** ।८।३।६। अम्परे खयि पुम्शब्दस्य रुः स्यात् । व्युत्पत्तिपक्षेऽप्रत्ययस्येति षत्वपर्युदासात्

---

त्यनिष्टं प्रसज्येत । पदस्य यो ङम् तस्येति वैयधिकरण्येन व्याख्यायामपि कुर्वन्नास्ते इत्यत्र णत्वं प्रसज्येत, 'पदान्तस्य' इति निषेधस्याप्रवृत्तेः । यद्यपि बहिरङ्गपरिभाषया ङमुड्विधेरसिद्धत्वादिष्टं सिध्यति, तथापि यथोद्देशपक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेः प्रसज्यत एव णत्वमिति यथोक्तं व्याख्यानमेव साध्विति दिक् ॥—**सुगण्णीश** इति । ण्यल्लोपौ न स्थानिवत् । पूर्वत्रासिद्धे तन्निषेधात् ॥ ननु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वाण्णुट् स्यादिति चेन्न । 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात् । अत एव परमवाचौ परमगोदुहौ परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न । प्राचा तु 'ङञि च पदे' इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्येति व्याख्यानान्ङमुण्नेत्युक्तं, तदनेन प्रत्युक्तम् । इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात् ॥—**समः सुटि** ॥ यद्यपि मोऽनुस्वारेण सिद्धं, तथापि अनुनासिकत्रिसकारसिद्ध्यर्थमिदम् ॥—**अत्रानुनासिकः**— । अयमधिकारी विधिर्वेति पक्षद्वयम् । आद्ये अत्र ग्रहणमनर्थकम् । अधिकारादेव रुप्रकरणलाभात् । तुशब्दस्तु अधिकारपक्षे परस्मात्कार्यिणः पूर्वकार्यस्य विशेषद्योतनार्थः । परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक इति ॥ विधिपक्षे (तुशब्दः) व्यर्थः । वाग्रहणं स्पष्टार्थम् । 'अनुनासिकात्परः' इति ज्ञापकादेव सिद्धेः । नहि विकल्पं विना 'अनुनासिकं विहाय' इत्यनुनासिकाभावपक्षः संभवति । इदमेव ध्वनयितुं वृत्तौ तुवेतिशब्दावनुक्त्वा रोः पूर्वस्यानुनासिकः स्यादित्येवोक्तम् ॥—**रोः पूर्वस्ये**ति । उपलक्षणमेतल्लोपस्यापि । अत्र रुप्रकरणे यो विधिस्ततः पूर्वस्येति निष्कृष्टोऽर्थः । एवं रोः पूर्वस्मात्पर इत्यस्यापि रुप्रकरणे यो विधिस्ततः पूर्वस्मात्पर इत्यर्थो बोध्यः ॥—**अनुनासिकात्**—॥ ल्यब्लोपे पञ्चमीत्याह—**अनुनासिकं विहाये**ति । अनुनासिकाभावपक्षे इत्यर्थः ॥ पूर्वस्येति प्रकृतस्य तु विभक्तिविपरिणामेन पञ्चम्यन्ततेत्यभिप्रेत्याह—**रोः पूर्वस्मादिति** । संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात् 'अवत्सा धेनुरानीयताम्' इत्यत्रेव संभावितानुनासिकत्वगुण एवोपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन संबध्यते इत्यभिप्रेत्याह—रोः पूर्वस्मादिति इति तु मनोरमायामवतारितं, तत्तु पूर्वस्येत्यनुवर्तनं विभक्तिविपरिणामं चानपेक्ष्य लौकिकन्यायेनैवेष्टं सिध्यति इत्याशयेनोक्तमित्याहुः ॥ —**अनुस्वारागम** इति । आगमत्वं च परशब्देनैव लभ्यते ॥ यथा 'पूर्वौ तु ताभ्यामैच्' इत्यत्र पूर्वशब्देन ऐचोरागमत्वमिति भावः॥—**विसर्जनीय**—॥—**खरी**ति । एवञ्च 'खरवसानयोः—' इति सूत्रान्मण्डूकप्लुत्यानुवर्तते ॥—**संस्स्कर्ते**ति । 'संपरिभ्याम्—' इति करोतेः सुट् ॥ ननु अनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेति अनुस्वारपक्षे त्रिसकारकं रूपं कथं स्यादित्याशङ्क्याह—**अनुस्वारविसर्गेत्यादि** ॥—**अकारोपरी**ति । यदि लिकारोपरि पठ्येरन् तर्हि पयःसु यशःसु इत्यादौ इणः परस्येति षत्वं स्यादिति भावः॥—**अच्त्वादि**ति । न चैवं हरिः कर्ता हरिं स्मरेत् रामः पातीत्यादौ यणादिप्रसङ्गः, त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात् ॥—**अनुस्वारस्यापि द्वित्वे** इति । अपिशब्दात्ककारस्य ॥—**वचनान्तरेणे**ति । 'अचो रहाभ्याम्' इति कृतेपि 'यणो मयः' इति भवत्येवेति भावः॥—**पुमः खयि**— ॥ पुंसः संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणम् । अम्परः इति बहुव्रीहिः ॥—**पर्युदासादि**ति । 'इदुदुपधस्य—' इति षत्वविधायके सूत्रे इति भावः ॥—**ख्याञादेशेने**ति 'चक्षिङः ख्याञ्' इत्यत्र खशादिरयमादेशः । असिद्धकाण्डे णत्वान्तरं 'शस्य यो वा' इति स्थितमिति वक्ष्यते । एवं च यत्वस्यासिद्ध-

---

१ अनुस्वारागम इति—अयं चानवयव एव, अवयवत्वे मानाभावात् । २ सो वक्तव्य इति—समस्सुटीत्यत्र सकारं प्रश्लिष्य 'समः सुटि' 'पुमः खय्यमपरे' 'कानाम्रेडिते' इति सूत्रत्रयेण सकारो विधेय इति भावः । ३ समो वेति—रुप्रकरणे इति व्याख्यानस्यानेन फलं द्रष्टव्यम् । ४ पाठस्येति—अयं च पाठोऽनित्यः, 'नुम्विसर्जनीय—' इति सूत्रे 'अट्कुप्विति' सूत्रे च अनुस्वारोपलक्षकनुम्ग्रहणात् । अतएव यज्ञशब्दे यमपरत्वेऽपि जद्वित्वं भवति । ५ वचनान्तरेणेति—'लक्ष्ये लक्षणस्य'—इति न्यायस्तु एकस्यैव पुनः प्रवृत्ताविति भावः ।

## दिक्संख्ये संज्ञायाम् २।१।५०।

समानाधिकरणेनत्यापादपरिसमाप्तेरधिकारः। संज्ञायामेवेति (७०) नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः। नेह उत्तरा वृक्षाः। पञ्च ब्राह्मणाः।

## तद्धितार्थोत्तरपदसमाहारे च(७१)।२।१।५१।

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये

यामेव दिक्संख्ये समस्येते नान्यत्रेति नियामकमिदमिति भावः। त्रिलोकनाथइत्यादौ तु उत्तरपदद्विगुरिति असंज्ञकत्वेऽपि न क्षतिः। पूर्वसूत्रमित्यादौ संज्ञाभावेऽपि कालवाचकत्वात् समासः। न च तत्र दिग्विशेषबोधः उदयगिर्य्यादिसम्बद्धायाएव दिक्त्वात् एवं देशवाचकेनापि समासइति द्रष्टव्यम्।

(७१) तद्धितार्थोत्तरेत्यादिसूत्रे वैषयिके आधारे सप्तमी। विषयत्वञ्चानेकविधमित्याह तद्धितार्थे विषये इत्यादि तद्धितार्थे वाच्ये इति तु नोक्तं पाञ्चनापितिरित्यादौ समासेनोक्तत्वात्तदुत्तरं तद्धितानुत्पत्तिप्रसङ्गात्। अतएव द्विगोर्लुग्धितस्य लुग्वचनं चरितार्थमन्यथा तदर्थस्य समासेनोक्ततयाऽप्रयोगात् तदनुत्पत्तौ कथं लोपः स्यात्। समाहारः समूहः स चावयवाभिन्नोपि बुद्धिकल्पितभेदवान्। अतएव समूहं प्रति तस्योपसर्ज्जनत्वं तेन पञ्चखट्वीत्यादिसिद्धिः तत्र खट्वाशब्दस्योपसर्ज्जनत्वेन ह्रस्वे कृतएवादन्तत्वे सत्येव ङीपः प्रवृत्तेरित्यन्यत्र विस्तरः। अत्रेदं बोध्यं समूहस्य तद्धितार्थत्वेऽपि सामूहिकस्य तद्धितस्य लुकि पञ्चगवमित्यत्र गोरतद्धितलुकीति(९५६४०) टच् न स्यादिति विषये इत्युक्तमेवञ्च समाहारे वाच्ये इति तस्य पृथगुपादानसामर्थ्यादेव समासान्तइत्याशयेन वाच्ये इति व्याख्यातं मति। तथाच समासेनैव समाहारस्योक्तत्वात् न सामूहिकतद्धितोत्पत्तिरिति भावः।

दिक्संख्ये प्राग्वद्वा। पूर्वस्यां शालायाम्भवः। पौर्व्वशाल। समासे कृते दिक्पूर्व्वपदादसंज्ञायां ञ इति (५५८सू०) ञः। सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भावः। (७२)*। आपरशालः। पूर्व्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्व्वयोस्तत्पुरुषः तेन शालाशब्दे आकार (७३) उदात्तः। पूर्वशालाप्रियः। द्विगु समाहारो नास्त्यनभिधानात्। संख्यायामस्तद्धितार्थे। षण्णां मातृणामपत्यम् षाण्मातुरः (७४) पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहाववान्तरतत्पुरुषस्य विकल्पे प्राप्ते (७५) द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्य (७६) समासवचनम्।

## गोरतद्धितलुकि। ५। ४। ९२।

(७२) एतद्वार्त्तिकमुत्तरपूर्व्वेत्यादिद्वन्द्वसिद्ध्यर्थमवश्यमारम्भणीयं तेन प्रकृते पुंवद्भावेनोपपत्तावपि न विफलतेति बोध्यम्।

(७३) उदात्तइति अयति त्ववान्तरतत्पुरुषे पूर्व्वपदप्रकृतिस्वरेण पूर्व्वशब्दस्याद्युदात्तत्वमेव स्यादिति भावः।

(७४) षाण्मातुरइति मातुरुत्संख्यासंभद्रपूर्व्वाया:(५०५सू०)इत्युदादेशः अनपत्य इत्युक्तेर्द्विगोर्लुगिति (४६१सू०) न लुक्।

(७५) विकल्पे प्राप्तेइति बहुविभाषयेति शेषः। ततश्च टजभावे पञ्चगोधनइत्यपि स्यादिति भावः।

(७६) एतच्चोभयत्रापि नित्यताबोधकमिति बोध्यम् अतएवैतद्वार्त्तिकमुक्त्वा समुदायवृत्तावयवानां कदाचिदप्यवृत्तिर्मा भूदिति प्रयोजनमुक्तं भाष्ये।

द्वन्द्वोत्तरतत्पुरुषोदाहरणन्तु, वाक् च दृषच्च प्रिये अस्य वाक्दृषद्प्रियएवं कृत्वोपानत्प्रियइति इह त्रिपदे बहुव्रीहौ कृते पूर्व्वं नित्यद्वन्द्वत्वेन समासान्तटजपि नित्यएव। मनो०

गोऽन्तात् (७७) तत्पुरुषाट्टच् स्यात् समासान्तो न तद्धितलुकि। पञ्चगवधनः। पञ्चानां गवां समाहारः।

**संख्यापूर्वो द्विगुः। २। १। ५२।**

तद्धितार्थ(३५५पृ०) त्यत्रोक्तः (७८) संख्यापूर्वो द्विगुः स्यात्।

**द्विगुरेकवचनम्। २। ४। १।**

द्विग्वर्थः समाहारएकवत् (७९) स्यात्। स नपुंसक (८०) मिति (३९५पृ०) नपुंसकत्वम्। पञ्चगवम्।

---

(७७) गोऽन्तस्य तत्पुरुषस्य समासस्यान्तष्टच् स्यादिति सूत्रार्थः फलितगुमाह गोऽन्तादिति अतद्धितलुकीति किं पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यत्र तद्धितठकोऽध्यर्द्धपूर्व्वेति (६२२पृ०) लुकि मा भूत्।

(७८) तद्धितार्थेत्यत्रोक्त इति अयं भावः पूर्व्वसूत्रविषये एवेयं संज्ञा एतदर्थमेव सूत्रद्वयं कृतमन्यथा दिक्संख्ये संज्ञायामतद्धितार्थोत्तरपदसमाहारे चित्येव ब्रूयात्। तेन सप्तर्षय इत्यत्र इगन्त (३५७पृ०) पूर्व्वपदप्रकृतिस्वरत्वं न भवति किन्तु समासान्तोदात्तएव। एवञ्च संख्यापूर्व्वस्त्रिविधः तद्धितार्थे विषये "उत्तरपदे च परतः" समाहारे वाच्ये चेति तत्र संख्यापूर्व्वो यः समासः स इत्यर्थः। तद्धितार्थे यथा पञ्चकपालः संस्कृतं भक्षा (६२८पृ०) इत्यणः द्विगोर्लुगनपत्ये इति (४८१पृ०) लुक्। उत्तरपदे यथा पञ्चनावप्रियः नावो द्विगोरिति (३८५पृ०) समासान्तष्टच्। समाहारे पञ्चमूली द्विगोरिति (२२०पृ०) ङीप्।

(७९) द्विगुरेकवचनमिति वक्तीतिवचनं बाहुलकात् कर्त्तरि ल्युट् सामान्येन नपुंसकम् द्विगुः समासः एकार्थप्रतिपादको भवतीत्यर्थः न हि वस्तुतोनेकार्थस्यैकार्थ्यं सम्भवतीत्यतोऽतिदेशोऽयमित्याशयेनाह एकवदिति। तथाच समाहारे यो द्विगुस्तदर्थ एकवत् स्यादित्यर्थः।

(८०) स नपुंसकमिति परवल्लिङ्ग(२९०पृ०)मित्यस्यापवादः। स समाहारो द्विगुर्द्वन्द्वश्च नपुंसकं स्यादितिसूत्रार्थः।

## कुत्सितानि कुत्सनैः । २ । १ । ५३ ।

कुत्स्यमानानि कुत्सनैः सह प्राग्वत् । वैयाकरणखसूचिः (८१) मीमांसकदुर्दुरूढः (८१) ।

## पापाणके (८२) कुत्सितैः । २ । १ । ५४ ।

पूर्व्वसूत्रापवादः । पापनापितः । अणककुलालः ।

## उपमानानि(८४) सामान्यवचनैः । २। १ ।२२

घनइव श्यामः घनश्यामः । इह पूर्व्वपदन्तत्पुरुषे लाक्षणिक-

---

(८१) यः पृष्टः सन् प्रश्नं विस्मारयितुं खं गगनं निर्मलत्वादिना सूचयत्यसौ खसूचिः पूर्व्वनिपातार्थं सूत्रम् ।

(८२ दुर्दुरूढः दृष्टकर्म्मकर्त्तरि रूढोऽयं शब्दः ।

(८३) "कुपूयकुत्सितावद्यगर्ह्यखेटाणकाः समा" इत्यमरोक्तेरणकशब्दः कुत्सितवचनः पापशब्दोऽपि तथाप्रसिद्धः कुत्स्यमानयोरप्यनयोः परनिपातार्थमेतदारम्भइयि बोध्यम् ।

(८४) उपमानानीति । उपमीयते येन तदुपमानं उपपूर्व्वात् माङः करणे ल्युट् उपपूर्व्वकस्य माङ् सादृश्यहेतुके परिच्छेदे रूढः येन वस्तुना सादृश्येन वस्त्वन्तरं परिच्छिद्यते तदुपमानमित्यर्थः समानो धर्म्मः सामान्यं चातुर्व्वर्ण्यादित्वात् (६५७सू०) स्वार्थे ष्यञ् उपमानोपमेयसाधारणो धर्म्मः सामान्यं तद्विशिष्टवचनैरित्यर्थः न तु केवलं साधारणधर्म्मवचनैरिति । एतच्च वचनपदाल्लभ्यते पूर्व्वं ये सामान्यमुक्त्वा तद्वति द्रव्ये पर्य्यवस्यन्ति ते तथा भवन्तीति बोध्यम् । तच्च सामान्यविशिष्टं उपमानस्य सम्बन्धि तेन च सम्बन्धित्वादाक्षिप्तमुपमेयमेव विधाप्यते ।

मिति (८५) पूरयितुम् लौकिकविग्रहे इवशब्दः प्रयुज्यते। पूर्व्वनिपातनियमार्थम् (८६) सूत्रम्।

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। २। १। ५६।

उपमेयं (८७) व्याघ्रादिभिः सह प्राग्वत्साधारणधर्म्मस्याप्रयोगे सति। विशेष्यस्य पूर्व्वनिपातार्थम् सूत्रम्। पुरुषव्याघ्रः, नृसोमः। व्याघ्रादिराकृतिगणः। सामान्याप्रयोगे किम् पुरुषो व्याघ्र इव शूरः।

(८५) लाक्षणिकमिति अतएव सामानाधिकरण्यात् मृगीव चपलेति वाक्ये मृगचपलेति पुंवद्भावः। उत्तरपदोपस्थापितस्य सामान्यचपलत्वादिव्याकारकस्यैव सादृश्यं गृह्यते सन्निधानात्। लाक्षणिकत्वेऽपि भूतपूर्व्वगत्या वाक्यार्थबोधकत्वादुपमानपरतेत्यवसेयम्।

(८६) पूर्व्वनिपातेति अन्यथा खञ्जकुब्जवदनियमः स्यादिति भावः।

(८७) उपमेयमिति उपमेयत्वमुपमानपरिच्छेद्यत्वम्। उपमानोपमेययोः समभिव्याहारे उपमानस्य विशेषणतेत्याह विशेष्यस्येति। पुरुषो व्याघ्र इव शूर इति विग्रहे शूरत्वापेक्षयापि पुरुषस्य प्रधानत्वात् राजपुरुषः सुन्दर इतिवत् विशेषणयोगसम्भवात् सामान्याप्रयोग इत्युक्तम्। अयञ्च समास उपमानोपमेययोः समानलिङ्गत्वएव भवति विभिन्नलिङ्गत्वे मयूरव्यंसकादित्वात् समासः स च रूपकरूप इति। चन्द्रेन्दुः। व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृक वृष वराह हस्तिन् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव। इत्येते व्याघ्रादयः। आकृतिगणत्वेन घनश्यामः नृसोमः मुखपद्मम् मुखकमलम् करकिसलय इत्यादिसिद्धिः।

## विशेषणं(८८)विशेष्येण बहुलम् । २ । १ । ५७

भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत् । नीलमुत्पलम् नीलोत्पलम् । बहुलग्रहणात् क्वचिन्नित्यम् । कृष्णसर्पः । क्वचिन्न । रामो जामदग्न्यः ।

## पूर्व्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च । २ । १ । ५८ ।

पूर्व्वनिपातनियमार्थमिदम् । पूर्व्ववैयाकरणः । अपराध्यापकः । अपरस्यार्द्धे पश्चभावो वक्तव्यः * । अपरश्चासावर्द्धश्च । पश्चार्द्धः । कथमेकवीरइति पूर्ब्बकालैकेति (२५४७०) बाधित्वा परत्वादनेन समासे वीरैक इति हि स्यात्बहुलग्रहणाद् (८९)भविष्यति ।

## श्रेण्यादयः (९०) कृतादिभिः । २ । १ । ५९ ।

(८८) विशेषणमिति विशेषणत्वादि विषयताविशेषरूपं स्वरूते व्याख्यानात् भेद्यभेदकशब्दाभ्यामपि तदेवाभिधीयते । अत्रेदं बोध्यं विशेष्यविशेषणभावे न यथेष्टता किन्तु शब्दस्वाभाव्याद् नियमानियमौ तथाहि गुणक्रियाशब्दसमभिव्याहारे जातेरेव विशेष्यता यथा नीलोत्पलं शुक्लवस्त्रं पाचकब्राह्मणइत्यादिनियमः । गुणशब्दयोः क्रियाशब्दयोर्गुणक्रियाशब्दयोश्च न नियमस्तेन खञ्जकुब्जः कुब्जखञ्जः पाचकपाठकः पाठकपाचकः खञ्जपाठकः पाठकखञ्जइत्यादि प्रयोगः । मनो०

(८९) बहुलेति एकेषु सत्स्वेषु वीरयते पराक्रमतेइति वा क्वचित्प्रयोगः ।

(९०) आद्यआदिशब्दो व्यवस्थावाची द्वितीयस्तु प्रकारवाची ।

श्रेणि पूग मुकुन्द राशि निचय विशेष विधान पर इन्द्र देव मुण्ड

श्रेण्यादिषु च्व्यर्थवचनं कर्त्तव्यम्। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः (८१)।

## क्तेन नञ्विशिष्टेनानञ्। २। १। ६०।

नञ्विशिष्टेन (८२) क्तान्तेनानञ् क्तान्तं समस्यते। कृतञ्च तदकृतञ्च कृताकृतम्। शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् *। शाकप्रियः पार्थिवः शाक (८३) पार्थिवः। देवब्राह्मणः।

भूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय विशिष्ट पटु पण्डित कुशल चपल निपुण कृपण। इत्येते श्रेण्यादयः। एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः।

कृत मित मत भूत उक्त युक्त समाज्ञात समाम्नात समाख्यात संभावित संसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत दृष्ट कलित दलित उदाहृत विश्रुत उदित। कृतादिराकृतिगणः।

(८१) च्व्यन्तानान्तु कुगतीत्यनेन(१७१सू०)समासे च्वौ चेति(७३०सू०)दीर्घः इह तूक्तार्थानामप्रयोगान्न च्विरिति बोध्यम्।

(८२) नञ्विशिष्टेति सावधारणपरोऽयं तेन नञ्मात्रयुक्तेन क्तान्तेन नञ्रहितं क्तान्तं समस्यते इत्यर्थः। नुडधिकेऽपीति वाच्यं तेन अशितञ्चानशितञ्चेति अशितानशितम्। एकदेशकरणात् देशान्तरस्याकरणात् असमाप्तं यत्तदेव कृताकृतमिति क्रियाऽसमाप्तिद्योतकोऽयं नञिति बोध्यम् पूर्वनिपातनियमार्थञ्चेदम्।

(८३) पृथिव्या ईश्वरः पार्थिवस्तस्येश्वर(६२६५सू०)इत्यण् शाकप्रिय इति बहुव्रीहिस्तस्य पार्थिवशब्देन समासे पूर्वस्य सोत्तरपदस्य प्रियशब्दस्य लोपः एवं सर्वत्र शाकादिशब्दस्य शाकप्रयादौ लक्षणया तत्प्रयोगसमर्थनेऽपि सुखार्थं शाकप्रियपार्थिव इति प्रयोगनिवृत्त्यर्थं सूत्रम्॥

**सन्महत्परमोत्कृष्टाः (९४) पूज्यमानैः । २ । १ । ६१ ।**

सद्वैद्यः । वक्ष्यमाणेन(१८७पृ०)महत आकारः । महावैयाकरणः पूज्यमानैः किम् । उत्कृष्टो गौः पङ्कादुद्धृत इत्यर्थः ।

**वृन्दारकनागकुञ्जरैः पूज्यमानम् । २ । १ । ६२ ।**

गोवृन्दारकः । व्याघ्रादे(९५)राकृतिगणत्वादेव (१५९पृ०)सिद्धे सामान्यप्रयोगार्थं वचनम् ।

**कतरकतमौ जाति(९६)परिप्रश्ने । २ । १ । ६३ ।**

कतरकठः । कतमकलापः । गोत्रञ्च चरणैः सहेति(२३८पृ०) जातित्वम् ।

**किं क्षेपे । २ । १ । ६४ ।**

कुत्सितो राजा किंराजा (९७) यो न रक्षति ।

(९४) गुणक्रियाशब्दैः सदादीनां समासे पूर्वनिपातनियमार्थमिदं सूत्रम् महापापमित्यादौ पापस्य महत्त्वेन स्तावे पूजास्त्येवेति बोध्यम् ॥

(९५) वृन्दारकशब्दो देवजातिवाची नागशब्दो गजसर्पोभयवाची कुञ्जरः प्रसिद्धस्तेषामुपमानत्वेनैव पूज्यवाचित्वादुक्तार्थत्वमाशङ्क्याह व्याघ्रादेरिति । तेन गोकुञ्जरः स्थूल इत्यादौ स्थूलत्वरूपसामान्यप्रयोगेऽपि एतत्सूत्रबलेन समास इति भावः ।

(९६) भवतां कतमपण्डित इत्यादौ समासाभावाय जातीत्युक्तम् ।

(९७) क्षेपे किम् । को राजा पाटलिपुत्रे इत्यादौ प्रश्नपरे न । प्रकृतोदाहरणे किमः क्षेपे इति(४५५पृ०) समासान्तनिषेधः ।

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः ।२।१।६५ ।

तत्पुरुषः(९८) समानाधिकरणः कर्म्मधारयः ।१।२।४२।

पुंवत्कर्मधारयजातीयदेशीयेषु । ६ । ३ । ४२ ।

कर्म्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्पर(९९) ऊङभावो यस्मिन् तथाभूतम्पूर्व्वं पुंवत् । पूरणीप्रियादिष्वप्राप्तः पुंवद्भावो विधीयते । महानवमी । कृष्णचतुर्द्दशी । महाप्रिया । तथा कोपधादेः(१००)प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते । पाचकस्त्री । दत्तभार्य्या । पञ्चमभार्य्या । स्रौघ्नभार्य्या । सुकेशभार्य्या । ब्राह्मणभार्य्या । एवम्पाचकजातीया पाचकदेशीयेत्यादि । इभपोटा (१०१) ।

(९८) तत्पुरुषाधिकारे पुनस्तत्पुरुषग्रहणमेकसंज्ञाधिकारात् कर्म्मधारयसंज्ञया तत्पुरुषसंज्ञाया बाधः स्यात् स माभूदित्येतदर्थमन्यथा तत्पुरुषे विहितसमासान्तस्य कर्म्मधारये प्रवृत्तिर्न स्यादिति बोध्यम् । समानाधिकरण समानाधिकरणावयवकइत्यर्थो व्याख्यानात् ।

(९९) स्त्रियाः पुंवत् भाषितपुंस्कादनूङ्समानाधिकरणे इत्यतः(४०१पृ०)स्त्रियाः, पुंवत्, भाषितपुंस्कादनङिति च पदान्यनुवर्त्त्य यथायोग्यं योजयन्नाह भाषितपुंस्कादिति अपूरणीप्रियादिष्विति तु नानुवर्त्तते व्याख्यानादित्याह पूरणीत्यादि । महानवमीत्यत्र पुंवत्त्वे आन्महत(२८७पृ०)इत्यात् ।

(१००) कोपधादेरिति न कोपधाया इति संज्ञापरणस्येति वृद्धिनिमित्तस्य चेतिस्वाङ्गाच्चेति जातेश्चेति(४०८,४०९पृ०) पञ्चसूत्र्या निषिद्धस्य पुनर्ग्रहणार्थमिदम् ।

(१०१)इभः पोटेत्यादिविग्रहः । जातेःपूर्व्वं निपातार्थं पोटायुवतीत्यादि । सूत्रं ।

पोटा स्त्रीपुंसलक्षणा। इभयुवतिः। अग्निस्तोकः। उदश्वित् (१०२) कतिपयम्। गृष्टिः सकृत्प्रसूता। गोगृष्टिः। धेनु र्नवप्रसूतिका। गोधेनुः। वशा बन्ध्या। गोवशा। वेहद्गर्भघातिनी। गोवेहत्। बष्कयणी अतरुणवत्सा। गोबष्कयणी। कटप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्त्तः (१०३)।

प्रशंसावचनैश्च (१०४)। २। १। ६६।

एतैः सह जातिः प्राग्वत्। गोमतल्लिका। गोमचर्चिका। गोप्रकाण्डम्। गवोद्घः। गोतल्लजः। प्रशस्तो गौरित्यर्थः। मतल्लिकादयो नियतलिङ्गा नतु विशेष्यनिघ्नाः। जातिः किम् कुमारी मतल्लिका।

युवा खलतिपलितवलिनजरतीभिः। २। १। ६७।

पूर्व्वनिपातनियमार्थं सूत्रम्। लिङ्गविशिष्टपरिभाषया युव-

(१०२) "तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्ज्जलं" मित्यमरोक्तम्।

(१०३) कठधूर्त्त इत्यत्र कठत्वं न कुत्स्यते ऽतः कुत्सितानि कुत्सनैरित्यनेन (७५८०) न गतार्थता प्रवृत्तिनिमित्तकुत्सायामेव तस्य प्रवृत्तेरिति विवेकः। "जनयन्ति कुतूहलान्तिं धूर्त्ता वक्ता बालमृत्यमानाः" मित्यत्र धूर्त्तवका इति प्रामादिकमेवेति। मनो॰

(१०४) प्रशंसावचनैश्चेति सूत्रे वचनग्रहणं रूढिमात्रशब्दपरिग्रहार्थं तेन ये यौगिकाः प्रशस्तशोभनरमणीयादयः ये च विशेषवचनाः शुचिमृद्वादयः ये च गौण्या वृत्त्या प्रशंसां बोधयन्ति सिंहोमाणवक इत्यादयस्ते सर्व्वे व्युदस्यन्ते। मनो॰

ᳲकᳲपयोः प्राप्तौ । अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ । संपुंकानामिति सः । पुँस्कोकिलः । पुंस्कोकिलः । पुँस्पुत्रः । पुंस्पुत्रः । अम्परे किम् । पुंक्षीरम् । खयि किम् । पुंदासः । ख्याञादेशे न । पुंख्यानम् । ॥ नश्छव्यप्रशान् ।८।३।७। अम्परे छवि नकारान्तस्य पदस्य रुः स्यात् न तु प्रशान्शब्दस्य । विसर्गः । सत्वम् । श्चुत्वम् । शार्ङ्गिँश्छिन्धि । शार्ङ्गिंश्छिन्धि । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । पदस्य किम् । हन्ति । अम्परे किम् । सन्त्सरुः खड्गमुष्टिः । अप्रशान् किम् । प्रशान्तनोति । ॥ नॄन्पे ।८।३।१०। नॄनित्यस्य रुः स्याद्वा पकारे परे । ॥ कुप्वोः ᳲकᳲपौ च ।८।३।३७। कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः । चाद्विसर्गः । येननाप्राप्त इतिन्यायेन विसर्जनीयस्य स इत्यस्यापवादोऽयम् । न तु शर्परे विसर्जनीय इत्यस्य । तेन वासःक्षौममित्यादौ विसर्ग एव । नॄँᳲपाहि । नॄँᳲपाहि । नॄँःपाहि । नॄंःपाहि । नॄन्पाहि । ॥ कानाम्रेडिते ।८।३।१२। कान्नकारस्य रुः स्यादाम्रेडिते परे । संपुंकानामिति सः । यद्वा । ॥ कस्कादिषु च ।८।३।४८। एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यत्र तु सः । ᳲकᳲपयोरपवादः इति सः । काँस्कान् । कांस्कान् । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालम् । आकृतिगणोऽयम् । ॥ संहितायाम् ।६।१।७२। इत्यधिकृत्य । छे च ।६।१।७३। ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम् । श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः । ततश्चर्त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः । तस्य चर्त्वेन चः । श्चुत्वस्यासिद्धत्वाच्चोः कुरिति कुत्वं न । स्वच्छाया । शिवच्छाया । ॥ आङ्माङोश्च ।६।१।७४। एतयोश्छे परे तुक् स्यात् । पदान्ताद्वेति विकल्पापवादः । आच्छादयति । माच्छिदत् । ॥ दीर्घात् ।६।१।७५। दीर्घाच्छे परे तुक् स्यात् । दीर्घस्यायं तुक् न तु छस्य । सेनासुराच्छायेति ज्ञापकात् । चेच्छिद्यते । ॥ पदान्ताद्वा ।६।१।७६। दीर्घात्पदान्ताच्छे परे तुग्वा स्यात् । लक्ष्मीच्छाया । लक्ष्मीछाया ॥ इति हल्संधिः ॥

तथा अम्परत्वाभावात् 'पुमः खयि–' इति रुत्वं नेत्यर्थः ॥—**पुंख्यानमिति** । चक्षिङो 'ल्युट् च' इति ल्युटि ख्याञादेशः॥ ननु आदेश इह दुर्लभः 'वर्जने प्रतिषेधः' 'असनयोश्च' इति वार्तिकादिति चेत्सत्यम् । '**बहुलं तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थम्**' इति वार्तिके बहुलग्रहणात्संमाधेयम् । विस्तरस्त्विह मनोरमायामनुसंधेयः ॥—**त्रायस्वेति** ॥ 'त्रैङ् पालने' लोटि शप्यायादेशः ॥—**प्रशानिति** ॥ प्रपूर्वात् शाम्यतेः क्विप् । 'अनुनासिकस्य–' इति दीर्घः । 'मो नो धातोः' इति नः । तस्यासिद्धत्वान्नलोपो न ॥—**नॄन्पे** ॥ पकारोपरि अकार उच्चारणार्थः । तेन नॄः पुनातीत्यादि सिद्धम् । 'उभयथर्क्षु' इत्यत उभयथेति अनुवृत्तेर्विकल्पः फलित इत्याशयेनाह—**रुः स्याद्वेति** ॥—**कुप्वोः ᳲकः–** ॥ अत्र कुप्वोरिति रेफस्य विसर्गः । जिह्वामूलीयस्य खत्वात् । 'खर्परे शरि–' इति विसर्गस्यास्य लोपः, जिह्वामूलीयस्य शर्त्वात् । 'वा शरि–' इति विसर्ग एव वा ॥ आदेशयोः कपावुच्चारणार्थौ ॥—**चाद्विसर्ग** इति । प्राचा तु–चाद्विकल्पः इत्युक्तं, तदसत् । ᳲकᳲपाभ्यां मुक्ते विसर्जनीयस्य सत्वप्रसङ्गात् ॥—**कानाम्रेडिते** । 'कान्कानि' इति वाच्यं आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात् । इह मा भूत् । कान् कान् पश्यसीति । अत्र एकः किंशब्दः प्रश्ने । द्वितीयः क्षेपे । कान् कुत्सितान् पश्यसीत्यर्थः ॥ वार्तिके कान्ग्रहणाभावेऽपि सत्वं सिध्यतीत्याशयेनाह—**यद्वेति** । संपुमोस्तु वार्तिकेनैव सत्वम् । कस्कादिषु संस्कर्ता संस्करिष्यति पुंस्कोकिलः पुंस्काम इत्यादिबहूनां पाठे गौरवात् । कस्कादिषु संपुंकानिति पठित्वा सर्वमपि वार्तिकं त्यक्तुमशक्यं पुंस्कोकिल इत्यादाविणः परत्वेन विसर्गस्य षत्वप्रसङ्गात् । किं तु कान्ग्रहणमिव संग्रहणं वार्तिके त्यक्तुं शक्यमित्यन्ये ॥ —**कस्कादिषु च** ॥ अत्र 'सोपदादौ' इत्यतः स इति 'इणः षः' इति सूत्रं चानुवर्तते । तदाह—**एष्विण उत्तरस्ये**त्यादि ॥—**कौतस्कुत** इति । कुतः कुत आगत इत्यर्थे अव्ययात्यपि प्राप्ते गणपाठसामर्थ्यादणित्याहुः । 'अव्ययानां भमात्रे–' इति वक्ष्यमाणेनात्र टिलोपः॥—**सर्पिष्कुण्डिके**ति । 'नित्यं समासे–' इत्येव सिद्धे इह पाठस्य प्रयोजनमसमासे व्यपेक्षाविरहेऽपि षत्वार्थमित्यादि वक्ष्यति ॥—**संहितायाम्** ॥—**इत्यधिकृत्ये**ति । एतच्च 'इको यणचि' इत्यत्रैव वक्तव्यमपि सूत्रक्रमानुरोधेनात्रोक्तम् ॥—**छे च** ॥ छकारोपरि अकार उच्चारणार्थः, 'विदिभिदिच्छिदेः–' इति निर्देशात् । तेन विच्छिन्नमित्यादि सिद्धम् ॥—**ह्रस्वस्ये**ति । एतच्च 'ह्रस्वस्य पिति कृति–' इत्यतोऽनुवर्तते तुक् च ॥ —**सेनासुरे**ति । यदि हि छस्य तुक् स्यात्तर्हि छस्य चर्त्वे सति चद्वयं स्यात् । संनिपातपरिभाषया चर्त्वाप्रवृत्तौ तु छकारोपरि चकारः श्रूयेतेति भावः ॥ —**पदान्ताद्वा** ॥ प्रकृतेन दीर्घेण विशेषणात्तदन्तविधिलाभेनेष्टसिद्धावप्यन्तग्रहणं पदान्तस्यैव तुग्यथा स्यात्पदस्य मा भूदित्येतदर्थम् । अन्यथा पदविधित्वात्समर्थपरिभाषोपस्थितौ समर्थेषु लक्ष्मीच्छायादिष्वेव स्यात्तिष्ठतु कुमारी

---

१ षत्वप्राप्ताविति—इदमनुनासिकपक्षे । अनुस्वारपक्षे तु तेन व्यवधानादप्राप्तिरिति बोध्यम् । २ प्रशान्शब्दस्येति—सूत्रेऽप्रशानिति षष्ठ्यर्थे प्रथमा इति भावः । ३ आङ्माङोश्चेति—आङा साहचर्यान्माङव्ययमेव गृह्यते, तेन माङ्माने इत्येतस्य क्विबन्तस्य छे परेऽपि न नित्यस्तुक् । ४ चेच्छिद्यत इति—तुको हलादिः शेषस्तु न, अभ्याससंज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा संहतानामेव तेन निवृत्तेः ।

तिशब्दोपि समस्यते। युवा खलतिः युवखलतिः। युवतिः खलती। युवखलती। युवजरती। युवत्यामेव (१०५) जरतीधर्म्मोपलक्षणेन तद्रूपारोपात्सामानाधिकरण्यम्।

## कृत्यतुल्याख्या (१०६) अजात्या। २। १। ६८।

भोज्योष्णम्। तुल्यश्वेतः सदृशश्वेतः। अजात्या किम् भोज्यओदनः। प्रतिषेधसामर्थ्याद्विशेषणसमासोऽपि न।

## वर्णो वर्णेन (१०७)। २। १। ६९।

समानाधिकरणेन सह प्राग्वत्। कृष्णसारङ्गः (१०८)।

## कडाराः कर्मधारये। २। २। ३८।

कडारादयः (१०९) शब्दाः कर्म्मधारये वा पूर्वं प्रयोज्याः। कडारजैमिनिः जैमिनिकडारः।

(१०५) युवत्यामेवेति जरत्यां युवतिधर्म्मारोपे तु युवतिशब्दस्य विशेषणतया विशेषणं विशेष्येणेति (३६०पृ) समासे सिद्धेऽपि पूर्व्वनिपातनियमासिद्धग्रा जरतीग्रहणस्य वैयर्थ्यं स्यादित्यशङ्कारेण तद्व्यावर्त्तयतीति भावः।

(१०६) कृत्यतुल्येति कृत्यप्रत्ययान्तस्तुल्यवाचनश्च जातिवाचकभिन्नेन समस्यते। पूर्व्वनिपातनियमार्थमिदम्।

(१०७) समानाधिकरणेन वर्णवाचिना वर्णवाची तादृशः समस्यते इत्यर्थः।

(१०८) सारङ्गश्चित्रः कृष्णशब्दस्तदवयवे लाक्षणिक इति सामानाधिकरण्यम्।

(१०९) बहुवचनेन गणसूचनादाह कडारादय इति कर्म्मधारये किं कडारपुरुषकोप्यामरत्यादौ न।

कडार गडुल खञ्ज खोड़ काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गल तनु जठर बधिर मठर कुब्ज बर्ब्बर एते कडारादयः।

## कुमारः श्रमणादिभिः। २। १। ७०।

कुमारी (११०) श्रमणा कुमारश्रमणा। इह गणे श्रमणाप्रव्रजितागर्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते। लिङ्गविशिष्ट परिभाषाया एतदेव (१११) ज्ञापकं बोध्यम्।

## चतुष्पादो गर्भिण्या। २। १। ७१।

चतुष्पाज्जाति (११२) वाचिनो गर्भिणीशब्देन सह प्राग्वत्। गोगर्भिणी। चतुष्पाज्जातिरिति वक्तव्यम्*। नेह स्वस्तिमतो गर्भिणी।

## मयूरव्यंसकादयश्च (११३)। २। १। ७२।

(११०) श्रमणादिगणे श्रमणादीनां स्त्रीत्वेन पाठात् कुमारशब्दस्य लिङ्गविशिष्टपरिभाषया स्त्रीपरत्वमित्याशयेनोदाहरति कुमारीति।

श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पटु मृदु पण्डित कुशल चपल निपुण। एते श्रमणादयः।

(१११) एतदेवेति एतदपीत्यर्थः युवा खलतीत्यादिसूत्रे (३६४पृ०) जरतीग्रहणस्यापि तत्परिभाषायाज्ञापकत्वात्॥

(११२) चतुष्पादोजातेर्ग्रहणं कर्त्तव्यमिति वार्त्तिकलभ्यमर्थमाह जातीति।

(११३) मयूर इव व्यंसक इत्युपमानसमासापवादोऽयं चकारोऽवधारणार्थः। तेनान्येन सह समासान्तरं वारयति ततश्च परमो मयूरव्यंसक इति वाक्यमेव न समासः।

मयूरव्यंसक छात्रव्यंसक कम्बोजमुण्ड यवनमुण्ड (छन्दसि) हस्तगृह्य पादगृह्य लाङ्गूलगृह्य पुनर्दाय। (एहीडादयोऽन्यपदार्थे) एहीडं वर्त्तते एहियवं वर्त्तते एहिवाणिजा क्रिया अपेहिवाणिजा प्रेहिवाणिजा एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहि-

एते निपात्यन्ते। मयूरोव्यंसकः मयूरव्यंसकः। व्यंसको धूर्त्तः। उदक् चावाक् च उच्चावचम्। निश्चितञ्च प्रचितञ्च निश्चप्रचम्। नास्ति किञ्चन यस्य सः अकिञ्चनः। आख्यातमाख्यातेन (११४) क्रियासातत्ये। अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता (११५)। पचतभ-

द्वितीया एहिकटा अपेहिकटा प्रेहिकटा आहरकरटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धरचूडा आहरचेला आहरवसना आहरसेना आहरवनिता कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धमविधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् नखप्रचम् निश्चप्रचम् अकिञ्चन स्नात्वाकालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्णश्यामा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया। जहिकर्म्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति। जहिजोडम् जहिस्तम्बम् उज्जहिस्तम्बम्। आख्यातमाख्यातेन क्रियासातत्ये। अश्नीतपिबता पचतभृज्जता खादतमोदता खादताचमता आहरनिवपा आवपनिष्किरा उत्पचविपचा भिन्द्धिलवणा छिन्धिविचक्षणा पचलवणा पचप्रकुटा। आकृतिगणोऽयम्। तेन अकुतोभय: कान्दिशीकः आहोपुरुषिका अहमहमिका यद्दृच्छा एहिरेयाहिरा उन्मृजावमृजा द्रव्यान्तरम् अवश्यकार्य्यमित्यादि।

(११४) मयूरव्यंसकान्तर्गणसूत्रमाख्यातमिति क्रियाप्रधानमित्यर्थः ए-होडादयइत्यतोऽन्यपदार्थे इत्यनुवर्त्तते गणे तस्यैव पूर्व्वं पाठादिह तु तस्य असातत्यार्थतां ध्वनयितुं व्युत्क्रमेण पाठस्तदाह सततं यत्राभिधीयतेइति।

(११५) अश्नीतपिबतेति अन्यपदार्थस्य क्रीडादिरूपत्वेन स्त्रीत्वात् समासत्वेन प्रातिपदिकतयात्र टाप्।

ज्यता । खादतमोदता(११६)। एहीडादयोऽन्यपदार्थे। एहीडे इति यस्मिन् कर्म्मणि तत् एहीडम्(११७)। एहियवम्। उद्वर (११८) कोष्टादुत्सृज देहीति यस्यां क्रियायां सा। उद्धरोत्सृजा। उड्डमविधमा। अत्रातत्वार्थमिह पाठः(११६)। जहिकर्म्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधाति। जहीत्येतत्कर्म्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये समासेन चेत्कर्त्ता(१२०)ऽभिधीयत इत्यर्थः। जहिजोडः। जहिस्तम्बः। नास्ति कुतो भयं यस्य सोऽकुतोभयः (१२१) अन्यो राजा राजान्तरम्। चिदेव चिन्मात्रम्।

## ईषदकृता।२।२।७।

ईषत्पिङ्गलः। ईषद् गुणवचनेनेति वाच्यम्। ईषद्रक्तम्।

---

(११६) खादतमोदतेत्यत्र मोदतामित्यस्य स्थाने मोदतेत्यादेशः।

(११७) एहीडमित्यत्र लडुत्तमपुरुषैकवचनान्तस्येड्धातोः स्थाने ईडादेशः। एहियवमित्यत्र यौमीत्यस्य स्थाने यवादेशः।

(११८)उद्वर कोष्ठादित्यत्र उद्धरोत्सृजेत्येव विग्रहः उत्सृजेत्य स्य विवरणं देहीति उद्धरेत्यस्याकाङ्क्षापूरणाय कोष्ठादिति न तु तस्य विग्रहवाक्यघटकत्वम्।

(११६) इह एहीडादिषु पाठस्तस्य तिङन्तपूर्व्वपदोत्तरपदकसमुदायानामिति शेषः।

(१२०) कर्त्ता तद्वचनस्य कर्त्तेत्यर्थस्तथाच जहि जोडमित्याभीक्ष्ण्येन यश्चाह स जहीजोड़ इत्यर्थः। अत्र जहिजोडेतिवचनकर्त्तुरेव समासेनाभिधानमिति बोध्यम्।

(१२१) अन्तरशब्दो भिन्नवाची मात्रं कात्स्न्र्येऽवधारणे इत्यवधारणार्थकमात्रशब्दाभ्यां नित्यसमासस्तदन्तस्य नपुंसकता मात्रशब्दपरेऽनुनासिकनित्यता च निपात्यते इति विशेषः।

नञ्। २। २। ६।

नञ् (१२२) सुपा सह समस्यते।

नलोपो नञः। ६। ३। ७३।

नञो नस्य लोपः स्यादुत्तरपदे। न ब्राह्मणः अब्राह्मणः।

तस्मान्नुडचि। ६। ३। ७४।

लुप्तनकारान्नञ उत्तरपदस्याऽजादेर्नुडागमः स्यात्। अनश्वः। अर्थाभावे (१२३) ऽव्ययीभावेन सहायं विकल्प्यते (१२४)

---

(१२२) नञिति उत्तरपदार्थप्रधानोऽयं समासः। आरोपितत्वं नञा द्योत्यं आरोपमात्रं वा विषयत्वं तु संसर्गः। तथाच अब्राह्मणशब्दादारोपितो ब्राह्मण इति बोधे अर्थात् ब्राह्मणभिन्न इति पर्य्यवस्यति। अत एवानुपसर्ज्जनत्वादतस्मिन्नित्यादौ सर्व्वनामकार्य्यं सिध्यति तत्पुरुषश्चौत्सर्गिकोत्तरपदप्रधानत्वज्ञाप्याहृतमेव यथोक्तं हरिणा

नञ्समासे चापरस्य प्राधान्यात् सर्व्वनामता।
आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्व्ववदिति।

किं यतोऽतिसर्व्ववत् असदित्यादौ न सर्व्वनामकार्य्याभावोऽनउत्तरपदप्राधान्यमित्यर्थः। अभावो वा नञर्थः स च विशेषणं विशेष्यो वा न्यायादवसेयो यथोक्तं हरिणा

अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्य्यतामिति।

(१२३) अर्थाभावे इति तत्रापि आरोपितो घट इत्येव बोधः भेदेन तदारोपबोधेऽत्यन्ताभावबोधस्तादात्म्येन तदारोपबोधे भेदबोधोऽत्र च प्रकरणादिकं नियामकमिति भावः।

(१२४) विकल्प्यते इति पूर्व्वपदार्थप्राधान्येऽव्ययीभाव उत्तरपदार्थप्राधान्ये नञ्समास इत्येवं रीत्या व्यवस्थयेति भावः।

रक्षोहागमलघ्वसन्देहाः (१२५) प्रयोजनमिति अद्रुतायामसंहितमिति च भाष्यवार्त्तिकप्रयोगात् । तेनानुपलब्धिरविवादोऽविघ्नमित्यादि सिद्धम् । नञो नलोपस्तिङि क्षेपे* । अपचसि(१२६)त्वञ्जाल्म । नैकधेत्यादौ तु नशब्देन(१२७) सह सुपेति(२१९) समासः ।

**नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या।६।३।७५।**

पादिति शत्रन्तः । वेदादृत्यसुन्नन्तः । न सत्याः असत्याः न असत्या नासत्याः । न मुञ्चतीति नमुचिः । न कुलमस्य ।

(१२५) न्यायसिद्धेऽर्थे लिङ्गमप्याह रक्षोहेति व्याकरणस्य प्रयोजनाकाङ्क्षायां भाष्यकारेण रक्षादीनां प्रयोजनत्वं दर्शितं तत्रासन्देह आरोपितसन्देहः सन्देहाभावो वा प्रयोजनमित्यर्थः । अव्ययीभावे तु तस्याव्ययतया रक्षादिभिः सह द्वन्द्वसमासानुपपत्तिः द्वन्द्वतत्पुरुषयोरेव परवल्लिङ्गतया असन्देहाद्दति पुंलिङ्गनिर्देशानुपपत्तिश्चेति भावः । अद्रुतायामित्यस्य द्रुताभिन्नायां मध्यविलम्बितायामावृत्तौ असंहितं संहिताभाव इति वार्त्तिकस्यार्थस्तेन असंहितमित्यव्ययीभावोऽभावार्थेऽतोऽनयोर्विकल्प इति बोध्यम् ।

(१२६) तिङन्तेन सह समासाभावादप्राप्तौ इदं वार्त्तिकम् । अपचसीति कुत्सितं पचसीत्यर्थः ।

(१२७) नशब्देनेति नञा समासे तु अनेकधेति स्यादिति भावः । एवमेव नमेरुनाराचनान्तरीयकादयः साधवः ।

(१२८) न भ्राजते इति नभ्राट् क्विबन्तः न पातीति नपात् शत्रन्तः नवेत्ति नवेदाः असुन्प्रत्ययान्तः नासत्या इति बहुवचनमविवक्षितम् । एतदन्ताः शब्दाः सप्तम्यर्थे प्रथमान्ताः । नमुचिरौणादिकः किप्रत्ययान्तः ।

न खमस्य। न स्त्री पुमान्। स्त्रीपुंसयोः पुंसकभावो निपात-नात्। न क्षरतीति नक्षत्रम्। क्षीयतेः क्षरतेर्वा क्षत्रमिति निपात्यते। न क्रामतीति नक्रः। क्रमेर्डः। न अकमस्मि-न्निति नाकः।

## नगोऽप्राणिष्वन्यतरस्याम्। ६। ३। ७७।

नगइत्यत्र नञ् प्रकृत्या वा। नगाः अगाः पर्व्वताः। अप्रा-णिष्विति किम्। अगो वृषलः शीतेन। नित्यं क्रीडेत्यतो (२४७५०)नित्यमित्यनुवर्त्तमाने।

## कु(१२९)गतिप्रादयः। २। २। १८।

एते समर्थेन (१३०) नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपु-रुषः। गतिश्चेत्य(२०४)नुवर्त्तमाने।

## ऊर्य्यादि (१३१) च्विडाचश्च। १। ४। ६१।

---

(१२९) कुगतीतिसूत्रे कुशब्दः कुत्सितार्थोऽव्ययमेव गृह्यते गत्यादिसाह-चर्य्यात् तेनाव्ययपूर्व्वपदप्रकृतिस्वरः।

(१३०) समर्थेनेति समर्थः पदविधिरिति(२१७५०) परिभाषयोपस्थितं समर्थ-पदं तृतीयया विपरिणम्यते इति भावः।

(१३१) ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला संश-कला ध्वंसकला भ्रंसकला गुलुगुधा सजूस् फलू फली विक्ली आक्ली आलोष्टी केवाली केवासी पर्य्याली शेवाली वर्षाली अत्यूमशा वश्म-शा मस्मसा मसमसा श्रौषट् वौषट् वषट् स्वाहा स्वधा वन्धा प्रादुस् श्रुत् आविस्। एते उर्य्यादयः।

च्विडाचौ सम्बन्धियोगे गतिसंज्ञौ उर्य्यादयोऽपि शब्दस्वाभाव्यात्तैरेव प्रयुज्यन्ते प्रायेण सजातीयाः सहचरा भवन्तीति न्यायेनैषां तथात्वा-

एते क्रियायोगे गतिसंज्ञाः स्युः। ऊरीकृत्य (१३२) शुक्लीकृत्य। पटपटाकृत्य। कारिकाशब्दस्योपसंख्यानम् *। कारिका क्रिया (१३३)। कारिकाकृत्य।

**अनुकरणञ्चानितिपरम्। १।४।६२।**

खाट्कृत्य। अनितिपरं किम् खाड़िति कृत्वा निरष्ठीवत्।

**आदरानादरयोः सदसती। १।४।६३।**

सत्कृत्य असत्कृत्य

**भूषणेऽलम्। १।४।६४।**

अलंकृत्य। भूषणे किम् अलं कृत्वौदनङ्गतः। पर्य्याप्तमित्यर्थः। अनुकरणमित्यादि त्रिसूत्री स्वभावात् कृञ्विषया।

**अन्तरपरिग्रहे। १।४।६५।**

अन्तर्हत्य मध्ये हत्वेत्यर्थः। अपरिग्रहे किम् अन्तर्हत्वा गतः हतम्परिगृह्य गतइत्यर्थः (१३४)।

इत्यवगमात् तत्रापि आविःप्रादुःशब्दौ विहायान्येषां करोतिनैव योगइति व्यवस्था। मनो०।

(१३२) तथैवोदाहरति। ऊरीकृत्येति एतेषां च गत्यादिसंज्ञाफलं समासस्तत्फलं च वक्ष्यतीति बोध्यम्। प्रादुःशब्दस्य साक्षात्प्रभृतिषु पाठात् कृञ्योगे गतिसंज्ञाविकल्पइति ध्येयम्।

(१३३) कारिका क्रियेति मर्य्यादास्थितिर्यत्नरूपेत्यर्थः धात्वर्थनिर्द्देशे ण्वुल्। दासीश्लोकवाचिनी तु न गृह्यते व्याख्यानात्।

(१३४) कृत्वा गमनंहि द्विधा हनं त्यक्त्वा हतं गृहीत्वा वा तत्राद्यमुदाहर-

## कणेमनसी(१३५)श्रद्धाप्रतिघाते। १। ४। ६६।

कणेहत्य पयः पिबति। मनोहत्य। कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्त्तते। मनःशब्दोऽप्यत्रैव। श्रद्धाप्रतिघाते किं कणे हत्वा (१३६)।

## पुरोऽव्ययम्। १। ४। ६७।

पुरस्कृत्य(१३७)।

## अस्तञ्च। १। ४। ६८।

अस्तमिति मान्तमव्ययं (१३८) गतिसंज्ञं स्यात्। अस्तङ्गत्य।

## अच्छ गत्यर्थवदेषु। १। ४। ६९।

अव्ययमित्येव। अच्छगत्य अच्छोद्य। अभिमुखं गत्वा उक्त्वा वेत्यर्थः। अव्ययं किम् जलमच्छ (१३९) गच्छति।

---

णमन्त्यं प्रत्युदाहरणम् तथाचापरिग्रहइति प्रयोगोपाधिर्न प्र वाच्यकोटौ प्रविष्टमिति भावः।

(१३५) कणेमनसी शब्दस्वरूपे। कणेहत्येतिपराधरयोगे (७३६।२) क्त्वाप्रत्ययः। अतिशयेनाभिलष्य तत्तृप्तिपर्यन्तं पयः पिबतीत्यर्थः। ततश्च श्रद्धाया अपगमात् प्रतिघातोगम्यते।

(१३६) कणे हत्वेति सूक्ष्मतण्डुलावयवे कणास्मिन् हत्वेत्यर्थः।

(१३७) पुरस्कृत्येति पुरोभूय पुरोगत्वेत्याद्युदाहरणं तद्योगएवं न नियमं माभावात्। शब्देन्दु०।

(१३८) अव्ययमित्यनुवर्त्त्य व्याख्यानात् न निप्रार्थकास्तशब्दयोगे तेन काण्डमस्तं हत्वेत्यादि प्रयोगः।

(१३९) अच्छमिति प्रायीश्वरादित्य (१८१७) निकारादिपातत्वे ऽव्ययत्वे च विभक्तिलोपः स्यादिति भावः।

## अदोऽनुपदेशे । १ । ४ । ७० ।

अदः कृत्याद्ः कृतम् (१४०) । परम्परुपदेशे प्रत्युदाहरणम् । अदः कृत्वाऽदः कुरु ।

## तिरोऽन्तर्द्धौ (१४१) । १ । ४ । ७१ ।

तिरोभूय ।

## विभाषा कृञि । १ । ४ । ७२ ।

तिरः (१४२) कृत्य तिरस्कृत्य तिरः कृत्वा ।

## उपाजेऽन्वाजे (१४३) । १ । ४ । ७३ ।

एतौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य उपाजे कृत्वा । अन्वाजेकृत्य अन्वाजे कृत्वा दुर्बलस्य बलमाधायेत्यर्थः ।

## साक्षात्प्रभृतीनि (१४४) च । १ । ४ । ७४ ।

(१४०) अदःकृत्येति यदा स्वयमेव कृत्वा पर्य्यालोचयति तदेदमुदाहरणम् ।

(१४१) अन्तर्द्धाविति किं तिरो भूत्वा स्थितः पार्श्वतो भूत्वेत्यर्थः ।

(१४२) तिरःकृत्वेत्यत्र गतित्वाभावात् सत्वमपि न तिरसोऽन्यतरस्यामिति (७४पृ०) सत्वविधौ गतित्वानुवृत्तेः । माधवस्तु पराभवे तिरस्कारशब्दप्रयोगाद्गतिपक्षानुवृत्तिं नाङ्गीचकारेति । मनो० ।

(१४३) उपाजेऽन्वाजेशब्दौ एदन्तौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य बलाधाने वर्त्तेते ।

(१४४) साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा श्रद्धा प्राजर्या प्राजरुहा वीजर्य्या वीजरुहा संसर्य्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे विकसने प्रसहने प्रतपने प्रादुस् नमस् । आकृतिगणोऽयम् ।

# विसर्गसंधिः।

**विसर्जनीयस्य सः** ।८।३।३४। विष्णुस्त्राता। **शर्परे विसर्जनीयः** ।८।३।३५। शर्परे खरि विसर्जनीयस्य विसर्जनीयो नत्वन्यत्। कः त्सरुः। घनाघनः क्षोभणः। इह यथायथं सत्वं जिह्वामूलीयश्च न। **वा शरि** ।८।३।३६। शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। हरिः शेते। हरिश्शेते। * **खर्परे शरि वा विसर्गलोपो वक्तव्यः**। रामस्थाता। हरिस्फुरति। पक्षे विसर्गे सत्वे च त्रैरूप्यम्॥ कुप्वोः ≍क≍पौ च॥ क≍करोति। कः करोति। क≍खनति। कः खनति। क≍पचति। कः पचति। क≍फलति। कः फलति। **सोऽपदादौ** ।८।३।३८। विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः॥ पाशकल्पककाम्येष्विति वाच्यम्। पयस्पाशम्। यशस्कल्पम्। यशस्कम्। यशस्काम्यति॥ * **अनव्ययस्येति वाच्यम्**। प्रातःकल्पम्॥ * **काम्ये रोरेवेति वाच्यम्**॥ नेह गीः काम्यति। **इणः षः** ।८।३।३९। इणः परस्य विसर्गस्य षकारः स्यात्पूर्वविषये। सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति। **नमस्पुरसोर्गत्योः** ।८।३।४०। गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः। नमस्करोति। साक्षात्प्रभृतित्वात् कृञो योगे विभाषा गतिसंज्ञा। तदभावे नमः करोति। पुरोऽव्ययमिति नित्यं गतिसंज्ञा। पुरस्करोति। अगतित्वान्नेह। पूः पुरौ पुरः प्रवेष्टव्याः। **इदुदुपधस्य चाऽप्रत्ययस्य** ।८।३।४१। इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः। निष्प्रत्यूहम्। आविष्कृतम्। दुष्कृतम्। अप्रत्ययस्य किम्। अग्निः करोति। वायुः करोति। एकादेशशास्त्रनिमित्तकस्य न षत्वम्। कस्कादिषु

---

च्छत्रं हर देवदत्तेत्यत्र न स्यात्। असामर्थ्यात्। एवं 'न पदान्ताट्टोः–' इति सूत्रे पदाट्टोरिति वक्तव्येऽन्तग्रहणं दुष्टाः षट् सन्तस्तव इत्यत्रापि ष्टुत्वनिषेधार्थमित्याहुः॥ इति तत्त्वबोधिन्यां हल्संधिः॥

॥**विसर्गसंधिः**॥—**विष्णुस्त्राते**ति। प्रातिपदिकात् 'स्वौजसमौट्–' इति सुप्रत्यये तस्य रुत्वे 'खरवसानयोः' इति विसर्गे च कृते 'विसर्जनीयस्य' इति सः। अस्य च रुत्वं नाशङ्क्यं, रुत्वं प्रति विसर्जनीयसत्वस्यासिद्धत्वात्॥—**शर्परे विसर्जनीयः**॥ शर्पर इति बहुव्रीहिरनुवर्तमानश्च खरन्यपदार्थः॥ सत्वादेरयमपवादः। यदि तु 'शर्परे न' इत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धेऽपि कुप्वोः ≍क≍पौ स्याताम् वासः क्षौममद्भिः प्सातमित्यादौ, विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह—**न त्वन्यदि**ति। तदेव स्फुटयति—**इहे**ति॥—**सोऽपदादौ**॥—**अपदाद्योरि**ति। सूत्रे व्यत्ययेन एकवचनम्। यदि तु 'विसर्जनीयस्य सः' 'शर्परे विसर्जनीयः' इत्यत्र मण्डूकप्लुत्यानुवर्तितो यः खर् स इहाप्यनुवर्त्य विशेष्यते अपदादौ खरीति, तदा यथाश्रुतं साधु। परंतु पुनर्मण्डूकप्लुत्यानुवर्तने क्लेश इति भावः॥ अन्ये त्वाहुः। पुनर्मण्डूकप्लुतिं विनाप्यनुवर्तितुं शक्यः। 'वा शरि' इत्यत्र शरा खरं विशेष्य शर्रूपे खरीति व्याख्याने 'कुप्वोः–' इति सूत्रे कुप्वोः खरीति व्याख्याने च क्षत्यभावादिति॥—**पयस्पाशमि**ति। 'याप्ये पाशप्'। 'ईषदसमाप्तौ कल्पप्–'। 'अज्ञाते' 'कुत्सिते' इति कः। 'काम्यच्' इति काम्यच्॥—**पाशकल्पककाम्येष्वि**ति वृत्तिः। संभवप्रदर्शनमेतत् न तु परिगणनमन्यस्यासम्भवात्॥—**प्रातःकल्पमि**ति। अधिकरणशक्तिप्रधानस्य प्रातःशब्दस्येह वृत्तिविषये शक्तिमत्परत्वं दोषाभूतमहः दिवाभूता रात्रिरितिवत्॥—**गीः काम्यती**ति। न च सत्वनिषेधेऽपीह 'इणः षः' इति षत्वं स्यादिति वाच्यम्। तत्रापि 'काम्ये रोरेव' इत्यस्यानुवृत्तेः। यदि तु 'इणः षः' इत्यत्रैवेदं पठ्येत तर्हि षत्वमात्रप्रतिषेधेपि पूर्वेण सत्वं स्यात्॥—**इणः षः**॥ 'सोपदादौ' इत्यस्यापवादः॥—**पुरः प्रवेष्टव्या** इति। 'पॄ पालनपूरणयोः' 'भ्राजभास–' इत्यादिना क्विप्। तदन्ताज्जस्। जसन्ततां स्फुटीकर्तुं पूः पुरावित्युपन्यस्तम्॥—**इदुदुपधस्य**—॥ इदुदिति किम्। गीः करोति। पूः करोति॥ इह इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्ग इति वैयधिकरण्येन संबन्धः॥ अप्रत्ययस्येति तु अप्रत्ययो यो विसर्ग इति संबध्यते। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्। अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्। अप्रत्ययस्येति निषेधेनैव सिद्धत्वज्ञापनात्। अत एव अग्निरित्यादौ रोर्विसर्गः सिध्यति। अन्यथाऽपदान्तत्वान्न स्यात्। विसर्गविधिस्तु पुनरित्यादौ चरितार्थः। ज्ञापकं च विशेषापेक्षम्। तेन 'अचः परस्मिन्–' इति त्रिपाद्यां न प्रवर्तते। एवं च 'पूर्वत्रासिद्धीये न स्थानिवत्' इति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति मनोरमायां स्थितम्॥ अत्र वदन्ति। अप्रत्ययस्येत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्यादर्थ एव आकरे स्थित इति अप्रत्ययो यो विसर्ग इति सामानाधिकरण्येनान्वयो न युक्तः। सर्पिष्करोतीत्यत्र 'इसुसोः सामर्थ्ये' इति वैकल्पिकषत्वप्रवृत्तावपि तिष्ठतु सर्पिः पिब त्वमुदकमित्यत्र 'इदुदुपधस्य–' इत्यनेन नित्यं षत्वप्रसङ्गात्। न चाकरमतेऽव्युणादीनामव्युत्पत्त्याश्रयणे तथा स्वीकारादिष्टापत्तिरिति वाच्यम्। व्युत्पत्त्याश्रयणे दोषतादवस्थ्यात्, 'इसुसोः–' इत्यत्र सर्पिष्करोतीत्युदाहरणेन व्युत्पत्तिपक्षस्यैव वार्तिककारेण स्वीकृतत्वानुमानात्। अन्यथा 'इदुदुपधस्य–' इत्यनेनैव व्युत्पत्त्यव्यु-

---

१ अनव्ययस्येति—उपपयस्काम्यतीत्यादौ सत्वं भवत्येवेतिस्पष्टं बृहच्छेखरे। २ नमस्पुरसोरिति—अत्रापदादाविति न संबध्यते, पुरसो गत्या विशेषणाद्व्याख्यानाच्च।

कृञि वा गतिसंज्ञानि स्युः। च्व्यर्थ इति (१४५) वाच्यम् *। साक्षात्कृत्य साक्षात् कृत्वा। लवणंकृत्य लवणं कृत्वा। मान्तत्वं (१४६) निपातनात्।

## • अनत्याधानउरसिमनसी (१४७)।१।४।७५।

उरसिकृत्य उरसि कृत्वा। अभ्युपगम्येत्यर्थः। मनसिकृत्य मनसि कृत्वा। निश्चित्येत्यर्थः। अत्याधानमुपश्लेषणन्तत्र न उरसि कृत्वा पाणिं शेते।

## मध्येपदेनिवचने च (१४८)।१।४।७६।

एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने। मध्येकृत्य मध्ये कृत्वा। पदेकृत्य पदे कृत्वा। निवचनेकृत्य निवचने कृत्वा। वाचन्नियम्येत्यर्थः।

## नित्यं हस्तेपाणावुपयमने।१।४।७७।

(१४५) च्व्यर्थइति च्व्यन्ते तु पूर्व्वविप्रतिषेधेन नित्यैव संज्ञा। इदञ्च प्रायिकमत एव नमस्करोतीत्यादौ च्व्यर्थाभावेऽपि गतित्वमिति द्रष्टव्यम्।

(१४६) मान्तत्वं गतिसंज्ञासन्नियोगेन लवणमुदकमुष्णं शीतमार्द्रमित्येतेषां पञ्चानामपीत्यर्थः।

(१४७) उरसिमनसी विभक्तिप्रतिरूपकौ निपातौ। विभाषेत्यनुवर्त्तते।

(१४८) मध्येपदेनिवचने अपि तथा। विभाषा कृञीत्यतो(१।४।९८)विभाषेति अनत्याधाने इति चानुवर्त्तते एदन्तत्वं च निपात्यते न तु सप्तमी। मध्यपदं कृत्वा वाचं नियम्येति प्रत्ययेन तस्याकर्मान्वितत्वात्। निवचनं वचना

उपयमनं विवाहः। स्वीकारमात्रमित्यन्ये। हस्तेकृत्य। पाणौकृत्य (१४६)।

प्राध्वम्बन्धने। १। ४। ७८।

प्राध्वमित्यव्ययम् (१५०)। प्राध्वंकृत्य। बन्धनेनानुकूल्यं कृत्वेत्यर्थः। प्रार्थनादिना त्वानुकूल्यकरणे प्राध्वङ्कृत्वा।

जीविकोपनिषदावौपम्ये। १। ४। ७९।

जीविकामिव कृत्वा जीविकाकृत्य उपनिषदमिव कृत्वा उपनिषत्कृत्य। औपम्ये किम् जीविकां कृत्वा। प्रादि (१५१) ग्रहणमगत्यर्थम्। सुपुरुषः। अत्र (१५२) वार्त्तिकानि। प्रादयः गताद्यर्थे प्रथमया॰। प्रगत (१५३) आचार्य्यः प्राचार्य्यः। अत्यादयः (१५४) क्रान्ताद्यर्थे द्वितीयया॰।

भावः अर्थाभावेऽव्ययीभावः। अनत्याधाने इति किं हस्तिनः पदे कृत्वा शिरःशेते इत्यादौ न।

(१४६) हस्ते पाणाविति सप्तम्यन्तम् तत्पुरुषे कृति बहुल(४६०पृ०)मित्यलुक्। उपयमने किं हस्ते कृत्वा कार्षापणं गत इत्यादौ न।

(१५०) प्राध्वमित्यव्ययं मान्तं बन्धनेनानुकूल्ये वर्त्तते।

(१५१) कुगतिप्रादय इति सूत्रे(३७१पृ०)प्रादीनां पृथगुपादानफलमाह प्रादिग्रहणमिति तेन सुपुरुष इत्यादौ क्रियायोगाभावेनागतित्वेऽपि समासः।

(१५२) अत्रेति अव्यवस्थया समासप्राप्तौ वार्त्तिकानि व्यवस्थापकानीति भावः।

(१५३) प्रगत इत्यनेन गतार्थे वृत्तौ अस्वपदविग्रहेण नित्यसमासता दर्शिता।

(१५४) अत्यादय इत्यादिना अभिगतो मुखमभिमुखः उद्गतो वेलामुद्वेलः प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि ग्राह्यम्।

अतिक्रान्तो मालामतिमालः। अवादयः (१५५) क्रुष्टाद्यर्थे तृतीयया*। अवक्रुष्टः कोकिलया अवकोकिलः। पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या*। परिग्लानोऽध्ययनाय पर्य्यध्ययनः। निरादयः (१५६) क्रान्ताद्यर्थे पञ्चम्या*। निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। कर्म्मप्रवचनीयानाम्प्रतिषेधः(१५७)। वृक्षम्प्रति (१५८)।

## तत्रोपपदं(१५९)सप्तमीस्थम्। ३। १। ९२।

सप्तम्यन्ते पदे कर्म्मणीत्यादौ (३२२) वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं(१६०) पदमुपपदसंज्ञं स्यात्। तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात्।

(१५५) आदिपदात् परिणद्धो वीरुधा परिवीरुत् संनद्धो वर्म्मणा संवर्मेत्यादि ग्राह्यम्।

(१५६) निरादय इत्यादिपदात् उत्क्रान्ता कूलादुत्कूला इत्यादौ उदादिक्रान्ताद्यीत्यादि पदात् निर्गतमङ्गुलिभ्यो निरङ्गुलमित्यादौ निरादेः ग्राह्यम्।

(१५७) प्रतिषेधइति कुगतिप्रादय इत्यनेन (३० सू) प्राप्तसमासस्य प्रतिषेधो वक्तव्यः स च सुराजा अतिराजेति भाष्ये प्रयोगात् स्वतिभिन्नानामेव तेषामिति बोध्यम्।

(१५८) वृक्षं प्रतीत्यादौ लक्षणाद्यर्थकप्रते कर्म्मप्रवचनीयतया न तेन तत्पुरुषसमासः। प्रतिस्तवनमित्यादौ षत्वनिषेधः एवं फलं बोध्यम्।

(१५९) तत्रोपपदमित्यधिकारः। तथाच कर्म्मण्यणित्यादौ (३३१ सू०) सप्तमी प्रथमार्थे सूत्रत्वात् धातोरण् भवति कर्म्म चोपपदसंज्ञं भवतीत्येवं रीत्या तत्तत्सूत्रार्थः अत्र सूत्रे सप्तमीपदं तदन्तपरं तत्स्थञ्च तद्वाच्यमित्यात्र सप्तम्यन्तपदं इति।

(१६०) तत्तत्सूत्रे प्रथमार्थे सप्तमीविधानेन तत्सम्बन्धात् तद्वाचकं पदमिति।

उपपदमतिङ्। २। २। १९।

उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भं करोतीति कुम्भकारः। इह कुम्भ अम् कार इत्यलौकिकं(१६१) प्रक्रियावाक्यम्। अतिङ् किम् मा भवान् भूत्। माङि लुङिति (७।१८पृ०) सप्तमी निर्द्देशान्माङुपपदम्। अतिङ्ग्रहणं (१६२) ज्ञापयति। सुपेत्येतन्नेहानुवर्त्ततइति पूर्व्वसूत्रेऽपि(२७१पृ०) (१६३) गतिग्रहणं पृथक्कृत्याऽतिङ्ग्रहणान्तत्रापकृष्यते सुपेति च निवृत्तम्। तथाच(१६४) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबु-

---

उपपदशब्दश्चान्वर्थकः उप समीपे उच्चारितं पदमुपपदं सामीप्यञ्च सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यर्थेऽन्वयित्वं मत्वानुपूर्व्व्यव्यवधानं कर्म्मण्यणिति(७२२३पृ०)सूत्रे उष्ट्रमुखायइति भाष्योदाहरणात् तथाचात्रोपसर्गव्यवधानेऽपि उपपदत्वमिति बोध्यम्।

(१६१) अलौकिकमित्यस्य समासप्रवृत्तियोग्यं लोके प्रयोगानर्हमित्यर्थः।

(१६२) सह सुपेत्यधिकारात्(३१८पृ०)तिङन्तेन समासो न भविष्यति कृतमतिङ्ग्रहणेनेत्याशङ्क्यातिङ्ग्रहणस्य ज्ञापकतयैव सार्थक्यं दर्शयति अतिङ्ग्रहणमिति।

(१६३) पूर्व्वसूत्रेऽपीति तथाच तत्र योगं विभज्य कुप्रादयः सुबन्ताः सुबन्तेन सह समस्यन्ते गतिश्च सुबन्तः तिङन्तेन समस्यते इति व्याख्येयमित्यर्थः।

(१६४) तथाचेति यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभस्तथापि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमितन्यायेन इहापि ज्ञाप्यते इति भावः। प्रागिति कृदन्तादुत्तरपदात् सुबुत्पत्तेः पूर्व्वं समासइत्यर्थः। अत्र चरमपदादित्युक्तेः पूर्व्वपदे सुबुत्पत्तिरावश्यकीति ज्ञाप्यतेऽन्यथा राजधौर्य्यादौ नलोपाद्यनुपपत्तिः स्यादिति द्रष्टव्यम्।

त्ययोरिति सिद्धम्। व्याघ्री (१६५) अश्वक्रीती (१६६)। कच्छपी (१६७)।

## अमैवाव्ययेन। २। २। २०।

अमैव (१६८) तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते। स्वादुङ्कारम्। नेह कालसमयवेलासु तुमुन् (३४२२पृ०) कालः

(१६५) परिभाषाफलं दर्शयन् गतिमुदाहरति व्याघ्रीति व्याजिघ्रतीति व्याघ्री। आतश्चोपसर्गे (२१८पृ०) कः। तत्र व्याङोर्गत्योर्घ्रशब्देन समासो यदि घ्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तये लिङ्गाद्यपेक्षेत ततश्च लिङ्गाद्यपेक्षायां टापा भाव्यम् न तु ङीषा घ्रशब्दमात्रस्य जातिवाचित्वाभावात्। ततश्च घ्रेतिनाममात्रेणैव समासेऽदन्तत्वात् जातिलक्षणो (२३७पृ०) ङीषिति स्थितम्।

(१६६) कारकमुदाहरति अश्वक्रीतीति अश्वेन क्रीयते स्मेति वाक्ये कर्तृकरणे कृतेति (१४०पृ०) तृतीयासमासः तत्रोत्तरपदे सुबुत्पत्तेः प्रागेव समासे क्रीतात् करणपूर्वादिति (२३२पृ०) ङीप्। सुबन्तेन समासे तु टापा भाव्यमिति क्रीताशब्दस्यादन्तत्वाभावात् क्रीतादित्यादिना ङीष् न स्यात्।

(१६७) उपपदमुदाहरति कच्छपीति कच्छे जलप्राये पिबतीति कच्छपी सुपि चेति (३२२४पृ०) योगविभागात् कः। इहापि व्याघ्रीवत् सुबुत्पत्तेः पूर्वं समासः। अतएव हरिणा सुपां सुपा तिङा नाम्नेत्यादिना (१२०पृ०) नाम्नैव समासो दर्शितइति मन्तव्यम्।

(१६८) अमैवेति यस्मिन्नुपपदे येन वाक्येन अमैव विहितस्तदेवोपपदमव्ययेन सह समस्यते नान्यदित्यर्थः पूर्वेण सिद्धे नियमार्थम्। अव्ययेनेति किं कुम्भकारः अमैवेति ह्यव्ययपक्षेऽमैव तुल्यविधानं यत्तत् समर्थेन केनचित् समस्यते इत्यर्थः स्यात्। तथासति स्वादुंकारमित्यत्रैव स्यान्न तु कुम्भकारइत्यत्रापि। पूर्वसूत्रेणैवयथ्यंभीत्याऽव्ययनियमएवाय

समयो वेला वा भोक्तुम्। अग्रेवेति किम् अग्रे भोजम् अग्रे भुक्त्वा। विभाषाग्रे प्रथमपूर्वेष्विति (३४६७सू०) क्त्वा णमुलौ अमाचान्येन च तुल्यविधानमेतत्।

## तृतीयाप्रभृतीन्यन्यतरस्याम्।२।२।२१।

उपदंशस्तृतीयायामित्यादीन्युपपदान्यमन्तेनाव्ययेन (१६८) सह वा समस्यन्ते। मूलकेनोपदंशम्भुङ्क्ते मूलकोपदंशम्।

## क्त्वा च।२।२।२२।

तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते। उच्चैःकृत्य उच्चैः कृत्वा। अव्ययेऽयथाभिप्रेतेति (३४०६सू०) क्त्वा। तृतीयाप्रभृतीनीति किम्। अलं कृत्वा। खलु कृत्वा।

## तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः।५।४।८६।

---

नियम इति चेत् तर्हि अमन्तविषयकएव किं न स्यात् अमन्तेन यः समासः सोऽमेव तुल्यविधानस्येति नियमसम्भवात् तथाचाग्रेभोजमित्यत्र समासो मा भूत् अग्रे भुक्त्वा कालोभोक्तुमित्यत्र स्यादेवेति भावः। तद्देवेति किं कालोभोक्तुमित्यत्र न। अमैवेत्येवकारेणामा चान्येन तुल्यविधानस्योपपदस्य समासवारणेऽपि तुमुना तुल्यविधानस्य स्यादेवातस्तन्निवारणाय तद्देवेत्युक्तम्। तत्त्व०।

(१६८) तृतीयेति। अमैव तुल्यविधानस्य प्राप्तेऽमा चान्येन तुल्यविधानस्याप्राप्ते इयं विभाषा। तत्र प्राप्ते यथा उपदंशस्तृतीयायामिति अप्राप्ते यथा अव्ययेऽयथाभिप्रेताख्यान इति क्त्वाणमुलौ। उच्चैःकारमिति इह समासपक्षे कृदुत्तरप्रकृतिस्वरः आदिर्णमुल्यन्यतरस्याम् (३५४५सू०) मित्याद्युदात्तत्वम् असमासे तु धातो (३५४४सू०) रित्यन्तोदात्तमिति विवेकः। तत्त्व०॥

संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य (१७०) समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं(१७१)दारु। निर्गत्य मङ्गुलिभ्यो निरङ्गुलम्।

## अहःसर्व्वैकदेशसंख्यातपुण्याच्च रात्रेः ।५।४।८७।

एभ्यो रात्रेरच् स्यात् चात्संख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्।(१७२)। अहश्च रात्रिश्चाऽहोरात्रः(१७३)सर्व्वा रात्रिः सर्व्वरात्रः। पूर्व्वं रात्रेः पूर्व्वरात्रः संख्यातरात्रः। पुण्यरात्रः। द्वयो रात्र्योः समाहारः द्विरात्रम् (१७४)। अतिक्रान्तोरात्रिम् अतिरात्रः।

(१७०) तत्पुरुषप्रसङ्गात्तत्पुरुषासाधारणसमासान्तानाह तत्पुरुषस्येति तत्पुरुषादङ्गुलेरिति वक्तव्ये समासान्तापेक्षयाऽवयवषष्ठी निर्दिष्टेति बोध्यम्।

(१७१) द्व्यङ्गुलमिति तद्धितार्थे द्विगुस्तदुत्तरमुत्पन्नद्वयसचो द्विगोर्लुगिति(४९१पृ०) लुक्।

(१७२) द्वन्द्वार्थमिति अहःपदस्य ब्रह्माहपरतया रात्रिपदस्य मानुषरात्रिपरतया च ब्रह्मणोऽह्नोऽवयवीभूता मानुषी रात्रिरित्येवं सार्थक्येऽवयवषष्ठ्या तत्पुरुषानभिधानात् अन्यतत्पुरुषस्यासम्भवात् अहश्चासौ रात्रिश्चेति कर्म्मधारये एकस्य गौणत्वकल्पनया यथाकथञ्चित् सम्भवेऽपि हेमन्तशिशिरावहोरात्रे च छन्दसीति ( २ । ४ २८सू० ) द्वन्द्वविषय एव समासान्ततया निर्देशाच्च द्वन्द्वविषयमिदमित्यर्थः।

(१७३) अहोरात्र इति जातिरप्राणिनामिति (४३५पृ०) समाहारद्वन्द्वः रात्राह्नाहा इति (३९१पृ०)पुंस्त्वम्।

(१७४) द्विरात्रमिति संख्यापूर्व्वं रात्रं क्लीबमिति (३९१पृ०) वक्ष्यमाणेन क्लीवत्वम् (३९१पृ०)।

राजाहःसखिभ्यष्टच् ।५।४।९१।

एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः । अति (१७५) राजौ । कृष्णसखः ।

अह्नष्टखोरेव ।६।४।१४५।

एतयोरेव परतोऽह्नः टिलोपः स्यान्नान्यत्र । उत्तमाहः । द्वे अहनी भृतो द्व्यहीनः (१७६) क्रतुः । तद्धितार्थो द्विगुः तमधीष्ट इत्यधिकारे (१४२९०) द्विगोर्यत्यनुवृत्तौ रात्र्यहःसम्वत्सराच्चेति (१४५९०) खः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह (१७७) । मद्राणां राज्ञी मद्रराज्ञी ।

अह्नोऽह्न एतेभ्यः ।५।४।८८।

सर्वादिभ्यः परस्याऽहन्शब्दस्याह्नादेशः स्यात्समासान्ते परे ।

अह्नोऽदन्तात् ।८।४।७।

अदन्तपूर्वपदस्थाद्रेफात्परस्याऽह्नोऽह्नादेशस्य नस्य णः स्यात् ।

---

(१७५) टित्करणस्य फलप्रदर्शनायोदाहरति अतिराजीति टित्त्वात् ङीप् ।

(१७६) द्व्यहीन इति समासान्तविधेरनित्यत्वात् न टच् तेन द्व्यह्नीन इत्यनिष्टप्रयोगो नेति बोध्यम् । अतएव द्विगोर्यत्यनुवर्त्तमाने रात्र्यहःसम्वत्सराच्चेति चरितार्थं समासान्ते हि रात्र्यन्तद्विगोरप्रसिद्धेः तथा निर्देशो न स्यात् इत्येतज्ज्ञापकमाश्रित्यैव समासान्ताभाव इति तु न्याय्यम् ।

(१७७) अनित्यत्वादिति अन्यथा मद्रराज्ञीत्यत्र टचि पुंवत्त्वे टिलोपे च मद्रराजीति स्यादिति भावः ।

सर्वाह्णः। पूर्वाह्णः। संख्याताह्नः। द्वयोरह्नोर्भवः। कालाट्ठञ् (५६६सू०) द्विगोर्लुगनपत्य इति (४९१सू०) ठञो लुक्। द्व्यह्नः। स्त्रियामदन्तत्वाट्टाप्। द्व्यह्ना(१७८)। द्व्यह्नप्रियः। अत्यह्नः।

## क्षुभ्नादिषु (१७९) च। ८।४।३९।

एषु णत्वं न स्यात्। दीर्घाह्नी प्रावृट्। एवञ्चैतदर्थमह्न इत्यदन्तानुकरणक्लेशो (१८०) न कर्त्तव्यः। प्रातिपदिकान्तेति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात् अदन्तादिति तपरकरणान्नेह। परागतमहः पराह्नः।

---

(१७८) द्व्यह्नेति इदञ्च तद्धितार्थद्विगोर्विशिष्टलिङ्गतावादिमते वस्तुतोऽस्य स्त्रीत्वमेव नास्ति रात्राह्नाहाः पुंसीति सूत्रेण(३९१सू०)पुंस्त्वविधायकेन तस्य बाधात् तद्धितार्थे द्विगुः संख्या सर्वनामतदन्तका इत्यमरोक्तिस्तु रात्राह्नातिरिक्तविषयेति। शब्देन्दु०।

(१७९) क्षुभ्नादिष्विति अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्य इति भाष्यम् न भाभूपूकमीत्यादय(७३००सू०)स्तस्यैव प्रपञ्च इति कैयटः। क्षुभ्ना नृनमन नन्दिन् नन्दन नगर। एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति। हरिनन्दी हरिनन्दनः गिरिनगरम्। (नृतिर्यङि प्रयोजयति। नरीनृत्यते।) नर्त्तन गहन नन्दन निवेश निवास अग्नि अनूप एतान्युत्तरपदानि प्रयोजयन्ति। परिनर्त्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूप। आचार्य्यादणत्वञ्च। आचार्य्यभोगीनः। आकृतिगणोऽयम् क्षुभ्नादिः।
पाठान्तरम् क्षुभ्ना तृप्नु नृनमन नर नगर नन्दन (यङ्नृति) गिरिनदी गृहगमन निवेश निवास अग्नि अनूप आचार्य्यभोगीन चतुर्हायन इरिकादीनि (वनोत्तरपदानि संज्ञायाम्) इरिका तिमिर समीर कुबेर हरि कर्म्मार। क्षुभ्नादिः।

(१८०) अह्नोऽदन्तादिति(३८२सू०)सूत्रे अह्न इत्यदन्तानुकरणं षष्ठ्यर्थे प्रथमा तेन

**न संख्यादेः समाहारे । ५ । ४ । ८९ ।**

समाहारे वर्त्तमानस्य संख्यादेरह्नादेशो न स्यात् । संख्यादेरिति स्पष्टार्थम् । द्वयोरह्नोः समाहारः द्व्यहः । त्र्यहः ।

**उत्तमैकाभ्यां च । ५ । ४ । ९० ।**

आभ्यामह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः(१८१) पुण्यशब्दमाह । पुण्यैकाभ्यामित्येव सूत्रयितुमुचितम् । पुण्याहम् । एकाहः । उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थमित्येके । संख्याताहः ।

**अग्राख्याया (१८२) मुरसः । ५ । ४ । ९३ ।**

टच् स्यात् । अश्वानामुर इव अश्वोरसम् मुख्योऽश्व इत्यर्थः ।

**अनोऽश्मायःसरसाञ्जातिसंज्ञयोः । ५ । ४ । ९४ ।**

टच् स्याज्जातौ संज्ञायाञ्च । उपानसम्(१८३) । अमृताश्मः । कालायसम् । मण्डूकसरसमिति जातिः । महानसम् । पिण्डाश्मः । लोहितायसम् । जलसरसमिति संज्ञा ।

---

दीर्घाह्नी प्रावृडित्यादौ अदन्तत्वाभावात् न स्यादिति प्राचामाशयस्तथा व्याख्याक्लेशं परिजिहीर्षुराह अहरादन्तानुकरणमिति ।

(१८१) अहः सर्वैकदेशेति(२८१)सूत्रे सर्वोत्तरतया पुण्यशब्दस्य निर्दिष्टत्वादिहोत्तमशब्दस्य तत्परत्वमित्याह अन्त्यार्थ इति । पुण्यसुदिनाभ्यामिति(२९५४०)क्लीबत्वस्य वक्ष्यमाणतया पुण्याहमिति क्लीबम् ।

(१८२) अग्राख्यायामिति अग्रं प्रधानं तद्वाचिन उरःशब्दात् तत्पुरुषान्तावयवात् टच् स्यादित्यर्थः ।

(१८३) उपानसमित्यत्र प्रादिसमासः । अन्यत्र यथायथं समासः ।

भ्रातुष्पुत्रशब्दस्य पाठात् । तेनेह न । मातुः कृपा ॥ * मुहुसः प्रतिषेधः । मुहुःकामा । ❈ तिरसोऽन्यतरस्याम् ।८।३।४२। तिरसः सो वा स्यात् कुप्वोः । तिरस्कर्ता । तिरःकर्ता । ❈ द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ।८।३।४३। कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात् कुप्वोः । द्विष्करोति । द्विःकरोतीत्यादि । कृत्वोऽर्थे किम् । चतुष्कपालः । ❈ इसुसोः सामर्थ्ये ।८।३।४४। एतयोर्विसर्गस्य षः स्याद्वा कुप्वोः । सर्पिष्करोति । सर्पिःकरोति । धनुष्करोति । धनुःकरोति । सामर्थ्यमिह व्यपेक्षा । सामर्थ्ये किम् । तिष्ठतु सर्पिः, पिब त्वमुदकम् । ❈ नित्यं समासेऽनुत्तरपदस्थस्य ।८।३।४५। इसुसोर्विसर्गस्यानुत्तरपदस्थस्य नित्यं षः स्यात् कुप्वोः परयोः । सर्पिष्कुण्डिका । धनुष्कपालम् । अनुत्तरपदस्थस्येतिकिम् । परमसर्पिःकुण्डिका । कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः । व्यपेक्षायां नित्यार्थश्च । ❈ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ।८।३।४६। अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु

---

त्पत्तिपक्षभेदेन षत्वविकल्पसिद्धेस्तदुदाहरणस्यासंगतिप्रसङ्गात् । किंच तिष्ठतु सर्पिरित्यादौ 'इदुदुपधस्य–' इति षत्वस्येष्टत्वे–कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः—इति स्वमूलग्रन्थविरोध इति ॥ अत्र केचित् । इदुदुपधस्याप्रत्ययस्येति वक्तव्ये इदुदुपधस्येतिग्रहणं नित्यं य इदुदुपधस्तस्यैव विसर्गस्य षत्वं यथा स्यात् कविभिः कृतमित्यादौ मा भूदित्येवमर्थं, भिसो विसर्गस्य हि नित्यमिदुदुपधत्वं नास्ति रामैरित्यादौ तदभावाद् इति । तन्न । अग्निः करोतीति निषेधोदाहरणस्यासंगत्यापत्तेः । देव इत्यादौ अकारोपधत्वात् प्रियचत्वा इत्यादावाकारोपधत्वेन चतुष्कपाल इत्यादौ षत्वानापत्तेश्चेति यत्किंचिदेतत् ॥ अन्ये तु प्रत्ययस्य यो विसर्जनीयो न भवति इत्यादिव्याख्याने तूक्तोदाहरणे षत्वस्याप्रवृत्तेरपधत्वेत्येतत्तत्तुल्यजमित्याहुः ॥ स्यादेतत् । अप्रत्ययग्रहणमेव स्थानिवत्सूत्रं प्रति त्रिपादी सिद्धेत्यत्र ज्ञापकमित्युक्तम् । तदिदं वैयधिकरण्येनान्वयमभ्युपगच्छतां न सिध्येत् । अत्राहुः । 'न मु ने' इत्यत्र नेति योगं विभज्य स्थानिवत्सूत्रं प्रति त्रिपादी नासिद्धेति व्याख्यायते । 'प्रत्ययः' 'परश्च' इत्यादिनिर्देशाश्चेहानुकूलाः । योगविभागस्येष्टसिद्ध्यर्थत्वात् 'अचः परस्मिन्–' इति सूत्रं प्रति त्वसिद्धैव । ततश्च 'पूर्वत्रासिद्धे न स्थानिवत्' इति सिद्धान्तो युक्तिमूलक इत्यादि सर्वं संगच्छत इति ॥ अप्रत्ययो यो विसर्ग इति सामानाधिकरण्यपक्षे मातुः कृपेत्यादौ 'इदुदुपधस्य–' इति षत्वमाशङ्क्याह—**एकादेशशास्त्रनिमित्तकस्येति** । मातुरित्यत्र हि 'ऋत उत्' इति एकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम् । आकरे तु 'एकादेशनिमित्तात्' इति प्रचुरः पाठः, तत्र एकादेशशास्त्रं निमित्तं यस्य उकारस्य तस्मादित्यर्थः ॥ नन्वेवम् 'अप्रत्ययस्य' इत्यत्र सामानाधिकरण्यपक्षोऽप्याकरसंमत इति चेदत्राहुः । 'प्रत्येकं संयोगसंज्ञा' इति पक्ष आकरसंमतोऽपि यथा निष्प्रयोजनस्तथायमपि ॥ वैयधिकरण्यपक्षस्त्वावश्यक एव । अन्यथा तिष्ठतु सर्पिः पिब त्वमुदकमित्याद्यसिद्ध्यापत्तेरिति ॥ **—भ्रातुष्पुत्रशब्दस्य पाठादिति** । न च 'षत्वतुकोरसिद्धः' इत्येकादेशशास्त्रस्यासिद्धत्वात् षत्वाप्राप्तौ विध्यर्थ एव तत्र पाठो न ज्ञापनार्थ इति वाच्यम् । षत्वे तुकि च कर्तव्ये पदान्तपदाद्योः सतोरेवैकादेशोऽसिद्ध इति सिद्धान्तात् । अन्यथा शकहूष्विलत्रापि षत्वं न स्यात् । शकान् ह्वयन्तीत्यत्र 'आदेच उपदेशे–' इत्यात्वे क्विपि संप्रसारणे कृते 'संप्रसारणाच्च' इति पूर्वरूपैकादेशे च 'हलः' इति दीर्घः । भवति हि कोऽसिचत् सोऽसिचद् इत्यादौ पदान्तपदाद्योरादेशः । तेन तत्र षत्वनिषेधः सिध्यति न तु शकहूष्वित्यत्र । एवं च भ्रातुष्पुत्र इत्यत्रापि 'षत्वतुकोः–' इत्येकादेशशास्त्रमसिद्धं न भवतीत्युक्तं ज्ञापकं सुस्थमेव ॥ ननूक्तज्ञापकात् शकहूष्वित्यत्रापि मातुः कृपेत्यत्रेव षत्वं न स्यात् । मैवम् । तुल्यजातीयस्य ज्ञापकत्वात्, कश्च तुल्यजातीयः, यः कुप्वोरिति दिक् ॥ **—द्विस्त्रिश्चतुरिति–** ॥ इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव गृह्यते । कृत्वोऽर्थग्रहणं तु साहचर्यं न सर्वत्र व्यवस्थापकमित्यत्र ज्ञापकम् । तेन 'दीधीवेवीटाम्' इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणम् ॥ **—चतुष्कपाल** इति । चतुर्षु कपालेषु संस्कृत इत्यर्थे 'संस्कृतं भक्षाः' इत्यणो 'द्विगोर्लुगनपत्ये' इति लुक् । अत्र मनोरमायाम् 'इदुदुपधस्य–' इति नित्यं ष इत्युक्तम् । एवं च 'द्वितं त्रितमिति चतुःपञ्चाशत्' इति स्वमूलग्रन्थप्रयोगविरोधः स्यात्, चतुष्कपालवत्तत्रापि नित्यतया षत्वप्रवृत्तेः, अतोऽत्र षत्वनिवारणाय 'अप्रत्ययस्य' इत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्यर्थ एव स्वीकर्तव्यः ॥ चतुष्कपाल इत्यत्र तु कस्कादेराकृतिगणत्वात् षत्वप्रवृत्तिरित्याहुः ॥**—व्यपेक्षाविरहेऽपीति** । तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः ॥**—व्यपेक्षायामिति** । इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः । अत्र सर्पिरित्यसमस्तं पदमिति बोध्यम् । समासे तु 'नित्यं समासे–' इत्यनेन सिद्धेः । समासाभावमेव ज्ञापयितुमिदमिति

---

१ तिरस इति—अत्र गतिग्रहणं नानुवर्तते, पराभवेऽपि तिरस्कारशब्दप्रयोगात्, अन्तर्धावेव तिरसो गतित्वात् । २ चतुष्कपाल इति—ननु व्युत्पत्तिपक्षेऽत्र षत्वं न स्यात् इति चेत्, भाष्यप्रामाण्येनाव्युत्पत्तिपक्षस्यैवात्र कल्पनात् । चतुष्पादाद्यादिष्वत्रापि षत्वं भवत्येव । ३ करोत्यादिष्विति—करोतिशब्देन तदादेर्ग्रहणम्, समासाक्षिप्तोत्तरपदस्य विशेष्यत्वात् । विष्वगित्यादिसूत्रे चाप्रत्ययग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनादिति ।

ग्रामकौटाभ्याञ्च तक्ष्णः। ५। ४। ९५।

ग्रामस्य तक्षा ग्रामतक्षः। साधारण इत्यर्थः। कुट्यां भवः कौटः स्वतन्त्रः। स चासौ तक्षा च कौटतक्षः।

अतेः शुनः। ५। ४। ९६।

अतिश्वो(१८४) वराहः अतिश्वी सेवा।

उपमानादप्राणिषु। ५। ४। ९७।

अप्राणिविषयकोपमानवाचिनः शुनष्टच् स्यात्। आकर्षः(१८५) श्वेव आकर्षश्वः। अप्राणिषु किम् वानरः श्वेव वानरश्वा।

उत्तरमृगपूर्व्वाच्च सक्थ्नः। ५। ४। ९८।

चादुपमानात्। उत्तरसक्थम्। मृगसक्थम्। पूर्व्वसक्थम्। फलकमिव (१८६) सक्थि फलकसक्थम्।

नावोद्विगो। ५। ४। ९९।

नौशब्दान्तात् द्विगोष्टच् स्यान्न तु तद्धितलुकि (१८७)। वा-

---

(१८४) अतिश्व इति अतिक्रान्तः श्वानमित्यतिश्वस्ततोऽधिकवेगवानित्यर्थः। से वा नीचसेवा न श्वहत्या कदाचनेत्युक्ता सकलसेवा वा।

(१८५) आकर्षः पञ्चकुलोधान्यादिकर्षकः। काष्ठविशेषः। उपमानात् किं निष्क्रान्तः शुन इति वाक्ये निःश्वेत्यादौ न।

(१८६) फलकमिवेतीवशब्दस्य मयूरव्यंसकादित्वात् लोपः।

(१८७) नावइत्यत्र गोरतद्धित लुकीत्यतः(२५६८)मण्डूकप्लुत्या अतद्धितलुकीत्यनुवर्त्तते।

भ्यान्नौभ्यामागतः द्विनावरूप्यः। द्विगोर्लुगनपत्यइत्यत्र(४६१पृ०) (१८८) अचीत्यस्याऽपकर्षणाद्धलादेर्न लुक्। पञ्चनावप्रियः। द्विनावम्। त्रिनावम्। अतद्धितलुकीति किम्। पञ्चभिर्नौभिः क्रीतः पञ्चनौः (१८९)।

## अर्द्धाच्च। ५।४।१००।

अर्द्धान्नावष्टच् स्यात्। अर्द्धं नावः अर्द्धनावम्। क्लीबत्वं लोकात् (१९०)।

## खार्य्याः (१९१) प्राचाम्। ५।४।१०१।

द्विगोरर्द्धाच्च खार्य्याष्टच् स्याद्वा। द्विखारम् द्विखारि। अर्द्धखारम् अर्द्धखारि(१८२)।

## द्वित्रिभ्यामञ्जलेः। ५।४।१०२।

(१८८) द्विनावरूप्यइत्यत्र हेतुमनुष्येभ्यइति(५८५पृ०)रूप्यः तस्य द्विगोर्लुगनपत्यइत्येतेन लोपस्याशङ्कायामाह द्विगोरित्यादि। एतच्च तद्धितार्थे विषये द्विगोरुदाहरणम् पञ्चनावप्रियइत्युत्तरपदस्य, द्विनावमिति समाहारस्य उदाहरणम्।

(१८९) पञ्चनौरिति आर्हीयष्ठक् अध्यर्द्धपूर्वेत्यादिना(६३२पृ०) तस्य लुक्।

(१९०) अर्द्धनावमित्यत्र परवल्लिङ्गतया स्त्रीत्वप्राप्तावाह क्लीबत्वमिति लिङ्गमशिष्यं लोकाश्रयत्वादित्युक्तिरेवात्र मानमिति भावः।

(१९१) खार्य्याइत्यादौ अतद्धितलुकीत्येव तेन द्वाभ्यां खारीभ्यां क्रीतइत्यादौ तद्धितलुकि द्विखारिरित्येव।

(१९२) अर्द्धखारीति एकविभक्तावषष्ठ्यन्तवचनादुपसर्ज्जनत्वाभावेन न ह्रस्वः ईवन्तत्वात्तु लोपः ह्रस्वपाठे लोकाप्रयुक्ततया ह्रस्वइति भेदः।

टज्वा स्यात् द्विगौ। द्व्यञ्जलं द्व्यञ्जलि। अतद्धितलुकीत्येव द्वाभ्यामञ्जलिभ्यां (१८३) क्रीतः द्व्यञ्जलिः।

**ब्राह्मणो जानपदाख्यायाम्। ५।४।१०४।**

ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात्समासेन जानपदत्व(१८४)माख्यायते चेत्। सुराष्ट्रे (१८५) ब्रह्मा सुराष्ट्रब्रह्मः।

**कुमहद्भ्यामन्यतरस्याम्। ५।४।१०५।**

आभ्यां ब्राह्मणो वा टच् स्यात्तत्पुरुषे। कुत्सितो ब्रह्मा कुब्रह्मः(१८६) कुब्रह्मा।

**आन्महतः(१८७)समानाधिकरणजातीययोः।६।३।४६।**

---

(१८३) अञ्जलिभ्यामिति तत्परिमितधान्यादिनेत्यर्थः तथाच तस्य परिमाणार्थतया तदर्थकतद्धितस्य ठकः अध्यर्द्धेत्यादिना(६३२पृ॰)लुक्।

(१८४) जनपदे भवो जानपदस्तस्य भावप्रधाननिर्द्देशस्त्वाश्रयेन व्याचष्टे जानपदत्वमिति कस्येत्याकाङ्क्षायां सन्निधानात् ब्रह्मण एवेति लभ्यत इति बोध्यम्।

(१८५) सुराष्ट्रे इति अधिकरणस्य शेषत्वविवक्षयात्र षष्ठीसमास एव युक्तः न तु सप्तमीसमासः ब्रह्मशब्दस्य शौण्डादिगणे पाठाभावात्। जानपदे इति किं देवब्रह्मा नारद इत्यादौ न। शब्देन्दु॰।

(१८६) कुब्रह्मेति ब्राह्मणपर्य्यायोऽत्र ब्रह्मन्शब्दः श्मशानादिकर्म्मसु विनियुक्तो वेदो वा ब्राह्मशब्दार्थः।

(१८७) पदाधिकारे तदन्तस्यापि ग्रहणविधानात् महच्छब्दान्तस्यापि ग्रहणं तेन परममहापुरुष इत्यादिसिद्धिः तदन्तग्रहणेऽपि गौणस्य

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाब्रह्मः महाब्रह्मा । महादेवः महाजातीयः । समानाधिकरणे किम् महतः सेवा महत्सेवा । लाक्षणिकं विहाय प्रतिपदोक्तः सन्महदिति (१६२पृ०) समासो गृह्यत इति चेत् । महाबाहुर्न (१९८) स्यात् । तस्माल्लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येति परिभाषा नेह प्रवर्त्तते समानाधिकरणग्रहणसामर्थ्यात् । आदिति योगविभागादात्त्वं प्रागेकादशभ्य इति (१९९)निर्द्देशाद्वा । एकादश । महतीशब्दस्य पुंवत्कर्मधारयेति (१६२पृ०) पुंवद्भावे कृते आत्त्वम् । महाजातीया । महदात्त्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च* । असमानाधिकरणार्थमिदम् । महतो महत्या(२००) वा घासः । महाघासः । महाकरः । महाविशिष्टः । अष्टनः कपाले हविषि* । अष्टाकपालः । गवि च युक्ते* । गोशब्दे परे युक्त इत्यर्थे अष्टन आत्त्वं स्यात् । अष्टागवं शकटम् ।

न ग्रहणं भाष्ये महद्भूतश्चन्द्रमा इत्युदाहरणे च्व्यन्ते गौणत्वान्नात्त्वमित्युक्तत्वात् तेन अतिमहद्बाहुरित्येव । शब्देन्दु०

(१९८) महाबाहुरिति बहुव्रीहिरयं स च सामान्यशास्त्रानिर्दिष्टत्वाल्लाक्षणिक एवेति तत्र न प्रसङ्गः स्यादिति भावः ।

(१९९) प्रागेकादशभ्योऽच्छन्दसीति सूत्रे एकादशेत्यत्र कृतात्त्वपूर्व्वपदनिर्द्देशादित्यर्थः ।

(२००) महतो महत्या वेति तथा चात्र चकारोऽन्वाचयएव समुच्चयपरत्वे पुंवद्भावसन्नियोगशिष्टतया स्त्रियामेव प्रवृत्तिः स्यात्तस्मात्तत्र पुंवद्भावाप्रसक्तेरिति भावः ।

अच् प्रत्यन्ववेत्यतानिति (४५२४०) योगविभागाद्बहुव्रीहावपच्
अष्टानाङ्गवां (२०१) समाहारः अष्टगवम्। तद्युक्तत्वाच्छकट-
मष्टागवमिति वा।

## द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः। ६। ३।४७।

आत्स्यात्। द्वौ च दश च द्वादश द्व्यधिका(२०२)दशेति वा। द्वाविंशतिः। अष्टादश। अष्टाविंशतिः। अबहुव्रीह्यशीत्योः किम्। द्विवाः। द्व्यशीतिः। प्राक् शताद्वक्तव्यम्*। नेह द्विशतम्। द्विसहस्रम्।

## त्रेस्त्रयः। ६। ३। ४८।

त्रिशब्दस्य त्रयः स्यात्पूर्वविषये। त्रयोदश। त्रयोविंशतिः। बहुव्रीहौ तु। त्रिदश त्रिदशाः। सुजर्थे बहुव्रीहिः (२०३)। अशीतौ तु त्र्यशीतिः। प्रक्शतादित्येव। त्रिशतम्। त्रि-सहस्रम्।

## विभाषा चत्वारिंशत्प्रभृतौ सर्व्वेषाम्। ६। ३।४९।

(२०१) योगविभागस्य भाष्येऽदर्शनात् प्रकारान्तरेण प्रयोगं समर्थयति अ-ष्टानां गवामिति।

(२०२) द्व्यधिकेत्यत्र संख्या संख्येयं वाऽन्यपदार्थः एकादीनां द्वतिविषय इव विंशत्यादीनां सर्व्वत्र संख्यासंख्येयोभयपरत्वस्य स्वीकारात् तेन द्वाविंशतिर्गावः गवां वा द्वाविंशतिरित्युभयथा प्रयोगः।

(२०३) सुजर्थे इति संख्ययाव्ययेत्यादिना (४१०४०) बहुव्रीहिरिति बोध्यम्।

द्व्यष्टनोस्संख्य प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे । द्विचत्वारिंशत् द्वाचत्वारिंशत् । अष्टचत्वारिंशत् अष्टाचत्वारिंशत् त्रिचत्वारिंशत् त्रयश्चत्वारिंशत् एवं पञ्चाशत्षष्टिसप्ततिनवतिषु ।

## एकादिश्चैकस्य चादुक् । ६ । ३ । ७६ ।

एकादिर्नञ्प्रकृत्या स्यादेकस्यादुगागमश्च । नञोविंशत्या समासे कृते एकशब्देन सह तृतीयेति (११८९०) योगविभागात्समासः । अनुनासिकविकल्पः । एकेन न विंशतिः एकान्नविंशतिः । एकादूनविंशतिः एकोनविंशतिरित्यर्थः । षषउत्वन्दतदशधासूत्तरपदादेः ष्टुत्वञ्चधासु वेति वाच्यम् । षोडन् (२०४) । षोडश । षोढा षड्धा (२०५) ।

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । २ । ४ । २६ ।

एतयोः परपदस्येव लिङ्गं (२०६) स्यात् । कुक्कुटमयूर्याविमे

---

(२०४) षोडशमित्यत्र बहुव्रीहौ वयसि दन्तस्य दतृ इति(४२२९०) दत्रादेशः ।

(२०५) धासु वेत्यत्रोत्त्वसन्नियोगशिष्टतया ष्टुत्वस्योत्त्वाभावपक्षे न प्रवृत्तिरित्याशयेनोदाहरति षड्धेति ।

(२०६) परवल्लिङ्गमिति । समाहारविषयकोऽयं स नपुंसकमित्यनेन (९८५सू०) परत्वादेतस्य बाधात् परिशेषात् इतरेतरयोगद्वन्द्वविषयमेतत् । तत्र चोद्भूतावयवभेदकसमुदायस्य इतरेतरद्वन्द्वार्थतयाऽवयवलिङ्गेन तल्लिङ्गत्वे प्राप्ते पूर्वस्य परस्य वा लिङ्गानुसारेण प्रयोग इत्याशङ्कायां नियमार्थमिदम् तत्पुरुषे तु प्राधान्येन व्यपदेशा भवन्तीति न्यायेन प्राप्तावप्येकदेशिसमासे पूर्वपदार्थप्राधान्येन परलिङ्गाप्राप्त्या विध्यर्थमिदमिति विवेकः । सूत्रे द्वन्द्वतत्पुरुषयोरिति षष्ठ्यन्तमर्थपरं शब्दार्थयोरभे-

मयूरीकुक्कुटाविमौ। अर्द्धपिप्पली। द्विगुप्राप्तापन्नालम्पूर्व-
गतिसमासेषु (२०७) प्रतिषेधो वाच्यः॥। पञ्चसु कपालेषु
संस्कृतः पञ्चकपालः पुरोडाशः। प्राप्तो जीविकाम्
प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्य्यै अलंकुमारिः।
अतएव ज्ञापकात्समासः। निष्कौशाम्बिः।

पूर्व्ववदश्ववडवौ। २। ४। २७।

द्विवचनमतन्त्रम्(२०८) अश्ववडवौ अश्ववडवान् अश्ववडवैः।

रात्राह्नाहाः पुंसि। २। ४। २९।

एतदन्तौ द्वन्द्वतत्पुरुषौ (२०९) पुंस्येव। अनन्तरत्वात्परवल्लि-
ङ्गतापवादोऽप्ययम्परत्वात्समाहारनपुंसकतां बाधते। अहो-
रात्रः। रात्रेः पूर्वभागः पूर्वरात्रः। पूर्व्वाह्णः। द्व्यहः।
संख्यापूर्व्वं (२१०) रात्रं क्लीबम् *। द्विरात्रम्। त्रिरा-
त्रम्। गणरात्रम्।

---

दात् तथाच द्वन्द्वतत्पुरुषपदार्थस्य उत्तरावयवार्थलिङ्गवल्लिङ्गमित्यर्थ इत्याह परपदस्येवेति।

(२०७) गतिसमासपदं गतेः समासो येनेति बहुव्रीहिणा गतिसमासविधायकसूत्रपरं तच्च कुगतिप्रादय इति (३७१पृ०)सूत्रम्। तस्मिंश्च कुगत्योरलोदाहरणासम्भवात् प्रादावुदाहरति निष्कौशाम्बिरिति।

(२०८) द्विवचनमतन्त्रमविवक्षितं तेन बहुवचनेऽपि स्यादित्याशयः। अश्ववडवसमासार्थः पूर्व्वपदवल्लिङ्गं लभत इत्यर्थः।

(२०९) रात्राह्नाहा इत्यत्र द्वन्द्वतत्पुरुषयोरित्यनुवर्त्तते। इदञ्च प्राप्तापन्नादिसमासेऽपि प्रवर्त्तते। तेन प्राह्णः पराह्ण इत्यादेः पुंस्त्वमिति बोध्यम्।

(२१०) संख्यापूर्व्वमितीदं समाहारद्विगावेव प्रवृत्तमन्यस्यासम्भवात्। गणरात्रमिति संख्यापूर्व्वकतया समाहारे द्विगुः।

अपथन्नपुंसकम्। २। ४। ३०।

तत्पुरुषत्वेव (२११)। अन्यत्र तु अपथो देशः। कृतसमासान्तनिर्द्देशान्नेह। अपन्थाः (२१२)।

अर्द्धर्च्चाः पुंसि च। २। ४। ३१।

अर्द्धर्च्चादयः(२१३)शब्दाः पुंसि क्लीवे च स्युः। अर्द्धर्च्चः अर्द्धर्च्चम्। ध्वजः ध्वजम्। एवन्तीर्थशरीरमण्डपयूपदेहाङ्कुशकलशादि।

(२११) तत्पुरुषत्वेवेति तादृशद्वन्द्वस्यासम्भवादिति भावः।

(२१२) अपन्था इति पथो विभाषेति(४५६पृ०)पाक्षिकसमासान्ताभावः।

(२१३) अर्द्धर्च्चा इति बहुवचनं गणसूचनार्थं तदाह अर्द्धर्च्चादय इति।

अर्द्धर्च्च गोमय कषाय कार्षापण कुतप कुणप कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म्म कर्म्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाड़िम हिम रजत सक्तु पिधान सार पात्रघृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव(पात्रीर) षष्टिक वारवाण प्रोथ कपित्थ शुष्क शाल शील शुल्क शीधु कवच रेणु ऋण कपट शीकर मुसल सुवर्ण वर्ण पूर्व्व चमस क्षीर कर्ष आकाश अष्टापद मङ्गल निधन निर्य्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेड़ित शृङ्ग निगड़ खल मधु मूल मूलक स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक कर्पट शिखर कल्क नाट मस्तक वलय कुसुम तृण पङ्क कुण्डल किरीट कुमुद अर्व्बुद अङ्कुश तिमिर आश्रम भूषण इष्वास मुकुल वसन्त तडाग पिटक विटङ्क विड़ङ्ग पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास विशाल चषाल

**जात्याख्यायां(२१४) मेकस्मिन् बहुवचनमन्य**
**तरस्याम्।१।२।५८।**

**कोऽप्यर्थो वा बहुवद्भवति। ब्राह्मणाः पूज्याः ब्राह्मणः**
**ज्यः।**

---

खण्ड दर विटप रण बल मक मृणाल हस्त आर्द्र हल सूत्र ताण्ड-
व गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल छल पुर
राष्ट्र बिम्ब अम्बर कुट्टिम कुक्कुट कुडप ककुद खण्डल तोमर तोरण
मञ्चक पञ्चक पुङ्ख मध्य बाल छाल वल्मीक वर्ष वस्त्र वसु देह
उद्यान उद्योग स्नेह स्तेन स्तन स्वर संगम निष्क क्षेम शूक छत्र
पवित्र यौवन कलह पालक मूषिक मण्डल वल्कल कुञ्ज विहार लो
हित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ
लोमश तमाल लोह दण्डक शपथ प्रतिसर दारु धनुष् मान वर्चस्क
कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड़ शकल
तन्तुल। अर्द्धर्चादिः।
इह केषाञ्चिदर्थभेदेन लिङ्गव्यवस्था शास्त्रकारैरङ्गीकृता। तथाच
शाश्वतः।

मकरन्दस्य-मद्यस्य माक्षिकस्य च वाचकः।
अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुरिति।

तथाच मकरन्दादिवाचकत्वे द्विलिङ्गता चैत्रवाचित्वे पुंस्त्वमेव स्वार्थ-
कवैलिको मधुरित्यमरोक्तेः।

२१४) जात्याख्यायामिति प्राधान्येन जातेर्वाच्यतायामित्यर्थः। गवादिश
ब्दानां भावप्रत्ययं विना प्राधान्येन जातिबोधने इदमेव सूत्रं प्रमा-
णम्। एकस्या अपि तस्याविशेष्यत्वे च बहुत्वाद्यन्वयो व्यक्तिघटित
परम्परया बोध्यः। एवञ्च जातेरेकत्वेन तदाश्रयव्यक्तेर्बाहुल्येऽप्येकव-
चनमेव प्रयोज्यमिति ज्ञापनाय सूत्रमिदं तथाचैकस्मिन्नर्थे वर्त्तमानो
जातिशब्दो बहूनां वचनं बोधकं भवतीत्यर्थातिदेशोऽयमित्यवसेयम्। एक-
स्मिन् बहुवचनमित्युक्तेरेकत्वमेव बहुवचनप्रत्ययार्थ इति तु न्याय्यम्।

**अस्मदो द्वयोश्च।१।२।५९।**

एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात्। वयं ब्रूमः पक्षेऽहं ब्रवीमि आवां ब्रूव इति वा। सविशेषणस्य प्रतिषेधः॥। पटुरहं ब्रवीमि।

**फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे।१।२।६०।**

द्वित्वे (२१५) बहुत्वप्रयुक्तङ्कार्य्यं वा स्यात्। पूर्वे फल्गुन्यौ पूर्वाः फल्गुन्यः। पूर्वे प्रोष्ठपदे पूर्वाः प्रोष्ठपदाः। नक्षत्रे किम् पूर्वफल्गुन्यौ माणविके।

**तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे (२१६) बहुवचनस्य द्विवचनं नित्यम्।१।२।६३।**

बहुत्वं द्वित्ववद्भवति। तिष्यश्च पुनर्वसू(२१७)च तिष्यपुनर्व्वसू। तिष्येति किम् विशाखानुराधाः (२१८)। नक्षत्रे किम् तिष्य-पुनर्वसवो माणवकाः।

---

(२१५) चकारेण अस्मदो द्वयोश्चेत्यतो द्वयोरित्यस्यानुकर्षणादाह द्वित्वे इति उद्भूतावयवभेदे समुदायएवानयोरूढत्वादेकस्यां न प्रयोग'।

(२१६) तिष्येत्यत्र नक्षत्रइत्यनुवर्त्तते तिष्यपुनर्वसुशब्दतुल्यार्थयोरर्थे नक्षत्रे वर्त्तमानो यो नक्षत्रवाचकानां द्वन्द्वस्तस्येत्यर्थः। एवञ्च तत्तुल्यार्थ-कयोः सिध्यपुष्यशब्दयोरपि समासे तथेति बोध्यम्।

(२१७) पुनर्वसूइति पुनर्वसू द्वे तारेतिष्यएका तारा इति तद्द्वन्द्वे बहुत्वेऽपि अनेन द्विवचनविधानात् द्विवचनान्तता।

(२१८) विशाखे चानुराधाश्चेति विग्रहे विग्रहीतानां बहुत्वात् प्राप्ति प्रसक्तेऽपि तिष्यादिभिन्नत्वान्न प्रसङ्गः।

न दूरतस्पुत्रत्व । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः[1] । अयस्पात्रम् । अयःसहिता: कुशा अयस्कुशा । अयस्कर्णी । अतः किम् । गीःकारः । अनव्ययस्य किम् । स्वःकामः । समासे किम् । यशः करोति । अनुत्तरपदस्थस्य किम् । परमयशःकारः । ॥ अधःशिरसी पदे ।८।३।४७। एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे । अधस्पदम् । शिरस्पदम् । समास इत्येव । अधः पदम् । शिरः पदम् । अनुत्तरपदस्थस्येत्येव । परमशिरःपदम् ।

कस्कादिषु च ॥ भास्करः ॥ ॥ इति विसर्गसंधिः ॥

---

## स्वादिसंधिः ।

स्वौजसमौडिति सुप्रत्यये शिवस् अर्च्य इति स्थिते । ॥ ससजुषो रुः ।८।२।६६। पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात् । जश्त्वापवादः । ॥ अतो रोरप्लुतादप्लुते ।६।१।११३। अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । भोभगोअघो इति प्राप्तस्य यत्वस्यापवादः । उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति । रुत्वमनूद्य उत्वविधेः सामर्थ्यात् । ॥ प्रथमयोः पूर्वसवर्णः ।६।१।१०२। अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते । ॥ नादिचि ।६।१।१०४। अवर्णादिचि परे न पूर्वसवर्णदीर्घः । आद्गुणः । एङः पदान्तादति । शिवोऽर्च्यः । अतइति तपरः किम् । देवा अत्र । अतीति तपरः किम् । श्वआगन्ता । अप्लुतात्किम् । एहि सुस्रोत३[2] अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परोऽयम् । अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम् । तपरकरणस्य तु न सामर्थ्यं दीर्घनिवृत्त्या चरितार्थत्वात् । अप्लुते इति किम् । तिष्ठतु पय अ३ग्निदत्त । गुरोरनृत इति प्लुतः । ॥ हशि च ।६।१।११४। अप्लुतादतः परस्य रोरुः स्याद्धशि । शिवो वन्द्यः । रोरित्युकारानुबन्धग्रहणान्नेह । प्रातरत्र । प्रातर्गच्छ ।

---

सर्पिर्विशेषणमुक्तम् ॥—नित्यार्थश्चेति । अयं भावः । असमासे व्यपेक्षाविरहेऽत्यन्ताप्राप्तौ नित्यतया षत्वार्थः पाठः । व्यपेक्षायां त्वसमासे 'इसुसोः–' इति विकल्पेन प्राप्तौ नित्यार्थ इति ॥—अयःसहितेति । न त्वयसो विकारः, 'जानपद–' इति ङीप्प्रसङ्गात् ॥—अयस्कर्णीति । अय इव कर्णो यस्याः, 'नासिकोदरौ–' इति ङीष् ॥ —अधःशिरसी—॥ —एतयोरिति । सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोध्या ॥—अधस्पदमिति । पदस्याध इति विग्रहः । मयूरव्यंसकादित्वात्समासः ॥—शिरस्पदमिति । षष्ठीसमासः ॥ ॥ इति तत्त्वबोधिन्यां विसर्गसंधिः ॥

स्वादिसंधिः ॥ शिवः, इत्यस्यावसाने विसर्गस्तस्यार्च्य इत्यनेन समभिव्याहारे सत्त्वाभावात्कुलं कथं स्यादित्याशङ्कायामाह —स्वौजसमौडित्यादिनेति । एवं चात्र मूलभूत एव सुरस्तीति रुत्वादिकं स्यादेव, विसर्गस्त्विह न भवति खरवसानाभावात् । भाविन्यवसानभङ्गेऽकृतव्यूहपरिभाषयाऽर्च्यपदसमभिव्याहारात्पूर्वमपि न भवतीति बोध्यम् ॥—ससजुषो रुः ॥ पदस्येत्यनुवृत्तं ससजूभ्यां विशेष्यते, विशेषणेन तदन्तविधिः । न च सजूःशब्दांशे 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति निषेधः शङ्क्यः । तस्य प्रत्ययविधिविषयकत्वात् । सान्तं सजुष्शब्दान्तं च यत्पदं तस्य रुः स्यात्स चालोऽन्त्यस्य ॥ एवं स्थिते फलितमाह—पदान्तस्य सस्येति ॥—सजुष्शब्दस्येति । तदन्तस्य पदस्येत्यर्थः । तेन सजुषौ सजुष इत्यत्रापि नातिव्याप्तिः । न च सजूरित्यत्राव्याप्तिः 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिति वाच्यम् । तस्यापि प्रत्ययविधिविषयकत्वात् । अत एव 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति 'ग्रहणवता–' इति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति 'दिव उत्–' सूत्रे हरदत्तेनोक्तम् । कैयटहरदत्ताभ्यामिति तु मनोरमायां स्थितम् । तत्र कैयटेनानुक्तत्वात्कैयटग्रहणं प्रमादपतितमिति नव्याः । केचित्तु 'दिव उत्' सूत्रं यस्मिन्निति बहुव्रीहिरयं, सूत्रसमुदायश्चान्यपदार्थः । तथा च 'दिव उत्' सूत्रशब्देन 'इन्द्रे च' इति सूत्रस्यापि क्रोडीकरणात्तत्र कैयटेनोक्तत्वान्नोक्तदोष इति कुकविकृतिवत् क्लेशेन मनोरमां योजयन्ति ॥ यत्वस्यासिद्धत्वादुत्वे कृतेऽपि तस्य स्थानिवत्त्वेन रुत्वायत्वं स्यादित्याशङ्कायामाह—यत्वस्यापवाद इति ॥—उत्वविधेः सामर्थ्यादिति । न च 'अतो रोरप्लुतात्–' इति सूत्रं परित्यज्य 'रोःसुपि' इति सूत्रानन्तरं 'अत उरति' इत्येवं लाघवादुच्यतां किमनेन सामर्थ्याश्रयणप्रयासेनेति वाच्यम् । तथा हि सति उत्वस्यासिद्धतया शिवोऽर्च्य इत्यादावाद्गुणस्याप्रवृत्तिप्रसङ्गात् ॥—प्रथमयोः—॥ अत्र प्रथमाशब्दः प्रथमाद्वितीययोः समुदाये गौणः, द्विवचनं तु समुदायापेक्षया ॥ 'इको यणचि' इत्यतोऽचीति 'अकः सवर्णे दीर्घः' इत्यतोऽको दीर्घ इति 'एकः पूर्वपरयोः' इति सूत्रं चानुवर्तते इत्याशयेन व्याचष्टे—अकः प्रथमाद्वितीययोरचीत्यादिना ॥ अचि किम् । रामः । अकः किम् । गावौ, नावौ । प्रथमयोः किम् । वृक्षे, प्लक्षे ॥ यद्यपीदं 'नादिचि' इत्येनैनैव सिध्यति । तथापि हरी इत्यत्रेव हर्योरित्यत्रापि पूर्वसवर्णदीर्घः स्यात् । तद्वारणाय प्रथमयोरित्युक्तमिति दिक् ॥ पूर्वग्रहणं किम् । अमी इत्यत्र पक्षे परसवर्णो मा भूत् ॥ दीर्घग्रहणं किम् । त्रिमात्रे स्थानिनि त्रिमात्रो मा भूत् ॥—आद्गुण इति । अपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिरिति न्याया-

---

१ अयस्कुम्भ इति—अयस्कुम्भीत्यत्र लिङ्गविशिष्टपरिभाषया सत्वम् । २ सुस्रोत३इतीति—सुस्रोतस् इति कस्यचित्संज्ञा । दूराद्धूते चेति संबोधने प्लुतः ।

## स नपुंसकम्। २। ४। १७।

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। परवल्लिङ्गापवादः। पञ्चगवम्। दन्तोष्ठम्। अकारान्तोत्तरपदो (२१९) द्विगुः स्त्रियामिष्टः* । पञ्चमूली। आबन्तो वा॰। पञ्चखट्वी पञ्चखट्वम्। अनो नलोपश्च वा च द्विगुः स्त्रियाम॰। पञ्चतक्षी पञ्चतक्षम्। पात्राद्यन्तस्य (२२०) न॰। पञ्चपात्रम्। त्रिभुवनम्। चतुर्युगम्। पुण्यसुदिनाभ्यामह्नः क्लीवतेष्टा*। पुण्याहम्। सुदिनाहम्। पथः संख्याव्ययादेः॰। संख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीवमित्यर्थः। त्रयाणां पन्थास्त्रिपथम्(२२१)। विरूपः पन्थाः विपथम्। कृतसमासान्तनिर्देशान्नेह। सुपन्थाः। अतिपन्थाः। सामान्ये(२२२) नपुंसकम्॰। मृदु पचति (२२३)। प्रातः कमनीयम्।

---

(२१९) अकारान्तोत्तरेति। अत्र द्विगुः समाहारद्विगुरेव स नपुंसकमित्यस्यापवादत्वेन तस्यैव प्राप्तत्वौचित्यात्।

(२२०) पात्राद्यन्तस्येति स्त्रीत्वं नेत्यर्थः अकारान्तोत्तरसमाहारद्विगोः स्त्रीत्वस्यैव विधानेन तन्निषेधस्यैवोचितत्वात्।

(२२१ त्रयाणां पन्था इति वाक्ये त्रिपथमित्यत्र ऋक्पूरित्यादिना (४५१पृ०) समासान्तः। कापथविपथौ तु अर्द्धनावमित्यादिवत् लिङ्गस्य लोकाश्रयत्वात् पुमांसावेव। विपथा नगरीत्यादौ तु बहुव्रीहेर्लाक्षणिकतया प्रतिपदोक्तपरिभाषयैतस्य न प्रवृत्तिरिति बोध्यम्। शब्देन्दु॰

(२२२) सामान्येइति एतच्चानियतलिङ्गविषयमेवालिङ्गानां नियतलिङ्गानाञ्च नपुंसकत्वं नास्त्येव। एतच्च न्यायसिद्धं विशेष्यविशेषासन्निधाने सर्व्वनाम्न इव सर्व्वस्य नपुंसकत्वस्यैवोचितत्वादिति। शब्देन्दु॰

(२२३) मृदु पचतीति। क्रियाविशेषणत्वाद्द्वितीयान्तम्। तथाहि धातु-

## तत्पुरुषोनञ्कर्म्मधारयः। २। ४। १९।

अधिकारोऽयम् (२२४)।

## संज्ञायाङ्कन्योशीनरेषु। २। ४। २०।

कन्यान्तस्तत्पुरुषः क्लीवं स्यात्सा चेदुशीनरदेशोत्पन्नायाः कन्यायाः संज्ञा। सुशमस्याऽपत्यानि सौशमयः। तेषां कन्या सौशमिकन्थम्। संज्ञायाम् किम् वीरणकन्या। उशीनरेषु किम् दाक्षिकन्या।

## उपज्ञोपक्रमंतदाद्याचिख्यासायाम् (२२५)। २। ४। २१

---

धात्वर्थभावनारूपव्यापारं प्रति व्यपदेशिवद्भावपरिभाषया फलांशः कर्म्मीभूतः तथाच तत्सामानाधिकरण्यात् कर्म्मविशेषणत्वेन तत्र द्वितीया। अतएव खल्लल्वावित्यादौ कारकपूर्व्वकत्वेन यण्। यत्र तु भावनां प्रति करणतया धात्वर्थविशेषोऽन्वेति तत्र तद्विशेषणानां तृतीयान्ततैव अश्वमेधेन यजेतेत्यादौ तथा प्रयोगात्। ज्योतिष्टोमेन भक्तिपूर्व्वकं यजेतेत्यादौ तु भावनाविशेषणस्य दर्शनादिक्रियाव्याप्यतया क्रियाया अपि कृत्रिमकर्म्मसंज्ञावत्त्वेन तद्विवक्षायां द्वितीयान्तता तथा विवक्षाभावे तु प्रथमान्ततैवेति दिक्। मनो०

(२२४) आरोपस्याभावस्य वा नञा द्योतनात् तद्द्योत्यार्थेनोत्तरपदार्थस्य सामानाधिकरण्याभावात् कर्म्मधारयात् पृथगुक्तिरनञ्कर्म्मधारय इति। नञ्कर्म्मधारयभिन्नएव तत्पुरुषइतऊर्द्ध्वमधिकरिष्यते स च वक्ष्यमाणतत्तत्कार्य्यं लभतेइत्यर्थः। इदञ्च प्रकरणं परवल्लिङ्गत्वस्य विशेष्यनिघ्नत्वस्य चापवादकम्।

२२५) आख्यातुमिच्छा आचिख्यासा। अत्र सभा विवक्षैवाभिधीयतेइह शास्त्रे विवक्षैव नियामिका नतु वस्तुस्थितिः। विवक्षा च न प्रयोक्तृ

उपज्ञान्तउपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् तयोरुपज्ञा-यमानोपक्रम्यमाणयोरादिः प्राथम्यञ्चेदाख्यातुमिष्यते। पाणिनेरुपज्ञा (२२६) पाणिन्युपज्ञं ग्रन्थः। नन्दोपक्रमन्द्रोणः।

**छाया बाहुल्ये। २।४।२२।**

छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्व्वपदार्थ(२२७) बाहुल्ये। इक्षूणाञ्छाया। इक्षुच्छायम् विभाषासेनेति (२८८४०) विकल्पस्यायमपवादः। इक्षुछायानिषादिन्य इत्यत्र तु आ समन्ता न्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः।

**सभा राजाऽमनुष्यपूर्व्वा। २।४।२।३**

राजपर्य्यायपूर्व्वोऽमनुष्यपूर्व्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात्। इनसभम्। ईश्वरसभम्। पर्य्यायस्यैवेष्यते(२२८)।

सामान्यस्य किन्तु शिष्टानामेव तेषाञ्च यस्मिन्नर्थे पर्य्यवृत्त्या यादृशश-ब्दप्रयोगे इच्छा सैवेह ग्राह्या। सर्व्वत्राभिधानानभिधाने अपि शिष्टा-नामेवेति नातिप्रसङ्गः। शब्देन्दु०

(२२६) पाणिनेरुपज्ञेति उपज्ञायते इति कर्म्मण्यङ् पाणिनिसम्बन्ध्याद्य-ज्ञानविषय इति समासार्थः।

(२२७) बाहुल्ये इति कस्य बाहुल्यमित्यपेक्षायां छायाया निमित्तीभूता वरकद्रव्यस्यैव बाहुल्यमर्थाक्षिप्तं तच्च षष्ठीतत्पुरुषे पूर्व्वपदार्थ-निष्ठमित्याशयेनाह पूर्व्वपदार्थेति।

(२२८) पर्य्यायस्यैवेति पर्य्यायवचनस्यैवेत्यर्थः। एवकारेण स्वरूपस्य विशे-षणाच्च व्यावृत्तिः।

नेह राजसभा चन्द्रगुप्तसभा । अमनुष्यशब्दो रूढ्या (२२९) रक्षःपिशाचादीनाह । रक्षःसभम् । पिशाचसभम् ।

**अशाला (२३०) च । २ । ४ । २४ ।**

सङ्घातार्था या सभा तदन्तस्तत्पुरुषः क्लीवं स्यात् । स्त्रीसभम् स्त्रीसङ्घात इत्यर्थः । अशाला किम् धर्म्मसभा धर्म्मशालेत्यर्थः ।

**विभाषा सेनासुराच्छायाशालानिशानाम् । २ । ४ । २५ ।**

एतदन्तस्तत्पुरुषः क्लीवं वा स्यात् । ब्राह्मणसेनम्—ब्राह्मणसेना । यवसुरम्—यवसुरा । कुड्यच्छायम्—कुड्यच्छाया । गोशालम्—गोशाला । श्वनिशम्—श्वनिशा । तत्पुरुषोऽनञ्कर्म्मधारय (१८६४०) इत्यनुवृत्तेर्नेह । दृढसेनो राजा । असेना । परमसेना । इति तत्पुरुषः ।

---

(२२९) रूढ्येति । परे तु पर्य्युदासनञाऽपि तत्सिद्ध्यतीति ।

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिता ।

इत्युक्तेः सादृश्यविरोधसहितभेदस्य प्रकृते नञर्थत्वस्वीकारेण रक्षःपिशाचानाञ्च तथात्वादमनुष्यशब्देन तेषामेव ग्रहणमन्यथा काष्ठसभमित्यपि स्यादित्याहुः ।

(२३०) सभाशब्दस्य शालासंघातार्थकत्वेन तदर्थे प्रवृत्तौ निषेधाभावेन तत्र अशालेति पर्य्युदासः । शालार्थभिन्नेत्यर्थः ।

## शेषो (१) बहुव्रीहिः। २। २। २३।

अधिकारोऽयम्। द्वितीया श्रितेत्यादिना(२२६पृ०)यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमान्त इत्यर्थः।

## अनेकमन्यपदार्थे। २। २। २४।

अनेकं(२) प्रथमान्तमन्यपदार्थे वर्त्तमानं वा समस्यते स बहुव्रीहिः अप्रथमाविभक्त्यर्थे(३)बहुव्रीहिरिति समानाधिकर-

(१) शेषइति उक्तादन्यः शेषः द्वितीयादीनां तत्तत्पदैः समासोऽभिहितो नैवं प्रथमेतिशब्देन प्रथमान्ततया प्रथमायाः केनचित् समासोऽभिहितोऽतः प्रथमान्त एव शेषशब्दार्थः विशेषणं विशेष्येणेति(२६०पृ०)वास्तविकप्रथमान्तपदेन समासविधानेऽपि प्रथमेतिपदोल्लेखाभावेन न तेनोक्तता शङ्क्या। तथा चात्र सूत्रे शेषइति प्रथमान्तं पदमेतत्पूर्व्वसूत्रे प्रथमान्तपदोपात्तानामेव द्वितीयादीनां स्वापेक्षयावधित्वात् तदपेक्षया प्रथमान्तस्यैव शेषत्वं गम्यते। एतदभिप्रायेण व्याचष्टे यस्य त्रिकस्येति। संख्याकारकयोरन्यलभ्यतया स्वार्थद्रव्यलिङ्गात्मकस्यानन्यलभ्यत्वेन प्रातिपदिकार्थत्वात् प्रातिपदिकार्थे एव प्रथमायाउक्तत्वेन प्रथमान्तपदोपात्तस्य यस्य त्रिकस्येत्यर्थः। स्पष्टान्तरेण तदेवाह प्रथमान्तइति।

(२) द्वन्द्वैकशेषयोरपि प्रथमान्तपदघटिततया ततोविशेषार्थमाहानेकमित्यादि। समर्थं इति सुबिति चानुवर्त्तते अनेकं समर्थं परस्पराकाङ्क्षं शेषपदप्रतिपाद्यं प्रथमान्तं सुबन्तमन्यस्य पदस्यार्थे। वर्त्तमानं सत् बहुव्रीहिरित्यर्थः। अन्यत्वं चोपस्थितसमस्यमानप्रथमान्तपदापेक्षं तथाच समस्यमानपदातिरिक्तत्वमित्यर्थः।

(३) फलितमाहाप्रथमाविभक्त्यर्थे इति प्रथमाभिन्नाया द्वितीयादिविभक्तेरर्थे इत्यर्थः पदेन हि प्रकृत्यर्थोपसर्ज्जनः क्रियाकारकभावादिरूपः

णानामिति(४) च फलितम् । प्राप्तमुदकं यं ग्रामम् प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषो ग्रामः । प्रथमार्थे तु न । वृष्टे देवे गतः । व्यधिकरणानामपि न । पञ्चभिर्भु-

सम्बन्धो विभक्त्यर्थे प्राधान्येन बोध्यतेऽतस्तस्यैव बहुव्रीह्यर्थत्वे बहुव्रीहिनिष्पन्नपदेन देवदत्तादिपदानां सामानाधिकरण्यानुपपत्तिरतस्तद्वारणाय तत्तद्विभक्त्यर्थाश्रितसम्बन्ध्यन्तर्भावेणैव शक्तिकल्पनमिति बोध्यम् । एवञ्च चित्रा गावो यस्येति विग्रहवाक्येन चित्राभिन्नानां गवां प्राधान्येन बोधनेऽपि समासे विशेषणविशेष्यभावव्यत्यासस्तथैव शिष्टानां व्यवहारात् यथोक्तं हरिणा

समासतद्धितवृत्तौ यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावे च तत्र दृष्टो विपर्यय इति ।

एवञ्च विषयतासाम्यात् तयोस्तुल्यत्वमिति । अत्रान्यस्य पदस्यार्थे वर्त्तमानमित्युक्त्या तत्तदन्यपदार्थः समासघटकसमुदायपदशक्यः परस्परसमभिव्याहार एव तत्तच्छक्त्युद्बोधक इति समासेऽतिरिक्तैव शक्तिरिति द्योतितम् सा च योगरूढिरेव यथोक्तं हरिणा

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवदिति ।

विपक्षे बाधकादिकमधिकमुक्तं(२१८पृ०)प्राक् ।

(४) समानाधिकरणानामिति एतच्च शेषपदादेव लभ्यते समस्यमानपदानां व्यधिकरणत्वे शेषपदाभिधेयत्वासम्भवात् तथाच समानाधिकरणप्रथमान्तपदघटितत्वे सति अन्यपदार्थबोधकत्वमिति फलितं तेन समानाधिकरणे कर्मधारये न प्रसङ्गः । अत्र च बहुवचननिर्देशः स्थलेऽनेकपदश्रवणानुसारेण त्रिपदेऽपि बहुव्रीहिर्भवतीति द्योतनाय । एवञ्च उन्मत्तगङ्गमित्याद्यव्ययीभावस्य द्विपदमात्रविषयकत्वान्न तत्र प्रसङ्गः । वस्तुतः शेषो बहुव्रीहिरित्यधिकारविहितत्वं बहु-

क्तमस्य। प्रादिभ्यो (५) धातुजस्य वाच्यो वा चोत्तरपदलोपः*। प्रपतितपर्णः प्रपर्णः। नञोऽस्त्यर्थानां(६) वा चोत्तरपदलोपः *। अविद्यमानपुत्रःअपुत्रः। अस्तीति (७) विभक्तिप्रतिरूपकमव्ययम्। अस्तिक्षीरा गौः।

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु। ६। ३। ३४।**

भाषितपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिर्निपातनात्(८) पञ्चम्या अलुक् षष्ठ्याश्च लुक्। तुल्ये (९) प्रवृत्ति-

व्रीहित्वमित्येव लक्षणं वैयाकरणभूषणग्रन्थकृतोक्तं तदेवेह ग्राह्यमित्यवसेयम्। अनेकं प्रथमान्तमित्युक्त्या च सुपेति तृतीयान्तं नेह सम्बध्यते तथा सति द्वयोः समासानुपपत्तिः स्यादेकभिन्नस्य द्वित्वेन द्वयोरपि समासस्वीकारेण सुपेति तृतीयान्तपदोपस्थापस्यान्यस्य तत्रासम्भवादिति बोध्यम्।

(५) पूर्वपदान्तर्गतस्य प्रादिभ्य उत्तरभागस्य धातुजस्य लोपइत्यर्थः प्रपतितं पर्णं यस्मादिति वाक्ये पतितभागस्य तद्भूतस्य लोपएवमन्यत्रापि।

(६) नञः परेषामस्त्यर्थवाचिनां पदान्तरेण बहुव्रीहिर्वाच्यः अस्त्यर्थवाचिनां तु वा लोपइत्यर्थः।

(७) अस्तीत्यस्य तिङन्तत्वेन सुबित्यनुवृत्तेः समासो न स्यादत आह विभक्तीति। तिङन्तपदस्यापि कर्तृबोधकतया कर्त्रा सहाभेदान्वयस्वीकारात् तत्प्रतिरूपकास्तिपदसामानाधिकरण्यं क्षीरादेर्नानुपपन्नम्।

(८) निपातनादिति अन्यथाप्राप्तस्यान्यथोच्चारणं निपातनमत्र प्रसज्यप्रतिषेधार्थकनञा समासोऽपि निपातनसिद्धः वैयधिकरण्ये बहुव्रीहेः स्वरसतोऽसिद्धेस्तत्रापि तथैवेति बोध्यम्।

(९) भाषितः पुमान् यस्मिन्नर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तस्याधारत्व

निमित्ते यदुक्तपुंस्कन्तस्मात्परऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकस्य शब्दस्य पुंवाचकस्येव रूपं (१०) स्यात्समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः। गोस्त्रियोरिति(२२१८०)ह्रस्वः। चित्रा गावो यस्येति लौकिकविग्रहे। चित्रा जस् (११) गो ङस् इत्यलौकिकविग्रहे। चित्रगुः। रूपवद्भार्य्यः। चित्रा जरती गौर्य्यस्येति विग्रहे अनेकोक्तेर्बहूनामपि बहुव्रीहिः। अत्र केचित्। चित्राजरतीगुः। जरतीचित्रागुर्वा। एवन्दीर्घातन्वीजङ्घः। तन्वीदीर्घाजङ्घः। त्रिपदे बहुव्रीहौ प्रथमन्न पुंवत् उत्तरपदस्य मध्यमेन व्यवधानात् द्वितीयमपि न पुंवत् पूर्वपदत्वाभावात् उत्तरपदशब्दो हि समासस्य चरमावयवे रूढः पूर्व्वपदशब्दस्तु प्रथमावयव इति वदन्ति। वस्तुतस्तु नेह पूर्व्वपदमाक्षिप्यते आनङ् ऋत(४४०५०)इत्यत्र (१२) यथा। तेनोपा-

विवक्षया सप्तमी ततस्तदस्यास्तीत्यर्थे अर्शआद्यच्। यदर्थज्ञानेन तद्विशिष्टे शब्दस्य प्रवृत्तिस्तत् निमित्तं शक्यतावच्छेदकमिति यावदित्याशयेन व्याचष्टे तस्मे इति।

(१०) पुंवाचकस्य पुंवद्भावभाजः शब्दस्य प्रयोगान्तरे पुमांसमाचक्षाणस्य यद्रूपं तदेव भवतीत्यर्थतो रूपातिदेशोऽयम्।

(११) चित्रा जसिति वृत्तौ संख्याविशेषाभानेऽपि गोत्वे नानात्वानेकव्यक्तिभानात् भूमरूपमत्वर्थे बहुव्रीहिरिति द्योतनाय।

(१२) आनङिति तथाच समर्थसूत्रे भाष्ये होतृपोतृनेष्टोद्गातार इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्थानादुदाहृतः पूर्व्वपदाक्षेपे तु तत्र सिद्धेरत् नह्यत्र नेष्टा पूर्व्वपदं होतुरेव पूर्व्वपदत्वादिति भावः।

न्यस्य पुंवदेव। चित्राजरद्गुरित्यादि। अतएव(१३) चित्राजरत्यौ गावौ यस्येति द्वन्द्वगर्भेऽपि चित्राजरद्गुरिति भाष्यम् (१४)। कर्म्मधारयपूर्व्वपदे तु द्वयोरपि (१५) पुंवत्। जरच्चित्रगुः। कर्म्मधारयोत्तरपदे तु चित्रजरद्गवीकः(१६)। स्त्रियाः किम्। ग्रामणि कुलं तद्‌ दृष्टिरस्य ग्रामणिदृष्टिः। भाषितपुंस्कात्किम्। गङ्गाभार्य्यः अनूङ् किम्। वामोरूभार्य्यः। समानाधिकरणे किम्। कल्याण्याः माता कल्याणीमाता। स्त्रियाङ्किम् कल्याणी प्रधानं यस्य स कल्याणीप्रधानः। पूरण्यान्तु।

## अप् पूरणीप्रमाण्योः।५।४।११६।

पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गन्तदन्तात्प्रमाण्यन्ताच्च बहु-

---

(१३) अतएवेति पूर्व्वपदाक्षेपाभावादेवेत्यर्थः। चित्राजरत्यावित्यादिविग्रहे चित्राशब्दस्य समानाधिकरणस्त्रीलिङ्गशब्दोत्तरत्वाभावात् न पुंवदिति बोध्यम्।

(१४) भाष्यमित्यस्य सूचयतीति शेषः। पट्वीमृद्व्यौ भार्य्ये यस्येति द्वन्द्वगर्भबहुव्रीहौ पटुमृदुभार्य्य इत्युदाहरता भाष्यकारेणेदं ध्वनितमित्यर्थः।

(१५) द्वयोरपीति पूर्व्वपदान्तर्गतस्योत्तरपदस्य सामानाधिकरन्यविरहया विशेषणं विशेष्येणेति (२६०पृ०) समासात् तदाश्रयेण पूर्व्वपदस्य पुंवद्भावः पुनस्तेनोत्तरपदस्य सामानाधिकरण्यात् बहुव्रीहौ पुंवद्भाव इति द्वयोरपीत्यर्थः।

(१६) जरद्गवीत्यत्र गोरतद्धितेति(३५६पृ०)टचि स्त्रियां ङीष् ततश्चित्राशब्देन बहुव्रीहौ नद्यृतश्चेति (४०४पृ०) कप्। अतएवाहदमदशपदजमिति प्रयोगसिद्धिरित्यनुसन्धेयम्।

व्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणान्ताः कल्याणीपञ्चमा रात्रयः(१७)स्त्री प्रमाणी(१८)यस्य स स्त्रीप्रमाणः। पुंवद्भावप्रतिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव(१९)। रात्रिः पूरणी वाच्या (२०) चेत्युक्तोदाहरणे मुख्या। अन्यत्र तु (२१)

**नद्य्रतश्च । ५ । ४ । १५३ ।**

नद्युत्तरपदाद्दन्तोत्तरपदाच्च बहुव्रीहेः कप् स्यात्। पुंवद्भावः

**केऽणः । (२२) । ७ । ४ । १३ ।**

के परेऽणो ह्रस्वः स्यात् । इति प्राप्ते ।

**न कपि । ७ । ४ । १४ ।**

कपि परे ह्रस्वो न स्यात् । कल्याणपञ्चमीकः पक्षः । अत्र

(१७) रात्रय इति उद्भूतावयवभेदो रात्रिसमुदायोऽन्यपदार्थः ।

(१८( प्रमाणीति करणल्युडन्ततया विशेष्यनिघ्नत्वात् ङीप् ।

(१९) प्रधानपूरण्यामेवेति पुंवद्भावविधौ वार्त्तिके तथाऽभिधानात् कल्याणपञ्चमीकः पक्ष इति भाष्योदाहरणाच्च पुंवद्भावः समासान्तश्च तत्रैवेति भावः ।

(२०) वाच्या चेति अन्यपदार्थघटकतया समासवाच्येत्यर्थः । उद्भूतावयवभेदस्य रात्रिसमूहस्य प्रधानत्वेन यथा प्रथमाद्या रात्रयः समासाभिधेयास्तथा पञ्चम्यपीति रात्रिपदार्थस्यान्यपदार्थेऽनुप्रवेशात् प्राधान्यमिति भावः ।

(२१) अन्यत्र त्वित्यत्र, अग्निमस्य पुंवद्भाव इत्यस्यान्वयः कल्याणपञ्चमीक इत्यत्र पूरण्या अप्रधानत्वात् निषेधाप्राप्तेरिति भावः ।

(२२) केऽण इत्यत्र कस्तद्धितएव व्याख्यानात् तेन राकेत्यादौ न ह्रस्वः ।

देवास् इह इति स्थिते । रुत्वम् । **भोभगोअघोअपूर्वस्य योऽशि ।८।३।१७।** एतत्पूर्वस्य रोर्यादेशः स्यादशि परे । असन्धिः सौत्रः । लोपः शाकल्यस्य । देवाइह । देवायिह । अशि किम् । देवाः सन्ति । यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात् । न ह्ययमल्विधिः । रोरिति समुदायरूपाश्रयणात् । भोस् भगोस् अघोस् इति सकारान्ता निपाताः । तेषां रोर्यत्वे कृते । **[1]व्योर्लघुप्रयत्नतरः शाकटायनस्य ।८।३।१८।** पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे । यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघूच्चारणः । **ओतो गार्ग्यस्य ।८।३।२०।** ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात् । [2]गार्ग्यग्रहणं पूजार्थम् । भो अच्युत । पदान्तस्य किम् । तोयम् । **उञि च पदे ।८।३।२१।** अवर्णपूर्वयोः पदान्तयो-र्यवयोर्लोप उञि पदे । स उ एकाग्निः । पदे किम् । तन्त्रयुतम् । वेञः संप्रसारणे रूपम् । यदि तु प्रतिपदोक्तो निपात

---

दिति भावः । अत्र 'भिद्योद्ध्यौ नदे' 'तौ सत्' इत्यादि लिङ्गं, तद्धि 'नादिचि' इति पूर्वसवर्णदीर्घे निषिद्धे पुनरुत्सर्गस्य वृद्धेः प्रवृत्त्या च सिध्यति नान्यथेति ॥ नन्वेवं 'नान्तः पादमव्ययपरे' इति पाठे 'सुजाते अश्वसूनृते' 'उपप्रयन्तो अध्वरम्' इत्यादौ 'एङः पदान्तादति' इति पूर्वरूपमेव हि तेन निषिध्यते, तस्मिंश्च निषिद्धे 'एचोयवायावः' इत्युत्सर्गोऽपि प्रवर्तेत । मैवम् । बाधके निषिद्धे बाध्यमपि क्वचिन्नेति स्वीकारात्तत्सिद्धेः ॥—**भोभगो**—॥—**असंधिः सौत्र** इति । सूत्रे कृतः सौत्रः, 'कृतलब्ध–' इत्यण् । भगोअघोशब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वादित्यर्थः ॥ यदि तु भोस् भगोस् अघोस् इति सान्तं रान्तं वानुकृत्य भोइत्यादीनां त्रयाणाम् 'अलोऽन्त्यस्य' इत्यन्त्यस्य यः स्याद्, अपूर्वस्य रोश्चेति व्याख्यायते, तर्हि असंधिर्न्याय्य एवेति बोध्यम् ॥ ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्थानि, तथा च 'अनल्विधौ' इति स्थानिवद्भावो न स्यादित्याशङ्क्याह—**न ह्ययमिति** । यथा अग्रहीदित्यत्र 'ग्रहोऽलिटि' इति दीर्घस्य स्थानिवद्भावेन इट्त्वाद् 'इट ईटि' इति प्रवर्तते । एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्तते इति भावः ॥ यद्यपि 'रोरि' इत्यतो र इत्यनुवर्त्य रोर्यो रेफः तस्य यादेश इति व्याख्याने अयमल्विधिरेव, तथापि उत्तरार्थं कर्तव्यमशिग्रहणं र इत्यस्यानुवृत्तिविच्छेदवारणार्थमिहैव कृतम् ॥—**निपाता** इति । 'भोभगो–' इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः ॥ यदि तु 'विभाषा-भवद्भगवदघवतामोच्चावस्य' इति वार्तिकेन 'एषां रुः स्याद् अवस्यौकारो वा संबुद्धौ' इत्यर्थकेन निष्पन्ना एव भोःशब्दादयो गृह्येरन्, तदा पुंलिङ्गैकवचनमात्रे भो हरे इत्यादिसिद्धावपि भो हरिहरौ भो विद्वद्वृन्द भो गङ्गे इत्यादि न सिध्येत् । तस्मात् 'विभाषा भवद्–' इति वार्तिकं नावश्यमाश्रयणीयमिति भावः ॥ मनोरमायां तु भाष्यस्वरसरीत्या तु 'विभाषा–' इति वार्तिकमारब्धव्यमेवेत्युक्तम् । तथा हि हे भगवन् इतिवद् हे भो इति प्रयोगस्यापीष्टत्वात् । तस्य च वार्तिकारम्भ एव सिद्धेः । 'स्युः पाट्प्याडङ्गहेहैभोः' इत्यमरोक्तानां तु संबोधनार्थानां निपातानां सह प्रयोगायोगात् । किंच 'अत्रभवान् हरिः; तत्रभवान् ततोभवान्' इतिवत् तत्रभो इत्याद्यपि वार्तिके सत्येव सिध्यति, 'इतराभ्योऽपि दृश्यन्ते' इति सर्वविभक्त्यन्तात्त्रतसोर्भवदादियोग एवेष्टत्वात् ॥ किंच आमन्त्रितत्वे पदात्परस्याष्टमिकनिघातः 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानवद्भावश्चेत्यादि सिध्यति, नान्यथा ॥ भो हरिहरावित्यादिसिद्धये भो इति निपातोऽप्यवश्याभ्युपगन्तव्यः । यदि तु भगोअघोइति निपातावपि प्रामाणिकौ, तर्हि स्तां नाम, वार्तिकं तूक्तप्रयोजनाय स्वीकर्तव्यमेवेति दिक् ॥ स्यादेतत् । निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् प्रतिपदोक्तत्वात्र तु संबुद्ध्यन्ताः लाक्षणिकत्वादिति चेन्मैवम् । 'स्वरितेनाधिकारः' इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात् ॥ लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वाच्च । अनित्यत्वे लिङ्गं 'भुवश्च महाव्याहृतेः' इति सूत्रे महाव्याहृतिग्रहणं 'यावत्पुरा–' इति सूत्रे निपातग्रहणं च ॥ न चैवं लाक्षणिकानामपि ग्रहणे विभोरिदं, सुप्रभा गौर्यस्य स सुप्रभगुः तस्य सुप्रभगोरिदं, रघोरिदमित्यत्रापि यत्वापत्तिरिति वाच्यम् । परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात्साहचर्यं त्वेषां संबोधनार्थे इति बोध्यम् ॥ भोइत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यादितिव्याख्याने तु अर्थवद्ग्रहणपरिभाषया नातिप्रसङ्गः । न च 'अजहत्स्वार्था वृत्तिः' इति पक्षे विभोरिदं प्रभोरिदमित्यत्र भोरित्येकदेशस्य अर्थोऽस्तीति शङ्क्यं, 'जहत्स्वार्था वृत्तिः' इति मुख्यपक्षे तदभावादिति दिक् ॥—**व्योर्लघु**—॥—**वकारयकारयोरि**ति । भोभगोअघोअपूर्वयोरित्यर्थः ॥ लघुप्रयत्नतरः, लघूच्चारणतरः । स चान्तरतम्याद्वस्य वः, यस्य य इत्याह—**वयाविति** ॥—विधानसामर्थ्याल्लघुप्रयत्नतरस्य न भवतीत्याशयेनाह—**अलघुप्रयत्नस्येति** ॥ **भोयच्युतेति** । एवं भगोयच्युत । अघोयच्युत । वकारस्योदाहरणं तु असावादित्यः । एतच्च काशिकायां स्पष्टम् ॥—**उत्तरार्थं पदग्रहणमिति** । वस्तुतस्तूत्तरत्रापि नोपयुज्यते, पदस्येत्यनुवृत्त्यैव निर्वाहात् । 'उञि च पदे' इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्येति व्याख्यानात् परमदण्डिनावित्यादौ ङमुण्नेति प्राचो व्याख्यानस्य

---

१ व्योर्लघ्विति—यद्यपि वर्णेषु यस्य प्राथम्यात् य्वोरिति वक्तुमुचितं तथापि तथोच्चारणे यस्य लोपो य्वोरिति लोपो दुर्वारः इति विपरीतोच्चारणम् । २ गार्ग्यग्रहणमिति—लोपः शाकल्यस्येत्येव सिद्धे विकल्पे नित्यार्थमिदम् इति अनेन ध्वनितम् ।

तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया रात्रिरप्रधानम्। बहुकर्तृकः। अप्रियादिषु किम् कल्याणीप्रियः। प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा-कान्ता क्षान्ता समा चपला दुहिता वामा अबला तनया। सामान्ये (२३) नपुंसकम्। दृढम्भक्तिर्यस्य स दृढभक्तिः। स्त्रीत्वविवक्षायान्तु दृढाभक्तिः।

## तसिलादिष्वाकृत्वसुचः। ६। ३। ३५।

तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत् स्यात्। परिगणनङ्कर्त्तव्यम् अव्याप्त्यतिव्याप्तिपरीहाराय। त्रल्तसौ तरप्तमपौ चरट्जातीयरौ कल्पदेशीयरौ रूपप्पाशपौ थाल् तिल्थ्यनौ। बह्वीषु बहुत्र बहुतः। दर्शनीयतरा। दर्शनीयतमा। घरूपेति (४६४पृ०) वक्ष्यमाणो ह्रस्वः परत्वा-त्पुंवद्भावं बाधते। पट्वितरा। पट्वितमा। पटुचरी। पटु-जातीया। दर्शनीयकल्पा। दर्शनीयदेशीया। दर्शनीयरूपा। दर्शनीयपाशा। बहुथा। प्रशस्ता हकी हकतिः। अजाभ्यो हिता अजथ्या। शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः *। बह्वीभ्यो देहि बहुशः। अल्पाभ्यो देहि अल्पशः। त्वतलोर्गु-णवचनस्य (२४) *। शुक्लाया भावः शुक्लत्वम्। गुणवचनस्य

(२३) सामान्ये इति अदार्ढ्यमात्रनिवृत्तिपरत्वेन लिङ्गविशेषविवक्षा नास्ती-ति भावः। तथाच तद्विवक्षाया दृढाभक्तिरित्यादिसिद्ध्यर्थं प्रिया-दिषु तस्याः पाठः।

(२४) त्वतलोर्गुणवचनस्येति। सत्वे निविशतेऽपैति (२२८पृ०) प्रसिद्धगुणवचन स्येत्यर्थः। अत्र जात्याख्याव्यतिरिक्तं धर्ममात्रं गुणोऽभिप्राह्यः ततश्च

किम् कतर्या भावः कर्त्रीत्वम्। शरदः कृतार्थतेत्यादौ तु सामान्ये नपुंसकम्। भस्याऽढे तद्धिते। हस्तिनीनां समूहो हास्तिकम्। (२५) । अढे किम् रौहिणेयः (२६)। स्त्रीभ्यो ढगिति (५०६पृ०) ढोऽत्र गृह्यते। अग्नेर्ढगिति (५३२पृ०) ढकि तु पुंवद्देव। अग्नायी (२७) देवतास्य स्थालीपाकस्याग्नेयः। सपत्नीशब्दस्त्रिधा। शत्रुपर्य्यायात्सपत्नशब्दाच्छार्ङ्गरवादित्वात्(२४१पृ०)ङीनित्येकः। समानः पतिर्य्यस्या इति विग्रहे विवाहनिबन्धनम्पतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः स्वामिपर्य्यायपतिशब्देन भाषितपुंस्कस्तृतीयः। आद्ययोः शिवादित्वा (५०४पृ०)अण् सपत्न्या अपत्यं सापत्नः। तृतीयात्तु लिङ्गविशिष्टपरिभाषया प्रत्युत्तर(४८६पृ०)पदलक्षणो ण्य एव न त्वण् शिवादौ रूढ

शरदः कृतार्थतामित्यादौ न कश्चित् यत्नो भवतीति प्राचीनपक्षस्य भाष्यविरुद्धत्वादुपेक्षणीयतया गत्यन्तरमाह सामान्ये नपुंसकमिति।

(२५) हास्तिकमित्यत्र यस्येति (१२६पृ०) चेतीलोपे कृतेऽपि नकारलोपानुपपत्तिस्तल्लोपस्याभीयत्वेनासिद्धत्वात् स्थानिवत्त्वाच्चातः पुंवद्भावायायमारम्भः।

(२६) रौहिणेयइति रोहितशब्दात् वर्णादनुदात्तादिति(२२५पृ०)ङीब्नकारौ। सति तु पुंवत्त्वे असिद्धत्वं प्रत्ययविधावित्युक्त्वा प्रत्ययोत्पत्तेः पूर्व्वमेव तयोर्निवृत्तिरिति रोहितिरिति स्यादिति भावः। स्त्रीभ्यो ढगित्यस्य पञ्चम्य व्याख्यानमेव मूलम्।

(२७) अग्नायीति प्रवृत्तिनिमित्तैक्ये एव भाषितपुंस्कत्वस्योक्तत्वेन(४पृ०)पुंसि प्रवृत्तावग्निशब्दस्याग्नित्वमेव प्रवृत्तिनिमित्तं तत्स्त्रियां प्रवृत्तौ त्वग्निसम्बन्ध इति प्रवृत्तिनिमित्तभेदेऽपि अनारोपितशक्यतावच्छेदकस्यैव स्त्रियां लक्ष्यतावच्छेदकतया स्वीकारान्न दोषः। गङ्गादिशब्दास्तु लक्ष्यं तटं बोधयन्तः शास्त्रीयस्त्रीत्वविशिष्टमेव बोधयन्ति शब्दस्वाभाव्यादिति न गङ्गाशब्दादीनां भाषितपुंस्कतेति दिक्। शब्देन्दु०।

योरेव ग्रहणात्। सापत्यः (२८)। ठक्छसोश्च *। भवत्याः छात्राः। भावत्काः। भवदीयाः। एतद्वार्त्तिकमेकतद्धिते चेति सूत्रञ्च न कर्त्तव्यम् सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भावइति भाष्यकारेष्ट्या गतार्थत्वात्। सर्व्वमयः (२९)। सर्वकाम्यति सर्विका भार्य्या यस्य सर्वकभार्य्यः (३०) सर्व्वप्रियः (३१) इत्यादि। पूर्वस्यैवेदं (३२) भस्याढेतेति(२१२पृ०)लिङ्गात्(३३)। तेनाकचि एकशेषवृत्तौ च न। सर्व्विका सर्वाः। कुक्कुट्यादीनामण्डादिषु*। कुक्कुट्या अण्डम् कुक्कुटाण्डम्। मृग्याः पदम् मृगपदम्। मृगक्षीरम्। काकशावः।

## क्यङ्मानिनोश्च। ६। ३ ।३६।

एतयोः परतः पुंवत्। एनीवाचरति एतायते। श्येनीवा

(२८) सापत्यइति भाषितपुंस्कत्वात् पुंवद्भावे कृते यस्येति(१२९पृ०)चेतीलोपः।

(२९) सर्व्वमयइति मयडादीनां परिगणिततसिलादिवृत्तिर्भावात् न तत्सूत्रेण गतार्थतेति ध्येयमतएव सर्व्वत्रेत्यादि नोदाहृतम्।

(३०) सर्व्वकभार्य्य इति स्त्रियाः पुंवदित्यनेन (४०१पृ०) गतार्थता न सम्भवा नकोपधाया इति(४०८पृ०)निषेधात् न कोपधाया इत्यादेश्च स्त्रियाःपुंवदित्यादिप्रकरणोक्तस्यैव पुंवद्भावस्य निषेधकत्वाच्चात्र प्रवृत्तिरिति बोध्यम्।

(३१) सर्व्वप्रियइति अपूरणीप्रियादिष्विति(४०१पृ०)पर्य्युदासादप्राप्तेऽनेनपुंवत्।

(३२) पूर्व्वस्यैवेति वृत्तिघटकानेकपदभागमध्ये किञ्चिदपेक्षया पूर्व्वस्यैवेत्यर्थः अतएव वदितरेत्यादौ परस्य न पुंवदिति बोध्यम्।

(३३) लिङ्गादिति अन्यथा एषा द्वा एतयोः कपूर्व्वके आपि विधौ नानिमित्तं निर्विषयं स्यादिति भावः।

चरति श्येतायते। स्वभिन्ना(२४)मात्मानं दर्शनीयां मन्यते दर्शनीयमानिनी। दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः।

## न कोपधायाः। ६। ३। ३७।

कोपधायाः स्त्रियाः न पुंवत्। पाचिकाभार्य्यः। रसिकाभार्य्यः। मद्रिकायते (२५) मद्रिकामानिनी। कोपधप्रतिषेधे तद्धितवुग्ग्रहणम् *। नेह पाका (२६) भार्य्या यस्य स पाकभार्य्यः।

## संज्ञापूरण्योश्च। ६। ३। ३८।

अनयोर्न पुंवत्। दत्ताभार्य्यः दत्तामानिनी। दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति। पञ्चमीभार्य्यः। पञ्चमीपाशा।

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे। ६। ३। ३९।

वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत्। स्रौघ्नीभार्य्यः। माथुरीयते माथुरीमानिनी।

---

(२४) स्वभिन्नामिति या स्वात्मानमेव दर्शनीयां मन्यते तत्र स्त्रियाः पुंवद्भावेन(४०।पृ०)सिद्धम् एकस्या एव रूपभेदेन कर्मकर्तृत्वयोः सत्त्वेऽपि वास्तवाभेदेन सामानाधिकरण्यादिति भावः। मनो०

(२५) मद्रेषु भवा मद्रिका मद्रवृज्योः कनिति(५६५पृ०)कन् सेवाचरतीति क्यङ्।

(२६) इण्भीकापेत्यादिना (७४०५पृ०) औणादिककन् प्रत्ययः। नायं तद्धितो न वा वुन् इति न निषेधः।

मानिनी। वृद्धिनिमित्तस्य किम् मध्यमभार्य्यः। तद्धितस्य किम् काण्डलावभार्य्यः। वृद्धिशब्देन किम्(३७)तावद्भार्य्यः। रक्ते तु काषायी कन्या यस्य स काषायकन्यः। विकारे तु हैमी मुद्रिका यस्येति हैममुद्रिकः। वृद्धिशब्देन (३८) वृद्धिं प्रति फलोपधानाभावादिह पुंवत्। वैयाकरणभार्य्यः। सौवश्वभार्य्यः।

## स्वाङ्गाच्चेतः। ६। ३। ४०।

स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत्। सुकेशीभार्य्यः। स्वाङ्गात्किम् पटुभार्य्यः। ईतः किम् अकेशभार्य्यः (३९)। अमानिनीति वक्तव्यम्*। सुकेशमानिनी।

## जातेश्च। ६। ३। ४१।

जातेः परो (४०) यः स्त्रीप्रत्ययस्तदन्ता न पुंवत्। शूद्रा-

(३७) वृद्धिशब्देन किमिति तावती भार्य्या यस्येत्यत्र तावच्छब्दस्य आ सर्व्वनाम्न(१८४पृ०)इत्याकारविधानेऽपि वृद्धिशब्देन तद्विधानाभावान्न निषेधः।

(३८) वृद्धिनिमित्तस्येत्यत्र निमित्तशब्दः फलोपहितपरः स्वरूपयोग्यपरत्वे तु वैयाकरणभार्य्यः सौवश्वभार्य्य इति न सिध्येत्। उभयत्र न य्वाभ्यांपदान्ताभ्यां पूर्व्वौ तु ताभ्यामैजिति(४६६पृ०)सूत्रेण पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किन्तु पूर्व्वौ क्रमादैजादेशौ स्तत्यर्थकेन वृद्धिनिषेधेन ऐज्विधानाद् वृद्धिरतो न फलोपधायितेति भावः।

(३९) अकेशेति. सहनञ्विद्यमानपूर्व्वाच्चेत्यनेन(२२६पृ०)ङीष्निषेधः।

(४०) जातेः पर इति जातिवाचकात् परत्वमात्रमिह विवक्षितं न तु जातिवाचित्वेन विहितत्वमपि तेन ब्राह्मणीशब्दस्य शार्ङ्गरवादित्वात्

भार्य्यः। ब्राह्मणीभार्य्यः। चौलस्यैवायन्निषेधः। तेन हस्तिनीनां समूहो हास्तिकमित्यत्र भस्याढ इति(४०६१८०)तु भवत्येव।

## संख्यया(४१)ऽव्ययासन्नादूराधिकसंख्याः संख्येये। २।२।२५।

संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः। दशानां समीपे ये सन्ति ते उपदशाः (४२) नव एकादश वेत्यर्थः। बहुव्रीहौ संख्येये इति(४१२६०)वक्ष्यमाणो डच्।

## ति विंशतेर्डिति। ६।४।१४२।

विंशतेर्भस्य तिशब्दस्य(४३)लोपः स्याड्डिति। आसन्नविंशाः। विंशतेरासन्नाइत्यर्थः। अदूरत्रिंशाः। अधिकचत्वारिंशाः।

ङीनन्तत्वेन जातिलक्षणङीबन्तत्वाभावेऽपि न पुंवद्भाव इत्युदाहरणेन ज्ञापितम्।

(४१) संख्याया अव्ययैः सामानाधिकरण्यस्यान्यपदार्थे इत्येव विरहात् पूर्व्वेणाप्राप्तौ विधायकमेतत्।

(४२) उपदशा इति उपशब्दः समीपे समीपवर्त्तिनि च वर्त्तते तत्र सामीप्यार्थेऽव्ययीभावविधानात् परिशेषात् समीपिन्यर्थे बहुव्रीहिस्तथाच दशसमीपवर्त्तिन इति बोधः सामीप्यञ्च सदृक्तिदशत्वसंख्यासमीपवर्त्तिसंख्यावत्त्वेन तदेतदाह नवैकादश वेति एवञ्च नित्यबहुवचनान्तोऽयं शब्दस्तथाभाव्यात्।

(४३) त्रुते तीति लुप्तषष्ठीकं पदं तदाह तिशब्दस्येति।

द्वौ (४४)वा त्रयो वा द्वित्राः। द्विराहत्ता (४५)दश द्विदशाः। विंशतिरित्यर्थः।

## दिङ्नामान्यन्तराले। २। २। २६।

दिशो नामान्यन्तराले(४६) वाच्ये प्राग्वत्। दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा। नामग्रहणाद्यौगिकानान्न। ऐन्द्र्याश्च कौवेर्य्याश्चान्तरालम्।

## तत्र तेनेदमिति सरूपे। २। २। २७।

सप्तम्यन्ते(४७)ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरण-

---

(४४) द्वौ वा त्रयो वेति। वार्थेऽयं बहुव्रीहिः वार्थश्च नेह विकल्पः पक्षे द्विवचनस्याप्यापत्तेः किन्तु संशयएव संशयविषयो हि नियमेन परस्परप्रतिक्षेपकोऽतएव परस्परप्रतिक्षेपकानेकधर्म्मवत्त्वं धर्म्मिणि भासते तदेव विषयनिष्ठं वाशब्दस्यार्थः। संशये तु क्वचित् बलवत्प्रमाणेनैका कोटिर्बाध्यतेक्वचिद् द्वेकोटी। इह तु नोभयबाधः सूत्रप्रामाण्यादत एव नियमतो बहुत्वस्यैव बोधात् बहुवचनमिति बोध्यम् वस्तुतस्तु द्वित्रान्यतरा इत्येवं रीत्या बोधः।

(४५) द्विराहत्ता इति शब्दशक्तिस्वाभाव्यात् सुजर्थान्तर्भावेणैव पूर्व्वपदस्य वृत्त्याश्रयणात् सुचोऽप्रयोगः द्वित्वसंख्योत्पत्तिकावृत्तिविषया दशेति बोधः। सूत्रे संख्ययेति किं चत्वारो विप्रा इत्यत्र अव्ययेत्यादि किंविप्राः पञ्चेत्यत्र संख्येये इति किमधिका विंशतेर्गवां संख्येत्यादौ च मा भूत्।

(४६) अन्तरालशब्देन दिगेव भाष्यते प्रत्यासत्तेरतएव नित्यस्त्रीलिङ्गता इदं समानाधिकरणार्थं बहुवार्थेऽस्मिन्निति द्रष्टव्यम्। शब्देन्दु०

(४७) सप्तम्यन्ते इत्यादीनि प्रथमाद्विवचनान्तानि ग्रहणविषये ग्रहणादिक्रियान्तर्भावेण वृत्तिविषयतामापन्ने इत्यर्थः इदं युद्धमित्यादि तत्र विशेष्य इत्यर्थः।

विषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्म्मव्यतिहारे द्योत्ये स बहुव्रीहिः। इति शब्दादयं विषयविशेषो(४८) लभ्यते। अन्येषामपि दृश्यते*। दीर्घइत्यनुवर्त्तते इचि कर्म्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः। इच्समासान्तो (४।६५०) वक्ष्यते। तिष्ठद्गु प्रभृतिष्विच्प्रत्ययस्य (२।१५०)पाठादव्ययीभावत्वमव्ययत्वञ्च। केशेषु केशेषु गृहीत्वेदं(४६) युद्धं प्रवृत्तम् केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धम्प्रवृत्तम् दण्डादण्डि मुष्टीमुष्टिः।

## ओर्गुणः। ६। ४। १४६।

उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते। अवादेशः। बाभ्रवि। ओरोदिति वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्यइति ज्ञापयितुन्तेन स्वायम्भुवमित्यादि सिद्धम् सरूपे इति किम्। हलेन मुशलेन।

(४८) विषयविशेषइति ग्रहणादिरूपोऽन्यपदार्थक्रियारूपः कर्म्मव्यतिहारइत्यर्थः इतिशब्दस्यात्र प्रकाशे स च लोकसिद्धकर्म्मव्यतिहार एव अतएवोक्तमितिशब्दो लौकिकीं विवक्षामनुसारयतीति एवञ्च कर्णाकर्णिप्रथितमपरा इत्यादेः हस्ताहस्ति मिथात् मृथग् कुचतटीमित्यादेश्च सिद्धिः।

(४६) गृहीत्वेति क्त्वाप्रत्ययोऽध्याहृतस्त्यादिक्रियामादाय बोध्यः केशेषु केशेषु गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमित्यर्थः ग्रहणकर्म्मत्वं च प्रत्यासत्त्या केशादिविशिष्टपुरुषाणामेव युद्धस्यानेककर्तृकत्वात्। इदं सूत्रं वैयधिकरण्यार्थम् सरूपत्वात्प्राप्तस्यैकशेषस्यानवकाशेनानेन बाधार्थं चेति बोध्यम्।

## तेन (५०) सहेति तुल्ययोगे । २ । २ । २८ ।

तुल्ययोगे वर्त्तमानं सहेत्येतत्तृतीयान्तेन प्राग्वत् ।

## वोपसर्ज्जनस्य । ६ । ३ । ८२ ।

बहुव्रीह्यवयवस्य (५१) सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः सहपुत्रो वा आगतः । तुल्ययोगवचनम्प्रायिकम् (५२)। सकर्म्मकः । सलोमकः ।

## प्रकृत्याऽऽशिषि । ६ । ३ । ८३ ।

सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सहपुत्राय । सहामात्याय । अगोवत्सहलेष्विति वाच्यम् * । सगवे । सवत्साय । सहलाय ।

## बहुव्रीहौ संख्येये डजबहुगणात् ।५ । ४ ।७३

(५०) तेन सहेति तुल्येन गमनादिना योगस्तुल्ययोगस्तद्योतकं सहेत्यर्थः । तुल्ययोगे इति किं सहैव दशभिः पुत्रैर्भारं वहति गर्द्दभीत्यादौ विद्यमानवाचिसहशब्दे मा भूत् ।

(५१) उपसर्ज्जनस्येति न सहशब्दविशेषणमव्यभिचारात् किन्तूत्तरपदेन सन्निधापितस्य समासस्यैवमस्य तथात्वं च समासावयवद्वारैव तथा चोपसर्ज्जन सर्व्वावयवकस्य समासस्य बहुव्रीहेरित्यर्थस्तदेतदाह बहुव्रीह्यवयवस्येति । तेनेह सहकृत्वा सहयुद्धेत्यादौ न तत्र सर्व्वावयवस्योपसर्ज्जनत्वाभावात् ।

(५२) प्रायिकमिति सपूर्व्वायाः प्रथमायाइति (१७७पृ०) उदाहरः सकर्म्मकादिति (३२५,३पृ०) भू सूत्रनिर्द्देशज्ञापकादिति भावः ।

संख्येये यो बहुव्रीहिः (५३) तस्माड्डच् स्यात् । उपदशाः । अबहुगणात्किम् । उपबहवः । उपगणाः । अत्र स्वरे (५४) विशेषः । संख्यायास्तत्पुरुषस्य वाच्यः(५५) * । निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ।

**बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् । ५ । ४ । ११३ ।**

व्यत्ययेन(५६)षष्ठी । स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घे सक्थिनी यस्य स दीर्घसक्थः जलजाक्षी । स्वाङ्गात्किम् दीर्घसक्थि शकटम् स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शनादित्यच् (४५२६०) ।

---

(५३) बहुव्रीहाविति सप्तमी षष्ठ्यर्थे इत्याह संख्येये यो बहुव्रीहिस्तस्मादिति संख्येये वर्त्तमानसंख्यावचनान्तबहुव्रीहेरित्यर्थः ।

(५४) उपगणा इत्यत्र डचि रूपातिप्रसङ्गाभावात् स्वरातिप्रसङ्गमाह स्वरइति डचि सति चित्त्वादन्तोदात्तताऽसति पूर्व्वपदप्रकृतिस्वर इति विशेषः । बहुवचनन्तु त्रिचतुरादिसामीप्यवाचित्वाभिप्रायेण । अत्र शैषिकः कबपि न भवति विहितनिमित्तसमासान्तकबहुव्रीह्यपेक्षयैव शेषात् तस्य विधानात् । शब्देन्दुः

(५५) संख्याया इति संख्यान्तस्य तत्पुरुषस्यान्तावयवो डच् वाच्य इत्यर्थः । एकविंशतिरित्यादौ तु न अन्यत्राधिकलोपादिति वार्त्तिककृता निषेधात् ।

(५६) व्यत्ययेन षष्ठीति सप्तम्यर्थेऽस्मिन्नेत्याशयेन व्याचष्टे बहुव्रीहेरिति । स्वाङ्गञ्च (अद्रवं) मूर्त्तिमदित्याद्युक्तलक्षणम् (२३४७०) । षचः षित्वं ङीषर्थन्तद्दाहरति जलजाक्षीति ।

उञिति प्रश्लिष्यते तर्हुत्तरार्थं पदग्रहणम्। हलि सर्वेषाम् ।८।३।२२। भोभगोअघोअपूर्वस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन। भो देवाः। भो लक्ष्मि। भो विद्वद्वृन्द। भगो नमस्ते। अघो याहि। देवा नम्याः। देवा यान्ति। हलि किम्। देवायिह। रोऽसुपि ।८।२।६९। अह्नो रेफादेशः स्यान्न तु सुपि। रोरपवादः। अहरहः। अहर्गणः। असुपि किम्। अहोभ्याम्। अत्राहन्निति रुत्वम्॥ * रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्। अहोरूपं। गतमहोरात्रिरेषा। एकदेशविकृतस्यानन्यत्वादहोरात्रः। अहोरथन्तरम्॥ * अहरादीनां पत्यादिषु वा रेफः। विसर्गापवादः। अहर्पतिः। गीर्पतिः। धूर्पतिः। पक्षे विसर्गोपध्मानीयौ। रो रि ।८।३।१४। रेफस्य रेफे परे लोपः स्यात्। ढ्रलोपे पूर्वस्य दीर्घोऽणः ।६।३।१११। ढरेफौ लोपयतीति तथा तस्मिन्वर्णेऽर्थाद् ढकारे

'ङमो ह्रस्वादचि–' इति सूत्रे मनोरमायां निरस्तत्वाच्च॥ ननु 'हलि सर्वेषाम्' इत्यत्र पदेग्रहणानुवृत्तौ हलादौ पदे इति व्याख्यानलाभाद् वृक्षवृभ्यां वृक्षवृभिरित्यत्र वस्य नित्यं लोपो न भवति, किं तु 'लोपः शाकल्यस्य' इति वैकल्पिक एव लोप इत्यस्ति पदेग्रहणस्य प्रयोजनमिति चेन्मैवम्॥ 'हलि सर्वेषाम्' इत्यत्र वस्याननुवर्तितत्वात्। किंच माभ्यां मामिरित्यत्र भ्यामादौ परतो वस्य विकल्पेनैव भवन्मते लोपः स्यात्तत्र 'हलि सर्वेषाम्' इत्यस्याप्रवृत्तेः। न चेष्टापत्तिः। भाष्यकारैर्दण्डिनेत्यत्र ङमुड्वारणाय 'ङमो ह्रस्वादचि–' इत्यत्रैवानुवृत्त्यर्थं पदग्रहणमित्युक्तत्वात्॥ न च तदेव प्रयोजनमस्त्विति वाच्यम्। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडिति व्याख्यानेन दण्डिनेत्यत्र ङमुटः प्रसक्त्यभावात्॥—हलि सर्वेषाम्॥—यकारस्येति। वकारस्तु नानुवर्तते। भोभगोअघोअपूर्वस्यासंभवात्। अपूर्वस्तु यद्यपि संभवति वृक्षव्करोतीति तथापि तत्र लोपाप्रसङ्गः। अशीत्यनुवर्त्याशा हलो विशेषणात्। वृक्षव् हसतीत्यादि त्वनभिधानादसाध्वित्याहुः। गव्यमित्यत्र तु पदान्तत्वं नास्ति, गव्यूतिरित्यत्र वकारप्रश्लेषान्न वलोप इत्युक्तम्॥—देवा नम्या इति। अत्र 'लोपो व्योर्वलि' इति न प्रवर्तते तं प्रति यत्वस्यासिद्धत्वात्॥—हलि किम्॥—देवायिहेति। उत्तरार्थमावश्यक हलीति ग्रहणमिहैव कृतम्। तेन 'लोपः शाकल्यस्य' इत्यस्यास्य च विषयविभागोऽत्र सिध्यतीति भावः॥—रोऽसुपि॥ असुपीति यदि पर्युदासः स्यात्ततः सुप्सदृशे प्रत्यय एव स्यादहर्यतीत्यादौ, न त्वहर्भातीत्यादावपि। तस्मात्प्रसज्यप्रतिषेध एवेति व्याचष्टे—न तु सुपीति[1]॥—अहरहरिति। 'नित्यवीप्सयोः' इति द्वित्वम्॥ न चात्र रेफादेशस्यासिद्धत्वात्पूर्वं नलोपे अकारस्यैव रेफः स्यादिति वाच्यम्। 'अहन्' इत्यावर्त्य एकेन लोपाभावं निपात्य द्वितीयेन रुर्विधेय इति 'अहन्' इति सूत्रे वक्ष्यमाणतया रुत्वापवादस्यापि रेफादेशस्य नकारस्थानिकत्वलाभात्॥—अहोरात्र इति। 'अहःसर्वैकदेश–' इत्यादिना समासान्तो वक्ष्यते। 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम्॥—अहोरथन्तरमिति। रथन्तरं साम, तेनाहः समाहारद्वन्द्वः। पृथक्पदत्वं वा॥—अहरादीनामिति। उभयत्राप्यादिशब्दः प्रकारे। तेन 'स्वर्चक्षा रथिरः, कविः काव्येना स्वर्चना' इत्यादि प्राप्तम्॥—विसर्गापवाद इति। मो राजिवद्रेफस्य रेफो विधीयते विकारनिवृत्त्यर्थमिति भावः॥—ढ्रलोपे–॥ रेत्यकार उच्चारणार्थः। ढश्च रश्च ढ्रौ तौ लोपयतीति ढ्रलोपः। णिजन्तात्कर्मण्यणि उपपदसमासः॥—तृढो वृढ इति। ऊदित्त्वेन वेट्कत्वाद् 'यस्य विभाषा' इति निष्ठायां नेट्। ढत्वधत्वष्टुत्वढलोपाः। प्राचा दृढ इति प्रत्युदाहृतं, तदसत्। तत्र ढलोपस्यैवाभावात्। 'दृढः स्थूलबलयोः' इति सूत्रेण हि दृंहेर्नकारहकारयोर्लोपः, तकारस्य ढत्वं च निपात्यते, न त्वसिद्धकाण्डस्थढत्वस्य इह प्रवृत्तिः। 'दादेर्धातोः–' इति घत्वेन बाधात्। न चेड्भावो ढत्वं नलोपश्च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम्॥ तथा सति परिद्रढय्येत्यत्र 'ल्यपि लघुपूर्वात्' इति णेरयादेशो न स्यात्। पारिवृढी कन्येत्यत्र 'इतो मनुष्यजातेः' इति ङीषं बाधित्वा 'अणिञोः–' इति ष्यङ् स्याद् ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वादित्याकरे स्थितम्॥ ननु परिद्रढय्येत्यत्र ल्यबादेशः कथं भवेत् यावता परिदृढमाचष्ट इति णिचि कृते क्त्वाप्रत्यये च क्त्वान्त एव परेऽन्तर्भावात्समासाभाव इति चेत्। अत्र कैयटः। संग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमात्परिशब्दं पृथक्कृत्य दृढशब्दादेव णिच् क्रियते। णिंजन्तस्य धातुत्वात् क्त्वाप्रत्यये कृते परेः क्त्वान्तेन कृदन्तेन समास इति सिद्धो ल्यबादेशः, णाविष्ठवद्भावाद्भाव इति॥ ननु पूर्वस्येति व्यर्थं सप्तमीनिर्देशादेव तल्लाभादत आह—पूर्वग्रहणमित्यादि। 'ढ्रलोपे पूर्वस्य–' इति सूत्रस्योत्तरपदाधिकारस्थत्वादुत्तरपदस्थयोरेव ढरेफयोः परतो दीर्घः स्यान्न तु लीढः अजर्घा इत्यत्रेति भावः॥ यद्यप्यसंभवादेवानुत्तरपदस्थढकारे दीर्घो भवेत्, तथाप्यजर्घा इत्यत्र दीर्घो न स्यादिति ज्ञेयम्॥ वस्तुतस्तु उत्तरपदस्य समासचरमावयवे रूढत्वात्पुना रमत इत्यादावपि न स्यात्, किंतु नीरक्तं दूरक्तं इत्यादावेव स्यादिति तत्त्वम्॥—लीढ इति। 'लिह आस्वादने' क्तः। ढत्वधत्वष्टुत्वढलोपाः। इह ढलोपं प्रति ष्टुत्वं नासिद्धं ढकारे परतो लोपविधिसामर्थ्यात्। अत एव 'ढो ढे

[1] नतु सुपीति—ननु प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं दुर्वारम् इति वाच्यम्, न, 'प्रत्ययग्रहणे चापञ्चम्याः' इति परिभाषाया जागरूकत्वात्। अत्र च सुपीति सप्तमीनिर्देशेन सुपि परे इत्यर्थे लब्धे भवति चावश्यं कस्मात्परे इति आकाङ्क्षा, तस्यां च सत्यामर्थित्वेन अह्नोऽन्वयो वाच्य इति स्फुटमेव पञ्चम्यन्तार्थात्परप्रत्ययाश्रयणम् इति।

### अङ्गुलेर्दारुणि। ५। ४। ११४।

अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दार्वर्थे। पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं दारु। अङ्गुलिसदृशावयवधान्यादिविक्षेपणकाष्ठमुच्यते। बहुव्रीहेः किम् द्वे अङ्गुली प्रमाणमस्याः द्व्यङ्गुला (५७) यष्टिः। तद्धितार्थे तत्पुरुषे तत्पुरुषस्याङ्गुलेः(१८०४)इत्यच्। दारुणि किम् पञ्चाङ्गुलिर्हस्तः।

### द्वित्रिभ्यां षमूर्ध्नः। ५। ४। ११५।

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ। द्विमूर्धः। त्रिमूर्धः। नेतु (५८) नक्षत्रे अप् वक्तव्यः *। मृगो नेता यासान्ताः मृगनेत्रा रात्रयः। पुष्यनेत्राः।

### अन्तर्बहिर्भ्याञ्च लोम्नः। ५। ४। ११७।

आभ्यां लोम्नोऽप् स्याद्बहुव्रीहौ। अन्तर्लोमः। बहिर्लोमः।

### अञ्नासिकायाः सञ्ज्ञायान्नसञ्चास्थूलात्। ५। ४। ११८।

नासिकान्ताद्बहुव्रीहेरच् स्यात् नासिकाशब्दस्य नसं प्राप्नोति न तु स्थूलपूर्वात्।

### पूर्वपदात्संज्ञायामगः। ८। ४। ३।

(५७) द्व्यङ्गुलेत्यत्र मात्रचो द्वयसचो वा तद्धितस्य द्विगोर्लुगिति(४६१६०)लुक्।
(५८) नेतुरिति नक्षत्रे यो नेतृशब्दस्तदन्तात् बहुव्रीहेरित्यर्थः।

पूर्वपदस्थात्(५९)निमित्तात्परस्य नस्य णः स्यात्संज्ञायाम् न तु गकारव्यवधाने। द्रुरिव नासिकाऽस्य द्रुणसः। खरणसः। अगः किम् ऋचामयनम् ऋगयनम्। अनृगयनादिभ्य इति निपातनात् णत्वाभावमाश्रित्य अगइति प्रत्याख्यातं भाष्ये। अस्थूलात्किम् स्थूलनासिकः। खुरखराभ्यां वा नस्(६०)। खुरणाः खरणाः। पक्षेऽजपीष्यते। खुरणसः खरणसः।

## उपसर्गाच्च।५।४।११९।

प्रादिभ्यो नासिकाशब्दान्तादन्ताद्बहुव्रीहेरच् नासिकाया नसादेशश्च। असंज्ञार्थं वचनम्। उन्नता नासिका यस्य स उन्नसः। उपसर्गादनोत्परइति (६१) सूत्रन्तङ्गत्वा भाष्यकार आह।

---

(५९) अह्नोऽदन्तादित्यत्र(२२२पृ०)अदन्तग्रहणरूपज्ञापकादत्र प्रकरणे वर्णग्रहणे तदन्तग्रहणं नास्तीत्याशयेनाह पूर्वपदस्थादिति। समानपदे (१०६पृ०) इत्यस्याधिकारलब्धस्य अखण्डपदे इत्यर्थात् समासेऽप्राप्तौ विध्यर्थमिदमिति भाष्ये स्थितम्। रघुनाथविनेत्रादिशब्दे तु णत्वे संज्ञाभङ्गापत्तेर्न णत्वं णत्वे कृते चेत् संज्ञा रूढ्यर्थो वा गम्यते तदेत्यर्थादुक्तम्। एतत्तु मलकमेवाभियुक्तैः पठ्यते संज्ञाशब्दा अनादिप्रयुक्ता नियतानुपूर्वीका इदानीं कस्तद्विपरीतं प्रयोक्तुमर्हतीति। शब्देन्दु०।

(६०) खुरेति नासिकाया इत्यनुवर्त्तते। अजेव विकल्प्यते न तु नसादेशस्तस्मात् पक्षेऽजपीति।

(६१) उपसर्गादनोत्परइत्यस्य उपसर्गस्थाद्रेफात् परस्य नस्शब्दस्यावयवस्य नइत्यस्य णः स्यात् ओकारे परतः ओकाराद्वा परस्य न भवतीत्यर्थः। नस्शब्दस्य अस्मच्छब्दादेशनस्साधारणः। प्र नः मुञ्च इति वाक्ये प्र उ नः मुञ्च इति वाक्ये वा प्रनो मुञ्च,प्रोनो मुञ्चेत्यादौ अस्मदादेशनस्

**उपसर्गाद्बहुलम्। ८। ४। २८।**

उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद्बहुलम्। प्रणसः। वेर्ग्रो वक्तव्यः *। विगता नासिकाऽस्य विग्रः। ख्यश्च * । विख्यः। कथन्तर्हि "विनसा हतबान्धवेति" भट्टिः। विगतया नासिकयोपलक्षितेति व्याख्येयम्।

**सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाऽजपदप्रोष्ठपदाः। ५। ४। १२०।**

एते बहुव्रीहयोऽच्प्रत्ययान्ता निपात्यन्ते। शोभनम्प्रातरस्य सुप्रातः (६२)। शोभनं श्वोऽस्य सुश्वः। शोभनन्दिवाऽस्य सुदिवः। शारेरिव कुक्षिरस्य शारिकुक्षः। चतस्रोऽश्रयोऽस्य चतुरश्रः। एण्या इव पादावस्य एणीपदः (६३) अजपदः। प्रोष्ठो गौः तस्येव पादावस्य प्रोष्ठपदः।

**नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्। ५। ४। १२१।**

शब्दसामान्यग्रहणात् तदीयनकारस्य न णत्वं तस्य ओत्परत्वात् ओकारात् परत्वान्नेत्याकरे स्थितम्। अत्र चोपसर्गग्रहणं प्राद्युपलक्षणार्थं तेन संप्रति क्रियायोगाभावेऽपि न क्षतिः। भाष्यकारस्त्वत्र सूत्रेऽनोत्परइत्यपनीय बहुलं जग्राह।

(६२) सुप्रातइति प्रातःशब्देन तद्विहितं कर्म्म लक्ष्यते अन्यथा प्रातःशब्दस्याधिकरणप्रधानतया सुशब्देन सामानाधिकरण्यासम्भवः।

(६३) एणीपदादिषु त्रिषु पद्भावएण्याः पुंवद्भावाभावश्च निपातनात् चतुरश्रशब्दस्तालव्यमध्य इति। शब्देन्दु०।

अच् स्यात्। अहलः अहलिः। असक्थः असक्थिः। एवं सुदुर्भ्याम्। शक्त्योरिति पाठान्तरम्। अशक्तः अशक्तिः।

## नित्यमसिच् प्रजामेधयोः। ५। ४। १२२।

नञ्दुःसुभ्य इत्येव। अप्रजाः। दुःप्रजाः। सुप्रजाः। अमेधाः। दुर्म्मेधाः। सुमेधाः।

## धर्म्मादनिच् केवलात्। ५। ४। १२४।

केवलात् (६४) पूर्व्वपदात्परो यो धर्म्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात्। कल्याणधर्म्मा। केवलात्किम् परमः स्वो धर्म्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत्। स्वशब्दो ह्यत्र न केवलम्पूर्व्वपदम् किन्तु मध्यमत्वादापेक्षिकम्। सन्दिग्धसाध्यधर्म्मेत्यादौ तु कर्म्मधारयपूर्व्वपदो बहुव्रीहिः। एवञ्च (६५) परमस्वधर्म्मेत्यपि साध्वेव निवृत्तिधर्म्मा अनुच्छित्तिधर्म्मेत्यादिवत्। पूर्व्वपदन्तु बहुव्रीहिणाऽऽक्षिप्यते।

(६४) केवलादिति केवलशब्दोह्यसहायवचनस्तस्य धर्म्मादित्यस्य समानाधिकरणविशेषणत्वे बहुव्रीहिरेव न स्यात् बहुव्रीहेरनेकसुबन्तघटितत्वेन केवलधर्म्मशब्दान्तत्वे तद्रूपासिद्धेरतो बहुव्रीहिणाऽऽक्षिप्तस्य पूर्व्वपदस्यैव केवलपदं विशेषणमित्याशयेनाह पूर्व्वपदात् केवलादिति केवलादित्यस्य व्यावर्त्त्यं दर्शयितुमाह केवलात् किमिति। त्रिपदबहुव्रीहौ मध्यपदरूपस्य स्वपदस्य तत्पूर्व्ववर्त्तिपरमपदसहायत्वेन केवलत्वाभावान्न नात्र समासान्तोऽनिजिति भावः।

(६५) एवञ्चेति समानविभक्तिकपदपूर्व्वकभिन्नत्वस्यैव केवलशब्दार्थत्वविवक्षणात् परमस्वधर्म्मेत्यादौ स्वस्य धर्म्मः स्वधर्म्मः स्वः स्वीयो वा धर्म्मः स्व-

## जम्भा सुहरिततृणसोमेभ्यः। ५। ४। १२५।

जम्भेति कृतसमासान्तन्निपात्यते। जम्भो भक्ष्ये दन्ते च। शोभनो जम्भोऽस्य सुजम्भा। हरितजम्भा। तृणम्भक्ष्यं यस्य तृणमिव दन्ता यस्येति वा तृणजम्भा। सोमजम्भा। स्वादिभ्यः किम् पतितजम्भः।

## दक्षिणेर्म्मा लुब्धयोगे। ५। ४। १२६।

दक्षिणे ईर्म्मं व्रणं यस्य दक्षिणेर्मा मृगः। व्याधेन कृतव्रण इत्यर्थः।

## इच् कर्म्मव्यतिहारे। ५। ४। १२७।

कर्म्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात्समासान्तः। केशाकेशि। मुसलामुसलि।

## द्विदण्ड्यादि (६६) भ्यश्च। ५। ४। १२८।

धर्म्म इति तत्पुरुषोत्तरं कर्म्मधारयोत्तरं वा परमशब्देन बहुव्रीहौ स्वधर्म्मशब्दस्य धर्म्मान्ततया अनिच्। सन्दिग्धसाध्यं धर्म्मोयस्येत्यत्र तु साध्यपदस्य पूर्व्वपदवत्त्वेऽपि समानविभक्तिपदशून्यत्वात् केवलत्वं तथा चानुच्छित्तिधर्म्मेत्यादावपि उच्छित्तेः पूर्व्वं नञादिस्थितावपि न तस्य समानविभक्तिकत्वमिति नोदाहरणासङ्गतिः। त्रिपदे तु परमइत्यस्य समानविभक्तिकतया तत्पूर्व्वकस्य स्वपदस्य निरुक्तकेवलत्वाभावान्न प्रसङ्ग इति भावः।

(६६) द्विदण्डि द्विमुसलि उभाञ्जलि उभयाञ्जलि उभादन्ति उभयादन्ति उभाहस्ति उभयाहस्ति उभाकर्णि उभयाकर्णि उभापाणि उभ-

तादर्थ्ये चतुर्थ्येषा। एषां सिद्धयर्थमिच्प्रत्ययः स्यात्। द्वौ दण्डौ यस्मिन् प्रहरणे (९७) तत् द्विदण्डि प्रहरणम्। द्विमुसलि। उभाहस्ति (९८)।

**प्रसंभ्यां जानुनोर्ज्ञुः। ५। ४। १२९।**

आभ्यां परयोर्जानुशब्दयो (९९) र्ज्ञुरादेशः स्याद्बहुव्रीहौ। प्रगते जानुनी यस्य प्रज्ञुः। संज्ञुः।

**ऊर्ध्वाद्विभाषा। ५। ४। १३०।**

ऊर्ध्वज्ञुः ऊर्ध्वजानुः।

**धनुषश्च। ५। ४। १३२।**

धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात्। शार्ङ्गधन्वा।

यापाणि उभाबाहु उभयाबाहु एकपदि प्रोष्ठपदि आढ्यपदि सपदि निकुच्यकर्णि संहतपुच्छि अन्तेवासि। द्विदण्ड्यादि।

(९७) प्रहरणे इत्यनेन द्विदण्डा शालेत्यत्र तु इच् नेति ज्ञाप्यते निपातनस्य विषयविशेषपरिग्रहार्थत्वात्।

(९८) उभाहस्तीत्यत्र निपातनादेवायचं विनापि प्रयोगो भवतीति ज्ञापितम् निपातनस्य सर्वशक्तिमत्त्वात्।

(९९) जानुशब्दस्यैकत्वेपि अर्थगतमुपसर्गनिबन्धनं वा द्वित्वमाश्रित्य जानुनोरिति द्विवचननिर्देशः तत्फलन्तु स्थानषष्ठीत्वस्फुटीकरणमन्यथा जानुन इति निर्देशे पञ्चमीयमित्याशङ्केत तथा च प्रत्ययाधिकारात् जानुनः परोज्ञुः प्रत्ययःस्यादित्यनिष्टार्थो भवेत् स मा भूदित्याशयेन षष्ठ्यन्ततेति ध्वनयन्नाह जानुशब्दयोरिति।

वा संज्ञायाम्। ५। ४। १३३।

शतधन्वा शतधनुः।

जायाया निङ्। ५। ४। १३४।

जायान्तस्य बहुव्रीहेर्निङादेशः स्यात्।

लोपो व्योर्वलि। ६। १। ६६।

वकारयकारयोर्लोपः स्याद्वलि। पुंवद्भावः। युवतिर्जायाऽस्य युवजानिः।

गन्धस्येदुत्पूतिसुसुरभिभ्यः। ५। ४। १३५।

एभ्यो गन्धस्य इकारोऽन्तादेशः स्यात्। उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः। गन्धस्येत्त्वे तदेकान्तग्रहणम्*। एकान्तएकदेशइव अविभागेन (७०) लक्ष्यमाण इत्यर्थः। सुगन्धि पुष्पम् सलिलं वा। सुगन्धिर्वायुः। नेह शोभना गन्धाः द्रव्याणि (७१) अस्य सुगन्धआपणिकः।

(७०) अविभागेनेति एवञ्च गुणवाचिन एवेह ग्रहणं न द्रव्यवाचिनइति फलितोऽर्थः।

(७१) द्रव्याणीति अस्ति च गन्धशब्दो द्रव्यवचनः "गन्धस्तु सौरभे लेशे गन्धके गर्व्वलेशयोः। सएव द्रव्यवचनो बहुत्वे पुंसि च स्मृत" इति कोशात् "वहति जलमियं पिनष्टि गन्धानियमियमुद्ग्रथते स्रजोविचित्राः" इत्यादिप्रयोगाञ्च। केचित्तु एकान्तशब्देन स्वाभाविकत्वं विवक्षित्वा आगन्तुकस्य नेत्याहुः।

### अल्पाख्यायाम् । ५ । ४ । १३६ ।

सूपस्य (७२) गन्धो लेशो यस्मिन् तत् सूपगन्धि भोजनम् । घृतगन्धि । "गन्धो गन्धक आमोदे लेशे संबन्धगर्व्वयो"रिति विश्वः ।

### उपमानाच्च । ५ । ४ । १३७ ।

पद्मस्येव गन्धोऽस्य पद्मगन्धिः ।

### पादस्य लोपोऽहस्त्यादिभ्यः । ५ । ४ । १३८ ।

हस्त्यादिवर्ज्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । स्थानिद्वारेणाऽयं समासान्तः (७३) । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः(७४)किम् हस्तिपादः । कुसूलपादः ।

(७२) सूपस्येति व्यधिकरणपदो बहुव्रीहिरतएव ज्ञापकात् । यद्वा सूपो गन्धोलेशोऽस्मिन्नित्येव विग्रहः गन्धशब्दस्यात्र लेशवाची स्वल्पते तस्य च विशेषणत्वेऽप्यतएव ज्ञापकात् परनिपातः १ मनो०

(७३) अयं यदि समासान्तो न स्यात् तदाऽहस्त्यादिभ्यः इति निर्द्देशेन आदेः परस्येति (२८९०) परिभाषया पादशब्दस्यादेराकारलोपः स्यात् स्याच्च इतरसम सान्ताभावे शेषात् विभाषेति (४२५९०) कप्प्रत्ययइत्या-शयेनाह अयं समासान्तइति अभावस्यापि भावावयवत्वमौपचारिकं सूत्रबलादेव कल्प्यते इत्याह स्थानिद्वारेणेति ।

(७४) हस्तिन् कुद्दाल अश्व कुशिक कुरुत कटोल कटोलक गण्डोल गण्डोलक कण्डोल कण्डोलक अज कपोत जाल गण्ड महेला दासी गणिका कुसूल । हस्त्यादि ।

## कुम्भपदीषु (७५) च। ५। ४। १३९।

कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम्। पादः पत्(७८९७)। कुम्भपदी। स्त्रियां किम् कुम्भपादः।

## संख्यासुपूर्व्वस्य। ५। ४। १४०।

पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ। द्विपात्। सुपात्।

## वयसि दन्तस्य दतृ। ५। ४। १४१।

संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि। द्विदन्। चतुर्दन्। षट् दन्ता अस्य षोड़न्। सुदन्। सुदती। वयसि किम् द्विदन्तः करी। सुदन्तो नटः।

## स्त्रियां संज्ञायाम्। ५। ४। १४३।

दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ। अयोदती। फाल-दती। संज्ञायां किम् समदन्ती।

## विभाषा श्यावारोकाभ्याम्। ५। ४। १४४।

(७५) कुम्भपदी इत्येवमादिषु बहुव्रीहिषु पादस्य लोपः स्त्रियां नित्यं ङीप् च निपात्यते। कुम्भस्येव पादौ यस्याः सा कुम्भपदी।

कुम्भपदी एकपदी जालपदी शूलपदी मुनिपदी गुणपदी शतपदी सूत्रपदी गोधापदी कलशीपदी विपदी तृणपदी द्विपदी त्रिपदी षट्पदी दासीपदी शितपदी विष्णुपदी सुपदी निष्पदी आर्द्रपदी कुणिपदी कृष्णपदी शुचिपदी द्रोणपदी द्रुपदी सूकरपदी शकृत्पदी अष्टापदी स्थूणापदी अपदी सूचीपदी। कुम्भपद्यादि।

दन्तस्य दतृ बहुव्रीहौ । श्यावदन्—श्यावदन्तः । अरोकदन्—अरोकदन्तः ।

**अग्रान्तशुभ्रवृषवराहेभ्यश्च । ५ । ४ । १४५ ।**

एभ्यो दन्तस्य दतृ वा । कुट्मलाग्रदन् कुट्मलाग्रदन्तः ।

**ककुदस्याऽवस्थायां लोपः । ५ । ४ । १४६ ।**

अजातककुत् (७६) । पूर्णककुत् ।

**त्रिककुत्पर्व्वते । ५ । ४ । १४७ ।**

त्रीणि ककुदान्यस्य त्रिककुत् । संज्ञैषा पर्वतविशेषस्य । त्रिककुदोऽन्यः ।

**उद्विभ्यां काकुदस्य । ५ । ४ । १४८ ।**

लोपः स्यात् । उत्काकुत् । विकाकुत् । काकुदं तालु ।

**पूर्णाद्विभाषा । ५ । ४ । १४९ ।**

पूर्णकाकुत्—पूर्णकाकुदः ।

**सुहृद्दुर्हृदौ मित्रामित्रयोः । ५ । ४ । १५० ।**

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः । दुर्हृदयः ।

---

(७६) कालाहारादिकृता अवयवोपचयादयो वस्तुधर्म्मा अवस्थेत्युच्यते अजातककुत्त्वेन बाल्यं पूर्णककुत्त्वेन तारुण्यं गम्यते अवस्थायां किं श्वेतककुदस्त्वादौ न ।

ढेलोपके परे पूर्वस्याणो दीर्घः स्यात् । पुनारमते । हरीरम्यः । शंभूराजते । [1]अणः किम् । तृढः । वृढः । [2]तृहू हिंसायाम्, वृहू उद्यमने । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । लीढः । अजर्घाः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते । **विप्रतिषेधे परं कार्यम् ।१।४।२।** [3]तुल्यबलविरोधे परं कार्यं स्यात् । [4]इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव मनोरथः । **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।६।१।१३२।** अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे । एष विष्णुः । स शंभुः । अकोः किम् । एषको रुद्रः । [5]अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र । **सोऽचि लोपे चेत्पादपूरणम् ।६।१।१३४।** स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । [6]सेमामविड्ढि प्रभृतिं य ईशिषे । इह ऋक्पाद एव

---

लोपः' इत्यस्य पदाधिकारस्थत्वेऽप्यपदान्तस्य ढलोपो भवति ॥—**अजर्घा** इति । 'गृधु अभिकाङ्क्षायां' यङ्लुकि द्वित्वे अभ्यासस्य रुक् लङः सिपि शब्लुकि सिप ईडभावपक्षे लघूपधगुणो रपरः, 'इतश्च–' इतीकारलोपे हल्ङ्यादिलोपः, भष्भावः, जश्त्वे 'दश्च' इति रुत्वपक्षे अजर्घर्र् इति स्थिते 'रो रि' इति रेफलोपेऽनेन दीर्घः ॥ अत्रेयं सुगमव्याख्या—**ढ्रलोपे पूर्वस्य दीर्घोऽणः** । लीढः । नीरक्तं, दूरक्तम् । अणः किम् । तृढः । वृढः । पूर्वग्रहणमनुत्तरपदेपि पूर्वमात्रस्य दीर्घार्थम् । अजर्घाः । पुना रमते । हरी रम्यः । शम्भू राजत इति ॥—**विप्रतिषेधे**—॥ विप्रतिपूर्वात् 'षिधू शास्त्रे माङ्गल्ये च' 'षिध गत्याम्' इत्यस्माद्वा धातोर्घञ् । 'उपसर्गात्सुनोति–' इति षत्वम् । उपसर्गवशाच्च विरोधार्थकत्वम् ॥—**कार्यमिति** ॥ 'अर्हे कृत्यतृचश्च' इत्यर्हार्थे कृत्यप्रत्ययः । तेन तुल्यबलविरोध इति पर्यवसानादतुल्यबलेषूत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गविधिषु नेदं प्रवर्तते । नह्यपवादादीनां संनिधावुत्सर्गादीनां कृत्यर्हत्वं तैर्बाधितत्वात् । तत्र नित्यमावश्यकत्वाद्बाधकम्, अन्तरङ्गं तु लाघवात्, अपवादस्तु वचनप्रामाण्यात्, तद्भिन्नस्तु प्रकृतसूत्रस्य विषयः । अत एव 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इत्युक्तम् । यद्यतुल्यबलेष्वपि परमेव स्यात्तन्नोपपद्येताऽतो व्याचष्टे—**तुल्यबलविरोध** इति । जातौ पदार्थे विध्यर्थमिदं सूत्रम् । वृक्षेषु वृक्षाभ्यामित्यत्र हि लब्धावकाशयोरेत्वदीर्घत्वशास्त्रयोर्वृक्षेभ्य इत्यत्र युगपत्प्रसक्तौ विनिगमकाभावादप्रतिपत्तिरेव स्यात् । तदुक्तम् । 'अप्रतिपत्तिर्वा उभयोस्तुल्यबलत्वात्' इति । तत्रास्माद्वचनात्परस्मिन् कृते यदि पूर्वस्यापि निमित्तमस्ति तर्हि तदपि भवति, यथा भिन्धकीत्यत्र परत्वाद्द्विभावे कृतेऽप्यकच् । तदुच्यते—'पुनःप्रसङ्गविज्ञानात्सिद्धम्' इति । व्यक्तौ तु पदार्थे तत्तद्व्यक्तिविषयकयोर्लक्षणयोरन्यत्र चरितार्थत्वासंभवात्तव्यत्तव्यानीयरामिव पर्यायेण प्रवृत्तौ नियमार्थमिदं सूत्रं विप्रतिषेधे परमेव स्यान्न तु पूर्वमिति । एतल्लक्षणारम्भाच्च, तत्रतत्र पूर्वस्यानारम्भोऽनुमीयते । तथा च जुहुतात्त्वमित्यत्र परत्वात्तातङि कृते स्थानिवद्भावेन 'हुझल्भ्यः–' इति धित्वं न भवति । तदुच्यते—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति । लक्ष्यानुरोधाद्व्यवस्थाप्यमेतद्द्वयमपि । तत्र विधिपक्षे तूत्वे रेफलोपे च प्राप्ते इति पाठ्यम् । नियमार्थमिति पक्षे परमेव कार्यं स्यादित्येवकारोऽध्याहर्तव्यो वृत्तौ ॥—**उत्वमेवे**ति । सिद्धासिद्धयोरतुल्यबलत्वेन 'विप्रतिषेधे परम्' इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः । तदुक्तम्—'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति । एतेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे इति वक्ष्यमाणग्रन्थो व्याख्यातः॥—**एतत्तदोः**—॥ अत्र त्यदाद्यत्वमेकशेषश्च न कृतः सौत्रत्वात् 'प्रकृतिवदनुकरणम्' इति वैकल्पिकातिदेशाद्वा । एवं च वृत्तावप्येतत्तदोरिति प्रयोगः साधुः । 'हल्ङ्याब्भ्यः–' इत्यस्यानन्तरमेवेदं लाघवाय न कृतं संहिताधिकारोपजीवनादित्याहुः ॥ सूत्रे सु इति पृथक् पदं लुप्तषष्ठीकमित्याह—**एतत्तदोर्यस्सु**रिति । एतत्तदर्थगतसंख्याभिधायी यः सुस्तस्येत्यर्थः । एतत्तदोर्विहित इति व्याख्याने तु परमस ददाति, परमैष ददातीत्यादौ सुलोपो न स्यात् । एतत्तदोः पर इति व्याख्यानं तु न संभवति, एतत्तद्भ्यामिति पञ्चम्यभावात् । एतत्तदोरवयव इति न संभवत्येव, सोः प्रत्ययत्वात् । तस्मादर्थद्वारकसंबन्ध एवाश्रितः । तदाश्रयणे लिङ्गं तु अनञ्समास इति बोध्यम् । एतत्तदोः किम् । यो ददाति ॥—**अकोः किमिति** । साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः ॥—**एषक** इति । अकोरिति प्रतिषेध एव 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषां ज्ञापयतीति भावः ॥—**सोचि लो**— ॥ अचीति विस्पष्टार्थमिति वृत्तौ स्थितम् । सस् इति तच्छब्दस्य प्रथमैकवचना-

---

१ अणः किमिति—एषु विशेषाभावेन 'परिवृढ' इत्यादिनिर्देशेन ऋकारेऽप्रवृत्तेर्लृकारेऽसंभवेन दीर्घग्रहणप्राप्ताणपरिभाषयैव सिद्धिरिति प्रश्नः । ज्ञापकवचनकल्पने लाघवाभाव इत्युत्तराशयः । २ तृहू इति—क्वचित् तृंहू इति पाठः । तत्पक्षे 'नकारजावनुस्वारपञ्चमौ' इति वृद्धोक्तेरनिदितामिति नलोपः । ३ तुल्यबलविरोध इति—द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसंभविस्वकार्यसमर्पणे इत्यर्थः । ४ इति लोप इति—न च रोरीत्यपेक्षया नित्यमुत्वं, कृतेऽपि तत्र स्थानिवद्भावेनोत्वप्राप्तेरिति वाच्यम् । भो भगो इति सूत्रभाष्योक्तरीत्या तस्याल्विधित्वात् । ५ अनञ्समासे किमिति—नञ्तत्पुरुषस्य पूर्वपदार्थप्रधानत्वेन तच्छब्दाद्यर्थस्योपसर्जनत्वात् त्यदाद्यत्वाभावेन हल्ङ्यादिलोपो दुर्वार इति प्रश्नः । इदमेव ज्ञापकं नञ्समासे उत्तरपदार्थप्राधान्यस्य, गौणत्वेऽपि नञ्समासे उत्तरपदार्थप्राधान्यप्रयुक्तकार्यस्य वेत्युत्तराभिप्रायः । ६ सेमामेति—द्वादशाक्षरपादा जगती छन्दः ।

## उरःप्रभृतिभ्यः (७७) कप्। ५। ४। १५१।

व्यूढोरस्कः। प्रियसर्पिष्कः। इह पुमान् अनड्वान् पयः नौः लक्ष्मीरिति (७८) एकवचनान्तानि पठ्यन्ते। द्विवचन (७९) बहुवचनान्तेभ्यस्तु शेषाद्विभाषेति विकल्पेन कप्। द्विपुमान् द्विपुंस्कः। अर्थान्नञः ग०। अनर्थकम्। नञः किम् अपार्थम् अपार्थकम्।

## इनः स्त्रियाम्। ५। ४। १५२।

बहुदण्डिका नगरी। अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेनाऽपि तदन्तविधिम्प्रयोजयन्ति। बहुवाग्मिका। स्त्रियां किम् बहुदण्डी बहुदण्डिको ग्रामः।

## शेषाद्विभाषा। ५। ४। १५४।

अनुक्तसमासान्ता (८०) च्छेषाधिकारस्थाद्बहुव्रीहेः कप् वा

---

(७७) उरस् सर्पिस् उपानह् पुमान् अनड्वान् पयः नौः लक्ष्मीः दधि मधु शालि अर्थान्नञः। इत्येते उरः प्रभृतयः।

(७८) लक्ष्मीशब्दस्य पाठस्य नद्युतश्चेत्यनेन(४०४पृ०)सिद्धे नियमार्थमेकवचनान्तस्यैव नित्यो भवति अन्यवचनस्य तु शेषादिति वैकल्पिकः कप्। अत बहुलक्ष्मीकः बहुलक्ष्मीरिति। अनयोर्द्वैतस्य सदृत्वात् अकथा लक्ष्मीयस्येति विग्रहे कब्भावइति। मनो०

(७९) अन्यत्र गणे निर्विभक्तिकपाठस्यैव दृष्टत्वेन केषाञ्चित्सविभक्तिकानां पाठस्तत्संख्याविवक्षार्थस्तदाह द्विवचनेत्यादि।

(८०) अनुक्तसमासान्तादिति समासान्तापेक्षयैव शेषत्वागय। परे तु नैवेह कबपेक्षया शेषत्वं नापि समासान्तभावापेक्षया किन्तु अन-

स्यात् । महायशस्कः महायशाः । अनुक्तेत्यादि किम् व्याघ्रपात् । सुगन्धिः । प्रियपथः । शेषाधिकारस्थात् किम् उपबहवः । उत्तरपूर्वा । सपुत्रः । तन्त्रादिना (८१) शेष-शब्दोऽर्थद्वयपरः ।

## आपोऽन्यतरस्याम् । ७ । ४ । १५ ।

कपि (८२) आबन्तस्य ह्रस्वो वा स्यात् । बहुमालाकः — बहुमालकः । कबभावे बहुमालः ।

## न संज्ञायाम् । ५ । ४ । १५५ ।

शेषादिति (८३) प्राप्तः कप् न स्यात्संज्ञायाम् । विश्वे देवा अस्य विश्वदेवः ।

## ईयसश्च (८४) । ५ । ४ । १५६ ।

न्तरं यो बहुव्रीह्यधिकारउक्तः शेषो बहुव्रीहिरिति(२९९पृ०) तदपेक्षयैव शेषोपादानमित्याहुः । शब्देन्दु०

(८१) सकृच्छ्रुतस्य शेषशब्दस्य अनुक्तसमासान्तपरत्वे शेषो बहुव्रीहिरित्येतत्परत्वे च सकृदुच्चारितःशब्दः सकृदर्थं गमयतीति न्यायविरोधमालक्ष्य तन्त्रादिनेत्युक्तम् ।

(८२) न कपीत्यतः(४०४पृ०)कपीत्यनुवर्त्त्याह कपीति ।

(८३) अनन्तरेति न्यायाच्छेषादित्यस्यैव निषेध इत्याशयेनाह शेषादिति विश्वाख्या देवगणविशेषाइत्यर्थः उद्भूतावयवभेदत्वाद्बहुवचनम् ।

(८४) ईयसोरिति वक्तव्ये ईयस इति निर्देशात् शैषिकस्य कप इव स्त्रीलिङ्गमद्युतश्चेति(४०४पृ०)कपो निषेध इति बोध्यम् । तथाच ईयसो बहुव्रीहे

ईयसन्तोत्तरपदान्न कप्। बहवः श्रेयांसोऽस्य बहुश्रेयान्। गोस्त्रियोरिति (३२२पृ०)ह्रस्वत्वे प्राप्ते। ईयसो बहुव्रीहेर्नेति वाच्यं *। बह्व्यः श्रेयस्योऽस्य। बहुश्रेयसी। बहुव्रीहेः किम् अतिश्रेयसिः।

## वन्दिते भ्रातुः। ५। ४। १५७।

पूजिते(८५)ऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात्। प्रशस्तो भ्राता यस्य। प्रशस्तभ्राता सुभ्राता। न पूजनादिति (४५५पृ०) निषेधस्तु बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः (४१४) प्रागेवेति (४५५पृ०) वक्ष्यते। वन्दिते किम् मूर्खभ्रातृकः।

## नाडीतन्त्र्योः स्वाङ्गे। ५। ४। १५९।

स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात्कप् न स्यात्। बहुनाडिः (८६) कायः। बहुतन्त्रीः ग्रीवा। बहुतन्त्रीर्धमनी। स्त्रीप्रत्ययान्तत्वाभावाद्ध्रस्वो न। स्वाङ्गे किम् बहुनाडीकः स्तम्भः।

## निष्प्रवाणिश्च। ५। ४। १६०।

---

रितिवार्त्तिके ईयसः परस्य स्त्रीप्रत्ययस्य पुंविषयकस्येकारस्य यथा न ह्रस्व इत्यर्थस्तथास्यापि सूत्रस्यार्थस्तदेतदाह ईयसन्तोत्तरेति।

(८५) अभिवादनस्तुतिरूपोभयार्थकवन्दिधातुनोभयसाधरणपूजा लक्ष्यत इत्याशयेनाह पूजित इति।

(८६) बहुनाडिरित्यत्र स्त्रीप्रत्ययान्तत्वादुपसर्जनह्रस्वः तन्त्रीशब्दस्यौणादिकप्रत्ययान्तत्वान्न ह्रस्व इति भेदः।

कबभावोऽत्र निपात्यते। प्रपूर्वाद्वयतेर्ल्युट् (८७)। प्रवाणी तन्तुवायशलाका। निर्गता प्रवाण्यस्मात् निष्प्रवाणिः पटः। समाप्तवान् (८८) नवद्रत्यर्थः।

## सप्तमीविशेषणे बहुव्रीहौ।२।२।३५।

सप्तम्यन्तं (८९) विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम्। कण्ठेकालः। अतएव (९०) ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। चित्रगुः (९१)। सर्व्वनामसंख्ययोरुपसंख्यानम् *। सर्व्वश्वेतः। त्रिशुक्लः। मिथोऽनयोः समासे संख्या पूर्वा शब्दपरस्य (९२) विप्रतिषेधात्। द्व्यन्यः। संख्याया अल्पो (९३)

(८७) वयते ल्युडिति प्रोयतेऽस्मामित्यधिकरणे ल्युट्।

(८८) समाप्तवानिति समाप्तमायमं क्रिया यस्येत्यर्थे मतुप्।

(८९) सप्तम्यन्तस्य तु कर्त्राद्यन्वयद्वारैव क्रियान्वयाद्विशेषणत्वे सिद्धे सप्तमीग्रहणं वैयधिकरण्येऽप्यत्र समासं ज्ञापयति।

(९०) विशेषणपदस्यात्र ब्राह्मणवसिष्ठन्यायेन तदतिरिक्तविशेषणपरं तदाऽऽह्रातएवेति।

(९१) चित्रगुरिति उभयोरपि प्रथमानिर्द्दिष्टत्वेनानियमे प्राप्ते उभयपदार्थयोर्मध्ये विशेषणस्यैव पूर्व्वनिपातार्थं विशेषणग्रहणमिति भावः। उदाहरणे क्रमेण सर्व्वनामसंख्ययोः श्वेतशुक्लविशेषणत्वात् पूर्व्वनिपातः।

(९२) शब्दपरस्येति। अतएव सर्व्वनामसंख्ययोरित्यत्राल्पाचोऽपि संख्यायाः शब्दपरत्वेनैव न पूर्व्वनिपातः।

(९३) संख्यावाचकानां समासेऽल्पसंख्यावाचिकायाः पूर्व्वनिपात इत्यर्थः

वस्त्राः। हित्राः। द्वन्द्वेऽपि ॰। द्वादश। वा प्रियस्य ॰।
गुड़प्रियः प्रियगुड़ः। गड्वादिभ्यः परा सप्तमी ॰। गडु-
कण्ठः। क्वचिन्न वहेगडुः।

## निष्ठा।२।२।३६।

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। कृतकृत्यः (९४)। जाति-
कालसुखादिभ्यः परा निष्ठा वाच्या ॰। सारङ्गजग्धी (९५)
मासजाता। सुखजाता। प्रायिकञ्चेदम्। कृतकटः।
पीतोदकः।

## वाहिताग्न्यादिषु (९६)।२।२।३७।

आहिताग्निः अग्न्याहितः। आकृतिगणोऽयम्। प्रहर-
णार्थेभ्यः परे निष्ठासप्तम्यौ ॰। अस्युद्यतः। दण्डपाणिः।
क्वचिन्न। विवृतासिः।

इति बहुव्रीहिः।

---

(९४) कृतकृत्यशब्दयोः क्रियाशब्दत्वादनियमे प्राप्ते वचनम्।

(९५) सारङ्गजग्धीति अस्वाङ्गपूर्व्वपदाद्वेति (२३३४०) ङीप्।

(९६) आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत मद्य-
पीत ऊढ़भार्य्य गतार्थ। आकृतिगणोऽयम् तेन अस्युद्यत गडुकण्ठ
दण्डपाणिप्रभृतयोऽपि।

## चार्थे (१) द्वन्द्वः । २ । २ । २९ ।

अनेकं सुबन्तं चार्थे वर्त्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्पर (२) निरपेक्षस्याऽनेकस्य (३) एकस्मिन् (४) अन्वयः समुच्चयः । अन्यतरस्यानुषङ्गिक (५) त्वेऽन्वाचयः । मिलितानाम (६) मन्वय

---

(१) चार्थे इति अनेकमन्यपदार्थे (२९९४०) इत्यतोऽनेकमित्यनुवर्त्तते तत्फलं स्रग्वाग्दृषदमित्यत्रान्ते समासान्तः होतृपोतृनेष्टोद्गातार इत्यादावुपान्ते आनङ्प्रवृत्तिश्च । द्वन्द्वश्च प्रथमान्तानां परिनिष्ठितविभक्त्यन्तानां वेति पक्षद्वयम् ।

(२) परस्परनिरपेक्षस्येति एकस्य क्रियान्वयोत्तरमपरस्यावृत्त्या तदन्वय इति न तयोः परस्पराकाङ्क्षा ।

(३) अनेकस्येति तेनैकस्य सापेक्षत्वेऽपि न दोषउभयोस्तथात्वाभावात् । समुच्चये चशब्देन स्वसमभिव्याहृतपदार्थोत्तरसापेक्षत्वं बोध्यते तदसमभिव्याहारे तु न । अतएवात्रैक एव चशब्दः प्रयुज्यते तेन यच्छब्दोत्तरं चशब्दस्तस्यैव समभिव्याहृतक्रियादावन्वये इतरसापेक्षत्वं न त्वन्यस्येति बोध्यम् ।

(४) एकस्मिन् एकधर्मावच्छिन्ने इत्यर्थः अन्वय इत्यस्य यत्नेत्यादिस्तथाच यत्रैवमन्वयस्तत्र समुच्चयश्चशब्दार्थ इति भावः न त्वन्वयएव समुच्चय इति भ्रमितव्यम् । अन्वयश्च विशेष्यतया विशेषणतया वा तत्राद्यं चैत्रो गच्छति पचति चेत्यादौ क्रियासमुच्चये, अन्त्यम् ईश्वरं गुरुञ्च भजस्वेत्यादि द्रव्यसमुच्चये ।

(५) आनुषङ्गिकत्वमनुद्देश्यत्वमन्यतरस्य प्राधान्यञ्च तत्सम्बन्धिक्रियाया अवश्यकर्त्तव्यत्वरूपं तथाच समभिव्याहृतक्रियादिगतमानुषङ्गिकत्वव्याप्यत्वमन्वाचयचकारार्थः ।

(६) मिलितानामिति परस्परापेक्षाणामुद्भूतावयवभेदकसमूहरूपाणामित्यर्थः । अन्वय इत्यस्यैकधर्मावच्छिन्नेनान्वय इत्यर्थः । तेन मीमांसो

इतरेतरयोगः । समूहः (७) समाहारः । तत्रेश्वरं गुरुञ्च भजस्वेति समुच्चये, भिक्षामट गाञ्चानयेत्यन्वाचये च न समासोऽसामर्थ्यात् (८) । धवखदिरौ । संज्ञापरिभाषम् । अनेकोक्तिः होतपोतनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु । होतापोतानेष्टोद्गातारः ।

संयोगजनकव्यापारजनकव्यापारबोधकतया द्विकर्म्मकत्वेन अजां ग्रामं नयतीत्यादौ अजाग्रामयोरुभयोरपि धातूपात्तक्रियायामन्वयेन तत्र न चकारयोगो नापि समासः तयोरेकस्य संयोगेऽपरस्य संयोगानुकूलव्यापारेऽन्वयादेकत्वान्वयाभावात् । अतएव चात्रानेकचकाराप्रयोगः । यत्रैवमन्वयस्तत्रेतरेतरयोगस्तादृशसमूहश्च चार्थ इत्यर्थः ।

(७) अनुद्भूतावयवभेदः समूहः समाहार इत्यर्थः । तत्रेतरेतरयोगे उद्भूतावयवभेदसमूहस्य प्रतीत्या प्रत्येकावयववृत्तिधर्म्म एव प्रवृत्तिनिमित्तं समाहारे तु द्वित्वत्रित्वादिनैव समूहस्य भानात् समूहत्वनेव प्रवृत्तिनिमित्तमिति विशेषः । एवञ्च उभयत्रैव समूहस्य बोधः ।

(८) असामर्थ्यादिति एकार्थीभावाभावादित्यर्थः । तथाहि बहुव्रीहिघटकपदानां कर्म्माद्यन्तर्भावेणेव द्वन्द्वघटकपदानां चार्थान्तर्भावेणैव एकार्थीभाव आवश्यकः समर्थः पदविधिरिति(३१७सू॰)परिभाषितत्वात् चार्थे द्वन्द्व इत्युक्तेश्च । नचेतरान्वये परस्परनिरपेक्षाणामेकार्थीभावः सम्भवति येन समुच्चयान्वाचयावेकार्थीभावेऽन्तर्भूतौ स्याताम् । ततश्चेतरेतरयोगे समाहारे च साहित्यस्य सत्त्वादेकार्थीभावस्तयोस्तदसत्त्वे न तथेति बोध्यम् । इयांस्तु विशेषः इतरेतरयोगे साहित्यं विशेषणं द्रव्यं विशेष्यं समाहारे तु साहित्यं प्रधानं द्रव्यं विशेषणमिति यथा चानयोर्वैधर्म्यलक्षणमनुपदं तथोक्तं प्राक् ।

## राजदन्तादिषु (९) परम्।२।२।३१।

एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजा राजदन्तः। धर्मादिष्वनियमः (१०)। अर्थधर्मौ। धर्मार्थौ। दम्पती। जम्पती। जायापती (११)। जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते। आकृतिगणोऽयम्।

## द्वन्द्वे घि।२।२।३२।

द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ। अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे*। हरिगुरुहराः। हरिहरगुरवः।

---

(९) राजदन्तादिष्विति इदञ्च सर्वसमासविषयं षष्ठीसमासकर्मधारयद्वन्द्वसमासनिष्पन्नानां गणे पाठात्।
राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् अर्पितोप्तम् उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरग्वायनबन्धकी चित्ररथबाह्लीकम् अवन्त्यश्मकम् शूद्रार्य्यम् स्नातकराजानौ विष्वक्सेनार्ज्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ वैकारिमतम् गोजवाजम् गोपालधानीपूलासम् पूलासककुरण्डम् स्थूलपूलासम् उशीरबीजम् जिह्वाश्वि सिञ्जाश्वत्थम् चित्रास्वाती भार्य्यापती दम्पती जम्पती जायापती पुत्रपती पुत्रपशू केशश्मश्रु शिरोबीजम् शिरोजानु सर्पिर्मधुनी मधुसर्पिषी आद्यन्तौ अन्तादी गुणवृद्धी वृद्धिगुणौ। आकृतिगणोयम्।

(१०) धर्मादिष्विति द्वन्द्वविषयमेतत्। ते च राजदन्ताद्यन्तर्गणाः।

(११) जायापती इति अभ्यर्हितत्वेऽपि पत्युर्न पूर्वनिपातः राजदन्तादिगणे पाठादिति बोध्यम्।

## अजाद्यदन्तम्। २। २। ३३।

इदं द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ। बह्वष्वनियमः। अश्वरथेन्द्राः। इन्द्राश्वरथाः। अन्तादजाद्यदन्तं विप्रतिषेधेन। इन्द्राग्नी।

## अल्पाच्तरम् (१२)। २। २। ३४।

शिवकेशवौ। ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण(१३)*। हेमन्तशिशिरवसन्ताः। कृत्तिकारोहिण्यौ। समाक्षराणां किम् ग्रीष्मवसन्तौ। लघ्वक्षरम्पूर्व्वम्*। कुशकाशम्। अभ्यर्हितञ्च (१४) *। तापसपर्वतौ। वर्णानामानुपूर्व्येण *। ब्राह्मणक्षत्रियविट्शूद्राः। भ्रातुर्ज्यायसः *। युधिष्ठिरार्ज्जुनौ।

## द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्(१५)। २। ४। २।

(१२) अल्पाच्तरमिति लुत्वाभावो निपातनाद्सन्देहार्थञ्च तथानिर्देशः अत्रापि बह्वष्वनियमः अनित्यमिदं सखपत्योरिति(सू०१६६५०) सूत्रनिर्देशज्ञापकात्।

(१३) ऋतूनामानुपूर्व्यञ्च प्रादुर्भावकृतं नक्षत्राणान्तूदयकृतमिति बोध्यम्।

(१४) द्वन्द्वे घीत्यादिभ्यः परत्वादभ्यर्हितमित्यस्य परत्वात् सर्व्वापवादत्वम् तेन वासुदेवार्ज्जुनावित्यत्रार्ज्जुनस्याजाद्यदन्तत्वेऽपि अल्पाच्तरत्वेऽपि च न पूर्व्वनिपातः। एवमन्यत्रापि बोध्यम्।

(१५) प्राणितूर्य्यसेनाङ्गानामित्यत्राङ्गशब्दस्य प्रत्येकमन्वयस्तत्र प्राण्यन्तयोरवयवपरता मध्यस्य कार्य्ये उपकारकपरता तेन तूर्य्याङ्गपदेन वाद्य-

एषां द्वन्द्व एकवत्स्यात्। पाणिपादम्(१६)। मार्दङ्गिकपाणविकम्। रथिकाश्वारोहम्। समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं (१७) प्रकरणम् प्राण्यङ्गादीनां समाहार एव(१८) यथा स्यात्।

## अनुवादे चरणानाम्। २। ४। ३।

चरणानां द्वन्द्वएकवत्स्यात्सिद्धस्योपन्यासे (१९)। स्थेणोर्लुङीति वक्तव्यम् (२०)। उदगात्कठकालापम्। प्रत्यष्ठात्कठकौथुमम्।

## अध्वर्युक्रतुरनपुंसकम्। २। ४। ४।

कारएवोच्यन्ते तदेतदुदाहरणेन ज्ञापयति मार्दङ्गिकपाणविकमिति। एवञ्च प्राण्यङ्गानां प्राण्यङ्गेन, तूर्याङ्गाणां च तूर्याङ्गेणेत्येव नियमस्तेन मार्दङ्गिकरथिकौ मार्दङ्गिकाश्वारोहावित्यादिः स्यादेव।

(१६) पाणिपादमिति प्राण्यङ्गत्वोपचारेण प्राणित्वात् जातिरप्राणिनामित्यनेन(४३५पृ०)न गतार्थता।

(१७) चार्थे द्वन्द्वः(४३०पृ०)इत्यस्य समाहारद्वन्द्वपरतया प्राण्यङ्गाद्यनुवादेनैकवद्भावविधानं नियमार्थमित्याह समाहारस्येत्यादि।

(१८) समाहार एवेति समाहारे प्राण्यङ्गादीनामेवैकवद्भाव इति नियमः। विपरीतनियमस्तु न भवितुमर्हति तिष्यपुनर्वस्वोरिति(३९४पृ०) बहुवचननिर्देशात्।

(१९) प्रमाणान्तरावगतत्वं सिद्धत्वं तस्योपन्यासः प्रकृते उदयप्रतिष्ठयोरनुवादः। सिद्धत्वज्ञापने तु उदगुः कठकालापा इति बहुत्वं स्यात्। कठेषु कपालेषूदितेषु प्रतिष्ठितेषु वा आवाभ्यां गन्तव्यमिति समयं कृत्वा विस्मृत्य स्थितं प्रत्येवोपदेशादुदाहरणम्।

(२०) स्थेणोरिति लुङन्तस्य स्थाधातोरिणधातोश्च प्रयोगे सतीत्यर्थः।

गुडस इति सामवः । अविशेषाच्छ्रं ोऽभीलपरे । सैषदाशरथीरामः । कोमे घेविति किम् । सहर् शेति । सञ्च-ुपत्वा । समोवेलवधारणं तु स्वरु... बहुलमिति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते । तेनेह न । सोऽहमाजन्म शुद्धानाम् ॥ ॥ इति स्वादिसंधिः ॥

---

## अथ अजन्तपुंलिङ्गम् ।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं

न्तस्यानुकरणं लुप्तषष्ठीकमित्याह—**स इत्यस्येति** ॥—**बहुलग्रहणेति**। अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति—'सास्मा अरम्' इति । अत्र वदन्ति । ये तु सोऽहमाजन्मशुद्धानामित्यादिसिद्ध्यर्थं पादश्लेषे सत्येव पूर्वेतेति सावधारणं व्याचख्युस्तेषां 'सास्मा अरम्' इत्यादौ सुलोपानापत्तिः । अत्र हि सः अस्मै इति च्छेदः । बहुलग्रहणानुवृत्त्या तदुपपादने तु सोऽहमाजन्मेत्याद्येव तथा उपपाद्यतां किमवधारणेनेति ॥ ॥ इति तत्त्वबोधिन्यां स्वादिसंधिः ॥

**अजन्तपुंलिङ्गम्** ॥ **अर्थवदधातु—**॥—**प्रत्ययं प्रत्ययान्तं चेति**। सूत्रे तन्त्रादिनोभयं विवक्षितमिति भावः॥ अर्थवदिति नपुंसकनिर्देशस्तदनुगुणं विशेष्यमध्याहरति—**शब्दस्वरूपमिति**। अधातुरप्रत्यय इति पुंलिङ्गनिर्देशस्तु 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्युत्तरपदलिङ्गत्वाद्बोध्य इत्याहुः॥यदि तु धातुभिन्नमित्यर्थं परित्यज्यारोपितो धातुरधातुरिति व्याख्यायते, तदा नपुंसकत्वप्राप्तिशङ्कैव नास्तीति ज्ञेयम् ॥ अर्थवदिति किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् । तस्यां च सत्यां स्वादयः स्युः । ननु संख्याकर्मादेरभावान्न भविष्यतीति चेन्न । 'एकवचनमुत्सर्गतः करिष्यते' इति सिद्धान्तात् । हुंफडादिभ्य इव सोर्दुर्वारत्वात् । न चार्थवद्ग्रहणपरिभाषया अनर्थके न स्यादिति वाच्यम् । तस्या विशिष्टरूपोपादानविषयत्वात् । 'प्रादूहोढ—' इत्यत्र तु ऊढ इति विशिष्टरूपमुपात्तमिति कवलन्तैकदेस्यानर्थकस्योढशब्दस्य ग्रहणं नेत्युक्तम् । न ह्यत्र तथा विशेषरूपस्योपादानमस्ति । यद्यप्यधातुरित्यादिपर्युदासेनार्थवत्त्वं लभ्यते, तथाप्युत्तरार्थमर्थवद्ग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्' । न चैकाज्द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यात्, नावयवानामित्यर्थवद्ग्रहणं व्यर्थमिति शङ्क्यम् । समुदाये द्विरुक्ते अवयवा अपि द्विरुक्ता भवन्ति । वृक्षः प्रचलन् सहावयवैः प्रचलतीति न्यायात् । इह तु समुदाये प्रवृत्तया प्रातिपदिकसंज्ञया नावयवानां तत्कार्यसिद्धिरिति वैषम्यात् । अत एव यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण संयोगसंज्ञेति सिद्धान्तः संगच्छते । अन्यथा लद्युपन्यस्तन्यायेन समुदाय एव संयोगसंज्ञा प्रवर्तेत ॥ अत्र केचित् । धनं वनमित्यादौ प्रतिवर्णं सत्यामपि संज्ञायां सत्स्वपि स्वादिषु न क्षतिः । 'हल्ङ्याब्—' इत्यादिना सुलोपात् । न च नलोपो भस्य जश्त्वं च स्यादिति शङ्क्यम् । धातुपाठे धनवनेत्युच्चारणसामर्थ्यात्तदप्रवृत्तेरित्याहुः, तदसत् । अकारात्सोरुत्पत्तौ रुत्वप्रवृत्तेः । यद्यपि समुदितप्रातिपदिकस्यावयवत्वेन सुपो लुकि रुत्वं न भवेत्तथापि चिकीर्षति विभ्र इत्यादौ रेफदकारयोः पदान्तत्वे सति 'खरवसानयोः—' इति विसर्गस्य 'यरोऽनुनासिके—' इत्यनुनासिकस्य च प्रसङ्गादिति दिक् ॥ अधातुः किम् । अहन् । धातोः प्रातिपदिकसंज्ञायां सत्यां तिङां स्वाद्यपवादत्वादहन्नित्यत्र हन्तेस्तिपि सिपि वा कृते 'इतश्च—' इति इकारलोपे हल्ङ्यादिलोपे च प्राक् कृता प्रातिपदिकसंज्ञा नापगतेति 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः स्यात्तन्मा भूत् । 'अहन्' इति रुत्वं 'रोऽसुपि' इति रत्वं चेह न शङ्क्यम् लाक्षणिकत्वात् ॥ न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासात् प्रातिपदिकसंज्ञाभावेन नलोपो न भवेदिति वाच्यम् । प्रत्ययलक्षणेन उक्तपर्युदासाप्रवृत्तेः 'न ङिसंबुध्योः' इति निषेधेन ज्ञापितत्वात् । कथमन्यथा राजेत्यादौ नलोपः स्यात् ॥ यद्यपि व्युत्पत्तिपक्षे राजन्शब्दस्य कनिन्प्रत्ययान्ततया 'कृत्तद्धित—' इतिप्रातिपदिकसंज्ञायां राजेत्यादौ नलोपः स्यात् । तथा च 'न ङिसंबुध्योः' इति निषेधो न ज्ञापक इति कार्यकालपक्षेऽधातुग्रहणं व्यर्थं, तथाप्यव्युत्पत्तिपक्षे ज्ञापकमेवेति कार्यकालेऽपि तत्स्वीकर्तव्यम् । न च 'सुपोधातु—' इति सूत्रे प्रातिपदिकात्पृथग्धातुग्रहणाद्धातोर्नेयं संज्ञेति वाच्यम् । पुत्रीयतीत्यादौ प्रत्ययान्ते धातुग्रहणस्य चरितार्थत्वात् ॥ अप्रत्ययः किम् । हरिषु, करोषि । अत्र सुप्सिपोर्मा भूत् ॥—**अप्रत्ययान्तः किम्** । तत्रैव विभक्तिविशिष्टयोर्मा भूत् । न चान्तवद्भावेन काण्डे कुड्ये इत्यादौ प्रातिपदिकत्वं स्यादेव । तथा च 'ह्रस्वो नपुंसके—' इति ह्रस्वः सोरुत्पत्तिश्च स्यादिति वाच्यम् । 'सप्तम्यधिकरणे च' इत्यादिनिर्देशेन विभक्त्येकादेशस्यान्तवद्भावानभ्युपगमादिति दिक् । ननु प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात् । व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति चेन्नैवम् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणात् केवलस्य चातथात्वात् । अन्यथा सुसिकोरपि तदन्तत्वात् पदत्वं स्यात् । तथा च हरिषु करोषीत्यादौ षत्वं न स्यात् । 'सात्पदाद्योः' इति निषेधात् । न च षत्व-

---

• १ अर्थवदिति—न चाक्षौहिणीरथंतरादिपदघटकाक्षरथादिपदानां सर्वथार्थवत्त्वाभावेन प्रातिपदिकत्वाभावे सुबुत्पत्त्यभावात् समासाभावप्रसङ्ग इति वाच्यम् । तद्घटितपदानामन्यत्र दृष्टार्थारोपेण यथाकथंचित्साधुत्वाख्यानेनादोषात् । २ अप्रत्यय इति—अधात्वप्रत्ययावित्येव सिद्धे नञ्द्वयोपादानं स्पष्टार्थम् ।

यजुर्वेदे (२१) विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात्। अर्काश्वमेधम्। अध्वर्युक्रतुः किम्। इषुवज्रौ। सामवेदे विहितौ। अनपुंसकङ्किम् राजसूयवाजपेयौ। अर्द्धर्चादौ।

## अध्ययनतोऽविप्रकृष्टाख्यानाम्। २।४।५।

अध्ययनेन प्रत्यासन्ना (२२) आख्या येषान्तेषां द्वन्द्वएकवत्। पदकक्रमकम् (२३)।

## जातिरप्राणिनाम्। २।४।६।

प्राणिवर्ज्जजातिवाचिनां (२४ द्वन्द्वएकवत्। धानाशष्कुलि। प्राणिनान्तु। विट्शूद्राः। द्रव्यजातीनामेव (२५) नेह

(२१) अध्वर्युक्रतुरिति षष्ठ्यर्थे प्रथमा। अध्वर्युशब्दोयजुर्वेदं लक्षयति तदाह यजुर्वेदे इति।

(२२) अध्ययनेन प्रत्यासन्नेति अध्ययनगता प्रत्यासत्तिरध्येतृष्वारोप्यते इति भावः।

(२३) पदक्रमशब्दयोस्तु जातित्वादेव सिद्धेऽपि तदध्येतृवाचकेऽस्य प्रवृत्तिरिति बोध्यम्।

(२४) जातिरिति षष्ठ्यर्थे प्रथमेति तदाह जातिवाचिनामिति। इह प्राणिशब्देन मुख्यस्यैव ग्रहणम्। जातिः किं नन्दकपाञ्चजन्यौ हरेः तयोः संज्ञात्वादेकत्वाच्च गगनत्वादिवन्न जातित्वम्।

(२५) अप्राणिनामिति पर्य्युदासेन तत्सदृशग्रहणादाह द्रव्यजातीनामेवेति।

कूपरसौ । गमनाकुञ्चने । जातिप्राधान्य (२६) एवायमेकवद्भावः । द्रव्यविवक्षायान्तु । बदरामलकानि (२७) ।

**विशिष्टलिङ्गो नदीदेशोऽग्रामाः । २ । ४ । ७ ।**

ग्रामवर्जनदीदेशवाचिनाम्भिन्नलिङ्गानां (२८) समाहारे द्वन्द्वः स्यात् । उद्ध्यश्च इरावती च उद्ध्येरावति । गङ्गा च शोणश्च । गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । भिन्नलिङ्गानां किम् । गङ्गायमुने । मद्रकेकयाः । अग्रामाः किम् । जाम्बवन्नगरम् । शालूकिनी ग्रामः । जाम्बवशालूकिन्यौ ।

**क्षुद्रजन्तवः । २ । ४ । ८ ।**

एषां समाहारे द्वन्द्वः स्यात् । यूकालिक्षम् । आ नकुलात् क्षुद्रजन्तवः (२९) ।

---

(२६) जातिप्राधान्य इति जात्याश्रयसकलव्यक्तिबोधनाभिप्राये जातेरेव यत्र प्राधान्यं तत्रैव । यद्वा जातेः शब्दार्थतया जातेरेव यदा प्राधान्यं विशेष्यत्वं तदेतत्सूत्रं प्रवर्त्तते ।

(२७) बदरामलकानि फलत्वव्याप्यजातिवाचिनावेतौ अत्र जातेर्न प्राधान्यविवक्षा ।

(२८) नद्या नदीवाचकेन देशस्य च देशवाचकेन द्वन्द्व इत्यर्थस्तेन गङ्गापाटलिपुत्रे इत्येव । ग्रामपदेन नेह नगरं गृह्यते तेन मथुरापाटलिपुत्रमित्येव नदीपदेन नदस्यापि ग्रहणमन्यथा भिन्नलिङ्गत्वासम्भवात् ।

(२९) अल्पपरिमाणस्य क्षुद्रपदार्थत्वे तस्यापेक्षिकत्वादनवस्थितिरतः "क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः । शतं वा प्रसृतौ येषां केचिदानकुलादपि" इत्युक्तिमनुसृत्याहानकुलादिति ।

**येषाञ्च विरोधः (३०)शाश्वतिकः। २। ४। ९।**

एषाम्प्राग्वत्। अहिनकुलम्। गोव्याघ्रम्। काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षमृगेति प्राप्ता चकारेण बाध्यते।

**शूद्राणामनिरवसितानाम्। २। ४। १०।**

अवहिष्कृतानां शूद्राणाम्प्राग्वत्। तक्षायस्कारम्। पात्राद्वहिः (३१) कृतानान्तु। चाण्डालमृतपाः।

**गवाश्व (३२) प्रभृतीनि च। २। ४। ११**

यथोच्चारितानि (३३) साधूनि स्युः। गवाश्वम्। दासीदासमित्यादि।

**विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्व्वापराधरोत्तराणाम्। २। ४। १२।**

(३०) विरोधो विद्वेषो न तु सहानवस्थानं तेन छायातपाविति सिद्धम्।

(३१) पात्राद्बहिरिति "भस्मना शुध्यते कांस्यमित्यादि" कृत्स्नसंस्कारेण यैर्भुक्ते पात्रं न शुध्यति तेषामित्यर्थः।

(३२) गवाश्वेति। गवाश्वम् गवाविकम् गवैडकम् अजाविकम् अजैडकम् कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेदः मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोलपम् दासीदासम् कुटीकुटम् भागवतीभागवतम्। एतानि गवाश्वप्रभृतीनि।

(३३) यथोच्चारितानीति गणपाठे यथापठितानि तथैव नान्यथेत्यर्थः तेन गवाश्वमित्यत्र पररूपसन्धिपक्षादौ गोऽश्वा गोअश्वा इत्येवेति बोध्यम्।

वृक्षादीनां समानां द्वन्द्वः । अश्ववडवेत्यादिद्वन्द्वत्रयञ्च प्राग्वद्वा । वृक्षादौ विशेषाणामेव (२४) ग्रहणम् । प्लक्षन्यग्रोधम्-प्लक्षन्यग्रोधाः । रुरुपृषतम्-रुरुपृषताः । कुशकाशम्-कुशकाशाः । व्रीहियवम्-व्रीहियवाः । दधिघृतम्-दधिघृते । गोमहिषम्-गोमहिषाः । शुकबकम् शुकबकाः । अश्ववडवम्-अश्ववडवौ । पूर्वापरम् पूर्वापरे । अधरोत्तरम्-अधरोत्तरे । फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव (२५) द्वन्द्व एकवदिति वाच्यम् * । बदराणि चाऽऽमलकानि च बदरामलकम् । जातिरप्राणिना(४२५ पृ०)मित्येकवद्भावो नेह । बदरामलके । रथिकाश्वारोहौ । प्लक्षन्यग्रोधौ । इत्यादि। विभाषा वृक्षेति सूत्रे येऽप्राणिनस्तेषां ग्रहणम् । जातिरप्राणिनामिति(४२५ पृ०)नित्ये प्राप्ते विकल्पार्थम् । पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते मृगाणां मृगैरेव शकुनीनान्तैरे वोभयत्र द्वन्द्वः। अन्येषु सह इतरेतरयोग एवेति नियमार्थं मृगशकुनिग्रहणम्। एवं पूर्व्वापरमधरोत्तरमित्यपि । अश्वव-

* इह गणे पाठाच्च पशुद्वन्द्वे गवाश्वादौ विभाषा बाध्यते बाध्यते च दासीदासमित्यादौ पुमान् स्त्रिया(४४५ पृ०)इत्येकशेषः ।

(२४) विशेषाणामिति स्वं रूपं शब्दस्येति सूत्रभाष्ये वृक्षादीनां वृक्षविशेषवाचित्वस्यैवोक्तत्वात्तथाकल्पनमिति भावः । अत्र च वृक्षादिसूत्रकं वृक्षादिसर्व्वावयवकसमुदाये एव न तु विभिन्नावयवकेऽपि तेन व्रीहिकुशवृक्षमित्यादौ नास्य प्रवृत्तिरिति द्रष्टव्यम् ।

(२५) बहुप्रकृतिरिति बहुवचनान्तसर्व्वावयवक इत्यर्थः । तेनैकद्विप्रकृतिके इतरेतरयोगएवातएव "पातितैरथ नागाश्वै"रित्यादि प्रयोगसिद्धिः ।

ड्वग्रहणं तु पक्षे नपुंसकत्वार्थम् अन्यथा परत्वात्पूर्ववद-श्ववड़वाविति(२९१ पृ॰)स्यात्।

## विप्रतिषिद्धञ्चानधिकरणवाचि। २। ४। १३।

विरुद्धार्थानामद्रव्यवाचिनां(२६)द्वन्द्व एकवद्वा स्यात्। शीतोष्णं शीतोष्णे। वैकल्पिकः समाहारः। द्वन्द्वः चार्थे(४३० पृ॰)इति सूत्रेण प्राप्तः स विरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेवेति नियमार्थमिदम्। तेन(२७)द्रव्यवाचिनामितरेतरयोग एव। शीतोष्णे उदके स्तः। विप्रतिषिद्धकिम् नन्दकपाञ्चजन्यौ। इह पाक्षिकसमाहारद्वन्द्वो भवत्येव।

## न दधिपयआदीनि (३८)। २। ४। १४।

एतानि नैकवत् स्युः। दधिपयसी। इध्माबर्हिषी। निपातनाद्दीर्घः। ऋक्सामे। वाङ्मनसे।

(२६) अधिकरणमत्र द्रव्यं चकारो विभाषानुकर्षणार्थ इत्याशयेन व्याचष्टे अद्रव्येति। विरोधोऽत्र सहानवस्थानं तेन गुणपरत्वे शीतोष्णं शीतोष्णमेवं सुखदुःखे सुखदुःखमित्याद्युदाहरणम्।

(२७) तेनेति विरुद्धार्थानां द्रव्यवाचिनामितरेतरयोग एव न समाहारे द्वन्द्व इत्यर्थः।

(३८) दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राट्कौशिकौ प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी श्रद्धातपसी मेधातपसी अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे। एतानि दधिपयआदीनि। एषु गणेषु पठितानां येन केनचित् विधायकेन नियामकेन वाऽन्यथाविधानेऽपि तत्तत्कार्यं न भवतीत्यर्थः।

अधिकरणैतावत्त्वे च। २। ४। १५।

द्रव्यसंख्यावगमे एकवद्देवेति नियमो न (३८) स्यात्। दश दन्तोष्ठाः।

विभाषा समीपे। २। ४। १६।

अधिकरणैतावत्त्वस्य (४०) सामीप्येन परिच्छेदे समाहार एवेत्येवंरूपो नियमो वा स्यात्। उपदशम् दन्तोष्ठम्। उपदशाः दन्तोष्ठाः।

आनङृतो द्वन्द्वे। ६। ३। २५।

विद्यायोनिसम्बन्धवाचिनामृदन्तानां(४१) द्वन्द्वे आनङ् स्यादुत्तरपदे परे। होतापोतारौ। होतृपोतृनेष्टोद्गातारः।

(३८) इदञ्च चार्थे द्वन्द्वइति(४३०पृ०)सामान्यतः प्राप्तस्य नियमप्राप्तस्य च द्वन्द्वस्य निषेधार्थमित्याह नियमो नेति।

(४०) समीपे इत्यस्य सामीप्येन परिच्छेदे लक्षणा अनुवृत्तस्याधिकरणैतावत्त्वे इत्यस्य च षष्ठ्या विपरिणामइत्याशयेन व्याचष्टे अधिकरणेत्यादि। उपदशमिति नवकादश वा दन्तौष्ठसमूह इत्यर्थः।

(४१) आनङिति ऋतो विद्यायोनिसम्बन्धेभ्यः(४६२पृ०)इत्यतो विद्यायोनिसम्बन्धेभ्य इत्यनुवर्त्तते विभक्तिविपरिणामः विद्याकृतसम्बन्धः योनिकृतसम्बन्धश्चेति तदर्थः। अत्र ऋतइत्यस्य ततएवानुवृत्तिसम्भवेऽपि पुनस्तद्ग्रहणम् ऋदन्तसर्वावयवताद्योतनार्थं तेन पितृपितामहावित्यादौ नेति बोध्यम्। आनङोङित्त्वादन्त्यादेशे नलोपः नपरकरणन्तु उरण् रपरइति(४२पृ०)रपरत्ववारणाय। अत्र च यथाक्रमसम्बन्धात् विद्यासम्बन्धेन योनिसम्बन्धवतः समासे नानङ् संबन्धस्य द्विष्ठत्वात् एकस्य तथात्वेऽपरस्य तथात्वाभावात् तेन होतृपितराविति पितृहोतारावित्यादौ न।

मातापितरौ। पुत्रेऽन्यतरस्यामित्यतो (४६२पृ०) मण्डूकप्लुत्या पुत्र इत्यनुवृत्तेः(४२)। पितापुत्रौ।

## देवता (४३) द्वन्द्वे च। ६।३।२६।

द्वन्द्वोत्तरपदे परे आनङ्। मित्रावरुणौ। वायुशब्दप्रयोगे प्रतिषेधः *। अग्निवायू। वाय्वग्नी। पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्य्यस्य परिग्रहार्थम्। तेन ब्रह्मप्रजापती इत्यादौ नानङ्। एतद्धि नैकहविर्भागित्वेन श्रुतन्नापि लोके प्रसिद्धं साहचर्य्यम्।

## ईदग्नेः सोमवरुणयोः। ६।३।२७।

देवताद्वन्द्वे इत्येव।

## अग्नेः स्तुत्स्तोमसोमाः। ८।३।८२।

अग्नेः परेषामेषां सस्य षः स्यात्समासे। अग्निष्टुत्(४४)। अग्निष्टोमः। अग्नीषोमौ। अग्नीवरुणौ।

(४२) पुत्रे इत्यनुवृत्तेरिति ऋदन्तस्य पुत्रे उत्तरपदे आनङ् स्यादिति वाच्यं तेन तातपुत्रावित्यादौ न।

(४३) देवतेति ऋदन्तभिन्नार्थं विद्यायोनिसम्बन्धभिन्नार्थञ्चेदम्। अधिकारादेव द्वन्द्वलाभे द्वन्द्वग्रहणं विशेषद्वन्द्वबोधनार्थं तथा चात्र द्वन्द्वशब्दोनित्यसाहचर्य्यवाची द्वन्द्वं रहस्येत्यादिसूत्रेण(७४०पृ०) द्वन्द्वशब्दव्युत्पत्तौ अभिव्यक्तिस्तदर्थत्वाभिधानात् अभिव्यक्तिशब्देन च साहचर्य्यस्यैव बोधनादित्याशयेन स्वयमेवाग्रे वक्ष्यति(७४०पृ०)नित्यसाहचर्य्येणेति।

(४४) अग्निः स्तूयतेऽस्मिन् सोऽग्निष्टुत् क्रतुविशेषः।

## इद्वृद्धौ । ६ । ३ । २८ ।

वृद्धिमत्युत्तरपदे(४५)अग्नेरिदादेशः स्याद्देवताद्वन्द्वे । अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म्म । अग्नीवरुणौ देवते अस्य आग्निवारुणं । देवताद्वन्द्वे(५३२पृ०)चेत्युभयपदवृद्धिः अलौकिकवाक्ये (४६) आनङमीत्वञ्च वाधित्वा इत् । वृद्धौ किम् आग्नेन्द्रः । नेन्द्रस्य परस्ये (५३२पृ०) त्युत्तरपदवृद्धिनिषेधः । विष्णौ न * । अग्नावैष्णवम् (४७) ।

## दिवो द्यावा । ६ । ३ । २९ ।

देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षमे ।

## दिवसश्च पृथिव्याम् । ६ । ३ । ३० ।

दिव इत्येव चात् द्यावा । आदेशे अकारोच्चारणम् सकारस्य रुत्वं (४८) मा भूदित्येतदर्थम् । द्यौश्च पृथिवी च दिव-

(४५) देवताद्वन्द्वे वृद्धिरूपोत्तरपदासम्भवात् वृद्धिपदस्य वृद्धिमति लक्षणेत्याशयेन व्याचष्टे वृद्धिमतीति ।

(४६) अन्तरत्वात् पूर्व्वमानङीत्वे स्यातामत आहालौकिकवाक्यइति तद्धितार्थप्रकाशकालौकिकवाक्ये इत्यर्थः तथा च वृद्धिमत्त्वमुत्तरपरपदस्य भाव्येवेति नेत्त्वमिति भावः

(४७) अग्नावैष्णवमिति इत्त्वे प्रतिषिद्धे तयोरेकहविर्भागित्वेन साहचर्य्यात् देवताद्वन्द्वे च(४४१पृ०)इत्यनेनानङ् ।

(४८) रुत्वमिति अकारे सति यथा सकारश्रवणं तथैव श्रवणं तेन प्रयोगकालेऽप्यविकृत एव सकारः श्रूयते इत्यर्थः ।

स्पृथिव्यौ द्यावापृथिव्यौ। छन्दसि दृष्टानुविधिः। द्यावा चिदस्मै (४९) पृथिवी। दिवस्पृथिव्योरवतिरित्यत्र पदकारा (५०)अविसर्गम्पठन्ति।

**उषासोषसः। ६। ३। ३१।**

उषस्शब्दस्योषासादेशो देवताद्वन्द्वे। उषासासूर्य्यम्।

**मातरपितरावुदीचाम्। ६। ३। ३२।**

मातरपितरौ (५१)। उदीचाङ्किम् मातापितरौ।

**द्वन्द्वाच्चुदषहान्तात्समाहारे। ५। ४। १०६।**

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक् च त्वक् च वाक्त्वचम् (५२)। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम् प्रावृट्शरदौ।

इति द्वन्द्वः।

(४९) द्यावाचिदस्मै इत्यत्र चिदस्मै इतिपदव्यवधानेन समासाभावेऽपि वेदेऽयमादेश इत्यर्थः अस्मै इति सुपांसुलुगित्यादिना (उ५ १ ७ सू०) ङ्यसः शे अस्मभ्य मित्यर्थः।

(५०) अविसर्गमिति क्वापि सविसर्गं नित्यनुमेयमित्यर्थः।

(५१) मातरपितराविति एकशेषविकल्पे द्वन्द्वप्राप्तौ रूपमिदं मातुररङादेशनिपातार्थञ्च।

(५२) वाक्त्वचमिति बहूनां द्वन्द्वे वाक्त्वक्त्वचमिति द्वन्द्वगर्भद्वन्द्वे न वाक्स्रजत्वचमिति विशेषः। मनो०

## अथैकशेषः ।

सरूपाणाम् (८७१०) (१) । रामौ रामाः । विरूपाणामपि (२) समानार्थानाम् * । वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ । कुटिलदण्डौ ।

### वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । १ । २ । ६५ ।

यूना सहोक्तौ गोत्रं (३) शिष्यते गोत्रयुवप्रत्ययमात्रं (४) कृतश्चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् गर्गगार्ग्यायणौ । यूना किम् गार्ग्यगर्गौ ।

---

(१) सरूपाणामिति सूत्रप्रतीकम् । सरूपाणां समानार्थानां समानानुपूर्व्वीकाणां च मध्ये एक एव शिष्यमाणस्तत्तत्समुदायव्यक्तिबोधकः अपरांशो लुप्यते इत्यर्थः । अयञ्चैकशेषः प्रत्यर्थं शब्दनिवेश इति मते व्यक्तिभेदापेक्षया द्वन्द्वप्राप्तौ तदपवादकः । एष च सुबुत्पत्तेः पूर्व्वमेवोत्पद्यतेऽतः पदनिमित्तकद्वन्द्वबाधक इत्येके । सुबुत्पत्त्यनन्तरमुत्पद्यत इत्यन्ये । तत्र पदनिमित्तकत्वाभावे समासत्वं नास्तीत्यतः कृत्तद्धितसमासैकशेषेत्यादि(४४८पृ०)वृत्तिभेदगणने पृथङ्निर्द्देशस्तथाच समासत्वाभावेन पन्थानावित्यत्र न समासान्त इति एकः पक्षः । अस्य पदनिमित्तकत्वेऽपि गोबलीवर्द्दन्यायेन वृत्तिभेदगणने पृथग्ग्रहणं समासान्ताभावश्च तत्तत्सूत्रे एकशेषभिन्नत्वेन निवेशनाच्चेति पक्षान्तरम् ।

(२) विरूपाणामिति एकार्थकत्वे सति विभिन्नानुपूर्व्वीकाणामित्यर्थः ।

(३) अपत्यमन्तर्हितं वृद्धमितिपूर्व्वाचार्य्यैः परिभाषितस्य गोत्रापरपर्य्यायस्य वृद्धपदेन ग्रहणमित्याह गोत्रमिति ।

(४) मात्रपदेन प्रत्ययार्थकुत्सनादेः प्रकृत्यर्थस्य च व्यवच्छेदस्तदाह कृत्स्नमिति । एतदेवकारलभ्यं तत्कृतएव विशेषश्चेत् न तु तत्कृतातिरिक्त इत्यर्थात् ।

**प्रातिपदिकसंज्ञं स्यात् । [illegible] कृत्तद्धितसमासाश्च ।१।२।४६। कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः । पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थम्[1] । यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव । तेन वाक्यस्य न । [illegible] प्र-**

---

विधेर्निरवकाशता । सर्पिषे एष इत्यादौ चरितार्थत्वात् ॥ अन्ये तु व्याचक्षते । 'कृत्तद्धित–' इत्यत्र हि तदन्तविधिर्वक्ष्यते । तथा च तद्धितग्रहणस्य तद्धितान्तानामेव नत्वन्यप्रत्ययान्तानां संज्ञेति नियमार्थतामाश्रित्य प्रत्ययान्तपर्युदासोऽत्र न कर्तव्यः । अथवा 'सात्पदाद्योः' इति सूत्रे सातिग्रहणात्प्रत्ययो न प्रातिपदिकमिति सिद्धे प्रत्ययग्रहणसामर्थ्यात्तदन्तपरम् । उत्तरसूत्रे तद्धितग्रहणं विध्यर्थमेवास्तु ॥ यद्वा सातिग्रहणात्प्रत्ययस्य प्रातिपदिकत्वाभावे तद्धितग्रहणस्योक्तरीत्या नियमार्थत्वे च 'अर्थवदधातुः प्रातिपदिकम्' इत्येव सुवचमिति तेषाम् 'इको यणचि' इति सूत्रं व्यर्थं स्यात् । 'तस्मादित्युत्तरस्य' 'वाग्भृतुपित्रुषस–' इत्यादिनिर्देशाज्ज्ञापकादिष्टसिद्धेः । 'नाज्झलौ' इत्यत्राकारसहितोऽच् आजिति मूलस्थग्रन्थोऽयमपि विरुध्येत । 'कालसमयवेलासु–' इत्यादिज्ञापकादेव षत्वाभावसिद्धेः । यदि ज्ञापकेन प्रत्याख्यानमयुक्तमिति, यदि वाऽऽकारप्रश्लेष एव तल्लिङ्गमित्यभ्युपगमे सूत्राक्षरैरेवेष्टं सिध्यतीत्युच्येत, तर्हि 'अप्रत्यय–' इत्येतदभ्युपगम्य प्रत्ययपर्युदासे सातिग्रहणं लिङ्गं प्रत्ययान्तपर्युदासे तु तद्धितग्रहणमित्यप्रत्ययग्रहणमेवावर्त्य व्याख्यायतां, किमनया कुसृष्ट्येति दिक् । अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानम् 'अप्रत्ययः' इत्यस्यावृत्तिसौकर्यार्थम् । महासंज्ञाकरणं श्रुत्यनुरोधात् । तथा चाथर्वणे पठ्यते—'को धातुः, किं प्रातिपदिकं, कः प्रत्ययः–' इति । डित्थादीन्यव्युत्पन्नानीहोदाहरणम् । अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः ॥ वस्तुतस्तु व्युत्पत्तिपक्षे बहुपटव इत्याद्यर्थं सूत्रमिति नव्याः । न चैवं 'बहुच् पूर्वः प्रातिपदिकम्' इत्येव सूत्र्यतामिति वाच्यम् । मूलकेनोपदंशमित्यादौ कृदन्तत्वेनातिप्रसङ्गाद् गतिकारकपूर्वस्यापि कृदन्तत्वात् । न च समासग्रहणं नियमार्थमिति निस्तारः । अर्थवत्सूत्रारंभं विना समासग्रहणस्य नियमार्थत्वायोगात् ॥—**कृत्तद्धितसमासाश्च** ॥ अर्थवदित्यनुवर्तते तत्सामर्थ्यात्तदन्तविधिः ॥ ननु यद्यर्थवत्ता पारमार्थिकी विवक्ष्यते, सा पदस्य वाक्यस्य वाऽस्ति, न तु कृत्तद्धितान्तस्य, यदि तु प्रक्रियादशायां या कल्पिता सा विवक्ष्यते, तर्हि कृत्तद्धितयोरपि साऽस्तीति कथमर्थवद्ग्रहणानुवृत्त्या तदन्तग्रहणमिति चेदत्राहुः । अत एवार्थवद्ग्रहणसामर्थ्यमुक्तम् । प्रत्ययान्तेन ह्येकार्थीभूतेन प्रतीयमानोऽर्थ इह गृह्यते । तस्य लौकिकार्थं प्रति प्रत्यासन्नतरत्वान्मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणादत एव तदुपादानं सार्थकं पूर्वसूत्रे अधातुरिति पर्युदासबलेनापि तल्लाभसंभवादिति । तदेतत्सकलमभिप्रेत्याह—**कृत्तद्धितान्ताविति** । लिट् धुग् इत्यादौ 'अधातु' इति कर्तौ औपगव इत्यादौ 'अप्रत्ययान्त' इति पर्युदासे प्राप्ते 'कृत्तद्धित–' इत्यारम्भः ॥—**नियमार्थमिति** । न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्क्यम् । वाक्यस्याप्रत्ययान्तत्वात् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । न चैवमपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावाद्राजकुमारीत्यादौ ङीबन्ते विध्यर्थमस्त्विति वाच्यम् । 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति लुग्विषये हल्ङ्यादिलोपाप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः । तत्र च कुमारीशब्दस्य सुबन्तत्वेऽपि राजकुमारीशब्दस्यातथात्वादप्रत्ययान्तत्वेन प्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात् । अत एव गोमत्प्रिय इत्यादौ नुमादयो न, लुकः प्रागन्तरङ्गस्य हल्ङ्यादिलोपस्य प्रवृत्तौ तु स्युरेवेति दिक् ॥ नियमशरीरमाह—**यत्र संघात** इति ॥ नियमश्चात्र सजातीयापेक्ष इत्याह—**पूर्वो भागः पदमिति** । षड्विधेऽपि समासे पूर्वभागस्य पदत्वाव्यभिचाराद्भवत्ययं सजातीयः । पूर्वो भाग इत्युपलक्षणम् 'उत्तरस्तु प्रत्ययो न' इत्यपि बोध्यम् । अन्यथा जन्मवानित्यादौ संज्ञा न स्यात् । 'स्वादिषु–' इत्यनेन पूर्वभागस्य पदत्वात् । न च तद्धितग्रहणसामर्थ्यात्तत्र स्यादेवेति वाच्यम् । तद्धितग्रहणस्य भानव इत्यादौ कृतार्थत्वात् । तत्र हि पूर्वभागस्य भत्वं, न तु पदत्वम् । न चैवमयमियानित्यादिसमुदायस्य प्रातिपदिकत्वं स्यादेव पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वादनेन नियमेन वारयितुमशक्यत्वादिति वाच्यम् । 'उत्तरस्तु प्रत्ययो न' इत्यत्र 'तद्विहितप्रत्ययो न' इति व्याख्यानात् ॥ पूर्वो भागः पदमिति किम् । बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा स्यात् । तेन बहुपटव इत्यत्र उपोत्तमोदात्तत्वं सिध्यति । प्रथमजसो लुकि 'चितः सप्रकृतेर्बह्वकजर्थम्' इति चित्स्वरे कृते पुनर्जस उत्पत्तेः । प्रातिपदिकसंज्ञायामसत्यां तु जसेवोदात्तः स्यात् । यद्वा प्रकृतिप्रत्ययभावानापन्नसंघातस्य चेद्भवति तर्हि समासस्यैव' इति नियमार्थं समासग्रहणम् । तेन गवित्ययमाहेत्यादौ नातिप्रसङ्ग इति दिक् ॥ नियमफलमाह—**तेन वाक्यस्य नेति** । गामभ्याज शुक्लामित्यादिवाक्यस्य न भवतीत्यर्थः । सत्यां हि संज्ञायां सुब्लुक् स्यात् । न चैवमपि मूलकेनोपदंशं भुङ्क्ते इत्यादिवाक्यस्य संज्ञा दुर्वारा 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाद्' इति चेन्मैवम् । समासग्रहणकृतनियमेन परत्वाद्बाधात् । एवं च 'कृत्तद्धित–' इति सूत्रे कृद्ग्रहणपरिभाषा निष्फलत्वान्नोपतिष्ठते । तस्याश्च परिभाषायाः व्यावहासीत्यत्रावकाशः । तत्र हि 'कर्मव्यतिहारे णच् स्त्रियाम्' इति धातोर्णचि कृते गतिपूर्वस्य णजन्तत्वात् 'णचः स्त्रियाम्' इत्यञि कृत्युपसर्गाकारस्यादिवृद्धिस्वरो भवतः । कृद्ग्रहणे कारकपूर्वस्याप्युदाहरणमवतप्तेनकुलस्थितमित्यादि स्फुटीभविष्यति ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन 'निपा-

---

१ नियमार्थमिति—नचानर्थकशशशृङ्गादिसमासे विध्यर्थं समासग्रहणमिति वाच्यम् । अत्राप्यर्थवदित्यनुवृत्तेः ।

तल्लक्षणः किम् (५) भागवित्तिभागवित्तिकौ (६)। कुत्स्ने किम् (७) गार्ग्यवात्स्यायनौ (८)।

**स्त्री पुंवच्च। १। २। ६६।**

यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् (९)। गार्गी च गार्ग्यायणौ(१०)च गार्ग्याः। अस्त्रियामित्यनुवर्त्तमाने (११) यञञोश्चेति (५०२पृ०) लुक्। दाक्षी च दाक्षायणश्च दाक्षी।

**पुमान् स्त्रिया(१२)। १। २। ६७।**

---

(५) तल्लक्षणः किमिति तल्लक्षणएव किमिति प्रश्नार्थः।

(६) भागवित्तस्य गोत्रापत्यं भागवित्तिरित्यस्मात् यूनि वृद्धाट्टक् सौवीरेषु बहुलमिति(५१५पृ०) कुत्सायां ठक्। इह कुत्सासौवीरत्वं चाधिकमपेक्ष्यते न तु युवत्वमात्रकृतं वैरूप्यमिति न प्रसङ्ग इति भावः।

(७) कृत्स्नं किमिति। एवकारेण प्रकृत्यर्थस्यापि व्यावृत्तिः किमिति प्रश्नः।

(८) गार्ग्यवात्स्यायनयोः प्रकृत्यंशे वैरूप्यं न प्रत्ययादिकृतमिति न प्रसङ्ग इत्युत्तराशयः।

(९) स्त्रीत्वस्य वैरूप्यकारणस्याधिक्यात् पूर्व्वेणाप्राप्तौ वचनम् तल्लक्षणेदित्यादीन्यपि संबध्यन्ते तेन भागवित्तिकश्च गार्गी च वात्स्यायनश्चेत्यादौ न।

(१०) पुंवद्भावप्रयुक्तं वैलक्षण्यं स्फुटीकर्त्तुं द्विवचनान्तेन विग्रहमाह गार्ग्यायणाविति।

(११) अर्थे पुंवत्त्वातिदेशफलमाह अनुवर्त्तमाने इति अस्त्रियामित्यस्यानुवृत्तिश्च तद्राजस्य बहुषु तेनैव स्त्रियामिति (५२०पृ०) सूत्रादितिशेषः

(१२) अत्रैकविभक्ता (८७पृ) वित्यनुवर्त्तते एकविभक्तौ तद्धितरूपविरहशेदित्यर्थः। अतएव जननीपरिच्छेदकवाचकमातृशब्दयोर्नैकशेषस्तयोरेकविभक्तौ मातरौ मातारावित्यादिरूपभेदेन विशेषात्।

स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत्(१३)। हंसी च हंसश्च हंसौ (१४)।

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम्। १। २। ६८।

भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

## नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्।१।२।६९।

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च (१५) वा एकवत् (१६) स्यात्तल्लक्षणएव विशेषश्चेत्। शुक्लः पटः शुक्ला पटी शुक्लं वस्त्रम् तदिदं शुक्लम्। तानीमानि शुक्लानि।

## पिता मात्रा। १। २। ७०।

मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ मातापितरौ (१७) वा।

---

(१३) तल्लक्षणएव विशेषश्चेदिति किम् इन्द्रेन्द्राण्यौ अत्रेन्द्राण्याः पुंयोगनिमित्तकविशेषात्र तल्लक्षणत्वम्।

(१४) हंसाविति स्त्रीव्यक्तेरपि हंसत्वेन बोधाविशेषेऽपि स्त्रीत्वमात्रेण विशेषात् ङीप्। अत्र च सरूपाणामेवेत्यनुवृत्तेर्वरटा च हंसश्चेत्यादौ विरूपैकशेषे नास्यप्रवृत्तिः।

(१५) अन्यतरस्यामित्यस्यैकवचनमित्यनेनैव सम्बन्ध आनन्तर्यात् त्वर्थकचशब्दाद्वेत्याह तच्च वेति। अत्र अनपुंसकेनेति किं शुक्लं शुक्लश्च शुक्ले इति।

(१६) एकवदिति अस्यैवैकवद्भावबोधनार्थमिदं तेनान्यस्त्रलाणां समाहारद्वन्द्वविषये न प्रवृत्तिस्तेन घटमित्यादि नेति बोध्यम्। अत्र तल्लक्षणकृत इति किं हिमहिमान्यौ अत्र महत्त्वादिकृतो विशेषः।

(१७) मातापितराविति "पितुर्दशगुणं माता गौरवेणातिरिच्यते" इत्युक्तेर्मातुरभ्यर्हितत्वात् पूर्वनिपातः।

## श्वशुरः श्वश्र्वा। १। २। ७१।

श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षणएव विशेषश्चेत्। श्वशुरौ। श्वश्रूश्वशुरौ।

## त्यदादीनि सर्व्वैर्न्नित्यम्। १। २। ७२।

सर्वैः(१८) सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। स च देवदत्तश्च तौ। त्यदादीनां मिथः सहोक्तौ यत् परं (१९) तच्छिष्यते। स च यश्च यौ। पूर्वशेषोऽपि दृश्यते इति भाष्यम्। स च यश्च। तौ। त्यदादितः (२०) शेषे पुन्नपुंसकतो लिङ्गवचनानि *। सा च देवदत्तश्च। तौ। तच्च देवदत्तश्च यज्ञदत्ता च तानि। पुन्नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते। तच्च देवदत्तश्च ते। अद्वन्द्वतत्पुरुष (२१) विशेषणानामिति वक्तव्यम्*। कुक्कुटमयूर्य्याविमे। मयूरीकुक्कुटाविमौ। तच्च सा च ते अर्द्धपिप्पल्यौ (२२)।

(१८) सर्व्वैस्त्यदादिभिरन्यैश्चेत्यर्थः। सर्व्वैः किं प्रत्यासत्त्या त्यदादिभिरित्यर्थो मा भूत्।

(१९) यत् परमिति गणीयमत्र परत्वम् द्विपर्य्यन्तानामिति नियमो नास्ति अहं च भवांश्चावामिति भाष्योक्तेः।

(२०) त्यदादित इति त्यदादीनां शेषे सह विवक्षिते यः पुमान् यच्च नपुंसकं तद्वशेन लिङ्गप्रतिपादकानि भवन्त्यर्थात् त्यदादीन्येवेत्यर्थः। पुंनपुंसकतद्रूत्युक्तेः स्त्रिया सहैकशेषेऽपि न तथेति भावः।

(२१) अद्वन्द्वेति द्वन्द्वादिविशेषणानान्तु न प्राप्नुक्तं किन्तु विशेष्यमिष्टवेति भावः।

(२२) तच्च पिप्पल्या अर्द्धं, सा च अर्द्धं पिप्पलीति विग्रहः।

वात्। तत्पुरुषविशेषः कर्म्मधारयः तद्विशेषो द्विगुः। अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव तत्पुरुषस्य क्वचिदे(५) वेत्युक्तम्। (२५१पृ०)किञ्च(६)

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङान्तिङा।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः॥ १॥

सुपां, सुपा। राजपुरुषः। तिङा। पर्य्यभूषयत्। नाम्ना। कुम्भकारः। धातुना। कटप्रूः। अजस्रम्। तिङांतिङा। पिवतखादता खादतमोदता। तिङां सुपा। कृन्तविचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा। एहीडादयोऽन्यपदार्थे चेति(२६८पृ०)मयूरव्यंसकादौ पाठात्समासः।

इति सर्व्वसमासशेषः।

---

(५) क्वचिदिति द्वाह्लजातादावित्यर्थस्तेनैतेषां प्रायोवादत्वेन न विभाजकत्वमिति भावः।

(६) सिद्धान्ते समासविभाजकोपाधिर्नास्त्येव। तत्रापरितोषश्चेदियं हरिकारिकोक्तिर्ग्राह्येत्याशयेनाह किञ्चेति। सुपामिति चतुर्षु संबध्यते अधिकमुक्तं(२२०पृ०)प्राक्।

## ऋक्पूरब्धूःपथामानक्षे। ५। ४। ७४।

अ अनक्षे इति छेदः। ऋगाद्यन्तस्य (१) समासस्य अप्रत्ययो ऽन्तावयवः स्यात्। अक्षे या धूः तदन्तस्य तु न। अर्द्धर्चः। अनृचबह्वृचावध्येतर्य्येव(२)। नेह। अनृक् साम। बह्वृक् सूक्तम्। विष्णोः पूः विष्णुपुरम्। क्लीवत्वं लोकात्। विमलापं सरः।

## द्व्यन्तरुपसर्गेभ्योऽप ईत्। ६। ३। ९७।

अप इति कृतसमासान्तस्यानुकरणम् षष्ठ्यर्थे प्रथमा। एभ्योऽपस्य ईत्स्यात्। द्विर्गता आपो यस्मिन्निति द्वीपम्। अन्तरीपम् (३)। प्रतीपम्। समीपम्। समापो देवयजनमिति तु समा (४) आपो यस्मिन्निति बोध्यम्। कृतसमासान्तग्रहणान्नेह। स्वप्। स्वपी। अवर्णान्ताद्वा*। प्रेपम् प्रापम्। परेपम् परापम्।

## ऊदनोर्द्देशे। ६। ३। ९८।

(१) साधारणसमासान्तानाह ऋगित्यादि अक्षे येति अक्षसंबन्धिनी या धूरित्यर्थः सम्बन्धिनोऽधिकरणत्वविवक्षया सप्तमी। योग्यत्वादक्षद्-त्वस्य धूरित्यनेनैव सम्बन्धः।

(२) अध्येतर्य्येवेति अध्येतृत्वयोग्यतावतीत्यर्थः। अध्ययनं चोपस्थितत्वा-दृक्संबन्ध्येव।

(३) अन्तरीपमित्यादित्रिकस्य अन्तर्गता, प्रतिकूला संगताश्चापो यस्मि-न्निति विग्रहत्रयम्।

(४) समाइत्यनेन उपसर्गत्वाभावेन द्व्यन्तरित्यादिप्रवृत्त्यभावो दर्शितः।

अनोः परस्यापस्य ऊत्स्याद्देशे अनूपो देशः। राजधुरा। अक्षे तु। अक्षधूः दृढधूरक्षः। सखिपथो रम्यपथो देशः।

## अच् प्रत्यन्ववपूर्व्वात्सामलोम्नः। ५। ४। ७५।

एतत्पूर्व्वात्सामलोमान्तात्समासादच् स्यात्। प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। कृष्णोदक्पाण्डुसंख्यापूर्व्वाया भूमेरजिष्यते (५)। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः। द्विभूमः प्रासादः। संख्याया नदीगोदावरीभ्याञ्च*। पञ्चनदम् सप्तगोदावरम्। अजिति योगविभागादन्यत्रापि। पद्मनाभः।

## अक्ष्णोऽदर्शनात्। ५। ४। ७६।

अचक्षुः पर्य्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव (६) गवाक्षः।

## अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्साम वाङ्मनसाक्षिभ्रुवदारगवोर्व्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्द्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः। ५। ४ । ७७।

(५) अच्प्रत्यन्ववादिति सूत्रेऽजिति योगविभागात् विषयभेदे सद्भ्यते नेद कृष्णभूमेत्यादिसिद्धिरित्याशयेनाह कृष्णोदगित्यादि।

(६) करणल्युडन्तदर्शनशब्दो योगरूढिभ्यां चक्षुःपरस्तत्पर्युदासेऽक्षिपदं तत्सदृशपरमित्याशयेनाह गवामक्षीव।

एते पञ्चविंशतिरजन्ता निपात्यन्ते। आद्यास्त्रयो बहुव्रीहय:। अविद्यमानानि चत्वार्य्यस्य अचतुर:। विचतुर:। सुचतुर:। त्र्युपाभ्याञ्चतुरोऽजिष्यते। त्रिचतुर:। चतुर्णां समीपे उपचतुरा:। ततएकादश द्वन्द्वा:। स्त्रीपुंसौ। धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ (७) च ऊर्व्वष्ठीवम्। निपातनाट्टिलोप:। पदष्ठीवम्। निपातनात्पादशब्दस्य पद्भावश्च। नक्तञ्च दिवा च नक्तन्दिवम्। रात्रौ च दिवा च रात्रिन्दिवम्। रात्रेर्मान्तत्वन्निपात्यते। अहनि च दिवा च अहर्दिवम्। वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थ:। सरजसमिति साकल्येऽव्ययीभाव:। बहुव्रीहौ तु। सरज: पङ्कजम्। निश्चितं श्रेय: निश्रेयसम्। तत्पुरुषएव नेह। नि:श्रेयान् पुरुष:। पुरुषस्यायु: पुरुषायुषम्। ततो द्विगु:। द्व्यायुषम्। त्र्यायुषम्। ततो द्वन्द्व:। ऋग्यजुषम्। ततस्त्रय: कर्म्मधारया:। जातोक्ष:। महोक्ष:। वृद्धोक्ष:। शुन: समीपम् उपशुनम्। टिलोपाभाव: सम्प्रसारणञ्च निपात्यते। गोष्ठेऽश्वा गोष्ठश्व:।

## ब्रह्महस्तिभ्यां वर्च्चस:। ५। ४। ७८।

अच् स्यात्। ब्रह्मवर्च्चसम् (८)। हस्तिवर्च्चसम्। पल्यराजभ्याञ्चेति वक्तव्यम् *। पल्यवर्च्चसम्।

---

७) जानूपर्य्यष्ठीवदस्त्रियाम्।

८) ब्रह्म वर्च्चसमित्यत्र षष्ठीतत्पुरुष:।

**अवसमन्धेभ्यस्तमसः। ५।४।७९।**

अवतमसम् (९)। सन्तमसम्। अन्धयतीत्यन्धम्। पचाद्यच्। अन्धन्तमः अन्धतमसम्।

**श्वसो वसीयःश्रेयसः। ५।४।८०।**

वसुशब्दः प्रशस्तवाची। ततईयसुनि वसीयः। श्वस्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयतामाह। मयूरव्यंसकादित्वात्समासः श्वोवसीयसम्। श्वःश्रेयसन्ते भूयात्।

**अन्ववतप्ताद्रहसः। ५।४।८१।**

अनुरहसम्। अवरहसम्। तप्तरहसम् (१०)।

**प्रतेरुरसः सप्तमीस्थात्। ५।४।८२।**

उरसि प्रति प्रत्युरसम्। विभक्त्यर्थेऽव्ययीभावः।

**अनुगवमायामे। ५।४।८३।**

एतन्निपात्यते दीर्घत्वे। अनुगवं यानम्। यस्य चायाम इति (३२०पृ०) समासः।

**द्विस्तावा त्रिस्तावा वेदिः। ५।४।८४।**

---

(९) अवहीनं सन्ततञ्च तम इति विग्रहे क्रमेण अवतमसं सन्तमसमिति अन्धं गाढ़मिति फलितार्थः।

(१०) अनुगतमवहीनं च रहइति प्रादिसमासः तप्तमिव रहः यथोक्तम्।
परेणानधिगम्यं हि यद्रहो वह्नितप्तवत्।
तप्तं च तद्रहश्चेति तत्तप्तरहसं विदुरिति।

अच्प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिः ततो (११) द्विगुणा त्रिगुणा वाऽश्वमेधादौ तत्र वेदिनिपातनम् । वेदिरिति किम् द्विस्तावती त्रिस्तावती रज्जुः ।

उपसर्गादध्वनः । ५ । ४ । ८५ ।

प्रगतोऽध्वानम् प्राध्वो रथः ।

न पूजनात् । ५ । ४ । ६९ ।

पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा । स्वतिभ्यामेव । नेह । परमराजः । पूजनात्किम् । गामतिक्रान्तोऽतिगवः । बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः (४।४।११०) प्रागेवायं (१२) निषेधः । नेह । सुसक्थः, स्वक्षः ।

किमः क्षेपे । ५ । ४ । ७० ।

क्षेपे यः किम्शब्दस्ततः परं यत्, तदन्तात्समासान्ता न स्युः । कुत्सितो राजा किंराजा । किंसखा । किंगौः । क्षेपे किम् किंराजः । किंसखः । किंगवः ।

नञस्तत्पुरुषात् । ५ । ४ । ७१ ।

---

(११) द्विराहत्ता तावतीत्यर्थे सुच् आवृत्तिक्रियान्तर्भावेण पूर्वपदस्य वृत्तिः । द्विगुणेति फलितकथनम् ।

(१२) इत्यतः प्रागिति । प्राग्बहुव्रीहिग्रहणं कर्त्तव्यमिति वार्त्तिकोक्तेरिति भावः ।

समासान्तो न। अराजा। असखा। तत्पुरुषात्किम् अधुरं शकटम्।

पथो विभाषा। ५। ४। ७२।

नञ् पूर्वात्पथो वा समासान्तः। अपथम्। अपन्थाः। तत्पुरुषादित्येव। अपथोदेशः अपथं वर्त्तते।

इति समासान्ताः।

---

प्रत्ययः ।३।१।१। आपञ्चमपरिसमाप्तेरधिकारोऽयम् । ⧗ परश्च ।३।१।२। अयमपि तथा । ⧗ ङ्याप्प्रातिपदिकात् ।४।१।१। ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्यापञ्चमपरिसमाप्तेरधिकारः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात् ङ्याब्भ्यां प्राङ् माभूदित्येवमर्थम् । ⧗ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ।४।१।२। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः । सुङस्योरुकारेकारौ जश्टङपाश्चेतः । ⧗ विभक्तिश्च ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः । तत्र

---

तस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या इति वार्तिकं गतार्थम् । येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम् । अवयति । अनुकरणेषु अनुकार्येण सहाभेदविवक्षायामर्थवत्त्वाभावादेव न प्रातिपदिकत्वम् । 'भू सत्तायाम्' इति यथा । भेदविवक्षायां तु संज्ञा स्यादेव 'भुवो वुक्–' इति यथा ॥—**अधिकारोऽयमिति** ॥ प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः ॥—**ङ्याप्प्रातिपदिकात्** ॥ समाहारद्वन्द्वादेकवचनम् । ङीति ङीप्ङीष्ङीनां सामान्यग्रहणम्, आबिति च टाप्डाप्चापाम् ॥—**आपञ्चमसमाप्तेरिति** ॥ ननु 'घकालतनेषु–' इति ज्ञापकात्सुबन्तात्तद्धितोत्पत्तिरित्यभ्युपगते किमर्थस्तद्धितेषु प्रातिपदिकाधिकार इति चेदत्राहुः ॥ असति ह्यधिकारे 'अत इञ्' इत्यत्रात इत्येतत्सुबन्तस्यैव विशेषणं स्यात्, ततश्च दक्षस्यापत्यमित्यत्रैव इञ् स्यान्न तु दक्षयोर्दक्षाणामित्यत्र । किं च 'वृद्धाच्छः' इत्यत्र वृद्धमित्येतत् सुबन्तविशेषणं मा भूत् । अन्यथा जानन्तीति ज्ञाः 'इगुपध–' इति कः । ज्ञानामयमित्यत्र सुबन्तस्य वृद्धत्वाच्छः स्यात् । प्रातिपदिकाधिकारे तु वृद्धं यत्प्रातिपदिकं तत्प्रकृतिकात् सुबन्ताच्छ इत्यर्थलाभादिह प्रातिपदिकस्यावृद्धत्वाच्छो न भवति किं तु अणेव भवति ॥ शब्दकौस्तुभे त्वसत्यस्मिन्नधिकारे वाक्यादपि कप्रत्ययादयः स्युस्ततो विशिष्टप्रातिपदिकतया सकलसुब्लोपे स्पष्टमेवानिष्टमिति स्थितम् ॥—**लिङ्गविशिष्टस्येति** । लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः । परिभाषायाः प्रयोजनं श्वश्रूः । प्रत्ययान्तत्वेनाप्रातिपदिकत्वेऽपि इह स्वादयः । न च 'श्वशुरः श्वश्र्वा' इति निर्देशादेव स्वादिसिद्धिरिति वाच्यम् । निर्देशस्य शब्दपरत्वात् । 'विपराभ्यां जेः' 'ङेर्यः' इतिवत् । किं च कुमारीमाचष्टे कुमारयति 'णाविष्ठवत्' इति टिलोपः । एवं यामिन्य इवाचरन्ति यामिनयन्तीत्यत्राचारे क्विबपि फलम् ॥—**ङ्याब्भ्यां प्रागिति** । तेन एनिका आर्यका च सिध्यति । तथाहि । 'न सामिवचने' इति ज्ञापयिष्यमाणोऽत्यन्तस्वार्थिकः कन् एतार्यशब्दाभ्यां ङ्यापौ बाधेत, ततश्च एतिका आर्यिकेत्येवं रूपं स्यात् । ङ्याब्ग्रहणसामर्थ्यात्तु ङीबन्तात्कनि एनिकेत्यपि सिध्यति । 'वर्णादनुदात्तात्–' इत्यस्य वैकल्पिकत्वात् । आबन्तात्कनि 'उदीचामातःस्थाने–' इतीत्वविकल्पादार्यका आर्यिकेति रूपद्वयं सिध्यति । वस्तुतस्तु ङ्यापोर्ग्रहणं मास्तु घकालतनेषु–' इत्यलुग्विधानसामर्थ्यात्सुबन्तात्तद्धितोत्पत्तिरिति हि निष्कर्षः । तथा च सुपः प्रागेव ङ्यापौ प्रवर्तेते । स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम् ॥—**स्वौजसमौट्**–॥ समाहारे द्वन्द्वः ॥—**सुङस्योरिति** । सोरुकारः 'अर्वणस्त्रसौ–' इत्यत्र विशेषणार्थः । 'असि' इत्युक्ते हि असकारादावित्यर्थः स्यात् । तथा च 'वाजमर्वत्सु' इति न सिध्येत् ॥ ङ्सेरिकारः 'टाङसिङसां–' 'ङसिङ्योः स्मात्स्मिनौ' इत्येतदर्थः ॥ जस्शसोर्जकारशकारौ 'जसः शी' 'तस्माच्छसो नः–' इत्यनयोर्विषयविभागार्थौ ॥ ननु अन्यतरस्य निरनुबन्धकत्वमेवास्त्विति चेन्न । जसो जकाराभावे औङित्यस्य आव् स्यात्, ततश्च प्रत्ययस्य वकारान्तता संभाव्येत, एवं शसः शकराभावे औटो डित्वं संभाव्येत, तथा च तेजसी इत्यादौ टिलोपः स्यात् । अथ वा लिहावित्यादौ डित्वसामर्थ्यादभस्यापि टेर्लोपः संभाव्येत ॥ औटष्टकारः सुडिति प्रत्याहारार्थः ॥ टाटकारस्तु 'टाङसिङसां–' 'द्वितीयाटौस्स्वेनः' इति विशेषणार्थः । एतेन 'आदिरन्त्येन–' इति सूत्रे काशिकाकारेण यदुक्तम्—अन्त्येनेति किं, सुडिति तृतीयैकवचनावयवेन मा भूद्—इति तत्परास्तम् । औटष्टकारस्यानन्यार्थतया तेनैव संभवात् प्रत्यासत्तेश्च । अत एव शब्दकौस्तुभे तत्रान्यदेव प्रयोजनमुक्तम् । मध्यमेनेता सहित आदिस्तदुत्तरेषामपि ग्राहको मा भूदित्यन्त्येनेति ग्रहणम् । अन्त्येनेता सहितो मध्यमः पूर्वेषामपि मा भूदित्यादिग्रहणम्—इति । अमुमेवार्थं मनसि निधाय—आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते—इति निष्कृष्टमुक्तं प्राक् ॥ प्रकृतमनुसरामः ॥ ङेप्रभृतीनां ङकारो 'घेर्ङिति' 'ङेराम्–' इति विशेषणार्थः । सुपः पकारस्तु प्रत्याहारार्थः ॥ —**विभक्तिश्च** ॥ 'तिङस्त्रीणित्रीणि–' इत्यतस्तिङ्ग्रहणं व्यवहितमपि स्वरितत्वबलादनुवर्तते । 'सुपः' इति च संनिहितमित्यभिप्रेत्याह—**सुप्तिङाविति** ॥ तिङां विभक्तिसंज्ञायाः प्रयोजनं 'न विभक्तौ तुस्माः' इति । सुपां तु त्यदाद्यत्वादिकमपि ॥ चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः । अन्यथा एकसंज्ञाधिकारादेकवचनादिसंज्ञाभिः सह वचनद्वयप्रामाण्यात्पर्यायः स्यात् । ततश्च रामेभ्यः नमाम

---

१ आपञ्चमेति—नन्वेवं 'हनस्त' इत्यादिविकारागमानामपि प्रत्ययसंज्ञा स्यात् इति चेन्न, प्रत्यय इति महासंज्ञया स्वीयार्थप्रत्यायकस्यैव संज्ञाकरणात् । न चैवमत्यन्तस्वार्थिकानां प्रकृत्यर्थेनार्थवत्त्वेऽपि लोके तथात्वाभावात्संज्ञा न स्यादिति वाच्यम् । प्रत्यय इत्यत्र तन्त्रेण यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इत्यङ्गीकारात् । २ ङ्याब्ग्रहणमिति—नच ङीप्रत्ययान्तादेव ङ्याबन्तादेवेति नियमार्थमेतदिति वाच्यम् । युवतिश्वश्रूशब्दादिभ्यो सुबुत्पत्त्यनुपपत्तेः । अत एव 'श्वशुरः श्वश्वा' इत्यादि निर्देशाः संगच्छन्ते ।

## अलुगुत्तरपदे (१)। ६। ३। १।

अलुगधिकारः प्रागानङः उत्तरपदाधिकारस्त्वा पादसमाप्तेः।

## पञ्चम्याः स्तोकादिभ्यः। ६। ३। २।

एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे। स्तोकान्मुक्तः। एवम्(२) अन्तिकार्थदूरार्थकृच्छ्रेभ्यः। उत्तरपदे किम् निःस्तोकः। ब्राह्मणाच्छंसिन उपसंख्यानम् *। ब्राह्मणे विहितानि शस्त्राणि उपचारात् ब्राह्मणानि तानि शंसतीति। ब्राह्मणाच्छंसीति ऋत्विग्विशेषः। द्वितीयार्थे पञ्चमी उपसंख्यानादेव।

## ओजःसहोऽम्भस्तमसस्तृतीयायाः। ६। ३। ३।

ओजसा कृतमित्यादि। अञ्जस उपसंख्यानम् *। अञ्जसा कृतम्। आर्जवेन कृतमित्यर्थः। पुंसानुजो(३)जनुषान्ध इति च *। यस्याग्रजः पुमान् स पुंसानुजः। जनुषान्धः जात्यन्धः।

## मनसः संज्ञायाम्। ६। ३। ४।

(१) उत्तरपदशब्दः समासचरमावयवे रूढः। समासप्रयोजनं तु स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिरित्यादिसिद्धिः।

(२) इह स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति(२४२५०)समासप्रयोजनं ये पठितास्तएवादिशब्देनेह रहस्यन्ते इत्याशयेनाह एवमिति।

(३) पुंसानुजः पुंसा हेतुनानुज इत्यर्थः जनुषान्धः जन्मनान्धो जात्यन्ध इत्यर्थः।

मनसागुप्ता।

**आज्ञायिनि च। ६। ३। ५।**

मनस इत्येव। मनसा ज्ञातुं शीलमस्य मनसाज्ञायी।

**आत्मनश्च। ६। ३। ६।**

आत्मनस्तृतीयाया अलुक् स्यात्। पूरणे(४)इति वक्तव्यम्। पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः। आत्मनापञ्चमः। "जनार्दनस्त्वात्मचतुर्थएवेति," बहुव्रीहिर्बोध्यः। पूरणे किम् आत्मकृतम्।

**वैयाकरणाख्यायाञ्चतुर्थ्याः। ६। ३। ७।**

आत्मनइत्येव। आत्मनेपदम्। आत्मनेभाषा (५)। तादर्थ्ये चतुर्थी। चतुर्थीति(१४१पृ०)योगविभागात्समासः।

**परस्य च। ६। ३। ८**

परस्मैपदम्। परस्मैभाषा।

(४) पूरणे इति स्वरितत्वबलात्तदधिकारविहितप्रत्ययग्रहणमित्याह पूरणे इति तस्य पूरणे(६७०पृ०)इत्यधिकृतविहितप्रत्ययान्त इत्यर्थः।

(५) आत्मनेभाषेति धातुसूत्रगणोणादिलिङ्गानुशासनात्मकं पञ्चप्रस्थानं व्याकरणं तत्र धातुपाठे भाषाशब्दस्य दृष्टत्वात् वैयाकरणत्वम् वैयाकरणाख्यायामित्यत्र पूर्वसूत्रस्थस्यैवात्मन इत्यस्यानुवृत्तिर्बोध्येत्याशयेनाह आत्मनइत्येवेति प्रकृतिविकृतिभावाभावेन चतुर्थीसमासाभावमाशङ्क्याह योगविभागादिति।

## हलदन्तात्सप्तम्याः संज्ञायाम्। ६। ३। ९।

हलन्तादन्ताच्च सप्तम्या अलुक् संज्ञायाम्। त्वचिसारः।

## गवियुधिभ्यां स्थिरः। ८। ३। ९५।

आभ्यां स्थिरस्य सस्य षः स्यात्। गविष्ठिरः। अत्र गवीति(६) वचनादेवालुक्। युधिष्ठिरः। अरण्येतिलकः। अत्र संज्ञायामिति (३५२पृ०) सप्तमीसमासः। हृद्द्युभ्यां च*। हृदिस्पृक्(७)। दिविस्पृक्।

## कारनाम्नि च प्राचां हलादौ। ६। ३। १०।

प्राचान्देशे यत्कारनाम (८) तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक्। मुकुटेकार्षापणम्। दृषदिमाषकः। पूर्वेण सिद्धे नियमार्थम्। कारनाम्न्येव प्राचामेव हलादावेवेति। कारनाम्नि किम्। अभ्यर्हितपशुः। कारादन्यस्यैतद्देयस्य नाम। प्राचाङ्किम्। यूथपशुः(९)। हलादौ किम् अविकटोरणः(१०)। हलदन्तात्किम्। नद्यां दोहः नदीदोहः (११)।

---

(६) गवीत्यत्र अवादेशात् पूर्वं लुक् प्राप्तौ हलन्तत्वाभावेन हलदन्तादित्यस्याप्राप्तेरत आह गवीतिवचनादेवेति।

(७) हृदीति अलुग्विधिज्ञापकात् कर्म्मणीयं सप्तमी।

(८) वणिक्पशुपालकर्षकेभ्यो राजग्राह्योभागः करः स एव कारः।

(९) यूथपशुः यूथे पशुरूपउदग्देशे कररूपेण देयइति न तत्रालुक्।

(१०) अविशब्दात् संघाते कटच्प्रत्ययः उरणो मेषः अविकटे उरणइति विग्रहे तस्य हलादित्वाभावान्नालुक्। सप्तमीति (३५१पृ०)योगविभागात् समासः।

(११) नद्यामिति नद्युत्तरणे देयः दोहरूपःकरइत्यर्थः।

मध्याद्गुरौ। ६। ३। ११।

मध्येगुरुः। अन्ताच्च। अन्तेगुरुः।

अमूर्द्धमस्तकात् स्वाङ्गादकामे। ६। ३। १२।

कण्ठेकालः। उरसिलोमा। अमूर्द्धमस्तकात्किम् मूर्द्ध-शिखः। मस्तकशिखः। अकामे किम् मुखे कामोऽस्य मुखकामः।

बन्धे च विभाषा। ६। ३। १३।

हलदन्तात्सप्तम्या अलुक्। हस्तेबन्धः—हस्तबन्धः। हलदन्तेति किम् गुप्तिबन्धः।

तत्पुरुषे कृति बहुलम्। ६। ३। १४।

स्तम्बेरमः-स्तम्बरमः। कर्णेजपः-कर्णजपः। क्वचिन्न (१२)। कुरुचरः।

प्रावृट्शरत्कालदिवाञ्जे। ६। ३। १५।

प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यायं प्रपञ्चः।

विभाषा वर्षक्षरशरवरात्। ६। ३। १६।

---

(१२) तत्पुरुषे इति सूत्रे हलदन्तादित्यस्यानुवर्त्तनेऽपि नैतस्य सार्व्वत्रिकत्वं बहुलग्रहणादेशान्यत्र न भविष्यतीति ध्वनयन्नाह क्वचिन्नेति तेन गोषु चर इति वाक्ये गोचर इत्यादि सिद्धिः।

एभ्यः सप्तम्या अलुक् जे। वर्षेजः-वर्षजः। चरेजः-चरजः।
शरेजः शरजः। वरेजः वरजः।

घकालतनेषु(१२) कालनाम्नः ६।३।१७

सप्तम्या विभाषा लुक् स्यात्। घ। पूर्व्वाह्णेतरे-पूर्वाह्णतरे। पूर्वाह्णेतमे—पूर्वाह्णतमे। काल। पूर्व्वाह्णेकाले—पूर्व्वाह्णकाले। तन। पूर्व्वाह्णेतने पूर्व्वाह्णतने।

शयवाससवासिष्वकालात्। ६।३।१८।

खेशयः-खशयः। ग्रामेवासः-ग्रामवासः। ग्रामेवासी-ग्रामवासी। हलदन्तादित्येव। भूमिशयः। अपो योनियन्मतुषु *। अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः। अप्सु भवोऽप्सव्यः। अप्सुमन्तावाऽऽज्यभागौ।

नेन्सिद्धबध्नातिषु च। ६।३।१९।

इन्नन्तादिषु सप्तम्या अलुग्न। स्थण्डिलशायी। साङ्काश्यसिद्धः चक्रबद्धः।

स्थे च भाषायाम्। ६।३।२०।

सप्तम्या अलुग्न। समस्थः। भाषायां किम् कृष्णोऽस्यास्य्सरेष्ठः।

षष्ठ्या आक्रोशे। ६।३।२१।

(१२) घशब्देन तरप्तमपौ गृह्येते तरप्तमपौ घः इति (१००४०) शब्दशास्त्रसंज्ञानात्। कालशब्दस्य स्वरूपग्रहणम्।

चौरस्यकुलम् । आक्रोशे किम् ब्राह्मणकुलम् । वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरेषु ॰ । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः (१४) । आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्यकुलिकेति च॰ । अमुष्यापत्यम् । आमुष्यायणः । नडादित्वात् (४८८४ सू॰)फक् । अमुष्यपुत्रस्य भावआमुष्यपुत्रिका । मनोज्ञादि(६५७४ सू॰)त्वाद्वुञ् । एवमामुष्यकुलिका । देवानां प्रिय(१५)इति च मूर्खे ॰ । अन्यत्र देवप्रियः । शेपपुच्छलाङ्गूलेषु शुनः ॰ । शुनःशेफः (१६) । शुनःपुच्छः । शुनोलाङ्गूलः । दिवश्च दासे ॰ । दिवोदासः ।

## पुत्रेऽन्यतरस्याम् । ६ । ३ । २२ ।

षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम् । दास्याःपुत्रः दासीपुत्रः । निन्दायां किम् ब्राह्मणीपुत्रः ।

## ऋतो विद्यायोनिसम्बन्धेभ्यः । ६ । ३ । २३ ।

विद्यासम्बन्धयोनिसम्बन्धवाचिनऋदन्तात् षष्ठ्याअलुक् । होतुरन्तेवासी होतुःपुत्रः । पितुरन्तेवासी पितुःपुत्रः (१७) ।

(१४) पश्यतोहरइति पश्यन्तमनादृत्येत्यर्थः षष्ठी चानादरेइति(२१०३सू॰)षष्ठी ।

(१५) देवानामिति पशवो हि देवानां प्रीतिं जनयन्ति इति तत्प्रियास्तथा तत्प्रियत्वेन पशुतुल्यता प्रतीयते इति पशुवन्मूर्ख इत्यर्थः ।

(१६) शुनइव शेफमस्य शुनःशेफः एवं पुच्छलाङ्गूलाभ्यामपि बहुव्रीहिः एते च बह्वृचप्रसिद्धा ऋषिभेदाः ।

(१७) पितुः पुत्रः प्रख्यातात् पितुरुत्पन्न इत्यर्थः ।

विद्यायोनिसम्बन्धेभ्यस्तत्पूर्व्वोत्तरपद(१८) ग्रहणम्*। नेह। होतृधनम्।

**विभाषा स्वसृपत्योः। ६। ३। २४।**

ऋदन्तात् षष्ठ्या अलुक् वा स्वसृपत्योः परयोः।

**मातुःपितुर्भ्या(१९)मन्यतरस्याम्। ८। ३। ८५**

आभ्यां स्वसुः सस्य षो वा स्यात् समासे। मातुःष्वसा—मातुःस्वसा। पितुःष्वसा—पितुःस्वसा। लुक्पक्षे तु।

**मातृपितृभ्यां स्वसा। ८। ३। ८४।**

आभ्यामस्य स्वसुः सस्य षः स्यात् समासे। मातृष्वसा। पितृष्वसा। असमासे तु(२०)। मातुः स्वसा। पितुः स्वसा।

इत्यलुक्समासः।

(१८) तत्पूर्व्वोत्तरेति। विद्यायोनिसम्बन्धवाचकान्यतरपूर्व्वोत्तरपदस्य ग्रहणमित्यर्थस्तेन होतुःपुत्र इत्यादि सिद्धम्।

(१९) मातुःपितुर्भ्यामिति रेफान्तानुकरणं विसर्गादावप्येकदेशविकृतन्यायेन तत्त्वमस्तीति बोधनाय।

(२०) मातुःपितुर्भ्यामिति सूत्रे समास इत्यनुवर्त्तितं तत्फलमाह असमासे त्विति।

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ६ । ३ । ४३ ।**

भाषितपुंस्काद्यो ङी तदन्तस्याऽनेकाचो ह्रस्वः स्यात् घरूपकल्पप्रत्ययेषु(१)चेलडादिषु चोत्तरपदेषु परेषु । ब्राह्मणितरा (२) । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि । ब्रुवः पचाद्यचि वच्यादेशगुणयोरभावोऽपि निपात्यते । चेलडादीनि वृत्तिविषये कुत्सनवाचीनि । तैः कुत्सितानि कुत्सनैरिति(२५८६०)समासः । ङ्यः किम् दत्तातरा । भाषितपुंस्कात्किम् आमलकीतरा (३) । कुवलीतरा(४) ।

**नद्याः शेषस्याऽन्यतरस्याम् । ६ । ३ । ४४ ।**

अङ्यन्तनद्याः ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात् । ब्रह्मबन्धुतरा ब्रह्मबन्धूतरा । स्त्रितरा(५)स्त्रीतरा । कृन्नद्या न * । लक्ष्मीतरा ।

---

(१) उत्तरपदाधिकारे क्वचित्प्रत्ययग्रहणे तदन्तग्रहणं नास्तीत्याशयेनाह प्रत्ययेष्विति ।

(२) ब्राह्मणितरेति जातिपरङीन्प्रत्ययान्तत्वेन जातेश्चेति(४०८९०) निषेधात् तसिलादिष्विति(४०५९०)पुंवद्भावो नेति बोध्यम् ।

(३) आमलकीशब्दो वृक्षे नित्यस्त्रीलिङ्गः कुवलीशब्दोऽपि तथेत्याशयेनोदाहरणम् । मनो०

(४) आमलक्यादयो भाषितपुंस्का नेत्यरुचेराह कुवलीति । शब्देन्दु०

(५) नद्या इत्यत्र भाषितपुंस्कादितीह न सम्बध्यते इत्याशयेनोदाहरति स्त्रितरेति ।

## उगितश्च। ६। ३। ४५।

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा। ह्रस्वाभावपक्षे तसिलादिष्विति(४०५०) पुंवत्। विद्वत्तरा। इत्यादिषु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलम्(६)।

## हृदयस्य(७)हृल्लेखयदण्लासेषु। ६। ३। ५०।

हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियम् हृद्यम्। हृदयस्येदम् हार्दम्। हृल्लासः। लेखेत्यणन्तस्य ग्रहणम्। घञि तु। हृदयलेखः। लेखग्रहणमेव ज्ञापकम्(८)। उत्तरपदाधिकारे तदन्तविधिर्नास्तीति।

## वा शोकष्यञ्रोगेषु। ६। ३। ५१।

हृच्छोकः—हृदयशोकः। सौहार्दम्—सौहृदय्यम्। हृद्रोगः हृदयरोगः। हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति तेन सिद्धे प्रपञ्चार्थ(९)मिदम्।

(६) निर्मूलमिति नहि स्वयमप्रवर्त्तमानोऽपि ह्रस्वः पुंवत्त्वं बाधतेइति न्यायमेवेति भावः।

(७) हृच्छब्देनैव हृल्लेखादिपदसिद्धौ सूत्रमिदं हृदयलेखादिप्रयोगवारणार्थम्।

(८) ज्ञापकमिति उत्तरपदं विशेष्यं कृत्वा तदन्तविधिर्नेत्यर्थः एवञ्च तदंशे उत्तरपदे इत्यस्य न संबन्धः।

(९) प्रपञ्चार्थमिति अत्र प्रयोगद्वयमन्यत्र हृदयशब्दप्रयोगएवेति व्यवस्थार्थमिति भावः।

**पादस्य पदाऽऽज्यातिगोपहतेषु। ६। ३। ५२।**

एषूत्तरपदेषु पादस्य पदइत्यदन्तआदेशः (१०) स्यात्। पादाभ्यामजतीति पदाजिः। पदातिः। अज्यतिभ्याञ्चपादे चेतीण् (उ४२२पृ०)प्रत्ययः अजेर्व्यभावो निपातनात्। पदगः। पदोपहतः

**पद्यत्यऽतदर्थे। ६। ३। ५३।**

पादस्य पत्स्यादतदर्थे यति परे। पादौ विध्यन्ति पद्याः शर्कराः। अतदर्थे किम् पादार्थमुदकम्पाद्यम्। पादार्घाभ्याञ्चेति(७२३पृ०)यत्। इके चरतावुपसंख्यानम्*। पादाभ्यां चरति पदिकः। पर्पादित्वात्(६०६पृ०)ष्ठन्।

**हिमकाषिहतिषु च। ६। ३। ५४।**

पद्धिमम्। पत्काषी (११)। पद्धतिः।

**ऋचः शे। ६। ३। ५५।**

ऋचः पादस्य (१२) पत्स्याच्छे परे। गायत्र्यापच्छः शंसति पादम्पादमित्यर्थः। ऋचः किम् पादशः कार्षापणन्ददाति।

**वा घोषमिश्रशब्देषु। ६। ३। ५६।**

(१०) उत्तरसूत्रे पद्ग्रहणादत्र पदेत्यदन्तं लुप्तविभक्तिकमित्याशयेनाह्यदन्त आदेश इति।

(११) पत्काषीति सुप्यजाताविति(उ३४१पृ०)णिनिः पद्धतिरित्यत्र कर्मणि क्तिन्।

(१२) ऋच इति अत्र चतुर्थांशवाची पादशब्दः पूर्व्वसूत्रेषु सर्व्वत्र स्वाङ्गवाचीति विवेकः।

**सु औ जस् इत्यादीनां सप्तानां त्रिकाणां प्रथमाद्यः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः । सुपः ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः । द्व्येकयोर्द्विवचनैकवचने ।१।४।२२। द्वित्वैकत्वयोरेते स्तः । बहुषु बहुवचनम् ।१।४।२१। बहुत्वे एतत्स्यात् । रुत्वविसर्गौ । रामः । सरूपाणामेकशेष एकविभक्तौ ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ॥**

---

इत्यादौ बहुवचनसंज्ञापक्षे विभक्तित्वाभावात्सस्येत्संज्ञा स्यात् ॥—**इहापीति**। अस्मिन्नपि तन्त्रे 'प्रातिपदिकार्थलिङ्गपरिमाण–' इत्यादौ इत्यर्थः ॥—**सुपः** ॥ अत्र 'तिङस्त्रीणित्रीणि–' इति सूत्रात् 'त्रीणित्रीणि' इति पदं 'तान्येकवचन–' इति सूत्रं च तानीति पदं विहायानुवर्तत इति व्याचष्टे—**सुपस्त्रीणित्रीणी**त्यादिना ॥—**एकश** इति । एकैकमित्यर्थः । 'संख्यैकवचनाच्च' इति वीप्सायां प्रथमान्ताच्छस् ॥—**द्व्येकयोः**—॥ इह द्व्येकशब्दौ संख्यापरावित्यभिप्रेत्याह—**द्वित्वैकत्वयो**रिति ॥ संख्येयपरत्वे तु बहुवचनं स्यादिति भावः ॥—**बहुषु**—॥ अयमपि संख्यापर एवेत्याह—**बहुत्व** इति । बहुवचनं स्वाश्रयद्रव्यगतं बहुत्व धर्मे आरोप्य कृतम् । तत्फलं तु बहुः पर्वत इति वैपुल्यवाचिनो नेह ग्रहणमिति सूचनमेव । वस्तुतो व्यर्थं तत्परत्वादेकवचनसंभवादिति शब्दकौस्तुभादौ स्थितम् ॥ **रुत्वविसर्गा**विति । ननु रुत्वस्यासिद्धत्वादुकारस्येत्संज्ञालोपयोरभावात् 'स्थानिवदादेशः–' इत्यस्यापि त्रिपाद्यामप्रवृत्त्या रेफान्तस्य 'सुप्तिङन्तम्–' इति पदसंज्ञाऽभावेन च विसर्गोऽत्र दुर्लभः । विसर्गविधेस्तु पुनरित्यादौ चरितार्थत्वादिति चेन्मैवम् । 'न मुने' इति सूत्रे नेति योगं विभज्य असिद्धं नेति व्याख्यायामीष्टसिद्धिरित्युक्तत्वात् ॥—**राम** इति । संज्ञाशब्दोऽयमव्युत्पन्न इति पक्षे अर्थवत्सूत्रेण प्रातिपदिकसंज्ञा, 'करणाधिकरणयोश्च' इत्यधिकारे घापवादेन 'हलश्च' इति घञा रमन्तेऽस्मिन्निति व्युत्पादने तु 'कृत्तद्धित–' इति सूत्रेणेति विवेकः ॥ अत्र केचित् परिष्कुर्वन्ति । 'गन्धर्वः शरभो रामः सृमरो गवयः शशः । इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः' इत्यमरोक्त्या यदि पशुविशेषे प्रयुज्यते तदा रूढोऽयं रामशब्द इत्यर्थवत्सूत्रेण संज्ञा ॥ यदा तु रामचन्द्रे भगवति प्रयुज्यते तदा रमन्ते योगिनो यस्मिन्निति व्युत्पत्त्याश्रयणात् 'कृत्तद्धित–' इति सूत्रेण संज्ञेति ॥ —**सरूपाणामेकशेषः**—॥ इतरनिवृत्तिपूर्वकमवस्थानं शेषशब्दार्थः । न च विरूपेष्वेकशेषाप्रवृत्त्या घटकलशाविति द्वन्द्वापत्तिरिति शङ्क्यम्, 'विरूपाणाम्–' इति वार्तिकस्य वक्ष्यमाणत्वात् । वस्तुतस्तु सूत्राक्षरैरेव वार्तिकार्थो लभ्यते । रूप्यते बोध्यते इति रूपमर्थः । समानं रूपं येषामिति सरूपाः 'ज्योतिर्जनपद–' इत्यादिना समानस्य सभावः, तथा समानं रूपं स्वरूपं येषां ते सरूपाः सरूपाश्च सरूपाश्च सरूपाः तेषामित्येकशेषेण व्याख्यानात् । न च स्वाङ्गे स्वव्यापारायोगः वाक्यापरिसमाप्तिन्यायादिति वाच्यम् । उद्देश्यतावच्छेदकरूपाक्रान्ततया स्वस्मिन्नपि प्रवृत्तेः ॥ अन्यथा 'तुल्यास्यप्रयत्नम्–' इत्यादौ सवर्णदीर्घो न स्यात् । तथा 'अर्थवत्–' सूत्रान्तर्गतानां प्रातिपदिकत्वं, 'प्रत्ययः' 'परश्च' इत्यत्र सुप्प्रत्ययः, 'ससजुषोः–' इत्यत्र रुः, 'खरवसानयोः–' इति सूत्रे विसर्गश्च न स्यादिति सर्वोपप्लवः स्यात् ॥ 'स्वाध्यायोऽध्येतव्यः' इत्यस्य 'नेह नाना–' इत्यादिश्रुतेश्च स्वस्मिन्नपि यथा प्रवृत्तिस्तथा दीर्घादीनामपीति च तुल्यमेकशेषेऽपि ॥ एतेन 'अ इ उण्' इत्यादौ 'आद्गुणः' इत्यादिसंधिकार्यं कुतो नेत्याशङ्कायाम्—वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्संधिर्न—इति केषांचित्समाधानं परास्तम् । वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां गुणादीनामुपेन्द्र इत्यादौ तटस्थइव उद्देश्यतावच्छेदकरूपाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वात् ॥ स्यादेतत् । 'सरूपाणामेक एकविभक्तौ' इत्येव सूत्रमस्तु किमनेन शेषग्रहणेन ॥ अत्राहुः । तथा हि सति सरूपाणां स्थाने एकोऽन्तरतम आदेशो भवतीत्यर्थः स्यात्तथा चाश्वश्चाश्वश्चेत्यत्रोदात्तद्वयवतः स्थाने उदात्तद्वयवानादेशस्तथा अनुदात्तद्वयवतः स्थाने अनुदात्तद्वयवानादेशः प्रसज्येतेति ॥—**एकविभक्तौ यानी**ति । विभक्तिः सारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम् । एवं चानैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते । यद्येतन्नारभ्येत, तर्हि प्रत्येकं विभक्तिः स्याद् द्वन्द्वश्च प्रवर्तेत । आरब्धे त्वेकशेषेऽनेकसुबन्तविरहाद् द्वन्द्वप्राप्तिरेव नास्तीति भावः ॥ ननु सुबुत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थं बोधयतीति द्विवचनाद्यनुत्पत्तौ रामौ रामा इत्यादि न सिध्येत् । नैष दोषः, शिष्यमाणस्य लुप्यमानार्थाभिधायित्वात् ॥ अत एव 'कृत्तद्धितसमासैकशेष–' इत्येकशेषो वृत्तिषु गण्यते । परार्थाभिधानं हि वृत्तिः । अत एव च लुप्तेऽपि प्रत्यये किम् धुग् इत्यादौ कर्ता प्रतीयत इति दिक् ॥—**सरूपाण्येवे**ति । एतच्च उत्तरसूत्रस्थस्यैवकारस्य इहानुकर्षणाल्लभ्यते ॥ अत्र च एकस्यामपि विभक्तौ परतः विरूपाणि न दृष्टानीति पर्यवसन्नोऽर्थः, तेन मातृशब्दयोर्जननीवाचिपरिच्छेत्तृवाचिनोर्नैकशेषः,

---

१ सुप इति—सुबिति प्रत्याहारो न सप्तमीबहुवचनम्, एकस्यानेकसंज्ञाविधानानर्थक्यात् । २ एकश इति—वीप्सायां द्विर्वचनं तु न, शसोऽपवादत्वात् । न चैवमृषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तथा सर्वे ते सहस्रदक्षिणाः संपन्नाः इति भाष्येऽइउण्सूत्रस्थे एकैकश इति प्रयोगानुपपत्तिरिति वाच्यम्, तत्र एकेति संबोधनान्तं प्रभाद्यर्थं पृथक्पदमिति दोषाभावात् । अथवा नायं भाष्यप्रयोगः किन्तु श्रौत इति छान्दसोऽयं प्रयोगः ।

पादस्य पत्। पद्घोषः-पादघोषः। पन्मिश्रः-पादमिश्रः। पच्छब्दः-पादशब्दः। निष्के चेति वाच्यम् *। पन्निष्कः-पादनिष्कः।

## उदकस्योदः संज्ञायाम्। ६। ३। ५७।

उदमेघः। उत्तरपदस्य चेति वक्तव्यम्। क्षीरोदः।

## पेषंवासवाहनधिषु च। ६। ३। ५८।

उदपेषम्पिनष्टि। उदवासः। उदवाहनः। उदधिर्घटः। समुद्रे तु पूर्व्वेण सिद्धम्।

## एकहलादौ (१३) पूरयितव्येऽन्यतरस्याम्। ६। ३। ५९।

उदकुम्भः-उदककुम्भः। एकेति किम् उदकस्थाली। पूरयितव्येति किम् उदकपर्व्वतः।

## मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ६। ३। ६०।

उदमन्थः-(१४) उदमन्थः। उदौदनः-उदकौदनः।

---

(१३) एकहलादावित्यत्र एकशब्दोऽसहायवाची एकसंख्यावाची च सहायस्य तुल्यजातीयो हलेव व्यवच्छिद्यते तथाचैकहलमुच्चार्य्य यत्रानुच्चार्य्यते तत्रैवास्य प्रवृत्तिरिति भावः। पूरयितव्यं पूरणार्हम्।

(१४) उदमन्थ इति द्रवद्रव्यसंस्कृताः सक्तवो मन्थ इत्युच्यते। मनो॰

## इको ह्रस्वोऽङ्यो गालवस्य। ६। ३। ६१।

इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे। ग्रामणीपुत्रः ग्रामणिपुत्रः। इकः किम् रमापतिः। अङ्य इति किम् गौरीपतिः। गालवग्रहणं पूजार्थम् अन्यतरस्यामित्यनुवृत्तेः। इयङ्वङ्भाविनामव्ययानाञ्च नेति वाच्यम् *। श्रीमदः। भ्रूभङ्गः। शुक्लीभावः (१५)। अभ्रुकुंसादीनामिति वक्तव्यम् *। भ्रुकुंसः भ्रूकुंसः। भ्रुकुटिः भ्रूकुटिः। अकारोऽनेन विधीयत इति व्याख्यान्तरम्। भ्रकुंसः। भ्रकुटिः। भ्रुवा कुंसा भाषणं शोभा वा यस्य। स्त्रीवेषधारी नर्त्तकः। भ्रुवः कुटिः कौटिल्यम्।

## एक तद्धिते च। ६। ३। ६२।

एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च। एकस्या आगतम्। एकरूप्यम्। एकक्षीरम्।

## ङ्यापोः संज्ञाछन्दसोर्बहुलम्। ६। ३। ६३।

रेवतिपुत्रः। अजक्षीरम्।

## त्वे च। ६। ३। ६४।

त्वप्रत्यये ङ्यापोर्वा ह्रस्वः। अजत्वम् अजात्वम् रोहिणित्वम् रोहिणीत्वम्।

---

(१५) शुक्लीभाव इत्यत्र शुक्लीत्यस्य च्विप्रत्ययान्तत्वादव्ययत्वान्न ह्रस्वः।

## ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे। ६। १। १३।

ष्यङन्तस्य पूर्व्वपदस्य सम्प्रसारणं स्यात्पुत्रपत्योरुत्तरपदयो-स्तत्पुरुषे।

## सम्प्रसारणस्य। ६। ३। १३९।

सम्प्रसारणस्य दीर्घः (१६)। स्यादुत्तरपदे। कौमुदगन्ध्यायाः पुत्रः। कौमुदगन्धीपुत्रः (१७)। कौमुदगन्धीपतिः। व्यवस्थितविभाषया ह्रस्वो न। स्त्रीप्रत्यये चानुपसर्ज्जने नेति तदादिनियमप्रतिषेधात्। परमकारीषगन्धीपुत्रः। उपसर्ज्जने तु तदादिनियमान्नेह। अतिकारीषगन्ध्यापुत्रः (१८)।

## बन्धुनि बहुव्रीहौ। ६। १। १४।

बन्धुशब्दे उत्तरपदे ष्यङः सम्प्रसारणं स्याद्बहुव्रीहौ। कारीषगन्ध्या बन्धुरस्येति। कारीषगन्धीबन्धुः। बहुव्रीहाविति-किम् कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। क्लीवनिर्द्देशस्तु शब्दस्वरूपापेक्षया। मातज्मातृकमातृषु वा *।

(१६) संप्रसारणस्येत्यत्र ढ्रलोप इत्यतो दीर्घः (८ सू) इत्यनुवर्त्तते उत्तरपदे (४५ ०सू०) इत्यधिकाराल्लभ्यम्।

(१७) कुमुदगन्धेरपत्यं स्त्रीत्यर्थे ष्यङि यङश्चाबिति (७५ सू०) चाबन्तत्वेऽपि ष्यङन्तत्वात् संप्रसारणम्।

(१८) अतिकारीषेति अत्यादय इति (२७६ सू०) समासे पुनस्तत्पुरुषे ष्यङन्तं न पूर्व्वपदमिति भावः।

कारीषगन्ध्यामातः-कारीषगन्धीमातः । कारीषगन्ध्यामातृकः-कारीषगन्धीमातृकः । कारीषगन्ध्यामाता—कारीषगन्धीमाता । अस्मादेव निपातनान्मातृशब्दस्य मातजादेशो नद्यृतश्चेति (४०४पृ०) कब्विकल्पश्च बहुव्रीहावेवेदम् । नेह । कारीषगन्ध्याया माता । कारीषगन्ध्यामाता । चित्त्वसामर्थ्याच्चित् स्वरो बहुव्रीहिस्वरम्बाधते ।

## इष्टकेषीकामालानाञ्चिततूलभारिषु । ६ । ३ । ६५ ।

इष्टकादीनान्तदन्तानाञ्च (१९) पूर्वपदानाञ्चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी (२०) । उत्पलमालभारी ।

## कारे (२१) सत्याऽगदस्य । ६ । ३ । ७० ।

मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः । अस्तोश्चेति वक्तव्यम् । अस्तुंकारः (२२) धेनोर्भव्यायाम् । धेनु (२३)

(१९) उत्तरपदाच्चिप्तं पूर्वपदं विशेष्यीकृत्य तदन्तविधिरित्याशयेनाह तदन्तानामिति ।

(२०) मालां बिभर्त्तीति ताच्छील्ये णिनिः । अत्र सूत्रे हारिष्विति क्वचित् पाठः । मनो०

(२१) कारेइत्यत्र अरुर्द्विषदजन्तस्य मुमित्यतो (४३३०पृ०) मुमित्यनुवर्त्तते । सत्यङ्कारः सत्यकरणम् । अणपथेऽपि परत्वात् डाचं बाधित्वा मुम् ।

(२२) अस्तुङ्कारोऽभ्युगमः । अस्त्विति तिङन्तप्रतिरूपकमव्ययम् ।

(२३) धेनुश्चासौ भव्या चेति विग्रहः भविष्यती धेनुरित्यर्थः । परनिपातः ।

भ्रव्या। लोकस्य पृणे *। लोकम्पृणः। पृण इति मूलविभुजादित्वात्(७०३२५पृ०)कः। इत्येऽनभ्यासस्य *। अनभ्यासमित्यः। दूरतः परिहर्त्तव्य इत्यर्थः। भ्राष्ट्राग्न्योरिन्धे *। भ्राष्ट्रमिन्धः। अग्निमिन्धः। गिलेऽगिलस्य *। तिमिङ्गिलः। अगिलस्य किम्। गिलगिलः। गिलगिले च *। तिमिङ्गिलगिलः। उष्णभद्रयोः करणे *। उष्णङ्करणम्। भद्रङ्करणम्।

## रात्रेः कृति विभाषा। ६। ३। ७२।

रात्रिञ्चरः रात्रिचरः। रात्रिमटः रात्र्यटः। असिद्धार्थमिदं सूत्रम् खिति तु अरुर्द्विषदिति(७३३०पृ०)नित्यमेव वक्ष्यते रात्रिम्मन्यः।

## सहस्य सः संज्ञायाम्। ६। ३। ७८।

उत्तरपदे। सपलाशम्। संज्ञायां किम्। सहयुध्वा।

## ग्रन्थान्ताऽधिके च। ६। ३। ७९।

अनयोः परयोः सहस्य सः स्यादुत्तरपदे। समुहूर्त्तं (२४) ज्यौतिषमधीते। सद्रोणा खारी।

## द्वितीये चाऽनुपाख्ये (२५)। ६। ३। ८०।

(२४) समुहूर्त्तमित्यन्तवचनेऽव्ययीभावः मुहूर्त्तादिशब्दानां कालवाचितया प्रसिद्धानामपि तत्प्रतिपादकग्रन्थे कालत्वारोपेण प्रवृत्तेरव्ययीभावे चाकाले इति(२२८पृ०)निषेधादनेन सादेशः। ज्यौतिषमिति ज्योतिष इदमित्यर्थे अण्।

(२५) उपाख्या प्रत्यक्षं तद्भिन्नेऽनुमेये द्वितीये सहायवाचिन्युत्तरपदे इत्यर्थः। अप्रधानं सहायश्च द्वितीयशब्दार्थः।

अनुमेये द्वितीये सहस्य सः स्यात्। सराक्षसीका निशा। राक्षसी साक्षादनुपलभ्यमाना निशयानुमीयते।

**समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु। ६। ३। ८४।**

समानस्य सः स्यादुत्तरपदे न तु मूर्द्धादिषु। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यौनः सनुत्यः। तत्र भव इत्यर्थे सगर्भसयूथसनुताद्यत्। अमूर्द्धादिषु किम्। समानमूर्द्धा। समानप्रभृतयः। समानोदर्काः। समानस्येति योगो विभज्यते। तेन सपक्षः साधर्म्यम् सजातीयमित्यादि सिद्धमिति काशिका। अथवा सहशब्दः सदृशवचनोऽस्ति। सदृशस्सख्या ससखीति यथा। तेनायमस्वपदविग्रहो बहुव्रीहिः। समानः पक्षो यस्येत्यादि।

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु। ६। ३। ८५।**

एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात्। सज्योतिः(२६)। सजनपद इत्यादि।

**चरणे ब्रह्मचारिणि। ६। ३। ८६।**

(२६) समानं ज्योतिरस्येति बहुव्रीहिः समानशब्दः समकालवचनः। यस्मिन् ज्योतिषि आदित्ये नक्षत्रे वा उपनिपतितं तदुत्समनपर्य्यन्तमनुवर्त्तमानमशौचादि सज्योतिरित्युच्यते।

ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने। चरणः शाखा, ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म। तच्चरतीति ब्रह्मचारी। समानः सः (२७)। सब्रह्मचारी।

तीर्थे ये। ६। ३। ८७।

तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात्। सतीर्थ्यः एकगुरुकः। समानतीर्थे वासीति(१२४९)यत्प्रत्ययः।

विभाषोदरे (२८)। ६। ३। ८८।

यादौ प्रत्यये विवक्षिते इत्येव। समानोदर्य्यः सोदर्य्यः।

दृग्दृशवतुषु। ६। ३। ८९।

सदृक्। सदृशः। दृक्षे चेति वक्तव्यम्*। सदृक्षः। वतुरुत्तरार्थः

इदङ्किमोरीश्की। ६। ३। ९०।

दृगदृशवतुषु इदमईश् किमः की स्यात्। ईदृक् ईदृशः। कीदृक् कीदृशः। वतूदाहरणं(६६८पृ०)वक्ष्यते। दृक्षे चेति वक्तव्यम्*। ईदृक्षः। कीदृक्षः। आ सर्व्वनाम्नः(१८४पृ०)। दृक्षे च॥।

(२७) स इति ब्रह्मचारीत्यर्थः तस्य समानत्वं वेदस्य व्रतस्य वा समानत्वात् समानवेदाध्ययननिमित्तव्रतचारीत्यर्थः।

(२८) सोदरसहोदरशब्दौ तु समानमुदरं यस्येति विग्रहे सहशब्देन समासे वोपसर्ज्जनस्येत्यनेन(४१२पृ०)सादेशात् सिद्धौ।

तादृक् तादृशः। तावान्। तादृक्षः। दीर्घः सत्वोत्त्वे। अमूदृशः अमूदृक् अमूदृक्षः।

समासेऽङ्गुलेः सङ्गः। ८। ३। ८०।

अङ्गुलिशब्दात्सङ्गस्य मूर्द्धन्यः स्यात्समासे। अङ्गुलिषङ्गः। समासे किम्। अङ्गुलेः सङ्गः।

भीरोः स्थानम्। ८। ३। ८१।

भीरुशब्दात् स्थानस्य सस्य मूर्द्धन्यः स्यात्समासे। भीरुष्ठानम्। असमासे तु। भीरोः स्थानम्।

ज्योतिरायुषस्तोमः। ८। ३। ८३।

आभ्यां स्तोमस्य सस्य मूर्द्धन्यः समासे। ज्योतिष्टोमः। आयुष्टोमः। समासे किम् ज्योतिषः स्तोमः।

सुषामादिषु (२९) च। ८। ३। ९८।

सस्य मूर्द्धन्यः। शोभनं साम यस्य सुषामा। सुषन्धिः।

एति संज्ञायामगात्। ८। ३। ९९।

सस्य मूर्द्धन्यः। हरिषेणः। एति किम् हरिसक्थम्। संज्ञा-

(२९) सुषामा निःषामा दुःषामा सुषेधः निषेधः दुःषेधः सुषन्धिः निःषन्धिः दुःषन्धिः सुष्ठु दुष्ठु गौरिषक्थः (संज्ञायाम्) प्रतिष्णिका जलाषाहम् नौषेचनम् दुन्दुभिषेवणम् (एतिसंज्ञायामगात्) हरिषेणः (नक्षत्राद्वा) रोहिणीषेणः आकृतिगणोऽयम् सुषामादिः। एति संज्ञायामित्यादि सूत्रद्वयं गणसूत्रमेव सूत्रपाठे तद्द्वयं प्रमादेन निक्षिप्तम्।

र्यां किम् पृथ्सेनः। अगकारात्किम् विष्वक्सेना। दृणको (६५पृ०) रित्येव सर्व्वसेनः।

नक्षत्राद्वा। ८। ३। १००।

एति सस्य संज्ञायामगकारान्मूर्द्धन्यो वा। रोहिणीषेणः रोहिणीसेनः। अगकारात्किम् शतभिषक्सेनः। आकृति-गणोऽयम्।

अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्था स्थितोत्सुकोतिकारकरागच्छेषु। ६। ३। ९९।

अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु। अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यदुत्सुकः। अन्यदूतिः। अन्यद्रागः। अन्यदीयः। अषष्ठीत्यादिं किम् अन्यस्याऽन्येन वाशीः अन्याशीः। कारके छे च नायन्निषेधः। अन्यस्य कारकः अन्यत्कारकः। अन्यस्यायम् अन्यदीयः। गहादेराकृति(५६६पृ०)गणत्वाच्छः।

अर्थे विभाषा। ६। ३। १००।

अन्यदर्थः अन्यार्थः।

कोः कत्तत्पुरुषेऽचि। ६। ३। १०१।

अजादावुत्तरपदे। कुत्सितोऽश्वः कदश्वः। कदन्नम्। तत्पुरुषे किम् कूष्ट्रो राजा। त्रौ च॰। कुत्सितास्त्रयः कत्त्रयः।

रथवदयोश्च। ६। ३। १०२।

कद्रथः। कद्वदः।

**तृणे च जातौ। ६।३।१०३।**

कत्तृणम्।

**का पथ्यक्षयोः। ६।३।१०४।**

कापथः। काक्षः। अक्षशब्देन तत्पुरुषः। अक्षिशब्देन बहुव्रीहिर्वा।

**ईषदर्थे। ६।३।१०५।**

ईषज्जलम् काजलम्। अजादावपि परत्वात्कादेशः। काम्लम्।

**विभाषा पुरुषे। ६।३।१०६।**

कापुरुषः—कुपुरुषः। अप्राप्तविभाषेयम्। ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव। ईषत्पुरुषः कापुरुषः।

**कवं चोष्णे। ६।३।१०७।**

उष्णशब्दे उत्तरपदे कवं का च वा स्यात्। कवोष्णम्—कोष्णम्—कदुष्णम्।

**पृषोदरादीनि(३०)यथोपदिष्टम्।६।३।१०९।**

---

(३०) पृषोदर पृषोत्थान वलाहक जीमूत श्मशान उलूखल पिशाच बृषी मयूर। पृषोदरादिराकृतिगणः

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।

एतच्च समासविषयकमेवेति नियमो न, प्राचीनकारिकायां हंससिंहादिशब्दानामपि पृषोदरादित्वेन सिद्धत्वोक्तेः।

प्रथमयोः पूर्वसवर्णः । नादिचि । वृद्धिरेचि । रामौ । **चुटू** ।१।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः । इति जस्येत्संज्ञायाम् । **न विभक्तौ तुस्माः** ।१।३।४। विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सकारस्य नेत्वम् । **अतो गुणे** ।६।१।९७। अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यादिति प्राप्ते । परत्वात्पूर्वसवर्णदीर्घः । अतोगुणे इति हि पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायेनाकःसवर्ण इत्यस्यैवायमपवादो नतु प्रथमयोरित्यस्यापि । रामाः । **एकवचनं संबुद्धिः** ।२।३।४९। संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् । **एङ्ह्रस्वात्संबुद्धेः** ।६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत् । संबुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह । हे कतरत्कुलेति । हे राम । हे रामौ । हे रामाः । एङ्ग्रहणं किम् । हे हरे । हे विष्णो । अत्र हि परत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात्परत्वं नास्ति । **अमि पूर्वः** ।६।१।१०७। अ-

---

मातृभ्यां मातृभिरित्यादौ सारूप्येऽपि औजसादिषु वैरूप्यात् । नन्वेवं पयः पयो नयति देव देवेत्यादावतिप्रसङ्गः स्यादेवेति चेत् उच्यते । सहविवक्षायामेव एकशेषः प्रवर्तते । इतरेतरयोगद्वन्द्वस्य विषय इति यावत् । यत्र ह्यनेकस्यार्थस्य मिलितस्य इतरान्वयः स तथाभूतो विषयः । इदं च 'इदितो नुम् धातोः' इति लिङ्गाल्लभ्यते न्यायाच्च । तथाहि । 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति स्थिते श्रूयमाणैकशब्दोपस्थितं सर्वमविशेषादैकरूप्येणैवान्वेतुमर्हति । यद्वा, 'तिष्यपुनर्वस्वोः' इति सूत्राद् द्वन्द्वे इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सति इति व्याख्येयं, न तु द्वन्द्वे कृते सतीति । पन्थानौ पन्थान इत्यदौ 'ऋक्पूरब्धूः–' इत्यादिना समासान्तापत्तेः, करौ करा इत्यादौ 'द्वन्द्वश्च प्राणितूर्य–' इत्यादिना एकवद्भावापत्तेश्चेति दिक् ॥ सूत्रे शेषशब्दः कर्मसाधन इत्याह—**एक एव शिष्यत** इति । असत्येकग्रहणे द्विबह्वोरपि शेषः स्यात् इत्येकग्रहणम् । न चैवमप्येकविभक्ताविलत्र एकग्रहणं व्यर्थमिति शङ्क्यम् । एकस्यामपि विभक्तौ परतः विरूपाणि न दृष्टानीत्यर्थलाभाय तस्यावश्यकत्वात् । किं च खसा च खसारौ चेत्यादौ विभक्तौ परतः पूर्वभागयोर्वैरूप्यदर्शनात्खसार इत्येकशेषस्तत्र न स्यात् । तथा खसरि च खसोश्चेत्यत्र वैरूप्यदर्शनात्खसृष्विति न स्यात् । किं तु कमलौ कमल इत्यादिष्वेव स्यात् । कृते त्वेकग्रहणे नायं दोषः प्रसज्यते । एकविभक्तौ परतः पूर्वत्र वैरूप्यादर्शनात् ॥ यदा तु विभक्तावित्यत्रैकत्वस्य विवक्षितत्वात् मास्त्वत्र एकग्रहणमित्युच्यते, तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्त्विति केचित् ॥ अन्ये त्वाहुः एकग्रहणमेकैकविभक्ताविति अर्थलाभार्थम् । तथा च सकलविभक्तावित्यर्थलाभादेवकारापकर्षणं विनैव सिद्धमिष्टमिति दिक् ॥ एकश्च द्वौ चेत्यादावेकशेषो न भवत्यनभिधानात् । द्वन्द्वोऽप्यत्रानभिधानेनैव वारणीयः, उत्सर्गतः संख्याशब्देष्वेवमेव । विंशत्यादौ त्वेकशेष इष्ट एवेति बोध्यम् ॥—**चुटू** ॥ 'आदिर्ञिटुडवः' इत्यत आदिः—'षः प्रत्ययस्य' इत्यतः प्रत्ययस्येति चानुवर्तते तदाह—**प्रत्ययाद्याविति** । प्रत्ययाद्याविति किम् । चाचाटः ॥ 'तेन वित्तश्चुञ्चुप्चणपौ' इत्यत्र प्रत्ययादौ यकारो लुप्तनिर्दिष्टस्तेन चस्य नेत्संज्ञेति वक्ष्यति ॥—**न विभक्तौ**—॥ 'हलन्त्यम्' इतीत्संज्ञाप्राप्तौ निषेधारम्भः । तु इत्यस्योदाहरणम् । रामात्, पचेरन् । मकारस्य तु रामम्, अद्राक्षम् । विभक्तौ किम् । 'अचो यत्' । 'ऊर्णाया युस्' । 'रुधादिभ्यः श्नम्' । एतेष्वन्त्यस्येत्संज्ञा यथा स्यात् । 'इदमस्थमुः' इत्यत्र मकारपरित्राणार्थमुकारानुबन्धासञ्जनादनित्योऽयमिति ज्ञायते ॥ अन्यथा 'प्राग्दिशो विभक्तिः' इति थमो विभक्तित्वादिदानीमो मकारस्येवानेनैव सूत्रेणेत्त्वनिषेधसिद्धेः किं तेनेति । तेन 'किमोऽत्' क्वेति सिद्धम् ॥—**एकवचनम्**–॥ 'सुः संबुद्धिः' इत्येव सुवचम् । न च सप्तमीबहुवचनेऽतिप्रसङ्गः । संबोधने प्रथमेत्यधिकारादेव तदभावादिति नव्याः ॥ अत्र व्याचख्युः । 'सुः संबुद्धिः' इति वाच्ये एकवचनग्रहणमेकोऽर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थम् । अन्यथा 'सामन्त्रितम्' इति पूर्वसूत्रे तदन्तस्यामन्त्रितसंज्ञा कृतेति प्रक्रमाभेदाय इयमपि संज्ञा तदन्तस्यैव स्यादिति ॥ —**एङ्ह्रस्वात्संबुद्धेः** ॥ यद्यत्र 'हल्ङ्याब्भ्यः–' इत्यतो हलमननुवर्त्य एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परस्याः संबुद्धेर्लोप इति व्याख्यायेत, हलनुवृत्तावप्यङ्गात्परा या संबुद्धिः तस्याः यद्धलिति वा । उभयथापि हे ज्ञानेति न सिध्येत् । लोपात्परत्वात्सोरतोऽमि पूर्वत्वे च कृते एकादेशस्य परादिवद्भावे ह्रस्वान्तात्परत्वाभावात्पूर्वान्तवद्भावे अम एवाभावाद् 'उभयत आश्रयणे तु नान्तादिवद्' इति निषेधादतो व्याचष्टे—**एङन्तादि**त्यादिना **चेद्धलि**त्यन्तेन ॥—**संबुद्ध्याक्षिप्तस्येति** । तदन्तस्यैव संज्ञाऽभ्युपगमे तु संबुद्ध्याऽङ्गमाक्षेप्तुं न शक्यते इति बोध्यम् ॥—**ह्रस्वात्परत्वं नास्तीति** । तथा च सूत्रे एङ्ग्रहणमावश्यकमिति भावः ॥ किं च 'इमां किमाचामयसे न चक्षुषी' इति श्रीहर्षप्रयोगे सेहति पृथक् पदं सलक्ष्मीके हे दमयन्तीत्यर्थ इति 'निगरणचलनार्थेभ्यश्च' इति सूत्रे मनोरमायां व्युत्पादितम् । ततश्च तत्रापि संबु-

---

१ नोत्तरानिति—अनन्तरापेक्षयोत्तरान्व्यवहितानित्यर्थः । २ कुलेति—नच संबुद्धिसंज्ञायाः सकारमात्रनिष्ठतयाऽस्विधित्वेनमिः संबुद्धित्वाभावे कथं मस्य संबुद्ध्यवयवत्वमिति वाच्यम्, सुप्संज्ञाया उकारविशिष्टे सत्त्वेन तदुपस्थाप्यजायमानैकवचनसंज्ञाया विशिष्टे सत्त्वेन संबुद्धिसंज्ञाया अप्युकारविशिष्ट एव सत्त्वात् । ३ पूर्व इति—ननु पूर्वे सवर्ण इत्यनुवृत्त्यैव सिद्धे पूर्वग्रहणं व्यर्थमिति वाच्यम्, न, रामं कुमारीमित्यादावान्तरतम्यात् द्विमात्रापत्तेः ।

पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः। पृषत् उदरम् पृषोदरम्। तलोपः। वारिवाहको बलाहकः। पूर्व्वपदस्य वः उत्तरपदादेश्च लत्वम्।

भवेद्वर्णागमात् हंसः (२१) सिंहो वर्णविपर्य्ययात्।

गढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ॥ १ ॥

दिक्शब्देभ्यस्तीरस्य तारभावो वा ग०। दक्षिणतारम्-दक्षिणतीरम्। उत्तरतारम्—उत्तरतीरम्। दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेष्टुत्वञ्च ग०। दुःखेन दाश्यते दूडाशः। दुःखेन नाश्यते दूणाशः। दुःखेन दभ्यते दूडभः। खल्तिभ्यः। दन्भेर्नलोपो निपात्यते। दुष्टं ध्यायतीति। दूढ्यः। आतश्चेति(उ३१।८) कः। ब्रुवन्तोऽस्यां सीदन्तीति बृषी। ब्रुवच्छब्दस्य बृ आदेशः। सदेरधिकरणे डट्। आकृतिगणोऽयम्।

---

(२१) हन्तेः पचाद्यचि सुगागमे हंसइति हिंसेस्तु पचाद्यचि हकारसकारयोः स्थानव्यत्ययात् सिंहइति गढोत्मेत्यत्र आकारविकृत्या उकारादेशः पृषोदरमित्यत्र तकारवर्णलोपः इत्येवं रीत्या सर्व्वत्र बोध्यम्। एतन्मूलकमेव।

लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि।

समो वा हिततयोर्मांसस्य पचि युड्घञोरिति।

अन्तइति शेषः कृत्यप्रत्ययान्ते उत्तरपदे अवश्यम्शब्दस्यान्तोमकारः लुम्पेत्। अवश्यसेव्यः तथा कामशब्दमनः शब्दयोः परतः तुम्शब्दस्यान्तः। गन्तुकामः गन्तुमनाः तुमिति षष्ठ्यर्थे प्रथमा। हिततशब्दयोः परतः समोऽन्तो मकारो लुम्पेत्। सहितः-संहितः-सततः सन्ततः। युड्घञ्परपचि धातौ परे मांसशब्दस्यान्तोकारो लुम्पेत्। मांसपचनः-मांस्पचनः मांसपाकः—मांस्पाकः इत्यादि।

**संहितायाम् । ६ । ३ । ११४ ।**

अधिकारोऽयम् ।

**कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य । ६ । ३ । ११५ ।**

कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । लक्षणस्य किम् शोभनकर्णः । अविष्टादीनाङ्किम् विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ।

**नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । ६ । ३ । ११६ ।**

क्विबन्तेषु परेषु पूर्वपदस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्म्माविित् । नीरुक् । अभीरुक् । ऋतीषट् । परीतत् । क्वाविति किम् परिणहनम् । विभाषा पुरुष(४७६५०) इत्यतो मण्डूकप्लुत्या विभाषाऽनुवर्त्तते । सा च व्यवस्थिता । तेन गतिकारकयोरेव नेह । पटुरुक् । तिग्मरुक् ।

**वनगिर्य्योस्संज्ञायाङ्कोटर (१२) किंशुलुकादो (१३) नाम् । ६ । ३ । ११७ ।**

(१२) कोटर मिश्रक सिध्रक पुरग शारिक । कोटरादिः ।

(१३) किंशुलुक शाव नड अञ्जन भञ्जन लोहित कुक्कुट । किंशुलुकादिः ।

कोटरादीनां वने परे किंशुलुकादीनाङ्गिरौ परे च दीर्घः स्यात् संज्ञायाम्।

वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः। ८। ४। ४।

वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्य। इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः। तेषां कृतदीर्घाणां णत्वविधौ निर्द्देशो नियमार्थः अग्रेशब्दस्य तु विध्यर्थः। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। सारिकावणम्। कोटरावणम्। एभ्य एवेति किम् असिपत्रवनम्। वनस्याग्रे अग्रेवणम्। राजदन्तादिषु(४११ पृ०)निपातनात्सप्तम्या अलुक् प्रातिपदिकार्थमात्रे प्रथमा। किंशुलुकागिरिः।

वले। ६। ३। ११८।

वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम्। कृषीवलः।

मतौ बह्वचोऽनजिरादौ (३४) नाम्। ६। ३। ११९।

अमरावती। अनजिरादीनाङ्किम् अजिरवती। बह्वचः किम् व्रीहिमती। संज्ञायामित्येव। नेह वलयवती।

शरादीनाञ्च (३५)। ६। ३। १२०।

(३४) अजिर खदिर पुलिन हंस कारण्डव चक्रवाक। अजिरादिः।

(३५) शर वंश धूम अहि कपि मणि मुनि शुचि हनु। शरादिः।

शरावती।

**इको वहेऽपीलोः। ६। ३। १२१।**

इगन्तस्य दीर्घः स्याद्वहे। ऋषीवहम्। कपीवहम्। इकः किम् पिण्डवहम्। अपीलोः किम् पीलुवहम्। अपील्वादीनामिति वाच्यम्*। दारुवहम्।

**उपसर्गस्य घञ्यमनुष्ये बहुलम्।६।३।१२२।**

उपसर्गस्य बहुलन्दीर्घः स्याद्घञन्ते परे नतु मनुष्ये। परीपाकः—परिपाकः। अमनुष्ये किम्। निषादः।

**इकः काशे। ६। ३। १२३।**

इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे। वीकाशः नीकाशः। इकः किम् प्रकाशः।

**अष्टनः संज्ञायाम्। ६। ३। १२५।**

उत्तरपदे दीर्घः। अष्टापदम्। संज्ञायाङ्किम्। अष्टपुत्रः।

**चितेः कपि। ६। ३। १२७।**

एकचितीकः।

**नरे संज्ञायाम्। ६। ३। १२९।**

विश्वानरः।

**मित्रे चर्षौ। ६। ३। १३०।**

विश्वामित्रः। ऋषौ किम्। विश्वमित्रो माणवकः। शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः॰। श्वादन्तः। इत्यादि।

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्यो ऽसंज्ञायामपि। ८। ४। ५।**

एभ्यो वनस्य णत्वं स्यात्। प्रवणम्। कार्ष्यवणम्। इह णात्वरत्वात् णत्वम्।

**विभाषौषधिवनस्पतिभ्यः। ८। ४। ६।**

एभ्यो वनस्य णत्वं वा स्यात्। दूर्व्वावणम्—दूर्व्वावनम्। शिरीषवणम्—शिरीषवनम्(३६)। द्व्यक्षरत्र्यक्षरेभ्य एव॰। नेह—देवदारुवनम्। इरिकादिभ्यः (३७) प्रतिषेधो वक्तव्यः॰। इरिकावनम्। मिरिकावनम।

**वाहनमाहितात्। ८। ४। ८।**

आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात्। इक्षुवाहणम्। आहितात्किम्। इन्द्रवाहनम्। इन्द्रस्वामिकं वाहनमित्यर्थः। वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात्।

(३६) वनस्पतिशब्दः इह वनमात्रवाची न तु पारिभाषिकपुष्पशून्यफलवद्वृक्षमात्रपरस्तदुदाहरणेनाह शिरीषवनमिति।

(३७) ओषधित्वात् प्राप्तौ प्रतिषेधः। इरिका मिरिका तिमिरा। इरिकादिराकृतिगणः।

**पानं देशे। ८।४।९।**

पूर्वपदस्थान्निमित्तात्परस्य पानस्य णत्वं स्याद्देशे गम्ये। क्षीरम्पानं येषाम् ते क्षीरपाणाः उशीनराः (३८)। सुरापाणाः प्राच्यः। पीयते इति पानम्। कर्म्मणि ल्युट्।

**वा भावकरणयोः। ८।४।१०।**

पानस्येत्येव। क्षीरपाणम्—क्षीरपानम्। गिरिनद्यादीनां(३९) वा॰। गिरिणदी—गिरिनदी। चक्रनितम्बा—चक्रणितम्बा।

**प्रातिपदिकान्तनुम्विभक्तिषु च। ८।४।११।**

पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात्। प्रातिपदिकान्ते। माषवापिणौ। नुमि। व्रीहिवापाणि। विभक्तौ। माषवापेण। पक्षे माषवापिनावित्यादि। उत्तरपदम् यत्प्रातिपदिकन्तदन्तस्यैव णत्वम्। नेह। गर्गाणाम् भगिनी गर्गभगिनी। अतएव(४०)नुम्ग्रहणं कृतम्। अङ्गस्य नुम्विधानात्तद्भक्तो हि नुम् न तूत्तरपदस्य। किञ्च (४१) प्रहिण्वन्नित्यादौ हि हेर्नुमो णत्वार्थमपि नुम्ग्रहणम्।

---

(३८) उशीनरशब्दो देशवाची तद्वासिषूपचारात् वर्त्तते।

(३९) गिरिनदी गिरिनख गिरिनड्ड गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्य्यमान माषोन आर्गयन। आकृतिगणोऽयम् गिरिनद्यादिः।

(४०) अतएवेति पूर्वपदाच्छिन्नेनोत्तरपदेन प्रातिपदिकस्य विशेषणादेवेत्यर्थः। उत्तरपदशब्दस्य समासचरमावयवे रूढ़त्वात् माषवापिणावित्यादावुत्तरस्य पदत्वमिति भावः।

(४१) पूर्वपदाच्छिन्नसमासरूपप्रातिपदिकान्तस्येति व्याख्याय भाष्ये नुम्-

प्रेन्वन(४२) मित्यादौ तु क्षुम्नादि(१८३४)त्वान्न। युवादेर्न्न*
रम्ययूना। परिपक्वानि। एकाजुत्तरपदे णः (१८४०) (४३)
नित्यमित्युक्तम्। वृत्रहणौ। हरिम्मानयतीति या सा हरि-
माणी। नुमि। क्षीरपाणि। विभक्तौ। क्षीरपेण। रम्यविणा(४४)

## कुमति (४५) च। ८। ४। १३।

कवर्गवत्युत्तरपदे प्राग्वत्। हरिकामिणौ। हरिकामाणि।
हरिकामेण।

## पदव्यवायेऽपि। ८। ४। ३८।

पदेन व्यवधानेऽपि (४६) णत्वं न स्यात्। माषकुम्भवापेन।

* ग्रहणं प्रत्याख्यातमित्यरुचेराह क्विभ्विति णत्वार्थमपीति णत्वार्थमे-
वेत्यर्थः।

(४२) प्रेन्वनमित्यादौ त्विति प्रत्ययसम्बन्धिनो नस्यैव धातुमध्यवर्त्तिनुमोऽपि-
नस्य न णत्वमित्यर्थः।

(४३) अनेकाजित्युत्तरपदार्थमिदम्। अत्र कार्गवदुत्तरपदान्तिमसमासस्य
विभक्त्यादिप्रकृतेश्च प्रत्यासत्त्यैकत्वाश्रयणेऽपि चित्वगवीणामित्या-
दौ णत्वं भवत्येव विभक्तिप्रकृतेः समासत्वात्।

(४४) रम्यविणेत्यत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य विशब्दस्य पदत्वेऽपि पद-
व्यवाये इति निषेधस्य न प्रसङ्गः तस्य अतद्धित इति (४८४पृ०) वार्त्ति-
कैकवाक्यतया णत्वाश्रयातिरिक्ततद्धितभिन्नपरेण पदेन व्यवधाने न
भवतीत्यर्थकत्वेनात्र तथात्वाभावात्।

(४५) कादावित्यर्थकत्वापत्तेः कावित्यनुक्त्वा कुमतीत्युक्तम्।

(४६) निमित्तनिमित्तिनोर्मध्ये पदेन व्यवधाने इत्यर्थः। व्यवधायकपदं च
णत्वाश्रयातिरिक्तभिन्नपरत्वेन विशेषणीयमिति भावः।

**प्रतिष्कशश्च कशेः । ६ । १ । १५२ ।**

कश गतिशासनयोरित्यस्य प्रतिपूर्व्वस्य पचाद्यचि सुट् निपात्यते षत्वञ्च । सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते । कशेः किम् प्रतिगतः कशां प्रतिकशोऽश्वः । यद्यपि कशेरेव कशा । तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन धात्वन्तरोपसर्गान्न ।

**प्रस्कण्वहरिश्चन्द्रावृषी । ६ । १ । १५३ ।**

हरिश्चन्द्रग्रहणममन्त्रार्थम् (५२) । ऋषोइति किम् प्रकण्वो देशः । हरिचन्द्रोमाणवकः ।

**मस्करमस्करिणौ वेणुपरिव्राजकयोः । ६ । १ । १५४ ।**

मकरशब्दोऽव्युत्पन्नः तस्य सुडिनिश्च निपात्यते । वेणिवति किम् मकरो ग्राहः । मकरी समुद्रः ।

**कास्तीराजस्तुन्दे नगरे । ६ । १ । १५५ ।**

ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम् । अजस्येव तुन्दमस्येति अजस्तुन्दन्नाम नगरम् । नगरे किम् कातीरम् । अजतुन्दम् ।

(५२) अमन्त्रार्थमिति मन्त्रे तु ह्रस्वाच्चन्द्रोत्तरपदे मन्त्र । (६५।१।१५०) इत्यनेनैव सूत्रेण संभवादितिभावः । हरिश्चन्द्रो राजर्षिः ।

**कारस्करो वृक्षः। ६। १। १५६।**

कारङ्करोतीति। कारस्करो वृक्षः। अन्यत्र कारकरः। केचित्तु कस्कादिष्विदं (६८४०) पठन्ति न सूत्रेषु।

**पारस्करप्रभृतीनि च संज्ञायाम्।६।१।१५७।**

एतानि (५३) ससुट्कानि निपात्यन्ते नाम्नि। पारस्करः। किष्किन्ध्या। तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च *। तात्पर्य्यं चत्वेन दकारो बोध्यः। तद्बृहतोर्दकारतकारौ लुप्येते करपत्योस्तु सुट् चौरदेवतयोरिति समुदायोपाधिः। तस्करः। बृहस्पतिः (५४)। प्रायस्य चित्तिचित्तयोः *। प्रायश्चित्तिः। प्रायश्चित्तम् (५५)। वनस्पतिरित्यादि। आकृतिगणोऽयम्।

इति समासाश्रयविधयः।

(५३) पारं करोतीति कृञो हेतुताच्छील्येत्यादिना (३।२।२०) टः। पारस्कारो देशो नगरं वा। सोऽभिजनोऽस्य अण् पारस्करो मुनिभेदः किष्कु प्रमाणा गुहा किष्किन्ध्या तस्करश्चौरः बृहस्पतिः सुराचार्य्यः। वनस्पतिर्वृक्षः। पारस्करादिराकृतिगणोऽयम्।

(५४) बृहत्या वाचः पतिः बृहस्पतिः वाग्वै बृहती तस्या एष पतिरिति श्रुतेः

(५५) प्राय इत्यकारान्तपुंलिङ्गस्तपोवाची "प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते" इति स्मृतेः।

इति समाप्तं समासाश्रयप्रकरणम्।

**समर्थानां प्रथमाद्वा (१)।४।१।८२।**

इदं पदत्रयं(२) मधिक्रियते प्राग्दिश इति(६८०पृ०)यावत्। सामर्थ्यम् परिनिष्ठितत्वम् क्रतसन्धिकार्य्यत्वमिति यावत्।

**प्राग्दीव्यतोऽण्।४।१।८३।**

तेन (३) दीव्यतीत्यतः(६०४पृ०)प्रागणधिक्रियते।

**अश्वपत्यादिभ्य (४) श्च।४।१।८४।**

एभ्योऽण् स्यात्। प्राग्दीव्यतीयेष्वर्थेषु (५) वक्ष्यमाणस्य ण्यस्यापवादः।

(१) अवसरसङ्गत्या तद्धितप्रकरणमारभते समर्थानामिति समर्थानां मध्ये सूत्रे प्रथमोपात्तात् प्रत्ययो वेदितव्यः स च वा। प्रथमत्वञ्च तत्तत् सूत्रे प्रथमोच्चारितशब्दप्रतिपाद्यत्वम्।

(२) पदत्रयमिति प्रत्येकं पदानां स्वरितत्वात्। वेत्यस्य तु प्राग्दिश इत्युत्तरमपि सम्बन्धः अवधिप्रदर्शनं तु विशिष्टस्य पदत्रिकस्येति बोध्यम्। तद्धितानामेकार्थीभाव एव प्रवृत्तिः समर्थः पदविधि(३१७पृ०)रित्युक्तेरित्युक्तमतः समर्थानामित्यस्येहार्थान्तरं तथाच समर्थशब्दः शक्तपर्य्यायः शक्तत्वञ्चार्थप्रतिपादकत्वं तच्च परिनिष्ठितस्यैवेति तदाह परिनिष्ठितत्वमिति।

(३) प्राग्दीव्यत इत्यत्र तेन दीव्यतीतिसूत्रपठितदीव्यतिशब्दघटकदीव्यच्छब्दो ग्राह्य इत्याह तेनेति।

(४) अश्वपति ज्ञानपति शतपति धनपति गणपति स्थानपति यज्ञपति राष्ट्रपति कुलपति गृहपति धान्यपति धन्वपति बन्धुपति धर्म्मपति सभापति प्राणपति क्षेत्रपति। अश्वपत्यादिः।

(५) प्राग्दीव्यतीति प्रकरणे ये ये प्रत्यया यस्मिन् यस्मिन्नर्थे भवन्ति तेषु तेष्वर्थेष्वित्यर्थः।

**कोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात्। रामम्। रामौ। लशक्वतद्धिते।१।३।८। तद्धितवर्जप्रत्ययाद्या लश-कवर्गा इतः स्युः। इति शसः शस्येत्संज्ञा। तस्माच्छसो नः पुंसि।६।१।१०३। पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः स्यात्पुंसि। अट्कुप्वाङ्नुम्व्यवायेऽपि।८।४।२। अट्कवर्गपवर्गाङ्नुम्एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे। पदव्यवायेऽपीति निषेधं बाधितुमाङ्ग्रहणम्। नुम्ग्रह-णमनुस्वारोपलक्षणार्थम्। तच्चाकर्तुं शक्यम्। अयोगवाहानामट्सूपदेशस्योक्तत्वात्। इति णत्वे प्राप्ते। पदान्तस्य।८।४।३७। पदान्तस्य नस्य णत्वं न स्यात्। रामान्। यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्।१।४।१३।**

द्धिलोपार्थमेङ्ग्रहणमावश्यकमेव॥ स्यादेतत्। एङ्ग्रहणस्य सेइत्यत्र सावकाशतया हे हरे इत्यादौ संबुद्धिलोपो न स्यात् संनिपा-तपरिभाषाविरोधात्। तथा ह्रस्वग्रहणस्यापि हे रामेत्यत्र सावकाशत्वाद् हे गौरि इत्यादौ परत्वाद्धल्ङ्यादिलोपं बाधित्वा 'अम्बा-र्थनद्योः' इति ह्रस्वे कृते संबुद्धिलोपो न स्यात्। लक्ष्मीशब्दे तु हल्ङ्यादिलोपस्याप्यभावाद् हे लक्ष्मि इत्यत्र सुतरां संबुद्धिलोपो न स्यात्। सत्यम्। 'गुणात्संबुद्धेः' इति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषां बाधित्वापि संबुद्धिलोपः प्रवर्तत इति दिक्॥—**अमि पूर्वः**॥ प्रथमयोरिति पूर्वसवर्णदीर्घे प्राप्तेऽयमारम्भः॥ 'इको यणचि' इत्यतोऽचीत्यनुवर्तते तदाह—**अम्य-चीति**। अमि योऽच् तस्मिन् अमोऽवयवे अचीति यावत्। तेन मकारसहितस्य पूर्वरूपं नेति स्थितं मनोरमायाम्। एवम् 'अक्षादूहिन्याम्–' इत्यादावपि ऊहिन्यां योऽच् तस्मिन् इत्यादि बोध्यम्। 'पदास्वैरिबाह्या–' इत्यादिनिर्देशाच्चास्मिन् व्याख्याने लिङ्गमित्यपि स्थितम्॥ कथं तर्हि काशिकादावमि परत इत्येवोक्तं, न त्वम्यचीति चेदत्राहुः। 'तस्मादित्युत्तर-स्य' 'आदेः परस्य' इत्यादेरेवादेश इति निर्णीते 'एकः पूर्वपरयोः' इत्यादेशः पूर्वपरयोरेव भविष्यतीत्याशयेन नोक्तमिति॥ —**लशक्व**—॥ 'आदिर्ञिटुडवः' इत्यत आदिरनुवर्तते 'षः प्रत्ययस्य' इत्यतः प्रत्ययस्येति, 'अतद्धिते' इति पर्युदासाद्वा लभ्यत इत्याह—**प्रत्ययाद्या** इति। लश्च शश्च कुश्चेति समाहारद्वन्द्वे लशकिति नपुंसकम्। तदितरेतरयोगद्वन्द्वेन विवृ-णोति—**लशकवर्गा** इति। अतद्धित इति किम्। 'प्राणिस्थादातः' इति लच्। चूडालः। लोमादिभ्यः शः। लोमशः॥ अत्र प्रयोजनाभावादेव नेत्संज्ञेति नेदं प्रत्युदाहरणमिति नव्याः॥ 'कर्णललाटाद्–' इति भवार्थे कन्। कर्णिका। सत्यां ही-त्संज्ञायां 'किति च' इति वृद्धिः स्यात्॥ प्रत्ययाद्या इति किम्। 'जल्पभिक्ष–' इति वृङः षाकन्। वराकः। अत्र 'क्ङिति च' इति गुणो न स्यात्॥—**तस्माच्छसो**—॥ तच्छब्देन संनिहितः पूर्वसवर्णदीर्घः परामृश्यते। दीर्घमात्रपरामर्शे तु एतान् गाः पश्येत्यत्रापि नत्वप्रसङ्गात्॥ शस इत्यवयवषष्ठी स चावयवः परत्वेन विशेष्यते पूर्वसवर्णदीर्घात् परस्य शसो-ऽवयवस्येति तदेतदाह—**परो यः शसः सकार** इति। परो यः शसिति न व्याख्यातम्। कृते पूर्वसवर्णदीर्घे ततः परस्य शसोऽसंभवात्॥—**अट्कुप्वाङ्**—॥ 'रषाभ्याम्–' इति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदम्। तत्र सर्वैर्व्यवायोऽसंभवी, एकैकमात्रव्यवाय इत्यपि नार्थः, क्षुभ्नादिषु क्षुभ्नपाठसामर्थ्यात् 'सरूपाणाम्–' इत्यादिनिर्देशाच्चेत्यभि-प्रेत्याह—**व्यस्तैर्यथासंभवमिति**॥ नन्वेवं कृत्स्नं कार्त्स्न्यमित्यादावडादिव्यवधानाभावाण्णत्वाभावेऽप्यादर्शेनेत्यादावड्-व्यवधानादतिप्रसङ्गः। न च अडादिभिरेव व्यवधान इति नियमः, अप्राप्ते विधिरयमित्युक्तत्वात्। सत्यम्। योगविभागो-ऽत्र बोध्यः। 'व्यवायेऽपि' इत्येको योगो विध्यर्थः। 'अट्कुप्वाङ्नुम्' इत्यन्यो नियमार्थः। छान्दसो भिसो लुक्॥ अत्र योगविभागं विनापि निर्वाहः सुकर इति तु नव्याः॥ तथाहि। 'अट्कुप्वाङ्–' इति सूत्रे 'रषाभ्याम्' इत्यनुवर्तते। पञ्चमी-श्रुत्या 'तस्मादित्युत्तरस्य' इति परिभाषोपतिष्ठते। उपस्थितापि सा वचनप्रामाण्यादडादिव्यवाये न प्रवर्तते। तदन्यव्यवा-ये तु प्रवर्तत एव, अत एव—येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादेकवर्णव्यवहितस्यैव इको गुणो न तु भि-नत्तीत्यादावनेकव्यवहितस्येकः—इति 'पुगन्तलघूपधस्य–' इति सूत्रे वक्ष्यति॥ एवं च यत्राडादिभिरेव व्यवधानं रामे-णेत्यादौ तत्र भवत्येव णत्वम्। यत्र त्वडादिभिन्नेन व्यवधानमादर्शेनेत्यादौ तत्र न भवति। 'तस्माद्–' इति परिभाषाया जागरूकत्वात्॥—**निषेधं बाधितुमिति**। तेन पर्याणद्धमित्यत्र 'उपसर्गादसमासेऽपि–' इति णत्वं सिध्यतीति भावः॥ —**उपलक्षणार्थमिति**। नुम्स्थानिकस्य स्वाभाविकस्य वानुस्वारमात्रस्योपलक्षणार्थं नुम्ग्रहणमित्यर्थः। तेन 'बृहि वृद्धौ' इदित्वान्नुम् तस्यानुस्वारः। 'तृंह हिंसायां' स्वाभाविकोऽत्रानुस्वारः। बृंहणं तृंहणम् उभयत्रापि णत्वं सिद्धम्॥ —**अयोगवाहानामिति**। अविद्यमानो योगः प्रत्याहारेषु संबन्धो येषां ते अयोगाः अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारसंबन्धशून्या इत्यर्थः। वाहयन्ति निर्वाहयन्ति प्रयोगमिति वाहाः। अयोगाश्च ते वाहाश्च अयोगवाहाः। अनुप-दिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः॥—**अट्ष्विति**। निष्कर्षस्त्वकारोपरीति, तेन पयःक्षिप्रावाविणः परस्येति षत्वं न भवति। अत एवोक्तं प्राक्—अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि—इति॥—**णत्वं न स्यादिति**। 'न भाभूपूकमिगमि–' इत्यतो नेत्यनुवर्तत इति भावः॥—**यस्मात्**—॥—**तदादीति**। तत्प्रकृति-

१ पदान्तस्येति—अत्र सूत्रे अनन्तरस्येति व्यवस्थापकन्यायाप्रवृत्तिर्बोध्या, अपदान्तस्येत्यनुवर्त्यैतस्य भाष्ये प्रत्याख्यानात्।
२ प्रत्ययविधिरिति—अत्र प्रत्ययग्रहणपरिभाषया न तदन्तग्रहणम्। प्रत्ययग्रहणे चापञ्चम्या इति तन्निषेधात्।

**तद्धितेष्वचामादेः। ७। २। ११७।**

ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात्।

**किति च। ७। २। ११८।**

किति च तद्धिते तथा। अश्वपतेरपत्यादि आश्वपतम्। गाणपतम्। गाणपत्यो(६) मन्त्र इति तु प्रामादिकमेव।

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः। ४। १। ८५।**

दित्यादिभ्यः पत्युत्तरपदाच्च(७)प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात्। अणोऽपवादः। दैत्यः (८)। अदितेरादित्यस्य वा आदित्यः। प्राजापत्यः। यमाच्चेति काशिकायाम्। याम्यः। पृथिव्या ञाञौ॰। पार्थिवा पार्थिवी। देवाद्यञञौ॰। दैव्यम् दैवम्। बहिषष्टिलोपो (९) यञ्च॰। बाह्यः। ईकक् च *। बाहीकः। स्थाम्नोऽकारः॰। अश्वत्थामः (१०)। पृषोदरा-

६) गाणपत्य इति देवतार्थकाण्णान्ताच्चतुर्व्वर्णादेराकृतिगणत्वेन ष्यञि तु तथा भवत्येवेति। मनो०

(७) पत्युत्तरपदाच्चेत्यनेन बहुच्पूर्ब्बकपत्यन्तान्न भवति अयथा पत्यन्तादित्ये-वोक्तं स्यात् तेन बहुपतिशब्दान्नेति। मनो०

(८) दैत्य इति दितिशब्दात् कृदिकारादक्तिन इति(२३०पृ०)ङीपि कृते स्त्री-भ्योढक्(५०६पृ०)दैतेय इति सिद्धम्।

(९) बहिषष्टिलोपवचनमव्ययानां भमात्र इत्यस्यानित्यताज्ञापनार्थं तेनारातीय इत्यादौ न टिलोपः।

(१०) अश्वस्येव स्थाम बलं यस्येति बहुव्रीहौ पृषोदरादित्वात् सस्य तः।

**यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात्। अत्रामि भविष्यामीत्यादौ विकरणविशिष्टस्याप्यङ्गसंज्ञार्थं तदादिग्रहणम्। विधिरिति किम्। स्त्री इयती। प्रत्यये किम्। प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत्। ⧗ अङ्गस्य ।६।४।१। इत्यधिकृत्य। ⧗ टाङसिङसामिनात्स्याः ।७।१।१२। अकारान्तादङ्गाट्टादीनां क्रमादिनादय आदेशाः स्युः। णत्वम्। रामेण। ⧗ सुपि च ।७।३।१०२। यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात्। रामाभ्याम्। ⧗ अतो भिस ऐस् ।७।१।९। अकारान्तादङ्गाद्भिस ऐस् स्यात्। अनेकाल्त्वात्सर्वादेशः। रामैः। ⧗ ङेर्यः ।७।१।१३। अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात्। रामाय। इह स्थानिवद्भावेन यादेशस्य सुप्त्वात्सुपि चेति दीर्घः। संनिपात-**

---

रूपमादिर्यस्य शब्दस्वरूपस्येति बहुव्रीहिः ॥ ननु 'यस्मात्प्रत्ययविधिस्तदङ्गम्' इत्येवास्तु किमादिग्रहणेनेत्यत आह—**भवामीत्यादि**। प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वादङ्गत्वं, तेन कर्ता कारक इत्याद्यपि सिध्यतीति भावः ॥—**अङ्गसंज्ञार्थमिति**। अन्यथा 'अतो दीर्घो यञि' इति दीर्घो न स्यादिति भावः । न चारम्भसामर्थ्यादेव दीर्घः स्यादिति वाच्यम्। 'पय गतौ'। 'वय गतौ'। आभ्यां यङ्लुकि पापामि पापावः पापाम इत्यादौ चरितार्थत्वात् ॥—**स्त्री इयतीति**। इदमः परिमाणे वतुप्। 'किमिदंभ्यां वो घः' इति घस्तस्य इयादेशः। 'इदंकिमोः–' इति ईश् 'यस्येति च' इति ईशो लोपः। 'उगितश्च' इति ङीप्। सत्यां हि संज्ञायां स्त्रीशब्दस्य 'यस्येति च' इति लोपः स्यात्। न चेशो लोपस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वान्नातिप्रसङ्ग इति वाच्यम्। 'प्राग्भादसिद्धत्वम्' इति पक्षाभ्युपगमादनित्यत्वाद्वेति व्याख्यातारः ॥ नन्वास्तु स्त्री अं पश्यतीत्यत्र स्त्रीशब्दस्य 'स्त्रियाः' इति इयङ् स्यादकारादमि कृते 'अमि पूर्वः' इत्येकादेशस्य परादिवद्भावेन प्रत्ययत्वात्। अततेर्डप्रत्यये टिलोपे च सत्यकारस्य स्वत एव प्रत्ययत्वाच्च। विधिग्रहणे कृते तु नायं दोषः प्रसज्यते। अम्प्रत्ययस्याकारादप्रत्ययस्य चाततेर्विहितत्वेऽपि स्त्रीशब्दादविधानात्॥ स्यादेतत्। वतुपोऽम्प्रत्ययस्य च स्त्रीशब्दादविधानेऽपि सोर्विधिरस्त्येवेति तद्दोषतादवस्थ्यमिति चेन्मैवम्। संनिधानबलेन यस्मात् यः प्रत्ययो विहितः तस्मिन् तदङ्गमिति व्याख्यानात् ॥—**प्रत्यये किमिति**। तदादिरूपं कियदित्यपेक्षायां यस्मात्प्रत्यय इति प्रत्ययस्य श्रुतत्वात्प्रत्ययपर्यन्तमेवाङ्गं भविष्यतीति मत्वा प्रश्नः। प्रत्ययस्य श्रुतत्वेऽपि प्रत्ययविशिष्टं ततोऽप्यधिकं वा निरवधिकमङ्गं स्यात् तदादि इत्यस्यार्थनिर्णये प्रत्ययश्रवणस्योपक्षयादित्याशयेन व्याचष्टे—**प्रत्ययविशिष्टस्येत्यादिना**। प्रत्ययविशिष्टस्येति किम्। वव्रश्च। अत्र विशिष्टस्याङ्गसंज्ञायाम् 'उरत्' इत्यदादेशस्य परनिमित्तत्वालाभात् 'अचः परस्मिन्–' इति स्थानिवत्त्वाप्रवृत्त्या 'न संप्रसारणे–' इति निषेधाभावादभ्यासस्य पुनरपि संप्रसारणं प्रवर्तेत। तथा भ्वर्थं श्र्यर्थमित्यत्र 'अचि श्नुधातुभ्रुवाम्' इति इयङुवङौ स्यातामुक्तरीत्या अचीत्यनेनाजादौ प्रत्यय इत्यलाभात् ॥ ततोऽधिकस्याङ्गसंज्ञायां तु 'देवदत्त ओदनमपाक्षीद्' इत्यत्र देवदत्तशब्दात्प्रागडागमः स्याद्देवदत्तशब्दात्सुप्रत्ययस्य विहितत्वेन लुङः प्राग्वर्तिसमुदायस्याङ्गत्वात्। द्वितीयप्रत्ययग्रहणे कृते तु न कोऽपि दोषः प्रसज्यते ॥ अन्ये तु यस्माल्लुङादिविधिः प्रत्यासत्त्या तस्यैवाङ्गस्याडागमः स्यादिति ततोऽप्यधिकस्येत्येतदनास्थयोक्तं किं तु एतस्यापि विशिष्टस्याङ्गत्वे यद्दूषणं तदेवेत्याहुः ॥—**टाङसि**—॥ 'अतो भिस ऐस्' इत्यस्मादनुवृत्तेन अत इत्यनेन सामानाधिकरण्येन विशेषणात् 'अङ्गस्य' इत्यधिकृतं षष्ठ्यन्तमपि पञ्चम्या विपरिणम्यते विशेषणेन तदन्तविधिस्तदाह—**अकारान्तादङ्गादिति** ॥—**सुपि च** । यञीत्यनुवर्तते । अल्ग्रहणात्तदादिविधिरित्याह—**यञादौ सुपीति** ॥ यञि किम्। रामः ॥ अत इति किम्। अग्निभ्याम् ॥—**अतो भिस ऐस्** ॥ ननु एस् इत्येवास्तु। न च 'अतो गुणे' इति पररूपापत्तिः। एकारोच्चारणवैयर्थ्यापत्तेः। अन्यथा इसमेव विदध्याद् इति चेत्सत्यम्। एदैतोर्द्विमात्रत्वाविशेषेण गौरवाभावात्। 'बहुलं छन्दसि' इत्यत्र अनतोऽपि भवति। नद्यैरिति काशिकोदाहृतप्रयोगस्य ऐस्करणं विना अनिर्वाहाच्च ॥ केचित्तु ऐस्करणं निर्जरसैरित्यैकारश्रवणार्थमिति व्याचख्युः तच्चिन्त्यम्। संनिपातपरिभाषया जरसादेशाप्रवृत्तेर्निर्जरैरित्येव भाष्ये सिद्धान्तितत्वात् ॥—**ङेर्यः** ॥ ङेरिति चतुर्थ्येकवचनस्य ग्रहणं, न सप्तम्येकवचनस्य, व्याख्यानात्। अत एव 'ङेराम्' इत्यत्रास्याग्रहणम्, 'समानाधिकरणे' 'स्त्रियाम्' इत्यादिनिर्देशाच्च ॥—**स्थानिवद्भावेनेति** ॥ आदेशालाश्रयविधौ स्थानिवत्त्वनिषेधाभावादिति भावः ॥—**सुपि चेति दीर्घ इति**। न च परत्वाद् 'अकृत्सार्वधातुकयोः' इति दीर्घोऽस्त्विति शङ्क्यम्। तत्र 'अयङ् यि क्ङिति' इत्यतः क्ङितीत्यनुवर्तनात्। अन्यथा उरुयेत्यत्रापि दीर्घः स्यात्। उरुशब्दात्परस्य टाइत्यस्य 'सुपां सुलुक्' इति यादेशः, एतच्च काशिकायां स्पष्टम् ॥ यद्यपि ङेर्यादेशस्य ङित्त्वमस्ति 'न ल्यपि' इति ज्ञापकेन अनुबन्धकार्येष्वल्विधावपि स्थानिवत्त्वाभ्युपगमात्, तथापि शानचः शित्त्वेन लित्वेन क्वचिदनुबन्धकार्येषु स्थानिवत्त्वानभ्युपगमादादेशे ङित्त्वं नेत्यभ्युपेत्येदं, विरोधाभावात्परत्वमत्राकिंचित्करमित्यनादरेण वा 'अकृत्सार्वधातुक–' इति दीर्घो नोक्त इति स्थितस्य गतिमाहुः ॥ ननु 'ज्यादादीयसः' इति ज्यशब्दात्परस्य ईयस आकारविधानमङ्गवृत्तपरिभाषाया लिङ्गम्। अन्यथा 'बहोर्लोपः–' इत्यतो लोप इत्यनुवर्त्य लोपमेव विदध्यादाकारं तु न विदध्यात्, 'अकृत्सार्वधातुकयोः' इति दीर्घेण ज्यायानिति रूपसिद्धेरिति भाष्ये स्थितम्। तदिदानीं विरुध्येत, क्ङितीत्यनुवृत्तौ तु ज्यायानित्यत्र 'अकृत्सार्व–' इति दीर्घाप्रवृत्तेः। तथा च 'अकृत्–' इति सूत्रे क्ङितीति नानुवर्तनीयमुक्तया–

लक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषा तु नेह प्रवर्तते । कष्टाय क्रमणे इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञाप-नात् । रामाभ्याम् । ॥ बहुवचने झल्येत् ।७।३।१०३। झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकारः स्यात् । रामेभ्यः । बहुवचने किम् । रामः । रामस्य । झलि किम् । रामाणाम् । सुपि किम् । पचध्वम् । अहल्यम् । ॥ वाव-साने ।८।४।५६। अवसाने झलां चरो वा स्युः । रामात् । रामाद् । द्वित्वे रूपचतुष्टयम् । रामाभ्याम् । रामेभ्यः । रामस्य । सस्य द्वित्वपक्षे खरि चेति चर्त्वेऽप्यान्तरतम्यात्सस्य स एव न तु तकारः । अल्पप्राणतया प्रयत्नभेदात् । अतएव सःसीति तादेश आरभ्यते । ॥ ओसि च ।७।३।१०४। ओसि परे अतोऽङ्गस्य एकारः स्यात् । रामयोः । ॥ ह्रस्व-नद्यापो नुट् ।७।१।५४। ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् । ॥ नामि ।६।४।३। नामि

धृष्णुयेत्यत्र दीर्घाभावश्छान्दस इत्येवाभ्युपेयमिति चेद्, अत्राहुः । 'ज्ञाजनोर्जा' इत्याकारग्रहणमुक्तपरिभाषालिङ्गम् । अन्य-था जमेव विदध्यात् । 'अतो दीर्घो यञि' इति जायते जानातीत्यादौ दीर्घसिद्धेरित्यपि भाष्ये स्थितं, तच्च ज्ञापकम् 'अकृत्–' इत्यत्र क्ङितीत्यनुवृत्तावपि संगच्छते । एवं च सति 'ज्यादात्' इत्याकारग्रहणं लिङ्गमिति तु भाष्ये प्रौढिवादमा-त्रमस्तु ॥—**संनिपाते**ति । संनिपातः संश्लेषः लक्षणं निमित्तं यस्य स संनिपातलक्षणः, तं संनिपातं विहन्तीति तद्विघातः । कर्मण्यण् । कुलत्ले । स्वोपजीवकविधिः उपजीव्यविघातकविधेर्निमित्तं न भवतीत्यर्थः ॥—**रामः रामस्ये**ति । यद्यपि रामस्येत्यत्र संनिपातपरिभाषयाप्येत्वं सुपरिहरं, तथापि 'अदः सर्वेषाम्' इति निर्देशादेत्वविधौ संनिपातपरिभाषा न प्रवर्तेत इत्याशयेनोक्तमिति स्थितस्य गतिः समर्थनीया ॥—**जश्त्वं वावसान** इति । अत्राहुः । जश्त्वे कृतेऽवसाने चर्त्वमिति न मन्तव्यं, किंतु येननाप्राप्तन्यायेन अवसाने चर्त्वस्य जश्त्वापवादत्वाच्चर्त्वाभावपक्षे जश्त्वमिति योज्यम् ॥—**द्वित्व** इति । 'अनचि च' इत्यनेन । अनचीति प्रसज्यप्रतिषेध इति प्रागेवोक्तम् । पर्युदासाभ्युपगमे तु इह द्वित्वं न स्यात् ॥—**तादेश आरभ्यत** इति । वत्स्यतीत्यादौ चर्त्वेन तकारो न लभ्यत इति 'सः स्यार्धधातुके' इत्यनेन सकारस्य तकारो विधीयत इत्यर्थः ॥—**ह्रस्वनद्यापो**— ॥ अङ्गस्येत्यनुवर्तते । तच्च पञ्चम्यन्तेन सामानाधिकरण्याद् अङ्गादिति विपरिणम्य ह्रस्वा-दिभिर्विशेष्यते विशेषणेन तदन्तविधिरित्याशयेनाह—**ह्रस्वान्तादि**ति । एतेन ह्रस्वनद्याप इति पञ्चमी न तु षष्ठीति स्फोटितम् । ज्ञापकं त्वत्र 'नामि' इति, नहि प्रकृत्यागमत्वे अङ्गसंज्ञानिमित्तं नाम् संभवति ॥ एवं चानया पञ्चम्याऽनन्यार्थ-तया 'तस्मादित्युत्तरस्य' इति परिभाषोपस्थित्या 'आमि सर्वनाम्नः सुट्' इत्यतोऽनुवृत्तमामीति सप्तम्यन्तं 'ङः सि धुट्' इत्यत्रेव षष्ठ्या विपरिणम्यते, आमीति सप्तम्याः 'त्रेस्त्रयः' इत्यत्र चरितार्थत्वादित्यभिप्रेत्याह—**आमो नुडागमः स्यादि**ति । अत्र नव्याः । 'नुट्' इति योगं विभज्य 'अङ्गात्परस्यामो नुट्' इत्युत्सर्गविधिं कृत्वा 'नद्यापः' इत्यंशेन 'दीर्घा-त्परस्यामो नुट् चेद्भवति तर्हि नद्याप एव' इति नियमविधिं व्याख्याय ह्रस्वग्रहणं प्रत्याख्येयम् । न चैवं लिहां दुहामि-त्यादौ अतिप्रसङ्ग इति वाच्यम् । हलन्ताच्चेद्भवति तर्हि षट्चतुर्भ्य एवेति नियमाभ्युपगमात् । 'ध्वंसनडुहां' 'कतिपयच-तुरां' 'युजिक्रुञ्चां' 'झलाम्' इत्यादिनिर्देशाच्च । तस्माद् ह्रस्वग्रहणप्रत्याख्याने न कोऽपि 'दोष इत्याहुः ॥ अत्र वदन्ति । नुडिति पृथग्योगे कृते सति ङेरामि कृते परमप्याटं बाधित्वा अन्तरङ्गत्वादामो नुट् स्यात् । तथा च—परत्वादाटा नुड् बाध्यते—इति वक्ष्यमाणग्रन्थेन 'आटि कृते सकृद्गतिन्यायात् नुट् न' इति भाष्यग्रन्थेन च विरोधः स्यात् ॥ यद्यपि निय-मसूत्राणां विधिमुखेन प्रवृत्तिरिति पक्षे ङेरामि कृते तस्य 'नद्यापः' इत्यनेनैव नुडागमे प्रसज्यमाने 'आण्नद्याः' इत्यनेन स बाध्यत इति परत्वादाटा नुड् बाध्यते इत्यादिग्रन्थः संगच्छते, तथापि नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे परमपि आटं बाधित्वा अन्तरङ्गत्वान्नुट् स्यादेव । किंच 'नद्यापः' इत्यत्र 'नद्यापः परस्यामो नुडेव स्यान्नान्यत्' इत्यर्थः स्यात् । तथा च गौर्या रमायां सर्वासां सर्वस्यामिति न सिध्येत् । सुडागमस्य पुंसि आट्याट्स्याडागमानां तु ङिदन्तरे चरितार्थत्वात् ॥ अपि च गौर्यामित्यादौ ङेरामि कृते नुटं बाधित्वा प्राप्तमाटं बाधितुं नदीग्रहणम् । एवं रमायां सर्वासां सर्वस्यामित्यादौ प्राप्तं याटं सुटं च बाधितुमाब्ग्रहणमिति । 'नद्यापः' एतद्विध्यर्थमेव स्यान्न नियमार्थम् । ततश्च विश्वपां वातप्रम्यामित्यादौ नुट् दुर्वार एव । 'नद्यां मतुप्' भाषायां सदवसश्रुवः' 'सर्वासां प्रायदर्शनं' 'तदस्यां प्रहरणम्' इत्यादिनिर्देशान् शरणीकृत्य विध्यर्थतापादनस्य नुडेवेति प्रागुक्तनियमस्य च निवारणे तु प्रतिपत्तिगौरवम् । अपि च—'आकारान्तादीकारान्ता-दूकारान्ताच्चेद्भवति तर्हि नद्याप एव' इति नियमस्यापि संभवात् । विश्वपां वातप्रम्यां खलप्वामित्यादौ नुडागमा-भावेऽपि गवामित्यादौ नुट् स्यात् । न च छन्दसि 'गोः पादान्ते–' इत्यारम्भात् लोके गोशब्दात्परस्यामो नुड् न भवेदिति वाच्यम् । पादान्ते गोशब्दात्परस्यामो नुट् चेच्छन्दस्येवेति नियमेन लोके पादान्ते गोनामिति प्रयोगस्याभावेऽप्य-पादान्ते तस्यानिवार्यत्वापत्तेः । रायां ग्लावां नावामित्यादौ दुर्निवारत्वाच्च । यदि तु दीर्घात्परस्य आमो नुट् चेदित्यादिनि-

१ जश्त्वमिति—बाधित्वेति शेषः, अन्यथाऽवसाने चर्त्वस्य पदान्तजश्त्वापवादत्वात्तदुत्तरं चर्त्वोपन्यासो न युक्तः स्यात् ।

२ नामीति—ननु नुटीत्येव सूत्रं कार्यं, भृङ्गशब्देऽनश्वशब्दे अक्षण्वन्तः इत्यत्र च न दोषः, अव्युत्पन्नत्वान्नाम्त्वासिद्धत्वानां बागरूकत्वात् इति वाच्यम्, न, पूर्वत्रासिद्धमित्यस्यानित्यत्वज्ञापनार्थत्वादिति स्पष्टं नपदान्तसूत्रे कौस्तुभे शब्देन्दुशेखरे ।

परेऽप्यनवकाशत्वात् सुटि नेति निषेधः । रामाणाम् । सुपि चेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते । संनिपातपरिभाषाविरोधात् । नामीत्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते । रामे । रामयोः । सुपि एत्वे कृते । [illegible] अपदान्तस्य मूर्धन्यः ।८।३।५५। आ पादपरिसमाप्तेरधिकारोऽयम् । [illegible] इण्कोः ।८।३।५७। इत्यधिकृत्य । [illegible] आदेशप्रत्यययोः ।८।३।५९। सहेः साडः स इति सूत्रात्स इति षष्ठ्यन्तं पदमनुवर्तते । इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः

---

'मो नो धातोः' 'म्वोश्च' इति सूत्रे विध्यर्थं भवेत् । आकारान्तादिभ्यः परस्यामो नुट् चेदित्यादिनियमे तु नियमार्थं स्यात्तत्र 'विधिनियमसंभवे विधिरेव ज्यायान्' इति न्यायाननुसंधानेन दीर्घान्तात्परस्यामो नुट् चेदित्यादिनियम एव स्वीक्रियत इत्युच्यते तथापि पुनः प्रतिपत्तिगौरवमस्त्येव, तस्माद् ह्रस्वग्रहणप्रत्याख्यानस्यातिक्लेशसाध्यत्वाद्यथाश्रुतमेव रमणीयमिति ॥—नामि ॥ 'ढ्रलोपे–' इत्यतो दीर्घ इत्यनुवर्तते । दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्येति विशेष्यते । विशेषणेन च तदन्तविधिः । तदेतदाह—अजन्ताङ्गस्येत्यादि । अर्थवद्ग्रहणपरिभाषया नामिति नुट्सहित एवाम् गृह्यते । तेन पामनामक्ष्मामित्यादौ न भवति । तत्र हि पामादिलक्षणे नप्रत्यये टापि द्वितीयैकवचने च कृते त्रयाणामपि प्रत्ययानां प्रत्येकमर्थवत्त्वेऽपि नामिति समुदायस्यानर्थकत्वात् ॥' यद्यपि नलोपस्यासिद्धत्वाद् अनेन पामनामित्यत्र दीर्घः सुपरिहरः' तथापि 'नोपधायाः' इत्यनेन तु स्यादेवेति बोध्यम् ॥ 'नुटि' इति तु न सूत्रितम् । 'भृञः किन्नुट् च' इत्यौणादिकगन्प्रत्ययान्ते भृङ्गशब्दे मा भूदिति । स्यादेतत् । नुडागमस्याम्भक्तत्वादाम्ग्रहणेन सनकारोऽप्याम् ग्रहीष्यत इति 'आमि' इत्येव सूत्रमस्तु । न चामीतिदीर्घस्य कृताकृतप्रसक्तित्वेन नित्यत्वात्परमपि नुटं बाधित्वा अग्नीनामिन्दूनामित्यत्र दीर्घे कृते ह्रस्वाश्रयो नुट् न भवेदिति वाच्यम् । ह्रस्वान्तान्नुडितिवचनसामर्थ्यात् कृतेऽपि दीर्घे भूतपूर्वगत्याश्रयेणैतत्प्रवृत्तेः ॥ नापि 'न तिसृचतसृ' इति निषेधात्तिसृणामित्यत्र ह्रस्वान्तान्नुडिति वचनस्य प्रयोजनमस्तीति वाच्यम् । चतसृणामित्यत्र 'षट्चतुर्भ्यश्च' इत्यनेनैव नुट्सिद्धेः 'ह्रस्वनद्यापः–' इति सूत्रे 'त्रेस्त्रयः' इत्यतः त्रेरित्यनुवर्त्य त्रिशब्दात्परस्यामो नुडिति व्याख्यानात् तिसृणामित्यत्रापि तत्सिद्धेः ॥ यद्यपि नृणामित्यत्र प्रयोजनमस्ति, तथापि नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । अन्यथा 'नृनद्यापः' इत्येव वदेत् । तस्मादामीत्युक्तौ न किंचिद्बाधकमस्ति इत्यामः सनकारस्य ग्रहणमनर्थकमिति चेत् । अत्रोच्यते । उत्तरार्थं सनकारग्रहणं कर्तव्यं 'नोपधायाः' इति दीर्घो नामि यथा स्यात्, चर्मणां वर्मणामित्यत्र मा भूदिति । तदुक्तं वार्तिककृता—'नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुट् भवेत् । वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्मणाम्' इति ॥ अत्र वदन्ति । वचनाद्भूतपूर्वगत्याश्रयेण तत्प्रवृत्तिरित्येतच्चिन्त्यम् । गौणत्वे 'षट्चतुर्भ्यश्च' इति नुटोऽप्रवृत्त्या प्रियचतसृणामित्यत्र नुडर्थं ह्रस्ववचनस्य चरितार्थत्वेन सामर्थ्योपक्षयात् । तत्र हि 'नुमचिर–' इति रादेशात्पूर्वविप्रतिषेधेन नुडिष्यत इति ॥ तदयुक्तम् । 'ऋन्नद्यापः' इति सूत्रितेऽपि ऋदन्तान्नुट् सिध्यत्येवेति ह्रस्वग्रहणस्य सामर्थ्यानुपक्षीणत्वादिति दिक् ॥—**परिभाषाविरोधादि**ति । कृताकृतप्रसक्तित्वेन नामीति दीर्घस्य नित्यत्वात्परोऽपि 'सुपि च' इति दीर्घो न प्रवर्तत इति नोक्तम् । 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति' इति 'नामि' इति दीर्घस्याप्यनित्यत्वात् ॥—**आरम्भसामर्थ्यादि**ति । 'सुपि च' इत्यस्य तु न सामर्थ्यं रामाभ्यामित्यादौ सावकाशत्वादिति भावः ॥ ननु कतीनामित्यत्र परत्वात् 'षट्चतुर्भ्यश्च' इति नुटि 'नामि' इति दीर्घः संनिपातपरिभाषामबाधित्वैव प्रवर्तत इत्यारम्भसामर्थ्यस्योपक्षयात् 'नामि' इति सूत्रमपि रामाणामित्यत्र सनिपातपरिभाषया न प्रवर्तते । तथा च 'आचार्याणाम्' इति निर्देशेनोक्तपरिभाषाया अनित्यत्वमाश्रित्य 'सुपि च' इति दीर्घ एव परत्वात् प्रवर्ततामिति चेत् ॥ अत्र केचित्समाधयन्ति । चतुर्ग्रहणसाहचर्याद् हलन्तषट्सञ्ज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुट् भवति न तु कतिशब्दात् परस्यामः, तथा च कतीनामित्यत्र ह्रस्वाश्रय एव नुडित्यारम्भसामर्थ्यं नोपक्षीणमिति । तदपरे न क्षमन्ते । रेफो यथा हल्संज्ञकस्तथा अम्सञ्ज्ञकोऽपि भवतीत्यमन्तषट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड् भवति न तु षकारान्तात्परस्येति वक्तुं शक्यतया षण्णामित्यत्र नुडभावप्रसङ्गात् । तस्मादिह साहचर्यं न ग्राह्यमेव ॥ अन्ये तु 'षट्चतुर्भ्य–' इति बहुवचननिर्देशादर्थपरोऽयं निर्देशः, तथा चार्थप्राधान्यं यत्र, तत्रैव षट्संज्ञाश्रयो नुड् भवति न तु प्रियषष्णां प्रियषषामित्यादौ इति सिद्धान्तात् । बहिरङ्गः षट्संज्ञाश्रयो नुट । तथा चान्तरङ्गत्वात्कतीनामित्यत्र ह्रस्वाश्रय एव नुडिति 'नामि' इति दीर्घः संनिपातपरिभाषां बाधित्वैव प्रवर्तते, ततश्चारम्भसामर्थ्यादिति मूलोक्तग्रन्थस्य न काप्यनुपपत्तिरिति समादधुः ॥ इतरे तु आरम्भसामर्थ्यादित्यस्यायमर्थो 'न तिसृचतसृ' इति निषेधारम्भसामर्थ्यादिति । तिसृणामित्यत्र ह्रस्वान्तलक्षणे नुटि कृते 'नामि' इति दीर्घप्रवृत्तौ हि 'न तिसृ–' इति निषेध आरभ्यते । सनिपातपरिभाषया दीर्घाप्रवृत्तौ तु किमनेन निषेधेनातो ज्ञायते 'नामि' इति दीर्घः संनिपातपरिभाषां बाधत इति । यैस्तु 'ह्रस्वनद्यापः–' इत्यत्र ह्रस्वग्रहणं प्रत्याख्यायते, तैस्तु 'नामि' इति दीर्घे आरम्भसामर्थ्यं नाश्रयणीयमेव ॥—**अपदान्तस्य**—॥ ष इत्येव सिद्धे मूर्धन्यग्रहणम् 'इणः षीध्वम्–' इति ढत्वार्थम् । वक्रुढ्वे । अकृढ्वम् ॥—**इण्कोः** ॥ समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । कोः किम् । गवाक्षु । गवाद्यु ॥— **आदेशप्रत्यययोः** ॥ प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः । 'हलि सर्वेषाम्' इतिनिर्देशात् 'सात्पदाद्योः' इत्यत्र सातिग्रहणाच्च लिङ्गादित्याशयेन व्याचष्टे—**आदेशः प्रत्ययावयवश्चे**ति । यदि तु आदे-

प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात् । विवृताघोषस्य सस्य तादृश एव षः । रामेषु । इण्कोः किम् । रामस्य । आदेशप्रत्यययोः किम् । सुपीः । सुपिसौ । सुपिसः । अपदान्तस्य किम् । हरिस्तत्र । एवं कृष्णमुकुन्दादयः । ॥ सर्वादीनि सर्वनामानि ।१।१।२७। सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । तदन्तस्यापीयं संज्ञा द्वन्द्वे चेति ज्ञापकात् । तेन परमसर्वत्रेति त्रल् । परमभवकानित्यत्राकच सिध्यति । ॥ जसः शी ।७।१।१७। अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । न चार्वणस्तृ इत्यादाविव नानुबन्धकृतमनेकाल्त्वमिति वाच्यम् । सर्वादेशत्वात्प्रागित्संज्ञाया एवाभावात् । सर्वे । ॥ सर्वनाम्नः स्मै ।७।१।१४। अतः सर्वनाम्नो ङेः स्मै स्यात् । सर्वस्मै । ॥ ङसिङ्योः स्मात्स्मिनौ ।७।१।१५। अतः सर्वनाम्नो ङसिङ्योरेतौ स्तः । सर्वस्मात् । ॥ आमि सर्वनाम्नः सुट् ।७।१।५२। अवर्णान्तात्सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे ।

---

शावयवो गृह्येत, तर्हि तिसृणामित्यादौ दोषः । यद्यपि सकारोच्चारणसामर्थ्यात्तत्र षत्वं न स्यात्, तथापि बिसंबिसं मुसलंमुसलमित्यादौ षत्वं दुर्वारं स्याद् आष्टमिकद्विर्वचनस्यादेशरूपत्वात् । यदि तु प्रत्ययो यः सकार इति गृह्येत, तर्हि रामेषु करिष्यतीत्यादौ न स्यात्, किं तु 'इन्द्रो मा वक्षत्' इत्यादावेव स्यात् । मनोरमायामेकापि षष्ठी विषयभेदाद् भिद्यत इत्युक्त्वा सहविवक्षाभावेऽपि सौत्रत्वाद् द्वन्द्व इत्युक्तं, तत्तु प्रत्ययशब्दे लक्षणामनङ्गीकृत्य यथाश्रुताभिप्रायेणोक्तमिति बोध्यम् ॥ —**विवृताघोषस्येति** । विवृतस्य सस्य तादृश एवेत्युक्ते ऋकारेऽतिप्रसङ्गस्तद्वारणायाघोषस्येति । अघोषस्येत्येतावदुच्यमाने ठकारेऽतिप्रसङ्गस्तद्वारणायोभयमुपात्तम् ॥—**तादृश एव ष** इति । तादृश एव षादेशो भवति नान्य इत्यर्थः ॥ ननु दधिसेचौ दधिसेच इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिरिति पञ्चमीसमासो भाष्ये उक्तस्तथ इहापि 'सात्पदाद्योः' इति निषेधः स्यात्, करिष्यतीत्यादौ षत्वविधेः सावकाशत्वादिति चेन्मैवम् । 'स्वादिषु' इति या पदसंज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्तते इति सातिग्रहणेन ज्ञापितत्वात् ॥—**रामस्येति** । 'टाङसिङसामिनात्स्याः' इति वक्तव्ये सकारोच्चारणसामर्थ्यात्षत्वं न भवेन्नडादिषु अमुष्येति निपातनात्ततः फगादौ 'आमुष्यायण—' इत्यादिवार्तिकनिर्देशाच्च अमुष्येत्यत्र षत्वं भवेत्, तर्हि विश्वपाभ्यामित्यादि प्रत्युदाहर्तव्यम् । न च तत्रापि ध्रुबिति वक्तव्ये सुबिति सकारोच्चारणसामर्थ्यादेव न भवेदिति शङ्क्यम् । लिट्त्सु प्रशान्त्सु इत्यत्र 'ङः सि धुट्' 'नश्च' इति धुटः प्रवृत्तये सकारोच्चारणस्यावश्यं स्वीकर्तव्यत्वादिति दिक् ॥—**सर्वादीनि**—॥ तद्गुणसंविज्ञानो बहुव्रीहिरयम् 'अदः सर्वेषाम्' इति लिङ्गात् । आदिशब्दोऽत्रावयववाची, सर्वं आदिरवयवो येषां तानीति विग्रहः, उद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनम् । तस्य युगपल्लक्ष्ये प्रयोगाभावाद् 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन तदवयवेषु प्रवर्तमाना सर्वनामसंज्ञा अविशेषात्सर्वशब्देऽपि प्रवर्तत इति युक्तं तद्गुणसंविज्ञानत्वम् । तस्यान्यपदार्थस्य गुणाः वर्तिपदार्थरूपाणि विशेषणानि तेषां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यक्षरार्थः । लोकवेदयोरपि संयोगसमवायान्यतरसंबन्धे 'लोहितोष्णीषा ऋत्विजश्चरन्ति' 'लम्बकर्णमानय' इत्यादौ तद्गुणसंविज्ञानत्वमेव । स्वस्वामिभावसंबन्धे त्वतद्गुणसंविज्ञानत्वं चित्रगुमानयेत्यादौ ॥ ननु सर्वनामानीत्यत्र 'पूर्वपदात्संज्ञायाम्—' इति णत्वं कस्मान्न भवति । सौत्रत्वान्नेति चेल्लोके सर्वनामशब्दस्य साधुत्वापत्त्या सर्वनामसंज्ञानि स्युरित्युत्तरग्रन्थस्यासाधुत्वापत्तेरिति चेन्मैवम् । 'निपातनात् णत्वं न' इति भाष्योक्तव्याख्याश्रयणादिष्टसिद्धेः । अत्र भाष्यानुसाराद् 'बाधकान्येव निपातनानि भवन्ति' इति पक्ष आश्रितः । 'अबाधकान्यपि निपातनानि भवन्ति' इति पक्षस्तु 'विभाषा फाल्गुनी—' इति सूत्रे श्रवणाशब्दे निपातितेऽपि श्रावणीति प्रयोगोऽपि साधुरित्येवमर्थमाश्रयिष्यते ॥ विशेषणानुगुणविशेष्यमध्याहरति—**शब्दरूपाणी**ति ॥—**द्वन्द्वे चे**ति । स हि निषेधः समुदायस्यैव न त्ववयवानामिति वक्ष्यति, न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः ॥ नन्वङ्गाधिकारे तदन्तविधिं विनैव परमसर्वस्मा इत्यादौ स्मायादिसिद्धेस्तदन्तसंज्ञायाः किं फलमित्यत आह—**तेने**ति । न चेहापि प्रातिपदिकादित्यनुवृत्तेः सर्वनाम्नस्तद्विशेषणत्वे तदन्तविधिर्भविष्यतीति वाच्यम् । 'समासप्रत्ययविधौ प्रतिषेधः' इत्युक्तत्वादिति भावः ॥—**अकच्चे**ति । चकारात्परमसर्वत्र इत्यत्र तसिल् ॥—**जसः शी** ॥ दीर्घोच्चारणमुत्तरार्थम् । वारिणी । मधुनी ॥—**अनेकाल्त्वादि**ति । न तु शित्त्वादिति भावः ॥—**इत्संज्ञाया एवाभावादि**ति । इहेत्यत्रोपदेशकाल एव ऋकारस्येत्संज्ञा, शीभावस्य तु सर्वादेशत्वानन्तरं स्थानिवत्त्वेन प्रत्ययत्वे लब्धे 'लशक्वतद्धिते' इति प्रत्ययादेशस्येत्संज्ञेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः ॥—**अवर्णान्तादि**ति ॥ अवर्णान्तादङ्गात्परस्येत्यर्थः, तेन येषां तेषामित्यादौ नाव्याप्तिः ॥—**सर्वनाम्नो विहितस्ये**ति ।

---

१ द्वन्द्वेचेति—द्वन्द्वशब्दस्य द्विशब्दप्रकृतिकत्वेऽपि स्मिन्नादिरूपं सर्वनामकार्यं न, संज्ञात्वात् । २ सर्वस्मै इति—ननु सर्वशब्दस्य बुद्धिस्थानेकार्थवाचित्वेन बहुवचनमेव स्यान्नैकवचनादि इतिचेन्न, बुद्धिस्थानेकसंख्याकावयवारब्धसमुदाये सर्वशब्दः प्रयुक्त इति यदानुद्भूतावयवः समुदायस्तदैकवचनं भवत्येव यथा सर्वो लोक इति । तादृक्समुदायद्वित्वादिविवक्षायां द्विवचनादि । उद्भूतावयवभेदविवक्षायां तु बहुवचनमेव सर्वे घटा इति ।

**सर्वेषाम् । हे सर्व । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । सर्वादयश्च पञ्चत्रिंशत् । सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व; नेम, सम, सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्, इति । उभशब्दो द्वित्वविशिष्टस्य वाचकः । अतएव नित्यं द्विवचनान्तः । तस्येह पाठस्तु उभकावित्यकजर्थः । नच कप्रत्ययेनेष्टसिद्धिः । द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादाविवायच्प्रसङ्गात् । तदुक्तम् ॥ * उभयोऽन्यत्रेति ॥ अन्यत्रेति द्विवचनपरत्वाभावे । उभयशब्दस्य द्विवचनं नास्तीति कैयटः । अस्तीति**

---

सर्वनाम्नः परस्येति तु नोक्तं वर्णाश्रमेतराणामित्यत्र सुट्प्रसङ्गात् । 'द्वन्द्वे च' इत्यनेन समुदायस्य सर्वनामसंज्ञानिषेधेऽप्यवयवस्या-निषेधात् । विहितविशेषणत्वाश्रयणे प्रमाणं तु 'दक्षिणोत्तरपूर्वाणाम्' इति भाष्यकारप्रयोग एव ॥—**आम** इति । सर्वनाम्न इति पञ्चम्या निरवकाशतया आमीति सप्तम्याः 'त्रेस्त्रयः' इत्युत्तरसूत्रे कृतार्थायाः षष्ठी प्रकल्प्यत इति भावः ॥—**पञ्चत्रिंशदि**ति । पञ्च त्रिंशच्चेति द्वन्द्वः । पञ्चाधिकात्रिंशदिति तत्पुरुषो वा ॥ न च 'संख्यायाः तत्पुरुषस्य–' इति वक्ष्य-माणवार्तिकेन समासान्तो डच् स्यादिति वाच्यम् । तत्रैव वार्तिके 'अन्यत्राधिकलोपात्' इत्युक्तत्वात् । ननु सर्वेषां नाम सर्वनामेत्यन्वर्थत्वात् संज्ञायाः सर्वविश्वादय एव संज्ञिनो भविष्यन्ति नान्ये इति किमनेन पञ्चत्रिंशदिति परिगणनेन, 'सर्वा-दीनि' इति सूत्रेण वा, मैवम् । परिगणनाभावे कृत्स्नसमस्तादिष्वतिप्रसङ्गात् । एवं च पञ्चत्रिंशत्संख्याकानि सर्वादीन्येव सर्वनामसंज्ञकानि मान्यानीति नियमाय 'सर्वादीनि–' इति सूत्रमप्यावश्यकम् । न त्वनुनासिकसंज्ञासूत्रमिव मन्दप्रयोजन-मिति बोध्यम् ॥—**पूर्वपरा–** । व्यवस्थायामसंज्ञायां यानि पूर्वपरावरदक्षिणोत्तरापराधराणि तानि सर्वादिगणसंनिविष्टानि मान्यानीत्यर्थः । सर्वनामसंज्ञा तु 'सर्वादीनि सर्वनामानि' इत्यनेनैव सिध्यति । एवमुत्तरसूत्रद्वयेऽपि बोध्यम् ॥—**अत एवे**ति । द्वयोर्द्विवचनस्यैव युक्तत्वादिति भावः ॥—**नित्यं द्विवचनान्त** इति । सर्वदा द्विवचनान्त इत्यर्थः । न चैवम् 'उभावुदात्तो नित्यम्' उभ(शब्द)स्य सर्वनामत्वे कोऽर्थः–इति सूत्रकारभाष्यकारप्रयोगो विरुध्यत इति शङ्क्यम् । अत्रार्थपरस्यैव नित्यं द्विवचनान्तता न तु स्वरूपानुकरणपरस्येत्यभ्युपगमात् ॥ अथ सर्वादिषु उभशब्दपाठो व्यर्थः, सर्वनामकार्याणां स्मायादीनां द्विवचनेऽभावात् । न च 'सर्वनाम्नस्तृतीया च' इति सूत्रेणोभाभ्यां हेतुभ्यामुभयोर्हेत्वोरिति षष्ठीतृतीयासिद्धिस्तत्फलमिति वाच्यम् । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति वार्तिकेनैव गतार्थत्वात् । न च वृत्तिकृता 'सर्वनाम्नस्तृतीया च' इति सूत्रे पठितत्वादिदमपि वार्तिकं सर्वनाम्न एव सर्वविभक्तिप्रापकं नान्यस्येति वाच्यम् । भाष्ये 'हेतौ' इति सूत्रे तद्वा-र्तिकस्य पठितत्वात् । अत एव 'अन्नेन कारणेन वसति अन्नस्य कारणस्य' इत्युदाहृतं हरदत्तेनेत्याशङ्क्याह—**तस्येह पाठ-स्त्वि**ति ॥ ननु कप्रत्ययेनापीष्टसिद्धेः किमकजर्थपाठेन । न च काकचोः स्वरे विशेषोऽस्तीति वाच्यम् । प्रत्ययस्वरेण चित्स्व-रेण वा अन्तोदात्तत्वे विशेषाभावादित्याशङ्क्याह—**न चे**ति । उभशब्दस्य द्विवचनपरत्वमकच् प्रत्ययो न विहन्ति टेः प्राक् जायमानत्वात्, तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् । कप्रत्ययस्तु विहन्त्येव प्रातिपदिकात्परत्र जायमानत्वादित्याशयेनाह —**द्विवचनपरत्वाभावेने**ति ॥—**अयच्प्रसङ्गा**दिति । उभशब्दात्तसोः परतः स्वार्थे यथा अयच् भवति तथा कप्रत्यये सति स्यादिति भावः । यद्यपि स्वार्थे अयच् दृष्टान्तेऽपि दुर्लभस्तथापि 'उभावुदात्तः–' इति सूत्रे 'नित्यम्' इति योगविभागात्सुलभ एव । तथाहि । 'उभावुदात्तः,' 'द्वित्रिभ्याम्' इति सूत्राद्वेति नानुवर्तते अस्वरितत्वात् । अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थे अयच् स्यात् । उभयो मणिः । उभयः पाशः । ततो 'नित्यम्–' । उभशब्दात् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे । तेन उभयतः उभयत्र उभयपक्षविनीतनिद्रा इत्यादि सिद्धम् ॥ नन्वेवमकचि कृतेऽप्ययच् दुर्वारः, वृत्तिविषये स्वार्थे नित्यमयजिति त्वयैवोक्तत्वादिति चेत्, एवं तर्हि योगविभागस्येष्टसिध्यर्थतया 'उभौ साभ्यासस्य' इति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यायते, न तु वृत्तिविषय इति न दोषः ॥—**तदुक्तमि**ति । वार्तिककृतेति शेषः ॥—**उभयोऽन्यत्रे**ति । उभयेति यः स्वार्थिकोऽयजन्तः स अन्यत्र प्रयुज्यते न तु द्विवचने परतः इत्यर्थः ॥ न च उभावित्यादौ द्विवचनपरत्वं दुरुपपादम्, उभयत आश्रयणेऽन्तादिवद्भावविरहादिति वाच्यम् । उभशब्दादुत्पन्नद्विवचनं लुका नापहृतं यत्र ततोऽन्यत्रायजिति विव-क्षितोऽर्थ इति मनोरमायामुक्तत्वात् । एवं च सर्वादिषूभशब्दपाठोऽकजर्थ इति स्थितम् ॥ भाष्ये तु कप्रत्ययस्य स्वार्थिकत्वे-न स्वार्थाभिधानसमर्थत्वादुभशब्दात्परस्य द्विवचनपरत्वमस्तीत्याश्रित्योभशब्दपाठः सर्वादिगणे प्रत्याख्यातः । मनोरमायां तु भाष्ये प्रत्याख्यानं प्रौढिवादमात्रं कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वादन्यथा त्रतसिल्वादावतिप्रसक्तत्वादित्यादि स्थितम् ॥—**उभयशब्दस्ये**ति । उभौ अवयवौ यस्य उभयः 'उभावुदात्तो नित्यम्' इति तयपोऽयच् ॥—**नास्ती**ति । अनभिधानादिति भावः ॥ तथा चोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वेन अव्ययत्वे प्राप्ते 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे कृत्तद्धितानां ग्रहणं च पाठे इति भाष्ये कैयटेनावतारितम् ॥—**अस्तीति** । पचतिकल्पं पचतिरूपमित्यादिवार-

इत्यन्ये । तयपोऽयजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया प्रथमचरमेति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनो-भयशब्दस्य नित्यैव संज्ञा भवति । उभये । डतरडतमौ प्रत्ययौ । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति । सुप्तिङन्तमिति ज्ञापकात् । तथापीह तदन्तग्रहणम् । केवलयोः संज्ञायाः प्रयोजनाभावात् । अन्यतरान्यतमशब्दाव-व्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा । त्व त्व इति द्वावप्यद-न्तावन्यपर्यायौ । एक उदात्तोऽपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्या-यस्तु नेह गृह्यते । यथासंख्यमनुदेशः समानामिति ज्ञापकात् ॥ * अन्तरं बहिर्योगेति गणसूत्रेऽपुरीति वक्तव्यम् ॥ अन्तरायां पुरि । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ।१।१।३४। एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे पूर्वाः ॥ स्वाभिधेयापे-क्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः । असंज्ञायां किम् । उत्तराः कुरवः । स्वमज्ञातिधनाख्यायाम् ।१।१।३५। ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । स्वे । स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा । अन्तरं-

---

णेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नास्तीति भावः ॥—तस्मादिति । उभयशब्दादित्यर्थः ॥—तयप्प्रत्ययान्त-तयेति । उभयशब्दस्येति शेषः । यदि तूभयशब्दादयच् स्वतन्त्रः, नतु तयप आदेश इति निष्कर्षः स्वीक्रियते, तदात्र 'प्रथमचरमतया—' इति वैकल्पिकप्राप्तिर्नास्त्येवेति बोध्यम् ॥—नित्यैवेति । उभया अभिन्ना इति तु च्छान्दसत्वाद्बोध्य-म् ॥—डतरडतमाविति । 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' । 'वा बहूनां जातिपरिप्रश्ने डतमच्' । 'एकाच्च प्राचाम्' इति विहितौ ॥—अव्युत्पन्नाविति । एतच्च पदमञ्जर्यां कैयटे स्पष्टम् ॥—एके इति ॥—काशिकाकाराः एतं त्वं मन्ये इत्युदात्तस्य 'उत त्वः पश्यन्' इत्यनुदात्तस्य च दर्शनादिति भावः ॥—एक इति । प्रथम इत्यर्थः । संहि-तया पाठे तान्ततवस्यास्फुटत्वेऽपि त्वदिति तान्तश्छेत्तव्यः । अन्यथा एकश्रुत्या सकृदेव पठेत् । न च तान्ते विप्रतिपत्तव्यम् । 'त्वत्त्वसमसिमेत्यनुच्चानि' इति फिट्सूत्रात् । तथा च ऋङ्मन्त्रः 'स्तरीरुत्वद्भवति सूत उत्वत्' इति ॥—जयदेवोऽपि प्रायुङ्क्त । 'त्वदधरमधुरमधूनि पिबन्तम्' इति । त्वत्तोऽन्यस्या अधर इति विग्रहो न तु तवाधर इति । 'पश्यसि दिशिदि-शि रहसि भवन्तम्' इति पूर्ववाक्येन सहानन्वयापत्तेः ॥—सम इति । तथा च श्रूयते 'मानो वृकाय वृक्ये समस्मै' । 'उत समस्मिन्' इत्यादि ॥ —'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः' ।—गणसूत्र इति ॥ यद्यपि भाष्येऽष्टा-ध्यायीस्थसूत्रे 'अपुरीतिवक्तव्यम्' इति वार्तिकं पठितं, तथापि तद्गणसूत्रस्यैव शेषो न तु जसि विभाषाविधायकस्य । अत इत्यधिकृत्य जसः शीविधानादाबन्तात्प्राप्त्यभावात् ॥—अन्तरायामिति । प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेत्यर्थः। लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा सर्वनामतायाः प्राप्तिर्बोध्या । त्यदृतद् एतौ उक्तपरामर्शकौ । त-त्रायश्छान्दस इति गणरत्नकारोक्तिर्नादर्तव्या । 'त्यश्छन्दसि बहुलम्' इति सूत्रे छन्दोग्रहणवैयर्थ्यापत्तेः ॥—एक इति । 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते' ॥—इत्थं सर्वादिगणं व्याख्या-येदानीं तदन्तर्गतत्रिसूत्रीसमानाकारामष्टाध्यायीस्थां त्रिसूत्रीं व्याचष्टे—पूर्वापरेत्यादिना ॥—स्वाभिधेयेति । स्व-स्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः । अपेक्ष्यत इत्यपेक्षः । कर्मणि घञ् ॥ कथं तर्हि 'दिशः सपत्नी भव दक्षिणस्याः' इति । अत्राहुः, अस्त्येवात्रापि व्यवस्था प्रसिद्धत्वाभावधिवाची शब्दः प्रयुज्यते । न च संज्ञात्वाभिषेधः। आधुनिकसंकेतो हि संज्ञा न च दिक्षु साऽस्तीति । दिक्षु चिरंतनः, कुरुषु त्वाधुनिकः संकेत इत्यत्र तु व्याख्यातृवचनमेव प्रमाणम् । एतेन 'विश्वेषां देवानाम्' इति व्याख्यातं, वेदे प्रसिद्धत्वाद्देवगणविशेषे विश्वशब्दस्याधुनिकसंकेताभावात् ॥—दक्षिणा गाथका इति । 'गस्थकन्' इति शिल्पिनि थकन् । इहामुकस्मात्कुशला इत्यवध्यन्वयसंभवेऽपि तन्नियमो नास्ती-ति भावः ॥ एवमधरे ताम्बूलरागः, उत्तरे प्रत्युत्तरे च शक्ताः, इत्यपि प्रत्युदाहर्तव्यम् ॥—उत्तराः कुरव इति । सुमेरु-मवधिमपेक्ष्य कुरुषु उत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था, किं त्वाधुनिकसंकेतोऽयमित्याहुः ॥—स्वमज्ञेति । आत्माऽत्मी-यज्ञातिधनवाची स्वशब्दः, तत्र ज्ञातिधनयोः पर्युदासादात्मात्मीयौ परिशिष्टावित्याशयेन व्याचष्टे—आत्मीया इत्यर्थः, आत्मान इति वा ॥ यत्त्वाहुः । आत्मनि स्वशब्दो नपुंसकः, तेन स्वे स्वा इत्युदाहरणं तत्रायुक्तमिति । तद्भ्रमात् । 'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इत्यमरसिंहोक्तेरात्मन्यपि स्वशब्दस्य पुंस्त्वात् । न च 'स्वो ज्ञातौ' इत्यमरकोशे आत्मनीत्यस्य स्वमित्युत्तरेणान्वयादात्मवाची स्वशब्दो नपुंसक एवेति वाच्यम् । 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनीकोशविरोधेनात्मनीति पूर्वान्वयि, न तु उत्तरान्वयि इति व्याख्यातुमुचितत्वात् ॥ किंच 'विभाषा जसि' इति प्रकरणे 'स्वात्मात्मीये' इत्येवं वक्तव्ये गुरुनिर्देशं कुर्वन्सूत्रकारोऽप्यात्मवाचिस्वशब्दस्य पुंस्त्वे प्र-

---

१ अपुरीति वक्तव्यमिति—पूःशब्दार्थस्य विशेष्यत्वे नेत्यर्थः । अयं च निषेधः स्त्रियामेव । तेन स्त्रीत्वविशिष्टस्यैव बोधनेन तल्लाभे मानाभावात् । अत एव भाष्येऽन्तरायां पुरीत्येवोदाहृतम् ।

**बहिर्योगोपसंव्यानयोः** ।१।१।३६। बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः । **पूर्वादिभ्यो नवभ्यो वा** ।७।१।१६। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । शेषं सर्ववत् । एकशब्दः संख्यायां नित्यैकवचनान्तः । **न बहुव्रीहौ** ।१।१।२९। बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । त्वकं पिता यस्य स त्वत्कपितृकः । अहकं पिता यस्य स मत्कपितृकः । इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते । अन्यथा लौकिके विग्रहवाक्ये इव तत्राप्यकच् प्रवर्तेत । स च समासेऽपि श्रूयेत । अतिक्रान्तो भवकन्तमतिभवकानितिवत् । भाष्यकारस्तु त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम् । संज्ञोपसर्जनीभूतास्तु न सर्वादयः । महासंज्ञाकरणेन तदनुगुणानामेव गणे संनिवेशात् । अतः संज्ञाकार्यमन्तर्गणकार्यं च तेषां न भवति । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय देहि । अतिकतरं कुलम् । अतितत् । **तृतीयासमासे** ।१।१।३०। अत्र सर्वनामता न स्यात् । मासपूर्वाय । तृतीयासमासार्थवाक्येऽपि न । मासेन पूर्वाय । **द्वन्द्वे च** ।१।१।३१। द्वन्द्वे उक्ता संज्ञा न । वर्णाश्रमेतराणाम् । समुदायस्यायं निषेधो न त्ववयवानाम् । नचैवं तदन्तविधिना

माणम् । तस्मात् स्वे स्वा इत्यस्य आत्मान इति विवरण सम्यगेवेति स्थितम् ॥—**ज्ञातिधनवाचिनस्त्वि**ति । ताच्छील्येन णिनिना ज्ञातिधनयोरप्यात्मीयत्व पुरस्कृत्य प्रवृत्तौ सर्वनामतास्त्येवेति ध्वनयति ॥ एतदर्थमेव हि सूत्रे आख्याग्रहण कृतम् ॥ 'स्वमात्मात्मीयाख्यायाम्' इति वक्तव्ये ज्ञातिधनयो· पर्युदासाश्रयणं मात्रालाघवाय । न च 'स्वमात्मात्मीययो' इत्युच्यमाने आख्याग्रहण नापेक्षितमिति वाच्यम् । वस्तुत आत्मीयस्यापि ज्ञातित्वेन धनत्वेन विवक्षाया सर्वनामता भा भूदिति तस्यावश्यकत्वात् ॥—**अन्तरम्**—॥ (बहिर्योगोपसंव्यानयोरिति) । बहिरित्यनावृतो देशो बाह्य चोच्यते । तत्राद्यमर्थं गृहीत्वाह—**बाह्या इत्यर्थ** इति । द्वितीये त्वाभ्यन्तरा इत्यर्थो बोध्यः । बाह्ये नाभ्यन्तरस्य योगोऽस्ति । अर्थद्वयमप्याकरे स्थितम् । इदमेवार्थद्वयं मनसि निधाय अन्तराया पुरीत्यत्र प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेति व्याख्यातम् ॥ उपसव्यानशब्दोऽपि करणव्युत्पत्त्या उत्तरीयपरः । कर्मव्युत्पत्त्या त्वन्तरीयपरः ॥—एकशब्दस्याष्टावर्था उक्तास्तत्र विशेषमाह—**संख्यायामि**ति । अन्येषु तु सप्तस्वर्थेषु वचनान्तरमपि स्यादेव, एके एकेषामिति यथेति भावः ॥ —**न बहुव्रीहौ** ॥ कृते बहुव्रीहौ निषेधो व्यर्थ· । 'उपसर्जनीभूता न सर्वादय:' इति वक्ष्यमाणत्वाद् अत आह —**चिकीर्षित** इति । बहुव्रीहावित्यत्र विषयसप्तम्याश्रयणादयमर्थो लभ्यते ॥—**त्वकमि**ति । अज्ञाते कुत्सिते वा 'अव्ययसर्वनाम्नाम्–' इत्यकच् । एवमहकमित्यत्रापि ॥—**प्रक्रियावाक्ये** इति । अलौकिकविग्रहवाक्ये इत्यर्थः । तच्च युष्मद्सु पितृसु इत्याद्याकारकम् ॥ ननु तत्राकच् प्रवर्ततां को दोष इत्यत आह—**स चे**ति । न च निमित्तस्यानुपसर्जनत्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया समासात्प्रागपि सर्वनामता न भविष्यतीति वाच्यम् । तस्या अनित्यत्वात् । तत्र चैतत्सूत्रस्यैव ज्ञापकत्वात् ॥—**अतिभवकानि**ति । इदमेव ज्ञापनफलमिति भावः ॥ 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति प्रादिसमास· ॥—**प्रत्याचख्यावि**ति । 'च्छ्वो शूड्–' इति सतुग्ग्रहण प्रकृतिप्रत्यापत्तिवचन वा अनित्यत्वे ज्ञापक, लक्ष्यानुरोधाच्च व्यवस्थेति भाव ॥— **यथोत्तरमि**ति । तथा च सप्रति भाष्यकारोक्त्यैव व्यवस्थेति भावः ॥—**गणे संनिवेशादि**ति । एतेन 'पूर्वपरा–' इति गणसूत्रे 'असज्ञायाम्' इति ग्रहण मन्दप्रयोजनमिति ध्वनितम् । सज्ञायां यानि पूर्वादीनि, तेषा गणे सनिवेशाभावात् । एवमष्टाध्यायीस्थे 'पूर्वपरावर–' इति सूत्रेऽपि 'असज्ञायाम्' इत्येतत्त्यक्तु शक्यम् । न च तदभावे जसि परतः सज्ञायामुत्तराः कुरव इत्यत्राप्राप्तविकल्पः स्यादिति वाच्यम् । सर्वनामसंज्ञाया अन्वर्थत्वेन सज्ञायामप्राप्तविधेरसभवादसज्ञायामेव पूर्वेण प्राप्ता सज्ञा जसि वा स्यादिति वक्तुमुचितत्वात् ॥—**संज्ञाकार्यमि**ति । सर्वनामसज्ञाप्रयुक्त स्मायादिकमित्यर्थः ॥—**अन्तर्गणकार्यमि**ति । 'अड्डतरादिभ्य.–' 'त्यदादीनामः' 'तदोः सः सौ–' इत्यादिकमित्यर्थः ॥—**अतिकतरमि**ति । अत्राद्डादेशो न । अतितदित्यत्र तु त्यदाद्यत्वं 'तदोः सः सौ–' इति सत्व च नेति भाव· ॥—**तृतीयासमासे** ॥ अत्र 'विभाषा दिक्समासे–' इत्यतः समासइत्यनुवर्तमाने पुनः समासग्रहण गौणार्थस्यापि सग्रहार्थमित्यभिप्रेत्याह— **तृतीयासमासार्थे**ति । इह 'पूर्वसदृश–' इति विहितः समासो गृह्यते प्रतिपदोक्तत्वात् । न तु 'कर्तृकरणे–' इति समासः, तेन त्वयका कृतमित्यत्र निषेधो न भवति । 'औंकारसकारभकारादौ

१ सज्ञोपसर्जनीभूता इति—अतएव भूतपूर्वः आढ्य आढ्यपूर्वः इत्यत्रापि न सर्वादित्वम्, पूर्वत्वस्य आढ्यविशेषणत्वात् । अत्रोपसर्जन कृत्रिममकृत्रिम चोभयमपि गृह्यते । २ तृतीयासमासार्थवाक्येऽपि इति—तृतीयासमासो हि पूर्वसदृशेत्यादिना विहित एव गृह्यते, प्रतिपदोक्तत्वात् । तथा वाक्यमपि तत्सूत्रप्राप्तियोग्यमेव गृह्यते, प्रत्यासत्तिन्यायात् । तेन करोतिद्वारा सामर्थ्ये मासेन कृतपूर्वः मासपूर्वः इत्यत्र न निषेधः । पूर्वसदृशेति सूत्र करोतिद्वारा सामर्थ्ये न प्रवर्तते । तस्य हेत्वादितृतीयास्थले साक्षात्सम्बन्धे चारितार्थ्यात् । करोतिद्वारकः समासस्तु तृतीया तत्कृतेत्यनेन भविष्यतीति ।

सुट्प्रसङ्गः । सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात् । **विभाषा जसि ।१।१।३२।** जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् । वर्णाश्रमेतरे । वर्णाश्रमेतराः । शीभावं प्रत्येव विभाषेत्युक्तमतो नाकच् । किंतु कप्रत्यय एव । वर्णाश्रमेतरकाः । **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।१।१।३३।** एते जसः कार्यं प्रत्युक्तसंज्ञा वा स्युः । प्रथमे । प्रथमाः । शेषं रामवत् । तयः प्रत्ययः ततस्तदन्ता ग्राह्याः । द्वितये । द्वितयाः । शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् । * **विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ॥** द्वितीयस्मै । द्वितीयायेत्यादि । एवं तृतीयः । अर्थवद्ग्रहणान्नेह । पटुजातीयाय । निर्जरः । **जराया जरसन्यतरस्याम् ।७।२।१०१।** जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । पदाङ्गाधिकारे तस्य च तदन्तस्य च । अनेकाल्त्वात्सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति । एकदेशविकृतस्यानन्यत्वात् जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः । इनादीन् बाधित्वा परत्वाज्जरस् । निर्जरसा । निर्जरसे । निर्जरसः । पक्षे हलादौ च रामवत् । वृत्तिकृता तु पूर्वविप्रतिषेधेन इनातोः कृतयोः संनिपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसादिति रूपे ननु निर्जरसा निर्जरस इति केचिदित्युक्तम् । तथा भिसि निर्जरसैरिति रूपान्तरमुक्तम् । तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्येत्येव

---

सुपि–' इति व्यवस्थापयिष्यमाणत्वादिह सुपष्टेः प्रागकच् ॥—**समुदायस्येति** । तत्रैव द्वन्द्वस्य मुख्यत्वात् । न च द्वन्द्वे यानि सर्वादीनिति सबन्ध', कारकाणां क्रिययैवान्वयात् । न च द्वन्द्वे विद्यमानानि यानीति सबन्ध' । विद्यतिक्रियाध्याहारे गौरवात्, निषेध्याया भवतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्चेति भाव' ॥—**सुट्प्रसङ्ग** इति । न च 'द्वन्द्वे च' इति निषेधसामर्थ्याद्वर्णाश्रमेतराणामित्यादौ सुड् न प्रसज्यत इति वाच्यम् । अनाङ्गस्य त्रतसिलादेर्व्यावृत्त्या तत्सामर्थ्यस्योपक्षीणत्वात् ॥— **जसाधारमिति** ॥ शीभावेन जस्यपहृतेऽप्यौपचारिकाधारत्वमत्र बोध्यम् । यद्वा, जस इर्जसिः तस्मिन् सौत्रः सप्तम्या लुक् इत्यर्थतो व्याचष्टे—**जसाधारमिति** । अन्यथा मत्वकचि 'जसः शी' इत्यस्य प्रवृत्तौ वर्णाश्रमेकरके इत्यपि रूप स्यादिति भावः॥ यदा अज्ञातः कुत्सितो वा इतरः इतरकः इत्यकच कृत्वा वर्णाश्च आश्रमाश्च इतरकश्चेति द्वन्द्वः क्रियते, तदा रूपद्वय स्यादेव ॥ पर तु इतरशब्देन द्वन्द्व कृत्वा अज्ञाता वर्णाश्रमेतरा इत्यज्ञाताद्यर्थयोगो यदा क्रियते, तदा वर्णाश्रमेतरका इत्येकमेव रूप साध्विति बोध्यम् ॥ ननु द्वन्द्वावयवस्येतरशब्दस्याप्यकच् दुर्वारः, अवयवस्य सर्वनामतानपायात् । 'द्वन्द्वे च' इत्यनेन हि समुदायस्य निषेधो न त्ववयवानामित्युक्तमिति चेद् अत्राहु. ।सिद्धान्ते हि जहत्स्वार्था वृत्तिरिति पक्षो मुख्यस्तस्मिंस्तु पक्षे अवयवानां निरर्थकत्वादज्ञाताद्यर्थयोगाभावेनाकचः प्राप्तिरेव नास्ति । यैस्तु 'द्वन्द्वे च' इति चकारेणावयवेष्वपि सज्ञा निषिध्यते इत्युच्यते, तेषामजहत्स्वार्थवृत्तिपक्षाभ्युपगमेऽपि न दोष इति ॥ —**प्रथमचरम**— ॥ नेमशब्दस्य नित्यं प्राप्ते अन्येषामप्राप्ते चायमारम्भः ॥—**तयःप्रत्यय** इति । 'सख्याया अवयवे तयप्' इति विहित' ॥—**तीयस्येति** । 'द्वेस्तीयः' । 'त्रेः सप्रसारण च' इति विहितस्य ॥—**पटुजातीयायेति** । 'प्रकारवचने जातीयर्' ॥—**जराया जर**—॥ 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्त्य 'अचि र ऋतः' इत्यतोऽनुवृत्तेनाचीत्यनेन विशेष्यते विशेषणेनेह तदादिविधिः, 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्यस्य तदन्तविधेरपवादत्वादित्याशयेनाह—**अजादौ विभक्ताविति** । अजादौ किम् । जराभ्याम् । जराभिः ॥ विभक्ताविति किम् । जराया इद जारम् । न च जराया अमुडेवास्त्विति वाच्यम् । जराशब्दात् 'तत्करोति–' इति णिचि 'णाविष्ठवत्' इति टिलोपे ततः क्विपि णिलोपे चैकदेशविकृतस्यानन्यतया जरित्यस्य जराशब्दत्वादसुडि 'ङिच्च' इत्यन्त्यस्य प्रवृत्त्या जसौ जस इति रूपापत्तेः । इष्यते त्वत्रापि जरसौ जरस इति । न च णिलोपस्थानिवद्भावाद्विभक्तिपरत्वाभावेन जरसावित्यादि न सिध्यतीति शङ्क्यम् । 'क्वौ लुप्त न स्थानिवत्' इति निषेधात् । यद्यपि 'क्वौ लुप्त न स्थानिवत्' इति क्वाचित्क, तथापीह तदाश्रयणे जरसिति गुर्वादेशकरणमेव मानमित्यवधेयम् ॥—**पदाङ्गाधिकार** इति । परिभाषेय 'येन विधिः–' इत्यस्य प्रपञ्चभूता । अत एव मनोरमायां पदमङ्ग च विशेष्य विशेषणेन च तदन्तविधिरित्युक्तम् । विशेष्यमिति तु प्रायेणेति बोध्यम् । तेन 'अल्लोपोऽनः' इति सूत्रे अङ्गावयवो योऽनिति वक्ष्यमाणग्रन्थः सगच्छते । अत्र नव्या.—नन्वाकरे 'तस्य तदुत्तरपदस्य च 'इति प्रचुर पाठः । तदन्तस्येति पाठे तु बहुच्पूर्वकेष्वपि पदाङ्गाधिकारकार्याणि प्रवर्तेरन्नित्याशङ्क्य समादधुः । अनभिधानात्पदाङ्गाधिकारकार्याणि बहुच्पूर्वकेषु न प्रवर्तन्त इत्याशयेन फलितार्थकथनपरतया तदुत्तरपदस्य चेति पठित न त्विदमपूर्ववचनमिति॥ सोपसर्गस्य सर्वस्य स्थाने जरसादेशमाशङ्क्याह—**निर्दिश्येति** ॥ ननु तदन्तविधिना जराशब्दान्त यदङ्ग तत्रैव निर्दिश्यमानजराशब्दे जरसादेशेन भवितव्य न त्वन्यत्रेत्यत आह—**एकदेशविकृतस्येति** ॥ पदाधिकारेऽपि तदन्तविधावुदाहरण तदन्तस्यापि रुत्वरत्वे दीर्घाह्नो निदाघ इत्यादि वक्ष्यति । 'अलुगुत्तरपदे' इत्ययमुत्तरपदाधिकारोऽपि पदाधिकारग्रहणेन गृह्यते । तत्फलं तत्रैव स्फुटीकरिष्यति ॥—**पक्षे** इति । जरसादेशाभावे ॥—**तदनुसारिभिरिति** । ये तु निर्जरसिनेत्यादि,

---

१ विभाषेति—इद च वार्तिकमन्प्रत्ययान्ते न प्रवर्तते । तस्य लाक्षणिकत्वात् । तेन द्वितीयाय भोगायेत्यवाद्युदात्तस्य । २ पूर्वविप्रतिषेधेनेति—विप्रतिषेधसूत्रे परशब्दस्येष्टार्थवाचित्वादिति भावः। ३ भिसीति—एसिति वक्तव्ये ऐसुकरणात्संनिपातपरिभाषाऽनित्येति भाव.।

।६।४।१३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः। यूष्णि। यूषणि। पक्षे रामवत्। पद्दन्निति सूत्रे प्रभृतिग्रहणं प्रकारार्थम्। तथा च। औङः श्यामपि दोषन्नादेशो भाष्ये ककुद्दोषणी इत्युदाहृतः। तेन पद्ङ्घ्रिरणोऽङ्घ्रियां, स्वान्तं हृन्मानसं मन इति संगच्छते। आसन्यं प्राणमूचुरिति च। आस्ये भवः आसन्यः। दोषशब्दस्य नपुंसकत्वमप्यत एव भाष्यात्। तेन दक्षिणं दोर्निशाचर इति संगच्छते। भुजबाहू प्रवेष्टो दोरिति साहचर्यात्पुंस्त्वमपि। दोषं तस्य तथाविधस्य भजत इति। द्वयोरह्नोर्भवो द्व्यह्नः। ॥ संख्याविसायपूर्वस्याह्नस्याऽहन्नन्यतरस्यां ङौ ।६।३।११०। संख्यादिपूर्वस्याह्नस्याऽहन्नादेशो वा स्यात् ङौ। द्व्यह्नि। द्व्यहनि। द्व्यह्ने। विगतमहर्व्यह्नः। व्यह्नि। व्यहनि। व्यह्ने। अह्नः सायः सायाह्नः। सायाह्नि। सायाहनि। सायाह्ने। इत्यदन्ताः॥ ॥ विश्वपाः। ॥ दीर्घाज्जसि च ।६।१।१०५। दीर्घाज्जसि इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात्। वृद्धिः। विश्वपौ। सवर्णदीर्घः। विश्वपाः। यद्यपीह औङि नादिचीत्येव सिद्धं जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति तथापि गौर्यौ गौर्य इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्। ॥ आतो धातोः ।६।४।१४०। आकारान्तो यो धातुस्तदन्तस्य भस्याऽङ्गस्य लोपः स्यात्। अलोऽन्त्यस्य। विश्वपः। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। धातोः किम्। हाहान्। टा सवर्णदीर्घः। हाहा। ङे वृद्धिः। हाहै। ङसिङसोर्दीर्घः। हाहाः। ओसि वृद्धिः। हाहौः। ङौ आद्गुणः। हाहे। शेषं विश्वपावत्। आत इति योगविभागादधातोरप्याकारलोपः क्वचित्। क्त्वः। श्नः। इत्यादन्ताः॥ ॥ हरिः। प्रथमयोः पूर्वसवर्ण.। हरी। ॥ जसि च ।७।३।१०९। ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे। हरयः। ॥ ह्रस्वस्य गुणः ।७।३।१०८। ह्रस्वस्य गुणः स्यात्संबुद्धौ। एङ्ह्रस्वादिति सबुद्धिलोपः। हे हरे। हरिम्। हरी। हरीन्। ॥ शेषो घ्यसखि ।१।४।७। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्त सखिवर्जं

---

'भस्य' इत्यनेनासर्वनामस्थाने इत्यस्यैव यजादेराक्षेपात्। तदेतदाह—**असर्वनामस्थाने**त्यादि॥—**ककुद्दोषणी** इति। ककुद् दोषणी इति छेदः। एकपदत्वे त्वनुपपत्तिरनुपदमेव वक्ष्यते॥—**आसन्यमि**ति। 'ये चाभावकर्मणोः' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न॥—**अत एवे**ति। 'ककुद्दोषणी' इति भाष्यप्रयोगादेवेत्यर्थः॥ यद्यपि ककुच्च दोश्च तयोः समाहारः ककुद्दोः ककुद्दोश्च ककुद्दोश्च ककुद्दोषणीत्येकशेषे कृते भाष्य सुयोजमिति दोःशब्दस्य नपुसकत्वेनद प्रमाण, तथापि ककुदित्यस्य पृथक्पदत्वमेव न्याय्यम्। अन्यथा बाह्वोर्द्वित्वे लब्धेऽपि ककुद एकत्व न लभ्यते इति भावः॥ 'तमुपाद्रवदुद्यम्य दक्षिण दोर्निशाचरः' इति रघुस्तत्र दक्षिण दोरुद्यम्य तमुपाद्रवदित्यन्वयः॥—**दोषं तस्ये**ति। अय च श्रीहर्षप्रयोगः। दोषं हस्त दूषण च भजतः चापस्येति सबन्धः॥—**द्वयोरह्नोर्भव** इति। 'तद्धितार्थ–' इति समास। 'राजाहःसखिभ्यः–' इति टच्, 'अह्नोऽह्न एतेभ्यः' इति अह्नादेशः, कालाट्ठञो 'द्विगोर्लुगनपत्ये' इति लुक्॥—**अह्नः साय** इति। स्यतेर्घञि अवसानवचनः सायशब्दः, 'सख्याविसाय–' इति ज्ञापकादेकदेशिसमासः॥ इत्यदन्ता.॥ ॥—**विश्वपा** इति। विश्व पाति रक्षतीति विग्रहे 'पा रक्षणे' इत्यस्मात् 'आतोऽनुपसर्गे–' इति क बाधित्वा 'आतो मनिन्क्वनिब्वनिपश्च' इति चकाराद्विजिति व्याख्यातारः। इह छन्दसि 'आतो मनिन्–' इति विच्, लोके तु 'अन्येभ्योऽपि दृश्यते' इत्यनेनेति विवेकः॥—**दीर्घाज्जसि च**॥ चकारादिचीत्यनुकृष्यते नेति च वर्तते तदाह—**दीर्घाज्जसि इचि चे**ति। सूत्रे चकाराभावे ह्रस्वाकारादिचि दीर्घाकारात्तु जसीति व्यवस्था सभाव्येतेति भावः॥—**इत्याद्यर्थमि**ति। ननु 'यू स्त्र्याख्यौ' 'त्वादिभ्यः' इति निर्देशादिक्प्रत्याहाराच्प्रत्याहारयोरेव निरूढलक्षणेति व्याख्यायता तथा च दीर्घस्याच्त्वाभावाद्गौर्यावित्यादौ पूर्वसवर्णदीर्घो न प्राप्नोतीति किमनेन निषेधेनेति चेन्मैवम्। अस्मादेव निषेधाज्ज्ञापकादिग्जिभिन्नेष्वपि प्रत्याहारेषु लक्षणा स्वीक्रियते। अन्यथा गौरीरित्यादौ शसि परत. पूर्वसवर्णदीर्घो न स्यात्। कि च उपार्छतीत्यादौ 'उरण रपरः' नैषादकर्षुकः इत्यादौ 'इसुसुक्–' इति टस्य कादेशः, अमीषामित्यादौ इणः परस्य सस्य षत्व च न सिध्यतीति दिक्॥ 'प्रथमयोः–' इति सूत्रानन्तर 'दीर्घाच्छसि' इत्येव सुवचं, दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इति तस्यार्थः। एव च चकारो न कर्तव्यो नेति च नानुवर्तनीयमिति महल्लाघवमित्येके॥ शसि दीर्घादेवेति विपरीतनियमवारणाय 'नृन्पे' 'कानाम्रेडिते' इति निर्देशाश्रयणे प्रतिपत्तिगौरव स्याद् इति यथान्यासमेव श्रेय इत्यन्ये॥—**हाहानि**ति॥ गन्धर्वविशेषवाचकमव्युत्पन्न प्रातिपदिकमिदम्। 'हाहा हूहूश्चैवमाद्या गन्धर्वाः' इत्यमरः। केचित्तु अकारो वासुदेवस्तेन सह वर्तते इति सास्तान् सानिति प्रत्युदाहरन्ति॥ क्त्वः। श्नः। यद्यपि 'क्त्वो ल्यप्' 'श्नः शानज्झौ' 'क्रमश्च क्त्वि' इति निर्देशादेतत्सूत्रेष्वातो लोपः सिध्यति, तथापि क्त्वो ल्यप् भवति श्नः शानज् भवतीति व्याख्यानवाक्येष्वसाधुत्वशङ्कावारणायेदमुक्तम्॥ इत्यादन्ताः॥ ॥ सूत्रे शेषपदस्य प्रयोजनमाह—**अनदीसंज्ञावि**ति। 'यूस्त्र्याख्यौ' इत्यतः यू, 'ङिति ह्रस्वश्च' इत्यतः ह्रस्व इत्यनुवर्तते

१ प्रकारार्थमिति—प्रकारः सादृश्य, तच्च सुप्त्वेन। मासपचनीत्यादावपि न लुमतेत्यस्यानित्यत्वात्सुप्परत्व प्रत्ययलक्षणेन बोध्यमिति बृहच्छब्देन्दुशेखरे। २ पूर्वस्येति—सायेभ्य इति वक्तव्ये पूर्वग्रहणमुत्तरपदे इत्यस्याधिकृतस्य षष्ठ्यन्तत्वलाभार्थम्।

घिसंज्ञं स्यात्। शेषः किम्। मत्यै। एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थमिति तत्त्वम्। ह्रस्वौ किम्। वातप्रम्यै। इदुतौ किम्। मात्रे। **आङो नाऽस्त्रियाम्** ।७।३।१२०। घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा। अस्त्रियां किम्। मत्या। **घेर्ङिति** ।७।३।१११। घिसंज्ञकस्य ङिति सुपि गुणः स्यात्। हरये। घेः किम्। सख्ये। ङिति किम्। हरिभ्याम्। सुपि किम्। पट्वी। घेर्ङितीति गुणे कृते। **ङसिङसोश्च** ।६।१।११०। एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात्। हरेः हर्योः। हरीणाम्। **अच्च घेः** ।७।३।११९। इदुद्भ्यामुत्तरस्य ङेरौत्स्याद् घेरन्तादेशश्चाकारः। हरौ। हर्योः। हरिषु। एवं श्रीपत्यग्निरविकव्यादयः। **अनङ् सौ** ।७।१।९३। सख्युरङ्गस्याऽनङादेशः स्यादसंबुद्धौ सौ परे। ङिच्चेत्यन्तादेशः। **अलोऽन्त्यात्पूर्व उपधा** ।१।१।६५। अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्। **सर्वनामस्थाने चासंबुद्धौ** ।६।४।८। नान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे। **अपृक्त एकाल्प्रत्ययः**[3] ।१।२।४१। एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः

---

तदाह—**ह्रस्वौ यावित्यादि** ॥—**मत्यै** इति। नदीसञ्ज्ञापक्षे घिसंज्ञाया सत्याम् 'आण् नद्याः' इत्याडागमे 'घेर्ङिति' इति गुणे अयादेशे च मतयै इति स्यादिति भावः ॥—**आङो ना**—'पुंसि' इति तु नोक्तम्, अमुना कुलेनेत्यत्र यथा स्यात्। न च नुमा रूपसिद्धिः। मुत्वस्यासिद्धत्वात्, 'इकोऽचि' इति नुमोऽप्रवृत्तेः। नादेशे तु नासिद्धत्वम्। 'न मुने' इति निषेधात्। न च 'न मु ने' इति निषेधो नुम्येव किं न स्यात्, न इत्यकारस्याविवक्षितत्वादिति वाच्यम्। अमुना घटेनेत्यादावमिद्ध्यापत्तेः। अमुष्मै कुलायेत्यादौ नुम्प्रसङ्गाच्च। न च तत्र स्मायादेशे सति नुमोऽप्रवृत्तिरिति शङ्क्यम्। स्मायादेशं बाधित्वा परत्वान्नुमः प्रवृत्तेः ॥—**प्राचामिति**। आचार्याणामिति शेषः ॥—**ङसिङसोश्च** ॥ इह ङसिङसौ द्वौ एङावपि तयोर्यथासंख्यं न, अस्वरितत्वात्। अल्पाच्तरस्य पूर्वनिपाताकरणाल्लिङ्गात् 'अच्च घे.' 'उपसर्गे घोः किः' इति निर्देशाच्च ॥—**अच्च घेः** ॥ अत्र इदुद्भ्याम्, औद् इति 'ङेराम्' इत्यतो ङेरिति च पदत्रयमनुवर्तत इत्याशयेनाह—**इदुद्भ्यां परस्य ङेरौत्स्यादि**ति। घेरुत्तरस्येति प्राचां व्याख्यानमिह तु नोक्तम्। सूत्रे घेरित्यस्य षष्ठ्यन्तत्वात् तन्त्रावृत्त्यादौ च प्रमाणाभावात्। 'औत्' इति पूर्वसूत्रे इदुद्भ्यामुत्तरस्य ङेरिति वृत्तसंबन्धस्य त्यागायोगाच्च ॥ यत्तु व्याचख्युः। अदिति तपरत्वं बुद्धावित्यादावत्वे स्त्रिया टाप् मा भूदित्येतदर्थमिति, तच्चिन्त्यम्। तपरग्रहणाद्धि टापा सह दीर्घो मा भूत् टाप् तु स्यादेव लक्षणद्वयबाधे मानाभावात्। अत एव 'कृन्मेजन्तः' इति सूत्रे भाष्यादौ सन्निपातपरिभाषया पद्धतावित्यत्र टाप् नेत्युक्त, टापो व्यवधाने ह्यानन्तर्यविघातः स्यादिति ॥ तपरकरणाट्टाबभावे तु सनिपातपरिभाषोपन्यासस्तत्र विरुध्येत ॥ यदपि व्याचख्यु.। औतस्तकारः स्वरितार्थ इति। तदपि न। 'स्तीर्णे बर्हिषि समिधाने अग्नौ' इत्यादौ स्वरितत्वादर्शनात्। 'न विभक्तौ' इति सूत्रे ङेरौतस्तु तकार उच्चारणार्थो नेत्सञ्ज्ञक इति स्वयमेवोक्तत्वाच्च। तस्मादुभयत्र तपरकरणमुच्चारणार्थमेवेति मनोरमायां स्थितम् ॥—**अनङ् सौ** ॥ नकारादकार उच्चारणार्थ.। 'असबुद्धौ' इति पर्युदासात् साविति प्रथमैकवचनं गृह्यते, न तु सप्तमीबहुवचनम् ॥ 'सोर्डा' इत्येव सिद्धे अनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थ, तेन उशनसः सबुद्धावनङ् सिध्यतीति प्राञ्चः ॥ यद्यपि 'सोर्डा' इत्युक्ते 'ऋदुशन–' इत्युत्तरसूत्रेणापि डा स्यात्। ततश्च उशनेत्यत्र 'सर्वनामस्थाने चासबुद्धौ' इति दीर्घः स्यात्। पुरुदंसेत्यत्र तु 'सान्तमहतः' इति स्यात् तथापि सञ्ज्ञापूर्वकविधेरनित्यत्वाद् अङ्गवृत्तपरिभाषया वा तत्समाधेयमिति तेषामाशयः ॥—**अलोऽन्त्यात्पूर्व**—॥ अल इति पञ्चमी अन्त्यादित्यनेन विशेष्यत इत्याह—**अन्त्यादल** इति। अलः किम्। शिष्टः शिष्टवानित्यादौ अन्त्यात्सघातात् पूर्वस्य शकारस्य मा भूत्। सत्यां हीत्सञ्ज्ञायां 'शास इदङ् हलोः' इति शस्येत्त्व स्यात्। नन्वेवमप्यन्त्यादल' पूर्वस्य सघातस्योपधासञ्ज्ञायां शिष्ट इत्यादौ शकारविशिष्टस्याकारस्य इत्व स्यादित्यतिप्रसङ्गदोषस्तदवस्थ एवेति चेदुच्यते। यथा हि लोके अमीषा ब्राह्मणानामन्त्यात्पूर्व आनीयतामित्युक्ते यथाजातीयकोऽन्त्यात्पूर्व आनीयते, तथाऽत्राप्यन्त्योऽलात्मक इति तत्पूर्वोऽप्यलेव गृह्यते॥ तदेतदाह—**पूर्वो वर्ण** इति। अत्र'अचोऽन्त्यादि टि'इत्यत्रेव अल इति निर्धारणे षष्ठीत्यपि सुवचमिति केचिदाहुः। अलां मध्ये योऽन्त्यस्तस्मात्पूर्वो वर्ण उपधासञ्ज्ञः स्याद् इति व्याख्याया अपि संभवदुक्तिकत्वात् ॥—**सर्वनामस्थाने**—॥ 'नोपधायाः' इति सूत्र 'ढ्लोपे–' सूत्राद्दीर्घग्रहण चानुवर्तते इत्याशयेनाह—**नान्तस्ये**त्यादि ॥—**अपृक्त एकाल्**—॥ असहायवाच्यत्रैकशब्द. सख्यावाची वा। न च सख्यावाचित्वे अभैत्सीदित्यत्र हलन्तात्परस्य सिचोऽपृक्तत्वाल्लोपः स्यादिति वाच्यम्। विभक्तिसाहचर्याद्विभक्तेरेव लोप इति व्याख्यानात्। एकालिति किम्। जागृविः 'वेरपृक्तस्य' इति लोपो न। इदमेवैकग्रहण 'वर्णग्रहणे जातिग्रहणं ज्ञापयति' इत्यभ्युपगम्य 'नि-

---

१ मात्रे इति—ऋतो ङीति नियमेनैव सिद्धौ व्यर्थमिदुद्ग्रहणमिति वाच्यम्। न, पित्रेत्यादौ नाभावस्य दुर्वारत्वात्। २ ङसिङसोश्चेति—ङसोश्चेत्येव सिद्धे ङसिग्रहण चिन्त्यप्रयोजनमिति। ३ अपृक्त इति—इदं सूत्र त्यक्तु शक्यम्, अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धेः इति केचित्।

स्यात्। हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते। हल्ङ्याब्भ्यः किम्। ग्रामणीः। दीर्घात्किम्। निष्कौशाम्बिः। अतिखट्वः। सुतिसीति किम्। अभैत्सीत्। तिपा सहचरितस्य सिपो ग्रहणात्सिचो ग्रहणं नास्ति। अपृक्तमिति किम्। बिभर्ति। हल् किम्। बिभेद। प्रथमहल् किम्। राजा। नलोपो न स्यात् संयोगान्तलोपस्यासिद्धत्वात्। सखा। हे सखे। सख्युरसंबुद्धौ ।७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णित्कार्यकृत् स्यात्। अचो ञ्णिति ।७।२।११५।

पात एकाजनाड्, इत्यत्र एकाज्ग्रहणं त्यक्तुं शक्यमित्यवोचाम ॥—हल्ङ्याब्भ्यो—॥ दीर्घादित्येतद् ङ्यापोरेव विशेषण, न तु हलोऽसंभवादित्याह—दीर्घौ याविति। न लिदं विहितविशेषण, प्रमाणाभावात्। या सा का इत्यादावव्याप्तेश्च। न च तत्र हलन्ताद्विहितत्वेन निर्वाहः। यः स इत्यादावतिव्याप्तेः। कर्ता सखेत्यादावव्याप्तेश्च। यद्यपि त्यदाद्यत्वविधौ विभक्तावित्यस्य विषयसप्तमीत्वे स्वीकृते या सेत्यादौ नोक्तदोषः। सुविभक्तेराबन्ताद्विहितत्वस्य संभवात्। तथा अनड्विधौ सावित्यस्य विषयसप्तमीत्वे कर्ता सखेत्यादावपि न दोषः। हलन्ताद्विहितस्य सोः संभवात्। तथापि बहुश्रेयसीत्यत्राव्याप्तिप्रसङ्ग इति भावः।—हलिति। तस्य सुतिसीत्येवरूपत्वमेकदेशविकृतन्यायेन बोध्यम् ॥—लुप्यत इति। यद्यपि इह 'लोपो व्योर्वलि' इत्यतो लोप इत्यनुवर्तते, तच्च तत्र भावसाधनं तथापीह कर्मसाधनं, हलिति प्रथमान्तेन सामानाधिकरण्यादिति भावः ॥—निष्कौशाम्बिरतिखट्व इति। प्रादिसमासे 'गोस्त्रियोः' इति ह्रस्व ॥ नन्विह समस्तस्य ङ्याबन्तत्वं नास्ति। न च स्त्रीप्रत्यये तदादिनियमो नास्तीति वाच्यम्। अनुपसर्जने हि तथा, इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येव। अन्यथा अतिकारीषगन्ध्यापुत्र इत्यत्र ष्यङन्तपूर्वपदलक्षणसंप्रसारणप्रसङ्गात्। सत्यम्। तथाप्युत्तरपदस्य ङ्याबन्तत्वेन सोस्ततः परत्वानपायाद्दीर्घग्रहणाभावे सुलोपः स्यादेव। नहीदं ङ्याब्ग्रहण विहितविशेषणमित्यधुनैवोक्तत्वात् ॥ स्यादेतत्। गङ्गामात्मन इच्छति गङ्गीयति ततः क्विप्। अलोप यलोपे च गङ्गीः। इह ईकारस्य स्थानिवद्भावेनाच्त्वाद्दीर्घत्वाच्चातिव्याप्तिः। न चाल्लोपस्य स्थानिवत्त्वात्सोरापः परत्व नेति शङ्क्यम्। 'क्वौ लुप्त न स्थानिवत्' इति निषेधादिति चेन्मैवम्। ङीई आआप् इति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यातत्वेन प्रकृते आकाररूपस्य आपोऽभावादुक्तातिप्रसङ्गाभावात् ॥ निष्कौशाम्बीयते. क्विपि तु निष्कौशाम्बी इति भवत्येव। ईकाररूपङीबन्तत्वेन सुलोपप्रवृत्ते. ॥—अपृक्तं किम्। बिभर्तीति। इदं च प्रत्युदाहरण चिन्त्यम्। विशिष्टस्याहल्त्वात्। सुतिसीना हलिति क्लिष्ट व्याख्यायातिप्रसङ्गापादनस्यानुचितत्वात् ॥ यत्तु व्याचख्युः, सुरां सुनोतीति सुरासुत्, तमाचष्टे सुरासयति, ततः क्विप्। सुराः। सुरासौ। सुरासः। इह सुनोतेरवयवस्य सस्य लोपं व्यावर्तयितुमपृक्तग्रहणमिति। तदपि चिन्त्यम्। परस्परसाहचर्येण सुतिसीनां विभक्तीनामेव ग्रहणात्। अन्यथा सिचो लोपापत्तेरुक्तत्वात्। प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणाच्च ॥ यत्तु 'तित्स्वरितम्' इति सूत्रे कैयटेनोक्त न क्वचिदियं परिभाषा भाष्यवार्तिककाराभ्यामाश्रितेति ॥ तद्भ्रमसात्। 'अङ्गस्य' इति सूत्रे भाष्यादौ तस्याः पठितत्वात्, स्वयमपि तत्र व्याख्यातत्वाच्च ॥—संयोगान्तलोपस्यासिद्धत्वात् इति। ननु संयोगान्तलोपो नासिद्धः। 'न ङिसंबुद्ध्योः' इति सूत्रे संबुद्धिग्रहणाज्ज्ञापकात्। न चैवं गोमानित्यादावपि नलोपापत्ति, ज्ञापकस्य विशेषविषयत्वात्। यत्र हि नकारविभक्त्योरानन्तर्यं तत्रैव सिद्ध व्याख्यानात्। यत्त्वाहुः हे ब्रह्मन्निति नपुंसकार्थत्वात् नैतज्ज्ञापकमिति। तन्न। लुका लुप्ते प्रत्ययलक्षणाभावात्। 'संबुद्धौ नपुंसकानाम्–' इत्यस्यावश्यकत्वाच्च। संबुद्धिग्रहणस्य नपुंसकविषयत्वासंभवेनोक्तज्ञापकस्य सुस्थत्वात्। तस्मान्नलोपो न प्रयोजनमिति चेदिह तर्हि अभिनोऽत्रेत्यत्र रोरुत्व न स्यात्। मिपि 'दश्च' इति रुत्वे विभक्तिसकारस्य संयोगान्तलोपे तस्यासिद्धत्वात्। तथा अबिभर्भवान् अजागर्भवानित्यत्र तिलोपो न स्यात्। 'रात्सस्य' इति नियमात्। तदुक्तम्—'संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति। रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते'। इति। नलोपादिरित्यादिशब्देनोत्व संगृह्यते ॥ अत्रेदमवधेयम्। ङ्याब्ग्रहण सोरेव विशेषण, न तु तिस्यो, व्याख्यानात्। तेन मालेवाचरद् अमालाद् गङ्गेवाचरद् अगङ्गाद् इत्यत्र नातिप्रसङ्गः। तथा च हलन्तात्पर सुतिसीत्येतदपृक्त हल् लुप्यते, दीर्घौ यौ ङ्यापौ तदन्तात्परं 'सु' इत्येतदपृक्त हल् लुप्यते इति वाक्यार्थः पर्यवसन्नः ॥ यत्तु व्याचख्युः ङ्याब्भ्यां तिस्योरसंभव एवेति। तत्र ङ्यन्तादसंभव इति सत्यम्। आबन्तात्तु आचारक्विबन्ताल्लङस्तिप्सिपौ स्त एव। अगङ्गात्। अगङ्गा इति यथा। न च शपा व्यवधानम्। एकादेशस्य पूर्वान्तत्वेन ग्रहणात्। न च स्थानिवद्भावः। अपूर्वविधित्वात् ॥ अन्ये त्वाहुः। ङ्याब्ग्रहणमसंभवादेव तिस्योर्विशेषणं न भवतीति यदुक्त, तत्सम्यगेव। न च अगङ्गादगङ्गा इत्यत्र संभवोऽस्तीत्युक्तमिति वाच्यम्। तत्र स्थानिभूतस्य शपः पूर्वस्मान्निमित्तभूतादापः परयोस्तिस्योर्लोपे कर्तव्ये स्थानिवद्भावेन शपा व्यवधानात् तिस्योर्लोपस्याप्रसक्तेः। न च फलाभावात्पञ्चमीसमासपक्षो न स्वीक्रियते इत्यपि वाच्यम्। तत्प्रयोजनस्य प्रागेव प्रदर्शितत्वादिति ॥—सखेति। समानं ख्यायते जनैरिति सखा। 'ङिच्च यलोप' इति चानुवर्तमाने 'समाने ख्यः स चोदात्तः' इति ख्याइत्यस्मादिण् समानशब्दस्योदात्तः सभावश्च। न चेह सुविभक्तिसंनियोगेन सखिशब्दस्यानङि कृते सन्निपातपरिभाषया 'हल्ङ्याब्–' इति सुलोपो न भवतीति शङ्क्यम्। 'स्वतन्त्रः कर्ता' इत्यादिनिर्देशेनानङो नकारमाश्रित्य सुलोपे कर्तव्ये तत्परिभाषाया अप्रवृत्तेः ॥—सख्युरसंबुद्धौ॥ इह 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थान इत्यनुवर्तते

**ञति णिति च परेऽजन्ताङ्गस्य वृद्धिः स्यात्। सखायौ। सखायः। सखायम्। सखायौ। घिसंज्ञाऽभावान्न तत्कार्यम्। सख्या। सख्ये। ख्यत्यात्परस्य ।६।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उत्स्यात्। सख्युः २। औत् ।७।३।११८। इदुद्भ्यां परस्य ङेरौत्स्यात्। उकारानुवृत्तिरुत्तरार्था। सख्यौ। शेषं हरिवत्। शोभनः सखा सुसखा। सुसखायौ। सुसखायः। अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः। समुदायस्य सखिरूपत्वाभावादसखीति निषेधाप्रवृत्तेर्घिसंज्ञा। सुसखिना। सुसखये। ङसिङसोर्गुणे कृते कृतयणादेशाभावात् ख्यत्यादित्युत्वं न। सुसखेः सुसखौ इत्यादि। एवमतिशयितः सखा अतिसखा। परमः सखा यस्येति विग्रहे। परमसखा। परमसखायावित्यादि। गौणत्वेऽप्यनङ्णित्वे प्रवर्तेते। सखीमतिक्रान्तोऽतिसखिः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच्। हरिवत्। इहानङ्णित्वे न भवतः। गोस्त्रियोरिति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात्। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्। पतिः समास एव ।१।४।८। पतिशब्दः समास एव घिसंज्ञः स्यात्। पत्या। पत्ये। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतिना। भूपतये। कतिशब्दो नित्यं बहुवचना-**

---

तदसंबुद्धावित्यनेन विशेष्यते। 'गोतो णित्' इति सूत्राण्णिदित्यनुवृत्त तत्सामानाधिकरण्येन सप्तम्याः प्रथमा कल्प्यत इत्याह—**संबुद्धिवर्जे सर्वनामस्थानमि**ति। 'सख्युरसंबुद्धिः' इत्येव सूत्रयितु युक्तमिति मनोरमायां स्थितम्॥ ननु सखेत्यत्रोपधादीर्घं बाधित्वा परत्वात् 'अत उपधायाः' इति वृद्ध्या भाव्य सोर्णित्त्वादिति चेद्॥ अत्राहुः। कृताकृतप्रसङ्गिलमात्रेणापि नित्यत्वस्वीकारात् अन्तरङ्गत्वाच्च सखेत्यत्र वृद्धिं बाधित्वा 'सर्वनामस्थाने चासंबुद्धौ' इत्युपधादीर्घेणैव भवितव्य 'सख्युरसंबुद्धौ' इति णिद्वद्भावमुपजीव्यात्र प्रवर्तमानस्य 'अत उपधायाः' इत्यस्य बहिरङ्गत्वादिति॥—**अचोऽञ्णिति**॥ 'मृजेर्वृद्धिः' इत्यतो वृद्धिरित्यनुवर्तते, अङ्गस्येति चानुवृत्तमचा विशेष्यते, विशेषणेन तदन्तविधिरित्याशयेन व्याचष्टे—**अजन्ताङ्गस्ये**ति॥—**ख्यत्यात्**—॥ पञ्चमीनिर्देशादेव परस्येति लब्धे परस्येति ग्रहणम् 'एकः पूर्वपरयोः' इति निवृत्तमिह नाधिक्रियते इति ध्वननार्थम्॥ ख्यश्च त्यश्चेति समाहारद्वन्द्वे ख्यत्य तत्र खिखीशब्दयोः कृतयणादेशयोरनुकरण ख्येति। एव तितीशब्दयोऽस्त्येति, उभयत्राप्यकार उच्चारणार्थो न तु मुख्यापत्यादिशब्दैकदेशानुकरणमिदम् 'सख्युर्य.' 'पत्युर्नः—' 'सख्याया. सवत्सरमख्यस्य च' 'आपत्यस्य च—' इत्यादिनिर्देशादित्यभिप्रेत्याह—**खितिशब्दाभ्यामि**ति। एव च यत्र यण्प्रवृत्तिः तत्रैवोत्व, न त्वतिसखेरित्यादौ। न चैव यणा निर्देशस्योक्तप्रयोजनत्वाद् ह्रस्वान्तयोरेव ग्रहण स्यान्न तु दीर्घान्तयोरिति शङ्कयम। निर्देशस्य ह्रस्वदीर्घसाधारणत्वाच्छास्त्रस्य बहुविषयत्वसंभवे तत्संकोचस्यान्याय्यत्वात्केति भावः॥ —**औत्**॥ एतच्च सूत्रं नदीसंज्ञकेषु 'इदुद्भ्याम्' इति पूर्वसूत्रेण बाध्यते। घिसंज्ञकेषु 'अच्च घे.' इति उत्तरसूत्रेण। तस्मात्संज्ञाद्वयशून्योऽस्य विषयः। न च तादृश उकारोऽस्तीत्यत आह—**उकारानुवृत्तिरि**ति। प्राचा तु घिनदीसंज्ञावर्जिताभ्यामिदुद्भ्या परस्येत्युक्तम्। तदसत्। तादृशस्योकारस्याप्रसिद्धेः॥—**सुसखे**ति। प्रादिसमासे 'राजाहःसखिभ्यः' इति टचो 'न पूजनाद्' इति निषेधः। 'शेषो घ्यसखि' इत्यत्रासखीति नाय प्रसज्यप्रतिषेधः। असमर्थसमासादिदोषापत्तेः, किं तु पर्युदास एवेति सुसखीत्यस्य सखिशब्दभिन्नत्वाद्घिसंज्ञा स्यादेव। न च समुदायस्य सखिशब्दभिन्नत्वेऽपि सखिशब्दान्तभिन्नत्वं नेति कथमसखीति निषेधाप्रवृत्तिरिति शङ्कयम्। विशेष्यासंनिधानादसखीत्यत्र 'येन विधिस्तदन्तस्य' इत्यस्याप्रवृत्तेः, तदेतत्सकलमभिप्रेत्याह—**समुदायस्ये**त्यादि। एवमतिसखेत्यत्रापि समासान्तनिषेधादिक बोध्यम्॥—**गौणत्वेऽपी**ति। अतिदधेत्यादावस्थ्याद्यनङ्वदिति भाव.। तथा च 'येन विधिः—' इति सूत्रे परमसखायाविति बहुव्रीहिः, तत्पुरुषे हि टचा भाव्यमिति कैयटः। तथा 'द्वितीयाश्रिता—' इति सूत्रे सोमसखेति प्रतीकमुपादाय बहुव्रीहित्वान्न समासान्त इति स एवाह। अनक्षो वरुण इन्द्रसखा, अग्ने याहि मरुत्सखा, तीव्र सोम पिबति गोसखायमित्यादिप्रयोगाश्चैवमेव संगच्छन्ते। तत्र बहुव्रीहिप्रयुक्तस्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात्। एतेन घिसंज्ञासूत्रे शोभन॰ सखा अस्य सुसखिरित्युदाहरन्तौ हरदत्तन्यासकारौ तदनुगामिनश्चान्ये उपेक्ष्याः॥—**अनित्यत्वादि**ति। 'शक्तिलाङ्गलाङ्कुश' इति वार्तिके घटघटीग्रहणमत्र लिङ्गम्॥—**पतिः समास एव**॥ एवकार इष्टतोऽवधारणार्थः। अन्यथा हि 'समासे पतिरेव' इति नियम. संभाव्येत, ततश्च महाकविनेत्यादिप्रयोगो न सिध्येत्। 'अनल्विधौ' 'धात्वादे.' इत्यादिज्ञापकानुसरणे तु प्रतिपत्तिगौरव स्यादिति भावः॥—**पत्येत्यादि**। नन्वेव 'शेषोऽध्यसखिपती' इत्येवोच्यता, किमनेन 'पतिः समास एव' इति सूत्रेणेति चेन्न। समुदायस्य पतिरूपत्वाभावेन बहुच्पूर्वकपतिशब्दस्यापि घिसंज्ञा स्यात्। ततश्च सुसखिनेत्यादिवद् बहुपतिनेत्यादि प्रसज्येत, इष्यते तु बहुपत्येत्यादि। नापि 'सखिपती समास एव' इत्येव सूत्र्यतामिति शङ्कयम्। बहुपत्येत्यादिवद्बहुसख्येत्यापत्तेः, इष्यते तु बहुसखिनेत्यादि॥ अथ कथं 'सीतायाः पतये नम.' इति, 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ'

---

१ नित्य बहुवचनान्त इति—किंशब्दात्संख्यापरिमाणे वर्तमानाद्डतिप्रत्ययः संख्यापरिच्छिन्न संख्येये वाच्ये डतिप्रत्ययो विधीयते न तु द्वित्वाद्यवच्छिन्ने अनभिधानात्। तेनेदमुपपन्नम्। अत एव 'किमित्येतत्परिप्रश्ने वर्तते, परिप्रश्नोऽनिर्ज्ञाने, अनिर्ज्ञात च बहुषु, द्व्येकयोः पुनर्निर्ज्ञातमेवेति 'किम॰ संख्यापरिमाणे डति च' इति सूत्रस्थ भाष्य संगच्छते इति भावः।

**न्तः । बहुगणवतुडति संख्या ।१।१।२३। एते संख्यासंज्ञाः स्युः । डति च ।१।१।२५। डत्यन्ता[1] संख्या षट्संज्ञा स्यात् । प्रत्ययस्य लुक्श्लुलुपः ।१।१।६१। लुक्श्लुलुप्शब्दैः[2] कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् । षड्भ्यो लुक् ।७।१।२२। षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् । प्रत्ययलोपे प्रत्ययलक्षणम्[3] ।१।१।६२। प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते । न लुमताङ्गस्य ।१।१।६३। लुक् श्लु लुप् एते लुमन्तः । लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं[4] न स्यात् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । अस्मद्युष्मत्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः ।**

---

इति पराशरश्च । अत्राहुः । पतिरित्याख्यात. पतिः 'तत्करोति तदाचष्टे' इति णिचि टिलोपे 'अच इ.' इत्यौणादिकप्रत्यये 'णेरनिटि' इति णिलोपे च निष्पन्नोऽय पतिशब्द' 'पति समास एव' इत्यत्र न गृह्यते, लाक्षणिकत्वाद् इति ॥ एतेन 'कृष्णस्य सखिरर्जुनः' इति भारत, 'सखिना वानरेन्द्रेण' इति रामायण च व्याख्यातम् ॥—**कतिशब्द** इति । का संख्या येषां ते कति । 'किमः सख्यापरिमाणे डति च' इति डतौ डित्त्वाट्टिलोपः ॥—**बहुगणवतु**—॥ बहुगणौ प्रातिपदिके सख्यावाचके गृह्येते न तु सघवैपुल्यवाचकं अपि, सख्यायते अनयेत्यन्वर्थसज्ञाविज्ञानात् । अत एव डतिरपि 'किमः सख्यापरिमाणे डति च' इति विहितस्तद्धित एव गृह्यते, वतुसाहचर्याच्च । न तु 'पातेर्डतिः' ॥ यद्यपि 'सज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहण नास्ति' तथापीह वतुडत्योः केवलयोः सज्ञाविधौ फलाभावादन्वर्थतावलाच्च तदन्तयोरेव सज्ञा प्रवर्तते ॥ सानुबन्धनिर्देशस्तु ब्राह्मणवद्वसतिरित्यादावतिप्रसङ्गशङ्कां निराकर्तुमित्याहु ॥ न चैव सख्याकार्येषु कृत्वसुजादिषु कृत्रिमसख्याया एव ग्रहण स्यात् न त्वकृत्रिमाया इति पञ्चकृत्व इत्यादि न सिध्येत् । कृत्रिमाकृत्रिमयो कृत्रिमे कार्यसप्रत्ययाद् इति वाच्यम् । 'सख्याया अतिशदन्तायाः कन्' इत्यत्र तिशदन्तपर्युदासबलेन सख्याकार्येषु कृत्रिमाकृत्रिमन्यायाप्रवृत्तेः ॥ नन्वेव भूरिशब्दात्कृत्वसुच्प्रत्यय इति चेद् अत्राहुः । अनियतसख्यावाचिना चेत्सख्याकार्य स्यात्तर्हि बहुगणयोरेवेत्येव भूतानियमफलकसख्याविज्ञानान्नास्त्यतिप्रसङ्ग इति ॥—**डति च** ॥ 'ष्णान्ता षट्' इत्यतः षडित्यनुवर्तते । सख्येति च प्रकृत डतीत्यनेन विशेष्यते तदाह—**डत्यन्ता संख्येति** ॥ सख्येति किम् । पतय ॥—**प्रत्ययस्य लुक्श्लुलुपः** ॥ 'अदर्शन लोप.' इत्यतोऽनुवृत्तस्यादर्शनस्यानेकसंज्ञाकरणसामर्थ्यात्तन्त्राद्याश्रित्य तद्भाविनसज्ञा इह विज्ञायन्ते, तेन सज्ञासकरोऽत्र न भवति तदेतदाह—**लुक्श्लुलुप्शब्दैरि**त्यादि । सति तु सज्ञासकरे हन्तीत्यत्र शब्लुकि 'श्लौ' इति द्वित्व स्यात् । जुहोतीत्यत्र श्लौ सति 'उतो वृद्धिर्लुकि हलि' इति वृद्धि स्यात् । न च तत्राभ्यस्तस्य नेत्यनुवृत्तेयायोतिनोनोतीत्यादाविव वृद्धिर्न भविष्यतीति वाच्यम् । सज्ञासकरपक्षे तदनुवृत्त्यसंभवात् । अन्यथा सूत्रस्य निर्विषयत्वापत्तेः । न च यातीत्यादिरवकाशः, सज्ञासंकरे तत्रापि द्वित्वस्य दुर्वारत्वादिति भाव ॥ 'फले लुक्' 'जुहोत्यादिभ्य श्लु' 'जनपदे लुप्' इत्यादिविधिप्रदेशेषु सूत्रशाटकवद्भाविसज्ञाविज्ञानान्नान्योन्याश्रय. ॥—**षड्भ्यो लुक्** ॥ 'सर्वनाम्न स्मै' इतिवत् 'षषो लुक्' इति वक्तव्ये बहुवचननिर्देशोऽत्रार्थप्राधान्यसूचनार्थः । कृत्रिमाकृत्रिमन्यायेन स्वरूपनिरासमिद्धे, तेन षडर्थगतसख्याभिधायिनोरेव जश्शसोर्लुगित्यर्थपर्यवसानात्प्रियपञ्चान इत्यादौ नातिप्रसङ्ग ॥ 'जश्शसो शि.' इत्यतोऽनुवर्तनादाह—**जश्शसोर्लुक् स्यादि**ति ॥—**प्रत्ययलोपे**—॥ विशेषविहिता अपि लुगादिसज्ञा लोपसज्ञां न बाधन्ते । एकसज्ञाधिकारादन्यत्र सज्ञानां बाध्यबाधकभावानङ्गीकारादिति भाव ॥ स्थानिवत्सूत्रेण सिद्धे नियमार्थमिद सूत्र, प्रत्ययस्यासाधारण रूप यत्र प्रयोजक, तदेव कार्य प्रत्ययलोपे सति भवति न तु प्रत्ययाप्रत्ययसाधारणमिति । तेन शोभना दृषदो यस्य सुदृषत् प्रासाद इत्यत्र 'नञ्सुभ्याम' इत्यन्तोदात्ततां बाधित्वा 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम 'अत्वसन्तस्य—' इति दीर्घश्च न भवति । यद्वा, यत्र प्रत्यय प्राधान्येनाश्रीयते तत्राल्विधावपि विध्यर्थमिदम, तेन अतृणेडित्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन् भवति । 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति तु वर्णप्राधान्यविषयक, तेन गवे हित गोहितमित्यत्र अवादेशो न । यद्यपीद पक्षद्वयमाकराल्ढ, तथापि नियमपक्ष एव प्रबल इति यङ्लुगन्ते मनोरमाया स्थितम् ॥ स्यादेतत् । सूत्रस्यास्यावश्यकत्वेऽपि 'प्रत्ययलोपे तल्लक्षणम्' इत्येव सूत्र्यता किमनेन द्वितीयप्रत्ययग्रहणेन । अत्राहुः । प्रत्ययस्यासाधारण रूप यत्रेत्यादिलाभाय द्वितीयप्रत्ययग्रहणमिति ॥—**न लुमताङ्गस्य** ॥ लुमतेति किम् । कार्यते हार्यते, अत्र 'णेरनिटि' इति णिलोपेऽपि णिजपेक्षा वृद्धिर्भवत्येव ॥ अङ्गस्येति किम् ।

---

१ डत्यन्तेति—नन्वत्र सज्ञाविधित्वात्तदन्तग्रहण दुर्लभ, नच केवलस्य सज्ञाया. प्रयोजनाभाव., अङ्गाधिकारे तदन्तविधः सत्त्वेन षड्भ्यो लुक एव प्रयोजनस्य सत्त्वात् इति चेत्, न, षट्कनीति डडनुवादेन शुको विधानेन च तदन्तस्यैव सख्यासज्ञाप्रवृत्तेः । २ लुक्श्लुलुप इति—एते च विधीयमाना: सर्वादेशा एव । क्सस्याचीति प्रकृते लुग्वा दुहेति लुग्ग्रहणात् । ३ लक्षणमिति—नच 'प्रत्ययज प्रत्ययवत्' इत्येव सिद्धे लक्षणग्रहण व्यर्थमिति भ्रमितव्यम्, प्रत्ययनिमित्तकमेव भवति न तु प्रत्ययस्थानिकमित्यर्थलाभार्थं तत् । तेन नवोभिन्नो नवभिन्न. इत्यत्र ऐसादिक न । अन्ये तु अतिदेशेनाहार्यतद्बुद्धावपि उच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावेन नैसादिरिति व्यर्थमेव लक्षणग्रहणमिति वदन्ति । ४ अङ्गकार्यमिति—एतच्च आङ्गमनाङ्ग वेति शेखरे स्पष्टम् ।

त्रिभ्यः । **त्रेस्त्रयः** ।७।१।५३। त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । परमत्रयाणाम् । गौणत्वे तु नेति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम् । त्रिषु । द्विशब्दो नित्यं द्विवचनान्तः । **त्यदादीनामः** ।७।२।१०२। एषामकारोऽन्तादेशः स्याद्विभक्तौ ॥ *** द्विपर्यन्तानामेवेष्टिः** । द्वौ २ द्वाभ्याम् ३ । द्वयोः २ । द्विपर्यन्तानां किम् ? भवान् । भवन्तौ । भवन्तः । संज्ञायामुपसर्जनत्वे च नात्वम् । सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । द्विः । द्वी । द्वावतिक्रान्तोऽतिद्विः । हरिवत् । प्राधान्ये तु परमद्वौ इत्यादि । औडुलोमिः । औडुलोमी । बहुवचने तु उडुलोमाः ॥ *** लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः** ॥ बाह्वादीञोऽपवादः । औडुलोमिम् । औडुलोमी । उडुलोमान् ॥ इतीदन्ताः ॥ वातप्रमीरित्युणादिसूत्रेण माङ ईप्रत्ययः स च कित् । वातं प्रमिमीते वातप्रमीः । दीर्घाज्जसि च । वातप्रम्यौ । वातप्रम्यः । हे वातप्रमीः ॥ अमि पूर्वः ॥ वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् ३ । वातप्रम्ये । वातप्रम्यः २ । वातप्रम्योः २ । वातप्रम्याम् । दीर्घत्वान्न नुट् । ङौ तु सवर्णदीर्घः । वातप्रमी । वातप्रमीषु । एवं ययीपप्यादयः । यान्त्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः । यापोः किद्द्वे चेति ईप्रत्ययः । क्विबन्तवातप्रमीशब्दस्य तु अमि शसि ङौ च विशेषः । वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि । एरनेकाच इति वक्ष्यमाणो यण् प्रधीवत् । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी । दीर्घङ्यन्तत्वाद्धल्ङ्याबिति सुलोपः । **यू स्त्र्याख्यौ नदी** ।१।४।३। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः ॥ *** प्रथमलिङ्गग्रहणं च** । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं व-

---

प्त सप्त कर्तीत्यादौ प्रत्ययान्तकार्यं 'सुप्तिङन्तम्–' इति पदसंज्ञा यथा स्यात् ॥—**अस्मदि**ति । प्राचा त्वव्ययास्मदिनि पठित, तत्र अव्ययेत्युपेक्षितम् 'सदृश त्रिषु' इति श्रुतेर्लिङ्गत्रयाद्यभावपरत्वेन अव्ययानामलिङ्गत्वात् । अव्ययीभावस्य तु वचनात्क्लीबत्वेऽपि लिङ्गान्तराभावाच्च ॥—**त्रिशब्द** इति । 'तरतेर्ड्रिन्' डित्वाट्टिलोपः ॥—**त्रेस्त्रयः** ॥ त्रेरिति षष्ठी, न तु पञ्चमी । त्रय इत्यदन्त न तु सान्त 'निजा त्रयाणाम्–' इति निर्देशादित्यभिप्रेत्याह—**त्रिशब्दस्य त्रयादेश** इति ॥ ननु 'निजा त्रयाणाम्–' इति निपातनादेव त्रयादेशे सिद्धे किमनेन सूत्रेणेति चेत् । मैवम् । 'अबाधकान्यपि निपातनानि भवन्ति' इत्यनेन ज्ञापनात् । तेन पुरातनमिति सिध्यति । अन्यथा 'पुराणप्रोक्तेषु–' इति निपातनादेतद्बाध्येत ॥ 'त्रेरयङ्' इत्येव न सूत्रित । तत् करोति आचष्टे वेत्यर्थे 'तत्करोति–' इत्यादिना णिचि ततः क्विपि 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे 'ह्रस्वस्य पिति–' इति तुकि त्रित् ततो बहुत्वविवक्षायामामि कृते त्रेरयङि त्रयाणामिति रूपासिद्धेः । न च 'वार्णादाङ्गं बलीय.' इति तुकः प्रागेवाय स्यादिति शङ्क्यम् । युगपत्प्रवृत्तावेवाङ्गस्य बलीयस्त्वात् ॥—**केचिदि**ति । त्रिसबन्धिन्यामीति विज्ञानाद्गौणे त्रयादेशो न भवतीति तेषामाशयः ॥—**वस्तुतस्त्वि**ति । अर्थप्राधान्यबोधकस्य बहुवचनस्याभावाद्गौणत्वेऽपि त्रयादेशो न्याय्य. प्रियास्थ्नेत्यादावस्थ्याद्यनङ्वदिति भाव. ॥—**त्यदादीनामः** ॥ 'अष्टन आ विभक्तौ' इत्यतोऽनुवर्तनादाह—**विभक्तावि**ति । विभक्ताविति किम् । तद् यद् । सोर्लुका लुप्तत्वात्प्रत्ययलक्षण न ॥—**द्विपर्यन्तानां किमि**ति । युष्मदस्मच्छब्दयोरिष्ट्यभावेऽपि दोषो नास्ति, आत्वयत्वलोपैर्विशेषविहितैरत्वस्य बाधनात् । तथा किंशब्देऽपि न दोष , किमः कादेशस्य विशिष्यविधानादिति प्रश्नः ॥—**भवानि**ति ॥ भवत् सु इति स्थिते तकारस्थाने अत्वे कृते 'अतो गुणे' इति पररूपे 'उगिदचाम्–' इति नुमि सति 'सर्वनामस्थाने–' इत्यनेन दीर्घे सुलोपे नलोपे च सति भवा इतिरूप स्यादिति भावः ॥—**भवन्तावि**ति । पूर्ववत्तकारस्यात्वे पररूपे नुमि दीर्घे भवानाविति रूप स्यादिति भावः ॥ उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः ॥—**इञोऽपवाद** इति । तथा च बहुत्वे अकारान्तोऽयमुडुलोमशब्द. स औडुलोमिशब्दादन्य एव तस्य च इकारान्तेषु व्युत्पादन प्रासङ्गिकमिति बोध्यम् ॥ इति इदन्ताः ॥ —**किदिति** ॥ तेन 'आतो लोप इटि च' इत्यालोप इति भावः ॥—**क्विबन्तवातप्रमी** इति । माङ्धातो क्विपि 'ईत्वमवकारादौ' इति निषेधादीत्व नेति शङ्काया मीनातेरेव क्विप् बोध्य । यद्वा । ईप्रत्ययान्तवातप्रमीशब्दादाचारक्विबन्तात्कर्तरि क्विप् बोध्यः ॥—**श्रेयस्य** इति । 'प्रशस्यस्य श्रः' इतीयसुनि श्रादेशः । 'उगितश्च' इति ङीप् ॥—**बहुश्रेयसी**ति । 'स्त्रियाः पुंवत्–' इति पुंवद्भाव । 'ईयसश्च' इति न कप् । नाप्युपसर्जनह्रस्वः 'ईयसो बहुव्रीहेर्न' इति निषेधात् ॥ —**यू स्त्र्याख्यौ**–॥ ईश्च ऊश्च यू व्याख्यानाद्दीर्घयोरेव ग्रहणमविभक्तिकोऽय निर्देश इत्येके । 'दीर्घाज्जसि च' इति निषेधस्य 'वा छन्दसि' इति पाक्षिकत्वात् 'प्रथमयोः पूर्वसवर्णः' इति दीर्घ इत्यन्ये ॥ इह 'प्रत्ययस्यैव ग्रहणम्' इति परिभाषा नोपतिष्ठते । 'नेयङुवङ्स्थानावस्त्री' इति निषेधाल्लिङ्गात् । तेन प्रध्यै प्रध्या इत्यादौ नदीकार्यं स्यादेव ॥ स्त्रियमाचक्षाते स्त्र्याख्यौ । मूलविभुजादित्वात्क 'चक्षिङः ख्याञ्' 'आतो लोप इटि च' इत्यालोपः ॥—**ईदूदन्तावि**ति । इह वर्णयोरेव संज्ञेत्यपि

---

१ केचिदिति—'आमि सर्वनाम्न.–' इत्येतस्य साहचर्यादिति तेषामाशयः । २ वस्तुतस्तु इति—नच गौणमुख्यन्यायेनात्र न भविष्यतीति वाच्यम्, तत्र हि अप्रसिद्धत्वस्य गौणलाक्षणिकत्वस्य वा ग्रहणात् । स्पष्ट चेद विस्तरशो बृहच्छेखरे । ३ वातप्रमीनिःश्रृङ्गो मृगाकृतिर्जन्तुविशेषः । ४ प्रथमेति—इदं च यूस्त्र्येति पूर्वसूत्रविषयमेव नतु ङिति ह्रस्वश्चेति सूत्रविषयम् । तेन अतिश्रिये ब्राह्मणायेत्यत्र विकल्पो न ।

कव्यमित्यर्थः । **अम्बार्थनद्योर्ह्रस्वः** ।७।३।१०७। अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् संबुद्धौ । हे बहुश्रेयसि । शसि बहुश्रेयसिन् । **आण् नद्याः** ।७।३।११२। नद्यन्तात्परेषां ङितामाडागमः स्यात् । **आटश्च** ।६।१।९०। आटोऽचि परे वृद्धिरेकादेशः स्यात् । बहुश्रेयस्यै । बहुश्रेयस्याः । नद्यन्तात्परत्वान्नुट् । बहुश्रेयसीनाम् । **ङेराम् नद्याम्नीभ्यः** ।७।३।११६। नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात् । इह परत्वादाटा नुट् बाध्यते । बहुश्रेयस्याम् । शेषमीप्रत्ययान्तवातप्रमीवत् । अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत्[1] । कुमारीमिच्छन् कुमारीवाचरन्वा ब्राह्मणः कुमारी । क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । हल्ङ्याबिति सुलोपः । **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** ।६।४।७७। श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रूइत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । ङिच्चेत्यन्तादेशः । आन्तरतम्यादेरियङ् ओरुवङ् । इतीयङि प्राप्ते । **एरनेकाचोऽसंयोगपूर्वस्य** ।

पक्षोऽस्ति । 'आच्छीनद्योः–' इति सूत्रस्वरसात् । तथा ङ्याख्यत्व तु ङ्यादिषु स्वतः, तन्त्रीर्लक्ष्मीरित्यादौ तु स्त्रीवाचकवर्णसमुदायघटकत्वेन प्रवेशात् । तेन नद्यन्तादिव्यवहारो न विरुध्यते । एवं 'शेषो घ्यसखि' इत्यत्रापि इवर्णोवर्णयोरेव घिसंज्ञेति पक्षोऽप्यस्तीति बोध्यम् ॥ तेन 'घ्यन्ताजाद्यन्तयोर्घ्यन्त परम्' इति व्यवहारः संगच्छते । वर्णसंज्ञापक्षे 'असखि' इत्यस्य सखिभिन्नस्यावयव इत्यर्थः, न तु सखिशब्दावयव वर्जयित्वेति । तेन समुदायस्य सखिशब्दभिन्नत्वादतिसखिनेत्यादि निर्बाधमित्यवधेयम् ॥ स्त्रियामित्येव वक्तव्ये आख्याग्रहणं नित्यस्त्रीलिङ्गलाभार्थमित्याशयेनाह—**नित्यस्त्रीलिङ्गाविति** ॥ यू किम् । मात्रे ॥ ङ्याख्याविति किम् । ग्रामण्ये ॥—**पूर्वमि**ति । वृत्तेः प्रागित्यर्थः । संज्ञाया यथोद्देशं प्रवृत्तौ न्यायसिद्धमिदं, कार्यकालपक्षे तु वाचनिकमित्याहुः ॥—वर्णसंज्ञापक्षाश्रयेणाह—**नद्यन्तानामि**ति ॥—**हे बहुश्रेयसी**ति । अत्र ह्रस्वविधानसामर्थ्याद्गुणो न प्रवर्तते । अन्यथा 'अम्बार्थनद्योर्गुणः' इत्येव ब्रूयात् । न च लाघवाभावः शङ्क्यः । ह्रस्वग्रहणे मात्राधिक्यात् । 'ह्रस्वस्य गुणः' इत्युत्तरसूत्रे गुणग्रहणत्यागेन सुतरां लाघवसंभवाच्च ॥ अन्ये तु कृतेऽपि ह्रस्वे यदि गुण इष्टः स्यात्तर्हि 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा 'नदीह्रस्वयोर्गुणः' इत्येव ब्रूयादित्याहुः । तत्र पदलाघवाभावेऽपि प्रक्रियालाघवमस्ति, परंतु 'जसि च' इत्यत्र ह्रस्वस्येत्येकदेशानुवृत्तौ क्लेशोऽस्तीति बोध्यम् ॥—**आण् नद्याः** ॥ 'अण् नद्याः' इत्येव सुवचम् । विधानसामर्थ्यात् 'अतो गुणे' इत्यस्याप्रवृत्तौ यथायथं वृद्धिसवर्णदीर्घाभ्यां बहुश्रेयस्यै बहुश्रेयस्याः इत्यादिरूपसिद्धेः । ननु परत्वादाटा नुड् बाध्यत इत्युत्तरग्रन्थपर्यालोचनया ङेरामि कृते तस्य नुडागमनिवारणार्थमड्विधानावश्यकत्वात्सामर्थ्यमुपक्षीणमिति चेद्, एवं तर्हि 'ह्रस्वनद्यापः' इत्यनन्तरं 'ङेर्नः' इत्येव सूत्र्यतामामीत्यनुवृत्त्या ङेरामो नुट् नेत्यर्थलाभात् । तस्मात् 'अण् नद्याः' इति विधानसामर्थ्यात् 'अतो गुणे' इति न प्रवर्तत इति दिक् ॥—**आटश्च** ॥ यद्यपि इह ङयि 'वृद्धिरेचि' इत्येव सिद्धं ङसिङसोर्ङेरामि च सवर्णदीर्घेण । तथाप्यैन्दिददित्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् ॥ 'अजादीनामटा सिद्धम्' 'आडजादीनाम्' इति सूत्रं मास्तु इति वदतो वार्तिककारस्य मते तु 'अटश्च' इत्येव सूत्रमिति बोध्यम् ॥ –**ङेराम्न**–॥ ङेरिति सप्तम्येकवचनस्य ग्रहणं 'समानाधिकरणे स्त्रियाम्'–इत्यादिनिर्देशात् ॥—**आटा नुट् बाध्यत** इति । आटि कृते तु पुनर्न प्रवर्तते । 'सकृद्गतौ' इति न्यायाश्रयणादिति भावः ॥—**न सुलोप** इति 'लक्षेर्मुट् च' इत्यौणादिक ईप्रत्ययान्तो लक्ष्मीशब्द इत्युपसर्जनह्रस्वोऽपि नेति बोध्यम ॥—**कुमारी**ति । यद्यपि क्विबर्थं प्रति ङ्यन्तस्योपसर्जनत्वाद्ध्रस्वत्वं प्राप्तं, तथापि 'गोस्त्रियोः' इत्यत्र कृत्रिमोपसर्जनत्वं गृह्यते न त्वप्रधानरूपमिति नात्र ह्रस्वः प्रवर्तते । अत एव हरीतक्याः फलानि हरीतक्य इत्यत्रापि ह्रस्वो न भवति । 'लुक् तद्धितलुकि' इत्यत्र त्वप्रधानरूपमुपसर्जनमेव गृह्यते न तु कृत्रिमोपसर्जनमसंभवादिति वक्ष्यामः ॥—**अचि श्नु**–॥ 'श्नसेश्च ह्रः' इति श्नुप्रत्ययान्तत्वाद् भ्रूशब्दस्य धातोः पृथग्ग्रहणम् ॥ अन्ये त्वाहुः 'गमः क्वौ' इत्यत्र 'ऊङ् च गमादीनामिति वक्तव्यम्' इति वार्तिकादनुनासिकलोपे ऊडादेशे कृते निष्पन्नोऽयं भ्रूशब्दः । तथा च धातुग्रहणेनैव सिद्धे भ्रूग्रहणं निरर्थकमिति ॥ इण इति वक्तव्ये य्वोरिति गुरुनिर्देश इणप्रत्याहारः परेणैव णकारेण गृह्यत इति ज्ञापनार्थः । इह य्वोरिति धातोरेव विशेषणं, न तु श्नुभ्रुवोरव्यभिचारादित्याह—**इवर्णोवर्णान्तधातोरि**ति । श्नुधातुभ्रुवामिवर्णोवर्णयोरिति व्याख्याने तु इयङुवङोर्ङित्त्वं व्यर्थं स्याद्वैयधिकरण्यं च प्रसज्येतेति भावः ॥ ननु सामानाधिकरण्यपक्षेऽपि ङित्त्वं व्यर्थं 'निर्दिश्यमानस्यादेशा भवन्ति' इति इवर्णोवर्णान्तधातोः सर्वादेशत्वनिवृत्तिसंभवादिति चेन्न । श्नुभ्रुवोरपि निर्दिश्यमानत्वेन सर्वादेशत्वप्रसङ्गात् ॥ इ उ इत्यष्टादशानां संज्ञेत्युक्तत्वाद् यथासंख्यमिह न प्रवर्तते इत्याह—**आन्तरतम्यादि**ति । स्थानत इति भावः ॥ य्वोः किम् । चक्नतुः । चक्नुः ॥ अचीति किम् । आप्नुयात् । जुहुयात् ॥

१ हे बहुश्रेयसीति—अम्बार्थनद्योर्गुणः इति वक्तव्ये ह्रस्वविधानान्न गुणः इति तु न युक्तम् । मातृवाचकानःशब्दस्याम्बार्थत्वाद्गुणापत्तेः । ननु तस्य ऋवत्त्वाट्टका सम्बुद्धेरभावान्न तत्रोपयोग इति, हे वारे इतिवत् पक्षे गुणापत्तेस्तदवस्थत्वात् । २ य्वोरिति—इदं च धातोर्भिन्नवचनत्वेऽपि समानाधिकरणं विशेषणम्, वेदाः प्रमाणमित्यादौ तथा दर्शनात् । ३ इतीयङीति—ननु 'धातोरुच्यमानं कार्यं धातुप्रत्यये' इति परिभाषया सुपि न प्राप्नोतीति वाच्यम्, न 'न भूसुधियोः' 'क्षियो दीर्घात्' 'भुवः सङ्ज्ञान्तरयोः' इत्यादिनिर्देशः अत्र प्रकरणे तस्याः परिभाषाया अप्रवृत्तिकल्पनात् ।

**६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे । इति यण् । कुमार्यौ । कुमार्यः । हे कुमारि । अमि शसि च । कुमार्यम् । कुमार्यः । कुमार्यै । कुमार्याः २ । कुमारीणाम् । कुमार्याम् । प्रधीः । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः । उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषणादिह स्यादेव यण् । उन्न्यौ । उन्न्यः । हे उन्नीः । उन्न्यम् । ङेराम् । उन्न्याम् । एवं ग्रामणीः । अनेकाचः किम् । नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियम् । नियः । ङेराम् । नियाम् । असंयोगपूर्वस्य किम् । सुश्रियौ । यवक्रियौ ॥ * गतिकारकेतरपूर्वपदस्य यण नेष्यते । शुद्धधियौ । परमधियौ । कथं तर्हि दुर्धियो वृश्चिकभियेत्यादि । उच्यते । दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्य धीशब्दं प्रति गतित्वमेव नास्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः । वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम् । वृश्चिकसंबन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा । ꣸ न भूसुधियोः ।६।४।८५। एतयोर्यण् न स्यादचि सुपि सुधियौ । सुधिय इत्यादि ॥ सखायमिच्छति । सखीयति । ततः क्विप् । अल्लोपयलोपौ । अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते । क्वौ लुप्तं न स्थानिवत् ।**

—**एरनेकाचः**—॥ 'इणो यण्' इत्यतो यण् इति वर्तते । 'अचि श्नुधातु–' इति सूत्रादिह धातुरेव अनुवर्तते, न तु श्नुभ्रुवौ । तयोरिवर्णासंभवात् । धातुग्रहणं चावृत्त्योभयोर्विशेषणं संयोगस्याङ्गस्य चेति व्याचष्टे—**धात्ववयवसंयोगे**त्यादि । तत्र धातुना संयोगस्य विशेषणादिह यण् । उन्न्यौ । उन्न्यः । हरी हरीन् इत्यादि सिद्ध्यर्थं धातुना अङ्गं विशेष्यते । अन्यथा प्रध्यं प्रध्यः इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् स्यात् धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तत्वादङ्गस्य ॥—**प्रधीरि**ति । प्रध्यायतीति प्रधी । 'ध्यायतेः संप्रसारणं च' इति क्विपि संप्रसारणे पूर्वरूपे च 'हलः' इति दीर्घः ॥ यदा तु प्रकृष्टा धीर्बुद्धिर्यस्येति विगृह्यते, तदा धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहणं च' इति नित्यस्त्रीलिङ्गातिदेशे यथासंभवं नदीकार्यं बोध्यम् ॥ 'प्रथमलिङ्गग्रहणं च' इति वार्तिकस्य प्रथमलिङ्गं गृहीत्वा 'यूस्त्र्याख्यौ–' इत्यनेन नदीत्वं वक्तव्यमित्यर्थाद् 'एरनेकाचः–' इति यण्विषयत्वेन 'नेयङुवङ्–' इति निषेधस्याप्रवृत्तेश्चेत्येके ॥ अन्ये त्वाहुः । एवं तर्हि यथोद्देशं प्रवृत्तौ न्यायसिद्धमिति मनोरमाग्रन्थो विरुध्येत । यथोद्देशपक्षेऽपि प्रधीशब्दाद्यर्थतया वचनस्यावश्यकत्वात् । मूले हि उपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्युक्तं, न तु नित्यस्त्रीत्वमिति । तस्मात् 'प्रथमलिङ्गग्रहणम्' इत्यनेन लिङ्गप्रयुक्तं यन्नदीत्वं वृत्तेः प्राक् स्थितं तदिहातिदिश्यते । धीशब्दे तु 'नेयङुवङ्–' इति निषेधेन नदीत्वाभावान्नास्त्येव प्रधीशब्दे नदीत्वातिदेश इति ॥ 'ङिति ह्रस्वश्च' इति वैकल्पिकनदीत्वमपीह नातिदिश्यते । प्रथमलिङ्गेति वचनं यथोद्देशे न्यायसिद्धमिति ग्रन्थानुरोधेन वृत्तेः प्रागवस्थायामवयवत्वेनाभिमते विद्यमानाया एव नदीसंज्ञायाः समुदाये अभ्युपेयत्वात् । न च प्रकृष्टा धीर्यस्य तस्मै प्रध्ये प्रध्यः इत्यादौ प्रथमान्तधीशब्दस्य ङिति परे प्रवर्तमाना नदीसंज्ञास्तीति दिक् ॥—**उन्नीरि**ति । 'सत्सूद्विष–' इत्यादिना क्विप् ॥—**ङेरामि**ति । आम्नत्वान्नीशब्दान्तादपि ङेराम् भवतीति भावः ॥ ग्रामं नयतीति ग्रामणीः । 'अग्रग्रामाभ्यां नयतेः' इति णत्वम् ॥—**नीरि**ति । नयतीति नीः क्विप् ॥ —**गतिकारकेतरे**ति । 'गतिकारकपूर्वस्यैव यणिष्यते' इति तु नोक्तम्, कुमारीमिच्छन् ब्राह्मणः कुमारी कुमार्यौ कुमार्यः इत्यत्र यणभावप्रसङ्गात् ॥ —**शुद्धधियावि**ति । यदा तु शुद्धं ब्रह्म ध्यायतीति विगृह्यते, तदा भवत्येव यण् शुद्धध्यौ शुद्धध्यः । एवमग्रेऽपि ॥ —**कथं तर्ही**ति । गतिकारकेतरपूर्वपदत्वं इह नास्तीति यणैव भाव्यमिति प्रश्नः ॥ दुर्धिय इत्यत्र 'प्रादिभ्यो धातुजस्य–' इति वार्तिकेन उत्तरपदलोपो बोध्य इत्याशयेनाह—**दुःस्थिता धीर्येषामि**ति ॥—**वृश्चिकशब्दस्ये**ति । भाष्यकृता हि बुद्धिपरिकल्पितमपायमाश्रित्य 'भीत्रार्थानाम्–' इति सूत्रं प्रत्याख्यातं, ततश्च संबन्धमात्रविवक्षायां षष्ठ्येवेति नास्त्यत्र कारकपूर्वत्वमिति भावः ॥—**वृश्चिकसंबन्धिनी भीरि**ति । एवं च भययोगाभावाद्वृश्चिकस्य नापादानकारकत्वमिति सूत्रमतेऽपि न दोष इति भावः ॥ 'ओः सुपि' इत्यतः सुपीत्यनुवर्तनादाह—**अचि सुपी**ति ॥ सुपि किम् । सुध्युपास्यः । वस्तुतस्तु सुपीत्यननुवृत्तावपि न क्षतिः, 'अनन्तरस्य–' इति न्यायेन 'एरनेकाचः–' इति 'ओः सुपि' इति च सूत्रद्वयेन प्रापितस्यैव यणो 'न भूसुधियोः' इति निषेधाभ्युपगमात् ॥—**स्थानिवत्त्वाद्यणि प्राप्त** इति । 'एरनेकाचः–' इत्यनेन ॥ न चान्तर्वर्तिनीं विभक्तिमाश्रित्य सखीशब्दस्य पदत्वात् 'न पदान्त–' इति निषेधेन अल्लोपो न स्थानिवदिति वाच्यम् । 'नः क्ये' इति नियमेन क्यचि नान्तस्यैव पदत्वादत आह—**क्वौ लुप्तमि**ति । 'नपुंसके भावे क्तः' लोप इत्यर्थः । इदं सर्वं कुमारीमिच्छन् कुमारीत्यत्रापि बोध्यम् । क्वौ लुप्तमित्येतत्क्वाचित्कं क्वौ विधिं प्रति न स्थानिवदित्यभ्युपगमात् । अन्यथा बेभिदि ब्राह्मणकुलानीति हलन्तनपुंसके वक्ष्यमाणं न सङ्गच्छेत । बेभिद्यतेः क्विपि अल्लोपे यलोपे च क्वौ लुप्तत्वेनाल्लोपस्य स्थानिवत्त्वाभावे झलन्तलक्षणनुम्प्रसङ्गात् । क्वौ विधिं प्रति न स्थानिवदित्यस्योदाहरणं लवमाचक्षाणो लौः । अत्र णिचि यष्टिलोपः यश्च क्वौ णिलोपः तदुभयं 'छ्वोः शूड्–' इति वकारस्य क्विनिमित्ते ऊठि कर्तव्ये न स्थानिवत् । 'एत्येधत्युठ्सु'

१ यत्क्रियेति—अयं चार्थः 'उपसर्गाः क्रियायोगे' इत्यत्र योगग्रहणाल्लभ्यते । २ सुधियौ इति—न चात्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तत्वात् 'लोपः शाकल्यस्येति' यलोपः प्राप्नोतीति शङ्क्यम्, उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणनिषेधात् ।

**एकदेशविकृतस्यानन्यतयाऽनङ्णित्वे। सखा। सखायौ। सखायः। हे सखीः। अमि पूर्वरूपात्परत्वाद्यणि प्राप्ते ततोऽपि परत्वात्सख्युरसंबुद्धाविति प्रवर्तते। सखायम्। सखायौ। शसि यण्। सख्यः। सह खेन वर्तत इति सखः। तमिच्छतीति सखीः। सुखमिच्छतीति सुखीः। सुतमिच्छतीति सुतीः। सख्यौ। सुख्यौ। सुत्यौ। ख्यत्यादिति दीर्घस्यापि ग्रहणादुकारः। सख्युः। सुख्युः। सुत्युः। लूनमिच्छतीति लूनीः। क्षाममिच्छतीति क्षामीः। प्रस्तीममिच्छतीति प्रस्तीमीः। एषां ङसिङसोर्यण्। नत्वमत्वयोरसिद्धत्वात् ख्यत्यादित्युत्वम्। लून्युः। क्षाम्युः। प्रस्तीम्युः। शुष्कीयतेः क्विप्। शुष्कीः। इयङ्। शुष्कियौ। शुष्कियः। ङसिङसोः शुष्कियइत्यादि। इति ईदन्ताः॥ शंभुर्हरिवत्। एवं विष्णुवायुभान्वादयः। तृज्वत्क्रोष्टुः ।७।१।९५। क्रोष्टुशब्दस्तृजन्तेन तुल्यं वर्तते असंबुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः। ऋतो ङिसर्वनामस्थानयोः।**

---

इति वृद्धिः॥ अत्रेदमवधेयम्। 'न पदान्त–' इति सूत्रे 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्' इति वार्तिकमस्ति तदेकदेशानुवादोऽयं 'क्वौ लुप्तम्–' इत्यादीति। लुका लुप्तं न स्थानिवदित्यादीनामप्युदाहरणान्यत्रोच्यन्ते। पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः। 'आर्हात्–' इति ठक्, तस्य 'अध्यर्धपूर्व' इति लुक्, 'लुक् तद्धितलुकि' इति ङीषो लुक्। तस्य लुका लुप्तत्वेन स्थानिवत्त्वाभावाद् अत्र यणादेशो न भवति। न च ङीषो लुकः परनिमित्तकत्वाभावात् स्थानिवत्त्वं न भवेदिति शङ्क्यम्। ङीषो लुकं प्रति स्थानिद्वारा तद्धितलुकः परत्वस्वीकारात्। यद्वा, बुद्धिपरिकल्पितं पौर्वापर्यमभावेऽप्यस्तीति नास्त्यत्रानुपपत्तिः। न च अढे तद्धिते विवक्षिते 'भस्याढे–' इति पुंवद्भावादुक्तनिषेधं विनैवेष्टसिद्धिरित्यपि शङ्क्यम्। यत्र भावि भत्वं तत्रैव पुंवद्भावः, इह तु लुकि भत्वाभावात्कुतः पुंवद्भाव इति कैयटेनोक्तत्वात्॥ तथा पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः। 'सास्य देवता' इत्यण्। 'द्विगोर्लुगनपत्ये' इति लुक्। ततो ङीषो लुकि तस्य स्थानिवत्त्वाभावात् ङीषा संनियुक्त आनङ् न श्रूयते। पुंवद्भावस्यात्र शङ्कापि नास्ति। इन्द्रे इन्द्रत्वमिन्द्राण्यामिन्द्रस्त्रीत्वमिति प्रवृत्तिनिमित्तभेदे भाषितपुंस्कत्वस्यानभ्युपगमात्। ये तु 'न पदान्त–' इति सूत्रे वरे ई इति ईकारप्रश्लेषं कुर्वन्ति। तेषामिह लुग्ग्रहणं न कार्यम्॥ उपधात्वे कर्तव्ये न स्थानिवत्। तेन परिखाशब्दाच्चातुरर्थिके अणि कृते 'वृद्धादकेकान्त–' इत्यादिना पारिखशब्दात्खोपधलक्षणे छप्रत्यये पारिखीयः सिध्यति। अन्यथा उपधासंज्ञायाः पूर्वविधित्वेन तस्यां कर्तव्यायामालोपः स्थानिवत्स्यात्। नन्वेवं पटयतीत्यादौ वृद्धिः स्यादिति चेन्न। यत्रोपधासंज्ञामुपजीव्य प्रत्ययो विहितस्तत्रैवायं निषेध इति भाष्ये स्थितत्वात्। तत्र चङ्परनिर्ह्रासग्रहणमेव ज्ञापकं चङि परे यो ह्रासः स चङ्परनिर्ह्रासस्तत्र न स्थानिवत्। वादितवन्तं प्रयोजितवानवीवदद्वीणां परिवादकेन। अत्र प्रथमणिलोपस्य स्थानिवत्त्वादाकारोऽनुपधेति 'णौ चङि–' इत्युपधाह्रस्वो न प्राप्नोति। णिसामान्यग्रहणादेतत्सिद्धमिति चेत्, तर्ह्यन्यदुदाहर्तव्यं वारि आख्यदवीवरत्। न च 'अग्लोपि' इति निषेधः शङ्क्यः, परत्वाद्वृद्धौ सत्यां टिलोप इत्यभ्युपगमेनाग्लोपित्वाभावात्। अत एव 'मुण्डमिश्र–' इति सूत्रे हलिकल्योर्हलकलेत्यदन्तनिपातनं सार्थकम्॥ कुत्वे न स्थानिवत्। अर्चयतेरर्कः 'कृदाधारार्चिकलिभ्यः' इति कः। पाचयतेः पाक्तिः। इह 'चोः कुः' इति कुत्वे णिलोपो न स्थानिवत्॥ वार्तिकेऽस्मिन् क्विचङ्परनिर्ह्रासोपधानां ग्रहणमावश्यकं, लुकः ईकारप्रश्लेषेण गतार्थत्वात् कुत्वस्य पूर्वत्रासिद्धीयत्वाच्चेत्यवधेयम्॥ 'चजोः–' इति कुत्वे वा उदाहरणमन्वेषणीयम्॥—**सख** इति। 'तेन सहेति–' इति बहुव्रीहौ 'वोपसर्जनस्य' इति सभावः॥—**सखीरि**त्यादि। 'सुप आत्मनः क्यच्'। 'क्यचि च' इतीत्वम्॥—**दीर्घस्यापी**ति। एतदर्थं कृतयणादेश इति भावः॥ ननु अतिसखेर्भूपतेरिति गुणविषयं व्यावर्तयितुं यणा निर्देश इति चेद्, अस्त्वेवं, तथापि दीर्घप्रवृत्तिः केन वार्यता, न हि ह्रस्वे यणा भाव्यं, न दीर्घेष्वित्यत्र प्रमाणमस्ति। सौत्रस्य विकृतनिर्देशस्याव्याप्त्यतिव्याप्त्युभयवारकत्वे सारवत्त्वलाभेन तथैवौचित्याद्भाष्याद्दृढत्वाच्च॥—**लूनमि**ति। 'ल्वादिभ्यः' इति निष्ठानत्वम्॥—**क्षाममि**ति। 'क्षायो मः' इति मः॥—**प्रस्तीममि**ति। 'प्रस्त्योऽन्यतरस्याम्' इति मः। 'स्त्यः प्रपूर्वस्य' इति संप्रसारणम्॥—**शुष्कीरि**ति। 'शुषः कः' इति निष्ठातस्य कः॥—**पक्कीरि**ति। 'पचो वः' इति वः॥—**इयङि**ति। संयोगपूर्वत्वादिवर्णस्य यण् नेति भावः॥ इति ईदन्ताः॥ ॥—**हरिवदि**ति। तद्वत्साध्य इत्यर्थः॥—**तृज्वत् क्रोष्टुः**॥ 'क्रुश आह्वाने रोदने च'। अस्मात् 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्प्रत्यये क्रोष्टुशब्दः, तृचि तु क्रोष्टृशब्दः, द्वावपि शृगालवचनौ, तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव तृतीयादावच्युभयम्, अन्यत्र तुन्नन्त एवेति नियमार्थं त्रिसूत्री आरभ्यते॥ क्रोष्टुरिति तुन्नन्तात्प्रथमा। तृज्वदिति तृतीयान्ताद्वतिः। निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयत्वेनातिदेशस्यानेकविधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यते। तच्च न पचादेर्यस्य कस्यचित्। किंतु क्रुशेरेव, उपस्थितत्वात्, अर्थतः आन्तर्याच्चेत्यभिप्रेत्य फलितमाह—**क्रोष्टुशब्दस्थाने क्रोष्टृशब्द** इति। निमित्तातिदेशो यथा। चिकीर्षति। चिकीर्षते। अत्र सन्नन्तस्य 'पूर्ववत् सनः' इत्यनेन ञित्वातिदेशे कर्त्रभिप्राये आत्मनेपदं सिध्यति॥ ननु कार्यातिदेशेनाप्येतद्गतार्थमिति चेत्। अत्राहुः। निमित्तप्रतिसंधानपूर्वकत्वात्तस्येति निमित्तातिदेशः पृथगुक्त इति॥ व्यपदेशातिदेशो यथा। 'आद्यन्तवदेकस्मिन्' इत्यनेन

७।३।११०। ङौ सर्वनामस्थाने च परे ऋवन्ताङ्गस्य गुणः स्यात् । इति प्राप्ते। **ऋदुशनस्पुरुदंसोऽनेहसां च** ।७।१।९४। ऋदन्तानामुशनसादीनां चाऽनङ् स्यादसंबुद्धौ सौ परे । **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्** ।६।४।११। अबादीनामुपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेन पितृभ्रातृप्रभृतीनां न । उद्गातृशब्दस्य तु भवत्येव । समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात्[1] । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टून् । **विभाषा तृतीयादिष्वचि** ।७।१।९७। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे । **ऋत उत्** ।६।१।१११। ऋदन्तात् ङसिङसोरति परे उकार एकादेशः स्यात् । रपरत्वम् । **रात्सस्य** ।८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रेफस्य विसर्गः । क्रोष्टुः । आमि परत्वात्तृज्वद्भावे प्राप्ते ॥ * **नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन** । क्रोष्टूनाम् । क्रोष्टरि । क्रोष्टोः ।

कर्तव्यमित्यादौ सावकाशप्रत्ययाद्युदात्तत्वफलक आदित्वव्यपदेश औपगवादावतिदिश्यते ॥ तादात्म्यातिदेशो यथा 'सुबामन्त्रिते पराङ्गवत् स्वरे' इत्यनेन द्रवत्पाणी शुभस्पतीत्यत्र शुभशब्दस्य पराङ्गवत्त्वे सति पाष्ठिकेन 'आमन्त्रितस्य' इत्यनेन शकारादुकारस्याद्युदात्तत्वं सिध्यति ॥ शास्त्रातिदेशो यथा । 'कालेभ्यो भववद्' इत्यनेन कालवाचिभ्यः 'तत्र भवः' इत्यधिकारे यत् शास्त्रं तत् 'सास्य देवता' इत्यर्थे अतिदिश्यते । तेन मासिकं प्रावृषेण्यमित्यत्र यथाविहितं 'कालाट्ठञ्' 'प्रावृष एण्य' इति सिध्यति । कार्यातिदेशे तु इह प्रकृतिप्रत्ययादीनां साकर्यं स्यात् ॥ कार्यातिदेशो यथा 'गोतो णित्' गौः गावौ गावः । अत्र णित्कार्यं वृद्धिरतिदिश्यते प्राधान्यात् । केचित्तु निमित्तातिदेशं 'गोतो णित्' इत्युदाहरन्ति, कार्यातिदेशस्य 'कर्मवत्कर्मणा–' 'स्थानिवदादेश –' इत्याद्युदाहर्तव्यम् । रूपातिदेशो यथा । वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिका । अत्र वतण्डीशब्दे 'पुंवत् कर्मधारय–' इत्यनेन पुंवाचकवातण्ड्यशब्दरूपमतिदिश्यते ॥ इह मनोरमायामतिदेशस्य षड्विधत्वमुक्तम्, ॥ अन्ये तु "कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिना । व्यपदेशश्च सप्तैतानतिदेशान्प्रचक्षते" इति सप्तविधत्वमाहुः । अर्थातिदेशस्योदाहरणं गार्गी च गार्ग्यायणश्च गार्ग्यौ । अत्र 'स्त्री पुंवच्च' इत्यनेन गोत्रप्रत्ययान्तस्त्रीवाचकस्य 'वृद्धो यूना' इत्येकशेषे सति स्त्र्यर्थस्य पुमर्थोऽतिदिश्यते तेन स्त्रियामपत्यकृतबहुत्वे 'यञञोश्च' इति लुक् सिध्यति ॥—**ऋतो ङि**—॥ ऋत् ऋत् एतयोरनुकरणे ऋकारान्ते गुणवारणाय तपरकरणमिति बोध्यम्॥ —**अप्तृन्**—॥ 'तुरिष्ठेमेयस्सु' इतिवत् तृ इत्येव सिद्धे तृन्तृचोर्भेदेनोपादानं 'क्वचित्सामान्योक्तावपि विशेष एव गृह्यते' इति ज्ञापनार्थम् । तेन 'न कोपधायाः' इत्यत्र सामान्योक्तावप्यकृत्तद्धितयोरेव को गृह्यते । न कमात्रम् । तेन यदग्रे वक्ष्यति 'कोपधप्रतिषेधे तद्धितवुग्रहणम्' इति तदुपपन्नं भवतीत्येके ॥ अन्ये त्वाहुः । 'अप्तृ–' इत्येव वक्तव्ये तृन्तृजिति भेदेनोपादानमर्थवणस्तृन्व्यावृत्तये । यद्यप्यर्थवत्परिभाषया तन्निवृत्तिः सिध्यति, तथापि तस्याः परिभाषाया अनित्यत्वज्ञापनाय तयोः पृथगुपादानम् ॥ तेन 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति सिद्धमिति ॥ व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह—**नियमार्थमि**ति । औणादिकानामन्येषां संज्ञाशब्दानां मा भूदित्येतदर्थमित्यर्थः ॥ धातृशब्दस्त्वौणादिकः संज्ञाशब्दो न भवति इति तत्र दीर्घो भवत्येव । धातारौ । धातारः ॥ अव्युत्पत्तिपक्षे तु नप्त्रादिग्रहणं विध्यर्थमिति पितृभ्रातृप्रभृतीनां दीर्घशङ्कैव नास्तीति बोध्यम् ॥ **तेने**ति । पितरौ । पितरः । भ्रातरौ । भ्रातरः इत्यादौ दीर्घो नेत्यर्थः ॥—**क्रोष्टे**ति । अनङ् । हल्ङ्याब्भ्यो दीर्घादिति लोपात्परत्वादुपधादीर्घः । (स च) 'सर्वनामस्थाने च' इत्यनेन यद्यपि लभ्यते, तथापि परत्वात् 'अप्तृन्–' इत्येव न्याय्यः । कृतेऽप्यनङि एकदेशविकृतस्यानन्यत्वेन तृन्त्वात् । अन्यथा गुणे कृतेऽपि क्रोष्टारावित्यादौ दीर्घो न स्यादिति भावः ॥—**विभाषा तृ**—॥ 'यस्मिन्विधिस्तदादौ–' इति तदादिविधिरित्याह—**अजादिष्वि**ति ॥—**ऋत उत्** ॥ ऋकाराकारयोरेकादेशे सति ह्रस्व एव उकारः स्यान्न तु दीर्घ इत्येतदर्थकेन तपरकरणेन 'भाव्यमानोऽण् क्वचित् सवर्णान् गृह्णाति' इति ज्ञाप्यते, तेन यवलपरे हकारे मस्य विधीयमाना यवला अनुनासिका भवन्ति ॥—**रात्सस्य** ॥ 'संयोगान्तस्य लोपः' इत्यनेनैव सिद्धे नियमार्थमिदमित्याह—**सस्यैवे**ति ॥—**नान्यस्ये**ति । ऊर्क् परिमार्ट् इत्यादौ रेफात्संयोगान्तस्य लोपो नेत्यर्थः ॥ रादेव सस्येति विपरीतनियमोऽत्र न भवति । उरःप्रभृतिषु कृतसंयोगान्तलोपस्य पुमानित्यस्य दर्शनात् ॥—**परत्वादि**ति । न च नुट् नित्य इति वाच्यम् । तृज्वद्भावे कृते सन्निपातपरिभाषया नुटो दुर्लभत्वाद् इति भावः ॥—**नुमचिरे**ति । वारीणां तिसृणां क्रोष्टूनामिति क्रमेणोदाहरणानि ॥ ननु रेण स्वविषये प्राप्तं सर्वं बाध्यं बाध्यसामान्यचिन्ताश्रयणाद् अत एव गुणदीर्घोत्वानामपवाद इति वक्ष्यति । तथा चाविशेषान्नुडप्यनेन बाध्यत इति कथमिह विप्रतिषेधः । उत्सर्गापवादयोस्तदयोगादिति चेद्, अत्राहुः । अत एव तदंशे विप्रतिषेधं दूषयित्वा 'न तिसृचतसृ' इति ज्ञापकान्नुडिति भाष्यकृतोक्तम् । एवं च

१ भाष्यप्रयोगादिति—एवं च उणादिष्वस्य व्युत्पादनमप्रामाणिकमिति भावः । पङ्कजशब्दवदष्टाध्यायीव्युत्पन्नत्वेऽपि योगरूढिस्वीकारे बाधकाभावात् इति तत्त्वम् ।

पक्षे हलादौ च शंभुवत् ॥ इत्युदन्ताः ॥ हूहूः । हूह्वौ । हूह्वः । हूहूम् । हूह्वौ । हूहूनित्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः २ । अतिचमूनाम् । अतिचम्वाम् । खलपूः । **ओः सुपि** ।६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि । गतिकारकेतरपूर्वपदस्य यण् नेष्यते । खलप्वौ । खलप्व इत्यादि । एवं सुल्वादयः । अनेकाचः किम् । लूः । लुवौ । लुवः । धात्ववयवेति किम् । उल्लूः । उल्ल्वौ । उल्ल्वः । असंयोगपूर्वस्य किम् । कटप्रुवौ । कटप्रुवः । गतीत्यादि किम् । परमलुवौ । सुपि किम् । लुलुवतुः । स्वभूः । न भूसुधियोः । स्वभुवौ । स्वभुवः । **वर्षाभ्वश्च** ।६।४।८४। अस्योवर्णस्य यण् स्यादचि सुपि । वर्षाभ्वौ । वर्षाभ्वः । दृम्भतीति दृम्भूः । अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूरित्युणादिसूत्रेण व्युत्पादितः । दृम्भ्वौ । दृम्भ्वः । दृम्भूम् । दृम्भ्वौ । दृम्भून् । शेषं हूहूवत् । दृन्भिति नान्ते हिंसार्थेऽव्यये भुवः क्विप् । दृन्भूः ॥ * **दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः** । दृन्भ्वौ । दृन्भ्व इत्यादि खलपूवत् । करभ्वौ । करभ्वः । दीर्घपाठे तु कर एव कारः । स्वार्थिकः प्रज्ञाद्यण् । कारभ्वौ । कारभ्वः । पुनर्भूर्यौगिकः पुंसि । पुनर्भ्वावित्यादि । दृग्भूकाराभूशब्दौ स्वयंभूवत् ॥ इत्यूदन्ताः ॥ ॥ धाता । हे धातः । धातारौ । धातारः ॥ * **ऋवर्णान्नस्य णत्वं वाच्यम्** ॥ धातॄणामित्यादि । एवं नप्त्रादयः । उद्गातारौ । पिता । व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः । पितरौ । पितरः । पितरम् । पितरौ । शेषं धातृवत् । एवं जामातृभ्रात्रादयः । ना । नरौ । नरः । हे नः । **नृ च** ।६।४।६। नृ इत्येतस्य नामि वा दीर्घः स्यात् । नृणाम् । नॄणाम् ॥ इति ऋदन्ताः ॥ ॥

नुम्तृज्वद्भावाभ्यामित्येव सुवचमिति ॥ इत्युदन्ता ॥ ॥—**हूहूरि**ति । गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम् ॥—**हूह्वावि**ति । 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे सति 'इको–' इति यण् ॥—**अतिचमूशब्दे त्वि**ति । 'प्रथमलिङ्गग्रहणं च' इत्युक्ते । तथा चैवमतिचम्वादय इति प्राचोक्तं नादर्तव्यमिति भावः ॥—**खलपूरि**ति । खलं पुनातीति पूञः क्विप् ॥—**ओः सुपि** ॥ 'इणो यण्' इत्यतो यण् 'एरनेकाच'–' इति सूत्रं च सर्वमनुवर्तते इवर्णवर्जम्, ओरित्युकारस्य कार्यिणो निर्देशात् । 'अचि श्नुधातु–' इतिसूत्राद्धातु. 'एरनेकाच–' इत्यत्रैव संबध्यते इत्याशयेन व्याचष्टे—**धात्ववयवसंयोगे**त्यादि ॥—**वर्षाभ्वौ वर्षाभ्व** इति । अत्र 'इको यणचि' इति यणं बाधित्वा 'प्रथमयोः–' इति पूर्वसवर्णदीर्घः प्राप्तः, तस्य 'दीर्घाज्जसि च' इति निषेधे पुनरपि यणादेशप्रसक्तौ 'अचि श्नुधातुभ्रुवाम्–' इत्युवङ्, तं च बाधित्वा 'ओः सुपि' इति यण्, तस्य 'न भूसुधियो' इति निषेधे पुनरुवङादेशस्य प्रसक्तौ 'वर्षाभ्वश्च' इति यणिति बोध्यम् ॥ एवमन्यत्राप्युत्सर्गापवादविषय ऊह्याः ॥ 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुरा' इत्यमरः । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः ॥—**दृम्भती**ति । 'दृम्भी ग्रन्थे' तुदादि । दृम्भूर्ग्रन्थकर्ता । कथक इत्यन्ये ॥—**व्युत्पादित** इति । ऊप्रत्ययो नुमागमश्चात्र निपात्यते इत्यर्थः । दशपादीवृत्तौ तु 'दर्भेण दृन्भूः नुमागमोऽनुस्वारश्च निपात्यते' इत्युक्तम् ॥ अयमूकारो न धातोरिति उवङोऽप्रसङ्गात् 'इको यणचि' इति यण्, स च 'अमि पूर्वः' इत्यनेन बाध्यत इत्याशयेनाह—**दृम्भूमि**ति । शसि 'दीर्घाज्जसि च' इति निषेधाप्रवृत्त्या पूर्वसवर्णदीर्घेणापि बाध्यत इत्याह—**दृम्भूनि**ति ॥—**दृन्भिती**ति । इदं च श्रीपतिमतं, माधवेन तु 'अन्दूदृम्भू–' इत्यादिसूत्रेण दृढशब्दे उपपदे भुवः कूप्रत्ययः उपपदस्य दृन्नादेशश्च निपात्यत इत्युक्तम् ॥—**दृन्भूरि**ति ॥ तरुसर्पजातिभेद इत्येके । कर्परिरित्यन्ये ॥—**वक्तव्य** इति । 'वर्षाभ्वश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वादिति भावः ॥ एवं च 'ओः सुपि' इति प्राप्तस्य यणो 'न भूसुधियोः' इति निषेधे 'वर्षादृन्करपुनःपूर्वस्य भुवः' इत्येतद्विध्यर्थमिति स्थितम् ॥ अत्र नव्याः । 'वर्षादृन्कर–' इत्यस्य नियमार्थता स्वीकृत्य 'न भूसुधियोः' इत्यत्र भूग्रहणं त्यक्तुं शक्यमिति ॥—**दीर्घपाठ** इति । 'दृन्कार–' इति पाठे इत्यर्थः । एवं च ह्रस्वपाठे कारपूर्वस्योवङेव, दीर्घपाठे तु करपूर्वस्योवङिति विवेकः ॥ 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरोक्तेः पुनर्भूशब्दो नित्यस्त्रीलिङ्गः । तथा च स्त्रीलिङ्गप्रकरण एव वक्तुमुचितो, न त्वत्रेत्याशङ्कायामाह—**यौगिकः पुंसी**ति । पुनर्भवतीति पुनर्भूरिति क्रियाशब्दः पुलिङ्गेऽप्यस्तीत्यर्थः ॥—**स्वयंभूवदि**ति । प्राचा तु दृग्भूकाराभूशब्दौ वर्षाभूवदुदाहृतौ तदुपेक्ष्यमिति भावः ॥ इत्यूदन्ताः ॥ ॥—**धाते**ति । दधातीति धाता अब्जयोनिः । डुधाञस्तृच् तृन् वा अनङ् दीर्घसुलोपनलोपाः ॥—**व्युत्पत्तिपक्ष** इति । अव्युत्पत्तिपक्षे दीर्घशङ्कैव नास्ति, अप्तृनादिष्वपठनादिति भावः ॥—**नेति** । 'नयतेर्डिच्च' इति ऋप्रत्ययान्तो नृशब्दः । अनङादि प्राग्वत् ॥—**नृ च** ॥ इह 'छन्दस्युभयथा' इति सूत्रादुभयथेत्यनुवर्तत इत्यभिप्रेत्याह—**वा दीर्घः स्यादि**ति । केचित्त्विह छन्दसीत्यप्यनुवर्तयन्ति, तेषां हि 'चिन्ताजर्जरचेतसां बत नृणां का नाम शा-

१ गतीति—मकूल्वावित्यत्र तु क्रियाविशेषणत्वेन कर्मत्वाद्यण् भवत्येव । २ दृन्करेति—इदं च वार्तिकं 'वर्षाभ्वश्च' इत्यत्रानुक्तसमुच्चयार्थेन चकारेण सङ्ग्राह्यमिति केचित् । ३ स्वार्थिक इति—स्वस्याः प्रकृतेरर्थः स्वार्थः । तत्र भवः स्वार्थिकः । अध्यात्मादित्वाट्ठञ् । द्वारादित्वप्रयुक्त ऐजागमस्तु इह न भवति द्वारादिषु स्वग्रामस्वाध्यायशब्दयोः पाठेन स्वशब्दादेश्चैदेतयोरेवेति-नियमार्थकेनाप्राप्तेः ।

कॄ दॄ अनयोरनुकरणे प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशादित्त्वे रपरत्वम् । कीः । किरौ । किरः । तीः । तिरौ । तिरः इत्यादि गीर्वत् । इत्वाभावपक्षे तु ऋदुशन इति ऋतो ङीति च तपरकरणादनङ्गुणौ न । कॄः । क्रौ । क्रः । कॄम् । क्रौ । कॄन् । क्रा । क्रे इत्यादि ॥ **इति ॠदन्ताः** ॥ ॥ गम्लृ शकॢ अनयोरनुकरणेऽनङ् । गमा । शका । गुणविषये तु लपरत्वम् । गमलौ । गमलः । गमलम् । गमलौ । गमॄन् । गम्ला । गम्ले । ङसिङसोस्तु ऋतउदित्युत्वे लपरत्वे संयोगान्तस्य लोपः । गमुल् । शकुल् । इत्यादि ॥ **इति ॡदन्ताः** ॥ ॥ सेः । सयौ । सयः । स्मृतेः । स्मृतयौ । स्मृतयः ॥ **इत्येदन्ताः** ॥ ॥ **गोतो णित्** ।७।१।९०। गोशब्दात्परं सर्वनामस्थानं णिद्वत् स्यात् । गौः ।

---

न्तेः कथा' 'नृणामेको गम्यस्त्वमसि–' इत्यादिप्रयोगा न सगच्छेरन् । किच 'छन्दस्युभयथा' इति पूर्वसूत्रेणैव नृणां नृणामिति सिद्धे 'नृ च' इति सूत्रस्य वैयर्थ्यं स्यात् । यदपि पूर्वसूत्रे तिसृचतसृ इत्यनुवर्तयन्ति, तदप्ययुक्तम् । अविशेषेण विकल्पदर्शनात् । तथा च 'धाता धातृणाम्' इति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते, बह्वृचैस्तु दीर्घ इति दिक् ॥ इत्यृदन्ताः ॥ ॥

—**प्रकृतिवदनुकरणमि**त्यादि । 'यत्तदेतेभ्यः परिमाणे' इति निर्देशोऽत्र लिङ्गम् । भवन्ति हि तत्र त्यदाद्यत्वकरणादनुकरणस्य प्रकृतिवत्त्वमेकशेषाभावदर्शनाच्च वैकल्पिकत्वम् ॥—**इत्वे रपरत्वमि**ति । 'ॠत इद्धातोः' इतीत्वे 'उरण् रपरः' इति रपरत्वम् ॥—**कीरि**ति । कॄधातुरित्यर्थ ॥ एवं—**तीरि**ति तॄधातुः ॥—**इत्यादी**ति । 'ॠत उत्' इति तपरकरणात् ङसिङसोरत उदादेशो न, क्रः । दीर्घान्तत्वादामो न नुट्, क्राम् । ङौ तु क्रि इत्यादि ॥ इत्यॄदन्ताः ॥ ॥ **अनङि**ति ऋऌवर्णयोः सावर्ण्यात् 'ऋदुशन–' इति सूत्रप्रवृत्तेः ॥—**गुणविषय** इति । 'ऋतो ङि–' इति गुणविषये ॥—**गमॄन्** इति । ऌवर्णस्य दीर्घाभावात् 'प्रथमयोः–' इति यः पूर्वसवर्णदीर्घः स ऌकारॠकारयोः स्थाने ॠकार एव भवति ॥ नन्वत्र लकारद्वयगर्भो दीर्घोऽस्त्विति चेद्, अत्राहुः । 'प्रथमयोः पूर्वसवर्णः' इत्यस्याकः प्रथमाद्वितीययोरचि पूर्वस्य सवर्णो यो दीर्घः स पूर्वपरयोः स्थाने भवतीत्यर्थाद्ऌवर्णयोर्वचनेन सावर्ण्यसद्भावात् ॠकार एव ऌकाराऽकारयोः स्थाने भवति । न तु लकारद्वयगर्भो दीर्घः, तस्य ईषत्स्पृष्टप्रयत्नत्वात् प्रयत्नभेदेन ऌकारसावर्ण्याभावादिति ॥ एव च होतॄनित्यादौ रेफद्वयगर्भो दीर्घ ऋकाराकारयोः स्थाने न भवत्येवेति बोध्यम् ॥ **इत्यादी**ति । गम्ऌभ्याम् । गम्ऌभिः । गम्ऌभ्यः । आमि तु गमॄणामिति केचित् ॥ वस्तुतस्तु ऌकारस्थाने लकारद्वयगर्भेणैव दीर्घेण भवितव्य स्थानत आन्तर्यस्य बलीयस्त्वात् । होतॄणामित्यत्र तु ॠकार एव भवति स्थानप्रयत्नोभयसाम्यात् ॥ स्यादेतत् । रेफद्वययुक्तस्य लकारद्वययुक्तस्य चेषत्स्पृष्टप्रयत्नत्वात् प्रयत्नभेदेन ऋऌवर्णाभ्या सावर्ण्याभावेनाच्त्वाभावात् 'ऊकालोऽज्–' इत्यादिना दीर्घसज्ञा नास्तीति कथमत्र लकारद्वयगर्भेण भवितव्यम्, 'ॠति ॠ वा' 'ॡति ॡ वा' इति वार्तिकप्रत्याख्यान वा कथ सगच्छताम् , 'अकः सवर्णे' इत्यनेन इष्टरूपाणामसिद्धेः , अत्राहुः । उभयोरप्यच्त्वसिद्धये वर्णसमाम्नाये 'ऋऌक्' सूत्रोत्तर पाठः कर्तव्य , तेन सर्वेष्टसिद्धिः । न च दीर्घत्वसिद्धावपि विवृतप्रयत्नसाम्यात् होतॄकार इत्यत्र ॠकारो दीर्घ एव स्यात्, न तु रेफद्वययुक्तो दीर्घ इति शङ्कयम् । ऋकारद्वयस्थाने रेफद्वयवतः साम्येन कदाचित्तस्यापि प्रवृत्तेः । होतॢकार इत्यत्र ऌकारेण आन्तर्यात्कदाचिल्लकारद्वययुक्तः कदाचिदृकारेण आन्तर्यादृकारश्च भवति । पर तु वार्तिकमते होतृॠकार· इत्यत्र रेफद्वयगर्भो न भवति । प्रत्याख्यानपक्षे तु कदाचिद्भवतीति वैषम्यमस्ति, तत्रेष्टापत्तिर्वा प्रत्याख्यानस्य प्रौढिवादता वा अभ्युपगन्तव्येति ॥ अत्रेद बोध्यम् । 'अकः सवर्णे–' इति सूत्रस्थभाष्ये 'ॠति ॠ वा ॡति ॡ वा' इत्येतत्र प्रत्याख्यात, 'तुल्यास्य–' इति सूत्रस्थभाष्ये तु तस्य प्रत्याख्यानेऽपि फलभेदे तदयोगात् । स्वीकृते तु तस्मिन् 'अकोऽकि' इत्येव सुवचमिति ग्रन्थोऽनुपपन्न एव ॥ यदि तु 'ॠति ॠ वा' इति वार्तिकं, 'उॠ' इति 'ॠ वा' इति पठ्यते, तदा वार्तिकयोः सवर्ण इति पदानुवृत्त्यनपेक्षणात्सुवचमेवाऽकोऽकीति ॥ प्रकृतमनुसरामः । ङौ तु 'ऋतो ङि–' इति गुणो लपरः । गमलि । गम्लो. । गम्ऌषु । एव शकॢशब्देऽप्यूह्यम् ॥ इति ॡदन्ताः ॥ ॥—**सेरि**ति । अस्यापत्यमिः कामः, अस्य स्त्री ई लक्ष्मीस्तेन तया वा सह वर्तत इति विग्रहे 'तेन सहेति तुल्ययोगे' इति बहुव्रीहौ 'वोपसर्जनस्य' इति सहस्य सभावे 'आद्गुण.' ॥—**सय** इति ॥ ननु सेइत्येकारस्य अन्तवद्भावेन पदान्तत्वादयादेश बाधित्वा जसि परत· 'एङः पदान्तात्–' इति पूर्वरूपमेकादेशः स्यात्, तथा च सेरित्येव रूप स्यात् न तु सय इति चेद् । अत्र केचित् । एव तर्हि 'थासः से' 'ईशः से' इति विहितादेशस्यानुकरणशब्दोऽयम्, तत्र हि जसि परतोऽयादेशस्य निर्बाधत्वादिति ॥—**स्मृतेरि**ति । इ· कामः स्मृतो येन सः, ईर्लक्ष्मीः स्मृता येनेति वा विग्रहः । 'निष्ठा' इति स्मृतशब्दस्य पूर्वनिपातः ॥—**स्मृतय** इति । नन्वत्र पूर्वोक्तरीत्या 'एङः पदान्तादति' इति पूर्वरूपेण भाव्य, न त्वयादेशेन, न ह्यत्रानुकरणशब्दत्वकल्पनमौचित्य लभते इति चेत् । अत्र नव्याः । 'उत्तरपदत्वे

---

१ इत्वे इति—'किरश्च पञ्चभ्यः' इति निर्देशात् अधातुप्रत्ययेऽपि तस्य प्रवृत्तिरिति भावः । २ सेरिति—ननु इना सह वर्तते इति विग्रहे सभावात्पूर्वमन्तरङ्गत्वाद्गुणे सहेः इति रूपं स्यात् । नच ततः सादेशः, एवमपि एदन्तता दुर्लभैव इति चेत्, न, उत्तरपदाधिकारस्थबहिरङ्गेऽन्तरङ्गपरिभाषाऽप्रवृत्तेः 'इच एकाचोऽम्–' इति सूत्रे भाष्ये उक्तत्वादक्षतेः ।

गावौ । गावः । **औतोऽम्शसोः ।६।१।९३।** आ ओत इति छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात्सुबेव अम् गृह्यते । नेह । अचिनवम् । असुनवम् । गाम् । गावौ । गाः । गवा । गवे । गोः । इत्यादि ॥ * **ओतोणिदिति वाच्यम्** ॥ * **विहितविशेषणं च** । तेन । सुद्यौः । सुद्यावौ । सुद्यावः । ओकारान्ताद्विहितं सर्वनामस्थानमिति व्याख्यानान्नेह । हे भानो । हे भानवः । उः शंभुः स्मृतो येन सः स्मृतोः । स्मृतावौ । स्मृतावः । स्मृताम् । स्मृतावौ । स्मृताः । इत्यादि ॥ इत्योदन्ताः ॥ ॥ **रायो हलि ।७।२।८५।** रैशब्दस्याऽऽकारोऽन्तादेशः स्याद्धलि विभक्तौ । अचि आयादेश । राः । रायौ । रायः । रायम् । रायौ । रायः । राया । राभ्यामित्यादि ॥ **इत्यैदन्ताः** ॥ ॥ ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । इत्यादि । औतोऽम्शसोरितीह न प्रवर्तते । ऐऔजिति सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात् ॥ ॥ इत्यजन्ताः पुंलिङ्गाः ॥

---

चापदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणप्रतिषेधाद 'एङः पदान्तादति' इत्यस्याप्रवृत्तिः । किंच । 'स्वादिष्वसर्वनामस्थाने' 'यचि भम्' इत्यत्र भाष्यकृता स्वादिषु पूर्वं पदसंज्ञं भवतीति व्याख्याय ततोऽसर्वनामस्थाने यचीति छित्वा नञं च क्रियया संबध्य यजादौ सर्वनामस्थाने परतः पूर्वं पदसंज्ञं न भवतीति व्याख्यातम् । ततश्चानेन 'सुप्तिङन्तम्–' इति 'स्वादिषु–' इति च द्विविधापि संज्ञा निषिध्यत इति पूर्वान्तत्वप्रयुक्ता पदान्ततेह दुर्लभेति स्मृतय इति रूपं निर्बाधमेव । तथा सय इत्यत्र इना सहेत्यादिव्युत्पत्तिपक्षेऽपि नानुपपत्तिः । न चैकादेशस्य पूर्वान्तत्वेनाव्ययत्वात्सुपो लुक् स्यादिति शङ्क्यम् । अव्ययसंज्ञाया अन्वर्थत्वेनोपसर्जने तदभावात् । न चैवमपि सह इ इति स्थिते अन्तरङ्गत्वाद्गुणे कृते सहेशब्दस्य सादेश एव न स्यादेकादेशस्य परादिवद्भावे सहशब्दाभावात्पूर्वान्तत्वे तूत्तरपदत्वाभावाद् उभयत आश्रयणे अन्तादिवद्भावे निषेधाच्च, अस्तु वा सहशब्दस्य सभावः तथापि स इत्यदन्तमेव रूपं स्यात्र तु से इत्येदन्तमिति शङ्क्य 'नेन्द्रस्य परस्य' इत्युत्तरपदवृद्धिप्रतिषेधेन 'पूर्वोत्तरपदयोः प्रथमं कार्यं भवति तत एकादेशः' इति सामान्यज्ञापनादित्याहुः ॥—**गोतो णित्** ॥ 'इतोऽत्सर्वनामस्थाने' इत्यतोऽनुवृत्तं सप्तम्यन्तं सर्वनामस्थानग्रहणं प्रथमया विपरिणम्यते णिदित्यनेन सामानाधिकरण्यात्, तदाह—**सर्वनामस्थानमि**ति ॥—**णित्कार्यकृत्स्यादि**ति । णिति परे पूर्वस्य यत्कार्यं तत्करोतीत्यर्थः ॥ —**गौरित्या**दि । चित्रगुरित्यत्र तु न भवति ओत इति वक्ष्यमाणत्वात् ॥ तद्धितो यः शस् स ओकारान्तान्न सम्भवतीत्याशयेनाह—**शसा साहचर्यादि**ति । 'सुपि' इत्यनुवर्तनाच्चेत्यपि काशिकायामुक्तम् ॥ कैयटस्तु तद्धितोऽपि शसस्तीति कथमिह साहचर्यादम् सुप्त्वमित्याशङ्क्याचीत्यधिकारादजादिशस् सुबेव सम्भवति, न तु तद्धित इत्याह—**अचिनवमि**ति । चिनोतेर्लङादेशस्य मिपः 'तस्थस्थमिपाम्–' इत्यम् ॥—**ओतो णिदिति वाच्यमि**ति । गोत इत्यपहाय ओत इति वाच्यमित्यर्थः । एवं च गामित्यत्र परत्वाद्वृद्धिः स्यादिति शङ्काया अनवकाशः, निरवकाशतया आत्वेन वृद्धेरेव बाधनात् ॥ इत्योदन्ताः ॥ ॥—**रायो हलि** ॥ 'अष्टन आ विभक्तौ' इत्यत आ इति विभक्ताविति च वर्तते तदाह—**आकारान्तादेश** इति । 'अर्थरैविभवा अपि' इत्यमरः । 'रायिश्छान्दसः' इति भाष्यम्, तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं न तु केवलस्यापीति 'वान्तो यि–' इति सूत्रे कैयटः । स एव केवलोऽपि छान्दस इति पक्षान्तरमप्याह ॥ इत्यैदन्ताः ॥ ॥—**ग्लौरि**ति । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । एवं जनानवतीति जनौः । 'ज्वरत्वर–' इत्यूठ् 'एत्येधत्यूठ्सु' इति वृद्धिः । अच्यावादेशः । जनावौ जनावः इत्यादि ॥—**न प्रवर्तत** इति । हे ग्लौरित्यत्र सम्बुद्धिलोपः, ग्लावः इत्यत्र 'ङसिङसोश्च' इति पूर्वरूपं च न प्रवर्तत इत्यपि बोध्यम् ॥—**सावर्ण्याभावज्ञापनादि**ति । सति सावर्ण्ये एचश्चतुर्विंशतेः संज्ञा भवन्तीति 'वृद्धिरादैच्' इत्येतत् 'वृद्धिरादेङ्' इति पठितुं शक्यत्वात् 'ऐऔच्' इति सूत्रं व्यर्थं सत् सावर्ण्याभावं ज्ञापयति ॥ अत एव एदैतोरोदौतोश्च न मिथः सावर्ण्यम् 'ऐ औच्' इति सूत्रारम्भसामर्थ्यादित्यादि 'अणुदित्सवर्णस्य–' इति सूत्रे एवोक्तमिति भावः ॥ ननु 'ऐऔच्' इति सूत्राभावे 'नग्वाभ्याम्–' इति सूत्रे ताभ्यामैजिति प्रत्याहारोऽस्य न सिध्येत्, 'पूर्वौ तु ताभ्यामेङ्' इत्युक्ते तु विधीयमानस्य सवर्णाग्राहकतया वैयाकरणः सौवश्व इत्यादावेदोतावेवागमौ स्तो, न त्वैदौतौ । ततश्च वैयर्थ्याभावात् 'ऐऔच्' इति सूत्रं सावर्ण्याभावं न ज्ञापयतीति चेन्मैवम् । 'पूर्वौ तु ताभ्यामैं औ' इति पठनेनापि इष्टसिद्धेस्तत्सूत्रवैयर्थ्यस्य तदवस्थत्वात् । स्थितस्य गतिप्रदर्शनमिदम् ॥ वस्तुतस्तु 'ऐऔच्' इतिसूत्रारम्भसामर्थ्यादित्युक्ते तु 'ताभ्यामैच्' इत्यत्रानुपपत्तिर्नास्त्येव । न च 'ऐऔच्' इति सूत्राभावे 'अदेङ्गुणः' 'एङि पररूपम्' 'एङः पदान्तादति' इत्यादावेङ्प्रत्याहारः कथं सिध्येदिति वाच्यम् । सति तु सावर्ण्ये 'अदेज् गुणः' 'एचि पररूपम्' 'एचः पदान्तादति' इति पठितुं शक्यत्वादतिप्रसङ्गस्य एच्ग्रहणेऽपि तुल्यत्वात् । न चैवमप्येचां चतुर्णां क्रमादयायादेशसिद्ध्यर्थम् 'एओङ्' 'ऐऔच्' इति सूत्रद्वयमप्यावश्यकमिति वाच्यम् । 'स्थानेऽन्तरतमः' इत्यनेनैव एचां क्रमादयादयः सिध्यन्तीति प्रागेवास्माभिरुप-

---

१ ओतो णिदिति—'गोत–' इत्यत्र तपरकरणेन लब्धोऽयमर्थः । २ विहितेति—अत एव दिव औदिति वक्तव्ये औकारविधानं चरितार्थम् ।

## अजन्तस्त्रीलिङ्गप्रकरणम् ।

रमा । **औङ आपः** ।७।१।१८। आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे[१] । रमाः । **संबुद्धौ च** ।७।३।१०६। आप एकारः स्यात्संबुद्धौ । एङ्ह्रस्वादिति संबुद्धिलोपः । हे रमे । हे रमे । हे रामः । रमाम् । रमे । रमाः । स्त्रीत्वान्नत्वाभावः । **आङि चापः** ।७।३।१०५। आङि ओसि च परे आबन्तस्याऽङ्गस्य एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः । **याडापः** ।७।३।११३। आपः परस्य ङिद्वचनस्य याडागमः स्यात् । वृद्धिरेचि । रमायै । सवर्णदीर्घः । रमायाः । रमयोः । रमाणाम् । रमायाम् । रमयोः । रमासु । एवं दुर्गादयः । **सर्वनाम्नः स्याड्ढ्रस्वश्च** ।७।३।११४। आबन्तात्सर्वनाम्नः परस्य[२] ङितः स्याट् स्यादापश्च ह्रस्वः । याटोऽपवादः । सर्वस्यै । सर्वस्याः २। एकादेशस्य पूर्वान्तत्वेन ग्रहणादामि सर्वनाम्न इति सुट् । सर्वासाम् । सर्वस्याम् । सर्वयोः । सर्वासु । एवं विश्वादय आबन्ताः । **विभाषा दिक्समासे बहुव्रीहौ** ।१।१।२८। अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । दिङ्नामान्यन्तराले इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह । योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै । बहुव्रीहिग्रहणं स्पष्टार्थम् । अन्तरस्यै शालायै । बाह्यायै इत्यर्थः । अपुरी-

पादितत्वात् ॥ यदा हि 'स्वराणामूष्मणां चैव' इत्यादिप्रागुक्तशिक्षावचनानुरोधात् 'एङौ विवृततरौ, ऐचौ विवृततमौ' इत्यभ्युपगम्यते, तदात्वेदैतोरोदौतोश्च मिथः सावर्ण्यप्रसक्तिरेव नास्तीति 'ऐऔच्' इति 'एऔच्' इति वा सूत्रं नोक्तं ज्ञापकमिति ज्ञेयम् ॥ केचित्तु विवृततरयोरेङोर्विवृततमत्वाभावेऽपि विवृततरे विवृततमे च विवृतत्वस्य सत्त्वात्तदादाय तुल्यप्रयत्नत्वमेङोरैचोश्चास्तीति सावर्ण्यप्रसक्तावुक्तज्ञापकाश्रयण सम्यगेवेत्याहुः । तदपरे न क्षमन्ते । तथा हि सति 'इको गुणवृद्धी' इति सूत्रस्थशब्दकौस्तुभग्रन्थेन सह विरोधप्रसङ्गात् ॥ तत्र हि—'स्वराणामूष्मणा च–' इत्यादिशिक्षानुरोधाच्चेता नेतेत्यादौ गुणाप्रवृत्ति' स्याद्विवृततरत्वरूपवैलक्षण्यस्य सत्त्वादिति न शङ्क्यम् । विधेर्विषयत्वापत्तेः । 'जयः' 'करण' 'धान्याना भवने' इत्यादिनिर्देशैरिकारादिषु गुणप्रवृत्त्यनुमानाच्च—इति प्रकारान्तरेण समाहितम् । त्वदुक्तरीत्या तुल्यप्रयत्नवत्त्वे तु चेता नेतेत्यादौ गुणाप्रवृत्तिशङ्का निरालम्बनैव स्यात् । तस्मादीषद्विवृतभेदेन स्वराणामूष्मणामिव विवृततरविवृततमभेदेन सावर्ण्याभावोऽत्र सुवच इति दिक् ॥ ॥ इत्यजन्ता पुल्लिङ्गाः ॥

**रमेति** ॥ रमते इति रमा 'रम क्रीडायाम्' इत्यस्मात्पचाद्यचि टाप लिङ्गविशिष्टपरिभाषया स्वादयः । हल्ङ्याब्भ्यो दीर्घादिलोपः । न चात्राबन्तत्वादेव स्वाद्युत्पत्तिरस्तु प्रत्ययान्तस्याप्रातिपदिकत्वेऽपि ङ्याप्पोः पृथग्ग्रहणादिति वाच्यम् । ङ्याब्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात्प्रत्याख्यातत्वाच्च तद्ग्रहणस्य ॥—**शी स्यादि**ति । 'जसः शी' इत्यतः शी इत्यनुवर्तत इति भावः ॥—**संबुद्धौ च** ॥ 'बहुवचने झल्येत्' 'आङि चापः' इत्यत एदाप इत्यनुवर्तते तदाह—**आप एकारः स्यादि**ति ॥—**एङ्ह्रस्वादि**ति । न चात्र हल्ङ्यादिनैव सुलोपोऽस्तु प्रत्ययलक्षणन्यायेन 'संबुद्धौ च' इत्येत्त्वस्यापि प्रवृत्तिसंभवादिति शङ्क्यम् । परत्वात्प्रतिपदोक्तत्वाच्च एत्वे कृते हल्ङ्यादिलोपस्याप्राप्तेः स्थानिवद्भावादात्त्वेऽप्याकाररूपत्वाभावात् । आआबित्याकार प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानात् । 'एङ्ह्रस्वात्–' इति लोपस्यैव परत्वेन न्याय्यत्वाच्चेति भावः ॥—**आङि–**॥ चकारेण 'ओसि च' इति प्रकृत परामृश्यते इत्याह—**ओसि च पर** इति ॥—**रमाभिरि**ति । नन्विह एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'अतो भिस ऐस्' इत्यैस् प्राप्नोति । न च तपरत्वसामर्थ्यान्नैवमिति शङ्क्यम् । अकृतैकादेशे विश्वपाभिरित्यादौ कृतार्थत्वादिति चेन्मैवम् । अल्विधौ 'अन्तादिवच्च' इत्यस्याप्रवृत्तेः ॥—**याडापः** ॥ 'घेर्ङिति' इत्यतोऽनुवृत्त ङितीति सप्तम्यन्तमाप इति पञ्चम्यनुरोधेन षष्ठ्या विपरिणम्यत इत्याह—**ङिद्वचनस्ये**ति । अत्र 'सुपि च' इत्यतः सुपीत्यनुवर्तनात् सुप एव याट् । तेन अपित्सार्वधातुकस्य ङित्त्वेऽपि मालेवाचरतो मालात इत्यादौ तसादेर्न भवति । एतच्च 'अचः परस्मिन्–' इत्यत्र पूर्वस्य विधिः पूर्वविधिरिति षष्ठीसमासपक्षाभ्युपगमेनोक्त पञ्चमीसमासपक्षाभ्युपगमे तु शपः स्थानिवत्त्वेन व्यवधानात् मालात इत्यादावाटः प्रसङ्ग एव नास्तीत्याहुः ॥ 'यट्' इत्येव वक्तव्ये दीर्घोच्चारणं स्पष्टप्रतिपत्त्यर्थम् । न च 'अतो गुणे' इति पररूपापत्तिः, अकारोच्चारणसामर्थ्यादेव तद्बाधात् ॥—**वृद्धिरेची**ति । प्राचा तु 'आटश्च' इत्युपन्यस्तम् । 'तदुपेक्षितम् । याट्स्याटोष्टकारस्य समुदायानुबन्धत्वेनेह आटोऽभावात् ॥—**सर्वनाम्नः स्याट्–**॥ दीर्घोच्चारण प्राग्वत् स्पष्टप्रतिपत्त्यर्थम् ॥ आबन्तस्य सर्वादिगणे पाठाभावात् सर्वनामत्व नेत्याशङ्क्याह—**एकादेशस्य पूर्वान्तत्वेने**ति ॥ **विभाषादिक्समासे-**॥ गौणत्वादप्राप्ते विभाषेय, न तु 'न बहुव्रीहौ' इति निषेधे प्राप्ते इति भ्रमितव्यम् । तस्यालौकिकप्रक्रियावाक्यान्तर्गतसर्वादिविषयत्वादस्य च समासविषयत्वात् ॥—**स्पष्टार्थमि**ति । प्रतिपदोक्तदिक्समासविधायके 'दिङ्नामानि–' इति सूत्रे 'शेषो

---

१ रमे इति—यस्येति चेति लोपस्तु न भवति । अभत्वात्, औङः श्या प्रतिषेधाच्च । २ परस्येति—आबन्तात्परस्य सर्वनाम्नो विहितस्येत्यर्थः । तेन मासपूर्वायै इत्यत्र न स्याट् ।

त्युक्तेनेह । अन्तरायै नगर्यै । **विभाषा द्वितीयातृतीयाभ्याम् ।७।३।११५।** आभ्यां ङितः स्याट् स्यादापश्च ह्रस्वः । इदं सूत्रं त्यक्तुं शक्यम् । तीयस्य ङित्सूपसंख्यानात् । द्वितीयस्यै । द्वितीयायै । द्वितीयस्याः । द्वितीयायाः । द्वितीयस्याम् । द्वितीयायाम् । शेषं रमावत् । एवं तृतीया । अम्बार्थनद्योर्ह्रस्वः । हे अम्ब । हे अक्क । हे अल्ल । असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न । हे अम्बाडे । हे अम्बाले । हे अम्बिके । जरा । जरसौ । शीभावात्परत्वाज्जरस् । आमि नुटः परत्वाज्जरस् । जरसामित्यादि । पक्षे हलादौ च रमावत् । इह पूर्वविप्रतिषेधेन शीभावं कृत्वा संनिपातपरिभाषाया अनित्यतां चाश्रित्य जरसी इति केचिदाहुस्तन्निर्मूलम् । यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य । औङ आपः । आङि चापः । याडापः । ह्रस्वनद्यापः । ङेराम् । इति पञ्चापि विधयः प्राप्ताः । एवं नसनिशप्रत्सु । तथाप्यनल्विधावित्युक्तेर्न भवन्ति । आ आबिति प्रश्लिष्य आकाररूपस्यैवाऽऽपः सर्वत्र ग्रहणात् । एवं हल्ङ्यादिसूत्रेऽपि आ आप् ङी ई इति प्रश्लेषादतिखट्वः निष्कौशाम्बिरित्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम् । नचैवमप्यतिखट्वायेत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम् । आबन्तं यदङ्गं ततः परस्य याड्विधानात् । उपसर्जनस्त्रीप्रत्यये तदादिनियमात् । पद्दन्न इति नासिकाया नस् । नसः । नसा । नोभ्यामित्यादि । पक्षे सुटि च रमावत् । निशाया निश् । निशः । निशा । **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।८।२।३६।**

---

बहुव्रीहिः' इत्यतो बहुव्रीहिरित्यधिकारादिति भाव. ॥—**त्यक्तुं शक्यमि**ति । न चाबन्तस्य द्वितीयादिशब्दस्य तीयप्रत्ययान्तत्वाभावाद् 'विभाषा द्वितीया–' इतिसूत्रमावश्यकमिति शङ्क्यम् । एकादेशस्य पूर्वान्तत्वेन ग्रहणादाबन्तस्यापि तीयप्रत्ययान्तत्वात् । 'तीयस्य' इति पुंनपुंसकार्थमवश्य वक्तव्येनानेनैव सिद्धौ 'विभाषा द्वितीया–' इति सूत्र न कर्तव्यमिति भावः ॥—**अम्बार्थनद्योर्ह्रस्वः** । अत्र 'अम्बार्थं द्व्यक्षर यदि' इति वचनात् द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वो भवति नान्येषामित्याशयेन फलितमाह—**असंयुक्ता ये डलका** इत्यादि ॥ –**जरे**ति । 'जृष्वयोहानौ' इत्यस्मात् 'षिद्भिदादिभ्यः–' इत्यङि 'ऋदृशोऽङि–' इति गुणे कृते टाप् ॥—**शीभावात्परत्वाज्जरस**मित्यादि । ननु 'औङ आपः' 'ह्रस्वनद्यापो नुट्' इत्यपेक्षया 'जराया:–' इतिसूत्रस्य परत्वादस्त्वेव परत्वम् 'आङि चापः' 'याडापः' 'ङेराम्' इति विधयो जरसादेशं बाधित्वा परत्वात् स्युरिति चेद् अत्राहुः । 'आङि चापः' इत्येकारादेशे कृतेऽप्येकदेशविकृतन्यायेन 'जराया:–' इति जरसादेशप्रसक्त्या नित्यत्वादेकारादेशं बाधित्वा जरसादेश एव भवति । न चैकारादेशोऽपि नित्य एव, जरसादेशे कृतेऽपि स्थानिवत्त्वेनाबन्तत्वात् 'आङि चापः' इति प्रवृत्तेरिति वाच्यम् । आकाररूपस्यैवापः सर्वत्र ग्रहणाद् इत्यनुपदमेव वक्ष्यमाणत्वात्तदप्रवृत्तेः । 'याडापः' इति याडागम तु जरसादेशोऽन्तरङ्गत्वाद्बाधते । आकाररूपाप. परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात् । ङेराममपि जरसादेशो नित्यत्वाद्बाधते । न चाकाररूपाबन्तात्परस्य ङेरामि कृते सनिपातपरिभाषया जरसादेशस्याप्रवृत्तौ न तस्य नित्यतेति वाच्यम् ॥ **रूपमालायां** जरसीत्युक्तत्वादिष्टानुरोधादुक्तपरिभाषाया अनित्यत्वाभ्युपगमे बाधकाभावादिति ॥—**स्वाश्रयमि**ति । यजादिसुबाश्रय तन्निमित्तकमित्यर्थः । यजादिसुप एव याडागमापादानात्स्वशब्देन तत्परामृश्यते ॥—**स्थानिवद्भावेने**ति । न चैव लाक्षणिकत्वात्कथमिह याट् स्यादिति वाच्यम् । अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया· प्रवृत्तौ अतिदेशस्य वैयर्थ्यापत्ते. ॥ अतो व्याचष्टे—**आबन्तं यदङ्गमि**ति । 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणम्' इति नियमादतिखट्वेति यदङ्ग तदाबन्त न भवति, यच्चाबन्त खट्वेति तदङ्ग न भवतीति नात्र याडागमप्रसक्तिरिति भाव ॥ अत्र नव्या । 'प्रत्ययग्रहणे तदन्तग्रहणम्' इत्याप्ग्रहणेनाबन्तं गृह्यते । आबन्तस्याङ्गविशेषणे त्वाबन्तान्तग्रहणादतिखट्वायेत्यत्रोक्तदोषतादवस्थ्यमिति यद्युच्यते, तर्ह्यङ्गेनाबन्तं विशेष्यताम्—अङ्गसञ्ज्ञक यदाबन्तमिति, तथा च नोक्तातिप्रसङ्गशङ्कालेश इत्याहुः ॥ स्त्रीप्रत्यये तदादिनियमो नेत्याशङ्क्याह—**उपसर्जने**ति । अय भावः । 'स्त्रीप्रत्यये चानुपसर्जने न' इत्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमप्रतिषेधो वक्ष्यते न तूपसर्जनेऽपि । अत एव परमकारीषगन्धीपुत्रवदतिकरीषगन्ध्यापुत्र ·इत्यत्र 'ष्यङः सप्रसारण पुत्रपत्योस्तत्पुरुषे' इति संप्रसारण न भवति । अतिकारीषगन्ध्यस्य हि ष्यङन्तत्वाभावात् । न च बहुश्रेयसीत्यत्र श्रेयसीत्युत्तरभागस्य ङ्यन्तत्वाद्यथा हल्ङ्यादिलोपः प्रवर्तते तथा तत्राप्युत्तरभागस्य ष्यङन्तत्वात्संप्रसारण स्यादेवेति शङ्क्यम् ।

---

१ त्यक्तु शक्यमिति— ननु अन्प्रत्ययान्तस्य द्वे रूपे यथा स्याता तदर्थमिद चरितार्थमिति वाच्यम् । नच महाविभाषयान्प्रत्ययाभावे रूपद्वयसिद्धिरिति भ्रमितव्यम् । तत्सूत्रे महाविभाषानुबन्धाभावस्य तद्धिते वक्ष्यमाणत्वात् इति चेन्न । भागार्थे विधीयमानस्य स्त्रीत्वाभावात् । अत्रच प्रत्याख्यानपर भाष्यमेव मानम् । अत एव सञ्ज्ञोपसर्जनार्थमपि न, सर्वनाम्नः स्याड्ढिति साहचर्याच्च । २ अम्बार्थेति—अत्र वार्तिक 'मातुर्मातच् पुत्रार्थमर्हते' इति । जननीद्वारा पुत्रस्य प्रशसाया द्योत्याया द्योतको मातजादेशो भवति सच समासान्तकबपवाद इति तदर्थः । उदाहरण तु हे गार्गीमात इति । यत्र तु श्लाघ्यत्व न द्योत्य तत्र तु हे गार्गीमातृक इत्येव भवति । स्पष्ट चेद जैनेन्द्रव्याकरणे, तत्रहि 'मातुर्मातः पुत्रेऽर्हे सिनामन्त्र्ये' इति सूत्रमेव वर्तते । आमन्त्र्ये सिना सबोधनैकवचनेन सहेत्यर्थ. ।

**व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। षस्य जश्त्वेन डकारः। निड्भ्याम्। निड्भिः। सुपि डः सीति पक्षे धुट्। चर्त्वम्। तस्यासिद्धत्वाच्चयो द्वितीया इति तटयोष्ठथौ न । न पदान्ताट्टोरिति ष्टुत्वं न। निट्त्सु। निट्सु। षढोः कः सि ।८।२।४१। षस्य ढस्य च कः स्यात्सकारे परे। इति तु न भवति । जश्त्वं प्रत्यसिद्धत्वात्। केचित्तु व्रश्चादिसूत्रे दादेर्धातोरिति सूत्राद्धातोरित्यनुवर्तयन्ति। तन्मते जश्त्वेन जकारे । निज्भ्याम्। निज्भिः। जश्त्वम्। श्चुत्वम्। चर्त्वम्। निच्शु। चोः कुरिति कुत्वं तु न भवति। जश्त्वस्यासिद्धत्वात्॥ * मांसपृतनासानूनां मांस्पृत्नसो वाच्याः शसादौ वा। पृतः। पृता । पृद्भ्याम् । पक्षे सुटि च रमावत्। गोपा विश्वपावत्। मतिः प्रायेण हरिवत्। स्त्रीत्वान्नत्वाभावः। मतीः। नत्वं न। मत्या। ङिति ह्रस्वश्च ।१।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इउवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे। आण् नद्याः। मत्यै। मतये। मत्याः २। मतेः २। नदीत्वपक्षे औदिति ङेरौत्त्वे प्राप्ते। इदुद्भ्याम् ।७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्। पक्षे अच्च घेः। मत्याम्। मतौ । एवं श्रुतिस्मृत्यादयः। त्रिचतुरोः स्त्रियां तिसृचतसृ ।७।२।९९। स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः। अचि र ऋतः ।७।२।१००। तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामपवादः। तिस्रः २ । आमि नुमचिरेति नुट्। न तिसृचतसृ ।६।४।४। एतयोर्नामि दीर्घो न स्यात्। तिसृणाम्। तिसृषु। स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह । प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः मतिवत्। आमि तु प्रियत्रयाणामिति विशेषः । प्रियास्तिस्रो यस्य स इति विग्रहे तु प्रियतिसा। प्रियतिस्रौ। प्रियतिस्रः। प्रियतिस्रमित्यादि। प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि। स्वमोर्लुका**

पूर्वपदस्य ष्यङन्तस्य पुत्रपत्योरुत्तरपदयो' सम्प्रसारणमिति 'ष्यङः सम्प्रसारणम्' इत्यत्रैव वक्ष्यमाणत्वात् ॥—**तटयोष्ठथौ नेति**। धुडभावे टस्य ठो न। धुट्पक्षे तु तस्य थो नेति विवेक ॥—**न भवतीति**। जश्त्वात्प्राक् षस्य कुत्व न भवतीत्यर्थः ॥—**केचित्त्विति**। परिशिष्टकारादयः॥—**निच्शु** इति। अत्र 'शश्छोऽटि' इति पक्षे छत्व बोध्यम् ॥—**मांसपृतनेति**। पृतना सेना ॥—**नात्वं नेति**। 'अस्त्रियाम्' इति पर्युदासादिति भावः॥—**ङिति ह्रस्वश्च**॥ 'वामि' इति सूत्राद् वेत्यनुवर्तते। अप्राप्तविभाषेयम्। ह्रस्वयोरप्राप्तावितरयोस्तु 'नेयङुवङ्स्थानौ–' इतिनिषेधप्राप्तावारम्भात्। इहेयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणि ईदूतोर्विशेषणानि ह्रस्वयोस्तु स्त्रियामित्येव विशेषण, न तु नित्यस्त्रीत्वपर्यन्तम्। अन्यथा इष्वशनिप्रभृतीनामुभयलिङ्गाना पटुमृदुप्रभृतीना सर्वलिङ्गाना च स्त्रीत्वेऽपि नदीत्व न स्यात्। कैयटमते हि तेषां नित्यस्त्रीत्वाभावात् ॥ मतान्तरेऽपि ह्रस्वांशे नित्यग्रहणव्यावर्त्यालाभाच्च । अत एवाख्याग्रहण विहाय स्त्रीशब्दमात्र निष्कृष्य सबध्यते, तदेतदाह—**ह्रस्वौ च इवर्णोवर्णौ स्त्रियामिति**॥—**औत्वे प्राप्त** इति। 'ङेराम्–' इत्यपेक्षया परत्वादिति भावः॥ प्राचा तु 'औत्' इति सूत्रे 'इदुद्भ्याम्' 'अच्च घेः' इति पूर्वोत्तरसूत्रद्वयबलल्लभ्यार्थमुपादाय घिनदीसञ्ज्ञावर्जिताभ्यामिति व्याख्यातम्। 'इदुद्भ्याम्' इति सूत्र च नोपन्यस्तमित्यसमञ्जसमेतत् ॥—**त्रिचतुरोः**—॥ 'अष्टन आ विभक्तौ' इत्यतोऽनुवर्तनादाह—**विभक्तौ परत** इति। विभक्तौ किम्। त्रिभार्यः चतुर्भार्य इति केचित्॥ तन्मन्दम्। 'स्त्रियाः पुवद्–' इति पुवद्भावेनापीष्टसिद्धेः। किं तु प्रियादौ परतः पुवद्भावो नेति त्रिप्रिय इत्याद्युदाहर्तव्यमिति नव्या. ॥—**गुणदीर्घोत्वानामिति**। तिस्रस्तिष्ठन्तीत्यत्र 'ऋतो ङि–' इति गुणस्य रत्वमपवादः, तिस्र' पश्येत्यत्र तु 'प्रथमयो'–' इति पूर्वसवर्णदीर्घापवाद', प्रियतिस्र आगतः प्रियतिस्र स्वमित्यत्र 'ऋत उत्' इत्युत्वस्येति विवेकः॥ यद्यपि मध्येऽपवादन्यायेन दीर्घोत्वयोरेव रत्वमपवादः स्यान्न तु 'ऋतो ङि–' इति गुणस्य। तथापि बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्त सर्वमेवेह बाध्यत इति भाव. ॥—**त्रिचतुरोर्विशेषणादिति**। श्रुतत्वाद्धि त्रिचतुरोरित्यस्यैव स्त्रियामिति विशेषण नाङ्गस्येति भावः ॥—**प्रियतिसेति** प्रिय जस् त्रि जस् इति स्थिते 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इत्यकृत एव तिस्रादेशे सुपो लुकि कृते समासाद् या विभक्तिस्तस्या परतः तिस्रादेशः 'स्त्रियाः पुवत्–' इति प्रियाशब्दस्य पुवद्भावः। 'ऋदुशन–' इत्यनङ् ॥ यद्यपि इह जहत्स्वार्थवृत्तिपक्षे त्रिशब्दस्य निरर्थकत्वेन स्त्रीवाचित्वं दुर्लभ, तथापि भूतपूर्वगत्या स्त्रिया वृत्तिर्बोध्या। उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्यत्वात्। अजहत्स्वार्थवृत्तिपक्षे तु स्त्री-

१ तस्यासिद्धत्वादिति—चयो द्वितीया इति वार्तिकस्य 'नादिन्याक्रोशे–' इति सूत्रे भाष्ये पठितत्वादिति भावः। २ नात्व नेति—स्त्रीत्वादित्यनुकृष्यते। अत एव पुस्त्वाभावान्नत्वाभाव इति नोक्त, नहि पुस्त्वाभावो नाभावे प्रतिबन्धकः। नपुंसकेऽपि तदङ्गीकारात्। ३ मत्यामिति—नच सनिपातपरिभाषया यणभावो वाच्यः, 'आण्नद्याः' इत्यादिनिर्देशात्। ४ त्रिचतुरोरिति—अत्र वार्तिकम् 'सञ्ज्ञाया कन्युपसंख्यानमिति'। तिसृका नाम ग्रामः। ५ ऋत इति—इदञ्च अनुवृत्ततिसृचतसृशब्दयोः षष्ठ्यन्तत्वलाभार्थम्, अन्यथा अय रादेशो हि तिसृचतस्रोरजादिविभक्तौ परे बाधकः स्यात्। कृतेतु ऋकारग्रहणे उपजीव्यत्वाद्बाधो न भवति। ६ नुमचिरेति—नच स्वार्थद्रव्यबहिर्भूतलिङ्गरूपार्थविभक्तिसञ्ज्ञानिमित्ततिस्राद्यादेशापेक्षयान्तरङ्गत्वान्नुटि सिद्धे पूर्वविप्रतिषेधोऽयुक्त इति वाच्यम्, 'न तिसृचतसृ' इति सूत्रे तिसृग्रहणेन एतत्सूत्रविषये बहिरङ्गपरिभाषानाश्रयणात्। अन्यथान्तरङ्गत्वान्नयादेशे तदसगति. स्पष्टैव।

लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । न लुमतेति निषेधस्यानित्यत्वात्पक्षे प्रियतिसृ । रादेशात्पूर्वविप्रतिषेधेन नुम् । प्रियतिसृणी । प्रियतिसृणि । तृतीयादिषु वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुमृभावौ । प्रियतिस्रा । प्रियतिसृणा । इत्यादि । द्वेरत्वे सत्याप् । द्वे २ । द्वाभ्याम् ३ । द्वयोः २ । गौरी । गौर्यौ । गौर्यः । नदीकार्यम् । हे गौरि । गौर्यै इत्यादि । एवं वाणीनद्यादयः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादनङि णिङ्गद्भावे च प्राप्ते । विभक्तौ लिङ्गविशिष्टाग्रहणम् । सखी । सख्यौ । सख्यः । इत्यादि गौरीवत् । अङ्यन्तत्वान्न सुलोपः । लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री । हे स्त्रि । ॐ **स्त्रियाः** ।६।४।७९। स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः । ॐ **वाम्शसोः** ।६।४।८०। अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियौ । स्त्रियः । स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः २ । स्त्रियोः । परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रियोः । स्त्रीषु । स्त्रियमतिक्रान्तोऽतिस्त्रिः । अतिस्त्रियौ । गुणनाभावौत्वलुङ्भिः परत्वात्पुंसि बाध्यते । क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् । जसि च । अतिस्त्रयः । हे अतिस्त्रे । हे अतिस्त्रियौ । हे अतिस्त्रयः । वाम्शसोः । अतिस्त्रियम् । अतिस्त्रिम् । अतिस्त्रियौ । अतिस्त्रियः । अतिस्त्रीन् । अतिस्त्रिणा । घेर्ङितीति । अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् । अच्च घेः । अतिस्त्रौ । ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया । इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने । क्लीबे तु नुम् । अतिस्त्रि । अतिस्त्रिणी । अतिस्त्रीणि । अतिस्त्रिणा अतिस्त्रिणे । ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात्पक्षे प्राग्वद्रूपम् । अतिस्त्रये । अतिस्त्रिणः२ । अतिस्त्रेः२ । अतिस्त्रिणोः२ । अतिस्त्रियोरित्यादि । स्त्रियां तु प्रायेण पुंवत् । शसि अतिस्त्रीः । अतिस्त्रिया । ङिति ह्रस्वश्चेति ह्रस्वान्तत्वप्रयुक्तो विकल्पः । अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासः । तत्संबद्धस्यैवानुवृत्तेर्दीर्घस्यायं निषेधो नतु ह्रस्वस्य । अतिस्त्रियै । अतिस्त्रये । अतिस्त्रियाः २ । अतिस्त्रेः २ । अतिस्त्रीणाम् । अतिस्त्रियाम् । अतिस्त्रौ । श्रीः । श्रियौ । श्रियः । ॐ **नेयङुवङ्स्थानावस्त्री** ।१।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो नतु स्त्री । हे श्रीः । श्रियै । श्रिये । श्रियाः । श्रियः । ॐ **वामि**[1] ।१।४।५। इयङुवङ्-

---

निष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः तेन प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिरित्यत्र प्रियत्रिशब्दस्य स्त्रियावृत्तित्वेऽपि न तिस्रादेशप्रसङ्ग , 'प्रत्ययोत्तरपदयोश्च' इत्येतत्सूत्रगतभाष्यग्रन्थसदर्भश्चोक्तव्याख्याने प्रमाणम् ॥—**अनित्यत्वादिति** । 'इकोऽचि–' इत्यज्ग्रहणमिह लिङ्गम् । तथाहि । भ्यांभिसादिषु सत्यपि नुमि 'न लोपः प्रातिपदिकान्तस्य' इति तल्लोपसंभवादचीति व्यर्थम् । न च 'न ङिसम्बुद्ध्योः' इति निषेधात् सम्बुद्धौ लोपो न सम्भवतीति तत्रानिष्टवारणायाचीत्यावश्यकमिति वाच्यम् । सम्बुद्धिश्च लुका लुप्तेति नुमः प्राप्तेरेव तत्र दुर्लभत्वात् । 'न लुमता–' इति निषेधस्यानित्यत्वं विना तत्र प्रत्ययलक्षणाप्रवृत्तेः । नाप्युत्तरार्थं तदिति वाच्यम् । उत्तरत्रैव कर्तव्ये तत्राचीतिकरणस्य वैयर्थ्यात् । 'न लुमता–' इति निषेधस्यानित्यत्वे सम्बुद्धौ प्रत्ययलक्षणेन प्राप्त नुम वारयितुं तदिति भवत्येवाज्ग्रहण लिङ्गम् । न चेदमनित्यत्व सम्बुद्धिगुणमात्रविषयकमित्यभिनिवेष्टव्यम् । लक्ष्यानुरोधेनान्यत्रापि क्वचित्तदभ्युपगमे बाधकाभावात् । अत एव प्रियतिसृ प्रियत्रीति रूपद्वयमपि कैयटेन स्वीकृतम् ॥—**रादेशादिति** । अत्र 'प्रियतिसृणी, प्रियतिसृणि' इति भाष्य मानम् ॥—**इत्यादीति** । प्रियतिस्रे प्रियतिसृणे । प्रियतिस्रः प्रियतिसृणः । आमि रादेशं बाधित्वा पूर्वविप्रतिषेधेन नुम्, त च बाधित्वा पूर्वविप्रतिषेधेन नुट् । प्रियतिसृणाम् ॥—**द्वेरत्वे सत्याविति** । विभक्तिमनिपातकृतमपि त्यदाद्यत्व टापो निमित्त 'न यासयोः' इति निर्देशेन सन्निपातपरिभाषाया अनित्यत्वादिति भावः ॥—**अङ्यन्तत्वादिति** । केचिदिह 'कृदिकारात्–' इति पाक्षिकङीषमिच्छन्ति । तन्मते तु सुलोप पक्षे स्यादेव । अत एव वातप्रमी श्री लक्ष्मीरितिपक्षे ङ्यन्ताः सुसाधव इति रक्षितः । 'लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशश्च ॥—**स्त्री** इति । स्त्यायतेऽस्या शुक्रशोणिते इति स्त्री । 'स्त्यायतेर्ड्रट्' । 'लोपो व्योः–' इति यलोपः, टित्वात् ङीप् । ङ्यन्तत्वान्सुलोपः ॥—**परत्वादिति** । 'स्त्रियाः' इति इयङपेक्षया ॥—**इयादेशोऽचि नान्यत्रेति** । अजादौ य इयादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्य ओसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणनाभावादिभि. पूर्वोक्तैर्बाधितत्वादित्यर्थः ॥—**इयङुवङ्स्थानावित्यस्यैवेति** । 'यू स्त्र्याख्यौ' इत्यनुवर्तनादियङुवङ्स्थानाविति ईदूतोर्विशेषणम् । तेन इयङुवङ्स्थानावीदूतावेवास्त्रीति पर्युदस्तो न तु ह्रस्वाविति भावः ॥—**श्रीरिति** । 'क्विब्वचिप्रच्छि–' इत्यादिना क्विब्दीर्घौ । ङ्यन्तत्वाभावान्न सुलोपः ॥ —**नेयङुवङ्स्थानावस्त्री** ॥ तिष्ठतो ययोरिति स्थानौ । अधिकरणे ल्युट् । इयङुवङोः स्थानाविति षष्ठीसमासः । तथा च फलितार्थमाह—**इयङुवङोः स्थितिर्ययोरिति** । स्थानग्रहण किम् । प्रकृष्टा धीः प्रधीः । हे प्रधि । अत्र 'एरनेकाच–' इति यणा इयङो बाधनात् 'नेयङुवङ्स्थानौ–' इति निषेधो न प्रवर्तते । यत्रेयङुवङौ निष्पद्येते तत्रैव नदीसंज्ञाया निषेधः । यत्र त्वपवादेन बाध्येते तत्र न निषेध इत्येतदर्थं हि स्थानग्रहण कृतम् ॥ अन्यथा 'नेयङुवङोः' इत्येव ब्रूयात् । इयङुवङोर्निमित्तभूतौ यू नदीसंज्ञकौ नेत्यर्थलाभात् ॥ अस्त्रीति किम् । हे स्त्रि ॥—**वामि** ॥ 'यू स्त्र्याख्यौ नदी' 'नेयङुवङ्स्थानावस्त्री' इ-

---

१ वामि—अत्र वा आमि इत्येव च्छेदः नतु अमांनि द्वितीयैकवचने नदीकार्याभावात् ।

स्थानौ व्याख्यौ यू आमि वा नदीसंज्ञौ स्तो नतु स्त्री । श्रीणाम् । श्रियाम् । श्रियि । श्रियाम् । प्रधीशब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम् । पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति स्वीकारात् । लिङ्गान्तरानभिधायकत्वं तदिति कैयटमते तु पुंवद्रूपम् । प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत् । अमि शसि च प्रध्यं प्रध्य इति विशेषः । सुष्ठु धीर्यस्याः सुष्ठु ध्यायति वेति विग्रहे तु वृत्तिमते सुधीः श्रीवत् । मतान्तरे पुंवत् । सुष्ठु धीरिति विग्रहे तु श्रीवदेव । ग्रामणीः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः । एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् । धेनुर्मतिवत् । **स्त्रियां च** ।७।१।९६। स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते । **ऋन्नेभ्यो ङीप्** ।४।१।५। ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । क्रोष्ट्री । क्रोष्ट्र्यौ । क्रोष्ट्र्यः । वधूर्गौरीवत् । भ्रूः श्रीवत् । हे सुभ्रूः । कथं तर्हि हापितः क्वासि हे सुभ्रु इति भट्टिः । प्रमाद एवायमिति बहवः । खलपूः पुंवत् । पुनर्भूः । दृन्करेति यणा उवङो बाधनान्नेयङुवङिति निषेधो न । हे पुनर्भु । पुनर्भ्वम् । पुनर्भ्वौ । पुनर्भ्वः । **एकाजुत्तरपदे णः** ।८।४।१२। एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् । आरम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम् । यणं बाधित्वा परत्वान्नुट् । पुनर्भूणाम् । वर्षाभूः । भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूः कैयटमते । मतान्तरे तु हे वर्षाभु । पुनर्नवायां तु हे वर्षाभु । भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवः । वर्षाभ्वौ । वर्षाभ्वः । स्वयंभूः पुंवत् । **न षट्स्वस्रादिभ्यः** ।४।१।१०। षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः । स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।

---

त्यनुवर्तनादाह—**इयङुवङोः स्थानावि**त्यादि ॥—यद्यपि नेति प्रकृते निषेधोऽनेन विकल्प्यते, तथापि निषेधविकल्पे विधिविकल्प एव फलतीति स एव सूत्रार्थ उचित इत्याशयेनाह—**वा नदीसंज्ञौ स्त** इति । 'ङिति ह्रस्वश्च' इति सूत्रेप्येवमेव ॥—**प्रधीशब्दस्य त्वि**ति । 'एरनेकाच–' इति यणा इयङो बाधनात् 'नेयङुवङ्स्थानौ–' इति निषेधोऽत्र न प्रवर्तते ॥ यत्र चापवादेनेयङुवङौ बाध्येते तत्र न निषेध इत्याशयेन व्याचष्टे—**लक्ष्मीवद्रूपमि**ति । अमि शसि च विशेष इत्यनुपदमेव वक्ष्यति ॥—**पुंवद्रूपमि**ति । अयं च मतभेदः प्रकृष्टा धीर्यस्याः प्रकर्षेण ध्यायतीति वा विग्रहे बोध्यः ॥—**लक्ष्मीवदि**ति । मतद्वयेऽपीति शेष ॥—**सुष्ठु धीर्यस्या** इति । ननु अस्मिन् विग्रहे कैयटमते सुधीशब्दस्य नित्यस्त्रीत्वाभावेऽपि धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहण च' इति सुधीशब्दः श्रीवदेव भवति, न तु पुंवदेव इति चेद् । अत्राहुः । 'नेयङुवङ्स्थानावस्त्री' इति धीशब्दे नदीसञ्ज्ञानिषेधात् सुधीशब्दे 'प्रथमलिङ्गग्रहण च' इत्यस्याप्रवृत्तिः, तथा च वृत्तिमते, इति ग्रन्थः स्वरसत. सगच्छते इति ॥—**मतान्तर** इति । लिङ्गान्तरानभिधायकत्व तदिति कैयटमते इत्यर्थः ॥—**श्रीवदेवे**ति । बुद्धिवाचकधीशब्दस्य नित्यस्त्रीत्वान्मतद्वयेऽपि श्रीवदेवेत्यर्थः ॥—**स्त्रियां च** ॥ असर्वनामस्थानार्थमयमारम्भः । तृज्वत् क्रोष्टुरिति वर्तते, तद्वदेवात्रापि रूपातिदेशः । स्त्रियामित्यर्थग्रहण तदाह—**स्त्रीवाची क्रोष्टुशब्द** इत्यादि । एव च पञ्चभिः क्रोष्ट्रीभि. क्रीतं रथै' पञ्चक्रोष्टृभी रथैरित्यत्रापि तृज्वद्भाव सिध्यति ॥ ये तु स्त्रियामिति स्त्रीप्रत्यये इति व्याचक्षते, ङीषर्थे च क्रोष्टृशब्द गौरादिषु पठन्ति । तेषामिह तृज्वद्भावो न सिध्येत् । 'तेन क्रीतम्' इति ठकः 'अध्यर्धपूर्व–' इति लुक्त्वात् 'लुक्तद्धितलुकि' इति ङीषो लुकि स्त्रीप्रत्ययपरत्वाभावात् ॥—**ऋन्नेभ्यो**—॥ ऋत् ऋकार., नो नकारः, प्रयोगापेक्ष बहुलम् ॥ प्रातिपदिकविशेषणात्तदन्तविधिः । स्त्रियामिति चाधिक्रियते तदाह—**ऋदन्तेभ्य** इत्यादि ॥ —**क्रोष्ट्री** इति । 'स्त्रिया च' इत्येतस्याङ्गत्वादङ्गेन प्रत्ययस्याक्षेपाद्विभक्तौ परत एवेह तृज्वद्भावस्ततो ङीबिति बोध्यम् ॥—**भ्रूरि**ति । भ्रमतीति भ्रू' । 'भ्रमेश्च डू.' इति भ्रमतेर्डूप्रत्ययः डित्त्वाट्टिलोपः ॥—**हेसुभ्रूरि**ति । डूप्रत्ययस्यास्त्रीप्रत्ययत्वात् 'गोस्त्रियोः' इति ह्रस्वो न भवति । 'नेयङुवङ्स्थानौ–' इति नदीसञ्ज्ञानिषेधात्सबुद्धिह्रस्वोऽपि नेति भाव. ॥ ह्रस्वोऽत्रानुपपन्न इत्याक्षिपति—**कथं तर्ही**ति । 'विमानने सुभ्रु पितुर्गृहे कुतः' इति कालिदासप्रयोगोऽप्यनुपपन्न इति बोध्यम् ॥—**बहव** इति । केचित्तु 'नेयङुवङ्'–इति सूत्रे 'वामि' इत्यतो वाग्रहणमपकृष्य व्यवस्थितविभाषा चाश्रित्य समादधिरे ॥ तदसत् । तथा सतीह नञ्ग्रहण 'वामि' इत्युत्तरसूत्र च व्यर्थ स्यात्, 'वेयङुवङ्स्थानौ' इत्येव वक्तु शक्यत्वात् ॥ अन्ये तु 'सामान्ये नपुंसकम्' इति कथचित्समादधुः ॥—**एकाच्**—॥ एकोऽच् यस्मिंस्तद् एकाच्, तदुत्तरपद यस्य स एकाजुत्तरपद इति बहुव्रीहिगर्भो बहुव्रीहिः । उत्तरपदशब्दः समासावयवे रूढस्तेनाक्षिप्तसमासोऽनेन विशेष्यत इत्याह—**तस्मिन् समास** इति ॥ 'रषाभ्या नो ण–' इत्यतो णइत्यनुवर्तमानेऽपि णग्रहणमिह नित्यार्थमावश्यकमित्याशङ्क्याह—**आरम्भसामर्थ्यादि**ति । 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पेन सिद्धावेतदारम्भसामर्थ्यादित्यर्थः ॥—**स्वयंभूः पुंवदि**ति । मतद्वयेपि नदीसंज्ञाया अभावात् 'ङिति ह्रस्वश्च' इत्यादि न प्रवर्तत इति भावः ॥—**न षट्स्वस्रादिभ्यः** ॥ स्त्रिया यदुक्त तन्न भवतीति व्याख्यानादनन्तरो ङीबिव व्यवहितृष्टावपि निषिध्यत इत्याशयेनाह—**ङीप्टापौ ने**ति । स्वस्रादीनां ङीप् प्राप्तः । षट्संज्ञकानां तूभौ ॥—**स्वसा तिस्र** इति । 'न तिसृचतसृ' इति नामि दीर्घत्वप्रतिषेधाज्ज्ञापकादेव, ङीबभावे सिद्धे स्वस्रादिषु तिसृचतसृशब्दपाठो न कर्तव्य इति

**याता मातेति सहैते स्वस्रादय उदाहृताः । अप्तृन्निति दीर्घः । स्वसा । स्वसारौ । स्वसारः । माता पितृवत् । शसि मातॄः । द्यौर्गोवत् । राः पुंवत् । नौग्लौवत् ॥ ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥**

---

## अजन्तनपुंसकलिङ्गाः ।

**अतोऽम् ।७।१।२४। अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात् । अमि पूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्मात्रलोपः । हे ज्ञान । नपुंसकाच्च ।७।१।१९। क्लीबात्परस्यौङः शी स्यात् । भसंज्ञायाम् । यस्येति च ।६।४।१४८। भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे । इत्यकारलोपे प्राप्ते । * औङः श्यां प्रतिषेधो वाच्यः । ज्ञाने । जश्शसोः शिः ।७।१।२०। क्लीबादनयोः शिः स्यात् । शि सर्वनामस्थानम् ।१।१।४२। शि इत्येतदुक्तसंज्ञं स्यात् । नपुंसकस्य झलचः ।७।१।७२। झलन्तस्याऽजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः ज्ञानानि । पुनस्तद्वत् । शेषं रामवत् । एवं धनवनफलादयः । अड्डतरादिभ्यः पञ्चभ्यः ।७।१।२५। एभ्यः क्लीबेभ्यः स्वमोरद्ड्डादेशः स्यात् । टेः ।६।४।१४३। डिति परे भस्य टेर्लोपः स्यात् । वावसाने ।**

---

'कृन्मेजन्तः' इति सूत्रे कैयटः ॥—**स्वसे**ति । 'सावसेश्न्' । 'ऋदुशन–' इत्यनङ् । 'ननान्दा तु स्वसा पत्युः' । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' ॥—**द्यौर्गोवद्**िति । गमेर्डोः' । बाहुलकाद्द्युतेरपि । डित्वाट्टिलोपः । 'ओतो णित्' इति णिद्वद्भावाद्वृद्धिः ॥—**राः पुंवद्**िति । यद्यपि पुलिङ्ग एवायम् 'अर्थरैविभवा अपि' इत्यमरोक्तेर्भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्, तथापि 'रात्येन राः स्त्रीत्येके' इति क्षीरस्वामिना स्त्रीलिङ्गताया अप्यभ्युपगमादेवमुक्तम् ॥—**नौग्लौवद्**िति । 'ग्लानुदिभ्यां डौ.' । डित्वाट्टिलोपः । 'स्त्रिया नौस्तरणिस्तरिः' इत्यमरः ॥ ॥ इत्यजन्ता स्त्रीलिङ्गाः ॥

**अतोऽम् ॥** अत इत्येतदधिकृतस्याङ्गस्य विशेषण 'स्वमोर्नपुसकात्–' इति चानुवर्तत इत्याशयेनाह—**अतोऽङ्गादि**त्यादि । अदन्तादङ्गादित्यर्थ' ॥—**स्वमोरि**ति । अमोऽम्विधान 'स्वमोर्नपुसकात्' इति प्राप्तस्य लुको बाधनार्थम् ॥—**अम् स्याद्**िति । यद्यपि म् इत्येव छित्वा मोर्मे कृते सनिपातपरिभाषया 'सुपि च' इति दीर्घत्वाप्रसक्त्या ज्ञानमिति रूप सिध्यति । द्वितीयैकवचने तु 'आदेः परस्य' इत्यकारस्य मकारे कृतेऽन्त्यस्य मस्य सयोगान्तलोपे सिद्धमिष्टम् । तथापि 'सयोगान्तलोपो झल.' इत्यभिप्रायेणेद व्याख्यातम् ॥ यत्त्वाहुः । अमिति पदच्छेदाकरणे अतिजरसमिति न सिध्येदिति, तन्नभसात् । सोरमि कृते सनिपातपरिभाषया जरसादेशस्याप्रवृत्त्या अतिजरमिति रूपस्यैवेष्यमाणत्वात । द्वितीयैकवचने तु 'अतोऽम्' इति बाधित्वा परत्वाज्जरसि कृते सनिपातपरिभाषया लुकोऽप्रवृत्तावतिजरसमिति रूपसिद्धेश्चेति दिक् ॥—**ज्ञानमि**ति । ज्ञप्तिर्ज्ञानम् । ल्युडन्तः । 'युवोरनाकौ' । 'कृत्तद्धित–' इति प्रातिपदिकत्वात्स्वाद्युत्पत्तिः ॥—**हल्मात्रे**ति । हे ज्ञानसु इति स्थिते सम्बुद्धिलोपात्परत्वादमादेशे कृते अमि पूर्वत्व च, तस्यान्तवद्भावाद्ध्रस्वान्तमङ्ग भवतीति ततः परस्य संबुद्धिसंबन्धिनो मकारस्य लोप इत्यर्थः ॥—**नपुंसकाच्च ॥** 'जसः शी' 'औङ आपः' इत्यतः शी औङ इति चानुवर्तत इत्यभिप्रेत्याह—**क्लीबात्परस्ये**त्यादि ॥—**भसंज्ञायामि**ति । 'सुडनपुसकस्य' इति पर्युदासेनासर्वनामस्थानत्वादौङि 'यचि भम्' इति प्रवर्तत इति भाव ॥—**यस्येति**—॥ इश्च अश्च य तस्य तदाह—**इवर्णावर्णयोरि**ति । ईति चेति चकारेण 'नस्तद्धिते' इत्यतस्तद्धितोऽनुकृष्यत तदाह—**ईकारे तद्धिते चे**ति ॥—**औङः श्यामि**ति ॥ विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः ॥ नेदं वचन कर्तव्यम् । 'विभाषा ङिश्योः' इत्यतः श्यामिति प्रकृत, 'न सयोगात्' इत्यतो नेति च, तत्राभिसबन्धमात्र कर्तव्य यस्य ईकारे तद्धिते च लोपो भवति श्या नेत्याकरः ॥—**जश्शसोः**—॥ जसा साहचर्यादिह सुपेव शस् गृह्यते । तेनेह न । कुण्डशो ददाति ॥—**शि सर्वनामस्थानम् ॥** महासज्ञाकरण पूर्वाचार्यानुरोधेन ॥—**नपुंसक**—॥ 'इदितो नुम् धातोः' इत्यतो नुमनुवर्तते । 'उगिदचाम्–' इत्यतः सर्वनामस्थाने इति च । 'अङ्गस्य' इति चाधिकृतम् । तथा च झलज्भ्या नपुसकमङ्ग विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह—**झलन्तस्ये**त्यादि ॥—**अड्डतरादिभ्यः**—॥ पञ्चभ्य इति किम् । नेम तिष्ठति । नेम पश्य । डतरादयो डतरडतमेतरान्यान्येतरेति सर्वादिषु पठिताः ॥—**अद्ड्डादेशः स्याद्**िति । जिघृक्षितादेशस्वरूपप्रतिपादनाय ष्टुत्व न कृतम् ॥—**टेः ॥** 'तिविंशतेः–' इत्यतो डितीत्यनु-

---

१ मातेति—अयच नियमः सम्बन्धिकजननीवाचकस्यैव नतु स्त्रिया परिच्छेत्तृवाचकमातृशब्दे, ननान्द्रादिसाहचर्यात् । २ श्यामिति—विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः । अत एव निर्देशात् गौरादिपाठाद्वा शीशब्दान्ङीप् बोध्यः । औङ इति स्वरूपकथनम् । सर्वं इत्यस्य भाधिकारेण सिद्धेः । ३ जश्शसोरिति—नच निरनुबन्धकपरिभाषया तद्धितशसोऽत्र ग्रहण स्यात् इति वाच्यम्, धर्मिग्राहकमानेन येनानुबन्धेन सानुबन्धत्व तदनुच्चारण एव तत्प्रवृत्तेः । ४ शेषमिति—अकर्तरीति घञ् । घञजपाः पुसीति तु प्रायोवादः । ५ अद्ड्डादेश इति—न चास्य टित्वे मानाभाव इति वाच्यम्, डतरादिभ्यः पञ्चभ्योऽदिति वक्तव्ये संदिग्धगुरुनिर्देशस्यैव मानत्वात् ।

कतरत् । कतरद् । कतरे । कतराणि । भस्येति किम् । पञ्चमः । टेर्लुप्तत्वात्प्रथमयोरिति पूर्वसवर्णदीर्घः । एङ्ह्रस्वादिति संबुद्धिलोपश्च न भवति । हे कतरत् । पुनस्तद्वत् । शेषं पुंवत् । कतमत् । अन्यत् । अन्यतरत् । इतरत् । अन्यतमशब्दस्य तु अन्यतममित्येव । * एकतरात्प्रतिषेधो वक्तव्यः । एकतरम् । सोरमादेशे कृते संनिपातपरिभाषया न जरस् । अजरम् । अजरसी । अजरे । परत्वाज्जरसि कृते झलन्तत्वान्नुम् । **सान्तमहतः संयोगस्य** ।६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः[1] स्यादसंबुद्धौ सर्वनामस्थाने परे । अजरांसि । अजराणि । अमि लुकोपवादमम्भावं बाधित्वा परत्वाज्जरस् । ततः संनिपातपरिभाषया न लुक् । अजरसम् । अजरम् । अजरसी । अजरे । अजरांसि । अजराणि । शेषं पुंवत् । पद्दन्नइति हृदयोदकास्यानां हृद् उदन् आसन् । हृन्दि । हृदा । हृद्भ्यामित्यादि । उदानि । उद्ना । उदभ्यामित्यादि । आसानि । आस्ना । आसभ्यामित्यादि । मांसि । मांसा । मान्भ्यामित्यादि । वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तम् । अतएव भाष्ये मांस्पचन्या उखाया इत्युदाहृतम् । अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न । पद्दन्न इत्यत्र हि छन्दसीत्यनुवर्तितं वृत्तौ तथाप्यपोभीत्यत्र मासश्छन्दसीति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचिदिति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम् । **ह्रस्वो नपुंसके प्रातिपदिकस्य** ।१।२।४७। क्लीबे प्रातिपदिकस्याऽजन्तस्य[2] ह्रस्वः स्यात् । श्रीपम् । ज्ञानवत् । श्रीपाय । अत्र संनिपातप-

वर्तते 'भस्य' इति चाधिकृतं तदाह—**डिति परे भस्ये**ति । भस्य किम् । पञ्चमः । अत्र डटो मडागमे भत्वाभावाट्टिलोपो न भवति । किं तु पदत्वात् नलोप एव ॥ अदडो डित्करणस्य प्रयोजनमाह—**टेर्लुप्तत्वादि**त्यादि ॥ ननु पूर्वसवर्णदीर्घाभावाय दादेश एव क्रियता किमद्डादेशेनेत्याशङ्क्याह—**एङ्ह्रस्वादि**त्यादि । दादेशे तु हे कतरेति स्यादिति भावः ॥—**अन्यतमस्य त्वि**ति । एवं च 'सामान्यादिष्वन्यतमत्तमः' इत्यादिप्रयोगाः प्रामादिका एवेति भावः ॥—**अजरमि**ति । अविद्यमाना जरा यस्य तत् । 'गोस्त्रियोः' इत्युपसर्जनह्रस्वे 'अतोम्' ॥—**परत्वादि**ति । अजरशि इति स्थिते यद्यपि जरसादेशात्प्रागेव 'नपुंसकस्य झलचः' इत्यजन्तलक्षणो नुमागमः स्यात्स चाङ्गभक्तोऽङ्गमेव न व्यवदध्यात् । अवयवस्य तु जराशब्दस्य व्यवधायक एवेति निर्दिश्यमानस्यादेशो विधीयमानो न प्राप्नोति, तथापि यस्मादन्त्यादचः परस्तस्यैवान्तावयवो मित्स्याद् इति स्वमते त्ववयवावयव' समुदायस्याप्यवयव इत्यभ्युपगमेन कथञ्चिज्जरसादेशे जातेऽपि सान्तत्वाभावात् 'सान्तमहतः–' इति दीर्घो न स्यादिति भावः ॥—**सान्तमहतः**—॥ अत्र 'नोपधायाः' 'सर्वनामस्थाने चासंबुद्धौ', इत्यनुवर्तते । सान्तेति लुप्तषष्ठीकं संयोगान्तस्येत्यनेन समानाधिकरणमिति व्याचष्टे—**सान्तसंयोगस्ये**त्यादि ॥—**तस्योपधाया** इति । तत्पूर्वस्येत्यर्थः ॥—**अमि लुकोपवादमि**त्यादि । एतेन स्वमोरमादेशे कृते वा जरसिति प्राचो ग्रन्थः प्रत्युक्तः ॥—**मांस्पचन्या** इति । पच्यतेऽस्यामिति पचनी 'करणाधिकरणयोश्च' इति ल्युट् । टिड्ढाणञ्-ङीप् । मांसस्य पचनी मांस्पचनी । अत्र ङसो लुका लुप्तत्वात् प्रत्ययलक्षणं नेति प्रभृतिग्रहणस्य प्रकारार्थत्वं विना मांसशब्दस्य मांसित्यादेशो न सिध्येदिति भावः ॥ ननु पृषोदरादिसूत्रे 'मांसस्य पचि युड्घञोः' इति वक्ष्यमाणत्वादन्तलोपेनाप्येतत् रूपं सिद्धमिति चेद् । अत्राहुः । 'पृषोदरादीनि यथोपदिष्टम्' इत्यस्योत्तरपदाधिकारस्थत्वाद्युडन्तं यदुत्तरपदं मांस्पचनमित्यादि तत्रैवान्तलोपः स्यात् । अत्र हि ङीबन्तमुत्तरपदं न तु युडन्तमिति नास्त्येवान्तलोप इति ॥—**मासश्छन्दसी**ति । मासुशब्दस्य तकारः स्याद्भादौ प्रत्यये छन्दसीति वार्तिकार्थः । 'माद्भिः शरद्भिः दुरोदर तव' इत्युदाहरणम् ॥—**ह्रस्वो नपुंसके**—॥ इह ह्रस्वश्रुत्योपस्थितेनाच इत्यनेन प्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**अजन्तस्ये**ति । प्रातिपदिकस्याच इति वैयधिकरण्येन व्याख्यायां सुब्राह्मणकुलमित्यत्रातिप्रसङ्गः स्यात् । एतच्च 'अचश्च' इति सूत्र एवास्माभिः स्पष्टीकृतम् ॥ प्रातिपदिकस्येति किम् । काण्डे । कुड्ये ॥—**ज्ञानवदि**ति । श्रीपाणीत्यादौ 'एकाजुत्तरपदे–' इति णत्वं तु विशेषः । श्रीपेणेत्यत्रापीनादेशेन सहाद्गुणे कृते एकादेशस्य पूर्वान्तत्वेन ग्रहणात् 'अचः परस्मिन्–' इति सूत्रे पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षाश्रयेण स्थानिवत्त्वाद्वा एकाजुत्तरपदत्वमस्तीति स्यादेव णत्वम् ॥—**संनिपाते**ति । अवर्णमाश्रित्य कृतो यादेशः कथमवर्णलोपे निमित्तं स्यात् । न च 'सुपि च' इति दीर्घार्थं संनिपातपरिभाषाया अनित्यत्वाभ्युपगम आवश्यक एवेति वाच्यम् । 'कष्टाय–' इति निर्देशेन दीर्घविधौ अनित्यत्वाभ्युपगमेऽप्यवर्णलोपे कार्ये तदनभ्युपगमात् । कृतेऽपि दीर्घे ह्रस्वव्यक्त्यपायेऽप्यत्वजातेरनपायादिति दिक् —॥ एतेन श्रीपशब्दान्ङयि श्रीप्येति

१ दीर्घ इति—हसशिरासि इत्यत्र हसशब्दे तु न दीर्घ., सर्वनामस्थाने इत्यस्य सान्तसंयोगविशेषणत्वात् । नचैवं 'न्सुमहतोः' इत्येव सिद्धे संयोगग्रहणं व्यर्थमिति वाच्यम्, अन्त्स् शब्दे दीर्घार्थं संयोगग्रहणात् । अन्त्स् शब्दस्तु–अन्ततीत्यन्, त्सरतीति त्सर, अनयोर्द्वन्द्वः, ततः आचक्षाणण्यन्तात् क्विपि टिलोपे च कृते बोध्यः । २ प्रातिपदिकस्येति—ननु क्लीबवदर्थे वाचकतासंबन्धेन वर्तमानस्याजन्तस्य ह्रस्व इत्युक्ते धातुतिङन्तादौ असंभवात्सामर्थ्यैनैव प्रातिपदिके लब्धे पुनः प्रातिपदिकग्रहणं व्यर्थम्, काण्डे इत्यादौ तु तस्य शक्तिप्रधानतया क्लीबवदर्थकत्वाभावेन न दोष इति वाच्यम् । न, स्पष्टार्थत्वात्प्रातिपदिकग्रहणस्य । सर्वं चेदं भाष्ये स्पष्टम् इति शब्देन्दुशेखरे निरूपितम् ।

रिभाषया आतो धातोरित्याकारलोपो न । **स्वमोर्नपुंसकात्** ।७।१।२३। क्लीबादङ्गात्स्वमोर्लुक् स्यात् । वारि । **इकोऽचि विभक्तौ** ।७।१।७३। इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ । वारिणी । वारीणि । नलुमतेति निषेधस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हे वारे । हे वारि । आङो ना । वारिणा । घेर्ङितीति गुणे प्राप्ते । * **वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन** । वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । नामीति दीर्घः । वारीणाम् । वारिणि । वारिणोः । हलादौ हरिवत् । **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य** ।७।१।७४। प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि । अनादये । अनादिने । इत्यादि । शेषं वारिवत् । पीलुर्वृक्षस्तत्फलं पीलु तस्मै पीलुने । अत्र न पुंवत् । प्रवृत्तिनिमित्तभेदात् । **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः** ।७।१।७५। एषामनङ् स्याट्टादावचि स चोदात्तः । अल्लोपोऽनः । दध्ना । दध्ने । दध्नः २ । दध्नोः २ । दध्नि । दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । तदन्तस्याप्यनङ् । अतिदध्ना । सुधि । सुधिनी । सुधीनि । हे सुधे । हे सुधि । सुधिया । सुधिना । प्रध्या । प्रधिना । मधु । मधुनी । मधूनि । हे मधो । हे मधु । एवमम्ब्वादयः । सानुशब्दस्य स्नुर्वा । स्नूनि । सानूनि । प्रियक्रोष्टु । प्रियक्रोष्टुनी । तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम् । प्रियक्रोष्टूनि ।

---

केषांचित्व्याख्यानं परास्तम् ॥ —**स्वमोर्नपुंसकात्**॥ अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य किमः कादेशस्य च बाधकः । परत्वाद्धि त्यदाद्यत्वे 'तदोः-' इति सत्वे सोरम्भावे च स कुलमिति स्यात् । इष्यते तु तत्कुलमिति ॥—**इकोऽचि**—॥ विभक्तौ किम् । मधु मद्य तस्येद माधवम् । अत्र नुमि सति टिलोपः स्यात् ॥—**वृद्ध्यौत्वेति** । अतिसखिनीत्यत्र 'सख्युरसम्बुद्धौ' इति णिद्वद्भावाद्वृद्धिः प्राप्ता, वारिणीत्यत्र तु 'अच्च घेः' इत्यौत्वम् । प्रियक्रोष्टुनीत्यादौ तृज्वद्भावः प्राप्तः ॥ ननु नुम्नुटो' को विशेषस्तत्राह—**नामीति दीर्घ** इति । नुमस्त्वङ्गभक्तत्वात्तस्मिन्सति दीर्घो न स्यादिति भावः ॥—**तृतीयादिषु**—॥ यद्यत्र भाषितः पुमान् येन शब्देन स भाषितपुंस्कः शब्द इति विवक्ष्येत, तदा पीलुने इत्यादावतिप्रसङ्गः स्यात्, अतो व्याचष्टे—**प्रवृत्तिनिमित्तैक्य** इति । अय भावः । भाषितः पुमान् यस्मिन् अर्थे तत् भाषितपुंस्कं प्रवृत्तिनिमित्त तदस्यास्तीति अर्शआदित्वादच् । तेनैकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्क यच्छब्दस्वरूपं तल्लभ्यत इति । 'इकोऽचि विभक्तौ' इत्यतोऽचीत्यनुवर्तनादाह—**टादावची**ति । इगन्त किम् । सोमपेन कुलेन । अचि किम् । ग्रामणिभ्यां कुलाभ्याम् । टादौ किम् । अनादिनी । अनादीनि ॥—**तत्फलमि**ति । पीलो फल पीलु । 'फले लुक्' इति ओरणो लुक् ॥—**प्रवृत्तिनिमित्तभेदादि**ति । पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तं, फले तु फलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्व वा । उभयथापि पुनपुंसकयोर्नैक प्रवृत्तिनिमित्तमिति भावः ॥—**अस्थिदधि**—॥ 'इकोऽचि-' इति नुमि प्राप्ते विधिरयं, नकारादकार उच्चारणार्थः । इकारस्त्वन्तादेशार्थः । 'नब्विषयस्यानिसन्तस्य' इति फिट्सूत्रेणास्थ्यादय एते आद्युदात्ता. । तत्रान्तस्यानुदात्तेकारस्य विधीयमानोऽनङ् 'स्थानेऽन्तरतम' इत्यनुदात्तः स्यादित्युदात्त उच्यते, तच्चोदात्तत्वमस्थनि दधनि इत्यादावल्लोपाभावपक्षे स्फुट, दध्ना दध्ने इत्यादावनङोकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्व प्रयोजनमिति बोध्यम् । तृतीयादिष्वित्यनुवर्तते अचीति च, तदाह—**टादावची**ति । टादौ किम् दधिनी । दधीनि । अचि किम् । दधिभ्याम् ॥—**तदन्तस्यापी**ति । आङ्गत्वादिति भावः ॥—**अतिदध्ने**ति । दधि अतिक्रान्तेनेत्यर्थः । स्त्रियामतिदध्न्येव । सन्निपातपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः । प्राचा तु प्रियदध्ना ब्राह्मणेनेत्युक्त स्त्रियां तु प्रियदध्या प्रियदध्यै इत्याद्यपि कैश्चिदुक्तम्, । तदमत् । उरःप्रभृतिषु दधिशब्दस्य पाठाद्बहुव्रीहौ नित्य कप्यनङः प्रसक्त्यभावात् । उक्तपरिभाषाभ्या ङीपः प्रवृत्तेर्दूरादपास्तत्वाच्चेति दिक् ॥—**सुधिनी** इति । परत्वान्नुमा इयङ् बाध्यते ॥—**सुधिये**ति । शोभनज्ञानवत्त्व प्रवृत्तिनिमित्त पुनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात् 'तृतीयादिषु-' इति पुंवत्पक्षे नुमभावात् 'न भूसुधियो.' इति यणनिषेधाच्चेयङ् ॥—**प्रध्ये**ति । अत्रापि प्रकृष्टज्ञानवत्त्व पुनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्पुंवत्पक्षे यण् । नपुंसकपक्षे तु नुमिति बोध्यम् ॥ बहवः श्रेयांसो यस्य तद्बहुश्रेयसी कुलमित्यत्र नपुंसकह्रस्वत्व न । ईयसो बहुव्रीहेर्नेति ह्रस्वमात्रस्य प्रतिषेधादित्येके । अन्ये तूपसर्जनह्रस्व एव निषिध्यते । नपुंसकह्रस्वत्व तु स्यादेव । बहुश्रेयसि बहुश्रेयसिनी इत्याहु' ॥—**मध्वि**ति । 'मधु मद्ये पुष्परसे, मधुर्वसन्ते चैत्रे च' । इह पुनपुंसकयोरेक प्रवृत्तिनिमित्त नास्ति, किं तु मद्यत्ववसन्तत्वादिरूप भिन्नभिन्नमेव ॥ तथा च भाषितपुंस्कत्वाभावान्मधुने मधुनः मधुनोरित्येव भवति, न तु मधवे मधोरित्यादीति दिक् ॥—**स्नुर्वे**ति । 'मांसपृतनासानूनाम्-' इति

---

१ स्वमोरिति—अयच लुक विभक्तिनिमित्तकार्याणा बाधकः । अन्तरङ्गानपीति न्यायात् । २ विभक्ताविति—सुपीति वक्तव्ये विभक्तिग्रहण चिन्त्यप्रयोजनम् । नामधातौ तिङि क्रियावाचकत्वेन नपुंसकत्वाभावात् इति केचिदाहुः । ३ विप्रतिषेधेनेति—औकारस्य वृद्धित्वेऽपि पृथग् ग्रहण गुणवृद्धिशब्दाभ्या तद्भावितयोरेव ग्रहणमिति ज्ञापनार्थं, तेन एतानि, द्वे कुले इति सिद्धम् । अन्यथा अत्व बाधित्वा पूर्व नुमापत्ति' । ४ पुंवदिति—अयं च व्याप्तिन्यायेन ह्रस्वत्वनुमोरभावातिदेशः । तृतीयादौ पुंसि विहितस्यातिदेशस्य भावस्याभावात् ।

टादौ पुंवत्पक्षे प्रियक्रोष्ट्रा । प्रियक्रोष्टुना । प्रियक्रोष्ट्रे । प्रियक्रोष्टवे । अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रियक्रोष्टुने । नुमचिरेति नुट् । प्रियक्रोष्टूनाम् । सुलु । सुलुनी । सुलूनि । पुनस्तद्वत् । सुल्वा । सुलुना । धातृ । धातृणी । धातॄणि । हे धातः । हे धातृ । धात्रा । धातृणा । एवं ज्ञातृकर्त्रादयः । **एच इग्घ्रस्वादेशे ।१।१।४८।** आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात् । प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि । इह न पुंवत् । यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात् । एवमग्रेऽपि । प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतस्यानन्यत्वाद्रायोहलीत्यात्वम् । प्रराभ्याम् । प्रराभिः । नुमचिरेति नुड्यात्वे प्रराणामिति माधवः । वस्तुतस्तु संनिपातपरिभाषया नुड्यात्वं न । नामीति दीर्घस्यारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम् । प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुना । सुनुने । इत्यादि ॥ ॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

## हलन्तपुंलिङ्गप्रकरणम् ।

**हो ढः ।८।२।३१।** हस्य ढः स्याज्झलि पदान्ते च । हल्ङ्याबिति सुलोपः । पदान्तत्वाड्ढस्य डः । जश्त्वचर्त्वे । लिट् लिड् । लिहौ । लिहः । लिहम् । लिहौ । लिहः । लिहा । लिड्भ्याम् । लिट्त्सु । **दादेर्धातोर्घः ।८।२।३२।** उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । उपदेशे किम् । अधोगित्यत्र यथा स्यात् । दामलिहमात्मानमिच्छति दामलिह्यति । ततः क्विपि दामलिट् । अत्र माभूत् । **एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७।**

वार्तिककारोक्त्येति भाव ॥ 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्युभयलिङ्ग' सानुशब्दः, तस्य नपुसकत्वे रूपमाह—**स्नूनि सानूनी**ति । पुंसि तु स्नन् । सानून् इत्यादि ॥—**सुल्वे**ति । शोभनलवनकर्तृत्व पुनपुसकयोरेकमेवेति भाषितपुंस्कत्वात्पुवत्पक्षे नुमभावात् 'ओः सुपि' इति यण् ॥—**सुलुने**ति । यण बाधित्वा परत्वान्नुम् ॥—**धात्रे**ति । धारणपोषणकर्तृत्व पुनपुसकयोरेकमेवेति पुंवत्पक्षे यण् ॥—**एचः**—॥ आदिश्यत इत्यादेशः ह्रस्वश्चासावादेशश्च ह्रस्वादेशः, निर्धारणे सप्तमी जातावेकवचनमतो व्याचष्टे—**आदिश्यमानेषु ह्रस्वेषु मध्य** इति ॥ एचां पूर्वभागोऽकारसदृशः, उत्तरस्तु इवर्णोवर्णसदृशस्तत्रोभयान्तरतमस्य ह्रस्वस्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्याता, तथा च मा कदाप्यकारो भूदिति नियमार्थेय परिभाषेत्यभिप्रेत्याह—**इगेव स्यादि**ति । आन्तरतम्यादेकारैकारयोरिकारः । ओकारौकारयोस्तु उकारः । एकारान्तस्योदाहरण तु, इ· स्मृतो यन स स्मृतेः शोभनः स्मृतेः यस्य तत् सुस्मृतीत्यादि ॥ एतच्च परिभाषासूत्रमपार्थकम् । तथा च वार्तिककृतोक्त 'सिद्धमेङः सस्थानत्वात्' 'ऐचोश्चोत्तरभूयस्त्वात्' इति । अस्यार्थः । शब्दपरविप्रतिषेधेन एङ उत्तरभागान्तरतमौ इउवर्णावेवेति सिद्धम् । ऐचोश्चेति चकारो भिन्नक्रम उत्तरभूयस्त्वाच्चेति हेतोरनन्तरं बोध्यः । अर्धमात्रा अवर्णस्य, अध्यर्धमात्रा इवर्णोवर्णयोरित्युत्तरभागाधिक्यान्मल्लग्रामादिवद्भूयसा व्यपदेशेनापि इकारोकारौ भविष्यत इति ॥—**प्रद्युने**ति । ननु प्रकृष्टस्वर्गवत्त्वादिकं यत्प्रवृत्तिनिमित्त तत् पुनपुसकयोः समानमिति भाषितपुस्कत्वात् पक्षे पुंवद्भावोऽत्र स्यादेवेत्याशङ्कायामाह—**यदिगन्तमि**ति । 'एतच्च 'रा दाने' इति धातौ अतिरि ब्राह्मणकुलमिति प्रक्रम्य माधवेन स्पष्टीकृतम् ॥ कथं तर्हि प्राचा प्रद्यवा प्रराया सुनावेत्युदाहृतमिति चेदत्राहुः । प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तकस्यास्तुद्योशब्दो भाषितपुस्कः स एव इदानीमिगन्तस्तथा च प्रद्युशब्दोऽपि भाषितपुस्क एव एकदेशविकृतस्यानन्यत्वादतः पुवद्भावो न भवतीति, इत्थं च पुंवद्भावः एजन्तेपु माधवमते नास्ति मतान्तरे त्वस्तीति बोध्यम् ॥—**प्ररी**ति । प्रकृष्टो रा यस्य तत् । शोभना नौर्यस्य तत् सुनु ॥ ॥ इति तत्त्वबोधिन्यामजन्ता नपुसकलिङ्गाः ॥

॥—**होढः** ॥ 'झलो झलि' 'पदस्य' 'स्कोः सयोगाद्योरन्ते च' इत्यतो झलीति पदस्यान्त इति चानुवर्तते । तदाह—**झलीत्यादि** । झलि परतः पदान्ते वा विद्यमानस्य हस्येत्यर्थः ॥—**लिडि**ति । 'लिह आस्वादने' क्विप् ॥—**लिट्त्स्वि**ति । ढस्य जश्त्वेन डः, तस्य 'खरि च' इति चर्त्वेन टः । तस्यासिद्धत्वात् 'चयो द्वितीयाः–' इति पक्षे टस्य ठो न । सस्य थुत्वं तु न भवति । 'न पदान्ताट्टोः–' इति निषेधात् ॥—**लिट्त्स्वि**ति । ढस्य जश्त्वेन डकारे चर्त्वस्यासिद्धत्वात्ततः प्रागेव 'डः सि–' इति पक्षे धुट् । चर्त्वेन तकारः, ततो डस्य चर्त्वेन टः । धुटश्चर्त्वस्यासिद्धत्वात्पक्षे 'चयो द्वितीयाः–' इति तस्य थो न । ष्टुत्व तु तकारस्य न शङ्क्यमेव । 'न पदान्तात्–' इति निषेधस्याधुनैवोक्तत्वादिति ॥—**दादेर्धातोर्घः** ॥ धातोरित्यावर्तते । तत्रैकमतिरिच्यमानमुपदेशकाल लक्षयतीत्याशयेनाह—**उपदेश** इति ॥ उपदेशग्रहणस्याव्याप्त्यतिव्याप्तिपरिहारः फलमित्याह—**अधोगित्यादिनाऽमात्र भूदित्यन्तेन** ॥—**एकाचो बशो**—॥ झलीति निवृत्तमिति ।

१ ढ इति—डस्तु न विहितः, धुट्, लेढीत्याद्यसिद्धापत्तेः । २ उपदेशे इति—एतच्च औपदेशिकदादित्वलक्षणया लभ्यते । ननु औपदेशिकप्रायोगिकयोर्मध्ये औपदेशिकस्य ग्रहणमिति परिभाषयैव सिद्धे लक्षणा आवृत्तिर्वा व्यर्थेति वाच्यम्, न, अत्वसन्तस्येति सूत्रभाष्यविरोधेन तस्याः अनङ्गीकारात् । अत एव तत्र तत्र सूत्रकृता कृतमुपदेशग्रहणं चरितार्थम् । ३ घः स्यात् इति—गकारस्तु न विहितः, धुग् इत्यादौ भष्भावानापत्तेः । ४ भषिति—झषिलेव वक्तुमुचितं, भष्पदाशक्तिकैल्पनेन लाघवात् ।

**धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च । एकाचो धातोरिति सामानाधिकरण्येनान्वये तु इह न स्यात् । गर्दभमाचष्टे गर्दभयति । ततः क्विप् । णिलोपः । गर्धप् । झलीति निवृत्तम् । स्ध्वोर्ग्रहणसामर्थ्यात् । तेनेह न । दुग्धम् । दोग्धा । व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः । जश्त्वचर्त्वे । धुक् । धुग् । दुहौ । दुहः । षत्वचर्त्वे । धुक्षु । वा द्रुहमुहष्णुहष्णिहाम् ।८।२।३३। एषां हस्य वा घः स्याज्झलि पदान्ते च । पक्षे ढः । ध्रुक् । ध्रुग् । ध्रुट् । ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम् । ध्रुड्भ्याम् । ध्रुक्षु । ध्रुट्त्सु । ध्रुट्सु । एवं मुहष्णुहष्णिहाम् । विश्ववाट् । विश्ववाड् । विश्ववाहौ । विश्ववाहः । विश्ववाहं । विश्ववाहौ । इग्यणः संप्रसारणम् ।१।१।४५। यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् । वाह ऊठ् ।६।४।१३२। भस्य वाहः संप्रसारणमूठ् स्यात् । संप्रसारणाच्च ।६।१।१०८। संप्रसारणादचि परे पूर्वरूपमेका-**

---

धुग्भ्यां धुक्ष्वित्यादौ पदान्त इत्येव भष्भावसिद्धेरिति भावः ॥ प्राचा तु प्रातिपदिकस्य तु झलि पदान्ते चेति व्याख्यातम् । तत् प्रामादिकमेव । अधोक् अधोग् इत्याद्यसिद्ध्यापत्तेः । प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च ॥ ननु धातोरवयव इति वैयधिकरण्येनान्वये क्विबन्तस्य दुहेः 'दादेः–' इति घत्वेन झषन्तत्वेऽपि भष्भावो न स्यात् । दुघिति समुदायस्य यः पूर्वावयवो दु इत्येकाच् तस्य झषन्तत्वाभावात् । उघ् इत्युत्तरावयवे तु बशभावादित्यत आह—**व्यपदेशिवद्भावेने**ति । न च धात्ववयवो धातुरित्येव व्यपदिश्यतां तथा च गर्धबिति सिध्येदिति वाच्यम् । अर्थवता हि व्यपदेशिवद्भावः, न चावयवोऽर्थवानिति तस्य धातुत्वव्यपदेशासंभवात् ॥—**भष्भाव** इति । क्विप प्राक्प्रवृत्ताया धातुसंज्ञाया निरपवादत्वेनावस्थितत्वात् 'दादेर्धातोः–' इति घत्वे कृते झषन्तत्वादिति भाव ॥—**धुगि**ति । 'दुह प्रपूरणे' क्विप् ॥—**वा द्रुह**—॥ 'द्रुह जिघांसायां' 'मुह वैचित्त्ये' 'ष्णुह उद्गिरणे,' 'ष्णिह प्रीतौ' । द्रुहेर्दादित्वान्नित्य प्राप्ते अन्येषामप्राप्ते उभयत्रविभाषेयम् । ननु द्रुहादयो दिवादिष्वनेनैव क्रमेण पठ्यन्ते, तत्र 'वा द्रुहादीनाम्' इत्येवास्तु दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिस्तदन्तर्गणो द्रुहादिरस्तु । रधादिगणसमाप्तये ष्णिहधातोरनन्तरं वृत्करणस्य कृतत्वेनातिप्रसङ्गशङ्काया निरवकाशत्वात् । मैव, तथाहि सति यङ्लुकि दोध्रुग् दोध्रुड् इत्यादि न सिध्येत् 'निर्दिष्ट यद्गणेन च' इति निषेधात् ॥—**इग्यणः**–॥—**यणः स्थाने** इति । विधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाश्रयणान्नान्योन्याश्रयः ॥ ननु यण स्थानिकस्यैक संप्रसारणत्वे अदुहितरामित्यत्र लङो लकारस्य स्थाने उत्तमपुरुषैकवचनमिट्, तस्य यण्स्थानिकत्वेन संप्रसारणसंज्ञाया सत्या 'हलः' इति दीर्घ स्यात् । तरप प्रति लङन्तस्याङ्गत्वादिति चेद् । अत्र कैयटः । यथासङ्ख्यसम्बन्धात्संप्रसारणसंज्ञा च न भवतीति । नन्वनुवादे परिभाषाणामनुपस्थानात्कथमिह यथासङ्ख्यत्वलाभ । नचैव स्थानयोगोऽपि न लभ्येतेति वाच्यम् । 'षष्ठी स्थानेयोगा' इत्यत्रैतत्सूत्रमनुवर्त्य व्याख्याया तल्लाभात् । अत्राहुः । तन्त्रावृत्त्याद्याश्रयणेन 'संप्रसारणस्य' इति सूत्रे तद्भावितग्रहणाददुहितरामित्यत्र 'हल' इति लङः स्थानिकस्येटः संप्रसारणस्य दीर्घो न भवति, लङ्स्थानिकस्येट संप्रसारणशब्देनाभावितत्वात् । नन्वेवमप्यक्षद्युवौ अक्षद्युव इत्यादौ ऊठः संप्रसारणसंज्ञायां 'संप्रसारणाच्च' इति पूर्वरूपं स्यादिति चेत्, न । 'संप्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम्' इति वार्तिककृतोक्तत्वाद् वार्णदाङ्गस्य बलीयस्त्वाद्वा उवङेव स्यात् ॥ अत्र नव्याः । 'ष्यङ संप्रसारणम्–' इत्यादिविधिप्रदेशेष्वेव 'यण इग्' इति पठित्वा संप्रसारणसंज्ञासूत्र त्यक्तु शक्यमित्याहु ॥—**वाह ऊठ्** ॥ 'एत्येधत्यूठ्सु' इति विशेषणार्थष्ठकारो 'हलन्त्यम्' इतीत्संज्ञकः । अत्र 'भस्य' इत्यधिक्रियते, 'वसोः संप्रसारणम्' इत्यतोऽनुवृत्त संप्रसारणमूठो विशेषण तेन 'अलोऽन्त्यस्य' इति न भवति तदेतदाह—**भस्य वाह** इत्यादि ॥ प्राचा तु वाहो वाशब्दस्य संप्रसारण स्यादित्युक्तं, तच्च फलितार्थकथनपरतया कथ चिन्नेयमित्याहुः ॥—**संप्रसारणाच्च** ॥ 'अमि पूर्वः' इत्यत. पूर्व इत्यनुवर्तने 'इको यणचि' इत्यतोऽचीति च, 'एकः पूर्वपरयोः' इति चाधिक्रियते । तदाह—**संप्रसारणादची**त्यादि ॥—**छन्दस्येव ण्वि**रिति । 'वहश्च' इति सूत्रे 'भजो ण्वि.' 'छन्दसि सहः' इत्यतो ण्विप्रत्ययस्य छन्दसीत्यस्य चानुवृत्तेरिति भावः ॥ स्यादेतत् । 'वाह.' इत्येव सूत्रमस्तु संप्रसारणमेवात्र विधीयता, तस्य लघूपधगुणे वृद्धिरेचीति वृद्धौ सिद्ध विश्वौह इत्यादि किमूठ्ग्रहणेन । सत्यम् । एव स्थिते क्रियमाणमूठ्ग्रहणं बहिरङ्गपरिभाषां ज्ञापयति । तस्यां हि सत्यां जातस्य बहिरङ्गस्य संप्रसारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितम् । न चानकारान्तोपपदेऽकारान्तोपसर्गोपपदे च रूपे विशेषः स्यादिति कथमूठ्ग्रहणं ज्ञापकमिति चेद् । अत्राहुः कैयटादयः । भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाभावोऽनुमीयते इति ॥

१ व्यपदेशिवदिति—विशिष्टोऽपदेशो मुख्यो व्यवहारः सोऽस्यास्तीति व्यपदेशी तेन तुल्यमित्यर्थः । २ धुगिति— ननु धातुत्वस्य क्रियावाचित्वे सति भ्वादिगणपठितत्वरूपत्वेन, क्रियायाः प्रधानाप्रधानन्यायेनानुपसर्जनीभूतप्रधानरूपाया एव ग्रहीतुमौचित्यात्कथमत्र घत्वभषभावौ इति चेत्, न, अत्वसन्तेति सूत्रे अधातोरिति निषेधसामर्थ्येन धातुग्रहणे उपसर्जनस्यापि ग्रहणाभ्युपगमात् । एतन्मूलकमेव 'क्विबन्ता धातुत्वं न जहतीति' बोध्यम् ।

देशः स्यात् । एत्येधत्यूठ्सु । विश्वौहः । विश्वौहेत्यादि । छन्दस्येव ण्विरिति पक्षे णिजन्ताद्विच्[1] । **चतुरनडुहोरामुदात्तः** ।७।१।९८। अनयोराम् स्यात्सर्वनामस्थाने स चोदात्तः । **सावनडुहः** ।७।१।८२। अस्य नुम् स्यात्सौ परे । आदित्यधिकारादवर्णात्परोऽयं नुम् । अतो विशेषविहितेनापि नुमा आम् न बाध्यते । अमा च नुम् न बाध्यते । सोर्लोपः । नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो[2] न । अनड्वान् । **अम् संबुद्धौ** ।७।१।९९। चतुरनडुहोरम् स्यात्संबुद्धौ । आमोपवादः । हे अनड्वन् । अनड्वाहौ । अनड्वाहः । अनडुहा । **वसुस्रंसुध्वंस्वनडुहां दः**[3] ।८।२।७२। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम् । विद्वान् । पदान्ते इति किम् । स्रस्तम् । ध्वस्तम् । **सहेः साडः सः** ।८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् । तुराषाट् । तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि । तुरं सहत इत्यर्थे छन्दसि सह इति ण्विः । लोके तु साहयतेः क्विप् अन्येषामपीति पूर्वदस्य दीर्घः । **दिव औत्** ।७।१।८४। दिविति प्रातिपदिकस्य औत्स्यात्सौ परे । अल्विधित्वेन स्थानिवत्त्वाभावाद्धल्ङ्याबिति सुलोपो न । सुद्यौः । सुदिवौ । सुदिवः । सुदिवम् । सुदिवौ । **दिव उत्** ।६।१।१३१। दिवोऽन्तादेश उकारः स्यात्पदान्ते । सुद्युभ्याम् । सुद्युभिः । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ । **षट्चतुर्भ्यश्च**[4] ।७।१।५५। षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात् । णत्वम् । द्वित्वम् । चतुर्ण्णाम् । **रोः सुपि** ।८।३।१६। सप्तमीबहुवचने परे रोरेव विसर्जनीयो नान्यरेफस्य । षत्वम् । षस्य द्वित्वे प्राप्ते । **शरोऽचि** ।८।४।४९। अचि परे शरो न द्वे स्तः । चतुर्षु । प्रियचत्वाः । हे प्रियचत्वः । प्रि-

एतेन भुवं वहतीति भूवाट् । भूहः । भूहा । प्रौहः । प्रौहेत्यादिप्रयोगाः परास्ताः ॥—**चतुरनडुहोः**—॥ 'इतोऽत्सर्वनामस्थाने' इत्यतोऽनुवर्तनादाह—सर्वनामस्थान इति ॥—**सावनडुहः** ॥ 'आच्छीनद्योः–' इत्यतो नुममनुवर्त्याह—**नुम्स्यादिति** । विशेषविहितेन यामुटा सामान्यविहितः सीयुडिव नुमा आम् बाध्यतामित्याशङ्क्य निराकरोति—**अवर्णात्परोऽयमित्यादिना** । उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावो नेति भावः ॥—**अमा चेति** । विशेषविहितेनापीत्यनुषज्यते । 'आमा च नुम्न बाध्यते' इति केचित्पठन्ति । तस्यायमर्थः । बहुनड्वाहीत्यत्र परत्वान्नुमि कृते पुनः प्रसङ्गविज्ञानात् 'नपुंसकस्य झलचः' इति नुम् भवत्येव, न तु बाध्यत इति ॥ नुमो दत्वमाशङ्क्याह—**नुम्विधिसामर्थ्यादि**त्यादि । विधानसामर्थ्यात्सर्वत्राविकृतेन नुमा भवितव्यमिति भावः ॥ नन्वेवमनड्वांस्तत्रेत्यत्र 'नश्छव्य' इति रुत्वमपि न स्यादिति चेद । अत्राहुर्भाष्यकाराः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । भवति हि दत्वं प्रति नुमो विधिरनर्थकः, रुत्वं प्रति तु निमित्तमेवेति ॥—**अनड्वानिति** । अनः शकटं वहतीति विग्रहे अनसि वहेः क्विप् । अनसो डश्च । यजादित्वात्सम्प्रसारणम् । अनडुह् इति स्थिते । आम्नुम्सुलोपेषु कृतेषु संयोगान्तलोपेन हकारलोपः ॥—**वसुस्रंसु**—॥ वसुरिति प्रत्ययः, तेन तदन्तं ग्राह्यम् । 'ससजुषो–' इतिसूत्रात्सेत्यनुवर्तते, तच्च वसोरेव विशेषणं, न तु स्रंसुध्वसोरव्यभिचारात् । नाप्यनडुहः, असंभवादित्यभिप्रेत्याह—**सान्तवस्वन्तस्येति** ॥—**सहेः साडः सः** ॥ सहेरिति किम् । सह डेन वर्तते सडः । यस्य नाम्नि डशब्दोऽस्ति यथा मृड इति । सडस्यापत्यं साडिः ॥ हान्ताः ॥ ॥—**दिव औत्** ॥ तकार उच्चारणार्थः ॥—**प्रातिपदिकस्येति** । अव्युत्पन्नस्य 'दिवेर्डिविः' इति न्यासोहितसूत्रेण व्युत्पन्नस्य वा ग्रहणं, न तु 'दिवु क्रीडादौ' इतिधातोः, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया । तेनाक्षद्यूरित्यादौ न भवति । न च त्वान्तरङ्गत्वादूठेव स्यान्न तु औत्वप्रसक्तिरिति वाच्यम् । ऊठि कृतेऽप्येकदेशविकृतन्यायेन 'दिव औत्' इत्यस्यापि प्रसक्तिसंभवादिति दिक् ॥—**दिव उत्** ॥ तपरकरणमिह द्युभ्यामित्यादावुकारस्य सम्प्रसारणत्वात् 'हलः' इति दीर्घे प्राप्ते तन्निवारणायेत्याहुः ॥ वान्ताः ॥ ॥—**चत्वार** इति 'चतेरुरन्' इत्युरन्प्रत्ययान्तश्चतुर्शब्दः । ततो जसि 'चतुरनडुहोः–' इत्याम् ॥—**षट्चतुर्भ्यश्च** ॥ बहुवचननिर्देशादर्थस्य प्राधान्यं विवक्षितम् । अर्थश्चामः परत्वं शब्दद्वारकं, तेन तदन्तविधौ सत्यपि परमचतुर्णामित्यादावेव भवति, न तु बहुव्रीहौ, तदेतद्वक्ष्यति—'गौणत्वे तु नुड् नेष्यते' इत्यादिना ॥—**द्वित्वमिति** । 'अचो रहाभ्याम्–' इत्यनेन ॥—**रोः सुपि** ॥ सुपीति न प्रत्याहारः, खरीत्यनुवृत्तेः । तेन पयोभ्यामित्यादौ विध्यर्थमेतन्न भवति । 'खरवसानयोः–' इत्येव सिद्धेऽयमारम्भो नियमार्थमित्याह—**रोरेवेति** । 'रोः सुप्येव विसर्जनीयः' इति विपरीतनियमस्त्विह न भवति । 'हलोऽनन्तराः संयोगः' इत्यादिनिर्देशात् ॥—**शरोऽचि** ॥

१ णिजन्ताद्विजिति— अनेन लोके विश्ववाट्शब्दस्य साधुत्वमात्रमुच्यते तत्त्वरयोठ् णिलोपस्य स्थानिवत्त्वात्, भसंज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणात् इति केचित् । वस्तुतस्तु वहश्चेत्यत्र छन्दोग्रहणं नानुवर्तते । अत एव विभाषा पूर्वाह्णेति सूत्रस्थः प्रष्ठौहः आगत प्रष्ठवाड्रूप्यमिति भाष्यप्रयोगः संगच्छते । २ लोपो नेति—तत्र पञ्चमीसमासस्याप्याश्रयणादिति भावः । ३ वस्विति—प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति परिभाषया व्याख्यानाद्वा वसुशब्देन प्रत्ययो गृह्यते, न तु वसु स्तम्भे इति धातुः । ४ षट्चतुर्भ्यश्चेति—ननु ष्णान्तेति सूत्रे रेफप्रक्षेपेण रेफान्तस्यापि षट्संज्ञा विधेया किमत्र चतुर्ग्रहणेन, तिस्रः चतस्रः इत्यादौ तु सन्निपातपरिभाषया लुको वारणम्, इति चेन्न, । चत्वार इत्यादौ लुगापत्तेः । तत्सिद्ध्यर्थं 'रो न' इत्युक्तौ तु पदलाघवाभावः स्फुट एव ।

यचत्वारौ । प्रियचत्वारः । गौणत्वे तु नुट् नेष्यते[1] । प्रियचतुराम् । प्राधान्ये तु स्यादेव । परमचतुर्णाम् । कमलं कमलां वा आचक्षाणः कमल्[2] । कमलौ । कमलः । षत्वं । कमल्षु । **मो नो धातोः** ।८।२।६४। धातोर्मस्य नः स्यात्पदान्ते । नस्यासिद्धत्वान्नलोपो न । प्रशाम्यतीति प्रशान् । प्रशामौ । प्रशामः । प्रशान्भ्यामित्यादि । **किमः कः** ।७।२।१०३। किमः कः स्याद्विभक्तौ । अकच्सहितस्याप्ययमादेशः । कः । कौ । के । कम् । कौ । कान् । इत्यादि सर्ववत् । **इदमो मः** ।७।२।१०८। इदमो मः स्यात्सौ परे । त्यदाद्यत्वापवादः । **इदोऽय् पुंसि** ।७।२।१११। इदम इदोऽय् स्यात्सौ पुंसि । सोर्लोपः । अयम् । त्यदाद्यत्वं पररूपत्वं च । **दश्च** ।७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः संबोधनं नास्तीत्युत्सर्गः । **अनाप्यकः** ।७।२।११२। अककारस्येदम इदोऽन् स्यादापि विभक्तौ । आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः । अनेन । **हलि लोपः**[3] ।७।२।११३। अककारस्येदम इदो लोपः स्यादापि हलादौ । नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे । **आद्यन्तवदेकस्मिन्** ।१।१।२१। एकस्मिन् क्रियमाणं कार्यमादाविवाऽन्त इव स्यात् । आभ्याम् । **नेदमदसोरकोः** ।७।१।११। अककारयोरिदम-

---

'अचो रहाभ्याम्–' इत्यतो द्वे इति 'नादिन्याक्रोशे–' इत्यतो नेति चानुवर्तत इत्याह—**न द्वे स्त** इति ॥ नन्वस्तु द्वित्वमेकस्य 'झरो झरि सवर्णे' इति लोपे सिद्धमिष्टम् ॥ मैवम् । लोपस्य वैकल्पिकत्वेन पक्षे द्वयोः श्रवणप्रसङ्गात् ॥ प्रियाः चत्वारश्चत्वारि वा यस्य स प्रियचत्वा' । आङ्गत्वात्तदन्तस्यापि 'चतुरनडुहो –' इत्याम् । हे प्रियचत्व इत्यत्र तु 'अम् संबुद्धौ' इत्यम् ॥ रान्ताः ॥ ॥—**कमलामि**ति । 'कमला श्रीर्हरिप्रिया' इत्यमरः ॥—**कमलि**ति । 'तत्करोति तदाचष्टे' इति णिचि इष्ठवद्भावाट्टिलोपः । णिजन्तात्क्विपि 'णेरनिटि' इति णिलोपः ॥ एवं सलिलमाचक्षाणः सलिल् सलिलौ सलिल इत्यादि बोध्यम् ॥ नन्वेवं तोयमाचक्षाणस्तोय् तोयौ तोय इति यान्ता अपि सुसाधाः । न च 'वेरपृक्तलोपाद्वलि लोप' पूर्वविप्रतिषेधेन' इति यलोपः शङ्क्यः । 'लोपो व्योर्वलि' इति लोपे कर्तव्ये णिलोपस्य टिलोपस्य वा स्थानिवद्भावेन वल्परत्वाभावादिति चेन्मैवम् । 'न पदान्त–' इति सूत्रेण यलोपे स्थानिवद्भावनिषेधात् । तस्मात् 'लोपो व्योर्वलि' इति यलोपः स्यादेवेति यान्ता नोक्ताः ॥ लान्ता ॥ ॥—**पदान्त** इति । प्राचा तु झलीत्यप्युक्तं, तन्निष्फलत्वादुपेक्ष्यम् ॥—**प्रशानि**ति । 'शम उपशमे' क्विप् । 'अनुनासिकस्य क्वि–' इति दीर्घः ॥—**किमः कः** ॥ 'कायतेर्डिमु' इति डिमि प्रत्यये निष्पन्नः किंशब्दः ॥—**विभक्तावि**ति । 'अष्टन आ विभक्तौ' इत्यतोऽनुवर्तत इति भावः ॥ नन्वत्र 'इमः' इत्येव सूत्र्यताम् । तेन तिमष्टिमादीनां क्विबन्तानामतिप्रसङ्गवारणाय त्यदादीनामिमः अः स्यादिति व्याख्यास्यते, तदा द्विशब्दात् प्राक् किंशब्दस्य पाठः कर्तव्यः । 'नानर्थके–' इति निषेधादलोऽन्त्यविधिर्न भविष्यति तत्किं कादेशेनेत्यत आह—**अकच्सहितस्यापी**ति । इमोऽकारविधौ तु साकच्कस्य कक इति रूपं स्यादिति भावः ॥ नन्वेवं गणकार्यत्वाभावादुपसर्जनेऽपि स्यात् । मैवम् । त्यदादीनामित्यनुवर्त्य त्यदादीनां किम इति व्याख्यानात् ॥—**इदमो मः** ॥ 'इन्देः कमिर्नलोपश्च' । इदम् ॥ 'तदोः सः सौ–' इत्यतोऽनुवर्तनादाह—**सौ पर** इति ॥—**इदोऽय्**— ॥ पुंसीति किम् । इयं स्त्री ॥—**त्यदादेः संबोधनं नास्ती**ति । प्रचुरप्रयोगादर्शनमेवात्र मूलम् ॥—**उत्सर्ग** इति । तेन 'तदोः सः सौ' इति सूत्रे 'अनन्त्ययोरिति किं हे स' इति भाष्यं, भो अच्युत भवन्नच्युतेत्यादि प्रयोगाश्च न विरुध्यन्त इति भावः ॥—**अनाप्यकः** ॥ आबिति प्रत्याहारो, न तु टाप् । विभक्ताविति विशेषणादतो व्याचष्टे—**टा इत्यारभ्य सुपः पकारेणे**ति ॥—**नानर्थकेऽलोन्त्यविधिरि**ति ॥ नन्वेवं बिभर्ति पिपर्तीत्यादौ 'भृञामित्' 'अर्तिपिपर्त्योश्च' इतीत्त्वं सर्वस्याभ्यासस्य स्यात् । द्वित्वाभावे केवलस्यानर्थकत्वेऽपि द्वित्वे सति समुदायस्यैवार्थवत्त्वादित्याशङ्कायामाह—**अनभ्यासविकार** इति ॥—**आद्यन्तवत्**— ॥ 'सत्यन्यस्मिन् यस्य पूर्वो नास्ति स आदिः' । 'सत्यन्यस्मिन्यस्य परो नास्ति सोऽन्तः' इति लोके प्रसिद्धं, तदुभयमेकस्मिन्नसहाये न संभवतीति तत्राद्यन्तव्यपदिष्टानि कार्याणि न स्युरतोऽयमतिदेश आरभ्यते । न च परत्वात् 'सुपि च' इति दीर्घे पश्चाद्धलि लोपे सत्याभ्यामित्यादि सिध्यतीति किमत्राद्यन्तवत्सूत्रोपन्यासेनेति शङ्क्यम् । नित्यत्वात् 'हलि लोपः' इत्यस्य दीर्घात्पूर्वमेव प्रवृत्तेः ॥ एकस्मिन्नित्युपमेये सप्तमीदर्शनात्सप्तम्यर्थ एव वतिरित्यभिप्रेत्याह—**आदाविवान्त इवे**ति । आदिवत् किम् । औपगवः । अत्राण आद्युदात्तत्वं यथा स्यात् । भाष्ये त्वाद्यन्तवदित्यपनीय 'व्यपदेशिवदेकस्मिन्' इति सूत्रमूहितम् । विशिष्टोपदेशो व्यपदेशः । मुख्यो व्यवहारः सोऽस्यास्तीति व्यपदेशी मुख्य इति यावत् । तेन तुल्यमेकस्मिन्न-

---

१ नेष्यते इति—चतुर्भ्य इति बहुवचनेनार्थस्य प्राधान्यसूचनात् । परे तु अत्र नुट्प्रवृत्तौ न कस्यचिद्भाष्यस्य विरोधः, नामीतिसूत्रस्थं भाष्यं तु विपरीतमनुकूलम्, बहुवचनं तु शब्दप्रयोगान्यनराभिप्रायेणोपपन्नम्, यथा 'न षट्स्वस्रादिभ्यः' 'तिसृभ्यो जसः' इत्यादौ इति प्राहुः । २ कमलिति—नन्विदमसंगतम्, 'नहि पदान्ताः परेऽणः सन्ति' इति नपदान्तसूत्रस्थभाष्यात् इति चेन्न । 'भोभगो–' इति सूत्रस्थवृक्षवकरोतीति भाष्यप्रयोगेण तस्य भाष्यस्य पदान्ता एचो यो रेफो वा न संभवन्तीत्यभिप्रायेणैकदेशिवचनत्वात् । ३ हलि लोप इति—हल्यशित्येव वक्तुं युक्तम्, नन्विदमो णौ ततः क्विपि भ्यामि च दोष इति वाच्यम्, णिलोपस्य स्थानिवत्त्वात्, त्यदादीनामित्यनुवृत्त्या गौणे तदप्रवृत्तेश्च ।

दसोर्भिस ऐस् न स्यात् । एत्वम् । एभिः । अत्वम् । नित्यत्वात् ङेः स्मै पश्चाट्टिलोपः । अस्मै । आभ्याम् । एभ्यः । अस्मात् । आभ्याम् । एभ्यः । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु । ककारयोगे तु अयकम् । इमकौ । इमके । इमकम् । इमकौ । इमकान् । इमकेन । इमकाभ्याम् । इमकैः । **इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ।२।४।३२।** अन्वादेशविषयस्येदमोऽनुदात्तोऽश् आदेशः स्यात्तृतीयादौ । अश्वचनं साकच्कार्थम् । **द्वितीयाटौस्स्वेनः ।२।४।३४।** द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथाऽनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः । गणयतेर्विच् ।सुगण् । सुगणौ । सुगणः । सुगण्ट्सु । सुगण्ट्सु । सुगण्सु । क्विप् । अनुनासिकस्य क्विझलोरिति दीर्घः । सुगाण् । सुगाणौ । सुगाणः । सुगाण्ट्सु । सुगाण्ट्सु । सुगाण्सु । परत्वादुपधादीर्घः । हल्ङ्यादिलोपः । ततो नलोपः । राजा । **न ङिसंबुद्ध्योः ।८।२।८।** नस्य लोपो न स्यात् ङौ संबुद्धौ च । राजन् । ङौ[1] तु छन्दस्युदाहरणम् । सुपां सुलुगिति ङेर्लुक् । निषेधसामर्थ्यात्[2] प्रत्ययलक्षणम् । परमे व्योमन् । * **ङावुत्तरपदे प्रतिषेधो वक्तव्यः** । चर्मणि तिला अस्य चर्मतिलः । ब्रह्मणि निष्ठा अस्य ब्रह्मनिष्ठः । राजानौ । राजानः । राजानम् । राजानौ । अल्लोपोनः । श्चुत्वम् । न चाल्लोपः स्थानिवत् । पूर्वत्रासिद्धे तन्निषेधात् । नापि बहिरङ्गतयाऽसिद्धः। यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः । जंजोर्ज्ञः[3] । राज्ञः । राज्ञा । **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।८।२।२।** सुब्विधौ स्वरविधौ संज्ञाविधौ कृतितुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ । इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न । राज-

सहायेऽपि कार्यं स्याद् इत्यर्थः । तेन द्याय आरित्यादौ 'एकाच'–' इति द्वित्व सिध्यति । अन्यथा आद्यन्तोपदिष्टत्वाभावाद् द्वित्व न स्यादिति दिक् ॥—**नेदमदसोः**—॥ भाष्ये तु 'इदमदसोः कात् । नियमार्थमिदम्, इदमदसोः कादेव भिस ऐस् नान्यतः' इति स्थितम् ॥ नव्यास्तु । 'इदमदसोः कात्' इति सूत्रिते तु काद्भिस ऐस् इदमदसोरेवेति विपरीतनियमोऽपि सभाव्येत । तथा च पाचकैरित्यादि न सिध्येत् । किं तु 'इदमदसोः काद्भिस ऐस्' 'अतः' इत्येव सूत्रद्वयं सुवचमित्याहुः ॥ —स्मायादेशात्परत्वादनादेशः स्यादित्याशङ्कायामाह—**नित्यत्वान् ङेः स्मै** इति ॥—**इदमोऽन्वादेशे**—॥ नन्विदमोऽनुदात्तमात्रविधावपि हलि लोपेन आभ्यामित्यादि समीहितरूप सिध्यति, एनेन एनयोरित्यत्र तु विशिष्यैनादेशो विहितः किमनेनाश्ग्रहणेनेत्यत आह—**साकच्कार्थमि**ति । यद्यपीह शित्करण व्यर्थम्, अकारस्याकारविधानसामर्थ्यादेव सर्वादेशसिद्धेः, तथाप्यनुदात्तत्वार्थमेवाकारविधानमित्याशङ्का स्यात्तन्निवारणाय शित्करणमित्याहुः ॥ अ अ इति प्रश्लिष्य निर्देशे त्वनेकाल्त्वादेव सर्वादेशसिद्धे शिद्ग्रहण त्यक्तु शक्यमित्याकरः ॥—**द्वितीयाटौस्सु**—॥ 'इदमोऽन्वादेशे–' इत्यतः इदम इत्यनुवर्तते अन्वादेश इति च । 'एतदस्त्रतसोः–' इत्यत एतद इत्यपि, तदाह—**इदमेतदोरेनादेश** इत्यादि । अनुदात्त इत्यनुवर्तनादेनादेशोऽनुदात्त इति ज्ञेय. ॥—**कार्यं विधातुमि**ति । अपूर्वं बोधयितुमित्यर्थः । 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एनमातं ङित विद्यात्' इत्यत्र तु ईषदर्थादयो न विधीयन्ते किंत्वनूद्यन्ते इति न तत्रैनादेशः । एतेन 'नक्तं भीरुरय त्वमेव तदिम राधे गृह प्रापय' इत्यपि व्याख्यातम् । भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात् ॥ मान्ताः ॥ ॥ —**सुगाणि**ति । क्विप् । न च 'अनुनासिकस्य क्वि–' इति दीर्घे कर्तव्ये अल्लोपणिलोपयोः स्थानिवद्भावः शङ्क्यः । दीर्घविधौ तन्निषेधात् । क्वौ विधिं प्रति निषेधाच्च ॥ णान्ताः ॥ ॥—**निषेधसामर्थ्यादि**ति ॥ यदा तु 'न ङिसंबुद्ध्योः' इत्यत्र षष्ठ्यन्ततामाश्रित्य ङ्यन्तस्य संबुद्ध्यन्तस्य च पदस्य लोपो नेति व्याख्यायते, तदा प्रत्ययलक्षण सुलभमिति तदर्थं निषेधसामर्थ्यानुसरणक्लेशो न कर्तव्य इत्याहुः ॥ पूर्वस्मादपि विधौ स्थानिवत्त्वमाशङ्क्याह—**नचेति** ॥—**षाष्ठीं परिभाषामि**ति । 'वाह ऊठ्' इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः ॥—**नलोपः सुप्स्वर**—॥ 'पूर्वत्रासिद्धम्' इत्यनेनैव सिद्धे नियमार्थमारम्भ इत्याह—**नान्यत्रे**त्यादि । तेन राजाश्व इत्यादौ सवर्णदीर्घे कर्तव्ये नलोपोऽसिद्धो न भवतीति भावः ॥ सुब्विधिमुदाहरति—**आत्वमि**त्यादिना । सुबाश्रितो विधिः सुब्विधि । स्वरविधौ पञ्चार्मम् 'दिक्सख्ये सज्ञायाम्' इति समासे नलोपे कृते अवर्णान्त पूर्वपदं जातमिति 'अर्मे चावर्ण द्व्यच्त्र्यच्' इति पूर्वपदाद्युदात्तत्व प्राप्त नलोपस्यासिद्धत्वान्न भवति । सज्ञाविधौ 'पञ्चेत्यत्र नलोपे कृतेऽपि' इत्यादिना स्त्रीप्रत्ययेषु वक्ष्यति ॥ अन्ये तु, दण्डिगुप्तौ गुप्तदण्डिनावित्यप्युदाहरणम् । अत्र नलोपस्यासिद्धत्वाद् घिसज्ञा नास्तीति 'द्वन्द्वे घि' इति पूर्वनिपातनियमो न भवतीत्याहुः । कृति तुग्विधौ तु

१ ङौ तु छन्दसीति—नच राजनीवाचरतीत्यर्थेऽधिकरणाच्चेति क्यचि नलोपाभावार्थं सूत्रे ङिग्रहणस्य लौकिकप्रयोगे फलं संभवतीतीदमनुपपन्नमिति वाच्यम्, वेदे अयस्मयादित्वेनैव लोपाभावे सिद्धे ङिग्रहणप्रत्याख्यानपरभाष्यप्रामाण्येन ईदृशे विषये लोके क्यजनुत्पत्तेरेवाङ्गीकारात् । २ सामर्थ्यादिति—न लुमतेति निषेधस्यानित्यत्वज्ञापनद्वारेत्यर्थः । एतदनित्यत्वबललब्धमेवं 'सबुद्धौ नपुसकाना नलोपो वा वक्तव्य.' इति बोध्यम् । ३ जजोर्ज्ञ इति—नेदमपूर्वादेशविधायक सूत्रभाष्यवार्तिकेष्वपठितत्वात्, किंतु अभियुक्तवचनम् ।

**भ्याम् । राजभिः । राज्ञे । राजभ्यः । राज्ञः । राज्ञोः । राज्ञाम् । राज्ञि । राजनि । प्रतिदीव्यतीति प्रतिदिवा । प्रतिदिवानौ । प्रतिदिवानः । अस्य भविषयेऽल्लोपे कृते । हलि च ।८।२।७७। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि । न चाल्लोपस्य स्थानिवत्त्वम् । दीर्घविधौ तन्निषेधात् । बहिरङ्गपरिभाषा तूक्तन्यायेन न प्रवर्तते । प्रतिदीव्नः । प्रतिदीव्नेत्यादि । यज्वा । यज्वानौ । यज्वानः । न संयोगाद्वमन्तात् ।६।४।१३७। वकारमकारान्तसंयोगात्परस्यानोऽकारस्य लोपो न स्यात् । यज्वनः । यज्वना । यज्वभ्यामित्यादि । ब्रह्मणः । ब्रह्मणा । ब्रह्मभ्यामित्यादि । इन्हन्पूषार्यम्णां शौ ।६।४।१२। एषां शावेवोपधाया दीर्घो नान्यत्र । इति निषेधे प्राप्ते । सौ च ।६।४।१३। इन्नादीनामुपधाया दीर्घः स्यादसंबुद्धौ सौ परे । वृत्रहा । हे वृत्रहन् । एकाजुत्तरपदे इति णत्वम् । वृत्रहणौ । वृत्रहणः । वृत्रहणम् । वृत्रहणौ । हो हन्तेर्ञ्णिन्नेषु ।७।३।५४। ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात् । हन्तेः ।८।४।२२। उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात् । प्रहण्यात् । अत्पूर्वस्य ।८।४।२२। हन्तेरत्पूर्वस्यैव नस्य णत्वं नान्यस्य । प्रघ्नन्ति । योगविभागसामर्थ्यादनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायं बाधित्वा एकाजुत्तरपदे इति णत्वमपि निवर्त्यते । नकारे परे कुत्वविधिसामर्थ्यादल्लोपो**

वृत्रहभ्याम् ॥ 'ब्रह्मभ्रूण–' इति विहित क्विपमाश्रित्य 'ह्रस्वस्य–' इति तुङ् न । कृति तुग्विधाविनि किम् । वृत्रहच्छत्रमिह स्यादेव 'छे च' इति तुक् ॥ यद्यपि वृत्रहभ्यामित्यत्र 'असिद्ध बहिरङ्गमन्तरङ्गे' इत्यनेनैव नलोपस्यासिद्धत्वं सिध्यति, तथाप्यस्याः परिभाषाया अनित्यत्वज्ञापनार्थ कृति तुग्ग्रहण, तेन या सा इत्यादि सिध्यति । अन्यथा विभक्त्याश्रयस्यात्वस्य बहिरङ्गत्वेनासिद्धत्वादाब् न स्यात् । एतच्च 'नाजानन्तर्ये बहिष्ट्वप्रकॢप्तिः' इत्यत्र यत्रान्तरङ्गे बहिरङ्गे वा अचोरानन्तर्यमिति हरदत्तादिमतेन कैश्चिदुक्तम् । उत्तरकार्ये अच आनन्तर्यमिति कैयटमते तु नात्र बहिरङ्गपरिभाषा प्रवर्तते । या सेत्यत्र टाप् तु सन्निपातपरिभाषामपि बाधित्वा 'न यासयोः' इति निर्देशादेव सिध्यतीति ज्ञेयम् ॥—**प्रतिदिवे**ति । 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन् ॥—**हलि च** ॥ 'र्वोरुपधाया दीर्घ इकः' इत्यनुवर्तते 'सिपि धातोः' इत्यतो धातोरिति च, तत्र धातुग्रहण र्वोरित्यनेन विशेष्यते, विशेषणेन तदन्तविधिस्तदाह—**रेफवान्तस्य धातो**रित्यादि । रेफान्तस्य तु गीर्यति पूर्यति गीर्ण पूर्ण इत्याद्युदाहरणम् ॥ धातोः किम् । रेफान्तस्य पदस्य मा भूत् । अग्निः करोति ॥ नन्वस्तु धातोरनुवर्तन परतु र्वोरित्यनेन धातुर्न विशेष्यते रेफवान्तस्य धातोरिति किं तु इग्विशेष्यते रेफवान्तस्य इको दीर्घः स्यात्तौ च रेफवकारौ धातोश्चेद्, अन्तशब्दोऽत्र समीपवाची । तथा च 'उपधाया च' इति सूत्र त्यक्तु शक्यमनेनैव मूर्छति हूर्छतीत्यादिरूपसिद्धेरिति चेत् । मैवम् । कुर्कुरीयतीत्यत्रातिप्रसङ्ग स्यात्तस्मात् र्वोरित्यनेन धातुरेव विशेष्यः । एतच्चाकरे स्पष्टम् ॥ यत्तु 'उपधायां च' इति कैश्चिदुपन्यस्तम् । तन्न । दिवेर्वकारस्यानुपधात्वात् ॥—**उक्तन्याये**नेति । यथोद्देशपक्षे षाष्ठी परिभाषां प्रति दीर्घस्यासिद्धत्वेत्यर्थः ॥—**प्रतिदीव्न** इति । 'न भकुर्छुराम्' इत्यत्र र्वोरित्यनुवर्तनाद्रेफवान्तस्यैव भस्य निषेध इति न दीर्घनिषेध शङ्क्यो, नान्तस्येह भत्वात् ॥—**यज्वे**ति । इष्टवान्यज्वा । 'सुयजोर्ङ्वनिप्' ॥—**ब्रह्मण** इति ॥ 'सर्वधातुभ्यो मनिन्' इति प्रक्रम्य 'बृंहेर्नोच्च' इति नस्यात्वविधानाद्ब्रह्मनशब्दोऽयं निष्पन्नः ॥—**इन्हन्**—॥ 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेनैव सिद्धे नियमार्थमिद तदाह—**शावेवोपधाया** इति । उपधादीर्घस्यायं नियमः । तेन वृत्रहायत इत्यत्र 'अकृत्सार्वधातुकयोः' इति दीर्घो भवत्येव । वृत्रहणी इत्यत्र 'अनुनासिकस्य क्विझलोः–' इति यो दीर्घ सोऽपि नियमेन व्यावर्त्यते । उपधादीर्घमात्रापेक्षया नियमविज्ञानादिति तु मनोरमायां स्थितम् ॥—**शावे**वेति नियमाद्दीर्घस्याप्राप्तावाह—**सौ चे**ति । 'शिसौ' इति वक्तव्ये योगविभाग उत्तरार्थः ॥—**वृत्रहे**ति । वृत्र हतवान् । 'ब्रह्मभ्रूण–' इति क्विप् ॥—**हन्तेर्हस्ये**ति । ञिति णितीत्येतद्धन्तेर्विशेषणम्, नकारे इति तु हस्येति यथासंभव बोध्यम् । यद्वा, ञिण्णिन्नाः सर्वेऽपि हस्यैव विशेषण ञिति णितीत्यंशे येन नाव्यवधानन्यायेन द्वाभ्यां व्यवधानं स्वीक्रियते । तेन घातः घातक इत्यत्र कुत्व भवति । इह तु न भवति । हननमात्मन इच्छति हननीयति हननीयतेर्ण्वुल् हननीयक इति । एतच्च भाष्यकैयटादौ स्पष्टम् ॥ 'हन्तेरत्पूर्वस्य' इति सूत्र योगविभागेन व्याचष्टे—**हन्तेरि**ति ॥ प्रसङ्गादस्योदाहरणमाह—**प्रहण्यादि**ति ॥ प्रकृतोपयुक्तमशमाह—**अत्पूर्वस्ये**ति ॥—**एकाजुत्तरे**ति । न चाल्लोपे कृते एकाच्त्व नास्तीति वाच्यम् । पूर्वस्मादपि विधौ स्थानिवद्भावात् । न च 'पूर्वत्रासिद्धे न स्थानिवत्' इति वाच्यम् । 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तेः ॥—**निवर्त्यत** इति । 'कुमति च' इति णत्वमपि निवर्त्यत एवेति बोध्यम् । भाष्ये तु—'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः' । किं प्रयोजनम् । वृत्रघ्न सुघ्नः प्राघानि । 'हन्तेरत्पूर्वस्य' इत्यत्पूर्वग्रहणं न कर्तव्य भवति' इत्युक्तम् ॥ एतच्च वार्तिकार्थवर्णनमात्रम्, न तु वस्तुस्थितिः । वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसंग्रहस्यैव न्याय्यत्वादिति तु मनोरमायां स्थितम् ॥ ननु 'अत्पूर्वस्य' इत्यत्र तपरो विव-

१ वमन्तादिति—वमाभ्यां संयोगस्य विशेषणात्तदन्तत्वे लब्धेऽन्तग्रहण स्पष्टार्थम् । २ अत्पूर्वस्येति—अत इत्येव सिद्धे पूर्वग्रहण स्पष्टार्थम् ।

न स्थानिवत् । वृत्रघ्नः । वृत्रघ्ना । इत्यादि । यत्तु वृत्रघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तं तद्भाष्यवार्तिकविरुद्धम् । एवं शार्ङ्गिन्यशस्विन्नर्यमन्पूषन् । यशस्विन्निति विन्प्रत्यये इनोऽनर्थकत्वेऽपि इन्हन्नित्यत्र ग्रहणं भवत्येव । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीति वचनात् । अर्यम्णि । अर्यमणि । पूष्णि । पूषणि । **मघवा बहुलम्** ।६।४।१२८। मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् । ऋ इत् । **उगिदचां सर्वनामस्थानेऽधातोः** ।७।१।७०। अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः । मघवान् ।

---

क्षितो न वा । यदि विवक्षितस्तर्हि बहुवृत्रहाणीति न सिध्येत् । यद्यविवक्षितस्तदा प्राघानीति घ्निणन्तेऽपि णत्वं स्यात् । ततश्च 'कुव्यवाये हादेशेषु प्रतिषेध' इति वचनं स्वीकर्तव्यमेवेति किमनेन योगविभागेन ॥ अत्राहुः । तपरोऽत्र विवक्षित एव । न च बहुवृत्रहाणीत्यत्र णत्वासिद्धिः । णत्वस्यान्तरङ्गत्वेन तत्कार्यं प्रति दीर्घस्यासिद्धत्वात् । न च त्रैपादिकेऽन्तरङ्गे षाष्ठी परिभाषा न प्रवर्तत इति वाच्यम् । कार्यकालपक्षाभ्युपगमात् । न चैवमन्तरङ्गं णत्वं प्राघाणीत्यत्रापि स्यादिति वाच्यम् । 'पूर्वं धातुः साधनेन युज्यते' इति पक्षे णत्वस्य बहिरङ्गत्वात् । इष्टानुरोधेन 'पूर्वं धातुरुपसर्गेण–' इति पक्षस्यानभ्युपगमाद् इति ॥ अन्ये तु 'हन्तेरत्पूर्वस्य' इत्यत्र उपसर्गादित्यस्यानुवृत्तिस्वीकाराद् योगविभागसामर्थ्येन भ्रूणघ्न इत्यत्र 'एकाजुत्तर–' इत्यादिना णत्वाभावेऽपि वृत्रघ्नः सुघ्न इत्यत्र णत्वं दुर्वारमिति 'कुव्यवाये–' इति वार्तिकं स्वीकर्तव्यमेव । योगविभागस्यान्तरस्येति न्यायबाधेनापि चरितार्थत्वादुपसर्गसम्बन्धस्यापि बाधे सामर्थ्याभावात् । न च ब्रह्मादिषु कर्मसूपपदेषु विधीयमानः क्विप् प्रत्ययः केवलधातोरेव स्यान्न तु सोपसर्गादिति ब्रह्मप्रहा भ्रूणप्रहेत्यादि रूपमेव दुर्लभमिति वाच्यम् । 'आतोऽनुपसर्गे कः' इत्यत्रानुपसर्गेति सामान्यापेक्षज्ञापकात्सोपसर्गाद्धन्तेरपि 'ब्रह्मभ्रूण–' इति क्विप्संभवात् । अनुपसर्गग्रहणस्य सामान्यापेक्षज्ञापकत्वे तूक्तवार्तिकमेव प्रमाणम् । तस्मात् 'हन्तेः' इति योगविभागोऽत्र निरर्थक एवेत्याहुः ॥—**माधवेनोक्त**मिति । इत्थं हि तदीयो ग्रन्थः । 'भसञ्ज्ञायामल्लोपे उत्तरपदमनच्कं स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदलाभावाद् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पो भवति 'वृत्रघ्नो वृत्रघ्णः' इति ॥—**तद्भाष्ये**ति । किं च अल्विधित्वान्नेत्यसगतमल्विध्यर्थमेव 'अचः परस्मिन्–' इत्यस्यारम्भात् । तस्याप्रवृत्तौ युक्त्यन्तरस्यैव वाच्यत्वात् । 'एकाजुत्तर–' इत्यस्याप्रवृत्तावपि 'कुमति च' इति सूत्रस्य दुर्वारत्वाद् वैकल्पिकत्वं णत्वस्यासगतमेव । न च त्रिपाद्यामपि पूर्वं प्रत्युत्तरशास्त्रस्यासिद्धत्वात् 'एकाजुत्तरपदेणः' 'कुमति च' इत्यस्याप्रवृत्त्या 'प्रातिपदिकान्त–' इति वैकल्पिकमेव णत्वं भवतीति वाच्यम् । न हि योगे योगोऽसिद्धः किन्तु प्रकरणे प्रकरणमिति भाष्यादौ स्पष्टत्वादिति दिक् ॥—**अनिनस्मिन्ग्रहणानी**ति । अन् राज्ञेत्यर्थवता, साम्ना इत्यनर्थकेन । इन् दण्डीत्यर्थवता, वाग्मीत्यनर्थकेन । अस् सुपया इत्यर्थवता, सुस्रोता इत्यनर्थकेन । इह 'भुरीभ्या नुट्च' इत्यसुनस्तुट् । मन् सुशर्मेत्यर्थवता, सुप्रथिमा इत्यनर्थकेन । एतच्च 'इणः षीध्वम्–' इति सूत्रे अङ्गग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्सिद्धम् । वेविषीध्वमित्यत्र षीध्वशब्दस्य ग्रहणं मा भूदिति हि तत्राङ्गग्रहणं कृतम् । तच्चापार्थकम्; अनर्थकत्वादेव तद्ग्रहणासिद्धेः । अतो ज्ञायते अर्थवद्ग्रहणपरिभाषा अनित्येति ॥—**मघवा बहुलम्** ॥ 'अर्वणस्त्रसौ–' इत्यतस्तृ इत्यनुवर्तते, तदपेक्षा च 'मघवा' इति षष्ठ्यर्थे प्रथमा, तदाह—**मघवन्शब्दस्ये**ति ॥—**अधातोरि**ति ॥ अधातुभूतपूर्वस्यापीत्यर्थः । अञ्चतिग्रहणं हि नियमार्थम् । उगितो धातोश्चेद्भवति तर्ह्यञ्चतेरेवेति । एवं च गोमानिवाचरति गोमान् इत्यादौ सम्प्रति धातुत्वेऽपि विध्यर्थमधातुग्रहणम् । एतच्च मूल एव स्फुटीभविष्यति । नन्वञ्चतिग्रहणमौपदेशिकधातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति व्याख्यायाधातुग्रहणं त्यज्यतामिति चेत् । अत्र नव्याः । नुम्मात्रविषयको नायं नियमो, 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते तेनेह न उखास्रत्' इति 'उगितश्च' इति सूत्रे वक्ष्यमाणत्वात् । ततश्च यद्यौपदेशिकधातोश्चेदुगित्कार्यमिति व्याख्यायेत, तर्हि पूर्वोक्ते गोमानित्यादौ स्त्रियाम् 'उगितश्च' इति ङीप् प्रसज्येत । आचारक्विबन्तस्यौपदेशिकधातुत्वाभावात् । न चेष्टापत्तिः । अधातोर्ग्रहणादेव सूत्रकृता तत्र ङीप् नेष्यत इत्यनुमानादिति दिक् ॥ 'ननु नलोपिनोऽञ्चतेरेव नुमागमः स्यात्' न तु पूजार्थस्य नकारवतोऽञ्चतेरित्येवमर्थम्, 'अचाम्' इतिग्रहणस्य सार्थकत्वात्कथमेतस्य सामान्यनियमार्थतेति चेद् । उच्यते । अचामित्यत्र नलोपोऽविवक्षितः । तथा च पूर्वोक्तनियमार्थता भाष्यकैयटाद्युक्ता संगच्छत एव । पूजार्थस्याञ्चतेर्नुमि सत्यपि 'नश्चापदान्तस्य–' इति सूत्रे जातिपक्षमाश्रित्य नत्वजातेरनुस्वारविधानेन समीहितरूपसिद्धेः । व्यक्तिपक्षे त्वनुस्वारस्य शर्षु पठितत्वाद् अनुस्वारे परे नुमोऽनुस्वारे सति अनुस्वारद्वयवद्रूपमिष्यते । 'अनचि च' इति द्वित्वेन तद्रूपस्य तवापि मते दुर्वारत्वात् । न च भवन्मते द्वित्वेनानुस्वारत्रयं स्यादिति शङ्क्यम्, 'झरो झरि–' इति लोपेन निवारयितुं शक्यत्वात् । लोपाभावपक्षे त्रयाणां श्रवणं स्यादिति चेद् भाष्यकैयटाद्युक्तनियमानुरोधेन तत्स्वीकारे बाधकाभावात् । इष्टानुरोधेन जातिपक्ष एवात्राश्रयणीयः ॥—**नुमागमः स्यादि**ति ।—'इदितो नुम् धातोः' इत्यतो नुमनुवर्तत इति भावः ॥ ननु कुर्वन्नित्यादाविव संयोगान्तलोप-

---

१ उगिदचामिति—अत्र अजिति न प्रत्याहारः, 'नपुंसकस्य झलचः' इत्यत्र पुनरच्ग्रहणात् । व्याख्यानात् भाष्यादिस्वरसाच्च पकीयमतपठितो धातुरपि अच् अचि इत्येके इति न गृह्यते ।

इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति बहुलग्रहणात्। तथा च श्वन्नुक्षन्निति निपातनान्मघवच्छब्दात्सुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत् सूत्रं प्रत्याख्यातमाकरे। हविर्जक्षिति निःशङ्को मखेषु मघवानसाविति भट्टिः। मघवन्तौ। मघवन्तः। हे मघवन्। मघवन्तम्। मघवन्तौ। मघवतः। मघवता। मघवद्भ्यामित्यादि। तृत्वाभावे। मघवा। छन्दसीवनिपौ चेति वनिबन्तं मध्योदात्तं छन्दस्येव। अन्तोदात्तं तु लोकेऽपीति विशेषः। मघवानौ। मघवानः। सुटि राजवत्। श्वयुवमघोनामतद्धिते ।६।४।१३३। अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात्। संप्रसारणाच्च। आद्गुणः। मघोनः। अन्नन्तानां किम्। मघवतः। मघवता। स्त्रियां मघवती। अतद्धिते किम्। माघवनम्। मघोना। मघवभ्यामित्यादि। शुनः। शुना। श्वभ्यामित्यादि। युवन्शब्दे वस्योत्वे कृते। न संप्रसारणे संप्रसारणम् ।६।१।३७। संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात्। इति यकारस्य नेत्वम्। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम्। यूनः। यूना। युवभ्यामित्यादि। अर्वा। हे अर्वन्। अर्वणस्त्रसावनञः ।६।४।१२७। नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशः स्यान्न तु सौ। उगित्वान्नुम्। अर्वन्तौ। अर्वन्तः अर्वन्तम्। अर्वन्तौ। अर्वतः। अर्वता। अर्वद्भ्यामित्यादि। अनञः किम्। अनर्वा। यज्व-

---

स्यासिद्धत्वेन नान्तस्याभावाद्दीर्घत्वं न स्यादित्याशङ्क्याह—**इह दीर्घे कर्तव्य** इति॥—**बहुलग्रहणा**दिति। क्वचिदन्यदेवेत्यर्थकादित्यर्थः। बहूनर्थान् लातीति बहुलम्। 'आतोऽनुपसर्गे—' इति कर्मण्युपपदे कः॥—**श्वन्नुक्षन्नि**ति। 'श्वन्नुक्षन्पूषन्प्लीहन् क्लेदन् स्नेहन् मूर्धन् मज्जन्नर्यमन्विश्वप्सन्परिज्मन् मातरिश्वन् मघवन्' इत्युणादिसूत्रेणेत्यर्थः॥—**निपातना**दिति।—महेर्हकारस्य घकारः अवुगागमः कनि प्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः॥—**प्रत्याख्यातमाकर** इति। एवं च फलभेदेऽत्रादेशस्य प्रत्याख्यानासंभवाद् आदेशपक्षेऽपि दीर्घो भाष्यादिसंमत एवेति बहुलग्रहणात्संयोगान्तलोपस्य नासिद्धत्वमित्युक्तम्॥ यत्त्वाहुः। मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ इत्येव भाष्याशय इति। तन्न। मतुबन्तस्य छान्दसत्वे मानाभावात्। उदाहृतभट्टिप्रयोगविरोधाच्चेति दिक्॥—**छन्दसीवनिपावि**ति। मत्वर्थे ईवनिपौ स्तः छन्दसीति वार्तिकार्थः। सुमङ्गलीरियं वधूर्मघवानमीमहे इत्युदाहरिष्यति वैदिकप्रक्रियायाम्॥—**अन्तोदात्तं त्वि**ति। यद्यपि श्वन्नुक्षन्नित्यत्र कनिन्नन्ता एते इत्युज्ज्वलदत्तादिग्रन्थपर्यालोचनया आद्युदात्तत्व लभ्यते, तथापि उक्षा समुद्रो अरुणः सुपर्णः, पूषा त्वेतो नयतु, अग्निर्मूर्द्धा दिवः, इत्यादौ तत्सूत्रोपात्तानामुक्षादीनामन्तोदात्तस्य निर्विवादतया कनिप्रत्यय एवोचित इति भावः॥—**श्वयुव**—॥'अल्लोपोऽनः' इत्यतोऽन इत्यपकृष्य व्याचष्टे—**अन्नन्तानामि**ति॥—**अन्नन्तानां किम्। मघवत** इति। यद्यपि नस्य तादेशेऽप्येकदेशविकृतस्यानन्यत्वादन्नन्तताऽत्रास्त्येव, तथापि विशेषणसामर्थ्यात् श्रूयमाणनकारान्तस्यैव संप्रसारणं न त्वत्रेत्याहुः॥ वार्तिककृता तु 'श्वादीना सप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्' इत्युक्तम्॥ नन्वेवमल्लोपो न इत्यल्लोपो दुर्वार इति चेन्मैवम्। भाष्यकृता पूर्वोक्तवार्तिकमत्रानुवर्त्य 'अल्लोपोऽनः, नकारान्तस्यैव' इति व्याख्यातत्वात्। एतच्च 'ऋत्वक्' इति सूत्रे भाष्ये स्पष्टम्। एतेन बहुधीवरी राजकीयमित्यत्राप्यल्लोपाभावः सिद्धः। 'वनो र च' 'राज्ञः क च' इत्यादेशे कृते नकारान्तत्वाभावात्॥—**स्त्रियां मघवती**ति। मघवत्यौ मघवत्य इत्यत्र लिङ्गविशिष्टपरिभाषया 'उगिदचाम्—' इति नुम् न शङ्क्यः। विभक्तौ लिङ्गविशिष्टाग्रहणाद् इत्याहुः॥—**न संप्रसारणे**—॥ 'ष्यङः सप्रसारणम्' इत्यतः संप्रसारणमित्यनुवर्तमानेऽपि पुनः संप्रसारणग्रहणात् प्रदेशान्तरस्थं 'श्वयुवमघोनाम्' इत्यपि सप्रसारणं निषिध्यते तदाह—**इति यकारस्य नेत्वमि**ति॥—**यून** इति। ननूकारेण व्यवधानात्कथमत्र निषेधः, विव्याध विव्यधे इत्यादावव्यवधानेऽपि निषेधस्य चरितार्थत्वात्। न च सवर्णदीर्घे कृते नास्ति व्यवधानमिति वाच्यम्। 'अचः परस्मिन्—' इति स्थानिवत्त्वात्। अत्राहुः। विदेशस्थनिषेधार्थात्पुनः संप्रसारणग्रहणादेव व्यवधानेऽप्यत्र निषेधो भविष्यतीत्यदोषः। न च 'व्यथो लिटि' इति विदेशस्थेन यकारस्य सप्रसारणे कृते वकारस्य तदभावाय 'न सप्रसारणे' इति सूत्र प्रवर्त्यं पुनः संप्रसारणग्रहणं चरितार्थमिति व्यवधाने निषेधो न भविष्यतीति शङ्क्यम्। 'व्यथो लिटि' इत्येतद्धलादिःशेषापवाद इत्याकरे स्पष्टत्वात्। उत्सर्गसदेशश्चापवाद इति परस्यैव संप्रसारण भवति न पूर्वस्येति कैयटेन व्याख्यातत्वाच्चेति॥—**अर्वणस्तृ**—॥ अङ्गस्येति वर्तते, तच्चार्वणा विशेष्यते, अनञ इत्यनेनापि, तदाह—**नञा रहितस्ये**त्यादि। असाविति पर्युदासे विभक्तौ परत एव स्यात् ततश्चार्वतीत्यादौ न स्यादित्याशयेनाह—**न तु सावि**ति। न चैवमर्वप्रिय इत्यादावतिप्रसङ्गः। अङ्गेन स्वनिमित्तस्य प्रत्ययस्याक्षेपात्सुका लुप्तत्वेनात्र प्रत्ययलक्षणाभावात्। एतेन 'बार्हरलुप्यत सहस्र-

---

१ मघवतीति—पुयोगेन स्त्रियां वृत्तौ 'उगितश्च' इति ङीप्। यत्तु पुयोगादिति सूत्रेणेति तत्तुच्छम्, तत्रातोऽनुवृत्तेः। २ शुन इति—अत्र संप्रसारणे वार्णादाङ्गस्य बलीयस्त्वात्पूर्वरूपं बाधित्वालोपापत्तिस्तु न, आभीयासिद्धत्वेन संप्रसारणासिद्धा ''न सयोगात्—' इति निषेधात्। वार्णपरिभाषाया अनित्यत्वाच्च। ३ अन्त्यस्य यणः पूर्वमिति—सकृत्प्रवृत्त्यैवोभयोः संप्रसारणे जाते निषेधोऽय व्यर्थ इति केषांचिदुक्तिः प्रत्युक्ता। नचैव लक्ष्ये लक्षणन्यायस्य जागरूकत्वान्निषेधाचारितार्थ्ये तदवस्थमेवेति वाच्यम्। कार्याश्रयवर्णभेदेन लक्ष्यभेदसत्त्वात्। ईदृशस्थले लक्ष्यभेदाश्रयणे चेदमेव मानम्।

वत् । पथिमथ्यृभुक्षामात् ।७।१।८५। एषामाकारोऽन्तादेशः स्यात्सौ परे । आआदिति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः । इतोऽत्सर्वनामस्थाने ।७।१।८६। पथ्यादेरिकारस्याऽकारः स्यात्सर्वनामस्थाने परे । थो न्थः ।७।१।८७। पथिमथोस्थस्य न्थादेशः स्यात् सर्वनामस्थाने परे । पन्थाः । पन्थानौ । पन्थानः । पन्था-

---

हगर्वगर्वः' इति श्रीहर्षप्रयोगो व्याख्यातः ॥ नन्वेवं 'स्थानिवदादेशः'—इति सूत्रे धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः स्थानिवत् स्युरिति प्राचो ग्रन्थमनूद्य तत् किं परिगणनमुदाहरणमात्रं वेति विकल्प्य, नान्त्यः, अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यादिति मनोरमायां यदुक्तं तत् कथं सगच्छेत । अव्ययस्योक्तरीत्यानङ्गत्वात् । न च 'न लुमता—' इत्यनेनाङ्गकार्यनिषेधेऽप्यङ्गसंज्ञाया अनिषेधान्नोक्तदोष इति वाच्यम् । 'प्रत्यये परतः' पूर्वस्य यत् कार्यमाङ्गमनाङ्गं वा तत्सर्वं 'न लुमता—' इत्यनेन निषिध्यते' इति 'यडोऽचि च' इति सूत्रस्थमनोरमाग्रन्थपर्यालोचनया लुमताशब्देन लुप्ते अङ्गसज्ञाया अप्यस्वीकार्यत्वात् । तस्या अपि प्रत्यये परतः पूर्वस्य कार्यत्वात् । यदि लुका लुप्तेऽप्यङ्गत्वं स्वीक्रियते, तदाऽयं ग्रन्थो 'यचि भं' 'वृषण्वस्वश्वयोः' इत्यत्र 'वृषवर्षुकं वसु धनं यस्य वृषण्वसु, वृषा अश्वो यस्य वृषणश्व इत्युदाहृत्य भत्वादिह नलोपो न भवति अल्लोपस्तु अनङ्गत्वान्न' इति मूले वैदिकप्रक्रियायां वक्ष्यमाणग्रन्थेन सह विरुध्येत। नच 'अल्लोपोऽनः' इत्यत्राङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽनिति व्याख्यानाद् अल्लोपस्य तत्र प्राप्त्यभावादनङ्गत्वादिति समाधानं व्यर्थमिति भ्रमितव्यम् । भसंज्ञयैव यजादिस्वादिपरो योऽनिति व्याख्यानवत् वस्वश्वयोः परतो योऽनिति व्याख्यानस्यापि लाभात् । तस्मात्पदात्पृथगित्येव वक्तव्ये अङ्गपदाभ्यामित्यङ्गग्रहणं रभसकृतमेवेति चेद् ॥ अत्राहुः । 'न लुमता—' इति सूत्रे लुमता लुप्ते तन्निमित्ताङ्गस्याङ्गसंज्ञकस्य कार्यं न स्यादिति व्याख्यायते। तदा 'अर्वणस्तु—' इत्याद्यङ्गकार्याप्रवृत्तावप्यङ्गसंज्ञाया निर्बाधत्वादङ्गग्रहणं तत्रत्यं सम्यगेव ॥ यदा त्वाङ्गमनाङ्गं वेत्यादिमनोरमाग्रन्थस्यानङ्गत्वादिति मूलग्रन्थस्य च स्वारस्यपर्यालोचनया लाघवादव्ययस्याङ्गत्वे फलाभावाच्च प्रत्यये परतः पूर्वस्य कार्यं निषिध्यते, तदा त्वविशेषेण अङ्गसंज्ञाया अपि निषेधादङ्गग्रहण तत्र रभसकृतमेव । न च 'न लुमता—' इत्यनेन अङ्गसंज्ञानिषेधे 'युवोरनाकौ' इति सूत्रस्थभाष्यकैयटाभ्यां विरोधः स्यादिति वाच्यम् । तयोस्तत्र प्रौढिवादेन प्रवृत्तत्वात् । तथा च 'न लुमता तस्मिन्' इति सिद्धान्तोऽय निषिध्यत इति मनोरमाग्रन्थश्च स्वरसतः सगच्छत इति ॥ ननु ऋधातोर्विचि गुणे च अरिति रूप तस्मान्मतुपि अर्वन्तावित्यादि सेत्स्यति । 'छन्दसीवनिपौ—' इति वनिपि वेदे अर्वेति सेत्स्यति, ऋधातोरेव 'स्नामदिपद्यर्ति—' इत्यादिना वनिपि तु लोकेऽप्यर्वेति सेत्स्यति । रूढिशब्दश्चायं 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरकोशात् । ततश्चार्थोऽपि न भिद्यते इति किमनेन सूत्रेणेति चेद् । अत्राहुः । नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञुपपदे च नान्तस्य प्रयोगो भवत्यन्यत्र तु नान्तस्य प्रयोगो न भवति इति व्यवस्थार्थमिद 'तृज्वत् क्रोष्टुः' इति त्रिसूत्रीवदिति ॥ यत्तु केश्चिदुक्तम् अर्वन्मघवन्शब्दयोरपि भाषायामसाधुत्वमेव । 'अर्वणस्तृ मघोनश्च न शिष्य छान्दस हि तत् । मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्' इति वार्तिकादिति । तदापाततः । वार्तिकस्य वनिबन्तमध्योदात्तपरत्वात्, छन्दस्येव वनिब्विधानात् । तथा च श्रीहर्षः—'वाहैरलुप्यत सहस्रहगर्वगर्वः' इति प्रायुङ्क्त ॥—**अर्वन्तौ । अर्वन्त** इति । व्यपदेशिवद्भावेनार्वान्तत्वात् त्रादेशः । न च व्यपदेशिवद्भावोऽप्रातिपदिकेनेति वाच्यम् । तस्य प्रत्ययविधिविषयत्वात् ॥—**पथिमथि**—॥ 'गमेरिनिः' इत्यत इनिरिति 'परमे कित्' इत्यतः किदित्यनुवर्तमाने 'मन्थः' इत्यनेन निष्पन्नो मथिन्शब्दः । 'पतस्थ च' चादिनिः । पथिन् । 'ऋभुक्षः स्वर्गवज्रयोः' । ततो मत्वर्थीयेनिना ऋभुक्षिन्निति बोध्यम् ॥ ननु 'अस्थिदधि—' इति सूत्रे उदात्ततया पठितेऽप्यनडीष्टसिद्धौ 'अनङुदात्तः' इत्युदात्तग्रहणं 'गुणा अभेदका' इति पक्ष ज्ञापयतीति निर्विवादम् । तथा च तस्मिन् पक्षे सूत्रेऽननुनासिकोच्चारणेऽप्यान्तरतम्यादनुनासिकाकारः स्यादत आह—**आआदिति** ॥—**इतोत्सर्वनाम**—॥ आदिति वर्तमाने पुनरद्ग्रचन किमर्थं कृतेऽप्यद्ग्रचने पन्था इत्यत्र सवर्णदीर्घेण भाव्यमन्यत्र तूपधाया दीर्घेणेति चेत् । मैवम् । ऋभुक्षणमित्यत्र 'वा षपूर्वस्य निगमे' इति दीर्घविकल्पे सति पक्षे ह्रस्वश्रवणार्थमद्ग्रचनस्यावश्यकत्वात् ॥—**थो न्थः**—॥ स्थान्यादेशौ द्वावप्यनच्कौ 'थंन्थ.' इत्येव सिद्धे 'इतोऽत्सर्वनामस्थाने' इत्येतदृभुक्षिन्नर्थम् । त्रयाणामनुवृत्तावपि ऋभुक्षस्थोन सभवतीत्याशयेनाह—**पथिमथोरि**ति ॥ प्रसङ्गादाह—**स्त्रियामि**ति ॥—**नान्तलक्षण** इति । 'न पूजनात्' इति निषेधात् 'ऋक्पूरब्धूः—' इत्यप्रत्ययो नेति भावः॥—**सुपथी**ति । 'इनः स्त्रियाम्' इति कप् न कृतः, समासान्तविधेरनित्यत्वात् । 'युवोरनाकौ' इति सूत्रे 'सुपथी' इति भाष्याच्च । 'न पूजनाद्' इति निषेधस्य तु नायं विषयः, 'षचः प्राचीनेष्वेव सः' इति वक्ष्यमाणत्वात् । पथिमथीत्यात्वं थो न्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाग्रहणान्न भवति ॥ अत्रेदं बोध्यम् । पन्थानमात्मन इच्छति पथीयति ।

---

१ पथिमथीति—ननु अनेन सूत्रेण अदेव विधेयः, इकारस्यापि अत्वे रूपसिद्धेः । नचातो गुणे इत्यस्यापत्तिः, 'पथिमथ्यृभुक्षा लोपः' 'भस्य टेः' 'इतोऽत्सर्वनामस्थाने' इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्येनैव पररूपबाधात्, इति चेन्न । अनुनासिकवारणाय प्रश्लेषे दीर्घोच्चारणेन लाघवाभावात् । पररूप तु न, समस्तत्वेन पदान्तत्वात्। अन्ये तु क्यजन्तात् क्विपि पन्था इत्यर्थमाद्विधान सफलयन्ति । २ थो न्थः इति—थो नुडिति नोक्त, इत्संज्ञाद्यन्तावित्यनुसंधानेन प्रक्रियालाघवाभावात् ।

नम्।[1]पन्थानौ। **भस्य टेर्लोपः** ।७।१।८८। भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा। पथिभ्यामित्यादि। एवं मन्थाः। ऋभुक्षाः। स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः। सुपथी। सुमथी नगरी। अनृभुक्षी सेना। आत्वं नपुंसके न भवति न लुमतेति प्रत्ययलक्षणनिषेधात्। सुपथि वनम्। *संबुद्धौ नपुंसकानां नलोपो वा वाच्यः। हे सुपथिन्। हे सुपथि। नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वाद्ध्रस्वस्य गुणो न। द्विवचने भत्वाट्टिलोपः। सुपथी। शौ सर्वनामस्थानत्वात् सुपन्थानि। पुनरपि। सुपथि। सुपथी। सुपन्थानि। सुपथा। सुपथे। सुपथिभ्यामित्यादि। **ष्णान्ता षट्** ।१।१।२४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। षड्भ्यो लुक्। पञ्च २। संख्या किम्। विप्रुषः। पामानः। शतानि सहस्राणीत्यत्र संनिपातपरिभाषया न लुक्। सर्वनामस्थानसंनिपातेन कृतस्य नुमस्तद्विघातकत्वात्। पञ्चभिः। पञ्चभ्यः २। षट्चतुर्भ्यश्चेति नुट्। **नोपधायाः** ।६।४।७। नान्तस्योपधाया दीर्घः स्यान्नामि परे। नलोपः[2]। पञ्चानाम्। पञ्चसु। परमपञ्च। परमपञ्चानाम्। गौणत्वे तु न लुग्नुटौ। प्रियपञ्चा। प्रियपञ्चानौ। प्रियपञ्चानः। प्रियपञ्चानम्। एवं सप्तन् नवन् दशन्। **अष्टन आ विभक्तौ** ।७।२।८४। अष्टन आत्वं स्याद्धलादौ विभक्तौ। **अष्टाभ्य औश्**[3] ।७।१।२१। कृताकारादष्टनः परयोर्जस्शसोरौश् स्यात्। अष्टभ्य इति व-

---

ततः क्विप्। अल्लोपयलोपौ। एकदेशविकृतस्यानन्यत्वात् 'पथिमथि–' इत्यात्वम्, 'थो न्थः'। पन्थाः। 'इतोऽत्सर्वनामस्थाने' इत्यत्वं न भवति। इत इति तपरकरणात्। 'एरनेकाचः–' इति यण बाधित्वा परत्वान्नित्यत्वाच्च 'थो न्थः'। संयोगपूर्वकत्वान्न यण्। पन्थियौ। पन्थियः। पन्थियम्। पन्थियौ। '**भस्य टेर्लोपः**' ॥ पथः। पथा। पथिभ्याम्। पथिभिरित्यादि। एवं मन्थीयतेः क्विपि तु मन्थाः। मन्थियौ। मन्थियः। ऋभुक्षाः। ऋभुक्षियौ। ऋभुक्षियः इत्यादि ॥ एतेन 'इतोऽत्सर्वनामस्थाने' इत्यत्र स्थानिन्यादेशे च तपरकरण मुखसुखार्थमिति हरदत्तः प्रत्युक्तः। आदेशे तपरकरणस्यानावश्यकत्वेऽपि स्थानिनि तु पन्थियौ इत्यादिसिद्धये तस्यावश्यकत्वात्॥ ननु नलोपस्यासिद्धत्वात् 'पथिमथ्यृभुक्षाम्–' इति नस्यात्वे पन्थ्याः, ऋभुक्ष्याः, इत्येव भवितव्यम्, न तु पन्था इत्यादि इति चेद्। अत्राहुः। नलोपस्यान्तर्वर्ती सुब्निमित्तम्, आत्वस्य तु बहिर्वर्ती सुप्। प्रत्यासत्त्या हि यत्र एक एव सुप् निमित्तभूतः तत्रैव 'नलोपः सुप्स्वर–' इति नलोपस्यासिद्धत्वं नान्यत्रेति नात्र नकारस्यात्व किं त्वीकारस्येति ॥—**ष्णान्ता षट्** ॥—स्त्रीलिङ्गनिर्देशः संख्यां विशेषयितुम्, तत्सामर्थ्याच्च पूर्वत्र संज्ञापरमपि संख्याग्रहणमिह संज्ञिपर संपद्यत इत्याशयेनाह—**संख्येति**। प्राचा तूपदेशकाले षान्ता नान्ता चेत्युक्तम्, तन् 'पञ्चेन्यत्र नलोपे कृतेऽपि–' इत्यादिवक्ष्यमाणस्वग्रन्थविरुद्धम्। संप्रत्यनान्तत्वेऽप्युपदेशे नान्तत्वमासीदिति किमसिद्धत्वेनेति दिक् ॥—**संनिपातेति**। तथा चोपदेशकाले इति व्याख्यान निष्फलमपीति भावः॥ यत्त्वाहुः परिभाषाया अनित्यत्वाल्लुक् स्यादिति, तत्साहसमात्रम्। इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया अकिंचित्करत्वापत्तेः ॥ यदप्याहुः; उपदेशग्रहणमिह कुत समागतमित्याशङ्क्य 'ष्णान्ता–' इत्यन्तग्रहणसामर्थ्यादौपदेशिकत्व लभ्यत इति। तदपि न। संख्येत्यस्याकर्षणेन संज्ञिपरत्वसंपादनेन च सामर्थ्योपक्षयात् ॥—**नोपधायाः** ॥—नेति लुप्तषष्ठीकमङ्गस्य विशेषणम्। नलोपस्यासिद्धत्वात् 'नामि' इति दीर्घो न प्रवर्तत इत्ययमारम्भ. ॥—**गौणत्वे त्विति**। बहुवचननिर्देशस्यार्थप्राधानार्थत्वादिति भावः ॥—**प्रियपञ्चामिति**। अद्वयमध्ये चकारः ॥—**अष्टन आ विभक्तौ** ॥ सौत्रत्वादिहाल्लोपो न कृतः। 'कनिन्युवृषितक्षि–' इत्यतः कनिनित्यनुवर्तमाने 'सप्यशूभ्या तुट् च' इत्यनेन सप्तन् अष्टन्शब्दौ निष्पन्नौ ॥ 'रायो हलि' इत्युत्तरसूत्राद्धलीत्यपकृष्यते। तच्च विभक्तेर्विशेषणमित्यभिप्रेत्य व्याचष्टे—**हलादाविति** ॥ हलीत्यस्यानपकर्षणे त्वष्टानामिति न सिध्येत्। परत्वान्नित्यत्वाच्च नुटः प्रागात्वे कृते अनान्तत्वेत षट्संज्ञाभावान्नुटोऽप्रवृत्तेः। न च यथोद्देशपक्षे अन्तरङ्गत्वात्प्रागेव कृता षट्संज्ञैकदेशविकृतन्यायेन कृतात्वेऽपि सुलभेति वाच्यम्। अल्विधौ उक्तन्यायायोगात्। किं च प्रियाष्टानौ प्रियाष्टानः प्रियाष्ट्नः प्रियाष्टनेत्याद्यपि न सिध्येत्। उक्तरीत्या तत्राप्यात्वप्रवृत्तेरिति बोध्यम् ॥—**अष्टाभ्य औश्** ॥—शित्वात्सर्वादेशः। ननु 'अनेकाल् शित् सर्वस्य' इति सूत्रे शिद्ग्रहण प्रत्याख्यायानेकाल्त्वादेव सर्वादेश इति सुवचम्। न च शस्येत्संज्ञायामनेकाल्त्व नास्तीति वाच्यम्, अत्र भूतपूर्वगत्याश्रयणात्। न चैवम् 'अवर्णत्रसौ–' इति त्रादेशस्यापि सर्वादेशता स्यादिति वाच्यम्। ऋकारस्योगित्कार्यार्थत्वेन तत्र सामर्थ्योपक्षयात्। न चैवमौशित्यादौ शकारः श्रवणार्थ एव स्यादिति शङ्क्यम्। अनुशतिकादिषु 'ऐहलौकिकम्' इति निर्देशेन शकारस्येत्संज्ञाभ्युपगमादिति दिक्॥ —**कृताकारादिति**॥ननु हलीत्यपकृष्यत इत्युक्तं तत् कथ कृताकारतेत्याह—**अष्टभ्य इतीति**।अष्टाभ्य इति कृतात्वस्येदमनुकरणम्, न तु लक्षणवशसंपन्नमात्व, तथा हि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थम् 'अष्टभ्य औश्' इत्येव

---

१ शतानीति—ष्णान्तेत्यत्र षकारसाहचर्यान्नकारस्यापि आगमाजन्यस्यैव ग्रहणमिति न दोष इति केचित्। २ नलोप इति—सुवैः पधानार्मित लिङ्गान्न संनिपातपरिभाषाविरोधः। ३ औशिति—नन्यत्र उडेव विधेयः, स च डित्वेत्यन्त्यसकारस्य स्यात्। तथा च अष्टा अउ इति स्थिते आद्गुणे वृद्धौ रूपसिद्धिरिति वाच्यम्, न, इणूङिशीनामाद्गुणः सवर्णदीर्घत्वादिति न्यायेनान्तरङ्गत्वाद्गुणात्पूर्वं सवर्णदीर्घे सति आद्गुणे च रूपासिद्धेः।

कल्ये कृतात्वनिर्देशो जस्शसोर्विषये आत्वं ज्ञापयति । वैकल्पिकं चेदमष्टन आत्वम् । अष्टनो दीर्घादिति सूत्रे दीर्घग्रहणाज्ज्ञापकात् । अष्टौ २ । परमाष्टौ २ । अष्टाभिः । अष्टाभ्यः २ । अष्टानाम् । अष्टासु । आत्वाभावे । अष्ट । अष्ट । इत्यादि पञ्चवत् । गौणत्वे त्वात्वाभावे राजवत् । शसि प्रियाष्टनः । इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम् । कार्यकालपक्षे बहिरङ्गस्याऽल्लोपस्यासिद्धत्वाद्वा । प्रियाष्टना । इत्यादि । जश्शसोरनुमीयमानमात्वं प्राधान्यएव न तु गौणतायाम् । तेन प्रियाष्टनो हलादावेव वैकल्पिकमात्वम् । प्रियाष्टाभ्याम् ३ । प्रियाष्टाभिः । प्रियाष्टाभ्यः २ । प्रियाष्टासु । प्रियाष्टनो राजवत्सर्वं हाहावच्चापरं[1] हलि ॥ भष्भावः । जश्त्वचर्त्वे । भुत् । भुद् । बुधौ २ । बुधः । बुधा । भुद्भ्याम् ३ । भुत्सु । **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** ।३।२।५९। एभ्यः क्विन् स्यात् । अलाक्षणिकमपि किंचित्कार्यं निपातनाल्लभ्यते । निरुपपदाद्युजेः क्विन् । कनावितौ । **कृदतिङ्** ।३।१।९३। संनिहिते[2] धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् । **वेरपृक्तस्य** ।६।१।६७। अपृक्तस्य वस्य लोपः स्यात् । कृत्तद्धितेति प्रातिपदिकत्वात्स्वादयः । **युजेरसमासे** ।७।१।७१। युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । संयोगान्तस्य लोपः । **क्विन्प्रत्ययस्य कुः** ।८।२।६२। क्विन्प्रत्ययो[3] यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते । नस्य कुत्वेनानुनासिको ङकारः । युङ् । नश्चापदान्तस्येति नुमोऽनुस्वारः परसवर्णः । तस्याऽसिद्धत्वाच्चोः कुरिति कुत्वं न । युञ्जौ । युञ्जः । युञ्जम् । युञ्जौ । युजः । युजा । युग्भ्यामित्यादि । असमासे किम् । **चोः कुः** ।८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । इति कुत्वम् । क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वात् । सुयुक् । सुयुग् । सुयुजौ । सुयुजः ।

ब्रूयादिति भावः ॥—**इदमिति** ।—श्रुतमनुमितं चेत्यर्थः ॥—**अष्टनो दीर्घादिति** । दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात् । अष्टाभिः । दीर्घात्किम् । अष्टभिः । मध्योदात्तमिदम् । 'षट्त्रिचतुर्भ्यो हलादिः' इति बाधित्वा 'झल्युपोत्तमम्' इत्यस्य प्रवृत्तेः । षट्त्रिचतुर्भ्यो या झलादिविभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यादिति तदर्थः ॥ ननु प्रियाष्टेत्यादौ विभक्तेरुदात्तत्वनिवारणाय दीर्घग्रहणमिहावश्यकमिति कथमस्यात्वविकल्पज्ञापकतेति चेद् । अत्राहुः । 'अष्टनो दीर्घात्' इत्यत्रान्तोदात्तादित्यनुवर्त्यान्तोदात्तादष्टनः परेत्यादिव्याख्यानादष्टाभिरित्यादौ विभक्तेरुदात्तत्वं सिध्यति । घृतादित्वेनाष्टनोऽन्तोदात्तत्वात् । प्रियाष्टन इत्यादिबहुव्रीहौ तु पूर्वपदप्रकृतिस्वराभ्युपगमेनाष्टनोऽन्तोदात्तत्वाभावाद्विभक्त्युदात्तत्वं न प्रवर्तते इति दीर्घग्रहणं व्यर्थं सत् उक्तार्थे ज्ञापकमेवेति ॥—**अष्टानामिति** । नुटः पश्चादेव सन्निपातपरिभाषाया अनित्यत्वादात्वं, न तु ततः प्रागिति तु मनोरमायां स्थितम् ॥ अत्र नव्याः । सन्निपातपरिभाषया आत्वाभावेऽप्यत्र न क्षतिः, 'नोपधायाः' इति दीर्घे नलोपे पञ्चानां सप्तानामितिवद्रूपसिद्धेः । नच 'अष्टनो दीर्घात्' इति विभक्त्युदात्तत्वामात्वविधेः प्रयोजनमिति वाच्यम् । 'षट्त्रिचतुर्भ्यो हलादिः' इत्यनेनैव तत्सिद्धेरिति ॥—**पूर्वस्मादपीति** । न चात्र 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधः शङ्क्यः । 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तत्वादिति दिक् ॥—**प्राधान्य एवेति** । औङ्श्च हि लुमुटाविव प्राधान्य एव भवति, न तु गौणत्वे । अष्टाभ्य इति बहुवचननिर्देशात् । अन्यथा हि कृतात्वानुकरणेऽपि एकवचनेनैव निर्दिशेत् । 'अष्टाऔश्' इति 'अष्ट' इति वा । एतच्च 'ष्णान्ता षट्' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । तथा चौङ्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वं प्राधान्य एवोचितमिति भावः ॥ प्रियाष्टा इति प्रथमैकवचनम् ॥ उक्तार्थं संगृह्णाति—**प्रियाष्टनो राजवदिति** ॥ नान्ताः ॥—**भुदिति** । बुध्यतेः क्विप् ॥ धान्ताः ॥—**ऋत्विग्दधृक्**—॥—**किंचिदिति** ॥ ऋतावुपपदे यजेः क्विन् । धृष्णोतेर्द्वित्वमन्तोदात्तत्वं च । सृजेः कर्मणि क्विन् अमागमश्च । दिशेः कर्मणि क्विन् । उत्पूर्वात् स्निहेः क्विन् । उपसर्गान्तलोपः षत्वं च । अञ्चेः सुप्युपपदे क्विन् इत्यर्थः ॥—**निरुपपदाद्युजेरिति** । क्रुञ्चेरप्येवम् । नलोपाभावस्त्वधिकः ॥—**कनावितौ** इति । इकारस्तूच्चारणार्थ इति भावः ॥—**संनिहित** इति । प्राचा तु तृतीये धात्वधिकारे इत्युक्तम् । तदसत् । 'धातोः कर्मणः' इति सन्निधौ धातुग्रहणस्योत्तरत्रानुवृत्तेरभावेनाधिकारत्रयाभावात् ॥—**युजेरसमासे** ॥ 'उगिदचाम्—' इत्यतः सर्वनामस्थान इत्यनुवर्तते । 'इदितो नुम् धातोः' इत्यतो नुम् चेत्याशयेनाह—**सर्वनामस्थाने नुम् स्यादिति** ॥—**क्विन्प्रत्ययस्य**—॥ 'क्विनः कुः' इत्युक्तेऽपि प्रत्ययग्रहणे तदन्तग्रहणात् क्विन्नन्तस्य सिद्धे प्रत्ययग्रहणं बहुव्रीहिविज्ञानार्थमित्याशयेन व्याचष्टे—**क्विन् प्रत्ययो यस्मादिति** । बहुव्रीह्याश्रयणफलं तु स्पृगित्यादि स्फुटीभविष्यति ॥—**सुयुगिति** । सुष्ठु युनक्तीति विग्रहे 'सत्सूद्विष—'

१ हाहावच्चापरं हलीति—एतच्च सर्वं हरदत्तवृत्त्याद्यनुरोधेन । भाष्यमते तु एतेषामनभिधानादसाधुत्वेन सर्वोऽपि विचारो निष्फलः । तथा च भाष्यं 'विभाषा आत्वं यदयमात्वभूतस्य ग्रहणं करोति अष्टाभ्य इति । अन्यथा अष्टन इत्येव ब्रूयात्—' इत्यादि । कैयटरीत्या गौणेऽप्रवृत्त्यर्थत्वाद्बहुवचनस्य तदसंगतिः स्पष्टैवेति बोध्यम् । स्पष्टं चेदं बृहच्छेखरे ।
२ संनिहिते इति—तत्फलं तु णिजादीनां संज्ञाभावः । ३ प्रत्ययस्येति—प्रत्ययग्रहणसामर्थ्यादतद्गुणसंविज्ञानो बहुव्रीहिरयम् । नच तदभावे वस्य कुत्वापत्तिरिति वाच्यम्, कुत्वस्य पूर्वत्रासिद्धत्वेन वलोपे कृते तदप्राप्तेः । किंच क्विनः कुत्वे क्विनो घ इत्येव वदेत् इति स्पष्टं भाष्ये कैयटे च ।

युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं न त्विका निर्देशः। तेनेह न। युज्यते समाधत्ते इति युक्। युज समाधौ दैवादिक आत्मनेपदी। संयोगान्तलोपः। खन्। खञ्जौ। खञ्जः। इत्यादि॥ व्रश्चेति षत्वम्। जश्त्वचर्त्वे। राट्। राड्। राजौ। राजः। राड्सु। राट्त्सु। एवं विभ्राट्। देवेट्। देवेजौ। देवेजः। विश्वसृट्। विश्वसृड्। विश्वसृजौ। विश्वसृजः। इह सृजियजोः कुत्वं नेति क्लीबे वक्ष्यते। परिमृट्। षत्वविधौ राजिसाहचर्यात् टुभ्राज् दीप्ताविति फणादिरेव गृह्यते। यस्तु एजृभ्रेजृभ्राजृदीप्ताविति तस्य कुत्वमेव। विभ्राक्। विभ्राग्। विभ्राग्भ्यामित्यादि। * परौ व्रजेः षः पदान्ते। परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्तविषये षत्वं च। परित्यज्य सर्वं व्रजतीति परिव्राट्। परिव्राजौ। परिव्राजः। ॥ विश्वस्य वसुराटोः।६।३।१२८। विश्वशब्दस्य दीर्घः स्याद्वसौ राट्शब्दे च परे। विश्वं वसु यस्य स विश्वावसुः। राडिति पदान्तोपलक्षणार्थम्। चर्त्वमविवक्षितम्। विश्वाराट्। विश्वाराड्। विश्वराजौ। विश्वराजः। विश्वाराड्भ्यामित्यादि। ॥ स्कोः संयोगाद्योरन्ते च।८।२।२९। पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात्। भृट्। भृड्। सस्य श्चुत्वेन शः। तस्य जश्त्वेन जः। भृज्जौ। भृज्जः।ऋत्विगित्यादिना ऋतावुपपदे यजेः क्विन्। क्विन्नन्तत्वात्कुत्वम्। ऋत्विक्। ऋत्विग्। ऋत्विजौ। ऋत्विजः।रात्सस्येति नियमान्न संयोगान्तलोपः। ऊर्क्। ऊर्ग्। ऊर्जौ। ऊर्जः। त्यदाद्यत्वं पररूपत्वं च। ॥ तदोः सः सावनन्त्ययोः ।७।२।१०६। त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे। स्यः। त्यौ। त्ये। त्यम्। त्यौ। त्यान्। सः। तौ।

---

इति क्विप्॥—तेनेह नेति। युज्नेत्यर्थः। क्विन्प्रत्ययखलु स्यादेव 'ऋत्विग्–' इत्यादिसूत्रे युजीति इका निर्देशात्॥—खञ्जिति। खञ्जतीति खन्। खजि गतिवैकल्ये॥—एवं विभ्राडिति। फणादिरयं। विशेषेण भ्राजते इति विभ्राट्॥ देवान् यजतीति देवेट्। क्विपि यजादित्वात्संप्रसारणे आद्गुणः। विश्वं सृजतीति विश्वसृट्। क्विबन्तः। क्विन्प्रत्ययो यस्माद् इति बहुव्रीह्याश्रयणात् कुत्वं कस्मान्न भवतीत्याशङ्क्याह—नेति क्लीबे वक्ष्यते इति। 'रज्जुसृड्भ्यामिति भाष्यकारप्रयोगात्। यद्वा, व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः' इति वक्ष्यत इत्यर्थः॥ परिमार्ष्टीति परिमृट्॥—परौ व्रजेः। 'क्विब्वचिप्रच्छिश्रीस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च' इत्यौणादिकात्पूर्वसूत्रादिह क्विब्दीर्घावनुवर्तेते, तदाह—क्विप् स्याद्दीर्घश्चेति॥—विश्वस्य वसु—॥ 'ढ्रलोपे–' इत्यतोऽनुवर्तनादाह—विश्वशब्दस्य दीर्घः स्यादिति॥ —स्कोः—॥ पदस्येत्यनुवर्तते 'झलो झलि' इत्यतो झलीति च, संयोगेति लुप्तषष्ठीकं झलन्ताभ्यां विशेष्यते, तदेतदाह—पदान्ते झलि च परे इति॥ झलि किम्। भ्रष्टा॥ भृज्जतीति भृट्। क्विप्। 'ग्रहिज्या–' इति संप्रसारणम्। 'व्रश्च' इति षत्वम्॥—ऊर्गिति। 'ऊर्ज बलप्राणनयोः'। अस्माच्चुरादिण्यन्ताद् 'भ्राजभास–' इत्यादिना क्विपि णिलोपः, स च चोः कुत्वे न स्थानिवत्, पदान्तविधित्वात् पूर्वत्रासिद्धत्वाच्च। इह जान्तेषु अवयाः। अवयाजौ। अवयाज इति नोदाहृत 'मन्त्रे श्वेतवहोक्थ–' इति प्रकृत्य 'अवे यजः' इति विहितस्य ण्विनस्तदपवादस्य पदान्ते डसश्छान्दसत्वेन वैदिकप्रक्रियायामेव वक्तुमुचितत्वात्॥—तदोः सः सावनन्त्ययोः॥—'त्यदादीनामः' इत्यतोऽनुवर्तनादाह—त्यदादीनामिति॥ त्यदादीनामिति किम्। आतपः, तारकः॥ तदोदिति किम्। यः॥ अनन्त्ययोः किम्। हे स। अत्र परत्वात्त्यदाद्यत्वं बाधित्वा दस्य सकारे सस् इति हल्ङ्यादिना सुलोपे रुत्वविसर्गौ स्याताम्, तथा च हे सः इति रूपं स्यात्। किंच स्त्रिया सेति रूपं न स्यात्॥ यदा त्वन्त्यस्य सकारे जातेऽपि पुनःप्रसङ्गविज्ञानात्त्यदाद्यत्वं सकारस्य स्वीक्रियते, तदा न किंचिदनिष्टमित्यनन्त्ययोरिति त्यक्तुं शक्यम्॥ यदि तु 'तदोः सः सौ' इत्यस्यानन्तरम् 'अदस औ सुलोपश्च' इत्यत्र 'अदसः' इति योगं विभज्यादस एव दकारस्य सत्वं नान्यस्य दस्येति नियमः क्रियते, तदा 'सकृद्गतौ–' इति न्यायेनाप्यनन्त्ययोरिति त्यक्तुं शक्यम्। न चैवं द्रावात्मन इच्छति द्रीयति ततः क्विपि स्र इति रूपं न स्यात् किं तु द्र इति रूपं स्यादिति फलभेदान्नियमपक्षो न संभवतीति वाच्यम्। गौणे अत्वसत्वयोरसंभवेन द्रिरित्यस्यैव रूपस्य न्याय्यत्वादिति मनोरमायामुक्तत्वात्॥ सौ किम्। तौ ते तौ तान्॥ ननु 'तोः सः सौ' इत्येव सूत्रमस्तु, किमनेन तदोरिति पृथग्ग्रहणेनेति, मैवम्। अनेष इत्यत्र नकारस्य सत्वप्रसङ्गात् 'नलोपो नञः' 'तस्मान्नुडचि' इत्यजाद्युत्तरपदस्य एष इत्यस्य नुड्विधानेन त्यदादिस्वैवर्गत्वान्नकारस्य। न च सत्वे सति नुड्विधानं व्यर्थमिति वाच्यम्। अनश्व इत्यादौ सावकाशत्वात्। तथा च 'तदोः' इत्येव सूत्रं युक्तम्। ननु 'तस्मान्नुडचि' इति सूत्रे 'तस्मात्' इति पदं परित्यज्य लाघवात् 'नुगचि' इत्येवोच्यतां तथा च अजाद्युत्तरपदे परे नञ एव नुगागम इत्यनेष इत्यत्र नोक्तदोष इति चेद्॥ एवं तर्हि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः स्यात्। विधानसामर्थ्यान्न

---

१ धातुपाठेति—प्रथमोपस्थितत्वाद्व्याख्यानाच्चेति भावः। २ युगिति—क्विप्चेति क्विप् प्रत्ययः। क्विन्प्रत्ययविधायकेऽपि युजेरसमासेऽत्यन्तेव युजिर् योगे इत्यस्यैव ग्रहणात्। ३ वसुराटोरिति—रट्धातोर्णिनि क्विपि निष्पन्नराड्शब्दस्य तु नेह ग्रहणम्, सुप्रसिद्धत्वेन वसुशब्दसाहचर्येण चैश्वर्यसंबन्ध्यर्थप्रतिपादकस्य राजतिनिष्पन्नस्यैव ग्रहणात्॥ आदित्यविश्वसव इत्यत्र तु विश्वशब्दस्य पूर्वपदत्वाभावान्न दीर्घः। ४ ऋत्विगिति—ऋतौ ऋतुं वा यजतीति विग्रहः, 'वसन्ताय कपिञ्जलानालभेत' इत्यादौ तेषामपि देवतात्वदर्शनात्।

ते। परमसः। परमतौ। परमते। द्विपर्यन्तानामित्येव। नेह। त्वम्। नच तकारोच्चारणसामर्थ्यान्नेति वाच्यम्। अतित्वमिति गौणे चरितार्थत्वात्। संज्ञायां गौणत्वे चात्वसत्वे न। त्यद्। त्यदौ। त्यदः। अतित्यद्। अतित्यदौ। अतित्यदः। यः। यौ। ये। एषः। एतौ। एते। अन्वादेशे तु एनम्। एनौ। एनान्। एनेन। एनयोः २। **ङे प्रथमयोरम्** ।७।१।२८। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात्। **मपर्यन्तस्य** ।७।२।९१। इत्यधिकृत्य। **त्वाहौ सौ** ।७।२।९४। युष्मदस्मदोर्मपर्यन्तस्य त्व अह इत्येतावादेशौ स्तः सौ परे। **शेषे लोपः** ।७।२।९०। आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात्। अतो गुणे। अमि पूर्वः। त्वम्। अहम्। ननु त्वं स्त्री अहं स्त्री इत्यत्र त्व अम् अह अम् इति स्थिते अमि पूर्वरूपं परमपि बाधित्वाऽन्तरङ्गत्वाट्टाप् प्राप्नोति। सत्यम्। अलिङ्गे युष्मदस्मदी। तेन स्त्रीत्वाभावान्न टाप्। यद्वा। शेष इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया। तेन मपर्यन्ताच्छेषस्य अद् इत्यस्य लोपः। स च परोऽप्यन्तरङ्गे अतोगुणे कृते प्रवर्तते। तेनादन्तत्वाभावान्न टाप्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्। **युवावौ द्विवचने** ।७।२।९२। द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ। **प्रथमायाश्च द्विवचने भाषायाम्** ।७।२।८८। इह युष्मदस्मदोराकारोऽन्तादेशः स्यात्। औङीत्येव सुवचम्। भाषायां किम्। युवं वस्त्राणि। युवाम्। आवाम्।

---

भवतीति चेदेवमपि 'ङमो ह्रस्वादचि–' इति ङमुड् दुर्वार एव। ततश्च 'तस्मान्नुडचि' इति सूत्रे पञ्चम्यन्तमावश्यकमेव टिदनुबन्धश्चेति 'तदोः' इति सूत्रे तोरिति वक्तुमशक्यमनेष इत्यत्रोक्तदोषात्॥ अत्र कैयटः। तोरित्युक्तेऽप्यनेष इत्यत्र सत्वं न भवेत्, नुडागमस्य पदद्वयाश्रितत्वेन बहिरङ्गत्वादन्तरङ्गसत्वदृष्ट्यासिद्धत्वादिति। उत्तरपदाधिकारस्थकार्ये बहिरङ्गपरिभाषाभावस्य 'इच एकाचोम्–' इत्यत्र भाष्ये उक्तत्वादयं कैयटश्चिन्त्यः॥—**गौणे चरितार्थत्वा**दिति। गौणे हि अन्तर्गणकार्यत्वात्सत्वं न प्रवर्तते। 'त्वाहौ सौ' इत्युक्ते तु अतित्वमिति स्यादिति भावः॥—**अत्वसत्वे ने**ति। तयोः सर्वाद्यन्तर्गणकार्यत्वादिति भावः॥—**अतित्य**दिति। त्यमतिक्रान्तोऽतित्यद्॥—**ङे प्रथमयोरम्**॥ 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते। ङे इति पृथक् पदं लुप्तषष्ठीकम्। प्रथमयोरिति द्विवचनबलेन प्रथमाशब्दः प्रथमाद्वितीयोभयार्थक इत्याशयेन व्याचष्टे—**युष्मदस्मद्भ्यां परस्य ङे इत्यस्ये**त्यादिना। 'ङेप्रथमयोः' इति सुवचम्॥—**त्वाहौ सौ**॥ यद्यपि युष्मदः 'त्वमावेकवचने' इत्येव त्वादेशः, तथापि अस्मदो अहादेशार्थमिदम्। किंच 'त्वमौ' इति सूत्रेण युवां युष्मान् वाऽतिक्रान्तोऽतित्वमिति न सिध्यति, एकार्थवाचित्वाभावाद्युष्मद इति भावः॥—**युष्मदस्मदो**रिति। एतच्च 'युष्मदस्मदोरनादेशे' इत्यतो लभ्यते॥—**शेषे**–॥ उक्तादन्यः शेषः, आत्वयत्वे च प्रागुक्तम्, तद्विषयादन्यविभक्तिरिति शेषशब्दार्थस्तदेतद्व्याचष्टे—**आत्वयत्वनिमित्तेतरे**ति॥—**अन्त्यस्ये**ति। अलोन्त्यपरिभाषयेति भावः॥—**अतो गुण** इति। नन्वास्तु त्वाहौ सावित्यत्र त्वाहादेशयोरन्त्याकार उच्चारणार्थं एवास्तु किमनेन पररूपकरणप्रयासेनेत्याहुः॥—**त्वम् अहमि**ति॥ ननु युष्मानतिक्रान्तः अतित्वमित्यादौ 'त्वाहौ सौ' इत्यस्यावकाशोऽस्ति, त्वामतिक्रान्तेनातित्वयेत्यादौ 'त्वमावेकवचने' इत्यस्यावकाशः, त्वमहमित्यत्र तूभयोः प्रसङ्गे 'त्वमावेकवचने' इत्यनेन परत्वाद्भाव्यम्। नैष दोषः। 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः' इति वक्ष्यमाणत्वात्॥—**अधिकरणत्वविवक्षये**ति। यदि तु 'शेषे' इति विभक्तिविशेषणं स्यात्तर्हि व्यर्थमेतद्, आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसंभवात्। न चैवमन्त्यलोप इति पक्षस्य निरालम्बनतापत्त्या युष्मदस्मदोरन्त्यलोपः स्यादिति ग्रन्थोऽयुक्त इति वाच्यम्। 'साम आकम्' इति ससुट्कनिर्देशेन तस्यापि पक्षस्य ज्ञापितत्वादिति भावः॥—**अतो गुणे कृते प्रवर्तत** इति। 'वार्णादाङ्गं बलीयः' इति तु समानाश्रय एव भवति, न तु व्याश्रये। इह तु शेषे लोपस्य विभक्तिनिमित्तम्, पररूपस्य त्वकार इति व्याश्रयत्वमिति भावः। समानाश्रयं उदाहरणं तु कारक इत्यादि बोध्यम्। तत्र हि यण्वृद्ध्योः प्राप्तयोर्वृद्धिरेव भवति॥ आङ्गत्वात्तदन्तविधिरित्याह—**परमत्वमित्या**दि॥—**युवावौ द्विवचने**॥ उक्तिर्वचनं द्वयोर्वचनं द्विवचनं, तदेतदाह—**द्वयोरुक्ता**विति। न चात्र कृत्रिमन्यायविरोधः शङ्क्यः। वचनग्रहणसामर्थ्यादेव तद्बाधात्। अन्यथा द्वित्वे इत्येव ब्रूयात्। 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यधिकाराद् द्वित्वे या विभक्तिस्तस्यां परत इति व्याख्यानसंभवात्॥—**युवं वस्त्राणी**ति। शेषे लोपः॥

---

१ मपर्यन्तस्येति—परिग्रहण युष्मदस्मदोर्मान्तस्येति वैयधिकरण्यार्थम्, अन्यथा सामानाधिकरण्यस्योचितत्वात् क्विबन्तमान्तयोर्ग्रहणं स्यात् नतु दान्तयोः, कृते तु तस्मिन् मान्तदान्तयोरुभयोर्ग्रहणम् इति केचित्। परे तु यथा कटिपर्यन्तं वस्त्रमित्युक्तेऽग्रेऽपि किंचिदस्तीति प्रतीयते तद्वदत्र परिग्रहणे दान्तयोरेव ग्रहणं स्यात् इति मन्यन्ते। २ अन्तरङ्गत्वादिति—लिङ्गसंख्याकारकसापेक्षविभक्तिनिमित्तकपूर्वरूपापेक्षया टापः स्त्रीत्वमात्रापेक्षत्वेनान्तरङ्गत्वादिति भावः। ३ अलिङ्गे इति—लिङ्गविशेषाभाववती इत्यर्थः। ४ अधिकरणत्वविवक्षयेति—अन्ये तु अस्य विभक्तिनिमित्तत्वादन्त्यलोपेऽपि सन्निपातपरिभाषया टाप् न। अत एव 'युष्मदस्मदो'–विति उत्र टाप् न' इति कृन्मेजन्तसूत्रे भाष्यकृतः। एवं च शेषस्य लोप इत्यर्थे फलाभावः, शेषग्रहणं तु भाष्ये प्रत्याख्यातमेव, त्यदादीनाम इति सूत्रस्थं भाष्यं प्रौढ्योक्त्यैव, आहुरित्यनेन बोधितारुचिक चेति वदन्ति।

मपर्यन्तस्य किम् । साकच्कस्य मा भूत् । युवकाम् । आवकाम् । त्वया मयेत्यत्र त्वया म्येति मा भूत् । युवकाभ्यामावकाभ्यामिति च न सिध्येत् । **यूयवयौ जसि** ।७।२।९३। स्पष्टम् । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । इह शेषे लोपोऽन्त्यलोप इति पक्षे जसः शी प्राप्तः । अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति न भवति । ङे प्रथमयोरित्यत्र मकारान्तरं प्रश्लिष्य अम् मान्त एवावशिष्यते नतु विक्रियत इति व्याख्यानाद्वा । **त्वमावेकवचने** ।७।२।९७। एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तः । **द्वितीयायां च** ।७।२।८७। युष्मदस्मदोराकारः स्यात् । त्वाम् । माम् । युवाम् । आवाम् । **शसो न** ।७।१।२९। नेत्यविभक्तिकम् । युष्मदस्मद्भ्यां परस्य शसो नकारः स्यादमोऽपवादः । आदेः परस्य । संयोगान्तस्य लोपः । युष्मान् । अस्मान् । **योऽचि** ।७।२।८९। अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया । **युष्मदस्मदोरनादेशे** ।७।२।८६। अनयोराकारः स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः । **तुभ्यमह्यौ ङयि** ।७।२।९५। अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि । अमादेशः । शेषे लोपः । तुभ्यम् । मह्यम् । परमतुभ्यम् । परममह्यम् । अतितुभ्यम् । अतिमह्यम् । युवाभ्याम् । आवाभ्याम् । **भ्यसोऽभ्यम्** ।७।१।३०। भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात् । आद्यः शेषे लोपस्यान्त्यलोपत्व एव । तत्राङ्गवृत्तपरिभाषया एत्वं न । अभ्यम् तु पक्षद्वयेऽपि साधुः । युष्मभ्यम् । अस्मभ्यम् । **एकवचनस्य च** ।७।१।३२। आभ्यां पञ्चम्येकवचनस्य अत्स्यात् । त्वत् । मत् । ङसेश्चेति सुवचम् । युवाभ्याम् । आवाभ्याम् । **पञ्चम्या अत्** ।७।१।३१। आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् । **तवममौ ङसि** ।७।२।९६। अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि । **युष्मदस्मद्भ्यां ङसोऽश्** ।७।१।२७। स्पष्टम् । तव । मम । युवयोः । आवयोः । **साम आकम्** ।७।१।३३। आभ्यां परस्य साम

---

—**मपर्यन्तस्य किमि**ति । अधिकारसूत्रं किमर्थमिति प्रश्नः ॥—**युवकामावकामि**ति । ननु युवावयोः समुदायादेशत्वेऽपि युवकामित्यादि सिध्यति । 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् अन्यत्र तु सुबन्तस्य टेः प्राक्' इति युष्मदस्मद्विषये व्यवस्थायास्त्वयका मयकेत्यादिसिद्धये वक्ष्यमाणत्वात्, किमनेन 'मपर्यन्तस्य' इत्यधिकारेणेत्यपरितोषादाह —**त्वया मयेत्यत्रे**ति ॥ ननु त्वमादेशयोरपि समुदायादेशत्वे त्वयेत्यादि साधयितुं शक्यत एव 'योऽचि' इति सूत्रं परित्यज्य 'अच्ये' इति सूत्रे कृते अजादौ विभक्तौ परतोऽन्त्यस्य एकारादेशे सत्ययादेशप्रवृत्तेरिति पुनरपरितोषादाह— **युवकाभ्यामि**त्यादि ॥—**अङ्गकार्य** इति । एतेन 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषा अर्थत उपनिबद्धा । 'अङ्गे अङ्गाधिकारे वृत्तं वर्तनं यस्य तदङ्गवृत्तं शास्त्रं तस्मिन्प्रवृत्ते सति पुनरन्यस्याङ्गवृत्तशास्त्रस्य प्रवृत्तौ प्राप्तायामविधिः' इति तत्परिभाषाया अर्थः । एषा च परिभाषा 'ज्ञाजनोर्जा' इत्यनेन ज्ञापिता ॥ उपपत्तिस्तु मनोरमातोऽवगन्तव्या । न चैवं द्वाभ्यामित्यत्र त्यदाद्यत्वे कृते 'सुपि च' इति दीर्घो न स्यादिति वाच्यम् । 'द्वयोरेकस्य' इत्यादिनिर्देशेन उक्तपरिभाषाया अनित्यत्वज्ञापनादिति दिक् ॥—**मकारान्तर**मित्युपलक्षणं, 'जसः शी' इत्यत्र जसः स इति मकारं प्रश्लिष्य सान्तस्य जस इति व्याख्यानात्, 'अतोम्' इतिसूत्रादम्ग्रहणमनुवर्त्य अम् अमेवेति व्याख्यानाद्वेति बोध्यम् ॥—**एकस्योक्तावि**ति । 'त्वमावेकत्वे' इति वक्तव्ये वचनग्रहणादयमर्थो लभ्यत इति भावः ॥—**अविभक्तिकमि**ति । तथा च 'ङेप्रथमयोः' इति पूर्वसूत्रेण प्राप्तस्यामः प्रतिषेधोऽयमिति भाष्ये शङ्कितम् । न च तथैव किं न स्याद्, 'द्वितीयायां च' इत्यात्वे पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वे चेष्टसिद्धेरिति वाच्यम् । स्त्रीनपुंसकयोर्नत्वाऽप्राप्त्या युष्मान् ब्राह्मणीः युष्मान्कुलानीत्यसिद्धिप्रसङ्गात् । अलिङ्गत्वपक्षे तु युष्मान् ब्राह्मणानित्यादेरप्यसिद्धिप्रसङ्गाच्च ॥—**योऽचि** ॥ अचि किम् । युवाभ्याम् । यदि तु 'युष्मदस्मदोरनादेशे' इत्यत्र 'रायो हलि' इत्यतो हलीत्यनुवर्तते तदेहाचीति मास्तु, परिशेषादेव सिद्धेः ॥—**युष्मदस्मदोरनादेशे** ॥ अनादेशे किम् । युष्मभ्यम् । न चाभ्यम्पक्षे आदेशो हलादिर्नेत्यनादेशग्रहणं त्यक्तुं शक्यमिति वाच्यम् । योऽचीत्यत्रानुवृत्त्यर्थं तस्यावश्यकत्वात् ॥—**हलादौ पर** इति । 'योऽचि' इत्यज्ग्रहणात्परिशेषसिद्धमिदं, 'रायो हलि' इत्यतोऽनुवृत्त्या लब्धं वा ॥—**पक्षद्वयेऽपि साधुरि**ति ॥ नन्वन्त्यलोपपक्षे पररूपं बाधित्वा सवर्णदीर्घः स्यादकारोच्चारणसामर्थ्यादिति चेद् ॥ अत्राहुः । 'बहुवचने झल्येत्' इत्येत्वनिवृत्त्याऽकारोच्चारणस्य चरितार्थत्वादिति ॥ यद्यप्यङ्गवृत्तपरिभाषया एत्वं सुपरिहरं, तथापि तस्यानित्यत्वे इदमप्यकारोच्चारणं ज्ञापकमिति तत्त्वम् ॥—**युष्मदस्मद्भ्यां ङसोऽश्** । शित्वं सर्वादेशार्थम् । अन्यथा हि 'आदेः परस्य' इति स्यात् । न चकारस्य अकारविधाने वैयर्थ्यम् । आदेशव्यपदेशेन यत्वनिवृत्त्यर्थत्वात् । न चावयवस्यादेशे सत्यपि विभक्तेरनादेशतास्त्येवेति वाच्यम् । 'सर्वे सर्वपदादेशाः' इति सिद्धान्तात् । इदमेव शित्वं ज्ञापयति 'सर्वे सर्वपदादेशाः' इति । अर्थवत्येव स्थान्यादेशभावविश्रान्तिरित्यर्थः । सिच्ङादयस्तु वचनसामर्थ्यादनर्थकस्यापि भवन्तीति मनोरमायां स्थितम् ॥—**तवममे**ति । ननु अत्रान्त्यलोपपक्षे अशः स्यादेशः स्यात्, यत्व-

---

१ त्वमावितिं—अत्रापि विभक्ताविति सम्बध्यते । अत एव प्रत्ययोत्तरेति सूत्रं सार्थकम् । तत्फलं तु त्वं सुन्दरः पुत्रो यस्येति त्रिपदे बहुव्रीहौ नादेश इति ।

**आकं स्यात् । भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः[1] । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥ समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी । समासार्थोऽन्यसंख्यश्चेत्स्तो युवावौ त्वमावपि ॥ १ ॥ सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते । त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥ एते परत्वाद्बाधन्ते युवावौ विषये स्वके । त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः[2] ॥ ३ ॥ द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ॥ तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ च न ॥ ४ ॥ त्वां मां वा अतिक्रान्त इति विग्रहे । अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम्२ । अतिमाम्२ । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वभ्यम् । अतिमभ्यम् । ङसिभ्यसोः । अतित्वत् २ । अतिमत् २ । भ्यामि प्राग्वत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वयोः । अतिमयोः । अतित्वासु । अतिमासु ॥ युवाम् आवां वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअम्औट्सु । अतियुवाम् ३ । अत्यावाम् ३ । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् ३ । अत्यावाभ्याम् ३ । अतियुवाभिः । अत्यावाभिः । भ्यसि अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसोः । अतियुवत् २ । अत्या-**

निवृत्त्यर्थतया अश्वचनस्य चरितार्थत्वात् । न च स्यादेशस्यापवादोऽशिति वाच्यम् । अशादेशप्रवृत्तिकाले शेषे लोपाभावेन स्यादेशस्याप्रवृत्तेः । अत्राहुः । अङ्गवृत्तपरिभाषया स्यादेशो वारणीयः । यदि तु अङ्गस्य यत्कार्यं तद्विषयिण्येव सा परिभाषा, न त्वङ्गाधिकारपरेति दुराग्रहः, तर्ह्यशिल्यत्र 'अतो गुणे' इति पररूपेणाकारान्तरं प्रश्लिष्य अकाररूप एवाश् भवति, न तु विक्रियत इति व्याख्येयमिति ॥ नन्वाकमादेशात्पूर्वमनादेशत्वाद् 'योऽचि' इति यत्वेन भाव्यं, ततश्च शेषे लोपाभावादवर्णान्तादिति विधीयमानस्य सुडागमस्याप्रसक्त्या साम इति ससुट्कनिर्देशो व्यर्थ इत्यत आह—**भाविन** इति । कृते हि शेषेलोपे अकारान्तत्वात् प्राप्तः सुट् ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यान्निवर्तत इति भावः । 'शेषे लोपष्टिलोप' इति मक्षे तु सुट्ग्रहणं व्यर्थमेव ॥ आकमिति दीर्घोच्चारणं सवर्णदीर्घार्थम् । अन्यथा पररूपं स्यात् । न चाकारोच्चारणसामर्थ्यम् । एत्वनिवृत्त्याऽभ्यम इव चरितार्थत्वात् ॥ इह 'युवावौ द्विवचने' 'त्वमावेकवचने' इति सूत्रद्वयेऽपि द्विवचनैकवचनशब्दावर्थपरौ, न तु प्रत्ययपराविति व्याख्यातं तत्फलं दर्शयति—**समस्यमान** इत्यादिना ॥—**द्व्येकत्ववाचिनी** इति । पञ्चकं प्रातिपदिकार्थ इति पक्षाभिप्रायेणेदमुक्तम् । अस्मिंस्तु पक्षे संख्याया अपि प्रातिपदिकार्थत्वात् । त्रिकपक्षे तु द्व्येकार्थवाचिन इति पाठ्यम् । संख्याया विभक्त्यर्थत्वेऽपि संख्येयस्य प्रातिपदिकार्थत्वानपायात ॥—**अन्यसंख्यश्चेद्**िति । युष्मदस्मदर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थः ॥—**स्त** इति । अर्थपरत्वाश्रयणसामर्थ्यादेव भूतगतेरपि स्वीकाराद्युवावौ त्वमावपि स्तः । प्रत्ययपरत्वे तु न स्यातामित्यव्याप्तिः स्यादिति भावः । एवं चतुर्थश्लोकेऽपि न युवावौ त्वमौ न चेत्युक्त्या प्रत्ययपरत्वेऽतिव्याप्तिर्ध्वनिता । एवं चाव्याप्त्यतिव्याप्तिपरिहारायार्थपरत्वमाश्रितमिति फलितम् ॥ नन्वेवं सुजस्ङेङस्स्वपि युष्मदस्मदोर्द्व्यर्थत्वे युवावौ स्यातामेकार्थत्वे तु त्वमावित्याशङ्कायामाह—**सुजस्ङेङस्सु परत** इति ॥ के ते आदेशा इत्यत आह—**त्वाहौ यूयवयावि**त्यादि ॥ अस्त्वेवं त्वाहादिभिर्युवावयोर्बाधस्त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत आह—**त्वमावपी**ति । 'विप्रतिषेधे परम्—' इत्यत्र परशब्दस्येष्टवाचित्वादिति भावः ॥—**अतित्वामि**ति । त्वां मां वा अतिक्रान्ताविति विग्रहः ॥—**अतियूयमतिवयमि**ति । त्वां मां वा अतिक्रान्ता इति विग्रहः । एवमग्रेऽप्यूह्यम् ॥—**अतित्वाकमतिमाकमि**ति । अत्रान्त्यलोपपक्षे त्वङ्गवृत्तपरिभाषया नुडागमो निवार्यः । 'ह्रस्वनद्यापः' इत्यत्र ह्रस्वान्ताद्विहितस्यामो नुडिति व्याख्यानाद्वा ॥ नन्वेवं भिन्नविषयतया सुटो नुडपवादत्वाभावेनावर्णान्तसर्वनामभ्यो विहितस्यामो नुडेव परत्वात् स्यात्, न तु सुडागमस्तस्य येषां केषामित्यादौ सावकाशत्वादिति चेद् ॥ अत्राहुः । 'त्यदादेरामि सुट्' इति वक्तव्ये 'आमि सर्वनाम्नः' इति सर्वनामग्रहणसामर्थ्याद् 'हलि सर्वेषाम्' इत्यादिनिर्देशाच्चावर्णान्तसर्वनामभ्योऽप्यामः सुडेव भवति, न तु नुट् । 'शस्प्रभृतिषु' इति च विषयसप्तमी, तेन पदादिष्वप्यामि न नुडिति । एवं च साम इति ससुट्कनिर्देशेन युष्माकमस्माकमित्यत्र सुडागमाभावेऽपि नुडागमो दुर्वार इत्याशङ्काया अपि निरवकाश एवेति बोध्यम् ॥ यत्तु वदन्ति । 'साम आकम्' इत्यत्र यद्यपि सुट्ग्रहणं न स्थानिविशेषणं बाधात् तथापि उपलक्षणं तु भवति । तेन यस्यामः सुडग्रे भावी तस्यैवाम आकमा भवितव्यं, न चैतद्द्वाणत्वे मभवतीत्याकम्न प्रवर्तते, तथा च अतित्वयामतिमयामित्येव रूपं, न त्वतित्वाकमतिमाकमिति ॥ तदसत् । आकमापहृतस्यामः सुडन्वयाभावात् । आकमः सुड् भावीति चेत्तर्हि तमेवोपलक्षयेत् । आदेशद्वारकेण परम्परासंबन्धेन स्थानिनमुपलक्षयति चेदेवं तर्हि युष्माकमित्यादौ सुट् श्रूयेत ॥ साम इति निर्देशसामर्थ्यान्न श्रूयेतेति चेन्न। निर्देशस्य गौणव्यावृत्त्या चरितार्थत्वेन सामर्थ्याभावादित्यन्यत्र विस्तरः ॥ गुणभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युक्त्वा

१ ससुट्कनिर्देश इति—नन्वा आकमिति आकारप्रश्लेषेणैव आकारादिराकमित्यर्थे दोषाभावेन सकारनिर्देशाभाव उचित इति चेन्न, लक्षणैकचक्षुर्भिर्दुर्ज्ञेयत्वात् । केचित्तु इष्टापत्तिं मन्यन्ते । २ पूर्वेति—विप्रतिषेधे पूर्वः पूर्वविप्रतिषेध इति सुप्सुपेति समासः ।

वत् २ । ओसि अतियुवयोः २ । अत्यावयोः २ । अतियुवाकम् । अत्यावाकम् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु । युष्मानस्मान्वेति विग्रहे सुजसङेङस्सु प्राग्वत् । औअमॢऔट्सु । अतियुष्माम् ३ । अत्यस्माम् ३ । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् ३ । अत्यस्माभ्याम् ३ । अतियुष्माभिः । अत्यस्माभिः । भ्यसि । अतियुष्मभ्यम् । अत्यस्मभ्यम् । ङसिभ्यसोः । अतियुष्मत् २। अत्यस्मत् २। ओसि । अतियुष्मयोः २ । अत्यस्मयोः २ । अतियुष्माकम् । अत्यस्माकम् । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु । अत्यस्मासु । **पदस्य ।८।१।१६। पदात् ।८।१।१७। अनुदात्तं सर्वमपादादौ ।८।१।१८।** इत्यधिकृत्य । **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ।८।१।२०।** पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वांनावित्यादेशौ स्तस्तौ चानुदात्तौ । **बहुवचनस्य वस्नसौ ।८।१।२१।** उक्तविधयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः । वांनावोरपवादः । **तेमयावेकवचनस्य ।८।१।२२।** उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः । **त्वामौ द्वितीयायाः ।८।१।२३।** द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः । श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः । स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥ सुखं वां नौ ददात्वीशः पतिर्वा-

---

'संप्रति द्व्यर्थवाचित्वे उदाहरति—**युवामावां वा अतिक्रान्त** इत्यादिना ॥ बह्वर्थयोस्तु उदाहरति—**युष्मानस्मान्वेति** ॥—**पदस्य** ॥ 'अपदान्तस्य मूर्धन्य.' इति विरोधनिर्देशात् प्राक् पदस्येत्ययमधिकार. । तेन राजा राजभ्यामित्यादौ 'न लोपः प्रातिपदिकान्तस्य' इति नलोपः सिध्यति । न तु राजानौ राजान इत्यत्र । तथा गोमान् यवमानित्यादौ संयोगान्तलोपो, न तु गोमन्तौ यवमन्तावित्यादौ । तथा 'मो नो धातो.' इति नत्व प्रशान्भ्यामित्यादौ भवति, न तु प्रशामौ प्रशाम इत्यत्र । तथा हरिं वन्दे इत्यादौ 'मोऽनुस्वार.' पवर्तते, न तु गम्यत इत्यादौ । न च 'उभि च पदे' इत्यत पदे इत्यधिकारात्पदे परतो मस्यानुस्वारः स्यात्, न तु गम्यत इत्यत्रेति किमिह पदस्येत्यधिकारेणेति वाच्यम् । पुंस्विति रूपासिद्धिप्रसङ्गात् । तस्मात् 'मोऽनुस्वारः' इत्यत्र पदस्येत्यनुवर्तनीयमेव, पदे इत्यस्योत्तरसूत्रेऽप्युपयोगो नास्तीति 'उभि च पदे' इत्यत्रावोचाम । इह पदस्येति संबन्धसामान्ये षष्ठी. सा तूत्तरेषु यथायोग संबन्धविशेषे अवतिष्ठते । क्वचित् स्थाने षष्ठी, क्वचिद् अवयवषष्ठीति । तत्र 'सयोगान्तस्य लोप ' 'मो नो धातो·' 'मोऽनुस्वारः' इत्यादौ पदस्येति स्थानषष्ठी, अवयवषष्ठ्या तूक्तातिप्रसङ्गात् । 'मादुपधायाः' इत्यादौ त्ववयवषष्ठी । अन्यथा वृक्षवानित्यत्रैव मतुपो मस्य वत्व स्यान्न तु वृक्षवन्तौ वृक्षवन्त इत्यत्र । एतच्चानुपदमेवोपपादयिष्यते ॥ यद्यपि 'षष्ठीस्थानेयोगा' इति परिभाषया 'पदस्य' इत्यत्र स्थानषष्ठ्येव लभ्यते, न त्ववयवषष्ठी । तथापि नलोपसूत्रे अन्तस्येति ग्रहणाज्ज्ञापकादवयवषष्ठ्यपि लभ्यते । यदि पदस्येति स्थानषष्ठ्येव स्यात्तर्हि नान्तस्य पदस्य लोपो भवन्नलोऽन्त्यस्य स्यादिति अन्तग्रहणमनर्थकं स्यात् । अवयवषष्ठ्यङ्गीकारे तु अन्तस्येति ग्रहण सार्थकम् । तद्यथा नलोपसूत्रे प्रातिपदिकान्तस्येत्यसमासनिर्देश. । प्रातिपदिकसञ्ज्ञकस्य पदस्य अन्तावयवो यो नकारस्तस्य लोप इति सूत्रार्थ इति ॥ नन्वेवमन्तस्येतिग्रहणमवयवषष्ठीलज्ञापनार्थमिति स्वीकारात्पदस्येत्यत्र कथ नाम स्थानषष्ठीलाभः सवन्धविशेषस्य निर्धारितत्वेन स्थानषष्ठीपरिभाषाया अनुपस्थिते' । अत्राहु· । प्रयोगमूलत्वाद्व्याकरणस्मृतेर्लक्ष्यानुरोधेन स्थानषष्ठ्यपि स्वीक्रियते, ज्ञापकसिद्धा अवयवषष्ठी न सर्वत्र स्वीक्रियते, इति नलोपसूत्रे मनोरमायामन्तग्रहणं त्यक्तु शक्यमित्युक्तम् ॥ भाष्यादौ तु 'पदस्य' इत्यधिकृतस्यावयवषष्ठ्यन्तत्वमप्यभ्युपगम्यते, न तु स्थानषष्ठ्यन्तत्वमेवेति ज्ञापनार्थमन्तग्रहण, तेन वृक्षवन्तौ वृक्षवन्त इत्यत्र 'मादुपधाया –' इति वत्व सिध्यति पदावयवस्य मतुपः सत्त्वात् । अन्यथा पदस्येत्यस्य विशेष्यत्वे मतुपा तदन्तविधौ मत्वन्त यत्पद तदवयवस्य मतुपो मादुपधाया परस्य मस्य वत्व भवतीत्यर्थ· स्यात् । तथा च वृक्षवानित्यत्रैव स्यात्, न तु वृक्षवन्तौ वृक्षवन्त इत्यत्रेति स्थितम् ॥—**पदात्** ॥ 'कुत्सने च सुप्यगोत्रादौ' इत्यतः प्रागयमधिकारः । यदि तु 'कुत्सने च सुपि–' इत्यत्रापि पदादित्यनुवर्तते, तदा देवदत्तः पचति पूतीत्यत्रैव निघातः स्यान्न तु पचति पूतीत्यत्र ॥—**अनुदात्तं सर्वमपादादौ** ॥ इदं पदत्रयमा पादपरिसमाप्तेरधिक्रियते ॥—**षष्ठीचतुर्थी**ति । 'अल्पाच्तरम्' इति षष्ठीत्यस्य पूर्वनिपातः ॥—**षष्ठ्यादिविशिष्टयो**रिति ॥ ननु युष्मदस्मदोरित्युक्तत्वात्तयोरेव वांनावादय आदेशा. स्युः । न च 'पदस्य' इत्यधिकाराद्विभक्त्यन्तस्यैव पदत्वात्षष्ठ्यादिविशिष्टयोरेव स्युरिति वाच्यम् । उक्तरीत्या वन्नसादौ दोषाभावेऽपि भ्यामादौ परतो युष्मदस्मदोः पदत्वात्केवलयोर्वांनावादेशप्रसङ्गस्य दुर्वारत्वात् । तथा च 'सुख वां नौ ददात्वीशः' इति प्रयोगो न संगच्छेत । नापि 'द्वितीयास्थयोः' इति स्थग्रहणसामर्थ्याद्विभक्तिविशिष्टयोरेव आदेशा भवेयुरिति वाच्यम् । 'स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव' इति वक्ष्यमाणतया तत्सामर्थ्यस्योपक्षयात् ॥ मैवम् । 'अनुदात्त सर्वम्' इति सर्वग्रहणाधिकारात्सर्वस्यैव विभक्तिविशिष्टस्य आदेशा भवन्तीति आकरे स्पष्टत्वात् ॥ यदि तु 'सर्वस्य द्वे' इत्यतः सर्वस्येति पदमनुवर्तते, तदा सर्वग्रहणमिह त्यक्तु शक्यमित्याहुः ॥—उक्तानादेशान्वचनक्रमेणोदाहरति—**श्रीश इत्यादिना** ॥—**स्वामी ते मेऽपी**ति । 'स्वामीश्वराधिपति–' इति षष्ठीसप्तम्योर्विधानादिह षष्ठी ॥ द्विवचनान्तयोरुदाहरणमाह—**पातु वामि**त्यादि·

**मपि नौ हरिः । सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥ पदात्परयोः किम् । वाक्यादौ मा भूत् । त्वां पातु । मां पातु । अपादादौ किम् । वेदैरशेषैः संवेद्योऽस्मान्कृष्णः सर्वदाऽवतु । स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव । नेह । इति युष्मत्पुत्रो ब्रवीति । इत्यस्मत्पुत्रो ब्रवीति ॥ * समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । एकतिङ् वाक्यम् । तेनेह न । ओदनं पच तव भविष्यति । इह तु स्यादेव । शालीनां ते ओदनं दास्यामीति ॥ * एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः ॥ अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति धाता तव भक्तोऽस्तीति वा । तस्मै ते नम इत्येव । न चवाहाऽहैवयुक्ते ।८।१।२४। चादिपञ्चकयोगे नैते आदेशाः स्युः । हरिस्त्वां मां च रक्षतु । कथं त्वां मां वा न रक्षेदित्यादि । युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः । परंपरासंबन्धे तु आदेशः स्यादेव । हरो हरिश्च मे स्वामी । पश्यार्थैश्चानालोचने ।८।१। २५। अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः । चेतसा त्वां समीक्षते । परम्परासंबन्धेऽप्ययं निषेधः । भ-**

ना । बहुवचनान्तयोस्तु—**'सोऽव्यद्वो न'** इत्यादि ॥—**'सेव्योऽत्र वः स न'** इति ॥ 'अर्हे कृत्यतृचश्च' इति ण्यत्, 'कृत्यानां कर्तरि वा' इति षष्ठी ॥—**वेदैरशेषैरि**ति । 'युष्मान् रक्षतु गोविन्दः' इति प्राचः पाठस्तूपेक्षितः, युष्मानित्यस्य तु पदात्परत्वाभावादेवाप्राप्तेः । अस्मानित्यस्य तु पदात्परत्वेऽपि समानवाक्यस्थपदात्परत्वाभावात् ॥ ननु 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयानाम्' इति सूत्र्यतां, विशेषणेन तदन्तविधौ षष्ठ्याद्यन्तयोर्युष्मदस्मदोः पर्यवस्यति । न च स्थग्रहणाभावे युष्मदस्मदोः सबन्धिनीनां षष्ठीचतुर्थीद्वितीयानामित्यर्थः स्यादिति वाच्यम् । 'सर्वस्य' 'पदस्य' इत्यनुवर्तनादतो व्याचष्टे **—स्थग्रहणादि**ति । तिष्ठतिरिहाहानौ वर्तते । यथा 'समये तिष्ठ सुग्रीव' इति समय मा हासीरिति गम्यते । तेन षष्ठ्यादीनविजहतोरेव युष्मदस्मदोरादेशा इत्यर्थः ॥—**इति युष्मत्पुत्र** इति । युवयोः पुत्रो युष्माकं पुत्र इति वा विग्रहः, न तु तव पुत्र इति । तथा हि सति त्वत्पुत्र इत्येव स्यात् । एवमस्मत्पुत्र इत्यत्राप्यूह्यम् ॥ पदात्परत्व सपादयितुमिति शब्दः ॥ ननु राज्ञोः पुरुषो राज्ञां पुरुष इति विग्रहे राजपुरुष इति नेष्यत इति सिद्धान्तविरोधाद्युष्मत्पुत्रोऽस्मत्पुत्र इत्यत्र युवयोर्युष्माकमित्यादिविग्रहो न सभवतीति चेद् अत्राहुः । यत्र वृत्तौ सख्याविशेषबोधक प्रमाण नास्ति तत्रैवैकत्वसख्याश्रीयते तथा राजपुरुष इति ॥ न हि राजपुरुष इत्यत्र विभक्तौ निवृत्ताया राजपदार्थे द्वित्वादिप्रत्यायक किंचिदस्ति । यत्र पुनः सख्याभेदगमकमर्थप्रकरणाद्यांस्त, भवति तत्र द्विवचनबहुवचनयोरपि वृत्तिः । प्रकृते त्वेकवचनान्तेन विग्रहे 'प्रत्ययोत्तरपदयोश्च' इति त्वमादेशप्रसङ्गादर्थाद्विवचनबहुवचनान्तेनेति विग्रहे वृत्तिर्भविष्यतीति ॥ अर्थः सामर्थ्यम् । अर्थाद्यथा, मुद्रैः क्रीतो माद्रिकः । न ह्येकेन मुद्रेन द्वाभ्यां वा मुद्राभ्या क्रयण सभवति ॥ प्रकरणाद्यथा—'भवद्रिामवसरप्रदानाय वचासि नः' । भवतोगिरामिति तत्र ह्यर्थः ॥—**समानवाक्य** इति । 'देवदत्त अस्त्यय दण्डो देवदत्त हरानेन' इत्यत्र दण्ड इत्येतत्पूर्ववाक्यस्थमिति समानवाक्यस्थत्वाभावादामन्त्रितनिघातो न भवति ॥—**एकतिङि**ति । एक तिडन्त यत्रेति बहुव्रीहि ॥ ननु ओदनस्त्वया पक्तव्यस्तव भविष्यतीत्यत्रातिप्रसङ्गः पक्तव्योऽस्तीत्यध्याहारेण भिन्नवाक्यतामसमर्थनेऽपि पश्य मृगो धावतीत्यादावेकवाक्यत्वव्यवहारो न स्यात् ॥ सत्यम् । प्रकृतोपयोगित्वेनेदमुक्त, पश्य मृग इत्यादौ तु 'अर्थैकत्वादेक वाक्य साकाङ्क्ष चेद्विभागे स्यात्' इति शास्त्रान्तरप्रसिद्धत्वमेवेत्येके ॥ अन्ये तु 'आख्यात सविशेषण वाक्यम्' इति वार्तिककारवचनपर्यालोचनया 'एकतिङ्' इत्यत्र तिडन्त विशेष्यसमर्पक विवक्षित, ततश्च पश्य मृगो धावतीत्यत्र तिङन्तद्वये सत्यपि पश्येत्यस्यैव विशेष्यसमर्पकत्वान्नोक्तदोष इत्याहुः ॥ एकशब्दः समानवचनो न तु सख्यावाची, बहुव्रीहिश्चायम् । तेन 'ब्रूहिब्रूहि देवदत्त' इत्यत्र वाक्यत्वादामन्त्रितनिघातः सिध्यतीति समर्थसूत्रे कैयट. ॥ 'युष्मदस्मदोर्विभाषा अनन्वादेशे' इति वार्तिकमर्थतः पठति—**एते वांनावादय** इति ॥ यद्यपि 'सपूर्वाया. प्रथमाया विभाषा' इत्यनेनैतत् पठ्यते, तथाप्यविशेषेण विकल्पोऽय विधीयते इत्याशयेन सपूर्वत्वाभावेऽपि विकल्पमुदाहरति—**धाता ते भक्त** इति ॥ अन्वादेशे तु नित्यमुदाहरति—**तस्मै ते नम इत्येवे**ति ॥—'तुल्यार्थै' इत्यादिवत् 'न चवाहाहैवे.' इति तृतीयानिर्देशेनापि युक्तार्थलाभे युक्तग्रहणमनर्थकमित्यत आह—**युक्तग्रहणादि**ति । यत्र युष्मदस्मदर्थगतान् समुच्चयादीन् चादयो द्योतयन्ति तदा चादिभिः सहार्थद्वारा युष्मदस्मदोः साक्षाद्योगः, तत्राय निषेध इत्यर्थः ॥—**हरो हरिश्चे**ति । अत्र चशब्दो हरहरिगतसमुच्चयमाह, हरिहराभ्या त्वस्मदः सबन्धो, न तु समुच्चयेनेति न साक्षाद्योगः किं तु परपरायोग इति न निषेध इति भावः ॥—**पश्यार्थैश्चाना**—॥ अत एव निपातनाद्भावे 'पाघ्राध्माधेट्—' इति शः । दर्शनं पश्यः, तच्चेह

१ सवेद्योऽस्मानिति—नन्वत्र सध्यभावे नवाक्षरत्वेनानुष्टुप्पादत्वानापत्ति., सधौ तु उभयत आश्रयणेऽन्तवद्भावाभावेन कथमादेशप्राप्तिरिति चेन्न, सवेद्यो इत्येकादशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात । स्मानित्यस्य चैकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्दत्वेन सधौ कृते तत्प्राप्तिरिति । २ पञ्चकेति—समुच्चयविकल्पाद्भुतखेदावधारणार्थाना च, वा, ह, अह, एवाना पञ्चानामन्यतमेन योगे इत्यर्थः । ३ चेतसेति—नन्वचाक्षुषेतिपर्युदासेन बहिरिन्द्रियजन्यज्ञानार्थयोगे एव स्यादिति चेतसेत्ययुक्तमिति वाच्यम्, न, अनालोचनार्थैरित्येव सिद्धे पश्यार्थैरित्यस्य वैयर्थ्यापत्तेः ।

कस्तव रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा । **सपूर्वायाः प्रथमाया विभाषा** ।८।१।२६। विद्यमानपूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्युः । भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् । त्वा मेति वा । **सामन्त्रितम्** ।२।३।४८। संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् । **आमन्त्रितं पूर्वमविद्यमानवत्** ।८।१।७२। स्पष्टम् । अग्ने तव । देवास्मान्पाहि । अग्ने नय । अग्न इन्द्र वरुण । इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च न । सर्वदा रक्ष देव न इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं रक्षेत्येतदाश्रित्यादेशः । एवम् इमं मे गङ्गे यमुने इति मन्त्रे यमुन इत्यादिभ्यः प्राचीनामन्त्रिताविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः । **नामन्त्रिते समानाधिकरणे सामान्यवचनम्** ।८।१।७३। विशेष्यं समानाधिकरणे आमन्त्रिते परे नाविद्यमानवत्स्यात् । हरे दयालो नः पाहि । अग्ने तेजस्विन् । **विभाषितं विशेषवचने** ।८।१।७४। अत्र भाष्यम् । बहुवचनमिति वक्ष्यामीति । बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवद्वा । यूयं प्रभवः । देवाः शरण्याः युष्मान् भजे । वो भजे इति वा । इहान्वादेशेऽपि वैकल्पिका आदेशाः । सुपात् । सुपाद् । सुपादौ । सुपादः । सुपादम् । सुपादौ । **पादः पत्** ।६।४।१३०। पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । सुपदः । सुपदा । सुपाद्भ्यामित्यादि । अग्निं मन्थतीत्यग्निमत् । अग्निमद् । अग्निमथौ । अग्निमथः । अग्निमद्भ्यामित्यादि । ऋत्विगित्यादिसूत्रेणाञ्चेः सुप्युपपदे क्विन् । **अनिदितां हल उपधायाः क्ङिति** ।६।४।२४। हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च ।

---

ज्ञानमात्रम् 'अदर्शन लोपः' इत्यत्र यथा, न तु चाक्षुषज्ञानमेव, 'अनालोचने' इति निषेधात् तदेतदाह—**अचाक्षुषज्ञानार्थैरिति** ॥—**परंपरासंबन्धेऽपीति** । पूर्वसूत्रस्थयुक्तग्रहणेन ज्ञापितमेतद्भवत्यन्यत्र परपरासबन्धेऽपि निषेध इति ॥ —**सपूर्वायाः**—॥ सहशब्दोऽत्र सलोमक इत्यत्रेव विद्यमानवचनः 'तेन सहेति–' इत्यत्र तुल्ययोगवचनं प्रायिकमिति वक्ष्यमाणत्वाद्विद्यमानवचनस्यापि सहस्य समास । 'वोपसर्जनस्य' इति सभावः ॥ प्रथमाया इति च प्रत्ययग्रहणात्तदन्तविधिरित्यालोच्याह—**अविद्यमानपूर्वाद्**ित्यादि ॥ 'एते वान्नावादय आदेशा' इत्यविशेषोक्त्यैव विभाषया सिद्धेः किमर्थमिद वचनमित्याशङ्क्य परिहरन्नाह—**अन्वादेशेऽपी**ति ॥—**भक्तस्त्वमि**त्यादि । त्व भक्तोऽहमपि तेन हरिस्त्वा मां च त्रायत इति सबन्धः । एवं च प्रक्रान्तत्वान्न यच्छब्दापेक्षा । येन कारणेन हरेस्त्व भक्तस्तेनैव कारणेनाहमपीति व्याचक्षाणानां तु यच्छब्दाध्याहारक्लेश इति बोध्यम् ॥ अत्र तेनेति पूर्वविद्यमान पद ततो हरिरिति प्रथमान्त ततः परस्य युष्मच्छब्दस्यादेशः । तथा त्रायते इत्यस्मात्पर स इति प्रथमान्त ततः परस्यास्मच्छब्दस्यादेशः ॥—**सामन्त्रितम्** ॥—'संबोधने च' इत्यतः सबोधने इत्यनुवर्तते । सा इत्यनेन प्रथमा निर्दिश्यते । महासज्ञाकरणसामर्थ्यात्सज्ञाविधावपि तदन्तग्रहणम् ॥ आमन्त्रणमामन्त्रितमुपचारात्तत्साधने वृत्तिः, विभक्त्यन्तेन चामन्त्र्यते, न तु केवलया विभक्त्येत्याशयेनाह—**तदन्तमि**ति ॥—**इहेति** । 'अग्ने तव' 'देवास्मान्' इत्यत्र युष्मदस्मदोर्न भवत्यादेशः, 'अग्ने नय' इत्यत्र 'तिङतिङः' इति न तिङन्तनिघातः, अग्न इन्द्र वरुणेत्यत्र तु 'आमन्त्रितस्य च' इत्यामन्त्रितनिघातो नेति विवेक ॥—**सर्वेषां निघात** इति । अय च निघातः पदकाले श्रूयते न तु संहिताकाले 'स्वरितात्संहितायामनुदात्तानाम्' इति संहितायामेकश्रुतिविधानात् ॥—**अग्ने तेजस्विन्नि**ति । इह पदात् परत्वात्तेजस्विन्नित्यस्य 'आमन्त्रितस्य च' इत्याष्टमिकनिघातः सर्वानुदात्तः ॥—**सुपाद्**िति । शोभनौ पादौ यस्येति बहुव्रीहिः । 'सङ्ख्यासुपूर्वस्य' इति पादस्यान्तलोपः ॥—**पादः पत्** ॥ —**तदवयवस्ये**ति । एतच्च 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया लभ्यते । इय च परिभाषा 'षष्ठी स्थानेयोगा' इत्यनेन ज्ञापिता । तथाहि 'अस्तेर्भूः' 'इको यणचि' इत्यादौ सामीप्यादिसबन्धप्रसङ्गेऽपि लक्ष्यानुरोधेन व्याख्यानादन्तरङ्गत्वात् 'स्थानिवदादेशः–' इति ज्ञापकाच्च स्थानेयोगत्वे सिद्धेऽप्यारभ्यमाणेन 'षष्ठी स्थानेयोगा' इत्यनेन षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न तु प्रतीयमानमित्यर्थो लभ्यते । तथा च 'निर्दिश्यमानस्यादेशा भवन्ति' इति सिद्धम् ॥ अलोऽन्त्यस्य' 'आदेः परस्य' इति योगौ तु आरम्भसामर्थ्यान्निर्दिश्यमानपरिभाषाया बाधकौ, तेन 'पुमः खय्यम्परे' 'उदः स्थास्तम्भोः–' इत्यादौ न दोष इति दिक् ॥ दन्ताः ॥ ॥ **अग्निमद्**िति । मथ्नातेर्मन्थतेश्च क्विपि एतदेव रूपम् ॥ इदितस्तु नलोपाभावादग्निमन् अग्निमन्थौ । अग्निमन्थः ॥ थान्ता ॥ ॥ **अनिदिताम्**—॥ इद् ह्रस्वेकार इत्संज्ञको येषां तानि इदिन्ति न इदिन्ति अनिदिन्ति तेषामनिदिताम् । एतच्च अङ्गस्य विशेषण, हल इत्यपि, तदाह—**हलन्तानामनिदितामि**ति ॥ —**उपधाया नस्ये**ति । 'श्नान्नलोपः' इति सूत्रादितः लुप्तषष्ठीक पदमनुवर्तते तच्चोपधाग्रहणेन विशेष्यत इति भावः ॥

१ संबोधने इति—ननु संबोधनप्रथमापदानुवृत्त्यैव सज्ञिलाभे सति व्यर्थमिति चेन्न, हेहेभोइत्यादीना विशिष्य कोशेषु संबोधने शक्तेरुक्तत्वेन तत्र प्रातिपदिकेतिसूत्रेणैव प्रथमोत्पत्तेस्तेषा सज्ञार्थं तदावश्यकत्वात् । अन्यथा अनन्तरस्येति न्यायेन सबोधने चेति विहितप्रथमान्तस्यैव स्यात् । २ पाद इति—अत्र पाच्छब्देन सङ्ख्यासुपूर्वस्येत्यादिना कृतसमासान्ताकारलोपस्य ग्रहणम्, सुपदेत्यन्तक्विबन्तस्य वा । तत्र ढिनोर्थे गिल्लोपस्य स्थानिवत्त्व शङ्क्यम्, क्वौ लुप्तमिति निषेधात् ।

उगिदचामिति नुम् । संयोगान्तस्य लोपः । नुमो नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकारः । प्राङ् । अनुस्वारपरसवर्णौ । प्राञ्चौ । प्राञ्चः । प्राञ्चम् । प्राञ्चौ । **अचः ।६।४।१३८।** लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् । **चौ ।६।३।१३८।** लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात् । प्राचः । प्राचा । प्राग्भ्यामित्यादि । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । अच इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते । अकृतव्यूहा इति परिभाषया । प्रतीचः । प्रतीचा । अमुमञ्चतीति विग्रहे । अदस् अञ्च् इति स्थिते । **विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ।६।३।९२।** अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्तेऽञ्चतौ परे । अदद्रि अञ्च् इति स्थिते यण् । **अदसोऽसेर्दादु दो मः ।८।२।८०।** अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च मः । उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः । आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घः । अमुमुयङ् । अमुमुयञ्चौ । अमुमुयञ्चः । अमुमुयञ्चम् । अमुमुयञ्चौ । अमुमुईचः । अमुमुईचा । अमुमुयग्भ्यामित्यादि । मुत्वस्याऽसिद्धत्वान्न यण् । अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते अदमुयङ् । अः सेः सकारस्य स्थाने यस्य सोऽसिरिति व्याख्यानात् त्यदाद्यत्वविषय एव मुत्वं नान्यत्रेति पक्षे अदद्र्यङ् । उक्तं च ॥ अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ॥ केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यत इति ॥ विष्वग्देवयोः किम् । अश्वाची । अञ्चतौ किम् । विष्वग्युक् । अप्रत्यये किम् । विष्वगञ्चनम् । अप्रत्ययग्रहणं ज्ञापयति अन्यत्र धातुग्रहणे तदादिविधिरिति । तेनाऽयस्कारः । अतः कृकमीति सः । उदङ् । उदञ्चौ । उदञ्चः । शसादावचि । **उद ईत् ।६।४।१३९।** उच्छब्दात्परस्य लुप्तनकारस्या-

अनिदितामिति किम् । नन्द्यते ॥ हलः किम् । नीयते ॥ उपधायाः किम् । हन्यते ॥—**अचः** ॥ 'अल्लोपोऽनः' इत्यतोऽल्लोप इत्यनुवर्तते 'भस्य' इति च । तदाह—**भस्याकारस्य लोपः स्यादि**ति ॥ अत्र नव्याः । यद्यत्राञ्चतेर्भस्येति सामानाधिकरण्येनान्वयः स्वीक्रियते, तर्हि प्रतीचः प्रतीचेत्यादि न सिध्येत् । उपसर्गसहितस्यैव भत्वेन केवलस्याञ्चतेर्भत्वाभावात् । भस्यावयवस्याञ्चतेरिति वैयधिकरण्येनान्वये तु प्रत्यगात्मनेत्यादावञ्चतेरकारस्य लोपः स्यात् । अञ्चत्यन्तस्य भस्याकारलोप इति व्याख्यायां प्राचः प्राचेति प्रशब्दाकारस्यापि लोपः स्यात् । तन्त्रावृत्त्यादिनाञ्चत्यन्तस्य भस्याञ्चतेरकारस्येति व्याख्यानेऽपि प्रत्यञ्चमञ्चति प्रत्यद्ङ् तत शसादिषु प्रत्यद्ङ्च प्रत्यद्ङ्चेत्यादावतिप्रसङ्ग एव । तस्मात् 'अल्लोपोऽनः' इत्यत्रेवात्रापि अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽञ्चतिस्तस्याकारस्य लोपः स्यादिति व्याख्येयम् । 'ध्रुप्रागपागुदक्प्रतीचः'—इति निर्देशश्चेह व्याख्याने लिङ्गमित्याहुः ॥—**चौ** ॥ 'चजोः' इति निर्देशाच्चवर्गग्रहण न भवतीत्याह—**लुप्ताकारनकारेऽञ्चता**विति । अत्राकारलोपेन नकारलोपस्याक्षिप्तत्वात्तत्कथन व्यर्थमेव, किंतु लुप्ताकारेऽञ्चतावित्येव सुवचमित्याहुः ॥ 'ढ्लोपे—' इति सूत्रादणो दीर्घ इत्यस्य चानुवर्तनादाह—**अणो दीर्घः स्यादि**ति ॥—**प्राचः प्राचे**ति । प्रतीच इत्याद्यर्थमवश्यस्वीकार्येऽतोलोपे कृते अनेन दीर्घो विधीयत इति भावः ॥—**प्राग्भ्यामि**ति । 'चोः कुः' इति कुत्व, न तु 'क्विन्प्रत्ययस्य—' इत्यनेन, तस्यासिद्धत्वात् ॥—**विष्वग्देवयोश्च—**॥ चकारेण 'आ सर्वनाम्नः' इत्यतः सर्वनाम्न इति लभ्यते इत्याह—**अनयोः सर्वनाम्नश्चे**ति ॥—**अप्रत्ययान्तेऽञ्चता**विति । अविद्यमानः प्रत्ययोऽप्रत्ययः क्विन् क्विबादिः । 'अञ्चतौ वप्रत्यये' इति पाठे तु 'वप्रत्ययान्तेऽञ्चतौ' इति व्याख्येयम् । विष्वग्देवयोस्तूदाहरण विष्वगञ्चतीति विष्वद्र्यङ् इति बोध्यम् ॥—**अदसोऽसेः—**॥ असेरिति इकार उच्चारणार्थस्तदाह—**अदसोऽसान्तस्ये**ति ॥ असान्तस्येति किम् । अमुमात्मन इच्छति अदस्यति । दात् परस्य किम् । अमुया अमुयोरित्यत्रान्त्ययकारस्य माभूत् ॥—**ह्रस्वव्यञ्जनयोरि**ति । व्यञ्जनस्य हि ह्रस्व ईषत्सदृशो दीर्घस्तु विसदृश इति भावः ॥ प्राञ्चस्तु ह्रस्वदीर्घयोः समाहारद्वन्द्वमकृत्वैव 'विधीयमानोऽप्यण् क्वचित् सवर्णान् गृह्णाति' इति स्वीकृत्य आन्तरतम्याद् ह्रस्वव्यञ्जनयोर्ह्रस्वः दीर्घस्य दीर्घ इति व्याचक्षते ॥—**अन्त्यबाध** इति । सूत्रे अदस इति नावयवषष्ठी, किं तु स्थाने षष्ठी, एवं हि अलोन्त्यपरिभाषोपतिष्ठते । तथा च अदसो योऽन्त्यः स दात्परो न भवति दात्परो यः सोऽदसोऽन्त्यो न भवतीत्येवमन्त्यबाधेऽन्त्यसमीपस्य भवतीति तेषामाशयः ॥—**उक्तं चे**ति । वार्तिककृतेति शेषः । एवं च अमुद्र्यङ् इति केषांचिदुदाहरण भाष्यानुक्तत्वादुपेक्ष्यमिति भावः ॥—**लत्ववदि**ति । चलीक्लृप्यत इत्यत्र 'कृपो रो लः' इत्युभयोर्यथा लत्व तथेत्यर्थः ॥ नन्वप्रत्ययग्रहणाभावेऽप्युत्तरपदाधिकारस्थत्वाद्विष्वद्र्यङ् देवद्र्यङ् इत्यञ्चत्युत्तरपदेष्वेवाद्र्यादेशः स्यान्न तु विष्वगञ्चनमित्यत्रातो व्याचष्टे—**अप्रत्ययग्रहणं ज्ञापयती**ति ॥—**अन्यत्रे**ति । 'अतः कृकमि—' इत्यादौ ॥—**तेने**ति । अन्यथा 'नित्य समासे—' इत्यतोऽनुवृत्तेन समासग्रहणेनोत्तरपदस्याक्षेपात् 'अतः कृकमि—' इति कृधातुग्रहणे कृधातूत्तरपदक एवायस्कृदित्यादौ सत्व स्यात्, नत्वणन्तोत्तरप-

१ अच इति—अत्र अजिति न प्रत्याहारः, आतो धातो रित्यारम्भात्, प्रतीचो यदिति निर्देशाच्च । अत एव पचाद्यचो न ग्रहणम् । २ अण इति—नन्वेव कर्तृचः हर्तृचः इत्यादौ दीर्घानापत्तिः इति चेदत्र कैयटः । यदीदृशः प्रयोग उपलभ्यते तर्हि इतोऽणिति निवृत्तमिति । ३ सर्वनाम्न इति—इद च सर्वनाम्नो गौणत्वेऽपि प्रवर्तते, विधानसामर्थ्यात् । ४ असान्तस्येति—सान्तग्रहणमोकाररेफयोरप्युपलक्षणम्, अदोऽनुपदेशे इति निर्देशात् ।

ञ्चतेर्भस्याकारस्य ईस्स्यात् । उदीचः । उदीचा । उदग्भ्यामित्यादि । **समः समि** ।६।३।९३। वप्रत्ययान्तेऽञ्चतौ परे । सम्यङ् । । सम्यञ्चौ । सम्यञ्चः । समीचः समीचा । **सहस्य सध्रिः** ।६।३।९५। वप्रत्ययान्तेऽञ्चतौ परे । सध्र्यङ् । **तिरसस्तिर्यलोपे** ।६।३।९४। अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात् । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यञ्चम् । तिर्यञ्चौ । तिरश्चः । तिरश्चा । तिर्यग्भ्यामित्यादि । **नाञ्चेः पूजायाम्** ।६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । प्राङ् । प्राञ्चौ । प्राञ्चः । नलोपाभावादकारलोपो न । प्राञ्चः । प्राञ्चा । प्राङ्भ्याम् । प्राङ्क्षु । प्राङ्षु । एवं पूजार्थे प्रत्यङ्ङादयः । कुञ्च कौटिल्याल्पीभावयोः । अस्य ऋत्विगादिना नलोपाभावोऽपि निपात्यते । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुङ्भ्यामित्यादि ॥ चोः कुः ॥ पयोमुक् । पयोमुग् । पयोमुचौ । पयोमुचः । व्रश्चेति षत्वम् । स्कोरिति सलोपः । जश्त्वचर्त्वे । सुवृट् । सुवृड् । सुवृश्चौ । सुवृश्चः । सुवृट्सु । सुवृट्त्सु ॥ * **वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च** ॥ एते निपात्यन्ते शतृवच्चैषां कार्यं स्यात् । उगित्त्वान्नुम् । सान्तमहत इति दीर्घः । मह्यते पूज्यते इति महान् । महान्तौ । महान्तः । हे महन् । महतः । महता । महद्भ्यामित्यादि । **अत्वसन्तस्य चाधातोः** ।६।४।१४। अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासंबुद्धौ सौ परे । परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः ततो नुम् । धीमान्[३] । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् । धातोरप्यत्वन्तस्य दीर्घः । गोमन्तमिच्छति गोमानिवाचरतीति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् उगिदचामिति सूत्रेऽज्ग्रहणं नियमार्थम् । धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति । तेन स्रत् ध्वत् इत्यादौ न । अधातोरिति तु अधातुभूतपूर्वस्यापि नुमर्थम् । गोमान् । गोमन्तौ । गोमन्तः । इत्यादि । भातेर्डवतुः । भवान् । भवन्तौ । भवन्तः । शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः । भवतीति भवन् । **उभे अभ्यस्तम्** ।६।१।५।

---

दकेऽयस्कार इत्यत्रेति भावः ॥—**उद ईत्** ॥—अच., इत्यस्यापवादः ॥ इह अच इत्यनुवर्तते भस्येति च तदाह—**उच्छब्दात्परस्य लुप्तनकारस्ये**त्यादि ॥ भस्येति किम् । उदञ्चौ । उदञ्च. । उदग्भ्याम् ॥ लुप्तनकारस्येति किम् । पूजायाम् उदञ्चः, उदञ्चेति यथा स्यादिति ॥—**समः—समि** ॥—समीत्यविभक्तिको निर्देशः । एव 'तिरसस्तिरि–' इत्यपि । सगतमञ्चतीति सम्यङ् ॥—**समीच** इति । अल्लोपे 'चौ' इति दीर्घ. ॥—सह अञ्चतीति सध्र्यङ् । भविषये अल्लोपदीर्घौ । सध्रीच इत्यादि ॥—**तिरसः**—॥ न विद्यते लोपो यस्य सः अलोप इति बहुव्रीहि । अञ्चताविल्यनुवर्तमानमन्यपदार्थः । अवयवद्वारकश्च लोप समुदाये उपचर्यत इत्यभिप्रेत्याह—**अलुप्ताकार** इत्यादि । अकारलोपे सतीति नोक्त, व्याख्यानात् ॥ अप्रत्ययान्ते किम् । तिरोऽञ्चनमित्यादौ मा भूत् ॥—**तिरश्च** इति । लुप्ताकारत्वात्तिर्यादेशाभावे सस्य श्चुत्वेन शः । न चाल्लोपस्य स्थानिवत्त्वात् श्चुत्व न स्यादिति वाच्यम । पूर्वत्रासिद्धे तदभावात्पदान्तविधित्वाच्च ॥—**नाञ्चेः**—॥ नुमैव सिद्धे प्राञ्च' प्राञ्चेत्यादौ नुमोऽभावेऽपि नकारश्रवणार्थं. ॥—**प्राङि**ति । प्रकर्षेणाञ्चति पूजयतीति पूजार्थादञ्चेः क्विन् । —**प्राङ्क्ष्वि**ति । 'ङ्णोः कुक्टुक्–' इति वा कुक्, 'चयो द्वितीयाः–' इति पक्षे खकारोऽपि बोध्य ॥—**एवमि**ति । शसादिषु प्रत्यञ्चः । प्रत्यङ्भ्याम् । अमुमुयञ्चः । अमुमुयङ्भ्याम् । उदञ्च' । उदङ्भ्यामित्यादि ज्ञेयम् ॥ क्रुञ्चतीति क्रुङ् ॥ —**सलोप** इति । श्चुत्वस्यासिद्धत्वादिति भाव. । मुष्ठु वृश्चतीति सुवृट् । क्विपि 'ग्रहिज्या–' इति संप्रसारणम ॥—**सुवृट्त्स्वि**ति । चर्त्वस्यासिद्धत्वात्पूर्व 'ड.सि–' इति वा धुट् ततश्चर्त्वम ॥ चान्ताः ॥—**निपात्यन्त** इति । पृषु सेचने । बृह वृद्धौ । अत्र गुणाभावः ॥ महेः कर्मणि प्रत्ययः । अत एव मह्यते पूज्यते स महानिति व्याचष्टे ॥ गमेस्तु जगादेशः । चत्वारोऽप्यतिप्रत्ययान्ताः । एतच्च उणादिषु स्फुटीकरिष्यते ॥—**अत्वसन्तस्य चाधातोः** ॥ 'ढ्लोपे–' सूत्राद्दीर्घस्य 'नोपधायाः' इत्युपधाग्रहणस्य चानुवर्तनादाह—**उपधाया दीर्घः स्यादि**ति । इह अधातोरिति योगो विभज्यते तत्सामर्थ्यादनन्तरस्यासन्तस्यैव प्रतिषेधः, नत्वत्वन्तस्येति कैयटादयस्तदेतद्दर्शयति—**धातुभिन्नासन्तस्य चे**ति । धात्ववयवभिन्नो योऽस् तदन्तस्येत्यर्थः । तेन उखास्रत् पर्णध्वद् इत्यादि सिद्धम् । धातुभिन्नो योऽसन्तस्तस्येति व्याख्याया स्रत् ध्वदित्यत्र सिद्धान्ते दीर्घाभावेऽप्यत्र तु स्यादेवेति दिक् ॥ अत्र 'सर्वनामस्थाने च–' इति सूत्रादसंबुद्धावित्यनुवर्तते 'सौ च' इत्यतः साविति च तदाह—**असंबुद्धौ सौ पर** इति ॥—**अत्वन्तत्वाभावादि**ति । अतु इत्युकारानुबन्धस्यानुकरणाच्छत्रन्तस्य न भवतीत्यर्थः ॥—**उभे**—॥ शब्दरूपापेक्षया नपुंसकनिर्देशः ॥—**षाष्ठद्वित्वे**ति । 'अनन्तरस्य विधिर्वा भवति

---

१ समीति—'समो मिङ' 'सम इक्' इति च नासूत्रि, परिभाषाज्ञानगौरवपरिहारार्थत्वात् । २ पूजार्थस्येति—पूजारूपार्थस्य गम्यमानत्वे इत्यर्थः । अत एव 'अञ्चोऽनपादाने' इति सूत्रेऽव्याकुल गच्छतीत्यर्थकेऽञ्चितं गच्छतीति भाष्यप्रयोगः सगच्छते । एवं चाञ्चेः पूजार्थत्वे पूजाप्रयोजकार्थकत्वे च नलोपो न । एव प्रकृष्ट गच्छतीत्यर्थके प्राञ्च्शब्देऽपि न भवति नलोपः, उपसर्गाणा द्योतकत्वेनाञ्चतेः पूजाप्रयोजकप्रकर्षार्थत्वात् । ३ धीमानिति—ननु अत्वसन्तस्येति सूत्रे मतोर्ग्रहण न स्यात्, एकानुबन्धकपरिभाषाविरोधात् । न चान्यस्यासभवः, अव्युत्पत्तिपक्षे भवतोः सभवात् इति चेन्न । यदुपदेशप्रयुक्ता यस्येत्सज्ञा तस्य तदनुबन्धत्वस्यैव स्वीकारात् पकारादेः समुदायानुबन्धत्वेऽपि अतोऽननुबन्धकत्वाभावात् इति दिक् ।

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः । **नाभ्यस्ताच्छतुः** ।७।१।७८। अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत् । ददद् । ददतौ । ददतः । **जक्षित्यादयः षट्** ।६।१।६। षड् धातवोऽन्ये जक्षितिश्च सप्तम. एतेऽभ्यस्तसंज्ञाः स्युः । जक्षत् । जक्षद् । जक्षतौ । जक्षतः । एवं जाग्रत् । दरिद्रत् । शासत् । चकासत् । दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम् । दीध्यत् वेव्यत् । गुप् । गुब् । गुपौ । गुपः । गुब्भ्यामित्यादि । **त्यदादिषु दृशोऽनालोचने कञ्च** ।३।२।६०। त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेर्धातोः कञ् स्याच्चात् क्विन् । **आ सर्वनाम्नः** ।६।३।९१। सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु । कुत्वस्यासिद्धत्वाद्व्रश्चेति षः । तस्य जश्त्वेन डः । तस्य कुत्वेन गः । तस्य चर्त्वेन पक्षे कः । तादृक् । तादृग् । तादृशौ । तादृशः । षत्वापवादत्वात्कुत्वेन खकार इति कैयटहरदत्तादिमते तु चर्त्वाभावपक्षे ख एव श्रूयेत नतु गः । जश्त्वं प्रति कुत्वस्यासिद्धत्वात् । दिगादिभ्यो यदिति निर्देशान्नासिद्धत्वमिति वा बोध्यम् । व्रश्चेति षत्वम् । जश्त्वचर्त्वे । विट् । विड् । विशौ । विशः । विशम् । **नशेर्वा** ।८।२।६३। नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते । नक् । नग् । नट् । नड् । नशौ । नशः । नग्भ्याम् । नड्भ्यामित्यादि । **स्पृशोऽनुदके क्विन्** ।३।२।५८। अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात् । घृतस्पृक् । घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः । क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् । स्पृक् । षड्गकाः प्रागवत् । ञिधृषा प्रागल्भ्ये । अस्मादृत्विगादिना क्विन् द्वित्वमन्तोदात्तत्वं च निपात्यते । कुत्वात्पूर्वं जश्त्वेन डः । गः । कः । धृष्णोतीति दधृक् । दधृग् । दधृषौ । दधृषः । दधृग्भ्यामित्यादि । रत्नानि मुष्णातीति रत्नमुट् । रत्नमुड् । रत्नमुषौ । रत्नमुषः । षड्भ्यो लुक् । षट् । षड् । षड्भिः । षड्भ्यः २ । षट्चतुर्भ्यश्चेति नुट् । अनामिति पर्युदासान्न ष्टुत्वनिषेधः । यरोऽनुनासिक इति विकल्पं बाधित्वा प्रत्यये भाषायां नित्यमिति वचनान्नित्यमनुनासिकः । षण्णाम् । षट्त्सु । षट्सु । तदन्तविधिः । परमषट् । परमषण्णाम् । गौणत्वे तु प्रियषषः । प्रियषषाम् । रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषो रुरिति रुत्वम् । **र्वोरुपधाया दीर्घ इकः** ।८।२।७६। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते । पिपठीः । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् । वा शरीति वा विसर्जनीयः । **नुम्वि-**

---

प्रतिषेधो वा' इति न्यायादिति भावः ॥ द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहण समुदायप्रतिपत्त्यर्थमिति व्याचष्टे—**उभे समुदिते** इति । अन्यथा नेनिजतीत्यत्र 'अभ्यस्तानामादि'—' इत्याद्युदात्तत्व प्रत्येक पर्यायेण स्यात् ॥—**नाभ्यस्ताच्छतुः** ॥ व्यवहितोऽपि नुमेवात्र निषिध्यते अन्येषामप्रसक्तेरित्यभिप्रेत्याह—**नुम्न स्यादिति** ॥—**ददिति** । ददातीति ददत् । दाञो लटः शत्रादेशः, शपः श्लुः, 'श्लौ' इति द्वित्वमभ्यासस्य ह्रस्वः । 'श्नाभ्यस्तयोरातः' इत्यालोपः ॥—**जक्षित्यादयः षट्** ॥ जक्षिति पृथक् पदम् । इतिशब्देन जक्षिरेव परामृश्यते । इति आदिर्येषामित्यतद्गुणसंविज्ञानबहुव्रीहिस्तदेतदाह—**षट् धातवोऽन्ये** इति ॥ तान्ता ॥ ॥ गोपायतीति गुप् क्विपि विवक्षिते 'आयादय आर्द्धधातुके वा' इति वैकल्पिकत्वादिहायप्रत्ययाभावः । आयप्रत्ययपक्षे त्वतोलोपे यलोपे च गोपा इति रूप बोध्यम् ॥ पान्ताः ॥ ॥—**त्यदादिषु** ॥—कञन्तस्य तूदाहरण तादृशो यादृश इत्यादि । तच्चात्र नोक्त, हलन्तेष्वनुपयोगात् ॥ अनालोचने किम् । त पश्यतीति तद्दर्शः । कर्मण्यण् । तादृशादयस्तु रूढिशब्दत्वादसताप्यवयवार्थेन व्युत्पाद्यन्ते । अत एवाज्ञानार्थाद् दृशेरिति सगच्छते । भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता तमिवेमं पश्यन्ति जनाः 'स इवाय पश्यति' ज्ञानविषयो भवतीत्यर्थादज्ञानार्थादिति तु सगच्छते । तत्र दृशेर्ज्ञानविषयत्वापत्तिमात्रवृत्तित्वेऽपि विषयीकरणावृत्तित्वात् ॥—**आकारोऽन्तादेश** इति । आकारादेशे सति त्वतो गुणः स्यात् । न चाकारोच्चारणसामर्थ्याद्दीर्घः स्यादेवेति वाच्यम् । अकारस्याविधौ हल एव श्रवणप्रसङ्गात् ॥—**विडिति** । 'विश प्रवेशने' इत्यस्मात् क्विप् ॥—**नशेर्वा** ॥ केचिदिह झलीत्यनुवर्त्य झलि पदान्ते चेति व्याचक्षते । तन्न । नष्टमित्यादावतिप्रसङ्गात् ॥—**नगिति** । षडगकाः प्रागवत् ॥—**स्पृशोऽनुदके क्विन्** ॥ ककारो गुणाभावार्थः । नकारस्तु 'क्विन्प्रत्ययस्य कु' इति विशेषणार्थः । वस्तुतस्तु व्यर्थ एव सः 'क्विप्रत्ययस्य कुः' इत्युक्तेऽपि तदनुबन्धपरिभाषया क्विबन्तस्य कुत्वाप्रसक्तेः । न चाद्युदात्तत्वं प्रयोजन, क्विनः प्रकृतीनामेकाच्त्वाद्धातुस्वरेणापि तत्सिद्धेः । दधृगित्यत्र त्वन्तोदात्तत्वनिपातनादाद्युदात्तत्वं नापेक्षितमेवेति दिक् ॥ अत्र सुपीत्यनुवर्तते कर्मणीति तु निवृत्तमित्याशयेनाह—**अनुदके सुप्युपपदे** इति । **घृतस्पृगि**ति । घृतं घृतेन वा स्पृशतीति विग्रहः ॥ अनुदके किम् । उदक स्पृशतीति उदकस्पर्शः । निषेधसामर्थ्यादिह क्विबपि न भवति । तस्मिन् हि सति क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणेन कुत्वस्यावर्जनीयतया 'अनुदके' इति निषेधस्य फलाभावात् ॥ केचित्तु उदकस्पृडिति प्रत्युदाहरन्ति । निषेधसामर्थ्यात् कुत्व मास्तु क्विप् स्यादेवेति तेषामाशयः ॥ शान्ताः ॥—**गौणत्वे त्विति** । 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' इति बहुवचननिर्देशात् षडर्थप्राधान्ये एव लुग्नुटौ भवत इति भावः ॥ पिपठिषतेः क्विप्यतो लोपे कृदन्तत्वात् स्वाद्युत्पत्तौ पिपठिष्सु इति स्थिते, सोर्हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वात्सस्य रुर्भवति । न च रुत्वे कर्तव्ये अल्लोपस्य स्थानिवत्त्व शङ्क्यम् । पूर्वत्रासिद्धे तन्निषेधात् ॥—**नुम्वि-**

**सर्जनीयशर्व्यवायेऽपि ।८।३।५८।** एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षत्वम् । पिपठीष्षु । पिपठीःषु । प्रत्येकमिति[1] व्याख्यानादनेकव्यवधाने षत्वं न । निंस्स्व । निंस्से । नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं व्याख्यानात् । तेनेह न । सुहिन्सु । पुंसु । अतएव न शर्ग्रहणेन गतार्थता । रात्स-स्येति सलोपे विसर्गः । चिकीः । चिकीर्षौ । चिकीर्षः । रोः सुपीति नियमान्न विसर्गः । चिकीर्षु । दमेर्डोस् । डित्वसामर्थ्याट्टिलोपः । षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ । दोः । दोषौ । दोषः । पद्दन्न इति वा दोषन् । दोष्णः । दोष्णा । दोषः । दोषा । विश प्रवेशने । सन्नन्तात् क्विप् । संयोगान्तलोपः[2] । व्रश्चेति षः । जश्त्वचर्त्वे । विविट् । विविड् । विविक्षौ । विविक्षः । स्कोरिति कलोपः । तट् । तड् । तक्षौ । तक्षः । गोरट् । गोरड् । गोरक्षौ । गोरक्षः । तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु स्कोरिति न प्रवर्तते । णिलोपस्य स्थानिवद्भावात् । पूर्वत्रासिद्धीये न स्थानिवदिति तु इह नास्ति । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषेधात् । तस्मात्संयोगान्तलोप एव । तक् । तग् । गोरक् । गोरग् । संयोगान्तलोपः । पिपक्[3] । पिपग् । एवं विवक् । दिधक् । पिस गतौ । सुष्ठु पेसतीति सुपीः । सुपिसौ । सुपिसः । सुपिसा । सुपीर्भ्याम् । सुपीःषु सुपीष्षु । एवं सुतूः । तुस खण्डने । विद्वान् । विद्वांसौ । विद्वांसः । हे विद्वन् । विद्वांसम् । विद्वांसौ । **वसोः संप्रसारणम् ।६।४।१३१।** वस्वन्तस्य भस्य संप्रसारणं स्यात् । पूर्वरूपत्वं षत्वम् । विदुषः[4] । विदुषा । वसुस्रंस्विति दत्वम् । विद्वद्भ्यामित्यादि । सेदिवान् । सेदिवांसौ । सेदिवांसः । सेदिवांसम् । अन्तरङ्गोऽपीडागमः संप्रसारणविषये न प्रवर्तते । अकृतव्यूहा इति परिभाषया । सेदुषः । सेदुषा । सेदिवद्भ्यामित्यादि । सान्तमहत इत्यत्र सान्तसंयोगोऽपि

**सर्जनीय**—॥ 'इण्कोः' इति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनम् ॥—**ष्टुत्वेन पूर्वस्येति** । सनः सस्य रुत्वविसर्गयोः कृतयोः 'वा शरि' इति विकल्पात् पक्षे सकारस्तेन शर्व्यवाये सुपः सस्य षत्व पूर्वस्य ष्टुत्वम् । न तु 'आदेशप्रत्यययोः' इति षः, 'अपदान्तस्य' इति निषेधादिति भाव. ॥ एव स्थिते शर्ग्रहणेन न प्रयोजनं किं तु 'नुम्विसर्जनीयव्यवायेऽपि' इत्येव सूत्रं युक्तमित्येके ।। 'नुम्शर्व्यवायेऽपि' इत्येव युक्त सूत्रयितु, शर्ग्रहणेन विसर्जनीयस्य लाभादित्यन्ये ॥—**निंस्स्वेति** । आद्यसकारस्य प्रत्येक व्यवधानेऽपि आदेशप्रत्ययावयवत्वाभावात् षत्व न भवति । न चात्र 'आदेशप्रत्यययोः' इत्यनुवृत्त्यभावात् 'नुम्विसर्जनीय–' इत्यनेन धातुसकारस्य षत्व स्यादिति वाच्यम् । तस्य स्वातन्त्र्येण विधायकत्वानङ्गीकारात् ॥ 'अपदान्तस्य मूर्धन्यः' 'इण्को' इतिवत् 'नुम्विसर्जनीय–' इत्यस्याप्यधिकारसूत्रत्वात् ॥ कर्तुमिच्छति चिकीर्षति । चिकीर्षतेः क्विप् प्रत्ययः । चिकी. । 'एकाच उपदेशे–' इति 'सनि ग्रहगुहोश्च' इति वा सन इडभावे 'इको झल्' इति कित्वाद्गुणाभावे 'अज्झनगमा सनि' इति दीर्घे 'ऋत इत्–' इतीत्वे रपरत्व ततो द्वित्व 'हलादि शेष' 'कुहोश्चुः' अल्लोप सोर्हल्ङ्यादिलोपे पदान्तत्वात् 'र्वोरुपधाया.–' इति दीर्घ. ॥—**दोरिति** । दाम्यतीति दोः ॥—**संयोगान्तलोप** इति । न चास्मिन् कर्तव्ये बहिरङ्गत्वेनातो लोपस्यासिद्धत्व शङ्क्यम् । बहिर्निमित्तापेक्षपदसंज्ञासापेक्षत्वेन सयोगान्तलोपस्यैव बहिरङ्गत्वादिति दिक् ॥—**विविडिति** । विशेः सन 'एकाचः–' इतीण्निषेधे 'हलन्ताच्च' इति किन्वात् गुणाभाव. । द्वित्वाभ्यासकार्ये ॥—**तडिति** । 'तक्षू त्वक्षू तनूकरणे' इत्यस्मात् क्विप् । गा रक्षतीति गोरट् । कर्मण्युपपदे 'वा सरूप' न्यायेन क्विप् ॥—**कुत्वस्यासिद्धत्वादिति** । इतरथा 'स्कोः–' इति कलोपः स्यादिति भाव· ॥—**पिपगिति** । पक्तुमिच्छति पिपक् ॥ वक्तुमिच्छति विवक् ॥ 'दादेः–' इति घः । 'एकाचो बशो–' इति भष्भावः । दग्धुमिच्छति दिधक् ॥ पान्ता ॥ —**सुतूरिति** ॥ सुष्ठु तोसतीति सुतूः ॥ वेत्तीति विद्वान् । 'विदेः शतुर्वसु.' । अदादित्वाच्छपो लुक् । 'सार्वधातुकमपित' इति ङित्वान्नोपधागुण. । उगित्वान्नुम् । 'सान्तमहतः–' इति दीर्घ. । सयोगान्तलोपस्यासिद्धत्वान्नलोपो न॥—**वसोः**–॥ प्रत्ययग्रहणे तदन्तग्रहणमित्याह—**वस्वन्तस्येति** ॥—**सेदिवानिति** । 'भाषायां सदवसश्रुव.' इति लिट. क्वसु, 'लिटि धातोः' इति द्वित्वम्, 'हलादिः शेषः,' 'अत एकहल्मध्ये–' इत्येत्वाभ्यासलोपौ, 'वस्वेकाजाद्घसाम्' इतीट्, नुम्, 'सान्त' इति दीर्घः ॥—**सेदुष** इति । ननु 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया 'विदेः शतुर्वसु.' इत्यस्यैव वसो. सप्रसारणं युक्तं, न तु क्वसोः । सत्यम् । वसोरुकारानुबन्धकरण क्वसोः सामान्यग्रहणार्थम् । उगित्त्वस्य स्थानिवद्भावेनापि सिद्धेः । इह गमिप्रभृतिभ्यः क्वसुर्नोदाहृतः, छान्दसत्वात् । अत एव वैदिकप्रक्रियाया तस्थिवान् जग्मिवान् इत्याद्युदाहर्तव्य नात्रेत्याहुः ॥ कवयस्तु प्रयुञ्जते—'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' । 'त तस्थिवांस नगरोपकण्ठे' इत्यादि ॥

१ प्रत्येकमिति—व्यवायशब्दस्य प्रत्येक सबन्धात् निसेः प्रतिषेध इति वार्तिकप्रत्याख्यानपरभाष्यप्रामाण्याच्च फलितमिदम् । २ सयोगान्तलोप इति—एतस्मात्पूर्वं षत्वस्यासिद्धत्वादिति क्वचित्कोऽपपाठः, अफलत्वात् इति । ३ पिपगिति—एतत्पूर्वं कुत्वस्यासिद्धत्वादिति केचिद्वर्णयन्ति सोऽप्यपपाठ., सनोऽल्लोपस्य स्थानिवत्त्वेनापि स्कोरिति लोपवारणसंभवात् । ४ विदुष इति—नच षत्वे कर्तव्ये षत्वतुकोरिति सूत्रेण एकादेशस्यासिद्धत्वात्कथमत्र षत्वमिति शङ्क्यम्, पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वबोधनात् ।

**प्रातिपदिकस्यैव गृह्यते नतु धातोः । महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति सुहिन् । सुहिंसौ । सुहिंसः । सुहिन्भ्याम् । सुहिन्सु । ध्वत् । ध्वद् । ध्वसौ । ध्वसः । ध्वद्भ्याम् । एवं स्रत् । पुंसोऽसुङ् ।७।१।८९। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । उकार उच्चारणार्थः । बहुपुंसी इत्यत्र उगितश्चेति ङीबर्थं कृतेन पूञो डुम्सुनिति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुंसः । पुंसा । पुंभ्याम् । पुंभिः । पुंसु । ऋदुशनेत्यनङ् । उशना । उशनसौ । उशनसः ॥ * अस्य संबुद्धौ वाऽनङ् नलोपश्च वा वाच्यः । हे उशनन् । हे उशन । हे उशनः । उशनोभ्यामित्यादि । अनेहा । अनेहसौ । अनेहसः । हे अनेहः । अनेहोभ्यामित्यादि । वेधाः । वेधसौ । वेधसः । हे वेधः । वेधोभ्यामित्यादि । अधातोरित्युक्तेर्न दीर्घः । सुष्ठु वस्ते सुवः । सुवसौ । सुवसः । पिण्डं ग्रसते पिण्डग्रः । पिण्डग्लः । ग्रसु ग्लसु अदने । अदस औ सुलोपश्च ।७।२।१०७। अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च । तदोः सः साविति दस्य सः । असौ ॥ * औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च ॥ प्रतिषेधसन्नियोगशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ । असुकः । त्यदाद्यत्वं पररूपत्वम् । वृद्धिः । अदसोऽसेरिति मत्वोत्वे । अमू । जसः शी । आद्गुणः । एत ईद्बहुवचने ।८।२।८१। अदसो दात्परस्यैत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे । अमुम् ।**

---

अत्र वदन्ति—छान्दसा अप्येते पद्दन्नसादय इव क्वचिद् भाषायां भवन्ति 'मासश्छन्दसि' इत्यस्य सामान्यापेक्षज्ञापकत्वाश्रयणात्कथचित् समाधेयमिति ॥—**सुहिनिति** । सयोगान्तलोपस्यासिद्धत्वान्नोपधादीर्घ. ॥—**सुहिन्त्स्विति** । 'नश्च' इति सस्य वा धुट् ॥ ध्वंसत इति ध्वत् । स्रसत इति स्रत् । 'स्रसु ध्वसु अवस्रंसने' 'ध्वंसु गतौ च' इत्याभ्या क्विप् । 'अनिदिताम्–' इति नलोपः, 'वसुस्रंसु–' इति दत्वम् ॥—**पुंसोऽसुङ्** ॥ 'इतोऽत्सर्वनामस्थाने' इत्यनुवर्तनादाह—**सर्वनामस्थान** इति ॥—**विवक्षित** इति । तेन परमपुमानित्यत्र परत्वादसुङि कृते समासान्तोदात्तत्व भवदसुङ एवाकारस्य भवति । परसप्तम्यां तु नैतत्सिध्येत् । सर्वनामस्थानोत्पत्तेः प्रागेव पुम्शब्दोकारस्योदात्तत्वे कृते स्रसनधर्मणो हलः स्थाने तद्धर्मणोऽनुदात्तस्यैवादेशस्य प्रसङ्गात् । न चोकारस्य कृतोऽपि स्वरोऽनन्त्यत्वान्निवर्तयिष्यते असुङश्चान्त्यत्वात्करिष्यत इति वाच्यम् । अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वादिति भाव ॥ वस्तुतस्तु अकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषापवादत्वात्परसप्तमीपक्षोऽपि सूपपादः । एतच्च मनोरमायां स्पष्टम् ॥—**पूञ** इति । यद्यप्युणादिषु 'पातेर्डुम्सुन्' इति वक्ष्यति, तथापि पाठान्तरमनुसृत्यात्रोक्तमिति बोध्यम् ॥—**हे पुमन्निति** । असंबुद्धावित्युक्तेः 'सान्त–' इति न दीर्घः ॥—**पुंस्विति** । संयोगान्तलोपे 'मोऽनुस्वार.' । नुम्स्थानिकस्यैवानुस्वारस्योपलक्षणात् 'नुम्विसर्जनीय–' इति न षत्वम् ॥—**उशनेति** । 'वशेः कनसि.' 'ग्रहिज्या–' इति सम्प्रसारणम ॥—**अस्य संबुद्धाविति** । एतच्च वाचनिकम् । हरदत्तादयस्त्वाहुः । 'सोर्डा' इति वाच्ये 'अनङ् सौ' इति वचनेन क्वचिदनङ एव श्रवणस्य ज्ञापितत्वादेतत्सिद्धमिति ॥ यद्यपि सोर्डे कृते डित्त्वसामर्थ्याट्टिलोपे 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घे 'उशाना' इत्यनिष्टरूप प्रसज्यते, तथाप्यङ्गवृत्तपरिभाषया दीर्घो नेतिकृत्वा ज्ञापकत्व सगच्छत इति तेषामाशयः ॥—**अनेहा**ः॥—**वेधा** इति । असुन्प्रकरणे 'नञि हन एहच्' 'विधाञो वेध च' इति व्युत्पादनादसन्तत्वेन दीर्घः । अनेहाः कालः । वेधा विश्वसृट् ॥—**अदस औ सुलोपश्च** ॥ अदस इति षष्ठी । 'तदोः सः सौ' इत्यतः सावित्यनुवर्तते तदाह—**औकारोऽन्तादेशः स्यात्सौ पर** इति । नन्वदस इति पञ्चम्येवास्तु ततः परस्य सोरेवौकारो विधीयतां त्यदाद्यत्वेन असाविति रूप सिध्यति किं सुलोपविधानेन । न च स्वरे भेदः । उदात्तेन सहैकादेशे औकारस्योदात्तत्वात् ॥ मैवम् । असकौ स्त्री इत्यत्र टापि 'प्रत्ययस्थात्–' इतीत्त्वप्रसङ्गात् ॥—**असुक** इति । औत्वाभावे त्यदाद्यत्व सादुत्वम् । स्त्रिया तु असुका । अमुक इत्यसुकी इति च प्रयोगोऽसाधुरेव । एवममुकशर्मेत्यादिरपि । अदकःशर्मेत्यादेरेव न्याय्यत्वात् ॥—**एत ईद्बहुवचने** ॥ पारिभाषिकस्य बहुवचनस्य ग्रहणे अमीभिरित्यादिसिद्धावपि जसि अमी इति न सिध्येत् । न ह्यत्र एकारस्य बहुवचनपरतास्त्यतो व्याचष्टे—**बह्वर्थोक्ताविति** ॥—**विभक्तिकार्यं प्रागिति** । 'त्यदादीनामः' इत्यादिसपादसप्ताध्यायीं प्रति 'अदसोसेः–' इति त्रैपादिकशास्त्रस्यासिद्धत्वादिति । अकृते तु विभक्तिकार्ये सान्तत्वाद् उत्वमत्वयोरप्रवृत्तेश्चेति भावः ॥ यदि तु 'पूर्वत्रासिद्धम्' इत्यत्र कार्यासिद्धत्वमिष्येत, तर्हि अमू अमुमित्यादि न सिध्येत् । त्यदाद्यत्वे पररूपात्प्रागेवोत्वमत्वयोः कृतयोः पश्चान्मुत्वकार्यस्यासिद्धतया 'अतो गुणे' इति पररूपे अमौ इत्यादिरूपसिद्धिप्रसङ्गात् । किंच चर्म वस्ते चर्मवः । सुष्ठु वस्ते सुवः । अत्र परत्वात् 'स्कोः–' इति सलोपे तस्यासिद्धत्वाद्दलुङ्याद्दिलोपे उक्तरूपं न सिध्यतीति कार्यासिद्धिपक्षो हेय एव ॥ अत्र वदन्ति । सपादसप्ताध्याय्यां विहित

---

१ बहुपुंसीति—ननु सर्वनामस्थाने इत्यस्य विषयसप्तमीत्वेन विवक्षणात् परत्वादन्तरङ्गत्वाच्च ङीप बाधित्वा पूर्वमेवासुङि कृते ततो ङीपि बहुपुमसीति स्यादितिचेन्न, स्वार्थद्रव्यलिङ्गसख्याकारकप्रयुक्तकार्याणा क्रमिकत्वस्वीकारेण पूर्वमेव ङीप् इति न कश्चिद्दोषः । २ अस्येति—एतच्च वृत्तिमाधवाद्यनुरोधेन, भाष्यानुक्तत्वेनाप्रमाणत्वादुशन इत्येक रूपमिति प्रामाणिकाः । ३ अमुक इति—अमुकः अमुकी अमुकशर्मेत्यादौ अव्युत्पन्नः अदःशब्दपर्यायोऽमुकशब्दो बोध्य इति केचित् ।

**अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः । ॥ न मु ने ।८।२।३। नाभावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना । अमूभ्याम् ३ । अमीभिः । अमुष्मै । अमीभ्यः २ । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ॥ ॥ इति हलन्ताः पुंलिङ्गाः ॥**

---

## हलन्तस्त्रीलिङ्गप्रकरणम् ।

**॥ नहो धः ।८।२।३४। नहो हस्य धः स्याज्झलि पदान्ते च । उपानत् । उपानद् । उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु । उत्पूर्वात् ष्णिह प्रीतावित्यस्मादृत्विगादिना क्विन् । निपातनाद्दलोपषत्वे । क्विन्नन्तत्वात्कुत्वेन हस्य घः । जश्त्वचर्त्वे । उष्णिक् । उष्णिग् । उष्णिहौ । उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु । द्यौः । दिवौ । दिवः । द्युषु । गीः । गिरौ । गिरः । एवं पूः । चतुरश्चतस्रादेशः । चतस्रः २ । चतसृणाम् । किमः कादेशे टाप् । का । के । काः । सर्ववत् । ॥ यः सौ ।७।२।११०। इदमो दस्य यः स्यात्सौ ॥ इदमो मः ॥ इयम् । त्यदाद्यत्वं टाप् । दश्चेति मः । इमे । इमाः । इमाम् । इमे । इमाः । अनया ॥ हलि लोपः ॥ आभ्याम् ३ । आभिः । अस्यै । अस्याः २ । अनयोः २ । आसाम् । अस्याम् । आसु । अन्वादेशे तु । एनाम् । एने । एनाः । एनया । एनयोः २ । ऋत्विगादिना सृजेः क्विन् अमागमश्च निपातितः । स्रक् । स्रग् । स्रजौ । स्रजः । स्रग्भ्याम् । स्रक्षु । त्यदाद्यत्वं टाप् । स्या । स्ये । स्याः । एवं तद् यद् एतद् । वाक् । वाग् । वाचौ । वाचः । वाग्भ्याम् । वाक्षु । अप्शब्दो नित्यं बहुवचनान्तः। अप्तृन्निति दीर्घः । आपः अपः । ॥ अपो भि ।७।४।४८। अपस्तकारः स्याद्भादौ प्रत्यये परे । अद्भिः । अद्भ्यः २ ।**

---

कार्यं प्रति त्रिपाद्या विहितमसिद्धमिति प्रक्रियाग्रन्थोक्तकार्यासिद्धिपक्षे मनोरथ', अमुमित्यादि न सिध्येदिति केचित् । तन्न । प्रक्रियाग्रन्थोक्तेर्हि कार्यं प्रति कार्ये कर्तव्ये, असिद्ध पूर्वमेव न जातमित्यर्थः । शास्त्रासिद्धत्वेऽप्येवमेव फलितोऽर्थः ॥ तदुक्तं कैयटेन । 'यच्छास्त्रमुच्चारित तस्यासिद्धत्वमशक्य कर्तुमित्यसिद्धवत्त्वनातिदेश आश्रीयत' इति । तथा चातिदेशेन कार्याप्रवर्तकत्वरूपोऽसिद्धधर्मः शास्त्रेऽतिदिश्यमान कार्यासिद्धत्व एव फलति । एव च मनोरथ इत्यत्र उत्वे कर्तव्ये रेफलोपस्य पूर्वमेवाप्रवृत्तौ रोरुत्वस्याप्रतीघातान्मनोरथसिद्धिरप्यूह्या । तथा अमुमित्यादिसिद्धिरिति कार्यासिद्धिपक्षे न काप्यनुपपत्तिरिति ॥—**न मु ने** ॥ ने इति विषयसप्तमीत्याह—**नाभावे कर्तव्य** इति । अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः ॥ नन्वेवमपि कृते नाभावे 'सुपि च' इति दीर्घ स्याद, दीघ प्रति मुत्वस्यासिद्धत्वादत आह—**कृते चेति** । एतच्च ने इत्यस्यावृत्त्या लभ्यते । एकत्र विषयसप्तम्यपरत्र तु सतसप्तमीन्याश्रयणात् ॥ वस्तुतस्तु कृते चेति व्याख्यान व्यर्थ, संनिपातपरिभाषया 'सुपि च' इति दीर्घस्य समाधेयत्वात् ॥ ननु 'अमुना' इति वत् 'अमुना' इत्येवोच्यतां किमनेनासिद्धत्वनिषेधेनेति चेदत्राहुः । न मु ने इत्युक्तिः'न' इति योगविभागार्था, तेन राम' रामेभ्य इत्यादि सिध्यति । अन्यथा हि रोरसिद्धतया उकारस्येत्संज्ञालोपौ कथ स्याताम् । न चानुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रति रुत्व नासिद्धमिति वाच्यम् । तरुमूल देवरुहीत्यादौ 'हशि च' इत्यस्य व्यावृत्तये 'अतो रोः-' इत्यत्रानुनासिकस्यैव निर्देशेन तत्रैव चरितार्थत्वात् ॥ एव च स्थानिवत्सूत्रस्यापि प्रवृत्तौ पदत्वाद्विसर्गो लभ्यते । प्रत्यय. परश्चेत्यादिनिर्देशाश्चेह लिङ्गमिति दिक् ॥ इति हलन्ताः पुंलिङ्गा. ॥

**नहो धः** ॥ द इत्येव तु नोक्त, तथा हि सति नद्धमित्यत्र 'रदाभ्याम्-' इति नत्वं स्यात् 'झषस्तथोः-' इति च न स्यात ॥—**नहो हस्येति** । 'हो ढ.' इत्यतोऽनुवृत्ते 'अलोऽन्त्यस्य' इत्यनेन वा हस्यैवादेश इति भावः ॥ 'झलो झलि' 'पदस्य' 'स्कोः संयोगाद्योरन्ते च' इत्यतो झलपदान्तग्रहणान्यनुवर्तन्ते तदाह—**झलीत्यादि** । झलि परतः पदान्ते वा विद्यमानस्येत्यर्थः ॥—**उपानदिति** । उपपूर्वान्नहः सपदादित्वात् क्विप् । 'नहिवृति-' इति पूर्वपदस्य दीर्घः । सोर्हल्ङ्यादिलोपे धत्व जश्त्वचर्त्वे ॥ अत्रेद बोध्यम् । सुष्ठु अनड्वाहो यस्यामिति बहुव्रीहौ स्वनड्वानिति पुवदेव रूपम् । केचित्तु गौ. गादिङीष कृत्वा स्वनड्वाही इत्युदाजहुः । तदसत् । अनुपसर्जनाधिकारविरोधात् ॥—**गीरिति** । 'गॄ निगरणे' 'गॄ शब्दे' इत्यस्माद्वा क्विप् । 'ऋत इद्धातोः' इतीत्वे रपरत्वम । 'र्वोरुपधाया दीर्घः' इति दीर्घः ॥—**पूरिति** । 'पॄ पालनपूरणयोः' 'उदोष्ठ्यपूर्वस्य' इत्युत्वम ॥—**चतस्र इति** । इह 'चतुरनडुहो-' इत्याम्न भवति, परत्वादाम वाधित्वा चतस्रादेशे कृते सकृद्गतिन्यायेन पुनस्तस्याप्रवृत्तेः ॥—**चतसृणामिति** । 'न तिसृचतसृ' इति न दीर्घः ॥—**सर्ववदिति** । 'तेन तुल्यम्-' इति वति, 'सर्वनाम्नो वृत्तिमात्रे-' इति पुवद्भाव. ॥—**यः सौ** ॥ यत्वमिदं स्त्रियामेव परिशेषात् । 'इदोऽय् पुंसि' इति पुंस्ययवचनात् क्लीवे सोर्लुका लुप्तत्वाच्च ॥—**एवमिति** । सा । ते । ता' । या । ये । याः । एषा । एते । एताः । इत्यादीत्यर्थः ॥—**वागिति** । वचे. क्विब्वचि-' इत्यादिना क्विप् दीर्घोऽसप्रमारण च । 'चोः कुः' ॥—**अप्शब्द इति** ।

---

१ द्यौरिति—यणि औत्वस्य बहिरङ्गासिद्धत्वं तु न, नाजानन्तर्य इति निषेधात् ।

अपाम् । अप्सु । दिक् । दिग् । दिशौ । दिशः । दिग्भ्याम् । दिक्षु । त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक् । दृग् । दृशौ । दृशः । त्विट् । त्विड् । त्विषौ । त्विषः । त्विड्भ्याम् । त्विट्त्सु । त्विट्सु । सह जुषते इति सजूः । सजुषौ । सजुषः । सजूर्भ्याम् । सजूष्षु । सजूःषु । षत्वस्यासिद्धत्वाद्रुत्वम् । आशीः । आशिषौ । आशिषः । आशीर्भ्याम् । असौ । त्यदाद्यत्वं टाप् । औङः शी । उत्वमत्वे । अमू । अमूः । अमूम् । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्याम् । अमूभ्यः । अमुष्याः २ । अमुयोः २ । अमूषाम् । अमुष्याम् । अमूषु ॥ ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

---

## हलन्तनपुंसकलिङ्गप्रकरणम् ।

स्वमोर्लुक् । दत्वम् । स्वनडुत् । स्वनडुद् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ दिव उत् ॥ अहर्विमलद्यु । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायाम् ॥ * उत्तरपदत्वे चापदादिविधौ प्रतिषेधः । इति प्रत्ययलक्षणं न । विमलदिवी । विमलदिवि । अपदादिविधौ किम् । दधिसेचौ । इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव । कुत्वे तु न । वाः । वारी । अझलन्तत्वान्न नुम् । वारि । चत्वारि । न लुमतेति कादेशो न । किम् । के । कानि । इदम् । इमे । इमानि ॥ * अन्वादेशे नपुंसके एनद्वक्तव्यः ॥ एनत् । एने । एनानि । एनेन । एनयोः २। ब्रह्म । ब्रह्मणी । ब्रह्माणि । हे ब्रह्मन् हे ब्रह्म ॥ रोऽसुपि ॥ अहर्भाति । विभाषा ङिश्योः । अह्नी । अहनी । अहानि । ॥ अहन् ।८।२।६८। अहन्नित्यस्य रुः स्यात्पदान्ते । अहोभ्याम् । अहोभिः । इह अहः अहोभ्यामित्यादौ रुत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते । अहन्नित्यावर्त्य नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः । तदन्तस्यापि रुत्वरत्वे । दीर्घाण्यहानि यस्मिन् स दीर्घाहा निदाघः । इह हल्ङ्यादि-

'आप्नोतेर्ह्रस्वश्च' इति ह्रस्वश्चकारात् क्विप् ॥ 'अच उपसर्गात्त.' इत्यतोऽनुवर्तनादाह—तकारः स्यादिति ॥—दिगिति । क्विन्नन्तत्वात् कुत्वम् । षडगकाः..प्रागवद्बोध्या. ॥—अन्यत्रापीति । त्यदाद्युपपदलाभावेऽप्यात्यर्थः ॥ . त्विडिति । 'त्विष दीप्तौ' इत्यस्मात् क्विप् । जश्त्वचर्त्वे ॥—सजूरिति । 'जुषी प्रीतिसेवनयो.' इत्यस्मात् क्विप् । 'ससजुषो–' इति षस्य रुत्वम् । 'र्वोः–' इति दीर्घः ॥—आशिषाविति । 'आशासः क्वावुपसङ्ख्यानम्' इत्युपधाया इत्वम्, 'शासिवसि–' इति षत्वम् ॥—असाविति । अदसस्त्यदाद्यत्व पररूपत्व टाप् । एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'अदस औ सुलोपश्च' । 'तदोः–' इति सत्वमित्येके ॥ अन्ये तु परत्वाद्विशेषविधेश्च पूर्वमौत्व ततोऽत्र नात्वटापावित्याहु. ॥ ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

. दत्वमिति ॥ 'वसुस्रंसु–' इति दत्वमनडुच्छब्दान्तेऽपि प्रवर्तते पदाधिकारस्थत्वादिति भावः ॥—पूर्वपदस्येवेति । अन्यथा राजपुरुषो वागाशीरित्यादौ नलोपकुत्वादिक यथासभव न स्यादिति भावः ॥—उत्तरपदत्वे चेति । उत्तरशब्देनोत्तरपदमुच्यते । उत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षण न भवतीत्यर्थः । एतेन सुधियौ सुधिय इत्यत्रान्तर्वर्तिसुपा पदत्वात्पक्षे शाकलप्रसङ्ग इत्याशङ्का परास्ता । उक्तरीत्या प्रत्ययलक्षणनिषेधात् ॥ उत्तरपदत्वे किम् । राजपुरुष इत्यादौ नलोपो यथा स्यात् ॥ पश्यति दधीत्यादावपि दधिशब्दस्य पदत्वे प्रत्ययलक्षण भवत्येवोत्तरपदस्य समासावयवे रूढत्वात् ॥—दधिसेचाविति । सिञ्चत इति सेचौ 'अन्येभ्योऽपि दृश्यन्ते' इति विच । दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक् सुबुत्पत्तेः समासविधानात् सेचशब्दस्य पदसञ्ज्ञा नास्तीति पदादित्व सकारस्य न स्यात् ॥ नन्वेवमुपपदसमासे षत्व दुर्वारमिति चेद् अत्राह कैयट. । 'अनभिधानात्सोपपदाद्विजभाव', दधिसेचाविति प्रयोगाभावात्' इति॥ वस्तुतस्तु पदादादिः पदादिरिति पक्षे तूपपदसमासेऽपि षत्व सुपरिहरम् ॥—अन्वादेश इति । अम्येवेद विधीयते नलौट्शसादिषु, फलाभावात् । 'स्वमोर्नपुंसकात्' इत्यमो लुका लुप्तेऽपि प्रत्ययलक्षणमिह प्रवर्तते वचनसामर्थ्यादित्याहुः ॥ वस्तुतस्तु 'द्वितीयाटौःसु–' इति सूत्र एव एनद्वक्तव्यः । एनम् । एनौ । एनानित्यादि तु त्यदाद्यत्वेन सिद्धम् । क्लीबे अमि लुका लुप्तत्वेऽपि तकारोच्चारणसामर्थ्यादेनदादेश. । न चैवमेतच्छ्रितमित्यत्राप्येनदादेशापत्ति. । 'द्वितीयाश्रिता–' इति समासे कृते सुपो लुकि द्वितीयादिविभक्तिपरत्वाभावात् । न च तकारोच्चारणसामर्थ्यादेनदादेश इत्युक्तमिति वाच्यम् । एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन बहिरङ्गे सामासिके लुकि तदप्रवृत्तेरिति मनोरमायां स्थितम् ॥—ब्रह्मणी- इति । इह 'विभाषाङिश्योः' इत्यल्लोपो न, 'न सयोगाद्वमन्तात्' इति निषेधात् ॥—रोऽसुपि । अहर्भातीति । 'अहन्' इति रुत्वे कृते तु 'हशि च' इत्युत्वप्रवृत्त्या अहो भातीति स्यादिति भाव ॥—नलोपाभावं निपात्येति । 'अहन्' इत्यत्र नकारान्तरं प्रश्लिष्य नान्तस्य अहन्शब्दस्य रुरिति व्याख्ययापि रुत्वरत्वयोर्नकारस्थानिकत्व सेत्स्यतीति बोध्यम् ॥—तदन्तस्यापीति । पदाधिकारस्थत्वादिति भावः ॥ न चात्र प्रत्ययलक्षणन्यायेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य समासैकदे-

१ तदन्तस्यापीति—ननु अत्र तदन्तविधिर्दुर्लभः, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति परिभाषाविरोधादिति चेन्न । तस्याः परिभाषायाः प्रत्ययविषयत्वात् । ध्वनित चेदमप्तृन्निति सूत्रे स्वसा परमस्वसेति उदाहरण ददता भाष्यकारेण ।

लोपे प्रत्ययलक्षणेनाऽसुपीति निषेधाद्रत्वाभावे रुः । तस्यासिद्धत्वान्नान्तलक्षण उपधादीर्घः । संबुद्धौ तु हे दीर्घाहो निदाघ । दीर्घाहानौ । दीर्घाहानः । दीर्घाह्णा । दीर्घाहोभ्याम् । दण्डि । दण्डिनी । दण्डीनि । स्रग्वि । स्रग्विणी । स्रग्वीणि[1] । वाग्मि । वाग्मिनी वाग्मीनि । बहुवृत्रहाणि । बहुपूषाणि । बह्वर्यमाणि । असृजः पदान्ते कुत्वम् । सृजेः क्विनो विधानात् । विश्वसृडादौ तु न । सृजिदृशोरिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात्[2] । यद्वा व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः । स्रगृत्विक्शब्दयोस्तु निपातनादेव कुत्वम् । असृक्शब्दस्तु अस्यतेरौणादिके ऋच्प्रत्यये बोध्यः । असृक् । असृग् । असृजी । असृञ्जि । पद्दन्न इति वा असन् । असानि । असृजा । अस्ना । असृग्भ्याम् । असभ्यामित्यादि । ऊर्क् । ऊर्ग् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः ॥ * **बहूर्जि नुम्प्रतिषेधः** ॥ * **अन्त्यात्पूर्वो वा नुम्** ॥ बहूर्जि बहूर्ञ्जि वा कुलानि । त्यत् । त्यद् । त्ये । त्यानि । तत् । तद् । ते । तानि । यत् । यद् । ये । यानि । एतत् । एतद् । एते । एतानि । अन्वादेशे तु एनत् । बेभिद्यतेः क्विप् । बेभित् । बेभिद् । बेभिदी । शावल्लोपस्य स्थानिवत्त्वादझलन्तत्वाच्च नुम् । अजन्तलक्षणस्तु नुम् न । स्वविधौ स्थानिवत्त्वाभावात् । बेभिदि ब्राह्मणकुलानि । चेच्छिदि ॥ गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः । असंध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥ स्वम्सुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः । चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥ तथाहि । गामञ्चतीति विग्रहे ऋत्विगादिना क्विन् । गतौ नलोपः । अवङ् स्फोटायनस्येत्यवङ् । गवाक् । गवाग् । सर्वत्र विभाषेति प्रकृतिभावे । गोअक् । गोअग् । पूर्वरूपे । गोऽक् । गोऽग् । पूजायां नस्य कुत्वेन ङः । गवाङ् । गोअङ् । गोऽङ् । अम्यपि एतान्येव नव । औङः शी । भत्वादच इत्यल्लोपः । गोची । पूजायां तु गवाञ्ची । गोअञ्ची । गोऽञ्ची । जश्शसोः शिः । शेः सर्वनामस्थानत्वान्नुम् । गवाञ्चि । गोअञ्चि । गोञ्चि । गतिपूजनयोस्त्रीण्येव । गोचा । गवाञ्चा । गोअञ्चा । गोऽञ्चा । गवाग्भ्याम् । गोअग्भ्याम् । गोग्भ्याम् । गवाङ्भ्याम् । गोअङ्भ्याम् । गोऽङ्भ्याम् । इत्यादि ॥

---

शस्याप्यहन्शब्दस्य पदत्वाद्रुत्वं स्यादेव, किमनेन तदन्तविध्याश्रयणेनेति शङ्क्यम् । 'उत्तरपदत्वे चापदादिविधौ' इति प्रतिषेधेन प्रत्ययलक्षणाप्रवृत्तेः ॥—**सृजिदृशोरिति सूत्र** इति । एतच्चोपलक्षणम् । 'मृजेर्वृद्धिः' इतिसूत्रेऽपि तत्प्रयोगात् ॥ **रज्जुसृड्भ्यामि**ति । ननु भ्याप्रत्ययो झलादिरकिद् भवतीति 'सृजिदृशोः' इत्यमागमः स्यात् । मैवम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । न चैवमपि 'अनुदात्तस्य चर्दुपधस्य–' इति वैकल्पिकः प्राप्नोति, तद्विधौ धातोः स्वरूपेणानुपादानादिति शङ्क्यम् । धातोरुच्यमान कार्यं तत्प्रत्यय एवेति परिष्कारात् । एव च प्रसृड्भ्यां, प्रसृड्भिरित्यादौ नाय दोषः प्रसज्यते । एतच्च 'मृजेर्वृद्धिः' इति सूत्रे भाष्ये स्पष्टम् । ननु धातोरुच्यमानं कार्यं तत्प्रत्यय एवेति चेद् धियौ धियः भुवौ भुव इत्यादावियङुवङौ न स्याताम्, किं तु चिक्षियतुः लुलुवतुरित्यादावेव स्याताम् ॥ सत्यम् । वस्तुगत्या धातोरेवोच्यमानं कार्यमियङादिकं न भवति किं त्वङ्गस्योच्यमानमिति वैषम्यात् ॥—**कुत्वापवाद** इति । षत्वसूत्रे सृजमृजयजेति विशिष्य ग्रहणादिति भावः ॥—**असृक्शब्दस्त्वि**ति । एतच्च क्षीरस्वामिग्रन्थे स्पष्टम् ॥—**ऋच्प्रत्यये बोध्य** इति । यद्यप्यस्मिन्पक्षे स्वरो भिद्यते, तथापि लोके स्वरस्यानादराद्वेदे तु बाहुलकादिष्टस्वरः सिध्यतीति भावः ॥ **बहूर्जी**ति । इदमन्त्यादिति च वाचनिकम् । तथा च वार्तिकम् । 'बहूर्जि प्रतिषेधः, अन्त्यात्पूर्वं नुममेके' इति । भाष्ये तु अचः परो यो झल् तदन्तस्य नुमित्याश्रित्य प्रथमवार्तिक प्रत्याख्यातम् । एव च उन्र्जीत्यत्र नुम् दुर्लभः । किं च उर्द माने क्रीडायां च । गर्ह गर्हायामित्यादीना क्विबन्ताना भाष्यमते नुमा न भाव्यमेवेति बोध्यम् ॥—**अल्लोपस्य स्थानिवत्त्वा**दिति । 'क्वौ लुप्त न स्थानिवत्' इति तु नेहाश्रीयते । तस्य क्वाचित्कत्वात् । 'क्वौ विधि प्रति न स्थानिवत्' इत्यस्यैव सार्वत्रिकत्वादिति भावः ॥ 'जायन्ते नव सौ, तथाऽमि च नव, भ्याभिस्भ्यसा सगमे षट्सङ्ख्यानि, नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि । चत्वार्यन्यवचःसु कस्य विबुधा शब्दस्य रूपाणि तज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥' इति नरपतिसभायां क्वचित् केनचित् प्राचीनेन कृतस्याक्षेपस्य प्राचीनैरेव पण्डितैः कैश्चित् 'गवाक्शब्दस्य' इत्यादिना 'विभावय' इत्यन्तेन श्लोकद्वयेन समाधानमुक्तम् । तदेव श्लोकद्वय प्रकृतोपयोगादाह—**गवाक्शब्दस्य रूपाणी**ति ॥ अञ्चतेर्गतौ नलोपः, पूजायां तु नेत्याशयेनाह—**अर्चागतिभेदत** इति । आद्यादित्वात्तसिः । पूजार्थगत्यर्थभेदेनासन्ध्यवङादिभिर्नवाधिकशतं रूपाणि बोध्यानीत्यर्थः ॥ उक्तसङ्ख्यामेव व्यवस्थापयति—**स्वम्सुप्स्वि**ति । प्रत्येकमिति शेषः । एवमग्रेऽपि षट् त्रीणि चत्वारीत्यत्रापि बोध्यम् ॥—**रूपाणी**ति । संकलनया नवाधिकशत रूपाणीत्यर्थः ॥ इह 'चयो द्वितीयाः–' इति वार्तिकमनाश्रित्य नवाधिकशतमित्युक्तमिति बोध्यम् । तदाश्रयणे तु त्रीणि रूपाणि वर्धन्त इत्यनुपदमेव वक्ष्यमाणत्वात् ॥—**इत्यादी**ति । आदिशब्देनान्यान्यपि ज्ञेयानि । तद्यथा गवाग्भिः । गोअग्भिः । गोग्भिः । गवाङ्भिः । गोअङ्भिः । गोऽङ्भिः ॥ ङयि । गोचे । गवाञ्चे । गोअञ्चे । गोऽञ्चे ॥ भ्यामि प्राग्वत् ॥ भ्यसि । गवाग्भ्यः । गोअग्भ्यः । गोग्भ्यः । गवाङ्भ्यः । गोअ-

---

१ स्रग्वीणीति—इन्ग्रहणेऽनर्थकस्यापि ग्रहण भवतीति पूर्वमुक्त तस्यानेन फल दर्शितम् । २ भाष्यप्रयोगादिति—रज्जुसृड्भ्यामिति भाष्यप्रयोगेण अनव्ययपूर्वपदे कुत्वाभावो ज्ञाप्यते, अव्ययपूर्वपदत्वे तु असृगित्यादौ कुत्वमेवेति बोध्यम् ।

सुपि तु ञान्तानां पक्षे क्कोः कुगिति कुक् । गवाङ्क्षु । गोअङ्क्षु । गोऽङ्क्षु । गवाङ्षु गोअङ्षु । गोऽङ्षु । गवाक्षु । गोअक्षु । गोक्षु । न चेह चयो द्वितीया इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम् । चर्त्वस्यासिद्धत्वात् । कुक्पक्षे तु तस्यासिद्धत्वाज्जश्त्वाभावे पक्षे द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव ॥ ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात् । रूपाण्यश्वाक्षिभूतानि ५२७ भवन्तीति मनीषिभिः ॥ १ ॥ तिर्यक् । तिरश्ची । तिर्यञ्चि । पूजायां तु । तिर्यङ् । तिर्यञ्ची । तिर्यञ्चि । यकृत् । यकृती । यकृन्ति । पद्दन्निति वा यकन् । यकानि । यक्ना । यकृता । शकृत् । शकृती । शकृन्ति । शकानि । शक्ना । शकृता । ददत् ददती । ॥ वा नपुंसकस्य ।७।१।७९। अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात्सर्वनामस्थाने परे। ददन्ति । ददति । तुदत् । ॥ आच्छीनद्योर्नुम् ।७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः । तुदन्ती । तुदती । तुदन्ति । भात् । भान्ती । भाती । भान्ति । पचत् । ॥ शप्श्यनोर्नित्यम् ।७।१।८१। शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य

---

ड्भ्यः । गोऽड्भ्यः ॥ ङसौ । गोचः । गवाश्चः । गोअश्चः । गोऽश्चः ॥ भ्यामि भ्यसि च प्रागवत् ॥ ङसि पञ्चम्येकवचनवत् ॥ ओसि । गोचो. । गवाश्चोः । गोअश्चोः । गोऽश्चोः ॥ आमि । गोचाम् । गवाश्चाम् । गोअश्चाम् । गोऽश्चाम् ॥ ङौ तु गोचि । गवाश्चि । गोअश्चि ॥ गोऽश्चि । ओसि प्रागवत् ॥ सुपि तु गवाड्क्षु । गवाड्षु । गोअड्क्षु । गोअड्षु । गोऽड्क्षु । गोऽड्षु । गवाक्षु । गोअक्षु । गोक्षु ॥ ननु भ्याम्त्रये भ्यस्द्वये ङसिङसोरोस्द्वये च समानरूपत्वात् कथमिह नवाधिकशतमित्युक्तमिति चेद् ॥ अत्राहुः—अर्थभेदेन रूपभेदमाश्रित्य तथोक्तमिति ॥—**षण्णामाधिक्यं शङ्क्यमि**ति । नवसु मध्ये ककारस्थाने पञ्चक्षिकखकारप्रवृत्त्या रूपषट्काधिक्य न शङ्क्यमित्यर्थः ॥—**चर्त्वस्यासिद्धत्वादि**ति । तथा च शास्त्रदृष्ट्या ककारो नास्त्येव किं तु गकार एवास्तीति भावः ॥—**तस्यासिद्धत्वादि**ति। कुकोऽसिद्धत्वादित्यर्थः ॥—**वर्धन्त एवे**ति । एवं च त्रयाणामाधिक्यसभवात्सुपि द्वादश रूपाणि भवन्तीति सकलनया द्वादशाधिकशत मत न तु नवाधिकशतमिति भावः ॥—**अश्वाक्षिभूतानी**ति । सप्तविंशत्यधिका पञ्चशतीत्यर्थः । सौ नवानामन्त्यस्य द्वित्वे अष्टादश ॥ औङि चतुर्णां मध्ये पूजार्थानां त्रयाणा अद्वित्वे सप्त । अणोऽप्रगृह्यस्येत्यनुनासिकस्तु नास्ति प्रगृह्यत्वात् ॥ जसि अद्वित्वस्यानुनासिकस्य च विकल्पाद् द्वादश ॥ संकलनया सप्तत्रिंशत् । एवं द्वितीयायामपि विभक्तौ सप्तत्रिंशत् । तथा च संकलनया चतुःसप्ततिः ॥ टायां चतुर्णां मध्ये पूजार्थाना त्रयाणां अद्वित्वे सप्त । तेषां च सप्तानामनुनासिकविकल्पे चतुर्दश । संकलनया अष्टाशीतिः ॥ भ्यामि षट्सु रूपेषु भात्पूर्वस्य द्वित्वे द्वादश, तेषां द्वादशानामपि 'यणो मयः' इति यद्वित्वे चतुर्विंशतिः, तेषामपि मकारस्य द्वित्वेऽष्टचत्वारिंशत् । संकलनया षट्त्रिंशदधिक शतम् ॥ भिसि चतुर्विंशति. । भात् पूर्वस्य विसर्गस्य द्वित्वात् । संकलनया षष्ट्युत्तरशतम् ॥ ङयि चतुर्णां मध्ये पूजार्थानां त्रयाणां अद्वित्वे सप्त । अनुनासिकस्तु नास्ति । एकारस्यानण्त्वात् । सकलनया सप्तोत्तरषष्ट्यधिक शतम् ॥ भ्यामि प्रागवदेवाष्टचत्वारिंशत् । तथैव भ्यसि भात् पूर्वस्य यविसर्गयोश्च द्वित्वात् । सकलनया त्रिपष्ट्यधिक शतद्वयम् ॥ ङसौ चतुर्णां मध्ये अद्वित्वे सप्त । तेषा तु सप्तानां विसर्गद्वित्वे चतुर्दश । संकलनया सप्तोत्तरसप्तत्यधिक शतद्वयम् । भ्यांभ्यसोः प्रागवदेव प्रत्येकमष्टचत्वारिंशत् । सकलनया त्रिसप्तत्यधिकं शतत्रयम् ॥ ङसाविव ङस्ओस्आम्ङिओस् इत्यत्रापि प्रत्येक चतुर्दश । चतुर्षु रूपेषु मध्ये अद्वित्वे सप्तानामप्यन्त्यस्य द्वित्वात् । ङौ तु सप्तानामप्यन्त्यस्य 'अणोऽप्रगृह्यस्य—' इति वैकल्पिकानुनासिकप्रवृत्तेः । सकलनया त्रिचत्वारिंशदधिकं शतचतुष्टयम् ॥ सुपि गत्यर्थे त्रयाणां कद्वित्वे षट् । तेषां तु 'खयःशरः' इति षद्वित्वे द्वादश । उकारस्यानुनासिके चतुर्विंशतिः संकलनया सप्तोत्तरषष्ट्यधिक शतचतुष्टयम् । पूजायां तु कुगभावे त्रयाणां ङकारद्वित्वेऽनुनासिके च द्वादश । कुक्-पक्षे तु चयो द्वितीयादेशे षट् । षण्णां ङषयोर्द्वित्वेऽननुनासिके चाष्टचत्वारिंशत् । सकलनया सप्तविंशत्यधिका पञ्चशतीत्यर्थः॥—**तिरश्ची** इति । भत्वात् 'अच ' इत्यल्लोपः 'अलोपे' इति वचनात्तिर्यादेशाभावः ॥—**ददद्**िति । पुलिङ्गेऽप्यय व्युत्पादितः ॥—**शते**ति । 'ऋदुशन—' इत्यनङ् । शतृप्रत्यय इत्यर्थः ॥—**आच्छीनद्योः**—॥ नुम्ग्रहणमिह चिन्त्यप्रयोजन 'नाभ्यस्ताच्छतुः' 'वा नपुंसकस्य' इत्यत्र 'इदितो नुम् धातोः' इत्यतोऽनुवृत्तेरावश्यकतया तदुत्तरत्रापि तत एवानुवर्तते वाधकाभावात् ॥—**शतुरवयव** इति । तुदादेः शस्यान्तरङ्गत्वाच्छत्रादेशाकारेण सहैकादेशे कृतेऽवर्णान्तात्परस्य शतुरिति न भवति । 'उभयत आश्रयणे नान्तादिवत्' इति वक्ष्यमाणत्वादिति भावः ॥—**भादि**ति । भा दीप्तौ । लटः शतर्यदादित्वाच्छपो लुक् ॥—**शप्श्यनोर्नित्यम्** ॥ आरम्भसामर्थ्यान्नित्यत्वे सिद्धेऽपि नित्यग्रहणमिह वेत्यधिकारनिवृत्त्यर्थम् । अन्यथा श्नार-

---

१ वा नपुसकस्येति—ननु वाशाविवेव सूत्रयितुमुचितम्, नपुंमके तस्यैव सर्वनामस्थानस्य सभवात् इति चेन्न । श्रुतानुमितन्यायज्ञापनाद्वारा गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्यात्, बहवो ददतो येषु तानि बहुददति इत्यत्र माभूदित्येवमर्थ तत्सत्वात् ।

नित्यं नुम् स्यात् शीनद्योः परतः । पचन्ती । पचन्ति । दीव्यत् । दीव्यन्ती । दीव्यन्ति । स्वप् । स्वब् । स्वपी । निरवकाशत्वादपि नुमः प्राक् अप्तृन्निति दीर्घः । प्रतिपदोक्तत्वात् । स्वाम्पि । निरवकाशत्वं प्रतिपदोक्तत्वमिति पक्षे तु प्रकृते तद्विरहान्नुमेव । स्वम्पि । स्वपा ॥ अपो भि ॥ स्वद्भ्याम् । स्वद्भिः । अर्तिपृवपीत्यादिना धनेरुस् । हल्वस् । धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षत्वम् । धनूंषि । धनुषा । धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पिपठिषतेः क्विप् । वोरिति दीर्घः । पिपठीः । पिपठिषी । अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न । स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नुम् न । पिपठिषि । पिपठीर्भ्यामित्यादि । पयः । पयसी । पयांसि । पयसा । पयोभ्यामित्यादि । सुपुम् । सुपुंसी । सुपुमांसि । अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ॥ ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

---

## अव्ययप्रकरणम् ॥

**स्वरादिनिपातमव्ययम्** ।१।१।३७। स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, अवस्, समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ्, हेतौ, इद्धा, अद्धा,

म्नसामर्थ्यादिह नित्यमुत्तरत्र विकल्प इत्याशङ्क्येत ॥—**पचन्ती** इति । कर्तरि शपि नित्य नुम् ॥—**दीव्यन्ती** इति । दिवादिभ्यः श्यनि नित्य नुम् । पचन्तीति दीव्यन्तीति बहुवचने तु 'नपुसकस्य झलचः' इति नुम् बोध्य. ॥—**स्वबिति** । शोभना आपो यस्मिन्सरसीति बहुव्रीहिः । 'ऋक्पूरब्–' इति समासान्ते प्राप्ते 'न पूजनात्' इति निषेध । 'ह्रस्वनद्युपसर्गेभ्यः–' इति ईन्न भवति तत्र 'अप' इति 'कृतसमासान्तस्यानुकरणम्' इति वक्ष्यमाणत्वात् ॥—**निरवकाशत्वं प्रतिपदोक्तत्वमिति** । अयमेव पक्षः प्रबल इति 'छदिरुपधिबलेर्ढञ्' इति सूत्रे मनोरमाया स्थितम् ॥—**धनेरुसिति** । 'जनेरुसिः' इत्यत उसिरित्यनुवर्तमाने 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' इत्यौणादिकेनेत्यर्थः ॥—**धनुर्भ्यामिति** । इह 'र्वोरुपधायाः–' इत्यादिना दीर्घो न शङ्क्यः, रेफान्तस्याधातुत्वात् ॥—**एवमिति** । 'चक्षे. शिच' चादुसिः । चक्षुः । 'अर्चिशुचिहुसृपि–' इत्यादिना जुहोतेरिसिः । आदिशब्देन सर्पिरर्चिरादयो ग्राह्याः ॥—**सुपुमांसीति** । 'पुंसोऽसुङ्' इति सूत्रे सुटीति व्याचक्षाणस्य प्राचो मते जमीष्टसिद्धावपि शसि नैतत्सिध्येत् ॥ औङि चातिप्रसङ्गः । 'इतोऽत्सर्वनामस्थाने' इत्यतोऽनुवृत्तिं पर्यालोच्य सर्वनामस्थान इति यथाश्रुत ब्रुवतां तु सर्वेष्टसिद्धि' ॥ ॥ इति हलन्ता नपुसकलिङ्गाः ॥

**स्वरादिनिपातमव्ययम्** ॥ स्वरादयश्च निपाताश्चेति समाहारद्वन्द्वः ॥ ननु चादिष्वेव स्वरादीन् पठित्वा प्रकृतसूत्र परित्यज्य 'तद्धितश्चासर्व–' इत्यादि सूत्रचतुष्टयमपि 'चादयोऽसत्त्वे' इत्यस्माद् ऊर्ध्वं कृत्वाव्ययप्रदेशेषु निपातशब्देनैव व्यवह्रियतामिति चेन्न । स्वस्ति वाचयति स्व. पश्यति स्वः पततीत्यादौ कर्मादिकारकयोगेन सत्त्ववाचकत्वात् तेषा निपातसज्ञानापत्तेः । चादीना ह्यसत्त्ववाचिनामेव निपातसज्ञा, न तु सत्त्ववाचिनाम् । स्वरादीना तु सत्त्ववाचिनामसत्त्ववाचिना चाव्ययसंज्ञेष्यत इति व्यवस्थानापत्तेश्च ॥ अथ 'प्राग्रीश्वरान्निपाता.' 'स्वरादीनि–' 'चादयोऽसत्त्वे' इति सूत्र्यता, तथा हि सति स्वरादीनां सत्त्ववचनानामपि निपातसज्ञा सेत्स्यतीति चेन्न । एव हि 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञा स्वरादीनामप्येकाचा प्रसज्येत । सन्ति हि स्वरादिषु 'किमोऽत' 'दक्षिणादाच्' इत्यादावेकाचो तद्धिता, केन्प्रभृतय एकाचः कृत्प्रत्ययाश्च सन्ति । 'तसिलादिस्तद्धित एधाच्पर्यन्त ' इति सूत्रस्य 'कृन्मेजन्त' इति सूत्रस्य च स्वरादिगणपठितत्वात् । यद्यप्यत्र मूले स्वरादिषु गणसूत्रद्वयमिद न पठित, तथापि प्राचा पाठे लब्धमित्यनुपदमेव स्फुटीकरिष्यते ॥ स्वरादीनुदाहरति—**स्वरित्यादिना** । **स्वरिति** स्वर्गे परलोके च । **अन्तरिति** मध्ये । **प्रातरिति** प्रत्यूषे । **पुनरित्य**प्रथमे विशेषे च । **सनुतरि**त्यन्तर्धाने । स्वराद्याः पञ्च रेफान्ता' । तेन स्वर्याति प्रातरत्रेत्यादावुत्व न भवति । सान्तत्वे हि स्यादेव दोषः । **उच्चैस्** महति । **नीचैस्** अल्पे । **शनैस्** क्रियामान्द्ये । **ऋधक्** सत्येऽपि । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । **युगपदि**त्येककाले । **आराद्**दूरसमीपयोः । **पृथक्** भिन्ने । **ह्यस्** अतीतेऽह्नि । **श्वोऽ**नागतेऽह्नि । **दिवा** दिवसे । **रात्रा**विति निशि । **साय**मिति निशामुखे । **चिर**मिति बहुकाले । **मनाक्**, **ईषत्** इमावल्पे । **जोषं** सुखे मौने च । **तूष्णी**मिति मौने । **बहिस् अवस्** इमौ बाह्ये । **समये**ति समीपे मध्ये च । **निकषे**त्यन्तिके । **स्वय**मिति आत्मनेत्यर्थे । **वृथे**ति व्यर्थे । **नक्त**मिति रात्रौ । **नञ्** इति निषेधे । **हेता**विति निमित्ते । **इद्धे**ति प्राकाश्ये । **अद्धे**ति स्फुटावधारणयोः । तत्त्वातिशय-

१ निरवकाशत्वमिति—इदं च शेषाद्विभाषेत्यत्र भाष्ये स्पष्टम् तत्र हि—'शेषग्रहणमनर्थकं, ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति' इत्याशङ्क्य 'अनवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कब्भावे सावकाशाः' इत्युक्तम् । २ स्वरिति—प्रयोगस्थानामनुकरणान्येतानि । तत्रानुकार्यानुकरणयोरभेदविवक्षया प्रातिपदिकत्वाभावेन सुबनुत्पत्तिः । भूसत्तायामितिवद् । तेन विसर्गादिकं न । ३ आरादिति—अव्ययात्त्यबितिसूत्रे भाष्ये ग्रामविशेषवाचिनोऽपि आराच्छब्दस्याव्ययत्वं स्वीकृतम् ।

**सामि, वत् ब्राह्मणवत् । क्षत्रियवत् । सना, सनत्, सनात्, उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, श्रौषट्, वौषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, प्रवाहिका, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्धम्, नमस्, हिरुक्, धिक्, अम्, आम्, प्रताम्, प्रशान्, प्रतान्, मा, माङ्, । आकृतिगणोऽयम् ॥ च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, कुवित्, नेत्, चेत्,**

योरित्यन्ये । **सामी**त्यर्थजुगुप्सितयोः ॥ **वत्** । 'तेनतुल्यम्-' इत्यादिभिर्विहितो यो वतिप्रत्ययः स इह गृह्यते । तदाह—**ब्राह्मणवत् क्षत्रियवत्** इति । प्रत्ययमात्रस्य संज्ञाप्रयोजनाभावात्प्रत्ययान्तमुदाहृतम् । यस्तु 'उपसर्गाच्छन्दसि धात्वर्थे' इति विहितः, स इह न गृह्यते । 'यदुद्वतो निवतो यासि' इत्यत्र सत्त्वधर्मस्य लिङ्गसङ्ख्यान्वयस्य दर्शनात् ॥ अत्र वदन्ति । 'तद्धितश्चासर्वविभक्तिः' इत्यत्र 'तसिवती' इति वतिप्रत्ययोऽपि परिगण्यते, तच्च न कर्तव्यं स्वरादिपाठेनैव गतार्थत्वात् स्वरादिषु वा वदिति न पठनीयमिति ॥—**सना, सनत्, सनात्** एते नित्ये । **उपधे**ति भेदे । **तिरस्** अन्तर्द्धौ तिर्यगर्थे परिभवे च । **अन्तरे**ति मध्ये विनार्थे च । **अन्तरे**णेति[1] वर्जने । **ज्योगि**ति कालभूयस्त्वे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे च । **कमि**ति वारिमूर्धनिन्दासुखेषु । **शमि**ति सुखे । **सहसे**त्याकस्मिकाविमर्शयोः । **विने**ति वर्जने । **नाने**त्यनेकविनार्थयोः । **स्वस्ती**ति मङ्गले । **स्वधा** पितृदाने । **अलं** भूषणपर्याप्तिशक्तिवारणनिषेधेषु ॥ **वषट् श्रौषट् वौषट्** एते हविर्दाने । **अन्यद**न्यार्थे । **अस्ती**ति सत्तायाम् । **उपांशि**वत्यप्रकाशोच्चारणरहस्ययोः । **क्षमेति** क्षान्तौ । **विहायसे**ति वियदर्थे । **दोषे**ति रात्रौ । **मृषा मिथ्ये**त्येतौ वितथे ॥ **मुधेति** व्यर्थे ॥ इत ऊर्ध्वं 'क्त्वातोसुन्कसुन.' 'कृन्मकारसन्ध्यक्षरान्तः' 'अव्ययीभावश्च' इति गणसूत्रत्रयमष्टाध्यायीस्थसूत्र्या समानार्थकमिह न पठित चेदपि प्राचीनगणपाठे तदस्तीति बोध्यम् । वैयर्थ तु परिहरिष्यते ॥ पुरेत्यविरते चिरातीते भविष्यदासन्ने च । **मिथो मिथस्** एतौ रह:सहार्थयोः । **प्राय**मिति बाहुल्ये । **मुहुसि**ति पुनरर्थे । **प्रवाहुक**मिति समानकाले ऊर्ध्वार्थे च । **प्रवाहिके**ति पाठान्तरम् । **आर्यहल**मिति बलात्कारे ॥ शाकटायनस्तु **आर्ये**ति प्रतिबन्धे । **हल**मिति प्रतिषेधविवादयोरित्याह ॥ **अभीक्ष्ण**मिति पौन:पुन्ये । **साकं सार्ध**मेतौ सहार्थे । **नमस्**[2] नतौ । **हिरुक्** वर्जने । **धिङ्**निन्दाभर्त्सनयो । इत ऊर्ध्वं 'तसिलादयस्तद्धिता एधाच्पर्यन्ताः' 'शस्तसी' 'कृत्वसुच्' 'सुच्' 'आस्थालौ' 'च्व्यर्थाश्च' इति प्राचीनगणपाठेऽस्तीति बोध्यम् ॥ तसिलादीत्यादेरयमर्थः । 'पञ्चम्यास्तसिल्' इत्यारभ्य 'एधाच्च' इत्येतदन्तैः सूत्रैरुक्ता ये तद्धितास्तदन्ताः स्वरादिषु बोद्धव्या. । तथा 'बह्वल्पार्थाच्छस्–' । 'प्रतियोगे पञ्चम्यास्तसि.' । 'तेनैकदिक्' । 'तसिश्च' इत्ययमपि तसिः । 'क्रियाभ्यावृत्तिगणने कृत्वसुच्' । 'द्वित्रिचतुर्भ्यः सुच्' । 'इण आसि.' इत्युणादिसूत्रेण विहित आसिः । 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' । 'संपद्यकर्तरि च्विः' । 'विभाषा साति कार्त्स्न्ये' । 'देये त्रा च' इत्येतदन्ता अपि ग्राह्या इति । **अम्** शैघ्र्येऽल्पे च । **आम्** अङ्गीकारे । 'अमु च छन्दसि' 'किमेत्तिङव्यय–' इति 'कांस्प्रत्ययात्–' इत्यादिभिश्च विहिता अपि अमामौ गृह्येते इत्येके ॥ प्रत नय प्रतर ययाचतरां कारयामास ॥ **प्रताम्** ग्लानौ । **प्रशान्** समानार्थे । **प्रतान्** विस्तारे । **मा माङ्** एतौ निषेधाशङ्कयोः ॥ **आकृतिगण** इति । तेनान्येऽपि ज्ञेयाः । तथा हि । **कामम्** स्वाच्छन्द्ये । **प्रकाम**मित्यतिशये । **भूय** इति पुनरर्थे । **साम्प्रत**मिति न्याय्ये । **पर**मिति किंत्वर्थे । **साक्षात्** प्रत्यक्षे । **साची**ति तिर्यगर्थे । सत्यमित्यर्धाङ्गीकारे । **मङ्क्षु आशु** एतौ शैघ्र्ये । **संवत्** वर्षे । **अवश्यं** निश्चये । उषेति रात्रौ । **ओ**मित्यङ्गीकारे ब्रह्मणि च । **भू**रिति पृथिव्याम् । **भुव** इत्यन्तरिक्षे । **झटिति झगिति तरसा** एते शैघ्र्ये । **सुष्ठु** प्रशंसायाम् । दुष्ठु निकृष्टे । **शु** पूजायाम् । **कु** इति कुत्सितेषदर्थयोः । **अञ्जसे**ति तत्त्वशीघ्रार्थयोः । **मिथु** इति द्वाविल्यर्थे । **अस्त**मिति विनाशे । **स्थाने** इति युक्ते । **वर**मिति ईषदुत्कर्षे । **सुदि** शुक्लपक्षे । **वदि** कृष्णपक्षे इत्यादि ॥ चादीनुदाहरति—**चे**त्यादिना । चेति समुच्चयान्वाचयेतरेतरयोगसमाहारेषु । **वा** स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये । **हे**ति प्रसिद्धौ । **अहे**ति पूजायाम् । **एवे**त्यवधारणेऽनवकॢप्तौ च । **एव**मित्युक्तपरामर्शे । **नून**मिति निश्चये तर्के च । **शश्व**दिति पौन:पुन्ये नित्ये सहार्थे च । **युगपदि**त्येककाले । **भूयस्** पुनरर्थे आधिक्ये च । **कूपदि**ति प्रश्ने प्रशंसाया च । **कुविदि**ति भूर्यर्थे प्रशसायां च । **नेदि**ति शङ्कायां प्रतिषेधविचारसमुच्चयेषु च । **चेदि**ति यद्यर्थे । **चण्** अय चेदर्थे । णानुबन्धस्तु 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्–' इति विशेषणार्थः । समुच्चयादौ त्वननुबन्धक. । **कच्चि**दितीष्टप्रश्ने । **यत्रे**ति अनवकॢप्त्यमर्षगर्हाश्चर्येषु । नावकल्पयामि न मर्षये गर्हे आश्चर्यं वा यत्र भवान् वृषल याजयेत् । **नहे**ति प्रत्यारम्भे । **हन्ते**ति हर्षे विषादेऽनुकम्पायां वाक्यारम्भे च । **माकिः**

---

१ अन्तराअन्तरेणेति—'अन्तरान्तरेणयुक्ते' इति सूत्रभाष्येऽनयोर्निपातत्वोक्तेः स्वरादिषु अनयोः पाठः प्रक्षिप्त इति केचिदाहुः

२ नमसिति—महसा नमसामिति प्रयोगस्तु सत्त्ववाचकत्वे बोध्यः ।

**चण्, कच्चित्, किंचित्, यत्र, नह, हन्त, माकिः, माकीम्, नकिः, आकिम्, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, रै, श्रौषट्, वौषट्, स्वाहा, स्वधा, तुम्, तथाहि, खलु, किल, अथो, अथ, सुष्ठु, स्म, आदह, उपसर्गविभक्तिस्वरप्रतिरूपकाश्च। अवदत्तम्, अहंयुः, अस्तिक्षीरा, अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ, पशु, शुकम्, यथाकथाच, पाट्, प्याट्, अङ्ग, है, हे, भोः, अये, द्य, विषु, एकपदे, युत्, आतः। चादिरप्याकृतिगणः। ॥ तद्धितश्चासर्वविभक्तिः ।१।१।३८।** यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात्। परिगणनं कर्तव्यम्। तसिलादयः प्राक् पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः। अम्। आम्। कृत्वोऽर्थाः। तसिवती। नानाञाविति। तेनेह न। पचतिकल्पम्। पचतिरूपम्। **॥ कृन्मेजन्तः ।१।१।३९।** कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात्।

---

**माकीं नकिरिति** त्रयोपि वर्जने। **माङ्नञौ** स्वरादिषूक्तौ। इह पाठस्तु निपातत्वार्थः, तेनाद्युदात्तत्व फल सिध्यतीति केचित्॥ तदसत्। फिट्स्वरेणापीष्टसिद्धेः॥ अन्ये त्वाहु.। सत्त्ववचनानामप्यव्ययसंज्ञार्थं स्वरादिपाठ इति॥ तदप्यसत्। लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः। तस्मादुभयत्र पाठश्चिन्त्यप्रयोजनः। **यावत्तावदि**ती साकल्यावधिमानावधारणेषु। साकल्ये—यावत् कार्यं तावत् कृतम्। अवधौ यावद्भन्तव्य तावत्तिष्ठ। माने—यावद्दत्तं तावद्भुक्तम्। अवधारणे—यावदमत्रं तावद्ब्राह्मणानामन्त्रयस्व॥ **त्वै** विशेषवितर्कयोः। **द्वै** वितर्के। **न्वै** इति पाठान्तरम्। **रै** दाने अनादरे च। **रै** करोति ददातीत्यर्थः। त्व रै कि करिष्यसि। **श्रौषट् वौषट्** एतौ हविर्दाने। **स्वाहा** देवताभ्यो दाने। **स्वधे**ति पितृभ्यः। **श्रौषडादी**नामनेकाचामुभयत्र पाठः स्वरभेदार्थः। **तुमि**ति तुकारे। गुरु तुङ्कस्य हुंकृत्य। **तथाही**ति निदर्शने। **खलु** इति निषेधवाक्यालंकारनिश्चयेषु। **किले**ति वार्तायामलीके च। **अथो अथे**ति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अयं स्वरादावपि। तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिध्यति। अत एव श्रीहर्षः,—'उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे। यथा कुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयांबभूव ताम्' इति। अत्र हि अथ स्नपयांबभूवेत्यस्य मङ्गलं स्नपन चकारेत्यर्थः। निपातस्तु स्वरूपेणैव मङ्गल मृदङ्गध्वनिवत्॥ **सुष्ठु** स्वरभेदार्थं पाठः। **स्मे**त्यतीते पादपूरणे च। **आदहे**त्युपक्रमहिंसाकुत्सनेषु। आदह स्वधामभित्यत्र तु पदकारा आदिति पृथक् पद पठन्ति॥—**अवदत्तमि**ति। इह अवस्यानुपसर्गत्वात् 'अच उपसर्गात्तः' इति न भवति। **अहमि**ति सुबन्तप्रतिरूपकमहकारे। एव 'गेये केन विनीतौ वाम्' इति। युवामित्यर्थः। सुबन्तप्रतिरूपकमव्ययम्। **अस्ती**ति तु तिङन्तप्रतिरूपकम्। एवं 'त्वामस्मि वच्मि—' इत्यत्रास्मीत्यहमर्थे तिङन्तप्रतिरूपकम्। आहेत्युवाचेत्यर्थे। आसेति बभूवेत्यर्थे इत्यादि बोध्यम्॥ **अहंयुरि**ति। 'अहंशुभमोर्युस्' । यदि तु 'त्वाहौ सौ' इति मपर्यन्तस्याहादेशे शेषे लोपे च कृते निष्पन्नो योऽहंशब्दस्तस्माद्युस्प्रत्ययः क्रियेत तर्हि सुपो लुकि अस्मद्युसिति स्थिते मदीय इत्यत्रेव मपर्यन्तस्य मादेशे सति मद्युरिति स्यादिति भावः॥ **अस्तिक्षीरे**ति। तिङन्तत्वे तु बहुव्रीहिसमासोऽय नोपपद्यत इति भावः। **अ** इति संबोधनेऽधिक्षेपे निषेधे च। **आ** इति वाक्यस्मरणयोः। **इ** संबोधनजुगुप्साविस्मयेषु। **ई उ ऊ ए ऐ ओ औ** संबोधने। **पशु** सम्यगर्थे। पशु मन्यमानाः। **शुकं** शैघ्र्ये। **यथाकथाचे**त्यनादरे। **पाट्**प्रभृतयः सप्त संबोधने। **द्ये**ति हिंसाप्रातिलोम्यपादपूरणेषु। **विषु** नानार्थे। **एकपदे** इत्यकस्मादित्यर्थे। **युत्** कुत्सायाम्। **आत** इति इतोऽपीत्यर्थे॥—**आकृतिगण** इति। तद्यथा **यत्तदि**ति हेतौ। **आहोस्विद्वि**कल्पे। **सीम** सर्वतोभावे। **शुकम**तिशये। **अनुकं** वितर्के। **शश्वद्** अन्तःकरणे आभिमुख्ये च। **व** पादपूरणे इवार्थे च। **दिष्ट्ये**त्यानन्दे। **चटु चाटु** प्रिये वाक्ये। **हुमि**ति भर्त्सने। **इवे**ति सादृश्ये। **अद्यत्वे** इति इदानीमित्यर्थे 'इत्यादि॥ अत्र स्वरादिचाद्योराकृतिगणत्वाविशेषेऽपि येषा निपातस्वर इष्टस्ते चादिषु। अन्ये तु स्वरादिषु स्वरद्वयभाजस्तूभयत्र बोध्याः॥—**तद्धितश्चासर्वविभक्तिः**॥—**सर्वे**ति। वचनत्रयात्मिकेत्यर्थः॥—**नोत्पद्यत** इति। कि लेकवचनमेवोत्पद्यत इति भावः॥ तद्धित. किम्। एकः। द्वौ। त्रयः॥ असर्वेत्यादिकम्। औपगवः॥ ननु पञ्चालाः गोदौ वरणा इत्यादावतिप्रसङ्गः। न च 'लुब्योगाप्रख्यानात्' इति वदतां नैषां तद्धितान्तत्वमङ्गीकृतमिति नातिप्रसङ्ग इति वाच्यम्। एवमपि पचतिकल्प पचतिरूपमित्यादावतिव्याप्तेर्दुर्वारत्वादित्याशङ्क्याह—**परिगणनं कर्तव्यमि**ति॥—**तसिलादय** इति। 'पञ्चम्यास्तसिल्' इति विहितो यस्तसिल् तदादयो 'याप्ये पाशप्' इति विहितपाशप्प्रत्ययपर्यन्ता इत्यर्थः॥—**शस्प्रभृतय** इति। 'बह्वल्पार्थात्—' इति विहितो यः शस्तदादयः 'समासान्ताः' इति सूत्रपर्यन्ताः॥—**कृत्वोऽर्था** इति। 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति विहिताः कृत्वसुजादयस्त्रयः॥—**तसिवती** इति। न च तसेः परिगणनं व्यर्थं, शस्प्रभृतित्वादेव 'प्रतियोगे पञ्चम्यास्तसिः' इत्यस्य लाभादिति वाच्यम्। 'तेनैकदिक्' 'तसिश्च' इत्येतदर्थतया तस्यावश्यकत्वात्। 'तेन तुल्यम्—' इति वतिः॥—**नानाञावि**ति। 'विनञ्भ्यां नानाञौ नसह' इति विहितौ॥—**पचतिकल्पमि**ति। अव्ययसंज्ञाया हि सत्यां सुपो लुक् स्यादिति भावः॥—**कृन्मेजन्तः**॥ अत्र मेजन्त इत्येतच्छ्रुतत्वात् कृत एव विशेषणं न तु कृदन्तस्याश्रुतस्य' अन्यथा प्रतामौ प्रतामः। लवमाचष्टे णौ क्विपि णिलोपे वसीठि वृद्धौ लौः। अत्रापि प्रसज्येतेति भावः। भवति ह्येतत्प्रत्ययलक्षणेन कृदन्तमेजन्तं न श्रूयते इति तदाह—

**स्मारंस्मारम् । जीवसे पिबध्यै । ॥ क्त्वातोसुन्कसुनः ।१।१।४०। एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः । ॥ अव्ययीभावश्च ।१।१।४१। अधिहरि । ॥ अव्ययादाप्सुपः ।२।४।८२। अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् । विहितविशेषणान्नेह । अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणे । आब्ग्रहणं व्यर्थमलिङ्गत्वात् ॥ सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ इति श्रुतिर्लिङ्गसंख्याकारकऽभावपरा ॥ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा**

---

**क्रुधो मान्त पजन्त** इति ॥—**स्मारंस्मारमि**ति । स्मरतेः 'आभीक्ष्ण्ये णमुल् च' इति णमुल् । वृद्धिः । रपरत्व 'नित्यवीप्सयोः' इति द्वित्वम् ॥—**जीवसे** इति । 'तुमर्थेसेसेन्–' इत्यसेप्रत्ययः ॥—**पिबध्यै** इति । 'तुमर्थे–' इत्यनेनैव शध्यैप्रत्ययः । 'पाघ्रा–' इति पिबादेश ।'येन विधिस्तदन्तस्य' इत्यनेनैव सिद्धे सूत्रे अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थं, तेनेह न । आधये चिकीर्षवे । लक्षणप्रतिपदोक्तसंनिपातपरिभाषाभ्यां सिद्धे तयोरनित्यत्वज्ञापनायेदमिति मनोरमाया स्थितम् । एतच्च 'अव्ययादाप्सुपः' इत्यत्र अव्ययान् परस्य सुपो लुगिति यथाश्रुतव्याख्यामभिप्रेत्योक्तम् । अव्ययाद्विहितस्येति व्याख्याने लाधये इत्यादौ अव्ययसज्ञायामनिष्टान्तरमूह्यम् ॥—**क्त्वातोसुन्कसुनः** ॥—**कृत्वे**ति । 'समानकर्तृकयोः–' इत्यादिना क्त्वा ॥—**उदेतोरि**ति । उत्पूर्वादिणो 'भावलक्षणे स्थेण्–' इत्यादिना तोऽसुन् ॥—**विसृप** इति । 'सृपितृदोः कसुन्' ॥—**अव्ययीभावश्च** ॥ अव्ययसज्ञः स्यात् ॥ इह लुकि मुखस्वरोपचारयोर्निवृत्तौ चेति परिगणन कर्तव्यम् । लुक्युदाहरणम् । उपाग्नि ।'अव्ययाद्–' इति सुपो लुक् । मुखस्वरनिवृत्तौ उदाहरणम् । उपाग्निमुख. प्रत्यग्निमुख 'मुख स्वाङ्गम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्ययदिक्शब्द–' इत्यादिना प्रतिषेधः । तथा च 'बहुव्रीहौ प्रकृत्या' इति पूर्वशब्दप्रकृतिस्वर एव भवति, पूर्वपद च समासस्वरेणान्तोदात्तम् । विसर्गस्थानिकस्य सकारस्य उपचार इति प्राचा सज्ञा तन्निवृत्तावुदाहरणम् । उपपय.कारः । उपपय·काम । इह 'अतः कृकमि–' इति प्राप्त सत्वम् 'अनव्ययस्य' इति पर्युदस्यते ॥ परिगणनं किम् । उपाग्न्यधीयान । इह 'सुबामन्त्रिते' इति पराङ्गवद्भावेन षाष्ठम् 'आमन्त्रितस्य च' इत्याद्युदात्तत्व यथा स्यात् । पराङ्गवद्भावे हि अव्ययानां प्रतिषेध उपसख्यातः, उपाग्न्यधीयानेत्यादौ मा भूदिति । तथा उपाग्निकमित्यादौ 'अव्ययसर्वनाम्नाम्–' इत्यकच्च न ॥ उपकुम्भमन्य· 'खित्यनव्ययस्य' इति वर्तमाने 'अरुर्द्विषदजन्तस्य–' इति विहितो यो मुम् तस्येह प्रतिषेधो न । उपकुम्भीभूत । इह 'अस्य च्वौ' इतीत्वस्य प्रतिषेधो न । इत्वविधौ हि 'अव्ययस्य च्वावित्वं न' इति प्रतिषेध उच्यते । दोषाभूतमहः दिवाभूता रात्रिरित्यत्र मा भूदिति ॥ स्यादेतत् । स्वरादित्वेनैव सिद्धत्वात् 'तद्धितश्च–' इत्यादिचतु.सूत्री व्यर्था । तत्र हि 'तसिलादिस्तद्धित एधाच्पर्यन्त.' इत्यादिना 'च्व्यर्थाश्च' इत्यन्तेनाभिप्रत्ययमौणादिक वर्जयित्वा 'तद्धितश्चासर्वविभक्ति' इत्यस्यार्थः सगृह्यते । 'कृन्मकारसन्ध्यक्षरान्त.' इत्यनेन 'कृन्मेजन्त.' इत्यस्यार्थः संगृह्यते । 'क्त्वातोसुन्कसुन.' 'अव्ययीभावश्च' इति सूत्रद्वय तु स्वरूपेणैव पठ्यत इति ॥ अत्राहुः । पुनर्वचनमनित्यत्वज्ञापनार्थं तेन प्रागुक्त 'लुङ्मुखस्वरोपचारा.' इति परिगणन लभ्यते । पुरा सूर्यस्योदेतोराधेयः । पुरा क्रूरस्य विसृपो विरप्शिन्नित्यादिसिद्धये, 'नलोकाव्यय–' इत्यत्र 'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः' इति वक्ष्यते तदप्यनेनैव लभ्यते इति ॥—**अव्ययादाप्सुपः** ॥ 'ण्यक्षत्रियार्ष–' इति सूत्राल्लुगत्रानुवर्तत इत्याह—**लुक् स्यादि**ति । अव्ययमिति महासज्ञाकरणमन्वर्थसज्ञाविज्ञानार्थम् । न व्येति विविध विकार न गच्छति, सत्त्वधर्मान् लिङ्गसख्यादीन्न गृह्णातीति यावत् । तेनात्युच्चैसौ अत्युच्चैस इत्यादिसिद्धिः । अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरिग्रहादव्ययसज्ञाया अत्राभावात् । नन्वेवमप्युच्चै.शब्दस्याव्ययत्वानपायात् सुपो लुक् दुर्वार इत्यत आह—**विहितविशेषणादि**ति ॥—**अत्युच्चैसावि**ति[1] । ननु अत्यादयः क्रान्ताद्यर्थे द्वितीयान्तेन समस्यन्ते, उच्चै.शब्दस्त्वधिकरणशक्तिप्रधान इति कर्मत्वायोगान्न तस्य द्वितीयान्तता ॥ सत्यम् । शक्तिप्रधानान्यपि कानिचिदव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि क्वचिद् भवन्ति । यथा दोषामन्यमहः । दिवामन्या रात्रिरिति । ततश्च प्रक्रियादशायामुच्चैःशब्दस्य द्वितीयान्तत्व सभवतीति दिक् ॥ ननु स्वरादिषु उच्चै.शब्दः पठ्यते तत्र कथ तदन्तस्य प्रसङ्ग इति चेन्न । अन्वर्थसज्ञयैव तदन्तविधेरपि ज्ञापनात् । अन्यथा उपसर्जने प्रसङ्गाभावेन तन्निवृत्त्यर्थाया अन्वर्थसज्ञाया वैयर्थ्यापत्तेः । तेन परमस्वः परमोच्चैरित्यादौ सत्त्वधर्मापरिग्रहादव्ययत्व सिद्ध, तदेतदाह—**अव्ययसंज्ञायां यद्यपी**त्यादि ॥ 'अव्ययादापो लुग्वचनानर्थक्य लिङ्गाभावात्' इति वार्तिक मनसि निधायाह—**आब्ग्रहणं व्यर्थमि**ति । सूत्रस्योक्तिसभवस्तु 'स्त्रियाम्' इति सूत्रे स्त्रीसमानाधिकरणादिति पक्ष गृहीत्वेति बोध्यः । स च न स्थित, भूतमिय ब्राह्मणीत्यादावतिव्याप्तेः ॥ यदि तु 'आमः' इति सूत्रानन्तर 'सुपो धातुप्रातिपदिकयोः' 'अव्ययात्' इति सूत्र्यते तदा सुब्ग्रहणमपि व्यर्थं, सुप इत्यनुवृत्तिसंभवादिति नव्याः ॥ अलिङ्गत्वे आथर्वणप्रणवविद्यागतश्रुतिविरोधमाशङ्क्याह—**सदृशमि**ति । एतेषु यन्न व्येति किं तु सदृश एकप्रकारं तदव्ययमिति योजना । यद्वा । यस्मान्न व्येति तदव्ययम् ॥—**लिङ्गकारके**ति ॥ विभक्तिवचन-

---

१ अत्युच्चैसाविति—अत्र इति स्थिते इति शेषः । अत्युच्चैरिति उत्तरपदार्थप्रधानस्तत्पुरुषः । औङिति अशब्दस्य द्विवचन, तत्रैकादेशस्य परादिवद्भावात्सुत्वम् इति बृहच्छेखरे ।

**वाचा निशा दिशा ॥ वगाहः। अवगाहः। पिधानम्। अपिधानम् ॥ ॥ इत्यव्ययानि ॥ ॥**

---

## स्त्रीप्रत्ययप्रकरणम् ॥

**स्त्रियाम् ।४।१।३। अधिकारोऽयम्। समर्थानामिति यावत्। अजाद्यतष्टाप् ।४।१।४। अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये[1] टाप् स्यात्। अजाद्युक्तिर्ङीषो ङीपश्च बाधनार्था[2]। अजा। अतः, खट्वा। अजादिभिः स्त्रीत्वस्य विशेषणात्नेह। पञ्चाजी। अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम्। अजा। एडका। अश्वा। चटका[3]।**

शब्दौ कारकसंख्यापराविति भावः ॥ यद्यप्यव्ययीभावस्य लिङ्गसंख्याकारकयोगोऽस्ति तथापि वचनादव्ययत्वम् ॥ अव्ययविशेषे कार्यान्तरमाह—**वष्टीति**। भागुरिराचार्यः ॥—**आपं चैवेति**। वष्टीत्यनुषज्यते ॥ **यथा वाचेति**। परिगणनमिदमित्येके। अन्ये तूदाहरणमात्रमित्याहुः ॥—**वगाह** इति। अपिना साहचर्यादादिरेवाकारो लुप्यते नान्त्य इति भावः ॥ इत्यव्ययानि ॥

**अजाद्यतः**—॥ अजशब्दः आदिर्यस्येति बहुव्रीहिः। अच् आदिर्यस्येति तु नार्थः 'ऋचि' इति निर्देशाद् गणपाठसामर्थ्याच्च। अदिति न स्वरूपग्रहणम्, 'संख्याया–' इति लिङ्गाद् अजादिभिः पृथक्पाठसामर्थ्याच्च ॥ इह 'ङ्याप्प्रातिपदिकात्' इत्यधिकारेऽपि ङ्यापौ न सबध्येते इहैव तयोर्विधेयत्वाद्, अपि तु प्रातिपदिकमेव। तच्चाकारेण विशिष्यते, विशेषणेन च तदन्तत्वलाभः, तदाह—**अजादीनामकारान्तस्य** चेति। सूत्रे 'अतः' इति षष्ठी तदर्थश्च वाच्यवाचकभावः ॥ स्त्रियामिति तु धर्मप्रधानो निर्देश इत्याशयेनाह—**वाच्यं यत् स्त्रीत्वमिति**। एतच्च लिङ्गं प्रातिपदिकार्थ इति पक्षाभिप्रायेणोक्तम्। कस्माद्भवतीत्याकाङ्क्षाया सन्निधानादजादिभ्योऽकारान्ताच्चेति बोध्यम्। 'इको यणचि' इत्यत्र कस्मादचि पर इत्याकाङ्क्षायामिक इति यथा। टापः पकारः स्वरार्थः. 'औङ आपः' 'आङि चापः' 'याडापः' इत्यादौ सामान्यग्रहणार्थश्च। तद्विघातनार्थष्टकारः। आविन्युक्ते हि तदनुबन्धपरिभाषया 'औङ आपः' इत्यादावयमेव गृह्येत डाप्चापोस्तु ग्रहणं न स्यात् ॥ नन्वत इत्येव सिद्धे अजादिग्रहणं व्यर्थम्। न च क्रुञ्चा उष्णिहेत्यादिषु हलन्तत्वादप्राप्ते विध्यर्थं तदिति वाच्यम्। तथा सति क्रुञ्चेत्यादिरेव गृह्येत, न त्वजादिरतो व्याचष्टे—**अजाद्युक्तिर्ङीपो ङीपश्चेति** ॥—**खट्वेति**। खट् काङ्क्षायाम्। 'अशुप्रुषिलटिखटिकणिविशिभ्यः क्वन्' ॥ नन्वचेतनानां खट्वादिशब्दानां कथं लिङ्गे व्यवस्थेति चेद् उच्यते। लोकप्रसिद्धस्तनाद्यवयवसंस्थानविशेषात्मकं लिङ्गं न व्याकरणे आश्रीयते, दारानित्यादौ नत्वाभावप्रसङ्गात्। तटस्तटीतटमित्यादौ यथायथं लिङ्गत्रितयनिबन्धनकार्याणामसिद्धिप्रसङ्गाच्च, किं तु पारिभाषिकमेव लिङ्गत्रयम्। तच्च केवलान्वयि। अयमर्थः इयं व्यक्तिरिदं वस्त्विति शब्दानां सर्वत्राप्रतिबद्धप्रसरत्वात्। तत्र कश्चिच्छब्द एकस्मिंल्लिङ्गे शक्तः कश्चित् द्वयोः कश्चित् त्रिषु इति लिङ्गानुशासनादिभ्यो निर्णेयम् ॥ कुमारब्राह्मणादिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः ॥ लौकिकस्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे। कथमन्यथा कुमारी कुमार इत्यादयः प्रयोगा व्यवतिष्ठेरन्। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरस्याप्ययमेवार्थः। नन्वेवं पशुनेति पुंस्त्वं विवक्षितमिति मीमांसकोद्घोषः कथं योज्यः। पारिभाषिकस्याव्यावर्तकतया तद्विवक्षाया अकिंचित्करत्वात्। लौकिकस्य तु लिङ्गस्य पशुशब्दादप्रतीतेरिति चेद् अत्राहुः। 'छागो वा मन्त्रवर्णात्' इति षष्ठान्त्याधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यश्छागशब्दस्य लौकिकपुंस्त्वविशिष्टपारिभाषिके शक्तत्वादिति ॥ तच्च जातित्रयमित्येके। उक्तं च हरिणा—'तिस्रो जातय एवैताः केषाचित् समवस्थिताः। अविरुद्धाविरुद्धाभिर्गोमनुष्यादिजातिभिः ॥ **भाष्ये तु** प्रकारान्तरमुक्तम्,—'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः। संस्त्याने स्त्यायतेर्ड्ट्र् स्त्री सूतेः सप् प्रसवे पुमान् ॥ उभयोरन्तरं यच्च तदभावे नपुंसकम्' इति। अस्यायमर्थः। संस्त्यानं स्त्री सत्त्वरजस्तमोलक्षणानां गुणानामपचयः। प्रसवो गुणानामुपचयः। सप् पुमान्। सूतेर्धातोः सप् सकारस्य पकारादेश इत्यर्थः। औणादिकोम्सुन्प्रत्ययो ह्रस्वश्च बाहुलकादिति कैयटः। 'पूञो डुम्सुन्' इति माधवः। तयोरुपचयापचययोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकं 'नभ्राण्नपाद्–' इति निपातनादिति भावः ॥ तथा च स्थितिमात्रं नपुंसकम्। अत एवाविर्भावतिरोभावयोरपि स्थितिसामान्यविवक्षासंभवान्नपुंसकम्। लिङ्गसर्वनामेति सिद्धान्तः। स्त्रीपुमान्नपुंसकमिति शब्दाश्च शुक्लादिशब्दवद्धर्मे धर्मिणि च वर्तन्ते। स्वकृतान्ततः इति। वैयाकरणसिद्धान्तत इत्यर्थः ॥ 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः ॥—**पञ्चाजीति**। पञ्चानामजानां समाहार इति 'तद्धितार्थ–' इत्यादिना द्विगुः। 'अकारान्तोत्तरपदः–' इति स्त्रीत्वे 'द्विगोः' इति ङीप्। न चात्र प्रत्ययविधौ तदन्तविधिविरहादेव टापोऽप्रवृत्तौ ङीबेव स्यादिति वाच्यम्। अमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनाट्टाप्प्राप्तेः सत्त्वात् ॥—**समासार्थसमाहारनिष्ठमिति** ॥ नन्वजहत्स्वार्थायां वृत्तौ समा-

१ तत्र द्योत्य इति—प्रत्ययार्थत्वे हि तस्य विशेष्यतापत्तिः, द्योत्यस्य तु विशेषणत्वमिति आकरे स्पष्टम्। अत एव वागादिषु विनापि टापं तद्बोधो भवति वाच्यत्वे हि वाचकाभावात्स न स्यात् इति भावः। २ बाधनार्थेति—येननाप्राप्तिन्यायेनेति भावः। ३ चटकेति—क्षिपकादित्वादित्त्वं नेति शब्देन्दुशेखरे।

मूषिका । एषु जातिलक्षणो ङीष् प्राप्तः । बाला । वत्सा । होढा । मन्दा । विलाता । एषु वयसि प्रथम इति ङीप् प्राप्तः ॥ * **संभस्राजिनशणपिण्डेभ्यः फलात्** ॥ संफला । भस्त्रफला । ङ्यापोरिति ह्रस्वः ॥ * **सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्** ॥ सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा ॥ * **शूद्रा चामहत्पूर्वा जातिः** ॥ पुंयोगे तु शूद्री । अमहत्पूर्वा किम् । महाशूद्री । कुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेऽपि । कोकिला जातावपि ॥ * **मूलान्नञः** ॥ अमूला ॥ ऋन्नेभ्यो ङीप् ॥ कर्त्री । दण्डिनी । ॥ **उगितश्च** ।४।१।६। उगिदन्तात्प्रातिपदिकात् स्त्रियां ङीप् स्यात् । भवती । पचन्ती । दीव्यन्ती । शप्श्यनोरिति नुम् । उगिदचामिति सूत्रेऽजग्रहणेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते । तेनेह न । उखास्रत् । क्विप् । अनिदितामिति नलोपः । पर्णध्वत् । अञ्चतेस्तु स्यादेव । प्राची । प्रतीची । ॥ **वनो र च** ।४।१।७। वन्नन्तात्तदन्ताच्च प्रातिपदिकात् स्त्रियां

हारोऽप्यजाद्यर्थ एवेति चेत् । मैवम् । तथापि तस्य पदान्तरसमभिव्याहारापेक्षया बहिरङ्गत्वात् टाब्विधेस्त्वन्तरङ्गे चरितार्थत्वात् । कथं तर्हि परमाजेति चेत् । प्रागुत्पन्नस्यैव टापस्तत्र श्रवणात् । अत्यजा निरजेत्यत्र त्वदन्तत्वप्रयुक्तष्टाबित्यवेहि । न च पञ्चाजीत्यत्रापि तथास्त्विति वाच्यम् । 'द्विगोः' इति ङीपा बाधितत्वात् ॥—**चटके**ति । न चात्र 'प्रत्ययस्थात्-' इतीकारः शङ्क्यः । 'चटकाया ऐरक्' इति लिङ्गादिहैव निपातनाद्वा तदप्रवृत्तेः । एव च क्षिपकादिषु चटकेति पठन नातीवावश्यकमिति नव्याः ॥— **मूषिके**ति । 'वृश्चिकृषोः किकन्' इत्यधिकारे 'मुषेर्दीर्घश्च' इति किकनि इकारमध्यो मूषिकाशब्दः । यस्तु 'मूष स्तेये' इति दीर्घोपधात्सञ्ज्ञायां कुनि मूषकशब्दो माधवेनोक्तस्ततोऽप्यय टाप् । प्रत्ययस्थादितीत्व तु विशेषः ॥ केचित्तु कुन्नन्तोऽसावजादिगणे पाठ न प्रयुङ्क्ते गणे तत्पाठस्य जातिलक्षणङीषृबाधनार्थत्वात्सञ्ज्ञाया अजातित्वात् । तथा चादन्तत्वादेव कुन्नन्ताट्टाप् सिध्यतीत्याहु ॥ तच्चिन्त्य, व्याघ्रीत्यादिवत्सञ्ज्ञात्वेऽपि जातित्वानपायात् ॥— **भस्त्रफले**ति । भस्त्रेव फलानि यस्या इति विग्रहः ॥—**ङ्यापोरि**ति । एतच्च 'फल निष्पत्तौ' इति धातौ माधवग्रन्थे स्थितम् ॥ 'पाककर्ण-' इत्यत्र भाष्ये तु दीर्घ एव दृश्यते ॥—**सदच्काण्डे**ति । सत्प्राक्काण्डेति पाठो नादर्तव्य इति ध्वनयन्नुदाहरति—**प्रत्यक्पुष्पे**ति ॥ अत्र नव्याः । 'सम्भस्रा-' इत्यादि वचनद्वय 'मूलान्नञ' इति वक्ष्यमाण च 'पाककर्ण-' इत्यनेन प्राप्तस्य ङीषो निषेधार्थं तत्रैव सूत्रे भाष्ये पठितमपि फले विशेषाभावादिहव ग्रन्थकारैः पठितम् । न चैतावताऽजाद्यन्तर्गणसूत्राणीति भ्रम कार्यस्तथात्वे मानाभावात् । किं तु वार्तिकान्येवेमानीत्याहुः ॥—**शूद्राचे**ति । शूद्रशब्दष्टापमुत्पादयति जातिश्चेत् । महत्पूर्वस्तु न । जातिश्चेदितीहापि सबध्यते । तेन महती शूद्रा महाशूद्रेति भवत्येव ॥ —**पुंयोगे त्वि**ति । पुंयोगश्च दाम्पत्यरूप एवेति न नियम., किं तु जन्यजनकभावोऽपि गृह्यते । तथा च स्मृतिः । 'वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ' इति ॥—**महाशूद्री**ति । 'आभीरी तु महाशूद्री जातिपुयोगयोः समा' इत्यमरः । इह 'अमहत्पूर्वा' इति व्यर्थ महाशूद्रशब्दो हि समुदित एवाभीरत्वजातौ वर्तते । तत्रावयवस्यानर्थकतया शूद्रशब्दार्थसमवेतस्त्रीत्वाभावेन टापः प्रसक्त्यभावात् । न च तदन्तविधिज्ञापनाय तदिति वाच्यम् । अनुपसर्जनाधिकारेणैव तदन्तविधिज्ञापनादिति दिक् ॥ अत्र नव्याः 'शूद्रा च' इत्यादिवचनम् 'अजाद्यत-' इति सूत्रस्थं वार्तिकमेव, न लिङ गणसूत्रमित्याहुः ॥ कुञ्चेत्यादि ॥ त्रयोऽमी हलन्ता इत्येके । भाष्ये तु 'कुञ्चानाऽऽलभेत' 'उष्णिहककुभौ' इत्यादिप्रयोगमुदाहृत्याऽदन्ता अपि स्वीकृताः । पचाद्यचा इगुपधलक्षणेन कप्रत्ययेन यथासभवमदन्तत्वात् ॥—**पुंयोगेऽपी**ति । यदा ज्येष्ठादयः प्रथमजातादौ वर्तन्ते तदादन्तत्वादेव टाप् सिद्ध. । यदा तु ज्येष्ठस्य स्त्रीत्वादिविवक्षा तदा पुयोगलक्षणो ङीष् प्राप्त. सोऽप्यनेन बाध्यते इति सूचयितुमपिशब्दः ॥—**मूलान्नञः** । नञः किम् । शतमूली ॥—**अमूले**ति । ओषधिजातिरियम् ॥—**उगितश्च** ॥ उगिच्छब्देन प्रातिपदिक विशेष्यते विशेषणेन तदन्तविधिः । न च प्रत्ययविधौ प्रतिषेधः शङ्क्यः । अनुपसर्जनादित्यनेन स्त्रीप्रत्ययेषु तदन्तविधिरस्तीति ज्ञापनात्, 'उगिद्वर्णग्रहणवर्जम्' इति 'येन विधिः-' इति सूत्र एवोक्तत्वाच्चेत्याशयेनाह—**उगिदन्तादि**ति ॥ तत्रोगित् प्रातिपदिक प्रत्ययश्चेति द्विविध सभवति । आद्ये उगिदन्ते—भवन्त महान्त चातिक्रान्ता अतिभवती अतिमहतीत्युदाहरण, सर्वादिगणे 'भवतु' इति पाठाद्भवच्छब्दस्योगित्वव्यपदेशः, महच्छब्दस्य तु शतृवद्भावात् । न चैव 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधात् केवलाभ्या भवन्महच्छब्दाभ्या ङीप् न स्यादिति वाच्यम् । प्रातिपदिकाप्रातिपदिकसाधारणेन शब्दमात्रमुगित्पदाभिधेयमित्युक्तनिषेधाप्रवृत्तेरित्याशयेनोदाहरति—**भवती**ति ॥ द्वितीयमुगिदन्तमुदाहरति—**पचन्ती**ति । पचेर्लटः शतरि 'कर्तरि शप्' । यदि तु सर्वादिगणे भवतु इति उगित् पठितः स 'भातेर्डवतुः' इति व्युत्पाद्यते, तदा भवतीति द्वितीयोगिदन्तस्याप्युदाहरणं भवत्येव ॥ शत्रन्तात्तु भवतेर्ङीपि 'शप्श्यनोः-' इति नित्यो नुम् । भवन्ती ॥ **उखास्रदि**त्यादि । उखायाः स्रसते पर्णेभ्यो ध्वसते । 'स्रंसु ध्वंसु अवस्रंसने' 'वसुस्रंसु-' इति दत्वम् ॥—**वनो र च** ॥ वन्निति प्रत्ययेन तदन्त प्रातिपदिक गृह्यते । वन्नन्तेन त्वधिकृतप्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**वन्नन्तात्तदन्ताच्चे**ति । 'येन विधिस्तदन्तस्य' इत्यत्र 'स्व

१ अञ्चतेस्त्विति—नलोपिनोऽञ्चतेरित्यर्थः । २ वनो र चेति—इद सूत्रे न ङीपूर्विधायक, किंतु ऋन्नेभ्य इति प्राप्तङीबनुवादन तत्संनियोगशिष्टरभावमात्रविधायकम् । उभयविधौ गौरवात् । वनूचात्रार्थवानेव गृह्यते तेन मघोनीत्यादौ नातिप्रसङ्गः ।

ङीप् स्यात् रश्चान्तादेशः । वनिति क्वनिप्क्वनिप्वनिपां सामान्यग्रहणम् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् । तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते । सुत्वानमतिक्रान्ता अतिसुत्वरी । अतिधीवरी । शर्वरी ॥ * **वनो न हश इति वक्तव्यम्** ॥ हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकात् ङीप् रश्च नेत्यर्थः । ओणृ अपनयने । वनिप् । विड्वनोरित्यात्वम् । अवावा ब्राह्मणी । राजयुध्वा ॥ * **बहुव्रीहौ वा** ॥ बहुधीवरी । बहुधीवा । पक्षे डाप् वक्ष्यते ॥ **पादोऽन्यतरस्याम्** ।४।१।८। पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकात् ङीब्वा स्यात् । द्विपदी । द्विपात् । **टाबृचि** ।४।१।९। ऋचि वाच्यायां पादन्ताट्टाप् स्यात् । द्विपदा ऋक् । एकपदा ॥ न षट्स्वस्रादिभ्यः ॥ पञ्च । चतस्रः । पञ्चेत्यत्र नलोपे कृतेऽपि ष्णान्ता षडिति षट्संज्ञां प्रति नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वान्न षट्स्वस्रादिभ्य इति न टाप् । **मनः** ।४।१।११। मन्नन्तान्न ङीप् । सीमा । सीमानौ । **अनो बहुव्रीहेः** ।४।१।१२। अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा । बहुयज्वानौ ॥ **डाबुभाभ्यामन्यतरस्याम्** ।४।१।१३। सूत्रद्वयोपात्ताभ्यां डाब् वा स्यात् ॥ सीमा । सीमे । सीमानौ । दामा । दामे ।

---

रूपम्' इति सूत्रात्स्वमित्यनुवर्त्य स्वस्य चेति व्याख्यानादुभयं लभ्यत इति भावः । यदि तु वन्नन्तमेव व्यपदेशिवद्भावेन वन्नन्तान्तमित्युच्यते, तर्हि 'येन विधि'–' इत्यत्र स्वमित्यनुवर्त्य स्वस्य चेति न व्याख्येयम् ॥ न चात्र 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधः शङ्क्यः । तस्य प्रत्ययमात्रविधिविषयत्वात्, वन्नन्तस्य वस्तुतः प्रातिपदिकत्वेऽपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वाभावाच्चेत्याहुः ॥—**सामान्यग्रहणमि**ति । सूत्रे वन इत्यनुबन्धरहितस्य ग्रहणात्तदनुबन्धपरिभाषा नोपतिष्ठत इति भावः ॥ वन्ग्रहणे वन्नन्त वन्नन्तान्त च कथं लभ्यत इत्याशङ्कायामाह—**प्रत्ययग्रहणे** इत्यादि ॥—**तेने**ति । वन्नन्तेनेत्यर्थः ॥—**तदन्तान्तमपि लभ्यत** इति । 'स्त्रियाम्' इत्यधिकारे 'ग्रहणवता प्रातिपदिकेन–' इति निषेधो न प्रवर्तते 'अमहत्पूर्वा' इत्यादिज्ञापकादिति भावः ॥ अन्ये त्वाहुः । वन्नन्तस्य वस्तुत प्रातिपदिकत्वेऽपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्व नास्तीत्युक्तत्वाद् 'ग्रहणवता–' इति निषेधशङ्केव नास्तीति ॥ —**सुत्वानमि**ति । 'सुयजोर्ङ्वनिप्' । 'अत्यादयः क्रान्ताद्यर्थे–' इति समासः ॥—**अतिधीवरी**ति । दधातेः 'अन्येभ्योऽपि दृश्यते' इति क्वनिप् । 'घुमास्था–' इतीत्वम् ॥ भाष्ये तु ध्यायतेः क्वनिपि सम्प्रसारणमिति स्थितम् ॥ नस्य रेफादेशे कृतेऽप्येकदेशविकृतस्यानन्यत्वात् 'अल्लोपोऽनः' इति प्राप्तोऽल्लोपोऽनो नकारान्तविशेषणात्तु न भवतीति 'श्वयुवमघोनाम्–' इत्यत्रैव व्युत्पादितम् ॥ —**शर्वरी**ति । शृधातोः 'अन्येभ्योऽपि–' इत्यनेनैव वनिप् गुणे कृते रपरत्वे हशन्तात् परत्वेऽपि हशन्ताद्विहितत्वाभावात् ङीन्रयोरत्र निषेधो न ॥ —**वनो न हश** इति । अबहुव्रीह्यर्थोऽयमारम्भः । बहुयज्वेत्यादौ तु 'अनो बहुव्रीहेः' इति ङीपो निषेधे रेफस्याप्यप्रवृत्तेः ॥ —**राजयुध्वे**ति । राजानं योधितवती 'राजनि युधि कृञः' इति ङ्वनिप् ॥ —**बहुव्रीहौ वे**ति । 'अन्यतरस्याम्' इति योगविभागादिद लभ्यते, तत्पूर्वं वचनमिति वक्ष्यते ॥ **बहुधीवरी**ति । बहवो धीवानो यस्या नगर्यामिति विग्रहः ॥ --**पक्षे डावि**ति । 'डाबुभाभ्याम्–' इति सूत्रेण । तथा च द्विवचने बहुधीवर्यौ बहुधीवानौ बहुधीवे इति रूपत्रयं भवतीति भावः ॥ —**द्विपादि**ति । द्वौ पादौ यस्या इति बहुव्रीहौ 'सङ्ख्यासुपूर्वस्य' इति पादशब्दस्यान्तलोपः, ङीपि भत्वात् 'पादः पत्' ॥ —**टाबृचि** ॥ पूर्वेण प्राप्तस्य ङीपोऽपवाद । यद्यपि 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति कोशात् पादसमानार्थकः पदशब्दोऽस्तीति तेनैव द्विपदा एकपदेति रूपं सिध्यति, तथापि ऋचि वाच्यायां द्विपदी द्विपादिति प्रयोगनिवृत्तये सूत्रारम्भोऽयमावश्यकः ॥ —**असिद्धत्वादि**ति ॥ एतच्चासिद्धत्वोपवर्णनं कार्यकालपक्ष एवोपयुज्यते, न तु यथोद्देशपक्षे सकृत्कृताया सञ्ज्ञायाः सर्वार्थत्वेन तस्याः पुनरपेक्षाभावात् । न च पञ्चन्निति नान्तस्य कृतायामपि सञ्ज्ञायां पञ्चेत्यदन्तस्य न कृतेति शङ्क्यम्, एकदेशविकृतस्यानन्यत्वादित्याहुः ॥ तदसत् । एकदेशविकृतस्योपसङ्ख्यानं हि 'स्थानिवदादेशोऽनल्विधौ' इत्यत्र पठ्यते तच्चाल्विधौ न प्रवर्तत एवेति यथोद्देशपक्षेऽप्यसिद्धत्ववर्णनस्य युक्तत्वात् ॥ —**न ङीबि**ति ॥ पूर्वसूत्रान्नेत्यनुवर्तत इति भाव. ॥ —**अनो बहुव्रीहेः** ॥ ननु राजयुध्वेत्यादिसिद्धये अवश्यं वक्तव्येन 'वनो न हशः' इत्यनेनैवेष्टसिद्धेः किमनेन सूत्रेण । मैवम् । अन्नन्ताद्बहुव्रीहेः 'डाबुभाभ्याम्–' इति टाब्विधानार्थमेतत्सूत्रस्यावश्यारब्धव्यत्वात् । तथा चानेन ङीपि निषिद्धे तन्मन्नियोगेन प्राप्तो 'वनो र च' इति यो रेफः सोऽपि दुर्लभ एवेति 'वनो न हशः' इति वार्तिकमबहुव्रीह्यर्थमिति फलितम् ॥ —**बहुयज्वानावि**ति । 'न संयोगात्–' इति निषेधान्नायमुपधालोपी । तेनात्र 'अन उपधालोपिन'–' इति वक्ष्यमाणविकल्पो न प्रवर्तते ॥—**डाबुभाभ्याम्**—॥ उभाभ्याग्रहणं व्यर्थं मन्नन्तान्नन्तयोरनुवृत्त्यैव तत्फलसिद्धेरित्येके ॥ उभयोरप्यनुवृत्तिसूचनाय तद्ग्रहणमाव-

---

१ कृतसमासान्त इति—उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवेनार्थाधिकारानुरोधादत्रापि स एव गृह्यते इति भावः, तेन पादयतेः क्विबन्तस्य न ग्रहणम् । २ टाबृचीति—अत्र अन्यतरस्यामित्यनुवर्त्यम्,. तेन ऋच्यभिधेयायामेकपादृक्त्यपि भवत्येव । अनुवृत्तौ प्रमाण तु एतत्सूत्रप्रत्याख्यानपर ङ्याप्सूत्रस्थ भाष्यम् इति द्रष्टव्यमेतद्विस्तरशः शब्देन्दुशेखरे । ३ न ङीबिति—अथ अन इति चै टापोऽपि निषेधः, स्त्रिया यत्प्राप्नोति तन्नेत्यर्थात् । अत एव सीमभ्यामित्यादौ नलोपे कृते न टाप् ।

दामानौ । न पुंसि दामेत्यमरः । बहुयज्वा ॥ बहुयज्वे । बहुयज्वानौ । ▪ **अन उपधालोपिनोऽन्यतरस्याम्** ।४।१।२८। अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् स्यात् । पक्षे डाब्निषेधौ । बहुराज्ञी । बहुराज्ञौ । बहुराजे । बहुराजानौ । ▪ **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः** ।७।३।४४। प्रत्ययस्थात्ककारात्पूर्वस्याऽकारस्येकारः स्यादापि परे स आप् सुपः परो न चेत् । सर्विका । कारिका ॥ अतः किम् । नौका । प्रत्ययस्थात्किम् । शक्नोतीति शका । असुपः किम् । बहुपरिव्राजका नगरी । कात्किम् । नन्दना । पूर्वस्य किम् । परस्य माभूत् । कटुका । तपरः किम् । राका । आपि किम् । कारकः ॥ * **मामकनरकयोरुपसंख्यानम्** ॥ मामिका । नरान् कायतीति नरिका ॥

---

इयकमन्यथा संनिहितस्यान्नन्तस्यैवानुवृत्तिरिति शङ्का स्यादित्यन्ये ॥ ननु निषेधडापोर्वचनसामर्थ्यात्पर्यायः सिध्यति तत् किमन्यतरस्यांग्रहणेन । सत्यम् । अन्यतरस्यामिति योगो विभज्यते तत्र 'मन'' इति निवृत्तम् । अनो बहुव्रीहेर्डाब्वा स्यात् । पूर्वेणैव डापि सिद्धे पुनर्विधानमिद 'ऋन्नेभ्यः–' इति ङीपा सह विकल्पार्थम् 'अन उपधालोपिनः–' इति सूत्र तु नियमार्थम् अनोयोऽसौ विकल्पः स उपधालोपिन एवेति । एव च बहुधीवर्यौ बहुधीवानौ बहुधीवन्युक्तरूपत्रय सिद्धमिति 'बहुव्रीहौ वा' इत्येतन्नापूर्व वचनमिति बोध्यम् ॥ उपधालोपिन एवेति नियमात् सुपर्वा चारुपर्वा इत्यादावनुपधालोपिनि ङीप् न भवति, किं तु डाप्निषेधावेव भवतः । अय च योगविभागोऽवश्यमभ्युपेयः । अन्यथा बहुधीवरीत्यत्र प्रकरणान्तरस्थेन 'अन उपधालोपिन.–' इति वक्ष्यमाणेन पाक्षिके ङीपि कृतेऽपि 'ऋन्नेभ्यः–' इति प्राप्त ङीपमनूद्य तत्सन्नियोगेन हि विधीयमानो यो 'वनो रच' इति रेफ स न सिध्येत । ननु 'वनो र च' इति सूत्रमेव ङीब्रौ विधत्तामिति चेन्न । उभयविधौ गौरवात् । किं च उभयविधायकत्वेऽपि 'अनो बहुव्रीहेः' इत्यनेन ङीपि निषिद्धे रोऽपि दुर्लभः सन्नियोगशिष्टत्वात् ॥ भाष्ये तु 'अनो बहुव्रीहेः' इत्यस्यानन्तरम् 'उपधालोपिनो वा' इति सूत्रमस्तु, 'अन उपधा–' इत्यादि प्रदेशान्तरस्थ सूत्र डाप्सूत्रेऽन्यतरस्याग्रहण च मास्त्वित्युक्तम् ॥—**अन उपधा**–॥ 'बहुव्रीहेरूधसो ङीष्' इत्यतो बहुव्रीहिग्रहण 'सङ्ख्याव्ययादेर्ङीप्' इत्यतो ङीप् चानुवर्तन इत्याशयेनाह—**अन्नन्तादि**त्यादि । नियमार्थमिदमित्युक्तम् । न चैव पूर्वेणैव विकल्पसिद्धाविहान्यतरस्याग्रहण व्यर्थमिति वाच्यम् । असति ह्यन्यतरस्याग्रहणे नित्यार्थो विधिरेवाय स्यान्न तु नियम इति ॥ **प्रत्ययस्थात् कात् पूर्वस्य**—॥ कादित्यकार उच्चारणार्थः । व्यञ्जनमात्र विवक्षितम् । अन्यथा एतिकाश्चग्न्तीत्यादावककारे इत्व न स्यात् । तत्र हि अकारविशिष्टककारस्य प्रत्ययस्थत्वाभावात् । न चाकच्यप्यकारान्तककार एव प्रत्ययस्थो भवतु 'अतो गुणे' इति पररूपे सत्येतिकाइत्यादिरूपसिद्धेरिति वाच्यम् । पचतकीत्यादिवक्ष्यमाणरूपासिद्धिप्रसङ्गादित्याशयेनाह—**ककारादि**ति । वर्णनिर्देशे कारप्रत्ययो विहितः । क्वचित्समुदायात् प्रयोगस्तु 'उच्चैस्तरां वा वषट्कार.' इत्यादि निर्देशरूपयत्नसाध्य इति भावः ॥—**आपि पर** इति । एतच्चाकारविशेषणम् । तत्सामर्थ्यात्ककाराकाराभ्या व्यवायेऽपि भवति, न तु पुत्रकाम्या रथकट्येत्यादौ त्रिचतुरादिव्यवाये । अत एव सर्विकेत्यादावाद्याकारस्य न भवति, तदेतदुक्तम्—**अकारस्येकारः स्यादापि परत** इति । यदि त्वापीति ककारविशेषण स्यात्तर्हि रथकट्येत्यादावतिप्रसङ्गः, व्यवहितस्यापि परत्वानपायात् । न च निर्दिष्टपरिभाषया निस्तारः । अनुवादे परिभाषाणामनुपस्थितेः । न चापीत्यस्याकारविशेषणत्वेऽपि तद्दोषतादवस्थ्यमिति वाच्यम् । अनुवादे परिभाषाणामित्यत्रानुवाद इत्यस्यानूद्यमानविशेषणेष्वित्यर्थाभ्युपगमात् । कात् पूर्वस्यात इदित्यत्र हि अत इत्यनूद्येत्वविधानादनुवाद्यत्वमेवात इत्यस्य, न त्वनूद्यमानविशेषणत्वम् । कादित्यस्य त्वनूद्यमानविशेषणत्व स्पष्टमेवेति न तत्र निर्दिष्टपरिभाषोपतिष्ठते इति वैषम्यात् । अनूद्यमानविशेषणे परिभाषा नोपतिष्ठत इत्येतत् 'उदीचामातः–' इति सूत्रस्थस्थानेग्रहणेन ज्ञापयिष्यते ॥ यदि 'असुपः' इति पर्युदासः स्यात् तर्हि बहुपरिव्राजकेत्यत्रापि स्यादेव उत्तरपदस्य सुबन्तत्वेऽपि समुदायस्यासुबन्तत्वात् ततः परष्टाबिति । तेनात्र प्रसज्यप्रतिषेध इत्याह—**स आप् सुपः परो न चेदि**ति । सुबन्तात् परो न चेदित्यर्थः ॥—**सर्विके**ति । 'अव्ययसर्वनाम्नाम्–' इत्यज्ञातार्थेऽकच् ॥—**कारिके**ति । करोतेर्ण्वुल् णित्वाद्वृद्धि ॥—**नौके**ति । नौशब्दात् स्वार्थे कः, ततष्टाप् ॥—**शके**ति । शक्नोतीति विग्रहः । पचाद्यच् ततष्टाप् ॥—**बहुपरिव्राजके**ति । परिपूर्वाद् व्रजेर्ण्वुल् । बहवः परिव्राजका यस्यामिति बहुव्रीहौ तदवयवस्य सुपो लुकि कृतेऽपि प्रत्ययलक्षणेनोत्तरपदस्य सुबन्तत्वाट्टापः सुबन्तात् परत्वमस्तीतीत्वमत्र न भवति ॥—**नन्दने**ति । 'नन्दिग्रहि–' इति ल्युः । वस्तुतस्तु सूत्रे 'प्रत्ययस्थे किं' इति सप्तमीनिर्देशमेव कृत्वा पूर्वस्येति ग्रहणं सुत्यजमित्याहुः ॥—**पूर्वस्य किमि**ति ॥ अर्थादेवेद लभ्यते । टाबेकादेशे कृते परत्र ह्रस्वाकाराभावादिति प्रश्नः । इतरो निर्दिष्टपरिभाषया कात् पूर्वस्येति न लभ्येत, किं तु टाबेकादेशं बाधित्वा कात् परस्यैवाकारस्य स्यादित्याशयेनाह—**परस्येत्यादि** ॥—**कटुके**ति । कटुरत्र कटुरसवति । अज्ञातादौ कः ॥—**राके**ति । 'कृदाधारार्चिकलिभ्यः कः' । बाहुलकादित्सञ्ज्ञाभावः । सञ्ज्ञापूर्वकविधेरनित्यत्वात् 'केऽणः' इति ह्रस्वो न ॥ **मामकनरकयोरि**ति । ककारस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् ॥—**मामिके**ति । ममेय मामिका । 'युष्मदस्म-

---

१ प्रत्ययस्थादिति—स्थग्रहण स्पष्टार्थम्, केवलककारस्य प्रत्ययस्याभावात् ।

*** त्यक्त्यपोश्च** ॥ दाक्षिणात्यिका । इहत्यिका । **न यासयोः** ।७।३।४५। यत्तदोरस्येत्वं स्यात् । यका । सका । यकाम् । तकाम् ॥ *** त्यकनश्च निषेधः** ॥ अधित्यका । उपत्यका । *** आशिषि वुनश्च** । जीवका । भवका ॥ *** उत्तरपदलोपे न** ॥ देवदत्तिका देवका ॥ *** क्षिपकादीनां च** ॥ क्षिपका । ध्रुवका । कन्यका । चटका ॥ *** तारका ज्योतिषि** ॥ अन्यत्र तारिका ॥ *** वर्णका तान्तवे** ॥ अन्यत्र वर्णिका ॥ *** वर्तका शकुनौ प्राचाम्** ॥ उदीचां तु वर्तिका ॥ *** अष्टका पितृदेवत्ये** ॥ अष्टिकान्या ॥ *** सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्** ॥ इह वा अ इति च्छेदः। कात्पूर्वस्याकारादेशो वेत्यर्थः। तेन पुत्रिकाशब्दे ङीन इवर्णस्य पक्षेऽकारः। अन्यत्रेत्त्वबाधनार्थमकारस्यैव पक्षेऽकारः। सूतका । सूतिकेत्यादि । **उदीचामातः स्थाने यकपूर्वायाः**[1] ।७।३।४६।

---

दोरन्यतरस्यां खञ्' इत्यण्, 'तवकममकावेकवचने' इति ममकादेशः, आदिवृद्धिः। 'केवलमामक–' इत्यादिना सञ्ज्ञाछन्दसोरेवेति नियमान्न ङीप् ॥—**नरिकेति** । 'कै शब्दे' 'आदेच उपदेशे–' इत्यात्वम्, 'आतोऽनुपसर्गे कः', 'आतो लोप इटि च' इत्यालोप, टाप्, इत्वम् ॥—**त्यक्त्यपोश्च** । उपसङ्ख्यानमित्यनुषज्यते । 'उदीचामातः–' इति विकल्पापवादः ॥—**दाक्षिणात्यिकेति** । दक्षिणस्यामदूरे दक्षिणा 'दक्षिणादाच्' दक्षिणा भवेति विग्रहे 'दक्षिणापश्चात्पुरसस्त्यक्', 'किति च' इत्यादिवृद्धिः, टाप् । ततो अज्ञातार्थे कः, 'केऽणः' इति ह्रस्वः, टाप् । प्राचा तु दक्षिणस्यां दिशि भवेति विगृहीतं तच्च मनोरमायां दूषितम् । त्यगिवधावव्ययसाहचर्यादाजन्तस्यैव दक्षिणाशब्दस्य ग्रहणात् । अन्यथा सर्वनाम्नो वृत्तिमात्रे पुंवद्भावापत्तेश्चेति ॥—**इहत्यिकेति** । 'अव्ययात्त्यप्' ॥—**न यासयोः** । 'प्रत्ययस्थात्' इति प्राप्ते निषेधोऽयम् । यासेति यत्तदोरुपलक्षणमित्याशयेनाह—**यत्तदोरिति** ॥—**यका सकेति** । यत्तदोरकच् । त्यदाद्यत्वे टाप् । स्वरूपस्याविवक्षाया फलमाह—**यकां तकामिति** । यद्यपि 'न यत्तदो.' इत्येव सूत्रयितुमुचितं, तथापि सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थं 'न यासयोः' इत्युक्तमित्याहुः ॥ वस्तुतस्तु 'न यत्तदोः' इत्युक्तेऽप्यनित्यत्वं सिध्यत्येव । अन्यथा अनयोरकारस्याप्यत्वं दुर्लभमिति किमनेन निषेधेनेति ॥—**त्यकनश्च निषेध** इति । ननु 'मृदस्तिकन्' इतिवत् प्रक्रियालाघवाय त्यिकन्निति वक्तव्ये त्यकन्नित्यकारनिर्देशसामर्थ्यादित्वाभावे सिद्धे किमनेन निषेधवचनेन । मैवम् । पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक इत्यादौ तद्धितलुकि स्त्रीप्रत्ययस्यापि लुक्यकारस्य श्रवणार्थत्वात्तस्य त्यिकन्नित्युक्ते हि पञ्चोपत्यिक इति स्यात् इष्यते तु पञ्चोपत्यक इति । तस्मादावश्यकमेव निषेधवचनम् । 'मृदस्तिकन्' इत्यत्रापीकारोच्चारणं तद्धितलुकि श्रवणार्थम् । न तु प्रक्रियालाघवार्थम् । अन्यथा पञ्चभिर्मृत्तिकाभिः क्रीत इति 'आर्हात्–' इति ठको 'अध्यर्ध–' इति लुकि कृते 'लुक् तद्धितलुकि' इति टापो लुकि निमित्ताभावात् 'प्रत्ययस्थात्–' इतीत्त्वं न स्यात् पञ्चमृत्तिक इत्यत्र । न च लुकः प्रागेवान्तरङ्गत्वात् 'प्रत्ययस्थात्–' इतीत्त्वं सिध्यत्येवेति वाच्यम् । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते' इत्यभ्युपगमात् । अत एव सनीस्रमत इत्यादौ नलोपाभावः सिध्यति । पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादौ टापा सहैकादेशोऽपि न भवति । अन्यथा एकादेशस्यादिवद्भावाट्टाब्ग्रहणात् 'लुक् तद्धितलुकि' इत्यनुपसर्जनस्त्रीप्रत्ययस्य लुकि कृते अकारस्य श्रवणं न स्यात् । एतच्च भाष्यकैयटयोः स्पष्टम् ॥—**उपत्यकेति** । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' ॥—**आशिषीति** । आशीरर्थे विहितस्य वुन्प्रत्ययस्यात इत्वं न भवतीति वक्तव्यमित्यर्थः ॥—**जीवका भवकेति** । जीवताद्भवतादित्यर्थे 'जीवतिभवतिभ्यामाशिषि च' इति वुन्, तस्याकादेशे कृते टाप् ॥—**देवकेति** । देवदत्तशब्दात्स्वार्थिकः कः । 'अनजादौ विभाषा लोपो वक्तव्यः' इति प्राग्दिवीयेषु वक्ष्यमाणत्वात् द्वितीयादच ऊर्ध्वस्य दत्तशब्दस्य लोपः । देवदत्तिकाशब्दस्योपन्यासस्तु दत्तलोपमभिव्यक्तुं तदभावे इत्त्वनिषेधाभावं च दर्शयितुम् ॥—**क्षिपकादीनां चेति** । नेत्यनुषज्यते ।—**क्षिपकेत्यादि** । क्षिपेरिगुपधलक्षणः कः । एवं 'ध्रुव स्थैर्ये' इत्यस्मादपि । यद्वा 'ध्रु गतिस्थैर्ययोः' पचाद्यच् । कुटादित्वान्ङित्त्वेन गुणाभावे उवङ् ॥ 'चट भेदने' । पचाद्यच् । ततष्टाप् । अज्ञातादौ कः । 'केणः' इति ह्रस्वः । पुनष्टाप् ॥ तरतेर्ण्वुल् अकादेशः । नक्षत्रं नेत्रकनीनिका च ज्योति ॥—**वर्णकेति** । प्रावारविशेषः । 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' इति चौरादिकात् ण्वुल् । तन्तूनां विकारस्तान्तवम् ॥—**अन्यत्र वर्णिकेति** । ग्रन्थविशेषस्य व्याख्या स्तोत्रकर्त्री च ॥—**वर्तकेति** । वर्तयतीति वर्तका । शकुनावेव वाच्येऽयं विकल्पः, अन्यत्र नित्यमेवेत्त्वमिति बोध्यम् ॥—**अष्टकेति** । पितरश्च ताः देवताश्च पितृदेवताः । तदर्थं कर्म पितृदेवत्यम् । 'देवतान्तात्तादर्थ्ये यत्' । अश्नन्ति ब्राह्मणा यस्यां सा अष्टका 'इष्यशिभ्यां तकन्' ॥—**अष्टिकान्येति** । अष्टौ परिमाणमस्याः । 'सङ्ख्याया अतिशदन्तायाः कन्' ॥—**सूतकेति** । सूतशब्दात् स्वार्थे कन् । वृन्दमस्यास्तीति मत्वर्थे 'शृङ्गवृन्दाभ्याम्–' इत्यारकन् । देवतावाचिवृन्दारकशब्दस्य पुलिङ्गत्वेऽपि रूपिमुख्यवाचिनोः स्त्रीलिङ्गत्वं संभवत्येव । अत एव 'त्रिपूत्तरे' इत्युपक्रम्य 'वृन्दारकौ रूपिमुख्यौ' इत्यमरेणोक्तम् ॥—**उदीचाम्**—॥ यकौ पूर्वौ यस्याः सा । अर्थगतं स्त्रीत्वमाकारे आरोप्य यकपूर्वाया इति

---

१ यकपूर्वाया इति—अत्र यकपूर्वत्वं पूर्वत्र कात्पूर्वत्वं चाव्यवहितमेव गृह्यते, उदात्तयणोरित्यादिवदनुवादेऽपि निर्दिष्टपरिभाषायाः प्रवृत्तेः । तेन कृशराशब्दात्कनि ह्रस्वत्वे नेत्वविकल्पो न ।

**यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे । केऽण इति ह्रस्वः । आर्यका । आर्यिका । चटकका । चटकिका । आतः किम् । सांकाश्ये भवा सांकाश्यिका । यकेति किम् । अश्विका । स्त्रीप्रत्ययेति किम् । शुभं यातीति शुभंयाः । अज्ञाता शुभंयाः शुभंयिका ॥ * धात्वन्तयकोस्तु नित्यम् ॥ सुनयिका सुपाकिका । ४६७ भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ।७।३।४७। स्वेत्यन्तं लुप्तषष्ठीकं पदम् । एषामत इद्वा स्यात् । तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम् । भस्त्राग्रहणमुपसर्जनार्थम्[1] । अन्यस्य तूत्तरसूत्रेण सिद्धम् । एषा द्वा एतयोस्तु सपूर्वयोर्नेत्त्वम् । अन्तर्वर्तिनीं विभक्तिमाश्रित्याऽसुपइति प्रतिषेधात् । अनेषका । परमैषका । अद्वके । परमद्वके । स्वशब्दग्रहणं संज्ञोपसर्जनार्थम् । इह हि आतः स्थाने इत्यनुवृत्तं स्वशब्दस्यातो विशेषणम् । नतु द्वैयोरसंभवात् । नाप्यन्येषामव्यभिचारात् । स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः[2] । अर्थान्तरे तु न स्त्री । संज्ञोपसर्जनीभूतस्तु कप्रत्ययान्तत्वाद्भवत्येवोदाहरणम्[3] । एवं चात्मीयायां स्विका परमस्विकेति नित्यमेवेत्त्वम् । निर्भस्त्रका ।**

स्त्रीलिङ्गनिर्देशस्तेन स्त्रीप्रत्ययो लभ्यत इत्याह—**स्त्रीप्रत्ययाकारस्येति** । अत्र 'न यासयोः' इत्यतो नेति वर्तते । यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्योदीचां मते इत्व नेत्यक्षरार्थ. । एव स्थिते फलितमाह—**इद्वा स्यादिति** । एवमग्रेऽप्यूह्यम् । 'षष्ठी स्थानेयोगा' इत्यनेनैव लब्धे सूत्रे स्थानग्रहणमनूद्यमानविशेषणेषु परिभाषा नोपतिष्ठत इति ज्ञापनार्थं, फल तु वृद्धसंज्ञायामिक्परिभाषानुपस्थानाच्छालीयादिसिद्धिः । यदि तु तत्रेक्परिभाषोपतिष्ठेत, तदा औपगवीय इत्यादावेव 'वृद्धाच्छ.' स्यात्, नतु शालीयो मालीय इत्यादौ । तत्र ह्याकारवृद्धेरिक्स्थानिकत्वाभावात् । तथा 'अतो गुणे' इत्यत्रेक्परिभाषोपस्थितौ एधे पचे यजे इत्यादावेव पररूप स्यात् । 'टित आत्मनेपदानाम्–' इति इट एत्वे कृते इक्स्थानिकत्वादेकारगुणस्य । भवन्ती पचन्तीत्यादौ तु न स्यात्, तत्रेक्स्थानिकत्वाभावादकारगुणस्येत्यपि बोध्यम् ॥ नव्यास्तु वृद्धाच्छ बाधित्वा 'अणृगयनादिभ्य.' इत्यण्प्रत्ययो यथा स्यादित्येतदर्थमृगयनादिगणे व्याकरणशब्दः पठ्यते । यद्यनूद्यमानविशेषणेषु परिभाषा उपतिष्ठेरन् तर्हि तत्पठन व्यर्थ स्यात् । आकारवृद्धेरिक्स्थानिकत्वाभावेन वृद्धसंज्ञाया अभावाच्छस्याप्रवृत्तेः । तथा च तस्मादेव पाठादुक्तार्थज्ञापनसम्भवे स्थानेग्रहणमिह स्पष्टार्थमित्याहुः ॥—**सांकाश्यिकेति** । संकाशेन निर्वृत्त नगर सांकाश्य, 'वुञ् छण्–' आदिसूत्रेण 'सकाशादिभ्यो ण्य.' । ततो भवार्थे 'धन्वयोपधाद्वुञ्,' अकादेश. । स च सांकाश्यभवां स्त्रियमाहेति तदकारस्यापि वैकल्पिकमित्त्व स्यात् तस्मादात इत्युक्तम् ॥ अत्र वदन्ति । यथायमकारो नाकारस्थानिकः, एव स्त्रीप्रत्ययस्थानिकोऽपि नेति ह्यङ्गविकलमेतत् । अकेति समुदायस्य स्त्रीवाचकवुञ्स्थानिकत्वेऽप्यकारमात्रस्यातथात्वात् । तस्मादात इति स्पष्टार्थमेवेति ॥—**शुभंया** इति । 'अन्येभ्योऽपि दृश्यते' इति विच् । शुभमिति मान्तो निपातः ॥—**सुनयिकेति** । सुष्ठु नयो यस्याः सुनया तत कः । 'केऽण.' इति ह्रस्वः । एवं सुष्ठु पाको यस्याः सा ॥—**भस्त्रेषा**—॥—**लुप्तषष्ठीकमिति** । केचिदिह स्वा इति छित्त्वा षष्ठ्याः स्थाने सौत्रत्वाद्व्यत्ययेन जसिति व्याचक्षते ॥ 'प्रत्ययस्थात्–' इत्यतोऽनुवर्तनादाह—**अत इद्वा स्यादिति** । ननु नञ्पूर्वाणामपीत्यपिशब्देन केवलाना सग्रहः क्रियते, न तु नञ्भिन्नपूर्वाणामपि ॥ तथा च निर्भस्त्रिकेत्यादि न सिध्येदतस्तदन्तविधिरावश्यक इत्याशयेनाह—**तदन्तविधिनैवे**त्यादि। आङ्गत्वादिति भावः ॥ एव च नञ्पूर्वाणामित्यस्य नियमार्थत्वशङ्कानिरस्ता, निर्भस्त्रिकेत्यादावतिप्रसङ्गात् ॥—**अन्यस्य त्विति** । अनुपसर्जनस्य तु 'अभाषितपुंस्काच्च' इत्यनेन सिद्धमित्यर्थ ॥—**एतयोस्त्विति** । भस्त्राजाज्ञास्वाना तु सपूर्वाणामपीत्व भवत्येव । तत्र टापः कप्रत्ययात्परत्वेन सुप. परत्वाभावात् 'असुप.' इति निषेधाप्रवृत्तेरिति भावः ॥—**सपूर्वयोरिति** । पूर्वावयवसहितयोर्विद्यमानपूर्वपदयोरिति यावत् ॥—**अन्तर्वर्तिनीमि**त्यादि । न सु एतद् सु इति स्थितेऽकचि कृतेऽकचः प्रागेव वा नञ्तत्पुरुषे कृते 'अन्तरङ्गानपि–' इति न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव सामासिके लुकि विशिष्टात्पुनः सुपि त्यदाद्यत्वे पररूपे च कृते ततष्टाप् । स च आद्यसुपः पर इति भावः ॥—**अनेषकेति** । अज्ञाता एषा एषका न एषका अनेषका । अज्ञाता अनेषा अनेषकेति वा लौकिकविग्रहोऽत्र बोध्य. । एव मग्रेऽप्यूह्यम् ॥—**स्वशब्दस्यातो विशेषणमिति** । यद्यपि हरदत्तग्रन्थे अत्रात:स्थान इत्येतत् स्वशब्दस्य विशेषणमित्युक्त, तथापि तत्र स्वशब्दस्येत्यनन्तरमत इति शेषो बोध्य इति भाव. ॥—**अर्थान्तरे त्विति** । आत्मज्ञातिधनेष्वित्यर्थः ॥—**नित्यमेवेति** । स्विकेत्यादावकचि कृते आत:स्थानिकोकारो दुर्लभ इति प्रकृतसूत्रस्याविषयत्वात् 'प्रत्ययस्थात्–' इति नित्येत्वप्रवृत्तेः । एव च 'हंसं तनौ संनिहित चरन्त मुनेर्मनोवृत्तिरिव स्विकायाम्' इति श्रीहर्षश्लोके 'भस्त्रैषा–' इति वैकल्पिकमित्त्वम् इति केषाचिद्व्याख्यान नादर्तव्यमिति भावः । वस्तुतो 'हंसं तनौ–' इति श्लोके स्विकायामिति प्रयोगोऽसाधुरेव । आत्मीयायां स्वशब्दस्य सर्वनामत्वात् स्याडागमप्रवृत्तेरिति नव्याः ॥ प्रत्युदाहरणान्युक्तानि । उदाहरणान्याह—**निर्भस्त्रिकेत्यादि** । निष्क्रान्ता भस्त्रा-

१ उपसर्जनार्थमिति—एव चानुपसर्जने आदाचार्याणामिति आत्व भवत्येव, उपसर्जनेऽस्य चारितार्थ्येन बाधे मानाभावादिति भावः । २ अकजर्ह इति—एव च तदकारस्यात:स्थानिकत्वाभाव इति भावः । ३ भवत्येवेति—नच सज्ञाभूतस्याभाषितपुंस्काच्चेत्यनेन सिद्धिः, 'सज्ञापूरण्योश्च' इति निषेधेन सज्ञाया अपि भाषितपुंस्कत्वावगमात् ।

निर्भस्त्रिका । एषका । एषिका । कृतषत्वनिर्देशान्नेह विकल्पः । एतिके । एतिकाः । अजका । अजिका । ज्ञका । ज्ञिका । द्वके । द्विके । निःस्वका । निःस्विका । **अभाषितपुंस्काच्च** ।७।३।४८। एतस्माद्विहितस्यातः स्थानेऽत इद्वा स्यात् । गङ्गका । गङ्गिका । बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम् । अज्ञाता अखट्वा अखट्विका । शैषिके कपि तु विकल्प एव । **आदाचार्याणाम्** ।७।३।४९। पूर्वसूत्रविषये आद्वा स्यात् । गङ्गाका । गङ्गिका । उक्तपुंस्कात्तु शुभ्रिका ॥ **अनुपसर्जनात्** ।४।१।१४। अधिकारोऽयं यूनस्तिरित्यभिव्याप्य । अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति ॥ **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** ।४।१।१५। अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात् । कुरुचरी । उपसर्जनत्वान्नेह । बहुकुरुचरा । नदट्, नदी । वक्ष्यमाणेत्यत्र टित्वादुगित्वाच्च ङीप् प्राप्तः । यासुटो ङित्वेन लाश्रयमनुबन्धकार्यं नादेशानामिति ज्ञापनान्न भवति । श्यः शानचः शित्वेन

---

या. निर्भस्त्रा, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । उपसर्जनह्रस्वष्टाप् । ततोऽज्ञातादौ कः । 'केणः' इति ह्रस्वः । पुनष्टाप् । सूत्रे एषेति विकृतनिर्देशो विवक्षितविषयो, न तु 'यासयोः' इतिवदुपलक्षणमित्यभिप्रेत्याह—**कृतषत्वनिर्देशा**दिति ॥ इहाजाज्ञेति स्त्रीलिङ्गनिर्देशादजादयः स्त्रीलिङ्गा एव गृह्यन्ते, तेनेह विकल्पो न । शुभ्राजिका । जानातीति ज्ञः इगुपधेति कः । प्रियो ज्ञो यस्याः सा प्रियज्ञिकेति ॥—**निःस्वके**ति । स्वस्याः निष्क्रान्तेति विग्रहो, न त्विह स्विकस्या निष्क्रान्तेति, तथात्वे ह्युपसर्जनेऽपि निःस्विकेत्येकमेव रूपं स्यात् आतः स्थानिकाकारस्य दुर्लभत्वेन प्रकृतसूत्राविषयत्वात् ॥ —**अभाषित**—॥—**एतस्मादि**ति । नित्यस्त्रीलिङ्गादित्यर्थः । विहितविशेषणतया व्याख्यानस्य फलमाह—**बहुव्रीहे**रिति ॥—**ततो विहितस्य नित्यमि**ति । अविद्यमाना खट्वा यस्याः साऽखट्वेत्यत्र 'शेषाद्विभाषा' इति समासान्तस्य कपो वैकल्पिकत्वात् कबभावपक्षे 'गोस्त्रियोः—' इत्युपसर्जनह्रस्वे कृते पुनरखट्वशब्दाद्भाषितपुंस्काट्टापि सत्यज्ञातादौ कप्रत्यये 'केऽणः' इति ह्रस्वेऽस्य विकल्पस्याप्रवृत्तेः 'प्रत्ययस्थात्—' इत्युत्सर्ग एव प्रवर्तते । परविशेषणत्वे त्वयं विकल्पः स्यादेवेति भावः ॥ बहुव्रीहेरित्युपसर्जनोपलक्षणं तेनातिखट्विकेत्यादावपि नित्यमेव ॥—**विकल्प एवे**ति । अखट्वेति बहुव्रीहौ न सु खट्वा सु इति स्थिते 'सुपो धातु—' इति सोर्लुक्युपसर्जनह्रस्वत्वं बाधित्वा 'शेषाद्विभाषा' इति समासान्ते कपि परत्वात् कृते स्त्रीप्रत्ययान्तत्वाभावादुपसर्जनह्रस्वो न प्रवर्तते, किं तु 'केऽणः' इति ह्रस्वस्य 'न कपि' 'आपोऽन्यतरस्याम्' इति वैकल्पिकनिषेधात्पाक्षिकह्रस्वे सति 'अभाषितपुंस्काच्च' इति विकल्पः प्रवर्तते, तत्र हि खट्वशब्दात्परस्य टापोऽभाषितपुंस्काद्विहितत्वादिति भावः ॥ ह्रस्वाभावपक्षे त्वखट्वाकेत्येतद्रूपान्तरम् ॥ —**अधिकारोऽयमि**ति । स्वरितत्वप्रतिज्ञानादिति भावः ॥—**अभिव्याप्ये**ति । अत एव बहुयुवा शालेत्यत्र 'यूनस्तिः' इति न प्रवर्तते इति प्राञ्चः ॥ न चात्र नलोपस्यासिद्धत्वान्नान्तलक्षणो ङीप् स्यादिति शङ्क्यं, 'नलोपः सुप्स्वर—' इति नियमेन ङीपं प्रत्यसिद्धत्वाभावादित्येके ॥ अन्ये तु 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणनिषेधेनान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाभावान्नलोपस्याप्रसक्त्या ङीप् स्यादेव । परं तु 'अनो बहुव्रीहेः' इति निषेधान्ङीबभावे डाब्निषेधाविह भवत इत्याहुः ॥—**अयमेवे**ति । अनुपसर्जनाधिकार एवेत्यर्थः ॥—**टिड्ढाणञ्**—॥ टिड्ढादयः प्रत्ययास्ते तदन्ता गृह्यन्ते, तच्चानुवर्तमानस्य प्रातिपदिकस्य विशेषणम् 'अजाद्यतः—' इति सूत्रादनुवर्तमानमप्यत इत्येतेन प्रातिपदिकविशेषणमता च तदन्तविधिरतो व्याचष्टे—**यट्टिदादि तदन्तं यददन्तं प्रातिपदिकमि**ति । नदट् देवट् इत्यादौ प्रत्ययस्यैव टित्वमिति टिदन्तप्रातिपदिकमिति व्याख्यानं सङ्गच्छत एव । स्तनधयीत्यत्र तु प्रत्ययस्य टित्वाभावेऽपि धातोष्टित्वस्याचरितार्थत्वात्समुदायात्स्यादेव ङीबिति वक्ष्यति ॥ अन्ये तु ढादय एव प्रत्ययाः टिदिति तु प्रत्ययाप्रत्ययसाधारणं, तेन टित् प्रातिपदिकं ढाद्यन्तं च यत् प्रातिपदिकमित्यर्थः । टित्त्वं तु प्रातिपदिकस्य क्वचित्प्रत्ययकृतं क्वचित् स्वतः क्वचित् प्रकृतिकृतं भवत्यवयवधर्मस्य समुदाये उपचारात् । तत्र आद्यस्योदाहरणं—**कुरुचरी**ति ॥ द्वितीयस्योदाहरणं—**नदडि**ति । पचादिषु टितोऽस्य पाठात् स्वत एव टित्वम् । तृतीयं तु धेटष्टित्वात् स्तनधयतीति कृदन्ते उदाहरिष्यतीत्याहुः ॥—**कुरुचरी**ति । कुरुषु चरतीत्यधिकरणोपपदे 'चरेष्टः' इति कर्तरि टः ॥—**उपसर्जनत्वान्नेहे**ति । बहवः कुरुचराः यस्यां सा बहुकुरुचरेति बहुव्रीहिरन्यपदार्थप्रधानस्तथा च टिदन्तस्योपसर्जनत्वान् ङीबित्यर्थः ॥—**वक्ष्यमाणे**ति । ब्रुवो 'लृटः सद्वा' इति शानच् । 'ब्रुवो वचिः' इति वच्यादेशः 'वच परिभाषणे' इत्यस्मात् कर्मणि वा लृटः शानच् । 'स्यतासी—' इति स्यः । कुत्वषत्वे । 'आने मुक्' इति मुक् ॥—**टित्वादुगित्वाच्चे**ति । स्थानिवद्भावेनेत्यर्थः । न चाल्विधित्वात्कथमिह स्थानिवद्भाव इति शङ्क्यम् । 'न ल्यपि' इति ज्ञापकादनुबन्धकार्येषु 'अनल्विधौ' इति निषेधस्याप्रवृत्तेः । अत एव रमायामित्यादौ परत्वात् ङेरामि कृते स्थानिवद्भावेनामो ङित्वाद् 'याडापः' इति याडागमः सिध्यति ॥—**ज्ञापनान्न भवती**ति । लिडादेशपरस्मैपदानां स्थानिवद्भावेनैव ङित्वलाभात्तदागमस्य यासुटो ङित्त्वं व्यर्थं सत् 'लाश्रयानुबन्धकार्यमादेशानां न' इति सामान्यतो ज्ञापयतीति भावः ॥ 'पिच्च ङिन्न' इत्यदादिगणे वक्ष्यमाणत्वात्तिबादिर्वापदेशिकेन पित्त्वेनातिदेशिकं ङित्वं बाध्यत इति यासुटो

१ अयमेवेति—आचारक्विबन्तात्कर्तरि क्विपोऽनभिधानमेव एतज्ज्ञाप्यप्रामाण्यादिति भावः

क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधज्ञापनाद्वा । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी ॥ * **ताच्छीलिके णेऽपि** । चौरी ॥ * **नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्** ॥ स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यङ्करणी । तरुणी । तलुनी ।

**यञश्च** ।४।१।१६। यञन्तात्स्त्रियां ङीप्स्यात् । अकारलोपे कृते । **हलस्तद्धितस्य** ।६।४।१५०।

---

ङित्त्वस्य वैयर्थ्याभावान्न तज्ज्ञापयतीति शङ्कमान प्रत्याह—**श्नः शानचः शित्त्वेने**त्यादि ॥—**सौपर्णेयी**ति । 'कद्रूश्च वै सुपर्णी' इति श्रुतिः । सुपर्णीशब्दादपत्येऽर्थे 'स्त्रीभ्यो ढक्' । 'आयनेयी–' इत्येयादेशः ॥ नन्वत्र निरनुबन्धपरिभाषया 'शिलाया ढः' 'तत्र साधुः' इत्यधिकारे 'सभाया यः' 'ढश्छन्दसि' इति विहितस्तयोरेव ढयोर्ग्रहणेन भवितव्यं न तु ढकः । सत्यम् । शिलाया ढस्य स्वभावान्नपुंसक एव प्रवृत्तेः स्त्रियामसम्भवात् । सभाया ढस्य च सभेयीति स्त्रियां छन्दसि प्रयोगदर्शनादन्यस्य हि निरनुबन्धस्यासम्भवाद्गत्या सानुबन्धको गृह्यते ॥—**ऐन्द्री**ति । इन्द्रो देवता अस्याः 'साऽस्य देवता' इत्यण् । इन्द्रस्येयमिति वा विग्रहः 'तस्येदम्' इत्यण् । अत्र व्याचक्षते । 'कृद्ग्रहणे गतिकारकपूर्वस्य' इत्यस्य प्रवृत्त्यभावेऽपि अण्णन्तस्य प्रातिपदिकविशेषणात्तदन्तान्तमपि गृह्यत इति कुम्भकारशब्दात् ङीप् स्यादेव । अस्तु वा कारशब्दादेव ङीप् तथापि कुम्भकारीति रूपं सिध्यत्येव । न च कारशब्दान्ङीपि तदन्तात् 'स्त्रीभ्यो ढक्' इति ढक्प्रत्यये कौम्भकारेयो न सिध्येदिति वाच्यम् । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात्तत्सिद्धेः । नापि नियमाभावे कारीशब्दात्कदाचिड्ढकि कुम्भकारेय इति रूप स्यादिति शङ्क्यम् । 'समर्थः पदविधिः' इति वक्ष्यमाणत्वेनासमर्थात्तद्धितानुत्पत्तेरिति ॥ मनोरमायां तु इह सूत्रे अनेकं वाक्यं तत्रानुपसर्जनमण् तस्य योऽकारस्तदन्तादिति व्याख्यानान्नेह । आपिशलमधीते आपिशला ब्राह्मणीति । अत्र हि प्रोक्तार्थे योऽण् श्रूयमाणः स उपसर्जनम् । यस्तु प्रधानो अध्येत्रण् 'प्रोक्ताल्लुक्' इति स लुप्तः । वर्णप्राधान्यान्न प्रत्ययलक्षणमतष्टाबेव भवतीति स्थितम् ॥ नन्वेवमापिशलेति रूपसिद्ध्यर्थमनुपसर्जनग्रहणस्यावश्यकत्वेन सामर्थ्योपक्षयात् कथमेतस्य तदन्तविधिज्ञापकतेति चेत्अत्राहुः । स्वरितत्वप्रतिज्ञया 'अधिकारोऽयम्' इत्यधिकारत्वाश्रयणादनुपसर्जनग्रहणस्य ज्ञापकत्व संभवत्येवेति ॥—**औत्सी**ति । उत्से भवा 'उत्सादिभ्योऽञ्' ॥ नन्वनेनैव सिद्धे 'शार्ङ्गरवाद्यञ–' इत्यञ्ग्रहण व्यर्थम् । अञन्तस्याद्युदात्तत्वेन ङीप्ङीनोः स्वरे विशेषाभावात् । मैवम् । उत्सस्यापत्य स्त्री औत्सीत्यत्राञन्तलक्षणं ङीपं बाधित्वा परत्वाज्जातिलक्षणे ङीषि प्राप्ते तद्बाधनार्थं तस्यावश्यकत्वात् । न चैव 'शार्ङ्गरवाद्यञः–' इति ङीना सिद्धमिदं रूपमित्यञ्ग्रहणमिह न कर्तव्यमिति वाच्यम् । तत्र 'जातेः' इत्यनुवृत्तेः । अन्यथा शार्ङ्गरवस्य स्त्री शार्ङ्गरवी औत्सस्य स्त्री औत्सीत्यादौ पुयोगेऽपि परत्वान्ङीन् स्यान्न तु ङीप् । इष्यते तु पुयोगे ङीपेव । तस्मात् भवाद्यर्थस्य जातित्वेनापरिभाषणाद्भवाद्यर्थे ङीबर्थमिहाप्यञ्ग्रहणमावश्यकमेवेति दिक् ॥—**ऊरुद्वयसी**त्यादि । ऊरू प्रमाणमस्याः सा । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' । यद्यत्र 'नलोका–' इति सूत्रे तन्नितिचद्वयसजिति मात्रचश्चकारेण प्रत्याहारो गृह्यते, तदा दघ्नञ्मात्रज्ग्रहणमिहाकर्तु शक्यम् ॥—**पञ्चतयी**ति । पञ्च अवयवा अस्याः, 'संख्याया अवयवे तयप्' ॥—**आक्षिकी**ति । 'तेन दीव्यति–' इति ठक् ॥—**लावणिकी**ति । लवणं पण्यमस्याः । 'लवणाट्ठञ्' ॥ टक्ठञोर्भेदेनोपादान ठन्निवृत्त्यर्थं, तेनेह न दण्डोऽस्त्यस्याः दण्डिका । 'अत इनि–' इति ठन् । अत एव ञिठन्तेऽपि न ङीप् । काशिषु भवा काशिका । काश्यादिभ्यष्ठञ्ञिठौ ॥—**यादृशी**ति । 'त्यदादिषु दृश –' इति कञ् । 'आ सर्वनाम्नः' इत्याकार ॥—**इत्वरी**ति । एति तच्छीला । 'इण्नशजिसर्तिभ्यः क्वरप्' । 'ह्रस्वस्य पिति कृति तुक्' । क्वरपोऽन्यतरानुबन्धोपादान स्पष्टार्थमेकेनैव वरचो व्यावृत्तिसिद्धेः । 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः । तत्र 'स्थेशभास–' इति वरच् । ईश्वरीति तु त्रेधा—पुयोगलक्षणे ङीष्यन्तोदात्तमेकम्, 'इक्नोपधायाः' इत्यनुवृत्तौ 'अश्नोतेराशुकर्मणि वरट्' इत्युणादिके वरटि टित्वान्ङीपि मध्योदात्तमपरम्' ईशेः क्वनिपि वनिपि वा ङीब्रयोराद्युदात्तमन्यत् ॥—**ताच्छीलिके**ति । अथ भावः । 'शील' 'छत्रादिभ्यो णः' इति यो णस्तस्मिन्नण्कार्यं भवति 'कार्मस्ताच्छील्ये' इति ज्ञापकात् । तत्र हि 'अन्' इत्यणि विहित प्रकृतिभाव बाधितुं टिलोपो निपात्यते, यदि तु णप्रत्यये अण्कार्यं न स्यात् तर्हि किं तेन । ताच्छीलिके एव अण्कार्यज्ञापनान्नेह । दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । 'तदस्यां प्रहरणम्–' इति णः । 'छत्रादिभ्योऽण्' इत्येव सूत्रमस्तु किमनया कुसृष्ट्येति तु बहवः ॥—**चौरी**ति । चुरा शीलमस्याः ॥—**नञ्स्नञ्** । वृत्तिकृता त्वत्रत्यख्युन्ग्रहण सूत्रे प्रक्षिप्य 'क्वरप्ख्युनाम्' इति पठितं, तच्च भाष्यविरुद्धमित्युत्तरत्र स्फुटीभविष्यति ॥—**स्त्रैणी पौंस्नी**ति । 'स्त्रीपुंसाभ्याम्–' इति नञ्स्नञौ ॥—**शाक्तिकी**ति । शक्तिः प्रहरणमस्याः, 'शक्तियष्ट्योरीकक्' ॥—'**आढ्यंकरणी**ति । अनाढ्यः आढ्यः क्रियते अनयेत्यर्थे 'आढ्यसुभग–' इत्यादिना कृञः ख्युन् । 'युवोः–' इत्यनादेशः । 'अरुर्द्विषत्–' इति मुम् ॥—**तरुणी । तलुनी**ति । तरुणतलुनयोर्गौरादिषु पाठात् ङीब्ङीषोः पर्यायो बोध्यः । स्वरे विशेषः । 'कॄवृदारिभ्य उनन्' । 'त्रोरश्च लो वा' इति । तरुणतलुनयोरुनन्प्रत्ययान्तत्वेन नित्त्वादाद्युदात्तता । सैव ङीपि । ङीषि त्वन्तोदात्ततेति ॥—**यञश्च** ॥ योगविभाग उत्तरार्थः । 'प्राचां ष्फ तद्धितः' इत्यत्र यञ एवानुवृत्तिर्यथा स्यात् ॥—**हलस्तद्धितस्य** ॥ हल इति पञ्चमी । 'यस्येति च' इति सू-

हल उत्तरस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे। गार्गी॥ अनपत्याधिकारस्थान्न ङीप्। द्वीपे भवा द्वैप्या। अधिकारग्रहणान्नेह। देवस्यापत्यं दैव्या। देवाद्यञञाविति हि यञ् प्राग्दीव्यतीयो न त्वपत्याधिकारपठितः। **प्राचां ष्फ तद्धितः** ।४।१।१७। यञन्तात्ष्फो वा स्यात् स्त्रियां स च तद्धितः। **षः प्रत्ययस्य** ।१।३।६। प्रत्ययस्यादिः ष इत्स्यात्। **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ।७।१।२। प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः। तद्धितान्तत्वात्प्रातिपदिकत्वम्। षित्वसामर्थ्यात् ष्फेणोक्तेऽपि स्त्रीत्वे षिद्गौरेति

---

ङ्यादीतीत्यनुवर्तते। 'नस्तद्धिते' इत्यतस्तद्धित इति नानुवर्तते, 'आपत्यस्य च–' इत्युत्तरसूत्रे पुनस्तद्धितग्रहणात्तदाह—**हल उत्तरस्येत्यादि**। 'तद्धितः' इत्यनुवृत्तौ त्विहापि स्यात्। साकाश्यकः। काम्पिल्यकः,। 'संकाशादिभ्यो ण्यः' ततो 'धन्वयोपधात्–' इति वुञ्।—**उपधाभूतस्येति**। 'सूर्यतिष्या–' इत्यत उपधाया इत्यनुवर्तत इति भावः। ननु 'यस्येति च' इति यञोऽकारलोपे कृते यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या। न चाल्लोपस्य स्थानिवद्भावः, यलोपे तन्निषेधात्। अत्राहुः। यलोपे कर्तव्येऽल्लोपस्याभीयत्वेनासिद्धत्वादुपधाग्रहणानुवृत्तिरभ्युपगन्तव्येति। अन्ये त्वाहुः। सूत्रारम्भसामर्थ्यादल्लोपस्यासिद्धत्वं न भवति तथा चोपधाग्रहण विनापि नात्र क्षतिः। एव च 'सूर्यतिष्या–' इति सूत्रेऽप्युपधाग्रहणं त्यक्तुं शक्यमुक्तयुक्तेरिति॥—**गार्गीति**। गोत्रप्रत्ययान्तस्य जातित्वेऽपि योपधत्वादत्र 'जाते.' इति ङीष् न भवति। तथा चाद्युदात्तमेवेद पदम्॥—**अनपत्याधिकारेति**। यद्यपि 'आपत्यग्रहण कर्तव्यम्' इत्येव वार्तिकं, तथाप्यपत्याधिकारविहितपर तत्। तादृशश्च गर्गादियञेव न तु देवायञ्। तस्यापत्याधिकाराद् प्रागेव पाठाद् अत एव भाष्यकृता 'यञश्च' इत्यत्र 'कन्ङ्करपोऽयञश्च' इति 'गर्गादिभ्योयञ्' इत्यत्र 'अयञ.' इति चाकारः प्रश्लिष्टः। एव 'यञञोश्च' इति सूत्रेऽपि 'यस्कादिभ्यो गोत्रे अयञञोश्च' इत्यकारः प्रश्लिष्टः। एतच्च मनोरमाग्रन्थानुरोधेनोक्तम्॥ नव्यास्त्वधिकारग्रहणमिहानर्थकं यथाश्रुतवार्तिकेनैव द्वीपे भवा द्वैप्येति रूपसिद्धेः। न च देवस्यापत्य स्त्री दैव्येतिरूपासिद्धिः शङ्क्या। 'अयञश्च' इति भाष्यकारीयनिष्कर्षात्तत्सिद्धेः। नहि 'देवाद्यञञौ' इत्यत्रायञित्यकारः प्रश्लिष्टु शक्यते। किं चाधिकारग्रहणे अभिजितोऽपत्यं स्त्रीत्यणन्तात्स्वार्थे 'अभिजिद्विदभृत्–' इत्यादिना यञि आभिजितीति रूपं न सिध्येत् 'श्रुसदणोयञ्' इत्यकारप्रश्लेषेण भाष्यकाररीत्यापीह ङीप्सम्भवादित्याहुः॥ स्यादेतत्। अकारं प्रश्लिष्य गर्गादिभ्यो यञि कृते गार्ग्य इति रूपं न सिध्येत्। मैवम्। वार्तिकप्रत्याख्यानाय भाष्यकृताकारप्रश्लेषे कृतेऽपि तस्येत्संज्ञकत्वेन लुप्तत्वादिष्टसिद्धेः। एवं च 'कङ्करप्ल्युनाम्' इतिपाठः 'कङ्करपो अयञश्च' इति भाष्यविरुद्ध इति स्पष्टमेव॥—**प्राचां ष्फ तद्धितः**॥ तद्धितग्रहणं ष्फप्रत्ययान्तस्य प्रातिपदिकसंज्ञार्थं तेन 'षिद्गौरा–' इति ङीष् सिध्यति। ननु प्रातिपदिकसंज्ञा विनापि षित्करणसामर्थ्यादेव ङीष् भविष्यति किमनेन तद्धितग्रहणेन। न च यञन्ते 'यस्येति च' इति लोपार्थं तदिति वाच्यम्। सवर्णदीर्घेणापि रूपसिद्धेर्लोपस्यानावश्यकत्वात्। एवं तर्हि तद्धितग्रहणमिञन्तादपि क्वचित् ष्फो भवतीति ज्ञापनार्थं तेन 'आसुरेरुपसंख्यानम्' इति वक्ष्यमाण सिध्यति॥—**षः प्रत्ययस्य**॥ 'आदिर्ञिटुडवः' इत्यत आदिरित्यनुवर्तत इत्यभिप्रेत्याह—**प्रत्ययस्यादिरिति**। प्रत्ययस्य किम्। षोडश। 'षष उत्वम्–' इत्यत्र उपदेशस्थोऽय षकारः। एतच्च कौस्तुभे स्थितम्॥ आदिः किम्। अविषः महिषः। 'अविमह्योष्टिषच्' ॥ नन्वत्र प्रयोजनाभावादेव पकारस्येत्संज्ञा न भविष्यति टित्वादेवाविषी महिषीति रूपसिद्धेः। न च पक्षे ङीष्यन्तोदात्तः प्रयोजनमिति वाच्यम्। 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तनिवृत्तिस्वरेण टितः परस्य ङीषोप्युदात्तत्वात्॥ अत्राहु। विनिगमनाभावेन पक्षे टकारस्यापि श्रवण स्यात्। तथा च षित्त्वाद्ङीष्यविषीत्यादिरूपसिद्धिः स्यात्। अतः षकारस्यैव श्रवण भवतु माकदाचिट्टकारस्य श्रवण भूदित्येतदर्थमादिग्रहणानुवृत्तिरिति॥—**आयने**—॥ आयनीनोर्नकारस्य नेत्त्वम्। फिनो नित्करणसामर्थ्यात्। फकारादिष्वकार उच्चारणार्थः। तेन ढ्क्फिनादीनामादेशः सिध्यति॥ आदिग्रहणं किम्। ऊरुदघ्नमित्यादौ मा भूत्॥ प्रत्ययेति किम्। धातोरादीनां मा भूत्। फक्कति। ढौकते। खनति। छादयति। घूर्णते॥ घजादिषु तु 'चजोः कुघिण्ण्यतोः' इत्यादिनिर्देशेनेत्संज्ञया भाव्यमित्यादेशाभावः। शमेढः। शण्ढ इत्येवमादीनामेते आदेशा न भवन्ति। 'उणादयो बहुलम्' इति बहुलवचनादिति दिक्॥—**क्रमादिति**। फ—आयन्। ढ—एय्। ख—ईन्। छ—इय्। घ—इय्। इत्यर्थः॥ स्त्रियामेव ष्फप्रत्ययविधानादत्र ङीष् न स्यादित्याशङ्क्याह—**षित्वसामर्थ्यादिति**। एकमेव स्त्रीत्वमुभाभ्यामुच्यत इति भावः॥—सर्वत्रग्रहणमुत्तरसूत्रादिहापकृष्यते बाधकबाधनार्थम्। तेन 'आवट्याच्च' इति वक्ष्यमाणं परमपि चापं बाधित्वा प्राचां मते आवट्यशब्दादपि ष्फ एव भवति। चाब्विधेस्तूदीचां मते सावकाशत्वात्। आवट्यायनी। एव चायञश्चाब्विषयेऽपि प्राचां ष्फ एव शार्कराक्ष्याय-

---

१ प्राचां ष्फ इति—यन् इत्यनुवर्तते अत इति च। यञो योऽकारस्तदन्तादित्यर्थः। तेन वतण्डीत्यत्र प्राचां मतेऽपि ष्फो न, वतण्डाच्चेति विहितस्य यञो लुक् स्त्रियामिति लुका लुप्तत्वेन वर्णाश्रये प्रत्ययलक्षणाभावाच्च यञोऽतोऽभावात्।

वक्ष्यमाणो ङीष् । गार्ग्यायणी । **सर्वत्र लोहितादिकतन्तेभ्यः** ।४।१।१८। लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् । लौहित्यायनी । कात्यायनी । **कौरव्यमाण्डूकाभ्यां च** ।४।१।१९। आभ्यां ष्फः स्यात् । टाप्ङीषोरपवादः। कुर्वादिभ्यो ण्यः । कौरव्यायणी । ढक् च मण्डूकादित्यण् । माण्डूकायनी ॥ * **आसुरेरुपसंख्यानम्** । आसुरायणी । **वयसि प्रथमे** ।४।१।२०। प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप् स्यात् । कुमारी। ***वयस्यचरम इति वाच्यम्** ॥ वधूटी । चिरण्टी । वधूटचिरण्टशब्दौ यौवनवाचिनौ । अतः किम् । शिशुः । कन्याया न । कन्यायाः कनीन चेति निर्देशात् । **द्विगोः** ।४।१।२१। अदन्ताद्द्विगोर्ङीप् स्यात् । त्रिलोकी । अजादित्वात्त्रिफला । त्र्यनीका सेना । **अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि** ।४।१।२२।अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्ङीप् न स्यात्तद्धितलुकि सति । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक्।अध्यर्धेति लुक् । द्वौ बिस्तौ पचति द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । परिमाणान्तात्तु द्व्याढकी । तद्धितलुकि किम् । समाहारे पञ्चा-

णीति यथा ॥—**सर्वत्र**—॥ सर्वेषां मत इत्यर्थस्तदेतत् फलितमाह—**नित्यं ष्फः स्यादि**ति । न न्वारम्भसामर्थ्यान्नित्यत्वे सर्वत्रग्रहणं व्यर्थमिति चेत् अत्राहु. । पूर्वसूत्रे बाधकबाधनोपयुक्तस्य तस्येह स्पष्टार्थमभ्युपगमान्न वैयर्थ्यमिति ॥ यञ इत्यनुवर्तनादाह—**यञन्तेभ्य** इति । लोहितादिर्गर्गाद्यन्तर्गण इति भावः ॥—**लौहित्यायनी**ति । सांशित्यायनी बाभ्रव्यायणीत्यादयोऽपि ज्ञेयाः । ननु गर्गादौ कतकण्वशकलेति पठ्यते तथा च शाकल्यायनीति रूपं न सिध्येत् । यदि तु लोहितादिकार्यार्थं कतशब्दात्प्रागेव शकलशब्दः पठ्येत तर्हि शाकल्यस्य छात्राः शाकला इत्यत्र 'कण्वादिभ्यो गोत्रे' इति कण्वादिकार्यमण् न सिध्येत् । उच्यते । कतकण्वशकलेतिगणपाठे कण्वशब्दात् पूर्वं शकलशब्दः पठितव्यः । कतन्तेभ्य इत्यत्र कतस्यान्तः कतन्त', कतोऽन्तो येषां ते कतन्ताः । शकन्ध्वादित्वात् पररूपम् । कतन्तश्च कतन्ताश्चेति बहुव्रीहितत्पुरुषयोरेकशेषोऽभ्युपेयस्तथा कण्वादिभ्य इत्यत्रापि कण्वस्यादिः कण्वादिः कण्व आदिर्येषामिति बहुव्रीहितत्पुरुषयोरेकशेषस्तथा च सर्वेष्टसिद्धिरिति ॥—**कौरव्य**—॥—**टाप्ङीषोरि**ति । योपधत्वेन 'जातेः—' इति ङीषः प्राप्त्यभावात्कौरव्यशब्दाट्टाप् माण्डूकात्तु ङीषिति भावः । यद्यपीह टाप्ङीपोरिति पाठः प्रायेण दृश्यते तथापि तत्र ङीबिति लेखकप्रमाद एव । पारिभाषिकस्य पौत्रप्रभृतिगोत्रस्यैव जातित्वान्ङीषः प्राप्तिर्नेति मतान्तराभिप्रायेण वा तथोक्तमिति बोध्यम् । कौरव्यसाहचर्यान्माण्डूकशब्दोऽपत्यप्रत्ययान्त एवेह गृह्यते न तु 'तस्येदम्' इत्यणन्तस्तेन 'यद्यसौ कूपमाण्डूकि तव' इति भट्टिप्रयोगः सिद्धः । तत्र हि मण्डूकस्येय भार्येति विवक्षया 'तस्येदम्' इत्यण् ॥—**वयसि**—॥ कालकृता शरीरावस्था वयः । यस्त्वर्थप्रकरणादिकमनपेक्ष्य श्रवणमात्रेण वय. प्रतिपादयति स वयोवाचीत्युच्यते अन्तरङ्गत्वात्, तेनेह न तु । निशया । लोहितपादा । इह प्रकरणादिना वयसः प्रतीतावपि शब्दादप्रतीतेः । अबालापि हि व्याध्यादिवशादुत्तानशेते, अलक्तकेन च रक्तचरणा भवति ॥ प्रथमेति किम् । वृद्धा ॥—**कुमारी**ति । प्रथमवयोवचन एवायं शब्दो न त्वनूढत्वप्रयुक्तः । पुंस्यपि कुमार इति प्रयोगात् । वृद्धकुमारीति गौणप्रयोगः ॥—**वयस्यचरम** इति । यौवनं न प्रथमवयः किं तु द्वितीयमिति वार्तिकारम्भः । उपचयाऽपचयलक्षणे द्वे एव वयसी इति पक्षे यौवनस्यापि प्राथम्यात् सूत्रेणैव सिध्यतीति बोध्यम् । वयांसि चत्वारीत्येके । यदाहुः—'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसि' इति ॥ त्रीणीत्यन्ये । यदाहुः—'पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति' इति ॥—**त्रिलोकी**ति । त्रयाणां लोकाना समाहारे 'तद्धितार्थे—इति द्विगुः । 'अकारान्तोत्तरपदो द्विगुः—' इति स्त्रीत्वम् ॥—**त्रिफले**ति । अत्र 'द्विगो.' इति ङीप् प्राप्नोति नतु 'पाककर्ण—' इति ङीष् । तत्र 'जातेः' इत्यनुवृत्तेः ॥—**त्र्यनीके**ति । अनीकमग्रता । त्रयाणामनीकाना समाहारः । अजादेराकृतिगणत्वाट्टाबिति त्र्यनीकाधिकरणे मीमांसकाः ॥—**पञ्चाश्वे**ति ॥ नन्वत्र 'द्विगो' इति ङीप् मा भूत् । ठगन्तत्वात्तु स्यादेव । नच 'अपरिमाण—' इति निषेधस्य निरवकाशतेति वाच्यम् । पञ्चानामजानां निमित्त धनपतिसयुक्तिः पञ्चाजा पञ्चोष्ट्रेत्यादौ सावकाशत्वात् । तत्र हि 'गोद्व्यचोसंख्या—' इति यत्प्रत्ययस्य 'अध्यर्धपूर्व—' इत्यादिना लुगितिचेद् । अत्राहुः । ठको योऽकार इति व्याख्यानात् ठगन्तलक्षणो ङीन्नेति ॥—**द्विबिस्ते**ति । 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः । 'आचितो दशभाराः स्युः' ॥—**द्विकम्बल्ये**ति । द्वाभ्यां कम्बलाभ्या क्रीता । कम्बल्यमूर्णापलशत, 'कम्बलाच्च सञ्ज्ञायाम्' इति यत् । ततः क्रीतार्थस्य ठञो लुक् ॥—**द्व्याढकी**ति । द्वावाढकौ पचतीति विग्रहे 'आढकाचितपात्रात्खोऽन्यतरस्यां,' 'द्विगोष्ठंश्च' इति खठञौ विहितौ ताभ्यां मुक्ते प्राग्वतीयष्ठञ् । तस्य 'अध्यर्ध—' इति लुक् । एतेन द्व्याचिता व्याख्याता । स्यादेतत् । 'काण्डान्तात्—' इत्युत्तरसूत्रे 'परितः सर्वतो येन मीयते तत् परिमाणमाढककुडवादि न तु परिच्छेदकमात्रम्' इति मनोरमायां स्थितम् । तथा चापरिमाणत्वादेव सिद्धे बिस्तादिग्रहणमिह व्यर्थं स्यात् । अत्राहुः । उन्मानस्य निषेधे बिस्तादीनामेवेति

१ प्रथमवयोवाचिन इति—द्विवर्षेत्यादिर्न वयःप्रवृत्तिनिमित्तकः, शालायामपि प्रयोगात् ।

**श्री । काण्डान्तात्क्षेत्रे ।४।१।२३। क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमाणमस्याः सा द्विकाण्डा क्षेत्रभक्तिः । प्रमाणे द्वयसजिति विहितस्य मात्रचः प्रमाणे लो द्विगोर्नित्यमिति लुक् । क्षेत्रे किम् । द्विकाण्डी रज्जुः । पुरुषात्प्रमाणेऽन्यतरस्याम् ।४।१।२४। प्रमाणे यः पुरुषस्तदन्ताद्द्विगोर्ङीप् वा स्यात्तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी द्विपुरुषा वा परिखा । ऊधसोऽनङ् ।५।४।१३१। ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात् स्त्रियाम् । इत्यनङि कृते डाप्ङीब्निषेधेषु प्राप्तेषु । बहुव्रीहेरूधसो ङीष् ।४।१।२५। ऊधोऽन्ताद्बहुव्रीहेर्ङीष् स्यात् स्त्रियाम् । कुण्डोध्नी । स्त्रियां किम् । कुण्डोधो धैनुकम् । इहानङपि न । तद्धितौ स्त्रियामित्युपसंख्यानात् । संख्याऽव्ययादेर्ङीप् ।४।१।२६। ङीषोऽपवादः । द्व्यूध्नी । अत्यूध्नी । बहुव्रीहेरित्येव । ऊधोऽतिक्रान्ता अत्यूधाः । दामहायनान्ताच्च ।४।१।२७। संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च**

---

नियमार्थं तद्ग्रहणं, तेन द्विकार्षापणी द्व्यक्षीत्यादि सिध्यतीति ॥—**काण्डान्तात्**—॥ षोडशहस्तप्रमाणो दण्डः काण्डम् । यद्यपि विशेषणेन तन्दतविधिः सिद्धः, तथाप्यसत्यन्तग्रहणे क्षेत्रे इत्येतत् श्रुतत्वात् काण्डस्यैव विशेषणं स्यान्न तु काण्डान्तस्य । ततश्च द्वाभ्यां काण्डाभ्यां काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेत्यत्र निषेधः स्यात् । इह तु निषेधो न स्याद् द्विकाण्डा क्षेत्रभक्तिरिति । अत्र हि काण्ड प्रमाणे वर्तते काण्डान्तस्तु क्षेत्रेऽतोऽन्तग्रहणं कृतम् । इह 'द्विगोः' इत्यनुवर्तते 'न तद्धितलुकि' इति च तदाह—**द्विगुस्ततो न ङीबित्यादि** ॥—**मात्रच** इति । द्वयसचो लुगिति प्राचोक्त नादर्तव्यम् । 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति सिद्धान्तादिति भावः ॥—**द्विकाण्डी रज्जुरिति** । द्वे काण्डे प्रमाणमस्याः । पूर्ववत्तद्धितलुक् 'द्विगोः' इति ङीप् ॥ नन्विहापरिमाणान्तादिति पूर्वेण निषेधः स्यात्, काण्डशब्दस्यायामपरतया परिमाणार्थत्वात्, परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणम् आढककुडवादि न तु यथाकथंचित्परिच्छेदकमात्रम् । यदाहुः—'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः' इति । अत एव द्विहस्ता भित्तिरित्यत्र ङीप् न भवतीति चेद् ॥ अत्राहुः । नियमार्थमिदं क्षेत्र एव निषेधो यथा स्यादिति । तथा च द्विकाण्डी रज्जुरित्यत्र ङीबेव सूत्रारम्भफलमिति ॥—**पुरुषात्प्रमाणे**—॥ अपरिमाणान्तत्वान्निषेधे प्राप्ते विकल्पार्थं वचनम् । पुरुषशब्दो यद्यपि लोके जातिवचनस्तथापि द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणशब्दसामानाधिकरण्यात् प्रमाणे वर्तत एव । वृत्तौ तु शब्दशक्तिस्वाभाव्यादेव । तथा च शुल्बसूत्रम्—'पञ्चारत्निः पुरुष' इति ॥—**द्विपुरुषीति** । अत्र 'प्रमाणे लो द्विगोर्नित्यम्' इति द्वयसचो लुगिति न्यासकारः ॥ नन्विह तद्धितलुग्दुर्लभः । पुरुषशब्दस्य प्रमाणवाचित्वाभावेन 'प्रमाणे लः—' इति श्लोकवार्तिकस्याप्रवृत्तेः । ये हि शमादिवत् प्रमाणत्वेन प्रसिद्धास्तत्रैव तत् प्रवर्तते न तु पुरुषशब्देऽपि । अन्यथा पुरुषद्वयसमित्यत्रापि लुक् स्यात् । न चैव द्वयसचदघ्नचावपि नास्मात्स्यातामिति[^] वाच्यम् । 'ऊर्ध्वमाने मतौ मम' इति वचनात् । एवं 'पुरुषात्प्रमाणे—' इति वैकल्पिकस्यापि ङीपः सामर्थ्यादेव प्रवृत्तिः । किं तु तद्धितलुगेव दुर्लभ इति चेन् अत्राहुः । अस्त्विह 'प्रमाणे लः' इत्यस्याप्रवृत्तिस्तथापि सुलभ एव लुक् । 'पुरुषात्प्रमाणे—' इति सूत्रे हि 'द्विगोस्तद्धितलुकि' इत्यनुवर्तते तत्सामर्थ्याल्लुगप्याक्षिप्यत इति सुवचत्वादिति ॥ प्रमाणे किम् । द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा गौः । तद्धितलुकीत्येव । समाहारे पञ्चपुरुषी । नन्विह पुरुषशब्दः प्रमाणे न वर्तते इति व्यङ्गविकलमेतद् इति चेन् । अत्राहुः । प्रमाणार्थवृत्तीनामेव पुरुषाणामत्र समाहारात्र व्यङ्गविकलता । ततश्च तद्धितलुकीत्यनुक्तौ पञ्चपुरुषशब्दाद्विकल्पः स्यादिष्यते तु 'द्विगोः' इति नित्यं ङीबिति ॥—**ऊधसोऽनङ्** ॥ नादेशेनैव सिद्धेऽनङ्करणं 'धनुषश्च' इत्युत्तरार्थमन्यथा शार्ङ्गधन्वेति न सिध्येद् इत्याहुः । वस्तुतस्तु इहार्थमप्यावश्यकमेव, अन्यथाऽनो लाक्षणिकत्वेनाल्लोपाप्रसङ्गादित्यन्ये । इह 'बहुव्रीहौ सक्थ्यक्ष्णोः—' इत्यतो बहुव्रीहावित्यनुवर्तते इत्याह—**ऊधोऽन्तस्य बहुव्रीहेरिति** । समासान्तप्रकरणस्थत्वेऽप्यनङो न प्रत्ययत्वमन्यथा ङित्त्ववैयर्थ्यापत्तेरिति प्राञ्चः । वस्तुतस्तु ष्यङ इव प्रत्ययत्वेऽप्यादेशत्वमविरुद्धं कुण्डोध्नीत्यत्र ङीपि कृते स्वरेऽपि विशेषाभावादिति बोध्यम् ॥—**स्त्रियामिति** । उपसंख्यानाल्लब्धमेतत् ॥—**डाप्ङीब्निषेधेष्विति** । 'डाबुभाभ्याम्—' इति वैकल्पिको डाप् । 'अन उपधालोपिनोऽन्यतरस्याम्' इति विकल्पेन ङीप् । 'अनो बहुव्रीहेः' इत्यनेन 'ऋन्नेभ्यः—' इति प्राप्तस्य ङीपो निषेध इति विवेकः ॥—**ङीष् स्यादिति** ॥ प्रकृतो ङीबेव तु न विहितः स्वरे विशेषात् ॥—**कुण्डोध्नीति** । कुण्डमिव ऊधो यस्याः सा ॥ बहुव्रीहेः किम् । प्राप्ता ऊधः प्राप्तोधाः । 'प्राप्तापन्ने—' इति समासः ॥—**धैनुकमिति** । 'अचित्तहस्ति—' इति समूहार्थे ठक् । 'इसुसुक्तान्तात्कः' ॥—**स्त्रियामित्युपसंख्यानादिति** । नन्विहैव लाघवार्थं 'बहुव्रीहेरूधसो ङीष्' 'नश्च' इति सूत्र्यताम् 'अनङ् च' इति वा । समासान्तेषु 'ऊधसो नङ्' इति च त्यक्त्वा 'धनुषो नङ्' इत्येव पठ्यताम् । मैवम् । कबभावे सावकाशस्यास्य पक्षे कपा बाधापत्तेः । सिद्धान्ते तु अनङः समासान्ततया शेषत्वमेवेह नास्तीति न कप्[1] ॥—**संख्याव्यया**—॥ आदिग्रहणात्पदान्तरव्यवधानेऽपि स्यादेव । द्विविधोध्नी ॥—**दाम**—॥ बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् ॥—**संख्यादेरिति** ।

---

१ प्राप्तेर्निवृत्ति—समासान्तानामलौकिके विग्रहवाक्ये एव प्रवृत्त्या पूर्वमनङ्यपेपा प्राप्तिः ।

ङीप् स्यात् । दामान्ते डाप्प्रतिषेधयोः प्राप्तयोर्हायनान्ते टापि प्राप्ते वचनम् । द्विदाम्नी । अन्यग्रहणाऽननुवृत्तेरुहृत्मा बडवेत्यत्र डाब्निषेधावपि पक्षे स्तः । द्विहायनी बाला ॥ * **त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्** ॥ **वयोवाचकस्यैव हायनस्य ङीप् णत्वं चेष्यते** ॥ त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र । त्रिहायना । चतुर्हायना शाला । **नित्यं संज्ञाछन्दसोः** ।४।१।२९। अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप् । सुराज्ञी नाम नगरी । अन्यत्र पूर्वेण विकल्प एव । वेदे तु शतमूर्ध्नी । **केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च** ।४।१।३०। एभ्यो नवभ्यो नित्यं ङीप् स्यात्संज्ञाछन्दसोः । अथोत इन्द्रः केवलीर्विशः । मामकी । भागधेयी । पापी । अपरी । समानी । आर्यकृती । सुमङ्गली । भेषजी । अन्यत्र केवला इत्यादि । मामकग्रहणं नियमार्थम् । अणन्तत्वादेव सिद्धेः । तेन लोकेऽसंज्ञायां मामिका । **अन्तर्वत्पतिवतोर्नुक्** ।४।१।३२। एतयोः स्त्रियां नुक् स्यात् ॥ ऋन्नेभ्यो ङीप् ॥ गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते । तत्रान्तरस्त्यस्यां गर्भ इति विग्रहे अन्तःशब्दस्याधिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याभावादप्राप्तो मतुब् निपात्यते । पतिवत्नीत्यत्र तु वत्वं निपात्यते । अन्तर्वत्नी । पतिवत्नी । प्रत्युदाहरणं तु । अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी ॥ **पत्युर्नो यज्ञसंयोगे** ।४।१।३३। पतिशब्दस्य नकारादेशः स्याद्यज्ञेन संबन्धे । वसिष्ठस्य पत्नी । तत्कर्तृकयज्ञस्य फलभोक्त्रीत्यर्थः । दम्पत्योः सहाधिकारात् । **विभाषा सपूर्वस्य** ।४।१।३४। पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात् । गृहस्य पतिः । गृहपतिः। गृहपत्नी । अनुपसर्जनस्येतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणं किंतु तदन्तस्य । तेन बहुव्रीहावपि । दृढपत्नी । दृढपतिः । वृषलपत्नी । वृषलपतिः । अथ वृषलस्य पत्नीति व्यस्ते कथमिति चेत् । पत्नीव पत्नीत्युपचारात् । यद्वा । आचारक्विबन्तात्कर्तरि क्विप् । अस्मिंश्च पक्षे । पत्यियौ । पत्नियः । इतीयङ्विषये विशेषः । सपूर्वस्य किम् । गवां पतिः स्त्री । **नित्यं सपत्न्यादिषु** ।४।१।३५। पूर्वविकल्पापवादः । समानस्य सभावोऽपि निपात्यते । समानः पतिर्यस्याः सा सपत्नी । एकपत्नी । वीरपत्नी । **पूतक्रतोरै च** ।४।१।३६। * इयं त्रिसूत्री

---

समासनिर्देशेऽपि स्वरितत्वबलादेकदेश एवानुवर्तत इति भावः ॥—**अननुवृत्तेरि**ति । भाष्यकृताऽननुवर्तितत्वादिति भावः ॥ एवं चोद्दामेत्यत्र 'दामहायनान्ताच्च' इत्यस्याप्रवृत्त्या पूर्वोक्तेषु डाप्ङीब्निषेधेषु प्राप्तेषु बहुराज्ञीवद्रूपत्रयं भवत्येतो व्याचष्टे—**डाब्निषेधावपी**ति ॥—**नित्यं संज्ञाछन्दसोः** ॥ 'अन उपधालोपिनः–' इति विकल्पस्यापवादः । आरम्भसामर्थ्यात्सिद्धेऽपि नित्यत्वे नित्यग्रहणमुत्तरत्र विकल्पाननुवृत्तिसूचनाय कृतमित्याहुः ॥—**शतमूर्ध्नी**ति । इह पञ्चदाम्नीति क्वचित् पाठः, स चायुक्तो 'दामहायनान्ताच्च' इत्यनेनैव सिद्धत्वात् ॥—**केवल**—॥ छन्दसि मामकी तनू । मित्रावरुणयोर्भागधेयी । तन्वः सन्तु पापीः । उतापरीभ्य. । समानीव आकूतिः । आर्यकृती । सुमङ्गली । 'सुमङ्गलीरियं वधूः' इत्यत्र तु 'छन्दसीवनिपौ–' इति मत्वर्थे ईप्रत्ययो बोध्यः । शिवा रुद्रस्य भेषजी ॥—**अन्यत्र केवलेत्यादी**ति । मामकनरकयोरुपसंख्यानादित्व, मामिका । भागशब्दात्पुलिङ्गात्स्वार्थे धेयप्रत्ययः । 'स्वार्थिकाः क्वचित् प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति स्त्रीत्वम् । भागधेयी । अभेदोपचारात्तद्वति वर्तमानः पापशब्दो विशेष्यनिघ्न' । पापा । अपरा । समाना । आर्येण कृतेति प्राक् सुबुत्पत्तेः कृदन्तेन समासः । टाप् । आर्यकृता । भिषज इयमित्यणि आदिवृद्धेरपवादोऽस्मादेव निपातनादेकारः । सञ्ज्ञाछन्दसोरिति नियमादन्यत्र भेषजा ॥—**प्रत्युदाहरणं त्वि**ति ॥ अन्तर्वती पतिवतीति प्राचोक्तं प्रत्युदाहरणमयुक्तमिति भावः । आद्ये अस्तिसामानाधिकरण्याभावान्मतुपोऽसभवात्, द्वितीये तु वत्वासंभवादिति भावः ॥—**विभाषा सपूर्वस्य** ॥ अप्राप्तविभाषेयम् अयज्ञसयोगत्वात् । पूर्वेण सहितः सपूर्वस्तस्य । यस्य समुदायस्य पूर्वावयवो विद्यते तस्येत्यर्थः । स च समुदाय., पतिशब्दस्तु न भवतीति पतिशब्देन तदन्तविधिरित्याह—**पतिशब्दान्तस्ये**ति । ननु पत्युरिति प्रातिपदिकविशेषणेन तदन्तलाभात्पत्यन्तस्येत्येवास्तु किमनेन सपूर्वग्रहणेन । अत्राहुः । केवलपतिशब्दस्यापि व्यपदेशिवद्भावेन पत्यन्तत्वादतिप्रसङ्गः स्यात् तद्वारणाय सपूर्वग्रहणमिति । अत्र पूर्वशब्दः पूर्वावयवपर इति ध्वनयन् प्रत्युदाहरति—**गवां पतिः स्त्री**ति । पातीति पतिरिति क्रियाशब्दस्य त्रिलिङ्गत्वादिह स्त्रीत्वम् । तथा च तैत्तिरीये नपुंसकेऽपि प्रयुज्यते—'अग्न साम्राज्यानामधिपति तन्मावतु' इति ॥—**व्यस्ते कथमि**ति । प्राचा तु समस्तेऽप्युपचार इत्युक्तं तद्वृथैवेति भावः ॥—**नित्यं सपत्न्यादिषु** ॥ आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम् ॥—**निपात्यत** इति । इह गणे समान एक वीर भ्रातृ पुत्रेति समानादय एव पठ्यन्ते ततश्च 'समानादिषु' इति वक्तव्ये सपत्न्यादिष्वित्युक्तिः सभावनिपातनार्थेति भावः ॥ सपत्न्यादिषु बहुव्रीहिराश्रीयत इत्याशयेनाह—**समानः पतिर्यस्याः से**ति ॥—**पूतक्रतोरै च** ॥ ऐकार आदेशो न तु प्रत्ययः । उत्तरसूत्रे उदात्तग्रहणात् ॥—**न त्वि**ति ॥ अन्यथा 'लघावन्ते–' इति

---

१ निषेधावपीति—अपिना अन उपधेति ङीप् बोध्यः । अन्ग्रहणेऽनर्थकस्यापि ग्रहणादिति भावः । २ उत्तरार्थमिति—बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ वारणाय इहार्थमपि इति केचित् । ३ न पत्युरिति—सूत्रे सपूर्वस्येत्यनेन पत्यन्तस्य गृह्यमाणत्वात् । स्पष्टं चेदमनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वमिति अनुपसर्जनात् इति सूत्रे शब्देन्दुशेखरे ।

पुंयोग इत्येष्यते ॥ पूतक्रतोः स्त्री पूतक्रतायी । यया तु क्रतवः पूताः सात्पूतक्रतुरेव सा । ४ वृषाकप्यग्निकुसितकुसिदानामुदात्तः ।४।१।३७। एषामुदात्त ऐ आदेशः स्यात् ङीप् च । वृषाकपेः स्त्री वृषाकपायी । हरविष्णू वृषाकपी इत्यमरः । वृषाकपायी श्रीगौर्योरिति च । अग्नायी । कुसितायी कुसिदायी । कुसिदशब्दो ह्रस्वमध्यो ननु दीर्घमध्यः ॥ मनोरौ वा ।४।१।३८। मनुशब्दस्यौकारादेशः स्यादुदात्त ऐकारश्च वा ताभ्यां संनियोगशिष्टो ङीप् च । मनोः स्त्री मनावी । मनायी । मनुः ॥ ४ वर्णादनुदात्तात्तोपधात्तो नः ।४।१।३९। वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् स्यात्तकारस्य नकारादेशश्च । एनी । एता । रोहिणी । रोहिता । वर्णानां तणतिनितान्तानामिति फिट्सूत्रेणाद्युदात्तः । श्येण्या च शलल्येति गृह्यसूत्रम् । त्रीण्येतानि यस्या इति बहुव्रीहिः । अनुदात्तात्किम् । श्वेता । घृतादीनां चेत्यन्तोदात्तोऽयम् । अत इत्येव । शितिः स्त्री ॥ * पिशङ्गादुपसंख्यानम् । पिशङ्गी । पिशङ्गा ॥ * असितपलितयोर्न । असिता । पलिता ॥ * छन्दसि क्रमेके । असिक्नी । पलिक्नी । अवदातशब्दस्तु न वर्णवाची किंतु विशुद्धवाची तेन अवदाता इत्येव । ४ अन्यतो ङीष् ।४।१।४०। तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात् स्त्रियां ङीष् स्यात् । कल्माषी । सारङ्गी । लघावन्ते द्वयोश्च बह्वषो गुरुरिति मध्योदात्तावेतौ । अनुदात्तान्तात्किम् । कृष्णा । कपिला । ४ षिद्गौरादिभ्यश्च ।४।१।४१। षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् । नर्तकी । गौरी । अनड्वाही अनडुही ॥ * पिप्पल्यादयश्च । आकृतिगणोऽयम् । ४ सूर्यतिष्यागस्त्य-

मध्योदात्तो वृषाकपिशब्द उदात्तत्वं प्रयोजयति, अग्न्यादिषु त्रिषु 'स्थानेऽन्तरतम' इत्येव सिद्धमिति वृत्त्यादिग्रन्था विरुध्येरन्निति भावः ॥—उदात्तैकार इति । 'शॄस्वृस्निहि–' इत्यादिना मनेरुप्रत्ययविधौ 'धान्ये नित्–' इत्यधिकारान्मनुशब्द आद्युदात्तः । समासनिर्देशेन एतद्दर्शयति उदात्त इत्यनुवर्तमानं सम्बन्धानुवृत्तेरैकारेणैव सबध्यते न त्वौकारेणापीति । तत्श्चैकारौकारावुदात्तौ स्त इति प्राचोक्त वृत्तिपदमन्वर्यादिविरोधादुपेक्ष्यमिति भावः ॥—मनायीति । मध्योदात्तमिदम् । इतरत्पदद्वयमाद्युदात्तम् ॥—एता कर्बुरा ॥—वर्णानामिति । एतः । शोणः । शितिः । पृश्निः । पृषदिति क्रमेणोदाहरणानि ॥—आद्युदात्त इति । 'अनुदात्तं पदमेकवर्जम्' इति शेषनिघातेनानुदात्तान्त एतशब्द इति भावः ॥—श्येण्येति । अत्र एतशब्दस्योपसर्जनत्वेऽपि तदन्तसमासस्यानुपसर्जनत्वमिति भावः ॥ 'पूर्वपदात्संज्ञायाम्–' इति णत्वम् ॥—गृह्यमिति । ग्रहू ग्रहणे 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप् ॥—त्रीण्येतान्यस्या इति ॥ ननु 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इति चित्रपर्याय एतशब्दः । तथा च शलल्यां चित्रत्रयाभावादर्थासगतिरित्याशङ्क्य केचिदिह व्याचक्षते । एतशब्दोऽत्र एतावयवपर इति नास्त्यत्रार्थासगतिः । न चैवमपि गुणविषये नपुसकप्रयोगो न संगच्छते 'गुणे शुक्लादयः पुंसि' इत्युक्तेरिति वाच्यम् । एतानि एतावयवाधिकरणानीति व्याख्यया गुणिलिङ्गपरत्वादेतशब्दस्य नपुंसकत्वमप्युपपद्यते इति ॥—पिशङ्गादिति । 'लघावन्ते' इति पिशङ्गशब्दस्य मध्योदात्तत्वात् 'अन्यतो ङीष्' इति ङीषि प्राप्ते ङीबुपसंख्यायते । स्वरे विशेषः ॥—क्रमेक इति । असितपलितयोस्तकारस्य 'वर्णादनुदात्तात्–' इति नकारे प्राप्ते तं बाधित्वा तकारस्थाने क्नमादेशं तत्संनियोगेन ङीप चेच्छन्त्येके आचार्या इत्यर्थः । अत्र 'छन्दस्येके' इत्यन्वयाद्भाषायां क्नोभवत्येव । छन्दस्येवेके इच्छन्त्यन्ये तु भाषायामपीत्यर्थपर्यवसानात् । अन्यथा एकग्रहणं भाष्यकारो न कुर्यात् । न हि छन्दसि 'पलिक्नीरियुवतय.' इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते । एवं च 'गतो गणस्तूर्णमसिक्निकानाम्' इति प्रयोगो नानुपपन्नः ॥—विशुद्धवाचीति । 'दैप् शोधने' इत्युक्तेः, अमरेण तु विशुद्धत्वसाधर्म्यात् 'अवदातः सितो गौरः' इत्युक्तमिति भावः॥—लघावन्त इति । अन्ते नाम एकस्मिन् लघौ द्वयोश्च लघ्वोः परतः बह्वषो बह्वच्कस्य गुरुरुदात्तः स्यात् । अषिरयचः प्राचां संज्ञा ॥—कृष्णेत्यादि । 'कृषेश्च' इति नप्रत्यये 'कपेश्च' इति सौत्राद्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ ॥—षिद्गौरादि—॥—नर्तकीति । 'नृतुधातोः' 'शिल्पिनि ष्वुन्' । ष्वुनः षित्वमवयवेऽचरितार्थत्वात्तदन्तस्य प्रातिपदिकस्यविशेषणम् । त्रपुषः षित्वस्याद्विधौ चरितार्थत्वात्रपेत्यत्र तु न ङीष् । मृजेः षित्वमनार्षं भिदादौ मृजेति पाठादित्याहुः ॥ मृजेः षित्वादेवाङ्, भिदादौ मृजेति पाठस्त्वनार्ष इत्यन्ये॥—गौरीति। गौरशब्दस्य वर्णवाचित्वेऽपि प्रातिपदिकस्वरेणान्तोदात्तत्वाद् 'अन्यतो ङीष्' इति ङीष् न प्राप्नोतीतीह गणे पाठः ॥—अनड्वाही । अनडुहीति । अनकारान्तत्वाज्जातिलक्षणस्य पुंयोगलक्षणस्य वा ङीषोऽप्राप्ततया गणेऽस्मिन्पठ्यते । प्रत्ययसहितपाठस्तु ङीषि परे आम्विकल्पार्थः । गौर मत्स्य मनुष्य शृङ्ग गवय हय मुकय इत्यादि ॥ यत्तु प्राचा 'ऋन्नेभ्यो ङीप्' इत्यत्र शुनीत्युदाहृतं, तत्तु गौरादिगणे श्वन्शब्दपाठादर्शनप्रयुक्तमित्याहुः ॥ अत्र केचित् नित्यस्त्रीत्वात् 'जातेरस्त्रीविषयात्–' इत्यप्राप्ते ङीषि पिप्पल्यादयो गौरादिषु पठ्यन्ते ङीषन्तपाठस्तु चिन्त्यप्रयोजनः । न च पिप्पली भार्या यस्य स पिप्पलीभार्य इत्यादौ पुवद्भाव बाधित्वा ङीषः श्रवणं यथा स्यादित्येतदर्थः स इति वाच्यम् । भाषितपुंस्कत्वाभावादेव पुंवद्भावनिषेधसिद्धेः किं चावान्तरगणत्वाभ्युपगमोऽपि पिप्पल्यादेर्व्यर्थ एव । न चैवं जाताधिकारे 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' इत्यत्र पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीषिति वक्ष्यमाणग्रन्थो विरुध्यत इति वाच्यम् । गौरादेराकृतिगणत्वादित्यपि वक्तुं शक्यत्वादित्याहुः ॥—सूर्यतिष्य—॥

**मत्स्यानां य उपधायाः ।६।४।१४९।** अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः ॥ * **मत्स्यस्य ङ्याम्** ॥ * **सूर्यागस्त्ययोश्छे च ङ्यां च** ॥ * **तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्** । मत्सी । मातरि षिच्चेति षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष् । दंष्ट्रा । **जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ।४।१।४२।** एभ्य एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद्वृत्त्यादिष्वर्थेषु ङीष् स्यात् । जानपदी वृत्तिश्चेत् । अन्या तु जानपदी । उत्सादित्वादञन्तत्वे टिड्ढेति ङीप्याद्युदात्तः । कुण्डी अमत्रं चेत् । कुण्डान्या । कुडि दाहे । गुरोश्च हल इति अप्रत्ययः । यस्तु अमृते जारजः कुण्ड इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव । अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते[1] नतु नियम्यते । गोणी आवपनं चेत् । गोणान्या । स्थली अकृत्रिमा चेत् । स्थलाऽन्या । भाजी श्राणा चेत् । भाजाऽन्या । नागी स्थूला चेत् । नागाऽन्या । गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम् । सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम् । काली वर्णश्चेत्[2] । कालाऽन्या । नीली अनाच्छादनं चेत् । नीलाऽन्या । नील्या रक्ता शाटीत्यर्थः । नील्या अन्वक्तव्य इत्यन् । अनाच्छादनेऽपि न सर्वत्र किंतु ॥ * **नीलादौषधौ** । नीली ॥ * **प्राणिनि च** । नीली गौः ॥ * **संज्ञायां वा** । नीली । नीला । कुशी अयोविकारश्चेत् । कुशाऽन्या । कामुकी मैथुनेच्छा चेत् । कामुकाऽन्या । कबरी केशानां संनिवेशविशेषः । कबराऽन्या । चित्रेत्यर्थः । **शोणात्प्राचाम् ।४।१।४३।** शोणी । शोणा । **वोतो गुणवचनात् ।४।१।४४।** उदन्ताद्गुणवाचिनो वा ङीष् स्यात् । मृद्वी । मृदुः । उतः किम् । शुचिः[3] । गुणेति किम् आखुः ॥ * **खरुसंयो-**

अत्र भस्येत्यनुवर्तमानमपि न सबध्यते । विषयपरिगणनेनैवातिप्रसङ्गनिवारणात् ॥—**मत्स्यस्य ङ्यामिति** । नेह मत्स्यस्येदं मात्स्यम् ॥—**छे च ङ्यां चेति** । सूरीयः । सूरी । अगस्तीयः । अगस्ती । नेह । सौर्यं । चरुम् । आगस्त्यम् ॥ —**नक्षत्राणी**ति ॥ नक्षत्रसबन्धी योऽण् 'नक्षत्रेण युक्तः कालः' इति 'सधिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति च विहितस्तस्मिन्नित्यर्थः । तत्र तिष्यस्य यलोपो निपात्यते । पुष्यस्य त्वप्राप्तो विधीयते । तिष्येण युक्तः कालस्तैषः । पुष्येण युक्तः पौषः। तथा तिष्ये भवस्तैष. । पुष्ये भवः पौषः । नेह । तिष्यस्यापत्य तैष्यः ॥—**मत्सी**ति । योपधत्वात् 'जातेरस्त्रीविषयात्–' इत्यप्राप्तो गौरादिपाठान्ङीष् ॥—**मातरि षिच्चे**ति । 'पितृव्यमातुलमातामह–' इति सूत्रस्थमिद वचनं तच्च पितामहीति रूपसिद्ध्यर्थमवश्य वक्तव्यमिति न वार्तिकस्य वैयर्थ्यम् । ये तु पितामहशब्दमपि गौरादिषु पठन्ति, तन्मते, वचनमिदं स्वरसतो न संगच्छते । यदि त्वनित्यत्वज्ञापनमेव वचनस्य फलमिति ब्रूषे, तर्हि 'षिद्गौरा–' इति सूत्र एव 'अनित्य षितः' इति वक्तव्य किमनेन वक्रमार्गेणेति दिक् ॥ दश्यतेऽनेनेति दंष्ट्रा । 'दाम्नीशस–' इत्यादिना करणे ष्ट्रन् ॥—**जानपदी**ति॥ जनपदे भवा ॥—**वृत्तिश्चेद्**िति । वर्ततेऽनयेति वृत्तिर्जीविका ॥—**कुण्डी**ति । 'अस्त्री कमण्डलुः कुण्डी' इत्यमरः ॥ —**कुण्डाऽन्ये**ति । क्रियाशब्दोऽयम् । अत एवाह—**कुडि दाह** इत्यादि । यस्तु घटपर्यायः कुण्डशब्दः स न प्रत्युदाहरणम् । 'पिटरः स्थाल्युखा कुण्डम्' इति तस्य नपुसकत्वात् । अग्न्यालयादिपर्यायोऽपि कुण्डशब्दो नपुसकलिङ्गे नियतः । 'कुण्डमग्न्यालये मानभेदे देवजलाशये' इति मेदिनीकोशात् ॥—**आवपनं चेद्**िति ॥ आङ्पूर्वाद्वपेरधिकरणे ल्युट् । ओप्यते निक्षिप्यते धान्य यस्मिन् ॥—**गोणान्ये**ति । यस्या यादृच्छिक नाम ॥—**अकृत्रिमे**ति ॥ यथा 'सैषा स्थली यत्र विचिन्वता त्वाम्' इति ॥—**स्थलान्ये**ति । कृत्रिमा पुरुषेण संस्कृता । श्राणा पक्वा ॥—**अयोविकार** इति । फाल इति प्रसिद्धा ॥—**कुशान्ये**ति । छन्दोगाः स्तोत्रीयागणनार्थानौदुम्बरान् शङ्कून् 'कुशा' इति व्यवहरन्ति । 'अतः कृकमि–' इति सूत्रे प्रसिद्ध एवायम् ॥—**कामुकान्ये**ति । मैथुनादन्यद्धनादिक कामयितु यस्याः शील सेत्यर्थः । 'लषपत–' इत्युकञ् ॥—**शोणात्** ॥ 'शोणः कोकनदच्छविः' इति कोशाच्छोणशब्दस्य वर्णवाचित्वाद् 'वर्णाना तण–' इत्याद्युदात्ततया 'अन्यतो ङीष्' इति सिद्धेऽपि प्राचामेव ङीष् नान्येषाम् इति नियमार्थमिदम् ॥—**वोतो गुणवचनात्** ॥ गुणो नाम नेह—अदेङ्रूपः 'उतः' इति विशेषणाद्वचनग्रहणाच्च, नापि विशेषणमात्रमिदमाखुर्द्रव्यमित्यादावतिप्रसङ्गादिति चेद् । अत्राहुः—सज्ञाजातिक्रियाशब्दान् हित्वान्ये गुणवाचिनः । चतुष्टयीशब्दाना प्रवृत्तिरित्याकरग्रन्थनिष्कर्षादेव निर्णय इति ॥ भाष्ये तु 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः' इति स्थितम् । सत्त्व द्रव्यम् । सत्त्व एव निविशत इति सावधारणं व्याख्येयम् । एतेन सत्ता व्यावर्त्यते । सा हि न केवल द्रव्ये वर्तते किं तु द्रव्य-

१ विधीयते इति—अपरे तु पिठरे तु न ना कुण्डमिति विश्वकोशात् कुण्डशब्दस्य स्त्रीविषयत्वाभावः स्फुट एव, कमण्डलुसंस्थानस्यानुगतत्वात् तद्रूपामत्रवाचिनः कुण्डशब्दस्य पशुवृक्षादिवज्जातिवाचकत्वमस्त्येव, अतः सूत्रान्तरेणैव ङीपि सिद्धे इद नियमार्थमिति, तेन अमृते जारजायां कुण्डेत्येवेति ब्रुवते । २ वर्णश्चेदिति—तद्विशिष्टश्चेदित्यर्थः, अन्यथा गुणे शुक्लादयः पुंसीत्यसगतं स्यात् । एवं मैथुनेच्छाचेदित्यत्रापि बोध्यम् । ३ शुचिरिति—नेद प्रत्युदाहरणं संगच्छते, उतोऽभावेऽप्यतोऽनुवृत्तेः । शेखरे तु शुक्लेति प्रत्युदाहर्तव्यमित्युक्तं तदपि न वार्तिककृत्संमतम्, खरुसंयोगोपधान्नेति निषेधेनैव सिद्धेः । अतः श्वेतेत्यौदाहरणीयम् ।

**गोपयाश्च । स्वरः पतिंवरा कन्या । पाण्डुः । बह्वादिभ्यश्च ।४।१।४५। एभ्यो वा ङीष् स्यात् । बह्वी । बहुः ॥ * कृदिकारादक्तिनः । रात्रिः । रात्री । सर्वतोऽक्तिन्नर्थादित्येके । शकटिः । शकटी । अक्तिन्नर्थादिति किम् । अजननिः । क्तिन्नन्तत्वादप्राप्ते विध्यर्थं पद्धतिशब्दो गणे पठ्यते । हिमकाषिहतिषु चेति पद्भावः । पद्धतिः । पद्धती । पुंयोगादाख्यायाम् ।४।१।४८। या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष् स्यात् । गोपस्य स्त्री गोपी ॥ * पालकान्तान्न ॥ गोपालिका । अश्वपालिका ॥ * सूर्याद्देवतायां चाप् वाच्यः ॥ सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् । सूरी कुन्ती । मानुषीयम् । इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ।४।१।४९। एषामानुगागमः स्यात् ङीष् च । इन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते । तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते । इतरेषां चतुर्णामुभयं विधीयते । इन्द्राणी ॥ * हिमारण्ययो-**

गुणकर्मसु । ननु द्रव्य एव द्रव्यत्वं वर्तत इति तत्रातिव्याप्तिरत आह—**अपैतीति**। अपगच्छतीत्यर्थः । अर्थात्सत्त्वादेव । यथा पीततायां जातायां फलादेर्नीलतापैति, नैव द्रव्यत्वं द्रव्यादपैति ॥ एवमपि गोत्वं गोषु वर्तते अश्वादेश्चापैति तत्रातिव्याप्तिरत आह—**पृथग्जातिषु दृश्यत** इति । गोत्व हि द्रव्यत्वावान्तरनानाजातिषु न दृश्यते । गुणस्तु दृश्यते । यथा अश्वे दृष्टा नीलता तृणादिष्वपि दृश्यते । एतेन पूर्वार्धेन सकलजातेर्व्यवच्छेद. ॥ एव तर्हि कर्म द्रव्ये वर्तते ततोऽपैति पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह—**आधेयश्चाक्रियाजश्चे**ति । उत्पाद्याऽनुत्पाद्या इत्यर्थः । उत्पाद्यो यथा घटादेः पाकजो रूपादिः । अक्रियाजोऽनुत्पाद्यः । स यथा आकाशादेर्महत्त्वादिः । क्रिया तु सर्वाप्युत्पाद्यैव न नित्येति तस्या द्वैविध्याभावाद्गुणत्वाभावः ॥ एवमपि द्रव्यस्य गुणत्व प्राप्नोति । अवयवि द्रव्यं ह्यवयवद्रव्येषु निविशते । असमवायिकारणसंयोगनिवृत्तौ विनाशात्ततोऽपैति भिन्नजातीयेषु च हस्तपादादिषु दृश्यते द्विविध च भवति । नित्यानित्यभेदेन निरवयवस्याऽऽत्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह—**असत्वप्रकृतिरि**ति । अद्रव्यस्वभाव इत्यर्थः ॥—**पतिंवरे**ति । एव च पाणिग्रहणोत्कण्ठाभिधायित्वाद्गुणवचनोऽयमिति भावः ॥—**बह्वादिभ्यश्च** ॥ बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धेऽप्युत्तरार्थं ग्रहण 'नित्यं छन्दसि' इत्युत्तरसूत्रेण बहुशब्दादपि छन्दसि नित्य यथा स्यादिति। वस्तुतस्तु बहुशब्दो 'नित्य छन्दसि' इति सूत्र च व्यर्थमेव सर्वविकल्पाना छन्दसि व्यवस्थिततत्वात् ॥ गणसूत्रमाह—**कृदिकारादि**ति ॥—**'सर्वतोऽक्तिन्नर्थात्'** इत्यपि गणसूत्रमेव। व्यवस्थितविभाषात्वादिह न, सुगन्धिः । प्रियपतिर्वेश्या ॥ —**अजननिरि**ति। 'आक्रोशे नञ्यनि.' इति जनेरनिप्रत्ययः। इहान्यान्यपि गणसूत्राणि सन्ति—शक्तिः शस्त्रे । शक्तिः शक्ती । शस्त्रे किम् । शक्तिः सामर्थ्यम् । शक्तिः शक्तीति पाठे तु शब्दद्वयम् । शक्तिः । शक्ती ।—इतः प्राण्यङ्गात् । धमनिः । धमनी ॥—चन्द्रभागान्नद्याम् । चन्द्रभागी । चन्द्रभागा । अहन्शब्दोऽत्र पठ्यते । सामर्थ्यात्तदन्तबहुव्रीहिरुदाहार्यः । अनुपसर्जनाधिकारबाधश्च । दीर्घाह्नी प्रावृट् । पक्षे डाप्डीन्निषेधाः । बहु पद्धति यष्टि विकट विशाल कल्याण पुराण चण्ड कृमाण अहन् । इत्यादि ॥—**पुंयोगादाख्यायाम्**॥ इह पुमिति लुप्तषष्ठीक पृथक् पद, तच्चावर्तते 'पुंयोगात्' इति हेतौ पञ्चमी 'आख्यायाम्' इति तु पञ्चम्यर्थे सप्तमीत्याशयेनाह—**या पुमाख्ये**त्यादि । पुमाख्या पुवाचकः शब्दः । —**पुंयोगात् स्त्रियां वर्तते** इत्यनेन गौणी वृत्तिरुक्ता । यदा तु मुख्यार्थात् 'तस्येदम्' इत्यण् । तदा गोपीत्येव भवति। योगः संबन्धः । स चेह दम्पतिभाव एवेति नाग्रहः, किं तु जन्यजनकभावोऽपि गृह्यते, सकोचे मानाभावात् । तेन 'कौसल्ययासावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत्' इति भट्टिप्रयोगः सगच्छते। केकयस्य दुहिता केकयी। 'जनपदशब्दात्क्षत्रियादञ्' इत्यपत्यप्रत्यये तु कैकयीति स्यात् । नचेह 'अतश्च' इति तद्राजाकारलुक् शङ्क्यः । 'न प्राच्यभर्गादि–' इति प्रतिषेधात् । तथा च कालिदासः—'कैकेयि कामाः फलितास्तव' इति । एतेन देवकी व्याख्याता । पुंयोगात् किम् । देवदत्ता । अयं हि संज्ञाशब्दः स्वभावात् स्त्रियमाह, न तु पुवाचकशब्दयोगात् । आख्यायां किम् । प्रसूता । अय हि जातप्रसवामाह । स च प्रसवो गर्भधारणद्वारा पुयोगनिमित्तक इत्यस्तीह पुयोग., किं तु नायं पुसो वाचक इति न ङीप् ॥ —**सूर्याद्देवतायामि**ति । ङीषोऽपवादः ॥—**सूरी**ति । 'सूर्यतिष्य–' इति यलोप.॥—**आनुगि**ति ॥ ननु ह्रस्वादिरेव लाघवादनुग्वक्तव्यः किमनेन दीर्घोच्चारणेन । अत्राहुः । अनुकि कृते 'अतो गुणे' इति पररूप स्यात् । न चाकारोच्चारणसामर्थ्याद्दीर्घो भविष्यत्यन्यथा हि नुकमेव कुर्यादिति वाच्यम् । 'अल्लोपोऽनः' इत्यस्य बाधेन चरितार्थत्वात् । 'पत्युर्नः' इतिवदादेशे कर्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेवाल्लोपो न भविष्यतीति चेन्न । शर्वशब्दे ककारस्य चारितार्थ्यात् । न हि तत्र लोपोऽस्ति 'न संयोगात्' इति निषेधात् । तस्मात् ककाराकारयोः सामर्थ्यविरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यकमिति ॥ केचित्तु नुकि कृते लाक्षणिकत्वात् 'अल्लोपोऽनः' इत्यस्याप्रवृत्त्या सवर्णदीर्घ एव अनुकि कृते भविष्यत्यकारोच्चारण-

१ गोपालिकेति—गाः पालयतीति गोपालः स एव गोपालकः तस्य स्त्रीत्यर्थः, ण्वुलन्तस्य तु गोपालकेत्येव भवति इति केचित् । वस्तुतस्तु शेषषष्ठ्या अपि कारकविभक्तित्वात्सुबुत्पत्तेः पूर्वं समासे आपः सुपः परत्वाभावेन तत्रापि इत्वप्रवृत्तेर्ण्वुलन्तमपि इति अवगन्तव्यम् ।

**महत्त्वे** ॥ महद्धिमं हिमानी । महदरण्यं अरण्यानी ॥ *** यवाद्दोषे** ॥ दुष्टो यवो यवानी ॥ *** यवनाल्लिप्याम्** । यवनानां लिपिर्यवनानी ॥ *** मातुलोपाध्याययोरानुग्वा** ॥ मातुलानी । मातुली । उपाध्यायानी । उपाध्यायी ॥ *** या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः** ॥ उपाध्यायी । उपाध्याया ॥ *** आचार्यादणत्वं च** ॥ आचार्यस्य स्त्री आचार्यानी । पुंयोग इत्येव । आचार्या स्वयं व्याख्यात्री ॥ *** अर्यक्षत्रियाभ्यां वा स्वार्थे** ॥ अर्याणी । अर्या । स्वामिनी वैश्या वेत्यर्थः । क्षत्रियाणी । क्षत्रिया । पुंयोगे तु । अर्यी । क्षत्रियी । कथं ब्रह्माणीति । ब्रह्माणमानयति जीवयतीति कर्मण्यण् । **क्रीतात्करणपूर्वात्** ।४।१।५०। क्रीतान्ताददन्तात्करणादेः स्त्रियां ङीष् स्यात् । वस्त्रक्रीती । क्वचिन्न । धनक्रीता । **क्तादल्पाख्यायाम्** ।४।१।५१। करणादेः क्तान्तात् स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः । **बहुव्रीहेश्चान्तोदात्तात्** ।४।१।५२। बहुव्रीहेः क्तान्तादन्तोदात्तादन्तात् स्त्रियां ङीष् स्यात् ॥ *** जातिपूर्वादिति वक्तव्यम्** । तेन बहुनञ्सुकालसुखादिपूर्वान्न । ऊरुभिन्नी । नेह । बहुकृता ॥ *** जातान्तान्न** ॥ दन्तजाता ॥ *** पाणिगृहीती भार्यायाम्** ॥ पाणिगृहीतान्या ।

---

सामर्थ्यात् । एव सत्यानुगिति दीर्घोच्चारणसामर्थ्याद् आ अनुगिति पदं विभज्यते । तत्रेन्द्रादीनामनुकैव सिद्धे अकारादेशविधानसादर्थ्यात्क्वचिदन्यतोऽपि विधानमनुमीयते तेन ब्रह्मणः स्त्री ब्रह्माणीति सिध्यतीत्याहुः । अत्र नव्याः । अस्तूक्तरीत्या दीर्घोच्चारणमन्यतो विधानार्थमेव परं तु आ अनुगिति पद विभज्य नकारस्याकारादेशे कृते दीर्घग्रहणसामर्थ्यादनजन्तस्याप्यनुकि ब्रह्माणीति सिध्यतीति न व्याख्येयम् । उभयविधौ वाक्यभेदापत्तेः । किं तु इन्द्रमाचक्षाणः इन्द्रः 'तत्करोति तदाचष्टे' इति ण्यन्तात्क्विप् तस्य स्त्री इन्द्राणीति सिध्यतीत्येव व्याख्येयम् । दीर्घोच्चारणसामर्थ्यात् 'अतः' इत्यधिकारोऽनुपसर्जनाधिकारश्च बाध्यत इति सुवचत्वात् । न चोभयबाधाभ्युपगमापेक्षयाऽत इत्यधिकारबाधमात्राभ्युपगमेन ब्रह्मणः स्त्री ब्रह्माणीति रूपसिद्धये आकारादेशो नुक् च भवतीत्येव व्याख्यायतामिति वाच्यम् । वाक्यभेदापेक्षया उभयबाधनगौरवस्य सुसहत्वात् ॥ एव च ब्रह्माणमानयति जीवयतीत्यादिवक्ष्यमाणग्रन्थोऽपि स्वरसतः सगच्छत इत्याहुः ॥—**हिमानी**ति । महत्त्वयोगे हिमारण्ययोः स्त्रीत्वम् ॥—**दुष्टो यवो यवानी**ति । जात्यन्तरमेवानेनाभिधीयते । अयमेव चास्य दोषो यस्मात्स्त्रीययवत्वजातेरभावेऽपि तदाकारानुकृतिः ॥—**यवनानी**ति । तस्येदमित्यणो बाधको ङीष् ॥—**वा ङीष्वाच्य** इति । इदं च 'इदश्च' इति घञ्विधायकसूत्रस्थ वार्तिकम् । वक्ष्यति च तत्र 'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्' इति ॥—**उपाध्यायी उपाध्याये**ति । उपेत्य अस्या अधीयत इति विग्रहः ॥—**स्वार्थे** इति । यदि तु पुयोग एवाय विधिः स्यात् शूद्रापि क्षत्रियस्य भार्या क्षत्रियाणी स्यात् । ब्राह्मणभार्या च क्षत्रिया क्षत्रियाणी न स्यादिति भाव. ॥—**वैश्या वेत्यर्थ** इति । 'अर्य. स्वामिवैश्ययो.' इत्यर्थद्वये निपातनादिति भावः । अत्रामरस्य सग्रहः । 'अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि । उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः । आचार्याणी तु पुंयोगे स्यादर्यी क्षत्रियी तथा । उपाध्यायान्युपाध्यायी' इति ॥—**कथमि**ति । सूत्रे ब्रह्मन्शब्दस्याग्रहणादानुगनुपपन्न एव इति प्रश्नः । उत्तर तु—**ब्रह्माणमानयती**त्यादि । ण्यन्तात् 'अन प्राणने' इत्यस्मात्कर्मण्यणि 'णेरनिटि' इति णिलोपे 'टिड्ढाणञ्–' इति ङीपि 'पूर्वपदात्सञ्ज्ञायाम्' इति णत्वं च ब्रह्माणीति रूपसिद्धेरिति भाव. ॥—**क्रीतात्**—॥ इह प्रकरणे 'अत' इत्यनुवर्तते 'प्रातिपदिकात्' इति च तदाह—**अदन्तादि**ति । प्रातिपदिकादिति शेष. ॥—**वस्त्रक्रीती**ति । वस्त्र भिस् क्रीत इति स्थिते प्राक्सुबुत्पत्तेः 'कर्तृकरणे–' इति समासेऽदन्तत्वान्ङीष् ॥—**क्वचिन्ने**ति । 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणाद् 'गतिकारकोपपद–' इति वक्ष्यमाणस्य क्वचिदप्रवृत्तौ सुबन्तेन समासः । तत्र सुपः प्रागेवान्तरङ्गत्वाट्टाप् । ततोऽदन्तत्वाभावान्न ङीषिति भावः । करणपूर्वादिति किम् । गवा क्रीता अश्वेन क्रीता इत्यादिविग्रहे मा भूत् । पूर्वशब्दो ह्यवयववचनः समासप्रातिपदिक चान्यपदार्थ. करण पूर्व यस्मिन् प्रातिपदिके तदिद करणपूर्व तस्मादित्यर्थ ॥—**क्तादल्पाख्यायाम्** ॥ अत्र व्याचख्युः । अल्पाख्यायामिति समुदायोपाधि. । अल्पैरभ्रैर्लिप्ता अभ्रलिप्ती । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति समुदायस्यापि क्तान्तत्वान्ङीष् । यद्यपि पूर्वपदार्थस्य अभ्राणामेवाल्पत्व गम्यते तथापि तदल्पत्वे सति तद्विलेपनस्याप्यल्पत्वमवश्य भवतीति समुदायोपाधित्वमल्पत्वस्य सगच्छत इति ॥—**तेन बहि**ति ॥ अयं भावः । 'बहोर्नञ्वदुत्तरपदभूम्नि' 'नञ्सुभ्यां जातिकालसुखादिभ्योऽनाच्छादनात्' 'क्तोकृतमितप्रतिपन्नाः' इति ह्यन्तोदात्तविधायकानि । तत्र जातिपूर्वादित्युक्ते बह्वादिपूर्वकस्यार्थाद्व्युदास इति ॥—**सुखादिपूर्वान्ने**ति । 'सुखादिभ्यः कर्तृवेदनायाम्' । इत्यत्र ये पठिताः सुखदुःखकृच्छ्रादयस्तेऽत्र गृह्यन्ते । सुखयाता, दुःखयाता, सुख दुःख वा यात प्राप्तमनयेति विग्रहः 'अस्वाङ्गपूर्वपदाद्वा' इति विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणमाह—**ऊरुभिन्नी**ति । भिन्नौ ऊरू यस्या इति बहुव्रीहौ भिन्नशब्दस्य 'निष्ठा' इति पूर्वनिपाते प्राप्ते 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति परनिपात ॥—**बहुकृते**ति । बहूनि कृतानि यया सा ॥—**जातान्तान्ने**ति । 'वर्णादनुदात्तात्–' इतिवद् 'बहुव्रीहेरुदात्तात्' इत्येव सिद्धेऽन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम् । 'वा जात' इति तु वैकल्पिक उदात्तो न तु नित्य इति भावः ॥—**पाणिगृहीती**ति । य-

**अस्वाङ्गपूर्वपदाद्वा** ।४।१।५३। पूर्वेण नित्यं प्राप्ते विकल्पोऽयम् । सुरापीती सुरापीता । अन्तोदात्तात्किम् । वस्त्रच्छन्ना । अनाच्छादनादित्युदात्तनिषेधः । अतएव पूर्वेणापि न ङीष् । **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** ।४।१।५४। असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तादजन्तात्प्रातिपदिकाद्वा ङीष् । केशानतिक्रान्ता अतिकेशी । अतिकेशा । चन्द्रमुखी । चन्द्रमुखा । संयोगोपधात्तु सुगुल्फा । उपसर्जनात्किम् । शिखा । स्वाङ्गं त्रिधा ॥ * **अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्** ॥ सुस्वेदा द्रवत्वात् । सुज्ञाना अमूर्तत्वात् । सुमुखा शाला अप्राणिस्थत्वात् । सुशोफा विकारजत्वात् ॥ * **अतत्स्थं तत्र दृष्टं च** ॥ सुकेशी सुकेशा वा रथ्या । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ॥ * **तेन चेत्तत्तथा युतम्** ॥ सुस्तनी सुस्तना वा प्रतिमा । प्राणिवदप्राणिसदृशे स्थितत्वात् । **नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च** ।४।१।५५। एभ्यो वा ङीष् स्यात् । आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते । पुरस्तादपवादन्यायात् । ओष्ठादीनां पञ्चानां तु असंयोगोपधादिति पर्युदासे प्राप्ते वचनम् । मध्येऽपवादन्यायात् । सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः । तुङ्गनासिकी । तुङ्गनासिका इत्यादि । नेह । सहनासिका । अनासिका । अत्र वृत्तिः ॥ * **अङ्गगात्रकण्ठेभ्यो वक्तव्यम्** ॥ स्वङ्गी । स्वङ्गेत्यादि । एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित् । भाष्याद्यनुक्तत्वादप्रमाणमिति प्रामाणिकाः । अत्र वार्तिकानि ॥ * **पुच्छाच्च** ॥ सुपुच्छी । सुपुच्छा ॥ * **कबरमणिविषशरेभ्यो नित्यम्** ॥ कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरी इत्यादि ॥ * **उपमानात्पक्षाच्च पुच्छाच्च** ॥ नित्यमित्येव । उलूकपक्षी शाला । उलूकपुच्छी सेना । **न क्रोडादिबह्वचः** ।४।१।५६। क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । अश्वानामुरः क्रोडा । आकृतिगणोऽयम् । सुजघना । **सहनञ्विद्यमान-**

---

स्याः पाणिग्निसाक्षिकं गृह्यते तस्यां वाच्यायां पाणिगृहीतशब्दान्ङीष्वक्तव्य इत्यर्थः ॥—**अन्येति** । कौतुकादिना पाणिर्गृहीतो यस्या दास्यादेः सा पाणिगृहीता ॥—**पूर्वेण नित्यं प्राप्त** इति । एतेन विकल्पोऽप्ययं जातिपूर्वादेवेति ध्वनितम् ॥ कथं तर्हि पुत्रहतीत्यत्र 'अस्वाङ्गपूर्वपदात्' इति वा ङीषिति कैयटः, पुत्रशब्दस्याजातिवाचकत्वात् । अन्यथा पुत्रादिनीत्यत्र 'सुप्यजातौ–' इति णिनिर्न स्यात् ॥ यदि त्वदनमाद. सोऽस्यास्तीति आदिनी पुत्राणामादिनीति विगृह्य कथञ्चित्साधितेऽपि 'जातिकालसुखादिभ्यः' इत्यन्तोदात्तविधायकसूत्रे जाते. किं, 'पुत्रजात.' इति वक्ष्यमाणमूलग्रन्थो विरुध्यत एवेति चेदुच्यते–'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असत्त्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥' इति भाष्ये लक्षणान्तरमुक्तं सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां प्रादुर्भावतिरोभावौ या प्राप्नोति, या च द्रव्यभाविनीत्यर्थः । गुणैर्युगपद्द्रव्येण सबध्यते । बह्वर्थां सर्वव्यक्तिव्यापिनीमित्यर्थ । तां जातिमित्यादि कैयटेन व्याख्यातम् । एव च पुत्रत्वस्य यावद्द्रव्यभावित्वेनोक्तलक्षणलक्षितत्वात् जातिवाचक एव पुत्रशब्द इति 'अस्वाङ्ग–' इति वा ङीषिति ग्रन्थस्तत्र न विरुध्यते । 'आकृतिग्रहणा जातिः' इत्यादिमुख्यपक्षाश्रयणे तु पुत्रत्वस्याजातित्वाजाते' किं पुत्रजात इति ग्रन्थोऽपि सगच्छत इति दिक् ॥ केचिदर्वाचीनास्तु पुत्रहती पुत्रजग्धीन्यत्र 'क्तादल्पाख्यायाम्' इत्यनेन ङीपमाहु. ॥—**सुरापीती**ति । पीता सुरा यया सा । 'जातिकाल–' इति सूत्रवार्तिकाभ्यां निष्ठाया अन्तोदात्तत्वपरनिपातौ ॥—**वस्त्रच्छन्ने**ति । बहुव्रीहिस्वरेण पूर्वपदप्रकृतिस्वरे शेषनिघाते च कृते अनुदात्तान्तोऽयम् ॥—**स्वाङ्गाच्चो—**॥ इह बहुव्रीहिरिति नानुवर्तते इति ध्वनयन्नुदाहरति—**अतिकेशी**ति ॥—**शिखे**ति । 'शीङ खो ह्रस्वश्च' इति खसदन्ताट्टाप् । अन्यथा टाप बाधित्वा ङीष् स्यादिति भावः । केचित्तु सुशिखेत्यपि प्रत्युदाहरन्ति । तच्चिन्त्यम् । टाबन्तेन समासे अनदन्तत्वेन ङीष. प्राप्त्यभावात् । न च टापः प्रागेव कृदन्तेनैव समासाददन्तत्वमस्तीति वाच्यम् । तथा हि सति शोभना शिखा सुशिखेत्यर्थस्यालाभादिति नव्याः । यद्यत्र स्वमङ्ग गृह्येत तर्हि सुमुखा शालेत्यत्रापि स्यात् । मुखस्य शालाङ्गत्वात् । सुकेशी रथ्येत्यत्र न स्यात् केशाना रथ्याङ्गत्वाभावात् । अतोऽव्याप्त्यतिव्याप्तिपरिहारार्थमाह—**स्वाङ्गं त्रिधे**ति ॥— **मूर्तिमदि**ति । स्पर्शवद् द्रव्यपरिमाण मूर्तिः । —**प्राणी**ति । मुखनासिकासंचारी वायु. प्राणः ॥—**सुमुखा शाले**ति । एव च 'फलमुखी कारणमुखी चानवस्था' इत्यादिप्रयोगाः प्रामादिका इति भावः ॥ प्रतिमादिगतस्तनस्य प्राणिन्यदृष्टत्वात् स्वाङ्गत्व न प्राप्नोतीति तृतीयलक्षणमाह—**तेन चेदि**ति । येनाङ्गेन प्राणिरूप वस्तु यथा युतं तेन तत्सदृशेनाङ्गेन तद् अप्राणिरूप वस्तु यथा प्राणिवद्युत युक्तं चेत् तदप्यप्राणिनि दृष्ट स्वाङ्गमित्यर्थः ॥—**मध्येऽपवादे**ति । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्' इति न्यायादित्यर्थः ॥ —**उरः क्रोडे**ति । स्त्रीलिङ्गोऽयमिति हरदत्तादयः । तत्रोपसर्जनह्रस्वत्वे कृते अदन्तत्वात् ङीषः प्राप्तिः । अमरस्तु 'न ना क्रोड भुजान्तरम्' इत्याह ॥ रत्नपतिस्तु पुलिङ्गतामाह ॥ गणे च क्रोडेति प्रातिपदिकमात्र पठ्यते न तु टाबन्तमिति गणरत्नमहोदधिकार. ॥ एवं चाऽविशेषाल्लिङ्गत्रयेऽप्युदाहरण बोध्यम् ॥ माधवस्तु तुदादिगणे 'कुड निमज्जने' इति धातावाह

---

१ अस्वाङ्गेति—न स्वाङ्गमस्वाङ्गम् पूर्वं पद पूर्वपदम् अस्वाङ्ग च तत् पूर्वपदं च तस्मादस्वाङ्गपूर्वपदादिति समासः, उत्तरत्र तथा विवक्षितत्वात् । २ अतिकेशीति—ननु करे मुख यस्या इति विग्रहे करमुखीत्यपि स्यात् इति चेन्न, पूर्वसूत्रादस्वाङ्गपूर्वपदादित्यनुकर्ष्य स्वाङ्गभिन्नपूर्वपदात्परं स्वाङ्गमित्यर्थस्य विवक्षितत्वात् । अत एव कल्याणपाणिपादेत्यादौ न ङीष् इति दिक् ।

**पूर्वाच्च** ।४।१।५७। सहेत्यादित्रिकपूर्वाच्च ङीष् । सकेशा अकेशा । विद्यमाननासिका । **नखमुखात्संज्ञायाम्** ।४।१।५८। ङीष् न स्यात् । शूर्पणखा । गौरमुखा । संज्ञायां किम् । ताम्रमुखी कन्या । **दिक्पूर्वपदान्ङीप्** ।४।१।६०। दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीपो ङीबादेशः स्यात् । प्राङ्मुखी । आद्युदात्तं पदम् । **वाहः** ।४।१।६१। वाहन्तात्प्रातिपदिकात् ङीष् स्यात् । ङीषेवानुवर्तते न ङीप् । दित्यवाट् च मे दित्यौही च मे । **सख्यशिश्वीति भाषायाम्** ।४।१।६२। इतिशब्दः प्रकारे भाषायामित्यस्यानन्तरं द्रष्टव्यः । तेन छन्दस्यपि क्वचित् । सखी । अशिश्वी । आधेनवो धुनयन्तामशिश्वीः । **जातेरस्त्रीविषयादयोपधात्** ।४।१।६३। जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् । **आकृतिग्रहणा जातिः** ॥ अनुगतसंस्थानव्यङ्ग्येत्यर्थः । तटी ॥ *** लिङ्गानां न च सर्वभाक् । सकृदाख्यातनिर्ग्राह्या** ॥ असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम् । वृषली । सत्यन्तं किम् । शुक्ला । सकृदित्यादि किम् । देवदत्ता ॥ *** गोत्रं च चरणैः सह** ॥ अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः । औपगवी । कठी । बह्वृची ।

क्रोडः । घञ् । क्रोडा अश्वानामुरः । टाबन्तोऽयं स्वभावतो विशेषविषयः । क्रोडादिषु टावन्तमात्रस्य पाठात् । भुजान्तर-मात्रवचनस्य क्रोडशब्दस्य बहुव्रीहि. । स्वाङ्गलक्षणो ङीषुविकल्पो भवत्येव । कल्याणक्रोडी मयूरीति ॥—केशैः सह वर्तत इति—**सकेशा** । अविद्यमानाः केशा यस्याः सा—**अकेशा** ॥—**शूर्पणखे**ति । 'पूर्वपदात्संज्ञायाम्–' इति णत्वम् । यदा तु शूर्पवन्नखानि यस्या इति योगमात्रं विवक्ष्यते न तु संज्ञा ततोऽसंज्ञात्वान्न ङीपुनिषेधो न वा णत्वं, तेन राक्षस्यपि योगवृत्त्या शूर्पनखीति भवतीत्याहुः ॥—**ङीषो ङीबादेश** इति । 'अन्यतो ङीष्' इत्यतो ङीषित्यनुवर्तते । 'दिक्पूर्वपदात्–' इति पञ्चम्या ङीषिति प्रथमायाः षष्ठी कल्प्यते इति भावः ॥ यदि तु स्वतन्त्रो ङीप् स्यात्तर्हि प्राग्गुल्फा प्राक्क्रोडेत्यत्रापि प्रसज्येत । पूर्वोक्तासंयोगोपधादित्यस्य निषेधाना चानुवृत्तौ प्रतिपत्तिगौरवमिति भाव. ॥— **वाहः**—॥ ण्विप्रत्ययान्तस्य वहेरनुकरणमिदम् 'वहेश्च' इत्यनेन कर्मण्युपपद एव वहेर्ण्विप्रत्ययविधानात्केवलस्य संभवो नास्तीति सामर्थ्या-त्तदन्तविधिरित्यभिप्रेत्याह—**वाहन्तादि**ति ॥—**न ङीबि**ति । अस्वरितत्वादिति भावः ॥—**दित्यौही**ति । ङीषि भसंज्ञायां वाह ऊठ्' 'संप्रसारणाच्च' इति पूर्वरूपम् । 'एत्येधत्यूठ्सु' इति वृद्धिः ॥—**सख्यशिश्वी**ति । सखिशब्दादशिशुशब्दाच्च ङीष् निपात्यते । न विद्यते शिशुर्यस्याः साशिश्वी । भाषायां किम् । सखा सप्तपदी भव ॥—**जातेरस्त्री**—॥ जात्या स्ववाचकशब्दो लक्ष्यते अर्थे कार्यासंभवात्, स्वरूपं तु न गृह्यते अस्त्रीविषयत्वादित्यादेर्वैयर्थ्यापत्तेरित्याशयेनाह—**जातिवाचि यदि**ति ॥—**आकृतिग्रहणे**ति ॥ ग्रहणमिति करणे ल्युट् ॥ सामान्ये नपुंसकम् । आकृतिर्ग्रहणं यस्या इति बहुव्रीहिस्तदेतत्फलितमाह ॥—**अनुगतसंस्थाने**त्यादि ॥ वृषले ब्राह्मणादिव्यावृत्तसंस्थानाभावादव्याप्तिरिति लक्षणान्तरमाह ॥—**लिङ्गानां चे**त्यादि । चकारो भिन्नक्रमः निर्ग्राह्येत्यस्या-नन्तरं बोध्यः । लिङ्गानामिति कर्मणि षष्ठी । न सर्वभाक्, सर्वाणि लिङ्गानि न भजतीत्यर्थः । सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वाद्भजो ण्विः समासश्च भवत्येवेति नात्र सामर्थ्याभावः शङ्क्यः ॥—**वृषली**ति । एकस्यां हि व्यक्तौ वृषलत्वे क-थिते तदपत्यतत्सहोदरादौ कथनं विनापि तस्य सुग्रहत्वादिति भावः ॥—**देवदत्ते**ति ॥ नन्वत्र परिमाणभेदेन द्रव्यभेदा-भ्युपगमे स्यादेवातिप्रसङ्गः । एकस्यां व्यक्तौ देवदत्तत्वे कथिते व्यक्त्यन्तरे कथनं विनापि तस्य सुग्रहत्वात् । मैवम् । परि-माणभेदेन द्रव्यभेदस्य प्रामाणिकैरनभ्युपगमात् । अभ्युपगमे वा समानकालतया व्यक्त्यन्तरस्य विशेषणात्, तथा च य-स्यां व्यक्तौ देवदत्तत्वं कथ्यते तत्समकालमन्या देवदत्तव्यक्तिरप्रसिद्धेति न देवदत्तत्वं जातिः । वृषलत्वादिस्तु भवत्येव त-दीयपितृभ्रात्रादिषु तस्य सुग्रहत्वादिति दिक् ॥ उक्तलक्षणद्वयाऽनाक्रान्तत्वात्तृतीयं लक्षणमाह—**गोत्रं च चरणैः स-हे**ति । अपत्याधिकारादन्यत्र लौकिकं गोत्रम् । चरणः शाखाध्येता ॥ तदेतत् फलितमाह—**अपत्यप्रत्ययान्त** इति । अत्र व्याचख्युः । नाडायनं बह्वृचमिदमिति नपुंसकप्रयोगदर्शनात् सर्वलिङ्गौ गोत्रचरणौ, अतः पृथग्लक्षणं कृतम् । तेनात्र 'लिङ्गानां च न सर्वभाक्' इति द्वितीयलक्षणेन गतार्थता न शङ्क्येति ॥—**औपगवी**ति । अण्णन्तलक्षणं ङीपं परत्वादयं बाधते । एवं चापत्याधिकारे औपगवीति प्रतीकमुपादाय 'टिड्ढाणञ्–' इत्यादिना ङीबिति व्याचक्षाणा उपेक्ष्या इति भा-वः ॥ केचित्तु अपत्याधिकारादुत्तरत्रैव लौकिकगोत्रं गोत्रशब्देन गृह्यते नान्यत्र पारिभाषिकगोत्रप्रत्ययान्त एव जातिकार्यं लभते न त्वपत्यप्रत्ययान्तः । 'गोत्रं च चरणैः सह' इति वचनस्यापत्याधिकारात् पूर्वभावित्वात् । तथा चापत्यार्थे औपग-वीति ङीबन्त इति प्राचामुक्तिः सम्यगेवेत्याहुः ॥—**कठी**ति । कठेन प्रोक्तमधीयाना वा 'कलापिवैशंपायनान्तेवासिभ्य-श्च' इति वैशंपायनान्तेवासित्वाण्णिनिस्तस्य 'कठचरकाल्लुक्' इति लुक् । अध्येत्रणस्तु 'प्रोक्ताल्लुक्' इत्यनेन ॥—**बह्वृची**ति । बह्व्यः ऋचोऽध्येतव्या यया सेति बहुव्रीहिः । 'अनृचबह्वृचावध्येतर्येव' इति वचनात् 'ऋक्पूरब्धूः–' इति अप्रत्ययः स-

१ आकृतिग्रहणा जातिरिति—'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः' इति लक्षणान्तरं भाष्ये । २ तटीति—अनुगतसंस्थानव्यङ्ग्यमेतत् । जलसमीपदेशविशेषो हि तटम् ।

ब्राह्मणीत्यत्र तु शार्ङ्गरवादिपाठात् ङीना ङीष् बाध्यते । जातेः किम् । मुण्डा । अस्त्रीविषयात्किम् । वलाका[1] । अयोपधात्किम् । क्षत्रिया ॥ * **योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधः** ॥ गवयी । हयी । मुकयी । हलस्तद्धितस्येति यलोपः । मनुषी ॥ * **मत्स्यस्य ङ्याम्** ॥ मत्सी । **पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च** ।४।१।६४। पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् स्यात् । ओदनपाकी । शङ्कुकर्णी ॥ शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढा एते । **इतो मनुष्यजातेः** ।४।१।६५। ङीष् स्यात् । दाक्षी । योपधादपि । उदमेयस्यापत्यं औदमेयी । मनुष्येति किम् । तित्तिरिः । **ऊङुतः** ।४।१।६६। उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः ॥ कुरुनादिभ्यो ण्यः ॥ तस्य स्त्रियामवन्तीत्यादिना लुक् । अयोपधात्किम् । अध्वर्युः ॥ * **अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्** ॥ रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव । अलाब्वा । कर्कन्ध्वा । अनयोर्दीर्घान्तत्वेऽपि नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम् ॥ प्राणिजातेस्तु कृकवाकुः । रज्ज्वादेस्तु रज्जुः । हनुः । **बाह्वन्तात्संज्ञायाम्** ।४।१।६७। स्त्रियामूङ् स्यात् । भद्रबाहूः । संज्ञायां किम् । वृत्तबाहुः । **पङ्गोश्च** ।४।१।६८। पङ्गूः ॥ **श्वशुरस्योकाराकारलोपश्च** ॥ चादूङ् । पुंयोगलक्षणस्य ङीषोऽपवादः । लिङ्गविशिष्टपरिभाषया स्वादयः । श्वश्रूः । **ऊरूत्तरपदादौपम्ये** ।४।१।६९। उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः । **संहितशफलक्षणवामादेश्च** ।४।१।७०। अनौपम्यार्थं सूत्रम् । संहितोरूः । सैव शफोरूः । शफौ खुरौ ताविवासान्तः ॥ यद्यपि स्त्रीणामध्ययन प्रतिषिद्धम्, तथापि पुराकल्पे ह्येतदासीत् । तदाह यमः—'पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापन च वेदाना सावित्रीवचन तथा' इति । यद्वा मा नामाधिगीष्ट तद्वश्यत्वात्ताच्छब्द्य भविष्यति, यथाऽनधीयानेऽपि माणवके ॥—**ब्राह्मणीत्यत्रे**ति । एव च प्राचो ङीबुदाहरण प्रामादिकमिति भावः ॥—**मुण्डे**ति । मुण्डगुणयोगान्मुण्डा । 'वलाका विसकण्ठिका' ॥—**क्षत्रिये**ति । 'क्षत्राद्घ.' इत्यपत्ये घविधानाद्गोत्रलक्षणा 'लिङ्गानां च न सर्व–' इत्यादिलक्षणा वा जाति ॥—**योपधप्रतिषेध** इत्यादि । गौरादिषु गवयादय इदानीतनै प्रक्षिप्ता इत्यस्मादेव वार्तिकाद्विज्ञायत इति कैयटादयः ॥—**पाककर्ण**—॥ जातेरित्यनुवृत्तेर्नेह । बहुपुष्पा । बहुफला शाखा । एव हि पूर्वेणैव सिद्धे किमनेन सूत्रेणेत्याशङ्क्याह ॥—**स्त्रीविषयादपी**ति ॥—**इतो मनुष्य**—॥ इतः किम् । विट् दरद् । विट्शब्दात् 'जनपदशब्दात् क्षत्रियादञ्' इत्यञ्, दरच्छब्दात्तु 'द्व्यञ्मगध–' इत्यण् । तयोः 'अतश्च–' इति लुक् । यस्तु वैश्यपर्यायो विट्शब्दः सोऽपि प्रत्युदाहरणमित्याहुः ॥—**दाक्षी**ति । 'अत इञ्' गोत्रलक्षणा जातिः । अदन्तत्वाभावादप्राप्तो ङीष् विधीयते ॥—**योपधादपी**ति । 'जातेः' इत्यनुवर्तमाने पुनर्जातिग्रहणादिति भावः ॥—**उदमेयस्ये**ति । उदक मेय यस्य उदमेय 'उदकस्योदः संज्ञायाम्' इत्युदादेशः ॥—इञ उपसंख्यानम् ॥ अजात्यर्थम् । सौतगमी । निवृत्ताद्यर्थे 'वुञ्छण्–' आदिसूत्रेण सुतगमादिभ्य इञ्, न चायमिञन्तो जातिः ॥—**ऊङुतः** ॥ ङकारो 'नोङ्धात्वोः–' इति विशेषणार्थः । अन्यथा यवाग्वा यवाग्वै इत्यत्रापि स निषेधः स्यात् । दीर्घोच्चारण तु श्वश्रूशब्दार्थमन्यत्र सवर्णदीर्घेणापि सिद्धेः ॥—**कुरूरि**ति । लिङ्गविशिष्टपरिभाषया स्वादयः । अत्र व्याचक्षते 'यद्येकादेशस्य पूर्वान्तत्वेन ग्रहणात्स्वादय इति व्याख्यायेत तर्हि काण्डे कुड्ये इत्यादावपि 'एकवचनमुत्सर्गतः' इति सुः प्रवर्तेत तद्वारणाय 'अप्रत्ययः' इति प्रसज्यप्रतिषेधाभ्युपगमे तु प्रकृते दोष । श्वश्रूरित्यत्रैकादेशाभावाल्लिङ्गविशिष्टपरिभाषाया आवश्यकत्वाच्च । अतएव रमा इत्यत्र 'एकादेशस्य पूर्वान्तत्वेन ग्रहणात् स्वादय इति मनोरमादौ न व्याख्यातमिति' ॥—**अध्वर्युरि**ति । अध्वर्युशाखाध्येत्री अध्वर्युशाखाध्यायिवशोद्भवेति वार्थ । चरणलक्षणेय जातिः । अध्वर यातीति विग्रहे 'मृगय्वादयश्च' इत्यौणादिकेन अध्वरशब्दस्यान्तलोपः याधातोः कुप्रत्ययश्च ॥—**पर्युदासादि**ति । यदि सूत्रादुत इति गृह्यते तर्हि अलाब्वादावूङः संभवो नेति भाव. ॥—**अलाब्वे**त्यादि । प्रथमान्त द्वितीयान्त वा नोदाहृतम् । वक्ष्यमाणप्रयोजनस्य तत्रासंभवात् ॥—**नोङ्धात्वोरि**ति । ऊङ्धात्वोर्यणः परे शसादय उदात्ता न स्युरिति सूत्रार्थः ॥—**पङ्गोश्च** ॥ अजात्यर्थमिदम् । पङ्गुशब्दो हि गुणवाची ॥—**श्वशुरस्ये**ति । पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् तत्संनियोगेन च विधीयमानो लोपः संनिहितत्वाद् अन्त्यस्यैवाकारस्य न त्वादेः, एतच्च वचन 'श्वशुरः श्वश्र्वा' इति निर्देशसिद्धार्थकथनपरम् । अतोऽपि प्रथमाकारस्य लोपो न शङ्क्य. ॥—**ऊरूत्तरपदा**—॥उपमीयतेऽनयेत्युपमा तस्या भाव औपम्यम् । उत्तरपदेन पूर्वपदमिहाक्षिप्यते तदेतत्फलितमाह—**उपमानवाचिपूर्वपदमि**ति ॥—**करभोरूरि**ति । 'मणिबन्धादाकनिष्ठ करस्य करभो बहिः', तद्वदूरू यस्याः सा 'धात्री कराभ्या करभोपमोरुः' इत्यत्र तूङ् न । करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात् ॥—**औपम्ये किम्** । वृत्तोरु । ऊर्वन्तादिति वक्तव्ये उत्तरपदग्रहणं हस्तिखाम्यूरुरित्यत्र माभूदित्येवमर्थम् । अत्र हि हस्तिन इव खाम्यूरू

[1] वलाकेति—अत्र 'वलाका विसपङ्क्तिः स्याद्वलाका विसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः' इति कोशे पुंलिङ्गस्याप्यभिधानादिद शुक्तमिति न भ्रमितव्यम्, प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नादित्यर्थात् ।

**१।४।९०। एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे, वृक्षं प्रति पर्यनु वा विद्योतते विद्युत् । इत्थंभूताख्याने, भक्तो विष्णुं प्रतिपर्यनु वा । भागे, लक्ष्मीर्हरिं प्रतिपर्यनु वा । हरेर्भाग इत्यर्थः । वीप्सायां, वृक्षंवृक्षं प्रतिपर्यनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । एषु किम् । परिषिञ्चति । ॥ अभिरभागे ।१।४।९१। भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभि वर्तते । भक्तो हरिमभि । देवंदेवमभिसिञ्चति । अभागे किम् । यदत्र ममाभिष्यात्तद्दीयताम् । ॥ अधिपरी अनर्थकौ ।१।४।९३। उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधात्गतिर्गताविति निघातो न । ॥ सुः पूजायाम् ।१।४।९४। सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किम् । सुषिक्तं किं तवाऽत्र । क्षेपोऽयम् । ॥ अतिरतिक्रमणे च ।१।४।९५। अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान् कृष्णः । ॥ अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु ।१।४।९६। एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः । संभावनायां लिङ् । तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन संबध्यते । सर्पिष इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसंबन्धे । इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम । द्वितीया तु नेह प्रवर्तते । सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात् ॥ अपि स्तुयाद्विष्णुम् । संभावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः ॥**

द्योतनमर्थः । सबन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति ॥—**भक्तो विष्णुं प्रती**ति । विष्णोर्भक्तेश्च विषयविषयिभावः प्रत्यादिद्योत्यः । भक्तः कश्चित् प्रकार प्राप्त इत्यर्थः ॥—**लक्ष्मीर्हरिं प्रती**ति । लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः सबन्ध. ॥—**वृक्षंवृक्षमि**ति । इह वीप्सा द्विर्वचनेनैव द्योत्यते । प्रत्यादिशब्दस्तु क्रियया सबध्यते । कर्मण्येव द्वितीया । कर्मप्रवचनीयसज्ञया उपसर्गसज्ञाया बाधात् षत्व न, एतदर्थमेव लक्षणादयो विषयतयोपात्ता इति व्याख्यातमाकरे । 'पञ्चम्यपाङ्परिभिः' इति तु न भवति । वर्जनार्थेनापेत्यनेन साहचर्यात् ॥—**परिषिञ्चती**ति । सर्वतः सिञ्चतीत्यर्थः । 'उपसर्गात्सुनोति–' इति षत्वम् ॥—**ममाभिष्यादि**ति । मम भागः स्यादित्यर्थ । प्राञ्चस्तु मामभिष्यादिति प्रत्युदाहरन्ति, तत्र मा प्राप्नुयादित्यर्थः । उपसर्गवशेनास्ते. सकर्मकत्वान्मामिति द्वितीया । अत्र च मम भाग इत्यर्थतः पर्यवसानात् 'अभागे' इति कर्मप्रवचनीयत्वे निषिद्धे 'उपसर्गप्रादुर्भ्याम्–' इति षत्वम् ॥—**कुतोऽध्यागच्छती**ति । इह प्रजयति, पराभवति, वृक्ष प्रति विद्योतते, इत्यत्र प्रादेर्विशेषद्योतकत्ववदभिपर्योरिह विशेषद्योतकत्वाभावादानर्थक्यं धात्वर्थमात्रद्योतकत्वेन त्वर्थकतास्त्येवेति बोध्यम् । 'गतिर्गतौ' इत्यत्र पदादित्यधिक्रियत इति पदात्परत्वसपत्तये कुत इत्युक्तम् ॥—**अतिरतिक्रमणे च** ॥ चकारेण पूजायामित्यनुकृष्यत इत्याह—**पूजायां चे**ति । अतिक्रमणमुचितादधिकस्यानुष्ठानम् । अर्थद्वयेऽप्येकमेवोदाहरति— **अति देवान् कृष्ण** इति । अन्ये तूदाहरन्ति—अतिसिक्तम्, अतिस्तुतमिति । बहुतर समीचीन सिक्त स्तुत चेत्यर्थ । बहुतरार्थे अतिक्रमण, समीचीने पूजेति विवेकः ॥ **अपिः पदार्थ**—॥—**सर्पिषोपि स्यादि**ति । सर्पिर्बिन्दु स्यादित्यर्थ ॥ अपे कर्मप्रवचनीयत्वे फलमाह—**अनुपसर्गत्वान्न ष** इति । उपसर्गसज्ञाभावात् 'उपसर्गप्रादुर्भ्यामस्ति.–' इतीह न प्रवर्तते इति भावः ॥—**संभावनायामि**ति । सभाव्यत इति सभावना । 'ण्यासश्रन्थो युच्' ॥ भवनक्रियासंभावनाया भवनस्य विषयत्वादाह—**तस्या एवे**ति । सभावनाया एवेत्यर्थः ॥—**कर्तृदौर्लभ्ये**त्यादि । कर्तृदौर्लभ्याद्भवनक्रियाया दौर्लभ्य द्योतयन्नपिशब्दो भवनक्रियावाचिना स्यादित्यनेन सबध्यत इत्यर्थः ॥—**अवयवावयविभावे**ति । सर्पिरवयवी बिन्दुरवयवः ॥—**इयमेवे**ति । बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यद्योतकत्वेवेत्यर्थ ॥—**द्वितीये**ति । 'कर्मप्रवचनीययुक्ते–' इत्यनेन विहिता ॥—**न त्वपिने**ति । न च बिन्दुना योगे तद्द्योतकापिशब्देनापि योगो जात एवार्थद्वारा शब्दाना योगस्याभ्युपगमादिति शङ्क्यम् । अपिशब्दस्य बिन्दुद्योतकत्वाभावात् । कथ तर्हि बिन्दुप्रतीतिरिति चेत् । शृणु–अपिना द्योत्यं भवनदौर्लभ्यमेव कर्तृदौर्लभ्यं क्षिपति । कर्त्ता त्विह बिन्दुरेवेति स प्रतीयते । अत एवापिशब्दबलेन गम्यमानस्येत्युक्त, न त्वपिना गम्यमानस्येति ॥ —**उक्तत्वादि**ति । उक्तप्रायत्वादित्यर्थ । अपिशब्दः स्यादित्यनेन सबध्यत इत्युक्ते स्यादित्यस्यापिना योगो न तु सर्पिषा-इत्यर्थपर्यवसानात् ॥—**अपि स्तुयादि**ति ॥ अवाङ्मनसगोचर विष्णुमपि स्तुयादित्यधिकोक्ति । एतादृशस्यान्यदीयस्तवने सामर्थ्यमस्तीत्यत्र कि वक्तव्यमिति भावः ॥ इह सभावनाद्योतको पिशब्दः, पूर्वत्र तु सभावनाविषयदौर्लभ्य-

---

१ वृक्ष वृक्षमिति—वृक्षादीनां सेचने कर्मत्वेऽपि तत्त्वेनाविवक्षाया कर्मप्रवचनीययुक्तत्वाद्द्वितीया । २ सुसिक्तमिति—संकगतपूज्यत्वद्योतकः सुः, क्रियापूज्यत्वकृते तत्तक्रियाकर्तुः पूज्यत्वे गम्ये एवैषा सज्ञा । अत एव सुषिक्त किं तवेत्यत्र न । ३ पदार्थेति—पदस्याप्रयुज्यमानस्यार्थः पदार्थः । ४ अपिशब्दबलेनेति—तदुक्त वृत्तिकृता 'मात्राबिन्दु.स्तोकमित्यस्यार्थेऽपिर्वर्तते' इति । ५ नत्वपिनेति—बिन्दुना योगेऽप्यपिद्योत्यसबन्धेनानन्वय इत्यर्थः । कर्मप्रवचनीयद्योत्यसंबन्धप्रतियोगित्वमेव तद्युक्तत्वम्, प्रकृते चापिद्योत्यसबन्धस्य बिन्दुः प्रतियोगी न सर्पिरिति भावः ।

अपि स्तुहि । अन्ववसर्गः कामचारानुज्ञा ॥ धिग्देवदत्तमपि स्तुयाद्वृषलम् । गर्हा । अपि सिञ्च अपि स्तुहि । समुच्चये । ⧗ **कालाध्वनोरत्यन्तसंयोगे** ।२।३।५। इह द्वितीया स्यात् । मासं कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः । अत्यन्तसंयोगे किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः । ⧗ **स्वतन्त्रः कर्ता** ।१।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । ⧗ **साधकतमं करणम्** ।१।४।४२। क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् । तमप्ग्रहणं किम् । गङ्गायां घोषः । ⧗ **कर्तृकरण-**

---

द्योतक इति महान् भेदः । 'उपसर्गात्सुनोति–' इत्यादिना षत्वं न भवति । कर्मप्रवचनीयसज्ञया उपसर्गसज्ञाया बाधात् । एवमुत्तरत्रापि बोध्यम् ॥—**अपि सिञ्च अपि स्तुहीति । सिञ्च स्तुहि चेत्यर्थः** ॥—**कालाध्वनोः**—॥ अन्तं विराममतिक्रान्तोऽत्यन्तः, स चासौ सयोगश्चात्यन्तसयोगः, निरन्तरसंनिकर्ष इत्यर्थः । केनेत्याकाङ्क्षायां गुणक्रियाद्रव्यैरित्यौचित्याद् बोध्यम् ॥—**द्वितीया स्यादि**ति । श्रुतत्वात्कालाध्ववृत्तिभ्यामेव । स्वरूपग्रहणं त्विह न भवति । 'कालाः,' 'अत्यन्तसंयोगे च' इति समासविधायके 'कालाः' इति बहुवचननिर्देशेन द्वितीयाविधौ स्वरूपविधिर्नेति ज्ञापनात् । अत एव मासप्रमितः मुहूर्तसुखमिति द्वितीयासमासविधावुदाहरिष्यति ॥—**मासं कल्याणी**त्यादि । अकर्मकधातुभिर्योग एव देशकालादीनां कर्मसंज्ञाविधानान्नेह 'कर्मणि द्वितीया' इति द्वितीया प्राप्नोतीति भावः ॥—**मासस्य द्वि**रिति । 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इत्यनेन षष्ठीति प्राञ्चः ॥ तन्न । तत्र शेषग्रहणानुवृत्त्या द्विरह्नो भोजनमिति कृदन्तेन सह समासनिवृत्तेरेव फलत्वात् । तस्मादिह 'षष्ठी शेषे' इति सूत्रेणैव षष्ठी भवत्यन्तरङ्गत्वादित्याहुः ॥ अन्यार्थमारब्धस्यापि 'कृत्वोऽर्थप्रयोगे' इतिसूत्रस्य द्विरह्नो भुङ्क्त इत्यत्र विशेषविहितत्वात्प्रवृत्तौ बाधकं नास्तीति केचित् ॥ ॥ इति द्वितीया ॥ ॥ **स्वतन्त्रः कर्ता** ॥ प्रधानीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यम् । आह च—'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते' इति । स्थाल्यादीनां वस्तुतः स्वातन्त्र्याभावेऽपि स्थाली पचति काष्ठानि पचन्तीत्यादिप्रयोगोऽपि साधुरेवेति ध्वनयति ॥—**विवक्षितोऽर्थ** इति ॥—**साधकतमं करणम्** ॥—**प्रकृष्टे**ति । यद्व्यापारानन्तरं फलनिष्पत्तिस्तत्प्रकृष्टम् । उक्तं च—'क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्' । विवक्ष्यत इत्यनेन स्थाल्यादीनामपि करणत्वमस्तीति सूचितम् । आह च—'वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् । स्थाल्या पचत इत्येषा विवक्षा दृश्यते यतः' इति । अय भाव. । कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कं च वस्तुविशेषे विशेषणविशेष्यभाववन्न नियतम्, किंतु वैवक्षिकम् । न हि 'गौः सर्वं प्रति गौरेव न तु कंचित् प्रत्यगौः' इतिवद्विशेषणं सर्वं प्रति विशेषणमेवेति वक्तुं शक्यम् । तथा च कया धातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने 'प्रकृतधातुव्यक्त्युपात्तव्यापाराश्रयतया विवक्षितः कर्ता, व्यापारव्यधिकरणफलाश्रयः कर्म, कर्तृकर्मद्वारकसबन्धेन व्यापारस्य फलस्य वा आश्रयोऽधिकरणम्' इति स्थितम् । पच्यर्थो व्यापारश्चानेकधा । एवं च पचेरधिश्रयणतण्डुलावपनैधोपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्ता, ज्वलनतात्पर्यकत्वे एधाः कर्तारः, तण्डुलधारणादिपरत्वे स्थाली कर्त्री, अवयवावयविभावादिपरत्वे तण्डुलाः कर्तारः, स्थाल्या पचतीत्यत्र तृतीयोपात्तव्यापाराश्रयोऽपि स्थाली करणमेव न तु कर्त्री, देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात्, तथा आदिखादिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्ता, तस्मिन्नेवार्थे भक्षयतिनोपात्ते प्रयोज्यः कर्म, अधिपूर्वैः शीङादिभिरुपात्तेऽर्थे आधारः कर्म, केवलैरुपात्ते अधिकरणमित्यादि ज्ञेयम् । एतेन ज्ञानस्य स्वप्रकाशत्वे कर्तृकर्मविरोध इति केषांचिदुक्तिः परास्ता । यद्धातूपात्तक्रियायां यदा यस्य स्वातन्त्र्यं विवक्ष्यते तदा तत्क्रियायां स कर्ता, यदुपात्तया कर्तुः क्रियया यदा आप्तुमिष्टतमत्वेन यद्विवक्ष्यते तदा तत् कारकं तत्क्रियायां कर्मत्वंव शब्दविशेषोपाधिकस्य कर्तृत्वादेः प्रत्यक्षे उक्तिसंभवाभावात् ॥ यत्तु केचित्परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वं चेद् वृक्षात्पर्णं पततीत्यादौ स्वसमवेतक्रियाजन्यविभागादिफलशालिनि कर्तर्यतिव्याप्त्यभावेऽप्यपादानेऽतिव्याप्तिः स्यादेव । अतश्च धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्येवाभ्युपगन्तव्यम् । एव च सति ग्रामं गच्छतीत्यादिसकर्मकेषु गमनजन्यसंयोगादाविष्टानुरोधेन धात्वर्थतावच्छेदकत्वेऽभ्युपगतेऽपि वृक्षात्पततीत्याद्यकर्मकेषु पतनादिजन्यविभागादौ तदवच्छेदकत्वाकल्पनान्नापादानेऽतिव्याप्तिः । नवा ग्रामं गच्छतीत्यादौ कर्तर्यतिव्याप्तिः, संयोगादिफलजनकीभूतधात्वर्थस्य परसमवेतत्वविशेषणात्कर्मत्वेनाभिमतं यत्तद्भिन्नस्य परशब्देनात्र विवक्षितत्वादित्याहुः ॥ तदप्येतेन प्रत्युक्तम् । ग्रामं गमयति देवदत्तमित्यादौ गन्तर्यव्याप्तेः । णिजर्थप्रेरणाजन्यप्रयोज्यव्यापारे गमनादौ धात्वर्थतावच्छेदकत्वाभावात् । तत्त्वाभ्युपगमे तु देवदत्तेन पाचयतीत्यादौ प्रयोज्यकर्तर्यतिव्याप्तेः । 'गतिबुद्धि–' इत्यादिशास्त्राभ्युपगमं विना क्वचित् प्रयोज्यकर्तरि कर्मत्वं, क्वचित्तु कर्तृत्वमिति निवारयितुमशक्यत्वात् । 'हृक्रोरन्यतरस्याम्' इति शास्त्रमन्तरेण हारयति वा कटं भृत्येन भृत्यमित्यत्र वैकल्पिककर्मत्वस्य दुरुपपादत्वाच्च । एतादृशेषु वैयाकरणोक्त्यैव निर्वाह इति चेत् ।

---

१ कालेति—अत्यन्तसंयोगश्च गुणक्रियाद्रव्यवदभावस्यापि । अत एव 'मासं भोजनाभाव' इति सिद्ध्यति । २ क्रियायामिति—एतच्च कारकाधिकाराल्लभ्यते ।

**योस्तृतीया** ।२।३।१८। **अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली ॥ * प्रकृत्यादि-भ्यउपसंख्यानम् ॥ प्रकृत्या चारुः। प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। समेनैति। विषमेणैति। द्विद्रोणेन धान्यं**

---

तर्हि 'आकडारादेका सञ्ज्ञा' 'या परानवकाशा च' इत्युक्तत्वान्निरवकाशया अपादानसंज्ञया सावकाशायाः कर्मसंज्ञाया बाधाभोक्तातिव्याप्तिरिति किमनेन धात्वर्थतावच्छेदकेत्यादिपरिश्रमेण ॥ स्यादेतत् 'आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना' इत्यादिप्रयोगः कथं संगच्छते, एकस्यैव वस्तुनो युगपदेकक्रियानिरूपितकर्तृत्वकर्मत्वादेरसंभवात्, परया कर्तृसंज्ञया कर्मकरणादिसंज्ञाया बाधात्। नैष दोषः। अहङ्काराद्युपाधिभेदेनात्मनोऽपि भेदमाश्रित्यात्मानमात्मना हन्तीत्यादिप्रयोगस्याकरे समर्थितत्वात् ॥ ननु 'साधक करणम्' इत्येवास्तु, कारकाधिकारादिह कारकमिति वर्तते साधक कारकं हि पर्यायः, तथा चोभयोपादानेन प्रकर्षो लभ्यत इत्याशयेन पृच्छति—**तमब्ग्रहणं किमि**ति ॥ इतरस्तु कारकप्रकरणे गौणमुख्यन्याय एतत्सूत्रादन्यत्र न प्रवर्तत इति ज्ञापनाय तमब्ग्रहणमित्याशयेन ज्ञापनफलमुदाहरति—**गङ्गायां घोष** इति। उक्तज्ञापनानङ्गीकारे त्विहाधिकरणसंज्ञा न स्यात्। तिलेषु तैल दधिनि सर्पिरित्यादौ मुख्याधारे तस्याश्चरितार्थत्वादिति भावः ॥ अत्र व्याचख्युः—यदा च तीरधर्म आधारत्व सामीप्यात् प्रवाहे उपचर्यते तदेद प्रयोजन, यदा तु गङ्गाशब्द एव तीरे वर्तते तदा तु न प्रयोजनं, तीरस्य मुख्याधारत्वात्। तत्राद्यपक्षे विभक्तिर्लाक्षणिकी द्वितीये तु प्रकृतिर्लाक्षणिकीत्यादि॥—**रामेणे**ति ॥ यद्यपि विभक्त्युपस्थितानां कारकाणां क्रियां प्रति विशेषणतैव, तथापि कृदुपस्थितानां विशेष्यतैव। 'सत्त्वप्रधानानि नामानि' इत्युक्तेः। धातूपस्थाप्ययोः फलव्यापारयोर्हन्यत इत्यादिकर्माख्यातसमभिव्याहारे विशेषणविशेष्यभावव्यत्यासाभावेऽपि हत इत्यादिकर्मकृत्समभिव्याहारे व्यत्यासोऽस्त्येव। तथा च रामनिष्ठो यो व्यापारो धनुराकर्षणादिस्तद्विषयीभूतो यो बाणव्यापारः शरीरभेदनादिस्तत्साध्यप्राणवियोगाश्रयो वालीति वाक्यार्थः। वालिनं हन्ति, वाली हन्यत इत्यादौ तु वालिनिष्ठप्राणवियोगानुकूलो यः शरीरभेदनादिर्बाणव्यापारस्तद्विषयको रामनिष्ठधनुराकर्षणादिव्यापार इत्यर्थो बोध्यः ॥ अत्रेदमवधेयम्—'फलव्यापारयोर्धातुराश्रये तु तिङ' स्मृतः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।' इह धातुः स्मृत इत्यन्वयः। वाचकत्वेनेति शेषः। 'आश्रये तु तिङः' इत्यत्र विभक्तिविपरिणामेन स्मृता इति सबध्यते। वाचकत्वेनेति पूर्ववत्। तिङ इत्युपलक्षण द्वितीयादीनामपि आश्रयमात्रार्थकत्वात् ॥ नन्वेवमाधारार्थकत्वे द्वितीयातृतीयासप्तमीनां सांकर्यं स्यात्। मैवम्। निरूपकभेदेनाधारभेदात् फलनिरूपिताधारभेदो द्वितीयार्थः। व्यापारनिरूपितः फलनिरूपितश्च सप्तम्यर्थ इति ह्यभ्युपगम्यते ॥ फले प्रधानमिति। एतच्च प्रायिकम्। कर्मकृत्समभिव्याहारे तु व्यत्यासोऽस्त्येवेति उक्तत्वात्। 'हरिं भजति देवदत्तः' इत्यादौ तु व्यापारस्य प्राधान्यमस्त्येव। प्रकृतिप्रत्ययार्थयोर्हर्याधारयोर्देवदत्ततिङ्वाच्याधारयोश्चाभेद इह संसर्गः। तथा च हर्याधारिका या प्रीतिस्तदनुकूल एकदेवदत्ताधारको वर्तमानो यो व्यापार इति वाक्यार्थः। न चाधारतैव वाच्येति मन्तव्यम्। तन्निष्ठधर्मस्याधारतात्वस्य वाच्यतावच्छेदकत्वापत्त्याऽतिगौरवात्। 'कर्मणि द्वितीया' इत्यादिसूत्रस्वरसभङ्गापतेश्च। अत एव भाष्यकारोऽप्याह–'सुपां कर्मादयोऽप्यर्थाः सख्या चैव तथा तिङाम्' इति। अनभिहिते किम्। हरिः करोति। पाचकः। कर्तरि ण्वुल्। शाब्दिकः। 'शब्दर्दुर करोति' इति ठक्। कृतं विश्वं येन कृतविश्वः, विश्वकर्मककृत्याश्रय इत्यर्थः। जीवन्त्यनेन जीवनः। करणे ल्युट् ॥—**प्रकृत्यादिभ्य** इति। आकृतिगणोऽयम्। तेन 'नाम्ना सुतीक्ष्णश्चरितेन दान्त' इत्यादि सिद्धम् ॥—**चारुरि**ति। अभिरूप इत्यर्थः। क्रियाया अश्रवणात् कर्तृकरणयोरभावात् षष्ठीह प्राप्ता। एतच्च गम्यमानकरोतिक्रियाकरणत्वात्सिद्धं, करणान्तरव्युदासाय हि प्रकृतेरेव करणत्व विवक्षितम्। स्वभावेनायमभिरूप कृतो न त्वलङ्कारादिनेत्यर्थात् ॥—**प्रायेण याज्ञिक** इति। एतदपि गम्यमानज्ञानक्रियां प्रति करणत्वात्सिद्धम्। आचारादिबाहुल्येन याज्ञिकोऽयमिति जनैर्ज्ञायत इत्यर्थात् ॥—**गोत्रेण गार्ग्य** इति। गार्ग्योऽस्य गोत्रमित्यर्थः। प्रथमात्र प्राप्ता, गोत्रेणाहं ज्ञाये इत्यर्थादिहापि तृतीया सिद्धा ॥—**समेने**त्यादि। सममेतीत्याद्यर्थे समविषमाभ्यां कर्मणि द्वितीया प्राप्ता। इहापि तृतीया सिद्धा, पथोऽपि गमने करणत्वाभ्युपगमात् ॥—**द्विद्रोणेने**ति। द्वयोर्द्रोणयो. समाहारो द्विद्रोणम्। पात्रादित्वात् स्त्रीत्वाभावः। द्रोणद्वयसबन्धिधान्यमित्यर्थः। इह षष्ठी प्राप्ता। द्विद्रोणपरिमितधान्यार्थे मूल्ये द्विद्रोणशब्दः, तस्य चक्रियां प्रति करणत्वमितीहापि तृतीया सिद्धेति दिक् ॥—**चादि**ति ॥ करणशब्दानुवृत्त्या 'परिक्रयणे संप्रदानमन्यतरस्याम्' इत्युत्तरसूत्रस्थान्यतरस्यांग्रहणापकर्षणेन वा सञ्ज्ञयोः पर्यायत्वे लब्धे चग्रहणं समुच्चयार्थम्। तेन मनसा दीव्यतीति मनसादेव इत्यत्र कर्मण्यण् करणे तृतीया चोभयं युगपत्सिध्यति। 'मनसः संज्ञायाम्' इत्यलुक् ॥ किं च अक्षैर्देवयते देवदत्तो यज्ञदत्तेनेत्यत्र सकर्मकत्वाद् अणि कर्तुर्णौ 'गतिबुद्धि–' इत्यनेन कर्मत्वं न, 'अणावकर्मकात्–' इति परस्मैपदमपि भवति। ननु कर्मकरणसंज्ञासमावेशस्य मनसादेव इत्यत्र कृतार्थत्वादक्षान्दीव्यतीत्यत्र परत्वात्तृतीयैव स्यान्न तु द्वितीयेति चेत्। अत्राहुः—कार्यकालपक्षे 'कर्मणि द्वितीया' इत्यत्र यदस्योपस्थानं

---

१ प्रकृत्यादिभ्य इति—अथ यथायथ सर्वविभक्त्यपवादः।

**क्रीणाति । सुखेन दुःखेन वा यातीत्यादि । दिवः कर्म च ।१।४।४३। दिवः साधकतमं कारकं कर्मसंज्ञं स्याच्चात्करणसंज्ञम् । अक्षैरक्षान्वा दीव्यति । अपवर्गे तृतीया ।२।३।६। अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वाऽनुवाकोऽधीतः । अपवर्गे किम् । मासमधीतो नायातः । सहयुक्तेऽप्रधाने ।२।३।१९। सहार्थेन युक्ते अप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता । एवं साकंसार्धसमंयोगेऽपि । विनापि तद्योगं तृतीया । वृद्धोयूनेत्यादिनिर्देशात् । येनाङ्गविकारः ।२।३।२०। येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । अक्ष्णा काणः । अक्षिसंबन्धिकाणत्वविशिष्ट इत्यर्थः । अङ्गविकारः किम् । अक्षि काणमस्य । इत्थंभूतलक्षणे ।२।३।२१। कंचित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः । संज्ञोऽन्यतरस्यां कर्मणि ।२।३।२२। संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा संजानीते । हेतौ ।२।३।२३। हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम् । करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च । दण्डेन घटः । पुण्येन दृष्टो हरिः । फलमपीह हेतुः ।**

तस्यानवकाशत्वाद् द्वितीयेति ॥ स्यादेतद् । दीव्यन्ते अक्षा इत्यत्राभिहितेऽपि कर्मणि करणत्वस्यानभिधानात्तृतीया स्यात्, तथा देवना अक्षा इत्यत्र ल्युटा करणत्वस्याभिधानेऽपि कर्मणोऽनभिधानाद् द्वितीया स्यात् । मैवम् । एकैव ह्यत्र शक्तिः संज्ञाद्वययोगिनी, तथा चैकस्या शक्तावभिहितायामन्यस्या अप्यभिधानादुभयत्राप्यभिधानमेव, न त्वनभिहितत्वम् ॥—**सहयुक्ते**—॥ 'सहेनाप्रधाने' इत्येव वाच्ये युक्तग्रहणादर्थग्रहणमित्याह—**सहार्थेने**ति । सहार्थकशब्देन सहसाकसार्धमित्यनेनेत्यर्थः ॥ **पुत्रेणे**ति । पितुरेवागमनक्रियासवन्धः शाब्द. पुत्रस्य त्वार्थ इत्येतावतैव तत्प्राधान्यमुच्यते ॥ अप्रधानग्रहण त्यक्तु शक्यम् । न चैवं पितुरपि तृतीयापत्तिः, तत्र प्रातिपदिकार्थमात्रे अन्तरङ्गत्वात्प्रथमोपपत्तेः । न च यत्र प्रथमा न प्राप्नोति पुत्रेण सह पितुरागमनमित्यादौ तत्र प्रधानात् पितुरपि तृतीया स्यादतस्तद्वारणायाप्रधानग्रहणमावश्यकमिति वाच्यम् । कारकविभक्तेर्बलीयस्त्वात् 'कर्तृकर्मणोः कृति' इति षष्ठ्या एव तत्र प्रवृत्तेरिति दिक् ॥—**येनाङ्ग**—॥ येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयव एव गृह्यते, सनिधानात् । रा चार्थाद्विकृत एव । न ह्यविकृतेनावयवेन शरीरस्य विकारः सभवति तदेतदाह—**येनाङ्गेन विकृतेने**ति ॥—**अङ्गिन** इति । सूत्रेऽङ्गशब्द अर्शआद्यजन्त इति भाव' ॥ जटानामित्थंभूतलक्षणमुपपादयति—**जटाज्ञाप्ये**ति । जटाभिर्ज्ञाप्यं यत्तापसत्व तद्विशिष्ट इत्यर्थः ॥—**संज्ञो**—॥ 'ज्ञा अवबोधने' इत्ययमेव गृह्यते न तु 'जनी प्रादुर्भावे' इति, तस्याकर्मकत्वात् । इम प्राग्भागस्य ज्ञ इत्यस्याल्लोपोऽन इत्यल्लोपेन निष्पन्नतया लाक्षणिकत्वाच्चेत्याशयेनाह—**जानाते**रिति ॥—**संजानीत** इति । 'सम्प्रतिभ्यामनाध्याने' इति तङ् । कृद्योगे परत्वात् 'कर्तृकर्मणोः' इति षष्ठ्येव पितुः सज्ञाता । आध्याने तु पित्रा पितर वा सजानाति ॥ हरदत्तस्त्वाह—आध्याने परत्वाद् 'अधीगर्थ–' इति षष्ठी मातु' सजानातीति । तन्न । तत्र शेषाधिकारादिति मनोरमायां स्थितम् ॥—**हेतौ** ॥ हेतुरिह लौकिकः फलसाधनीभूतो गृह्यते न तु 'तत्प्रयोजको हेतुश्च' इति कृत्रिम. । तस्य चकारेण कर्तृसज्ञाविधानात् कर्तृत्वादेव तृतीयासिद्धेरत आह —**हेत्वर्थे** इत्यादि ॥ ननु लौकिकहेतोरपि करणत्वादेव तृतीयासिद्धौ किमनेनेत्याशङ्क्य हेतुत्वकरणत्वयोर्भेदमाह—**द्रव्यादी**ति । आदिशब्देन गुणक्रिये ग्राह्ये । द्रव्यगुणक्रियानिरूपित निर्व्यापारव्यापारवृत्ति च यत्तद्धेतुत्वमित्यर्थः ॥—**करणत्वं त्वि**ति । क्रियामात्रनिरूपित व्यापारवद्वृत्ति च यत्तत्करणत्वमित्यर्थः । एव च हेतुकरणयोर्भेदादन्यतरेणान्यस्यान्यथासिद्धिर्न शङ्क्येति भावः ॥ उक्त च—'गव्यादिविषयो हेतु' कारक नियतक्रियम् । अनाश्रिते तु व्यापारे निमित्त हेतुरिष्यते' इति ॥ द्रव्यविषये हेतुत्वमुदाहरति—**दण्डेन घट** इति । दण्डहेतुको घट इत्यर्थः । अत्र हि व्यापारोऽस्तु वा मास्तु साक्षात् क्रियान्वयित्वाभावात् करणत्व नास्तीति भावः ॥ क्रियाविषये उदाहरणमाह—**पुण्येन दृष्ट** इति । पुण्यशब्देनेह परमापूर्वमुच्यते तस्य च हरिदर्शनरूपक्रियान्वयित्वसभवेऽपि व्यापारत्वाभावान्न करणत्वमिति भावः । यदा यागादिकमेव पुण्यशब्देन विवक्ष्यते, तदा तस्य व्यापारवत्त्वमस्त्येवेति 'कर्तृकरणयोः–' इत्यनेनैव तृतीया सिद्धा । गुणविषये तु पुण्येन गौरवर्ण इत्याद्युदाहार्यम् । जटाभिस्तापस इत्यादौ तु लक्ष्यलक्षणभावविवक्षायां हेतुत्वाविवक्षणादनेनाप्राप्ता तृतीयेति 'इत्थभूतलक्षणे' इत्यारब्धमित्याहुः ॥ अत्र केचिदुत्प्रेक्षन्ते—द्रव्यादिसाधारणत्वाद् हेतुत्वस्य 'हेतौ' इत्यनेनैव बाणेन हत इत्यादिप्रयोगसिद्धेः 'कर्तृकरणयोः–' इति सूत्रे करणग्रहण त्यक्तु शक्यं, करणसंज्ञा तु आवश्यकी 'क-

१ नायात इति—अनेन फलाप्राप्तिरेव स्फुटमुच्यते । २ सहार्थेनेति—सहार्थः साहित्य तच्च स्वसमभिव्याहृतक्रियादिसमानकालिकतत्क्रियादिमत्त्वं, क्वचिच्च समानदेशक्रियावत्त्वम् । अत एव माषवापोत्तर तत्रैव क्षेत्रे तिलवापे तिलैः सह माषान्वपतीति भवति । ३ अक्ष्णा काणइति—यद्यपि अक्ष्येव काण तथापि अवयवधर्मस्य समुदाये आरोपात् शरीरे तदवच्छिन्ने च व्यवहारो निरूढः । ४ काणत्वेति—लेशतोऽपि दर्शनसामर्थ्यहीनत्वं तत्त्वम् । ५ जटाभिरिति—यद्यपि जटाभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियाकरणत्वेनैव तृतीया सिद्धा तथापि करणत्वाविवक्षाया लक्ष्यलक्षणभावविवक्षायां तृतीयासिद्ध्यर्थमिदम् ।

अध्ययनेन वसति । गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका । अलं श्रमेण । साध्यं नास्तीत्यर्थः । इह साधनक्रियां प्रति श्रमः करणम् । शतेनशतेन वत्सान्पाययति पयः । शतेन परिच्छिद्येत्यर्थः ॥ * **अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया ॥** दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति । **कर्मणा यमभिप्रैति स संप्रदानम् ।१।४।३२।** दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात् । **चतुर्थी संप्रदाने ।२।३।१३।** विप्राय गां ददाति । अनभिहित इत्येव । दानीयो विप्रः ॥ * **क्रियया यमभिप्रैति सोऽपि संप्रदानम् ॥** पत्ये शेते ॥ * **कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा ॥** पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।

---

रणाधिकरणयोश्च' इत्याद्यर्थमिति ॥ अन्ये तु क्रियासाधकतमं यत्तद्व्यापारवत्त्वेन विवक्षितं चेत् करणं नो चेद्धेतुः । द्रव्यसाधकतमस्य दण्डादेस्तु व्यापारवत्त्वेऽपि हेतुत्वमेव । एवं च रामेण बाणेन हत इत्यादौ हनने बाणादिर्निमित्तमित्येतावदेव यदा विवक्ष्यते, तदा 'हेतौ' इत्यनेनैव तृतीया । 'बाणव्यापारसाध्यप्राणवियोगाश्रयः' इत्येवं व्यापाराविष्टत्वेन विवक्षायां तु हेतुत्वाविवक्षणात् 'कर्तृकरणयोः–' इति करणे तृतीया आरब्धेत्याहुः ॥—**फलमपी**ति । एतच्च 'प्रलय.' इति सूत्रे कैयटे स्पष्टम् ॥—**अध्ययनेने**ति । तादर्थ्यविवक्षया चतुर्थ्यपि भवतीति चतुर्थ्या सहैव तृतीया विकल्प्यते । अध्ययनाय वसति ॥ अत्र केचित् परिष्कुर्वन्ति—अध्ययनेन वसतीत्यत्र दण्डहेतुको घट इतिवदध्ययनहेतुको निवास इत्यर्थस्वीकारेऽप्यत्र विशेषः । अध्ययनस्य फलेन सहाभेदः ससर्गः, उपकारकत्वेन सहनिरूपकता । ततश्च 'फलाभिन्नाध्ययननिरूपितोपकारकत्वाश्रयनिवसनानुकूलो व्यापार.' इत्यर्थः । 'दण्डेन घटः' इत्यत्र तु 'दण्डनिष्ठोपकारकत्वनिरूपितोपकार्यत्वाश्रयो घटः' इत्यर्थः । उपकार्यं हि साध्यम् । फलमपि तदेवेति ॥—**गम्यमानापी**ति । अपिशब्देन श्रूयमाणक्रिया समुच्चीयते । न केवलं श्रूयमाणैव क्रिया विभक्तौ प्रयोजिका, किं तु गम्यमानापीति भावः ॥—**साधने**ति । साध्यमित्यत्र प्रकृतिभूतो यो धातुस्तदर्थं प्रतीति भावः ॥—**अशिष्टे**ति । एतच्च 'दाणश्च सा चेच्चतुर्थ्यर्थे' इत्यनेन ज्ञाप्यत इति मनोरमायां स्थितम् ॥ केचिदिह परिष्कुर्वन्ति 'अशिष्टव्यवहार इत्यंशो वाचनिक एव । अन्यांशस्तु ज्ञापकसिद्ध' इति ॥—**दास्या संयच्छते** इति । 'दाणश्च सा चेत्–' इति तङ् । 'पाघ्राध्मा–' इति यच्छादेशः ॥—**कामुक** इति । 'लषपतपद–' इत्यादिना कमेरुकञ् ॥ इति तृतीया ॥ ॥

**कर्मणा**—॥ महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थम् । सम्यक् प्रदीयतेऽस्मै तत्सम्प्रदानमिति । अत एवाह—**दानस्ये**ति । दानक्रियाकर्मणा कर्ता यमभिप्रैति संबध्नाति संबन्धुमीप्सति वा तत् कारकं सम्प्रदानसंज्ञकमित्यर्थः । तेन 'अजां नयति ग्रामम्, हस्तं निदधाति वृक्षे' इत्यादौ नातिप्रसङ्गः । दानं चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ न भवति । तत्र हि ददातिर्भाक्तः । एतच्च वृत्तिमतम् । भाष्यमते तु नान्वर्थतायामाग्रहः 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इत्यादिप्रयोगात् । रजकस्य ददातीति प्रयोगस्तु शेषत्वविवक्षायां भविष्यति । न चैवमजां नयति ग्राममित्यादावतिप्रसङ्गः शङ्क्यः । अजां प्रति ग्रामस्य शेषित्वाभावात् । यमभिप्रैतीत्युक्त्या हि यमिति निर्दिष्टस्य शेषित्वं कर्मणश्च शेषत्वं लभ्यते, गां प्रति तु विप्रस्य शेषित्वमस्तीति भवति तस्य सम्प्रदानसंज्ञा ॥ अत्र अभि प्र एतीत्येतत्पदत्रयं, न तु समास. । 'उदात्तवता गतिमता च तिङा गते. समासो वक्तव्य.' इति वार्तिकस्य छन्दोविषयत्वादिति हरदत्तः । भाषाविषयत्वे तु यत् प्रकुरुते इत्यादौ समासत्वात्सोरुत्पत्तिः स्यात् । लिङ्गसर्वनामनपुंसकतामभ्युपेत्य 'स्वमोर्नपुंसकात्' इति लुकि कृतेऽपि 'ह्रस्वो नपुंसके' इति ह्रस्वः स्यात्, यत् प्रकुर्वीरन्नित्यत्र तु नलोप. स्यात्, तस्मादुक्तवार्तिकस्य च्छन्दोविषयत्वं युक्तमेव ॥—**दानीय** इति ॥ बाहुलकात्सम्प्रदाने अनीयर् ॥—**क्रियये**ति । क्रियायाः कृत्रिमकर्मत्वाभावात् तया अभिप्रेयमाणस्य सूत्रेण संज्ञा न प्राप्नोतीति वचनम् । एतच्च 'क्रियार्थोपपदस्य च कर्मणि स्थानिन.' इत्यनेन सिद्धम् । पत्ये शेते इत्यादौ पतिमनुकूलयितुं शेते इत्याद्यर्थाभ्युपगमे बाधकाभावात् । भाष्यकारमते तु 'कर्मणा यमभिप्रैति' इति सूत्रेणैव सिद्धम् 'सदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं कर्म' इति तदुक्तत्वात् । नचैवमपि ददातिकर्मत्वाभावात् 'क्रियया यमभिप्रैति' इत्येतद्वचनं कर्तव्यमेवेति वाच्यम् । भाष्ये अन्वर्थसंज्ञात्वास्वीकारात् ॥ नन्वेवं कटं करोति, ओदनं पचतीत्यादावपि सम्प्रदानत्वप्रसङ्गस्तथा च वचनद्वयबलात् कर्मसम्प्रदानयोः पर्यायत्वे कटाय करोतीत्याद्यनिष्टप्रयोगोऽपि स्यादिति चेत् । अत्राहुः । पत्ये शेते इत्यकर्मकस्थले सावकाशायाः सम्प्रदानसंज्ञायाः निरवकाशया कर्मसंज्ञया बाधितत्वान्नैवानिष्टप्रसक्तिः । न चैवं 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ–' इति सूत्रमावश्यकमेवेति तत्प्रत्याख्यानं भाष्यस्य न संगच्छत इति वाच्यम् । भाष्ये तत्प्रत्याख्यानस्य प्रौढिवादमात्रत्वादिति दिक् ॥ स्यादेतत्—दानस्य तदर्थत्वात्तादर्थ्ये चतुर्थी सिद्धैव किमनया संप्रदानसंज्ञया । मैवम् । दानक्रियार्थं हि सम्प्रदानं, न तु दानक्रिया तदर्था । कारकाणां क्रियार्थत्वात् ॥ **कर्मणः करणसंज्ञा** इत्यादि । छान्दसमेतत् । अत एवेदं सुब्व्यत्ययेन सिद्धत्वादिति प्रत्याख्यायते ॥

---

१ अशिष्टेति—अशिष्टानां सकीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधकप्रयोगे प्रत्यासत्त्या यत्संबन्धेन व्यवहारस्य सकीर्णाचारत्वं तद्वाचकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः । २ दास्येति—दासीसंप्रदानकं रतिफलकं दानमिति बोधः । ३ दानस्येति—दाधात्वर्थस्येत्यर्थः । इदमुपलक्षणं क्रियामात्रस्य ।

॥ रुच्यर्थानां प्रीयमाणः । १।४।३३। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः संप्रदानं स्यात् । हरये रोचते भक्तिः । अन्यकर्तृकोऽभिलाषो रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । प्रीयमाणः किम् । देवदत्ताय रोचते मोदकः पथि । ॥ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।१।४।३४। एषां प्रयोगे बोधयितुमिष्टः संप्रदानं स्यात् । गोपी स्मरात्कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा । ज्ञीप्स्यमानः किम् । देवदत्ताय श्लाघते पथि । ॥ धारेरुत्तमर्णः ।१।४।३५। धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय धारयति मोक्षं हरिः । उत्तमर्णः किम् । देवदत्ताय शतं धारयति ग्रामे । ॥ स्पृहेरीप्सितः ।१।४।३६। स्पृहयतेः प्रयोगे इष्टः संप्रदानं स्यात् । पुष्पेभ्यः स्पृहयति । ईप्सितः किम्। पुष्पेभ्यो वने स्पृहयति । ईप्सितमात्रे इयं संज्ञा । प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञा । पुष्पाणि स्पृहयति । ॥ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।१।४।३७। क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति । द्रुह्यति । ईर्ष्यति । असूयति । यं प्रति कोपः किम् । भार्यामीर्ष्यति मैनामन्योद्राक्षीदिति । क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्याऽक्षमा । असूया गुणेषु दोषाविष्करणम् । द्रुहादयोऽपि कोपप्रभावा एव गृह्यन्ते । अतो विशे-

—**रुच्यर्थानाम्**—॥ रुचिरर्थो येषां ते रुच्यर्थास्तेषाम् ॥—**प्रीयमाण** इति। 'प्रीञ् तर्पणे' अस्मात् कर्मणि लट् ॥—**हरये रोचत** इति। हरिं प्रीणयतीत्यर्थः। कर्मसञ्ज्ञायां प्राप्तायां वचनम्। यद्यपि रुचिर्दीप्तावपि पठ्यते, तथापीह दीप्तिर्न विवक्षितेत्याह—**अन्यकर्तृकोऽभिलाष** इति। अत एवादित्यो रोचते दिक्षु इत्यत्र दीप्त्यर्थे संज्ञा न भवति ॥—**हरिनिष्ठप्रीतेरि**ति। एतेन अन्यकर्तृकत्वमिह प्रीत्याश्रयान्यकर्तृकत्वमित्युक्त भवति ॥—**मोदकः पथी**ति। देवदत्तस्येव प्रीयमाणपदाभावे तु पथोऽपि स्यादिति भावः ॥—**श्लाघह्नुङ्**—॥ 'श्लाघृ कत्थने' 'ह्नुङ् अपनयने' 'ष्ठा गतिनिवृत्तौ' 'शप उपालम्भे' ॥—**कृष्णाय श्लाघत** इति। कृष्णं स्तौतीत्यर्थः। कर्मत्वे प्राप्ते वचनमिदम् ॥ अन्ये त्वाहु। कृष्णाय आत्मानं परं वा श्लाघ्यं कथयतीत्यर्थ इति। अस्मिंस्तु पक्षे शेषषष्ठ्या प्राप्ताया वचनम् ॥—**ह्नुत** इति। सपत्नीभ्य. कृष्णं ह्नुवाना तमेवार्थं कृष्णं बोधयतीत्यर्थः ॥ यस्य कस्यचित् ह्नुते बोधयतीति वा ॥—**तिष्ठत** इति। स्थित्या स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः। 'प्रकाशनस्थेयाख्ययोश्च' इति तङ् ॥—**शपत** इति। उपालम्भेन स्वाभिप्राय कृष्णं बोधयतीत्यर्थ. ॥—**धारेरुत्तमर्णः** ॥ 'धृङ् अवस्थाने'। हेतुमण्ण्यन्तः। उत्तमर्णो धनस्वामी। अर्तेः क्तः। ऋणम्। 'ऋणमाधमर्ण्ये' इत्यत्र व्यवहारविशेषोपलक्षणार्थमाधमर्ण्यग्रहणमिति व्याख्यानादुत्तमर्णेऽपि निष्ठानत्व भवति। अस्मादेव निपातनादत्र बहुव्रीहौ निष्ठान्तस्य परनिपातो बोध्यः ॥—**भक्ताये**त्यादि। इह भक्त उत्तमर्णो हरिरधमर्णः। धृङोऽकर्मकत्वादणौ कर्तुर्मोक्षस्य णौ कर्मत्वम् ॥—**शतं धारयति ग्राम** इति। परत्वादिहाधिकरणसज्ञा भविष्यतीति चेदुत्तमर्णेऽपि तर्हि हेतुसज्ञा स्यादिति हरदत्तः ॥ ततश्चोत्तमर्णग्रहणाभावे हेतुसज्ञाया इवाधिकरणसज्ञाया अप्ययमपवादः स्यात्तद्वारणाय उत्तमर्णग्रहणमिति भाव॥ एव च कृतेऽप्युत्तमर्णग्रहणे 'तत्प्रयोजको हेतुश्च' इति हेतुसञ्ज्ञाया प्राप्ताया तद्बाधनार्थमिद सप्रदानसज्ञावचनमिति निष्कर्षमाहुः ॥ मनोरमायां तु षष्ठ्या प्राप्ताया इद वचनमिति स्थितम् ॥—**स्पृहेरीप्सितः** ॥ 'स्पृह ईप्सायां' चुरादावदन्त., तेन स्पृहयतीत्यत्र लघूपधगुणो न ॥—**परत्वादि**ति। तेन 'परम्परेण स्पृहणीयशोभम्' 'स्पृहणीयगुणैर्महात्मभि.' इत्यादौ कर्मण्यनीयर् सिध्यति। शेषत्वविवक्षाया तु 'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' इत्यत्र षष्ठ्यपि सिध्यतीति हरदत्तादयः ॥ वाक्यपदीयहेलाराजीयग्रन्थयोस्तु स्पृहयतियोगे कर्मसञ्ज्ञाया. शेषषष्ठ्याश्च बाधिकेय सप्रदानसञ्ज्ञेति स्थितम् ॥ युक्त चैतत्—'क्रियया यमभिप्रैति—' इत्यनेनैवेष्टसिद्धेः 'स्पृहेरीप्सितः' इत्येतत्सूत्रस्य हरदत्तादिमते वैयर्थ्यप्रसङ्गात्। तस्माद्वाक्यपदीयादिग्रन्थानुरोधेन 'परस्परेण स्पृहणीयशोभम्' इत्यादौ 'दानीयो विप्रः' इतिवद् बाहुलकात्सप्रदाने अनीयर् इति व्याख्येयम्। 'कुमार्य इव कान्तस्य' इत्यत्र तु त्रस्यन्तीत्येतदर्थतया कृतार्थस्य कान्तस्येति षष्ठ्यन्तस्य विपरिणामेन कान्ताय स्पृहयन्तीति व्याख्येयमिति केचित् ॥—**क्रुधद्रुह**—॥ 'क्रुध कोपे' 'द्रुह जिघांसायाम्' 'ईर्ष्य ईर्ष्यायाम्' 'असूयतिः कण्ड्वादियगन्तः'। एषामर्थ इवार्थो येषा धातूनामित्यर्थः ॥—**द्रोहोऽपकार** इति। 'द्रुह द्रोहे' इति पाठाभिप्रायेणोक्तं जिघांसा द्रोह एवेत्यर्थतोऽनुभाषण वा ॥—**अक्षमे**ति। परसपत्त्यसहनमित्यर्थः ॥ क्रुधद्रुहोरकर्मकत्वात्तद्योगे षष्ठी प्राप्ता। अन्ययोस्तु सकर्मकत्वाद् द्वितीया प्राप्ता ॥ ननु चित्तदोषार्थानामित्येवास्तु किं क्रोधादीनां विशिष्योपादानेनेति चेद्। अत्राहुः—द्वेषादावतिप्रसङ्गवारणाय विशिष्योपादानम्। तेन 'योऽस्मान्द्वेष्टि य च वय द्विष्मः' इत्यत्र चतुर्थी न भव-

१ अन्यकर्तृक इति—अभिलष्यनिकर्त्रपेक्षयान्यदभिलष्यतिकर्म तत्कर्तृक इत्यर्थः। हरिभक्तिमभिलष्यतीति प्रत्ययात् यत्किञ्चिद्विषयकप्रीत्यनुकूलव्यापाराश्रयोऽभिलष्यतेः कर्ता। यत्किञ्चिन्निष्ठप्रीत्यनुकूलः प्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्तेति भावः। २ श्लाघतेइति—श्लाघादीना स्तुत्यादिना बोधनमर्थः। ३ मोक्षमिति—मोक्षोऽप्यवश्यदेयत्वेन ऋण भवत्येव। ४ परत्वादिति—इदं सूत्र विषयतया क्रियाजनकत्वमात्रविवक्षायां चरितार्थमिति भावः। ५ भार्यामीर्ष्यतीति—नात्र भार्या प्रति कोपः, किंतु परैर्दृश्यमानां तां न सहते इत्येव। एव च अत्र न कोपजन्येर्ष्या, किं तु अन्यपुरुषदर्शनजन्या इति भावः।

षणं सामान्येन यं प्रति कोप इति। **क्रुधद्रुहोरुपसृष्टयोः कर्म** ।१।४।३८। सोपसर्गयोरनयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात्। क्रूरमभिक्रुध्यति। अभिद्रुह्यति। **राधीक्ष्योर्यस्य विप्रश्नः** ।१।४।३९। एतयोः कारकं संप्रदानं स्यात्। यदीयो विविधः प्रश्नः क्रियते। कृष्णाय राध्यति ईक्षते वा। पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः। **प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता** ।१।४।४०। आभ्यां परस्य श्रृणोतेर्योगे पूर्वस्य प्रवर्तनरूपव्यापारस्य कर्ता संप्रदानं स्यात्। विप्राय गां प्रतिश्रृणोति आश्रृणोति वा। विप्रेण मह्यं देहीति प्रवर्तितः प्रतिजानीत इत्यर्थः। **अनुप्रतिगृणश्च** ।१।४।४१। आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात्। होत्रेऽनुगृणाति प्रतिगृणाति। होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः। **परिक्रयणे संप्रदानमन्यतरस्याम्** ।१।४।४४। नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन् साधकतमं कारकं संप्रदानसंज्ञं वा स्यात्। शतेन शताय वा परिक्रीतः॥ *** तादर्थ्ये चतुर्थी वाच्या** ॥ मुक्तये हरिं भजति॥ *** कॢपि संपद्यमाने च** ॥ भक्तिर्ज्ञानाय कल्पते संपद्यते जायत इत्यादि॥ *** उत्पातेन ज्ञापिते च** ॥ वाताय कपिला विद्युत्॥ *** हितयोगे च** ॥ ब्राह्मणाय हितम्। **क्रियार्थोपपदस्य च कर्मणि स्थानिनः** ।२।३।१४। क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि

---

ति। तत्र ह्यनभिनन्दनं द्विषेरर्थः। अत एवाचेतनेष्वपि द्विषधातुः प्रयुज्यते। औषध द्वेष्टीति॥—**कोपप्रभवा एवे**ति। कथं तर्हि 'कुप्यसि कस्मैचिद्' इति। न हि कोपः कोपप्रभव॥ अत्र व्याचख्युः—कुपिरत्र द्रोहार्थ इति पत्ये शेते इतिवत् 'क्रियया यम्–' इत्येव सिद्धे क्रुधद्रुहोर्ग्रहण चिन्त्यप्रयोजनमित्याहु.॥—**राधीक्ष्योः**—॥ 'राध संसिद्धौ' 'ईक्ष दर्शने'। अनयोस्त्विह शुभाशुभपर्यालोचनमर्थस्तच्च प्रश्नपूर्वकमित्याशयेन विवृणोति—**पृष्टो गर्ग** इति। शुभाशुभरूपयोः कर्मणोर्धात्वर्थेनोपसंग्रहादकर्मकावेतौ। अत एव राध्यतीति श्यन् 'राधोकर्मकाद्वृद्धावेव' इति दिवादिषु वक्ष्यमाणेन गणसूत्रेणाकर्मकादेव तद्विधानात्। कृष्णसंबन्धि शुभाशुभमित्यर्थाभ्युपगमात् षष्ठ्या प्राप्तायां वचनमिदम्॥—**अनुप्रति**—॥ गृण इति श्नान्तस्यानुकरणशब्दात् षष्ठी॥ 'प्रत्याङ्भ्याम्–' इति पूर्वसूत्रे द्विवचननिर्देशात् प्रत्येकमेव धातुरावन्धि इति निर्धारिते तत्साहचर्यादिहापि प्रत्येकमेव रावन्धि इति सूचयन्नाह—**आभ्यां गृणातेरि**ति॥—**होत्रे** इति। कर्मत्वे प्राप्ते वचनम्॥—**परिक्रयणे**—॥ द्रव्यदानेनात्यन्तस्वीकारः क्रय. तस्य समीपे परिशब्द आचष्टे। अनियतकालात् क्रयणात् परिक्रयणस्य न्यूनकालत्वादित्याशयेनाह—**नियते**ति। भृत्या वेतनादिना॥—**तादर्थ्य** इति। तस्मै कार्यायेद तदर्थं कारण तस्य भावस्तादर्थ्यम्। ब्राह्मणादित्वात् ष्यञ्। 'कृत्तद्धितसमासेभ्य सबन्धाभिधान भावप्रत्ययेन' इति सिद्धान्तात् ष्यञा सबन्धोऽभिधीयते स च सबन्धोऽनेकविधो, न तु कार्यकारणभाव एव, तेन ब्राह्मणाय दधीत्याद्यपि सिद्धम्। ब्राह्मणस्य दध्यजन्यत्वेऽपि तत्संस्कार्यत्वात्। न चैव दधिशब्दादपि चतुर्थी स्यादिति शङ्क्य, सबन्धस्य द्विनिष्ठत्वेऽपि षष्ठीवद्विशेषणादेव भवतीत्याकरे अभ्युपगमात्। एव यूपाय दारु इत्यत्र दारुशब्दादपि न भवति 'हेतौ' इति तृतीयापि षष्ठीविषय एव भवतीति सापीह न भवति, किं तु प्रातिपदिकार्थे प्रथमैव। न चैतद्वार्तिकस्यावश्यकत्वे 'चतुर्थी सं-प्रदाने' इति सूत्र व्यर्थमिति भ्रमितव्यम्। हरये रोचते इत्याद्यर्थं तस्याप्यावश्यकत्वात्। विप्राय गामित्यत्रापि तादर्थ्ये चतुर्थ्याः प्राप्तिर्नास्तीति प्रागेवोक्तत्वाच्चेति दिक्॥ **कॢपी**ति। संपदादित्वाद्भावे क्विपि तदन्तात्सप्तमी। संपत्तिरिहाभूतप्रादुर्भावः, 'कॢप्यर्थकधातुप्रयोगे यः संपद्यते तत्र च विकारवाचकाच्चतुर्थी' इत्यर्थ.। स हि संपद्यते प्रादुर्भवति। तदुदाहरति—**भक्तिर्ज्ञानाये**ति। ज्ञानात्मना परिणमत इत्यर्थ.। प्रकृतिविकृत्योर्भेदविवक्षाया विकृतिवाचकाच्चतुर्थी। अभेदविवक्षायां तु परत्वात् प्रथमैव भक्तिर्ज्ञान कल्पते। यदा तु 'जनिकर्तु–' इति भक्तेरपादानत्व विवक्ष्यते, तदापि ज्ञानस्याभिहितकर्तृत्वात् प्रथमैव 'भक्तेर्ज्ञान कल्पते'॥ कॢपीत्यर्थग्रहणमित्याशयेनाह—**संपद्यत** इत्यादि॥ यद्यपि तादर्थ्ये चतुर्थ्येव भक्तिर्ज्ञानायेत्यादिप्रयोगाः सिध्यन्ति, तथापि परिणामरूपप्रकारकबोधार्थमिद वचनमित्याहु॥—**उत्पातेने**ति। प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः तेन ज्ञापितेऽर्थे वर्तमानाच्चतुर्थी वाच्येत्यर्थ॥—**वाताये**ति वातस्य। ज्ञापिकेत्यर्थः॥—**हिते**ति॥ चतुर्थीसमासविधानाज्ज्ञापकादेतल्लब्धमिति भावः॥ एव शुभयोगेऽपि चतुर्थी बोध्या॥—**क्रियार्थोपपद**—॥ क्रिया अर्थः प्रयोजन यस्याः सा क्रियार्था क्रिया उपपद यस्य। यद्यपि क्रियाया उपपदत्व न संभवति, तथापीह स्ववाचकशब्दद्वारा तद्बोध्यम्। क्रियाफल क्रियावाचकमित्यर्थ। क्रियावाचकस्यापि धातोरुपोच्चारितपदरूपोपपदत्व यद्यपि न संभवति सुप्तिङन्तस्यैव पदत्वात्, तथापीह क्रियावाचकप्रकृतिकमित्यर्थो विवक्षितः, तादृशमुपपद यस्य तुमुन्नन्तस्य तस्य कर्मणि चतुर्थी भवतीति निष्कृष्टोऽर्थ। 'तुमुन्ण्वुलौ क्रियायाम्–' इति सूत्रमहिम्ना क्रियार्थकमुपपद क्रियावाच्येव फलतीत्याशयेनाह—**क्रियार्था क्रिये**ति। स्थानिन इत्यस्यैवार्थकथनमप्रयुज्यमानस्येति॥—**तुमुन** इति। ण्वुलोऽप्युपलक्षणम्। फलेभ्यो यातीत्यस्य फलान्याहारक इति विवरणे बाधकाभावात्॥—**कर्मणी**ति। तथा च द्वितीयापवादोऽयमिति भावः॥ यत्तु प्रसादकृता व्याख्यातम्। अप्रयुज्यमानस्यैव कर्मणि यथा स्यात्। प्रयुज्यमानस्य कर्मणि मा

---

१ पूर्वव्यापारस्येति—श्रमनस्यत्यर्थः। २ इत्यर्थ इति—ओवामेत्यादि शब्दैरिति शेषः।

चतुर्थी स्यात् । फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । नमस्कुर्मो नृसिंहाय । नृसिंहमनुकूलयितुमित्यर्थः । एवं स्वयंभुवे नमस्कृत्येत्यादावपि । **तुमर्थाच्च भाववचनात् ।२।३।१५।** भाववचनाश्चेति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् । यागाय याति । यष्टुं यातीत्यर्थः । **नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ।२।३।१६।** एभिर्योगे चतुर्थी स्यात् । हरये नमः । उपपदविभक्तेः कारकविभक्तिर्बलीयसी । नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः । तस्मै प्रभवति स एषां ग्रामणीरिति निर्देशात् । तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम् । वषडिन्द्राय । चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायां परामपि चतुर्थींचाशिषीति षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् । **मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ।२।३।१७।** प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । श्यना निर्देशात्तानादिकयोगे न । न त्वां तृणं मन्वेऽहम् । अप्राणिष्वित्यपनीय ॥ * **नौकाकान्नशुकशृगालवर्ज्येष्विति वाच्यम्** ॥ तेन न त्वां नावमन्नं वा मन्ये इत्यत्राप्राणित्वेऽपि चतुर्थी न । न त्वां शुने मन्ये इत्यत्र प्राणित्वेऽपि भवत्येव । **गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।२।३।१२।** अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम् । ग्रामं ग्रामाय वा गच्छति । चेष्टायां किम् । मनसा हरिं

---

भूदिति नियमार्थं सूत्रमिति । तदसत् । अप्राप्तस्य नियमायोगात् । न चेह 'तादर्थ्ये' इति प्राप्तिः शङ्क्या । यानक्रियायाः फलार्थत्वाभावात् ॥ आहरणार्था हि यानक्रिया आहारणं तु फलकर्मकमित्यन्यदेतत् ॥ क्रियार्थोपपदस्य किम् । प्रविश पिण्डीम् । गृहप्रवेशन यद्यपि भक्षणार्थं तथापि भक्षिं प्रति कृत्रिमोपपदत्वं नास्ति । न च तुमुनः कर्मणीत्युक्तत्वाद् भक्षिकर्मणि चतुर्थ्याः प्रसक्तिरेव नास्तीति प्रत्युदाहरणमिदं न सगच्छते इति वाच्यम् । सति तु 'क्रियार्थोपपदस्य' इति पदे 'तुमुन्ण्वुलौ क्रियायाम्' इत्येतद्विषयकमेवेदं सूत्रमिति 'तुमुनः' इति लभ्यते नान्यथेति प्रत्युदाहरणस्यासगतत्वाभावात् ॥—**तुमर्थात्**—॥ 'अव्ययकृतो भावे' इति तुमुनो भावे एव विधानात् तदर्थस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणमत्र विशेषपरिग्रहार्थमित्याह—**भाववचनाश्चेती**ति । न च 'तादर्थ्ये' इत्येव गतार्थता शङ्क्या । क्रियार्थक्रियोपपदेन 'भाववचनाश्च' इति घञा तुमुनेव तादर्थ्यस्य द्योतितत्वात्प्रातिपदिकार्थमात्रे प्रथमाप्राप्तावेतत्सूत्रारम्भात् ॥ यत्तु प्रसादकृतोक्तम्—भाववचनादेव यथा स्यात्, पाचको व्रजतीति ण्वुलन्तान्मा भूदिति नियमार्थमिदं सूत्रमिति । तन्न । ण्वुलः कर्तृवाचकतया तुमर्थकत्वायोगात् ण्वुलन्ते कर्तुः प्राधान्यात् कर्तारं प्रति तादर्थ्याभावात् । गुणीभूततया पाकं प्रति तादर्थ्यसंभवेऽपि पाकवाचकधातोश्चतुर्थ्ययोगाच्च ॥ तुमर्थात् किम् । पचनं वर्तते ॥ भाववचनात् किम् । पाकः । त्यागः ॥ अत्र वदन्ति । 'क्रियार्थोपपदस्य' इत्यनुवर्त्य पञ्चम्या विपरिणम्य व्याख्याने बाधकाभावाद् भाववचनादिति त्यक्तुं शक्यम् । न चैव 'तुमर्थान्–' इत्येव वक्तव्यमिति वाच्यम् । वर्णलाघवसंभवे गौरवाश्रयणायोगादिति ॥—**बलीयसी**ति ॥ हरये नम इत्यत्र नुद्देशनक्रियाद्वारा हरिनमस्कारयोः सबन्धः हर्युद्देश्यको नमस्कार इति । एवं चोद्देशनक्रियावगतौ विलम्ब इति कारकविभक्तेर्बलीयस्त्वमित्येके । अन्ये तूपपदविभक्त्या सबन्धसामान्यमवगम्यते तद्विशेषावगमस्त्वर्थप्रकरणादिपर्यालोचनाधीनः कारकविभक्त्या तु कर्मत्वादिसबन्धविशेषो झटित्येवावगम्यते इति तस्या बलीयस्त्वमित्याहुः ॥—**षष्ठ्यपी**ति । ननु प्रभ्वादियोगे षष्ठ्येवास्तु अलशब्दस्तु पर्याप्तीतरार्थक एव गृह्यतामित्याशङ्क्याह—**तस्मै प्रभवती**ति ॥—**न त्वां तृण**मित्यादि ॥ ननु तृणादिवद् युष्मच्छब्दादपि पक्षे चतुर्थ्या भाव्यम् । मैवम् । 'अनादरे' इत्यस्य कर्मविशेषणत्वेन अनादरद्योतकं यत् कर्म तत्र चतुर्थीति व्याख्यानात् । तृणं ह्यत्रानादरद्योतकं न तु युष्मदर्थः ॥ स्यादेतत् । त्वा तृणं मन्ये तृणाय वेत्युदाह्रियतां किमनेन नञः प्रयोगेण । अत्राहुः–'प्रकृष्टकुत्सितग्रहणं कर्तव्यम्' इति वार्तिकमस्ति, तेन यद्वाचिनश्चतुर्थी विधीयते ततो निकृष्टत्वेन यदि कुत्सा प्रतिपाद्यते, तदा चतुर्थी भवति न तु साम्यविवक्षायाम् । तादृशी च कुत्साप्रतीतिर्नञः प्रयोगे झटित्येव भवतीति न त्वामित्युक्तमिति ॥—**श्यना निर्देशादि**ति । न च मन्य इति यका निर्देशः किं न स्यादिति वाच्यम् । अनभिहित इत्यधिकारात् । न हि यका योगे अनभिहितं कर्म भवति । श्यन्नपि दैवादिकधातूपलक्षणमात्रं, न तु स्वयं विवक्षितः । तेन 'तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः' इति भट्टिप्रयोगः सगच्छते ॥—**नौकाकान्ने**ति । व्यवस्थितविभाषा विज्ञातव्येति भाव. ॥—**गत्यर्थकर्मणि**—॥ गत्यर्थेति किम् । ओदनं पचति ॥ कर्मणीति किम् । अश्वेन व्रजति ॥ 'अनध्वनि' इत्यत्राध्वनीति न स्वरूपग्रहणम् । तथा हि सति 'अनध्वन' इत्येवावक्ष्यत् । किं त्वर्थग्रहणं सप्तमीनिर्देशात्, कर्मणीत्यनेन सामानाधिकरण्यात् । अर्थस्यैव हि कर्मत्वं सभवति न शब्दस्वरूपस्य, तेनाध्व-

---

१ नमस्कुर्म इति—नमःस्वस्तीत्यादिना तु न चतुर्थी, उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात् । २ पर्याप्त्यर्थग्रहणमिति—व्याख्यानादिति भावः । ३ स्वस्तीति—स्वस्तिशब्दोऽनव्ययमपि, 'प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः । स्वस्तिर्भवतु मे नित्यं सुखं चानुत्तमं तथा' इति भविष्योत्तरपुराणात् । ४ चेष्टाया किमिति—धात्वर्थस्य क्रियारूपत्वात्प्रश्नः । शरीरक्रियाया एव ग्रहणमित्युत्तरम् ।

व्रजति । अनध्वनीति किम् । पन्थानं गच्छति । गन्त्राधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव । उत्पथेन पथे गच्छति । **ध्रुवमपायेऽपादानम्** ।१।४।२४। अपायो विश्लेषस्तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात् । **अपादाने पञ्चमी** ।२।३।२८। ग्रामादायाति । धावतोऽश्वात्पतति । कारकं किम् । वृक्षस्य पर्णं पतति ॥ * **जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्**[1] ॥ पापाज्जुगुप्सते । विरमति । धर्मात्प्रमाद्यति । **भीत्रार्थानां भयहेतुः** ।१।४।२५। भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् । चोराद् बिभेति । चोरात्त्रायते । भयहेतुः किम् । अरण्ये बिभेति त्रायते वा । **पराजेरसोढः** ।१।४।२६। पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् । अध्ययनात्पराजयते । ग्लायतीत्यर्थः । असोढः किम् । शत्रून्पराजयते । अभिभवतीत्यर्थः । **वारणार्थानामीप्सितः** ।१।४।२७। प्रवृत्तिविघातो[2] वारणम् । वारणार्थानां धातूनां प्रयोगे ईप्सितोऽपादानं

---

वाचिनां सर्वेषामेव निषेधस्तथा च वार्तिकम्—'**अध्वन्यर्थग्रहणम्**–' इति ॥—**गन्त्राधिष्ठित एवे**ति । '**आस्थितप्रतिषेधो वक्तव्यः**' इति वार्तिकादिति भावः ॥ आस्थितः संप्राप्तः । पन्थानं गच्छतीत्यत्र हि पन्थाः प्राप्त एवेति न पक्षे चतुर्थी । यदा त्वप्राप्तत्वेन विवक्षा तदा पक्षे भवत्येव सा । इह अनध्वनीत्यपनीय 'असंप्राप्ते' इति पूर्यते तेन स्त्रियं गच्छतीत्यत्र स्त्री प्राप्तैवेति न चतुर्थी ॥ अत्र व्याचक्षते । अजां नयति ग्राममित्यत्र तु न भवत्येव चतुर्थी अगत्यर्थत्वात् । आक्षेपादिना ह्यत्र प्रतीयते गतिर्न त्वसौ नयतेरर्थः, प्रापणवाचित्वादिति ॥ 'गत्यर्थकर्मणि चतुर्थी वा' इति वक्तव्ये द्वितीयाग्रहणमपवादविषयेऽपि द्वितीया यथा स्यादित्येतदर्थं, तेन ग्रामं गन्तेत्यत्र कृद्योगलक्षणा षष्ठी न भवतीति वृत्तिकृतोक्तम् ॥ इति चतुर्थी ॥ ॥—**ध्रुवमपाये**—॥ 'ध्रु गतिस्थैर्ययोः' । अस्मात् पचाद्यचि कुटादित्वान्ङित्त्वे उवङ् । 'ध्रुव स्थैर्ये' इति केचित् । तत्र 'इगुपध–' इति कः । ध्रुवं स्थिरम् ॥ अपायशब्देन विवक्षितमाह—**विश्लेष** इति । एवं च प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयो ध्रुवमिति फलितम् ॥ तच्चार्थादवधिरेवेत्याह—**अवधिभूतमि**ति ॥—**धावत** इति । इह धावनक्रियाविशिष्टस्याप्यश्वस्य प्रकृतपतधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते 'परस्परस्मान्मेषावपसरतः' इत्यत्र तु स्वधातुना गतिद्वयेऽप्युपादानादेकनिष्ठां गतिं प्रति इतरस्याप्यपादानत्वं न विरुध्यते । उक्तं च हरिणा–'अपाये यदुदासीनं चलं वा यदि वाऽचलम् । ध्रुवमेवातदावेशात्तदपादानमुच्यते । पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ । तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥ मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्' इति । पर्वतात्पततोऽश्वात्पततीत्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्तदवधिकं देवदत्तादिनिष्ठं पतनमर्थः, पञ्चम्यर्थेऽवधौ अभेदेन संसर्गेण प्रकृत्यर्थः पर्वतादिर्विशेषणम्, प्रत्ययार्थस्तु पतनक्रियायाम्, स चावधिरूपो धर्मी, न तु धर्ममात्रम्, उद्धृतौदना स्थालीत्यत्रोदनकर्मकोद्धरणावधिभूता स्थालीति सामानाधिकरण्यदर्शनात् । एतच्च मनोरमायां स्थितम् ॥ नन्विह ध्रुवग्रहणं किमर्थम् । न च ग्रामादागच्छति शकटेनेत्यत्र शकटेऽतिव्याप्तिवारणाय तदिति वाच्यम् । परत्वात्तत्र करणसंज्ञाप्रवृत्तेः । न च संज्ञिनिर्देशार्थं ध्रुवग्रहणम्, कारकाधिकारात् कारकमिति लभ्यत इति ध्रुवग्रहणं चिन्त्यप्रयोजनमिति चेत् । अत्र वदन्ति । कारकत्वरूपव्यापकधर्ममात्रविवक्षायां साधकतमत्वेन विवक्षाभावदशायां करणसंज्ञाप्रसङ्गेन शकटस्यापादानत्वं स्यात्तन्मा भूदित्येतदर्थं ध्रुवग्रहणमिति ॥—**जुगुप्से**ति । जुगुप्सा निन्दा, विरामो विरतिः, प्रमादोऽनवधानता, एतदर्थकानां धातूनां कारकमपादानसंज्ञं स्यादित्यर्थः ॥ संयोगपूर्वको विश्लेषो विभागः, स चेह नास्ति, बुद्धिकृतस्तु गौणत्वान्नेह गृह्यते इति सूत्रेणाप्राप्तौ वार्तिकारम्भः ॥ भाष्यकारस्तु कारकप्रकरणे गौणमुख्यन्यायो नाश्रीयत इति तमब्ग्रहणेन ज्ञापितत्वात् जुगुप्सादीनां तत्पूर्वकनिवृत्तिमाश्रित्येदं वार्तिकं 'भीत्रार्थानाम्–' इत्यादिसूत्राणि च प्रत्याचख्यौ । पूर्वं हि बुद्ध्यापायं संप्राप्य ततो दोषदर्शनान्निवर्तत इत्यस्त्येवात्र बुद्धिकृतोऽपायः ॥—**भीत्रा**–॥ 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे' इति रामायणे तु कस्येत्यस्य संयुगेनान्वयान्नास्ति भयहेतुत्वमिति षष्ठीप्रयोगः संगच्छत एव । न चैवं संयुगस्यापादानत्वापत्तिरिति वाच्यम् । परया अधिकरणसंज्ञया अपादानसंज्ञाबाधात् । अधिकरणत्वाविवक्षायां तु इष्टापत्तेः ॥ भीत्रार्थेति किम् । व्याघ्रं पश्यति । न च कर्मत्वेन बाधः शङ्क्यः कर्मत्वाविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमीप्रसङ्गादित्याहुः ॥ भयहेतुग्रहणं चिन्त्यप्रयोजनम् । अरण्ये बिभेतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेरिति चेत् । अत्र वदन्ति । भयहेतुग्रहणाभावे कारकशेषत्वविवक्षायामतिप्रसङ्गः स्यात् । तथा च अरण्यस्य चोराद्बिभेतीति प्रयोगो न स्यादिति ॥—**पराजेः**–॥ —**अध्ययनादि**ति । अध्ययनसंबन्धिनी ग्लानिरित्यर्थः । कारकशेषत्वेन षष्ठ्यां प्राप्तायामिदम् ॥—**पराजयत** इति । 'विपराभ्यां जेः' इति तङ् ॥ असोढ इति क्तार्थो भूतकालो न विवक्षितः । तेनाध्ययनात् पराजेष्यत इत्यादि सिद्धम् । नन्वासोढग्रहणं व्यर्थं, शत्रून् पराजयत इत्यत्र परत्वात् कर्मसंज्ञासिद्धेः ॥ अत्रापि वदन्ति । कर्मत्वाविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमी स्यात्, सा मा भूदिति कर्तव्यमेवासोढग्रहणम् ॥—**वारणार्था**–॥—**यवेभ्य** इति । यवसंयोगात्

---

१ जुगुप्सेति—जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानमित्यर्थः । तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाविवक्षायां संबन्धित्वेन च विवक्षायां पापस्येति षष्ठी भविष्यति । २ प्रवृत्तिविघात इति—भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापार इत्यर्थः ।

स्यात्। यवेभ्यो गां वारयति। ईप्सतः किम्। यवेभ्यो गां वारयति क्षेत्रे। **अन्तर्धौ येनादर्शनमिच्छति ।१।४।२८।** व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात्। मातुर्निलीयते कृष्णः। अन्तर्धौ किम्। चौरान्न दिदृक्षते। इच्छतिग्रहणं किम्। अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्। **आख्यातोपयोगे। १।४।२९।** नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते। उपयोगे किम्। नटस्य गाथां शृणोति। **जनिकर्तुः प्रकृतिः ।१।४।३०।** जायमानस्य हेतुरपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते। **भुवः प्रभवः ।१।४।३१।** भवनं भूः। भूकर्तुः प्रभवस्तथा। हिमवतो गङ्गा प्रभवति। तत्र प्रकाशत इत्यर्थः॥ * **ल्यब्लोपे कर्मण्यधिकरणे च॥** प्रासादात्प्रेक्षते। आसनात्प्रेक्षते। प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः। श्वशुराज्जि-

---

प्रागेव गां निवारयतीति 'ध्रुवमपाये–' इत्यनेनासिद्धावयमारम्भ.। बुद्धिपरिकल्पितापायमङ्गीकुर्वतो भाष्यकारस्य मते तु वैयर्थ्यमेतस्य स्फुटमेव॥—**गां वारयती**ति। 'वृञ् वरणे' चुरादिः। गामित्यत्र ईप्सितत्वप्रयुक्तापादानसंज्ञा न भवति। ईप्सितत्मत्वविवक्षाया परत्वात् कर्मसंज्ञाप्रवृत्तेः॥ नन्वेवमीप्सितग्रहणमेव व्यर्थ, क्षेत्रे वारयतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेः। सत्यम्। अधिकरणस्य शेषत्वविवक्षायामिद प्रत्युदाहरणमिति पूर्वोक्तरीत्या पदप्रयोजनस्येहापि कल्पयितुं शक्यत्वात्॥—**अन्तर्धौ–**॥ येनेति कर्तरि तृतीया। न च कृद्योगषष्ठीप्रसङ्गः, उभयप्राप्तौ कर्मण्येवेति नियमात्। अत्र ह्यात्मन इति गम्यमानत्वादस्त्युभयोः प्राप्तिः॥—**निलीयत** इति। 'लीङ् श्लेषणे' दैवादिकः॥ नन्वन्तर्धाविति व्यर्थ, न दिदृक्षते चोरानित्यत्र परत्वात्कर्मसंज्ञासिद्धे॥ अत्राहुः। चोरा. आत्मान मा द्राक्षुरिति बुद्ध्या चोरान्न दिदृक्षत इत्ययमर्थोऽत्र विवक्षितस्तत्र कर्मणः शेषत्वविवक्षायामिद पूर्ववत् प्रत्युदाहरणमिति॥ शब्दकौस्तुभे तु 'अन्तर्धौ' इत्येतच्चिन्त्यप्रयोजनमिति स्थितम्॥—**आख्यातोप–**॥—**नियमपूर्वके**ति। तत्रैवोपयोगशब्दो रूढ इति भावः॥ आख्यातेत्येतत् तृजन्तमित्याह—**वक्ते**ति॥—**उपाध्यायादि**ति। उपेत्य अस्मादधीयत इति उपाध्यायः, 'इङश्च' इति घञ्। अध्ययन तु गुरूच्चारणोत्तरोच्चारण नियमपूर्वकम्॥—**नटस्ये**ति। गाथाकर्मक नटसबन्धि श्रवणमित्यर्थ.। नटस्य गाथान्वये तु कारकत्वाभावादेवाप्राप्तेरुपयोगग्रहण ममर्थित न स्यात्॥—**जनिकर्तुः–**॥ जनन जनिरुत्पत्तिः। 'इणजादिभ्यः' इति जनेर्भावे इण्। 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः। तस्याः कर्तेति शेषषष्ठ्या समासो, न तु कारकषष्ठ्या 'तृजकाभ्याम्–' इति निषेधात्। एव चोत्पत्त्याश्रयस्य यो हेतुस्तदपादानमित्यर्थाद्धात्वन्तरयोगेऽप्यपादानत्व भवत्येव। 'अङ्गादङ्गात्सभवति–' इति यथा। तदेतदाह—**जयमानस्ये**ति॥ एतेन 'इक्श्तिपौ धातुनिर्देशे' इति इका निर्देशोऽय जनिरित्याश्रित्य 'गमहन–' इत्युपधालोपमर्थासंगतिं समासानुपपत्ति चोद्भाव्य व्याकरणाधिकरणं गर्जन्तो मीमासकाः समाहिता इति भावः॥ इह प्रकृतिग्रहण हेतुमात्रपरमिति वृत्तिकृन्मतम्। पुत्रात् प्रमोदो जायते इत्युदाहरणात्। उपादानमात्रपरमिति तु भाष्यकैयटमतं तदुभयसाधारणम् उदाहरणमाह—**ब्रह्मण** इति। ब्रह्मा हिरण्यगर्भः। स च हेतुरेव न तूपादानम्। किं च मायोपहितं चैतन्यं ब्रह्म, तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः॥—**भुवः–**॥—**भवनं भू**रिति। सपदादित्वाद्भावे क्विप्। पूर्वसूत्रे गमागनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते स्वरितत्वादित्याह—**भूकर्तु**रिति॥ प्रभवत्यस्मादिति प्रभवः, 'अकर्तरि च कारके' इत्यधिकारादपादानार्थे 'ऋदोरप्'॥ जनिकर्तुरित्येव सिद्धे निरर्थकमिदमित्याशङ्कां परिहरन्नाह—**तत्र प्रकाशत** इति। प्रथम दृश्यत इत्यर्थ। एप चार्थो धातूनामनेकार्थत्वाल्लभ्यते। तथा चाभूतप्रादुर्भावो जनिः। अन्यतः सिद्धस्य प्रथममुपलम्भः प्रभव इत्यर्थभेदोऽस्तीति भावः॥ 'भीत्रार्थानाम्' इत्यारभ्येय सप्तसूत्री भाष्ये प्रत्याख्याता॥ तत्रेत्थमुपपत्तिसभवः। 'चोरेभ्यो बिभेति भयान्निवर्तत इत्यर्थ', त्रायते रक्षणेन चोरेभ्यो निवर्तयतीत्यर्थ', पराजयते ग्लान्या निवर्तत इत्यर्थः, वारयतीति प्रवृत्ति प्रतिबन्धात् निवर्तयतीत्यर्थ., निलीयते निलयनेन वर्तत इत्यर्थः, अधीते उपाध्यायान्निःसरन्त शब्दं गृह्णातीत्यर्थ', । ब्रह्मणः प्रपञ्चो जायत इत्यत्रापि ततोऽपक्रामन्निर्गच्छतीत्यर्थ, प्रभवतीत्यत्रापि भवनपूर्वक नि.सरणमर्थः, तथा च 'ध्रुवमपाये–' इत्यनेनैवेष्टसिद्धिरिति॥ वस्तुतस्तु निवृत्तिविस्मरणादिधात्वन्तरार्थविशिष्टे स्वार्थे वृत्तिमाश्रित्य यथाकथंचिदुक्तप्रयोगाणा समर्थनेऽपि मुख्यार्थपुरस्कारेण षष्ठीप्रयोगो दुर्वारः नटस्य शृणोतीतिवत्। न ह्युपाध्यायनटयोः क्रियानुकूलव्यापारांशे विशेषो वक्तु शक्य। अनभिधानब्रह्मास्त्रमाश्रित्य प्रत्याख्यान तु नातीव मनोरमम्। एव 'जुगुप्साविराम–' इत्यादिवार्तिकमप्यारम्भणीयम्। तथा च सूत्रवार्तिकमतमेवेह प्रबलम्। तथा 'ध्रुवं' 'भयहेतुः' 'अमोढः' इत्यादिसंज्ञिनिर्देशोऽपि सार्थक.। परत्वात्तत्संज्ञाप्राप्तावपि शेषत्वविवक्षायां 'न माषाणामश्नीयात्' इत्यादाविव षष्ठ्या इष्टतया तत्रापादानसंज्ञाया वारणीयत्वात्। एतच्च शब्दकौस्तुभे स्पष्टम्॥—**ल्यब्लोप** इति। ल्यबन्तस्य गम्यमानार्थत्वादप्रयोग इत्यर्थ.। ल्यब्ग्रहणमिह ल्यबर्थपर, तेन क्त्वोऽपि लोपे सिध्यति। आसने स्थित्वा प्रेक्षते। आसनात्प्रेक्षत

---

१ यथा स्यादिति—अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः। २ नियम इति—नियमो ब्रह्मचर्यादिः। ३ प्रकृतिरिति—प्रकृतिरुपादानकारणमिति शब्देन्दुशेखरे स्थितम्।

द्वेति। श्वशुरं वीक्ष्येत्यर्थः। गम्यमानाऽपि क्रिया कारकविभक्तीनां निमित्तम्। कस्मात्त्वं नद्याः॥ * यतश्चाध्वकालनिर्माणं तत्र पञ्चमी॥ * तद्युक्तादध्वनः प्रथमासप्तम्यौ॥ * कालात्सप्तमी च वक्तव्या॥ वनाद्ग्रामो योजनं योजने वा। कार्तिक्या आग्रहायणी मासे। ॥ अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते।२।३।२९। एतैर्योगे पञ्चमी स्यात्। अन्य इत्यर्थग्रहणम्। इतरग्रहणं प्रपञ्चार्थम्। अन्यो भिन्न इतरो वा कृष्णात्। आराद्वनात्। ऋते कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः शब्दो दिक्शब्दः। तेन संप्रति देशकालवृत्तिना योगेऽपि भवति। चैत्रात्पूर्वः फाल्गुनः। अवयववाचियोगे तु न। तस्य परमाम्रेडितमिति निर्देशात्। पूर्वं कायस्य। अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि षष्ठ्यतसर्थेति षष्ठीं बाधितुं पृथग्ग्रहणम्। प्राक् प्रत्यग्वा ग्रामात्। आच्, दक्षिणा ग्रामात्। आहि, दक्षिणाहि ग्रामात्। अपादाने पञ्चमीति सूत्रे कार्तिक्याः प्रभृतीति भाष्यप्रयोगात् प्रभृत्यर्थयोगे पञ्चमी। भवात्प्रभृति आरभ्य वा सेव्यो हरिः। अपपरिबहिरिति समासविधानाज्ज्ञापकाद्बहिर्योगे पञ्चमी। ग्रामाद्बहिः। ॥ अपपरी वर्जने।१।४।८८।एतौ वर्जने कर्मप्रवचनीयौ स्तः। ॥ आङ् मर्यादावचने।१।४।८९। आङ् मर्यादायामुक्तसंज्ञः स्यात्। वचनग्रहणादभिविधावपि। ॥ पञ्चम्यपाङ्परिभिः।२।३।१०। एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अप हरेः परि हरेः संसारः। परिरत्र वर्जने। लक्षणादौ तु हरिं परि। आ मुक्तेः संसारः। आसकलाद्ब्रह्म। ॥ प्रतिः प्रतिनिधिप्रतिदानयोः।१।४।९२। एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात्। ॥ प्रतिनिधिप्रतिदाने च यस्मात्।२।३।११। अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। प्रद्युम्नः कृष्णात्प्रति। तिलेभ्यः प्रति यच्छति माषान्। ॥ अकर्तर्यृणे पञ्चमी।२।३।२४। कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात्॥ शताद्बद्धः। अकर्तरि किम्। शतेन

---

इति॥—यतश्चेति। यदवधित्वेनाश्रित्याध्वनः कालस्य वा निर्माणं परिच्छेदः प्रतिपाद्यते ततः पञ्चमी इत्यर्थः। तेन पञ्चम्यन्तार्थेनार्थद्वारा युक्तान्निर्मीयमाणाध्ववाचिनः प्रथमासप्तम्यौ स्तः॥—कालादिति। इहापि तद्युक्तादित्यपेक्षते॥—आग्रहायणीति। अग्रे हायनमस्याः सा। प्रज्ञादेराकृतिगणत्वात् स्वार्थिकोऽण्। 'पूर्वपदात्संज्ञायाम्' इति णत्वम्॥—अन्यारा—॥—अर्थग्रहणमिति। व्याख्यानादिति भावः॥—प्रपञ्चार्थमिति। न च 'इतरस्त्वन्यनीचयोः' इत्यमरोक्तनीचार्थस्येद ग्रहणमस्तीति वाच्यम्। 'अस्मात्तारो मन्द्रो वा' इतिवत् पञ्चमीविभक्ते इत्यनेनैव सिद्धत्वात्॥—अन्यो भिन्न इतरो वेति। न चैव घटः पटो नेत्यत्रातिप्रसङ्गः नञोऽपि भेदे शक्तत्वादिति वाच्यम्। निपातानां द्योतकत्वमेव न तु वाचकत्वमित्यभ्युपगमात्॥—आराद्वनादिति। इह 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति प्राप्ता॥—ऋते कृष्णादिति। कथं तर्हि 'फलति पुरुषाराधनमृते' इति प्रयोग इति चेत्। प्रमादोऽयमिति हरदत्तः। अन्ये तु 'ततोऽन्यत्रापि दृश्यते' इति दृशिग्रहणाच्चात्र यावच्छीतमित्यादाविव ऋतेयोगे द्वितीयापि साधुरित्याहुः॥ अस्मिन् व्याख्याने 'ऋते द्वितीया च' इति चान्द्रसूत्रमनुकूलम्॥—दिशि दृष्ट इति। स्वभ्येति शेषः। तेनेन्द्रादयो नात्र गृह्यन्ते॥ नन्वेव ककुबादिग्रहणप्रसङ्ग इति चेद्। अत्राहुः। अन्यतरसाहचर्याद्व्याख्यानाद्वा दिग्भिन्नेऽर्थे यो न दृष्टः सोऽत्र गृह्यत इति॥—दिक्शब्दत्वेऽपीति। यद्यप्यदिक्शब्दोऽप्यञ्चूत्तरपदमस्ति सध्र्यङ्ङित्यादिः, तथापि दिक्शब्दसाहचर्यादञ्चूत्तरपदेन प्रागित्यादिदिक्शब्द एव गृह्यते। तेन सध्र्यङ् देवदत्तेनेत्यत्र नातिप्रसङ्ग इति भावः॥—दक्षिणा ग्रामादिति। दिक्शब्दत्वेनैव सिद्धे आजादिग्रहणं चिन्त्यप्रयोजनमित्याहुः॥—प्रभृतियोग इति। प्रभृत्यर्थयोग इत्यर्थः। तथा च 'कार्तिक्याः प्रभृति' इति भाष्यं विवृण्वता कैयटेन 'तत आरभ्य' इत्यर्थः, इति प्रयुक्तम्॥—ग्रामाद्बहिरिति। 'ज्ञापकसिद्धं न सर्वत्र' तेन 'करस्य करभो बहिः' इति सिद्धम्॥—अपपरी—॥ वर्जने किम्। परिषिञ्चति। सर्वत इत्यर्थः। अत्रोपसर्गत्वात् षत्वम्॥—वचनग्रहणादिति॥ विना तेनेति मर्यादा, सह तेनेत्यभिविधिः, इत्यत्र यः उपात्तो विशेषो विशेषणांशरूपः सोऽत्र न गृह्यते वचनग्रहणसामर्थ्यात्, किं तु अवधिमात्रं विवक्ष्यते इत्यर्थद्वयसंग्रहः॥ यद्वा मर्यादाशब्दो यस्मिन्नुच्यते तत् मर्यादावचनं तद्धि 'आङ्मर्यादाभिविध्योः' इति सूत्रं, तत्र य आङ् दृष्टः स उक्तसंज्ञ इत्यर्थः॥—परिहरेरिति। हरिं वर्जयित्वेत्यर्थः। 'परेर्वर्जने वा वचनम्' इति वार्तिकात् पक्षे द्विर्वचनाभावः॥—परिरत्रेति। अत्र पञ्चमीविधौ वर्जनार्थेनापेन साहचर्यादिति भावः॥—आमुक्तेरिति। मुक्तिं मर्यादीकृत्येत्यर्थः॥—आसकलादिति। सकलमभिव्याप्येत्यर्थः॥—प्रतिनिधिप्रतिदाने—॥ अस्मादेव निर्देशाल्लिङ्गादाभ्यां योगे पञ्चमी। 'ज्ञापकसिद्धं न सर्वत्र' इति कृष्णस्य प्रतिनिधिरित्यपि सिद्धमित्याहुः॥ मुख्यस्याभावे सति तत्सदृशं उपादीयते स प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्॥—अकर्तरि—॥—हेतुभूतमिति। 'हेतौ' इत्यनुवर्तते इति भावः॥—पञ्चमी स्यादिति। तृतीयापवादोऽयम्॥—शतेनेति। शतमिह उत्तमर्णाय धार्यमाणत्वादृणं 'तत् प्रयोजको हेतुश्च' इति चकारात् कर्तृसंज्ञं च॥

---

१ गम्यमानापीति—विशिष्य तद्वाचकशब्दानुपात्तेत्यर्थः। २ दिशि दृष्ट इति—शब्दग्रहणसामर्थ्यादिति भावः। ३ आरभ्येति—अवाचीमारभ्येत्यादौ तु आरभ्येत्यस्य गृहीत्वेत्यर्थः। ४ पञ्चमीति—पञ्चम्यपीत्यर्थः। तेन 'करस्य करभो बहिः' इत्यपि सूपपादम्।

बन्धितः । **विभाषा गुणेऽस्त्रियाम् ।२।३।२५।** गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याज्जाड्येन वा बद्धः। गुणे किम् । धनेन कुलम् । अस्त्रियां किम् । बुद्ध्या मुक्तः । विभाषेति योगविभागादगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः । **पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।२।३।३२।** एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये च । अन्यतरस्यां ग्रहणं समुच्चयार्थम् । पञ्चमीद्वितीयेऽनुवर्तेते । पृथग् रामेण रामात् रामं वा । एवं विना नाना । **करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ।२।३।३३।** एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः । **दूरान्तिकार्थेभ्यो द्वितीया च ।२।३।३५।** एभ्यो द्वितीया स्याच्चात्पञ्चमीतृतीये । प्रातिपदिकार्थमात्रे विधिरयम् । ग्रामस्य दूरं दूरात् दूरेण वा । अन्तिकम् अन्तिकात् अन्तिकेन वा । असत्त्ववचनस्येत्यनुवृत्तेर्नेह । दूरः पन्थाः । **षष्ठी शेषे ।२।३।५०।** कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि सबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति ।

—**बन्धित** इति । ण्यन्ते प्रयोजककर्तृ शतस्य हेतुमत्त्वाप्यस्तीति पञ्चम्यत्र स्यादेवातोऽकर्तरीत्युक्तमिति भावः ॥—**योगविभागादि**ति । एतच्च 'हेतुमनुष्येभ्यः—' इति सूत्रे पदमञ्जर्यां स्पष्टम् ॥—**स्त्रियां चे**ति । 'बाहुलकं प्रकृतेस्तदनुदृष्टेः' इति वार्तिकनिर्देशोऽपीह ज्ञापकः ॥—**पृथग्विना**—॥ ननु तृतीयाभावपक्षे 'एनपा द्वितीया' इति प्रकृता द्वितीयैव स्यात् । यदि तु द्वितीया विकल्पेन भवेत्, तदा पञ्चम्यपि स्यात् । सा तु नित्यैव तस्माद्विभक्तित्रयसमावेशो दुरुपपाद इत्यत आह—**अन्यतरस्यांग्रहणं समुच्चयार्थमि**ति । निपातानामनेकार्थत्वादिति भावः ॥—**पञ्चमी**ति । तत्र मण्डूकप्लुत्या पञ्चमी, द्वितीया तु सन्निहितैव । इह पृथग्वर्योरिति सूत्रयितव्ये पर्यायत्रयोपादानं पर्यायान्तरनिवृत्त्यर्थं, तेन हिरुग् देवदत्तस्येत्यत्र नेत्याहुः ॥ 'पृथङ्नानाभिस्तृतीयान्यतरस्याम्' इति सुवचम् । नानाजिति प्रत्ययग्रहणे तदन्तयोर्विनानानाशब्दयोर्लाभात् ॥—**नाने**ति । 'हिरुङ्नाना च वर्जने' इत्यमरः । 'नाना नारी निष्फला लोकयात्रा' इति प्रयोगः ॥—**करणे च**—॥ अन्यतरस्यामिति वर्तते पञ्चमीति च, तेन करणे तृतीयायां प्राप्तायां पक्षे पञ्चमी विधीयते तथा मुक्ते करणत्वादेव तृतीया सिद्धेत्याशयेनाह—**तृतीयापञ्चम्यौ स्त** इति ॥—**स्तोकेने**ति । अनायासेन मुक्त इत्यर्थः ॥—**दूरं दूराद्दूरेण वे**ति । इह सप्तम्यपि वक्ष्यते । किं च 'दूरान्तिकार्थेभ्यः—' इति सूत्रस्य 'सप्तम्यधिकरणे च' इत्युत्तरसूत्रेऽप्यनुवर्तनादधिकरणेऽप्येभ्यो विभक्तिचतुष्टयं बोध्यम् ॥ तथा च प्रयुज्यते—'दूरादावसथान्मूत्रं दूरात्पादावसेचनम्' इति । आवसथस्य दूरे इत्यर्थः ॥—**असत्त्ववचनस्ये**ति । सत्त्ववचनत्वमिह सत्त्वविशेषकत्वम् । एवं च सामानाधिकरण्येन प्रातिपदिकार्थविशेषकं व्युदस्यते तदाह—**दूरः पन्था** इति । एतेन 'करणे च स्तोका—' इति सूत्रे 'करणे किम् । क्रियाविशेषणे कर्मणि मा भूत् । स्तोकं पचति । क्रिया न द्रव्यम्' इति प्राचां ग्रन्थोऽपि व्याख्यातः । न च क्रियाया विशेष्यत्वेन द्रव्यत्वावश्यंभावात् नैतत् प्रत्युदाहरणं युक्तमिति वाच्यम् । धातुवाच्याया क्रियाया असत्त्वरूपत्वस्याकरे प्रसिद्धत्वात् । न च विशेष्यत्वे तदनुपपत्तिः । कर्तृकर्मेतरकारकलिङ्गानन्वयित्वमात्रेणासत्त्वरूपत्वोपपत्तेः ॥ उक्तं च—'क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः । असत्त्वरूपता तस्या इयमेवावधार्यताम्' इति ॥ फलव्यापारश्च क्रिया, फलाधारकारकं कर्म, व्यापाराधारकारकं कर्तेति विवेकः ॥—**षष्ठी शेषे** ॥ उपयुक्तादन्यः शेषः कर्मादयश्च प्रातिपदिकार्थपर्यन्ता उपयुक्तास्तत्र द्वितीयादीनां विधानादतो व्याचष्टे—**कारकप्रातिपदिकार्थव्यतिरिक्त** इति ॥—**राज्ञः पुरुष** इति । प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यादप्रधानादेव षष्ठी । प्रत्ययार्थोऽत्रेह पुम्पविशेषणम् । राजनिरूपितसेवकत्वसम्बन्धवान् पुरुष इत्यर्थविवक्षाया प्रधानात् पुरुषशब्दान्न षष्ठी । उक्तन्यायविरोधात् शेषत्वाभावाच्च । राज्ञः पुरुषस्तिष्ठतीत्यादौ पुरुषशब्दो हि प्रातिपदिकार्थमात्रवृत्तिः। पुरुषेण कृतमित्यादौ कारकार्थकः । यदा तु पुरुषनिरूपितसेव्यत्वसम्बन्धवान् राजेत्यर्थविवक्षा तदा पुरुषशब्दादपि षष्ठी भवत्येव पुरुषस्य राजेति ॥ यत्तु अप्रधानं शेष इति केश्चिदुक्तम् । तन्न । प्रातिपदिकार्थमात्रे शुक्लः पटः श्यामो घट इत्यादौ विशेषणे षष्ठीप्रसङ्गात् । न च प्रथमया बाधः । तस्याः प्रधाने चरितार्थत्वात् ॥—**कर्मादीनामपी**ति । यथा विशेषाविवक्षायां रूपवानिति प्रत्युज्यते, विशेषविवक्षायां तु नीलः पीत इत्यादि, तथेदमपि न्यायसिद्धमिति भावः ॥—**सतां गतमि**ति । सत्पुरुषसबन्धि गमनमित्यर्थः । मन्तो गच्छन्तीत्यत्र लाख्यातेन कर्तृत्वसबन्धस्योक्तत्वात् संबन्धमात्रविवक्षा कर्तुं न शक्यत इति षष्ठीह न भवति, किं तु प्रातिपदिकार्थमात्रे प्रथमैवेत्याहुः ॥—**सर्पिषो जानीते** इति । वस्तुतः करणस्य सबन्धमात्रविवक्षाया षष्ठी । सर्पिःसबन्धि प्रवर्तनमित्यर्थः । 'अकर्मकाच्च' इत्यनेन वा जानातेस्तङ् ॥ अन्ये तु व्याचख्युः, कर्मणः शेषत्वविवक्षया-

१ धूमादिति—धूमादग्निमान्, अग्निमत्त्वं च स्वज्ञानविषये लाक्षणिकं बोध्यमिति । २ अद्रव्येति—द्रव्यभिन्नवचनेभ्य इत्यर्थः । द्रव्यशब्देनात्र सत्तामपरामर्शयोग्यं लिङ्गनिरूपितविशेष्यं वा गृह्यते । ३ कर्मादीनामपीति—आदिपदेन कर्तुरपि ग्रहणं, 'नास्य च वर्तमाने' इत्यत्र भाष्ये छात्रस्य हसितमिति प्रयोगात् । ४ सबन्धमात्रविवक्षायामिति—क्रियाकारकभावमूलकसबन्धस्यैव विवक्षायां न तु कर्मत्वादिविवक्षायामित्यर्थः ।

**एधो दकस्योपस्कुरुते । भजे शंभोश्चरणयोः । फलानां तृप्तः । ॥ षष्ठी हेतुप्रयोगे ।२।३।२६। हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति । ॥ सर्वनाम्नस्तृतीया च ।२।३।२७। सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च । केन हेतुना वसति । कस्य हेतोः ॥ * निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् । किं निमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं किं कारणं को हेतुः किं प्रयोजनमित्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः । ज्ञानाय निमित्तायेत्यादि । ॥ षष्ठ्यतसर्थप्रत्ययेन ।२।३।३०। एतद्योगे षष्ठी स्यात् । दिक्शब्देति पञ्चम्या अपवादः । ग्रामस्य दक्षिणतः पुरः पुरस्तात् उपरि उपरिष्टात् । ॥ एनपा द्वितीया ।२।३।३१। एनबन्तेन योगे द्वितीया स्यात् । एनपेति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण । ॥ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।२।३।३४। एतैर्योगे षष्ठी स्या-**

षष्ठी । सर्पिःसंबन्धि ज्ञानमित्यर्थ इति ॥—**एधोदकस्येति** । एधाश्च उदकं चैषां समाहार एधोदकम् । 'जातिरप्राणिनाम्' इत्येकवद्भावः । यद्वा एधांसि च दक चेति विग्रहे पूर्ववदेकवद्भावः । उदकपर्यायो दकशब्दोऽप्यस्ति । तथा च हलायुधः— 'भुवनममृतं जीवनं दकं च' इति ॥—**उपस्कुरुते** इति । गन्धनादिसूत्रेणात्मनेपदम् । 'उपात्प्रतियत्न–' इति सुट् ॥ न चैवं 'ज्ञोऽविदर्थस्य करणे' 'अधीगर्थदयेशां कर्मणि' 'कृञः प्रतियत्ने' 'रुजार्थानां भाववचनानामज्वरेः' 'आशिषि नाथः' 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' 'व्यवहृपणोः समर्थयोः' 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इति शेषषष्ठीविधानार्थमष्टसूत्री निष्फला स्यादिति वाच्यम् । सर्पिषो ज्ञानमित्यादौ तस्याः समासनिवृत्तिफलकत्वात् । तथा हि 'ज्ञोऽविदर्थस्य–' इत्यादौ शेष इत्यनुवर्तते । शेषत्वेन विवक्षिते तु करणादौ षष्ठी सिद्धैव तदयमर्थः—इह षष्ठ्येव, न तु तल्लुक् । तथा च लुक्प्रयोजकीभूतः समास एव न भवतीति । न चाष्टसूत्र्या लुङ्मात्रनिवृत्तिफलकत्वमेवास्तु, समासस्तु स्वीक्रियतामिति वाच्यम् । इष्टानुरोधेन समास एव न भवतीति व्याख्यानस्योचितत्वात् । तथा च वार्तिकं 'प्रतिपदविधाना षष्ठी न समस्यते' इति ॥ हरिश्चाह 'कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः । प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये' इति ॥ एवं च शेषत्वविवक्षायां सर्पिषो ज्ञानं, मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनि । हरिस्मरणमित्यादीनि तु शेषत्वाविवक्षायां कृद्योगषष्ठ्याः समासे बोध्यानि । तत्र च कारकपूर्वकत्वात् 'गतिकारक–' इत्यादिना कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तत्वं भवति । शेषषष्ठ्या समासे तु अन्तोदात्तत्वं स्यात्तच्चानिष्टम् । तथा च स्वरार्थेयमष्टसूत्रीति निष्कर्षः । किं च मातुः स्मृतमित्यादौ समासाभावोऽपि फलं, न हि तत्र कारकषष्ठी लभ्यते 'न लोका–' इति निषेधात् । आहुश्च—'निष्ठाया कर्मविषया षष्ठी च प्रतिषिध्यते । शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते' इति । एतच्च मनोरमायां स्थितम् ॥—**षष्ठी हेतु**—॥ अत्र 'हेतौ' इत्यनुवर्तते तदाह—**हेतौ द्योत्य** इति ॥—**अन्नस्येति** । 'हेतौ' इति तृतीयाया प्राप्तायामनेन षष्ठी ॥ हेतुप्रयोगे किम् । अन्नेन वसति ॥ हेतौ द्योत्ये किम् । अन्नशब्दात् षष्ठी यथा स्यादित्येके । अन्नस्य हेतोस्तुभ्यं नम इत्यत्र युष्मच्छब्दान्मा भूदित्यन्ये ॥—**सर्वनाम्नस्तृतीया च** ॥ इह सर्वनाम्न इति प्रयोगापेक्षया षष्ठी । पञ्चम्या तु हेतुशब्दात् षष्ठीतृतीये न स्यातामित्याशयेनाह—**सर्वनाम्नो हेतुशब्दस्य चेति** । कस्मात् भवतीत्यपेक्षायाम् अर्थात् सर्वनामहेतुभ्यामिति संबध्यते ॥ अत्र व्याचख्युः । यद्यपि सर्वनाम्न इति पदस्य पञ्चम्यन्तत्वेऽपि हेतुशब्दस्य विशेषणत्वे सामानाधिकरण्याद्प्युपपद्यत इति न क्षतिः, तथापि विशेष्यत्वे लघ विधिर्न स्यादिति बोध्यमिति ॥—**निमित्तपर्यायेति** । पर्यायग्रहणस्य फलमाह—**एवमित्यादिना** । एतद्वार्तिकेन 'षष्ठी हेतुप्रयोगे' 'सर्वनाम्नस्तृतीया च' इति सूत्रद्वयं गतार्थमिति बोध्यम् ॥—**षष्ठ्यतस–**॥ 'दक्षिणोत्तराभ्यामतसुच्' इत्यस्य योऽर्थो दिग्देशकालरूपः सोऽर्थो यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः, अस्तातिप्रभृतयः पञ्च, तदन्तेन योगे इत्यर्थः । अतसुचोऽस्तात्यनन्तरत्वेऽपि लाघवानुरोधेन अस्तात्यर्थेति नोक्तमित्याहुः ॥—**पञ्चम्या अपवाद** इति । 'ततः पश्चात् संस्यते ध्वस्यते च' इति भाष्यप्रयोगात् पश्चाच्छब्दयोगे तु पञ्चम्यसाधु । अस्मादेव भाष्यप्रयोगात् पश्चाच्छब्देनाव्ययीभावो न भवतीति वक्ष्यते ॥ प्रत्ययग्रहणं किम् । इह मा भूत्, प्राग् ग्रामात् प्रत्यग् ग्रामात् ॥ कृतेऽपि प्रत्ययग्रहणे कुतो नेति चेद् । अत्राहुः । कैयटादयः—प्रत्ययग्रहणमधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञायत इति लुप्ते अस्तातौ षष्ठ्यभावः ॥ 'अन्यारात्–' इत्यत्राप्युत्तरपदस्यापीदं प्रयोजनमुक्तम् । तत्रान्यतरच्छक्यमवक्तुमेकप्रयोजनत्वादिति प्रत्ययग्रहणं चिन्त्यप्रयोजनमिति तु मनोरमायां स्थितम् ॥—**पुर** इति । 'पूर्वाधरावराणाम्' इत्यसिप्रत्यये पुरादेशः ॥—**पुरस्तादिति** । 'दिक्शब्देभ्यः' इत्यादिनास्तातिः, 'अस्ताति च' इति पूर्वस्य पुरादेशः ॥—**एनपा**—॥ कथं तर्हि 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्' इति । उत्तरेणेत्येतद् 'दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन' इति तोरणसमानाधिकरणं तृतीयान्तं न त्वेनबन्तमित्याहुः ॥ 'धनपतिगृहानुत्तरेण' इति कश्चित् पठ्यते, तदा तु सम्यगेव ॥—**दक्षिणेनेति** । दक्षिणस्यामदूर इत्यर्थे 'एनबन्यतरस्याम्' इत्यादिना एनप् ॥—**दूरान्तिकार्थैः**—॥

१ एधो दकस्येति—एधः कर्ता, दकस्य उदकस्य । एधशब्दोऽदन्तः पुंलिङ्गः 'कारके' इति सूत्रभाष्ये प्रयुक्तः । 'एधाः पक्ष्यन्तीति' । सान्तः क्लीबो वा इति शब्देन्दुशेखरे । २ किं निमित्तमिति—इदं प्रथमान्तं द्वितीयान्तं च ।

स्पञ्चमी च। दूरं निकटं ग्रामस्य ग्रामाद्वा। **ज्ञोऽविदर्थस्य करणे** ।२।३।५१। जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात्। सर्पिषो ज्ञानम्। **अधीगर्थदयेशां कर्मणि** ।२।३।५२। एषां कर्मणि शेषे षष्ठी स्यात्। मातुः स्मरणम्। सर्पिषो दयनम्। ईशनं वा। **कृञः प्रतियत्ने** ।२।३।५३। कृञः कर्मणि शेषे षष्ठी स्याद्गुणाधाने। एधो दकस्योपस्करणम्। **रुजार्थानां भाववचनानामज्वरेः** ।२।३।५४। भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात्। चौरस्य रोगस्य रुजा॥ * **अज्वरिसंताप्योरिति वाच्यम्**॥ रोगस्य चौरज्वरः। चौरसंतापो वा। रोगकर्तृकं चौरसंबन्धि ज्वरादिकमित्यर्थः। **आशिषि नाथः** ।२।३।५५। आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात्। सर्पिषो नाथनम्। आशिषीति किम्। माणवकनाथम्। तत्संबन्धिनी याच्नेत्यर्थः। **जासिनिप्रहणनाटक्राथपिषां हिंसायाम्** ।२।३।५६। हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। चौरस्योज्जासनम्। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा। चौरस्य निप्रहणनम्। प्रणिहननम्। निहननम्। प्रहणनं वा। नट अवस्कन्दने चुरादिः। चौरस्योन्नाटनम्। चौरस्य क्राथनम्। वृषलस्य पेषणम्। हिंसायां किम्। धानापेषणम्। **व्यवहृपणोः समर्थयोः** ।२।३।५७। शेषे कर्मणि षष्ठी स्यात्। द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता। शतस्य व्यवहरणं पणनं वा। समर्थयोः किम्। शलाकाव्यवहारः। गणनेत्यर्थः। ब्राह्मणपणनं स्तुतिरित्यर्थः। **दिवस्तदर्थस्य** ।२।३।५८। द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात्। शतस्य दीव्यति।

---

षष्ठ्यां प्राप्तायां पक्षे पञ्चम्यर्थं वचनम्। इहान्यतरस्याग्रहणं समुच्चयार्थं, तेन विप्रकृष्टापि पञ्चमी समुच्चीयते व्याख्यानात्, न तु सन्निहिते अपि द्वितीयातृतीये तदाह—**पञ्चमी चे**ति॥—**सर्पिषो ज्ञानमि**ति॥ वस्तुतः करणीभूतं यत्सर्पिः तत्सम्बन्धिनी प्रवृत्तिरित्यर्थः। ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा॥—**अधीगर्थ**—॥ अधिशब्दोच्चारणम् 'इङिकावध्युपसर्गं न व्यभिचरतः' इति ज्ञापनार्थम्। अन्यथा 'स्मृत्यर्थदयेशाम्' इत्येव ब्रूयाद् 'इगर्थे–' ति वा॥ इङशे नेदं ज्ञापकमिति चेत्तर्हि तदंशे 'णेरध्ययने वृत्तम्' इत्यत्राधिशब्दोच्चारणं ज्ञापकमस्तु॥ अत्र व्याचख्युः। कर्मणि किम्। करणे शेषत्वविवक्षायां मा भूत्। मातुर्गुणस्मरणम्। अत्र माता कर्म, गुणास्तु करणम्, उभयत्र शेषत्वविवक्षायामपि मातृशब्दादेवानेन सूत्रेण षष्ठी गुणशब्दात्तु 'षष्ठी शेषे' इत्यनेन। तेन गुणस्मरणमिति समासो भवतीति॥—**रुजार्थानाम्**—॥ 'रुजो भङ्गे' भिदादिपाठादत एव निपातनाद्वा अङि टाप्। रुजा व्याधिरर्थो येषां तेषां रुजार्थानां धातूनां भाववाचकत्वाव्यभिचाराद् भावशब्देनात्र घञादिवाच्यः सिद्धरूपो भाव उच्यते। वक्तीति वचनः। बाहुलकात् कर्तरि ल्युट्। प्रकृत्यर्थस्तु न विवक्षितः। नहि भावो वक्ता सम्भवति तस्मात् प्रत्ययस्य साधुत्वनिर्वाहायैव वचिरिति बोध्यः। तथा चायमर्थः। भावो वचनः कर्ता येषां तेषां भाववचनानामिति, तदेतद्व्याचष्टे—**भावकर्तृकाणामि**ति। 'रुजार्थानां भावकर्तृकाणाम्' इत्येव सूत्रयितुं युक्तम्॥—**चौरस्ये**ति। चुरा शीलमस्य चौरः। अत्र कर्मणि शेषत्वविवक्षायामनेन षष्ठी॥—**रोगस्ये**ति। 'पदरुज–' इति घञा रोगो भावोऽभिधीयते स च रुजायां कर्ता 'कर्तृकर्मणोः–' इति रोगशब्दात् षष्ठी॥ भावकर्तृकाणां किम्। श्लेष्मणश्चौररुजा। 'मायुः पित्तं कफः श्लेष्मा' इत्यमरः॥—**चौरज्वर** इति। इह चौरशब्दाद् 'रुजार्थानां' इति षष्ठ्या अप्रवृत्तौ 'षष्ठी शेषे' इत्यनेन 'षष्ठी' इति समासो भवत्येवेति भावः॥—**सर्पिषो नाथनमि**ति॥ सर्पिर्मे भूयादित्याशासनमित्यर्थः॥—**माणवकनाथनमि**ति। यद्यपि कर्मत्वविवक्षायां 'कर्तृकर्मणोः–' इति यदा षष्ठी, तदा आशिष्यपि समासोऽस्त्येव। तथापि तत्र 'गतिकारकोपपदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरः, समासान्तोदात्तत्वं तु याच्ञायामेव न त्वाशिषीति निष्कर्ष इति कौस्तुभे स्थितम्॥—**जासि**—॥ 'जसु ताडने' 'जसु हिंसायाम्' इति च चुरादिस्तस्येदं ग्रहणं न तु दैवादिकस्य 'जसु मोक्षणे' इत्यस्य। जासीति निर्देशात् 'हिंसायाम्' इति वचनाच्च॥—**निप्रहणनमि**ति। 'हन्तेरत्पूर्वस्य' इति णत्वम्॥—**प्रणी**ति। 'नेर्गद–' इति णत्वम्॥—**चुरादिरि**ति। 'नट नृत्तौ' इति तु न गृह्यते दीर्घनिर्देशादिति भावः॥—**क्राथनमि**ति। 'क्रथ हिंसायाम्' इति घटादौ पठ्यते, तस्य मित्त्वेऽपि इह निपातनाद्वृद्धिः। 'मित्त्वफलं तु निपातनात्परत्वात्' 'चिण्णमुलोः' इति दीर्घे चरितार्थमिति घटादौ वक्ष्यति॥ यत्तु हरदत्तेनोक्तम्। 'घटादिपाठो 'घटादयः षितः' इत्यातिदेशिकत्वे अङ् यथा स्यादित्येतदर्थः' इति तन्मन्दम्। 'घटादयः षितः' इति हि मध्ये सूत्रितम्। तेन पूर्वेषां त्वरत्यन्तानामेव षित्त्वं, न तु ज्वरादीनां परेषामिति। अत एव त्वरत्यन्तास्त्रयोदशानुदात्तेतः 'षितश्च' इति घटादौ वक्ष्यति॥—**पणनमि**ति॥ 'स्तुतावेव' इति वक्ष्यमाणत्वादायस्याभावः॥—**ब्राह्मणपणनमि**ति। 'आयादय आर्धधातुके वा' इत्यायस्य विकल्पः॥—**दिवस्तद**—॥ तच्छब्देन व्यवहृपणौ परामृश्येते तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीतावित्याशयेनाह—**द्यूते**ति॥ पूर्वसूत्र एव दिवेः पाठे तदर्थस्येति न कर्तव्यमिति यद्यपि लाघवं, तथापि योगविभाग उत्तरार्थः॥—**कर्मणी**ति। इह शेष इति न संबध्यते उत्तरसूत्रे विकल्पारम्भसामर्थ्यात्। अन्यथा षष्ठ्यां विकल्पितायां तया मुक्ते शेषे विभक्त्यन्तरस्याप्राप्त्या वृथैव विकल्पारम्भः स्यादिति भावः॥ अन्ये

---

१ समर्थयोरिति—समपर्यायसशब्देन सह सुप्सुपेति समासः। शकन्ध्वादित्वात्पररूपं वा। तुल्यार्थयोरिति भावः।

तदर्थस्य किम्। ब्राह्मणं दीव्यति। स्तौतीत्यर्थः। **विभाषोपसर्गे** ।२।३।५९। पूर्वयोगापवादः। शतस्य शतं वा प्रतिदीव्यति। **प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने** ।२।३।६१। देवतासंप्रदानेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य वाचकाच्छब्दात्षष्ठी स्यात्। अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा। **कृत्वोऽर्थप्रयोगे कालेऽधिकरणे** ।२।३।६४। कृत्वोर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात्। पञ्चकृत्वोऽह्नो भोजनम्। द्विरह्नो भोजनम्। शेषे किम्। द्विरहन्यध्ययम्। **कर्तृकर्मणोः कृति** ।२।३।६५। कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्। कृष्णस्य कृतिः। जगतः कर्ता कृष्णः॥ * **गुणकर्मणि वेष्यते** ॥ नेताऽश्वस्य स्रुघ्नस्य स्रुघ्नं वा। कृति किम् तद्धिते माभूत्। कृतपूर्वी कटम्। **उभयप्राप्तौ कर्मणि** ।२।३।६६। उभयोः प्राप्तिर्यस्मिन्कृति तत्र

---

त्वाहुः, लाघवात् पूर्वसूत्रे एव दिवो ग्रहणे कर्तव्ये पृथग्योगकरणसामर्थ्यादत्र शेष इति न सवध्यते। न चोत्तरार्थत्वात्पृथग्योगस्य नोक्तार्थज्ञापकत्वमिति वाच्यम्। सकोचे मानाभावेन फलद्वयस्यापि सुवचत्वादिति शेष इत्यस्यासंबन्धादिह त्रिसूत्र्यां तिङन्तमुदाहरति—**शतस्य दीव्यती**ति॥—**प्रेष्यब्रुवोः**—॥ इष्यतेर्दैवादिकस्य लोटो मध्यमपुरुषैकवचनं प्रेष्येति। तत्साहचर्याद् ब्रुविरपि तथाभूत एव गृह्यते। अत एवेह शेषग्रहणं न संबध्यते तिङन्तेन सह समासस्याप्रसक्तत्वात्॥ प्रेष्यब्रुवोः किम्। अग्नये छागस्य हविर्वपां मेदो जुहुधि॥ हविषः किम्। अग्नये गोमयानि प्रेष्य॥ देवतासप्रदाने किम्। माणवकाय पुरोडाशान् प्रेष्य॥ **हविषः प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः**॥ इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य॥—**कृत्वोऽर्थे**—॥ कृत्वसुचोऽर्थ इवार्थो येषां प्रत्ययाना ते कृत्वोऽर्थाः॥—**शेषे** इति। इह 'दिवस्तदर्थस्य' इत्यादिसूत्रषट्के विच्छिन्नमपि शेषग्रहणमनुवर्तते व्याख्यानात्॥—**पञ्चकृत्व** इति। 'सङ्ख्यायाः क्रियाइत्यादिना कृत्वसुच्॥—**द्विरि**ति। 'द्वित्रिचतुर्भ्यः सुच्'॥—**कर्तृकर्मणोः कृति**॥ शेष इति निवृत्तं, 'कर्तरि च कृति' इति सूत्रे कृतेन चकारेण 'अधीगर्थ–' इति सूत्रात् 'चतुर्थ्यर्थे बहुलं छन्दसि' इति पर्यन्तमनुवर्तमानस्य कर्मणीत्यस्यानुकर्षणसभवेऽपि पुनरत्र कर्मग्रहणादित्याहुः। तन्मन्दं, सनिहितस्याधिकरणस्यानुकर्षणप्रसङ्गे तन्निवृत्तये कर्मग्रहणसभवात्। तस्मात् व्याख्यानमेवात्र शरणमित्यपरे॥ कर्तृकर्मणो[1] किम्। शस्त्रेण भेत्ता॥—**कृतिरि**ति। करण कृतिः 'स्त्रियां क्तिन्'। कृष्णोऽत्र कर्ता॥ कर्मण्युदाहरति—**जगत** इति। कृष्णस्य तृचाभिहितत्वात् ततः षष्ठी न भवति॥—**कृति किमि**ति। नन्विह कर्तृकर्मभ्यां क्रिया आक्षिप्यते तद्वाची तु धातुरेव। धातोश्च द्विविधाः प्रत्ययाः कृतस्तिङश्च तत्र तिङ्प्रयोगे कटं करोतीत्यादौ 'न लोका–' इति प्रतिषेधेन भाव्यं। ततश्च परिशेषात् कृद्योगे एव षष्ठी भविष्यति, तस्मात्किं कृद्ग्रहणेनेति प्रश्नः॥—**कृतपूर्वी कटमि**ति। अत्र करोतिक्रियापेक्षमनभिहित कर्मत्व कटस्यास्त्येवेति षष्ठी स्यात्तद्धिताधिक्ये तु सा मा भूदित्येतदर्थ कृद्ग्रहणमिति भावः। ननु कृत' कटः पूर्वमनेनेत्यस्मिन् विग्रहे क्तस्य कर्मणि विधानात्तेनैवाभिहितं कर्मेति नैव द्वितीया प्राप्नोति, नापि तदपवादभूता षष्ठी, इहाप्यनभिहिताधिकारात्। किंच कृतशब्दस्य कटसापेक्षतया समासो दुर्लभ एव, एवं तद्धितोऽपीति चेत्। अत्राहुः। पूर्वं कृतमनेनेति विग्रहे अविवक्षितकर्मतया भावे क्तप्रत्यये कृतशब्दस्य कटसापेक्षत्वाभावात् समासतद्धितौ भवत एव। तथा च 'कृतपूर्वं य पूर्वं कृतवान्' इत्यनेन समासार्थः सपद्यते गुणभूतयापि क्रियया कारकाणां सबन्धस्य कट कृतवानित्यादौ दर्शनादत्रापि करोतिक्रियापेक्ष कर्मत्व कटस्याभ्युपगम्यते। तच्च कर्मत्व न केनाप्यभिहितम्। भावे क्तस्य, कर्तरि इनिप्रत्ययस्य, च विधानात्। अतोऽसति कृद्ग्रहणे षष्ठी स्यादेवेति। एवं च ओदनस्य पाचकतम इत्यत्र षष्ठ्या असाधुत्वे इष्टापत्तिरेव शरणम्। कृतपूर्वीत्यत्र समासतद्धितौ भवत एवेत्युक्तम्। तत्र समासः 'सुप्सुपा' इति बोध्यः। तद्धितस्तु 'पूर्वादिनिः' 'सपूर्वाच्च' इति कर्तरि इनिः। तद्धितौ 'श्राद्धमनेन' इतिसूत्रादनेनेत्यनुवृत्तेः॥ स्यादेतत्। भिदेर्ण्यन्तात् 'पर्यायार्हर्णोत्पत्तिषु' इति ण्वुचि भेदिका यज्ञदत्तस्य देवदत्तस्य काष्ठानामित्युभाभ्यामप्यनेन कृद्योगषष्ठी जायते तत्र मुख्यामुख्यसनिधौ मुख्यस्यैव कार्ये सप्रत्ययात् प्रयोजककर्तृवाचकादेव स्यात्। अन्यथा पाचयत्योदन देवदत्तेन यज्ञदत्त इत्यत्र प्रयोज्यप्रयोजकयोरुभयोरपि लकारवाच्यत्वे उभाभ्यामपि कर्तृवाचकाभ्यां प्रथमा स्यात्। मैवम्। प्रयोज्यप्रयोजकवाचकाभ्या भेदेन षष्ठी जायते न त्वेकैवेति नेह मुख्यामुख्यन्यायप्रवृत्तिः। तत्र तु लकारस्यैकत्वात् कर्तुस्तद्वाच्यत्वकल्पनायामुक्तन्याय' प्रवर्तत इति वैषम्यात्। एव च ओदनः पाच्यते देवदत्तेन यज्ञदत्तेनेत्यादावुभाभ्यामपि तृतीया स्यादेवेति बोध्यम्॥ अत्र व्याचक्षते। 'तदर्हम्' इति निर्देशात् 'कर्तृकर्मणोः कृति' इत्येतदनित्यम्। तथा च 'धायैरामोदमुत्तमम्' इति भट्टिप्रयोगः सगच्छत इति॥—**उभयप्राप्तौ**—॥ कृतीत्यनुवर्तते। तेनान्यपदार्थत्वाद्बहुव्रीहिरित्याह—**उभयोः प्राप्तिर्यस्मिन्नि**ति। उभयशब्देन कर्तृकर्मणी परामृश्येते। तेनैकस्मिन् कृति कर्तृ-

---

१ पूर्वयोगेति—एतेन अत्रापि शेष इति नानुवर्तते, तदर्थस्येति चानुवर्तते इति ध्वनितमिति बोध्यम्। २ कर्तृकर्मणोरिति—क्रियाविशेषणानां कर्मत्वेऽपि कर्मशब्देन तेषां न ग्रहणम्, अत एव दारुण यथा भवति तथाध्यापक इत्यर्थकस्य दारुणाध्यापकशब्दस्य सिध्यर्थं मलोपवचनं भाष्यकृता आरब्धम्। अन्यथा समासेनैव सिद्धे तदर्थं स्यात् इति। इदमेव क्रियाविशेषणात् षष्ठ्यभावे लिङ्गम्।

कर्मण्येव षष्ठी स्यात्। आश्चर्यो गवां दोहोऽगोपेन ॥ स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः ॥ भेदिका बिभित्सा वा रुद्रस्य जगतः ॥ * **शेषे विभाषा** ॥ स्त्रीप्रत्ययइत्येके। विचित्रा जगतः कृतिर्हरेर्हरिणा वा। केचिदविशेषेण विभाषामिच्छन्ति। शब्दानामनुशासनमाचार्येणाचार्यस्य वा। **क्तस्य च वर्तमाने** ।२।३।६७। वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात्। न लोकेति निषेधस्याऽपवादः। राज्ञां मतो बुद्धः पूजितो वा। **अधिकरणवाचिनश्च** ।२।३।६८। क्तस्य योगे षष्ठी स्यात्। इदमेषामासितं शयितं गतं भुक्तं वा। **न लोकाव्ययनिष्ठाखलर्थतृनाम्** ।२।३।६९। एषां प्रयोगे षष्ठी न स्यात्। लादेशाः। कुर्वन् कुर्वाणो वा सृष्टिं हरिः। उः। हरिं दिदृक्षुः। अलंकरिष्णुर्वा। उक। दैत्यान् घातुको हरिः ॥ * **कमेरनिषेधः** ॥ लक्ष्म्याः कामुको हरिः। अव्ययम्। जगत् सृष्ट्वा। सुखं कर्तुम्। निष्ठा। विष्णुना हता दैत्याः। दैत्यान् हतवान् विष्णुः। खलर्थः। ईषत्करः प्रपञ्चो हरिणा। तृन्निति प्रत्याहारः शतृशानचाविति तृशब्दादारभ्यातृनो नकारात्। शानन्। सोमं पवमानः। चानश्। आत्मानं मण्डयमानः। शतृ। वेदमधीयन्। तृन्। कर्ता लोकान् ॥ * **द्विषः शतुर्वा**। मुरस्य मुरं वा द्विषन् ॥ सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः ॥ शेषे षष्ठी

---

कर्मणोः प्राप्तिलाभादाश्चर्यमिदमोदनस्य पाको ब्राह्मणानां च प्रादुर्भाव इत्यत्र नाय नियमः प्रवर्तते। तत्पुरुषे तु स्यादेवात्रातिप्रसङ्ग इति भावः ॥ पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमिति ध्वनयति—**कर्मण्येवे**ति। एवं च कर्तरि षष्ठीप्रतिषेधोऽस्य सूत्रस्य फलं, न तु कर्मणि षष्ठीविधानमिति स्थितम् ॥—**स्त्रीप्रत्यययोरि**ति। 'स्त्रियां क्तिन्' इत्यधिकारे विहितयोरित्यर्थः ॥—**नायं नियम** इति। अकाऽकारयोः प्रयोगे कर्मण्येव षष्ठी न तु कर्तरीति यो नियम उक्तः स न प्रवर्तते, किंतु कर्तर्यपि षष्ठी प्रवर्तत इति फलितोऽर्थ. ॥ कथ तर्हि 'सुट् तिथोः' इतिसूत्रे 'सुटा सीयुटो बाधो न' इति वृत्ति. अत्राहुः। कर्तुः करणत्वविवक्षाया तृतीया बोध्येति ॥—**भेदिके**ति। भेदन भेदिका। 'पर्यायार्हणोत्पत्तिषु ण्वुच्'। 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इत्यनेन ण्वुलित्येके। 'युवोरनाकौ' स्त्रियां टापि 'प्रत्ययस्थात्–' इति इत्वम् ॥—**बिभित्से**ति। भेत्तुमिच्छा। भिदेः सनि 'हलन्ताच्च' इति कित्त्वाद्गुणाभाव.। 'अ प्रत्ययात्' इत्यकारप्रत्यये टाप् ॥—**शेषे** इति। अकाऽकाराभ्यामन्यस्मिन् क्तिनादावित्यर्थः ॥ कर्तरि षष्ठीनिषेधफलकस्य 'उभयप्राप्तौ' इति सूत्रस्य तत्रैव कर्तरि षष्ठीसंपादनफलकस्य 'स्त्रीप्रत्यययोरकाकारयो.–' इति वचनस्य च प्राक् स्थितत्वान् कर्तर्येव विभाषा अनेन शेषवचनेन क्रियते, न तु कर्मणीत्याशयेनोदाहरति—**जगतः कृतिर्हरेर्हरिणा वे**ति ॥—**अविशेषेणे**ति। अकाऽकारभिन्ने कृन्मात्रे इत्यर्थः ॥—**अनुशासनमि**ति। अनुशिष्यने असाधुशब्देभ्यः प्रविभज्य बोध्यते येनेति करणे ल्युट् ॥—**राज्ञां मत** इत्यादि ॥ 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'पूजितो यः सुरासुरैः' इत्यादौ तु भूते क्तो, न तु वर्तमाने। तेन तृतीया तत्रोपपद्यते। न च 'मतिबुद्धि–' इतिसूत्रेण बाधः शङ्क्य·। 'तेन' इत्यधिकारे 'उपज्ञाते' इति लिङ्गेनाबाधज्ञापनात् ॥—**अधिकरण**—॥ अयमपि निषेधापवादः ॥—**आसितमि**ति। आस्यते अस्मिन्नित्यामित 'क्तोऽधिकरणे च–' इत्यधिकरणे क्तः ॥—**इदमेषामि**ति। कर्तरि षष्ठीयम्। सकर्मकेभ्यस्त्वधिकरणे कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी, अनभिहितत्वाविशेषात्। इदमेषां भुक्तमोदनस्य। 'उभयप्राप्तौ कर्मणि' इत्यय नियमस्तु नेह प्रवर्तते, 'कर्तृकर्मणोः कृति' इत्यनन्तरस्या एव षष्ठ्यास्तन्नियमाभ्युपगमात्। एतच्च कौस्तुभे स्पष्टम् ॥—**न लोक**—॥ जिघृक्षितरूपविनाशप्रसङ्गात् तृनामित्यत्र णत्व न कृतम्। उश्च उकश्च उकौ, लश्चोकौ चेति विग्रहः ॥ ल इति लटादीना सामान्यग्रहण, तेषां च साक्षात् प्रयोगो न संभवतीति तदादेशा गृह्यन्त इत्याह—**लादेशा** इति। उदाह्रियन्त इति शेष. ॥ कट कारयांचकारेत्यत्र कृत्सञ्ज्ञकलिडन्तामन्तेन योगेऽपि कटस्य 'कर्तृकर्मणोः कृति' इति षष्ठी न भवति 'आमः' इति लुकोऽपि लादेशत्वादित्याहुः ॥ नन्वेवमपि 'वज्रिर्वज्र पपि. सोम ददिर्गाः' इत्यत्र 'न लोका–' इति निषेधाप्रवृत्तेः षष्ठी दुर्वारैव, न हि किकिनौ लकारौ, नापि तदादेशौ। नैष दोषः। 'किकिनौ लिट् च' इत्यनेन लिट्कार्यातिदेशः क्रियते, न तु लिट्सञ्ज्ञा। तथा च विशेषातिदेशे च सामान्यमप्यतिदिश्यते इति नानुपपत्ति. ॥—**दिदृक्षुरि**ति। 'सनाशसभिक्ष उः' ॥ उकारेण कृतो विशेषणात्तदन्तमपि लभ्यत इत्याशयेनाह—**अलंकरिष्णुरि**ति। 'अलंकृञ्निराकृञ्–' इत्यादिना इष्णुच् ॥—**घातुक** इति। 'लषपत–' इत्यादिना उकञ् ॥—**ईषत्कर** इति। 'ईषद्दुस्सुषु–' इत्यादिना खल। अर्थग्रहणादीषत्पानः सोमो भवतेत्यप्युदाहार्यम् ॥ अव्याप्तिं परिहर्तुमाह—**प्रत्याहार** इति ॥–**पवमान** इति। 'पूङ्यजो शानन्' ॥—**मण्डयमान** इति। 'मडि भूषायाम्–' इदित्त्वान्नुम् 'ताच्छील्यवयोवचन–' इति चानश् ॥—**अधीयन्नि**ति। 'इङ्धार्योः' इति शता। शाननादिषु 'लटः' इत्यननुवृत्त्या लादेश इत्यसिद्धेः प्रत्याहारग्रहणमाश्रीयत इति भावः ॥—**तृन्नि**ति। ताच्छीलादिषु 'तृन्' इति विहितस्तृन् प्रत्ययः ॥ तृन्निति प्रत्याहारग्रहणान्नित्यं निषेधे प्राप्ते विकल्पमाह—**द्विष** इति। 'द्विष अप्रीतौ' इत्यस्मात् 'द्विषोऽमित्रे' इति विहितो यः शतृप्रत्ययस्तत्प्रयोगे वा षष्ठीनिषेध इत्यर्थः ॥—**सर्वोऽयमि**ति। 'अनन्तरस्य–' इति न्यायादिति शेषः ॥—**शेषषष्ठी**ति। शाब्दबोधे वैलक्षण्यमस्तीति भावः। एवं चाश्चर्यो गवां

---

१ कमेरिति—उकान्तस्येति शेषः। इद च भाषायामेव, भाषायामिति भाष्योक्तः।

तु स्या[1]देव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः । **अकेनोर्भविष्यदाधमर्ण्ययोः** ।२।३।७०। भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । सतः पालकोऽवतरति । व्रजं गामी । शतं दायी । **कृत्यानां कर्तरि वा** ।२।३।७१। षष्ठी वा स्यात् । मया मम वा सेव्यो हरिः । कर्तरीति किम् । गेयो माणवकः साम्नाम् । भव्यगेयेति कर्तरि यद्विधानादनभिहितं कर्म । अत्र योगो विभज्यते । **कृत्यानाम्** ॥ उभयप्राप्ताविति नेति चानुवर्तते । तेन नेतव्या व्रजं गावः कृष्णेन । ततः ॥ **कर्तरि वा** ॥ उक्तोऽर्थः । **तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्** ।२।३।७२। तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा । अतुलोपमाभ्यां किम् । तुला उपमा वा कृष्णस्य नास्ति । **चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः** ।२।३।७३। एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी आशिषि । आयुष्यं चिरंजीवितं कृष्णाय कृष्णस्य वा भूयात् । एवं मद्रं भद्रं कुशलं निरामयं सुखं शं अर्थः प्रयोजनं हितं पथ्यं वा भूयात् । आशिषि किम् । देवदत्तस्यायुष्यमस्ति । व्याख्यानात्सर्वत्रार्थग्रहणम् । मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः । **आधारोऽधिकरणम्** ।१।४।४५। कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात् । **सप्तम्यधिकरणे च** ।२।३।३६। अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः । औप[2]श्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छाऽस्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा ॥ दूरान्तिकार्थेभ्य इति विभक्ति-

---

दोहोऽगोपेनेत्यत्र शेषत्वविवक्षायां कर्तर्यपि षष्ठी भवत्येवेति बोध्यम् ॥—**अकेनोः**—॥ आधमर्ण्ये अकस्यासंभवादाह—**भविष्यत्यकस्ये**ति । इनस्तु उभयोः संभवादाह—**भविष्यदाधमर्ण्यार्थेनश्च योग** इति । यथासंख्य तु न भवति । भाष्ये 'अकस्य भविष्यति' 'इन आधमर्ण्ये च' इति योग विभज्य व्याख्यानात् । इह 'भविष्यदिति स्वर्यते तेन 'भविष्यति गम्यादयः' इत्यधिकारे विहितः 'तुमुन्ण्वुलौ–' इति ण्वुलेव गृह्यत इत्याशयेनोदाहरति—**सतः पालक** इति । सत इति शत्रन्तम् ॥ यस्तु कालसामान्ये 'ण्वुल्तृचौ–' इति ण्वुलुक्तस्तत्र न निषेधः । ओदनस्य पाचकः, पुत्रपौत्राणां दर्शक एतीति भावः ॥—**व्रजंगामी**ति । 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यके णिनिः । यद्यप्ययं कालसामान्ये विहितस्तथापि 'भविष्यति गम्यादयः' इत्युक्तेर्भविष्यदर्थकः । गम्यादयः, केचिदुणादयः केचिदष्टाध्यायीगता इति हरदत्तः ॥ ननु 'गत्यर्थकर्मणि चतुर्थी वा' इत्येव सिद्धे द्वितीयाग्रहणमपवादविषयेऽपि द्वितीयाप्रवृत्त्यर्थमिति व्रजगामीति सिध्यत्येवेति चेत् । अत्राहुः । इहैव सूत्रे ग्रामगामीति भाष्योदाहरणात्तत्सूत्र नाङ्गीक्रियते । तेन ग्रामस्य गन्तेति षष्ठ्येव साध्वी, न तु ग्रामं गन्तेति द्वितीयेति ॥—**शतं दायी**ति । 'आवश्यका–' इत्याधमर्ण्ये णिनिः । भविष्यदाधमर्ण्यार्थेनश्च योग इत्युक्तत्वान्नेह निषेधः । अवश्य करोत्यवश्यकारी कटस्य । गम्यादित्वाभावाद्वर्तमानेऽप्ययम् ॥—**कृत्यानाम्**—॥ 'कर्तृकर्मणोः–' इति नित्ये प्राप्ते विभाषेयम् ॥—**सेव्य** इति । 'षेवृ सेवायां' 'ऋहलो –' इति कर्मणि ण्यत् ॥—**योगो विभज्यत** इति । भाष्यकारैरिति शेषः । 'उभयप्राप्तौ–' इत्यनेन कर्तरि निषेधे सिद्धे कर्मणि निषेधार्थमिदम् । 'गुणकर्मणि वेष्यते' इति तूभयप्राप्तिरहितस्थले नेताश्वस्येत्यादौ चरितार्थमिति दिक् ॥—**तुल्यार्थैः**—॥ शेषषष्ठ्या प्राप्ताया विकल्पेन तृतीया अनेन विधीयते, तया मुक्ते षष्ठ्येव भवेत्तदाह—**पक्षे षष्ठी**ति । बहुवचननिर्देशादेव पर्यायग्रहणे सिद्धे 'तुल्यार्थ.–' इत्यर्थग्रहण पदान्तरनैरपेक्ष्येण ये तुल्यार्थास्तेषां ग्रहणार्थं, तेन गौरिव गवय इत्यादौ नेत्याहुः । कथं तर्हि 'तुला यदारोहति दन्तवाससा' इति कालिदासः, 'स्फुटोपम भूतिसितेन शंभुना' इति माघश्च । उच्यते । 'सह युक्तेऽप्रधाने' इति तृतीया । न चात्र सहशब्दयोगो नेति शङ्क्यं, विनापि तद्योगं तृतीयेत्यभ्युपगमात् । वेति वर्तमानेऽन्यतरस्याग्रहणमुत्तरसूत्रे चकारेण तस्यानुकर्षणार्थम् । अन्यथा हि तृतीयैवानुकृष्येत सनिहितत्वात् ॥—**तुल्य** इति । तुलया संमितस्तुल्यः । 'नौवयोधर्म–' इत्यादिना यत् ॥—**तुला उपमा वे**ति । तोलनं तुला अस्मिन्नेव सूत्रे णिलुगङोर्निपातनात्साधुरिति माधवः । उपमितिरुपमा । 'आतश्चोपसर्गे' इत्यङ् ॥—**हितमि**ति । 'हितयोगे च' इत्यनाशिषि चरितार्थमित्याशिष्ययं विकल्प इति भावः ॥—**व्याख्यानादि**ति । सूत्रेऽर्थशब्दोऽपि पृथङ् निमित्तं, तथा च द्वन्द्व एवात्र न त्वर्थशब्देन बहुव्रीहिरिति भावः ॥ इति षष्ठी ॥—**आधारः**—॥ आध्रियतेऽस्मिन्नित्याधार । 'अध्यायन्याय–' इति सूत्रे 'अवहाराधार–' इत्युपसंख्यानादधिकरणे घञ् । स चाधारः कस्येत्याकाङ्क्षायां कारकाधिकारात्क्रियाया इति लभ्यते । इयं च संज्ञा साक्षात् क्रियाधारयोर्न संभवति पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधितत्वात् । अतो व्याचष्टे—**कर्तृकर्मद्वारे**ति । एवं च भूतले घट इत्यादौ अस्तीति क्रियाध्याहारो बोध्यः ॥—**त्रिधे**ति ॥ एतच्च 'संहितायाम्' इति सूत्रे भाष्ये स्पष्टम् । नद्यामास्ते इत्याद्यर्थं सामीपिकमधिकरणं चतुर्थमपि केचिदिच्छन्ति ॥—**कटे आस्त** इति । कर्तृद्वारा क्रियाधारस्योदाहरणमिदम्, कर्मद्वारा क्रियाधारस्य तु **स्थाल्यां पचती**ति ॥ वैषयिकाधारमुदाहरति—**मोक्षे** इति । अभिव्यापकस्य तु—**सर्वस्मिन्नि**ति । तिलेषु तैलमि-

---

१ स्यादेवेति—अत्र नवीनाः 'कारकषष्ठीनिषेधविषये शेषे षष्ठी न भवति' इति वदन्ति, तच्च शेखरतोऽवगन्तव्यं, विस्तरभयान्नेह लिख्यते । २ औपश्लेषिक इति— उप'समीपे'श्लेषः 'संबन्धः' तत्कृत इत्यर्थः । एतस्योदाहरण तु गङ्गायां गाव इति ।

भ्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः ॥ *** क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्** ॥ अधीती व्याकरणे । अधीतमनेनेति विग्रहे इष्टादिभ्यश्चेति कर्तरीनिः ॥ *** साध्वसाधुप्रयोगे च** ॥ साधुः कृष्णो मातरि । असाधुर्मातुले ॥ *** निमित्तात्कर्मयोगे** ॥ निमित्तमिह फलम् । योगः संयोगसमवायात्मकः ॥ चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ १ ॥ हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थमिदम् । सीमाऽण्डकोशः । पुष्कलको गन्धमृगः । योगविशेषे किम् । वेतनेन धान्यं लुनाति । **यस्य च भावेन भावलक्षणम्** ।२।३।३७। यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः ॥ *** अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च** ॥ सत्सु तरत्सु असन्त आसते । असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्तस्तरन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति । **षष्ठी चानादरे** ।२।३।३८। अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः । **स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** ।२।३।३९। एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम् । गवां गोषु वा स्वामी । गवां गोषु वा प्रसूतः । गा एवानुभवितुं जात इत्यर्थः । **आयुक्तकुशलाभ्यां चासेवायाम्** ।२।३।४०। आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे । आयुक्तो व्यापारितः । आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा । आसेवायां किम् । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः । **यतश्च निर्धारणम्** ।२।३।४१। जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः ।

---

त्याद्यप्यभिव्यापकस्योदाहरणमाहु ॥—**चतस्र** इति । प्रातिपदिकार्थमात्रे इत्यर्थः । 'दूरान्तिकार्थेभ्यः–' इत्यस्येहानुवर्तनादधिकरणेऽप्येते बोध्या ॥—**क्तस्येन्विषयस्ये**ति । इन् इन्नन्त' शब्दो विषयो वर्तनभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः ॥ अन्ये त्वाहुः । इनो विषय इति षष्ठीसमास. । विषयशब्देनेह प्रकृतिरुच्येत । क्तान्तस्येनः प्रकृतित्वादिति ॥—**अधीती व्याकरणे** इति । भावे क्तप्रत्यये तत 'इष्टादिभ्यश्च' इति कर्तरीनौ कृते पश्चाद्गुणभूतक्रियया सबध्यमान व्याकरणमनभिहित कर्मेति कृतपूर्वीकटमितिवद्द्वितीयात्र प्राप्ता । मासमधीती व्याकरणे इत्यादौ त्वकर्मकैर्धातुभिर्योगनिमित्तकस्य कालकर्मणो बहिरङ्गत्वादिहाग्रहणमिति सप्तम्यभावः । न चैव तत्र द्वितीयापि न स्यादिति वाच्यम् । लक्ष्यानुरोधेन द्वितीयाविधाने व्यक्तिपक्षाश्रयणात् । एतच्च कौस्तुभे स्थितम् ॥—**साध्वसाधुप्रयोगे च** ॥ यत्रार्चा न विवक्षिता, किं तु तत्त्वकथनमात्रं तत्रापि सप्तम्यर्थं वार्तिकेऽस्मिन् साधुग्रहण साधुर्भृत्यो राज्ञीत्यादि यथा । 'साधुनिपुणाभ्याम्' इति सूत्रे साधुग्रहण त्वर्चायां विवक्षितायां प्रतियोगे सप्तमीनिवृत्त्यर्थमिति विवेकः ॥—**निमित्तमिह फलमि**ति । यदि तु कारणमित्युच्यते, तर्हि जाड्येन बद्ध इत्यादावतिप्रसङ्ग स्यादिति भाव. ॥—**चर्मणी**ति । चर्मद्वीप्यादीनां समवायः सबन्धः ॥—**हेतुतृतीये**ति । तादर्थ्ये चतुर्थीत्यपि बोध्यम् ॥—**सीमाण्डकोश** इति । तथा च मेदिनीकार'—'सीमा घाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्' इति । 'अथ पुष्पलको गन्धमृगे क्षपणकीलयोः' इति च ॥ हरदत्तस्तु पुष्कलकः शङ्कुः । सीम्नि सीमज्ञानार्थ हतो निहतः निखात इत्याह । अस्मिस्तु पक्षे सीमपुष्कलकयोः संयोगसबन्ध' ॥—**यस्य च**—॥ निर्ज्ञातकाला हि क्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षण, तत्र प्रसिद्धक्रियाश्रययोः कर्तृकर्मणोर्वाचकाद् ब्राह्मणादिशब्दाल्लक्ष्यलक्षणभावसबन्धषष्ठ्या प्राप्तायामिय सप्तमी । लक्षकत्व क्रियायाः साक्षात्, आश्रयस्य तु ब्राह्मणादे. क्रियाद्वारेणेति बोध्यम् ॥ ब्राह्मणेष्वधीयानेषु गत इति कर्तर्युदाहरणम् ॥ कर्मण्याह—**गोष्वि**ति ॥—**अर्हाणामि**त्यादि । यस्या क्रियायां ये उचितास्ते अर्हा । तेषां कर्तृत्वे विवक्षिते सति तत्र सप्तमी वाच्या ॥ तथा यस्यां क्रियाया येषां कर्तृत्वमनुचितं तेषामकर्तृत्वे विवक्षिते च सप्तमी वाच्या ॥ तथा तद्वैपरीत्ये येषा कर्तृत्वमुचित तेषामकर्तृत्वे येषा तु नोचितं तेषां कर्तृत्वे च सप्तमी वाच्येत्यर्थ ॥ आद्यमुदाहरति—**सत्सु तरत्सु** इति । सन्तो हि तरणक्रियार्हाः कर्तारश्च ॥ द्वितीयमुदाहरति—**असत्सु तिष्ठत्सु** इति । अत्र तरणक्रियायामसतामनर्हत्वमकर्तृत्व च तिष्ठत्स्वित्यनेन प्रतीयते । तद्वैपरीत्ये प्रथममुदाहरति—**सत्सु तिष्ठत्स्वि**ति । सता हि तरणमुचित तेषा चाकर्तृत्व तिष्ठत्स्वित्यनेन बोध्यते । द्वितीयमुदाहरति—**असत्सु तरत्स्वि**ति । असता हि तरणमनुचित तेषा कर्तृत्व तरत्सु इत्यनेन गम्यते ॥ यद्यपीद 'यस्य च भावेन–' इत्येव सिद्ध, तथापि लक्ष्यलक्षणभावाविवक्षायां सप्तम्यर्थमिदमिति कैयटादयः । तत्त्वतस्तु व्यर्थमेवेदमित्यन्ये ॥ —**षष्ठी चानादरे** ॥—**अनादर** इति । 'यस्य च भावेन' इत्यनेन सप्तमी । अनादरे सति यो भावं लक्षयतीति । तदेतत्फलितमाह—**अनादराधिक्य** इति । केवलभावलक्षणे सप्तम्येव अनादराधिक्ये तु षष्ठीसप्तम्याविति निष्कर्षः ॥—**स्वामीश्वर**— ॥ 'स्वाम्यर्थ–' इति वक्तव्ये स्वाम्यादित्रयग्रहण पर्यायान्तरनिवृत्त्यर्थम् । 'विरूपाणामपि समानार्थाम्' इत्येकशेषोऽत्र न भवति स्वरूपपरत्वेन समानार्थकत्वाभावात् ॥—**दायाद** इति । दायमादत्ते इति दायादः । सोपसर्गादप्या-

---

१ निमित्तादिति—मुक्ताफलाय कारणमित्यादौ तु क्रियार्थोपपदस्येत्यादिना चतुर्थी, तत्र घ्नन्तीति शेषः । २ तत इति—ज्ञापकक्रियाश्रयवाचकादित्यर्थः । ३ प्राव्राजीदिति—अनादरविशिष्ट प्रव्रजन धात्वर्थः ।

नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावन् शीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः। **पञ्चमी विभक्ते** ।२।३।४२। विभागो विभक्तम्। निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः** ।२।३।४३। आभ्यां योगे सप्तमी स्यादर्चायां न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा। अर्चायां किम्। निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्॥ * **अप्रत्यादिरिमिति वक्तव्यम्**॥ साधुर्निपुणो वा मातरं प्रतिपर्यनु वा। **प्रसितोत्सुकाभ्यां तृतीया च** ।२।३।४४। आभ्यां योगे तृतीया स्याच्चात्सप्तमी। प्रसित उत्सुको वा हरिणा हरौ वा। **नक्षत्रे च लुपि**।२।३।४५। नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे। मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्। मूले श्रवणे इति वा। लुपि किम्। पुष्ये शनिः। **सप्तमीपञ्चम्यौ कारकमध्ये** ।२।३।७। शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः। अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येऽयं कालः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्तृकर्मशक्त्योर्मध्येऽयं देशः। अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते। तदस्मिन्नधिकमिति यस्मादधिकमिति च सूत्रनिर्देशात्। लोके लोकाद्वाधिको हरिः। **अधिरीश्वरे** ।१।४।९७। स्वस्वामिभावसंबन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात्। **यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी** ।२।३।९। अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्। उप परार्धे हरेर्गुणाः। परार्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी। अधि भुवि रामः। अधि रामे भूः। सप्तमी शौण्डैरिति समासपक्षे तु रामाधीना। अषडक्षेत्यादिना खः। **विभाषा कृञि** ।१।४।९८। अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे।

---

दन्ताद् अत एव निपातनात्कः। गवां गोषु वा दायाद इत्यत्र यद्यपि गवामित्येतत्समुदायस्य विशेषणं, तथापि दीयतेऽसौ दाय इति व्युत्पत्त्या अवयवार्थभूतमंशं स्पृशत्येव, तथा चात्र गवात्मकस्यांशस्य आदातेति फलितोऽर्थः॥—**पञ्चमी विभक्ते**॥—**भेद एवे**ति। न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः॥—**तत्र पञ्चमी स्यादि**ति। नन्वेवं माथुरा इत्यत्रापि पञ्चमी स्यात्। मैवम्। पूर्वसूत्रमिहानुवर्तते तेन यतो निर्धार्यते तत एवेत्यर्थात् निर्धारणावधेरेव पञ्चमीप्रवृत्तेः। अनभिहिताधिकारान्माथुरा इत्यत्र नातिप्रसङ्ग इत्यन्ये॥—**माथुरा** इति। न ह्यत्र निर्धारणावधेर्निर्धार्यमाणस्य गवां कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति। किं तु शब्दोपात्तयोर्धर्मयोर्विरोध एव॥ इदं च सूत्रं बुद्धिपरिकल्पितापायमाश्रित्यापादानप्रकरणे भाष्ये प्रत्याख्यातम्॥—**साधुनिपुणाभ्यामर्चायाम्**—॥ 'पुण कर्मणि शुभे' अस्मान्निपूर्वादिगुपधलक्षणः कः। 'अर्च पूजायाम्' अस्माद्भौवादिकाद् 'गुरोश्च हलः' इत्यप्रत्यये टाप्। चौरादिकात् 'ण्यासश्रन्थः—' इति युच्यर्चनेति स्यात्॥—**निपुणो राज्ञ** इति। साधुशब्दप्रयोगे त्वर्चा विना सप्तमी भवत्येव 'साध्वसाधुप्रयोगे च' इति वार्तिकात्॥ —**अप्रत्यादिभिरि**ति। 'लक्षणेत्थम्—' इति सूत्रोपात्ताः प्रत्यादयः॥—**प्रसितोत्सुका**—॥ 'तत्परे प्रसितासक्तौ' इत्यमरः। उत्सुकसाहचर्यात् प्रसितोऽपि तत्पर एवेह गृह्यते रूढ्या च। तेन प्रकर्षेण सितः शुक्ल इत्यर्थे न भवति॥—**नक्षत्रे च लुपि**॥ लुप्शब्दोऽत्रार्थविशेषे लाक्षणिक इत्याशयेनाह—**यो लुप्संज्ञये**त्यादि॥—**अधिकरण** इति। एतच्च 'सप्तम्यधिकरणे च' इत्यतो मण्डूकप्लुत्यानुवर्तत इति भावः॥ अधिकरणे किम्। मूलं प्रतीक्षते, मूलाय स्पृहयति॥—**मूलेने**ति। 'नक्षत्रेण युक्तः कालः' इत्यणो 'लुबविशेषे' इति लुप्॥ नक्षत्र इति किम्। पञ्चालेषु तिष्ठति। इह 'जनपदे लुप्' इति लुप्॥—**सप्तमीपञ्चम्यौ**—॥ 'कालाध्वनोरत्यन्तसंयोगे' इत्यतः कालाध्वनोरित्यनुवर्तनं, तच्च पञ्चम्या विपरिणम्यते तदाह—**यौ कालाध्वानौ ताभ्यामि**ति। इह कालाध्वभ्यां विभक्त्योर्यथासंख्यं न भवत्यस्वरितत्वात्॥—**अद्य भुक्त्वायमि**ति॥ नन्वत्र कर्ता एक एव तत्कथं कारकयोर्मध्ये कालः। सत्यम्। नात्र शक्त्याश्रयं द्रव्यं कारकमिति व्यवह्रियते, किं तु शक्तिरेव। सा च कालभेदाद् भिद्यत एव। एका हि अद्य भुजेः साधनमपरा द्व्यहेऽतीते भुजेस्तदेतद्व्याचष्टे—**कर्तृशक्त्योर्मध्येऽयं काल** इति॥—**यस्मादधिकम्**—॥—**उप परार्ध** इति। 'उपोऽधिके च' इत्यनेन उपेत्यस्य कर्मप्रवचनीयसंज्ञा॥ 'यस्य चेश्वरवचनम्' इत्यस्य तन्त्रादिना अर्थद्वयं विवक्षितम्। तथा हि। यस्येत्यनेन स्वं निर्दिश्यते यस्य स्वस्य संबन्धी ईश्वर उच्यते ततः सप्तमीति व्याख्याने स्ववाचकात् सप्तमीत्येकोऽर्थः। ईश्वरशब्दो भावप्रधानः। यन्निष्ठमीश्वरत्वमुच्यते ततः सप्तमीति व्याख्याने स्वामिवाचकात् सप्तमीत्यपरः। एवं स्थिते फलितमाह—**स्वस्वामिभ्यां पर्यायेणे**ति। अन्यतरस्मादुत्पन्नयैव सप्तम्या इतरनिष्ठसंबन्धस्याप्युक्तत्वाद्युगपदुभाभ्यां न

---

१ नृणामिति—बहुवचनं तु उद्भूतावयवभेदविवक्षया। तिरोहितावयवभेदविवक्षया चैकवचनं तु भाष्यविरुद्धम्। २ कालाध्वानाविति—यद्यपि अवध्यवधिमतोः साजात्यनियमेन कालाध्वानौ कारकमध्ये न सम्भवतः, तथापि शक्तिपदेन तदाधारकालग्रहणान्न दोषः। ३ अधिकशब्देनेति—कर्तरिक्तप्रत्ययान्ताध्यारूढशब्दार्थाधिकशब्देनेत्यर्थः। कर्मणिक्तप्रत्ययान्ताध्यारूढशब्दार्थाधिकशब्दयोगे तु 'अधिको लोको हरिणा' इति प्रथमैव।

**यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते । अगतित्वात्तिङि चोदात्तवतीति निघातो न ॥ ॥ इति विभक्त्यर्थाः ॥**

---

## अव्ययीभावः ।

**समर्थः पदविधिः ।२।१।१। पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः । प्राक्कडारात्समासः ।२।१।३। कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते । सह सुपा ।२।१।४। सह इति योगो विभज्यते । सुबन्तं**

---

सप्तमी स्यादिति भावः ॥ विभक्त्यर्थेऽव्ययीभावे लधिराभम् ॥—**यदत्रेति** ॥ यो मामधिकरिष्यति विनियोक्ष्यते तस्य मद्विनियोक्तुरीश्वरत्व गम्यते इत्यर्थः ॥—**तिङि चोदात्तेति** । उदात्तवति तिङि परे गतिर्निहन्यत इति सूत्रार्थः । अत्र करिष्यतीति तिङन्त उदात्तवान् 'तिङतिङः' इति 'निपातैर्यद्यदि–' इत्यादिना निषेधात् ॥—**निघातो नेति** । मामिति द्वितीया तु 'कर्मणि द्वितीया' इत्यनेनैव सिध्यतीति भावः ॥ इति सप्तमी ॥ इतिविभक्त्यर्थाः ॥

**समर्थः पदविधिः** ॥ सामर्थ्यं च द्विविधं व्यपेक्षालक्षणमेकार्थीभावलक्षणं चेति । तत्र स्वार्थे पर्यवसायिनां पदानामाकाङ्क्षादिवशात् परस्परसंबन्धः सा **व्यपेक्षा** । सैव वाक्ये राज्ञः पुरुष इत्यादौ । तत्र व्यपेक्षायां सत्यां यो यः सन्निहितो योग्यश्च तेन संबन्धोऽभ्युपेयते । यथा राज्ञः पुरुषोऽश्वश्च ॥ राज्ञो देवदत्तस्य च पुरुष इति ॥ एकार्थीभावस्तु राजपुरुष इत्यादिवृत्तावेव । स च प्रक्रियादशाया पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः । अत एव राजपुरुष इत्यत्र राज्ञि ऋद्धस्येति विशेषणं नान्वेति, पदार्थैकदेशत्वात् । न चैव देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः, तत्रापि देवदत्तोत्तरषष्ठ्यर्थस्य गुरुणान्वयादिति वाच्यम् । देवदत्तस्य प्रधानीभूतकुलेनैवान्वयात् । गवन्वस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थे, न तु तदितरः । उक्तं च 'समुदायेन संबन्धो येषां गुरुकुलादिना । संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह' इति । यद्वा । ससंबन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः । उक्तं च 'संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते' इति । नन्वेवं राज्ञोऽपि नित्यसापेक्षत्वादेकदेशत्वेऽपि ऋद्धस्येति विशेषणेनान्वयोऽस्तु । मैवम् । राज्ञ ईशितुरीशितव्यं प्रति साकाङ्क्षत्वेऽपि ऋद्धप्रत्यनाकाङ्क्षत्वात् । ननु वाक्ये कुम्भयैवावयवशक्त्योपपत्तौ विशिष्टार्थविषयकशक्त्यन्तरमेव मास्तु । सत्यम् । 'बहूनां वृत्तिधर्माणां वचनैरेव साधने । स्यान्महद्गौरवं तस्मादेकार्थीभाव आस्थितः । चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् । कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितम्' । तथाहि—धवखदिराविति वृत्त्यैव क्रोडीकृतार्थत्वाच्चकारो न प्रयुज्यते, तथा चित्रग्वादौ यत्पदम् । त्वया तु वचनं कर्तव्यम् । निरूढलक्षणा तु शक्तितो नातीव भिद्यते । किं च प्राप्तमुदकं यमिति व्यस्ते समीचीनमुदकमिति विशेषणवत्समस्तेऽपि उदकविशेषणप्रयोगः प्राप्तः । स च 'वृत्तस्य विशेषणयोगो न' इति वचनेनैव वारणीयः, 'नामार्थयोरभेदान्वयः' 'प्रत्ययार्थः प्रधानम्' इति व्युत्पत्तित्यागश्च । प्राप्तोदक इत्यादौ उदककर्तृकप्राप्तिकर्मेत्याद्यर्थाभ्युपगमात् । एकार्थीभावे तु लाघवमिति दिक् ॥ पदग्रहणं किम् । वर्णविधौ समर्थपरिभाषा मा भूत् । तिष्ठतु दध्यानय तक्रम्, इह स्यादेव यण् ॥ विधिग्रहणं तु पदस्य विधिः पदयोर्विधिः पदानां विधिरित्यनेकविभक्त्यन्तसमासलाभार्थम् । पदस्येत्युक्तौ तु 'उपपदमतिङ्' इत्यादावेवास्योपस्थितिः स्यादित्याहुः ॥ सूत्रे समर्थशब्दो लाक्षणिक इति ध्वनयन्नाह—**समर्थाश्रित** इति ॥ समर्थेति किम् । पश्यति कृष्णं श्रितो देवदत्तमित्यादौ कृष्णश्रित इत्यादि समासो मा भूत् । तथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र 'तस्यापत्यम्' इत्युपगुशब्दादण् मा भूदिति । क्वचित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद्वृत्तिरङ्गीक्रियते । तद्यथा किमोदनः शालीनाम् । केषां शालीनामोदनमित्यर्थः । सक्त्वाढकमापणीयानाम् । आपणीयानां सक्तूनामाढकमित्यर्थः । कुतो भवान्पाटलिपुत्रकः । द्वे पाटलिपुत्रे तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः । 'रोपधेतोः प्राचाम्' इति वुञ् ॥—**प्राक्कडारात्समासः** ॥ प्राग्ग्रहणमावर्तते, तेन पूर्वं समाससंज्ञा ततः संज्ञान्तरमपीति लभ्यते । तेनाव्ययीभावादिभिः समावेशः सिध्यति । अन्यथा पर्यायः स्यात् ॥ समसनं समासः । भावे घञ् । अनेकस्य पदस्य एकपदीभवनमित्यर्थं इत्येके ॥ वस्तुतस्तु 'अकर्तरि च कारके–' इति कर्मणि घञ् । अन्यथा सुबन्तं समस्यते इत्युत्तरग्रन्थो न सगच्छेत ॥ नन्वन्वर्थत्वात्समाससंज्ञायाः प्रत्येकमप्रसङ्गात्सहग्रहणं व्यर्थमित्याशङ्क्याह—**योगो विभज्यत** इति ॥ 'सुबामन्त्रिते–' इत्यतः सुबित्यनुवर्तते तदाह—**सुबन्तमिति** ॥—**समस्यत** इति । सपूर्वादस्यतेः कर्मणि तङ् । आचार्येणेति शेषः । समर्थेनेति तु सहयोगे तृतीया । समसनक्रियां प्रति सुबन्तं कर्म न तु कर्तृ ॥ यद्यपि सुबन्तस्य कर्तृत्वाभ्युपगमेऽपि 'उपसर्गादस्यत्यूह्योः' इति वार्तिकेन समस्यत इत्यत्रात्मनेपदं लभ्यते, तथापि समास इति व्याख्येयग्रन्थे कर्तरि घञ् दुर्लभः ।

---

१ पदविधिरिति—पदविधिशब्देन पदविधिसहचरितोऽपि गृह्यते । तेन सन्नन्तादावेकार्थीभावोऽस्त्येव ।

तिश्चेत्यनुवर्तमाने । **ऊर्यादिच्विडाचश्च** ।१।४।६१। एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । उररीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ॥ कारिकाशब्दस्योपसंख्यानम् * ॥ कारिका क्रिया कारिकाकृत्य । **अनुकरणं चानितिपरम्** ।१।४।६२। खाट्कृत्य । अनितिपरं किम् । खाडिति कृत्वा निरष्ठीवत् । **आदरानादरयोः सदसती** ।१।४।६३। सत्कृत्य । असत्कृत्य । **भूषणेऽलम्** ।१।४।६४। अलंकृत्य । भूषणे किम् । अलं कृत्वौदनं गतः पर्याप्तमित्यर्थः । अनुकरणमित्यादि त्रिसूत्री स्वभावात्कृञ्विषया । **अन्तरपरिग्रहे** ।१।४।६५। अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् । अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः । **कणेमनसी श्रद्धाप्रतीघाते** ।१।४।६६। कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते ।मनःशब्दोऽप्यत्रैव । **पुरोऽव्ययम्** ।१।४।६७। पुरस्कृत्य। **अस्तं च** ।१।४।६८। अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात्॥ अस्तगत्य । **अच्छ गत्यर्थवदेषु** ।१।४।६९। अव्ययमित्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा उक्त्वा चेत्यर्थः । अव्ययं किम् । जलमच्छं गच्छति । **अदोऽनुपदेशे** ।१।४।७०। अदःकृत्य अदःकृतम् । परं प्रत्युपदेशे प्रत्युदाहरणम् । अदः कृत्वा । **तिरोऽन्तर्धौ** ।१।४।७१। तिरोभूय । **विभाषा कृञि** ।१।४।७२। तिरःकृत्य ।

---

चक' । गत्यादिसाहचर्यात् ॥—**ऊर्यादिच्विडाचश्च** ॥ 'उपसर्गाः क्रियायोगे' इत्यतोऽनुवर्तनादाह—**क्रियायोग** इति ॥ च्विडाचौ कृभ्वस्तियोगे विहितौ । तत्साहचर्यादूर्यादीनामपि तत्रैव गतिसञ्ज्ञा। तेनेह न ऊरीपक्त्वा ॥ माधवादिग्रन्थे तु 'आविःप्रादु.शब्दौ मुक्त्वा अन्येषा करोतिनैव योगे गतिसञ्ज्ञा' इति स्थितम् ॥ तथैवोदाहरति—**ऊरीकृत्येति** । एतच्च मनोरमानुसारेणोक्तम् ॥ वस्तुतस्तु ऊरीभूयेति भाष्योदाहरणाद्दिङ्मात्रमुदाहरति, ऊरीकृत्येत्यवतरितु युक्तम् । सञ्ज्ञाफल समासस्तत्फल च ल्यबिति बोध्यम् ॥ ऊरी उररी एतावङ्गीकारे । आवि शब्दस्य तु साक्षात्प्रभृतिषु पाठात् कृञो योगे गतिसञ्ज्ञाविकल्प., कृभ्वस्तियोगे त्वनेन नित्यमिति बोध्यम् ॥ कथ तर्हि 'वारुणीमदविशङ्कमथाविश्चक्षुषो भवदसाविव रागः' इति माघ इति चेत् । अत्राहु । 'ते प्राग् धातो.' इति सूत्रस्य प्रयोगनियमार्थत्वपक्षे अनुपपत्तावपि सञ्ज्ञानियमार्थत्वपक्षे दोषलेशोऽपि नास्तीति ॥—**शुक्लीति** । 'कृभ्वस्तियोगे सपद्यकर्तरि च्वि.' । 'अस्य च्वौ' इतीकार. ॥—**पटपटाकृत्येति** । 'डाचि बहुल द्वे भवत' इति पटच्छब्दस्य द्वित्वम् । 'अव्यक्तानुकरणाद् द्व्यजवरार्धान्' इति डाचि टिलोपः । 'नित्यमाम्रेडिते डाचि' इति तकारपकारयो पकार एकादेश. ॥ निपातसञ्ज्ञायाः समावेशार्थं सूत्रे चकार' । तेन ऊरीकृतमित्यत्र 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरे क्रियमाणे निपातप्रयुक्तमाद्युदात्तत्व भवति ॥—**कारिकेति** ॥ भावे 'पर्यायार्हण-' इति ण्वुच् । तदाह—**क्रियेति** । 'क्रियायोगे' इत्यनेन कारिकाशब्दस्य विशेषणात् श्लोकवाची कारिकाशब्दोऽत्र न गृह्यत इति भावः । क्रियाशब्दस्यात्र मर्यादास्थितिरर्थ' । यत्न इत्यन्ये ॥—**अनुकरणं चा**—॥ 'ते प्राग् धातोः' इत्यस्य सञ्ज्ञानियमपक्षेऽनितीति व्यर्थमिति मत्वा पृच्छति—**अनितिपरं किमिति** ॥ इतरत्तु प्रयोगनियमपक्षे खाडित्यनुकरणस्येतिशब्दे परे गतिसञ्ज्ञाया निवारणायानितिपरमित्यावश्यकमिति प्रत्युदाहरति—**खाडिति कृत्वेति** । सत्या सञ्ज्ञाया एष प्रयोगो नैव स्यात् । किंतु 'इति खाट्कृत्य' इत्येव स्यादिति भाव. ॥ न च 'इति खाट्कृत्य' इति न भवति, इते' परस्यानुकरणस्य गतिसञ्ज्ञानिषेधादिति वाच्यम् । 'अनितिपरम्' इत्यत्र इति परो यस्माद् इतिपरम्, न इतिपरमनितिपरमिति बहुव्रीहिघटितनञ्तत्पुरुषाश्रयणात् ॥ स्यादेतत् । अनुकरणस्येतिशब्दपरत्वे क्रियायोगाभावाद्गतिसञ्ज्ञा नास्तीति खाडिति कृत्वेति रूप निर्बाध, किमनेनानितिपरग्रहणेनेति चेत् । अत्राहुः । इतिकृत्वेति समुदाय एव कृत्वेत्यर्थे वर्तते। तथा च इतिशब्दः क्रियाविशेषकः इति तद्घटितसमुदायस्य क्रियावाचकत्वादस्त्येव क्रियायोग इति ॥—**हतं परिगृह्येति** । हत्वा गमन द्विधा हत त्यक्त्वा परिगृह्य चेति । आद्यमुदाहरण द्वितीय तु प्रत्युदाहरणम् । अपरिग्रहे इति च प्रयोगोपाधि , न तु वाच्यकोटिनिविष्टमिति भावः ॥—**कणेहत्येति**[1] ॥ अत्यन्तमभिलष्य तन्निवृत्तिपर्यन्त पिबतीत्यर्थ ॥ तथा च श्रद्धाया अपगमात्तत्प्रतिघातो गम्यते । प्रत्युदाहरण तु कणे हत्वा गत. । सूक्ष्मस्तण्डुलावयव. कणस्तस्मिन् हत्वेत्यर्थ' ॥—**पुरस्कृत्येति** ॥ 'पूर्वाधरावराणाम्–' इत्यसिप्रत्ययान्तोऽयमव्ययम् । 'नमस्पुरसो –' इति विसर्गस्य सः । 'अमु पुरः पश्यसि' इत्यत्र तु स्थितमित्यध्याहारेण दृशि प्रत्यगतित्वात्सत्वाभावः ॥ अव्यय किम् । पुर पुरौ पुर कृत्वा गत ॥—**अस्तं च** ॥ अव्ययमिति किम् । अस्त कृत्वा काण्ड गत' ॥ क्षिप्तमित्यर्थ ॥—**अच्छमिति**। सत्या हि गतिसञ्ज्ञाया निपातसञ्ज्ञावत्त्वेनाव्ययत्वात्सुब्लुक् स्यादिति भावः ॥—**अदःकृत्येति** ॥ यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम् ॥—**अदः कृतमिति** । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् ॥—**प्रत्युदाहरणमिति** । अद कृत्वा अद.कुर्वित्यादीत्यर्थः ॥—**तिरोऽन्तर्धौ** ॥ अन्तर्धौ किम् । तिरो भूत्वा स्थित. । पार्श्वतो भूत्वेत्यर्थः ॥—**विभाषा कृञि** ॥—**तिरः कृत्वेति** । गतित्वाभावपक्षे 'तिरसोऽन्यतरस्याम्' इति सत्वमपि न भवति । तद्विधौ गतिग्रहणानुवृत्ते । माधवस्तु पराभवे तिरस्कारप्रयोगदर्शनात्सत्व-

---

१ कणेहत्वेति—'परावरयोगे च' इति क्त्वा ।

तिरस्कृत्य । तिरः कृत्वा । **उपाजेऽन्वाजे** ।१।४।७३। एतौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य । उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः । **साक्षात्प्रभृतीनि च** ।१।४।७४। कृञि वा गतिसंज्ञानि स्युः ॥ * **च्व्यर्थ इति वाच्यम्** ॥ साक्षात्कृत्य । साक्षात्कृत्वा । लवणंकृत्य । लवणं कृत्वा । मान्तत्वं निपातनात् । **अनत्याधान उरसिमनसी** ।१।४।७५। उरसिकृत्य । उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य । मनसि कृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेषणं तत्र न । उरसि कृत्वा पाणिं शेते । **मध्ये पदे निवचने च** ।१।४।७६। एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा। निवचनेकृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः । **नित्यं हस्ते पाणावुपयमने** ।१।४।७७। कृञि । उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य । **प्राध्वं बन्धने** ।१।४।७८। प्राध्वमित्यव्ययम् । प्राध्वंकृत्य । बन्धनेनानुकूलं कृत्वेत्यर्थः । प्रार्थनादिना त्वानुकूल्यकरणे । प्राध्वं कृत्वा । **जीविकोपनिषदावौपम्ये** १।४।७९। जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । औपम्ये किम् । जीविकां कृत्वा । प्रादिग्रहणमगत्यर्थम् । सुपुरुषः । अत्र वार्तिकानि ॥ * **प्रादयो गताद्यर्थे प्रथमया** ॥ प्रगत आचार्यः प्राचार्यः ॥ * **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** ॥ अतिक्रान्तो मालामतिमालः ॥ * **अवादयः क्रुष्टाद्यर्थे तृतीयया** ॥ अवक्रुष्टः कोकिलया अवकोकिलः ॥ * **पर्यादयो ग्लानाद्यर्थे चतुर्थ्या** ॥ परिग्लानोऽध्ययनाय पर्यध्ययनः ॥ * **निरादयः क्रान्ताद्यर्थे पञ्चम्या** ॥ निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः ॥ * **कर्मप्रवचनीयानां प्रतिषेधः** ॥ वृक्षं प्रति । **तत्रोपपदं सप्तमीस्थम्** ।३।१।९२। सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः । **उपपदमतिङ्** ।२।२।१९। उपपदं सु-

---

विधौ गतिग्रहणानुवृत्तिं केचिन्नेच्छन्तीत्याह ॥—**उपाजेऽन्वाजे** ॥ एतौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते । तदाह—**दुर्बलस्य** इति ॥—**साक्षात्प्रभृ-**॥ साक्षात् । मिथ्या । आम् । श्रद्धा । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् । गतिसञ्ज्ञासंनियोगेन लवणादीना पञ्चानां मकारान्तत्व निपात्यते । प्रादुस् । नमस् । आविस् इत्यादि । आकृतिगणोऽयम् ॥—**साक्षात्कृत्येति** । असाक्षाद्भत यथा साक्षाद्भवति तथा कृत्वेत्यर्थः ॥ च्व्यन्तेषु तु पूर्वविप्रतिषेधात् 'ऊर्यादिच्विडाचश्च' इति नित्यैव सञ्ज्ञा । तेन लवणीकृत्येत्यत्र मान्तत्वं न भवति । तद्धि पाक्षिकगतिसञ्ज्ञासंनियोगेनेह गणे निपातनात् ॥ भाष्यकृता लवणशब्दस्य लवणीशब्दस्य वा विकल्पेन लवणशब्द आदिश्यते तस्य च संज्ञाविकल्प इत्युक्तम् । उभयथापि त्रैरूप्य निर्बाधम् ॥—**अनत्या—**॥ उरसिमनसी विभक्तिप्रतिरूपकौ ॥—**मध्ये पदे-**॥ 'विभाषा कृञि' इति वर्तते । चकारात् 'अनत्याधाने' इति च । एषामनत्याधानरूपार्थविशेषे एदन्तत्वमविशेषेण निपात्यते, न तु गतिसञ्ज्ञासंनियोगेन । अनत्याधाने किम् । पदे कृत्वा शिरो नमति ॥—**वाचं नियम्येति**। निवचन हि वचनाभावः । अर्थाभावेऽव्ययीभावः ॥—**नित्यं हस्ते—**॥ उपयमनरूपार्थ एवैतयोरेदन्तत्वमौदन्तत्व च निपात्यते ॥ **हस्तेकृत्य** । परिणीयेत्यर्थः ॥ उपयमने किम् । हस्ने कृत्वा कार्षापण गतः ॥ स्वीकारमात्रमिति पक्षे तु नालमिति बुद्ध्या परावृत्य नानार्थ गत इति योज्यम् ॥—एव तावद्गतिसमासानुदाहृत्य प्रादिसमासान्वक्तुमारभते ॥—**प्रादिग्रहणमिति** ॥—**सुपुरुष** इति । क्रियायोगाभावाद्गतित्वाभाव' । अव्यवस्थया समासप्रसक्तौ व्यवस्थार्थ वचनानि पठ्यन्ते—**प्रादय** इति । आदिशब्द उभयत्र प्रकारे । तेन दुराचार. पुरुषो दुष्पुरुष इत्यादि सिद्धम् ॥—**प्रगत आचार्य** इति । अनेन गतार्थे वृत्तिमस्वपदविग्रहेण नित्यसमासता च दर्शयति । एव प्रगतः पितामहः प्रपितामहः । प्रमातामह इत्यादि ॥—**अत्यादय** इति । आदिपदादभिगतो मुखमभिमुख । उद्गतो वेलामुद्वेल' । प्रतिगतोऽक्ष प्रत्यक्ष इत्यादि सिद्धम् ॥ **अतिमाल** इति । 'गोस्त्रियोः–' इति ह्रस्वः ॥—**अवादय** इति । आदिपदात्परिणद्धो वीरुधा परिवीरुत् । सनद्धो वर्मणा संवर्मेति ॥—**पर्यादय** इति । आदिपदादुद्युक्तः सङ्ग्रामाय उत्सङ्ग्रामः ॥—**अध्ययनायेति** । तादर्थ्ये चतुर्थी । गुरुकुलवासादिना परिग्लानोऽध्ययनार्थमित्यर्थः ॥—**निरादय** इति । आदिपदादुत्क्रान्तः कुलादुत्कुलः । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥—**प्रतिषेध** इति । 'कुगतिप्रादयः' इति प्रसक्तसमासस्य वक्तव्यः प्रतिषेधः स च 'सुराजा, अतिसखा' इति भाष्यादिप्रयोगात्स्वतिभिन्नानामेव कर्मप्रवचनीयानामित्यर्थः ॥ **वृक्षं प्रतीति** ॥ 'लक्षणेत्थंभूता–' इति कर्मप्रवचनीयत्वविधिसामर्थ्यादिह समासो नेति चेन । तर्हि अपिस्तुतमित्युदाहार्यम् । 'अपि स्तुयाद्विष्णुम्' इत्यादौ 'अपिः पदार्थसभावना–' इत्यस्य सावकाशत्वात्स्वरे विशेषसत्त्वाच्चेत्याहुः ॥—**तत्रोपपदम्-**॥ सप्तमीस्थमित्यतद्व्याचष्टे ॥—**सप्तम्यन्त** इत्यादिना ॥—**तद्वाचकं पदमिति** । एतच्चोपपदमित्यन्वर्थसञ्ज्ञाबलाल्लभ्यते । अत एव सञ्ज्ञाविधावपि सप्तमीग्रहणेन सप्तम्यन्तं गृह्यते ॥ 'धातोः' इति पृथगधिकारबलात् 'सनिहिते धात्वधिकारे' इति लभ्यते । तेन 'च्लि लुङि' इत्यस्य लुङन्ते अभूदित्यादावुपपदे धातोश्च्लिरित्यर्थो न भवति ॥ तत्रग्रहणं व्याचष्टे—**तस्मिन् सत्येवेति** । उपपदे सत्येवेत्यर्थः । तत्रग्रहणाभावे तु

---

१ प्राध्वमिति—इद मान्तमव्यय बन्धनेनानुकूल्ये वर्तते ।

**बन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः । कुम्भं करोतीति कुम्भकारः। इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम् । अतिङ् किम् । मा भवान् भूत् । माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । अतिङ्ग्रहणं ज्ञापयति सुपेत्येतदिहानुवर्तत इति । पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते । सुपेति च निवृत्तम् । तथा च ॥ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति सिद्धम् ॥ व्याघ्री । अश्वक्रीती । कच्छपी ॥ अमैवाव्ययेन ।२।२।२०। अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारम् । नेह । कालसमयवेलासु तुमुन् । कालः समयो वेला वा भोक्तुम् । अमैवेति किम् । अग्रे भोजम् । अग्रे भुक्त्वा । विभाषाग्रेप्रथमपूर्वेष्विति**

'धः कर्मणि ष्ट्रन्' इत्यादाविव 'कर्मण्यण्' इत्यादावपि कर्मण्यभिधेये अणित्याद्यर्थः स्यात् । तथा च कर्तर्यण् प्रत्ययो न स्यात् । किं च सप्तम्यन्तनिर्देशस्योपपदसंज्ञार्थतया चरितार्थत्वात्केवलादपि धातोः कर्तर्यण् प्रत्ययः सभाव्येत, कृते तु तत्रग्रहणे कुम्भाद्युपपदस्य प्रत्ययोत्पत्तौ निमित्तत्वप्रतीत्या केवलादण्प्रत्ययशङ्कैव नास्ति । एवं स्थिते 'धः कर्मणि–' इत्यादौ क्वचिदर्थग्रहण व्याख्यनादित्याहुः ॥ अन्ये तु 'तत्रोपपदम्–' इत्यस्य 'कर्मण्यण्' इत्यादेश्चैकवाक्यतया प्रवृत्तावुपपदसंज्ञाया निर्विषयत्वापत्तेस्तत्रग्रहण विनापीष्ट सिद्ध्यत्येवेत्याहु. ॥—**समर्थेने**ति ॥ तेन महान्त कुम्भ करोतीत्यादौ नातिप्रसङ्गः ॥ —**अतिङन्तश्चे**ति । सुबिति तु अनुवर्तत एवेति अतिङन्तमिति नोक्तमिति भावः ॥—**कुम्भ असि**ति । अमिति तु नोक्त कृद्योगे षष्ठीविधानात् ॥—**अतिङ् किमि**ति । 'सुपा' इत्यधिकारात्किमनेनेति प्रश्न. ॥ इतरो वक्ष्यमाणं ज्ञापक मनसि निधाय प्रत्युदाहरति—**मा भवानि**ति । समासाभावसूचनाय भवानिति मध्ये प्रयुक्तम् ॥ —**पूर्वसूत्र** इति । कुप्रादयः, गतिः, इति योग विभज्य 'कुप्रादयः सुबन्ताः सुबन्तेन समस्यन्ते, गतिश्च सुबन्तोऽतिङन्तेन समस्यते इति व्याख्येयमित्यर्थः ॥—**तथा चे**ति । यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः । तथापि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत इति भावः ॥ कारकांशे तु 'कर्तृकरणे कृता–' इति सूत्रस्थबहुलग्रहणमुक्तार्थे साधकमित्यपि मनोरमायां स्थितम् ॥—**प्रागि**ति । कृदन्तात्तरमपदात्सुबुत्पत्तेः पूर्व समास इत्यर्थ. ॥ प्रथमान्तसुब्ग्रहणं त्विहानुवर्तत एव । तेन राजदर्शीत्यादौ पूर्वपदे नलोपादि कार्य सिध्यति ॥ परिभाषाफलं दर्शयन् गतिमुदाहरति–**व्याघ्री**ति ॥ व्याजिघ्रतीति व्याघ्री 'आतश्चोपसर्गे' इति क. । 'पाघ्राध्माधेट्दृशः–' इति शस्तु संज्ञायां न भवति व्याघ्रादिभिरिति निर्देशादिति वक्ष्यते । व्याङो घ्रशब्देन गतिसमास । स यदि घ्रशब्दस्य सुबन्ततामपेक्षेत, तर्हि सुबुत्पत्तये सख्याद्यपेक्षेत । ततः प्रागेव लिङ्गयोग इति लिङ्गनिमित्तप्रत्ययेन टापा भाव्य न तु ङीषा । घ्रशब्दमात्रस्य जातिवाचित्वाभावात् ततो घ्राशब्देन समास इत्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादिति भाव. ॥ यद्यप्युपपदत्वेनाप्येतत्सिद्ध, तथापि गतिग्रहणमाङो घ्रशब्देन समासे पश्चादाघ्रशब्देन विशब्दस्य समासार्थमावश्यकमेव । आङ्पूर्वाद्धातोः कप्रत्ययविधानादाङ उपपदसंज्ञाभ्युपगमेऽपि विशब्दे तदनभ्युपगमादिति बोध्यम् ॥ कारकमुदाहरति—**अश्वक्रीती**ति । अश्वेन क्रीता 'कर्तृकरणे कृता–' इति समास. । 'क्रीतात्करणपूर्वात्' इति ङीष् । सुबन्तेन समासे तु टापा भाव्यमित्यदन्तत्वाभावात् 'क्रीतात्करण–' इत्यय ङीष् न स्यादिति ज्ञेयम् ॥ उपपदमुदाहरति—**कच्छपी**ति । कच्छेन पिबतीति कच्छपी । 'सुपि' इति योगविभागात्कः । इहापि समासस्य सुबन्ततापेक्षाया टाबेव स्यान्न ङीषित्यादिव्याघ्रीत्यत्रेव बोध्यम् ॥ प्राचा तु 'उपपदमतिङन्त समस्यते' इत्युक्तम् । तदसत् । तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्यापत्त्या राजदर्शी चर्मकार इत्यादौ नलोपो न स्यादपदान्तत्वात् । प्राटितेत्यादौ 'अतो गुणे' इति पररूप च स्यात् ॥ स्यादेतत् कच्छेन साधनेन पिबतीत्यर्थाभ्युपगमे कच्छस्य कारकत्वेन कच्छपीति रूपसिद्धौ नेदमुपपदस्यासाधारणोदाहरणमिति चेत् । एव तर्हि माषवापिणीत्युदाहर्तव्यम् । 'सुप्यजातौ–' इति णिनौ कृते माषोपपदस्य कृदन्तेन समासे 'प्रातिपदिकान्त–' इत्यादिना पूर्वपदस्थान्निमित्तात्परस्य समासप्रातिपदिकान्तनकारस्य णत्व सिद्ध्यति । सुबन्तेन समासे त्वन्तरङ्गत्वान्नान्तलक्षणे ङीपि पश्चाद्वापिनीशब्देन समासे गर्गभगिनीत्यत्रेव णत्व न स्यादित्येके ॥ अन्ये तु कच्छेन हेतुना पिबतीत्यर्थविवक्षाया कच्छस्याकारकत्वात्कच्छपीत्युपपदस्योदाहरण सम्यगेवेत्याहुः ॥—**अमैवाव्ययेन** ॥ पूर्वेण सिद्धे नियमार्थमिदम् ॥—**तुल्यविधानमि**ति । एतच्चाध्याहारेण लभ्यम् ॥—**तदेवे**ति । यस्मिन्नुपपदे येन वाक्येन अमेव विहितस्तदेवोपपदमव्ययेन समस्यते, नान्यदित्यर्थः । नियमबललभ्योऽयमेवकारो न तु सूत्रस्थः ॥—**स्वादुंकारमि**ति । 'स्वादुमि णमुल्' ॥ अव्ययेनेति किम् । कुम्भकारः । असति ह्यव्ययग्रहणे अमेव यत्तुल्यविधान तदेव केनचित्समर्थेन समस्यते । तथा सति 'स्वादुंकारः' इत्यत्रैव समासः स्यान्न तु कुम्भकार इत्यत्र ॥ अथ पूर्वसूत्रवैयर्थ्यभीत्या अव्ययविषयकनियम इति चेत् । तर्हि अमन्तविषयक एव किं न स्यात् 'अमन्तेन यः समासः सोऽमैव तुल्यविधानस्य' इति । तथा चाग्रेभोजमित्यत्र समासो मा भूद्, अग्रे भुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेवेति भाव. ॥ तदेवेति किम् । कालो भोक्तुम् । समयो भोक्तुम् । अमैवेत्येवका-

१ अतिङन्तश्चेति—कथमपि तिङन्ताघटित इत्यर्थः । २ अलौकिकं प्रक्रियावाक्यमिति—समासप्रवृत्तियोग्य लोके प्रयोगानर्हमित्यर्थः । ३ अमैवेति—अमिति णमुल्खमुञो: सामान्यग्रहणम्, तेन चोरंकारमित्युदाहरणीयम् ।

क्त्वाणमुलौ। अमा चान्येन च तुल्यविधानमेतत्। **तृतीयाप्रभृतीन्यन्यतरस्याम्** ।२।२।२१। उपदंशस्तृतीयायामित्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते। मूलकेनोपदंशं भुङ्क्ते। मूलकोपदंशम्। **क्त्वा च**। २।२।२२। तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते। उच्चैःकृत्य उच्चैः कृत्वा। अव्यये यथाभिप्रेतेति क्त्वा। तृतीयाप्रभृतीनीति किम्। अलं कृत्वा। खलु कृत्वा। **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः** ।५।४।८६। संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु। निर्गतमङ्गुलिभ्यो निरङ्गुलम्। **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः** ।५।४।८७। एभ्यो रात्रेरच् स्यात्संख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्। अहश्च रात्रिश्चाहोरात्रः। सर्वा रात्रिः सर्वरात्रः। पूर्वं रात्रेः पूर्वरात्रः। संख्यातरात्रः। पुण्यरात्रः। द्वयो रात्र्योः समाहारो द्विरात्रम्। अतिक्रान्तो रात्रिमतिरात्रः। **राजाहःसखिभ्यष्टच्** ।५।४।९१। एतदन्तात्तत्पुरुषाट्टच् स्यात्। परमराजः। अतिराजी। कृष्णसखः। **अह्नष्टखोरेव** ।६।४।१४५। टिलोपः स्यान्नान्यत्र। उत्तमाहः। द्वे अहनी भृतो द्व्यहीनः क्रतुः। तद्धितार्थे द्विगुः। तमधीष्ट इत्यधिकारे द्विगोर्वेत्यनुवृत्तौ रात्र्यहःसंवत्सराच्चेति खः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह। मद्राणां राज्ञी मद्रराज्ञी। **अह्नोऽह्न एतेभ्यः** ।५।४।८८। सर्वादिभ्यः परस्याहन्शब्दस्याह्नादेशः स्यात्समासान्ते परे। **अह्नोऽदन्तात्** ।८।४।७। अदन्तपूर्वपदस्था-

---

रेणामा चान्येन तुल्यविधानस्योपपदस्य समासनिवारणेऽपि तुमुना तुल्यविधानस्य स्यादेवातस्तन्निवारणाय तदेवेत्युक्तम्॥ —**तृतीयाप्रभृतीन्यन्यतरस्याम्**॥ उभयत्र विभाषेयम्। अमैव तुल्यविधानस्य प्राप्तेऽमा चान्येन तुल्यविधानस्याप्राप्ते चारम्भात्। प्राप्ते यथा। 'उपदंशस्तृतीयायाम्' मूलकेनोपदंशं मूलकोपदंशम्॥ अप्राप्ते यथा। 'अव्यये यथाभिप्रेताख्याने' इति क्त्वाणमुलौ। उच्चैःकारम्। इह समासपक्षे कृदुत्तरपदप्रकृतिस्वरः 'आदिर्णमुल्यन्यतरस्याम्' इत्याद्युदात्तत्वम्। असमासे तु उच्चैरित्यन्तोदात्तत्वम्। 'उदि चेर्डसि' इति व्युत्पत्तिपक्षे प्रत्ययस्वरस्य, अव्युत्पत्तिपक्षे तु 'फिष' इत्यस्य च प्रवृत्तेरित्याहुः॥ मनोरमायां तु उच्चैरित्यन्तोदात्तस्वरादिषु तथा पाठादिति स्थितम्॥ अमेत्यनुवर्तत इत्याह— **अमन्तेनेति**। तेनेह न। पर्याप्तो भोक्तुम्। 'पर्याप्तिवचनेषु–' इति तुमुन्॥—**क्त्वा च**॥ क्त्वेति तृतीयान्तम्। 'आतः' इति योगविभागादालोप. 'त्विष स्कन्दिस्यन्दोः' इतिवदिति हरदत्त.। तन्न। सवर्णदीर्घेणापि तृतीयान्तत्वोपपत्तेः॥ —**अलं कृत्वेति**। 'अलंखल्वोः प्रतिषेधयोः–' इति सूत्रस्य 'उपदंशस्तृतीयायाम्' इत्यस्मात्पूर्वत्वान्नेह समासः॥—तत्पुरुषे असाधारणान् समासान्तानाह—**तत्पुरुषस्येति**। अलोन्त्यविधि बाधित्वा 'प्रत्ययः' 'परश्च' इति परत्वात्तत्पुरुषात्पर एवाच्प्रत्ययो भवति। यथा गापोष्टक् किन्त्वेऽपि गापाभ्यां पर एव टग् भवति, न त्वन्तावयवः। श्रमस्तु अनुबन्धकरणसामर्थ्यात्परविधिर्बाध्यते। एवं च लाघवात् 'तत्पुरुषादङ्गुले–' इति वक्तव्ये 'तत्पुरुषस्याङ्गुले.–' इति तु समासान्तापेक्षया अवयवषष्ठीत्याहुः॥—**द्व्यङ्गुलमिति**। 'तद्धितार्थ–' इति समास.। 'द्विगोर्नित्यम्' इति मात्रचो लोप इति वृत्तिकृत्॥ मनोरमायां तु द्वयसचो लुगिति स्थितम्॥—**द्वन्द्वार्थमिति**। अह्नो रात्रिरिति षष्ठीतत्पुरुषस्यासम्भवादिति भावः॥ ननु अहःशब्दस्याहस्तुल्यतया रात्रिशब्दस्य रात्रितुल्यतया गौणत्वसम्भवादहश्चासौ रात्रिश्चेति कर्मधारयोऽस्त्विति चेन्न। मुख्यसम्भवे गौणग्रहणायोगात्। 'हेमन्तशिशिरावहोरात्रे च' इत्यत्र द्वन्द्वे समासान्तदर्शनाच्च॥—**अहोरात्र** इति। 'जातिरप्राणिनाम्' इत्येकवद्भावः। 'स नपुंसकम्' इत्येतद्बाधित्वा परत्वात् 'रात्राह्नाहाः–' इति पुंस्त्वम्॥ एतेनैकवद्भावात् क्लीबतेति प्राचो ग्रन्थः परास्तः॥ 'मासेन स्यादहोरात्रः' इत्यादिग्रन्थविरोधाच्च॥—**सर्वरात्र** इति। 'पूर्वकालैक–' इति समासः॥—**पूर्वरात्र** इति। 'पूर्वापराधरोत्तरम्–' इत्येकदेशिसमासः॥ यदा तु रात्रिशब्दस्यैकदेशे लक्षणां स्वीकृत्य कर्मधारयोऽभ्युपगम्यते, तदा पूर्वरात्रिरित्येव भवति॥—**द्विरात्रमिति**। 'संख्यापूर्वं रात्रं क्लीवम्' इति वक्ष्यते॥—**अह्नष्टखोरेव**॥ 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदम्। एवकारस्त्वह्न एव टखयोरिति विपरीतनियमशङ्कानिरासार्थः। 'आत्माध्वानौ खे' इति प्रकृतिभावविधानेन तन्निरासे प्रतिपत्तिगौरवं स्यादिति भावः॥ टखोरेवेति किम्। अह्ना निर्वृत्तमाह्निकम्। 'कालात्' इत्यधिकारे 'तेन निर्वृत्तम्' इति ठञ्। टिलोपाभावात् 'अल्लोपोऽनः' इत्यकारलोपः॥—**उत्तमाह** इति। 'सर्वैकदेशसंख्यात–' इत्यत्र उत्तमशब्दस्यापाठादह्नादेशो न॥—**द्व्यहीन** इति। समासान्तविधेरनित्यत्वान्न टच्। सति तु तस्मिन्नह्नादेशः प्रसज्येत। न च नान्तस्य खे परे टिलोपविधिसामर्थ्यान्न टजितिति वाच्यम्। अहीन इत्यत्र तस्य सावकाशत्वात्॥ —**अनित्यत्वादिति**। अत्र च लिङ्गं 'शक्तिलाङ्गलाङ्कुश–' इत्यत्र घटीग्रहणम्॥—**मद्रराज्ञीति**। यद्यत्र टच् स्यात्तदा 'भस्याढे–' इति पुंवद्भावे टिलोपे मद्रराजीत्यनिष्टरूपं स्यादिति भावः॥—**अह्नोऽह्न एतेभ्यः**॥ एतच्छब्देन अहः-सर्वैकदेश–' इति सूत्रस्थाः परामृश्यन्ते। सूत्रे तु तस्मिन्नहरादयो निर्दिष्टाश्चकारेण च संख्याव्यये अनुकृष्टे तत्र सर्वेषां बुद्धिस्थत्वाविशेषेऽप्यहःशब्द इह न गृह्यते असम्भवादित्याशयेनाह—**सर्वादिभ्य** इति॥—**समासान्ते परे** इति। एतच्च प्रकरणाल्लब्धम्॥ भाष्ये तु अह्नादेशः प्रत्याख्यातः। 'अह्न एभ्यः अच् स्याट्टचोऽपवादः' इति व्याख्यायाम् 'अह्नष्टखोरेव' इति

---

१ द्वन्द्वार्थमिति—ब्रह्मणोऽह्नोऽवयवीभूता मानुषी रात्रिरित्याद्यर्थे षष्ठीतत्पुरुषाद्यनभिधानमेवेति भावः।

द्रेफात्परस्याऽह्नादेशस्य नस्य णः स्यात् । सर्वाह्णः । पूर्वाह्णः । संख्याताह्नः । द्वयोरह्नोर्भवः । कालाट्ठञ् । द्विगोर्लुगनपत्य इति ठञो लुक् । द्व्यह्नः । स्त्रियामदन्तत्वाट्टाप् । द्व्यह्ना । द्व्यह्नप्रियः । अत्यह्नः । **सू क्षुभ्नादिषु च ।८।४।३९।** एषु णत्वं न स्यात् । दीर्घाह्नी प्रावृट् । एवं चैतदर्थमह्न इत्यदन्तानुकरणक्लेशो न कर्तव्यः । प्रातिपदिकान्तेति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात् । अदन्तादिति तपरकरणान्नेह । परागतमहः पराह्नः । **सू न संख्यादेः समाहारे । ५।४।८९।** समाहारे वर्तमानस्य संख्यादेरह्नादेशो न स्यात् । संख्यादेरिति स्पष्टार्थम् । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः । **सू उत्तमैकाभ्यां च ।५।४।९०।** आभ्यामह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह । पुण्यैकाभ्यामित्येव सूत्रयितुमुचितम् । पुण्याहम् । सुदिनाहम् । सुदिनशब्दः प्रशस्तवाची । एकाहः । उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थमित्येके । संख्याताहः । **सू अग्राख्यायामुरसः ।५।४।९३।** टच् स्यात् । अश्वानामुर इव अश्वोरसम् । मुख्योऽश्व इत्यर्थः । **सू अनोश्मायःसरसां जातिसंज्ञयोः ।५।४।९४।** टच्स्याज्जातौ संज्ञायां च । उपानसम् । अमृताश्मः । कालायसम् । मण्डूकसरसमिति जातिः । महानसम् । पिण्डाश्मः । लोहितायसम् । जलसरसमिति संज्ञा । **सू ग्रामकौटाभ्यां च तक्ष्णः ।५।४।९५।** ग्रामस्य तक्षा ग्रामतक्षः । साधारण इत्यर्थः । कुट्यां भवः कौटः स्वतन्त्रः सचासौ तक्षा च कौटतक्षः । **सू अतेः शुनः ।५।४।९६।** अतिश्वो वराहः । अतिश्वी सेना । **सू उपमानादप्राणिषु ।५।४।९७।** अप्राणिविषयकोपमानवाचिनः शुनष्टच्स्यात् । आकर्षः श्वेव आकर्षश्वः । अप्राणिषु किम् । वानरः श्वेव वानरश्वा । **सू उत्तरमृगपूर्वाच्च सक्थ्नः ।५।४।९८।** चादुपमानात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि फलकसक्थम् । **सू नावो द्विगोः ।५।४।९९।** नौशब्दान्ताद्द्विगोष्टच् स्यान्न तु तद्धितलुकि । द्वाभ्यां नौभ्यामागतः द्विनावरूप्यः । द्विगोर्लुगनपत्य इत्यत्र अचीत्यस्यापकर्षणाद्धलादेर्न लुक् । पञ्चनावप्रियः । द्विनावम् । त्रिनावम् । अतद्धितलुकीति किम् । पञ्चभिर्नौभिः क्रीतः पञ्चनौः । **सू अर्धाच्च ।५।४।१००।** अर्धान्नावष्टच् स्यात् । नावोऽर्धम् अर्धनावम् । क्लीबत्वं लोकात् । **सू खार्याः प्राचाम् ।५।४।१०१।** द्विगोरर्धाच्च

नियमाद्विलोपाभावे 'अह्नोऽदन्तात्' इत्यकारलोपात्सर्वाह्ण इत्यादिरूपसिद्धेः ॥—**रेफादिति** ॥ यदि तु लक्षे अहस्सु भव इत्यादिव्युत्पत्त्या लाक्षाह्न इत्यपि प्रयोगोऽस्ति, तर्हि पादित्यपि बोध्यम् । 'रषाभ्याम्–' इत्यधिकारात् ॥—**ठञो लुगिति ।** अणो लुगिति वृत्तिकाराद्युक्तमयुक्तमिति भावः ॥ प्रसङ्गादाह—**स्त्रियामिति** । नन्विह स्त्रीत्वं दुर्लभं 'रात्राह्नाहाः पुंसि' इति वचनादिति चेन् । मैवम् । सर्वमहस्सर्वाह्न इत्यादावुपक्षीणस्य तद्वचनस्य लुप्ततद्धितायामप्रवृत्तेः । 'लुपि युक्तवत्–' इति लिङ्गातिदेशो ह्यत्र प्रमाणम् । प्राकृतलिङ्गानुशासनाना लुप्तप्रत्ययेषु प्रवृत्तौ तद्वैयर्थ्यापत्तेः । अत एव लवणः सूपः लवणा यवागूरित्यादौ न क्लीबत्वम् । किं च 'द्विगुप्राप्तापन्ना–' इत्यादिना परवल्लिङ्गत्वे प्रतिषिद्धे तदपवादस्य 'रात्राह्नाहाः–' इत्यस्याप्राप्तिरेवेति ह्यहशब्दोऽयं विशेष्यनिघ्न एव, न तु नियतपुंलिङ्गः । एवं चात्र भवार्थकतद्धिते लुप्तेऽपि 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन भवार्थवत्तन्निष्ठस्त्रीत्वाभिधानमपि न्याय्यमेवेति दिक् ॥—**टाबिति** । न चेह ठञन्तत्वान् ङीप् स्यादिति शङ्क्यम् । ठञो लुप्तत्वात् । न च प्रत्ययलक्षणम् । वर्णाश्रयत्वात् । ठञो योऽकारस्तदन्तान्ङीबिति तत्र व्याख्यातत्वात् । अत एव वृत्तिकाराद्युक्ताणो लुक्पक्षेऽपि न ङीप् । अण्योऽकारः' इति तत्र व्याख्यातत्वात् । न चैवमपि टजन्तत्वान्ङीप् स्यादेवेति वाच्यम् । टचः समासान्ततया तदन्तस्य तद्धितार्थं प्रत्युपसर्जनत्वात् । अत एव हि आपिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतं भाष्ये ॥ 'द्विगोः' इति ङीप् न शङ्क्य एव । 'अपरिमाण–' इति निषेधात् । अतष्टावेवात्र युक्तमत एवोदाहरन्ति—**द्व्यह्नेति** । 'अह्नोऽ–' इति सूत्रे अह्नादेशं प्रत्याख्याय 'अचप्रत्यन्वव–' इत्यतोऽचमनुवर्त्य 'टजपवादोऽच्' इति व्याचक्षाणस्य भाष्यकारस्य मते तु निर्विवाद एवात्र टाप् ॥ कथं तर्हि कालनिर्णयदीपिकायां द्व्यह्नीति प्रयोग इति चेन् । अत्राहुः । द्वे अहनी यस्यां तिथाविति बहुव्रीहौ नान्तलक्षणो ङीब् बोध्यः । द्वयोरह्नोर्भव इति व्याख्यानग्रन्थस्तु फलितार्थकथनपरतया ज्ञेय इति ॥—संख्यादिभिन्नस्य तत्पुरुषस्य समाहारे वृत्त्यसंभवादाह—**स्पष्टार्थमिति** ॥—**पुण्याहमिति** ॥ 'पुण्यसुदिनाभ्याम्–' इति क्लीबत्वं वक्ष्यति ॥—**उपान्त्यस्यापीति** । यथा 'प्रथमयोः–' इति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात्, तथेहापि उत्तमग्रहणसामर्थ्यादन्त्ययोर्द्वयोर्ग्रहणम् । उत्तमौ चैकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषामाशयः ॥—**अग्राख्यायाम्**[1]—॥ पञ्चम्यर्थे सप्तमी । अग्रं प्रधानम् । अग्रवाची य उरःशब्दस्तदन्तात्तत्पुरुषाट्टच् स्यात् ॥ अग्राख्यायां किम् । देवदत्तस्योरो देवदत्तोरः ॥—**ग्रामकौटा–**॥ 'जातिसंज्ञयोः' इति नानुवर्तते ॥ ग्रामेति किम् । राज्ञस्तक्षा राजतक्षा ॥—**अतिश्व** इति । श्वानमतिक्रान्तो जवेनेत्यर्थः ॥—**अतिश्वीति** । नीचेत्यर्थः ॥—**आकर्षः श्वेति** ॥ 'उपमितं व्याघ्रादि–' इति समासः । आकृष्यतेऽनेन खलादिगतं धान्यमित्याकर्षः काष्ठविशेषः ॥ उपमानात्किम् । निष्क्रान्तः शुनो निश्वा ॥—**फलकसक्थमिति** ॥ अत एव ज्ञापकादसामान्यवचनेनाप्युपमानस्य समास इति माधवः ॥—**द्विनावरूप्य इति ।** 'हेतुमनुष्येभ्यः–' इति रूप्य. ॥—**पञ्चनौरिति** । आर्हीयष्ठक् । 'अध्यर्धपूर्व–' इति लुक् ॥—**खार्याः–**॥**–द्विगोरिति ।**

१ अग्राख्यायामिति—अग्रं भवोऽश्वो मुख्य., तस्याख्यायामित्यर्थ. इति शेखरकृता यकारघटितः पाठो दर्शितः ।

खार्याष्टज्वा स्यात् । द्विखारम् । द्विखारि । अर्धखारम् । अर्धखारि । **द्वित्रिभ्यामञ्जलेः** ।५।४।१०२। टज्वा स्यात् द्विगौ । द्व्यञ्जलम् । द्व्यञ्जलि । अतद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः । **ब्रह्मणो जानपदाख्यायाम्** ।५।४।१०४। ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात्समासेन जानपदत्वमाख्यायते चेत् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । **कुमहद्भ्यामन्यतरस्याम्** ।५।४।१०५। आभ्यां ब्रह्मणो वा टच् स्यात् तत्पुरुषे । कुत्सितो ब्रह्मा कुब्रह्मः । कुब्रह्मा । **आन्महतः समानाधिकरणजातीययोः** ।६।३।४६। महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाब्रह्मः । महाब्रह्मा । महादेवः । महाजातीयः । समानाधिकरणे किम् । महतः सेवा महत्सेवा । लाक्षणिकं विहाय प्रतिपदोक्तः सन्महदिति समासोऽत्र ग्रहीष्यते चेत्, महाबाहुर्न स्यात् । तस्माल्लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येति परिभाषा नेह प्रवर्तते । समानाधिकरणग्रहणसामर्थ्यात् । आदिति योगविभागादात्वम् । प्रागेकादशभ्य इति निर्देशाद्वा । एकादश । महतीशब्दस्य पुंवत्कर्मधारयेति पुंवद्भावे कृते आत्वम् । महाजातीया ॥ * **महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च** ॥ असामानाधिकरण्यार्थमिदम् । महतो महत्या वा घासो महाघासः । महाकरः । महाविशिष्टः ॥ * **अष्टनः कपाले हविषि**[1] ॥ अष्टाकपालः ॥ * **गवि च युक्ते** ॥ गोशब्दे परे युक्त इत्यर्थे गम्येऽष्टन आत्वं वक्तव्यमित्यर्थः ॥ अष्टागवं शकटम् । अच्प्रत्यन्ववेत्यत्राजिति योगविभागाद्द्वुब्रीहावप्यच् । अष्टानां गवां समाहारः अष्टगवम् । तद्युक्तत्वाच्छकटमष्टागवमिति वा । **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः** ।६।३।४७। आत्स्यात् । द्वौ च दश च द्वादश । द्व्यधिकादशेति वा । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः । अबहुव्रीह्यशीत्योः किम् । द्वित्राः । द्व्यशीतिः ॥ * **प्राक् शतादिति वक्तव्यम्** ॥ नेह द्विशतम् । द्विसहस्रम् । **त्रेस्त्रयः** ।६।३।४८। त्रिशब्दस्य त्रयस् स्यात्पूर्वविषये । त्रयोदश । त्रयोविंशतिः । बहुव्रीहौ तु त्रिर्दश त्रिदशाः । सुजर्थे बहुव्रीहिः । अशीतौ तु त्र्यशीतिः । प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् । **विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्** ।६।३।४९। द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु । **एकादिश्चैकस्य चादुक्** ।६।३।७६। एकादिर्नञ् प्रकृत्या स्यादेकस्य च अदुगागमश्च । नञो विंशत्या सह समासे कृते एकशब्देन सह तृतीयेति योगविभागात्समासः । अनुनासिकविकल्पः । एकेन नविंशतिः एकान्नविंशतिः । एकाद्नविंशतिः । एकोनविंशतिरित्यर्थः ॥ * **षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वा-**

खारीशब्दान्ताद्विगोरित्यर्थः ॥—**अर्धखारी**ति । 'परवल्लिङ्गम्' इति स्त्रीत्वम् ॥—**अर्धखारमि**ति । अर्धनावमिव क्लीबत्व लोकात् ॥—**टज्वा स्याद्विगावि**ति ॥ द्विगाविति किम् । द्वयोरञ्जलिः ॥ द्व्यञ्जलिः ॥—**द्व्यञ्जलमि**ति । समाहारे द्विगुः ॥—**अतद्धितलुकीत्येवे**ति । एतच्च पूर्वसूत्रेऽपि बोध्यम् ॥—**अञ्जलिभ्यां क्रीत** इति । नात्राञ्जलिः पाणिद्वयं तस्य मूल्यत्वासंभवात्, किं तु 'अञ्जलिपरिमितो व्रीह्यादिर्विवक्षितः, ततश्च परिमाणत्वाद् द्व्यञ्जलिरित्यत्र ठञ् । तस्य तु 'अध्यर्धपूर्व-' इति लुक् ॥—**ब्रह्मणो**—॥ जनपदे भवो जानपदः । 'वृद्धेकयो.-' इतिवद्भावप्रधानो निर्देशस्तस्याख्यायां प्रत्यासत्त्या समासेनेत्येतल्लभ्यते तदाह—**समासेन जानपदत्वमि**ति । कस्येत्याकाङ्क्षायां सन्निधानाद्ब्रह्मण इति लभ्यते ॥—**सुराष्ट्रब्रह्म** इति । 'सप्तमी' इति योगविभागात्समास' ॥ जानपदेति किम् । देवब्रह्मा नारदः ॥—**कुब्रह्म** इति । ब्राह्मणपर्यायो ब्रह्मन् शब्दः ॥—**आन्महतः**—॥ तकार उच्चारणार्थो, न तु सर्वादेशार्थ इत्याह—**आकारोऽन्तादेशः स्यादि**ति । इहोत्तरपदाधिकारे पूर्वपदमाक्षिप्यते । तच्च महता विशेषितमिति तदन्तविधिर्लभ्यते । 'ग्रहणवता-' इति निषेधस्तु प्रत्ययविधिविषय इत्युक्तत्वात् । तेन महाबाहुवदतिमहाबाहुरिति प्रयोगो भवति । परममहत्परिमाणमित्यत्र तु परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषोऽभ्युपगम्यत इति न तत्रात्वप्रसक्तिरिति वृद्धाः ॥ यत्तु वर्धमानेनोक्तम् 'इष्टकेषीकामालानाम्-' इत्यत्र तदन्तविध्युपसंख्यानसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्ति, तेन परममहत आत्व नेति । तद्भाष्यकैयटविरुद्धम् । तथाहि । 'येन विधिः-' इतिसूत्रे पदाधिकारे प्रयोजनमिष्टकचित पक्वेष्टकचितमिति भाष्ये उदाहृत, कैयटेन च पदशब्देन उत्तरपद गृह्यत इति व्याख्यातम् । एतदेवार्थतः काशिकायामुपनिबद्धं न तु 'इष्टकेषी-' इत्यत्र कात्यायनोक्तमुपसंख्यानमस्ति ॥ ननु प्रतिपदोक्तसमासे यदुत्तरपद तस्मिन्नेव परे आत्व स्यान्नान्यत्रेति किमनेन समानाधिकरणग्रहणेनेत्यत आह—**महाबाहुरि**ति । बहुव्रीहिरयं, स च सामान्यशास्त्रनिर्वृत्तत्वाल्लाक्षणिक इति भावः ॥—**अष्टनः कपाल** इति । कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः ॥—**अष्टाकपाल** इति । 'संस्कृतं भक्षा-' इत्यण् । 'द्विगोर्लुगनपत्ये' इति लुक् ॥ 'अध्यर्धपूर्व-' इत्यणो लुगिति केषांचिद्व्याख्यानं तु प्रामादिकं, 'संस्कृतम्' इत्यणोऽनार्हीयत्वात् ॥—**त्रेस्त्रयः** ॥ संधिवेलादिषु त्रयोदशीति पाठात्सान्तोऽयमादेश इति ध्वनयन्नाह—**त्रयस् स्यादि**ति ॥—**सुजर्थे बहुव्रीहिरि**ति । 'संख्ययाव्यया-' इत्यादिनेति शेषः ॥—**एकादिरि**ति ॥ अदुगिति छेदः । पररूपं लकारोच्चारणसामर्थ्यान्न भवति ॥—**धासुवेति** । 'संख्याया विधार्थे' इत्यादिना विहितस्य धाप्रत्ययस्यैवेह ग्रह-

[1] हविषीति—तेनाष्टानां कपालानीति षष्ठीतत्पुरुषे न भवति ।

ख्यम् ॥ षोडन् । षोडश । षोढा । षड्धा । **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः** ।२।४।२६। एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली ॥ * **द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः** ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै अलंकुमारिः । अतएव ज्ञापकात्समासः । निष्कौशाम्बिः । **पूर्ववदश्ववडवौ** ।२।४।२७। द्विवचनमतन्त्रम् । अश्ववडवौ । अश्ववडवान् । अश्ववडवैः । **रात्राह्नाहाः पुंसि** ।२।४।२९। एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अनन्तरत्वात्परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते। अहोरात्रः। रात्रेः। पूर्वभागः पूर्वरात्रः। पूर्वाह्णः। घ्यहः॥ संख्यापूर्वं रात्रं क्लीबम् ॥ द्विरात्रम्। त्रिरात्रम्। गणरात्रम्। **अपथं नपुंसकम्** ।२।४।३०। तत्पुरुष इत्येव। अन्यत्र तु अपथो देशः। कृतसमासान्तनिर्देशान्नेह। अपन्थाः। **अर्धर्चाः पुंसि च** ।२।४।३१। अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः । अर्धर्चम् । ध्वजः । ध्वजम् । एवं तीर्थ, शरीर, मण्ड, पीयूष, देह, अङ्कुश, कलश इत्यादि । **जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्** ।१।२।५८। एकोऽप्यर्थो वा बहुवद्भवति । ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः । **अस्मदो द्वयोश्च** ।१।२।५९। एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात् । वयं ब्रूमः । पक्षेऽहं ब्रवीमि आवां ब्रूव इति वा ॥ * **सविशेषणस्य प्रतिषेधः** ॥ पटुरहं ब्रवीमि ॥ **फल्गुनीप्रोष्ठपदानां च नक्षत्रे** ।१।२।६०। द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात्। पूर्वे फल्गुन्यौ । पूर्वाः फल्गुन्यः।

---

णम् 'प्रत्ययाप्रत्यययोः–' इति परिभाषया । तेनेह न । षट् दधातीति षड्धा । 'आतोऽनुपसर्गे कः' । टाप् ॥—**षोडन्निति** । षड् दन्ता अस्य षोडन् । 'वयसि दन्तस्य–' इति दत्रादेशः ॥—**परवल्लिङ्गम्**—॥ इतरेतरयोगद्वन्द्वोऽत्र गृह्यते न समाहारे द्वन्द्वः 'स नपुंसकम्' इत्यपवादस्य वक्ष्यमाणत्वात् ॥ सूत्रे 'द्वन्द्वतत्पुरुषयोः–' इति न सप्तमीद्विवचनम् । तथात्वे द्वन्द्वे तत्पुरुषे च यत्परपदं तद्वल्लिङ्गं पदस्यातिदिश्येत, परपदस्य सबन्धिशब्दत्वेन पूर्वपदाक्षेपकत्वात्, ततश्च मयूरीकुक्कुटावित्यत्र पूर्वपदे ईकारनिवृत्तिप्रसङ्गः, कुक्कुटमयूर्यौ अर्धपिप्पलीत्यादौ तु पूर्वपदे स्त्रीप्रत्यय उत्पद्येत । किं तु षष्ठीद्विवचनमित्याशयेनाह—**एतयोरि**ति । द्वन्द्वतत्पुरुषार्थयोरित्यर्थः । एवं चानुप्रयोगेऽपि तदेव लिङ्गं सिद्धम् ॥ उपमेये षष्ठ्यभ्युपगमाद्वृत्तिरपि षष्ठ्यन्तादेवेत्याशयेनाह—**परपदस्येवे**ति ॥ भाष्ये तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति प्रत्याख्यातमिदं सूत्रम् ॥ अस्मिंश्च प्रत्याख्याते तुल्यन्यायत्वाल्लिङ्गानुशासनं सर्वमेव प्रत्याख्यातम् । तथापि तत्प्रौढिवादमात्रम् । अन्यथा व्याकरणस्यैव वैयर्थ्यप्रसङ्गात् ॥—**गतिसमासेष्वि**ति । गतिग्रहणं प्रादीनामुपलक्षणं मुख्यस्य गतेरसंभवादित्याशयेनोदाहरति—**निष्कौशाम्बिरि**ति ॥—**अतन्त्रमि**ति ॥ अत्र च लिङ्गं पूर्ववद्ग्रहणम् । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः ॥ इह समासार्थस्य वा पूर्ववल्लिङ्गातिदेशः उत्तरपदार्थस्य वा । उभयथाप्यश्ववडवौ शोभनावित्यनुप्रयोगेऽपि पुंस्त्वं सिध्यति ॥ ननु समासार्थस्य पुंस्त्वेऽपि स्वाश्रयस्त्रीत्वानिवर्तनाट्टापः श्रवणप्रसङ्ग । न चातिदेशवैयर्थ्यम् । शसि नत्वप्रवृत्त्या अनुप्रयोगे पुंलिङ्गत्वाभावेन च तत्सार्थक्यादिति चेदत्राहुः । इहैव निपातनात् 'अश्ववडवपूर्वापराधरोत्तराणाम्' इत्यत्र निपातनाद्वा टापो निवृत्तिरिति ॥—**अहोरात्र** इति ॥ प्राचा तु अहोरात्रमित्युदाहृतम् । तन्नेति प्रागेवोक्तम् ॥ अत्र वदन्ति । 'रात्राह्नाः–' इत्यनेन रात्रादीनामेव पुंस्त्वं विधीयते, तदन्तस्य तु 'परवल्लिङ्गम्–' इत्येव सिध्यति । अत एव भिन्नविषयत्वात् 'विप्रतिषेधे परं कार्यम्' इति न प्रवर्तते। एवं च 'रात्राह्नाः–' इति पुंस्त्वाप्रवृत्त्या समाहारे 'स नपुंसकम्' इत्येव भवति परवल्लिङ्गापवादत्वादिति । तन्न । उक्तरीत्या द्व्यहन्यहादावपि नपुंसकत्वप्रसङ्गात् । न चेष्टापत्तिः । द्व्यहत्र्यह इति प्राचाप्युदाहृतत्वेन स्वमूलग्रन्थेन सह विरोधापत्तेः । 'ते तु त्रिंशदहोरात्रः' इत्यादिकोशविरोधाच्च । तस्माद्रात्राद्यन्तस्यैवायं पुंस्त्वविधिः ॥ 'द्वन्द्वतत्पुरुषयोः–' इति प्रक्रमणात् तथा च भिन्नविषयत्वाद्यभावात् 'रात्राह्न–' इति पुंस्त्वं समाहारनपुंसकतां परत्वेन बाधत एव ॥—**संख्यापूर्वमि**ति । अत्र च 'अपथपुण्याहौ नपुंसकौ' । 'संख्यापूर्वा रात्रिः' इति लिङ्गानुशासनसूत्रं मूलम् । संख्याग्रहणेषु कृत्रिमाकृत्रिमन्यायो न प्रवर्तते 'द्व्यष्टनः संख्यायाम्–' इति सूत्रे अशीतिपर्युदासादित्याशयेनोदाहरति—**द्विरात्रं** ॥—**गणरात्रमि**ति । गणाना बहूनां रात्रीणां समाहार इति विग्रहः ॥—**अपथं नपुंसकम्** ॥—**तत्पुरुष इत्येवे**ति । द्वन्द्वग्रहणं तु नानुवर्तते अयोग्यत्वादिति भावः ॥—**अपन्था** इति । 'पथो विभाषा' इति समासान्तविकल्पः ॥ इदं सूत्रं शक्यमवक्तुम् । 'पथः संख्यायादेः' इति वक्ष्यमाणवार्तिकेन गतार्थत्वात् ॥ प्रसङ्गादाह—**अर्धर्चा** इति । इह केषांचिदर्थभेदेन व्यवस्थेष्यते । सा च व्यवस्था मद्यमकरन्दमाक्षिकाणां वाची मधुशब्दो द्विलिङ्गः, चैत्रादिवाची तु पुंलिङ्गः, क्रियावचनस्तु विशेष्यलिङ्ग इत्येवं यथायथं ज्ञेयम् ॥—'अर्धर्चाः पुंसि च' 'स नपुंसकम्' इत्यनयोर्मध्ये 'जात्याख्यायाम्' इति चतुःसूत्र्याः संगतिरिह चिन्त्या ॥ बहूनां वचनं प्रतिपादनमिति व्याख्यानात्फलितोऽत्रातिदेश इत्याशयेनाह—**एकोऽप्यर्थो वा बहुवदि**ति ॥ एवं च विशेषणादपि सिद्धमिति ध्वनयन्नुदाहरति—**ब्राह्मणाः पूज्या** इति । जात्याख्यायां किम् । देवदत्तो यज्ञदत्तः ॥ एकस्मिन्किम् । व्रीहियवौ ॥—**अस्मदो द्वयोश्च** ॥ चात् 'एकस्मिन् बहुवचनमन्यतरस्याम्' इति च वर्तते तदेतदाह—**एकत्वे च विवक्षित** इत्यादि ॥—**फल्गुनीप्रोष्ठपदानां**

**पूर्वे प्रोष्ठपदे । पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम् । फल्गुन्यौ माणविके ॥ ⧗ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।१।२।६३। बहुत्वं द्वित्ववद्भवति । तिष्यश्च[1] पुनर्वसू च तिष्यपुनर्वसू । तिष्येति किम् । विशाखानुराधाः । नक्षत्रेति किम् । तिष्यपुनर्वसवो वाणवकाः । ⧗ स नपुंसकम् ।२।४।१७। समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । परवल्लिङ्गापवादः । पञ्चगवम् । दन्तोष्ठम् ॥ * अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः॥ पञ्चमूली ॥ * आबन्तो वा ॥ पञ्चखट्वी । पञ्चखट्वम् ॥ * अनो नलोपश्च वा द्विगुः स्त्रियाम्॥ पञ्चतक्षी । पञ्चतक्षम्॥ * पात्राद्यन्तस्य न ॥ पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् ॥ * पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा ॥ पुण्याहम् । सुदिनाहम् ॥ * पथः संख्याव्ययादेः ॥ संख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः । त्रयाणां पन्थास्त्रिपथम् । विरूपः पन्थाः, विपथम् । कृतसमासान्तनिर्देशान्नेह । सुपन्थाः । अतिपन्थाः ॥ * सामान्ये नपुंसकम् ॥ मृदु पचति । प्रातः कमनीयम् । ⧗ तत्पुरुषोऽनञ्कर्मधारयः ।२।४।१९। अधिकारोऽयम्[2] । ⧗ संज्ञायां कन्थोशीनरेषु ।२।४।२०। कन्थान्तस्तत्पुरुषः क्लीबं स्यात्सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशमस्यापत्यानि सौशमयः तेषां कन्था सौशमिकन्थम् । संज्ञायां किम् । वीरणकन्था । उशीनरेषु किम् । दाक्षिकन्था । ⧗ उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।२।४।२१। उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् च ॥**

चकारेण द्वयोरनुकर्षणादाह—**द्वित्व** इति ॥—**फल्गुन्यौ माणविके** इति । फल्गुनीशब्दात् 'नक्षत्रेण युक्तः कालः' इत्यण् तस्य 'लुबविशेषे' इति लुप् । ततो जातार्थे 'फल्गुन्यषाढाभ्यां टानौ' इति टः, टित्त्वान् ङीप् । न चायं गौणः, यौगिकत्वात् । तथा च गौणमुख्यन्यायाप्रवृत्त्या नक्षत्रग्रहणमावश्यकमिति भावः ॥—**तिष्यपुनर्वस्वोः**–॥—**विशाखानुराधा** इति । विशाखे चानुराधाश्चेति विग्रहः ॥—**तिष्यपुनर्वसव** इति । तिष्यपुनर्वसुशब्दाभ्यां पूर्ववत् 'नक्षत्रेण युक्तः कालः' इत्यण् 'लुबविशेषे' इति च लुप् । ततो जातार्थे सन्धिवेलादिसूत्रेण अण् तस्य तु 'श्रविष्ठाफल्गुन्यनुराधा–' इत्यादिना लुक् ॥ नक्षत्र इत्यनुवर्तमाने पुनर्नक्षत्रग्रहणं पर्यायाणामपि यथा स्यादित्येतदर्थमित्याकरः । एवं च 'सिध्यपुनर्वसू' इत्यपि 'सिध्यतीति' दिक् ॥ बहुवचनस्य किम् । इदं तिष्यपुनर्वसु । चार्थे द्वन्द्वोऽयम् ॥—**स नपुंसकम्** ॥ 'अनन्तरस्य–' इति न्यायोऽत्र नाश्रीयते, तथात्वे द्विगुसंग्रहो न स्यादित्याशयेनाह—**द्विगुर्द्वन्द्वश्चे**ति । अत्र व्याचक्षते । प्रकरणादेवानुवाद्यलाभे 'स' ग्रहणमेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य संग्रहार्थम् तेन संज्ञापरिभाषमिति सिद्धमिति ॥ **पञ्चगवमिति** । 'तद्धितार्थ–' इत्यादिना समाहारे द्विगुः ॥—**दन्तोष्ठमि**ति । 'द्वन्द्वश्च प्राणि–' इत्यादिना समाहारे द्वन्द्वः ॥ **पञ्चखट्वमिति** । नपुंसकह्रस्वः ॥ **पञ्चखट्वीति** । उपसर्जनह्रस्वत्वे सत्यदन्तत्वात् 'द्विगोः' इति स्त्रीत्वपक्षे ङीप् ॥—**अनो नलोपश्चे**ति । 'उत्तरपदत्वे चापदादिविधौ–' इति प्रत्ययलक्षणप्रतिषेधादप्राप्तो नलोप इति भावः ॥ इह वाशब्दः स्त्रियामित्यनेन संबध्यते, न तु पूर्वेण । तेन नित्यो नलोप इत्याह—**पञ्चतक्षमि**त्यादि ॥—**पात्राद्यन्तस्ये**ति । स्त्रीत्वमिति शेषः । आकृतिगणोऽयम् ॥—**सुदिनाहमि**ति । प्रशस्तपर्यायः सुदिनशब्दः 'सुदिनासु समासु कार्यमेतत्प्रतिचिन्वीत विशेषतः स्वयं च' इत्यादिप्रयोगात् ॥—**पथः संख्याव्यये**ति । संख्याव्ययरूपो य आदिस्तस्मादित्यर्थः ॥—**त्रिपथं, विपथमि**ति । 'ऋक्पूरब्धूः–' इत्यप्रत्ययः ॥—**सुपन्थाः, अतिपन्था** इति । 'न पूजनात्' इति समासान्तनिषेधः ॥ कथं तर्हि 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः' इत्यमर इति चेत् । प्रमाद एवायमिति बहवः ॥ मनोरमायां तु 'पथे गतौ' इत्यस्मात्पचाद्यचि पथति व्याप्नोतीति व्युत्पादितः पथशब्दोऽस्ति । तथा च त्रिकाण्डशेषः । 'वाटः पथश्च मार्गः स्यात्' इति । तेन पथशब्देन समासे पुंस्त्वमुपपन्नम् । न चैवं विपथसिद्धावपि कापथो न स्यात्कादेशस्य दुर्लभत्वादिति वाच्यम् । 'ईषदर्थे च' इति तत्संभवात्कुत्सायामर्थतः पर्यवसानादिति स्थितम् ॥ केचित्तु 'पथः संख्या–' इति वार्तिके कृतसमासान्तस्यैव ग्रहणं, न तु पचाद्यजन्तस्येत्यत्र बीजाभावाद्विपथः कापथ इति प्रयोगो दुरुपपाद एवेत्याहु ॥ अत्र माधवः । परवल्लिङ्गापवादत्वात्तत्पुरुष एवेदं प्रवर्त्तते, नान्यत्र । विपथा नगरी, बहुव्रीहिरयम् । पन्थानमतिक्रान्ता अतिपन्था । इहापि न, 'द्विगुप्राप्ता–' इत्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति ॥—**सामान्ये नपुंसकमि**ति । अनियतलिङ्गविषयकमिदम् । तेनादिः पचति, प्रातरादिरिति पुंस्त्वमेव ॥—**मृदु पचती**ति । क्रियाविशेषणत्वाद्द्वितीयान्तम् । धातूपात्तभावनां प्रति हि फलांशः कर्मीभूतः । तथा च फलसामानाधिकरण्ये द्वितीया । अत एव सक्तूञ्शिवित्यादौ कारकपूर्वकत्वाद्यण् । यत्र तु भावनां प्रति करणतया धात्वर्थविशेषोऽन्वेति तत्र तद्विशेषणानां तृतीयान्ततैव, ज्योतिष्टोमेन यजेतेत्यत्र यथा । एतच्च 'करणे यजः' इति सूत्रे वृत्तिपदमञ्जर्योः स्पष्टम् ॥—**तत्पुरुषोऽनञ्**–॥ नञ्समासकर्मधारयभिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभाग्भवतीति सूत्रार्थः ॥—**उपज्ञो**–॥ उपज्ञायत इत्युपज्ञा 'आतश्चोपसर्गे' इति कर्मण्यङ् । उपक्रम्यत इत्युपक्रमः । कर्मणि घञ् । 'नो-

१ तिष्यश्चेति—तिष्य एका तारा, पुनर्वसू च द्वे तारे । छन्दसि पुनर्वस्वोरिति निर्देशात् । २ अधिकारोऽयमिति—परवल्लिङ्गमिति यावदिति भावः ।

तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः । **छाया बाहुल्ये ।२।४।२२।** छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये । इक्षूणां छाया इक्षुच्छायम् । विभाषासेनेति विकल्पस्यायमपवादः । इक्षुच्छायानिषादिन्य इति तु आ समन्तान्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः । **सभा राजाऽमनुष्यपूर्वा ।२।४।२३।** राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम् । ईश्वरसभम् ॥ * **पर्यायस्यैवेष्यते** ॥ नेह । राजसभा । चन्द्रगुप्तसभा । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम् । पिशाचसभम् । **अशाला च ।२।४।२४।** संघातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात । स्त्रीसभम् । स्त्रीसंघात इत्यर्थः । अशाला किम् । धर्मसभा । धर्मशालेत्यर्थः । **विभाषा सेनासुराच्छायाशालानिशानाम् ।२।४।२५।** एतदन्तस्तत्पुरुषः क्लीबं वा स्यात् । ब्राह्मणसेनम् । ब्राह्मणसेना । यवसुरम् । यवसुरा । कुड्यच्छायम् । कुड्यच्छाया । गोशालम् । गोशाला । श्वनिशम् । श्वनिशा । तत्पुरुषोऽनञ्कर्मधारय इत्यनुवृत्तेर्नेह । दृढसेनो राजा । असेना । परमसेना ॥　　॥ इति तत्पुरुषः ॥

## बहुव्रीहिप्रकरणम् ।

**शेषो बहुव्रीहिः ।२।२।२३।** अधिकारोऽयम् । द्वितीयाश्रितेत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमान्तमित्यर्थः । **अनेकमन्यपदार्थे ।२।२।२४।** अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स

दात्तोपदेशस्य–' इति वृद्धिप्रतिषेधः । उपज्ञा च उपक्रमश्चेति समाहारद्वन्द्वः । स चानुवर्तमानस्य तत्पुरुषस्य विशेषणम् । तच्छब्देन उपज्ञोपक्रमौ परामृश्येते । तदेतत्सकलमभिप्रेत्याह—**उपज्ञान्त** इत्यादि । आख्यातुमिच्छा आचिख्यासेतीच्छामना इह विवक्षैव शब्दप्रवृत्तौ नियामिका, न तु वस्तुस्थितिरिति ज्ञायते । तेन 'त्वदुपक्रमसौजन्यम्' इत्याद्यपि सिध्यति ॥—**पाणिनेरि**ति । कर्तरि षष्ठी ॥—**नन्दोपक्रममि**ति । नन्दस्योपक्रममिति विग्रहः ॥—**छाया**–॥ बाहुल्ये सति या छाया तद्वाची यश्छायान्तस्तत्पुरुष इत्यर्थः । इह कस्य बाहुल्य इत्यपेक्षायामावरकद्रव्यनिमित्तत्वाच्छायायास्तद्बाहुल्य इति गम्यते । तच्चावरकं पूर्वपदार्थभूतमेवेत्याशयेनाह– **पूर्वपदार्थबाहुल्ये** इति । पूर्वपदार्थबाहुल्ये किम् । कुड्यस्य छाया कुड्यच्छाया ॥—**प्रश्लेषो बोध्य** इति । केचित्तु 'इक्षुच्छायनिषादिन्य' इत्येव पठन्ति ॥—**सभा**–॥–**इनसभमि**त्यादि । इनशब्दोऽत्र राजपर्यायः । ईश्वरशब्दश्च । ननु 'स्वं रूपम्' इति वचनाद्राजशब्दस्यैव ग्रहणं युक्तं न पर्यायस्येत्यत आह—**पर्यायस्यैवेष्यत** इति । एवकारेण स्वरूपस्य विशेषाणां च निरासः । कथं तर्हि 'नृपतिसभामगमन्नवेपमानः' इति कीचकवधे । अत्र केचित् । ना पतिर्यस्यां सभायामिति बहुव्रीहौ कृते पश्चात्कर्मधारयः । 'अनञ्कर्मधारयः' इत्युक्तेर्न क्लीबत्वमित्याहुः ॥ रक्षितस्त्वाह । गजपतिवन्नृपतिरपि राजविशेषस्तेनात्र नानुपपत्तिरिति ॥—**अशाला च** ॥ शालावाची संघातवाची च सभाशब्दस्तत्र राजमनुष्यपूर्वत्वे शालावाचिनः क्लीबत्वमुक्तम् । अनेन तु संघातवाचिनो विधीयत इत्याह—**संघातार्थे**ति॥—**विभाषा सेना**–॥ प्रथमार्थे षष्ठीति सेनादिभिस्तत्पुरुषो विशेष्यते । विशेषणेन तदन्तविधिस्तदाह—**एतदन्त** इति ॥—**श्वनिशमि**ति । कृष्णचतुर्दशी । तस्यां किल केचिच्छ्वान उपवसन्ति । एतच्च शाबरभाष्यतिर्यगधिकरणे स्पष्टम् ॥ 'तत्पुरुष–' इत्याद्यधिकारसूत्रस्यात्रैव प्रयोजनं, न तु 'संज्ञायां कन्थोशीनरेषु' इत्यादिपञ्चसूत्र्याम् । अतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य च तत्रासम्भवादित्याकरे स्थितम् । तथैव प्रत्युदाहरति—**दृढसेन** इत्यादि ॥ ननु बहुव्रीहौ विशेष्यनिघ्नता न्याय्यैवेति किमनेन तत्पुरुषग्रहणेन । मैवम् । न्यायापेक्षया वचनस्य बलीयस्त्वात् । किं चासति तद्ग्रहणे द्वन्द्वे नपुंसकता स्यात्परवल्लिङ्गापवादत्वादस्य प्रकरणस्येति दिक् ॥ इति तत्पुरुषः ॥

**शेषो बहुव्रीहिः** ॥ 'शिष असर्वोपयोगे' कर्मणि घञ् । अत्र वृत्तिकृत् यत्रान्यसमासो नोक्तः स शेष इत्याह । येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिसंज्ञकः समासो न विहितः स शेष इत्यर्थ इति हरदत्तो व्याख्यत् ॥ एतच्च 'प्राक्कडारात्परं कार्यम्' इति पाठाभिप्रायेण बोध्यम् ॥ अस्मिंस्तु पक्षे शेषग्रहणाभावे उन्मत्तगङ्गमित्यत्र परत्वाद्बहुव्रीहिः स्यात् । निरवकाशत्वाच्चाव्ययीभाव इत्युन्मत्तगङ्ग इत्याद्यनिष्टं पक्षे प्रसज्येत ॥ 'आकडारादेका–' इति पाठाभ्युपगमपक्षे त्वेकसंज्ञाधिकारेणैवोन्मत्तगङ्गमित्यादिसिद्धेः शेषग्रहणं व्यर्थम् । निरवकाशतयाऽव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधात् । अतस्तत्रापि प्रयोजनमाह—**द्वितीयाश्रितेत्यादिने**ति । शेषाधिकारस्थबहुव्रीहेरेव 'शेषाद्विभाषा' इति कप्प्रत्ययो, नान्यस्माद्बहुव्रीहिरित्येतल्लाभार्थमपि शेषग्रहणमावश्यकमिति बोध्यम् ॥—**यस्य त्रिकस्ये**ति ॥ यद्यपि 'प्रादयो गताद्यर्थे प्रथमया' इत्युक्तम् । तथापि 'द्वितीया श्रितादिभिः' इतिवत् 'प्रथमा केनचित्सह समस्यते' इति नोक्तमित्यर्थः ॥ वार्तिककृता प्रथमयेत्युक्तावपि सूत्रकृता नोक्तमिति वा ॥—**प्रथमान्तमि**ति । कण्ठेकाल इत्यादिबहुव्रीहिस्तु ज्ञापकसाध्य इति भावः ॥—**अन्यस्य पदस्यार्थे** इति । समस्यमानपदातिरिक्तस्य पदस्यार्थे इत्यर्थः । पदेन हि प्रकृत्यर्थोपसर्जनकः कर्मकर्त्रादिरभिधीयते । प्रथमान्तेन तु प्रातिपदिकार्थमात्रम् ॥ यद्यपि त्रिकपक्षे सङ्ख्या प्रत्ययार्थः, तथापि तस्याः प्रकृ-

**बहुव्रीहिः। अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितम्। प्राप्तमुदकं यं प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः। प्रथमार्थे तु न। वृष्टे देवे गतः। व्यधिकरणानामपि न। पञ्चभिर्भुक्तमस्य॥ * प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः॥ प्रपतितपर्णः। प्रपर्णः॥ * नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः॥ अविद्यमानपुत्रः। अपुत्रः। अस्तीति विभक्तिप्रतिरूपकमव्ययम्। अस्तिक्षीरा गौः। स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।६।३।३४। भाषितपुंस्कादनूङ् ऊङोऽभावो यस्यामिति बहुव्रीहिः निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव[1] रूपं**

---

त्यर्थं प्रति विशेषणत्वाभ प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः प्रथमान्तस्यास्ति। एवं च 'द्वितीयान्तार्थे' इति फलितम्। तदाह—**अप्रथमाविभक्त्यर्थ** इति॥—**समाने**ति। एतच्च शेषग्रहणाल्लब्धम्॥ अनेक किम्। बहूनामपि यथा स्यात्। एतच्च मूल एव स्फुटीभविष्यति॥ अनिज्विधौ केवलग्रहण ज्ञापकीकृत्यानेकग्रहणमिह सुत्यजमित्याहुः॥ अन्यग्रहणं किम्। बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत, स्वपदार्थे हि सावकाशं तत्पुरुषं परत्वादन्यपदार्थे बहुव्रीहिर्बाधते। असति त्वन्यग्रहणे कण्ठेकाल इत्यादौ व्यधिकरणपदे बहूना समुदाये न सावकाश बहुव्रीहिं स्वपदार्थ इवान्यपदार्थेऽपि नीलोत्पलं सर इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत॥ पदग्रहण किम्। वाक्यार्थे मा भूत्। ग्राहवती नदी। इह मा स्नासीरिति वाक्यार्थो गम्यते॥ अर्थग्रहण किम्। यावता पदे पदान्तरस्य वृत्त्यसंभवादेव पदार्थे भविष्यति। अत्राहुः—प्रकृत्यर्थविशिष्टप्रत्ययार्थाभिधानं यथा स्यात्। अन्यथा प्राधान्यात् प्रत्ययार्थमात्रं गृह्येत। इष्टापत्तौ तु चित्रगुरित्येतत् षष्ठ्यर्थसबन्धमात्रपरं स्यात्। तथा च देवदत्तादेः सामानाधिकरण्य न स्यादिति॥ अत्रेदमवधेयम् 'सुपो–' इत्येतन्नानुवर्तते। तेनात्रानेकं प्रथमान्तं मिथः 'समस्यते' इति पर्यवसन्नोऽर्थः। एव च द्विपदबहुव्रीहिरबाध एव॥ ये तु 'सुप्सुपा' इत्यनुवर्त्य 'अनेकं सुबन्त सुपा सह–' इति व्याचक्षते तेषां तु द्विपदबहुव्रीहिर्दुर्लभ एवेति॥ द्वितीयादिविभक्त्यर्थे क्रमेणोदाहरति—**प्राप्तमि**त्यादि। ग्रामकर्मकप्राप्तिकर्तृ उदकं विग्रहार्थः। उदककर्तृकप्राप्तिकर्मेति समासार्थः। विग्रहवाक्ये स इति प्रयोगे तु तस्याप्ययमेवार्थः॥ अनडुत्कर्तृकोद्वहनकर्मीभूतो रथः। रथकर्मकोद्वहनकर्ता तु समामार्थः॥ रुद्रसंप्रदानकोपहरणकर्मीभूतः पशुः। पशुकर्मकोपहरणसप्रदान तु समासार्थः॥ स्थाल्यवधिकोद्धरणकर्म ओदनः। ओदनकर्मकोद्धरणावधिः स्थाली समासार्थ इत्यादि॥ इह कर्मादीनां समासेनाभिहितत्वात्प्रथमा॥ ननु वाक्ये धात्वर्थं प्रति क्तप्रत्ययार्थस्य कर्तुः कर्मणो वा विशेष्यसत्वाद्वृत्तावपि तथैवोचितेति प्राप्तोदकोढरथादौ उदककर्तृकप्राप्तीत्यादिवर्णन तु न युज्यते इति चेत्। उच्यते। एकार्थीभावादिभिर्वृत्तौ विशिष्टार्थविषयशक्त्यन्तरमेव स्वीक्रियते, न त्ववयवशक्तिः इति नानुपपत्ति॥ व्यपेक्षावादिभिस्त्वगत्या भिन्नैव व्युत्पत्तिः स्वीकार्या। किं च कर्तृविशिष्टप्राप्तेः पदार्थत्वे तस्यैव नामार्थत्वादुदकस्य तदभेदो वाच्यः, स च बाधितः, न हि कर्तृविशिष्टा प्राप्तिरुदकमिति संभवति। अत एव बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्महद्गौरवम् इत्यादिना समर्थसूत्रे एकार्थीभावपक्ष एव प्रबल इत्यवोचाम॥—**प्रथमार्थे तु ने**ति। शेषपदेन वा अन्यपदार्थ इत्यनेन वा अतिप्रसङ्गवारणात् 'अप्रथमाविभक्त्यर्थे' इति वचन न कर्तव्यमिति भावः॥—**व्यधिकरणानामि**त्यादि। इह शेषपदेनैव वारितोऽतिप्रसङ्ग इति 'समानाधिकरणानां बहुव्रीहिः' इत्यपि न कर्तव्यमिति भावः॥ 'यत्रान्यसमासो नोक्तः स शेषः' इति वृत्तिकारादीनां मते तु 'प्रथमान्तानामेव बहुव्रीहिः' इत्यलाभात्कर्तव्यमेवेद वचनमिति बोध्यम्॥—**प्रादिभ्य** इति। प्रादिभ्यः पर यद्धातुज तदन्तस्य पदान्तरेण बहुव्रीहिर्व्याख्येय इति सूत्रसिद्धानुवादः॥—**वा चे**ति। इद तु वाचनिकम्। पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य लोपो वाच्य इत्यर्थः। एतच्च प्रादीनामेव वृत्तौ विशिष्टार्थवृत्तितामाश्रित्य सुत्यजम्॥—**नञोऽस्त्यर्थानामि**ति। नञः परेषामस्त्यर्थवाचिनां पदान्तरेण बहुव्रीहिर्व्याख्येयः, अस्त्यर्थवाचिनां तु लोप इत्यर्थः॥ अस्त्यर्थानां किम्। अनुपनीतपुत्रः। नञ किम्। निर्विद्यमानपुत्रः॥ नन्विह 'सुपा' इत्यननुवृत्तावपि सुबित्येतदनुवर्तते। तथा चास्तिक्षीरेति प्रयोगो दुर्लभ इत्याशङ्क्य त साधयति—**विभक्तिप्रतिरूपकमि**ति॥—**स्त्रियाः पुंवत्**—॥—**निपातनादि**ति। एतच्च पूर्वत्रापि योज्यम्। अन्यथा व्यधिकरणानां बहुव्रीहिः स्वरसतो न सिध्येत्॥—**लुगिति**। अनूङिति प्रथमान्तम्। षष्ठ्यर्थे प्रथमेति हरदत्तः॥ एवं च सूत्रे केषांचित् 'अनूङः समानाधिकरणे' इति षष्ठ्यन्तपाठोऽसांप्रदायिक इति भावः॥—**तुल्ये** इत्यादि। 'भाषितः पुमान् यस्मिन्' इत्यादिव्याख्यानादयमर्थो लभ्यते इति 'तृतीयादिषु भाषितपुंस्कम्' इत्यत्रोपपादितम्। यद्यत्र 'भाषितः पुमान्येन तद्भाषितपुस्कम्' इत्युच्येत। तर्हि कुटीभार्यः द्रोणीभार्य इत्यादावतिप्रसङ्गः स्यात्। भवति हि कुटशब्दो घटे पुलिङ्गो, गेहे तु स्त्रीलिङ्गः। द्रोणशब्दस्तु परिमाणविशेषे पुंलिङ्गो, गवादन्यां तु स्त्रीलिङ्ग इति॥—**ऊङभावो यत्रे**ति॥ यदि तु ऊङन्योऽनूङिति पर्युदासः स्यात् तर्हि दा-

---

१ पुंवाचकस्येवेति—प्रत्यासत्त्या पुंवद्भावभाजः शब्दस्य प्रयोगान्तरे पुमासमाचक्षाणस्य यद्रूप तदेवातिदिश्यते, तेन जरतीशब्देन विग्रहे वृद्धगुरिति, वरटाभार्या यस्येति विग्रहे हसभार्यः इति च न भवति।

स्यात्समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे नतु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रा गावो यस्येति लौकिकविग्रहे । चित्रा अस् गो अस् इत्यलौकिकविग्रहे । चित्रगुः । रूपवद्भार्यः । चित्रा जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनामपि बहुव्रीहिः । अत्र केचित् । चित्राजरतीगुः । जरतीचित्रागुर्वा । एवं दीर्घातन्वीजङ्घः । तन्वीदीर्घाजङ्घः । त्रिपदे बहुव्रीहौ प्रथमं न पुंवत् । उत्तरपदस्य मध्यमेन व्यवधानात् । द्वितीयमपि न पुंवत् । पूर्वपदस्याभावात् । उत्तरपदशब्दो हि समासस्य चरमावयवे रूढः । पूर्वपदशब्दस्तु प्रथमावयवे रूढ इति वदन्ति । वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते । आनङ् ऋत इत्यत्र यथा । तेनोपान्त्यस्य पुंवदेव । चित्राजरद्गुरित्यादि । अतएव चित्राजरत्यौ गावौ यस्येति द्वन्द्वगर्भेऽपि चित्राजरद्गुरिति भाष्यम् । कर्मधारयपूर्वपदे तु द्वयोरपि पुंवत् । जरच्चित्रगुः । कर्मधारयोत्तरपदे तु चित्रजरद्गवीकः । स्त्रियाः किम् । ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः । भाषितपुंस्कात्किम् । गङ्गाभार्यः । अनूङ् किम् । वामोरूभार्यः । समानाधिकरणे किम् । कल्याण्याः माता कल्याणीमाता । स्त्रियां किम् । कल्याणी प्रधानं यस्य स कल्याणीप्रधानः । पूरण्यां तु । अप्पूरणीप्रमाण्योः ।५।४।११६। पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । पुंवद्भावप्रतिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव । रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या[1] । अन्यत्र तु । नद्यृतश्च ।५।४।१५३। नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप्स्यात् । पुंवद्भावः । केऽणः ।७।४।१३। के परेऽणो ह्रस्वः स्यात् । इति

---

आद्यन्तमेव गृह्येत । ततः किमिति चेद्, दरदोऽपत्यं दारदः । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इत्यादेः 'द्व्यञ्मगध–' इत्यण्, तस्य स्त्रियाम् 'अणश्च' इति लुक् । दरद्, सा चासौ वृन्दारिका च दारदवृन्दारिकेत्यादि न सिध्येत् । न ह्यत्र दर्शनीया भार्या यस्य दर्शनीयभार्य इत्यादाविव स्त्रीप्रत्ययः कश्चिदस्तीति भावः ॥ ननु 'न कोपधायाः' ऊङश्च इत्येव सूत्र्यतामिति चेत् । न । बाधकबाधनार्थेन 'पुंवत्कर्मधारये' इत्यनेन वामोरूभार्येति कर्मधारये पुंवद्भावापत्तेः । पृथक्प्रतिषेधसामर्थ्यात्सिद्धान्ते तु न दोषः ॥ स्त्रिया इत्यस्य स्त्रीप्रत्ययपरतां वारयति—**स्त्रीवाचकस्ये**ति 'स्त्रीप्रत्ययस्य पुंवद्भावः' इत्युक्ते तु स्त्रीप्रत्ययलोप इत्येवार्थः पर्यवस्यतीति दारदवृन्दारिकेति न सिध्येत । किं च पटुभार्य इत्यत्र उत्तरपदनिमित्ताया ङीषो निवृत्तेः 'अचः परस्मिन्' इति स्थानिवद्भावाद्यण् स्यात् ॥ अपि च वतण्डस्यापत्यं स्त्री वतण्डी 'वतण्डाच्च' इति यञ्, 'लुक् स्त्रियाम्' इति तस्य लुक् । शार्ङ्गरवादित्वान्ङीन् । वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिका । अत्र पुंवद्भावेन ङीनो निवृत्तावपि अर्थगतस्य स्त्रीत्वस्यानिवृत्तत्वात् 'लुक् स्त्रियाम्' इति यञो लुक् प्रसज्येतेति भाव. ॥—**ह्रस्व** इति । अनेकमिति प्रथमानिर्दिष्टत्वात् 'प्रथमानिर्दिष्टम्' इति 'एकविभक्ति च–' इति वा गोशब्दस्योपसर्जनत्वादिति भावः ॥—**चित्रा असि**ति । 'अन्तरङ्गानपि–' इति न्यायादिह पूर्वसवर्णदीर्घो न प्रवर्तते । अन्यथा एकादेशस्य परादित्वेन सुपो लुकि चित्रगुरित्यत्र अकारो न लभ्येतेति भावः ॥—**नेहे**ति । अत्रैव सूत्रे पट्वीमृद्व्यौ भार्ये अस्येति द्वन्द्वगर्भबहुव्रीहौ पट्वीमृदुभार्य इति भाष्योदाहरणादिति भाव ॥—**आनङि**ति । तथा च 'समर्थ'–सूत्रे भाष्ये होतृपोतृनेष्टोद्गातार इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्यानङ् उदाहृतः । पूर्वपदाक्षेपे तु न सिध्येत् । न ह्यत्र नेष्टा पूर्वपद, होतुरेव पूर्वपदत्वादिति भावः ॥—**अत एवे**ति । पूर्वपदानामनाक्षेपादेवेत्यर्थ ॥—**चित्राजरदि**ति । द्वन्द्वान्तर्गतजरच्छब्दस्योत्तरपदत्वेऽप्यसामानाधिकरण्यान्न टापो निवृत्तिः । न चैवमपि द्वन्द्वात्मकस्य पूर्वपदस्य समानाधिकरणोत्तरपदपरत्वात्पुंवद्भावे टान्निवृत्तिर्दुर्वारेति वाच्यम् । द्वन्द्वान्तर्गतचित्रजरच्छब्दयोः स्त्रीप्रत्ययप्रकृत्योः प्रत्येकं भाषितपुंस्कत्वेऽपि द्वन्द्वात्मकस्य पूर्वपदस्यातथात्वात् ॥—**द्वयोरपी**ति । पूर्वपदान्तर्गतमुत्तरपदमाश्रित्य प्रथमस्यापि पुंवद्भाव इति भावः ॥—**जरच्चित्रे**ति । पूर्वकालैक–' इति समासः । लिङ्गविशिष्टपरिभाषया जरद्ग्रहणेन जरतीशब्दस्यापि ग्रहणात् ॥—**चित्रजरद्गवीक** इति । जरती चासौ गौश्च जरद्गवी 'गोरतद्धित–' इति टचि टित्वान् ङीप् । चित्रा जरद्गवी यस्येति बहुव्रीहौ 'नद्यृतश्च' इति वक्ष्यमाणः कप् ॥—**वामोरूभार्य** इति । 'संहितशफलक्षणवामादेश्च' इत्यूङ् ॥—**प्रधानमि**ति । भावल्युडन्तं नित्यनपुंसकम् ॥—**पञ्चमी**ति ॥ 'तस्य पूरणे' इति डट् 'नान्तादसंख्यादेः–' इति डटो मडागमः 'टिड्ढा–' इति ङीप् ॥—**प्रमाणी**ति । करणे ल्युट् तदन्तस्य विशेष्यनिघ्नत्वान् स्त्रियां ङीप् ॥ कथं तर्हि 'प्रमाणाया स्मृतौ' इति शाबरभाष्यमिति चेद् । अत्र भट्टाः—'प्रमाणमयते याति मूलभूतां श्रुतिं यतः । क्विबन्तादयतेस्तस्मात्प्रमाणा स्मृतिरुच्यते' इत्याहुः ॥ तत्रायतेः क्विपि 'ह्रस्वस्य पिति कृति–' इति तुकि टाप् दुर्लभः । तथाप्यागमशास्त्रस्यानित्यत्वात्तुगभावे इति बोध्यम् ॥ क्विबिवाचरति क्विप् विजिन्यर्थ इति वा व्याख्येयम् ॥ अन्ये तु प्रमाणं वेदस्तद्वदाचरतीत्याचारक्विबन्तात्प्रमाणशब्दात्पचाद्यचि टाबित्याहु ॥—**प्रधानपूरण्यामेवे**ति । प्रधाने कार्यसम्प्रत्ययात्न्यायसिद्धमिदम् ॥—**नद्यृतः**—॥ तपरत्वं स्पष्टार्थम् ॥—**नद्युत्तरपदादि**ति । नद्यन्तादिति नोक्तं, कप्प्रत्ययेन सह समासे कृते

---

१ मुख्येति—उक्तनावयवभेदस्य रात्रिसमूहस्य प्रधानत्वेन यथा प्रथमाद्या रात्रयः समासाभिधेयाः, एवं पञ्चम्यपीति वाक्यपदार्थस्यान्यपदार्थेऽनुप्रवेशात्प्राधान्यमिति भाव. ।

भासे ॥ न कपि ।७।४।१४। कपि परे ह्रस्वो न स्यात्। कल्याणपञ्चमीकः पक्षः। अत्र तिरोहितावयवभेदस्य पक्ष-स्यान्यपदार्थतया रात्रिरप्रधानम्। बहुकर्तृकः। अप्रियादिषु किम्। कल्याणीप्रियः। प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्तिः। सचिवा। स्वसा। कान्ता। क्षान्ता। समा। चपला। दुहिता। वामा। अबला। त-नया ॥ सामान्ये नपुंसकम् ॥ दृढं भक्तिर्यस्य स दृढभक्तिः। स्त्रीत्वविवक्षायां तु दृढाभक्तिः। ॥ तसिलादिष्वा-कृत्वसुचः ।६।३।३५। तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत्स्यात्। परिगणनं कर्तव्यम्। अव्याप्त्यतिव्याप्तिपरि-हाराय। त्रतसौ। तरसमपौ। चरट्जातीयरौ। कल्पब्देशीयरौ। रूपप्पाशपौ। थाल्। तिल्थ्यनौ। बह्वीषु बहुत्र। बहुतः। दर्शनीयतरा। दर्शनीयतमा। घरूपेति वक्ष्यमाणो ह्रस्वः परत्वात्पुंवद्भावं बाधते। पट्वितरा। पट्वितमा। प-टुचरी। पटुजातीया। दर्शनीयकल्पा। दर्शनीयदेशीया। दर्शनीयरूपा। दर्शनीयपाशा। बहुथा। प्रशस्ता वृकी वृकतिः। अजाभ्यो हिता अजथ्या ॥ * शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः ॥ बह्वीभ्यो देहि बहुशः। अ-ल्पाभ्यो देहि अल्पशः ॥ * त्वतलोर्गुणवचनस्य ॥ शुक्लाया भावः शुक्लत्वम्। शुक्लता। गुणवचनस्य किम्। कर्त्र्या भावः कर्त्रीत्वम्। शरदः कृतार्थतेत्यादौ तु सामान्ये नपुंसकम् ॥ * भस्याढे तद्धिते ॥ हस्तिनीनां समूहो हास्तिकम्। अढे किम्। रौहिणेयः। स्त्रीभ्यो ढगिति ढोऽत्र गृह्यते। अग्नेर्ढगिति ढकि तु पुंवदेव। अग्नायी देवताऽस्य स्थालीपाकस्याग्नेयः। सपत्नीशब्दस्त्रिधा। शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादित्वात् ङीन्येकः। समानः पतिर्यस्या इति विग्रहे विवाहनिबन्धनं पतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः। स्वामिपर्यायपतिशब्देन भाषितपुंस्कस्तृती-यः। आद्ययोः शिवाद्यण्। सपत्न्या अपत्यं सापत्नः। तृतीयात्तु लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणो ण्य एव।

---

बहुव्रीहेरनद्यन्तत्वात्। उत्तरपदं तु नद्यन्तं भवत्येव, 'समासे अन्तः समासान्तः' इति पक्षाश्रयणादिति बोध्यम् ॥—दृढमिति ॥ अदार्ढ्यनिवृत्तिमात्रपरत्वेनात्र दृढशब्दप्रयोगान्न लिङ्गविशेषविवक्षितेति भावः। लिङ्गविशेषविवक्षायां तु दृढाभक्तिरित्यादिसिद्धये प्रियादिषु भक्तिशब्दपाठः ॥—तसिलादिषु कृत्वसुजन्तेष्विति। 'पञ्चम्यास्तसिल्' इ-त्यारभ्य 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्–' इत्येतत्पर्यन्तेष्वित्यर्थः ॥—अव्याप्त्यतिव्याप्तिवारणायेति। वृकतिरजथ्या बहुश इत्यत्राव्याप्तिः, तसिलादिकृत्वसुच्पर्यन्तेषु तिल्थ्यन्शसां पाठाभावात्। पट्वीदेश्या शुभ्रारूप्य इत्य-त्रातिव्याप्तिः, 'ईषदसमाप्तौ–' इति देश्यस्य 'षष्ठ्या रूप्य च' इति रूप्यस्य च तत्र पाठात्। अतस्तन्निवारणाय परिगणन-मित्यर्थः ॥ परिगणितान् त्रतसादीन् क्रमेणोदाहरति—बह्वीष्विति। यद्यपि बह्वादिषु ङीषो वैकल्पिकत्वात्तदभावे बहुत्रे-त्यादि सिध्यति। तथापि पक्षे बह्वीत्रेत्याद्यनिष्टवारणायेदम् ॥ ततस्त्रेति प्राचोक्तमुदाहरणमत्रोपेक्षितम्। 'सर्वनाम्ना वृ-त्तिमात्रे' इत्यनेन गतार्थत्वादिति मनोरमायां स्थितम् ॥—पट्वितरेति ॥ प्राचा तु पटुतरेत्युदाहृतम्, तत्प्रामादिकमिति भावः ॥—पटुचरीति। 'भूतपूर्वे चरट्' ॥—पटुजातीयेति। 'प्रकारवचने जातीयर्' ॥—दर्शनीयरूपेत्यादि। 'प्र-शंसायां रूपप्'। 'याप्ये पाशप्' ॥—बहुथेति। 'प्रकारवचने थाल्' तत्र हि 'किंसर्वनामबहुभ्यः' इत्यधिकृतम् ॥—वृ-कतिरिति। 'वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि' इति तिल् ॥—अजथ्येति। 'अजाविभ्यां थ्यन्' ॥—शसी-ति। 'बह्वल्पार्थात्–' इति यश्शस् स तसिलादिषु ज्ञातव्य इत्यर्थः। त्रतसादिषु परिगणनं कर्तव्यमिति यावत् ॥—त्वत-लोर्गुणवचनस्य। गुणस्येति वक्तव्ये वचनग्रहणं प्रसिद्धगुणपरिग्रहार्थम्। अतस्तथैवोदाहरति—शुक्लत्वं शुक्लतेति ॥ नन्विह जातिसंज्ञाव्यतिरिक्तं धर्ममात्रं गुण इति यत्प्राचीनैरुक्तं, तत्स्वीकर्तव्यम्। अन्यथा 'निरीक्ष्य मेने शरदः कृता-र्थता' 'सा मुमोच रतिदुःखशीलताम्' इत्यादिषु पुवद्भावाप्रवृत्त्या दीर्घश्रवणं स्यादित्यत आह—सामान्ये नपुंसकमि-ति ॥ एवं च 'नेष्टं पुरो द्वारवतीत्वमासीत्' इत्यादिप्रयोगो निर्बाध इति भाव. ॥—हास्तिकमिति। 'अचित्तहस्तिधे-नोः–' इति ठक्। न चात्र 'यस्येति–' लोपेन निर्वाहः, तस्य 'असिद्धवदत्रा–' इत्यसिद्धत्वान् 'अचः परस्मिन्' इति स्थानि-वद्भावाच्च 'नस्तद्धिते' इति टिलोपानापत्तेः। न च 'ठक्छसोश्च' इत्यनेनैवात्र पुवद्भावसिद्धिः शङ्क्या। छसा साहचर्यात्। 'भवतष्ठक्छसौ' इत्यस्यैव ठकस्तत्र ग्रहणात्। नापि 'जातेश्च' इति पुंवद्भावनिषेधः शङ्क्यः। अस्मादेव भाष्योदाहरणात् 'मौत्रस्यैव निषेधो, न लौपसंख्यानिकस्य' इति ज्ञापनात् ॥—रौहिणेय इति। रोहितशब्दात् 'वर्णादनुदात्तात्' इति ङी-नकारौ। सति तु पुंवद्भावे तयोर्निवृत्तौ रौहितेय इति स्यादिति भावः ॥—गृह्यत इति। व्याख्यानादिति शेषः ॥—अग्नायीति। अग्निशब्दाद् 'वृषाकप्यग्नि–' इति स्त्रियां ङीबैकारादेशौ ॥—आग्नेय इति। पुवद्भावाभावे तु आग्नायेय इ-ति स्यादिति भावः ॥—शत्रुपर्यायादिति। अत्र च 'व्यन् सपत्ने' इति निर्देशो लिङ्गम्। 'रिपौ वैरिसपत्नारिद्विषद्द्वेषण-दुर्हृदः' इत्यमरः ॥—विवाहनिबन्धनमिति। तज्जन्यसंस्कारविशेषविशिष्टे रूढमित्यर्थः ॥—सापत्न इति। अभाषि-तपुंस्कत्वात् द्वितीयस्य पुंवद्भावो न भवति। सति च पुंवद्भावे नकारादेशाभावात्सापत इति स्यात्। आद्यस्य तु पुंवद्भा-

१ गुणवचनस्येति—अत्र सङ्ख्याकृदन्ततद्धितान्तसमस्तसर्वनामसङ्ख्याशब्दातिरिक्तः शब्दो गुणवचनशब्देनोच्यते, आकडारसू-त्रभाष्यतस्तथैव लाभात्, अत एव 'एकतद्धिते च' इत्यत्र एकत्वमिति पुवत्त्वात्सिद्धमित्याशङ्क्य न सिध्यति, उक्तमेतत्त्वतलो-र्गुणवचनस्य इत्युक्तम्।

न स्यण् । शिवादौ रूढयोरेव ग्रहणात् । सापत्यः ॥ * **ठक्छसोश्च** ॥ भवत्याश्छात्रा भावत्काः । भवदीयाः । एतद्वार्तिकमेकतद्धिते चेति सूत्रं च न कर्तव्यम् । सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति भाष्यकारेष्टया गतार्थत्वात् । सर्वमयः । सर्वकाम्यति । सर्विका भार्या यस्य स सर्वकभार्यः । सर्वप्रिय इत्यादि । पूर्वस्यैवेदम् । भस्याढेति लिङ्गात् । तेनाकचि एकशेषवृत्तौ च न । सर्विका । सर्वाः ॥ * **कुक्कुट्यादीनामण्डादिषु** ॥ कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । मृगक्षीरम् । काकशावः । **क्यङ्मानिनोश्च** ।६।३।३६। एतयोः परतः पुंवत् । एनीवाचरति एतायते । श्येनीवाचरति श्येतायते । स्वभिन्नां कांचिद्दर्शनीयां मन्यते दर्शनीयमानिनी । दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः । **न कोपधायाः** ।६।३।३७। कोपधायाः स्त्रिया न पुंवत् । पाचिकाभार्यः । रसिकाभार्यः । मद्रिकायते । मद्रिकामानिनी ॥ * **कोपधप्रतिषेधे तद्धितवुग्रहणम्** ॥ नेह । पाका भार्या यस्य स पाकभार्यः ॥ **संज्ञापूरण्योश्च** ।६।३।३८। अनयोर्न पुंवत् । दत्ताभार्यः । दत्तामानिनी । दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञा-

---

वेऽपि सापत्न इत्येव भवतीति भावः ॥—**रूढयोरेवे**ति । आद्यः शब्दो रूढः, द्वितीयस्तु योगरूढः, तेन 'समानः पतिर्यस्याः' इति विग्रहो न विरुध्यत इति दिक् ॥—**ठक्छसोश्च** ॥ अभत्वार्थ आरम्भः ॥—**भावत्का** इति । 'भवतष्ठक्छसौ' ठावस्थायामेव पुंवद्भावे कृते 'ठस्येकः' इति इकादेशं बाधित्वा तान्तलक्षणः कादेशः ॥ नन्विकादेशे भत्वाद् 'भस्याढे–' इति पुंवद्भावे सति कादेशप्रवृत्त्या रूपसिद्धौ किमत्र ठग्ग्रहणेन । मैवम् । मथितं पण्यमस्य माथितिक इत्यत्रेवाल्विधित्वेन स्थानिवद्भावायोगात्सन्निपातपरिभाषया वा कादेशप्रवृत्तेर्दुर्लभत्वात् । अतः 'ठक्छसोः' इति ठग्ग्रहणं कर्तव्यमेव ॥—**भवदीया** इति । छसः सित्करणात् 'सिति च' इति पदसंज्ञा । तेनात्र जश्त्वं भवति । एवं च पदसंज्ञया भसंज्ञाया बाधात् 'भस्याढे' इत्यस्याप्रवृत्त्या वार्तिके छस्ग्रहणं कृतम् ॥—**भाष्यकारेष्टये**ति । अनेन सूत्रवार्तिकयोरुक्तिसंभवो ध्वनितः । उत्तरं दृष्ट्वा पूर्वस्याप्रवृत्तत्वात् । निष्कर्षे तु व्यर्थमेवेत्याह—**गतार्थत्वादि**ति ॥ इष्टेरुदाहरणान्याह—**सर्वमय** इत्यादिना । 'तत आगतः' इत्यर्थे 'मयड्वा' इति मयट् । तसिलादिषु मयडादेरपरिगणितत्वोत्तेनेदं न सिध्यतीति भावः ॥—**सर्वकभार्य** इति । न च 'स्त्रियाः पुंवत्–' इति सूत्रेण गतार्थता, 'न कोपधायाः' इति निषेधात् । न चास्यापि तेन निषेधः शङ्क्यः । 'स्त्रियाः पुंवत्–' इत्यादिप्रकरणोक्तस्यैव तेन निषेधात् । अस्या इष्टेस्तु तस्मिन् प्रकरणे असमाविष्टत्वात् । न च वृत्त्यन्तर्गतस्य सर्वनामत्वाभावात्पुंवद्भावो न भवेदिति वाच्यम् । वचनारम्भसामर्थ्यात् मात्रग्रहणाद्वा क्वचित्सर्वनामत्वेन दृष्टाना संप्रति संज्ञाभावेऽपि पुंवद्भावाभ्युपगमात् । अत एवोत्तरपूर्वायै इत्यत्र संज्ञाभावेऽपि पुंवद्भावः । सर्वा नाम काचित्तस्याः पुत्रः सर्वापुत्र इत्यत्र तु नातिप्रसङ्गः, संज्ञोपसर्जनयोः गर्वादिगणबहिर्भूतत्वेन वृत्तेः पूर्वमप्यसर्वनामत्वात् ॥—**सर्वप्रिय** इति । 'स्त्रियाः पुंवत्–' इत्यत्र प्रियादिपर्युदासो रूपवतीप्रिय इत्यादावुपयुज्यत इति भावः ॥ तदितरा तदन्येत्यादावुत्तरपदेऽतिप्रसङ्गमाशङ्क्याह—**पूर्वस्यैवे**ति । वृत्तिघटकानेकभागमध्ये किंचिदपेक्षया पूर्वस्येत्यर्थः ॥—**लिङ्गादि**ति । अन्यथा एषा ह्वा एतयोः कात्पूर्वस्य आपि विधीयमानमित्वं निर्विषयं स्यादिति भावः ॥ 'दक्षिणपूर्वा दिक्' इति भाष्योदाहरणमपीह लिङ्गमिति बोध्यम् । यत्तु प्राचा 'सर्वनाम्नः समासे पुंवत्' इत्युक्तम् । यच्च व्याचख्युः वार्तिकार्थमनुवदति सर्वनाम्न इत्यादिनेति । तत्प्रामादिकम् । 'वृत्तिमात्रे' इति पाठस्यैव भाष्यारूढत्वात् । सर्वमयः सर्वकाम्यतीत्युक्तोदाहरणासिद्धिप्रसङ्गाच्च । 'वार्तिकार्थमित्याद्यपि प्रामादिकमेव । वार्तिकग्रन्थे एतदभावात् । न च 'सर्वनाम्नो वृत्तिमात्रे' इत्येतद्वार्तिकमेव, न तु भाष्यकारेष्टिरिति शङ्क्यम् । 'ठक्छसोः' इति वार्तिकस्य निरालम्बनत्वापत्तेः । भाष्यकारेष्टित्वे तु वार्तिकस्योक्तिसंभव उक्त एव प्राक् ॥—**क्यङ्मा**—॥—**एतायत** इत्यादि । 'कर्तुः क्यङ् सलोपश्च' इति क्यङि पुंवद्भावे कृते एतश्येतयोः 'अकृत्सार्व–' इति दीर्घः ॥ मानिन्ग्रहणमसमानाधिकरणार्थमन्यथ चेत्याशयेन यथाक्रममुदाहरति—**स्वभिन्नामि**त्यादिना ॥ —**दर्शनीयमानिनी**ति । 'मनः' इति णिनिः । नान्तत्वात् ङीप् । या त्वात्मानमेव दर्शनीयां मन्यते तत्र 'स्त्रियाः' पुंवत्' इत्येव सिद्धम् । एकस्या अपि ईप्सिततमत्वव्यापाराश्रयत्वविवक्षाभेदेन कर्मत्वकर्तृत्वयोः सत्वेऽपि वास्तवाभेदेन सामानाधिकरण्याविघातादिति भावः ॥—**पाचिकाभार्य** इति ॥ पचतीति पाचिका ण्वुल् । 'युवोः–' इत्यकादेशे टापि 'प्रत्ययस्थात्' इतीत्वम् ॥—**रसिकाभार्य** इति । रसोऽस्त्यस्या इति रसिका । 'अत इनिठनौ' इति ठन् ॥—**मद्रिकायत** इति । 'क्यङ्मानिनोश्च' इति पुंवत्त्वप्राप्तिः । मद्रेषु भवा मद्रिका । 'मद्रवृज्योः कन्' । सति तु पुंवद्भावे इत्वं न श्रूयेतेति भावः ॥—**तद्धितवुग्रहणमि**ति । द्वन्द्वान्ते श्रूयमाणः प्रत्येकं संबध्यते, तद्धितग्रहणं वुग्रहणं चेत्यर्थः ॥—**पाका भार्ये**ति । 'अर्भकपृथुकपाका वयसि' इति कप्रत्ययान्तोऽयमुणादिषु निपातितः । न चायं तद्धितस्य ककारो, नापि वोः । 'वयसि प्रथमे' इति ङीपं बाधित्वा अजादित्वाट्टाप् ॥—**संज्ञापूरण्योश्च** ॥ यत्तु दत्तायते इति क्यङन्तमपि वृत्त्यादिषूदाहृतम् । तत्तु विशेषाभावादिहोपेक्षितम् ॥—**पञ्चमीपाशे**ति । 'याप्ये पाशप्' । 'तसिलादिषु' इति प्राप्तिः ॥—

---

१ कुक्कुट्यादीनामिति—जातिमात्रपरकुक्कुटादिनैव समासे सिद्धमेतदिति भाष्ये प्रत्याख्यातमिदम्, तत्पक्षे कुक्कुट्यादिशब्दानां समासोऽनभिधानान्न भवति ।

भूतोऽयमिति भाषितपुंस्कत्वमस्ति । पञ्चमीभार्यः । पञ्चमीपाशा । **वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** ।६।३।३९। वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् । स्रौघ्नीभार्यः । माथुरीयते । माथुरीमानिनी । वृद्धिनिमित्तस्य किम् । मध्यमभार्यः । तद्धितस्य किम् । काण्डलावभार्यः । वृद्धिशब्देन किम् । तावद्भार्यः । रक्ते तु काषायी कन्था यस्य स काषायकन्थः । विकारे तु हैमी मुद्रिका यस्येति हैममुद्रिकः । वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह पुंवत् । वैयाकरणभार्यः । सौवश्वभार्यः । **स्वाङ्गाच्चेतः** ।६।३।४०। स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः । स्वाङ्गात्किम् । पटुभार्यः । ईतः किम् । अकेशभार्यः ॥ * अमानिनीति वक्तव्यम् ॥ सुकेशमानिनी[1] । **जातेश्च** ।६।३।४१। जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवत् । शूद्राभार्यः । ब्राह्मणीभार्यः । सौत्रस्यैवायं निषेधः । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र भस्याढ इति तु भवत्येव । **संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये** ।२।२।२५। संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः । दशानां समीपे ये सन्ति ते उपदशाः । नव एकादश वेत्यर्थः । बहुव्रीहौ संख्येयेति वक्ष्यमाणो डच् । **ति विंशतेर्डिति** ।६।४।१४२। विंशतेर्भस्य तिशब्दस्य लोपः स्याड्डिति । आसन्नविंशाः । विंशतेरासन्ना इत्यर्थः ।

**वृद्धिनिमित्तस्य**—॥ **स्रौघ्नी**ति । स्रुघ्ने भवा । 'तत्र भवः' इत्यणि 'टिड्ढा–' इति ङीप् ॥—**माथुरीयत** इति । मथुरायां भवा माथुरी । सेवाचरतीत्यर्थे 'कर्तुः क्यङ्–' इति क्यङ् ॥—**मध्यमे**ति । मध्ये भवा मध्यमा । 'मध्यान्मः' इति मः ॥—**काण्डलावे**ति । काण्ड लुनातीति काण्डलावी 'कर्मण्यण्' । कृदयम् ॥—**तावदि**ति । तत्परिमाणमस्यास्तावती । 'यत्तदेतेभ्यः–' इति वतुपि 'आ सर्वनाम्नः' इत्याकारो न वृद्धिशब्देन विहित इति भावः ॥—**काषायी**ति । कषायेण रक्तेत्यर्थे 'तेन रक्त रागात्' इत्यणि ङीप् ॥—**हैमी**ति । हेम्नो विकार इत्यर्थे 'अनुदात्तादेश्च' इत्यञ् ॥—**फलोपधाने**ति । निमित्तशब्दः फलोपहितपरः । स्वरूपयोग्यपरत्वे तु वैयाकरणभार्य इत्यत्र पुवद्भावो न सिध्येदिति भावः ॥ व्याकरणमधीते वेत्ति वा वैयाकरणी । 'तदधीते तद्वेद' इत्यण् । स्वश्वस्यापत्य स्त्री सौवश्वी 'तस्यापत्यम्' इत्यण् । उभयत्र णित्त्वात्प्राप्ता आदिवृद्धि. 'नय्वाभ्याम्' इत्यनेन निषिध्यत इति नायं वृद्धि प्रति फलोपहितः, कि तु स्वरूपयोग्यः ॥ यद्यप्यैजागमनिमित्तत्वाद्वृद्धि प्रति फलोपहितोऽपि भवत्यय तद्धितः तथापि वृद्धिशब्देन विहितां वृद्धिं प्रति न भवतीति भावः ॥ अत्र व्याचक्षते–सूत्रे निमित्तशब्दः फलोपहितपरः, अन्यथा निमित्तग्रहणमनर्थकं स्यात् । वृद्धेस्तद्धितस्येत्युक्तेऽपि निमित्तत्वमेव सबन्ध इति वृद्धिनिमित्त यस्तद्धित इत्यर्थलाभात् । तेन वृद्धिशब्देन विहिता वृद्धिरित्ययमर्थो लभ्यते । अन्यथा फलोपहितपरत्वलाभो निष्फलः स्यादुक्तदोषतादवस्थ्यादिति ॥—**सुकेशी**ति ॥ 'स्वाङ्गाच्चोपसर्जनात्' इति ङीष् ॥—**अकेशे**ति । 'सहनञ्विद्यमान' इति निषेधान्ङीषभावः ॥—**जातेश्च** ॥ यद्यत्र जातेरित्येव विहित इति व्याख्यायेत तर्हि हास्तिकमित्युदाहरणे औपसख्यानिकस्य नाय निषेध इति भाष्योक्तिर्न संगच्छेत । हस्तिन्शब्दात् 'जातेः' इति ङीन्न विहितः, अदन्तत्वाभावात् । किं तु 'ऋन्नेभ्यः' इति ङीब्विहित इति पुंवद्भावनिषेधस्याप्रसक्तेरत आह—**जातेः पर** इति । एव च हस्तिनीभार्यः शुनीभार्य इत्यादावपि निषेधः सिध्यतीति भावः ॥—**स्त्रीप्रत्यय** इति । टाबादिः ॥ प्राचा तु ङीषेवोपात्तस्तदयुक्तमिति ध्वनयन्नुदाहरति—**शूद्राभार्य** इति ॥—**ब्राह्मणी**ति । शार्ङ्गरवादित्वान्ङीन् ॥ प्राचा तु ङीन्न पुवदिति व्याख्याय ब्राह्मणीभार्य इत्युदाहृतं । तद्भ्रमसात् ॥—**सौत्रस्यैवे**ति । व्याख्यानादिति भावः ॥ 'न कोपधायाः' इति निषेधस्तु 'भस्याढे' इति प्राप्तस्यापि भवत्येव । तेन विलेपिकायाः धर्म्यं वैलिपिकमिति सिद्धम् । यदि 'अण्महिष्यादिभ्यः' इत्यणि पुंवद्भावः स्यादिकारोऽत्र न श्रूयेत । एतच्च 'न कोपधायाः' इति सूत्रे भाष्ये स्पष्टम् ॥प्रासङ्गिक समाप्य प्रकृतमनुसरति—**संख्यये**ति । सामानाधिकरण्यस्यान्यपदार्थवृत्तेश्च विरहात्पूर्वेणाप्राप्तौ वचनम् ॥—**दशानामि**ति । उपगता दश येषामिति न विगृहीतम् । पूर्वेणैव सिद्धेः ॥—**उपदशा** इति । उपशब्दः समीपे समीपिनि च वर्तते । आद्ये अव्ययीभावः, द्वितीये तु बहुव्रीहिरिति विवेकः ॥—**नव एकादश वेत्यर्थ** इति । संख्याद्वारकसंबन्धस्यान्तरङ्गत्वादिति भावः । तेन दशानां वृक्षादीनां समीपे ये सन्ति गवादयस्ते उपदशा इति न प्रयुज्यन्ते ॥—सूत्रे तीति लुप्तषष्ठीकमित्याशयेनाह—**तिशब्दस्ये**ति ॥—**विंशा** इति । इह तिलोपोत्तरम् 'अतो गुणे' इति पररूपमेव, न तु टिलोपः, तिलोपस्याभीयत्वेनासिद्धत्वात् । न चात्र पररूपमपि न स्यात्तिलोपस्य स्थानिवत्त्वादिति शङ्क्यम् । अज्झलादेशोऽजादेशो न भवतीति 'अचः परस्मिन्' इत्यस्याप्रवृत्तेः । 'स्थानिवदादेशः' इति तु न प्रवर्तत एव, शास्त्रीये कार्ये कर्तव्ये तत्प्रवृत्तिः, न तु विघातार्थमिति सिद्धान्तात् ॥—**विंशतेरि**ति । इहापि आसन्ना विंशतिर्येषामिति न विगृ-

---

१ सुकेशमानिनीति—अमानितीति निषेधो दीर्घमुखमानिनीत्यादावपि, लिङ्गविशिष्टपरिभाषया मानिन्ग्रहणेन मानिनीशब्दस्यापि ग्रहणात् । यतो यो विहितस्तद्विशिष्टस्यैव तेन ग्रहणे मानाभावाद् इति भाष्ये ध्वनितमिहापि सुकेशमानिनीति उदाहरता ध्वनितमिति भावः ।

अदूरत्रिंशाः । अधिकचत्वारिंशाः । द्वौ वा त्रयो वा द्वित्राः । द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः । ॥ दिङ्नामान्यन्तराले ।२।२।२६। दिशो नामान्यन्तराले वाच्ये प्राग्वत् । दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा । नामग्रहणाद्यौगिकानां न । ऐन्द्र्याश्च कौबेर्याश्चान्तरालं दिक् । ॥ तत्र तेनेदमिति सरूपे ।२।२।२७। सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये स बहुव्रीहिः । इतिशब्दादयं विषयविशेषो लभ्यते । ॥ अन्येषामपि दृश्यते ।६।३।१३७। दीर्घ इत्यनुवर्तते । इचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः । इच् समासान्तो वक्ष्यते । तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च । केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं केशाकेशि । दण्डैर्दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि । ॥ ओर्गुणः ।६।४।१४६। उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते । अवादेशः । बाहवि । ओरोदिति वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुम् । तेन स्वायम्भुवमित्यादि सिद्धम् । सरूपे इति किम् । हलेन मुसलेन । ॥ तेन सहेति तुल्ययोगे ।२।२।२८। तुल्ययोगे वर्तमानं सहेत्येतत्तृतीयान्तेन प्राग्वत् । ॥ वोपसर्जनस्य ।६।३।८२। बहुव्रीह्यवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः सहपुत्रो वा

---

हीतमुक्तयुक्तेः ॥—अदूरेत्यादि । अदूरास्त्रिंशतः, अधिकाश्चत्वारिंशत इति विग्रहौ बोध्यौ ॥—द्वित्रा इति । वार्थेऽयं बहुव्रीहिः । स च वार्थो न विकल्पः, पक्षे द्विवचनस्याप्यापत्तेः, किं तु संशयः । स चानियतसंख्यावमर्शी । तत्र च त्रयोऽपि सर्वदा भासन्त इति तदपेक्ष बहुवचनमेव । आनयनादिक्रियान्वयस्तु द्वयोस्त्रयाणां वेत्यनियत एवेत्याहुः ॥—द्विरावृत्ता इति । सुजर्थे बहुव्रीहिरित्यर्थः ॥ वृत्तौ तु सुजर्थान्तर्भावेणैकार्थीभावाश्रयणात्सुचोऽप्रयोग ॥ संख्ययेति किम् । चत्वारो ब्राह्मणाः ॥ अव्ययेत्यादि किम् । ब्राह्मणाः पञ्च ॥ संख्येयेति किम् । अधिका विंशतिर्गवाम् । संख्यार्थेय संख्येति न समासः ॥ आ दशतः संख्या संख्येये वर्तन्ते न तु संख्यायाम् । विंशत्याद्याः संख्यास्तु संख्येयसंख्ययोर्वर्तन्ते । यदा तु संख्येये विंशतिशब्दस्तदा भवत्येव समासः । अधिकविंशा इति ॥—तत्र तेनेदम्—॥—ग्रहणविषय इति । गृह्यते इति ग्रहणं केशादिस्तद्विषयो वाच्यो ययोस्ते सरूपे । प्रह्रियन्ते अनेनेति प्रहरणं दण्डादि तद्विषयो वाच्यो ययोरिति प्राग्वत् ॥ कर्मव्यतिहारः परस्परग्रहणं परस्परप्रहरणं च । ननु 'ग्रहणविषये सप्तम्यन्ते समस्यते प्रहरणविषये तृतीयान्ते च' इत्यादिविषयविशेषः सूत्राक्षरैः कथं लभ्यते इत्यत आह—इतिशब्दादिति । स हि लौकिकीं विवक्षां दर्शयति । लोके केशाकेशीत्यादिप्रयोगे यावानर्थः प्रतीयते तावत्यर्थे बहुव्रीहिर्भवतीत्यर्थः ॥—अन्येषामपि दृश्यते ॥ अत्र प्राचा इचिग्रहणात्कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घत्वम्, 'आत्व चानचि' इत्युक्तम् ॥ तत्र 'आत्व वा' इत्यपाणिनीयम् । अत एव मुष्टामुष्टीत्युत्युदाहरणमप्यप्रामाणिकमेव । एतच्च मनोरमायां स्पष्टम् ॥—ओर्गुणः ॥ तद्धिते किम् । पट्वी । वाय्वो. ॥—गुणोक्तिरिति । यद्यपि 'ओरोत्' इति सूत्रितेऽपि 'भस्य तद्धिते' इत्येवंरूपसंज्ञापूर्वकत्वमस्त्येव । तथापि विधेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वको विधिरिति भाव ॥ यद्यपि ओदिति 'तपरस्तत्कालस्य' संज्ञकम् । तथापि इह तकार उच्चारणार्थस्तपरत्वे फलाभावात् । 'ओरो' इत्येव वास्तु । 'स्वं रूपं शब्दस्य–' इति तु प्रत्याख्यातमिति भाव ॥ स्यादेतत् । तपरस्तत्कालस्य संज्ञा भवतीति 'गुरोरनृतः–' इति प्लुतनिषेधस्यापि संज्ञापूर्वकत्वेनानित्यत्वात् क्लृ३प्तशिखेत्यत्र प्लुतसिद्धये 'ऋलृक्' सूत्रे ऋकारात्पृथक् लृकारोपदेशो व्यर्थः । सावर्ण्ये सत्यप्युक्तरीत्या लृकारस्य प्लुतसिद्धेरनित्यत्वज्ञापनस्य निष्फलत्वात् । न चैवमपि ऋदिता लृदित्कार्यं लृदितामृदित्कार्यं च वारयितुमनित्यत्वज्ञापनमावश्यकमिति वाच्यम् । राजृभ्राजृगम्लृशकॢ इति पृथगनुबन्धकरणसामर्थ्यात् 'नाग्लोपिशास्वृदिताम्' 'लृदितः परस्मैपदेषु' इति पृथगनुवादसामर्थ्याच्च तत्कार्याणामसांकर्यसिद्धेरिति चेत् । अत्राहुः—'गुरोरनृत –' इत्यनेन ऋद्भिन्नस्य गुरोः प्लुतविधानात् 'अनृतः' इत्येतदनूद्यमानगुरुविशेषणत्वेनानुवादरूपमेव, न तु विधेयसमर्पकसंज्ञारूपं पदमिति ऋस्थानिकप्लुतनिषेधस्यानित्यत्वासिद्ध्या कृ३प्तशिखेत्यत्र प्लुतो न सिध्यति । ततश्च तत्सिध्यर्थमुक्तज्ञापनायोभयोपदेश आवश्यक इति ॥ अन्ये तु ऋकारात्पृथक् लृकार उपदेष्टव्य एव ऋकारोपदेशेन लृकारस्यालाभात् । न च 'ऋलृवर्णयोर्मिथः सावर्ण्यम्–' इति वचनात् तल्लाभः शङ्क्यः । वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेरित्याहुः ॥—तेन सहेति—॥ तुल्ययोगे किम् । 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' । इह सहशब्दो न तुल्ययोगवचनः । भारकर्मकवहनक्रियायां तु पुत्राणामनन्वयात् । किं तु विद्यमानवचनः । दशसु पुत्रेषु विद्यमानेष्वित्यर्थः ॥ एतच्च सहशब्दस्य विद्यमानार्थत्वमप्यस्तीति वक्तुमुक्तम् । प्रत्युदाहरणशरीरं तु सह पुत्रैरित्येवेति बोध्यम् ॥ तृतीया तु 'सह युक्ते–' इत्यनेनैव ॥—वोपसर्जनस्य ॥ उपसर्जनस्येति न सहस्य विशेषणम्, अव्यभिचारात् । किं तु तत्परपदेन संनिधापितस्य समासस्य । तच्चावयवद्वारकम् । उपसर्जनसर्वावयवकस्य समासस्येत्यर्थः । तदेतत्फलितमाह—बहु-

१ अन्तराले इति—अन्तरालशब्देन दिगेव, प्रत्यासत्तेः । अत एवास्य नित्यस्त्रीलिङ्गता । २ अव्ययीभावत्वमिति—केचित्तु 'इच्प्रत्ययस्य स्वरादिषु पाठादव्ययत्वम्, अव्ययीभावत्वे तु न दृढतरं फलं मानम्, नापि तत्प्रयोगः प्रसितः' इत्याहुः । ३ तुल्ययोगे इति—एकेन गमनादिना योगस्तद्द्योतक सहेत्यर्थः ।

आगतः । तुल्ययोगवचनं प्रायिकम् । सकर्मकः । सलोमकः । ॥ **प्रकृत्याशिषि** ।६।३।८३। सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सहपुत्राय सहामात्याय ॥ * **अगोवत्सहलेष्विति वाच्यम्** । सगवे । सवत्साय । सहलाय । ॥ **बहुव्रीहौ संख्येये डजबहुगणात्** ।५।४।७३। संख्येये यो बहुव्रीहिस्तस्माड्डच् स्यात् । उपदशाः । अबहुगणात्किम् । उपबहवः । उपगणाः । अत्र स्वरे विशेषः ॥ * **संख्यायास्तत्पुरुषस्य वाच्यः** ॥ निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः । ॥ **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्** ।५।४।११३। व्यत्ययेन षष्ठी । स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घे सक्थिनी यस्य स दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् ॥ दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शनादित्यच् । ॥ **अङ्गुलेर्दारुणि** ।५।४।११४। अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दार्वर्थे । पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते । बहुव्रीहेः किम् । द्वे अङ्गुली प्रमाणमस्या द्व्यङ्गुला यष्टिः । तद्धितार्थे तत्पुरुषे तत्पुरुषस्याङ्गुलेरित्यच् । दारुणि किम् । पञ्चाङ्गुलिर्हस्तः । ॥ **द्वित्रिभ्यां ष मूर्ध्नः** ।५।४।११५। आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥ * **नेतुर्नक्षत्रे अब्वक्तव्यः** ॥ मृगो नेता यासां ताः मृगनेत्रा रात्रयः । पुष्यनेत्राः । ॥ **अन्तर्बहिर्भ्यां च लोम्नः** ।५।४।११७। आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः । ॥ **अञ् नासिकायाः संज्ञायां नसं चास्थूलात्** ।५।४।११८। नासिकान्ताद्बहुव्रीहेरच् स्यात् नासिकाशब्दश्च नसं प्राप्नोति न तु स्थूलपूर्वात् । ॥ **पूर्वपदात्संज्ञायामगः** ।८।४।३। पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां न तु गकारव्यवधाने । द्रुरिव नासिकाऽस्य द्रुणसः । खरणसः । अगः किम् । ऋचामयनं ऋगयनम् । अणृगयनादिभ्य इति निपातनात् णत्वाभावमाश्रित्य अग इति प्रत्याख्यातं भाष्ये । अस्थूलात्किम् । स्थूलनासिकः ॥ * **खुरखराभ्यां वा नस्** ॥ खुरणाः । खरणाः ॥ * **पक्षे अजपीष्यते** ॥ खुरणसः । खरणसः । ॥ **उपसर्गाच्च** । ५।४।११९। प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् नासिकाया नसादेशश्च । असंज्ञार्थं वचनम् । उन्नता नासिका यस्य स उन्नसः । उपसर्गादनोत्पर इति सूत्रं तन्नङ्क्त्वा भाष्यकार आह । ॥ **उपसर्गाद्बहुलम्** ।८।४।२८। उपस-

---

**व्रीहेरि**ति । तेनेह न, सहयुध्वा । सहकृत्वा । 'राजनि युधि कृञः' 'सहे च' इति क्वनिपि उपपदसमासाविमौ ॥ 'सहस्य सः संज्ञायाम्' इत्यतोऽनुवर्तनादाह—**सहस्य सः स्यादि**ति ॥—**प्रायिकमि**ति । 'विभाषा सपूर्वस्य' इत्यादिनिर्देशादिति भावः ॥—**सकर्मक** इति । विद्यमानकर्मक इत्यर्थः ॥— **प्रकृत्याशिषि** ॥ कथं तर्हि 'यजमानस्य सपुत्रस्य सभ्रातृकस्य सपरिवारस्यायुरारोग्यैश्वर्याभिवृद्धिरस्तु' इत्यादिप्रयोगाः सङ्गच्छन्त इति चेत् । उच्यते—'ऐश्वर्याभिवृद्धिरस्त्विति भवन्तोऽनुब्रुवन्तु' इत्येतत्प्रार्थनावाक्य, न त्वाशीर्वचनम् । यच्चाशीर्वचनम् । 'तथास्तु' इति तत्र हि सपुत्रकेत्यादि न प्रयुज्यत एवेति न काप्यनुपपत्तिः ॥—**बहुव्रीहौ संख्येये**—॥ व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह—**यो बहुव्रीहिस्तस्मादि**ति ॥ उपगणा इत्यत्र डचि सत्यसति च रूपे विशेषो नास्तीत्यत आह—**स्वरे विशेष** इति । डचि सति 'चितः' इत्यन्तोदात्तत्वं स्यात्, असति तु पूर्वपदप्रकृतिस्वर इत्यर्थः ॥ न च सत्यपि डचि परत्वात्पूर्वपदप्रकृतिस्वर एव स्यादिति शङ्क्यम् । 'चितः' इति स्वरस्य सतिशिष्टत्वात्, डचश्चित्करणस्य वैयर्थ्यापत्तेश्च ॥—**संख्याया** इति । संख्यान्तस्य तत्पुरुषस्य चरमावयवो डज्वक्तव्य इत्यर्थः ॥ एकविंशतिरित्यादौ तु न भवति, 'अन्यत्राधिकलोपात्' इति वार्तिककारोक्तेः ॥—**व्यत्ययेन षष्ठी**ति ॥ एतच्चोपलक्षण सप्तम्यपि व्यत्ययेनैव । तदाह—**स्वाङ्गवाची**त्यादि ॥ 'अद्रव मूर्तिमत्–' इत्यादिलक्षणलक्षित स्वाङ्गं गृह्यते । तेन शोभनाक्षी प्रतिमेत्यादिप्रयोगो निर्बाध एवेत्याहुः ॥—**षच् स्यादि**ति । षो ङीषर्थः । चस्तु 'चितः' इत्यन्तोदात्तार्थः । तेनात्र पूर्वपदप्रकृतिस्वरो न भवति ॥—**स्थूलाक्षे**ति । स्थूलानि अक्षीणि पर्वाङ्कुराणि यस्याः सा ॥ प्राचा तु स्थूलाक्षिरिक्षुरिति प्रत्युदाहृतम् । तन्न । 'अक्ष्णोऽदर्शनात्' इत्यचो दुर्वारत्वात् ॥ यदपि समासान्तविधेरनित्यत्वात्स न कृत इति कैश्चिद्व्याख्यातम् । तदसारम् । एवहि षजपि तथैव भविष्यतीति प्रत्युदाहरणस्यासंगतिप्रसङ्गात् ॥—**द्व्यङ्गुले**ति ॥ मात्रचो 'द्विगोर्नित्यम्' इति लुक् ॥—**नेतुरि**ति । नेता नायकः । नक्षत्रे यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरित्यर्थः ॥—**मृगनेत्रा** इति । मृगो मृगशीर्षनक्षत्रम् । चन्द्रो नेता यस्य मृगनक्षत्रस्य चन्द्रनेता मृग इत्यत्र तु न भवति । इह हि नेतृशब्दान्तो बहुव्रीहिर्नक्षत्रे वर्तते न नेतृशब्द इति ॥—**खुरखराभ्यामि**ति ॥ 'नासिकायाः–' इति वर्तते । केवलादेशवचन प्रत्ययनिवृत्त्यर्थम् ॥—**खुरणा** इति ॥ 'अलसन्तस्य–' इति दीर्घः ॥—**उपसर्गाच्च** ॥ उपसर्गग्रहणं प्रादीनामुपलक्षणं, नासिकाशब्दस्याक्रियार्थत्वेन त प्रत्युपसर्गत्वायोगात् । नच क्रियायोगाभावेऽप्युपसर्गत्वमस्त्विति शङ्क्यम् । सावके अधिसावकमित्यव्ययीभावे 'उपसर्गात्सुनोति–' इति षत्व प्रसङ्गात्तदाह—**प्रादेरि**ति ॥—**उपसर्गा-**

---

१ प्रायिकमिति—इदमितिशब्दाल्लभ्यते । २ संख्येये इति—संख्येयेऽर्थे विद्यमानसंख्याशब्दान्तो यो बहुव्रीहिरित्यर्थः । ३ अङ्गुलिसदृशेति—दारुणोऽप्राणितया मुख्याङ्गुल्यसंभवात् । ४ षइति—षचि प्रकृते षविधानं 'द्वित्रिभ्यां पाद्दन्मूर्धसु' इति पाक्षिकान्तोदात्तत्वाभावे पूर्वपदप्रकृतिस्वरार्थम् । षचि तु चित्स्वसामर्थ्यात्पूर्वपदप्रकृतिस्वरं बाधित्वा नित्यमन्तोदात्तत्व स्यात् ।

गेस्थानिमित्तात्परस्य नसो नस्य णः स्याद्बहुलम् । प्रणसः ॥ * वेर्ग्रो वक्तव्यः ॥ विगता नासिकाऽस्य विग्रः ॥ * ख्यश्च ॥ विख्यः ॥ कथं तर्हि विनसा हतबान्धवेति भट्टिः । विगतया नासिकयोपलक्षितेति व्याख्येयम् । **सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः** ।५।४।१२०। एते बहुव्रीहावच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवाऽस्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरश्रः । एण्या इव पादावस्य एणीपदः । अजपदः । प्रोष्ठो गौः, तस्येव पादावस्य प्रोष्ठपदः । **नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्** ।५।४।१२१। अच् स्यात् । अहलः । अहलिः । असक्थः । असक्थिः । एवं दुःसुभ्याम् । शक्त्योरिति पाठान्तरम् । अशक्तः । अशक्तिः । **नित्यमसिच् प्रजामेधयोः** ।५।४।१२२। नञ्दुःसुभ्य इत्येव । अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः । **धर्मादनिच्केवलात्** ।५।४।१२४। केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात् । कल्याणधर्मा । केवलात्किम् । परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ माभूत् । स्वशब्दो हीह न केवलं पूर्वपदं किंतु मध्यमस्त्वादापेक्षिकम् । संदिग्धसाध्यधर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः । एवं तु परमस्वधर्मेत्यपि साध्वेव । निवृत्तिधर्मा अनुच्छित्तिधर्मेत्यादिवत् । पूर्वपदं तु बहुव्रीहिणाक्षिप्यते । **जम्भा सुहरिततृणसोमेभ्यः** ।५।४।१२५। जम्भेति कृतसमासान्तं निपात्यते । जम्भो भक्ष्ये दन्ते च । शोभनो जम्भोऽस्य सुजम्भा । हरितजम्भा । तृणं भक्ष्यं यस्य तृणमिव दन्ता यस्येति वा तृणजम्भा । सोमजम्भा । स्वादिभ्यः किम् । पतितजम्भः । **दक्षिणेर्मा लुब्धयोगे** ।५।४।१२६। दक्षिणे ईर्मं व्रणं यस्य दक्षिणेर्मा मृगः । व्याधेन कृतव्रण इत्यर्थः । **इच् कर्मव्यतिहारे** ।५।४।१२७। कर्मव्यतिहारे यो ब-

---

**दनोत्परः** ॥ अनोत्पर किम् । प्रनो मुश्नतमित्यत्र णत्व मा भूत् ॥—**तद्वद्वक्तव्येति** । 'अनोत्पर' इत्यपनीय बहुलग्रहण च कृतेत्यर्थः । अन्यथा प्रणो नयेत्यादावव्याप्तिः, प्रनः पूषेत्यादौ त्वतिव्याप्तिः प्रसज्येतेति भावः ॥—**प्रणस** इति ॥ प्रगता नासिका अस्येति विग्रहः ॥—**कथं तर्हीति** । प्रत्यययोरन्यतरेण भाव्यमिति प्रश्नः ॥—**नासिकयेति** । तथा च विनसेति न प्रथमान्त, कि तु 'पद्दन्.–' इति नसादेशे तृतीयान्तमिति भावः ॥—**शोभनं प्रातरस्येति** । अधिकरणशक्तिप्रधानस्य सामानाधिकरण्यासम्भवात्प्रातःशब्देन प्रातस्तन कर्म लक्ष्यत इत्याहुः ॥ प्रात कल्पमित्यत्रेव प्रातःशब्दो वृत्तिविषये शक्तिमत्पर इति न सामानाधिकरण्यानुपपत्तिरित्यन्ये ॥ एणीपदादिषु निपातनात्पद्भावः ॥—**नञ्दुःसुभ्यो–**॥ नन्वत्र हलिग्रहण व्यर्थ हलशब्दमादायाहल इति प्रयोगसम्भवात् । नच महद्धल हलिः, तद्रहितोऽहलिस्तत्रैवार्थे हल इति प्रयोगार्थं तद्ग्रहणमिति वाच्यम् । अहल इत्यत्र महद्धलरहित इत्यर्थाप्रतीतेः । न चैवमप्यन्तोदात्तार्थमच्प्रत्ययविधानमावश्यकम्, अन्यथाऽहल इत्यत्र पूर्वपदप्रकृतिस्वरः स्यादिति शङ्क्यम् । 'नञ्सुभ्याम्' इत्यनेनान्तोदात्तत्वविधानात् । अत्राहुः । शैषिकस्य कपो निवृत्त्यर्थं, 'दुर्हल' इत्यत्रान्तोदात्तत्वार्थं च तदिति ॥—**शक्त्योरिति** । आचार्येण केनचिच्छात्रा हलिशक्त्योरिति पाठिता इति भावः ॥—**नित्यमसिच्**–॥ अकारोच्चारणमत्वसम्पादनार्थम्, तेन सुप्रजसावित्यादौ 'यस्येति च' इत्याकारलोपः सिध्यति । अस्वरितत्वादेव 'अन्यतरस्याम्ग्रहणाननुवृत्तिसिद्धौ नित्यग्रहणमन्यतो विधानार्थम् । तेनाल्पमेधस' इति सिध्यतीति वृत्तिकारादयः ॥—**धर्मादनिच्**—॥ अनिचोऽकारश्चिन्त्यप्रयोजन इत्येके ॥ अन्ये तु धर्म करोत्याचष्टे वा 'तत्करोति–' इति ण्यन्तात् क्विपि धर्म परमो धर्म यस्य स परमधर्मा । एकदेशविकृतस्यानन्यत्वाद्धर्मशब्दोऽयमित्यकारोच्चारणमिह सप्रयोजनमेवेत्याहुः ॥ बहुव्रीहिणात्र पूर्वपदमाक्षिप्यत इत्यनुपदमेव वक्ष्यति । तच्च 'केवलात्' इत्यनेन विशेष्यत इत्याह—**केवलात्पूर्वपदादिति** । प्राचा तूत्तरपदमपि विशेषितम् । प्रसादकृतापि केवलादिति धर्मशब्दस्य पूर्वपदस्य च विशेषणमिति व्याख्यानम् । तदुभयमपि चिन्त्यम् । आवृत्तौ मानाभावात् । धर्मपदविशेषणे प्रयोजनाभावाच्च ॥ न च धर्मशब्दान्त यत्रोत्तरपद तत्रावृत्तिः फलमिति वाच्यम् । तत्र बहुव्रीह्यवयवीभूतपूर्वपदात्परत्वस्य धर्मपदे असम्भवादेवादोषत्वात् ॥—**मध्यमत्वादिति** । न च 'सर्वनामसंख्ययो' इति स्वशब्दस्य पूर्वनिपातः शङ्क्यः, आहिताग्न्यादेराकृतिगणत्वादिति हरदत्तादिभिः समाहितत्वात् ॥—**आपेक्षिकमिति** ॥ नन्वत एव केवलग्रहण व्यर्थ, पूर्वशब्दस्य समासप्रथमावयवे रूढत्वेनैव मध्यमपदव्यावृत्तिसम्भवादिति चेत् । अत्राहुः । पूर्वपदाक्षेपे तात्पर्यग्राहकत्वेन केवलपदस्य सार्थकत्वादिति ॥—**कर्मधारयपूर्वपद** इति । नन्वत्रानिच् दुर्लभ, 'केवलात्' इत्यस्य समासानात्मकादित्यर्थादिति चेत् । मैवम् । केवलग्रहणस्य समासानात्मकपूर्वपदपरत्वे मानाभावात् । निवृत्तिधर्मा हि स्थानीभवतीत्यादिप्रयोगविरोधाच्च । अस्मदुक्तार्थस्तु 'धृञ् धारणे' इति धातौ माधवग्रन्थे स्पष्टः ॥ एतेन साध्यो धर्मोऽस्येति साध्यधर्मा सदिग्धश्चासौ साध्यधर्मा चेति विग्रहः । स च सदेहः साध्यधर्मद्वारक एव पर्यवस्यतीति केषांचिद्व्याख्यान परास्तम् ॥ उक्तरीत्यैव साध्यस्य सदिग्धत्वलाभे तत्समर्थनप्रयासस्य व्यर्थत्वात् ॥—**साध्वेवेति** । परमश्चासौ स्वश्च परमस्वः, स धर्मो यस्येति यदा विगृह्यते तदेत्यर्थः ॥—**दक्षिणेर्मा**—॥ लुब्धो व्याधः । तद्योगादेवेर्मनिष्पन्नाविद निपातन नान्यदेत्यर्थस्तदेतदाह—**व्याधेनेति** ॥ 'वाली हेमाब्जमाली गुणनिधिरिपुणा निर्मितो दक्षिणेर्मा' इति प्रयोगस्त्वौपचारिकः

हुव्रीहिस्तस्मादिच् स्यात्समासान्तः । केशाकेशि । मुसलामुसलि । **द्विदण्ड्यादिभ्यश्च** ।५।४।१२८। ताद्रर्थ्ये चतुर्थ्येषा । एषां सिद्ध्यर्थमिच् प्रत्ययः स्यात् । द्वौ दण्डौ यस्मिन्प्रहरणे तद् द्विदण्डि प्रहरणम् । द्विमुसलि । उभाहस्ति । उभयाहस्ति । **प्रसंभ्यां जानुनोर्ज्ञुः** ।५।४।१२९। आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ । प्रगते जानुनी यस्य प्रज्ञुः । संज्ञुः । **ऊर्ध्वाद्विभाषा** ।५।४।१३०। ऊर्ध्वज्ञुः । ऊर्ध्वजानुः । **धनुषश्च** ।५।४।१३२। धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात् । शार्ङ्गधन्वा । **वा संज्ञायाम्** ।५।४।१३३। शतधन्वा । शतधनुः । **जायाया निङ्** ।५।४।१३४। जायान्तस्य बहुव्रीहेर्निङादेशः स्यात् । **लोपो व्योर्वलि** ।६।१।६६। वकारयकारयोर्लोपः स्याद्वलि । पुंवद्भावः । युवतिर्जाया यस्य युवजानिः । **गन्धस्येदुत्पूतिसुसुरभिभ्यः** ।५।४।१३५। एभ्यो गन्धस्य इकारोऽन्तादेशः स्यात् । उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः ॥ * **गन्धस्येत्वे तदेकान्तग्रहणम्** ॥ एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः । सुगन्धि पुष्पं सलिलं च । सुगन्धिर्वायुः । नेह शोभना गन्धाः द्रव्याण्यस्य सुगन्ध आपणिकः । **अल्पाख्यायाम्** ।५।४।१३६। सूपस्य गन्धो लेशो यस्मिंस्तत् सूपगन्धि भोजनम् । घृतगन्धि । गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोरिति विश्वः । **उपमानाच्च** ।५।४।१३७। पद्मस्येव गन्धोऽस्य पद्मगन्धिः । **पादस्य लोपोऽहस्त्यादिभ्यः** ।५।४।१३८। हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । स्थानिद्वारेणायं समासान्तः । व्याघ्रस्येव पादावस्य व्याघ्रपात् ।

---

इति कथचिन्नेयः ॥—**केशाकेशी**ति ॥ 'तत्र तेनेदम्' इति कर्मव्यतिहारे बहुव्रीहिः । इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वेऽव्ययत्वम् ॥ नन्वेवमिचश्चित्करणं व्यर्थम् । अव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधात्समासस्वरेणान्तोदात्तत्वसिद्धेः । अत्राहु'—विशेषणार्थं तदावश्यकमेव । तिष्ठद्गुप्रभृतिषु इकारमात्रपाठे हि सुगन्धिरित्यादावतिव्याप्तिप्रसङ्गात् । किंचात्राव्ययीभावसंज्ञया बहुव्रीहिसंज्ञा न बाध्यते, कि तु द्वयोः समावेश एव उपजीव्यविरोधस्यान्याय्यत्वात् । एव च स्वरार्थमपि चित्त्व कर्तव्यमेवेति ॥—**द्विदण्डी**ति ॥ समुदायनिपातनस्य विशेषपरिग्रहार्थत्वाद् द्विदण्डा शालेत्यत्र लिङ् न भवति ॥—**उभाहस्ती**त्यादि । इह निपातनादेवायच. पाक्षिकत्वम् ॥—**प्रसंभ्याम्**—॥ जानुशब्दस्यैकत्वेऽप्युपपदनिबन्धनं द्वित्वमाश्रित्य जानुनोरिति द्विवचननिर्देशः, तत्फल तु स्थानषष्ठीत्वस्फुटीकरणम् ॥ 'जानुनः' इत्युक्ते तु किमियं पञ्चमी प्रत्ययाधिकारात् ज्ञुरपि प्रत्यय इत्येव सदेहः स्यात्, तदेतद् ध्वनयन्नाह—**जानुशब्दयोर्ज्ञुरादेश** इति ॥ **शार्ङ्गधन्वे**ति ॥ कथ तर्हि 'खलावण्याशंसाधृतधनुषमह्नाय तृणवत्' इति पुष्पदन्तप्रयोग इति चेत् । अत्राहुः । समासान्तविधेरनित्यत्वान्नात्रानुपपत्तिः । अनित्यत्वे प्रमाण च अश्वादिगणे राजन्शब्दपाठः । स हि 'प्रतेरश्वादयस्तत्पुरुषे' इत्यन्तोदात्तार्थः । 'राजाहःसखि-' इति टचो नित्यत्वे तु कि तेनेति ॥—**लोपो व्योर्वलि** ॥ 'व्योर्लोपः' इति वक्तव्ये 'वेरपृक्तलोपाद्वलिलोपः पूर्वविप्रतिषेधेन' इति ज्ञापयितुमादौ विधेयनिर्देशः कृतः । तेन सुखीयतेः क्विपि सुखीरिति सिद्धम् ॥—**गन्धस्येत्**—॥ तकार उच्चारणार्थ इत्याशयेनाह—**इकारोऽन्तादेश** इति । 'आदेः परस्य' इतीह न भवति 'समासान्ताः' इत्यधिकारात् ॥ अत्र केचिदाहु.।इकारस्य प्रत्ययत्वेऽपि न क्षतिः 'यस्येति च' इति लोपेनोद्गन्धिरित्यादिरूपसिद्धेः । न च 'तित्स्वरितम्' इत्यन्तस्वरितत्वापत्ति शङ्क्या, तकारस्योच्चारणार्थत्वाभ्युपगमात् । नापि षष्ठीनिर्देशादादेशत्वमेव न प्रत्ययत्वमिति वाच्यम् । 'गापोष्टग्' इत्यादिप्रत्ययविधिष्वपि षष्ठीदर्शनादिति ॥—**अविभागेने**ति ॥ एवं च गुणवाचिन एव ग्रहण, न तु द्रव्यवाचिन इति फलितोऽर्थ. ॥—**द्रव्याणी**ति।अस्ति च गन्धशब्दो द्रव्यवचनः 'वहति जलमिय पिनष्टि गन्धात्' इति प्रयोगात् । 'गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' इति कोशाच्च ॥ केचित्तु 'गन्धस्येत्वे' इति वार्तिके तदेकान्तशब्देन स्वाभाविकत्व विवक्षित तेनागन्तुकस्य नेत्याहुः ॥ तथा च भट्टिः । 'आघ्रायिवान् गन्धवहः सुगन्ध'' इति ॥ व्याख्यातं च जयमङ्गलायाम्–'गन्धस्य' इत्यादिनेकारः समासान्तो न, 'तदेकान्तग्रहणम्' इति वचनात् । सुगन्ध आपणिक इति यथेति ॥ अत एव 'भग्नबालमहकारसुगन्धौ' इत्यादीनां प्रामादिकत्वं दुर्घटवृत्तिकृतोक्तम् ॥—**अल्पाख्यायाम्**—॥ अल्पवाचिनो गन्धस्येकारान्तादेशः स्याद् बहुव्रीहौ ॥—**सूपस्य गन्ध** इति ॥ अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । यद्वा, फलितार्थकथनमेतत् । सूपो गन्धो यस्मिन्नित्येव विग्रहः । गन्धशब्दस्य विशेषणत्वेऽप्यस्मादेव ज्ञापकात् परनिपातः ॥—**पादस्य**–॥ यद्यय लोपः समासान्तो न स्याद् 'आदेः परस्य' इत्यादेः स्यात् । शैषिककप्च प्रसज्येत । 'शेषाद्विभाषा' इत्यत्र समासान्तापेक्षस्य शेषस्याश्रयणादत आह—**समासान्त** इति ॥ कथ पुनरभावो भावस्यावयवः स्यात्तत्राह—**स्थानिद्वारेणे**ति । वचनबलादौपचारिकमवयवत्वं गृह्यत

१ अनङादेश इति—साहचर्यात् ङित्त्वश्रवणाच्चास्यादेशत्वमिति भावः। २ एकदेश इवेति—तदेकान्तग्रहणमिति वार्तिकं गुणसमुदायो द्रव्यमिति पतञ्जलिमते गन्धोऽवयव इति तद्भाव इत्यन्ये । ३ पादस्य लोप इति—पादस्य पादिति नोक्तम्, प्रतिपदोक्ततयास्यैव 'पादः पत्' इत्यत्र ग्रहणापत्तौ पादयतेः क्विपि पद इत्यस्यानापत्तेः ।

अहस्त्यादिभ्यः किम् । हस्तिपादः । कुसूलपादः । **कुम्भपदीषु च** ।५।४।१३९। कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् ॥ पादः पत् ॥ कुम्भपदी । स्त्रियां किम् । कुम्भपादः । **संख्यासुपूर्वस्य** ।५।४।१४०। पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् । **वयसि दन्तस्य दतृ** ।५।४।१४१। संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि । द्विदन् । चतुर्दन् । षट् दन्ता अस्य षोडन् । सुदन् । सुदती । वयसि किम् । द्विदन्तः करी । सुदन्तः । **स्त्रियां संज्ञायाम्** ।५।४।१४३। दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ । अयोदती । फालदती । संज्ञायां किम् । समदन्ती । **विभाषा श्यावारोकाभ्याम्** ।५।४।१४४। दन्तस्य दतृ वा बहुव्रीहौ । श्यावदन् । श्यावदन्तः । अरोकदन् । अरोकदन्तः । **अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च** ।५।४।१४५। एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः । **ककुदस्यावस्थायां लोपः** ।५।४।१४६। अजातककुत् । पूर्णककुत् । **त्रिककुत्पर्वते** ।५।४।१४७। त्रीणि ककुदान्यस्य त्रिककुत् । संज्ञैषा पर्वतविशेषस्य । त्रिककुदोऽन्यः । **उद्विभ्यां काकुदस्य** ।५।४।१४८। लोपः स्यात् । उत्काकुत् । विकाकुत् । काकुदं तालु । **पूर्णाद्विभाषा** ।५।४।१४९। पूर्णकाकुत् । पूर्णकाकुदः । **सुहृद्दुर्हृदौ मित्रामित्रयोः** ।५।४।१५०। सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः । दुर्हृदयः । **उरःप्रभृतिभ्यः कप्** ।५।४।१५१। व्यूढोरस्कः । प्रियसर्पिष्कः । इह पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीरिति एकवचनान्तानि पठ्यन्ते । द्विवचनबहुवचनान्तेभ्यस्तु शेषाद्विभाषेति विकल्पेन कप् । द्विपुमान् । द्विपुंस्कः ॥ ***अर्थान्नञः** ॥ अनर्थकम् । नञः किम् । अपार्थम् । अपार्थकम् । **इनः स्त्रियाम्** ।५।४।१५२। बहुदण्डिका नगरी ॥ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । बहुवाग्मिका । स्त्रियां किम् । बहुदण्डी । बहुदण्डिको ग्रामः । **शेषाद्विभाषा** ।५।४।१५४। अनुक्तसमासान्ताच्छेषाधिकारस्थाद्बहुव्रीहेः कप् वा स्यात् । महायशस्कः । महायशाः । अनुक्तेत्यादि किम् । व्याघ्रपात् । सुगन्धिः । प्रियपथः । शेषाधिकारस्थात्किम् । उपबहवः ।

इति भावः ॥—**कुम्भपदीषु च** ॥ बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चादर्थावगतिरित्यभिप्रेत्याह—**कुम्भपद्यादिष्विति** । इह गणे कुम्भपदी एकपदी जालपदीत्येवं समुदाया एव पठ्यन्ते तस्य च प्रयोजनं विषयविशेषपरिग्रह इत्याशयेनाह—**स्त्रियामिति** । यच्चेहोपमानपूर्वं संख्यापूर्वं च पठ्यते तस्य सिद्धे लोपे नित्यङीबर्थवचनं, तेन 'पादोऽन्यतरस्याम्' इति विकल्पो न भवति ॥—**द्विदन्निति** ॥ द्वौ दन्तावस्य जातौ । शिशुत्वावस्थात्विह गम्यते । 'उगिदचाम्–' इति नुम् । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न ॥—**षोडन्निति** । 'षष उत्व दतृदश–' इत्यनेनोत्वष्टुत्वे ॥—**सुदतीति** । 'उगितश्च' इति ङीप् ॥—**समदन्तीति** ॥ 'नासिकोदर–' इत्यादिना ङीष् ॥—**श्यावदन्निति** ॥ 'श्यावः स्यात्कपिशः' इत्यमरः ॥—**अरोकदन्निति** । अरोका अच्छिद्रा दन्ता यस्य सः ॥—**अजातेति** ॥ अजातं ककुदमस्येति विग्रहः । इह हि बाल्यावस्था गम्यते ॥—**उरःप्रभृतिभ्यः कप्** ॥ 'समासार्थोत्तरपदान्ताः समासान्ताः' इति पक्षे तु बहुव्रीहेश्चरमावयवेभ्य उरःप्रभृतिभ्यः कबिति व्याख्येयम् । तद्धितत्वात्कस्य नेत्वम् ॥—**व्यूढोरस्क** इति । व्यूढं विशालमुरो यस्य सः 'सोऽपदादौ' इति विसर्जनीयस्य सः ॥—**प्रियसर्पिष्क** इति । 'इणः षः' इति विसर्गस्य षत्वम् ॥—**एकवचनान्तानीति** । 'नद्यृतश्च' इति सिद्धे लक्ष्मीशब्दपाठस्त्विह एकवचनान्तलक्ष्मीशब्दावयवकबहुव्रीहेरेव नित्यः कप् । अन्यत्र 'शेषात्' इति विकल्प एवेति नियमार्थः । तेन 'अकृशमकृशलक्ष्मीश्चेनसा शंसितं सः' इति भारविप्रयोगः सिद्धः । अकृशा लक्ष्म्यो यस्येति विग्रहः ॥ यत्तु प्राचोक्तं 'नद्यृतश्च' इति कप् बहुलक्ष्मीक इति । तदयुक्तम् । संख्यावाचिबहुशब्दस्यैकवचनान्तत्वाभावात्प्रकृतनियमेन वारितत्वात् । बह्वी अधिका लक्ष्मीर्यस्येति विग्रहे वैपुल्यवाचिन एकवचनान्तत्वसम्भवेऽपि विशेषविधेर्बलीयस्त्वेन 'उरःप्रभृतिभ्यः कप्' इत्येव वक्तुमुचितत्वात् ॥ यदा तु 'नियमशास्त्राणि निषेधमुखेन प्रवृत्तिः' इत्याश्रीयते तदा प्राचोक्तमपि सम्यगेवेति ज्ञेयम् ॥—**अर्थान्नञः** । गणसूत्रमिदम् ॥—**अनर्थकेनापीति** ॥ कथं 'तर्हि सुपथी नगरी' इति हलन्तसूत्रे, कपोऽत्र दुर्वारत्वात् । न च 'न पूजनात्' इत्यनेन 'ऋक्पूरब्धूः–' इत्यस्येव कपोऽपि निषेधः शङ्क्यः । पूज प्राचीनानामेव स निषेध इति वक्ष्यमाणत्वात् । कप्प्रत्ययस्य पच उत्तरत्वात् । सत्यम् । समासान्तविधेरनित्यत्वात्साधुरिति समाधेयम् । 'युवोरनाकौ' इति सूत्रे सुपथीति भाष्याचेत्युक्तम् ॥—**बहुवाग्मिकेति** । 'वाचो ग्मिनिः' ॥—**शेषाद्वि—** ॥ यद्यत्र प्रागुक्तकब्मात्रापेक्षः शेषः स्यात् तर्हि व्याघ्रपात्सुगन्धिरित्यादावपि स्यात् । अत समासान्तापेक्षः शेष इह गृह्यत इत्याह—**अनुक्तसमासान्तादिति** ।—**व्याघ्रपादिति** । स्थानिद्वारा लोपोऽपि समासान्त इत्युक्तम् ॥—**सुगन्धिरिति** । 'गन्धस्येत्–' इत्यादिना इत्समासान्तः ॥—**प्रियपथ** इति 'ऋक्पूर–' इत्यप्प्रत्ययः समासान्तः ॥ **उपबहव** इति ।

१ अवस्थायामिति—कालादिकृता अवयवोपचयापचयादयो वस्तुधर्मा अवस्थेत्युच्यते । अवस्थाया अभावे त्वनककुद इत्युदाहार्यम् ।

उत्तरपूर्वा । सपुत्रः । तन्त्रादिना शेषशब्दोऽर्थद्वयपरः । **आपोऽन्यतरस्याम्** ।७।४।१५। कप्याबन्तस्य ह्रस्वो वा स्यात् । बहुमालाकः । बहुमालकः । कबभावे बहुमालः । **न संज्ञायाम्** ।५।४।१५३। शेषादिति प्राप्तः कप् न स्यात्संज्ञायाम् । विश्वे देवा अस्य विश्वदेवः । **ईयसश्च** ।५।४।१५६। ईयसन्तोत्तरपदान्न कप् । बहवः श्रेयांसोऽस्य बहुश्रेयान् । गोस्त्रियोरिति ह्रस्वे प्राप्ते ॥ **ईयसो बहुव्रीहेर्नेति वाच्यम्** ॥ बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी । बहुव्रीहेः किम् । अतिश्रेयसिः ॥ **वन्दिते भ्रातुः** । ५।४।१५७। पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात् । प्रशस्तो भ्राता यस्य प्रशस्तभ्राता । न पूजनादिति निषेधस्तु बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवेति वक्ष्यते । वन्दिते किम् । मूर्खभ्रातृकः । **नाडीतन्त्र्योः स्वाङ्गे** ।५।४।१५९। स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात्कप् न स्यात् । बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा । तन्त्रीर्धमनी । स्त्रीप्रत्ययान्तत्वाभावाद्ध्रस्वो न । स्वाङ्गे किम् । बहुनाडीकः स्तम्भः । बहुतन्त्रीका वीणा । **निष्प्रवाणिश्च** ।५।४।१६०। कबभावोऽत्र निपात्यते । प्रपूर्वाद्वयतेर्ल्युट् । प्रवाणी तन्तुवायशलाका । निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः । समाप्तवानः, नव इत्यर्थः । **सप्तमीविशेषणे बहुव्रीहौ** ।२।२।३५। सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम् । कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । चित्रगुः ॥ * **सर्वनामसंख्ययोरुपसंख्यानम्** ॥ सर्वश्वेतः । द्विशुक्लः ॥ * **मिथोऽनयोः समासे संख्या पूर्वम्** । शब्दपरविप्रतिषेधात् ॥ द्व्यन्यः ॥ * **संख्याया अल्पीयस्याः** ॥ द्वित्राः ॥ * **द्वन्द्वेऽपि** । द्वादश ॥ * **वा प्रियस्य** ॥ गुडप्रियः । प्रियगुडः ॥ * **गड्वादेः परा सप्तमी** ॥ गडुकण्ठः । क्वचिन्न । वहेगडुः । **निष्ठा** ।२।२।३६। निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः ॥ * **जातिकालसुखादिभ्यः परा निष्ठा वाच्या** ॥ सारङ्गजग्धी । मासजाता । सुखजाता । प्रायिकं चेदम् । कृतकटः । पीतोदकः । **वाहिताग्न्यादिषु** ।२।२।३७। आहिताग्निः । अग्न्याहितः । आकृतिगणोऽयम् ॥ * **प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ** ॥ अस्युद्यतः । दण्डपाणिः ॥ क्वचिन्न । विवृतासिः ॥ ॥ इति बहुव्रीहिः ॥

'सत्ययाव्यया–' इत्यादिना समासः ॥—**उत्तरपूर्वे**ति । 'दिङ्नामा–' इत्यादिना समासः ॥—**सपुत्र** इति । 'तेन सहेति–' इत्यादिना समासः ॥ अत्र भावः । 'शेषो बहुव्रीहिः' इत्यतः शेषपदम् 'अनेकमन्यपदार्थे' इत्येतस्मिन्नेव सूत्रेऽनुवर्तते, 'सख्ययाव्ययासन्ना–' इत्यादिषु च निवर्तते । तथा च शेषाधिकारस्थत्वाभावादुपबहव इत्यादिषु कप्प्रत्ययो नेति ॥ एव च 'अनेकमन्यपदार्थे' इति सूत्रात्पृथक् 'सख्ययाव्ययासन्ना–' इत्यादीनामारम्भः कबभावार्थमप्यावश्यक इति स्थितम् ॥ ननु सकृदुच्चरितस्य शेषशब्दस्यानुक्तसमासान्तपरत्वं शेषाधिकारस्थपरत्वं च कथमित्यत आह—**तन्त्रादिने**ति ॥ 'अर्थभेदेन शब्दभेदः,' 'सत्यप्यर्थभेदे शब्दस्याभेद' इति मतद्वयम् । आद्ये आवृत्तिः । द्वितीये तन्त्रमिति विवेकः ॥ यत्तु वदन्ति 'प्रतिपदोक्ताः समासान्ताः स्वविषये बाधका भवन्ति' तत्किमनुक्तसमासान्तपरेण शेषग्रहणेनेति । तन्न । 'ऋक्पूः–' इत्यादीनां समासान्तरे चरितार्थतया प्रियपथ इत्यादौ परेण कपा बाधापत्तेः ॥—**ईयसश्च** ॥ नित्यो वैकल्पिकश्च कप्सर्वोऽपि निषिध्यते ॥—**बहुश्रेयानि**ति । अतिशयेन प्रशस्यः श्रेयान् । 'द्विवचनविभज्योप–' इतीयसुन् । 'प्रशस्यस्य श्रः' । 'शेषाद्विभाषा' इति कप्प्राप्तः । **बहुश्रेयसी**ति । 'नद्यृतश्च' इति नित्य प्राप्तः कब् लिङ्गविशिष्टपरिभाषया 'ईयसश्च' इति प्रतिषिध्यते ॥—**बहुनाडिरि**ति ॥ उपसर्जनह्रस्वः ॥—**स्त्रीप्रत्ययान्तत्वाभावादि**ति । 'अवितृस्तृतन्त्रिभ्यः' इतीप्रत्ययस्य 'स्त्रियाम्' इत्यधिकारे अविहितत्वादिति भावः ॥—**सप्तमीविशेषणे**–॥ यदा कण्ठे किंचिदस्ति ज्ञाते तस्य विशेषणं काल इति, तदेद सप्तमीग्रहणम् । अन्यदा तु तेन विनापि विशेषणत्वादेव सिद्धम् ॥—**चित्रगुरि**ति । न च 'उपसर्जनं पूर्वम्' इत्येवेदं सिध्यतीति वाच्यम् । 'बहुव्रीहौ सप्तमी' इत्युक्ते तक्रकौण्डिन्यन्यायेनोपसर्जनपूर्वत्वस्य बाधाऽपत्तेरतो विशेषणग्रहणं कृतम् ॥—**सर्वनामे**ति ॥ कथं तर्हि 'तः परो यस्मात्स तपरः' इति । कथं च 'जहत्स्वार्था वृत्तिः' इति ॥ इह हि जहत्स्व पदं य स जहत्स्वः सोऽर्थो यस्यामिति बहुव्रीहिगर्भो बहुव्रीहिस्तथा च स्वपरशब्दयोः सर्वनामत्वात्पूर्वनिपातने भाव्यमिति चेत् । अत्राहुः । सूत्रभाष्यप्रयोगात्स्वपरशब्दयोर्न पूर्वनिपातः । राजदन्तादित्वाद्वा सिद्धमिति ॥—**द्विशुक्ल** इति । यद्यपि सर्वनामत्वेनैव द्विशब्दस्य पूर्वनिपातत्वं सिध्यति । तथापि त्रिशुक्ल इत्यादिसिद्धये वार्तिके संख्याग्रहणं कृतम् ॥ ननु संख्याया अल्पाच्तरत्वेन 'संख्यासर्वनाम्नोः' इति वाच्ये विपरीतोच्चारणमयुक्तमित्याशङ्क्याह—**मिथोनयोरि**ति ॥ विपरीतोच्चारणमेवात्र लिङ्गमिति भावः ॥—**अल्पीयस्या** इति । अल्पार्थवाचिकाया इत्यर्थः ॥—**गड्वादेरि**ति । आदिशब्दः प्रकारवाची । तेन पद्मं नाभौ यस्य पद्मनाभः । ऊर्णा नाभौ यस्य । 'ङ्यापोः'—इति ह्रस्वः । ऊर्णनाभ इति सिध्यतीत्याहुः ॥—**जातिकाले**ति ॥ एतच्च 'जातिकालसुखादिभ्योऽनाच्छादनात्' इत्यनेन ज्ञापितमिति भावः ॥ सारङ्गो

१ 'तन्त्रादिनेति—उच्चारयित्रा तन्त्रणोच्चरित, बोद्धुस्त्वावृत्त्या बोध इति भावः । २ न कबिति—न सश्रेयसोरिति वक्तव्ये योगविभागसामर्थ्यान्नद्यृतश्चेत्यस्यापि निषेध इति बोध्यम् ।

स्थण्डिलशायी। साङ्काश्यसिद्धः। चक्रबद्धः। ▮ स्थे च भाषायाम् ।६।३।२०। सप्तम्या अलुग्न। समस्थः। भाषायां किम्। कृष्णोस्याखरेष्ठः। ▮ षष्ठ्या आक्रोशे ।६।३।२१। चौरस्य कुलम्। आक्रोशे किम्। ब्राह्मणकुलम्। ॥ * वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ॥ वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः ॥ * आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्यकुलिकेति च ॥ अमुष्यापत्यं आमुष्यायणः। नडादित्वात्फक्। अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका। मनोज्ञादित्वाद्वुञ्। एवमामुष्यकुलिका ॥ * देवानांप्रिय इति च मूर्खे[1] ॥ अन्यत्र देवप्रियः ॥ * शेपपुच्छलाङ्गूलेषु शुनः ॥ शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः ॥ * दिवश्च दासे ॥ दिवोदासः।

▮ पुत्रेऽन्यतरस्याम् ।६।३।२२। षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम्। दास्याः पुत्रः। दासीपुत्रः। निन्दायां किम्। ब्राह्मणीपुत्रः। ▮ ऋतो विद्यायोनिसंबन्धेभ्यः ।६।३।२३। विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तात्षष्ठ्या अलुक्। होतुरन्तेवासी। होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः ॥ * विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् ॥ नेह। होतृधनम्। ▮ विभाषा स्वसृपत्योः ।६।३।२४। ऋदन्तात्षष्ठ्या अलुग् वा स्वसृपत्योः परयोः। ▮ मातुःपितुर्भ्यामन्यतरस्याम् ।८।३।८५। आभ्यां स्वसुः सस्य षो वा स्यात् समासे। मातुःस्वसा। मातुःष्वसा। पितुःस्वसा। पितुःष्वसा। लुक्पक्षे तु। ▮ मातृपितृभ्यां स्वसा ।८।३।८४। आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे। मातृष्वसा। पितृष्वसा। असमासे तु मातुः स्वसा। पितुः स्वसा ॥ ॥ इत्यलुक्समासः ॥

---

## समासाश्रयविधयः।

▮ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।६।३।४३। भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूपकल्पप्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु। ब्राह्मणितरा। ब्राह्मणितमा। ब्राह्मणिरूपा। ब्राह्मणिकल्पा। ब्राह्मणिचेली। ब्राह्मणिब्रुवा। ब्राह्मणिगोत्रेत्यादि। ब्रूञः पचाद्यचि वच्यादेशगुणयोरभावो निपात्यते। चेलडादीनि वृत्तिविषये कुत्सनवाचीनि तैः कुत्सितानि कुत्सनैरिति समासः। ङ्यः किम्। दत्तातरा। भाषितपुंस्कात्किम्। आमलकीतरा। कुवलीतरा। ▮ नद्याः शेषस्यान्यतरस्याम् ।६।३।४४। अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात्। ब्रह्मबन्धुतरा। ब्रह्मबन्धूतरा। स्त्रितरा। स्त्रीतरा ॥ * कृन्नद्या न ॥ लक्ष्मीतरा। ▮ उगितश्च ।६।३।४५। उगितः[2] परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा। ह्रस्वाभावपक्षे तु तसिलादिष्विति पुंवत्। विद्वत्तरा। वृत्त्यादिषु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलम्। ▮ हृदयस्य हृल्लेखयदण्लासेषु ।६।३।५०। हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियं हृद्यम्। हृदयस्येदं हार्दम्। हृल्लासः। लेखेत्यणन्तस्य

---

इत्यनुवृत्तेस्तत्पुरुष एवायं निषेधः। बहुव्रीहौ 'बन्धे च विभाषा' इति विकल्प एव ॥—**पश्यतोहर** इति ॥ 'पश्यन्तमनादृत्य हरति' इत्यर्थः। 'षष्ठी चानादरे' इति षष्ठी ॥—**देवानामि**ति। मूर्खा हि देवाना प्रीति जनयन्तीति देवपशुत्वादिति मनोरमाया भावः। ब्रह्मज्ञानरहितत्वात्संसारिणो मूर्खाः। ते तु यागादिकर्माण्यनुतिष्ठन्तः पुरोडाशादिप्रदानद्वारा देवानामत्यन्तं प्रीतिं जनयन्ति। ब्रह्मज्ञानिनस्तु न तथा, तेषा यागाद्यनुष्ठानाभावात्। अतो गवादिस्थानापन्नत्वान्मूर्खा एव देवपशव इति ॥—**शेपपुच्छे**ति। शुन एव शेपमस्य शुनःशेपः ॥ यद्यपि शेपस्शब्दः सकारान्तः। 'गौर्लिङ्गं चिह्नशेपसोः' इत्यमरप्रयोगात्। तथापि शीडो निपातनादौणादिके पप्रत्यये अकारान्तोऽप्यस्त्येव ॥ तथा च मन्त्रः 'यस्यामुशन्तः प्रहराम शेपम्' इति ॥ 'चिह्नशेफयोः' इति पाठे तु शेफशब्दस्य सकारान्तत्वशङ्कैव नास्तीति बोध्यम् ॥ शुनःपुच्छ इत्यादावपि बहुव्रीहिः, त्रयोप्यमी ऋषिविशेषाणां संज्ञाः ॥—'मातुःपितुर्भ्याम्' इति सूत्रे 'समासेऽङ्गुलेः सङ्गः' इत्यतः समास इत्यनुवर्तितम्। तत्फलं दर्शयति—**असमासे त्वि**ति। वाक्ये वैकल्पिकमपि षत्व नेत्यर्थः ॥ इत्यलुक्समासः ॥

**घरूपकल्प**—॥ 'तरप्तमपौ घः'। 'प्रशंसाया रूपप्'। 'चिल वसने'। 'चेलट्' इति पचादौ टित्पठ्यते, ङीबर्थम् ॥—**प्रत्ययेष्वि**ति। लेखग्रहणेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहण नास्ति' इति ज्ञापयिष्यत इति भावः ॥—**ब्राह्मणितरे**ति। 'जातेश्च' इति निषेधात् 'तसिलादिषु—' इति न पुंवद्भावः ॥—**चेली**ति। पचादौ 'चेलट्' इति पाठात् 'टिड्ढा—' इति ङीप् ॥ —**आमलकी**ति। आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिङ्गौ ॥—**नद्याः** ॥ उक्तादन्यः शेषः, स च द्विधेत्याह—**अङ्यन्ते**ति। उपलक्षणमेतत्। 'भाषितपुंस्क' इत्यपि नेह सबध्यते इत्याशयेनाह—**स्त्रीतरे**ति ॥—**उगितः परा या नदी**ति ॥ ईदूतोः केवलयोरपि नदीसंज्ञेत्याश्रित्येदमुक्तम् ॥—**विदुषितरे**ति। 'उगितश्च' इति ङीपि 'वसोः संप्रसारणम्' ॥—**वृत्त्यादिष्वि**ति। प्रक्रियातद्व्याख्यानानि चादिशब्दग्राह्याणि ॥—**अण**-

---

१ मूर्खे इति—इद सिद्धहेमचन्द्रशब्दानुशासनादौ न दृश्यते। २ उगितः परेति—विहितेत्यर्थः, तेनेषुमतोऽपत्यं स्त्री ऐषुमती, ततस्तरे ऐषुमतितरेत्यत्र नित्यह्रस्व इति भाष्ये स्पष्टम्।

ग्रहणम् । घञि तु हृदयलेखः । लेखग्रहणमेव ज्ञापकम् उत्तरपदाधिकारे तदन्तविधिर्नास्तीति । **वा शोकष्यञ्रोगेषु** ।६।३।५१। हृच्छोकः । हृदयशोकः । सौहार्द्यम् । सौहृदय्यम् । हृद्रोगः । हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति । तेन सिद्धे प्रपञ्चार्थमिदम् । **पादस्य पदाज्यातिगोपहतेषु** ।६।३।५२। एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । अज्यतिभ्यां पादे चेतीण् प्रत्ययः । अजेर्व्यभावो निपातनात् । पदगः । पदोपहतः । **पद्यत्यतदर्थे** ।६।३।५३। पादस्य पत्स्यादतदर्थे यति परे । पादौ विध्यन्ति पद्याः शर्कराः । अतदर्थे किम् । पादार्थमुदकं पाद्यम् । पादार्घाभ्यां चेति यत् ॥ * **इके चरतावुपसंख्यानम्** ॥ पादाभ्यां चरति पदिकः । पर्पादित्वात् ष्ठन् । **हिमकाषिहतिषु च** ।६।३।५४। पद्धिमम् । पत्काषी । पद्धतिः । **ऋचः शे** ।६।३।५५। ऋचः पादस्य पत्स्याच्छे परे । गायत्रीं पच्छः शंसति । पादंपादमित्यर्थः । ऋचः किम् । पादशः कार्षापणं ददाति । **वा घोषमिश्रशब्देषु** ।६।३।५६। पादस्य पत् । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः ॥ * **निष्के चेति वाच्यम्** ॥ पन्निष्कः पादनिष्कः । **उदकस्योदः संज्ञायाम्** ।६।३।५७। उदमेघः ॥ * **उत्तरपदस्य चेति वक्तव्यम्** ॥ क्षीरोदः । **पेषंवासवाहनधिषु च** ।६।३।५८। उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् । **एकहलादौ पूरयितव्येऽन्यतरस्याम्** ।६।३।५९। उदकुम्भः । उदककुम्भः । एकेति किम् । उदकस्थाली । पूरयितव्येति किम् । उदकपर्वतः । **मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च** ।६।३।६०। उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः । **इको ह्रस्वोऽङ्यो गालवस्य** ।६।३।६१। इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । इकः किम् । रमापतिः । अङ्य इति किम् । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः ॥ * **इयङुवङ्भाविनामव्ययानां च नेति वाच्यम्** ॥ श्रीमदः । भ्रूभङ्गः । शुक्लीभावः ॥ * **अभ्रुकुंसादीनामिति वक्तव्यम्** ॥ भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः । अकारोऽनेन विधीयत इति व्याख्यान्तरम् । भ्रकुंसः । भ्रकुटिः । भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् । **एकतद्धिते च** ।६।३।६२। एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतं एकरूप्यम् । एकक्षीरम् । **ङ्यापोः संज्ञाछन्दसोर्बहुलम्** ।६।३।६३। रेवतिपुत्रः । अजक्षीरम् । **त्वे च** ।३।३।६४। त्वप्रत्यये ङ्यापोर्वा ह्रस्वः । अजत्वम् । अजात्वम् । रोहिणित्वम् । रोहिणीत्वम् । **ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे** ।६।१।१३। ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे । **संप्रसारणस्य** ।६।३।१३९। संप्रसारणस्य दीर्घः स्यादुत्तरपदे । कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः । कौमुदग-

---

**न्तस्य ग्रहणमि**ति ॥ अण्प्रत्ययसाहचर्याल्लेखशब्दोऽणन्त एव निर्दिष्ट इति भावः ॥ नन्वेवं लेखग्रहणमेव व्यर्थं स्यादण्ग्रहणेनैव सिद्धेरत आह—**ज्ञापकमि**ति । अत एव 'घरूपकल्पेषु तदन्तग्रहणं न' इति व्याख्यातम् ॥—**सौहार्द्यमि**ति । ब्राह्मणादित्वात् ष्यञ्, 'हृद्भगसिन्ध्वन्ते' इत्युभयपदवृद्धिः ॥—**पादस्य पद—**॥ उत्तरसूत्रे पद्ग्रहणात्पदेत्ययमदन्तः, सौत्रो विभक्तिलुक् तदाह—**अदन्तादेश** इति । तेन 'पदगः' इत्यादि सिद्धम् ॥—**पद्या** इति । 'विध्यत्यधनुषा' इति यत् ॥—**पाद्यमि**ति । 'पादार्घाभ्यां च' इति यत् । पूर्वसूत्रे आज्यादिषु प्राण्यङ्गस्यैव करणत्वसम्भवादिहापि तद्वचन एव पादशब्दो गृह्यते, न परिमाणवचनः । तेन 'द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यं, त्रिपाद्यम्' इत्यत्र 'पणपादमाष—' इति यति पदादेशो न भवति ॥ एतच्च वृत्तिहरदत्तग्रन्थयोः स्पष्टम् ॥—**पत्काषी**ति ॥ 'सुप्यजातौ—' इति णिनिः ॥—**पद्धति**रिति । कर्मणि क्तिन् ॥—**ऋचः** ॥ 'शे' इति शस्प्रत्ययस्येदमनुकरणम्, लोमादिषु पादशब्दस्य पाठाभावान्मत्वर्थे शो न सम्भवतीति भावः ॥—**पच्छ** इति । 'संख्यैकवचनाच्च वीप्सायाम्' इति शस् ॥—**उदमेघ** इति ॥ मात्स्यात्पुरुषस्येयं संज्ञा ॥—**उदपेषमि**ति ॥ 'स्नेहने पिषः' इति णमुल् ॥—**उदधिरि**ति । उदकं धीयतेऽस्मिन्निति विग्रहः । 'कर्मण्यधिकरणे च' इति किप्रत्ययः ॥—**उदमन्थ** इति ॥ द्रवद्रव्यमसंस्कृताः सक्तवो मन्थः । 'उदकेन मन्थः' इति विग्रहे 'तृतीया' इति योगविभागात्समास इति हरदत्तः ॥—**शुक्लीभाव** इति ॥ 'ऊर्यादिच्विडाचश्च' इति च्व्यन्तत्वान्निपातत्वेऽव्ययत्वम् ॥—**भ्रूकुंस** इत्यादि । 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः' इत्यमरः ॥ 'तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्' इति च ॥—**एकतद्धिते—**॥ 'एक' इति लुप्तषष्ठीकं तदाह—**एकशब्दस्ये**ति ॥ ह्रस्वविधानमस्य टाबन्ते एवोपयुज्यते । न तु केवले, स्वभावत एव ह्रस्वत्वादतो व्याचष्टे—**एकस्या आगतमि**त्यादि ॥—**ष्यङः—**॥ इह तत्पुरुषपदेन पूर्वपदमुत्तरपदं चाक्षिप्यते, तत्र ष्यङा पूर्वपदस्य विशेषणात्तदन्तं गृह्यत इत्याह—**ष्यङन्तस्ये**ति ॥—**पुत्रपत्योरुत्तरपदयोरि**ति । 'पुत्रपत्यन्तयोः' इति व्याख्याने तु 'कारीषगन्ध्यापरमपुत्रः' इत्यादावतिप्रसङ्गः स्यादिति भावः ॥—**संप्रसारणस्य** ॥ 'उत्तरपदे' इत्यधिक्रियते 'ढ्रलोपे' इत्यतो दीर्घ इत्यनुवर्तते तदाह—**दीर्घः स्यादुत्तरपद** इति । 'हलः' इति दीर्घोऽत्र न प्रवर्तते, प्रत्ययस्य लुका लुप्तत्वेनाङ्गसंज्ञाया अप्रवृत्तेः ॥—**कौमुदगन्ध्याया** इति । कुमुदगन्धे-

न्धीपतिः । व्यवस्थितविभाषया ह्रस्वो न । क्लीप्रत्यये चानुपसर्जने नेति तदादिनियमप्रतिषेधात् । परमकारीषगन्धीपुत्रः । उपसर्जने तु तदादिनियमान्नेह । अतिकारीषगन्ध्यापुत्रः । ▓ बन्धुनि बहुव्रीहौ ।६।१।१४। बन्धुशब्दे उत्तरपदे ष्यङः संप्रसारणं स्याद्बहुव्रीहौ । कारीषगन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः । बहुव्रीहाविति किम् । कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः । क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया ॥ * मातज्मातृकमातृषु वा ॥ कारीषगन्धीमातः । कारीषगन्ध्यामातः । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । कारीषगन्धीमाता । कारीषगन्ध्यामाता । अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः कब्विकल्पश्च । बहुव्रीहावेवेदम् । नेह कारीषगन्ध्याया माता कारीषगन्ध्यामाता । चित्स्वरसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरं बाधते । ▓ इष्टकेषीकामालानां चिततूलभारिषु ।६।३।६५। इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी । ▓ कारेसत्यागदस्य ।६।३।७०। मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः ॥ * अस्तोश्चेति वक्तव्यम् ॥ अस्तुङ्कारः ॥ * धेनोर्भव्यायाम् ॥ धेनुम्भव्या ॥ * लोकस्य पृणे ॥ लोकम्पृणः । पृण इति मूलविभुजादित्वात्कः ॥ * इत्येऽनभ्याशस्य ॥ अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः ॥ * भ्राष्ट्राग्न्योरिन्धे ॥ भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥ * गिलेऽगिलस्य ॥ तिमिङ्गिलः । अगिलस्य किम् । गिलगिलः ॥ * गिलगिले च ॥ तिमिङ्गिलगिलः ॥ * उष्णभद्रयोः करणे ॥ उष्णङ्करणम् । भद्रङ्करणम् । ▓ रात्रेः कृति विभाषा ।६।३।७२। रात्रिञ्चरः । रात्रिचरः । रात्रिमटः । रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु अरुर्द्विषदिति नित्यमेव वक्ष्यते । रात्रिंमन्यः । ▓ सहस्य सः संज्ञायाम् ।६।३।७८। उत्तरपदे । सपलाशम् । संज्ञायां किम् । सहयुध्वा । ▓ ग्रन्थान्ताधिके च ।६।३।७९। अनयोः परयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं ज्योतिषमधीते । सद्रोणा खारी । ▓ द्वितीये चानुपाख्ये ।६।३।८०। अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसीका निशा । राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते । ▓ समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ।६।३।८४। समानस्य सः स्यादुत्तरपदे न तु मूर्धादिषु । अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । योनः सनुत्यः । तत्र भव इत्यर्थे सगर्भसयूथसनुताद्यत् । अमूर्धादिषु किम् । समानमूर्धा । समानप्रभृतयः । समानोदर्काः । समानस्येति योगो विभज्यते । तेन सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धमिति

---

रपत्यं स्त्री कौमुदगन्ध्या 'तस्यापत्यम्' इत्यणि कृते 'अणिञोः' इति ष्यङादेशः, 'यङश्चाप्' ॥ ननु 'कौमुदगन्धीपुत्रः' इत्यादौ 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वेन भाव्यम्, दीर्घविधानं तु पक्षे सावकाशमित्यत आह—**व्यवस्थितविभाषयेति** ॥—**नेहेति** । सम्प्रसारणमिह नेत्यर्थः ॥—**अतिकारीषेति** । कारीषगन्ध्यामतिक्रान्तोऽतिकारीषगन्ध्यः, तस्य पुत्रः ॥—**इष्टकचितमिति** ॥ 'कर्तृकरणे कृता' इति तृतीयासमासः ॥—**पक्वेष्टकचितमिति** । पदाधिकारात्तदन्तविधिः प्रवर्तत इति भावः ॥—**मालभारीति** । 'माला बिभर्ति' इत्यर्थः । सुप्यजातौ–' इति णिनिः । 'हारिषु' इति पाठान्तरम् ॥—**कारे सत्या–**॥ 'अरुर्द्विषत्–' इत्यतोऽनुवर्तनादाह—**मुम् स्यादिति** । सत्यकारः शपथकरणम् । अशपथेऽपि 'सत्यादशपथे' इति डाच बाधित्वा परत्वान्मुमेव । अगदकारो वैद्यः । 'अस्तुकारोऽभ्युपगमः' ॥ अस्त्विति तिङन्तप्रतिरूपकमव्ययम् ॥—**धेनुंभव्येति** । भविष्यन्ती धेनुरित्यर्थः ॥ 'भव्यगेय–' निपातनात्कर्तरि कृत्यः । धेनुश्चासौ भव्या चेति विग्रहः[1] ॥ गौतमस्मृतौ तु 'अधेनुधेनुभव्या' इत्यत्र 'आर्षत्वान्मुम्न' इति बोध्यम् ॥—**लोकंपृण** इति । पृणधातुः प्रीणनार्थः । 'पृणतिः पूरणकर्मा' इति तु हरदत्तः ॥—**अनभ्याशमित्य** इति । अभ्याशः समीपं तद्भिन्नमनभ्याशम् 'एतिस्तुशास्वृदृजुषः' इति इणः क्यप् ॥—**भ्राष्ट्रमिन्ध** इति । कर्मण्यपि उपपदसमासः ॥ एवमग्निमिन्धोऽपि ॥—**गिले गिलस्य** ॥ 'गिलशब्दे उत्तरपदे अगिलस्य मुम्' इत्यर्थः ॥—**तिमिंगिल** इति । मत्स्यविशेषः । गिरतेर्मूलविभुजादित्वात्कः 'अचि विभाषा' इति लत्वम् ॥—**गिलगिले चेति** । 'गिलं गिलति इति गिलगिलः, तिमीनां गिलगिलः' इति विग्रहे इदमारब्धम् ॥—**रात्रेः कृ–**॥ उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाभावेऽपि रात्रिशब्दात्परत्र कृतोऽसंभवात्कृदन्त उत्तरपदे अयं विधिरित्याशयेनोदाहरति—**रात्रिंचर** इति ॥ यद्यप्याचारक्विबन्तात् ण्वुलादिः संभवति । तथापि विलम्बितोपस्थितिकत्वात्स न गृह्यत इति भावः ॥—**नित्यमेवेति** । पूर्वविप्रतिषेधेनेति भावः ॥—**रात्रिंमन्य** इति । 'आत्ममाने खश्च' इति खश् सार्वधातुकत्वात्तस्मिन्परे श्यन् ॥—**सहयुध्वेति** ॥ 'सहे च' इति क्वनिप् । स्त्रियामपि 'वनो न हशः' इति निषेधात् ङीब्रौ न ॥—**समुहूर्तमिति** ॥ अन्तवचनेऽव्ययीभावः । 'अव्ययीभावे चाकाले' इत्यत्र कालपर्युदासादप्राप्ते सभावे ग्रन्थान्तग्रहणम् ॥—**द्वितीये–**॥ 'अप्रधानो यः, स द्वितीयः' इति लोकप्रसिद्धम्, उपाख्यं प्रत्यक्षं तद्भिन्नमनुमेयं तदाह—**अनुमेये** इति ॥—**सराक्षसीकेति** । 'नद्यृतश्च' इति कप् ॥—**योगो विभज्यत**

---

१ धेनुभव्येति—मयूरव्यंसकादित्वात्समासः, अत एव भव्याशब्दस्य परनिपातः । २ स इति—अयं च सादेशो निपातनादुदात्त इति भाष्ये स्थितम् ।

काशिका । अथवा सहशब्दः सदृशवचनोऽप्यस्ति । सदृशः सख्या ससखीति यथा । तेनायमस्वपदविग्रहो बहुव्रीहिः । समानः पक्षोऽस्येत्यादि । **ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु** ।६।३।८५। एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् । सज्योतिः । सजनपद इत्यादि । **चरणे ब्रह्मचारिणि** ।६।३।८६। ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । चरणः शाखा । ब्रह्म वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीति ब्रह्मचारी । समानः सः सब्रह्मचारी । **तीर्थे ये** ।६।३।८७। तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् । सतीर्थ्यः, एकगुरुकः । समानतीर्थेवासीति यत्प्रत्ययः । **विभाषोदरे** ।६।३।८८। यादौ प्रत्यये विवक्षिते इत्येव । सोदर्यः । समानोदर्यः । **दृग्दृशवतुषु** ।६।३।८९। सदृक् । सदृशः ॥ * दृक्षे चेति वक्तव्यम् ॥ सदृक्षः । वतुरुत्तरार्थः । **इदंकिमोरीश्की** ।६।३।९०। दृग्दृशवतुषु इदम ईश् किमः की स्यात् । ईदृक् । ईदृशः । कीदृक् । कीदृशः । वतूदाहरणं वक्ष्यते । दृक्षे च । ईदृक्षः । कीदृक्षः । आ सर्वनाम्नः । दृक्षे च । तादृक् । तादृशः । तावान् । तादृक्षः । दीर्घः । मत्वोस्वे । अमूदृक् । अमूदृशः । अमूदृक्षः । **समासेऽङ्गुलेः सङ्गः** ।८।३।८०। अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात्समासे । अङ्गुलिषङ्गः । समासे किम् । अङ्गुलेः सङ्गः । **भीरोः स्थानम्** ।८।३।८१। भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे । भीरुष्ठानम् । असमासे तु । भीरोः स्थानम् । **ज्योतिरायुषः स्तोमः** ।८।३।८३। आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात्समासे । ज्योतिष्टोमः । आयुष्टोमः । समासे किम् । ज्योतिषः स्तोमः । **सुषामादिषु च** ।८।३।९८। सस्य मूर्धन्यः । शोभनं साम यस्य सुषामा । सुषन्धिः । **एति संज्ञायामगात्** ।८।३।९९। सस्य मूर्धन्यः । हरिषेणः । एति किम् । हरिसक्थम् । संज्ञायां किम् । पृथुसेनः । अगकारात्किम् । विष्वक्सेनः । इण्कोरित्येव । सर्वसेनः । **नक्षत्राद्वा** ।८।३।१००। एति सस्य संज्ञायामगकारान्मूर्धन्यो वा । रोहिणीषेणः । रोहिणीसेनः । अगकारात्किम् । शतभिषक्सेनः । आकृतिगणोऽयम् । **अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु** ।६।३।९९। अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अन्यदीयः । अषष्ठीत्यादि किम् । अन्यस्याऽन्येन वाशीः अन्याशीः । कारके छे च नायं निषेधः । अन्यस्य कारकः, अन्यत्कारः । अन्यस्यायमन्यदीयः । गहादेराकृतिगणत्वाच्छः । **अर्थे विभाषा** ।६।३।१००। अन्यदर्थः । अन्यार्थः । **कोः कत्तत्पुरुषेऽचि** ।६।३।१०१। अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे किम् । कूष्ट्रो राजा ॥ * त्रौ च ॥ कुत्सितास्त्रयः कत्त्रयः । **रथवदयोश्च** ।६।३।१०२। कद्रथः । कद्वदः । **तृणे च जातौ** ।६।३।१०३। कत्तृणम् । **का पथ्यक्षयोः** ।६।३।१०४। कापथम् । काक्षः । अक्षशब्देन तत्पुरुषः । अक्षिशब्देन बहुव्रीहिर्वा । **ईषदर्थे** ।६।३।१०५। ईषज्जलं काजलम् । अजादावपि परत्वात्कादेशः । काम्लः । वि-

---

इति ॥ एतदर्थमेव च्छान्दसमपि 'समानस्य च्छन्दसि' इति सूत्रमिहोपन्यस्तमिति भावः ॥—**बहुव्रीहिरि**ति । तेन वोपसर्जनस्य' इति सहस्य सभावः प्राप्नोतीति भाव ॥—**सज्योतिरि**ति । समानं ज्योतिरस्येति बहुव्रीहिः । यस्मिन् ज्योतिषि आदित्ये नक्षत्रे वा सजात तदस्तमयपर्यन्तमनुवर्तमानमाशौचं सज्योतिः इत्युच्यते ॥ इह 'समानमध्यमध्यमवीराश्च' इति प्रतिपदोक्त एव समासो न गृह्यते, 'सरूपाणामेकशेष'—' इति लिङ्गात् । किं तु बहुव्रीहिरपि इति हरदत्त. ॥—**ब्रह्मचारी**ति ॥ 'व्रत' इति णिनि ॥—**सब्रह्मचारी**ति । 'समानो ब्रह्मचारी' इत्यर्थ । ब्रह्मचारिणश्च समानत्व ब्रह्मणः समानत्वात् । ततश्च 'समाने ब्रह्मणि व्रतचारी' इति फलितोऽर्थ. ॥—**तीर्थे**—॥ 'ये' इत्यकारो न विवक्षित । प्रत्यये इति विशेष्य तु व्याख्यानाल्लभ्यते । तेन 'यस्मिन्विधिः' इति तदादिर्विधिरित्याह—**यादौ प्रत्यय** इति ॥—**विवक्षित** इति । उत्तरपदमात्रनिमित्तः समासोऽन्तरङ्ग, समासप्रकृतिकसुबन्तात्तु यत्प्रत्यय, अतस्तस्य परत्र न सम्भवतीत्याशयेनेदमुक्तम् ॥—**सोदर्य** इति ॥ 'समानोदरे शयित'' इत्यर्थे प्रत्ययात्प्राक् समानस्य सभावे कृते 'सोदराद्य' इति यः । सभावाभावपक्षे तु 'समानोदरे शयित ओ चोदात्त'' इति यति समानोदर्य. ॥—**सदृक् । सदृश** । इति ॥ 'समानान्ययोश्चेति वक्तव्यम्' इति दृशे. क्विन्कञौ ॥—**दीर्घ** इति ॥ अदसश्चात्वे कृते सवर्णदीर्घ इत्यर्थः ॥ एतच्च पूर्वोत्तरोदाहरणान्वयि ॥—**भीरोः स्थानमि**ति ॥ विसर्जनीयव्यवधानेऽपि षत्वप्राप्तिरस्ति ॥—**ज्योतिषः स्तोम** इति ॥ 'इद ज्योतिः स्तोमोऽयम्' इति प्रत्युदाहर्तुमुचितम् ॥—**एति संज्ञायामि**ति ॥ सुषामाद्यन्तर्गणसूत्रमेतद् ॥ एव 'नक्षत्राद्वा' इत्यपि ॥—**विष्वक्सेन** इति । चर्त्वस्यासिद्धत्वात्ककारेण व्यवधानमस्तीति भावः ॥—**अषष्ठ्य**—॥ अन्यदाशीरित्यादयः कर्मधारयाः ॥—**नायं निषेध** इति । एतच्च 'अषष्ठीतृतीयास्थ' इत्येव सिद्धे निषेधानित्यत्वज्ञापनार्थाद् द्विर्नञ उपादानाल्लभ्यत इत्याहुः ॥—**त्रौ च** ॥ अनजाद्यर्थमिदं वार्तिक 'कत्र्यादिभ्यो ढकञ्' इति निर्देशेनैव सिद्धम् ॥—**कापथ-**

---

१ अथवेति—अनेन पक्षान्तरोपन्यासेन योगविभागस्य भाष्यानारूढत्वमिति द्योतयति । २ यादौ प्रत्यये इति—निरनुबन्धकपरिभाषा तु नेहोपतिष्ठते, तीर्थान्तान्निरनुनासिकस्यासम्भवात् ।

**भाषा पुरुषे** ।६।३।१०६। कापुरुषः । कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव । ईषत्पुरुषः कापुरुषः । ¶ **कवं चोष्णे** ।६।३।१०७। उष्णशब्दे उत्तरपदे कोः कवं का च वा स्यात् । कवोष्णम् । कोष्णम् । कदुष्णम् । ¶ **पृषोदरादीनि यथोपदिष्टम्** ।६।३।१०९। पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषतः उदरं पृषोदरम् । तलोपः । वारिवाहको बलाहकः । पूर्वपदस्य बः उत्तरपदादेश्च लत्वम् ॥ भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥ १ ॥ * **दिक्शब्देभ्यस्तीरस्य तारभावो वा** ॥ दक्षिणतारम् । दक्षिणतीरम् । उत्तरतारम् । उत्तरतीरम् ॥ * **दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च** ॥ दुःखेन दाश्यते दूडाशः । दुःखेन नाश्यते दूणाशः । दुःखेन दभ्यते दूडभः । खल् त्रिभ्यः । दम्भेर्नलोपो निपात्यते । दुःखेन ध्यायतीति दूढ्यः । आतश्चेति कः । ब्रुवन्तोऽस्यां सीदन्तीति बृसी । ब्रुवच्छब्दस्य बृ आदेशः, सदेरधिकरणे डट् । आकृतिगणोऽयम् । ¶ **संहितायाम्** ।६।३।११४। अधिकारोऽयम् । ¶ **कर्णे लक्षणस्याऽविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य** ।६।३।११५। कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । लक्षणस्य किम् । शोभनकर्णः । अविष्टादीनां किम् । विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः । ¶ **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** ।६।३।११६। क्विबन्तेषु एषु परेषु पूर्वपदस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्माविद् । नीरुक् । अभीरुक् । ऋतीषट् । परीतत् । क्वाविति किम् । परिणहनम् । विभाषा पुरुष इत्यतो मण्डूकप्लुत्या विभाषानुवर्तते सा च व्यवस्थिता । तेन गतिकारकयोरेव । नेह । पटुरुक् । तिग्मरुक् । ¶ **वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्** ।६।३।११७। कोटरादीनां वने परे किंशुलुकादीनां गिरौ परे दीर्घं स्यात्संज्ञायाम् । ¶ **वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः** ।८।४।४। वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः । इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः । तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः । अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् । मिश्रका-

मिति ॥ कुत्सितः पन्थाः । 'ऋक्पूरब्धूः–' इति समासान्तः । 'पथः सङ्ख्याव्ययादेः' इति नपुंसकत्वम् ॥—**अप्राप्तविभाषेति** ॥ 'ईषदर्थे' इत्यस्यानुवृत्तेरिति भावः ॥—**पृषोदरप्रकाराणी**ति । आदिशब्दो हि न व्यवस्थावचनः, यथोपदिष्टपदानर्थक्यादिति भावः ॥—**शिष्टैरि**ति । अध्याहारलभ्यमिदम् 'यथोपदिष्टम्' इत्यत्र यथार्थेऽव्ययीभावः । उपदिशिश्चोच्चारणक्रियः । 'यानि यानि शिष्टैरुपदिष्टानि' इत्यर्थ ॥ एवं स्थिते फलितमाह—**यथोच्चारितानी**ति ॥—**तथैवेति** । समासपदविषयकमिदम् । उत्तरपदाधिकारात् । निरुक्तादिशास्त्रसिद्धानामसमासपदानाम् 'उणादयो बहुलम्' इत्येव सिद्धेश्च ॥ यद्यपि समासविषयकमेवेति नियमो न युज्यते, हसांसहशब्दयोरपि प्राचा कारिकायामुदाहृतत्वात् । तथापि तत्कारिकायां यथाशब्दाध्याहारेण दृष्टान्तप्रदर्शनार्थं तयोरुपन्यासः कृतो, न तु प्रकृतसूत्रोदाहरणत्वेनेति नियमोक्तिः सम्यगेवेत्याहुः ॥—**वर्णागमादि**ति । हन्तेः पचाद्यचि सगागम ॥—**विपर्यादि**ति । हिंसेस्तु पचाद्यचि हकारसकारयोः स्थानव्यत्ययः ॥—**दिक्शब्देभ्य** इति । वार्तिकमिदम् । 'दुरो दाशनाश–' इत्यप्येवम् ॥—**खल् त्रिभ्य** इति । दाशनाशदभेति त्रयोऽपि 'ईषद्दुःसुषु–' इति खल्प्रत्ययान्ता इत्यर्थः ॥—**बृसी**ति । 'मुनीनामासनं बृसी' ॥ आकृतिगणोऽयमिति । तेन 'लुम्पेदवश्यमः कृत्ये तु काममनसोरपि । समो वा हिततत्योर्मांसस्य पचि युड्घञोः' इत्यपि सगृहीतम् ॥ कृत्यान्ते उत्तरपदे अवश्यमः अन्तं लुम्पेत् । अवश्यगन्तव्य , अवश्यसेव्यः ॥ तथा तुमः काममनसोः परत. अन्तं लुम्पेत् । गन्तुकामः गन्तुमनाः ॥ समो हिततत्योः अन्त वा लुम्पेत् । सहितः सहितः सततः, संततः ॥ युट् घञ् च एतयोः यः पच् धातुः तस्मिन्परे मांसस्यान्त लुम्पेत । मांस्पचनी मांस्पाकः । इह संयोगान्तलोपोऽपि शिष्टोच्चारणान्नेति बोध्यम् ॥—**संहितायामि**ति ॥ तेन 'द्विगुणाकर्णः' इत्यादौ अवग्रहे दीर्घो न भवतीति सूत्राशयमुत्प्रेक्षयन्ति ॥—**अधिकारोऽयमि**ति । तेन 'विश्वाहि त्वा' इत्यादौ पदकाले 'द्व्यचोतस्तिङ.' इति दीर्घो नेत्यादिप्रयोजनान्यूह्यानीति ॥—**नहिवृति**— ॥ णह बन्धने, वृतु वर्तने, वृषु सेचने, व्यध ताडने, रुच दीप्तौ, षह मर्षणे, तनु विस्तारे ॥—**क्विबन्तेष्वि**ति । उत्तरपदेषु इति शेषः । तेन 'दिवसेषु रुक्' इत्यादौ नातिप्रसङ्गः ॥—**उपानदि**ति । सपदादित्वात्कर्मणि क्विप् ॥ 'निवर्तते' इति नीवृत् ॥ 'प्रवर्षति' इति प्रावृट् ॥ 'मर्माणि विध्यति' इति मर्माविद् । व्यधेः 'ग्रहिज्या–' इति संप्रसारणम् ॥ निरोचते इति नीरुक् ॥ 'ऋतिं सहते' ऋतीषट् । 'पूर्वपदात्' इति षत्वमिति हरदत्तः । 'सहेः पृतनर्ताभ्यां च' इत्यत्र 'सहेः' इति योगविभागाच्चकारस्यानुक्तसमुच्चयार्थत्वाद्वेत्यन्ये । सुषामादेराकृतिगणत्वादित्यपरे ॥ 'परितनोति' इति परीतत् । 'गमः क्वौ' इत्यत्र 'गमादीनामिति वाच्यम्' इत्युक्तेर्नलोपः ॥—**वनं पुरगा**— ॥ 'व्यत्ययेन षष्ठ्यर्थे प्रथमा' इत्याह—**वनशब्दस्ये**ति ॥—**एभ्य एवे**ति । कृतदीर्घेभ्यः पुरगादिभ्य एव परस्य णत्वमित्यर्थः । 'एभ्यो वनस्यैव णत्वं नान्येषाम्' इति विपरीतनियमशङ्का तु न भवति, वनादन्यस्मिन्नुत्तरपदे पुरगादीनां दीर्घान्तत्वासम्भवात् ॥—**नियमार्थ** इति ॥ अयं भावः 'पुरगामिश्रका' इति दीर्घनिर्देशादसं-

---

१ लक्षणस्येति—यत्पशूनां स्वामिविशेषज्ञानार्थं दात्राकारादिचिह्नं क्रियते तदिह लक्षणम् । २ अष्टकर्ण इति—अष्टसंख्यालिपिचिह्नकर्ण इत्यर्थः । एवमग्रेऽप्यूह्यम् ।

वणम् । सिध्रकावणम् । सारिकावणम् । कोटरावणम् । एभ्य एवेति किम् । असिपत्रवनम् । वनस्याग्रे अग्रेवणम् । राजदन्तादिषु निपातनात्सप्तम्या अलुक् । प्रातिपदिकार्थमात्रे प्रथमा । किंशुलुकागिरिः । **वले** ।६।३।११८। वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम् । कृषीवलः । **मतौ बह्वचोऽनजिरादीनाम्** ।६।३।११९। अमरावती । अनजिरादीनां किम् । अजिरवती । बह्वचः किम् । व्रीहिमती । संज्ञायामित्येव । नेह । वलयवती । **शरादीनां च** ।६।३।१२०। शरावती । **इको वहेऽपीलोः** ।६।३।१२१। इगन्तस्य दीर्घः स्याद्वहे । ऋषीवहम् । इकः किम् । पिण्डवहम् । अपीलोः किम् । पीलुवहम् ॥ * **अपील्वादीनामिति वाच्यम्** ॥ दारुवहम् । **उपसर्गस्य घञ्यमनुष्ये बहुलम्** ।६।३।१२२। उपसर्गस्य बहुलं दीर्घः स्याद्घञन्ते परे न तु मनुष्ये । परीपाकः । परिपाकः । अमनुष्ये किम् । निषादः । **इकः काशे** ।६।३।१२३। इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । वीकाशः । नीकाशः । इकः किम् । प्रकाशः । **अष्टनः संज्ञायाम्** ।६।३।१२५। उत्तरपदे दीर्घः । अष्टापदम् । संज्ञायां किम् । अष्टपुत्रः । **चितेः कपि** ।६।३।१२७। एकचितीकः । **नरे संज्ञायाम्** ।६।३।१२९। विश्वानरः । **मित्रे चर्षौ** ।६।३।१३०। विश्वामित्रः । ऋषौ किम् । विश्वमित्रो माणवकः ॥ * **शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः** ॥ श्वादन्तः, इत्यादि । **प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि** ।८।४।५। एभ्यो वनस्य णत्वं स्यात् । प्रवणम् । कार्ष्यवणम् । इह पात्परत्वाण्णत्वम् । **विभाषौषधिवनस्पतिभ्यः** ।८।४।६। एभ्यो वनस्य णत्वं वा स्यात् । दूर्वावणम् । दूर्वावनम् । शिरीषवणम् । शिरीषवनम् ॥ * **द्व्यच्त्र्यज्भ्यामेव** ॥ नेह । देवदारुवनम् ॥ * **इरिकादिभ्यः प्रतिषेधो वक्तव्यः** ॥ इरिकावनम् । मिरिकावनम् । **वाहनमाहितात्** ।८।४।८। आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहनन्कारस्य णत्वं स्यात् । इक्षुवाहणम् । आहितात्किम् । इन्द्रवाहनम् । इन्द्रस्वामिकं वाहनमित्यर्थः । वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात् । **पानं देशे** ।८।४।९। पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्याद्देशे गम्ये । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः ।

ज्ञाया दीर्घाभावेन संज्ञायामेव णत्वमिति फलितम् । एवं च 'पूर्वपदात् संज्ञायाम्' इत्यनेनैव वनस्य णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधिनिर्देशो नियमार्थ एवेति ॥ —**विध्यर्थ** इति । अगकारान्तेन 'पूर्वपदात्संज्ञायाम्' इत्यस्याप्रवृत्तेरिति भावः । न च पुरगाग्रहणमपि विध्यर्थमेव, गकारव्यवधानेन 'पूर्वपदात्संज्ञायाम्' इत्यस्य प्राप्त्यभावादिति वाच्यम् । 'अगः' इत्यस्य पञ्चम्यन्तत्वं स्वीकृत्य 'गान्तात्पूर्वपदात्परस्य णत्वं न' इति व्याख्यानात् । पुरगाशब्दस्य त्वकारान्तत्वात् 'अगः' इति निषेधस्याप्रवृत्तेः । अत एव 'अगः' इत्यस्य 'ऋगयनम्' इत्येकमेवोदाहरणमिति 'अणृगयनादिभ्यः' इति निर्देशाश्रयेण तत्प्रत्याख्यातमाकरे ॥ —**पुरगावणमि**त्यादि । नरकविशेषस्य संज्ञा ॥ —**असिपत्रवनमि**ति[1] । 'एभ्यो वनस्यैव' इति विपरीतनियमे तु णत्वमत्र दुर्वारमिति भावः ॥ सप्तम्यर्थस्य प्रातिपदिकार्थे अन्तर्भावादाह—**प्रथमे**ति ॥ किंशुलुकादीनामुदाहरणमाह—**किंशुलुकागिरिरि**ति । आदिशब्दग्राह्यास्तु 'अञ्जनागिरिः' इत्यादयः ॥ —किंशुलुकेति किम् । कृष्णगिरिः । रामगिरिः ॥ —**कृषीवल** इति ॥ 'रजःकृष्यासुति-' इत्यादिना मत्वर्थे वलच्[2] ॥ —**अमरावती**ति ॥ 'मादुपधायाश्च' इति, 'संज्ञायाम्' इति वा मतोर्वस्य वः ॥ घञन्तमात्रस्योत्तरपदस्याग्रहणादाह—**घञन्त** इति ॥ —**निषाद** इति । पुलिन्दो मनुष्यजातिः । 'निषीदन्त्यस्मिन्पापम्' इति निषादः 'हलश्च' इत्यधिकरणे घञ् ॥ कथं तर्हि दौवारिके प्रतीहारशब्दप्रयोग इति चेत् । अत्राहुः । प्रतिहारो द्वारम् । तात्स्थ्यात्ताच्छब्द्यमिति ॥ —**एकचितीक** इति । 'शेषाद्विभाषा' इति कप् ॥ 'दंष्ट्रा' इति वार्तिके दीर्घान्तः पठ्यते ॥ केचित्तु ह्रस्वान्तं पठित्वा 'श्वादंष्ट्रः' इति बहुव्रीहौ दीर्घमाहुः, न तु तत्पुरुषे ॥ —**इह पादि**ति ॥ 'कार्श्य' इति तालव्यपाठस्त्वनार्ष इति भावः ॥ —वनस्पतिभ्यो वनस्य णत्वमुदाहरति—**शिरीषवणमि**ति ॥ ननु 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' इत्यमरकोशात्पुष्पं विनैव फलप्रादुर्भावः स वनस्पतिः, स चोदुम्बरादिः । शिरीषस्तु न तथा, तस्य पुष्पफलोभयवत्त्वादतो णत्वमिदं कथमिति चेत् । अत्राहुः । वनस्पतिशब्देनात्र वृक्षमात्रमुपलक्ष्यते । अत्र 'लुपि युक्तवत्' इति सूत्रस्थं भाष्यं लिङ्गम् । तत्र हि 'व्यक्तिवचने किम् । शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनमित्यत्र णत्वं कर्तव्ये वनस्पतित्वमप्यतिदिश्येत' इत्युक्तम् ॥ तच्च शिरीषाणां वनस्पतित्वे संगच्छते नान्यथेति दिक् ॥ —**द्व्यच्त्र्यज्भ्यामेवे**ति । व्यवस्थितविभाषाश्रयणादिति भावः । ओषधित्वात्प्राप्ते प्रतिषेधमाह—**इरिकादिभ्य** इति । एतदपि व्यवस्थितविभाषाविज्ञानादेव सिद्धम् ॥ —उ-

१ असिपत्रवनमिति—नरकविशेषस्यैव संज्ञा । २ वल इति—वलच्प्रत्यय एव गृह्यते, यथोपदिष्टमित्यस्यानुवृत्तेः । तेनाजन्ते वलधातौ न दीर्घः । संज्ञायामेवेदम्, तेन पुत्रवल इत्यत्र न दीर्घः ।

पीयते इति पानम् । कर्मणि ल्युट् । **वा भावकरणयोः ।८।४।१०।** पानस्येत्येव । क्षीरपानम् । क्षीरपानम् ॥ *** गिरिनद्यादीनां वा ॥** गिरिनदी । गिरिणदी । चक्रनितम्बा । चक्रणितम्बा । **प्रातिपदिकान्तनुम्विभक्तिषु च ।८।४।११।** पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात् । प्रातिपदिकान्ते, माषवापिणौ । नुमि, व्रीहिवापाणि । विभक्तौ, माषवापेण । पक्षे माषवापिनावित्यादि । उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम् । नेह । गर्गाणां भगिनी गर्गभगिनी । अतएव नुम्ग्रहणं कृतम् । अङ्गस्य नुम्विधानात्तदङ्गको हि नुम् नतूत्तरपदस्य । किंच । प्रहिण्वन्नित्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम् । प्रेन्वनमित्यादौ तु क्षुभ्नादित्वान्न ॥ *** युवादेर्न ॥** रम्ययूना । परिपक्वानि । एकाजुत्तरपदे णः । नित्यमित्युक्तम् । वृत्रहणौ । हरिं मानयतीति हरिमाणी । नुमि, क्षीरपाणि । विभक्तौ, क्षीरपेण । रम्यविणा । **कुमति च ।८।४।१३।** कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामिणौ । हरिकामाणि । हरिकामेण । **पदव्यवायेऽपि ।८।४।३८।** पदेन व्यवधानेऽपि णत्वं न स्यात् । माषकुम्भवापेन । चतुरङ्गयोगेन ॥ *** अतद्धित इति वाच्यम् ॥** आर्द्रगोमयेण । शुष्कगोमयेण । **कुस्तुम्बुरूणि जातिः ।६।१। १४३।** अत्र सुण्निपात्यते । कुस्तुम्बुरु धान्याकम् । क्लीबत्वमतन्त्रम् । जातिः किम् । कुतुम्बुरूणि । कुत्सितानि तिन्दुकीफलानीत्यर्थः । **अपरस्पराः क्रियासातत्ये ।६।१।१४४।** सुण्निपात्यते । अपरस्पराः सार्था गच्छन्ति ।

---

**शीनरा** इति ॥ इह उशीनरशब्दस्तद्देशवासिषु भाक्तः ॥—**कर्मणि ल्युट्** इति । 'कृत्यल्युटो बहुलम्' इत्यनेन ॥—**वा भाव—॥** आदेशार्थ आरम्भ इत्यप्राप्तविभाषा ॥—**क्षीरपाणमि**ति । पीति' पान 'ल्युट् च' इति नपुसके भावे ल्युट् । पीयते अनेनेति पान, करणे ल्युट् । क्षीरस्य पान क्षीरपाणम् ॥—**गिरिनद्यादीनां वे**ति । वक्तव्यमिति शेषः ॥ संज्ञायां प्राप्ते, असज्ञायामप्राप्ते उभयतश्च विभाषेत्याहुः ॥—**माषवापिणावि**ति । 'बहुलमाभीक्ष्ण्ये' इति णिनिः ॥—**व्रीहिवापाणी**ति । कर्मण्यण् ॥—**उत्तरपदं यदि**ति ॥ इष्टानुरोधेन तथा व्याख्यायत इति भावः ॥—**गर्गभगिनीति ।** इह भगिनीशब्द उत्तरपद, न तु भगिन्शब्दः ॥ अत्र व्याख्याने नुम् ग्रहणमेव ज्ञापकमिति भाव' ॥ प्राचा मतमाह—**अत एवे**ति । तदुक्त ज्ञापक विघटयति—**किं चे**ति ॥—**परिपक्वानी**ति । 'कुमति च' इति नित्य णत्व प्राप्तम् ॥—**एकाजुत्तर—॥** प्राग् व्याख्यातमपि प्रकरणानुरोधेन स्मर्यते ॥—**वृत्रहणावि**ति । वृत्र हतवन्तौ 'ब्रह्मभ्रूण–' इति क्विप् ॥—**हरिमाणी**ति । मनेर्ण्यन्तात् 'क्विप् च' इति क्विप् । 'गतिकारकोपपदानाम्–' इत्यादिना सुबुत्पत्तेः प्राक् समासान्नकारान्तमुत्तरपदम्, नान्तलान्डीप ॥—**क्षीरपाणी**ति । पिबतेः कर्मण्युपपदे 'आतोऽनुपसर्गे–' इति कः । 'आतो लोप इटि च' इत्यालोपः ॥—**रम्यविणे**ति । रम्यश्चासौ विश्चेति विग्रहः । तत 'आङो नाऽस्त्रियाम्' ॥ ननु अन्तर्वर्तिनीं विभक्तिमाश्रित्य विशब्दस्य पदत्वात् 'पदव्यवायेऽपि' इति णत्वनिषेधः स्यात् । मैवम् । 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधेन विशब्दस्य पदत्वाभावात् ॥ 'स्वादिपु–' इत्यनेन तु रम्यविशब्दस्यैव पदत्वम् न तु विशब्दस्य । यस्मात्स्वादिविधिस्तस्यैव पदत्वाभ्युपगमात् । एव च पुनर्भूणामित्यत्र णत्व निर्बाधमेव, नामि परतो भूशब्दस्य पदत्वाभावात् ॥—**कुमति च ॥** अनेकाजुत्तरपदार्थ आरम्भ ॥ 'कौ' इत्येव तु न सूत्रितम् । 'यस्मिन्विधिः' इति तदादिविधौ कवर्गाद्युत्तरपद एव हरिकामाणीत्यादावय विधिः स्यात् । न तु वस्त्रयुगेणेत्यादौ, तथा च मतुबन्तनिर्देश आवश्यक इत्याह—**कवर्गवती**ति ॥—**पदेन व्यवधान** इति ॥ 'निमित्तनिमित्तिनोर्मध्ये पदे सति णत्व न' इत्यर्थ ॥—**माषकुम्भवापेने**ति । माषकुम्भ वपतीति 'कर्मण्यण' उपपदसमास ॥—**चतुरङ्गयोगेने**ति ॥ 'चन्वार्यङ्गान्यस्य । तेन योग.' इति मनोरमाया विगृहीतम् । तदयुक्तम् । 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधादङ्गशब्दस्यापदत्वात् । तस्मात् 'अङ्गानां योगो अङ्गयोगश्चतुर्णामङ्गयोग.' इत्येव विग्रहीतव्यम् । न च 'चतुरङ्गेन योग.' इति विग्रहेऽप्यङ्गशब्द उत्तरपद नेति प्रत्ययलक्षणप्रतिषेधो न प्रवर्तत इति शङ्क्यम । तस्य पूर्वसमासस्योत्तरपदत्वात्, 'उत्तरपदत्वे च' इति प्रतिषेधवचनस्यापि 'उत्तरस्य समासचरमावयवस्य पदत्वे कर्तव्ये पदादिविधिभिन्ने प्रत्ययलक्षण न प्रवर्तते' इत्यर्थाभ्युपगमाच्च ॥ 'शाकपार्थिवादीनामुत्तरपदलोपः' 'प्रादिभ्यो धातुजस्य–' इत्यादौ तूत्तरपदशब्देन समासचरमावयवमात्र गृह्यते इति प्रत्ययलक्षणप्रवृत्त्यभावेऽपि न क्षति ॥ इह तु पदत्वलाभाय प्रत्ययलक्षणप्रवृत्तिरपेक्षिता । एव च 'माषकुम्भवापेन' इत्यत्रापि कुम्भस्य वाप. कुम्भवापः । कुम्भशब्दः कुम्भपरिमितधान्ये भाक्तः । 'माषाणा कुम्भवाप:' इति विग्रहीतव्यमिति नव्याः ॥ केचित्तु 'अपदादिविधौ' इत्यत्र 'पदान्तविधौ' इत्यर्थ परिकल्प्य 'पदव्यवायेऽपि' इत्यस्य पदान्तविधित्वाभावान्नास्त्यत्र प्रत्ययलक्षणनिषेध इत्याहुः । तदपरे न क्षमन्ते । तथा हि सति लाघवात् 'पदान्तविधौ' इत्येव ब्रूयात्, न तु 'अपदादिविधौ' इति दिक् ॥—**अतद्धित** इति । 'व्यवधायकपदस्य तद्धितश्चेत्परो न भवति, तदा निषेध इत्यर्थः' ॥—**आर्द्रगोमयेणे**ति । इह गोशब्दः पदम् । 'उत्तरपदत्वे च' इति निषेधोऽत्र न शङ्क्यः, गोमयशब्दस्योत्तरपदत्वात् । गोशब्दस्य च 'स्वादिषु' इति पदत्वात् ॥—

---

१ क्षीरपानमिति—सर्पिष्पानमित्यादौ तु न, पात्पदाद्योरिति निषेधात् । तस्य हि पदे परतो यः षकारस्ततः परस्य नस्य णो नेत्यर्थः । अन्तग्रहणसामर्थ्यात् ।

सततमविच्छेदेन गच्छन्तीत्यर्थः । क्रियेति किम् । अपरपरा गच्छन्ति । अपरे च परे च सकृदेव गच्छन्तीत्यर्थः । गोष्पदं सेवितासेवितप्रमाणेषु ।६।१।१४५। सुट् सस्य षत्वं च निपात्यते । गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो गोष्पदः । असेविते, अगोष्पदान्यरण्यानि । प्रमाणे, गोष्पदमात्रं क्षेत्रम् । सेवितेत्यादि किम् । गोः पदं गोपदम् । आस्पदं प्रतिष्ठायाम् ।६।१।१४६। आत्मयापनाय स्थाने सुट् निपात्यते । आस्पदम् । प्रेति किम् । आ पदादापदम् । आश्चर्यमनित्ये ।६।१।१४७। अद्भुते सुट् । आश्चर्यं यदि स भुञ्जीत । अनित्ये किम् । आचर्यं कर्म शोभनम् । वर्चस्केऽवस्करः ।६।१।१४८। कुत्सितं वर्चो वर्चस्कम्, अन्नमलं, तस्मिन् सुट् । अवकीर्यत इत्यवस्करः । वर्चस्के किम् । अवकरः । अपस्करो रथाङ्गम् ।६।१।१४९। अपकरोऽन्यः । विष्किरः शकुनिर्विकिरो वा ।६।१।१५०। पक्षे विकिरः । वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो माभूदिति वृत्तिस्तन्न । भाष्यविरोधात् । प्रतिष्कशश्च कशेः ।६।१।१५२। कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च । सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते । कशेः किम् । प्रतिगतः कशां प्रतिकशोऽश्वः । यद्यपि कशेरेव कशा तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन धात्वन्तरोपसर्गान्न । प्रस्कण्वहरिश्चन्द्रावृषी ।६।१।१५३। हरिश्चन्द्रग्रहणममन्त्रार्थम् । ऋषीति किम् । प्रकण्वो देशः । हरिचन्द्रो माणवकः । मस्करमस्करिणौ वेणुपरिव्राजकयोः ।६।१।१५४। मकरशब्दोऽव्युत्पन्नस्तस्य सुडिनिश्च निपात्यते । वेण्विति किम् । मकरो ग्राहः । मकरी समुद्रः । कास्तीराजस्तुन्दे नगरे ।६।१।१५५। ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम् । अजस्येव तुन्दमस्येति अजस्तुन्दं नाम नगरम् । नगरे किम् । कातीरम् । अजतुन्दम् । कारस्करो वृक्षः ।६।१।१५६। कारं करोतीति कारस्करो वृक्षः । अन्यत्र कारकरः । केचित्तु कस्कादिष्विदं पठन्ति न सूत्रेषु । पारस्करप्रभृतीनि च संज्ञायाम् ।६।१।१५७। एतानि ससुट्कानि निपात्यन्ते नाम्नि । पारस्करः । किष्किन्धा ॥ * तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ॥ तात्पूर्वे चर्त्वेन दकारोऽपि बोध्यः । तद्बृहतोर्दकारतकारौ लुप्येते । करपत्योस्तु सुट् । चोरदेवतयोरिति समुदायोपाधिः । तस्करः । बृहस्पतिः ॥ * प्रायस्य[1] चित्तिचित्तयोः ॥ प्रायश्चित्तिः । प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् ॥ ॥ इति समासाश्रयविधयः ॥

गोष्पदम् ॥ असेविते गोष्पदशब्दस्य कृत्यसम्भवान्नञ्पूर्वमुदाहरति—अगोष्पदानीति ॥ गवां सञ्चारो यत्र नैव सम्भवति तत्रापि सुडागमार्थमसेवितग्रहणमित्याहुः ॥—आत्मयापनायेति ॥ कालक्षेपाय शरीरक्षेपणाय चेत्यर्थः ॥—आश्चर्यमिति ॥ आङः परस्य चरेः सुट् 'चरेराङि चागुरौ' इति यत् ॥—विष्किरः—॥ 'कॄ विक्षेपे' इत्यस्मात् 'इगुपध–' इत्यादिना कप्रत्यये सुडागमोऽनेन निपात्यते । षत्वं तु 'परिनिविभ्य –' इत्यनेन ॥—विकिरग्रहणमिति । 'विष्किरः शकुनौ विकिरो वा' इति वृत्तिग्रन्थे पाठः ॥ सूत्रपाठे तु विकिरग्रहणं नास्त्येवेति बोध्यम् ॥—तस्यापीति । विकिरशब्दस्यापीत्यर्थः ॥—कशेरेव कशेति ॥ कशधातोरेव कशशब्दो निष्पन्न इत्यर्थः ॥—धात्वन्तरेति । 'प्रतिकशः' इत्यत्र प्रतिर्गमेरुपसर्गो, न तु कशेः । 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव' इति न्यायादिति भावः ॥—अमन्त्रार्थमिति ॥ मन्त्रे तु 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इत्यनेनैव सिध्यतीति भावः ॥—मस्कर–॥ मस्करशब्दादिनिना मत्वर्थीयेनेष्टसिद्धौ मस्करिग्रहणं 'परिव्राजक एवायं प्रयोगो यथा स्यात्' इत्येवमर्थमित्याहुः ॥—कातीरमिति ॥ 'ईषदर्थे' इति कोः कादेशः ॥—पारस्कर इति ॥ 'पारं करोति' इति विग्रहः । 'कृञो हेतुताच्छील्य–' इति टः ॥—किष्किन्धेति । 'किमपि धत्ते' इति विग्रहे 'आतोऽनुपसर्गे कः' । टाप् निपातनात् किमो द्वित्वं पूर्वस्य मलोपः, सुट् षत्वं च । 'किं किं दधाति' इति विगृह्णतां मते तु वीप्सायां द्वित्वं सिद्धम् । अन्यत्र तु निपातनादेव ॥ वस्तुतस्तु रूढिशब्दा एते कथञ्चिद्व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्यः ॥—तद्बृहतोरिति । गणसूत्रमेतत् ॥—तादिति । 'तलोपश्च' इत्यत्रेति शेषः ॥—प्रायस्य । गणसूत्रमेतदपि । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्' इति स्मृतिः ॥—आकृतिगणोऽयमिति । तेन शतात्पराणि परश्शतानि कार्याणीत्यादि सिद्धम् ॥ इह 'सुप्सुपा' इति 'पञ्चमी' इति योगविभागाद्वा समासः । राजदन्तादित्वाच्छतशब्दस्य परनिपातः, पारस्करादित्वात्सुट् ॥ इति समासाश्रयविधयः समाप्ताः ॥

---

१ प्रायस्येति—निर्देशादकारान्तः पुलिङ्गस्तपोवाची प्रायःशब्दः । 'प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते' इति स्मृतेः । 'प्रायः पापम्' इत्यादिस्मृत्यन्तराच्च पापवाच्यपीति सर्वेष्टसिद्धिः ।

## तद्धितेष्वपत्याधिकारः।

**समर्थानां प्रथमाद्वा** ।४।१।८२। इदं पदत्रयमधिक्रियते। प्राग्दिश इति यावत्। सामर्थ्यं परिनिष्ठितत्वम्। कृतसंधिकार्यत्वमिति यावत्। **प्राग्दीव्यतोऽण्** ।४।१।८३। तेन दीव्यतीत्यतः प्रागणधिक्रियते। **अश्वपत्यादिभ्यश्च** ।४।१।८४। एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु। वक्ष्यमाणस्य ण्यस्यापवादः। **तद्धितेष्वचामादेः** ।७।२।११७। ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात्। **किति च** ।७।२।११८। किति तद्धिते च तथा। अश्वपतेरपत्यादि आश्वपतम्। गाणपतम्। गाणपत्यो मन्त्र इति तु प्रामादिकमेव। **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** ।४।१।८५। दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यादणोऽपवादः। दैत्यः। अदितेरादित्यस्य वा आदित्यः। प्राजापत्यः॥ * **यमाच्चेति काशिकायाम्** ॥ याम्यः ॥ * **पृथिव्या ञाञौ** ॥

अपवादसंगत्या तद्धितान्विवक्षुस्तदीयमधिकारसूत्रमाह—**समर्थानामि**ति। 'अन्यतरस्यांग्रहणानुवृत्तेः समासोऽपि' इति वक्ष्यमाणमूलग्रन्थेन समासापवादत्वं सूचितम्॥ विधेयानिर्देशादुत्तरत्र प्रकृतिविशेषाकाङ्क्षासत्त्वाच्च नायं स्वतन्त्रो विधिरित्याह—**अधिक्रियत** इति। 'पदत्रयम्' इत्यनेन प्रत्येकं स्वरितत्वप्रतिज्ञा सूचिता। तत्प्रयोजनं तु कस्यचिन्निवृत्तावप्यपरस्यानिवृत्तिः, तथा च 'प्राग्दिशः' इति सूत्रे—'समर्थानां प्रथमात्—' इति निवृत्तम्, 'वा' इति त्वनुवर्तत एव—इति वक्ष्यमाणमूलग्रन्थः सगच्छते॥—**प्राग्दिश इती**ति॥ तत उत्तरेषां प्रत्ययानां स्वार्थिकत्वेन 'समर्थानां प्रथमात्' इति पदयोः प्रयोजनं नेति भावः॥ ननु 'समर्थः पदविधिः' इति परिभाषया गतार्थत्वात् 'समर्थानाम्' इत्येतद्व्यर्थम्। न च पदविधित्वं नेति शङ्क्यम्। 'घकालतनेषु' इत्यलुग्विधानात् 'सुबन्तात्तद्धितोत्पत्तिः' इति सिद्धान्तस्य सकलसमतत्वादत आह—**सामर्थ्यमि**ति॥—**कृतसंधिकार्यत्वमि**ति। अस्य फलं तु 'तस्यापत्यम्' इति सूत्रे मूल एव स्फुटीभविष्यति। इह 'समर्थात्प्रथमाद्वा' इति वक्तुं युक्तम्॥—महोत्सर्गानाह—**प्राग्दीव्यत** इत्यादिना॥ सूत्रे 'दीव्यत' इत्येकदेशोऽनर्थकोऽप्यवधित्वेनोपात्तः 'प्राग्मीश्वरात्—' इतिवदित्येके॥ अन्ये त्वाहुः 'दीव्यत्' इति शत्रन्तम्। तेन देवनकर्ता अर्थ एवावधिरिति॥—**प्राग्दीव्यतीयेष्वि**ति॥ दीव्यतः प्राक् प्राग्दीव्यत्। 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभाव इति प्राञ्चः॥ 'प्राग्दीव्यतम्' इति तूचितम्। 'झयः' इति टच्प्रवृत्तेरिति केचित्। तन्न। 'झयः' इति टचः पाक्षिकत्वात्। अन्यथा 'उपसमिधमुपसमित्' इति तत्सूत्रस्थमूलोदाहरणस्यासंगत्यापत्तेः। न चात्र टचोऽभावे 'अव्ययानां भमात्रे' इति टिलोपे 'प्राग्दीव्यतीये' इति रूपं न स्यादिति शङ्क्यम्। अव्ययीभावस्याव्ययत्वे 'प्रयोजनं लुङ्मुखस्वरोपचारः' इति परिगणनात्। प्राग्दीव्यति भवः प्राग्दीव्यतीयः। 'वृद्धाच्छः'। त्यप् तु न शङ्कनीय एव। 'अमेहक्वतसित्रेभ्य एव' इति परिगणनात्। 'लुङ्मुखस्वर' इत्यादिपरिगणनया अनव्ययत्वाच्च॥—**वक्ष्यमाणस्ये**ति। 'पत्युत्तरपदाण्ण्यः' इति वक्ष्यमाणस्य॥—**तद्धितेष्व**—॥ अचां मध्ये आदिरजेवेति 'अचो ञ्णिति' इति सूत्रादच इत्यनुवर्तत इत्याशयेन व्याचष्टे—**अच** इति॥—**वृद्धिः स्यादि**ति। 'मृजेर्वृद्धिः' इत्यतोऽनुवर्तत इति भावः॥—**किति च**॥ 'वाहीकः' इत्याद्यर्थमपीदं सुगमव्याख्यानायात्रैवोपन्यस्तम्॥ 'अचामादेः' इति निर्दिष्टस्थानिकत्वादिक्भ्यात्र नोपतिष्ठत इत्याशयेनोदाहरति—**आश्वपतमित्यादि**॥—**प्रामादिकमेवे**ति। एतच्च हरदत्तग्रन्थे स्थितम्॥ यदि तु देवतार्थकाण्णन्ताच्चातुर्वर्ण्यादेराकृतिगणत्वात् ष्यञिति व्याख्यायते तदा निर्दुष्ट एवायं प्रयोगः॥ अश्वपति गणपति राष्ट्रपति कुलपति गृहपति पशुपति क्षेत्रपतीत्यश्वपत्यादिः॥—**दित्यदित्या**—॥ पतिशब्दस्योत्तरपदशब्देन बहुव्रीहिं कृत्वा पश्चाद् द्वन्द्वः कार्यो, न तु द्वन्द्वोत्तरं बहुव्रीहिरित्याह—**पत्युत्तरपदाच्चे**ति। 'पत्यन्तात्' इत्युच्यमाने बहुच्पूर्वादपि स्यादित्युत्तरपदग्रहणं कृतम्॥—**दैत्य** इति॥ ननु दितेर्देवताद्यर्थे ण्यः सावकाशः, 'इतश्चानिञः' इत्यपत्ये ढक् दैतेय इत्यादौ सावकाशः, तथा च दितेरपत्यमित्यत्रोभयप्रसङ्गे परत्वाड्ढक् स्यात्। मैवम्। 'ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धं' इति भाष्ये पूर्वविप्रतिषेधाश्रयणात्॥ अर्थविशेषे इति किम्। औष्ट्रपतम्। उष्ट्रपतिर्नाम पत्रम्। 'तस्येदम्'। 'पत्राध्वर्युपरिषदश्च' इत्यञ्। इह पूर्वविप्रतिषेधेन 'तस्येदम्' इत्यर्थे ण्यो न भवति। इदमित्यस्य सामान्यार्थत्वात्॥ कथं तर्हि 'दैतेयः' इति। अत्राहुः। 'कृदिकारात्—' इति ङीषन्तात् 'स्त्रीभ्यो ढक्'। ण्यस्तु न भवति। लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्। न च 'अन्तादिवच्च' इति पूर्वस्यान्तवद्भावेन स्यादेव ण्य इति भ्रमितव्यम्। दितिशब्दान् ङीपि कृते 'यस्येति च' इति लोपेन सवर्णदीर्घाभावादिति॥ आदित्यशब्दाण्ण्यप्रत्यये 'यस्य—' इति लोपे 'हलो यमां—' इति पाक्षिको यलोपः। न चाल्लोपस्य स्थानिवत्त्वम्, यलोपे 'न पदान्त—' इति तन्निषेधात्, 'पूर्वत्रासिद्धे न स्थानिवत्' इत्युक्तेश्च॥—**काशिकायामि**ति। भाष्ये तु न दृष्टमिति भावः॥ अणन्तात् स्वार्थिकेन ष्यञा प्रयोगः सूपपादः। स्त्रियां ङीष् न भवति, षितां ङीषोऽनित्यत्वात्॥ आञोः फलभेदज्ञापनस्य

१ समर्थानामिति—समर्थशब्दः शक्तपर्यायः, शक्तत्वं चार्थप्रतिपादकत्वम्। तच्च परिनिष्ठितस्यैव सम्भवति, नहि सु उत्थित इत्यस्य कल्पनयाप्यर्थवत्त्वमिति।

पार्थिवा । पार्थिवी ॥ * देवाद्यञञौ ॥ दैव्यम् । दैवम् ॥ * बहिषष्टिलोपो यञ्च ॥ बाह्यः ॥ * ईकक्च ॥ बाहीकः ॥ * स्थाम्नोऽकारः ॥ अश्वत्थामः । पृषोदरादित्वात्सस्य तः ॥ * भवार्थे तु लुग्वाच्यः ॥ अश्वत्थामा ॥ * लोम्नोऽपत्येषु बहुषु ॥ अकारः । बाह्वादीञोऽपवादः । उडुलोमाः । उडुलोमान् । बहुषु किम् । औडुलोमिः ॥ * गोरजादिप्रसङ्गे यत् ॥ गव्यम् । अजादिप्रसङ्गे किम् । गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् । ॥ उत्सादिभ्योऽञ् ।४।१।८६। औत्सः ॥ * अग्निकलिभ्यां ढक् वक्तव्यः ॥ अग्नेरपत्यादि आग्नेयम् । कालेयम् ॥

॥ इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ॥

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।४।१।८७। धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः । पौंस्नः । वत्यर्थे न । स्त्रीपुंवच्चेति ज्ञापकात् । स्त्रीवत् । पुंवत् । ॥ द्विगोर्लुगनपत्ये ।४।१।८८। द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् । पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चक-

---

स्त्रीलिङ्गमुदाहरति—पार्थिवा । पार्थिवीति ॥—बहिषः ॥ टिलोपवचनम् 'अव्ययानां भमात्रे' इत्यस्यानित्यतां ज्ञापयितुम् । तेन आरातीय इति सिद्धम् ॥—अश्वत्थाम इति । भाष्योदाहरणात्तदन्तविधि । न च बलवाचिनः स्थामशब्दस्यापत्येन योगासंभवाद्वचनारम्भसामर्थ्यात्तदन्तविधिः स्यादिति वाच्यम् । जाताद्यर्थे तत्संभवेन सामर्थ्योपक्षयात् । अश्वस्येव स्थाम यस्येति बहुव्रीहिः ॥—उडुलोमा इति । उडूनि नक्षत्राणीव लोमान्यस्येति विग्रहः । केवलस्यापत्येन योगासंभवात्तदन्तविधिस्ततोऽकारष्टिलोप ॥—गोरिति । न केवलमपत्य एवायं, किं तु प्राग्दीव्यतीयेषु सर्वेष्वर्थेष्विति ज्ञेयम् ॥—गव्यमिति । गवि भव गौर्देवता अस्य, गोरिदमित्यादिरर्थः ॥ केचित्तु भाष्ये सर्वत्रग्रहणात्प्राग्दीव्यतीयेभ्योऽन्यस्मिन्नर्थेऽप्ययं यत् । तेन गवा चरति गव्य इत्याद्यपि भवतीत्याहु ॥—गोरूप्यमित्यादि । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः', मयट्चा' इति रूप्यमयटौ ॥—उत्सादिभ्योऽञ् ॥ अणस्तदपवादानामिञादीना चायमपवादः ॥ इह 'बष्कयादसे' इति गणसूत्रम् । असे असमासे, पूर्वाचार्यसंज्ञेयम् । बाष्कयस्यापत्यादि बाष्केयः । असे किम् । गौबाष्कयिः ॥ 'असे' इति निषेधाल्लिङ्गादिह तदन्तविधिः, तेन धेनुशब्दस्येह पाठाद्धेनूना समूह आधेनवमिति सिद्धम् ॥ नन्वेवं धैनुकं गौधेनुकमित्यत्राञ् प्रवर्तेत, 'अचित्तहस्तिधेनोः—' इति सूत्रे धेनुशब्दग्रहणाद्धैनुकमिति सिद्धावपि गौधेनुक न सिध्येदिति चेत् ॥ न । 'धेनुरनञ् इकमुत्पादयति' इति विशेषवचनस्य भाष्ये स्थितत्वात् । ठक्, ठकमित्यर्थ ॥—अग्निकलिभ्यामिति । अय भाव । 'साऽस्य देवता' इत्यधिकारे 'अग्नेर्ढक्' इति सूत्र, 'दृष्ट साम' इत्यधिकारे 'कलेर्ढक्' इति वार्तिक चापनीय प्राग्दीव्यतीयेष्विदमेव पठनीयम् । तेनाग्नेरपत्यम्, अग्निना दृष्ट साम, अग्नेरिदम्, अग्नौ भवम्, अग्नेरागतमाग्नेयमिति सिध्यति । तथा कलेरपत्यमित्याद्यर्थे कालेयमपि सिध्यतीति ॥ एतेन 'यदकालयत्तत्कालेयस्य कालेयत्वम्' इति श्रुतावर्थान्तरेऽपि ढको दर्शनात् 'कलेर्ढक्' इति सूत्रमपार्थकमिति मीमांसकोक्तिः परास्ता । वार्तिके सूत्रत्वोक्तिरप्यवैयाकरणमीमांसकप्रतारणार्थेति दिक् ॥ इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ॥

स्त्रीपुंसाभ्याम्—॥ प्रागित्यनुवर्तते तदाह—प्रागर्थेष्विति ॥—पौंस्न इति । इह स्वादिषु—' इति पदत्वात्संयोगान्तलोपेन पुंस. सस्य निवृत्तावपि प्रत्ययसकार श्रूयत एव । अत एवाभ्यां परतो नञेव न विहित', पौंस्नमिति रूपासिद्धिप्रसङ्गात ॥ स्यादेतत् । उभाभ्यामपि प्रकृतोऽञेवास्तु, तत्संनियोगेन 'स्त्रीपुंसयोर्नुक्च' इति नुगेव विधीयताम् । न चैव 'स्त्रैणाः, पौंस्नाः' इति इत्यत्र 'यञञोश्च' इति लुक्प्रसङ्गः । स्त्रैणानां गण इत्यादौ 'संघाङ्कलक्षणेषु' इत्यण्प्रसङ्गश्च स्यादिति वाच्यम् । उभयत्रापि 'गोत्रे' इत्यनुवृत्ते , प्रवराध्यायप्रसिद्ध तत्र गोत्रम् । अन्यथा 'पौत्राः, दौहित्राः' इत्यत्राप्यञो लुक् स्याद् । एव च 'नञ्स्नञीकक्ख्युन्—' इति वार्तिके नञ्स्नञ्ग्रहण विना अजन्तत्वादेव ङीप् सिध्यतीत्यपरमप्यनुकूलमिति चेत् । अत्राहु । नुकि 'नस्तद्धिते' इति टिलोपः स्यात् । न चैव नुगानर्थक्यम् । टिलोपप्रवृत्त्यैव नुकः सार्थकत्वात् । यद्यपि स्त्रीशब्दे तस्य सार्थक्य नास्ति, 'यस्येति च' इत्यनेनापीकारलोपसंभवात् । तथापि 'स्त्रीदेवताऽस्य स्त्रायं हविः' इत्यत्रैव 'लोपात्परत्वाद्वृद्धिः स्यात्, नुकि तु टिलोप प्रवर्तते' इति स्त्रीशब्देऽपि नुकः सार्थक्यमस्तु । तस्मान्नञ्स्नञाविति यथान्यासमेव स्वीकर्तव्यमिति ॥ अन्ये तु 'स्त्रीपुंसयोर्नक्च' इत्यस्तु आगमे अकारो विवक्षितः । तस्य च 'यस्येति च' इति लोपे कृतेऽपि स्थानिवत्त्वाट्टिलोपो न भविष्यति । एवं 'टिड्ढाणञ्—' इति सूत्रेणैव ङीप्सिद्धौ नञ्स्नञोरुपसंख्यान मास्त्विति महदेव लाघवमित्याहुः ॥—वत्यर्थ इति । स्त्रीपुंसाभ्यां नञ्स्नञौ वत्यर्थे न प्रवर्तेते इति सामान्यापेक्षं ज्ञापकमिति भावः ॥ अत एवोदाहरति—स्त्रीवदिति 'आ च त्वात्' इति चकारो नञ्स्नञ्भ्यां त्वतलोः समावेशार्थ इति वक्ष्यति । तेन स्त्रैणं स्त्रीता पुंस्त्वं पुंस्तेति सिद्धम् ॥—द्विगोर्लुगनपत्ये ॥ द्विगोरिति षष्ठी, तदर्थश्च हेतुत्व, तच्च भाविनोऽप्यु-

---

१ लोम्नइति—अभिव्यक्तपदार्था ये इति न्यायेन संज्ञाभूतस्य न ग्रहणम् । अस्य चापत्यमात्रविषयत्वेऽपि साधारणप्रत्ययेषु पठनं 'स्थाम्नोऽकार' इत्यतोऽकारप्रत्ययाऽनुवृत्त्यनुरोधादिति भावः । २ द्विगोर्निमित्तमिति । न चैवं पञ्चकपालीति द्विगोः संस्कृतमित्यर्थे पाञ्चकपालमिति स्यादिति वाच्यम् । अनभिधानात्ततः प्रत्ययानुत्पत्तेः ।

पालः। द्विगोर्निमित्तस्येति किम्। पञ्चकपालस्येदं खण्डं पाञ्चकपालम्। अजादिः किम्। पञ्चगर्गरूप्यम्। अनपत्ये किम्। द्वयोर्मित्रयोरपत्यं द्वैमित्रिः। **गोत्रेऽलुगचि** ।४।१।८९। अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्या-लुक् स्यात्। गर्गाणां छात्राः। वृद्धाच्छः। **आपत्यस्य च तद्धितेऽनाति** ।६।४।१५१। हलः परस्यापत्यय-कारस्य लोपः स्यात्तद्धिते परे न त्वाकारे। गार्गीयाः। प्राग्दीव्यतीये किम्। गर्गेभ्यो हितं गर्गीयम्। अचि किम्। गर्गेभ्य आगतं गर्गरूप्यम्। **यूनि लुक्** ।४।१।९०। प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात्। ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः। वक्ष्यमाणः फिन्। ततो यून्यण्। ग्लौचुकायनः। तस्य छात्रोऽपि ग्लौचुकायनः। अणो लुकि वृद्धत्वाभावाच्छो न। **पैलादिभ्यश्च** ।२।४।५९। एभ्यो युवप्रत्ययस्य लुक्। पीलाया वेत्यण्। तस्मादणो द्व्यच इति फिञ्। तस्य लुक्। पैलः। पिता पुत्रश्च॥ *** तद्राजाच्चाणः**॥ द्व्यञ्मगधेत्यणन्तादाङ्ग-शब्दादणो द्व्यच इति फिञो लुक्। आङ्गः। पिता पुत्रश्च। **इञः प्राचाम्** ।२।४।६०। गोत्रे य इञ् तदन्ताद्युवप्र-त्ययस्य लुक् स्यात् तच्चेद्गोत्रं प्राचां भवति। पन्नागारस्यापत्यम्। अत इञ्। यञिञोश्चेति फक्। तस्य लुक्। पान्नागारिः पिता पुत्रश्च। प्राचां किम्। दाक्षिः पिता। दाक्षायणः पुत्रः। **न तौल्वलिभ्यः** ।२।४।६१। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात्। पूर्वेण प्राप्तः। तुल्वलः। तत इञि फक्। तौल्वलिः पिता। तौल्वलायनः पुत्रः। **फक्फिञोरन्यतरस्याम्** ।४।१।९१। यूनि लुगिति नित्यं लुकि प्राप्ते विकल्पार्थं सूत्रम्। कात्यायनस्य छात्राः कातीयाः। कात्यायनीयाः। यस्कस्यापत्यं यास्कः। शिवाद्यण्। तस्यापत्यं युवा यास्कायनिः। अणो द्व्यच इति फिञ्। तस्य छात्राः, यास्कीयाः। यास्कायनीयाः। **तस्यापत्यम्** ।४।१।९२। षष्ठ्यन्तात् कृतसन्धेः प्रथमादपत्येऽर्थे उक्ता

---

पपद्यते, बुद्ध्याध्यवसायादित्याशयेनाह—**द्विगोर्निमित्तमिति**॥—**अजादिरिति**। एतच्चोत्तरसूत्रात् 'अचि' इत्यपकर्षाल्ल-भ्यते, वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणेन वा॥ प्राग्दीव्यतीय किम्। पञ्चभ्यः कपालेभ्यो हितं पञ्चकपालीयम्॥ **गोत्रे लुगचि**॥ गोत्रे किम्। गोत्रार्थकप्रत्ययस्यैवालुग्यथा स्यात्। नेह। कुवलस्येदं कौवलं, बदरस्येदं बादरम्। कुवली-बदरीशब्दौ हि गौरादिङीषन्तौ ताभ्यां फलरूपे विकारे 'अनुदात्तादेश्च' इत्यञ्। तस्य 'फले लुक्' इति लुक्, तत इदमर्थे अजादिप्राग्दीव्यतीये विवक्षितेऽनेनालुङ्न भवतीति अवृद्धत्वाच्छो नेति भावः॥—**विवक्षित** इति। अचीति विषयसप्त-मी॥ परसप्तमीत्वे तु अवृद्धत्वाच्छस्याप्राप्तौ अणेव स्यादिति भावः॥—**गर्गाणामिति**। अपत्यबहुत्वविवक्षायां 'यञञो-श्च' इति लुक्, स चाजादिप्रत्यये चिकीर्षिते अनेन प्रतिषिद्ध इति गार्ग्यशब्दाच्छे कृते तस्य ईयादेशः॥ 'यस्येति च' इ-त्यकारलोपे यलोपार्थमाह—**आपत्यस्य चेति**। 'ढे लोपोऽकद्र्वाः' इत्यतो लोप इत्यनुवर्तते, 'सूर्यतिष्य–' इत्यतो य इति, 'हलस्तद्धितस्य' इत्यतो हल इति, च तदाह—**हलः परस्ये**त्यादि। आभीयत्वेऽप्यल्लोपो नासिद्धः, आरम्भसामर्थ्यात्। अत एवोपधाया इति नानुवर्तितमिति व्याचष्टे—**यकारस्येति**॥ आपत्यस्येति किम्। सांकाश्यकः काम्पिल्यकः। 'स-ङ्काशादिभ्यो ण्यः' ततो 'धन्वयोपधात्' इति वुञ्॥ तद्धिते इति किम्। गार्ग्यौ। गार्ग्ययोः। अनातीति किम्। गार्ग्याय-णः॥—**गर्गीयमिति**। 'तस्मै हितम्' इति च्छः॥—**यूनि लुक्**॥ प्राग्दीव्यतीय इति वर्तते, अचीति च, प्रत्ययाधि-काराच्च प्रत्यय इति लभ्यते तदाह—**प्राग्दीव्यतीयेऽजादौ प्रत्यय** इति॥ 'प्रत्ययस्य लुक्' इति सञ्ज्ञाकरणाल्लब्धो यः प्रत्ययः, स 'यूनि' इत्यनेन विशिष्यते। तथाच 'यूनि यः प्रत्ययस्तस्य लुक्' इत्यर्थस्तदाह—**युवप्रत्ययस्येति**॥—**वक्ष्यमाण** इति। 'प्राचामवृद्धात् फिन्बहुलम्' इति वक्ष्यमाणः॥ अजादौ किम्। ग्लौचुकायनरूप्यम्॥ प्राग्दीव्यतीये किम्। ग्लौचुकायनीयम्। 'तस्मै हितम्' इति छः॥ इह 'द्विगोर्लुगनपत्येऽचि' 'यूनि' 'गोत्रे न' इत्येव सूत्रयितव्यम्। त-थाच 'लुगलुग्ग्रहणं शक्यमकर्तुम्' इति मनोरमायां स्थितम्॥ तत्र 'फक्फिञोः–' इति सूत्रे 'यूनि' इत्यस्य मण्डूकप्लुति-राश्रयणीयेति क्लेशोऽयं लाघवानुरोधेन सोढव्य इति भावः॥—**पैलादिभ्यश्च**॥ 'ण्यक्षत्रियार्ष–' इत्यतो 'यूनि लुक्' इति वर्तते तदाह—**युवप्रत्ययस्य लुगिति**॥—**पीलाया वे**त्यादि। अपत्येऽप्यणि विहिते गोत्रापत्येऽप्यणेव 'एको गोत्रे' इति वक्ष्यमाणत्वात्। ततोऽणन्तात्पैलशब्दादपत्येऽपि विधीयमानः फिञ् युवापत्ये पर्यवस्यति। तस्य च फिञोऽनेन लुगित्य-र्थः॥ एवं च पीलाया अपत्ये गोत्रापत्ये युवापत्ये चावैरूप्येण पैलशब्दः प्रयुज्यत इत्याह—**पैलः पिता पुत्रश्चेति**। पै-लादिषु ये इञन्ताः शालङ्किसात्यकिऔदमेयिपैङ्गलिप्रभृतयस्तेभ्यः 'इञः प्राचाम्' इति लुकि सिद्धे अप्राचामर्थः पाठ इति ज्ञेयम्॥—**तद्राजाच्चाणः**॥—**गणसूत्रमिदम्**। तद्राजसंज्ञकात्परस्य युवप्रत्ययस्य लुगित्यर्थः॥—**तच्चेद्गोत्रं प्रा-चां भवतीति**। प्राचांग्रहणं गोत्रविशेषणं, न तु 'प्राचामवृद्धात्' इत्यादिवद्विकल्पार्थमित्यत्र व्याख्यानं शरणम्॥—**दाक्षिः पितेत्यादि**। दक्षस्यापत्यं गोत्रापत्यं च पुमान्दाक्षिः। युवापत्यं तु दाक्षायण इति भावः॥—**न तौल्वलि–**॥ बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थावगतिरित्यभिप्रेत्याह—**तौल्वल्यादिभ्य** इति। दैवमित्रि। दैवयज्ञि। श्वाफ-ल्कि। आसुरि। निमेषि। पौष्करसादि। वैकर्णीत्यादितौल्वल्यादिः॥—**कात्यायनस्येति**। कतस्य गोत्रापत्यं कात्यः। ग-र्गादित्वाद्यञ्। ततो यूनि 'यञिञोश्च' इति फक्॥—**कातीया** इति। 'आपत्यस्य च' इति यलोपः॥—**तस्यापत्यम्**।

खः । माहाकुलः । माहाकुलीनः । महाकुलीनः । **दुष्कुलाड्ढक्** ।४।१।१४२। पूर्ववत्पक्षे खः । दौष्कुलेयः । दुष्कुलीनः । **स्वसुश्छः** ।४।१।१४३। स्वस्रीयः । **भ्रातुर्व्यच्च** ।४।१।१४४। चाच्छः । अणोऽपवादः । भ्रातृव्यः । भ्रात्रीयः । **व्यन्सपत्ने** ।४।१।१४५। भ्रातुर्व्यन् स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये । भ्रातृव्यः शत्रुः । पाप्मना भ्रातृव्येणेति तूपचारात् । **रेवत्यादिभ्यष्ठक्** ।४।१।१४६। **ठस्येकः** ।७।३।५०। अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः । **गोत्रस्त्रियाः कुत्सने ण च** ।४।१।१४७। गोत्रं या स्त्री तद्वाचकाच्छब्दात् णठकौ स्तः कुत्सायाम् । सामर्थ्याद्यूनि । गार्ग्या अपत्यं गार्गो गार्गिको वा जाल्मः । भस्याढे तद्धिते इति पुंवद्भावाद्गार्ग्यशब्दाण्णठकौ । यस्येति लोपः । आपत्यस्येति यलोपः । **वृद्धाट्ठक् सौवीरेषु बहुलम्** ।४।१।१४८। सुवीरदेशोद्भवाः सौवीराः । वृद्धात्सौवीरगोत्राद्यूनि बहुलं ठक् स्यात् कुत्सायाम् । भागवित्तेर्भागवित्तिकः । पक्षे फक् । भागवित्तायनः । **फेश्छ च** ।४।१।१४९। फिञन्तात्सौवीरगोत्रादपत्ये छः ठक् च कुत्सने गम्ये । यमुन्दस्यापत्यं यामुन्दायनिः । तिकादित्वात् फिञ् । तस्यापत्यं यामुन्दायनीयः । यामुन्दायनिकः । कुत्सने किम् । यामुन्दायनिः । औत्सर्गिकस्याणो ण्यक्षत्रियेति लुक् । सौवीरेति किम् । तैकायनिः । **फाण्टाहृतिमिमताभ्यां णफिञौ** ।४।१।१५०। सौवीरेषु । नेह यथासंख्यम् । अल्पाच्तरस्य परनिपातालिङ्गादिति वृत्तिकारः । भाष्ये तु यथासंख्यमेवेति स्थितम् । फाण्टाहृतः । फाण्टाहृतायनिः । मैमतः । मैमतायनिः । **कुर्वादिभ्यो ण्यः** ।४।१।१५१। अपत्ये । कौरव्या ब्राह्मणाः । वावदूक्याः ॥ **सम्राजः क्षत्रिये** ॥ साम्राज्यः । साम्राजोऽन्यः । **सेनान्तलक्षणकारिभ्यश्च** ।४।१।१५२। एभ्यो ण्यः । एति संज्ञायामिति सस्य षः । हारिषेण्यः । लाक्षण्यः । कारिः शिल्पी तस्मात् तान्तुवाय्यः । कौम्भकार्यः । नापित्यः । **उदीचामिञ्** ।४।१।१५३। हारिषेणिः । लाक्षणिः । तान्तुवायिः । कौम्भकारिः । नापितात्तु परत्वात् फिञेव । नापितायनिः ॥ * **तक्ष्णोऽण उपसंख्यानम्** ॥ ताक्ष्णः । पक्षे ताक्षण्यः । **तिकादिभ्यः फिञ्** ।४।१।१५४। तैकायनिः । **कौशल्यकार्मार्याभ्यां च** ।४।१।१५५। अपत्ये फिञ् । इञोऽपवादः ॥ * **परमप्रकृतेरेवायमिष्यते** ॥ प्रत्ययसंनियोगेन प्रकृतिरूपं निपात्यते ।

वेति भाव ॥—**व्यन्स्यादि**ति । भ्रातुरपत्य यदि शत्रु । तदा भ्रातशब्दाद् व्यन्नेव स्यात् । न तु व्यच्छौ इत्यर्थः ॥ —**समुदायेने**ति । तद्घटितप्रत्ययेन शत्रुरूपेऽपत्ये वा वाच्य इत्यर्थः ॥ यत्तु वृत्तिकृतोक्तम् 'अपत्यार्थोऽत्र नास्त्येव' इति । तदुपेक्ष्यम् । भाष्यविरोधादिति मनसि निधायाह—**पाप्मने**ति । श्रुतिगतभ्रातृव्यशब्दस्य गतिं वदति—**उपचारादि**ति ॥ 'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम्' इत्यमर. । न हि पापं भ्रातुरपत्यं भवतीत्यतो भाक्त एवायं प्रयोग इति भावः ॥—**रेवत्या**—॥ रेवती अश्वपाली मणिपाली द्वारपालीत्यादि ॥—**ठस्येकः** ॥ 'अङ्गस्य' इत्यनुवर्तनादाह—**अङ्गात्परस्ये**ति । 'अङ्गात्' इति ठकारविशेषणादठचष्ठकारस्य न भवति । कर्मठः ॥—**गोत्रस्त्रियाः**—॥ णित्त्व तु 'ग्लुचुकायन्या अपत्य ग्लौचुकायनो जाल्म.' इत्यत्र फिञन्ताण्णे वृद्ध्यर्थमिति बोध्यम् ॥—**सामर्थ्याद्यूनी**ति । 'गोत्रादपरो गोत्रप्रत्ययो न' इत्युक्तत्वादिति भाव. ॥—**गार्ग्या अपत्यमि**ति । पितुरसविज्ञाने मात्रा व्यपदेशात् कुत्सा ॥ गोत्रेति किम् । कारिकेयो जाल्मः ॥ स्त्रिया किम् । औपगवस्यापत्यम् औपगविर्जाल्म. ॥ कुत्सनेति किम् । गार्गेयो माणवकः ॥—**फाण्टाहृति**—॥ 'कुत्सने' इति निवृत्तम् । वृत्तिमते णित्त्वस्य फलमस्तीति ध्वनयन्नुदाहरति—**मैमत** इति । न च भाष्यमतेऽपि 'फाण्टाहृताभार्य.' इत्यत्र 'वृद्धिनिमित्तस्य' इति पुंवद्भावनिवृत्तिर्णित्त्वफलमस्तीति वाच्यम् । 'अस्त्रियाम्' इति युवसंज्ञानिषेधाद्गोत्रसंज्ञासद्भावात 'एको गोत्रे' इति नियमादिञन्तात्फाण्टाहृतिशब्दादन्यस्यापत्यप्रत्ययस्याभावात्फाण्टाहृताशब्दस्यैवासत्त्वादिति भावः ॥—**कुर्वादिभ्यो**—॥ 'सौवीरेषु' इत्यपि निवृत्तम् ॥—**कौरव्या ब्राह्मणा** इति । यत्तु 'कुरुनादिभ्यो ण्यः' इति वक्ष्यति । तस्य तद्राजत्वाद्बहुषु लुकि 'कुरवः क्षत्रियाः' इति भवति, न तु 'कौरव्या.' इति भावः ॥—**वावदूक्य** इति । वदेर्यङन्तादूकप्रत्यय । स चात्रैव गणे निपातनादित्याहु. ॥ कुरु, गर्ग, वावदूक ॥—**सम्राजःक्षत्रिये** । सम्राट्शब्दाद् ण्य इत्यर्थः ॥ **वामरथ्यस्य कण्वादिवत्स्वरवर्जम्** । यञन्तस्य कण्वशब्दस्य यत्कार्यं तत् ण्यप्रत्ययान्तस्य वामरथ्यशब्दस्य स्यात्, आद्युदात्त विनेत्यर्थः ॥ बहुत्वे 'यञञोश्च' इति लुक् ॥ वामरथाश्छात्राः । 'कण्वादिभ्यो गोत्रे' इति छापवादोऽण् ॥ वामरथी । वामरथ्यायनी स्त्री । 'यञश्च,' 'प्राचां ष्फ तद्धित.' इति ङीप्ष्फौ ॥ वामरथानि । सघाङ्कलक्षणानि 'सघाङ्कलक्षणेषु' इति छापवादोऽण । सत्यकार, वलभीकार, वृद्धिकारेत्यादि ॥ —**हारिषेण्य** इति ॥ 'एतिसंज्ञायाम्—' इति षत्वस्यासिद्धत्वात्सेनान्तोऽयम् ॥—**ताक्ष्ण** इति ॥ उदीचामिञोऽपवादोऽयमण् । अस्मादुपसंख्यानाच्छिवादिषु तक्षन्शब्दपाठोऽनार्ष इति गम्यते ॥ वृत्तिकारस्तु तक्षन्शब्दं शिवादिषु पठित्वा 'कारिलक्षणमुदीचामिञमयमण् बाधते ण्यस्य तु बाधो नेष्यते' इत्याह ॥ तदनुरोधेनास्माभिरपि तत्र तथैव व्याख्यातम् । फले विशेषाभावात् ॥—**कौशल्य**—॥—**परमप्रकृतेरेवायमि**ति । यदि तु 'वृद्धेत्कोसला' इति ञ्यङन्तात्कोशलशब्दात्

**कुशलस्यापत्यं कौशल्यायनिः । कर्मारस्यापत्यं कार्मार्यायणिः ॥ * छागवृषयोरपि ॥ छाग्यायनिः वार्ष्यायणिः । अणो द्व्यचः ।४।१।१५६। अपत्ये फिञ् । इञोऽपवादः । कार्त्रायणिः । अण इति किम् । दाक्षायणः । द्व्यचः किम् । औपगविः ॥ * त्यदादीनां फिञ् वा वाच्यः ॥ त्यादायनिः । त्यादः । उदीचां वृद्धादगोत्रात् ।४।१।१५७। आम्रगुप्तायनिः । प्राचां तु । आम्रगुप्तिः । वृद्धात्किम् । दाक्षिः । अगोत्रात्किम् । औपगविः । वाकिनादीनां कुक् च ।४।१।१५८। अपत्ये फिञ् वा । वाकिनस्यापत्यं वाकिनकायनिः । वाकिनिः । पुत्रान्तादन्यतरस्याम् ।४।१।१५९। अस्माद्वा फिञ् सिद्धस्तस्मिन्परे पुत्रान्तस्य वा कुक् विधीयते । गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः । प्राचामवृद्धात्फिन्बहुलम् ।४।१।१६०। ग्लुचुकायनिः । मनोर्जातावञ्यतौ षुक् च ।४।१।१६१। समुदायार्थो जातिः । मानुषः । मनुष्यः । जनपदशब्दात्क्षत्रियादञ् ।४।१।१६८। जनपदक्षत्रिययोर्वाचकादञ् स्यादपत्ये । दाण्डिनायनेति सूत्रे निपातनाट्टिलोपः । ऐक्ष्वाकः । ऐक्ष्वाकौ । क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् । तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् । पञ्चालानां राजा पाञ्चालः ॥ * पूरोरण् वक्तव्यः ॥ पौरवः ॥ * पाण्डोर्ड्यण् ॥ पाण्ड्यः । साल्वेयगान्धारिभ्यां च ।४।१।१६९। आभ्यामपत्येऽञ् । वृद्धेदिति ञ्यङोऽपवादः । साल्वेयः । गान्धारः । तस्य राजन्यप्येवम् । द्व्यञ्मगधकलिङ्गसूरमसादण् ।४।१।१७०। अञोऽपवादः । द्व्यच् आङ्गः । वाङ्गः । सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम् । वृद्धेत्कोसलाजादाञ्ञ्यङ् ।४।१।१७१। वृद्धात् । आम्बष्ठ्यः । सौवीर्यः ।**

---

कारिलक्षणण्यन्तात्कर्मारशब्दाच्चाय विधिः स्यात्, तदा यून्येव प्रसज्येतेति भाव ॥—**छागेति** । दगुशब्दस्याप्युपलक्षणमेतत् 'फिञ्प्रकरणे **दगुकोसलकर्मारच्छागवृषाणां युट् चादिष्टस्य**' इति वार्तिकात् । आदिष्टस्य आयन्नादेशस्येत्यर्थः । अन्यथा प्रतिपदोक्ते युटि कृते प्रत्ययादित्वाभावात् कौशल्यायनिरित्यादौ फस्यायन्नादेशो न स्यात्, युकि कृते तु 'दागव्यायनिः' इत्यत्र ओर्गुण', अन्यत्राल्लोपश्च न स्यादिति भावः ॥—**कार्त्रायणिरिति** ॥ कर्तुरपत्य कार्त्रस्तस्यापत्य तु कार्त्रायणिः ॥ अत्र व्याचक्षते—कर्तृशब्दः कुर्वादिपु पठ्यते । तथा च 'कार्त्र्यः' इति वर्धमानेनोदाहृतम् । तस्मादिह भर्तृहर्त्रोरुदाहार्यमिति ॥—**दाक्षिरिति** ॥ 'वा नामधेयस्य' इति वृद्धसंज्ञाभावपक्षे प्रत्युदाहरणमिदम् । पक्षान्तरे तु फिञ् भवत्येव । 'दाक्षायण्योऽश्विनीत्यादि ताराः' इत्यमरः ॥—**वाकिनादीनाम्**—॥ यदि हि वृद्धमगोत्र शब्दरूप, तत्रागमार्थमेवेदं वचनमन्येषां तूभयार्थम् ॥ 'उदीचाम्' इत्यनुवर्तनाद्विकल्पः फलित इत्याह—**फिञ्वा स्यादिति** ॥—**वाकिनकायनिरिति** । वचन वाक' सोऽस्यास्तीति वाकिनः । अत एव निपातनादिनन् । अगारे एधत इति गारेधः पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात्पररूपम् । गारेधकायनिः ॥ चर्मिवर्म्यादौ तूभयार्थम् । चर्मवर्मशब्दाभ्या व्रीह्यादित्वादिनिः । '**चर्मिवर्मिणोर्नलोपश्च**' इति गणसूत्रम् । चार्मिकायणि' । वार्मिकायणिः । कुकि कृते नकारस्यानन्त्यत्वान्नलोपाप्राप्तौ वचनम् । न च कुक्परादिरस्त्विति वाच्यम् । फस्यानादित्वादायनादेशाभावप्रसङ्गात् ॥—**वाकिनिरिति** । 'अत इञ्' । फिञभावे तत्संनियोगशिष्ट' कुगत्र न भवति । एव गारेधिः चार्मिण इत्याद्यप्यम् ॥—**पुत्रान्तात्**—॥ 'उदीचां वृद्धात्–' इत्यनुवर्तत इत्याशयेनाह—**वा फिञ् सिद्ध** इति । तेनैव सूत्रेण फिञि सिद्धे अनेन कुगेव वा विधीयत इति भावः ॥ —**प्राचामवृद्धात्**—॥ प्राचांग्रहण पूजार्थम् ॥ अवृद्धादिति किम् । राजदन्तिः । बहुलग्रहणान्नेह दाक्षिः ॥—**मानुषः, मनुष्य** इति ॥ जातिशब्दावेतौ ॥ **'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः'** ॥ णत्वविधानार्थमिदम् । अणः सिद्धत्वात् । अनधीतवेदत्वान्मूढत्वं विहिताननुष्ठानाच्च कुत्सितत्वम् ॥ इद च वचन 'ब्राह्मणमाणव–' इति णत्वनिपातनाल्लब्धमित्याहु' ॥—**जनपद**—॥—**जनपदक्षत्रियेति** । जनपदवाची सन् यः क्षत्रियवाचीत्यर्थः ॥ यद्यपि पञ्चालादयो जनपदे बहुवचनान्ताः, क्षत्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्योभयवाचित्वमक्षतमेवेति बोध्यम् ॥ जनपदशब्दात्किम् । द्रुह्योरपत्य द्रौह्यव. । केवलक्षत्रियवाच्ययम् ॥ क्षत्रियादिति किम् । ब्राह्मणस्य पञ्चालस्यापत्ये पाञ्चालिरिति वृत्तिकारादयः ॥ बाह्वादिष्वस्य पाठादिद प्रत्युदाहरण चिन्त्यमित्यन्ये ॥—**क्षत्रियसमानशब्दादिति** । समान' शब्दो यस्य जनपदस्य सोऽय समानशब्दो जनपदः । क्षत्रियेण समानशब्दः क्षत्रियसमानशब्दस्तस्मात् 'तस्य' इति षष्ठीसमर्थाद्राजनि वाच्ये अपत्यवत्प्रत्ययो भवतीत्यर्थः ॥—**पञ्चालानां राजेति** । इह 'अवृद्धादपि बहुवचनविषयात्' इति प्राप्तो वुञ् बाध्यते ॥ पूरोरिति । पूरुशब्दो न जनपदवाचीति प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थ वचनम् । जनपदवाचित्वे तु 'द्व्यञ्मगध–' इत्येव सिद्धम् ॥—**पाण्डोर्ड्यण्** । णित्करणं तु 'पाण्ड्याभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य–' इति पुंवद्भावप्रतिषेधार्थम् ॥ युधिष्ठिरपितृवाचिनो गुणवाचिनश्च पाण्डोर्नेह ग्रहणं, 'जनपदशब्दात्' इत्युक्ते तदधिपतिवाचिन एवोपस्थानात् ॥—**वृद्धेत्**—॥ तपरकरण किम् । कौमारः । कुमारी-

---

१ अन्वर्थेति—एतच्च वृत्त्यनुसारेण, भाष्ये त्वस्यास्तत्त्वं नोक्तम् इति बोध्यम् ।

इत् । आवन्त्यः । कौसल्यः । अजादस्यापत्यं आजाद्यः । **कुरुनादिभ्यो ण्यः** ।४।१।१७२। कौरव्यः । नैषध्यः । सनैषधस्यार्थपतेरित्यादौ तु शैषिकोऽण् । **साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्** ।४।१।१७३। साल्वो जनपदस्तदवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ् । अञोऽपवादः । औदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । राजन्यप्येवम् । **ते तद्राजाः** ।४।१।१७४। अञादय एतत्संज्ञाः स्युः । **तद्राजस्य बहुषु तेनैवास्त्रियाम्** ।२।४।६२। बहुष्वर्थेषु तद्राजस्य लुक् स्यात्तदर्थकृते बहुत्वे नतु स्त्रियाम् । इक्ष्वाकवः । पञ्चाला इत्यादि । कथं तर्हि कौरव्याः पशवः । तस्यामेव रघोः पाण्ड्या इति च । कौरव्ये पाण्ड्ये च साधव इति समाधेयम् । रघूणामन्वयं वक्ष्ये, निरुध्यमाना यदुभिः कथंचिदिति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया । **कम्बोजाल्लुक्** ।४।१।१७५। अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ ॥ * **कम्बोजादिभ्य इति वक्तव्यम्** ॥ चोलः । शकः । द्व्यज्लक्षणस्याणो लुक् । केरलः । यवनः । अञो लुक् । कम्बोजाः समरे इति पाठः सुगमः । दीर्घादिपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः । सिन्धुतक्षशिलादिभ्योऽणञावित्यण् । **स्त्रियामवन्तिकुन्तिकुरुभ्यश्च** ।४।१।१७६। तद्राजस्य लुक् स्यात् । अवन्ती । कुन्ती । कुरूः । **अतश्च** ।४।१।१७७। तद्राजस्याकारस्य स्त्रियां लुक् स्यात् । शूरसेनी । मद्री । कथं माद्रीसुताविति । ह्रस्व एव पाठ इति हरदत्तः । भर्गादित्वं वा कल्प्यम् । **न प्राच्यभर्गादि यौधेयादिभ्यः** ।४।१।१७८। एभ्यस्तद्राजस्य न लुक् । पाञ्चाली । वैदर्भी । आङ्गी । वाङ्गी । मागधी । एते प्राच्याः । भार्गी । कारूशी । कैकेयी । केकयीत्यत्र तु जन्यजनकभावलक्षणे पुंयोगे ङीष् । युधा । शुक्रा । आभ्यां द्व्यच इति ढक् । ततः स्वार्थे पर्श्वादियौधेयादिभ्योऽणञावित्यञ् । शार्ङ्गरवाद्यञ इति ङीन् । अतश्चेति लुकि तु ढगन्तत्वात् ङीप्युदात्तनिवृत्तिस्वरः स्यात् । यौधेयी । शौक्रेयी । **अणिञोरनार्षयोर्गुरूपोत्तमयो**

शब्दो जनपदक्षत्रियवचनः ॥—**कुरुना—**॥ नकार आदिर्येषां ते नादयः । कुरुशब्दाद् द्व्यज्लक्षणे अणि प्राप्ते, नादिभ्यस्त्वञि प्राप्ते च, वचनम् ॥—**उदुम्बरादय** इति ॥ 'उदुम्बरास्तिलखला मद्रकारा युगन्धराः । भुलिङ्गाः शरदण्डाश्च साल्वावयवसञ्ज्ञिकाः' इति वृत्तिः ॥—**औदुम्बरिरि**ति । तैलखलिः । माद्रकारिः । यौगन्धरिरित्यादीन्युदाहर्तव्यानि ॥—**ते तद्राजाः** ॥—**अञाद्य** इति ॥ तत्र प्राचीनास्तु तच्छब्देन न परामृश्यन्ते गोत्रयुवसंज्ञाकाण्डेन विच्छेदात् ॥ एतदर्थमेवेदं न तत्काण्डमध्ये कृतमाचार्येणेत्याहुः ॥ 'वस्तुतस्तु तद्राज' इत्यधिकृत्य 'जनपदशब्दात्क्षत्रियादञ्' इत्यादिसूत्राणामारम्भे गोत्रयुवसञ्ज्ञाकाण्डस्य मध्ये पाठाभावेऽपि न क्षतिरित्यन्ये ॥—**तद्राजस्य—**॥—**तदर्थे**ति । तद्राजप्रत्ययार्थेन कृत इत्यर्थः ॥ तेनैवेति किम् । प्रियपाञ्चालाः ॥—**साधव इती**ति । तथाच 'तत्र साधुः' इति यत्प्रत्ययस्य तद्राजत्वाभावाल्लुङ् नेति भावः ॥ रघुयदुशब्दयोर्जनपदवाचित्वाभावादाभ्यां परस्य तद्राजसंज्ञा नेति लुकोऽप्रवृत्त्या राघवाणां यादवैरित्येव भवितव्यमित्याशङ्क्याह—**रघुयदुशब्दयोरि**ति ॥—**लक्षणये**ति । ततश्चोक्तार्थत्वादपत्यप्रत्ययो नापन्न इति भावः ॥ —**कम्बोजाल्लुक्** ॥ 'तद्राजस्य बहुषु—' इति प्रकरण एवेदं न कृतं, द्व्येकार्थवाचकस्याञो लुगभावप्रसङ्गात् ॥ यद्यपि लुगधिकारे पुनर्लुग्विधानसामर्थ्याद् द्व्येकयोरप्यञो लुग्भविष्यत्येवेति वक्तुं शक्यम् । तथाप्यतद्राजस्यापि लुक्प्रसङ्गशङ्कापत्तेर्लाघवाभावाच्च तत्प्रकरणे न कृतमित्याहुः ॥ न चात्र अपत्ये लक्षणयैव 'कम्बोजः, कम्बोजौ' इत्यादिरूपसिद्धौ किमनेन सूत्रेणेति शङ्क्यम् । काम्बोज इत्यादिप्रयोगिकानिष्टवारणाय सूत्रस्यावश्यकत्वात् ॥—**सिन्धुतक्षे**ति । कम्बोजशब्दस्य सिन्ध्वादित्वादण् । तस्य तु तद्राजत्वाभावाल्लुगेति भावः ॥—**अवन्ती । कुन्ती**ति । 'इतरेत—' इति ञ्यङो लुकि 'इतो मनुष्यजाते' इति ङीष् । कुरूरिति । ण्यस्य लुक् 'ऊङुतः' इत्यूङ् ॥—**अतश्च** ॥ इह तद्राजेन अकारो विशेष्यते, न त्वकारेण तद्राजः । विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामप्यदन्ततद्राजत्वादनेनैव लुकि सिद्धे अवन्तिकुन्तिकुरुभ्यो लुग्विधायकस्य 'स्त्रियामवन्ति—' इति सूत्रस्य वैयर्थ्यापत्तेः । न चेष्टापत्तिः । कौसल्येति रूपासिद्धिप्रसङ्गादित्याकूतं—**तद्राजस्याकारस्ये**ति । सूत्रे तपरकरणं विस्पष्टार्थमिति भावः ॥—**शूरसेनी**ति । अञो लुकि 'जातेः' इति ङीष् । न त्वञ्लक्षणो ङीन्, 'अञो योऽकारस्तदन्तात्' इति व्याख्यानात् ॥—**कारूशी**ति ॥ कृञ उः करुः तं वष्टि करूशः । 'वश कान्तौ' मूलविभुजादित्वात्कः । 'ग्रहिज्या—' इति सम्प्रसारणम् । तस्यापत्यं राजा वा कारूशः । स्त्रियां कारूशी ॥ एतेन मूर्धन्योपधः पाठो निरस्तः ॥ यौधेयादिभ्यो लुक्प्रतिषेधमुदाहर्तुमाह—**युधा । शुक्रे**त्यादि ॥—'**अतश्च' इति लुकि त्वि**ति । 'आदयस्तद्राजाः' इति वक्ष्यमाणत्वादञोऽस्य तद्राजत्वमस्तीति भावः ॥ योपधत्वान् ङीषः प्राप्तिरित्याशयेनाह—**ङीपी**ति ॥—**उदात्तनिवृत्तिस्वर** इति । 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीबुदात्तः स्यादित्यर्थः सिद्धान्ते त्वञो लुगभावात् ङीन्याद्युदात्तत्वमिति ज्ञेयम् ॥ स्यादेतत् । 'अतश्च—' इति सूत्रेण विधीयमानो लुक् चातुरर्थिका-

१ तदर्थेति—तद्राजान्तमात्रार्थाश्रितमिति यावत् । तेनाङ्गचैत्रमैत्रा इत्यत्र न, तत्र चैत्रादावपि बहुत्वस्यान्वयेन तदर्थमात्रार्थाश्रितत्वाभावात् ।

कुशलस्यापत्यं कौशल्यायनिः । कर्मारस्यापत्यं कार्मार्यायणिः ॥ * छागवृषयोरपि ॥ छाग्यायनिः वार्ष्यायणिः । ॥ अणो द्व्यचः ।४।१।१५६। अपत्ये फिञ् । इञोऽपवादः । कार्त्रायणिः । अण इति किम् । दाक्षायणः । द्व्यचः किम् । औपगविः ॥ * त्यदादीनां फिञ् वा वाच्यः ॥ त्यादायनिः । त्यादः । ॥ उदीचां वृद्धादगोत्रात् ।४।१।१५७। आम्रगुप्तायनिः । प्राचां तु । आम्रगुप्तिः । वृद्धात्किम् । दाक्षिः । अगोत्रात्किम् । औपगविः । ॥ वाकिनादीनां कुक् च ।४।१।१५८। अपत्ये फिञ् वा । वाकिनस्यापत्यं वाकिनकायनिः । वाकिनिः । ॥ पुत्रान्तादन्यतरस्याम् ।४।१।१५९। अस्माद्वा फिञ् सिद्धस्तस्मिन्परे पुत्रान्तस्य वा कुक् विधीयते । गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः । प्राचामवृद्धात्फिन्बहुलम् ।४।१।१६०। ग्लुचुकायनिः । ॥ मनोर्जातावञ्यतौ षुक् च ।४।१।१६१। समुदायार्थो जातिः । मानुषः । मनुष्यः । ॥ जनपदशब्दात्क्षत्रियादञ् ।४।१।१६८। जनपदक्षत्रिययोर्वाचकादञ् स्यादपत्ये । दाण्डिनायनेति सूत्रे निपातनाट्टिलोपः । ऐक्ष्वाकः । ऐक्ष्वाकौ । क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् । तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् । पञ्चालानां राजा पाञ्चालः ॥ * पूरोरण् वक्तव्यः ॥ पौरवः ॥ * पाण्डोर्ड्यण् ॥ पाण्ड्यः । ॥ साल्वेयगान्धारिभ्यां च ।४।१।१६९। आभ्यामपत्येऽञ् । वृद्धेदिति ञ्यङोऽपवादः । साल्वेयः । गान्धारः । तस्य राजन्यप्येवम् । ॥ द्व्यञ्मगधकलिङ्गसूरमसादण् ।४।१।१७०। अञोऽपवादः । द्व्यच् आङ्गः । वाङ्गः । सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम् । ॥ वृद्धेत्कोसलाजादाञ्ञ्यङ् ।४।१।१७१। वृद्धात् । आम्बष्ठ्यः । सौवीर्यः ।

कारिलक्षणण्यन्तात्कर्मारशब्दाद्याय विधिः स्यात्, तदा यून्येव प्रसज्येतेति भावः ॥—छागेति । दगुशब्दस्याप्युपलक्षणमेतत् 'फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् चादिष्टस्य' इति वार्तिकात् । आदिष्टस्य आयन्नादेशस्येत्यर्थः। अन्यथा प्रतिपदोक्ते युटि कृते प्रत्ययादित्वाभावात् कौशल्यायनिरित्यादौ फस्यायन्नादेशो न स्यात्, युकि कृते तु 'दागव्यायनिः' इत्यत्र ओर्गुणः, अन्यत्राल्लोपश्च न स्यादिति भावः ॥—कार्त्रायणिरिति ॥ कर्तुरपत्यं कार्त्रस्तस्यापत्यं तु कार्त्रायणिः ॥ अत्र व्याचक्षते—कर्तृशब्दः कुर्वादिषु पठ्यते । तथा च 'कार्त्र्यः' इति वर्धमानेनोदाहृतम् । तस्मादिह भर्तृहर्त्रीषुदाहार्यमिति ॥—दाक्षिरिति ॥ 'वा नामधेयस्य' इति वृद्धसंज्ञाभावपक्षे प्रत्युदाहरणमिदम् । पक्षान्तरे तु फिञ् भवत्येव । 'दाक्षायण्योऽश्विनीत्यादि ताराः' इत्यमरः ॥—वाकिनादीनाम्—॥ यदि हि वृद्धमगोत्रं शब्दरूपं, तत्रागमार्थमेवेदं वचनमन्येषां तूभयार्थम् ॥ 'उदीचाम्' इत्यनुवर्तनाद्विकल्पः फलित इत्याह—फिञ्वा स्यादिति ॥—वाकिनकायनिरिति । वचन वाकः सोऽस्यास्तीति वाकिनः । अत एव निपातनादिनन् । अगारे एधत इति गारेधः पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात्पररूपम् । गारेधकायनिः ॥ चर्मिवर्म्यादौ तूभयार्थम् । चर्मवर्मशब्दाभ्यां व्रीह्यादित्वादिनिः । 'चर्मिवर्मिणोर्नलोपश्च' इति गणसूत्रम् । चार्मिकायणि । वार्मिकायणिः । कुकि कृते नकारस्यानन्त्यत्वान्नलोपाप्राप्तौ वचनम् । न च कुक्परादिरस्त्विति वाच्यम् । फस्यानादित्वादायनादेशाभावप्रसङ्गात् ॥—वाकिनिरिति । 'अत इञ्' । फिञभावे तत्संनियोगशिष्टः कुगत्र न भवति । एवं गारेधिः चार्मिण इत्याद्यूह्यम् ॥—पुत्रान्तात्—॥ 'उदीचां वृद्धात्—' इत्यनुवर्तेत इत्याशयेनाह—वा फिञ् सिद्ध इति । तेनैव सूत्रेण फिञि सिद्धे अनेन कुगेव वा विधीयत इति भावः ॥—प्राचामवृद्धात्—॥ प्राचांग्रहणं पूजार्थम् ॥ अवृद्धादिति किम् । राजदन्तिः । बहुलग्रहणान्नेह दाक्षिः ॥—मानुषः, मनुष्य इति ॥ जातिशब्दावेतौ ॥ 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः' ॥ णत्वविधानार्थमिदम् । अण् सिद्धत्वात् । अनधीतवेदत्वान्मूढत्वं विहितानुष्ठानाच्च कुत्सितत्वम् ॥ इदं च वचनं 'ब्राह्मणमाणव–' इति णत्वनिपातनाल्लभ्यमित्याहुः ॥—जनपद—॥—जनपदक्षत्रियेति । जनपदवाची सन् यः क्षत्रियवाचीत्यर्थः ॥ यद्यपि पञ्चालादयो जनपदे बहुवचनान्ताः, क्षत्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्योभयवाचित्वमक्षतमेवेति बोध्यम् ॥ जनपदशब्दात्किम् । द्रुह्योरपत्यं द्रौह्यवः । केवलक्षत्रियवाच्ययम् ॥ क्षत्रियादिति किम् । ब्राह्मणस्य पञ्चालस्यापत्ये पाञ्चालिरिति वृत्तिकारादयः ॥ बाह्वादिष्वस्य पाठादिदं प्रत्युदाहरणं चिन्त्यमित्यन्ये ॥—क्षत्रियसमानशब्दादिति । समानः शब्दो यस्य जनपदस्य सोऽयं समानशब्दो जनपदः । क्षत्रियेण समानशब्दः क्षत्रियसमानशब्दस्तस्मात् 'तस्य' इति षष्ठीसमर्थाद्राजनि वाच्ये अपत्यवत्प्रत्ययो भवतीत्यर्थः ॥—पञ्चालानां राजेति । इह 'अवृद्धादपि बहुवचनविषयात्' इति प्राप्तो वुञ् बाध्यते ॥ पूरोरिति । पूरुशब्दो न जनपदवाचीति प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे तु 'द्व्यञ्मगध–' इत्येव सिद्धम् ॥—पाण्डोर्ड्यण् । णित्करणं तु 'पाण्ड्याभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य–' इति पुंवद्भावप्रतिषेधार्थम् ॥ युधिष्ठिरपितृवाचिनो गुणवाचिनश्च पाण्डोर्नेह ग्रहणं, 'जनपदशब्दात्' इत्युक्ते तदधिपतिवाचिन एवोपस्थानात् ॥—वृद्धेत्—॥ तपरकरणं किम् । कौमारः । कुमारी-

१ अन्वर्थेति—एतच्च वृत्त्यनुसारेण, भाष्ये त्वस्यास्तत्त्वं नोक्तम् इति बोध्यम् ।

इञ् । आवन्त्यः । कौसल्यः । अजादस्यापत्यं आजाद्यः । **कुरुनादिभ्यो ण्यः ।४।१।१७२।** कौरव्यः । नैषध्यः । सनैषधस्यार्थपतेरित्यादौ तु शैषिकोऽण् । **साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।४।१।१७३।** साल्वो जनपदस्तदवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ् । अञोऽपवादः । औदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । राजन्यप्येवम् । **ते तद्राजाः ।४।१।१७४।** अञादय एतत्संज्ञाः स्युः । **तद्राजस्य बहुषु तेनैवास्त्रियाम् ।२।४।६२।** बहुष्वर्थेषु तद्राजस्य लुक् स्यात्तदर्थकृते बहुत्वे नतु स्त्रियाम् । इक्ष्वाकवः । पञ्चाला इत्यादि । कथं तर्हि कौरव्याः पशवः । तस्यामेव रघोः पाण्ड्या इति च । कौरव्ये पाण्ड्ये च साधव इति समाधेयम् । रघूणामन्वयं वक्ष्ये, निरुध्यमाना यदुभिः कथंचिदिति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया । **कम्बोजाल्लुक् ।४।१।१७५।** अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ ॥ * **कम्बोजादिभ्य इति वक्तव्यम्** ॥ चोलः । शकः । द्व्यज्लक्षणस्याणो लुक् । केरलः । यवनः । अञो लुक् । कम्बोजाः समरे इति पाठः सुगमः । दीर्घादिपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः । सिन्धुतक्षशिलादिभ्योऽणञावित्यण् । **स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।४।१।१७६।** तद्राजस्य लुक् स्यात् । अवन्ती । कुन्ती । कुरूः । **अतश्च ।४।१।१७७।** तद्राजस्याकारस्य स्त्रियां लुक् स्यात् । शूरसेनी । मद्री । कथं माद्रीसुताविति । ह्रस्व एव पाठ इति हरदत्तः । भर्गादित्वं वा कल्प्यम् । **न प्राच्यभर्गादियौधेयादिभ्यः ।४।१।१७८।** एभ्यस्तद्राजस्य न लुक् । पाञ्चाली । वैदर्भी । आङ्गी । वाङ्गी । मागधी । एते प्राच्याः । भार्गी । कारूशी । कैकेयी । केकयीत्यत्र तु जन्यजनकभावलक्षणे पुंयोगे ङीष् । युधा । शुभ्रा । आभ्यां द्व्यच इति ढक् । ततः स्वार्थे पर्श्वादियौधेयादिभ्योऽणञावित्यञ् । शार्ङ्गरवाद्यञ इति ङीन् । अतश्चेति लुकि तु ढगन्तत्वात् ङीप्युदात्तनिवृत्तिस्वरः स्यात् । यौधेयी । शौभ्रेयी । **अणिञोरनार्षयोर्गुरूपोत्तमयो**

---

शब्दो जनपदक्षत्रियवचनः ॥—**कुरुना—**॥ नकार आदिर्येषां ते नादयः । कुरुशब्दाद् द्व्यज्लक्षणे अणि प्राप्ते, नादिभ्यस्त्वञि प्राप्ते च, वचनम् ॥—**उदुम्बरादय** इति ॥ 'उदुम्बरास्तिलखला मद्रकारा युगंधराः । भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिकाः' इति वृत्तिः ॥—**औदुम्बरिरि**ति । तैलखलि । माद्रकारि । यौगन्धरिरित्यादीन्युदाहर्तव्यानि ॥—**ते तद्राजाः** ॥—**अञादय** इति ॥ ततः प्राचीनास्तु तच्छब्देन न परामृश्यन्ते गोत्रयुवसंज्ञाकाण्डेन व्यवच्छेदात् ॥ एतदर्थमेवेदं न तत्काण्डमध्ये कृतमाचार्येणेत्याहुः ॥ 'वस्तुतस्तु तद्राज' इत्यधिकृत्य 'जनपदशब्दात्क्षत्रियादञ्' इत्यादिसूत्राणामारम्भे गोत्रयुवसंज्ञाकाण्डस्य मध्ये पाठाभावेऽपि न क्षतिरित्यन्ये ॥—**तद्राजस्य—**॥—**तदर्थे**ति । तद्राजप्रत्ययार्थेन कृत इत्यर्थः ॥ तेनैवेति किम् । प्रियपाञ्चालाः ॥—**साधव इती**ति । तथाच 'तत्र साधुः' इति यत्प्रत्ययस्य तद्राजत्वाभावाल्लुङ् नेति भावः ॥ रघुयदुशब्दयोर्जनपदवाचित्वाभावादाभ्यां परस्य तद्राजसंज्ञा नेति लुकोऽप्रवृत्त्या राघवाणां यादवैरित्येव भवितव्यमित्याशङ्क्याह—**रघुयदुशब्दयोरि**ति ॥—**लक्षणये**ति । तत्श्चोक्तार्थत्वादपत्यप्रत्ययो नापन्न इति भावः ॥ —**कम्बोजाल्लुक्** ॥ 'तद्राजस्य बहुषु–' इति प्रकरण एवेदं न कृतं, द्व्येकार्थवाचकस्याञो लुगभावप्रसङ्गात् ॥ यद्यपि लुगधिकारे पुनर्लुग्विधानसामर्थ्याद् द्व्येकयोरप्यञो लुग्भविष्यत्येवेति वक्तुं शक्यम् । तथाप्यतद्राजस्यापि लुक्प्रसङ्गशङ्कापत्तेर्लाघवाभावाच्च तत्प्रकरणे न कृतमित्याहुः ॥ न चात्र अपत्ये लक्षणयैव 'कम्बोजः, कम्बोजौ' इत्यादिरूपसिद्धौ किमनेन सूत्रेणेति शङ्क्यम् । काम्बोज इत्यादिपाक्षिकानिष्टवारणाय सूत्रस्यावश्यकत्वात् ॥—**सिन्धुतक्षे**ति । कम्बोजशब्दस्य सिन्ध्वादित्वादण् । तस्य तु तद्राजत्वाभावाल्लुग्नेति भावः ॥—**अवन्ती । कुन्ती**ति । 'वृद्धेत–' इति ञ्यङो लुकि 'इतो मनुष्यजातेः' इति ङीष् । कुरूरिति । ण्यस्य लुक् 'ऊङुतः' इत्यूङ् ॥—**अतश्च** ॥ इह तद्राजेन अकारो विशेष्यते, न लकारेण तद्राजः । विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामप्यदन्ततद्राजत्वादनेनैव लुकि सिद्धे अवन्तिकुन्तिकुरुभ्यो लुग्विधायकस्य 'स्त्रियामवन्ति–' इति सूत्रस्य वैयर्थ्यापत्तेः । न चेष्टापत्तिः । कौसल्येति रूपासिद्धिप्रसङ्गादिति व्याचष्टे—**तद्राजस्याकारस्ये**ति । सूत्रे तपरकरणं विस्पष्टार्थमिति भावः ॥—**शूरसेनी**ति । अञो लुकि 'जातेः' इति ङीष् । न त्वञ्लक्षणो ङीन्, 'अञो योऽकारस्तदन्तात्' इति व्याख्यानात् ॥—**कारूशी**ति ॥ कृञ उः करुः न वष्टि करुशः । 'वश कान्तौ' मूलविभुजादित्वात्कः । 'ग्रहिज्या–' इति सम्प्रसारणम् । तस्यापत्यं राजा वा कारुशः । स्त्रिया कारुशी ॥ एतेन मूर्धन्योपधः पाठो निरस्तः ॥ यौधेयादिभ्यो लुक्प्रतिषेधमुदाहर्तुमाह—**युधा । शुभ्रेत्यादि** ॥—'**अतश्च' इति लुकि त्वि**ति । 'ञादयस्तद्राजाः' इति वक्ष्यमाणत्वादञोऽस्य तद्राजत्वमस्तीति भावः ॥ योपधत्वात् ङीप् प्राप्तिर्नेत्याशयेनाह—**ङीपी**ति ॥—**उदात्तनिवृत्तिस्वर** इति । 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीबुदात्तः स्यादित्यर्थः सिद्धान्ते त्वञो लुगभावात् ङीन्याद्युदात्तत्वमिति ज्ञेयम् ॥ स्यादेतत् । 'अतश्च–' इति सूत्रेण विधीयमानो लुक् चातुरर्थिका-

---

१ तदर्थेति—तद्राजान्तमात्रार्थाश्रितमिति यावत् । तेनाङ्गचैत्रमैत्रा इत्यत्र न, तत्र चैत्रादावपि बहुत्वस्यान्वयेन तदर्थमात्रार्थाश्रितत्वाभावात् ।

**ष्यङ् गोत्रे** ।४।१।७८। अ्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम् । गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात् । निर्दिश्यमानस्यादेशा भवन्तीत्यणिञोरेव । षङावितौ । यङश्चाप् । कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या । वाराह्या । अनार्षयोः किम् । वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोः किम् । औपगवी । जातिलक्षणो ङीष् । गोत्रे किम् । अहिच्छत्रे जाता आहिच्छत्री । **गोत्रावयवात्** ।४।१।७९। गोत्रावयवा गोत्राभिमताः कुलाख्यास्ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशः स्यात् । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणिक्या । **क्रौड्यादिभ्यश्च** ।४।१।८०। स्त्रियां ष्यङ् प्रत्ययः स्यात् । अगुरूपोत्तमार्थोऽनणिञर्थश्चारम्भः । क्रौड्या । व्याड्या ॥ * **सूत युवत्याम्** ॥ सूत्या ॥ * **भोज क्षत्रिये** ॥ भोज्या । **दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम्** ।४।१।८१। एभ्यश्चतुर्भ्यः ष्यङ् । अगोत्रार्थमिदं[1] गोत्रेऽपि परत्वात्प्रवर्तते । पक्षे इतो मनुष्येति ङीष् । दैवयज्ञ्या । दैवयज्ञी । इत्यादि ॥ इत्यपत्याधिकारः ॥

---

नामेव तद्राजानां भवतु सन्निधानात्, न तु 'ञ्यादयस्तद्राजाः' इति पाञ्चमिकानामपि तद्राजानामिति किमनेन यौधेयादिग्रहणेन । सत्यम् । 'व्याप्तिन्यायेन पाञ्चमिकस्यापीह ग्रहणम्' इति ज्ञापयितु यौधेयादिग्रहणम् । तेन पार्श्वाद्यणः स्त्रियां लुक् सिध्यति । तथा हि पर्शुः क्षत्रियो जनपदेन समानशब्दः । तस्यापत्यं स्त्री 'द्व्यञ्मगध' इत्यण्, तस्य 'अतश्च' इति लुक् । पुनः पार्श्वादिलक्षणः स्वार्थिकोऽण् । तस्यापि लुकि 'ऊङुतः' पर्शूः ॥ एवं रक्षसः क्षत्रियस्यापत्यं स्त्री रक्षाः । पूर्ववदण्द्वयस्यापि लुकि 'अत्वसन्तस्य–' इति दीर्घः ॥ उक्तं च वार्तिककृता 'पर्श्वादिभ्यो लुग्वक्तव्य । यौधेयादिप्रतिषेधो वा ज्ञापकः पार्श्वादिलुक्' इति ॥—**यौधेयी**त्यादि । युधाया शुक्राया अपत्यं स्त्रीति विग्रहः ॥—**अणिञोः**—॥ **उत्तम**मिति । अव्युत्पन्नप्रातिपदिकमिदम्, न तूच्छब्दात्तमप् । तेन 'किमेत्तिङव्ययघात्' इत्याम् न शङ्क्यः ॥—**गोत्रे यावि**ति । 'अपत्याधिकारादन्यत्र लौकिकं गोत्रम्' इति नेह शास्त्रीयं गृह्यते । तथा च 'अनार्षयोः' इति पर्युदासादेव सिद्धे गोत्रग्रहणमिह त्यक्तुं शक्यम् । न चात्र गोत्रग्रहणसामर्थ्यात् शास्त्रीयमेव गोत्रं गृह्यत इति वाच्यम् । दैवदत्त्या याज्ञदत्त्येत्यादीनामनन्तरापत्येऽपीष्यमाणत्वात् ॥ अत एवानुपदं वक्ष्यति 'कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या' इति ॥ इदं च कौस्तुभानुसारि व्याख्यानमत्रत्यमूलानुगुणमपि 'दैवयज्ञि' सूत्रस्थेन 'अगोत्रार्थमिदम्' इत्यादिमूलग्रन्थेन सह विरुध्यत इति तत्रैव स्फुटीभविष्यति ॥ यद्यपि स्त्रीप्रत्ययाः प्रकृताः । तथापि 'पत्युर्नो यज्ञसंयोगे' इति नकारस्येव ष्यङ आदेशत्वमेवोचितम् 'अणिञोः' इति षष्ठीस्वरसादित्यभिप्रेत्याह— **ष्यङादेशः स्यादि**ति । ष्यङः प्रत्ययत्वेऽपि लक्ष्यसिद्धिरप्रत्यूहेति मनोरमायां स्थितम् ॥ नन्वयं 'ङिच्च' इत्यन्तादेशं बाधित्वा परत्वात्सर्वादेशः स्यात् । 'ङिच्च' इत्यस्यानन्यार्थङित्त्वेष्वनङादिषु चरितार्थत्वात् । ष्यङोऽनुबन्धस्य 'यङश्चाप्' इति विशेषणार्थतया सप्रयोजनत्वादित्याशङ्क्याह— **निर्दिश्यमानस्ये**ति ॥—**षङावितावि**ति । अनुबन्धद्वयकरणं ञ्यङ इव ष्यङोऽपि 'यङश्चाप्' इत्यत्र सामान्यग्रहणार्थम् ॥ न च 'ष्यङः सम्प्रसारणम्' इत्यत्र विशेषणार्थं तयोरुपयोगोऽस्ति । अन्यथा पाश्यापुत्रः पाश्यापतिरित्यत्र 'पाशादिभ्यो यः' इति यप्रत्ययेऽपि सम्प्रसारणप्रसङ्ग इति वाच्यम् । 'यङः सम्प्रसारणम्' इत्येकानुबन्धेनापि तद्वारणात् ॥ लोल्यापतिरित्यत्र लकारप्रत्ययेन व्यवधानात्सम्प्रसारणाभाव । कौमुदगन्धीपुत्र इत्यत्र त्वेकादेशस्य पूर्वान्तत्वेन ग्रहणान्नास्ति व्यवधानमिति सम्प्रसारणं सिध्यति ॥—**कौमुदगन्ध्ये**ति । अणः ष्यङ् ॥—**वाराह्ये**ति । इञः ष्यङ् ॥ अणिञोः किम् । ऋतभागस्यापत्यमार्तभागी । बिदादित्वादञ् 'शार्ङ्गरवाद्यञः' इति ङीन् ॥ 'टिड्ढा–' इत्यादिना ङीबिति तु वृत्तिकारः ॥ 'अणिञोः' इत्यत्र लौकिकं गोत्रं गृह्यते । 'गोत्रं च चरणैः–' इत्यत्र तु पारिभाषिकमेव गृह्यते । तेन जातित्वाभावान्ङीनः प्राप्तिर्नास्तीति स्थितस्य गतिमाहुः ॥—**गोत्रावयवात्** ॥ अवयवशब्दोऽप्रधानवाची अवयवश्चासौ गोत्रं चेति कर्मधारयः, निपातनाद्गोत्रशब्दस्य पूर्वनिपातः ॥—**गोत्राभिमता** इति । गोत्रमित्येवमभिमताः । गोत्रवाचित्वेन देशविशेषे प्रसिद्धाः, न तु प्रवराध्याये पठिता इत्यर्थः ॥ प्रवराध्यायेऽपाठाच्चाप्राधान्यम् ॥—**कुलाख्या** इति । कुलमाख्यायते यैरिति कुलाख्याः पुणिकभुणिकमुखरप्रभृतयः । तैर्हि कुलमाख्यायते 'पुणिका वयं गोत्रेण' 'भुणिका वयं गोत्रेण' इति ॥—**तत** इति । गोत्रावयवादित्यर्थः ॥—**क्रौड्यादिभ्यश्च** ॥ पञ्चमीनिर्देशात्प्रत्ययत्वमेवेहाश्रीयत इत्याह—**ष्यङ् प्रत्यय** इति । क्रौडि व्याडि आपिशलि गौकक्ष्य इत्यादि । गौकक्ष्यशब्दो गर्गादियञन्तस्तदर्थमाह—**अनणिञन्तार्थश्चे**ति ॥—**सूते**ति । गणसूत्रम् । सूतशब्दः ष्यङं लभते युवत्यां वाच्यायामित्यर्थः ॥—**सूत्ये**ति । ष्यङि 'यङश्चाप्' । अन्यत्र तु क्रियाशब्दाट्टाप् । सूतजातिवाचिनस्तु ङीष् । सूती ॥—**भोजे**ति । इदमपि गणसूत्रम् । जातिलक्षणङीषोपवादः ष्यङ्, क्रियाशब्दात्तु टाबेव । भोजयतीति भोज्या ॥—**दैवयज्ञि**—॥—**चतुर्भ्य** इति । इञन्तेभ्य इति शेषः ॥ देवा यज्ञा यष्टव्या यस्य स देवयज्ञः । शुचिर्वृक्षो यस्य शुचिवृक्षः । सत्यमुग्रं यस्य सत्यमुग्रः । निपातनाद्विशेष्यस्य पूर्वनिपातः मुमागमश्च । काण्डेन विद्धः काण्डेविद्धः । 'कर्तृकरणे कृता' इति समासः । निपात-

---

१ अगोत्रार्थमिदमिति—अनन्तरापत्यार्थमित्यर्थः ।

## तद्धितेषु रक्ताद्यर्थकाः ।

**तेन रक्तं रागात्** ।४।२।१। रज्यतेऽनेनेति रागः । कषायेण रक्तं वस्त्रं काषायम् । माञ्जिष्ठम् । रागात्किम् । देवदत्तेन रक्तं वस्त्रम् । **लाक्षारोचनाट्ठक्** ।४।२।२। लाक्षिकः । रौचनिकः ॥ **शकलकर्दमाभ्यामुपसंख्यानम्** ॥ शाकलिकः । कार्दमिकः । आभ्यामणपीति वृत्तिकारः । शाकलः । कार्दमः ॥ * **नील्या अन्** ॥ नील्या रक्तं नीलम् ॥ * **पीतात्कन्** ॥ पीतकम् । **हरिद्रामहारजनाभ्यामञ्** । हारिद्रम् । माहारजनम् । **नक्षत्रेण युक्तः कालः** ।४।२।३। पुष्येण युक्तं पौषमहः । पौषी रात्रिः । **लुबविशेषे** ।४।२।४। पूर्वेण विहितस्य लुप्स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः । कथं तर्हि पुष्ययुक्ता पौर्णमासी पौषीति । विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्य इति निर्देशेन पौर्णमास्यामयं लुब् नेति ज्ञापितत्वात् । श्रवणशब्दात्तु अत एव लुप् युक्तवद्भावाभावश्च । अबाधकान्यपि निपातनानि । श्रावणी । **संज्ञायां श्रवणाश्वत्थाभ्याम्** ।४।२।५। विशेषार्थोऽयमारम्भः । श्रवणा रात्रिः । अश्वत्थो मुहूर्तः । संज्ञायां किम् । श्रावणी । आश्वत्थी । **द्वन्द्वाच्छः** ।४।२।६। नक्षत्रद्वन्द्वाद्युक्ते काले छः स्यात् विशेषे सत्यसति च । तिष्यपुनर्वसवीयमहः । राधानुराधीया रात्रिः । **दृष्टं साम** ।४।२।७। तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम ॥ * **अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः** ॥ उशनसा दृष्टमौशनम् । औशनसम् । **कलेर्ढक्** ।४।२।८। कलिना दृष्टं कालेयं साम । **वामदेवाड्ड्यड्ड्यौ** ।४।२।९। वामदेवेन दृष्टं साम वामदेव्यम् । सिद्धे यस्येतिलोपेन किमर्थं ययतौ डितौ । ग्रहणं

---

नात्काण्डशब्दस्य एकारः । पाठान्तरे कण्ठे विद्मस्य, कण्ठे वा विद्म कण्ठे विद्म 'अगृवंमस्तकात्' इत्यलुक् । एभ्य सर्वेभ्योऽपत्ये 'अत इञ्' ॥—**गोत्रेऽपि परत्वादि**ति । तथा चोभयत्र विभाषेति भाव ॥ अत्रेदमवधेयम् 'अणिञो' इति सूत्रे यदि शास्त्रीय गोत्र गृह्यते, तदा 'अगोत्रार्थमिदम्' इत्यादिग्रन्थः स्वरसतः सगच्छते । यदि तु लौकिकं गोत्रमेव तत्र गृह्यते तदा 'अणिञो'—' इति नित्ये प्राप्ते विकल्पार्थमिदमित्येव व्याख्यानमुचितमिति ॥ इत्यपत्याधिकारः ॥

**तेन रक्तम्**—॥ तृतीयान्तात्समर्थाद्यथाविहित प्रत्ययाः स्यु ॥—**रज्यते अनेनेती**ति । बाहुलकात्करणे घञ् ॥—**राग** इति । रञ्जकद्रव्यमित्यर्थ. । शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः ॥—**लाक्षारोचनात्**—॥ वृत्तिकृता तु वार्तिकस्थौ शकलकर्दमौ सूत्रे प्रक्षिप्तौ ॥ 'शकलं त्वचि खण्डे च रागवस्तुनि वल्कले' इति विश्व ॥—**वृत्तिकार** इति । भाष्ये तु नैतद् दृष्टमिति भावः । नील्येति । नीली ओषधिविशेष । अणपवादोऽयम् ॥—**नक्षत्रेण**—॥ नक्षत्रवाचकाः शब्दा वृत्तिविषये तद्युक्त चन्द्रमसमभिदधानाः प्रत्यय लभन्ते ॥—**पुष्येणे**ति । पुष्यसमीपस्थेन चन्द्रमसेत्यर्थः ॥ एव च 'पौषमहः' इत्यादि व्यवहारः सगच्छते । सर्वेषामप्यह्नां पुष्ययोगसत्त्वेऽपि तत्समीपस्थचन्द्रमसा योगस्यासार्वत्रिकत्वात ॥ नक्षत्रेणेति किम् । चन्द्रेण युक्ता रात्रि. ॥ काल किम् । पुष्येण युक्तश्चन्द्र ॥—**लुबवि**—॥ पूर्वसूत्रस्यानुवर्तनादिह 'नक्षत्रेण युक्तस्य कालस्याविशेषे गम्ये' इत्यर्थो लभ्यते तदाह—**षष्टिदण्डे**ति । 'अद्य पुष्यः' इत्युक्त्या 'न ह्यो, न श्व.' इति विशेषे गम्यमानेऽपि अहोरात्रात्मककालस्यावान्तरविशेषानवगमान्न भवत्येवेति भाव. ॥ 'अविशेषे' इति प्रसज्यप्रतिषेधाश्रयणात् 'पौषोऽहोरात्रः' इत्यत्र लुब् न भवति, षष्टिदण्डसमुदायरूपकालस्य प्रतीतावप्यवयवद्वयात्मकस्य विशेषस्य प्रतीतेरित्याशयेनाह—**विशेषश्चेन्ने**ति ॥—**अद्य पुष्य** इति । 'मूलेनावाहयेद्देवीं श्रवणेन' इत्यप्युदाहरण बोध्यम् ॥—**द्वन्द्वाच्छः** ॥ विशेषे उदाहरणमाह—**तिष्ये**त्यादि । अविशेषे तूदाहर्तव्यम 'अद्य राधानुराधीयम' इति । न चात्र 'लुबविशेषे' इति अण इव च्छस्यापि लुप्स्यादिति वाच्यम् । मध्येऽपवादन्यायरीत्या पूर्वोपस्थितस्याण एव तत्प्रवृत्तेः ॥ यत्तु लुप् परत्वाद्बाधते इति वृत्तिकृतोक्तम् । तन्न । द्वयोर्युगपत्प्राप्त्यभावात ॥ —**दृष्टं साम** ॥ तृतीयान्ताद दृष्टमित्यर्थेऽणादयः स्युर्यद्दृष्टं तच्चेत्साम ॥—**अस्मिन्नर्थे** इति ॥ तथा च श्लोकवार्तिकम् । 'दृष्टे सामनि जाते चाप्यण डिद् द्विर्वा विधीयते । तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते' ॥ जातेऽर्थे यो द्विरण स च वा डिदित्यन्वय ॥ शतभिषजि जातः शातभिषः शातभिषजः । इह हि 'प्राग्दीव्यत ' इति प्राप्तोऽण कालाट्ठञा बाधितः, स 'सन्धिवेलादि' सूत्रेण प्रतिप्रसूयत इत्ययं द्विरुक्तोऽण् ॥—**तीयादि**ति । तीयादीकक् स्वार्थे भवतीत्यर्थः ॥ द्वैतीयक , तार्तीयकः ॥—**न विद्याया** इति । विद्यावाचकात्तीयान्तादीकम भवतीत्यर्थ. । द्वितीया विद्या ॥—**गोत्रादङ्कवदि**ति । गोत्रप्रत्ययान्तादङ्के य. प्रत्ययः स दृष्टे सामन्यपि भवति ॥ औपगवेन दृष्टमौपगवकम् । इह 'गोत्रचरणाद्वुञ' इति वुञ ॥—**वामदेवात्**—॥—**ग्रहणं मातदर्थ** इत्यादि । अतदर्थे 'ययतोश्चातदर्थे' इति विहिते नञ्स्वरे नञाश्रितस्वरे ड्यड्ड्यतोर्ग्रहण मा भूदित्यर्थः ॥ 'यय-

---

१ रागादिति—एतस्याभावे कर्तृतृतीयान्तादपि प्रत्ययः स्यादिति भाव । २ अद्य पुष्य इति—अद्यतनमहोरात्रमित्यादाविव राहोः शिर इत्यादाविव कल्पितभेदमादायाधारत्वोपपत्तिर्बोध्या ।

माऽस्तदर्थं भूद्रामदेव्यस्य नञ्स्वरे ॥१॥ **परिवृतो रथः** ।४।२।१०। वस्त्रैः परिवृतो वास्त्रो रथः । रथः किम् । वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते । तेनेह न । छात्रैः परिवृतो रथः । **पाण्डुकम्बलादिनिः** ।४।२।११। पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली । पाण्डुकम्बलशब्दो राजास्तरणवर्णकम्बलस्य वाचकः । मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम् । **द्वैपवैयाघ्रादञ्** ।४।२।१२। द्वीपिनो विकारो द्वैपम् । तेन परिवृतो द्वैपो रथः । एवं वैयाघ्रः । **कौमारापूर्ववचने** ।४।२।१३। कौमारेत्यविभक्तिको निर्देशः । अपूर्वत्वे निपातनमिदम् । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । यद्वा । अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या । **तत्रोद्धृतममत्रेभ्यः** ।४।२।१४। शरावे उद्धृतः शाराव ओदनः । उद्धरतिरिहोद्धरणपूर्वके निधाने वर्तते । तेन सप्तमी । उद्धृत्य निहित इत्यर्थः । **स्थण्डिलाच्छयितरि व्रते** ।४।२।१५। तत्रेत्येव । समुदायेन चेद्व्रतं गम्यते । स्थण्डिले शेते स्थाण्डिलो भिक्षुः । **संस्कृतं भक्षाः** ।४।२।१६। सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रे संस्कृता भ्राष्ट्रा यवाः । अष्टसु कपालेषु संस्कृतोऽष्टाकपालः पुरोडाशः । **शूलोखाद्यत्** ।४।२।१७। अणोऽपवादः । शूले संस्कृतं शूल्यं मांसम् । उखा पात्रविशेषः । तस्यां संस्कृतम् उख्यम् । **दध्नष्ठक्** ।४।२।१८। दध्नि संस्कृतं दाधिकम् । **उदश्वितोऽन्यतरस्याम्** ।४।२।१९। ठक् स्यात्पक्षेऽण् । **इसुसुक्तान्तात्कः** ।७।३।५१। इस् उस् उक् त् एतदन्तात्परस्य ठस्य कः स्यात् । उदकेन श्वयति वर्धते इत्युदश्वित् । तत्र संस्कृतः औदश्वित्कः । औदश्वितः । इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह । आशिषा चरति आशिषिकः । उषा चरति औषिकः ॥ * **दोष उपसंख्यानम्** ॥ दोर्भ्यां चरति दौष्कः । **क्षीराड्ढञ्** ।४।२।२०। अत्र संस्कृतमित्येव संबध्यते न तु भक्षा इति । तेन यवाग्वामपि भवति । क्षैरेयी । **सास्मिन्पौर्णमासीति** ।४।२।२१। इति शब्दात्संज्ञायामिति लभ्यते । पौषी पौर्णमासी अस्मिन् पौषो मासः । **आग्रहायण्यश्वत्थाट्ठक्** ।४।२।२२। अग्रे हायनमस्या

---

तोश्च' इति सूत्रेण विधीयमान नञ. परस्य यत्पद तस्योत्तरपदस्यान्तोदात्तत्व वामदेव्यशब्दे मा भूत् । किं तु—अव्ययपूर्वपदस्वर एव यथा स्यादित्येतदर्थं डित्करणमिति फलितोऽर्थः । न च कृतेऽपि डित्त्वे 'ययतोः' इत्यस्य प्रवृत्तिः कुतो नेति शङ्क्यम् । 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषयोः सत्त्वात् ॥ इमे च परिभाषे इहैव डित्त्वेन ज्ञाप्येते ॥ तत्राद्यायाः प्रयोजन 'पूरणगुण–' इति सूत्रे तव्यग्रहणे तव्यतोऽग्रहणम् ॥ द्वितीयस्यास्तु अङ्ग्रहणे चङोऽग्रहणम् । 'श्वयतेरः' अङि परे इति शेषः । अश्वत् । चङि परे तु न, अशिश्वियत् ॥—**परिवृतो**—॥ तृतीयान्तात्परिवृत इत्यर्थेऽणादयः स्युर्यः परिवृत. स चेद्रथो भवति ॥ रथाच्छादनार्थं यद्वस्त्रकम्बलादिकं तत एव सर्ववेष्टन भवति, न तु च्छत्रादिभ्य.' इत्याशयेनाह—**समन्ताद्वेष्टित** इति । परिः सर्वतोभावे वर्तत इति भावः ॥—**कौमारा**—॥ तेनेति निवृत्तम् ॥ 'अपूर्व' इति भावप्रधानो निर्देश इत्याह—**अपूर्वत्वे** इति । अपूर्वत्वं तु स्त्रिया एवेष्यते, पुरुषस्तु अपूर्वभार्योऽस्तु वा मा वेत्यनाग्रहः ॥—**अपूर्वपतिमि**ति । न पूर्वः पतिर्यस्या इति बहुव्रीहिः ॥—**कौमारः पतिरि**ति । द्वितीयान्तात्कुमारीशब्दादुपयन्तरि प्रत्ययः ॥—**कौमारी**ति । इह कुमारीशब्दात्प्रथमान्तात्स्वार्थे प्रत्ययः, 'टिड्ढाण्–' इति ङीप् ॥—**तत्रोद्धृत**—॥'सास्मिन्पौर्णमासीति' सूत्रात्प्राक् 'तत्र' इत्यधिकार. ॥ पात्रवाचिभ्य सप्तम्यन्तेभ्य उद्धृतमित्यर्थे यथाविहितं प्रत्ययाः स्युः ॥—**शाराव** इति । भुक्तोच्छिष्ट इति वृत्तिकृत् । अवशिष्ट इति तदर्थः । 'उच्छिनष्टि, न सर्वं जुहोति' इति कल्पसूत्रव्यवहारात् ॥—**सप्तमी**ति । निधानक्रियापेक्षया अधिकरणत्वादिति भाव. ॥—**स्थण्डिलात्**—॥ व्रत शास्त्रेण विहितो नियमः, तस्मिन्समुदायेन गम्ये सप्तम्यन्ताद्यथाविहितः प्रत्ययो भवति शयितर्यर्थे ॥—**अष्टाकपाल** इति । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् ॥—**शूलोखा**—॥ 'संस्कृत भक्षाः' इत्यनुवर्तते ॥ कथम् 'उख्योऽग्निः' इति । न ह्यसौ भक्ष इति चेत् । अत्राहुः । दिगादित्वाद्भवार्थे यदिति ॥—**दध्नष्ठक्** ॥—**दध्नी**ति । संस्कारस्त्विह लवणादिना, दधि त्वधिकरणमात्रम् ॥ यस्तु 'प्राग्वहतेः' इत्यत्र 'संस्कृतम्' इति ठग्वक्ष्यते स तृतीयान्ताद्बोध्यः । तेन दध्ना संस्कृतमपि दाधिकमेव ॥—**इसुसुक्तान्तात्**—॥ 'तात्' इत्युक्तेऽप्यङ्गविशेषणेनैव तान्तादिति लब्धे अन्तग्रहणं प्रत्ययोपदेशकाले यस्तान्तस्तस्मात्परस्य ठस्य कादेशो यथा स्यादित्येवमर्थम् । तेन 'माथितिकः' इत्यत्र ठस्य इकादेशे 'यस्य' इति लोपे च कृते तान्तत्वेऽपि इकस्य कादेशो न भवतीति 'ठस्येकः' इति सूत्रे कैयटः ॥ सन्निपातपरिभाषयैव इकस्य कादेशो न स्यादित्यन्तग्रहण त्यक्तुं शक्यमित्यन्ये ॥ **उदश्विदि**ति । श्वयतेः क्विपि तुक् 'उदकस्योदः–' इत्युदादेशः । इहैव निपातनात्सम्प्रसारणाभावः ॥—**सास्मिन्**—॥ सेति प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे प्रत्ययः स्याद्य' प्रथमान्तार्थः स चेत्पौर्णमासी भवति ॥—**इतिशब्दादि**ति । स हि लौकिकीं विवक्षामनुसारयति ॥ वृत्तिकृता तु सूत्रे एव 'संज्ञायाम्' इति प्रक्षिप्तम् ॥—**पौर्णमासी**ति । पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञा-

---

१ समंताद्वेष्टित—इत्यादिरपपाठः, पुत्रैः परिवृत इति प्रयोगात्, तदेकान्तग्रहणं कर्तव्यमिति वार्तिकाच्च इति शेखरकाराः ।
२ संस्कृतमिति—भोजनादिरूपोपयोगफला क्रिया संस्कारः, नतु गुणाधानमेवेति बोध्यम् ।

इत्याग्रहायणी । प्रज्ञादेराकृतिगणत्वादण् । पूर्वपदात्संज्ञायामिति णत्वम् । आग्रहायणी पौर्णमासी अस्मिन् आग्रहा-
यणिको मासः । अश्वत्थेन युक्ता पौर्णमासी अश्वत्थः । निपातनात्पौर्णमास्यामपि लुप् । आश्वत्थिकः । **विभाषा
फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः** ।४।२।२३। एभ्यष्ठग्वा । पक्षेऽण् । फाल्गुनिकः । फाल्गुनो मासः । श्राव-
णिकः । श्रावणः । कार्तिकिकः । कार्तिकः । चैत्रिकः । चैत्रः । **साऽस्य देवता** ।४।२।२४। इन्द्रो देवताऽस्येति
ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या च । ऐन्द्रो मन्त्रः । आग्नेयो
वै ब्राह्मणो देवतयेति तु [1]शैषिकेऽर्थे सर्वत्राग्नीति ढक् । **कस्येत्** ।४।२।२५। [2]कशब्दस्य इदादेशः स्यात्प्रत्ययस-
न्नियोगेन । यस्येति लोपात्परत्वादादिवृद्धिः । को ब्रह्मा देवतास्य कायं हविः । श्रीर्देवतास्य श्रायम् । **शुक्राद्
घन्** ।४।२।२६। शुक्रियम् । **अपोनप्त्रपांनप्तृभ्यां घः** ।४।२।२७। अपोनप्त्रियम् । अपांनप्त्रियम् । अपोन-
पात् अपांनपाच्च देवता । प्रत्ययसन्नियोगेन तूक्तं रूपं निपात्यते । अतएवापोनपाते अपांनपातेऽनुब्रूहीति प्रैषः ।
**छ च** ।४।२।२८। योगविभागो यथासंख्यनिवृत्त्यर्थः । अपोनप्त्रीयम् । अपांनप्त्रीयम् ॥ **शतरुद्राद्घश्च** ॥
चाच्छः । शतं रुद्रा देवता अस्य शतरुद्रियम् । शतरुद्रीयम् । घच्छयोर्विधानसामर्थ्याद्द्विगोर्लुगनपत्ये इति न लुक् ।
**महेन्द्राद्घाणौ च** ।४।२।२९। चाच्छः । महेन्द्रियं हविः । माहेन्द्रम् । महेन्द्रीयम् । **सोमाट्ट्यण्** ।४।
२।३०। सौम्यम् । टित्वान्ङीप् । सौमी ऋक् । **वाय्वृतुपित्रुषसो यत्** ।४।२।३१। वायव्यम् । ऋतव्यम् ।
**रीङ् ऋतः** ।७।४।२७। अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात् । यस्येति च ।
पित्र्यम् । उषस्यम् । **द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च** ।४।२।३२।
चाद्यत् । द्यावापृथिवीयम् । द्यावापृथिव्यम् । शुनासीरीयम् । शुनासीर्यम् । **अग्नेर्ढक्** ।४।२।३३। आग्नेयम् ।
**कालेभ्यो भववत्** ।४।२।३४। मासिकम् । प्रावृषेण्यम् । **महाराजप्रोष्ठपदाट्ठञ्** ।४।२।३५। माहारा-
जिकम् । प्रौष्ठपदिकम् । **देवताद्वन्द्वे च** ।७।३।२१। अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात् ञिति णिति
किति च परे । आग्निमारुतम् । **नेन्द्रस्य परस्य** ।७।३।२२। परस्येन्द्रस्य वृद्धिर्न स्यात् । सौमेन्द्रः । परस्य
किम् । ऐन्द्राग्नः । **दीर्घाच्च वरुणस्य** ।७।३।२३। दीर्घात्परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणम् । दीर्घा-
त्किम् । आग्निवारुणीमनड्वाहीमालभेत ॥ * **तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम्** ॥ नावयज्ञिकः
कालः । पाकयज्ञिकः ॥ * **पूर्णमासादण् वक्तव्यः** ॥ पूर्णो मासोऽस्यां वर्तते इति पौर्णमासी तिथिः । * **पितृ-
व्यमातुलमातामहपितामहाः** ।४।२।३६। एते निपात्यन्ते ॥ * **पितुर्भ्रातरि व्यत्** [3] ॥ पितुर्भ्राता पितृव्यः ॥

दित्वात्स्वार्थिकोऽणिति हरदत्तादयः । 'तदस्मिन्वर्तते' इत्यधिकारे 'पूर्णमासादण् वक्तव्यः' इति वार्तिकं न कर्तव्यमिति तदा-
शय ॥—**सास्य**—॥ 'सति प्रकृते राजासवद्गम्—' इति पुनः साग्रहणं कृतमित्याहुः ॥ इहैव सूत्रे निपातनाद्देवशब्दात्स्वार्थे
तल् ॥—**मन्त्रस्तुत्ये**ति । मन्त्रेण स्तुत्या । 'एतिस्तुशास्' इत्यादिना क्यपि तुक् टाप् ॥—**आग्नेयो वै ब्राह्मण** इति ।
इहाग्न्युद्देशेन ब्राह्मणो न त्यज्यत इति कथमयं प्रयोग इति न शङ्क्यमिति भावः ॥—**परत्वादादिवृद्धिरि**ति ॥ इदं च
समाधानं श्रायमित्यत्रावश्यकमिति तेनैव परिहारसंभवादित्वविधानसामर्थ्यमिह नाश्रितम् ॥—**उक्तं रूपमि**ति ॥ 'नपात'
इत्यस्य 'नप्तृ' इति रूपमित्यर्थः ॥— **शतं रुद्रा** इति ॥ शतशब्दोऽनन्तवचनः ॥—**सौमी**ति ॥ 'हलस्तद्धितस्य' इति
यलोपः ॥—**रीङ् ऋतः** ॥ अदन्तवृत्तपरिभाषया 'अकृत्सार्व' इति दीर्घो न प्रवर्तत इति दीर्घग्रहणमित्याहुः ॥—**यस्येति चे**ति ।
पित्रीयतीत्यत्र रीङ्विधिः सावकाश इति भावः ॥—**उषस्यमि**ति । उषस्शब्दः स्त्रीलिङ्गो दिवो दुहितरं ब्रवीति ॥
—**द्यावापृ**—॥ अणण्ययोरपवादः ॥—**शुनासीरीयमि**ति । शुनश्च सीरश्चेति द्वन्द्वे 'देवताद्वन्द्वे च' इत्यानङ् ॥ शुनो
वायुः, सीर आदित्य इति वृत्तिकृत ॥ हरदत्तस्तु शुनासीरशब्द इन्द्रस्य गुणवाचीत्यन्ये मन्यन्त इत्याह ॥ तथा च **मन्त्रः**
'इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे' इति । मरुतो यस्य सन्तीति मरुत्वानिन्द्रः, मरुत्वतीयं मरुत्वत्यम् । अग्नीषोम्यम् । अ-
ग्नीषोमीयम् । 'ईदग्नेः सोमवरुणयोः' । वास्तुनः पतिः वास्तोष्पतिः । इहैव सूत्रे निपातनात्साधुः । 'वेश्मभूर्वास्तुरस्त्रियाम्' ।
वास्तोष्पतीयं वास्तोष्पत्यम् । गृहमेधीयं गृहमेध्यम् । गृहमेधशब्दोऽकारान्तः । तथाच आश्वलायनः 'मरुद्भ्यो गृहमेधेभ्यः' इति
॥—**कालेभ्यो**—॥ कालवाचिभ्यो ये प्रत्यया भवार्थे वक्ष्यन्ते ते 'सास्य देवता' इत्यस्मिन्नर्थेऽनेनातिदिश्यन्ते ॥ वत्करणं
सर्वसादृश्यार्थम् । तेन यस्माद्यो विहितस्तस्मात्स एव भवति नान्यः । तथैवोदाहरति—**मासिकं प्रावृषेण्यमि**ति ।

१ शैषिकेऽर्थे इति—अग्नेरयं भक्तः इत्यर्थे इति भावः । २ कशब्दस्येति—अत्रारूढस्यत्वात्र ग्रहणम्, एवं च कायानुब्रूही-
त्येव प्रैषः, कस्मा अनुब्रूहीति कल्पसूत्रोक्तं तु आर्षमिति प्राञ्चः । नवीनास्तु किमोऽप्यत्र तन्त्रेण निर्देशः, शब्दपरत्वेऽपि
किमः कादेशः, क्षिप इत्यादौ इयङुत् । किशब्दोऽपि प्रजापतिवाची, अतएव 'कस्मै देवाय हविषा विधेम' इति श्रुतौ
प्रजापतये इत्यर्थकं कस्मै इतीदं सङ्गच्छत इत्याहुः । ३ व्यत् इति—तित्प्रत्ययस्मिद्वेति बहुभिराचार्यैर्भाति शेखरः ।

* **मातुर्डुलच्** ॥ मातुर्भ्राता मातुलः ॥ * **मातृपितृभ्यां पितरि डामहच्** ॥ मातुः पिता मातामहः । पितुः पिता पितामहः ॥ * **मातरि षिच्च** ॥ मातामही । पितामही ॥ * **अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः** ॥ सकारपाठसामर्थ्यान्न षः । अविसोढम् । अविदूसम् । अविमरीसम् ॥ * **तिलान्निष्फलात्पिञ्जपेजौ** ॥ तिलपिञ्जः । तिलपेजः । वन्ध्यस्तिल इत्यर्थः ॥ * **पिञ्जश्छन्दसि डिच्च** ॥ तिल्पिञ्जः । **तस्य समूहः** ।४।२।३७। काकानां समूहः काकम् । बाकम् । **भिक्षादिभ्योऽण्** ।४।२।३८। भिक्षाणां समूहो भैक्षम् । गार्भिणीनां समूहो गार्भिणम् । इह भस्याढ इति पुंवद्भावे कृते । **इनण्यनपत्ये** ।६।४।१६४। अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् । तेन नस्तद्धित इति टिलोपो न । युवतीनां समूहो यौवनम् । शत्रन्तादनुदात्तादेरञ् यौवतम् । **गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्** ।४।२।३९। एभ्यः समूहे वुञ् स्यात् । लौकिकमिह गोत्रं तच्चापत्यमात्रम् । **युवोरनाकौ** ।७।१।१। यु वु एतयोरनुनासिकयोः क्रमादन अक एतावादेशौ स्तः । ग्लुचुकायनीनां समूहो ग्लौचुकायनकम् । औक्षकमित्यादि । आपत्यस्य चेति यलोपे प्राप्ते ॥ * **प्रकृत्याऽके राजन्यमनुष्ययुवानः** ॥ राजन्यकम् । मानुष्यकम् ॥ * **वृद्धाच्चेति वक्तव्यम्** ॥ वार्धकम् । **केदाराद्यञ्च** । ४।२।४०। चाद्वुञ् । कैदार्यम् । कैदारकम् ॥ * **गणिकाया यञिति वक्तव्यम्** ॥ गाणिक्यम् । **ठञ्कवचिनश्च** ।४।२।४१। चात्केदारादपि । कवचिनां समूहः कावचिकम् । कैदारिकम् । **ब्राह्मणमाणववाडवाद्यत्** ।४।२।४२। ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ॥ * **पृष्ठादुपसंख्यानम्** ॥ पृष्ठ्यम् । **ग्रामजनबन्धुभ्यस्तल्** ।४।२।४३। ग्रामता । जनता । बन्धुता ॥ * **गजसहायाभ्यां चेति वक्तव्यम्** ॥ गजता । सहायता ॥ * **अह्नः खः क्रतौ** ॥ अहीनः । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । क्रतौ किम् । आह्नः । इह खण्डिकादित्वादञ् । अह्नष्टखोरेवेति नियमाट्टिलोपो न ॥ * **पर्श्वा णस् वक्तव्यः** ॥ **सिति च** ।१।४।१६। सिति परे पूर्वं पदसंज्ञं

---

'कालाहृम्' । 'प्रावृष एण्य' ॥—**डामहजिति** ॥ एतच्च वृत्त्याद्यनुरोधेनोक्तम् ॥ भाष्ये तु आनडादेशो महच् प्रत्ययश्च निपात्यते । तेनावग्रहः सिध्यतीत्युक्तम् ॥—**सकारपाठेति** । अन्यथा प्रक्रियालाघवाय षमेव पठेदिति भावः । एतच्च मनोरमायां स्थितम् ॥ अन्ये तूक्तरीत्या 'अविसोढम्' इत्यत्र षत्वनिवारणेऽपि 'अविदूसम्' इत्यादौ स्यादेव षत्वम् ॥ तत्र हि ण्यन्तात्क्विपि 'अविदूः' इत्यादिरूपसिद्धये सकारपाठसामर्थ्यस्योपक्षीणत्वात् । तस्मात् 'अविसोढम्' इत्यादिभाष्यकृदुदाहरणं सकारपाठसामर्थ्यादिति व्याख्येयमित्याहुः ॥—**तस्य समूहः** ॥ इह 'अचित्ताद्ठक्,' 'अनुदात्तादेरञ्' 'गोत्रान्ताद्वुञ्' 'केदाराद्यञ्' इत्यादिना प्रतिपद यञादींश्च वक्ष्यति । तथा च चित्तवदाद्युदात्तमगोत्रान्त प्रतिपदोक्तप्रत्ययरहितमिहोदाहरणमित्याशयेनोदाहरति—**काकं वाकमिति** । एव वार्कम् । काकबकवृकशब्दा· 'प्राणिनां कुपूर्वाणाम्' इति फिट्सूत्रेणाद्युदात्त । प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे तेषामुदात्तः स्यादिति सूत्रार्थः । 'अथादिः प्राक् शकटे.' इत्यधिकारात् ॥ यत्तु वृत्तिन्यासयो. शौकमित्युदाहृतम् तदुपेक्ष्यम् । खण्डिकादिषु शुकशब्दस्य पाठात्तत्ताला भाव्यमिति हरदत्तादयः ॥—**भिक्षादिभ्योऽण्** ॥—**भैक्षमिति** । अचित्तत्वाट्ठक् प्राप्तः ॥—**गार्भिणमिति** । अनुदात्तादित्वादञ् प्राप्तः । सति हि तस्मिन्नाद्युदात्तटिलोपौ स्याताम । न च 'भस्याढे' इति पुंवाचकरूपातिदेशान्न टिलोपः स्यादिति वाच्यम् । हस्तिनीनां समूहो हास्तिकमित्यत्रापि टिलोपानापत्तेः । तस्मात् स्त्रीप्रत्ययनिवृत्तिमात्रपर तत् । न तु रूपातिदेशकमिति बोध्यम् ॥—**यौवनमिति** ॥ युवतिशब्दस्यानुदात्तादित्वादञि प्राप्ते अणर्थमिह पाठः ॥ पुंवद्भावात्तिप्रत्ययनिवृत्ति' । 'अन्' इति प्रकृतिभाव. । ननु 'भस्याढे' इत्यत्र 'अढे तद्धिते विवक्षिते पुंवद्भावः' इत्यभ्युपगमात्तद्धितोत्पत्तेः प्रागेव प्रत्ययनिवृत्तौ सत्यां 'कनिन्युवृषि–' इति कनिनन्तया आद्युदात्तत्वादण् सिद्ध एवेति चेत् । सत्यम् । अत एव भाष्ये भिक्षादिषु युवतिशब्दपाठ· प्रत्याख्यातः ॥ 'इह युवतिशब्दपाठसामर्थ्यात्पुंवद्भावो न' इति वृत्तिकारोक्तिरप्यत एव निरस्ता ॥ नन्वेवं 'गार्भिण यौवतं गणे' इत्यादिप्रयोगा भाष्यमते न संगच्छेरन्नित्याशङ्क्याह—**शत्रन्तादिति** ॥—**युवोः**—॥ समाहारद्वन्द्वे सौत्र पुंस्त्वम् । उकारस्तूच्चारणार्थो नेत्संज्ञकः । तेन नन्दनः, कारकः, नन्दना, कारिका इत्यत्रोगिल्लक्षणौ नुम्ङीपौ न स्तः ॥ अनुनासिकयोरिति किम् । ऊर्णायुः ॥—**प्रकृत्याऽक** इति ॥ इह राजन्यमनुष्यग्रहण व्यर्थम् । रूढिशब्दत्वेन 'आपत्यस्य च' इति यलोपस्य प्राप्त्यभावात् । अत एव 'गोत्रोक्षोष्ट्र–' इत्यत्र तयोर्ग्रहण सार्थकम् । अन्यथा गोत्रग्रहणेनैव सिद्धे तयोर्ग्रहण न कुर्यादित्याहुः ॥ यूनो भावो यौवनिका । मनोज्ञादित्वाद्वुञ् ॥—**वार्धकमिति** । यदि वृद्धत्वेऽपि वार्धकमिति प्रयोगोऽस्ति, तर्हि मनोज्ञादित्व कल्पनीयमित्याहुः ॥—**ब्राह्मणमाणव**—॥ ननु त्रयोऽप्यमी वृद्धाः । तेभ्यः प्रकृतो यञेवास्तु । वृद्धाद्यति यञि वा रूपे विशेषाभावात् । नापि स्वरे विशेष., उभयथाप्युदात्तत्वात् । स्त्रियां विशेषस्तु न शङ्क्य एव, नपुंसकत्वात् । 'यञश्च' इत्यत्रापत्यग्रहणाच्च । ठञ् तु नानुवर्तिष्यते अस्वरितत्वादिति चेत् । सत्यम् । अवृद्धादपि कुतश्चिद्विधानार्थं यद्वचन तत्सिद्धार्थानुवादक वार्तिकमाह—**पृष्ठादिति** ॥ पृष्ठं स्तोत्रविशेषः ॥—**पृष्ठ्य** इति । पृष्ठाना समूहः पृष्ठ्यः षडह इति तु मत्वर्थ-

स्यात् । अभत्वादोर्गुणो न । पर्शूनां समूहः पार्शवम् । **अनुदात्तादेरञ्** ।४।२।४४। कापोतम् । मायूरम् । **खण्डिकादिभ्यश्च** ।४।२।४५। अञ् स्यात् । खण्डिकानां समूहः खाण्डिकम् । **चरणेभ्यो धर्मवत्** ।४।२।४६। काठकम् । छान्दोग्यम् । **अचित्तहस्तिधेनोष्ठक्** ।४।२।४७। साक्तुकम् । हास्तिकम् । धैनुकम् । **केशाश्वाभ्यां यञ्छावन्यतरस्याम्** ।४।२।४८। पक्षे ठगणौ । कैश्यम् । कैशिकम् । अश्वीयम् । आश्वम् । **पाशादिभ्यो यः** ।४।२।४९। पाश्या । तृण्या । धूम्या । वन्या । वात्या । **खलगोरथात्** ।४।२।५०। खल्या । गव्या रथ्या । **इनित्रकट्यचश्च** ।४।२।५१। खलादिभ्यः क्रमात्स्युः । खलिनी । गोत्रा । रथकट्या ॥ * **खलादिभ्य इनिर्वक्तव्यः** ॥ डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् । **विषयो देशे** ।४।२।५२। षष्ठ्यन्तादणादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः । शिबीनां विषयो देशः शैबः । देशे किम् । देवदत्तस्य विषयोऽनुवाकः । **राजन्यादिभ्यो वुञ्** ।४।२।५३। राजन्यकः । **भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ** । ४।२।५४। भौरिकीणां विषयो देशः भौरिकिविधम् । भौलिकिविधम् । ऐषुकारिभक्तम् । सारसायनभक्तम् । **सोऽस्यादिरिति च्छन्दसः प्रगाथेषु** ।४।२।५५। अण् । पङ्क्तिरादिरस्येति पाङ्क्तः प्रगाथः ॥ * **स्वार्थ उपसंख्यानम्** ॥ त्रिष्टुबेव त्रैष्टुभम् । **संग्रामे प्रयोजनयोद्धृभ्यः** ।४।२।५६। सोऽस्येत्यनुवर्तते । सुभद्रा प्रयोजनमस्य संग्रामस्येति सौभद्रः । भरता योद्धारोऽस्य संग्रामस्य भारतः । **तदस्यां प्रहरणमिति क्रीडायां णः** । ४।२।५७। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा । **घञः सास्यां क्रियेति ञः** ।४।२।५८। घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात् । घञ इति कृद्ग्रहणाद्गतिकारकपूर्वस्यापि ग्रहणम् । **श्येनतिलस्य पाते ञे** ।६।३।७१। श्येन तिल एतयोर्मुमागमः स्यात् ञप्रत्ययपरे पातशब्दे उत्तरपदे । श्येनपातोऽस्यां वर्तते श्यैनंपाता मृगया । तिलपातोऽस्यां वर्तते तैलंपाता स्वधा । श्येनतिलस्य किम् । दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः । **तदधीते तद्वेद** ।४।२।५९। व्याकरणमधीते वेद वा वैयाकरणः ।

---

लक्षणया बोध्यम् ॥—**ग्रामजन**—॥ वृत्तिकृता तु वार्तिकस्थसहायशब्दोपि सूत्रे प्रक्षिप्तः ॥—**अनुदात्तादेरञ्** ॥ आपूपिक शाष्कुलिकमित्यादौ परत्वात् 'अचित्तहस्तिधेनोः–' इति ठगेवेत्याशयेनेह सूत्रे नित्स्वरान्तमुदाहरन्ति—**कापोतमिति** ॥—**लघावन्त** इति । फिट्सूत्रेण कपोतमयूरशब्दौ मध्योदात्तौ ॥ न च 'शकुनीनां च लघुपूर्वम्' इत्याद्युदात्ताविमाविति शङ्क्यम् । 'अन्त्यात्पूर्वं लघूदात्तम्' इति तत्र व्याख्यानादित्याहुः ॥ —**खण्डिका**—॥ आद्युदात्तार्थमचित्ताट्ठको बाधनार्थं च वचनम् ॥—**चरणेभ्यः**—॥ यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते, स तस्याः प्रकृतेः समूहेऽपि स्यादित्यर्थः ॥ वुञादयो हि चरणेभ्यो वक्ष्यन्ते । तत्र 'चरणाद्धर्माम्नाययोः' इति तु वार्तिकम् । तदप्यनेनैवातिदेशसूत्रेण ज्ञाप्यते ॥—**काठकमित्यादि** । 'गोत्रचरणाद्वुञ्' ॥—**छान्दोग्यमिति** । 'छन्दोगौक्थिक–' इति ञ्यः ॥—**यञ्छाविति** । यथासङ्ख्यं स्तः ॥—**ठगणाविति** केशशब्दादचित्तत्वेन ठक् ॥—**विषयो देशे** ॥ 'तस्य' इत्यनुवर्तत इत्याह—**षष्ठ्यन्तादिति** ॥ विषयशब्दार्थमाह—**अत्यन्तेति** ॥—**भौरिक्या**—॥ आभ्यां गणाभ्यां यथासङ्ख्यमेतौ प्रत्ययौ स्तः ॥—**भौरिकिविधमित्यादि** ॥ क्लीबत्वं लोकात् ॥—**सोऽस्यादिरिति** ॥ छन्दो नामाक्षरसंख्यानिबन्धनपङ्क्त्यादिरिह विवक्षितं । तद्वाचकात् प्रथमान्तादस्येत्यादिमति प्रत्ययः स्यात्, स आदिमान्स प्रगाथश्चेत् ॥ प्रग्रथ्यत इति प्रगाथः । 'ग्रन्थ सदर्भे' इत्यस्मात् 'अकर्तरि च कारके' इति कर्मणि घञ् । पृषोदरादित्वाद्रेफनकारयोर्लोपः ॥ अन्ये तु प्रगीयत इति प्रगाथः 'गै शब्दे' इत्यत 'उषिकुषिगार्तिभ्य स्थन्' इत्याहुः । यत्र द्वे ऋचावावृत्त्या तिस्रः क्रियन्ते, स प्रगाथः —**त्रैष्टुभमिति** । 'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेन क्लीबतेति भावः ॥—**संग्रामे**—॥ ननु 'प्रथमात्' इत्यधिकारात्प्रथमोच्चारितसंग्रामवाचिन एव प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्य इत्यत आह—**सोऽस्येतीति** । एवं च प्रथमान्तविशेषणद्वारा प्रयोजनयोद्धृणां प्रकृतित्वम् 'अस्य' इति प्रत्ययार्थविशेषणद्वारा संग्रामस्य प्रत्ययार्थत्वं वक्तुं शक्यमिति भावः ॥ तथा चायमिह सूत्रार्थः । प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्येति षष्ठ्यन्तार्थेऽण् स्यात्, स च षष्ठ्यन्तार्थः संग्रामश्चेदिति ॥—**तदस्याम्**—॥ प्रथमान्तात्प्रहरणवाचकात्सप्तम्यन्तार्थेऽण् स्यात्, स चेत्सप्तम्यन्तार्थः क्रीडा भवति ॥ प्रहरणं किम् । माला भूषणमस्याम् ॥ क्रीडायां किम् । खड्गः प्रहरणमस्यां सेनायाम् ॥—**घञः** ॥—**कृद्ग्रहणादिति** । तेन 'श्यैनंपाता' इत्यत्र 'ञ्णिति' इत्यङ्गस्य विधीयमाना वृद्धिः सिद्धा । श्येनपातस्यापि घञन्तत्वादिति भावः ॥ घञः किम् । श्येनपतनमस्यां वर्तते ॥ क्रिया किम् । प्राकारोऽस्यां वर्तते ॥ 'तदस्याम्' इति प्रकृते पुनः 'सास्याम्' इत्युक्तिः 'क्रीडायाम्' इत्यस्य निवृत्तिर्यथा स्यादिति । अत एवाह—**दण्डपातोऽस्यां तिथाविति** ॥—**तदधीते**—॥ द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात् ॥ द्विस्तद्ग्रहणमधीयाने विदुषि च प्रत्येक

---

१ विषय इति—देशग्रहणाद्विषयशब्दोऽत्र ग्रामसमुदायवाचीति वृत्तिः । विषयः सत्त्ववान्, निशामस्तु न नियमेन तथेति तयोर्भेदः । २ प्रयोजनेत्यादि—तेनेह न, सुभद्रा प्रेक्षिकास्य संग्रामस्य ।

**क्रतूक्थादिसूत्रान्ताट्ठक् ।४।२।६०।** क्रतुविशेषवाचिनामेवेह ग्रहणम् । तेभ्यो मुख्यार्थेभ्यो वेदितरि तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः । वाजपेयिकः । उक्थं सामविशेषस्तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम् । तदधीते वेद वा औक्थिकः ॥ * **मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते** ॥ न्यायम्, नैयायिकः । वृत्तिम्, वार्तिकः । लोकायतम्, लौकायतिक इत्यादि ॥ * **सूत्रान्तात्त्वकल्पादेरेवेष्यते** ॥ सांग्रहसूत्रिकः । अकल्पादेः किम् । काल्पसूत्रः ॥ * **विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्** ॥ वायसविद्यिकः । गौलक्षणिकः । आश्वलक्षणिकः । पाराशरकल्पिकः ॥ * **अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्** ॥ आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रिविधा विद्या त्रिविद्या तामधीते वेद वा त्रैविद्यः ॥ * **आख्यानाख्यायिकेतिहासपुराणेभ्यश्च** ॥ यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद्यवक्रीतं तदधीते वेत्ति वा यावक्रीतिकः । वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । अधिकृत्य कृते ग्रन्थे इत्यर्थे वृद्धाच्छः । तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप् । ततोऽनेन ठक् । वासवदत्तिकः । ऐतिहासिकः । पौराणिकः ॥ * **सर्वादेः सादेश्च लुग्वक्तव्यः** ॥ सर्ववेदानधीते सर्ववेदः । सर्वतन्त्रः । सवार्तिकः । द्विगोर्लुगिति लुक् । द्वितन्त्रः ॥ * **इकन्पदोत्तरपदाच्छतषष्टेः षिकन्पथः** ॥ पूर्वपदिकः । उत्तरपदिकः । शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी । **क्रमादिभ्यो वुन् ।४।२।६१।** क्रमकः । क्रम, पद, शिक्षा, मीमांसा, क्रमादिः । **अनुब्राह्मणादिनिः ।४।२।६२।** तदधीते तद्वेदेत्यर्थे । ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणं तदधीते अनुब्राह्मणी । मत्वर्थीयेनैव सिद्धे अण्बाधनार्थमिदम् । **वसन्तादिभ्यष्ठक् ।४।२।६३।** वासन्तिकः । अथर्वाणमधीते आथर्वणिकः । दाण्डिनायनेति सूत्रे निपातनाट्टिलोपो न । **प्रोक्ताल्लुक् ।४।२।६४।** प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । पणनं पणः । घञर्थे कविधानमिति कः । सोऽस्यास्तीति पणी, तस्य गोत्रापत्यं पाणिनः । **गाथिविदथिकेशिगणिपणिनश्च ।६।४।१६५।** एतेऽणि प्रकृत्या स्युः । इति टिलोपो न । ततो यूनि इञ् । पाणिनि. । **ण्यक्षत्रियार्षञितो यूनि लुगणिञोः**[१] **।२।४।५८।** ण्यप्रत्ययान्तात्क्षत्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्ताद् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात् । कौरव्यः पिता । कौरव्यः पुत्रः । श्वाफल्कः पिता । श्वाफल्क पुत्रः । वासिष्ठः पिता । वासिष्ठः पुत्रः । तैकायनिः पिता । तैकायनिः पुत्रः । एभ्यः किम् । शिवाद्यण् । कौहडः पिता । तत इञ् । कौहडिः पुत्रः । यूनि

---

विधानार्थम् । तेनोत्तरत्र क्रतुवसन्तादयः शब्दास्तत्प्रतिपादकग्रन्थे गौणा अप्यधीयानेऽपि प्रत्यय प्राप्नुवन्ति । अन्यथा तेषामध्ययनासंभवेन वेदितर्येव प्रत्ययः स्यादिति भावः ॥—**क्रतूक्थादि**—॥—**क्रतुविशेषे**ति । स्वरूपस्य तु न ग्रहणम् । तथात्वे सत्युक्थादिष्वेव क्रतुशब्द पठ्येत, नापि क्रतुपर्यायाणामुक्थादिगणे यज्ञशब्दपाठादिति भाव ॥—**अध्येतरी**ति । अध्येतर्यपीत्यर्थः ॥—**आग्निष्टोमिक** इति । संस्थाविशेषवाचकस्याप्यग्निष्टोमशब्दस्यातत्संस्थाके क्रतौ निरूढप्रयोगः ॥—**तल्लक्षणे**त्यादि । तत्प्रतिपादकप्रातिशाख्यमित्यर्थ. ॥—**नेष्येते** इति ॥ अनभिधानादिति भाव. ॥—**त्रिविधे**ति । 'तिस्रो विद्या अधीते' इति विग्रहे तु तद्धितार्थे द्विगौ 'त्रिविद्य' इत्येव स्याद् 'द्विगोर्लुगनपत्ये' इति लुक्प्रवृत्तेरिति भावः ॥—**आख्यायिके**ति । गद्यपद्यरूपो ग्रन्थविशेष इत्यर्थः ॥—**सर्वादे**रिति । 'सादे.' इत्येव सिद्धे सर्वादिग्रहणमर्थवत्परिभाषाज्ञापनार्थम् ॥—**वार्तिक इति** । वार्तिकान्तमधीत इत्यर्थः । अन्तवचने अव्ययीभाव. । 'अव्ययीभावे चाकाले' इति सहस्य सभावः ॥—**इकन्नि**ति । पदशब्द उत्तरपद यस्य तस्मादिकन् । शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात्तु षिकन् वाच्य इत्यर्थः ॥—**शतपथिक** इति । वृत्तिकृता तु वार्तिके 'बहुलम्' इति पूरयित्वा 'शातपथः' इत्यणन्तमप्युदाहृतम् । तत्तु भाष्ये न दृष्टम् । षित्त्वफल दर्शयति—**शतपथिकी**ति ॥—**अण्बाधनार्थमि**ति ॥ भाष्ये तु प्रत्याख्यातमेवेद सूत्रं तद्रीत्या त्वणिष्यत इति । अनभिधानान्नेति वा बोध्यम् ॥—**वसन्ता**—॥ उक्थादिष्वेव वसन्तादीन् पठित्वा, वसन्तादिषु वा उक्थादीन् पठित्वा, अन्यतरच्छक्यमवक्तुम् ॥—**अथर्वाणमि**ति । अथर्वणा प्रोक्त उपचारादथर्वा ॥ यद्वा 'तेन प्रोक्तम्' इत्यधिकारे **'ऋषिभ्यो लुग्वक्तव्यः'** वसिष्ठो विश्वामित्रोऽनुवाक इत्युदाहृत्य **'अथर्वणो वा'** 'अथर्वा, आथर्वणः' इति भाष्योक्तेः साधु ॥—**गाथिविदथि**—॥ 'इनण्यनपत्ये' इति सिद्धे अपत्येऽप्यणि प्रकृतिभावार्थमयमारम्भः ॥ गाथिनः । वैदथिन. । कैशिन. । गाणिनः । पाणिनः ॥—**ण्यक्षत्रियार्ष**—॥—**कौरव्य** इति । 'कुर्वादिभ्यो ण्यः' तत इञो लुक् । कौरव्यः पुत्रः ॥ ननु तिकादिषु कौरव्यशब्द. पठ्यते तथा च कौरव्यायणीरिति फिञा भाव्यं, न त्विञेति चेत् । सत्यम् । 'कुरुनादिभ्यो ण्यः' इति क्षत्रियगोत्रे विहितो यो ण्यस्तदन्त तत्र पठ्यते । प्रकृते तु ब्राह्मणगोत्रप्रत्ययान्तमित्यवधेयम् ॥—**श्वाफल्क** इति । 'ऋष्यन्धक–' इत्यण् । तत इञो लुक्, श्वाफल्कः पुत्रः ॥—**वासिष्ठ** इति । ऋष्यण् इञो लुक् । वासिष्ठ. पुत्र. ॥—**तैकायनिरि**ति । 'तिकादिभ्यः फिञ्' ततोऽणो

१ ण्यक्षत्रियेति—ण्यादयः सर्वे गोत्रप्रत्ययान्ता एव गृह्यन्ते, गोत्राद्यूनीत्युक्तेः । क्षत्रियवाचिनो गोत्रप्रत्ययान्तादित्यर्थः

किम् । वामरथ्यस्य छात्राः वामरथाः । इति अणो लुक् तु न भवति । आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । पाणिनिना प्रोक्तं पाणिनीयम् । वृद्धाच्छः । इञश्चेत्यण् तु न । गोत्रे य इञ् तदन्तादिति वक्ष्यमाणत्वात् । ततोऽध्येतृवेदित्रणोलुक् । स्वरे स्त्रियां च विशेषः । पाणिनीय । पाणिनीया । **सूत्राच्च कोपधात् ।४।२।६५।** सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । अप्रोक्तार्थ आरम्भः । अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनेः सूत्रम् । तदधीते विदन्ति वा अष्टकाः । **छन्दोब्राह्मणानि च तद्विषयाणि ।४।२।६६।** छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः । अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासित्वाण्णिनिः । तस्य कण्ठचरकादिति लुक् । ततोऽण्, तस्य प्रोक्ताल्लुक् ।

## तद्धितेषु चातुरर्थिकाः ।

**तदस्मिन्नस्तीति देशे तन्नाम्नि ।४।२।६७।** उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरः । **तेन निर्वृत्तम् ।४।२।६८।** कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी । **तस्य निवासः ।४।२।६९।** शिबीनां निवासो देशः शैबः । **अदूरभवश्च ।४।२।७०।** विदिशाया अदूरभवं नगरं वैदिशम् । चकारेण प्रागुक्तास्त्रयोऽर्थाः संनिधाप्यन्ते । तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वं सिध्यति । **ओरञ् ।४।२।७१।** अणोऽपवादः । कक्षतु, काक्षतवम् । नद्यां तु परत्वान्मतुप् । इक्षुमती । **मतोश्च बह्वजङ्गात् ।४।२।७२।** बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ्

लुक् । तैकायनि' पुत्र ॥—**वामरथा** इति । कुर्वादित्वात् ण्य. । ततो वृद्धाच्छ बाधित्वा 'कण्वादिभ्यो गोत्रे' इति शैषिकोऽण् ॥—**इतीति** । 'ण्यक्षत्रियार्ष–' इत्युदाहृतसूत्रेणेत्यर्थ. ॥—**ऋष्यण एवे**ति । पाणिनशब्दे तु औत्सर्गिक एवाणिति भावः ॥ नन्विद 'वान्यस्मिन् सपिण्डे' इति सूत्रस्थभाष्यकैयटाभ्या विरुध्यते 'अत्रेर्युवापत्यानि पुमासो अत्रयः, 'इतश्चानिञ.' इति ढक् तदन्तायनि 'अत इञ्' तस्य 'ण्यक्षत्रिया–' इति लुक्, 'अत्रिभृगुकुत्स–' इति 'ढकोऽपि लुक्' इत्युक्तत्वात् । 'ऋष्यन्धक–' इत्यण एव ग्रहणे तु ढको अग्रहणात्ततः परस्येञो लुङ् स्यादित्याहुः ॥ वस्तुतस्तु 'दाक्षीपुत्रस्य पाणिने.' इति भाष्यप्रयोगादस्य साधुत्वमिति ज्ञेयम् ॥—**इञश्चेती**ति । 'यूनि लुक्' इति लुक्यपि प्रत्ययलक्षणेन इञन्तमस्तीति भाव' ॥—**गोत्रे य** इति । 'गोत्रमिह शास्त्रीय, न तु लौकिकमिति तत्र वक्ष्यते' इति भावः ॥—**स्वरे** इति । लुगभावे प्रत्ययस्वरेणान्तोदात्तत्व स्त्रिया च ङीप्स्यात् । लुकि सति लीकार उदात्तः, टाप् च सिद्ध्यतीति भावः ॥ —**अष्टकमि**ति ॥ 'संख्यायाः सञ्ज्ञासघसूत्राध्ययनेषु' इति 'सख्याया अतिशदन्तायाः कन्' ॥—**संख्याप्रकृतिकादि**ति । सख्याप्रकृतिकप्रत्ययान्तादित्यर्थ. ॥—**कालापक** इति । कलापिन्शब्दात्प्रोक्तार्थेऽण् 'सब्रह्मचारि–' इत्युपसख्यानाट्टिलोप. । ततो अध्येतर्यण् तस्य 'प्रोक्ताल्लुक्' इति लुक् । कालापानामाम्नाय इत्यर्थे 'गोत्रचरणाद्वुञ्' ततोऽध्येतृवेदित्रणो लुक्, स्वरे स्त्रियां च विशेषः ॥—**छन्दोब्राह्मणानि**—॥ इह मण्डूकप्लुत्यानुवृत्त 'प्रोक्तान्' इति पञ्चम्यन्त जमन्तत्वेन विपरिणम्यते 'छन्दोब्राह्मणानि' इत्यनेन सामानाधिकरण्यात । प्रोक्तशब्दश्च प्रोक्तार्थके प्रत्यये लाक्षणिक इत्याशयेनाह—**प्रोक्तप्रत्ययान्तानी**ति ॥—**तद्विषयाणी**ति । तच्छब्देन अध्येतृवेदितृप्रत्ययः परामृश्यते, विषयशब्दस्त्विहानन्यभाववाची, न तु देशवाचीत्यभिप्रेत्याह—**प्रत्ययं विना न प्रयोज्यानीत्यर्थ** इति । पाणिनीय पाणिनीया इतिवदनियमेन प्रयोगे प्राप्त नियमार्थमेतदिति भावः ॥ छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहण चिरतनप्रोक्तब्राह्मणानामेव तद्विषयत्वार्थम् । तेनेह न । याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि । यजन्तात् 'कण्वादिभ्यो गोत्रे' इत्यण्, 'आपत्यस्य च' इति यलोपः ॥ याज्ञवल्क्यादयो हि पाणिन्यपेक्षया नूतना इति वृत्तिकृता व्यवहारः ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन काश्यपिन कौशिकिन इत्यत्र कल्पेऽपि तद्विषयत्व सिद्धम् । 'काश्यपकौशिकाभ्यामृषिभ्याम्–' इति प्रोक्ते णिनिः, अध्येत्रणो लुक् ॥ छन्दोब्राह्मणानीति किम् । पाणिनीय व्याकरणम् ॥

**तदस्मिन्** ॥ अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहित प्रत्ययः स्यात्प्रत्ययान्तनामा देशश्चेत् ॥ तत् प्रत्ययान्त नाम यस्येति बहुव्रीहिः ॥ मतुपोऽयमपवाद. । इतिशब्दस्तु सकललोकप्रसिद्धे देशे यथा स्यात, न त्वाधुनिकसङ्केतेऽपीत्येतदर्थः ॥ उत्तरसूत्रत्रयेऽपि 'देशे तन्नाम्नि' इत्यनुवर्तते ॥—**तेन निर्वृत्तम्** ॥ अन्तर्भावितण्यर्थवृत्तेः कर्मणि क्तः ॥ —**अदूर**–॥अदूरमन्तिकम्, तत्र भवतीत्यदूरभवः । निपातनात्सप्तमीसमासः ॥—**चातुरर्थिकत्वमि**ति । चतुर्णामर्थानां समाहारश्चतुरर्थी । तत्र भवाश्चातुरर्थिकाः । अध्यात्मादित्वाट्ठञ् ॥ चतुर्ष्वर्थेषु भवा इति तद्धितार्थे द्विगौ तु 'द्विगोर्लुगनपत्ये' इति ठञो लुक् स्यात् ॥—**मतोश्च** ॥ ननु 'मतोर्बह्वचः' इत्येवास्तु । बह्वचो विहितो यो मतुप् तदन्तादिति वैयधिकरण्येन

१ छन्दइति—छन्दःपदेन गायत्र्यादिच्छन्दोयुतमन्त्राणामेव ग्रहणमिति ब्राह्मणग्रहणम् । जुष्टार्पिते च च्छन्दसीत्यत्र तु छन्दःपदस्य ब्राह्मणे लक्षणा, 'नित्य मन्त्रे–' इत्यत्र मन्त्रग्रहणात् । २ चातुरर्थिकत्वमिति—चतुर्णां सूत्राणामर्थाश्चतुरर्थाः, तत्र भवाश्चातुरर्थिकाः, तत्त्वमित्यर्थः ।

माऽण्। सैभ्रकावतम्। बह्वजिति किम्? आहिमतम्। अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं माभूत्। ॥ बह्वचः कूपेषु ।४।२।७३। अणोऽपवादः। दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः। ॥ उदक्च विपाशः ।४।२।७४। विपाश उत्तरे कूले ये कूपास्तेष्वञ्। अबह्वजर्थ आरम्भः। दत्तेन निर्वृत्तो दात्तः कूपः। उदक् किम्। दक्षिणतः कूपेष्वणेव। ॥ सङ्कलादिभ्यश्च ।४।२।७५। कूपेष्विति निवृत्तम्। सङ्कलेन निर्वृत्तं साङ्कलम्। पौष्कलम्। ॥ स्त्रीषु सौवीरसाल्वप्राक्षु ।४।२।७६। स्त्रीलिङ्गेषु एषु देशेषु वाच्येष्वञ्। सौवीरे, दत्तामित्रेण निर्वृत्ता दात्तामित्री नगरी। साल्वे, वैधूमाग्नी। प्राचि, माकन्दी। ॥ सुवास्त्वादिभ्योऽण् ।४।२।७७। अञोऽपवादः। सुवास्तोरदूरभवं सौवास्तवम्। वर्णु, वार्णवम्। अणग्रहणं नद्यां मतुपो बाधनार्थम्। सौवास्तवी। ॥ रोणी ।४।२।७८। रोणीशब्दात्तदन्ताच्च अण्, कूपाञोऽपवादः। रौणः। आजकरोणः। ॥ कोपधाच्च ।४।२।७९। अण्। अञोऽपवादः। कार्णच्छिद्रकः कूपः। कार्कवाकवम्। त्रैशङ्कवम्। ॥ वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ।४।२।८०। एभ्यः सप्तदशभ्यः सप्तदश. क्रमात्स्युश्चतुरर्थ्याम्। अरीहणादिभ्यो वुञ्। अरीहणेन निर्वृत्तमारीहणकम्। कृशाश्वादिभ्यश्छण्। कार्शाश्वीयम्। ऋश्यादिभ्यः कः। ऋश्यकम्। कुमुदादिभ्यष्ठच्। कुमुदिकम्। काशादिभ्य इलः। काशिलः। तृणादिभ्यः सः। तृणसम्। प्रेक्षादिभ्य इनिः। प्रेक्षी। अश्मादिभ्यो रः। अश्मरः। सख्यादिभ्यो ढञ्। साखेयम्। सङ्काशादिभ्यो ण्यः। साङ्काश्यम्। बलादिभ्यो यः। बल्यम्। पक्षादिभ्यः फक्। पाक्षायणः। पथः पन्थ च। पान्थायनः। कर्णादिभ्यः फिञ्। कार्णायनिः। सुतङ्गमादिभ्य इञ्। सौतङ्गमिः। प्रगद्यादिभ्यो ञ्यः। प्रगदिन्, प्रागद्यः। वराहादिभ्यः कक्। वाराहकः। कुमुदादिभ्यष्ठक्। कौमुदिकः। ॥ जनपदे लुप् ।४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यात्। ॥ लुपि युक्तवद्व्यक्तिवचने ।१।२।५१। लुपि सति प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः। ॥ तदशिष्यं संज्ञाप्रमाणत्वात् ।१।२।५३। युक्तवद्वचनं न कर्तव्यं संज्ञानां प्रमाणत्वात्। ॥ लुब्योगाप्रख्यानात् ।१।२।५४। लुबपि न कर्तव्योऽवयवार्थस्येहाप्रतीतेः। ॥ योगप्रमाणे च तदभावे दर्शनं स्यात् ।१।२।५५। यदि हि योगस्यावयवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत। ॥ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ।१।२।

---

व्याख्यानादिष्ट सिध्यति किमङ्गग्रहणेनेत्याशङ्का निवारयति—**अङ्गग्रहणमिति** ॥—**मत्वन्तविशेषणमिति** ॥ सभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादङ्गग्रहणाभावे मत्वन्तविशेषण स्यादेव। ततश्चाहिमतमित्यादावतिप्रसङ्गः स्यादिति भावः ॥—**रोणी** ॥ रोणीशब्दः प्रत्ययमुत्पादयतीत्यर्थ। तथाच फलितमाह—**रोणीशब्दादिति** ॥ पञ्चम्याः सौत्रो लुगित्यन्ये ॥—**तदन्तादिति**। 'येन विधिः—' इति सूत्रे भाष्यस्थविशेषवचनाद्, विशेषणविशेष्ययो' कामचारमाश्रित्य 'समासप्रत्ययविधौ प्रतिषेधः' इत्यस्य प्रत्याख्यानाद्वा तदन्तविधिरिति भावः ॥—**वुञ्छण्**—॥—'ठक' इत्यन्तमेक सम स्तपदम्। अरीहणादि लुप्तम्। तत्र प्रथमतः कुमुदान्ताना चतुर्णा द्वन्द्व विधाय, द्वितीयेन काशादिकुमुदान्तद्वन्द्वेन सह पुनर्द्वन्द्वो बोध्यः। तेन कुमुदशब्दस्य द्वि.पाठेऽपि नैकशेषः। आदिशब्दः प्रत्येक संबध्यत इत्याह—**अरीहणादिभ्य इति** ॥ पक्षाद्यन्तर्गणसूत्रमाह—**पथ इति** ॥—**जनपदे लुप्** ॥ तन्नाम्नीत्येव। नेह उदुम्बराः सन्त्यस्मिन्नौदुम्बरो जनपदः। न ह्यत्र लुबन्त नामधेयम् ॥ जनपदस्यैकत्वादेकवचने प्राप्ते बहुवचनादिफलकमतिदेशमाह—**लुपि युक्तवदिति** ॥ **व्यक्तिवचने** किम्। शिरीषाणामदूरभवो ग्रामः शिरीषाः 'वरणादिभ्यश्च' इति लुप्। तस्य वन शिरीषवनम्। इह वनस्पतित्वमतिदिश्येत। ततश्च 'विभाषौषधिवनस्पतिभ्यः' इति णत्वं स्यात् ॥ नन्वत्र शिरीषाणामिति षष्ठीबहुवचन कुतो नातिदिश्यत इति चेत् ॥ अत्राहु। वचनमिह संख्या, न त्वेकवचनद्विवचनादि। न चैवमपि सख्याबोधकत्वेन श्रुतैव षष्ठी परिगृह्यतामिति वाच्यम्। षष्ठ्यर्थस्य तद्धितवृत्त्यन्तर्गतत्वादुक्तार्थे प्रथमाया एव युक्तत्वादिति ॥—**पञ्चाला** इत्यादि। यद्यप्यत्राभिधेयलिङ्गवत्त्वेऽपीष्टसिद्धिः, तथापि कटुबदर्या अदूरभवो ग्रामः कटुबदरीत्यादिसिद्धये प्रकृतिलिङ्गातिदेश इति भावः ॥ पूर्वाचार्यानुरोधेन कृत सूत्र सप्रति प्रत्याचष्टे—**तदशिष्यमिति** ॥ पञ्चालाः, अङ्गाः, वङ्गाः, कलिङ्गा इत्यादयो जनपदस्य यथायथ बहुवचनाद्यन्ता एव सज्ञाः, न तत्र यत्नेन लिङ्गसख्ये प्रतिपादनीये। आपो दारा इत्यादिषु यथा। न हि तत्र शास्त्रेण लिङ्गसंख्ये प्रतिपाद्येते इति भावः ॥ उपजीवक प्रत्याख्यायोपजीव्यं प्रत्याचष्टे—**लुब्योगेति**। 'जनपदे लुप्' 'वरणादिभ्यश्च' इति द्विसूत्री लुप्शब्देन विवक्षिता। 'अशिष्यम्' इति संबध्यत एव। तदाह—**लुबपीति**। प्रकृतिप्रत्ययार्थयोः संबन्धो योग इत्याशयेन फलितमाह—**अवयवार्थस्येति**। अप्रत्याख्यानादिति व्याचष्टे—**अप्रतीतेरिति**। पञ्चालादयः शब्दाः क्षत्रियेषु यथा रूढास्तथा जनपदेऽपीति 'तस्य निवासः' 'अदूरभवश्च' इति तद्धितो नैवोत्पद्यते किमनेन लुपो विधानेनेत्यर्थः ॥—**न दृश्येतेति** ॥ विनापि क्षत्रियसंबन्धं पञ्चालादिशब्दो जनपदेषु प्रयुज्यते इति

१ योगप्रमाणे चेति—पञ्चालादौ योगस्यावयवशक्तेः प्रमाजनकत्वे इत्यर्थः।

५६। प्रत्ययार्थः प्रधानमित्येवंरूपं वचनमप्यशिष्यम्। कुतः, अर्थस्य लोकत एव सिद्धेः। **कालोपसर्जने च तुल्यम्** ।१।२।५७। अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः। विशेषणमुपसर्जनमित्यादि-पूर्वाचार्यैः परिभाषितं तत्राप्यशिष्यत्वं समानम्। लोकप्रसिद्धेः। **विशेषणानां चाजातेः** ।१।२।५२। लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा। पञ्चाला रमणीयाः। गोदौ रमणीयौ। अजातेः किम्। पञ्चाला जनपदः। गोदौ ग्रामः। * **हरीतक्यादिषु व्यक्तिः**। हरीतक्याः फलानि हरीतक्यः। * **खलतिकादिषु वचनम्**। खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि। * **मनुष्यलुपि प्रतिषेधः**। मनुष्यलक्षणे लुबर्थे विशेषणानां न। लुबन्तस्य तु भवतीत्यर्थः। चञ्चा अभिरूपः। **वरणादिभ्यश्च** ।४।२।८२। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः। **शर्कराया वा** ।४।२।८३। अस्माच्चातुरर्थिकस्य वा लुप्स्यात्। **ठक्छौ च** ।४।२।८४। शर्कराया एतौ स्तः। कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्ककौ। वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण् तस्य लुब्विकल्पः। षड् रूपाणि। शर्करा। शार्करम्। शार्करिकम्। शर्करीयम्। शार्करिकम्। शार्करकम्। **नद्यां मतुप्** ।४।२।८५। चातुरर्थिकः। इक्षुमती। **मध्वादिभ्यश्च** ।४।२।८६। मतुप् स्याच्चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्। **कुमुदनडवेतसेभ्यो ड्मतुप्** ।४।२।८७। कुमुद्वान्। नड्वान्। वेतस्वान्। आ-झयोर्झय इति अन्त्ये मादुपधाया इति वक्ष्यमाणेन वः। * **महिषाच्चेति वक्तव्यम्**। महिष्मान्नाम देशः। **नडशादाड्ड्वलच्** ।४।२।८८। नड्वलः। शादो जम्बालघासयोः। शाद्वलः। **शिखाया वलच्** ।४।२।८९। शिखावलम्। **उत्करादिभ्यश्छः** ।४।१।९०। उत्करीयः। **नडादीनां कुक् च** ।४।२।९१। नडकीयम्। * **कुञ्चा ह्रस्वत्वं च**। कुञ्चकीयः। * **तक्षन्नलोपश्च**। तक्षकीयः। **बिल्वकादिभ्यश्छस्य लुक्** ।६।४।

नार्थः सूत्रेणेत्यर्थः ॥—प्रसङ्गात्पूर्वाचार्यपरिभाषितमन्यदपि प्रत्याचष्टे—**प्रधानेत्यादिना** ॥—**विशेषणानाम्**—॥ यद्यपि सूत्रपाठे 'लुपि युक्तवत्' इति सूत्रादनन्तरमेतत्सूत्रं पठित्वा 'तदशिष्यम्' इत्यारब्धत्वात्तत्रैवेदं व्याख्यातुमुचितम्। तथापि जातेः प्रतिषेधमात्रपरमिदं, न तु युक्तवद्भावपरमित्याशयेन तत्र नोक्तमित्याहुः ॥—**पञ्चाला रमणीया** इति ॥ कथं तर्हि 'पाञ्चालाः जनपदः, सुभिक्षः सम्पन्नपानीयः' इति प्रयोग इति चेत्। जनपदविशेषणत्वादित्यवेहि ॥ पञ्चालविशेषणत्वाभ्युपगमे तु तद्वल्लिङ्गवचने स्त एव। पञ्चालाः सुभिक्षाः सम्पन्नपानीया इति ॥—**हरीतक्य** इति ॥ 'हरीतक्यादिभ्यश्च' इत्यणो लुप्। तत्र हि 'लुप् च' इत्यतो लुबनुवर्तते ॥—**खलतिकमिति**। 'वरणादिभ्यश्च' इति लुप् ॥—**चञ्चेति**। 'सञ्ज्ञायाम्' इति कनो 'लुप् मनुष्ये' इति लुप्। चञ्चा तृणमयः पुमान् ॥—**वरणादि**—॥ चकारोऽनुक्तसमुच्चयार्थः, तेनास्याकृतिगणत्वं सिद्धम् ॥—**वरणा** इति ॥ एवं कटुबदरी, शिरीषाः, गोदौ, खलतिकमित्यादीन्युदाहर्तव्यानि ॥ वत्वस्यासिद्धत्वात्तस्मिन्कर्तव्ये टिलोपो न स्थानिवदित्याशयेनाह—**झय** इति। तद्वानित्यत्रापि परत्वाद् 'झयः'-इत्यनेनैव वकारो न तु 'मादुपधायाः' इत्यनेनेति भावः ॥ न चासिद्धत्वात् 'मादुपधायाः' इत्येव तत्र न्याय्यमिति वाच्यम्। 'प्रकरणे प्रकरणमसिद्धं, न तु योगे योगः' इति 'उपसर्गादसमासेऽपि—' इत्यत्र भाष्ये निर्णीतत्वात् ॥ ननु वेतस्वानित्यत्र वेतस्शब्दस्य सुबन्तत्वेन पदत्वात् मतुपो डित्त्वसामर्थ्याट्टिलोपे एकदेशविकृतन्यायेन पदत्वात्सस्य रुत्वं स्यात्। न च स्थानिवत्त्वेन निर्वाहः। पूर्वत्रासिद्धे तन्निषेधादिति चेत्। मैवम्। अन्तरङ्गं रुत्वं प्रति बहिरङ्गस्य टिलोपस्यासिद्धत्वात्। न च पाष्ठी बहिरङ्गपरिभाषा त्रैपादिकं न जानातीति वाच्यम्। कार्यकालपक्षाभ्युपगमात् ॥ नन्वेवमपि 'स्वादिषु—' इति सान्तस्य पदत्वे तदाश्रयरुत्वस्यान्तरङ्गत्वाभावाद्बहिरङ्गपरिभाषा न प्रवर्तते इति रुत्वं दुर्वारमेव। न च 'नद्यां मतुप्' इति चतुरर्थ्यां मतुपो विधानाच्चातुरर्थिको ड्मतुप् मत्वर्थीय इति 'तसौ मत्वर्थे' इत्यनेन भत्वं शङ्क्यम्। टिलोपस्य स्थानिवत्त्वात्। न च पदत्वेऽप्येवम्। तस्य रुत्वविधिना सह कार्यकालतया 'पूर्वत्रासिद्धे न' इति निषेधादिति चेत्। अत्राहुः। पदसंज्ञायां यथोद्देशपक्षाश्रयणात् 'पूर्वत्रासिद्धे न' इति निषेधाप्रवर्तनात्स्थानिवत्त्वप्रवृत्त्या सान्तस्यापदत्वादिति ॥ एतेन घटी आमलकीत्यत्र 'स्वादिषु' इति पदत्वाज्जश्त्वं स्यात्, औत्सीत्यत्र तु संयोगान्तलोपः स्यादिति शङ्कापि परास्तेति दिक् ॥ ननु प्रक्रियालाघवाय ड्वतुबेव विधीयताम्, अथ वा 'कुमुदनडवेतसेभ्यो ड्वित' इति प्रकृतस्य मतुपो डित्त्वमतिदिश्यताम्, किमनेन ड्मतुब्विधानेन। सत्यम्। अन्यतो विधानार्थं तत् ॥ तत्सिद्ध्यर्थकथनपरं वार्तिकमाह—**महिषाच्चेति** ॥—**शिखाया**—॥ निर्वृत्ताद्यर्थे देशे तन्नाम्न्यणो बाधनार्थं चेदम्। 'दन्तशिखात्सञ्ज्ञायाम्' इति पञ्चमे वक्ष्यमाणं त्वदेशेऽपि शिखावल इति रूपसिद्ध्यर्थम् ॥—**नडादीनाम्**—॥ नडप्लक्षबिल्ववेत्रवेतसादयो नडादयः। नडाद्यन्तर्गणसूत्रमाह—**कुञ्चेति** ॥ एवं तक्षन्नित्यपि। उभयत्रापि षष्ठ्याः सौत्रो लुक्। 'टेः लोपः' इत्यतो लोपेऽनुवर्तमाने लुग्ग्रहणं व्यर्थमित्याश-

१ वाग्रहणेति—अन्यथा तत्र पाठसामर्थ्यादेव ठच्ककोर्विकल्पेन लोपे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। २ महिष्मानिति—अत्र प्रत्यये भाषायामिति न, धकारसवर्णानुनासिकाभावात्। तत्र च सवर्णग्रहणापकर्षस्य सर्वसम्मतत्वादिति।

१५३। नडाद्यन्तर्गता बिल्वकादयस्तेभ्यश्छस्य लुक् तद्धिते परे। बिल्वा यस्यां सन्ति सा बिल्वकीया। तस्यां भवा बैल्वकाः। वेत्रकीया। वैत्रकाः। छस्य किम्। छमात्रस्य लुग्यथा स्यात्कुको निवृत्तिर्माभूत्। अन्यथा सन्नियोगशिष्टानामिति कुगपि निवर्तेत। लुग्ग्रहणं सर्वलोपार्थं। लोपो हि यमात्रस्य स्यात्॥ ॥ इति चातुरर्थिकाः॥

## तद्धितेषु शैषिकाः।

शेषे।४।२।९२। अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राऽणादयः स्युः। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदि पिष्टा दार्षदाः सक्तवः। उलूखले क्षुण्ण औलूखलो यावकः। अश्वैरुह्यत आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दश रक्षः। शेष इति लक्षणं चाधिकारश्च। तस्य विकार इत्यतः प्राक् शेषाधिकारः। **राष्ट्रावारपाराद्घखौ** ।४।२।९३। आभ्यां क्रमाद्घखौ स्तः शेषे। राष्ट्रियः। अवारपारीणः। * **अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्**। अवारीणः। पारीणः। पारावारीणः। इह प्रकृतिविशेषाद्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते। **ग्रामाद्यखञौ** ।४।२।९४। ग्राम्यः ग्रामीणः। **कत्र्यादिभ्यो ढकञ्** ।४।२।९५। कुत्सितास्त्रयः कत्रयः। तत्र जातादिः कात्रेयकः। नागरेयकः। ग्रामादित्यनुवृत्तेः ग्रामेयकः। **कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु** ।४।२।९६। कौलेयकः श्वा। कौलोऽन्यः। कौक्षेयकोऽसिः। कौक्षोऽन्य। ग्रैवेयकोऽलङ्कारः। ग्रैवोऽन्यः। **नद्यादिभ्यो ढक्** ।४।२।९७। नादेयम्। माहेयम्। वाराणसेयम्। **दक्षिणापश्चात्पुरसस्त्यक्** ।४।२।९८। दक्षिणेत्याजन्तमव्ययम्। दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः। **कापिश्याः ष्फक्** ।४।२।९९। कापिश्यां जातादि कापिशायनं मधु। कापिशायनी द्राक्षा। **रङ्कोरमनुष्येऽण् च** ।४।२।१००। चात् ष्फक्।

---

इत्याह—**सर्वलोपार्थमि**ति॥—**यमात्रस्ये**ति। न च 'आदेः परस्य' इतीकारस्य भाव्यमिति वाच्यम्। 'सूर्यतिष्य–' इत्यतो यकारसबद्धस्यैव लोपस्यानुवर्तनादिति भावः॥ इति चातुरर्थिकाः॥

**शेषे**॥—**लक्षणं चेति**। ग्रहणक्षुण्णादिष्वर्थेषूत्तरत्रानुपात्तेष्वेषु अणो विधायकमित्यर्थ॥ ननु लक्षण तावद्व्यर्थम् 'तस्येदम्' इत्यनेन चाक्षुषादीनाम्, 'संस्कृतभक्षाः' इत्यनेन दार्षदादीना, सिद्धेः। तथाधिकारोऽपि व्यर्थः। तथा हि अधिकारस्यापत्यादिचतुरर्थपर्यन्तेष्वर्थेषु घादिष्ट्युट्युलन्ताना निवृत्ति, जाताद्यर्थसाकल्य वा प्रयोजनम्। तत्र निवृत्तिस्तावन्न प्रयोजनम्। आर्द्रकपालादीनामुत्करादिपाठेन 'इतः प्राचीनेष्वर्थेषु घादयो न प्रवर्तन्ते' इति ज्ञापनात्। अन्यथा 'वृद्धाच्छः' इत्येव सिद्धे तत्पाठस्य वैयर्थ्यप्रसङ्गात्। नाप्यर्थसाकल्य प्रयोजनम्, जाताधिकारात्प्राक्पाठसामर्थ्यादेव तल्लाभात्। यदि सन्निहिते जातार्थ एव घादयः स्युः, तदुत्तरेषु भवाद्यर्थेषु 'प्राग्दीव्यतः' इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमानाऽणादय एव स्युः। तदा जाताधिकारानन्तरमेव 'प्रावृषष्ठप्' इत्यादिभिः सह 'राष्ट्रावारपारा–' इत्यादयोऽपि पठ्येरन्। तस्माद्व्यर्थमिद सूत्रमिति चेत्। अत्रोच्यते। 'शैषिकात्सरूप शैषिको न' इति वक्ष्यमाणार्थस्य विषयलाभाय शेषाधिकारस्तावदावश्यकः। शैषिकत्वप्रयुक्तकार्यविशेष ध्वनयितु क्रियमाणः शेषाधिकार एव 'शैषिकान्मतुवर्थीयात्' इत्यादिश्लोकं ज्ञापयति। एष च श्लोक सन्विधौ मतुब्विधौ च भाष्ये पठितः॥ इह तु सन्नन्ते पठित इति तत्रैव व्याख्यास्यते॥ अपत्यादिष्वर्थेषु घादीना निवृत्त्यर्थमप्यधिकार आवश्यकः। न चोक्तज्ञापकेनैव तत्सिद्धिरिति वाच्यम्। ज्ञापकस्य विशेषापेक्षत्वे दोषतादवस्थ्यात्। 'आर्द्रकादिभ्यो यदि च्छः स्यात्तर्हि चतुरर्थ्यामेव' इति नियमस्यापि सम्भवाच्च। एव स्थिते चाक्षुषमित्यादिषु गृह्यमाणत्वादिप्रकारकबोधनाय विधायकत्वमपि तस्य सुवचमिति दिक्॥—**विगृहीतादपी**त्यादि॥ वचनमेवेदं, सूत्रे यथासङ्ख्यप्रवृत्त्यर्थ विशिष्टोच्चारणात्॥—**कुत्सितास्त्रय** इति॥ इह बहुव्रीहिरपि सुवचः। इहैव निपातनात्को कद्भावः॥ 'कद्भावे त्रावुपसङ्ख्यानम्' इति तु प्रत्याख्येयम्॥ **'कुल्याया यलोपश्च'** इति गणसूत्रम्। कुल्याया जातः कौलेयकः॥ कत्रि, उम्भि, कुण्डिन, माहिष्मतीत्यादि॥—**दक्षिणापश्चात्**—॥—**अव्ययमि**ति। साहचर्यादिति भावः॥ एव च दाक्षिणात्य इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे–' इति पुंवद्भावाशङ्कैव नास्तीति बोध्यम्॥—**पाश्चात्त्य** इति॥ कथ तर्हि 'पश्चात्तनैः कश्चन नुद्यमानः' इति। न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाश त्यकं कालवाचकात् ट्युट्युलौ बाधेते परत्वादिति वाच्यम्। 'अग्रादिपश्चात्–' इति डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वात्। सत्यम्। पश्चाद्भवन्ति पश्चात्तना इति कथञ्चित्समाधेयम्॥—**कापिश्याः ष्फक्**॥ कापिशीशब्दात्ष्फक् स्यात्॥ षित्त्वान्ङीष् तदाह—**कापिशायनी**ति॥—**रङ्कोरमनुष्ये**—॥ रङ्कवो जनपदः, ततः 'प्राग्दीव्यतोऽण्' इत्यण् प्राप्तः। तद्बाधक-

---

१ छस्य किमिति—तेभ्यः परस्य च्छस्यैव सम्भव इति प्रश्नः। २ यमात्रस्येति—इदं च उपधाग्रहणानुवृत्तौ सङ्गच्छते इति कश्चित्। वस्तुतस्तु तदनुवृत्त्यभावेऽपि आदेः परस्येति यमात्रस्यैव लोपः प्राप्नोतीति शब्देन्दुशेखरे स्पष्टम्। ३ अन्योऽर्थ इति—विशेष्यतया भासमान इत्यर्थः। एव चेदत्वेन भासमानमपत्याद्यपि न शेषः। ध्वनित चेदं 'तस्येदमित्यपत्येऽपि' इति श्लोकेन।

राङ्कवो गौः । राङ्कवायणः । अमनुष्य इति किम् । राङ्कवको मनुष्यः । **द्युप्रागपागुदक्प्रतीचो यत्** ।४।२।१०१। दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् । **कन्थायाष्ठक्** ।४।२।१०२। कान्थिकः । **वर्णौ वुक्** ।४।२।१०३। वर्णुर्नदस्तस्य समीपदेशो वर्णुः, तद्विषयार्थवाचिकन्थाशब्दाद्वुक् स्यात् । यथा हि जातं हिमवत्सु कान्थकम् । **अव्ययात्त्यप्** ।४।२।१०४ । * **अमेहक्वतसित्रेभ्य एव** ॥ अमाऽन्तिकसहार्थयोः । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । परिगणनं किम् । उपरिष्टाद्भव औपरिष्टः ॥ * **अव्ययानां भमात्रे टिलोपः** ॥ अनित्योऽयं बहिषष्टिलोपविधानात्[1] । तेनेह न । आरातीयः ॥ * **त्यब्नेर्ध्रुव इति वक्तव्यम्** ॥ नित्यः ॥ * **निसो गते** ॥ **ह्रस्वात्तादौ तद्धिते** ।८।३।१०१। ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते । निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः ॥ * **अरण्याण्णः**[2] ॥ आरण्याः सुमनसः ॥ * **दूरादेत्यः** ॥ दूरेत्यः ॥ * **उत्तरादाहञ्** ॥ औत्तराहः । **ऐषमोह्यःश्वसोऽन्यतरस्याम्** ।४।२।१०५। एभ्यस्त्यब्वा । पक्षे वक्ष्यमाणौ ट्युट्युलौ । ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । पक्षे शौवस्तिकं वक्ष्यते । **तीररूप्योत्तरपदादञ्ञौ** ।४।२।१०६। यथासंख्येन । काकतीरम्[3] । पाल्वलतीरम् । शैवरूप्यम् । तीररूप्यान्तादिति नोक्तम् । बहुरूप्यपूर्वान्माभूत् । बाहुरूप्यम् । **दिक्पूर्वपदादसंज्ञायां ञः** ।४।२।१०७। अणोऽपवादः । पौर्वशालः । असंज्ञायां किम् । संज्ञाभूतायाः प्रकृतेर्माभूत् । पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः । **मद्रेभ्योऽञ्** ।४।२।१०८। दिक्पूर्वपदादित्येव । दिशोऽमद्राणामिति मद्रपर्युदासादादिवृद्धिः । पौर्वमद्रः । आपरमद्रः । **उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्** ।४।२।१०९। अञ् स्यात् । शैवपुरम् । **प्रस्थोत्तरपदपलद्यादिकोपधादण्** ।४।२।११०। माहिकिप्रस्थः । पालदः । नैलीनकः । **क**-

त्वेन 'अवृद्धादपि' इति वुञ् प्राप्तः, तमपि बाधित्वा 'ओर्देशे' ठञ् प्राप्तः, तस्य तु 'कोपधादण्' बाधक , ततोऽपि परत्वात्कच्छाद्यणि प्राप्तेऽनेन ष्फगणौ विधीयेते । कोपधत्वादेवाणि सिद्धे कच्छादिषु रङ्कुशब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थ इति ॥ क्वचित्तु राङ्कव इति पठ्यते । स तु लेखकप्रमादः ॥ स्यादेतत् । अमनुष्यग्रहणमिह व्यर्थम् । अपवादेन वुञा तत्र ष्फगणोर्बाधेनामनुष्य एव पर्यवसानात् अण्ग्रहणमपि व्यर्थमेव, कच्छादित्वादेव तत्सिद्धेः । अत्राह काशिकाकृत् । नायं प्रसज्यप्रतिषेधः किं तु पर्युदासः, तेन मनुष्यभिन्ने प्राणिन्येव ष्फग्विधीयत इति, राङ्कवः कम्बल इत्यत्र न ष्फक् । विशेषविहितेन ष्फका अणो बाधा मा भूदित्यण्ग्रहणं च क्रियत इति ॥ भाष्ये तु अप्राणिन्यपि ष्फकमङ्गीकृत्येदं द्वयमपि प्रत्याख्यातम् ॥—**द्युप्रागपा**—॥—**दिव्यमि**ति । सूत्रे 'दिव उत्' इत्युत्वेन निर्देश इति भावः ॥ अपाची दक्षिणा दिक् । द्वितीयो वर्णः पकारो, न तु दन्त्योष्ठ्यः, 'यदिन्द्र प्रागपागुदग्' इत्यादौ तथा दर्शनादिति स्थितं मनोरमायाम् ॥ केचित्तु 'प्राच्यवाचीप्रतीच्यस्ता' इत्यमरकोशे अवाचीति दन्त्योष्ठ्यपाठं क्वाचित्कं पुरस्कृत्य सूत्रेऽपि 'अवाक्' इति पठित्वा अवाच्यमित्युदाहरन्ति ॥ 'प्रागपाक्' इति वेदे तु व्यत्ययेन वकारस्य पकार इति तेषामाशयः । प्रागादयोऽस्तात्यन्ता अव्ययाः, तद्भिन्नास्त्वनव्ययाः । उभयेषामपीह ग्रहणमविशेषात् ॥ कथं तर्हि 'संस्काराः प्राक्तना इव' इति । अत्राहुः । कालवाचिनः प्राक्शब्दाद्यतं बाधित्वा परत्वात् ट्युट्युलौ बोध्याविति ॥—**वर्णौ वुक्** ॥—**वर्णुरि**ति । 'अदूरभवश्च' इत्यर्थे सुवास्त्वादित्वादणि 'जनपदे लुप्' इति लुप् ॥—**अमात्य** इति ॥ अमाशब्दः समीपवाची स्वरादिः । अमा समीपे भव इत्यर्थः ॥—**ह्रस्वात्तादौ**—॥ पदान्तत्वात्षत्वस्याप्राप्तावयमारम्भः । आदिग्रहणं तु व्यर्थं 'यस्मिन्विधिः–' इत्येव सिद्धेः ॥ ह्रस्वात्किम् गीस्तराम् । धूस्तराम् ॥ तादौ किम् । सर्पिः साद्भवति ॥ तद्धिते किम् । सर्पिस्तरति ॥ **निङन्तस्य प्रतिषेधो वाच्यः** ॥ भिन्द्युस्तराम् ॥—**दूरेत्य** इति । दूरादागत इत्यादिरर्थः ॥—**औत्तराह** इति । इदाद्युदात्तत्वं स्त्रियां टाप् च बोध्यः ॥ यदा तु 'उत्तराच्च' इत्याहिप्रत्यये ततोऽण् क्रियते 'अमेह–' इति परिगणनेन त्यपोऽभावात् ॥ तदा औत्तराहशब्दोऽन्तोदात्तः, स्त्रियां ङीप् च विशेषः ॥—**वक्ष्यमाणावि**ति ॥ 'सायंचिरम्' इत्यादिनेति शेषः ॥—**वक्ष्यत** इति । 'श्वसस्तुट् च' इत्यत्र ॥—**दिक्पूर्व**—॥ 'असंज्ञायाम्' इत्यत्र सौत्रत्वात्षष्ठ्यर्थे सप्तमीत्याशयेनाह—**संज्ञाभूताया** इति ॥—**मद्रेभ्योऽञ्** ॥ बहुवचननिर्देशाज्जनपदवाची गृह्यते, न तु भद्रपर्यायः ॥—**दिशोऽमद्राणामि**ति । 'दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याचामादेर्वृद्धिः स्यात् ञिति णिति किति च तद्धिते' इति सूत्रार्थः ॥—**पौर्वमद्र** इति । मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन सामानाधिकरण्यात 'तद्धितार्थ–' इति समासः ॥ —**उदीच्य**—॥ दिग्ग्रहणं निवृत्तम् ॥ उदीच्यग्रामात्किम् । माथुरः ॥ बह्वचः किम् । ध्वाजः ॥ पिप्पल्यादिङीषन्तो ध्वजीशब्दः ॥ अन्तोदात्तात्किम् । शार्कराधान, शर्कराधानशब्दे धाशब्दाकार उदात्तः । उत्तरपदप्रकृतिस्वरेण लित्स्वरस्यावस्थानात् ॥ —**शैवपुरमि**ति । 'प्रस्थपुरवहान्ताच्च' इति वुञ् न भवति, 'वृद्धात्' इति तत्रानुवृत्तेः ॥—**प्रस्थोत्तर**—॥ उदीच्य-

१ टिलोपविधानादिति—बहिषष्टिलोपो यञ् इत्यनेनेति भावः । २ अरण्याण्ण इति—अणि हि सति ङीप् स्यादिति भावः । ३ काकतीरमिति—ककतीरः प्रकृतिः । काखतीरमिति पाठान्तरम् ।

ण्वादिभ्यो गोत्रे ।४।२।१११। एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्यात्। कण्वो गर्गादिः। काण्व्यस्य छात्राः काण्वाः। ▓ इञश्च ।४।२।११२। गोत्रे य इञ् तदन्तादण् स्यात्। दाक्षाः। गोत्रे किम्। सौतङ्गमेरिदं सौतङ्गमीयम्। गोत्रमिह शास्त्रीयं नतु लौकिकम्। तेनेह न। पाणिनीयम्। ▓ न द्व्यचः प्राच्यभरतेषु ।४।२।११३। इञश्चेत्यणोऽपवादः। प्रौष्ठीयाः। काशीयाः। भरतानां प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम्। ▓ वृद्धिर्यस्याचामादिस्तद्वृद्धम् ।१।१।७३। यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात्। त्यदादीनि च ।१।१।७४। वृद्धसंज्ञानि स्युः। ▓ वृद्धाच्छः ।४।२।११४। शालीयः। मालीयः। तदीयः। ▓ एङ् प्राचां देशे ।१।१।७५। एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने। एणीपचनीयः। गोनर्दीयः। भोजकटीयः। पक्षे अणि। ऐणीपचनः। गौनर्दः। भौजकटः। एङ् किम्। आहिच्छत्रः। कान्यकुब्जः॥ * वा नामधेयस्य वृद्धसंज्ञा वक्तव्या॥ दैवदत्तः। देवदत्तीयः। ▓ भवतष्ठक्छसौ ।४।२।११५। वृद्धाद्भवत एतौ स्तः। भावत्कः। जश्त्वम्। भवदीयः। वृद्धादित्यनुवृत्तेः शत्रन्तादणेव। भावतः। ▓ काश्यादिभ्यष्ठञ्ञिठौ ।४।२।११६। इकार उच्चारणार्थः। काशिकी। काशिका। वैदिकी। वैदिका॥ * आपदादिपूर्वपदात्कालान्तात्॥ आपदादिराकृतिगणः। आपत्कालिकी। आपत्कालिका। ▓ वाहीकग्रामेभ्यश्च ।४।२।११७। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः। छस्यापवादः। कास्तीरं नाम वाहीकग्रामः। कास्तीरिकी। कास्तीरिका। ▓ विभाषोशीनरेषु ।४।२।११८। एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः। सौदर्शनिकी। सौदर्शनिका। सौदर्शनीया। ▓ ओर्देशे ठञ् ।४।२।११९। उवर्णान्ताद्देशवाचिनष्ठञ्। निषादकर्षूः, नैषादकर्षुकः। केऽण इति ह्रस्वः। देशे किम्। पटोश्छात्राः पाटवाः। ञिठं व्यावर्तयितुं ठञ्ग्रहणम्। वृद्धाच्छं परत्वादयं बाधते। दाक्षिकर्षुकः। ▓ वृद्धात्प्राचाम् ।४।२।१२०। प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम्। आढकजम्बुकः। शाकजम्बुकः। नेह मल्लवास्तु, माल्लवास्तवः। ▓ धन्वयोपधाद्वुञ् ।४।२।१२१। धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात्। ऐरावतं धन्व ऐरावतकः। साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ। साङ्काश्यकः। काम्पिल्यकः। ▓ प्रस्थपुरवहान्ताच्च ।४।२।१२२। एतदन्ताद्वृद्धाद्देशवाचिनो वुञ् स्यात्। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः। पैलुवहकः। पुरान्तग्रहणमप्रागर्थम्। प्राग्देशे तूत्तरेण सिद्धम्। ▓ रोपधेतोः प्राचाम् ।४।२।१२३। रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ् स्यात्। पाटलिपुत्रकः। ईतः, काकन्दकः। ▓ जनपदतदवध्योश्च ।४।२।१२४। जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद्वुञ् स्यात्। आदर्शकः।

ग्रामलक्षणस्याञोऽपवादः॥—पालद इति। पलदीति इकारान्त इत्येके। नान्त इत्यन्ये। नलोपे सति यणादेशात्सहिता तुल्यैव॥ वाहीकशब्दः कोपधोऽपि पलद्यादिषु पठ्यते परं छ बाधितुम्। अन्यथा अण बाधित्वा परत्वाच्छ एव स्यात्कोपधप्रयुक्तोऽण् अवृद्धे सावकाश इति॥ यकृल्लोमनि भवो याकृल्लोमः। 'अन्' इति प्रकृतिभावस्तु न, गणेऽस्मिन्नलोपनिपातनादिति हरदत्तादयः॥—सौतंगमेरिति॥ सुतगमादिभ्यश्चातुरर्थिक इञ्॥—शास्त्रीयमिति॥ ननु 'अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते' इति चेत्। अत्राहुः। पूर्वसूत्रे गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्यते, 'कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्यः' इति गोत्रप्रत्ययानुवादेन तत्राण्विधानात्। कण्वादयश्च गर्गाद्यन्तर्गताः॥ 'गर्गादिभ्यो यञ्' इत्यत्र तु 'गोत्रे कुञ्जादिभ्यः–' इत्यतो गोत्रे इत्यनुवर्तते, न तु शास्त्रीयगोत्रमेव गृह्यते अपत्याधिकारस्थत्वात्, तदेव हि 'इञश्च' इति सूत्रेनुवर्तते इति॥—न द्व्यचः—॥—अपवाद इति। प्रतिषेध इत्यर्थः॥—भरतानामग्रहणस्येति। तेन 'इञः प्राचाम्' इति भरतेभ्यो युवप्रत्ययस्य लुङ् न भवति। औद्दालकिः पिता, औद्दालकायनः पुत्र इति 'आर्हादगोपुच्छ–' इति सूत्रे कैयटः॥—भवतः—॥ छादिरयं प्रत्ययो न तु शादिः—। पदसंज्ञार्थं सित्करणादित्याशयेनाह—जश्त्वमिति॥—काश्यादिभ्यः—॥ इकार उच्चारणार्थ इति। उभयत्र ञकार एवानुबन्धः, तस्य व्यत्यासपाठस्तु स्त्रीप्रत्यये विशेषार्थ इति भावः॥—आपदादीति॥ गणसूत्रमिदम्॥—वृद्धादेवेति। 'वृद्धाच्चेत्प्राचामेव' इति विपरीतनियमस्तु न भवति, अप्राग्देशवाचिनो वृद्धस्य उवर्णान्तस्याभावात्॥—धन्वयो—॥ धन्वेति न स्वरूपपर्यायर्योर्ग्रहणं, वृद्धत्वासंभवादित्याशयेनाह—धन्वविशेषेति॥—ऐरावतं धन्वेति॥ यद्यपि 'समानौ मरुधन्वानौ' इत्यमरेण पुंस्त्वमुक्तम्। तथापि 'आष्टकं नामधन्व' इति भाष्ये द्वस्वपाठान्नपुंसकोऽपि धन्वशब्दोऽस्त्येवेति बोध्यम्॥—उत्तरेणेति। रोपधत्वादिति भावः॥—जनपद—॥ स चासौ अवधिश्चेति कर्मधारयाज्जनपदरूप एवावधिर्लभ्यते। न च

१ नामधेयस्येति—अत्र नामशब्देनाधुनिकः संकेत एव गृह्यते, अत एवैङ् प्राचां देशे इति सार्थकम्, घटीयमित्यादि तु गहादित्वात्सिद्धम् इति केचित्। अन्ये तु रूढ्या बोधकशब्दत्वमेवात्र नामत्वम्। एङ् प्राचामिति तु नियमार्थम्, देशवृत्तिश्चेदेङादिरेवेति, एवं च घटीयाद्याः प्रयोगा अनेनैव साध्यन्त इत्याहुः।

त्रैगर्तकः । **अवृद्धादपि बहुवचनविषयात्** ।४।२।१२५। अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद्वुञ् स्यात् । अवृद्धादणो वृद्धाच्छस्यापवादः । अवृद्धाज्जनपदात्, आङ्ककः । अवृद्धाज्जनपदावधेः, आजमीढकः । वृद्धाज्जनपदात्, दार्वकः । वृद्धाज्जनपदावधेः, कालञ्जरकः । विषयग्रहणं किम् । एकशेषेण बहुत्वे माभूत् । वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, तासु भवो वार्तनः । **कच्छाग्निवक्त्र[1]वर्तोत्तरपदात्** ।४।२।१२६। देशवाचिनो वृद्धादवृद्धाच्च वुञ् स्यात् । दारुकच्छकः । काण्डाग्नकः । सैन्धुवक्त्रकः । बाहुवर्तकः । **धूमादिभ्यश्च** ।४।२।१२७। देशवाचिभ्यो वुञ् । धौमकः । तैर्थकः । **नगरात्कुत्सनप्रावीण्ययोः** ।४।२।१२८। नगरशब्दाद्वुञ् स्यात्कुत्सने प्रावीण्ये च गम्ये । नागरकश्चौरः शिल्पी वा । कुत्सनेति किम् । नागरा ब्राह्मणाः । **अरण्यान्मनुष्ये** ।४।२।१२९। वुञ् । अरण्याण्ण इत्यस्यापवादः ॥ * **पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्** ॥ आरण्यकः पन्थाः, अध्यायो, न्यायो, विहारो, मनुष्यो, हस्ती वा * ॥ **वा गोमयेषु** ॥ आरण्यकाः आरण्या वा गोमयाः । **विभाषाकुरुयुगन्धराभ्याम्** ।४।२।१३०। वुञ् । कौरवकः । कौरवः । यौगन्धरकः । यौगन्धरः । **मद्रवृज्योः कन्** ।४।२।१३१। जनपदवुञोऽपवादः । मद्रेषु जातो मद्रकः । वृजिकः । **कोपधादण्** ।४।२।१३२। माहिषिकः । **कच्छादिभ्यश्च** ।४।२।१३३। देशवाचिभ्योऽण् । वुञादेरपवादः । काच्छः । सैन्धवः । **मनुष्यतत्स्थयोर्वुञ्** ।४।२।१३४। कच्छाद्यणोऽपवादः । कच्छे जातादिः काच्छको मनुष्यः । काच्छकं हसितम् । मनुष्येति किम् । काच्छो गौः । **अपदातौ साल्वात्** ।४।२।१३५। साल्वशब्दस्य कच्छादित्वाद्वुञि सिद्धे नियमार्थमिदम् । अपदातावेवेति[2] । साल्वको ब्राह्मणः । अपदातौ किम् । साल्वः पदातिर्व्रजति । **गोयवाग्वोश्च** ।४।२।१३६। साल्वाद्वुञ् । कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् । **गर्तोत्तरपदाच्छः** ।४।२।१३७। देशे । अणोऽपवादः । वृकगर्तीयम् । उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् । **गहादिभ्यश्च** ।४।२।१३८। छः स्यात् । गहीयः ॥ * **मुखपार्श्वतसोर्लोपश्च** ॥ मुखतीयम् । पार्श्वतीयम् । अव्ययानां भमात्रे टिलोपस्यानित्यतां ज्ञापयितुमिदम् ॥ * **कुग्जनस्य परस्य च** ॥ जनकीयम् । परकीयम् ॥ * **देवस्य च** ॥ देवकीयम् ॥ * **स्वस्य च** ॥ स्वकीयम् ॥ * **वेणुकादिभ्यश्छण्वाच्यः** ॥ वैणुकीयम् । वैत्रकीयम् । औत्तरपदकीयम् । **प्राचां कटादेः** ।४।२।१३९। प्राग्देशवाचिनः कटादेश्छः स्यात् । अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् । **राज्ञः क च** ।४।२।१४०। वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्रं विधीयते । राजकीयम् । **वृद्धादकेकान्तखोपधात्** ।४।२।१४१। अक इक एतदन्तात्खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात् । ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनस्तत्र जातो ब्राह्मणकीयः । शाल्मलिकीयः । अयोमुखीयः । **कन्थापलदनगरग्रामह्रदोत्तरपदात्** ।४।२।१४२।

जनपदत्वादेव सिद्धे अवधिग्रहण व्यर्थम्, 'वुञेव यथा स्यान्नान्यत्' इत्येतदर्थं तस्यावश्यकत्वात् । अत एव जनपदावधिवाचिनस्त्रिगर्तशब्दात् 'गर्तोत्तरपदात्' इति च्छो न भवति, किं तु 'अवृद्धादपि बहुवचनविषयात्' इत्युत्तरसूत्रेण वुञेव भवतीत्याशयेनोदाहरति—**त्रैगर्तक** इति । 'जनपदतदवध्योः' इति सूत्रे जनपदावधिवाचिन उदारण तु 'श्यामायनकः' इत्यादि बोध्यम् ॥—**नागरा ब्राह्मणा** इति ॥ कन्यादिषु माहिष्मतीति सञ्ज्ञाशब्दसाहचर्यात्सञ्ज्ञाभूतनगरशब्दस्यैव ढकञा नागरेयक इति भाव्यमिति भावः ॥—**विभाषा कुरु—**॥ कुरुशब्द कच्छादिषु पठ्यते तत्सामर्थ्यात्पक्षेऽण् सिद्ध इति परिशेषाद्विभाषाग्रहण युगन्धरार्थमेव ॥ 'अवृद्धादपि–' इति नित्यप्राप्तौ वुञनेन विकल्प्यते । मनुष्यतत्स्थयोस्तु परत्वान्नित्य एव वुञ् । कौरवको मनुष्यः कौरवकमस्य हसितम् । एतदर्थमेवास्य कच्छादौ पाठः । अन्यथा अनयैव विभाषया वुञणोः सिद्धौ किं तेनेति भावः ॥—**सैन्धव** इति ॥ 'ओर्देशे' इति ठञ् प्राप्त ॥—**वुञि सिद्धे** इति ॥ 'मनुष्यतत्स्थयोः' इत्यनेन ॥—**गहादिभ्यश्च** ॥ गहादिभ्यो देशवाचिभ्यश्छ स्यात् ॥ पूर्वपक्षादिशब्देभ्यस्तु देशवाचित्वाभावेऽपि पाठसामर्थ्याच्छः ॥—**मुखपार्श्वतसोरि**ति । गणसूत्रमिदम् । सप्तम्यन्ताभ्यामाभ्यामाद्यादित्वात्तसिः ॥—**मुखतीयमि**ति । मुखे जातमित्याद्यर्थे तसन्ताच्छः । 'अलोऽन्त्यस्य' इति तसः सकारस्य लोपे 'यस्येति च' इत्यकारलोपः ॥—**कुग् जनस्ये**ति । इदमपि गणसूत्रम् ॥—**स्वकीयमि**ति । स्वार्थिककन्नन्तात्स्वशब्दाद्गहादेराकृतिगणत्वाच्छः । देशवाचित्वाभावेऽपि पूर्वपक्षादिवद्बोध्यः ॥ अत एव 'लुब्योगाप्रख्यानात्' इति सूत्रे 'न हि स्वकीयस्यैव प्रत्याख्यानम्' इति न्यासकारोक्तिः संगच्छते ॥ केवलात्स्वशब्दादणेव । स्वम् । एतच्च 'द्वारादीनां च' इत्यत्र आकरे उदाहृतम् । स्वीयमित्यत्र तु 'प्राक्क्रीताच्छः' अन्तरशब्दात्तु गहादित्वाच्छे तदन्तेन नञ्शब्दस्य समासे स्वार्थे कनि च 'नान्तरीयकम् इति भवति' । अविनाभूतमित्यर्थः—**वृद्धादके—**॥—**ब्राह्मणकीय** इति । 'कोपधादण्' इ-

---

१ वक्त्रवर्तेति—क्वचित्तु गर्तेति पठ्यते । २ अपदातावेवेति—साल्वादेरेवेति विपरीतनियमस्तु न व्याख्यानादिति भावः ।

कन्थादिर्यञ्जकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात्। ठञ्ञिठादेरपवादः। दाक्षिकन्थीयम्। दाक्षिपलदीयम्। दाक्षिनगरीयम्। दाक्षिग्रामीयम्। दाक्षिह्रदीयम्। **॥ पर्वताच्च** ।४।२।१४३। पर्वतीयः। **॥ विभाषाऽमनुष्ये** ।४।२।१४४। मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात्पक्षेऽण्। पर्वतीयानि पार्वतानि वा फलानि। अमनुष्ये किम्। पर्वतीयो मनुष्यः। **॥ कृकणपर्णाद्भारद्वाजे** ।४।२।१४५। भारद्वाजदेशवाचिभ्यामाभ्यां छः। कृकणीयम्। पर्णीयम्। भारद्वाजे किम्। कार्कणम्। पार्णम्। **॥ युष्मदस्मदोरन्यतरस्यां खञ्च** ।४।३।१। चाच्छः। पक्षेऽण्। युवयोर्युष्माकं वा अयं युष्मदीयः। अस्मदीयः। **॥ तस्मिन्नणि च युष्माकास्माकौ** ।४।३।२। युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः। **॥ तवकममकावेकवचने** ।४।३।३। एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञ्यणि च। तावकीनः। तावकः। मामकीनः। मामकः। छे तु। **॥ प्रत्ययोत्तरपदयोश्च** ।७।२।९८। मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च। त्वदीयः। मदीयः। **॥ अर्धाद्यत्** ।४।३।४। अर्ध्यः। **॥ परावराधमोत्तमपूर्वाच्च** ।४।३।५। परार्ध्यम्। अवरार्ध्यम्। अधमार्ध्यम्। उत्तमार्ध्यम्। **॥ दिक्पूर्वपदाट्ठञ्च** ।४।३।६। चाद्यत्। पौर्वार्धिकम्। पूर्वार्ध्यम्। **॥ ग्रामजनपदैकदेशादञ्ठञौ** ।४।३।७। ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः। इमेऽस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः। पौर्वार्धिकाः। ग्रामस्य पूर्वस्मिन्नर्धे भवा इति तद्धितार्थे समासः। ठञ्ग्रहणं स्पष्टार्थम्। अञ्चेत्युक्ते यतोऽप्यनुकर्षः संभाव्येत। **॥ मध्यान्मः** ।४।३।८। मध्यमः। **॥ अ सांप्रतिके** ।४।३।९। मध्यशब्दादकारप्रत्ययः स्यात्सांप्रतिकेऽर्थे। उत्कर्षापकर्षहीनो मध्यो वैयाकरणः। मध्यं दारु। नातिह्रस्वं नातिदीर्घमित्यर्थः। **॥ द्वीपादनुसमुद्रं यञ्** ।४।३।१०। समुद्रस्य समीपे यो द्वीपस्तद्विषयाद्द्वीपशब्दाद्यञ् स्यात्। द्वैप्यम्। द्वैप्या। **॥ कालाट्ठञ्** ।४।३।११। कालवाचिभ्यष्ठञ् स्यात्। मासिकम्। सांव-

---

इत्यण् प्राप्त' ॥—**आयोमुखीयम्**इति ॥ वाहीकग्रामलक्षणौ ठञ्ञिठाविह प्राप्तौ ॥—**ठञ्ञिठादेरि**ति ॥ आदिशब्देन 'रोपधेतोः' इत्यादिना प्राप्तस्य वुञः ॥—**पर्वतीय** इति ॥ 'तत्र घोर रघोर्युद्ध पार्वतीयैर्गणैरभूत्' इत्यत्र तु 'पर्वतीयस्य राज्ञ इमे इत्यर्थे छान्तादण्' ॥—**कृकण**—॥ भारद्वाजशब्दोऽत्र देशवचन', स च न प्रत्ययार्थः, किं तु प्रकृतिविशेषणमित्याह—**भारद्वाजदेशे**त्यादिना ॥—**युष्मदस्मदोः**—॥ 'त्यदादीनि च' इति वृद्धत्वान्नित्ये छे प्राप्ते खञणोरपि विधानार्थमिदम् ॥—**पक्षे अणि**ति। अन्यतरस्याग्रहणादिति भावः ॥ तथा चैते त्रयः प्रत्यया इति वैषम्याद्यथासख्य न भवन्तीति केचित् ॥ मनोरमायां तु यथासख्यनिवारणाय योगविभागः कृतः। तथा हि 'युष्मदस्मदोरन्यतरस्याम्'। आभ्यां छो वा स्यात्। 'त्यदादीनि च' इति वृद्धत्वान्नित्ये छे प्राप्ते विकल्पोऽयम्। ततः 'खञ्च' एवमुत्तरसूत्रेऽपि योगविभागो बोध्यः। तेन आदेशयोः खञण्भ्यां यथासख्य नेत्यादि ॥—**युवयोरि**त्यादि। एकवचने तवकममकादेशविधानादेकवचनान्तेन विग्रहोऽत्र न कृत. ॥—**तस्मिन्नणि च**—॥ तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते। ननु चानुकृष्टः ॥ निमित्तयोरादेशौ प्रति यथासख्य तु न भवति 'खञणोः—' इति वक्तव्ये पृथग्विभक्तिनिर्देशसामर्थ्यात् ॥ स्थान्यादेशयोस्तु इष्यत एव तत् ॥—**तवक**—॥ इह पूर्ववदेव निमित्तयोः खञणोरादेशौ प्रति यथासख्य न भवति, किंतु स्थान्यादेशयोरेवेत्याशयेनोदाहरति—**तावकीनः। मामकीन** इति ॥—**परावरा**—॥ 'परावराधमोत्तमेभ्यः' इत्येव वक्तव्ये पूर्वग्रहण पूर्वविप्रतिषेधसूचनार्थम्। तेन दिक्शब्दयोः परावरयोरर्धशब्देन समासे उत्तरसूत्रेण प्राप्तावपि ठञ्यतौ बाधित्वा यदेव भवति ॥—**दिक्**—॥ पूर्वपदग्रहण स्वरूपविधिनिरासार्थमित्याहुः ॥—**अ सांप्रतिके** ॥ सप्रतीत्यव्ययं न्याय्ये वर्तते 'अनाप्तश्चतूरात्रोऽतिरिक्तः, षड्रात्रः स वा एष सप्रति यज्ञो यत्पञ्चरात्रः' इत्यत्र तथा दर्शनात्। न न्यूनो नातिरिक्तः सम इत्यर्थः ॥ इदानीमित्यर्थे तु प्रसिद्धमेव। 'एतर्हि सप्रतीदानीम्' इत्यमरात्। ततः प्रज्ञादित्वात्स्वार्थेण्। विनयादित्वात्स्वार्थे ठगपि। तेन सांप्रत साप्रतिकमिति पर्यायौ ॥—**उत्कर्षे**त्यादि। न्याय्ये विद्यमान एव संप्रतिशब्दोऽत्र गृह्यते इति भावः ॥—**द्वीपादनु**—॥ समुद्र समया अनुसमुद्रम्। 'अनुर्यत्समया' इत्यव्ययीभावः सप्तम्यन्त चेदम्। विद्यामानक्रियाद्वारा द्वीपविशेषणमित्याशयेनाह—**समुद्रसमीपे यो द्वीप** इति। कच्छाद्यणो मनुष्यवुञश्चापवादोऽयम् ॥ अनुसमुद्रं किं, द्वैपमन्यत्। कच्छाद्यण् द्वैपको मनुष्यः। 'मनुष्यतत्स्थयोः—' इति वुञ् ॥—**द्वैप्ये**ति। 'यञश्च' इति ङीप् भवति। 'अपत्याधिकारस्थादेव यञो ङीप्' इति प्रागेवोक्तत्वात् ॥—**कालाट्ठञ्** ॥ स्वरूपस्यैव न ग्रहणम् 'संधिवेलादि' सूत्रेण संधिवेलात्रयोदशीचतुर्दशीप्रभृतिभ्योऽवृद्धेभ्योऽपि ठञ्बाधनार्थमण्विधानात्। किं तु सर्वेषामपि कालवाचिनां ग्रहणमित्याशयेनाह—**कालवाचिभ्य** इति ॥ यत्तु स्वरूपस्य पर्यायाणां च न ग्रहणमिति पदमञ्जर्यादिषु स्थितम्। तदसत्।

---

१ अमनुष्ये इति—अमनुष्यशब्दोऽत्र यौगिको व्याख्यानात्, नतु 'सभाराजाऽमनुष्यपूर्वा' इत्यत्रेव रूढ्या रक्षःपिशाचादिबोधकः। २ कालादिति—कालशब्देन यथाकथंचिदपि कालबोधकानां ग्रहणम्। अत एव सायप्रातिक इत्यत्र ठञ् सिद्धः। अन्यथा स्वाङ्गसमुदायस्य स्वाङ्गवाचकत्वाभाववत्कालसमुदायस्य कालवाचकत्वाभावाट्ठञ् न स्यात् इति दिक्।

त्सरिकम् । सायंप्रातिकः । पौनःपुनिकः । कथं तर्हि शार्वरस्य तमसो निषिद्धये इति कालिदासः, अनुदितौषसरागेति भारविः, समानकालीनं प्राक्कालीनमित्यादि च । अपभ्रंशा एवैत इति प्रामाणिकाः । तत्र जात इति यावत्काला‌धिकारः । **श्राद्धे शरदः** ।४।३।१२। ठञ् स्यात् । ऋत्वणोऽपवादः । शारदिकं श्राद्धम् । **विभाषा रोगातपयोः** ।४।३।१३। शारदिकः शारदो वा रोग आतपो वा । एतयोः किम् । शारदं दधि । **निशाप्रदोषाभ्यां च** ।४।३।१४। वा ठञ् स्यात् । नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् । **श्वसस्तुट् च** ।४।३।१५। श्वस्शब्दाट्ठञ् वा स्यात्तस्य तुडागमश्च । **द्वारादीनां च** ।७।३।४। द्वार, स्वर, स्वल्कश, स्वस्ति, स्वर्, स्फ्यकृत, स्वादु, मृदु, श्वस, श्वन्, स्व एषां न वृद्धिरैजागमश्च । शौवस्तिकम् । **संधिवेलाद्यृतुनक्षत्रेभ्योऽण्** ।४।३।१६। संधिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् । सन्धिवेलायां भवं सान्धिवेलम् । ग्रैष्मम् । तैषम् । सन्धिवेला, संध्या, अमावास्या, त्रयोदशी, चतुर्दशी, पौर्णमासी, प्रतिपत् ॥ * **संवत्सरात् फलपर्वणोः** ॥ सांवत्सरं फलं पर्व वा । सांवत्सरिकमन्यत् । **प्रावृष एण्यः** ।४।३।१७। प्रावृषेण्यः । **वर्षाभ्यष्ठक्** ।४।३।१८। वर्षासु साधु वार्षिकं वासः । कालात्साधुपुष्प्यत्पच्यमानेष्विति साध्वर्थे । **सर्वत्राण् च तलोपश्च** ।४।३।२२। हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । चकारात्पक्षे ऋत्वण् । हैमनम् । हैमन्तम् । **सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** ।४।३।२३। सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयो-

'कालिक' संबन्धः, कालिकी व्याप्तिः' इत्यादिप्रयोगानापत्तेः । न च विशेषाणामेव ग्रहणे सन्धिवेलादिभ्योऽण्विधानं ज्ञापकमिति वाच्यम् । स्वरूपमात्रग्रहणनिरासकत्वेनापि साफल्यात् ॥ गौणमुख्यन्यायस्त्विह नाश्रीयते । तेन कदम्बपुष्पसाहचर्यात्कदम्बपुष्पः कालः, व्रीहिपलालसाहचर्याद्व्रीहिपलाल' काल', तत्र भवं कादम्बपुष्पिकं व्रैहिपलालिकमित्याकरः। अत्र हि प्रमाणं सधिवेलादिसूत्रे अनेन कालग्रहणेन नक्षत्राणा विशेषणमेवेत्याहुः । न च पुष्यादिशब्दाना कालो मुख्य एवार्थः, 'लुबविशेषे' इति व्युत्पादनात्, तथा च कालविशेषणमुक्तार्थं न प्रमाणमिति वाच्यम् । पुष्यादिसमीपस्थचन्द्रमसा युक्ते काले पुष्यादिशब्दानां गौणत्वात् । 'लुबविशेषे' इति शास्त्रमपि गौणवृत्तित्वान्वाख्यापकमेवेति दिक् ॥ एवं स्थिते 'कालवाचिभ्यः-' इति मूलस्य 'कालप्रतिपादकेभ्यः' इति फलितोऽर्थः ॥—**श्राद्धमिति** ॥ भक्त्या क्रियमाणं पित्र्यं कर्मेत्यर्थः । 'प्रज्ञाश्रद्धार्चाभ्योऽण्' इति मत्वर्थीयेन व्युत्पादितं । श्रद्धावान्पुरुषस्तु न गृह्यते, अनभिधानात् ॥—**श्वसस्तुट् च** ॥ विभाषेत्यनुवर्तनादाह—**ठञ् वा स्यादिति** ॥ 'एषमोह्यः' इत्यादिना त्यबपि विकल्पेन विहित आभ्यां मुक्ते ट्युट्युलावपि स्त एव ॥—**शौवस्तिकमिति** ॥ नन्वन्तरङ्गत्वात् तुटि ठस्य प्रत्ययादित्वाभावात्कथं ठस्येकः इत्यत्र ठच इकादेशो न स्यात् । न च परत्वादिकादेशे तस्य तुडिति वाच्यम् । आदेशात्प्रागेवान्तरङ्गत्वात्तुटः प्रवृत्तेः । इकादेशस्य लाक्षणिकत्वेन बहिरङ्गत्वात् । सूत्रभङ्गेन तुकि हि क्रियमाणे तु 'इसुसुक्तान्तात्' इति कादेशप्रसङ्ग इति चेत् । सत्यम् । वुञ्छणादिषु ठचश्चित्त्वेन 'एकादेशोऽन्तरङ्गेभ्यो बलवान्' इति ज्ञापितत्वात् । अन्यथा प्रत्ययाद्युदात्तत्वे कृते एकादेश' स्यादिति किं ठचश्चित्त्वेन । कृते त्विकादेशे प्रत्ययस्वरबाधनाय चित्त्वं प्रयुज्यत इति मनोरमायां स्थितम् ॥—**संधिवेला**—॥ अण्ग्रहणं तु छबाधनार्थम् । अन्यथा 'सन्धिवेलादिभ्यो यथाविहितं प्रत्ययाः स्युः' इत्युक्ते पौर्णमासीशब्दात् 'वृद्धाच्छः' स्यात् । वचनं तु ठञो बाधनाय स्यादिति भावः ॥—**तैषमिति** । तिष्याद्भवादावण् । जातार्थे तु 'श्रविष्ठाफल्गुनी-' इति लुक् स्यात् । 'सूर्यतिष्य-' इत्यत्र 'तिष्यपुष्ययोर्नक्षत्राणि' इति वचनाद्यलोपः ॥—**प्रावृष एण्यः** ॥ ऋत्वणोऽपवादः । प्रवर्षतीति प्रावृट्, 'नहिवृति-' इति दीर्घः । तत्र भवः । जातं तु ठञ् वक्ष्यति । 'रषाभ्याम्-' इति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणमित्याहुः ॥ किं च 'प्रावृषेण्यमाचक्षाणः प्रावृषेण्' इत्यत्र णकारश्रवणार्थमपि तत् । ण्यन्तात्क्विपि टिलोपणिलोपयलोपाः ॥—**सर्वत्राण् च**—॥—**हेमन्तादिति** एतच्च 'हेमन्ताच्च' इत्यतोऽनुवृत्तमिति भावः ॥—**हैमनमिति** । अकारविशिष्टस्य तच्छब्दस्य लोपे 'अन्' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न । तकारस्यैव लोप इति पक्षे 'यस्येति च' इत्यल्लोपस्याभीयत्वेनासिद्धत्वात्स्थानिवद्भावाद्वा टिलोपो नेति बोध्यम् ॥—**हैमन्तमिति** । ऋत्वणि तकारलोपो न भवति, तस्य 'सर्वत्राण्-' इति प्रतिपदोक्तेन अणा संनियोगशिष्टत्वात् ॥ एतच्च प्रत्याख्यातं भाष्ये । तथा हि हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति 'हेमन्नाग्नीगन्ति कर्णौ' इत्यादिप्रयोगात् । ततश्च हेमन्हेमन्तशब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम् । छन्दसि तु 'हेमन्ताच्च' इति ठञा हैमन्तिकमिति तृतीयमपि रूपं सिध्यति । न च विशेषविहितेन ठञा अणो बाधः शङ्क्यः । छन्दसि सर्वविधीनां वैकल्पिकत्वात् । वृत्तिकृता तु 'हेमन्ताच्च इति सूत्रे सर्वत्रग्रहणमपकृष्य लोकेऽपि हैमन्तिकमिति स्वीकृतम् ॥—**सायंचिरम्**—॥ नन्वन्तरङ्गत्वात्प्रथमं तुटि 'मृत्युः' इत्यादाविव त्युशब्दस्य प्रत्ययतया अङ्गसंज्ञानिमित्तं यो युस्तस्य विधीयमानोऽनादेशो न स्यात् । न चैवं तुगेव क्रियतामिति वाच्यम् । तस्य पूर्वान्तत्वेन विसर्गाभावात्प्रातस्तनमित्यत्र सत्त्वाभावप्रसङ्गात्, अत

१ सन्धिवेलादीति—इह गणे शश्वतोवेति पाठाच्छाश्वतिकशाश्वतौ सिद्धाविति नस्तद्धिते इति सूत्रस्थभाष्यस्वरसः इति शब्देन्दुशेखरे स्पष्टम् ॥

स्तुट् च। तुटः प्रागनादेशः। अनद्यतन इत्यादिनिर्देशात्। सायन्तनम्। चिरन्तनम्। प्राह्णप्रगयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम्। दिवातनम्॥ * चिरपरुत्परारिभ्यस्त्नो वक्तव्यः॥ चिरत्नम्। परुत्नम्। परारित्नम्॥ * अग्रादिपश्चाड्डिमच्॥ अग्रिमम्। आदिमम्। पश्चिमम्॥ * अन्ताच्च॥ अन्तिमम्। **विभाषा पूर्वाह्णापराह्णाभ्याम्** ।४।३।२४। आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च। पक्षे ठञ्। पूर्वाह्णेतनम्। अपराह्णेतनम्। घकालतनेष्वित्यलुक्। पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनम्। अपराह्णतनम्। पौर्वाह्णिकम्। आपराह्णिकम्। **तत्र जातः** ।४।३।२५। सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः। स्रुघ्ने जातः स्रौघ्नः। औत्सः। राष्ट्रियः। अवापारीण इत्यादि। **प्रावृषष्ठप्** ।४।३।२६। एण्यस्यापवादः। प्रावृषि जातः प्रावृषिकः। **संज्ञायां शरदो वुञ्** ।४।३।२७। ऋत्वणोऽपवादः। शारदका दर्भविशेषा मुद्गविशेषाश्च। **उत्तरपदस्य** ।७।३।१०। अधिकारोऽयम्। हनस्त इत्यस्मात्प्राक्। **अवयवादृतोः** ।७।३।११। अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे। पूर्ववार्षिकः। अपरहैमनः। अवयवात्किम्। पूर्वासु वर्षासु भवः पौर्ववर्षिकः। ऋतोर्वृद्धिमद्विधाववयवानामिति तदन्तविधिः पूर्वत्र। इह तु न। अवयवत्वाभावात्। **सुसर्वार्धाज्जनपदस्य** ।७।३।१२। उत्तरपदस्य वृद्धिः। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः। जनपदतदवध्योरिति वुञ्। सुसर्वार्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिः। **दिशोऽमद्राणाम्** ।७।३।१३। दिग्वाचकाज्जनपदवाचिनो वृद्धिः। पूर्वपाञ्चालकः। दिशः किम्। पूर्वपञ्चालानामयं पौर्वपञ्चालः। अमद्राणां किम्। पौर्वमद्रः। योगविभाग उत्तरार्थः। **प्राचां ग्रामनगराणाम्** ।७।३।१४। दिशः परेषां नगरवाचिनां ग्रामवाचिनामङ्गानामवयवस्य च वृद्धिः। पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः। नगरे, पूर्वपाटलिपुत्रकः। **पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्** ।४।३।२८। पूर्वाह्णकः। अपराह्णकः। आर्द्रकः। मूलकः। प्रदोषकः। अव-

---

आह—**तुटः प्रागि**ति॥—**इत्यादी**ति। आदिशब्देन 'घकालतनेषु' इति ग्राह्यम्॥—**सायंतनमि**ति। स्यतेर्घञि सायशब्दोऽकारान्तो दिवसावसाने रूढः, तस्य प्रत्ययसनियोगेन मान्तत्व निपात्यत इति वार्तिककृन्मतम्॥ भाष्यकृता तु 'मान्ताव्ययम्' इत्याश्रित्य सायग्रहण प्रत्याख्यातम्। न चैवं सायशब्दात्कालाट्ठञि अनिष्टरूपप्रसङ्गः। तस्य कालवाचित्वाभावादनभिधानाद्वेत्याहुः॥—**चिरंतनमि**ति। चिरशब्दस्यापि प्रत्ययसंनियोगेन मान्तता निपात्यत इति भावः॥ अत्र वदन्ति। स्वरादौ पाठादव्ययत्वादेव सिद्धे सूत्रे चिरमित्येतल्लक्ष्यर्थम्। न चादन्ताच्चिरशब्दाट्ठञ् स्यादिति वाच्यम्। त्नेन बाधादिति॥—**एदन्तत्वमि**ति। प्राह्ण सोढोऽस्य प्राह्णेतन इत्याद्यर्थम्। तत्र हि सप्तमी नास्ति॥ जातार्थे 'घकालतनेषु' इत्यलुकापि सिद्धेः॥—**चिरत्नमि**ति। सूत्रे चिरशब्दस्योपादानात् ट्युट्युलावपि स्तः। न चैवं सूत्रे चिरशब्दस्य प्रत्याख्यानं न संभवतीति वाच्यम्। मान्ताव्ययादेव ट्युट्युल्विधौ तत्सम्भवात्। **परुत्** पूर्वस्मिन् वत्सरे। **परारि** पूर्वतरे॥—**अग्रादि**। डिमचो डित्त्वं स्पष्टार्थम्॥—**तत्र जातः**॥ ननु 'शेषे' इत्यस्य लक्षणत्वोक्तेः 'चाक्षुषं रूप, श्रावणः शब्दः' इत्यादाविव जातादिष्वर्थेष्वणादयः सिद्धाः, अधिकाराच्च घादयोऽपि। न च 'जातादिष्वेवाणादयः' इति नियमार्थं जाताद्यर्थनिर्देश आवश्यकः। अन्यथा 'तत्रास्ते, तत्र शेते' इत्याद्यर्थेऽपि प्रत्ययः स्यादिति वाच्यम्। चाक्षुषमित्याद्यसिद्ध्यापत्तेः। 'स्रुघ्न आस्ते, स्रुघ्ने शेते' इत्यादौ त्वनभिधानादेव तद्धितो न भविष्यति, अङ्गुल्या खनति वृक्षमूलादागत इत्यादौ यथा। समर्थविभक्तयस्त्वाक्षेपादेव लक्ष्यन्ते। चाक्षुषमित्यत्र तृतीया यथा, तस्मात् 'तत्र जातः' इत्याद्यर्थनिर्देशो व्यर्थ इति चेत्। मैवम्। 'प्रावृषष्ठप्' इत्याद्यपवादार्थं तदावश्यकत्वात्। ये तु निरपवादा अर्थनिर्देशाः 'कृतलब्धक्रीतकुशलाः' इत्यादयः, ते तु व्यर्था एवेति दिक्॥—**संज्ञायां शरदः**—॥ समुदायेन चेत्संज्ञा गम्यत इत्यर्थः॥ संज्ञायां किम्। शारद सस्यम्। 'सञ्ज्ञायाम्' इत्येतत् 'कृतलब्ध–' इत्येतत्पर्यन्त केचिदनुवर्तयन्तीति वृत्तिकृत्॥—**पूर्ववार्षिक** इत्यादि॥ वर्षाणां पूर्वः, हेमन्तस्यापर इति विग्रहे 'पूर्वापराधरोत्तरम्' इत्येकदेशिसमासः॥—**पूर्वास्वि**ति। तद्धितार्थे समासः॥—**ऋतोर्वृद्धिमद्विधावि**ति। ऋतुवाचिनः शब्दाद्वृद्धिनिमित्तकप्रत्ययविधाने तदन्तविधिर्वाच्यः, स चेदृतुवाचीशब्दोऽवयवेभ्यः पर इत्यर्थः। पूर्ववार्षिकः अपरहैमन इत्यत्र। तथा च 'वर्षाभ्यष्ठक्' 'सर्वत्राण् च तलोपश्च' इत्याभ्यां क्रमेण ठगणौ भवतः॥ वृद्धिमद्विधौ किं, पूर्वप्रावृषम्। 'प्रावृष एण्यः' इत्यत्र तदन्तविध्यभावादिह ऋत्वणेव॥—**इह त्वि**ति। पौर्ववार्षिक इत्यत्र। तथा चेह 'कालाट्ठञ्' इति ठञेवेति भावः—**आवयवत्वाभावादि**ति। अन्यथा पूर्वासु वर्षास्विति सामानाधिकरण्य न सगच्छेतेति भावः॥—**जनपदतदवध्योरितीति**॥ तस्मिन्ननुवर्तमाने 'अवृद्धादपि बहुवचनविषयात्' इत्यनेनेत्यर्थः॥—**पौर्वमद्र** इति॥ 'मद्रेभ्योऽञ्' इत्यञ्॥—**पूर्वाह्णक** इति॥ 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इत्यस्या-

---

१ पूर्ववार्षिक इति—इय चोत्तरपदवृद्धिः सत्यपि सम्भवे इति न्यायेन पूर्वपदवृद्धेर्बाधिका, अत एव 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति चरितार्थमिति भावः। २ उत्तरार्थ इति—'प्राचां ग्राम' इत्युत्तरसूत्रे दिश एव संबन्धो यथा स्यात् इत्येवमर्थ इत्यर्थः। एकयोगे तु स्वादिभ्यः परस्यापि मद्रस्य पर्युदासः संभाव्येतेतीहार्थोऽपीत्यन्ये।

स्करकः । **पथः पन्थ च** ।४।३।२९। पथि जातः पन्थकः । **अमावास्याया वा** ।४।३।३०। अमावास्यकः। आमावास्यः । **अ च** ।४।३।३१। अमावास्यः । **सिन्ध्वपकराभ्यां कन्** ।४।३।३२। सिन्धुकः । कच्छाद्यणि मनुष्यवुञि च प्राप्ते । अपकरकः । औत्सर्गिकेऽणि प्राप्ते । **अणञौ च** ।४।३।३३। क्रमात् स्तः । सैन्धवः। आपकरः । **श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्** ।४।३।३४। एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् । **लुक् तद्धितलुकि** ।४।२।४९। तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात् । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः इत्यादि ॥ * **चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्** ॥ चित्रायां जाता चित्रा । रेवती । रोहिणी । आभ्यां लुक्तद्धितलुकीति लुकि कृते पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष्[1] ॥ * **फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ** ॥ स्त्रियामित्येव । फल्गुनी । अषाढा । * **श्रविष्ठाषाढाभ्यां छण्वक्तव्यः** । अस्त्रियामपि । श्राविष्ठीयः । आषाढीयः । **जे प्रोष्ठपदानाम्** ।७।३।१८। प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः स्याज्जातार्थे ञिति णिति किति च । प्रोष्ठपदासु जातः प्रोष्ठपादो माणवकः । जे इति किम् । प्रोष्ठपदासु भवः प्रौष्ठपदः । बहुवचननिर्देशात्पर्यायोऽपि गृह्यते । भाद्रपादः । **स्थानान्तगोशालखरशालाच्च** ।४।३।३५। एभ्यो जातार्थप्रत्ययस्य लुक् स्यात् । गोस्थानः । गोशालः । खरशालः । विभाषा सेनेति नपुंसकत्वे ह्रस्वत्वम् । **वत्सशालाभिजिदश्वयुक्शतभिषजो वा** ।४।३।३६। एभ्यो जातार्थस्य लुग्वा स्यात् । वत्सशाले जातो वत्सशालः । वात्सशालः इत्यादि । * **जातार्थे प्रतिप्रसूतोऽण्वा डिद्वक्तव्यः** । शातभिषः शातभिषजः । शतभिषक् । **नक्षत्रेभ्यो बहुलम्** ।४।३।३७। जातार्थप्रत्ययस्य बहुलं लुक् स्यात् । रोहिणः । रौहिणः । **कृतलब्धक्रीतकुशलाः** ।४।३।३८। तत्रेत्येव । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः । **प्रायभवः** ।४।३।३९। तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः । **उपजानूपकर्णोपनीवेष्ठक्** ।४।३।४०। औपजानुकः । औपकर्णिकः । औपनीविकः । **संभूते** ।४।

---

पवादः ॥—**आर्द्रकः । मूलक** इति । नक्षत्राणोऽपवादः ॥—**प्रदोषक** इति । 'निशाप्रदोषाभ्यां च' इत्यस्यापवादः ॥ —**अवस्करक**इति । औत्सर्गिकस्याणोऽपवादः ॥ ये तु 'संज्ञायाम्' इत्येतत् 'कृतलब्ध–' इत्येतत्पर्यन्तमनुवर्तयन्ति । तन्मते असंज्ञाया यथायथमणादयो घादयश्च बोध्याः ॥—**अमावास्याया वा** ॥ सन्धिवेलाद्यणोऽपवादः ॥ 'अमावस्यदन्यतरस्याम्' इति सूत्रेणामापूर्वाद्वसेर्ण्यन्ति वृद्धौ पक्षे ह्रस्वत्वं निपात्यत इति ह्रस्वमध्यमप्यमावस्याशब्दस्येह ग्रहणम्, प्रकृतिग्रहणे विकृतेरपि ग्रहणात् । अमावस्यकः । आमावस्यः । ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधं पठन्ति, तेषां तु दीर्घोपधस्य न स्याद्विकृतिग्रहणेन प्रकृतेरग्रहणादिति हरदत्तादयः ॥ वस्तुतस्तु ग्रहप्रकृतिभूतस्यानुकरणमिदमित्याश्रित्य ह्रस्वोपधपाठोऽपि समर्थयितुं शक्यत इत्यन्ये ॥—**अ च** ॥ अमावास्याशब्दादकारप्रत्ययः स्यात् ॥ अयमपि पूर्ववद्भाभ्यां बोध्यः ॥—**अमावास्य** इति । ह्रस्वमध्यात्तु अमावस्यः ॥—**अणञौ च** ॥ यथासंख्यार्थो योगविभागः ॥—**श्रविष्ठा—**॥ इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तादयः ॥ माधवस्तु 'दीर्घान्तः' इति 'अत सातत्यगमने' इति धातावाह ॥ एवं चात्र स्वातीतिष्येति ङीषन्तग्रहणादङीषन्तस्य स्वातिरिति रूपं भवार्थ इव जातार्थेऽपि माधवमते सिध्यत्येव ॥ कैयटादिमते तु जातार्थे न सिध्यति । लुग्विधायकेऽस्मिन् ङीषन्तग्रहणेऽपि लिङ्गविशिष्टपरिभाषया ङीषन्तादपि अणो लुकः प्रवृत्तेः ॥—**उपसर्जने**ति ॥ अप्रधानमिहोपसर्जनं गृह्यते, न शास्त्रीयमसम्भवात् ॥ ननु 'गोस्त्रियोः' इति सूत्रेऽप्यप्रधानलक्षणमेवोपसर्जनं गृह्यताम् 'एकविभक्ति च' इति शास्त्रीयं न गृह्यताम् । मैवम् । हरीतक्याः फलानि हरीतक्य इत्यत्र ह्रस्वप्रसङ्गात् ॥ उपसर्जनस्य किम् । अवन्ती कुन्ती कुरू ॥—**श्रविष्ठास्वि**ति । श्रविष्ठा धनिष्ठा ॥—**इत्यादी**ति ॥ आदिशब्दादनुराधः स्वातिः तिष्यः पुनर्वसुः हस्तः विशाखः अषाढः बहुलः ॥ कृत्तिकावाची बहुलाशब्दष्टाबन्तः, तस्य समाहारद्वन्द्वेन ह्रस्वनिर्देशः सूत्रे ॥—**उपसंख्यानमि**ति । लुक इति शेषः ॥—**चित्रे**ति । 'लुक्तद्धित–' इति लुकि पुनष्टाप् ॥—**टानावि**ति । विधानसामर्थ्यादेतयोर्न लुक् ॥—**स्थानान्त—**॥ गोशालेत्यत्र 'विभाषा सेना–' इति नपुंसकत्वे ह्रस्वत्वं तत्साहचर्यात्खरशालेऽप्येवमेव । न चैवं स्त्रीत्वपक्षे लुङ् न स्यादिति शङ्क्यम् । लिङ्गविशिष्टपरिभाषया तत्रापि लुक्सिद्धेरित्याहुः ॥ यद्यपि टाबन्तयोः पाठेऽप्येकदेशविकृतन्यायेन क्लीबेऽपीष्टं सिध्यति, तथापि लाघवार्थं ह्रस्वपाठः ॥ —**नपुंसकत्वे ह्रस्वत्वमि**ति । सूत्रे इति शेषः ॥—**वत्सशाले जात** इति ॥ वत्सशालायामित्यपि बोध्यम् ॥—**इत्यादी**ति । आदिशब्दादभिजित् आभिजितः, अश्वयुक् आश्वयुजः ॥—**प्रतिप्रसूत** इति । कालाद्ठञा निवर्तमानो य औत्सर्गिकोऽण् 'सन्धिवेलादि' सूत्रेण पुनरभ्यनुज्ञात इत्यर्थः ॥—**कृतलब्ध—**॥ ननु कृतक्रीतत्वे जातलब्धत्वयोर्व्याप्ये इति किमनयोर्ग्रहणेन । सत्यम् । कृतत्वक्रीतत्वप्रकारकबोधेऽपि प्रत्ययार्थं तद्ग्रहणम् । अत एव जाते लुग्भाजामपि कृते न लुक् ॥—**प्राय—**॥ कादाचित्कभवनाश्रयः प्रायभवः । तेन 'तत्र भवः' इत्यनेन गतार्थतेत्याहुः ॥ भाष्ये प्रत्याख्यातमेतत् **'प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वात्'** इति ॥—**उपजानू—**॥ त्रयोऽप्यमी सामीप्येऽव्ययीभावाः ।

---

१ आकृतिगणत्वादिति—अन्यथा 'रेवतीरोहिणी नक्षत्रे' इति गौरादिषु पाठान्स न स्यादिति भावः ।

३।४१। स्रुघ्ने संभवति स्रौघ्नः । **कोशाड्ढञ्** ।४।३।४२। कौशेयं वस्त्रम् । **कालात्साधुपुष्प्यत्पच्यमानेषु** ।४।३।४३। हेमन्ते साधुर्हैमन्तः प्राकारः । वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः । शरदि पच्यन्ते शारदाः शालयः । **उप्ते च** ।४।३।४४। हेमन्ते उप्यन्ते हैमन्ता यवाः । **आश्वयुज्या वुञ्** ।४।३।४५। ठञोऽपवादः । आश्वयुज्यामुप्ता आश्वयुजका माषाः । **ग्रीष्मवसन्तादन्यतरस्याम्** ।४।३।४६। पक्षे ऋत्वण् । ग्रैष्मकम् । ग्रैष्मम् । वासन्तकम् । वासन्तम् । **देयमृणे** ।४।३।४७। कालादित्येव । मासे देयमृणं मासिकम् । **कलाप्यश्वत्थयवबुसाद्वुन्** ।४।३।४८। यस्मिन् काले मयूराः कलापिनो भवन्ति स उपचारात्कलापी तत्र देयमृणं कलापकम् । अश्वत्थस्य फलमश्वत्थस्तद्युक्तः कालोऽप्यश्वत्थः । यस्मिन् कालेऽश्वत्थाः फलन्ति तत्र देयमश्वत्थकम् । यस्मिन् यवबुसमुत्पद्यते तत्र देयं यवबुसकम् । **ग्रीष्मावरसमाद्वुञ्** ।४।३।४९। ग्रीष्मे देयमृणं ग्रैष्मकम् । आवरसमकम्[1] । **संवत्सराग्रहायणीभ्यां ठञ्च** ।४।३।५०। चाद्वुञ् । सांवत्सरिकम् । सांवत्सरकम् । आग्रहायणिकम् । आग्रहायणकम् । **व्याहरति मृगः** ।४।३।५१। कालवाचिनः सप्तम्यन्ताच्छब्दायत इत्यर्थे अणादयः स्युः यो व्याहरति स मृगश्चेत् । निशायां व्याहरति नैशो मृगः । नैशिकः । **तदस्य सोढम्** ।४।३।५२। कालादित्येव । निशासहचरितमध्ययनं निशा तत्सोढमस्य नैशः । नैशिकः । **तत्र भवः** ।४।३।५३। स्रुघ्ने भवः स्रौघ्नः । राष्ट्रियः । **दिगादिभ्यो यत्** ।४।३।५४। दिश्यम् । वर्ग्यम् । **शरीरावयवाच्च** ।४।३।५५। दन्त्यम् । कण्ठ्यम् । **प्राचां नगरान्ते** ।७।३।२४। प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्ञिति णिति किति च । सुह्मनगरे भवः सौह्मनागरः । पौर्वनागरः । प्राचां किम् । मनगरमुदक्षु तत्र भवो मानगरः । **जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्**[2] ।७।३।२५। जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिरुत्तरपदस्य वा ञिति णिति किति च । कुरुजङ्गले भवं कौरुजङ्गलम् । कौरुजाङ्गलम् । वैश्वधेनवम् । वैश्वधैनवम् । सौवर्णवलजम् । सौवर्णवालजम् । **दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्** ।३।४।५६। दार्तेयम् । कौक्षेयम् । कलशिर्घटः तत्र भवं

---

तेषां समाहारदन्द्वे सौत्र पुस्त्वम् ॥—**संभूते** ॥ इह तन्त्रादिना सभावना, आधारपरिमाणादाधेयस्यानतिरेकश्चेति द्वयमप्याश्रीयते ॥—**स्रौघ्न** इति । स्रुघ्ने सभाव्यते तत्परिमाणानतिरिक्तो वा सेनादिरित्यर्थः ॥—**कोशात्**—॥—**कौशेयमिति** । वस्त्रविशेषे योगरूढोऽयम् । कोशे सभवस्तु सत्कार्यवादाभिप्रायेण । मतान्तरे तु विकारप्रकरणे 'एण्या ढञ्' इत्यस्यानन्तर 'कोशाच्च' इति पठितव्यम् । तथा च वार्तिकं 'विकारे कोशाड् ढञ् संभूते ह्यर्थानुपपत्तिः' इति ॥—**कालात्**—॥ पुष्प्यदिति दैवादिकः शत्रन्तस्तदाह—**पुष्प्यन्तीति** ॥—**उप्ते च** ॥ कालादित्येव । योगविभाग उत्तरार्थः ॥—**उप्यन्त** इति सूत्रे भूतकालोऽतन्त्रमिति भावः ॥—**आश्वयुज्या वुञ्** ॥ ञकारः स्वरार्थ उत्तरत्र वृद्ध्यर्थश्च ॥—**आश्वयुज्यामिति** । अश्विनीनक्षत्रपर्यायो अश्वयुक् तद्युक्ता पौर्णमासी आश्वयुजी तत्रेत्यर्थः ॥—**देयमृणे** ॥ ऋणे किम् । मासे देया भिक्षा ॥—**आश्वत्थ** इति ॥ 'फले लुक्' । इह पुलिङ्गनिर्देशो यद्यप्ययुक्तः, तथापि फले अश्वत्थशब्द औपचारिक इत्याशयेन पुलिङ्गप्रयोग इत्याहुः ॥—**ठञ्चेति** ॥ 'सवत्सराग्रहायणीभ्या वा' इत्येव सुवचम् ॥ न च 'वा' इति वक्तव्ये ठञ् ग्रहणं व्यर्थ सधिवेलादिषु 'सवत्सरात्फलपर्वणोः' इति पठ्यते, तत्र फले ऋणत्वेन विवक्षिते अणं बाधित्वा ठञेव यथा स्यादिति काशिकादावुक्तमिति वाच्यम् । तस्मै हितास्तद्धिता इत्यन्वर्थसज्ञाकरणबलेनात्राण्प्रत्ययो न भवेदिति वक्तु शक्यत्वादिति नव्याः ॥—**नैशिक** इति ॥ 'निशाप्रदोषाभ्यां च' इति वा ठञ् ॥—**तत्र भवः** ॥ 'कालात्' इति निवृत्तम् । कालसंबद्धस्य 'तत्र' इत्यस्य निवृत्तये पुनस्तत्रग्रहणात् । न च पूर्वसूत्रस्थस्य 'तत्' इत्यस्य व्यावृत्तये तत्रग्रहणमस्त्विति वाच्यम् । 'तदस्य–' इति सूत्रस्येत उत्तरत्रापि सुपठत्वात् । यद्यपि भूधातुरुत्पत्तावपि वर्तते । तथापीह सत्तार्थ एव वर्तते, 'तत्र जातः' इति पृथग्ग्रहणादिति बोध्यम् ॥—**दिगादिभ्यो**—॥ दिश्, वर्ग, पूग, पक्ष, रहस्, उखा, साक्षिन् आदि, अन्त, मुख, जघन, मेघ, यूथ, 'उदकात्सज्ञायां' न्याय, वंश, कालेत्यादिदिगादिः । मुखजघनयोः पाठोऽत्राशरीरावयवार्थः । सेनाया मुखे जघने च भव मुख्यम् । जघन्यम् ॥—**प्राचां नगरान्ते** ॥ सप्तमीनिर्देशात् 'अङ्गस्य' इत्यधिकृतमपि सप्तम्यन्तेन विपरिणम्यते तदाह—**नगरान्तेऽङ्गे** इति ॥—**दृतिकुक्षि**—॥ दृतिश्चर्मविकारः, शरीरावयवविशेषश्च ॥ कुक्षिशब्दो धूमादिस्ततो 'धूमादिभ्यश्च' इति वुञि प्राप्ते अनेन ढञ् । कलशिर्मन्थपात्रं 'कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति' इति माघः ॥ 'बस्तिर्नाभेरधो द्वयोः' इत्यमरः । तत्र भवं बास्तेयम् ॥ 'अस्ति' इति तिङन्तप्रतिरूपको निपातः । स च तिङन्तेन समानार्थो भिन्नार्थश्च । आद्यो यथा, अस्तिक्षीरा गौः । द्वितीयो यथा, अस्तिमान् । धनवानित्यर्थः । तदिहाविशेषादुभयोरपि ग्रहणमास्थेयमिति हरदत्तः ॥ अहौ भवमाहेयं । 'त्रिष्वाहेयं वि-

---

१ आवरसमकमिति—आगामिवर्षाणामाद्ये वर्षे देयमित्यर्थः । अवरशब्दस्यादिक्छब्दत्वादसंज्ञायामप्यत्र कर्मधारयः ।
२ विभाषितमिति—विभाषितवृद्धिकमित्यर्थः ।

काल्लशेयम् । वास्तेयम् । आस्तेयम् । आहेयम् । ग्रीवाभ्योऽण् च ।४।३।५७। चात् ढञ् । ग्रैवेयम् । ग्रैवम् । गम्भीराञ्ञ्यः ।४।३।५८। गम्भीरे भवं गाम्भीर्यम् । अव्ययीभावाच्च ।४।३।५९। परिमुखं भवं पारिमुख्यम् । * परिमुखादिभ्य एवेष्यते । नेह । औपकूलः । अन्तःपूर्वपदाट्ठञ् ।४।३।६०। अव्ययीभावादित्येव । वेश्मनि इति अन्तर्वेश्मम् तत्र भवमान्तर्वेश्मिकम् । आन्तर्गणिकम् । * अध्यात्मादेष्ठञिष्यते । अध्यात्मं भवमाध्यात्मिकम् । अनुशतिकादीनां च ।७।३।२०। एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । अध्यात्मादिराकृतिगणः । देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ।७।३।१। एषां पञ्चानां वृद्धिप्राप्तावादेरच आत् ञिति णिति किति च । दाविकम् । देविकाकूले भवा दाविकाकूलाः शालयः । शिंशपाया विकारः शांशपश्चमसः । पलाशादिभ्यो वेत्यञ् । दित्यौह इदं दात्यौहम् । दीर्घसत्रे भवं दार्घसत्रम् । श्रेयसि भवं श्रायसम् । ग्रामात्पर्यनुपूर्वात् ।४।३।६१। ठञ् स्यात् । अव्ययीभावादित्येव । पारिग्रामिकः । आनुग्रामिकः । जिह्वामूलाङ्गुलेश्छः ।४।३।६२। जिह्वामूलीयम् । अङ्गुलीयम् । वर्गान्ताच्च ।४।३।६३। कवर्गीयम् । अशब्दे यत्खावन्यतरस्याम् ।४।३।६४। पक्षे पूर्वेण छः । मद्वर्ग्यः । मद्वर्गीणः । मद्वर्गीयः । अशब्दे किम् । कवर्गीयो वर्णः । कर्णललाटात्कनलंकारे ।४।३।६५। कर्णिका । ललाटिका । तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।४।३।६६। सुपां व्याख्यानः सौपो ग्रन्थः । तैङः । कार्तः । सुप्सु भवं सौपम् । बह्वचोऽन्तोदात्ताट्ठञ् ।४।३।६७। षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वम् । तस्य व्याख्यानस्तत्र भवो वा षात्वणत्विकः । क्रतुयज्ञेभ्यश्च ।४।३।६८। सोमसाध्येषु यागेष्वेतौ प्रसिद्धौ । तत्रान्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते । अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः । वाजपेयिकः । पाकयज्ञिकः । नावयज्ञिकः । बहुवचनं स्वरूपविधिनिरासार्थम् । अनन्तोदात्तार्थं

---

षास्थ्यादि' इत्यमरः ॥—ग्रीवाभ्योऽण च ॥ 'शरीरावयवाच्च' इति यतोऽपवादः । ग्रीवाशब्दो धमनीसंघाते वर्तते तत्र उद्भूतावयवसंघातविवक्षया सूत्रे बहुवचनम् । तिरोहितावयवसंघातविवक्षायां त्वेकवचनान्तादप्यण्ढञौ स्त एव ॥—ग्रैवेयमित्यादि । ग्रीवासु भवं, ग्रीवायामिति वा विग्रहः ॥—गम्भीराञ्ञ्यः ॥—पञ्चजनादुपसंख्यानम् ॥ पाञ्चजन्यम् ॥—परिमुखमिति ॥ यदा परिशब्दादिह वर्जनं गम्यते, तदा 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । यदि सर्वतोभावः, तदा त्वस्मादेव निपातनादव्ययीभाव इत्याहुः ॥—परिमुखादिभ्य एवेति ॥ अयं भावः । दिगादिगणानन्तरं परिमुख, परिहनु, पर्योष्ठ, पर्युलूखलेत्यादिगणः पठ्यते तत्साहचर्यादिह सूत्रे अव्ययीभावशब्देन परिमुखादिरेव गृह्यते । तस्य गणस्य कार्यान्तराभावादिति ॥ नन्वेवं 'परिमुखादेः' इति सूत्रं विशिष्यैव क्रियताम्, किमनेन प्रयासेन । उत्तरत्र 'अव्ययीभावात्' इत्यस्यापेक्षायामपि तत्रैव तत्करणौचित्यादिति चेत । अत्राह हरदत्तः—'परिमुखादेः' इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञ्यः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवतीति ॥ परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः । तथा च 'शाखा ग्रामौ' इति धातौ प्रतिशाखं भवं प्रातिशाख्यम् । 'अव्ययीभावाच्च' इति भवार्थे ञ इति माधवः ॥—अन्तर्वेश्ममिति ॥ 'नपुंसकादन्यतरस्याम्' इति समासान्तष्टच् ॥—अध्यात्ममिति । 'अनश्च' इति टच् ॥ —कर्णललाटात्—॥ यतोपवादः ॥ अलंकारे किम् । कर्ण्यं, ललाट्यम् ॥—तस्य व्याख्यान इति च—॥ व्याख्यायते येन स व्याख्यानः करणे ल्युट् । इतिशब्दो वाक्यार्थं परामृशति । तत्समीपे श्रूयमाणश्चकारः 'तत्र भवः' इति वाक्यार्थमाक्षिपति । नाम प्रतिपादकं, तच्च शक्त्या लक्षणया वेत्यत्र नाग्रहः । तथा च 'षष्ठ्यन्ताद्व्याख्यानकरणार्थे, सप्तम्यन्तात्तु भवार्थे, व्याख्यातव्यस्य प्रतिपादकात्प्रत्ययाः स्युः' इति सूत्रार्थः ॥ व्याख्यातव्यनाम्नः किम्, । पाटलीपुत्रस्य व्याख्यानी सुकोसला । पाटलीपुत्रो हि तया व्याख्यायते 'इदंप्रमाणमित्थंविधविशिष्टम्' इति । न त्विदं व्याख्यातव्यस्य नाम । ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात् । नामग्रहणं हि प्रसिद्ध्युपसंग्रहार्थमेव सूत्रे कृतम् ॥—बह्वचो—अणोऽपवादः ॥ बह्वचः किम्, । द्व्यचष्ठक् वक्ष्यते त्वेकाच् प्रत्युदाहार्यः । सौपम् । तैङम् ॥ अन्तोदात्तात्किम् । संहितायाः सांहितम् । 'गतिरनन्तरः' इत्याद्युदात्तोऽयम् ॥ अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । उदात्तादित्युक्तेऽपि वर्णग्रहणे तदन्तग्रहणात् 'वर्णादनुदात्तात्—' इत्यत्र यथा ॥—क्रतुयज्ञेभ्यश्च ॥—अग्निष्टोमस्य व्याख्यान इति । अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्तमाना अग्निष्टोमादिशब्दा इहोदाहरणं ग्रन्थानामेव व्याख्येयतया उक्तत्वादित्याहुः ॥ स्तुतिः स्तोमः । अग्नेः स्तोमोऽस्मिन्निति बहुव्रीहिः । 'परादिश्च परान्तश्च' इत्यन्तोदात्तोऽयम् ॥ पीयतेऽस्मिन्निति पेयः । 'कृत्यल्युटो बहुलम्' इत्यधिकरणे यत् । वाजोनाम यवागूभेदस्तस्य पेयो वाजपेयः । अयं हि कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । पेयशब्दस्य 'यतो नावः' इत्युदात्तत्वात् ॥ राज्ञा क्षत्रियेण सूयते, राजा सोमः सूयते अत्रेति वा राजसूयः । 'राजसूयसूर्य—' इति क्यप् । तत एव निपातनात्समासः षष्ठीसमासो वा । अयमप्युत्तरपदप्रकृतिस्वरेण मध्योदात्त एव । धातुस्वरेण सूयशब्दस्याद्युदात्तत्वात् ॥ असोमकेभ्य उदाहरति—पाकेति । अल्पपर्यायः पाकशब्दः । पाकश्चासौ यज्ञश्चेति कर्मधारयः । स च समास-

आरम्भः । **अध्यायेष्वेवर्षेः** ।४।३।६९। ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाध्याये ठञ् स्यात् । वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः । अध्यायेषु किम् । वासिष्ठी ऋक् । **पौरो**... **शपुरोडाशात्ष्ठन्** ।४।३।७०। पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः तंतष्ठन्[1] । पौरोडाशिक... । **छन्दसो यदणौ** ।४।३।७१। छन्दस्यः । छान्दसः । **द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणान...माख्याताट्ठक्** ।४।३।७२। द्व्यच् । ऐष्टिकः । पाशुकः । ऋत् । चातुर्होतृकः । ब्राह्मणिकः । आर्चिकः । इत्यादि । **अणृगयनादिभ्यः** ।४।३।७३। ठञादेरपवादः । आर्गयनः । औपनिषदः । वैयाकरणः । **तत आगतः** ।४।३।७४। स्रुघ्नादागतः स्रौघ्नः । **ठगायस्थानेभ्यः** ।४।३।७५। शुल्कशालाया आगतः शौल्कशालिकः । **शुण्डिकादिभ्योऽण्** ।४।३।७६। आयस्थानठकश्छादीनां चापवादः । शुण्डिकादागतः शौण्डिकः । कार्कणः । तैर्थः । **विद्यायोनिसंबन्धेभ्यो वुञ्** ।४।३।७७। औपाध्यायकः । पैतामहकः । **ऋतष्ठञ्** ।४।३।७८। वुञोऽपवादः । हौतृकम् । भ्रातृकम् । **पितुर्यच्च** ।४।३।७९। चाट्ठञ् रीङ् ऋतः । यस्येति लोपः । पित्र्यम् । पैतृकम् । **गोत्रादङ्कवत्** ।४।३।८०। बिदेभ्य आगतं बैदम् । गार्गम् । दाक्षम् । औपगवकम् । **नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्** ।७।३।३०। नञः परेषां शुच्यादिपञ्चानामादेरचो वृद्धिः पूर्वपदस्य तु वा ञिदादौ परे । आशौचम्[2] । अशौचम् । आनैश्वर्यम् । अनैश्वर्यम् । आक्षेत्रज्ञम् । अक्षैत्रज्ञम् । आकौशलम् । अकौशलम् । आनैपुणम् । अनैपुणम् । **हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः** ।४।३।८१। समादागतं समरूप्यम् । विषमरू-

---

स्वरेणान्तोदात्तः । नवैर्व्रीहिभिर्यजनं नवयज्ञः । आग्रयणम् । 'यजयाचविच्छ–' इति नङ् । 'कर्तृकरणे कृता—' इति समासः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्त' ॥—**अनन्तोदात्तार्थ** इति । वाजपेयराजसूयार्थं तथा अस्मिन्नारब्धे सत्यन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव भाव्यमित्याग्निष्टोमिक इत्याद्युदाहृतमिति भावः ॥—**अध्यायेष्वेवर्षेः** ॥ एवकारः स्पष्टप्रतिपत्त्यर्थः ॥—**वासिष्ठी**ति । भवार्थेऽण् ॥—**पौरोडाश**—॥ षित्वान्ङीष् पौरोडाशिकी । पुरोडाशिकी । पुरो दाश्यते इति पुरोडाशः । दाशृ दाने कर्मणि घञ् । इहैव निपातनाद्दस्य डत्वम् ॥—**छन्दसो**—॥ छन्दःशब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ स्तः । द्व्यज्लक्षणस्य ठकोऽपवादः ॥—**छन्दस्य** इत्यादि । इहार्थयोर्यदण्भ्या यथासंख्यं न भवत्यस्वरितत्वादिति बोध्यम् ॥—**द्व्यजृत्**—॥ अणोऽपवादः ॥—**चातुर्होतृक** इति । 'पृथिवी होता द्यौरध्वर्युः' इत्यादिमन्त्रस्य चतुर्होतेति नामधेयम् ॥—**इत्यादी**ति । आदिशब्दात्प्राथमिकः । आध्वरिकः । पौरश्चरणिकः ॥'**नामाख्यातग्रहणे संघातविगृहीतार्थम्**' इति वार्तिकम् । तत्र नामशब्दाद् द्व्यच्त्वादेव सिद्धे विगृहीतग्रहणमाख्यातार्थमिति ज्ञेयम् ॥ नामिकः । आख्यातिकः । नामाख्यातिकः ॥—**अणृगयन**—॥ ऋगयनादिभ्यो भवव्याख्यानयोरण् स्यात् ॥—**ठञादे**रिति । आदिशब्दाट्ठक्छयोः ॥—**आर्गयन** इति । अयनशब्दो भावसाधनः, तेन समासे 'अनो भावकर्मवचनः' इत्यन्तोदात्तः । अभेदोपचाराद्भाववचनोऽपि ग्रन्थे वर्तते । इह 'बह्वचोऽन्तोदात्तात्' इति ठञ् प्राप्तः ॥ औपनिषद इत्यत्राप्येवम् ॥ विद्यान्यायशिक्षाशब्देभ्यो 'द्व्यजृद्ब्राह्मण–' इति ठक् प्राप्तः ॥ व्याकरणशब्दात्तु 'वृद्धाच्छः' ॥—**ठगाय**—॥ एत्येन स्वामी, स्वामिनमयमेतीति, वाऽऽयः स्वामिग्राह्यो भागः । स यस्मिन्नुत्पद्यते तदायस्थानम् । बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः । वृद्धाच्छं परत्वादय बाधते । आपणिकः ॥ आकरिक. ॥—**छादीनां चे**ति । कार्कण इत्यत्र 'कृकणपर्णाद्भारद्वाजे' इति च्छः प्राप्तः । तीर्थशब्दात्तु धूमादित्वाद्वुञ् प्राप्त. । उदपानशब्दस्योत्सादित्वादञ् प्राप्त इत्यर्थः ॥—**विद्यायोनि**—॥ विद्यायोनिकृतः संबन्धो येषा तेभ्यो वुञ् स्यादणोऽपवादः ॥ छ तु परत्वाद्बाधते । आचार्यकः । मातामहकः । मातुलकः ॥—**ऋतष्ठञ्** ॥ 'विद्यायोनिसबन्धेभ्यः' इति वर्तते तदाह—**वुञोऽपवाद** इति ॥ 'उष्कञ्' इति वक्तव्ये तपरकरणं ठञ्ग्रहणं च चिन्त्यप्रयोजनमिति प्राञ्चः ॥ पैतृकी विद्येत्यत्र ङीबर्थं ठञ्ग्रहणमिति तु तत्त्वम् ॥ न च 'टिड्ढा–' इति सूत्रे कञ्ग्रहणात् ङीप् सिध्यतीति वाच्यम् । यादृशीत्याद्यसिद्धेः । तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणात् 'त्यदादिषु दृशः—' इति कञो ह्यनुबन्धकत्वात् ॥ तपरकरण विहाय 'उष्ठञ' इत्येव सुवचमित्याहुः ॥—**गोत्रादङ्कवत्** ॥ 'अपत्याधिकारादन्यत्र लौकिकं गोत्रम्' इत्युक्तम् । अपत्यप्रत्ययान्तात् 'तत आगतः' इत्यस्मिन्नर्थे अङ्कवत्प्रत्ययाः स्युः । अङ्के दृष्टस्य सर्वस्यायमतिदेशो, न तु साक्षाद्विहितस्यैवेत्याग्रहः तेन 'गोत्रचरणाद्वुञ्' इति वुञपि लभ्यते । स हि 'तस्येदम्' इति सामान्येन विधीयमानोऽपि अञ्यञिञन्तादन्यत्र अङ्केऽपि दृष्ट. ॥—**बैदमि**त्यादि । 'सङ्घाङ्क–' इत्यादिना अङ्कार्थेऽण् विहित इतीहाप्यञ्यञीञन्तादण् ॥—**औपगवकमि**ति । 'गोत्रचरणात्–' इति वुञ् । अङ्के दृष्ट इतीहाप्यणन्ताद्वुञ् ॥—**हेतुमनुष्येभ्यो**—॥ मनुष्यग्रहणमहेत्वर्थं बहुवचनं स्वरूपविधिनिरासार्थम् । **समरूप्यमि**ति । 'विभाषा गुणे–' इत्यत्र

---

१ ततष्ठनिति—पौरोडाशिकं काण्डमिति तु पुरोडाशमधिकृत्य कृत पौरोडाश, तदेव पौरोडाशिकमिति विनयादित्वाट्ठकि साधु । २ आशौचमिति—अशुचेरागतमित्यर्थ इत्यभिमानः । अशुचौ भवमिति वा । एवमन्येऽपि, एते सर्वे भावार्थकप्रत्ययान्ता इति मते तु अत्रैतत्सूत्रलेखो लेखकप्रमादादिति शब्देन्दुशेखरे ।

**ष्यम् । पक्षे गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तरूप्यम् । देवदत्तीयम् । दैवदत्तम् । मयट् च । ४।३।८२। सममयम् । विषममयम् । देवदत्तमयम् । प्रभवति ।४।३।८३। तत इत्येव । हिमवतः प्रभवति हैमवती गङ्गा । विदूराञ् ञ्यः ।४।३।८४। विदूरात्प्रभवति वैदूर्यो मणिः । तद्गच्छति पथिदूतयोः ।४।३।८५। स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा । अभिनिष्क्रामति द्वारम् ।४।३।८६। तदित्येव । स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् । अधिकृत्य कृते ग्रन्थे ।४।३।८७। तदित्येव । शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः । शारीरकं भाष्यमिति त्वभेदोपचारात् । शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।४।३।८८। शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमस्य सभा यमसभम् । क्लीबत्वं निपातनात् । यमसभीयः । किरातार्जुनीयम् । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयम् । विरुद्धभोजनीयम् । सोऽस्य निवासः ।४।३।८९। स्रुघ्नो निवासोऽस्य स्रौघ्नः । अभिजनश्च ।४।३।९०। स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । यत्र स्वयं वसति स निवासः । यत्र पूर्वैरुषितं सोऽभिजन इति विवेकः । आयुधजीविभ्यश्छः पर्वते ।४।३।९१। पर्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येत्यर्थे छः स्यात् । हृद्गोलः पर्वतोऽभिजनो येषामायुधजीविनां ते**

---

'विभाषा' इति योगविभागादगुणवचनादपि पञ्चमी । योगविभागे तु 'बाहुलकं प्रकृतेस्तदनुदृष्टेः' इति लिङ्गम् ॥—**मयट् च** ॥ योगविभागो यथासंख्यनिरासार्थः । टो ङीबर्थः ॥—**हैमवती**ति ॥ हिमवतः प्रकाशते । तत्र प्रथमं दृश्यत इत्यर्थः । उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते 'तत्र जात' इत्यतो भेदेन निर्देशात् ॥—**वैदूर्य** इति ॥ दन्त्यमध्योऽयं शाड्वलवत्, न तु नड्वलवन्मूर्धन्यमध्यः ॥ नन्वत्रार्थासंगतिः । बालवायपर्वतादसौ प्रभवति, विदूरनगरे तु संस्क्रियते ॥ सत्यम् । अत एव समाहितं भाष्ये । 'बालवायो विदूरं च प्रकृत्यन्तरमेव वा । न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत्' इति ॥ अस्यार्थः बालवायशब्दः प्रत्ययं लभते, विदूरादेशं च सूत्रे पठितेनादेशेनानुरूपः स्थानी बालवायशब्द आक्षिप्यते । यथा शिवादिषु पठिताभ्यां विश्रवणरवणादेशाभ्यामनुरूपः स्थानी विश्रवस्शब्द आक्षिप्यते, यथा वा 'पद्दन्–' इत्यादौ पदाद्यादेशानुरूपस्थानी पाददन्तादिराक्षिप्यते तद्वत् ॥—**प्रकृत्यन्तरमेवे**ति । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकोऽस्तीत्यर्थः । एवं चास्मिन्पक्षे 'बालवायात्प्रभवति' इति विग्रहे विदूरशब्दात्प्रत्यय' इति व्याख्यानक्लेशो नेति भावः ॥—**न वा** इति । वैशब्दोऽक्षमां द्योतयति । तत्र पर्वते विदूरशब्दोऽप्रसिद्ध इति चेद्ब्रूयाज्जित्वरीवद्व्यवहरेत् नियतपुरुषापेक्षो हि व्यवहारो दृश्यते, यथा वणिज एव वाराणसीं जित्वरीति व्यवहरन्ति एवं वैयाकरणा एवाऽद्रिं विदूर इति ॥—**तद्गच्छति**—॥ द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गन्ता पन्था दूतो वेत्यर्थः ॥ तत्र साध्वसिश्छिनत्ति, काष्ठानि पचन्तीत्यादाविव करणस्य स्वातन्त्र्यविवक्षया पन्थाः कर्ता ॥—**अभिनिष्क्रामति** ॥ द्वितीयान्तात्प्रत्ययः स्यादभिनिष्क्रामति तच्चेद्द्वारमित्यर्थः ॥—**स्रौघ्नं कान्यकुब्जद्वारमि**ति ॥ स्रुघ्नाभिमुखनिष्क्रमणे करणीभूतमिति फलितोऽर्थः । पूर्ववत्करणस्य कर्तृत्वम् ॥—**तदित्येवे**ति ॥ 'अधिकृत्य' इत्येतदपेक्षयात्र द्वितीया ॥—**शारीरकीय** इति । कुत्सितं शरीरं शरीरकं तत्सबन्धी शारीरको जीवात्मा तमधिकृत्य प्रस्तुत्य कृतो ग्रन्थः शारीरकीयः, चतुर्लक्षणीसूत्रसंदर्भः । वृद्धाच्छः ॥ अत्र वार्तिकम् । 'लुबाख्यायिकाभ्यो बहुलम्' इति । तादर्थ्ये एषा चतुर्थी । आख्यायिका नाम गद्यरूपो ग्रन्थविशेषः । अत एवाख्यानाख्यायिकयोस्तत्र भेदेनोपादानम् । आख्यायिकाभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुगित्यर्थः ॥ वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । सुमनोहरा । क्वचिन्न । भैमरथी ॥ अभेदोपचारेण गतार्थत्वान्नेदं वार्तिकमावश्यकमिति मूले नोक्तम् ॥—**शिशुक्रन्द**—॥ अत्र वार्तिकं 'द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः' दैवासुरम् । राक्षोसुरम् ॥—**निपातनादि**ति । 'सभा राजा–' इति सूत्रे 'अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह' इत्युक्तत्वात्तेन सूत्रेण क्लीबत्वं न सिद्ध्यतीति भावः ॥—**सोऽस्य निवासः** ॥ स इति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितः प्रत्ययः स्याद्यः प्रथमान्तार्थः स निवासश्चेत् ॥—**स्रुघ्नो निवास** इति । निवासाधिकरणमित्यर्थः ॥ नन्वस्येति कृद्योगे कर्तरि षष्ठी । तथा च विशेषणविशेष्यभावव्यत्यासात् स्रुघ्नाधिकरणवासकर्तेह वृत्त्यर्थः, तथा च 'तत्र भवः' इत्येव सिद्धं किमनेनेति चेत् । अत्राहुः । वासस्य चेतनमात्रकर्तृकतया प्रसिद्धत्वात्प्रकारकृतो भेदोऽस्तीति नास्ति वैयर्थ्यम् । 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि' इत्यादौ तूपचारो बोध्यः ॥—**अभिजनश्च** ॥ योगविभाग उत्तरार्थः । 'अभिजनाः पूर्वबान्धवाः' इति वृत्तिः । अभिजायते येभ्य इति व्युत्पत्तेरिति भावः । पूर्वबान्धवाः पित्रादयः । बन्धुशब्दः प्रज्ञादिः । पूर्वसूत्रादिह 'निवासः' इत्यनुवृत्तम् । तत्सामानाधिकरण्यादभिजनशब्दस्य तत्सबन्धिनि लक्षणा । एवं स्थिते फलितमाह—**यत्र पूर्वै**रिति ॥—**आयुधजीविभ्यः**—॥ तादर्थ्ये एषा चतुर्थी । आयुधजीविभ्य आयुधजीविनोऽभिधातुं प्रत्ययः स्यादित्यर्थः ॥ 'सोऽस्याभिजनः' इत्यनुवर्तते पर्वत इति प्रकृतिविशेषणं तदाह—**पर्वतवाचिन** इत्यादि ॥ पर्वत इति किम् । सांका-

१ पर्वते इति—पर्वतादिति पाठान्तरम् ।

हस्त्रोलीयाः। आयुधेति किम्। ऋक्षोदः पर्वतोऽभिजनो येषां ते आर्क्षोदा द्विजाः। ■ **शाण्डिकादिभ्यो ञ्यः। ४।३।९२।** शाण्डिकोऽभिजनोऽस्य शाण्डिक्यः। ■ **सिन्धुतक्षशिलादिभ्योऽणञौ ।४।३।९३।** सिन्ध्वादिभ्योऽञ् स्यादुक्तेऽर्थे। सैन्धवः। तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः। ■ **तूदीसलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ।४।३।९४।** तूदी अभिजनोऽस्य तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः। ■ **भक्तिः। ४।३।९५।** सोऽस्येत्यनुवर्तते। भज्यते सेव्यते इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः। ■ **अचित्ताददेशकालाट्ठक् ।४।३।९६।** अपूपा भक्तिरस्य आपूपिकः। पायसिकः। अचित्तात्किम्। दैवदत्तः। अदेशात्किम्। स्रौघ्नः। अकालात्किम्। ग्रैष्मः। ■ **महाराजाट्ठञ् ।४।३।९७।** माहाराजिकः। ■ **वासुदेवार्जुनाभ्यां वुन् ।४।३।९८।** वासुदेवकः। अर्जुनकः। ■ **गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ।४।३।९९।** अणोऽपवादः। परत्वाद्वृद्धाच्छं बाधते। ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः। नाकुलकः। बहुलग्रहणान्नेह। पाणिनो भक्तिरस्य पाणिनीयः। ■ **जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ।४।३।१००।** जनपदस्वामिवाचिनां बहुवचने जनपदवाचिनां समानश्रुतीनां जनपदवत्सर्वं स्यात्प्रत्ययः प्रकृतिश्च। जनपदतदवध्योश्चेति प्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते। अङ्गा जनपदो भक्तिरस्याङ्गकः। अङ्गाः क्षत्रिया भक्तिरस्याङ्गकः। जनपदिनां किम्। पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः। जनपदेनेति किम्। पौरवो राजा भक्तिरस्य पौरवीयः। ■ **तेन प्रोक्तम् ।४।३।१०१।** पाणिनिना प्रोक्तं पाणिनीयम्। ■ **तित्तिरिवरतन्तुखण्डिकोखाच्छण् ।४।३।१०२।** छन्दोब्राह्मणानीति तद्विषयता। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः। ■ **काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ।४।३।१०३।** काश्यपेन प्रो-

---

क्यका आयुधजीविनः। 'योपधात्' इति वुञ्॥—**शाण्डिकादिभ्यो ञ्यः॥** शण्डिका सर्वसेनशकेत्यादि॥—**सिन्धुतक्ष—॥** सिन्धु वण्ड गन्धार कम्बोजादयः सिन्ध्वादयः, ते तु प्रायेण कच्छादिष्वपि पठ्यन्ते। तेभ्योऽणि तत एव सिद्धे मनुष्यवुञो बाधनार्थं वचनम्॥ तक्षशिला वत्सोद्धरणकर्मेरेत्यादयस्तक्षशिलादयः॥—**वासुदेवार्जुनाभ्यां वुन्॥** छाणोरपवादः। 'अजाद्यदन्तम्' 'अल्पाच्तरम्' इति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तस्याकरणं 'सर्वतोऽभ्यर्हितं पूर्वं निपतति' इति ज्ञापनार्थम्। ननु वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धक—' इत्यणि वासुदेवशब्दो निष्पन्नः। तथा च तत्र 'गोत्रक्षत्रियाख्येभ्यः' इत्युत्तरसूत्रेण वुञेवास्तु, किमनेन वुना। नह्यत्र वृद्धौ विशेषः, प्रागेव वृद्धत्वात्। न च 'वृद्धिनिमित्तस्य—' इति पुंवद्भावनिषेधे दोषः स्यादिति वाच्यम्। वुन्यपि 'न कोपधायाः' इति निषेधस्योच्यमाणत्वात्। न वा स्वरे विशेषः। 'ञ्नित्यादिर्नित्यम्' इति तुल्यस्वरत्वात्। नापि 'अभ्यर्हितं पूर्वम्' इति ज्ञापनमेव तत्फलमिति वाच्यम्। तथात्वे हि पूर्वनिपातप्रकरणे 'अभ्यर्हितम्' इत्येव लाघवात्कुर्यादिति चेत्। अत्र भाष्यम्। 'संज्ञैषा भगवतः' इति। अयं भावः 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते' इति स्मृतेः परमात्मा इह वासुदेवः। सर्वत्रासौ वसति, सर्वमत्र वसतीति वा व्युत्पत्त्या वासुः, बाहुलकादुण्। वासुश्चासौ देवश्चेति विग्रहः। तथा च नेयं गोत्राख्या, नापि क्षत्रियाख्येति युक्त एव वुन्विधिः। 'अभ्यर्हितं पूर्वम्' इति तु प्रसङ्गाज्ज्ञापितं तदप्यनित्यं 'श्वयुवमघोनाम्—' इत्यादि लिङ्गादित्यवधेयम्॥—**वृद्धाच्छं बाधत** इति। औपगवो भक्तिरस्य औपगवकः॥—**जनपदिनाम्—॥** स्वस्वामिभावसबन्धे मत्वर्थीय दर्शयति—**जनपदस्वामिवाचिनामिति**—॥—**प्रत्ययः प्रकृतिश्चेति**। अनेन सर्वशब्दस्यार्थो दर्शितः। असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यात्। न तु प्रकृतेरिति हरदत्तः॥ अत्र वार्तिककारः सर्वशब्दस्य प्रयोजनमाह—'सर्ववचनं प्रकृतिनिर्ह्रासार्थम्' 'तच्च मद्रवृज्यर्थमिति। अयं भावः। वृद्धिनिमित्तेषु वुञादिष्वतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति विशेषस्य तत्र दुर्लभत्वान्मद्रवृज्योः कनि विशेषो बोध्यः। सोऽप्यबहुल एवेति निर्ह्रासोपचयोऽल्पता॥ तथा हि मद्राणां राजा 'द्व्यञ्मगध—' इत्यण्। माद्रः। वृजिशब्दात् 'वृद्धेत्कोशला—' इति ञ्यङ्। वार्ज्यः संभक्तिरस्येति प्रकृतिनिर्ह्रासे मद्रकः वृजिकः 'मद्रवृज्योः कन्', अन्यथा माद्रकः वार्ज्यक इति स्यात्॥—**आङ्गक** इति। 'जनपदतदवध्योश्च' 'अवृद्धादपि—' इति वुञ्। अङ्गशब्दात्स्वामिवाचिनो बहुवचनान्तादणि प्राप्ते वुञतिदिश्यते॥—**पञ्चाला ब्राह्मणा** इति। अभेदोपचाराद्ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः॥ बहुवचनग्रहणं किम्। एकवचनद्विवचनयोः सत्यपि शब्दभेदे अतिदेशो यथा स्यात्॥ आङ्ग आङ्गौ वा भक्तिरस्य आङ्गकः। इह वृद्धाच्छे प्राप्ते वुञ्॥—**तेन प्रोक्तम्॥** प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतं, 'कृते ग्रन्थे' इत्यनेन गतार्थत्वात्॥—**पाणिनिना प्रोक्तमिति**। स्वयमन्येन वा कृतं व्याकरणमध्यापनेनार्थव्याख्यानेन वा प्रकाशितमित्यर्थः॥ प्रेतिकिम्। देवदत्तेनाध्यापितं प्रख्यातस्यैव ग्रन्थस्याध्यापनमिति नेहानेन प्रत्ययः॥—**तित्तिरिव—॥** अणोऽपवादः॥—**तद्विषयतेति**। 'शौनकादिभ्यश्छन्दसि' इत्यत्रास्यानुवृत्तेस्तित्तिरिणा प्रोक्ताः श्लोका इत्यत्र न भवतीति भावः॥—**तैत्तिरीया** इति। 'प्रोक्ताल्लुक्' इत्यध्येतृप्रत्ययस्य लुक्। एवमग्रेऽपि॥—**काश्यप—॥** छस्यापवादः। णकार उत्तरत्र वृ-

---

१ तूदीसलातुरेति—शलेति पाठो वृत्तौ। २ पञ्चाला ब्राह्मणा इति—अत्राभेदोपचारो बोध्यः।

कमधीयते काश्यपिनः । ♊ **कलापिवैशम्पायनान्तेवासिभ्यश्च** ।४।३।१०४। कलाप्यन्तेवासिभ्यः, हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः । वैशम्पायनान्तेवासिभ्यः, आलम्बिनः । ♊ **पुराणप्रोक्तेषु ब्राह्मणकल्पेषु** ।४।३।१०५। तृतीयान्तात्प्रोक्तार्थे णिनिः स्यात् यत्प्रोक्तं पुराणप्रोक्ताश्चेद्ब्राह्मणकल्पास्ते भवन्ति । पुराणेन चिरन्तनेन मुनिना प्रोक्ताः । भल्लु, भाल्लविनः । शाट्यायन, शाट्यायनिनः । कल्पे, पिङ्गेन प्रोक्तः पैङ्गी कल्पः । पुराणेति किम् । याज्ञवल्क्यानि ब्राह्मणानि, आश्मरथः कल्पः । अणि आपत्यस्येति यलोपः । ♊ **शौनकादिभ्यश्छन्दसि** ।४।३।१०६। छन्दस्यभिधेये एभ्यो णिनिः । शौनकेन प्रोक्तमधीयते शौनकिनः । ♊ **कठचरकाल्लुक्** ।४।३।१०७। आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात् । कठेन प्रोक्तमधीयते कठाः । चरकाः । ♊ **कलापिनोऽण्** ।४।३।१०८। कलापिना प्रोक्तमधीयते कालापाः ॥ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानाट्टिलोपः । ♊ **छगलिनो ढिनुक्** ।४।३।१०९। छगलिना प्रोक्तमधीयते छागलेयिनः । ♊ **पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः** ।४।३।११०। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः । ♊ **कर्मन्दकृशाश्वादिनिः** ।४।३।१११। भिक्षुनटसूत्रयोरित्येव । कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः । ♊ **तेनैकदिक्** ।४।३।११२। सुदाम्ना अद्रिणा एकदिक् सौदामनी । ♊ **तसिश्च** ।४।३।११३। स्वरादिपाठादव्ययत्वम् । पीलुमूलेन एकदिक् पीलुमूलतः । ♊ **उरसो यच्च** ।४।३।११४। चात्तसिः । अणोऽपवादः । उरसा एकदिक् उरस्यः । उरस्तः । ♊ **उपज्ञाते** ।४।३।११५। तेनेत्येव । पाणिनिना उपज्ञातं पाणिनीयम् । ♊ **कृते ग्रन्थे** ।४।३।११६। वररुचिना कृतो वाररुचो ग्रन्थः । ♊ **संज्ञायाम्** ।४।३।११७। तेनेत्येव । अग्रन्थार्थमिदम् । मक्षिकाभिः कृतं माक्षिकं मधु । ♊ **कुलालादिभ्यो वुञ्** ।४।३।११८। तेन कृते संज्ञायाम् । कुलालेन कृतं कौलालकम् । वारुडकम् । ♊ **क्षुद्राभ्रमरवटरपादपादञ्** ।४।३।११९। तेन कृते सं-

---

ज्ञार्थः । ननु 'वृद्धिनिमित्तस्य' इति पुंवद्भावनिषेधोऽत्र फलमस्तीति चेन्न । अत्राहुः । णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामप्रवृत्तेः । 'प्रवृत्तावपि जातेश्च' इति सिद्धत्वात् । चरणत्वेन जातित्वादिति ॥ इविभ्यामिति किम् । इदानीतनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥—**कलापिवैशंपायन**— ॥ अणोऽपवादः । छ नु परत्वाद्बाधते ॥ कलाप्यन्तेवासिनश्चत्वारः । हरिद्रुः छगली तुम्बुरुः उलप इति ॥ वैशंपायनान्तेवासिनस्तु नव । आलम्बि कलिङ्ग कमल ऋचाभ आरुणि ताण्ड्य श्यामायन कठ कलापी इति ॥— **हारिद्रविण** इति । एवं तौम्बुरविण, औलपिनः ॥ छगलिनस्तु ढिनुकं वक्ष्यति ॥—**आलम्बिन** इति । एवं कालिङ्गिनः आर्चाभिनः आरुणिन ताण्डिन श्यामायनिन ॥ कठाल्लुकं वक्ष्यति कलापिनश्चाणम् ॥ याज्ञवल्क्याश्मरथ्यशब्दौ कण्वादी, तेन ताभ्यां यञन्ताभ्यां वृद्धाच्छो न भवतीत्याशयेनाह—**अणि आपत्यस्येती**ति । 'याज्ञवल्क्यादयो ह्यचिरकालाः' इति भारतादिषु व्यवहारः स एवानुमतः सूत्रकृता ॥—**कठचरकाल्लुक्** ॥ कठशब्दस्य वैशंपायनान्तेवासित्वाण्णिनिः । चरकादण् । तयोर्लुक् । छन्दसीत्येव । काठाः चारकाः श्लोकाः ॥ —**कलापिनोण्** ॥ वैशंपायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः ॥ 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते आह—**नान्तस्य टिलोप** इति ॥ 'कलापिनः' इत्युक्तेऽप्यौत्सर्गिकेऽणि सिद्धे पुनरण्ग्रहणमधिकविधानार्थं मद्बाधकबाधनार्थं भवति । तेन माथुरेण प्रोक्ता माथुरी वृत्तिः । मौदाः पैप्पलादाः शाकला इति सिद्धम् ॥ मुद पिप्पलाद शाकल्य एभ्यः 'पुराणप्रोक्तेषु' इति णिनेरपवादोऽण् ॥—**छगलिनो ढिनुक्** ॥ कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादः ॥—**पाराशर्य**—॥ मण्डूकप्लुत्या णिनिरिह सबध्यत इत्याह—**णिनिः स्यादि**ति । तद्विषयताऽत्रेष्यते । तदर्थं छन्दोग्रहणमनुवर्त्यम् । सूत्रयोश्छन्दस्त्वं तु गौण्या वृत्त्या बोध्यम् ॥—**भिक्षुसूत्रमि**ति । चतुर्लक्षणीरूपम् ॥—**पाराशरिण** इति । पाराशर्यो व्यासः । अनन्तरापत्येऽपि गोत्रत्वेनोपचारात् 'गर्गादिभ्यः' इति यञ् 'आपत्यस्य च' इति यलोपः । अध्येत्रणस्तु 'प्रोक्तात्—' इति लुक् ॥ भिक्षुनटसूत्रयोः किम् । पाराशरम् । शैलालम् ॥—**कर्मन्द**—॥ इहापि च्छन्दोनुवृत्त्यादि प्राग्वत् ॥ भिक्षुनटसूत्रयोः किम् । कार्मन्दम् । कार्शाश्वम् ॥—**तेनैकदिक्** ॥ तृतीयान्तादेकदिगित्यर्थे अणादयः स्युः ॥ एका दिक् समाना दिगित्यर्थः । पुनस्तेनेत्युक्तिश्छन्दोऽधिकारनिवृत्त्यर्था ॥—**सौदामिनी**ति । 'अन्' इति प्रकृतिभावान्न टिलोपः । 'तडित्सौदामिनी विद्युत्' इत्यमरः ॥—**तसिश्च** ॥ पूर्वोक्तविषये ॥—**उपज्ञाते** ॥ विनोपदेशं ज्ञातमुपज्ञातम् ॥—**कुलालादिभ्यो**—॥ कुलाल वरुड चण्डाल निषाद कुम्भकार श्वपाकादयः कुलालादयः ॥—**क्षुद्राभ्रमर**—॥ पादपशब्दाच्छे प्राप्ते, अन्येभ्यो अणि अञ् विधीयते ॥—**तस्येदम्** ॥ अणादयः पञ्च महो-

---

१ कलापीति—कलापिना वैशंपायनशिष्यत्वादेव सिद्धे तद्ग्रहणाच्छिष्यशिष्याणां न ग्रहणम् । २ भिक्षुसूत्रमिति—भिक्षुत्वसंपादकं सूत्रमित्यर्थः । यथा नटसूत्रम् । नटसूत्रज्ञाने हि नटत्वसंपत्तिः, एवं तज्ज्ञाने ब्रह्मरूपत्वेन सर्वज्ञानात्कर्मभ्रंशनाद्वारेण भिक्षुत्वसंपत्तेः । तथाच मनुः, 'वेदान्तान्विविधवच्छ्रुत्वा संन्यसेदनृणो द्विजः' इति ।

शायाम् । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् । **तस्येदम्**[1] ।४।३।१२०। उपगोरिदमौपगवम् । * **वहेस्तुरणिट् च** ॥ संवोढुः स्वं सांवहित्रम् । * **अग्नीधः शरणे रण् भं च**[2] ॥ अग्निमिन्धे अग्नीत्, तस्य स्थानमाग्नीध्रम् । तात्स्थ्यात्सोऽप्याग्नीध्रः । * **समिधामाधाने षेण्यण्** ॥ सामिधेन्यो मन्त्रः । सामिधेनी ऋक् । **रथाद्यत्** ।४।३।१२१। रथ्यं चक्रम् । **पत्रपूर्वादञ्** ।४।३।१२२। पत्रं वाहनम् । अश्वरथस्येदमाश्वरथम् । **पत्राध्वर्युपरिषदश्च** ।४।३।१२३। अञ् । * **पत्राद्वाह्ये** । अश्वस्येदं वहनीयमाश्वम् । आध्वर्यवम् । पारिषदम् । **हलसीराट्ठक्** ।४।३।१२४। हालिकम् । सैरिकम् । **द्वन्द्वाद्वुन्वैरमैथुनिकयोः** ।४।३।१२५। काकोलूकिका । कुत्सकुशिकिका । * **वैरे देवा[3]सुरादिभ्यः प्रतिषेधः** । दैवासुरम् । **गोत्रचरणाद्वुञ्** ।४।३।१२६। औपगवकम् । चरणाद्धर्माम्नाययोरिति वक्तव्यम् ॥ काठकम् । **सङ्घाङ्कलक्षणेष्वञ्यञिञामण्** ।४।३।१२७। **घोषग्रहणमपि कर्तव्यम्** ॥ अञ्, बैदः सङ्घोऽङ्को घोषो वा । बैदं लक्षणम् । यञ्, गार्गः । गार्गम् । इञ्, दाक्षः । दाक्षम् । परंपरासंबन्धोऽङ्कः साक्षात्तु लक्षणम् । **शाकलाद्वा** ।४।३।१२८। अण्[4] वोक्तेऽर्थे । पक्षे चरणत्वाद्वुञ् ।

---

त्सर्गाः, घादयश्च षष्ठ्यन्तात्संबन्धिनि स्युः ॥ अनन्तरादिष्वनभिधानान्न, देवदत्तस्यानन्तरमिति ॥—**वहेस्तु** । इडर्थमिदमुपसंख्यानम्, अण् तु सिद्ध एवानूद्यते । तुरिति तृन्तृचोः सामान्यग्रहणम् ॥ ढत्वादीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये पूर्वमिट् ततो निमित्ताभावान्न ढत्वादीत्याशयेनोदाहरति—**सांवहित्रमिति** ॥—**अग्नीदिति** । क्विप् । ऋत्विग्विशेषोऽयम् ॥ 'त्वमग्निद्दतायते' इत्यत्र तु च्छान्दस ह्रस्वत्वम् ॥—**आग्नीध्रमिति** । भत्वविधानाद्धस्य जस्त्वं नेति भावः ॥—**सोऽपीति** । अग्नीदपीत्यर्थः ॥ ननु 'पिबाग्नीध्रात्तव' इत्यादावाद्युदात्त प्रयुज्यते ॥ वार्तिके 'शुरण्' इति पाठादयमन्तोदात्त इति चेत् । अत्राहुः । 'आग्नीध्रसाधारणादञ्' इति वार्तिकेन विहितो यः स्वार्थेऽञ् तत्पक्षे तत्राद्युदात्तत्वं बोध्यमिति ॥—**समिधाम्** । कर्मणि षष्ठीयम् । आधानमिति करणे ल्युट् । कर्मणि षष्ठ्यन्तादाधानकरणे षेण्यण् स्यात् ॥—**सामिधेन्य** इति । यया अग्निः समिध्यते सा समित्, संपदादित्वात्करणे क्विप् । तस्या आधान इति विग्रहः ॥—**सामिधेनी**ति । षित्वान्ङीष् 'हलस्तद्धितस्य' इति यलोपः । यया ऋचा समिदाधीयते सा सामिधेनीत्यर्थः । 'प्रवो वाजा अभिद्यवः' इत्याद्याः 'आजुहोतादुवस्यत' इत्यन्ताः सामिधेन्य इति व्यवह्रियन्ते ॥—**रथाद्यत्** ॥ अणोऽपवादः । '**रथाद्रथाङ्गे**' इति वार्तिकमभिप्रेत्याह—**रथ्यं चक्रमिति** । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिरुपसंख्यायते । परमरथ्यम् । उत्तमरथ्यम् ॥ द्वयो रथयोरङ्ग द्विरथम् । इह 'द्विगोर्लुगनपत्ये' इति यतो लुक् ॥ ननु यत्प्रत्ययोऽत्र रथाङ्ग एव यदीष्यते कथ तर्हि 'रथस्य वोढा रथ्यः' इति । 'तद्वहति–' इत्यनेनेति चेत् । एव तर्हि अयमेव यद्रथाङ्ग एव वोढर्यपीष्यतां 'तद्वहति रथयुगप्रासङ्गम्' इत्यत्र रथग्रहण त्यज्यतामिति चेत् । मैवम् । द्वौ रथौ वहति द्विरथ्य इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयस्य लुक्प्रसङ्गात् ॥ 'तद्वहति' इति यत्प्रत्ययस्य तु प्राग्दीव्यतीयत्वाभावान्न लुगिति द्विरथ्य इति सिध्यतीति ॥ ननु 'द्विगोर्लुगनपत्ये' इत्यत्राचीत्यस्यापकर्षणात्कथमत्र यतो लुक्प्रसक्तिरिति चेत् ॥ अत्राहुः । 'तद्वहति–' इत्यत्र रथग्रहणमेव ज्ञापकमेतस्य यतो हलादेरपि लुग् भवतीति । अन्यथा तत्र रथग्रहण व्यर्थमेव स्यात्तथा च द्वयो रथयोरङ्गमिति विग्रहे द्विरथमिति प्रयोगः सुस्थ इति ॥—**पत्रपूर्वादञ्** ॥ पूर्वस्य यतोऽपवादः ॥—**पत्रमिति** । पतन्त्यनेनेति विग्रहे 'दाम्नी–' इत्यादिना ष्ट्रन् ॥ रथादित्येव सबध्यत इत्याह—**अश्वरथस्येदमिति** । अश्वयुक्तो रथोऽश्वरथस्तस्याङ्गमित्यर्थः ॥—**पत्राध्वर्यु**—॥ अणोऽपवादः । वार्तिकमाह—**पत्राद्वाह्य** इति । इह पत्रेत्यर्थग्रहणे, इतरयोस्तु स्वरूपग्रहणे व्याख्यानमेव शरणम् ॥—**द्वन्द्वाद्वुन्** ॥ अणोऽपवादः । छं तु परत्वाद्बाधते ॥—**काकोलूकिके**ति । काकोलूकस्य वैरमित्यर्थः । वुन्नन्तं स्त्रियाम् 'वैरमैथुनिकादिवुन्' इति स्त्र्यधिकारे अमर' ॥—**कुत्सकुशिकिके**ति । कुत्सकुशिकयोर्मैथुनिका विवाहरूपः संबन्ध इत्यर्थः ॥ मिथुनं दपती तस्य कर्म क्रियानिष्पादन, मनोज्ञादित्वाद्वुञ् वुन्नन्तं चेदम् । स्त्रिया स्वभावात् ॥ अत्र वदन्ति । कुत्साश्च कुशिकाश्च कुत्सकुशिकास्तेषां मैथुनिकेत्यपि विग्रहः । इह कुत्सश्च कुशिका चेति द्वयोरेव मैथुनिकायां वुनिति नाग्रहः कार्यः । 'यूनि लुक्' इति सूत्रे कैयटेन अत्रिभरद्वाजिकेत्यादिकं प्रसङ्गादुदाहृत्य बहुवचनान्तद्वन्द्वाद्वुञो व्याख्यातत्वादिति ॥—**सङ्घाङ्क**—॥ पूर्ववद्वुञोऽपवादः ॥—**घोषग्रहणमिति** । एव च प्रकृतयस्तिस्रः प्रत्ययार्थविशेषणानि चत्वारीति वैषम्याद्यथासंख्यमपि न प्रवर्तते ॥—**गार्ग** इति । 'आपत्यस्य–' इति यलोपः ॥ यद्यप्यङ्कलक्षणयोः पर्यायत्वं प्रसिद्धं 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । तथापि पृथग्ग्रहणसामर्थ्यादिह विशेषपरतेत्याह—**परम्परासंबन्ध** इति । यथा गवादिनिष्ठः स्वामिना गोद्वारा संबन्धः ॥—**साक्षादिति** । यथा बिदानां विद्या ।

---

१ तस्येदमिति—अत्रेदमित्यनेन शेषभूतसर्वविशेषणा सामान्यविशेषरूपेण प्रत्ययार्थत्वं बोधयति । २ भ चेति—यच्चिभमिति सूत्रादनन्तर रणीति वक्तव्यमित्यर्थः । तेनाकटारस्थत्वात्पदत्वसिद्धिः । ३ वैरे इति—क्वचित् द्वंद्वे इति पाठः, स तु लेखकप्रमादः, मैथुनिकायामतिव्याप्तेः । द्वंद्वशब्दो वैरवाची वा । तथा चामरसिंहः 'द्वंद्वं कलहयुग्मयोः' इति ।
४ अण वोक्तेऽर्थे इति—अण्मवद्धमंघादीनामनुवृत्तेरिति भावः ।

शाकलेन प्रोक्तमधीयते शाकलास्तेषां सङ्घोऽङ्को घोषो वा शाकलः । शाकलकः । लक्षणे क्लीबता । ॥ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।४।३।१२९। छन्दोगानां धर्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् ॥ चरणाद्धर्माम्नाययोरित्युक्तं तत्साहचर्यान्नटशब्दादपि तयोरेव । ॥ न दण्डमाणवान्तेवासिषु ।४।३।१३०। दण्डप्रधाना माणवा दण्डमाणवास्तेषु शिष्येषु च वुञ् न स्यात् । दाक्षा दण्डमाणवाः शिष्या वा । ॥ रैवतिकादिभ्यश्छः ।४।३।१३१। तस्येदमित्यर्थे । वुञोऽपवादः । रैवतिकीयः । बैजवापीयः । * कौपिञ्जलहास्तिपदादण् वाच्यः ॥ कपिञ्जलस्यापत्यम् । इहेव निपातनादण् । तदन्तात्पुनरण् । कौपिञ्जलः । गोत्रवुञोऽपवादः । हस्तिपादस्यापत्यं हास्तिपादस्यायं हास्तिपदः । ॥ आथर्वणिकस्येकलोपश्च ।४।३।१३३। अण् स्यात् । आथर्वणिकस्यायमाथर्वणः धर्म आम्नायो वा । चरणाद्वुञोऽपवादः ॥ समाप्ताः शैषिकाः ॥

## तद्धितेषु विकारार्थकाः ॥

**तस्य विकारः** ।४।३।१३४। * अश्मनो विकारे टिलोपो वक्तव्यः ॥ अश्मनो विकार आश्मः । भास्मनः । मार्तिकः । ॥ अवयवे च प्राण्योषधिवृक्षेभ्यः ।४।३।१३५। चाद्विकारे । मयूरस्यावयवो विकारे वा मायूरः । मौर्वं काण्डं भस्म वा । पैप्पलम् । ॥ बिल्वादिभ्योऽण् ।४।३।१३६। बैल्वम् । ॥ कोपधाच्च ।४।३।१३७। अण् । अञोऽपवादः । तर्कु, तार्कवम् । तैत्तिडीकम् । ॥ त्रपुजतुनोः षुक् ।४।३।१३८। आभ्यामण् स्याद्विकारे एतयोः षुगागमश्च । त्रापुषम् । जातुषम् । ॥ ओरञ् ।४।३।१३९। दैवदारवम् । भाद्रदारवम् । ॥ अनुदात्ता-

घोष आभीरस्थानम् । णित्त्व ङीबर्थं पुंवद्भावनिषेधार्थं च । वैदी विद्या यस्य वैदीविद्य । विदानामसाधारणी या विद्या तद्वानित्यर्थः ॥—**छन्दोगौक्थिक**—॥ सङ्घादयो निवृत्ता, एभ्यो ञ्य. स्यात्तस्येदमित्यर्थे ॥ चरणशब्देभ्यो वुञोऽपवादः न लौत्सर्गिकस्याणः ॥ धर्माम्नाययोरित्युक्तेनेह । छन्दोग कुलमित्यादि ॥—**न दण्ड**—॥ 'तस्येदम्' इत्यनुवर्तते तेषु शिष्येषु चेति प्रत्ययार्थविशेषणेष्विति शेष ॥—**दाक्षा** इति । 'इञश्च' इत्यण ॥—**रैवतिकादिभ्यश्छः** ॥ रैवतिकशब्दो 'रेवत्यादिभ्यष्ठक्' इति ठगन्त । रैवतिक आदमेषि बैजवापीत्यादिरैवतिकादयोऽमी गोत्रप्रत्ययान्ताः, ततः पूर्वेण वुञि प्राप्ते छविधानार्थमिदमित्याह— **वुञोऽपवाद** इति ॥ अत इत्माशङ्क्याह—**इहैव निपातनादि**ति । हस्तिनः पाद इव पादो यस्य हस्तिपादः । पादस्य लोपो न भवति 'अहस्त्यादिभ्य.' इति वचनात्तदाह—**हस्तिपादस्ये**ति ॥—**हास्तिपद** इति । अस्मादेव निपातनादण पद्भावश्चेति भाव. ॥—**आथर्वणिकस्य**—॥ अथर्वणा प्रोक्तो वेदोऽथर्वा, अभेदोपचारात् 'तदधीते वसन्तादिलाट्ठक्' 'दाण्डिनायन–' आदिसूत्रे निपातनाट्टिलोपाभावः ॥ अन्ये त्वाहुः । अथर्वणा प्रोक्तमधीते आथर्वणिकः । इह प्रोक्तेऽण् ततः 'छन्दोब्राह्मणानि–' इति तद्विषयतामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात्प्रोक्ताल्लुङ्नेति ॥ ॥ समाप्ताः शैषिकाः ॥

**तस्य विकारः** ॥ पञ्चम्यन्ताद्विकारे अणादय स्युः ॥ घादिसबद्धस्य तस्य ग्रहणस्य निवृत्तत्वं पुनस्तस्येत्युक्तम् ॥ अणादयस्तु न निवर्तन्ते 'प्राग्दीव्यत –' 'प्राग्भवनात्' इति विशिष्टावधिपरिच्छेदेनाधिकृतत्वात् । इह 'प्राणिरजतादिभ्योऽञ्, ओरञ्, अनुदात्तादेश्च, मयड्वैतयोः, नित्य वृद्धशरादिभ्य', पिष्टाच्च,' इत्यादिभिरपवादाना वक्ष्यमाणत्वादप्राणिषु आद्युदात्तम् अवृद्ध प्रतिपदमवक्ष्यमाणप्रत्यय चोदाहरणमिति पर्यालोच्य तथैवोदाहरति—**आश्म** इत्यादि । अश्मन्भस्मन्शब्दौ मनिन्प्रत्ययान्तौ, 'मृदस्तिकन्,' नित्स्वरेण त्रयोऽप्याद्युदात्ताः । प्राचीनस्य तस्येत्यस्य निवृत्तत्वादधिकारोक्तप्रत्यया न प्रवर्तन्त इति नेह ठक् । हाल', सैर ॥—**चाद्विकार** इति ॥ तेन वक्ष्यमाणप्रत्ययाः प्राण्यादिभ्यस्त्रिभ्योऽर्थद्वये भवन्त्यन्येभ्यस्तु विकार एवेति फलितम् ॥—**मयूर** इति । 'प्राणिरजतादिभ्यः' इत्यञ् । अनुदात्तादेरञः सिद्धत्वादुदात्तार्थं वृद्धेषु मयड्बाधनार्थं चावश्यकमिद परत्वादनुदात्तादिष्वपि प्रवर्तते ॥ ओषधिभ्य उदाहरति— **मौर्वमि**ति । मूर्वाशब्दः 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तः । पिप्पलशब्दस्तु 'लघावन्ते' इत्यनेनाद्युदात्तः ॥—**बिल्वादिभ्योऽण्** ॥ अञ्मयटोरपवादः । बिल्व व्रीहि काण्ड मुद्ग मसूर गोधूम इक्षु कर्पासी वेण्वादयो बिल्वादयः ॥—**त्रपुजतुनोः**—॥ 'बिल्वादिभ्योऽण्' इत्यतोऽनुवर्तनादाह— **अण् स्यादि**ति । 'ओरञ्' इत्यस्यायमपवाद । अप्राण्यादित्वादवयवे न भवतीत्याशयेनाह—**विकारे** इति ॥—**त्रापुषमि**ति । त्रपुणो विकारः । एव जतुनो विकारो जातुषम् ॥—**ओरञ्** ॥ अनुदात्तादेरन्यादिहोदाहरणम् ॥—**दैवदारवमि**ति–देवदारुभद्रदारुशब्दौ 'पीतद्र्वर्थानाम्' इत्याद्युदात्तौ–॥ **दाधित्थमि**ति ॥ दधनि तिष्ठतीति 'सुपि स्थः' इति कः । उपपदसमासः । पृषोदरादित्वात्सकारस्य तकारः । कुदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् ॥ एव कपित्थेऽपि बोध्यम् ॥

१ आश्म इति—एव च चर्मणो विकारश्चाम. कोशः । 'चर्मण कोशे' इत्युपसख्यानाट्टिलोपः ।

देश्च ।४।३।१४०। दाधित्थम् । कापित्थम् । पलाशादिभ्यो वा ।४।३।१४१। पालाशम् । कारीरम् । शम्याः ष्लञ् ।४।३।१४२। शामीलं भस्म । षित्वान्ङीष् । शामीली स्रुक् । मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।४।३।१४३। प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः । अश्ममयम् । आश्मनम् । अभक्ष्येत्यादि किम् । मौद्गः सूपः । कार्पासमाच्छादनम् । नित्यं वृद्धशरादिभ्यः ।४।३।१४४। आम्रमयम् । शरमयम् । * एकाचो नित्यम् ॥ त्वङ्मयम् । वाङ्मयम् । कथं तर्हि आप्यमम्मयमिति । तस्येदमित्यणन्तात्स्वार्थे ष्यञ् । गोश्च पुरीषे ।४।३।१४५। गोः पुरीषं गोमयम् । पिष्टाच्च ।४।३।१४६। मयट् स्याद्विकारे । पिष्टमयं भस्म । कथं पैष्टी सुरेति । सामान्यविवक्षायां तस्येदमित्यण् । संज्ञायां कन् ।४।३।१४७। पिष्टादित्येव । पिष्टस्य विकारविशेषः पिष्टकः । पूपोऽपूपः पिष्टकः स्यात् । व्रीहेः पुरोडाशे ।४।३।१४८। मयट् स्यात् । बिल्वाद्यणोऽपवादः । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् । असंज्ञायां तिलयवाभ्याम् ।४।३।१४९। तिलमयम् । यवमयम् । संज्ञायां तु तैलम् । यावकः । तालादिभ्योऽण् ।४।३।१५२। अञ्मयटोरपवादः । * तालाद्धनुषि ॥ तालं

---

—**पलाशादिभ्यो वा** ॥ उभयत्र विभाषेयम् । पलाशखदिरशिंशपास्यन्दनानामनुदात्तादित्वान्नित्ये प्राप्ते, करीरशिरीषविकङ्कतपूलासयवासशब्दानामप्राप्ते, विधानात् ॥ पलाशशब्दो घृतादित्वादन्तोदात्तः ॥ खदिरशब्दः 'अजिरशिशिर–' इत्यादौ किरच्प्रत्ययान्तो निपातितः ॥ शिंशपाशब्दो 'अथ द्वितीयं प्रागीषात्' इति वर्तमाने 'पान्ताना गुर्वादीनाम्' इति मध्योदात्तः ॥ 'स्यदि किञ्चिच्चलने' 'अनुदात्तेतश्च हलादेः' इति युच् ।—**कारीरमिति** ॥ 'किरतेरीरन्' । नित्स्वरेण करीरशब्दोऽयमाद्युदात्तः ॥ 'कृनॄभ्यामीषन्' 'शॄदृभ्या किच्च' पूर्ववच्छिरीषशब्दोऽप्याद्युदात्तः । विकङ्कतपूलासयवासशब्दाः 'ग्रामादीनां च' इत्याद्युदात्ताः ॥—**षित्वान्ङीषिति**[1] ॥ टित्वान्ङीबिति तु माधवः ॥—**मयड्वैतयोः**—॥ भाषायां[2] किम् । खादिरो यूप इति वृत्तिकारः ॥ ननु मयटो वैकल्पिकत्वात्सिद्धमिदमिति चेत् ॥ अत्राहुः । वेदे बह्वृचः परस्य मयटोऽर्थान्तरपरत्वमेवेति तात्पर्यग्रहणार्थमेवेदम् ॥ 'द्व्यचश्छन्दसि' इति सूत्रस्य 'द्व्यच एव' इति नियमार्थत्वे यद्यपीदं गतार्थम्, तथापि 'द्व्यचश्छन्दस्येव' इति विपरीतनियमशङ्कानिवृत्त्यर्थं भाषाग्रहणं कृतमिति ॥ अधिकारादेव विकारावयवयोर्लाभ एतयोरिति वचनं ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञ्' इत्येवमादयस्ते तद्विषयेऽपि यथा स्यादित्येवमर्थम् । कपोतमयं, लोहमयम् ॥ इह विकारावयवाभ्यां सह प्रत्येकम् 'अभक्षाच्छादनयो' इति सबध्यते समासनिर्देशादतो यथासंख्यं न ॥—**आश्मनमिति** । 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इति वचनादश्मभेदशब्दे भेदशब्दस्य लोपे अश्मन्निति नान्तमवशिष्यते, तथा कल्माषाङ्घ्रे राज्ञो भार्यायां मदयन्त्यां वसिष्ठेनोत्पादितः सुतोऽश्मको नाम, तत्र सज्ञात्वद्योतकस्य कप्रत्ययस्याभावे अश्मन्निति नाम भवति तस्यावयवे आश्मनं विकारेऽप्याश्मनमित्येव भवति । न च 'अश्मनो विकारे' इति टिलोपः स्यादिति वाच्यम् । प्रसिद्धतरत्वेन पाषाणवाचकस्यैव तत्र ग्रहीतुमुचितत्वत् ॥ वस्तुतस्तु 'तस्येदम्' इति सामान्यविवक्षायां पाषाणवाचकस्याप्यश्मन्शब्दस्याश्मनमिति भविष्यति, पैष्टी सुरेतिवत् ॥—**मौद्गः कार्पासमिति** । मुद्गशब्दः घृतादित्वादन्तोदात्तः । 'कृञः पासः' इति पासप्रत्यये गुणे रपरे च कर्पासीशब्दो जातिलक्षणङीषन्तस्ताभ्याम् 'अनुदात्तादेश्च' इत्यञं बाधित्वा बिल्वादित्वादण् ॥—**नित्यं वृद्ध**—॥ इह 'भाषायामभक्षाच्छादनयोः' इत्यनुवर्तत इति वृत्तिः ॥ नन्वेवमानन्दमयाधिकरणे शङ्कराचार्यैः 'अन्योऽन्तर आत्मानन्दमयः' इति श्रुतौ 'आनन्दमय इति विकारे मयट्' इत्युक्तं तत्कथं संगच्छतां, 'प्राचुर्ये मयट्' इति तु वक्तुमुचितमिति चेत् । अत्राहुः । प्राचुर्ये मयट्यपि प्रकृत्यर्थविरोधिनो दुःखस्य लेशतोऽनुवृत्तिलाभात्प्रकृते विकारार्थः पर्यवस्यतीति तेषामाशय ॥ यद्वा 'नित्यं वृद्ध–' इत्यत्र भाषाग्रहणं नानुवर्तते अनुवृत्तावपि 'भाषायां नित्यम्, अन्यत्र क्वाचित्कः' इत्याश्रित्य मयट् सुसाधः ॥ अथ वा 'हेतुमनुष्येभ्यः' इत्यनुवर्तमाने 'मयट् च' इति सूत्रेण आगतार्थे मयट् । विकार इति त्वार्थिकार्थकथनमेवातः शङ्करभगवत्पादोक्तिरनवद्यैवेति ॥—**शरमयमिति** । शर दर्भ मृत् कुटी तृण सोम बिल्वज शरादिः ॥—**एकाचो नित्यमिति** ॥ आरम्भसामर्थ्यादेव सिद्धे 'नित्यं वृद्ध–' इति नित्यग्रहणं योगविभागेनान्यत्रापि क्वचिद्विधानार्थं, तेनैतल्लभ्यत इति भावः ॥ एकाच्त्वादेव सिद्धे शरादिषु मृच्छब्दपठनं विस्पष्टार्थमित्याहुः ॥—**गोश्च पुरीषे**[3] ॥ पुरीषं न विकारो, नाप्यवयवः । तथापि 'तस्येदम्' इत्यर्थेऽयं प्रत्ययः । विकारावयवयोस्तु गोपयसोर्यत वक्ष्यति ॥ पुरीषे किम् । गव्यं पयः ॥—**यावक** इति ॥ यवशब्दाद्विकारेऽण्, तदन्तात् 'यावादिभ्यः' इति स्वार्थे कन् ॥—**तालादिभ्योऽण्**॥—**अञ्मयटोरिति** । तालश्यामाकशब्दाभ्यां वृद्धत्वान्मयट् प्राप्तः । बार्हिणां विकारो बार्हम् । 'प्राणिरजतादिभ्योऽञ्' ततो 'ञितश्च तत्प्रत्ययात्' इत्यञ् प्राप्तः, शेषे-

---

१ षित्वान्ङीषिति—शेखरे तु 'टित् प्रत्ययः । 'ञितश्च तत्प्रत्ययात्' इति सूत्रे भाष्ये विकारविकारेऽपि तद्विकारित्वमारोप्य तत्सूत्र प्रत्याख्यातम् । अस्य षित्वे हि तत्प्रत्याख्याने षित्वान्ङीष्, आरम्भे त्वञन्तत्वान्ङीबिति फलभेदः स्यात्' इत्युक्तम् । २ भाषायामिति—वेदे तु मृन्मयं गृहमित्यत्र प्राचुर्ये मयट् बोध्यः । ३ गोश्च पुरीष इति—नचैवं सति प्रकरणबाधोऽत्र भवतीति वाच्यम् । गोराहारविकारे पुरीषे गोविकारत्वमारोप्य प्रकरणैक्यस्य सुवचत्वात् इति ।

धनुः । अन्यत्तालमयम् । ऐन्द्रायुधम् । **जातरूपेभ्यः परिमाणे** ।४।३।१५३। अण् । बहुवचनात्पर्यायग्रहणम् । हाटकः तापनीयः सौवर्णो वा निष्कः । परिमाणे किम् । हाटकमयी यष्टिः । **प्राणिरजतादिभ्योऽञ्** ।४।३।१५४। शौकम् । बाकम् । राजतम् । **ञितश्च तत्प्रत्ययात्** ।४।३।१५५। ञितो विकारावयवप्रत्ययस्तदन्तादञ् स्यात्तयोरेवार्थयोः । मयटोऽपवादः । शामीलस्य शामीलम् । दाधित्थस्य दाधित्थम् । कापित्थम् । ञितः किम् । बैल्वमयम् । **क्रीतवत्परिमाणात्** ।४।३।१५६। प्राग्वतेष्ठञित्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते । अणादीनामपवादः । निष्केण क्रीतं नैष्किकम् । एवं निष्कस्य विकारोऽपि नैष्किकः । शतस्य विकारः शत्यः । शतिकः । **उष्ट्राद्वुञ्** ।४।३।१५७। प्राण्यञोऽपवादः । औष्ट्रकः । **उमोर्णयोर्वा** ।४।४।१५८। औमम् । औमकम् । और्णम् । और्णकम् । वुञभावे यथाक्रममणञौ । **एण्या ढञ्** ।४।३।१५९। ऐणेयम् । एणस्य तु ऐणम् । **गोपयसोर्यत्** ।४।३।१६०। गव्यम् । पयस्यम् । **द्रोश्च** ।४।३।१६१। द्रुर्वृक्षस्तस्य विकारोऽवयवो वा द्रव्यम् । **माने वयः** ।४।३।१६२। द्रोरित्येव द्रुवयम् । यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् । **फले लुक्** ।४।३।१६३। विकारावयवप्रत्ययस्य लुक् स्यात् फले । आमलक्याः फलमामलकम् । **प्लक्षादिभ्योऽण्** ।४।३।१६४। विधानसामर्थ्यान्न लुक् । प्लाक्षम् । **न्यग्रोधस्य च केवलस्य** ।७।३।५। अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् । **जम्ब्वा वा** ।४।३।१६५। जम्बूशब्दात्फलेऽण् वा स्यात् । जाम्बवम् । पक्षे ओरञ् तस्य लुक् जम्बु । **लुप् च** ।४।३।१६६। जम्ब्वाः फलप्रत्ययस्य लुप् वा स्यात् । लुपि युक्तवत् । जम्ब्वाः फलं जम्बूः । * **फलपाकशुषामुपसंख्यानम्** ॥ व्रीहयः । मुद्गाः । * **पुष्पमूलेषु बहुलम्** ॥ मल्लिकायाः पुष्पं

---

भ्यस्त्वनुदात्तादित्वादञ् प्राप्तः । तथाहि विशिदशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात्कः । 'अन्येषामपि–' इति दीर्घः । इन्द्राविशः इन्द्रादशः ॥ 'चप सान्त्वने' पचाद्यच् । चपापीयूक्षाशब्दो 'लघावन्ते' इति मध्योदात्तः 'फिषः' इत्यधिकारादापः प्रागेव स्वरप्रवृत्तेः । इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः । अण्ग्रहण बाधकबाधनार्थं यथाविहितप्रत्ययविधौ बर्हिणशब्दाद्वृद्धलक्षणो मयट् स्यात् 'ञितश्च तत्प्रत्ययात्' इत्यञो बाधनेन वचनस्य चरितार्थत्वमित्याहुः ॥—**तालाद्धनुषीति** । गणसूत्रमिदम् ॥—**हाटक** इति । इह वृद्धलक्षणो मयट् प्राप्तः, तपनीयादेः 'अनुदात्तादेश्च' इत्यञ् प्राप्तः ॥—**प्राणि**—॥ अनुदात्तादेरञ् सिद्धत्वात्परिशिष्टमिहोदाहरण तदाह—**शौकं बाकमिति** । 'शुकबकशब्दौ प्राणिनां कुपूर्वम्' इत्याद्युदात्तौ ॥—**राजतमि**ति । रजतसीसलोहउम्बरकण्टकारेत्यादयो रजतादयस्तेषु अनुदात्तादीनां पुनः पाठो मयड्बाधनार्थोऽन्यथा हि परत्वान्मयट् स्यादेव ॥—**शामीलमि**ति ॥ शामीलशब्द 'शम्याः ष्लञ्' इति प्लुअन्त. । दधित्थात् 'अनुदात्तादेश्च' इत्यञ दधित्थस्य दाधित्थम् ॥—**बैल्वमयमि**ति । बिल्वशब्दोऽणन्त ॥—**नैष्किकमि**ति । 'तेन क्रीतम्' इति ठक् ॥—**शत्यः शतिक** इति ॥ 'शताच्च ठन्यतौ' ॥—**अणञावि**ति । उमाशब्दः 'तृणधान्यानां च' इत्याद्युदात्तः । ऊर्णाशब्दस्तु प्रातिपदिकस्वरेणान्तोदात्त इति भावः ॥—**एण्या ढञ्** ॥ प्राण्यञोऽपवादः ॥ स्त्रीलिङ्गनिर्देशादाह—**एणस्य त्विति** ॥—**गोपयसोः**—॥ यद्यपि सर्वत्र गोरजादिप्रसङ्गे यदुक्तस्तथापि 'मयड्वैतयोः' इति पक्षे प्राप्त मयट बाधितुं पुनरय यद्विधिः ॥—**द्रोश्च** ॥ ओरञ', 'एकाचो नित्यम्' इति मयटश्चापवादोऽयम् ॥—**द्रव्यमि**ति । 'ओर्गुण.' 'वान्तो यि प्रत्यये' । 'द्रव्यगुणकर्म–' इत्यादिषु प्रयुज्यमानद्रव्यशब्दस्तु गुणैर्द्रूयते आश्रीयते इति द्रुधातो' 'अचो यत्' इति यत्प्रत्ययान्तः ॥—**माने वयः** ॥ यतोऽपवादः ॥—**द्रुवयमि**ति । द्रोर्विकारभूतं प्रस्थादिपरिमाणमित्यर्थः ॥—**फले लुक्** ॥—**विकारावयवे**ति । फलितस्य वृक्षस्य फलमवयवो विकारश्च तेनान्यतरस्मिन् प्रत्यय. ॥—**आमलकमि**ति । मयटो लुक् 'लुक्तद्धितलुकि' इति ङीपो लुक् । न चात्र स्थानिवद्भावेन 'यस्येति च' इति लोपः शङ्क्यः । 'लुका लुप्तं न स्थानिवत्' इत्यभ्युपगमात् । अत एव पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुरित्यत्र 'अध्यर्धपूर्व–' इति ठञो लुकि कृते 'लुक्तद्धित–' इति ङीपो लुका लुप्तत्वेन स्थानिवत्त्वाभावादुकारस्य यणादेशो न भवति ॥—**प्लक्षादिभ्योऽण्** ॥ अञोऽपवादः । शिग्रुकर्कन्धूशब्दाभ्याम् 'ओरञ्' इति, अन्येभ्यस्त्वनुदात्तादित्वादञः प्राप्तिः ॥ प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु कर्कन्धु बृहती ॥ तत्र प्लक्षशब्दः 'फिषः' इत्यन्तोदात्त । न्यग्रोधशब्दो 'लघावन्ते' इति मध्योदात्तः । अश्वत्थशब्दस्तु घृतादित्वादन्तोदात्त । इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ ॥ 'आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुद फलम्' इत्यमरः ॥—**न्यग्रोधस्य च**—॥ केवलस्येति किम् । न्यग्रोधमूले भवाः न्याग्रोधमूलाः शालयः ॥ न्यक् रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे तु विध्यर्थम् ॥—**जम्ब्वि**ति ॥ नपुंसकह्रस्वः । 'फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्' ॥—**फलपाके**ति । फलपाकेन शुष्यन्तीति फलपाकशुषः ॥—**व्रीहयः । मुद्गा** इति । बिल्वाद्यणो लुक् ॥—**मल्लिके**ति । अनुदात्तलक्षणस्याञो लुप् ॥ 'मादीनां च' इति फिट्सूत्रान्मल्लिकाशब्दे द्विती-

---

६ परिमाणादिति—परिमाणशब्देन परिच्छेदकमात्र, व्याख्यानात् । तेन सख्याया अपि ग्रहणम् ।

मल्लिका । जात्याः पुष्पं जाती । विदार्या मूलं विदारी । बहुलग्रहणादेह । पाटलानि पुष्पाणि । साल्वानि मूलानि । बाहुलकात्कचिल्लुक् । अशोकम् । करवीरम् । ▯ हरीतक्यादिभ्यश्च ।४।३।१६७। एभ्यः फलप्रत्ययस्य लुप्स्यात्। हरीतक्यादीनां लिङ्गमेव प्रकृतिवत् । हरीतक्याः फलानि हरीतक्यः । ▯ कंसीयपरशव्ययोर्यञौ लुक् च । ४।३।१६७। कंसीयपरशव्यशब्दाभ्यां यञञौ स्तश्छयतोश्च लुक् । कंसाय हितं कंसीयम्, तस्य विकारः कांस्यम् । परशवे हितं परशव्यम्, तस्य विकारः पारशवः ॥ इति प्राग्दीव्यतीयाः ॥

---

## ठगधिकारः ॥

▯ प्राग्वहतेष्ठक् ।४।४।१। तद्वहतीत्यतः प्राक् ठगधिक्रियते ॥ तदाहेति माशब्दादिभ्यः उपसंख्यानम् । * माशब्दः कारि इति य आह स माशब्दिकः । ▯ स्वागतादीनां च ।७।३।७। ऐच् न स्यात् । स्वागतमित्याह स्वागतिकः । स्वाध्वरिकः । स्वङ्गस्यापत्यं स्वाङ्गिः । व्यङ्गस्यापत्यं व्याङ्गिः । व्यडस्यापत्यं व्याडिः ॥ व्यवहारेण चरति व्यावहारिकः । स्वपतौ साधु स्वापतेयम् । * आहौ प्रभूतादिभ्यः ॥ प्रभूतमाह प्राभूतिकः । पार्याप्तिकः । * पृच्छतौ सुस्नातादिभ्यः । सुस्नातं पृच्छति सौस्नातिकः सौखशायनिकः । आनुशतिकादिः । * गच्छतौ परदारादिभ्यः ॥ पारदारिकः । गौरुतल्पिकः । ▯ तेन दीव्यति खनति जयति जितम् ।४।४।२। अक्षैर्दीव्यति आक्षिकः । अभ्र्या खनति आभ्रिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितमाक्षिकम् । ▯ संस्कृतम् ।४।४।३। दध्ना संस्कृतं दाधिकम्। मारीचिकम् । ▯ कुलत्थकोपधादण् ।४।४।४। ठकोऽपवादः । कुलत्थैः संस्कृतं कौलत्थम् । तैत्तिडीकम् । ▯ तरति ।४।४।५। उडुपेन तरति औडुपिकः । ▯ गोपुच्छाट्ठञ् ।४।४।६। गौपुच्छिकः । ▯ नौद्व्यचष्ठन् ।४।४।७। नाविकः । घटिकः । बाहुभ्यां तरति बाहुका स्त्री । ▯ चरति ।४।४।८। तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । शाकटिकः । दध्ना भक्षयति दाधिकः । ▯ आकर्षात् ष्ठल् ।४।४।९। आकर्षो निकषोपलः । आकषादिति पाठान्तरम् । तेन चरति आकर्षिकः । षित्वान्ङीष् । आकर्षिकी । ▯ पर्पादिभ्यः ष्ठन् ।४।४।

यमुदात्त जातीविदारिशब्दौ गौरादिङीषन्तौ ॥—**पाटलानी**ति । बिल्वादित्वादण् । साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥—**हरीतक्यादिभ्यश्च** ॥ इह द्राक्षाप्रभृतिभ्यो 'नित्यं वृद्ध–' इति प्राप्तस्य मयटो लुप्, अनुदात्तादिभ्योऽञः, इतरेभ्यस्त्वणः ॥—**लिङ्गमेवे**ति । वचनं तु विशेष्यवदेव । 'हरीतक्यादिषु व्यक्तिः' इत्युक्तत्वादिति भावः ॥—**कंसीयमि**ति ॥ 'प्राक्क्रीताच्छः' इत्यधिकारे 'तस्मै हितम्' इति छः । तस्यैव च्छस्यापवादतया 'उगवादिभ्यो यत्' परशव्यं दारु । पारशव्यशब्दस्यानुदात्तादित्वादञि सिद्धे तत्सन्नियोगेन यतो लुगर्थं वचनम् । नच 'यस्येति–' इलोपे कृते 'हलस्तद्धितस्य' इति यलोपेन सिद्धमिष्टमिति भ्रमितव्यम् । ईतीत्यनुवृत्तेः ॥ ॥ प्राग्दीव्यतीयाः समाप्ताः ॥

**तदाहेती**ति ॥ वाक्यादयं प्रत्ययविधिः, शब्दो माकारीति यो निषेधति स माशब्दिक इत्युच्यते । तथा नित्यः शब्द इति य आह स नैत्यशब्दिकः । कार्यशब्दिकः । इह वाक्याद् द्वितीया न सम्भवत्यप्रातिपदिकत्वात् । तेन तच्छब्देन कर्ममात्रं निर्दिश्यते । तच्च वाक्यार्थरूपमित्याहुः ॥—**ऐज् न स्यादि**ति ॥ 'न य्वाभ्याम्–' इति प्राप्त ऐजागमोऽनेन निषिध्यते । 'न कर्म–' इत्यतो नञनुवर्तनादिति भावः ॥—**स्वापतेयमि**ति । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' स्वशब्दस्य द्वारादित्वादैजागमस्य प्राप्तिः । द्वारादिफलं तु स्वस्येदं सौवमिति ज्ञेयम् ॥—**आहावि**ति । उपसंख्यानमित्यनुषज्यते । आहेति पदे एकदेशस्य प्रकृतिभागस्यागन्तुकेनेकारेण आहावित्यनुकरणम् ॥—**प्राभूतिक** इति । क्रियाविशेषणाद्वक्तरि प्रत्ययः ॥—**तेन दीव्यति**—॥ इह कालपुरुषसंख्या न विवक्षिताः । तेनाक्षैरदेवीत् देविष्यति वा आक्षिक इति भवति । एवमक्षैर्देविष्यसि देविष्यामि वा आक्षिकः, दीव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः । कारकं तु विवक्षितमेव 'जयति, जितम्' इति कर्तृकर्मणोः पृथगुपादानात् । तेनाक्षैर्धृतः, अक्षैः खातः, इति कर्मार्थे आक्षिक इति न भवति ॥—**अभ्र्ये**ति । 'अभ्रिः स्त्री काष्ठकुद्दालः' इत्यमरः ॥—**संस्कृतम्**—॥ योगविभाग उत्तरार्थः ॥—**बाहुके**ति ॥ सूत्रे षकारः सांहितिको, न त्वनुबन्ध इति न ङीष् । तथा च 'आकर्षात् पर्पादेः' इत्यादिश्लोकवार्तिकं षित्वविवेचनाय प्रकरणान्ते पठिष्यति ॥—**निकषोपल** इति । सुवर्णपरीक्षार्थः ॥—**पाठान्तरमि**ति । एतच्च भ्वादौ 'कषखष–' इत्यादिदण्डके 'आकषात्ष्ठल्' इति माधवेनोपन्यस्तम् । किं तु 'आकर्षात्पर्पादेः' इति वार्तिकस्याननुगुणम् । तत्र हि नीरेफपाठे वृत्तासमतिप्रसङ्गात् ॥—**पर्प** इति । 'पर्प गतौ' । 'हलश्च' इति करणे घञ् ॥ इहान्तर्गणसूत्रं 'पादः पच्च' इति । पादाभ्यां चरति

---

१ पुष्पाणीति—भाष्ये तु मूलानीति पाठः । २ माशब्दादिभ्य इति—आहौ प्रभूतादिभ्य इति वार्तिकारम्भसामर्थ्याद्वाक्यादयं प्रत्ययविधिरिति बोध्यम् । ३ स्वपतौ इति—स्वागतादिगणे स्वपतिशब्दपाठो मंदप्रयोजनः, 'स्वशब्दादेश्चात्स्वग्रामस्वाध्याययोरेवेति नियमेन स्वाराज्यादाविवात्राप्यैचोऽप्राप्तेः । ४ संस्कृतमिति—सत उत्कर्षाधान संस्कारः ।

१०। पर्पेण चरति पर्पिकः पर्पिकी । येन पीठेन पङ्गवश्चरन्ति स पर्पः । अश्विकः । रथिकः । **श्वगणाट्ठञ्च** ।४।४।११। चात् ष्ठन् । **श्वादेरिञि** ।७।३।८। ऐच् न । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । तदादिविधौ चेदमेव ज्ञापकम् । * **इकारादाविति वाच्यम्** । श्वगणेन चरति श्वागणिकः । श्वागणिकी । श्वगणिकः । श्वगणिकी । **पदान्तस्यान्यतरस्याम्** ।७।३।९। श्वादेरङ्गस्य पदशब्दान्तस्यैज्वा । श्वापदस्येदं श्वापदम् । शौवापदम् । **वेतनादिभ्यो जीवति** ।४।४।१२। वेतनेन जीवति वैतनिकः । धानुष्कः । **वस्नक्रयविक्रयाट्ठन्** ।४।४।१३। वस्नेन मूल्येन जीवति वस्निकः । क्रयविक्रयग्रहणं संघातविगृहीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः । **आयुधाच्छ च** ।४।४।१४। चाट्ठन् । आयुधेन जीवति आयुधीयः । आयुधिकः । **हरत्युत्सङ्गादिभ्यः** ।४।४।१५। उत्सङ्गेन हरत्यौत्सङ्गिकः । **भस्त्रादिभ्यः ष्ठन्** ।४।४।१६। भस्त्रया हरति भस्त्रिकः । षित्वान्ङीष् । भस्त्रिकी । **विभाषा विवधात्** ।४।४।१७। विवधेन हरति विवधिकः । पक्षे ठक् । वैवधिकः । एकदेशविकृतस्यानन्यत्वाद्वीवधादपि ष्ठन् । वीवधिकः । वीवधिकी । विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते । **अण्कुटिलिकायाः** ।४।४।१८। कुटिलिका व्याधानां गतिविशेषः कर्मारोपकरणभूतं लोहं च । कुटिलिकया हरति मृगानङ्गारान्वा कौटिलिको व्याधः कर्मारश्च । **निर्वृत्तेऽक्षद्यूतादिभ्यः** ।४।४।१९। अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम् । **त्रेर्मम्नित्यम्** ।४।४।२०। त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप्स्यान्नित्यम् । कृत्या निर्वृत्तं कृत्रिमम् । पक्त्रिमम् । * **भावप्रत्ययान्तादिमप् वक्तव्यः** । पाकेन निर्वृत्तं पाकिमम् । त्यागिमम् । **अपमित्ययाचिताभ्यां कक्कनौ** ।४।४।२१। अपमित्येति ल्यबन्तम् । अपमित्य निर्वृत्तं आपमित्यकम् । याचितेन निर्वृत्तं याचितकम् । **संसृष्टे** ।४।४।२२। दध्ना संसृष्टं दाधिकम् । **चूर्णादिनिः** ।४।४।२३। चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः । **लवणाल्लुक्** ।४।४।२४। लवणेन संसृष्टो लवणः सूपः । लवणं शाकम् । **मुद्गादण्** ।४।४।२५। मौद्ग ओदनः । **व्यञ्जनैरुपसिक्ते** ।४।४।२६। ठक् । दध्ना उपसिक्तं दाधिकम् । **ओजःसहोऽम्भसा वर्तते** ।४।४।२७। ओजसा वर्तते औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः । **तत्प्रत्यनुपूर्वमी-**

पदिकः ॥ यत्तु वार्तिक 'पद्भाव इके चरतावुपसंख्यानम्' इति गोऽस्यैव प्राप्त ॥ पर्प, अश्व, अश्वत्थ, रथ, जाल, न्यास, व्याल, पादः पत् ॥—**श्वगणाट्ठञ्च** ॥ ठकोऽपवादः ॥—**एतदेव ज्ञापकमि**ति ॥ द्वारादिगणे श्वन्शब्दः पठ्यते, न तु श्वभस्त्र श्वदंष्ट्रेत्यादिस्तथा च 'श्वादेरिञि' इति निषेधसूत्रमेव व्यर्थं सद्द्वारादिषु तदादिविधिं ज्ञापयतीत्यर्थः ॥ फलं तु द्वारपालस्यायं दौवारपाल इत्यादावैजागमस्य प्रवृत्तिः ॥—**इकारादावि**ति । सूत्रे इञित्यपनीय इकारादावि ति पठनीयमित्यर्थः । अन्ये तु इञीति स्थाने इतीति पठनीयम् । तथा चात्राक्षिप्तप्रत्ययस्य विशेष्यत्वाद् 'यस्मिन्विधिस्तदादौ–' इत्यनेन इकारादिर्लभ्यते इत्याह—**श्वगणिकी**ति । ष्ठनः षित्वान्ङीष् ॥—**श्वापदस्ये**ति । 'अन्येषामपि दृश्यते' इति दीर्घ ॥—**धानुष्क** इति । वेतनादिगणे धनुर्दण्डेति पठ्यते तच्च संघातविगृहीतार्थम् । तथा च धानुर्दण्डिक, दाण्डिक इत्याद्युदाहार्यम् ॥—**आयुधाच्छ च** ॥ आयुध्यन्ते अनेनेति आयुधं 'घञर्थे कविधानम्' इति कः ॥—**हरत्युत्सङ्गादिभ्यः** ॥ एभ्यस्तृतीयान्तेभ्यष्ठक् स्यादुपादत्ते नयति वेत्यर्थे ॥ उत्सङ्ग, उडुप, उत्थित, पिटक, पिटाक ॥—**भस्त्रादिभ्यः ष्ठन्** ॥ भस्त्रा चर्मविकारः । शीर्षभारशब्दोऽत्र पठ्यते निपातनाच्छीर्षभावः सप्तमीसमासश्च, 'तत्पुरुषे कृति–' इति वा अलुक् । पक्षे शीर्षभारः ॥—**एकदेशविकृतस्ये**ति ॥ 'वीवधाच्चेति वक्तव्यम्' इति वार्तिक न्यायसिद्धार्थकथनपरमिति भावः ॥ वृत्तिकृत्तु सूत्रे वीवधशब्दं प्रक्षिप्य 'विभाषा विवधवीवधात्' इति पपाठ ॥—**त्रेर्मम्नित्यम्** ॥ नित्यग्रहणं स्वातन्त्र्येण प्रयोग वारयितुम् । अत एव लौकिके विग्रहवाक्ये क्त्रिन्नादीनां प्रयोगो, न तु क्त्रे, तदाह—**कृत्या निर्वृत्तमि**ति । एवमग्रेऽपि पाकेन निर्वृत्तमिति विग्रहो बोध्यः । संख्यावाची त्रिशब्दो नेह गृह्यते, प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणात् 'णिजां त्रयाणाम्' इति लिङ्गाच्च । ननु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां मप विना त्रिप्रत्ययान्तस्य प्रयोगनिवारणेऽपि तदविवक्षायां तस्य स्वातन्त्र्येण प्रयोगो दुर्वार इति चेत् । न । नित्यमिति योगं विभज्य तन्सामर्थ्यादर्थविशेषानादरेणैव स्वातन्त्र्यवारणात् ॥—**इमबि**ति । एवं च मप् न कर्तव्यः । तथा हि 'भावप्रत्ययान्तादिमप्' । ततः 'त्रे' पर्वेण सिद्धे नियमार्थमिदं त्रिप्रत्ययान्त इमब्विषय एवेति । तेन त्रिप्रत्ययान्तप्रयोगो निवर्तितः । ततो 'नित्यम्' । अनेन निर्वृत्तार्थाविवक्षायामपि त्र्यन्तस्य स्वातन्त्र्य वार्यते । एवं च संख्यावाचित्रिशब्दस्य ग्रहणशङ्कैव नास्ति, भावप्रत्ययान्तादित्यनुवृत्तेः । स्वरेऽपि विशेषो नास्ति, उदात्तनिवृत्तिस्वरेण इमप इकारस्योदात्तत्वात् ॥—**अपमित्ये**ति ॥ 'उदीचां माङः' इति क्त्वाप्रत्यये अपेत्यनेन सह गतिसमासः क्त्वो ल्यप् । 'मयतेरिदन्यतरस्याम्' इति इत्वम् 'ह्रस्वस्य–' इति तुक् । ल्यबन्तादस्मात्तृतीयान्तात्प्रत्ययो न भवति, किं तु वचनात्प्रथमान्तादेवेति बोध्यम् ॥—**व्यञ्जनैरुप—**॥ व्यज्यते अनेन ओदनादिरस इति व्यञ्जनं तद्वाचिभ्यः उपसिक्त इत्यर्थे ठक् स्यात् ॥—**तत्प्रत्यनु—**॥ वृत्तेरकर्मकत्वात्कथं तस्य द्वितीयान्तेन प्रतीपमित्या-

---

१ वेति—एतच्च निषेधविकल्पे विधिविकल्पस्य फलितत्वादुपपद्यते । २ उपसिक्तं इति—सेचनेन मृदूकरणमुपसेकः ।

**पलोमकूलम्** ।४।४।२८। द्वितीयान्तादस्माद्वर्तते इत्यस्मिन्नर्थे ठक् स्यात् । क्रियाविशेषणत्वाद्द्वितीया । प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः । ॥ **परिमुखं च** ।४।४।२९। परिमुखं वर्तते पारिमुखिकः । पारिपार्श्विकः । ॥ **प्रयच्छति गर्ह्यम्** ।४।४।३०। द्विगुणार्थं द्विगुणं तत्प्रयच्छति द्वैगुणिकः । त्रैगुणिकः । * **वृद्धेर्वृधुषिभावो वक्तव्यः** । वार्धुषिकः । ॥ **कुसीददशैकादशात् ष्ठन्ष्ठचौ** ।४।४।३१। गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे । कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं तत्प्रयच्छति कुसीदिकः । कुसीदिकी । एकादशार्थत्वादेकादश ते च ते वस्तुतो दश चेति विग्रहेऽकारः समासान्त इहैव सूत्रे निपात्यते । दशैकादशिकः । दशैकादशिकी । दशैकादशान्प्रयच्छतीत्युत्तमर्ण एवेहापि तद्धितार्थः । ॥ **उञ्छति** ४।४।३२। बदराण्युञ्छति बादरिकः । ॥ **रक्षति** ।४।४।३३। समाजं रक्षति सामाजिकः । ॥ **शब्ददर्दुरं करोति** । ४।४।३४। शब्दं करोति शाब्दिकः । दार्दुरिकः । ॥ **पक्षिमत्स्यमृगान्हन्ति** ।४।४।३५। स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम् । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुनिकः । मार्गिकः । हारिणिकः । सारङ्गिकः । ॥ **परिपन्थं च तिष्ठति** ।४।४।३६। अस्माद्द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक् स्यात् । पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति पारिपन्थिकश्चौरः । परिपन्थं हन्ति पारिपन्थिकः । ॥ **माथोत्तरपदपदव्यनुपदं धावति** ।४।४।३७। दण्डाकारो माथः पन्थाः दण्डमाथः । दण्डमाथं धावति दाण्डमाथिकः । पादविकः । आनुपदिकः । ॥ **आक्रन्दाट्ठञ्च** ।४।४।३८। अस्माट्ठञ् स्याच्चाट्ठक् धावतीत्यर्थे । आक्रन्दं दुःखिनां रोदनस्थानं धावति आक्रन्दिकः । ॥ **पदोत्तरपदं गृह्णाति** ।४।४।३९। पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः । ॥ **प्रतिकण्ठार्थललामं च** ।४।४।४०। एभ्यो गृह्णात्यर्थे ठक् स्यात् । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः । ॥ **धर्मं चरति** ।४।४।४१। धार्मिकः । * **अधर्माच्चेति व्यक्त-**

---

दिना सबन्ध इत्याशङ्कायामाह—**क्रियाविशेषणत्वादिति** ॥—**प्रतीपमिति** । प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः । 'ऋक्पूः—' इत्यकारः समासान्तः । 'द्व्यन्तरुपसर्गेभ्यः—' इति ईत्वम् । व्युत्पत्तिमात्रमिदम् । प्रतिकूलानुकूलपर्याया ह्येमे रूढिशब्दाः ॥—**आन्वीपिक** इति ॥ अन्वीपमित्यत्र 'ऊदनोर्देशे' इत्युत्वं तु न भवत्यदेशत्वात् ॥—**परिमुखमिति** 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयसंज्ञाया 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी, 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । ततष्ठक् । स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः ॥ यदा तु सर्वतोभावे परिशब्दः प्रादिसमासश्च, तदा यतो यतः स्वामिनो मुखं ततस्ततो यो वर्तते स एवमुच्यते । एवं पारिपार्श्विकोऽप्यर्थद्वये बोध्यः ॥—**प्रयच्छति** ॥ द्वितीयान्तात्प्रयच्छत्यर्थे ठक् स्यात् यत्प्रयच्छति गर्ह्यं चेत्तत् ॥—**द्विगुणार्थं द्विगुणमिति** । तादर्थ्यात्ताच्छब्द्यमिति भावः ॥ बहुवृद्ध्युद्देश्यकदानकर्मतयास्य द्रव्यस्य गर्ह्यत्वम् ॥—**वार्धुषिक** इति । वृद्ध्यर्था वृद्धिः, तां प्रयच्छतीति विग्रहः ॥ अथ कथं 'वृद्ध्याजीवश्च वार्धुषिः' इत्यमरः । ठक्संनियोगेनैव वृधुषिभावस्वीकारात् अत्राहुः—निरङ्कुशाः कवय इति ॥ गर्ह्यमिति किम् । द्विगुणं त्रिगुणं वा वृद्धिं प्रयच्छत्यधमर्ण इत्यर्थे द्वैगुणिक इत्यादि माभूत् ॥—**निपात्यते** इति ॥ अत एव व्याख्यातप्रयोगोऽप्युपपद्यत इत्याशयेनोदाहरति—**दशैकादशानिति** । 'सङ्ख्याया अल्पीयस्याः' इति पूर्वनिपातः ॥—**उत्तमर्ण एवेति** । दश दत्त्वा एकादश गृह्णातीति तस्यैव गर्ह्यत्वादिति भावः ॥—**उञ्छति** ॥ भूमौ पतितस्यैकैकस्योपादानमुञ्छः ॥—**सामाजिक** इति समजन्ति अस्मिन्निति समाजः समूहः ॥—**शब्दं करोतीति** ॥ प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः । अभिधानस्वाभाव्याद् व्युत्पादन एवायं प्रत्ययः । नेह शब्दं करोति बर्बरः खरो वा ॥—**दार्दुरिक** इति । कुलालः । वाद्यभाण्डवाचीह दर्दुरशब्दः ॥—**मात्स्यिक** इति ॥ 'मत्स्यस्य ङ्याम्' इति परिगणनात् 'सूर्यतिष्या—' इति यलोपाभावः ॥—**हारिणिक** इति ॥ नन्विदं पर्यायस्योदाहरणं न भवति हरिणस्य मृगविशेषत्वात्तथा चात्र पर्यायस्योदाहरणं किमिति न प्रदर्शितमिति चेत् अत्राहुः । आरण्यकचतुष्पात्सु हरिणे च मृगशब्दो वर्तते । यदा हरिणवाची मृगशब्दः, तदा मृगपर्यायस्योदाहरणं भवत्येवेति ॥—**परिप**—॥ परिमुखवदयमव्ययीभावस्तत्पुरुषो वा क्रियाविशेषणत्वात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वमस्त्येवेत्याह—**द्वितीयान्तादिति** ॥ चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोतीत्याह—**तिष्ठति हन्ति चेति** ॥—**माथ** इति ॥ मथ्यते गन्तृभिरिति माथः 'मथे विलोडने' । कर्मणि घञ् ॥—**पदोत्तरपदम्**—॥ पदशब्द उत्तरपदं यस्य तत्पदोत्तरपदम् । पदान्तमिति तु नोक्तम्, बहुच्पूर्वान्मा भूदिति ॥—**प्रतिकण्ठमिति** ॥ कण्ठं कण्ठं प्रतीति यथार्थेऽव्ययीभावः 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यनेन वा । यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः, तस्येह न ग्रहणं व्याख्यानादित्याहुः ॥—**धर्मं चरति** ॥

---

१ क्रियाविशेषणत्वादिति—अकर्मकधातुस्थलेऽपि फलव्यापारयोर्धात्वर्थत्वेन फलसामानाधिकरण्याद्द्वितीयेति भावः । २ द्विगुणार्थमिति—औपचारिकादेवाय प्रत्ययः, अभिधानस्वभावात् । ३ निपात्यते इति—'संख्यायास्तत्पुरुषस्य वाच्यः' इति वार्तिकं तु अव्ययादावेवेति भावः ।

व्यम् ॥ आधर्मिकः । **प्रतिपथमेति ठंश्च** ।४।४।४२। प्रतिपथमेति प्रातिपथिकः । **समवायान्समवैति** ।४।४।४३। सामवायिकः । सामूहिकः । **परिषदो ण्यः** ।४।४।४४। परिषदं समवैति पारिषद्यः । **सेनाया वा** ।४।४।४५। ण्यः स्यात्पक्षे ठक् । सैन्याः । सैनिकाः । **संज्ञायां ललाटकुकुट्यौ पश्यति** ।४।४।४६। ललाटं पश्यति लालाटिकः सेवकः । कुकुटीशब्देन तत्पाताई: स्वल्पदेशो लक्ष्यते ॥ कौकुटिको भिक्षुः । **तस्य धर्म्यम्** ।४।४।४७। आपणस्य धर्म्यमापणिकम् । **अण् महिष्यादिभ्यः** ।४।४।४८। महिष्या धर्म्यं माहिषम् । याजमानम् । **ऋतोऽञ्** ।४।४।४९। यातुर्धर्म्यं यात्रम् । * **नराच्चेति वक्तव्यम्** ॥ नरस्य धर्म्या नारी । * **विशसितुरिड्लोपश्चाञ्च वक्तव्यः** ॥ विशसितुर्धर्म्यं वैशस्त्रम् । * **विभाजयितुर्णिलोपश्चाञ्च वाच्यः** ॥ विभाजयितुर्धर्म्यं वैभाजित्रम् । **अवक्रयः** ।४।४।५०। षष्ठ्यन्ताट्ठक् स्यादवक्रयेऽर्थे । आपणस्यावक्रय आपणिकः । राजग्राह्यं द्रव्यमवक्रयः । **तदस्य पण्यम्** ।४।४।५१। अपूपाः पण्यमस्य आपूपिकः । **लवणाट्ठञ्** ।४।४।५२। लावणिकः । **किसरादिभ्यः ष्ठन्** ।४।४।५३। किसरं पण्यमस्य किसरिकः । षित्वान्ङीष् । किसरिकी । किसर, उशीर, नलद इत्यादि । किसरादयः सर्वे सुगन्धिद्रव्यविशेषवाचिनः । **शलालुनोऽन्यन्तरस्याम्** ।४।४।५४। छन्स्यात् पक्षे ठक् । शलालुकः । शलालुकी । शालालुकः । शालालुकी । शलालुः सुगन्धिद्रव्यविशेषः । **शिल्पम्** ।४।४।५५। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । **मड्डुकझर्झरादणन्यतरस्याम्** ।४।४।५६। मड्डुकवादनं शिल्पमस्य माड्डुकः । माड्डुकिकः । झार्झरः । झार्झरिकः । **प्रहरणम्** ।४।४।५७। तदस्येत्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः । **परश्वधाट्ठञ्च** ।४।४।५८। पारश्वधिकः । **शक्तियष्ट्योरीकक्** ।४।४।५९। शाक्तीकः । याष्टीकः । **अस्ति नास्ति दिष्टं मतिः** ।४।४।६०। तदस्येत्येव । अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः । नास्तीति मतिर्यस्य स नास्तिकः । दिष्टमिति मतिर्यस्य स दैष्टिकः । **शीलम्** ।४।४।६१। अपूपभक्षणं शीलमस्य आपूपिकः । **छत्रादिभ्यो णः** ।४।४।६२। गुरोर्दोषाणामावरणं छत्रं तच्छीलमस्य छात्रः । **कार्मस्ताच्छील्ये** ।६।४।१७२। कार्म इति ताच्छील्ये णे टिलोपो निपात्यते । कर्मशीलः कार्मः । नस्तद्धित इत्येव सिद्धे अण्कार्ये ताच्छीलिके णेऽपि । तेन चौरी तापसीत्यादि सिद्धम् । ताच्छील्ये किम् । कार्मणः । **कर्माध्ययने**

---

चरतिरिहासेवाया, न त्वनुष्ठानमात्रे । तेन दैववशाद्धर्मे प्रवृत्तो धार्मिक इति नोच्यते । आसेवा हि स्वारसिकी प्रवृत्तिः । एवं दैववशादधर्मे प्रवृत्तो यः स न अधार्मिक इति नोच्यते ॥—**प्रतिपथमि**ति वीप्सायामाभिमुख्ये वा अव्ययीभाव । 'ऋक्पू–' इति समासान्त ॥—**समवायान्**—॥ समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् स्यात्समवैतीत्यर्थे ॥ इह समवपूर्वस्येणोर्थः प्रविश्यैकदेशीभवनम् । तत्र गुणभूतप्रवेशापेक्षया समवायानिति द्वितीयानिर्देशः विशेष्यापेक्षया तु लोके सप्तमी प्रायेण प्रयुज्यते 'कुरुक्षेत्रे समवेता' इति यथा । 'एत्येधति–' इति वृद्धिरिह न भवति, एजादित्वाभावात् ॥—**सैन्याः सैनिका** इति ॥ द्वितीयान्ताण्ण्यठकौ ॥ यत्तु 'सेनाया समवेता ये सैन्यास्ते सैनिकाश्च ते' इति निघण्टुषूक्त । तत्फलितार्थकथनपर बोध्यम् ॥—**संज्ञायाम्** ॥ ललाटकुकुटीशब्दाभ्या द्वितीया । ताभ्यां पश्यतीत्यर्थे ठक् स्यात्सम्यग्ज्ञान संज्ञा प्रसिद्धिस्तस्या' प्रसिद्धविषयभूतेर्थे इत्यर्थ' ॥—**लालाटिक** इति । दूरे स्थित्वा प्रभोर्ललाट पश्यति न तु कार्येषूपतिष्ठत इत्यर्थ' ॥ 'लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः' ॥—**कौकुटिको भिक्षुरि**ति । सन्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः सयम्य गच्छतीति भाव' ॥—**धर्म्यमि**ति ॥ धर्मादनपेत धर्म्य । 'धर्मपथ्यर्थन्यायादनपेत' इति यत् ॥—**अवक्रयः** ॥ अवक्रीयते अनेनेति करणे 'एरच्' ॥—**पण्यमि**ति ॥ पणितव्येर्थे 'अवद्यपण्य–' इति यदन्तो निपातितः ॥—**शलालुक** इति ॥ 'इसुसुक्तान्तात्कः' । ठक्पक्षे त्वादिवृद्धिः । शालालुकः ॥—**मार्दङ्गिक** इति ॥ मृदङ्गशब्देन मृदङ्गवादन लक्ष्यते । मुख्यार्थे तु प्रयोगो न भवति, 'अनभिधानादिति भावः ॥ **शिल्पं** ॥ कौशलम् । तच्च मृदङ्गवादनविषयकम्, तेन मृदङ्गवादनविषयके मृदङ्गशब्दस्य लक्षणेति निष्कर्षः ॥—**प्रहरणम्** । प्रह्रियते अनेनेति प्रहरणमायुधम् ॥—**धानुष्क** इति । 'इसुसुक्तान्तात्कः' । 'इणः ष' इति विसर्गस्य षः ॥—**परश्वधात्** ॥ चाट्ठक् । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' ।—**परलोक** इति ॥ एतच्चाभिधानशक्तिस्वाभाव्याल्लभ्यते ॥—**आस्तिक** इति । अस्तिनास्तिशब्दौ निपातौ । यद्वा वचनसामर्थ्यादस्तीत्याख्यातात् । नास्तीति निपाताख्यातसमुदायाच्च प्रत्ययः ॥—**दिष्टमि**ति । 'दैव दिष्टं भागधेयम्' इत्यमरः ॥ 'नालम्बते दैष्टिकताम्' इति माघः ॥ प्रमाणानुगा मतिर्दिष्टेति प्राचोक्तिस्तूपेक्ष्या' दिष्टशब्दस्य क्लीबत्वे प्रमाणानुगमात्क्लीवाचकत्वे चोक्तकोशविरोधादिति दिक् ॥—**छत्रादिभ्यो णः** ॥ 'छत्रादिभ्योण्' इत्येव सुवचमिति 'कार्मस्ताच्छील्ये' इति सूत्रे कैयटः ॥—**ताच्छील्ये णे** इति ॥ कर्मन्शब्दस्य च्छत्रादित्वादिति भावः ॥—**चौरी**त्यादि । चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे णप्रत्यये सति तदन्तान्ङीप्

---

१ पण्यमिति—विक्रयाय हट्टे प्रसारितम् । २ किसरादिभ्य इति—तालव्यमध्यपाठो वृत्तौ । ३ शाक्तीक इति—ईककि दीर्घोच्चारण स्पष्टार्थम् ।

**वृत्तम्** ।४।४।६३। प्रथमान्तात्षष्ठ्यर्थे ठक् स्यादध्ययने वृत्ता या क्रिया सा चेत्प्रथमान्तस्यार्थः । ऐकान्यिकः । यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरितोच्चारणरूपं स्खलितमेकं जातं सः । **बह्वच्पूर्वपदाट्ठच्** ।४।४।६४। प्राग्विषये । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । द्वादशापपाठा अस्य जाता इत्यर्थः । **हितं भक्षाः** ।४।४।६५। अपूपभक्षणं हितमस्मै आपूपिकः । **तदस्मै दीयते नियुक्तम्** ।४।४।६६। अग्रभोजनं नियतं दीयते अस्मै आग्रभोजनिकः । **श्राणामांसौदनाट्टिठन्** ।४।४।६७। श्राणा नियुक्तं दीयतेऽस्मै श्राणिकः । श्राणिकी । मांसौदनग्रहणं संघातविगृहीतार्थम् । मासौदनिकः । मांसिकः । ओदनिकः । **भक्तादणन्यतरस्याम्** ।४।४।६८। पक्षे ठक् । भक्तमस्मै नियुक्तं दीयते भाक्तः । भाक्तिकः । **तत्र नियुक्तः** ।४।४।६९। आकरे नियुक्त आकरिकः । **अगारान्ताट्ठन्** ।४।४।७०। देवागारे नियुक्तो देवागारिकः । **अध्यायिन्यदेशकालात्** ४।४।७१। निषिद्धदेशकालवाचकाट्ठक् स्यादध्येतरि । श्मशानेऽधीते श्माशानिकः । चतुर्दश्यामधीते चातुर्दशिकः । **कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति** ।४।४।७२। तत्रेत्येव । वंशकठिने व्यवहरति वांशकठिनिकः । वंशा वेणवः कठिना यस्मिन्देशे स वंशकठिनस्तस्मिन्देशे या क्रिया यथानुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः । प्रास्तारिकः । सांस्थानिकः । **निकटे वसति** ।४।४।७३। नैकटिको भिक्षुः । **आवसथात् ष्ठल्** ।४।४।७४। आवसथे वसति आवसथिकः । षित्वान्ङीष् आवसथिकी । आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च । आवसथात्किसरादेः षितः षडेते ठगधिकारे ॥१॥ षडिति सूत्रषट्केन विहिता इत्यर्थः । प्रत्ययास्तु सप्त ॥ इति ठकोऽवधिः समाप्तः ॥

## तद्धितेषु प्राग्घितीयाः ॥

**प्राग्घिताद्यत्** ।४।४।७५। तस्मै हितमित्यतः प्राक् यदधिक्रियते । **तद्वहति रथयुगप्रासङ्गम्** ।४।४।७६। रथं वहति रथ्यः । युग्यः[1] । वत्सानां दमनकाले स्कन्धे काष्ठमासज्यते स प्रासङ्गः । तं वहति प्रासङ्ग्यः । **धुरो यड्ढकौ** ।४।४।७७। हलि चेति दीर्घे प्राप्ते । **न भकुर्छुराम्** ।८।२।७९। भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । धुर्यः । धौरेयः । **खः सर्वधुरात्** ।४।४।७८। सर्वधुरां वहतीति सर्वधुरीणः । **एकधुराल्लुक्च** ।४।४।७९। एकधुरां वहति एकधुरीणः । एकधुरः[2] । **शकटादण्** ।४।४।८०। शकटं वहति शाकटो गौः । **हलसीराट्ठक्**

---

सिध्यतीत्यर्थः ॥—**कर्माध्ययने**—॥ 'तदस्य' इत्यनुवर्तते, ठगिहाधिक्रियत एव तदाह—**प्रथमान्तादि**त्यादि ॥—**ऐकान्यिक** इति । एकमन्यदिति विगृह्य 'तद्धितार्थ–' इति समासः, ततष्ठक् । एवं द्वैयन्यिकः त्रैयन्यिक इत्युदाहार्यम् । इह तु वृद्धिं बाधित्वा 'न य्वाभ्याम्–' इत्यैच् ॥—**हितं भक्षाः** ॥ 'अस्य' इति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै' इत्यस्यापकर्षो वेत्याशयेनाह—**अपूपभक्षणं हितमस्मा** इति । अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः ॥—**श्राणा**—॥ 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः ॥—**टिठनि**ति । इकार उच्चारणार्थः । टो ङीबर्थः ॥—**संघातविगृहीतार्थमि**ति ॥ ओदनिक इत्यत्र हि वृद्धिनिवारणाय टिठनारब्धः । अन्यथा लाघवाट्ठञमेव ब्रूयादिति भावः ॥—**आकरिक** इति । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः ॥—**अध्यायिन्य**—॥ अदेशकालात् किम् । काश्यामधीते, पूर्वाह्णे अधीते ॥—**कठिनान्त**—॥ प्रस्तारसंस्थानशब्दौ सनिवेशपर्यायाविति बहवः ॥ प्रस्तारो यज्ञः 'प्रे स्त्रोऽयज्ञे' घञ् । संस्थान सनिवेश इत्येके ॥—**नैकटिको भिक्षुरि**ति ॥ संन्यासी हि ग्रामस्य निकटे वसन् भिक्षार्थमेव ग्रामे प्रविशति, न तु तत्र वसतीति भावः ॥—**आवसथात्**—॥ लकारः स्वरार्थः । आवसन्त्यस्मिन्नित्यावसथः । 'उपसर्गे वसः' इत्यथप्रत्ययः ॥—**कुसीदसूत्रादि**ति । 'कुसीददशैकादशात्' इति सूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः । इह 'नौ द्व्यचष्ठन्' इत्यत्रैव येषां षकारः साहितिक इति सभाव्यते, तेषामेव गणने छत्रादेः षित्त्वमनार्षमिति भ्रमः स्यादतः श्लोकवार्तिककारः षित्प्रत्ययान्सर्वानपि पर्यजीगणत् ॥ ॥ ठकोवधिः समाप्तः ॥

**युग्य** इति ॥ युगं रथाङ्गं वहतीत्यर्थः ॥—**प्रासङ्ग** इति । प्रासज्यते असाविति कर्मणि घञ् ॥—**धुरो**—॥ 'धुरो ढक् च' इत्येव सुवचम् ॥—**नभ**—॥—**उपधाया** इति ॥ 'उपधायां च' इति पूर्वसूत्रादेतल्लभ्यत इति भावः ॥ उपधायां किम् । प्रतिदीव्नः । इह नान्तस्य भत्वेऽपीकारस्यानुपधात्वान्निषेधो न प्रवर्तते ॥—**खः सर्वधुरात्** ॥ 'सर्वधुरायाः' इति वक्तव्ये नपुंसकनिर्देशः शब्दस्वरूपापेक्षया 'बन्धुनि बहुव्रीहौ' इतिवत् ॥—**सर्वधुरामि**ति । 'पूर्वकालैक–' इति समासः । 'ऋक्पूरब्धूः' इति समासान्तोऽप्रत्ययः ॥—**एकधुराल्लुक् च** ॥ चात्खः । एवं च प्राकरणिकस्य यतो लुक्, खस्य तु विधानसामर्थ्याच्छ्रवणमिति फलितं तदाह—**एकधुरीण** इत्यादि ॥—**शाकटो गौरि**ति ॥ ननु 'तस्येदम्'

---

१ युग्य इति—युगशब्दो रथाङ्गवाच्येव रथसाहचर्यात् । २ एकधुर इति—अन्तरङ्गानपीतिन्यायेन सवर्णदीर्घात्पूर्वमेव टापो लुक् ।

।४।४।८१। हलं वहति हालिकः। सैरिकः। **संज्ञायां जन्या** ।४।४।८२। जनी वधूः तां वहति प्रापयति जन्या। **विध्यत्यधनुषा** ।४।४।८३। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्याच्चेत्तत्र धनुः करणम्[1]। पादौ विध्यन्ति पद्याः शर्कराः। **धनगणं लब्धा** ।४।४।८४। तृजन्तमेतत्। धनं लब्धा धन्यः। गणं लब्धा गण्यः। **अन्नाण्णः** ।४।४।८५। अन्नं लब्धा आन्नः। **वशं गतः** ।४।४।८६। वश्यः परेच्छानुचारी। **पदमस्मिन्दृश्यम्** ।४।४।८७। पद्यः कर्दमः। नातिशुष्क इत्यर्थः। **मूलमस्यावर्हि** ।४।४।८८। आवर्हणमावर्हः उत्पाटनं तदस्यास्तीत्यावर्हि। मूलमावर्हि येषां ते मूल्या मुद्गाः। **संज्ञायां धेनुष्या** ।४।४।८९। धेनुशब्दस्य षुगागमो यत् प्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम्। धेनुष्या बन्धके स्थिता। **गृहपतिना संयुक्ते ञ्यः** ।४।४।९०। गृहपतिर्यजमानस्तेन संयुक्तो गार्हपत्योऽग्निः। **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु** ।४।४।९१। नावा तार्यं नाव्यम्। वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो विष्यः। मूलेन आनाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया समितं सीत्यं क्षेत्रम्। तुलया सम्मितं तुल्यम्। **धर्म-**

---

इत्यणा सिद्धम्। यो हि शकटं वहति शकटस्यासौ भवति अत्राहुः। आरम्भसामर्थ्यादत्र तदन्तविधिः। तेन द्वे शकटे वहति द्वैशकट इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुङ् न भवति, 'तस्येदम्' इत्यणि तु स्यादेव लुगिति ॥—**हलसीरात्**—॥ ननु 'तस्येदम्' इत्युपक्रमे हलसीराट्ठक इति पठितम्। तथा च तेनैव शैषिकेण हालिक सैरिक इति सिद्धौ किमनेनेति चेत्। सत्यम्। आरम्भसामर्थ्यादत्रापि तदन्तविधिः। तेन न द्वैहलिको द्वैसीरिक इति भवति, शैषिके ठकि तु प्राग्दीव्यतीयो लुक् स्यात् ॥—जायते अस्यां गर्भ इति व्युत्पत्तिमाश्रित्य आह—**जनी वधूरिति**। 'जनिघसिभ्यामिण्' 'जनिवध्योश्च' इति न वृद्धिः। 'कृदिकारात्—' इति ङीष्। यतोऽनेन सूत्रेण यति जन्या मातुर्वयस्या। सा हि विवाहादिषु वधूं जामातृसमीपं प्रापयति ॥ कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त—'यानेति जन्यानवदत्कुमारी' इति। जनीं वहन्तीति जन्यास्तानित्यर्थः ॥—**पद्या** इति ॥ 'पद्यत्यतदर्थे' इति पद्भावः ॥ अधनुषा किम्। चोरं विध्यति। सभाव्यते हि चोरव्यधने धनुषः करणता। यदा तु धनुर्यति प्रयुज्येत तदा सापेक्षत्वादेव न भवति। एवं च 'न चेत्तत्र धनुः करणम्' इत्यत्र 'सभाव्यते' इति शेषो बोध्यः ॥—**तृजन्तमिति** ॥ एवं च 'न लोका—' इत्यादिना कृद्योगषष्ठ्या निषेधात् 'धनगणम्—' इति प्रयोगो निर्बाध इति भावः ॥—**वशं गतः** ॥ वशनं वश इच्छा। 'वशिरण्योरुपसंख्यानम्' इत्यप् ॥—**मूलमस्यावर्हि**। प्रथमान्तादावर्हि इत्युपाधिकान्मूलशब्दादस्येति षष्ठ्यर्थे यत्स्यात् ॥ —**आवर्ह** इति ॥ 'वृहू उद्यमने' दन्त्योष्ठ्यादिरयम्, न तु पवर्गादिः 'उद्वृह रक्षः सहमूलमिन्द्र' इत्यादिप्रयोगदर्शनात् ॥—**मूल्या मुद्गा** इति। मूलोत्पाटनं विना सग्रहीतुमशक्याः, मध्यतो लूयमानेषु कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ताः। सुष्ठु शुष्का इति यावत् ॥—**यप्रत्यय** इति ॥ तेन धेनुष्याशब्दोऽन्त उदात्तः। यति तु तित्स्वरः स्यादिति भावः ॥—**संज्ञायामिति** ॥ ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम् ॥—**गार्हपत्य** इति। 'गृहपतिना—' इति निर्देशादेव तृतीयान्तात्प्रत्ययः। 'संज्ञायाम्' इत्यनुवृत्तेराहवनीयादौ नातिप्रसङ्गः ॥—**नौवयोधर्म**—॥ नावादिभ्योऽष्टभ्यो यथासंख्यं तार्यादिष्वष्टस्वर्थेषु यत्स्यात् ॥ इह तार्यादियोगे यथासंभवं करणे कर्तरि हेतौ तुल्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिरर्थाल्लभ्यते ॥ अत्र प्रथमं मूलान्तानां द्वन्द्वं कृत्वा द्वितीयमूलादिद्वन्द्वेन सह समाहारद्वन्द्वः मूलान्तानां द्वित्राणां वा मूलादीनामेव वा द्वन्द्वं कृत्वा नावादिषु द्वन्द्वः। तेन सारूप्याभावादेकशेषो न भवति ॥—**नावा तार्यमिति**। शक्यार्थे 'ऋहलोर्ण्यत्', करणे तृतीया ॥—**वयस्य** इति। 'स्निग्धो वयस्यः सवयाः' इत्यमरः। 'वयसा तुल्यः शत्रुः' इत्येव तु न भवति संज्ञाधिकारात् ॥—**वध्य** इति। विषेण वधमर्हतीत्यर्थः। 'दण्डादिभ्यः' इति सूत्रेण वधशब्दादर्हार्थे यद्विधानात् ॥—**मूलेनानाम्यमिति**। मूलं नाम पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यम्। तेन स्वस्मादतिरिक्तं लाभाख्यं यद्द्रव्यमात्मानं प्रति शेषीक्रियते आत्मन उपकारकं क्रियते तत् आनाम्यम्। आङ्पूर्वको नमिरभिभवे वर्तते तस्मात् 'पोरदुपधात्' इति यति प्राप्ते अत एव निपातनाण्ण्यत्, तथा चानाम्यमभिभवनीयम्। आत्मानं प्रति शेषीकर्तव्यं स च लाभाख्यो भाग एव। लोके तु यावता द्रव्येण पटादिकं विक्रीयते तत्रैव समुदाये मूल्यशब्दः प्रसिद्धो, न तु मूलातिरिक्तभागमात्रे व्युत्पादितः। एवं च लाभमात्रे व्युत्पादितस्य मूल्यशब्दस्य तद्घटिते सघाते निरूढलक्षणा बोध्या ॥—**सीतेति**। सीता हलाग्रं, सपूर्वादिणः कः। समितं निम्नोन्नतादिरहितं कृतमित्यर्थः। समीकृतमिति यावत्। 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिः। परमसीत्यम्। द्वाभ्यां सीताभ्यां समितमिति तद्धितार्थे समासस्ततो यत्। द्विसीत्यम् ॥—**तुलया संमितमिति**। संमितं परिच्छिन्नम्। रूढिशब्दोऽयं

१ धनुः करणमिति—धनुरिति करणमात्रोपलक्षणम्, तेन चोरं विध्यति खड्गेनेत्यादावपि न।

**पथ्यर्थन्यायादनपेते** ।४।४।९२। धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् । **छन्दसो निर्मिते** ।४।४।९३। छन्दसा निर्मितं छन्दस्यम् । इच्छया कृतमित्यर्थः । **उरसोऽण् च** ।४।४।९४। चाद्यत् । उरसा निर्मितः पुत्र औरसः । उरस्यः । **हृदयस्य प्रियः** ।४।४।९५। हृद्यो देशः । हृदयस्य हृल्लेखेति हृदादेशः । **बन्धने चर्षौ** ।४।४।९६। हृदयशब्दात् षष्ठ्यन्ताद्बन्धने यत्स्याद्वेदेऽभिधेये । हृदयस्य बन्धनं हृद्यो वशीकरणमन्त्रः । **मतजनहलात्करणजल्पकर्षेषु** ।४।४।९७। मतं ज्ञानं तस्य करणं भावः साधनं वा मत्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः । **तत्र साधुः** ।४।४।९८। अग्रे साधुः अग्र्यः । सामसु साधुः सामन्यः । ये चाभावकर्मणोरिति प्रकृतिभावः । कर्मण्यः । शरण्यः । **प्रतिजनादिभ्यः खञ्** ।४।४।९९। प्रतिजनं साधुः प्रातिजनीनः । सांयुगीनः । सार्वजनीनः । वैश्वजनीनः । **भक्ताण्णः** ।४।४।१००। भक्ते साधवो भाक्ताः[2] शालयः । **परिषदो ण्यः** ।४।४।१०१। पारिषद्यः । परिषद इति योगविभागाण्णोऽपि[3] । पारिषदः । **कथादिभ्यष्ठक्** ।४।४।१०२। कथायां साधुः काथिकः । **गुडादिभ्यष्ठञ्** ।४।४।१०३। गुडे साधुर्गौडिक इक्षुः । साक्तुका यवाः । **पथ्यतिथिवसतिस्वपतेर्ढञ्** ।४।४।१०४। पथि साधु पाथेयम् । आतिथेयम् । वसनं वसतिस्तत्र साधुर्वासतेयी रात्रिः । स्वापतेयं धनम् । **सभाया यः** ।४।४।१०५। सभ्यः । **समानतीर्थेवासी** ।४।४।१०७। साधुरिति निवृत्तम् ॥ वसतीति वासी । समाने तीर्थे गुरौ वसतीति सतीर्थ्यः । **समानोदरे शयित ओ चोदात्तः** ।४।४।१०८। समाने उदरे शयितः स्थितः समानोदर्यो भ्राता । **सोदराद्यः** ।४।४।१०९। सोदर्यः । अर्थः प्राग्वत् ॥ इति प्राग्घितीयाः ॥

'संज्ञायाम्' इत्यधिकारात् । अतएव 'तुल्यम्' इति सदृशमात्रे प्रयुज्यते । न तुलायामाग्रहः क्रियते ॥—**पथ्यमिति** ॥ संज्ञाधिकारादभिधेयनियमः, तेन शास्त्रीयात्पथोऽनपेतमेव पथ्यम् । न तु मार्गादनपेतश्चोरोऽपि ॥—**छन्द**—॥ 'छदि सवरणे' इति चुरादिरिच्छायामपि वर्तते, धातूनामनेकार्थत्वात् । ततो घञि इच्छापर्यायश्छन्दःशब्दः प्रसिद्ध एव 'स्वच्छन्दोच्छलदच्छकच्छ–' इत्यादौ ॥ असुनि तु यः सान्तः सोऽत्र प्रकृतिस्तत्र निर्माणे इच्छायाः करणत्वात्सामर्थ्यात्तृतीयान्तात्प्रत्ययः ॥—**इच्छया कृतमिति** । यद्यपि वेदे त्रिष्टुबादिषु च सान्तश्छन्दःशब्दोऽस्ति, तथापि इह न गृह्यते संज्ञाधिकारात्, किं त्विच्छापर्याय एव गृह्यते इति भावः ॥—**पुत्र** इति ॥ सञ्ज्ञाधिकारान्नेह । उरसा निर्मितं सुखम् ॥—**हृदयस्य**—॥ प्रीणातीति प्रियः 'इगुपध–' इति कः । कृद्योगात्कर्मणि षष्ठी, अलौकिके तद्धितप्रकृतिभागे तु वचनसामर्थ्यादेव ॥ एवमन्यत्रापि बोध्यम् ॥—**बन्धने**—॥ बध्यतेऽनेनेति बन्धनः । करणे ल्युट् ॥—**वशीकरणमन्त्र** इति ॥ तेन हि परहृदय वशीक्रियते । सञ्ज्ञाधिकाराद्वसिष्ठादावृषौ नायं यत् ॥—**मत**—॥—**करणमिति** । कर्मणि षष्ठी । कृतिः करणं, क्रियतेऽनेनेति वा करणमित्याशयेनाह—**भावः साधनं वेति** ॥ जल्पशब्दो भावसाधनः । कर्तरि षष्ठी ॥—**हलस्येति** । कर्षणं कर्षस्तद्योगात्कर्मणि षष्ठी । करणस्य कर्तृत्वविवक्षायां कर्तरि षष्ठी वा ॥ 'रथसीता–' इति तदन्तविधिः । द्विहल्यः । त्रिहल्यः ॥—**तत्र साधुः** ॥ साधुरिह प्रवीणो योग्यो वा गृह्यते । नोपकर्ता । तत्र हि परत्वात् 'तस्मै हितम्' इत्यनेन भाव्यम् । सञ्ज्ञाधिकारादुपकर्ता न गृह्यत इत्यन्ये ॥—**प्रतिजनमिति** ॥ 'जनो जनः' इति प्रतिजनं । वीप्सायामव्ययीभावः । प्रतिजन, इदं युग, संयुग, पापकुल, परस्यकुल, अमुष्यकुल, सर्वंजन, विश्वजन, पञ्चजनम् ॥ 'परस्यामुष्य' षष्ठ्योर्निपातनादलुक् ॥—**भक्त** इति ॥ 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः ॥—**गुडादिभ्यष्ठञ्** ॥ गुड, कुल्माष, सक्तु, अपूप, माष, ओदन, इक्षु, वेणु, सङ्ग्राम, संघात, प्रवास, निवास, वृत् ॥—**वसतिरिति** । वसेश्चेत्यतिप्रत्ययः । स्वस्य पतिः स्वपतिराढ्यस्तस्मिन्स्वापतेयम् ॥—**सभाया यः** ॥ यति तु तित्स्वरः स्यात् 'क्रतुर्भवत्युक्थ्यः' इति यत् । न च 'यतोनावः' इत्याद्युदात्तता शङ्क्या । 'यदुत्पत्तिवेलायां द्व्यच्कस्य यदन्तस्यादिरुदात्तः' इति वेदभाष्ये स्थापितत्वात् ॥ पक्षान्तरे तु 'नमः शष्प्याय च फेन्याय च' इत्यादिवदाद्युदात्तः स्यात् । एवं च व्याख्यानद्वयस्याप्यावश्यकत्वे लक्ष्यानुरोधेन क्वचित्किंचिद्व्याख्येयमिति तत्त्वम् ॥—**समानतीर्थे वासी** ॥ निपातनाण्णिनिः, ग्रहादेराकृतिगणत्वान्नन्दिग्रहीत्यनेन वा ॥—**सतीर्थ्य** इति ॥ 'तीर्थे ये' इति समानस्य सभावः । तरन्त्यनेनेति तीर्थं । 'तरतेस्थक्' ॥—तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जलावतारे च' इति विश्वः ॥ इह तूपाध्यायवाचिन एव ग्रहणं नान्यस्य, संज्ञाधिकारात् ॥—**शयितः स्थित** इति ॥ शीधातुः स्थित्यर्थे वर्तते । 'जलाशयः' 'कुशेशयम्' इति प्रयोगादिति भावः ॥—**समानमुदरमिति** । 'पूर्वापरप्रथम–' इत्यादिना तत्पुरुषः, ततो यत्, तित्स्वरापवाद ओकारस्योदात्तः ॥—**सोदराद्यः** ॥ 'ओ चोदात्तः' इति नानुवर्तते । 'विभाषोदरे' इति समानस्य सभावः । तत्र 'तीर्थे ये' इत्य

---

१ धर्मादनपेतमिति—यदनुष्ठानं धर्ममनुवर्तत एव तदित्यर्थः । २ भाक्ता इति—निष्फलीकृता इत्यर्थः । ३ योगविभागादिति—सर्ववेदपारिषदं हीद शास्त्रमिति भाष्यप्रयोगादिति भावः ।

# तद्धितेषु च्छयतोरधिकारः ।

**प्राक् क्रीताच्छः** ।५।१।१। तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते । **उगवादिभ्यो यत्** ।५।१।२। प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत्स्याच्छस्यापवादः । * **नाभि नभं च** ॥ नभ्योऽक्षः । नभ्यमञ्जनम् । रथनाभावेवेदम् । * **शुनः संप्रसारणं वा च दीर्घत्वम्** । शून्यम् । शुन्यम् । * **ऊधसोऽनङ् च** । ऊधन्यः । **कम्बलाच्च संज्ञायाम्** ।५।१।३। यत्स्यात् । कम्बल्यमूर्णापलशतम् । संज्ञायां किम् । कम्बलीया ऊर्णा । **विभाषा हविरपूपादिभ्यः** ।५।१।४। आमिक्ष्यं दधि । आमिक्षीयम् । पुरोडाश्यास्तण्डुलाः । पुरोडाशीयाः । अपूप्यम् । अपूपीयम् । **तस्मै हितम्** ।५।१।५। वत्सेभ्यो हितो वत्सीयो गोधुक् । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । हविष्यम्[1] । **शरीरावयवाद्यत्** ।५।१।६। दन्त्यम् । कण्ठ्यम् । नस नासिकायाः ॥ नस्यम् । नाभ्यम् ।

---

तोऽनुवृत्तं, येइत्येतद्विषयसप्तमी । तेन सोदर इत्यस्माद्यः प्रत्ययः ॥—**प्राग्वदि**ति । 'समानोदरे शयित इत्येवार्थः' इत्यर्थः ॥ कथं तर्हि 'अपन्थानं तु गच्छन्त सोदरोऽपि विमुञ्चति' इति मुरारिरिति चेद् । अत्राहुः । सह समानमुदर यस्य सोदरः । 'वोपसर्जनस्य' इति सहस्य सभाव. । तस्य वैकल्पिकत्वात् 'यत्र भ्रात्रा सहोदरः' इत्याद्यपि सिद्धमिति ॥ इति प्राग्घितीयाः ॥   समाप्ताश्चातुर्थिकाः ॥

**प्राक् क्रीताच्छः**॥—**इत्यतः प्रागि**ति । इहार्थोऽवधित्वेन गृह्यते, न तु प्रत्ययः प्रकृतिर्वा । तेनार्था एवावधिमन्त इति प्राक्क्रीताद्येऽर्था हितादयस्तेष्वस्योपस्थानम् । अवधिसजातीयो ह्यवधिमान् भवति । यथा 'मासान्त्य;' इति कालः प्रतीयते, 'ग्रामात्पूर्वः' इति देशः, 'अलोऽन्त्यात्पूर्व' इत्यत्रेव । एव च समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छ तक्रकौण्डिन्यन्यायेन बाधते । अन्यथा छस्य यदादेश्च सनिधानाविशेषात्तव्यत्तव्यानीयरामिव पर्यायः स्यात् । अतोऽत्रार्थोऽवधित्वेन गृह्यते ॥ ननु यदादिविषये छो न भविष्यति 'विभाषा हविरपूपादिभ्यः' इति विभाषाग्रहणाल्लिङ्गात् । तथा च प्रत्ययस्य प्रकृतेर्वा अवधित्वस्वीकारे न क्षतिः । उक्तज्ञापकेनोगवादिप्रभृतिभ्यश्छस्यातिप्रसङ्गनिरसनादिति चेत् । अत्राहुः । एवं सति 'छः' इत्येवाधिकारोऽस्तु नार्थोऽवधिनिर्देशेन ॥ 'प्राग्वतेष्ठञ्' इत्यादिके तु प्रकरणे नास्याधिकारः, अधिकारान्तरेणोपदष्टत्वात् ॥ स्पष्टप्रतिपत्त्यर्थमवधिनिर्देश· । अन्यथा प्रतिपत्तिगौरव स्यादिति चेत् । तर्हि 'विभाषा हवि–' इत्यादिज्ञापकाश्रयणे प्रतिपत्तिगौरवादर्थ एवावधित्वेन निर्देष्टुमुचित इति ॥—**उगवादिभ्यो**—॥ उवर्णादेर्गवशब्दादेश्च यत्स्यादित्यर्थो न भवति, गवादिगणपाठात् ॥ गवाद्यन्तर्गणसूत्राण्याह—**नाभि नभं चे**ति । नाभिशब्दो यतं लभते नभादेशं चेत्यर्थः ॥—**नभ्योऽक्ष** इति । रथाङ्ग सच्छिद्र नाभिः । तदनुप्रविष्टः काष्ठविशेषोऽक्षः । स च तदनुगुणत्वात्तस्मै हितः । अञ्जन तैलाभ्यङ्ग', तदपि स्नेहनत्वान्नाभये हितम् ॥—**रथनाभावेवे**ति । शरीरावयवे तु नाभ्यमित्येव, परेण 'शरीरावयवाद्यत्' इत्यनेनास्य बाधादिति भावः ॥—**शून्यमि**ति ॥ चकारस्यानुक्तसमुच्चयार्थत्वात् 'नस्तद्धिते' इति टिलोपो न भवति, 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु दुर्लभः, सम्प्रसारणे पररूपे च कृते अनूरूपाभावात् । दीर्घपक्षे तु तद्विधानसामर्थ्यादपि टिलोपाभावः सुपरिहरः ॥—**नङ् चे**ति । चाद्यत् । 'नश्च' इति सुवचमिति मनोरमा ॥ अन्ये त्वाहुः । ऊधन्यशब्दात् 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठवत्' इति टिलोपे णिजन्तात्कर्तरि क्विपि णिलोपयलोपयोः कृतयोः 'अनुनासिकस्य क्वि–' इति दीर्घे ततः क्विबन्तादाचारक्विपि ऊधानते इत्यादावात्मनेपदार्थं नङो ङित्करणमावश्यकमिति ॥ —**ऊधन्यमि**ति । 'ये चा–' इति प्रकृतिभाव. ॥—**कम्बलाच्च संज्ञायाम्** ॥ प्राक्क्रीतीयेष्वर्थेषु यत्स्यात् । छस्यापवादः ॥—**विभाषा हविरपूपादिभ्यः** ॥ गवादिषु हविःशब्दस्य पाठादिह हविर्विशेषाणां ग्रहणम्, नच गवादिष्वेव हविर्विशेषाणा ग्रहण कि न स्यादिति वाच्यम् । असंजातविरोधित्वेन तत्र स्वरूपग्रहणस्य न्याय्यत्वात् ॥ —**अपूप्यमि**ति । अपूपेभ्यो हितं चूर्णमित्यर्थः ॥ अपूप, तण्डुल, पृथुक, मुसल, कर्णवेष्टकेत्याद्यपूपादिगणे 'अन्नविकारेभ्यश्च' इति पठ्यते । अन्नविकारा अन्नप्रकारा अदनीयविशेषास्तेभ्यो यद्वा स्यादिति तदर्थः ॥ ओदन्या ओदनीयास्तण्डुलाः ॥ एव चानेनैव गणसूत्रेण सिद्धे अपूपादीनां केषांचिद्गणे पाठः प्रपञ्चार्थः ॥ 'हविरपूपादिभ्यो विभाषाया उगवादिभ्यो यत्पूर्वविप्रतिषेधेन' सक्तव्या धानाः, चरव्यास्तण्डुलाः । चरुर्नाम हविरिति काशिका ॥ स्थालीवचनस्य चरुशब्दस्य तत्रस्थे हविषि उपचाराद्वृत्तिरिति कैयटादयः ॥—**नस्यमि**ति ॥ नासिकायै हितम् । 'नासिकायां भवम्' इति विग्रहे तु 'शरीरावयवाच्च' इति यत् । नस्यम् । तस्युदाहरण नस्तः 'अपादाने चाहीयरुहोः' इति तसिः । क्षुद्रे तु नासिकायाः क्षुद्रो नःक्षुद्रः । 'सुप्सुपा' इति समासः ॥—**नाभ्यमि**ति । 'नाभि नभं च' इति नभादेशो रथनाभावेव प्रवर्तते । तस्य गवा-

---

१ हविष्यमिति—हविःशब्दो गवादिः, विभाषा हविरपूपादिभ्यः इत्यत्र तु हविर्विशेषवाचकानां ग्रहण बोध्यम् ।

**ये च तद्धिते** ।६।१।६१। यादौ तद्धिते परे शिरश्शब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः । तद्धिते किम् । शिर इच्छति शिरस्यति । * **वा केशेषु** ॥ शीर्षण्याः शिरस्या वा केशाः । अचि शीर्ष इति वाच्यम् । अजादौ तद्धिते शिरसः शीर्षादेशः । स्थूलशिरस इदं स्थौलशीर्षम् । **खलयवमाषतिलवृषब्रह्मणश्च** ।५।१।७। खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । चाद्रथ्या । **अजाविभ्यां थ्यन्** ।५।१।८। आजथ्या यूथिः । अविथ्या । **आत्मन्विश्वजनभोगोत्तरपदात्खः**[1] ।५।१।९। **आत्माध्वानौ खे** ।६।४। १६९। एतौ खे प्रकृत्या स्तः । आत्मने हितमात्मनीनम् । विश्वजनीनम् । * **कर्मधारयादेवेष्यते** । षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव । विश्वजनीयम् । * **पञ्चजनादुपसंख्यानम्** ॥ पञ्चजनीनम् । * **सर्वजनाट्ठञ् खश्च** । सार्वजनिकः । सर्वजनीनः । * **महाजनाट्ठञ्** । माहाजनिकः । मातृभोगीणः पितृभोगीणः राजभोगीनः । * **आचार्यादणत्वं च** ॥ आचार्यभोगीनः । **सर्वपुरुषाभ्यां णढञौ** ।५।१।१०। सर्वाण्णो वेति वक्तव्यम् । सर्वस्मै हितं सार्वम् । सर्वीयम् । * **पुरुषाद्वधविकारसमूहतेनकृतेषु** ॥ भाष्यकारप्रयोगात्तेनेत्यस्य द्वन्द्वमध्ये निवेशः । पुरुषस्य वधः पौरुषेयः । तस्येदमित्यणि प्राप्ते । पुरुषस्य विकारः पौरुषेयः । प्राणिरजतादिभ्योऽञ् इत्यञि प्राप्ते । समूहेऽप्यणि प्राप्ते । एकाकिनोऽपि परितः पौरुषेयवृता इवेति माघः । तेन कृते ग्रन्थेऽणि प्राप्ते । अग्रन्थे तु प्रासादादावप्राप्त एवेति विवेकः । **माणवचरकाभ्यां खञ्** ।५।१।११। माणवाय हितं माणवीनम् । चारकीणम् ।

---

दियता सनियोगशिष्टत्वादिति भावः ॥—'शीर्षंश्छन्दसि' इत्यतोऽनुवर्तनादाह—**शीर्षन्नादेश** इति ।।—**शीर्षण्य** इति । 'ये चाभाव–' इति प्रकृतिभावः ॥—**शिरस्यतीति** । 'नः क्ये' इति नियमेन पदत्वाभावाद्वत्वाभावः ॥—**खलयव**—॥ अत्र वृषशब्दोऽकारान्तो गृह्यते । न नकारान्तः । अन्यथा ह्रस्वदेहार्थं नलोपमकृत्वैव निर्दिशेत् । 'आत्मन्विश्वजन–' इतिवत् । वृषाय हित वृष्यम् । नान्तात्वति तु वृषण्यमिति स्यात् ॥—**ब्रह्मण्यमिति** । ब्रह्मन्शब्दो ब्राह्मणपर्यायः । प्रकृतिभावस्तु 'ये चा–' इत्यनेन पूर्ववत् । इह वृषन्शब्दाद्ब्राह्मणशब्दाच्च यतः प्राप्तिरेव नास्ति । छोऽप्यनभिधानान्नेत्याकरः । तेन वृष्णे हितं ब्राह्मणेभ्यो हितमिति वाक्यमेव ॥—**चाद्रथ्येति** । गवादिषु रथशब्दो न पठितः । हितार्थ एव रथ्येति यथा स्यात् । अर्थान्तरे मा भूदिति ॥—**अजाविभ्याम्**—॥ अजशब्द इह पुंलिङ्ग उपात्तः । अत एव 'द्वन्द्वे घि' इत्यविशब्दस्य पूर्वनिपातं बाधित्वा 'अजाद्यदन्तम्' इति अजशब्दस्य पूर्वनिपातः कृतः । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि' इति स्त्रीलिङ्गादपि थ्यन् । तसिलादिषु थ्यनः परिगणनात्पुंवद्भावे रूप तुल्यम् ॥—**अजथ्येति** । अजेभ्यो अजाभ्यो वा हितेति विग्रहः ॥—**कर्मधारयादेवेति** ॥ व्याख्यानादिति भावः ॥—**विश्वजनीयमिति** । विश्वस्य जनः सर्वसाधारणो वैश्यादिः, विश्वो जनोऽस्येति बहुव्रीहावपि स एवान्यपदार्थस्तस्मै हितमिति विग्रहः ॥—**पञ्चजनीनमिति** । रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनास्तेभ्यो हित 'दिक्सङ्ख्ये सञ्ज्ञायाम्' इति समासः । 'पञ्चजनात्' इत्येतत्प्रभृति वार्तिकत्रयमपि कर्मधारयविषयमेव । तेन षष्ठीसमासाद्बहुव्रीहेश्च छ एव । पञ्चजनीयः ॥—**सर्वजनीन** इति । सर्वो जनः सर्वजनः । 'पूर्वकालैक–' इति तत्पुरुषः । तस्मै हितमिति विग्रह. ॥ साध्वर्थे तु 'प्रतिजनादिभ्यः खञ्' इति खञि सार्वजनीनवैश्वजनीनशब्दौ व्युत्पादितौ ॥—**मातृभोगीण** इति । इहाखण्डपदत्वाभावेऽपि 'अट्कुप्वाङ्' इत्यनेन यथा णत्व भवति तथा प्रागेवोपपादितम् । मातुर्भोगः शरीर तस्मै हित इति विग्रहः ॥ यद्यपि 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरेण अहेरित्युक्तम् । तथापि प्रयोगबाहुल्याभिप्रायं तत् । शक्तिस्तु शरीरमात्रे इत्याकरः ॥ मातृपितृशब्दाभ्यामौत्सर्गिकश्छ एव । मात्रीयः । पित्रीयः ॥ राजाचार्याभ्यां त्वौत्सर्गिकः छोऽपि न भवत्यनभिधानात्किं तु राज्ञे हितमाचार्याय हितमिति वाक्यमेवेत्याकरः ॥—**सर्वपुरुषाभ्याम्**—॥ आभ्यां शब्दाभ्यां यथासङ्ख्य णढञौ स्तस्तस्मै हितमित्यर्थे 'प्राक्क्रीतात्–' इति छस्यापवादादिति सूत्रार्थः ॥—**सर्वादिति** । अनुकरणत्वात्सर्वनामकार्याभावः ॥—**पुरुषाद्वधविकारेति** ॥ योग्यताबलादिह षष्ठी समर्थविभक्तिर्लभ्यते, 'तेन कृत' इत्यत्र तु उपात्तैव तृतीया तदाह—**पुरुषस्य वध इति** ॥—**समूहेऽप्यणीति** । 'तस्य समूहः' इत्यनेन ॥—**ग्रन्थेऽणीति** । 'कृते ग्रन्थे' इत्यनेन ॥—**अप्राप्ते** इति । पौरुषेयः प्रासाद इत्यादौ न कस्याप्यपवादोऽयं ढञिति भावः ॥—**माणव**—॥ खञो ञित्करणं वृद्ध्यर्थं स्वरार्थं च ॥ यद्यपि माणवे वृद्धिः स्वतःसिद्धैव, तथापि माणवीनभार्य इत्यत्र 'वृद्धिनिमित्तस्य च'—इति पुंवद्भावप्रतिषेधार्थमिति ज्ञेयम् ॥ —**माणवायेति** । मनोः कुत्सितमपत्य माणवः । 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः' इत्यपत्याधिकारस्थवार्तिकाण्णत्वं, तच्च वार्तिकमेतत्सूत्रस्थनिर्देशसिद्धार्थकथनपरमित्याहुः ॥—**चारकीणमिति** । चरतीति पचाद्यच् । 'चरिचलिपतिवदीनाम्' इति द्विर्वचनं विकल्पितत्वादिह न भवतीति । ततः संज्ञायां

---

१ भोगोत्तरपदादिति—उत्तरपदशब्दो हि भोगेनैव सबध्यते, व्याख्यानात् । भोगः शरीरसामान्यवाची अत्र, अहिरिव भोगैः पर्येतीत्यत्र तथा दर्शनात् ।

तदर्थं विकृतेः प्रकृतौ ।५।१।१२। विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां छप्रत्ययः स्यात् । अङ्गारेभ्य एतानि अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टकाः । शङ्कव्यं दारु । छदिरुपधिबलेर्ढञ् ।५।१।१३। छादिषेयाणि तृणानि । बालेयास्तण्डुलाः । * उपधिशब्दात्स्वार्थे इष्यते । उपधीयत इत्युपधी रथाङ्गं तदेव औपधेयम् । ऋषभोपानहोर्ञ्यः ।५।१।१४। छस्यापवादः । आर्षभ्यो वत्सः । औपानह्यो मुञ्जः । चर्मण्यप्ययमेव पूर्वविप्रतिषेधेन । औपानह्यं चर्म । चर्मणोऽञ् ।५।१।१५। चर्मणो या विकृतिस्तद्वाचकादञ् स्यात् । वर्ध्र्यै इदं वार्ध्रं चर्म । वारत्रं चर्म । तदस्य तदस्मिन् स्यादिति ।५।१।१६। प्राकार आसामिष्टकानां स्यात्प्राकारीया इष्टकाः । प्रासादीयं दारु । प्राकारोऽस्मिन् स्यात् प्राकारीयो देशः । इतिशब्दो लौकिकीं विवक्षामनुसारयति । तेनेह न । प्रासादो देवदत्तस्य स्यादिति । परिखाया ढञ् ।५।१।१७। पारिखेयी भूमिः ॥ छयतोः पूर्णोऽवधिः ॥

## तद्धितेष्वार्हीयाः ॥

प्राग्वतेष्ठञ् ।५।१।१८। तेन तुल्यमिति वतिं वक्ष्यति ततः प्राक् ठञधिक्रियते । आर्हादगोपुच्छसंख्या-

कनि चरकः ॥—तदर्थं विकृतेः—॥ 'तस्मै हितम्' इत्यतस्तस्मा इत्यनुवर्तते तदाह—चतुर्थ्यन्तादिति । 'तदर्थम्' इति 'सामान्ये नपुसकं' व्यत्ययेन सप्तमीस्थाने प्रथमेत्याशयेनाह—तदर्थायामिति ॥ विकृत्यर्थायामित्यर्थः । तदिति सर्वनाम्ना हि विकृतिः परामृश्यते । एव च विकृतिरेव प्रथमानिर्दिष्टेति 'समर्थाना प्रथमात्–' इत्यधिकारोप्यत्र निर्बाध एव ॥—शङ्कव्यमिति । 'उगवादिभ्यः' इति यत् ॥—छदिरुपधि—॥ समाहारद्वन्द्वे सौत्र पुस्त्वम् । छस्यापवादोयम् ॥—छादिषेयाणीति । छद्यतेऽनेनेति छदिः । 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः' । 'इस्मन्त्रन्क्विषु च' इति ह्रस्वत्वम् । यदा तु चर्मविकार छदिस्तदा परत्वात 'चर्मणोऽञ' इत्यञ् प्राप्नोति । पूर्वविप्रतिषेधेन तु ढञेवेष्यते । छादिषेय चर्म ॥ आह च 'यञ्ढञावञः पूर्वविप्रतिषिद्धम्' 'ढञ् च' इति ॥ यत उदाहरण स्तनगव्य, स्तनगुश्चर्मविकारस्तदर्थं चर्म 'उगवादिभ्य' इति यत् । ञ्यस्योदाहरणमौपानह्यमिति अनुपद वक्ष्यति ॥—बालेया इति । 'करोपहारयोः पुसि बलिः प्राण्यङ्गजे स्त्रियाम्' इत्यमरः ॥—उपधिरिति । 'उपसर्गे घोः किः' इति धाञ कि । 'आतो लोप इटि च' इत्यालोपः ॥ —विप्रतिषेधेनेति । 'यञ्ढञावञः' इत्यादिवार्तिकेनेत्यर्थः ॥ ननु ढञ्विधौ छदिरित्यस्य, ञ्यविधौ उपानहश्च विशिष्य ग्रहणेन 'प्रतिपदोक्त बलीयः' इति सिद्धे किमनेन पूर्वविप्रतिषेधेन ॥ अत्राहु । निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलीयस्त्वे प्रयोजकं, न तु सावकाशत्वे इत्यनेव मुनिवचनेनानुमीयते । तेन 'स्वम्पि तडागानि' इत्येव युक्त, परत्वान्नुम्प्रवृत्तेः । प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य स्वापि तडागानीति मत दुर्बलम् । 'अपृतृन्–' इति दीर्घ आपांसि आप्सन्तीत्युदाहरणे सावकाशतया प्रतिपदोक्तत्वस्याबलीयस्त्वादिति ॥—चर्मणोञ् ॥ 'तदर्थम्' इत्यादिपूर्वोक्ते अञ् स्यात् छस्यापवाद. । 'चर्मणः' इति षष्ठी न तु पञ्चमी । पञ्चम्या तु चर्मशब्दाच्चर्मार्थाया प्रकृतौ प्रत्यय स्यात् 'चर्मणो द्वीपि–' इत्यादौ । न चेष्यते चार्मणो द्वीपीति तदाह—चर्मणो या विकृतिरिति ॥—वार्ध्र्यै इति । 'वृधिवपिभ्याम्' इति रन्प्रत्यये वर्ध्रशब्द आद्युदात्तश्चर्मवाची, 'तस्य विकारः' इत्यण् 'टिड्ढा–' इति ङीप् । वार्ध्री रज्जुः तस्यै वर्धेरौणादिके ष्ट्रनि तु वर्ध्रीति भवति ततोऽणि तु वार्ध्रम् । 'नध्री वध्री वरत्रा स्यात्' इत्यमरः । 'चर्माः पश्य, वध्रिकाः पश्य' इति भाष्यम् ॥—तदस्य—॥ प्रथमासमर्थात्प्रातिपदिकात्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहित प्रत्ययः 'स्यात्' इति 'सम्भावनेऽलमिति च' इत्यादिना सम्भावने लिङ् । इष्टकाना बहुत्वेन प्राकारः आसा स्यादिति तत्सम्भाव्यते । देशस्य हि गुणेन प्राकारोऽस्मिन्स्यादिति सम्भाव्यते । इह प्रकृतिविकारभावस्तादर्थ्यं च न विवक्षित, किं तु योग्यतामात्रं । तेन पूर्वस्यायमविषयः । इतिस्तच्छब्दस्य ग्रहण स्पष्टप्रतिपत्त्यर्थम् । 'तदस्यास्त्यस्मिन्' इतिवत्सकृत्तच्छब्दग्रहणेनैवेष्टसिद्धेः ॥ छयतोः पूर्णोऽवधिः ॥

प्राग्वतेष्ठञ् ॥ 'ठञ्' इत्येव वक्तव्ये 'प्राग्वतेः' इति वचन मध्ये योऽधिकारवानपवाद 'सर्वभूमिपृथिवीभ्यामणञौ' 'शीर्षच्छेदाद्यच्च' इत्येवमादिः, तेन विच्छेदेपि 'पारायण–' इत्यादौ ठञेव यथा स्यात् इत्येवमर्थम् । न चैव 'पारायण' आदिसूत्र एव ठञ् निर्दिश्यतामिति वाच्यम् । उत्तरसूत्रे येषां पर्युदासः क्रियते गोपुच्छादीनां तेभ्यष्ठञः प्रकृतसूत्रं विनालाभात् । तथा च गौपुच्छिकः साप्ततिक इत्यादौ ठञर्थमिदं सूत्रमत्रप्रदेशे आरब्धमिति बोध्यम् ॥—आर्हादगोपुच्छ—॥

---

१ बालेया इति—बाल्यावस्थाया यो लौहित्यादिगुणस्तद्धिता बालेया इत्युच्यन्ते । प्रकृतिविकृतिभावोऽत्र यथाकथंचित् । २ प्रासादो देवदत्तस्येति—ईदृशेऽर्थे प्रासादीयो देवदत्त इति प्रयोगो लोके न दृश्यते इति भावः । ३ प्राग्वतेरिति—अत्र वतिशब्देन तदर्थो लक्ष्यते, तेनार्थबोधकेष्वेवास्योपस्थानम्, तेनापवादविषये नेति बोध्यम् ।

परिमाणाट्ठक् ।५।१।१९। तदर्हतीत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा । **असमासे निष्कादिभ्यः ।५।१।२०।** आर्हादित्येतत्तेन क्रीतमिति यावत्सप्तदशसूत्र्यामनुवर्तते । निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु । नैष्किकम् । समासे तु ठञ् । **परिमाणान्तस्यासंज्ञाशाणयोः ।७।३।१७।** उत्तरपदवृद्धिः स्यात् ञिदादौ ॥ परमनैष्किकः । असमासग्रहणं ज्ञापकं भवति । इतः प्राक् तदन्तविधिरिति । तेन । सुगव्यम् । यवापूप्यमित्यादि ॥ इतऊर्ध्वं तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि ॥ पारायणिकः । द्वैपारायणिकः । अलुकीति किम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीते शूर्पादञ् माभूत् किंतु ठञ् । द्विशौर्पिकम् । **अर्धात्परिमाणस्य पूर्वस्य तु वा ।७।३।२६।** अर्धात्परिमाणवाचकस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च । अर्धद्रोणेन क्रीतम् आर्धद्रौणिकम् । अर्धद्रौणिकम् । **नातः परस्य ।७।३।२७।** अर्धात्परस्य परिमाणाकारस्य वृद्धिर्न पूर्वपदस्य तु वा ञिदादौ । अर्धप्रस्थिकम् । आर्धप्रस्थिकम् । अतः किम् । आर्धकौडविकम् । तपरः किम् । अर्धखार्यां भवा अर्धखारी । अर्धखारीभार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावनिषेधो न स्यात् । **शताच्च ठन्यतावशते ।५।१।२१।** शतेन क्रीतं शतिकम् । शत्यम् । अशते किम् ।

---

—**तदर्हतीति** । इह 'तदर्हम्' इति सूत्रान्तर्गतमच्प्रत्ययान्त नानुक्रियते, किं तु तिङन्तस्यैकदेशः शबन्त एव व्याख्यानादिति भावः ॥—**अभिव्याप्येति** । तेन श्वैतच्छत्रिक इत्यत्रार्हत्यर्थे ठग् भवतीति भावः ॥ ननु परिमाणात्पृथक्संख्याग्रहण व्यर्थं परिमीयते परिच्छिद्यते येन तत्परिमाणं संख्ययापि च परिच्छिद्यत इति सापि परिमाणमेवेति चेत् । अत्र श्लोकवार्तिकम्—'ऊर्ध्वमानं किलोन्मानं, परिमाणं तु सर्वत । आयामस्तु प्रमाण स्यात्सख्या बाह्या तु सर्वतः' ॥ अस्यार्थः । तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेर्गुरुत्वमुन्मीयते तदुन्मानम् । आरोह उच्छ्रायः । परिणाहो विस्तारः । ताभ्यामारोहपरिणाहाभ्या स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादिः परिमीयते तत्परिमाण प्रस्थादि, परिः सर्वतोभावे । आयामो दैर्घ्यं स येन मीयते तत्प्रमाण तच्च क्वचित्तिर्यगवस्थितस्य वस्तुनो भवति । यथा वस्त्रादेर्हस्तादिः । क्वचिदूर्ध्वाधोभागावस्थितस्य भवति । यथा हास्तिनमुदकम् । ऊरुद्वयसमुदकमिति । सख्या तु उन्मानपरिमाणप्रमाणेभ्यः पलादिप्रस्थादिहस्तादिभ्यस्त्रिभ्यो बहिर्भूता एकत्वद्वित्वादिरिति ॥ इह सख्यापरिमाणयोरेव प्रकृतत्वेऽप्युन्मानप्रमाणयोर्विवेचनं प्रसङ्गकृतमिति बोध्यम् ॥—**असमासे निष्कादिभ्यः** ॥ निष्क, पण, पाद, माष, वाह, द्रोण, षष्टि, इति सप्त निष्कादयः ॥ तत्र द्रोणशब्दः परिमाणवाची, षष्टिशब्दः संख्यावाची, ताभ्यां ठञि प्राप्ते वचनम् । इतरेषा तु पञ्चानामुन्मानवाचित्वेन पूर्वसूत्रेणैव ठकि सिद्धे समासप्रतिषेधार्थं वचनमित्येके ॥ अन्ये त्वाहुः । पूर्वसूत्रे परिच्छेदकमात्र संख्याभिन्न परिमाणशब्देन गृह्यते । तेन सर्वेभ्यष्ठञि प्राप्ते ठग्विधानार्थं वचनम् । न चैव 'परिमाण तु सर्वतः' इति भेदेन व्युत्पादन व्यर्थमिति वाच्यम् । 'प्रमाणपरिमाणाभ्या संख्यायाश्चापि संशये' इत्यादावस्योपयोगादिति पक्षद्वयमप्येतत्पदमञ्जर्या स्पष्टम् ॥—अथ किमर्थम् 'असमासे' इत्युच्यते, प्रातिपदिकग्रहणे तदन्तग्रहणाभावादेवेष्टसिद्धेरत आह—**असमासग्रहणमिति** ॥—**सुगव्यमिति** । 'उगवादिभ्यो यत्' ॥—**यवापूप्यमिति** 'विभाषा हविरपूपादिभ्यः' इति यत् । अन्नविकारत्वादेव सिद्धे अपूपादीनां प्रतिपदपाठसामर्थ्यात्तदन्तविधिर्नेति न्यासग्रन्थस्तूपेक्ष्यः, वृत्त्यादिग्रन्थविरोधादिति भावः ॥ अत एव तत्सूत्रे 'अपूपादीनां केषाचित्पाठः प्रपञ्चार्थः' इत्यवोचाम ॥—**ऊर्ध्वमिति** ॥ ज्ञापकेन तदन्तविधौ लब्धेऽपि विशेषव्यवस्थार्थमिदम् ॥ संख्यापूर्वपदानामिति किम् । इह मा भूत् परमपारायण वर्तयति ॥—**द्विशूर्पमिति** । तद्धितार्थे द्विगुरयम् । एषा हि प्रकृतिर्लुगन्ता न भवति इति सख्यापूर्वपदादप्यस्मात् 'शूर्पादञन्यतरस्याम्' इति प्राप्तस्यान्ठञो वा 'अध्यर्धपूर्व–' इति लुक् ॥—**द्विशौर्पिकमिति** 'परिमाणान्तस्य–' इत्युत्तरपदवृद्धिः । ठञो द्विगु प्रति निमित्तत्वाभावाल्लुगभावः ॥ यद्यपि 'अध्यर्ध–' इति सूत्रे द्विगोः परस्यार्हीयस्य लुगित्येव मूले व्याख्यायते । तथापि द्विगोर्निमित्तस्येति व्याख्येयमेव । अन्यथा अत्रैव ठञो लुक् स्यादेतच्च अध्यर्ध–इति सूत्रे स्फुटीकरिष्यते ॥—**तपरः किमिति** ॥ दीर्घाकारस्य वृद्धौ कृतायामपि रूपे विशेषो नास्तीति प्रश्नः ॥—**निषेधो न स्यादिति** । तथा च वृद्धिनिषेधाभावाय तपरकरणमावश्यकमिति भावः ॥ इद च पुंवद्भावनिषेधाभावापादन पूर्वपदस्य वृद्ध्यभावपक्षे क्रियते ॥ यदा तु पूर्वपदस्य पाक्षिकी वृद्धिः क्रियते, तदा फलोपधानवृद्धिनिमित्त तद्धित इत्युत्तरपदाकारस्य वृद्धिनिषेधेऽपि स्यादेव पुवद्भावनिषेध इति बोध्यम् ॥—**शताच्च**—॥ अशतेऽभिधेये आर्हीयेष्वर्थेषु ठन्यतौ स्तः । उत्तरसूत्रेण प्राप्तस्य कनोऽपवादः ॥ चकारः 'असमासे' इत्यस्यानुकर्षणार्थः ॥

१ परिमाणान्तस्येति—अत्र परिमाणशब्देन परिच्छेदकमात्र गृह्यते, शाणपर्युदासात् । कालस्य तु परिच्छेदकत्वेऽपि नेह ग्रहणम्, अनेनैव सिद्धे सख्यायाः सवत्सरेत्यत्र संवत्सरग्रहणेन परिमाणग्रहणे कालपरिमाणग्रहणस्याभावज्ञापनात्, नच संज्ञायां तदुपयोग इति वाच्यम्, ज्ञापनपरभाष्यप्रामाण्येन तादृशसंज्ञाया अभावकल्पनात् ।

शतं परिमाणमस्य शतकः सङ्घः । इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थान्न भिद्यते । तेन ठन्यतौ न किंतु कन्नेव । असमास इत्येव । द्विशतेन क्रीतं द्विशतकम् । **॥ संख्याया अतिशदन्तायाः कन् ।५।१।२२।** संख्यायाः कन् स्यादार्हीयेऽर्थे नतु त्यन्तशदन्तायाः । पञ्चभिः क्रीतः पञ्चकः । बहुकः । त्यन्तायास्तु साप्ततिकः । शदन्तायाः, चात्वारिंशत्कः । **॥ वतोरिड्वा ।५।१।२३।** वत्वन्तात्कन इड्वा स्यात् । तावतिकः । तावत्कः । **॥ विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ।५।१।२४।** योगविभागः कर्तव्यः । आभ्यां कन् स्यात् । असंज्ञायां ड्वुन् स्यात्कनोऽपवादः । विंशकः त्रिंशकः । संज्ञायां तु विंशतिकः । त्रिंशत्कः । **॥ कंसाट्टिठन् ।५।१।२५।** टो ङीबर्थः । इकार उच्चारणार्थः । कंसिकः । कंसिकी । *** अर्धाच्चेति वक्तव्यम् ।** आर्धिकः । आर्धिकी ॥ *** कार्षापणाट्टिठन्वक्तव्यः ।** प्रतिरादेशश्च वा । कार्षापणिकः । कार्षापणिकी । प्रतिकः । प्रतिकी । **॥ शूर्पादञन्यतरस्याम् ।५।१।२६।** शौर्पम् । शौर्पिकम् । **॥ शतमानविंशतिकसहस्रवसनादण् ।५।१।२७।** एभ्योऽण् स्याट्ठञठकनामपवादः । शतमानेन क्रीतं शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् । **॥ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ।५।१।२८।** अध्यर्धपूर्वाद्द्विगोश्च परस्यार्हीयस्य लुक् स्यात् । अध्यर्धकंसम् । द्विकंसम् । संज्ञायां तु पाञ्चकलापिकम् । **॥ विभाषा कार्षापणसह-**

---

—**द्विशतकमि**ति । द्वौ च शतं च तेषां समाहारो द्विशतम् । ततः कन् 'प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकि' इत्यनया इष्ट्या समासादपि प्राप्नोतीति 'असमासे' इत्येतस्यानयनमुचितमिति भावः ॥—**त्यन्तशदन्ताया** इति ॥ त्यन्तसहिता शदन्तेत्युत्तरपदलोपी समासः ॥—**पञ्चक** इति । लौकिक्याः सङ्ख्याया उदाहरणम् ॥—**बहुक** इति । पारिभाषिक्याः ॥—**साप्ततिक** इति । ठञो ञित्वादादिवृद्धिः ठस्येकादेशे 'यस्येति च' इतीकारलोपः ॥ अर्थवतस्तिशब्दस्य ग्रहणाड् डत्यवयवस्य तिशब्दस्य पर्युदासो न भवति । कतिकः ॥—**चात्वारिंशत्क** इति । 'इसुसुक्तान्तात्कः' ॥ —**वतोरिड्वा** ॥ 'वतोः' इति पञ्चमी, सा च 'कन्' इति प्रथमायाः षष्ठीं कल्पयतीत्याह—**वत्वन्तात्कन** इति ॥ —**तावतिक** इति । 'यत्तदेतेभ्यः–' इति वतुप् । 'आ सर्वनाम्नः' इत्यात्वम् ॥—**कर्तव्य** इति ॥ अन्यथा त्यन्तशदन्तयोः पर्युदासाद्विंशतित्रिंशद्भ्यां कन् दुर्लभ इति भावः ॥—**विंशक** इति । 'ति विंशतेर्डिति' इति तिशब्दलोपः ॥— **आर्धिक** इति ॥ अर्धशब्दस्य कार्षापणार्धे रूढत्वाद्भागवदपेक्षयाऽत्रासामर्थ्यं न शङ्क्यम् । प्रकरणादिवशेन भागविशेषे विज्ञाते सति नास्त्यस्यासामर्थ्यमिति बोध्यम् ॥ एतेनार्धशब्दस्य सापेक्षत्वात्तदन्तादेव टिठन् द्रोणार्धिकः प्रस्थार्धिक इति केषांचिदुक्तिः परास्ता ॥—**शूर्पा—**॥ शूर्पशब्दस्य परिमाणवाचित्वादञि प्राप्ते तदपवादत्वेनाञ् पक्षे विधीयते ॥— **ठञ्ठकनामि**ति ॥ शतमान परिमाण ततष्ठञ प्राप्तः, विंशत्या क्रीत विंशतिक सञ्ज्ञाशब्दोऽयम् । असञ्ज्ञायां हि 'विंशतित्रिंशद्भ्याम्' इति ड्वुन् स्यात् । सञ्ज्ञा च यदि परिमाणस्य, तदा ठञ् प्राप्तः । अर्थान्तरस्य चेत्तर्हि ठक् प्राप्तः । वसनशब्दात्तु ठगेव, सहस्रशब्दस्य सङ्ख्यावाचित्वात्तत 'सङ्ख्याया अतिशदन्तायाः' इति कन्प्राप्त इति विवेकः ॥—**अध्यर्धपूर्व—**॥ अध्यारूढमर्धं यस्मिन् तदध्यर्धम् 'प्रादिभ्यो धातुजस्य' इत्युत्तरपदलोप । अध्यर्धशब्द पूर्वो यस्मिन्निति बहुव्रीहिगर्भबहुव्रीहौ कृते अध्यर्धपूर्व च द्विगुश्चेति द्वन्द्वः । सौत्र पुंस्त्वम् । द्विगोरिति पञ्चमी न तु षष्ठीत्याशयेन व्याचष्टे— **अध्यर्धपूर्वादि**त्यादि । एतच्च वृत्तिकाररीत्या व्याख्यातम् ॥ अत्र वार्तिक 'द्विगोर्लुकि तन्निमित्तग्रहणं' द्विगोर्निमित्तं यस्तद्धितस्तस्य लुगिति वक्तव्यम् । द्वाभ्यां शूर्पाभ्यां क्रीत द्विशूर्पम् । द्विशूर्प्या क्रीतं द्विशौर्पिकमिति ॥ पूर्वोक्तोदाहरणे तु ठञो लुङ् माभूदिति ॥ ननु द्वयो. शूर्पयोः समाहारो द्विशूर्पी तया क्रीतमिति विग्रहे द्विशूर्पमिति रूपं न स्यात । तद्धितस्यात्र द्विगोरनिमित्ततया 'अध्यर्ध–' इति लुकोऽप्रवृत्ते. । द्विगोः परस्येति व्याख्याया तु न सिद्धमिष्टमिति चेत् । नैवम् । 'अर्थविशेषासप्रत्यये अतन्निमित्तादपि' इति वचनान्तरस्य वार्तिककृतैवोक्तत्वात् । यत्र तद्धितार्थद्विगुना सह अर्थो न भिद्यते । तत्र स तद्धितो यस्य निमित्त न भवति तस्मादपि द्विगोः परस्य लुगिति वक्तव्यमिति तस्यार्थः ॥ एव च द्विशूर्पमिति तद्धितार्थद्विगुना सह द्विशूर्प्या क्रीतमित्यस्यार्थो न भिद्यते इति समाहाराद्विगोः परस्य तद्धितस्य लुग् भवत्येवेति न काप्यनुपपत्तिः ॥ वस्तुतस्तु सूत्रे द्विगोरिति षष्ठीमाश्रित्य 'द्विगोर्निमित्त यस्तद्धितः' इति व्याख्याय प्रथमं वार्तिकं प्रत्याख्यातु शक्यम् ॥ 'द्विशूर्प्या क्रीतम्' इति विग्रहे तु द्विशूर्पादेव प्रत्ययो भवति । 'अजाविकन्यायात्, न तु द्विशूर्पीशब्दात्' इत्याश्रित्य द्वितीयमपि प्रत्याख्यातुं शक्यम् ॥ नन्वध्यर्धशब्दः सङ्ख्यावाच्येव ॥ तथा च लोके गण्यते 'एकोऽध्यर्धो द्वौ' इति ॥ अत एव अध्यर्धकमिति कन्, अध्यर्धकंसमिति तद्धितार्थे द्विगुः, अध्यर्धसांवत्सरिकमित्यादौ 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिश्च भवति । तत्किमध्यर्धपूर्वग्रहणेनेति चेद् । अत्राहुः । 'संख्याकार्यमेतस्य किंचिन्न' इति ज्ञापनार्थमिदम् । तेन कन्द्विगुसमासवृद्धिभ्योऽन्यत्र भवति । तद्यथा अध्यर्धं करोति । नेह कृत्वसुच् । यः सकृत्फलान्ता क्रियामभिनिर्वृत्य पुनस्तामेव कुर्वन् मध्ये निवर्तते स एवमुच्यते इति ॥—**पाञ्चकलापिक-**

---

१ वस्तुत इति—अभेद एव पारमार्थिकः; भेदस्तु काल्पनिक इति भावः

ब्राम्यताम् ।५।१।२९। लुग्वा स्यात् । अध्यर्धकार्षापणम् । अध्यर्धकार्षापणिकम् । द्विकार्षापणम् । द्विकार्षापणिकम् । औपसंख्यानिकस्य टिठनो लुक् । पक्षे अध्यर्धप्रतिकम् । द्विप्रतिकम् । अध्यर्धसहस्रम् । अध्यर्धसाहस्रम् । द्विसहस्रम् द्विसाहस्रम् । **द्वित्रिपूर्वान्निष्कात्** ।५।१।३०। लुग्वा स्यात् । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् । * **बहुपूर्वाच्चेति वक्तव्यम्** । बहुनिष्कम् । बहुनैष्किकम् । **बिस्ताच्च** ।५।१।३१। द्वित्रिबहुपूर्वाद्बिस्तादार्हीयस्य लुग्वा स्यात् । द्विबिस्तम् । द्विबैस्तिकमित्यादि । **विंशतिकात्खः** ।५।१।३२। अध्यर्धपूर्वाद्द्विगोरित्येव । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् । **खार्या ईकन्** ।५।१।३३। अध्यर्धखारीकम् । द्विखारीकम् । * **केवलायाश्चेति वक्तव्यम्** ॥ खारीकम् । **पणपादमाषशताद्यत्** ।५।१।३४। अध्यर्धपण्यम् । द्विपण्यम् । अध्यर्धपाद्यम् । द्विपाद्यम् । इह पादः पदिति न । यस्येति लोपस्य स्थानिवद्भावात् । पद्यत्यतदर्थे इत्यपि न । प्राण्यङ्गार्थस्यैव तत्र ग्रहणात् । **शाणाद्वा** ।५।१।३५। यत्स्यात्पक्षे ठञ् तस्य लुक् । अध्यर्धशाण्यम् । अध्यर्धशाणम् **द्वित्रिपूर्वादण् च** ।५।१।३६। शाणादित्येव । चाद्यत् । तेन त्रैरूप्यम् । परिमाणान्तस्यासंज्ञाशाणयोरिति पर्युदासादादिवृद्धिरेव । द्वैशाणम् । द्विशाण्यम् । द्विशाणम् । इह ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषां समर्थवि-

---

मिति । पञ्च कलापाः परिमाणमस्येति विग्रहे 'तद्धितार्थ–' इति समास. । 'तदस्य परिमाणम्' इति ठञ् । एवं पाञ्चलोहितिकमपि बोध्यम् । पञ्च लोहिन्यो गुञ्जाः परिमाणमस्येति विग्रहे पूर्ववत्समासतद्धितौ । 'भस्याढे तद्धिते' इति पुंवद्भावाल्लोहिनीशब्दस्येकारनकारयोरभावः । परिमाणविशेषस्य नामधेये एते । असंज्ञाग्रहणं प्रत्ययान्तस्य विशेषणं न तु द्विगोः । एतच्च वृत्तिकृता सूत्राशयमनुरुध्य वर्णितमिति इहापि तथैवोक्तम् । भाष्यवार्तिकयोस्त्वसंज्ञाग्रहणं प्रत्याख्यातम् । तथा हि द्विगुविशेषणमसंज्ञाग्रहणम् । पञ्चकलापपञ्चलोहितशब्दौ च द्विगू कृततद्धितलुकावेव संज्ञे । यस्तु ताभ्यामुत्पद्यते ठक् स श्रूयते एव, द्विगोरनिमित्तत्वेन तस्य लुगभावादिति ॥—**विभाषा** ॥—**टिठनो लुगिति** ॥ प्रत्यादेशपक्षे तु लुङ्न भवति, प्रत्यादेशस्य प्रत्ययसंनियोगशिष्टत्वादिति बोध्यम् ॥—**अध्यर्धसहस्रमिति** । 'शतमानविंशतिक–' इति विहितस्याणो लुक् । तदभावपक्षे तु 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य–' इत्युत्तरपदवृद्धिः । अध्यर्धशब्दः सङ्ख्यावाचीत्यधुनैवोक्तत्वात् ॥—**द्वित्रिपूर्वात्**—॥ अध्यर्धग्रहणमुत्तरार्थमनुवृत्तमपीह न संबध्यते । 'द्विगोः' इति तु संबध्यत एव षष्ठीसमासं व्यावर्तयितुम् । अत्र च व्याख्यानमेव शरणम् ॥ 'द्वित्रिभ्यां निष्कात्' इत्येव सिद्धे पूर्वग्रहणं चिन्त्यप्रयोजनमिति हरदत्तः ॥—**द्विनैष्किकमिति** । 'प्राग्वतेष्ठञ्' मतान्तरे तु ठगिति मनोरमायाम् । निष्कादिभ्यः समासे ठगभावात् । 'परिच्छेदकमात्रं गृह्यते' इति मतान्तरेऽपि ठञेव भवति, तन्मते उन्मानस्यापि परिमाणत्वात् 'असमासे निष्कादिभ्यः' इत्यादिना पर्युदस्तत्वाट्ठगभावे निष्कादिभ्यष्ठञि प्राप्ते असमासे ठग्विधानेऽपि समासे ठञ एव प्राप्तत्वादित्यन्ये ॥ 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः ॥ 'द्विगोः' इति सम्बन्धान्नेह लुक् । द्वयोर्निष्को द्विनिष्कस्तेन क्रीतं द्वैनैष्किकम् । 'अध्यर्धपूर्व–' इत्यसम्बन्धादध्यर्धनैष्किकमित्यत्राप्यनेन लुङ् न भवति ॥—**बिस्ताच्च** ॥ चकारेण 'द्वित्रिपूर्वात्' इत्यनुकृष्यते तत्फलं तु 'चानुकृष्टं नोत्तरत्र' इत्युत्तरत्रानुवृत्त्यभावः ॥—**विंशतिकात्खः** ॥ 'शतमानविंशतिक–' इत्यणि प्राप्ते तस्य च लुकि प्राप्ते खोऽत्र विधीयते ॥—**खार्याः**—॥ 'तदस्य परिमाणम्' इति ठञि प्राप्ते तस्य च लुकि प्राप्ते ईकन् विधीयते ॥ कन्विधौ 'केणः' इति ह्रस्वः स्यात् ॥ इकन्विधावपि 'यस्येति च' इति लोपादिष्टं न सिध्यतीति भावः ॥—**प्राण्यङ्गार्थस्यैवेति** ॥ अय भावः । 'पादस्य पदाज्यातिगोपहतेषु' इत्यत्र प्राण्यङ्गस्यैव हि पादस्य ग्रहणं तस्यैवाज्यातिभिर्गतिवचनैः सम्बन्धसम्भवात् । तथा च 'पद्यति–' इत्यादावपि तस्यैवानुवृत्तिः । इह तु पणमाषाभ्यां साहचर्यात्परिमाणवाचिनो ग्रहणमिति ॥—**पक्षे ठञिति** ॥ यद्यपि शाण उन्मानम् । तथापि 'आर्हात्–' इति सूत्रे परिमाणग्रहणेन परिमीयते परिच्छिद्यते अनेनेति योगवृत्त्या परिच्छेदकमात्रं गृह्यते इति वादिनां मते अस्यापि पर्युदासाट्ठगभावे ठञिति भावः ॥ मुख्यमते तु ठगेव बोध्यः ॥ शाणाद्वेति सूत्रे **'शताच्चेति वक्तव्यं,'** पूर्वेण नित्यं प्राप्ते विकल्पार्थम् ॥ एवं च पूर्वसूत्रे शतग्रहणमकृत्वा शतशाणाभ्यां वेत्येव वक्तुं युक्तमित्याहुः ॥ अध्यर्धशत्यम् । अध्यर्धशतम् । पञ्चशत्यम् । पञ्चशतम् । यदभावे सङ्ख्यालक्षणस्य कनो लुक् । 'शताच्च ठन्यतौ' इति तु न प्रवर्तते, तत्रासमासग्रहणस्यानुवर्तनात् ॥—**द्वित्रिपूर्वादण् च** । वार्तिकमिदं वृत्तिकृता सूत्रेषु प्रक्षिप्तम् ॥ भाष्यादिप्रामाण्याच्छतग्रहणमिह न संबध्यत इत्याशयेनाह—**शाणादित्येवेति** ॥ न्यासकृता त्वविधायके वार्तिके सूत्रत्वभ्रमेण व्याख्यातम्—'शतशाणाभ्यां वा' इति सूत्रयितव्ये 'पणपाद–' इति पूर्वसूत्रे शतग्रहणं क्रियते तस्येदं फलं शतशब्दः स्वरितत्वेनानुवर्तमानोऽपि 'शाणाद्वा' इत्यत्रैव संबध्यते, तदुत्तरसूत्रे 'द्वित्रिपूर्वादण् च' इत्यत्र तु न संबध्यते, तेन शतशब्दादण् न—इति ॥ तदिदं सामर्थ्यवर्णनमण्विधायकं यदि सूत्रं स्यात् तदा संगच्छते नान्यथेत्यास्तां तावत् ॥—**त्रैरूप्यमिति** । तदेतद्दर्शयति—**द्वैशाणमित्यादिना** । अण्येकं, ठञो लुकि द्वितीयं, यति तृतीयम् ॥—**ठञादयस्त्रयोदशेति** ॥ ननु एकादशैव प्रत्ययाः प्रकृताः सूत्रभेदेन विहितत्वाद्यत्प्रत्ययस्य द्विर्गणने तु द्वादशेति

---

१ ईकन्निति—दीर्घोच्चारणं खारीशब्दस्य स्वपर्यायपुंलिङ्गखारशब्दप्रकृतिकत्वे पुंवत्त्वेनेष्टासिद्धेरिति भावः ।

भक्तयोऽर्धाश्वाकाह्वितास्त इदानीमुच्यन्ते । **तेन क्रीतम्** ।५।१।३७। ठञ् गोपुच्छेन क्रीतं गौपुच्छिकम् । साप्ततिकम् । प्रास्थिकम् । ठक् । नैष्किकम् । **ह्रस्वो गोण्याः** ।१।२।५०। गोण्या ह्रस्वास्तद्धितलुकि । लुकोऽपवादः । पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः । **तस्य निमित्तं संयोगोत्पातौ** ।५।१।३८। संयोगः संबन्धः । उत्पातः शुभाशुभसूचकः । शतिकः शत्यो वा धनपतिसंयोगः । शतिकं शत्यं वा दक्षिणाक्षिस्पन्दनम् । शतस्य निमित्तमित्यर्थः । * **वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्** ॥ वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । * **सन्निपाताच्चेति वक्तव्यम्** ॥ सान्निपातिकम् । **गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्** ।५।१।३९। गोर्निमित्तं संयोग उत्पातो वा गव्यः । द्व्यचः, धन्यः । यशस्यः । स्वर्ग्यः । गोद्व्यचः किम् । विजयस्य वैजयिकः । असंख्येत्यादि किम् । पञ्चानां पञ्चकम् । साप्तकम् । प्रास्थिकम् । खारीकम् । अश्वादि, आश्विकम् । आश्मिकम् । * **ब्रह्मवर्चसादुपसंख्यानम्** ॥ ब्रह्मवर्चस्यम् । **पुत्राच्छ च** ।५।१।४०। चाद्यत् । पुत्रीयः । पुत्र्यः । **सर्वभूमिपृथिवीभ्यामणञौ** ।५।१।४१। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । पार्थिवः । सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यते । **तस्येश्वरः** ।५।१।४२। **तत्र विदित इति च** ।५।१।४३। सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा सार्वभौमः । पार्थिवः । **लोकसर्वलोकाट्ठञ्** ।५।१।४४। तत्र विदित इत्यर्थे । लौकिकः । अनुशतिकादित्वादुभयपदवृद्धिः । सार्वलौकिकः । **तस्य वापः** ।५।१।४५। उप्यते अस्मिन्निति वापः क्षेत्रम् । प्रस्थस्य वापः प्रास्थिकम् । द्रौणिकम् । खारीकम् । **पात्रात् ष्ठन्** ।५।१।४६। पात्रस्य वापः क्षेत्रं पात्रिकम् । पात्रिकी क्षेत्रभक्तिः । **तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते** ।५।१।४७। वृद्धिर्दीयत इत्यादि क्रमेण प्रत्येकं संबन्धादेकवचनम् । पञ्चास्मिन् वृद्धिः आयः लाभः शुल्क उपदा वा दीयते पञ्चकः । शतिकः । शत्यः । साहस्रः । उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः । ग्रामादिषु स्वामिग्राह्यो भाग आयः । विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः । रक्षानिर्वेशो राजभागः शुल्कः । उत्कोच उपदा ॥ * **चतुर्थ्यर्थ उपसंख्यानम्** ॥ पञ्चास्मै वृद्ध्यादि-

---

त्रयोदशेत्येतद्दुरुपपादमेव । न च 'शूर्पादञन्यतरस्याम्' इत्यन्यतरस्याग्रहणलभ्यठञमादाय त्रयोदशत्वं सूपपादमिति वाच्यम् । तुल्यन्यायेन 'शाणाद्वा' इति सूत्रलभ्ययठञोर्ग्रहणेन पञ्चदशत्वप्रसङ्गात् । नापि सूत्रोपात्तैर्द्वादशभिः सह 'द्वित्रिपूर्वादण् च' इति वार्तिकोपात्ताण्प्रत्ययस्य गणनेन निर्वाहः । उक्तरीत्या 'कंसाट्टिठन्' इति सूत्रे 'अर्धाच्चेति वक्तव्यं' 'कार्षापणाट्टिठन् वक्तव्यः' इत्यादिवार्तिकोक्तटिठन्प्रत्ययस्यापि ग्रहणप्रसङ्गादिति चेद् । अत्राहुः । 'कंसाट्टिठन्' इति सूत्रस्थ एव टिठन् अर्धकार्षापणशब्दाभ्यां परामृष्ट इति न भिद्यते । 'द्वित्रिपूर्वादण् च' इति वार्तिकस्थोऽण् तु भिद्यते, 'शतमानविंशतिक–' इत्यणो दूरस्थत्वेन परामर्ष्टुमशक्यत्वादिति ॥—**तेन क्रीतम्** ॥ तेनेति तृतीयान्तात्क्रीतार्थे यथाविहितं प्रत्ययाः स्युः ॥—**ठञिति** । 'आर्हात्' इति सूत्रे 'अगोपुच्छ–' इत्यादिपर्युदासाट्ठगभावे गोपुच्छसप्ततिप्रस्थेभ्यष्ठञ् भवतीत्यर्थः ॥ ननु देवदत्तेन क्रीत पाणिना क्रीत सतोषेण क्रीतमित्यादावतिप्रसङ्ग इति चेत् । अत्राहुः । करणे तृतीयैनेह समर्थविभक्तिः, सापि मूल्यद्रव्यसमर्पकाच्छब्दादुत्पन्ना, न त्वन्यापि, अन्यत्र त्वनभिधानान्न प्रत्ययः ॥ एतत् च 'तद्धिताः' इति महासञ्ज्ञाकरणाल्लभ्यते तेभ्यः प्रयोगेभ्यो हिता इति व्याख्यानादिति ॥—**लुकोऽपवाद** इति ॥ 'लुक्तद्धितलुकि' इति प्राप्तस्य स्त्रीप्रत्ययस्य लुकोऽपवाद इत्यर्थः ॥—**पञ्चकमिति** ॥ सङ्ख्यालक्षणः कन् ॥—**आश्मिकमिति** । अश्मनो निमित्तमित्यर्थे ठक् 'नस्तद्धित' इति टिलोपः ॥—**पुत्राच्छ च** ॥ 'गोद्व्यचः' इति नित्य यति प्राप्ते वचनम् ॥ कथं पुत्रीयः क्रतुरिति । नहि क्रतुः संयोगो नाप्युत्पात इति चेत् ॥ अत्राह हरदत्तः । संयुज्यतेऽनेनेति व्युत्पत्त्या क्रतुरपि संयोग एव, यागकरणेन हि पुरुषः फलेन संयुज्यते अतो यागादिरपि संयोगो, न केवलं संबन्ध एवेत्याग्रह इति ॥—**सर्वभूमि**—॥ आभ्यां यथासंख्यमणञौ स्तः ॥—**तस्येश्वरः** ॥ 'तस्य निमित्तम्' इत्यतोऽनुवृत्त्यैव सिद्धे पुनः 'तस्य' इति निर्देशो निमित्तरूपप्रत्ययार्थस्य निवृत्तये । अन्यथा हि संयोगोत्पाताविवेश्वरोऽपि प्रत्ययार्थस्य विशेषणं संभाव्येत ॥—**तत्र विदित इति च** ॥ योगविभाग उत्तरार्थो यथासंख्यनिवृत्त्यर्थश्च ॥—**तस्य वापः** ॥ 'तस्य' इति वापापेक्षया कर्मणि षष्ठीत्याह—**प्रस्थस्येति** । कर्तरि षष्ठ्यां तु देवदत्तस्य वापः क्षेत्रमित्यादौ स्यादिति भावः ॥—**खारीकमिति** । 'खार्या ईकन्' ॥—**तदस्मिन्**—॥ प्रथमासमर्थात् 'अस्मिन्' इति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति । शुल्कग्रहणं प्रपञ्चार्थं, तस्याप्यायविशेषत्वात् । तथा च 'ठगायस्थानेभ्यः' इति ठग् भवति शौल्कशालिक इति हरदत्तः ॥—**उपदा दीयत** इति ॥ जसः सस्य रुत्वे यत्वे च यलोपः ॥—**साहस्र** इति । 'शतमान–' इत्यादिनाण् ॥—**रक्षानिर्वेश**

---

१ क्रीतमिति—क्रयो नाम द्रव्यदानपूर्वकं वस्त्वन्तरग्रहणम् । २ प्रत्येकमिति—एकैककर्मकत्वानाधिकरणेऽपि प्रयोगस्येष्टत्वात्, द्वन्द्वस्तु सौत्रत्वात्साधुरिति भावः ।

दीयते पञ्चको देवदत्तः । समग्रब्राह्मणे दानमितिवदधिकरणत्वविवक्षा वा । ⧗ **पूरणार्धाट्ठन्** ।५।१।४८। यथाक्रमं ठक्टिठनोरपवादः । द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः । तृतीयिकः । आर्धिकः । अर्धशब्दो रूपकस्यार्धे रूढः । ⧗ **भागाद्यच्च** ।५।१।४९। चाट्ठन् । भागशब्दोऽपि रूपकस्यार्धे रूढः । भागो वृद्ध्यादिरस्मिन् दीयते भाग्यं भागिकं शतम् । भाग्या भागिका विंशतिः । ⧗ **तद्धरति वहत्यावहति भाराद्वंशादिभ्यः** ।५।१।५०। वंशादिभ्यः परो यो भारशब्दस्तदन्तं यत्प्रातिपदिकं तत्प्रकृतिकाद्द्वितीयान्तादित्यर्थः । वंशभारं हरति वहत्यावहति वा वांशभारिकः । ऐक्षुभारिकः । भाराद्वंशादिभ्य इत्यस्य व्याख्यान्तरं भारभूतेभ्यो वंशादिभ्य इति । भारभूतान्वंशान् हरति वांशिकः । ऐक्षुकः । ⧗ **वस्नद्रव्याभ्यां ठन्कनौ** ।५।१।५१। यथासंख्यं स्तः । वस्नं हरति वहत्यावहति वा वस्निकः । द्रव्यकः । ⧗ **संभवत्यवहरति पचति** ।५।१।५२। प्रस्थं संभवति प्रास्थिकः कटाहः । प्रस्थं स्वस्मिन्समावेशयतीत्यर्थः । प्रास्थिकी ब्राह्मणी । प्रस्थमवहरति पचति वेत्यर्थः ॥ तत्पचतीति द्रोणादण् च * ॥ चाट्ठञ् । द्रोणं पचतीति द्रौणी । द्रौणिकी । ⧗ **आढकाचितपात्रात्खोऽन्यतरस्याम्** ।५।१।५३। पक्षे ठञ् । आढकं संभवति अवहरति पचति वा आढकीना । आढकिकी । आचितीना आचितिकी । पात्रीणा । पात्रिकी । ⧗ **द्विगोः ष्ठंश्च** ।५।१।५४। आढकाचितपात्रादित्येव । आढकाद्यन्ताद्द्विगोः संभवत्यादिष्वर्थेषु ठन्खौ वा स्तः । पक्षे ठञ् तस्याध्यर्धेति लुक् । षित्वान्ङीप् । द्व्याढकिकी । द्व्याढकीना । द्विगोरिति ङीप् । द्व्याढकी । द्व्याचितिकी । द्व्याचितीना । अपरिमाणेति ङीप्निषेधात् । द्व्याचिता । द्विपात्रिकी । द्विपात्रीणा । द्विपात्री । ⧗ **कुलिजाल्लुक्खौ च** ।५।१।५५। कुलिजान्ताद्द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ वा स्तः । चात् ष्ठंश्च । लुगभावे[1] ठञः श्रवणम् । द्विकुलिजी । द्वैकुलिजिकी । द्विकुलिजीना । द्विकुलिजिकी । ⧗ **सोऽस्यांऽशवस्नभृतयः** ।५।१।५६। अंशो भागः । वस्नं मूल्यम् । भृतिर्वेतनम् । पञ्च अंशो वस्नो भृतिर्वास्य पञ्चकः । ⧗ **तदस्य[2] परिमाणम्** ।५।१।५७। प्रस्थं परिमाणमस्य प्रास्थिको राशिः । ⧗ **संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु** ।५।१।५८। पूर्वसूत्रमनुवर्तते । तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः । यद्वा द्व्येकयोरितिवत्संख्यामात्रवृत्तेः परिमाणिनि प्रत्ययः । पञ्चैव पञ्चकाः शकुनयः । पञ्च परिमाणमेषामिति वा । सङ्घे पञ्चकः । सूत्रे अष्टकं पाणिनीयम् । सङ्घशब्दस्य प्राणिसमूहे रूढत्वात्सूत्रं पृथगुपात्तम् । पञ्चकमध्ययनम् । * **स्तोमे डविधिः** ॥ पञ्चदशः मन्त्राः परिमाणस्य पञ्चदशः । सप्तदशः । एकविंशः ।

---

इति । निर्वेशो भृतिः । रक्षानिमित्तको निर्वेशः । सबन्धषष्ठ्या समासः ॥—**सममि**त्यादि । एव च सप्रदानस्यैवाधिकरणत्वविवक्षयेष्टसिद्धौ उपसंख्यानं नादर्तव्यमिति भावः ॥—**पूरणार्धाट्ठन्** ॥ पूर्यतेऽनेनेति पूरणोऽर्थस्तद्वाचिनोऽर्धशब्दाच्च ठन् स्यात् ॥—**आर्धिकमि**ति । 'अर्धाच्चेति वक्तव्यम्' इति टिठन् प्राप्तः, सति च तस्मिन् स्त्रियां ङीप् स्यात् । इष्यते तु टाप् ॥—**रूपकस्ये**ति ॥ रूपक कार्षापणम् ॥—**रूढ** इति । तथा च भगवद्द्रव्यसापेक्षत्वेनासामर्थ्यमिह नोद्भावनीयमिति भावः ॥—**भारभूतेभ्यो वंशादिभ्य** इति ॥ ननु वंशादयः शब्दास्ते कथ भारभूता इत्यत आह—**भारभूतानि**ति ॥ भारशब्दोऽर्थद्वारा वंशादीना विशेषणमिति भावः ॥ 'भारेभ्यः' इति वक्तव्ये प्रत्येकं संबन्धविवक्षया सूत्रे 'भारात्' इति निर्देशः ॥—**वस्निक** इति ॥ वस्न मूल्यम् ॥—**संभवत्यवह**रति ॥ आधारप्रमाणादाधेयप्रमाणस्य यदनाधिक्यं तदुपसर्जन धारणं संभवतेरर्थः । तेन सकर्मकत्वात्तदिति द्वितीयान्तानुवृत्तिर्न विरुध्यते तदाह—**प्रस्थं स्वस्मिन्नि**ति ॥—**प्रास्थिकी**ति । ठञन्तत्वान्ङीप् ॥ अवहरतीत्येतद्व्याचष्टे—**उपसंहरती**ति ॥—**तत्पचती**ति ॥ वार्तिकेऽस्मिन्पचतिग्रहण संभवत्यवहरतिनिवृत्त्यर्थम् । द्रोणपरिमिते व्रीह्यादौ द्रोणशब्दो लाक्षणिकः ॥—**पक्षे ठञि**ति ॥ आढकादीनां परिमाणत्वाट्ठञेति भावः ॥—**द्विगोः ष्ठंश्च** ॥ ष्ठनिति च्छेदः तदाह—**षित्वादि**ति ॥—**द्व्याढकिकी**ति । 'न य्वाभ्याम्' इत्यैजागमो न शङ्क्यः, वृद्धिनिषेधसनियोगेन तद्विधानाद्वृद्धेश्च प्राप्त्यभावात् ॥—**अपरिमाणे**ति । आचितस्य परिमाणत्वेऽपि तस्मिन् सूत्रे विशिष्यग्रहणादिति भावः ॥—**द्वैकुलिजिकी**ति॥ 'असञ्ज्ञाशाणयोः' इत्यत्र कुलिजशब्दोऽपि इष्यते, तेनोत्तरपदवृद्धिर्नेत्याहुः ॥—**तदस्य परिमाणम्** ॥ इह परिमाणशब्देन परिच्छेदकमात्रं गृह्यते, न तु सर्वतोमानमेव, उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणात् । षष्टिजीवितं परिमाणमस्य षाष्टिकः ॥ 'सोऽस्य' इति वर्तमाने पुनः 'तदस्य' इति ग्रहणाद् 'द्वे षष्टी जीवित परिमाणमस्य द्विषाष्टिकस्त्रिषाष्टिकः' इत्यादौ 'अध्यर्ध–' इति लुङ्न भवति । स्पष्टं चेदं काशिकादौ ॥—**पूर्वसूत्रमि**ति । तेन पञ्च गावः परिमाणमस्य पञ्चको गोसंघ इत्यादि सिध्यति । यदा तु प्रकृत्यर्थस्यैव परिच्छेदिका संख्या पञ्च गावोस्य सघस्येति, तदा तु प्रत्ययो न भवति, परिमाणस्य प्रत्ययार्थत्वाभावाद् । एतच्च 'आर्हादगोपुच्छ–' इति कैयटे स्पष्टम् ॥ स्वार्थे उदाहरति—**पञ्चैवे**ति ॥—**स्तोमे डविधिरि**ति । डित्करणमेकविंश इत्यत्र तिलोपार्थम् । त्रयस्त्रिंशादौ टिलोपार्थं च ॥—**पञ्चदश मन्त्रा** इति । 'साम्ना स्तुवीत' 'एकं

---

१ लुगभावे इति—अन्यतरस्यांग्रहणमनुवर्तते इति वृत्त्यनुरोधेनेदम् । वस्तुतस्तु तदत्र नानुवर्तते, पुनः खग्रहणात्

२ तदस्येति—सोऽस्येत्यनुवर्तमाने तदस्येति स्पष्टार्थम् ।

गोमयागेषु च्छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोमः । **पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्** ।५।१।५९। एते रूढिशब्दा निपात्यन्ते । **पञ्चद्दशतौ वर्गे वा** ।५।१।६०। पञ्च परिमाणमस्य पञ्चद्वर्गः । दशत् । पक्षे पञ्चकः । दशकः । **त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्** ।५।१।६२। त्रैंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि । चात्वारिंशानि ब्राह्मणानि । **तदर्हति** ।५।१।६३। लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठगादयः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । **छेदादिभ्यो नित्यम्** ।५।१।६४। नित्यमाभीक्ष्ण्यम् । छेदं नित्यमर्हति च्छैदिको वेतसः । छिन्नप्ररूढत्वात् । *** विराग विरङ्गं च** ॥ विरागं नित्यमर्हति वैरङ्गिकः । **शीर्षच्छेदाद्यच्च** ।५।१।६५। शीर्षच्छेदं नित्यमर्हति शीर्षच्छेद्यः । शैर्षच्छेदिकः । यठकोः सन्नियोगेन शिरसः शीर्षभावो निपात्यते । **दण्डादिभ्यो यत्** ।५।१।६६। एभ्यो यत् स्यात् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः । **पात्राद् घंश्च** ।५।१।६८। चाद्यत् तदर्हतीत्यर्थे । पात्रियः । पात्र्यः । **कडङ्करदक्षिणाच्छ च** ।५।१।६९। चाद्यत् । कडंकरोतीति विग्रहे अतएव निपातनात् खच् । कडङ्करं माषमुद्गादिकाष्ठमर्हतीति कडङ्करीयो गौः ।

---

सामतृचे क्रियते' इति हि श्रुतिः । तत्र तृचस्य आवृत्त्या पञ्चदशमन्त्राः । सप्तदशे स्तोमे अन्त्याया ऋचः सप्तकृत्व आवृत्तिः । प्रथममध्यमयोस्तु पञ्चकृत्व एव । एकविंशे स्तोमे तु तृचस्य सप्तकृत्व आवृत्तिरिति ज्ञेयम् ॥—**छन्दोगैरिति** । सामगैरित्यर्थः ॥—**पङ्क्तिविंशति**—॥ 'तदस्य परिमाणम्' इति वर्तते ॥ पञ्चन्शब्दस्य टिलोपः, तिप्रत्ययः, 'चोः कुः' इति कुत्वम् । पञ्च पदानि परिमाणमस्य पङ्क्तिश्छन्द इति काशिका ॥ पदशब्दोऽत्र पादपर्याय इति हरदत्तः ॥—**रूढिशब्दा** इति । तथा चात्र नावयवार्थेऽभिनिवेष्टव्यम् । पङ्क्तिशब्दो हि नानार्थः । अस्ति क्रमसन्निवेशे ब्राह्मणपङ्क्तिः पिपीलिकापङ्क्तिरिति । अस्ति च दशसङ्ख्यायां पङ्क्तिरथ इति । दशरथ इत्यर्थः । अस्ति हि छन्दोविशेषे यस्य पञ्चाक्षरा पञ्चपादाः । तथा च छन्दोविशेषे एवावयवार्थो नान्यत्रेति बोध्यम् ॥ द्वयोर्दशतोर्विन्भावः शतिश्च प्रत्ययः अपदत्व च । द्वौ दशतौ परिमाणमस्य विंशतिः । अपदत्वनिपातनान्नकारस्यानुस्वारः ॥ केचित्तु विन्भावमुक्त्वा अपदत्व चेति न पठन्ति ॥ त्रयाणां दशतां त्रिन्भावः शच्च प्रत्ययः । मतान्तरे तु त्रिभावः ॥ त्रयो दशत. परिमाणमस्य त्रिंशत् ॥ एवं चतुर्णां चत्वा पञ्चानां पञ्चा । आभ्यामपि शत्प्रत्ययः ॥ पण्णां दशतां षष्, तिश्च प्रत्यय' अपदत्व च । षड् दशतः परिमाणमस्य षष्टिः ॥ ततस्त्रिभ्योऽपि तिप्रत्यय एव । सप्तानां दशता सप्त, अष्टानां दशतामशी, नवाना दशतां नव, दशानां दशतां शभावः तश्च प्रत्ययः । दश दशत' परिमाणमस्य शतम् ॥—**पञ्चद्दशतौ**—॥ इमौ डत्यन्तत्वेन निपात्येते वर्गेऽभिधेये । 'तदस्य परिमाणम्' इत्यनुवर्तत एव ॥ —**दशदिति** । दश परिमाणमस्य ॥—**पक्षे** इति । वाग्रहणात् 'सङ्ख्याया' इति कनपि भवतीति भावः ॥—**त्रिंशच्चत्वारिंशतोः**—॥ व्यत्ययेन पञ्चम्यर्थे षष्ठीद्विवचनम् **'चत्वारिंशतो ब्राह्मणे'** इति पाठे तु समाहारद्वन्द्वात्पञ्चम्येकवचनम् ॥ इह 'ब्राह्मणसंज्ञायाम्' इति षष्ठीसमासेन निर्देशमुचितम् । तथा हि सति 'ब्राह्मणस्य चेत्संज्ञा' इति स्फुटीभवति । अन्यथा तु यस्य कस्यचित्संज्ञायां ब्राह्मणस्थे च प्रयोगे इत्यनिष्टोऽर्थ. सभाव्येत । ततश्च मन्त्रे भाषाया च डण् न सिध्येत् । इष्यते च सः । तस्मादिष्टानुरोधेन पञ्चम्यर्थे सप्तमीति व्याख्येयम् ॥ 'ब्राह्मणेऽभिधेये' इति तु काशिकायां व्याख्यातम् ॥—**ठञादय** इति ॥ ठञ उदाहरणं तु प्रस्थमर्हति प्रास्थिक , द्रौणिकः इत्यादिकम् । आदिशब्दग्राह्यस्य ढक उदाहरणमाह—**श्वैतच्छत्रिकमिति** । एव स्वार्गिकः शन्य' शतिकः साहस्र इत्यादीन्युदाहर्तव्यानि ॥ —**छेदादिभ्यो**—॥ नित्यग्रहणमिह 'नित्य क्रीडाजीविकयोः' इत्यत्रेव महाविभाषया प्राप्तस्य वाक्यस्य निवृत्त्यर्थं न भवति, आरम्भसामर्थ्यादेव तस्मिन्वृत्तिसिद्धेः । किं तु प्रत्ययार्थविशेषणमिति ध्वनयति—**छेदं नित्यमर्हतीति** । भाष्ये तु नित्यग्रहण प्रत्याख्यात सूत्रमेव मास्त्विति तदाशय इति मनोरमा ॥ अय भाव' । नित्यग्रहणमिह प्रत्ययार्थविशेषणं न भवति । नित्यं छेदमर्हतीत्यासभवात् । न हि कश्चित्पदार्थो नित्यं छेदमर्हति । योऽपि वेतसादिरर्धच्छिन्न' प्ररोहति, सोऽपि न नित्य छेदमर्हति । कालान्तर एव तस्य च्छेदप्रवर्तनात् । न चात्र नित्यग्रहणत्यागेऽपि च्छेदमर्हतीत्यादिविग्रहवाक्यनिवृत्तये सूत्रस्यावश्यकत्वात्तत्प्रत्याख्यान न युज्यत इति शङ्क्यम् । विग्रहवाक्यस्य भार्यादिसमत्वादिति दिक् ॥ छेद भेद द्रोह दोषेत्याद्यश्छेदादयः । गणसूत्रमाह—**विरागेति** ॥—**दण्डादिभ्यः**—॥ पूर्वसूत्राद्यनुवर्तन इत्याह—**यत्स्यादिति** । केचित्तु 'दण्डादिभ्यो यः' इति पठन्ति ॥ स चापपाठ एव भाष्यादिविरोधादित्याहु' ॥ तथा हि 'अचो यत्' इति सूत्रे भाष्ये उक्तं 'हनो वा यत् वधादेशश्च' वध्यः घात्यः 'तद्धितो वा' । वधमर्हति वध्य इति ॥ यदि चेह यद्विधीयेत तदैवैतदुपपद्यते पक्षद्वयेऽपि 'यतोऽनावः' इत्याद्युदात्तत्वात् । यदि त्वत्र यो विधीयेत तदा स्वरो भिद्येत ॥ मनोरमायां तु 'क्यन्विधौ 'हनो वा वधस्तद्धितो वा' इति भाष्यम् । यदि चेह यद्विधीयेत, तदैव तदुपपद्यते । क्यपाद्युदात्तत्वं यत्यपि तद्धिते 'यतोऽनावः' इत्याद्युदात्तत्वमित्यादि स्थितम् ॥—**कडंकरदक्षिणाच्छ च** ॥ 'कडगर—' इति पाठस्तूपेक्ष्य इति ध्वनयति **—कडं करोतीति** । 'कड मदे' कडतीति कडः ॥ —**माषमुद्गादिकाष्ठमिति** । अमरश्चाह, 'कडकरो बुसं क्लीबम्'

---

१ पङ्क्तिविंशतीति—अत्र विंशत्याद्याः संख्यायां सङ्ख्येये चैकवचनान्ताः, तेन विंशतिर्गवामित्यादि सिद्धम् ।

कडङ्करीयः। दक्षिणामर्हतीति दक्षिणीयः। दक्षिण्यः। ॥ स्थालीबिलात् ।५।१।७०। स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः। स्थालीबिल्याः। पाकयोग्या इत्यर्थः। ॥ यज्ञर्त्विग्भ्यां घखञौ ।५।१।७१। यथासंख्यं स्तः। यज्ञमृत्विजं चाऽर्हति यज्ञियः। आर्त्विजीनो यजमानः ॥ * यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ॥ यज्ञियो देशः। आर्त्विजीन ऋत्विक् ॥ आर्हीयाणां ठगादीनां द्वादशानां पूर्णोऽवधिः ॥

## तद्धितेषु ठञधिकारे कालाधिकारः ॥

अतः परं ठञेव। ॥ पारायणतुरायणचान्द्रायणं वर्तयति ।५।१।७२। पारायणं वर्तयति पारायणिकश्छात्रः। तुरायणं यज्ञविशेषः, तं वर्तयति तौरायणिको यजमानः। चान्द्रायणिकः। ॥ संशयमापन्नः ।५।१।७३। संशयविषयीभूतोऽर्थः सांशयिकः। ॥ योजनं गच्छति ।५।१।७४। यौजनिकः। * क्रोशशतयोजनशतयोरुपसंख्यानम्। क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः। * ततोऽभिगमनमर्हतीति च वक्तव्यम् ॥ क्रोशशतादभिगमनमर्हतीति क्रौशशतिको भिक्षुः। यौजनशतिक आचार्यः। ॥ पथः ष्कन् ।५।१।७५। षो ङीषर्थः। पन्थानं गच्छति पथिकः। पथिकी। ॥ पन्थो ण नित्यम् ।५।१।७६। पन्थानं नित्यं गच्छति पान्थः। पान्था। ॥ उत्तरपथेनाहृतं च ।५।१।७७। उत्तरपथेनाहृतं औत्तरपथिकम्। उत्तरपथेन गच्छति औत्तरपथिकः। * आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम्। वारिपथिकम्। ॥ कालात् ।५।१।७८। व्युष्टादिभ्योऽणित्यतः प्रागधिकारोऽयम्। ॥ तेन निर्वृत्तम् ।५।१।७९। अह्ना निर्वृत्तमाह्निकम्। ॥ तमधीष्टो भृतो भूतो भावी ।५।१।८०। अधीष्टः सत्कृत्य व्यापारितः। भृतो वेतनेन क्रीतः। भूतः स्वसत्तया व्याप्तकालः। भावी तादृश एवानागतः। मासमधीष्टो मासिकोऽध्यापकः। मासं भृतो मासिकः कर्मकरः। मासं भूतो मासिको व्याधिः।

---

इति ॥—गौरिति। 'नीवारपाकादिकडङ्करीयैः' इति रघुः ॥—स्थालीबिलात् ॥ छयतावनुवर्तेते। अस्माच्छयतौ स्तः। ठञोऽपवादः ॥ —पाकयोग्या इति। निष्फलीकृता इति यावत् ॥—यज्ञमृत्विजं चार्हतीति। अर्थसमर्थो विद्वान् शास्त्रेणापर्युदस्त इत्यर्थः ॥ देशस्यानेवंविधत्वादुपसंख्यानम्—यज्ञियो देश इति। यज्ञानुष्ठाने योग्य इत्यर्थः ॥, —ऋत्विगिति। स तु ऋत्विक्त्वमर्हति, न तु ऋत्विजमिति सूत्रेण खञोऽप्राप्तावुपसंख्यानम् ॥ आर्हीयाणां ठगादीनां गतोऽवधिः ॥

पारायण—॥ आदित आरभ्य आन्तादविच्छेदेन वेदस्याध्ययनं पारायणम्। तच्च गुरुणा शिष्येण च निर्वर्त्यते, अन्यतरासंनिधौ अध्ययनक्रियाया अनिष्पादनात्। तथापि शिष्य एव प्रत्यय इष्यते न तु गुराविस्याकरे स्थितम्। तदाह—छात्र इति ॥—यजमान इति। यद्यपि पुरोडाशादिनिर्वर्तनेन ऋत्विगपि यज्ञं निर्वर्तयति, तथापि तत्र तौरायणिक इति न प्रयुज्यते, अनभिधानादिति भावः ॥ चान्द्रायणं तपोविशेषः ॥—विषयीभूतोऽर्थ इति ॥ 'स्थाणुर्वा पुरुषो वा' इति संशयविषयीभूते स्थाण्वादावेव प्रत्यय इष्यते, न तु सदेग्धरि' इति भावः ॥ कथं तर्हि 'सांशयिकः संशयापन्नमानसः' इति चेत्। अत्राहुः। संशयापन्नं मानसं यस्मिन्विषये स विषयः संशयापन्नमानस इति ॥—ततोऽभिगमनमिति ॥ अत्र पञ्चम्यन्तात्प्रत्ययः ॥—पन्थो—॥ पथः पन्थ इत्ययमादेशः णश्च प्रत्ययः ॥ नित्यग्रहणमिह प्रत्ययार्थविशेषणं, न तु वाक्यनिवृत्त्यर्थमित्याशयेनाह—नित्यं गच्छतीति ॥ नित्यमिति किम्। पथिकः। भाष्ये तु नित्यग्रहणं प्रत्याख्यातम्। अयं हि भाष्याशयः। नित्यं पन्थानं गच्छतीत्यर्थोऽत्र यद्यपि संभवति, तथापि नातैवार्थे पान्थशब्दस्य प्रयोग इष्यते। कदाचिद्गच्छत्यपि तत्प्रयोगात्। न चैवमपि विग्रहवाक्यनिवृत्त्यर्थं नित्यग्रहणमस्त्विति शङ्क्यम्। शिष्टप्रयोगे विग्रहवाक्यस्य दर्शनादिति ॥—उत्तरपथेन—॥ चकारेण गच्छतीति प्रत्ययार्थः समुच्चीयते तदाह—उत्तरपथेन गच्छतीति ॥—वारिपथिकमिति। वारिपथेनाहृतमिति वा विग्रहः ॥—कालात्। स्वरूपग्रहणमिह न भवति, 'तमधीष्टो भृतो भूतो भावी' इत्यत्यन्तसंयोगे द्वितीयानिर्देशात्। 'मासाद्वयसि-' इत्यादौ मासादीनां काले विशेषणाच्च ॥—तेन निर्वृत्तम् ॥ तृतीयान्तात्कालवाचिनष्ठञ् स्यात्। तेनेति करणे तृतीया। चतुरर्थ्यन्तर्गते 'तेन निर्वृत्तम्' इत्यत्र तु कर्तरि तृतीयेति विशेषः। उभयत्राप्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः ॥—आह्निकमिति। 'अह्नष्टखोरेव' इति नियमात् 'नस्तद्धिते' इति टिलोपो न ॥—मासाद्वयसि—॥ खञो ञित्करणं स्वरार्थं पुंवद्भावप्रतिषेधार्थं च। मासीनाभार्यः ॥ अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद् भूत इत्येतदेव संबध्यते। न हि मासमधीष्टो भृतो वेत्यादुक्तौ काचित्कालकृता शरीरावस्था गम्यत इत्याशयेनाह—मासं भूत इति। एतच्च वृत्तिपदं

---

१ पन्थो ण इति—अणिति पाठस्तु छेदादिभ्यश्चेतिसूत्रस्थभाष्यासमतः। २ कालादिति—कालग्रहणे यथाकथंचिद् कालबोधकस्य ग्रहणमिति तदस्य परिमाणमिति सूत्रे भाष्ये स्पष्टम्। अतिप्रसङ्गस्त्वनभिधानान्न।

मासं भावी मासिक उत्सवः। ॥ मासाद्वयसि यत्खञौ ।५।१।८१। मासं भूतो मास्यः। मासीनः। ॥ द्विगोर्यप् ।५।१।८२। मासाद्वयसीत्यनुवर्तते। द्वौ मासौ भूतो द्विमास्यः। ॥ षण्मासाण्ण्यच्च ।५।१।८३। वयसीत्येव। यबप्यनुवर्तते। चाट्ठञ्। षाण्मास्यः। षाण्मासिकः। ॥ अवयसि ठंश्च ।५।१।८४। षाण्ण्यत्। षण्मासिको व्याधिः। षाण्मास्यः। ॥ समायाः खः ।५।१।८५। समामधीष्टो भृतो भूतो भावी वा समीनः। ॥ द्विगोर्वा ।५।१।८६। समायाः ख इत्येव। तेनपरिजय्येत्यतः प्राक्प्रवृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः। द्विसमीनः। द्वैसमिकः। ॥ रात्र्यहःसंवत्सराच्च ।५।१।८७। द्विगोरित्येव। द्विरात्रीणः। द्वैरात्रिकः। द्व्यहीनः। द्वैयह्निकः। समासान्तविधेरनित्यत्वान्न टच्। द्विसंवत्सरीणः। ॥ संख्यायाः संवत्सरसंख्यस्य च ।७।३।१५। संख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ। द्विसांवत्सरिकः। द्वे षष्टी भृतो द्विषाष्टिकः। परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम्। तेन द्वैसमिक इत्युत्तरपदवृद्धिर्न। ॥ वर्षाल्लुक् च ।५।१।८८। वर्षशब्दान्ताद्विगोर्वा खः। पक्षे ठञ् वा च लुक्। त्रीणि रूपाणि। द्विवर्षीणो व्याधिः। द्विवर्षः। ॥ वर्षस्याभविष्यति। ७।३।१६। उत्तरपदस्य वृद्धिः स्यात्। द्विवार्षिको मनुष्यः। भविष्यति तु द्वैवर्षिकः। अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न। गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः। द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः। ॥ परिमाणान्तस्यासंज्ञाशाणयोः ।७।३।१७। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। द्विनैष्किकम्। असंज्ञेति किम्। पञ्च कलापाः परिमाणमस्य पाञ्चकलापिकम्। तद्धितान्तः संज्ञा। द्वैशाणम्। कुलिजशब्दमपि केचित्पठन्ति। द्वैकुलिजिकः। ॥ चित्तवति नित्यम् ।५।१।८९। वर्षशब्दान्ताद्विगोः प्रत्ययस्य नित्यं लुक् स्यात् चेतने प्रत्ययार्थे। द्विवर्षो दारकः। ॥ षष्टिकाः षष्टिरात्रेण पच्यन्ते ।५।१।९०। बहुवचनमतन्त्रम्। षष्टिको धान्यविशेषः[1]। तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते। ॥ तेन परिजय्यलभ्यकार्यसुकरम् ।५।१।९३। मासेन परिजय्यो जेतुं शक्यो मासिको व्याधिः। मासेन लभ्यं कार्यं सुकरं वा मासिकम्। ॥ तदस्य ब्रह्मचर्यम् ।५।१।९४। द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात्। अत्यन्तसंयोगे द्वितीया। मासं ब्रह्मचर्यमस्य स मासिको ब्रह्मचारी। आर्धमासिकः। यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः। मासोऽस्येति मासिकं ब्रह्मचर्यम्। * महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् ॥ महानाम्न्यो नाम विदामघवन्नित्याद्या ऋचः। तासां ब्रह्मचर्यमस्य माहानाम्निकः। हरदत्तस्तु भस्याढ इति पुंवद्भावान्माहानामिक इत्याह। * चतुर्मासाण्ण्यो यज्ञे

त्रयोः स्पष्टम् ॥—**मासीन** इति। बालकः ॥—**द्विगोर्यप्** ॥ प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्पूर्वेण यत्खञोः प्राप्तयोर्यब् विधीयते ॥ पित्त्वादनुदात्तः। तेन 'द्विमास्यः' इत्यादौ 'इगन्तकाल-' इत्यादिना पूर्वपदप्रकृतिस्वरो न तिष्ठते ॥ 'य.' इत्युक्ते तु प्रत्ययस्योदात्तत्वादन्तोदात्तो द्विमास्यः स्यात्, सति शिष्टस्वरबलीयस्त्वादिति भावः ॥—**यबप्यनुवर्तत** इति ॥ व्याख्यानमेवात्र शरणम् ॥—**समायाः खः** ॥ 'हायनोऽस्त्री शरत्समा.' इत्यमरः ॥—**समामधीष्ट** इत्यादि। अधीष्टादयश्चत्वारोऽर्था अत्राप्यनुवर्तन्त इति भाव. ॥—**द्विगोर्वा** ॥ 'संख्यापूर्वपदानां तदन्तग्रहणमलुकि' इत्यभ्युपगमात्पूर्वेण नित्ये प्राप्ते विकल्पः ॥—**द्वैसमिक** इति। खेन मुक्ते पक्षे ठञिति भाव ॥—**द्वैयह्निक** इति ॥ 'टखोरेव' इति नियमादिह टिलोपो न। 'अल्लोपोऽन'' 'न य्वाभ्याम्—' इत्यैच ॥ ननु 'तद्धितार्थ-' इति द्विगुसमासानन्तरं 'रात्र्यहःसंवत्सराच्च' इत्येव बाधित्वा परत्वाट्टचा भाव्य, न च महाविभाषया टचो विकल्प इति वाच्यम्। 'बृहतीजात्यन्ताः समासान्ताश्च' इति नित्येषु परिगणनादत आह—**समासान्तविधेरि**ति। यद्यपि टचि कृतेऽप्यह्नादेशे 'द्वैयह्निकः' इति रूप सिध्यति, तथापि 'द्व्यहीन'' इति हि रूप न सिध्यति' टचि सत्यह्नादेशे तस्य स्थानिवत्त्वात्, 'राजाहः-' इति समासान्तस्याहःशब्दान्तसमासग्रहणेनैव ग्रहणाच्च' 'रात्र्यहःसंवत्सराच्च' इति खप्रत्यये कृतेऽपि द्व्यहीन इति रूपप्रसङ्गादित्याहुः ॥—**उत्तरपदवृद्धिर्ने**ति ॥ एतच्चोपलक्षणम्। 'द्विवर्षा' इत्यत्र 'द्विगोः' इति ङीन्न भवति। परिमाणपर्युदासेन पर्युदासाभावात् 'अपरिमाणबिस्ताचित-' इतीह निषेधप्रवृत्तेः। द्विवर्षे भृते 'तमधीष्टः-' इति ठञ् 'वर्षाल्लुग्' इति लुक् ॥ 'चित्तवति नित्यम्' इति नित्य लुको वक्ष्यमाणत्वादचित्तवानिह प्रत्ययार्थ इति प्रत्युदाहरति—**द्विवर्षीणो व्याधि**रिति ॥—**द्विवार्षिको मनुष्य** इति ॥ अत्र वदन्ति। मनुष्ये। 'चित्तवति-' इति नित्यलुक्प्रसङ्गात् 'मनुष्यो मनुष्यसदृशः प्रतिमादिः' इति व्याख्याय स्थितस्य गतिः समर्थनीयेति ॥—**दारक** इति ॥ बालकः ॥—'परिजय्यः' इत्यस्य विवरणं 'जेतुं शक्यः' इति। 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशः ॥—**महानाम्न्यो नामे**ति ॥ तथा चाभाषितपुंस्कत्वात्पुंवद्भावो नेति भावः ॥—**हरदत्तस्त्वि**ति। यौगिकोऽय, न तु रूढ इति मन्यते ॥—**माहानामिक** इति। पुंवद्भावे कृते 'नस्तद्धिते' इति टिलोपः ॥—**चतुर्मासादि**ति। मासशब्दस्य कालवाचित्वात्कालाधिकारे वार्तिकारम्भः। न च विशिष्टस्य कालवाचित्वाभावादिह संगतिर्दुर्निरूपेति शङ्क्यम्। 'प्राग्वतेः संख्यापूर्वपदानां तदग्रहणम्' इत्यभ्युपगमादस्त्येव

[1] षष्टिका इति—शालिविशेष एवायम्, न मुद्गेषु।

तत्र भव इत्यर्थे । चतुर्षु मासेषु भवन्ति चातुर्मास्यानि यज्ञकर्माणि । * संज्ञायामण् ॥ चतुर्षु मासेषु भवति चातुर्मासी आषाढी । अण्णन्तत्वान्ङीप् । ▯ तस्य च दक्षिणा यज्ञाख्येभ्यः ।५।१।९५। द्वादशाहस्य दक्षिणा द्वादशाहिकी । आख्याग्रहणादकालादपि । आग्निष्टोमिकी । वाजपेयिकी । ▯ तत्र च दीयते कार्यं भववत् ।५।१।९६। प्रावृषि दीयते कार्यं वा प्रावृषेण्यम् । शारदम् ॥ कालाधिकारस्य पूर्णोऽवधिः ॥

## तद्धितेषु ठञधिकारः ॥

▯ व्युष्टादिभ्योऽण् ।५।१।९७। व्युष्टे दीयते कार्यं वा वैयुष्टम् । व्युष्ट, तीर्थ, संग्राम, प्रवास इत्यादि । ▯ तेनयथाकथा च हस्ताभ्यां णयतौ ।५।१।९८। यथाकथाचेत्यव्ययसंघातात्तृतीयान्ताद्धस्तशब्दाच्च यथासंख्यं णयतौ स्तः । * अर्थाभ्यां तु यथासंख्यं नेष्यते ॥ यथाकथा च दीयते कार्यं वा याथाकथाचम् । अनादरेण देयं कार्यं वेत्यर्थः । हस्तेन दीयते कार्यं वा हस्त्यम् । ▯ संपादिनि ।५।१।९९। ठञ् । तेनेत्येव । कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकं मुखम् । कर्णालंकाराभ्यामवश्यं शोभत इत्यर्थः । ▯ कर्मवेषाद्यत् ।५।१।१००। कर्मणा संपादि कर्मण्यं शौर्यम् । वेषेण संपादी वेष्यो नटः । वेषः कृत्रिम आकारः । ▯ तस्मै प्रभवति सन्तापादिभ्यः ।५।१।१०१। सन्तापाय प्रभवति सान्तापिकः । सांग्रामिकः । ▯ योगाद्यच्च ।५।१।१०२। चाट्ठञ् । योगाय प्रभवति योग्यः । यौगिकः । ▯ कर्मण उकञ् ।५।१।१०३। कर्मणे प्रभवति कार्मुकम् । ▯ समयस्तदस्य प्राप्तम् ।५।१।१०४। समयः प्राप्तोऽस्य सामयिकम् । ▯ ऋतोरण् ।५।१।१०५। ऋतुः प्राप्तोऽस्य आर्तवम् । ▯ कालाद्यत् ।५।१।१०७। कालः प्राप्तोऽस्य काल्यं शीतम् । ▯ प्रकृष्टे ठञ् ।५।१।१०८। कालादित्येव । तदस्येति च । प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरम् । ▯ प्रयोजनम् ।५।१।१०९। तदस्येत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं फलं कारणं च । ▯ विशाखाषाढादण्मन्थदण्डयोः ।५।१।११०। आभ्यामण् स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः । * चूडादिभ्य उपसंख्यानम् । चूडा, चौडम् । श्रद्धा, श्राद्धम् । ▯ अनुप्रवचनादिभ्यश्छः ।५।१।१११। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम् । ▯ समापनात्सपूर्वपदात् ।५।१।११२। व्याकरणसमापनं प्रयोजनमस्य व्याकरणसमापनीयम् । ▯ ऐकागारिकट् चौरे ।५।१।११३। एकमसहायमगारं प्रयोजनमस्य मुमुषिषोः स ऐकागारिकश्चौरः । ▯ आ-

---

संगतिरिति ॥—**संज्ञायामणिति** ॥ 'तत्र भवः' इत्यनेनैव सिद्धे पुनरण्विधिः 'द्विगोर्लुगनपत्ये' इति लुक्मा भूदित्येतदर्थमिदमत्रारब्धम् ॥ एव चास्मिन् वार्तिके 'चतुर्मासात्' इत्यस्यानुवृत्तये पूर्ववार्तिकमत्रैवारब्धमित्यपि ज्ञेयम् ॥ **चातुर्मासी**ति । कस्य सञ्ज्ञेत्याकाङ्क्षायामाह—**आषाढी**ति । अषाढानक्षत्रयुक्ता पौर्णमासीत्यर्थः ॥—**तस्य दक्षिणा**—॥ षष्ठ्यन्तेभ्यो यज्ञाख्येभ्यो दक्षिणेत्यस्मिन्नर्थे ठञ् स्यात् ॥ कालाधिकारादेवेह द्वादशाहादिभ्यः सिद्धे आख्याग्रहणं व्यर्थमित्याशङ्क्य परिहरति—**आख्याग्रहणादि**ति ॥—**तत्र च**—॥ कालवाचिनः सप्तम्यन्ताद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययः स्यात् ॥—**प्रावृषेण्यमि**ति । 'प्रावृष एण्यः' इति भवार्थे विहितः स इहाप्यतिदिश्यत इति भावः ॥—**शारदमि**ति । 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण्' ॥ ॥ कालाधिकारस्य पूर्णोवधिः ॥

**व्युष्टादिभ्योऽण्** ॥ व्युष्टशब्दः कालवाची दिवसमुखे वर्तते ॥—**संपादिनि** ॥ गुणोत्कर्षः संपत्तिः । 'आवश्यके णिनिः' इति वृत्तिकृत् । एव वस्त्रयुगेन सपादि वास्त्रयुगिकं शरीरमित्यप्युदाहार्यम् । वस्त्रयुगेन अवश्यं शोभत इत्यर्थः ॥—**तस्मै प्रभवति** ॥ समर्थः शक्तः प्रभवतीत्युच्यते ॥—**आर्तवमि**ति ॥ पुष्पमित्यादि विशेष्य बोध्यम् ॥—**काल्यमि**ति ॥ 'प्रत्यूषोऽहर्मुख काल्यम्' इत्यमरः । तत्र प्रातःकाले काल्यशब्दस्य व्युपत्त्यन्तरं मृग्यम् ॥—**प्रकृष्टे ठञ्** ॥ प्रकृष्यते अयमिति प्रकृष्टः । कर्मणि क्तः । तेन च प्रकर्षेण कालो विशेष्यते इत्याह—**दीर्घः काल** इति । ठञ्ग्रहणं विस्पष्टार्थम् । अन्यथा अनन्तरस्य यतोऽनुवृत्तिराशङ्क्येत ॥—**इन्द्रमह** इति ॥ मह उत्सवः ॥—**वैशाखो मन्थः** ॥—**आषाढो दण्ड** इति । विशाखाषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्तेते । तयोस्तु यथाकथञ्चिद्व्युत्पत्तिः क्रियत इति हरदत्तः ॥ विलोडनदण्डस्यैवाधारभूतः काष्ठविशेषो मन्थ इत्युच्यते ॥—**अनुप्रवचना**—॥ अनुप्रवचनं नाम ब्रह्मोदनमुच्यते ॥—**सपूर्वपदादि**ति ॥ विद्यमानपूर्वपदादित्यर्थः ॥—**ऐकागारिकट्**—॥ टो ङीबर्थः । ऐकागारिकी ॥ किमर्थमिदमुच्यते यावता 'प्रयोजनम्' इत्येव ठञि सिद्धम् । सत्यम् । चौरे नियमार्थमावश्यकमिदं सूत्रम् ॥ अन्यथा एकागारं प्रयोजनं यस्य भिक्षोरित्यत्रापि स्यात् ॥ नन्वेवमपि 'एकागाराच्चौरे' इति ठञेव नियम्यतां किमैकागारिक इति निपातनेन

---

१ प्रावृषि दीयते इति—भाष्यमते दीयते इत्यस्य 'अग्निष्टोमे दीयते भक्तमाग्निष्टोमिकम्' इत्युदाहरणं बोध्यम् । स्पष्टं चेदं शब्देन्दुशेखरे । २ चूडादिभ्य इति—इद 'व्युष्टादिभ्योऽण्' 'ऋतोऽण्' इत्यनयोरपि बोध्यम् इति शेखरकारः ।

कालिकङाद्यन्तवचने ।५।१।११४। समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याऽऽकाल आदेशः । आशु विनाशीत्यर्थः । पूर्वदिने मध्याह्नादावुत्पद्य दिनान्तरे तत्रैव नश्वर इति वा । * आकालाट्ठंश्च ॥ आकालिका विद्युत् ॥ ठञः पूर्णोऽवधिः ॥

## तद्धितेषु भावकर्मार्थाः ॥

**तेन तुल्यं क्रिया चेद्वतिः** ।५।१।११५। ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । क्रिया चेदिति किम् । गुणतुल्ये मा-भूत् । पुत्रेण तुल्यः स्थूलः । **तत्र तस्येव** ।५।१।११६। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रव-न्मैत्रस्य गावः । **तदर्हम्** ।५।१।११७। विधिमर्हति विधिवत्पूज्यते । क्रियाग्रहणं मण्डूकप्लुत्यानुवर्तते । तेनेह न । राजानमर्हति च्छत्रम् । **तस्य भावस्त्वतलौ** ।५।१।११९। प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता । त्वान्तं क्लीबं, तलन्तं स्त्रियाम् । **आ च त्वात्** ।५।१।१२०। ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थं गुणवचनादिभ्यः कर्मणि विधानार्थं चेदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता । **न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणव-टयुधकतरसलसेभ्यः** ।५।१।१२१। इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा । अपति-त्वम् । अपटुत्वम् । नञ्पूर्वात्किम् । बार्हस्पत्यम् । तत्पुरुषात्किम् । नास्य पटवः सन्तीत्यपटुस्तस्य भाव आपटवम् ।

---

टित्करणेन च प्रयोजनमिति चेत् । अत्राहुः । टकारः कार्यावधारणार्थः । ङीबेव भवति न ञित्स्वर इति । वृद्धिस्तु निपातना-द्भवत्येवेति ॥—**आकाल आदेश** इति ॥ निपात्यत इति शेषः ॥—**आद्यन्तौ यस्येत्यादि** । अस्येत्यधिकारात्षष्ठ्यर्थे इकट् प्रत्ययो निपात्यत इति भाव. ॥—**आकालाट्ठंश्च** । वार्तिकमिदम् ॥ ॥ ठञ. पूर्णोऽवधिः ॥

**तेन तुल्यं क्रिया चेद्वतिः** ॥ तुल्यमिति सामान्ये नपुसकम् । तृतीयान्तात्तुल्यमित्यर्थे वति. स्याद्यत्तुल्यं क्रिया चेत्सा ॥ —**ब्राह्मणेन तुल्यमि**ति । नन्वत्र 'ब्रह्मणो यथा वर्तते तथा क्षत्रियादिकर्तृकाध्ययन वर्तते' इति वाक्यार्थोऽसंगत इति चेत् । अत्राहुः । ब्राह्मणशब्दस्तत्कर्तृकाध्ययने लक्षणया वर्तते 'ब्राह्मणकर्तृकाध्ययनतुल्याध्ययन वाक्यार्थः' इति न कोऽपि दोषः ॥—**गुणतुल्ये** इति । उपलक्षणमिदम् । अक्रियातुल्य इत्यर्थः ॥ एव च 'ब्राह्मणेन सदृशः क्षत्रियः' इत्यर्थे ब्राह्म-णवत् क्षत्रियः' इति प्रयोगोऽसाधुरेव । अत एव 'पर्वतो वह्निमान् महानसवत्' इति वाक्ये 'माहानससदृशः पर्वतः' इत्यर्थे वतेरसाधुत्व मत्वा तस्य वतेः साधुत्वरक्षणार्थं 'पर्वतो वह्निमान् भवितुमर्हति' इत्यादिक्रियापद प्रयुञ्जते वृद्धाः ॥—**तत्र तस्येव** ॥ सप्तम्यन्तात् षष्ठ्यन्ताच्च इवार्थे प्रत्ययः ॥ 'क्रिया चेत्' इति नानुवर्तते इति द्रव्यादितुल्ये वत्प्रत्ययो भवति ॥—**मथुरावत्स्रुघ्ने** इति । मथुराया यादृशः प्राकारः, तेन तुल्य' प्राकारः स्रुघ्ने इत्यर्थः ॥—**तदर्हम्** ॥ अर्हतीत्यर्ह पचाद्यच् ॥ यद्यपि कृद्योगे कर्मणि षष्ठ्या भवितव्यम् । तथापि अत्र सौत्रो विभक्तिव्यत्यय इत्येके ॥ 'कर्तृकर्मणोः–' इति षष्ठ्या अनित्यत्व-ज्ञापकमिदम् । तेन च 'धार्यैरामोदमुत्तमम्' इति भट्टिप्रयोगः सगच्छत इति तु कारकेष्ववोचाम ॥ द्वितीयान्तादेव प्रत्यय इति स्फुटीकर्तु तिङन्तेन विगृह्णाति—**विधिमर्हती**ति ॥ कथ तर्हि 'ततो यथावद्विहिताध्वराय' इति, असत्त्वार्थकस्य कर्मत्वासं-भवेन द्वितीयान्तत्वाभावादिति चेन् । अत्राहुः । यथाशब्दो वृत्तिविषये सत्त्वार्थकः, तथात्वमित्यादिषु त्वतलादिदर्शनात् । अन्यथा षष्ठ्यपि नास्तीति त्वतलौ न स्याताम् । तथा च द्वितीयान्ताद्यथाशब्दादर्हार्थे वतिः । योग्यतामर्हतीति विधानमि-त्यर्थात् क्रियायोगोऽपि सुलभ इति ॥—**तस्य भावस्त्वतलौ** ॥—**प्रकृती**ति । न तु यः कश्चिद्धर्मः, घटत्वमित्यत्र द्रव्यत्वपृथिवीत्वादेरभानात् ॥—**गोर्भाव** इति । इह गोशब्दोऽर्थपरः, शब्दस्वरूपपरो वेति पक्षद्वयम् ॥ यदार्थपरः, तदा धर्मविशेषः प्रत्ययार्थः, स च धर्मत्वेनैव भासते । प्रकृतिजन्येत्यादिस्तु प्रयोगोपाधिः ॥ यदा तु शब्दपरस्तदा तज्जन्यबोध-प्रकारः प्रत्ययार्थः । स च धर्मविशेष एव । पाचकत्वमित्यत्र तु कर्तृत्वरूपसबन्धः प्रकारः । पच्यमानत्वमित्यत्र तु कर्म-त्वरूपसबन्धः । तथा औपगवत्वमित्यत्र जन्यत्वरूपसंबन्धः प्रकार. । राजपुरुषत्वमित्यत्र तु स्वरूपः सबन्धः इत्यादूह्यम् ॥ एवं स्थिते हरिटीकाया यदुक्तं 'कृत्तद्धितसमासेभ्यः सबन्धाभिधान भावप्रत्ययेन' इति । तत्र नापूर्व शक्त्यन्तर कल्प्यम् । उक्तरीत्यैव तत्राप्युपपत्तेरिति सक्षेपः ॥—**अपवादैः सहे**ति ॥ 'पृथ्वादिभ्य इमनिज्वा' इत्यादिभिः ॥—**चकार** इति । अन्यथा त्वतलौ स्त्रीपुसाभ्यां न स्याताम्, अन्यत्र तयोः सावकाशत्वादिति भाव. ॥—**पौंस्नं पुंस्त्वमि**ति । संयोगान्त-लोपे 'पुमः खयि–' इति रुत्वम् । पाक्षिकावनुनासिकानुस्वारौ विसर्गे कृते सत्वम् ॥—**अपतित्वमि**ति ॥ इह 'पत्यन्त–'

---

१ क्रियेति—एतच्च सन्निहितत्वात्समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययार्थस्य विशेषणम्, नतु प्रकृत्यर्थस्य । २ तत्रेति—अत्र तत्रेत्यनेन षष्ठ्यर्थे सप्तम्या एव ग्रहणम्, नत्वधिकरणसप्तम्याः । असामर्थ्यात् । इवशब्दयोगे षष्ठ्यर्थे सप्तम्याश्चेदमेव ज्ञापकमिति भाष्ये स्पष्टम् । ३ प्रकार इति—मुख्यविशेष्यतानिरूपितविषयताश्रय इत्यर्थः । ४ अपवादैरिति—अन्यथापवादविषयेऽस्यानुप-स्थितिः स्यान्निराकाङ्क्षत्वादिति भावः ।

अचतुरेति किम् । आचतुर्यम् । आसङ्गत्यम् । आलवण्यम् । आवश्यम् । आयुष्यम् । आकत्यम् । आरस्यम् । आकस्यम् । **पृथ्वादिभ्य इमनिज्वा** ।५।१।१२२। वावचनमणादिसमावेशार्थम् । **र ऋतो हलादेर्लघोः** ।६।४।१६१। हलादेर्लघोर्ऋकारस्य रः स्यात् इष्ठेमेयस्सु । **टेः** ।६।४।१५५। भस्य टेर्लोपः स्यादिष्ठेमेयस्सु । पृथोर्भावः प्रथिमा । पार्थवम् । म्रदिमा । मार्दवम् । **वर्णदृढादिभ्यः ष्यञ्च** ।५।१।१२३। चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । द्रढिमा । षो ङीष्यर्थः । औचिती । याथाकामी । **गुणवचनब्राह्मणादिभ्यः कर्मणि च** ।५।१।१२४। चाद्भावे । जडस्य कर्म भावो वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् ॥ अर्हतो नुम् च ॥ अर्हतो भावः कर्म वा आर्हन्त्यम् । आर्हन्ती । ब्राह्मणादिराकृतिगणः । **यथातथायथापुरयोः पर्यायेण** ।७।३।३१। नञः परयोरेनयोः पूर्वोत्तरपदयोः पर्यायेणादेरचो वृद्धिर्ञिदादौ । अयथातथाभावः आयथातथ्यम् । अयाथातथ्यम् । आयथापूर्यम् । अयाथापूर्यम् । आ पादसमाप्तेर्भावकर्माधिकारः । * **चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्** ॥ चत्वारो वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । सामीप्यम् । औपम्यम् । त्रैलोक्यमित्यादि । सर्वे वेदाः सर्ववेदास्तानधीते सर्ववेदः । सर्वादेरिति लुक् । स एव सार्ववेद्यः । * **चतुर्वेदस्योभयपदवृद्धिश्च** ॥ चतुरो वेदानधीते चतुर्वेदः सएव चातुर्वैद्यः । चतुर्विद्यस्येति पाठान्तरम् । चतुर्विद्यएव चातुर्वैद्यः । **स्तेनाद्यन्नलोपश्च** ।५।१।१२५। नेति संघातग्रहणम् । स्तेन चौर्ये पचाद्यच् । स्तेनस्य भावः कर्म वा स्तेयम् । स्तेनादिति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि [1]केचिदिच्छन्ति । **सख्युर्यः** ।५।१।१२६। सख्युर्भावः कर्म वा सख्यम् । * **दूतवणिग्भ्यां च** ॥ दूतस्य भावः कर्म वा दूत्यम् । वणिज्यमिति काशिका ॥ माधवस्तु वणिज्याशब्दः स्वभावात् स्त्रीलिङ्गः । भाव एव चायं प्रत्ययो न तु कर्मणीत्याह । भाष्ये तु दूतवणिग्भ्यां चेति नास्त्येव । ब्राह्मणादित्वाद्वाणिज्यमपि । **कपिज्ञात्योर्ढक्** ।५।१।१२७। कापेयम् । ज्ञातेयम् । **पत्यन्तपुरोहितादिभ्यो यक्** ।५।१।१२८। सैनापत्यम् । पौरोहित्यम् । * **राजाऽसे** ॥ राज-

---

ति यग् न भवति ॥—**अपटुत्वमिति** । इह तु 'इगन्ताच्च लघुपूर्वात्' इत्यण् न भवति ॥—**आचतुर्यमित्यादि** ॥ ब्राह्मणादित्वात् ष्यञ् ॥—**पृथ्वादिभ्यः**—॥—**अणादी**ति । इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिष्वण्. समावेशः । चण्डखण्डादिषु गुणवचनेषु ष्यञः । बालवत्सादिषु वयोवचनलक्षणस्याञ इति बोध्यम् । त्वतलौ तु पूर्वसूत्रेणैव लब्धौ ॥—**र ऋतो**—॥ हलादेः किम् । ऋजिष्ठः । ऋजीयान् ॥ लघोः किम् । कृष्णिमा । 'पृथुमृदुभृश–' इति परिगणने तु 'हलादेर्लघोः' इति त्यक्तुं शक्यम् ॥—**वर्णदृढादिभ्यः**—॥ गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम् । 'पृथुमृदुभृश–' इति परिगणनादिह रभावो न भवति । कृतमाचष्टे कृतयति । णाविष्ठवद्भावः ॥—**औचिती**ति । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । 'हलस्तद्धितस्य' इति यलोपः । एवं याथाकामी ॥ दृढ, परिवृढ, भृश, कृश, इत्यादि । अत्र द्वे गणसूत्रे—'**वेः यातलाभमतिमनःशारदानाम्**' । विशब्दादुत्तरे ये यातादयः पञ्च तदन्तानां समासानाम् अनन्तरः ष्यञ् भवतीत्यर्थः । वियातता । वियातिमा । वैयात्यम् । विलाभिमा । वैलाभ्यम् । विमतिमा । वैमत्यम् । इगन्तत्वादणपि । वैमतम् । विमनिमा । वैमनस्यम् । विशारदिमा । वैशारद्यम् । त्वतलोः समावेशेन विलाभत्वम् । विलाभतेत्यादीन्यूह्यानि ॥ '**समो मतिमनसोः**' ॥ समः परे ये मतिमनसी तदन्तयोः समासयोरनन्तरः ष्यञ् भवतीत्यर्थः । संमतित्वम् । समतिमा । सांमत्यम् । इगन्तत्वादणि सांमतम् । समनस्त्वम् । संमनिमा । सांमनस्यम् ॥—**गुणवच**—॥ ष्यञनुवर्तते, कर्म क्रिया कार्यं च । 'शरीरायासमात्रसाध्य शौचादि क्रिया । शास्त्रेण विहितो यागादिः कार्यम्' इति तयोर्भेदमाहुः ॥—**अर्हत** इति । 'अर्ह प्रशसायाम्' इति शत्रन्तोऽर्हच्छब्दः पूजार्थाभिधायीति कैयटः ॥—**आकृतिगण** इति । केषांचित्पाठस्तु कार्यान्तराय । तथा हि 'अर्हतो नुम् च' इति नुमर्थः पाठः ॥ एकभावः, त्रिभावः, अन्यभावः, एषां पाठः स्वार्थे विधानार्थः । तथा च प्रत्याहाराह्निके वार्तिके प्रयोगः—'आन्यभाव्यं तु कालशब्दव्यवायात्' इति । अन्यभाव एव आन्यभाव्यम् । अन्यत्वमित्यर्थः ॥ यत्तु व्याकरणाधिकरणे भट्टपादैरुक्तम् 'आन्यभाव्यमप्रयोगः' इति । तत्त्ववैयाकरणमीमांसकसंतोषार्थमित्यवधेयम् ॥—**सर्ववेद** इति—॥ 'पूर्वकालैक–' इति समासः ॥—**चतुर्वेद** इति । तद्धितार्थे द्विगुः । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् ॥—**चतुर्विद्य** इति । 'विद्यालक्षणसूत्रान्तात्' ठक् । तस्य लुक् ॥—**संघातग्रहणमि**ति ॥ वर्णग्रहणे तु 'यस्येति च' इत्यकारलोपे सतीष्टं न सिध्यति । 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवद्भावादयादेशप्रसङ्गादिति भावः ॥ ननु संघातग्रहणेऽपि 'अलोऽन्त्यस्य' इत्यकारस्यैव लोपः स्यान्न तु संघातग्रहणस्येति चेत् । मैवम् । आरम्भसामर्थ्यात् 'नानर्थकेऽलोऽन्त्यविधिः–' इति निषेधाद्वा तत्सिद्धेः ॥—**कपिज्ञात्योः**—॥ इह कपिज्ञाती द्वौ, भावकर्मणी अर्थावपि द्वौ, तयोर्यथासंख्यं न भवत्यस्वरितत्वप्रतिज्ञानात् । एवं 'पत्यन्तपुरोहितादिभ्यः' 'द्वन्द्वमनोज्ञादिभ्यः' इत्यत्रापि बोध्यम् ॥—

१ केचिदिति—भाष्यानुक्तत्वमरुचिहेतुरिति बोध्यम् ।

शब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा राज्यम् । समासे तु ब्राह्मणादित्वात् ष्यञ् । आधिराज्यम् । **प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।५।१।१२९।** प्राणभृज्जाति, आश्वम् । औष्ट्रम् । वयोवचने, कौमारम् । कैशोरम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । दौष्ठवम् । **हायनान्तयुवादिभ्योऽण् ।५।१।१३०।** द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् । * **श्रोत्रियस्य यलोपश्च ॥** श्रौत्रम् । कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते । कौशल्यम् । कौशलमित्यादि । **इगन्ताच्च लघुपूर्वात् ।५।१।१३१।** शुचेर्भावः कर्म वा शौचम् । मौनम् । कथं काव्यम् । कविशब्दस्य ब्राह्मणादित्वात्ष्यञ् । **योपधाद्गुरूपोत्तमाद्वुञ् ।५।१।१३२।** रामणीयकम् । आभिधानीयकम् । * **सहायाद्वा ॥** साहाय्यम् । साहायकम् । **द्वन्द्वमनोज्ञादिभ्यश्च ।५।१।१३३।** शैष्योपाध्यायिका । मानोज्ञकम् । **गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ।५।१।१३४।** अत्याकारोऽधिक्षेपः । तदवेतस्ते गोत्रचरणयोर्भावकर्मणी प्राप्त अवगतवान्वा । गार्गिकया श्लाघते । गार्ग्यत्वेन विकत्थत इत्यर्थः । गार्गिकयाऽत्याकुरुते । गार्गिकामवेतः । काठकेन श्लाघते । **होत्राभ्यश्छः ।५।१।१३५।** होत्राशब्द ऋत्विग्वाची स्त्रीलिङ्गः । बहुवचनाद्विशेषग्रहणम् । अच्छावाकस्य भावः कर्म वा अच्छावाकीयम् । मैत्रावरुणीयम् । **ब्रह्मणस्त्वः ।५।१।१३६।** होत्रावाचिनो ब्रह्मशब्दात्त्वः स्यात् । छस्यापवादः ।

---

**ब्राह्मणादित्वादि**ति ॥ यद्यपि ब्राह्मणादिषु राजन्शब्दः केवलः पठितः । तथाप्ययमेव 'असे' इति प्रतिषेधो ज्ञापयति 'अस्त्यत्रप्रकरणे राजन्शब्देन तदन्तविधिः' इति । एव च ब्राह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति ॥ अन्ये तु ब्राह्मणादेराकृतिगणत्वादेव तदन्तात् कथञ्चित्ष्यञि सिद्धे राजन्शब्दस्य तत्र पाठो यका सह समावेशार्थ इति । तथा चावेष्ट्यधिकरणे शाबरभाष्ये उक्त—'राज्ञः कर्म राज्य ब्राह्मणादित्वात् ष्यञिति' ॥ पुरोहित संग्रामिक पथिक सारथिकेत्यादयः ॥—**प्राणभृज्जाति**—॥ मुखनासासञ्चारी वायुः प्राण. । 'प्राणिजाति–' इत्येव सुवचम् ॥ प्राणभृदिति किम् । तृणत्वम् । तृणता ॥ जातीति किम् । देवदत्तत्वम् ॥—**औद्गात्रमि**ति । उद्गात्रादिषु ये ऋत्विग्वचनास्तेभ्यो 'होत्राभ्यश्छः' इति छे प्राप्ते अञ् विधीयते । सुष्टु दुष्टु द्वाभ्यां गुणलक्षणे ष्यञि प्राप्ते, वधूशब्दादिगन्तलक्षणेऽणि, शेषेभ्यस्त्वतलोः प्राप्तयो ॥ इह तु **'सुभगं मन्त्रे'** पठ्यते । सुभगमित्येतच्छब्दरूप मन्त्रविषये प्रयोगे अञमुत्पादयतीत्यर्थः । 'महते सौभगाय' । सर्वविधीना छन्दसि विकल्पितत्वादिह 'हृद्भगसिन्ध्वन्ते' इत्युत्तरपदवृद्धिर्न भवति । अत एव मन्त्रेऽपि क्वचिदञ् न भवति । 'सौभाग्यमस्यै दत्त्वा' इह ष्यञ ॥—**हायनान्त**—॥ अस्मात्त्वतलोः प्राप्तयोरण्विधानम् । युवस्थविरशब्दाभ्या वयोवचनलक्षणे अञि प्राप्ते ॥—**यौवनमि**ति । अणि परतः 'अन्' इति प्रकृतिभावः ॥ मनोज्ञादिपाठाद्वुञपि । यौवनकम् । 'प्रकृत्याके राजन्यमनुष्ययुवान' इति प्रकृतिभाव ॥—**श्रोत्रियस्ये**ति । 'श्रोत्रियश्छन्दोऽधीते' इत्यत्र छन्दसः श्रोत्रभावः घश्च प्रत्यय इति यदा व्याख्यान, तदेह 'घलोपः' इति यथाश्रुतम् ॥ यदा तु 'वाक्यार्थे पदवचनम्' इति पक्षः, तदा घशब्देन इय इति रूपं लक्ष्यते ॥ क्वचित्तु 'यलोपश्च' इति पाठः, तत्र येति सघातग्रहण व्याख्येयम् । वर्णग्रहणे त्विकारस्य यणादेशः स्यान्न तु 'यस्येति च' इति लोपः । अकारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भत्वाभावात् । एतच्च हरदत्तग्रन्थे स्पष्टम् ॥ मूलपुस्तकेषु 'यलोप.' इति मुख्यपाठ एव प्रायेण दृश्यते, न तु घलोप इति पाठ.॥ **इगन्ताच्च**—॥ लघुः पूर्वोऽवयवो यस्येति प्रातिपदिकविशेषणम् । पूर्वत्व च संनिधानादिगवधिकमेव । तेनातिपाण्डुशब्दान्न भवति ॥ 'लघुपूर्वकः' इत्येव सुवचम् । लघुपूर्वश्चासौ इक् च लघुपूर्वेक् तस्य प्रातिपदिकविशेषणात्तदन्तलाभ इति नव्याः ॥ इगन्तात्किम् । घटत्वम् ॥ लघुपूर्वात्किम् । पाण्डुत्वम् ॥—**कथं काव्यमि**ति ॥ कुधातोः 'ओरावश्यके' इति रूपसिद्धावपि कवेः कर्मत्यर्थे काव्यमिति स्यादिति प्रश्नः ॥—**योपधात्**—॥ गुरु उपोत्तमं यस्य प्रातिपदिकस्य तस्मादित्यर्थः ॥ योपधात्किम् । विमानत्वम् ॥ गुरूपोत्तमादिति किम् । क्षत्रियत्वम् ॥ —**आभिधानीयकमि**ति ॥ अत्र प्रकृतिरभेः पराऽनीयर्प्रत्ययान्तो दधातिः । अभिधेयस्य भाव कर्म वेत्यर्थः ॥ —**सहायाद्वे**ति ॥ सूत्रेण नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ **द्वन्द्वमनोज्ञादिभ्यश्च** ॥ मनोज्ञ प्रियरूप बहुल अवश्येत्यादिर्मनोज्ञादिः ॥—**गोत्रचरणात्**—॥ गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्वुञ् स्याद्भावकर्मणोः ॥ अपत्याधिकारादन्यत्र लौकिक गोत्रम् । तेनापत्यप्रत्ययान्तेभ्य इत्यर्थः ॥ प्रवराध्याये ये पठितास्तेभ्य इत्यपरे ॥ 'गोत्रं च चरणैः सह' इति जातित्वात् 'प्राणभृज्जाति–' इत्यादिना अञि प्राप्ते वचनम् ॥—**श्लाघेत्यादि** । श्लाघादिषु विषयभूतेष्वित्यर्थः ॥—**प्राप्त** इति । इणः प्राप्त्यर्थत्वात् । अवपूर्वस्येणो ज्ञाने प्रसिद्धत्वादाह—**अवगतवान्वे**ति ॥—**गार्गिकये**ति । 'आपत्यस्य–' इति यलोपः ॥ चरणाद्वुञ उदाहरण तु काठिकया श्लाघते इत्यादि बोध्यम् ॥ श्लाघादिष्विति किम् । गार्ग्यत्वम् । कठत्वम् ॥—**होत्राशब्द** इति—॥ जुहोतेस्त्रन् ॥—**नेति वाच्ये** इति । छप्रत्यये निषिद्धे 'तस्य भावस्त्वतलौ'

ब्रह्मत्वम्। नेति वाच्ये त्ववचनं तलो बाधनार्थम्। ब्राह्मणपर्यायाद्ब्रह्मन्शब्दात्तु त्वतलौ। ब्रह्मत्वम्। ब्रह्मता॥
नञ्स्नञोरधिकारः समाप्तः॥

---

## तद्धितेषु पाञ्चमिकाः॥

**धान्यानां भवने क्षेत्रे खञ्** ।५।२।१। भवन्त्यस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्। **व्रीहिशाल्योर्ढक्** ।५।२।२। व्रैहेयम्। शालेयम्। **यवयवकषष्टिकाद्यत्** ।५।२।३। यवानां भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम्। **विभाषा तिलमाषोमाभङ्गाणुभ्यः** ।५।२।४। यत् वा स्यात् पक्षे खञ्। तिल्यम्। तैलीनम्। माष्यम्। माषीणम्। उम्यम्। औमीनम्। भङ्ग्यम्। भाङ्गीनम्। अणव्यम्। आणवीनम्। **सर्वचर्मणः कृतः खखञौ** ।५।२।५। असामर्थ्येऽपि[1] निपातनात्समासः। सर्वश्चर्मणा कृतः सर्वचर्मीणः। सार्वचर्मीणः। **यथामुखसंमुखस्य दर्शनः खः** ।५।२।६। मुखस्य सदृशं यथामुखं प्रतिबिम्बम्। निपातनात्साद्दृश्येऽव्ययीभावः। समं सर्वं मुखं संमुखम्। समशब्दस्यान्तलोपो निपात्यते। यथामुखं दर्शनो यथामुखीनः। सर्वस्य मुखस्य दर्शनः संमुखीनः। **तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति** ।५।२।७। सर्वादेः पथ्याद्यन्ताद्[2] द्वितीयान्तात्खः स्यात्। सर्वपथान् व्याप्नोति सर्वपथीनः। सर्वाङ्गीणः। सर्वकर्मीणः। सर्वपत्रीणः। सर्वपात्रीणः। **आप्रपदं प्राप्नोति** ।५।२।८। पादस्याग्रं प्रपदं तन्मर्यादीकृत्य आप्रपदम्। आप्रपदीनः पटः। **अनुपदसर्वा-**

---

इत्यनेनैव त्वप्रत्ययः सिध्यति। विभक्तेरनुच्चारणाल्लाघव च भवतीति भाव॥ 'होत्राभ्यः' इत्यनुवृत्तेः फलं दर्शयति—**ब्राह्मणपर्यायादि**ति॥ इति भावकर्मार्थकाः॥ नञ्स्नञोरधिकारः समाप्तः॥

**धान्यानाम्**—॥ 'धिवि प्रीणने' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति कर्तरि ण्यत्। अस्मादेव निपातनादन्त्यस्य लोप इकारस्य चात्वम्। धिनोतीति धान्यम्। मन्त्रश्च 'धान्यमसि धिनुहि देवान्' इति दृश्यते॥ धान्यानामिति भवनापेक्षया कर्तरि षष्ठी। सा च निर्देशादेव समर्थविभक्तिः। बहुवचन तु स्वरूपविधिनिरासार्थम्। अलौकिके प्रक्रियावाक्ये तु षष्ठ्यन्तत्वानुवादेन तद्धितविधिसामर्थ्यादेवेति बोध्यम्॥ भवतिरिहोत्पत्तिवचनः क्षेत्रग्रहणसामर्थ्यात्। सूत्रे हि सत्तावचनस्यापि भवतेर्ग्रहणं मा भूदिति क्षेत्रग्रहणं कृतम्। अन्यथा 'धान्यानां भवनं कुसूलः' इत्यत्रापि स्यादिति॥ धान्यानां किम्। तृणानां भवनं क्षेत्रम्॥—**व्रीहिशाल्योः**—॥ अत्रापि निर्देशादेव षष्ठी समर्थविभक्तिः। सा च भवनापेक्षया कर्तरीत्यादिपूर्ववत्॥—**यवयवक**—॥ अत्र प्रत्ययार्थसामर्थ्याल्लभ्या षष्ठी समर्थविभक्तिः॥—**विभाषा**—॥ खञि नित्ये प्राप्ते वचनम्॥—**औमीनं भाङ्गीनमि**ति। ननूमाभङ्गयोर्धान्यत्वाभानात्कथमिह खञ्। 'व्रीहयश्च मे यवाश्च मे' इति चमकानुवाके हि द्वादशैव धान्यानि पठितानि, न तूमाभङ्गौ पठितौ इति चेत्॥ मैवम्। 'शणसप्तदशानि धान्यानि' इति स्मरणात्। तत्र चोमाभङ्गयोरपि पाठाद्धान्यत्वमस्तीति भाष्यादौ स्थितत्वात्। न च चमकानुवाके धान्यपरिगणनेनार्थः, तत्राधान्यानामप्यश्मादीनां पाठात्। धान्यानामपि केषांचित् कोद्रवादीनामपाठात्। तस्मादन्यत एव धान्यनिर्णय इति पूर्वोक्तस्मृत्या तयोर्धान्यत्वमस्तीति ज्ञेयम्॥—**सर्वचर्मणः**—॥ 'खश्च' इत्येव तु नोक्तम्। यतोऽप्यनुकर्षः संभाव्येतेति॥ अत्र तृतीया समर्थविभक्तिः। कृत इति प्रत्ययार्थे चर्मणः करणत्वस्योचितत्वात्॥—**सर्वश्चर्मणे**ति। सर्वेण चर्मणा कृत इत्यर्थे तद्धितो नेष्यत इति भावः॥—**यथामुख**—॥ दृश्यतेऽस्मिन् दर्शनः। अधिकरणे ल्युट्। 'असादृश्ये' इति प्रतिषेधात्सादृश्ये यथाशब्दस्य कथं समासस्तत्राह—**निपातनादि**ति। एतच्च वृत्तिग्रन्थमनुसृत्योक्तम्। भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः। तथा च मायामृग प्रक्रम्योक्तम्—'यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्' इति॥—'**यथामुखं दर्शन** इति। अव्ययीभावस्यापि यथामुखशब्दस्योन्मत्तगङ्गादिवत्सत्त्ववचनत्वात्कर्मशक्तियोगे सति कृद्योगलक्षणा षष्ठी तस्याः 'नाव्ययीभावात्' इत्यमादेशः॥—**सर्वस्य मुखस्ये**ति। 'संमुखस्य' इति नोक्तम्। प्रत्ययसंनियोगेनैव समशब्दस्यान्त्यलोपनिपातनात्। सशब्दस्तु समशब्दार्थे न दृश्यते 'समुखो भव' इत्यत्र 'अभिमुखः' इत्यर्थप्रतीतेः। तत्र च खप्रत्ययस्याजनिष्यमाणत्वात्॥ कथ तर्हि—'संयुगे संमुखीनं तमुद्यदं प्रसहेत कः' इति भट्टिः। अभिमुखावस्थानात्सामर्थ्याद्भविष्यतीति हरदत्तः॥—**तत्सर्वादेः**—॥ तदिति द्वितीया समर्थविभक्तिः। व्याप्नोतीति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। तत्र केवलानां पथ्यादीनां सर्वादित्वासभवात्प्रातिपदिकैरपि तैस्तदन्तविधिः। तदाह—**पथ्याद्यन्तादि**ति। पथ्यङ्गकर्मपत्रपात्रान्तात्प्रातिपदिकादित्यर्थः॥—**सर्वपथीन** इति। 'पूर्वकालैक—' इति समासः। 'ऋक्पूः—' इति समासान्तः। तस्य पथ्यन्तसमासग्रहणेन ग्रहणाद्भवति खप्रत्ययः॥—**अनुपदसर्वान्नायानयम्**—॥ बद्धाभक्षयतीत्यत्र

---

१ असामर्थ्येऽपीति—सर्वशब्दस्य कृत इत्यनेनान्वयादुत्तरपदार्थे अन्वयाभावादसामर्थ्यमिति भावः। २ पथ्याद्यन्तादिति—पत्रपात्रमिति पञ्चम्यर्थे प्रथमेति भावः।

**आयानयं बद्धाभक्षयतिनेयेषु ।५।२।९।** अनुरायामे सादृश्ये च। अनुपदं बद्धा अनुपदीना उपानत्। सर्वाण्यन्नानि भक्षयति सर्वान्नीनो भिक्षुः। आयानयः स्थलविशेषः। तं नेय आयानयीनः शारः। **परोवरपरम्परपुत्रपौत्रमनुभवति ।५।२।१०।** परांश्चावरांश्चानुभवतीति परोवरीणः। अवरस्योत्वं निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। प्रकृतेः परम्परभावो निपात्यते। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। परम्पराशब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गं तस्मादेव स्वार्थे ष्यञि पारम्पर्यम्। कथं पारोवर्यवदिति। असाधुरेवायम्। खप्रत्ययसंनियोगेनैव परोवरेति निपातनात्। **अवारपारात्यन्तानुकामं गामी ।५।२।११।** अवारपारं गामी अवारपारीणः। अवारीणः। पारीणः। पारावारीणः। अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः। अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः। **समांसमां विजायते ।५।२।१२।** यलोपोऽवशिष्टविभक्तेरलुक् च पूर्वपदे निपात्यते। समांसमीना गौः। समांसमीना सा यैव प्रतिवर्षं प्रसूयते। * **खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः॥** समांसमां विजायते। समायां समायां वा। **अद्यश्वीनावष्टब्धे ।५।२।१३।** अद्य श्वो वा विजायते अद्यश्वीना वडवा। आसन्नप्रसवेत्यर्थः। केचित्तु विजायत इति नानुवर्तयन्ति। अद्यश्वीनं मरणम्। आसन्नमित्यर्थः। **आगवीनः ।५।२।१४।** आङ्पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते। गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति स आगवीनः। **अनुग्वलंगामी ।५।२।१५।** अनुगु गोः पश्चात्पर्याप्तं गच्छति अनुगवीनो गोपालः। **अध्व-**

---

निपातनात्तिङन्तेन सह द्वन्द्वः॥ द्वितीयान्तेभ्योऽनुपदादिभ्यो यथासङ्ख्यं बद्धादिष्वर्थेषु ख स्यात्॥—**अनुरायाम** इत्यादि। 'यस्य चायामः' इति 'यथार्थेऽव्ययम्' इति वा अव्ययीभाव इत्यर्थः॥—**सर्वान्नीन** इति। प्रकारकार्त्स्न्ये सर्वशब्दः। यान्यन्नानि लभ्यन्ते उष्णानि शीतलानि सरसानि नीरसानि वा सर्वाणि भक्षयतीत्यर्थः॥ 'अयः प्रदक्षिणगमनम्। अनयः प्रसव्यगमनम्। प्रदक्षिणप्रसव्यगामिना शाराणां यस्मिन्परैरसमावेशः सोऽयमयानयः' इति काशिका॥—**तं नेय** इति। नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि द्वितीया॥—**अयानयीनः शार** इति। 'फलकशिरसि स्थित इत्यर्थः' इति काशिका॥—**अवरस्येति**॥ आदेरिति शेषः॥ उत्वे कृते 'आद्गुणः'॥ केचित्तु ओत्वं परशब्दस्य निपात्यते तस्मात्परस्यातः 'एङः पदान्तादति' इति पूर्वरूपादेश इति पक्षान्तरमाहुः॥—**अवारपार**—॥—**गामी**ति। 'गमेरिनिः, आङि णिच्च' इति बहुलवचनात्केवलादपि णिनि। 'भविष्यति गम्यादयः' इति भविष्यत्कालता॥ न्यासकारस्तु 'आवश्यके णिनिः, सोऽपि भविष्यत्येव' इत्याह॥—**अवारपारमि**ति। 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधः॥ केचित्तु 'गत्यर्थकर्मणि—' इति सूत्रे द्वितीयाग्रहणमपवादविषये विधानार्थम्। तेन कृद्योगषष्ठी न भवति 'ग्रामं गन्ता' इतिवदिति व्याचख्युः। तदसत्। 'अकेनोः—' इति प्रतिषेधे षष्ठीप्रसङ्गस्यैवाभावात्॥—**अवारीण** इत्यादि। 'विगृहीतादपि परीतादपीष्यते' इति भावः॥—**अत्यन्तमि**ति। क्रियाविशेषणम्॥—**अनुकाममि**ति। काम इच्छा तस्य सदृशमनुकामम्। कामानुरूपमित्यर्थः। 'अव्ययं विभक्ति—' इति यथार्थेऽव्ययीभाव॥—**समांसमाम्**—॥—**यलोप** इति। 'समायाम्' इत्यत्र यकारलोप इत्यर्थः॥—**पूर्वपदे निपात्यत** इति। अन्यथा तद्धिते उत्पन्ने यथोत्तरपदे सुपो लुग् भवति 'सुपो धातुप्रातिपदिकयोः' इति तथा पूर्वपदेऽपि स्यादिति भाव.॥—**समांसमीने**ति। वीप्सायां द्विर्वचनम्। सुबन्तसमुदायः प्रकृतिः॥ विजायते इत्येतद्व्याचष्टे—**प्रसूयत** इति। विपर्वको जनिर्गर्भविमोचने वर्तत इति भावः। गर्भविमोचने कृत्स्नायाः समाया व्याप्त्यभावात् 'अत्यन्तसयोगे च' इति द्वितीया न भवतीत्याशयेनाह—**समायामि**त्यादि॥—**खप्रत्ययानुत्पत्ता**विति॥ पदद्वयेऽपीति शेषः॥ वार्तिकेन समांसमामिति मन्त्रप्रयोगस्तूपपन्न इति भावः॥—**अद्यश्वीना**—॥ अविभक्तिको निर्देशः, न तु स्त्रीलिङ्गनिर्देशोऽयम्। अद्यश्वीनो गोसमूहः। अद्यश्वीन गोमण्डलमित्यादावपीष्टत्वात्॥—**अद्य श्वो वे**ति। निपातनाद् वार्थे समासोऽयमिति भावः॥ 'अवाच्चालम्बना—' इति सूत्रेण आविदूर्ये स्तम्भेः षत्वविधानादवष्टब्धशब्द आसन्नपरः॥ 'विजायते' इति हि वर्तते। स च गर्भविमोचनार्थकस्तदाह—**आसन्नप्रसवेत्यर्थ** इति॥—**कर्मकर** इति॥ यस्तु प्रातः गां गृहीत्वा गच्छति गोपालस्तस्मिन्नित्यर्थः॥—**गोःप्रत्यर्पणपर्यन्तमि**ति। गोशब्दो लक्षणया गोः प्रतिदाने वर्तत इति भावः॥—**आगवीन** इति। 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावे 'गोस्त्रियोः—' इति ह्रस्वे कृते खप्रत्ययः। 'ओर्गुणः'॥—**अनुग्व**—॥ ख इत्यनुवर्तते। अनुगुशब्दात् 'अलंगामी' इत्यस्मिन्नर्थे खः स्यात्॥—**गोः पश्चा**दिति। पश्चादर्थेऽव्ययीभावः॥—**पर्याप्तमि**ति। क्रियाविशेषणम्॥ अत्र हरदत्त.। अनुगवित्यस्य क्रियाविशेषणत्वाद् द्वितीयान्तादिह प्रत्ययः। न चालंगामीत्यस्य 'सुप्यजातौ' इति णिनिप्रत्ययान्ततया कृद्योगलक्षणा षष्ठी स्यादिति वाच्यम्। क्रियाविशेषणादतत्प्रवृत्तेः शोभनं पाचक इत्यादौ तथादर्शनादित्याह॥ अत्र केचित् धातूपात्तव्यापारजन्यफलाश्रयत्वं यत्र तन्मुख्यं कर्म, यत्र तु व्यापारजन्यत्वमात्रं तदौपचारिकम्। ततश्च तण्डुलानां पाचक इत्यत्र मुख्ये कर्मणि कृद्यो-

खप्रत्ययानुत्पत्ताविति—पदद्वयेऽपीति शेषः। सूत्रे उभयत्रापि तथोच्चारणात्। विकल्पस्तु वाचनिक एव।

**नो यत्खौ** ।५।२।१६। अध्वानमलं गच्छति अध्वन्यः । अध्वनीनः । ये चाभावकर्मणोः । आत्माध्वानौ खे इति सूत्राभ्यां प्रकृतिभावः । **अभ्यमित्राच्छ च** ।५।२।१७। चाद्यत्खौ । अभ्यमित्रीयः अभ्यमित्र्यः । अभ्यमित्रीणः अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः । **गोष्ठात्खञ् भूतपूर्वे** ।५।२।१८। गोष्ठो भूतपूर्वः गौष्ठीनो देशः । **अश्वस्यैकाहगमः** ।५।२।१९। एकाहेन गम्यते इत्येकाहगमः । आश्वीनोऽध्वा । **शालीनकौपीने अधृष्टाकार्ययोः** ।५।२।२०। शालाप्रवेशमर्हति शालीनः अधृष्टः । कूपपतनमर्हति कौपीनं पापम् । तत्साधनत्वात्तद्वद्गोप्यत्वाद्वा पुरुषलिङ्गमपि । तत्संबन्धात्तदाच्छादनमपि । **व्रातेन जीवति** ।५।२।२१। व्रातेन शरीरायासेन जीवति नतु बुद्धिवैभवेन स व्रातीनः । **सात्पदीनं सख्यम्** ।५।२।२२। सप्तभिः पदैरवाप्यते साप्तपदीनम् । **हैयङ्गवीनं संज्ञायाम्** ।५।२।२३। ह्योगोदोहस्य हियङ्गुरादेशः विकारार्थे खञ् च निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतम् । **तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ** ।५।२।२४। पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् । **पक्षात्तिः** ।५।२।२५। मूलग्रहणमात्रमनुवर्तते । पक्षस्य मूलं पक्षतिः । **तेन वित्तश्चुञ्चुप्चणपौ** ।५।२।२६। चकारः प्रत्ययोरादौ लुप्तनिर्दिष्टस्तेन चस्य नेत्संज्ञा । विद्यया वित्तो विद्याचुञ्चुः । विद्याचणः । **विनञ्भ्यां नानाञौ नसह** ।५।२।२७। असहार्थे पृथग्भावे वर्तमा-

---

गलक्षणा षष्ठी भवति । मृदुपाचकः शोभन पाचक इत्यत्र तु सा न भवति । फलव्यापारयोः क्रियाकर्मभावव्यवहारे सत्यपि फलस्यौपचारिककर्मत्वात्, तद्विशेषत्वाच्च मृद्वादेरिति तस्याशय इत्याहु ॥ अन्ये त्वेवं तर्हि तुल्यन्यायेन क्रियाविशेषणाद् द्वितीयाया अप्यप्रवृत्तिः स्यात् । तस्मात्, 'तदर्हम्' इति निर्देशादनित्या कृद्योगषष्ठीति क्रियाविशेषणात्सा न स्वीक्रियत इति हरदत्ताशयः कथंचिद्वर्णनीय इत्याहुः ॥ वस्तुतस्तु पश्चादर्थेऽव्ययीभावोऽयमिति निर्विवादम् ॥ पश्चादिति चास्तात्यर्थे निपातितम् । तच्च यद्यपि विभक्तित्रयसाधारणम् । तथापीह योग्यताबलात्सप्तम्यर्थवृत्तिः । अतस्तस्य कर्मत्वायोगात्प्रथमान्तादेवेह प्रत्यय इति वक्तुमुचितम् । कृद्योगलक्षणषष्ठीशङ्काप्यत एव नेति बोध्यम् ॥—**अभ्यमित्रात्**—॥ अभ्यमित्रशब्दो 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । क्रियाविशेषणत्वाद्द्वितीया समर्थविभक्तिः ॥—**गोष्ठात्खञ्** ॥ गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः । 'घमर्थे कविधानम्' इत्यधिकरणे कः । 'अम्बाम्बगोभूमि-' इति षत्वम्, पूर्व भूतो भूतपूर्वः 'सुप्सुपा' इति समासः ॥—**अश्वस्य**—॥ कर्तरि षष्ठीयं निर्देशादेव समर्थविभक्तिः ॥—**एकाहगम** इति । 'कर्तृकरणे कृता' इति । समासः ॥ नन्विह 'ग्रहवृदृनिश्चिगमश्च' इत्यप् बाधित्वा 'परिमाणाख्यायां सर्वेभ्यः' इति घञ् प्राप्नोति, अस्ति चात्र परिमाणाख्या 'एकाहेन गम्यते' इति परिच्छेदावगमाद् ॥ अत्राहुः । अस्मादेव निपातनादब् द्रष्टव्य इति ॥ —**शालीनकौपीने**—॥ इमौ खप्रत्ययान्तत्वेन निपात्येते । रूढिशब्दावेतौ कथंचिद्व्युत्पाद्याविति नात्रावयवार्थेऽभिनिवेशः कार्यः ॥—**शालाप्रवेशम**िति । अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः ॥—**कूपपतनम**िति । यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः ॥—**तदाच्छादनम**िति । वास.खण्ड इत्यर्थः ॥ अन्ये त्वाहुः अकार्यशब्दे यः करोति स क्रियासामान्यवचनः, तेन लज्जाहेतुत्वेन अद्रष्टव्यत्वात्पुरुषलिङ्ग कौपीनम् । अस्पृश्यत्वात्तदाच्छादनमिति ॥—**शरीरायासेने**ति ॥ भारवहनादिनेत्यर्थः । यद्यपि व्रातशब्दो लोके संघातवचनः, तथाप्यत्रत्यभाष्यादिग्रन्थपर्यालोचनया अयमेवार्थ इहोचित इति भावः ॥—**साप्तपदीनम्**—॥ योग्यतया समर्थविभक्तिस्तृतीयेति दर्शयति—**सप्तभिः पदै**रिति । पदमिह सभाषणं पादविक्षेपो वा । तद्धितार्थे द्विगुः । अवाप्यत इत्यर्थे खञ् ॥—**हैयंगवीनम्**—॥—**ह्योगोदोहस्ये**ति । गोदोहो गोदोहः षष्ठीसमासः तेन सह ह्यस्शब्दस्य 'सुप्सुपा' इति समासः । ततो विकारे अनुदात्तलक्षणस्याञोऽपवादः खञ् । अत्र ह्यःशब्देन कालप्रत्यासत्तिर्विवक्षिता ॥—**नवनीतम**िति । यद्यपि वृत्तौ घृतमित्युक्तं तथैव चामरेणापि—'तत्तु हैयंगवीन यद् ह्योगोदोहोद्भव घृतम्' इत्युक्तम् । तथापि घृतशब्देन नवनीतमेव विवक्षितमिति हरदत्तग्रन्थानुरोधेनेदमुक्तम् ॥—**तस्य पाक**—॥ पाकः परिणामः । मूलमुपक्रमः । 'तस्येदम्' इत्यणादिषु प्रासेष्वयमारम्भः । जाहचो जकारस्य प्रयोजनाभावान्नेत्वम् । पीलु कर्कन्धु शमी करीर कुवल बदर अश्वत्थ खदिर पील्वादिः ॥ कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ कर्णादिः ॥—**मूलग्रहणमात्रम**िति ॥ एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः ॥—**पक्षतिरि**ति । प्रतिपत् पक्षिणां पक्षमूलं च ॥—**तेन**—॥ वित्तः प्रतीतः । 'वित्तो भोगप्रत्यययोः' इति निपातनात् 'रदाभ्यां निष्ठातो नः' इति नत्वं न ॥—**लुप्तनिर्दिष्ट** इति । 'चुटुशाः प्रत्ययस्य' इति वक्तव्ये पृथग्योगकरणात् 'चुटू' इत्येतदनित्यमिति समाधानान्तरमप्याहुः ॥—**नानाञावि**ति ॥ नाञो ञकारो वृद्ध्यर्थः स्वरार्थश्च । 'न सह' इति प्रकृतिविशेषणं, न प्रत्ययार्थ इत्याशयेनाह—**असहार्थ** इत्यादि । यदि प्रत्ययार्थः स्यात्ततो 'द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः' इति सहार्थो गम्येत 'न न सह' अपि तु सहैवेति । तस्मात्प्रकृतिविशेषणम् ।

---

१ गोष्ठादिति—अत्र केचित् 'यद्यपि भूतपूर्वे चरट्, षष्ठ्या रूप्य चेत्यत्रैव पठित्वा, 'गोष्ठ (५-३)' इत्येव सूत्रयितुं युक्तम तथापि तयोरन्यत्र पाठसामर्थ्येन विशेषविहितेनापि खञा चरटो बाधो न भवति' इत्याहुः ।

नाम्बां स्वार्थे प्रत्ययौ । विना । नाना । **वेः शालच्छङ्कटचौ** ।५।२।२८। क्रियाविशिष्टसाधनवाचकात्स्वार्थे । विस्तृतम् विशालम् । विशङ्कटम् । **संप्रोदश्च कटच्** ।५।२।२९। सङ्कटम् । प्रकटम् । उत्कटम् । वाङ्किटम् । *** अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्** ॥ अलाबूनां रजः, अलाबूकटम् । *** गोष्ठजादयः स्थानादिषु पशुनामभ्यः** । गवां स्थानं गोगोष्ठम् ॥ *** संघाते कटच्** ॥ अवीनां सङ्घातोऽविकटः । *** विस्तारे पटच्** । अविपटः । *** द्वित्वे गोयुगच्** । द्वावुष्ट्रौ उष्ट्रगोयुगम् । *** षट्त्वे षङ्गवच्** । अश्वषङ्गवम् । *** स्नेहे तैलच्** । तिलतैलम् । सर्षपतैलम् । *** भवने क्षेत्रे शाकटशाकिनौ** । इक्षुशाकटम् । इक्षुशाकिनम् । **अवात्कुटारच्च** ।५।२।३०। चात्कटच् । अवाचीनोऽवकुटारः । अवकटः । **नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः** ।५।२।३१। अवादित्येव । नतं नमनम् । नासिकाया नतं अवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिका अवटीटा । पुरुषोऽप्यवटीटः । **नेर्बिडज्बिरीसचौ** ।५।२।३२। निबिडम् । निबिरीसम् । **इनच् पिटच्चिक चि च** ।५।२।३३। नेरित्येव । नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेश्चिक चि इत्यादेशौ च । *** कप्रत्ययचिकादेशौ च वक्तव्यौ** । चिकिनम् । चिपिटम् । चिक्कम् । *** क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषी** । क्लिन्ने चक्षुषी अस्य चिल्लः । पिल्लः । *** चुल् च** । चुल्लः । **उपाधिभ्यां त्यकन्नासन्नारूढयोः** ।५।२।३४। संज्ञायामित्यनुवर्तते । पर्वतस्यासन्नं स्थलमुपत्यका । आरूढं स्थलमधित्यका । **कर्मणि**

---

एतच्च व्याख्यानाल्लभ्यते ॥ यद्येव सहेत्येव प्रत्यययोस्तु, विनञोः प्रतिषेधार्थत्वादिष्टसिद्धेः 'विगर्दभरथकः' इत्यादौ विशब्दस्यापि प्रतिषेधवृत्तिर्दृष्टैवेति । सत्यम् । क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत । विगतेन सह विकृतेन सहेति । तस्माद्यथोक्तमेव न्याय्यम् । एतच्च हरदत्तग्रन्थे स्पष्टम् ॥—**स्वार्थ** इति । अनिर्दिष्टार्थत्वादिति भावः ॥—**संप्रोदश्च**—॥ क्रियाविशिष्टसाधनवाचकात्स्वार्थे प्रत्ययः । सकट सहतम्, सबाध इत्यर्थ. । प्रकट प्रज्ञातम्, प्रकाशत इत्यर्थः । उत्कटम् उद्भूत, विकट विकृतं, रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते ॥—**अलाबूतिले**त्यादि । एभ्यः पञ्चभ्यो रजस्यभिधेये कटच् प्रत्ययो भवति । रजसो विकारत्वाद्विकारे प्रत्ययानामपवादोऽयम् ॥—**अलाबूकटमि**ति ॥ 'ओरञ्' 'मयड्वैतयोः' इति मयड्वेह प्राप्तः ॥—**तिलकटमि**ति । 'असञ्ज्ञाया तिलयवाभ्याम्' इति मयड् प्राप्तः ॥ उमाशब्दाद् घृतादित्वादन्तोदात्तात् 'अनुदात्तादेश्च—' इत्यञ्, 'उमोर्णयोर्वा' इति वुञ्च प्राप्तः ॥ भङ्गाशब्दात् 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तत्वादण्मयड्वा प्राप्त इत्येव यथासभव प्रत्ययप्राप्तिरूह्या ॥ हरदत्तस्तु तिलशब्दस्य घृतादित्वादन्तोदात्तत्वमङ्गीकृत्य ततः 'अनुदात्तादेश्चाम्' इत्यञ्, 'असञ्ज्ञाया तिलयवाभ्यम्' इति मयड्वा प्राप्त इत्याह तत्र तिलशब्दस्य घृतादित्वकल्पने बीज चिन्त्यम् ॥ 'तृणधान्याना च द्व्यषाम्' इति फिट्सूत्रेणाद्युदात्तस्यैव न्याय्यत्वात् । 'तिलाश्च मे' इत्यत्र तथैव वेदे पाठाच्च ॥—**गोष्ठजादय** इति । 'सघाते कटच्' इत्यादीन्यस्यैव प्रपञ्चः । इहोभयत्रादिशब्दः प्रकारे ॥—**पशुनामभ्य** इति । 'पशुनामादिभ्य.' इति भाष्ये प्रचुरः पाठः ॥—**गवां स्थानमि**ति । 'तस्येदम्' इत्यत्रार्थे 'सर्वत्र गोरजादिप्रसङ्गे' इति यति प्राप्ते गोष्ठच् ॥—**संघात** इति । अप्रसृतावयव. समूहः सघातः । प्रसृतावयवस्तु विस्तारः । कटच्पटचौ द्वावपि सामूहिकानामपवादौ ॥—**द्वित्वे** इति । प्रकृत्यर्थस्य द्वित्वे द्योत्य इत्यर्थ. ॥—**उष्ट्रगोयुगमि**ति । द्वयं युगमित्यादिवद् द्व्यवयवसघातप्राधान्यादेकवचनम् । एवमग्रेऽपि ॥—**नतमि**ति ॥ नपुसके भावे क्तः ॥—**नमनमि**ति । नीचैस्त्वमित्यर्थः ॥—**अवटीटमि**ति । नासिकासाधनके नमने वर्तमानादवशब्दात्स्वार्थे प्रत्ययः ॥ कथ तर्हि नासिकायां चावटीटशब्दस्य प्रयोग इत्यत आह—**तद्योगादि**ति ॥—**नेर्बिडच्**—॥ 'नते नासिकायाः संज्ञायाम्' इति वर्तते निशब्दान्नासिकाया नतेऽभिधेये निबिडज्बिरीसचौ स्तः ॥—**निबिडमि**ति । तद्योगान्निबिडा नासिका निबिरीसा ॥ कथं तर्हि 'निबिडाः केशाः, निबिडं वस्त्रम्' इति । उपमानाद्भविष्यति । एतच्च काशिकायां स्पष्टम् ॥ केचित्तु उक्तप्रयोगानुरोधेनेह सूत्रे 'नते नासिकायाः—' इति नानुवर्तत इति व्याचक्षते ॥—**प्रकृतेरि**ति ॥ निशब्दस्येत्यर्थः । **आदेशौ चे**ति । प्रत्ययौ तत्सनियोगेन यथासंख्यमिमावादेशौ च स्त इत्यर्थः ॥—**चिकिनमि**ति । इनच्प्रत्ययसनियोगेन चिकादेशः ॥—**चिपिटमि**ति । पिटच्प्रत्ययसंनियोगेन चि इत्यादेशः ॥—**क्लिन्नस्ये**ति । चिल् पिल् इत्येतावादेशौ भवतो लश्च प्रत्ययः 'अस्य चक्षुषी' इत्येतस्मिन्नर्थे ॥—**चुल् चे**ति । चाल्लप्रत्ययः ॥—**चुल्ल** इति । क्लिन्ने अस्य चक्षुषी इति पूर्वोक्त एव विग्रहः ॥ कथ तर्हि 'स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्षिण चाप्यमी' इत्यमर इति चेत् । अत्राहुः । पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्येति ॥ अन्ये त्वाहुः—अस्य चक्षुषी इत्यत्र 'अस्य' इति न वक्तव्यम् । क्लिन्ने चक्षुषी चिल्ले पिल्ले । पुरुषे तु मत्वर्थेच् । अर्शआदिषु 'स्वाङ्गाद्धीनात्' इति सूत्रितत्वादिति ॥—**उपाधिभ्याम्**—॥ संज्ञाधिकारादिह नियतविषयमासनारूढं गृह्यत इत्याशयेनाह—**पर्वतस्येति**[1] । आसन्नं समीपम् । आरूढमुच्चस्थानम् ॥—**उपत्यके**ति । 'अत्य-

१ पर्वतस्येति—'समुद्रोपत्यका हैमी पर्वताधित्यका पुरी' इत्यादौ तु लाक्षणिकः प्रयोगो बोध्यः ।

घटोऽठच् ।५।२।३५। घटतइति घटः पचाद्यच् । कर्मणि घटते कर्मठः पुरुषः । ⧗ तदस्य संजातं तारकादिभ्य इतच् ।५।२।३६। तारकाः संजाता अस्य तारकितं नभः । आकृतिगणोऽयम् । ⧗ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।५।२।३७। तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् । * प्रमाणे लः । शमः । दिष्टिः । वितस्तिः । * द्विगोर्नित्यम् ॥ द्वौ शमौ प्रमाणमस्य द्विशमम् । * प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः ॥ शममात्रम् । प्रस्थमात्रम् । पञ्चमात्रम् । * वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् । तावदेव , तावद्द्वयसम् । तावन्मात्रम् । ⧗ पुरुषहस्तिभ्यामण् च ।५।२।३८। पुरुषः प्रमाणमस्य पौरुषम् । पुरुषद्वयसम् । हास्तिनम् । हस्तिद्वयसम् । ⧗ यत्तदेतेभ्यः परिमाणे वतुप् ।५।२।३९। यत्परिमाणमस्य

---

यस्थात्–' इतीत्वं तु न भवति, 'त्यकनश्च निषेधः' इत्युक्तत्वात् ॥—कर्मणि घटो—॥ सप्तम्यन्तात्कर्मन्शब्दाद् 'घटते' इत्यर्थे ठच् स्यात् ॥—कर्मठ इति । ठस्येक इतीह न भवति । अठचि ठस्याप्रत्ययत्वेनाङ्गसंज्ञानिमित्तत्वाभावात् ॥ —तारकितमिति ॥ एवं पुष्पितं फलितं पुलकित रोमाञ्चितमित्याद्युदाहार्यम् ॥—प्रमाणे द्वयसच्—॥ प्रमाणे विद्यमानात्प्रथमान्तात् 'अस्य' इति निर्दिष्टे प्रमेयेऽर्थे त्रयः प्रत्ययाः स्युः । प्रमाणमिह परिच्छेदकमात्रम् । तत्र मात्रच् । द्वयसच्दघ्नचौ तूर्ध्वमान एव भवतः । 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति भाष्यात् । ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानम् ऊर्वादि । तेन तिर्यङ्मानादौ 'दण्डद्वयसं क्षेत्रम्' इत्यादि न प्रयुज्यते, यथोत्तरं मुनीनां प्रामाण्यात् ॥ अत एव 'द्विकाण्डा क्षेत्रभक्तिः' इत्यत्र 'द्वयसचो लुक्' इति प्राचोक्तं नादर्तव्यमित्यवोचाम ॥—प्रमाणे ल इति । लुक् एषा पूर्वाचार्यसंज्ञा । प्रमाणत्वेन ये प्रसिद्धास्ततः परस्यैवायं लुगित्युदाहरति—शमो दिष्टिः वितस्तिरिति । शमः प्रमाणमस्येत्यादिविग्रहः । एषु मात्रचो लुग्, इतरयोरसंभवात् । शमादीनामनूर्ध्वमानत्वात् ॥—द्विगोर्नित्यमिति । द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाप्राप्तो लुग्विधीयते ॥ ननु विकल्पस्याप्रकृतत्वान्नित्यग्रहणमिह निरर्थकमिति चेत् । अत्राहुः । अनुपदं संशये वक्ष्यमाणो मात्रच् शममात्रमित्यादौ यथा न लुप्यते, 'प्रमाणे लः' इत्यस्य 'प्रमाणे द्वयसच्' इति यः पूर्वविधिस्तद्विषयपरत्वात्, एवं द्विगोरपि न लुप्येत । इष्यते च लुक् । द्वौ शमौ स्यातां न वा द्विशम इति । तथा चाधिकसंग्रहार्थं नित्यग्रहणमिति ॥ अत्र केचिद् 'द्विगोर्लः' इत्युक्तेऽपि पुनर्लग्रहणं नित्यार्थमधिकसंग्रहार्थमिति व्याख्यातुं शक्यत इति वैचित्र्यार्थं नित्यग्रहणमित्याहुः ॥—शममात्रमित्यादि । शमः स्यान्न वेत्यादिविग्रहः ॥—पुरुषहस्तिभ्यामण् ॥ 'इनण्यनपत्ये' इति प्रकृतिभावः । हस्ती प्रमाणमस्य हास्तिनम् ॥ अत्र काशिकायामुक्तं 'द्विगोर्नित्यं लुक् द्विपुरुषमुदकम्' इत्यादि ॥ व्याख्यातं च हरदत्तेन–यद्यपि 'प्रमाणे लो द्विगोर्नित्यम्' इत्यस्य नायमनुवादः, पुरुषहस्तिनोः शमादिवत् प्रमाणत्वेनाप्रसिद्धत्वात्, अत एव हि पुरुषद्वयसमित्यादौ 'प्रमाणे लः' इति लुङ् न भवति । तथाप्यपूर्वोऽत्र लुग्विधीयते' इति ॥ एतच्चासङ्गतम् । 'द्विगोर्नित्यं लुक्' इत्यपूर्ववचनस्य मुनित्रयानुक्तत्वात् ॥ वस्तुतस्तु विधीयत इत्यस्यानुमीयत इत्यर्थः । अय भावः । 'द्विगोः' 'तद्धितलुकि' इत्यनुवर्तमाने 'पुरुषात्प्रमाणेऽन्यतरस्याम्' इति ङीब्विकल्प्यते तदेव लुकमनुमापयतीति ॥—यत्तदेतेभ्यः—॥ यावानित्यादि । 'आ सर्वनाम्नः' इत्यात्वे 'उगिदचाम्' इति नुम् । 'अत्वसन्तस्य च' इति दीर्घः । हल्ङ्यादिलोपसंयोगान्तलोपौ । 'प्रमाणे' इत्यनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात्कृतम् । तथा च वार्तिकम् । 'डावतोरर्थवैशेष्यान्निर्देशः पृथगुच्यते । मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः' इति ॥ अस्यार्थः—इह शास्त्रे वतुपं विधाय तस्मिन् परे आत्वं विहितम् । पूर्वाचार्यास्तु डावतुं विदधिरे तद्रीत्या निर्देशोऽयं डावताविति । विशेष्यत इति विशेषस्तस्य भावो वैशेष्यं तस्मात्, अर्थभेदादित्यर्थः । अर्थभेदस्तु 'परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्' इति प्रागेवोक्त इति भावः ॥ नन्वनयोरर्थभेदे सति यावानध्वा यावती रज्जुरित्यादि न सिध्येत्, अत्र ह्यायाममात्रं गम्यते । यद्युपमानाद्भविष्यतीति ब्रूषे, तर्हि प्रमाणग्रहणमेवानुवर्त्यताम्, यावानध्वेत्यादिप्रयोगाश्च मुख्याः सन्तु । ये परिमाणे प्रयोगाः 'यावान् धान्यराशिः' इत्यादयः । त एवोपमानाद्भवन्तु तत्राह मात्रादीति । 'यत्तदेतेभ्यः–' इति विशेषविहितो हि वतुप् सामान्यविहितान् मात्रजादीन् बाधेत । तेन तन्मात्रमित्यादि न स्यात् । परिमाणग्रहणे सति तु भिन्नोपाधिकत्वाद्वतुपः प्रमाणे विहितमात्रजादिभिः सह बाध्यबाधकभावो नेति भावः ॥ नन्वेवमपि बाधः स्यादेव । 'प्रमाणे द्वयसच्' इत्यत्र प्रस्थमात्रमित्यादिसिद्धये प्रमाणग्रहणस्य परिच्छेदकमात्रपरतया व्याख्यातत्वेन वतुपो यत्तदेतेभ्यो विहितत्वेन विशेषविहितत्वानपायात् । तस्मात् 'यत्तदेतेभ्यो वतुप् च' इत्येव सूत्र्यताम्, मास्तु परिमाणग्रहणम्, अस्तु च प्रमाणे इत्यर्थाधिकारः, तेन यावती रज्जुर्यावान् धान्यराशिरित्यादिप्रयोगाः सर्वेऽप्युपचारं विनैव निर्वहन्तीत्यपरमनुकूलमत आह भावः सिद्धश्चेति ॥ डावतोरिति । पञ्चम्यन्तम् । अर्थभेदे सति वत्वन्तान्मात्रजादीनामुत्पत्तिः सिध्यति । तत्परिमाणमस्य तावद्धान्यं राशीकृतम् । तावत्प्रमाणमस्य कुड्यादेः, तावन्मात्रम् । यादृग्राशीकृतस्य धान्यादेर्दैर्घ्यं तादृशं कुड्यादेरपीत्यर्थः । एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वाद्वतुबन्तान्मा-

---

१ प्रमाणे द्वयसजिति—प्रमाणशब्देनायामपरिच्छेदकस्यैव ग्रहणमिति मते तु प्रस्थमात्रमित्याद्यसाध्वेवेति बोध्यम् ।

यावान् । तावान् । एतावान् । **किमिदंभ्यां वो घः ।५।२।४०।** आभ्यां वतुप्स्यादिकस्य च घः । कियान् । इयान् । **किमः संख्यापरिमाणे इति च ।५।२।४१।** चाड्डतुप् । तस्य च वस्य घः स्यात् । का संख्या येषां ते कति । कियन्तः । **संख्याया अवयवे तयप् ।५।२।४२।** पञ्चावयवा अस्य पञ्चतयं दारु । **द्वित्रिभ्यां तयस्यायज्वा ।५।२।४३।** द्वयम् । द्वितयम् । त्रयम् । त्रितयम् । **उभादुदात्तो नित्यम् ।५।२।४४।** तयपोऽयच् स्यात् स चाद्युदात्तः । उभयम् । **तदस्मिन्नधिकमिति दशान्ताड्डः ।५।२।४५।** एकादश अधिका अस्मिन्नेकादशम् । *** शतसहस्रयोरेवेष्यते ।** नेह । एकादश अधिका अस्यां विंशतौ । *** प्रकृतिप्रत्ययार्थयोः * समानजातीयत्व एवेष्यते ।** नेह । एकादश माषा अधिका अस्मिन् सुवर्णशते । **शदन्तविंशतेश्च ।५।२।४६।** डः स्यादुक्तेऽर्थे । त्रिंशदधिका अस्मिन् त्रिंशं शतम् । विंशम् । **संख्याया गुणस्य निमाने मयट् ।५।२।४७।** भागस्य मूल्ये वर्तमानात्प्रथमान्तात्संख्यावाचिनः षष्ठ्यर्थे मयट् स्यात् । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम् । [3]गुणस्येति किम् । द्वौ व्रीहियवौ निमानमस्योदश्वितः । निमाने किम् । द्वौ गुणौ

---

त्रजादयो न स्युः । यस्य हि तावत्प्रमाणं तस्य तदपि प्रमाणम् । जानुप्रमाणक जलादि यस्य प्रमाण तदपि जानुप्रमाणकमिति वक्तुं शक्यत्वात् । एवं च तावत्शब्द एव प्रयुज्येत, न तु तावन्मात्रमित्यादि । अन्यथा तत्प्रमाणमस्य तन्मात्रम् । तन्मात्रं प्रमाणमस्य तन्मात्रमात्रमित्येवं मात्रजादिभ्यः प्रत्ययमालाप्रसङ्गात् ॥—**किमिदंभ्याम्**—॥—**वतुप्स्यादिति** । वकारस्य घविधिसामर्थ्याद्वतुपमनुवर्त्य सोप्यत्र विधीयत इति भावः ॥ 'आदेः परस्य' इत्येव सिद्धे 'वः' इति वचनमादेशप्रतिपत्त्यर्थम् । इतरथा घ प्रत्ययान्तरं विज्ञायेत ॥—**कियानिति** । 'इदंकिमोरीश्की' । 'यस्येति च' इति लोपः ॥—**इयानिति** । ईशादेशस्य 'यस्य' इति लोपे प्रत्ययमात्रमवशिष्यते । पठन्ति च—'उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ गतवति विलय च प्राकृतेऽपि प्रपञ्चे । सपदि पदमुदीत केवलप्रत्ययो यत् तदियदिति मिमीते को हृदा पण्डितोऽपि' ॥ वैयाकरणानामौपनिषदानां च प्रक्रियामाश्रित्य प्रवृत्तो ह्यर्थोऽय श्लोकः ॥—**किमः संख्या**—॥ 'तदस्य—' इत्यनुवर्तत एव । संख्यायाः परिमाण परिच्छेदः, तस्मिन् कर्तव्ये यः प्रश्नस्तस्मिन्वर्तमानात्किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिः स्यात् ॥ सख्यापरिमाणे किम् । क्षेपे माभूत् । का संख्या येषां दशानाम् । 'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्वं न विद्यते, इत्येव सख्येयद्वारेणात्र सख्याया कुत्सा बोध्या ॥—**संख्याया**—॥ अवयवे वर्तमाना या सख्या तद्वाचिनः प्रथमान्तात्षष्ठ्यर्थे तयप् स्यात् । य प्रत्ययवयवः सोऽवयवी प्रत्ययार्थः 'अस्य' इत्यधिकारात् ॥ यथा द्वयसजादिषु प्रमाणे प्रकृत्यर्थे प्रमेयं प्रत्ययार्थस्तद्वत् ॥—**त्रयमिति** ॥ ननु 'त्रयोऽवयवाः तन्तवो यस्य त्रयं सूत्रम्' इति प्रयोगे सभवत्यपि 'मुनित्रयम्' इति प्रयोगो न सगच्छते, अन्यपदार्थस्यावयविनोऽभावादिति चेत् ॥ अत्राहुः । अवयवी त्वत्र समुदाय एव ॥ स चातिरिक्तो वाऽनतिरिक्तो वेति विचारान्तरम् ॥ एवं च समुदायस्यातिरिक्तत्वपक्षेऽपि समुदायघटकत्वेन मुनीनां प्रत्यभिज्ञानान्मुनित्रयनमस्कारस्य विघ्नविघातकत्वमस्त्येवेति ॥—**उभादुदात्तो नित्यम्** ॥ इह 'चितः' इत्यनेनैवान्तोदात्तत्व सिद्धम् । सर्वोदात्तत्व तु 'अनुदात्त पदमेकवर्जम्' इति वचनाद्बाधितम् । न च हे उभयेति सम्बुध्यन्ते आमन्त्रिताद्युदात्तत्वं बाधितु वचनमिति शङ्क्यम् । पुरस्तादपवादन्यायेन चित्स्वरस्यैव बाध्यता, न त्वामन्त्रिताद्युदात्तत्वस्येति सुवचत्वात् । तस्मादुदात्तवचनसामर्थ्यादादेरेवायम् । प्रयुज्यते च तथा—'उभयं शृणवच्च न' इति । तदेतत्सकलमभिप्रेत्याह—**स चेति** ॥—**तदस्मिन्**—॥ पुनस्तद्ग्रहणम् 'अस्य' इति षष्ठ्यन्तसंबद्धतद्ग्रहणनिरासार्थम् ॥ प्रत्ययविधौ तदन्तविध्यभावादाह—**दशान्तादिति** ॥ अन्तग्रहणं किम् । दश अधिका अस्मिन् शते । न चेह व्यपदेशिवद्भावेन दशान्तत्वमस्तीति वाच्यम् । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यभ्युपगमात् ॥—**शदन्त**—॥ प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति 'यस्मात्प्रत्ययविधिस्तदादे स्तदन्तस्य' इति परिभाषया तदादिनियमः स्यात् तं वारयितुमन्तग्रहणम् । तेन एकत्रिंशम् । एकचत्वारिंशमित्यादि सिद्धम् । नचैवं गोत्रिंशदधिका अस्मिन् शते इत्यादावतिप्रसङ्गः शङ्क्यः । 'संख्याया अवयवे तयप्' इत्यतः संख्याग्रहणानुवृत्तेः । अन्तग्रहणमिह विंशतिशब्दान्तरं कर्तव्यम् । 'शद्विंशत्यन्ताच्च' इति । तेन एकविंशं शतमित्यादि सिध्यति । अन्यथा 'ग्रहणवता' इति तदन्तविधिप्रतिषेधादिह न स्यात् ॥—**संख्याया गुणस्य**—॥ गुणो भावः । निमीयते क्रीयतेऽनेनेति निमानं मूल्यम् । 'मेङ् प्रणिदाने' इत्यस्मान्निपूर्वात्करणे ल्युट् । तदाह—**भागस्य मूल्ये इति** ॥—**षष्ठ्यर्थे इति** ॥ यद्यपि 'तदस्मिन्नधिकम्—' इत्यतः 'तद्' इत्यनुवृत्तौ प्रथमान्तादित्ययमेवार्थो लभ्यते, तथापि मण्डूकप्लुत्या 'तदस्य संजातम्' इत्यतः 'तदस्य' इत्यनुवर्तनात् 'षष्ठ्यर्थे' इत्येतदपि लभ्यत इति भावः । **द्विमयमिति** । द्विशब्दस्य सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वात् 'यथा-

---

१ अवयवे इति—अवयवी चात्रानुद्भूतावयवभेदोऽपि समुदायः, तेन मुनित्रय, बहुतयं यूथम्, उभये देवमनुष्या इति सिद्धम् । २ इष्यते इति—इतिकरणलभ्योऽयमर्थः । ३ गुणस्येति—मध्यमणिन्यायेनोभयत्रापि संबध्यते । गुणकर्मकनिमाने वर्तमानाद्गुणगतसंख्यावाचकान्मयडित्यर्थः ।

**क्षीरस्य एकस्तैलस्य द्विगुणं क्षीरं पच्यते तैलेन । तस्य पूरणे डट् ।५।२।४८। एकादशानां पूरण एकादशः । नान्तादसंख्यादेर्मट् ।५।२।४९। डटो मडागमः स्यात् । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् । विंशः । असंख्यादेः किम् । एकादशः । षट्कतिकतिपयचतुरां थुक् ।५।२।५१। एषां थुगागमः स्याड्डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट् । कतिपयथः । चतुर्थः । * चतुरश्छयतावाद्यक्षरलोपश्च । तुरीयः । तुर्यः । बहुपूगगणसङ्घस्य तिथुक् ।५।२।५२। डटीत्येव । पूगसङ्घयोरसंख्यात्वेऽप्यत एव डट् । बहुतिथ इत्यादि । वतोरिथुक् ।५।२।५३। डटीत्येव । यावतिथः । द्वेस्तीयः ।५।२।५४। डटोऽपवादः । द्वयोः पूरणो द्वितीयः[1] । त्रेः संप्रसारणं च ।५।२।५५। तृतीयः । विंशत्यादिभ्यस्तमडन्यतरस्याम् ।५।२।५६। एभ्यो डटस्तमडागमो वा स्यात् । विंशतितमः । विंशः । एकविंशतितमः एकविंशः ।**

नाम्' इति पदे सत्यपि तद्धितोत्पत्तिरिहाविरुद्धेति ज्ञेयम् ॥ नन्वेवमपि प्रत्ययान्तस्योदश्विच्छब्देन सामानाधिकरण्यं दुर्लभम् । यावतोदश्विद्भागे प्रत्ययो विहितो, नोदश्विति ॥ अत्राहुः । भागेति विधीयमानः प्रत्ययः अभिधानस्वाभाव्याद् भागवन्तमाचष्टे । तेन सामानाधिकरण्य भवतीति । 'गुणनिमाने' इति वक्तव्ये व्यस्तोच्चारणात् 'एकत्व गुणस्य' इत्यत्र विवक्षितम् । तेनेह न भवति । यवाना द्वौ भागौ निमानमेषामुदश्वितस्त्रयाणा भागानामिति ॥ 'भूयसश्च वाचिकायाः संख्याया प्रत्यय इष्यते' इह न भवति । एको भागो निमानमस्येति ॥ भूयस इति च प्रत्ययार्थादाधिक्यमात्र प्रकृत्यर्थस्य विवक्षित, न तु बहुत्वं । तेन द्विशब्दादपि भवत्येव ॥—**तस्य पूरणे**—॥ 'तस्य' इति षष्ठयन्तानुकरणम् । एकत्वमविवक्षितम्, एकस्य पूराणासंभवात् । पूर्यतेऽनेनेति पूरणः, ण्यन्तात्करणे ल्युट् ॥—**एकादशानामि**ति । उद्भूतावयवभेदः समुच्चयः प्रकृत्यर्थः । अवयव इह प्रत्ययार्थः । यस्मात्संख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्ययः । यथा 'अतिशायने–' 'याप्ये–' इत्यादिषु प्रवृत्तिनिमित्तस्यैवातिशयादिक गृह्यते, अन्तरङ्गत्वात् । तथेहापि । तेन 'एकादशानां घटानां पूरणो जलादिः' इत्यत्र नातिप्रसङ्गशङ्कालेशोऽपीति भावः । ननु यदि प्रवृत्तिनिमित्तस्य पूरणे प्रत्ययः, तर्ह्यत्र एकादशत्वस्य पूरण इति विग्रहो वक्तु युक्त इति चेत् । अत्राहुः । 'वैयाकरणपाशः' इत्यत्र यथा 'याप्यो वैयाकरणः' इति विग्रहः । न तु 'याप्य वैयाकरणत्वम्' इति तथेहापि बोध्यमिति । एव च व्युत्क्रमेणाध्यायेषु गम्यमानेषु 'वृद्धिरादैच्' इत्याध्यायो यदा चरमं गण्यते तदा सोऽप्यष्टमो भवत्येव ॥—**नान्तादसंख्यादेः**—॥—**डट** इति । 'डट्' इति प्रथमान्तस्यानुवृत्तस्य 'नान्तात्' इति पञ्चम्या षष्ठीं कल्प्यत इति भावः । यद्यपीह मटः प्रत्ययत्वेऽपि न क्षतिः, तथाप्युत्तरत्र तमट आगमत्वमेवाभ्युपगन्तव्यम् । अनुदात्तता यथा स्यात् । प्रत्ययत्वे ह्याद्युदात्तः स्यात् । प्रत्ययत्वे तथा चैकरूप्येणैव संदर्भव्याख्यानमुचितम् ॥ अन्येऽप्याहुः–मटः प्रत्ययत्वे अकारसहितो मकारो विधेय. । आगमत्वे तु मकारमात्रमिति लाघवमस्तीति ॥—**विंश** इति । विंशतेः पूरणः । 'तिविंशतेर्डिति' इति लोपः ॥—**षट्कति**—॥ इह षष्ठीनिर्देशबलात् षडादीनामागमित्वं स्पष्टमिति तदानुकूल्येनानुवृत्तां डट् सप्तम्या विपरिणम्यते तदाह—**डटी**ति । डट एव थुट् न कृतः । षष्ठे पकारस्य जश्त्वप्रसङ्गात् । चतुर्थे रेफस्य विसर्गप्रसङ्गाच्च । न चैव 'नान्तात्–' इति सूत्रेऽपि डति परे मुगेव विधीयतामिति वाच्यम् । पञ्चमः सप्तम इत्यादौ नलोपाभावापत्तेः ॥—**चतुरश्छयतावि**ति । विशेषविहिताभ्यामपि च्छयद्भ्यां डट्प्रत्ययो न बाध्यते, थुग्विधानसामर्थ्यात् । तेन चतुर्थ इति सिद्धः ॥—**आद्यक्षरे**ति । अच्सहित व्यञ्जनमक्षरशब्देनोच्यते । अच्सहितस्यादेर्व्यञ्जनस्येत्यर्थः । व्यञ्जनसहितस्यादेरच इति व्याख्याने तु द्विर्वचनन्यायेन तकारस्यापि लोपः स्यादिति हरदत्तः । आदेर्व्यञ्जनस्येति व्याख्याने प्रमाणं तु 'द्वितीयतृतीय–' इति सूत्रे 'तुर्याणि' इति निर्देशो बोध्यः ॥—**द्वेस्तीयः**॥—**डटोऽपवाद** इति । डट आदेशस्तु न भवति । 'डिति 'टिड्ढा–' इति' ङीपः प्रसक्त्या 'द्वितीयाश्रिता–' इति निर्देशानुपपत्तेः ॥ अत एव निर्देशाद्विशब्दस्याप्यादेशो न भवति ॥—**तृतीय** इति ॥ रेफस्य ऋकारः संप्रसारणम् । 'हलः' इति दीर्घस्तु न भवति, 'ढ्लोपे' इति सूत्रादण इत्यनुवृत्तेः । 'त्रेस्तृ च' इति नोक्तं, प्रत्ययो मा विज्ञायीति ॥—**विंशत्यादिभ्यः**—॥ इह प्रत्यासत्त्या 'पङ्क्ति–' इत्यादिसूत्रेण निपातिता विंशत्यादयो गृह्यन्ते, न लोकप्रसिद्धाः, विप्रकृष्टत्वादिति भाष्यमतम् ॥ वृत्तिकृता तु विंशत्यादयो लौकिका एव संख्याशब्दा गृह्यन्ते, न पङ्क्ति–' इत्यादिसूत्रनिर्दिष्टाः । तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात् । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । एवं च सति 'षष्ठयादेश्चासंख्यादेः' इति पर्युदासो युज्यत एवेत्युक्तम् ॥—**एकविंशतितम** इति । यद्यपि भाष्यमते तदन्तविधिर्दुर्लभः । तथापि 'षष्ठयादेश्च–' इति सूत्रे संख्यादिपर्युदासो ज्ञापयति 'इह प्रकरणे तदन्तानामपि ग्रहणम्' इति । एवं च सति एकान्नविंशतेः पूरण एकान्नविंशतितम इत्यपि सिध्यति । 'लौकिकानां ग्रहणम्' इति वृत्तिमते तु नैतत्सि-

---

१ द्वितीय इति—सहायवाची द्वितीयशब्दस्तु अव्युत्पन्न प्रातिपदिकम्, अनेन तु नास्य साधुत्वम् । न ह्यपूरणस्तीयशब्दोऽस्तीति पूरणाद्भाग इति सूत्रस्थभाष्यासंगतेः ।

**नित्यं शतादिमासार्धमाससंवत्सराच्च ।५।२।५७।** शतस्य पूरणः शततमः । एकशततमः । मासादेरतएव डट् । मासतमः । **षष्ठ्यादेश्चाऽसंख्यादेः ।५।२।५८।** षष्टितमः । संख्यादेस्तु विंशत्यादिभ्य इति विकल्प एव । एकषष्टः । एकषष्टितमः । **मतौ छः सूक्तसाम्नोः ।५।२।५९।** मत्वर्थे छः स्यात् । अच्छावाकशब्दोऽस्मिन्नस्ति अच्छावाकीयं सूक्तम् । वारवन्तीयं साम । **अध्यायानुवाकयोर्लुक् ।५।२।६०।** मत्वर्थस्य छस्य । अतएव ज्ञापकात्तत्र छः । विधानसामर्थ्याच्च विकल्पेन लुक् । गर्दभाण्डः । गर्दभाण्डीयः । **विमुक्तादिभ्योऽण् ।५।२।६१।** मत्वर्थेऽण् स्यादध्यायानुवाकयोः । विमुक्तः शब्दोऽस्मिन्नस्ति वैमुक्तः । दैवासुरः । **गोषदादिभ्यो वुन् ।५।२।६२।** मत्वर्थेऽध्यायानुवाकयोः । गोषदकः । इषेत्वकः । **तत्र कुशलः पथः ।५।२।६३।** वुन् स्यात् । पथि कुशलः पथकः । **आकर्षादिभ्यः कन् ।५।२।६४।** आकर्षे कुशल आकर्षकः । आकषादिभ्य इति रेफरहितो मुख्यः पाठः । आकषो निकषोपलः । **धनहिरण्यात्कामे ।५।२।६५।** काम इच्छा । धने कामो धनको देवदत्तस्य । हिरण्यकः । **स्वाङ्गेभ्यः प्रसिते ।५।२।६६।** केशेषु प्रसितः केशकः । तद्रचनायां[1] तत्पर इत्यर्थः । **उदराट्ठगाद्यूने ।५।२।६७।** अविजिगीषौ ठक् स्यात । कनोऽपवादः । बुभुक्षयात्यन्तपीडित उदरे प्रसित औदरिकः। आद्यूने किम् । उदरकः । उदरपरिमार्जनादौ प्रसक्त इत्यर्थः । **सस्येन परिजातः ।५।२।६८।** कन् स्वर्यते नतु ठक् । सस्यशब्दो गुणवाची नतु धान्यवाची । शस्येनेति पाठान्तरम् । सस्येन गुणेन परिजातः संबद्धः सस्यकः साधुः । **अंशं हारी ।५।२।६९।** हारीत्यावश्यके णिनिः । अत एव तद्योगे षष्ठी न । अंशको दायादः । **तन्त्रादचिरापहृते ।५।२।७०।** तन्त्रकः पटः । प्रत्यग्र इत्यर्थः । **ब्राह्मणकोष्णिके संज्ञायाम् ।५।२।७१।** आयुधजीविनो ब्राह्मणा यस्मिन्देशे स ब्राह्मणकः । अल्पमन्नं यस्यां सा उष्णिका यवागूः । अन्नशब्दस्य उष्णादेशो निपात्यते । **शीतोष्णाभ्यां कारिणि ।५।२।७२।** शीतं करोतीति शीतकोऽलसः । उष्णं करोतीति उष्णकः शीघ्रकारी । **अधिकम् ।५।२।७३।** अध्यारूढशब्दात्कन् उत्तरपदलोपश्च । **अनुकाभिकाभीकः कमिता**

---

ध्येत विंशतिसख्यातः प्राग्भावित्वादस्या सख्याया· एतच्च कैयटहरदत्तग्रन्थयोः स्पष्टम् ॥ ननु 'अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु' इति वदता कात्यायनेन 'पङ्क्ति–' इत्यादिसूत्रस्य प्रत्याख्यातत्वात् तत्सूत्रे निपातिताः विंशत्यादयो गृह्यन्ते । इति भाष्यमतमयुक्तमिति चेत् ॥ अत्राहुः । यद्यपि प्रत्याख्यात तथापीहार्थमावश्यक तत । अत एव तत्र भाष्यकृता 'नासृया कर्तव्या यत्रानुगम क्रियते' इत्युक्तम ॥ अतः कात्यायनोक्तप्रत्याख्यान नादर्तव्यमिति ॥—**शततम** इति ॥ यद्यपीद 'षष्ट्यादेश्च' इत्युत्तरसूत्रेणैव सिध्यति । तथापि सख्यादेश 'नित्य शतादि–' इत्यावश्यकमिति ध्वनयन्नुदाहरति—**एकशततम** इति ॥—**मासादेरि**ति । सख्यावाचित्वाभावेऽपीति भावः ॥—**षष्ठ्यादेश्चे**ति ॥ 'विंशत्यादिभ्यः–' इति विकल्पे प्राप्ते नित्यार्थोऽयमारम्भः । **संख्यादेस्त्विति** । एतच्च प्राक् शताद्बोध्यम् 'नित्यं शतादि–' इत्युक्तत्वात् ॥ **मतौ छः**—॥—**मत्वर्थ** इति । मतोर्विषय इत्यर्थ । तेन 'तत्' इति प्रमथा समर्थविभक्तिः, अस्यास्मिन्निति प्रत्ययार्थश्चेह लभ्यते ॥ **विधानसामर्थ्यादि**ति ॥ मतुप्प्रकरण एवास्मिन् सूत्रे कर्तव्ये यदत्रास्य लुग्विधानं तत्पाक्षिकं लुकमनुमापयतीति कैयटः ॥—**तत्र कुशलः**—॥ सप्तमीसमर्थात्पथिन्शब्दात्कुशल इत्यर्थे वुन्स्यात् ॥—**आकर्षादिभ्यः कन्** ॥ वुना सिद्धे कन्ग्रहणं इडुदन्तार्थम् । अशनिकः शकुनिकः त्सरुकः ॥—**मुख्य पाठ** इति ॥ आकषन्त्यस्मिन् सुवर्णादिकमित्याकषः । 'पुसि सज्ञाया घ' इति व्याख्याय, ये तु 'आकर्षादिभ्यः' इति सरेफं पठन्ति, तेषामाकर्ष इति घञि रूपम्' इति हरदत्तेनोक्तत्वादिति भाव· ॥—**धने काम** इति ॥ 'तत्र' इत्यनुवर्तनात्सप्तम्यन्तात्प्रत्यय इति भावः ॥—**उदरात्**—॥ आद्यूनशब्दार्थमाह—**अविजिगीषावि**ति । 'दिवोऽविजिगीषायाम्' इति तत्रैव निष्ठानत्वविधानात् ॥—**सस्येन**—॥ कर्तरि तृतीयेयम् । परितो जातः परिजात. ॥ फलितमाह—**संबद्ध** इति ॥—**अत एवे**ति ॥ 'अकेनोः–' इति निषेधादिति भावः ॥—**तन्त्रात्**—॥ तन्यन्ते तन्तवोऽस्मिन्निति व्युत्पत्त्या तन्त्र तन्तुवायशलाका अचिरः कालो अपहृतस्येत्यचिरापहृतस्तस्मिन् । 'कालाः परिमाणिना' इति समास ॥—**प्रत्यग्र** इति । नूतन इत्यर्थ. ॥—**ब्राह्मणकोष्णिके**—॥ ब्राह्मणशब्दादायुधजीवित्वोपाधिकात्प्रथमान्तात् सप्तम्यर्थे कन् प्रत्ययो निपात्यते । अन्नशब्दात्तु अल्पत्वौपाधिकात् । तदाह—**आयुधेत्यादि** ॥—**शीतोष्णाभ्याम्**—॥ शीतमिव शीतम् । मन्दमित्यर्थ. । शीते सति कार्यकरणे पाटवाभावात् ॥ उष्णमिवोष्णम् । शीघ्रमित्यर्थः । क्रियाविशेषणाभ्या द्वितीयाभ्या प्रत्यय. । कृद्योगलक्षणा षष्ठी तु क्रियाविशेषणात्रेत्युक्तम् । मुख्यार्थवृत्तिभ्यां तु प्रत्ययो न भवत्यनभिधानात् ॥—**अधिकम्** ॥—**अध्यारूढशब्दा**दिति । 'गत्यर्थाकर्मक–' इत्यादिना रुहः कर्तरि कर्मणि वा क्तो विहितः । आद्ये क्तप्रत्ययेन कर्मणोऽनभिहितत्वाद् अध्यारूढशब्दयोगे द्वितीया । अध्यारूढो द्रोणः खारीमिति ग्रामं गत इति वत् । तथा अधिकशब्देनापि योगे द्वितीयायां प्रा·

---

१ तद्रचनायामिति—अत्रैवार्थेऽस्य साधुत्वमिति भावः ।

।५।२।७४। अन्वभिभ्यां कन् । अभेः पाक्षिको दीर्घश्च । अनुकामयते अनुकः । अभिकामयते अभिकः । अभीकः । ⧗ **पार्श्वेनान्विच्छति** ।५।२।७५। अनृजुरुपायः पार्श्वं तेनान्विच्छति पार्श्वकः । ⧗ **अयःशूलदण्डाजिनाभ्यां ठक्ठञौ** ।५।२।७६। तीक्ष्णउपायोऽयः शूलं तेनान्विच्छति आयःशूलिकः साहसिकः । दण्डाजिनं दम्भः, तेनान्विच्छति दाण्डाजिनिकः । ⧗ **तावतिथं ग्रहणमिति लुग्वा** ।५।२।७७। कन् स्यात्पूरणप्रत्ययस्य च लुग्वा । द्वितीयकं द्विकं वा ग्रहणं देवदत्तस्य । द्वितीयेन रूपेण ग्रहणमित्यर्थः ॥ * **तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक्** । षष्ठेन रूपेण गृह्णाति षट्को देवदत्तः । पञ्चकः । ⧗ **स एषां ग्रामणीः** ।५।२।७८। देवदत्तो मुख्यो येषां ते देवदत्तकाः । त्वत्काः । मत्काः । ⧗ **शृङ्खलमस्य बन्धनं करभे** ।५।२।७९। शृङ्खलकः करभः । ⧗ **उत्क उन्मनाः** ।५।२।८०। उद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कन् । उत्क उत्कण्ठितः । ⧗ **कालप्रयोजनाद्रोगे**[1] ।५।२।८१। कालवचनात्प्रयोजनवचनाच्च कन् स्याद्रोगे । द्वितीयेऽहनि भवो द्वितीयको ज्वरः । प्रयोजनं कारणं रोगस्य फलं वा । विषपुष्पैर्जनितो विषपुष्पकः । उष्णं कार्यमस्य उष्णकः । रोगे किम् । द्वितीयो दिवसोऽस्य । ⧗ **तदस्मिन्नन्नं प्राये संज्ञायाम्** ।५।२।८२। प्रथमान्तात्सप्तम्यर्थे कन् स्यात् यत्प्रथमान्तमन्नं चेत्प्रायविषयं तत् । गुडापूपाः प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी । * **वटकेभ्य इनिर्वाच्यः** । वटकिनी । ⧗ **कुल्माषादञ्** ।५।२।८३। कुल्माषाः प्रायेणान्नमस्यां कौल्माषी । ⧗ **श्रोत्रियंश्छन्दोऽधीते** ।५।२।८४। श्रोत्रियः । वेत्यनुवृत्तेश्छान्दसः । ⧗ **श्राद्धमनेन भुक्तमिनिठनौ** ।५।२।८५। श्राद्धी । श्राद्धिकः । ⧗ **पूर्वादिनिः** ।५।२।८६। पूर्वं कृतमनेन पूर्वी ।

---

ख्यायां 'यस्मादधिकं' 'तदस्मिन्नधिकम्' इति च निर्देशद्वयात् पञ्चमीसप्तम्यौ भवतः । अधिको द्रोणः खार्याः । अधिको द्रोणः खार्यामिति । द्वितीये तु क्तेन कर्मणोऽभिहितत्वात्प्रथमा । अधिका खारी द्रोणेन । कर्मणोऽभिहितत्वादेव पञ्चमीसप्तम्याविह न शंकनीये ॥—**अनुका**—॥ समाहारद्वन्द्वे सौत्र पुंस्त्वम् । सूत्रत्वाल्लिङ्गव्यत्यय इति फलितोऽर्थः ॥—**अन्वभिभ्यां कनिति** । क्रियाविशिष्टसाधनवाचिभ्यां स्वार्थे निपात्यत इत्यर्थः ॥—**पार्श्वेनान्विच्छति** ॥ 'आकर्षादिभ्यः कन्' इत्यतः कन्ननुवर्तते ॥—**अनृजुरिति** । तिर्यगवस्थानात्पार्श्वमनृजु, तत्साधर्म्यादुपायोऽपि ॥ इह शीतोष्णपार्श्वायःशूलदण्डाजिनशब्दा गौणा एव गृह्यन्ते । मुख्यार्थेभ्यस्तु प्रत्ययो न भवत्यनभिधानात् ॥—**तावतिथं ग्रहणमिति लुग्वा** ॥ तावतां पूरणं तावतिथम् । 'वतोरिथुक्' । यथा 'तस्यापत्यम्' इत्यत्र तस्येति षष्ठ्यन्तानां सामान्यनिर्देशस्तथात्र 'तावतिथम्' इति पूरणप्रत्ययान्तानां सामान्यनिर्देशः ॥ अनन्तरावपि ठक्ठञौ नानुवर्तेते, अस्वरितत्वादित्यभिप्रेत्याह—**कन्स्यादिति** ॥—**पूरणप्रत्ययस्येति** । न तु कनः लुक् । वाग्रहणानर्थक्यप्रसङ्गात् । पञ्चमं पञ्चमकमित्यादिरूपं हि तेन साध्यम् । तच्च महाविभाषाधिकाराद्विकल्पेन कन उत्पत्त्या सिद्धमेव तस्मात्पूरणप्रत्ययस्यैव लुक्सूत्रकारस्याभिमत इति व्याचष्टे—**द्विकमिति** । वार्तिककारस्तु कन एव लुगिति व्याख्यामभिप्रेत्य 'तावतिथं ग्रहणमिति लुग्वावचनानर्थक्य विभाषाग्रहणात्' इत्याह ॥ तन्मते द्वितीयकं द्वितीयमित्यैव रूपं न तु द्विकमिति बोध्यम् ॥—**तावतिथेनेति** । पूरणप्रत्ययान्ताद्ग्रहणोपाधिकात् स्वार्थे विधीयमानो ग्रहीतरि न प्राप्नोतीति वचनमिति कैयटः ॥—**स एष ग्रामणीः** ॥ ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमरः ॥—**करभ** इति ॥ उष्ट्रबालकः ॥—**द्वितीयेऽहनीति** ॥ यद्यपि द्वितीयशब्दः कालवाची न भवति, तथाप्यर्थप्रकरणादिना वृत्तिविषये काले वर्तत इति भावः ॥ न: साक्षात्कालवाचिभ्यो मासादिभ्यो न भवति, द्वितीयादिभ्यस्तु भवतीत्यत्र किं मानमिति चेत् । अत्राहुः—उत्तरसूत्रस्थसंज्ञापकर्षणाच्छब्दस्वाभाव्याद्वा तद्बोध्यमिति ॥—**वटकेभ्य** इति । कनि प्राप्ते वचनम् ॥ ननु संज्ञाग्रहणात्कन्न भविष्यतीति चेत् ॥ किं ततः ॥ इनेरप्राप्तत्वात्तदर्थं वचनमङ्गीकार्यमेव ॥ 'अत इनिठनौ–' इत्येव कथंचिदिनिः सिध्यतीत्याशात्र न कार्या । 'सप्तम्या च नतौ स्मृतौ' इतिवचनात् ॥—**श्रोत्रियन्**—॥ यश्छन्दोऽधीते सः श्रोत्रियो भवति । अ: भाष्ये 'छन्दोऽधीते इत्यस्य वाक्यस्यार्थे श्रोत्रियन्नित्येतत्पदं निपात्यते' इति वाक्यार्थे पदवचनपक्षः । 'छन्दसो वा श्रोत्रभाव निपात्यते 'तदधीते' इत्येतस्मिन्नर्थे घंश्च प्रत्ययः' इति पक्षान्तरं च स्थितम् । व्याख्यातं च कैयटेन 'वाक्यार्थस्य संबन्धरूपस्य क्रियारूपस्य वाऽसत्वभूतत्वात् । श्रोत्रियशब्दस्य च सत्वभूतार्थाभिधायित्वाद्वाक्यार्थग्रहणेन तदाश्रयछन्दोऽध्याय अभिधीयत इति ॥ एकां शाखामधीत्य श्रोत्रियो भवतीति धर्मशास्त्रम् ॥—**वेत्यनुवृत्तेरिति** । 'तावतिथं ग्रहणमिति लुग्वा' इत्यतः ॥—**श्राद्धमनेन**—॥ श्रद्धास्मिन्नस्तीति श्राद्धम्–'प्रज्ञाश्रद्धार्चाभ्यो णः' ॥ यद्यपि पित्र्यं कर्म श्राद्धशब्देनोच्यते । तथापीह तत्साधनद्रव्यमुच्यते । मुख्यस्य श्राद्धस्य भोक्तुमशक्यत्वात् ॥—**श्राद्धी । श्राद्धिक** इति ॥ 'अ तन एवेष्यते' अद्य भुक्ते श्वः श्राद्धिक इति मा भूत् ॥—**पूर्वादिनिः** ॥ पूर्वमिति क्रियाविशेषणाद् द्वितीयान्तात्प्रत्ययः 'अनेन' इति कर्तृवाचकमनुवर्तते । न च क्रियामन्तरेण कर्ता संभवतीति कांचित्क्रियामध्याहृत्य प्रत्ययो विधेयस्तदाह-

---

१ कालप्रयोजनादिति—कालवाचकः पूरणप्रत्ययान्त एव, ततः सप्तम्यन्ताद्भवे प्रत्ययः । कारणवाचकात्तृतीयान्ताज्जनितेऽर्थे, फलबोधकात्प्रथमान्तादस्य कार्यमित्यर्थे, अभिधानस्वाभाव्यादिति शब्देन्दुशेखरे ।

सपूर्वाच्च ।५।२।८७। कृतपूर्वी । इष्टादिभ्यश्च ।५।२।८८। इष्टमनेन इष्टी । अधीती । छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ।५।२।८९। लोके तु परिपन्थिशब्दो न न्याय्यः । अनुपद्यन्वेष्टा ।५।२।९०। अनुपदमन्वेष्टा अनुपदी गवाम् । साक्षाद्द्रष्टरि संज्ञायाम् ।५।२।९१। साक्षाद्द्रष्टा साक्षी । क्षेत्रियच् परक्षेत्रे चिकित्स्यः ।५।२।९२। क्षेत्रियो व्याधिः । शरीरान्तरे चिकित्स्यः । अप्रतीकार्य इत्यर्थः । इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ।५।२।९३। इन्द्र आत्मा तस्य लिङ्गं करणेन कर्तुरनुमानात् । इतिशब्दः प्रकारार्थः । इन्द्रेण दुर्जयमिन्द्रियम् । तदस्यास्त्यस्मिन्निति मतुप् । ५।२।९४। गावोऽस्यास्मिन्वा सन्ति गोमान् ॥ भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ १ ॥ रसादिभ्यश्च ।५।२।९५। मतुप् । रसवान् । रूपवान् । अन्यमत्वर्थीयनिवृत्त्यर्थं वचनम् । रस, रूप, वर्ण, गन्ध, स्पर्श, शब्द, स्नेह गुणात् । एकाचः ॥ स्ववान् । गुणग्रहणं रसादीनां विशेषणम् ।

पूर्वं कृतमनेनेति ॥—सपूर्वाच्च ॥ 'अनेन' इति, पूर्वसूत्र चानुवर्तते ॥ विद्यमानपूर्वकात्पूर्वशब्दादनेनेत्यस्मिन्नर्थे इनिः स्यात् ॥ 'पूर्वान्ताच्च' इत्येतत्फलितम् ॥—कृतपूर्वीति । कृतपूर्वशब्दयोः 'सुप्सुपा' इति समासः । इह प्रातिपदिकाधिकारात् 'पूर्वादिनिः' इत्यनेनैव पूर्वशब्दान्तप्रातिपदिकात् कृतपूर्वशब्दादिनौ सिद्धे 'सपूर्वाच्च' इत्येतद् 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति परिभाषा ज्ञापयति । कृतपूर्वीत्येतत्सिद्धये 'पूर्वान्ताच्च' इति स्वीकृते तेनैव व्यपदेशिवद्भावेन पूर्वीत्यपि रूपे सिद्धे 'पूर्वादिनिः' इत्येतत् 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति परिभाषां ज्ञापयति ॥—छन्दसि—॥ पर्यवस्थातृशब्दाच्छत्रुपर्यायात्स्वार्थे इनिप्रत्ययः अवस्थातृशब्दस्य पन्थपरएतावादेशौ निपात्येते ॥ अपत्य 'परिपन्थिनम्' 'मा त्वा परि परिणो विदन्' । उभयत्रापि परिशब्दे अवग्रहः ॥—लोके त्विति । 'अनुपस्थितपरिपन्थिभिः पार्थिवैः' इत्यादौ ॥—अनुपद्यन्वेष्टा ॥ अन्वेष्टरि इनिः प्रत्ययो निपात्यते ॥—अनुपदमिति ॥ पदस्य पश्चात् । पश्चादर्थेऽव्ययीभावः ॥—अनुपदी गवामिति ॥ पदापेक्षया षष्ठी । गोपदात्पश्चादन्वेषण गवामेव । तेन हिरण्यादावन्वेष्ये न भवतीति हरदत्तः ॥—साक्षाद्द्रष्टरि—॥ द्रष्टर्यर्थे इनि' स्यात् ॥ साक्षाच्छब्दोऽव्ययम्, तेन 'प्रकृतिवदनुकरणम्' इत्यतिदेशादिह सूत्रे पञ्चम्या लुक् ॥ 'उदस्थास्तम्भो'–' 'अवाच्चालम्बना–' इत्यादौ तु 'प्रकृतिवत्' इत्यतिदेशस्य वैकल्पिकत्वेनाव्ययत्वाभावात् पञ्चम्या लुङ् न भवतीति बोध्यम् ॥—साक्षीति । 'अव्ययानां भमात्रे' इति टिलोपः । यद्यपि साक्षाद्द्रष्टारस्त्रयो भवन्ति, दाता ग्रहीता उपद्रष्टा च, तथापीह सञ्ज्ञाग्रहणात् साक्षिशब्देनोपद्रष्टैवोच्यत इत्याहुः ॥—क्षेत्रियच्—॥ 'परक्षेत्रशब्दात्सप्तम्यन्ताद्घच् परशब्दस्य लोपश्च निपात्यते' इति मनोरमा ॥ अन्ये तु 'परक्षेत्रे चिकित्स्य' इत्यर्थे 'क्षेत्रियच्' इति निपात्यते । वाक्यार्थे पदवचनं श्रोत्रियवदित्यप्याहुः ॥ एवमन्यत्राप्यूह्यम् ॥—क्षेत्रियो व्याधिरिति । किञ्च क्षेत्रिय विषम् । यत्परशरीरे सङ्क्रमय्य चिकित्स्यते ॥ अपि च क्षेत्रियाणि तृणानि । यानि सस्यानि सस्यार्थक्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि ॥ किं च क्षेत्रियः पारदारिकः ॥ परदाराः परक्षेत्रम् । तत्र चिकित्स्यो निग्रहीतव्यः । सर्वेऽप्येते पक्षा आकरे स्थिताः ॥—इन्द्रियमिन्द्र—॥ इन्द्रशब्दाद्घच । इन्द्रेण दृष्टं ज्ञातं 'मम चक्षुः, मम श्रोत्रम्' इत्यादिक्रमेण । सृष्टमदृष्टद्वारा । जुष्ट प्रीणित सेवित वा । दत्त यथायथ विषयेभ्यः ॥ रूढिशब्दोऽयं कथंचिद्व्युत्पादितः ॥—तदस्यास्त्यस्मिन्निति मतुप् ॥ तदिति प्रथमासमर्थात्प्रत्ययः ॥ अस्तीति पुरुषवचने अविवक्षिते, कालस्तु विवक्षितः धने गते भाविनि वा 'धनवानयम्' इति प्रतीत्यभावात् । इतिशब्दो विषयविशेषलाभार्थस्तथाहि–'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' ॥ अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः ॥—भूमा बहुत्वम् । तच्चापेक्षिकम् । यस्य हि यावदुचित तावदेव बहुत्वबोधकबहुशब्देनापि प्रतीयते । यथा पञ्चषाभिरपि गोभिर्देवदत्तस्य बह्वयो गाव इति व्यवहारः । राज्ञस्तु सहस्रगोरपि गावोऽल्पा इति व्यवहारः ॥ गोमान् । यवमान् । यस्य खार्यादिभिः परिच्छिन्ना यवाः सन्ति स एवमुच्यते ॥ ननु सहस्रेणापि यवैर्यवमानिति ॥ कथ तर्हि 'यवमतीभिरद्भिर्यूप प्रोक्षति' इति । अत्राहुः । जातिमात्रसंबन्धस्य विवक्षितत्वाद्भूमाभावेऽप्यत्र मतुप् ॥ भूमादिग्रहण तु प्रायेण भूमादयः प्रतीयन्त इत्येवं परिमितिः ॥—निन्दायां, ककुदावर्तिनी कन्या ॥—प्रशंसायां, रूपवान् ॥—नित्ययोगे, क्षीरिणो वृक्षाः ॥—अतिशायने उदरिणी कन्या ॥—संबन्धे, दण्डी । संसर्गः संयोगः । तेन सयुक्तदण्ड एवोच्यते, न तु गृहावस्थितदण्डोऽपि ॥ इह दण्डपुरुषयोः सयोगे सत्यपि दण्डी पुरुष इत्यादिवत् 'पुरुषी दण्डः' 'पुरुषवान् दण्डः' इति न प्रयुज्यते । वृत्तिनियामकस्य विलक्षणसंबन्धस्याभावात् । संयोगे समानेऽपि प्रतीतिबलाद्वैलक्षण्य कल्प्यत इत्याहुः ॥ एवं च यवसंसर्गमात्रेण यवमत्य आपो न भवन्ति, किं तु यवमण्डलवच्च पात्रमेवेत्याशयेन 'कथं यवमतीभिरद्भिः' इत्याक्षेपो भूमादिग्रहणं प्रायिकमित्याद्युत्तरं च संगच्छत एव ॥—अन्यमत्वर्थीयेति ॥ कथं तर्हि 'रूपिणी कन्या' 'रसिको नटः' इति । अत्राहुः । रसादिगणे 'गुणात्' इति पठ्यते । तेन गुणवाचिभ्य

तसौ मत्वर्थे ।१।४।१९। तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। वसोः संप्रसारणम्। विदुष्मान्। * गुणवचनेभ्यो मतुपो लुगिष्टः ॥ शुक्लो गुणोऽस्यास्तीति शुक्लः पटः। कृष्णः। मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।८।२।९। मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः स्यात्। किंवान्। ज्ञानवान्। विद्यावान्। लक्ष्मीवान्। यशस्वान्। भास्वान्। यवादेस्तु यवमान्। भूमिमान्। झयः ।८।२।१०। झयन्तान्मतोर्मस्य वः स्यात्। अपदान्तत्वान्न जश्त्वम्। विद्युत्वान्। संज्ञायाम् ।८।२।११। मतोर्मस्य वः स्यात्। अहीवती। मुनीवती। शरादीनां चेति दीर्घः। आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ।८।२।१२। एते षट् संज्ञायां निपात्यन्ते। आसनशब्दस्यासन्दीभावः। आसन्दीवान् ग्रामः। अन्यत्रासनवान्। अस्थिशब्दस्याष्ठीभावः। अष्ठीवान् नाम ऋषिः। अस्थिमानन्यत्र। चक्रशब्दस्य चक्रीभावः। चक्रीवान्नाम राजा। चक्रवानन्यत्र। कक्ष्यायाः संप्रसारणम्। कक्षीवान्नाम ऋषिः। कक्ष्यावानन्यत्र। लवणशब्दस्य रुमण्भावः। रुमण्वान्नाम पर्वतः। लवणवानन्यत्र। चर्मणो नलोपाभावो णत्वं च। चर्मण्वती नाम नदी। चर्मवत्यन्यत्र। उदन्वानुदधौ च ।८।२।१३। उदकस्य उदन्भावो मतौ उदधौ संज्ञायां च। उदन्वान् समुद्रः ऋषिश्च। राजन्वान् सौराज्ये ।८।२।१४। राजन्वती भूः। राजवानन्यत्र। प्राणिस्थादातो लजन्यतरस्याम् ।५।२।९६। चूडालः। चूडावान्। प्राणिस्थात्किम्। शिखावान्दीपः। आतः किम्। हस्तवान्। प्राण्यङ्गादेव। नेह। मेधावान्। प्रत्ययस्वरेणैव सिद्धे अन्तोदात्तत्वे चूडालोऽसीत्यादौ स्वरितो वानुदात्ते पदादाविति स्वरितबाधनार्थश्चकारः। सिध्मादिभ्यश्च ।५।२।९७। लच्वा स्यात्। सिध्मलः सिध्मवान्। अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं ननु प्रत्ययविकल्पार्थम्। तेनाकारान्तेभ्य इनिठनौ न ॥ वातदन्तबललललाटानामूङ् च ॥ वातूलः। वत्सांसाभ्यां कामबले

एवान्यमत्वर्थीयस्य निषेधः, रूपिणीत्यत्र तु रूपशब्देन सौन्दर्यं गृह्यते। तच्च न गुणः ॥ रसिक इत्यत्र तु रसशब्देन भावो गृह्यते। न तु रसनाग्राह्यो गुण इति ॥—**गुणवचनेभ्य** इति ॥ गुणे तद्वति च प्रसिद्धा ये शुक्लादयस्त एव गृह्यन्ते। न तु रूपादयोऽपि। तेन रूपं वस्त्रमित्यादिप्रयोगो न भवति ॥—**मादुपधाया**—॥ म्च अश्च मं समाहारे द्वन्द्वः। तेन मतुप्प्रत्ययाक्षिप्तं प्रातिपदिकं विशेष्यते। तदाह—**मवर्णावर्णान्तादि**ति ॥ 'उपधायाश्च' इति वाक्यान्तरम्। उपधाभूतान्मात्परस्य मतोरित्यर्थः। 'येन नाव्यवधान' न्यायेनान्त्याल्व्यवहितेऽपि भवतीति। एवमक्षरार्थे स्थिते फलितमाह—**मवर्णावर्णोपधादि**ति ॥—**झयः** ॥ इदमपि मतुबाक्षिप्तस्य प्रातिपदिकस्य विशेषणम्। तदाह—**झयन्तादि**ति ॥—**विद्युत्वानि**ति। एतेन 'वह्निमद्वान्' इति नैयायिकप्रयोगो निरस्तः। उक्तरीत्या जश्त्वस्याप्रवृत्तेः। मलन्तान्मतुपो निषेधाच्च ॥ ननु गोधुग्वान् मधुलिण्मानित्यत्र हस्य घत्वे च कृते 'झयः' इति वत्वप्रवृत्त्याऽनुनासिकपरत्वाभावात् 'प्रत्यये भाषायां नित्यम्' इत्यनेन घकारढकारयोरनुनासिकाप्रवृत्तेर्गोधुग्वान् मधुलिड्वानित्यनिष्टं प्रसज्येत। मैवम्। घत्वढत्वयोरसिद्धत्वेन 'झयः' इति वत्वाप्रवृत्तेः॥—**प्राणिस्थात्**—॥—**शिखावान् दीप** इति। प्रत्युदाहरणदिगियं दर्शिता। शिखाशब्दस्य श्रीह्यादिपाठेन लचोऽप्रसङ्गात्। 'चूडावान् वृक्षः' इति प्रत्युदाहार्यमिति हरदत्तः ॥ न च वृक्षस्य प्राणित्वमस्तीति शङ्क्यम्। मुखनासासंचारी वायुः प्राणः, तद्वानेव प्राणीति तदाशयात् ॥—**प्राण्यङ्गादेवे**ति। एतच्चेति करणानुवृत्त्या लभ्यते ॥—**चूडालोऽसी**ति ॥ असीत्यस्य 'तिङ्ङतिङः' इति निघातः। चूडालशब्दात्सोरुत्वे तस्य 'अतो रोरप्लुतात्' इत्युकारे कृते हलां स्वसनधर्मत्वात्तत्स्थानिकोऽकारोऽनुदात्तः। सुपृस्थानिकस्यापि सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्त इत्यन्ये ॥ पूर्वेण सह आद्गुणे सति 'एकादेश उदात्तेन' इत्योकार उदात्तः। ततः 'एङः पदान्तादति' इति पूर्वरूपमेकादेशस्तस्य 'स्वरितो वानुदात्त' इत्यादिना स्वरिते प्राप्ते तद्बाधनाय चकार इत्यर्थः।—**सिध्मादिभ्यश्च** ॥ सिध्म गडु मणि विजय निष्पाव पांसु हनु पार्ष्ण्यादयः सिध्मादयः ॥—**समुच्चयार्थमि**ति। निपातानामनेकार्थत्वादिति भावः। न च इनिठनावप्यन्यतरस्यांग्रहणेन समुच्चीयेतामिति शङ्क्यम्। तयोरप्रकृतत्वात्। मतुप्प्रत्ययस्तु समुच्चीयते। तस्य प्रकृतत्वात्। अस्ति चेह लिङ्गं 'केशाद्वः' इत्यत्रान्यतरस्यांग्रहणम्। तद्धि इनिठनोः प्राप्त्यर्थं क्रियते। प्रकृतस्यान्यतरस्याग्रहणस्य विकल्पार्थत्वे तदनुवृत्त्यैव सिद्धौ किं तेन। क्रियमाणं तु पूर्वस्यान्यतरस्याग्रहणस्य समुच्चयार्थतां ज्ञापयत्येव। तथा च वार्तिकं, 'लजन्यतरस्यामिति समुच्चयः' इति। अय भावः। 'प्राणिस्थात्' इति सूत्रेण लचि विकल्पिते पक्षे मतुबिति चूडालश्चूडावानिति रूपद्वयं यद्यपि सिध्यति। तथापि सिध्मादिषु येऽदन्तास्तेषु इनिठनोः प्रवृत्त्या दोषः ॥ समुच्चयार्थत्वेन न दोष इति ॥ एवं च 'लच्वा स्यात्' इति वृत्तौ वाशब्दः समुच्चये बोध्यः। 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इत्यमरः ॥—**वातदन्ते**त्यादि सिध्माद्यन्तर्गणसूत्रम् ॥—**ऊङ् चे**ति। ङित्त्वादन्तादेशः। ऊकारमात्रोच्चावन्तादेशत्वसिद्धावपि प्रत्ययत्वशङ्कानिवारणाय ङोऽनुबन्धः कृतः। न च षष्ठ्यन्ताद्विहितस्य प्रत्ययत्वं नेति शङ्क्यम्। 'अहंशुभमोर्युस्' 'गोपयसोर्यत्'

१ आसन्दीवदिति—अत्र सूत्रे कक्षीवच्छब्दपाठोऽनार्ष इति 'न संप्रसारणे' इति सूत्रस्थभाष्यस्वरसः। तत्र हि 'कक्ष्यायाः संज्ञायां मतौ सम्प्रसारणं वक्तव्यम्' इति वचनमेवारब्धम्, वत्वं तु 'संज्ञायाम्' इति सूत्रेण सिद्धमिति।

।५।२।९८। आभ्यां लच् स्याद्यथासंख्यं कामवति बलवति चार्थे। वत्सलः। अंसलः। **फेनादिलच्च** ।५।२।९९। चाल्लच्। अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमनुवर्तते। फेनिलः। फेनलः फेनवान्। **लोमादिपामादिपिच्छादिभ्यः शनेलचः** ।५।२।१००। लोमादिभ्यः शः। लोमशः। लोमवान्। रोमशः। रोमवान्। पामादिभ्यो नः। पामनः। * **अङ्गात्कल्याणे**। अङ्गना। * **लक्ष्म्या अच्च**। लक्ष्मणः। * **विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः**॥ विषुणः। पिच्छादिभ्य इलच्। पिच्छिलः। पिच्छवान्। उरसिलः। उरस्वान्। **प्रज्ञाश्रद्धार्चाभ्यो णः** ।५।२।१०१। प्राज्ञो व्याकरणे। प्राज्ञा। श्राद्धः। आर्चः॥ * **वृत्तेश्च**। वार्तः। **तपःसहस्राभ्यां विनीनी** ।५।२।१०२। विनीन्योरिकारो नकारपरित्राणार्थः। तपस्वी। सहस्री। असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमण्बाधा माभूदिति। सहस्रात्तु ठनोऽपि बाधनार्थम्। **अण् च** ।५।२।१०३। योगविभाग उत्तरार्थः। तापसः। साहस्रः। * **ज्योत्स्नादिभ्य उपसंख्यानम्**। ज्यौत्स्नः। तामिस्रः। **सिकताशर्कराभ्यां च** ।५।२।१०४। सैकतो घटः। शार्करः। **देशे लुबिलचौ च** ।५।२।१०५। चादण् मतुप् च। सिकताः सन्त्यस्मिन्देशे सिकताः सिकतिलः। सैकतः। सिकतावान्। एवं शर्करा इत्यादि। **दन्त उन्नत उरच्** ।५।२।१०६। उन्नता दन्ताः

---

इत्यादौ प्रत्ययत्वाभ्युपगमात्॥—**वातूल** इति। अन्तोदात्तमिदम्। प्राचा तु 'बलादूल' 'वाताच्च' इति पठित्वा वातूल इत्युक्तम्। तदुपेक्ष्यम्। प्रत्ययस्वरेण मध्योदात्तप्रसङ्गात्। गणसूत्रबलेनान्तोदात्तमेवेष्यत इत्याहुः॥ **पार्ष्णिधमन्योर्दीर्घश्च**'। '**क्षुद्रजन्तूपतापाच्च**' इत्यपि गणे पठ्यते। पार्ष्णीलः धमनीलः। क्षुद्रजन्तुः। यूकालः मक्षिकालः॥ उपतापो रोगः। विपादिकालः॥—**वत्सांसाभ्याम्**—॥—**कामवती**ति। कामबलशब्दौ सूत्रे अर्शआद्यजन्ताविति भावः॥—**वत्सल** इति॥ स्नेहवानित्यर्थः॥ ननु वत्सासशब्दौ वयोविशेषे प्राण्यङ्गविशेषे च रूढौ, न कामबलयोः। तत्कथं ताभ्यां लजन्ताभ्या कामवान् बलवांश्चोच्यत इति चेत्। अत्राहुः। वृत्तिविषये वत्सासशब्दौ स्नेहबलयोर्वर्तेते इति॥ अस्मिंस्तु प्रकरणे सर्वत्र समुच्चीयमानोऽपि मतुबिह नेष्यते। मतुबन्तेनोक्तार्थस्याप्रतीतेः। किं त्वर्थान्तरमेव तेन प्रतीयते। वत्सवती गौः। अंसवान् दुर्बल इति॥—**लोमादि**—॥ इह 'नन्दिग्रहिपचादिभ्यः' इति वत् 'लोमपामपिच्छादिभ्यः' इति सुपठम्। '**अङ्ग कल्याणे**' इति गणसूत्रमर्थतः पठति—**अङ्गादिति**॥ **शाकीपलालीदद्र्वो ह्रस्वत्वं च,**। चान्नप्रत्ययः॥ महच्छाकं शाकी तद्वत् शाकिनम्॥ महत्पलालं पलाली तद्वत्पलालिनम्॥ 'दरिद्रातेरालोपश्च' इत्युणादिसूत्रेण इकाराकारयोर्लोपश्चाद्रूप्रत्ययः। दद्रूस्त्वग्रोगविशेषः। तद्वान् दद्रुणः॥—**विश्वगिति**। 'समर्थानाम्' इत्यस्यापवादोऽयम्। अकृतसन्धेरकृतयणादेशस्याञ्चतेर्लोपः। चकारान्नप्रत्यय इत्यर्थः॥ यदि तु कृते यणादेशे उत्तरपदलोपः स्यात्। तदा वलिलोपे सति विष्ण इति स्यात्॥—**विषुण** इति। विषु नाना अञ्चन्तीति विष्वञ्चित्तान्यस्य सन्ति विषुणः विषुवदाख्यः कालः। तस्य हि नानागतानि दिनानि सन्ति। दिनान्तराणां न्यूनाधिकभावस्य तन्मूलत्वात्। अयं भावः। विषुवति दिनानां समतायां जातायामग्रे न्यूनान्यधिकानि च दिनानि भवेयुरिति नानागतदिनवत्त्वं यद्यपि विषुवति नास्ति। तथापि नानागतदिनमूलभूतदिनानां सत्त्वात्तथोच्यत इति॥ तथा नानागमनवत्त्वान्मृत्युर्वायुरव्यवस्थितचित्तश्च विषुणशब्देनोच्यते॥—**प्रज्ञाश्रद्धा**—॥—**प्राज्ञो व्याकरणमि**ति। गुणभूतया क्रियया कर्मत्वेन संबन्धः कृद्ग्रहणात्तद्धितप्रयोगे षष्ठी न। कृतपूर्वीकटमितिवत्॥ ननु प्रकर्षेण जानातीति प्रज्ञः। स एव प्रज्ञावान्। तथा च प्रज्ञ एव प्राज्ञ इत्यणि कृते सिद्धमिष्टं किमत्र प्रज्ञाग्रहणेनेत्याशङ्क्य निराकुर्वन्नाह—**प्राज्ञे**ति। स्त्रियां टाप्। 'प्रज्ञादिभ्यश्च' इत्यणि तु ङीप् स्यादिति भावः॥—**वृत्तेश्चेति**। वार्तिकमिदम्। काशिकाकृता तु वृत्तिशब्दः सूत्रे प्रक्षिप्तः॥ विच्छिन्नस्य प्रतिविधानं वृत्तिः॥—**तपस्वी**—॥—**सहस्री**ति। असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा मा भूदिति। सहस्रात्तु ठनोऽपि बाधनार्थम्। एतच्च समाधानं मूलपुस्तकेष्वपि क्वचिद्दृश्यते॥—**उत्तरार्थ** इति॥ विनीन्योर्यथासंख्यप्रवृत्त्यर्थश्चेत्यपि बोध्यम्॥—**ज्यौत्स्न** इति। शुक्लपक्षः॥—**तामिस्र** इति। कृष्णपक्षः नरकविशेषश्च। तमःसमूहस्तमिस्रं 'ज्योत्स्नातमिस्रा—' इति निपातनान्मत्वर्थीयो रः। तत्र ह्यवयवभूतानि तमांसि विद्यन्ते। तदस्मिन्नस्तीति विग्रहे रान्तादण्। स्त्रियां तामिस्री॥ 'तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता' इत्यमरोक्तौ तु तमिस्रेत्येतद्रान्तं न त्वणन्तमिति न विरोधः॥ एवं च तमिस्रा रात्रयो अस्मिन् सन्ति तामिस्रः पक्ष इत्यपि व्याख्यातुं शक्यम्॥—**सिकताशर्क**—॥ देशे विशेषस्य वक्ष्यमाणत्वादाह—**घट** इति॥—**मतुप् चेति**॥ अन्यतरस्याग्रहणेन सर्वत्र मतुपः समुच्चयादिति भावः॥—**सिकता** इति। लुपि युक्तवद्भावः॥ अत्र सूत्रद्वयस्योदाहरणान्यमरः सजग्राह—'स्त्री शर्करा शर्करिलः शार्करः शर्करावति। देश एवादिमावेवमुन्नेयाः सिकतावति' इति॥—**दन्त उन्न**—॥ उन्नत इति किम्। दन्त-

१ उत्तरार्थ इति—तपःसहस्राभ्यामणविनीनी इति न्यासेन भिन्नविभक्त्युच्चारणादण उभयसबन्धो विनीनोर्यथासंख्यं च सिद्धमिति भावः।

सन्ध्यस्य दन्तुरः। ऊषसुषिमुष्कमधो रः ।५।२।१०७। ऊषरः। सुषिरः। मुष्कोऽण्डः, मुष्करः। मधु माधुर्यम्, मधुरः। * रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्। खरः। मुखरः। कुञ्जो हस्तिहनुः, कुञ्जरः। * नगपांसुपाण्डुभ्यश्च। नगरम्। पांसुरः। पाण्डुरः। पाण्डरशब्दस्तु अव्युत्पन्न एव। * कच्छ्वा ह्रस्वत्वं च। कच्छुरः। द्युद्रुभ्यां मः ।५।२।१०८। द्युमः। द्रुमः। केशाद्वोऽन्यतरस्याम् ।५।२।१०९। प्रकृतेनान्यतरस्यांग्रहणेन मतुपि सिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थम्। केशवः केशी। केशिकः। केशवान्। * अन्येभ्योऽपि दृश्यते। मणिवो नागविशेषः। हिरण्यवो निधिविशेषः। * अर्णसो लोपश्च। अर्णवः। गाण्ड्यजगात्संज्ञायाम् ।५।२।११०। ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः। गाण्डिवम्। गाण्डीवम्। अर्जुनस्य धनुः। अजगवं पिनाकः। काण्डाण्डादीरन्नीरचौ ।५।२।१११। काण्डीरः। आण्डीरः। रजःकृष्यासुतिपरिषदो वलच् ।५।२।११२। रजस्वला स्त्री। कृषीवलः। वल इति दीर्घः। आसुतीवलः शौण्डिकः। परिषद्वलः। पर्षदिति पाठान्तरम्। पर्षद्वलम्। * अन्येभ्योऽपि दृश्यते। भ्रातृवलः। पुत्रवलः। शत्रुवलः। वल इत्यत्र संज्ञायामित्यनुवृत्तेर्नेह दीर्घः। दन्तशिखात्संज्ञायाम् ।५।२।११३। दन्तावलो हस्ती। शिखावलः केकी। ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ।५।२।११४। मत्वर्थे निपात्यन्ते। ज्योतिष उपधालोपो नश्च प्रत्ययः। ज्योत्स्ना। तमस उपधाया इत्वं रश्च। तमिस्रा। स्त्रीत्वमतन्त्रम्। तमिस्रम्। शृङ्गादिनच्। शृङ्गिणः। ऊर्जसो वलच्। तेन बाधा माभूदिति विनिरपि। ऊर्जस्वी। ऊर्जस्वलः। ऊर्जोऽसुगागमइति वृत्तिस्तु चिन्त्या। ऊर्जस्वतीतिवदसुन्नन्तेनैवोपपत्तेः। गोशब्दान्मिनिः। गोमी। मलशब्दादिनच्। मलिनः। ईमसश्च। मलीमसः। अत इनिठनौ। ५।२।११५। दण्डी दण्डिकः। व्रीह्यादिभ्यश्च ।५।२।११६। व्रीही। व्रीहिकः। न च सर्वेभ्यो व्रीह्यादिभ्य इष्ठनाविष्येते। किं तर्हि शिखामालासंज्ञादिभ्य इनिः। यवखदादिभ्य इकः। अन्येभ्य उभयम्। तुन्दादिभ्य इलच्च ।५।२।११७। चादिनिठनौ मतुप् च। तुन्दिलः। तुन्दी। तुन्दिकः। तुन्दवान्। उदर, पिचण्ड, यव, व्रीहि।

---

वान्॥—ऊषसुषि—॥ समाहारद्वन्द्वे सौत्रं पुंस्त्वम्॥ 'स्यादूषः क्षारमृत्तिका'। 'उषवानूषरः' इत्यमरः। सुषिश्छिद्रम्॥—खर इति। महत्कण्ठविवरं ख तद्वानित्यर्थः। गर्दभे रूढोऽयम्॥ मुखरो वाचाल इति हरदत्तः॥—नगरमिति। नगा वृक्षाः पर्वताश्च। जातिशब्दोऽयम्। तथा च नगरीत्यत्र ङीष् भवति॥ नगशब्दोऽयमश्मादिषु पठ्यते इति 'वुञ्छण्–' आदिसूत्रेणास्य सिद्धत्वादस्माद्रोऽयं न वक्तव्य इति हरदत्तः॥—पाण्डुर इति। पाण्डुः शुक्लो वर्णस्तद्वान्॥—अव्युत्पन्न एवेति। गुणमात्रे गुणिनि च वर्तते। 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः। 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति च॥—कच्छ्वा। कच्छूस्त्वग्रोगविशेषः॥—द्युद्रुभ्यां मः॥—द्युम इति। द्यौरस्यास्ति 'दिव उत्' इत्युत्वम्॥ द्रुर्वृक्षः सोऽस्यास्ति जनकतयेति द्रुमोऽपि वृक्ष एव। 'पलाशी द्रुद्रुमागमाः' इत्यमरः। इह सर्वत्र समुच्चीयमानोऽपि मतुप् रूढशब्देषु नेष्यते। तदर्थस्य मतुपा अभिधातुमशक्यत्वात्॥—दृश्यत इति॥ व इत्यनुवर्तते॥—अर्णव इति। अर्तेरसुन् नुट्च। अर्णः जल तद्वान्॥—संज्ञायामिति। 'तदस्यास्ति–' इति सूत्रस्थेति शब्दस्यैवायं प्रपञ्चः। यणेति।—'ल्यपत्यात्–' इतिवत्कृतयणादेशानुकरणं न भवति। लक्ष्ये यणोऽभावात्। किं तु सूत्रे सांहितिकोऽयं यणिति भावः॥ प्रयुज्यते चोभयथा। 'अधिरोहति गाण्डिवं महेषौ'। 'गाण्डीवी कनकशिलानिभं भुजाभ्याम्' इति च॥—आसुतीवल इति॥ षुञ् अभिषवे क्तिन्। आसुतिरभिषवः॥—परिषदिति। परितः सीदतीति परिषत् 'सत्सूद्विष–' इत्यादिना क्विप् 'सदिरप्रतेः' इति षत्वम्॥—पाठान्तरमिति। 'शृदृभसोऽदिः' इत्यदिप्रत्ययो बाहुलकात् पृषेरपि भवति॥ तथा च भाष्यं 'पार्षदकृतिरेषा तत्र भवता' 'सर्ववेदपार्षदं हीद शास्त्रम्' इति च। भट्टिस्त्वाह। 'पर्षद्वलान्महाब्रह्मैराटनैकटिकाश्रमान्' इति 'पर्षदेषा दशावरा' इति मनुः॥—भ्रातृवल इति। 'वले' इत्यत्राण्ग्रहणानुवृत्तेर्नेह दीर्घः। पुत्रबलादौ तु स्यात्तत्राह—संज्ञायामित्यनुवृत्तेरिति। 'वनगिर्योः' इति सूत्रादिति भावः॥—ज्योत्स्ना चन्द्रप्रभा। तत्रावयवीभूतं ज्योतिरस्तीति मत्वर्थीयोपपत्तिः। एतेन तमस्समूहे तमिस्राशब्दो व्याख्यातः। निघण्टुषु तमःपर्यायस्तमिस्रशब्दः पठितः। तत्र समूहसमूहिनोरभेदोपचार इति हरदत्तः॥—स्त्रीत्वमतन्त्रमिति। व्याख्यानमत्र शरणम्॥ ऊर्जस्विन्गोमिन्नित्यत्र नान्तत्वाभिव्यक्तये नलोपो न कृतः॥—अत इनिठनौ॥ तपरकरणं किम्। खट्वावान्॥ 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ'। एकाक्षरात्—खवान्॥ कृतः—कारकवान्। जातेः—व्याघ्रवान्। सप्तम्यां—दण्डाः अस्यां सन्ति दण्डवती शाला॥ 'तदस्यास्ति–' इति सूत्रस्थेतिकरणो विषयनियमार्थः सर्वत्रापि सबध्यत इति॥ क्वचित्कृतोऽपि भवति। कार्यी कार्यिकः। क्वचित्तु जातेरपि—तण्डुली तण्डुलिकः॥ एतच्च काशिकादौ स्पष्टम्॥—तुन्दादिभ्य इलच्च॥ अन्यतरस्यामित्यनुवर्तनादाह—मतुप् चेति। अत्र

* स्वाङ्गाद्विवृद्धौ* । 'विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युः' । विवृद्धौ कर्णौ यस्य स कर्णिकः । कर्णी । कर्णिकः । कर्णवान् । **एकगोपूर्वाट्ठञ् नित्यम्** ।५।२।११८। एकशतमस्यास्तीति ऐकशतिकः । ऐकसहस्रिकः । गौशतिकः । गौसहस्रिकः । **शतसहस्रान्ताच्च निष्कात्** ।५।२।११९। निष्कात्परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिकाट्ठञ् स्यान्मत्वर्थे । नैष्कशतिकः । नैष्कसहस्रिकः । **रूपादाहतप्रशंसयोर्यप्** ।५।२।१२०। आहतं रूपमस्यास्तीति रूप्यः कार्षापणः । प्रशस्तं रूपमस्यास्तीति रूप्यो गौः । आहतेति किम् । रूपवान् । * **अन्येभ्योऽपि दृश्यते** । हिम्याः पर्वताः । गुण्या ब्राह्मणाः । **अस्मायामेधास्रजो विनिः** ।५।२।१२१। यशस्वी । यशस्वान् । मायावी । मायावान् । व्रीह्यादिपाठादिनिठनौ । मायी । मायिकः । क्विन्नन्तत्वात्कुः स्रग्वी । * **आमयस्योपसंख्यानं दीर्घश्च** । आमयावी । * **शृङ्गवृन्दाभ्यामारकन्** । शृङ्गारकः । वृन्दारकः । * **फलबर्हाभ्यामिनच्** । फलिनः बर्हिणः । * **हृदयाच्चालुरन्यतरस्याम्** । इनिठनौ मतुप् च । हृदयालुः । हृदयी । हृदयिकः । हृदयवान् । * **शीतोष्णतृप्रेभ्यस्तदसहने** । शीतं न सहते शीतालुः । उष्णालुः । स्फायितञ्चीति रक् । तृप्रः पुरोडाशः । तं न सहते तृप्रालुः । तृप्रं दुःखमिति माधवः । * **हिमाच्चेलुः** । हिमं न सहते हिमेलुः । * **बलादूलः** । बलं न सहते बलूलः । * **वातात्समूहे च** । वातं न सहते वातस्य समूहो वा वातूलः । * **तप्पर्वमरुद्भ्याम्** । पर्वतः मरुत्तः । **ऊर्णाया युस्** ।५।२।१२३। सित्वात्पदत्वम् । ऊर्णायुः । अत्र छन्दसीति केचिदनुवर्तयन्ति । युक्तं चैतत् । अन्यथाहि अहंशुभमोरित्यत्रैवोर्णाग्रहणं कुर्यात् । **वाचो ग्मिनिः** ।५।२।१२४। वाग्मी । **आलजाटचौ बहुभाषिणि** ।५।२।१२५। * **कुत्सित इति वक्तव्यम्** । कुत्सितं बहु भाषते वाचालः । वाचाटः । यस्तु सम्यग्बहु भाषते स वाग्मीत्येव । **स्वामिन्नैश्वर्ये** ।५।२।१२६। ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच् । स्वामी । **अर्शआदिभ्योऽच्** ।५।२।१२७। अर्शांस्यस्य वि-

---

'स्वाङ्गाद् विवृद्धौ' इति पठ्यते । विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युः । विवृद्धौ कर्णावस्य कर्णिलः कर्णी कर्णिकः कर्णवान् ॥—**एकगोपूर्वात्** ॥—**ऐकशतिक** इति । एकं च तच्छतं चेति 'पूर्वकाल—' इत्यादिना कर्मधारयः । षष्ठीतत्पुरुषाद्बहुव्रीहेर्द्वन्द्वाच्च न भवत्यनभिधानादिति हरदत्तादयः ॥ अत इत्येव नेह—एकविंशतिरस्यास्तीति ॥ नित्यग्रहणं मतुपो बाधनार्थम् । अन्यथा ठञा इनिठनोर्बाधे कृतेऽप्यन्यतरस्यांग्रहणानुवृत्त्या मतुप् स्यादेवेत्याहुः ॥ कथम्—एकद्रव्यवान्—इति । असाधुरेवायम् ॥ एकेन द्रव्यवानिति वा विग्रहीतव्यम् ॥ कथम्—एकदण्डी इति । 'एकदेशिनैकाधिकरणे' इति निर्देशो ज्ञापयति 'इनिरपि क्वचिद्भवति' इति ॥—**रूपादाहत**—॥ आहतप्रशंसाविशिष्टेऽर्थे वर्तमानाद्रूपशब्दान्मत्वर्थे यप् स्यात् ॥—**आहतमि**ति । आहननमाहतं ताडनमित्यर्थः । ततो निष्पन्नं यत्कार्षापणादिरूपं तदपि कार्ये कारणोपचारादाहतमित्युच्यते इत्याहतरूपयोः सामानाधिकरण्यमुपपद्यते ॥—**हिम्या** इति । भूम्नि यप् ॥—**पर्वता** इति । हिमवान् तत्पर्यन्तवर्तिनश्च ॥—**गुण्या** इति । दृशिग्रहणादिनिरपि । तथा च माघः—'गुण्यगुण्य इति न व्यजीगणत्' । गुणी अगुण्य इति पदच्छेदः ॥—**अस्मायामेधा**—॥—**यशस्वी**ति । 'तसौ मत्वर्थे' इति भत्वाद्रुत्वं न ॥—**यशस्वानि**ति । नित्यग्रहणात् 'पूर्वत्रासम्बद्धमप्यन्यतरस्याग्रहणं मतुप्समुच्चयार्थमिह संबध्यत एव । 'तसौ मत्वर्थे' इति सूत्रे यशस्वानिति भाष्योदाहरणादिति भावः ॥ 'चोः कुः' इत्यनेन सिद्धे व्रश्चादिषत्वमाशङ्क्याह—**क्विन्नन्तत्वा**दिति ॥—**हृदयाच्चालुरन्यतरस्याम्** । अन्यतरस्याग्रहणं इनिठनोः प्राप्त्यर्थं । मतुप् समुच्चीयत एव । चकारस्य 'चुटू' इतीत्संज्ञा । तेन हृदयालुशब्दोऽन्तोदात्त इत्याहुः ॥—**शीतोष्णे**ति । इह चालुरनुवर्तते ॥—**पुरोडाश** इति । 'न तृप्रा उरुव्यचसम्' इति मन्त्रस्य भाष्ये तथा व्याख्यातत्वादिति भावः ॥—**माधव** इति । मुग्धानुवृत्त्या स्थितमिदम् ॥—**हिमाच्चेलुरि**ति । एकारादिरयं प्रत्यय इति माधवः ॥—**बलादि**ति । सिध्मादिषु बलूलवातूलशब्दौ मत्वर्थे प्रकारान्तरेण व्युत्पादितौ ॥—**तप्पर्वमरुद्भ्याम्** । पित्त्वमनुदात्तत्वार्थम् । काशिकायां तु 'पर्वमरुद्भ्यां तन्वक्तव्यः' इति स्थितम् ॥ हरदत्तेन तु तन्निति प्रतीकमुपादाय आद्युदात्तत्वार्थो नकार इत्युक्तम् । तच्च मनोरमायां महता प्रबन्धेन दीक्षितैर्निराकृतम् । तत एव तदवधार्यम् ॥—**पदत्वमि**ति ॥ तेन 'यस्येति च' इति लोपो न प्रवर्तत इति भावः ॥—**अनुवर्तयन्ती**ति । 'बहुलं छन्दसि' इत्यतः ॥—**वाचो ग्मिनिः** ॥ इकारो नकारपरित्राणार्थः । चकारस्य कुत्वे जश्त्वे च वाग्मी वाग्मिनावित्यादौ द्वयोर्गकारयोः श्रवणं भवति । द्वित्वे तु त्रयाणाम् ॥ 'मिनिः' इत्युक्ते तु द्वित्वे सति द्वयोर्गकारयोः श्रवणं द्वित्वाभावे त्वेकस्यैव श्रवणं स्यात् । किं च यरोऽनुनासिके 'प्रत्यये भाषायां नित्यम्' इति वाक्यमित्यत्रैव नित्यमनुनासिकः प्राप्नोति । तच्चानिष्टमिति ग्मिनिः कृतः ॥—**स्वामिन्नैश्वर्ये** ॥—**ऐश्वर्यवाचका**दिति । स्वशब्दस्यैश्वर्यवाचित्वमेतद् वृत्तिविषयकमेवेति बोध्यम् ॥ ईशिता हि ईश्वरः स तु स्वामीत्युच्यते । यथा वागीश एव वाचस्पतिर्वाचः स्वामीति ॥ ऐश्वर्ये किम् । स्ववान् ॥—**अर्शआदिभ्यो**—॥ इह **'स्वाङ्गाद्धीनात्'** इति गणे पठ्यते । खञ्जः

यस्ते अर्शसः । आकृतिगणोऽयम् । **द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ।५।२।१२८।** द्वन्द्वः । कटकवलयिनी शङ्खनूपुरिणी । उपतापो रोगः । कुष्ठी । किलासी । गर्ह्यं निन्द्यम् । ककुदावर्ती । काकतालुकी । प्राणिस्थात्किम् । पुष्पफलवान्घटः । *** प्राण्यङ्गान्न** ॥ पाणिपादवती । अतद्धत्येव । चित्रकललाटिकावती । सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् । **वातातीसाराभ्यां कुक् च ।५।२।१२९।** चादिनिः । वातकी । अतीसारकी ॥ **रोगे चायमिष्यते *** ॥ नेह वातवती गुहा । *** पिशाचाच्च** । पिशाचकी । **वयसि पूरणात् ।५।२।१३०।** पूरणप्रत्ययान्तान्मत्वर्थे इनिः स्याद्वयसि द्योत्ये । मासः संवत्सरो वा पञ्चमोऽस्यास्तीति पञ्चमी उष्ट्रः । ठन्बाधनार्थमिदम् । वयसि किम् । पञ्चमवान् ग्रामः । **सुखादिभ्यश्च ।५।२।१३१।** इनिर्मत्वर्थे । सुखी । दुःखी । मालाक्षेपे ॥ माली । **धर्मशीलवर्णान्ताच्च ।५।२।१३२।** धर्माद्यन्तादिनिर्मत्वर्थे । ब्राह्मणधर्मी । ब्राह्मणशीली ॥ ब्राह्मणवर्णी । **हस्ताज्जातौ ।५।२।१३३।** हस्ती । जातौ किम् । हस्तवान्पुरुषः । **वर्णाद्ब्रह्मचारिणि ।५।२।१३४।** वर्णी[1] । **पुष्करादिभ्यो देशे ।५।२।१३५।** पुष्करिणी । पद्मिनी । देशे किम् । पुष्करवान्करी । *** बाहूरुपूर्वपदाद्बलात्** । बाहुबली । ऊरुबली । *** सर्वादेश्च** । सर्वधनी । सर्वबीजी । *** अर्थाच्चासन्निहिते** । अर्थी । संनिहिते तु अर्थवान् । *** तदन्ताच्च** । धान्यार्थी । हिरण्यार्थी । **बलादिभ्यो मतुबन्यतरस्याम् ।५।२।१३६।** बलवान् । बली । उत्साहवान् । उत्साही । **संज्ञायां मन्माभ्याम् ।५।२।१३७।** मन्नन्तान्मान्ताच्चेनिर्मत्वर्थे । प्रथमिनी । दामिनी । होमिनी । सोमिनी । संज्ञायां किम् । सोमवान् । **कंशंभ्यां बभयुस्तितुतयसः ।५।२।१३८।** कंशमिति मान्तौ । कमित्युदकसुखयोः । शमिति सुखे । आभ्यां सप्त प्रत्ययाः स्युः । युस्यसोः सकारः पदत्वार्थः । कंवः कंभः । कंयुः । कंतिः । कंतुः । कंतः । कंयः । शंवः । शंभः । शंयुः । शंतिः । शंतुः । शंतः । शंयः । अनुस्वारस्य वैकल्पिकः परसवर्णः । वकारयकारपरस्यानुनासिकौ वयौ । **तुन्दिवलिवटेर्भः ।५।२।१३९।** वृद्धा नाभिस्तुन्दिः । मूर्धन्योपधोऽयमिति माधवः । तुन्दिभः । वलिभः । वटिभः । पामादित्वाद्वलिनोऽपि । **अहंशुभमोर्युस् ।५।२।१४०।** अहमिति मान्तमव्ययमहङ्कारे । शुभमिति शुभे । अहंयुः अहङ्कारवान् ॥ शुभंयुः शुभान्वितः ॥ ॥ **इति मत्वर्थीयाः** ॥

---

## तद्धितेषु विभक्तिसंज्ञकाः ।

**प्राग्दिशो विभक्तिः ।५।३।१।** दिक्शब्देभ्यस्त्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः[2] स्युः ॥ अथ स्वार्थिकाः प्रत्ययाः ॥ समर्थानामिति प्रथमादिति च निवृत्तम् । वेति त्वनुवर्तत एव । **किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ।५।३।२।** किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते[3] । **इदम इश् ।५।३।३।** प्राग्दिशीये परे । **एतेतौ रथोः ।५।३।४।** इदम्शब्दस्य एत इत इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । इशोऽपवादः । **एतदोऽन् ।५।३।५।** योगविभागः कर्तव्यः । एतदः । एतेतौ स्तो रथोः ॥ अन् एतद इत्येव । अनेकाल्त्वात्सर्वादेशः ।

---

पादोऽस्यास्तीति खञ्जः । काणं चक्षुर्यस्यास्तीति काणः ॥—**प्रथिमिनी**ति ॥ 'पृथ्वादिभ्य' इतीमनिचि 'टे.' इति टिलोपः । 'र ऋतः' इति रभावः । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति मन्नन्तादिनौ कृते 'नस्तद्धिते' इति टिलोपे नान्तत्वान्ङीप् ॥—**दामिनी**ति । दाधातोर्मनिन् ॥—**होमिनीसोमिनी**ति । 'अर्तिस्तुसुहुसृधृक्षि-' इत्यौणादिकेन मनि निरवाद्धोमसोमशब्दौ मप्रत्ययान्तौ ॥—**कंशंभ्याम्**—॥—**पदत्वार्थ** इति । अन्यथा 'कम्युः, काम्यः, शम्युः, शाम्यः' इति स्यादिति भावः ॥—**वकारयकारपरस्ये**ति । बहुव्रीहिरयम् ॥—**अनुनासिकौ वयावि**ति । एतेन प्रथमप्रत्ययः दन्त्योष्ठ्यादिः, न तु पवर्गतृतीय इति ध्वनितम् ॥—**माधव** इति ॥ 'तुडि तोडने' इति धातौ तेनोक्तम्—'वृद्धा नाभिस्तुण्डिः' । इन् । तुण्डिरस्यास्तीति तुण्डिलः । 'तुन्दादिभ्य इलच्' इत्यत्र 'स्वाङ्गाद्विवृद्धौ' इति गणसूत्रेण इलच् । तुण्डिल एव तुण्डिभः । 'तुण्डिवलिवटेर्भ.' इति मत्वर्थीयो भ इति ॥ वट वेष्टने इन् । वटिशब्दः पामादिषु पठ्यते । तेन वटिन इत्यपि भवति ॥—**अहंयुः** ॥—**शुभंयुरि**ति ॥ पूर्ववदनुस्वारपरसवर्णौ ॥ इति मत्वर्थीयाः ॥

**किंसर्वनाम**—॥ द्व्यादिपर्युदासात्किमः पृथग्ग्रहणम् ॥ द्व्यादिषु किम् । शब्दपाठे प्रयोजनं तु त्वं कश्च कौ । अहं च कश्च कौ इत्यत्र किमः शेषः । 'त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यते' इत्युक्तत्वात् ॥—**एतदोऽन्**—॥ भाष्यारूढोऽयं पाठः ॥ वृत्तिकारस्तु 'एतदोऽश्' इति पठित्वा शकारः सर्वादेशार्थ इत्याह ॥—**अनि**ति । प्राग्दिशीये परे अन्स्यात् ॥—**अनेकाल्त्वादि**ति । नित्करणस्य प्रयोजनं नास्ति प्रत्ययनित्त्वस्यैव स्वरार्थत्वादिति भावः ॥—**कु**

---

१ वर्णादिति—वर्णोऽत्र वेदाध्ययनार्थं ब्रह्मचर्यम् । २ विभक्तिसंज्ञा इति—संज्ञासूत्रत्वं च एतस्य सूत्रस्य व्याख्यानाद्बोध्यम् । अन्यथा प्राक्कडारादितिवदधिकारोऽपि संभाव्यते । ३ अधिक्रियते इति—अधिकारश्च विधेयानिर्देशाद्बोध्यः ।

लकोपः प्रातिपदिकान्तस्य । ⧗ सर्वस्य सोऽन्यतरस्यां दि ।५।३।६। प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात् । ⧗ पञ्चम्यास्तसिल् ।५।३।७। पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् स्याद्वा । ⧗ कु तिहोः ।७।२। १०४। किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः । कुतः । कस्मात् । यतः । ततः । अतः । इतः । अमुतः । बहुतः । द्यादेस्तु । द्वाभ्याम् । ⧗ तसेश्च ।५।३।८। किंसर्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात् । स्वरार्थं विभक्त्यर्थं च वचनम् । ⧗ पर्यभिभ्यां च ।५।३।९। आभ्यां तसिल् स्यात् । * सर्वोभयार्थाभ्यामेव । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः । ⧗ सप्तम्यास्त्रल् ।५।३।१०। कुत्र । यत्र । तत्र । बहुत्र । ⧗ इदमो हः ।५।३।११। त्रलोऽपवादः । इशादेशः । इह । ⧗ किमोऽत् ।५।३।१२। वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात्पक्षे त्रल् । ⧗ क्वाति ।७।२।१०५। किमः क्वादेशः स्यादति । क्व । कुत्र । ⧗ वा ह च च्छन्दसि ।५। ३।१३। कुह स्थः कुह जग्मथुः । ⧗ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ।२।४।३३। अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः तौ चानुदात्तौ स्तः । एतस्मिन् ग्रामे सुखं वसामः । अथोऽत्राधीमहे । अतो न गन्तास्मः । ⧗ इतराभ्योऽपि दृश्यन्ते ।५।३।१४। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । सभवान् । ततोभवान् । तत्रभवान् । तंभवन्तम् । ततोभवन्तम् । तत्रभवन्तम् । एवं दीर्घायुः । देवानांप्रियः । आयुष्मान् । ⧗ सर्वैकान्यकिंयत्तदः काले दा ।५।३।१५। सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् । सर्वस्मिन्काले सदा । सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् । सर्वत्र देशे । ⧗ इदमोर्हिल् ।५।३।१६। सप्तम्यन्तात्काले इत्येव । हस्यापवादः । अस्मिन्काले एतर्हि । काले किम् । इह देशे । ⧗ अधुना ।५।३।१७। इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थेऽधुनाप्रत्ययः स्यात् । इश् । यस्येति लोपः । अधुना । ⧗ दानीं च ।५।३।१८। इदानीम् । ⧗ तदो दा च ।५।३।१९। तदा । तदानीम् । तदो दावचनमनर्थकं विहितत्वात् । ⧗ अनद्यतने र्हिलन्यतरस्याम् ।५।३।२१। कर्हि । कदा । यर्हि । यदा । तर्हि । तदा । एतस्मिन्काले एतर्हि । ⧗ सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।५।३।

---

**तिहोः** ॥ तकारादिकार उच्चारणार्थः । वेत्यनुवृत्तेः फलं दर्शयति—**कस्मादिति** ॥—**यतस्तत** इति । 'कृत्तद्धित–' इति प्रातिपदिकत्वात्सुपो लुकि त्यदाद्यत्वम् । पक्षे यस्मात् ॥—**इत** इति । 'इदम इश्' । पक्षे अस्मात् ॥ **अत** इति । एतदोऽनादेशः । पक्षे एतस्मात् ॥—**अमुत** इति । 'अदसोसे.–' इति मुत्वम् । पक्षे । अमुष्मात् ॥—**बहुत** इति । पक्षे बहुभ्यः ॥—**द्वाभ्यामिति** । सर्वनामत्वात्प्राप्तोऽपि तसिल् 'अद्व्यादिभ्यः' इति पर्युदासान्न ॥—**तसेरिति** ॥ 'प्रतियोगे पञ्चम्यास्तसि,' 'अपादाने चाहीयरुहो' इति विहितस्य तसेस्तसिलादेश इत्यर्थः ॥—**विभक्त्यर्थं चेति** । अन्यथा परत्वात्तसौ कृते तस्याप्राग्दिशीयत्वाद्विभक्तिसञ्ज्ञाया अभावात्त्यदाद्यत्वाभावे 'यतोऽवगच्छति' इत्यादि न सिध्येदिति भावः ॥ न च तसेर्ग्रामत इत्यादौ चरितार्थत्वात्किमादिभ्यस्तसिलो बाधकत्वेन तसिर्न प्रवर्तते । तस्य निरवकाशत्वात् । तथा च 'तसेश्च' इति विधानं व्यर्थमिति वाच्यम् । कुतोऽवहीयते कुतोऽवरोहतीत्यादौ तसिलः सावकाशत्वात् ॥—**सर्वोभयार्थाभ्यामेवेति** ॥ अत्र चाभिधानस्वाभाव्यं हेतुः । तेनेह न भवति । परिषिञ्चति । अभिषिञ्चति । उपर्यर्थे परिः । अभिस्त्वाभिमुख्ये ॥ नन्वोदनं परिषिञ्चतीत्यत्र सर्वतोभावे परिरिति तसिलभावः कथमिति चेन्न । मैवम् । वावचनानुवृत्त्या तु तत्सिद्धेः ॥—**सप्तम्यास्त्रल्** ॥ इह त्रल्तसिलौ स्वतन्त्रौ प्रत्ययौ । न तु सप्तमीपञ्चम्योरादेशौ । तेन कुत्र बहुत्र कुतः बहुत इत्यादौ 'अच्च घे.' 'घेर्ङिति' इत्यादिकं नेत्याहुः ॥—**किमोऽत्** ॥ 'न विभक्तौ तुस्माः' इति निषेधोऽत्र न प्रवर्तते । थमोरुकारेण मकारपरित्राणार्थेनानित्यताज्ञापनात् ॥—**वाग्रहणमिति** । 'किमोऽद्वा' इति सूत्रं पठित्वा 'ह च छन्दसि' इति सूत्रयितुं युक्तम् ॥—**कुत्रेति** । यद्यपि भागवृत्तिकारो भाषायां त्रल् नेच्छति । तथापि बहुप्रयोगदर्शनादिह स्वीकृतम् ॥ तथा च श्रीहर्षः । 'नान्यत्र कुत्रापि च साभिलाषम्' ॥ अमरश्चाह— 'साहचर्याच्च कुत्रचित्' इति ॥—**वा ह च छन्दसि** ॥ पूर्वोक्तस्य वाग्रहणापकर्षणस्य स्फुटीकरणार्थमिदमुपन्यस्तम् ॥—**अत** इति ॥ एतस्मात् ग्रामादित्यर्थः ॥—**तत्र भवन्तमिति** ॥ ततोभवता तत्रभवता ततोभवते तत्रभवते इत्यादि ॥—**एवमिति** । ततोदीर्घायुस्तत्रदीर्घायुरित्याद्यूह्यमित्यर्थः ॥—**सदेति** ॥ 'सर्वस्य सोऽन्यतरस्यां दि' इति सभावः ॥—**कदेति** । किमः कः ॥—**एतर्हीति** ॥ 'एतेतौ रथोः' इत्येतादेशः ॥—**अधुनाप्रत्यय इति** ॥ निपातनान्मध्योदात्तोऽयम् । भाष्यमतं चेदम् ॥ वृत्तिकारस्त्वाह—इदमो अश्भावः धुना च प्रत्यय इति ॥ तत्र 'ऊडिदम्–' इत्यादिना विभक्तिस्वरः, स च 'आदेः परस्य' इत्यादेर्भवतीति हरदत्तः ॥—**दावचनमिति**—॥ 'तदश्च' इत्येव सूत्रं पठनीयमिति भावः ॥—**एतस्मिन्काले एतर्हीति** ॥ 'एतदः' इति योगविभागादेकादावेतादेशः ॥—**सद्यः परुत्**—॥ निपातनाद्विषयविशेषो लभ्यत इत्याह—**अहनीति** । सप्तम्यन्तस्याहन्शब्दस्यार्थे इत्यर्थः ॥ तद्दर्शयति—

२२। एते निपात्यन्ते । समानस्य सभावो द्यस् चाहनि । समानेऽहनि सद्यः । पूर्वपूर्वतरयोः परः उदारीच प्रत्ययौ वत्सरे । पूर्वस्मिन्वत्सरे परुत् । पूर्वतरे वत्सरे परारि ॥ इदमहश् समसण् प्रत्ययश्च संवत्सरे । अस्मिन्संवत्सरे ऐषमः । परस्मादेद्यव्यहनि । परस्मिन्नहनि परेद्यवि । इदमोऽश् द्यश्च । अस्मिन्नहनि अद्य । पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस् । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । उभयोरह्नोरुभयेद्युः । * द्युश्चोभयाद्वक्तव्यः । उभयद्युः । प्रकारवचने थाल् ।५।३।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात्स्वार्थे । तेन प्रकारेण तथा । यथा । इदमस्थमुः ।५।३।२४। थालोऽपवादः । * एतदोऽपि वाच्यः । अनेन एतेन वा प्रकारेण इत्थम् । किमश्च ।५।३।२५। केन प्रकारेण कथम् ॥ ॥ प्राग्दिशीयानां विभक्तिसंज्ञानां पूर्णोऽवधिः ॥

---

## तद्धितेषु स्वार्थिकाः ।

**दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ।५।३।२७।** सप्तम्याद्यन्तेभ्यो दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः प्रत्ययः स्यात् । **पूर्वाधरावराणामसिपुरधवश्चैषाम् ।५।३।३९।** एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात्तद्योगे चैषां क्रमात्पुर्, अध्, अव्, इत्यादेशाः स्युः । **अस्ताति च ।५।३।४०।** अस्तातौ परे पूर्वादीनां पुरादयः स्युः । पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः । पुरस्तात् । अधः । अधस्तात् । अवः । अवस्तात् । **विभाषावरस्य ।५।३।४१।** अवरस्यास्तातौ परेऽव् स्याद्वा । अवस्तात् । अवरस्तात् । एवं देशे काले च । दिशि रूढेभ्यः किम् । ऐन्द्र्यां वसति । सप्तम्याद्यन्तेभ्यः किम् । पूर्वं ग्रामं गतः । दिगादिवृत्तिभ्यः किम् । पूर्वस्मिन् गुरौ वसति । अस्ताति चेति ज्ञापकादसिरस्तातिं न बाधते । **दक्षिणोत्तराभ्यामतसुच् ।५।३।२८।** अस्तातेरपवादः । दक्षिणतः । उत्तरतः । **विभाषापरावराभ्याम् ।५।३।२९।** परतः । अवरतः । परस्तात् । अवरस्तात् । **अञ्चेर्लुक् । ५।३।३०।** अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात् ॥ लुक्तद्धितलुकि ॥ प्राच्यां प्राच्याः प्राची वा दिक् प्राक् । उदक् । एवं देशे काले च । **उपर्युपरिष्टात् ५।३।३१।** अस्तातेर्विषये ऊर्ध्वशब्दस्योपादेशः स्याद्रिल्रिष्टातिलौ च प्रत्ययौ ॥ उपरि उपरिष्टाद्वा वसति आगतो रमणीयं वा । **पश्चात् ।५।३।३२।** अपरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये । **उत्तराधरदक्षिणादातिः ।५।३।३४।** उत्तरात् । अधरात् । दक्षिणात् । **एनबन्यतरस्यामदूरेऽपञ्चम्याः ।५।३।३५।** उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये पञ्चम्यन्तं विना । उत्तरेण । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । इह केचिदुत्त-

---

**समानेऽह्नीति** ॥—**परउदारी चेति** । पर इत्यादेश उदारी प्रत्ययौ ॥—**प्रकारवचने थाल्** ॥ सामान्यस्य भेदको विशेषः प्रकारः । यथा ब्राह्मणसामान्यस्य माथुरकाठकादय इति हरदत्तः ॥ यद्यपि 'प्रकारे गुणवचनस्य' इत्यत्र सादृश्यं प्रकारस्तथापि नेह सादृश्य गृह्यते अनभिधानात् ॥ 'अव्ययं विभक्ति–' इति सूत्रे सादृश्यमपि यथाशब्दार्थ इत्युक्तम्, इह तु केवलस्य थाल्प्रत्ययस्य सादृश्यं नार्थः किं तु प्रकार एवेत्युक्तमिति नास्ति पूर्वापरविरोध इति बोध्यम् ॥—**तेन प्रकारेण तथेति** । प्रथमान्तात्तु न भवति, स प्रकारस्तथेति अनभिधानादेवेति भावः । कि सर्वनामबहुभ्यो विशेषविहितेनापि थाला जातीयर् न बाध्यते अर्थभेदात् । प्रकारे हि थाल् । जातीयर् तु तद्वति स्वभावात् । एव च कृत्वा प्रकारमात्रे थालं विधाय तदन्तात्प्रकारवति जातीयर प्रयुञ्जते । तथाजातीयोऽन्यथाजातीय इति ॥—**अनेन एतेन वेति** ॥ द्वितीयान्तादपि थमुर्भवत्येव । इममेत वा प्रकारमापन्न इत्थंभूतः । अत्र च 'लक्षणेत्थंभूताख्यान–' इत्यादिसौत्रप्रयोगो लिङ्गम् ॥ एतेन कथंभूतो व्याख्यातः ॥—**इत्थमिति** । 'एतेतौ रथोः' इति इदम इतादेशः । 'एतदः' इति योगविभागादेतदोऽपि इतादेश इति भावः ॥—**किमश्च** ॥ योगविभागः 'था हेतौ च छन्दसि–' इत्युत्तरसूत्रे किम एवानुवृत्तिर्यथा स्यादिदमो मा भूदिति ॥ ॥ प्राग्दिशीयानां पूर्णोऽवधिः ॥

**दिग्देशकालेष्विति** ॥ यथासङ्ख्यमत्र नेष्यते अस्वरितत्वात् ॥—**पुरः पुरस्तादिति** ॥ कथं तर्हि 'पश्यामि तामित इतः पुरतश्च पश्चात्' इति भवभूतिः, 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः, 'पुरतः प्रथमे चाग्रे' इति विश्वश्च । समानकालीनपूर्वकालीनमित्यादिवत्प्रामादिकमेवेति बहवः ॥ केचित्तु 'दक्षिणोत्तराभ्यां तसुज्विधिनैवेष्टसिद्धौ 'अतसुच्' इत्यकारोच्चारणमन्यतोऽपि विधानार्थं । तेन पुरत इति सिध्यति । 'पुर अग्रगमने' क्विपि पुर् 'र्वोः' इति दीर्घस्तु न भवति भत्वात् । न चातसुचश्चित्त्वेऽप्यकारोच्चारणं पक्षे आद्युदात्तत्वार्थमिति वाच्यम् । बहूनां प्रयोगानुरोधेनान्यतो विधानार्थमिति कल्पनस्यैव न्याय्यत्वादित्याहुः ॥ यथासंख्यत्वानाश्रयणात् पुरस्ताद्वसति पुरस्तादागतः पुरस्ताद्रमणीयम् । अधस्ताद्वसति अधस्तादागत इत्यादि सिध्यति ॥—**प्राच्यां प्राच्य इति** ॥ प्राच्यां दिशि वसति प्राग्वसति । प्राच्या दिश आगतः प्रागागत इत्यादि योज्यम् ॥—**पञ्चम्यन्तं विनेति** ॥ नेह उत्तरादागतः । अधरादागतः ॥—**उत्तरेणेत्यादि** । वसति रमणीयं वा ॥—**पक्षे यथास्वमिति** । दक्षिणतः । उत्तरतः । अधः । अधस्तात् । उत्तरात् । अधरात् । दक्षिणात् ॥—

रादीनननुवर्त्य दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् । **दक्षिणादाच्** ।५।३।३६। अस्तातेर्विषये । दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणादागतः । **आहि च दूरे** ।५।३।३७। दक्षिणाद् दूरे आहि स्यात् चादाच् । दक्षिणाहि । दक्षिणा । **उत्तराच्च** ।५।३।३८। उत्तराहि । उत्तरा । **संख्याया विधार्थे धा** ।५।३।४२। क्रियाप्रकारार्थे वर्तमानात्संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । पञ्चधा । **अधिकरणविचाले च** ।५।३।४३। द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात् । एकं राशिं पञ्चधा कुरु । **एकाद्धो ध्यमुञन्यतरस्याम्** ।५।३।४४। ऐकध्यम् । एकधा । **द्वित्र्योश्च धमुञ्** ।५।३।४५। आभ्यां धा इत्यस्य धमुञ् स्याद्वा । द्वैधम् । द्विधा । त्रैधम् । त्रिधा । * **धमुञन्तात्स्वार्थे डदर्शनम्** । पथि द्वैधानि । **एधाच्च** ।५।३।४६। द्वेधा । त्रेधा । **याप्ये पाशप्** ।५।३।४७। कुत्सितो भिषक् भिषक्पाशः । **पूरणाद्भागे तीयादन्** ।५।३।४८। द्वितीयो भागो द्वितीयः । तृतीयः । स्वरे विशेषः । * **तीयादीकक् स्वार्थे वाच्यः** । द्वैतीयीकः । द्वितीयः तार्तीयीकः । तृतीयः । * **न विद्यायाः** । द्वितीया । तृतीया । विद्येत्येव । **प्रागेकादशभ्योऽच्छन्दसि** ।५।३।४९। पूरणप्रत्ययान्ताद्भागेऽन् । चतुर्थः । पञ्चमः । **षष्ठाष्टमाभ्यां ञ च** ।५।३।५०। चादन् । षष्ठो भागः षाष्ठः । षष्ठः । आष्टमः । अष्टमः । **मानपश्वङ्गयोः कन्लुकौ च** ।५।३।५१। षष्ठाष्टमशब्दाभ्यां क्रमेण कन्लुकौ स्तो माने पश्वङ्गे च वाच्ये । षष्ठको भागः मानं चेत् । अष्टमो भागः पश्वङ्गं चेत् । अस्य अनो वा लुक् । चकाराद्यथाप्राप्तम् । षष्ठः । षाष्ठः । अष्टमः आष्टमः । महाविभाषया सिद्धे लुग्वचनं पूर्वत्र ञानौ नित्याविति ज्ञापयति । **एकादाकिनिच्चासहाये** ।५।३।५२। चात्कन्लुकौ । एकः । एकाकी । एककः । **भूतपूर्वे चरट्** ।५।३।५३। आढ्यो भूतपूर्वः आढ्यचरः । **षष्ठ्या रूप्य च** ।५।३।५४। षष्ठ्यन्ताद्भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च । कृष्णस्य

---

**संख्याया विधार्थे धा** ॥ विधाशब्दस्यार्थो विधार्थः ॥ यद्यप्योदनपिण्डोऽपि विधाशब्देनोच्यते तथापीह न गृह्यते । तेन एका गोविधेत्यादौ न भवति ॥ इह हि 'विधायाम्' इति वक्तव्ये अर्थग्रहणस्य प्रयोजनं विधाशब्दो यत्रार्थे प्रसिद्धस्तत्रैव यथा स्यात् । तादृशश्चार्थः प्रकार एव स च क्रियाविषयक एव गृह्यते अभिधानस्वभावात्तदाह—**क्रियाप्रकारे वर्तमानादिति** ॥ कथं तर्हि 'नवधा द्रव्य, बहुधा गुणः' इत्यादि ॥ अत्रापि ह्यश्रुता क्रिया प्रतीयते, 'उपदिश्यते,' इति वा, 'भवति' इति वा इति हरदत्तः ॥—**अधिकरणविचाले च** ॥ अधिकरण द्रव्य विचलनं विचालोऽन्यथाकरणं । णिजन्तादेरच् । तच्चेह संख्यासंनिधानात्संख्यान्तरापादनम् इति व्याचष्टे—**द्रव्यस्येत्यादिना** । संख्यान्तरापादनं हि एकस्यानेकीकरणम् । अनेकस्य च एकीकरणं तत्राद्ये उदाहरणम्—**एकं राशिं पञ्चधेति** । पञ्च राशीन् कुर्वित्यर्थः ॥ द्वितीये तु अनेकम् एकधा कुर्वित्युदाहर्तव्यम् । इह क्रियाविषयकप्रकारो न गम्यत इति सूत्रारम्भः ॥—**एकाद्धो**—॥ शब्दप्रधानत्वात्सर्वनामकार्याभावः । इह प्रकरणादेव सिद्धे पुनर्धाग्रहण विधार्थे विहितस्यापि यथा स्यात् । 'अनन्तरस्य—' इति न्यायेनाधिकरणविचाले विहितस्यैव हि प्राप्नोतीति वृत्तिपदमञ्जर्योः स्थितम् ॥ एतेन स्वतन्त्र एव प्रत्ययोऽस्त्वित्याशङ्का परास्ता ॥—**ऐकध्यमिति** । विधार्थे ऐकध्य भुङ्क्ते । अधिकरणविचाले तु ऐकध्य राशिं कुर्वित्यादि ज्ञेयम् । एवमग्रेऽपि द्वैधमित्यादौ योज्यम् ॥—**एधाच्च** ॥ द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य एधाच् स्यात् । योगविभागो यथासंख्यनिरासार्थः ॥—**याप्ये पाशप्** ॥ 'कुत्सिते' इत्यत्रैव नाय विहितः । तिङन्तादपि प्रसङ्गात् ॥—**पूरणाद्भागे**—॥ पूरणार्थत्वात्तीयप्रत्ययः पूरणशब्देनोक्तः । पूरणग्रहण चोत्तरार्थं । न ह्यपूरणस्तीयप्रत्ययो भवति । मुखतीयः पार्श्वतीय इत्यत्र त्वनेर्थकत्वान्नातिप्रसङ्गः ॥ भाग इति पुंस्त्व विवक्षितम् । तेन समासेऽप्यर्थे विभक्तौ विवक्षितायां चतुर्थी पञ्चमीत्येव भवति । 'प्रागेकादशभ्यः–' इत्यनि सति तु टापि चतुर्था पञ्चमेति प्रसज्येत ॥—**एकादाकिनिच्च**—॥ असहायवाचिन एकशब्दादाकिनिच् स्यात् ॥—**कन्लुकाविति** । आकिनिचः कनो वा पक्षे लुक् । तयोरेवानेन सूत्रेण विधानात् ॥ असहायग्रहणं संख्याशब्दनिरासार्थम् । अन्यथा प्रसिद्धत्वात्संख्याप्रकरणाच्च तस्यैव ग्रहण स्यात् । इष्टापत्तौ तु द्वित्वबहुत्वे च न स्यादेकाकिनौ एकाकिन इति । न हि द्वयोर्बहुषु वा एकत्वसंख्यास्ति । असहायत्व तु परस्परातिरिक्तसहायाभावेन द्वयोर्बहूनामपि भवति । इह 'अकिनिच्' एवायं वक्तव्यः, सवर्णदीर्घेण सिद्धमिष्टम् । 'यस्येति च' इति लोपश्चाकारोच्चारणसामर्थ्यान्न भवतीत्यादि हरदत्तग्रन्थे स्थितम् ॥—**भूतपूर्वे**—॥ अत्र वर्तमानाच्चरट स्यात् ॥ 'गोष्ठात् खञ्' इत्यत्रैव नोक्तम् । विशेषविहितेन खञा चरटो बाधा मा भूदिति । संनिधौ हि सामान्यविशेषभावः स्फुटीभवति । यद्यपि दूरस्थस्यापि बाधो न्याय्य एव । तथापीह गौरवं स्वीकृत्य दूरे पाठसामर्थ्याद्बाधो नेति भावः ॥—**षष्ठ्या रूप्य च** ॥ भूतपूर्व इत्यनुवर्तते । तच्च यद्यपि पूर्वत्र ङ्याप्प्रातिपदिकस्य विशेषणं । तथापीह न तथा, षष्ठ्यन्तार्थस्य विशेषणत्वात्, तद्वाचिनस्य संबन्धिनो गवादेः प्रधानत्वात्, प्रधानेतरसंनिधौ च प्रधाने कार्यसंप्रत्ययस्य न्याय्यत्वात्तदेतदाह—**भूतपूर्वेऽर्थे**

---

१ दक्षिणादाच्—चकार आजाहीत्येव विशेषणार्थः । तेन वाक्यस्मरणयोराङ्डाकारस्य व्यावृत्तिरिति भाष्यम् ।

भूतपूर्वो गौः कृष्णरूप्यः। कृष्णचरः। तसिलादिषु रूप्यस्यापरिगणितत्वान्न पुंवत्। शुभ्रा वा भूतपूर्वः शुभ्रारूप्यः। **॥ अतिशायने तमबिष्ठनौ ।५।३।५५।** अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः। अयमेषामतिशयेनाढ्यः। आढ्यतमः। लघुतमो लघिष्ठः। **॥ तिङश्च ।५।३।५६।** तिङन्तादतिशये द्योत्ये तमप् स्यात्। **॥ तरप्तमपौ घः। १।१।२२।** एतौ घसंज्ञौ स्तः। **॥ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।५।४।११।** किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे। किंतमाम्। प्राह्णेतमाम्। पचतितमाम्। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः। **॥ द्विवचनविभज्योपपदे तरबीयसुनौ ।५।३।५७।** द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्वयोरपवादः। अयमनयोरतिशयेन लघुर्लघुतरः। लघीयान्। उदीच्याः प्राच्येभ्यः पटुतराः। प-

---

रूप्यः स्यादिति ॥—**अतिशायने**—॥ अतिपूर्वाच्छेतेर्ल्युट्। अतिशयनमेवातिशायनम्। अस्मादेव निपातनाद्दीर्घः। न तु सौत्रः। तेन लोकेऽपि दीर्घः साधुः। अबाधकान्यपि निपातनानि भवन्ति। तेन ह्रस्वोऽपि साधुः। यद्यपि केवलः शेतिः स्वप्ने वर्तते तथाप्यतिपूर्वः प्रकर्षे। प्रकर्षश्चात्र नाधिक्यं, किं त्वभिभवः। 'पूर्वान् महाभागतयातिशेषे' इति प्रयोगदर्शनात् ॥ न चैव 'प्रकर्षे तमबिष्ठनौ' इत्येव कुतो न सूत्रितमिति शङ्क्यम्। अतिशायनमिति निपातनार्थमेव तथोक्तत्वात् ॥ अतिशयो न प्रत्ययार्थः। तथा हि सति लघोरतिशायन लघुतममिति स्यात्। प्रत्ययार्थस्य प्राधान्यात् ॥ नापि प्रकृत्यर्थः। तथा हि सति प्रकार्षोतिशयनादिभ्य एव स्यात्, न लाघ्व्यादिभ्यः। किं तु प्रकृत्यर्थविशेषणम्। प्रत्ययस्तु द्योतकस्तदेतदाह—**अतिशयविशिष्टे**त्यादि ॥—**अयमेषामि**ति। ह्यवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते, तदा तरबीयसुनावपवादौ वक्ष्येते। तथा च परिशेषाद्बहूनां मध्ये यदा एकदेशस्य निर्धारणं सोऽस्य विषय इति भावः ॥ —**आढ्यतम** इति। सुबन्तात्तमप्। 'सुपो धातु–' इति लुक्। यद्यपि 'ङ्याप्प्रातिपदिकात्' इत्येवानुवर्तते। तथापि सुबन्तपरतयैव व्याख्येयम्। अन्यथा हि पूर्वाह्णेतरां पूर्वाह्णेतमामित्यादौ 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुग्विधानं कथमुपपद्यताम् ॥—**तिङश्च** ॥ अस्मादिष्ठन्न भवति, 'अजादी गुणवचनादेव' इति नियमादित्याशयेनाह—**तमप् स्यादि**ति ॥—**तरप्तमपौ घः** ॥ अस्मिन्नेवातिशायनिकप्रकरणे 'तादौ घः' 'पितौ घः' इति वा वक्तव्ये प्रकरणान्तरे गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति। तेन 'अल्पाच्तरम्' 'लोपश्च बलवत्तरः' इत्यादि सिद्धम्। अल्पाजेव ह्यल्पाच्तरं। न त्वत्र द्वयोरेकस्यातिशयविवक्षायां तरप्। अन्यथा 'शिवकेशवौ' इत्यादिसिद्धावपि 'शङ्खदुन्दुभिवीणाः' इत्यादि न सिध्येदित्याहुः ॥—**किमेत्**—॥ आमोरुकारो यदि त्यज्येत, तर्हि पचतितरामित्यादौ 'ह्रस्वनद्यापः' इति नुटि पचतितराणामिति स्यात्। 'यस्येति' लोपस्य परेण नुटा बाधात्। सिद्धान्ते तु 'निरनुबन्धग्रहणे न सानुबन्धस्य' इति परिभाषया नुड्विधौ नास्य ग्रहणम् ॥—**द्विवचनविभज्योपपदे**—॥ द्वयोरर्थयोर्वचनं द्विवचनं। करणे ल्युट्। कर्मणि षष्ठ्या समासः। येन पदेन द्वावर्थावुच्येते, तद्द्विवचनम्। विभक्तव्यं विभज्यम्। 'ऋहलोः–' इति ण्यति प्राप्ते तदपवादो यत् निपात्यते। ण्यति तु 'चजोः' इति कुत्वेन विभाग्यमिति स्यात् ॥ विभाज्यशब्दस्य स्मृतिषु प्रयुक्तस्य साधुत्वं चिन्त्यमिति हरदत्तोक्तिश्चिन्त्या। ण्यन्तात् 'अचो यत्' इति विभाज्यमिति रूपसिद्धेः। न चात्रार्थभेदः शङ्क्यः। 'निवृत्तप्रेषणात् धातोः प्राकृतेऽर्थे णिच्' इति 'णेरणौ–' इति सूत्रे व्युत्पादनादिति दिक् ॥ द्विवचनं च विभज्यं चेति द्वन्द्वः ॥ तस्य उपपदेन कर्मधारयः। तथा च द्व्यर्थवाचके विभजनीये चोपपदे सतीत्यक्षरार्थः। द्विवचनान्ते उपपदे इति व्याख्यायां तु दन्तोष्ठस्य दन्ताः स्निग्धतरा इत्यादि न सिध्यति। ननु द्वयोर्वचनं द्विवचनमिति पक्षेऽपि नेदं सिध्यति समाहारस्यैकत्वात् गुणभूतवर्तिपदार्थाश्रयणे तु द्वात्रिंशद्दन्ताः द्वावोष्ठाविति तेषां बहुत्वात्तुतरां न सिद्ध्येदिति चेत्। अत्राहुः। वृत्तावभेदैकत्वसंख्यामुपाददति वर्तिपदानि। ततश्च भेदस्य परित्यागादभेदैकत्वसंख्यायाश्चोपादानाद्दन्तोष्ठत्वलक्षणार्थद्वयं दन्तोष्ठशब्देनोच्यत इति नास्ति 'द्वयोर्वचनं द्विवचनमित्येतदर्थकद्विवचनोपपदे' इति पक्षे दोष इति ॥ विस्तरस्त्वाकरग्रन्थेभ्योऽवगन्तव्यः। अन्वर्थं चोपपदम् उपोच्चारित पदमिति, न तु कृत्रिमम्। तद्धितविधौ तस्यासंभवात्। तच्च विग्रहवाक्य एव प्रयुज्यते। वृत्तौ तु गतार्थत्वान्नावश्यकम् ॥ एवं स्थिते उपपदग्रहणं स्पष्टार्थम् ॥ इह द्वे उपपदे द्वे च सुबन्ततिङन्तरूपे प्रकृती द्वौ च प्रत्ययौ तथापि यथासंख्यं नेष्यते ॥ द्विवचनोपपदमुदाहरति—**अनयोरि**ति ॥—**लघीयानि**ति। 'टेः' इति लोपः। उगित्वान्नुम्। 'सान्तमहतः' इति दीर्घः। हल्ङ्यादिसंयोगान्तलोपौ ॥ विभज्योपपदमुदाहरति—**प्राच्येभ्य** इति। 'पञ्चमी विभक्ते' इति पञ्चमी ॥ कथं तर्हि 'पुरुद्रवान् पटुरासीत् ऐषमस्तु पटुतरः' इति। अत्राहुः। एकस्यापि धर्मिणस्तत्कालस्थत्वादिरूपधर्मभेदेन भेदाध्यारोपात्प्रतियोग्यपेक्षस्तत्कालस्थप्रकर्षस्तदाश्रयश्चेह तरप्प्रत्यय इति ॥

---

१ उच्चैस्तमस्तरुरिति—उच्चैःशब्दोऽत्रोच्चत्वगुणवत्परः। द्रव्यस्य स्वतःप्रकर्षाभावेऽपि द्रव्यनिष्ठगुणादिप्रकर्ष एव द्रव्यप्रकर्ष इति बोध्यम्। २ द्विवचनेति—नतरामित्यादौ प्रतियोग्यसमानाधिकरणत्वरूपात्यन्तिकत्वेऽभावगते प्रकर्षे तरप्। प्रवृत्तिनिमित्तगते प्रकर्षे तरबादिरिति तु प्रकृत्यर्थप्रकर्षासंभवविषयम्। एवं द्योत्यार्थप्रकर्षेऽपि द्योतकात्तरप्। यथा, नितरां गच्छतीत्यादौ।

टीयांसः । **अजादी गुणवचनादेव** ।५।३।५८। इष्ठन्नीयसुनौ गुणवचनादेव स्तः । नेह । पाचकतरः । पाचकतमः । **तुश्छन्दसि** ।५।३।५९। तृन्तृजन्तादिष्ठन्नीयसुनौ स्तः । **तुरिष्ठेमेयःसु** ।६।४।१५४। तृशब्दस्य लोपः स्यादिष्ठेमेयःसु परेषु । अतिशयेन कर्ता करिष्ठः । दोहीयसी धेनुः । **प्रशस्यस्य श्रः** ।५।३।६०। अस्य श्रादेशः स्यादजाद्योः । **प्रकृत्यैकाच्** ।६।४।१६३। इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः श्रेयान् । **ज्य च** ।५।३।६१। प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः । **ज्यादादीयसः** ।६।४।१६०। आदेः परस्य । ज्यायान् । **वृद्धस्य च** ।५।३।६२। ज्यादेशः स्यादजाद्योः । ज्येष्ठः । ज्यायान् । **अन्तिकबाढयोर्नेदसाधौ** ।५।३।६३। अजाद्योः । नेदिष्ठः । नेदीयान् । साधिष्ठः । साधीयान् । **स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः** ।६।४।१५६। एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठादिषु । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवमीयस् । ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वाद् ह्रसिमा । क्षेपिमा । क्षोदिमा । **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः** ।६।४।१५७। प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दिष्ठः । एवमीयसुन् । प्रेयान् । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्प्रेमेत्यादि । **बहोर्लोपो भू च बहोः** ।६।४।१५८। बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः । भूमा । भूयान् । **इष्ठस्य यिट् च** ।६।४।१५९। बहोः परस्य इष्ठस्य लोपः स्यात् यिडागमश्च । भूयिष्ठ. । **युवाल्पयोः कनन्यतरस्याम्** ।५।३।६४। एतयोः कनादेशो वा स्यादिष्ठेयसोः । कनिष्ठः । कनीयान् । पक्षे । यविष्ठः । अल्पिष्ठ इत्यादि । **विन्मतोर्लुक्** ।५।३।६५ विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः । त्वचीयान् । **प्रशंसायां रूपप्** ।४।३।६६। सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः पटुरूपः । प्रशस्तं पचति पचतिरूपम् ।

---

व्यपदिशन्ति च—'अन्य एवासि संवृत्तः' 'कश्चित्स एवासि धनञ्जयस्त्वम्' इति ॥—**अजादी गुणवचनादेव** ॥ इष्टतोऽवधारणार्थ एवकारः । तेन प्रत्ययनियमोऽयम् । एवकाराभावे तु गुणवचनादजादिप्रत्ययावेवेति प्रकृतिनियमोऽपि संभाव्येत । तथा च पटुतरः, पटुतम इत्यादि न सिध्येत् ॥—**तुश्छन्दसि** ॥ पूर्वेण नियमेन व्यावर्तितयोः प्रतिप्रसवोऽयम्, नञ्पूर्वो विधिः । तेन उपाधिसंकरो न ॥ **तुरिष्ठे**—॥ 'टेः' इत्यनेनान्त्यलोपे सिद्धेऽप्यारम्भसामर्थ्यात्सर्वस्य तृशब्दस्य लोपस्तदाह—**करिष्ठ** इति ॥—**दोहीयसी**ति । इयमनयोरतिशयेन दोग्ध्री 'भस्याढे तद्धिते सिद्धश्च प्रत्ययविधौ' इति वचनात् तद्धिते कर्तव्ये प्रागेव पुंवद्भाव इति ङीपि निवृत्ते दोग्धृशब्दात्प्रत्ययः, ततस्तृचि निवृत्ते निमित्ताभावाद् घत्वजश्त्वयोरपि निवृत्तिः ॥ अलौकिकविग्रहवाक्ये प्रागेव तयोरप्रवृत्तिः 'अकृतव्यूह—' परिभाषयेति तु तत्त्वम् ॥ गुणस्तु प्रवर्तते । लुप्तेऽपि तृचि प्रत्ययलक्षणध्रौव्यात् ॥ छान्दसमपि 'तुः—' इति सूत्रम्, 'तुरिष्ठेमेयःसु' इति च 'णाविष्ठवत्' इत्यतिदेशेन लोकेऽपि कर्तारमाचष्टे कारयतीत्यादावुपयोक्ष्यमाणत्वादिहोपन्यस्तम् ॥—**प्रशस्यस्य श्रः** ॥ 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह—**अजाद्योरि**ति ॥ अजाद्योः किम् । प्रशस्यतरः । प्रशस्यतम. ॥—**श्रेष्ठ** इति । प्रकृतिभावादिह 'टेः' इति लोपो 'यस्येति' लोपश्च न भवति ॥—**ज्यादात्**—॥ ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात् ॥—**वृद्धस्य च** ॥ स्वरूपस्येह ग्रहण, न तु 'वृद्धिर्यस्याचामादिः' इति पारिभाषिकस्य, व्याख्यानात् । अस्य 'प्रियस्थिर—' इत्यादिना वर्षादेशोऽपि पक्षे भवति । न च तस्येमनिचि सावकाशता शङ्क्या । वृद्धशब्दादिमनिचोऽभावात् ॥ यदि तु 'वृद्धस्य वर्षिश्च' इति सूत्रमिहैव क्रियेत तदा द्विर्वृद्धग्रहण न कर्तव्यमिति लाघवं भवतीत्याहुः ॥—**स्थूलदूर**—॥ परग्रहणं यविष्ठो ह्रसिष्ठ इत्यत्र पूर्वयणो लोपो माभूदिति । पूर्वग्रहण तु स्पष्टार्थम् । परस्मिन् लुप्ते सामर्थ्यात्पूर्वस्यैव गुणलाभात् ॥—**स्थविष्ठ** इति । न चात्र 'ओर्गुणः' इत्येव सिद्धे गुणग्रहण व्यर्थमिति वाच्यम् । परयणादिलोपस्याभीयत्वेनासिद्धत्वात् क्षिप्रक्षुद्रयोरोर्गुणस्य प्राप्त्यभावात् । क्षेपिष्ठः क्षोदिष्ठ इत्यसिद्धिप्रसङ्गाच्च ॥—**एवमि**ति ॥ प्रेयान् । स्फेयान् । वरीयानित्यादि ॥—**इमेयसोर्लोप** इति ॥ स च 'आदेः परस्य' इत्यादेरेव भवति ॥—**इष्ठस्य यिट् च** ॥ पूर्वसूत्रं सम्पूर्णमनुवर्तते तदाह—**बहोरी**त्यादि । भूरादेशश्चेत्यपि ज्ञातव्यम् ॥—**भूयिष्ठ** इति । इष्ठस्यादिलोपे कृते यिशब्द आगमः ॥ यद्वा लोपापवादो यकार आगमः, इकारस्तूच्चारणार्थः । पक्षद्वयमपीद भाष्यारूढम् ॥—**युवाल्पयोः**—॥ युवेति स्वरूपग्रहणम्, न तु युवापत्यस्य, अल्पसाहचर्याद्व्याख्यानाच्च । 'अजादी' इत्यनुवर्तनादजाद्योरेव पूर्वयोर्न तु तरप्तमपोरित्याशयेन व्याचष्टे—**इष्ठेयसोरि**ति ॥—**विन्मतोर्लुक्** ॥—**स्रजिष्ठ** इति । विनो लुकि कृते भत्वात्पदकार्याभावः । अस्मादेव ज्ञापकादगुणवचनत्वेऽपि विन्मतोरजादी भवतः ॥—**प्रशंसायां रूपप्** ॥ प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा, न तु स्तुतिः । तेनेहापि भवति । चौररूपोऽय यदक्ष्णोरप्यञ्जनं हरति । गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते ॥—**पचतिरूपमि**ति । 'क्रियाप्रधानमाख्यातम्' क्रियायाश्चासत्त्वरूपत्वेऽपि औत्सर्गिकमेकवचनं भवति । तेन पचतोरूपं पचन्तिरूपमित्यादि । इह प्रथमैव विभक्त्यन्तराणामप्राप्तेरिति बहवः । वस्तुतस्तु पश्येत्यादियोगे कर्मणि द्वितीयापि सुलभा ॥

**ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।५।३।६७।** ईषदूनो विद्वान् विद्वत्कल्पः । यशस्कल्पम् । यजुःकल्पम् । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् । **विभाषा सुपो बहुच् पुरस्तात्तु ।५।३।६८।** ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्सच प्रागेव नतु परतः । ईषदूनः पटुर्बहुपटुः । पटुकल्पः । सुपः किम् । यजतिकल्पम् । **प्रकारवचने जातीयर् ।५।३।६९।** प्रकारवति चायम् । थाल् तु प्रकारमात्रे । पटुप्रकारः पटुजातीयः । **प्रागिवात्कः ।५।३।७०।** इवे प्रतिकृताविल्यतः प्राक् काधिकारः । **अव्ययसर्वनाम्नामकच् प्राक् टेः ।५।३। ७१।** तिङश्चेत्यनुवर्तते । **कस्य च दः ।५।३।७२।** कान्ताव्ययस्य दकारोऽन्तादेशः स्यादकच । **अज्ञाते ।५।३। ७३।** कस्यायमश्वोऽश्वकः । उच्चकैः । नीचकैः । सर्वके । विश्वके । * **ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्** । युवकयोः । आवकयोः । युष्मकासु । अस्मकासु । युष्मकाभिः । अस्मकाभिः । ओकारेत्यादि किम् । त्वयका । मयका । * **अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः** । मित्वादन्त्यादचः परः । तूष्णीकामास्ते । * **शीले को मलोपश्च** । तूष्णींशीलस्तूष्णीकः । पचतकि । जल्पतकि । धकित् । हिरकुत् । **कुत्सिते ।५।३।७४।** कुत्सितोऽश्वोऽश्वकः । **संज्ञायां कन् ।५।३।७५।** कुत्सिते कन् स्यात्तदन्तेन चेत्संज्ञा गम्यते । शूद्रकः । राधकः । स्वरार्थं वचनम् । **अनुकम्पायाम् ।५।३।७६।** पुत्रकः । अनुकम्पितः पुत्र इत्यर्थः । **नीतौ च तद्युक्तात् ।**

---

क्लीबत्वं लोकात् । एवं पचतिकल्पमित्यादावपि बोध्यम् ॥—**विभाषा सुपः**–॥ सूत्रे 'सुपः' इति षष्ठ्यन्तम् । 'षष्ठ्यतसर्थप्रत्ययेन' इत्युक्तेः ॥—**सुबन्तादि**ति । एतच्च पञ्चम्यन्तमुक्तमेव । पुरस्ताच्छब्दपर्यायस्य प्रागितिशब्दस्य वृत्तौ प्रयुक्तत्वात् । प्रागित्यपकृष्यत इति तु मनोरमायां स्थितम् । न च सूत्रस्थपुरस्ताच्छब्दसमानार्थकप्राक्शब्दयोगेऽपि 'षष्ठ्यतसर्थ–' इति षष्ठी स्यादिति वाच्यम् । 'अन्यारात्–' इति सूत्रेऽञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थप्रत्ययेन' इत्येतद्बाधनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा प्राक् प्रत्यग्वा ग्रामादित्युदाहृतत्वात् । काशिकायां तु वृत्तावपि पुरस्ताच्छब्दः प्रयुक्तः सुबन्तादिति च प्रयुक्तं तदसमञ्जसमिति मत्वा हरदत्तेन कथंचित् समर्थितम् । ल्यब्लोप एषा पञ्चमी ॥ एवंभूतं प्रकृतित्वेनाश्रित्येत्यर्थं इति ॥—**प्रागेवे**ति । सौत्रस्तुशब्दोऽवधारणे वर्तत इति भावः । तेन च बहुजेव विकल्प्यते, न पूर्वत्वम् । तुशब्दाभावे तु प्राक्त्वं विकल्प्येत । तथा च पक्षे बहुच् परः स्यात् ॥ भाष्यकारस्य मते तु नेदं तुशब्दस्य फलम् । तथाहि—'उदश्वितोऽन्यतरस्याम्' इत्यादौ प्रधानत्वात्प्रत्यय एव विकल्प्यते, न तु परत्वं, प्रत्यय एव हि परत्वविशिष्टो विधीयत इति विशेषणस्य गुणत्वात् । 'गुणानां च परार्थत्वात्' इति न्यायात् ॥ तद्वदिहापि विभाषाग्रहणेन बहुजेव संभत्स्यते, न पुरस्तादित्येतत् । तुशब्दस्य तु अवधारणार्थस्यान्यदेव प्रयोजनं पुरस्तादेव सर्व यथा स्यादिति । तेन लिङ्गसंख्ये अपि प्राक् प्रत्ययोत्पत्तेः प्रकृत्यवस्थायां ये दृष्टे ते एव स्तः । बहुचः प्रयोगश्च प्राक् प्रकृतेरेव भवतीति ॥ तेन बहुगुडो द्राक्षा 'लघुर्बहुतृणं नरः' इत्यादौ प्रकृतिवल्लिङ्गमेव भवति, न त्वभिधेयवल्लिङ्गम् ॥ ननु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनानि लभन्ते' इत्येव सिद्धमिति किमनेन तुशब्दग्रहणेनेति चेत् । अत्राहुः । एतदेव ज्ञापयति 'ईषदसमाप्तौ ये स्वार्थिकास्तेष्वभिधेयवदेव लिङ्गवचने स्त' इति । तेन गुडकल्पा द्राक्षा शर्कराकल्पो गुड इत्यादि सिद्धम् ॥—**प्रागिवात्कः** ॥ 'सुपः' इत्यनुवर्तते । तेन तिङन्तात्को न ॥—**अव्ययसर्वनाम्नाम्**—॥—**अनुवर्तते** इति । मण्डूकप्लुत्येति भावः । 'ङ्याप्प्रातिपदिकात्' 'सुपः' इति चानुवर्तत एव ॥—**कस्य च दः** ॥—**कान्ताव्ययस्ये**ति । सर्वनामग्रहणं तिङ्ग्रहणं च नेह संबध्यते, तयोः कान्तत्वासंभवात् । न चाधोक् अधोगित्यादौ संभवोऽस्तीति वाच्यम् । कत्वस्यासिद्धत्वात् । यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि 'अशाशक्' इति संभवति । तथापि यङ्लुकोऽसार्वत्रिकत्वात्तादृशं लक्ष्यमस्ति । छन्दसि क्वचिल्लक्ष्यसद्भावेऽपि 'सर्वे विधयश्छन्दसि वा विधीयन्ते' इति दत्वविधिर्न प्रवर्तत इति भावः ॥—**ओकारे**ति ॥ अकज्विधौ सुपोऽप्यनुवृत्त्या सर्वनाम्ना सुपा च टेर्विशेषणे कामचाराद् अव्यवस्थाप्रसङ्गे भाष्यकारवचनाद्व्यवस्थाश्रीयते । ओकारसकार इत्यादिसंकोचश्च युष्मदस्मन्मात्रविषयकः । तथैव भाष्ये उदाहृतत्वात् । अन्येषां त्वविशेषेण प्रातिपदिकस्यैव टेः प्रागकच्, न सुबन्तस्य । तेन सर्वकेण इमकेन भवकन्तमित्यादि सिध्यति ॥—**त्वयका मयके**ति ॥ नन्वत्र सुपः प्रागकचि कृते, प्रत्यये परतस्त्वमादेशयोः सतोरपि 'योऽचि' इति यत्वं न स्यात्, विभक्तिपरत्वाभावादिति चेत् । मैवम् । अकृतव्यूहपरिभाषाया अनित्यतामाश्रित्याकचः पूर्वमेव यत्वविधानात् । एवं युवकामावकामित्यत्राप्यकचः पूर्वमेव युवावादेशाविति बोध्यम् ॥—**शीले क** इति । शील स्वभावो नियमश्च ॥—**तूष्णीक** इति । 'केऽणः' इति ह्रस्वस्तु भाष्यकारप्रयोगात् 'न कपि' इत्यत्र 'न' इति योगविभागाद्वा न भवतीत्याहुः ॥ अकचो द्वितीय अकार उच्चारणार्थ इति ध्वनयन्नुदाहरति—**पचतकी**त्यादि ॥—**अनुकम्पायाम्**—॥–'कृपा दयानुकम्पा स्यात्' इत्यमरः ॥—**नीतौ च तद्यु-**

---

१ ईषदसमाप्ताविति—स्वार्थिकानां प्रकृतितो लिङ्गवचनाङ्गीकाराद्बहुगुडो द्राक्षा, वृषभकल्पः इयं गौरित्यादि सिद्धम् । बहुगुडा द्राक्षा इति तु क्वचित्प्रकृतितो लिङ्गवचनातिक्रमात्सिद्धम् । अत्र च 'णचः स्त्रियाम्'—इत्यत्र स्त्रीग्रहणं लिङ्गम् ।

५।३।७७। सामदानादिरुपायो नीतिस्तस्यां गम्यमानायामनुकम्पायुक्तात्कप्रत्ययः स्यात् । हन्त ते धानकाः । गुडकाः पृहकि । अहकि । पूर्वेणानुकम्प्यमानात्प्रत्ययः । अनेन तु परम्परासंबन्धेऽपीति विशेषः । **बह्वचो मनुष्यनाम्नष्ठज्वा** । ५।३।७८। पूर्वसूत्रद्वयविषये । **घनिलचौ च** ।५।३।७९। तत्रैव । **ठाजादावूर्ध्वं द्वितीयादचः** ।५।३।८३। अस्मिन्प्रकरणे यष्ठोऽजादिप्रत्ययश्च तस्मिन्प्रत्यये परे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते । अनुकम्पितो देवदत्तो देविकः । देवियः । देविलः । देवदत्तकः । अनुकम्पितो वायुदत्तो वायुदत्तकः । ठग्रहणमुको द्वितीयत्वे क-विधानार्थम् । वायुकः । पितृकः । * **चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः** ॥ अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः । अनजादौ च विभाषा लोपो वक्तव्यः । देवदत्तकः । देवकः । * **लोपः पूर्वपदस्य च** । दत्तिकः । दत्तियः दत्तिलः । दत्तकः । * **विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः** । देवदत्तः । दत्तः । देवः ॥ सत्यभामा । भामा । सत्या । * **उवर्णाल्ल इलस्य च** । भानुदत्तः । भानुलः । * **ऋवर्णादपि** । सवित्रियः । सवितृलः । चतुर्थादनजादौ च लोपः पूर्वपदस्य च । अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥१॥ **प्राचामुपादेरडज्वुचौ च** । ५।३।८०। उपशब्दपूर्वात्प्रातिपदिकात्पूर्वविषये अडच् वुच् एतौ स्तः । चाद्यथाप्राप्तम् । प्राचां ग्रहणं पूजार्थम् । अनुकम्पित उपेन्द्रदत्तः उपडः । उपकः । उपिकः । उपियः । उपिलः । उपेन्द्रदत्तकः । षड् रूपाणि । **जातिनाम्नः कन्** ।५।३।८१। मनुष्यनाम्न इत्येव । जातिशब्दो यो मनुष्यनामधेयस्तस्मात्कन्स्यादनुकम्पायां नीतौ च । सिंहकः । शरभकः । रासभकः । * **द्वितीयं संध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः** ॥ अनुकम्पितः कहोडः कहिकः । * **एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः** ॥ वागाशीर्दत्तः वाचिकः । कथं षडङ्गुलिदत्तः षडिक इति ॥ षषष्ठाक्रात् ॥

**—अनुकम्पायुक्ता**दिति । यद्यपि पुत्रादिरेव साक्षादनुकम्पायुक्तो न तु धानादिः, तथापि तद्द्वारा धानादीनामप्यस्त्यनुकम्पासबन्ध इति भावः ॥**—धानका** इति । धानाशब्दः स्त्रीलिङ्गः । ततः कः 'केऽणः' इति ह्रस्वः । कप्रत्ययान्ताट्टाप् ॥ अत्र 'प्रत्ययस्थात्–' इतीत्वेन भाव्यम् । प्रायेण तु धानका इति पठ्यते ॥ तत्र लिङ्गातिवृत्तिर्द्रष्टव्येति हरदत्तः ॥ 'कर्मव्यतिहारे णच् स्त्रियाम्' इति सिद्धे 'णचः स्त्रियामञ्' इति सूत्रे पुनः स्त्रीग्रहणेन ज्ञापित 'स्वार्थिकाः प्रकृतिलिङ्गं क्वचिदतिवर्तन्ते' इति ॥ तेन धानका इत्यत्र पुस्त्वमिति भावः ॥**—घनिलचौ च** ॥ चकाराद्यथाप्राप्तमिति काशिका । इह पूर्वसूत्रेणैव ठञ् विहितः । वावचनात्कोऽपि । चकारेण तु कस्याभ्यनुज्ञेति चिन्त्य, योगविभागे फलमपि चिन्त्यमिति हरदत्तः ॥**—ठाजादौ—**॥ समाहारद्वन्द्वे मौत्र पुस्त्वम् । आदिग्रहण चिन्त्यप्रयोजन, 'यस्मिन्विधिस्तदादौ' इत्येव सिद्धमिति हरदत्तः ॥**—अस्मिन्प्रकरण** इति । अनुकम्पाया नीतौ चेत्यर्थद्वयस्यैव प्रत्यासत्त्या बुद्धौ सन्निधानादिति भावः ॥ ऊर्ध्वग्रहणमिह सर्वलोपार्थम् । अन्यथा 'आदेः परस्य' इत्यादेरेव स्यादित्यभिप्रेत्याह**—द्वितीयादच ऊर्ध्वं सर्वमिति** । 'अजिनान्तस्य' इत्यतो लोप इत्यनुवर्तनादाह**—लुप्यत** इति । ननु ठग्रहण व्यर्थम् इकादेशे कृते अजादावित्येव सिद्धत्वादत आह**—ठग्रहणमुको द्वितीयत्व** इति ॥**—वायुक** इति । वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव लोपे 'इसुसुक्तान्तात्–' इति कः । किंच पृथक् ठग्रहणस्य प्रयोजनान्तरमप्यस्ति । यदा तु चित्रगुप्रभृतिभ्यष्ठच्, तदोगन्तत्वात् कादेशप्राप्त्या प्रथममिकादेशस्याऽसभवेनाजादिलक्षणो लोपो न स्यादिति तदर्थमपि ठग्रहणम् । तेन ठावस्थायामुत्तरपदलोपे कादेशस्यासभवादिकादेशे चित्रिक इति रूप सिध्यतीति बोध्यम् ॥ 'चतुर्थादनजादौ च' इति वक्ष्यमाणमेव श्लोकं भङ्क्त्वा व्याचष्टे**—चतुर्थादच ऊर्ध्वस्ये**ति ॥**—अनजादा**विति । हलादावित्यर्थः । 'अस्मिन् प्रकरणे' इत्येव ॥**—लोपः पूर्वपदस्य चे**ति । ठाजादावनजादौ चेति बोध्यः ॥ 'अप्रत्यये तथैवेष्टः' इत्येतद्व्याचष्टे**—विनापि प्रत्ययमि**ति ॥**—ल इलस्य चे**ति । इलस्य लः लोप इत्यर्थस्तत्र 'आदे. परस्य' इति इकारलोपो बोध्यः ॥**—प्राचामुपादेः—**॥ 'बह्वचो मनुष्य–' इत्याद्यनुवर्तते ॥**—उपेन्द्रदत्त** इति ॥ ननु कृतसंधेरुपेन्द्रशब्दादेकादेशस्य पूर्वान्ततया ग्रहणात् 'उपादेः' इति विधीयमानौ प्रत्ययौ स्ता नाम । लोपस्तु नकारादेरेव स्यात् । ततश्च उपक उपड इति रूपे न स्याताम् । किं तु उपयक उपयड इति रूपे स्याताम् । एवं घनिलच्ठच्स्वपि दोष एव । तस्मादिहैव 'द्वितीयं संध्यक्षरं चेत्' इति वार्तिक कुतो नोक्तमिति चेत् । अत्राहुः । प्रकारान्तरेण निर्वाहसभवान्नोक्तम् । तथाहि । आद्गुणे कृते 'द्वितीयं संध्यक्षरम्' इत्यादिना अकारस्यापि लोपप्रसक्त्या गुणात्पूर्वमेवाकृतव्यूहपरिभाषया प्रत्ययः । नच परिनिष्ठितत्वपरेण समर्थग्रहणेन सौत्थितिरित्यत्रेव परिभाषाबाधः शङ्क्यः । 'प्राग्दिशः' इति सूत्रे 'समर्थग्रहणं निवृत्तम्' इत्युक्तत्वात् ॥ 'अकृतसंधेः' इति प्रागुक्तज्ञापकबलेन समर्थग्रहणप्रत्याख्यानपक्षेऽपि ज्ञापकस्य विशेषपरत्वाश्रयणादिति ॥ उपेन्द्रः उपगुरुरुपकर्तेत्यादिषूपडादीनां पञ्चानां रूपाणां साम्येऽपि सैन्धवादिष्विव प्रकरणादिना विशेषोऽध्यवसेयः ॥**—जातिनाम्नः—**॥ ये शब्दा जात्यन्तरे प्रसिद्धाः, मनुष्ये नामत्वेन विनियुक्तास्त इहोदाहरणम् ॥**—द्वितीयमित्यादि** । एचः संध्यक्षरमिति प्राचां संज्ञा ॥**—वागाशीरि**ति । वाचि आशीर्यस्येति विग्रहः ॥**—वाचिक** इति । यद्यत्र द्वितीयादच

१ एकाक्षरेति–अच्सहितं व्यञ्जनमक्षरम् । एकाच्पूर्वपदानामित्यर्थः । द्वितीयादच ऊर्ध्वमित्यनेन द्वितीयाज्विशिष्टस्य लोपाप्राप्तेरिदम् ।

आदिवचनात्सिद्धम् । शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ।५।३।८४। एषां मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात् । पूर्वस्यापवादः । अनुकम्पितः शेवलदत्तः शेवलिकः । शेवलियः । शेवलिलः । सुपरिकः । विशालिकः । वरुणिकः अर्यमिकः । अजिनान्तस्योत्तरपदलोपश्च ।५।३।८२। अजिनान्तान्मनुष्यनाम्नोऽनुकम्पायां कन् तस्य चोत्तरपदलोपः । अनुकम्पितो व्याघ्राजिनो व्याघ्रकः । सिंहकः । अल्पे ।५।३।८५। अल्पं तैलं तैलकम् । ह्रस्वे ।५।३।८६। ह्रस्वो वृक्षो वृक्षकः । संज्ञायां कन् ।५।३।८७। ह्रस्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् । पूर्वस्यापवादः । वंशकः । वेणुकः । कुटीशमीशुण्डाभ्यो रः ।५।३।८८। ह्रस्वा कुटी कुटीरः । शमीरः शुण्डारः । कुत्वा डुपच् ।५।३।८९। ह्रस्वा कुतूः कुतुपः । 'कुतूः कृतेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' । कासूगोणीभ्यां ष्टरच् ।५।३।९०। आयुधविशेषः कासूः । ह्रस्वा सा कासूतरी । गोणीतरी । वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।५।३।९१। वत्सतरः । द्वितीयं वयः प्राप्तः । उक्षतरः । अश्वतरः । ऋषभतरः । प्रवृत्तिनिमित्ततनुत्व एवायम् । किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ।५।३।९२। अनयोः कतरो वैष्णवः । यतरः । ततरः । महाविभाषया कः । यः । सः । वा बहूनां जातिपरिप्रश्ने डतमच् ।५।३।९३। बहूनां मध्ये एकस्य निर्धारणे डतमच् वा स्यात् । जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । यकः सकः । महाविभाषया यः । सः । * किमोऽस्मिन्विषये डतरजपि । कतरः । एकाच्च प्राचाम् ।५।३।९४। डतरच् डतमच्च स्यात् । अनयोरेकतरो

---

ऊर्ध्वस्य लोपः स्यात् । तदा वाच् आ इक इति स्थिते 'यस्येति च' इत्याकारस्य लोपे तस्य स्थानिवत्त्वादाकारान्तस्य भत्वे अन्तर्वर्तिनीं विभक्तिमाश्रित्य चकारान्तस्य पदत्वेन कुत्वजश्त्वयोः सतोर्वागिक इति स्यात् ॥ उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाभावात्तुल्यावधिकतया 'यचि भम्' इति भसंज्ञया 'सुप्तिङन्तम्' इति पदसंज्ञा एकसंज्ञाधिकारात्परत्वाद्बाध्यते । 'स्वादिषु' इति पदसंज्ञा तु न शङ्कनीयैव 'यचि भम्' इति भसंज्ञायास्तदपवादत्वात् ॥—**कथमि**ति । अत्राप्युत्तरपदलोपे जाते जश्त्वं दुर्लभमिति प्रश्नः ॥—**षष** इति । अत्र सौत्र एव लोप इष्यते न लौपसंख्यानिक इत्यर्थः ॥—**शेवलसुपरि**—॥—**शैवलिक** इति । 'बह्वचो मनुष्यनाम्नः' इति ठञ् । घनिलचोस्तु शेवलियः शेवलिलः ॥ 'शेवलादीनां तृतीयाल्लोपो य उच्यते स च कृतसंधीनां वक्तव्यः' ॥ सुपर्याशीः ॥ सुपरिकः सुपरियः सुपरिल इति भाष्ये स्थितम् कैयटेन तु सुपरिक इति प्रतीकमुपादाय संहिताकार्ये तु कृते लोपे सति सुपर्यिक इति स्यादिति व्याख्यातम् ॥ अयं भावः । संहिताकार्ये यणि कृते तृतीयादच ऊर्ध्वलोपे सति शीर्दत्त इत्यस्यैव लोपः स्यात् । आकारस्य तु 'यस्येति च' इत्यनेन स्यात्तथाच स्थानिवद्भावाद्यणो निवृत्तिर्न भविष्यतीति ॥—**ह्रस्वे** ॥ तैलादौ ह्रस्वदीर्घादिव्यवहाराभावाद् वृक्षक इत्युदाहृतम् ॥ यद्यपि 'अल्पे' इत्यनेनैवेदं रूपं सिध्यति तथापि शाब्दबोधे विशेषोऽस्तीत्याहुः ॥—**कुटीर** इति ॥ 'स्वार्थिकाः प्रकृतितो लिङ्गमतिवर्तन्ते' इति पुलिङ्गतात्र संगच्छते ॥—**वत्सोक्षाश्व**—॥ तनुत्व न्यूनता । सा च प्रवृत्तिनिमित्तस्य प्रत्यासत्तेः । क्वचित्तु तत्सहचरितधर्मान्तराणाम् । तत्र वत्सः प्रथमवयाः ॥ वयसश्च प्रथमस्य न्यूनत्व नाम वयोऽन्तरप्राप्तिस्तदाह—**द्वितीयमि**ति । तरुण उक्षा । तारुण्यस्य तनुत्व तृतीयवयःप्राप्तिः । अश्वायामश्वादुत्पन्नोऽश्वः, अश्वत्वं च जातिः । तत्सहचरितस्याश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपितृकता । तथा च गर्दभेनाश्वायामुत्पादितोऽश्वतरः ॥ ऋषभो भारस्य वोढा । तस्य तनुत्व भारोद्वहने मन्दशक्तिता । तद्वांस्तु ऋषभतरः ॥—**किंयत्तदो**—॥—**कतरो वैष्णव** इति । गुणेन निर्धारणमिदम् ॥ क्रियासंज्ञाभ्यां निर्धारणे तु कतरोऽध्यापकः । कतरो देवदत्त इत्यादि ज्ञेयम् ॥ ननु द्वयोरेकस्य निर्धारणे डतरच् भवति, तर्हि 'कयोरन्यतरो देवदत्तः' 'ययोरन्यतरः' 'तयोरन्यतरः' इत्यात्रापि प्राप्नोति । अत्राहुः । निर्धार्यमाणवाचिभ्य एवाय प्रत्ययोऽभिधानस्वाभाव्यात् । तेनात्र नातिप्रसङ्ग इति ॥ एकस्येति किम् । 'द्वयोः' इति कर्मणि षष्ठी माभूत् । तथाहि सति 'अस्मिन् सघे कौ देवदत्तयज्ञदत्तौ' इत्यादावेव स्यात् ॥—**वा बहूनाम्**—॥ 'किंयत्तदः' इति वर्तते ॥ जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः । अत्र जाताविति सर्वेषां विशेषणम् ॥ षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निष्कृष्य संबन्धोऽनुपपन्नः स्यात् । परिप्रश्नग्रहण तु किम एव विशेषणम् । तच्च क्षेपनिवृत्त्यर्थम् ॥ तत्र जातिग्रहणं प्रायोऽभिप्रायम् । क्रियागुणसंज्ञाभिरपि निर्धारणे डतमच इष्टत्वात् ॥ तथा पूर्वसूत्रे द्वयोरिति प्रायोऽभिप्रायम् । बहूनां निर्धारणेऽपि डतरच इष्टत्वात् ॥ तथा च वार्तिकम् । 'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्' इति ॥ अत्र कैयटः । 'द्वयोः' इति, 'जातिपरिप्रश्ने' इति च न कर्तव्यमिति भाव इति । तदेतदाह—**प्रत्याख्यातमाकर** इति ॥—**कठ** इति । कतमो भवतामध्यापकः शूरो देवदत्तो वेत्यप्युदाहर्तव्यम् ॥—**यकः सक** इति ॥ कक इति तु नोक्तम् । अकच्सहितस्यापि 'किमः कः' इत्ययमादेश इति व्याख्यातत्वात् ॥—**महाविभाषये**ति । 'प्राग्दिशः' इति सूत्रे समर्थप्रथमग्रहणयोर्निवृत्तत्वेऽपि वाग्रहणमनुवर्तते इत्युक्तत्वादिति भावः ॥ 'किंयत्तदः' इति सूत्रे द्वयोरित्यस्य प्रत्याख्यानादाह—**किमोऽस्मिन्नि**ति ॥—**एकाच्च**—॥ प्राचांग्रहणं पूजार्थं । विकल्पोऽनुवर्तत एव ॥

मैत्रः । एषामेकतमः । **अवक्षेपणे कन्** ।५।३।९५। व्याकरणकेन गर्वितः । येनेरतः कुत्स्यते तद्विहोदाहरणम् । स्वतः कुत्सिते तु कुत्सित इत्यस्य ॥ ॥ प्रागिवीयानां पूर्णोऽवधिः ॥

**इवे प्रतिकृतौ** ।५।३।९६। कन् स्यात् । अश्व इव प्रतिकृतिः अश्वकः । प्रतिकृतौ किम् । गौरिव गवयः । **संज्ञायां च** ।५।३।९७। इवार्थे कन् स्यात्समुदायेन चेत्संज्ञा गम्यते । अप्रतिकृत्यर्थमारम्भः । अश्वसदृशस्य संज्ञा अश्वकः । उष्ट्रकः । **लुम्मनुष्ये** ।५।३।९८। संज्ञायां विहितस्य कनो लुप्स्यान्मनुष्ये वाच्ये । चञ्चा तृणमयः पुमान् । चञ्चेव मनुष्यश्चञ्चा । वर्ध्रिका । **जीविकार्थे चापण्ये** ।५।३।९९। जीविकार्थं यद्विक्रीयमाणं तस्मिन्वाच्ये कनो लुप्स्यात् । वासुदेवः । शिवः । स्कन्दः । देवलकानां जीविकार्थासु देवप्रतिकृतिष्विदम् । अपण्ये किम् । हस्तिकान्विक्रीणीते । **देवपथादिभ्यश्च** ।५।३।१००। कनो लुप्स्यात् । देवपथः । हंसपथः । आकृतिगणोऽयम् । **वस्तेर्ढञ्** ।५।३।१०१। इवेत्यनुवर्तत एव । प्रतिकृताविति निवृत्तम् । वस्तिरिव वास्तेयम् । वास्तेयी । **शिलाया ढः** ।५।३।१०२। शिलाया इति योगविभागाड्ढञपीत्येके । शिलेव शिलेयम् । शैलेयम् । **शाखादिभ्यो यः** ।५।३।१०३। शाखेव शाख्यः । मुख्यः । जघनमिव जघन्यः अग्र्यः । शरण्यः । **द्रव्यं च भव्ये** ।५।३।१०४। द्रव्यमयं ब्राह्मणः । **कुशाग्राच्छः** ।५।४।१०५। कुशाग्रमिव कुशाग्रीया बुद्धिः । **समासाच्च तद्विषयात्** ।५।३।१०६। इवार्थविषयात्समासाच्छः स्यात् । काकतालीयो[1] देवदत्तस्य वधः । इह काकतालसमागमसदृशश्चौरसमागम इति समासार्थः । तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः । अजाकृपाणीयः । अतर्कितोपनत इति फलितोऽर्थः । **शर्करादिभ्योऽण्** ।५।३।१०७। शर्करेव शार्करम् । **अङ्गुल्यादिभ्यष्ठक्** ।५।३।१०८। अङ्गुलीव आङ्गुलिकः । भरुजेव भारुजिकः । **एकशालायाष्ठजन्यतरस्याम्** ।५।३।१०९। एकशालाशब्दादिवार्थे ठञ्वा पक्षे ठक् । एकशालेव एकशालिकः । ऐकशालिकः । **कर्कलोहितादीकक्** ।५।३।११०। कर्कः शुक्लोऽश्वः स इव कार्कीकः । लौहितीकः स्फाटिकः । **पूगाञ्ञ्योऽग्रामणीपूर्वात्** ।५।३।११२। इवार्थो

---

**—अवक्षेपणे कन्** ॥ कुत्सिते तु कः । स्वरे विशेषः ॥**—येन इतर** इति । अवक्षिप्यते येनेत्यवक्षेपणशब्दः करणे ल्युडन्त इति भावः ॥ प्रागिवीयानां पूर्णोऽवधिः ॥

**अश्वक** इति ॥ अश्वशब्दोऽश्वे एव वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृश इति नायं स्वार्थिक इत्येके ॥ अन्ये तु सादृश्यनिबन्धनादभेदोपचाराद्गौर्वाहीक इतिवदश्वशब्द एव प्रतिकृतौ वर्तते । प्रत्ययस्तु तस्यौपचारिकत्वस्य बोधक इत्याहुः ॥ प्रतिकृतौ किं, गौरिव गवयः ॥ तृणचर्मकाष्ठादिनिर्मित प्रतिमापरपर्याय वस्तु प्रतिकृतिः । गवयस्तु नैवम् ॥**—समुदायश्चेदिति** । प्रकृतिप्रत्ययसमुदायश्चेदश्वसदृशस्य संज्ञेत्यर्थः ॥**—चञ्चा । वर्ध्रिके**ति । लुपि युक्तवद्भावात् स्त्रीलिङ्गता ॥**—वासुदेवः । शिव** इत्यादि ॥ याः प्रतिमाः प्रतिगृह्य गृहाद् गृह भिक्षमाणा अटन्ति ता एवमुच्यन्ते । देवलका अपि ॥ त एव भिक्षवोऽभिप्रेताः ॥ यास्त्वायतनेषु प्रतिष्ठाप्यन्ते च तासूत्तरसूत्रेण लुप् तदुक्तम् । 'अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु' इति । अर्चासु प्रतिमासु । प्रतिमासु कीदृशीषु पूजनार्हासु गेहेष्वायतनेषु वा याः पूज्यन्ते तासु । चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यन्ते ॥ अर्चासूदाहरणं—शिवः विष्णुः ॥ चित्रकर्मणि—अर्जुनः दुर्योधनः ॥ ध्वजेषु—कपिः गरुडः सिंह. ॥ सुपर्णसिंहमकरादयो ध्वजेषु राज्ञां सन्ति ॥ **—हस्तिकानि**ति ॥ ईदृशमेव विषयमभिप्रेत्य पठन्ति—'राम सीतां लक्ष्मण जीविकार्थे विक्रीणीते यो नरस्तं च धिक् धिक् । अस्मिन्पद्ये योऽपशब्द न वेत्ति व्यर्थप्रज्ञ पण्डित त च धिग्धिक्' इति । अय भावः । 'अपण्ये' इत्युक्तत्वात्पण्ये हस्तिकानितिवत् रामक सीतिकां लक्ष्मणकमिति प्रयोगा एव साधव इति ॥**—देवपथ** इत्यादि । देवपथ इव प्रतिकृतिः । हंसपथ इव प्रतिकृतिरिति विग्रहः ॥**—बस्तिरि**ति ॥ 'वस्तिर्नाभेरधो द्वयो.' इत्यमरः ॥**—द्रव्यं च भव्ये** ॥ द्रुशब्दादिवार्थे ण्यप्रत्ययो निपात्यते ॥**—समासाच्च तद्विषयात्** ॥ तच्छब्देन प्रकृत इवार्थो निर्दिश्यते इत्याह**—इवार्थविषयादि**ति ॥**—छः स्यादि**ति । इवार्थ इति बोध्यम् । 'पूगाञ्ञ्यः' इत्यतः प्रागिवेत्यधिकारात् । शस्त्रीश्यामेत्यादौ तु एक एव इवार्थः । स च समासान्तर्भूत इति च्छो न भवत्युक्तार्थानामप्रयोगात् ॥**—काकतालीय** इति । प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः । सुप्सुपेति वा । उभयथापि विशेषसंज्ञाविनिर्मुक्तः । स च छप्रत्ययविषय एव । तेन स्वातन्त्र्यमुपाध्यन्तरयोगो विग्रहश्च नेत्याकरः ॥**—इह काकताले**त्यादि । आगच्छतः काकस्याऽकस्मात्तालफलपतनाद्यथा वधः, तथैव चाकस्मिकचोरसमागमाद्देवदत्तवधः ॥ एवमजाया आगच्छन्त्या कृपाणपतनाद् यथा वधः, तत्सदृशं मरणमिति फलितोऽर्थः ॥**—अतर्कितोपनत** इति । अचिन्तितोपपन्नः, यादृच्छिक इत्यर्थः ॥**—पूगाञ्ञ्यो—**॥

---

१ काकतालीय इति—अत्र पूर्वपदमुपमानकाकागमनपरम् उत्तरपदं चोक्तपूर्वपदार्थसमानाधिकरणोपमानतालपतनपरम् । समुदायश्चोपमेयदेवदत्तगमनसमानाधिकरणचोरपतनपर इति बोध्यम् ।

विवृत्तः। नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगास्तद्वाचकात्स्वार्थे ञ्यः स्यात्। लौहितध्वज्यः। ॥ व्रातच्फञोरस्त्रियाम् ।५।३।११३। व्राते। कापोतपाक्यः। च्फञ् । कौञ्जायन्यः। ब्राध्नायन्यः। ॥ आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ।५।३।११४। वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट्। क्षौद्रक्यः। मालव्यः। स्त्रियां ङीप्। क्षौद्रकी। आयुधेति किम्। मल्लाः। सङ्घेति किम्। सम्राट्। वाहीकेषु किम्। शबराः। अब्राह्मणेति किम्। गोपालकाः। शालङ्कायनाः। ब्राह्मणे तद्विशेषग्रहणम् राजन्ये स्वरूपग्रहणम्। ॥ वृकाट्टेण्यण् ।५।३।११५। आयुधजीविसङ्घवाचकात्स्वार्थे। वार्केण्यः। आयुधेति किम्। जातिशब्दान्मा भूत्। ॥ दामन्यादित्रिगर्तषष्ठाच्छः ।५।३।११६। दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात्। त्रिगर्तः षष्ठो वर्गो येषां ते त्रिगर्तषष्ठाः ॥ आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी ॥ क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः ॥१॥ दामनीयः। दामनीयौ। दामनयः। औलपि। औलपीयः। त्रिगर्तः। कौण्डोपरथीयः। दाण्डकीयः। ॥ पर्श्वादियौधेयादिभ्योऽणञौ ।५।३।११७। आयुधजीविसङ्घवाचिभ्य एभ्यः क्रमादणञौ स्तः स्वार्थे। पार्शवः। पार्शवौ। पर्शवः। यौधेयः। यौधेयौ। यौधेयाः। ॥ अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ।५।३।११८। अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात्। आभिजित्यः। वैदभृत्यः। शालावत्यः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः। ॥ ञ्यादयस्तद्राजाः ।५।३।११९। पूगाञ्ञ्य इत्यारभ्य उक्ता एतत्संज्ञाः स्युः। तेनास्त्रियां बहुषु लुक्। लोहितध्वजाः। कपोतपाकाः। कौञ्जायनाः। ब्राध्नायना इत्यादि। ॥ पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ।५।४।१। लोपवचनमनैमित्तिकत्वार्थम्। अतो न स्थानिवत्। पादः पत्। तद्धितार्थे इति समासे कृते प्रत्ययः। वुन्नन्तं स्त्रियामेव। द्वौ द्वौ पादौ ददाति द्विपदिकाम् ॥ द्विशतिकाम् ॥ पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥ द्विमोदकिकाम्। ॥ दण्डव्यवसर्गयोश्च ।५।४।२। वुन् स्यात्। अवीप्सार्थमिदम्। द्वौ पादौ दण्डितः द्विपदिकाम्।

---

स्वरूपग्रहणं तु न भवति, 'अग्रामणीपूर्वात्' इति वचनात्। पूर्वशब्दो ह्यवयववचनः ॥ अग्रामणीपूर्वादिति किम्। देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः। 'स एषां ग्रामणीः' इति कन्। अत्र समुदायः पूगवचनः ॥—**लौहितध्वज्य** इति। लोहितः ध्वजो यस्य स लोहितध्वजः। स एव लौहितध्वजः ॥—**व्रातच्फञोः**—॥ उत्सेधजीविनं व्रातस्य पूगाद्विशेषः। उत्सेधः शरीरायासः।—**कौञ्जायन्य** इति। 'गोत्रे कुञ्जादिभ्यः' इति च्फञ् ॥—**दामन्यादित्रिगर्तषष्ठात्**—॥ समाहारद्वन्द्वात्पञ्चमी ॥—**त्रिगर्तषष्ठेभ्य** इति। येषामायुधजीविनां षडन्तर्वर्गाः ॥ षष्ठवर्गस्तु त्रिगर्तस्तेभ्य इत्यर्थः ॥ त्रिगर्तवर्गषष्ठकाः के इत्याकाङ्क्षायामाह—**आहुस्त्रिगर्तषष्ठांश्चे**ति ॥ अत्र जानकयस्त्रिगर्तवर्गः। तेषु च त्रिगर्तषष्ठेषु प्रथमपञ्चमौ कौण्डोपरथब्राह्मणगुप्तशब्दौ शिवाद्यणन्तौ शेषास्त्विञन्ताः ॥ केचित्तु अतद्धितान्तमेव पञ्चमं ब्रह्मगुप्तशब्दं पठन्ति ॥—**कौण्डोपरथीय** इति। बहुवचने तु कौण्डोपरथाः। दाण्डकय इत्यादि ॥—**पार्शव** इति ॥ पर्शुरिति जनपदशब्दस्ततोऽपत्ये 'द्व्यञ्मगध—' इत्यण्। बहुत्वे तद्राजत्वाल्लुक्। पुनः संघविवक्षायामनेनाण्। अस्याप्यणो बहुत्वे तद्राजत्वाल्लुक्। तदाह—**पर्शव** इति ॥ ननु पर्शुरिति यो जनपदशब्दस्तस्मादेवानेन स्वार्थेऽण् विधीयतामपत्यवाचिपर्शुशब्दात्संघविवक्षायामण्विधौ तु स्वार्थिकत्वं न सिध्येदिति चेत्। अत्राहुः। केवलः पर्शुशब्द एव जनपदवाची न त्वणन्त इति जनपदवाचिनः स्वार्थेऽण् न विधीयते, किं तु 'द्व्यञ्मगध' इत्यणः 'तद्राजस्य बहुषु—' इत्यादिना लुकि बह्वपत्यवाचिपर्शुशब्दादेव स्वार्थे विधीयते। स्वार्थश्चात्र संघ एव। न च पर्शुशब्दस्य सघवाचित्वं नेति शङ्क्यम्। बह्वपत्यवाचित्वे संघवाचित्वध्रौव्यादिति न काप्यनुपपत्तिरिति ॥—**यौधेय** इति। युध्यतेऽसौ युधा। युधेरिगुपधलक्षणः कः। युधाया अपत्यं 'द्व्यचः' इति ढक् तदन्तात्संघविवक्षायामनेनाञ्। तेन यौधेय इति आद्युदात्त भवति। किं च यौधेयस्याङ्को लक्षणं वा यौधेयः। 'संघाङ्कलक्षण—' इत्यञन्तादण्। एवं यौधेयादिषु ये ढगन्ताः शौकेयादयस्तेषु सर्वेषु प्रयोजनद्वयमूह्यम् ॥—**यौधेया** इति। अञो लुक् अन्तोदात्तम्। न च 'न प्राच्यभर्गा—' इत्यादिना निषेधः शङ्क्यः। स्त्रियामेव तन्निषेधात् ॥—**आभिजित्य** इति ॥ आभिजितशब्दादणन्ताद्यञ्। एवं विदभृत्प्रभृतिभ्यो अणि तदन्तेभ्यो वैदभृतः। शालावतः। शैखावतादिभ्यो यञ् ॥—**पादशतस्य संख्यादेः**—॥ पादशतस्य किम्। द्वौ द्वौ माषौ ददाति ॥ संख्यादेरिति किम्। पादं पादं ददाति ॥ वीप्सायामिति किम्। द्वौ पादौ ददाति ॥—**अनैमित्तिकत्वार्थमि**ति। निमित्ते भवो नैमित्तिकः। अध्यात्मादित्वाट्ठञ् ॥—**तद्धितार्थ** इति। यद्यपि प्रकृत्युपाधिर्वीप्सा। तथापि वुनो द्योत्येति तद्धितार्थो भवत्येवेति भावः ॥—**ददा**तीति। समर्पणमात्रमिह ददातेरर्थः, न तु परस्वत्वापादनपर्यन्तम्। तथात्वे हि उत्तरसूत्रविषयत्वं स्यात्। केचित्तु व्यवसृजतेर्धातोः प्रयोगे सत्येव उत्तरसूत्रस्य प्रवृत्तिमाहुः ॥—**अन्यत्रापि तद्दर्शनादि**ति। द्वौ द्वौ माषौ ददातीत्यादौ त्वनभिधानान्नातिप्रसङ्ग इति भावः ॥—**दण्डव्यवसर्ग**—॥ दण्डनं दण्डः घुरादित्वाद्भावे घञ्। अत्राप्युदाहरणे 'तद्धितार्थ—' इति समासः। स्त्रीलिङ्गं च तद्धितार्थः। यद्वा प्रकृत्यर्थ एव तद्धितार्थः, स्वार्थिकत्वाद्वुनः ॥—**द्वौ पादौ दण्डित** इति।

द्विपदिकाम् । व्यवसृजति ददातीत्यर्थः । ॥ स्थूलादिभ्यः प्रकारवचने कन् ।५।४।३। जातीयरोऽपवादः । स्थूलकः । अणुकः । * चञ्चद्बृहतोरुपसंख्यानम् । चञ्चत्कः । बृहत्कः । * सुराया अहौ ॥ सुरावर्णोऽहिः सुरकः । ॥ अनत्यन्तगतौ क्तात् ।५।४।४। छिन्नकम् । भिन्नकम् । अभिन्नकम् । ॥ न सामिवचने ।५।४।५। सामिपर्याये उपपदे क्तान्तान्न कन् । सामिकृतम् । अर्धकृतम् । अनत्यन्तगतेरिह प्रकृत्यैवाभिधानात्पूर्वेण कन् न प्राप्तः । इदमेव निषेधसूत्रमत्यन्तस्वार्थिकमपि कनं ज्ञापयति । बहुतरकम् । ॥ बृहत्या आच्छादने ।५।४।६। कन् स्यात् । द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ आच्छादने किम् । बृहती छन्दः । ॥ अषडक्षाशित-ङ्ग्वलङ्कर्मालंपुरुषाध्युत्तरपदात्खः ।५।४।७। स्वार्थे । अषडक्षीणो मन्त्रः । द्वाभ्यामेव कृत इत्यर्थः । आशिता गावोऽस्मिन्नित्याशितङ्गवीनमरण्यम् । निपातनात्पूर्वस्य मुम् । अलं कर्मणे अलंकर्मीणः । अलंपुरुषीणः । ईश्वराधीनः नित्योऽयं खः । उत्तरसूत्रे विभाषाग्रहणात् ॥ अन्येऽपि केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते । तमबादयः प्राक्कनः ज्यादयः प्राग्वुनः । आमादयः प्राङ्मयटः । बृहतीजात्यन्ताः समासान्ताश्चेति । ॥ विभाषाञ्चेरदिक्स्त्रियाम् । ५।४।८। अदिक्स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदिकात्खः स्याद्वा स्वार्थे । प्राक्, प्राचीनम् । प्रत्यक्, प्रतीचीनम् । अवाक्, अवाचीनम् । निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः । अर्वन्तमञ्चतीति अर्वाक्, अर्वाचीनम् । अदिक्स्त्रियां किम् । प्राची दिक् । उदीची दिक् । दिग्ग्रहणं किम् । प्राचीना ब्राह्मणी । स्त्रीग्रहणं किम् । प्राचीनं ग्रामादाम्राः ।

देवदत्तेन यज्ञदत्त इति शेषः । दण्डेरप्रधाने कर्मणि क्त इति यज्ञदत्त इत्यत्र प्रथमा । द्वौ पादाविव्यत्र द्विपदिकामित्यत्र च द्वितीया भवति । 'दण्डेर्ग्रहणार्थे' इति द्विकर्मकेषूक्तम् । तथा च द्विपदिकाकर्मकग्रहणविषयीभूतो यज्ञदत्त इत्यादिरर्थ इति नव्याः ॥—**स्थूलादिभ्यः**—॥ प्रकारो भेदः सादृश्य च । उभयत्रापि यथासंभव कन् ॥—**जातीयरोऽपवाद** इति । तेनायमपि तद्वदेव प्रकारवति न तु प्रकारमात्रे इत्युक्त भवति ॥—**चञ्चद्बृहतोरि**ति । एतावपि स्थूलादिष्वेव पठितव्याविति भावः ॥—**चञ्चत्क** इति । चञ्चतिश्चलनकर्मा चञ्चन्नेव कश्चिच्चञ्चत्क । एवं बृहद्विशेषो बृहत्कः । यद्वा अचञ्चन्नबृहन्नपि प्रभाविशेषाच्चञ्चन्निव बृहन्निव मणिविशेषो लक्ष्यते स चञ्चत्कः । बृहत्कः ॥—**सुरक** इति । 'केऽणः' इति ह्रस्वः॥—**छिन्नकमि**ति । ईषच्छिन्नमित्यर्थः । क्तप्रकृतिवाच्यया क्रियया कप्रत्ययवाच्यस्य साधनस्य व्याप्तिरत्यन्तगतिः । सेह नास्ति ॥—**न सामिवचने** ॥ सामि अर्धः उच्यते येन तत्सामिवचनमिति व्युत्पत्त्या वचनग्रहणं पर्यायार्थमित्याह—**सामिपर्याये** इति ॥—**सामिकृतमि**ति । 'सामि' इति समासः ॥—**अर्धकृतमि**ति । विशेषणसमासो बहुव्रीहिर्वा ॥ —**प्रकृत्यैवे**ति । सामिवचनेनैवेत्यर्थः ॥—**ज्ञापयती**ति । अय भावः । 'न सामिवचने' इत्यनेन 'अनत्यन्तगतौ' इति कनो न निषेधः । सामिकृतादिभ्यस्तस्य प्राप्त्यभावात् तेभ्योऽसमासे सामिपदेनैव अनत्यन्तगतेर्द्योतनात् । समासेभ्यस्तु क्तान्तत्वाभावाच्च । न च कृद्ग्रहणपरिभाषया समासस्य क्तान्तत्वमस्तीति शङ्क्यम् । सामिशब्दस्य गतिकारकत्वाभावात् । तस्मात् स्वार्थिक एव कन् निषिध्यत इति । इदमेव निषेधवचनं क्वचित्स्वार्थिक कन ज्ञापयतीति ॥—**अषडक्षीण** इति ॥ अविद्यमानानि षडक्षीणि यस्मिन्निति बहुव्रीहिः । अक्षिशब्दोऽत्र श्रोत्रेन्द्रिये वर्तते । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच् । तदन्तादनेन खः । मन्त्रो मन्त्रणम् ॥—**आशितंगवीनमि**ति । आङ्पूर्वादश्नोतेः 'आशितः कर्ता' इति ज्ञापकात्कर्तरि क्तः । ण्यन्तात्कर्मणि वा । उभयथापि प्रभूतयवसमिति फलितोऽर्थः ॥—**अलंकर्मीण** इति । अलकर्मे अलंपुरुषेति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासः ॥—**अलंपुरुषीण** इति । प्रतिमल्लादिः ॥—**ईश्वराधीन** इति । अधिशब्दः शौण्डादिरित्युक्तम् ॥—**तमबादय** इति । 'अतिशायने तमप्' इत्यादयः ॥—**प्राक्कन** इति । 'अवक्षेपणे कन्' इति विहितात् ॥—**ज्यादय** इति । 'पगाऽऽज्यो ग्रामणीपूर्वात्' इत्यादयः ॥—**प्राग्वुन** इति । 'पादशतस्य संख्यादेः' इति विहितात् ॥—**आमादय** इति । 'किमेत्तिङव्ययघादामु–' इत्यादयः ॥—**प्राङ्मयट** इति । 'तत्प्रकृतवचने मयट्' इत्यतः प्रागित्यर्थः ॥—**बृहतीजात्यन्ता** इति । बृहतीशब्देन 'बृहत्या आच्छादने' इति विहितः कन् उपलक्ष्यते । जात्यन्तशब्देन 'जात्यन्ताच्च'—इति च्छः । बहुवचननिर्देशात्पाशबादयो गृह्यन्ते । यो हि वैयाकरणपाशादिशब्दैरर्थः प्रतीयते नासौ प्रकृतिमात्रेण प्रतीयते इति तेऽपि तमबादिवन्नित्या एवेति स्थितमाकरे ॥ कन्छौ मुक्त्वा मूले बृहतीमात्रप्रयोगो जात्यन्तमात्रप्रयोगश्च कृतः, स तु अवाचकोऽप्यार्षग्रन्थानुवादत्वान्न दोषाय ॥—**विभाषाञ्चेर**—॥ दिक् चासौ स्त्री चेति दिक्स्त्री तत्र प्रतिषेधो, न तु दिशि स्त्रियां च, स्त्रीलिङ्गैकवचननिर्देशात् ॥—**प्राचीनमि**ति । 'अचः' इत्यकारलोपे कृते 'चौ' इति दीर्घः । एवमग्रे क्वचिदूह्यम् ॥—**प्राचीना ब्राह्मणी**ति । प्रकर्षेणाञ्चतीनि प्राचीनेत्येवं क्रियानिमित्तको वा देशकालनिमित्तको वा अयं शब्दो ब्राह्मण्यां वर्तते, न तु दिशीति प्रतिषेधाभावः ॥—**प्राचीनमि**ति । प्राच्यां दिशीत्यर्थे 'दिक्शब्देभ्यः'—इत्यस्तातिः । 'अञ्चेर्लुक्' इति लुक् । 'लुक्तद्धितलुकि' इति ङीपो लुक् । 'तद्धितश्चासर्व-

१ जातीयरोऽपवाद इति—जातीयविधौ भेद एव प्रकार इति जयादित्यमतेऽपवाद इत्यस्य परत्वाद्बाधक इत्यर्थः । तत्राप्युभयं गृह्यते इति वामनमते तु यथाश्रुतमेव ।

**आत्यन्ताच्छ बन्धुनि** ।५।४।९। ब्राह्मणजातीयः । बन्धुनि किम् । ब्राह्मणजातिः शोभना । जातेर्व्यञ्जकं द्रव्यं बन्धु । **स्थानान्ताद्विभाषा सस्थानेनेति चेत्** ।५।४।१०। सस्थानेन तुल्येन चेत् स्थानान्तस्समर्थवदि-त्यर्थः । पितृस्थानीयः । पितृस्थानः । सस्थानेन किम् । गोः स्थानम् । **अनुगादिनष्ठक्** ।५।४।१३। अनुगद-तीत्यनुगादी । स एव आनुगादिकः । **विसारिणो मत्स्ये** ।५।४।१६। अण् स्यात् । वैसारिणः । मत्स्येति किम् । विसारी देवदत्तः । **संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्** ।५।४।१७। अभ्यावृत्तिर्जन्म । क्रि-याजन्मगणनवृत्तेः संख्याशब्दात्स्वार्थे कृत्वसुच् स्यात् । पञ्चकृत्वो भुङ्क्ते । संख्यायाः[1] किम् । भूरिवारान्भुङ्क्ते । **द्वित्रिचतुर्भ्यः सुच्** ।५।४।१८। कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिः । रात्रस्य । चतुः । **एकस्य सकृच्च** । ५।४।१९। सकृदित्यादेशः स्याच्चात्सुच् । सकृद्भुङ्क्ते । संयोगान्तस्येति सुचो लोपः । न तु हल्ङ्याबिति । अभैत्सीदि-त्यत्र सिच इव सुचोऽपि तदयोगात् । **विभाषा बहोर्धाऽविप्रकृष्टकाले** ।५।४।२०। अविप्रकृष्ट आसन्नः । बहुधा दिवसस्य भुङ्क्ते । आसन्नकाले किम् । बहुकृत्वो मासस्य भुङ्क्ते । **तत्प्रकृतवचने मयट्**[2] ।५।४।२१। प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनम् । भावेऽधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमन्नमयम् । अपू-

---

विभक्तिः' इत्यव्ययत्वात् स्त्रीत्वाभावः । खे तु कृते स्वभावान्नपुंसकत्वम् ॥—**ब्राह्मणजातीय** इति ॥ व्यक्तयोरितिव-द्भावप्रधानो ब्राह्मणशब्दः, तस्य जातिशब्देन सह बहुव्रीहिः । ब्राह्मणत्वजात्याधारभूतः पिण्ड इत्यर्थः ॥—**ब्राह्मणजाति-**रिति । षष्ठीतत्पुरुषः । भावप्रधानेन सह कर्मधारयो वा ॥—**जातेर्व्यञ्जक**मिति । बध्यते जातिरस्मिन्निति बन्धुः 'शृ-स्वृस्निहि-' इत्यादिना अधिकरणे उप्रत्ययः । रूढोऽपि बन्धुशब्द आप्तपर्यायः पुंलिङ्गोऽस्ति, तथापि स नेह गृह्यते । 'बन्धुनि' इति नपुंसकनिर्देशादिति भावः ॥ सस्थानेनेत्यस्यैव व्याख्यान—**तुल्येने**ति ॥—**पितृस्थानीय** इति । स्थानमत्र संबन्धविशेषः पदमिति यस्य प्रसिद्धिः । पितुरिव स्थानमस्य पितृस्थानः । पितृतुल्य इत्यर्थः ॥—**गोस्थान-**मिति । तिष्ठन्त्यस्मिन्निति स्थान देशः ॥ इतिकरणं विवक्षार्थम् । तेन तत्पुरुषो बहुव्रीहिर्वा यस्तुल्यस्थानशब्दस्तस्माच्छो न भवति ॥—**अनुगादिनः**—॥ प्रकृतिस्वरूपप्रदर्शनपरं चैतत् । न त्वय केवलः प्रयोगार्हः, ठको नित्यत्वादिति हर-दत्तः । 'सुप्यजातौ–' इति णिनिः ॥—**विसारिणो**—॥ पूर्ववदिहापि णिनिः । हरदत्तस्तु 'सुप्यजातौ' इति णिनिरु-पसर्गभिन्न एव सुप्युपपदे भवतीत्याशयेन पूर्वसूत्रेऽस्मिश्च अतएव निपातनात् णिनिरित्याह । तदयुक्तम् । 'स बभूवोपजी-विनाम् । अनुयायिवर्गः । न वञ्चनीयाः प्रभवोऽनुजीविभिः' इत्यादिप्रयोगानुरोधेन उपसर्गे सुप्युपपदेऽपि णिनेरवश्य स्वीक-र्तव्यतया निपातनाश्रयणस्य व्यर्थत्वात् ॥ 'अणिनुणः' इत्यतोऽनुवर्तनादाह—**अण् स्यादि**ति ॥—**वैसारिण** इति । 'इनण्यनपत्ये' इति प्रकृतिभावः ॥—**संख्यायाः**—॥ अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्यते' तदा षट्कृत्वः प्रवृत्तौ पञ्चकृत्व इति स्यात् । अतोऽत्र विवक्षितमर्थमाह—**अभ्यावृत्तिर्जन्मे**ति ॥—**भूरिवारानि**ति । भूरिशब्दस्य लौकिकसंख्यावाचित्वेऽपि नेह ग्रहणम् । 'बहुगण–' इति सूत्रे बहुग्रहणस्य नियमार्थत्वात् 'अनियतसंख्यावाचिनां चेद्भवति बहोरेव' इति नियमशरीरमिति मनोरमा ॥ बहुगणयोरेवेति नियमशरीरमित्यन्ये ॥ वारशब्दस्य क्रियोत्पत्त्याधारकालवा-चित्वात् 'कालाध्वनोः' इति द्वितीयेति हरदत्तः । ननु वारशब्दस्य कालवाचित्वे भूरिशब्दोऽपि तत्समानाधिकरणत्वात्काल एव वर्तत इति कथमत्र प्रसङ्ग इति चेत् अत्राहुः । कालवाचित्वेऽपि क्रियाभ्यावृत्तेरपि गम्यमानत्वात्प्रसङ्ग इति ॥ अभ्या-वृत्तिगणने किम् । पञ्च पाकाः दश पाकाः इत्यत्र क्रियामात्रगणने माभूत् ॥ क्रियाग्रहण किमर्थम् । यावताभ्यावृत्तिः क्रियाया एव भवति, साध्यार्थविषयत्वात्तस्याः, न द्रव्यगुणयोः । तयोस्तु सिद्धस्वभावतया शब्दाभिधानात् ॥ पुनःपुनर्दण्डो पुनः-पुनः स्थूल इत्यत्रापि गम्यमानाया भवतिक्रियाया एवाभ्यावृत्तिर्न तु द्रव्यगुणयोरिति चेत् । मैवम् । उत्तरार्थ क्रियाग्रहण स्यावश्यकत्वात् ॥—**एकस्य सकृच्च** ॥ अभ्यावृत्तिरिति न संबध्यते । एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते, तस्या-स्त्वावृत्तेरसभवात् ॥ क्रियाग्रहणमिहार्थमावश्यकम् ॥ अन्यथा 'आ दशतः संख्याः संख्येये वर्तन्ते' इत्येको भुङ्क्ते इत्यत्रापि स्यादिति । इह साधु पचतीत्यादिवदेकं भुङ्क्ते इति प्रयोगे प्राप्ते सकृच्छब्दप्रयोगार्थमिद सूत्रमिति कैयटः ॥ एकः पाक इत्यत्र तु अनभिधानान्नेति काशिका ॥—**संयोगान्तस्ये**ति ॥ हल्ङ्यादिना सुलोप इति प्राचो ग्रन्थोऽयुक्त इत्याह—**न त्वि**ति ॥ सुतिसीति साहचर्याद्विभक्तय एव तत्र गृह्यन्त इत्यभिप्रेत्याह—**सिच इवे**ति ॥—**बहुधा दिवसस्य भुङ्क्ते** इति ॥ शेषत्वविवक्षायां षष्ठी । 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इत्यनेन षष्ठीति हरदत्तोक्तिस्तु नादर्तव्या । शेषा-धिकारबलेनाष्टसूत्र्याः समासनिवृत्तिफलकतया तिङन्तेनोदाहरणमिति प्रागुक्तनिष्कर्षविरोधादित्याहुः ॥—**तत्प्रकृत**—॥ **प्राचुर्येण प्रस्तुत**मिति । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढः, तथापि वचनग्रहणादयं विशेषो लभ्यते । वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनम् तत्र यथा स्यादित्येवमर्थम् ॥—**आद्ये** इति । प्रथमान्तात्प्रकृते वाच्ये

---

१ संख्यायाः किमिति—गणने वृत्तिः संख्याशब्दानामेवेति प्रश्नः । २ तत्प्रकृतेति—तद्ग्रहण वाक्यभेदेन प्राचुर्याभावे-ऽपि अत्यन्तस्वार्थिकमयडर्थम् । तेन चिन्मयं ब्रह्मेत्यादि सिद्धम् ।

पमयम् । यवागूमयी । द्वितीये अन्नमयो यज्ञः । अपूपमयं पर्व । **समूहवच्च बहुषु** ।५।४।२२। सामूहिकाः प्रत्यया अतिदिश्यन्ते चान्मयट् । मोदकाः प्रकृताः मौदकिकम् । मोदकमयम् । शाष्कुलिकम् । शष्कुलीमयम् । द्वितीयेऽर्थे । मौदकिको यज्ञः । मोदकमयः । **अनन्तावसथेतिहभेषजाञ्ञ्यः** ।५।४।२३। अनन्त एवानन्त्यम् । आवसथ एवावसथ्यम् । इतिहेति निपातसमुदायः, ऐतिह्यम् । भेषजमेव भैषज्यम् । **देवतान्तात्ता-दर्थ्ये यत्**[1] ।५।४।२४। तदर्थं एव तादर्थ्यम् । स्वार्थे ष्यञ् । अग्निदेवतायै इदम् अग्निदेवत्यम् । पितृदेवत्यम् । **पादार्घाभ्यां च** ।५।४।२५। पादार्थमुदकं पाद्यम् । अर्घ्यम् । * **नवस्य नू आदेशः त्नप्तनप्खाश्च प्रत्यया वक्तव्याः** । नूत्नम् । नूतनम् । नवीनम् । * **नश्च पुराणे प्रात्** । पुराणार्थे वर्तमानात्प्रशब्दान्नो वक्तव्यः । चात्पूर्वोक्ताः । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् । * **भागरूपनामभ्यो धेयः** । भागधेयम् । रूपधेयम् । नामधेयम् । * **आग्नीध्रसाधारणादञ्** । आग्नीध्रम् । साधारणम् । स्त्रियां ङीप् । आग्नीध्री । साधारणी । **अतिथेर्ञ्यः** ।५।४।२६। तादर्थ्ये इत्येव । अतिथये इदमातिथ्यम् । **देवात्तल्** ।५।४।२७। देव एव देवता । **अवेः कः** ।५।४।२८। अविरेवाविकः । **यावादिभ्यः कन्** ।५।४।२९। याव एव यावकः । मणिकः । **लोहितान्मणौ** ।५।४।३०। लोहित एव मणिर्लोहितकः । **वर्णे चानित्ये** ।५।४।३१। लोहितकः कोपेन । * **लोहिताल्लिङ्गबाधनं वा** । लोहितिका लोहिनिका कोपेन । **रक्ते** ।५।४।३२। लाक्षादिना रक्ते यो लोहितशब्दस्तस्मात्कन्स्यात् । लिङ्गबाधनं वेत्येव । लोहितिका लोहिनिका शाटी । **कालाच्च** ।५।४।३३। वर्णे चानित्ये रक्ते इति द्वयमनुवर्तते । कालकं मुखं वैलक्ष्येण । कालकः पटः । कालिका शाटी । **विनयादिभ्यष्ठक्** ।५।४।३४। विनय एव वैनयिकः । सामयिकः । * **उपायो ह्रस्वत्वं च** । औपयिकः । **वाचो व्याहृतार्थायाम्** ।५।४।३५। संदिष्टार्थायां वाचि विद्यमानाद्वाक्शब्दात्स्वार्थे ठक् स्यात् । संदेशवाग् वाचिकं स्यात् । **तद्युक्तात्कर्मणोऽण्** ।५।४।३६। कर्मैव कार्मणम् । वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः । **ओषधेरजातौ** ।५।४।३७।

प्रत्ययः ॥ स्वार्थिकत्वात्प्रकृतितो लिङ्गम् । अपूपमयमित्यपि क्वचित्पठ्यते । प्रस्तुतोऽपूपोऽपूपमयम् ॥ क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते । अस्मिन्पक्षे तद्ग्रहण व्यर्थम् । द्वितीये त्वावश्यकं प्रथमान्तादेव प्रत्ययलाभार्थम् ॥—**द्वितीये** इति । अस्मिन्पक्षे उच्यमानता प्रकृत्यर्थविशेषणम् । ल्युटोक्तमधिकरण तु मयडर्थः । अत एव विशेष्यनिघ्नता तदाह—**अन्नमयो यज्ञ** इति । अन्न प्रकृतमुच्यते अस्मिन्नित्यर्थः ॥—**मौदकिकम्** ॥—**शाष्कुलिकमिति** ॥ 'अचित्तहस्तिधेनोष्ठक्' ॥—**आवसथ** इति ॥ 'उपसर्गे वसेः' इत्यथप्रत्ययः ॥—**निपातसमुदाय** इति । उपदेशपारंपर्ये वर्तते वचनाच्चाप्रातिपदिकादेव प्रत्ययः ॥—**ऐतिह्यमिति** । 'इतिहाव्ययम्' इति कोशः ॥—**भेषजमिति** । भिषज्यतेः कण्ड्वादियगन्तात्क्विप् । भिषजामिदं भेषजम् । अस्मादेव निपातनादेकारः ॥—**पितृदेवत्यमिति** ॥ पितरश्च ता देवताश्च पितृदेवताः । पितृदेवताभ्य इदमिति विग्रहः ॥—**अर्घ्यमिति** ॥ 'मूल्ये पूजाविधावर्घः' इत्यमरः ॥—**पूर्वोक्ता** इति । त्नप्तनप्खप्रत्यया इत्यर्थः ॥—**आग्नीध्रमिति** । 'अग्नीधः शरणे रण् भ च' इति शैषिकेषु व्युत्पादित, तच्चान्तोदात्तम्, ततः स्वार्थेऽनेनाञ् । आद्युदात्तत्व फलम् । फलान्तरमप्याह—**स्त्रियामिति** ॥—**आग्नीध्रीति** । शालेति विशेष्यम् ॥ समानं धारणमस्याः साधारणी । अनेक प्रत्यवशिष्टसबन्धा भूम्यादिः । पृषोदरादित्वात्समानस्य सभावः । विभाषाप्रकरणादञभावे टाप् । आग्नीध्रा शाला । साधारणा भूमिः ॥ नन्वञभावपक्षे समानस्य सभावेऽपि साधारण इत्येव स्यान्न त्वत्रादिवृद्धिरिति चेत् । अत्राहुः । 'साधारणादञ्' इत्यत एव निपातनात्समानस्य सभावविधानाद्वा इष्टसिद्धिरिति ॥—**देवतेति** ॥ तलन्त स्त्रियाम् ॥—**वर्णे चानित्ये** ॥ अनित्ये किम् । लोहितं रुधिरम् । लोहिता लाक्षा ॥ अनित्यत्वमिह समानाधिकरणध्वसप्रतियोगित्वम् । अतएव 'रक्ते' इत्युत्तरसूत्र सार्थकम् । लाक्षादिना रक्ते लौहित्यस्य यावदाश्रयमवस्थानेन नित्यतया पूर्वेणासिद्धेः ॥—**लोहितक** इति । कोपेन लोहितो यः पुरुषस्तस्मिन्नेव क्षणादूर्ध्वं कोपशान्तौ लोहितो नश्यतीति भवत्यत्रानित्यो वर्णः । 'प्रातिपदिकात्तद्धितः' इति पक्षस्य प्रतिपदविधानमात्रेणापवादत्वमिति पक्षस्य चाश्रयणे 'वर्णादनुदात्तात्' इत्यतः प्रागेव कनि कृते लोहितिकेति रूप न स्यादित्याशङ्कायामाह—**लिङ्गबाधनं वेति** । लोहितादित्युपलक्षणम् । एतिका एनिकेत्यादेरपि सम्प्राह्यत्वात् । 'सुबन्तात्तद्धिताः' इति पक्षस्य 'निरवकाशत्वमपवादत्वम्' इति पक्षस्य च मुख्यत्वात्तदाश्रयणे तु 'वर्णादनुदात्तात्' इत्यस्यानन्तरमेव कनः प्रवृत्तेः कन्प्रत्ययस्य पुलिङ्गे सावकाशतया निरवकाशत्वाभावाच्च वार्तिकमिदं न कर्तव्यम् । अत एव ङ्याब्ग्रहण व्यर्थमिति स्वाम्पीति रूप प्रबलमिति च मनोरमादावुक्तमिति दिक् ॥—**उपायेति** ॥ उपायशब्दष्ठक लभते ह्रस्वत्व चेत्यर्थः ॥ अकस्माच्छब्दोऽत्र पठ्यते स तु दान्तो न तु तान्तः । तेन कादेशो न 'अव्ययानां भमात्रे टिलोपः' आकस्मिकम् ॥—**वाचो व्याहृता**—॥ व्याहृतार्थायां किम् । मधुरा वाग्देवदत्तस्य ॥—**वाचिकमिति** । 'अतिवर्तन्ते स्वार्थिकाः क्वचिल्लिङ्गम्' इति नपुंसकत्वम् ॥—**प्रज्ञ एवेति** ॥ प्रजाना-

१ देवतान्तादिति—वैधे कर्मणि त्यज्यमानद्रव्योद्देश्यत्व, मन्त्रस्तुत्यत्व च देवतात्वम् ।

स्वार्थेऽण् । औषधं पिबति । अजातौ किम् । ओषधयः क्षेत्रे रूढाः । ॥ प्रज्ञादिभ्यश्च ।५।४।३८। प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः । ॥ मृदस्तिकन् ।५।४।३९। मृदेव मृत्तिका । ॥ सस्नौ प्रशंसायाम् ।५।४।४०। रूपपोऽपवादः । प्रशस्ता मृत् मृत्सा । मृत्स्ना । उत्तरसूत्रेऽन्यतरस्यांग्रहणान्नित्योऽयम् । ॥ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।५।४।४२। बहूनि ददाति बहुशः । अल्पानि अल्पशः ॥ * बह्वल्पार्थान्मङ्गलामङ्गलवचनम् । नेह । बहूनि ददात्यनिष्टेषु । अल्पं ददात्याभ्युदयिकेषु । ॥ संख्यैकवचनाच्च वीप्सायाम् ।५।४।४३। द्वौ द्वौ ददाति द्विशः । माषं माषं माषशः । प्रस्थशः । परिमाणशब्दा वृत्तावेकार्था एव । संख्यैकवचनात्किम् । घटं घटं ददाति । वीप्सायां किम् । द्वौ ददाति । कारकादित्येव । द्वयोर्द्वयोः स्वामी । ॥ प्रतियोगे पञ्चम्यास्तसिः ।५।४।४४। प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः स्यात् । प्रद्युम्नः कृष्णतः प्रति । * आद्यादिभ्य उपसंख्यानम् । आदौ आदितः । मध्यतः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण स्वरतः । वर्णतः । ॥ अपादाने चाऽहीयरुहोः ।५।४।४५। अपादाने या पञ्चमी तदन्तात्तसिः स्यात् । ग्रामा-

---

तीति प्रज्ञः । 'इगुपधज्ञा–' इति कः । ततः स्वार्थेऽण् । प्राज्ञः ॥—**प्राज्ञी**ति । 'टिड्ढा–' इति ङीप् । प्रज्ञानं प्रज्ञा । 'आतश्चोपसर्गे–' इत्यङि टाप् । प्रज्ञा विद्यते यस्याः सा तु प्राज्ञा भवति । 'प्रज्ञाश्रद्धार्चाभ्यः' इति णः ॥—**मृदस्तिकन्** ॥ 'प्रत्ययस्थात्' इत्येव सिद्धे इकारोच्चारण प्रक्रियालाघवार्थ, टापो लुक्यपि श्रवणार्थं च । पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिकः पटः ॥—**सस्नौ**—॥ इह 'प्रशंसायां रूपप्' इत्यस्यानन्तरं 'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि' । 'मृदः सस्नौ' 'तिकंश्च' इति वक्तुमुचितम् ॥ न चैव सस्नाविव तिकन् प्रत्ययोऽपि प्रशंसायामेवेत्यतिप्रसङ्गः । 'तिकंश्च' इत्यत्र 'प्रशंसायाम्' इति निवृत्तमिति कल्पनायां मानाभावादिति वाच्यम् । 'मृदः सस्नतिकनः' इति वक्तव्ये तिकनः पृथक्करणस्यैव तत्र मानत्वात् ॥—**प्रशस्तामृदि**ति । 'मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका' इत्यमरः ॥—**नित्योऽयमि**ति । मृदित्येतावदुक्ते प्रशस्तत्वानवगमाद्विभाषात्त नानुवर्तेत इति सस्नावित्यय विधिर्नित्य एव । उत्तरसूत्रस्थान्यतरस्यांग्रहणात्तु सुतरामिति भावः ॥—**बह्वल्पार्थात्**—॥[1]—**बहूनी**ति । बहुभ्यो ददाति बहुशः, अल्पेभ्य अल्पश इत्याद्यपि बोध्यम् ॥ बह्वल्पार्थात्किम् । गां ददाति । अश्वं ददाति ॥ अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च । भूरिशो ददाति । त्रिशः ॥ कारकात्किम् । बहूनां स्वामी, अल्पानां स्वामी ॥—**मङ्गलवचनमि**ति । 'बहुशो ददात्याभ्युदयिकेषु कर्मसु । अल्पशो ददात्यनिष्टेषु' । आभ्युदयिकेषु बहुदानम् अनिष्टेष्वल्पदानं च मङ्गलम् ॥ तद्वैपरीत्येन दानं तु मङ्गलं न भवतीत्याशयेनाह—**नेहे**ति ॥—**अनिष्टेष्वि**ति । भयादिनिमित्तेषु दानेषु ॥—**आभ्युदयिकेष्वि**ति । अभ्युदयप्रयोजनेष्वग्न्याधेयादिषु । मूलपुस्तके तु 'मङ्गलामङ्गलवचनम्' इति प्रायेण पठ्यते । तत्रामङ्गलग्रहण वृथेत्याहुः । प्रायिकं चैतन्मङ्गलवचनमन्यत्रापि हि दृश्यते 'अपेतापोढमुक्तपतितापत्रस्तैरल्पशः' इति । कारकत्वं तु समसनक्रियां प्रति पञ्चम्याः कर्मत्वात्तदभिधायकत्वाच्चाल्पशब्दस्य । तथा च व्याचक्षते । अल्पा पञ्चमी समस्यत इति । आचार्येणेति शेषः ॥—**परिमाणशब्द** इति ॥ तथा चैकवचनग्रहणेन एकोऽर्थ उच्यते येनेत्यर्थकेन वृत्तावेकार्थतानियताः परिमाणशब्दा एव गृह्यन्त इति भावः ॥—**माषं माषमि**ति । माषदातेत्युक्ते माषमाषमात्रस्य हिरण्यादेर्दातेति प्रतीयते, न तु माषाणामिति प्रतीतिरिति भवत्यय वृत्तावेकार्थतानियमः ॥ एव प्रस्थादिरपि ॥ घटादयस्तु नैवम् । घटदातेत्युक्ते तु घटानां दातेत्यर्थस्यापि प्रतीयमानत्वादत एव च प्रत्युदाहरति—**घटं घटमि**ति । घटादयो जातिशब्दा नैकार्था भवन्ति जातियोगस्यैकानेकसाधारणत्वात्, किं त्वभेदैकत्वसंख्यामुपाददते । एतच्च सर्वं जयादित्यमतानुसारेणोक्तम् ॥ वामनमते जातिशब्देभ्योऽपि भवत्येव । तथा च 'जश्शसोः' इति सूत्रे तेनोक्तम् 'जसा सहचरितस्य शसो ग्रहणादिह न भवति । 'कुण्डशो ददाति वनशः प्रविशति' इति ॥ तस्यायमाशयः—जातिशब्दोऽपि यद्यर्थप्रकरणादिना वृत्तावेकार्थो भवति, तदा भवत्येव ततोऽपि शसिति ॥ अथ कथम् 'एकैकशः पितृसयुक्तान्' इति द्विर्वचनशसोः सह प्रयोग इति चेत् । छन्दोवदृषयः कुर्वन्तीति हरदत्तः । अतएव 'सुपः' इति सूत्रे एकैकश इति प्राचो ग्रन्थः प्रामादिक इत्यवोचामेति मनोरमायां स्थितम् ॥ वस्तुतस्तु एकैकमेव एकैकशः । स्वार्थे शस्, न तु वीप्साया 'एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा' इति भाष्यादिति 'तान्येकवचन–' इत्यादिसूत्रे वक्ष्यामः ॥—**द्वौ ददाती**ति । कथं तर्हि—'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्व न विद्यते' इति । न ह्यत्र वीप्सास्ति, नापि कारकत्वमिति चेत् । अत्राहुः । सहस्रं सहस्रं ये समेतास्तेषामपि परिषत्त्वं नेत्यर्थः ॥ तथा च समवायक्रियां प्रति कर्तृत्व वीप्सा चास्त्येवेति ॥ एतेन 'एकश एकवचनादिसंज्ञानि स्युः' इति व्याख्यातम् । एकशब्दार्थस्यास्तिक्रियां प्रति कर्तृत्वात् ॥—**कृष्णतः प्रती**ति ॥ 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति कर्मप्रवचनीयसंज्ञायां 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी ॥—**आद्यादिभ्य** इति । 'तस्यादित उदात्तम-

---

१ बह्वल्पार्थादिति—अत्राल्पशब्देन स्तोकादीनामेव ग्रहणम् । न तदर्थैकशब्दस्य । तत्सत्त्वे मानाभावात् । सत्त्वेऽपि तत्रार्थे तस्याप्रसिद्धतरत्वेनाल्पार्थशब्देन न ग्रहणम् ।

ग्रामच्छति । ग्रामतः । अहीयरुहोः किम् । स्वर्गाद्धीयते । पर्वतादवरोहति । 𝕏 अतिग्रहाऽव्यथनक्षेपेष्वकर्तरि तृतीयायाः ।५।४।४६। अकर्तरि तृतीयान्ताद्वा तसिः स्यात् । अतिक्रम्य ग्रहोऽतिग्रहः । चारित्रेणातिगृह्यते । चारित्रतोऽतिगृह्यते । चारित्रेणान्यानतिक्रम्य वर्तत इत्यर्थः । अव्यथनमचलनम् । वृत्तेन न व्यथते । वृत्ततो न व्यथते । वृत्तेन न चलतीत्यर्थः । क्षेपे । वृत्तेन क्षिप्तः । वृत्ततः क्षिप्तः । वृत्तेन निन्दित इत्यर्थः ।*अकर्तरीति किम् । देवदत्तेन क्षिप्तः । 𝕏 हीयमानपापयोगाच्च ।५।४।४७। हीयमानपापयुक्तादकर्तरि तृतीयान्ताद्वा तसिः । वृत्तेन हीयते । वृत्तेन पापः । वृत्ततः । क्षेपस्याविवक्षायामिदम् । क्षेपे तु पूर्वेण सिद्धम् । अकर्तरि किम् । देवदत्तेन हीयते । 𝕏 षष्ठ्या व्याश्रये ।५।४।४८। षष्ठ्यन्ताद्वा तसिः स्यान्नानापक्षसमाश्रये । देवा अर्जुनतोऽभवन् । आदित्याः कर्णतोऽभवन् । अर्जुनस्य पक्षे इत्यर्थः । व्याश्रये किम् । वृक्षस्य शाखा । 𝕏 रोगाच्चापनयने ।५।४।४९। रोगवाचिनः षष्ठ्यन्ताद्वा तसिश्चिकित्सायाम् । प्रवाहिकातः कुरु । प्रतीकारमस्याः कुर्वित्यर्थः । अपनयने किम् । प्रवाहिकायाः प्रकोपनं करोति । 𝕏 कृभ्वस्तियोगे संपद्यकर्तरि च्विः ।५।४।५०। * अभूततद्भाव इति वक्तव्यम्[1] । विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे । 𝕏 अस्य च्वौ ।७।४।३२। अवर्णस्य ईः स्यात् च्वौ । वेर्लोपः । च्व्यन्तत्वादव्ययत्वम् । अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात् । * अव्ययस्य च्वावीत्वं नेति वाच्यम् । दोषाभूतमहः । दिवाभूता रात्रिः । एतच्चाव्ययीभावश्चेति सूत्रे भाष्ये उक्तम् । 𝕏 क्यच्व्योश्च ।६।४।१५२। हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये च्वौ च परतः । गार्गीभवति । 𝕏 च्वौ च ।७।४।२६। च्वौ परे पूर्वस्य दीर्घः स्यात् । शुचीभवति । पटूस्यात् । अव्ययस्य दीर्घत्वं नेति केचित्तन्निर्मूलम् । स्वस्ति स्यादिति तु महाविभाषया च्वेरभावात्सिद्धम् । स्वस्तीस्यादित्यपि पक्षे स्यादिति चेदस्तु । यदि नेष्यते तर्ह्यनभिधानात् च्विरेव नोत्पद्यते इत्यस्तु ॥ रीङ्‌कृतः ॥ मात्रीकरोति । 𝕏 अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।५।४।५१। एषां लोपः स्यात् च्विश्च । अरूकरोति । उन्मनीस्यात् । उच्चक्षूकरोति । विचेतीकरोति । विरहीकरोति । विरजीकरोति । 𝕏 विभाषा साति कार्त्स्न्ये ।५।४।५२। च्विविषये सातिर्वा स्यात्साकल्ये । 𝕏 सात्पदाद्योः ।८।३।१११। सस्य षत्वं न स्यात् । दधि सिञ्चति । कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति । अग्नीभवति । महाविभाषया वाक्यमपि । कार्त्स्न्ये किम् । एकदेशेन शुक्लीभवति पटः । 𝕏 अभिविधौ संपदा च ।५।४।५३। संपदा कृभ्वस्तिभिश्च योगे सातिर्वा स्याद्व्याप्तौ । पक्षे कृभ्वस्तियोगे च्विः । संपदा तु वाक्यमेव । अग्निसात्संपद्यते अग्निसाद्भवति शस्त्रम् । अग्नीभवति । जलसात्संपद्यते जलीभवति लवणम् । एकस्या व्यक्तेः सर्वावयवावच्छेदेनान्यथाभावः कार्त्स्न्यम् । बहूनां व्यक्तीनां किंचिदवयवावच्छेदेनान्यथात्वं त्वभिविधिः । 𝕏 तदधीनवचने ।५।४।५४। सातिः स्यात्कृभ्वस्तिभिः संपदा च योगे । राजसात्करोति । राजसात्संपद्यते । राजाधीनमित्यर्थः । 𝕏 देये त्रा च । ५।४।५५। तदधीने देये त्रा स्यात्सातिश्च कृभ्वादियोगे । विप्राधीनं देयं करोति विप्रत्रा करोति । विप्रत्रा संपद्यते । पक्षे विप्रसात्करोति । देये किम् । राजसाद्भवति राष्ट्रम् । 𝕏 देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।५।४।५६। एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । देवत्रा वन्दे रमे वा । बहुलोक्तेरन्यत्रापि ।

र्धहरम्' इत्येतदत्र लिङ्गम् ॥—ग्रामत इति ॥ एवमध्ययनात्पराजयते अध्ययनत इत्याद्यपि बोध्यम् ॥—अतिगृह्यत इति ॥ अन्यातिक्रमेण लोकैर्गृह्यत इत्यर्थः । फलितमाह—अन्याननतिक्रम्य वर्तत इति ॥—प्रवाहिकात इति ॥ प्रच्छर्दिकातः कुर्वित्याद्यप्युदाहरणम् । प्रवाहिका सूचिका । प्रच्छर्दिका तु वमनव्याधिः ॥—कृभ्वस्तियोगे—॥ योग इति किम् । अशुक्लः शुक्लो जायते ॥—संपद्यकर्तरीति । संपद्यश्चासौ कर्ता चेति विग्रहः । पाघ्राध्माधेट्दृशः' इति विहितः शप्रत्ययोऽस्मादेव निपातनात्सपदोऽपि भवति । दिवादित्वात् श्यनिति हरदत्तः ॥—वक्तव्यमिति । वृत्तिकारस्तु 'अभूततद्भावे' इति सूत्रमध्ये प्रचिक्षेप ॥—च्व्यन्तत्वादिति ॥ तस्य निपातत्वात् 'स्वरादिनिपातमव्ययम्' इत्यनेनेत्यर्थः ॥ —गार्गीभवतीति ॥ इह यञन्तात् सुपि ततः च्विप्रत्यये कृते 'आपत्यस्य च तद्धितेऽनाति' इति यलोपो न भवति, ईकारेण व्यवधानादिति बोध्यम् ॥—अरुर्मनः—॥—च्विश्चेति । पूर्वेण सिद्धस्यापि च्वेरयमनुवादः । लोपस्तु तत्संनियोगशिष्टत्वार्थः ॥—विभाषा साति—॥ विभाष्यते विकल्प्यते इति विभाषा । 'गुरोश्च हलः' इत्यकारप्रत्ययः । ततः टाप् । न लिदमव्ययं 'द्वयोर्विभाषयोर्मध्ये, पयसस्तु विभाषया' इत्यादौ विभक्तेर्दर्शनात् ॥—कृत्स्नमिति ॥ सर्वावयवोपेतमित्यर्थः ॥—अग्निसाद्भवति शस्त्रमिति ॥ जातावेकवचनम् । सर्वाणि शस्त्राणीत्यर्थः ॥—वन्दे रमे वेति ॥ देवान्

---

१ अभूततद्भाव इति—गम्यमाने इति शेषः । अभूतत्वं च प्रत्यासत्त्या तद्भावशब्दघटकतच्छब्दार्थकरणकत्वेनैव ग्राह्यम् । एवं च येन रूपेण प्रागभूतं तेन रूपेण तस्य भावे इति फलितोऽर्थः । एवं च यत्र प्रकृतिस्वरूपमेव विकाररूपतामापद्यमानं विवक्ष्यते तत्रायं प्रत्ययः ।

बहुत्रा जीवतो मनः । ॥ अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ।५।४।५७। द्व्यच् अवरं न्यूनं न तु ततो न्यूनम् अनेकाजिति यावत् । तादृशमर्धं यस्य तस्माड्डाच् स्यात्कृभ्वस्तिभिर्योगे । * डाचि विवक्षिते द्वे बहुलम् । नित्यमाम्रेडिते डाचीति वक्तव्यम् । डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तकारपकारयोः पकारः । पटपटाकरोति । अव्यक्तानुकरणात्किम् । दृषत्करोति । द्व्यजवरार्धात्किम् । श्रत्करोति । अवरेति किम् । खरटखरटाकरोति । श्रपटश्रपटाकरोति । अनेकाच इत्येव सूत्रयितुमुचितम् । एवं हि डाचीति परसप्तम्येव द्वित्वे सुवचेत्यवधेयम् । अनितौ किम् । पटिति करोति । ॥ कृञो द्वितीयतृतीयशम्बबीजात्कृषौ । ५।४।५८। द्वितीयादिभ्यो डाच् स्यात्कृञ एव योगे कर्षणेऽर्थे । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । द्वितीयं तृतीयं कर्षणं करोति द्वितीयाकरोति । तृतीयाकरोति । शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति शम्बाकरोति । बीजेन सह कर्षति बीजाकरोति । ॥ संख्यायाश्च गुणान्तायाः ।५।४।५९। कृञो योगे कृषौ डाच् स्यात् । द्विगुणाकरोति क्षेत्रम् । क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः । ॥ समयाच्च यापनायाम् ।५।४।६०। कृषाविति निवृत्तम् । कृञो योगे डाच् स्यात् । समयाकरोति । कालं यापयतीत्यर्थः । ॥ सपत्रनिष्पत्रादतिव्यथने ।५।४।६१। सपत्रापरोति मृगम् । सपुङ्खशरप्रवेशनेन सपत्रं करोतीत्यर्थः । निष्पत्राकरोति । सपुङ्खस्य शरस्याऽपरपार्श्वेन निर्गमनान्निष्पत्रं करोतीत्यर्थः । अतिव्यथने किम् । सपत्रं निष्पत्रं वा करोति भूतलम् । ॥ निष्कुलान्निष्कोषणे ।५।४।६२। निष्कुलाकरोति दाडिमम् । निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच् । ॥ सुखप्रियादानुलोम्ये ।५।४।६३। सुखाकरोति । प्रियाकरोति गुरुम् । अनुकूलाचरणेनानन्दयतीत्यर्थः । ॥ दुःखात्प्रातिलोम्ये ।५।४।६४। दुःखाकरोति स्वामिनम् । पीडयतीत्यर्थः । ॥ शूलात्पाके ।५।४।६५। शूलाकरोति मांसम् । शूलेन पचतीत्यर्थः । ॥ सत्यादशपथे ।५।४।६६। सत्याकरोति भाण्डं वणिक् । क्रेतव्यमिति तथ्यं करोतीत्यर्थः । शपथे तु सत्यं करोति विप्रः । ॥ मद्रात्परिवापणे ।५।४।६७। मद्रशब्दो मङ्गलार्थः । परिवापणं मुण्डनम् । मद्राकरोति । माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः । * भद्राच्चेति वक्तव्यम् । भद्राकरोति । अर्थः प्राग्वत् । परिवापणे किम् ॥ मद्रं करोति । भद्रं करोति ॥ इति तद्धितप्रक्रिया समाप्ता ॥

वन्दे देवत्रा वन्दे । देवेषु रमे देवत्रा रमे इत्यर्थोऽत्र पर्यवसन्नः । एव मनुष्यान् गच्छति मनुष्यत्रा गच्छति । मनुष्येषु वसति मनुष्यत्रा वसति । पुरुषान् गच्छति पुरुषत्रा गच्छति । पुरुषेषु वसति पुरुषत्रा वसति । पुरुशब्दो बहुपर्यायः । पुरून् गच्छति पुरुषु वसति वा पुरुत्रा । मर्त्यान्मर्त्येषु वा मर्त्यत्रा ॥—**डाचि विवक्षित** इति ॥ परसप्तम्या त्वन्योन्याश्रयः स्यात् । डाचि कृते द्वित्वे सति द्व्यजवरार्धता, तस्यां च सत्यां डाजिति भावः ॥—**खरटखरटा करोती**ति । द्वित्वपररूपादि प्राग्वत् । द्व्यजवरार्धादित्युक्ते त्वत्र डाच् न स्यात् । न ह्यत्रार्धं द्व्यच् किं तु त्र्यच् ॥—**अनेकाच इत्येवे**ति । 'द्व्यजवरार्धात्' इत्यपनीयेत्यर्थः ॥—**पटिती**ति । 'अव्यक्तानुकरणस्यात इतौ' इति पररूपम् ॥ नन्वत्र करोतिना योगो दुर्लभः । इतिशब्देन व्यवधानात् । तथा चानिताविति व्यर्थमिति चेत् । अत्राहुः । इतिशब्देन करोत्यर्थगतप्रकार एव परामृश्यते इत्येवं प्रकारेण करोतीति । तथा च पटच्छब्दस्यार्थद्वारा योगोऽस्त्येवेति ॥—**बीजेन सहे**ति ॥ ननु बीजेन सह भूतलस्य कर्षणे बीजानामपि कर्षणप्रसङ्गाद्विवक्षितार्थो न सिध्यतीति चेत् । अत्राहुः । वृत्तिविषये बीजशब्दो बीजावापसहिते विलेखने वर्तते । तथा च बीजावापसहित विलेखनं करोतीत्यर्थ इति ॥—**समयाच्च—**॥—**कालं यापयतीत्यर्थ** इति ॥ 'कर्तव्यस्यावसरप्राप्तिः समयस्तस्यातिक्रमणं यापना' इति वृत्तिग्रन्थमुपादाय हरदत्त आह । 'अद्य मे पारवश्य, श्वः परश्वो वा अस्य समय इत्येवं बहुषु दिवसेषु य आह स एवमुच्यते' इति ॥—**सपत्रनिष्पत्रात्**—॥ लक्ष्ये शराः पतन्त्यनेनेति पत्रम् । शराणां पुङ्खगतो बर्हः ॥—**सपत्रं निष्पत्रं वा करोती**ति । पत्राणि पर्णानि तत्सहितं तद्रहित वेति यथासंभवमर्थः ॥ **निष्कुलात्**—॥ निष्कोषणमन्तरवयवानां बहिर्निष्कासनम् ॥ निष्कोषणे किम् । विनिष्कुलं करोति शत्रुम् ॥—**शूलात्पाके** ॥ पाके किम् । शूलं करोति कदन्नं, शूलमुदररोगः ॥—**सत्यादशपथे** ॥ सत्सु साधु सत्यम् । 'तत्र साधुः' इति प्राग्घितीयत्वाद्यति प्राप्ते अत एव निपातनाद् यः । अन्तोदात्तोऽयम् । 'सत्येनोत्तभिता भूमिः' । 'ऋतं च सत्यं च' इत्यत्र तथा दर्शनात् ॥—**सत्याकरोती**ति । भाण्डं रत्नादिद्रव्यजातम् ॥—**क्रेतव्यमि**ति ॥ मयैवैतद् ग्राह्यमिति बुद्ध्या परीक्षादिना सत्यंकारद्रव्यप्रदानेन च दृढं करोतीत्यर्थः ॥—**तथ्यमि**ति । तथैव तथ्यम् । 'पादार्घाभ्यां च' इति चकारस्यानुक्तसमुच्चयार्थत्वात्स्वार्थे यत् ॥—**परिवापणमि**ति ॥ कर्मव्यापारमात्रवाचिनो वपेर्हेतुमण्णिचि ल्युडिति हरदत्तः ॥. कर्मव्यापारः फलं तस्य कर्मनिष्ठत्वात् । तथा च फलमात्रवाचिन इत्यर्थ फलित इत्याहुः ॥—**माङ्गल्यमुण्डनेने**ति । चौलदीक्षादौ ॥—**भद्राच्चे**ति । भद्रादित्यर्थग्रहणमिति व्याख्याने तु मङ्गलादिभ्योऽपि स्यादिति बोध्यम् ॥ इति तद्धितप्रक्रिया ॥

## ॥ द्विरुक्तप्रक्रिया ॥

**सर्वस्य द्वे ।८।१।१। इत्यधिकृत्य । नित्यवीप्सयोः ।८।१।४। आमीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य**

---

**सर्वस्य द्वे** ॥ सर्वशब्दस्य द्वे भवत इति विधिस्तु न शङ्क्यः । किं तु 'नित्यवीप्सयोः' इत्येवमादीनां विधेयकार्यिणोर-निर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोऽय तदाह—**इत्यधिकृत्येति**। एतदर्थरूपमधिकृत्येत्यर्थ । स्वरूपग्रहण तु न भवति 'नाम्रेडितस्यान्त्यस्य तु वा' इति लिङ्गात् । स्वरूपग्रहणे हि सति द्विरुक्तसर्वशब्दस्यैव परमाम्रेडित स्यात् । न द्विरुक्तस्याव्यक्तानुकरणशब्दस्य परमिति 'नाम्रेडितस्य' इति पररूपनिषेधोऽन्त्यस्य तकारस्य विकल्पविधिश्च कथ सगच्छेत ॥ ननु 'नित्यवीप्सयोः' इत्यादौ 'पदस्य' इति वक्ष्यमाणमपकृष्य पदस्यैव द्वित्व विधीयते इति किमनेन सर्वस्येति ग्रहणेनेति चेत् । अत्राहुः । 'स्वादिषु' इति पदसञ्ज्ञामादाय वृक्षाभ्यामित्यादौ प्रकृतिभागमात्रस्य द्विर्वचन स्यात् । कृते तु 'सर्वस्य' इति ग्रहणे 'सर्वशब्दोऽवयवकार्त्स्न्ये वर्तते' इति 'सर्वावयवोपेतस्य द्वित्व, न तु कश्चिदवयवो वर्ज्यते' इत्यर्थलाभादिष्टसिद्धिरिति ॥ इह 'द्वे' इत्यस्य सख्येयापेक्षायां शब्दरूपे गृह्येते । शब्दानुशासनप्रस्तावात् । 'सर्वस्य' इति स्थानषष्ठी ॥ सोऽय स्थाने द्विर्वचनपक्षः ॥ यदि तु उच्चारणे सख्येये, तदा स्थान्यादेशभावो न सभवति, निवृत्तिधर्मा हि स्थानी भवति, सर्वे चेत् निवृत्तं कस्योच्चारण स्यादतः 'सर्वस्य' इत्यध्याहृतोच्चारणशब्दापेक्षया 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी 'सर्वं द्विरुच्चारयेत्' इति फलितोऽर्थः । सोऽय 'द्विःप्रयोगो द्विर्वचनम्' इति पक्षः ॥ ननु आद्यपक्षे स्थानिवद्भावेन समुदायस्यैव पदत्वं स्यात् । न त्ववयवयोस्ततश्च पदकार्याणि न स्युः । न चेष्टापत्तिः । 'अपचन्नपचन्' इत्यत्र ङमुट्, 'वृक्षान् वृक्षान्' इत्यत्र 'पदान्तस्य' इति णत्वनिषेध , 'अग्नेऽग्ने' इत्यत्र 'एङः पदान्तात्' इति पूर्वरूपत्वं च न सिध्येत् । कि चापदान्तत्वप्रयुक्तकार्याणि स्युः । तद्यथा 'पयःपय' इत्यत्र 'सोऽपदादौ' इति सत्व स्यात्, 'पपीःपपीः' इत्यत्र 'इणः षः' इति षत्व स्यात् । 'पाशकल्पककाम्येषु' इति वृत्तिग्रन्थमवष्टभ्य कथचित्सत्वषत्वपरिहारेऽपि 'अश्नीताश्नीत' इत्यत्र 'अतो गुणे' इति पररूपं स्यादिति चेत् । अत्राहुः । यदि प्रत्यस्तमितावयवभेदः समुदाय एक एवादेशः स्याद् द्वे इति वचनमनुपपन्न स्यात् अतो द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते । तत्र स्थानिवद्भावेन समुदायस्य पदत्व स्वत एव चावयवयोरपीति न कश्चिद्दोष इति ॥ स्यादेतत् । द्विःप्रयोगपक्षे प्रत्येक पदसञ्ज्ञायां सिद्धायामपि समुदायस्य न सिध्यति। ततश्च देवदत्तः पचतिपचतीत्यादौ 'तिङ्ङतिङः' इति सर्वस्य पदस्य निघातो न सिध्यतीति चेत् । अत्राहुः। पचतिपचतीत्यादौ हि स एव धातुः प्रत्ययश्चात्र द्विःपठ्यते । ततश्च यो यस्मात् प्रत्ययो विहितस्तदादितदन्तमिति विधीयमाना पदसञ्ज्ञा समुदायस्यापि प्रवर्तते । तेनावग्रहादिः सिध्यतीति ॥—**नित्यवीप्सयोः** ॥ नित्यमिह पौनःपुन्यमित्याह—**आभीक्ष्ण्य** इति ॥—**द्योत्य** इति। 'नपुसकमनपुसकेन' इत्येकशेषः, एकवद्भावश्च बोध्यः ॥—**पदस्येति**। तेन नित्यतायां विधीयमानं द्विर्वचन धातुमात्रस्य न भवति । कि च क्रियासमभिहारे धातोर्विहितो यङन्तरङ्गः, पदस्योच्यमान तु बहिरङ्गमिति यङं न बाधते । अन्यथा हि पौनःपुन्य भृशार्थश्च क्रियासमभिहार इति भृशार्थे सावकाशोऽय यङ् पौनःपुन्ये परत्वाद् द्विर्वचनेन बाध्येत । न च पदस्य द्विर्वचनाभ्युपगमे सगतिकस्य प्रपटतीत्यादेर्द्विर्वचन न स्यादिति वाच्यम् । वार्तिककारवचनात्तत्सिद्धेः ॥ अत्र वदन्ति । सगतिकस्य द्वित्वे एकपद्य नास्त्येव, स्थानिनः पदत्वाभावेन आदेशेऽपि तस्य दौर्लभ्यात । द्विःप्रयोगपक्षे तु प्रथमगति विहायावशिष्टस्य समुदायस्य पदत्व प्राप्त तस्मिन् सत्यपि न क्षतिः ॥ वस्तुतस्त्विह स्थाने द्विर्वचनपक्ष एव मुख्यः । सुबन्तत्वेनादेशस्यापि सुबन्तत्वात्सुबन्तात्तद्धित इति पक्षे समुदायात् ष्यञ्ठञोः सभवेन पौनःपुन्यं पौनःपुनिक इति रूपसिद्धेः । 'प्रातिपदिकात्तद्धितः' इति पक्षाभ्युपगमेऽपि श्रूयमाणप्रत्ययान्तस्यैव प्रातिपदिकत्वनिषेधात्पुनरित्यस्यैव प्रातिपदिकत्वेनादेशस्यापि प्रातिपदिकत्वात्पौनःपुन्यमित्यादि सिध्यत्येव ॥ द्विःप्रयोगपक्षे त्वन्तरङ्गत्वादव्ययात्सुपो लुकि द्वित्वं प्रवर्तेत इति समुदायस्य सुबन्तत्वाभावात् प्रातिपदिकत्वाभावाच्च ष्यञ्ठञौ नच भवतः । न च 'अर्थवदधातुः—' इत्यादिना समुदायस्य प्रातिपदिकत्वं सोरुत्पत्तौ तस्य लुकि च सुबन्तत्व प्रातिपदिकत्व च संभवत्येवेति वाच्यम् । 'यत्र सघाते पूर्वो भागः पद तस्य चेद्भवति समासस्यैव' इति नियमेन प्रातिपदिकत्वासभवेन सुबन्तत्वस्याप्यसभवात् । न च द्विःप्रयोगपक्षे स एव धातुः प्रत्ययश्च द्विःपठ्यत इति समुदायस्यापि पदसञ्ज्ञा प्रवर्तते इत्यधुनैवोक्तत्वात्पुनःपुनरिति समुदायस्य सुबन्तत्वमस्त्येवेति शङ्क्यम् । अन्तरङ्गत्वात्सोर्लुकि प्रकृतिभागस्य द्विर्वचने सति यस्मात्प्रत्ययो विहितस्तदादि तदन्तमिति विधीयमानायाः पदसञ्ज्ञायाः समुदायस्य दुर्लभत्वात् । ततश्चैकपद्याभावे 'पुनःपुनर्जायमाना पुराणी' इत्यादाववग्रहोऽपि न सिध्येदिति ॥—**आभीक्ष्ण्यमिति** । तद्धि क्रियानिष्ठधर्मः । तेन तद्द्योतनार्थं द्वित्व क्रियाप्रधानानामेव न्याय्यम् । क्रियाप्राधान्यं चाख्यातेऽस्ति, कृद्विशेषे च 'अव्ययकृतो भावे' इति वक्ष्यमाणत्वादिति भावः ॥ **केचित्तु क्रियाप्रधानानामेव द्वित्वे परिगृहीतसाधनाया एव क्रियायाः व्यवहारोपयोगित्वात्तदभिधानाय धातुमात्रस्य द्वित्वं न भवति किं तु तादृशक्रियाभिधायिनः पदस्यैव स्यादिति पदस्यापकर्षणाभावेऽपि न क्षतिरित्याहुः । तच्चिन्त्यम् । उक्तरीत्या नानाकारक-**

**द्विर्वचनं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । पचतिपचति । भुक्त्वाभुक्त्वा । वीप्सायाम्, वृक्षंवृक्षं सिञ्चति । ग्रामोग्रामो रमणीयः । परेर्वर्जने ।८।१।५। परिपरि वङ्गेभ्यो वृष्टो देवः । वङ्गान्परिहृत्येत्यर्थः । * परेर्वर्जने वा वचनम् । परि वङ्गेभ्यः । उपर्यध्यधसः सामीप्ये ।८।१।७। उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपे देश इत्यर्थः । अध्यधि सुखम् । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो लोकम् । लोकस्याधस्तात्समीपे देश इत्यर्थः । वाक्यादेरामन्त्रितस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु ।८।१।८। असूयायाम्, सुन्दर सुन्दर वृथा ते सौन्दर्यम् । संमतौ, देवदेव वन्द्योऽसि । कोपे, दुर्विनीतदुर्विनीत इदानीं ज्ञास्यसि । कुत्सने, धानुष्कधानुष्क वृथा ते धनुः । भर्त्सने, चोरचोर घातयिष्यामि त्वाम् । एकं बहुव्रीहिवत् ।८।१।९। द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात् । तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । इह द्वयोरपि सुपोर्लुकि कृते बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप् । एकैकयाहुत्या । इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः । न बहुव्रीहावित्यत्र**

---

विशिष्टक्रियासमर्पकस्य वाक्यस्यैव द्वित्वापत्तेः । किं च भावार्थकलकारान्तानामव्ययकृतां च भवदुक्तरीत्या द्वित्वं न स्यात् ॥ ननु तत्र नित्यतावगत्यनन्तरं पदान्तरैः साधनाकाङ्क्षा परिपूर्यत इति भूयते पक्त्वेत्यादिपदानां द्वित्वं स्यादेवेति चेत् । तर्हि तत्रैव धातुमात्रस्य द्वित्व केन वार्यताम् । किं च तद्वदेव कर्तृकर्मलकारस्थलेऽपि धातुमात्रद्वित्वं दुर्वारमिति पदस्येत्यपकर्षणमावश्यकमेवेति दिक् ॥—**वीप्सायामिति** ॥ व्याप्तुमिच्छा वीप्सा । व्याप्तिप्रतिपिपादयिषेति यावत् । सा च प्रयोक्तुर्धर्मः आबाधवत् । 'गतगता' इत्युक्ते प्रियस्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्ते इति यथा प्रतीयते तथा वृक्षंवृक्षं सिञ्चतीत्यादावपि व्याप्तिं बुबोधयिषोरिदं वाक्यमित्यवगमात् ॥ शाब्दबोधविषयस्तु व्याप्तिरेव । तथाच 'नित्यव्याप्त्योः' इत्येव सूत्रयितुं शक्यम् । व्याप्तिरिह कार्त्स्न्यं तच्चाधिकारिकम् । 'सर्वे ब्राह्मणा आमन्त्रिताः' इत्यादौ यथा । न हि 'जगतीतले विद्यमाना ब्राह्मणाः सर्वेऽपि केनचिदामन्त्रयितु शक्यन्ते' इति स्वग्रामस्थस्वजातीयब्राह्मणपरतया तत्र सकोचो यथाभ्युपेयते । तथात्रापि सकलवृक्षसेचनसामर्थ्यं कस्यापि मनुष्यस्य नास्तीति यत्र वाटिकादौ वृक्षसेचनार्थमधिकारस्तद्वाटिकास्थवृक्षाणामेव कार्त्स्न्यं वृक्षंवृक्षं सिञ्चतीत्यादौ गम्यते इत्यभ्युपेयम् ॥ यत्र तु सकोचे कारणं नास्ति, तत्रासंकोच इष्ट एव 'जातोजातो निधनमुपैति' इति यथा ॥ न चैव वृक्षंवृक्षमित्यादौ बहुवचनप्रसङ्गः । बहूनां भानेऽपि बहुत्वसङ्ख्यायास्तत्राभानात् । प्रत्येकनिष्ठमेकमेव हि तत्र भासते इत्यादि मनोरमायां स्थितम् ॥ वृक्षवृक्षमिति समुदायस्य तु प्रातिपदिकत्वाभावाद्बहुवचनस्य प्रसङ्ग एव नास्ति । न च 'अर्थवदधातुः–' इत्यनेन प्रातिपदिकत्व शङ्क्यम् । 'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति समासस्यैव' इति नियमात् । न चाष्टमिकं द्विर्वचनमादेशरूपमिति संघातो न भवतीत्यपि शङ्क्यम् । द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते इति प्रागुक्तत्वात् ॥ नन्वेवमपि 'सरित्सरित्' 'योषायोषा' इत्यादौ बहुवचनोत्पत्तिर्दुर्वारैव । सरिदिति स्थानिनः प्रातिपदिकत्वसंभवेन तदादेशस्यापि सरित्सरिदित्यादेः स्थानिवद्भावेन प्रातिपदिकत्वसंभवादिति चेत् । अत्राहुः । अन्तरङ्गैकसंख्यावरुद्धो द्विरुक्तार्थः सङ्ख्यान्तरे निराकाङ्क्ष एव । न हि वस्तुगत्या बहुत्वमस्तीत्येतावतैव तस्य शाब्दबोध आपादयितु शक्यते । असत्त्वार्थकेष्वपि तदापत्तेः । न हि शयनबाहुल्याभिप्रायेण 'देवदत्तेन शय्यन्ते' इति भावे कश्चित्प्रयुङ्क्ते ॥ तत्रायोग्य तदिति चेत् । समं प्रकृतेऽपि । अत्र च लिङ्गम् 'एकैकस्य प्राचाम्' इति निर्देश इति ॥—**परेर्वर्जने** ॥ अत्र वार्तिक 'परेरसमासे' । नेह परित्रिगर्त वृष्टो देवः ॥ 'वेति च वक्तव्यम्' ॥ तथा चाप हरेः परि हरेः ससार इति कारकेषूदाहृतम् ॥—**परिपरि वङ्गेभ्य** इति । 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी ॥—**उपर्यध्य**—॥ सामीप्यं प्रत्यासत्तिः । तच्च कालकृत देशकृतं वा ॥—**अध्यधि सुखमिति** । कालकृतस्योदाहरणमिदम् ॥ सामीप्य इति किम् । उपरि चन्द्रमाः । उपरि शिरसो घटं धारयतीत्यत्र तु वस्तुतो विद्यमानमपि सामीप्य न विवक्षितं, किं त्वौत्तराधर्यमेव केवलं विवक्षितमिति द्विर्वचनं न भवति ॥ विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम् । अत्र च 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति सन्नन्तप्रयोगो ज्ञापक इत्याहुः ॥—**वाक्यादेः**—॥—**सुन्दरसुन्दरेत्यादिः** । 'स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु' 'आम्रेडितं भर्त्सने' इति सूत्राभ्यां यथायथं प्राप्तः प्लुतो वैकल्पिकत्वान्नेह कृतः । उक्त हि प्राक् 'सर्वः प्लुतो वैकल्पिकः' इति ॥ नन्वत्र कोपासूयाभ्यां पृथक्कुत्सनभर्त्सनग्रहणमपार्थकम् । न ह्यसूयां विना कुत्सयते, न वा अकुपितो भर्त्सयत इति चेत् । अत्राहुः । गुरवो हि हितैषित्वादकुपिता अपि भर्त्सनं कुर्वते, विनाप्यसूयां कुत्सां कुर्वन्तीति पृथक्तया निर्देशः सूत्रकारेण कृतः । 'साम्रृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः । लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः' इति ॥—**एकं बहुव्रीहिवत्** ॥ द्वे इत्यनुवर्तते । तच्चानुवादसमर्पकं, तदाह—**द्विरुक्त** इति ॥—**तेनेति** । यद्यप्येतौ बहुव्रीहौ विशिष्य न विहितौ, तथापि तत्र दृष्टावित्येतावतैवातिदिश्येते इति भावः ॥—**सुब्लोपपुंवद्भावाविति** । पूर्वपदप्रकृतिस्वरश्च बोध्यः ॥—**समुदायात्सुबिति** । तच्चैकवचनमेवेति अन्तरङ्गैकसंख्यावरुद्धो द्विरुक्तार्थः । संख्यान्तरे निराकाङ्क्षेति प्रागेवोक्तत्वात् ॥—**पूर्वभाग इति** । नतूत्तरभागेऽपि । तथाहि द्वित्वात्र पुंवद्भावः 'सर्वनाम्नो वृत्तिमात्रे–' इति वा 'स्त्रियाः पुंवत्–' इति वा ॥ तत्राद्यः

पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम् । तेनातिदिष्टबहुव्रीहौ सर्वनामतास्त्येवेति प्राञ्चः । वस्तुतस्तु भाष्यमते प्रत्याख्यातमेतत् । सूत्रमतेऽपि बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकं न तु बहुव्रीहावितीहातिदेशशङ्कैव नास्ति । एकैकस्मै देहि । ॥ आबाधे च ।८।१।१०। पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च । गतगतः । विरहात्पीडयमानस्येयमुक्तिः । बहुव्रीहिवद्भावात्सुब्लुक् । गतगता । इह पुंवद्भावः । ॥ कर्मधारयवदुत्तरेषु ।८।१।११। इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यम् । प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि । ॥ प्रकारे गुणवचनस्य ।८।१।१२। सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत् । कर्मधारयवदुत्तरेष्वित्यधिकारात् । तेन पूर्वभागस्य पुंवद्भावः। समासस्येत्यन्तोदात्तत्वं च । पटुपट्वी । पटुपटुः । पटुसदृशः । ईषत्पटुरिति यावत् । गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते । शुक्लशुक्लं रूपम् । शुक्लशुक्लः पटः । * आनुपूर्व्ये द्वे वाच्ये ॥ मूलेमूले स्थूलः । * संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः ॥ सर्पः सर्पः बुध्यस्व २ । सर्पः ३ बुध्यस्व ३ ।

---

पूर्वभागस्यैव 'भस्त्रैषा–' इति ज्ञापकादित्युक्तम् ॥ द्वितीयस्तु समानाधिकरणे परे विधीयते, न चोत्तरभागस्य समानाधिकरणपरत्वमस्तीति भावः ॥—अवग्रहे विशेष इति । एकैकयेत्येकएकयेति भवतीत्यर्थः ॥—एकैकस्मै इति ॥ ननु सुब्लोपपुंवद्भावाविव बहुव्रीहौ सर्वनामसञ्ज्ञाभावोऽपि दृष्ट इत्ययमपि बहुव्रीहिवद्भावेनातिदिश्यताम् । तथाच स्मायादेशोऽत्र दुर्लभ इति चेत् । अत्राहुः । सुब्लोपपुंवद्भावाविव सर्वनामसंज्ञाभावः शास्त्रेण न दृष्टः । किं तु बहुव्रीहेर्गौणत्वात्सर्वनामकत्वं न संभवतीति तदभावो दृष्ट इति नायमतिदिश्यते । 'न बहुव्रीहौ' इति शास्त्रं त्वलौकिकवाक्ये निषेधकं, नतु बहुव्रीहावित्युक्तत्वादिति ॥—आबाधे च ॥—इहेति ॥ बहुव्रीहिवद्भावादित्यनुषज्यते । तथा च 'स्त्रियाः पुंवत्–' इति प्रवर्तते । न च द्विरुक्तस्य परमुत्तरपदं नेति वाच्यम् । बहुव्रीहिवदित्यतिदेशबलेनैव उत्तरपदत्वस्यापि लाभात् ॥ ननु बहुव्रीहिवद्भावेनोत्तरपदत्वलाभे सति ननेत्यत्र 'नलोपो नञः' इति कस्मान्न भवति । उच्यते । 'नलोपो नञः' इत्यत्र उत्तरपदे इति प्रवर्तते, नञ इति च कार्यिणो निर्देशः, तत्र साक्षाच्छिष्टेन कार्यित्वेन नञो निमित्तभावो बाध्यते । यथा मद्रह्रदो भद्रह्रद इति । अत्र रेफस्य 'अचो रहाभ्याम्–' इति द्वित्वप्रसङ्गे आकरे उक्तं 'नेमौ रहौ कार्यिणौ किं तु निमित्तमेतौ द्विर्वचनस्य' इति ॥ नन्वेवमपि 'धूर्धूः' 'पन्थाःपन्थाः' इत्यादौ 'ऋक्पूरब्धूः–' इति समासान्तः स्यादिति चेन् । न । 'समासाच्च तद्विषयात्' इत्यतः समासादित्यनुवर्तमाने 'समासान्ताः' इति पुनः समासग्रहणं हि समासाधिकारविहितो यः समासस्तत्परिग्रहार्थम् । तेनातिदेशिके समासे समासान्तानामप्रवृत्तिरिति दिक् ॥—कर्मधारयवदुत्तरेषु ॥ अधिकारेणैव सिद्धे 'वदुत्तरेषु' इति वचनं विस्पष्टार्थमिति वृत्तिः ॥—प्रकारे गुणवचनस्य ॥ यद्यपि प्रकारशब्दो भेदे सादृश्ये च वर्तते । बहुभिः प्रकारैर्भुङ्क्ते, बहुभिर्भेदैर्विशेषैरित्यवगमाद्, ब्राह्मणप्रकारोयं माणवकः, ब्राह्मणसदृश इत्यवगमाच्च । तथापीह विवक्षितमाह —सादृश्य इति । व्याख्यानमेवात्र शरणम् ॥—पुंवद्भाव इति । 'पुंवत्कर्मधारय–' इति सूत्रात् । तच्च कोपधादिष्वपि कालककालिकेत्यादिषु प्रवर्तते । तेन बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावोक्तिर्व्यर्थेति शङ्काया निरवकाश इति बोध्यम् ॥—पटुपटुरिति । इह द्वित्वेन जातीयरो बाधा नेष्यते पटुजातीय इति वामनः । अन्यथा ब्राह्मणजातीय इत्यादावगुणवचनेऽपि भेदरूपेऽर्थे सावकाशो जातीयर् गुणवचनेषु सादृश्यपरेण द्वित्वेन बाध्येतेति भावः ॥ गुणवचनस्येति किम् । अग्निर्माणवकः । सिंहो माणवकः ॥ यद्यपीहाग्निसिंहशब्दाभ्यां गौण्या वृत्त्या तैक्ष्ण्यक्रौर्यादिगुणो गम्यते, तथापि प्रकारे वर्तमानस्येत्येव सिद्धे गुणवचनग्रहणसामर्थ्यान् मुख्यवृत्त्या गुणपराणामेव द्वित्वं, न त्वन्येषामित्याकरः ॥ 'नवनव प्रीतिरहो करोति' इत्यत्र वीप्सायां द्विर्वचनम् । अनेन तु द्विर्वचने सुब्लुक् स्यात् । 'नवनवा वनवायुभिराददे' इत्यत्र त्वनेनैव द्विर्वचनं, न तु वीप्सायामिति पुवद्भावः ॥ कथं 'भीतभीत इव शीतमयूखः' इति भारविः, । इवशब्देन सादृश्यस्योक्ततया इह प्रकारे द्वित्वायोगात् । सत्यम् । भीतेभ्यो भीत इति कथंचिद्व्याख्येयम् । तेनातिभीत इति फलितम् । 'आधिक्ये द्वे वाच्ये' इति वार्तिकेन भीतभीतादौ द्वित्वमिति दुर्घटादिभिरुक्तं समाधानं नादर्तव्यम् ॥ तादृशस्य वार्तिकस्याप्रसिद्धत्वात् । अथ कथं 'खिन्नःखिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणःक्षीणः परिलघुपयः स्रोतसां चोपयुज्य' इति मेघदूतः । पदार्थभेदस्याभावेन वीप्सार्थस्यासंभवादिति चेत् । अत्राहुः । एकस्यापि खेदावस्थासु क्षयावस्थासु च भेदं परिकल्प्य वीप्सा बोध्येति ॥ अथ कथं 'मन्दमन्दं नुदति पवनश्चानुकूलो यथा त्वाम्' इति मेघः । वीप्सार्थस्यासंभवादनेनैव द्विर्वचने कृते 'मन्दमन्दमुदितः प्रययौ खम्' इतिवत्सुब्लुक् स्याद् इति चेत् । सत्यम् । स्वतो मन्दगामिनं त्वां पवनो मन्दं नुदतीति कथंचिद्व्याख्येयं । सिद्धस्य गतेश्चिन्तनीयत्वात् ॥—शुक्लशुक्लमिति । केवलगुणवाचिन उदाहरणमिति ध्वनयति—रूपमिति ॥—आनुपूर्व्ये इति । वीप्साभावादयमारम्भः ॥—मूलेमूले इति । अग्रेअग्रे सूक्ष्मा इत्यप्युदाहर्तव्यम् । एकस्य वस्तुनो वेणुदण्डादेरेकमेव मुख्यं मूलमग्रं च । इतरेषां भागानामापेक्षिकोऽग्रमूलव्यपदेशः । स्थौल्यसौक्ष्म्ये अपि नैकरूपे, किं तर्हि यथामूलमुपचीयते स्थौल्यं, यथा अग्रं सौक्ष्म्यं तथा नेतरे भागा इति वीप्साया असंभवः ॥ 'मूले मूले पथि विटपिनाम्' इत्यत्र तु वीप्सायां द्विवचनम् ॥ एतच्च हरदत्तग्रन्थे स्पष्टम् ॥—न्यायसिद्ध इति । यावद्भिः

* क्रियासमभिहारे च । लुनीहिलुनीहीत्येवायं लुनाति । नित्यवीप्सयोरिति सिद्धे भृशार्थे द्वित्वार्थमिदम् । पौनःपुन्येऽपि लोटा सह समुच्चित्य द्योतकत्वं लब्धुं वा । * कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् । बहुलग्रहणादन्यपरयोर्न समासवत् । इतरशब्दस्य तु नित्यम् । * असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः । अन्योऽन्यं विप्रा नमन्ति । अन्योऽन्यौ । अन्योऽन्यान् । अन्योऽन्येन कृतम् । अन्योऽन्यस्मै दत्तमित्यादि । अन्योऽन्येषां पुष्करैराममृशन्त इति माघः । एवं परस्परम् । अत्र कस्कादित्वाद्विसर्गस्य सः । इतरेतरम् । इतरेतरेणेत्यादि । * स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः । अन्योऽन्याम् । अन्योऽन्यम् । परस्पराम् । परस्परम् । इतरेतराम् । इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः । अत्र केचित् । आमादेशो द्वितीयाया एव । भाष्यादौ तथैवोदाहृतत्वात् । तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः । अन्ये[1] तूदाहरणस्य दिङ्मात्रत्वात्सर्वविभक्तीनामामादेशमाहुः । दलद्वये टाबभावः क्लीबे चाद्विरहः स्वमोः ॥ समासे सोरलुक्चेति सिद्धं बाहुलकाश्रयम् ॥ १ ॥ तथाहि । अन्योऽन्यं परस्परमित्यत्र दलद्वयेऽपि टाप् प्राप्तः । न च सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । अन्यपरयोरसमासवद्भावात् । नच द्विर्वचनमेव वृत्तिः । यांयां प्रियः प्रैक्षत कातराक्षी सासेत्यादावतिप्रसङ्गात् । अन्योऽन्यमितरेतरमित्यत्र चाड्डतरादिभ्य इत्यद्ड् प्राप्तः । अन्योऽन्यसंसक्तमहस्त्रियामम् । अन्योऽन्याश्रयः । परस्पराक्षिसादृश्यम् । अदृष्टपरस्परैरित्यादौ सोर्लुक्च प्राप्तः । सर्वं बाहुलकेन समाधेयम् । प्रकृतवार्तिकभाष्योदाहरणं स्त्रियामिति सूत्रे अन्योऽन्यसंश्रयत्वे तदिति भाष्यं चात्र प्रमाणमिति । अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । ८।१।१३। प्रियप्रियेण ददाति । प्रियेण वा । सुखसुखेन ददाति । सुखेन वा । द्विर्वचने कर्मधारयवद्भावात्सुब्लुकि पुनस्तदेव वचनम् । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः । यथास्वे यथायथम् ।८।१।१४। यथास्वमिति वीप्सायामव्ययीभावः । योऽयमात्मा यच्चात्मीयं तद्यथास्वम् । तस्मिन्यथाशब्दस्य द्वे[2] क्लीबत्वं च निपात्यते । यथायथं ज्ञाता । यथास्वभावमित्यर्थः । यथात्मीयमिति वा । द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ।८।१।१५। द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु ।

---

शब्दैः सबोध्योऽर्थमवगच्छति तावतां प्रयोक्तव्यत्वादिति भावः ॥—**पौनःपुन्य** इति । पुनःपुनर्भवितरि वर्तमानात्पुनःपुनःशब्दात् भावे प्रत्ययः ॥—**लोटा सह समुच्चित्येति** ॥ नन्वत्र लोटा सह समुच्चित्य यथा द्विर्वचनं भवति, तथा क्रियासमभिव्याहारे यङा सह समुच्चित्य द्विर्वचनं स्यात्पापच्यतेपापच्यते बोभूयतेबोभूयते इति । अत्राहुः । लोट् क्रिया ।—समभिव्याहार व्यभिचरति । समुच्चयेऽपि जायमानत्वात् । ततश्च लोट्द्विर्वचनयोरेव तद्द्योतकत्वं, न त्वेकैकस्येति युक्तं लोडन्तस्य द्विर्वचनम् । यङ् तु क्रियासमभिव्याहार न व्यभिचरतीति द्विर्वचन विनैव तस्य द्योतकत्वम् । तेन तदन्तस्य न द्विर्वचनमिति ॥—**कर्मव्यतिहार** इति । क्रियाविनिमय इत्यर्थः ॥—**द्वे** इति । नित्यमेवेदं द्वित्वम्, बाहुलकं तु समासवद्भावस्यैव ॥—**सुपः सुर्वक्तव्य** इति ॥ अत्र कैश्चिदुक्त द्वितीयादीनामेवेद स्वादेशविधानम् । अत एवोत्तरदलेऽपि द्वितीयादय एव, न तु प्रथमा, तत्राप्येकवचनमेव न तु वचनान्तरमिति । तदपाणिनीयम् । भाष्यादावनुक्तत्वात् । तदेतद्ध्वनयन् वचनान्तरमुदाहरति—**अन्योऽन्यावन्योऽन्यानि**ति ॥—**माघ** इति । स च भाष्यानुगुण एवेति भावः ॥ एतेनार्वाचीनमत कवयोऽपि नाद्रियन्त इत्युक्त भवति ॥ भारविश्चाह—'क्षितिनभस्सुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैः' इति । अत्रादृष्टः परस्परो यैरिति विग्रहः ॥ यदि तु द्वितीयादीनामेव स्वादेशविधानम् न तु प्रथमायाः, तर्ह्ययं प्रयोगो न सिध्येदिति दिक् ॥—**अन्योऽन्यामि**ति । न चात्र आमभावेपि टाप् स्यादिति शङ्क्यम् ॥ 'बहुलग्रहणाट्टाबभावः' इत्यनुपदमेव वक्ष्यमाणत्वात् ॥ स्त्रीनपुंसकयोस्तृतीयादिषु पुवदिति प्राचो ग्रन्थं परिष्कुर्वन्नाह—**अत्र केचिदि**ति ॥ वस्तुस्थितिमाह—**अन्येत्वि**ति ॥—**अतिप्रसङ्गादि**ति । तथा च एकशेषप्रतिबन्धाद् द्विर्वचनस्यापि वृत्तित्वमाश्रित्य तद्बलेन पुवद्भावो न शङ्क्यो लक्ष्यविरोधात् । 'कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत्' इति 'अकथित—' सूत्रस्थ 'यायाम्' इति भाष्यप्रयोगविरोधाच्चेति भावः ॥ नव्यास्तु 'यांयां प्रियः प्रैक्षत' इत्यादिमाघप्रयोगे 'सासा' इति द्विर्वचनमयुक्तम् । द्विरुक्तार्थस्य सेत्यनेनैव परामर्ष्टुं शक्यत्वात् ॥ अत एव भाष्ये 'यायां मन्येत सा भवेत्' इत्येवोक्तमित्याहुः ॥—**सोर्लुक् च प्राप्त** इति । सुपः स्वादेशविधानस्यान्योऽन्यं परस्परमित्यत्र केवले चरितार्थत्वादिति भावः ॥—**योय आत्मेत्यादि** ॥ आत्मात्मीययोरपि स्वशब्दवाक्यवाच्यत्वात् ॥—**यथायथमिति** । 'न लोका—' इत्यनेन कृद्योगषष्ठीनिषेधः ज्ञातेत्यस्य तृन्नन्तत्वात् ॥ 'योय आत्मा' इत्यर्थे विद्यमानयथायथशब्दस्यार्थमाह—**यथास्वभावमिति** । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः ॥—**पूर्वपदस्येति** ॥ द्विऔ द्विऔ इति स्थिते कर्मधारयवद्भावात्सुब्लुकि कृते पूर्वपदावयवस्यैकारस्येत्यर्थः ॥—**अत्वमुत्तरपदस्येति** । उत्तरपदावयवस्यैकारस्येत्यर्थः ॥—**नपुं**

---

१ अन्ये त्विति—तदुक्तं वृद्धैः—'नचोदाहरणमादरणीयम्' इति । तदतिरिक्तोदाहरणाभाव इत्येवंपरतयानादरणीयमित्यर्थः । २ द्वे इति—वीप्सायां यथाशब्दस्यावृत्तेर्द्वित्वाप्राप्त्या तदपि निपात्यते इति भावः ।

**तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् । इतरे विषयभूताः । द्वन्द्वं मन्त्रयते । रहस्यमित्यर्थः । मर्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति[1] । माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेणापीत्यर्थः । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः । द्विवर्गसंबन्धेन पृथगवस्थिताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वन्द्वं संकर्षणवासुदेवौ । अभिव्यक्तौ साहचर्येणेत्यर्थः । योगविभागादन्यत्रापि द्वन्द्वमिष्यते ॥ इति द्विरुक्तप्रक्रिया ॥**

**॥ इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्धं समाप्तम् ॥**

**सकत्वं चे**ति । चकारादेकवद्भाव इत्यपि बोध्यम् । तेन 'अतोऽम्' इत्यमादेशे द्वन्द्वमिति सिध्यति ॥—**रहस्यं द्वन्द्वशब्दवाच्यमि**ति । द्वाभ्यां निर्वृत्ते रहस्ये योगरूढिरेवेत्यर्थः ॥—**द्वन्द्वं मन्त्रयते** इति । द्वौ द्वौ भूत्वा मन्त्रयेते इत्यर्थः । एवं हि तद् रहस्यं भवति ॥—**आचतुरमि**ति । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभाव । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति टच् । चतुःशब्दोऽत्र चतुर्णां पूरणे द्रष्टव्यः । आ चतुर्थादित्यर्थः ॥—**द्वन्द्वं यज्ञपात्राणी**ति । 'स्फ्यश्च कपालानि च' इत्यादीनि पात्राणि द्वन्द्व प्रयुनक्ति । आसादयतीत्यर्थ ॥—**अभिव्यक्तौ साहचर्येणेत्यर्थ** इति । अत्र द्वन्द्वमित्यत्र स्वार्थे द्विर्वचनम् । एकवद्भावादिक तु पूर्ववत् ॥—**अन्यत्रापी**ति । 'द्वन्द्व युद्ध प्रवर्तते' । इह वीप्सायां द्विर्वचनम् । द्वयोर्द्वयोर्युद्धमित्यर्थः ॥ 'द्वन्द्वानि सहते । शीतमुष्णमेक द्वन्द्व सुखदु.ख चापर क्षुत्तृष्णे चापरम् । इह स्वार्थे द्विर्वचनमे॰ कवद्भावादि पूर्ववत् । बहुल लेकशेषवशात् ॥

सिद्धान्तकौमुदीव्याख्या या कृता तत्त्वबोधिनी । समाप्त तत्र पूर्वार्ध तेन तुष्यतु शंकरः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवामनेन्द्रस्वामिचरणारविन्दसेवकज्ञानेन्द्रसरस्वतीकृतौ
सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्याया पूर्वार्धं संपूर्णम् ॥




१ मिथुनीयन्तीति—मिथुनशब्देन तत्कर्म मैथुनम्, तदिच्छतीत्यर्थे क्यच् । मिथुनायन्ते इति क्यङन्तोऽपपाठः । उपमानार्थाभावात् ।

श्रीः ।

# तत्त्वबोधिनीव्याख्यासंवलिता

# सिद्धान्तकौमुदी ।

## तिङन्ते भ्वादिगणः ।

**श्रौत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम् । तोष्टूय्यमानोऽप्यगुणो विभुर्विजयतेतराम् ॥ १ ॥**

**पूर्वार्धे कथितास्तुर्यपञ्चमाध्यायवर्तिनः । प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः ॥ २ ॥**

तत्रादौ दश लकाराः प्रदर्श्यन्ते । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । एषु पञ्चमो

---

श्रीः ॥ अज्ञाननाशने दक्ष दीक्षितं भक्तरक्षणे । वटमूलाश्रयं त्र्यक्षं दक्षिणामूर्तिमाश्रये ॥ १ ॥

ग्रन्थमध्ये विघ्नविघाताय कृतं मङ्गल शिष्यशिक्षार्थ निबध्नाति—**श्रौत्रे**त्यादिना । श्रोत्रियस्य भावः श्रौत्रम् 'हायनान्तयुवादिभ्योऽण्' इति सूत्रे 'श्रोत्रियस्य यलोपश्च' इति वार्तिकाद्यलोपे अण्प्रत्यये च 'यस्येति च' इतीकारलोपः । अर्हतोभाव आर्हन्ती । 'गुणवचनब्राह्मणादिभ्यः–' इति सूत्रे 'अर्हतो नुम् च' इत्युक्तेर्नुम् ष्यञ् च । षित्वान्ङीषि 'हलस्तद्धितस्य' इति यलोपः । ताभ्या वित्तैः श्रौत्रार्हन्तीचणैः । 'तेन वित्तः–' इति चणप् । श्रोत्रियत्वयोग्यताभ्यां प्रसिद्धैरित्यर्थः । किं च गुण्यैर्गुणवद्भिः । प्रशस्तगुणयुक्तैरिति यावत् । 'रूपादाहतप्रशसयोः–' इति सूत्रे 'अन्येभ्योऽपि दृश्यते' इत्युक्त्या 'गुण्या ब्राह्मणा.' इत्यस्य भाष्यादावुदाहृतत्वात् ॥—**अहर्दिवमि**ति । अहन्यहनि, प्रत्यहमित्यर्थः । 'अचतुर–' इत्यादिना निपातनात्साधुः ॥—**तोष्टूय्यमान** इति । स्तौतेर्यङन्तात्कर्मणि शानच् 'सार्वधातुके यक्' इति धातोर्यक् 'आने मुक्' इति मुक् । अपिशब्देन आपाततो विरोध द्योतयति । वस्तुनस्तु न विरोधः । स्तुतिप्रयोजकीभूतानामनन्तकल्याणगुणानां श्रुतिस्मृतिसिद्धत्वेऽपि वियदादिवद्व्यावहारिकत्वात्तदभावस्य पारमार्थिकत्वात् । एतच्चोत्तरमीमासाया स्पष्टमेव । विभुर्व्यापकः परमेश्वरः । अतिशयेन विजयते विजयतेतराम् । सर्वोत्कर्षेण वर्तत इति फलितोऽर्थः । 'विपराभ्या जेः' इति तङ् । तदन्तात् 'द्विवचनविभज्य–' इत्यादिना तरपि 'किमेत्तिङव्ययघादामु–' इत्याम् । नन्विह तरप् दुर्लभ एव, विजयत इत्यस्य अप्रातिपदिकत्वादतिङन्तत्वाच्च । नच 'सह सुपा' इत्यत्र सहेति योगविभागात्तिङन्तेन विशब्दस्य समासे प्रातिपदिकत्व स्यादेवेति वाच्यम् । स च छन्दस्येवेति तत्रत्यग्रन्थेन सह विरोधापत्तेः । किं च प्रातिपदिकत्वाभ्युपगमे सोरुत्पत्तिः स्यात्, लिङ्गसर्वनामताभ्युपगमेन नपुंसकत्वात्सोर्लुक्यपि 'ह्रस्वो नपुसके–' इति ह्रस्वो दुर्वारः स्यात् । समुदायान्तर्गतस्य 'जयते' इत्यस्य तिङन्तत्वेऽपि साकाङ्क्षत्वेनासामर्थ्यात्ततोऽपि भवितुं नार्हति । 'समर्थः पदविधिः' इति परिभाषितत्वात् । 'आमन्तेन विशब्दो युज्यते' इति कल्पनाया त्वन्तरङ्गत्वात्परस्मैपदप्रवृत्तौ विजयतितरामिति स्यादिति चेन् । अत्राहुः । समुदायान्तर्गताज्जयत इत्यस्मादेव तरप् । नच तत्र विशब्देन सह साकाङ्क्षत्वेनासामर्थ्यं शङ्क्यम् । तिङन्तस्य प्रधानत्वेन सापेक्षत्वेऽपि दोषाभावात्, उपसर्गस्य द्योतकत्वेन प्रत्येकमर्थ एव नास्तीति साकाङ्क्षताया वक्तुमशक्यत्वाच्चेति । वृत्तकथनपूर्वक वर्तिष्यमाणमाह—**पूर्वार्ध** इति । हलन्तेषु 'स्पृशोऽनुदके क्विन्' 'ऋत्विक्दधृक्स्रग्–' इत्यादिना क्विनादिव्युत्पादन प्रासङ्गिकमिति भावः ॥—**तुर्य**श्चतुर्थः । 'चतुरश्छयतावाद्यक्षरलोपश्च' इत्युक्तत्वात् ॥—**अथे**ति । इहापि कृत्सु 'ण्वुः क्रियामम्' 'अणिनुणः' इत्यादिव्युत्पादनं प्रासङ्गिकं बोध्यम्, प्राधान्येन तु तृतीयाध्यायस्था एवेहोच्यन्त इति भावः ॥ अनुबन्धभेदेन भेदमाश्रित्याह—**दश लकारा** इति ॥—**प्रदर्श्यन्त** इति । यद्यपि पञ्चमलकारे रूपाण्यधुना न व्युत्पाद्यन्ते तथापि लकारः स्वरूपेण प्रदर्श्यते 'लः कर्मणि च भावे चाकर्मकेभ्यः' 'लस्य' इत्यादिसूत्रविषयतां व्युत्पादयितुमिति भावः ॥—**पञ्चम**

---

१ श्रौत्रेति—श्रौत्रं वेदाध्ययनकर्तृत्वं, तद्विहितकर्मानुष्ठातृत्वमार्हन्ती ताभ्यां प्रसिद्धैरित्यर्थः ।

ककारश्छन्दोमात्रगोचरः । **वर्तमाने लट् ।३।२।१२३।** वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । **लः कर्मणि च भावे चाकर्मकेभ्यः ।३।४।६९।** लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे क-

---

इति । लेडित्यर्थः । लट्लिडिति श्लोकक्रममपेक्ष्यैव लेटः पञ्चमत्वं, न तु सूत्रोक्तक्रमेणेति बोध्यम् ॥—**वर्तमाने लट्** । वर्तमान इत्येतत्प्रकृत्यर्थविशेषणमित्याह—**वर्तमानक्रियावृत्तेर्धातो**रिति । धातोरिति सूत्रमातृतीयाध्यायान्तमधिक्रियत इति भावः ॥—**लट् स्यादि**ति । तस्य वाच्यत्वमनुपदमेव स्फुटीभविष्यति । वर्तमानकालस्तु न तद्वाच्यः किं तु द्योत्य एव । लिडादिष्वपि भूतादिकालो यथायथं द्योत्य एवेत्यवगन्तव्यम् । वस्तुतस्तु वाच्यत्वाभ्युपगमोऽपि सुगम इति विध्यादिसूत्रे वक्ष्यामः ॥—**अटावितावि**ति । अकार उच्चारणार्थ इति तु नोक्तम्, लिडादिवैलक्षण्यसंपादनात्तस्यावश्यवक्तव्यत्वात् ॥—**लः कर्मणि च**—॥ चकारात् 'कर्तरि कृत्' इत्यतः कर्तरीत्यनुकृष्यते, सकर्मकविषयं चेदम् । अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात्, भावे चेत्युत्तरवाक्येन तत्र तत्र विशेषविधानाच्च । तदेतदाह—**सकर्मकेभ्य** इति ॥—**भावे चे**ति । चकारेण कर्तैवानुकृष्यते न तु कर्म, असंभवात्तदाह—**भावे कर्तरि** चेति । ननु भावकर्मणोरात्मनेपदविधानात् 'शेषात्कर्तरि' इति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्मकर्तारोऽर्था अनुमातु शक्यन्त इति किमनेन सूत्रेण । मैवम् । असत्यस्मिन्सूत्रे सकर्मकेभ्योऽपि घञादिवद्भावे लकारापत्तौ घटं क्रियते देवदत्तेनेत्यादिप्रयोगः प्रसज्येत, तन्माभूदित्येतदर्थमेतस्सूत्रस्यावश्यकत्वात् । न चैवम् 'अकर्मकेभ्यो भावे लः' इत्येव सूत्र्यतां, भावे अकर्मकेभ्य एवेति नियमार्थमिति वाच्यम् । अकर्मकेभ्यो भाव एवेति विपरीतनियमापत्त्या कर्तरि तेभ्यो लकारानापत्तेः । तस्माद्भावे चेति चकार आवश्यकः । न चैवं 'भावे चाकर्मकेभ्यः' इत्येवास्त्विति वाच्यम् । भावे इव कर्तर्यप्यकर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यो भाव इव कर्तर्यपि लकारानापत्तेः । नन्वेवमपि 'लश्च भावे चाकर्मकेभ्यः' इत्येवास्तु चकारेण कर्तरीत्यनुकर्षणाल्लकाराः सकर्मकेभ्यः कर्तरि स्युरकर्मभ्यो भावे कर्तरि च स्युरित्यर्थे पर्यवसिते कर्मणि तूक्तज्ञापकाद्भविष्यन्तीति किमनेन कर्मणीत्यनेनेति चेत् । मैवम् । उत्तरसूत्रे तयोरित्यनेन कर्मणोऽपि परामर्शार्थं तस्यावश्यकतया ज्ञापकानुसरणक्लेशस्य वैयर्थ्यात् । तस्माद्यथान्यासमेव रमणीयम् । अत्र नैयायिकाः—'लकाराणां कृतावेव शक्तिर्लाघवान्न तु कर्तरि । कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात्, देवदत्त इत्यादिप्रथमान्तपदे तल्लाभाच्च । देवदत्तः पचतीत्यत्र हि देवदत्तो विशेष्यः, यत्नो विशेषणम्, आश्रयत्वं तु संसर्गः । तथाच पाकानुकूलकृत्याश्रयो देवदत्त इत्यादिशाब्दबोधोऽपि सुष्ठूपपद्यते' इति । तन्न । पचतीत्युक्ते पाककर्ता क इत्याकाङ्क्षानुरोधेन लकाराणां कर्तरि शक्तिरित्यभ्युपगन्तुमुचितत्वात् । पाकानुकूला कृतिरिति शाब्दबोधाभ्युपगमे तु कस्मिन्नित्याकाङ्क्षा स्यात्, कस्येति वा । न चैककर्तृका पचिक्रियेति शाब्दबोधाभ्युपगमेऽपि क इत्याकाङ्क्षा नोपपद्यत एवेति शङ्क्यम् । कर्तृसामान्यबोधे सति क इति कर्तृविशेषाकाङ्क्षायां बाधकाभावात् । नापि देवदत्तकर्तृका पचिक्रियेत्युक्तेऽपि कस्मिन्नस्ति कस्य वेत्याकाङ्क्षा दुर्वारैवेति शङ्क्यम् । विक्लृत्यनुकूलव्यापारस्यैव पचिक्रियात्वात् तदाश्रयस्य देवदत्तस्य कर्तृत्वात् क्रियाश्रयत्वे निश्चिते कस्मिन्नित्याकाङ्क्षाया अप्रवृत्तेः । किं च पचन्तं देवदत्तं पश्य, पचते देवदत्ताय देहि, पचमानस्य देवदत्तस्य द्रव्यम्, इत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशत्वाविशेषेण तेभ्योऽपि कृतिमात्रबोधापत्तेः । न चेष्टापत्तिराश्रयत्वं संसर्ग इत्युक्तत्वेन पाकानुकूलकृत्याश्रयं देवदत्तं पश्येत्याद्यर्थस्वीकारे दोषाभावादिति वाच्यम् । नामार्थयोर्भेदान्वयस्य स्वपरसिद्धान्तविरुद्धत्वात् । न चैवं नामार्थयोरभेदसंसर्गव्युत्पत्त्यनुरोधेन शतृशानजादीनां कर्तरि शक्तिस्तिबादीनां कृतावेवेति वैषम्यं स्वीक्रियते, प्रामाणिकगौरवस्यादोषत्वादिति वाच्यम् । स्थान्येव वाचको लाघवान्न त्वादेशो गौरवादिति स्वसिद्धान्तस्य परित्यागापत्तेः । रामः, ज्ञानं, कतरत्, इत्यादौ सोर्विसर्गे सोरमि सोरदडि च कृते लाघवात्सुत्वेनैव शक्तिर्न तु तत्तद्रूपेणेत्यादिभवदीयव्यवहारस्यासांगत्यापत्तेश्च । एवं च तिबादीनां शत्रादीनां च स्मारकतया लिपिस्थानीयत्वं बोधकस्तु लकार एवेति स्थिते स च शत्राद्यन्ते कर्तरि शक्त इत्यभ्युपगमे तिङन्ते कथं कृतिं बोधयेत्? । 'अन्याय्यश्चानेकार्थत्वम्' इति न्यायात् । यदि तु वैयाकरणरीतिमाश्रित्य सर्वत्रादेशा एव वाचका इत्याद्यभ्युपगम्यते तर्हि घटं, घटेन, हरेऽव, विष्णोऽवेत्यादिषु 'सर्वे सर्वपदादेशाः' इति न्यायेन पदस्फोटो वाक्यस्फोटश्च सिध्येदिति भवतां तन्महदनिष्टम् । किं च 'कर्तरि कृत्' इति यत्कर्तृग्रहणं तदेव 'लः कर्मणि' इति सूत्रे चकारेणानुकृष्यत इति कथं ण्वुलादीनां लकाराणां च शक्तौ वैलक्षण्यम् । न च नामार्थयोरभेदान्वयसंसर्गाभ्युपगम एव ण्वुलादौ कर्तुर्वाच्यत्वे बीजमिति वाच्यम् । पचतिरूपं पचतिकल्पं देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुर्वाच्यतौचित्यात् । ननु समुदायस्य नामत्वेऽपि तिङ्प्रत्ययो न नामेति चेत्पाचक इत्यत्राप्यक इत्येतन्न नामेति तुल्यम् । अकान्तं नामेति चेत् रूपबाद्यन्तमपि नामेति तुल्यम् । ततश्चात्र प्रशस्तपाककर्ता देवदत्त इत्याद्यभेदान्वयो भवद्भिरभ्युपगन्तव्य इति तिङ्क्ष्वपि कर्तुर्वाच्यता स्वीकर्तव्यैव । किं च कर्तुर्वाच्यत्वानभ्युपगमे 'युष्मदि समानाधिकरणे मध्यमः' 'अस्मद्युत्तमः' इति सामानाधिकरण्यप्रयुक्ता पुरुषव्यवस्था अभिहिते कर्तरि

---

१ वर्तमानक्रियेति—वर्तमानकालक्रियेत्यर्थः । वर्तमानत्वं प्रारब्धापरिसमाप्तक्रियाश्रयत्वं कालगतं बोध्यम् । २ ल इति—दमुच्चारणार्थाकारेण सह जातावेकवचनम्, लस्येत्यत्र तथा दृष्टत्वात् ।

प्रथमा' इत्यादिकं च भवन्मते कथं संगच्छताम्। यत्तु अनभिहित इत्यस्यानभिहितसंख्याक इत्यर्थवर्णनेन 'देवदत्तः पचत्योदनम्, ओदनः पच्यते देवदत्तेन' इत्यादौ प्रथमाद्वितीयादिव्यवस्थापनमुक्तम्। तन्न। कृत्तद्धितसमासेषु संख्याभिधानस्याप्रसिद्धत्वात्। ततश्च पक्वव्यस्तण्डुलः, शत्यः शतिकोऽश्वः, प्राप्तोदको ग्रामः, इत्यादिषु 'कर्मणि द्वितीया' इत्यस्य प्रवृत्तौ प्रथमा न स्यात्। न च तिष्ठतीत्यध्याहारेण संख्याभिधानमिहाप्यस्तीति वाच्यम्। स्थित इत्याद्यध्याहारे तदभावात्। शाब्दिकोऽयं देवदत्तो न तु नैयायिक इत्यादिषु नीलमिदं न तु रक्तमित्यत्रेव क्रियापदाध्याहारस्यानावश्यकतया आख्यातेन 'शब्ददर्दुरं करोति' इति ठक्प्रत्ययेन वा कर्तृसंख्याया अनुक्तत्वाद्देवदत्ते कर्तरि तृतीयोत्पत्तिप्रसङ्गाच्च। तस्मादनभिहिते कर्तरीत्यादिव्याख्यानमेवाभ्युपेतव्यम्। अपि च धातूपात्तव्यापाराश्रयः कर्ता तत्राश्रयमात्रं कृतां लकाराणां चार्थः न तु व्यापारोऽपि, तस्य धातुनैव लब्धत्वात्। अत एव कर्ता कारक इत्यादौ प्रकृतिप्रत्ययार्थयोर्नानन्वयः, व्यापाराश्रयस्य प्रत्ययार्थत्वे तु तस्य प्रकृत्यर्थेन व्यापारेणान्वयः क्लिष्टः स्यात्। यस्तु वदति 'कृधातोः कृतिरर्थः कृत्प्रत्ययस्यापि कृतावेव शक्तिर्न तु कर्तरि। 'कर्तरि कृत्' इत्यत्र हि कर्तरीति भावप्रधानो निर्देशः। कर्तृत्वं कृतिमत्त्वम्। तच्च कृतिरेव। यत्र तु देवदत्तादिपदसमभिव्याहारस्तत्र तृजादौ कृतिमति लक्षणेत्यादि तन्मते पूर्वोक्तकर्तृत्वादौ सुतरामनन्वयः। 'कर्मवत्कर्मणा' इति सूत्रे करोतिरुत्पादनार्थः, उत्पत्तिश्च कर्मस्था, यत्नार्थकत्वे तु करिष्यते घट इत्यादि न सिध्येदिति वक्ष्यमाणदूषणं च दुरुद्धरम्। आश्रयमात्रस्य प्रत्ययार्थत्वे तु रथो गच्छतीत्यत्र रथस्याचेतनस्य यत्नाभावेऽपि गमनानुकूलचक्रभ्रमणादिव्यापाराश्रयत्वान्न काचिदनुपपत्तिः। एवं स्थिते कृतौ शक्तिरित्यस्योक्तिसंभव एव नास्ति, कृतेरपि व्यापारविशेषतया प्रायेण धातुत एव लाभात्, जानातीत्यादावाश्रयत्वं प्रत्ययस्यार्थ इति स्वीकृत्य तत्रार्थत्वस्य त्वयापि वक्तव्यत्वात्। न हि यत्नमन्तरेण ज्ञानं नोदेतीति कश्चिदभ्युपैति। तस्मात्कृतां तिङां च वैलक्षण्यं दुर्लभमिति कर्त्रर्थकत्वमभ्युपेयम्। एतेन कर्त्रधिकरणे आख्यातवाच्यत्वं कर्तुर्निरस्य जङ्गम्यमानाधिकरणे यङन्ताद्विहितस्य जङ्गम्यमान इति शानचः कर्तृवाचकत्वं स्वीकुर्वन्तो मीमांसका अपि प्रत्युक्ताः। यत्तु तैरुक्तं शानजशे 'कर्तरि कृत्' इति व्याकरणं शक्तिग्राहकमस्तीति। तन्न। कृद्वाक्यशेषो ह्ययमर्थाकाङ्क्षायामनिर्दिष्टार्थेषु ण्वुलादिष्वेवोपतिष्ठते 'आकाङ्क्षितविधानं ज्यायः' इति न्यायात्, न तु शत्रादिषु। स्थानिभूतलकारार्थेनैवैतेषां निराकाङ्क्षत्वाद्, अन्यथा भावे कर्मणि च शानचो दौर्लभ्यापत्तेः। ततश्च शय्यमाने आस्यमाने चायं गत इत्यादिप्रयोगो भावे न स्यात्। कर्मणि तु क्रियमाण इत्यादिप्रयोगो न स्यात्। यत्तु भट्टपादा आहुः। कर्तरि यदेकत्वं तत्र तिप् कर्तरि यद्वित्वं तत्र तस्, इत्यादिक्रमेण 'लः कर्मणि—' इत्यस्य 'द्व्येकयोः—' इत्यादेश्चैकवाक्यतया व्याख्यानान्न कर्तृवाच्यता सूत्रादायातीति। तच्चिन्त्यम्। 'तान्येकवचनद्विवचन—' इति विहितद्विवचनादिसंज्ञा हि तिबाद्यादेशनिष्ठा। ततश्च द्विवचनादिसंज्ञकतिबादिविधिना 'द्व्येकयोः—' इत्यस्यैकवाक्यतास्तु। न च तिबादिविधौ कर्तरीत्यस्ति, यद्द्वित्वैकत्वादिविशेषणतया कथंचिन्नीयेत। ननु 'लः कर्मणि' इति सूत्रे 'कर्तरि कृत्' इत्यतोऽनुवृत्तं कर्तृग्रहणं तिबादिविधावस्त्येव, लविधितिबादिविध्योरप्येकवाक्यतास्वीकारादिति चेत्। सत्यम्। वाक्यैकवाक्यता हि सा न तु पदैकवाक्यता। 'लः कर्मणि—' इति विहितलकारानुवादेन तिबाद्यादेशविधेः प्रवृत्तत्वात्। तथा च लविधौ श्रूयमाणं कर्तृग्रहणं कथं संख्या विशिनष्टु। न हि यत्र कर्तृग्रहणं तत्र संख्योपस्थापकमस्ति। लकारस्य द्विवचनादिसंज्ञाविनिर्मुक्तत्वात्। ततश्च कर्तरि यदेकत्वमिति व्याख्या कथमपि न संभवत्येव॥ स्यादेतत्। 'लः कर्मणि—' इति सूत्रे ल इत्यकारानुबन्धकयोर्लड्लटोः सामान्यग्रहणं न भवति किंतु टकारानुबन्धकलकाराणां सामान्यग्रहणमिति निर्विवादम्। तत्र 'ल' इति जसन्तं माभूत् किं तु ङसन्तमस्तु। 'लः परस्मैपदम्' इतिवदादेशापेक्षा चेयं षष्ठी, लस्य य आदेशः स कर्मणि चेत्यादि। न चाविहितस्य लस्यानुवादो न संभवतीति वाच्यम्। 'वर्तमाने लट्' इत्यादिभिरेव लविधानात्। तथा च लस्य स्थाने य आदेशः स सकर्मकात्कर्मणि कर्तरि च स्यादकर्मकाद्भावे कर्तरि चेत्यर्थः सुलभ इति भट्टपादोक्तयोजनिका निर्बाधैव चेत्। अत्राहुः। ल इत्यस्य षष्ठ्यन्तत्वे आदेशानामेवार्थ उक्तः स्यात्। सोऽपि तिबादीनामेव न तु शबादीनाम्, तेषां द्विवचनादिसंज्ञाविरहात्। 'द्व्येकयोः—' इत्यादिनास्यैकवाक्यताया भवद्भिरुक्तत्वात्। न च भवदुक्तरीत्या 'कर्तरि कृत्' इत्यनेनैव निर्वाहः। भावे कर्मणि च शानचो दौर्लभ्यापत्तेरुक्तत्वात्। न च शानज्विधिना सहात्मनेपदव्यवस्थापकानामेकवाक्यतया 'भावकर्मणोः' इत्यनेनेष्टसिद्धिः। सकर्मकादपि भावे शानजापत्तेः। किं च जसन्तत्वे श्रुतेनैव संबन्धः षष्ठ्यन्तत्वे त्वादेशा इत्यध्याहाराद्गौरवमित्यादि॥ अत्रेदं बोध्यम्। 'भावे चाकर्मकेभ्यः' इत्यकर्मकग्रहणेनाविवक्षितकर्माणोऽपि गृह्यन्ते। अत एव 'णेरणौ' इति सूत्रे नेह पच्यते नेह भुज्यते इति भावे लकार इति हरदत्तः। अत्यन्ताविद्यमानकर्मकाणामेव ग्रहणं, नेह, पच्यते इत्यादौ तु कर्मण्येव लकारः। गम्यमानत्वाच्च कर्म न प्रयुज्यत इति मतान्तरम्। एतच्च 'गतिबुद्धि—' इत्यादिसूत्रे हरदत्तग्रन्थे स्पष्टम्। यत्तु कैश्चिदुक्तम् 'अविवक्षितकर्मणां भावे लकार इति प्रसादकृतोक्तं भाष्यादिविरोधादयुक्तम्' इति। तच्चिन्त्यम्। पक्षद्वयस्यापि भाष्यकैयटादिग्रन्थारूढत्वात्। प्रत्युताविवक्षितकर्माणोऽप्यकर्मका इति पक्ष एव प्रबलः। तथाहि 'समानकर्तृकेषु तुमुन्' इति सूत्रे इच्छता क्रियत इति भावे लडुक्तो हरदत्तेन, 'णेरध्ययने वृत्तम्' इति सूत्रे कैयटहरदत्तादिभिरपि नपुंसके भावे क्तः अकर्मकेभ्य एव, 'तयोरेव कृत्यक्त—'

**तेरि च ।** **लस्य ।३।४।७७।** अधिकारोऽयम् । **तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ।३।४।७८।** एतेऽष्टादश लादेशाः स्युः । **लः परस्मैपदम् ।१।४।९९।** लादेशाः परस्मैपदसंज्ञाः स्युः । **तङानावात्मनेपदम् ।१।४।१००।** तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञापवादः । **अनुदात्तङित आत्मनेपदम् ।१।३।१२।** अनुदात्तेत उपदेशे यो ङिच्चदन्ताच्च धातोर्लस्य स्थाने आ-

इत्यत्र क्तमात्रस्य ग्रहणात्तत्र भावे चाकर्मकेभ्य इत्यनुवर्तनादन्यथा घटं कृतमिति प्रसज्येतेति सिद्धान्तितम् । एवं स्थिते यद्यविवक्षितकर्माणोऽपीह सूत्रेऽकर्मकग्रहणेन गृह्येरन्, तर्हि पीता गावो भुक्ता ब्राह्मणा इत्यादौ भावे क्तान्तादर्शआद्यजित्यादि निष्ठादिप्रकरणे स्वयमेव वक्ष्यमाणम्, 'आदि कर्मणि इति सूत्रे हरदत्तेन वक्ष्यमाण, कृतपूर्वीत्यत्र भावे क्त इति कैयटाद्युक्तं' च कथं सगच्छतां, कथं च 'गत तिरश्चीनम्' इत्यादिप्रयोगाः संगच्छेरन् । 'गतिबुद्धि' इति सूत्रे त्वकर्मकग्रहणेनाविवक्षितकर्माणो न गृह्यन्त इत्युक्त तेनाणौ यः कर्ता स ण्यन्ते कर्म न भवतीति देवदत्तेन पाचयतीति सिद्धम् । 'गत्यर्थाकर्मक–'इति सूत्रेऽपि न गृह्यन्ते, तेन हि सूत्रेण कर्तर्यपि क्तो विधीयत इति दत्तवान् पक्ववान् इत्याद्यर्थे दत्तः पक्व इत्याद्यापत्तेः । इह सूत्रे त्वविवक्षितकर्मणामकर्मकत्वेन ग्रहणे न कोऽपि दोष इत्यास्तां तावत् ॥—**लस्य** ॥ वर्णग्रहणे प्रत्ययग्रहण–परिभाषा, अर्थवद्ग्रहणपरिभाषा च न प्रवर्तते इति लुनाति, चूडाल, इत्यादौ तिबाद्यादेशः कुतो न भवतीति चेद् । अत्राहुः । 'लः कर्मणि' इति सूत्रे निर्दिष्टानां कर्त्राद्यर्थानामनुवृत्तेः कर्त्राद्यर्थे विहितस्य लकारस्य ग्रहणमिति । अतोऽपि तिबाद्यादेशानुवादेन कर्त्राद्यर्थविधिरिति कल्पना निरस्ता । लस्थानिकतिबादीनां कर्त्राद्यर्थविधान, कर्त्राद्यर्थे विहितस्य लस्य तिबादिविधानमित्यन्योन्याश्रयापत्तेः । यद्वा धातोरित्यधिकाराद्धातोर्विहितस्यैव लस्येह ग्रहणमिति नोक्तातिप्रसङ्गः । लस्येत्संज्ञा तु न भवति, फलाभावात् । न च लित्स्वरः फल, णलो लित्त्वेन तदभावस्य ज्ञापनात् । नाप्यश्रवणमेव फलं, तदुच्चारणस्यानर्थक्यापत्तेरादेशविधिनैवाश्रवणलाभाच्च । लस्य तिबादिस्थानित्वाभ्युपगमे तु 'लः परस्मैपदम्' इत्यादिस्वरसतः संगच्छत इति दिक् ॥—**तिप्तस्झि**—॥ समाहारे द्वन्द्वः । इटष्टकार आगमलिङ्ग न भवति सप्तदशभिरादेशैः समभिव्याहारात्, किं तु 'इटोऽत्' इति विशेषणार्थः । एरदित्युच्यमाने एधैवहि एधेमहीत्यत्रापि स्यात् वर्णग्रहणे प्रत्ययग्रहणार्थवद्ग्रहणपरिभाषयोरप्रवृत्तेः । केचित्तु 'इटोऽत्' इत्यत्र लिङ इत्यनुवर्तनाल्लिङादेशस्येवर्णस्येति सामानाधिकरण्येन व्याख्याने एधेवहि एधेमहीत्यादावतिप्रसङ्गो नास्त्येव । न हि तत्र इकारमात्रमादेशो भवति, तेन 'इटोऽत्' इत्यत्र टकारः स्पष्टप्रतिपत्त्यर्थ एवेत्याहुः । तच्चिन्त्यम् । इकारस्य विशेषणत्वे विशेषणेन तदन्तग्रहणादिवर्णान्तस्य लिङोऽत्स्यादित्यर्थप्रसक्त्या उक्तातिप्रसङ्गस्य तदवस्थत्वात् । वहिमहीत्यस्यापि स्थानिवत्त्वेन लिङ्त्वात् । महिङो ङकारस्तङ् तिङिति प्रत्याहारार्थः, स च समुदायानुबन्धो न त्ववयवानुबन्धो व्याख्यानात् । तेनेपेः कर्मणि आशीर्लिङि एपिषीमहीत्यत्र गुणनिषेधो न, तथा वृश्चतेः पृच्छतेश्च कर्मणि लिटि वव्रश्चिमहे पप्रच्छिमहे इत्यत्र 'ग्रहिज्या–' इति संप्रसारणं न ॥—**तङानौ**—॥ लस्येत्यस्यानुवृत्तेर्लादेश एवानो गृह्यते इत्याशयेनाह—**शानच्कानचौ चे**ति । तेन परस्मैपदिभ्योऽपि 'ताच्छील्यवयोवचन' इति चानश् भवत्येव । कतीह निघ्नानाः ॥—**अनुदात्तङितः**—॥ अनुदात्तश्च ङश्च अनुदात्तङौ तौ इतो यस्य सोऽनुदात्तङित् । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं संबध्यते । तत्रानुदात्तांशे तदन्तविधेः फलाभावात् अशान्तर एव तदन्तग्रहणमित्याशयेनाह—**अनुदात्तेत** इत्यादि । 'उपदेशेऽजनुनासिक–' इत्यतोऽनुवृत्तमुपदेशग्रहणमपि ङिदंश एव सबध्यते नान्यत्र, अव्यभिचारात्तदाह—**उपदेशे यो ङिदि**ति । विशेष्यमन्तरेण तदन्तविधिरिह दुर्लभ इत्यत आह—**धातोरि**ति ॥—**लस्ये**ति । नन्विहानुवृत्तेरभावादुभयमपि दुर्लभं 'भूवादयः' इति सूत्रान्मण्डूकप्लुत्यानुवृत्तस्य धातव इत्यस्य विभक्तिविपरिणामात्कथंचिद्धातोरिति पदे लब्धेऽपि लस्येत्येतन्न लभ्यत इति चेत् । अत्राहुः । 'इको झल्' इत्यत्र सना धातोरिवेहात्मनेपदेन लकारधात्वोराक्षेपो बोध्यः । तिङां लादेशत्वाल्लस्य च धातोर्विधानादिति । उपदेश इति किम् । चुकुटिषति । 'गाङ्कुटादिभ्यः–' इति सन आतिदेशिकं ङित्वम् । धातोः किम् । चङङ्भ्यां माभूत् । अदुद्रुवत् । अवोचत् । ननु लावस्थायामेव वृतादिभ्यः 'स्यतासी–' इत्यादिना स्यप्रत्यये कृते व्यवधानादात्मनेपदपरस्मैपदरूपनियमाप्रवृत्तावपि लकारसामान्याश्रयत्वेनान्तरङ्गत्वात्स्यप्रत्ययात्पूर्वमेव लस्य तिबादिषु सत्सु पक्षे परस्मैपदं पक्षे चात्मनेपदं सिद्ध्यत्येवेति 'वृद्भ्यः स्यसनोः' इति सूत्रे स्यग्रहण व्यर्थं सत् तेनैव स्यग्रहणेन 'विकरणेभ्यो नियमो बलीयान्' इति ज्ञापितम् । तेनानुदात्तेत्त्वाद्वर्तिष्यत इत्येवं नित्यमात्मनेपदे प्राप्ते 'वृद्भ्यः स्यसनोः' इति परस्मैपदमपि पक्षे भवति । तथा च विकरणेभ्यो नियमस्य बलीयस्त्वाच्चङ्ङोर्न दोषः, विकरणात्प्रागेव परस्मैपदप्रवृत्तिरिति चेत् । सत्यम् । स्यग्रहणं विकरणव्यवधानेऽपि नियमप्रवृत्तिं ज्ञापयतीति पक्षे चङ्ङोर्दोषः स्यादेव । अय पक्षः 'शदेः शितः' इति सूत्रे भाष्यकैयटयोः स्पष्टः । किं च तदन्तविधिलाभार्थमपि धातुग्रहणमावश्यकं 'धातोरेकाच' इत्यादिना यङ् । बो-

१ लादेशा इति—लमात्रोद्देशेन विहिता आदेशा इत्यर्थः, तेन सिजादीना परस्मैपदसंज्ञा न भवति । तेषां च्लेरित्यादिविशिष्टानुवादेन विहितत्वात् । २ आत्मनेपदमिति—अनया च संज्ञया पूर्वसंज्ञाया बाध आकडारीयत्वात् ।

त्मनेपदं स्यात्। **स्वरितञितः कर्त्रभिप्राये क्रियाफले ।१।३।७२।** स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले। **शेषात्कर्तरि परस्मैपदम् ।१।३।७८।** आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात्। **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ।१।४।१०१।** तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः। **तान्येकवचनद्विवचनबहुवचनान्येकशः ।१।४।१०२।** लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनादिसंज्ञानि स्युः। **युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।१।४।१०५।** तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात्। **प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ।१।४।१०६।** मन्यधातुरुपपदं यस्य धातोस्तस्मिन्प्रकृतिभूते सति मध्यमः स्यात्परिहासे गम्यमाने मन्यतेस्तूत्तमः स्यात्स चैकार्थस्य वाचकः स्यात्। **अस्मद्युत्तमः ।१।४।१०७।** तथाभूतेऽस्मद्युत्तमः स्यात्। **शेषे प्रथमः ।१।४।१०८।** मध्यमोत्तमयोरविषये प्रथमः स्यात् ॥ भू सत्तायाम् ॥ कर्तृविवक्षायां भू ति इति स्थिते। **तिङ्शित्सार्वधातुकम् ।३।४।११३।** तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः।

भूयते। 'ऋतेरीयङ्' ऋतीयते। शेते न्हुते इत्यत्र तु व्यपदेशिवद्भावेन ङिदन्तत्वम्। 'नमोवरिवश्चित्रङः' इति क्यचि चित्रीयते इत्येतत्कथमिति चेत् अत्राहुः। अवयवेऽचरितार्थो ङकारः क्यजन्तस्य विशेषणं भवति। तथा च समुदायानुबन्धो ङकार इति व्यपदेशिवद्भावेनैव ङिदन्तत्वं बोध्यमिति ॥—**स्वरितञितः**—॥ पूर्ववदिच्छब्दः प्रत्येकं सम्बध्यते। कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायं, कर्मण्यण् ॥—**धातोरि**ति। धातोर्लस्येत्यर्थः। लकारधात्वोराक्षेपः पूर्ववद्बोध्यः ॥—**तिङस्त्रीणि त्रीणि**—॥ तिङः षट् त्रिकाः संज्ञास्तु तिस्र इति यथासंख्यं न प्राप्नोतीत्यत आह—**उभयोरि**ति। परस्मैपदमात्मनेपदमिति चानुवर्तते। तेन पदद्वये प्रत्येकं त्रयस्त्रिका इति यथासंख्यं संज्ञाः प्रवर्तन्त इति भावः। ननु प्रथमश्च प्रथमश्च प्रथमौ मध्यमश्च मध्यमश्च मध्यमावित्येवं कृतैकशेषाणां प्रथमादीनां प्रथमौ च मध्यमौ च उत्तमौ च प्रथममध्यमोत्तमा इति द्वन्द्वेऽभ्युपगते त्रिकद्वयस्य त्रिकद्वयस्य यथासंख्यं प्रथममध्यमोत्तमसंज्ञाः स्युर्न त्वेकैकस्येति। एवं 'णलुत्तमो वा' इति सूत्रं विरुध्येत णल उत्तमसंज्ञकत्वालाभात्, ततश्च प्रथममध्यमोत्तमा इत्यत्र कृतद्वन्द्वानां प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्चेत्येकशेष आश्रीयताम्, तथाहि सति संज्ञा अपि षडिति परस्मैपदात्मनेपदग्रहणानुवृत्तिक्लेश विनैवेष्टसिद्धिरिति चेत्। मैवम्। एकशेषाश्रयणे गौरवाद्वैयर्थ्याच्च त्वयापि परस्मैपदात्मनेपदग्रहणमनुवर्त्यमेव। अन्यथा शतृक्वसोः सावकाशा परस्मैपदसंज्ञा प्रथमादिसंज्ञया बाध्येत। ततश्च क्राम्यति क्रामतीत्यादौ 'क्रमः परस्मैपदेषु' इति दीर्घो न स्यात्। आक्रामन्नित्यादौ तस्य सावकाशत्वात्। यदि तु 'परस्मैपदानाम्—' इति विहितस्य णलो 'णलुत्तमो वा' इति णित्त्वविकल्पविधानाज्ज्ञापकात्परस्मैपदसंज्ञा प्रथमादिसंज्ञया न बाध्यत इति ब्रूषे, तर्हि सुतरां प्रतिपत्तिगौरवम् ॥—**तान्येकवचन**—॥ तानीत्यस्य व्याख्यानं तु लब्धेत्यादि। अन्यथैकसंज्ञाधिकारात्प्रथमादिसंज्ञानामेकवचनादिसंज्ञानां च पर्यायः स्यात्। इष्टापत्तौ तु अत्तेर्लोटो 'मिनिः' इति कृते एकत्वविवक्षायामुत्तमसंज्ञाभावात् 'आडुत्तमस्य—' इत्यस्याप्रवृत्त्या अन्नीत्यादिप्रयोगोऽपि साधुः स्यादिति भावः ॥—**प्रत्येकमि**ति। यत्तु प्राचा एकैकश इत्युक्तं तदयुक्तम्। शसैव वीप्साया उक्तत्वेन द्विर्वचनायोगात्, येन नाप्राप्तिन्यायेन द्विर्वचनापवादः शसिति सिद्धान्तात्। तथा 'सुपः' इति सूत्रेऽप्येकैकश इति प्राचोक्तमयुक्तमेव। एतच्च मनोरमाग्रन्थानुरोधेनोक्तम्। अन्ये तु एकैकमेवैकैकशः। स्वार्थे शस् न त्वत्र वीप्सायाम्। न च स्वार्थे यः शस् स आकरग्रन्थाभावगम्यत इति वाच्यम्। एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वेति भाष्यात् शसन्तस्य प्रत्येकमित्यर्थकत्वेन कैयटेन व्याख्यानाच्च स्वार्थिकस्यापि शसोऽवगम्यमानत्वात्। ततश्चैकैकश इति प्राचोक्तमयुक्तमिति यदुक्तं तदेवायुक्तमित्याहुः ॥—**युष्मदि**—॥ समानाधिकरण इत्यस्य व्याख्यानं तिङ्वाच्यकारकवाचिनीति। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। स्थानिनीत्यस्य व्याख्यानमप्रयुज्यमान इति। समानाधिकरणे किम्। त्वां पश्यति, त्वया क्रियते, तुभ्यं ददाति ॥—**प्रहासे**—॥ मन्योपपद इति सप्तम्यन्तस्यानुगुणकं व्याचष्टे—**तस्मिन्प्रकृतिभूते सती**ति। तस्माद्धातोर्लस्य स्थान इत्यर्थः ॥—**तथाभूते**ति। तिङ्वाच्यकारकवाचिनि प्रयुज्यमानेऽप्रयुज्यमाने चेत्यर्थः ॥—**तिङ्शित्**—॥ धात्वधिकारोक्ता इति किम्। हरीन्। शसः 'सार्वधातुकमपित्' इति ङित्त्वे 'घेर्ङिति' इति गुणः स्यात्, लिहः श्रियः इत्यादिशसन्तेषु 'सार्वधातुके यक्' इति यक् च स्यात्। केचित्तु वारिणीत्यत्र नुमि कृतेऽपि लघूपधगुणः स्यादित्याहुः। तन्न। क्ङितीति निषेधाद्, इगन्तत्वप्रयुक्तस्य नुमो

१ क्रियाफले इति—क्रियाफलं च यदुद्देशेन क्रियाप्रवृत्तिरवगता तदेव नतु दक्षिणादिरूपम्। २ उपपदे इति—उपोच्चरितं पदमुपपदं नतु कृत्रिमम्, तस्येहानुपयोगादप्राप्तेश्च। ३ अविषये इति—तेन देवदत्तश्च त्वं च इत्यत्र एकशेषे युवां भवथः इत्येव, युष्मदर्थविषयत्वात्। एकशेषेऽपि शिष्टशब्दप्रवृत्तिनिमित्तेनैव लुप्तार्थबोधात्। ४ सत्तायामिति—सत्ता इह आत्मधारणं, सत्तायामित्यादेर्वर्तत इति शेषो बोध्यः।

**कर्तरि शप्** ।३।१।६८। कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् । शपावितौ । **सार्वधातुकार्धधातुकयोः** ।७।३।८४। अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः । **झोऽन्तः** ।७।१।३। प्रत्ययावयवस्य झस्यान्तादेशः स्यात् । अतो गुणे । भवन्ति । भवसि । भवथः भवथ । **अतो दीर्घो यञि** ।७।३।१०१। अतोऽङ्गस्य दीर्घः स्याद् यञादौ सार्वधातुके परे । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः । एहि मन्ये ओदनं भोक्ष्यसे इति भुक्तः सोऽतिथिभिः । एतमेत वा मन्ये ओदनं भोक्ष्येथे , भोक्ष्यध्वे ॥ भोक्ष्ये । भोक्ष्यावहे । भोक्ष्यामहे । मन्यसे । मन्येथे । मन्यध्वे इत्यादिरर्थः । युष्मद्युपपदे इत्याद्यनुवर्तनं नेनेह न । एतु भवान्मन्यते ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिः । प्रहासे किम् । यथार्थकथने माभूत् । एहि मन्यसे ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिरित्यादि । **परोक्षे लिट्** ।३।२।११५। भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः । **लिट् च** ।३।४।

---

गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च ॥—**कर्तरि शप्** ॥ 'सार्वधातुके यक्' इत्यतः सार्वधातुक इत्यनुवर्तते 'धातोरेकाचः–' इति सूत्राद्धातोरिति च, तदाह । कर्त्रर्थ इत्यादि ॥—**झोऽन्तः** ॥ तकारादकार उच्चारणार्थः । 'आयनेयीनी–' इति सूत्रात्प्रत्ययग्रहणमनुवर्तते न त्वादिग्रहणम्, एकदेशे स्वरितत्वप्रतिज्ञानात् । तस्याप्यनुवृत्तौ तु शयान्ते इति न सिध्येत् । शीङो 'लेटोडाटौ' इत्यन्तरङ्गत्वादन्तादेशात्प्रागाटि कृते झस्यादित्वाभावात्, तदेतदाह—**प्रत्ययावयवस्ये**ति। प्राचा तु प्रत्ययान्तस्येत्युक्तं तदनेन प्रत्युक्तम् । इह मनोरमायामादिग्रहणं निवृत्तमित्युक्तं तदापाततः, अन्यत्राप्रवृत्तस्यादिग्रहणस्य निवृत्तत्वायोगात्, निवृत्तमित्यस्याननुवृत्तमित्यर्थ इति वा कथञ्चिद्व्याख्येयम् । यत्तु प्रत्ययादेरिति ग्रन्थसमर्थनाय व्याचक्षते आडागमे कृते तत्सहितोऽपि प्रत्ययोऽस्तु नाम न तु तत्सहित एव प्रत्यय इति नियमोऽस्तीति । तन्न । अवयवविनिर्मुक्तस्यावयवित्वायोगात् । अन्यथा भूयास्तामित्यादौ तामादीनामिडागमापत्तेः । ननु अङ्गात्परस्य प्रत्ययस्येटः यासुडन्तं तु नाङ्गमिति चेत् । न । आगमविनिर्मुक्तस्यापि प्रत्ययत्वमिति वदतां मते भवामि भविष्यामीत्यादौ विकरणान्तस्येव तदादिग्रहणबलेन यासुडन्तस्याप्यङ्गताया दुर्वारत्वात् । किं च लिविषीयेत्यत्र विशेषविहितत्वात्सीयुटि कृते लिङः स्थाने इट् तस्यागमेनादित्वविघातात्प्रत्ययाद्युदात्तत्वं न प्राप्नोतीत्याशङ्क्य प्रत्ययस्वरे कर्तव्ये आगमा अविद्यमानवदित्यतिदेश आद्युदात्तश्चेति सूत्रे भाष्यादौ स्वीकृतः । न चैतत्केवलस्यापि प्रत्ययत्वे युज्यते, न च तन्मते आगमसहितस्यापि प्रत्ययत्वादिकारस्याप्युदात्तः स्यात्, तद्वारणाय प्रत्ययस्वरे कर्तव्य इत्यादिग्रन्थः स्वीकर्तव्य एवेति नास्त्येवाकरग्रन्थविरोध इति वाच्यम् । 'आगमा अनुदात्ताः' इति विशेषवचनेनागमस्याप्यनुदात्तत्वे कृते आद्युदात्तत्वस्य तत्राप्रवृत्तेरिति दिक् ॥—**झस्ये**ति । झकारादकार उच्चारणार्थः—**अतो गुणे** इति । 'अतो दीर्घो यञि' इति तु न प्रवर्तते, स्थान्यलादेशविधौ स्थानिवत्त्वनिषेधादिति भावः ॥—**अतो दीर्घो**—॥ 'तुरुस्तुशम्यमः–' इति सूत्रात्सार्वधातुक इत्यनुवर्तते । सार्वधातुके किं, केशवः अङ्गना । अत आ इति वक्तव्ये दीर्घग्रहणं दीर्घ एव यथा स्यादित्येवमर्थम् । अन्यथाऽपाक्षीरोदन देवदत्त ननु पचामि भोरित्यत्रानन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतः स्यात् । केचित्तु अत आदिति सुवच तपरकरणसामर्थ्याद्विकारनिवृत्तिर्भवेदिति प्लुतस्यापि प्रसङ्गात्, उदात्तस्थाने उदात्त आकारः, अनुदात्तस्थानेऽनुदात्त आकार इत्यादि 'स्थानेऽन्तरतमः' इत्यनेनैव सिद्धम् । अत एव 'वृषाकप्यग्नि' इति सूत्रे वृषाकपिशब्दो मध्योदात्त एक एत्रोदात्तत्वं प्रयोजयति, अग्न्यादिषु तु 'स्थानेऽन्तरतमः' इत्येव सिद्धमिति मनोरमादावुक्तम् । ततश्च प्रयोजनाभावात्तपरकरणमनणि विध्यर्थमिति नाशङ्कनीयमेव । यदि तु 'हल्ङ्याब्भ्यः' इत्यत्र आबितिवदत आ इत्यत्रापि आ आ इति प्रश्लेषः क्रियते तदा तपरकरणं विनापीष्टसिद्धिरित्याहुः । 'प्रहासे च–' इति सूत्रस्योदाहरणमाह—**एहि मन्ये** इति । ओदन भोक्ष्ये इति त्वं मन्यस इत्यर्थः ॥—**एतं एत वे**ति । एत मन्ये ओदन भोक्ष्येथे एत मन्ये ओदनं भोक्ष्यध्वे इत्यन्वयः । भोक्ष्यावहे इति युवां मन्येथे, भोक्ष्यामह इति यूय मन्यध्वे इति क्रमेणार्थः ॥—**परोक्षे लिट्** ॥ यद्यप्यधिश्रयणादिव्यापाररूपा क्रिया सर्वा परोक्षैव । उक्त हि भाष्ये—'क्रियानामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुमिति, तथापि तदनुकूलशक्तिमतां व्यापाराविष्टाना साधनानां पारोक्ष्यमिह विवक्षितम्, तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेऽपि लिट् भवत्येव । अग्रं पपाच त्वं पेचिथ । ननु क्रियाशब्दवाच्याधिश्रयणाध:श्रयणादिव्यापाराणां युगपत्प्रत्यक्षाविषयत्वेऽपि क्रमशः प्रत्यक्षविषयत्वमस्ति, यत्र तु क्रमशोऽपि प्रत्यक्षविषयत्वं नास्ति तत्र हि पारोक्ष्यं क्रियायाः, ततश्च लिडुत्तमपुरुषो दुर्लभ इति चेत् । अत्राहुः । स्वव्यापारस्यापि वर्तमानतादशायां व्यासङ्गादिना स्वयमप्रतिसंधाने ततः कार्येणानुमितौ भवत्येव । 'बहु जगद पुरस्तात्तस्य मत्ता किलाहम्' इतिवदिति ॥—**लिट् च** ॥

---

१ कर्तरि—कर्तृग्रहणमुत्तरार्थं, भावकर्मणोस्तु यका बाधात् । अन्यथापवादविप्रतिषेधेन भावकर्मणोरपि दिवादिभ्यः श्यन् स्यात् । यत्तु पुरस्तादपवादन्यायेन शप एव बाधकः स्यात् । २ परोक्षे इति—पारोक्ष्यं च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम् । ३ भूतेति—भूतत्वं च वर्तमानध्वंसप्रतियोगिसमयवृत्तित्वम् ।

११५। लिडादेशस्तिङार्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः। तेन शबादयो न । **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।३।४।८२।** लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते । **भुवो वुग्लुङ्लिटोः ।६।४।८८।** भुवो वुगागमः स्यात् लुङ्लिटोरचि । नित्यत्वाद्वुग्गुणवृद्धी बाधते । **एकाचो द्वे प्रथमस्य ।६।१।१। अजादेर्द्वितीयस्य ।६।१।२।** इत्यधिकृत्य । **लिटि धातोरनभ्यासस्य ।६।१।८।** लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते । **पूर्वोऽभ्यासः ।६।१।४।** अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् । **हलादिः शेषः ।७।४।६०।** अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः । **ह्रस्वः ।७।४।५९।** अभ्यासस्याचो ह्रस्वः स्यात् । **भवतेरः ।७।४।७३।** भवतेरभ्यासोकारस्य अः स्यात् लिटि । **अभ्यासे चर्च ।८।४।५४।** अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः खयां चरः । तत्रापि प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतिचर इति विवेक आन्त-

---

**आर्धधातुकसंज्ञ एवे**ति । 'लङः शाकटायनस्य-' इति सूत्रादेवकारोऽनुवर्तत इति भावः ॥—**परस्मैपदानाम्**—॥ अत्र थशब्दरााकारो विधीयमानोऽन्तस्य प्राप्नोति । न चाकारस्याकारविधौ निरर्थकत्वमिति वाच्यम् । यथासंख्यसंपादनेन कृतार्थत्वात् । अत्राहुः । धातोरित्यधिकारात् 'आदेः परस्य'इति व्यञ्जनमात्रस्य कृते द्वयोः 'अतो गुणे' इति पररूपम् । यद्वा द्वयोरकारयो. पररूपेण सूत्रे निर्देशस्तथा चानेकाल्त्वात्सर्वादेशे सिद्धमिष्टमिति । ननु सुबन्तानामेव द्वन्द्वस्तत्र त्वकारद्वयकल्पनाया सवर्णदीर्घ एव स्यादिति चेत् नैवम् । आदेशाना स्थान्यर्थेनैवार्थवत्त्वात् थशब्दस्य विधीयमानमकारद्वय प्रत्येकमर्थवन्न भवतीति समुदितस्य प्रातिपदिकत्वेन 'अतो गुणे' इति पररूपस्यैव प्रवृत्तेः ॥—**भुवो वुक्**—॥ 'अचि श्नुधातु-' इति सूत्रादचीत्यनुवर्तते तदाह—**लुङ्लिटोरची**ति । अचीति किम् । अभूत् अभू' इत्यत्र वुकि सति 'लोपो व्यो ' इति लोप बाधित्वा परत्वाद्धल्ङ्यादिलोप' स्यात् । ननु हल्ङ्यादिलोपादन्तरङ्गत्वात् 'लोपो व्योः-' इति लोप एव भविष्यति । तथा च मव्यतेर्यङ्लुडन्ताल्लङि तिप्सिपोः अमामत् अमाम इत्यत्र व्योर्लोप एव माधवादिभिः स्वीकृतः । एव चाज्ग्रहण 'मादुपधाया-' इत्युत्तरार्थमनुवर्तमानमिहाप्युपरञ्जकतया वृत्तिकारादिभिर्योजित न त्वावश्यकतयेत्येव निष्कर्ष उचित इति चेद । अत्राहु' । 'भुवो वुक्-' इत्यस्याङ्गत्वाद्धद्दपेक्षत्वेन हल्ङ्यादिलोपस्येव वुकोऽपि बहिरङ्गतया असिद्धत्वे सति वलि लोपस्य प्राप्तेरेवाभावादज्ग्रहणमिहार्थमपीत्येव युक्तमिति । अय च शङ्काग्रन्थः समाधानग्रन्थश्च मनोरमाया स्थित. ॥ अत्र नव्या । मव्यतेर्यङ्लुगन्त एव नास्ति अमामदित्यादि रूप तु दूरादपास्तमेव, यकारवकारान्तानामूठभाविना यङ्लुग् नास्तीति च्छ्वोः शूड्-' इति सूत्रे भाष्ये ध्वनितम् । कैयटेन स्पष्टीकृतम् । इद च च्छ्वोरिति यत्रोद् तद्विषयक 'ज्वरत्वर-' इत्यूट्भाविनो' स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्य माधवादिसमत च । 'मव्य बन्धने' अय वान्त ऊठ्भावीति मूले वक्ष्यमाणत्वात् । तथाच तद्ग्रन्थेन सहात्रत्यमनोरमाग्रन्थो विरुध्यत इत्याहुः । यदि तु मवतेर्यङ्लुगन्तादिति मनोरमाया पठ्यते तदा तत्र पूर्वापरग्रन्थविरोधो नास्तीति दिक् ॥—**अजादेरि**ति । यदि बहुव्रीहेः षष्ठी तदा इन्द्रमात्मन इच्छति इन्द्रीयति इन्द्रीयितुमिच्छति इन्दिद्रियिषति इत्यत्र दकारस्य 'न न्द्राः-' इति द्वित्वनिषेधः स्यात्, किंतु अच्चासावादिश्चाजादिस्तस्मादिति कर्मधारयादेषा पञ्चमी तदाह—**आदिभूतादचः परस्य त्वि**ति ॥—**भूव्भूव्** इति । यद्यप्यत्र धात्ववयवत्व प्राथम्य च न सगच्छते तथापि व्यपदेशिवद्भावेन तद्बोध्यम् । नन्विह चत्वार एकाचस्तत्रावयवाश्रयः, तत्र भू ऊ ऊव् इति भूविति समुदायश्चतुर्थः, तथा चानियमेन यस्य कस्यचिद्द्वित्व स्यात । नैवम् । समुदायस्यैकाच एव द्विर्वचनस्य न्याय्यत्वात्तस्मिन्हि द्विरुच्यमाने अवयवा अपि द्विरुच्यन्त एव, वृक्षचलने सर्वावयवचलनवत् ॥—**अत्रे**ति । एकाचो द्वे इति प्रकरणे ॥—**हलादिः**—॥ अभ्यासस्येति जातिपरो निर्देशस्तेन आतनुः आटतुरित्यादौ तकारादिनिवृत्ति. सिध्यति, क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात् ॥—**भवतेरः** ॥ 'अत्र लोपोऽभ्यासस्य' इति सूत्रादभ्यासपदमनुवर्तते । अत्र प्राचोक्तम् । भवतेरिति कर्तृनिर्देशाद् भावकर्मणोर्नात्वमिति, व्याख्यातं च तत्पात्रेण कर्त्रर्थयो. श्तिप्शपोर्निर्देशादित्यर्थ इति । तन्न । धातुनिर्देशमात्रे श्तिपो विधानात् शपश्च विकरणत्वेनानर्थकत्वात् कर्त्रर्थके परे विहितस्यापि तस्य श्तिपः शित्त्वसामर्थ्यादेवेह प्रवृत्तेः, अन्यथा त्वदुक्तरीत्या 'उपसर्गात्सुनोतिसुवति-' इत्यादीनामपि भावकर्मणोरप्रवृत्तौ सर्वोपप्लव एव स्यात्, अपसिद्धान्तश्चायमिति स्पष्टमेवाकरदशाम् । प्रयुञ्जते च कर्मण्यप्यकारं कवयः । 'तस्यातपत्र विभरावभूवे विभावरीभिर्निभरांबभूविरे' इत्यादि । एतच्च प्रक्रियाप्रमादग्रन्थदूषणं मनोरमायां स्थितम् । अत्र नव्याः । श्तिप. शित्त्वसामर्थ्यादेवेह शपः प्रवृत्तिरिति यदुक्त तन्न । पिबति ग्लायतीरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् । एव च 'उपसर्गात्सुनोतिसुवति,-' 'भवतेरः', 'ध्यायतेः सप्रसारण च' इत्यादिनिर्देशादकर्तृवाचिन्यपि परे शबादय इत्येव व्याख्येयम् । अन्यथा 'इक्श्तिपौ' इति सूत्रे वक्ष्यमाणस्वग्रन्थेन सह विरोधापत्तेः । के-

---

१ आदिभूतादिति—अनेनं चाधिकारसूत्रे द्वितीयस्येति न कर्तव्यमिति ध्वनितम् । २ अन्ये इत्यादि—इतरनिवृत्तिपूर्वकावस्थानस्य शेषशब्दार्थत्वादिदमुक्तम् ।

रतस्मात्। ॥ असिद्धवदत्राभात् ।६।४।२२। इत ऊर्ध्वमा पादपरिसमाप्तेराभीयम्। समानाश्रये तस्मिन्कर्तव्ये तद्-सिद्धं स्यात्। इति वुकोऽसिद्धत्वादुवङि प्राप्ते। * वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ। बभूव। बभूवतुः।

---

चित्तु शित्वात्तिपः सार्वधातुकत्वेन भवतिरित्यादौ 'आर्धधातुकस्येड् वलादेः' इतीडागमनिवृत्त्या, ब्रवीतिरित्यत्र 'ब्रुव ईट्' इतीडागमप्रवृत्त्या च शित्त्वं चरितार्थमिति व्याचख्युः तच्चिन्त्यम्। 'तितुत्र–' इत्यनेनेण्णिषेधादार्धधातुकत्वेऽपि क्षत्यभावात्। 'ब्रुव ईट्' इत्यत्र ब्रुवः परस्य हलादेः पित ईडागम इत्येतन्मात्रस्य मूले व्याख्याततत्वात्सार्वधातुकस्येति विशेषणाभावेऽपि क्षत्यभावात्। न च हलादेः पित्प्रत्ययस्य सार्वधातुकस्येति विशेषणाभावे ब्रुवो लिटि वच्यादेशे सिपस्थलि उवक्थेत्यत्रातिप्रसङ्गः स्यादिति वाच्यम्। थलोऽत्र पित्त्वाभावात्। न च स्थानिवद्भावेन पित्त्वं, श्नः शानचः शित्वेन लिङ्गेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति तन्निषेधात्। तस्मात्पूर्वोक्तरीत्यैव शितप. शित्वसामर्थ्यादकर्तर्यपि शपः प्रवृत्तिरिति ग्रन्थो निराकर्तव्य इत्याहुः। तदपरे न क्षमन्ते। थलः पित्त्वाभावे हि 'असयोगाल्लिट् कित्' इति कित्वात् 'वचिस्वपि–' इति संप्रसारणे सत्युवचिथ उवक्थेति न सिद्ध्येत् किं तु ऊचिथ ऊक्थेति स्यात्। तस्मात्स्थानिवत्त्वेन थलः कित्वेऽभ्युपगते उवक्थेत्यादावतिप्रसङ्गवारणाय पितः सार्वधातुकस्येडागम इति व्याख्यातव्यमेव। तथाच ब्रवीतिरित्यत्र ईडागमप्रवृत्त्या शित्वं चरितार्थमिति कैश्चिद्यदुक्त तदपि सम्यगेवेति ॥—**असिद्धवदत्राभात्** ॥ वत्करणं प्रतिपत्तिलाघवाय, अन्यथा सिद्धे असिद्ध इति प्रयुज्यमानमनुपपन्नं सत्सामर्थ्यादसिद्धवदिति कल्पनीय स्यात्। यथा राजभिन्ने पुरोहिते राजायमिति प्रयोगो राजवदिति कथचित्कल्पयति, राजवदय पुरोहित इत्युक्ते तु लघुप्रतिपत्तिर्भवति, तथा चागत्या 'षत्वतुकोरसिद्धः' इत्यत्रासिद्धवदिति कल्प्यते। 'असयोगाल्लिट् कित्' इत्यत्रापि किद्वदित्यगत्यैव कल्प्यत इति ज्ञेयम्। आ भादित्यभिविधावाङ्। भाधिकारमभिव्याप्येत्यर्थः। अधिकारश्चायम्। अत्रग्रहण समानाश्रयप्रतिपत्त्यर्थम्। आभाद्ग्रहणं विषयनिर्देशार्थम्। भाधिकारस्यावधित्वाभस्तु 'अङ्गस्य', 'प्रत्ययः', 'परश्च' इत्यादाविव व्याख्यानेनैव सिध्यति। एव चानुदात्तोपदेशेत्यत्रास्योपस्थाने सत्ययमर्थो भवति। एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे स चासिद्धो भवति। अत्र झलादिकिदाश्रित्यैव यदाभीयं प्राप्नोति तस्मिन्कर्तव्य इति जहि जहि 'अतो हेः' इति लुग् न भवति, अनुनासिकलोपस्य हिशब्दाश्रितत्वेनासिद्धत्वात्। नन्वस्याधिकारत्वे यत्र यत्रोपस्थान तत एवारभ्य यदाभीय तस्मिन्नेव कर्तव्येऽसिद्धत्वं स्यान्न तु ततः पूर्वस्मिन्नपि। ततश्च 'घ्वसोः–' इत्येत्वं पूर्वस्मिन्नपि धित्वे कर्तव्ये नासिद्ध स्यादिति चेत्। न। भवेदय दोषः शब्दाधिकारे। अर्थाधिकारस्त्वयं। ततश्चेह 'श्नान्नलोपः' इत्यवधिर्निर्णीतः स एव प्रतिसूत्रमुपतिष्ठते, तदेतत् सकलमभिप्रेत्याह—**इत ऊर्ध्वमिति**। अत्रापि शाब्दासिद्धत्वमेवाकरे स्थितम्। तेन एधि शाधीत्यत्र स्थानिनो झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्निबन्धनं 'हुझल्भ्यो हेर्धिः' इति धित्व सिद्ध्यति। प्राचोक्तकार्यासिद्धत्वपक्षे तु न सिद्ध्यति। देवदत्तस्य हन्तरि हते देवदत्तस्य जीवनं नेति न्यायेन एत्वविधिना झल्बुद्धौ निवर्तितायां पश्चादेत्वबुद्धिनिवर्तनेऽपि धित्वकार्यस्याप्रवृत्तेरित्याहुः। समानाश्रये इति किम्। पपुषः। चिच्युषः। लुलुवुषः। इह पाधातोश्चिनो लूनश्च परस्य वसोर्यत्सप्रसारण तत् 'आतो लोप इटि च' इत्यालोपे 'एरनेकाचः–' इति यण्युवङि च कर्तव्ये नासिद्धम्। आलोपादीनि हि क्वसौ, संप्रसारणं तु विभक्ताविति व्याश्रयत्वात्। न च बहिरङ्गत्वेनासिद्धतास्त्विति शङ्क्यम्। 'नाजानन्तर्ये' इति निषेधात्। 'वाह ऊठ्' सूत्रस्थबहिरङ्गपरिभाषाया अप्याभीयत्वेनाल्लोपादिषु कर्तव्येष्वसिद्धत्वाच्च। न चोक्तपरिभाषाया आल्लोपादीनां च समानाश्रयत्वं नेति शङ्क्यम्। वसोः संप्रसारणे कृते ह्यजाद्याश्रयेणाल्लोपादीनि प्रवर्तन्ते तेषु कर्तव्येषु सप्रसारणस्यासिद्धत्वाय तद्विषये बहिरङ्गपरिभाषापि प्रवर्तत इति तेषां तत्सत्वादिति दिक्। विषयत्वाभार्थमाभाद्ग्रहणं किम्। आभीय प्रत्येवाभीयमसिद्धं नान्यं प्रतीति यथा स्यादित्येवमर्थम्। तेन अभाजि राग इत्यत्र 'भञ्जेश्च चिणि', 'रञ्जेश्च', 'घञि च भावकरणयोः' इति नलोपे कृते तस्यासिद्धत्वाभावात् 'अत उपधायाः' इति वृद्धिर्भवतीत्याहुः ॥ स्यादेतत्। देभतुः देभुरित्यत्र 'श्रन्थिग्रन्थिदम्भि–' इति वक्ष्यमाणवचनेन लिटः कित्वान्नलोपेऽप्येत्वाभ्यासलोपौ न स्यातां, नलोपस्यासिद्धत्वात्। अत्राहुः। 'श्नसोरल्लोपः' इति तपरकरणाल्लिङ्गादाभीयासिद्धत्वमनित्यमिति नास्त्यत्र दोषः। तपरकरणं हि आस्तामित्यत्राडागमस्य लोपो माभूदित्येतदर्थम्। यद्याडागमः श्नसोरल्लोपं प्रत्याभीयत्वेनासिद्धः स्यात्तर्हि किं तेन तपरकरणेन। एवं च 'दम्भेश्च' इति वक्ष्यमाणं नापूर्वं वार्तिकं किं त्वनित्यत्वबललभ्यमेवेति ॥—**वुक** इति। 'भुवो वुक्' शास्त्रस्य। एवमग्रेऽपि। युट उदाहरणं तु दिदीपे ॥—**बभूवेति**। अत्र प्राचा 'इन्धिभवतिभ्यां च' इति सूत्रं पितोऽपि लिटः कित्वार्थमिति व्याख्याय 'अचोऽञ्णिति' इति वृद्धिप्राप्तौ 'क्ङिति च' इति निषेध इत्युक्तं तदुपेक्षितम्। इग्लक्षणयोरेव गुणवृद्ध्योर्निषेध इति सिद्धान्ताद्। अन्यथा इक्स्थानिकयोर्निषेधे लैगवायन इत्यत्रापि वृद्धिर्न स्यात्। न चात्र कित्वसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेध इति वाच्यम्। थलि उत्तमे णलि च गुणनिषेधेन कित्वस्य चरितार्थत्वात्। सूत्रं तु प्रत्याख्यातमेवाकरे। तथाच वार्तिकम् 'इन्धेश्छ

---

१ बभूवेति—अभ्यासविकारेषु बाध्यबाधकभावाभावेन हलादिःशषात्वयोरत्र समावेशो बोध्यः।

**बभूवुः । ▪ आर्धधातुकस्येड्वलादेः ।७।२।३५। वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम । ▪ अनद्यतने लुट् ।३।३।१५। भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् । ▪ स्यतासी लृलुटोः ।३।१।३३। लृ इति लृङ्लृटोर्ग्रहणम् । धातोः स्यतासी एतौ स्तो लृलुटोः परतः । शबाद्यपवादः । ▪ आर्धधातुकं शेषः ।३।४।११४। तिङ्शिद्भ्योऽन्यो धातोरितिविहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ।**

न्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्' इति । यद्यपीह शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्ति, तथापि कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यता स्वीक्रियत इति पक्षोऽप्यस्मादेव वार्तिकादवगम्यते, तेन रधेर्णिचि परामप्युपधावृद्धिं बाधित्वा नित्यत्वाद् 'रधिजभोरचि' इति नुमि कृते रन्धयतीति सिद्धम् । नन्वेवमपि सयोगात्परस्य लिटः कित्वार्थमिन्धेश्चेत्यंशोऽपेक्षित एव । अन्यथा 'समीधे दस्यु हन्तमम्' इत्यत्रेन्धेर्नलोपो न स्यात् । मैवम् । 'छन्दस्युभयथा' इति सूत्रेण हि सार्वधातुकसज्ञा आर्धधातुकसज्ञा च विधीयते, तेन 'सार्वधातुकमपित्' इति लिटो ङित्वे स्यादेव नलोप इति वार्तिकाशयात् । अत्र नव्याः । बभूवेत्यत्र 'द्विर्वचनेऽचि' इत्यजादेशस्य निषेधाद्गुणवृद्धिभ्यां प्रागेव वुकः प्रवृत्त्या भुवो वुको नित्यत्वादिति वार्तिके नित्यत्वादिति हेतूपन्यासो निष्प्रयोजनः, शब्दान्तरस्य प्राप्त्या वुको नित्यत्व नास्तीत्याशङ्क्य कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यत्व स्वीक्रियत इत्यादिसमाधानमपि व्यर्थमेवेत्याक्षिप्य स्वयमेव समादधुः । षाष्ठद्वित्वप्रकरणान्ते हि वार्तिककृता पूर्वविप्रतिषेधः पठ्यते 'द्विर्वचन यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः' इति । तथाच 'द्विर्वचनेऽचि' इति सूत्र नारम्भणीयमित्याशयेन नित्यत्वादिति हेतुरुपन्यस्त इति । 'द्विर्वचनेऽचि' इति सूत्रेणाजादेशस्य स्थानिवद्भावो विधीयत इति पक्षे तु द्वित्वात्प्रागेव वृद्ध्याद्यादेशस्य स्वीकृतत्वादादेशानन्तरमपि वुकः प्रवृत्तिरस्तीति भुवो वुको नित्यत्वादित्यादिग्रन्थः सम्यगेव । न चैवमपि नामधातुषु त्वापयति मापयतीत्यत्र मपर्यन्तस्य त्वमौ पररूपात्पूर्वं नित्यत्वाट्टिलोप इति ग्रन्थः कथ सगच्छेतेति वाच्यम् । 'प्रकृत्यैकाच्' इति सूत्र भाष्ये प्रत्याख्यातमित्याशयेन तत्प्रवृत्ते. । अत एव त्वादयति मादयतीत्येव न्याय्यमिति तत्रोक्तमिति दिक् ॥—**आर्धधातुकस्येड्वलादेः** ॥ 'नेड्वशिकृति' इत्यत इडित्यनुवर्तमाने पुनरिड्ग्रहण निषेधसवद्धस्येटो निवृत्त्यर्थम् । वस्तुतस्तु 'समर्थाना प्रथमाद्वा' इत्यनुवृत्तस्य पदत्रयस्य मध्ये 'प्राग्दिशः–' इत्यनन्तर 'समर्थाना प्रथमात्' इति निवृत्त 'वा' इति त्वनुवर्तत इति व्याख्यानमिव नेति निवृत्तम्, इडित्यनुवर्तत इति व्याख्यातुं शक्यत्वादिड्ग्रहण त्यक्तु शक्य, तथापि स्पष्टप्रतिपत्त्यर्थं तत्स्वीकृतमिति बोध्यम् । आर्धधातुकस्येति किम् । आस्ते, शेते । वलादेः किम् । च्यवनीयम् । ननु 'रुदादिभ्य सार्वधातुके' इत्यनेन सार्वधातुकस्य यदीट् भवति तर्हि रुदादिभ्य एवेति नियमादास्ते शेत इत्यत्र न भवेदित्यार्धधातुकस्येति व्यर्थम् । न च रुदादिभ्यः सार्वधातुक एवेति विपरीतनियमाद्रोदितेत्यत्र न स्यात्, आस्ते शेत इत्यत्र तु स्यादिति शङ्क्यम् । 'रुदविदमुषग्रहिस्वपिप्रच्छ. सश्च' इति क्त्वासनोः कित्वस्य वैयर्थ्यप्रसङ्गात् त्वदुक्तरीत्या रुदादे क्त्वासनोरिडागमाभावेन 'न क्त्वा सेट्' इति निषेधाप्रवृत्त्या क्त्वाप्रत्यये औपदेशिककित्वस्य मुख्यत्वात् । 'हलन्ताच्च' इति झलादिसन कित्वाच्च । तस्माद्विपरीतनियमाप्रसङ्गेनार्धधातुकग्रहण व्यर्थमेव । ननु तद्ग्रहणाभावे वलादेरित्यस्याङ्गस्येति यद्विशेषण तद्विशेष्य स्यात्, ततश्च अडाविवेडागमोऽप्यङ्गस्य स्यात् । मैवम् । कृतेऽप्यार्धधातुकग्रहणे वलाद्यार्धधातुकस्य यदङ्ग तस्येडागम इति व्याख्यानापत्त्योक्तदोषतादवस्थ्यादकृतेऽपि तद्ग्रहणेऽङ्गस्य यो वलादिरङ्गनिमित्त तस्येडिति व्याख्यानादिष्टसिद्धेश्च । तस्मादुभयथापि व्याख्याने शरणीकर्तव्ये 'आर्धधातुकस्य' इत्यस्य त्याग एव श्रेयान् । नन्वेव केशवः, अह्ना, वृक्षत्वमित्यत्रेट् स्यात् 'ऋत इद्धातो.' इत्यतो धातोरित्यनुवर्तनादधातोः परस्य न भवतीति परिहारसभवेऽपि लूभ्या पूभ्यामित्यत्र दुर्वार एवेडागमो विहितविशेषणेनाप्यय वारयितुमशक्यः' क्विबन्ता. धातुत्व न जहतीति पूभ्या पभिरित्यत्र भ्यामादेर्धातोर्विहितत्वानपायात् । किं च जुगुप्सते इत्यादौ 'गुप्तिज्किद्भ्य.' इति धातोर्विहितस्य सन इट् दुर्वारः स्यात् । न चेह धातोः परत्र विहितस्य वलादेरिति व्याख्यानलाभाय धातोरिति पञ्चम्यन्तमपेक्षित तच्च दुर्लभम् । 'ऋत इद्धातो.' इत्यत्र धातोरिति षष्ठ्यन्तत्वात्, तथा च वृक्षत्वमित्यादावपीडागमप्रसङ्ग इति वाच्यम् । शब्दाधिकारपक्षे स्वरितत्वेन तत्सदृशशब्दोऽनुमीयत इति पञ्चम्यन्तलाभात् । अस्तु वा षष्ठ्यन्तत्वं, विहितत्व षष्ठ्यर्थ इति व्याख्यायामिष्टसिद्धे. । तस्माज्जुगुप्सत इत्यादावतिप्रसङ्गवारणार्थमार्धधातुकस्येति ग्रहणम् । केचित्तु धातोरित्यावर्त्य धातोरित्युच्चार्य विहितो यः प्रत्ययस्तस्येडिति यदि व्याख्यायेत तदा लूभ्या जुगुप्सत इत्यत्रातिप्रसङ्गाभावादार्धधातुकस्येति व्यर्थमित्याहुः ॥—**बभूविथेति** । न चात्र 'श्र्युकः किति' इतीण्निषेधे वुगागमोऽपि न स्यादिति शङ्क्यम् । क्रादिनियमादिटः प्रवृत्तेः ॥—**अनद्यतने**—॥ अतीतायाः रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन सहितो दिवसोऽद्यतन इति 'कालोपसर्जने च तुल्यम्' इत्यत्र स्थितम् ॥—**आर्धधातुकम्**—॥—**धातोरिति** । 'धातोरेकाचः' इत्यतः धातोरित्यनुवर्तमाने पुनर्धातोरित्यधिकारसूत्रारम्भादिद लभ्यते । एतच्च तत्रैव मनोरमायां स्पष्टम् ॥

१ लृलुटोरिति—यद्यपि लृशब्देन लृङ्लृटोर्ग्रहणं, तथापीह यथासख्य प्रवर्तते । वाचकशब्दसाम्यात् ।

**लुटः प्रथमस्य डारौरसः** ।२।४।८५। डा रौ रस एते क्रमात्स्युः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः[1] । **पुगन्तलघूपधस्य च** ।७।३।८६। पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात्सार्वधातुकार्धधातुकयोः । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । तेन भिनत्तीत्यादावनेकव्यवहितस्येको न गुणः । भवित् आ । अत्रेको गुणे प्राप्ते । **दीधीवेवीटाम्** ।१।१।६। दीधीवेव्योरिटश्च[2] गुणवृद्धी न स्तः । भविता । **तासस्त्योर्लोपः** । ७।४।५०। तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे । **रि च** ।७।४।५१। रादौ प्रत्यये प्राग्वत् । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः । **लृट् शेषे च** ।३।३। १३। भविष्यदर्थाद्धातोर्लृट् स्यात्क्रियार्थायां क्रियायामसत्यां सत्यां च । स्यः इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः । **लोट् च** ।३।३।१६२। विध्यादिष्वर्थेषु धातोर्लोट् स्यात् । **आशिषि लिङ्लोटौ** ।३।३।१७३। **एरुः** ।३।४।८६। लोट इकारस्य उः स्यात् । भवतु । **तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्** ।७।१।३५। आशिषि तुह्योस्तातङ् वा स्यात् । अनेकाल्त्वात्सर्वादेशः । यद्यपि ङिच्चेत्ययमपवादस्तथाप्यनन्यार्थङित्त्वेष्वनङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थतया संभवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण बाध्यते । इहोत्सर्गापवादयोरपि समबलत्वात् । भवतात् । **लोटो लङ्वत्** ।३।४।८५। लोटो लङ इव कार्यं स्यात् । तेन तामादयः सलोपश्च । तथा हि । **तस्थस्थमिपां तान्तन्तामः** ।३।४।१०१। ङितश्चतुर्णां तामादयः क्रमात्स्युः । **नित्यं ङितः** ।३।४।९९। सकारा-

---

धातोरिति विहितेति किम् । लूभ्यां जुगुप्सते ॥—**अनेकव्यवहितस्ये**ति । सार्वधातुकादिकमिको विशेषणं न लङ्गस्येति भावः ॥—**तासस्त्योः**–॥ 'सस्यार्धधातुके' इत्यतः सीत्यनुवर्तते, अङ्गाक्षिप्तप्रत्ययस्य सीत्यनेन विशेषणात् । 'यस्मिन्विधिः' इति तदादिविधिस्तादिदमाह—**सादावि**ति । एव रादावित्यत्राप्यूह्यम् ॥—**प्राग्वदि**ति । तासेर्लोप इत्यर्थः । अस्तिस्तु नेह संबध्यते, ततो रादिप्रत्ययस्यासभवात् ॥—**लृट् शेषे च** ॥ 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति प्रागुक्तं ततोन्यः शेष इत्याह—**असत्यामि**ति । हरदत्तस्त्वाह । अस्वरितत्वादेव क्रियार्थायां क्रियायामिति नानुवर्तते । एवं च शेषे चेति सुत्यजमिति । तच्चिन्त्यम् । शयिष्यत इति स्थीयत इत्यादौ तुमुना लृटो बाधापत्तेः । क्तल्युट्तुमुन्खलर्थेषु वा सरूपविधेरभावात् । अत्र च ज्ञापक 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इत्यत्र लोटा बाधा माभूदिति पुनः कृत्यविधिरित्यादि कृदन्ते वक्ष्यति । इदमपि ज्ञापकमित्यन्यदेतत् । यत्तु प्राचा भविष्यतीति व्रजतीत्युदाहृतं तदापाततः । तुमुन्विषयेऽपि लृट् भवति तुमुना लृण्न बाध्यत इत्येतत्प्रतिपादनाय तस्यानुपयोगात् । न हि भविष्यतीत्यत्र कर्तरि तुमुनः प्राप्तिरस्ति, भावे हि सः । समानकर्तृकेष्ववेति च वक्ष्यते । लृडित्येतावत्सूत्रकरणेऽपि भविष्यतीति व्रजतीत्यय सिद्ध्यत्येवेत्यास्ता तावत् ॥—**लोट् च** ॥ 'विधिनिमन्त्रणा–' इत्याद्यनुवर्तते तदाह—**विध्यादिष्वि**ति ॥—**आशिषि लिङ्लोटौ** ॥ ननु विध्यादिसूत्र एव संप्रश्नप्रार्थनाशीःष्वित्युच्यता किमनेन पृथक्सूत्रकरणेनेति चेद् । अत्राहुः । इह हि 'क्तिच्क्तौ च–' इत्युत्तरसूत्रार्थमाशिषीति तावदावश्यकम् । लिङ्लोटावपीहैव विधेयौ । विध्यादिसूत्रे आशीर्ग्रहणे हि 'स्मे लोट्' इत्यादिना स्वविषये परत्वाद्बाधः स्यात् । सिद्धान्ते तु परत्वादेष विधिः 'स्मे लोट्' इत्यादेर्बाधक इति महान्विशेष इति ॥—**तुह्योस्तातङ्**–॥ यद्यपि तिह्योस्तातङिति वक्तुं शक्य तथापि लाघवाभावादतिप्रसङ्गवारणाय हिशब्दसाहचर्याश्रयणे लोट इत्यनुवर्तमाने वा गौरवाच्च तुह्योरित्युक्तम् ॥—**लोटो लङ्वत्** ॥ लोट इत्युपमेये षष्ठीदर्शनादुपमानादपि षष्ठ्यन्तादेव वतिस्तदाह—**तेने**ति । अडाटौ तु नातिदिश्येते । न हि तौ लङः क्रियेते किं लङ्गस्येति भावः । नन्वेवमपि यान्तु वान्तु इत्यत्र 'लङः शाकटायनस्य–' इति जुस् स्यात्, जुह्वतु विदन्त्वित्यत्र तु 'सिजभ्यस्त–' इति जुस्स्यात् । अत्राहुः । 'विदो लटो वा' इति वाग्रहणमिहानुवर्त्य व्यवस्थितविभाषाश्रयणान्न जुस् । यद्वा 'लङः शाकटायनस्य–' इति सूत्रे 'नित्य ङितः' इत्यतो ङित इत्यनुवृत्त्यैवेष्टसिद्धेर्लङ्ग्रहणमतिरिच्यते, लुङि सिचा लृङि स्यप्रत्ययेन च व्यवधानात्, लिङि तु 'झेर्जुस्' इति जुसो विहितत्वाच्च । ङित इत्यस्य लङ्येव पर्यवसानात्ततो लङ्ग्रहण विभज्यते । नियमश्चायं 'लङेव यो लङ् तस्यैव झेर्जुस् न तु लङ्वद्भावेन यो लङ् तस्येत्यतो नोक्तदोष इति' । तच्चिन्त्यम् । अदुरित्यत्र 'सिजभ्यस्त–' इति नित्यजुस बाधित्वा परत्वाच्छाकटायनस्येति विकल्पप्रसङ्गात् । तस्माल्लङ्ग्रहणं शाकटायनसूत्रे कर्तव्यमेव, न तु तदतिरिच्यते । न च 'आत' इति सूत्रेणादुरित्यत्र नित्य जुस्स्यादिति वाच्यम् । तस्य नियमार्थत्वेन विध्यर्थत्वायोगाद्, अन्यथा अभूवन्नित्यत्र 'सिजभ्यस्त–' इति जुस् दुर्वार एव स्यादिति नव्याः । यदि त्विह 'आतः' इति सूत्रमावर्त्य विध्यर्थता नियमार्थता च व्याख्यायेत तदा तूक्तदोषाभावाद्यद्वेति समाधानमपि सम्यगेव, शाकटायनस्येति जुसो वैकल्पिकत्वात्, तदभावपक्षे पुनःप्रसक्तविज्ञानात् । 'सिजभ्यस्त–' इति जुसि स्वीकृते तु सुतरां सम्यगेव, परं तु जुह्वतु विदन्त्वित्यत्र जुस्वारणाय व्यवस्थितविभाषा त्वाश्रयणीयैवेति दिक् ॥—**सकारान्तस्ये**ति । ङित्लकारोत्तमसकार-

---

१ ङित्त्वेति—सर्वादेशत्वं तु अनुबन्धान्तरेणापि सिद्धम् इति भावः । २ इटश्चेति—धातुसाहचर्येऽपि तस्यानित्यत्वादागमस्यैवेटो ग्रहणं, व्याख्यानात् ।

**न्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । अलोऽन्त्यस्येति सस्य लोपः । भवताम् । भवन्तु । सेर्ह्यपिच्च ।३।४।८७। लोटः सेर्हिः स्यात्सोऽपिच्च । अतो हेः ।६।४।१०५। अतः परस्य हेर्लुक् स्यात् । भव । भवतात् । भवतम् । भवत । मेर्निः ।३।४।८९। लोटो मेर्निः स्यात् । आडुत्तमस्य पिच्च ।३।४।९२। लोडुत्तमस्याडागमः स्यात्स पिच्च । हिन्योरुत्वं न । इकारोच्चारणसामर्थ्यात् । भवानि । भवाव । भवाम । अनद्यतने लङ् ।३।२।१११। अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् । लुङ्लङ्लृङ्क्ष्वडुदात्तः ।६।४।७१। एषु परेष्वङ्गस्याडागमः स्यात्स चोदात्तः । इतश्च ।३।४।१००। ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः स्यात् । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम । विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।३।३।१६१। एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात् । विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं नियोगकरणम् । आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । प्रवर्तनायां लिङ् इत्येव सुवचम् । चतुर्णां पृथगुपादानं प्रपञ्चार्थम् । या-**

स्येति प्राचो व्याख्यानं त्वयुक्तं भूयासमित्यादावतिप्रसङ्गः स्यादिति भावः ॥—**ङिदुत्तमस्ये**ति । ङित्कारीत्तमस्येत्यर्थः । तेन भवावः भवाम इत्यादौ नातिप्रसङ्गः ॥—**सोऽपिच्चे**ति । एवं च पित्त्वेनानुदात्तस्य सिपः स्थाने यो हिरादेशः स तु 'स्थानेऽन्तरतमः' इत्यनुदात्तो न भवति 'जहि शत्रून्' 'स्तुहि श्रुतम्' ॥—**भवतादि**ति । लुगपेक्षया परत्वाद्धेस्तातङ्, अन्तरङ्गमेव लुक् बाधते न तु परमिति भावः ॥—**स पिच्चे**ति । स इति तच्छब्देन यस्याऽडागमः स परामृश्यत इत्याहुः ॥—**इतश्च** ॥ 'इतश्च लोपः–' इति सूत्रात्परस्मैपदेष्वित्यनुवृत्तं षष्ठ्येकवचनान्ततया विपरिणमय्य इत इत्यनेन विशेष्यते तदाह—**परस्मैपदमिकारान्तं यत्तस्ये**ति । प्राचा तु परस्मैपदेष्विकारस्य लोप इत्युक्तम् । तदयुक्तम् । भवेदित्यादावधतिव्याप्तेः । ननु 'अतो येयः' इत्यत्र ईय दीर्घादिरस्तु, एवं च नोक्तातिव्याप्तिः 'इतश्च' इति तपरकरणात् । अत एव अबोभवीदित्यादावपि न दोष इति चेत् मैवम् । रुदेर्लङि अरुदितामित्यादौ दोषप्राप्त्यादिति मनोरमायां स्थितम् ॥—**विधिनिमन्त्रणा**—॥—**द्योत्येषु वाच्येषु वे**ति । पक्षद्वयस्याप्याकरे स्थितत्वादिति भावः । अत्राद्ये त्वित्थमुपपत्तिः—विध्यादीनां प्रत्ययार्थत्वमनुचितम् । तथाहि सति कर्त्रादीनामर्थानां लकारान्तरे चरितार्थानां विध्यादयोऽर्था बाधकाः स्युः, तथा च लिङः कर्त्राद्यभिधायकत्वं न स्यात्, ततश्च द्विवचनबहुवचने न स्याताम्, शबादयश्च न स्युः, पुरुषव्यवस्था च न स्यात्, अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिध्येदिति । द्वितीये त्वित्थमुपपत्तिः—विध्यादिभिः कर्त्रादयो न बाध्यन्ते परस्परविरोधाभावात् । तथा च 'लः कर्मणि–' इत्यत्र ल इति बहुवचननिर्देशेन सर्वलकाराणां ग्रहणाल्लिङादीनामपि कर्त्रादयोऽर्था भवेयुः । किं च कर्त्रादयोऽपि निरवकाशाः । न च लडादयोऽवकाशा । न्यायसाम्येन विध्यादिवद्वर्तमानत्वभूतत्वादेरपि तत्तल्लकारवाच्यत्वात् । न चैवं पचतीत्यादौ धात्वर्थं प्रति वर्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यात् । तथा चैककर्तृका वर्तमाना पचिक्रियेत्यादिशाब्दबोधवर्णनमयुक्तं स्यादिति वाच्यम् । प्रत्ययार्थतया विशेष्यत्वापादनस्य कर्त्रादावपि तुल्यत्वात् । ननु प्रत्ययार्थः प्रधानं प्रकृत्यर्थो विशेषणमित्यौत्सर्गिकमाख्याते त्यज्यते 'भावप्रधानमाख्यातम्' इति सिद्धान्तानुरोधादिति चेत्तर्हि तत एव नोक्तदोष इति दिक् ॥—**प्रवर्तनायामि**ति । प्रवर्तना त्वस्य विध्यादिषु चतुर्ष्वनुस्यूतत्वादिति भावः । अत्र वदन्ति । प्रवृत्तिः प्रवर्तना चोभयमपि व्यापारः, स च धात्वर्थः । फलव्यापारयोर्धातुवाच्यत्वस्वीकारात् । तदाश्रयस्तु लकारार्थः, व्यापारत्वेन प्रवर्तनाया धात्वर्थत्वेऽपि प्रवृत्तत्वात् । प्रवर्तना तु लिङ्त्वादिरूपेण लकारवान्या द्योत्या चेति पक्षद्वयम् । प्रवृत्तिः पुरुषनिष्ठा आर्थी भावनेत्युच्यते । प्रवर्तना तु विधिः, मां प्रेरयतीत्यनुभवाल्लिङादिनिष्ठा शाब्दी भावनेत्युच्यते । वेद एव लिङादिनिष्ठा वक्तुरभावात् । लोके तु पुरुषनिष्ठेति केचिदभ्युपगच्छन्ति । प्रवर्तनाया अस्याः पुरुषप्रवृत्तिरेव भाव्या । पुरुषप्रवृत्तेस्तु यजनदानादि भाव्यम् । एवं च धातूपात्तव्यापारस्य विषयविषयिभावेन द्वेधान्वयं तात्पर्यग्राहका लिङादय इति द्योतकतापक्ष एव ज्यायान् । लिङ्त्वादिरूपेण लकारस्य प्रवर्तनायां शक्त्यन्तरकल्पने गौरवात् । एवं णिच्यपि । इयांस्तु विशेषः । णिच्प्रत्ययद्योत्या प्रेरणा सर्वस्मिन्नपि मते पुरुषादिनिष्ठैव न तु णिज्निष्ठा, लिङादिद्योत्या तु मतभेदेन लिङ्निष्ठा वा पुरुषनिष्ठा वेति ॥ स्यादेतत् । लिङादिद्योत्या प्रवर्तना लोके पुरुषनिष्ठेति मते पाचयत्योदनं देवदत्तेन यज्ञदत्त इतिवत् पचेदोदनं देवदत्तेन यज्ञदत्त इति प्रयोगः स्यात् । प्रवृत्त्याश्रयः प्रवर्तनाश्रयश्च लकारेणोक्त इति कर्तरि तृतीया न भवति किं तु प्रथमैवेति चेन् । तर्हि ओदनं देवदत्तो यज्ञदत्तः पचेदिति प्रयोगः स्यात् । अत्राहुः । पुरुषनिष्ठेति मते प्रवर्तना लिङादिवाच्यैव, न तु धातुवाच्या । तथा च लिङुपात्तव्यापाराश्रयस्य पुरुषस्य कर्तृत्वाभावान्नोक्तदोषः । देवदत्तेन पाचयति

१ भवतादिति—लुगपेक्षया परत्वाद्धेस्तातङ्, अन्तरङ्गानपीति न्यायस्तु ज्ञापकसिद्धत्वादनित्य इति शब्देन्दुशेखरे । २ अनद्यतने इति—अयं बहुव्रीहिः, तेन अद्यश्वो वा भुङ्क्ष्महि इत्यत्र लुङेव । ३ संप्रश्नेति—संप्रश्नः सम्प्रधारणं—विचारः, 'तद्वा कर्तव्यमेतद्वा' इत्यादिरूपः ।

**यासुट् परस्मैपदेषूदात्तो ङिच्च** ।३।४।१०३। लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च । किद्वचनेऽस्मिं-श्वते क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इति । आदेशस्य शानचः शित्त्वमपीह किङ्कम् । **सुट् तिथोः** ।३।४।१०७। लिङस्तकारथकारयोः सुट् स्यात् । सुटा यासुट् न बाध्यते । लिङो यासुट् तकारथकारयोः सुडिति विषयभेदात् । **लिङः सलोपोऽनन्त्यस्य** ।७।२।७९। सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति सकारद्वयस्यापि निवृत्तिः । सुटः श्रवणं त्वाशीर्लिङि । स्फुटतरं तु तत्राप्यात्मनेपदे । **अतो येयः** ।७।२।८०। अतः परस्य सार्वधातुकावयवस्य याङ्त्यस्य इय् स्यात् । गुण. । यलोपः । भवेत् । सार्वधातुके किम् । चिकीर्ष्यात् । मध्येऽपवादन्यायेन हि अतो लोप एव बाध्येत । भवेदित्यादौ नु परत्वाद्दीर्घः स्यात् । भवेताम् । **झेर्जुस्** ।३।४।१०८। लिङो झेर्जुस् स्यात् । ज इत् । **उस्यपदान्तात्** ।६।१।९६। अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् । इति प्राप्ते । परत्वान्नित्यत्वाच्चातो येय इति प्राप्तः । यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यं तथापि यास इत्येतस्य इय् इति व्याख्येयम् । एवं च सलोपस्यापवाद इय् । अतो येय इत्यत्र तु सन्धिरार्षः । भवेयुः । भवेः भवेतम् । भवेत । भवेयम् । भवेव । भवेम । **लिङाशिषि** ।३।४।११६। आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् । **किदाशिषि** ।३।४।१०४। आशिषि लिङो यासुट् कित्स्यात् । स्कोरिति सलोपः । **क्ङिति च** ।१।१।५। गित्किन्ङिन्निमित्ते इग्लक्षणे

---

यज्ञदत्त इत्यादौ तु णिजन्तस्य धातुत्वाद्धातूपात्तव्यापाराश्रयत्वेन प्रयोज्यप्रयोजकयोरुभयोरपि कर्तृत्वात्कारणाऽनुक्ते प्रयोज्ये कर्तरि तृतीयेति वैषम्यमिति कौस्तुभादौ 'हेतुमति च' इति सूत्रे प्रयोजकव्यापारस्य णिज् वाच्यत्वपक्ष एव मुख्यत्वेन स्थापितः। व्यापारद्वयस्यापि णिच्प्रकृत्यर्थत्वे त्वभीत्यस्य णिजर्थविशेषकत्वे अभिसावयति प्रकृत्यर्थविशेषकत्वे तु 'उपसर्गात्सुनोति–' इति षत्वमभिषावयतीति सिद्धान्तस्य स्वारस्यभङ्गापत्तेरिति । तथा च 'गतिबुद्धि–' इति सूत्रेऽणिकर्तेति विशेषणमव्यावर्तकं स्यात् । तन्मते प्रयोजकव्यापारस्यापि णिच्प्रकृत्यर्थत्वे प्रयोजकस्याप्यणौ कर्तृत्वादिति दिक् । प्रार्थनं याच्ञा ॥—**क्वचिदि**ति । ज्ञापनफलं तु वक्ष्यमाणेत्यादौ टिदुगित्लक्षणङीबभाव इति 'टिड्ढा–' इति सूत्र एवोक्तम् । रुयादित्यादौ 'उतो वृद्धिर्लुकि हलि' इति न प्रवर्तते, भाष्ये 'पिच्च ङिन्न, ङिच्च पिन्न' इति व्याख्यानाद्विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधादित्यदादौ वक्ष्यमाणतया यासुटो ङित्त्व न ज्ञापकमित्यपरितोषादाह—**श्नः शानचः शित्वमि**ति ॥—**सुट् तिथोः** ॥ तकारादिकार उच्चारणार्थः ॥—**लिङः सलोपो**—॥ 'रुदादिभ्यः' इति सूत्रात्सार्वधातुक इत्यनुवर्तते, सेति लुप्तषष्ठीकमनन्त्यस्येत्यनेन विशेष्यते तदाह—**सार्वधातुकलिङोऽनन्त्यस्ये**ति ।—**सकारद्वयस्यापी**ति । अवयवावयवोऽपि समुदायं प्रत्यवयव इत्याश्रयणात्सुटोऽपि लिङ्भक्तत्वादिति भावः ॥—**आशीर्लिङी**ति । भूयास्तामित्यादौ । ननु सुटि कृते 'अनचि च' इति द्वित्वस्यासिद्धत्वात्ततः प्रागेव 'स्कोः–' इति यासुटः सकारो लुप्यते, झलि परे यः सयोगस्तदादित्वात् । तथा चैकसकारक रूपं तुल्यम् । सुडभावे यासुटः सकारस्य द्वित्वे कृते तु सुटि 'स्कोः–' इति सलोपात्सुट एव सकारस्य द्वित्वे च द्विसकारकमपि रूप तुल्यमेवेति सुटो विधान व्यर्थमित्यपरितोषादाह—**स्फुटतरं त्वि**ति । एधिषीष्टेत्यादाविति भावः ॥—**मध्येऽपवादन्यायेने**ति । 'रुदादिभ्यः–' इति सूत्रात्सार्वधातुक इत्यनुवृत्तावय न्यायः प्रवर्तत इति भावः ॥—**अन्तरङ्गत्वादि**ति। प्रत्ययमात्रापेक्षत्वाद्, 'अतो येयः' इत्यस्य त्वाङ्गत्वात्प्रकृतिप्रत्ययोभयसापेक्षत्वेन बहिरङ्गत्वादिति भावः । नन्वपदान्ताकारस्य जुसश्चाश्रयणात्पररूपस्याप्युभयसापेक्षत्वमस्त्येवेति चेत् । मैवम् । अनेकाश्रयणेऽपि प्रत्ययमात्राश्रयतया प्रकृतेरनाश्रयणात् ॥—**व्याख्येयमि**ति । एतच्च विप्रतिषेधसूत्रे भाष्ये स्पष्टम् ॥—**आर्धधातुकसंज्ञ** इति । 'लङः शाकटायनस्यैव' इत्यत एवकारोऽनुवर्तनीयः । अन्यथा एकसंज्ञाधिकारबहिर्भूतत्वेन सार्वधातुकसंज्ञापि स्यात्ततश्च पक्षे शबादिः स्यात् ॥—**किदाशिषि** ॥ ङित्त्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे किद्वचनमिज्यादित्यादौ सप्रसारणार्थं जागर्यादित्यत्र गुणार्थं च । जागर्तेर्गुणो हि ङिति पर्युदस्यते, ङित्वं चेह विशेषविहितेन कित्त्वेन बाध्यते ॥—**स लोप** इति । झल्परसयोगादित्वेन यासुटः सस्य लोपः, सुटस्तु पदान्तसंयोगादित्वेनेति भाव इति मनोरमायां स्थित तदसंबद्धमिति मत्वात्र निष्कर्षमाहुः । भूयास्ता भूयास्तं भूयास्तेत्यत्र झल्परसयोगादित्वेन यासुटः सस्य लोपः, भूयादित्यत्र सुट इव यासुटोऽपि सस्य लोपः पदान्तसयोगादित्वेनैव । अन्यथा झल्परसयोगादिलोपस्यासिद्धत्वात्सयोगान्तलोप एव स्यात् । मृष्ट इत्यादौ सावकाशस्य झल्परसयोगादिलोपस्य संयोगान्तलोपाबाधकत्वादिति ॥—**ङिन्निमित्ते** इति । गिति किति ङिति परे इको गुणवृद्धी नस्त इति न व्याख्यात, छिन्नं भिन्नमित्यत्र लघूपधगुणस्यानिषेधप्रसङ्गात् । नचारम्भसामर्थ्यं शङ्क्यम् । चितं स्तुत मित्यादावव्यवहिते किति चरितार्थत्वादिति भावः । अन्ये तु क्ङितीति प्रत्ययग्रहणात् प्रत्ययेन संनिधापितस्याङ्गस्य क्ङिति पर इति व्याख्याने तु छिन्नम्भिन्नमित्यादि सिध्यत्येव । न चैवं भवावः भवाम इत्यादावतिप्रसङ्ग इति वाच्यम् । अन्तरङ्गगुणं प्रति बहिरङ्गनिषेधस्याप्रवृत्तेरित्याहुः । क्ङिति सूत्रे चर्त्वेन गकारोऽपि प्रश्लिष्यत इत्याशयेन गित्किन्ङिन्निमित्त इत्युक्तम् । गिति किं 'ग्लाजिस्थश्च ग्स्नुः' जिष्णुः । किति त्वस्मिन्स्थाक्नुरित्यत्र 'घुमास्था–' इतीत्वं प्रसज्येत । न च ग्स्नोर्गित्त्वे भूष्णुरित्यत्रेण्निषेधो न स्यात् 'ग्लाजिस्थश्च' इति चकाराद्भुवश्च

---

१ द्वयस्यापीति—पुरा प्रवृत्त्या लक्ष्यभेदात् पुनः प्रवृत्तिरिति भावः ।

गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।
**लुङ्** ।३।२।११०। भूतार्थवृत्तेर्धातोर्लुङ् स्यात् । **माङि लुङ्** ।३।३।१७५। सर्वलकारापवादः । **स्मोत्तरे लङ् च** ।३।३।१७६। स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् । **च्लि लुङि** ।३।१।४३। शबाद्यपवादः । **च्लेः सिच्** ।३।१।४४। इचावितौ । **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** ।२।४।७७। एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते । **भूसुवोस्तिङि** ।७।३।८८। भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात् । **अस्तिसिचोऽपृक्ते** ।७।३।९६। सिच अस् चेति समाहारद्वन्द्वः । सिच्छब्दस्य सौत्रं भत्वम् । अस्तीत्यव्ययेन

गुरुर्भवतीति स्वीकारादिति वाच्यम् । 'श्र्युकः किति' इत्यत्रापि चर्त्वेन गकार प्रश्लिष्य गित्कितोरिण्न स्यादिति व्याख्यानात् । न चैवं चर्त्वस्यासिद्धतया 'श्र्युकः–' इत्यत्र विसर्जनीयो न लभ्यत इति 'हशि च' इत्युत्वमेव स्यादिति वाच्यम् । सौत्रत्वात् । 'न भु ने' इत्यत्र नेति योगविभागेनासिद्धत्वाभावाद्वेष्टसिद्धेः । वामनस्तु 'ग्लाजिस्थ–' इति सूत्रे स्था आ इति प्रश्लेषात्स्थास्नुरित्यत्र 'घुमास्था–' इतीत्व न भविष्यतीति गकारप्रश्लेषाभावान्न 'श्र्युकः किति–' इत्यत्र चर्त्वस्यासिद्धत्वाभावसमर्थनक्लेश इत्याह ॥—**इग्लक्षण** इति । इक इत्येव विहिते इत्यर्थः । इग्लक्षणे किम् । लैगवायनः । लिगोर्नडादित्वात्फक् । इहादिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वेऽपि न निषेधः । न चेक इत्युक्तेऽपि 'किति च' इत्यारम्भसामर्थ्यादत्र निषेधो न भवेदिति शङ्क्यम् । नाडायनादौ तस्य चरितार्थत्वात् ॥—**भूयादि**ति । इह स्कोरिति लोपस्यासिद्धत्वात्तकारस्य संयोगान्तलोपः प्राप्तः पदान्तसंयोगादिलोपेनानवकाशेन बाध्यते । नन्वेवमपि सयोगादिलोपस्य 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वाद्धलङ्यादिलोपः स्यात्, पदान्ते संयोगादिलोपस्य भृट् भृडित्यादौ सावकाशत्वादिति चेद् । अत्राहुः । सुट्यासुटोः सतोस्ताभ्या विशिष्टस्यैव प्रत्ययत्वेनापृक्तत्वाभावाद्, हलन्तायाः प्रकृतेः परत्वाभावाच्चोक्तदोषशङ्कैव नास्तीति ॥—**सर्वलकारापवाद** इति । मास्मिवत्यादौ निषेधार्थकमाशब्दोऽन्य एव न तु माङित्याहुः ॥—**च्लि लुङि** ॥ इकार उच्चारणार्थ इति मनोरमा । न च 'मन्त्रे घस–' इति सूत्रे लेरिति स्थाने ल इत्युच्यमाने च्लिभिन्नस्यापि लकारस्य लुक् स्यादिति शङ्क्यम् । 'गातिस्था–' इति सूत्रात्सिच इत्यनुवर्त्य सिच्स्थानिनः स्थान्यर्हस्य लस्य लुगिति व्याख्यायामतिप्रसङ्गाभावाद्विभाषानुवृत्तेर्लुको वैकल्पिकतया छन्दसि रूपान्तरस्यानापाद्यतया च सिजनुवृत्तिं विनापि नातिप्रसङ्ग इत्याहुः ॥—**शबाद्यपवाद** इति । आदिशब्दात्तत्तद्गणप्रयुक्तानां श्यन्नादीनां ग्रहणम् ॥—**इचावितावि**ति ॥ तत्रेदित्वे प्रयोजनममस्तेत्यत्र 'अनिदिताम्' इत्युपधालोपाभावः ॥—**गातिस्था**—॥ इह व्यवहितोऽपि लुगनुवर्तते न तु श्लुः, व्याख्यानादित्याशयेनाह—**लुगि**ति ॥—**गापावि**ति । गातीति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्विकरण इणादेशो गृह्यते, 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' इति परिभाषया पिबतिर्गृह्यते न तु पातिरित्यर्थः ॥—**भूसुवोः**—॥ 'षूङ् प्राणिगर्भविमोचने' सुवतिसूयत्योस्तु न ग्रहणं तिङो विकरणेन व्यवधानात् ॥—**अस्तिसिचोऽपृक्ते** ॥ अत्र प्राञ्चः । अस्तिश्च सिच्चेति समाहारद्वन्द्वे अस्तिसिच् तस्मादिति विग्रहं मत्वा अस्तेः सिचश्च परस्येति व्याचख्युः । तच्चिन्त्यम् । तत्र समासान्तस्यानित्यत्वाश्रयेण 'द्वन्द्वाच्चुदषहान्तात्–' इति प्राप्तस्य टचः परिहारेऽपि 'समुद्राभ्राद्घः' इति निर्देशात् 'अल्पाच्तरम्' इत्येतदनित्यमित्याश्रित्य सिच्छब्दस्य परत्वसमर्थनेऽपि 'अस्तेर्भूः' इति भूभावस्य स्थानिवत्त्वेनास्तितया तत्रापृक्तस्य हल ईडागमस्य दुर्वारत्वात्, तथा गातिस्थाघुपाभूभ्य' सिचो लुक्यपि स्थानिवद्भावेन सिचः परत्वानपायादगादस्थादभूदित्यादावतिप्रसङ्गाच्च । तदेतद्ध्वनयन्व्याचष्टे—**सिच्चास् चे**ति ॥—**सौत्रं भत्वमि**ति । तेनात्र कुत्वजश्त्वे न भवत इति भावः ॥—**विद्यमानादि**ति । सिचोऽस्तेश्च विद्यमानविशेषणेन लुप्तात्सिचः कृतभूभावादस्तेश्च नेति भावः । भाष्यकारास्त्वाहुः । 'अस्तिसिचोऽपृक्ते' इति द्विसकारकोऽय निर्देश इति । अत्र माधवः । अस् स् इति समुदायस्याधातुतया 'इक्श्तिपौ धातुनिर्देशे' इति श्तिप्प्रत्ययो न स्यादिति । अत्र वदन्ति । द्विसकारकनिर्देशे श्तिप् न स्यादिति यदुक्तं तद्भ्रमसोक्तिमात्रम् । इत्थ हि भाष्याशयः । सिच इत्यस्यानन्तर सकारः प्रश्लिष्यते न तु श्तिपः प्राक् । अत एव 'सिचोऽपृक्ते' इति द्विसकारकोऽयं निर्देश इत्युक्त भाष्ये । अन्यथा अस्तीति निर्देशो द्विसकारक इत्येव ब्रूयात्, एवं च सान्तादस्तेः सान्तात्सिच इति चार्थो निर्बाध एव । द्वितीयश्च सकारो लुप्यते 'सयोगान्तस्य पदान्तस्य' इति व्याख्यानाद्, व्यपदेशिवद्भावेन पदान्तत्व द्वितीयसकारस्य । न च संयोगान्तलोपस्यासिद्धत्वान् 'अतो रोः–' इत्युत्वं दुर्लभमिति वाच्यम् । 'संयोगान्तलोपो रोरुत्वे' इति वार्तिकेनासिद्धत्वनिषेधात्, सयोगान्त यत्पदमिति व्याख्याने तु नेह सयोगान्तलोपः, किं तु सकारद्वयस्यापि रुत्वे कृते 'अतो रोः–' इत्यनेनैक एवोकारो भविष्यति, विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद्विवक्षितत्वात् । न च स्थानिभेदेन उकारद्वये सत्यपि न क्षतिः, सवर्णदीर्घानन्तरमाद्गुणे सति समीहितरूपसिद्धेरिति वाच्यम् । एकपदाश्रयत्वेनान्तरङ्गत्वाद्गुणे पश्चादवादेशप्रवृत्त्या 'सिचोऽपृक्ते' इति रूपासिद्धेः, तस्मादुक्तरीत्या एक एवोकार इति स्वीकर्तव्यम् । अत एव विधेयगतैकत्वस्य विवक्षितत्वाद् 'एकः पूर्वपरयोः' इत्यत्रैकग्रहणं भाष्यादौ प्रत्याख्यातम् । नन्वति परे यो रुः स स्वतः परो न भवति अतः परस्तु अति पूर्वो न भवतीति रुद्वयस्थाने कथमुकारः स्यात् । मैवम् । 'रोः' इति जातिपरनिर्देशेनात

१ भूसुवोरिति—अत्र पितीत्यस्यानुवर्तनाननुवर्तनयोः फलदोषयोरभावेन तदनुक्तिः ।

**कर्मधारयः । ततः पञ्चम्याः सौत्रो लुक् । विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात् । इतीण्नेह । सिचो लुप्तत्वात् । अभूत् । हलः किम् । ऐधिषि । अपृक्तस्येति किम् । ऐधिष्ट । अभूताम् । सिजभ्यस्तविदिभ्यश्च ।३।४।१०९। सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् स्यात् । इति प्राप्ते । आतः ।३।४।११०। सिज्लुक्याऽदन्तादेव झेर्जुस् स्यात् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम । न माङ्योगे ।६।४।७४। अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् भूद्वा । लिङ्निमित्ते लृङ्क्रियातिपत्तौ ।३।३।१३९। हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । ते प्राग्धातोः ।१।४।८०। ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः । आनि लोट् ।८।४।१६। उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात । प्रभवाणि । * दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः । दुःस्थितिः । दुर्भवानि । * अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ॥ अन्तर्धा । अन्तर्धिः । अन्तर्भवाणि । शेषे विभाषाऽकखादावषान्त उपदेशे ।८।४।१८। उपदेशे कादिखादिपान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात् । प्रणिभवति । प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥ इति । सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात् ।**

परत्वस्य पूर्वत्वस्य च सम्भवात् । न चैवमपि परत्वात् 'हशि च' इति प्रथमस्यैव रोरु स्यादिति वाच्यम् । रुत्वस्यासिद्धतया हश्परत्वाभावात् । न चाश्रयासिद्धत्वमिति वाच्यम् । स्थान्यंशे तथात्वेऽपि निमित्तभूतहशंशे तदसम्भवात् । यद्यपि सत्वजातेरेकत्वादुभयोरपि एक एव रुर्भवतीति व्याख्यया नायं क्लेशस्तथापि रुत्वविधौ पदस्येत्यनुवर्तनादेकपदान्तत्वं न सम्भवति, द्वितीयसकारस्य पृथक्पदत्वादित्याहुः ॥—**अपृक्तस्य हल** इति । अपृक्तसार्वधातुकस्येति प्राचोक्त त्वयुक्तम् । ऐधिषि इत्यादावतिव्याप्ते:, सार्वधातुकग्रहणव्यावर्त्यालाभाच्च ॥—**आतः** ॥ सिज्ग्रहणमनुवर्तते 'झेर्जुस्' इति च । सिच आकाराच्च परस्य झेर्जुस् । तत्र प्रत्ययलक्षणेन सिच परत्वमाकारात्तु श्रुत्या । एवं स्थिते फलितमाह—**सिज्लुकीति** । 'गातिस्था–' इति सूत्रेणेत्यर्थः । 'सिजभ्यस्त–' इति पूर्वसूत्रेणैवादन्तादपि झेः सिद्धे जुसि नियमार्थोऽयमित्याह—**आदन्तादेवेति**[1]॥ —**हेतुहेतुमद्भावादीति** । अत्र केचित् । आदिशब्देनाशंसावचनं गृह्यत इति व्याख्याय आशंसावचने लिङो यन्निमित्तं तत्रापि क्रियातिपत्तौ भविष्यति । लृङ्, गुरुश्चेदायास्यत् । आशंसा, अहमध्येष्ये इत्याद्युदाहरन्ति । अन्ये तु 'भविष्यति मर्यादा–' इत्यादिना भविष्यतीत्युपक्रम्य यो यो लिङ् विहितस्तन्निमित्त एव क्रियातिपत्तौ लृङ् भवति नान्यत्रेत्याहुः ॥—**लिङ्निमित्तमिति** । 'हेतुहेतुमतोर्लिङ्' 'इच्छार्थेषु लिङ्लोटौ' इत्यादिलकारार्थप्रक्रियाया स्फुटीभविष्यति॥—**अनिष्पत्ताविति** । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यदिति तत्रैवोदाहरिष्यति ॥—**प्रागेवेति** । न परतः, नापि व्यवहिता इत्यर्थः । अत एव 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति सूत्रितम् ॥—**आनि लोट्** ॥ नि लोडित्येव वक्तव्ये आनिग्रहणमागमशास्त्रस्यानित्यता ज्ञापयितुम् । तेन 'सागरं तर्तुकामस्य जप्त्वा स्तोत्रम्' इत्यादि सिद्ध्यति । लोड्ग्रहणं स्पष्टप्रतिपत्त्यर्थम् । न च प्रकृष्टा वपा येषां तानि प्रवपानि मांसानीत्यत्राप्यनेन नित्यं णत्वं स्यादिति वाच्यम् । उपसर्गग्रहणादर्थवद्ग्रहणाच्चास्याप्रवृत्तेः । प्रातिपदिकान्तेति वैकल्पिकणत्वं त्विष्यत एव ॥—**दुरः षत्वेति** ॥ 'दुरः परस्य णत्वं नेति केचित्' इति प्राचोक्तं त्वयुक्तम् । एवं हि सिद्धान्ते णत्वं स्यात् तच्चाकरविरुद्धमिति भावः ॥—**अन्तर्धेति** । 'आतश्चोपसर्गे' इत्यङ् टाप्, ॥—**अन्तर्धिरिति** । 'उपसर्गे: घोः किः' अन्तःशब्दस्याङ्विधावुपसर्गत्वमुपसंख्यायते तत्तु प्रकृतानुपयोगादुपेक्षितम् । भिदादिपाठेन प्रज्ञाश्रद्धेति निपातनेन वा गतार्थत्वाच्च ॥—**शेषे विभाषा—**॥ 'नेर्गदनद–' इति सूत्रोक्तापेक्षया शेष इत्याह—**गदनदादेरन्यस्मिन्निति** । उपदेशे किम् । प्रनिचकार प्रनिचखादेत्यत्रापि निषेधो यथा स्यात् । अषान्तेति किम् । प्रनिपिनष्टि । उपदेशग्रहणात् प्रनिपेक्ष्यति । चक्षिङः ख्याञ् । प्रनिचक्शे इत्यत्रापि निषेधः । शेषग्रहणं स्पष्टार्थम् । णत्वशास्त्रे संहितायामित्यधिकारात् संहितायामविवक्षितायां णत्वाभावः संहितायां तु णत्वमिति विकल्पसिद्धेः किमनेन विभाषाग्रहणेनेत्याशङ्का न कार्येत्याह—**इहोपसर्गाणामित्यादि** । एकपद इत्यनेनैव सिद्धे समासग्रहणं गोबलीवर्दन्यायेनेति बोध्यम्[2] ॥—**वाक्ये त्विति** । संहिता विवक्षाधीना न त्वत्र नित्येत्यर्थः ॥—**उपलक्षणमिति** । एतच्च सत्ताद्यर्थनिर्देशं कृतवतो भीमसेनस्यापि सम्मतमित्यत्र 'कुर्द खुर्द गुर्द गुद क्रीडायामेव' इत्येवकारो ज्ञापकः । 'सेधतेर्गतौ' इति सूत्रे गतावित्येतदपि 'षिध गत्याम्' इत्याद्यर्थनिर्देशस्योपलक्षणत्व एव घटते नान्यथेति दिक् ॥—**उत्पद्यत इत्याद्यर्थादिति** । एवं च उपसर्गं विना-

---

१ आदन्तादेवेति—विपरीतनियमस्तु न, व्याख्यानात् । २ एकपदे इति—एकपदशब्देन अखण्डं पदं गृह्यते, अखण्डत्वं च पदत्वाभाववदुत्तरखण्डत्वम् । अत एव समासग्रहणं चरितार्थम् । अत एव अग्रे अग्रे इत्यादौ पदद्विर्वचनेऽपि संहिताऽनित्यैव ॥

उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । संभवति । अनुभवति । अभिभवति । उद्भवति । परिभवतीत्यादौ विलक्षणार्थावगतेः । उक्तं च । उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥१॥ इति । **एध वृद्धौ । कत्थन्ताः षट्त्रिंशदनुदात्तेतः । टित आत्मनेपदानां टेरे ।३।४।७९।** टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । एधते । **सार्वधातुकमपित् ।१।२।४।** अपित्सार्वधातुकं ङिद्वत्स्यात् । **आतो ङितः ।७।२।८१।** अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते । **थासः से ।३।४।८०।** टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । एधावहे । एधामहे । **इजादेश्च गुरुमतोऽनृच्छः ।३।१।३६।** इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि । आमो मकारस्य नेत्त्वम् । आस्कासोराम्विधानाज्ज्ञापकात् । **आमः ।२।४।८१।** आमः परस्य लुक् स्यात् । **कृञ्चानुप्रयुज्यते लिटि ।३।१।४०।** आमन्तात्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । आम्प्रत्ययवत्कृञोऽनुप्रयोगस्येति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते । तेन कृभ्वस्तियोग इत्यतः कृञो द्वितीयेति ञकारेण प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः । तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः । संपदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते । कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते । **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ।१।३।६३।** आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहु-

प्युत्पत्त्यर्थप्रतीतेरुद्भवतीत्यादौ प्रयुज्यमानोऽप्युपसर्गो द्योतक एव न तु वाचक इति भावः ॥—**उपसर्गेण धात्वर्थ** इति । अत एवाऽमरेणाप्युक्तम्—'स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः । अनुलापो मुहुर्भाषा विलापः परिदेवनम् ॥ विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः । सुप्रलापः सुवचनमपलापस्तु निह्नवः' इति ॥—**टित आत्मने—**॥ ननु शानचोऽपि लस्थानिकात्मनेपदत्वात्पचमानो यजमान इत्यत्र टेरेत्वेन भवितव्यमिति चेत् । अत्राहुः । टित्कृताकारादिभिरात्मनेपदानां विशेषणान्न दोषः । एवं च 'टितस्तङां टेरे' इत्येव वक्तुमुचितमिति ॥—**थासः से** ॥ एकारोच्चारणं ज्ञापनार्थमिति 'लिट-स्तझयोः—' इत्यत्र स्फुटीभविष्यति ॥—**अतो गुणे** इति । इट एत्वे कृते आद्गुणं बाधित्वा वृद्धौ प्राप्तायामनेन पररूपमित्यर्थः ॥—**इजादेश्च—**॥ 'धातोरेकाचः—' इत्यतो धातुग्रहणं 'कास्प्रत्ययात्—' इत्यत आम् लिटीति चाऽनुवर्तत इत्याह—**इजादिर्यो धातुरि**त्यादि । गुरुमान् किम् । इयेष । ऋच्छेस्त्वानर्च्छ ॥—**आमः** ॥ 'लक्षणप्रतिपदोक्त'परिभाषया 'प्रत्ययग्रहण'परिभाषया च नेह । आम । आमतुः ॥—**परस्य लुगि**ति । 'मन्त्रे घस—' इति सूत्रादेरित्यनुवर्त्य 'लेर्लुक्' इति काशिकादौ व्याख्यातं तदत्रोपेक्षितं व्यावर्त्याभावात् । निदाघपवादत्वात्कावस्थायामेवाय लुक् । तेन आमन्तस्याऽतिङन्तत्वाद्देवदत्तादिपदात्परत्वेऽपि 'तिङ्ङतिङः' इति न निघातः । आमन्तात्परस्य निघातश्च तिङन्तस्येत्यर्थः । न चातिङन्तत्वे पदत्वाभावादामन्तात्परस्य निघातो न सिध्यतीति शङ्क्यम् । लिटः क्त्वात्प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वे सोरुत्पत्तावामन्तस्याव्ययत्वात्सुपो लुक्यपि प्रत्ययलक्षणेन सुबन्ततया पदत्वात् ॥—**कृञ्चानुप्रयुज्यते—**॥ कथं तर्हि 'तं पातयां प्रथममास पपात पश्चात्' । 'प्रभ्रंशयां यो नहुषं चकार' इति । प्रमाद एवायम् । न च विपरीतप्रयोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यात्पश्चात्प्रयोगो व्यवहितोऽपि न दुष्यतीति वाच्यम्, विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चेति वार्तिकविरोधात् ॥—**अन्यस्यापी**ति । यदीह कृञ्शब्देन एक एव धातुर्गृह्येत तदा धात्वन्तरस्य प्राप्त्यभावात् 'आम्प्रत्ययवद्—' इति सूत्रेऽनुप्रयुज्यमानस्य कृञ इति विशेषणं व्यर्थं स्यादिति भावः । न चात्र 'कृञ् च—' इति चकारेणैवानुप्रयोगोऽन्यस्यापीति ज्ञायत इति शङ्क्यम् । धातोराम् स्यात् । अनुप्रयुज्यते च लिट्परः कृञ् इत्यर्थसमर्पकतया तस्योपक्षीणत्वात् ॥—**अभेदान्वय** इति । सामान्यविशेषयोरभेदान्वयो लोकसिद्ध इति भावः । एवं च एधाञ्चक्रे एधाम्बभूव इत्यादौ एककर्तृकभूतानद्यतनपरोक्षा वृद्ध्यभिन्ना क्रियेति तुल्यो बोधः । ननु करोतिः सकर्मकः भवतिस्त्वकर्मक इति कथमिह तुल्यतेति चेत् । अत्राहुः । यदा हि करोतिरुत्पादनार्थकः स्वातन्त्र्येण प्रयुज्यते घटं चक्रे राज्यं चकारेति तदा नियमेन सकर्मकत्वम् । यदा तु क्रियान्तरसमानाधिकरणः करोतिः प्रयुज्यते जुहवाञ्चकारेत्यादौ तदा यत्समानाधिकरणः करोतिस्तस्य सकर्मकत्वाकर्मकत्वाभ्यां स्वयमपि तथाभावं भजते । एवं भ्वस्त्योरप्याम्प्रकृतिसामानाधिकरण्येन क्वचित्सकर्मकत्वं बोध्यम् । अत एवानुप्रयुज्यमानाद्भवतेः सकर्मकत्वात्कर्मणि लिट् । तथा च माघः—'तस्यानपत्रं बिभरांबभूवे' इति । श्रीहर्षश्च 'तपर्तुपूर्तावपि मेदसा भरा विभावरीभिर्बिभराम्बभूविरे' इति । अत्रेदमवधेयम् । जुहाव जुहवाञ्चकार जुहवाम्बभूव इत्यादौ केवलो होमो गम्यते इतरत्र तु होमरूपा क्रियेति बोधः । फले तु न कश्चिद्विशेषः, घटमानय द्रव्यं घटमानयेत्यत्र यथा । एवं चाम्प्रकृत्यर्थगतिकारकसंख्याविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति ॥—**अनन्विते**ति । सम्पदर्थस्याम्प्रकृत्यर्थस्य चाभेदान्वयो न संभवति उभयोरपि विशेषरूपत्वादिति भावः ॥—**आम्प्रत्ययवत्** ॥ आम्प्रत्ययान्तस्यात्मनेप-

१ उपसर्गास्त्विति—तुना उपसर्गाणां द्योतकत्वमेव, निपातानां द्योतकत्वं वाचकत्वं चेति ध्वनितम् । २ ज्ञापकादिति—ननु मित्त्वादन्त्यादचः परत्वसामर्थ्यादमजातविरोधन्यायेनात्र सवर्णदीर्घबाधोऽस्त्विति चेन्मैवम्, प्रधानसवर्णदीर्घबाधापेक्षया ह्रस्वबाधस्यौचित्यात् । ३ अनन्वितार्थत्वादिति—संपदेर्हि सिद्धवस्तुनो योग्यरूपान्तरापत्तिरूपार्थकत्वात् इति भावः ।

भीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् । इह पूर्ववदित्यनुवर्त्य वाक्यभेदेन संबध्यते । पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति । तेन कर्तृगेऽपि फले इन्दांचकारेत्यादौ न तङ् । **लिटस्तझयोरेशिरेच्** ।३।४।८१। लिडादेशयोस्तझयोरेश् इरेच् एतौ स्तः । एकारोच्चारणं ज्ञापकं, तङादेशानां टेरेत्वं नेति । तेन डारौरसां न । कृ ए इति स्थिते । **असंयोगाल्लिट्कित्** ।१।२।५। असंयोगात्परोऽपित्लिट्कित्स्यात् । क्ङिति चेति निषेधात्सार्वधातुकार्धधातुकयोरिति गुणो न । द्वित्वात्परत्वाद्यणि प्राप्ते । **द्विर्वचनेऽचि** ।१।१।५९। द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद्द्वित्वे कर्तव्ये । **उरत्** ।७।४।६६। अभ्यासऋवर्णस्य अत्स्यात्प्रत्यये परे । रपरत्वम् ॥ हलादिः शेषः । प्रत्यये किम् । वव्रश्च । **कुहोश्चुः** ।७।४।६२। अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात् । एधांचक्रे । एधांचक्राते । एधांचक्रिरे । **एकाच उपदेशेऽनुदात्तात्** ।७।२।१०। उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य

---

पदाभावादाह—**अतङ्गुण इति** ॥—**आम्प्रकृत्या तुल्यमनुप्रयुज्यमानादिति** । तृतीयान्ताद्वतिः । अनुप्रयोगस्येत्यत्र कर्मणि घञिति भावः ॥ 'अनुदात्तङित–' इत्यतोऽनुवर्तनादाह—**आत्मनेपदं स्यादिति** । एवमप्राप्तस्य विधानेऽपि प्राप्तस्य निवारणमनेनैव सूत्रेण न संभवतीत्यत आह—**वाक्यभेदेनेति** । अत्र च प्रमाणमाम्प्रत्ययवदिति वचनमेव । अन्यथा पूर्ववदित्यनुवृत्त्यैवानुप्रयोगस्य कृञः आमः पूर्वेण तुल्यमित्यर्थलाभादिष्टसिद्धेः किं तेन आम्प्रत्ययवदित्यनेन ॥—**लिटस्तझयोः**—॥ एशिति शकारकरणमकारविशिष्टकारस्यादेशत्वाय ॥—**असंयोगात्**—॥ असंयोगादिति किम् । ममन्थे । अत्र नलोपो न ॥—**द्विर्वचनेऽचि** ॥ अचा सामानाधिकरण्यलाभाय द्विर्वचनशब्दस्य तन्निमित्ते लक्षणा स्वीक्रियते । यद्वा । उच्यत इति वचनं द्विर्वचनं यस्मिन्नचि तद्द्विर्वचनम् । अथवा द्विर्वचनमस्मिन्नस्तीत्यर्शआद्यच् । तदेतदाह—**द्वित्वनिमित्तेऽचीति** । इह 'अचः परस्मिन्–' इत्यतोऽच इति, 'स्थानिवदादेशः–' इत्यस्मादादेश इति, 'न पदान्त–' इत्यतो नेति, चानुवर्तते तदाह—**अच आदेशो न स्यादिति** । यद्यपीह वृत्त्यादौ अजादेशः स्थानिवत्स्यादिति रूपातिदेशपक्षः स्वीकृतः, फलं चोभयत्र तुल्यं, तथाप्यादेशनिषेधपक्षोऽपि भाष्यारूढ इति स एवात्र स्वीकृतः । किं च आदेशमङ्गीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात् । 'न पदान्त–' इति निषेधानन्तरं पाठोऽप्येव सत्यनुगृहीत इति श्रेयानयं पक्षः । इष्टानुरोधेन द्विर्वचन इत्यावर्त्य कालावधारणपरतयापि व्याचष्टे—**द्वित्वे कर्तव्ये** इति । कृते तु द्वित्वे यथायथमादेशः स्यादेवेति भावः ॥ द्वित्वनिमित्ते किम् । दुद्यूषतीत्यत्र द्वित्वात्परत्वादूठि कृते यदि यणः पूर्वमेव द्वित्वं स्यात् तदा दिद्यूषतीत्यनिष्टं रूप स्यात्तन्माभूदिति द्वित्वनिमित्त इत्युक्तम् । न ह्यूठ् द्वित्वनिमित्तम् । अचीति किम् । जेघ्रीयते । देध्मीयते । शाशय्यते । इह 'ई घ्राध्मोः' इति ईकारः । 'अयङ् यि क्ङिति' इत्ययङादेशश्च निषिध्यते स माभूदिति प्राञ्चः । अन्ये त्वाहुः । अचीति व्यर्थं घ्रीय्ध्मीय्शय्य इति द्वितीयाजूबाधकस्यैकाचः कार्यितया यङो द्वित्वनिमित्तत्वाभावादिति । अचः किम् । असूषुपत् । इह 'स्वापेश्चङि' इति यत्संप्रसारणं तस्मिन्निषिद्धेऽभ्यासे उवर्णो न श्रूयेत । न च द्वित्वे कृते पुनः संप्रसारणेन स्वापेरवयवत्वाविशेषादभ्यासे तदुत्तरखण्डे च उकारश्रवण भवेदिति वाच्यम् । परस्य संप्रसारणे कृते यून इत्यत्रेव 'न संप्रसारणे–' इति पूर्वस्य यणः सप्रसारणनिषेधात् । स्यादेतत् । चक्रुरित्यत्र अच आदेशस्य निषेधाप्रवृत्त्या यण् स्यादेव । अतुसो द्वित्वनिमित्तत्वेऽप्यकारस्याऽतथात्वात् । न च 'द्विर्वचनेऽचि' इत्यस्य वैयर्थ्यम् । चक्र इत्यादौ सावकाशत्वात् । तथा चैकाच्त्वाभावात् 'लिटि धातोः–' इतीह द्वित्वं न स्यादिति चेत् । मैवम् । इह द्वित्वनिमित्तशब्देन साक्षाद्वा समुदायघटकतया वा यद्द्वित्वप्रयोजकं लक्ष्यानुरोधेन तस्य सर्वस्य ग्रहणात् । एतच्च 'ठस्येकः' इति सूत्रे कैयटे स्पष्टम् । तथाच ऊर्णोतेः सनि 'सनीवन्त–' इतीट्पक्षे 'विभाषोर्णोः' इति ङित्त्वविरहे ऊर्णुनविषतीति सिद्धम् । सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन तस्मिन्परे प्राप्तयोर्गुणावादेशयोर्द्वित्वे कर्तव्ये निषेधात् । अत एवाहुस्तद्भावभावितामात्रेणेह निमित्तत्वमिति । एवं च द्वित्वनिमित्तघटकतया सन इडागमोऽस्तु, अकारश्च द्वित्वनिमित्तमिति स्थितम् । नन्वेवम् ऋधातोः सनि 'स्मिपूङ्रञ्ज्वशां सनि' इति इटि कृते इस्शब्दनिमित्तकस्य गुणस्य 'द्विर्वचनेऽचि' इति निषेधे 'अजादेर्द्वितीयस्य' इति द्वित्वप्रसङ्गादरिरिषतीति न सिध्येत् । रिस्शब्दस्य द्वित्वे तु यद्यपि सिद्ध्यति तथापि गुणनिषेधे रिस्शब्द एव दुर्लभ इति चेद् । अत्राहुः । गुणे रपरे कृते रिस्शब्दस्यैव द्वित्वम् । नच द्वित्वनिमित्ते ह्यचि गुणस्य निषेधः । इस्शब्दस्तु नेह निमित्तं कार्यित्वात् । न हि कार्यी निमित्ततयाऽऽश्रीयते । 'स्थण्डिलाच्छयितरि व्रते' इति ज्ञापकात् । अन्यथा शीङो ङित्त्वेन 'क्ङिति च–' इति गुणनिषेधाच्छयितरीति रूपस्यासिध्यापत्तेः । न च क्ङिति ङिति परे गुणवृद्धी नेति व्याख्यायामुक्तार्थे शयितरीति न ज्ञापकमिति वाच्यम् । तद्व्याख्यायां छिन्न भिन्नमित्यत्र गुणनिषेधो न स्यादित्यादिदोषस्य 'क्ङिति च' इति सूत्र एवोपपादितत्वात् । न चैव कार्यिणो निमित्तत्वानाश्रयणे सन्नन्तस्य कार्यित्वात्सनि परतः प्राप्तयोर्गुणावादेशयोरनिषेधादूर्णुनविषतीत्यपि न स्यादिति वाच्यम् । मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वलाभात् । ऊर्णोतेर्हि नुशब्द एव द्वित्वरूपं कार्य-

---

१ न तङिति—इदमुपलक्षण कानचोऽपि । २ वव्रश्चेति—अन्यथा उरत्त्वस्यापरनिमित्तत्वात्स्थानिवत्त्वाभावेन न संप्रसारणे इति निषेधानापत्तिः ।

यकादेरार्धधातुकस्येट् न स्यात् । उपदेशे इत्युभयान्वयि । एकाच इति किम् । यङ्लुग्व्यावृत्तिर्यथा स्यात् । स्मरन्ति हि ॥ श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥ इति । एतच्चैवैकाज्ग्रहणेन ज्ञाप्यते । अच इत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते । तेन वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः । आदेशोपदेशेऽनेकाच्त्वात् । अनुदात्ताश्चानुपदमेव संग्रहीष्यन्ते । एधांचकृषे । एधांचकाथे । **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** ।८।३।७८। इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् । एधांचकृढ्वे । एधांचक्रे । एधांचकृवहे । एधांचकृमहे । एधांबभूव । अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न । अन्यथा हि कृञ् चानुप्रयुज्यत इति कृभ्वित्येव ब्रूयात् । **अत आदेः** ।७।४।७०। अभ्यासस्यादे-

मनुभवति न तु सन् । अरिरिषतीत्यत्र तु रिस्शब्दः कार्यभागिति वैषम्यादिति ॥—**उभयान्वयीति** । मध्ये पाठाद्देहलीदीपन्यायेन पूर्वोत्तराभ्यां संबध्यत इत्यर्थः । तत्रोत्तरान्वयस्य कर्तुं गन्तुमित्यादाविण्निषेधः फलम् । नित्स्वरेण संप्रत्युदात्तत्वात् । पिपक्षति बिभत्सतीत्यादाविण्निषेधस्तु पूर्वान्वयस्य फलम् । द्वित्वे कृते अनेकाच्त्वात् ॥ नन्वेकाच इत्युक्ते ह्युपदेशपदेनाप्यन्वयः स्वीकर्तव्यस्तदेव मास्तु उपदेशेऽनुदात्तादित्यनेनैवेष्टसिद्धेरिति शङ्कते—**एकाचः किमिति** । पिपक्षतीत्यादाविव यङ्लुक्यपीण्निषेधः स्यादेवेत्याशङ्कायामाह—**स्मरन्ति हीति** ॥—**श्तिपेत्यादि** । श्तिपा यथा—स्यतिहन्तियातिवातिद्रातीत्यादि । तेन प्रन्यजङ्घनीदित्यादौ 'नेर्गद-' इति णत्वं न । शपा यथा—भरेति । तेन बिभर्तेः सनि बिभरिषतीत्यत्र 'सनीवन्तर्ध-' इतीड्विकल्पो न किं तु नित्यमेवेट् । 'एकाच-' इति निषेधाप्रवृत्तेः । अनुबन्धेन निर्देशो द्विधा स्वरूपेणेत्संज्ञकत्वेन च । स्वरूपेण यथा—'शीङः सार्वधातुके गुणः' 'दीङो युडचि' इति । शेशीतः । देदितः । तस्मिन्क्तप्रत्यये चेमे क्रमेणोदाहरणे । इत्संज्ञकत्वेन यथा—अनुदात्तङितः, तेन स्पर्ध शीङादिभ्यः 'अनुदात्तङितः-' इत्यात्मनेपदं न । पास्पर्द्धीति । शेशयीति । गणेन यथा—बेभिदीति । 'रुधादिभ्यः' इति श्नम् न । एकाज्ग्रहण प्रकृतसूत्रे । तेन बेभेदिता चेच्छेदितेत्यादाविण्निषेधो न ॥—**एतच्चेति** । न च श्तिपाशपायंशे कथमिदं ज्ञापकमिति शङ्क्यम् । एकादेशानुमतिद्वारा सर्वत्र ज्ञापनस्य 'उपपदमतिङ्' इत्यादौ दृष्टत्वात् । अत एव तत्र 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति सिद्धमित्युक्तम् । अनन्यार्थैः स्यतिहन्तिभरेत्यादिभिः श्तिबादिभिरेव ज्ञापनसंभवाच्च । 'अपरस्पराः-' इति सूत्रे सातत्यग्रहणेन एकदेशानुमत्या 'लुम्पेदवश्यमः कृत्ये' इत्यादिपूर्वाचार्यश्लोको ज्ञापित इति तु तत्रावोचाम । मनोरमायां लोकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषया ज्ञापनस्य 'गतिकारकोपपदानाम्-' इत्यादौ दृष्टत्वादित्युक्तं तदयुक्तमिति नव्याः । 'गतिकारकोपपदानाम्-' इत्याद्येव हि पूर्वाचार्याणां परिभाषा । न च तज्ज्ञापन तत्रैव दृष्टमिति युज्यते वक्तुमिति ॥—**तद्वत** इति । न च मत्वर्थलक्षणाया मानाभावः । वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात् । न चेदानीमनुदात्तपाठः परिभ्रष्टः, आधुनिकानां वसतिशक्लीत्यादिपाठस्त्वनार्षत्वान्न मानमिति शङ्क्यम् । पाणिनिना पठितानामेवानुदात्तधातूनामाधुनिकैर्व्याख्यातृपरंपरया सगृहीतत्वात् । अन्यथा एकः अच् यस्येति बहुव्रीहित्वाभावार्थमेकग्रहणे कृतेऽप्यनुदात्तपाठस्य परिभ्रष्टत्वात् वसतिशक्त्यादयोऽनुदात्ताः, न तु भ्वेधादय इति निर्धारणं न स्यात् ॥—**एकग्रहणेति** । नन्वेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामर्थ्यादित्युक्त्वा परस्परव्याघातः स्यादिति चेत् । अत्राहुः । एकाच्शब्देनैकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः किं तु वस्तुगत्यैवैकाज्ग्रहण तथैकग्रहण विनैव लभ्यत इत्यदोष इति ॥—**वधेरिति** । यत्तु तद्व्यावृत्तयेऽनिट्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना स एव प्राचाऽनुसृतः । 'अदृदृदन्तरुक्ष्णुशीयुनुक्षुश्विडीङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिटः' इति । स चादन्तपर्युदास इहोपेक्षितः । सूत्राननुगुणत्वात् । तथाहि—'सर्वे सर्वपदादेशाः' इति न्यायेन कृइत्यादे: कर् इत्यादिरादेशस्तस्य यथा स्थान्युपदेश गृहीत्वा कर्ता हर्तेत्यादौ निषेधः प्रवर्तते तथैव वधादेशेऽपि प्रवर्तमानः केन वार्यताम् । अदन्तपर्युदाससामर्थ्यादिति चेत् । न । सूत्रकारेणाऽपर्युदस्तत्वादिति भावः ॥—**इणः षीध्वम्**—॥ 'इण्कोः' इत्यधिकारेऽपि पुनरिण्ग्रहण कवर्गात्परस्य माभूदित्येतदर्थम् । तेनेह न । पक्षीध्वम् ॥—**अङ्गात्परेषामिति** । विहितानामित्युक्तौ तु दाओ लुङि अदिड्ढ्वमित्यत्राव्याप्तिः स्यात् लिहदुहनहां तु लत्वघत्वधत्वेषु लिक्षीध्वं धुक्षीध्वं नत्सीध्वमित्यत्रातिव्याप्तिश्च स्यादिति बोध्यम् ॥ अङ्गात् किम् । वेविषीध्वम् । यद्यर्थवतः षीध्वमित्यस्य ग्रहणात् कृषीड्ढ्वमित्यादावेव भवेत् नत्वत्र, तथाप्यर्थवद्ग्रहणपरिभाषा क्वचिन्न प्रवर्तत इति ज्ञापनार्थमिदमुक्तम् । तेन 'अनिनस्मन्ग्रहणानि-' इति सिद्धम् ॥—**एधांबभूवेत्यादि** । 'आम्प्रत्ययवत्-' इति सूत्रे कृञ्ग्रहणादनुप्रयोगान्तरे तद्नेति 'शेषात् कर्तरि-' इति परस्मैपदमेव । भावकर्मणोस्तु स्यादेव एधाबभूवे ईक्षाबभूवे इति । अस्तेस्तु भावकर्मणोस्तङि कृते एशि इटि च रूपे विप्रतिपद्येते । तथाहि । उभयत्रापि 'ह एति' इति हादेशे कृते एधामाह ईक्षामाह इति केचित् । तासिसाहचर्यादिटयेव हत्वं न लेशीत्यन्ये । तत्साहचर्यादेव सार्वधातुक एव एति हत्वम् । तथा च कर्मव्यतिहारे तहि व्यतिहे इत्यत्रैव भवति न तूक्तद्वयेऽपि । तेन एधामासे ईक्षामासे इत्येव रूपमित्यपरे ॥—**कृञ्चितीति** । यद्यपि कृञ्

१ षीध्वमिति—षकारोच्चारण तु भुवीध्वमित्यत्रैकदेशविकृतन्यायेन सीध्वमः सत्त्वादतिव्याप्तिवारणार्थमिति ।

रतो दीर्घः स्यात् । पररूपापवादः[1] । एधामास । एधामासतुरित्यादि ॥ एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे । धि च ।८।२।२५। धादौ प्रत्यये[2] परे सलोपः स्यात् । एधिताध्वे । ह एति ।७।४।५२। तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे ॥ एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे । आमेतः ।३।४।९०। लोट एकारस्याम् स्यात् । एधताम् । एधेताम् । एधन्ताम् । सवाभ्यां वामौ ।३।४।९१। सवाभ्यां परस्य लोडेतः क्रमाद्व अम् एतौ स्तः । एधस्व । एधेथाम् । एधध्वम् । एत ऐ ।३।४।९३। लोडुत्तमस्य एत ऐ स्यात् । आमोऽपवादः । एधै । एधावहै । एधामहै । आडजादीनाम् ।६।४।१०२। अजादीनामाट् स्याल्लुङादिषु । अटोऽपवादः । आटश्च । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि । लिङः सीयुट् ।३।४।१०२। सलोपः । एधेत । एधेयाताम् । झस्य रन् ।२।४।१०५। लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् । इटोऽत् ।३।४।१०६। लिङादेशस्येटोऽत्स्यात् । एधेय । एधेवहि । एधेमहि । आशीर्लिङि आर्धधातुकत्वात् लिङः सलोपो न । सीयुट्सुटोः प्रत्ययावयवत्वात्षत्वम्[3] । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि ॥ ऐधिष्ट । ऐधिषाताम् । आत्मनेपदेष्वनतः ।७।१।५। अनकारात्परस्यात्मनेपदेषु झस्य अत् इत्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । इणः षीध्वंलुङ्लिटां धोऽङ्गात् । ऐधिढ्वम् । इड्भिन्न एव इणिह गृह्यते इति मते[4] तु ऐधिध्वम् । ढधयोर्वस्य मस्य च द्वित्वविकल्पात्षोडश रूपाणि । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि । उदात्तत्वाद्धलादेरिट् । प्रसङ्गादनुदात्ताः संगृह्यन्ते ॥ ऊदृदन्तैर्यौति, रु, क्ष्णु, शीङ्, स्नु, नु, क्षु,

इत्युक्तौ लाघवमस्ति, तथापि धातुद्वयस्यैव लाभार्थं प्रत्याहाराश्रयणे क्लेश इति भावः ॥—**पररूपापवाद** इति । अपवाद इत्यय ग्रन्थो नामधातुप्रक्रियास्थस्वग्रन्थेन सह विरुध्यते । तत्र हि अ इवाचरति अति । प्रत्ययग्रहणमपनीय कास्यनेकाज् इत्युक्तेर्नाम् । औ । अतुः । उः । द्वित्वम् 'अतो गुणे' । 'अत आदेः' इति दीर्घः । णल औ वृद्धिरित्युक्तत्वात् । हलादिःशेषात् प्रागेव परत्वात् 'अत आदेः' इति दीर्घे कृते तु पररूपशङ्कापि तत्र नास्तीति चिन्त्योऽय ग्रन्थ इति नव्याः ॥—**आडजादीनाम्** । एतच्चाजादीनामटा सिद्धमिति वार्तिककृता प्रत्याख्यातम् । ननु अटि सति 'वृद्धिरेचि' इत्यनेन ऐधतेत्यादिसिद्धावपि ऐन्ददित्यादि न सिध्येत् । किं च 'अतो गुणे' इति पररूपप्रवृत्त्या ऐधतेत्याद्यपि न सिद्ध्येत् । यदि तु 'आटश्च' इति सूत्रम् अटश्चेति क्रियेत तर्हि अश्वपोऽहसद् इत्यत्र वृद्धिः स्यात् । 'रुदश्च पञ्चभ्यः' 'अड्गार्ग्यगालवयोः' इति अडागमस्य सत्वात् 'अतो रोरप्लुतात्–' इति रोरुत्वे सति अच्परत्वाच्चेति चेत् । न । 'उपसर्गादृति धातौ' इत्यपकृष्याजादौ धाताविति व्याख्यानात् । न च अश्वपोऽस्तीत्यादावोकारस्यान्तवद्भावेनाट्त्वात्परत्राजादिधातुसत्त्वाच्चोक्तदोषस्तदवस्थ इति वाच्यम् । आदित्यनुवर्त्य अकाररूपादाटोऽचि परे वृद्धिरिति व्याख्यानात् । एतेन अटश्चेत्युक्तौ 'अट गतौ' इत्यस्माल्ल्युटि अटनमित्यत्रातिप्रसङ्गः स्यादित्येतदपि निरस्तम् । न चैवमपि आतद् आतीद् इत्यादि न सिध्यति । अटश्चेत्यस्य ऐन्ददित्यादौ सावकाशतया परत्वादिह अतो गुणस्यैव प्रवृत्तेरिति वाच्यम् । चकारोऽत्र पुनर्वृद्धिविधानार्थ इत्यभ्युपगमादन्तरङ्गत्वाद्वा 'अटश्च' इत्यस्यैव प्रवृत्तेः । स्यादेतत् । 'आडजादीनाम्' इति सूत्राभावे आस्तामासन् इति कथमटा सिध्यति । 'श्नसोः–' इत्यलोपेन 'अटश्च' इति तत्र वृद्ध्यप्रवृत्तेः । मैवम् । अन्तरङ्गत्वात्प्रागेवाडागमे कृते वृद्धा च कृताया पश्चात् श्नसोरल्लोपस्याप्रसक्तेः । न च 'वार्णादाङ्गं बलीयः' इति वृद्धेः प्रागल्लोप एव स्यादिति शङ्क्यम् । व्याश्रयत्वात् । 'वार्णादाङ्गम्–' इति परिभाषाया अनित्यत्वाद्वा । तत्र हि 'श्नसोरल्लोपः' इति तपरकरणमेव लिङ्गम्, यदि वृद्धेः प्रागेवाल्लोपः स्यात्तर्हि किं तेन तपरकरणेनेति । यद्यपि वैदिकप्रक्रियायामानट् आव इत्यादौ 'छन्दस्यपि दृश्यते' इत्याडागमस्य वक्ष्यमाणत्वात्तदर्थमाट्सूत्रं कर्तव्य तथाप्याट विनैवाड्व्यत्ययेन आङ्पूर्वकत्वेन वा तत्र कथंचिद्व्याख्येयमिति स्थितस्य गतिमाहुः ॥ —**सलोप** इति । 'लिङः सलोपोऽनन्त्यस्य' इत्यनेन । एधेयातामिति । सीयुटः सलोपे आद्गुणः, ॥—**एधिषीध्व**मिति ॥ इणः परत्वेऽपि इणन्तादङ्गात्परत्वाभावात् 'इणः षीध्वम्–' इति ढत्व न भवति ॥—**आत्मने**—॥ 'झोऽन्तः' इत्यतो झ इति 'अदभ्यस्तात्' इत्यस्मात् अदिति चानुवर्तते । तदाह—**झस्यात्स्यादि**ति । आत्मनेपदेषु किम् । अदन्ति । सुन्वन्ति । अनतः किम् । एधन्ते । प्लवन्ते ॥—**इड्भिन्न एवेणि**ति । 'विभाषेटः', इति इटो विशिष्यग्रहणाद्गोबलीवर्दन्यायेन कैश्चिदिड्भिन्न एवेणिह गृह्यत इति भावः ॥—**ऊदृदन्तैरि**ति । ऊदृदन्तैर्विना यौत्यादिभिर्विना वृङ्वृञ्भ्यां

१ पररूपापवाद इति—पररूपपदमेकादेशोपलक्षणम्, आनृजे इत्यादा गुणस्यैव प्राप्तेः । अभ्यासविकारेषु बाध्यबाधकभावाभावेन पूर्वोपस्थितहलादिः शेषोत्तरं दीर्घ इति भावः । २ प्रत्यये इति—तेन पयो धावतीत्यादौ न सलोपः । ३ षत्वमिति—लक्ष्यभेदात्पुनः प्रवृत्तिरिति भावः । युगपदेवोभयोर्वा । ४ मते तु इति—तुना भाष्याननुग्रहरूपोऽस्वरसो बोधितः ।

**श्रि, डीङ्, श्रिभिः ॥ वृङ्, वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ १ ॥ शक्लृ, पच्, मुच्, रिच्, वच्, विच्, सिच्, प्रच्छि, त्यज, निजिर्, भजः ॥ भञ्ज्, भुज्, भ्रस्ज्, मस्जि, यज्, युज्, रुज्, रञ्ज्, विजिर्, स्वञ्जि, सञ्ज्, सृजः ॥ २ ॥ अद्, क्षुद्, खिद्, छिद्, तुदि, नुदः पद्य, भिद्, विद्यति, विनद्, ॥ शद्, सदी, स्विद्यति, स्कन्दि, हदी, क्रुध्, क्षुधि, बुध्यती ॥ ३ ॥ बन्धि, युधि, रुधी, राधि, व्यध्, शुधः, साधि, सिद्ध्यती ॥ मन्य, हन्नाप् क्षिप्, छुपि, तप् तिप, स्तृप्यति, दृप्यती ॥ ४ ॥ लिप्, लुप्, वप्, शप्, स्वप्, सृपि, यभ्, रभ्, लभ्, गम्, नम्, यमो, रमिः ॥ क्रुशि, दंशि, दिशी, दृश, मृश, रिश्, रुश्, लिश्, विश्, स्पृशः, कृषिः ॥५॥ त्विष्, तुष्, द्विष्, दुष्, पुष्य, पिष्, विष्, शिष्, शुष्, श्लिष्यतयो, घसिः ॥ वसति, दह्, दिहि, दुहो, नह्,**

विना च अन्ये ये एकाचोऽजन्तास्ते निहताः । अनुदात्ता इत्यर्थः । तथा च दाता धाता चेता स्तोतेत्यादिषु इण् न भवति। ऊदन्ता भूलूप्रभृतयः । ॠदन्ताः कॄतॄप्रभृतयः । 'यु मिश्रणादौ' । 'रु शब्दे' 'रुङ् गतिरेषणयोः' इत्युभयोर्ग्रहणम् । निरनुबन्धपरिभाषया 'लुग्विकरणाऽलुग्विकरणयो' इति परिभाषया च । नच साहचर्याल्लुग्विकरणस्यैव ग्रहणमिति शङ्क्यम् तस्यानित्यत्वात् । 'क्ष्णु तेजने' । 'शीङ् स्वप्ने' । 'ष्णु प्रस्रवणे' । 'णु स्तुतौ' । 'टुक्षु शब्दे' । 'टुओश्वि गतिवृद्ध्योः' । 'डीङ् विहायसा गतौ' । 'श्रिञ् सेवायाम्' । 'वृङ् सम्भक्तौ' । 'वृञ् वरणे' । नन्वेतद्भिन्नानामेकाचामेवानुदात्तत्वे ऊर्णुतः ऊर्णुतवानित्यादि न सिध्येदिति चेत् । मैवम् । 'ऊर्णोतेर्णुवद्भावो वाच्यः' इति वक्ष्यमाणवार्तिकेनेष्टसिद्धेः । अत एव ऊर्णोनूयते इत्यत्र 'धातोरेकाच–' इति यङ् । ऊर्णुनावेत्यत्रानेकाच्त्वेन प्रवृत्तस्याऽमोऽभावश्च सिध्यति । उक्तं च भाष्ये—'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्' इति । 'विभाषा गुणेऽस्त्रियाम्' इति हेताविय पञ्चमी । हेतुरिह फलम् । एतच्च कैयटे स्पष्टम् । उपग्रहः प्रतिषेधः । इट्प्रतिषेधार्थमित्यर्थः । एवं च णुवद्भावेनैकाच्त्वात् 'श्र्युकः किति' इति निषेधप्रवृत्तेः ऊर्णुतः इत्यादि सिध्यति । 'एकाच उपदेशे–' इतीण्निषेधस्तु न प्रवर्तते, णुवद्भावेनैकाच्त्वेऽप्यनुदात्तत्वाभावात्, ऊर्णुधातोर्णुधातोश्च उदात्तत्वात्, तथाचोर्णविता और्णावीदित्याद्यपि सिद्धम् । 'वसतिशक्लृघस्लृभ्यः' इति प्राचो ग्रन्थस्य पाठमुपेक्ष्य हलन्तेषु कादिक्रमेणाह—**शक्लृ इति** । कान्त एकः । चान्तेषु पचमुचरिचवचविचसिचः षट् । 'डुपचष् पाके' । 'पचि व्यक्तीकरणे' । द्वावपि पचित्यनेन गृह्येते । 'मुच्लृ मोक्षणे' । रिचित्यनेन 'रिचिर् विरेचने' । 'रिच वियोजनसम्पर्चनयोः' इति चौरादिकश्च गृह्यते । वचित्यनेन तु 'वच परिभाषणे' ब्रुवो वचिरपि । वचियौंजादिकोऽपि गृह्यते । 'विचिर् पृथग्भावे' । 'षिच क्षरणे' । छान्तेषु प्रच्छ्येकः । जान्तेषु त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्ज्विजिर्स्वञ्जसञ्जसृज पञ्चदश । भुजित्यनेन 'भुज पालनाभ्यवहारयोः' 'भुजो कौटिल्ये' इति च गृह्यते । युजित्यनेन 'युजिर् योगे' 'युज समाधौ' इति च गृह्यते । केचित्तु व्याघ्रभूतिश्लोके भाष्ये च युजित्यनेन 'युजिर् योगे' इत्येकदेशोच्चारणमित्याहुस्तन्मते युज समाधौ सेट् । सृजित्यनेन तु 'सृज विसर्गे' दिवादिस्तुदादिश्च गृह्यते । दान्तेषु अदक्षुदखिद्छिद्तुद्नुदपद्यभिद्विद्यतिविनदशद्सदस्विद्यस्कन्दहद पञ्चदश । खिदित्यनेन खिद दैन्ये खिद्यति' खिन्दतिः खिन्त्तिश्च गृह्यन्ते ॥—**विद्यतीति** । 'विद सत्तायाम्' ॥—**विनदिति** । 'विद विचारणे' । धान्तेषु क्रुध्क्षुधबुध्यबन्धयुध्रुधराध्व्यध्शुध्साध्सिध्यतय एकादश । रुधित्यनेन 'रुधिर् आवरणे' । 'अनो रुध कामे' इति दिवादिश्च गृह्यते । नान्तेषु मन्यहनौ द्वौ । 'मन ज्ञाने' दिवादिः ॥ पान्तेषु आप्क्षिप्छुप्तप्तिप्तृप्यदृप्यलिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश । क्षिपित्यनेन 'क्षिप प्रेरणे' क्षिप्यतिः क्षिपतिश्च गृह्यन्ते । 'छुप स्पर्शे' तपित्यनेन 'तप सन्तापे', 'तप ऐश्वर्ये' दिवादिः, 'तप दाहे' इत्यपि णिजभावपक्षे गृह्यते । 'तिपृ क्षरणे' तृप्यतिदृप्यत्योर्वेट्कत्वेऽपि 'अनुदात्तस्य चर्दुपधस्य–' इत्यमर्थोऽत्र पाठः । भान्तेषु यभ्रभलभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुशदंशदिशदृशमृशरिशरुशलिशविशस्पृशो दश । 'रिश रुश हिंसायाम्' । लिशित्यनेन 'लिश अल्पीभावे' दिवादिः, 'लिश गतौ' तुदादिश्च गृह्यते ॥ षान्तेषु कृषत्विषतुषद्विषदुषपुष्यपिषविषशिषशुषश्लिष्य एकादश । कृषिति भौवादिकतौदादिकौ गृह्येते । विषित्यनेन 'विष्लृ व्याप्तौ' नियविर्षमिर्षति दण्डकस्थोऽपि गृह्यते । शिषित्यनेन 'शिष्लृ विशेषणे' कष स्वप शिषेति दण्डकस्थश्च गृह्यते ॥ विषिति 'विष्लृ व्याप्तौ' इति जौहोत्यादिक एव गृह्यते न दण्डकस्थः । शिषित्यनेनापि 'शिष्लृ विशेषणे' इति रौधादिक एव न तु दण्डकस्थ इति बोपदेवादयः । सान्तेषु घस्लृवसती द्वौ, घस्लृ अदने, 'लुङ् सनोर्घस्लृ' इत्यत्तेरादेशस्य तु स्थान्यनुदात्तत्वेनापि सिद्धम् । हान्तेषु दहदिहदुहनहमिहरुहलिहवहयोऽष्टौ । दुहित्यनेन दुहिरिति भौवादिको न गृह्यते किं तु 'दुह प्रपूरणे' इति आदादिक एवेति प्राञ्चः । इह मनोरमायां सङ्ग्रहश्लोक उक्तः—'कचच्छजा दधनपा भमशाः षसहाः क्रमात् । कचकाणणटा खण्डो गघजष्टक्षजाः स्मृताः' इति । तत्र पूर्वार्धोपात्ता ये चतुर्दश वर्णास्तदन्ता धातवः उत्तरार्धोपात्तकादिक्रमेण ये वर्णास्तत्सङ्ख्याका बोध्या इत्यर्थः । अत एव कान्त एकः । चान्ताः षट् । छान्त एकः । जान्ताः पञ्चदशेत्यादि व्याख्यानम् । कइत्येकस्य, च इति षण्णां, ण

१ एकाच इति—अनेन जागृदीधीत्यादीनां व्यावृत्तिः । २ शक्लृ इति—'भाष्ये तु अनुबन्धरहितः पाठो दृश्यते' इति शेखरकृतः । ३ पचिति—डुपचष् पाके इत्यस्यैव ग्रहणम्, प्रसिद्धत्वात् ।

मिहू, रुहू, लिहू, वहिस्तथा ॥ ६ ॥ अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥ तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥ ७ ॥ तृप्, दृपी, तौ वारयितुं श्यना निर्देश आदृतः ॥ किं च ॥ स्विद्यपद्यौ, सिध्यबुध्यौ, मन्यपुष्यश्लिषः, श्यना ॥ ८ ॥ वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ॥ णिजिर्, विजिर्, शक्लृ, इति सानुबन्धा अमी तथा ॥ ९ ॥ विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ॥ व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥ १० ॥ रञ्जि, मस्जी, अदि, पदी, तुद्, क्षुध्, शुषि, पुषी, शिषिः ॥ भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः ॥ ११ ॥ स्पर्ध संघर्षे। संघर्षः पराभिभवेच्छा। धात्वर्थेनोपसंग्रहादकर्मकः[1]। स्पर्धते शर्पूर्वाः खयः ।७।४।६१। अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते। हलादिः शेष इत्यस्यापवादः। पस्पर्धे। स्पर्धिता। स्पर्धिष्यते। स्पर्धताम्। अस्पर्धत। स्पर्धेत। स्पर्धिषीष्ट। अस्पर्धिष्ट। अस्पर्धिष्यत ॥ ३ ॥ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च। गाधते। जगाधे ॥ ४ ॥ बाधृ लोडने। लोडनं प्रतिघातः। बाधते ॥ ५ ॥ नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु। * आशिषि नाथ इति वाच्यम्। अस्याशिष्येवात्मनेपदं स्यात्। नाथते। अन्यत्र नाथति ॥ ६ ॥ नाधते ॥ ७ ॥ दध धारणे। दधते। अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०। लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि। थलि च सेटि ।६।४।१२१। प्रागुक्तं स्यात्। आदेशश्चेह वैरूप्यसंपादक एवाश्रीयते। शसिदद्योः प्रतिषेधवचनाज्ज्ञापकात्। तेन प्रकृतिजश्चरां तेषु

इति पञ्चदशानां सञ्ज्ञेत्याद्यभ्युपगमात् ॥ पान्तेषु द्वयोः श्यना निर्देशस्य फलमाह—**तुदादाविति**। तृप्दृपी मतभेदेन तुदादौ स्थितौ। चुरादौ तु तृपिः सर्वमते स्थितः दृपिस्त्वेकीयमतेनेति विवेकः। अत एव वक्ष्यति। 'तृप तृम्फ तृप्तौ'। द्वावपि द्वितीयान्तावित्यन्ये। 'दृप दृम्फ उत्क्लेशे'। प्रथमः प्रथमान्तः द्वितीयो द्वितीयान्त इत्येके इति च तुदादौ। चुरादौ तु 'तृप तृप्तौ'। 'तृष दृप संदीपन' इत्येके इति च ॥—**अन्यनिवृत्तये** इति। निवर्तनीयास्तु 'ञिष्विदा स्नेहनमोचनयोः'। 'पद स्थैर्ये'। 'षिध गत्याम्'। 'षिधू शास्त्रे माङ्गल्ये च'। 'बुधिर् बोधने'। इति भौवादिकाः। 'मनु अवबोधने' तानादिकः। 'पुष पुष्टौ' भौवादिकः कैयादिकश्च। 'श्लिष दाहे' भौवादिकः। 'वस आच्छादने' आदादिकः, एते अनुदात्तत्वराहित्यात् सेटः। 'युञ् बन्धने' क्रैयादिकोऽयमनुदात्त इत्यनिट्। श्यना निर्देशेन संग्राह्यास्तु 'ञिष्विदा गात्रप्रक्षरणे' 'पद गतौ'। 'षिधु संराद्धौ'। 'बुध अवगमे'। 'मन ज्ञाने'। 'पुष पुष्टौ'। 'श्लिष आलिङ्गने'। 'वस निवासे' एतेऽनिटः। 'यु मिश्रणामिश्रणयोः'। अयं सेट् ॥—**अमी तथेति**। 'णिजि शुद्धौ'। 'ओविजी भयचलनयोः'। 'शक मर्षणे'। इत्येषां क्रमेण आदादिकतौदादिकदैवादिकानां व्यावृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः। विन्दतिरिति 'विदिर् लाभे'॥—**इष्ट** इति। अनिट्त्वेनेति शेषः ॥—**भाष्यानुक्ता** इति। भाष्यकृताऽनुक्ताः, न तु प्रत्याख्याता इति नास्तीह तद्विरोधः। ततश्च व्याघ्रभूत्यादिग्रन्थानुरोधात् शुष्क धृष्टौ 'कैन नञ्विशिष्टेनानञ्' इत्यादि सौत्रप्रयोगादस्तु प्रतिपत्तुमित्यादिसार्वलौकिकव्यवहाराच्च उपलक्षणतयैव भाष्य नेयमिति भावः ॥—**अकर्मक** इति। अत्र केचित्। अभिभवेच्छा धात्वर्थस्तथा च स्पर्धार्थकस्य सकर्मकता दृश्यते आह्वास्त मेरावमरावतीं येति उदाहरिष्यते च 'स्पर्धायामाङः' इत्यत्र स्वयमेव कृष्णश्चाणूरमाह्वयते स्पर्धत इत्यर्थ इति। श्रीहर्षोऽपि प्रायुङ्क्त। 'तन्नासत्ययुगान्तं वा त्रेता स्पर्धितुमर्हति' इति। अतोऽस्य सकर्मकत्व न्याय्यमित्याहुः ॥—**शर्पूर्वाः**—॥ अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः। तेन शरो न शेषः किं तु खयामेव। इह स्पर्ध इत्यत्र रेफस्यापि द्वित्वं भवति द्वितीयस्यैकाचः संबन्धिरेफस्यैव 'न न्द्राः—' इति निषेधादिति बोध्यम्। **गाधृ**। ऋकारो 'नाग्लोपिशास्वृदिताम्' इति निषेधार्थः। अजगाधत्। आस्पदं स्थापनं अवस्थान वा प्रतिष्ठा। एकत्र स्थापन संदर्भो वा ग्रन्थः। **नाथृ नाधृ**। उपतापो रोगः ॥ अनुदात्तेत्त्वादेव सिद्धेः नियमार्थं वार्तिकमित्याह—**आशिष्येवेति** ॥—**अत एकहल्मध्ये**—॥ एकशब्दोऽत्रासहायवचनः ॥ एकयोर्हलोर्मध्ये इत्यर्थः। तद्व्याचष्टे—**असंयुक्तेति**। इष्टानुरोधेन लिटीत्यावर्त्य आदेशविशेषणमेतस्य निमित्तं च क्रियत इत्याह—**लिण्निमित्तेति**। किति लिटीति च। यद्यपि 'गमहन—' इति सूत्रे क्ङितीति वर्तते। तथापि प्रयोजनाभावात् ङितीत्येतन्नानुवर्तत इति भावः। किति किम्। ननाद। लिटि किम्। पापच्यात् ॥—**चकणतुरिति**। न चैवमपि बभणतुरित्यत्र 'अभ्यासे चर्च' इत्यस्यासिद्धत्वादेत्वाभ्यासलोपौ स्त एवेति वाच्यम्। फलभजग्रहणेन एत्वविधिं प्रति तत्सूत्रस्य सिद्धत्वज्ञापनात्। एवं चादेशश्चेह वैरूप्यसंपादक एव गृह्यते इति व्याख्यानमवश्यं कर्तव्यमेवेति दिक्। **मदि** स्तुति। मोदः संतोषः। मदो गर्वः। स्वप्न आलस्यम् ॥—**न शसदद** ॥— शसु हिंसायां दन्त्यातः। सूत्रेऽवयवाऽवयविभावः षष्ठ्यर्थः। तथा च शसददवादीनां योऽकार इत्यन्वयसम्भवेऽपि अकारस्य गुणरूपलाक्षेदनिबन्धना षष्ठी न संभवतीत्याशङ्क्य तन्निर्वाहार्थं व्याचष्टे—**गुणशब्देन भावितस्येति**। भावितत्वं च साक्षात्परंपरा साधारणम्। तथा च शशरतुः पपरतुरित्यादौ गुणशब्देन क्रियमाणो योऽर् तदवयवोऽकारः। लुलविथेत्यादौ तु गुणश-

1 अकर्मक इति—देवदत्तो यज्ञदत्तं स्पर्धते इत्यत्र तु स्पर्धापूर्वके शब्दने वृत्तिः।

तत्स्वपि एत्वाभ्यासलोपौ स्त एव । देभे । देभाते । देभिरे । अतः किम् । दिदिवतुः । तपरः किम् । ररासे । एके-त्यादि किम् । तत्सरतुः । अनादेशादेः किम् । चकणतुः । लिटा आदेशविशेषणादिह स्यादेव । नेमिथ । सेहे ॥ ८ ॥ स्कुदि आप्रवणे । आप्रवणमुत्प्लवनमुद्धरणं च । इदितो[1] नुम् धातोः ।७।१।५८। स्कुन्दते । चुस्कुन्दे ॥ ९ ॥ श्विदि श्वैत्ये । अकर्मकः । श्विन्दते । शिश्विन्दे ॥ १० ॥ वदि अभिवादनस्तुत्योः । वन्दते । ववन्दे ॥ ११ ॥ भदि कल्याणे सुखे च । भन्दते । बभन्दे ॥ १२ ॥ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । मन्दते । ममन्दे ॥ १३ ॥ स्पदि किंचिच्चलने । स्पन्दते । पस्पन्दे ॥ १४ ॥ क्लिदि परिदेवने । शोक इत्यर्थः । सकर्मकः । क्लिन्दते चैत्रम् । चिक्लिन्दे ॥ १५ ॥ मुद हर्षे । मोदते ॥ १६ ॥ दद दाने । ददते । न शसददवादिगुणानाम् ।६।४।१२६। शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्य एत्वाभ्यासलोपौ न । ददद । दददाते । दददिरे ॥ १७ ॥ ष्वद ष्वर्द आस्वादने । अयमनुभवे सकर्मकः । रुचावकर्मकः । धात्वादेः[2] षः सः ।६।१।६४। धातोरादेः षस्य सः स्यात् । सात्पदाद्योरिति षत्वनिषेधः । अनुस्वदते । सस्वदे ॥ १८ ॥ स्वर्दते सस्वर्दे ॥ १९ ॥ उर्द माने क्रीडायां च । उपधायां च ।८।२।७८। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । ऊर्दते । ऊर्दांचक्रे ॥ २० ॥ कुर्द खुर्द गुर्द गुद[3] क्रीडायामेव । कूर्दते । चुकूर्दे ॥ २१ ॥ खूर्दते ॥ २२ ॥ गूर्दते ॥२३॥ गोदते । जुगुदे ॥ २४ ॥ षूद क्षरणे । सूदते । सुषूदे ॥ सेकृ, सृप्, सृ, स्तृ, सृज, स्तृ, स्त्याऽन्ये दन्त्याजन्तसादयः । एकाचः षोपदेशाः ष्वष्क्, स्विद्, स्वद, स्वञ्ज, स्वप्, स्मिङः ॥ १ ॥ दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि, च-

---

ब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽकार इत्यर्थान्नास्त्यत्रानुपपत्तिः ॥—दददे इति । शशसतुः । शशसुः । ववमतुः । ववमुरित्यादावपि निषेधो बोध्यः ॥ ष्वद स्वर्द ॥—अयमिति । प्रत्येकाभिप्रायेणोक्तमित्याहुः ॥—सकर्मक इति । स्वदस्व । हव्यान्यनुभवेत्यर्थः ॥—अकर्मक इति । 'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारः' इति श्रीहर्षः । न स्वदते । न रोचते इत्यर्थः ॥—धात्वादेः—॥ धातुग्रहणं किम् । षट् षड्क्ष । आदेः किम् । लषति ॥—उपधायां च ॥ 'सिपि धातोः—' इत्यतः धातोरित्यनुवर्तते । 'र्वोरुपधाया ' इत्यतः र्वोरिक इति । 'हलि च' इत्यतो हलीति च । तदाह—धातोरित्यादि । धातोः किम् । 'ऊङुतः' । कुरुः कुर्वो कुर्व इत्यत्रेको दीर्घो माभूत् । न चात्र रेफस्य प्रातिपदिकोपधात्वेऽपि पदोपधात्वाभावादेव दीर्घो न भवेदिति धातोरित्यनुवर्तनमिहानावश्यकमिति वाच्यम् । पदस्येत्यनुवृत्तौ तु कूर्दते खूर्दते इत्याद्यसिद्धिप्रसङ्गात् । वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवदिति स्वीकारात् 'अचः परस्मिन्' इति स्थानिवत्त्वस्य निषेधाभ्युपगमेऽपि कार्यकालपक्षे 'असिद्धं बहिरङ्गम्' इति परिभाषाया प्रवृत्तेर्बहिरङ्गस्य यणोऽसिद्धत्वात् कुर्वौ कुर्व इत्यत्र 'उपधाया च' इति दीर्घो न भवेदिति धातुग्रहणाऽनुवर्तनस्य नात्यन्तावश्यकता, पदस्येत्यननुवृत्त्या कूर्दते इत्यादौ दीर्घः सिद्ध्यत्येवेत्याहुः । रेफवकारयोः किम् । पुष्यति । हल्परयोः किम् । चिरिणोति । जिरिणोति । इकः किम् । अर्वते । नर्दति । ननु 'हलि च' इत्यत्र रेफवकारयोर्हल्परयोरिको दीर्घः स्यादिति व्याख्याया कूर्दते गूर्दते इत्यादिसिद्ध्यत्येवेति सूत्रमिदं व्यर्थमिति चेत् । 'हलि च' इत्यत्र धातुग्रहणमनुवर्तनीयमेव । अन्यथा दिवमिच्छति दिव्यतीत्यादावति-प्रसङ्गः स्यात् । तथा च 'उपधाया च' इति सूत्राभावे उपधाभूतयो र्वोः परतो दीर्घो न स्यात् किं तु रेफवान्तयोरेव धात्वोः 'हलि च' इति सूत्रेण स्यादित्येतत्सूत्रमावश्यकमेवेति ॥—सूदते इति । स्रवतीत्यर्थः । ननु स्वर्देतिवत् स्वद सूदेति दन्त्यादय एव धातवः पठ्यन्ताम् । षोपदेशान् पठित्वा सत्वविधौ गौरवात् । मैवम् । तथाहि सति ण्यन्तात्सूदेः असिषू-दत् असूषुदद् इत्यादौ लिटि सुषूदे सिषेधेत्यादौ च 'आदेशप्रत्यययोः' इति षत्वं न स्यात् । इणः परस्य सकारमात्रस्य षत्व-विधौ तु सुपिसौ सुपिस इत्यादावपि स्यादिति । धातुपाठे पाणिनिना तालव्यदन्त्यादिपाठवत् षोपदेशा अपि व्यवस्थयैव पठिताः, स च पाठ इदानीं परिभ्रष्टः । साधादिषु सादिपाठस्यैव दृश्यमानत्वात् ॥ अतो लक्षणमुखेन तान्व्यवस्थापयति—सेगित्यादि । दन्त्यश्च अच्च दन्त्याचौ तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्याजन्तसादयोऽजन्तसादयश्चैकाचः षोपदेशा बोध्याः । तथा च साधादौ साम्प्रतं पठ्यमानः सकार उपदेशे न स्थित इत्यनुमेयमिति भावः । दन्त्येत्यादि किम् । चुस्कुन्दे । एकाचः किम् । सोसूच्यते । सोसूत्र्यते । सूचिसूत्री चुरादावदन्तौ ॥ उक्तलक्षणस्यातिव्याप्तिं वारयितुमाह—सेगिति । 'सेकृ गतौ' । 'सृप्लृ गतौ' । 'सृ गतौ' । 'स्तृञ् आच्छादने' । 'सृज विसर्गे' । 'स्तृञ् आच्छादने' । 'स्त्यै शब्दसंघातयोः' । एभ्योऽन्ये । पूर्वेण केषांचिदसंग्रहादाह—ष्वष्केति । 'ष्वष्क गतौ' । 'ञिष्विदा गात्रप्रक्षरणे' । 'ष्वद आस्वादने' । 'ष्वञ्ज परिष्वङ्गे' । 'ञिष्वप् शये' । 'ष्मिङ् ईषद्धसने' । एते षोपदेशा इत्यन्वयः । 'स्वाद आस्वादने' इत्यादावतिव्याप्तिमाशङ्क्याह

---

१ इदित इति—कर्मधारयेण धातोर्विशेषणं, तेन इदिदन्तस्य धातोर्नुम् विधानात् चक्षिङादौ न दोषः । २ धात्वादेरिति—धातुग्रहणं स्पष्टार्थम्, नामधातुव्यावृत्तयेऽनुवृत्तेनोपदेशग्रहणेनैव षट् षड् इत्यादिसिद्धेः । ३ गुदेति—गुद इति पृथग्धातुः, अत एवोदाहरति—गोदते, जुगुदे इति ।

ष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् ॥ २५ ॥ ह्राद् अव्यक्ते शब्दे । ह्रादते । जह्रादे ॥ २६ ॥ ह्लादी सुखे च । चाद्-व्यक्ते शब्दे । ह्लादते ॥ २७ ॥ स्वाद आस्वादने । स्वादते ॥ २८ ॥ पर्द कुत्सिते शब्दे । गुदरवे इत्यर्थः । पर्दते ॥ २९ ॥ यती प्रयत्ने । यतते । येते ॥ ३० ॥ युतृ जुतृ भासने । योतते । युयुते ॥ ३१ ॥ जोतते । जुजुते ॥३२॥ विथृ वेथृ याचने । विविथे ॥ ३३ ॥ विवेथे ॥ ३४ ॥ श्रथि शैथिल्ये । श्रन्थते ॥ ३५ ॥ ग्रथि[1] कौटिल्ये । ग्रन्थते ॥ ३६ ॥ कत्थ श्लाघायाम् । कत्थते ॥३७॥ एधादयोऽनुदात्तेतो गताः ॥ ॥ अथाष्ट त्रिंशत्[2] तवर्गीयान्ताः पर-स्मैपदिनः ॥ अत सातत्यगमने । अतति । अत आदेः । आत । आततुः । आतुः । लुङि आतिस् ई त् इति स्थिते । इट ईटि ।८।२।२८। इटः परस्य सस्य लोपः स्यादीटि परे । * सिज्लोप एकादेशे सिद्धो वाच्यः । आतीत् । आतिष्टाम् । आतिषुः । वदव्रजहलन्तस्याचः ।७।२।३। वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु । इति प्राप्ते । नेटि ।७।२।४। इडादौ सिचि प्रागुक्तं न स्यात् । मा भवानतीत् । अतिष्टाम् । अतिषुः ॥१॥ चिती संज्ञाने । चेतति । चिचेत । अचेतीत् । अचेतिष्टाम् । अचेतिषुः ॥२॥ च्युतिर् आसेचने । सेचनमार्द्रीकरणम् । आङीषदर्थेऽभिव्याप्तौ च । * इर इत्संज्ञा वाच्या ॥ च्योतति । चुच्योत । इरितो वा ।३।१।५७। इरितो धा-तोश्च्लेरङ् वा स्यात्परस्मैपदे परे । अच्युतत् अच्योतीत् ॥ ३ ॥ श्च्युतिर् क्षरणे । श्च्योतति । चुश्च्योत । अश्च्युतत् । अश्च्योतीत् ॥ ४ ॥ यकाररहितोऽप्ययम् । श्चोतति ॥ ५ ॥ मन्थ विलोडने । विलोडनं प्रतिघातः । मन्थति । ममन्थ । यासुटः किदाशिषीति कित्त्वादनिदितामिति नलोपः । मथ्यात् ॥ ६ ॥ कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः । इदित्वान्नलोपो न । कुन्थ्यात् । मन्थ्यात् ॥ १० ॥ षिध गत्याम् । सेधति । सिषेध । सेधिता । असेधीत् । सात्पदा-द्योरिति निषेधे प्राप्ते । उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्[3] ।८।३।६५। उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् । सदिरप्रतेः ।८।३।६६। प्रतिभिन्नादुपसर्गात्सदेः सस्य षः

—दन्त्यः केवलदन्त्य इति । तथा च असिखददित्यादौ षत्व नेति भावः । ह्लादी सुखे च ॥ चादव्यक्ते शब्दे । ईकारः 'श्वीदितो निष्ठायाम्' इतीण्निषेधार्थः । प्रल्हन्नः, प्रह्लन्नवान् । इह 'ल्हादो निष्ठायाम्' इत्युपधाह्रस्वः ॥—श्लाघायामिति । अविद्यमानगुणसबन्धज्ञापन श्लाघा ॥—आततुरिति । हल्मध्यस्थत्वाभावादेत्वं न ॥—इट ईटि ॥ 'सयोगान्तस्य लोपः' इत्यतो लोप इति 'रात्सस्य' इत्यतः सस्येति चानुवर्तते तदाह—लोपः स्यादिति । इटः किम् । अहार्षीत् । ईटि किम् । आतिष्टाम् । आतिषुः ॥—सिज्लोप इति । अत्र वन्दन्ति । सलोप इति वक्तव्ये सिज्ग्रहणं 'झलो झलि' इत्या-दिसूत्रत्रय सिज्विषयकमिति ज्ञापनार्थम् । तेनेह न । सोमसुत् । स्तोता । द्विष्टराम् । द्विष्टमाम् । 'धि च' इति सूत्रे तु वामनमते सिचो लोपः । भाष्यमते तु सस्येति भेदो बोध्य इति ॥—वदव्रज—॥ अवादीत् । अव्राजीत् । 'अतो हलादेः—' इति वि-कल्पं बाधित्वा अनेन नित्य वृद्धिः । हलन्तस्योदाहरणमपाक्षीत्, अधाक्षीदिति । तदन्तविधिनैव सिद्धे अन्तग्रहण स्पष्ट-प्रतिपत्त्यर्थम् । 'हलोऽच' इत्युक्ते त्वजन्ताङ्गस्य हल स्थाने वृद्धिरिति कदाचिदाशङ्क्येत । अच इति तु इक्परिभाषाया अनुपस्थानार्थम् । अन्यथा अभैत्सीदित्यत्र स्यान्न त्वपाक्षीदित्यादौ ॥—नेटि ॥—प्रागुक्तं नेति । हलन्तत्वादेव सिद्धे वदव्र-जोर्विशिष्य विधानान्न निषेधः । किं तु हलन्तलक्षणाया एव वृद्धेर्निषेधस्तस्या अनिडादौ सिचि चरितार्थत्वात् । अमुमेवार्थं मनसि निधाय क्वचित्पुस्तकेषु हलन्तलक्षणा वृद्धिर्नेत्येव पठ्यते ॥—इर इत्संज्ञेति । इकारस्य 'उपदेशेऽजनुनासिकः—' इति रेफस्य तु 'हलन्त्यम्' इति प्रत्येकमित्संज्ञायामिदित इति नुम् स्यादिति भावः । एतस्य वैयर्थ्य 'चक्षिङ् व्यक्तायां वाचि' इत्यत्र स्फुटीभविष्यति ॥—चुश्च्योतेति । शर्पूर्वाः खयः ।—यकाररहितोऽप्ययमिति । तथा च प्रयुज्यते 'मधुश्चुतं-घृतमिव सुपूतम्' इति ॥—मन्थ । अय क्र्यादावपि । 'षिध गत्याम्' । अयमुदिदिति केचित् । ननु सिध्यतिबुध्यत्योः श्यना निर्देशात् सिधित बुधितमिति वृत्तिग्रन्थविरुद्धम् । उदित्त्वे तूदितो वेति क्त्वायामिड्विकल्पान्निष्ठायामिड् न स्याद्, 'यस्य विभाषा' इति निषेधात् ॥—सिषेधेति । 'आदेशप्रत्यययोः' इति षत्वम् ॥—उपसर्गात्—॥ 'सुनोति सुवति' इत्यादिश्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थस्तेन अभिसोषवीति अभिसोषोतीत्यादौ षत्व नेति प्राञ्चः । स्थादिष्वेवाभ्यासस्य षत्वं सुनोत्यादिष्विति नियमान्नेह षत्वप्राप्तिरिति व्यर्थः प्रतिषेध इति मनोरमादौ स्थितम् । सेनयेति णिजन्तो नामधातुः । सेनया अभियाति अभिषेणयति । सेधेति शपा निर्देशाद्भौवादिकस्य ग्रहण न तु सिध्यतेः । परिसिध्यति ॥ गृहा दारा इत्यत्रेव 'तात्स्थ्यात्ता च्छब्द्यम्' इत्याह—उपसर्गस्थादिति ॥—निमित्तादिति । इण्रूपात् । कवर्गस्तु नेह संबध्यते, असंभवात् । न च निःषुणोति निःषेधति निःषिञ्चतीत्यादौ व्यवधानेन इणः परत्वाभावाद् सस्य षत्वं न स्यादिति शङ्क्यम् । षत्वविधौ 'नुम् विसर्जनीयशर्व्यवायेऽपि' इत्यधिकारात् । इणन्तादुपसर्गादिति व्याख्याने तु स्यादेवात्राव्याप्तिः । 'दुरःषत्वणत्वयोः—' इत्युपसर्ग त्वप्रतिषेधाद्दुःसुनोति दुःसेधतीत्यादौ तु षत्वेन न भवितव्यमिति दिक् ॥ मूर्द्धन्यादेशे फलितमाह—सस्य षः स्या

१ ग्रथि कौटिल्ये इति—कौटिल्यं शाठ्यं वक्रता वा । २ अष्ट त्रिंशदिति—अष्ट त्रिंशदिति च भिन्ने पदे, समस्तत्वे तु अष्टात्रिंशदिति पाठो बोध्यः । ३ उपसर्गादिति—अभिषावयतीति ण्यन्तेऽपि षत्व भवत्येव, शब्दशक्तिमहिम्नोपसर्गाणामपि प्रकृत्यर्थे एवान्वयात्

स्यात् । **स्तन्भेः** ।८।३।६७। स्तन्भेः सौत्रस्य सस्य षः स्यात् । योगविभाग उत्तरार्थः । किंच । अप्रतेरिति नानुवर्तते । व्यष्टभ्नात् । अभिष्टभ्नाति । परिष्टभ्नाति । ... बाहुमतिष्टम्भविवृद्धमन्युः । **अवाच्चालम्बनाविदूर्ययोः** ।८।३।६८। अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात् । **वेश्च स्वनो भोजने** ।८।३।६९। व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने । **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** ।८।३।७०। परिनिविभ्यः परेषामेषां सस्य षः स्यात् । निषेधति । **प्राक्सितादड्व्यवायेऽपि** ।८।३।६३। सेवसितेत्यत्र सितशब्दात्प्राग् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत् । **स्थादिष्वभ्यासेन चाभ्यासस्य** ।८।३।६४। प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः ॥ १० ॥ **सेधतेर्गतौ** ।८।३।११३। गत्यर्थस्य सेधतेः षत्वं न स्यात् । गङ्गां विसेधति ॥ ११ ॥ षिधू शास्त्रे माङ्गल्ये च । शास्त्रं शासनम् । **स्वरतिसूतिसूयतिधूञूदितो वा** ।७।२।४४। स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् ।

---

दिति । स्थादिषु 'प्राक् सितात्–' इत्यत्र क्रमज्ञानस्यापेक्षितत्वात्तेनैव क्रमेण षत्वसूत्राणि व्याचष्टे—**सदिरप्रतेः** ॥ अप्रतेः किम् । प्रतिसीदति । षष्ठ्यर्थे प्रथमेत्याह—**सदेरि**ति ॥—**स्तन्भेः** ॥ सौत्रस्येति । स्तन्भु स्तुन्भु इति सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु 'ष्टभि प्रतिबन्धे' इत्यस्येति भावः । एवं 'जॄस्तन्भु' इत्यङ्विधायकसूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यम् । एतच्च 'लक्षणप्रतिपदोक्त'परिभाषया लभ्यते । सौत्रो हि धातुर्नकारोपध इति प्रतिपदोक्तः । इदित्त्वान्नुमि ष्टभिर्लाक्षणिकः । तेन विस्तम्भते इत्यादौ षत्वं न । 'उदः स्थास्तम्भोः–' इति सूत्रे मकारोपधग्रहणेनोभयोरपि ग्रहणादुत्तम्भते इति द्वयोरपि रूपं तुल्यं, मकारस्योभयत्रापि लाक्षणिकत्वात् ॥—**उत्तरार्थ** इति । उत्तरसूत्रे स्तन्भेरेवानुवृत्त्यर्थं इति भावः । ननु 'सदिस्तन्भ्योः' इति सूत्रितेऽपि एकदेशे स्वरितत्वप्रतिज्ञानात्कथंचिदनुवृत्तिर्भविष्यतीत्यत आह—**किं चे**ति॥—**नानुवर्तत** इति । तथा च 'स्तन्भेः' इत्यत्राऽननुवृत्तये योगविभाग आवश्यक इति भावः॥—**अवाच्चा**—॥ चकारश्चिन्त्यप्रयोजन इत्याहुः । आलम्बनमाश्रयणम् । यथा यष्टिमवष्टभ्य आस्ते । तामाश्रित्य तिष्ठतीत्यर्थः । आविदूर्यं सामीप्यम् । तच्च प्रयोगोपाधिः । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्त इत्यर्थः । एतयोः किम् । अवस्तब्धो वृषलः शीतेन । केचिदिह अविदूरशब्दात्स्वार्थे ष्यञ् । आविदूर्यमनतिदूरम् । ईषद्दूरमित्यर्थः । तथा च अविदूरशब्दात् 'न नञ्पूर्वात्तत्पुरुषात्–' इति निषेधे प्राप्ते अत एव निपातनाद्भावप्रत्यय इति मनोरमाग्रन्थोक्तिर्नातीवोपयुज्यत इत्याहुः ॥—**वेश्च**—॥ विष्वणति । सशब्दं भुङ्क्त इत्यर्थः । 'अट्कुप्वाङ्–' इति णत्वम् । एवमवष्वणति । व्यष्वणत् । विषष्वाण । 'स्थादिष्वभ्यासेन–' इति षत्वम् । भोजने किम् । विस्वनति वीणा ॥—**परिनिविभ्यः**—॥ सेवेत्यत्र अकार उच्चारणार्थः । न च यङ्लुग्निवृत्त्यर्थं शपा निर्देश एवास्त्विति शङ्क्यम् । वकारान्तानामूठ्भाविना यङ्लुग् नास्तीति वक्ष्यमाणत्वात् । 'षेवृ सेवायाम्' । परिषेवते । 'षिञ् बन्धने' क्तान्तः सितशब्दः, एरजन्तः पचाद्यजन्तो वा सयशब्दः, विषित । विषय । प्रत्ययाविशिष्टग्रहणं किम् । विसिनोति । 'षिवु तन्तुसंताने' । परिषीव्यति । 'षह मर्षणे' । परिषहते । सुडागमः परिष्करोति । विष्करोति । स्तुस्वञ्जोः 'उपसर्गात्सुनोति–' इत्येव सिद्धे परिनिविभ्य परयोरेतयोः 'सिवादीनां वाड्व्यवायेऽपि' इति विकल्पार्थं पुनर्वचनम् ॥—**प्राक् सितात्**—॥ 'उपसर्गात्सुनोति–' इत्यादिना विहितं षत्वम् अड्व्यवाये नेति भ्रमनिवारणार्थमपिशब्दस्योपादानम् ॥—**तेषामि**ति । पञ्चदशानामित्यर्थः । अभ्यषुणोदित्यादीन्युदाहर्तव्यानि ॥—**स्थादिषु**—॥ इह द्वे वाक्ये आद्यं षत्वविध्यर्थं द्वितीयं तु नियमार्थमित्याशयेनाह—**व्यवायेऽपि षत्वमेषामेव चे**ति । स्थादीनां दशानामेवाभ्यासस्य षत्वमित्यर्थः । तत्फलं तु 'षू प्रेरणे' अभिसुसूषति । अत्रोक्तनियमादभ्यासमकारस्य न षत्वं, द्वितीयस्य तु 'स्तौतिण्योः' इति नियमान्न भवति । अभिसिषासतीत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वं पूर्वस्य तूक्तनियमान्नेति बोध्यम् ॥ स्यादेतत् । निषिषेधेत्यादौ अभ्यासस्य 'उपसर्गात्सुनोति–' इत्यनेन सिद्धम्, अभ्यासात्परस्य तु 'आदेशप्रत्ययोः' इत्यनेनेति किमाद्यवाक्येन । अत्राहुः । फलत्रयार्थमाद्यं वाक्यं[1] अषोपदेशार्थम् । तथाहि । सेनया अभियातुमिच्छति अभिषिषेणयिषति । [2]अवर्णान्ताभ्यासार्थं च । 'अधीमनं गोत्रभिदोऽधितष्ठौ' । [3]षणि प्रतिप्रसवार्थं च । अभिषिषिक्षति । 'षिच क्षरणे' । 'स्तौतिण्योरेव' इति नियमात् षभूते सनि निवर्तितमपि षत्वमुपसर्गमाश्रित्यात्र भवतीति ॥—**सेधतेर्गतौ** ॥ श्तिपा निर्देशाद्गत्यर्थादस्माद्यङ्लुकि न निषेधः । तेनोपसर्गमाश्रित्य षत्वं भवत्येव ॥—**निषेधती**ति । न च सेधेति शपा निर्देशाद्यङ्लुकि 'उपसर्गात्सुनोति–' इति षत्वं न भवेदिति शङ्क्यम् । दैवादिकनिवृत्त्यर्थतया शपा निर्देशस्य चारितार्थ्यात् । अन्यथा सेधतेरिति श्तिपा निर्देशस्य वैयर्थ्यापत्तेरिति दिक् । 'षिधू शास्त्रे' । माङ्गल्यं मङ्गलक्रिया । स्वार्थे ष्यञ् ॥—**स्वरतिसूति**—॥ 'स्वृ शब्दोपतापयोः'

१ सेधतेर्गताविति—अयं निषेधोऽनन्तरस्येति न्यायेन नादेशप्रत्ययोरित्यस्य, तेन सिषेधत्यादौ षत्वं भवत्येव इति केचित् । अन्ये तु सिचो यङ्यस्येतत्साहचर्यादयं सर्वषत्वनिषेधः, उपसर्गादित्यस्य तु नात्र सबन्धो विच्छिन्नत्वात्, तेन गङ्गां सिसेधेत्येव यथाभिधानमस्तीति वदन्ति । २ स्तीति—अत्र गुणाभावश्छान्दसः ।

**झषस्तथोर्धोऽधः ।८।२।४०।** झषः परयोस्तथयोर्धः स्यान्न तु दधातेः । अलब्ध । सिषेध । सिषेधिथ । सेद्धा । सेधिता । सेत्स्यति । सेधिष्यति । असैत्सीत् । **झलो झलि ।८।२।२६।** झलः परस्य सस्य लोपः स्यात् झलि । असैद्धाम् । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । पक्षे असेधीत् । असेधिष्टा मित्यादि ॥ १२ ॥ खादृ भक्षणे । ऋकार इत् । खादति । चखाद ॥ १३ ॥ खद स्थैर्ये हिंसायां च । चाद्भक्षणे- स्थैर्ये अकर्मकः । खदति । **अत उपधायाः ।७।२।११६।** उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । चखाद । **णलुत्तमो वा ।७।१।९१।** उत्तमो णल्वा णित्स्यात् । चखाद । चखद । **अतो हलादेर्लघोः ।७।२।७।** हलादेर्लघोरकारस्य इडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात् । अखादीत् । अखदीत् ॥ १४ ॥ बद स्थैर्ये । पवर्गीयादिः । बदति । बबाद । बेदतुः । बेदिथ । बबाद । बबद । अबादीत् अबदीत् ॥ १५ ॥ गद व्यक्तायां वाचि । गदति । **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।८।४।१७।** उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्यात् गदादिषु । प्रणिगदति । जगाद ॥ १६ ॥ रद विलेखने । विलेखनं भेदनम् । रराद । रेदतुः ॥ १७ ॥ णद अव्यक्ते शब्दे । **णो नः ।६।१।६५।** धातोरादेर्णस्य नः स्यात् । णोपदेशास्त्वनर्द-नाटि-नाथ्-नाध्-नन्द्-नक्क-नॄ-नृतः । नाटेर्दीर्घोऽर्हस्य पर्युदासान्नटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेर्नॄनर्त्योश्च केचिण्णोपदेशतामाहुः । **उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति ॥ १८ ॥ अर्द गतौ याचने च । अत आदेः । **तस्मान्नुड् द्विहलः ।७।४।७१।** द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्द । आर्दीत् ॥ १९ ॥ नर्द गर्द शब्दे । णोपदेशत्वाभावान्न णः । प्रनर्दति ॥ २० ॥ गर्दति । जगर्द ॥ २१ ॥

---

भ्वादिः । ननु 'स्वरतिसूतिसूयतिधूञूदितो वा' इति सूत्रयता किमनेन सूतिसूयत्योः पृथग्ग्रहणेन । मैवम् । तथाहि सति निरनुबन्धकपरिभाषया 'षू प्रेरणे' इति तौदादिकस्यैव ग्रहणं स्यान्न त्वादादिकदैवादिकयोरेतयोः । न चैव षूङ् इति पठ्यतामिति वाच्यम् । 'लुग्विकरणाऽलुग्विकरणयोः' इति परिभाषया अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसङ्गात् । अस्याश्च परिभाषायाः सूतिसूयत्योः पृथग्ग्रहणमेव ज्ञापकमित्याहुः । 'धूञ् कम्पने' स्वादिः क्र्यादिश्च । सानुबन्धनिर्देशो 'धू विधूनने' इत्यस्य निवृत्त्यर्थः । 'इट् सनि वा' इत्यतो वेति वर्तमाने पुनर्वाग्रहण लिङ्सिचोर्विकल्पनिवृत्त्यर्थम् । अन्यथा लिङ्सिज्विशिष्ट वापदमग्रापि लिङ्सिचोरेव विकल्प कुर्यात् । पुनर्वाग्रहणे तु आर्धधातुकतयाग्रे विकल्पः सिद्ध इति भावः ॥—**झषस्तथोः**—॥ अध इति किम् । धत्तः ॥—**अभैत्सीद्**इति । 'अस्तिसिचः–' इति ईडागमः । 'वदव्रज–' इति वृद्धिः । ततश्चर्त्वम् ॥—**झलो झलि** ॥ 'संयोगान्तस्य–' इत्यतो लोप इति 'रात्सस्य' इत्यतः सस्येति चानुवर्तते तदाह—**सस्य लोपः स्याद्**इति । पदस्येत्यधिकारात्प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टाना त्रयाणामेकपदसबन्धित्वे लोपोऽयम् । तेन सोमसुत् स्थानमित्यत्र न भवति । झलः किम् । अनैष्टाम् । झलि किम् असैत्सीत् ॥—**असेधीद्**इति । 'नेटि' इति वृद्धिप्रतिषेधः । गुणः । **खादृ** ॥—**ऋकार इद्**इति तेन 'नाग्लोपि–' इति निषेधे अचखादत् ॥—**अत उप**—॥ अतः किम् । तुतोद । उपधायाः किम् । गणयति । इह अतो लोप बाधित्वा परत्वाद्वृद्धिः स्यात् ॥—**अतो हलादेः**—॥ इह 'सिचि वृद्धिः–' इति सूत्रमनुवर्तते । 'नेटि' इति सूत्रादिटि इति 'ऊर्णोतेर्विभाषा' इत्यतो विभाषाग्रहण च तदाह—**इडादावित्यादि** । अतः किम् । अदेवीत् । हलादेः किम् । मा भवानतीत् । अटीत् । लघोः किम् । अगर्दीत् । अरक्षीत् । इडादौ किम् । अपाक्षीत् । परस्मैपदे किम् । अयतिष्ट । अयतिषाताम् । अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय 'येन नाव्यवधानम्' इति न्यायेन यद्येकवर्णव्यवधानमेवाश्रीयते तदा अरक्षीदित्यत्रापि प्रसक्त्यभावाल्लघोरिति शक्यमकर्तुमित्याहुः । तपरकरणं स्पष्टार्थम् ॥—**पवर्गीयादिर्**इति । दन्त्योष्ठ्यादित्वे तु 'न शसदद–' इत्येत्वाभ्यासलोपनिषेधाद् बेदतुः बेदिथेत्यादि न सिध्येदिति भावः ॥—**नेर्गदनद**—॥ गदादीनां चतुर्णा शपा निर्देशः स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्निवृत्त्यर्थः । तेन प्रनिजागदीति । प्रनिनानदीति । प्रनिसासेति । प्रनिजंघनीति इत्यादौ णत्व न । घुशब्देन घुसंज्ञका दाधादयः षट् गृह्यन्ते । डुदाञ् । प्रणिददाति । दाण् । प्रणियच्छति । दो । प्रणिद्यति । देङ् । प्रणिदयते । धेट् । प्रणिधयति । डुधाञ् । प्रणिदधाति । माशब्देन मेङ्माङोरेव ग्रहणं । घुप्रकृतिमाङिति पठित्वा भाष्यादौ तथा व्याख्यानात् ॥—**णो नः**॥— **धातोर्**इति । 'धात्वादेः षः सः' इत्यतोऽनुवर्तनाद्धात्वादेरित्येव । नेह । अणति । णोपदेशान्पर्युदासमुखेनाह—**णोपदेशास्त्व**ति । नर्द शब्दे । नट अवस्यन्दने । चुरादिः । यस्तु नट नृत्ताविति घटादिः स नेह गृह्यते नाटीति दीर्घनिर्देशात् । नाथृ नाधृ याञ्चादौ । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽष्टाभ्यो भिन्ना इत्यर्थः ॥—**तवर्गे**ति । तेषां मते तु पञ्चभ्यो भिन्ना णोपदेशाः ॥—'**उपसर्गाद**—'॥ 'समासेऽङ्गुलेः सङ्गः' इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणं । कृते तु तस्मिन्नसमास एव स्यादित्यपेर्ग्रहणं कृतम् ॥—**प्रणिनदती**ति । नेर्गदेति णत्वम् । धातुनकारस्य तु 'उपसर्गादसमास–' इति णत्वं न भवत्यडादिभिन्नेन व्यवधानात् । तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह—**दीर्घीभूताद्**इति ॥ **खर्द** । दन्दशूकस्य सर्प-

दैन्यम् । दैवादिकस्य मित्त्वार्थोऽयमनुवादः । मदयति । हर्षयति, ग्लेपयति वेत्यर्थः । अन्यत्र मादयति । चित्तविकारमुत्पादयतीत्यर्थः ॥ ४१ ॥ ध्वन शब्दे । भाष्ये मित्त्वार्थमनूद्यते । ध्वनयति घण्टाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥ ४२ ॥ अत्र भोजः । दलि, वलि, स्खलि, रणि, ध्वनि, त्रपि, क्षपयश्चेति पपाठ । तत्र ध्वनिरणी उदाहृतौ । दल विशरणे । वल संवरणे । स्खल संचलने । त्रपूष् लज्जायामिति गताः । तेषां णौ । दलयति । वलयति । स्खलयति । त्रपयति । क्षै क्षये इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः । क्षपयति ॥ ४९ ॥ स्वन अवतंसने । शब्दे इति पठिष्यमाणस्यानुवादः । स्वनयति । अन्यत्र स्वानयति ॥ ५० ॥ * घटादयो मितः ॥ मित्संज्ञा इत्यर्थः ॥ * जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ॥ मित इत्यनुवर्तते । जॄषिति षित्त्वनिर्देशाज्जीर्यतेर्ग्रहणम् ॥ जॄणातेस्तु जारयति । केचित्तु जनी जॄ ष्णसु इति पठित्वा ष्णसु निरसने इति दैवादिकमुदाहरन्ति ॥ ५४ ॥ ज्वलह्वलह्मलनमामनुपसर्गाद्वा । एषां मित्त्वं वा । प्राप्तविभाषेयम् । ज्वलयति । ज्वालयति । उपसृष्टे तु नित्यं मित्त्वम् । प्रज्वलयति । कथं तर्हि प्रज्वालयति । उज्ज्वालयतीति । घञन्तात्तत्करोतीति णौ । कथं संक्रामयतीति । मितां ह्रस्व इति सूत्रे वा चित्तविराग इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत् । एतेन रजो विश्रामयन्राज्ञाम्, धुर्यान्विश्रामयेति स इत्यादि व्याख्यातम् ॥ ५८ ॥ * ग्लास्नावनुवमां च ॥ अनुपसर्गादेषां मित्त्वं वा स्यात् । आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा ॥ ६२ ॥ न कम्यमिचमाम् ॥ अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात् । कामयते । आमयति । चामयति ॥ ६५ ॥ शमो दर्शने ॥ शाम्यतिर्दर्शने मित्स्यात् । निशामयति रूपम् । अन्यत्र तु प्रणयिनो निशमय्य वधूः कथाः । कथं तर्हि निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति । शम आलोचन इति चौरादिकस्य । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः शाम्यतिवत् ॥६६॥ यमोऽपरिवेषणे । यच्छतिर्भोजनात्तोऽन्यत्र मित्स्यात् । आयामयति । द्राघयति, व्यापारयति वेत्यर्थः । परिवेषणे तु यमयति ब्राह्मणान् । भोजयतीत्यर्थः । पर्यवसित नियमयन्नित्यादि तु नियमवच्छब्दात्तत्करोतीति णौ बोध्यम् ॥ ६७ ॥ स्खदिरवपरिभ्यां च ॥ मित्स्यात् । अवस्खादयति । परिस्खादयति । अपावपरिभ्य इति न्यासकारः । स्वामी तु न कमीति नञमुत्तरत्रिसूत्र्यामननुवर्त्य शम अदर्शने इति चिच्छेद । यमस्त्वपरिवेषणे मित्त्वमाह । तन्मते पर्यवसितं नियमयन्नित्यादि सम्यगेव । उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्येति नियमात्प्रस्खादयतीत्याह । तस्मात् सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः । इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम् ॥ ६९ ॥ फण गतौ ॥ नेति निवृत्तमसंभवात् । निषेधात्पूर्वमसौ न पठितः ।

तीत्यर्थः ॥—लडयति दधीति । उन्मथ्नाति । विलोडयतीत्यर्थः । केचित्तु जिह्वाव्यापारे लडयति दधि, उन्मथने तु लडयति शत्रुमिति व्यत्यासेन योजयन्ति ॥—लाडयति पुत्रमिति । शर्करादिदानेनानुकूलयतीत्यर्थः ॥—ध्वनिरणी उदाहृताविति । ध्वनिरव्यवधानेनोदाहृतः, रणिस्तु कण रण गतावित्यत्रेत्यर्थः । स्वन अवतसने । अवतसन भूषणम् ॥—स्वनयतीति । भूषयतीत्यर्थः । अस्वानीत् । अस्वनीत् । अस्वनि । अस्वानि । स्वनस्वनम् । स्वानस्वानम् ॥—घटादयो मित्संज्ञा इत्यर्थ इति । अन्ये तु मकारानुबन्धा इति व्याचक्षते । घट । चेष्टायामिति प्रत्येक पाठे गौरवादेकत्रैव सर्वेषां मित्संज्ञा मकारानुबन्धकत्व वाऽनेन सूत्रेण विधीयत इति भावः ॥—जनीजॄष् । जनी प्रादुर्भावे । जॄष् वयोहानौ । क्नसु ह्वरणदीप्त्योः । त्रयोऽपि दिवादयः । रञ्ज रागे दैवादिको भौवादिकश्च । अमन्ता. कमिगमीत्यादयः । जनयति । जरयति । क्नसयति । रजयति मृगान् । रञ्जयति पक्षिणः । कमयति । गमयति । रमयति ।—ज्वलह्वल॥—एषांमित्त्वमिति । मित इत्यनुवृत्तस्येह भावप्रधानता । अनुपसर्गादिति तु पञ्चम्यर्थेयं पञ्चमीत्येव क्लेशेन व्याख्येयमिति भावः । 'नमश्चानुपसर्गाद्वा' इति पाठान्तर तत्र न कश्चित्क्लेशः ॥—प्राप्तविभाषेति । ज्वल दीप्तौ । ह्वल ह्मल चलने इति त्रयाणां पूर्वपठितत्वान्नमेस्त्वमन्तत्वादिति भावः ॥—कथं संक्रामयतीति । क्रमेः 'नोदात्तोपदेशस्य' इति वृद्धिप्रतिषेधाद् घञि क्रम इत्येव भवति न तु क्राम इति पूर्वोक्तसमाधानस्यात्र सभवात्पृथक् प्रश्न. ॥—व्यवस्थितविभाषेत्यादि । क्वचित् णौ मितां ह्रस्वो न प्रवर्तत इति भावः ॥—वृत्तिकृदिति केचित्तु घञन्तात्क्रमशब्दात्प्रज्ञाद्यणि क्रामशब्दं स्वीकृत्य तस्मात् 'तत्करोति' इति णौ सक्रामयतीति समादधत इति भावः ॥—इतरयोः प्राप्ते इति । वनेः पूर्वं पाठाद्वमेरमन्तत्वाच्चेति भावः । ग्लापयति । ग्लपयति । स्नापयति । स्नपयति । वानयति । वनयति । वामयति । वमयति ॥—शाम्यतिवदिति । यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीत्यर्थः ॥—यमोऽपरिवेषणे ॥—यच्छतिरिति । यम उपरमे इत्यय धातुः । भोजनाशब्दो 'ण्यासश्रन्थो युच्' इति युजन्तो ज्ञेयः । परिवेषणमिह भोजनानुकूलव्यापारस्ततोऽन्यस्मिन्नर्थे मिन्निषेधः ॥—नियमयन्निति । नियमवच्छब्दाण्णिचि विन्मतोर्लुकि शतरि शप्प्रत्यये गुणे च ज्ञेयम् ॥—व्यत्यासः फलित इति । स्वामिमते त्वपरिवेषणे आयमयति । परिवेषणे तु यामयति ब्राह्मणान् । अवादिपूर्वस्य स्खदेरवस्खदयति । परिस्खदयति । प्रपूर्वस्य तु प्रस्खादयतीत्येव व्यत्यासो ज्ञेयः ॥—उपेक्ष्यमिति ।

१ दैवादिकस्येति—अस्यैवानुवाद इत्यर्थबोधनार्थमीदित्त्वमिति भावः । २ वृत्तिकृदिति—भाष्ये त्वेतन्न दृश्यते इति भावः ।

फणादिकार्यानुरोधात् । फणां च सप्तानाम् ।६।४।१२५। एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । फणयति ॥ घृत् ॥ घटादिः समाप्तः ॥ फणेः प्रागेव वृदिल्वेके । तन्मते फाणयतीत्येव ॥ ७० ॥ राजृ दीप्तौ । स्वरितेत् । राजति । राजते । रेजतुः । रराजतुः । रेजे । रराजे । अत इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम् ॥ ७१ ॥ टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । अनुदात्तेतः । आद्यतेरिह पाठः फणादिकार्यार्थः । पूर्वं पाठस्तु अभ्राजादिषत्वाभावार्थः । तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणम् । भ्रेजे । बभ्राजे । वा भ्राशेति श्यन्वा । भ्राश्यते । भ्राशते । भ्रेशे । बभ्राशे । भ्लाश्यते । भ्लाशते । भ्लेशे । बभ्लाशे । द्वावपीमौ तालव्यान्तौ ॥ ७४ ॥ स्यमु स्वन ध्वन शब्दे । स्यमादयः क्षरत्यन्ताः परस्मैपदिनः । स्येमतुः । सस्यमतुः । अस्यमीत् । स्वेनतुः । सस्वनतुः । अस्वानीत् । अस्वनीत् । विष्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । वेश्च स्वन इति षत्वम् । फणादयो गताः ॥ दध्वनतुः ॥ ३ ॥ षम ष्टम अवैकल्ये । ससाम । तस्ताम ॥५॥ ज्वल दीप्तौ । अज्वालीत् ॥ ६ ॥ चल कम्पने ॥ ७ ॥ लज घातने । घातनं तैक्ष्ण्यम् ॥ ८ ॥ टल ट्वल वैक्लव्ये ॥ १० ॥ ष्ठल स्थाने ॥ ११ ॥ हल विलेखने ॥ १२ ॥ णल गन्धे । बन्धन इत्येके ॥ १३ ॥ पल गतौ । पलति ॥ १४ ॥ बल प्राणने धान्यावरोधने च । बलति । बेलतुः । बेलुः ॥ १५ ॥ पुल महत्त्वे ॥ पोलति ॥ १६ ॥ कुल संस्त्याने बन्धुषु च । संस्त्यानं सघातः ॥ बन्धुशब्देन तद्व्यापारो गृह्यते । कोलति । चुकोल ॥ १७॥ शल हुल पत्लृ गतौ । शशाल । जुहोल । पपात । पेततुः । पतिता । पतः पुम् ।७।४।१९। अङि परे । अपप्तत् । नेर्गदेति णत्वम् । प्रण्यपप्तत् ॥ २० ॥ क्वथे निष्पाके । क्वथति । चक्वाथ । अक्वथीत् ॥ २१ ॥ पथे गतौ । अपथीत् ॥ २२ ॥ मथे विलोडने । मेथतुः । अमथीत् ॥ २३ ॥ टुवम उद्गिरणे । इहैव निपातनादृत इत्वमिति सुधाकरः । ववाम । ववमतुः । वादित्वादेत्वाभ्यासलोपौ न । भागवृत्तौ तु वेमतुरित्याद्यप्युदाहृतं तद्भाष्यादौ न दृष्टम् ॥ २४ ॥ भ्रमु चलने । वा भ्राशेति श्यन्वा । भ्रम्यति । भ्रमति । भ्राम्यतीति तु दिवादेर्वक्ष्यते ॥ वा जॄभ्रमुत्रसाम् ।६।४।१२४। एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः । बभ्रमतुः । अभ्रमीत ॥ २५ ॥

'न पादम्याङ्–' इति सूत्रे आयामयत इत्युदाहृत्य वृत्तावुक्त यमोऽपरिवेषण इत्यनेन मित्त्व प्रतिषिध्यत इति न्यासेऽपि तत्र 'न कम्यमि–' इत्यतो नेत्यनुवर्तत इत्युक्तम् । एव हि निषेधानन्तर पाठ उपपद्यते । अन्यथा 'न कमि–' इत्यतः प्रागेव त्रिसूत्रीं पठेदिति भावः । फण गतौ । फणति । लुङि । अफाणीत् । अफणीत् । णौ तु 'चिण्णमुलोः–' इति वा दीर्घः । अफणि । अफाणि । फणफणम् । फाणफाणम् ॥—असंभवादिति । मित्त्वप्राप्तिं विना निषेधासभवादिह नेत्येतन्न सबध्यते किं तु मित्संज्ञैव । तदेतदाह—फणयतीति ॥—सामर्थ्यादिति । फणादिषु पाठसामर्थ्यादित्यर्थः ॥—तत्र हीति । षत्वविधौ हीत्यर्थः । तथा च विभ्राट विभ्राड्भ्याम्, पूर्वं पठितस्य तु विभ्राक् विभ्राग्भ्यामित्यादि सिध्यतीति भावः ॥—अस्यमीदिति । मान्तत्वान्न वृद्धिः ॥ ॥ अथ ज्वलादि. ॥—अज्वालीदिति । 'अतो ल्रान्तस्य' इति वृद्धिः ॥—वैक्लव्य इति । वैक्लव्य भयादिजनितोद्विग्नता ॥—तद्व्यापार इति । बन्धुतानुकूलो व्यापारः ॥—पतः पुम् ॥ मित्त्वादन्त्यादचः परः ॥—अक्वथीदिति । एदित्वान्न वृद्धिः । एवम् अपथीत् । अमथीदित्यत्रापि । टुवम् । केचिदमुमुदित पठित्वा वान्त्वा वमित्वेत्युदाहरन्ति । तत्तु वामनेन विरुध्यते । तेन हि 'आदितश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य वान्त इत्यत्र इडभावः साधित । उदित्त्वे तु 'यस्य विभाषा' इत्यनेनैव वान्त इति सिद्धेस्तदसगत स्यात् । एवं च क्त्वाप्रत्यये वमित्वेत्येव साधु ॥—निपातनादिति । अन्यथा गुणे सति उद्वरण इति स्यात् । यद्यपि अर्थनिर्देश आधुनिकस्तथापि पृषोदरादित्वमित्यत्रैव तात्पर्य बोध्यम् ॥—इत्याद्यप्युदाहृतमिति । 'वेमुश्च केचिद्रुधिरम्' इत्यादिप्रयोगानुरोधेन तथोदाहृतमित्याहुः । ननु वादित्वेन निषेधादेत्वाभ्यासलोपौ कथमिह स्यातामिति चेत् । अत्राहुः । 'न शसददवादिगुणानाम्' इति सूत्रितेऽपि वेत्यकारान्तसंघातग्रहणेनेष्टसिद्धेरादिग्रहणमौपदेशिकप्रतिपत्त्यर्थमेकान्ता अनुबन्धा इति च स्वीक्रियते । तथा च नायं वादिः किं तु ट्वादिरिति । अन्ये तु वमेरादौ 'लोपो व्योः–' इति लोपेन यकारः प्रश्लिष्यते । ततश्चोपदेशे वादित्वाभावान्निषेधो नेत्याहुः । भ्रमु चलने । मण्डलाकारेण चलनमेव धात्वर्थो न तु चलनमात्रं तदभाववद्विशेष्यक तत्प्रकारकज्ञानं च धात्वर्थः । 'शुक्तिं पश्यन् रजतमिति भ्रमति' इति प्रयोगात् । 'उदितो वा' इति क्त्वायां वेट् भ्रमित्वा । भ्रान्त्वा । 'यस्य विभाषा' इति निष्ठाया नेट् । भ्रान्तः । नन्वस्य ज्वलादिगणे पाठः किमर्थः । न चात्र णप्रत्ययार्थमेव पाठ इति वाच्यम् । पचादेराकृतिगणत्वादच्प्रत्ययेनापि भ्रम इति रूपसिद्धेः । 'नोदात्तोपदेशस्य–' इति वृद्धिनिषेधात् णप्रत्यये अच्प्रत्यये च रूपस्य तुल्यत्वादितिचेद् । अत्राहुः । यदि पचादित्वादच्प्रत्ययः स्यात्तर्हि अभ्रम इत्यत्र अव्ययावशक्ताविति नञः परमन्तोदात्त स्यात् णप्रत्यये लिह तत्पुरुषे तुल्यार्थः इत्याद्युदात्तमेव भवतीति ॥—वा जॄभ्रमुत्रसाम् ॥ अप्राप्तविभाषेयम् ॥—अभ्रमीदिति । मान्तत्वान्न वृद्धिः ॥—अक्षारीदिति । हलन्तलक्षणाया वृद्धेः 'नेटि' इति निषेधे 'अतो ल्रान्तस्य'

१ तद्भाष्यादावित्ति—वेमुरित्यादिप्रयोगा अमाधव एवेति भावः ।

क्षर संचलने । अक्षारीत् ॥ २६ ॥ * ॥ ॥ अथ **द्वावनुदात्तेतौ** ॥ षह मर्षणे । परिनिविभ्य इति षत्वम् । परिषहते । सेहे । सहिता । तीषसहेति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः । **सहिवहोरोदवर्णस्य** ।६।३।११२। अनयोरवर्णस्य ओत्स्याड्ढ्लोपे सति । **सोढः** ।८।३।११५। सोढ्रूपस्य सहेः सस्य षत्वं न स्यात् । परिसोढा । **सिवादीनां वाड्व्यवायेऽपि** ।८।३।७१। परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि । पर्यषहत । पर्यसहत ॥ १ ॥ रम क्रीडायाम् । रेमे । रेमिषे । रन्ता । रंस्यते । रंसीष्ट । अरंस्त ॥ २ ॥ ॥ अथ **कसन्ताः परस्मैपदिनः** ॥ षद्लृ विशरणगत्यवसादनेषु । **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** ।७।३।७८। पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । सीदति । ससाद । सेदतुः । सेदिथ । ससत्थ । सत्ता । सत्स्यति । ऌदित्वादङ् । असदत् । सदिरप्रतेः । निषीदति । न्यषीदत् । **सदेः परस्य लिटि** ।८।३।११८। सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद । निषेदतुः ॥ १ ॥ शद्लृ शातने । विशीर्णतायामयम् । शातनं तु विषयतया निर्दिश्यते । **शदेः शितः** ।१।३।६०। शिद्भाविनोऽस्मादात्मनेपदं स्यात् । शीयते । शशाद । शेदतुः । शेदिथ । शशत्थ । शत्ता । अशदत् ॥ २ ॥ **क्रुश** आह्वाने रोदने च । क्रोशति । क्रोष्टा । श्लेः क्सः । अक्रुक्षत् ॥ ३ ॥ **कुच** संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच ॥ ४ ॥ बुध अवगमने । बोधति । बोधिता । बोधिष्यति ॥ ५ ॥ **रुह** बीजजन्मनि प्रादुर्भावे च । रोहति । रुरोह । रुरोहिथ । रोढा । रोक्ष्यति । अरुक्षत् ॥ ६ ॥ **कस** गतौ । अकासीत् । अकसीत् ॥ ७ ॥ **वृत्** । ज्वलादिगणः समाप्तः ॥ ॥ अथ **गूहत्यन्ताः स्वरितेतः** ॥ **हिक्क** अव्यक्ते शब्दे । हिक्कति । हिक्कते ॥ १ ॥ **अञ्चु** गतौ याचने च । अञ्चति । अञ्चते ॥ २ ॥ **अचु** इत्येके ॥ ३ ॥ **अचि** इत्यपरे ॥ ४ ॥ **टुयाचृ** याच्ञायाम् । याचति । याचते ॥ ५ ॥ **रेटृ** परिभाषणे । रेटति । रेटते ॥ ६ ॥ **चते चदे** याचने । चचात । चेते । अचतीत् । चचाद । चेदे । अचदीत् ॥ ८ ॥ **प्रोथृ** पर्याप्तौ । पुप्रोथ । पुप्रोथे ॥ ९ ॥ **मिदृ मेदृ** मेधाहिंसनयोः । मिमेद । मिमिदे । मिमेदे । थान्ताविमाविति स्वामी । मिमेथ । धान्ताविति न्यासः ॥ ११ ॥ **मेधृ** सङ्गमे च । मेधति । मिमेधे ॥ १२ ॥ **णिदृ णेदृ** कुत्सासन्निकर्षयोः । निनेद । निनिदतुः । नि-

---

इति वृद्धिः । **षह** । अपराधे सत्यपि कोपानाविष्करणं मर्षणम् ॥—**सहिवहो**—॥ इह रेफलोपस्यासंभवाद् 'ढ्रलोपे पूर्वस्य–' इत्यतो ढलोप एवानुवर्तते तदाह—**ढलोप** इति ॥ ढलोपे किम् । सहते । वहते ॥—**सोढः** ॥—**षत्वं** नेति । 'न रपर–' इति सूत्रान्नेत्यनुवर्तत इति भावः ॥—**सिवादीनां**—॥ सिवुसहसुट्स्तुस्वञ्जः सिवादयः । पर्यषीव्यत् । पर्यष्करोत् । पर्यस्करोत् । न्यष्टौत् । न्यस्तौत् । व्यष्वजत् । **रम** क्रीडायाम् । अमुमुदित मत्वा रत्वा रमित्वेति केचिदुदाजहुस्तन्माधवादयो न सहन्ते । तथा च क्त्वाया रन्त्वेत्येव साधु ॥—**रेमिषे** इति । क्रादिनियमादिट् । पचाद्यचि टाप् । रमा । घञि तु रामः । अमन्तत्वेन मित्त्वात् णौ ह्रस्वः । रमयति । **षद्लृ** । विशरणमवयवानां विश्लेषः । अवसादनं नाशः ॥—**पाघ्राध्मा**—॥ पा पाने । पा रक्षणे इति तु न गृह्यते । लुग्विकरणत्वात् । द्रष्टीति केषांचित्पाठस्तत्र 'सृजिदृशोः–' इत्यम् । अर्तीत्यादौ ऋच्छादेशाद्यभाव इव सांत्रत्वात्पश्यादेशाभाव इति बोध्यम् । दृश्यर्तीति पाठस्तु निर्दुष्ट एव ॥—**पादीनामिति** । एकादशानामेषां यथासङ्ख्यमेकादश पिबाद्यादेशाः स्युरित्यर्थः । 'ष्ठिवुक्लमुचमाम्–' इत्यतः शितीत्यनुवर्तते स च कर्मधारय इत्यभिप्रेत्याह—**इत्संज्ञकशकारादाविति** । शकारादाविति किम् । पपे । जघ्रे । दध्मे । शितीति बहुव्रीहिरित्यभ्युपगमे त्विह पिबाद्यादेशाः स्युरेव ॥—**सेदिथेति** । 'उपदेशेऽत्वतः' इति क्रादिनियमप्राप्तस्येटो निषेधेऽपि भारद्वाजनियमादिट् ॥—**सदेः परस्य**—॥ सदेरिति षष्ठी । फलितमाह—**अभ्यासात्परस्येति** । 'स्थादिष्वभ्यासेन च–' इति प्राप्तिः । लिटीति किम् । निषिषित्सति । सदिस्वञ्ज्योरिति वृत्त्यादिरूढोऽपि पाठ इहोपेक्षितः भाष्याननुगुणत्वात् ॥ —**निषसादेति** । 'सदिरप्रतेः' इत्यत्राप्रतेरिति पर्युदासात्प्रतिससादेत्यत्राभ्यासस्यापि षत्वं नेति बोध्यम् । **शद्लृ** । विशीर्णतायामिति वक्तव्ये शातनं इत्युक्तिरसङ्गतेत्याशङ्क्य कथंचित्समाधत्ते **शातनं त्विति** । शदेरेव हि णिचि 'शदेरगतौ–' इति तत्वे ल्युटि च शातनमिति रूपम् । तथा चास्यैव धातोरिदं रूपं प्रसिद्धं चेत्यभिप्रेत्य तन्निर्देशः कृतः । यथा गम्लृ गतौ । डुपचष् पाके इत्यादाविति भावः ॥ **कुच** संपर्चनादौ । कुच शब्दे तारे इति चवर्गीयान्तेषु पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादित्वप्रयुक्तो णप्रत्ययो यथा स्यादिति मनोरमादौ स्थितम् । अत्र नव्याः । अनेनैव ग्रन्थेन पाणिनिनापि क्वचित्क्वचिदर्थनिर्देशः कृत इत्यनुमीयते । अन्यथाऽत्रत्यग्रन्थस्वारस्यभङ्गापत्तेरित्याहुः ॥ —**बोधितेति** । बुध्यतेरेवानिट्कारिकासु पठितत्वादयं सेडिति भावः ॥—**अकासीदिति** । हलन्तलक्षणाया वृद्धेः 'नेटि' इति निषेधेऽपि 'अतो हलादेः–' इति वैकल्पिकी वृद्धिः ॥—**वृदिति** । अत्र नव्याः । 'ज्वलितिकसन्तेभ्यः–' इति निर्देशाद्वृत्करणमिहानार्षमित्यनुमीयते । अन्यथा 'ज्वलादिभ्यो णः' इत्येव सूत्रयेदित्याहुः । **अञ्चु** गतौ । 'अनिदिताम्–' इति न लोपः । अच्यात् । अञ्चीत्येकीयमते तु इदित्त्वादञ्च्यात् । **मेधृ** संगमे च । चात्पूर्वोक्तेऽर्थे । 'प्रजायै गृहमेधिनाम्' इत्यत्र गृहैर्दारैर्मेधन्ते इति विग्रहः । 'सुप्य-

विद् । निमेदे ॥ १४ ॥ शृधु मृधु उन्दने । उन्दनं क्लेदनम् । शर्धति । शर्धते । शर्धिता । मर्धति । मर्धते ॥१६॥ बुधिर् बोधने । बोधति । बोधते । इरित्वादङ् वा । अबुधत् । अबोधीत् । अबोधिष्ट । दीपजनेति चिण् तु न भवति । पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात् ॥ १७ ॥ उबुन्दिर् निशामने । निशामनं ज्ञानम् । बुबुन्दे । अबुदत् । अबुन्दीत् ॥ १८ ॥ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेणति । वेणते । नान्तोऽप्ययम् ॥१९॥ खनु अवदारणे । खनति । खनते । ॥ गमहनजनखनघसां लोपः क्ङित्यनङि ।६।४।९८। एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । चख्नतुः । ये विभाषा । खायात् । खन्यात् ॥ २० ॥ चीवृ आदानसंवरणयोः । चिचीव । चिचीवे ॥ २१ ॥ चायृ पूजानिशामनयोः ॥ २२ ॥ व्यय गतौ । अव्ययीत् ॥ २३ ॥ दाशृ दाने । ददाश । ददाशे ॥ २४ ॥ भेषृ भये । गतावित्येके । भेषति । भेषते ॥ २५ ॥ भ्रेषृ भ्लेषृ गतौ ॥ २६ ॥ अस गतिदीप्त्यादानेषु । असति । असते । आस । आसे । अयं षान्तोऽपि ॥ २७ ॥ स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् । स्पशति । स्पशते ॥ २८ ॥ लष कान्तौ । वा भ्राशेति श्यन्वा । लष्यति । लषति । लेषे ॥ २९ ॥ चष भक्षणे ॥ ३० ॥ छष हिंसायाम् । चच्छषतुः । चच्छषे ॥ ३१ ॥ झष आदानसंवरणयोः ॥ ३२ ॥ भ्लक्ष भ्रक्ष अदने ॥ ३४ ॥ भक्ष इति मैत्रेयः ॥ ३५ ॥ दासृ दाने ॥ ३६ ॥ माहृ माने ॥ ३७ ॥ गुहू संवरणे । ॥ ऊदुपधाया गोहः ।६।४।८९। गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये । गूहति । गूहते । ऊदित्वाद्विट् । गूहिता । गोढा । गूहिष्यति । घोक्ष्यति । गूहेत् । गुह्यात् । अगूहीत् । इडभावे क्सः । अघुक्षत् । ॥ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।७।३।७३। एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ । अघुक्षत । क्सस्याचीत्यन्तलोपः । अघुक्षाताम् । अघुक्षन्त । अगुह्वहि । अघुक्षावहि । अघुक्षामहि ॥३८॥ ॥ अथाजन्ता उभयपदिनः । श्रिञ् सेवायाम् । श्रयति । श्रयते । शिश्रियतुः । श्रयिता । णिश्रीति चङ् । अशिश्रियत् ॥ १ ॥ भृञ् भरणे । भरति । बभार । बभ्रतुः । बभर्थ । बभृव । बभृषे । भर्ता । ॥ ऋद्धनोः स्ये ।७।२।७०। ऋतो हन्तेश्च स्यस्य इट् स्यात् । भरिष्यति । ॥ रिङ् शयग्लिङ्क्षु ।७।४।२८। शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न । भ्रियात् । ॥ उश्च ।१।२।१२। ऋवर्णात्परौ झलादी लिङ्सिचौ तङ्परौ कितौ स्तः । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः । ॥ ह्रस्वादङ्गात् ।८।२।२७। सिचो लोपः स्याज्झलि । अभृत । अभृषाताम् । अभरिष्यत् ॥ २ ॥

---

जातौ–' इति णिनिः । शृधु मृधु ॥—क्लेदनमिति । आर्द्रीभाव इत्यर्थः । उदित्वात् क्त्वाया वेट् । शर्धित्वा । शृद्ध्वा । उबुन्दिर् । बुन्दित्वा । बुत्वा । निष्ठाया बुन्नः । निशामन चाक्षुषं ज्ञानम् । वेणृ । गत्यादयः पञ्चार्थाः । वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः ॥—नान्तोऽपीति । 'उत माता महिषमन्ववेनत्' इत्यत्र नान्तदर्शनादिति भावः । खनु । खनित्वा । खात्वा । निष्ठायाम् । खातः ॥—गमहन–॥ 'अचि श्नुधातुभ्रुवाम्–' इत्यतोऽचीत्यनुवर्तते । 'ऊदुपधाया गोहः' इत्यत उपधाग्रहणं च । तदाह—एषामुपधाया इत्यादि । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । जज्ञे । जज्ञाते । जक्षतुः । जक्षुः । अनङीति किम् । अगमत् ॥—चीवृ । चीवरं वस्त्रं, 'चीवरपीवरमीवर–' इत्युणादिषु निपातितोऽयम् । व्यय गतौ । वित्तत्यागे तु नित्यमात्मनेपदी गत इति मनोरमा न कुत्रापि गत इति चिन्त्यैव सा ॥—अव्ययीदिति । यान्तत्वान्न वृद्धिः । स्पश बाधनस्पर्शनयोः । 'णिश्रि–' इति च्लेश्चङि । अपस्पशत् । 'अत्स्मृदृत्वरप्रथ–' इत्यादिना अभ्यासस्यात्वं सन्वदित्यापवादः । पस्पशा । यङन्तादचि 'यङोऽचि च' इति लुक् 'अजाद्यत–' इति टाप् । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घस्तु न भवति सञ्ज्ञापूर्वकविधेरनित्यत्वादित्याहुः । 'जपजभदहदशभञ्जपसां' च' इत्यत्र पसेति सौत्रो धातुः । पसतीत्यादि । यङ्लुकोस्तु 'जपजभ–' इत्यनेनैवाभ्यासस्य नुक् । यङि । पंपस्यते । लुकि । पपमीति । पपस इति कण्ड्वादिः । पपस्यति ॥—ऊदुपधायाः—॥—गुणहेताविति । एतच्च गोह इति विकृतनिर्देशाल्लब्धम् । 'अचि श्नुधातु–' इत्यतोऽनुवृत्तेनाचीत्यनेनाङ्गाक्षिप्तप्रत्ययो विशेष्यते । विशेषणेन तदादिविधिस्तदाह —अजादाविति ॥—दन्त्ये तङीति । दन्त्यादौ तङीत्यर्थः । अदुग्ध । अधुक्षत । अदिग्ध । अधिक्षत । अलीढ । अलिक्षतेत्यादि ॥—रिङ् शयग्लिङ्क्षु ॥ 'अयङ् यि क्ङिति' इत्यतोऽनुवृत्त यीत्येतल्लिङ एव विशेषणं शेऽसंभवात् । यकि तु वैयर्थ्यात् । तथा 'अकृत्सार्वधातुकयोः–' इत्यनुवृत्तमपि लिङ एव विशेषणमित्यभिप्रेत्याह—यादावित्यादि । शे । म्रियते ॥ तुदादिभ्य इति शः । यकि । क्रियते । म्रियते ॥—उश्च ॥ 'इको झल्' इत्यतो झल्ग्रहणं 'लिङ्सिचौ–' इति पूर्वसूत्रं चानुवर्तते तदाह—ऋवर्णादित्यादि ॥—अभार्षीदिति । 'सिचि वृद्धिः–' इति वृद्धिः ॥—ह्रस्वादङ्गात् ॥ झलात्

---

१ गुणहेताविति—एतेन जुगूहतुरित्यादि सिद्धम् । २ ह्रस्वादङ्गादिति—यद्यपि 'ह्रस्वात्सिचः' इत्येव सिद्धम् । अङ्गविद्यामित्यादावपि न दोषः । आगमे कृते तत्सहितस्यैव प्रत्ययत्ववत्प्रिम्चत्वम् इति स्वावयवत्वेन पौर्वापर्याभावात्, तथापि पदलाघवाभावादेवमेवोक्तम् ।

**हृञ् हरणे । हरणं प्रापणं स्वीकारः स्तेयं नाशनं च । जहर्थ । जह्रिव । जह्रिषे । हर्ता । हरिष्यति ॥३॥ धृञ् धारणे । धरति । अधार्षीत् । अधृत ॥ ४ ॥ णीञ् प्रापणे । निनयिथ । निनेथ । निन्यिषे ॥ ५ ॥॥ अथाजन्ताः परस्मैपदिनः ॥ धेट् पाने । धयति । आदेच उपदेशेऽशिति ।६।१।४५। उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति । आत औ णलः ।७।१।३४। आदन्ताद्धातोर्णल औकारादेशः स्यात् । दधौ । आतो लोप इटि च ।६।४।६४। अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । द्वित्वात्परत्वाल्लोपे प्राप्ते द्विर्वचनेऽचीति निषेधः । द्वित्वे कृते आल्लोपः । दधतुः । दधुः । दधिथ । दधाथ । दधिव । धाता । दाधा घ्वदाप् ।१।१।२०। दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । एर्लिङि ।६।४।६७। घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । धेयात् । धेयास्ताम् । धेयासुः । विभाषा धेट्श्व्योः ।३।१।४९। आभ्यां**

किम् । अच्योष्ट । अप्रोष्ट । अङ्गग्रहणादिह 'रात्सस्य' इत्यतः सस्येत्यनुवृत्तावपि प्रत्ययस्यैव तत्रापीष्टत्वात्सिच एव लोपो भवति । तेनेह न । अस्तं द्विष्टमाम् । केचित्त्विहाङ्गग्रहणाभावे अपाचिष्टाम् अलाविष्टामित्यादावपि अतिप्रसङ्गः स्यादित्याहुस्तदपरे न क्षमन्ते । सनिपातपरिभाषयापि परिहारसंभवादिति । झलीति किम् । अभृषाताम् । अभृषत । **हृञ् हरणे ।** चत्वार इहार्थाः । भारं हरति । प्रापयतीत्यर्थः । अंशं हरति । स्वीकरोतीत्यर्थ. । स्वर्णं हरति । चोरयति । पापं हरति । नाशयति । **धृञ् ।** दधार । दध्रतुः । दधर्थ । दध्रे । दध्राते । धर्ता । ध्रियात् । **णीञ् ॥—निनयिथेति** । भारद्वाजनियमादिड्विकल्पः ॥—**आदेच उपदेशे शिति** ॥ 'लिटि धातोः—' इत्यतो धातोरित्यनुवृत्तमेचा विशेष्यते । तदाह—**एजन्तस्य धातोरि**ति । उपदेशे किम् । चेता स्तोता । ननु लाक्षणिकत्वादेवात्र न भविष्यतीति चेद् । अत्राहुः । वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति ज्ञापनार्थमुपदेशग्रहणम् । तेन 'क्रीङ्जीना णौ' इति कृतात्वे क्रापयतीत्यादौ नुक् सिध्यतीति मनोरमाकृत् । धातोः किम् । गोभ्याम् । नौभ्याम् । अस्ति ह्यत्रापि गमेर्डोः 'ग्लानुदिभ्या डौः' इत्युपदेशे एच् । अशितीति प्रसज्यप्रतिषेध इत्याह—**न तु शिती**ति । पर्युदासे तु जग्ले मम्ले इत्यादौ 'द्विर्वचनेऽचि' इति निषेधादात्वं न स्यादभ्यासे उकारश्च श्रूयेत । किं च सुग्ल इत्यत्र 'आतश्चोपसर्गे' इति कः । सुग्लेत्यत्र 'आतश्चोपसर्गे' इति स्त्रियामङ् । सुग्लान इत्यत्र 'आतो युच्' इति युच् न स्यात् । प्रत्ययनिमित्त ह्यात्वमादन्ताच्च प्रत्यय इत्यन्योन्याश्रयात् । प्रसज्यप्रतिषेधे तु न कोऽपि दोषः । 'ह्वावामश्च' इति सूत्रेण कबाधनार्थं पुनरण्विधानं च प्रतिषेधपक्षे ज्ञापकम् । तदाहुः । अनैमित्तिकमात्वं शिति तु प्रतिषेध इति । नन्वेवमपि एशः शित्त्वाज्जग्ले मम्ले इत्यादि न सिध्यतीति चेद् । अत्राहुः । यदि तु शितीति बहुव्रीहिः स्यात्तदात्र स्यादेव दोषः । किं तु कर्मधारयोऽयम् । तथा चाशितीत्यत्रेत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थः । धातुग्रहणाक्षिप्तप्रत्ययस्य शितीतिकर्मधारयेण विशेषणाद्विषयसप्तम्या तु इत्संज्ञकशकारादिभिन्नप्रत्ययविषये आत्वमित्यर्थात्पर्युदासेऽपि न क्षतिरिति ॥—**आत औ णलः** ॥ इह अङ्गस्येत्यनुवर्तते धातोरिति तु फलितार्थकथनम् । आदन्तादङ्गादित्यर्थः ॥—**आतो लोप इटि च** ॥ आर्धधातुक इत्यनुवर्तते 'दीङो युडचि क्ङिति' इत्यतोऽचि क्ङितीति च' तदेतत्फलितमाह—**अजाद्योरार्धधातुकयोरि**ति । अजाद्योः किम् । ग्लायते । यक् । जाग्लायते । यङ् । दासीय । डुदाञ् लिङुत्तमैकवचनमिट् । आर्धधातुकयोः किम् । यान्ति । वान्ति । व्यतिरे । रा दाने । कर्मव्यतिहारे धातोर्लङुत्तमैकवचनमिट् ॥—**दधिथेति** । एव च अजाद्यार्धधातुकस्य क्त्विेन दधिव दधिमेत्यादिष्वातो लोपसिद्धावपि दधिथ पपिथेत्यादिरूपसिद्धये सूत्रेऽस्मिन्निटीति ग्रहणमावश्यकमिति ज्ञेयम् । यदि तु इडागम एवात्र गृह्यते व्याख्यानात्तदाऽचि क्ङितीत्येतदार्धधातुकस्यैव विशेषणं न तूभयोः ॥—**दाधा घ्वदाप्** । इह दारूपाश्चत्वारः । डुदाञ् दाने । दाण्दाने । दो अवखण्डने । देङ् रक्षणे । धारूपौ तु द्वौ । डुधाञ् धारणपोषणयोः । धेट् पाने । अनुबन्धानामनेकान्तत्वात् 'आदेच उपदेशे—' इत्यात्वे दोदेङ्धेटामनुकरणे दाधारूपत्वमस्ति । एवं च दाश्च दाश्च दाः । धाश्च धाश्च धौ । दाश्च धौ च दाधाः इति विग्रहः ॥—**दाप्दैपौ विने**ति । दाप् लवने । दैप् शोधने एतद्भिन्ना इत्यर्थः । दैप. पित्त्वमिह प्रतिषेधार्थं न त्वनुदात्तार्थम् । 'अनुदात्तौ सुप्पितौ' इति प्रत्ययस्यैव पितोऽनुदात्तत्वात् । न च दैपो लाक्षणिकत्वान्नास्य प्रतिषेध इति शङ्क्यम् । पित्करणस्यानर्थक्यप्रसङ्गात् । इदमेव दैपः पित्त्व 'गामादाग्रहणेष्वविशेषः' इति परिभाषाया ज्ञापकमित्याहुः । अदाबिति किम् । दातं बर्हिः । लूनमित्यर्थः । इह 'दो दद्घोः' इति दद्भावो न । अवदातं मुखम् । शुद्धमित्यर्थः । इह तु 'अच उपसर्गात्—' इति तदेशो न ॥—**एर्लिङि** ॥—**मास्थादीनामि**ति । मास्थागापाजहातिसामित्यर्थः । मा माने । गामादाग्रहणेष्वविशेषेऽपि माङ्मेङौ नेह गृह्येते लिङि क्त्वासंभवात् । ष्ठा गतिनिवृत्तौ । गै शब्दे । गाङ् गताविति तु न गृह्यते लिङि क्त्वासंभवादेव । पा पाने । ओहाक् त्यागे । षोऽन्तकर्मणि । देयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् । आर्धधातुके किम् । मायात् । मायाताम् । मायुः । कितीति किम् । दासीष्ट । इह 'दीङो युडचि—' इत्यतः क्ङितीत्यनुवर्तमानेऽपि प्रकृतोपयोगितया कितीत्यस्यैवानुवृत्तिः कृता ॥—**विभाषा धेट्**—॥ 'च्लि लुङि' इत्यनुवर्तते 'णिश्रि—' इत्य-

च्लेश्चङ्वा स्यात्कर्तृवाचिनि लुङि परे। चङीति द्वित्वम्। अदधत्। अदधताम्। **विभाषा घ्राधेट्शाच्छासः** ।२।४।७८। एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे। अधात्। अधाताम्। अधुः। **यमरमनमातां सक् च** ।७।२।७३। एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु। अधासीत्। अधासिष्टाम्। अधासिषुः ॥ १ ॥ ग्लै म्लै हर्षक्षये। हर्षक्षयो धातुक्षयः। ग्लायति। जग्लौ। जग्लिथ। जग्लाथ। **वान्यस्य संयोगादेः** ।६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि। ग्लायात्। ग्लेयात्। अग्लासीत्। म्लायति ॥ ३ ॥ द्यै न्यक्करणे। न्यक्करणं तिरस्कारः ॥ ४ ॥ द्रै स्वप्ने ॥ ५ ॥ ध्रै तृप्तौ ॥ ६ ॥ ध्यै चिन्तायाम् ॥ ७ ॥ रै शब्दे ॥ ८ ॥ स्त्यै ष्ट्यै शब्दसंघातयोः। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्। षोपदेशफलं तु तिष्ट्यासति। अतिष्ट्यपदित्यत्र षत्वम् ॥ १० ॥ खै खदने ॥ ११ ॥ क्षै जै षै क्षये। क्षायति। जजौ। ससौ। साता। घुमास्थेत्यत्र विभाषा घ्राधेडित्यत्र च स्यतेरेव ग्रहणं न त्वस्य। तेन एत्वसिज्लुकौ न। सायात्। असासीत् ॥ १४ ॥ कै गै शब्दे। गेयात्। अगासीत् ॥ १६ ॥ शै श्रै पाके ॥ १८ ॥ पै ओवै शोषणे। पायात्। अपासीत्। घुमास्थेतीत्वं तदपवाद एर्लिङीत्येत्वं गातिस्थेति सिज्लुक् च न। पारूपस्य लाक्षणिकत्वात् ॥ २० ॥ ष्टै वेष्टने। स्तायति ॥ २१ ॥ ष्णै वेष्टने। शोभायां चेत्येके। शौच इत्यन्ये। स्नायति ॥ २२ ॥ दैप् शोधने। दायति। अघुत्वादेत्वसिज्लुकौ न। दायात्। अदासीत् ॥ २३ ॥ पा पाने। पाघ्राध्मेति पिबादेशः। तस्यादन्तत्वान्नोपधागुणः। पिबति। पेयात्। अपात् ॥ २४ ॥ घ्रा गन्धोपादाने। जिघ्रति। घ्रायात्। घ्रेयात्। अघ्रासीत्। अघ्रात् ॥ २५ ॥ ध्मा शब्दाग्निसंयोगयोः। धमति ॥ २६ ॥ ष्ठा गतिनिवृत्तौ। तिष्ठति। स्थादिष्वभ्यासेनेति षत्वम्। अधितष्ठौ। उपसर्गादिति षत्वम्। अधिष्ठाता। स्थेयात् ॥ २७ ॥ म्ना अभ्यासे। मनति ॥ २८ ॥ दाण् दाने। प्रणियच्छति। देयात्। अदात् ॥ २९ ॥ ह्वृ कौटिल्ये। ह्वरति। **ऋतश्च संयोगादेर्गुणः** ।७।४।१०। ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदं परत्वाण्णल्यपि भवति। रपरत्वम्। उपधावृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। ऋद्धनोः स्ये। ह्वरिष्यति। **गुणोऽर्तिसंयोगाद्योः** ।७।४।२९। अर्तेः संयो-

---

स्यात्कर्तरीति च तदाह—**च्लेश्चङ् वेत्यादि** ॥—**अदधदि**ति। चङि आतो लोपः। श्वयतेरुदाहरणमशिश्वियन् ॥—**विभाषा घ्रा—**॥ इह 'ण्यक्षत्रियार्ष–' इत्यतो लुगनुवर्तते 'गातिस्था–' इत्यतः सिचः परस्मैपदेष्विति च तदाह—**सिचो लुग्वेत्यादि** ॥—**अधुरि**ति। 'आतः' इति झेर्जुस्। परस्मैपदे किम्। व्यत्यघ्रास्त ॥—**यमरमनमा—**॥ इह 'आर्धधातुकस्येड्वलादेः' इतीडनुवर्तते। 'अञ्जेः सिचि' इत्यतः सिज्ग्रहणं, स्तुसुधूञ्भ्य इत्यतः परस्मैपदग्रहणं च तदाह—**एभ्यः सिच इडित्यादि**। अयंसीत्। अयंसिष्टाम्। व्यरंसीत्। व्यरंसिष्टाम्। अनंसीत्। अनंसिष्टाम्। परस्मैपदेषु किम्। उदायत भारम्। अरंस्त। अरंसाताम् ॥—**वान्यस्य—**॥ अन्यस्य किम्। स्थेयात्। **द्यै** न्यक्करणे। द्यायति। दद्यौ। अद्यासीत्। **'घुमास्था–' इत्यत्रे**ति। व्याख्यानात्तन्त्रान्तरे जहातिस्यतीनामिति श्यना निर्देशाच्चेति भावः ॥—**विभाषा घ्रे**ति। श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः। एवं शाच्छासेति युग्विधावपि स्यतेरेव ग्रहणमिति बोध्यम्। तेनास्य धातोः 'अर्तिह्री–' इति पुगेव। सापयति। **पै ओवै**। पायति। वायति। शुष्यतीत्यर्थः। 'ओदितश्च' इति निष्ठानत्वम्। वानम्। 'शुष्के वानमुभे त्रिषु' इत्यमरः ॥—**अदन्तत्वादि**ति। केचित्तु अङ्गवृत्तपरिभाषयापि गुणाभावं समर्थयन्ति। **घ्रा** गन्धोपादाने। गन्धोपादानं गन्धग्रहणम्। नन्वेवं कर्मणो धात्वर्थेनोपसंग्रहादकर्मकत्वेन 'जिघ्रति कुसुमम्' इत्यादिप्रयोगो न सिध्येदिति चेद्। अत्राहुः। यद्धात्वर्थेन कर्तृनिष्ठकर्मण उपसंग्रहस्तस्यैव धातोरकर्मकत्वं नान्यस्य। भवति हि जीवति नृत्यतीत्यादेरकर्मकत्वम्। तदर्थोपसंगृहीतकर्मणः कर्तृनिष्ठत्वात्। घ्राधातोः कर्मणस्त्वतथात्वान्नाकर्मकतेति। **ध्मा** शब्दाग्निसंयोगयोः। शब्दशब्देन तदनुकूलो वायुरिह गृह्यते। तेन शङ्खं धमतीतिवत् मृदङ्गं धमतीति प्रयोगो नेत्याहुः। अग्निसंयोगे सुवर्णं धमति। अग्निना संयुनक्तीत्यर्थः ॥—**स्थेयादि**ति। 'एर्लिङि' इति नित्यमेत्वम्। लुङि। अस्थात्। **म्ना** अभ्यासे। मनति। विद्यामभ्यस्यतीत्यर्थः। मम्नौ। अम्नासीत् ॥—**अदादि**ति। 'गातिस्था–' इति सिचो लुक् ॥—**ऋतश्च–**॥ संयोगादेः किम्। चक्रतुः। चक्रुः। तपरकरणं स्पष्टार्थम्। स्तॄञ् इत्यादेर्लिटि तस्तरतुरित्यादौ 'ऋच्छत्यॄताम्' इति गुणस्य जायमानत्वात्। चकारो मन्दप्रयोजनः। 'दयतेर्दिगि लिटि' इत्यतोऽनुवर्तनादाह—**गुणः स्याल्लिटी**ति। अवृद्धिनिमित्ते लिटीति प्राचो व्याख्यानं तु नादर्तव्यम्। न च स्वविषये वृद्धिर्बाधिकेति फलितार्थकथनपरतया तदुक्तिः सङ्गच्छत इति वाच्यम्। परत्वेन गुणस्यैव न्याय्यत्वादिति भावः ॥—**गुणोऽर्ति—**॥ अर्तीति भ्वादिस्वाद्योर्ग्रहणम्। लुका निर्देशस्तु सौत्रः। ऋग्रहणे कर्तव्ये श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। 'रीङ् ऋतः' इत्यस्मादृत इति वर्तते, तच्च संयोगादित्वेन विशेष्यते। तदाह—**संयोगादेरि**ति। अर्तिसंयोगाद्योरित्यकारे विधेये गुणग्रहणं चिन्त्यप्रयोजनम्। 'अयङ् यि क्ङिति' इति सूत्रात् यीत्यनुवर्तते तच्च लिङो

---

१ गुण इति—अरैव सिद्धे गुणग्रहणं ऋच्छत्यॄतामित्यस्य इग्लक्षणत्वेन क्ङिति चेति निषेधाय, कसोः कित्त्वसामर्थ्यान्निषेधविषयस्यापि तस्य गुणस्य निषेधानङ्गीकारात्।

गादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वार्ष्टाम् ॥ ३० ॥ स्वृ शब्दोपतापयोः । स्वरतिसूतीति वेट् । सस्वरिथ । सस्वर्थ । वमयोस्तु । **श्र्युकः किति ।७।२।११।** श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण्न स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम परत्वादृद्धनोरिति नित्यमिट् । स्वरिष्यति । स्वर्यात् । अस्वारीत् । अस्वारिष्टाम् । अस्वार्षीत् । अस्वार्ष्टाम् ॥ ३१ ॥ स्मृ चिन्तायाम् ॥ ३२ ॥ कृ संवरणे ॥ ३३ ॥ सृ गतौ । क्रादित्वान्नेट् । ससर्थ । ससृव । रिङ् । स्रियात् । असार्षीत् । असार्ष्टाम् । **सर्तिशास्त्यर्तिभ्यश्च । ३।१।५६।** एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि । इह लुक्शपा शासिना साहचर्यात्सर्त्यर्ती जौहोत्यादिकावेव गृह्येते । तेन भ्वाद्योर्नाङ् । शीघ्रगतौ तु पाघ्राध्मेति धौरादेशः । धावति ॥ ३४ ॥ ऋ गतिप्रापणयो । ऋच्छति । **ऋच्छत्यृताम् ।७।४।११।** तौदादिकऋच्छेर्ऋधातोर्ऋतां च गुणः स्याल्लिटि । णलि प्राग्वदुपधावृद्धिः । आर । आरतुः । आरुः । **इडत्त्यर्तिव्ययतीनाम् ।७।२।६६।** अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आरिथ । अर्ता । अरिष्यति । अर्यात् । आर्षीत् । आर्ष्टाम् ॥ ३५ ॥ गृ घृ सेचने । गरति । जगार । जगर्थ । जग्रिव । रिङ् । ग्रियात् । अगार्षीत् ॥ ३७ ॥ ध्वृ हूर्छने ॥ ३८ ॥ स्रु गतौ । सुस्रोथ । सुस्रुव । स्रूयात् । णिश्रीति चङ् । लघूपधगुणादन्तरङ्गत्वादुवङ् । असुस्रुवत् ॥ ३९ ॥ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सुषोथ । सुषविथ । सुषुविव । सोता । **स्तुसुधूञ्भ्यः परस्मैपदेषु ।७।२।७२।** एभ्यः सिच इट् स्यात्परस्मैपदेषु । असावीत् । पूर्वोत्तराभ्यां लिङ्भ्यां साहचर्यात्सुनोतेरेव ग्रहणमिति पक्षे असौषीत् ॥ ४० ॥ श्रु श्रवणे । **श्रुवः शृ च ।३।१।७४।** श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च शब्विषये । शपोऽपवादः । श्नोङित्वाद्धातोर्गुणो न । शृणोति । शृणुतः । **हुश्नुवोः सार्वधातुके ।६।४।८७।** जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके । उवङोऽपवादः । शृण्वन्ति । शृणोमि । शृण्वः । शृणुव । शृण्मः । शृणुमः । शुश्रोथ । शुश्रुव । शृणु । शृणवानि । शृणुयात् । श्रूयात् । अश्रौषीत् ॥ ४१ ॥ ध्रु स्थैर्ये । ध्रवति । अयं कुटादौ गत्यर्थोऽपि ॥ ४२ ॥ दु द्रु गतौ । दु-

विशेषणम् । 'रिङ् शयग्लिङ्क्षु' इति सूत्रायग्ग्रहणस्य लिङ्ग्रहणस्य चानुवर्तनादित्यभिप्रेत्याह—**यकि यादाविति** । आर्धधातुके इत्येतत् 'अकृत्सार्वधातुकयो –' इत्यनुवृत्तिपर्यालोचनया फलितार्थकथनमिति ज्ञेयम् । सयोगादेरिति किम् । क्रियात् । यादीति किम् । सस्कृषीष्ट । आर्धधातुके किम् । इयृयात् । **स्वृ** । उपतापो रोगः ॥ **श्र्युकः किति** ॥ 'एकाच उपदेशे' इत्यत एकाच इत्यनुवर्तत तच्च उको विशेषणमित्याह—**एकाच उगन्तादि**ति । श्रितः श्रितवान् । श्रित्वा । भूतः । भूत्वा । भूतिः । गित्युदाहरणम् । भूष्णुः । 'ग्लाजिस्थश्च–' इति ग्स्नुः । स च गिद्भवति न कित् । स्थास्नुरित्यत्र 'घुमास्था–' इतीत्वप्रसङ्गात् । एकाच इति किम् । जागरितः । जागरितवान् । ऊर्णोतेस्तु नुवद्भावे ऊर्णुतः । ऊर्णुतवान् इति सिध्यति । उगन्तात्किम् । शयितः । शयितवान् ॥—**पुरस्तादि**त्यादि । 'आर्धधातुकस्येड्वलादेः' इत्यादिविधिकाण्डात्प्रागेव 'नेड्वशि कृति' इत्यादिप्रतिषेधकाण्डारम्भसामर्थ्यादित्यर्थः ॥—**निषेधे प्राप्ते** इति । स्वृतः । सूतः । धूत इत्यादौ यथेति भावः । **सृ** गतौ । सरति । सरिष्यति ॥—**सर्तिशास्त्यर्ति** ॥ परस्मैपदेति न संबध्यते । पुषादियोगादस्य पृथक्करणात् । **आङः शासु** । इच्छायामित्यस्यात्र न ग्रहण किं तु सर्त्यर्तिभ्यां साहचर्यात्परस्मैपदिनः शासेरेवेत्याहुः । असरन् । अशिषन् । आरत् ॥—**प्राग्वदिति** । किदर्थमारब्धोऽपि गुणः परत्वाण्णल्यपि भवति । रपलम् । तत उपधावृद्धिरित्यर्थः ॥—**नित्यमिट् स्यादि**ति । 'विभाषा सृजिदृशोः' इत्यतो विभाषा नानुवर्तत इति भावः । **ध्वृ** । हूर्छनं कौटिल्यम् । **स्रु** गतौ । यद्यपि सामान्येन गतिरुक्ता तथापि द्रवद्द्रव्यस्यैव गतिरिह ज्ञेया । स्रवति घृतम् ॥—**प्रसवोऽभ्यनुज्ञानमि**ति । 'देवस्य त्वा सवितुः प्रसवे' इत्यादावभ्यनुज्ञानार्थदर्शनात् ॥—**स्तुसुधूञ्भ्यः**—॥ परस्मैपदेषु किम् । अस्तोष्ट । अधोष्ट ॥—**श्रुवः शृ च** ॥ यद्यय श्रुधातुः स्वादौ पठ्येत तर्हि चकारो न कर्तव्य इति लाघवमित्याहुः ॥—**हुश्नुवोः**—॥ जुह्वति । सुन्वन्ति । हुश्नुवोः किम् । योयुवति । नोनुवति । सार्वधातुके किम् । जुहुवतुः । जुहुवुः । असयोगपूर्वेति किम् । अक्ष्णुवन्ति । असयोगपूर्वग्रहणमोर्विशेषण न तु श्नुप्रत्ययस्य । तेन आप्नुवन्ति इत्यत्रापि यण्निषेधः सिध्यति । प्रत्ययविशेषणत्वे तु अक्ष्णुवन्तीत्यत्रैव निषेधः स्यादिति भावः । स्यादेतत् । यङ्लुकश्छान्दसत्वाद्योयुवतीत्यादौ प्रत्ययस्य 'छन्दस्युभयथा' इत्यनेनार्धधातुकत्वाश्रयणे यणादेशो न भवेदिति किमनेन हुश्नुग्रहणेन । न च युवन्ति नुवन्ति इत्यत्रातिप्रसङ्गवारणाय तद्ग्रहणमिति वाच्यम् । अनेकाच इत्यस्यानुवर्तनेनोक्तदोषाभावादिति चेद् । अत्राहुः । 'दाधर्तिदर्धर्षिबोभूतु–' इति च्छन्दसि निपातनाद्भाषाया यङ्लुकि बोभवीतीत्यादौ 'भूसुवोः' इति गुणनिषेधो न प्रवर्तते । अत एव भाषायामपि यङ्लुक् सिद्ध इति वक्ष्यमाणत्वात् । योयुवतीत्यादावतिप्रसङ्गवारणाय हुश्नुग्रहण कर्तव्यमेवेति । हुश्नुग्रहणाज्ज्ञापकाद् भाषायामपि क्वचिद्यङ्लुग्भवतीति भाष्यकाराः । एवं च सार्वधातुकपरयोर्हुश्नुवोरनेकाच्त्वाव्यभिचारादनेकाच इत्यस्यानुवृत्तिरिह किमर्थेत्याशङ्काया निरवकाश एव । तदनुवृत्त्यभावे

द्रोथ । दुद्रविथ । दुद्रुविव । दुद्रोथ । दुद्रुव । णिश्रीति चङ् । अदुद्रुवत् ॥ ४४ ॥ जि ज्रि अभिभवे । अभिभवो न्यूनीकरणं न्यूनीभवनं च । आद्ये सकर्मकः । शत्रून् जयति । द्वितीये त्वकर्मकः । अध्ययनात्पराजयते । अध्येतुं ग्लायतीत्यर्थः । विपराभ्यां जेरिति तङ् । पराजेरसोढ इत्यपादानत्वम् ॥ ४५ ॥ ॥ अथ ङीङन्ता ङितः ॥ ष्मिङ् ईषद्धसने । स्मयते । सिष्मिये । सिष्मियिढ्वे । सिष्मियिध्वे ॥ १ ॥ गुङ् अव्यक्ते शब्दे । गवते । जुगुवे ॥ २ ॥ गाङ् गतौ । गाते । गाते । गाते । इटएत्वे कृते वृद्धिः । गै । लङ इटि । अगे । गेत । गेयाताम् । गेरन् । गासीष्ट । गाङ्कुटादिसूत्रे इङादेशस्यैव गाङो ग्रहणं न त्वस्य । तेनाङित्वाद्घुमास्थेतीत्वं न । अगास्त । आदादिकोऽयमिति हरदत्तादयः । फले[1] तु न भेदः ॥ ३ ॥ कुङ् घुङ् उङ् ङुङ् शब्दे । अन्ये तु उङ् कुङ् खुङ् गुङ् घुङ् ङुङ् इत्याहुः । कवते । चुकुवे । घवते । अवते । ऊवे । वार्णादाङ्गं बलीय इत्युवङ् । ततः सवर्णदीर्घः । ओता । ओष्यते । ओषीष्ट । औष्ट । ङवते । ङुङुवे । ङोता ॥ ७ ॥ च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ ॥ ११ ॥ ज्युङ् इत्येके ॥ १२ ॥ रुङ् गतिरेषणयोः । रेषणं हिंसा । रुरुवे । रवितासे ॥ १३ ॥ धृङ् अवध्वंसने । धरते । दध्रे ॥ १४ ॥ मेङ् प्रणिदाने । प्रणिदानं विनिमयः प्रत्यर्पणं च । प्रणिमयते । नेर्गदेति णत्वम् । तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात् ॥ १५ ॥ देङ् रक्षणे । दयते । **दयतेर्दिगि लिटि** ।७।४।९। दिग्यादेशेन द्वित्वबाधनमिष्यत इति वृत्तिः । दिग्ये । **स्थाघ्वोरिच्च** ।१।२।१७। अनयोरिदादेशः स्यात् सिच्च कित्स्यात्तङि । अदित । अदिथाः । अदिषि ॥ १६ ॥ श्यैङ् गतौ । श्यायते । शश्ये ॥ १७ ॥ प्यैङ् वृद्धौ । प्यायते । पप्ये । प्याता ॥ १८ ॥ त्रैङ् पालने । त्रायते । तत्रे ॥ १९ ॥ पूङ् पवने । पवते । पुपुवे । पविता ॥ २० ॥ मूङ् बन्धने । मवते ॥ २१ ॥ डीङ् विहायसागतौ । डयते । डिड्ये । डयिता ॥ २२ ॥ तॄ प्लवनतरणयोः ।

---

हुश्नुग्रहणस्य ज्ञापकत्वासंभवादिति दिक् ॥—**दुद्रविथेति** । भारद्वाजनियमादिट् । दुद्रोथ । दुद्रुवेति । क्रादित्वाल्लिटि नेट् । **गाङ् गतौ** ॥—**गाते गाते गात** इति । पूर्वं शपा सह सवर्णदीर्घे कृते 'आतो ङितः' इति न प्रवर्तते 'आत्मनेपदेष्वनतः' इति तु प्रवर्तते इति तातांझेषु तुल्यं रूपमित्याहुः । गै । गावहे । गामहे । जगे । जगाते । गाताम् । गाताम् । गाताम् । गास्व । उत्तमे तु । गै । गावहै । गामहै । अगात् । अगाताम् ॥—**न त्वस्येति** । गाते इत्यादौ तङ प्रवर्त्य ङकारस्य चरितार्थत्वात् । आदेशङकारस्तु न चरितार्थः । स्थानिवद्भावेन ङित्त्वादेव तङः सिद्धत्वादिति भावः ॥—**आदादिकोऽयमिति** । एवं च गाते गाथे इत्यादावातामाथामोः परतः 'आतो ङितः' इत्यस्य प्रवृत्तिशङ्कैव नास्तीति भावः ॥—**फले तु न भेद** इति । न च गाते गाथे इत्यादौ शपा सह सवर्णदीर्घे कृतेऽपि पूर्वस्मात्परस्य विधौ कर्तव्ये स्थानिवत्त्वादतः परत्वेन ङितामाकारस्य इय् स्यादिति शङ्क्यम् । पञ्चमीसमासपक्षस्यानित्यत्वाभ्युपगमादिति भावः ॥—**ङुङुवे** इति । 'कुहोश्चुः' इति ङस्य ञः ॥—**च्युङ्** इति । अस्मात् पचाद्यचि विच्यवः वबयोरभेदाद्विच्यब इत्यन्ये । **मेङ्** ॥—**प्रणिमयत** इति । ननु 'नेर्गद–' इति कथमिह णत्वं स्यात् । शिद्विषये आत्वाभावेन मारूपाभावादशिद्विषये कृतात्वेऽप्यस्मिन् णत्वं दुर्लभमेव । प्रतिपदोक्तस्यैव माधातोर्ग्रहणौचित्यान्न त्वस्य लाक्षणिकस्य । 'गामादाग्रहणेष्वविशेषः' इत्यभ्युपगमे तु मीनातिमिनोत्योरात्वे कृते प्रनिमाता प्रनिमास्यतीत्यादावतिप्रसङ्गः स्यादित्यत आह—**तत्रेति** ॥—**इष्टत्वादिति** । अयं भावः । घुसंज्ञासूत्रे प्रणिदयते प्रणिधयतीत्यादौ णत्वसिद्धये भाष्यकारैरित्थं सिद्धान्तितम् । 'नेर्गदनद–' इति णत्वविधौ 'घुमा–' इत्यस्य स्थाने 'घुप्रकृतिमाङ्' इति पठनीयम् । घुश्च प्रकृतिश्च माङ् चेति द्वन्द्वः । प्रकृतिश्च कस्येत्याकाङ्क्षायां सनिधानात्पूर्वोत्तरयोरेव । तेन न क्वाप्यव्याप्तिः । नापि मा माने इत्यत्र मीनातिमिनोत्योश्चातिव्याप्तिः । माङ् इति ङकारानुबन्धकस्यैव पठितत्वादिति ॥—**दिग्यादेशेनेति** । दयतेर्लिटि परे द्वित्वे प्राप्ते दिग्यादेशश्च तत्र विशेषविहितेन दिग्यादेशेन द्वित्वशास्त्रस्य बाधः । न चैवं 'प्यायः पी' 'चक्षिङः ख्याञ्' इति पीख्याञोरपि विशेषविहितत्वाभ्यां द्वित्वबाधः स्यादिति वाच्यम् । विषयसप्तमीमाश्रित्य लिडुत्पत्तेः प्रागेव तयोः प्रवृत्तत्वात् । दिग्यादेशविधौ तु लिटीति परसप्तम्येव न तु विषयसप्तमी लक्ष्यानुरोधात् । तदेतत्सूचयति ॥—**इष्यत** इति । दयतेर्लिटि द्वित्वे प्राप्ते तद्बाधित्वा परत्वाद्दिग्यादेश इति तु नोक्तम् । परस्परलब्धावकाशयोरेव परस्य बलीयस्त्वात् । दिग्यादेशं विना द्वित्वस्य सावकाशत्वेऽपि द्वित्वं विना दिग्यादेशस्य तदभावादिति दिक् ॥—**स्थाघ्वोरिच्च** ॥ इह 'लिङ्सिचौ' इति सूत्रादात्मनेपदेष्विति नानुवर्तितम् । परस्मैपदेषु 'गातिस्था–' इति लुकः प्रवृत्तेर्व्यावर्त्यालाभात् । अस्थित । अस्थिषाताम् । भाव्यमानोऽण् क्वचित्सवर्णान् गृह्णातीत्यत्रेदमपि तपरकरणं लिङ्गमित्याहुः । अत्र वदन्ति । विधीयमानस्य सवर्णग्राहकत्वेऽपि तपरकरणमिह व्यर्थम् । न चात्र दीर्घः स्यादिति वाच्यम् । 'घुमास्था–' इत्यनेनैव तत्सिद्धौ विधिवैयर्थ्यापत्तेः । न चैवमपि प्लुतः स्यादिति वाच्यम् । प्लुताऽप्लुतप्रसङ्गे 'प्लुतश्च विषये स्मृतः' इति सिद्धान्तादिति । **डीङ्** । विहायसा आकाशेन । विहायसामिति पाठस्त्वनाकर इत्याहुः ॥

---

१ फले तु न भेद इति—गा अ आते इत्यत्र वार्णपरिभाषया सवर्णदीर्घं बाधित्वा 'आतो ङितः' इतीयादेशः स्यादिति भेदस्तु न शङ्क्यः । तस्याः स्थान्येकत्वे एव प्रवृत्तेः ।

ॠत इद्धातोः ।७।१।१००। ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । * इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन ॥ तरति । ऋच्छत्यॄतामिति गुणः । वृफलेत्येत्वम् । तेरतुः । तेरुः । वॄतो वा ।७।२।३८। वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । तरीता । तरिता । अलिटीति किम् । तेरिथ । हलि चेति दीर्घः । तीर्यात् । सिचि च परस्मैपदेषु ।७।२।४०। अत्र वृत इटो दीर्घो न । अतारिष्टाम् ॥ २३ ॥ ॥ अथाष्टावनुदात्तेतः ॥ गुप गोपने ॥ १ ॥ तिज निशाने ॥ २ ॥ मान पूजायाम् ॥ ३ ॥ बध बन्धने ॥ गुप्तिज्किद्भ्यः सन् ।३।१।५। मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।३।१।६। सूत्रद्वयोक्तेभ्यः सन् स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च । * गुपेर्निन्दायाम्[१] । * तिजेः क्षमायाम् । * कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च । * मानेर्जिज्ञासायाम् । * बधेश्चित्तविकारे । * दानेरार्जवे । * शानेर्निशाने । सनाद्यन्ता इति धातुत्वम् । सन्यङोः ।६।१।९। सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । अभ्यासकार्यम् । गुपिप्रभृतयः किद्भिन्ना[२] निन्दाद्यर्थका एवानुदात्तेतो दानशानौ च स्वरितेतौ । एते नित्यं सन्नन्ताः । अर्थान्तरे त्वननुबन्धकाश्चुरादयः । अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ् । धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम् । तेनेड्गुणौ न । जुगुप्सते । जुगुप्सांचक्रे । तितिक्षते । मीमांसते । भष्भावः । चर्त्वम् । बीभत्सते ॥ ४ ॥ रभ राभस्ये । आरभते । आरेभे । रब्धा । रप्स्यते ॥ ५ ॥ डुलभष् प्राप्तौ । लभते ॥ ६ ॥ ष्वञ्ज परिष्वङ्गे । दंशसञ्जस्वञ्जां शपि ।६।४।२५। रञ्जेश्च ।६।४।२६। एषां शपि नलोपः । स्वजते । परिष्वजते । श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरम् । देभतुः । सस्वजे इति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते । * सदेः परस्य लिटीति सूत्रे स्वञ्जेरुपसंख्यानम् । अतोऽभ्यासात्परस्य षत्वं न । परिषस्वजे । परिषस्वञ्जे । सस्वजिषे । सस्वञ्जिषे । स्वङ्क्ता । स्वङ्क्ष्यते । स्वजेत । स्वङ्क्षीष्ट । प्रत्यष्वङ्क्त । प्राक्सितादिति षत्वम् । परिनिविभ्यस्तु सिवादीनां वेति विकल्पः । एतदर्थमेवोपसर्गात्सुनोतीत्येव सिद्धे स्तुस्वञ्जोः परि-

—ॠत इद्धातोः ॥ किरति । गिरति । कीर्णः । गीर्णः । स्तीर्णः । धातोः किम् । मातॄणाम् ॥—इत्वोत्वाभ्यामिति । परत्वाद् गुणवृद्धी भवत इति कर्तव्ये किमिदं वार्तिकमिति चेत् । अत्राहु । परादप्यन्तरङ्गं प्रबलमितीत्वे प्राप्ते वार्तिकमिदमारब्धमिति ॥—वॄतो वा ॥ इह 'आर्धधातुकस्येड्'— इत्यत इडित्यनुवर्तते 'ग्रहोऽलिटि'इत्यतो लिटि दीर्घ इति च तदाह—इटो दीर्घो वेत्यादि ॥—सिचि च ॥ 'न लिडि' इत्यतो नेत्यनुवर्तनादाह—इटो दीर्घो नेति ॥—मान्बध—॥ आभ्यासस्येति च्छेदः । अभ्यासस्य विकार आभ्यासः । स चात्र 'सन्यत' इतीत्वमेव । यदि तु ह्रस्व इत्येव गृह्येत तर्हि तद्धितनिर्देशो व्यर्थः स्यात्तदेतदाह—अभ्यासस्येकारस्येति । वृत्तिकारागुपनिबद्धार्थान्दर्शयति । गुपेर्निन्दायामित्यादिना ॥—सन्यङोः—॥ सप्तमीमाश्रित्य सनि यङि च परे इति व्याख्याया प्रतीषिषति अटाट्यते इत्यादि न सिद्ध्येत् । सन्यङोः प्रकृतिभागस्यैव द्वित्वप्रसक्तेरत आह—सन्नन्तस्येति । ननु सप्तमीपक्षेऽपि सन्यङोरेव द्वित्वं स्यान्न तु प्रकृतिभागस्य । शपोऽकारेणैव जुगुप्सते तितिक्षते इत्यादिरूपसिद्धेस्तयोरकारोच्चारणस्य 'अजादेर्द्वितीयस्य' इति द्वित्वार्थत्वात् । यद्यपि निमित्तस्य कार्यित्वस्वीकारे आट आटतुरित्यादौ लिटि परतः पूर्वभागमात्रस्य द्वित्वं न सिध्येत्तथाप्यकारोच्चारणसामर्थ्यात् 'सन्यङोः' कार्यित्वमभ्युपगन्तुं शक्यमिति चेत् । मैवम् । अकारफलानां बहूनां सत्त्वात् । तथाहि दित्स्य धित्स्यमित्यत्राचो यति कृते 'यतो नाव' इत्याद्युदात्तः सिध्यति । अकाराभावे तु 'ऋहलोः'—इति ण्यतीष्टस्वरो न सिध्येत् । किंच पिपठिषि ब्राह्मणकुलानीत्यत्राल्लोपस्य स्थानिवत्त्वाद् झलन्तलक्षणो नुम् न भवति, अकाराभावे तु स्यादेव नुम् । अपि च पापचक इत्यादावल्लोपस्य स्थानिवत्त्वात् 'अत उपधायाः' इति वृद्धिर्न प्रवर्तते । अपि च 'यस्य हलः' इत्यत्र यस्येति सघातग्रहणमहर्यादित्यादौ यलोपव्यावृत्त्यर्थमिति सर्वसमतम् । तथा च अपापचिष्टेत्यादौ यलोपोऽप्यकारफलमिति 'सन्यङोः' इति षष्ठ्येव युक्ता । एवं हि यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वं सिध्यति । परसप्तम्यां तु द्वित्वस्याङ्गकार्यत्वात् 'न लुमता—' इति निषेधः प्रवर्तेतेति दिक् ॥—दानशानौ चेति । आर्जवनिशानार्थाविति भावः ॥ —अर्थान्तरे त्विति । धातुपाठोपात्ते गोपनादिरूपेऽर्थे इत्यर्थः ॥—अननुबन्धका इति । सानुबन्धकत्वे तु केवलेऽचरितार्थत्वात् अनुबन्धस्य सन्नन्तादिवाकर्तृगफलाद् ण्यन्तादपि तङ् स्यादिति भावः । एवं चाऽनुपूर्वीमात्रसाम्येऽपि भ्वादयश्चुरादिभ्यो भिन्ना एवेति फलितम् ॥—इड्गुणौ नेति । यद्यपि 'हलन्ताच्च' इति सनः कित्त्वेनापि गुणाभावः सुसाधस्तथापीडभावार्थमुक्तहेतुरेवाश्रयणीय इति किं हेत्वन्तराश्रयणेनेति भावः । केचित्तु अर्थवद्ग्रहणपरिभाषया इच्छासन एव 'हलन्ताच्च' इति सूत्रे ग्रहणमिति नास्य स्वार्थसनः कित्वमित्याहुः ॥ रभ राभस्ये । राभस्यमुपक्रमः । लिटि । रेभे । रेभाते । लुङि । अरब्ध । अरप्सातम् । डुलभष् । 'ड्वितः क्त्रिः' । लब्धिमम् । 'षिद्भिदादिभ्यः—' इत्यङ् । लभा ।

१ गुपेर्निन्दायामिति—गोपनाद्यर्थकानां निन्दादौ वृत्तिस्तु धातूनामनेकार्थत्वाद्बोध्या । २ किद्भिन्ना इति—य एव विद्वान् चिकित्सतीत्यादिप्रयोगात्स परस्मैपदीति भावः ।

विपरीतत्र पुनरुपादानम् । पर्यष्वङ्क्त । पर्यस्वङ्क्त ॥ ७ ॥ हद पुरीषोत्सर्गे । हदते । जहदे । हत्ता । हत्स्यते । हदेत । हत्सीष्ट । अहत्त ॥ ॥ अथ परस्मैपदिनः ॥ ञिक्ष्विदा अव्यक्ते शब्दे ॥ १ ॥ स्कन्दिर् गतिशोषणयोः । चस्कन्दिथ । चस्कन्थ । स्कन्ता । स्कन्त्स्यति । नलोपः । स्कद्यात् । इरित्त्वादङ् वा । अस्कदत् । अस्कान्त्सीत् । अस्कान्ताम् । अस्कान्त्सुः । **वेः स्कन्देरनिष्ठायाम्** ।८।३।७३। षत्वं वा स्यात् । कृत्येवेदम् । अनिष्ठायामिति पर्युदासात् । विष्कन्त्ता । विस्कन्त्ता । निष्ठायां तु । विस्कन्नः । **परेश्च** ।८।३।७४। अस्मात्परस्य स्कन्देः सस्य षो वा । योगविभागादनिष्ठायामिति न संबध्यते । परिष्कन्दति । परिस्कन्दति । परिष्कण्णः । परिस्कन्नः । षत्वपक्षे णत्वम् । न च पदद्वयाश्रयतया बहिरङ्गत्वात्षत्वस्यासिद्धत्वम् । धातूपसर्गयोः कार्यमन्तरङ्गमित्यभ्युपगमात् । पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेनेति भाष्यम् । पूर्वं साधनेनेति मतान्तरे तु न णत्वम् ॥ २ ॥ यभ मैथुने । येभिथ । ययब्ध । यब्धा । यप्स्यति । अयाप्सीत् ॥ ३ ॥ णम प्रह्वत्वे शब्दे च । नेमिथ । ननन्थ । नन्ता । अनंसीत् । अनंसिष्टाम् ॥ ४ ॥ गम्लृ सृप्लृ गतौ । **इषुगमियमां छः** ।७।३।७७। एषां छः स्याच्छिति परे । गच्छति । जगाम । जग्मतुः । जग्मुः । जगमिथ । जगन्थ । गन्ता । **गमेरिट् परस्मैपदेषु** ।७।२।५८। गमेः परस्य सकारादेरिट् स्यात् । गमिष्यति । लृदित्त्वादङ् । अनङीति पर्युदासान्नोपधालोपः । अगमत् । सर्पति । ससर्प । **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** ।६।१।५९। उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति परे । स्रप्ता । सर्प्ता । स्रप्स्यति । सर्प्स्यति । असृपत् ॥ ६ ॥ यम उपरमे । यच्छति । येमिथ । ययन्थ । यन्ता । अयंसीत् । अयंसिष्टाम् ॥ ७ ॥ तप सन्तापे । तप्ता । अताप्सीत् । **निसस्तपतावनासेवने** ।८।३।१०२। षः स्यात् । आसेवनं पौनःपुन्यं ततोऽन्यस्मिन्विषये । निष्टपति ॥ ८ ॥ त्यज हानौ । तत्यजिथ । तत्यक्थ । त्यक्ता । अत्याक्षीत् ॥ ९ ॥ षञ्ज सङ्गे । दंशसञ्जस्वञ्जां शपीति नलोपः । सजति । सङ्क्ता ॥ १० ॥ दृशिर् प्रेक्षणे । पश्यति । **विभाषा सृजिदृशोः** ।७।२।६५। आभ्यां थल इड्वा । **सृजिदृशोर्झल्यमकिति** ।६।१।५८। अनयोरमागमः स्याज्झलादावकिति । दद्रष्ठ । ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्त्वादङ् वा । **ऋदृशोऽङि गुणः** ।७।४।१६। ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् । अङभावे । **न दृशः** ।३।१।४७। दृशश्च्लेः क्सो न । अद्राक्षीत् ॥ ११ ॥ दंश दशने । दशनं दंष्ट्राव्यापारः । पृषोदरादित्वादनुनासिकलोपः । अत एव निपातनादित्येके । तेषामप्यत्रैव तात्पर्यम् । अर्थनिर्देशस्याधुनिकत्वात् । दंशसञ्जेति नलोपः । दशति । ददंशिथ । ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् । अदाङ्क्षीत् ॥ १२ ॥ कृष विलेखने । विलेखनमाकर्षणम् । क्रष्टा । कर्ष्टा । क्रक्ष्यति । कर्क्ष्यति । * **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः** । अक्राक्षीत् । अक्राष्टाम् । अकार्क्षीत् । अकार्ष्टाम् । अकार्क्षुः । पक्षे क्सः । अकृक्षत् । अकृक्षताम् । अकृक्षन् ॥ १३ ॥ दह भस्मीकरणे । देहिथ । ददग्ध । दग्धा । धक्ष्यति । अधाक्षीत् । अदाग्धाम् । अधाक्षुः ॥ १४ ॥ मिह सेचने । मिमेह । मिमेहिथ । मेढा । मेक्ष्यति । अमिक्षत् ॥ १५ ॥ कित निवासे रोगापनयने च । चिकित्सति । संशये

---

लिटि । लेभे । लुङि । अलब्ध ॥—**वेः स्कन्देरनिष्ठायाम्** ॥ 'सिवादीनाम्–' इत्यतो वेति वर्तते । अषोपदेशत्वादप्राप्ते विभाषेयम् । माधवादिग्रन्थानुरोधेनाऽऽह—**कृत्येवेदमि**ति । प्राचा तु विष्कन्दतीत्युदाहृतं तत्र मूलं मृग्यमिति भावः ॥—**न संबध्यत** इति । अत एव तिङन्तेऽपि षत्वमुदाहरन्ति—**परिष्कन्दती**ति ॥—**णम प्रह्वत्वे** । केचिदमुदितं पठन्ति तत्प्रामादिकमित्याहुः ॥—**जग्मतुरि**ति । 'गमहन–' इत्युपधालोपः ॥—**अनुदात्तस्य**—॥ 'आदेच उपदेशेऽशिति' इत्यत उपदेशे इत्यनुवर्तते । उपदेशे किम् । स्रप्तुम् । तुमुनि उदात्तः । ऋदुपधस्य किम् । कर्ता । झलीति किम् । ससर्प । अकितीति किम् । सृप्तः ॥—**असृपदि**ति । लृदित्वादङ् । 'स्पृशमृश–' इति सिज्विकल्पवार्तिके सृपं प्रक्षिप्य अस्राप्सीदिति केचिदुदाहरन्ति तत्प्रामादिकमित्याहुः ॥—**अयंसीदि**ति । 'यमरम–' इतीट्सकौ ॥—**निसस्तपता**—॥ मूर्धन्य इत्यनुवर्तमाने फलितमाह—**षः स्यादि**ति । आसेवने तु निस्तपति । पुनःपुनस्तपतीत्यर्थः ॥—**विभाषा सृजिदृशोः** ॥ क्रादिनियमान्नित्ये प्राप्ते विभाषेयम् ॥—**सृजिदृशोः**—॥ झलि किम् । ससर्ज ददर्श । अकितीति किम् । सृष्टः । सृष्टवान् । दृष्टः । दृष्टवान् ॥—**अदाङ्क्षीदि**ति । 'वदव्रज–' इति वृद्धिः । अदाङ्ष्टाम् । अदाङ्क्षुः । क्रष्टा कर्ष्टेति । 'अनुदात्तस्य च'—इत्यम् वा ॥—**धक्ष्यती**ति । घत्वषत्वभष्भावाः ॥—**अधाक्षीदि**ति । 'अस्तिसिचः' इतीट् । वृद्धिः । घत्वादि प्राग्वत् । **मिह सेचने** । सेचनमिह मिश्रीकरणक विवक्षितं न तु सेचनमात्रम् । 'मेढ्रं मेहनशेफसी' इत्यमरः । **कित निवासे** । कितेर्व्याधिप्रतीकारादावेव सनित्युक्तं तदुदाहरति—**चिकित्सती**ति । रोगमपनयतीत्यर्थः ।

---

१ कृत्येवेदमिति—परे तु अत्र भाष्याननुग्रहः । अत एव 'अनुविपरिभ्य–' इत्यत्रैव भगवतात्र सूत्र पर्युदासप्रसज्यप्रतिषेधयोः फलभेदविचारो न कृतः । तस्मादिपूर्वस्यास्य तिङ्प्रयोगो वा सषत्वप्रयोग इत्याहुः । २ अनुनासिकलोप इति—सच दंष्ट्राव्यापारे एव । तत्तुत्रं वर्म दंशनमित्यमरस्वरसात् ।

प्रायेण विपूर्वः । विचिकित्सा तु संशय इत्यमरः । अस्यानुदात्तेत्त्वमाश्रित्य चिकित्सते इत्यादि कश्चिदुदाजहार । निवासे तु केतयति ॥ १६ ॥ दान खण्डने । शान तेजने ॥ ॥ इतो वहत्यन्ताः स्वरितेतः ॥ दीदांसति । दीदांसते । शीशांसति । शीशांसते । अर्थविशेषे सन् । अन्यत्र दानयति ॥ २ ॥ डुपचष् पाके । पचति । पचते । पेचिथ । पपक्थ । पेचे । पक्ता । पक्षीष्ट ॥ ३ ॥ षच समवाये । सचति । सचते ॥ ४ ॥ भज सेवायाम् । भेजतुः । भेजुः । भेजिथ । बभक्थ । भक्ता । भक्ष्यति । भक्ष्यते । अभाक्षीत् । अभक्त ॥ ५ ॥ रञ्ज रागे । नलोपः । रजति । रजते । अराङ्क्षीत् । अरङ्क्त ॥ ६ ॥ शप आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शशाप । शेपे । अशाप्सीत् । अशप्त ॥ ७ ॥ त्विष दीप्तौ । त्वेषति । त्वेषते । तित्विषे । त्वेक्ष्यति । त्विक्षीष्ट । अत्विक्षत् । अत्विक्षाताम् ॥ ८ ॥ यज देवपूजासङ्गतिकरणदानेषु । यजति । यजते । **लिट्यभ्यासस्योभयेषाम्** ।६।१।१७। वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि । इयाज । **वचिस्वपियजादीनां किति** ।६।१।१५। वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्किति । पुनःप्रसङ्गविज्ञानाद्द्वित्वम् । ईजतुः । ईजुः । इयजिथ । इयष्ठ । ईजे । यष्टा । यक्ष्यति । इज्यात् । यक्षीष्ट । अयाक्षीत् । अयष्ट ॥ ९ ॥ डुवप् बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि । केशान्वपति । उवाप । ऊपे । वप्ता । उप्यात् । वप्सीष्ट । प्रण्यवाप्सीत् । अवप्त ॥ १० ॥ वह प्रापणे । उवाह । उवहिथ । सहिवहोरोदवर्णस्य । उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढ्वम् ॥ ११ ॥ वस निवासे । परस्मैपदी । वसति । उवास । **शासिवसिघसीनां च** ।८।३।६०। इण्कुभ्यां परस्यैषां सस्य षः स्यात् । ऊषतुः । ऊषुः । उवसिथ । उवस्थ । वस्ता । **सः स्यार्धधातुके** ।७।४।४९। सस्य तः स्यात्सादावार्धधातुके । वत्स्यति । उष्यात् । अवात्सीत् । अवात्ताम्[1] ॥ १२ ॥ वेञ् तन्तुसन्ताने । वयति । वयते । **वेञो वयिः** ।२।४।४१। वा स्याल्लिटि । इकार उच्चारणार्थः[2] । उवाय । **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** ।६।१।१६। एषां किति ङिति च संप्रसारणं स्यात् । इति यकारस्य प्राप्ते । **लिटि वयो यः** ।६।१।३८। वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः । **वश्चास्यान्यतरस्यां किति** ।६।१।३९। वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयस्तासावभावात्थलि नित्यमिट् । उवयिथ । स्थानिवद्भावेन ञित्वात्तङ् ।

---

शत्रुं चिकित्सति ॥ निगृह्णातीत्यर्थः । क्षेत्रे तृणं चिकित्सति । अपनयति नाशयति वेत्यर्थः । अर्थान्तरे चुरादिरित्युक्तं तदुदाहरति—**केतयतीति** । षच समवाये । समवायः संबन्धः ॥—**भेजतुरिति** । 'तृफलभज—' इत्येत्वम् ॥—**भक्ष्यतीति** । कुत्वषत्वे । **त्विष** दीप्तौ ॥—**अत्विक्षदिति** । 'शल—' इति क्सः । कत्वषत्वे ॥—**अत्विक्षातामिति** । 'क्सस्याचि' इति लोपः । **यज** देव । देवपूजा लिह देवोद्देशेन विधिबोधितो द्रव्यत्यागः ॥—**लिट्यभ्यासस्यो**—॥ वच्यादयो वचिस्वपियजादयः । ग्रह्यादयस्तु 'ग्रहिज्यावयि—' इत्यादयः । यद्यपि ग्रहिपृच्छतिभृज्जतीनामभ्यासस्य संप्रसारणे कृतेऽकृते च विशेषो नास्ति, तथापि पर्जन्यवल्लक्षण प्रवर्तते । जग्राह । पप्रच्छ । बभ्रज्ज । वृश्चतेस्तु विशेषः । संप्रसारणस्याकरणे वव्रश्चेत्यत्र वकारस्य सप्रसारणं स्यात् । कृते तु संप्रसारणे 'न संप्रसारणे' इति निषेधप्रवृत्तिरिति । लिटीति किम् । विवक्षति । यियक्षति ॥—**वचिस्वपि**—॥ आगणान्ता यजादयः । 'यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ इत्यपि । ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव' ॥ कितीति किम् । इयष्ठ । **डुवप्** । 'ड्वितः क्त्रिः' । उप्त्रिमम् ॥—**शासिवसिघसीनां च** ॥ धातुसकारस्याप्राप्ते विधिरयम् । ननु सुपिसौ सुपिस इत्यादावतिप्रसङ्गवारणाय धातोः सकारस्य चेदेवमेवेति नियमार्थता स्वीकृत्य 'आदेशप्रत्यययोः' इति सूत्रं त्यज्यतामिति चेद् । अत्राहुः । आदेशावयवस्य षत्ववारणाय आदेशस्येत्यंशस्तावदावश्यकः । तद्ग्रहणे कृते धातुभिन्नसकारस्य चेद्भवति आदेशरूपस्यैवेति नियमप्रसङ्गवारणाय प्रत्ययग्रहणमपि कर्तव्यमेवेति ॥—**अवात्सीदिति** । 'वदव्रज—' इति वृद्धिः । 'सः सि'—इति तः । 'अस्तिसिचः'—इतीट् ॥—**उच्चारणार्थ** इति । इत्संज्ञायाम् 'इदितः'—इति तु नुम् स्यादिति भावः ॥—**उवायेति** । 'ग्रहिज्या—' इत्यत्र वयिग्रहणाद्वेञ इति निषेधोऽत्र न प्रवर्तत इत्याहुः ॥—**ग्रहिज्यावयि**—॥ गृह्णाति । गृहीतः । जिनाति जिनीतः । जीनः । ङिति वयेरुदाहरणं नास्ति किति तु 'वचिस्वपियजादीनाम्—' इति सिद्धम् । यजादिषु वेञः पाठात् । अत एवाभ्याससप्रसारणमपि सिद्धम् ॥—**वेञ** इति । संप्रसारणनिषेधस्तु 'लिटि वयो यः' इति निषेधारम्भान्न प्रवर्तते । तस्माद् ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थमेवेति बोध्यम् ॥—**वश्चास्या**—॥ अस्येत्यनेन 'वयो यः' इति परामृश्यते । तदाह—**वयो यस्येति** । 'वो वा किति' इत्येव सुवचम् । 'लिटि वयो यः' इति प्रकृतत्वात् । 'उपदेशेऽत्वतः' इति निषेधमाशङ्क्याह—**वयस्तासावभावादिति** । ननु स्थानिनस्तासौ विद्यमानत्वात् स्थानिवद्भावेन तासौ विद्यमानत्व सुलभमिति चेद् । अत्राहुः । शास्त्री-

---

१ अवात्तामिति—सिज्लोपस्यासिद्धत्वेन सःसीति तत्व सिज्लोपः । २ उच्चारणार्थ इति—परे तु वयिरित्यादौ स्थानिवद्भावेन भाव्यातिदेशिकं धातुत्वमादाय धातुनिर्देशोऽत्र इक् इति वदन्ति ।

ऊवे। ऊवे। वयादेशाभावे। ∎ वेञः ।६।१।४०। वेञो न संप्रसारणं स्याल्लिटि। ववौ। ववतुः। ववुः। ववियि। ववाथ। ववे। वाता। ऊयात्। वासीष्ट। अवासीत्॥ १३॥ व्येञ् संवरणे। व्ययति। न व्यो लिटि ।६।१।४६। व्येञ आत्वं न स्याल्लिटि। वृद्धिः। परमपि हलादिःशेषं बाधित्वा यस्य संप्रसारणम्। उभयेषां ग्रहणसामर्थ्यात्। अन्यथा वच्यादीनां ग्रहादीनां चानुवृत्त्यैव सिद्धं किं तेन। विव्याय। विव्यतुः। विव्युः। इडर्त्तीति नित्यमिट्। विव्ययिथ। विव्याय। विव्यय। विव्ये। व्याता। वीयात्। व्यासीष्ट। अव्यासीत्। अव्यास्त॥ १४॥ ह्वेञ् स्पर्धायां शब्दे च। ∎ अभ्यस्तस्य च ।६।१।३३। अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणं स्यात्। ततो द्वित्वम्। जुहाव। जुहुवतुः। जुहुवुः। जुहोथ। जुहविथ जुहुवे। ह्वाता। हूयात्। ह्वासीष्ट। ∎ लिपिसिचिह्वश्च ।३।१।५३। एभ्यश्च्लेरङ् स्यात्। ∎ आत्मनेपदेष्वन्यतरस्याम् ।३।१।५४। अतो लोपः। अह्वत्। अह्वताम्। अह्वन्। अह्वत। अह्वास्त॥ १५॥ ॥ अथ द्वौ परस्मैपदिनौ॥ वद व्यक्तायां वाचि। अच्छ वदति। उवाद। ऊदतुः। उवदिथ। वदिता। उद्यात्। वदव्रजेति वृद्धिः। अवादीत्॥ १०॥ टुओश्वि गतिवृद्ध्योः। श्वयति। ∎ विभाषा श्वेः ।६।१।३०। श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च। शुशाव। शुशुवतुः। * श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः। तेन लिट्यभ्यासस्येति संप्रसारणं न। शिश्वाय। शिश्वियतुः। श्वयिता। श्वयेत्। शूयात्। जृस्तम्भ्विल्वङ् वा। ∎ श्वयतेरः ।७।४।१८। श्वयतेरिकारस्य अकारः स्यादङि। पररूपम्। अश्वत्। अश्वताम्। अश्वन्। विभाषा धेट्श्व्योरिति चङ्। इयङ्। अशिश्वियत्। ह्यन्तेति न वृद्धिः। अश्वयीत् ॥ २॥ वृत्। यजादयो वृत्ताः। भ्वादिस्त्वाकृतिगणः। तेन चुलुम्पतीत्यादिसंग्रहः॥ ॥ इति भ्वादयः॥

## ॥ तिङन्ते अदादयः॥

ऋतेरीयङ् ।३।१।२९। ऋतिः सौत्रः तस्मादीयङ् स्यात्स्वार्थे। जुगुप्सायामयं धातुरिति बहवः। कृपायां चेत्येके। सनाद्यन्ता इति धातुत्वम्। ऋतीयते ऋतीयांचक्रे। आर्धधातुकविवक्षायां तु। आयादय आर्धधातुके वेतीयङभावे शेषात्कर्तरीति परस्मैपदम्। आनर्त। अर्तिष्यति। आर्तीत्॥ १॥ अद भक्षणे। द्वौ परस्मैपदिनौ।

यकार्ये हि स्थानिवद्भावो न तु लौकिके। अचस्तास्वदिति निषेधस्य शास्त्रीयत्वेपि सोऽत्र नातिदिश्यते। अच इत्युक्तेरल्विधित्वादिति॥—वेञः॥लिटि किम्। उत्तम्। उत्तवान्॥—न व्यो लिटि॥ लिटि किम्। व्याता व्यास्यति॥—हलादिशेषं बाधित्वेति। हलादिशेषं तु वस्य सम्प्रसारणं स्यादिति भावः।—वीयादिति। सम्प्रसारणे अकृतसार्वेति दीर्घः। अजन्तोकारवान्वा यस्तास्यनिट् थलि वेड् भवतीत्याशङ्कायामाह—नित्यमिडिति। ह्वेञ। शब्द इति सामान्योक्तावपि आकारणरूपशब्द एवात्र गृह्यत इत्याहुः। तथा च माघे। 'यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्बाहुना जुहुविरे मुहुरात्मवर्ग्यां' इति कर्मणि प्रयोगः॥ह्वः सम्प्रसारणमभ्यस्तस्य चेति सूत्र योगविभागेन व्याचष्टे—। अभ्यस्तस्य चेति। पूर्वयोगस्तु णौ च सश्चङोर्विषये प्रवर्तते। जुहावयिषति। अजूहवत्॥—अभ्यस्तीभविष्यतो ह्वेञः इति। अभ्यस्तनिमित्ते प्रत्यये परे द्विर्वचनात्प्रागेव ह्वेञः संप्रसारणमिति फलितोऽर्थः। अभ्यस्तमस्यास्तीति अभ्यस्त मनादिस्तस्य यो ह्वेञ् तत्प्रकृतिभूतस्तस्येत्यादिव्याख्यानस्य स्वीकारात्। तेन जिह्वायकियिषतीत्यत्र ह्वेञ सम्प्रसारणं न भवति ण्वुलो द्वित्वनिमित्तत्वाभावात्। अत एव णिचो द्वित्वनिमित्तत्वं नेति ह्वः सम्प्रसारणमिति योगविभागः क्रियते। एतच्च आकरे स्पष्टम्॥—लिपिसिचि—। लिप उपदेहे। षिच क्षरणे। अलिपत्। असिचत्॥—अच्छ वदतीति। अच्छेत्यस्य वदयोगे गतित्वाद्धातोः प्राक् प्रयोगः॥—विभाषा श्वेः॥—लिटि यङि चेति। 'लिट्यडोश्च' इति पूर्वसूत्रमिहानुवर्तत इति भावः। उभयत्रविभाषेयं लिड्शे अतुसादौ नित्यं प्राप्ते णलादावप्राप्ते। यङशे त्वप्राप्तविभाषा। शोशूयते। शेश्वीयते॥—संप्रसारणं नेति। अन्यथा शुशावयेत्यादि स्यादिति भावः॥—श्वयतेरः॥ अलोऽन्त्यपरिभाषालभ्यमाह—इकारस्येति॥—पररूपमिति। अतो लोपस्तु न भवति आर्धधातुकोपदेशे यद्दकारान्तमिति व्याख्यातत्वात्॥—इयङिति। लघूपधगुणापेक्षयान्तरङ्गत्वादिति भावः॥—अश्वयीदिति। नन्विहान्तरङ्गत्वाद्गुणाऽयादेशयोः कृतयोर्यान्तत्वादेव वृद्धिनिषेधो भवेदिति किमनेन णिश्विग्रहणेनेति चेद्। अत्राहुः। न सिच्यन्तरङ्गमस्तीति ज्ञापनार्थं णिश्विग्रहणम्। तेन चिरिणोतिजिरिणोत्योर्यङ्लुगन्तानां चिनीप्रभृतीना च मिचि बहिरङ्गा वृद्धिरेव भवति। अचिरायीत्। अजिरायीत्। अचेचायीत्। अनेनायीत् इति॥—तेनेति। उक्तं च वार्तिककृता—'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इति॥—चुलुम्पतीति। लुम्पतीत्यर्थः। चुलुम्प लोप इति कविकल्पद्रुमे उक्तत्वात्॥ ॥ इति भ्वादयः॥

ऋतेरीयङ्॥ तान्तोऽयं धातुरिकारनिर्दिष्टो न लिकारान्तः। वश्चिलुक्ष्यृतश्चेति निर्देशात्। केचित्तु ईयङ् इति दीर्घोच्चारणात्तान्तोऽयमिति ज्ञायते। इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादित्याहुस्तच्चिन्त्यम्। इदन्तत्वे तु ऐरनेकाच इति यणा सवर्णदीर्घस्य बाधात्। न च ऋतेर्यङ्विधावकृत्सार्वेति दीर्घोपपत्तेरीयङ्विधानं तान्तत्वे लिङ्गं भवत्वेवेति वाच्यम्।

**अदिप्रभृतिभ्यः शपः** ।२।४।७२। लुक् स्यात् । अत्ति । अत्तः । अदन्ति । **लिट्यन्यतरस्याम्** ।२।४।४०। अदो घस्लृ वा स्याल्लिटि । जघास । गमहनेत्युपधालोपः । तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य च-र्त्वम् । शासिवसीति षत्वम् । जक्षतुः । जक्षुः । घसस्तासावभावात्थलि नित्यमिट् । जघसिथ । आद । आदतुः । ऋ-द्वत्यतीति नित्यमिट् । आदिथ । अत्ता । अत्स्यति । **हुझल्भ्यो हेर्धिः** ।६।४।१०१। होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अदानि । **अदः सर्वेषाम्** ।७।३।१००। अदः परस्यापृक्तसार्वधातुकस्य अडागमः स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्या-ताम् । अद्युः । अद्यास्ताम् । अद्यासुः । **लुङ्सनोर्घस्लृ** ।२।४।३७। अदो घस्लृ स्यात् लुङि सनि च । लृ-दित्त्वादङ् । अघसत् ॥ २ ॥ हन हिंसागत्योः । प्रणिहन्ति । **अनुदात्तोपदेशवनतितनोत्यादीनामनुना-सिकलोपो झलि क्ङिति** ।६।४।३७। अनुनासिकेति लुप्तषष्ठीकं[1] वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । यमिरमिनमिगमिहनि मन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति । **हमोर्वा** ।८।४।२३। उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः । प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्वः । हो हन्तेरिति कुत्वम् । जघान । जघ्नतुः । जघ्नुः । **अभ्यासाच्च** ।७।३।५५। अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ । जघन्थ । हन्ता । ऋद्धनोरितीट् । हनिष्यति । हन्तु । हतात् । घ्नन्तु । **हन्तेर्जः** ।६।४।३६। हौ परे । आभीयतया अस्यासिद्ध-त्वाद्धेर्न लुक् । जहि । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहनम् । **आर्धधातुके** ।२।४।३५। इत्यधिकृत्य । **हनो वध लिङि** ।२।४।४२। **लुङि च** ।२।४।४३। वधादेशोऽदन्तः । आर्धधातु-क इति विषयसप्तमी । तेनार्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । आर्धधातुके किम् । विध्यादौ हन्यात् । हन्तेरिति णत्वम् । प्रहण्यात् । अल्लोपस्य स्थानिवत्त्वादतो हलादेरिति न वृद्धिः । अवधीत् ॥ ३ ॥ ॥ अथ चत्वारः स्वरितेतः ॥ द्विष अप्रीतौ । द्वेष्टि । द्विष्टे । द्वेष्टा । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु । द्विष्टात् । द्विड्ढि । द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट् । **द्विषश्च** ।३।४।११२। लङो झेर्जुस्वा स्यात् । अद्विषुः । अद्विषन् । अद्वेषम् । द्विषीत् । द्विक्षीष्ट । अद्विक्षत ॥ १ ॥ दुह प्रपूरणे । दोग्धि । दुग्धः । धोक्षि । दुग्धे । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अधुग्ध्वम् । अधुक्षत् । अधुक्षत । लु-ग्वा दुहेति लुक्पक्षे तथासध्वंवहिषु लङ्वदपि ॥ २ ॥ दिह उपचये । प्रणिदेग्धि ॥ ३ ॥ लिह आस्वादने । लेढि ।

---

यङ्विधौ 'सन्यङोः' इति द्वित्वापत्तेः ॥—**कृपायां चेति** । 'अर्तन च ऋतीया च घृणीया च घृणार्थकाः' इति 'जुगुप्सा करुणा घृणा' इति चामरः ॥—**हुझल्भ्यो हेर्धिः** ॥ जुहुधि । घसिभसोर्हलीत्यतो हलीत्यनुवर्त्य हलादेरिति व्याख्या-नाद् । रुदिहि स्वपिहि इत्यादाविडादेर्हेर्धिर्न भवति, अत्तादित्यत्र तु धित्वात्परत्वात्तातङि कृते स्थानिवद्भावेन पुनर्धित्व तु 'सकृद्गतौ' इति न्यायान्नेत्याहुः । अन्ये तु हेर्धिरित्यत्र स्थान्यादेशयोर्द्वयोरपीकार उच्चारणार्थ इति हकारस्य धकार आ-देशः । तेन हलीत्यनुवृत्तिर्न कर्तव्या, नापि तातङो धित्वप्रसङ्ग इति सकृद्गतिन्यायाश्रयणमपि मास्त्वित्याहुः ॥—**अदः सर्वेषाम्** ॥ 'अड्गार्ग्यगालवयोः' इत्यतः अडित्यनुवर्तते । गार्ग्यगालवयोरित्यस्य त्वनुवृत्तिशङ्का निवारयितुं सर्वेषा ग्रह-णम् ॥—**लुङ्सनोः**—॥ जिघत्सति ॥—**प्रणिहन्ती**ति । 'नेर्गद—' इति णत्वम् ॥—**अनुदात्तोपदेश**—॥ यद्यत्र एतेषामनुनासिकस्य लोप इति व्याख्यायेत तदा मन्यतेर्नम्नहमिहमुचमस्जादीना चानन्त्यस्यापि लोपः स्यात्, तथा च मतः नतः नद्धः मीढः मग्न इत्यादि न सिध्येद् । अत आह—**लुप्तषष्ठीकमि**ति ॥—**वनतीतरेषामि**ति । वनतेरव्यभिचारा-द्विशेषण व्यर्थमिति भावः । वतिः । इह क्तिनि 'नेड्वशि कृति' इतीण्निषेधाज्झलि क्ङिति न लोपः ॥—**लोपः स्यादि**ति । अलोऽन्त्यस्येति भावः । अनुनासिकान्ताऽनुदात्तोपदेशान्दर्शयति—**यमिरमी**ति । तनोत्यादीनप्यनुनासिकान्तान्दर्शयति॥ —**तनुक्षणुक्षिण्वि**ति । करोतिवर्जितास्तनोत्यादयो नव तन्मध्ये सनोतेः 'जनसनखनाम्' इत्यात्व वक्ष्यतीति न स परि-गणितः । ततः क्षतः क्षित इत्यादीन्युदाहरणानि । तनोत्यादीनामुदित्वात् क्त्वायामिड्विकल्पनान्निष्ठायां नेट् । अनुनासिका-न्तानामिति किम् । शक्तः । रुद्धः । झलीति किम् । गम्यते । नम्यते । क्ङितीति किम्, गन्ता । मन्ता ॥—**जघान ज-घ्नतुरि**ति । यद्यप्यत्र 'अभ्यासाच्च' इत्यस्यापि प्रवृत्तिरस्ति तथाप्यन्तरङ्गत्वाद् 'हो हन्तेः'—इत्युपन्यस्तम् ॥—**आभीय-तये**ति । सन्निपातपरिभाषयापि हेर्लुङ् नेति वक्तु शक्यमिति केचित् । तन्मन्दम् । 'अतो हेः' इत्यारम्भसामर्थ्यात्तस्या-अप्रवृत्तेरिति नव्याः ॥—**वधादेशोऽदन्त** इति । तेन आदेशोपदेशेऽनेकाच्त्वात् अवधीदित्यत्र 'एकाचः' इतीण्निषेधा-प्रवृत्ताविडादौ सिचि 'अतो हलादेः'—इति प्राप्ता वृद्धिरल्लोपस्य स्थानिवत्त्वान्नेति भावः । **दुह** प्रपूरण । प्रपूरणे त्याजनम्॥ —**लङ्वदपी**ति । अदुग्ध । अदुग्धाः । अधुग्ध्वम् । अदुह्वहि ॥—**दिह** । उपचयो वृद्धिः ॥—**प्रणिदेग्धी**ति । 'ने-

---

१ लुप्तषष्ठीकमिति—असमस्तं सौत्रत्वाल्लुप्तविभक्तिकमित्यर्थः ।

लीढः । लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे । लेढु । लीढि । लेहानि । अलेट् । अलिक्षत् । अलिक्षत । अलीढ । अलिक्षावहि । अलिह्वहि ॥ ४ ॥ चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । विचक्षणः प्रथयन् । नुम् तु न । अन्तेदित इति व्याख्यानात् । ङकारस्तु अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः[1] । तेन स्फायन्निमौर्वीमन्धीत्यादि सिध्यति । चष्टे । चक्षाते । आर्धधातुके इत्यधिकृत्य । चक्षिङः ख्याञ् ।२।४।५४। वा लिटि ।२।४।५५। अत्र भाष्ये ख्शादिरयमादेशः । असिद्धकाण्डे शस्य यो वेति स्थितम् । ञित्त्वात्पदद्वयम् । चख्यौ । चख्ये । चक्शौ । चक्शे । चयो द्वितीया इति तु न । चर्त्वस्यासिद्धत्वात् । चचक्षे । ख्याता । क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । अचष्ट । चक्षीत । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् । अस्यतिवक्तिख्यातिभ्योऽङ् ।३।१।५२। एभ्यश्च्लेरङ् । अख्यत् । अख्यत । अक्शासीत् । अक्शास्त ॥ * वर्जने क्शाञ् नेष्टः ॥ समचक्षिष्टेत्यादि ॥ ५ ॥ ॥ अथ पृच्यन्ता अनुदात्तेतः ॥ ईर गतौ कम्पने च । ईर्ते । ईरांचक्रे । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट ॥ १ ॥ ईड स्तुतौ । ईट्टे । ईशः से ।७।२।७७। ईडजनोर्ध्वे च ।७।२।७८। ईशीड्जनां सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात् । ईडिष्व । ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात् । ऐड्ढ्वम् ॥ २ ॥ ईश ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे ॥ ३ ॥ आस उपवेशने । आस्ते । दयायासश्च । आसांचक्रे । आस्स्व । आध्वम् । आसिष्ट ॥ ४ ॥ आङः शासु इच्छायाम् । आशास्ते । आशासाते । आङ्पूर्वत्वं प्रायिकम् । तेन नमोवाकं प्रशास्महे इति सिद्धम् ॥ ५ ॥ वस आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता ॥ ६ ॥ कसि गतिशासनयोः । कंस्ते । कंसाते । कंसते । अयमनिदिदित्येके कस्ते । तालव्यान्तोऽप्यनिदित् । कष्टे । कशाते । कक्षे । कड्ढ्वे ॥ ७ ॥ णिसि चुम्बने । निंस्ते । दन्त्यान्तोऽयम् । आभरणकारस्तु तालव्यान्त इति बभ्राम ॥ ८ ॥ णिजि शुद्धौ । निङ्क्ते । निङ्क्षे । निञ्जिता ॥ ९ ॥ शिजि अव्यक्ते शब्दे । शिङ्क्ते ॥ १० ॥ पिजि वर्णे । संपर्चने इत्येके । उभयत्रेत्यन्ये । अवयवे इत्यपरे । अव्यक्ते शब्दे इतीतरे । पिङ्क्ते ॥ ११ ॥ पृजीत्येके । पृङ्क्ते ॥ १२ ॥

---

गेह–' इति णत्वम् ॥—**अलिक्षतेति** । 'शल इगुपधा–' इति क्सः । 'अलिक्षाताम् । अलिक्षन्त ॥—**अलीढेति** । 'लुग्वा दुह–' इति वा लुक् । अलीढाः । अलीढ्वम् ॥—**चक्षिङ्** ॥—**दर्शनेऽपीति** । 'विश्वा रूपा अभिचष्टे शचीभिः' इत्यत्र दर्शनार्थत्वेन व्याख्यातत्वादिति भावः ॥—**युजर्थ** इति । 'अनुदात्तेतश्च हलादेः' इति युच् ॥—**अन्तेदित** इति । 'इदितः' इति नुम्विधौ गोः पादान्त इत्यस्मादन्त इत्यनुवर्तत इति भावः । एवं च नुमागमशङ्कानुत्थानाय चक्षिङ इकारस्थानेऽकार एवासत्तुमुचित. । अनुदात्तत्वेनैव तङि सिद्धे ङकारो व्यर्थ इत्याशङ्क्याह—**ङकारस्त्विति** ॥—**स्फायन्निति** । स्फायी वृद्धावित्यनुदात्तेतो लटः शत्रादेशः ॥—**चष्टे** इति । 'स्कोः—' इति कलोप. । ष्टुत्वम् ॥—**ख्शादिरिति** । तेन पुंख्यानमित्यत्र 'पुमः खय्यमपरे' इति रुत्व नेत्यादि पूर्वार्धे एवोक्तम् ॥—**असिद्धकाण्डे** इति । णत्वप्रकरणानन्तरमिति शेषः । तेन पर्याख्यानमित्यत्र शकारेण व्यवधानात् 'कृत्यचः' इति णत्व न । तथा सुप्रख्येन निर्वृत्त सौप्रख्यं तत्र भवः सौप्रख्यीयः । यत्वस्यासिद्धत्वाद् 'धन्वयोपधात्–' इति वुञ् न । किं तु च्छ एवेति बोध्यम् ॥—**अचष्टेति** । 'स्कोः—' इति कलोपः । ष्टुत्वम् ॥ 'अस्यतिवक्तिख्याति–' इत्यत्र विधिसामर्थ्याद्यत्व नासिद्धम् । स्वतन्त्रस्य ख्याधातोः सार्वधातुकमात्रविषयताया वक्ष्यमाणत्वात् । अस्यतेः पुषादिपाठादङि सिद्धे तदर्थ ग्रहणमित्यादि पुषादिषु वक्ष्यति ॥—**वक्तीति** । 'ब्रुवो वचिः' 'वच परिभाषणे' इति उभयोर्ग्रहणम् । **ईर** । ईरिता । ईरिष्यते । लङि । ऐर्त । ऐराताम् । ऐरत । ऐरि । ऐर्वहि । ऐर्महि ॥—**ईशः से** ॥ यथाश्रुतसूत्रन्यासे ईशो ध्वे शब्दे परे ईशिध्वमिति न सिध्येदत आह—**ईशीड्जनामिति** ॥—**वैचित्र्यार्थमिति** । ध्वे इत्यस्य पूर्वत्रापकर्षः । से इत्यस्योत्तरत्रानुवृत्तिरित्येवं विचित्रबोधार्थ इत्यर्थः । इह काशिकादौ जनेरुदाहरणमुक्तम् । तथा हि । जनी प्रादुर्भाव इत्यस्माच्छयनूछान्दसो लुक् उपधालोपाभावश्च । जनिषे । जनिध्वे । जनिष्व । जनिध्वम् । जन जनने इति श्लुविकरणस्याप्युपधालोपे व्यतिजज्ञिषे । व्यतिजज्ञिध्वे । 'कर्तरि कर्मव्यतिहारे' इति तङ् ॥—**नमोवाकमिति** । 'नमस्ते रुद्रमन्यवे' इत्यादि नमोवचनम् । वचेर्घञ् । 'चजोः' इति कुत्वम् ॥—**ववसे** इति । वादित्वादेत्वाभ्यासलोपौ न । **णिसि** चुम्बने ॥—**बभ्रामेति** । 'नुम् विसर्जनीय'—इति सूत्रे वृत्तिपदमञ्जर्यादिभिरुक्तं 'नुमादिभि. प्रत्येकं व्यवाये षत्वमिष्यते तेन निंस्ते निंस्स्वे इत्यत्र न भवति' इति तदस्य सान्तत्वे युज्यते । शान्तत्वे तु 'व्रश्च–' आदिषत्वे 'षढोः–' इति कत्वे कवर्गात्परत्वेन षत्वं दुर्वारमिति प्रत्युदाहरणमिद न संगच्छत इति भावः । **णिजि शुद्धौ** । अनिट्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेडिति ध्वनयति—**निञ्जितेति** ।—**शिजि अव्यक्ते शब्दे** । क्तप्रत्यये शिञ्जितम् । आवश्यकणिन्यन्तान्ङीपि शिञ्जिनी । 'भूषणाना तु शिञ्जितम्' । 'मौर्वी

---

१ ज्ञापनार्थ इति—इदं च माधवमतानुरोधेन । परे तु ज्ञापकत्वं भाष्यानुक्तम्, स्फायन्नित्यादि तु असाध्वेवेति वदन्ति ।

वृजी वर्जने । दम्भोदयादिः । ईदित् । वृक्ते । वृजाते । वृज्जे । इदिदित्यन्ये । वृङ्क्ते ॥ १३ ॥ पृची संपर्चने । पृङ्क्ते ॥ १४ ॥ षूङ् प्राणिगर्भविमोचने । सूते । सुषुवे । सोता । सविता । भूसुवोरिति गुणनिषेधः । सुवै । सविषीष्ट । सोषीष्ट । असविष्ट । असोष्ट ॥ १५ ॥ शीङ् स्वप्ने । **शीङः सार्वधातुके गुणः** ।७।४।२१। क्ङिति चेत्यस्यापवादः । शेते । शयाते । **शीङो रुट्** ।७।१।६। शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । अशयिष्ट ॥ १६ ॥ ॥ अथ कौत्यन्ताः परस्मैपदिनः । ऊर्णुस्तूभयपदी । यु मिश्रणेऽमिश्रणे च । **उतो वृद्धिर्लुकि हलि** ।७।३।८९। लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । युयाव । यविता । युयात् । इह उतो वृद्धिर्न । भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् । विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात् । यूयात् । अयावीत् ॥ १ ॥ रु शब्दे । **तुरुस्तुशम्यमः सार्वधातुके** ।७।३।९५। एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात् । नाभ्यस्तस्येत्यतोऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति । रौति । रुवीतः । रुतः । हलादेः किम् । रुवन्ति । तिङः किम् । शाम्यति । सार्वधातुके किम् । आशिषि रूयात् । विध्यादौ तु रुयात् । रुवीयात् । अरावीत् । अरविष्यत् ॥ २ ॥ तु इति सौत्रो धातुर्गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति स्मरन्ति[1] । तवीति । तौति । तुवीतः । तुतः । तोता । तोष्यति ॥ ३ ॥ णु स्तुतौ । नौति । नविता ॥ ४ ॥ टुक्षु शब्दे । क्षौति । क्षविता ॥ ५ ॥ क्ष्णु तेजने । क्ष्णौति । क्ष्णविता ॥ ६ ॥ ष्णु प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । स्नुयात् । स्नूयात् ॥ ७ ॥ ऊर्णुञ् आच्छादने । **ऊर्णोतेर्विभाषा** ।७।३।९०। वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति । ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते ॥ * **ऊर्णोतेराम् नेति वाच्यम्** । **न न्द्राः संयोगादयः** ।६।१।३। अचः पराः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य[2] द्वित्वम् । णत्वस्यासिद्धत्वात् । पूर्वत्रासिद्धीयमद्विर्वचन इति त्वनित्यम् । उभौ साभ्यासस्येति लिङ्गात् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णु-

---

ज्या शिञ्जिनी गुणः' इति चामरः ॥—**सुषुविषे** इति । 'स्वरतिसूति–' इति विकल्प बाधित्वा 'श्र्युकः किति' इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । **शीङ्** स्वप्ने ॥—**क्ङिति चेत्यस्येति** । अन्यत्र 'सार्वधातुकार्धधातुकयोः' इत्यनेन सिद्धमिति भावः ॥—**शीङो रुट्** ॥ 'झोन्तः' इत्यतो झ इत्यनुवर्तते । 'अदभ्यस्तात्' इत्यतोऽदिति च । तथा चेष्टानुरोधेनाऽदिति प्रथमान्तस्य षष्ठ्यन्तत्वमाश्रित्य व्याचष्टे—**झादेशस्याऽत** इति । झस्यैव रुडागमे तु अदादेशो दुर्लभ इत्यदित्यस्याप्यनुवृत्तिः कृता ॥—**शिश्ये** इति । 'एरनेकाचः' इति यण् । शेताम् । शयाताम् । शेरताम् । शेष्व । शयाथाम् । शेध्वम् ॥—**उतो वृद्धिः**—॥ 'नाभ्यस्तस्याचि पिति–' इत्यतो निषेधानुवृत्तेराह—**न त्वभ्यस्तस्येति** । उतः किम् । एति । एषि । लुकीति किम् । सुनोति । जुहोति । हलि किम् । यवानि । यवाव । 'आडुत्तमस्य'–इत्याडागमः पित् । पिति किम् । युतः । रुतः । 'नाभ्यस्तस्य' इति किम् । योयोति । रोरोति । सार्वधातुके किम् । यूयात् । न चात्र ङिच्च पिन्नेति व्याख्यानान्निर्वाहः शङ्क्यः । 'किदाशिषि' इति यासुटः कित्त्वात् । केचित्तु युयात् सुयात् इत्यादावपि ङिच्च पिन्नेत्येतदाश्रित्य व्याचक्षते । सञ्ज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न भवति । अन्यथा 'उत औद्' इत्येव वदेदिति ॥—**तुरुस्तु**—॥ तुः सौत्रो धातुरिति वक्ष्यति ॥—**अपिदर्थमिति** । एभ्यः परस्य पितः सार्वधातुकस्येति प्राचो व्याख्यानं प्रामादिकं रुवीतः स्तुवीत इत्याद्यसिध्यापत्तेरिति भावः । शम्यमोरुदाहरण तु शमीध्वम् । अभ्यमीति । अभ्यन्ति । शम्यमोश्छन्दसि विकरणस्य लुकि सति हलादिसार्वधातुकमनन्तरं सम्भवतीति काशिकायामुक्तम् । आपिशलास्तु 'तुरुस्तुशम्यमः सार्वधातुके छन्दसि' इति पठन्ति तन्मते सूत्रमिदं छन्दस्येव ॥—**ऊर्णोतेर्विभाषा** ॥ 'उतो वृद्धिः' इति नित्यं प्राप्ते विभाषेयम् । हलादौ किम् । ऊर्णवानि । पिति किम् । ऊर्णुतः । सार्वधातुके किम् । ऊर्णूयात् । '**ऊर्णोतेराम्न**–'इति । 'ऊर्णोतेर्णुवद्भावो वाच्यः' इति वक्ष्यमाणस्यामभावोऽपि फलमिति भावः ॥—**न न्द्राः**—॥ अजादेरिति वर्तते । स च कर्मधारयः । आदिग्रहणस्य तु प्रकृतेऽनुपयोगस्तदेतदाह—**अचः परा** इति । उन्दिदिषति । इन्दिदिषति । अड्डिडिषति । 'न न्द्राः' इति किम् । ईक्षतेः सनि ईचिक्षिषते । सयोगादयः किम् । प्राणिणिषति । अरिरिषति । अचः पराः किम् । इन्द्रीयितुमिच्छतीति क्यजन्तात्सनि इन्दिद्रीयिषति । इह नकारस्य द्वित्वाभावेऽपि दकारस्तु द्विरुच्यत एव । अचः परत्वाभावात् ॥—**नुशब्दस्येति** । उपदेशे नकार एव । णत्व तु 'रषाभ्याम्–' इत्यनेनेति भावः ॥—**पूर्वत्रासिद्धीयमिति** । अत्र द्विर्वचनशब्देन षाष्ठमाष्टमिकं चोभयं गृह्यते । तत्र षाष्ठस्य ऊढिमाख्यत् औडिढत् इत्युदाहरणम् । आष्टमिकस्य तु द्रोग्धा द्रोग्धा द्रोढा द्रोढेति । इह त्रिपादीस्थघत्वढत्वादिकं द्विर्वचने सिद्धमेव । असिद्धत्वे तु त्रिपादीस्थकार्यात्पूर्वमेव द्रोह्ता इत्यस्य द्वित्वे पश्चात्

---

१ स्मरन्तीति—अव्यवहिततिङ ईड्विधानमत्र बीजम् । २ नुशब्दस्येति—णत्वस्यासिद्धतया नुनुद्वयैव द्वित्वकरणात् । यद्बुध्या शास्त्रप्रवृत्तिस्तद्वितीयप्रयोगस्यैव साधुत्वान्वाख्यानान्नोत्तरखण्डे णश्रवणम्, पूर्वोच्चारणेन व्यवधानान्न शास्त्रेण तत्प्रसक्तिः इति भावः ।

ऊर्णुनुवुः । **विभाषोर्णोः** ।१।२।३। इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुविता । ऊर्णविता । ऊर्णौतु । ऊर्णोतु । ऊर्णवानि । ऊर्णवै । **गुणोऽपृक्ते** ।७।३।९१। ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । इह वृद्धिर्न । ङिच्च पिन्नेति भाष्यात् । ऊर्णूयात् । ऊर्णविषीष्ट । ऊर्णुविषीष्ट । और्णुवीत् । और्णुविष्टाम् । **ऊर्णोतेर्विभाषा** ।७।२।६। इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णाविषुः । और्णवीत् ॥ ८ ॥ द्यु अभिगमने । द्यौति । द्योता ॥ ९ ॥ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सोता । असौषीत् ॥ १० ॥ कु शब्दे । कोता ॥ ११ ॥ ष्टुञ् स्तुतौ । स्तौति । स्तवीति । स्तुतः । स्तुवीतः । स्तुते । स्तुवीते । स्तुसुधूञ्भ्य इतीट् । अस्तावीत् । प्राक्सितादिति षत्वम् । अभ्यष्टौत् । सिवादीनां वा । पर्यष्टौत् । पर्यस्तौत् ॥ १२ ॥ ब्रूञ् व्यक्तायां वाचि । **ब्रुवः पञ्चानामादित आहो ब्रुवः** ।३।४।८४। ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । अकार उच्चारणार्थः । आह । आहतुः । आहुः । **आहस्थः** ।८।२।३५। झलि परे । चर्त्वम् । आत्थ । आहथुः । **ब्रुव ईट्** ।७।३।९३। ब्रुवः परस्य हलादेः पित ईट् स्यात् । आत्थेत्यत्र स्थानिवद्भावात्प्राप्तोऽयं झलीति थत्वविधानान्न भवति । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । आर्धधातुकाधिकारे । **ब्रुवो वचिः** ।२।४।५३। उवाच । ऊचतुः । ऊचुः । उवचिथ । उवक्थ । ऊचे । वक्ता । ब्रवीतु । ब्रूतात् । ङिच्च पिन्नेत्यपित्वादीण्न । ब्रवाणि । ब्रवै । ब्रूयात् । उच्यात् । अस्यतिवक्तीत्यङ् । **वच उम्** ।७।४।२०। अङि परे । अवोचत् । अवोचत ॥ १३ ॥ ॥ अथ शास्यन्ताः परस्मैपदिनः । इङ् त्वात्मनेपदी । इण् गतौ । एति । इतः । **इणो यण्** ।६।४।८१। अजादौ प्रत्यये परे । इयङोऽपवादः । यन्ति । इयाय । **दीर्घ इणः किति** ।७।४।६९। इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि । ईयतुः । ईयुः । इययिथ । इयेथ । एता । इतात् । इहि । अयानि । ऐत् । ऐताम् । आयन्[1] । इयात् । ईयात् । **एतेर्लिङि** ।७।४।२४। उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अणः किम् । समेयात्

'वा द्रुह–' इति घत्वढत्वयोः प्रवृत्तौ द्रोग्धा द्रोढेत्यपि द्विर्वचन कदाचित्स्यात् न तु द्रोग्धा द्रोग्धेति समानजातीयस्यैव नियमेन द्विर्वचनं सिध्यति । किं च षट् सन्तीत्यत्र डस्य चर्त्वे टकारस्य द्वित्व 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेरिति मनोरमादावुक्तम् । अत एव सुध्युपास्य इत्यत्र धस्य जश्त्वेन दकारे व्यक्तिभेदाद्दकारस्यापि द्वित्व सुवचमेवेत्याहुः ॥—**अनित्यमिति** । अत एव हृतिशब्दस्य द्वित्वमोजिढदित्यपि नामधातुषु वक्ष्यति ॥—**उभौ साभ्यासस्ये**ति । अनितेरित्यनेन णत्वं कृत्वा द्विर्वचने कृते प्राणिणत् । प्राणिणिषतीति सिद्धमिति सूत्रमिद ज्ञापकमित्यर्थः । एव च प्रणिनायेत्यादौ द्वितीयस्य णत्वाभावः सिद्धः ॥—**विभाषोर्णोः** ॥ 'गाङ्कुटादिभ्य:'—इत्यतो ङिदिति 'विज इट्' इत्यत इडिति चानुवर्तते इत्याशयेनाह—**इडादिप्रत्यये** इत्यादि । तेन गुणविकल्पे पक्षे उवङ् ॥—**गुणोऽपृक्ते** ॥ 'नाभ्यस्तस्याचि' इत्यतः पिति सार्वधातुके इति 'उतो वृद्धिर्लुकि हलि' इत्यतो हलीति वर्तते तदाह—**हलादावित्यादि** ॥—**ऊर्णोतेर्विभाषा** ॥ 'सिचि वृद्धिः'—इति सूत्र 'नेटि' इत्यत इटीति चानुवर्तत इत्याशयेनाह—**इडादावित्यादि** ॥—**स्तवीतीति** । 'तुरुस्तुशम्यमः'—इति ईड्वा 'स्तुसुधूञ्भ्यः' इत्यत्र परस्मैपदेष्वित्युक्तेः । आत्मनेपदे तु नेट् । अस्तोष्ट । अस्तोषाताम् ॥—**ब्रुवः पञ्चानाम्** । 'विदो लटो वा' इत्यतो लटो वेति वर्तते । ब्रुव इत्येतदादिम पञ्चम्यन्तमन्तिमं तु षष्ठ्यन्तमित्याशयेनाह—**ब्रुवो लट इत्यादि** ॥—**चर्त्वमिति** । प्रक्रियालाघवात् 'आहस्त' इत्येव सुवचमित्याहुः ॥ **ब्रुव ईट्** । हलादेः किम् । ब्रवाणि । पितः किम् । ब्रूतः ॥—**झलीति थत्वविधानादि**ति । ईडागमे कृते झलादित्वाभावादिति भावः ॥ **इण्** गतौ ॥—**इयङोऽपवाद** इति । येन नाप्राप्तिन्यायेनेति भावः । गुणवृद्धी तु परत्वादस्य बाधिके । अयनम् । आयकः ॥**दीर्घ इणः किति** ॥ 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येत्यनुवर्तते 'व्यथो लिटि' इत्यतो लिटीति च । किति किम् । इयाय । अत्र वदन्ति । इह दीर्घे कृतेऽपि 'अभ्यासस्यासवर्णे' इतीयङा रूपसिद्धेः कितीति व्यर्थम् । न च दीर्घस्येयङि दीर्घविधान व्यर्थमिति वाच्यम् । ईयतुः । ईयुरित्यत्र 'वार्णादाङ्गं बलीयः' इति यणि कृते दीर्घविधेरावश्यकत्वात् । किं च लिटीत्यनुवर्तमानमपीह व्यर्थमेव व्यावर्त्याभावादिति । एता । एष्यति । एतु । इतात् । इताम् । यन्तु । इहि । उत्तमे तु अयानि । अयाव । अयाम । लङ्मध्यमे । ऐः । ऐतम् । ऐत । उत्तमे त्वायम् । ऐव । ऐम ॥—**ईयादि**ति । 'अकृत्सार्व–' इति दीर्घः ॥—**एतेर्लिङि** ॥ इहार्धधातुक इति स्वरूपकथनार्थं प्रक्षिप्तम् । किति लिङीत्येतावतैवेष्टसिद्धेः ॥—**उभयत आश्रयण** इति । अन्तादिशब्दाववयवविशेषवाचिनौ । तत्र यदि पूर्वस्यावयवबुध्या एकादेश आश्रीयते तदा तस्यैव परस्य क-

१ आयन्निति—यण आभीयासिद्धत्वेनाट् । तदसिद्धत्वप्रत्याख्याने तु लावस्थायामडेव कर्तव्यः, आडजादीनामिति च न कार्यम्, आटश्चेति सूत्रमटश्चेति कार्यम्, तेन ऐज्यतेत्यादौ न दोषः । आयन्नित्यत्र चान्तरङ्गत्वाद्दृद्धावायादेशः, वृद्धौ कृतायामिणो यणिति तु न, तत्र परित्यपकर्षणेनेकाररूपस्यैवेणो यणित्यर्थात् ।

समीयादिति प्रयोगस्तु भौवादिकस्य । इणो गा लुङि ।२।४।४५। गातिस्थेति सिचो लुक् । अगात् । अगाताम् । अगुः ॥ १ ॥ इङ् अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते । गाङ् लिटि ।२।४।४९। इङो गाङ् स्याल्लिटि । लावस्थायां विवक्षिते वा । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अध्यै । गुणायादेशयोः कृतयोरुपसर्गस्य यण् । पूर्वं धातुरुपसर्गेणेति दर्शनेऽन्तरङ्गत्वाद्गुणात्पूर्वं सवर्णदीर्घः प्राप्तः । णेरध्ययने वृत्तमिति निर्देशान्न भवति । अध्यैत । परत्वादियङ् । तत आट् । वृद्धिः । अध्यैयाताम् । अध्यैयि । अध्यैवहि । अधीयीत । अधीयाताम् । अधीयीध्वम् । अधीयीय । अध्येषीष्ट । विभाषा लुङ्लृङोः ।२।४।५०। इङो गाङ् वा स्यात् । गाङ्कुटादिभ्योऽञ्णिन्ङित् ।१।२।१। गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः । घुमास्थागापाजहातिसां हलि ।६।४।६६। एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट । अध्यैष्ट । अध्यगीष्यत । अध्यैष्यत ॥ २ ॥ इक् स्मरणे । अयमप्यधिपूर्वः । अधीगर्थदयेशामिति लिङ्गात् । अन्यथा हीगर्थेत्येव ब्रूयात् । * इण्वदिक इति वक्तव्यम् । अधियन्ति । अध्यगात् । केचित्तु आर्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यण्न । तथा च भट्टिः । सस्मीतयोराघवयोरधीयन्निति ॥ ३ ॥ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं गर्भग्रहणम् । असनं क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । अडागमे सत्यनेकाच्त्वाद्यणिति केचित् । अव्यन् ॥ ४ ॥ अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । ईयात् । ऐषीत् ॥ ५ ॥ या प्रापणे । प्रापणमिह गतिः । प्रणियाति । यातः । यान्ति । लङः शाकटायनस्यैव ।३।४।१११। आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः । अयान् । यायात् । यायाताम् । यायास्ताम् ॥ ६ ॥ वा गतिगन्धनयोः । गन्धनं सूचनम् ॥ ७ ॥ भा दीप्तौ ॥ ८ ॥ ष्णा शौचे ॥ ९ ॥ श्रा पाके ॥ १० ॥ द्रा कुत्सायां गतौ ॥ ११ ॥ प्सा भक्षणे ॥ १२ ॥ पा रक्षणे । पायास्ताम् । अपासीत् ॥ १३ ॥

---

थमादिवद्भावः । एवं परस्यादिवत्त्वे पूर्वस्यान्तवद्भावो न स्यादेकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः । नन्वेवं रामौ इत्यस्य सुप्तिङन्तमिति पदत्वं न स्यात् । परादित्वे रामेति प्रकृतेरभावात् । यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणमिति स्वीकाराद्राम् इत्यस्य प्रकृतित्वात् । पूर्वान्तत्वे तु परत्र प्रत्ययाभावाद् । अत्राहु: । पूर्वं पदसंज्ञा पश्चादेकादेश इति नोक्तदोषः । इह च ज्ञापकं 'सुपिसूतिसमाः' इति । विध्यादौ समीयादिति न भवत्येव । आशीर्लिङि तु 'अकृत्सार्व–' इति दीर्घे कृतेऽपि ह्रस्वत्वेन भाव्यमित्याशङ्क्याह—**भौवादिकस्ये**ति । इटकिटकटीत्यत्र प्रश्लिष्टस्य ईधातोराशीर्लिङि इदं रूपम् । वी गतीत्यत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यत इति मते तु विध्यादिलिङ्यपि भवत्येवेति बोध्यम् ॥—**गाङ् लिटि** ॥ **लावस्थायामि**ति । वार्तिकमते एकादेशात्प्रागेव गाङादेशे 'द्विर्वचनेऽचि' इति सूत्रं न प्रवर्तते द्वित्वनिमित्ताचोऽभावात् ॥ —**विवक्षित** इति । भाष्यमते तु सुतरां न प्रवर्तते अनैमित्तिकत्वादिति भावः ।—**निर्देशान्न भवती**ति । वार्णादाङ्गं बलीय इति समाधानं तु न प्रवर्तते व्याश्रयत्वादिति भावः ॥—**अध्यैयते**ति । 'आत्मनेपदेष्वनतः' इति झस्य अत् । लङ्मध्यमे तु अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् ॥—**अध्येषीष्टे**ति । लिङः सीयुट् । अध्येषीयास्ताम् । अध्येषीरन् ॥ —**गाङ्कुटादिभ्यो**—॥ इह गाङ् गतावित्यस्य न ग्रहणम् । तदर्थतया ङकारानुबन्धस्य तत्र चरितार्थत्वात् । आदेशङकारस्तु अचरितार्थः । स्थानिवद्भावेनैव तङः सिद्धत्वादत आह—**गाङादेशा**दिति । कुटादिस्तुदाद्यन्तर्गणः । केचित्तु कुट आदिर्येषां ते कुटादयः । कुटस्य आदिः कुटादिः कुटादिश्च कुटादयश्च कुटादयः इति समासद्वयमाश्रित्य कुटपूर्वस्य लिखधातोरपि ग्रहणाल्लिखनमिति प्रयोगः सिद्ध इत्याहुः । तच्च 'रलो व्युपधात्–' इति सूत्रस्थेन लिखित्वा लेखित्वा लिलिखिषति लिलेखिषति इति वृत्तिग्रन्थेन, शकुनिष्वालेखने इति सौत्रप्रयोगेण च विरुध्यते । अञ्णिदिति किम् । घञि कोटः पोटः । णलि चुकोट पुपोट ॥—**घुमास्था**—॥ 'दीङो युडचि–' इत्यतः क्ङितीत्यनुवर्तते । आर्धधातुक इति चाधिक्रियत एव । क्ङिति किम् । दाता । धाता । हलादौ किम् । ददतुः । ददुः । अन्यथा आतो लोपात्परत्वादीत्त्वं स्यात् । आर्धधातुके किम् । मातः । माथः ।—**अध्यगीष्टे**ति । सिचो ङित्त्वादीत्त्वम् । **इक्** स्मरणे । ककार इह 'इण्वदिकः' इति विशेषणार्थः । एरित्युक्ते तु इट किट कटीत्यत्र प्रश्लिष्टस्य ईधातोरपि ग्रहणं स्यादित्याहुः ॥—**केचित्तु** इति । आर्धधातुकाधिकारे वार्तिकपाठात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादतिदेश इति भावः ॥—**अधीयन्नि**ति । स्मरन्नित्यर्थः । राघवयोरित्यत्र 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । **वी** गति ॥—**अवियन्नि**ति । अडागमात्परत्वादियङ् ॥—**अडागमे सती**ति । कृताकृतप्रसङ्गित्वमात्रेण अटो नित्यत्वादिति भावः । अत एवापरितोषाद् 'असिद्धवदत्राभात्' इति समानाश्रये यणि कर्तव्ये अटोऽसिद्धत्वादियङेवोचित इत्याशयेन वा केचिदित्युक्तम् । लावस्थायामेवाडागम इति पक्षे तु यणेवेति बोध्यम् ॥— **ईकारोऽपी**ति । प्रयुञ्जते च 'न हि तरणिरुदीते दिक्पराधीनवृत्तिः' इति । व्याख्यातं च मनोरमायाम् । कर्मव्यतिहारे तङ् । न च 'न गतिहिंसार्थेभ्यः' इति निषेधः शङ्क्यः । उत्पूर्वस्याऽविर्भावार्थत्वादिति । अत्र वदन्ति । व्यतिशब्दं विना कर्मव्यतिहारकल्पनं क्लेशावहम् । परकीयकर्म च कर्मव्यतिहारेऽपेक्ष्यते तच्चात्र नोपात्तम् । परस्परकरणं तु न संभवत्येव ।

रा दाने ॥ १४ ॥ ला आदाने । द्वावपि दाने इति चन्द्रः ॥ १५ ॥ दाप् लवने । प्रणिदाति । प्रनिदाति । दाया-स्ताम् । अदासीत् ॥ १६ ॥ ख्या प्रकथने । अयं सार्वधातुकमात्रविषयः । सस्थानत्वं नमः ख्यात्रे इति वार्तिके तन्नात्वं चेह लिङ्गम् । सस्थानो जिह्वामूलीयः स नेति ख्याञादेशस्य खशादित्वे प्रयोजनमित्यर्थः । संपूर्वस्य ख्यातेः प्रयोगो नेति न्यासकारः ॥ १७ ॥ प्रा पूरणे ॥१८॥ मा माने । अकर्मकः । तनौ ममुस्तत्र न कैटभद्विष इति माघः । उपसर्गवशेनार्थान्तरे सकर्मकः । उदरं परिमाति मुष्टिना । नेर्गदेत्यत्र नास्य ग्रहणम् । प्रणिमाति । प्रनिमाति ॥ १९ ॥ वच परिभाषणे । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर इत्यपरे । वग्धि । वच्यात् । उच्यात् । अवोचत् ॥ २० ॥ विद् ज्ञाने । ꣸ विदो लटो वा ।३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे । वेत्ति । वित्तः । इत्यादि । वि-वेद । विविदतुः । उपविदेत्याम्पक्षे विदेत्यकारान्तनिपातनान्न लघूपधगुणः । विदांचकार । वेदिता । ꣸ विदांकु-र्वन्त्वित्यन्यतरस्याम् ।३।१।४१। वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पु-रुषवचने न विवक्षिते इतिशब्दात् । ꣸ तनादिकृञ्भ्य उः ।३।१।७९। तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽ-पवादः । तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम् । तेन न विश्वसेदविश्वस्तमित्यादि सिद्धम् । विदांकरोतु । ꣸ अत उत्सार्वधातुके ।६।४।११०। उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । उदिति तपरकरणसामर्थ्यान्न गुणः । विदांकुरुतात् । विदांकुरुताम् । उतश्चेति हेर्लुक् । आभीयत्वेन लुकोऽसिद्धत्वादुत्वम् । विदांकुरु । विदांकरवाणि । अवेत् । अवित्ताम् । सिजभ्यस्तेति झेर्जुस् । अविदुः । ꣸ दश्च ।८।२।७५। धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा । अवेः । अवेत् ॥ २१ ॥ अस् भुवि । अस्ति । ꣸ श्नसोरल्लोपः ।६।४। १११। श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति । स्तः । सन्ति । तासस्त्योरिति सलोपः । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ॥ आर्धधातुके इत्यधिकृत्य । ꣸ अस्तेर्भूः ।२।४।५२। बभूव । भविता । अस्तु । स्तात् ।

---

ततश्चोदीते इति भावे निष्ठा ज्ञेया । तथा चोदये दिक्पराधीनवृत्तिस्तरणिर्नेत्यर्थः सुगम इति ॥—प्रणिदातीति । 'शेषे वि-भाषा–' इति णत्वविकल्पः ॥—अदासीदिति । अघुत्वान्न सिज्लुक् ॥—नमः ख्यात्रे इति । यद्ययमार्धधातुकेऽपि प्रयुज्येत तर्हि तृजन्तेऽस्मिन्परे 'शर्परे विसर्जनीय' इत्यस्याप्रवृत्त्या कुप्वोरिति जिह्वामूलीयो दुर्वारः स्यादेवेति तद्भावः । खशादित्वे प्रयोजनमिति वार्तिककाराद्युक्तिर्व्याकुप्येतेति भावः ॥—संपूर्वस्येत्यादि । संख्यातीत्यादिप्रयोगो नास्त्येव । संख्येति प्रयोगस्तु ख्याञादेशस्येति न्यासकाराशयः । मा माने ॥—नास्येति । घुप्रकृतिमाङ् इति पाठात् ङितामेव तत्र ग्रहणं, त-तश्च 'शेषे विभाषा–' इति विकल्प एव प्रवर्तत इत्याह—प्रणिमातीत्यादि । वच परिभाषणे । उवाच । वक्ता। वक्ष्यति वक्तु । वक्तात् । अवक् । अवक्ताम् ॥—अयमन्तिपर इति । तथा च वचन्ति । वक्ष्यन्ति । वचन्तु । अवचन् । अ-वोचन् । अवक्ष्यन्नित्येतेऽसाधवः ॥—बहुवचनपर इति । अस्मिन् पक्षे लटि मध्यमे वक्थ । उत्तमे तु । वच्मः । लि-टि । ऊचुः । मध्यमे । ऊच । उत्तमे तु । ऊचिम । लुटि वक्तारः । लिङि वच्यासु । उच्यासुरित्यादयोऽप्यसाधवः ॥—झिपर इति । अस्मिंस्तु पक्षं । वक्थः । वच्म. । ऊच । लिटि ऊचिमेत्यादय. साधव इति दिक् ॥—विदो लटो वा ॥ पञ्चमीयं न तु षष्ठी । तेन वियातिविन्दत्योरव्यवहितपरस्य लटोऽभावान्नेते आदेशास्तदाह—वेत्तेरिति ॥—लोटो लु-गिति । 'आमः' इति सूत्रे 'मन्त्रे घस–' इत्यतो लेरित्यनुवर्त्य आमः परस्य लेर्लुगिति व्याकुर्वतां मतेनेदमुक्तम् । निष्कर्षे तु तेनैव लुगिति वोध्यम् ॥—पुरुषवचने इति । प्रथमपुरुषो बहुवचन चेत्यर्थः । परस्मैपदमप्यविवक्षितमेवेति केषांचि-न्मते कर्मव्यतिहारे तङ । व्यतिविदांकुरुताम् । व्यतिविदांकुर्वातामित्यादि ज्ञेयम् ॥—तेनेति । विश्वसेदित्यत्र शपो लु-गभावः सिद्ध इति भावः । एवमप्यविश्वस्तमित्यत्रेडभावः कथमिति चेदागमशास्त्रस्यानित्यत्वादिति गृहाण ॥—अत उ-त्सार्व—॥ क्ङिति किम् । करोति । करोषि ॥—लुकोऽसिद्धत्वादिति । सार्वधातुकग्रहणमुत्तरार्थमेव नात्रावश्यकम् । इह भूतपूर्वगत्या सार्वधातुकपरत्वमाश्रीयत इति वृत्तिमते त्वसिद्धवर्णनस्योपयोगलेशोऽपि नास्तीति ज्ञेयम् ॥—दश्च । 'सिपि धातोरुर्वा' इत्यनुवर्तते, पदस्येति, 'झलां जशोऽन्ते' इत्यस्मादन्त इति च तदाह—धातोर्दस्येत्यादि । सिपि किम् । तिपि । अवेत् । दान्तस्य धातोः सिपि रुर्वेत्येतावतैवेष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः । तच्चिन्त्यम् । वेत्तीत्यत्रा-तिप्रसक्तत्वात्स्यासिद्धत्वेन दान्तत्वात् ॥—श्नसोरल्लोपः ॥ 'अत उत्–' इति सूत्रादत इत्यनुवर्त्याद्ग्रहणं त्यक्तुं शक्यमि-त्याहुः ॥—श्नसोरिति । शकन्ध्वादित्वात्पररूपमित्याह—श्नस्यास्तेश्चेति । श्नस्योदाहरणम् । रुन्धः । रुन्धन्तीत्यादि । क्ङिति किम् । रुणद्धि । अस्ति । तपरकरणमास्तामासन्नित्यत्र स्याडागमे कृते तस्य लोपो माभूदित्येतदर्थम् । निष्कर्षस्तु अ-

---

१ न विवक्षिते इति—तयोर्नान्तरीयकतया उच्चार्यमाणत्वादिति भावः । २ सार्वधातुके क्ङितीति—अत्र सार्वधातुके इति निष्फलम् । आर्धधातुके तस्य भूभावात् । ईहामासेत्यादौ अत आदेरिति दीर्घे सति परस्य लोपेऽपि क्षत्यभावात् । श्नस्य सार्व-धातुके एव सत्त्वाच्च ।

स्ताम् । सन्तु । **घ्वसोरेद्धावभ्यासलोपश्च** ।६।४।११९। घोरस्तेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च । आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः। एधि । तातङ्पक्षे एत्वं न, परेण तातङा बाधात्, सकृद्गताविति न्यायात् । स्तात् । स्तम् । स्त । असानि । असाव । असाम । अस्तिसिच इतीट् । आसीत् । श्नसोरित्यल्लोपस्याभीयत्वेनासिद्धत्वादाट् । आस्ताम् । आसन् । स्यात् । भूयात् । अभूत् । सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीण्न । **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** ।८।३।८७। उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे । निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः ॥ २२ ॥ मृजू शुद्धौ । **मृजेर्वृद्धिः** ।७।२।११४। मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे ॥ * **क्ङित्यजादौ वेष्यते** ॥ व्रश्चेति षः । मार्ष्टि । मृष्टः । मृजन्ति । मार्जन्ति । ममार्ज । ममार्जतुः । ममृजतुः । ममार्जिथ । ममार्ष्ठ । मार्जिता । मार्ष्टा । मृड्ढि । अमार्ट् । अमार्जम् । अमार्जीत् । अमार्क्षीत् ॥ २३ ॥ रुदिर् अश्रुविमोचने । **रुदादिभ्यः सार्वधातुके** ।७।२।७६। रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न । रुदिहि । **रुदश्च पञ्चभ्यः** ।७।३।९८। हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् । **अड्गार्ग्यगालवयोः** ।७।३।९९। अरोदीत् । अरोदत् । अरुदिताम् । अरुदन् । अरोदीः । अरोदः । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट् । रुद्यात् । अरुदत् । अरोदीत् ॥ १ ॥ **ञिष्वप् शये** । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वपिथ । सुष्वप्थ । **सुविनिर्दुर्भ्यः सुपिसूतिसमाः** ।८।३।८८। एभ्यः सुप्यादेः सस्य षः स्यात् । पूर्वं धातुरुपसर्गेण युज्यते । किति लिटि परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम् । पूर्वत्रासिद्धीयमद्विर्वचने ॥ सुषुषुपतुः । सुषुषुपुः । अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम् । षत्वस्यासिद्धत्वात्ततः पूर्वं हलादिःशेषः । नित्यत्वाच्च । ततः सुपिरूपाभावान्न षः । सुसुष्वाप । सुस्वप्ता । अस्वपीत् । अस्वपत् । स्वप्यात् । सुप्यात् । सुषुप्यात् । अस्वाप्सीत् ॥ २ ॥ **श्वस प्राणने** । श्वसिति । श्वसिता । अश्वसीत् । अश्वसत् । श्वस्याताम् । श्वस्यास्ताम् । ह्ययन्तक्षणेति न वृद्धिः । अश्वसीत् ॥ ३ ॥ **अन च** । अनिति । आन । अनिता । आनीत् । आनत् । **अनितेः** ।८।४।१९। उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति ॥ ४ ॥ **जक्ष भक्षहसनयोः** । जक्षिति । जक्षितः । **अदभ्यस्तात्** ।७।१।४। झस्य अत्स्यात् । अन्तापवादः । जक्षति । सिजभ्यस्तेति जुस । अजक्षुः । अयमन्तस्थादिरित्युज्ज्वलदत्तो बभ्राम ॥ ५ ॥ रुदादयः पञ्च

---

नुपदं स्फुटीभविष्यति ॥—**घ्वसोरेद्धा**–॥ एत्वमलोऽन्त्यस्य, लोपस्तु शित्वात्सर्वस्येति भाष्यादौ स्पष्टम् । देहि । धेहि ॥ —**असिद्धत्वादाडिति** । नन्वेवमाटोऽसिद्धत्वात् 'श्नसोः–' इत्यल्लोपो न भवेदिति तपरकरण तत्र व्यर्थमिति चेद् । अत्राहुः । आभाच्छास्त्रस्यानित्यताज्ञापनाय तपरकरणम् । तेन देभतुरित्यादि सिद्धमिति । स्यादेतत् । अत्र केचित् । अग्रहणस्य निष्फलत्वे तपरकरणस्य ज्ञापनार्थत्व न सिध्येत् । न च 'अत उत्–' इति सूत्रस्थतपरकरणमेव ज्ञापनार्थमस्त्विति वाच्यम् । अस्येत्युक्तौ गौरवादर्धमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात् । तस्मादुक्तज्ञापनार्थमग्रहणमावश्यकमित्याहुः ॥—**उपसर्गप्रादुर्भ्याम्**—॥ प्रादुस् इति सान्तमव्ययम् । प्रादुषश्चेति पाठे प्रादुर्भ्यामिति निर्देशो न युज्यते इति प्राचा षान्तपाठः प्रामादिक ॥—**परस्येति** । अयमस्तेः सस्य विशेषण न स्वस्तेः । तेन प्रादुरस्तीत्यत्र न षत्वम् । उपसर्गेत्यादि किम् । दधि स्यात् । अस्तेः किम् । परिसृजति । **मृजू** शुद्धौ । अय न षिद् । भिदादिपाठसामर्थ्यात् ॥—**मृजेर्वृद्धिः** ॥ गुणापवादः । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याह—**धातुप्रत्यये** इति । धातुप्रत्यये किम् । कसपरिमृड्भ्याम् ॥—**क्ङित्यजादाविति** । एतच्चान्येषां वैयाकरणाना मतम् 'इको गुणवृद्धी' इति सूत्रे भाष्यकृता स्वीकृतम् ॥—**मृड्ढीति** । 'हुझल्भ्यः–' इति हेर्धिः । षत्वष्टुत्वजश्त्वानि ॥—**वलादेः सार्वधातुकस्येति** । वलादेः किम् । रुदन्ति । सार्वधातुके किम् । स्वप्ता ॥—**धित्वं नेति** । सकृद्गताविति न्यायात्, हेर्धिरिति स्थान्यादेशयोरिकार उच्चारणार्थ इत्यादिप्रागुक्तसमाधानाद्वेति भावः ॥—**रुदश्च**—॥ पञ्चभ्यः किम् । जागर्तेर्लङि अजागः॥ **प्रकृतिप्रत्यये**त्यादि । हलादिपित्सार्वधातुकापृक्तापेक्षत्वाच्च बहिरङ्गत्वमडीटोः ॥—**अरुदद्**िति । 'इरितो वा' इत्यङ् ॥—**अरोदीदि**ति । 'अस्तिसिच–' इति ईट् । 'रुदश्च–' इत्यनेन तु न, सिचा व्यवधानेन रुदादेः परत्वाभावात् ॥—**सुषुपतुरिति** । 'वचिस्वपि–' इति संप्रसारणम् । ततो द्वित्वम् ॥—**सुपिसूतिसमा** इति । सूतीति क्तिन्नन्तः । समेति पचाद्यजन्तः । सुषुप्तिः । सुषूतिः । सुषमा । विषमः ॥—**अद्विर्वचन** इति । तेन षत्वसहितस्य द्वित्वम् ॥—**सुपिरूपाभावादिति** । 'एकदेशविकृतमनन्यवत्' इति तु न प्रवर्तते । तस्य स्थानिवत्सूत्रशेषत्वात् । षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थानिवत्त्वाभावादित्याहुः । वस्तुतस्तु 'स्थानिवदादेश–' इत्येत प्रति त्रिपादी सिद्धेत्युक्तम् । तस्मादिह समाधानान्तरमूह्यमित्यन्ये ॥ —**अनितेः**॥'उपसर्गादसमासेऽपि–' इत्यत उपसर्गादिति वर्तते, 'रषाभ्याम्–' इत्यतो नो ण इति च तदाह—**उपसर्गस्था**दित्यादि ॥—**अन्तापवाद** इति । 'झोऽन्त.' इत्यस्य अदादेशोऽपवाद । अस्य त्वपवादो जुसिति ज्ञेयम् ॥—**बभ्रामेति** । जक्षन् क्रीडन् रममाण इत्युपनिषदि जक्षादित्वस्य निर्विवादत्वात् । 'नाभ्यस्ताच्छतुः' इति निषेधेन जक्षन् इति नुमश्छा-

चकाः ॥ ॥ जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । उषविदेत्याम्वा । जागरांचकार । जजागार । **जाग्रोऽविचिण्णल्ङित्सु** ।७।३।८५। जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च । जजागरतुः । अजागः । अजागृताम् । अभ्यस्तत्वाज्जुस् **जुसि च** ।७।३।८३। अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् । अजागरुः । अजादौ किम् । जागृयुः । आशिषि तु । जागर्यात् । जागर्यास्ताम् । जागर्यासुः । लुङि । अजागरीत् । जागृ इस् इत्यत्र यण् प्राप्तः, तं सार्वधातुकगुणो बाधते । तं सिचि वृद्धिः । तां जागर्तिगुणः । तत्र कृते हलन्तलक्षणा प्राप्ता, नेटीति निषिद्धा । ततोऽतो हलादेरिति बाधित्वाऽतोल्रान्तस्येति प्राप्ता, ह्यन्तेति निषिध्यते ॥ तदाहुः । गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् । पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नवेति ॥ १ ॥ दरिद्रा दुर्गतौ । दरिद्राति ॥ **इद्दरिद्रस्य** ।६।४।११४। दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके । दरिद्रितः । **श्नाभ्यस्तयोरातः** ।६।४।११२। अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके । दरिद्रति । अनेकाच्त्वादाम् । दरिद्रांचकार । आत औ णल इत्यत्र ओङित्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । अतएव ज्ञापकादाम्नेत्येके । ददरिद्रौ । ददरिद्रतुरित्यादि । यत्तु णलि ददरिद्रेति तन्निर्मूलमेव ॥ दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः ॥ लुङि वा, सनि ण्वुलि ल्युटि च न ॥ दरिद्रिता । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः । दरिद्रियात् । दरिद्र्यात् । अदरिद्रीत् । इट्सकौ । अदरिद्रासीत् ॥ २ ॥ चकासृ दीप्तौ । चकास्ति । झस्य अत् । चकासति । चकासांचकार । धि चेति सलोपः सिच एवेत्येके । चकाद्धि । चकाधीत्येव भाष्यम् । **तिप्यनस्तेः** ।८।२।७३। पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । अचकात् अचकाद् । अचकासुः । **सिपि धातो रुर्वा** ।८।२।७४। पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे दः । अचकाः अचकात् ॥ ३ ॥ शासु अनुशिष्टौ । शास्ति । **शास इदङ्हलोः** । ६।४।३४।

---

न्दसत्वेऽपि जशादित्वस्य तत्कल्पनाया अन्याय्यत्वात् । धातुवृत्त्यादौ जशादिपाठाच्च ॥—**जाग्रोऽविचिण्णल्**—॥ **ङिद्भ्योऽन्यस्मिन्निति** । जागृविः । विशब्देन वादिप्रत्ययो गृह्यते । इकारस्तूच्चारणार्थ इति वदता मते क्वसावपि न भवति । अजागृवान् । जजागृवांसौ । चिण् । अजागारि । णल् । जजागार । ङित् । जागृतः । जागृथः ॥—**वृद्धिविषये** इति । ण्वुलि । जागरकः । घञि । जागरः । णिचि । जागरयति । न चैतेषु गुणे कृतेऽपि 'अत उपधायाः' इति वृद्धिः स्यादिति वाच्यम् । गुणविधेश्चिण्णल्प्रतिषेधस्य चानर्थक्यापत्तेः ॥—**जुसि च** ॥ चकारः स्पष्टप्रतिपत्त्यर्थः । 'क्सस्याचि' इत्यतोऽचीत्यनुवर्तत इत्याह—**अजादाविति** ॥—**जागृयुरि**ति । एवं शृणुयुः चिनुयुरित्यादावपि गुणो नेति बोध्यम् । यासुटो ङित्त्वाच्छृणुयुरित्यादौ गुणो नेति प्राचोक्तिस्तु मनोरमायां दूषिता, 'जुसि च' इति गुणस्य निषेधापवादत्वादिति । केचित्तु 'जुसि च' इत्यत्र उसीत्यावर्त्य उसूरूपे जुसीति व्याख्यानान्नोक्तदोष इत्याहुः । अजादौ जुसीति समाधानं तु भाष्यारूढम् ॥ जागर्तेः सिच इटि कृते यणादिप्राप्तिक्रम दर्शयति ॥—**जागृ इस् इत्यत्रे**ति ॥—**तत्र कृते** इति । हलन्तलक्षणाया वृद्धेर्जागर्तिगुणेन बाधस्तेन गुणेन हलन्तत्वसंपादनात् । या हि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यते नान्येति भावः । अजागरिष्टाम् । अजागरीरित्यादि । **दरिद्रा** ॥—**इद्दरिद्रस्य** ॥ इद्दरिद्रः इति वक्तुमुचितम् ॥—**श्नाभ्यस्त**—॥ क्रीणन्ति । क्रीणते । पुनन्ति । पुनते । दधति । दधते । क्ङिति किम् । क्रीणाति । पुनाति । दधाति । आतः किम् । बिभ्रति ॥—**ओ इत्येव सिद्धे** इति । प्रथमत्यागे मानाभावादिति भावः ॥—**निर्मूलमेवे**ति । यत्तु व्याख्यातृभिः समर्थ्यते । आमोऽभावे आतो लोपे कृते आदन्तत्वाभावादौत्वं नेति । तन्न । 'आत औ णलः' इत्यत्र प्राथम्यादोकारे कर्तव्ये औकारविधानं दरिद्रातेरालोपेऽपि श्रवणार्थं सत् आमभावे लिङ्गमिति हरदत्तमाधवादिग्रन्थैः स्वग्रन्थेन च विरोधात् । तत्कथमौत्वस्याप्रवृत्तिर्भवेत् । यदप्युक्तम् । ओकारौकारयोर्द्विमात्रत्वाविशेषादौकारविधानमिति । तदपि स्थवीयः । तस्मिन्पक्षे आमो दुर्वारत्वप्रसङ्गात् ॥—**विवक्षित** इति । तेन दरिद्रातीति दरिद्र इति पचाद्यजेव भवति परसप्तम्यां तु 'श्याद्व्यधा—' इत्यादन्तलक्षणो णः स्यात् । सति तु तस्मिन् 'आतो युक् चिण्कृतोः' इति युकि दरिद्राय इति स्यादिति भावः ॥—**सनि ण्वुली**ति । एतेष्वालोपो नेत्यर्थः । दिदरिद्रासति । दरिद्रायकः । दरिद्राणम् ॥—**अदरिद्रुरि**ति । 'सिजभ्यस्त—' इति झेर्जुस् । 'लङः शाकटायनस्यैव' इत्यादन्तलक्षणो विकल्पस्तु न भवति । परत्वात् 'श्नाभ्यस्तयोः' इत्यालोपे आकारान्तस्यैवाभावात् । 'ई हल्यघोः' इत्यत ईत्वमिह न शङ्क्यमेव । झेर्जुसि हलादिपरत्वाभावादिति भावः । ननु दरिद्रा झि इति स्थिते जुसः प्रागेव आल्लोपात्परत्वादपवादत्वाच्च ईत्वं स्यात् । मैवम् । अकृतव्यूहपरिभाषाया जागरूकत्वाद् । ईत्वनिमित्तं हलादित्वं तच्च विनाशोन्मुखं जुसो भावित्वात् ॥—**झस्य अदि**ति । अदभ्यस्तादित्यनेन ॥—**तिप्यनस्तेः** ॥ पदान्तस्य किम् । चकास्ति । सस्येति किम् । वशेर्लङि तिपि । अवट् । तिपि किम् । क्विपि चकाः । अनस्तेः किम् । सर्वमा इदम् । आ इति लङि तिपि अस्ते रूपम् । 'बहुलं छन्दसि' इति ईट् न ॥—**शास इदङ्हलोः** ॥ अङि । अशिषत् । अशिषताम् । क्ङिति । शिष्टः ।

---

१ ओ इत्येवेति—द्विमात्रत्वसाम्येऽपि ओकारस्य विवृततरत्वेन प्रयत्नलाघवादिति भावः ।

शास उपधाया इत्त्वादङि हलादौ क्ङिति च । शासिवसीति षः। शिष्टः । शासति । शशासतुः । शास्तु । शिष्टाम् । शासतु । शा हौ ।६।४।३५। शास्तेः शादेशः स्याद्धौ परे । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः । अशात् । शिष्यात् । सर्तिशास्तीत्यङ् । अशिषत् । अशासिष्यत् ॥ ४ ॥ दीधीङ् दीप्तिदेवनयोः ॥ एतदादयः पञ्च धातवश्छान्दसाः ॥ दीधीते । एरनेकाच इति यण् । दीध्याते । यीवर्णयोर्दीधीवेव्योः ७।४।५३। एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे । इति लोपं बाधित्वा नित्यत्वाद्धेरेत्वम् । दीध्ये । दीधीवेवीटामिति गुणनिषेधः । दीध्यांचक्रे । दीधिता । दीधिष्यते ॥ १ ॥ वेवीङ् वेतिना तुल्ये । वीगतीत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः ॥२ ॥ अथ त्रयः परस्मैपदिनः ॥ षस[1] सस्ति स्वप्ने । सस्ति । सस्तः । ससन्ति । ससास । सेसतुः । सस्तु । सधि ॥ पूर्वत्रासिद्धमिति सलोपस्यासिद्धत्वादतो हेरिति लुक् न । असत् । असस्ताम् । असः । असत् । सस्यात् । असासीत् । अससीत् ॥ १ ॥ सन्तिः । सन्तः । संस्तन्ति । बहूनां समवाये द्वयोः संयोगसंज्ञेत्याश्रित्य स्कोरिति लोपाभावात् । संस्ति । संस्तः इत्येके ॥ २ ॥ वश कान्तौ । कान्तिरिच्छा । वष्टि । उष्टः । उशन्ति । वक्षि । उष्ठः । उवाश । ऊशतुः । वशिता । वष्टु । उष्टात् । उड्ढि । अवट् । औष्टाम् । औशन् । अवशम् । उश्यातम् । उश्यास्ताम् । अवाशीत् । अवशीत् ॥ ३ ॥ चर्करीतं[2] च ॥ यङ्लुगन्तमदादौ बोध्यम् । ह्नुङ् अपनयने । ह्नुते । जुह्नुवे । ह्नुवीत । ह्नोषीष्ट । अह्नोष्ट ॥ ४ ॥ इत्यदादयः ॥

---

## तिङन्ते जुहोत्यादयः ।

हु दानादनयोः ॥ आदाने चेत्येके । प्रीणनेऽपीति भाष्यम् । दानं चेह प्रक्षेपः । स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते । इतश्चत्वारः परस्मैपदिनः । जुहोत्यादिभ्यः श्लुः ।२।४।७५। शपः श्लुः स्यात् । श्लौ ।६।१।१०। धातोर्द्वे स्तः । जुहोति । जुहुतः । अदभ्यस्तादित्यत् । हुश्नुवोरिति यण् । जुह्वति । भीह्रीभृहुवां श्लुवच्च ।३।१।३९। एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवांचकार । जुहाव । होता । होष्यति । जुहोतु । जुहुतात् । हुझल्भ्यो हेर्धिः । जुहुधि । आटि परत्वाद्गुणः । जुहवानि । परत्वाज्जुसि चेति गुणः । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् ॥ १ ॥ ञिभी भये । बिभेति । भियोऽन्यतरस्याम् ।६।४।११५। इकारः स्या-

---

शिष्टवान् । शिष्यात् । शिष्यास्ताम् । अङ्साहचर्यात्परस्मैपद एवेत्वम् । नेह । आशास्ते । अन्ये तु यस्माच्छासेरङ् संभवति तस्यैवेत्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिढ्वे इत्यात्मनेपदेऽपि इत्वं स्वीकुर्वन्ति ॥—**शा हौ** ॥ पूर्वसूत्रे उपधापदान्वयानुरोधेन शास इत्यवयवषष्ठ्यपि इह स्थानषष्ठ्येव उपधाया इत्यस्य निवृत्तत्वादित्याह—**शास्तेः शादेश** इति । 'धि च' इति सलोपेन शाधीति रूपे सिद्धेऽपि सलोपस्यासिद्धत्वात् 'शास इत्—' इति इत्वं स्यात् तद्वारणाय शाविधानमित्याहुः ॥—**यीवर्णयोः** ॥ य्वोरित्युक्तेऽपीष्टसिद्धौ यकारेकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतम् । यिश्च इवर्णश्च यीवर्णौ तयोः । यिश्चेति इकार उच्चारणार्थो न तु विवक्षितस्तदाह—**यकारे इवर्णे चे**ति । यिवर्णयोरिति पाठस्तूचितः ॥—**लोपं बाधित्वे**ति । लोपस्य तूदाहरणम् । आदीध्य गतः । अवेव्य गतः । दीधिता । दीधिष्यते । वेविता । वेविष्यते । 'यीवर्णयोरिति किम् । आदीध्यनम् । आवेव्यनम् । **षस** ॥—**असदि**ति । 'तिप्यनस्तेः' इति दत्वम् ॥—**अस** इति । 'सिपि धातोः—' इति रुर्वा । पक्षे दः ॥—**सन्ती**ति । इदित्वान्नुमि मनूसृत्ति इति स्थिते 'स्कोः' इति सलोपे 'झरो झरि सवर्णे' इति तकारस्य वा लोपः ॥—**संस्ति संस्त** इति । इहापि पूर्ववत्तलोपो वा बोध्यः । **वश** कान्तौ । भाषायामप्यस्य प्रयोगो दृश्यते । 'वष्टि भागुरिरल्लोपं' 'जयाय सेनान्यमुशति देवाः' इति ॥—**चर्करीतं च** ॥ गणसूत्रमिदम् । चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा ॥—**अदादौ बोध्यमि**ति । तेन यङ्लुगन्तेषु 'अदिप्रभृतिभ्यः—' इति शपो लुग् भवतीति भावः । प्राचा तु चर्करीतमिति यङ्लुगन्त परस्मैपदमित्युक्त तच्चेहाप्रकृतत्वादुपेक्षितम् ॥ इत्यदादयः ॥

**हु दाना**—॥ यद्यपि स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादानमेव दानं तथापि प्रयोगमनुसृत्य व्याचष्टे **प्रक्षेप** इति ॥—**वैध** इति । आहवनीयादौ ॥—**हविष** इति । विधिबोधितद्रव्यस्येत्यर्थः ॥—**स्वभावादि**ति । तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन वा पाषाणः प्रक्षिप्तः पुरोडाशो वा गर्तादौ स तु प्रक्षेपो न होम इति ज्ञेयम् ॥—**परस्मैपदिन** इति । तेन होष्य इति केषांचित्प्रयोगोऽसाधुरेव । 'स्मरार्मौ जुह्वानाः' इत्यानन्दलहरीप्रयोगस्तु साधुरेव । शानचोऽप्रवृत्तावपि चानशन्तत्वात् ॥—**आटीति** । 'आड्डुत्तमस्य' इत्यनेन ॥—**परत्वादि**ति । 'हुश्नुवोः' इति यणपेक्षया परत्वादित्यर्थः ॥—**भियोऽन्यतरस्याम्** ॥ सार्वधातुके किम् । भीयते । बिभिये । हलादौ किम् । बिभ्यति । क्ङिति किम् । बिभेति । केचिदत्र हलादौ

---

१ षससस्तीति—जक्षित्यादय इति सूत्रस्थभाष्यप्रयोगात्तु सस्तिधातुरत्र नास्तीति प्रतीयते । मूलपाठस्तु माधवानुरोधेनेति बोध्यम् । २ चर्करीतमिति—यङ्लुकः संज्ञेयमित्यर्थः ।

हलादौ क्ङिति सार्वधातुके। बिभितः। बिभीतः। बिभ्यति। बिभयांचकार। बिभाय। भेता ॥ २ ॥ ह्री लज्जायाम्। जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयांचकार। जिह्राय ॥ ३ ॥ पॄ पालनपूरणयोः। अर्तिपिपर्त्योश्च ।७।४।७७। अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ। उदोष्ठ्यपूर्वस्य ।७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ऋत्-दन्तस्तदन्तस्याङ्गस्य उत्स्यात्। गुणवृद्धी परत्वादिमं बाधेते। पिपर्ति। उत्वम्। रपरत्वम्। हलि चेति दीर्घः। पिपूर्तः। पिपुरति। पपार। क्ङिति लिटि ऋच्छत्यृतामिति गुणे प्राप्ते। शॄदॄप्रां ह्रस्वो वा ।७।४।१२। एषां क्ङिति लिटि ह्रस्वो वा स्यात्। पक्षे गुणः। पप्रतुः। पप्रुः। पपरतुः। पपरुः। परिता। परीता। अपिपः। अपिपूर्ताम्। अपिपरुः। पिपूर्यात्। पूर्यात्। अपारीत्। अपारिष्टाम्। ह्रस्वान्तोऽयमिति केचित्। पिपर्ति। पिपृतः। पिप्रति। पिपृयात्। आशिषि प्रियात्। अपार्षीत्। पाणिनीयमते तु तं रोदसी पिपृतमित्यादौ छान्दसत्वं शरणम् ॥ ४ ॥ डुभृञ् धारणपोषणयोः। भृञामित् ।७।४।७६। भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ। बिभर्ति। बिभृतः। बिभ्रति। बिभृषे। श्लुवद्भावाद् द्वित्वेत्वे। बिभरामास। बभार। बभर्थ। बभृव। बिभृहि। बिभराणि। अबिभः। अबिभृताम्। अबिभरुः। बिभृयात्। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत ॥ ५ ॥ माङ् माने शब्दे च। ई हल्यघोः ।६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य। मिमीते। श्नाभ्यस्तयोरित्यालोपः। मिमाते। मिमते। ममे। मातास्मि ॥ ६ ॥ ओहाङ् गतौ। जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते ॥ ७ ॥ ओहाक् त्यागे। परस्मैपदी। जहाति। जहातेश्च ।६।४।११६। इत्स्याद्वा हलादौ क्ङिति सार्वधातुके। पक्षे ईत्वम्। जहितः। जहीतः। जहति। जहौ। आ च हौ ।६।४।११७। जहातेर्हौ परे आ स्यात् चादिदीतौ। जहाहि। जहिहि। जहीहि। अजहात्। अजहुः। लोपो यि ।६।४।११८। जहातेरालोपः स्याद्यादौ सार्वधातुके। जह्यात्। एर्लिङि। हेयात्। अहासीत् ॥ ८ ॥ डुदाञ् दाने। प्रणिददाति। दत्तः। ददति। दत्ते। ददौ। घ्वसोरित्येत्वाभ्यासलोपौ। देहि। अददात्। अदत्ताम्। अददुः। दद्यात्। देयात्। अदात्। अदाताम्। अदुः। अदित ॥ ९ ॥ डुधाञ् धारणपोषणयोः। दानेऽप्येके। प्रणिदधाति। दधस्तथोश्च ।८।२।३८। द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः। वचनसामर्थ्यादालोपो न स्थानिवदिति वामनमाधवौ। वस्तुतस्तु पूर्वत्रासिद्धीये न स्थानिवत्। धत्तः। दधति। धत्थः। धत्थ। धत्ते। धत्से। धद्ध्वे। धेहि। अधित ॥ १० ॥ ॥ अथ त्रयः स्वरितेतः ॥ णिजिर् शौचपोषणयोः। णिजां त्रयाणां गुणः श्लौ ।७।४।७५। णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। निनेज। नेक्ता। नेक्ष्यति। नेनेक्तु। नेनिग्धि। नाभ्यस्तस्याचि पिति सार्वधातुके ।७।३।८७। लघूपधगुणो न स्यात्। नेनिजानि। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। नेनिज्यात्। निज्यात्। अनिजत्। अनैक्षीत्। अनिक्त ॥ १ ॥ विजिर् पृथग्भावे। वेवेक्ति। वेविक्ते। विवेजिथ। अत्र विज इडिति ङित्त्वं न। ओविजी इत्यस्यैव तत्र ग्रहणात्।

---

क्ङितीत्येतन्नातीवोपयुज्यते। इत्वविधानस्य बिभित इत्यादौ चरितार्थत्वात्। बिभ्यति बिभेतीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः ॥—**अर्तिपिपर्त्योश्च** ॥ अर्तेरुदाहरणमियर्तीति वक्ष्यति ॥—**उदोष्ठ्य**—॥ अङ्गावयवेति किम्। ऋ गतौ क्र्यादिस्तस्मात् क्तप्रत्यये 'श्र्युकः किति' इति इण्निषेधात् समीर्ण इति भवति। अन्यथा तु समूर्ण इति स्यात् ॥—**शॄदॄप्रां**—॥ शॄ हिंसायाम्। दॄ विदारणे। इमौ क्र्यादी ॥—**पक्षे गुण** इति। 'ऋच्छत्यॄताम्' इत्यनेन ॥—**पप्रतुरिति**। ह्रस्वपक्षे यण्। ननु ह्रस्वग्रहणमिह मास्तु गुणानुवृत्त्या तस्यैव विकल्पोऽस्तु। तथा च यणादेशेन पप्रतुः शश्रतुरित्यादि सिध्यत्येव। गुणपक्षे तु पपरतुः शशरतुरित्याद्यपि सिध्यतीति चेत्। मैवम्। गुणाभावपक्षे 'ॠत इद्धातोः' इतीत्वप्रसङ्गात्। न चान्तरङ्गत्वाद्यणेव स्यादिति वाच्यम्। वार्णादाङ्गस्य बलीयस्त्वात्। **डुभृञ्**। 'ड्वितः क्त्रिः'। भृत्रिमम् ॥—**भृञामित्** ॥ णिजां त्रयाणामित्यतोऽनुवर्तनादाह—**एषां त्रयाणामिति**। केचित्तु कपिञ्जलाधिकरणन्यायेन त्रयाणामिति लभ्यत इत्याहुः। त्रयाणां किम्। जहाति। श्लौ किम्। बभार ॥—**ई हल्यघोः** ॥—**श्नाभ्यस्तयोरिति**। लुनीते पुनीते। क्ङितीति किम्। लुनाति। अघोः किम्। धत्तः। दत्तः। **मिमीते** इति। 'घुमास्था—' इतीत्वमिह न प्रवर्तते तत्रार्धधातुक इत्यनुवृत्तेः। अन्यथा मातः। माथः। गाते। गासे इत्यादावतिप्रसङ्गात्। अत एव काशिकायामुक्तमार्धधातुक इत्यधिकारो न ल्यपीति योगं यावदिति ॥—**जहातेश्च** ॥ क्ङितीति किम्। जहाति। सार्वधातुके किम्। हीयते ॥—**चादिदीताविति**। अत एव भट्टिः प्रायुङ्क्त। 'जहिहि जहीहि जहाहि रामभार्याम्' इति ॥—**लोपो यि** ॥ सार्वेति किम्। हेयात् ॥—**प्रणिददातीति**। 'नेर्गद—' इति णत्वम् ॥—**दत्त** इति। 'श्नाभ्यस्तयोः' इत्यालोपः। अघोरित्युक्तत्वादीत्वं तु न ॥—**अदादिति**। 'गातिस्था—' इति सिचो लुक् ॥—**दधस्तथोश्च** ॥ दध इति कृतद्विर्वचनाभ्यासकार्यो धाञेव गृह्यते न तु दध धारण इत्ययमिति व्याचष्टे—**द्विरुक्तस्येति**। झषन्तस्य किम्। दधाति। नन्वेवं धत्त इत्यादावपि न स्यादाल्लोपस्य स्थानिवत्त्वेनाझषन्तत्वादत आह—**वचनसामर्थ्यादिति** ॥—**णिजाम्**—॥ श्लाविति किम्। निनेज ॥—**नाभ्यस्तस्य**—॥ अभ्यस्तस्य किम्। द्वेषाणि।

णिजिविजी श्लावावपि ॥ २ ॥ विष्लृ व्याप्तौ । वेवेष्टि । वेविष्टे । लदित्त्वादङ् । अविषत् । सिच क्सः । अजादौ क्सस्याचीति लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त ॥३॥ ॥ अथ आगणान्ताः परस्मैपदिनश्छान्दसाश्च ॥ घृ क्षरणदीप्त्योः । जिघर्म्यग्निं हविषा घृतेन । घृणामित् । बहुलं छन्दसीति इत्वम् ॥ १ ॥ हृ प्रसह्यकरणे । अर्थं जुवो अभिजिहर्ति होमान् ॥ २ ॥ ऋ सृ गतौ । बहुलं छन्दसीत्येव सिद्धे अर्तिपिपर्त्योश्चेतीत्वविधानादयं भाषायामपि । अभ्यासस्यासवर्णे इतीयङ् । इयर्ति । इयृतः । इय्रति । आर । आरतुः । इडत्त्यर्तीति नित्यमिट् । आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात् । आरत् । ससर्ति ॥ ३ ॥ भस भर्त्सनदीप्त्योः । बभस्ति । घसिभसोर्हलि चेत्युपधालोपः । झलो झलीति सलोपः । बब्धः । बप्सति ॥ ५ ॥ किद् ज्ञाने । चिकेत्ति ॥ ६ ॥ तुर त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति ॥ ७ ॥ धिष शब्दे । दिधेष्टि । दिधिष्टः ॥ ८ ॥ धन धान्ये । दधन्ति । दधन्तः । दधनति ॥ ९ ॥ जन जनने । जजन्ति । ☒ जनसनखनां सञ्झलोः ।६।४।४२। एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति । जजंसि । जजात । जजन्यात् । जजायात् । जन्यात् । जायात् ॥ १० ॥ गा स्तुतौ । देवाञ्जिगाति सुम्नयुः । जिगीतः । जिगति ॥११॥

॥ इति जुहोत्यादयः ॥

## तिङन्ते दिवादयः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । भूषन्ताः परस्मैपदिनः ॥ दिवादिभ्यः श्यन् ।३।१।६९। शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् ॥ १ ॥ षिवु तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत् । न्यसेवीत् ॥ २ ॥ स्रिवु गतिशोषणयोः ॥ ३ ॥ ष्ठिवु निरसने । केचिदिहेमं न पठन्ति ॥ ४ ॥ ष्णुसु अदने । आदान इत्येके । अदर्शन इत्यपरे । स्नुस्यति । सुष्णोस ॥ ५ ॥ ष्णसु निरसने । स्नस्यति । सस्नास ॥ ६ ॥ क्नसु ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । चक्नास ॥ ७ ॥ व्युष दाहे । वुव्योष ॥ ८ ॥ प्लुष च ॥ ९ ॥ नृती गात्रविक्षेपे । नृत्यति । ननर्त । ☒ सेऽसिचि कृतचृतच्छृदतृदनृतः ।७।२।५७। एभ्यः परस्य सिजिभन्नस्य सादेरार्धधातुकस्येड्वा स्यात् । नर्तिष्यति । नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् ॥ १० ॥ त्रसी उद्वेगे । वा भ्राशेति श्यन्वा । त्रस्यति । त्रसति । त्रेसतुः । तत्रसतुः ॥ ११ ॥ कुथ पूतीभावे । पूतीभावो दौर्गन्ध्यम् ॥ १२ ॥ पुथ हिंसायाम् ॥ १३ ॥ गुध परिवेष्टने ॥ १४ ॥ क्षिप प्रेरणे । क्षिप्यति । क्षेप्ता ॥ १५ ॥ पुष्प विकसने । पुष्यति । पुपुष्प ॥ १६ ॥ तिम ष्टिम ष्टीम आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति ॥ १९ ॥ व्रीड चोदने लज्जायां

---

अचि किम् । वेवेष्टि । पिद्ग्रहणम् 'उतो वृद्धिर्लुकि हलि' इत्युत्तरार्थम् । सार्वेति किम् । निनेज ॥—बहुलं छन्दसीतीत्वमिति । एतच्च पूर्वोत्तरान्वयि ॥—इयर्तीति । अभ्यासस्य इयङ् अभ्यासादुत्तरस्य तु गुणः ॥—इय्रतीति । 'अदभ्यस्तात्' इत्यत् ॥—अर्यादिति 'गुणोऽर्ति–' इति गुण ॥—आरदिति । 'सर्तिशास्ति–' इत्यङि 'ऋदृशोऽङि–' इति गुणः ॥—बब्ध इति । तसस्तकारस्य 'झषस्तथोः–' इति धत्वम् ॥—तुतूर्त इति । 'हलि च' इति दीर्घः । धन धान्ये । धान्यार्जन इत्यर्थः ॥—दधन्त इति । छान्दसत्वात् 'अनुनासिकस्य–' इति नेह दीर्घ इत्याहुः ॥—जनसनखनाम्–॥ जन जनने, जनी प्रादुर्भावे इत्युभयोरपि ग्रहणम् । झलादौ सनि सिषासति ॥—जज्ञतीति । 'गमहन–' इत्युपधालोपः । —जजायादिति । 'ये विभाषा' इति वा आत्वम् । एव जायादित्यत्रापि ॥—जिगातीति । 'बहुलं छन्दसि' इति इत्वम् ॥ इति जुहोत्यादयः ॥

दिवु क्रीडा । उदित्करण क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं च । देवित्वा । द्यूत्वा । द्यूनम् । क्रीडायाम्, दीव्यन्ति माणवकाः । विजिगीषायाम्, शत्रुं दीव्यति । विजिगीषते इत्यर्थः । कान्तिरिच्छा द्युतेः पृथग्ग्रहणात् ॥ षिवु ॥—परिषिषेवेति । 'स्थादिष्वभ्यास–' इति नियमो नेह प्रवर्तते तत्र प्राक् सितादित्यनुवृत्तेः । अस्य चाप्राक्सितीयत्वात् । तेनाभ्यासस्य षत्व 'परिनिविभ्यः–' इत्यनेन भवत्येव ॥—न्यषेवीदिति । 'सिवादीनां वा–' इति विकल्पः । नृती । ईदित्करणं 'श्वीदित–' इति निष्ठायामिण्निषेधार्थम् । यद्यपि 'सेऽसिचि–' इति इटो विकल्पितत्वात् 'यस्य विभाषा' इत्यनेनैवेष्टं सिध्यति, तथापि 'यस्य विभाषा' इत्यस्यानित्यत्वज्ञापनार्थमीदित्करण तेन 'धावितमिभराजधिया' इत्यादि सिद्धम् ॥—सेऽसिचि—॥—नर्तिष्यति नर्त्स्यतीति । निनर्तिषति । निनृत्सति । कर्तिष्यति । कर्त्स्यति । चिकर्तिषति । चिकृत्सति इत्यादि ज्ञेयम् ॥—अनर्तीदिति । असिचीत्युक्तत्वादिह नित्यमिट् ॥—त्रेसतुरिति । 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपौ । कुथ । पूतीभावः पवित्रीभवनम् । कुथ्यति भूमिः । पवित्रीभवतीत्यर्थः । पुष्प विकसने । 'कालात्साधु–' इत्यत्र पुष्यतिः शत्रन्तः । पचाद्यचि पुष्पम् । संज्ञायां कन् । पुष्पकम् । व्रीड । 'गुरोश्च हलः' इत्यप्रत्यये टाप् । व्रीडा । घञि तु व्रीडः ।

च । व्रीड्यति ॥ २० ॥ इष गतौ । इष्यति ॥ २१ ॥ षह षुह चक्यर्थे । चक्यर्थस्तृप्तिः । सह्यति । सुह्यति ॥ २३ ॥ जॄष् झॄष् वयोहानौ । जीर्यति । जजरतुः । जेरतुः । जरिता । जरीता । जीर्येत् । जीर्यात् । जॄस्तम्भ्विति क्ङा । ऋदृशोऽङि गुणः । अजरत् । अजारिष्टाम् । झीर्यति । जझरतुः । अझारीत् ॥ २५ ॥ षूङ् प्राणिप्रसवे । सूयते । सुषुवे । स्वरतिसूतीति विकल्पं बाधित्वा श्र्युकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता । सविता ॥ २६ ॥ दूङ् परितापे । दूयते ॥ २७ ॥ दीङ् क्षये । दीयते । दीङो युडचि क्ङिति ।६।४।६३। दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् । * वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ । दिदीये । मीनातिमिनोतिदीङां ल्यपि च ।६।१।५०। एषामात्वं स्यात् ल्यपि चकारादशित्येज्निमित्ते । दाता । दास्यते । अदास्त । अदास्थाः ॥ २८ ॥ डीङ् विहायसा गतौ । डीयते । डिड्ये ॥ २९ ॥ धीङ् आधारे । धीयते । दिध्ये । धेता ॥३०॥ मीङ् हिंसायाम् । हिंसात्र प्राणवियोगः । मीयते ॥ ३१ ॥ रीङ् श्रवणे । रीयते ॥ ३२ ॥ लीङ् श्लेषणे । विभाषा लीयतेः ।६।१।५१। लीयतेरिति यका निर्देशो न तु श्यना । लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च । लेता । लाता । लेष्यते । लास्यते । एज्विषये किम् । लीयते । लिल्ये ॥ ३३ ॥ व्रीङ् वृणोत्यर्थे । व्रीयते । विव्रिये । स्वादय ओदितः । तत्फलं तु निष्ठानत्वम् ॥ ३४ ॥ पीङ् पाने । पीयते ॥ ३५ ॥ माङ् माने । मायते । ममे ॥ ३६ ॥ ईङ् गतौ । ईयते । अयांचक्रे ॥३७॥ प्रीङ् प्रीतौ । सकर्मकः । प्रीयते । पिप्रिये ॥३८॥ ॥ अथ परस्मैपदिनश्चत्वारः । शो तनूकरणे । ओतः श्यनि ।७।३।७१। लोपः स्यात् श्यनि । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति । विभाषा घ्राधेटिति सिचो वा लुक् । लुगभावे यमरमेतीट्सकौ । अशात् । अशाताम् । अशुः । अशासीत् । अशासिष्टाम् ॥१॥ छो छेदने । छ्यति ॥२॥ षोऽन्तकर्मणि । स्यति । ससौ । अभिष्यति । अभ्यष्यत् ।

---

अत एव 'व्रीडमावहति मे स सप्रति' इति कालिदासः । 'व्रीडादिवाभ्यासगतैर्विलिल्ये' इति माघश्च । षह षुह । 'परिनिविभ्यः–' इत्यत्र सहेत्यकार उच्चारणार्थ इति षत्वमिह भवति । परिषह्यति । 'तीषसह–' इतीड्विकल्पस्तु नास्य भवति सहेतिशबन्तनिर्देशात्, किं तु षह मर्षण इत्यस्यैव स इत्यात्रेयादयः । सहेति निर्देशस्योभयत्र तुल्यत्वे 'तीषसह–' इत्यत्र शपा निर्देशः । 'परिनिविभ्यः–' इत्यत्र तु नेत्यर्धजरतीयमिदं हेयमेव । तत्त्व तु प्रयोगमनुसृत्य महद्भिरेव निर्धार्यम् । नपुंसके भावे क्तः । सुहितं तृप्तिः । अत एव 'पूरणगुण–' इति सूत्रे सुहितार्थास्तृप्त्यर्था इति व्याख्यातम् ॥—**जेरतुरिति** । 'ऋच्छत्यृताम्' इति गुणे कृते 'न शस–' इति गुणशब्देन भावितस्य निषेधात् 'अत एकहल्मध्ये' इत्यप्रवृत्तौ 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपविकल्पः । **षूङ्** । प्रसव उत्पत्तिः । मृत्पिण्डो घट सूयत इत्यादिप्रयोगाभावात्प्राणीत्युक्तम् । 'स्वादय ओदितः' इति वक्ष्यमाणत्वात् 'ओदितश्च' इति निष्ठातस्य नत्वम् । प्रसूनम् ॥—**विकल्पमि**ति । परमपीति शेषः ॥—**निषेधे प्राप्त** इति । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः ॥—**दीङो**—॥ पञ्चमीत्यभिप्रायेण व्याचष्टे—**परस्ये**ति ॥—**अजादेरि**ति । ङः सीत्यत्रेव उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति सप्तम्याः षष्ठीकल्पनम् । अचि किम् । देदीयते । क्ङितीति किम् । उपादानम् । आभीयत्वेनासिद्धत्वमाशङ्क्याह—**वुग्युटावि**ति ॥—**दिदीये** इति । परमपि यण बाधित्वा नित्यत्वादादौ युट् । सति तु यणि ईकारस्य श्रवण न स्यादिति युटः सिद्धत्वमुक्तम् ॥—**मीनाति**—॥ मीञ् हिंसायाम् । डुमिञ् प्रक्षेपणे । प्रमाय । उपदाय । प्रमातव्यम् । उपदातव्यम् । एज्निमित्त इति विषयसप्तमी । तेन आदावात्वं पश्चाद्दञ् । 'आतो युक्' इति युक् । उपदाय इति सिध्यति । अन्यथा एरचि कृते आत्वे उपदा इति स्यात् ॥—**अदास्ते**ति । दीङः प्रतिषेधः 'स्थाघ्वोरिच्च' इति न घुत्वमित्यदितेति रूपं न भवतीत्येके । अन्ये तु 'स्थाघ्वोरिच्च' इत्येतत्तु न भवति दीङोऽनुकरणे दारूपासम्भवेनाघुत्वात् । अत एव प्रनिदातेत्यादौ 'नेर्गद–' इति णत्वमपि न भवतीत्याहुः । अयं भावः । दो अवखण्डने इत्यादेर्दारूपत्वं सम्भवति । 'आदेच उपदेशे–' इत्यस्यानैमित्तिकत्वात् । दीङस्तु एज्निमित्तप्रत्ययविषये आत्वं दा इत्यनुकरणे एज्निमित्तस्याभावित्वान्न घुत्वम् । एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याप्रसक्तिरिति । **डीङ्** । डीनः डीनवान् । स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न । इटि हि सति व्यवधानात् 'ओदितश्च' इति नत्व न स्यादिति । स्वादिषु पाठसामर्थ्यादिड्व्यवधानेऽपि णत्वमस्त्विति न शङ्क्यमिष्टानुरोधात् । डयित इति प्रयोगस्तु भौवादिकस्य । निष्ठा शीङिस्यत्र निष्ठेति योगविभागादकित्वे गुण इत्याहुः । मीङ् हिंसायाम् । मीञ् इति क्र्यादौ ॥—**प्राणवियोग** इति । मीयते प्राणैर्वियुज्यत इत्यर्थः । **लीङ्** । ली श्लेषण इति क्र्यादौ ॥—**यके**ति । सार्वधातुके यगिति विहितेन ॥—**न तु श्यने**ति ॥ अन्यथा लीङ् इत्येव ब्रूयादिति भावः । यका निर्देशस्य फलमाह ॥—**लीलीङोरि**ति । ल्यपि । विलाय । विलीय । **व्रीङ्** वृणीत्यर्थे । वरणम् । वृञ् वरण इति स्वादौ पठिष्यमाणत्वात् । वरणे इति वक्तव्ये वृणोत्यर्थ इति वचनं वैचित्र्यार्थम् । व्री वरण इति क्र्यादौ । **माङ्** ॥—**मायत** इति । घुमास्थेतीत्वं तु न । तत्रार्धधातुक इत्यधिकारात् ॥—**षो अन्त** । अन्तकर्म नाशनम् । 'राघवस्य शरैर्घोरैर्घोरं रावणमाहवे' इति । राघवेति संबुध्यन्तम् । स्येति लोण्मध्यमैकवचनम् ॥—**अभिष्यती**ति । 'उपसर्गात्सुनोति–' इति षत्वम् ॥—**अभ्यष्यदि**ति । 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् ॥

भमिससौ ॥ ३ ॥ दो अवखण्डने । द्यति । ददौ । प्रणिदाता । देयात् । अदात् ॥ ४ ॥ ॥ अथात्मनेपदिनः पञ्चदश ॥ जनी प्रादुर्भावे । ॠ ज्ञाजनोर्जा ।७।३।७९। अनयोर्जादेशः स्यादिशति । जायते । जज्ञे । जज्ञाते । जज्ञिरे । जनिता । जनिष्यते । दीपजनेति वा चिण् । ॠ जनिवध्योश्च ।७।३।३५। अनयोरुपधाया वृद्धिर्न स्यात् चिणि ञ्णिति कृति च । अजनि । अजनिष्ट ॥ १ ॥ दीपी दीप्तौ । दीप्यते । दिदीपे । अदीपि । अदीपिष्ट ॥ २ ॥ पूरी आप्यायने । पूर्यते । अपूरि । अपूरिष्ट ॥ ३ ॥ तूरी गतित्वरणहिंसनयोः । तूर्यते ॥ ४ ॥ धूरी गूरी हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते । जुगूरे ॥ ६ ॥ घूरी जूरी हिंसावयोहान्योः ॥ ८ ॥ शूरी हिंसास्तम्भनयोः ॥ ९ ॥ चूरी दाहे ॥ १० ॥ तप ऐश्वर्ये वा । अयं धातुरैश्वर्ये वा तङ्श्यनौ लभते । अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः । केचित्तु वाग्रहणं वृतुधातोरायवयवमिच्छन्ति । तप्यते । तप्ता । तप्स्यते । पतेति व्यत्यासेन पाठान्तरम् । द्युतयामा नियुतः पत्यमानः ॥ ११ ॥ वृतु वरणे । वृत्यते । पक्षान्तरे वावृत्यते । ततो वावृत्यमाना सा रामशालां न्यविक्षतेति भट्टिः ॥१२॥ क्लिश उपतापे । क्लिश्यते । क्लेशिता ॥ १३ ॥ काशृ दीप्तौ । काश्यते ॥१४॥ वाशृ शब्दे । वाश्यते । ववाशे ॥ १५ ॥ ॥ अथ पञ्च स्वरितेतः ॥ मृष तितिक्षायाम् । मृष्यति । मृष्यते । ममर्ष । ममृषे ॥ १ ॥ ई शुचिर् पूतीभावे । पूतीभावः क्लेदः । शुच्यति । शुच्यते । शुशोच । शुशुचे । अशुचत् । अशोचीत् । अशोचिष्ट ॥ २ ॥ णह बन्धने । नह्यति । नह्यते । ननाह । नेहे । नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत् ॥ ३ ॥ रञ्ज रागे । रज्यति । रज्यते ॥ ४ ॥ शप आक्रोशे । शप्यति । शप्यते ॥५॥ ॥ अथैकादशानुदात्तेतः ॥ पद गतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ॥ ॠ चिण् ते पदः ।३।१।६०। पदश्च्लेश्चिण् स्यात्तशब्दे परे । प्रण्यपादि । अपत्साताम् । अपत्सत ॥ १ ॥ खिद दैन्ये । खिद्यते । चिखिदे । खेत्ता । अखित्त ॥ २ ॥ विद सत्तायाम् । विद्यते । वेत्ता ॥ ३ ॥ बुध अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् ॥ ४ ॥ युध संप्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध । कथं युध्यतीति । युधमिच्छतीति क्यच् । अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति वा ॥ ५ ॥ अनो रुध कामे । अनुरुध्यते ॥ ६ ॥ अण प्राणने । अण्यते । आणे । अणिता ॥ ७ ॥ अनेति दन्त्यान्तोऽयमित्येके ॥ ८ ॥ मन ज्ञाने । मन्यते । मेने । मन्ता ॥ ९ ॥ युज समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता ॥ १० ॥ सृज विसर्गे । अकर्मकः । संसृज्यते सरसिजैररुणांशुभिन्नैः । ससृजिषे । स्रष्टा । स्रक्ष्यते । लिङ्सिचाविति कित्त्वान्न गुणो नाप्यम् । सृक्षीष्ट । असृष्ट । असृक्षाताम् ॥ ११ ॥ लिश अल्पीभावे । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् ॥ १२ ॥ ॥ अथागणान्ताः परस्मैपदिनः ॥ राधोऽकर्मकाद्वृद्धावेव । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह वृद्धाविति । यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । विराध्यन्तं क्षमेत कः । द्रुह्यन्त-

---

—अभिससाविति । 'स्यादिषु–' इति नियमान्न षत्वम् । दो अवखण्डने । अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः । खण्डने इत्येतावत्युक्तेऽपीष्टसिद्धेः ॥—प्रणिदातेति । नेर्गदेति णत्वम् ॥—देयादिति । 'एर्लिङि' इत्येत्वम् ॥—अदादिति । 'गातिस्था–' इति सिचो लुक् ॥—ज्ञाजनोर्जा ॥ जानाति । शिति किं ? ज्ञाता । ज इति ह्रस्वोच्चारणेऽपि 'अतो दीर्घो यञि' दीर्घे सिद्धे जाग्रहणमङ्गवृत्तपरिभाषाज्ञापनार्थम् । तेन पाधातोः पिबादेशे कृते गुणो न भवति पिबादेशस्यादन्तत्वाश्रयणं तूपायान्तरमित्याहुः ॥—ञिति णिति कृति चेति । घञि ञिति कृत्युदाहरणं जनः । णिति कृति तु जनकः । जनयतीत्यत्रोपधावृद्धौ सत्यां 'जनीजृष्–' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वः । दीपी दीप्तौ । ईदित्त्वान्निष्ठायामिण्न । दीप्तः । एवं पूरीत्यादेरीदित्त्वात्पूर्ण इत्यादि ज्ञेयम् ॥—केचित्त्विति । तेषां मते ऐश्वर्ये तप्यते इत्येव प्रयोगो न तु तपतीति ॥—न्यविक्षतेति । निपूर्वाद्विशतेर्लुङि 'शल इगुपधा–' इति क्सः । 'नेर्विशः' इति तङ् । वाशृ शब्दे । 'मन्दिवाशि–' इत्युरच् । वाशुरा रात्रिः ॥—तितिक्षायामिति । 'गुप्तिज्किद्भ्यः–' इति सन् । तत्र हि तिजेः क्षमायामित्युक्तम् । ईशुचिर् । ईदित्त्वान्नेट् । शुक्तम् । क्लिन्नमित्यर्थः ॥—ननद्धेति । 'नहो धः' इति धत्वम् ॥—चिण् ते पदः ॥ तशब्द इति सामर्थ्यादात्मनेपदप्रथमपुरुषैकवचनम् । तशब्दे किम् । अपत्थाः ॥—प्रण्यपादीति । 'चिणो लुक्' इति तशब्दस्य लुक् । 'नेर्गद–' इति णत्वम् ॥—अबोधीति । 'दीपजनबुध–' इति चिण् । अनो रुध कामे । अनोः परो रुधधातुः कामे । काम इच्छा । दिवादिषु पाठसामर्थ्यात् 'रुधादिभ्यः–' इति श्नमं बाधित्वा श्यन् ॥—नाप्यमिति । 'सृजिदृशोर्झल्यमकिति' इत्यकितीत्येव विधानात् । लिश । आतपादिनानल्पस्य अल्पभावोऽल्पीभावः ॥—लिक्षीष्टेति । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः ॥—अलिक्षतेति । 'शल इगुपधा–' इति क्सः ॥—राधोऽकर्मकात्— । भिन्नक्रमं दर्शयति—अकर्मकादेवेति । राधो वृद्धावेव श्यन्निति व्याख्यायामकर्मकादिति विशेषणं व्यर्थं स्याद् वृद्धावस्याकर्मकत्वात् । अकर्मकात्किम् । शत्रुमपराध्नोति । हिनस्तीत्यर्थः । राध संसिद्धाविति स्वादौ । राधो हिंसायामित्यनुवादाद्धिंसायामप्ययम् ॥—उदाहरणमाहेति । अकर्मकत्वप्रयोजकस्य यस्य कस्यचिदर्थस्येति भावः । अकर्मके श्यन्नन्तस्य प्रयोगान्दर्शयति—यन्मह्य-

मित्यर्थः । राध्यत्योदनः । सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । राधो हिंसायामित्येत्वाभ्यासलोपाविह न हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा । रात्स्यति । अयं स्वादिश्चुरादिश्च ॥ १ ॥ व्यध ताडने । ग्रहिज्येति संप्रसारणम् । विध्यति । विव्याध । विविधतुः । विव्यद्ध । विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् विध्यात् । अव्यात्सीत् ॥ २ ॥ पुष पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ् । अपुषत् ॥ ३ ॥ शुष शोषणे । अशुषत् ॥ ४ ॥ तुष प्रीतौ ॥ ५ ॥ दुष वैकृत्ये ॥ ६ ॥ श्लिष आलिङ्गने । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति । श्लिषः ।३।१।४६। अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादो न तु चिणः । पुरस्तादपवादन्यायात् । आलिङ्गने ।३।१।४६। श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र । योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियमः । अश्लिक्षत्कन्यां देवदत्तः । आलिङ्गन एवेति किम् । समश्लिषज्जतु काष्ठम् । अङ् । प्रत्यासत्ताविह श्लिषिः । कर्मणि अनालिङ्गने सिजेव न तु क्सः । एकवचने चिण् । अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् ॥ ७ ॥ शक विभाषितो मर्षणे । विभाषित इत्युभयपदीत्यर्थः । शक्यति । शक्यते हरिं द्रष्टुं भक्तः । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । अशकत् । अशक्त । सेट्कोऽयमित्येके तन्मतेनानिट्कारिकासु लृदित्पठितः । शकिता । शकिष्यति ॥ ८ ॥ ष्विदा गात्रप्रक्षरणे । घर्मस्रुताविय्यर्थः । अयं ञीदिति न्यासकारादयः । नेति हरदत्तादयः । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् ॥ ९ ॥ क्रुध क्रोधे । क्रोद्धा । क्रोत्स्यति ॥ १० ॥ क्षुध बुभुक्षायाम् । क्षोद्धा । कथं क्षुधित इति । संपदादिक्विबन्तात्तारकादित्वादितजिति माधवः । वस्तुतस्तु वसतिक्षुधोरितीट् वक्ष्यते ॥ ११ ॥ शुध शौचे । शुध्यति । शुशोध । शोद्धा ॥ १२ ॥ सिधु संराद्धौ । ऊदित्पाठः प्रामादिकः । सिध्यति । सेद्धा । सेत्स्यति । असिधत् ॥ १३ ॥ रध हिंसासंराद्ध्योः । संराद्धिर्निष्पत्तिः । रध्यति । रधिजभोरचीति नुम् । ररन्धतुः । रधादिभ्यश्च ।७।२।४५। रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । ररन्धिथ । ररद्ध । ररन्धिव । रेध्व । नेट्यलिटि रधेः ।७।१।६२। लिड्वर्जे इटि रधेर्नुम्न स्यात् । रधिता । रद्धा । रधिष्यति । रत्स्यति । अङि नुम् । अनिदितामिति नलोपः । अरधत् ॥ १४ ॥ णश अदर्शने । नश्यति । ननाश । नेशतुः । नेशिथ । मस्जिनशोर्झलि ।७।१।६०। नुम् स्यात् । ननंष्ठ । नेशिव । नेश्व । नेशिम । नेश्म । नशिता । नंष्टा । नशिष्यति । नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति । नशेः षान्तस्य ।८।४।३६। णत्वं न स्यात् । प्रनंष्टा । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति । नशिष्यति ॥१॥ तृप प्रीणने । प्रीणनं तृप्तिस्तर्पणा च । नाग्निस्तृप्यति काष्ठानाम् ।

मित्यादिना ॥—कृष्णायेति । 'राधीक्ष्योः–' इति चतुर्थी ॥—अपुषदिति । ङित्वाद्गुणाभावः । शुष । शोष्टा । शोक्ष्यति ॥—'श्लिष अलिङ्गने' इति सूत्र योगविभागेन व्याचष्टे—श्लिष इति ॥—अनिटश्च्लेः क्स इति । एतच्च 'च्लेः सिच्' 'शल इगुपधात्–' इत्यतोऽनुवर्तत इति भावः । अनिटः किम् । श्लिषु दाह इति भौवादिकस्य सेटो माभूत् । अश्लेषीत् । 'शल इगुपध–' इति सिद्धे पुनः क्सविधे फलमाह—पुषाद्यङ इति ॥—सामर्थ्यादिति । यदि हि श्लिष इति प्राप्त एव क्सो नियम्येत तर्हि योगविभागो व्यर्थः स्यादिति भावः । शल इगुपधादित्यस्यापीति । तेन कर्मण्यातांप्रभृतिष्वनालिङ्गने सिजेव भवति न तु क्सः । समश्लिक्षत जतूनि काष्ठैरिति क्सप्रत्यये सति तु समाश्लिक्षन्तेति स्यादिति भावः ॥—प्रत्यासत्ताविति । आलिङ्गन हि प्राणिकर्तृकं न तु काष्ठादिकर्तृकमिति भावः । श्लिषश्च्लेरालिङ्गन एव क्स इति व्याख्यानफल दर्शयति—कर्मणीत्यादिना । अश्लिक्षातामित्यादौ यद्यपि क्ससिचोर्विशेषो नास्ति 'क्सस्याचि'इत्यकारलोपात्तथापि थासादावस्त्येव विशेष इति ध्वनयन्नुदाहरति—अश्लिष्ठाः। अश्लिड्ढ्वमिति ॥—न्यासकारादय इति । तथा च तन्मते 'ञीतः क्तः' इति वर्तमाने क्तो भवति । आदित्त्वान्निष्ठाया नेट् । स्विन्नः । 'विभाषा भावादिकर्मणोः' । स्विन्नम् । स्वेदितमित्यादि । षिधु । संराद्धिर्निष्पत्तिः । 'उदितो वा' इति क्त्वायामिड्विकल्पः । इट्पक्षे 'रलो व्युपधात्–' इति वा कित्त्वम् । सिधित्वा सेधित्वा । सिद्ध्वा ॥—प्रामादिक इति । ऊदित्त्वे त्वनुदात्तेषु सिध्यतेः पाठो व्यर्थः स्यादिति भावः ॥—रधादिभ्यश्च ॥ 'स्वरतिसूति–' इत्यतो वेत्यनुवर्तते । योगविभागो वैचित्र्यार्थः । गणनिर्देशाद्यङ्लुकि राराधितेत्येव न तु रारद्धेति ॥—नेट्यलिटि—॥ इटीति किम् । रन्धकः । अलिटीति किम् । ररन्धिव । नुमि कृते संयोगात्परत्वेनाक्त्वान्नलोपो न ॥—नंष्टेति । 'नशेर्वा' इति कुत्वमिह न शङ्क्यं पदान्त एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्येत् ॥—प्रणश्यतीति । 'उपसर्गादसमासेऽपि–' इति णत्वम् ॥—नशेः ॥ 'न भाभूपूकमिगमि–' इत्यतो नेत्यनुवर्तते तदाह—णत्वं न स्यादिति । षस्येत्युक्तेऽपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सज्ज्ञापयतीत्याह—भूतपूर्वेति ॥—काष्ठानामिति । करणस्य शेषत्वविवक्षायां षष्ठी ॥—तत्रप्थेति । 'अनुदात्तस्य चर्दुपधस्य–' इति विकल्पे-

पितृनताप्सींदिति भट्टिः । इत्युभयत्र दर्शनात् । ततर्पिथ । तत्रप्थ । ततर्प्थ । तर्पिता । तर्प्ता । त्रप्ता । स्पृशमृशकृषेति सिज्वा । अताप्सींत् । अत्राप्सीत् । अतर्पीत् । अतृपत् ॥ १६ ॥ दृप हर्षमोहनयोः । मोहनं गर्वः । दृप्यतीत्यादि । रधादित्वादिमौ वेट्कावमर्थमनुदात्तता ॥ १७ ॥ द्रुह जिघांसायाम् । वाद्रुहमुहेति वा घः । पक्षे ढः । दुद्रोग्ध । दुद्रोढ । दुद्रोहिथ । द्रोहिता । द्रोग्धा । द्रोढा । द्रोहिष्यति । ध्रोक्ष्यति । ढत्वघत्वयोस्तुल्यं रूपम् । अद्रुहत् ॥ १८ ॥ मुह वैचित्ये । वैचित्यमविवेकः । मुह्यति । मुमोहिथ । मुमोग्ध । मुमोढ । मोग्धा । मोढा । मोहिता । मोहिष्यति । मोक्ष्यति । अमुहत् ॥ १९ ॥ ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोह । सुष्णोहिथ । सुष्णोग्ध । सुष्णोढ । सुष्णुहिव । सुष्णुह्व । स्नोहिता । स्नोग्धा । स्नोढा । स्नोहिष्यति । स्नोक्ष्यति । अस्नुहत् ॥ २० ॥ ष्णिह प्रीतौ । स्निह्यति । सिष्णेह । वृत् ॥ रधादयः समाप्ताः ॥ पुषादयस्तु आ गणान्तादिति सिद्धान्तः ॥२१॥ शमु उपशमे । शमामष्टानां दीर्घः श्यनि ।७।३।७४। शमादीनामित्यर्थः । प्रणिशाम्यति । शेमतुः । शेमिथ । शमिता । अशमत् ॥ १ तमु काङ्क्षायाम् । ताम्यति । तमिता । अतमत् ॥ २ ॥ दमु उपशमे । उपशमे इति ण्यन्तस्य । तेन सकर्मकोऽयम् । न तु शमिवदकर्मकः । अदमत् ॥ ३ ॥ श्रमु तपसि खेदे च । श्राम्यति । अश्रमत् ॥ ४ ॥ भ्रमु अनवस्थाने । वा भ्राशेति श्यन्वा । तत्र कृते शमामष्टानामिति दीर्घः । भ्राम्यति । लुङ्यङ् । अभ्रमत् । शेषं भ्वादिवत् ॥५॥ क्षमू सहने । क्षाम्यति । चक्षमिथ । चक्षन्थ । चक्षमिव । चक्षण्व । चक्षमिम । चक्षण्म । क्षमिता । क्षन्ता । अयमषित् । भ्वादिस्तु षित् । अषितः क्षयाम्यति क्षान्तिः क्षमूषः क्षमते क्षमा ॥६॥ क्लमु ग्लानौ । क्लाम्यति । क्लामति । शपीव श्यन्यपि ष्ठिवुक्लम्वित्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः । अङ् । अक्लमत् ॥ ७ ॥ मदी हर्षे । माद्यति । अमदत् । शमादयोऽष्टौ गताः ॥ ८ ॥ असु क्षेपणे । अस्यति । आस । असिता । अस्यतेस्थुक् ।७।४।१७। अङि परे । आस्थत् । अस्य पुषादित्वादङि सिद्धे अस्यतिवक्तीति वचनं तङर्थम् । तङ् तूपसर्गादस्यत्यूह्योरिति वक्ष्यते । पर्यास्थत ॥ १ ॥ यसु प्रयत्ने । यसोऽनुपसर्गात् ।३।१।७१। संयसश्च ।३।१।७२। श्यन्वा स्यात् । यस्यति । यसति । संयस्यति । संयसति । अनुपसर्गात्किम् । प्रयस्यति ॥ २ ॥ जसु मोक्षणे । जस्यति ॥ ३ ॥ तसु उपक्षये । दसु च । तस्यति । अतसत् । दस्यति । अदसत् ॥ ५ ॥ वसु स्तम्भे । वस्यति । ववास । ववसतुः । न शसददेति निषेधः । बशादिरयमिति मते तु । बेसतुः । बेसुः ॥ ६ ॥ व्युष विभागे । अयं दाहे पठितः । अर्थभेदेन त्वङर्थं पुनः पठ्यते । अव्युषत् । ओष्ठ्यादिर्दन्त्यान्तोऽयं प्युस इत्यन्ये । अपकारो युस इत्यपरे ॥ ७ ॥ प्लुष दाहे । अप्लुषत् । पूर्वत्र पाठः सिजर्थ इत्याहुः । तद् भ्वादिपाठेन गतार्थमिति सुवचम् ॥ ८ ॥ बिस प्रेरणे । बिस्यति । अबिसत् ॥ ९ ॥ कुस संश्लेषणे । अकुसत् ॥ १० ॥ बुस उत्सर्गे ॥ ११ ॥ मुस खण्डने ॥ १२ ॥ मसी परिणामे । परिणामो विकारः । समी इत्येके ॥ १३ ॥ लुठ विलोडने ॥ १४ ॥ उच समवाये । उच्यति । उवोच । ऊचतुः । मा भवानुचत् ॥ १५ ॥ भृशु भ्रंशु अधःपतने । बभर्श । अभृशत् । अनिदितामिति नलोपः । भ्रश्यति । अभ्रशत् ॥ १७ ॥ वृश वरणे । वृश्यति । अवृशत् ॥ १८ ॥ कृश तनूकरणे । कृश्यति ॥ १९ ॥ ञितृषा पिपासायाम् ॥ २० ॥ हृष तुष्टौ । श्यन्नङौ भौवादिकाद्विशेषः ॥ २१ ॥ रुष रिष हिंसायाम् । तीषसहेति वेट् । रोषिता । रोष्टा । रेषिता । रेष्टा ॥ २३ ॥ डिप क्षेपे ॥ २४ ॥ कुप क्रोधे ॥ २५ ॥ गुप व्याकुलत्वे ॥ २६ ॥ युप रुप लुप विमोहने । युप्यति । रुप्यति । लुप्यति । लोपिता । लुप्यतिः सेट्कः । अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव ग्रहणात् ॥ २९ ॥ लुभ गार्ध्ये । गार्ध्यमाकाङ्क्षा । तीषसहेति वेट् । लोभिता । लोब्धा । लोभिष्यति । लुभ्येत् । लुभ्यान् । अलुभत् । भ्वादेरवृत्कृतत्वाल्लोभतीत्यपीत्याहुः ॥ ३० ॥ क्षुभ संचलने । क्षुभ्यति ॥ ३१ ॥ णभ तुभ हिंसायाम् । क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते । तेषां द्युतादित्वादङ् सिद्धः । क्र्यादित्वात्पक्षे सिज्भवत्येव । इह पाठस्तु श्यनर्थः ॥ ३३ ॥ क्लिदू आर्द्रीभावे । क्लिद्यति । चिक्लेदिथ । चिक्लेत्थ । चिक्लिदिव । चिक्लिद्व । चिक्लिदिम । चिक्लिद्म । क्लेदिता । क्लेत्ता ॥ ३४ ॥ ञिमिदा स्नेहने । मिदेर्गुणः । मेद्यति । अमिदत् । द्युतादिपाठादेवामिदत् अमेदिष्टेति सिद्धे इह पाठोऽमेदीदिति माभूदिति । द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः ॥ ३५ ॥ ञिक्ष्विदा स्नेहनमोचनयोः ॥ ३३ ॥ ऋधु वृद्धौ । आनर्ध । आर्धत्

नामागमः ॥—रधादय इति । रधनशतृपदृपद्रुहमुहष्णुहष्णिह इत्यर्थः । शमु । उदित्त्वात्क्त्वायां वेट् । शमित्वा । शान्त्वा । 'यस्य विभाषा' इति निष्ठायामनिट् । शान्तः ॥—भ्रमु अनवस्थाने ॥—शेषमिति । श्यनि दीर्घो लुङि अङ् च विशेष उक्तस्ततोऽन्यदित्यर्थः ॥—चक्षण्वेति । 'म्वोश्च' इति मस्य नत्वे कृते णत्वम् ॥—शमादिपाठ इति । 'शमित्यष्टाभ्यो घिनुण्' ॥—शमादय इति । शम्‌तम्‌दम्‌श्रम्‌भ्रम्‌क्षम्‌क्लम्‌मद इत्यर्थः ॥—यसोऽनुप—॥ अत्र वदन्ति । यस इत्येवास्तु । ततः समः नियमार्थमिदम् । सोपसर्गाद्यसश्चेत्सपूर्वकादेवेति । एवं च पूर्वसूत्रेऽनुपसर्गादिति ग्रहणमुत्तरत्र च यस-

॥ १७ ॥ गृधु अभिकाङ्क्षायाम्। अगृधत् ॥ १८ ॥ वृत् ॥ पुषादयो दिवादयश्च वृत्ताः। केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वादिवदाकृतिगणः। तेन क्षीयते सूयतीत्यादि सिद्धिरित्याहुः ॥ इति दिवादयः ॥

## ॥ तिङन्ते स्वादयः ॥

षुञ् अभिषवे। अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च। तत्र स्नानेऽकर्मकः॥ स्वादिभ्यः श्नुः ।३।१।७३। सुनोति। सुनुतः। हुश्नुवोरिति यण्। सुन्वन्ति। सुन्वः। सुनुवः। सुन्वहे। सुनुवहे। सुषाव। सुषुवे। सोता। सुनु। सुनवानि। सुनवै। सुनुयात्। सूयात्। स्तुसुधूञ्भ्य इतीट्। असावीत्। असोष्ट। अभिषुणोति। अभ्यषुणोत्। अभिसुषाव ॥ सुनोतेः स्यसनोः ।८।३।११७। स्ये सनि च परे सुञः षो न स्यात्। विसोष्यति ॥१॥ षिञ् बन्धने। सिनोति। विसिनोति। सिषाय। सिष्ये ॥ २ ॥ शिञ् निशाने। तालव्यादिः। शेता ॥ ३ ॥ डुमिञ् प्रक्षेपणे। मीनातिमिनोतीत्यात्वम्। ममौ। ममिथ। ममाथ। मिम्ये। माता। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त ॥ ४ ॥ चिञ् चयने। प्रणिचिनोति। विभाषा चेः ।७।३।५८। अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च। प्रणिचिकाय। चिचाय। चिक्ये। चिच्ये। अचैषीत्। अचेष्ट ॥ ५ ॥ स्तृञ् आच्छादने। स्तृणोति। स्तृणुते। गुणोर्तीति गुणः। स्तर्यात्। ऋतश्च संयोगादेः ।७।२।४३। ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि। स्तरिषीष्ट। स्तृषीष्ट। अस्तरिष्ट। अस्तृत ॥ ६ ॥ कृञ् हिंसायाम्। कृणोति। कृणुते। चकार। चकर्थ। चक्रे। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत ॥ ७ ॥ वृञ् वरणे। बभूथाततन्थजगृम्भ्मववर्थेति निगमे ।७।२।६४। एषां वेदे इडभावो निपात्यते। तेन भाषायां थलीट्। ववरिथ। ववृव। ववृवहे। वरिता। लिङ्सिचोरात्मनेपदेषु ।७।२।४२। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि। न लिङि ।७।२।३९। वृतो लिङ इटो दीर्घो न स्यात्। वरिषीष्ट। वृषीष्ट। अवारीत्। अवरिष्ट। अवरीष्ट। अवृत ॥ ८ ॥ धुञ् कम्पने। धुनोति। धुनुते। अधौषीत्। अधोष्यत् ॥ ९ ॥ दीर्घान्तोऽप्ययम्। धूनोति। धूनुते। स्वरतिसूतीति वेट्। दुधविथ। दुधोथ। किति लिटि तु श्र्युक इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्। दुधुविव। स्तुसुधूञ्भ्य इति नित्यमिट्। अधावीत्। अधविष्ट। अधोष्ट ॥ १० ॥ ॥ अथ परस्मैपदिनः ॥ टुदु उपतापे। दुनोति ॥ १ ॥ हि गतौ वृद्धौ च। हिनुमीना ।८।४।१५। उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात्। प्रहिणोति। हेरचङि ।७।३।५६। अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय ॥२॥ पृ प्रीतौ। पृणोति। पर्ता ॥ ३ ॥ स्पृ प्रीतिपालनयोः। प्रीतिचलनयोरित्यन्ये। चलनं जीवनमिति स्वामी। स्पृणोति। पस्पार ॥ ४ ॥ स्मृ इत्येके। स्मृणोति। पृणोत्यादयस्त्रयश्छान्दसा इत्याहुः ॥ ५ ॥ आप्लृ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप। आप्ता। आप्नुहि। लृदित्वादङ्। आपत ॥ ६ ॥ शक्लृ शक्तौ। अशकत् ॥७॥ राध साध संसिद्धौ। राध्नोति। राधो हिंसायाम् ।६।४।१२३। एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। अपरेधतुः। रेधुः। रेधिथ। राद्धा। साध्नोति। साद्धा। असात्सीत्। असाद्धाम् ॥९॥ ॥ अथ द्राव-

श्चेति ग्रहणं त्यक्तुं शक्यमिति ॥—दाहे पठित इति। पुष दाह इत्यस्मिन्नेव गणे पठित इत्यर्थः ॥—अङर्थमिति। दाहे पठितस्य तु सिजेव। अप्योषीत् ॥ इति दिवादयः ॥

षुञ् ॥—सुन्व इति। 'लोपश्चास्या-' इत्युकारस्य वा लोपः ॥—सुनवानीति। 'आडुत्तमस्य-' इत्यादि कृते 'हुश्नुवोः-' इति यण् बाधित्वा परत्वाद्गुणः ॥—सुनोतेः स्यसनोः ॥ 'न रपर-' इत्यस्मान्नेत्यनुवर्तनादाह—षो न स्यादिति। सनि तु अभिसुसूः। सन्नन्तादस्मात्क्विप्यतो लोपे रुत्वे दीर्घः। सुसूषतीत्यनेनत्तु नोदाहरणम् 'स्तौतिण्योरेव षणि' इति नियमेनैव षत्वाभावसिद्धेः। एतच्च काशिकायां स्पष्टम्। चिञ्। चयनं रचनाविशेषः ॥—विभाषा चेः ॥ 'चजोः' इति सूत्रात्कुरित्यनुवर्तते 'सन्लिटो र्जेः' इत्यतः सन्लिटोरिति च। सन्युदाहरणं। चिकीषति। चिचीषति ॥—ऋतश्च संयोगादेः ॥ 'इट् सनि वा' इत्यत इट् वेत्यनुवर्तते। 'लिङ्सिचोः-' इति सूत्रादात्मनेपदेष्विति च तदाह—इड्वा स्यात्तङीति। तङि किम्। अस्तार्षीत् ॥—बभूथाततन्थ—॥ भूधातोस्तनोतेश्च थलि इडभावो निपात्यते। 'त्वं हि होता प्रथमो बभूथ'। 'येनान्तरिक्षमुर्वी ततन्थ'। भाषायां तु बभूविथ। तेनिथ। 'जगृम्भ्मा ते दक्षिणमिन्द्र हस्तम्'। भाषायां जग्रहिम। वृणोतेस्थलि क्रादिसूत्रेणेण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणम्। 'ववर्थ त्व हि ज्योतिषाम्'। भाषायां ववरिथ। वव्रषे ॥—लिङ्सिचोः—॥ वृत इत्यनुवर्तते। आत्मनेपदेषु किम्। अवारीत्। अवारिष्टाम्। अवारिषुः। सिचि च परस्मैपदेष्विति निषेधादिह 'वृतो वा' इति न दीर्घः ॥—हिनु मीना ॥ प्रमीणाति ॥ —हेरचङि ॥ जेघीयते। अचङीति किम्। अजीहयत्। इह ण्यन्तस्य धात्वन्तरत्वात्केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात्कुत्वप्राप्तिरेव नास्तीत्यचङीति निषेधो व्यर्थः सन् ज्ञापयति ण्यधिकस्यापि कुत्वं भवतीति। तेन जिघापयिषतीत्यादि सिद्धम् ॥—आप्नुहीति। संयोगपूर्वत्वात् 'उतश्च प्रत्ययात्-' इति हेर्लुङ् न॥—राधो हिंसायाम् ॥ अत

तुदात्तेतौ॥ अशू व्याप्तौ संघाते च। अश्नुते। ※ अश्नोतेश्च।७।४।७२। दीर्घादभ्यासावर्णात्परस्य नुट् स्यात्। आनशे। अशिता। अष्टा। अशिष्यते। अक्ष्यते। अश्नुवीत। अशीष्ट। अशिषीष्ट। आशिष्ट। आष्ट। आक्षाताम्॥ १॥ ष्टिघ आस्कन्दने। स्तिघ्नुते। तिष्टिघे। स्तेघिता॥२॥ ॥ अथ आ गणान्तात्परस्मैपदिनः॥ तिक तिग गतौ च। चादास्कन्दने। तिक्नोति। तिग्नोति॥ २॥ षघ हिंसायाम्। सघ्नोति॥ ३॥ ञिधृषा प्रागल्भ्ये। धृष्णोति। दधर्ष। धर्षिता॥४॥ दम्भु दम्भने। दम्भनं दम्भः। दभ्नोति। ददम्भ। श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम्। अनिदितामिति नलोपः। तस्याभीयत्वेनासिद्धत्वादेत्वाभ्यासलोपयोरप्राप्तौ॥ * दम्भेश्च॥ एत्वाभ्यासलोपौ वक्तव्यौ। देभतुः। ददम्भतुः। इदं कित्त्वं पिद्विषयकमिति सुधाकरादयः। तन्मते तिप्सिप्मिप्सु। देभ। देभिथ। देभेति रूपान्तरं बोध्यम्। अपिद्विषयकमिति न्यासकारादिमते तु। ददम्भ। ददम्भिथ। ददम्भेत्येव। दभ्यात्॥ ५॥ ऋधु वृद्धौ॥ ६॥ तृप प्रीणन इत्येके। क्षुभ्नादित्वाण्णत्वं न। तृप्नोति। छन्दसि। आ गणान्तादधिकारोऽयम्। अह व्याप्तौ। अह्नोति॥ १॥ दघ घातने पालने च। दघ्नोति॥ २॥ चमु भक्षणे। चम्नोति॥ ३॥ रि क्षि चिरि जिरि दाश दृ हिंसायाम्। रिणोति। क्षिणोति। अयं भाषायामपीत्येके। न तद्यशः शस्त्रभृतां क्षिणोति। ऋक्षीत्येक एवाजादिरित्यन्ये। ऋक्षिणोति। चिरिणोति। जिरिणोति। दाश्नोति। दृणोति॥ ९॥ वृत्॥ इति स्वादयः॥

---

## ॥ तिङन्ते तुदादयः॥

तुद व्यथने॥ इतः षट्स्वरितेतः। ※ तुदादिभ्यः शः।३।१।७७। तुदति। तुदते। तुतोद। तुतोदिथ। तुतुदे। तोत्ता। अतौत्सीत्। अतुत्त॥ १॥ णुद प्रेरणे। नुदति। नुदते। नुनोद। नुनुदे। नोत्ता॥ २॥ दिश अतिसर्जने। अतिसर्जनं दानम्। देष्टा। दिक्षीष्ट। अदिक्षत्। अदिक्षत॥ ३॥ भ्रस्ज पाके। ग्रहिज्येति संप्रसारणम्। सस्य श्चुत्वेन शः। शस्य जश्त्वेन जः। भृज्जति। भृज्जते। ※ भ्रस्जो रोपधयो रमन्यतरस्याम्।६।४।४७। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके। मित्त्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः। बभर्ज। बभर्जतु.। बभर्जिथ। बभर्ष्ठ। बभर्जे। रमभावे। बभ्रज्ज। बभ्रज्जतुः। बभ्रज्जिथ।

---

इत्यनुवर्तमानेऽपि सामर्थ्यादिकारमात्र स्थानित्वेनाश्रीयते॥—अश्नोतेश्च॥ तस्मान्नुडित्यनुवर्तत इत्याह—दीर्घादिति। श्नुविकरणनिर्देश. किम्। क्र्यादेरश भोजन इत्यस्य माभूत्। आश। आशतु.। ञिधृषा। शूलेन धृष्णोति प्रगल्भते इति शूलधृक्। शूलधृषौ। 'ऋत्विक्दधृक्–' इति क्विनो विधानादन्यत्रापि पदान्तविषये कुत्वम्। दम्भु। लोकवञ्चनाय विहितकर्मानुष्ठान दम्भ'। तृप। अय सेट्क। अनुदात्तेषु श्यना निर्देशात्। अह व्याप्तौ। अस्मात् 'ऋहलोर्ण्यत्' इति अह्य इति 'तस्मादित उदात्तमर्धह्रस्वम्' इत्यत्रास्माभिरुपपादितम्। अन्ये त्वाहु'। 'शतचक्रं योह्यो वर्तनि.' इत्यत्र अह्य इति षष्ठ्यन्तमेव। 'घेदिति' इति गुणस्तु अहिशब्दस्य च्छान्दसत्वान्नेति। रिक्षि। एते षट् धातवः। एक एवाजादिरिति मते तु पञ्च धातवः॥ इति स्वादयः॥

तुदतीति। परमपि लघूपधगुण बाधित्वा नित्यत्वात् शइत्येके। अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये। भ्रस्ज पाके। भर्जनरूप: पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकस्तत्र प्रयोगाभावादित्याहु। भ्रस्जो इति केषाचित्पाठे तु 'ओदितश्च' इति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत्॥—भ्रस्जो रोपधयोः—॥ रम्यकार उच्चारणार्थः। रमित्यस्यान्त्यादच. परत्वे 'रोपधयोः' इति षष्ठीनिर्देशस्य वैयर्थ्यमाशङ्क्याह—निवृत्तिरिति। अय भाव'। स्थानविशेषलाभाय मित्त्वस्य करणान्न रोपधयो' स्थाने रम् भवति। यत्र ह्यनिर्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति। यथा 'इको यणचि' इत्यादौ यणादि.। प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयो. स्थाने न भवति। एवं चास्य आदेशागमत्वे भवतो यथा श्नम' प्रत्ययागमत्वमिति। अन्ये त्वेतादृग् व्याख्यानमयुक्तमिति मत्वा 'मन. क्विचि' इत्यतो लोपमनुवर्त्य भ्रस्जो रोपधयोर्लोपः रम् तु आगम एवेत्याहुः। अपरे तु 'भ्रस्जो रसरन्यतरस्याम्' इत्येव सूत्रमस्तु। रसः ऋ इति च्छेदः। रस इति रेफाकारसकाराणां य. सघातस्तस्य ऋ इत्यादेशः स्यादित्यर्थ.। ततश्च क्ङिति भर्जको भर्जनं बभर्जेत्यादि सिध्यति। ऋकाराभावपक्षे तु भ्रजको भ्रजन बभ्रज्जेत्यादि। क्ङिति तु ऋकारपक्ष भृष्टिः भृज्यादित्यादि। तदभावे संप्रसारणे सति तदेव रूपम्। एवं च बरीभृज्यत इत्यादौ रीको रेफस्य निवृत्ति वारयितुम् 'अनुदात्तोपदेश–' इत्यत उपदेशग्रहणमनुवर्त्यमिदानीं तु नानुवर्त्य, क्ङिति रमागमं बाधित्वा संप्रसारणमिति पूर्वविप्रतिषेधश्च न कर्तव्य इति महदेव लाघवमित्याहुः। इद च रसोर्वचनात्सिद्धमिति वार्तिकाशयवर्णनमेव न त्वपूर्वम्। वचनादित्यस्य वा ऋवचनादिति भेदः। भाष्यकारैस्तु 'सूत्र भिद्यते यथान्यासमेवास्तु' इति वदद्भिरस्यां दुष्टत्वं सूचितं तच्च मनोरमायां स्पष्टमेव। तथा हि

**स्कोरिति सलोपः । भ्रश्चेति षः । बभ्रष्ठ । बभ्रज्जे । भ्रष्टा । भर्ष्टा । भ्रक्ष्यति । भर्क्ष्यति ॥ * क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन ॥ भृज्ज्यात् । भृज्ज्यास्ताम् । भर्क्षीष्ट । भ्रक्षीष्ट । अभार्क्षीत् । अभ्राक्षीत् । अभर्ष्ट । अभ्रष्ट ॥ ४ ॥ क्षिप प्रेरणे । क्षिपति । क्षिपते । क्षेप्ता । अक्षैप्सीत् । अक्षिप्त ॥ ५ ॥ कृष विलेखने । कृषति । कृषते । क्रष्टा । कर्ष्टा । कृष्यात् । कृक्षीष्ट । स्पृशमृशकृषेति सिज्वा । पक्षे क्सः । सिचि अम्वा । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । तङि लिङ्सिचाविति कित्त्वादम्न । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षत । अकृक्षाताम् । अकृक्षन्त ॥ ६ ॥ ऋषी गतौ । परस्मैपदी । ऋषति । आनर्ष ॥ १ ॥ जुषी प्रीतिसेवनयोः ॥ आत्मनेपदिनश्चत्वारः । जुषते । ओविजी भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । विज इट् ।१।२।२। विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते ॥ २ ॥ ओलजी ओलस्जी व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे ॥ ४ ॥ ॥ अथ परस्मैपदिनः ॥ ओव्रश्चू छेदने । ग्रहिज्या । वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ । वव्रष्ठ । लिट्यभ्यासस्येति संप्रसारणम् । रेफस्य ऋकारः । उरत् । तस्याचःपरस्मिन्निति स्थानिवद्भा-**

---

रेफाकारसमुदायस्य ऋभावे पञ्च दोषाः । अपिल्लिटि बभर्जतुः बभर्जुरित्यादीष्यते, बभृजतुः बभृजुरित्यादि स्यात् । न चात्र गुणेन निर्वाहः । ऋभावे सति 'असंयोगाल्लिट् कित्' इति कित्त्वप्रवृत्त्या तन्निषेधात् । 'सनीवन्त–' इति इड्विकल्पाद्बिभर्क्षतीत्यादि इष्यते बिभृक्षतीत्यादि स्यात् ऋभावे 'हलन्ताच्च' इति सनः कित्त्वप्रवृत्तेः । लिङ्सिचोस्तङि भर्क्षीष्ट अभर्ष्टेत्यादि स्यात् 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वाद् णिजन्ताच्चङि अबभर्जदितीष्यते । अबीभृजदित्यपि स्यात् । इररारामपवादत्वेन 'उर्ऋत्' इति ऋत्वप्रवृत्तौ 'सन्वल्लघुनि–' इति सन्वद्भावात् 'सन्यतः' इतीत्त्वे 'दीर्घो लघोः' इति प्रवृत्तेः । यद्यपि 'उर्ऋत्' इत्यस्य वैकल्पिकत्वादबभर्जदिति सिध्यत्येव तथापि पक्षे अबीभृजदित्यनिष्टं स्यादिति बोध्यम् । ऋजिभृजी भर्जने इति भ्रादेस्तादृशं रूपमिष्टमिति चेत् । मैवम् । भर्जनार्थे हि तादृग् रूपमिष्ट न तु पाकसामान्ये । उभयोरेकार्थत्वाभ्युपगमेऽपि प्राचीनाश्चत्वारो दोषास्तु दृढा एव । न हि तेऽपि धात्वन्तरेण सुपरिहाराः । अपिल्लिटि भृजेरपि धातोर्गुणाभावादनुदात्तत्वेन आत्मनेपदित्वाच्च बभर्जतुरित्यादिरूपस्य तेनाप्यसिद्धेः । तथा भृजेरुदात्तत्वेन ततः परेषां सन्लिङ्सिचामिडागमप्रौव्यात् । बिभर्क्षति भर्क्षीष्ट अभर्ष्टेत्यादिरपि तेन न सिध्यति । एतेन भ्रस्जेर्भृजिरादेश इति पक्षोऽपि निरस्तः पूर्वोक्तदूषणगणप्रसङ्गात् । किं च अस्मिन्पक्षे यङ्लुकि अधिको दोषः । वधादेशवत्साभ्यासस्य भृज्यादेशे पुनर्द्विर्वचनस्य दुर्लभत्वात्स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । स्वीकृतेपि द्विवचने रग्रिग्रीकोऽभ्यासस्य स्युरेवेति रुगादिरहितं बाभर्जि बाभर्जिष्यतीत्यादि रूपं नैव सिध्येत् । यदि तु लाघवे पक्षपातेन स्वातन्त्र्य चिकीर्ष्यते तर्हि भ्रस्जे रसोरिति पठित्वा र।स।ते समुदायस्य अरेव विधीयतां तथा च न कोपि दोष इति । अयमत्र सग्रहः—'रस ऋश्चेदपिल्लिट्सन्लिङ्सिच्चङ्परणिक्षु ते । दोषो भ्रस्जेर्भृजौ चैव दोषो यङ्लुकि चाधिकः ॥ साभ्यासस्य हि भृज्भावो भवेद्धन्तेर्वधिर्यथा । द्वित्व पुनर्न लभ्येत स्थानिवत्वाद्वधेरिव ॥ तस्मादस्तु यथान्यासं स्वातन्त्र्येऽस्तु रसोरिति' ॥—**पूर्वविप्रतिषेधेने**ति । नित्यत्वादित्यपि सुवचम् । न च संप्रसारणात्पूर्वं धातो रेफस्य पश्चात्तु रमागमे रेफस्येति शब्दान्तरप्राप्त्या सप्रसारणस्य नित्यत्व नेति शङ्क्यम् । लक्ष्यानुरोधेन कृताकृतप्रसङ्गित्वेनापि क्वचिन्नित्यत्वस्वीकारात् ॥—**विज इट्** ॥ इह 'वृद्धिर्यस्य–' इति सूत्रान्मण्डूकप्लुत्या यस्यादिरिति अनुवर्तते तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितम् । नव्यास्तु इह इडित्यनेनोत्तमैकवचन न गृह्यते । तथा च सति विजिषीयेत्यत्रैव स्यान्न तूद्विजितेत्यादौ । ततश्चेष्टसिध्यर्थमिडागमो गृह्यते तस्य तु ङित्त्वं व्यर्थम् । तन्निमित्तगुणस्याप्राप्तेरतो लक्षणया इड्वान् गृह्यते । इट्प्रत्ययस्यादिरिति फलितार्थकथनमिडादिप्रत्ययो ङिद्वदिति । एवं च इडादिरिति लाभाय यस्यादिरित्यनुवर्तनक्लेशो व्यर्थ एवेत्याहुः । इह ओविजीति तुदादिः रुधादिश्च गृह्यते न तु विजिर् पृथग्भावे इति जुहोत्यादिर्व्याख्यानात् । यस्त्वत्र हरदत्तेन जुहोत्यादेरग्रहणं हेतुरुक्तः तस्यानिट्कत्वादिति । तदयुक्तम् । क्रादिनियमेन लिटि इट्संभवात् । न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्व व्यर्थमिति वाच्यम् । अपिल्लिटः कित्त्वेऽपि विवेजिथेत्यत्र पित्त्वेन ङित्त्वाभावात् ॥—**वव्रश्चे**ति । अत्र नव्याः । वव्रश्चेत्यादौ 'लिट्यभ्यासस्य–' इत्यभ्यासावयवयोरपि यणोः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय 'न संप्रसारणे–' इति सूत्रं स्वीक्रियते यतश्च अत एव ज्ञापकात्परस्य प्रथमं संप्रसारणमिति परिकल्प्य आ पादपरिसमाप्तेरङ्गाधिकार इति पक्षमभ्युपगम्य उरदत्वस्याङ्गाक्षिप्तप्रत्ययनिमित्तकत्वस्वीकारात् 'अचः परस्मिन्–' इति स्थानिवद्भावप्रवृत्त्या संप्रसारणपरत्वमाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपद्यते । परस्य सप्रसारणं परस्य यणः संप्रसारणमिति वा सूत्रिते परस्यैव सप्रसारणं न तु पूर्वस्य यण इत्यर्थलाभाद् उक्तक्लेश विनैव वव्रश्च यून इत्यादि सर्वं सिध्यति ॥ नचैवं 'लिटि वयो यः' 'वेञः' इत्यत्र संप्रसारणनिषेधाय नञोऽनुवृत्तिर्न लभ्येतेति वाच्यम् । 'न लिटि वयो यः' इति सूत्रकरणे बाधकाभावात् 'न संप्रसारणे–' इति यथाश्रुतसूत्रप्रणयने गत्वा मात्राद्वयस्याधिक्याच्च । एवं च लघूपायेनेष्टसिद्धौ

१ अकृक्षन्तेति—क्सादेशेऽनत इत्युक्तेरदादेशो न भवतीति बोध्यम् ।

चाज संप्रसारण इति वस्योत्वं न । व्रश्चिता । व्रष्टा । व्रश्चिष्यति । व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत् । अव्राक्षीत् ॥ १ ॥ व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत् । अव्यचीत् । व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते । अनसीति पर्युदासेन कृन्मात्रविषयत्वात् ॥ २ ॥ उछि उञ्छे । उञ्छति ॥ ३ ॥ उच्छी विवासे । उच्छति ॥ ४ ॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । ऋच्छत्यृतामिति गुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता ॥ ५ ॥ मिच्छ उत्क्लेशे । उत्क्लेशः पीडा । मिमिच्छ । अमिच्छीत् ॥ ६ ॥ जर्ज चर्च झर्झ परिभाषणभर्त्सनयोः ॥ ९ ॥ त्वच संवरणे । तत्वाच ॥ १० ॥ ऋच स्तुतौ । आनर्च ॥ ११ ॥ उब्ज आर्जवे ॥ १२ ॥ उज्झ उत्सर्गे ॥ १३ ॥ लुभ विमोहने । विमोहनमाकुलीकरणम् । लुभति । लोभिता । लोब्धा । लोभिष्यति ॥ १४ ॥ रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । रिफति । रिरेफ । रिहेत्येके । शिशुं न विप्रा मतिभी रिहन्ति ॥ १५ ॥ तृप तृम्फ तृप्तौ ॥ आद्यः प्रथमान्तः । द्वितीयो द्वितीयान्तः । द्वावपि द्वितीयान्तावित्यन्ये । तृपति । ततर्प । तर्पिता । स्पृशमृशेति सिज्विकल्पः पौषादिकस्यैव । अरूपवादत्वात् । तेनात्र नित्यं सिच् । अतर्पीत् । तृम्फति । शस्य ङित्वादनिदितामिति नलोपे । * शे तृम्फादीनां नुम्वाच्यः । आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते । तृम्फादयः । तृम्फति । ततृम्फ । तृम्फ्यात् ॥१७॥ तुप तुम्प तुफ तुम्फ हिंसायाम् । तुपति । तुम्पति । तुफति । तुम्फति ॥ २१ ॥ दृफ दृम्फ उत्क्लेशे । प्रथमः प्रथमान्तः । द्वितीयो द्वितीयान्तः । प्रथमो द्वितीयान्त इत्येके । दृफति । दृम्फति ॥ २३ ॥ ऋफ ऋम्फ हिंसायाम् । ऋफति । आनर्फ । ऋम्फति । ऋम्फांचकार ॥ २५ ॥ गुफ गुम्फ ग्रन्थे । गुफति । जुगोफ । गुम्फति । जुगुम्फ ॥ २७ ॥ उभ उम्भ पूरणे । उभति । उवोभ । उम्भति । उम्भांचकार ॥ २९ ॥ शुभ शुम्भ शोभार्थे । शुभति । शुम्भति ॥३१॥ दृभी ग्रन्थे । दृभति ॥ ३२ ॥ चृती हिंसाग्रन्थनयोः । चर्तिता । सेसिचीति वेट् । चर्तिष्यति । चर्त्स्यति ।

---

'न संप्रसारणे–' इति सूत्रारम्भो ज्ञापयति निमित्तभेदाभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तते इति । तथा च सुध्युपास्य इत्यादौ धकारस्य द्वित्वे कृते पुनरुकारात्परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव । यदि स्थानिभेदेऽपि निमित्तैक्ये कार्याप्रवृत्तिः क्वचिद् दृश्यते तत्र तु 'ज्ञापकसिद्धं न सर्वत्र' इति स दोषः परिहियतामित्याहुः ॥ —अव्रश्चीदिति । ऊदित्वात्पक्षे इट् । 'वदव्रज–' इति वृद्धेः 'नेटि' इति निषेध ॥—अव्राक्षीदिति । स्कोरिति सलोपः व्रश्चेति षः । षढोरिति कः । ततः सस्य षत्वम् । न चात्र सकारस्य कथं लोप इति वाच्यम् । धातुपाठे सकारस्य पाठात् । तदाहुः—'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चषाट्टवर्गस्तवर्गजः' इति । व्यच । व्याजीकरणं छद्मकरणम् ॥—पर्युदासेनेति । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमासश्च प्रसज्येतेति भावः ॥—कृन्मात्रविषयत्वादिति । तेन उद्विचिता उद्विचितुमित्यत्र संप्रसारण भवति । व्यचितेत्यादौ तु तिङ्विषये न भवति । विव्याचेत् । ऋफति । आनर्फ । ऋम्फति । ऋम्फांचकार ॥ गुफ । कुटादित्वे जातेऽपि न क्षतिः । 'गाङ्कुटादिभ्यः' इति सूत्रे अणित प्रत्यया ङितः स्युरित्युक्तत्वात् । उत्तमे णलि तु णित्वाभावपक्षे ङित्वात्सप्रसारणे विव्यचेति न सिध्येदिति अनसीति पर्युदास आवश्यक इति बोध्यम् । उछि उच्छे उछी विवासे । इमौ भ्वादिगणे व्याख्यातौ । इह पाठस्तु उच्छतीत्यत्र 'आच्छीनद्योः' इति नुम्विकल्पार्थः । पूर्वपाठस्तु स्वरार्थः । तथाहि । उञ्छति उच्छतीत्यादौ पिद्वचने शप्तिवादीनां पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदम् । शे तु प्रत्ययस्वरेण मध्योदात्तमिति । न च सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वक्ष्यमाणत्वात्कथमिह मध्योदात्ततेति वाच्यम् । कुरुत इत्यादौ तसादेर्विकरणात्परत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेऽपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात् ॥—उपलक्षणत्वादिति । अत एव अदुपधस्य चेद् अश्नोतेरेवेति नियममाश्रित्य द्विहल्ग्रहणं भाष्यकारैः प्रत्याख्यातम् । अन्यथा तत्र सगच्छेतेति भावः ॥—आनर्च्छेति । अनृच्छ इति पर्युदासान्नाम् । नव्यास्तु 'ऋच्छत्यृताम्' इति लिटि परे गुणविधानसामर्थ्यादामभावः सिद्ध इति 'इजादेः' इति सूत्रे अनृच्छ इत्येतत्स्पष्टप्रतिपत्त्यर्थमित्याहुः । अन्ये तु 'ऋच्छत्यृताम्' इत्यत्र तौदादिकऋच्छेरिति सर्वैरेव व्याख्यातत्वात् गणान्तरेऽपि ऋच्छिरस्तीत्यनुमीयते तद्धातोस्तु लिट्याम्निवारणाय अनृच्छ इत्येतदावश्यकमित्याहुः । मिच्छ । उत्कटः क्लेश उत्क्लेशः । ऋच स्तुतौ । ऋच्यते स्तूयते देवतादिकमनयेति ऋक् । बाहुलकादिह करणे क्विप् । लोभिता । लोब्धा । 'तीषसह–' इति वेट् । शिशुं न विप्रा इति । न शब्द इवार्थे । विप्रा ब्राह्मणाः शिशुमिव मतिभी रिहन्ति हिंसन्ति । न्यूनीकुर्वन्तीत्यर्थः । चृती हिंसाग्रन्थनयोः । ईदित्करणं 'श्वीदितो निष्ठायाम्' इतीण्निषेधार्थम् । यद्यप्यवेट्कत्वान्निष्ठायामिण्निषेधः सिध्यति अथापि 'यस्य विभाषा' इत्यस्यानित्यतां ज्ञापयितुमीदित्करणम् । तेन 'धा-

---

१ तृपतृंफेति—शे मुचादीनामिति सूत्रभाष्ये 'शे तृंपादीनां नुम् वाच्यः तृम्पति, तृम्फति' इति पाठदर्शनादाद्योऽपि सनकारः प्रतीयते । मूलं तु धातुवृत्त्यनुसारीति बोध्यम् ।

पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह वल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति । ॐ नाग्लोपिशास्वृदिताम् ।७।४।२। णिच्य-ग्लोपिनः शास्तेर्ऋदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्धयति । उदित्वाद्वर्तति । वर्धति ॥ ३४ ॥ रुट लजि अजि दसि भृशि रुशि शीक नट पुटि जिवि रघि लघि अहि रहि महि च ॥ ४९ ॥ लडि तड नल च ॥ ५२ ॥ पूरी आप्यायने । ईदित्वं निष्ठायामिण्निषेधाय । अत एव णिज्वा । पूरयति । पूरति ॥ ५३ ॥ रुज हिंसायाम् ॥ ५४ ॥ ष्वद आस्वादने । स्वाद इत्येके । असि-ष्वदत् । दीर्घस्य त्वपोपदेशत्वात् । असिस्वदत् ॥ ५६ ॥ इत्यास्वदीयाः । आ धृषाद्वा । इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य । युज पृच संयमने । योजयति । योजति । अयौक्षीत् । पर्चयति । पर्चति । पार्चिता । अप-र्चीत् ॥ २ ॥ अर्च पूजायाम् ॥ ३ ॥ षह मर्षणे साहयति । स एवायं नागः सहति कलभेभ्यः परिभवम् ॥ ४ ॥ ईर क्षेपे ॥ ५ ॥ ली द्रवीकरणे । ¹लापयति । लयति । लेता ॥ ६ ॥ वृजी वर्जने । वर्जयति । वर्जति ॥ ७ ॥ वृञ् आवरणे । वारयति । वरति । वरते । वरिता । वरीता ॥ ८ ॥ जॄ वयोहानौ । जारयति । जरति । जरिता । जरीता ॥ ९ ॥ ज्रि च । ज्राययति । ज्रयति । ज्रेता ॥ १० ॥ रिच वियोजनसंपर्चनयोः । रेचयति । रेचति । रेक्ता ॥ ११ ॥ शिष असर्वोपयोगे । शेषयति । शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये ॥ १२ ॥ तप दाहे । तापयति । तपति । तप्ता ॥ १३ ॥ तृप तृप्तौ । सन्दीपन इत्येके । तर्पयति । तर्पति । तर्पिता ॥ १४ ॥ छृदी सन्दीपने ॥ छर्दयति । छर्दति । छर्दिता । छर्दिष्यति । सेसिचीति विकल्पो न । साहचर्यात्तत्र रौधा-दिकस्यैव ग्रहणात् ॥ १५ ॥ चृप छृप तृप दृप सन्दीपन इत्येके । चर्पयति । छर्पयति ॥ १९ ॥ दृभी भये । दर्भ-यति । दर्भति । दर्भिता ॥ २० ॥ दृभ सन्दर्भे ॥ अयं तुदादावीदित् ॥ २१ ॥ श्रथ मोक्षणे । हिंसायामित्येके ॥ २२ ॥ मी गतौ । माययति । मयति । मेता ॥ २३ ॥ ग्रन्थ बन्धने ॥ ग्रन्थयति । ग्रन्थति ॥ २४ ॥ शीक आमर्षणे ॥ २५ ॥ चीक च ॥ २६ ॥ अर्द हिंसायाम् ॥ स्वरितेत् । अर्दयति । अर्दति । अर्दते ॥ २७ ॥ हिसि हिंसायाम् ॥ हिंसयति । हिंसति । हिनस्तीति श्नमि गतम् ॥ २८ ॥ अर्ह पूजायाम् ॥ २९ ॥ आङः षद पद्यर्थे । आसादयति । आसीदति । पाघ्रेति सीदादेशः ॥ आसत्ता । आसात्सीत ॥ ३० ॥ शुन्ध शौचकर्मणि ॥ शुन्धिता । अशुन्धीत । अशुन्धिष्टाम् ॥ ३१ ॥ छद अपवारणे । स्वरितेत् ॥ ३२ ॥ जुष परितर्कणे ॥ परितर्कणमूहो हिंसा वा । परितर्पण इत्यन्ये ॥ परितर्पणं परितृप्तिक्रिया । जोषयति । जोषति । प्रीतिसेवनयोर्जुषतं इति तुदादौ ॥ ३३ ॥ धूञ् कम्पने ॥ णावित्यधिकृत्य ॥ * ॥ धूञ्प्रीञोर्नुग्वक्तव्यः । धूनयति । धवति । धवते । केचित्तु धूञ्प्रीञोरिति पठित्वा प्रीणातिसाहचर्याद्धुनातेरेव नुकमाहुः । धावयति ॥ ३४ ॥ अयं स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च । तथा च कविरहस्ये ॥ धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ॥ वायुर्विधूनयति चम्पकपु-ष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च ॥१॥ प्रीञ् तर्पणे ॥ प्रीणयति । धूञ्प्रीञोरिति हरदत्तोक्तपाठे तु । प्राययति । प्रयति । प्रयते ॥ ३५ ॥ श्रन्थ ग्रन्थ सन्दर्भे ॥ ३७ ॥ आपॄ लम्भने । आपयति । आपिपत । आपति । आप्ता । आपत् । स्वरितेदयमित्येके । आपते ॥ ३८ ॥ तनु श्रद्धोपकरणयोः ॥ उपसर्गाच्च दैर्घ्ये ॥ तानयति । वितानयति ।

त्वाद्पूर्वकात्स्वद. सकर्मकाण्णिजिति व्याचख्यु । आस्वदीयेषु धातव. सर्वे सकर्मकाः ॥ पाटयतीति । अथ चुरादावेव सघाते गतः पुन पाठस्तु अर्थभेदात । स्वाद इत्येक इति । अस्मिन् मते पूर्वत्राप्यास्वाद सकर्मकादिति पाठ्यम् । ननु दीर्घपाठो व्यर्थ । ह्रस्वपाठेऽप्युपधावृद्ध्या स्वादयतीति रूपाणा तुल्यत्वादत आह—दीर्घस्य त्विति । 'स' स्विदिस्वदिस-हीना च' इति सूत्रेण अभ्यासेण परस्य सस्य सकारो न तु षत्वमिति वक्ष्यमाणत्वान्मतन्तेऽपि सिस्वादयिषतीत्यादि रूप तुल्यमेवेत्यभिप्रेत्याह—असिस्वददिति ॥ इत्यास्वदीया ॥— आधृषाद्वा । व्याख्यानाद, योग्यताबलाद्वा णिजिति स-वध्यते ॥—अयौक्षीदिति । णिजभावपक्षे अनिट्कोऽयमिति भाव. । ली द्रवीकरणे । लिनातिलायत्योर्थका निर्देश इति भाष्यकारोक्तत्वाद् 'विभाषा लीयतेः' इत्यात्वमिह न प्रवर्तत इति ध्वनयति—लेतेति ॥—वरीतेति । 'वृतो वा' इति वा दीर्घः । लिङि वूर्यात् । आत्मनेपदे तु वृषीष्ट । वरिषीष्ट । 'लिङ्सिचोरात्मनेपदेषु' इति वेट् । 'न लिङि' इति इटो दीर्घनि-षेधः । इडभावपक्षे 'उश्च' इति कित्त्वान्न गुण. । लुङि अवारीत् । अवारिष्टाम् । अवारिषुः । 'सिचिच परस्मैपदेषु' इति दीर्घ-निषेधः । आत्मनेपदे तु अवरिष्ट अवरीष्ट । इडभावे सिचो लोप. । अवृत । रिच । णिजभावे अयमनिडित्याह—रिक्तेति ॥—अशिक्षदिति । 'शल इगुपधा—' इति क्स. । तृप । अनिट्सु श्यना निर्देशादय सेडिति ध्वनयति—तर्पितेति । छृदी । ईदित्वान्निष्ठायामनिट् । ऋवर्णान्तस्य णत्वम् । छृण्णः । छृण्णवान् ॥—ह्रस्वश्चेति । धुञ् कम्पने इत्यर्थ ॥—अवाक्षी-

१ लापयतीति—लीलोरिति नुक् न भवति, लासाहचर्याद्धेतुमण्णावेव तस्य प्रवृत्तेः ।

तनति । वितनति ॥ ३९ ॥ **चन** श्रद्धोपहननयोरित्येके ॥ चानयति । चनति ॥ ४० ॥ **वद** सन्देशवचने ॥ वादयति स्वरितेत् । वदति । वदते । अनुदात्तेदित्येके । ववदतुः । ववदिथ । ववते । वद्यात् ॥ ४१ ॥ **वच** परिभाषणे ॥ वाचयति । वचति । वक्ता । अवाक्षीत् ॥ ४२ ॥ **मान** पूजायाम् । मानयति । मानति । मानिता । विचारणे तु भौवादिको नित्यसन्नन्तः । स्तम्भे मानयते इत्याकुस्मीयाः । मन्यते इति दिवादौ । मनुते इति तनादौ च ॥ ४३ ॥ **भू** प्राप्तावात्मनेपदी ॥ भावयते । भवते । णिचसन्नियोगेनैवात्मनेपदमित्येके । भवति ॥ ४४ ॥ **गर्ह** विनिन्दने ॥ ४५ ॥ **मार्ग** अन्वेषणे ॥ ४६ ॥ **कठि** शोके । उत्पूर्वोऽयमुत्कण्ठायाम् । कण्ठते इत्यात्मनेपदी गतः ॥ ४७ ॥ **मृजू** शौचालंकारयोः । मार्जयति । मार्जति । मार्जिता । मार्ष्टा ॥ ४८ ॥ **मृष** तितिक्षायाम् । स्वरितेत् । मर्षयति मर्षति । मर्षते । मृष्यति मृष्यते इति दिवादौ । सेचने शपि मर्षति ॥ ४९ ॥ **धृष** प्रहसने । धर्षयति । धर्षति ॥ ५० ॥ इत्याधृषीयाः ॥ ॥ **अथादन्ताः** ॥ **कथ** वाक्यप्रबन्धे ॥ अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचकथत् ॥ १ ॥ **वर** ईप्सायाम् ॥ वरयति । वारयतीति गतम् ॥ २ ॥ **गण** संख्याने ॥ गणयति ॥ **ई च गणः** ।७।४।९७। गणेरभ्यासस्य ईत्स्याच्चादचङ्परे णौ । अजीगणत् । अजगणत् ॥३॥ **शठ श्वठ** सम्यगवभाषणे ॥ ५ ॥ **पठ वठ** ग्रन्थे ॥ ७ ॥ **रह** त्यागे ॥ अररहत् ॥ ८ ॥ **स्तन गदी** देवशब्दे । स्तनयति । गदयति । अजगदत् ॥१०॥ **पत** गतौ वा ॥ वा णिजन्तः । वाऽदन्त इत्येके । आद्ये । पतयति । पतति । पतांचकार । अपतीत् । द्वितीये । पातयति । अपीपतत् ॥ ११ ॥ **पष** अनुपसर्गात् । गतावित्येव । पषयति ॥ १२॥ **स्वर** आक्षेपे । स्वरयति ॥ १३ ॥ **रच** प्रतियत्ने ॥ रचयति ॥ १४ ॥ **कल** गतौ संख्याने च ॥ १५ **चह** परिकल्कने । परिकल्कनं दम्भः शाठ्यं च ॥ १६ ॥ **मह** पूजायाम् ॥ महयति । महतीति शपि गतम् ॥ १७ ॥ **सार कृप श्रथ** दौर्बल्ये ॥ सारयति । कृपयति । श्रथयति ॥ २० ॥ **स्पृह** ईप्सायाम् ॥ २१ ॥ **भाम** क्रोधे । अबभामत् ॥ २२ ॥ **सूत्र** पैशून्ये ॥ सूचयति । अषोपदेशत्वान्न षः । असूसुचत् ॥ २३॥ **खेट** भक्षणे ॥ तृतीयान्त इत्येके ॥ **खोट** इत्यन्ये ॥ २६ ॥ **क्षोट** क्षेपे ॥ २७ ॥ **गोम** उपलेपने ॥ अजुगोमत ॥ २८ ॥ **कुमार** क्रीडायाम् । अचुकुमारत् ॥ २९ ॥ **शील** उपधारणे । उपधारणमभ्यासः ॥ ३० ॥ **साम** सान्त्वप्रयोगे । अससामत् । साम सान्त्वने इत्यतीतस्य तु असीषमत ॥ ३१ ॥ **वेल** कालोपदेशे । वेलयति ॥ ३२ ॥ **काल** इति पृथग्धातुरित्येके । कालयति ॥ ३३ ॥ **पल्यूल** लवनपवनयोः ॥ ३४ ॥ **वात** सुखसेवनयोः । गतिसुखसेवनयोरित्येके । वातयति । अववातत् ॥ ३५ ॥ **गवेष** मार्गणे । अजगवेषत् ॥ ३६ ॥ **वास** उपसेवायाम् ॥ ३७ ॥ **निवास** आच्छादने । अनिनिवासत् ॥३८॥ **भाज** पृथक्कर्मणि ॥३९॥ **सभाज** प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्यन्ये । सभाजयति ॥४०॥ **ऊन**

---

दिति । 'असतिवक्ति–' इति लुका निर्देशादद्वर्नेति भावः । 'वचिस्वपि–' इति सम्प्रसारणम् । उन्यात । **धृष** प्रसहने । केचित्त्वादितमाहुस्तन्मते धृष्टो मुख्यमने भषित' । नन्वत्र निष्ठा शीङ्स्विदादिना सेण्णिष्ठायाः किरवनिषेधाद्गुणेन भाव्यमिति चेद् । अत्राहुः । आदिस्मिहचर्यादादित एव ञिधृषेस्तस्य तत्र ग्रहणात । न च आदितो निष्ठाया इट् दुर्लभ इति शङ्क्यम् । 'विभाषा भावादिकर्मणोः' इति तत्सम्भवादिति ॥ इत्याधृषीयाः ॥ ॥ **अथादन्ता** इति । वक्ष्यमाणेषु धातुषु अन्त्याऽवयवोऽकारो न तूच्चारणार्थ इत्यर्थः ॥—**स्थानिवत्त्वान्न वृद्धिरि**ति । 'अचः परस्मिन्–' इति सूत्रेणेत्यर्थः । न च स्थानिनि सति यत्कार्यं तदेव स्थानिवदित्यनेनातिदिश्यते न त्वादेशप्रयुक्तं वार्यते । अन्यथा नायकः पावकः इत्यादि न सिद्ध्येदेति वृद्धिरत्र दुर्वारेति वाच्यम् । 'अचः परस्मिन्' इत्यत्र स्थानिवदित्यनुवर्त्य शब्दाधिकारपक्षाश्रयेण भावाभावावुभावप्यतिदिश्येते इति सिद्धान्तात् । स्थानिनि सत्यभवन्त्या वृद्धेरादेशेऽप्यभावात् । स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्यत्र तु 'न पदान्त–' इति सूत्रस्थयलोपादिग्रहणमेव लिङ्गमिति दिक् ॥—**ई च गणः** ॥ 'अत्स्मृदृत्वर–' इत्यत्र योऽत् स चकारेण समुच्चीयते । **स्तन गदी** । गदीत्यत्र इका निर्देशादतो लोपः । अनेकाच्त्वेनाषोपदेशत्वात्षत्वं न ॥—**तिस्तनयिषति** । 'स्तनिहषिपुषि–' इति णेरिण्णुचि 'अयामन्ता–' इत्ययादेशः । स्तनयित्नुर्वलाहकः । **पत गतौ वा** । गणसूत्रमिदम् ॥—**कृपयती**ति । 'कृपो रो लः' इति न प्रवर्तते । तत्र कृप् सामर्थ्ये इत्यस्य ग्रहणात् । कृपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात् । **स्पृह** । आप्तुमिच्छा ईप्सा ॥—**अबभाम**दिति । अल्लोपस्य स्थानिवत्त्वात् 'णौ चङि–' इत्युपधाह्रस्वो न । **सूच** । पिशुनो दुर्जनस्तस्य कर्म पैशून्यम् ॥—**अषोपदेशत्वा**दिति । अनेकाच्त्वादिति भावः ॥—**साम सान्त्वने इत्यतीतस्य** त्विति । अयं तु धातुः इतः प्राङ् मूलपुस्तके न क्वापि दृष्टः पुस्तकान्तरेषु मृग्यः । केचित्तु साम सान्त्वने इत्यस्य क्वाप्यपठितत्वेऽपि षान्त्व सामप्रयोगे इति प्राक्पठितमेव । तत्र च षान्त्वसामेति धातुद्वयं प्रयोगे वर्तते । प्रयोगश्च सान्त्वप्रयोगपरः । स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समर्थयन्ते । **गवेष** । मार्गणमन्वेषणम् । **ऊन** परिहाणे । अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपेन 'अजादेर्द्वितीयस्य' इति णिचा सह द्वित्वे औनिनदित्यनिष्टं प्रसज्यते किं तु औननदित्येव रूपमिष्टम् । तच्च नशब्दस्य द्वित्वं विना न सम्भवति । न च 'द्विर्वचनेऽचि' इति सूत्रेण

**परिहाणे ऊनयति । ओःपुयण्जीति सूत्रे पयोरिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गं णिच्यच आदेशो न स्याद्द्वित्वे कार्ये इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात । तेनाचिकीर्तदिति सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वं तत उत्तरखण्डेऽल्लोपः औननत् । माभवानूननत् ॥ ४१ ॥ ध्वन शब्दे ॥ अदध्वनत् ॥ ४२ ॥ कूट परितापे । परिदाह इत्यन्ये**

द्वित्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावान्निषेधाद्वा नशब्दस्य द्वित्वं सिध्यतीति वाच्यम् । णिचो द्वित्वनिमित्तत्वाभावादत आह **—ओः पुयणजीत्यादि** । सपूर्णसूत्रं लिङ्गमिति केषाचिद् भ्रमं निवर्तयितुमाह**—पयोरि**ति । अयं भावः । 'स्मिपूङ्रञ्ज्वशां सनि' 'सनीवन्तर्ध–' इति सूत्राभ्यां पूङ्योतिभ्यां परस्य सन इडागमे कृते 'द्विर्वचनेऽचि' इति स्थानिवद्भावादादेशनिषेधाद्वा उवर्णान्तस्यैव द्वित्वमिति पुपविषते । पुपविषतीत्यनिष्टं प्रसज्येत । तदर्थमभ्यासोवर्णस्येत्वार्थं पयोरित्यपेक्षितम् । अन्यथा पिपविषते । पिपविषतीति न सिद्ध्येदिति **॥—वर्गप्रत्याहारे**ति । पुयण्जीति वर्गादिग्रहणफलं तु अबीभवत् अमीमवत् अरीरवत् अलीलवत् अजीजवत् विभावयिषति रिरावयिषति लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यम् । तद्दुरुपपादम् । णिचि परत्वादन्तरङ्गत्वाच्च वृद्ध्यादौ कृते द्वित्वे सत्यभ्यासे उवर्णस्य दुर्लभत्वादकारस्य 'सन्यत' इतीत्वेन रूपसिद्धेश्च । ततो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः । ज्ञापनफलं तु यत्र 'ओः पुयणजि–' इत्यस्याप्राप्तिस्तत्र बोध्यम् । तद्यथा । चुक्षावयिषति । चङ्यचुक्षवत् । उद्गुरिवाचरति उद्गवति । सर्वप्रातिपदिकेभ्य इत्याचारे क्विप् तदन्तात्धातोर्णौ सन् । उड्डावयिषति । चङि औड्डवत् । तु इति सौत्रो धातुस्ततो णौ सन । तुतावयिषति । चङि अतूतवत् । नुनावयिषति । अनूनवत् । पुस्फारयिषति । अपुस्फुरत् । 'चिस्फुरोर्णौ' इति वात्वम् । अपुस्फरदित्यादिष्वभ्यासे उकारश्रवणं भवति ज्ञापनात्, अन्यथा चिक्षावयिषतीत्यादि प्रसज्येत । तदेतत्सकलमभिप्रेत्य वार्तिककृतोक्तम् 'ओः' पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य' इति । स्थानिवद्भावः प्रतिषेधस्याप्युपलक्षणम् । **अच आदेशो न स्यादि**ति । प्रतिषेधपक्षो मुख्य इत्यभिप्रेत्येदमुक्तम् । प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति बोध्यम् । नन्वेवं कृ॒त सशब्दन इति धातोर्णौ चङि ऋरादेशात्प्रागेव कृ॒त इत्यस्य द्वित्वे उरदत्वे च अचकीर्तदिति स्यान्न तु अचिकीर्तदित्यत आह**—यत्र द्विरुक्ताविति ॥—आद्योऽजि**ति । चङ्सहितस्योत्तरखण्डत्वमभ्युपेत्येदमुक्तम् । अन्ये तु आद्यग्रहणं स्पष्टप्रतिपत्त्यर्थं धातोरवयवस्यैकाचो द्वित्वे सत्यभ्यासोत्तरखण्डे अज्द्वयासम्भवादित्याहुः । औनटत् औननदित्यादौ परिनिष्ठितं अवर्णस्यालाभादाह**—प्रक्रियायामि**ति । चुक्षावयिषतीत्यादौ प्रक्रियायामवर्णो न लभ्यते इत्याह**—परिनिष्ठिते रूपे वे**ति । वाशब्दोऽनास्थायां क्वचिदवर्णपरत्वं विवक्षितं न तु अमुकत्रैवेत्याग्रह इति भावः **॥—सजातीयापेक्षत्वादि**ति । पुयण्जीत्यभ्यासोत्तरखण्डे अवर्णपरा भवन्ति । अतस्तथैव ज्ञापकमित्यर्थः । अत एव भाष्यकृता पवर्गादेरन्यस्मिन्नपि हलि अवर्णपरे एव स्थानिवत्त्वमिति अचिकीर्तदित्यादौ नातिव्याप्तिरिति सिद्धान्तितम् । ननु 'ओः पुयण्जि–' इति सूत्रे णिचि इति नास्ति तथा च णिच्यच आदेशो न स्यादित्ययं कथमिदं ज्ञापकं भवेत् । न च सामान्यतो द्वित्वे कार्ये अच आदेशो न स्यादित्येव ज्ञाप्यतामिति वाच्यम् । दिद्यवनीषिषति निनवयिषतीत्यादावभ्यासे उकारश्रवणप्रसङ्गादिति चेद् । अत्राहुः । येन नाव्यवधानमित्येकेन प्रत्ययेन द्वित्वनिमित्तप्रत्ययस्य व्यवधानमाश्रीयते । तच्च णेरेव सम्भवतीति णिज्विषयकमेव ज्ञापकं दिद्यवनीषिषतीत्यत्र तु ल्युटा क्यचा व्यवधानादनेन व्यवधानमिति न तद्विषयकं ज्ञापनमिति । अस्मिन् मते आचारक्विबन्तादृवनशब्दात्सनि दुद्यवनिषतीति स्यात् तच्च नेष्यते णौ स्थानिवद्भावस्य ज्ञापकमिति वार्तिकोक्तेः । स्थानिवत्त्वेन प्रतिषेधेन वा णावेवाभ्यासे उकारेण भवितव्यम् । अतो वार्तिककारवचनादेव णौ स्थानिवदिति स्वीकर्तव्यम् । तथा च न पूर्वोदाहरणेषु दोष इति दिक् । फलितमाह**—प्रकृते त्वि**ति **॥—औननदि**ति । 'नोनयति ध्वनयति–' इति चङ्परस्त्विह न । तत्र च्छन्दसीत्यनुवृत्त्या 'मालायतो जरितुः काममूनयीः' इत्यादावेव तदभिधानात् । यद्यपि परिनिष्ठितं एवावर्णपरत्वमित्याशयेन उवर्णादेशे एव स्थानिवत्त्वमाशङ्क्य इति वदता बोपदेवादीनां मते औनिनदित्येव भाव्यम् । अवर्णादेशस्य स्थानिवत्त्वे तु परिनिष्ठितरूपे अवर्णपरत्वालाभात्तथापि अचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्य उत्तरभागे अवर्णाभावादिति भाष्यकारोक्तपरिहारपर्यालोचनया उवर्णादेश एव स्थानिवदिति नियमो नास्तीत्यौननदिति रूपं निर्बाधमेव । किं च उवर्णादेश एवेति नियमे 'लोपः पिबतेरीच्चाभ्यासस्य' इति सूत्रे अपीप्यदित्यत्र पिबतेर्णौ शाच्छासेत्यादिना युकि चङि उपधालोपे तस्य स्थानिवत्त्वात्पाशब्दस्य द्वित्वमिति वृत्तिग्रन्थो विरुध्येत । अपि च 'शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा' इति वैयाघ्रपद्यवार्तिकस्थ औजढदिति प्रयोगोऽपि विरुध्येत । एतद्धि पूर्वत्रासिद्धमित्यस्य प्रयोजनकथनवार्तिकम् । तद्यथा । शुष्किकेत्यत्रो दूदीचामात–' इतीत्वविकल्पो न । 'शुषः कः' इति कत्वस्यासिद्धत्वेन यकपूर्वत्वाभावात । शुष्कजङ्घेत्यत्र कत्वस्यासिद्धत्वादेव 'न कोपधायाः' इति पुंवद्भावनिषेधो न । क्षामिमानित्यत्र तु 'मादुपधायाः–' इति वत्वं न । 'क्षायो मः' इति मत्वस्यासिद्धत्वात् । वहेः क्तान्ताण्णिचि चङि औजढदित्यत्र ढत्वस्यासिद्धत्वाण्णौ कृतस्य टिलोपस्य स्थानिवत्त्वाच्च ढतशब्दस्य द्वित्वं 'कुहोश्चुः' 'अभ्यासे चर्च' सन्वदित्वं तु अनग्लोपीति प्रतिषेधान्न भवति । एवं काशि-

॥ ४१ ॥ सङ्केत ग्राम कुण गुण चामन्त्रणे ॥ चात्कूटोऽपि । कूटयति । सङ्केतयति । ग्रामयति । कुणयति ॥ गुणयति । पाठान्तरम् ॥ केत श्रवणे निमन्त्रणे च ॥ केतयति । अभिकेतयति । कुण गुण चामन्त्रणे चकारात्केत कूण सङ्कोचने इति ॥ स्तेन चौर्ये ॥ अतिस्तेनत् ॥ ४८ ॥ ॥ आ गर्वादात्मनेपादिनः ॥ पद गतौ ॥ पदयते । अपपदत् ॥ १ ॥ गृह ग्रहणे । गृहयते ॥ २ ॥ मृग अन्वेषणे । मृगयते । मृग्यतीति कण्ड्वादिः ॥ ३ ॥ कुह विस्मापने ॥ ४ ॥ शूर वीर विक्रान्तौ ॥ ६ ॥ स्थूल परिबृंहणे ॥ स्थूलयते । अतुस्थूलत ॥ ७ ॥ अर्थ उपयाच्ञायाम् । अर्थयते । आर्तथत ॥ ८ ॥ सत्र सन्तानक्रियायाम् ॥ असससत्रत ॥ अनेकाच्त्वान्न षोपदेशः । सिसत्रयिषते ॥ ९ ॥ गर्व माने ॥ गर्वयते । अदन्तत्वसामर्थ्याण्णिज्विकल्पः । धातोरन्त उदात्तो लिङ्याम् च फलम् । एवमग्रेऽपि ॥ १० ॥ इत्यागर्वीयाः ॥ सूत्र वेष्टने ॥ सूत्रयति । असुसूत्रत् ॥ १ ॥ मूत्र प्रस्रवणे ॥ मूत्रयति । मूत्रति ॥ २ ॥ रूक्ष पारुष्ये ॥ ३ ॥ पार तीर कर्मसमाप्तौ । अपपारत् । अतितीरत् ॥ ५ ॥ पुट संसर्गे ॥ पुटयति ॥ ६ ॥ धेक दर्शन इत्येके ॥ अदिधेकत् ॥ ७ ॥ कत्र शैथिल्ये ॥ कत्रयति । कत्रति । कर्तेत्यप्येके ॥ कर्तयति । कर्तति ॥ ९ ॥ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ॥ प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । पटुमाचष्टे पट-

कायामपि 'पर्वत्रासिद्धम्' इति सूत्रे औजढदित्युदाहृत्य ऊढिमाख्यदौजिढदित्येतत्तु क्तिन्नन्तस्य ऊढिशब्दस्य भवतीत्युक्तं तदपि विरुध्येत । उवर्णादेश एव स्थानिवदिति नियमे णौ कृतस्य टिलोपस्यात्र स्थानिवत्त्वाभावेन हतशब्दस्य हतिशब्दस्य वा द्वित्वासंभवात् । एवं चाङ्ग्लाताण्णिल्यलोपे चङि स्थानिवत्त्वात्कशब्दस्य द्वित्वे आककदिति रूपमेव सर्वसमतं न त्वाचिकदिति बोपदेवोक्तमिति बोध्यम् । नन्वचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्योत्तरभागे अवर्णाभावादिति वदन्भाष्यकारो न बोपदेवग्रन्थस्य प्रतिकूलः । उत्तरभागे परिनिष्ठितरूपे अवर्णपरत्वमुवर्णादेशस्यैव संभवति नान्यस्येत्यनेनैव भाष्यकारेण तथोक्तमिति वक्तुं शक्यत्वादिति चेत् । मैवम् । तथा हि सति यत्र 'ओः पुयण्जि–' इत्यस्याप्राप्तिस्तत्राप्युवर्णादेश एव स्थानिवज्ज्ञापकस्य सजातीयापेक्षत्वादित्येवमेव भाष्यकारो वदेत् । ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगादिति दिक् । सङ्केतिताश्चत्वारोऽत्र धातवः ॥—**पाठान्तरमि**ति । सङ्कोचन इत्येतत्पर्यन्तम् । अनेकाच्त्वेनाषोपदेशत्वात्षत्वं नेति ध्वनयति—**अतिस्तेनदि**ति । **गृहयते** इति । अल्लोपस्य स्थानिवत्त्वान्न गुणः । लुङि अजगृहत् । अग्लोपान्न सन्वद्भावः ॥—**मृग्यते** इति । मार्गयति मार्गतीति तु मार्ग अन्वेषण इत्याधृषीयस्य । अर्थ ॥—**अर्थयत** इति । वृद्धेर्लोपो बलीयानित्यल्लोपान्न वृद्धिः । बोपदेवस्तु वृद्धौ कृतायां पुकि चाऽर्थापयते इति रूपमाह तद्भ्रमात् । न चार्थवेदमन्यानामित्यापुक् स्यादेवेति वाच्यम् । तत्र प्रातिपदिकस्य ग्रहणात् ॥—**अदन्तत्वसामर्थ्यादि**ति । कथादिषूपधावृद्धिदीर्घसन्वद्भावविरहेण सारभामप्रभृतीनामुपधाह्रस्वस्य गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनादन्तत्वं सार्थकम् । इह त्वदन्तत्वे प्रागुक्तफलाभावाण्णिचः पाक्षिकत्वं ज्ञापयतीति भावः । ननु अदन्तत्वसार्थकत्वाय वाऽल्लोप इति प्राचोक्तमेवाभ्युपगम्यतामिति चेत् । अत्राहुः । चिन्तयतेरिदित्त्ववत् सामान्यापेक्षं ज्ञापकमिति मते इह अदन्तत्वस्य फलं स्पष्टमेव । विशेषापेक्षं ज्ञापकमिति मते तु तत्र तत्र आकार इकार उकाराश्रयानुबन्धा यथा ज्ञापकतया स्वीकृताः । तथा अदन्ततापि णिज्विकल्पमेव ज्ञापयतु, कृमेतत्र णिज्विकल्पेन कृतार्थत्वे अपर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात् । तथा हि सति मतद्वयेऽप्येकरूपमेव फलं लभ्यत इति ॥—**असुसूत्रदि**ति । अनेकाच्त्वान्न षत्वम् ॥—**प्रातिपदिकादि**ति । यदि सुबन्तात्णिच् स्यात्तदा स्रजयतीत्यादौ कुत्वं स्यादिति भावः इति केचित् । तन्न । इष्ठवद्भावेन भत्वे कुत्वस्याप्रसक्तेः । अत्र बहुलं णिच् स्यात् । न च णिच इष्ठवद्भवतीति अन्वयात्पक्षे वाक्यमपि भवतीत्याह—**पटुमाचष्ट** इति । धात्वर्थ इत्यनेन करणाख्यानादिर्गृह्यत इति भावः । तेन वह्न्याचष्टे भावयतीत्यत्र 'इष्ठस्य यिट् च' इति णिचोऽपि यिट् स्यात् । अत्राहुः । टेरिति सूत्रे णाविष्ठवत्प्रातिपदिकस्येति वार्तिके प्रातिपदिकग्रहणं प्रत्ययकार्याणामतिदेशो माभूदित्येवमर्थम् । तेनात्र णिचो यिण्न भवति तदभावे भूभावेनापि न भवितव्यं सन्नियोगशिष्टत्वात् । किं तु बहयतीत्येव भवितव्यमिति मतान्तरम् । एतच्च तत्रैव सूत्रे कैयटे स्पष्टमिति । अन्ये त्वाहुः । इष्ठवदिति हि सप्तम्यन्ताद्वतिर्णावित्युपमेये सप्तमीदर्शनात्तेन इष्ठनि परे पूर्वस्य यत्कार्यं तदतिदिश्यते न त्विष्ठनोऽपीति ॥—**पुंवद्भावे**ति । अतिशयेन पट्वी पटिष्ठेत्यत्र 'भस्याढे तद्धिते' इति पुंवद्भावः । कशिष्ठः द्रढिष्ठ इत्यत्र 'र ऋतो हलादेः–' इति रभावः । साधिष्ठ इत्यादौ टिलोपः । अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र 'विन्मतोर्लुक्' इति विनो लुक् । अतिशयेन गोमान् गविष्ठ इत्यादौ मतुपो लुक् । स्थविष्ठ इत्यादौ 'स्थूलदूर–' इत्यादिना यणादिलोपः । प्रेष्ठ इत्यादौ 'प्रियस्थिर–' इत्यादिना प्रस्थाद्यादेशः ॥—**तद्वण्णावपी**ति । पुंवद्भावस्योदाहरणमेणीमाचष्टे एतयति । टिलोपेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भावग्रहणं दरदमाचष्टे दारदयतीत्यादिसिद्ध्यर्थमिति बोध्यम् । द्रढयतीत्यादौ रभावः । स्रग्विणमाचष्टे स्रजयतीत्यत्र विनो लुक् । गोमन्तमाचष्टे गवयतीत्यत्र मतुपो लुक् । अन्तर्वृत्तपरिभाषया वृद्धिरत्र न भवति । प्रियमाचष्टे

**यति । परत्वाद्वृद्धौ सत्यां टिलोपः । अपीपटत् । णौ चङीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् । अपपटत् ॥ तत्करोति तदाचष्टे ॥ पूर्वस्य प्रपञ्चः ॥ करोत्याचष्ट इति धात्वर्थमात्रं णिजर्थः ॥ लडर्थस्त्वविवक्षितः ॥ तेनातिक्रामति । अश्वेनातिक्रामति अश्वयति । हस्तिनातिक्रामति हस्तयति ॥ धातुरूपं च ॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते ॥ चशब्दोऽनुक्तसमुच्चयार्थः । तथा च वार्तिकम् ॥ * आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति । कंसवधमाचष्टे कंसं घातयति । इह कंसं हन् इ इति स्थिते । ❀ हनस्तोऽचिण्णलोः ।७।३।३२। हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति । नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता । ततश्चाड्द्वित्वयोर्दोषः । किंच कुत्वतत्वे न स्याताम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । सत्यम् । प्रकृतिवच्चेति चकारो भिन्नक्रमः । कारकं च चात्कार्यम् । हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः । कंसमजीघतत् । कर्तृकरणाद्धात्वर्थे ॥ कर्तुर्व्यापारार्थं यत्करणं न**

प्रापयति स्थिरमाचष्टे स्थापयतीत्यादौ तु वृद्धिर्भवत्येव । द्वयोरिति निर्देशेन तस्याः परिभाषाया अनित्यत्वज्ञापनादिति दिक् ॥ —**परत्वाद्वृद्धाविति** । लोपः शब्दान्तरप्राप्त्याऽनित्यः वृद्धिरप्यनित्या । उभयोरनित्ययोः परत्वाद्वृद्धिः । तस्यां कृतायामोकारस्यावादेशात्प्रागेव परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्च लोप इत्यर्थः । एवं चानग्लोपित्वाद्दीर्घसन्वद्भावौ स्त इत्याह— **अपीपटदि**ति । इह टिलोपस्य स्थानिवद्भावेन व्यवधानाद्दीर्घसन्वद्भावौ नेति न भ्रमितव्यम् । स्थानिवत्त्वेऽप्यङ्गस्य णिच्परत्वानपायात् । चङ्परे णौ यद्भवतीति पक्षेऽपि अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति दीर्घसन्वद्भावौ स्त एव । केचित्तु चङ्परे णौ यद्भवतीति पक्षे पटुशब्दोकारस्य वृद्धौ कृतायां णिच्परं लघु दुर्लभमिति सन्वद्भावाप्राप्त्याऽपपटदित्येव रूपम् । प्रथमं टिलोपः पश्चाद्द्विर्वचनमिति मत्वा अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति मनोरमोक्तं यत् तन्नादर्तव्यम् । णिच्यच आदेशो न स्याद्द्वित्वे कर्तव्ये इति निषेधपक्षस्य मुख्यतया प्रागुक्तत्वेन प्रथमं टिलोपस्य दुरुपपादत्वादित्याहुस्तन्मन्दम् । अपीपटदित्यत्र द्वितीयाच्पर्यन्तस्य प्रथमावयवस्य द्वित्वमिति हि निर्विवादम् । तथा च द्वितीयस्याचो द्वित्वाकरणात्प्रथमं टिलोपः स्यादेवेति ॥—**वृद्धेर्लोप** इति । कृताकृतप्राप्तिमात्रेण लोपो नित्यः । वृद्धिस्त्वनित्या । टिलोपे सति स्थानिनः पूर्वत्र कर्तव्याया लोपस्य स्थानिवत्त्वात्, स्वविधौ स्वस्य स्थानिवत्त्वाभावाच्च । अस्मिंस्तु पक्षे 'मुण्डमिश्र–' इति सूत्रे हलिकल्योरदन्तत्वनिपातनस्य वैयर्थ्यमेव । वृद्धेः प्राक् टिलोपे सति अग्लोपित्वसम्भवात् । तथा चादन्तत्वनिपातनसामर्थ्याट्टिलोपात्पूर्वं वृद्धिरेवेत्यनग्लोपित्वादपीपटदित्येव रूपं साध्विति प्रतीयते । भाष्यद्वयप्रामाण्याद्रूपद्वयमपि साध्विति बहव ॥—**लडर्थस्त्विति** । करोत्याचष्टे इति हि कर्तरि वर्तमाने लडेकवचनम् । लडर्थाविवक्षाया तु ण्यन्ताद्भावकर्मणोः भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययो भवत्येवेति भावः । यद्यप्येकत्वादिसङ्ख्या लडर्थो न भवति तथापि लडादेशनिष्ठोऽपीह लडर्थत्वेन गृह्यत इति ज्ञेयम् । तेनातिक्रामतीति । तृतीयाप्रकृतिभूतात्प्रातिपदिकाण्णिच् । तृतीयान्ताण्णिजित्यन्ये । एवं तत्करोतीत्यत्रापि द्वितीयाप्रकृतिभूताद्द्वितीयान्ताद्वा णिच् । न च सुबन्ताण्णिचि वाचं करोत्याचष्टे वाचाऽतिक्रामति वा वाचयतीत्यत्र कुत्वं स्यादिति शङ्क्यम् । इष्टवद्भावेन भसंज्ञया पदसंज्ञाया बाधात् । यशस्विनमाचष्टे यशसयति स्रग्विणमाचष्टे स्रजयतीत्यादौ विनो लुकि प्राप्तस्य पदकार्यस्य बाधाय भसंज्ञातिदेशस्यावश्यकत्वात् 'तत्करोति–' इत्यादिनिर्देशानुगुणत्वाच्च सुबन्ताण्णिजिति पक्ष एव ज्यायानित्याहुः ॥—**णिच्प्रकृतिरि**ति । वधशब्दो णिच्प्रकृतिरिदानीं तु कृल्लुक्यवशिष्टभाग एव प्रकृतिरित्यर्थः ॥—**आख्यानात्कृत** इति । यद्यपि वधशब्दः कृदन्तः स आख्यानं न भवति तथाप्याख्यानवाची कृदन्तश्च कंसवधशब्दो भवत्येव कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् ॥—**कृल्लुगि**ति । 'हनश्च वधः' इति विहितस्य अप्प्रत्ययस्य लुक् ॥—**प्रकृतिप्रत्यापत्तिरि**ति । विकारपरित्यागेन स्वरूपेणावस्थितिरित्यर्थस्तदेतत्सकलमभिप्रेत्याह—**कंसहन् इति स्थिते** इति ॥—**कंसविशिष्टस्ये**ति । तस्मादेव णिचो विधानादिति भावः । **दोष** इति । कंसशब्दात्पूर्वमडागमः कंस इत्यस्य द्विर्वचनं स्यादित्यर्थः ॥—**किंचे**ति । एवं च कंसमजीघतदितीष्टं न सिध्येदिति भावः ॥—**तत्प्रत्यये** धातोर्विहितप्रत्यये । तेन वार्त्रघ्नमित्यत्र 'हनस्तः' इति तत्वं न भवतीति ज्ञेयम् । उक्तदोषान्परिहरति—**सत्यमि**ति । प्रकृतिवच्चेति चकारोऽनुक्तसंग्रहार्थ इत्याह—**चात्कार्यमि**ति । यद्यप्यन्यत्र रीतिदर्शनादप्यड्द्विर्वचने सिध्यतः, तथापि धातावनन्तर्भूतद्वितीयान्तादिलाभाय कारकातिदेशः । कार्यातिदेशस्तु कुत्वतत्वादिलाभायेति विवेकः । इह भारतभागवतादिप्रसिद्धे कंसवधाद्युपाख्याने एव णिजिति नाग्रहः किं तूपाख्यानमात्रे । तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति । इह कृत्प्रकृतौ राज्ञः कर्तृत्वेऽपि गमेर्हेतुमण्णौ 'गतिबुद्धि–' इत्यनेन तस्य कर्मत्वमिति द्वितीयान्तमेव रूपातिदेशबलात्स्वीक्रियते । देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीत्यत्र तु देवदत्तस्य कर्तृत्वानपायात्तृतीयैव भवति । रुक्मिणीहरणमाचष्टे इत्यादौ 'हृक्रोरन्यतरस्याम्' इति विकल्पात् रुक्मिणीं रुक्मिण्या वा हारयतीति प्रयोगः ॥ —**कर्तृकरणादि**ति । कर्तृग्रहणाभावे चक्षुषा पश्यति चक्षयतीत्यादावेव स्यान्न तु करिभिरवघ्नाति अवकरयतीत्यादौ । लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वात्, अतस्तत्संग्रहार्थं कर्तृग्रहणमिति मनोरमायां स्थितम् । नव्यास्तु साधकतमत्वेन वि-

तु चक्षुरादिमात्रमित्यर्थः । असिना हन्ति असयति ॥ वष्क दर्शने ॥१॥ **चित्र** चित्रीकरणे ॥ आलेख्यकरण इत्यर्थः। कदाचिद्दर्शने ॥ चित्रेत्ययमद्भुतदर्शने णिचं लभते । चित्रयति ॥ २ ॥ अंस समाघाते ॥ ३ ॥ वट विभाजने ॥ ४ ॥ लज प्रकाशने ॥ **वटि लजि** इत्येके ॥ वण्टयति । लञ्जयति । अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये । वण्टापयति। लञ्जापयति ॥ ७ ॥ शाकटायनस्तु,कथादीनां सर्वेषां पुकमाह । तन्मते कथापयति । गणापयतीत्यादि ॥ **मिश्र** सम्पर्के ॥ ८ ॥ **संग्राम** युद्धे ॥ अयमनुदात्तेत् अकारप्रश्लेषात् । अससंग्रामत ॥ ९ ॥ **स्तोम** श्लाघायाम् ॥ अतुस्तोमत् ॥ १० ॥ **छिद्र** कर्णभेदने ॥ करणभेदन इत्यन्ये । कर्णेति धात्वन्तरमित्यन्ये ॥ १२ ॥ **अन्ध** दृष्ट्युपघाते ॥ उपसंहार इत्यन्ये ॥ आन्दधत् ॥ १३ ॥ **दण्ड** दण्डनिपातने ॥ १४ ॥ **अङ्क** पदे लक्षणे च ॥ आञ्चकत् ॥ **अङ्ग** च ॥ आञ्जगत् ॥ १६ ॥ **सुख दुःख** तत्क्रियायाम् ॥ १८ ॥ **रस** आस्वादनस्नेहनयोः ॥ १९ ॥ **व्यय** वित्तसमुत्सर्गे । अवव्ययत ॥ २० ॥ **रूप** रूपक्रियायाम् ॥ रूपस्य दर्शनं करणं वा रूपक्रिया ॥ २१ ॥ **छेद** द्वैधीकरणे ॥ अचिच्छेदत् ॥ २२ ॥ **छद** अपवारण इत्येके ॥ छदयति ॥२३ ॥ **लाभ** प्रेरणे ॥ २४ ॥ **व्रण** गात्रविचूर्णने ॥ २५ ॥ **वर्ण** वर्णक्रियाविस्तारगुणवचनेषु । वर्णक्रिया वर्णकरणम् । सुवर्णं वर्णयति । कथां वर्णयति । विस्तृणातीत्यर्थः । हरिं वर्णयति । स्तौतीत्यर्थः ॥ २६ ॥ बहुलमेतन्निदर्शनम् ॥ अदन्तधातुनिदर्शनमित्यर्थः । बाहुलकादन्येऽपि बोध्याः ॥ तद्यथा ॥ **पर्ण** हरितभावे ॥ अपपर्णत् ॥ **विष्क** दर्शने ॥ **क्षप** प्रेरणे ॥ **वस** विवासे ॥ **तुत्थ** आवरणे ॥ एवमान्दोलयति । प्रेङ्खोलयति । विडम्बयति । अवधीरयतीत्यादि । अन्ये तु दशगणीपाठो बहुलमित्याहुः । तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः । अपरे तु नवगणीपाठो बहुलमित्याहुः । तेनापठितेभ्योऽपि क्वचित्स्वार्थे णिच् । रामो राज्यमचीकरदिति यथेत्याहुः । चुरादिभ्य एव बहुलं णिजित्यर्थ इत्यन्ये । सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः ॥ **णिङ्ङ्गान्निरसने** ॥ अङ्गवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात् । हस्तौ निरस्यति हस्तयते । पादयते ॥ **श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च** ॥ श्वेताश्वादीनां चतुर्णामश्वादयो लुप्यन्ते णिङ् च धात्वर्थे । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते । अश्वतरमाचष्टेऽश्वयते । गालोडितं वाचां विमर्शः, तत्करोति गालोडयते । आह्वरयते । केचित्तु णिचमेवानुवर्तयन्ति तन्मते परस्मैपदमपि ॥ पुच्छादिषु धात्वर्थ इत्येव सिद्धम् ॥ णिजन्तादेव बहुलवचनादात्मनेपदमस्तु । मास्तु पुच्छभाण्डेति णिङ्विधिः । सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः ॥ इति चुरादयः ॥

---

## ॥ तिङन्ते ण्यन्तप्रक्रिया ॥

**तत्प्रयोजको हेतुश्च** ।१।४।५५। कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात । ॥ **हेतुमति च** ।३।१।२६। प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात । भवन्तं प्रेरयति भावयति । णिचश्चेति कर्तृगे फले आत्मनेपदम् ।

---

वक्षित यत् तत्करणशब्देन गृह्यते न तु लोकप्रसिद्धकरणमेव । अन्यथा 'कर्तृकरणयोस्तृतीया' इत्यादावपि लोकप्रसिद्धकरणग्रहणप्रसक्त्या बाणेन हत इत्यादि रूप न सिध्येत । तथा च कर्तृग्रहण विनाप्यवकरयतीति रूपसिद्धौ न किंचिद्बाधकमिति व्याख्याय कर्तृकरणादित्यत्र समाहारद्वन्द्व मत्वा देवदत्तेन पाचयति देवदत्तयतीत्युदाजहः । **कदाचिद्दर्शने** । चित्रकरणकदाचिद्दर्शनयोरिति सुवचम् ॥—**अदन्तेषु पाठबलादि**ति । अदन्तस्य फलान्तर्भावादतो लोप बाधित्वा वृद्धिरित्यर्थः । **संग्राम** । सग्रामेति युद्धवाचि प्रातिपदिक करोतीत्यर्थे णिच लभते ॥—**अनुदात्तेदि**ति । एतच्च 'भृशादिभ्यो भुवि—' इति सूत्रे कयटेनोक्तम् ॥—**अकारप्रश्लेषादि**ति । तेन प्रश्लिष्टस्येत्सज्ञा प्रकृत्यकारस्य तु दृष्टवदिति टिलोपः । तथा च अग्लोपादससग्रामेत्यत्र नोपधाह्रस्व' । **सुख दुःख** । तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ परामृश्येते । प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे अनयोः पाठ' सोपसर्गात्प्रत्ययार्थ इत्येके । सुखदुःखाभ्या तत्क्रियायामेव णिच् स्यात्र त्वाचष्ट इत्यस्मिन्नर्थे इत्येतदर्थ. पाठ इत्यन्ये ॥—**पुच्छादिष्वि**ति । भीमसेनस्य वाक्यम् ॥—**ग्रन्थान्त** इति । भू सत्तायामित्यादिधातुपाठस्यान्त इत्यर्थः ॥ इति चुरादय ॥

**तत्प्रयोजको हेतुश्च** ॥ तच्छब्देन 'स्वतन्त्र कर्ता' इति पूर्वसूत्रोपात्तः कर्ता परामृश्यते । तस्य कर्तुः प्रयोजकः प्रेरक , तद्व्यापारानुकूलव्यापारवानित्यर्थः । चकारः सज्ञाधिकारबाधनार्थस्तदाह—**हेतुसंज्ञः कर्तृसंज्ञश्चे**ति । हेतुसज्ञायाः प्रयोजन 'भीस्म्योर्हेतुभये' 'भियो हेतुभये षुक्' इत्यादौ प्रयोजकस्य हेतुत्वेन व्यवहारः । कर्तृसज्ञायास्तु 'लः कर्मणि च भावे च—' इति सूत्रेण प्रयोजके वाच्ये लकारादयः॥—**हेतुमति च** ॥ स्वनिष्ठाधारतानिरूपिताधेयतासबन्धेन हेतुर्यत्रास्ति स हेतुमान्व्यापारः । तस्मिन्वाच्ये णिजित्याहुः ॥—**प्रयोजकव्यापार** इति । प्रयोजकश्चेतनाचेतनसाधारण्येन विवक्षितः स च क्वचित्सिद्धः क्वचित्फलरूपः । देवदत्तः पाचयति गमयतीत्यादौ सिद्धः । भिक्षा वासयति संग्रामो वासयतीत्यादौ तु फलरूपः ॥—**प्रेषणादावि**ति । भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणा । आज्ञेत्यर्थः । आदिशब्देनाध्येषणानुमत्यादीनामुपा-

भावयते । भावयांबभूव । ओः पुयण्ज्यपरे ।७।४।८०। सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्त्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । मूङ् । अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् । स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।७।४।८१। एषामभ्यासोकारस्येत्त्वं वा स्यात्स्यवर्णपरे धात्वक्षरे परे । असिस्रवत् । असुस्रवत् । नाग्लोपीति ह्रस्वनिषेधः । अशशासत् । अडुढौकत् । अचीचकासत् । मतान्तरे । अचचकासत् । अग्लोपीति सुब्धातुप्रकरणे उदाहरिष्यते । ण्यन्ताण्णिच । पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः । चोरयति । णौचङीति ह्रस्वः । दीर्घो लघोः । न चाग्लोपित्वाद्द्वयोरप्यसंभवः, ण्याकृतिनिर्देशात् । अचूचुरत् । णौ च संश्चङोः ।६।१।३१। सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात् । संप्रसारणं तदाश्रयं च कार्यं बलवदिति आदौ संप्रसारणं पूर्वरूपम् । अशूशवत् । अलघुत्वान्न दीर्घः । अशिश्वयत् । स्तम्भुसिवुसहां चङि ।८।३।११६। उपसर्गस्थान्निमित्तादेषां सस्य षो न स्याच्चङि । अवातस्तम्भत् । पर्यसीषिवत् । न्यसीषहत् । आटिटत् । आशिशत् । बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव । ओणेर्ऋदित्करणाल्लिङ्गात् ।

दानम् । समानस्याधिकस्य वा ऋत्विगाचार्यादेः प्रवर्तना अध्येषणम् । प्रार्थनेत्यर्थः । अनुमतिस्तु राजादेः सम्मतिः, ता विना यागादिक्रिया न निष्पद्यत इत्यनुमतिमात्रेण राजादि' प्रयोजकः । अनुमत्यादीत्यादिशब्देनात्रोपदेशानुग्रहयोरुपादानम् । ज्वरितः कषाय पिबेदित्युपदेशमात्रेण वैद्यादिः प्रयोजकः । यस्तु केनचिद्धन्तुमिष्ट पलायमान निरुणद्धि सोऽपि हन्तुरनुग्राहकत्वेन प्रयोजकः । सर्वेऽप्येते विशेषा. कथ णिच्प्रत्ययगम्या इति चेद् । अत्राहु' । सर्वानुगत प्रवर्तनासामान्य णिचोऽर्थः, विशेषास्त्वर्थप्रकरणादिगम्या इति । नन्वेव णिचो लोडादीनां च पर्यायता स्यात्ततश्च इदानी पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति णिजपि प्रयुज्येतेति चेन् । मैवम् । कर्तु' प्रयोजको हि हेतुः प्रैषविषयो यः सबोध्यो देवदत्तादि. स तु नाद्यापि प्रश्नकर्तृत्वेनावधारितः । तथा च प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठप्रवृत्तिः सा णिजर्थस्तदनुपहिता प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः । उक्त च—'द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोट् विधीयते । सक्रियस्य प्रयोगस्तु यदा सविषयो णिच.' इति । अस्यार्थः । कर्तृत्वेनानवधारितस्य देवदत्तादेस्तु प्रैषे प्रच्छ ज्ञीप्सायामित्यादेर्लोट भवति । प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदा सा णिचो विषय इति । किं च प्रयोक्तृनिष्ठा प्रयुक्तिर्लोडर्थः प्रयोज्यप्रयोक्तृकर्तृका तु णिजर्थ' । पच देवदत्तेत्यत्र हि वक्तैव प्रेरकः । पाचयतीत्यादौ वक्तृभिन्नः पाचयामीत्यादौ तु वक्तेति दिक् ॥—ओः पुयण्जि—॥ पुयण्जीति समाहारद्वन्द्वान्सप्तम्येकवचनम् । अपर इति बहुव्रीहिः । 'अत्र लोपोऽभ्यासस्य' इत्यत. अभ्यासस्येत्यनुवर्तते । 'भृञामित्' इत्यत इद्ग्रहणं 'सन्यतः' सनीति च । अङ्गस्येति तु अधिकियत एव तदेतदभिप्रेत्याह—सनि परे यदङ्गमित्यादि । अपरे किम् । बुभूषति । पवर्गयणजीतिकिम् । ऊर्णुनविषति ॥—अबीभवदित्यादि । भू सत्तायाम् । पूङ् पवने । मूङ् बन्धने । यु मिश्रणादौ । रु शब्दे । लूञ् छेदने । जु गतौ । सौत्रोऽयं धातुः 'जुचङ्क्रम्य–' इत्यत्र निर्दिष्टः । ननु भू भू इति द्वित्वोत्तर वृद्ध्यावादेशौ भवतस्तत कृतस्य 'णौ चङि–' इति ह्रस्वस्य स्थानिवद्भावेन लघुपरत्वाभावात्सन्वद्भावाप्रवृत्त्याऽबीभवदित्यादावभ्यासोवर्णमेव दुर्लभमिति चेद् । अत्राहुः । आरम्भसामर्थ्यादेव न स्थानिवत्त्वमिति ॥—स्रवतिशृणोति–॥ अपर इत्यनुवर्तते । ननु पुयण्जीति, पवर्गजकारयोरसभवाद्यणः सभवेऽप्यव्यभिचारात्तदाह—अवर्णपरे धात्वक्षरे इति । अक्षरशब्दोऽत्र वर्णपरः । अवर्णपरे किम् । शुश्रूषति । शृणोत्यादेरुदाहरण तु अशिश्रवत् । अशुश्रवत् । अदिद्रवत् । अदुद्रवत् । अपिप्रवत् । अपुप्रवत् । अचिच्यवत् । अचुच्यवत् ॥—अडुढौकदिति । ढौकृ गतौ । चङ्परे णौ यदङ्ग तस्य योऽभ्यासो लघुपर इति पक्षाश्रयेणाह—अचीचकासदिति ॥—मतान्तर इति । 'अङ्ग यत्र द्विरुच्यते' इति मते चङ्परे णौ यल्लघु तत्परो योऽङ्गस्याभ्यास इति मते चेत्यर्थः ॥—सुब्धातुप्रकरण इति । अतितिरायत् । अससाश्रायत् । अविवद्रायत् । अदिदेवद्रायदित्याद्युदाहरिष्यत इत्यर्थ ॥—वृद्धिं बाधित्वेति । 'ण्यल्लोपावियङ्–' इत्यादिवचनाण्णिलोपाशप्रत्याख्यानपक्षेऽपवादत्वाद्वेत्यर्थ ॥—असंभव इति । तथा च अचुचोरदित्येव रूपमिति भाव ॥—ण्याकृतिनिर्देशादिति । चङ्परे णित्वे इत्यर्थस्तेन णिद्वित्वे सत्यपि णित्व चङ्परमस्तीति ह्रस्वदीर्घयोरस्ति सभव इति भावः । एतेन अवीवददीणा परिवादकेनेत्यादौ सन्वद्भावो व्याख्यातस्तत्रापीत्थमेव पूर्वपक्षसिद्धान्तयोस्तुल्यत्वात् ॥—विभाषेत्यनुवर्तते । सश्चङोरिति णावित्यस्य विशेषण 'ह्वः सप्र–' इत्यतः सप्रसारणमनुवर्तत एवेत्याह—सन्परे चङ्परे इति ॥—बचनादिति । इयं च परिभाषा 'लिट्यभ्यासस्योभयेषाम्' इत्यत्र वच्यादीनां ग्रह्यादीनामनुवृत्त्यैवेष्टसिद्धावुभयेषांग्रहणसामर्थ्याल्लभ्यते । अन्यथा वव्रश्चेत्यत्र हलादिःशेषे कृते वस्य सप्रसारण स्यादित्याहुः ॥—स्तम्भुसिवु—॥ स्तम्भुः सौत्रः । षिवु तन्तुसताने । षह मर्षणे । स्तम्भतेः 'स्तन्भेः' इत्यनेन प्राप्तिरन्ययोस्तु 'परिनिविभ्यः–' इत्यनेनेति विवेकः ॥—आटिटत् आशिशदिति । णिचा सह द्वित्वात्सन्वद्भावो नेति तद्विषये विहितो यो 'दीर्घो लघोः' इति दीर्घः स न प्रवर्तते ॥—ऋदित्करणाल्लिङ्गादिति । यदि पूर्व द्विर्वचन भवेत्तदा णिशब्दस्य द्वित्वे सत्युपधाह्रस्वस्याप्राप्तेस्तत्प्रतिषेधार्थमृदित्करणं

**मा भवानिदिधत् । एजादावेधतौ विधानान्नेह वृद्धिः । मा भवान्प्रेदिधत् । न न्द्रा इति नदराणां न द्वित्वम् । औन्दिदत् । आड्डिडत् । आर्चिचत् । उब्ज आर्जवे । उपदेशे दकारोपधः । भुजन्युब्जौ पाण्युपतापयोरिति सूत्रे निपातनाद्दस्य वः । स चान्तरङ्गोऽपि द्वित्वविषये न न्द्रा इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते न तु ततः प्राक् । दकारोच्चारणसामर्थ्यात् । औब्जिजत् । अजादेरित्येव । नेह । अदिद्रपत् । ॥ रभेरशब्लिटोः ।७।१।६३। रभेर्नुम् स्यादचि न तु शब्लिटोः । ॥ लभेश्च ।७।१।६४। अरारम्भत् । अललम्भत् । हेरचङीति सूत्रे अचङी-त्युक्तेः कुत्वं न । अजीहयत् । अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् । असस्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः । ॥ विभाषा वेष्टिचेष्ट्योः ।७।४।९६। अभ्यासस्यात्वं वा स्याच्चङ्परे णौ । अववेष्टत् । अविवेष्टत् । अचचे-ष्टत् । अचिचेष्टत् । भ्राजभासेत्यादिना वोपधाह्रस्वः । अबिभ्रजत् । अबभ्राजत् ॥ * काण्यादीनां वेति वक्तव्यम्**

---

व्यर्थं स्यादतस्तदुक्तेऽर्थे ज्ञापकमेव ॥—**एजादावेधताविति** । 'एत्येधत्यूठ्सु' इति सूत्रे एजाद्योरेत्येधत्योरिति व्याख्यातत्वादिति भावः । न च मा भवान्प्रेदिधदित्यत्र 'णौ चङि–' इति ह्रस्वे कृते नायमेधतिरिति वृद्धेरप्रवृत्तौ किमेधतेरेजादिविशेषणेनेति वाच्यम् । एकदेशविकृतस्यानन्यत्वात् । न चैवमपि 'अजादेर्द्वितीयस्य' इति धिशब्दस्थाने धिधिशब्दादेशे सति वक्षसोरिव प्रकृतिप्रत्ययविभागसमोह इति वाच्यम् । 'द्विःप्रयोगो द्विर्वचनं षाष्ठम्' इति भाष्ये सिद्धान्तितत्वात् । अन्यथा इहैव प्रेदिधदित्यत्र णिलोपो न स्यात् । जिघांसतीत्यादौ सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यादिति दिक् ॥—**उब्ज आर्जव** इति । अयमुपध्मानीयोपध इति वार्तिककृतोक्तम् । तस्य 'झलां जश् झशि' इति जश्त्वेन बकारे कृते उब्जिता । उब्जितमिति रूपम् । एतच्चायोगवाहानां शर्षु पाठस्य फलम् । भाष्यकारादयस्तूपध्मानीयोपधपाठे उब्जिजिषतीति रूपं न सिध्येत् । यदि पूर्वत्रासिद्धीयमद्विर्वचने इत्याश्रित्य बकारोत्तरं द्वित्वं क्रियते यदि वा अस्यानित्यतामाश्रित्य बकारात्पूर्वमेवोपध्मानीयस्य द्वित्वमुभयथापि इष्टरूपासिद्धिराद्ये उब्जिजिषति, द्वितीये तूपध्मानीयस्यान्त्वात्तदादेः 'अजादेर्द्वितीयस्य' इति द्वित्वे हलादिःशेषे द्वितीयोपध्मानीयस्य जश्त्वेन बकारे पश्चात्प्रथमस्यापि तथैव बकारे उबब्जिषतीत्यापत्तेः । ततश्चेष्टसिद्धये दकारोपधोऽयं स्वीकार्यः । भुजन्युब्जाविति निपातनादुपधादकारस्य वो भवतीति वाक्यं कल्प्यते तच्च 'स्तोः श्चुना श्चुः' इत्यस्याग्रे । तदयमर्थः । श्चुना योगे उदजेर्दकारस्य बकार इति । अभ्युद्गः समुद्ग इत्यत्र तु उब्जिता उब्जितुमित्यत्रेव चवर्गयोगो नास्तीति न बकारः । दकारोपधे चास्मिन्स्वीकृते 'न न्द्राः' इति निषेधाज्जिशब्दस्य द्वित्वे ततो बकारे च उब्जिजिषतीति सिध्यति रूपम् । न च 'पूर्वत्रासिद्धीयमद्विर्वचने' इति बकारोत्तरं द्विर्वचने सति स्यादेवानिष्टमिति वाच्यम् । द्विर्वचने हि त्रैपादिकं सिद्धं न तु तन्निषेधेऽपि । तथा च निषेधे त्रिपादीस्थस्यासिद्धत्वात् 'न न्द्राः' इति निषेधः प्रवर्तते । यद्वा तादृशवाक्यमिह न कल्प्यते किं तु 'भुजन्युब्जौ–' इति निपातनेन दस्य ब इति । न चैवं बकारसहितस्य द्वित्वप्रसङ्गः । धातौ दकारोच्चारणसामर्थ्यात् । न चाभ्युद्ग इत्यादावपि बकारश्रवणप्रसङ्गः । अकुत्वविषय एव बकारनिपातनाभ्युपगमात् । यद्वा अभ्युद्ग इत्यादि रूपं दुगुपसर्गाद्गमेर्डप्रत्यये ज्ञेयम् । उदजेस्तु घञि अनभिधानात्प्रयोगाभाव इति वदन्ति । तदेतद्भाष्यादिमतमभिप्रेत्याह—**उपदेशे दकारोपध** इत्यादि । **अजादेरित्यव**ति । न न्द्रा इत्यत्र अजादेरित्यनुवर्तते तेन आदिभूतादचः परा एव नदरा द्विर्नोच्यन्ते नान्ये इत्यर्थः । ननु लावस्थायामेव अडिति भाष्यकारोक्तपक्षे अदिद्रपदित्यत्र अजादित्वमस्त्येव न्याय्यश्च प्रथममट् परत्वादन्तरङ्गत्वाच्चेति चेद् । अत्राहुः । द्वितीयस्येत्यप्यत्रानुवर्तते तत्सामर्थ्याच्च नित्यं द्वितीयस्येति तदर्थः । तेन लावस्थायामटि कृतेऽपि धातुसंज्ञाप्रवृत्तिकाले अजादित्वाभावान्नोक्तदोषः । नित्यं द्वितीयस्यैकाचो ये नदरास्तेषामेव निषेधात् । न चैवं नित्यं द्वितीयस्येति व्याख्ययैव इष्टसिद्धावजादेरित्यस्यात्रानुवृत्तिर्मास्त्विति वाच्यम् । इन्दिद्रीयिषतीत्यत्र दकारस्यापि द्वित्वनिषेधापत्तेः । अजादेरित्युक्तौ त्वादिभूताचः परत्वं दकारस्य नेति सिद्धमिष्टम् । न च अजादेरित्युक्तावपि चन्दिद्रीयिषतीत्यत्र दोषः स्यादेव, आद्यवयवस्य हल्त्वान्नकारस्य द्वित्वनिषेधाप्रसङ्गादिति वाच्यम् । अजादेरिति कर्मधारयात् पञ्चमीत्युक्तत्वात् । इह च एकदेशे स्वरितत्वं प्रतिज्ञाय अच इत्येवानुवर्त्यताम् । अथवा आदेरित्यस्याप्यनुवर्तनमस्तु तस्य नावयवपरत्वं किंतु पूर्ववर्तिमात्रपरत्वं शब्दाधिकाराश्रयणादिति ज्ञेयम् । नन्वेवमुत्तरार्थतया द्वितीयस्येति ग्रहणस्य सार्थकत्वे स्थिते द्वितीयस्येति न वक्तव्यमिति भाष्यं विरुध्येतेति चेत् । मैवम् । यस्मिन्सूत्रे पठितं तत्र मास्त्विति तदाशयात् । न च अजादेरित्येतावत्युक्ते यस्य कस्यचिदेकाचो द्वित्वं स्यादिति वाच्यम् । प्रथमस्यैकाचः पूर्वेणैव सिद्धेः पुनरारम्भो द्वितीयस्य द्वित्वार्थमिति सुवचत्वात् ॥—**रभेरशब्लिटोः** ॥ 'रधिजभोः–' इत्यतोऽचीति 'इदितः' इत्यतो नुमिति चानुवर्तते । अचि किम् । आरब्धम् । अशब्लिटोः किम् । रभते । रेभे ॥—**लभेश्च** ॥ योगविभाग 'आङो यि' इत्यत्र लभेरेवानुवृत्तिर्यथा स्यादिति ॥—**काण्यादीनामिति** । कण निमीलने । रण शब्दे । भण शब्दे । श्रण दाने । लुप्लृ छेदने । हिठ विबाधायाम् । षट् । ह्वेञ् स्पर्धायां शब्दे च । बण शब्दे । लुठ प्रतिघाते । लुप्लृ छेदने । लोपीति णिजन्तनिर्देशः । लापय इति पाठान्तरे लप व्यक्तायां वाचि । केचित्तु लपहठ इति पठन्ति । न्यासे चत्वारः । श्रण दाने । लुठ स्तेये । भ्वादिः । चुरादौ दण्डकपाठे भाषा-

ण्यन्ताः कणरणभणश्रणलुपहेठाः काण्यादयः पञ्चाष्ये उक्ताः । ह्वायिवाणिलोटिलोपयश्चत्वारोऽधिका न्यासे । वाणिलोठी अप्यन्यत्र । इत्थं द्वादश । अचीकणत् । अचकाणत् । **स्वापेश्चङि** ।६।१।१८। ण्यन्तस्य स्वापेश्चङि संप्रसारणं स्यात् । असूषुपत् । **शाच्छासाह्वाव्यावेपां युक्** ।७।३।३७। णौ परे । पुकोऽपवादः । शाययति । ह्वाययति । **ह्वः संप्रसारणम्** ।६।१।३२। सन्परे चङ्परे च णौ ह्वः संप्रसारणं स्यात् । अजूहवत् । अजुहावत् । **लोपः पिबतेरीच्चाभ्यासस्य** ।७।४।४। पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् । अर्तिह्रीति पुक् । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति । **तिष्ठतेरित्** ।७।४।५। उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् । **जिघ्रतेर्वा** ।७।४।६। अजिघ्रिपत् । अजिघ्रपत् । उर्ऋत् ॥ अचीकृतत् । अचिकीर्तत् । अवीवृतत् । अववर्तत् । अमीमृजत् । अममार्जत् । *पातेर्णौ लुग्वक्तव्यः ॥ पुकोऽपवादः । पालयति । **वो विधूनने जुक्** ।७।३।३८। वातेर्जुक् स्याण्णौ कम्पार्थे । वाजयति । कम्पे किम् । केशान्वापयति । विभाषा लीयतेः । **लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने** ।७।३।३९। लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो णौ स्नेहद्रवे । विलीनयति । विलाययति । विलालयति । विलापयति वा घृतम् । ली ई इति ईकारप्रश्लेषादात्वपक्षे नुक् न । स्नेहद्रवे किम् । लोहं विलापयति । विलाययति । *प्रलम्भनाभिभवपूजनासु लियो नित्यमात्वमशिति वाच्यम् । **लियः संमाननशालीनीकरणयोश्च** ।१।३।७०। लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे । जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते ।

---

थैकोऽपि । अरीरणत् । अरराणत् । अबीभणत् । अबभाणत् । अशिश्रणत् । अशश्राणत् । अलूलुपत् । अलुलोपत् । अजीहिठत् । अजिहेठत् ॥—**स्वापेश्चङि** ॥ चङि किम् । स्वापयति ॥—**असूषुपद्**िति । इह सप्रसारणोत्तरं द्वित्वम् ॥—**शाच्छासा—**॥ शो तनूकरणे । छो छेदने । षोऽन्तकर्मणि । ह्वेञ् स्पर्धायाम् । व्येञ् संवरणे । वेञ् तन्तुसताने । पा पाने । 'लुग्विकरणालुग्विकरण' इति परिभाषया पा रक्षणे इति नेह गृह्यते । तस्य तु पालयतीति रूपमनुपद वक्ष्यति । शाययति । अशीशयत् । छाययति । अचिच्छयत् । साययति । असीषयत् । ह्वाययति । अजिह्वयत् । व्याययति । अविव्ययत् । वाययति । अवीवयत् । पाययति । अपीपयत् । इह शाच्छासादीना कृतात्वाना निर्देशः पुकः प्राप्तिं ध्वनयितुम् । तत्प्रयोजन त्वस्मिन्प्रकरणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः । तेन ध्यापयति क्षापयतीत्यादि सिद्धम् ॥—**ह्वः संप्र—**॥ 'णौ च सश्चङोः' इति वर्तते तदाह—**सन्पर** इत्यादि ।—**अजूहवत्** । **अजुहावद्**िति । 'काण्यादीना वा' इति ह्रस्वविकल्पः ॥—**अपीप्यद्**िति । उपधालोपस्य द्वित्वे कर्तव्ये प्रतिषेधात् कृते लोपे स्थानिवद्भावाद्वा पायशब्दस्य द्वित्वे हलादिःशेषे ईकारः । स च अनभ्यासविकार इतिनिषेधादन्त्यस्यादेशः । इहाग्लोपित्वादलघूपधत्वाच्च सन्वद्भावदीर्घयोरप्राप्तावित्व विधीयते ।—**व्लेपयतीत्या**दि । व्ली वरणे । रीङ् क्षये । क्नूयी शब्दे उन्दे च । क्ष्मायी विधूनने ॥—**तिष्ठतेरित्** ॥ तकारो मन्दप्रयोजन । श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थं । अतास्थायत् । लटि तास्थायतीति तास्थायेति । **उर्ऋत्** । चुरादौ व्याख्यातम् ॥—**अचीकृतद्**िति । ऋदादेशाभावपक्षे 'उपधायाश्च' इतीत्वे रपरत्वम् 'उपधाया च' इति दीर्घः ॥—**पुकोऽपवाद** इति । आदन्तत्वात्पुकः प्राप्तिः । एव च लुगागमस्य पुड्निवृत्तिरेव फलम् । पालयतीति रूपस्य पाल रक्षणे इति धातुनाऽपि सिद्धेरिति भावः ॥—**वो विधू—**॥ लुग्विकरणाऽलुग्विकरणपरिभाषाया ओवै शोषण इत्यस्यैव ग्रहण न तु वा गतिगन्धनयोरित्यस्य । लक्षणप्रतिपदोक्तपरिभाषा त्वस्मिन्प्रकरणे न प्रवर्तत इत्युक्त प्राक् । ओवै शोषणे इत्यस्य रूपमिति वदन् वामनोऽप्यत्रानुकूलः । वज गतावित्ति धातुना वाजयतीति रूपे सिद्धे जुगागमस्य पुड्निवृत्तिरेवेहापि फलम् ॥—**वातेरि**ति । वायतेरिति वक्तु युक्तम् । आत्वविधायकसूत्र स्मारयति—**विभाषा लीयतेरि**ति । लीयतेरिति यकानिर्देशो न तु श्यना । अन्यथा विभाषा लीङ इत्येवावक्ष्यत् । तेन लीलीङोरुभयोरप्यात्व भवति ॥—**लीलोः** ॥ लीङ् श्लेषणे दिवादिः । ली श्लेषणे क्र्यादि. । लाग्रहणेन ला आदाने अदादिः कृतात्वौ लीलीङा च त्रयोऽपि गृह्यन्ते । लीयतेरिति औचित्यादिहापि यका निर्देश इत्युभयोरपि ग्रहणम् । न च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्' इति परिभाषया सूत्रेऽपि लीङो न ग्रहणमिति वाच्यम् । इय हि परिभाषा 'वामदेवाड्ड्यड्ड्यौ' इत्यत्र डित्त्वेन ज्ञापिता । ज्ञापन च उत्सर्गतः सजातीयापेक्षमिति प्रत्ययग्रहणविषयत्वमस्याः कल्प्यते । यथा सदव्ययतव्यसमानाधिकरणेनेत्यत्र तव्यस्यैव ग्रहण न तु तव्यतः, अत एव 'जृव्रश्च्योः क्त्व' इति सूत्रे जॄणातिर्जीर्यत्योरुभयोर्ग्रहणमिति न्यासकृतोक्तम् । अतोऽत्र लीलीङोर्ग्रहणमिति सम्यगेव । न चैव 'दिव औत्' इत्यत्र निरनुबन्धपरिभाषया दिविति प्रातिपदिकस्यैव ग्रहण न तु धातोरिति ग्रन्थः कथं सगच्छत इति वाच्यम् । उत्सर्गतः प्रत्ययग्रहणविषयत्वेन क्वचिदन्यत्रापि प्रवृत्तौ बाधकाभावादिति वदन्ति ॥—**विलीनयती**ति । लीलीङोरीकारान्तयोर्नुकि रूपम् । **विलाययती**ति । नुगभावपक्षे तयोरेव रूपम् ॥—**विलालयती**ति । लातेः कृतात्वयोर्लीलीङोश्च लुकि रूपम् ॥—**विलापयती**ति । लुगभावपक्षे आदन्ताना तेषामेव रूपम् ॥—**लोहं विलापयती**ति । नुक्लुकोरभावादात्वपक्षे पुक् । आत्वाभावे तु वृद्ध्यायादेशौ ॥—**प्रलम्भने**ति । प्रलम्भनं वञ्चनम् । अशिति किम् । लीयते । लिनाति ॥—**लियः संमान—**॥ चात्प्रलम्भने ॥—**बिभेतेर्हेतुभये** ॥ हेतुः प्रयोजकः । इह

अभिभवतीत्यर्थः। बालमुल्लापयते। वञ्चयतीत्यर्थः। **विभेतेर्हेतुभये ।६।१।५६।** बिभेतेरेच आत्वं वा स्यात्प्रयोजकाद्भयं चेत्। **भीस्म्योर्हेतुभये ।१।३।६८।** ण्यन्ताभ्यामाभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ। सूत्रे भयग्रहणं धात्वर्थोपलक्षणम्। मुण्डो भापयते। **भियो हेतुभये षुक् ।७।३।४०।** भी ई इतीकारः प्रश्लिष्यते। ईकारान्तस्य भियः षुक् स्यात् णौ हेतुभये। भीषयते। **नित्यं स्मयतेः ।६।१।५७।** स्मयतेरेचो नित्यमात्वं स्याण्णौ हेतोः स्मये। जटिलो विस्मापयते। हेतोश्चेद्भयस्मयावित्युक्तेर्नेह। कुञ्चिकयैनं भाययति। विस्माययति। कथं तर्हि विस्मापयन् विस्मितमात्मवृत्ताविति। मनुष्यवाचेति करणादेव हि तत्र स्मयः। अन्यथा शानजपि स्यात्। सत्यम्। विस्माययन्नित्येव पाठ इति साम्प्रदायिकाः। यद्वा। मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते तथा सिंहो विस्मापयन्निति ण्यन्ताण्णौ शतेति व्याख्येयम्। **स्फायो वः ।७।३।४१।** णौ। स्फावयति। **शदेरगतौ तः ।७।३।४२।** शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ। शातयति। गतौ तु। गाः शादयति गोविन्दः। गमयतीत्यर्थः। **रुहः पोऽन्यतरस्याम् ।७।३।४३।** णौ। रोपयति। रोहयति। **क्रीङ्जीनां णौ ।६।१।४८।** एषामेच आत्वं स्याण्णौ। क्रापयति। अध्यापयति। जापयति। **णौ च संश्चङोः ।२।४।५१।** सन्परे चङ्परे च णौ इङो गाङ् स्यात्। अध्यजीगपत्। अध्यापिपत्। **सिध्यतेरपारलौकिके ।६।१।४९।** ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्वं स्याण्णौ। अन्नं साधयति। निष्पादयतीत्यर्थः। अपारलौकिके किम्। तापसः सिध्यति। तत्त्वं निश्चिनोति। तं प्रेरयति सेधयति तापसं तपः। **प्रजने वीयतेः ।६।१।५५।** अस्यैच आत्वं वा स्याण्णौ प्रजनेऽर्थे। वापयति वाययति वा गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः॥ ऊदुपधाया गोहः। गूहयति **दोषो णौ ।६।४।९०।** दुष इति सुवचम्। दुष्यतेरुपधाया ऊत्स्याण्णौ। दूषयति। **वा चित्तविरागे ।६।४।९१।** विरागोऽप्रीतता चित्तं दूषयति दोषयति वा कामः॥ मितां ह्रस्वः॥ भ्वादौ चुरादौ च मित उक्ताः। घटयति। जनीजॄष्। जनयति। जरयति। ज़ृणातेस्तु। जारयति। * **रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः।** मृगरमणमाखेटकम्। रजयति मृगान्। मृगेति किम्। रञ्जयति पक्षिणः। रमणादन्यत्र तु रञ्जयति मृगान्तृणदानेन। चुरादिषु ज्ञपादिश्चिञ्॥ चिस्फुरोरिति वा आत्वम्। चपयति। चययतीत्युक्तम्। चिनोतेस्तु। चापयति। चाययति। स्फारयति। स्फोरयति। अपुस्फुरत्।

'आदेच उपदेशे-' इत्यत एव आदित्यनुवर्तते 'विभाषा लीयतेः' इत्यतो विभाषा, 'चिस्फुरोः' इत्यतो णाविति च तदाह **—विभेतेरेच** इत्यादि॥**—भीस्म्योः**॥ व्यत्ययेन षष्ठीत्याह**—आभ्यामिति**। 'णेरणौ-' इत्यतो णेरित्यनुवृत्तेर्ण्यन्ताभ्यामेव विधिरकर्त्रभिप्रायार्थः॥**—ईकारान्तस्येति**॥ तेन आत्वपक्षे भाययते इत्येव न त्वत्र पुगित्यर्थः॥**—करणादेव हीति**। तथा च करणात स्मये आत्वाभावेन पुगदुर्लभ इति भाव.॥**—प्रयोज्यकर्त्रीति**। यद्यपि प्रथमणिजर्थं प्रति मनुष्यवागेव प्रयोजिका। अत एव आत्व प्रवृत्त तथापि द्वितीयणिजर्थाभिप्रायेणेदमुक्तमिति मनोरमायाम्। केचित्तु प्रयोज्यस्य कर्त्रा प्रयोजककर्त्रीति यावदिति प्रथमणिजर्थाभिप्रायेणैवेद सुयोजमित्याहु.॥**—ण्यन्ताण्णाविति**। राजा विस्मयते त मनुष्यवाग्विस्मापयते तया सिंहो विस्मापयन्नित्यर्थः। एवं च प्रथमणिचि हेतुर्मनुष्यवागिति आत्वपुकावुपपन्नौ॥**—क्रीङ्जीनाम्—**॥ डुक्रीञ् द्रव्यविनिमये। इङ अध्ययने। जि जये। अचिक्रपत। अजीजपत्॥**—अध्यजीगपदिति**। नात्र णिजिन्मित्तस्य गाङो द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा शङ्क्यः। यत्राभ्यासोत्तरखण्डे आद्योऽज्वर्णोऽस्मि तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात्। इह तु गाङ पूर्व सति हि द्वित्वे 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्व भवेत्ततश्चङ्परणिजिन्मित्तो गाङ् ततश्च प्रक्रियाया परिनिष्ठितरूपे वा अवर्णवदुत्तरखण्ड दुर्लभ कीर्तयति सा्म्यादिति नोक्तशङ्कावकाशः॥**—अध्यापिपदिति**। पिशब्दस्यात्र द्वित्वम्॥**—सिध्यतेरपार—**॥ श्यना निर्देशाद्दैवादिकस्याग्रहणम॥**—तत्त्वं निश्चिनोतीति**। तत्त्वनिश्चयश्चात्मविषयक. स च परलोके उपयुज्यते॥**—प्रजने-**॥ वीयतेरिति वी गतिप्रजनादावादादिकस्य यका निर्देशः। अत्र केचिदुत्प्रेक्षयन्ति। वीतेरिति वक्तव्ये यका निर्देशाद्व्येञोऽपि ग्रहणम्। तस्यापि यकि सम्प्रसारणे वीधातुना समानरूपत्वात्। अतो द्वयोरपि प्रजनेऽर्थे आत्व वा स्यात। तत्र आत्वे तदभावे च यद्यपि व्येञ व्याययतीति रूप तुल्य शाच्छासेति युक्कोऽपवादतया युग्विधानात तथापि णिजन्तात्क्विपि व्याव्यौ व्याः। आत्वाभावपक्षे व्यं व्यायौ व्यायः इत्यस्ति विशेषः। विभाषाविधानसामर्थ्यात्पक्षेऽपि 'आदेच उपदेशेऽशिति' इति न प्रवर्तते। अनेकार्थत्वाच्च धातूना व्ययतेरपि प्रजनोऽर्थ इति॥**—दोषो णौ**॥ दुष वैकृत्ये दिवादिः। णौ किम्। दोषः॥**—चित्तमिति**। चिती सञ्ज्ञान इत्यस्मात् क्तः॥**—दूषयति। दोषयति वेति**। चित्त दुष्यति स्नानसंध्यादौ विरक्त भवति। तत्प्रयुङ्क्त इत्यर्थः॥**—ज़ृणातेस्त्विति**। अघित्वादस्य मित्वं नेति भावः॥**—आखेटकमिति**। मृगयेत्यर्थ॥**—रजयतीति**। रज्जन्ति मृगाः, ग्रहणमरणाद्यनुकूलव्यापारविषया भवन्ति, तान्मृगास्तादृग्व्यापारविषयान्करोतीत्यर्थः॥**—ज्ञपादिश्चिञ्** इति। तेन मित्त्वाद्ध्रस्व इति भावः। स्वादिगणस्थस्य तु मित्वं नेत्युदाहरति**—चापयतीत्यादि**॥**—अपुस्फुरदिति**। द्वित्वे कर्तव्ये अजादेशस्य स्थानिवत्त्वान्निषेधाद्वा स्फुरित्युकारवतो द्वित्व ततः 'चि-

अपुस्फरत् । ※ उभौ साभ्यासस्य ।८।४।२१। साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति । प्राणिणत् । ※ णौ गमिरबोधने ।२।४।४६। इणो गमिः स्याण्णौ । गमयति । बोधने तु प्रत्याययति । इण्वदिकः । अधिगमयति । हनस्तोऽचिण्णलोः । हो हन्तेरिति कुत्वम् । घातयति । ईर्ष्ययति । * **ईर्ष्यतेस्तृतीयस्येति वक्तव्यम् ।** तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः । आद्ये षकारस्य द्वित्वं वारयितुमिदम् । द्वितीये त्वजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते प्रवर्तते । ऐर्ष्यियत् । ऐर्षिष्यत् । द्वितीयव्याख्यायां णिजन्ताच्चङि पकार एवाभ्यासे श्रूयते । हलादिःशेषात् । द्वित्वं तु द्वितीयस्यैव । तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः । निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः । तेन प्रार्थयन्ति शयनोत्थितं प्रिया इत्यादि सिद्धम् । एवं सकर्मकेषु सर्वेषूह्यम् ॥ इति ण्यन्तप्रक्रिया ॥

## तिङन्ते सन्नन्तप्रक्रिया ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ।३।१।७।** इषिकर्मणः इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । धातोर्विहितत्वादिह सन आर्धधातुकत्वम् । इट् । द्वित्वम् । सन्यतः । पठितुमिच्छति पिपठिषति । कर्मणः किम् । गमनेनेच्छतीति करणान्मा भूत् । समानकर्तृकात्किम् । शिष्याः पठन्त्वितीच्छति गुरुः । वाग्रहणात्पक्षे वाक्यमपि । लुङ्सनोर्घस्लृ । एकाच उपदेश इति नेट् । सस्य तत्वम् । अत्तुमिच्छति जिघत्सति । ईर्ष्यतेस्तृतीयस्येति षिसनोर्द्वित्वम् । ईर्ष्यियिषति । ईर्ष्यिषिषति । ※ **रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।१।२।८।** एभ्यः

स्फुरोर्णौ' इति वा आत्वम् ॥—**उभौ सा**—॥ 'रषाभ्याम्–' इति सूत्रे न इति षष्ठ्यन्तं प्रथमाद्विवचनान्ततया विपरिणम्यत इत्याह—**उभौ नकाराविति**। ननु साभ्यासस्येत्युक्त्या उभयोरपि भविष्यतीत्युभौग्रहणं व्यर्थमिति चेद् । अत्राहुः । साहित्यमात्रं विवक्षितं न तुल्ययोग इत्यभ्युपगमे द्वयोर्युगपन्न सिद्ध्येदित्युभौग्रहणम् । न च तुल्ययोगाविवक्षायां 'तेन सहेति तुल्ययोगे' इति समासोऽत्र न स्यादिति शङ्क्यम् । तुल्ययोगग्रहणं प्रायिकं सकर्मकः सलोमक इत्युक्तत्वादिति । कैयटे तु उभावित्यस्मिन्नसति साभ्यासस्यानितेर्णो भवतीत्युच्यमाने वचनसामर्थ्याच्च 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यनाश्रीयमाणे अकृतणत्वस्य द्विर्वचने कृते अनन्तरस्यानितेरिति पूर्वस्य णत्वस्य सिद्धत्वात् व्यवहितनकारार्थमिदं णत्वं स्यात् । अनन्तरस्य तु तक्रकौण्डिन्यन्यायेन न स्यादिति उभावित्युच्यत इति स्थितम् । साभ्यासस्येति किम् । प्राण् नमति । असत्यस्मिन् 'अनितेः' इति षष्ठी सबन्धसामान्ये स्यात्तत्श्चानन्तर्यादिसबन्धोऽपि गृह्येत । सति त्वस्मिन्नवयवावयविभावसंबन्धो लभ्यते । अतोऽर्थवत्साभ्यासग्रहणम् । यदि शिष्टानुरोधेनानितेरिति षष्ठी अवयवसबन्धे व्याख्यायते अनितेश्च नकारद्वयाभावात्सामर्थ्याद्द्विर्वचनं प्राप्तं एवानितिर्गृह्येत तदा साभ्यासस्येति मन्दप्रयोजनम् । इह पूर्वं णत्वं कृत्वा द्वित्वे कृते प्राणिणदित्यादिसिद्धावयमारम्भः 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वज्ञापनार्थः । तेन ऊर्णुनावित्यत्र णत्वात्पूर्वमेव नुशब्दस्य द्वित्वादभ्यासोत्तरखण्डे णत्वाभावः सिद्धः ॥—**प्रत्याययतीति** । प्रतिपूर्वस्येणो ज्ञापनार्थता । लुङि प्रत्याययत् । इह इणो णिचि कृते 'इणो यण्' इति यणं बाधित्वा परत्वाद्वृद्धिः । न च 'ओः पुयण्ज्–' इति ज्ञापकात्पूर्वं द्वित्वं पश्चाद्वृद्धिरिति शङ्क्यम् । 'अजादेर्द्वितीयस्य' इति णिचो द्वित्वेऽभ्यासोत्तरखण्डस्यावर्णपरत्वाभावात् ॥—**इति वार्थ** इति । व्याख्यानद्वयमप्याकरारूढमिति भावः ॥—**षकारस्येति** । रेफस्य तु 'न न्द्राः' इत्यनेन निषेधादिति भावः ॥ —**द्वितीये त्विति** । तृतीयस्यैकाच इति पक्षे ॥—**सन्नन्ते प्रवर्तते** इति वचनसामर्थ्यादिति भावः ॥—**ऐर्ष्यियदिति** । तृतीयव्यञ्जनस्येति पक्षे इदमुदाहरणम् । ऐर्षिष्यदिति स्पष्टमसाधुत्वमाशङ्क्योपपादयति—**द्वितीयव्याख्यायामि**त्यादिना ॥ —**द्वितीयस्यैवेति** । एकाच इति शेषः ॥—**अप्रवृत्तेरिति** । किं तु सन्नन्त एव प्रवर्तते । तत्र त्वनुपदम् ईर्ष्यियिषति इत्युदाहरिष्यति । अथ उपयाच्ञायामित्यस्य आगर्वीयत्वादात्मनेपदेन भाव्यमिति प्रार्थयन्तीति माघकाव्यादिप्रयोगोऽसाधुरित्याशङ्क्य तत्समर्थनायाह—**निवृत्तप्रेषणादिति** । उक्तं च—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति ॥ —**तेनेत्यादि** । प्रार्थना कुर्वन्तीति विवक्षितार्थे प्रयोगः सिद्ध इति भावः । केचित्तु परस्मैपदसिद्धये प्रार्थनं प्रार्थः तं कुर्वन्ति प्रार्थयन्तीति व्याचक्षते । तदसत् । धातुसंज्ञाप्रयोजकप्रत्यये चिकीर्षिते उपसर्गाणां पृथक्करणस्य वक्ष्यमाणतयार्थवेदेत्यापुगागमस्य दुर्वारत्वात् ॥ इति ण्यन्तप्रक्रिया ॥

**धातोः कर्मणः**—॥—**इषिकर्मण** इत्यादि । इच्छायामिति श्रुतत्वात्कर्मत्वं कर्तृत्वं च तदपेक्षमेव गृह्यत इति भावः ॥ **पठितुमिच्छतीति** । एकनिष्ठा पाठगोचरा वर्तमानेच्छेत्यर्थः ॥—**घिसनोरिति** । तृतीयव्यञ्जनस्येति पक्षे यकारस्य द्वित्वं, तृतीयस्यैकाच इति पक्षे तु सन इत्यर्थः ॥—**रुदविद**—॥ रुदसाहचर्याद् वेत्तेरेव ग्रहणम् । इह रुदविदमुषाणां ग्रहणं 'रलो व्युपधात्–' इति विकल्पे प्राप्ते ग्रहेः 'न क्त्वा सेट्' इति निषेधात्क्त्वाया अप्राप्ते स्वपिप्रच्छयोस्तु क्त्वः कित्त्वेऽपि सनः कित्त्वस्याप्राप्तौ वचनम् । रुदित्वा । विदित्वा । मुषित्वा । एतेषु गुणाभावः कित्त्वस्य फलम् । गृहीत्वा । सुप्त्वा ।

सन् क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति। **सनि ग्रहगुहोश्च** ।७।२।१२। ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात्। ग्रहिज्येति संप्रसारणम्। सनः षत्वस्यासिद्धत्वाद्भष्भावः। जिघृक्षति। जुघुक्षति। **किरश्च पञ्चभ्यः** ।७।२।७५। कृ गृ दृङ् धृङ् प्रच्छ् एभ्यः सन इट् स्यात्। पिपृच्छिषति। चिकरिषति। जिगरिषति। जिगलिषति। * अत्रेटो दीर्घो नेष्टः॥ दिदरिषते। दिधरिषते। कथमुदिधीर्षुरिति। औवादिकयोर्धृङ्धृञोरिति गृहाण। **इको झल्** ।१।२।९। इगन्ताज्झलादिः सन् कित्स्यात्। बुभूषति। दीङ्। दातुमिच्छति दिदीषते। एज्विषयत्वाभावान्मीनातिमिनोतीत्यात्वं न। अत एव सनि मीमेति सूत्रे माधातोः पृथङ्मीग्रहणं कृतम्। **हलन्ताच्च** ।१।२।१०। इक्समीपाद्धलः परो झलादिः सन् कित्स्यात्। गुहू। जुघुक्षति। बिभित्सति। इकः किम्। यियक्षते। झलिकम्। विवर्धिषते। हलग्रहणं जातिपरम्। तृन्हू। तितृक्षति। तितृंहिषति। **अज्झनगमां सनि** ।६।४।१६। अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि। सन्लिटोर्जेः। जिगीषति। विभाषा चेः। चिकीषति। चिचीषति। जिघांसति। **सनि च** ।२।४।४७। इणो गमिः स्यात्सनि न तु बोधने। जिगमिषति। बोधने प्रतीषिषति। इण्वदिकः। अधिजिगमिषति। कर्मणि तङ्। परस्मैपदेष्विग्युक्तेर्नेट्। झलादौ सनीति दीर्घः। जिगांस्यते। अधिजिगांस्यते। अजादेशग्रहणेत्युक्तेर्गच्छतेर्न दीर्घः। जिगंस्यते। संजिगंसते। **इङश्च** ।२।४।४८। इङो गमिः स्यात्सनि। अधिजिगांसते। **रलो व्युपधाद्धलादेः संश्च** ।१।२।२६। उश्च इश्च वी ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतिस्वाप्योः संप्रसारणम्। दिद्युतिषते। दिद्योतिषते। रुरुचिषते। रुरोचिषते। लिलिखिषति। लिलेखिषति। रलः किम्। दिदेविषति। व्युपधात्किम्। विवर्तिषते। हलादेः किम्। एषिषिषति। इह नित्यमपि द्वित्वं गुणेन बाध्यते। उपधाकार्यं हि द्वित्वात्प्रबलम्। ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात्। **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्** ।७।२।४९। इवन्तेभ्य ऋधादिभ्यश्च सन इड्वा स्यात्। इडभावे हलन्ताच्चेति कित्वम्। च्छ्वोरिति वस्य ऊठ्। यण् द्वित्वम्। दुद्यूषति।

---

पृष्ट्वा। एतेषु सम्प्रसारणमपि फलम्॥—**सनि ग्रहगुहोश्च**॥ ग्रहेरिव गुहेरपि उकारान्तत्वेन प्राप्ते निषेधोऽयम्॥—**सनः षत्वस्यासिद्धत्वाद्भष्भाव** इति। कत्वस्यासिद्धत्वाद्भष्भाव इत्येव सुवचम्। केचित्तु ढत्वे सति भष्भाव इत्यध्याहारेण योजयन्ति। तथा च जागृह स इति स्थिते। इणः परत्वेन सस्य षत्वं प्राप्तं तस्यासिद्धत्वाड्ढत्वे भष्भावः। ततश्च कत्वे कवर्गात्परस्य षत्वमिति विधिक्रमः। अन्ये तु षत्वे ढत्वे च कृते पश्चाद्भष्भावे कर्तव्ये सकारपरत्वाभावाद्भष्भावो न स्यादित्याशङ्कायां सनः षत्वस्यासिद्धत्वादिति ग्रन्थः प्रवृत्त इति कार्यासिद्धिपक्षावलम्बनेन व्याचक्षते॥—**जिघृक्षती**ति। गुहेर्जुघुक्षति। सूत्रे चकारात् 'श्रयुकः किति' इत्यत उक इत्यनुकृष्यते। उगन्तात्। बुभूषति। लुलूषति। श्रयतिस्तु नानुकृष्यते। तस्य 'सनीवन्तर्ध–' इति विकल्पविधानात्॥—**किरश्च पञ्चभ्यः**॥ पञ्चग्रहणमुत्तरार्थं स्पष्टप्रतिपत्तये इहैव कृतम्। एवं च प्रच्छधातोरनन्तरं गणपाठस्थं वृत्करणं त्यक्तुं शक्यम्। अत्रत्यपञ्चभ्य इत्यनेनैव वृत्करणं यत्तदपाणिनीयमिति व्याख्येयमित्याहुः। केचित्तु 'गृधाकर्मकिरादिसनाम्–' इति वार्तिके किरादिज्ञानाय वृत्करणमावश्यकमित्याहुः। अत्र 'इट्' इति 'वृतो वा' इति प्राप्ते भाष्यकारोक्तिरियम्॥—**औवादिकयो**रिति। तथाच 'अज्झनगमाम्–' इति वक्ष्यमाणेन दीर्घ इति भावः॥—**इको झल्**॥ 'रुदविद–' इत्यतः सन्ननुवर्तते, सनाक्षिप्तो धातुरिका विशेष्यते, विशेषणेन च तदन्तविधिरित्याह—**इगन्ता**दिति। इगन्तात् किम्। पिपासति। तिष्ठासति। झलिति किम्। शिशयिषते॥—**कित्स्या**दिति। 'असंयोगाल्लिट् कित्' इत्यतः किदनुवर्तत इति भावः॥—**एज्विषयत्वाभावा**दिति। कित्त्वेन गुणाप्राप्तेरित्यर्थः॥—**अत एवे**ति। अचेज्विषयादन्यत्राप्यात्त्वं भवेत्तदा मीग्रहणं तत्र न कुर्यान्माधातोः प्रग्रहणेऽविशेषादिति भावः॥—**हलन्ताच्च**॥ इगित्यनुवर्तनं तदवयवस्य हलो न सम्भवतीति समीपवाच्यत्रान्तशब्द इत्याशयेन व्याचष्टे—**इक्समीपा**दिति। सोऽन्त्याविशेषणस्यान्तशब्दस्य परनिपातः॥—**तितृक्षती**ति। कित्त्वे सति 'अनिदिताम्–' इति नलोपः॥—**अज्झनगमाम्**—॥ गमः सामान्येन ग्रहणे गम्लृ गतावित्यस्मात् सञ्जिगंसते इत्यत्रातिप्रसङ्गः स्यादतः सनि च इङश्चेति सूत्राभ्यां विहितस्येणिङोरादेशस्य 'इण्वदिक' इति इक आदेशस्य च ग्रहणमित्याशयेनाह—**अजादेशगमे**रिति। एतच्च सूत्रेऽज्ग्रहणाल्लभ्यते। तथा हि। इह सनीत्येव सूत्रं कर्तव्यं दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्य विशेषणादजन्ताङ्गस्य दीर्घः। चिचीषति। ततो हनिगम्योरित्यपरं कर्तव्यम्। एवं चाज्ग्रहणमतिरिच्यमानं प्रवृत्तिभेदेन गमेर्विशेषणार्थम्। अजन्तस्य दीर्घो भवति। अजादेशगमेश्चेति। झलादाविति किम्। जिगमिषति। 'गमेरिट् परस्मैपदेषु' इतीट्॥—**सनि च**॥ 'णौ गमिरबोधने' इत्यतोऽबोधन इत्यनुवर्तते॥—**प्रतीषिषती**ति। तक्रकौण्डिन्यन्यायस्यानित्यत्वान्मनूक्पस्याभ्यासस्येत्वम्। अनित्यत्वे लिङ्गं तु 'नित्य कौटिल्ये गतौ' इत्यत्र नित्यग्रहणमिति वक्ष्यते॥—**संजिगंसते** इति। 'समो गम्यृच्छिभ्याम्' इति तङ् 'पूर्ववत्सन' इति सन्नन्तादपि भवति॥—**रलो व्युपधा**—॥ 'न क्त्वा सेट्' इत्यतः सेडिति वर्तते। चकारेण क्त्वायाः संग्रहः। 'असंयोगात्–' इत्यतः किदिति 'नोपधात्' इत्यतो वेति चानुवर्तते

दिदेविषति । स्तौतिण्योरेवेति वक्ष्यमाणनियमान्न षः । सुस्यूषति । सिसेविषति । **आपूज्ञप्यृधामीत् ।७।४।५५।** एषामच ईत्स्यात्सादौ सनि । **अत्र लोपोऽभ्यासस्य ।७।४।५८।** सनि मीमेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् । आप्तुमिच्छति ईप्सति । अर्धितुमिच्छति । रपरत्वम् । चर्त्वम् । ईर्त्सति । आदधिषति । बिभ्रजिषति । बिभर्जिषति । बिभ्रक्षति । बिभर्क्षति । **दम्भ इच्च ।७।४।५६।** दम्भेरच इत्स्यादीच्च सादौ सनि । अभ्यासलोपः । हलन्ताच्चेत्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्त्वान्नलोपः । धिप्सति । धीप्सति । दिदम्भिषति । शिश्री-षति । शिश्रयिषति । उदोष्ठ्यपूर्वस्य । सुस्वूर्षति । सिस्वरिषति । युयूषति । यियविषति । ऊर्णुनूषति । ऊर्णुनुविषति । ऊर्णुनविषति । न च परत्वाद्गुणावादेशयोः सतोरभ्यासे उकारो न श्रूयेतेति वाच्यम् । द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा । न च सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यम् । कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते न त्वननुभवन्नपि । न चेह सन् द्वित्वमनुभवति । बुभूर्षति । बिभरिषति । ज्ञपिः पुगन्तो मित्संज्ञकः पकारान्तश्चौरादिकश्च । इडभावे इको झलिति कित्त्वान्न गुणः । अज्झनेति दीर्घः परत्वाण्णिलोपेन बाध्यते । आपृज्ञपीति ईत् । ज्ञीप्सति । जिज्ञपयिषति । अमितस्तु । जिज्ञापयिषति । जनसनेत्या-त्वम् । सिषासति । सिसनिषति । तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः । **तनोतेर्विभाषा ।६।४।१७।** अस्यो-पधाया दीर्घो वा स्याज्झलादौ सनि । तितांसति । तितंसति । तितनिषति ॥ * **आशङ्कायां सन्वक्तव्यः ॥** श्वा मुमू-र्षति । कूलं पिपतिषति । **सनि मीमाघुरभलभशकपतपदामच इस् ।७।४।५४।** एषामच इस् स्यात्सादौ सनि । अभ्यासलोपः । स्कोरिति सलोपः । पित्सति । दिदरिद्रिषति । दिदरिद्रासति । डुमिञ् मीञ् आभ्यां सन् । कृतदीर्घस्य मिनोतेरपि मीरूपत्वाविशेषादिस् । सः सीति तः । मित्सति । मित्सते । मा माने । मित्सति । माङ्मे-ङोः । मित्सते । दोदाणोः । दित्सति । देङ् । दित्सते । दाञ् । दित्सति । दित्सते । धेट् । धित्सति । धाञ् । धित्स-ति । धित्सते । रिप्सते । लिप्सते । शकॢ । शिक्षति । शक मर्षण इति दिवादिः । स्वरितेत् । शिक्षति । शिक्षते । पि-त्सते ॥ * **राधो हिंसायां सनीस् वाच्यः ॥** रित्सति । हिंसायां किम् । आरिरात्सति । **मुचोऽकर्मकस्य गुणो वा ।७।४।५७।** सादौ सनि । अभ्यासलोपः । मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् । मु-मुक्षति वत्सं कृष्णः । न वृद्भ्यश्चतुर्भ्यः । विवृत्सति । तङि तु । विवर्तिषते । सेऽसिचीति वेट् । निनर्तिषति । निनृत्स-ति । **इट् सनि वा ।७।२।४१।** वृङ्वृञ्भ्यामॄदन्ताच्च सन इड्वा स्यात् । तितरिषति । तितरीषति । तितीर्षति । विवरिषति । विवरीषति । वुवूर्षति । वृङ् । वुवूर्षते । विवरिषते । दुध्वूर्षति । **स्मिपूङ्रञ्ज्वशां सनि ।७।२।७४।**

---

तदाह—**क्त्वासनावित्यादि** । सेट्किम् । भित्त्वा । छित्त्वा । बुभुक्षते ॥—**आपृज्ञप्यृ—॥** 'सनि मीमा-' इत्यतः अच इत्यनुवर्तते 'स स्यार्धधातुके' इत्यतः सीति च तदाह—**अच ईत्स्यात्सादाविति** । सीत्यस्य सनो विशेषणात्सादाविति लाभः ॥—**ईप्सतीति** ॥ 'अजादेर्द्वितीयस्य' इति प्सशब्दस्य द्वित्वम् ॥—**बिभ्रज्जिषतीति** । इटि तदभावे च रमागम-विकल्पाच्चत्वारि रूपाणि ॥—**सुस्वूर्षतीति** । 'अज्झनगमाम्-' इति दीर्घे रपरत्वम् ॥—**यियविषतीति** । 'द्विर्वचनेऽचि' इत्यादेशनिषेधाद्द्वित्वे कृते अभ्यासस्योवर्णस्येत्त्वम् ॥—**ऊर्णुनूषतीति** । इडभावे 'अज्झनगमाम्-' इति दीर्घः । इट्पक्षे तु 'विभाषोर्णोः' इति वा ङित्त्वम् ॥—**न चेह सन्निति** । किं तु नुशब्द इत्यर्थः ॥—**कित्त्वान्न गुण इति** । णिचः स्थाने इत्यर्थः ॥—**श्वा मुमूर्षतीति** ॥ एकस्यात्वेषया मरणशङ्केति बोध्यम् । मरणशङ्काविषयो भवतीत्यन्ये । 'पूर्ववत्सनः' इत्यात्मने-पदमिह न शङ्क्यम् । शदेरित्यादिसूत्रद्वये सनो नेत्यनुवर्त्य व्याख्यभेदेन व्याख्येयमिति वक्ष्यमाणत्वात् ॥—**सनि मीमा—॥** सः सीत्यतः सीत्यनुवर्तते तस्य सनो विशेषणत्वात्सादौ सनीति लाभः ॥—**मीरूपाविशेषादिति** । ननु मिनोतेर्मीरूपस्य लाक्षणिकत्वात् मीग्रहणेन ग्रहणं न प्राप्नोति । नैष दोषः । यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदो-क्तयोरिति परिभाषोपस्थानं न तु यत्र प्रयोगाश्रयणं तत्रेति 'इको झल्' इति सूत्रे भाष्यकृतैवोक्तत्वात् । तस्यायमाशयः । मीरूपमात्रस्य प्रयोगोऽत्राश्रितः 'विभाषा दिक्समासे' इत्यत्र तु लक्षणाभिनिर्वृत्तस्य समासशब्दस्याश्रयणात् 'दिङ्नामान्यन्त-राले' इति प्रतिपदोक्त एव समास आश्रीयते इति । लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात्क्वचिदुपतिष्ठते क्वचिन्नोपतिष्ठते इति तु निष्कृष्टोऽर्थः ॥—**मित्सतीति** । 'हलन्ताच्च' इति कित्त्वान्नोपधागुणः ॥—**शिक्षतीति** । ननु निरनुबन्धपरिभा-षया शक मर्षण इत्यस्यैव ग्रहणमुचितमिति चेत् । अत्राहुः । इयं हि परिभाषा प्रत्ययग्रहणविषया । अत एव जृव्रश्च्यो-रित्यत्र जॄझृषोरुभयोर्ग्रहणमिति न्यासकारेणोक्तमतोऽत्रापि स्वादिदिवादिकयोर्ग्रहणं युक्तमेवेति ॥—**मुचोऽकर्मकस्य—॥** 'हलन्ताच्च' इति कित्त्वेन गुणाभावे प्राप्ते विधिरयम् ।—**विवृत्सतीति** । 'वृद्भ्यः स्यसनोः' इति विकल्पेन परस्मैपदम् ॥ —**इट् सनि वा ॥** चिकीर्षतीत्यादौ 'अज्झनगमाम्-' इति दीर्घे कृते नेदं प्रवर्तते । 'एकाच उपदेश-' इत्यतः उपदेश इत्यनु-वर्त्य उपदेशे ऋकारान्तादिति व्याख्यानात् । अत एवेदं विनैवोदाहरति—**दुध्वूर्षतीति** । ध्वृ कौटिल्ये । 'अज्झन-' इति दीर्घः । 'उदोष्ठ्यपूर्वस्य' इत्युत्वं रपरत्वं 'हलि च' इति दीर्घः ॥—**स्मिपूङ्—॥** पूङि ङकारानुबन्धग्रहणात् पूञः पुपूषतीत्ये-

स्मि पूङ् ऋ अञ्जू अश् एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति । इह रिस्शब्दस्य द्वित्वम् । इस् इति सनोऽवयवः कार्यभागिति कार्यिणो निमित्तत्वायोगाद्द्विर्वचनेऽचीति न प्रवर्तते । अञ्जिजिषति । अशिशिषते । उभौ साभ्यासस्य । प्राणिणिषति । उच्छेस्तुक् । चुत्वम् । पूर्वत्रासिद्धीयमद्विर्वचन इति चछाभ्यां सहितस्येटो द्वित्वम् । हलादिः शेषः । उचिच्छिषति । निमित्तापाये नैमित्तिकस्याप्यपाय इति त्वनित्यम् । च्छ्वोरिति सतुक्ग्रहणाज्ज्ञापकात् । प्रकृतिप्रत्यापत्तिवचनाद्वा । णौ च संश्चङोरिति सूत्राभ्यामिङोगाङ् श्वयतेः संप्रसारणं च वा । अधिजिगापयिषति । अध्यापिपयिषति । शिश्वाययिषति । शुशावयिषति । ह्वः संप्रसारणम् । जुहावयिषति । णौ द्वित्वात्प्रागच आदेशो नेत्युक्तत्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुक्षावयिषति । ओः पुयण्ज्यपरे । पिपावयिषति । बिभावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । पुयण्जि किम् । नुनावयिषति । अपरे किम् । बुभूषति । स्रवतीतीत्वं वा । सिस्रावयिषति । सुस्रावयिषतीत्यादि । अपर इत्येव । शुश्रूषते । ॥ स्तौतिण्योरेव षण्यभ्यासात् ।८।३।६१। अभ्यासेण परस्य स्तौतिण्यन्तयोरेव सस्य पः स्यात्षभूते सनि नान्यस्य । तुष्टूषति । द्युतिस्वाप्योरित्युत्वम् । सुष्वापयिषति । सिषाधयिषति । स्तौतिण्योः किम् । सिसिक्षति । उपसर्गात्सुनोत्यादिष्वभ्यासेन चेति पत्वम् । परिषिषिक्षति । पणि किम् । तिष्ठासति । सुपुप्सति । अभ्यासादित्युक्तेर्नेह निषेधः । इण् । प्रतीषिषति । इक् । अधीषिषति । ॥ सः स्विदिस्वदिसहीनां च ।८।३।६२। अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव न षः पणि परे । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति । स्थादिष्वभ्यासस्येति नियमान्नेह ॥ अभिसुसूषति ॥ शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिक. । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ ॥ शैषिकाच्छैषिकः सरूपो न, तेन शालीये भव इति वाक्यमेव । न तु छान्ताच्छः । सरूपः किम् । अहिच्छत्रे भव आहिच्छत्रः । आहिच्छत्रे भव आहिच्छत्रीयः । अण्णन्ताच्छः । तथा मत्वर्थात्सरूपः स न । धनवानस्यास्ति । इह मतुबन्तान्मतुप् न । विरूपस्तु स्यादेव । दण्डिमती शाला । सरूप इत्यनुपज्यते । अर्थद्वारा सादृश्यं तस्यार्थः । तेन इच्छासन्नन्तादिच्छासन्न । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते ॥ इति सन्नन्तप्रक्रिया ॥

## तिङन्ते यङन्तप्रक्रिया ।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** ।३।१।२२। पौनःपुन्यं भृशार्थश्च क्रियासमभिहारस्तस्मिन्द्योत्ये यङ् स्यात् । ॥ **गुणो यङ्लुकोः** ।७।४।८२। अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च । सनाद्यन्ता इति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति बोभूयते । बोभूयांचक्रे । अबोभूयिष्ट । धातो. किम् । आर्धधातुकत्वं यथा स्यात् । तेन भुवो वचिरित्यादि । एकाच· किम् । पुनःपुनर्जागर्ति । हलादेः किम् । भृशमीक्षते । भृशं रोचते शोभते इत्यत्र यङ्नेति भाष्यम् । पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते । * **सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः** । आद्यास्त्रयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । अनेकाच्त्वेना-

व । 'सनि ग्रह–' इतीण्निषेधात् ॥—**सिस्मयिषत** इति । स्मिङ् ईषद्धसने अस्यानिट्त्वादिडागमस्याप्राप्ति. । 'स्तौतिण्योरेव–' इति नियमान्न प ॥—**अरिरिषतीति** । अस्यानिट्त्वादिडागमस्याप्राप्ति ॥—**रिस्शब्दस्येति** । सन इटि गुणे च कृते अरिस इति स्थिते 'अजादेर्द्वितीयस्य' इति रिसशब्दस्य द्वित्वमित्यर्थ ॥—**अञ्जिजिपतीत्यादि** । अत्र व्यक्तिम्रक्षणादौ । अश् व्याप्तौ । अनयोरूदित्त्वाद्विकल्पे प्राप्ते नित्यमिट् । अश भोजने इति क्र्यादिस्तु नित्य सेडेव ॥—**सूत्राभ्यामिति** । एक द्वितीयेऽपरं तु पष्ठे तत्राद्येन गाङादेशोऽपरेण सम्प्रसारणम् । **ह्वः संप्रसारणम्** । इद च णिजन्तेषु व्याख्यातमिह तु स्मारितम् ॥—**जिजावयिषतीति** । जु गतौ सौत्रो धातु. 'जुचङ्क्रम्य–' इत्यत्रोक्त ॥—**शुश्रूषते** इति । 'ज्ञाश्रुस्मृदृशां सन' इत्यात्मनेपदम् ॥—**स्तौतिण्योरेव–** ॥ एव च सिषाधयिषतीति प्रयोगस्य साधुत्व न तु सिसाधयिषेत्यस्येति ज्ञेयम् ॥ —**उपसर्गात्त्विति** । मध्येऽपवादन्यायात् 'स्तौतिण्यो –' इति नियमेन 'आदेशप्रत्यययो.' इति षत्वमेव बाध्यते न तु 'स्थादिष्वभ्यासेन च–' इत्युत्तरेण विहितमिति भाव. ॥—**सुपुप्सतीति** । 'रुदविद–' इति सनः कित्वान्न गुणः ॥—**प्रतीषिषतीति** । इह षभूते सनीण् गताविति धातोः परस्य सस्य षत्वं भवत्येवेत्यर्थः ॥—**नियमान्नेहेति** । न चात्र नियमादेव निषेधे 'सुनोतेः स्यसनो.' इति सूत्रं सन्विषये निर्विषय स्यादिति वाच्यम् । अभिसुसूषतेरप्रत्यय. । अभिषुषूरित्यत्र षत्वनिषेधाय तस्यावश्यकत्वात् । एतच्च काशिकायां स्पष्टम् ॥—**शैषिकेति** । एतच्च श्लोकवार्तिकमिति केचित् । भाष्यमिति बहवः । शेषे भवः शैषिकः । अध्यात्मादित्वाट्ठञ् । मतुबर्थे भवो मतुबर्थीय. । गहादित्वाच्छः । मतुबर्थोऽस्यास्तीति मतुबर्थिकः 'अत इनिठनौ' इति ठन् ॥ इति सन्नन्तप्रक्रिया ॥

**धातोरेकाचो—**॥ क्रियासमभिहार इत्युक्ताद्धातोरेव स्यान्न तु प्रातिपदिकादिति पृच्छति—**धातोः किमिति** ॥ —**भुवो वचिरित्यादीति** । वावच्यते, वाव्यायत इत्यादिरूपसिद्धिः प्रयोजनमित्यर्थः । धातुग्रहणाभावे धिगित्यव्य-

षोपदेशत्वात्षत्वं न । मोमूत्र्यते । **यस्य हलः ।६।४।४९।** यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । आदेः परस्य । अतो लोपः । सोसूचांचक्रे । सोसूचिता । सोसूत्रिता । मोमूत्रिता । **दीर्घोऽकितः ।७।४।८३।** अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । अटाट्यते । **यङि च ।७।४।३०।** अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि । यकारपररेफस्य न द्वित्वनिषेधः । अरार्यते इति भाष्योदाहरणात् । अरारिता । अशाशिता । ऊर्णोनूयते । बेभिद्यते । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः । बेभिदिता । **नित्यं कौटिल्ये गतौ ।३।१।२३।** गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे । कुटिलं व्रजति वाव्रज्यते । **लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ।३।१।२४।** एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति लोलुप्यते । सासद्यते । **चरफलोश्च ।७।४।८७।** अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः । नुगित्यनेनानुस्वारो लक्ष्यते ॥ स च पदान्तवद्वाच्यः ॥ वा पदान्तस्येति यथा स्यात् । **उत्परस्यातः ।७।४।८८।** चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः । हलि चेति दीर्घः । चञ्चूर्यते । चंचूर्यते । पम्फुल्यते । पंफुल्यते । **जपजभदहदशभञ्जपशां च ।७।४।८६।** एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः । गर्हितं जपति जञ्जप्यते इत्यादि । **ग्रो यङि ।८।२।२०।** गिरते रेफस्य लत्वं स्याद्यङि । गर्हितं गिलति जेगिल्यते । घुमास्थेतीत्वम् । गुणः । देदीयते । पेपीयते । सेषीयते । विभाषा श्वेः । शोशूयते । शेश्वीयते । यङि च । सास्मर्यते । रीङ् ऋतः । चेक्रीयते । सुट् । संचेस्क्रीयते ।

---

यादपि स्यात्तस्य क्रियावाचित्वादिकाच्त्वाच्चेति तद्वारणार्थमपि धातुग्रहणमावश्यकमित्याहु ॥—**यस्य हलः** ॥—**संघातग्रहणमि**ति । तेन ईर्ष्यिता अहर्यीदित्यादौ यलोपो न । सङ्घातग्रहणेन चार्थवद्ग्रहणपरिभाषोपस्थित्या पुत्रकाम्येत्यादौ नातिप्रसङ्गः । वर्णग्रहणे तु उक्तपरिभाषाया अनुपस्थित्या स्यादेवात्र यलोप इति भावः । हलः किम् । लोलूयिता । पोपूयिता ॥—**दीर्घोऽकितः** ॥ अकितः किम् । यंयम्यते । रंरम्यते । ननु दीर्घश्रुत्योपस्थितेनाचा 'अत्र लोपोऽभ्यासस्य' इत्यतोऽनुवृत्तमभ्यासस्येत्येतद्विशिष्येताम् । ततश्चाजन्ताभ्यासस्य दीर्घो भवतीत्यर्थात्पापच्यत इत्यादावेव दीर्घो भवेन्न तु यंयम्यते जङ्घनीतीत्यादौ । तत्र हि परत्वान्नुकि कृतेऽभ्यासस्याजन्तत्वाभावाद्दीर्घस्य प्रसक्तिरेव नास्तीति किमनेनाकित इत्यनेन । न चाभ्यासावयवस्याचो दीर्घ इति वैयधिकरण्यान्वयं स्वीकृतेऽकिद्ग्रहणं प्रयोजनवदिति वाच्यम् । संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् । येन नाप्राप्तिन्यायेन नुको दीर्घापवादत्वस्वीकाराच्च । तस्मादकित इति व्यर्थमिति चेद् । अत्राहुः । डोढौक्यते इत्यत्राभ्यासह्रस्वं बाधित्वा परत्वात् 'दीर्घोऽकितः' इति दीर्घे कृते डोढौक्यत इति स्यात् । तस्माद् अभ्यासविकारेषु उत्सर्गविधीन् बाधका न बाधन्त इति ज्ञापनायाकित इति ग्रहणं कर्तव्यमिति । तथा चोक्तज्ञापकनिर्वाहाय 'दीर्घोऽकितः' इत्यत्राभ्यासस्याच इति वैयधिकरण्यपक्षस्याश्रयणात् यंयम्यत इत्यादौ दीर्घात्प्रागेव नुकि कृतेऽपि दीर्घः स्यात्, तद्वारणार्थमकित इत्यावश्यकमिति दिक् ॥—**अटाट्यत** इति । इह ट्यशब्दस्य द्वित्वम् ॥—**यङि च** ॥ इह 'गुणोऽर्तिसंयोगाद्योः' इत्येतत्सर्वमप्यनुवर्तते ॥—**यकारपरस्ये**ति । यदि भाष्योदाहरणं सामान्यापेक्षं ज्ञापकं स्यात्तदाऽर्थमाख्यत् आरर्यदित्यादि सिध्यति ॥—**नित्यं कौटिल्ये**—॥ नित्यशब्दोऽवधारणार्थक इत्याह—**कौटिल्ये एवे**ति । तक्रकौण्डिन्यन्यायेनैवेष्टे सिद्धे नित्यग्रहणं तस्य न्यायस्यानित्यत्वज्ञापनार्थम् । तेन 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तेनाबाधनात्पूजार्थेभ्यो भूते क्तः सिध्यति । ततश्च 'क्तस्य च वर्तमाने' इति षष्ठी न प्रवर्तत इति 'पूजितो यः सुरासुरैः' इति तृतीया साध्वेव ॥—**इत्यादी**ति । जञ्जभ्यते । दंदह्यते । दंदश्यते । बंभज्यते । पस धातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति स्पश बाधनस्पर्शनयोरित्यत्र माधवः । पंपस्यते । काशिकायां तु तालव्यान्तः क्वचिद्दृश्यते । एवं जञ्जपीति । जञ्जभीति । दन्दहीनीत्यादि यङ्लुकि उदाहर्तव्यम् ॥—**ग्रो यङि** ॥ 'कृपो रो लः' इत्यतो रो ल इति वर्तते तदाह—**रेफस्य लत्वमि**ति ॥—**चेक्रीयते** इति । परत्वाद्रीङि कृते द्विर्वचनम् ॥—**संचेस्क्रीयते** इति । रीङि द्वित्वे च सुट् । न च संकृ इत्यस्यामवस्थायां द्वित्वात्परत्वात्सुटि कृते संयोगादित्वेन रीङ्प्रवृत्तेः प्राक् गुणः स्यादिति वाच्यम् । अड्भ्यासव्यवायेऽपीत्यस्यारम्भे अडभ्यासयोः कृतयोरेव सुट् न तु ततः प्रागिति सिद्धान्तात् । एतेन सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुण इति केषाञ्चित्समाधानं परास्तम् । अभ्यासात्परस्य सुटि कृते साभ्यासस्याङ्गस्य संयोगादित्वमृदन्तत्वं च नास्तीति गुणप्राप्तेरभावात् । ननु 'अड्भ्यासव्यवायेऽपि सुट् कात्पूर्वः' इति वार्तिकप्रत्याख्यानाय 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्षं स्वीकृत्य भाष्यकृता संचस्करतुरित्यादावन्तरङ्गत्वात्सुटि समुट्कस्यैव द्वित्वाभ्युपगमात् संचेस्क्रीयते इति न सिध्येत् । तत्र हि सुटि कृते रीङं बाधित्वा परत्वाद् 'यङि च' इति गुणे संचस्कर्यत इत्यनिष्टरूपप्रसङ्गात् । यदि तु इष्टानुरोधेन पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति मताश्रयणेन रीङादेशं द्वित्वं च कृत्वा पश्चात्सुटि इष्टं रूपं सिध्यतीत्युच्यते, तर्हि 'अड्भ्यासव्यवायेऽपि' इति वचनं स्वीकर्तव्यमेव स्यादिति चेद् । अत्राहुः । अड्भ्यासेत्यादिवार्तिकं विनापि संचस्करतुरित्यादिरूपसिद्धये भाष्यकृता 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्ष आश्रितः । संचेस्क्रीयते इत्यादिसिद्धिस्तु

**सिचो यङि** ।८।३।११२। सिचः सस्य षो न स्याद्यङि । सेसिच्यते । **न कवतेर्यङि** ।७।४।६३। कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । कौतिकुवत्योस्तु चोकूयते । **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्** ।७।४।८४। एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । नलोपः । वनीवच्यते । सनीस्रस्यते इत्यादि । **नुगतोऽनुनासिकान्तस्य** ।७।४।८५। अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् । नुकानुस्वारो लक्ष्यत इत्युक्तम् । यंयम्यते । यंयम्यते । तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न । भाम क्रोधे । बाभाम्यते । ये विभाषा । जाजायते । जञ्जन्यते ॥ * **हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः** । जेघ्नीयते । हिंसायां किम् । जङ्घन्यते । **रीगृदुपधस्य च** ।७।४।९०। ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः । वरीवृत्यते । क्षुभ्नादित्वान्न णः । नरीनृत्यते । जरीगृह्यते । उभयत्र लत्वम् । चलीक्लृप्यते ॥ * **रीगृत्वत इति वक्तव्यम्** । वरीवृश्च्यते । परीपृच्छ्यते । **स्वपिस्यमिव्येञां यङि** ।६।१।१९। संप्रसारणं स्याद्यङि । सोषुप्यते । सेसिम्यते । वेवीयते । **न वशः** ।६।१।२०। वावश्यते । **चायः की** ।६।१।२१। चेकीयते । **ई घ्राध्मोः** ।७।४।३१। जेघ्रीयते । देध्मीयते । **अयङ् यि क्ङिति** ।७।४।२२। शीङोऽयङादेशः स्यादादौ क्ङिति परे । शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते । तोत्रौक्यते ॥ इति यङन्तप्रक्रिया ॥

---

## तिङन्ते यङ्लुगन्तप्रक्रिया ।

**यङोऽचि च** ।२।४।७४। यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनापि बहुलं लुक् स्यात् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । शेषात्कर्तरीति

---

वार्तिकायत्तैवेति ॥—**सिचो यङि** ॥ अभ्याससकारस्य 'उपसर्गात्सुनोति–' इति ततः परस्य तु 'स्थादिष्वभ्यासेन च–' इति षत्वे प्राप्ते निषेधोऽयम् । यङि किम् । अभिषिषिक्षति ॥—**न कवतेर्यङि** ॥ इह कोरित्येव वाच्ये कवतेरिति शपा निर्देशात्कुङ् शब्द इति भ्वादिरेव गृह्यते न तु कु शब्द इति अदादिः कूङ् शब्द इति तुदादिश्चेत्याशयेनाह—**कौतिकुवत्योस्त्विति** । ननु कोरित्युक्तेऽपि कूङः प्रसङ्गो नास्ति दीर्घान्तत्वाल्लुग्विकरणपरिभाषया च कौतेरपि प्रसङ्गो नास्तीति चेद् । अत्राहुः । कोरित्युक्ते तु निरनुबन्धपरिभाषाया अपि जागरूकत्वादुभयोर्ग्रहणं स्यादिति कौतिव्यावृत्त्यर्थं शपा निर्देशः कर्तव्यः । कृते च तस्मिन्कुवतिमपि व्यावर्तयतीत्यत्र तात्पर्यमिति कुङ इत्येवात्र सुवचम् ॥—**इत्यादीति** । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते । एवं वनीवञ्चीति सनीस्रसीति । दनीध्वसीतीत्यादि यङ्लुक्युदाहर्तव्यम् ॥—**घ्नीभाव** इति ॥ घ्नीभावे कृतेऽपि 'अभ्यासाच्च' इति कुत्वेन जेघ्नीयत इति सिध्यति, तथापि प्रक्रियालाघवाय घ्नी इत्युक्तमिति मनोरमा । अन्ये तु 'सेहिः' 'मेनिः' इति इकारोच्चारणसामर्थ्याद्यथा 'एरु' इत्युत्वं न भवति तथा घ्नीभावे हि कृते 'अभ्यासाच्च' इति कुत्वं न स्यादित्याशयेन घ्नीभावः कृत इत्याहुः । अत्र च द्विर्यादेशेनैव घ्नीभावेन द्वित्वं न बाध्यते पुनः प्रसङ्गविज्ञानादिति केचित् । वस्तुतस्तु यङन्तावयवस्य द्वितीयाजवधिकस्य द्वित्वं घ्नीभावस्तु प्रकृतिमात्रस्येति विषयभेदाद्द्वित्वं निर्बाधमेव ॥—**रीगृदुपधस्य च** ॥ ऋदिति किम् । चेकीर्त्यते । णिजभावपक्षे एकाच्त्वाद्यङ् ॥—**स्वपिस्यमि–** ॥ यङि किम् । स्वप्नक् ॥—**सेसिम्यते** इति । स्यमु शब्दे दन्त्याजन्तसादित्वाभावेनाषोपदेशत्वान्न षः ॥—**वेवीयते** इति । 'हलः' इति 'अकृत्सार्व–' इति वा दीर्घः ॥—**चायः की** ॥ यङि परे चायः की स्यात् । दीर्घोच्चारणं यङ्लुगर्थम् । अत एव 'न लुमता–' इति निषेधोऽपि न प्रवर्तत इति यङ्लुक्यपि चायः की स्यादेव । चेकीतः ॥—**ई घ्राध्मोः** ॥ दीर्घोच्चारणं प्राग्वत् । जेघ्रीतः अस्यावावित्याद्यर्थं दीर्घग्रहणमिति तु सुवचम् ॥—**शाशय्यते** इति ॥ परत्वादन्तरङ्गत्वाच्चायङादेशे कृते द्वित्वम् ॥ इति यङन्तप्रक्रिया ॥

**यङोऽचि च** ॥ यङा साहचर्यादचीति प्रत्ययो गृह्यते न तु प्रत्याहारः । 'ण्यक्षत्रियार्ष–' इत्यतोऽत्र लुगनुवर्तते । तदाह—**अच्प्रत्यये लुक् स्यादिति** । चकारेण 'बहुलं छन्दसि' इत्यतो बहुलमित्यनुकृष्यत इत्याह—**बहुलं लुक् स्यादिति** । केचित्तु छन्दसीत्यनुकर्षन्ति तेषामपि क्वचिद्भाषायां यङ्लुग्भवत्येव । भूसुवोरिति गुणनिषेधे सिद्धे बोभूत्विति छन्दसि निपातनाज्ज्ञापकात् । एतच्च मूले एव स्फुटीभविष्यति ॥—**अनैमित्तिकोऽयमिति** । अच्प्रत्यये विधीयमानो यङ्लुक् तु तन्निमित्त एव । तेन लोलुवः पोपुव इत्यादौ 'न धातुलोपः–' इति निषेधः सिध्यति ॥—**यङन्तत्वादिति** । 'सन्यङोः' इति षष्ठी न तु सप्तमी । अन्यथा यङो लुका लुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेर्द्वित्वं न स्यादिति भावः । न चाङ्गाधिकारविहितकार्यस्यैव 'न लुमता–' इति निषेधाद्द्वित्वमत्र स्यादेवेति सप्तमीपक्षोऽपि निर्दुष्ट इति वाच्यम् । 'न लुमता–' इत्यत्राङ्गाधिकारो न गृह्यते किं तु आक्षिप्तमनङ्गं वा प्रत्यये परतः पूर्वस्य विधीयमानं सर्वमिति सिद्धान्तात् । अन्यथा राजपुरुष इत्यादौ नलोपो न स्यात्, त्वदुक्तरीत्या प्रत्ययलक्षणप्रवृत्तौ भत्वेन पदत्वबाधात् । यद्यपि 'एकाचः–' इति विधीय-

परस्मैपदम् । अनुदात्त ङित इति तु न । ङित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः । यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत् । अत एव सुदृषत्प्रासाद इत्यत्रात्वसन्तस्येति दीर्घो न । येऽपि स्पर्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न । अनुदात्तङित इत्यनुबन्धनिर्देशात् । तत्र शितपा शपेति निषेधात् । अत एव श्यन्नादयो न । गणेन निर्देशात् । किंतु शबेव । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् । **यङो वा** ।७।३।९४। यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यात् । भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न । बोभूतु तेतिक्ते इति छन्दसि निपातनात् । अत एव यङ्लुग्भाषायामपि सिद्धः । न च यङ्लुकि अप्राप्त एव गुणाभावो निपात्यतामिति वाच्यम् । प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणात् । द्विःप्रयोगो द्विर्वचनं षाष्ठमिति सिद्धान्तात् । बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभवांचकार । बोभविता । अबोभवीत् । अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयास्ताम् । गातिस्थेति सिचो लुक् । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् । अबोभोत् । अबोभूताम् । अभ्यस्ताश्रयो जुस् । नित्यत्वाद्वुक् । अबोभूवुः । अबोभविष्यदित्यादि । पास्पर्धीति । पास्पर्धि । पास्पर्धः । पास्पर्धति । पास्पर्त्सि । हुझल्भ्यो हेर्धिः । पास्पर्धि । लङ् । अपास्पर्त् । अपास्पर्द् । सिपि दश्चेति रुत्वपक्षे रो रि । अपास्पाः । जागाद्धि । जागाधीति । अघात्सि । अजाघात् । सिपि रुत्वपक्षे अजाघाः । नाथृ । नानात्ति । नानात्तः । दध । दादद्धि । दादद्धः । दाधत्सि । अदाधत् । अदादद्धाम् । अदादधुः । अदाधः ।

---

मान द्वित्वं 'शितपा शपा–' इत्यादिना निषिध्यते तथापि तत्स्यादेव । 'गुणो यङ्लुकोः', 'रुग्रिकौ च लुकि' इत्याद्यभ्यासकार्यविधिभिर्द्वित्वानिषेधस्य ज्ञापनात् ॥—**प्रत्ययाप्रत्ययेति**। प्रत्यये ङित्त्व दृश्यते 'ऋतेरीयङ्' इत्यादिषु, अप्रत्ययेऽपि दृश्यते चित्रङादिषु । एवं च यङो लुकि प्रत्ययलक्षणेन यङाश्रितङित्त्वप्रयुक्तकार्यमात्मनेपदमत्र न शङ्क्यमिति भावः । ङित इत्यनुबन्धनिर्देशादिति परिहारस्त्वत्र नोक्तः । शीङादीनामिव भू इत्यादिधातूनामनुबन्धेनानिर्दिष्टत्वात् । यङो ङकारस्य प्रत्ययानुबन्धत्वेन समुदायाननुबन्धत्वात् । यङन्तोऽपि धातुरनुबन्धेनानिर्दिष्ट इति बोध्यम् ॥—**सुदृषदिति**। शोभना दृषदोऽस्मिन्निति बहुव्रीहौ दृषच्छब्दो जसन्तः ॥—**दीर्घो नेति**। असिति प्रत्ययोऽप्रत्ययश्चास्तीति । प्रत्ययस्यासाधारणरूपानाश्रयणात्प्रत्ययलक्षणेनासन्तत्वाभावादिति भावः ॥—**तेभ्योऽपीति**। ये त्वनुदात्तेतः प्रत्ययलक्षण विनैव ङितश्च तेभ्योऽपीत्यर्थः ॥—**अदादौ पाठादिति**। तथा च 'अदिप्रभृतिभ्यः शपः' इत्यनेन यङ्लुगन्तात्परस्य शपो लुगित्यर्थः ॥—**यङो वा**॥ 'नाभ्यस्तस्याचि–' इति सूत्रात्पिति सार्वधातुक इति 'उतो वृद्धिः–' इत्यतो हलीति चानुवर्तते 'ब्रुव ईट्' इत्यत ईडिति च । तदेतदाह—**यङन्तादित्यादि**। यङो लुक्यपि प्रत्ययलक्षणेनात्र यङन्तत्वम् । एतेन यङन्ताद्धलादिपित्सार्वधातुकं न संभवतीति यङ्लुगन्त लक्ष्यत इति व्याख्यान परास्तम् । उक्तरीत्या यङन्तत्वानपायात् । किं च यङन्ताद्धलादिपिन्न संभवतीति यङ्शब्देन यङ्लुगन्ते लक्षितेऽपि 'सन्यङो.' इति द्वित्वस्य यङन्ते चरितार्थतया यङ्लुगन्तलक्षणाया बीजाभावाद्यङ्लुकि द्वित्वाभावप्रसङ्गादिति दिक् ॥—**छन्दसि निपातनादिति**। गुणनिषेधे सिद्धे निपातनमिद छन्दस्येव गुणनिषेधो नान्यत्रेति नियमार्थमित्यर्थः ॥—**बोभूत्विति**। समुदायस्यातिरिक्तत्वाद् 'भूसुवोः–' इति गुणनिषेधो न प्राप्नोतीति निपातनमिद न नियमार्थमित्याशङ्कायामाह—**न चेति** ॥—**द्विःप्रयोग** इति । तथा च प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमित्येतन्न्यायसिद्धं नापूर्वं वचनमिति भावः ॥—**बोभुवतीति**। अदभ्यस्तादित्यत् ॥—**अबोभूवीदिति**। केचिदिह 'भुवो वुक्–' इति सूत्रे 'ओः सुपि' इत्यत ओरित्यनुवर्तते । तथा च उवर्णान्तस्य भुवो वुगित्यर्थाद् गुणे कृते वुकः प्राप्तिर्नास्तीत्यनित्यो वुक् । स च पराभ्या गुणवृद्धिभ्या बाध्यते । तेन बोभवीदिति रूपमाहुः । तच्चिन्त्यम् । भुवो वुको नित्यत्वादिति भाष्यग्रन्थविरोधात् । तस्माद्वुको नित्यत्वमाश्रित्य 'इन्धिभवतिभ्यां च' इति सूत्र प्रत्याख्यातवतो भाष्यकृत ओरित्यनुवर्तनमसमतमेव । आत इति नियमाज्जुसभावमाशङ्क्याह—**अभ्यस्ताश्रय** इति । अय भावः । 'सिजभ्यस्त–' इति सूत्रेण सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तस्यैवाय नियमो न त्वभ्यस्ताश्रयस्य जुस इति ॥ 'जुसि च' इति गुणमाशङ्क्याह—**नित्यत्वाद् वुगिति** ॥—**अबोभुवुरिति**। न चात्र परत्वात् 'अदभ्यस्तात्' इति अदादेशः स्यादिति वाच्यम् । अभ्यस्ताश्रयजुसोऽदादेशापवादत्वात् ।—**पास्पर्धीतीति**। स्पर्ध सङ्घर्षे । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । 'यङो वा' इति ईड्विकल्पः । इडभावपक्षे 'झषस्तथोः–' इति धत्वं, 'झरो झरि सवर्णे' इति वा धलोपः । लिटि पास्पर्धाचकार । लुटि पास्पर्धिता । लृटि पास्पर्धिष्यति । लोटि पास्पर्धीतु पास्पर्द्धु पास्पर्धात् । पास्पर्धाम् । पास्पर्धतु । पास्पर्धीति । हेर्धित्वे वा धिलोपः । लङि । इडागमपक्षे अपास्पर्धीत् ॥—**रुत्वपक्षे** इति । पक्षान्तरे तु अपास्पर्त् अपास्पर्द् । लिङि । पास्पर्ध्यात् । पास्पर्ध्याताम् । पास्पर्ध्यास्ताम् । लुङि । 'अस्तिसिचोऽपृक्ते' इति नित्यमीट् । इट ईटीति सलोपः । अपास्पर्धीत् । अपास्पर्धिष्टाम् । अपास्पर्धिषुः । लृङि । अपास्पर्धिष्यत् ॥—**जागाद्धीति**। गाधृ प्रतिष्ठादौ । ईट्पक्षे तु जागाधीति । जाघात्सीति । एकाच इति भष्भावः । धस्य चर्त्वम् । लोटि जागाधीतु जागाद्धु जागाद्धा जागाधतु । लङि । अजागाधीत् । अजाघात् । अजागाद्धाम् । अजागाधुः । लुङि । अजागाधीत् । अजागाधिष्टाम् । **नाथृ नाधृ** याच्ञादौ ॥—**नानात्तीति**। ईट्पक्षे नानाथीति । **दध** धारणे । ईट्पक्षे दाद-

अदाधत् । लुङि । अदादाधीत् । अदादधीत् । चोस्कुन्दीति । चोस्कुन्ति । अचोस्कुन् । अचोस्कुन्ताम् । अचोस्कुन्दुः । मोमुदीति । मोमोत्ति । मोमोदांचकार । मोमोदिता । अमोमुदीत् । अमोमोत् । अमोमुत्ताम् । अमोमुदुः । अमोमुदीः । अमोमोः । अमोमोत् । लुङि गुणः । अमोमोदीत् । चोकूर्ति । चोकूर्दीति । लङ् तिप् । अचोकूर्त् । अचोकूर्दीत् । सिप्पक्षे । अचोकूः । अचोखूः । अजोगूः । वनीवञ्चीति । वनीवङ्क्ति । वनीवक्तः । वनीवचति । अवनीवञ्चीत् । अवनीवन् । जङ्गमीति । जङ्गन्ति । अनुदात्तोपदेशेत्यनुनासिकलोपः । जङ्गतः । जङ्ग्मति । म्वोश्च । जङ्गन्मि । जङ्गन्वः । एकाज्ग्रहणेनोक्तत्वाच्चेण्णिषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वाच्च हेर्लुक् । जङ्गहि ॥ मो नो धातोः ॥ अजङ्गन् । अनुबन्धनिर्देशाच्च च्लेरङ् । ह्म्यन्तेति न वृद्धिः । अजङ्गमीत् । अजङ्गमिष्टाम् । हन्तेर्यङ्लुक् । अभ्यासाच्चेति कुत्वं यद्यपि हो हन्तेरित्यतो हन्तेरित्यनुवर्त्य विहितं, तथापि यङ्लुकि भवत्येवेति न्यासकारः । श्तिपा शपेति निषेधस्त्वनित्यः । गुणो यङ्लुकोरिति सामान्यापेक्षज्ञापकादिति भावः । जङ्घनीति । जङ्घन्ति । जङ्घतः । जङ्घ्नति । जङ्घनिता । श्तिपा निर्देशाज्जादेशो न । जङ्घहि । अजङ्घनीत् । अजङ्घन् । जङ्घन्यात् । आशिषि तु वध्यात् । अवधीत् । अवधिष्टामित्यादि । वधादेशस्य द्वित्वं तु न भवति । स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । तद्धि समानाधिकरणं धातोर्विशेषणम् । बहुव्रीहिबलात् । आङ्पूर्वात्तु आङो यमहन इत्यात्मनेपदम् । आजङ्घते इत्यादि । उत्परस्येति तपरत्वान्न गुणः । हलि चेति दीर्घस्तु स्यादेव । तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात् । चञ्चुरीति । चञ्चूर्ति । चञ्चूर्तः । चञ्चुरति । अचञ्चुरीत् । अचञ्चूः । चङ्खनीति । चङ्खन्ति । जनसनेत्यात्वम् । चङ्खातः । गमहनेत्युपधालोपः । चङ्ख्नति । चङ्खाहि । चङ्खनानि । अचङ्खनीत् । अचङ्खन् । अचङ्खाताम् । अचङ्ख्नुः । ये विभाषा । चङ्खायात् । चङ्खन्यात् । अचङ्खनीत् । अचङ्खानीत् । उतो वृद्धिरित्यत्र नाभ्यस्तस्येत्यनुवृत्तेरुतो वृद्धिर्न । योयोति । योयवीति । अयोयवीत् । अयोयोत् । योयुयात् । आशिषि दीर्घः । योयूयात् । अयोयावीत् । नोनवीति । नोनोति । जाहेति । जाहाति । ई हल्यघोः । जाहीतः । इह जहातेश्च आच ह्रौ लोपोधि घुमास्था एर्लिङीत्येते पञ्चापि

---

धीति । लुङि 'अतो हलादेः–' इति वा वृद्धिः ॥—**चोस्कुन्दीती**ति । स्कुदि आप्रवणे । इदित इति नुम् । ईडभावे 'झरो झरि सवर्णे' इति वा लोपः । लङि । ईट्पक्षे अचोस्कुन्दीत् । लुङि तु 'अस्तिसिचः–' इति नित्यमीट् । अचोस्कुन्दीत् । अचोस्कुन्दिष्टाम् ॥—**मोमुदीती**ति । मुद हर्षे । 'नाभ्यस्तस्याचि–' इति लघूपधगुणनिषेधः ॥—**मोमोदिते**ति । न चात्र 'न धातुलोपः–' इति गुणनिषेधः शङ्क्यः । बहुलग्रहणेन प्राप्तस्य यङ्लुकोऽनैमित्तिकत्वात् ॥—**लुङि गुण** इति । सिज्निमित्तकोऽयं गुणस्तेन 'नाभ्यस्तस्याचि–' इति निषेधो न शङ्कनीय इति भावः ॥—**चोकूर्ती**ति । कुर्द खुर्द गुर्द गुद क्रीडायाम् । लङि तिपि । ईट्पक्षे अचोकूर्दीत् । अजोगूर्दीत् ॥—**पक्षे अचोकूरि**ति । 'दश्च' इति रुत्वपक्षे इत्यर्थः ॥—**वनीवञ्चीती**ति । वञ्चु गतौ । 'नित्यं कौटिल्ये गतौ' इति यङ् । 'नीग्वञ्चु–' इत्यभ्यासस्य नीगागमः । यङो लुका लुप्तत्वात् न तदाश्रितो नलोपः ॥—**वनीवक्त** इति । तसो ङित्वादिह स्यादेव 'अनिदिताम्–' इति नलोपः । लोटि वनीवञ्चीतु । वनीवक्तु । वनीवक्तात् । वनीवक्ताम् । वनीवचतु । वनीवग्धि । वनीवञ्चानि । जङ्गमीति । 'नुगतोऽनुनासिकान्तस्य' इति नुक् ॥—**जंगमती**ति । 'गमहन–' इत्युपधालोपः ॥—**अजंगन्नि**ति । ईट्पक्षे त्वजङ्गमीत् । अजङ्गताम् । अजङ्ग्मुः । अजङ्गमीः । अजङ्गतम् । अजङ्गत । अजङ्गमम् । अजगन्व । अजङ्गन्म ॥—**सामान्यापेक्षे**ति । अयं भावः । एकाच इत्यत्रैकाज्ग्रहणाद्यङ्लुकि द्विर्वचनं न कुत्रापि प्राप्नोति । तथा च 'गुणो यङ्लुकोः' इत्यभ्यासस्य विधीयमानो गुणो द्विर्वचनं विना निवेशमलभमानः सन् श्तिपा शपेति सर्वेषामपि निषेधानां क्वचिद्यङ्लुक्यप्रवृत्तिं ज्ञापयतीति । तथा च प्रयुज्यते । 'राजा वृत्रं जङ्घनत्' इत्यादि ॥—**द्वित्वं तु न भवती**ति । वध्यात् अवधीदित्यत्र कृतद्विर्वचनस्य 'हनो वध लिङि, लुङि च' इति वधादेशात्पुनर्द्वित्वं न भवतीत्यर्थः । तत्र हेतुमाह—**स्थानिवत्त्वेने**ति ॥—**आङ्पूर्वादि**ति । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः ॥—**चञ्चूर्ती**ति । चरतिर्गतौ भक्षणे च । 'चरफलोश्च' इत्यभ्यासस्य नुक् । 'उत्परस्यातः' इत्युत्वम् । 'हलि च' इति दीर्घः । अचञ्चरित्यत्र तु पदान्तविषयत्वात् 'र्वोरुपधायाः–' इति दीर्घः ॥—**चङ्खनी**ति । खनु अवदारणे ॥—**चङ्खान** इति । यत्तु केचिद्धातुग्रहणेन कृतं कार्यं यङ्लुकि वेति 'जनसन–' इत्यात्वाभावे 'अनुनासिकस्य क्विझलोः–' इति दीर्घोऽपि न भवति क्विप्साहचर्याद्धि झलादिः कृदेव तत्र गृह्यते न तु तिङित्यभ्युपेत्य चङ्खन्त इति रूपमाहुस्तदयुक्तम् । धातुग्रहणेन कृतस्य यङ्लुक्यप्रवृत्तौ मानाभावात् । सत्यपि प्रमाणे आत्वं वेति विकल्पोक्त्या चङ्खान् इति रूपं केन वार्यताम् । यच्चोक्तम् 'अनुनासिकस्य–' इति सूत्रे क्विप्साहचर्याज्झलादिरपि कृदेव गृह्यत इति तदप्ययुक्तमेव । यदि हि कृदेव क्विप्स्यात्तदा साहचर्योक्तिः सङ्गच्छेत किं तु कृद्भिन्नोऽप्यस्त्येवाचारक्विप् । अत एव राजानति चर्माणति इत्यादौ माधवादिभिः क्विनिमित्तो दीर्घ उक्तः ॥—**चङ्खाही**ति । हेरपित्वेन ङित्वात् 'जनसन–' इत्यात्वम् ॥—**अचङ्खानीदि**ति । 'अतो हलादेः–' इति वा वृद्धिः ॥—**जाहेतीत्यादि** । हाङ्हाकोस्तुल्यानि रूपाणि । ङित्वप्रयुक्तस्यात्मनेपदस्य यङ्लुक्यप्रवृत्तेः । 'भृञामित्' इति हाङ इत्त्वस्य श्लुनिमित्ताभ्यासस्यैव विहितत्वाच्च ।

न भवन्ति । श्तिपा निर्देशात् । जाहति । जाहासि । जाहेषि । जाहीथः । जाहीथ । जाहीहि । अजाहेत् । अजाहात् । अजाहीताम् । अजाहुः । जाहीयात् । आशिषि जाहायात् । अजाहासीत् । अजाहासिष्टाम् । अजाहिष्यत् । लुका लुप्ते प्रत्ययलक्षणाभावात्स्वपिस्यमीत्युत्वं न । रुदादिभ्य इति गणनिर्दिष्टत्वादिण्न । सास्वपीति । सास्वप्सि । सास्वप्तः । सास्वपति । असास्वपीत् ॥ असास्वप् । सास्वप्यात् । आशिषि तु वचिस्वपीत्युत्वम् । सासुप्यात् । असास्वापीत् । असास्वपीत् । रुग्रिकौ च लुकि ।७।४।९१। ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि । ऋतश्च ।७।४।९२। ऋदन्ताद्धातोरपि तथा । वर्वृतीति । वरिवृतीति । वरीवृतीति । वर्वर्ति । वरिवर्ति । वरीवर्ति । वर्वृत्तः ३ । वर्वृतति ३ । वर्वर्तामास ३ । वर्वर्तिता ३ । गणनिर्दिष्टत्वान्न वृद्भ्यश्चतुर्भ्य इति न । वर्वर्तिष्यति ३ । अवर्वृतीत् ३ । अवर्वर्त् ३ । सिपि दश्चेति रुत्वपक्षे रो रि । अवर्वाः ३ । गणनिर्दिष्टत्वादङ् न । अवर्वर्तीत् ३ । चर्करीति ३ । चर्कर्ति । चरिकर्ति । चरीकर्ति । चर्कृतः ३ । चर्कति ३ । चर्करांचकार ३ । चर्करिता ३ । अचर्करीत् ३ । अचर्कः ३ । चर्कृयात् ३ । आशिषि रिङ् । चर्क्रियात् ३ । अचर्कारीत् ३ । ऋतश्चेति तपरत्वान्नेह । कॄ विक्षेपे । चाकर्ति । तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीन् । अतातः । अतातीर्ताम् । अतातरुः । अतातारीत् । अतातारिष्टामित्यादि । अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्वं रपरत्वम् । हलादिः शेषः । रुक् । रिग्रीकोस्तु अभ्यामस्यासवर्ण इति इयङ् । अरर्ति । अरियर्ति । अररीति । अरियरीति । अर्कृतः । अरियृतः । झि अत् । यण् । रुको रो रीति लोपः । न च तस्मिन् कर्तव्ये यणः स्थानिवत्त्वम् । पूर्वत्रासिद्धीये तन्निषेधात् । आरति । अरिय्रति । लिङि श्तिपा निर्देशाद्गुणोऽर्तीति गुणो न । रिङ् । रलोपः । दीर्घः । आरियात् । अरिय्रियात् । आरारीत् । आरियारीत् । गृहू ग्रहणे । जर्गृहीति ३ । जर्गर्ढि ३ । जर्गृढः ३ । जर्गृहति ३ ।

---

नच अकित इति निषेधेन हाकोऽभ्यासस्य दीर्घो दुर्लभ इति कथमुभयोस्तुल्यरूपतेति शङ्क्यम् । अकित इत्यत्र हि न विद्यते किद्यस्याभ्यासस्येति बहुव्रीहिराश्रीयते, तेन 'द्विःप्रयोगो द्विर्वचनं षाष्ठम्' इत्यभ्युपगमाद्धातो. कित्त्वे अभ्यासस्य कित्त्वेऽपि वनीवञ्चीतीत्यादाविव कित्त्वाभावान्न दोषः । किं च द्वित्वाभावे केवलस्यार्थवत्त्वेऽपि द्वित्वे सति समुदाय एवार्थवानिति हि सर्वसंमतम् । तथा कित्त्वमपि समुदायस्यैवास्तु न तु प्रत्यवयवमिति नास्त्येव दीर्घे प्रतिबन्धः ॥—**जाहीयाद्**िति । 'ई हल्यघो.' इतीत्वम् ॥—**लुका लुप्त** इति । सर्वविधिभ्यो लुग्विधर्बलीयस्त्वादकृतव्यूहपरिभाषया च लुक. पूर्वं न शङ्क्यमेवेति भावः ॥—**उत्वं ने**ति । फलितार्थकथनमिद । स्वपिस्यमीत्यादिना विधीयमान यत्सम्प्रसारण तन्नेत्यर्थ. ॥—**असास्वापीद्**िति । 'अतो हलादेः–' इति विकल्पेन वृद्धि' ॥—**रुग्रिकौ च**—॥ चकारेण 'रीगृदुपधस्य–' इत्यतो रीगनुकृष्यते रुक उकार उच्चारणार्थः ॥—**ऋतश्च** ॥ ऋताऽनुवर्तमानमङ्ग विशेष्यते । ऋदन्तस्याङ्गस्य योऽभ्यासस्तस्येत्यर्थः । ऋदन्ताद्धातोरिति पाठस्तु फलितार्थकथनपरतया नेयः । लोटि । वर्वृतीतु ३ । वर्वर्तु ३ । वर्वृत्तात् । वर्वृत्ताम् ३ । वर्वृततु ३ । वर्वृद्धि ३ ॥—**अङ्नेति** । 'पुषादिद्युतादि–' इत्यनेन । डुकृञ् करणे **चर्कृयाद्**िति । सार्वधातुकत्वात् 'अकृत्सार्व–' इति न दीर्घः । लुङि । 'सिचि वृद्धिः–' इति वृद्धि' । अचर्कारीत् ३ अचर्कारिष्टाम् ३ अचर्कारिषुः ३ अचर्कारी ३ ॥—**चाकर्नी**ति । ईट्पक्षे चाकरीति । लोटि । चाकरीतु । चाकर्तु । चाकीर्तात् । चाकीर्ताम् । चाकिरतु । चाकीर्हि । लङि अचाकरीत् । अचाकः । अचाकीर्ताम् । अचाकरुः । लिङि । चाकीर्यात् । आशिषि तु चाकीर्यास्ताम् । लुङि अचाकारीत् । अचाकारिष्टाम् । एव तातरीतीत्यादि ॥—**अर्तेरि**ति । भौवादिकजौहोत्यादिकयोर्ग्रहणम् ॥—**उरदत्वमि**ति । केचित्तु 'गुणो यङ्लुको' इत्यभ्यासस्य गुणमाहुः । फले तु न विशेषः ॥—**रिग्रीकोस्त्वि**ति । एव च अरियर्तीति रूपमुभयोस्तुल्यमिति भावः ॥—**आरती**ति । 'रो रि' इति लोपे 'ढ्रलोपः–' इति दीर्घः । 'दीर्घोऽकितः' इति दीर्घस्तु न भवति कित्त्वात् ॥—**अरिय्रती**ति । परत्वात्पूर्वमियङ् ततो यण् रिग्रीकोस्तुल्यमिद, मध्यमोत्तमयोस्तु अरर्षि । अरियर्षि । अररीषि । अरियरीषि । अर्कृथः अरियृथः । अरर्मि अरियर्मि अररीमि । अरियरीमि अर्कृवः अरियृवः । लिटि अरराचकार । रिग्रीकोस्तु । अरियराचकार । लुटि । अररिता । रिग्रीकोस्तु अरियरिता । अररिष्यति । ४ अरियरिष्यति । अरर्तु । अरियर्तु । अर्कृतात् । अरियृतात् । अर्कृताम् । अरियृताम् । अरिय्रतु । अर्कृहि । अरियृहि । अरराणि । अरियराणि । अरराव । अरियराव । लङि । आरः । आरिय. । आररीत् । आरियरीत् । आर्कृताम् । आरियृताम् । आररुः । आरियरु. । आरियः । आररीः । आरियरीः । आर्कृतम् । आरियृतम् । आर्कृत । आरियृत । आररम् । आरियरम् । आर्कृव । आरियृव । विधिलिङि अर्कृयात् । अरियृयात् । अरियृयाताम् । अर्कृयुः ॥—**लिङी**ति । आशीर्लिङीत्यर्थः ॥—**अरिय्रियाद्**िति । रिग्रीकोः अरियृ इति स्थिते लिङि रिङ् । बहिरङ्गत्वेन रिङोऽसिद्धत्वाद्यलोपो न भवत्यच' परस्मिन्निति स्थानिवत्त्वाच्च । न च 'नपदान्त–' इति निषेधः शङ्क्यः । स्वरदीर्घयलोपेषु लोपरूपाजादेश एव न स्थानिवदित्युक्तत्वात् । न च अकृतव्यूहपरिभाषया इयङ् नेति शङ्क्यम् । रिङः स्थानिवत्त्वेन निमित्तविनाशाभावाद् उक्तपरिभाषाया अप्रवृत्तेः । अत एव अरिय्रतीत्यपि सिद्धम् । तत्रापि यणः स्थानिवत्त्वेन निमित्तविनाशाभावात् तत्परिभाषाऽप्रवृत्तेरियङो निर्बाधत्वात् । क्वचित्तु मूलपुस्तकेषु परत्वाच्च पूर्वं रिङि कृते इय-

अजर्घर्द् ३ । गृह्णातेस्तु जाग्रहीति । जाग्राढि ॥ तसादौ किति निमित्तं संप्रसारणम् । तस्य बहिरङ्गत्वेनासिद्धत्वान्न ल्वा-दयः । जागृढः । जागृहति । जाग्रहीषि । जाग्रक्षि । लुटि । जाग्रहिता । ग्रहोऽलिटीति दीर्घस्तु न । तत्रैकाच इत्य-नुवृत्तेः । माधवस्तु दीर्घमाह तद्भाष्यविरुद्धम् । जर्गृधीति ३ । जर्गर्द्धि ३ । जर्गृद्धः ३ । जर्गृधति ३ । जर्गृधीषि ३ । जर्घर्त्सि ३ । अजर्गृधीत् ३ । इडभावे गुणः । हल्ङ्यादिलोपः । भष्भावः । जश्त्वचर्त्वे । अजर्घर्त् ३ । अजर्गृ-द्धाम् ३ । सिपि दश्चेति पक्षे रुत्वम् । अजर्घाः ३ । अजर्गर्धीत् ३ । अजर्गर्धिष्टाम् ३ । पाप्रच्छीति । पाप्रष्टि । त-सादौ ग्रहिज्येति संप्रसारणं न भवति । श्तिपा निर्देशात् । च्छ्वोः शूडिति शः । व्रश्चेति षः । पाप्रष्टः । पाप्रच्छति । पाप्रश्मि । पाप्रच्छ्वः । पाप्रश्मः । यकारवकारान्तानां तूठ्भाविनां यङ्लुङ् नास्तीति च्छ्वोरिति सूत्रे भाष्ये ध्वनितम् ।

---

डोऽप्रवृत्तिरित्याशयेन आरिरियात् आरीरियादिति पठ्यते तदापाततः । अरिय्रतीति रूपासिद्ध्या पूर्वोत्तरग्रन्थयोर्विरो-धापत्तेः । लुङि । आरारीन् । आरियारीत् । लृङि आररिष्यत् । आरियरिष्यत् ॥—**जर्गृहीती**ति । 'नाभ्यस्तस्याचि-' इति गुणनिषेधः । मध्यमोत्तमयोस्तु जर्गृहीषि ३ । जर्घर्क्षि ३ जर्गृढः ३ जर्गृहीमि ३ जर्गृह्वः ३ जर्गृह्म ३ जर्गृ-हांचकार । जर्गर्हिता जरीगर्हिता । इहानुबन्धनिर्देशादूदिल्लक्षण इड्विकल्पो न । जर्गृहीतु जर्गर्ढु । जर्गृढाम् । जर्गृहतु ३ जर्गृढि ३ । मिपि । जर्गृहाणि ३ । लुङि । अजर्गृहीत् ३ । ईडभावे एकाच इति भष्भावः । अजघर्ट् ३ यद्यपि इह यत्रैकाज्-ग्रहणं चेति निषेधाद्भष्भावो दुर्लभस्तथापि 'गुणो यङ्लुकोः' इत्यनेन 'श्तिपा शपा-' इत्यादिनिषेधस्यानित्यत्वज्ञापनात् भ-ष्भावोऽत्र प्रवर्त्तते इत्याहु । अजर्गृढाम् । अजर्गृहुः ३ अजर्गृहीः । अजर्घर्ट् ३ अजर्गर्ड् ३ अजर्गृहम् ३ अजर्गृह्व ३ जर्गृह्यात् ३ अजर्गर्हीत् । अजर्गर्हिष्टाम् ३ अजर्गर्हिष्यत् ३ ॥—**जाग्रहीती**ति । ग्रह उपादाने । यङो लुका लुप्तत्वात्तन्नि-मित्तं 'ग्रहिज्या-' इति सम्प्रसारणमिह नेति भावः ॥—**जर्गृढ** इति । उरत् । 'दीर्घोऽकितः' । तत्रैकाच इति अनुवर्तत इति 'एकाचो द्वे' इति अस्मिन् सूत्रे हरदत्तेनोक्तत्वादिति भावः ॥—**माधवस्त्व**ति । अय भावः । 'ग्रहोऽलिटि-' इति सूत्रे यङ्लोपे चोक्तमिति वार्तिकतदीयभाष्यकैयटादिपर्यालोचनया जरीगृहितेत्यादिषु ग्रहेर्यङन्तात्तृचस्तासेर्वा य इट् तस्य दीर्घाभावे युक्तिद्वयं लभ्यते । पूर्वस्मादपि विधौ स्थानिवद्भाव इत्येके । ग्रहेर्विहितो य इट् तस्य दीर्घ इत्यपरे । तत्राद्यः पक्षो भाष्यवार्तिककाररीत्या । ताभ्यां हि 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यवष्टभ्य दीर्घादिग्रहणस्य प्रत्याख्यानात् । त्रैपादिकदीर्घातिरिक्तदीर्घेऽस्मिन् कर्तव्ये स्थानिवद्भावस्य तन्मते सुवचत्वात् । द्वितीयस्तु सूत्ररीत्या, तेन तु सामान्यतो दीर्घविधौ स्थानिवद्भावस्य निषिद्धत्वात्तन्मते स्थानिवद्भावस्य वक्तुमशक्यत्वात् । एव च यङ्लुकि दीर्घप्रवृत्तौ न किंचिद् बाधकम् । यङ्लुकोऽनैमित्तिकत्वात् अज्झलादेशत्वाच्च स्थानिवद्भावायोगात् । 'द्विःप्रयोगो द्विर्वचन षाष्ठम्' इति सिद्धान्ता-द्यङ्लुगन्ताद् गृह्णातेर्विहितस्य ग्रहेर्विहितत्वानपायाच्च ॥—**तद्भाष्यादिविरुद्धमि**ति । आदिशब्देन कैयटहरदत्तौ गृह्येते 'विरोधश्चात्र मनोरमायामुपपादितः । तथा हि 'एकाचो द्वे प्रथमस्य' इति सूत्रे ग्रहेरङ्गादिति भाष्यमुपादाय कैयट आह । 'तृचो हि जरीगृहीत्यङ्ग न तु ग्रहिः, विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणमिति' । यद्यपि तत्र यङन्त प्रक्रम्ये-दमुक्त, तथापि युक्तिसाम्याद्यङ्लुगन्तेऽपि न दीर्घ इति लक्ष्यते । एकाज्ग्रहणमनुवर्तयन् हरदत्तोऽप्यत्रानुकूलः । न ह्य-स्मिन्पक्षे यङ्लुकि दीर्घस्य प्रसक्तिरस्ति । एव च पूर्वस्मादपि विधौ स्थानिवद्भाव इति ग्रहेर्विहितस्य दीर्घ इति च प्रागु-क्तसमाधानमुपायस्योपायान्तरादूषकत्वादिति न्यायेन यङन्तांशे उपायान्तरपरतया नेयम् । न च ग्रहिति यथाश्रुतरूपा-श्रयणे गृहीत इत्यादाविटो दीर्घो न स्यादिति वाच्यम् । अङ्गसंज्ञाप्रवृत्तिवेलाया यथाश्रुतरूपस्यैव सत्त्वात् । ग्राहितमित्यादौ तु नैवम् । एकाच इति समाधान तु णिज्भिन्नविषयकमेव, 'निष्ठाया सेटि' इति णिलोपे ग्राहितमित्यादावेकाच्त्वानपायात् । तदित्थम्—'यङ्लुगन्ताण्णिजन्ताच्च यङन्ताच्च ग्रहेरिटोः । द्विधा त्रिधा चतुर्धा च दीर्घप्राप्तिः समाहिता' ॥ अस्यार्थः । यङ्लुगन्ताद्दीर्घे प्राप्ते समाधानद्वयम् । ग्रहेरङ्गादिति व्याख्यानमेकाच इत्यनुवृत्तिश्चेति । णिजन्तात्तु ग्रहिस्वरूपाभावः, वि-हितविशेषण, स्थानिवद्भावश्चेति समाधानत्रयम् । यङन्तात्समाधानचतुष्टयम् । 'एकाचः-' इत्यनुवृत्तिः, पूर्वोक्तसमा-धानत्रय चेति ॥—**अजर्घा** इति । **गृधु** अभिकाङ्क्षायाम् । इह अपदान्तस्यापि रेफस्य 'रो रि' इति लोपो भवत्येव, तत्र मण्डूकप्लुत्या पदस्येत्यनुवर्तनात् ॥—**पाप्रष्टी**ति । **प्रच्छ** ज्ञीप्सायाम् । 'व्रश्च-' इति षः । पाप्रच्छिता । पाप्रच्छिष्य-ति । पाप्रष्टु । पाप्रष्टात् । पाप्रष्टाम् । पाप्रच्छतु । पाप्रड्ढि । पाप्रच्छानि । अपाप्रट् । अपाप्रच्छुः । अपाप्रच्छीः । अपाप्रट् । अपाप्रष्टम् । अपाप्रष्ट । अपाप्रच्छम् । अपाप्रश्म ॥—**भाष्ये ध्वनितमि**ति । 'छ्वोः शूड्-' इति सूत्रे भाष्ये किद्ग्रहणमनुवर्तते न वेति विकल्प्य कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम् । एतावानेव विशेषः । अनुवर्तमाने किद्ग्रहणे 'च्छः षत्वं वक्तव्यम्' इति । अननुवर्तमाने तु छः सत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टमित्यादिसिद्धये व्रश्चादिसूत्रे च्छग्रहणं न कर्तव्यमिति भावः । एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो 'यङ्लुक् नास्ती-त्युक्तप्रायम् । अन्यथा दिवेर्यङ्लुकि इडभावपक्षे देदेति देदेषि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात् । तत्र

गृह्यते आर्यगृह्यः। तत्पक्षाश्रित इत्यर्थः। **विभाषा कृवृषोः** ।३।१।१२०। क्यप्स्यात्। कृत्यम्। वृष्यम्। पक्षे। **ऋहलोर्ण्यत्** ।३।१।१२४। ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यात्। कार्यम्। वर्ष्यम्। **युग्यं च पत्रे** ।३।१।१२१। पत्रं वाहनम्। युग्यो गौः। अत्र क्यप् कुत्वं च निपात्यते। **अमावस्यदन्यतरस्याम्** ।३।१।१२२। अमोपपदाद्वसेरधिकरणे ण्यत्। वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते। अमा सह वसतोऽस्यां चन्द्रार्कौ-वमावस्या। अमावास्या॥ ऋहलोर्ण्यत्॥ चजोरिति कुत्वम्। पाक्यम्॥ * **पाणौ सृजेर्ण्यद्वाच्यः**। ऋदुपध-लक्षणस्य क्यपोऽपवादः। पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः॥ * **समवपूर्वाच्च**। समवसर्ग्या। **न क्वादेः** ।७।३।५९। क्वादेर्धातोश्चजोः कुत्वं न। गर्ज्यम्। वार्तिककारस्तु चजोरिति सूत्रे निष्ठायामनिट इति पूरयित्वा न क्वादेरित्यादि प्रत्याचख्यौ। तेन अर्जितर्जिप्रभृतीनां न कुत्वम्। निष्ठायां सेट्त्वात्। मुचुग्लुञ्चुप्रभृतीनां तु क्वादित्वेऽपि कुत्वं स्यादेव। सूत्रमते तु यद्यपि विपरीतं प्राप्तं तथापि यथोत्तरं मुनीनां प्रामाण्यम्। **अजिव्रज्योश्च**।७।३।६०। न कुत्वम्। समाजः। परिव्राजः। **भुजन्युब्जौ पाण्युपतापयोः** ।७।३।६१। एतयोरेतौ निपातौ। भुज्यतेऽनेनेति भुजः पाणिः। हलश्चेति घञ्। न्युब्जन्त्यस्मिन्निति न्युब्जः। उपतापो रोगः। पाण्युपतापयोः किम्। भोगः। समुद्गः। **प्रयाजानुयाजौ यज्ञाङ्गे** ।७।३।६२। एतौ निपातौ यज्ञाङ्गे। पञ्च प्रयाजाः। त्रयोऽनुयाजाः। यज्ञाङ्गे किम्। प्रयागः। अनुयागः। **वञ्चेर्गतौ** ।७।३।६३। कुत्वं न। वञ्च्यम्। गतौ किम्। वङ्क्यं काष्ठम्। कुटिलीकृतमित्यर्थः। **ओक उचः के** ।७।३।६४। उचेर्गुणकुत्वे निपात्येते के परे। ओकः शकुन्तवृषलौ। इगु-पधलक्षणः कः। घञा सिद्धेऽन्तोदात्तार्थमिदम्। **ण्य आवश्यके** ।७।३।६५। कुत्वं न। अवश्यपाच्यम्। **यजयाचरुचप्रवचर्चश्च** ।७।३।६६। ण्ये कुत्वं न। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यं ग्रन्थविशेषः। ऋच्। अर्च्यम्। ऋदुपधत्वेऽप्यत एव ज्ञापकात् ण्यत्॥ * **त्यजेश्च**। त्याज्यम्। त्यजिपूज्योश्चेति काशिका। तत्र

---

हसत्काः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः॥—**विभाषा कृ-**॥ करोतेः क्यप्यप्राप्ते वृषेस्तु ऋदुपधलान्नित्य प्राप्तेऽयमारम्भः॥—**पत्रं वाहनमिति**। पतत्यनेनेत्यत्र 'दाम्नीशस-' इत्यादिना करणे ष्ट्रन्॥—**युग्यो गौरिति**। यद्यपि 'तद्वहति रथयुगप्रासङ्गम्' इति तद्धितयतापि इदं सिध्यति तथापि ण्यत व्यावर्तयितुमिद सूत्रम्। अन्यथा हि योग्यो गौरिति स्यात्। अन्ये त्वाहुः। युग्यो हस्तीति हि वृत्तावुदाहृतं तत्तु तद्धितेन न सिध्यति। न हि हस्ती युगं वहति। कृता तु सिध्यति युज्यते सबध्यते ह्यसौ कुथादिनेति। ततश्चात्र वैयर्थ्यशङ्कैव नास्तीति दिक्॥—**वृद्धौ सत्यामिति**। तेनामावास्याया वेति विहितस्तद्धितो ह्रस्वपक्षेऽपि सिध्यति एकदेशविकृतस्यानन्यत्वाद्। यदि तु यत्प्रत्ययान्तस्येदं पाक्षिक निपातनमित्याश्रीयेत तदा यता मुक्तेऽधिकरणे ण्यदेव तावद् दुर्लभः। अथापि बाहुलकाल्लभ्येत। एवमपि ण्यदन्तमनूद्य विहितस्तद्धितो यदन्तान्न स्यादिति दिक्॥—**ऋहलोः**—॥ पञ्चम्यर्थे षष्ठी। ऋ इति ऋधातोर्न ग्रहणं किन्तु ऋवर्णस्य हला साहचर्यात्परं कार्यमिति निर्देशादीङवन्देत्यादिलिङ्गाच्च॥ ऋहलोरित्येतदनुवर्तमानस्य धातोर्विशेषण विशेषणेन तदन्तविधिस्तदेतदाह—**ऋवर्णान्तादित्यादि**। अत्रेदमवधेयम्। मूलपुस्तकेषु सर्वत्र 'विभाषा कृवृषोः' इत्यत्र पक्षे ण्यत् भवतीति वक्तुम् 'ऋहलोर्ण्यत्' इति सूत्र पठित्वा पश्चाद् 'युग्यं च पत्रे' 'अमावस्यदन्यतरस्याम्' इति पठितम्। मनोरमायां तु सूत्रपाठक्रमेण 'युग्य च पत्रे' 'अमावस्यदन्यतरस्याम्' इति व्याख्याय पश्चात् 'ऋहलोः-' इति सूत्र व्याख्यात तथैवात्रापि व्याख्यातमिति॥—**गर्ज्यमिति**॥ गर्जे शब्दे 'ऋहलो-' इति ण्यति 'चजो.' इति कुत्वे प्राप्तेऽयं निषेधः॥—**कुत्वं स्यादेवेति**। 'ऊदितो वा' इति क्त्वायामिड्विकल्पात् 'यस्य विभाषा' इति निष्ठायामनिट्त्वादिति भावः॥—**विपरीतमिति**। सूत्रकारमते मुचुग्लुञ्चुप्रभृतीना न क्वादेरिति कुत्वं न भवति, वार्तिककारमते तु निष्ठायामनिट्त्वात् 'चजोः' इति कुत्व भवतीति परस्परविरुद्धमित्यर्थः॥—**यथोत्तरमिति**। तथा च वार्तिकानुरोधेन कुत्वं स्वीकर्तव्यमिति भाव.॥—**समाज** इति। अज गतिक्षेपणयोरित्यस्माद्घञि 'चजोः' इति कुत्वे प्राप्तेऽय निषेधः। एवं व्रजेरपि॥—**न्युब्ज** इति॥ उब्ज आर्जवे। निपूर्वस्यास्य जस्य कुत्वाभावो दस्य च बकारो निपात्यते॥—**घञा सिद्धे** इति। उच समवाय इत्यस्माद्घञि 'चजोः-' इति कुत्वे लघूपधगुणे च ओक इति रूप सिध्यति, पर तु 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तमनिष्ट स्यादिति भाव.॥—**ण्य आवश्यके**॥ अवश्यभावः आवश्यक। मनोज्ञादित्वाद्वुञ्। अव्ययानां भमात्रे टिलोपः॥—**अवश्यपाच्यमिति**। 'आवश्यकाधमर्ण्ययोर्णिनिः' 'कृत्याश्च' इति ण्यत्। अवश्यशब्दोऽर्थद्योतनार्थो न तु प्रयोगार्थः। तेनार्थप्रकरणादिगम्येऽपि तस्मिन् ण्यत्कुत्वाभावश्च भवति। यथा 'अशोच्यानन्वशोचस्त्वम्' इति। केचित्तु शोचितुमर्हाः शोच्याः न शोच्या अशोच्या इति भगवद्गीतास्विदं व्याचक्षते तच्चिन्त्यम्। 'अर्हे कृत्यतृचश्च' इति ण्यति 'चजोः-' इति कुत्वप्रसङ्गात् 'चजोः-' इति कुत्वं निष्ठायामनिट इति वार्तिकमते तु सम्यगेवेति दिक्॥—**यज**—॥ यज देवपूजादौ। टुयाचृ याच्ञायाम्। रुच दीप्तौ। प्रपूर्वो वच परिभाषणे। ऋच स्तुतौ॥—**ग्रन्थविशेष** इति। तथा च सञ्ज्ञयमिति 'वचोऽशब्दसंज्ञायाम्' इत्यस्याप्रसक्तान्निषेधोऽयमिति भावः॥—**ज्ञापकादिति**। सरूपत्वाद्वा-

पूर्जेर्ग्रहणं चिन्त्यम्। भाष्यानुक्तत्वात्। ण्यत्प्रकरणे त्यजेरुपसंख्यानमिति हि भाष्यम्। **वचोऽशब्दसंज्ञायाम्** ।७।३।६७। वाच्यम्। शब्दाख्यायां तु वाक्यम्। **प्रयोज्यनियोज्यौ शक्यार्थे** ।७।३।६८। प्रयोक्तुं शक्यः प्रयोज्यः। नियोक्तुं शक्यो नियोज्यो भृत्यः। **भोज्यं भक्ष्ये** ।७।३।६९। भोग्यमन्यत् ॥ * ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम्। लाप्यम्। दभिर्धातुष्वपठितोऽपि वार्तिकबलात्स्वीकार्यः। दाभ्यः। **ओरावश्यके** ।३।१।१२५। उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यंभावे द्योत्ये। लाव्यम्। पाव्यम्। **आसुयुवपिरपित्रपिचमश्च** ।३।१।१२६। षुञ्। आसाव्यम्। यु मिश्रणे। याव्यम्। वाप्यम्। राप्यम्। त्राप्यम्। चाम्यम्। **आनाय्योऽनित्ये** ।३।१।१२७। आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते। दक्षिणाग्निविशेष एवेदम्। स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्वलनात्। आनेयोऽन्यो घटादिः। वैश्यकुलादेरानीतो दक्षिणाग्निश्च। **प्रणाय्योऽसंमतौ** ।३।१।१२८। संमतिः प्रीतिविषयीभवनं कर्मव्यापारः। तथा भोगेष्वादरोऽपि संमतिः। प्रणाय्यश्चोरः। प्रीत्यनर्ह इत्यर्थः। प्रणाय्योऽन्तेवासी। विरक्त इत्यर्थः। प्रणेयोऽन्यः। **पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु** ।३।१।१२९। मीयतेऽनेन पाय्यं मानम्। ण्यत् धात्वादेः पत्वं च। आतो युगिति युक्। सम्यङ् नीयते होमार्थमग्निं प्रतीति सान्नाय्यं हविर्विशेषः। ण्यदायादेशः समो दीर्घश्च निपात्यते। निचीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः। अधिकरणे ण्यत् आय् धात्वादेः कुत्वं च निपात्यते। धीयतेऽनया समिदिति धाय्या ऋक्। **क्रतौ कुण्डपाय्यसंचाय्यौ** ।३।१।१३०। कुण्डेन पीयतेऽस्मिन्सोमः कुण्डपाय्यः क्रतुः। संचीयतेऽसौ संचाय्यः। **अग्नौ परिचाय्योपचाय्यसमूह्याः** ।३।१।१३१। अग्निधारणार्थे स्थलविशेषे एते

---

सरूपविधिना ण्यद्भवेदिति न शङ्कनीयमिति भावः ॥—**वाक्यमिति**। तिङ्सुबन्तचयो वाक्यम् ॥—**भोज्यम्**—॥ भक्ष्यमिहाभ्यवहार्यमात्रं विवक्षितं न तु खरविशदमभ्यवहार्यं। तेन भोज्या यवागूरित्यपि भवतीत्याहुः ॥—**भोग्यमन्यदि**ति। पालनीयमुपभोग्यं चेत्यर्थः ॥—**लपिदभिभ्यां** चेति। 'पोरदुपधात्' इति प्राप्तस्य यतोऽपवादः। जयादित्यस्तु 'आसुयुवपिरपि' इति सूत्रे लपिं प्रक्षिप्य रपिलपिचपीति पठित्वाऽनुक्तसमुच्चयार्थेन चकारेण दभेः संग्रह इत्युक्तवान् तत्र वैषम्येण व्याख्यानं निर्बीजं भाष्यविरोधश्च स्पष्ट एवेति बोध्यम् ॥—**स्वीकार्य** इति। 'काम्यनेकाच आम्वक्तव्यश्चुलुम्पाद्यर्थम्' इति वार्तिकबलाद्यथा चुलुम्पादिभ्य आम् स्वीक्रियते तद्वदिति भावः। तथा च प्रयुज्यते। 'न ता नशन्ति न दभाति तस्करः' 'विष्णुर्गोपा अदाभ्यः' इत्यादि ॥—**लाव्यमि**ति। आवश्यके उपपदे इति व्याख्याने तु नेदं सिध्यतीति भावः। क्वचित्तु लाघवं प्रत्यनादरात् व्यनिगे इत्यादौ व्यतिशब्दवत् द्योतितार्थस्यापि प्रयोगो दृश्यते। अवश्यलाव्यम्। अत्रोपपदसमासासंभवेऽपि मयूरव्यंसकादेराकृतिगणत्वात्समासः ॥—**आसु**—॥ **षुञ्। आसाव्यमि**ति। षुञ् अभिषव इत्यय गृह्यते न षु प्रसवैश्वर्ययोरिति। 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादिति। **यु मिश्रण** इति। युञ्बन्धन इति तु न गृह्यते सानुबन्धकत्वादिति भावः। अत्र युप्रभृतीनां द्वन्द्वं कृत्वा पश्चादासुशब्देन द्वन्द्वः। तेन 'अल्पाच्तरम्' इति युशब्दस्य न पूर्वनिपातः शङ्क्यः। इहाद्ययोः 'अचो यत्' इत्यनेन रपित्रपिचमां तु 'पोरदुपधात्' इत्यनेन यत्प्रत्यये प्राप्तेऽयमारम्भः ॥—अनित्यमात्रे यदि प्रयोगस्तर्हि घटादावतिप्रसङ्ग इत्यत आह—**दक्षिणाग्निविशेषे**त्यादि ॥—**वैश्यकुलादेरि**ति। दक्षिणाग्नेर्हि यो निर्विकल्प्यते वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वेति ॥—**कर्मव्यापार** इति। तथा चायमर्थः। लोकानां या प्रीतिस्तद्विषयीभवनं यस्मिन्नास्ति चोरादौ सोऽसंमतिरिति। वस्तुतस्तु प्रीतिविषयीभवनापेक्षया लाघवात्प्रीतिरेव संमतिः सा यस्मिन् चोरादौ नास्ति लोकानां सोऽसंमतिः। यद्वा संमतिः प्रीतिविषयेषु यस्य नास्ति स विरक्तोऽसंमतिः। तन्त्रेणार्थद्वयमपि गृह्यते ॥—**पाय्यसान्नाय्य**—॥ चतुर्षु अर्थेषु चत्वारो निपात्यन्ते। मीयतेऽनेनेति माङः करणे ण्यत्। मेयमन्यम् ॥—**हविर्विशेष** इति। ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति विहितो दधिपयोरूपः ॥—**धीयते अनये**ति। अत्र सर्वा सामिधेनी न ग्राह्या किं तु समिध्यमानवती समिद्धवती चान्तरेण विकृतिषु प्रक्षिप्यमाणा 'पृथुपाजा अमर्त्यः' इत्यादिकैव। अयं च विशेषो निपातनस्य रूढ्यर्थत्वाल्लभ्यते। नन्वेवं निपातनात्सामिधेनीविशेषवाचकत्वे सामिधेनीग्रहणं व्यर्थमिति चेद्। अत्राहुः। सूत्रे सामिधेनीग्रहणं प्रयोगविशेषोपलक्षणार्थम्। तथा चासामिधेन्यामपि दृश्यते। धाय्याः शंसतीति। न हि शस्त्रेण समित् प्रक्षिप्यते ॥—**क्रतौ कुण्डपाय्य**-इति। कुण्डशब्दे तृतीयान्ते उपपदे पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते। नन्वत्र ण्यदेव निपात्यतां प्रकृतत्वाद्। एवं च 'आतो युक् चिण्कृतोः' इति सिद्धत्वात् युक् च न निपातनीय इति लाघवमस्तीति चेन्। मैवम्। तित्स्वरप्रसङ्गाद्। इष्यते तु 'यतोऽनावः' इत्याद्युदात्तः कृदुत्तरपदप्रकृतिस्वरः। तथा च प्रयुज्यते। प्रणाय्यान् कुण्डपाय्य इति। संपूर्वाच्चिनोतेस्तु ण्यदायौ निपात्येते। क्रतौ किम्। कुण्डपानम्। सञ्चेयम् ॥—**अग्नौ परि**—॥ अग्निरिह न ज्वलनः किं तु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं तदाह—**स्थलविशेष** इति ॥—**एते साधव** इति। स्थलविशेषेऽभिधेये परिपूर्वाच्चिनोतेः ण्यदायादेशयोः संपूर्वस्य वहेस्तु संप्रसारण-

साधवः । अन्यत्र तु परिचेयम् । उपचेयम् । संचाय्यम् । ॥ चित्याग्निचित्ये च ।३।१।१३२। चीयतेऽसौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या । ॥ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।३।३।१६३। त्वया गन्तव्यम् । गमनीयम् । गम्यम् । इह लोटा बाधा माभूदिति पुनःकृत्यविधिः क्त्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्नेति ज्ञापयति । तेन क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धम् । ॥ अर्हे कृत्यतृचश्च ।३।३।१६९। स्तोतुमर्हः स्तुत्यः, स्तुतिकर्म । स्तोता, स्तुतिकर्ता । लिङा बाधा माभूदिति कृत्यतृचोर्विधिः । ॥ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।३।४।६८। एते कृत्यान्ताः कर्तरि वा निपात्यन्ते । पक्षे तयोरेवेति सकर्मकात्कर्मणि अकर्मकात्तु भावे ज्ञेयाः । भवतीति भव्यः । भव्यमनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामानेन वा इत्यादि । ॥ शकि लिङ् च ।३।३।१७२। चात्कृत्याः । वोढुं शक्यो वोढव्यः वहनीयो वाह्यः । लिङा बाधा माभूदिति कृत्योक्तिः ॥ लाघवादनेनैव ज्ञापनसंभवे प्रैषादिसूत्रे कृत्याश्चेति सुत्यजम् । अर्हे कृत्यतृचोर्ग्रहणं च ॥ इति कृत्यप्रक्रिया ॥

---

## कृदन्तप्रक्रिया ।

॥ ण्वुल्तृचौ ।३।१।१३३। धातोरेतौ स्तः । कर्तरि कृदिति कर्त्रर्थे । युवोरनाकौ । कारकः । कर्ता । वोढुमर्हो वोढा । कारिका । कर्त्री । गाङ्कुटेति ङित्त्वम् । कुटिता । अञ्णिदित्युक्तेर्न ङित्त्वम् । कोटकः । विज इट् । विजिता । हनस्तोऽचिण्णलोः । घातकः । आतो युक् । दायकः । नोदात्तोपदेशस्येति न वृद्धिः । शमकः । दमकः । अनिटस्तु नियामकः । जनिवध्योश्च । जनकः । वध हिंसायाम् । वधकः । रधिजभोरचि । रन्धकः । जम्भकः । नेड्वशि कृति रधेः । रधिता । रद्धा । मस्जिनशोर्झलीति नुम् । मङ्क्ता । नंष्टा । नशिता । रभेरशब्लिटोः । रम्भकः । रब्धा । लभेश्च । लम्भकः । लब्धा । तीषसहेतिवेट् । एषिता । एष्टा । सहिता । सोढा । दरिद्रातेरालोपः । दरिद्रिता । ण्वुलि न । दरिद्रायकः । कृत्यल्युट इत्येव सूत्रमस्तु । यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात् । एवं च बहुलग्रहणं योगविभागेन

---

दीर्घयोश्च निपातनादिति भावः ॥—**चित्योऽग्निरि**ति । चिनोतेः कर्मणि क्यप् । यतोऽपवादः । इह सूत्रे अग्नावित्यनुवर्तते तच्च चित्यशब्दस्यैव विशेषणं न द्वितीयस्य । तस्य भावार्थकत्वेनाग्निवाचकत्वासंभवात् । अग्नेरन्यत्र चेयमित्येव । शब्दकौस्तुभादौ तु अग्निचित्येत्यत्र भावे यकारप्रत्ययस्तुक् च निपात्यते न तु क्यप् । तेनान्तोदात्तत्वं भवति । क्यपि तु कृते क्यपः पित्त्वादनुदात्तत्वे धातुस्वरेण चित्य इत्याद्युदात्तः स्यादिति स्थितम् । ननु वासरूपविधिना कृत्या अपि भविष्यन्तीत्यत आह—**क्त्यधिकारादूर्ध्वमि**त्यादि ॥ **क्तल्युडि**ति । हसितं हसनं छात्रस्य । नपुंसके भावे क्तः ल्युट् चेत्यनयोर्विषये भावे इति घञ् । इच्छति भोक्तुम् । अत्र 'इच्छार्थेषु लिङ्लोटौ' इति लोण् । लिङ् तु भवत्येव । 'समानकर्तृकेषु तुमुन्' लिङ् चेति वचनात् । ईषत्पानः । 'आतो युच्' इति युच् । अत्र 'ईषद्दुःसुषु–'इति खल् न ॥—**लिङा बाधे**ति । चकारेण 'लिङ् यदि' इत्यतो लिङनुकृष्यत इति भावः ॥—**भव्य**–॥ 'तयोरेव–'इति नियमात्कर्तर्यप्राप्ते वचनम् ॥—**साम्नामि**ति । कर्मणि षष्ठी ॥—**इत्यादी**ति । प्रवक्तीति प्रवचनीयो गुरुः स्वाध्यायस्य । प्रवचनीयो गुरुणा स्वाध्यायः । उपस्थानीयः शिष्यो गुरोः । उपस्थानीयो गुरुः शिष्येण । जायते जन्यः जन्यमनेन वा । आप्लवते आप्लाव्यः ण्यत् आप्लाव्यमनेन वा ॥—**शकि लिङ् च** ॥—**वोढव्य** इति । वह प्रापणे इत्यस्मात्तव्य । हस्य 'हो ढः' इति ढत्वे 'झषस्तथोः–'इति धत्वे 'ष्टुना ष्टुः' इति ष्टुत्वे 'ढो ढे लोपः' 'सहिवहोः–'इत्यवर्णस्यौत्वम् । अत्र ढलोपे कर्तव्ये ष्टुत्वमसिद्धमिति नाशङ्क्यम्, आश्रयासिद्धत्वात् ॥—**बाधा माभूदि**ति । कृत्यानामिति शेषः ॥—**कृत्योक्तिरि**ति । कृत्यानुकर्षकचकारोक्तिरित्यर्थः ॥—**लाघवादि**ति । इह हि चकारमात्रेण ॥ ॥ **इति कृत्यप्रक्रिया** ॥

**ण्वुल्तृचौ** ॥ णकारो वृद्ध्यर्थः लकारो 'लिति' इति स्वरार्थः । तृचश्चकारस्तु 'तुरिष्ठेमेयस्सु' 'तुश्छन्दसि' इत्यादौ सामान्यग्रहणाविघातार्थः । 'चितः' इत्यन्तोदात्तार्थस्तु न भवति, 'आद्युदात्तश्च' इत्यनेनैव सिद्धेः । एवं च 'अप्तृन्–'इति सूत्रे तृन्तृचोः पृथग्ग्रहणं विहाय अप्तृस्वसृ इत्येव सुवचमित्येके । अन्ये तु सामान्यग्रहणेऽपि क्वचिद्विशेषस्यैव ग्रहणं भवतीति ज्ञापनार्थमप्तृन्निति सूत्रे तृन्तृचोरुभयोर्ग्रहणम् । तेन कोपधग्रहणेन तद्धितवुग्ग्रहणमित्येतत्सिद्धमित्याहुः ॥—**वोढे**ति । 'अर्हे कृत्यतृचश्च' इति तृच्, ढलादयस्तु वोढव्य इत्यत्रेवात्राप्यूह्याः ॥—**रन्धिते**ति । 'रधादिभ्यश्च' इति वेट् ॥—**रद्धे**ति । इह 'नेड्वशि कृति,' इति निषेधाप्रवृत्तावपि 'रधि–'इत्यनेन अच्परत्वाभावान्नुम्न ॥—**मङ्क्ते**ति । टुमस्जो शुद्धौ । अस्मात् तृच् 'मस्जि'—इति नुम् अन्त्यात्पूर्वः । स्कोरिति सलोपः । जस्य कुत्वे चर्त्वम् अनुस्वारपरसवर्णौ । 'बहूनां समवाये द्वयोर्द्वयोः संयोगः' इति पक्षे तु नुमागमस्याच्परत्वेऽपि 'स्कोः–'इति सलोपो भवत्येवेति ज्ञेयम् ॥—**नंष्टे**ति । रधादित्वादिड्भावपक्षे नुम् ॥—**लब्धे**ति । 'झषस्तथोः'—इति धः, भकारस्य जश्त्वम् । 'लभेश्च' इति नुम् तु न भवत्यचीत्यनुवर्तनात् ॥—**ण्वुलि नेति** । सनि ण्वुलि ल्युटि च नेति वचनात् ॥—**योगविभागेनेति** । 'कृत्यल्युटो बहुलम्' इति सूत्रे कृतो बहुलमित्ये-

कुम्भग्रहणस्यार्थ्यव्यभिचारार्थम् । पादाभ्यां ह्रियते पादहारकः । कर्मणि ण्वुल् । * क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः । प्रक्रन्ता । कर्तरीति किम् । प्रक्रमितव्यम् । आत्मनेपदेति किम् । संक्रमिता । अनन्यभावे विषयशब्दः । तेनानुपसर्गाद्वेति विकल्पार्हस्य न निषेधः । क्रमिता । तदर्हत्वमेव तद्विषयत्वम् । तेन क्रन्तेत्यपीति केचित् । गमेरिडित्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयति । सञ्जिगमिषिता । एवं न वृद्भ्यश्चतुर्भ्यः । विवृत्सिता । यङन्तात् ण्वुल् । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । पापचकः । यङ्लुगन्तात्तु पापाचकः । **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।३।१।१३४।** नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । मधुसूदनः । विशेषेण भीषयतीति विभीषणः । लवणः । नन्द्यादिगणे निपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री । विशयी । वृद्ध्यभावो निपातनात् । विषयी । इह षत्वमपि । परिभावी । परिभवी । पाक्षिको वृद्ध्यभावो निपात्यते । पचादिराकृतिगणः । शिवशमरिष्टस्य करे । कर्मणि घटोऽठच् इति सूत्रयोः करोतेर्घटेश्चाच्प्रयोगात् । अच्प्रत्यये परे यङ्लुग्विधानाच्च । केषांचित्पाठस्त्वनुबन्धासञ्जनार्थः । केषांचित्प्रपञ्चार्थः । केषांचिद्बाधकबाधनार्थः । पचतीति पचः । नदट् । चोरट् । देवट् इत्यादयष्टितः । नदी । चोरी । देवी । दीव्यतेरिगुपधेति कः प्राप्तः । जारभरा । श्वपचा । अनयोः कर्मण्यण् प्राप्तः । न्यङ्क्वादिषु पाठात् श्वपाकोऽपि । यङोऽचि चेति लुक् । न धातुलोप इति गुणवृद्धिनिषेधः । चेक्रियः । नेन्यः । लोलुवः । पोपुवः । मरीमृजः ॥ * **चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्** ॥ आगमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो हलादिः शेषश्च न । चराचरः । चलाचलः । पतापतः । वदावदः ॥ * **हन्तेर्घत्वं च** ॥ घत्वमभ्यासस्य उत्तरस्य त्वभ्यासाच्चेति कुत्वम् । घनाघनः ॥ * **पाटेर्णिलुक्चोक्च दीर्घश्चाभ्यासस्य** ॥ पाटूपटः । पक्षे चरः । चलः । पतः । वदः । हनः । पाटः । रात्रेः कृतीति वा मुम् । रात्रिंचरः रात्रिचरः । **इगुपधज्ञाप्रीकिरः कः ।३।१।१३५।** एभ्यः कः स्यात् । क्षिपः । लिखः । बुधः । कृशः । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः । वासरूपविधिना ण्वुल्तृचावपि । क्षेपकः । क्षेप्ता । **आतश्चोपसर्गे ।३।१।१३६।** कः स्यात् । श्याद्व्यधेति णस्यापवादः । सुग्लः । प्रज्ञः । **पाघ्राध्माधेट्दृशः शः ।३।१।१३७।** पिबतीति पिबः । जिघ्रः । धमः । धयः । धया कन्या । धेटष्टित्वात् स्तनन्ध-

---

वाकरे स्थितम् । तथा च योगविभागं विनैव सर्वेष्टसिद्धिरित्याहुः ॥—**प्रक्रन्ते**ति । 'प्रोपाभ्यां समर्थाभ्याम्' इति क्रमेरात्मनेपदविषयता ॥—**अनन्यभावे विषयशब्द** इति । तदन्याविषयत्वे सति तद्विषयत्वमनन्यभावः । तथा च विकल्पार्हस्य क्रमेः परस्मैपदात्मनेपदोभयप्राप्तिविषयत्वान्निषेधो नेति भावः ॥—**संजिगमिषिते**ति । संपूर्वाद्गमेः सन् 'सन्यङोः' इति द्वित्वे हलादिः शेषे 'सन्यतः' इत्यभ्यासस्येत्वम् । 'आर्धधातुकस्य-' इति सन इट्, षत्व, सन्नन्तात्तृच् पुनरिट् ॥—**अल्लोपस्ये**ति । प्राचा तु 'न धातुलोप-' इति सूत्रे इक इत्यनुवृत्तेर्वृद्धेरनिषेधः पापाचक इत्युक्त, तन्न । यङन्ते अल्लोपस्य स्थानिवत्त्वेन वृद्धेः प्राप्त्यभावात् । ननु यङन्ते तु पापाचकरूपाभिप्रायेण तथोक्तम् । तत्र हि आकारविशिष्टस्यैव यङो लुगिति सर्वसमतत्वेन स्थानिवत्त्वाभावादिति चेत् । मैवम् । एव तर्हि आर्धधातुकस्य धात्ववयवलोपनिमित्तत्वाभावेन यङ्लुगन्ते 'न धातुलोप-' इति निषेधस्य प्रसक्त्यभावात् ॥—**नन्दिग्रहि**—॥ द्वन्द्वान्ते श्रूयमाणं आदिशब्द प्रत्येकं सबध्यते तदाह—**नन्द्यादेर्ल्यु**रित्यादि ॥—**मधुसूदन** इति । मधु दैत्यं सूदयतीति विग्रहः । सूद क्षरणे । इह अर्दिसूदिभ्यां कर्मण्यणि प्राप्ते नन्द्यादिपाठात् ल्युः ॥—**विभीषण** इति । 'भियो हेतुभये षुक्' ॥—**ग्राही**ति । णिनेर्णित्त्वादुपधावृद्धिः ॥—**स्थायी**ति । आतो युक् ॥—**मन्त्री**ति । मत्रीति चुरादाविदित्पाठान्नुम्, 'णेरनिटि' इति लोपः ॥—**विषयी**ति । षिञ् बन्धने 'धात्वादेः-' इति षस्य सत्वे 'आदेशप्रत्ययोः' इति प्राप्तस्य षत्वस्य 'सात्पदाद्योः' इति निषेधादाह—**इह षत्वमपी**ति । निपातनादित्यनुषज्यते । 'परिनिविभ्यः' इति सूत्रे सितसयेति क्तान्ताजन्तसिनोतेर्ग्रहणाण्णिन्यन्तसिनोतेर्निपातनं विना षत्व दुर्लभमिति भावः ॥—**जारभरे**त्यादि । जार बिभर्ति, श्वानं पचतीति विग्रहः ॥—**श्वपाकोऽपी**ति । कर्मण्यणपि पक्षे भवतीति भावः ॥—**चेक्रिय** इति । संयोगपूर्वत्वात् 'एरनेकाचः-' इति न यण् ॥—**लोलुव** इति । इह सुबभावात् 'ओः सुपि' इति यण्नेति 'अचि श्नुधातु-' इत्युवङ् ॥—**मरीमृज** इति । 'रीगृदुपधस्य च' इति रीगागमः हलादिःशेषश्च नेति । सति तु हलादिःशेषे आगमस्य आदेशस्य वा विशेषो नास्तीत्या चाभ्यासस्येत्येव ब्रूयादिति भावः ॥—**पाटेर्णिलु**गिति । 'णेरनिटि' इति लोपे हि प्रत्ययलक्षणन्यायेन पाटूपट इत्यत्रोपधावृद्धिः स्यादिति भावः । इहापि पूर्ववद्ध्रस्वहलादिःशेषयोरभावः ॥—**इगुपध**-॥ इक् उपधा यस्य सः । ज्ञा अवबोधने प्रीञ् तर्पणे कॄ विक्षेपे । एषामितरेतरयोगद्वन्द्वे व्यत्ययेन पञ्चम्येकवचने कॄशब्दस्य धात्वनुकरणत्वेन प्रकृतिवदनुकरणमित्यतिदेशात् 'ॠत इद्धातोः' इति इत्वम् । समाहारद्वन्द्वे तु नपुंसकह्रस्वत्वे सति इत्व न स्यात् ॥—**ज्ञ** इति । जानातीति ज्ञः, 'आतो लोप इटि च' इत्यालोपः ॥—**पाघ्राध्मा**—। पा पाने । पा रक्षणे इत्ययं तु न गृह्यते लुग्विकरणत्वात् । इह सूत्रे उपसर्गे इति केचिदनुवर्तयन्ति तद्बहूनामसंमतम् । तथा च श्रीहर्षः 'फलानि धूमस्य धयानधोमुखान्' इति । श्रूयते च । 'यदा पश्यः पश्यते रुक्मवर्णः'

यीति ख्यतीव ङीप् प्राप्तः । ख्यशोऽन्यत्र नेष्यत इति हरदत्तः । पश्यतीति पश्यः । घ्रः संज्ञायां न । व्याघ्रादिभिरिति निर्देशात् । अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ।३।१।१३८। शः स्यात् । लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः सुखार्थः सौत्रो हेतुमण्ण्यन्तः । सातयः । वाऽसरूपन्यायेन क्विपि । सात् परमात्मा । सात्वन्तो भक्ताः । षह मर्षणे चुरादिः । हेतुमण्ण्यन्तो वा । साहयः । अनुपसर्गात्किम् । प्रलिपः ॥ * नौ लिम्पेर्वाच्यः ॥ निलिम्पा देवाः ॥ * गवादिषु विदेः संज्ञायाम् ॥ गोविन्दः । अरविन्दम् । ददातिदधात्योर्विभाषा ।३।१।१३९। शः स्यात् । ददः । दधः । पक्षे वक्ष्यमाणो णः । अनुपसर्गादित्येव । प्रदः । प्रधः । ज्वलितिकसन्तेभ्यो णः ।३।१।१४०। इतिशब्द आद्यर्थः । ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा । पक्षेऽच् । ज्वालः । ज्वलः । चालः । चलः । अनुपसर्गादित्येव । उज्ज्वलः ॥ * तनोतेरुपसंख्यानम् ॥ इहानुपसर्गादिति विभाषेति च न संबध्यते । अवतनोतीत्यवतानः । श्याद्व्यधास्रुसंस्रुतीणवसावहृलिहश्लिषश्वसश्च । ३।१।१४१। श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात् । श्यैङोऽवसतेश्चादन्तत्वात्सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम् । अवश्यायः । प्रतिश्यायः । आत् । दायः । धायः । व्याधः । स्रु गतौ । आङ्पूर्वः संपूर्वश्च । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः । दुन्योरनुपसर्गे ।३।१।१४२। णः स्यात् । दुनोतीति दावः । नीलाहचर्यात्सानुबन्धकाद्दुनोतेरेव णः । द्रवतेस्तु पचाद्यच् । द्रवः । नयतीति नायः । उपसर्गे तु प्रद्रवः । प्रणयः । विभाषा ग्रहः ।३।१।१४३। णो वा । पक्षेऽच् । व्यवस्थितविभाषेयम् । तेन जलचरे ग्राहः । ज्योतिषि ग्रहः ॥ भवतेश्चेति काशिका ॥ भवो देवः संसारश्च । भावाः पदार्थाः । भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच् । भावः । गेहे कः ।३।१।१४४। गेहे कर्तरि ग्रहेः कः स्यात् ।

इति ॥—**अनुपसर्गाल्लिम्पविन्द**-॥ इह लिम्पविन्देति भाविना नुमा सनुम्कौ निर्दिष्टौ तेन लाभार्थस्यैव विन्देर्ग्रहणं न तु सत्ताद्यर्थकानाम् ॥—**धारय** इति । धृञ् धारणे । धृङ् अवस्थाने । ण्यन्तयोर्द्वयोरपि ग्रहणम् । अथ कथं 'न मद्यमन्त्रोत्तरधारयस्य ते' इति श्रीहर्षः । परत्वाद्धि सूत्रधारादिष्विव कर्मण्यणा भाव्यम् । तथाच वार्तिकम् । 'अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन' इति । सत्यम् । कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति । एतेन गङ्गाधरभूधरजलधरादयो व्याख्याताः ॥—**पारय** इति । पार कर्मसमाप्तौ चुरादिण्यन्तः । पॄ पालनपूरणयोरिति वा हेतुमण्ण्यन्तः ॥—**वेदय** इति । विद चेतनाख्यानादिषु चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः । इहोदाहरणेषु लिपिविदिभ्यां 'तुदादिभ्यः शः' 'शे मुचादीनाम्' इति नुम् । धार्यादिभ्यस्तु शब्गुणायादेशाः ॥—**अरविन्दमिति** । चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अराः तदाकाराणि दलानि तत्सादृश्यादरास्तान् विन्दति लभते इत्यर्थे कर्मण्यणो बाधनायेदम् ॥—**ददातिदधात्योर्विभाषा** ॥ **ददः दध** इति । शे परे 'जुहोत्यादिभ्यः' इति श्लुः 'श्लौ' इति द्वित्वम् अपित्सार्वधातुकस्य शस्य ङित्वात् 'आतो लोपः–'इत्यालोपः ॥—**वक्ष्यमाणो ण** इति । 'श्याद्व्यधा–' इति णप्रत्यये आतो युकि दायः धायः ॥—**प्रदः प्रधः** इति । 'आतश्चोपसर्गे' इति कः । स्यादेतत् । दद दाने दध धारणे आभ्यामचि ददो दध इति सिद्धं दाधाभ्यामादन्तलक्षणे णप्रत्यये दायो धाय इत्यपि, ततश्चेद व्यर्थमिति चेत् । सत्यम् । स्वरार्थमिदं सूत्रम् । अददः अदधः । इहहि अव्ययपूर्वपदप्रकृतिस्वर इष्यते अजन्तत्वेन तु अजकावशक्तावित्यन्तोदात्तत्व स्यात् ॥—**इतिशब्द आद्यर्थ** इति । निपातानामनेकार्थत्वादिति भावः ॥—**श्याद्व्यधा**—॥ अनुपसर्गादिति निवृत्तम् । उत्तरसूत्रे पुनरनुपसर्गग्रहणाद् । एवं च तत्संबद्ध विभाषाग्रहणमपि निवृत्तं तदाह—**नित्यमिति** । इह सूत्रे श्यैङ् गतावित्यस्य आत्वे श्या आद् इति प्रश्लेषो न तु शीङो यणादेशेन नाप्यततेः अच्छब्दान्तानां वायतिप्रभृतीनां नाप्यकारान्तानां वा प्रश्लेषेण ग्रहण व्याख्यानादिति भावः ॥—**कं बाधितुमि**ति । अन्यथा 'आतश्चोपसर्गे' इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः स्यादित्यर्थः । स्रु गतौ । प्राचा तु सूत्रे आश्रु संश्रु इति तालव्य पठित्वा शृणोतिरुदाहृतस्तदनाकरम् । तथा च प्रयुञ्जते—'अनाश्रवावः किमहं कदापि वक्तु विशेषः परमस्ति शेष' इति नैषधादौ । अमरोऽप्याह 'वचने स्थित आश्रवः' इति । यदि तु सूत्रे अस्मिन् शृणोतेर्ग्रहण स्यात्तर्हि 'ऋदोरप्' इति सामान्यविहितमपं बाधित्वा आङ्पूर्वकाच्छृणोतेर्विशेषविहितोऽण् एव स्यात्, तथा च आश्रव इति रूपं न स्यात्किंत्वाश्राव इति स्यादिति दिक् ॥—**लेहः । श्लेष** इति । 'इगुपधज्ञा'—इति कप्रत्यये गुणो न स्यादिति भावः ॥—**दुनोतेरि**ति । टुदु उपतापे इत्यस्मात् ॥-**द्रवतेरि**ति । द्रु गतावित्यस्मात् ॥—**द्रव** इति । 'दवदावौ वनारण्यवन्ही' इत्यमरः ॥—**काशिके**ति । भाष्ये त्वेतद्वार्तिकं नास्तीति तन्मते भावशब्दोऽसाधुरित्यत आह—**भाष्यमतेत्वि**ति ॥—**गेहे कः** ॥ गेह इति प्रत्ययार्थस्य कर्तुर्विशेषणं नोपपदम् । 'गृहपतिना संयुक्ते ञ्यः' इति निर्देशादित्यभिप्रेत्याह—**गेहे कर्तरी**ति । एतत्सूत्रं तु शक्य-

गृह्णाति धान्यादिकमिति गृहम् । तात्स्थ्याद्गृहा दाराः । **शिल्पिनि ष्वुन्** ।३।१।१४५। क्रियाकौशलं शिल्पं तद्वत्कर्तरि ष्वुन् स्यात् ॥ *** नृतिखनिरञ्जिभ्य एव** ॥ नर्तकः । नर्तकी । खनकः । खनकी ॥ *** असि अकेऽने च रञ्जेर्नलोपो वाच्यः** । रजकः । रजकी । भाष्यमते तु नृतिखनिभ्यामेव ष्वुन् । रञ्जेस्तु क्वुन्शिल्पिसंज्ञयोरिति क्वुन् । टाप् । रजिका । पुंयोगे तु रजकी । **गस्थकन्** । ३।१।१४६। गायतेः स्थकन् स्यात् शिल्पिनि कर्तरि । गाथकः । **ण्युट् च** ।३।१।१४७। गायनः । टित्वाद्गायनी । **हश्च व्रीहिकालयोः** ।३।१।१४८। हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि । जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति हायनो वर्षम् । जिहीते प्राप्नोति वा । **प्रुसृल्वः समभिहारे वुन्** ।३।१।१४९। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः । सरकः । लवकः । **आशिषि च** ।३।१।१५०। आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात्कर्तरि । जीवतात् जीवकः । नन्दतात् नन्दकः । आशीः प्रयोक्तृधर्मः । आशासितुः पित्रादेरियमुक्तिः । **कर्मण्यण्** ।३।२।१। कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् । उपपदसमासः । कुम्भं करोतीति कुम्भकारः । आदित्यं पश्यतीत्यादावनभिधानान्न ॥ *** शीलिकामिभक्ष्याचरिभ्यो णः** ॥ अणोऽपवादार्थं वार्तिकम् । मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा ॥ *** ईक्षिक्षमिभ्यां च** ॥ सुखप्रतीक्षा । बहुक्षमा । कथं तर्हि गङ्गाधरभूधरादयः । कर्मणः शेषत्वविवक्षायां भविष्यन्ति । **ह्वावामश्च** ।३।२।२। अण् स्यात् । कापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः । **आतोऽनुपसर्गे कः** ।३।२।३। आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्त्राऽण् । आतो लोपः । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् । गोसन्दायः ॥ *** कविधौ सर्वत्र प्रसारणिभ्यो डः** । ब्रह्मजिनाति ब्रह्मज्यः । सर्वत्रग्रहणात् आतश्चोपसर्गे ।

---

मकर्तु गृहू ग्रहणे इति भ्वादेरिगुपधलक्षणे कप्रत्यये कृते गृहशब्दस्य सिद्धे. ॥—**तात्स्थ्यादि**ति । भवति हि तात्स्थ्यात्ताच्छब्द्यम् । मञ्चाः क्रोशन्तीत्यादौ मञ्चशब्देन पुरुषा अपि व्यपदिश्यन्ते, एवं च गृहशब्दो वेश्मनि मुख्यो दारेषु त्वौपचारिक इत्यर्थः । अत्रेदमवधेयम् । गृहशब्दोऽयमर्धर्चादित्वादुभयलिङ्गः, तत्र नपुंसकलिङ्गोऽभिधेयवचन. पुंलिङ्गस्तु बहुवचनान्त एव । 'गृहाः पुंसि च भूम्न्येव' इत्यमरोक्तेरिति ॥—**शिल्पिनि ष्वुन्** ॥ पूर्वेण साहचर्याच्छिल्पिनीत्यपि प्रत्ययार्थस्य विशेषण न तूपपदमित्याह—**तद्वति कर्तरी**ति ॥—**भाष्यमते त्वि**ति । तथा च षष्ठे 'रजकरजनरजःसूपसंख्यानम्' इति वार्तिक प्रत्याख्यातुं भाष्यकृतोक्तम् । रजकरजनरजःसु कित्वात् सिद्ध कित एवैते औणादिका इति तत्र कैयटः ॥—**रजक** इति । क्वुन् ॥ रजनमिति 'रञ्जेः क्युन्' इति क्युन् । रज इति 'भूरञ्जिभ्या कित्' इत्यसुन् प्रत्यय इत्यादि ॥—**गस्थकन्** ॥ गामादाग्रहणेष्वविशेषेऽपि गै शब्द इत्ययमेवेह गृह्यते न तु गाङ् गताविति थकन् प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातु समर्थ इत्याशयेनाह—**गायतेरि**ति ॥—**ण्युट् च** ॥ योगविभाग उत्तरत्र अस्यैवानुवृत्त्यर्थः ॥—**गायन** इति । आतो युक् ॥—**जहात्युदकमि**ति । उदकादधिक वर्धनात् ॥—**भावान्** इति । भावाः पदार्थाः तान् जिहीते इति ओहाङ् गतौ 'भृञामित्' इत्यभ्यासस्येत्वम् ॥— **प्रुसृल्वः** ॥ पञ्चमीस्थाने व्यत्ययेन जस् । 'ओः सुपि' इति यण् ॥—**लक्ष्यत** इति । भूयः सहचाराद् यो हि या क्रियां पुनः पुनरनुभवति स तत्र प्रायेण कौशलं लभते तेन सकृदपि यः सुष्ठु करोति तत्र वुन् यस्तु बहुशोऽपि दुष्ट करोति तत्र नेति भावः ॥—**आशिषि च** ॥ अप्राप्तप्रार्थनमाशीः सा च प्रयोक्तृधर्मो न प्रत्ययार्थः ।'कर्तरि कृत्' इति कर्त्रर्थे विधानादित्याशयेनाह—**आशीर्विषयार्थेत्या**दिना ॥—**जीवतादि**ति । जीवन तव भूयादित्यर्थः ॥—**जीवक** इति । स्त्रिया तु टाप्याशिषि वुनश्च नेति निषेधात् 'प्रत्ययस्थात्–'इति इत्वाभावः । जीवका ॥—**कर्मण्यण्** ॥—**उपपदसमास** इति । 'तत्रोपपदम्–'इति कर्मादिवाच्यकुम्भादिवाचकपदस्योपपदसंज्ञायाम् 'उपपदमतिङ्' इति समास इत्यर्थः ॥—**कुम्भकार** इति । अणि कृते 'कर्तृकर्मणोः कृति' इति षष्ठ्यन्तस्य कुम्भशब्दस्य कारशब्देन समासः ॥—**शेषत्वविवक्षायामि**ति । पदसंस्कारपक्षे तु धरतीति धरः गङ्गाया धर इति 'कर्मणि या षष्ठी तदन्तेन समास इति सुवचम् । स्यादेतत् । धातोर्विधीयमानस्याणादेः पदविधित्वाभावेन समर्थपरिभाषाया अनुपस्थानात्पश्यति कुम्भ करोति कटमित्यादावसमर्थादपि धातोरणादयः स्युरिति चेद् । अत्राहुः । कुम्भाद्युपपदे विधीयमानस्याणादेरपि पदाश्रितविधित्वात्समर्थपरिभाषोपस्थानान्नोक्तदोष । उपोच्चारितं पद ह्युपपदं पदं च सुप्तिङन्तमिति प्रागेवोक्तत्वादिति ॥—**ह्वावामश्च** ॥—**कापवाद** इति । 'आतोऽनुपसर्गे–'इति प्राप्तिबाधा ॥—**स्वर्गह्वाय** इत्यादि । ह्वेञ्वेञोः 'आदेच–' इत्यात्वे 'आतो युक्–'इति युक् । माङ् माने मेङ् प्रणिदाने अनयोरिह ग्रहणं न तु मा माने इत्यस्य अकर्मकत्वात् । कविधानस्य फलमाह—**आतो लोप** इति ॥—**पार्ष्णित्रमि**ति ॥ —**पार्ष्णि त्रायत** इति । त्रैङ् पालने ॥—**गोसंदाय** इति । अण् युक् ॥—**प्रसारणिभ्य** इति । प्रसारणमिति संप्रसारणपर्यायः ॥—**जिनाती**ति । ज्या वयोहानौ ॥—**क्र्यादिभ्य** इति । श्नाप्रत्यये 'ग्रहिज्या–'इति सम्प्रसारणे पूर्वरूपे 'हलः' इति दीर्घे च कृते 'प्वादीनाम्–'इति ह्रस्वः ।' —**ब्रह्मज्य** इति । डित्वसामर्थ्यादभस्यापि टेर्लोपः पूर्वेण के हि

आह्वः । प्रह्वः । ⧗ सुपि स्थः ।३।२।४। सुपीति योगो विभज्यते। सुपि उपपदे आदन्तात्कः स्यात् । द्वाभ्यां पिबतीति द्विपः । समस्थः । विषमस्थः । ततः स्थः ॥ सुपि तिष्ठतेः कः स्यात् । आरम्भसामर्थ्याद्भावे । आखूनामुत्थानमाखूत्थः । ⧗ प्रष्ठोऽग्रगामिनि ।८।३।९२। प्रतिष्ठत इति प्रष्ठो गौः । अग्रतो गच्छतीत्यर्थः । अग्रेति किम् । प्रस्थः । ⧗ अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ।८।३।९७। स्थ इति कप्रत्ययान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्यः स्थस्य सस्य षः स्यात् । द्विष्ठः । त्रिष्ठः । इत ऊर्ध्वं कर्मणि सुपीति द्वयमप्यनुवर्तते । तत्राकर्मकेषु सुपीत्यस्य संबन्धः । ⧗ तुन्दशोकयोः परिमृजापनुदोः ।३।२।५। तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात् । * आलस्यसुखाहरणयोरिति वक्तव्यम् । तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता । अलसादन्यत्र तुन्दपरिमार्जं एव । यस्तु संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः ॥ * कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् । मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः । गिलतीति गिलः । ⧗ प्रे दाज्ञः ।३।२।६। दारूपाज्जानातेश्च प्रोपसृष्टात्कर्मण्युपपदे कः स्यादणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः । अनुपसर्ग इत्युक्तेः प्रादन्यस्मिन्सति न कः । गोसंप्रदायः ॥ ⧗ समि ख्यः ।३।२।७। गोसंख्यः । ⧗ गापोष्टक् ।३।२।८। अनुपसृष्टाभ्यामाभ्यां टक् स्यात्कर्मण्युपपदे । सामगः । सामगी । उपसर्गे तु सामसङ्गायः ॥ * पिबतेः सुराशीध्वोरिति वाच्यम् । सुरापी । शीधुपी । अन्यत्र क्षीरपा ब्राह्मणी । सुरां पाति रक्षतीति सुरापा । ⧗ हरतेरनुद्यमनेऽच् ।३।२।९। अंशहरः । अनुद्यमने किम् । भारहारः ॥ * शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम् । शक्तिग्रहः । लाङ्गलग्रहः ॥ * सूत्रे च धार्येऽर्थे । सूत्रग्रहः । यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव । सूत्रग्राहः । ⧗ वयसि च ।३।२।१०। उद्यमनार्थं सूत्रम् । कवचहरः कुमारः । ⧗ आङि ताच्छील्ये ।३।२।११। पुष्पाण्या-

सति कित्त्वात्संप्रसारणादौ च ब्रह्मजिय इति स्यात् ॥—**आह्वः । प्रह्व** इति । के हि सति 'वचिस्वपि–' इत्यादिना ह्वेञः संप्रसारणे सत्याहुवः प्रहुव इति स्यादिति बोध्यम् ॥—**सुपि स्थः** ॥ सुबिति प्रत्याहारो गृह्यते न तु सप्तमीबहुवचनं कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणात् ॥—**आरम्भसामर्थ्यादि**ति । कर्तरि पूर्वेणैव सिद्धत्वादिह 'कर्तरि कृत्' इति न सवध्यते अनिर्दिष्टार्थश्च स्वार्थे धातो. स्वार्थो भाव एव । नन्वेव घञर्थे कविधानमित्यनेन गतार्थतेति चेत् । न । वार्तिक दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः । किंच 'षष्ठी' इति सूत्रेण पाक्षिकसमासे प्रसक्ते 'उपपदमतिङ्' इति नित्यसमासार्थमिदम् । अत एव ल्युडन्तेनाऽस्वपदविग्रहमाह—**आखूनामुत्थानमि**ति । नन्वेव घञर्थे कविधाने 'स्थास्नापाव्यधिहनियुध्यर्थम्' इति वार्तिके स्थाग्रहणं व्यर्थमिति चेद् । अत्राहुः । अकर्तरि कारके विधानार्थं तत्र स्थाग्रहणमिति ॥—**आखूत्थ** इति । स्था इत्यस्य के परे 'आतो लोपः' इत्यालोपः 'उदः स्थास्तम्भोः–' इति उदः परस्य थ , उदो दस्य चर्त्वम् । अत्र प्राचा आखूत्थ वर्तत इति नपुंसके पठित तदुपेक्ष्यमिति मनोरमायामुक्तम् । भाष्यादौ सर्वत्र पुल्लिङ्गस्यैवोदाहृतत्वात् । 'ल्युः कर्तरि मनिज् भावे कः किर्घो प्रादितोऽन्यतः' इत्यमरकोशे भावे कस्य पुस्त्वविधानाद् 'भावे नणकचिद्भ्योन्य' इति नपुसकविधानेन कस्य पर्युदासाच्चेति नणकचिद्भ्य इत्यत्र चकार इद्यस्य स चेन् नश्चणश्च कश्च चिच्च नणकचितस्तेभ्योऽन्य इति विग्रहः ॥—**अम्बाम्ब–॥ कप्रत्ययान्ते**ति । तेन भूमिस्थित गोस्थानमित्यादौ नेति भावः । प्राचा तु स्थस्य सस्येति व्याख्यातव्ये स्थः सस्येति व्याख्यात तदाकरविरोधेन कप्रत्ययान्तस्येत्यध्याहृत्य व्याख्येयम् ॥—**द्विष्ठः त्रिष्ठ** इति । द्वयोस्तिष्ठतीत्यादि विग्रहः । एवमम्बष्ठः आम्बष्ठः गोष्ठः भूमिष्ठ सव्यष्ठः अपष्ठ. कुशेष्ठः कुष्ठः शङ्कुष्ठः अङ्गुष्ठः मञ्जिष्ठः पुञ्जिष्ठः परमेष्ठः बर्हिष्ठः दिविष्ठः अग्निष्ठः ॥—**आभ्यामि**ति । परिमृजापनुदोरित्यत्र पञ्चम्यर्थे षष्ठीति भावः ॥—**तुन्दपरिमृज** इति । अत्र मृजेरजादाविति वैकल्पिकी वृद्धिर्व्यवस्थितविभाषया नेत्येके । स्यादेवेत्यन्ये ॥—**मूलविभुजादिभ्य** इति । तादर्थ्ये एषा चतुर्थी मूलविभुजादिसिध्यर्थमित्यर्थः ॥—**प्रेदा–॥** गामादाग्रहणेष्वविशेषादाह ॥—**दारूपादि**ति ॥ **पथि प्रज्ञ** इति । पन्थानं प्रकर्षेण जानातीत्यर्थः ।—**प्रादन्यस्मिन्नि**ति । प्रशब्दमात्रोपपदे अस्य सूत्रस्य चरितार्थत्वादुपसर्गान्तरे सति 'आतोऽनुपसर्ग' इत्यनेनापि न भवतीति भावः ॥—**गोसंख्य** इति । गाः सचष्टे इति विग्रहः । चक्षिङः ख्याञ् । ख्या प्रकथन इत्यस्य तु सपूर्वस्य प्रयोगो नास्तीति न्यासकारः । सार्वधातुकमात्रविषयोऽसौ धातुरिति च मनोरमादौ स्थितम् ॥—**गापोष्टक्** ॥ इह गामादाग्रहणेष्वविशेषेऽपि गायतेरेव ग्रहणं न तु गाङ् गतौ गा स्तुतौ इत्यनयोः, अनभिधानात् ।—**सामगा सामगी**ति । एतेन टकः कित्त्वमालोपार्थं टित्त्वं तु ङीबर्थमिति ध्वनितम् । प्रत्ययाधिकाराट्टकः प्रत्ययत्वेन प्रत्ययः परश्चेति धातोः पर एव स्यादित्याद्यन्तौ टकिताविल्यस्यात्र आशङ्कैव नास्तीति बोध्यम् ॥—**सामसंगाय** इति । कर्मण्यणि सति 'आतो युक्–'इति युक् ॥—**पिबतेरि**ति । लुग्विकरणालुग्विकरणयोरिति परिभाषालब्धार्थकथनमुपपदपरिगणन तु वाचनिकमेव ॥—**क्षीरपे**ति ॥ क्षीरं पिबतीत्यातोऽनुपसर्गे कः ॥—**शक्ती**ति । घटग्रहणेनैव सिद्धे घटीग्रहण लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थं तेन

हरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् । भारहारः । **अर्हः ।३।२।१२।** अर्हतेरच् स्यात्कर्मण्युपपदे । अणोऽपवादः । पूजार्हा ब्राह्मणी । **स्तम्बकर्णयो रमिजपोः ।३।२।१३।** हस्तिसूचकयोरिति वक्तव्यम् । स्तम्बे रमते स्तम्बेरमो हस्ती । तत्पुरुषे कृतीति हलदन्तादिति वा अलुक् । कर्णेजपः सूचकः । **शमि धातोः संज्ञायाम् ।३।२।१४।** शम्भवः । शम्वदः । पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम् । कृञो हेत्वादिषु टो मा भूत् । शङ्करा नाम परिव्राजिका तच्छीला । **अधिकरणे शेतेः ।३।२।१५।** खे शेते खशयः ॥ * **पार्श्वादिषूपसंख्यानम्** । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः ॥ * **उत्तानादिषु कर्तृषु** । उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य सः अवमूर्धा । अधोमुखः शेते इत्यर्थः ॥ * **गिरौ डश्छन्दसि** । गिरौ शेते गिरिशः । कथं तर्हि गिरिशमुपचचार प्रत्यहं सा सुकेशीति । गिरिरस्यास्तीति विग्रहे लोमादित्वाच्छः । **चरेष्टः ।३।२।१६।** अधिकरणे उपपदे । कुरुचरः । कुरुचरी । **भिक्षासेनादायेषु च ।३।२।१७।** भिक्षां चरतीति भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः । कथं प्रेक्ष्य स्थितां सहचरीमिति । पचादिषु चरडिति पाठात् । **पुरोऽग्रतोऽग्रेषु सर्तेः ।३।२।१८।** पुरस्सरः । अग्रतस्सरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः । सूत्रेऽग्रे इति एदन्तत्वमपि निपात्यते । कथं तर्हि यूथं तदग्रसरगर्वितकृष्णसारमिति । बाहुलकादिति हरदत्तः । **पूर्वे कर्तरि ।३।२।१९।** कर्तृवाचिनि पूर्वशब्दे उपपदे सर्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरतीति पूर्वसारः । **कृञो हेतुताच्छील्यानुलोम्येषु ।३।२।२०।** एषु द्योत्येषु करोतेष्टः स्यात् । अतः कृकमीति सः । यशस्करी विद्या । श्राद्धकरः । वचनकरः । **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ।३।२।२१।** एषु कृञष्टः स्यात् अहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः । भास्करः । बहुकरः । बहुशब्दस्य वैपुल्यार्थे संख्यापेक्षया पृथग्ग्रहणम् । लिपिलिबिशब्दौ पर्यायौ । संख्या । एककरः । द्विकरः । कस्कादित्वादहस्करः । नित्यं समासेऽनुत्तरपदस्थस्येति षत्वम् । धनुष्करः । अरुष्करः ॥ * **कियत्तद्बहुषु कृञोऽज्विधानमिति वार्तिकम्** । किंकरा । यत्करा । तत्करा । हेत्वादौ टं बाधित्वा परत्वादच् । पुंयोगे ङीष् । किंकरी ।

---

मद्रराज्ञीत्यत्र टच्, द्विषतीताप इत्यत्र 'द्विषत्परयोः' इति खच् नेति दिक् ॥—**कवचहर** इति । कवचोद्यमन क्रियमाणं सम्भाव्यमानं वा वयो गमयति तेनासत्यपि कवचग्रहणे कवचहर इति भवत्येव ॥—**हस्तिसूचकयोरि**ति । अन्यत्र तु स्तम्बे रन्ता कर्णे जपिता ॥—**शमि धातोः—**॥ शमि उपपदे धातुमात्रात्संज्ञायामच् स्यात् ॥—**पुनर्धातुग्रहणमि**ति । असति धातुग्रहणे शमि सञ्ज्ञायामित्यस्यावकाशः शभवः शवदः, 'कृञो हेतुताच्छील्ये' इत्यस्यावकाशः श्राद्धकरः शङ्कर इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात् धातुग्रहणे कृते तु तस्सामर्थ्यादजेव भवति तदाह—**शङ्करा नामेत्या**दि ॥—अनधिकरणार्थमुपसंख्यानमिति दर्शयति पार्श्वाभ्यामित्यादिना ॥—**कुरुचर** इति । कुरुषु देशेषु चरत्यटतीत्यर्थः ॥—**भिक्षासेना—**॥ अनधिकरणार्थ आरम्भः ॥—**भिक्षां चरती**ति । चरतिरत्र चरणपूर्वके अर्जने वर्तते चरणेन भिक्षामर्जयतीत्यर्थः ॥—**सेनाचर** इति । सेनां चरति प्रविशतीत्यर्थः ॥—**पचादिष्वि**ति । टविधान तु 'उपपदमतिङ्' इति नित्यसमासार्थम् । सहचरः । सहचरीत्यत्र तु सुप्सुपेति वैकल्पिकः समासः ॥—**कृञो—**॥ हेतुरिह लौकिको न तु 'तत्प्रयोजको हेतुश्च' इति कृत्रिमः, केवले कृञि तदसंभवात् ॥—**द्योत्येष्वि**ति । न तु वाच्येषु 'कर्त्तरि कृत्' इत्यस्य बाधापत्तेरिति भावः ॥ हेत्वादिषु क्रमेणोदाहरति—**यशस्करीत्या**दि । एषु किम् । कुम्भकारः । इह प्रसिद्धतरत्वाड्डुकृञनुबन्धोऽपि करोतिरेव गृह्यते न तु कृञ् हिंसायामिति । हेतुः कारणम् । आनुलोम्यमाराध्यचित्तानुवर्तनम् ॥—**दिवाविभा—**॥ ननु अन्तशब्देन नञ्समासे स्वीकृतेऽपीष्टसिद्धौ सूत्रे त्वन्तशब्दात्पृथगनन्तग्रहणं व्यर्थमिति चेद् । अत्राहुः । स्वरे तु विशेषोऽस्ति नञ्समासे हि अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः स्यात्, अनन्तशब्दस्योपपदत्वे तु 'गतिकारकोपपदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमिति ॥—**दिवाकर** इति । दिवा दिवस करोतीति विग्रहः । दिवाभूता रात्रिरित्यादाविव दिवाशब्दस्य वृत्तिविषये शक्तिमत्परत्वात् । मूलेऽनुक्तान्यपि कानिचिदुदाहरणानि ऊह्यानि । कर एव कारः प्रज्ञादित्वादण् । कारं करोतीति कारकरः आदिकरः नान्दीकरः किंकरः बलिकरः भक्तिकरः कर्तृकरः चित्रकरः क्षेत्रकरः जङ्घाकरः बाहुकरः इति ॥—**वार्तिकमि**ति । कैयटहरदत्तादिरीत्योक्तम् । माधवस्तु इष्टिरियमित्याह ॥—**पुंयोगे ङीषि**ति । यत्तु न्यासकृतोक्तं हेत्वादिषु पूर्वसूत्रेण ट एव भवति तेन किंकरणशीला किंकरीत्युपपन्नं भवतीति तन्नादर्तव्यम् । परत्वादचा टचो बाधितत्वात्पूर्वविप्रतिषेधस्य निर्मूलत्वाच्चेति भावः । वृत्तौ तु पक्षान्तरमप्युक्तमथवा पचादिषु पाठः करिष्यत इति दिवाविभेत्यस्मिन् सूत्रे किमादिग्रहणमपनीय पचादिष्वेव 'कियत्तद्बहुषु कृञ' इति पठितव्यं वार्तिकमपीत्यमेव नेयमिति तस्याशयः । अस्मिन्पक्षे कर्मण्यणं बाधित्वा चरितार्थमिदं वचनं हेत्वादिविवक्षायां परत्वाट्टेन बाध्यते तेन पुंयोगं विनापि किंकरी स्यादेव पुंयोगविवक्षायां तु निर्विवादो ङीष्, कियत्तद्बहुष्वजेवेति प्रक्रियायां

**कर्मणि भृतौ ।३।२।२२।** कर्मशब्दे उपपदे करोतेष्टः स्यात् । कर्मकरो भृतकः । कर्मकारोऽन्यः । **न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।३।२।२३।** एषु कृञष्टो न । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकार इत्यादि । **स्तम्बशकृतोरिन् ।३।२।२४॥ * व्रीहिवत्सयोरिति वक्तव्यम् ।** स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः किम् । स्तम्बकारः । शकृत्कारः । **हरतेर्दृतिनाथयोः पशौ ।३।२।२५।** दृतिनाथयोरुपपदयोर्हृञ इन् स्यात्पशौ कर्तरि । दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः । पशौ किम् । दृतिहारः । नाथहारः । **फलेग्रहिरात्मम्भरिश्च ।३।२।२६।** फलानि गृह्णाति फलेग्रहिः । उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीति आत्मम्भरिः । आत्मनो मुमागमः । भृञ इन् । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । ज्योत्स्नाकरम्भमुदरम्भरयश्चकोरा इति मुरारिः । **एजेः खश् ।३।२।२८।** ण्यन्तादेजेः खश् स्यात् । **अरुर्द्विषदजन्तस्य मुम् ।६।३।६७।** अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते उत्तरपदे न त्वव्ययस्य । शित्त्वाच्छबादि । जनमेजयतीति जनमेजयः । **वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम् ॥** वातमजा मृगाः । **खित्यनव्ययस्य ।६।३।६६।** खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात् । ततो मुम् । शुनिन्धयः । तिलन्तुदः । शर्धंजहा माषाः । शर्धोऽपानशब्दः तं जहति इति विग्रहः । जहातिरन्तर्भावितण्यर्थः । **नासिकास्तनयोर्ध्माधेटोः ।३।२।२९।** अत्र वार्तिकम् ॥ *** स्तने धेटो नासिकायां ध्मश्चेति वाच्यम्** । स्तनं धयतीति स्तनन्धयः । धेटष्टित्वात् स्तनन्धयी । नासिकन्धमः । नासिकन्धयः । **नाडीमुष्टयोश्च ।३।२।३०।** एतयोरुपपदयोः कर्मणोर्ध्माधेटोः खश् स्यात् ॥ *** यथासंख्यं नेष्यते ।** नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ॥ *** घटीखारीखरीषूपसंख्यानम् ।** घटिन्धमः । घटिन्धय इत्यादि । खारी परिमाणविशेषः । खरी गर्दभी । **उदि कूले रुजिवहोः ।३।२।३१।** उत्पूर्वाभ्यां रुजिवहिभ्यां कूले

विकल्पोक्तिस्त्वाकरविरुद्धत्वात्कर्मण्यणोऽपि पक्षे प्रसङ्गाच्चायुक्तैव । न चाजभावे 'दिवाविभा—'इति टः स्यादिति वाच्यम् । सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वाद् । अथ वा सूत्रे किमाद्यपनयनं मास्त्विति प्रौढिवादेन प्रक्रियाग्रन्थः प्रवृत्तः इति स्वीक्रियते । तथा च हेत्वाद्यविवक्षायां किंयत्तदिति वार्तिकेनाच्, तद्विवक्षायां तु परत्वाट्ट इति विषयविशेषे व्याख्याभेदात् फलित विकल्पमाश्रित्य प्रक्रियायामज्वेति प्राचोक्तमिति स्थितस्य गतिः समर्थनीया ॥—**कर्मणि भृतौ** ॥ भृतिर्वेतनम् । कर्मानुवृत्तौ पुनः कर्मग्रहणात्स्वरूपपरतेत्याह—**कर्मशब्द** इति ॥—**स्तम्बकरिरि**त्यादि । इनो नित्त्वात् कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम् ॥—**कुक्षिम्भरि**रिति । एव च 'गिरिस्तु कनकाचलः कति न सन्ति चाश्मव्रजा' किटिस्तु धरणीधरः कति न सन्ति भूदारकाः । मरुत्तु मलयानिल कति न सन्ति झञ्झानिलाः प्रभुस्तु विबुधाश्रयः कति न सन्ति कुक्षिम्भराः ॥' इति केषांचित्प्रयोगः प्रामादिक एव ॥—**एजेः खश्** ॥ एजृ कम्पने एजेरिति ण्यन्तस्य निर्देशो न तु शुद्धस्यैका निर्देशः, खशः शित्करणाल्लिङ्गात् । तद्धि सार्वधातुकत्वे सति शप् यथा स्यादिति । न च शुद्धस्य शब्दस्य शपि सत्यसतिवा विशेषोऽस्ति । न चोत्तरार्थं शित्त्वमिति वाच्यम् । इहार्थत्वे संभवति केवलोत्तरार्थत्वस्यान्याय्यत्वात्तदेतदाह—**ण्यन्तादेजे**रिति ॥—**अरुर्द्विषत्**—॥ वर्णग्रहणे तदन्तविधेः सिद्धावप्यन्तग्रहणं शुनिंधय इत्यादौ ह्रस्वे कृते मुम्प्रवृत्त्यर्थम् । तथा हि अन्त.शब्दः समीपपरः अच्चासावन्तश्चेति विग्रहः निपातनाद्विशेषणस्य परनिपातः । समीपः । 'खित्यनव्ययस्य' इति सूत्रेण विहितो योऽच् तदन्तस्य मुमिति व्याख्यायते । एवं च जनमेजय इत्यादौ स्वतो ह्रस्वेऽपि मुम्सिद्धये प्रथमं खितीति ह्रस्वः प्रवर्त्तनीय इत्यवधेयम् ॥—**शर्द्धंजहा** इति । शर्द्धनं शर्द्धः । शृधु कुत्सायाम् । घञ् तं जहति इति ॥ ननु माषाः शर्द्धमपानशब्द त्याजयन्ति न तु स्वतो जहतीत्याशङ्कायामाह—**अन्तर्भावितण्यर्थ** इति । यथासख्य वारयितुमाह—**अत्रे**ति ॥—**धेटष्टित्त्वा**दिति । अवयवे अचरितार्थत्वादिति भावः । खश्प्रत्ययान्तादेव धेटो ङीबिष्टो नान्यत इति वर्धमानक्षीरस्वामिहरदत्तादयः । तेन 'पाघ्राध्माधेड्—'इति शप्रत्यये 'आतोऽनुपसर्गे कः इति कप्रत्यये च टाबेव । धया कन्या । गां धयतीति गोधा । अत्र संप्रदाय एव शरणम् ॥—**नासिकंधम**इति । 'पाघ्राध्मा—'इति धमादेशः ॥—**नाडीमुष्टयोश्च**॥**यथासख्यं** नेति । एतच्चेहैव सूत्रे भाष्ये वृत्तौ च स्थितम् । यत्तु यथासख्यमितिसूत्रे नाडीमुष्टयोरित्युदाहृत भाष्ये तत्प्राप्तिमात्राभिप्रायेणेत्येके, शब्दकौस्तुभे तु मतभेदेन तद्बोध्यमिति स्थितम् ॥—**घटीखारीखरीष्वि**ति । जयादित्यस्तु वातशब्दमप्युदाजहार । वातधमः वातंधय इति, तत्तु भाष्यादौ न दृश्यत इति मूलेएवोपेक्षितम् ॥—**उदि कूले**—॥ ननु कूलस्येवोच्छब्दस्यापि सप्तम्यन्तत्वादुपपदत्वं स्यात्तश्च रुजिवहिभ्यां सह यथासंख्य स्यादिति चेत् । अत्राहुः । नाडीमुष्ट्योरितिवल्लाघवादुत्कूलयोरिति वक्तव्ये उदीति व्यस्तोच्चारणान्नोपपदम् । एवं चोदीति पञ्चम्याः स्थाने सप्तमी रुजिवहोरिति तु पञ्चम्याः स्थाने षष्ठीति । एतच्च यथासंख्यसूत्रे कैयटे स्पष्टम् । किं च रुजेः सकर्मकत्वात्कर्मणी-

कर्मण्युपपदे खश् स्यात्। कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः । **वहाभ्रे लिहः** ।३।२।३२। वहः स्कन्धस्तं लेढीति वहंलिहो गौः । अदादित्वाच्छपो लुक् । खशो ङित्वान्न गुणः । अभ्रंलिहो वायुः । **परिमाणे पचः** ।३।२।३३। प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः । **मितनखे च** ।३।२।३४। मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवाची । **विध्वरुषोस्तुदः** ।३।२।३५। विधुन्तुदः । मुमि कृते संयोगान्तस्य लोपः । अरुन्तुदः । **असूर्यललाटयोर्दृशितपोः** ।३।२।३६। असूर्यमित्यसमर्थसमासः । दृशिना नञः संबन्धात् । सूर्यं न पश्यन्तीत्यसूर्यम्पश्या राजदाराः । ललाटन्तपः सूर्यः । **उग्रम्पश्येरम्मदपाणिन्धमाश्च** ।३।२।३७। एते निपात्यन्ते । उग्रमिति क्रियाविशेषणं । तस्मिन्नुपपदे दृशेः खश् । उग्रं पश्यतीत्युग्रम्पश्यः । इरा उदकं तेन माद्यति दीप्यतेऽविन्धनत्वादिति इरम्मदो मेघज्योतिः । इह निपातनात् श्यन्न । पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा । अन्धकाराद्यावृत इत्यर्थः । तत्र हि सर्पाद्यपनोदनाय पाणयो ध्मायन्ते । **प्रियवशे वदः खच्** ।३।२।३८। प्रियंवदः । वशंवदः ॥ * गमेः सुपि वाच्यः । असंज्ञार्थमिदम् । मितङ्गमो हस्ती ॥ * विहायसो विह इति वाच्यम् ॥ * खच्च डिद्वा वाच्यः । विहङ्गमः । विहङ्गः । भुजङ्गमः । भुजङ्गः । **द्विषत्परयोस्तापेः** ।३।२।३९। खच् स्यात् । **खचि ह्रस्वः** ।६।४।९४। खच्परे णौ उपधाया ह्रस्वः स्यात् । द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या । तेनेह न । द्विषतीं तापयतीति द्विषतीतापः । **वाचि यमो व्रते** ।३।२।४०। वाक्शब्दे उपपदे यमेः खच् स्याद्व्रते गम्ये । **वाचंयमपुरन्दरौ च** ।६।३।६९। वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः । **पूःसर्वयोर्दारिसहोः** ।३।२।४१। पुरं दारयतीति पुरन्दरः । सर्वंसहः । सहिग्रहणमसंज्ञार्थम् ॥ भगे च दारेरिति काशिका । बाहुलकेन लब्धमिदमित्याहुः । भगं दारयतीति भगन्दरः । **सर्वकूलाभ्रकरीषेषु कषः** ।३।२।४२। सर्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या । **मेघर्तिभयेषु कृञः** ।३।२।४३। मेघङ्करः । ऋतिङ्करः । भयंकरः । भयशब्देन तदन्तविधिः । अभयङ्करः । **क्षेमप्रियमद्रेऽण् च** ।३।२।४४। एषु कृञोऽण् स्यात् । चात् खच् क्षेमङ्करः । क्षेमकारः । प्रियङ्करः । प्रियकारः । मद्रङ्करः । मद्रकारः । वेति वाच्येऽण्ग्रहणं हेत्वादिषु टो मा भूदिति । कथं तर्हि अल्पारम्भाः क्षेमकरा इति । कर्मणः शेषत्वविवक्षायां पचाद्यच् । **आशिते भुवः करणभावयोः** ।३।२।४५। आशितशब्दे उपपदे भवतेः खच् । आशितो भवत्यनेनाशितम्भवः ।

---

त्युपतिष्ठते तेन कूल विशेष्यते नोच्छब्दः,असत्ववाचित्वेनासभवात् तदेतदाह—**उत्पूर्वाभ्यामि**त्यादिना ॥ **विधुन्तुद** इति । अरुर्द्विषदजन्तस्येत्युकारात्परो मुम् । 'तमस्तु राहु. स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः॥—**अरुन्तुद** इति । 'अरुन्तुदस्तु मर्मस्पृग्' इत्यमरः। 'व्रणोऽस्त्रियामीर्ममरुः इति च ॥—**असूर्यंपश्या** इति । 'पाघ्राध्मा-' इति पश्यादेशः । गुप्तिपर चेदम् । एव नाम राजदाराः गुप्ताः यदपरिहार्यदर्शन सूर्यमपि न पश्यन्ति किं पुनः परपुरुषमिति । तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते । यदा तु सूर्याभावदर्शनमात्र सूर्येतरचन्द्रादेर्दर्शन वा विवक्षित तदा खश् न भवत्यनभिधानादिति न्यासकारादयः ॥—**प्रियवशे वदः खच्** ॥ खकारो मुमर्थश्चकारस्तु 'खचि ह्रस्व.' इति विशेषणार्थ इति वृत्ति' । खे ह्रस्व इत्युच्यमाने 'एजेः खश्' जनमेजय इत्यत्रापि स्यादिति तदाशयः । एकानुबन्धग्रहणं द्व्यनुबन्धस्य न ग्रहणमिति खशि न भविष्यतीत्यादिना वृत्तिग्रन्थस्यायुक्तत्वमाहुः । खशि प्रकृते प्रत्ययान्तरकरणमुत्तरार्थम् । द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां शप् च माभूदिति । नन्वेवमुत्तरत्रैव क्रियतामिति चेत् । सत्यम् । इह करणमन्यतोऽपि क्वचित् भवतीति ज्ञापनार्थं, तेन गमेः सुपीति नापूर्व वार्तिक कि तु ज्ञापकसिद्धमेव ॥—**असंज्ञार्थमि**ति । सज्ञायां तु वक्ष्यमाणेन 'गमश्च' इति सूत्रेणैव सिद्धमिति भावः ॥—**विहंगम** इति । विहायसा आकाशेन गच्छतीति विग्रहः ॥ पूर्ववार्तिकेनैक्यमकृत्वा 'खच् च डिद्वा' इति पृथक्करणसामर्थ्यादन्यत्रापि क्वचिद्भवतीत्याशयेनोदाहरति—**भुजंगमः भुजंग** इति। इह गमेःसुपीति खच्॥—**द्विषन्तप** इति । 'अरुर्द्विषत्-' इति मुमि कृते सयोगान्तलोपः॥—**वाचियमो व्रते॥निपात्यत** इति ॥ न चैवं खच् प्रत्ययोऽप्यत्रैव निपात्यतामिति वाच्यम् । व्रतादन्यत्रापि प्रसङ्गात् । यदि तु निपातनबलादेव व्रतविषयता आश्रीयते तत्रैव वा व्रतग्रहणं क्रियते वाचंयमो व्रते पुरंदरश्चेति तदा इह 'वाचि यमो व्रते' इति सूत्रं पूःसर्वयोरित्यत्र पुरिदारेत्यंशश्च शक्यमकर्तुम् ॥—**पूःसर्वयोः**—॥ दॄ विदारणे अयमेव गृह्यते न तु दॄ भये दृङ् आदर इत्येताविति संप्रदायः । असज्ञार्थमिदम् । संज्ञाया तु 'सज्ञायां भृतॄवृजि' इति वक्ष्यमाणेन सिध्यतीति भावः ॥—**आशितंभव** इति । यावता ओदनेन अतिथ्यादिर्भोजितो भवति स एवमुच्यते । इह वासरूपविधिना ल्युडपि । आशितभवनं, घञ् तु बाध्यत एव सरूपत्वादित्याहुः । न चात्र क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ल्युटो निषेधः शङ्क्यः । यत्र हि घञादेर्बाधकत्वेन क्तल्युडादयः प्रसक्तास्तत्र नित्य बाधो न तु विकल्पेनेति तस्यार्थः । इह तु ल्युटोऽप्यपवादः खच् । अत्र वासरूपन्यायो निर्बाध एव । एतच्च

ओदनः । आदित्यस्य भवनं आदितम्भवः । **संज्ञायां भृतृवृजिधारिसहितपिदमः** ।३।२।४६। विश्वं बिभर्तीति विश्वम्भरः । विश्वम्भरा । रथन्तरं साम । इह रथेन तरतीति व्युत्पत्तिमात्रं न त्ववयवार्थानुगमः । पतिंवरा कन्या । शत्रुंजयो हस्ती । युगंधरः पर्वतः । शत्रुंसहः । शत्रुंतपः । अरिंदमः । दमिः शमनायां तेन सकर्मक इत्युक्तम् । मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः । **गमश्च** ।३।२।४७। सुतंगमः । **अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः** ।३।२।४८। संज्ञायामिति निवृत्तम् । एषु गमेर्डः स्यात् । डित्वसामर्थ्यादभस्यापि टेर्लोपः । अन्तं गच्छतीत्यन्तग इत्यादि ॥ * **सर्वत्रपन्नयोरुपसंख्यानम्** । सर्वत्रगः । पन्नं पतितं गच्छतीति पन्नगः । पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम् ॥ * **उरसो लोपश्च** । उरसा गच्छतीत्युरगः ॥ * **सुदुरोरधिकरणे** । सुखेन गच्छत्यत्र सुगः । दुर्गः ॥ * **अन्यत्रापि दृश्यते इति वक्तव्यम्** । ग्रामगः । * **डे च विहायसो विहादेशो वक्तव्यः**। विहगः। **आशिषि हनः** ।३।२।४९। शत्रुं वध्याच्छत्रुहः । आशिषि किम् । शत्रुघातः ॥ * **दारावाहनोऽणन्तस्य च टः संज्ञायाम्** । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः । दार्वाघाटः ॥ * **चारौ वा** । चार्वाघाटः ॥ * **कर्मणि समि च** । कर्मण्युपपदे संपूर्वाद्धन्तेरुक्तं वेत्यर्थः । वर्णान्संहन्तीति वर्णसङ्घाटः । पदसङ्घाटः । वर्णसङ्घातः । पदसङ्घातः । **अपे क्लेशतमसोः** ।३।२।५०। अपपूर्वाद्धन्तेर्डः स्यात् । अनाशीरर्थमिदम् । क्लेशापहः पुत्रः । तमोपहः सूर्यः । **कुमारशीर्षयोर्णिनिः** ।३।२।५१। कुमारघाती । शिरसः शीर्षभावो निपात्यते । शीर्षघाती । **लक्षणे जायापत्योष्टक्** । ३।२।५२। हन्तेष्टक् स्याल्लक्षणवति कर्तरि । जायाघ्नो ना । पतिघ्नी स्त्री । **अमनुष्यकर्तृके च** ।३।२।५३। जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । अमनुष्येति किम् । आखुघातः शूद्रः । अथ कथं बलभद्रः प्रलंबघ्नः । शत्रुघ्नः । कृतघ्न इत्यादि । मूलविभुजादित्वात्सिद्धम् । चोरघातो नगरघातो हस्तीति तु बाहुलकादणि । **शक्तौ हस्तिकपाटयोः** ।३।२।५४। हन्तेष्टक् स्यात् शक्तौ द्योत्यायाम् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कपाटघ्नश्चोरः । कवाटेति पाठान्तरम् । **पाणिघताडघौ शिल्पिनि** ।३।२।५५। हन्तेष्टक् टिलोपो घत्वं च निपात्यते पाणिताडयोरुपपदयोः । पाणिघः । ताडघः । शिल्पिनि किम् । पाणिघातः । ताडघातः ॥ * **राजघ उपसंख्यानम्** । राजानं हन्ति राजघः । **आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्** ।३।२।५६। एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात् । अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम् । अच्वौ किम् । आढ्यीकुर्वन्त्यनेन । प्रतिषेधसामर्थ्यात् इह ल्युडपि नेति काशिका । भाष्यमते तु ल्युट्

---

आशितभवनमित्युदाहरतो जयादित्यस्यापि समतमेवेति दिक् ॥—**संज्ञायां भृतृ-**॥ 'विश्वभरः कैटभजित्' । 'रसा विश्वंभरा स्थिरा' इत्यमरः ॥—**व्युत्पत्तिमात्रमि**ति । तत्फल तु स्वरावग्रहौ 'रथतरमाजभारा वसिष्ठः' इत्यत्र हि रथमित्यवगृह्णन्ति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्व चाधीयते अखण्डत्वे त्ववग्रहो न स्यान्नवविषयस्येत्याद्युदात्तश्च स्यात् ॥—**इत्युक्तमि**ति । माधवाद्यनुरोधेनेत्यर्थः ॥—**मतान्तरेत्वि**ति । हरदत्तादिमत इत्यर्थः । चित्तव्यापारोपरमः शमः इन्द्रियव्यापारोपरमस्तु दम इत्यादि वेदान्तग्रन्थाश्चेहानुकूलाः । सञ्ज्ञायां किम् । कुटुम्ब बिभर्तीति कुटुम्बभारः ॥—**गमश्च** ॥ पूर्वसूत्र एव गमिर्नोक्तः उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात् । भृतृप्रभृतीनां माभूदिति ॥—**सुदुरोरधिकरणे** ॥ कर्मणि तु 'ईषद्दुःसुषु'—इति खलेव, सुखेन गम्यत इति सुगम पन्थाः । दुर्गमः ॥—**दाराविति**। शब्दापेक्षया पुल्लिङ्गता तदाह—**दारुशब्द** इति । 'काष्ठ दार्विन्धन त्वेधः' इत्यमर.।टविधानार्थमिदम् । अण् तु कर्मण्यणित्येव सिद्धः । 'अलोऽन्त्यस्य' इत्येव सिद्धेऽन्तग्रहण स्पष्टार्थम् । अन्यथा हि टः प्रत्ययः सभाव्येत ॥—**दार्वाहन्ती**ति । दार्वाघाटः । गोधाकालकादार्वाघाटत्रस्ते वनस्पतीनाम् ॥—**कुमारशीर्षयोर्णिनिः** ॥ एतयो कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात् । 'सुप्यजातौ—' इत्यादिभिः सिद्धे ताच्छील्यावश्यकाधमर्ण्यविरहेऽपि णिन्यर्थ शिरसः शीर्षभावार्थ वचनम् ॥—**लक्षणवती**ति । सूत्रे लक्षणशब्दोऽर्श आद्यजन्त इति भावः ॥—**जायाघ्न** इति । जायामरणसूचक पाणिरेखाविशेषादिक यस्यास्ति स ता हन्तीति गौणो व्यवहारः । एव पतिघ्नीत्यत्रापि बोध्यम् ॥—**अमनुष्यकर्तृके च** ॥ मनुष्यभिन्नकर्तृकेऽर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टक् स्यात् । यद्यप्यमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहेति प्रागुक्तम् । तथापीह लक्ष्यानुरोधेन व्याख्यातव्यमित्याशयेनाह—**तिलकालक** इत्यादि । नानुबन्धकृतमसारूप्यमिति टगणोः सारूप्याद्वाऽसरूपविध्यप्रवृत्तेराह—**बाहुलकादि**ति ॥—**शक्तौ हस्ति-**॥ शक्तौ किम् । विषेण हस्तिन हन्तीति हस्तिघातः । यद्यपीह शक्तिरस्ति अशक्तस्य कर्तृत्वानुपपत्तेस्तथापि शक्तिग्रहणसामर्थ्यात्प्रकर्षो विज्ञायते तेन स्वबलेनैव हन्तुं या शक्तिः सा गृह्यते ॥—**कपाटघ्न** इति । कं शिरः पाटयति प्रविशत इति कपाटम् । पाठान्तरे तु अटतेः पचाद्यच् । 'कवं चोष्णे' इत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः ॥—**आढ्यसुभग-**॥—**च्व्यर्थेष्वि**ति । अभूततद्भावविषयेष्वित्यर्थः ॥—**आढ्यंकरणमि**ति । लिङ्गविशिष्टपरिभाषया आढ्याशब्देऽप्युपपदे यदा ख्युन् तदापि 'खित्यनव्ययस्य' इति ह्रस्वेन एतदेव रूपम् ॥—**आढ्यीकुर्वन्त्यनेने**ति । नन्विह ख्युनोऽभावेऽपि 'करणाधिकरणयोश्च' इति ल्युटा भवितव्यमित्यत आह—**प्रतिषेधसामर्थ्या-**

स्यादेव । अच्वावित्युत्तरार्थम् । **कर्तरि भुवः खिष्णुच्खुकञौ ।३।२।५७।** आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवतीति आढ्यम्भविष्णुः । आढ्यम्भावुकः । **स्पृशोऽनुदके क्विन् ।३।२।५८।** घृतस्पृक् । कर्मणीति निवृत्तम् । मन्त्रेण स्पृशतीति मन्त्रस्पृक् । **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।३।२।५९।** व्याख्यातम् । **त्यदादिषु दृशोऽनालोचने कञ्च ।३।२।६०।** * **समानान्ययोश्चेति वाच्यम् ।** सदृक् । सदृशः । अन्यादृक् । अन्यादृशः ॥ * **क्सोऽपि वाच्यः ।** तादृक्षः । सदृक्षः । अन्यादृक्षः । **सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।३।२।६१।** एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे । द्युसत् । उपनिषत् । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् । प्रध्रुक् । गोधुक् । प्रधुक् । अश्वयुक् । प्रयुक् । वेदवित् निविदित्यादि ॥ * **अग्रग्रामाभ्यां नयतेर्णो वाच्यः ।** अग्रणीः । ग्रामणीः । **भजो ण्विः ।३।२।६२।** सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात् । अंशभाक् । प्रभाक् । **अदोऽनन्ने ।३।२।६८।** विट् स्यात् । आममत्ति आमात् । सस्यात् । अनन्ने किम् । अन्नादः । **क्रव्ये च ।३।२।६९।** अदेर्विट् । पूर्वेण सिद्धे वचनमण्बाधनार्थम् क्रव्यात् आममांसभक्षकः । कथं तर्हि क्रव्यादोऽस्रप आशर इति । पक्वमांसशब्दे उपपदेऽण् । उपपदस्य क्रव्यादेशः पृषोदरादित्वात् । **दुहः कब्घश्च ।३।२।७०।** कामदुघा । **अन्येभ्योऽपि दृश्यन्ते ।**

---

दिति । तथाहि आढ्यीकरणमिति रूपं ल्युट्ख्युनोस्तुल्यम् । न च ख्युनि मुमूह्रस्वौ स्यातामिति वाच्यम् । अनव्ययस्येति पर्युदासात् । 'ऊर्यादिच्विडाचश्च' इति निपातसंज्ञकत्वेन च्व्यन्तस्य अव्ययत्वात् । न च ख्युनि सति 'उपपदमतिङ्' इति नित्यसमासो लभ्यते, ल्युटि तु नेति वाच्यम् । ल्युट्यपि गतिसमासस्य सम्भवात् । तस्यापि नित्यसमासत्वात् । न च स्त्रीप्रत्यये विशेषः, ल्युटि 'टिड्ढा–' इति सूत्रेण ख्युनि तत्रत्येन ख्युन उपसंख्यानेन च ङीपस्तुल्यत्वात् । नापि स्वरे विशेषः, ल्युटि लित्स्वरेण कृञ उदात्तत्वाविशेषात् । न चोत्तरार्थमच्वावित्युक्तमिति वाच्यम् । केवलोत्तरार्थत्वे हि तत्रैव ब्रूयात् । तदेतदुक्त**मिह ल्युडपि ने**ति ॥—**भाष्यमते त्वि**ति ॥ भाष्यवार्तिकस्वरसेन ल्युडिष्ट इति केवलोत्तरार्थत्वं लभ्यते । अतस्तद्विरोधात् वृत्तिकृन्मतमयुक्तमिति कैयटः ॥—**कर्त्तरि भुवः**–॥—**अच्व्यन्तेष्वि**ति । अच्वावित्यनुवर्तते अन्यथा आढ्यीभविष्णुः आढ्यीभावुक इति स्यादिति भावः । कर्तृग्रहणं करणानुवृत्तिभ्रमनिरासार्थमुत्तरार्थं चेति प्राञ्चः । वस्तुतस्तु व्यर्थमेव अस्वरितत्वादेवाननुवृत्तिसिद्धेः उत्तरत्राप्युपयोगो नेति स्पष्टीकरिष्यमाणत्वाच्च । खकारो मुमर्थः । चकारः 'चितः' इत्यन्तोदात्तार्थः । ञकारो वृद्ध्यर्थः । स्यादेतत् । खिष्णुच इकारो मास्तु ख्ष्णुरित्येवोच्यताम्, एवं चकारोऽपि न कर्तव्यः प्रत्ययस्वरेणैवाभिमतसिद्धेः, इकारादित्वसिद्धये इडागमे कृतेऽपि 'आगमा अनुदात्ताः' इति तस्यानुदात्तत्वात् । न च 'कृत्योकेष्णुच्चार्वादयश्च' इति स्वरसूत्रे अस्य ग्रहणं न स्यात् । चकारानुबन्धाभावादिकारस्य लाक्षणिकत्वात्षत्वणत्वयोरसिद्धत्वेनेष्ण इति रूपाभावाच्चेति वाच्यम् । कृतेऽपि इकारे तदनुबन्धस्येति परिभाषया अलंकृञादीष्णुच एव ग्रहणं स्यान्न त्वेतस्य । इकारोच्चारणसामर्थ्यादस्यापि ग्रहणमिति चेद्धन्तैवं ख्ष्णुजयमस्तु तत्रेटि कृते चकारानुबन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेणेति चिन्त्यमेतत् । न चेह लाघवाभावादिकारोऽस्तु चकार एव मास्त्विति शङ्क्यम् । एकमात्रो ह्रस्वः व्यञ्जनमर्धमात्रकमिति सर्वसम्मतत्वात् । यत्तु हरदत्तेनोक्तं षत्वणत्वयोः सामर्थ्यादस्याग्रहणमिति तदापाततः । ख्नुजपेक्षया ष्णुजुक्तौ प्रत्युत प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामर्थ्यायोगादिति दिक् ॥—**निवृत्तमि**ति । ननु स्पृशेः सकर्मकत्वात्कर्मण्युपपदे इति चेद् । अत्र प्राञ्चः । पूर्वसूत्रात्कर्त्तरि इत्यनुवर्त्तते सा चानुवृत्तिः 'कर्तरि कृत्' इत्यनेनैव कर्तरि क्विनः सिद्धत्वाद्व्यर्था सती कर्तृप्रचयार्था, कर्मण्युपपदे एकः कर्त्ता करणादौ चापर इत्येवं कर्तृप्रचयस्तथा च सुबन्ते उपपदे इति फलितं भवतीति मन्त्रस्पृगित्याद्यपि सिद्धमिति । वस्तुतस्तु कर्तृग्रहणं व्यर्थमिति पूर्वसूत्र एवोक्तम् । न चेह कर्तृप्रचयार्थं तदावश्यकमिति शङ्क्यम् । मन्त्रस्पृगित्यादेः क्विपि सिद्धेः । न च क्विपि कुत्वं न स्यादिति वाच्यम् । क्विन्प्रत्ययो यस्मादिति बहुव्रीहित्वादेव कुत्वसम्भवादिति दिक् ॥—**सदृगि**ति । तमिवेमं पश्यन्ति जनाः स इवायं पश्यति ज्ञानविषयो भवतीति व्युत्पत्त्या कर्मकर्तरि प्रत्ययः दृश्यर्थानुगुणत्वात् ॥—**सत्सूद्विष**–॥ षद्लृ विशरणादौ सू इति द्विषा साहचर्यात्सूतेरादादिकस्य ग्रहणं न तु सुवतिसूयत्योः । युजिर् योगे युज समाधौ द्वयोरपि ग्रहणम् । विद ज्ञाने विद विचारणे विद सत्तायां त्रयाणामपि ग्रहणम् । विद्लृ लाभे इत्यस्य तु न ग्रहणम् विदेत्यकारस्य विवक्षितत्वात् ॥—**द्युसदि**ति । 'पूर्वपदात्–' इति षत्वं तु न भवति छन्दसीत्यनुवृत्तेः । तथा च माघः— 'मनस्सु येन द्युसदाम्न्यधीयते' इति । 'आदितेया दिविषदः' इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः । उपनिषदित्यत्र तु 'सदिरप्रतेः' इति षः ॥—**अग्रग्रामाभ्यामि**ति । 'स एषां ग्रामणीः' इति निर्देशेन ज्ञापितमेतत् । नीरूपप्रत्ययविषयत्वे भेद, तेन कर्मण्यणि णत्वं न भवति । ग्रामनायः । ज्ञापकस्य सामान्यविषयत्वात् अग्रशब्दोपपदादपि णत्वं तेनाग्रणीरित्यपि सिद्धमित्याहुः ॥—**अदोऽनन्ने** ॥—**विट् स्यादि**ति । 'जनसनखनक्रमगमो विट्' इति पूर्वसूत्रानुवृत्तेः । पूर्वसूत्रं त्विह नोपन्यस्तम् । तत्र हि 'छन्दसि सहः' इत्यतः छन्दसीत्यनुवर्तनात् ॥—**कामदुघे**ति । धेनुरिति शेषः । कामं दोग्धीति

।३।२।७५। छन्दसीति निवृत्तम् । मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः । **नेड्वशि कृति** ।७।२।८। वशादेः कृत इण्न स्यात् । शॄ । सुशर्मा । प्रातरित्वा । **विड्वनोरनुनासिकस्याऽऽत्** ।६।४।४१। अनुनासिकस्य आत्स्यात् । विजायत इति विजावा । ओणृ । अवावा । विच्, रोट । रेट् । सुगण् । **क्विप् च** ।३।२।७६। अयमपि दृश्यते । सत्सूद्विषेति त्वस्यैव प्रपञ्चः । उखास्रत् । पर्णध्वत् । वाहभ्रट् । **अन्तः** ।८।४।२०। पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् । शास इदितीत्वम् । मित्राणि शास्ति मित्रशीः ॥ * **आशासः क्वावुपधाया इत्वं वाच्यम्** । आशीः । इत्वोत्वे । गीः । पूः । **ह्रस्वमन्त्रन्क्विषु च** ।६।४।९७। एषु छादेर्ह्रस्वः स्यात् । तनुच्छत् । अनुनासिकस्य क्वीति दीर्घः । मो नो धातोः । प्रतान् प्रशान् । च्छ्वोरित्यूठ् । अक्षद्यूः । ज्वरत्वरेत्यूठ् । जूः । जूरौ । जूरः । तूः । स्रूः । ऊः । वृद्धिः । जनानवतीति जनौः । जनावौ । जनावः । मूः । मुवौ । मुवः । सुमूः । सुम्वौ । सुम्वः । राल्लोपः । मूर्छा, मूः । मुरौ । मुरः । धुर्वी, धूः । **गमः क्वौ** ।६।४।४०। अनुनासिकलोपः स्यात् । अङ्गगत् ॥ * **गमादीनामिति वक्तव्यम्** । परीतत् । संयत् । सुनत् ॥ * **ऊङ् च गमादीनामिति वक्तव्यम्** । लोपश्च । अग्रेगूः । अग्रेभ्रूः । **स्थः क च** ।३।२।७७। चात् क्विप् । शंस्थः । शंस्थाः । शमि धातोरित्यचं बाधितुं सूत्रम् । **सुप्यजातौ णिनिस्ताच्छील्ये** ।३।२।७८। अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी । अजातौ किम् । ब्राह्मणानामन्त्रयिता । ताच्छील्ये किम् ।

---

विग्रहः ॥—**अन्येभ्योपि दृश्यन्ते** ॥ इह 'विजुपे छन्दसि' इत्यतो विच् प्रत्ययः । 'आतो मनिन्–' इति सूत्रान्मनिनादयश्चानुवर्तन्ते तदाह—**मनिन्क्वनिबित्यादि** ॥—**सुशर्मेति** । सुष्ठु शृणातीति विग्रहः । प्रातः एतीति प्रातरित्वा । इणः क्वनिपि 'ह्रस्वस्य पिति–' इति तुक् ॥—**अवावेति** । अनुनासिकस्य आत्वे अवादेशः सौ दीर्घनलोपौ ॥—**रोट् रेडिति** । रुष रिष हिंसायाम् । उपधागुणः जश्त्वचर्त्वे ॥—**वाहभ्रडिति** पाठः । वाहादश्वाद् भ्रश्यतीति विग्रहः । वृत्तौ तु वहाभ्रडिति पाठः । वहः स्कन्धः 'अन्येषामपि दृश्यते' इति पूर्वपदान्तस्य दीर्घ इति हरदत्तः ॥—**अन्तः** ॥ अनितेरिति वर्तते अन्तश्चोत्तरपदापेक्षो गृह्यते नानितेरपेक्षयाऽव्यभिचारादत आह—**पदान्तस्येति** ॥—**हे प्राणिति** । अन प्राणने क्विप् 'अनुनासिकस्य' इति दीर्घः । 'न ङिसंबुद्ध्योः' इति नलोपनिषेधः । अन्यत्र तु न लोपेन भाव्यमिति सबुद्ध्यन्तमुदाहृतम् ॥—**मित्रशीरिति** । लुप्तेऽपि क्विप्प्रत्यये प्रत्ययलक्षणन्यायेन हलादिकित्प्रत्ययपरत्वमस्ति, वर्णाश्रये नास्ति प्रत्ययलक्षणमित्येतद्वर्णप्राधान्य एवेत्युक्तत्वादिति भावः ॥—**आशास** इति । शासु अनुशिष्टौ आङः शासु इच्छायामात्मनेपदे 'शास इत्–'इत्यादिना सिद्धे क्वावेव उपधाया इत्वमिति नियमार्थमिदम् । तेन आशास्ते इति सिद्धमित्येके । अन्ये तु विध्यर्थमेवेद न नियमार्थं प्राप्त्यभावात् । न च 'शास इदङ् हलोः' इति इत्वस्य प्राप्तिरस्तीति वाच्यम् । तत्राङ्साहचर्यात्परस्मैपदिन एव शासेर्ग्रहणात् । यद्यपि सर्त्तिशास्तीति सूत्रे पृथक् योगकरणादर्त्तेर्लुङि आरत समारतेति पदद्वयेऽप्यङिति सिद्धान्तस्तथाप्युत्तरार्थतया परस्मैपदग्रहणानुवृत्तेरप्याकरे स्पष्टतया परस्मैपदे दृष्टो यः शास्तिस्तस्मात्परस्याङिति निष्कर्षः । तथा चाऽऽशास्ते इत्यत्र इत्वप्रसक्तिरेव नास्तीत्याहुः । वस्तुतस्तु 'आशिषि लिङ्लोटौ' 'क्षियाशीःप्रैषेषु' इत्यादिनिर्देशेनैव सिद्धमिति नेदमपूर्ववार्तिकम् । ततश्च इत्वं वाच्यमित्यस्य इत्व व्याख्येयमित्यर्थः । आशिषीत्याद्युक्तनिर्देशादिति दिक् ॥—**सुम्वाविति** । 'ओः सुपि' इति यण् ॥—**स्थः क च** ॥—**शंस्था** इति । क्विपि लुप्ते 'घुमास्था–' इति ईत्व न, स्थानिवद्भावस्य अनल्विधाविति निषेधात् । प्रत्ययलक्षणसूत्रं तु प्रत्ययस्यासाधारणरूप यत्राश्रीयते तत्रैवेति नियमार्थमिति निष्कर्षात् । यत्तु कैयटेनोक्तम् । ईत्वमवकारादाविति वचनाद्भाष्यकारीयोदाहरणप्रामाण्याद्वा प्रत्ययलक्षणेन ईत्व नेति तत अतृणेडित्यादिसिद्धये प्रत्ययप्राधान्ये अल्विध्यर्थं प्रत्ययलक्षणसूत्रमिति पक्षमभिप्रेत्य तत्राप्यवकारादाविति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण पक्षान्तरस्वीकार इति बोध्यम् । न तु नियमार्थमिति निष्कर्षपक्षे तु प्रागुक्तमित्रशीरित्यत्र कथमित्वं भवेदिति चेत् । अत्राहुः । शासः इदिति ततः अङि नियमार्थमिदम् । अजादौ चेदित्व स्यादङ्येव नान्यत्रेति हल्ग्रहणं मास्त्विति ज्ञेयमिति । न चैवमपि हलादौ पिति सार्वधातुके तृण इमो विधानादतृणेडित्यादि तु नियमपक्षे न सिध्यतीत्यल्विध्यर्थमिति पक्षोऽपि स्वीकार्य इति वाच्यम् । 'उतो वृद्धिः–' इति सूत्राद्धल्ग्रहणमनुवर्त्य तृणहानीत्यत्रानिष्टवारणाय 'नाभ्यस्तस्याचि–' इति सूत्रादचि नेत्यनुवर्त्य व्याख्यानात् । एतच्च रुधादिगण एव व्याख्यातम् । स्यादेतत् । 'सुपि स्थः' 'क्विप् च' इति सूत्राभ्यां कक्विपौ सिद्धौ तत्राह—**शमीत्यादि** । धातुग्रहणसामर्थ्याद्धि धातुमात्राद्भवन्नच् प्रत्ययो हेत्वादिषु कृञष्टं यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेतेति 'स्थः क च' इत्यारम्भ इति भावः । नन्वेव 'शमि धातोः'—इत्यस्यानन्तरं 'स्थः क च' इति सूत्र्यतां चकारेणाचि समुच्चिते सवर्णदीर्घेण शस्था इति भविष्यति एव चोत्सर्गापवादयोः समानदेशतया संदर्भशुद्धिरपि लभ्यते इत्वाभावार्थं च न यतनीयमिति महल्लाघवमिति चेत् । अत्राहुः । अशंस्था इत्यत्र 'अच्कावशक्तौ' इति सूत्रेणोत्तरपदमन्तोदात्तं स्यात् । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' इति शस्थाशब्दस्याजन्तत्वात् । क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वरः सिध्यतीति ॥—**उष्णभोजीति** । उष्ण भोक्तुं शीलमस्य ॥—**आमन्त्र-**

वर्ष्यं भङ्क्तुं कदाचित् । इह वृत्तिकारेणोपसर्गभिन्न एव सुपि णिनिरिति व्याख्याय उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानमिति पठितम् । हरदत्तमाधवादिभिश्च तदेवानुसृतम् । तच्च भाष्यविरोधादुपेक्ष्यम् । प्रसिद्धश्चोपसर्गेऽपि णिनिः । स बभूवोपजीविनाम् अनुयायिवर्गः । पततयो धाम विसारि । न वञ्चनीयाः प्रभवोऽनुजीविभिरित्यादौ ॥ * साधुकारिण्युपसंख्यानम् ॥ * ब्रह्मणि वदः । अताच्छील्यार्थं वार्तिकद्वयम् । साधुदायी । ब्रह्मवादी । ॥ कर्तर्युपमाने ।३।२।७९। णिनिः स्यात् । उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अताच्छील्यार्थं जात्यर्थं च सूत्रम् । कर्तरि किम् । अपूपानिव भक्षयति माषान् । उपमाने किम् । उष्ट्रः क्रोशति ॥ व्रते ।३।२।८०। णिनिः स्यात् । स्थण्डिलशायी । ॥ बहुलमाभीक्ष्ण्ये ।३।२।८१। पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः । क्षीरपायिण उशीनराः । ॥ मनः ।३।२।८२। सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी । ॥ आत्ममाने खश्च।३।२।८३।स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् चाण्णिनिः। पण्डितमात्मानं मन्यते पण्डितम्मन्यः । पण्डितमानी । खित्यनव्ययस्य । कालिम्मन्या। अनव्ययस्य किम् ।दिवामन्या। ॥ इच एकाचोऽम्प्रत्ययवच्च । ६।३।६८। इजन्तादेकाचोऽम् स्यात्स च स्वाद्यम्वत्खिदन्ते परे । औतोऽम्शसोः । गाम्मन्यः । वाम्शसोः । स्त्रियम्मन्यः । श्रीम्मन्यः । नृ । नरम्मन्यः । भुवम्मन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारवचनात्

---

यितेति । मत्रि गुप्तपरिभाषणे चुरादिराङ्पूर्वः । इदित्वान्नुम् । ताच्छील्यस्य विवक्षितत्वात्तृन् । अत एव 'न लोक–' इति निषेधात् ब्राह्मणानित्यत्र कर्मणि षष्ठी न कृता ॥—उपसर्गभिन्न एवेति । 'सत्सूद्विष–' इति सूत्रे उपसर्गेऽपीत्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लाभायास्मिन्सूत्रे पुनः सुब्ग्रहणं कृतमिति भावः ॥—भाष्यविरोधादिति । उक्तं च भाष्ये सुपिति वर्तमाने पुनः सुब्ग्रहणं किमर्थमनुपसर्ग इत्येव तदभूत् इद तु सुप्मात्रे यथा स्यादुदारासारिण्यः प्रत्यासारिण्य इति । अस्यायमाशयः । 'सत्सूद्विष–' इति सूत्रे 'सुपि स्थः' इत्यतः सुपीत्यनुवर्तते तच्च उपसर्गेतरपरम् । उपसर्गेऽपीति पृथगुक्तेः । तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यादिति निष्कर्षे तु मा भूदिह सुब्ग्रहणमुपसर्गेपीत्यंशस्याप्यनुवृत्त्या निर्वाहात् । सर्वथापि सुप्मात्रे उपपदे णिनिः न त्वनुपसर्ग एवेति सिद्धान्तः । एतच्च शब्दकौस्तुभे स्पष्टम् ॥—प्रसिद्धश्चेति । एवं च पाणिनीयानुसारिणीमिति प्रक्रियाकारप्रयोगोऽपि निर्बाध एव । अमरश्च प्रायुङ्क्त । 'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति दिक् ॥—साधुकारिणीति । एतच्च ज्ञापकसिद्धम् । 'आ क्वेः' इति सूत्रे हि तच्छीलात्पृथक् साधुकारी गृह्यते तच्च ताच्छील्यं विनापि णिनौ सत्येव सगच्छते ॥—ब्रह्मणि वदः । इदं तु वाचनिकमेव । अताच्छील्यार्थमिदम् । एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम् । यत्तु भट्टवार्तिके ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यान कृतम् । आ क्वेरित्यधिकारे तु ब्रह्मणि वदेर्णिनिविधायक वचन नास्त्येवेति कथमिदं संगच्छेतेति चेत् । अत्राहुः । भट्टपादानामयमाशयः । 'सुप्यजातौ–' इति सूत्रेण ताच्छील्ये णिनिः उपसख्यानेन ज्ञापकेन वा साधुकारिणि णिनिः 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यके णिनिस्तु तद्धर्मे पर्यवस्यति न त्विह 'आ क्वेः' इति सूत्रस्य व्यापारोऽस्तीति। ननु ब्रह्मवादिनो वदन्ति इत्यत्र ब्रह्म वेद इति ब्रह्मशब्दस्यापि जातिवाचकत्वात्कथमिह ताच्छील्ये णिनिरिति समर्थनमिति चेत् । अत्र नव्याः । 'सुप्यजातौ–' इत्यत्र प्राणिजातिरेव पर्युदस्यते ताच्छील्यसमभिव्याहारात् । ब्राह्मणानामन्त्रयितेति प्रत्युदाहरणानुगुण्याच्चेति न काप्यनुपपत्तिरिति ॥—मनः ॥ बहुलग्रहणानुवृत्तेरिह मन ज्ञान इति दैवादिकस्यैव ग्रहण न तु मनु अवबोधन इति तानादिकस्य । तेन उत्तरसूत्रे खशि श्यनेव भवति न तूप्रत्ययस्तदाह—मन्यतेरिति ॥ आत्ममाने—॥ मनन मानः, भावे घञ्, आत्मनो मान इति कर्मणि षष्ठ्या समासः । स्वपर्याय आत्मशब्दः प्रत्ययार्थत्वेन सन्निहितकर्ता स्वपदार्थस्तदाह—स्वकर्मक इत्यादि ॥—चादिति । ननु वासरूपविधिना लभ्यत एव णिनिरिति किमर्थश्चकार इति चेत् । अत्राहुः । चकारेण विच्छेदाय णिनिः समुच्चीयते । तेन 'करणे यजः' इत्यादौ णिनिरेवानुवर्तते न तु खश्, एवं चोक्तप्रयोजनानुरोधेन चानुकृष्टं नोत्तरत्रेतीह न प्रवर्तेत इति ॥—पण्डितमात्मानमिति । एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं पण्डितत्वविशिष्टरूपेण च कर्मत्व बोध्यम् । आत्ममाने किम् । दर्शनीयमानी देवदत्तो यज्ञदत्तस्य ॥—कालिमन्येति । 'स्त्रियाः पुंवत्–' इति प्राप्त पुंवद्भाव बाधित्वा परत्वाद् ह्रस्व. । यत्त्वत्र 'क्यङ्मानिनोः' इति प्राप्तः पुंवद्भाव इति प्रसादकृतोक्तं, तद्भ्रमसोक्तमेव, मानिन्रूपाभावस्य स्पष्टत्वात् ॥—दिवामन्येति । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिस्वभावात्कर्मत्वम् ॥—इच एकाचः–॥ अम्ग्रहणमिहावर्तते, तत एकेन अम् विधीयते परेण प्रत्ययो विशेष्यते तदाह—स्वाद्यम्वदिति । एव च 'न विभक्तौ तुस्माः' इति निषेधान्मकारस्य नेत्संज्ञा, अत एव परश्च भवति । औतोऽम्शसोरित्यत्र शसा साहचर्यात् सुबेवाम् गृह्यत इत्युक्तत्वादोत आकारश्च भवतीत्याशयेनोदाहरति—गाम्मन्य इति ॥—नरम्मन्य इति । 'ऋतोऽङि'–इत्यादिना गुणः ॥—भाष्यकारेति । अयं भावः । यथा प्रष्ठादयः शब्दाः पुंयोगात्स्त्रियां वर्तन्ते प्रष्ठी गणिकेति तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्तते, तत्र 'ह्रस्वो

**श्रीशब्दस्य ह्रस्वो मुममोरभावश्च । भूते ।३।२।८४। अधिकारोऽयम् । वर्तमाने लडिति यावत् । करणे यजः ।३।२।८५। करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि । सोमेनेष्टवान् सोमयाजी । अग्निष्टोमयाजी । कर्मणि हनः ।३।२।८६। पितृव्यघाती । कर्मणीत्येतत्सहे चेति यावदधिक्रियते । ब्रह्मभ्रूणवृत्रेषु क्विप् । ३।२।८७। एषु कर्मसूपपदेषु हन्तेर्भूते क्विप्स्यात् । ब्रह्महा । भ्रूणहा । वृत्रहा । क्विप् चेत्येव सिद्धे नियमार्थमिदम् । ब्रह्मादिष्वेव हन्तेरेव भूते एव क्विबेवेति चतुर्विधोऽत्र नियम इति काशिका । ब्रह्मादिष्वेव क्विबेवेति द्विविधो नियम इति भाष्यम् । सुकर्मपापमन्त्रपुण्येषु कृञः ।३।२।८९। सौ कर्मादिषु च कृञः क्विप्स्यात् । त्रिविधोऽत्र नियम इति काशिका । सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । क्विबेवेति नियमात्कर्म कृतवानित्यत्राण्न । कृञ एवेति नियमान्मन्त्रमधीतवान्मन्त्राध्यायः । अत्र न क्विप् । भूत एवेति नियमात् मन्त्रं करोति करिष्यति वेति**

---

नपुंसके–' इति ह्रस्वः । मुम् तु न अपवादेनामा बाधात् । 'स्वमोर्नपुंसकात्' इत्यमो लुक् । न चैव गामन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयोः' इति लुक् स्यादिति वाच्यम् । अम्विधिसामर्थ्यादेव तद्बाधादित्याहुः । अम्प्रत्ययस्तु 'मध्येऽपवादा' इति न्यायेन 'सुपो धातुप्रातिपदिकयोः' इति लुकमेव बाधते न तु 'स्वमोर्नपुंसकात्' इति लुकमिति भाष्यादौ स्थितम् । स्यादेतत् । नपुसकह्रस्वे कृते मुमः प्राप्तिरेव नास्ति कथमत्रापवादेन अमा बाधादित्युक्तिः संगच्छेत 'अरुर्द्विषत्–' इति सूत्रे हि अन्तग्रहणस्य समीपवाचित्वेन 'खित्यनव्ययस्य' इति ह्रस्वे कृते पश्चान्मुमिति व्याख्यातत्वात् । सत्यम् । जनमेजय इत्यत्र स्वतः सिद्धेऽपि ह्रस्वे यथा 'खित्यनव्ययस्य' इति पुनर्ह्रस्वो मुमर्थं स्वीक्रियते तथाऽत्रापि भवेदित्यस्त्येव मुमः प्राप्तिरिति ॥—**भूते**॥ धातोरित्यधिकाराद्धात्वर्थस्य विशेषणमिदम् । भूतेऽर्थे विद्यमानाद्धातोरित्यर्थः ॥—**करणे**–॥ स्वरितत्वाण्णिनिरेवानुवर्तते न तु खश् इत्याह—**णिनिः स्याद्**िति । सोमेन लताविशेषेण याग कृतवानित्यर्थः ॥—**अग्निष्टोमे**ति । अग्निष्टोमस्तोत्रेण समाप्यमानो यो यागस्स लक्षणयाऽग्निष्टोमस्तेनापूर्वं भावितवानित्यर्थः । उक्तं च काशिकायाम् । अग्निष्टोमः फलभावनायां करणमिति ॥—**कर्मणि हनः** ॥—**पितृव्यघाती**ति । अत्र काशिका । कुत्सितग्रहणं कर्तव्यमिह माभूत् चोर हतवानिति । यद्यपीद भाष्ये नास्ति तथापि शब्दशक्तिस्वाभाव्यादिदं लभ्यत इत्याहुः ॥—**चतुर्विध** इति । अयमाशयः । इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्यास्ततोऽन्तर प्रकृतित्वाद्धन्तिस्ततः परिशेषाद्भूत इति । क्विप् तु सर्वान्ते निर्देष्टव्यः । विधेयत्वात् । तदेव वचनव्यक्तिः । ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति । एव स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्यायेन नियमोऽत्र भवन्ननन्तरे भवति ततश्च ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तर निर्दिष्टत्वादुपपदान्तरसबन्धनिवृत्तिफलो नियमो भवति । ब्रह्मादिषु हन्तेरेव भूते इत्यवधारणे त्वनन्तरत्वाद्विशेषेऽपि प्राथम्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः, ब्रह्मादिषु हन्तेर्भूते एव क्विबित्यवधारणे तु क्विप्हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात्कालान्तरसंबन्धनिवृत्तिफलकः प्रत्ययनियमः । ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ प्रत्ययान्तरसबन्धनिवृत्तिफलकः कालनियमः । सोऽय प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः । अगृह्यमाणविशेषात्तु चतुर्विधस्यापीह ग्रहणम् । तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूत इत्याश्रयणाद्वर्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव पुरुष हन्ति हनिष्यति वा पुरुषहा । अरिहयोगविचक्षणः । अरीन् हन्तीति अरिहा स चासौ योगश्च अरिहयोगस्तत्र विचक्षण इत्यर्थः । प्रकृतिनियमफलं तु पुरुष हतवान् पुरुषहा इति भूतार्थे प्रयोगाभावः । ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेऽपि भूत इत्याश्रयणाद्वर्तमानभविष्यत्कालयोर्धात्वन्तरादपि भवत्येव । वृत्र जयति जेष्यति वा वृत्रजिदिति । उपपदनियमफल तु वृत्र जितवान् वृत्रजिदिति प्रयोगाभावः । भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विप् भवत्येव पुरुष हन्ति हनिष्यति वा पुरुषहा, अरिहेति प्रागवत् । प्रत्ययनियमफलं तु ब्रह्माण हन्ति ब्रह्महेत्यादिप्रयोगाभावः । भूते क्विबेवेति कालनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तर भवत्येव पितृव्य॰हतवान् पितृव्यघाती, । इह 'कर्मणि हनः' इति भूते णिनिः । कालनियमफलं तु ब्रह्माणं हतवान् ब्रह्मघातीति प्रयोगाभावः । सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते निष्ठा तु भवत्येव । वृत्र हतवानिति । भाष्यकारस्तु प्रकृतिकालनियमावेवाशिश्रियत् । तस्यायमाशयः । धातुकाले हि नेह सूत्रे श्रुतौ किं तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ अतस्तयोरेवोपरोधो न्याय्यो न तूपपदप्रत्यययोः श्रुत्युपस्थापितत्वात् । एव न्यायोपष्टब्धेन भाष्येण सह विरोधाद् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम् । यत्त्विह हरदत्तेनोक्त धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम् ॥—**सुकर्म**—॥–**त्रिविध** इति । धातुनियमस्त्विह नेष्यते इति भावः ॥—**क्विबेवेती**ति । भूते क्विबेवेति प्रत्ययान्तरसंबन्धनिवृत्तिफलककालनियमादित्यर्थः ॥—**कृञ एवेती**ति । सुकर्मादिषु कृञ एवेति धात्वन्तरसंबन्धनिवृत्तिफलकोपपदनियमादित्यर्थः । **भूत एवेती**ति । भूत एव क्विबिति कालान्तरसंबन्धनिवृत्तिफलकप्रत्ययनियमादित्यर्थः ॥—**स्वादिष्वेवेती**ति । स्वादिष्वेव

विवक्षायां न क्विप्। स्वादिष्वेवेति नियमाभावादन्येष्वप्युपपदेषु क्विप्। शास्त्रकृत्। मन्त्रकृत्। **सोमे सुञः।** ।३।२।९०। सोमसुत्। चतुर्विधोऽत्र नियम इति काशिका। एवमुत्तरसूत्रेऽपि। **अग्नौ चेः** ।३।२।९१। अग्निचित्। **कर्मण्यग्न्याख्यायाम्** ।३।२।९२। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप्स्यात् अग्न्याधारस्थलविशेषस्याख्यायाम्। श्येन इव चितः श्येनचित्। **कर्मणीनि विक्रियः** ।३।२।९३। कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात्॥ * **कुत्सितग्रहणं कर्तव्यम्।** सोमविक्रयी। घृतविक्रयी। **दृशेः क्वनिप्** ।३।२।९४। कर्मणि भूत इत्येव। पारं दृष्टवान् पारदृश्वा। **राजनि युधिकृञः** ।३।२।९५। क्वनिप्स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा। **सहे च** ।३।२।९६। कर्मणीति निवृत्तम्। सहयुध्वा। सहकृत्वा। **सप्तम्यां जनेर्डः** ।३।२।९७। सरसिजम्। मन्दुरायां जातो मन्दुरजः। ङ्यापोरिति ह्रस्वः। **पञ्चम्यामजातौ** ।३।२।९८। जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात्। संस्कारजः। अदृष्टजः। **उपसर्गे च संज्ञायाम्** ।३।२।९९। प्रजा स्यात्सन्ततौ जने। **अनौ कर्मणि** ।३।२।१००। अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्। पुमांसमनुरुध्य जाता पुमनुजा। **अन्येष्वपि दृश्यते** ।३।२।१०१। अन्येष्वप्युपपदेषु जनेर्डः स्यात्। अजः। द्विजः। ब्राह्मणजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्। परितः खाता परिखा। **क्तक्तवतू निष्ठा** ।१।१।२६। एतौ निष्ठासंज्ञौ स्तः। **निष्ठा** ।३।२।१०२। भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र तयोरेवेति भावकर्मणोः क्तः। कर्तरि कृदिति कर्तरि क्तवतुः। उकावितौ। स्नातं मया। स्तुतस्त्वया विष्णुः। विष्णुर्विश्वं कृतवान्। **निष्ठायामण्यदर्थे** ।६।४।६०। ण्यदर्थौ भावकर्मणी ततोऽन्यत्र निष्ठायां क्षियो

---

कृञ इत्युपपदान्तरसबन्धनिवृत्तिफलकधातुनियमाभावादित्यर्थः—**सोमे सुञः** ॥ इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रेऽपि। तत्र भूतकालस्य क्विपि नियतत्वात्सोम सुतवान् सोमसावः, अग्निं चितवान् अग्निचाय इत्यण् न भवति। सुनोतेः सोम एव उपपदे नियतत्वाच्चिनोतेस्त्वग्नावेवोपपदे नियतत्वात्। सुरां सुतवान् सुरासुत् इष्टकाश्चितवानिष्टकाचिदिति न भवति किं तु सुरासावः इष्टकाचाय इत्यणेव भवति, सोमस्य सुनोतावेव धातोर्नियतत्वात्। अग्नेस्तु चिनोतावेव नियतत्वात्। सोमं क्रीतवान् सोमक्रीः अग्निं भृतवान् अग्निभृद् इति क्विप् न भवति किं तु सोमक्रायः अग्निभार इत्यणेव भवति। भूत एव क्विपो नियतत्वात्सोम सुनोति सोष्यति वेत्यर्थे क्विप् न भवति। तथा अग्निं चिनोति चेष्यति वेत्यर्थे क्विबभावः किं त्वणेव ॥—**कर्मण्यग्न्याख्यायाम्** ॥—**श्येनचिदिति**। समुदायोऽय आहवनीयधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढः ॥—**कर्मणीति** ॥—**कुत्सितग्रहणमिति**। एतच्च वार्तिक पुनः कर्मग्रहणसामर्थ्याल्लभ्यते, यत्कर्म क्रियया सबध्यमान कर्तुः कुत्सामावहति तत्रेत्यर्थः। सोमादयश्च विक्रियमाणाः शास्त्रे प्रतिषेधात्कुत्सावहाः। कुत्सितग्रहणान्नेह धान्यविक्रायः ॥—**दृशेः क्वनिप्** ॥ 'अन्येभ्योऽपि दृश्यन्ते' इति सिद्धे नियमार्थमिदं क्वनिबेव यथा स्यात्तत्सहनिर्दिष्टौ मनिन्वनिपौ माभूतां न वा अणादय इति। सोपपदप्रत्ययस्यैव नियमेन निवर्तनान्निष्ठा तु भवत्येव ॥—**पारं दृष्टवानिति**। एवं स्थिते 'विश्वदृश्वनयना वयमेव' इत्यादौ विश्वं पश्यन्ति विश्वदृश्वानि तानि नयनानि येषां ते विश्वदृश्वनयना इत्येव क्वनिबन्तस्य लटा विग्रहेऽपि न क्षतिः। प्रत्ययान्तरनिवृत्त्यर्थं सूत्रमित्येवं वृत्तिकारादिभिर्व्याख्यातत्वात्। कालान्तरनिवृत्त्यर्थमिदमिति कैयटाभियुक्तैरनुक्तत्वादिति दिक् ॥—**राजनि युधिकृञः**—**सहे च** ॥ इदमपि सूत्रद्वय 'दृशेः क्वनिप्' इतिवन्नियमार्थमिति न्याय्यम्। वस्तुतस्तु दृशिग्रहणेन निर्वाहस्यागतिकत्वादियं त्रिसूत्री विधात्रीत्यपि सुवचम्। प्राचां ग्रन्थास्त्विहोदासीना एवेति शब्दकौस्तुभे स्थितम् ॥—**मन्दुरायामिति** ॥ 'वाजिशाला तु मन्दुरा' इत्यमरः ॥—**पुमनुजेति** ॥ इह जनिः सकर्मकः, अनुरोधविशिष्टजननवृत्तित्वात् ॥—**अन्येष्वपि दृश्यते** ॥ 'सप्तम्यां जनेः—' इत्युक्तमसप्तम्यामपि दृश्यतइत्याह—**अजः द्विज** इति। न जायत इत्यजः, द्विर्जातो द्विजः, 'जन्मना जायते शूद्रः कर्मणा जायते द्विजः' इत्यभियुक्तोक्तेः। 'पञ्चम्यामजातौ' इत्युक्त जातावपि दृश्यत इत्याह—**ब्राह्मणज** इति ॥—**अपिशब्द** इति। यत्तु 'अन्तात्यन्ताध्व—' इति प्रकरणे 'अन्यत्रापि दृश्यते' इत्युपसंख्यातं, तद्भूतकालं विनापि यथा स्यादित्येवमर्थम्। वस्तुतस्तु प्रकृतसूत्रस्थस्यापिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्तद्वार्तिकमनेनैव गतार्थम्। किंच, चेदं 'इको गुणवृद्धी' इति सूत्रे जनेर्ड प्रक्रम्य गमेरप्ययं डो वक्तव्य इति वदता भाष्यकारेण। एवं च प्रकृतसूत्रस्थं 'अन्येभ्योऽपि दृश्यते' इति वार्तिकमपि गतार्थमिति बोध्यम् ॥—**क्तक्तवतू निष्ठा** ॥ ननु क्तक्तवत्वोः सिद्धयोर्निष्ठेति सञ्ज्ञासिद्धिः, सिद्धायां निष्ठासञ्ज्ञायां क्तक्तवत्वोर्विधानमित्यन्योन्याश्रय इति चेत्। अत्राहुः। भाविनी संज्ञाऽत्र विज्ञायते स भूते भवति यस्योत्पन्नस्य निष्ठेति संज्ञा भवति इत्याश्रयणे सामर्थ्यात् क्तक्तवत्वोर्विधानमेतदिति नास्त्युक्तदोष इति ॥—**ण्यदर्थौ भावकर्मणी** इति। यद्यपि याज्या ऋगित्यादौ करणादावपि बाहुल्काण्ण्यद्भवति, तथापि 'तयोरेव—' इति वचनाद्भावकर्मणी एव साक्षादुपात्तोऽर्थ इति स एवेह विवक्षित इति

दीर्घः स्यात्। क्षियो दीर्घात् ।८।२।४६। दीर्घात् क्षियो निष्ठातस्य नः स्यात्। क्षीणवान्। भावकर्मणोस्तु क्षितः कामो मया। श्र्युकः किति। श्रितः। श्रितवान्। भूतः। भूतवान्। क्षुतः॥ * ऊर्णोतेर्णुवद्भावो वाच्यः॥ तेन एकाच्त्वान्नेट्। ऊर्णुतः। नुतः। वृतः। रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।८।२।४२। रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च। शॄ। ऋत इद्। रपरः। णत्वम्। शीर्णः। बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह। कृतस्यापत्यं कार्तिः। भिन्नः। छिन्नः। संयोगादेरातो धातोर्यण्वतः। ८।२।४३। निष्ठातस्य नः स्यात्। द्राणः। स्त्यानः। ग्लानः। ल्वादिभ्यः ।८।२।४४। एकविंशतेर्लूञादिभ्यः प्राग्वत्। लूनः। ज्या। प्रहिज्या। जीनः॥ * दुग्वोर्दीर्घश्च॥ दु गतौ। दूनः। टुदु उपतापे इत्ययं तु न गृह्यते सानुबन्धकत्वात्। मृदुतया दुतयेति माघः। गूनः॥ * पूञो विनाशे॥ पूना यवाः। विनष्टा इत्यर्थः। पूतमन्यत्॥ * सिनोतेर्ग्रासकर्मकर्तृकस्य॥ सिनो ग्रासः। ग्रासेति किम्। सिता पाशेन सूकरी। कर्मकर्तृकेति किम्। सितो ग्रासो देवदत्तेन। ओदितश्च ।८।२।४५। भुजो। भुग्नः। टुओश्वि। उच्छूनः। ओहाङ्। प्रहीणः। स्वादय ओदित इत्युक्तम्। सूनः। सूनवान्। दूनः। दूनवान्। ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट्। उड्डीनः। द्रवमूर्तिस्पर्शयोः श्यः ।६।१।२४। द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम्। श्योऽस्पर्शे ।८।२।४७। श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे। हल इति दीर्घः। शीनं घृतम्। अस्पर्शे किम्। शीतं जलम्। द्रवमूर्तिस्पर्शयोः किम्। संश्यानो वृश्चिकः। शीतात्संकुचित इत्यर्थः। प्रतेश्च। ६।१।२५। प्रतिपूर्वस्य श्यः संप्रसारणं स्यान्निष्ठायाम्। प्रतिशीनः। विभाषाऽभ्यवपूर्वस्य ।६।१।२६। श्यः संप्रसारणं वा स्यात्। अभिश्यानं घृतम्। अभिशीनम्। अवश्यानोऽवशीनो वृश्चिकः। व्यवस्थितविभाषेयम्। तेनेह न। समवश्यानः। अञ्चोऽनपादाने ।८।२।४८। अञ्चो निष्ठातस्य नः स्यान्न त्वपादाने। यस्य विभाषा ।७।२।१५। यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठाया इण्न स्यात्। उदितो वेति क्त्वायां वेट्त्वादिह नेट्। समक्नः। अनपादाने किम्। उदक्तमुदकं कूपात्। नत्वस्यासिद्धत्वाद्व्रश्चेति षत्वे प्राप्ते॥ * निष्ठादेशः षत्व-

---

भावः॥—क्षियो—॥ क्षि क्षये, क्षि निवासगत्योः द्वयोरपि ग्रहणम्॥—क्षितः काम इति। अन्तर्भावितण्यर्थत्वेन सकर्मकत्वात्कर्मणि क्तः। एतच्च क्षितोतमनेदिममिति मन्त्रव्याख्याया माधवग्रन्थे स्पष्टम्। भावे तु क्षितं कामेनेत्याद्युदाहरणीयम्। इण् निषेधसूत्रं स्मारयति—श्र्युकः कितीति॥—क्षुत इति। टुक्षु शब्दे॥—नुत इति। णु स्तुतौ॥—वृत इति। वृङ् सम्भक्तौ वृञ् वरणे॥—रदाभ्याम्—॥ इह रदाभ्यामित्यनेन तकारो विशेष्यते न निष्ठा तेन चरितमुदितमित्यत्र न, तकारस्येटा व्यवहितत्वात्तदेतदाह—परस्य निष्ठातस्येति॥—बहिरङ्गत्वेनेति। निष्ठातकाराद्बहिर्भूततद्धितञित्प्रत्ययमाश्रित्याङ्गस्यादेरचो विधीयमानत्वाद्वृद्धिर्बहिरङ्गेति भावः॥—द्राण इति। द्रा कुत्सायां गतौ॥—ग्लानः म्लान इति। ग्लै म्लै हर्षक्षये॥—एकविंशतेरिति॥ क्र्यादिषु प्वादयो द्वाविंशतिः पठ्यन्ते, तत्र पूञ् विहाय ल्वादयो ज्ञेयाः॥—जीन इति। सिद्धत्वान्नित्यत्वाच्च 'ग्रहिज्या-' इति संप्रसारणे कृते 'संयोगादेरातः-' इत्यस्याप्राप्तिः॥—गून इति। गु पुरीषोत्सर्गे॥—विनष्टा इति। धातूनामनेकार्थत्वात्पूञ् पवनइत्यस्य विनाशेऽपि वृत्तिः॥ —सिनोतेरिति। षिञ् बन्धने। ग्रासरूपं कर्म ग्रासकर्म तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः॥ —सिनो ग्रास इति। पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद् बन्धनेऽनुकूलो भवति तदा कर्मण एव कर्तृत्वमिति बोध्यम्॥—ग्रासेति किमिति। ग्रासकर्मकर्तृकस्येति किमर्थमित्यर्थ.॥—कर्मकर्तृकेति किमिति। ग्रासकर्मकस्येत्येवास्तु कर्तृपद किमर्थमित्यर्थः। कर्मपद विहाय ग्रासकर्तृकस्येत्युक्तौ तु ग्रासेन कण्ठ सित इत्यत्रापि स्यादिति बोध्यम्॥—भुग्न इति। भुजो कौटिल्ये, न त्वस्यासिद्धत्वात् झलि परत कुत्वम्॥—उच्छून इति। श्वयतेर्यजादित्वात्संप्रसारणे पूर्वरूपे च 'हलः' इति दीर्घः॥—प्रहीण इति। 'घुमास्था-' इति ईत्वम्॥—सून इति। षूङ् प्राणिप्रसवे॥—दून इति। दूङ् परितापे॥—ओदिन्मध्ये इति। यदि डीङ इट् स्यात्तर्हि धातोः परो निष्ठातकारो न संभवतीति नत्वार्थः पाठोऽनर्थकः स्यादिति भावः। न च ओदिन्मध्ये पाठसामर्थ्यादिटा व्यवधाने नत्वं भवेदिति वैपरीत्यं किं न स्यादिति शङ्क्यम्। लक्ष्यानुरोधेन इडभावकल्पनाया एव न्याय्यत्वात्। अन्ये तु सत्यपि इडागमे सवर्णदीर्घे चैकादेशस्य पूर्वान्तत्वेन ग्रहणादिडा व्यवधानं नास्त्येवेतीष्टं सिध्यतीत्याहुः॥ —संश्यान इति। श्यैङ् गतावित्यस्य 'आदेच-' इत्यात्वे 'संयोगादेरातः-' इति निष्ठातस्य नः॥—यस्य विभाषा॥ यस्येत्यार्धधातुकापेक्षया षष्ठी। यदीयस्यार्धधातुकस्येत्यर्थः॥—समक्न इति। अञ्चु गतिपूजनयोः, सपूर्वः, नत्वस्यासिद्धत्वात् झलि परतः कुत्वम्॥—उदक्तमिति। उद्धृतमित्यर्थः। व्यक्तमित्येतत्तु अञ्जू व्यक्तीत्यस्य न त्वञ्चेः। तेनात्र नत्वाभावः॥—वृक्ण इति। ओव्रश्चू छेदने, 'ग्रहिज्या-' इति संप्रसारणम्। नत्वस्यासिद्धत्वात् 'स्कोः-' इति सलोपः 'चोः कुः'

स्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः ॥ वृक्णः। वृक्णवान्। **परिस्कन्दः प्राच्यभरतेषु** ।८।३।७५। पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्दः। प्राच्येति किम्। परिष्कन्दः। परिस्कन्नः। परेश्चेति विकल्पः। स्तम्भेरिति षत्वे प्राप्ते। **प्रतिस्तब्धनिस्तब्धौ च** ।८।३।११४। अत्र षत्वं न स्यात्। **दिवोऽविजिगीषायाम्** ।८।२।४९। दिवो निष्ठातस्य नः स्यादविजिगीषायाम्। द्यूनः। विजिगीषायां तु। द्यूतम्। **निर्वाणोऽवाते** ।८।२।५०। अवाते इति छेदः। निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न। निर्वाणोऽग्निर्मुनिश्च। वाते तु निर्वातो वातः। **शुषः कः** ।८।२।५१। निष्ठात इत्येव। शुष्कः। **पचो वः** ।८।२।५२। पक्वः। **क्षायो मः** ।८।२।५३। क्षामः। **स्त्यः प्रपूर्वस्य** ।६।१।२३। प्रात् स्त्यः संप्रसारणं स्यान्निष्ठायाम्। **प्रस्त्योऽन्यतरस्याम्** ।८।२।५४। निष्ठातस्य मो वा स्यात्। प्रस्तीमः। प्रस्तीतः। प्रात्किम्। स्त्यानः। **अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः** ।८।२।५५। ञिफला। फुल्लः। निष्ठातस्य लत्वं निपात्यते। क्तवत्वेकदेशस्यापीदं निपातनमिष्यते। फुल्लवान्। क्षीबादिषु तु क्तप्रत्ययस्यैव तल्लोपः। तस्यासिद्धत्वात्प्राप्तस्येटोऽभावश्च निपात्यते। क्षीबो मत्तः। कृशस्तनुः। उल्लाघो नीरोगः। अनुपसर्गात्किम्। **आदितश्च** ।७।२।१६। आकारेतो निष्ठाया इण्न स्यात्। **ति च** ।७।४।८९। चरफलोरत उत्स्यात्तादौ किति। प्रफुल्तः। प्रक्षीबितः। प्रकृशितः। प्रोल्लाघितः। कथं तर्हि लोध्रद्रुमं सानुमतः प्रफुल्लमिति। फुल्ल विकसने पचाद्यच्। सूत्रं तु फुल्तादिनिवृत्त्यर्थम्। * **उत्फुल्लसंफुल्लयोरुपसंख्यानम्** ॥ **नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्** ।८।२।५६। एभ्यो निष्ठातस्य नो वा। नुन्नः। नुत्तः। विद विचारणे रौधादिक एव गृह्यते उन्दिना परेण साहचर्यात्। विन्नः। वित्तः। वेत्तेस्तु विदितः। विद्यतेर्विन्नः। उन्दी। **श्वीदितो निष्ठायाम्** ।७।२।१४। श्वयतेरीदितश्च निष्ठाया इण्न। उन्नः। उत्तः। त्राणः। त्रातः। घ्राणः। घ्रातः। ह्रीणः ह्रीतः। **न ध्याख्यापॄमूर्छिमदाम्** ।८।२।५७। एभ्यो निष्ठातस्य नत्वं न। ध्यातः। ख्यातः। पूर्तः। राल्लोपः। मूर्तः। मत्तः। **वित्तो भोगप्रत्यययोः** ।८।२।५८। विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चार्थे। वित्तं धनम्। वित्तः पुरुषः। अनयोः किम्। विन्नः। विभाषा गमहनेति क्वसौ वेट्त्वादिह नेट्। **भित्तं शकलम्** ।८।२।५९। भिन्नमन्यम्। **ऋणमाधमर्ण्ये** ।८।२।६०।

---

इति कुत्वं च। ऊदित्त्वेन वेट्कत्वात् 'यस्य विभाषा' इति निष्ठाया इडभावः। नुड्विधिलादेशविनामेषु वर्णैकदेशस्यापि वर्णत्वेन ग्रहणादृकारैकदेशो रेफो निमित्तमिति 'अट्कुप्वाङ्–' इति नस्य णत्वम्। णत्वस्य विनाम इति प्राचां संज्ञा। ऋवर्णान्नस्य णत्वमिति यथाश्रुतपक्षेपि णत्वनिषेधार्थं क्षुभ्नादिषु नृमनशब्दपाठादृकारं निमित्तीकृत्यापि 'अट्कुप्वाङ्'–इति णत्वं भवत्येवेति दिक् ॥—**परिस्कन्दः** ॥ अचि निपातनम्। अथ वा निष्ठातकारस्य लोप इति काशिका ॥—**द्यून** इति ॥ 'च्छ्वोः शूड्–' इत्यूठ्। क्षीण इत्यर्थ. ॥—**द्यूतमि**ति। विजिगीषया हि तत्राक्षाः पात्यन्ते इति गम्यते विजिगीषा ॥—**निर्वाणो वाते** ॥ वा गतिगन्धनयोः, निपूर्वादस्मान्निष्ठातस्य नत्वे णत्वम् ॥—**वातश्चेत्कर्ता नेति**। एवं च वातेन हेतुना निर्वाणो दीप इत्यत्र निषेधो नेत्याहुः ॥—**निर्वात** इति। 'गत्यर्थाकर्मक–' इति कर्तरि क्तः। नितरां वातो गत इत्यर्थः ॥—**शुष्क** इति। शुष् शोषणे ॥—**क्षाम** इति। क्षै क्षये 'आदेचः–' इत्यात्वम् ॥—**प्रस्तीमः प्रस्तीत** इति। स्त्यै ष्ट्यै शब्दसघातयोः। आत्वे कृते 'सयोगादेः–' इत्यस्यासिद्धत्वात्पूर्वं सप्रसारणे पूर्वरूपे च कृते 'हलः' इति दीर्घः पश्चाद्यण्वत्वादन्तत्वयोर्विरहान्न नत्वम्। संस्त्यान इत्यत्र तु भवत्येव ॥—**क्षीबादिष्वि**ति ॥ क्षीबृ मदे, कृश तनुत्वे, लाघृ शक्तावुत्पूर्वः, एभ्यः क्त. ॥ ननु फुल्ल विकसन इत्यस्मादुल्लाघेश्च पचाद्यचि इतराभ्यामिगुपधलक्षणे कप्रत्यये च फुल्लादयः सिध्यन्ति तत्किं सूत्रेणेत्यत आह—**सूत्रं त्विति**। निवृत्त्यर्थमित्युपलक्षणम्। फुल्लवानिति रूपस्य निष्ठा च व्यजनादित्याद्युदात्तस्य च सिद्ध्यर्थमिति बोध्यम् ॥—**उत्फुल्लसंफुल्लयोरि**ति। यद्यपि प्रफुल्ल इति च फुल्लेः पचाद्यचा सिद्धं, तथापि उत्फुल्ल संफुल्ल इति प्रयोगनिवृत्त्यर्थं वचनम् ॥—**नुद**—।'रदाभ्यां'–'सयोगादेरातः'–इति नित्ये प्राप्ते ह्रीत्यस्याप्राप्ते उभयत्र विभाषेयम् ॥—**वेत्तेस्त्वि**ति। तथा च भाष्यम्। 'वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। वेत्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः' इति ॥—**नुन्नः नुत्तः** इति। 'अनिदिताम्–' इति नलोपः ॥—**न ध्या**—॥ ध्यै चिन्तायाम्। ख्या प्रकथने। पृ पालनपूरणयोः। मुर्च्छा मोहसमुच्छ्राययो.। मदी हर्षे ॥—**पूर्त** इति। 'श्र्युकः किति' इति इण्निषेध.। लोपविधिं स्मारयति—**राल्लोप** इति ॥—**मूर्त** इति। 'आदितश्च' इति नेट् ॥—**मत्त** इति। 'श्वीदितः–' इति नेट् ॥ वित्तेर्ज्ञानार्थकाद्विदेरिटा भाव्यं सत्तार्थकविदेर्विचारणार्थकविदेश्च भोगप्रत्यययोर्वृत्तिर्न संभवतीत्याशयेनाह—**विन्दतेरि**ति। विदॢ लाभ इत्यस्येत्यर्थः। भुज्यत इति भोगः। प्रतीयत इति प्रत्यय इति कर्मसाधनावेताविति व्याचष्टे—**भोग्ये प्रतीते चार्थे** इति ॥ **भित्तं शकलम्** ॥ भिदेः क्ते 'रदाभ्याम्'–इति प्राप्तनत्वस्याभावो निपात्यते। 'भित्तं शकलखण्डे वा' इत्यमरः ॥—**भिन्नमन्यदि**ति। विदीर्णमित्यर्थः ॥—**ऋणमाधमर्ण्ये** ॥ अधमं दुःखप्रदमृणमस्य सोऽधमर्णः

ऋधातोः क्ते तकारस्य नत्वं निपात्यते अधमर्णव्यवहारे । अन्यत्र ऋतम् । स्फायः स्फी निष्ठायाम् ।६।१।२२। स्फीतः । इण्निष्ठायाम् ।७।२।४७। निरः कुषो निष्ठाया इट् स्यात् । यस्य विभाषेति निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः । वसतिक्षुधोरिट् ।७।२।५२। आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् । उषितः । क्षुधितः । अञ्चेः पूजायाम् ।७।२।५३। पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् । अञ्चितः । गतौ तु अक्तः । लुभो विमोहने ।७।२।५४। लुभः क्त्वानिष्ठयोर्नित्यमिट् स्यान्न तु गार्ध्ये । लुभितः । गार्ध्ये तु लुब्धः । क्लिशः क्त्वानिष्ठयोः ।७।२।५०। इड्वा स्यात् । क्लिश उपतापे नित्यं प्राप्ते । क्लिशू विबाधने । अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पः । क्लिशितः । क्लिष्टः । पूङश्च ।७।२।५१। पूङः क्त्वानिष्ठयोरिड्वा स्यात् । पूङः क्त्वा च ।१।२।२२। पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् । पवितः । पूतः । क्त्वाग्रहणमुत्तरार्थम् । नोपधादित्यत्र हि क्त्वैव संबध्यते । निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।१।२।१९। एभ्यः सेण्निष्ठा किन्न स्यात् । शयितः । शयितवान् । अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । शेश्यितः शेश्यितवान् ॥ * आदिकर्मणि निष्ठा वक्तव्या । आदिकर्मणि क्तः कर्तरि च ।३।४।७१। आदिकर्मणि यः क्तः स कर्तरि स्यात् चाद्भावकर्मणोः । विभाषा भावादिकर्मणोः ।७।२।१७। भावे आदिकर्मणि चादितो निष्ठाया इड्वा स्यात् । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । ञिष्विदेति भ्वादिरत्र गृह्यते । मिदिः साहचर्यात् । स्विद्यतेस्तु स्विदित इत्येव । ञिमिदा । ञिक्ष्विदा । दिवादी भ्वादी च । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । प्रधर्षितं तेन । सेट्किम् प्रस्विन्नः । प्रस्विन्नं तेनेत्यादि । मृषस्तितिक्षायाम् ।१।२।२०। सेण्निष्ठा किन्न स्यात् । मर्षितः । मर्षितवान् । क्षमायां किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः । उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ।१।२।२१। उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात् । द्युतितम् । द्योतितम् मुदितम् । मोदितं साधुना । प्रद्युतितः । प्रद्योतितः । प्रमुदितः । प्रमोदितः साधुः । उदुपधात्किम् । विदितम् । भावेत्यादि किम् । रुचितं कार्षापणम् । सेट्किम् । कुष्टम् ॥ * शब्विकरणेभ्य एवेष्यते । नेह । गुध्यतेर्गुधितम् । निष्ठायां सेटि ।६।४।५२। णेर्लोपः स्यात् । भावितः । भावितवान् । ओदित इति नेट् । संप्रसारणम् । शूनः । दीनः । गुहू, गूढः । वनु, वतः । तनु, ततः । पतेः सनि वेट्त्वादिडभावे प्राप्ते द्विती-

---

तस्य भाव आधमर्ण्यं तेन व्यवहारविशेषो लक्ष्यते ततश्च उत्तमर्णेऽपि सिध्यतीत्याशयेन व्याचष्टे—**अधमर्णव्यवहार** इति । स व्यवहारो दातृग्रहीत्रोः सम्बन्धो भवतीत्युत्तमर्णेऽपि प्रयोगो न विरुध्यते । लक्षणाया तु 'धारेरुत्तमर्णः' इति निर्देशो लिङ्गम् ॥—**स्फायः स्फी** ॥ स्फायी वृद्धौ, कथं तर्हि स्फीतिकाम इति स्फीतमाचष्टे इति ण्यन्तादच इः, अल्लोपणिलोपौ ॥—**यस्येति** । 'निरः कुषः' इति विकल्पितेट्त्वादिति भावः ॥—**उषित** इति । यजादित्वात्संप्रसारणम् । 'शासिवसि–' इति षः । वसतीति शपा निर्देशः स्पष्टार्थः । वस्तेः सेट्कत्वाद्भवितव्यमेवेटा ॥—**क्षुधित** इति । एवं च 'तस्यालमेषा क्षुधितस्य' इति प्रयोगो निर्बाध एवेति क्षुधेर्धातोर्भावे क्विपि तारकादित्वादितजिति धातुवृत्तिषु यदुक्तं तन्नादर्तव्यम् । समानन्यायतया कुधितादावुपयोक्ष्यत इति वा कथंचिन्नेयम् ॥—**अञ्चेः**–॥ उदित्वात् क्त्वायां विकल्पे प्राप्ते निष्ठायां 'यस्य विभाषा' इति निषेधे वचनम् ॥—**अञ्चित** इति । 'नाञ्चेः पूजायाम्' इति नलोपनिषेधः ॥—**अक्त** इति । 'अनिदिताम्–' इति नलोपः ॥—**लुभो**–॥ 'तीषसह–' इति क्त्वाया विकल्पे निष्ठायां निषेधे च प्राप्ते वचनम् ॥—**पूङश्च** ॥ 'श्र्युकः किति' इति निषेधे प्राप्ते वचनम् ॥—**पूङः क्त्वा च** ॥ 'न क्त्वा सेट्' इत्यनेनैव सिद्धे क्त्वाग्रहणमिह व्यर्थमित्यत आह—**उत्तरार्थमिति** ॥—**क्त्वैवेति** । न तु निष्ठा चानुकृष्टत्वादिति भावः ॥—**शेश्यित** इति । 'एरनेकाचः–' इति यण् ॥—**आदिकर्मणि** इति । आद्येषु क्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम् । आदिकर्मणि क्तस्य कर्तरि विधानार्थं चेत्याहुः ॥—**चादिति** ॥ अन्यथा तक्रकौण्डिन्यन्यायेन भावकर्मणोर्न स्यादिति भावः ॥—**प्रस्वेदित** इति । चशब्द आदिकर्मद्योतनार्थः, स्वेदितमित्यादि भावे ॥—**भ्वादिरत्रेति** । ञिष्विदा स्नेहनमोचनयोरिति पठितः ॥—**स्विद्यतेस्त्विति** । ष्विदा गात्रप्रक्षरणे इति दिवादिषु पठितस्य स्विदित इत्येवेति कित्त्वनिषेधाभावादिति भावः । न च ष्विदेति दैवादिकोऽपि ओदिदिति वाच्यम् । हरदत्तग्रन्थविरोधादिति भावः । अत्र हरदत्तः ञिक्ष्विदा स्नेहनमोचनयोरिति दिवादि गृह्यते न तु ञिक्ष्विदा अव्यक्ते शब्दे इति भ्वादिरपि मिदिना साहचर्यादित्याह । तच्चिन्त्यम् । भ्वादिष्वपि मिदेः पठ्यमानत्वात् । तस्मादविशेषादुभयोर्ग्रहणं न्याय्य तदेतदाह—**दिवादी भ्वादी चेति** । स्विदादीनामादितश्चेतीण् निषेधात्सेण्निष्ठा न संभवतीत्यादिकर्मणि निष्ठोदाहृता ॥—**अविस्पष्टमिति** । मृष धातोस्तितिक्षायामेव वृत्तिसत्त्वेऽपि सूत्रस्थतितिक्षाग्रहणमेव ज्ञापयत्यनेकार्था धातव इति ॥—**रुचितमिति** । रुच दीप्तौ 'गत्यर्थाकर्मक–' इति कर्तरि क्तः ॥—**कुष्टमिति** । कुश आह्वाने रोदने च व्रश्चादिना षत्वे ष्टुत्वम् ॥—**गुधितमिति** । गुध परिवेष्टने दिवादिः ॥—**संप्रसारणमिति** । वचिस्वपीत्यनेन ॥—**शून इति** । टुओश्वि गतिवृद्ध्योः । 'हलः' इति दीर्घः 'ओदितश्च' इति निष्ठातस्य नः ॥—**गूढ** इति । 'यस्य विभाषा' इति नेट् ढत्वधत्वढलोपदीर्घाः ॥—**वतः वत** इति । 'अनुदात्तोपदेश–' इति नलोपः ॥—**सनि**-

धावितेति सूत्रे निपातनादिट्। पतितः। सेऽसिचीति वेट्कत्वात्सिद्धे कृन्तत्यादीनामीदित्त्वेनानित्यत्वज्ञापनाद्वा। तेन धावितमिभराजधियेत्यादि। यस्य विभाषेत्यत्रैकाच इत्येव। दरिद्रितः। **क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु** ।७।२।१८। क्षुब्धादीन्यष्टावनिड्डानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु। द्रवद्रव्यसंपृक्ताः सक्तवो मन्थो मन्थनदण्डश्च। क्षुब्धो मन्थश्चेत्। स्वान्तं मनः। ध्वान्तं तमः। लग्नं सक्तम्। निष्ठानत्वमपि निपातनात्। म्लिष्टमविस्पष्टम्। विरिब्धः स्वरः। म्लेच्छ रेभृ अनयोरुपधाया इत्वमपि निपात्यते। फाण्टम् अनायाससाध्यः कषायविशेषः। माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह। बाढं भृशम्। अन्यत्र तु क्षुभितम्। क्षुब्धो राजेति त्वागमशास्त्रस्यानित्यत्वात्। स्वनितम्। ध्वनितम्। लगितम्। म्लेच्छितम्। विरेभितम्। फणितम्। बाहितम्। **धृषिशसी वैयात्ये**। ७।२।१९। एतौ निष्ठायामविनये एवानिटौ स्तः। धृष्टः। विशस्तः। अन्यत्र धर्षितः। विशसितः। भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्ति। अत एव नियमार्थमिदं सूत्रमिति वृत्तिः। धृषेरादित्वे फलं चिन्त्यमिति हरदत्तः। माधवस्तु भावादिकर्मणोरवैयात्ये विकल्पमाह। धृष्टम्। धर्षितम्। प्रधृष्टः। प्रधर्षितः। **दृढः स्थूलबलयोः** ।७।२।२०। स्थूले बलवति च निपात्यते। दृह दृहि वृद्धौ। इडभावः। तस्य ढत्वम्। हस्य लोपः। इदितो नलोपश्च। दृहितो दृंहितोऽन्यः। **प्रभौ परिवृढः** ।७।२।२१। वृह वृहि वृद्धौ। निपातनं प्राग्वत्। परिवृहितः परिवृंहितोऽन्यः। **कृच्छ्रगहनयोः कषः** ।७।२।२२। कषो निष्ठाया इण्न स्यादेतयोरर्थयोः। कष्टं दुःखं तत्कारणं च। स्यात्कष्टं कृच्छ्रमाभीलम्। कष्टो मोहः। कष्टं शास्त्रम्। दुरवगाहमित्यर्थः। कषितमन्यत्। **घुषिरविशब्दने**। ७।२।२३। घुषिर्निष्ठायामनिट् स्यात्। घुष्टा रज्जुः। अविशब्दने किम्। घुषितं वाक्यम्। शब्देन प्रकटीकृताभिप्रायमित्यर्थः। **अर्देः संनिविभ्यः** ।७।२।२४। एतत्पूर्वादर्देर्निष्ठाया इण्न स्यात्। समर्णः। न्यर्णः। व्यर्णः। अर्दितोऽन्यः। **अभेश्चाविदूर्ये** ।७।२।२५। अभ्यर्णम्। नातिदूरं नासन्नं वा। अभ्यर्दितमन्यत्। **णेरध्ययने**

---

**वेट्कत्वादि**ति। 'तनिपतिदरिद्रातिभ्य. सनो वा इड्वाच्यः' इति वचनात् ॥—**कृन्तत्यादीनामि**ति। 'श्वीदितः–' इति निष्ठायामनिट्कार्यं कृती छेदने चृती हिंसाग्रन्थनयोः नृती गात्रविक्षेप इत्येतेषामीदित्त्वकरणेन 'यस्य विभाषा' इत्यस्यानित्यत्वज्ञापनाद्वा पतित इति सिद्धमित्यर्थः ॥—**क्षुब्ध** ॥ क्षुभ सचलने 'झषस्तथो–' इति धत्वम्। स्वन ध्वन शब्दे। इडभावे 'अनुनासिकस्य क्विझलोः–' इति दीर्घः। लगे सङ्गे म्लेच्छ अव्यक्ते शब्दे 'व्रश्च–' इति षत्वे ष्टुत्वम्। रेभृ शब्दे फण गतौ दीर्घः ष्टुत्वम्। वाह् प्रयत्ने इडभावे ढत्वधत्वष्टुत्वढलोपाः। अनायासशब्देन तत्साध्यो लक्ष्यत इत्याह—**अनायाससाध्य** इति। 'क्षुण्णमौषधजातमुष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा यत्पीयते तत्फाण्टम्' इत्याहुः ॥—**वेदभाष्ये** इति। 'तद्वै नवनीतं भवति घृतं देवानां फाण्ट मनुष्याणाम्' इति शतपथश्रुतेर्व्याख्यायामित्यर्थः ॥—**अन्यत्र त्वि**ति। मन्थादेरवाच्यत्वे त्वित्यर्थः ॥—**धृषिशसी** ॥ ञिधृषा प्रागल्भ्ये। शसु हिंसायाम्। अनयोः 'आदितः' 'यस्य विभाषा' इति सूत्राभ्यामिट्प्रतिषेधे हि सिद्धेऽप्यनयोर्वैयात्य एवानिट्त्वं नान्यत्रेति नियमार्थमित्याह—**अविनये एवे**ति। विरुद्ध यातो वियातः अविनीतस्तस्य भावो वैयात्यम्। ननु धृषेः 'विभाषा भावादिकर्मणोः' इति विकल्पे प्राप्ते नित्यार्थं कस्मान्न भवतीत्याशङ्क्याह—**नास्ती**ति। अनभिधानादिति भावः। अत्र प्रमाणमाह—**अत एवे**ति ॥—**माधवस्त्वि**ति। एवं च आदित्वस्य फलवत्वात् हरदत्तोक्त यच्चिन्त्य तदेव चिन्त्यमिति भावः ॥—**दृढः स्थूल–**। बलमस्यास्तीति बलः 'अर्श आदिभ्योऽच्'। तदाह—**बलवती**ति ॥ स्थूलो मांसलः स च निर्बलोऽपि, बलवान् कृशोऽपि दृढ इति फलितोऽर्थः ॥—**तस्ये**ति। तकारस्येत्यर्थः ॥—**हस्ये**ति। ननु 'ह्रोढः' इति ढत्वे ढोढे लोपेनैव सिद्धमिति तस्य ढत्वं हस्य लोपश्च न निपात्यतामि चेन्मैवम्। तथाहि सति ढलोपस्यासिद्धत्वेन द्रढिमेत्यत्र 'र ऋतो हलादेर्लघोः' इति रभावो न स्यात्परिद्रढय्य गत इत्यत्र 'ल्यपि लघुपूर्वात्' इत्ययादेशो न स्यात्। परिदृढस्यापत्य पारिदृढी कन्येत्यत्र गुरूपोत्तमलक्षणः ष्यङ् स्यात्। अतोऽसिद्धत्वनिवृत्तये हलोपो निपात्यत इति भाष्यादौ स्थितम्। अत एव 'ढ्रलोपे' इति सूत्रे अणः किं दृढ इति प्राचो ग्रन्थस्य प्रामादिकतामभिप्रेत्य तृढो वृढ इति प्रत्युदाहृतम् ॥—**प्रभौ**–॥ **निपातनमि**ति। हलोपे प्रयोजनमपि व्रढिमा परिव्रढय्येत्यादिसिद्धिरिति प्राग्वदेव बोध्यम् ॥—**कृच्छ्रगहनयोः**–॥ कृच्छ्र दुःखं तत्कारणं च लक्षणया गृह्यते, कषतिर्हिंसार्थः ॥—**कष्टो मोह** इति। दुःखहेतुरित्यर्थः ॥—**घुषिरवि**–॥ घुषिरविशब्दार्थ इति भ्वादिः घुषिरविशब्दन इति चुरादिर्द्वयोरपि सामान्येन ग्रहणम्। ननु विशब्दनार्थाद्घुषेश्चुरादिणिचा भाव्यं ततश्च णिचा व्यवधानाद् घुषेः परा निष्ठा नास्तीति कथमिण्निषेधप्रसङ्गः, किं च विशब्दने लिण्निषेधाभावाण्णिच्युपधागुणे 'निष्ठायां सेटि' इति णिलोपे च घोषितं वाक्यमित्यपि स्यादिति चेन्। अत्राहुः। एवं तर्हि विशब्दनप्रतिषेध एव ज्ञापकः विशब्दनार्थस्य चुरादिणिजनित्य इति नास्त्युक्तदोष इति दिक् ॥—**अभेः** ॥ विशेषेण दूरं विदूरं ततोऽन्यदविदूरं तस्य भाव आविदूर्यम्। ब्राह्मणादित्वात्ष्यञ्। अस्मादेव निर्देशात् 'नञ्पूर्वात्तत्पुरुषात्–' इति निषेधो न भवति। सामीप्य इत्येव तु नोक्त नातिदूरस्यासंग्रहापत्तेः, तदेतद्ध्वनयन्व्याचष्टे—**नातिदूरं नासन्नं वे**ति। एवं च सामीप्य इति प्राचीनव्याख्यानमुपलक्षणतया नेयमित्याहुः ॥

श्रुतम् ।७।२।२६। ण्यन्ताद्वृतेः क्तस्येडभावो णिलुक्चाधीयमानेऽर्थे । वृत्तं छन्दश्छात्रेण । संपादितम् अधीतमिति यावत् । अन्यत्र तु वर्तिता रज्जुः । शृतं पाके ।६।१।२७। श्रातिश्रपयत्योः के शृभावो निपात्यते क्षीरहविषोः पाके । शृतं क्षीरं । स्वयमेव विक्लिन्नं पक्कं वेत्यर्थः । क्षीरहविर्भ्यामन्यत्तु श्राणं श्रपितं वा । वा दान्तशान्तपूर्ण-दस्तस्पष्टच्छन्नज्ञप्ताः ।७।२।२७। एते णिचि निष्ठान्ता वा निपात्यन्ते । पक्षे । दमितः । शमितः । पूरितः । दासितः । स्पाशितः । छादितः।ज्ञपितः। रुष्यमत्वरसंघुषाऽऽस्वनाम् ।७।२।२८। एभ्यो निष्ठाया इड्वा । रुषितः। रुष्टः । आन्तः । अमितः । तूर्णः । त्वरितः । अस्याऽऽदित्त्वे फलं मन्दम् । संघुष्टः।संघुषितः।आस्वान्तः।आस्वनितः। हृषेर्लोमसु ।७।२।२९। हृषेर्निष्ठाया इड्वा स्यात् लोमसु विषये । हृष्टं हृषितं लोम ॥ * विस्मितप्रतिघातयोश्च । हृष्टो हृषितो मैत्रः । विस्मितः प्रतिहतो वेत्यर्थः । अन्यत्र तु । हृषु अलीके उदित्वान्निष्ठायां नेट् । हृष तुष्टौ इट् । अपचितश्च ।७।२।३०। चायतेर्निपातोऽयं वा । अपचितः । अपचायितः । प्यायः पी ।६।१।२८। वा स्यान्निष्ठायाम् । व्यवस्थितविभाषेयम् । तेन स्वाङ्गे नित्यम् । पीनं मुखम् । अन्यत्र प्यानः पीनः स्वेदः । सोपसर्गस्य न । प्रप्यानः । आङ्पूर्वस्यान्धूधसोः स्यादेव । आपीनोऽन्धुः । आपीनमूधः । ह्रादो निष्ठायाम् ।६।४।९५। ह्रस्वः स्यात् । प्रह्लन्नः । द्यतिस्यतिमास्थामित्ति किति ।७।४।४०। एषामिकारोऽन्तादेशः स्यात्तादौ किति । ईत्वदत्त्वयोरपवादः । दितः । सितः । मा माङ् मेङ् । मितः । स्थितः । शाच्छोरन्यतरस्याम् ।७।४।४१। शितः । शातः । छितः । छातः । व्यवस्थितविभाषात्वाद्व्रतविषये श्यतेर्नित्यम् । संशितं व्रतम् । सम्यक्संपादितमित्यर्थः । संशितो ब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः । दधातेर्हिः ।७।४।४२। तादौ किति । अभिहितम्। निहितम् । दो दद् घोः ।७।४।४६। घुसंज्ञकस्य दा इत्यस्य दथ् स्यात्तादौ किति। चर्त्वम्। दत्तः। घोः किम्। दातः।

णेः-॥ अधीयत इति अध्ययनम् 'कृत्यल्युटः-' इति बहुलवचनात्कर्मणि ल्युट् ॥—णिलुक् चेति । निपात्यत इति शेषः । लोपे हि प्रत्ययलक्षणेन गुणः स्यादिति भावः ॥—शृतम् ॥ श्रातिश्रपत्योरिति । श्रा पाके इत्यदादौ पठ्यते चुरादावपि घटादिष्वपि पठ्यते मित्त्वार्थम् । श्रै पाक इति च भ्वादौ तस्यापि कृतात्वस्येह ग्रहणम् । निपातनसामर्थ्याल्लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इत्याहुः ॥—शृभावो निपात्यत इति । 'ष्यङः सम्प्रसारणम्-' इति प्रकृतमेव संप्रसारणं न विहितम् । श्रयतेरपि श्रितमेव यथा स्यादिति । अत्र 'विभाषाभ्यवपूर्वस्य' इति विभाषानुवर्तते सा च व्यवस्थिता तेन क्षीरहविषोरेव शृभावो नित्यश्च, अन्यत्र तु नैव भवतीत्याशयेनाह—क्षीरहविषोः पाक इति ॥—अन्यत्तु इति । शाकादिः श्रपितमिति णौ मिता ह्रस्वः ॥—वा दान्त—॥ शमु दमु उपशमे, पूरी आप्यायने दिवादिश्चुरादिश्च । दसु उपक्षये, स्पश बाधने, छद अपवारणे । ज्ञपिर्मित् मित्संज्ञायां मारणतोषणनिशामनेष्वित्युक्तेः ॥—रुष्य—॥ रुष रोषे 'तीषसह-' इति विकल्पितेट्कत्वात् 'यस्य विभाषा' इति नित्ये निषेधे प्राप्ते विकल्पो विधीयते । अम गत्यादिषु, अम रोगे इति चौरादिकस्तु न गृह्यते 'एकाचः' इत्यधिकारादित्याहुः ॥—आन्त इति । 'अनुनासिकस्य-' इति दीर्घः ॥—तूर्ण इति । ञित्वरा सम्भ्रमे 'ज्वरत्वर-' इत्यूठ् निष्ठानत्वम् । 'आदितश्च' इति निषेधे प्राप्ते विकल्पः । एव च आदित्त्वस्य फलमात्मनेपदमात्रं तच्च एधत्यादिवद्गत्यनुबन्धत्वेऽपि सिध्यत्येवेत्याशयेनाह—फलं मन्दमिति ॥—संघुष्ट इति । संपूर्वाद् घुषेर्विशब्दने इटि प्राप्ते विकल्पोऽयम् । अविशब्दनेऽपि सपूर्वस्य परत्वादयं विकल्प एव ।—आस्वान्त इति । आङ्पूर्वस्य स्वनेर्मनोऽभिधानेप्ययमेव विकल्पः परत्वात् । आस्वान्तं मनः । आस्वनित मन इति ॥—हृषेः-॥ हृषु अलीके उदित्त्वान्निष्ठायामनिट् हृष तुष्टौ सेट् उभयोरपि ग्रहणमित्युभयत्र विभाषेयम् ॥—पीनमिति । ओदित्त्वान्निष्ठानत्वम् ॥ —प्यान इति । 'श्वीदितो निष्ठायाम्' इतीडभावे यलोपः । नत्वे व्यवस्थान्तरमाह—सोपसर्गस्य नेत्यादि । अन्धुः कूपः ॥—प्रह्लन्न इति । ह्लादी सुखे ईदित्त्वादिडभावे 'रदाभ्याम्-' इति नत्वम् ॥—द्यतिस्यति-॥ दोऽवखण्डने, षोऽन्तकर्मणि, मा माङ् माने, मेङ् प्रणिदाने, ष्ठा गतिनिवृत्तौ । श्तिपा निर्देशो धातुविशेषणार्थः । न हि श्तिप विना श्यन् सुलभः । यत्तु प्रसादकृतोक्तम् । श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः दादत्तः सासत्त इति । तन्न । यङ्लुकि हि इटा भाव्यं दादितः सासित इति तत्र ति कितीति वचनान्नास्ति प्रसङ्गः । किं च 'दो दद् घोः' इति विधीयमान आदेश अनेकाल्त्वात्सर्वस्येति निर्विवादम् । तथा च हन्तेर्यङ्लुगन्तस्य वधादेशवत्साभ्यासस्य प्रवर्तेतेति दादत्त इति त्वदुदाहृतरूप कथमुक्तिसंभवं लभेतेत्याहुः ॥—शाच्छो—॥ शो तनूकरणे । छो छेदने ॥—दधातेर्हिः ॥ श्तिपा निर्देशो धेटो निवृत्त्यर्थः ॥ तीत्यनुवृत्तेर्यङ्लुकि न । दाधितः । अत्रापि प्रसादकृता श्तिपा निर्देशस्य यङ्लुङ्निवृत्त्यर्थत्वाद्दाधीत इति 'घुमास्था-' इतीत्वमुदाहृतं तत्पूर्ववदेव हेयम् ॥—दो दद्घोः ॥ इहादेशः थान्त एव न तु तदथान्तः जश्त्वे कृते संहितायास्तुल्यत्वेऽपि प्रक्रियाया दोषादिति प्राञ्चः । तथा चाहुः । तान्ते दीर्घत्वाद्यो दोषो दान्तदोषो निष्ठानत्वं धान्ते दोषो धत्वाख्यः स्यान्निर्दोषत्वात् थान्तो ग्राह्य इति तदनुसारेणाह—दथ् स्यादिति ॥—दात

तान्तो वायमादेशः । न चैवं विदत्तमित्यादावुपसर्गस्य दस्तीति दीर्घापत्तिः । तकारादौ तद्विधानात् । दान्तो वा । धान्तो वा । न च दान्तत्वे निष्ठानत्वं धान्तत्वे झषस्तथोरिति धत्वं शङ्क्यम् । सन्निपातपरिभाषाविरोधात् । **अच उपसर्गात्तः** ।७।४।४७। अजन्तादुपसर्गात्परस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति । चर्त्वम् । प्रत्तः । अवत्तः । अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते । चकाराद्व्याप्रात्तम् । **दस्ति** ।६।३।१२४। इगन्तोपसर्गस्य दीर्घः स्याद्दादेशो यस्तकारस्तदादावुत्तरपदे । खरि चेति चर्त्वमाश्रयात्सिद्धम् । नीत्तम् । सूत्तम् । घुमास्थेतीत्वम् । धेट् । धीतम् । गीतम् । पीतम् । जनसनखनां सञ्झलोरित्यात्वम् । जातम् । सातम् । खातम् । **अदो जग्धिर्ल्यप्ति किति** ।२।४।३६। ल्यबिति लुप्तसप्तमीकम् । अदो जग्धिः स्यात् ल्यपि तादौ किति च । इकार उच्चारणार्थः । धत्वम् । झरो झरि । जग्धः । आदिकर्मणि क्तः कर्तरि च । प्रकृतः कटं सः । प्रकृतः कटस्तेन । निष्ठायामण्यदर्थे इति दीर्घः । क्षियो दीर्घादिति णत्वम् । प्रक्षीणः सः । **वा क्रोशदैन्ययोः** ।६।४।६१। क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च । क्षीणायुर्भव । क्षितायुर्वा । क्षीणोऽयं तपस्वी । क्षितो वा । **निनदीभ्यां स्नातेः कौशले** ।८।३।८९। आभ्यां स्नातेः सस्य षः स्यात्कौशल्ये गम्ये । निष्णातः शास्त्रेषु । नद्यां स्नातीति नदीष्णः । सुपीति कः । **सूत्रं प्रतिष्णातम्** ।८।३।९०। प्रतेः स्नातेः षत्वम् । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । अन्यत्र प्रतिस्नातम् । **कपिष्ठलो गोत्रे** ।८।३।९१। कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः । गोत्रे किम् । कपीनां स्थलं कपिस्थलम् । **विकुशमिपरिभ्यः स्थलम्** ।८।३।९६। एभ्यः स्थलस्य सस्य षः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् । **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** ।३।४।७२। एभ्यः कर्तरि क्तः स्यात् भावकर्मणोश्च । गङ्गां गतः । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे प्राप्ता गङ्गा येनेत्यादि । **क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः** ।३।४।७६। एभ्योऽधिकरणे क्तः स्यात्

---

इति । दाप् लवने अदाबिति निषेधान्न घुत्वम् । इह सर्वे पक्षाःसापवादा इत्याह—**तान्तो वेत्यादिना** ॥—**दीर्घापत्तिरिति** । विदत्तमित्यादावुपसर्गस्येत्यर्थः । दस्तीत्यत्र द्वौ पक्षौ दा इत्यस्य य आदेशः स तकारान्तस्तकारादिर्वेति तत्राद्ये पक्षेऽयं दोषो नान्त्ये इत्याशयेनोक्तदोष परिहरति—**तकारादाविति** ॥—**निष्ठानत्वमिति** । 'रदाभ्याम्–' इत्यनेन ॥ —**सन्निपातेति** । तादिं निमित्तीकृत्य विहितो यो दान्ताद्यादेशः स तकारविघातकनत्वादिविधेर्निमित्त न भवतीति भावः ॥ —**अच उपसर्गात्तः** ॥ तकारादकार उच्चारणार्थः । अच इत्यावर्तते तत्रैक पञ्चम्यन्तमुपसर्गं विशिनष्टि अपरं षष्ठ्यन्तं स्थानलाभायेति व्याचष्टे—**अजन्तादित्यादिना** । यद्वा अच इत्यनावृत्त पञ्चम्यन्तमेवास्तु किं तु द्वितकारकोऽयमादेशस्तेनानेकाल्त्वात्सर्वस्य घोर्भविष्यति एकतकारो हि 'अलोन्त्यस्य' इति बाधित्वा 'आदेः परस्य' इत्यादेरेव स्यादत्र इति पञ्चमीनिर्देशात् । यद्येवम् 'अपो भि' इत्युत्तरसूत्रेऽपि द्वितकार एवेति सर्वादेशः स्यादिति चेत् । अत्राहुः । पञ्चम्यन्तस्याच इत्यनुवृत्तेरचः परस्य पकारस्यैव भविष्यति तत्रान्त्यस्य संयोगान्तलोपे पूर्वस्य जश्त्वेन सिद्धमिष्टमिति ॥—**अवदत्तमित्यादि** । आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैव विशेषण नेतरेषामसंभवात् । दातुं प्रक्रान्तमारब्धमिति प्रदत्तमित्यस्यैवार्थः ॥—**इष्यते** इति । तादेशबाधनार्थं निपातनमिष्यत इत्यर्थः । अन्ये तु अवादीनामुपसर्गप्रतिरूपकत्वाश्रयणे त्ववदत्त विदत्तमित्यादि सिध्यति उपसर्गत्वाश्रयणे तु पूर्वोक्तमवत्तमित्यादीति नापूर्वमिद वचनमित्याहुः ॥—**दस्ति** ॥ 'इकः काशे' इत्यत इक इति 'उपसर्गस्य घञि–' इत्यत उपसर्गस्येति 'ढलोपे–' इत्यतो दीर्घ इति चानुवर्तते 'अलुगुत्तरपदे' इत्यतोऽनुवृत्तस्योत्तरपदे इत्यस्य तीति विशेषण यस्मिन्विधिरिति तदादिविधिस्तदेतत्सकलमभिप्रेत्य व्याचष्टे—**इगन्तोपसर्गस्येत्यादिना** । ननु चर्त्वस्यासिद्धत्वादादेशतकारो नास्तीत्यत आह—**आश्रयात्सिद्धमिति** । 'अतो रोः–' इत्युत्वं प्रति रुत्ववदिति भावः ॥ —**धीतमिति** । 'दधातेर्हिः' इत्यत्र लुग्विकरणस्य निर्देशाद् धेट् पान इति अस्मादेर्हिर्न भवति, नापि दत् 'दो दद् घोः' इति द इत्युपादानादिति भावः ॥—**उच्चारणार्थ** इति । इदित्वे तु नुम् स्यादिति भावः ॥—**धत्वमिति** 'झषस्तथोः–' इत्यनेन 'झरो झरि–' इति अनेन पाक्षिको धलोप इत्यर्थः । इदानीं क्तार्थान् प्रपञ्चयति ॥—**आदिकर्मणि–**॥ व्याख्यातम् ॥—**प्रकृतः कटमिति** । कट कर्तुमारब्धवानित्यर्थः । प्रशब्द आदिकर्मद्योतनार्थः । क्तेनोक्तत्वात्कर्तरि प्रथमा कर्मण्यनुक्तत्वाद् द्वितीया । प्रकृतः कटस्तेनेति कर्मणि प्रयोगे तु विपर्ययः ॥—**नदीष्ण** इति । नद्यां स्नातो नदीस्नाने कुशल इत्यर्थः ॥ —**गत** इति । 'अनुदात्तोपदेश–' इति मलोपः ॥—**प्राप्त** इति । प्रपूर्वः आप्लृ व्याप्तौ व्याप्तिरपीह सूत्रे गतिशब्देन विवक्षितेति भावः ॥—**ग्लान** इति । ग्लै हर्षक्षये अकर्मकोऽयम् । 'आदेच–' इत्यात्वे 'संयोगादेरातः–' इति नत्वम् ॥—**शेषमिति** । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥—**अधिष्ठित** इति । 'द्यतिस्यति–' इति इत्वम् ॥—**उपोषित** इति । 'वसतिक्षुधोः–' इतीट् 'शासिवसि–' इति षत्वम् ॥—**अनुजीर्ण** इति । जॄष् वयोहानौ 'ॠत इद्धातोः' 'हलि च' इति दीर्घः ।

याजयामासिवद् । औष्यं स्थैर्यम् । मुकुन्दस्यासितमिदमिदं यातं रमापतेः । भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः । आसेरकर्मकत्वात्कर्तरि भावे च । आसितो मुकुन्दः । आसितं तेन । गत्यर्थेभ्यः कर्तरि कर्मणि च । रमापतिरिदं यातः । तैनेदं यातम् । भुजेः कर्मणि । अनन्तेनेदं भुक्तम् । कथं भुक्ता ब्राह्मणा इति । भुक्तमस्ति एषामिति मत्वर्थीयोऽच् । वर्तमाने इत्यधिकृत्य । ⧗ ञीतः क्तः ।३।२।१८७। मिन्विदा । क्ष्विण्णः । जिइन्धी । इद्धः । ⧗ मतिबुद्धिपूजार्थेभ्यश्च ।३।२।१८८। मतिरिहेच्छा । बुद्धेः पृथगुपादानात् । राज्ञां मतः इष्टः । तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यादि । ⧗ नपुंसके भावे क्तः ।३।३।११४। क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात् । जल्पितम् । शयितम् । हसितम् । ⧗ सुयजोर्ङ्वनिप् ।३।२।१०३। सुनोतेर्यजेश्च ङ्वनिप्स्याद्भूते । सुत्वा । सुत्वानौ । यज्वा । यज्वानौ । ⧗ जीर्यतेरतृन् ।३।२।१०४। भूत इत्येव । जरन् । जरन्तौ । जरन्तः । वासरूपन्यायेन निष्ठापि । जीर्णो जीर्णवान् । ⧗ छन्दसि लिट् ।३।२।१०५। ⧗ लिटः कानज्वा ।३।२।१०६। ⧗ क्वसुश्च ।३।२।१०७। इह भूतसामान्ये छन्दसि लिट् तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम् । कवयस्तु बहुलं प्रयुञ्जते । तं तस्थिवांसं नगरोपकण्ठे इति । श्रेयांसि सर्वाण्यधिजग्मुषस्ते इत्यादि । ⧗ वस्वेकाजाद्घसाम् ।७।२।६७। कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् नान्येषाम् । एकाच् । आदिवान् । आरिवान् । आत् । ददिवान् । जक्षिवान् । एषां किम् । बभूवान् । ⧗ भाषायां सदवसश्रुवः ।३।२।१०८। सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात् । तस्य च नित्यं क्वसुः । निषेदुषीमासनबन्धधीरः । अध्यूषुषस्तामभवज्जनस्य । शुश्रुवान् । ⧗ उपेयिवाननाश्वाननूचानश्च

---

नलं णत्वम् ॥—**मुकुन्दस्येति** । अस्यतेऽस्मिन्नित्यासितमासनमित्यर्थः । यायतेऽस्मिन्निति यानं मार्गः । भुज्यतेऽस्मिन्निति भुक्तं भोजनमित्यर्थः । त्रिष्वपि 'अधिकरणवाचिनश्च' इति कर्तरि षष्ठी ॥—**क्ष्विण्ण** इति । 'आदितश्च' इति नेट् ॥—**इद्ध** इति । 'श्वीदितः–' इति नेट् नलोपः ॥—**राज्ञामिति** । 'क्तस्य च वर्तमाने' इति षष्ठी ॥—**इष्ट** इति । 'तीषसह–' इति वेट्कत्वात् 'यस्य विभाषा' इति नेट् ॥—**शीलित** इत्यादि । शील समाधौ, रक्ष पालने, क्षमूष् सहने, क्रुश आह्वाने, जुषी प्रीतिसेवनयोः ॥—**सुयजोर्ङ्वनिप्** ॥ **सुनोतेरिति** । षुञ् अभिषवे । यद्यपीह सु गतौ षु प्रसवैश्वर्ययोरिति निरनुबन्धकयोरेव ग्रहणं न्याय्यं, तथाप्यनभिधानादुभयपदिना साहचर्याद्वा तयोर्ग्रहणं न भवतीति भावः । ङकारः सुनोतेर्गुणप्रतिषेधार्थः । पकारस्तु स्वरार्थस्तुगर्थश्च ॥—**यज्वेत्यादि** । ङ्वनिपि कृते स्वत्र 'वचिस्वपि–' इति संप्रसारणं स्यादिति ङ्वनिबुक्तः ॥—**अतृनिति** । नकारः स्वरार्थः । ऋ इत् ॥—**जरन्निति** । ऋकारस्य गुणे रपरोऽकारः 'उगिदचाम्–' इति नुम् । संयोगान्तलोपस्यासिद्धत्वान्न दीर्घः ॥—**छन्दसि लिडिति** ॥ सूत्रस्यार्थमाह—**भूतसामान्ये** इति । न च 'छन्दसि लुङ्लङ्लिटः' इत्यनेन गतार्थता शङ्क्या, धातुसंबन्धाधिकारे हि स विधिः । इदं तु धातुसंबन्धं विनापि भवतीति विशेषात् । अत्र व्याचख्युः । कानचः कित्करणं तिस्तिराण इत्यत्र 'ऋच्छत्यृताम्' इति गुणस्य निषेधार्थं सति प्रतिषेधविषये आरभ्यते । चक्राण इत्यत्र तु 'असंयोगाल्लिट्कित्' इत्येव सिद्धं कित्त्वमिति ॥—**त्रिमुनिमतमिति** । सूत्रकृता छन्दसीति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च भाष्यवार्तिकयोरपि क्वसुकानचोः 'छन्दस्युभयथा' इति वचनात्सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्वादेवाजिवानित्यादौ नलोपादीनां कित्कार्याणामन्यथा सिद्धिमाशङ्क्य तितीर्वान् तिस्तिराण इत्यादौ 'ऋच्छत्यृताम्' इति प्राप्तस्य गुणस्य बाधनार्थं कित्करणमिति सिद्धान्तिततत्वात् । अत एव कित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इति केषांचिदुत्प्रेक्षा नादर्तव्येति हरदत्तमाधवादिग्रन्थे स्पष्टमिति भावः ॥—**कवयस्त्विति** । गतानुगतिकतयेति भावः ॥—**वस्वे—**॥ वस्वित्यविभक्तिको निर्देशस्तथा च व्याख्यास्यति—**वसोरिति** । नित्यत्वाद् द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह—**कृतद्विर्वचनानामेकाचामिति** । कृतेऽपि द्वित्वे एकाच एव ये अवशिष्यन्ते तेषामित्यर्थः । 'नेड्वशि कृति' इति निषेधं बाधित्वा क्रादिनियमात्सर्वत्र प्राप्तस्येटो नियमोऽयमित्याह—**नान्येषामिति** ॥—**आदिवानिति** । अद भक्षणे द्वित्वहलादिशेषाभ्यासदीर्घसवर्णदीर्घेषु कृतेषु कृतद्वित्वोऽप्ययमेकाजेवेतीड् भवति ॥—**आरिवानिति** । ऋ गतौ 'ऋच्छत्यृताम्' इति गुणे कृते द्वित्वादिषु पूर्ववत्कृतेष्वयमप्येकाच् ॥—**ददिवानिति** । डुदाञ् दाने कृते द्वित्वे नायमेकाच् इण्निमित्तश्चातो लोपो वा सति तस्मिन्भवतीत्यनेकार्थमाद्ग्रहणम् ॥—**जक्षिवानिति** । 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेशः । द्वित्वे कृते नायमेकाजिति घसिग्रहणम् । अत्र व्याचख्युः । द्वित्वात्पूर्वं परत्वात् 'घसिभसोर्हलि–' इत्युपधालोपः स्यात्तस्मिंश्च कृतेऽनच्कत्वात् द्वित्वमेव न स्यात् । न चास्य द्वित्वे कर्तव्ये 'द्विर्वचनेऽचि' इत्यनेन स्थानिवद्भावो निषेधो वा शङ्क्यः, द्वित्वनिमित्तस्याचोऽभावात् । ततश्च नायं कृतद्विर्वचन एकाज् भवतीति घसिग्रहणं, तत्सामर्थ्यात्तु परत्वादुपधालोपमिडागमो बाधते, कृते लिडागमे 'गमहन–' इत्युपधालोपस्तस्य चाजनिमित्तत्वेन स्थानिवत्त्वाद् द्वित्वम् । यद्वा 'द्विर्वचनेऽचि' इति निषेधपक्षे तूपधालोपात्प्रागेव द्वित्वं पश्चादुपधालोपः 'शासिवसिघसीनां च' इति षत्वं चर्त्वे क्षः 'अभ्यासे चर्च' इत्यभ्यासघकारस्य जश्त्वमिति ॥—**निषेदुषीमिति** । षद्लृ विशरणादौ

।३।२।१०९। एते निपात्यन्ते । उपपूर्वादिणो भाषायामपि भूतमात्रे लिड्वा तस्य नित्यं क्वसुः । इट् । उपेयिवान् । उपेयुषः स्वामपि मूर्तिमग्र्याम् । उपेयुषी । उपेत्यविवक्षितम् । ईयिवान् । समीयिवान् । नञ्पूर्वादश्नातेः क्वसुरिडभावश्च । धृतजयधृतेरनाशुष इति भारविः । अनुपूर्वाद्वचेः कर्तरि कानच् । वेदस्यानुवचनं कृतवाननूचानः । ⧗ विभाषा गमहनविदविशाम् ।७।२।६८। एभ्यो वसोरिड्वा । जग्मिवान् । जगन्वान् । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । विविशिवान् । विविश्वान् । विशिना साहचर्याल्लिदृतेर्ग्रहणम् । वेत्तेस्तु विविद्वान् । नेड्वशि कृतीतीण्निषेधः ॥ * दृशेश्च ॥ ददृशिवान् । ददृश्वान् । ⧗ लटः शतृशानचावप्रथमासमानाधिकरणे ।३।२।१२४। अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः । शबादि । पचन्तं चैत्रं पश्य । ⧗ आने मुक् ।७।२।८२। अङ्गस्यातो मुमागमः स्यादाने परे । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् । तेन प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् ब्राह्मणः ॥ * माङ्याक्रोशे इति वाच्यम् । मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति । माङि लुङिति प्राप्ते एतद्वचनसामर्थ्याल्लट् । ⧗ संबोधने च ।३।२।१२५। हे पचन् हे पचमान । ⧗ लक्षणहेत्वोः क्रियायाः ।३।२।१२६। क्रियायाः परिचायके हेतौ चार्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्तः । शयाना भुञ्जते यवनाः । अर्जयन्वसति । हरिं पश्यन्मुच्यते । हेतुः फलं कारणं च । ⧗ कृत्यचः । ८।४।२९। प्रपीयमाणः सोमः । ⧗ ईदासः ।७।२।८३। आसः परस्यानस्य ईत्स्यात् । आदेः परस्य । आसीनः । ⧗ विदेः शतुर्वसुः ।७।१।३६। वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् । विदन् । विद्वान् । विदुषी । ⧗ तौ सत्

---

'लिटि धातोः–' इति द्वित्वे 'अत एकहल्मध्ये–' इत्येत्वाभ्यासलोपौ 'उगितश्च' इति ङीपि 'वसोः–' इति संप्रसारणे वलादित्वाभावान्नेट् । 'सदिरप्रतेः' इति षत्वम् । पुंसि तु निषेदिवान् ॥—अध्यूषुष इति । वस निवासे अधिपूर्वः 'वचिस्वपि–' इति संप्रसारणं द्वित्वहलादिशेषसवर्णदीर्घाः ङसि भत्वात्संप्रसारणं प्रथमैकवचने तु अध्यूषिवान् ॥—उपेयिवानना–॥—इडिति । वलादिलक्षण एवेट् 'नेड्वशि कृति' इति निषिद्धः क्र्यादिनियमात्पुनः प्राप्तः 'वस्वेकाजाद्घसाम्' इति सूत्रेण कृतद्वित्वानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषामिति नियच्छता प्रतिषिद्धो नित्यत्वात् द्वित्वे कृतेऽनेकाच्त्वात् । न च सवर्णदीर्घेणैकाच्त्वम् । 'दीर्घ इणः किति' इत्यभ्यासदीर्घे कृते तत्सामर्थ्यात्सवर्णदीर्घाभाव इति पक्षाश्रयणात् । स एव वलादिलक्षण इट् इह प्रतिश्रूयते नापूर्वो विधीयते तेन संप्रसारणविषये न भवति । अत एवोदाहरति—उपेयुष इति । सति त्विटि तस्य यणादेशे उपेय्युष इति स्यादिति भावः ॥—अविवक्षितमिति । व्याख्यानमेवात्र शरणम् ।—ईयिवानिति । इणो द्वित्वे सवर्णदीर्घं बाधित्वा आन्तरत्वात् 'इणो यण्' इति यण् भवति, वसोरिडागमे हि परत्राजादिप्रत्ययस्य सत्त्वात् ॥—वचेरिति । वच परिभाषण इत्यस्माद्ब्रुवो वचेर्वा कर्तरि न तु भावकर्मणोः । एतच्च निपातनाल्लभ्यम् ॥—जग्मिवानित्यादि । इट्पक्षे 'गमहन–' इत्युपधालोपः ॥—लटः शतृ– ॥—सामानाधिकरण्ये सतीति । यद्यप्यादेशरहितस्य लटः प्रयोगाभावात्सामानाधिकरण्य दुर्लभं तथापि शतृशानचोस्तद् दृष्ट्वा स्थानिन्यपि सामानाधिकरण्यं कल्प्यते ॥—शबादीति । शित्त्वेन सार्वधातुकत्वादिति भाव ॥—पचन्तमिति । शतुरुगित्त्वान्नुम् । विक्लित्त्यनुकूलवर्तमानव्यापाराश्रयमित्यर्थः ॥—आने मुक् ॥ 'अतो येयः' इति पूर्वसूत्रादनुवृत्तं पञ्चम्यन्तमप्यत इति पदं षष्ठ्या विपरिणम्यते, आन इति सप्तमीबलात् । न चात इति पञ्चमीबलादान इति सप्तम्यन्त पद षष्ठ्या विपरिणम्यतामिति शङ्क्यम् । पञ्चम्याः पूर्वसूत्रे चरितार्थत्वात्सप्तम्याश्चाचरितार्थत्वात्तदेतदाह—अङ्गस्यात इति । प्राचा त्वदन्ताङ्गस्येति व्याख्यातं । तदयुक्तम् । पचमान इत्यादौ 'अदुपदेशाल्लसार्वधातुकमनुदात्तम्' इति शानचः स्वरस्यासिद्धिप्रसङ्गात् । अदन्ताङ्गस्येति पक्षे हि अङ्गभक्तो मुक् स चाङ्गमेव न व्यवदध्यात्तदवयवमकार तु व्यवदध्यादेव अकारमात्रभक्तत्वे तु तदवयवत्वाभावात्ति व्यवधानमित्यदोषः । ननु स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषया मुकोऽविद्यमानत्वेन व्यवधानाभावात्स्यादेवानुदात्तत्वमिति चेन् । अत्राहुः । हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवन्नान्यत्रेत्याकरारूढम् । न चात्र हलः स्वरप्राप्तिरस्तीति प्रकृते परिभाषेयं नोपयुज्यते । अन्यथा मरुत्वानित्यादावपि 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्व स्यादिति दिक् ॥—लडिति । यद्यपि प्रथमान्तं प्रकृतं, तथापि धातोरित्यधिकारात्पञ्चम्यन्तात्परं प्रथमान्तं षष्ठ्या विपरिणम्यत इति भावः । न च 'वर्तमाने लट्' इत्यत्रैवोक्तरीत्या विपरिणामोऽस्त्विति शङ्क्यम् । प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्व नास्तीति 'गुप्तिज्किद्भ्यः सन्' इत्यत्र भाष्यकरैः स्वीकृतत्वात् ॥—प्रथमासामानाधिकरण्येऽपीति । उपलक्षणमिदम् । अप्रथमान्तेन सामानाधिकरण्याभावेऽपीत्यर्थः । तेन कुर्वतोऽपत्यं कौर्वतः कुर्वतो भक्तिः कुर्वद्भक्तिः कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिद्धति । अन्यथा कुर्वतोऽपत्यमित्यादौ तद्धितसमासौ न स्याताम् ॥—लक्षणहेत्वोः–॥ लक्ष्यतेऽनेनेति लक्षणं परिचायकम् ॥—शयाना इति । शीङ् आत्मनेपदित्वात्परस्य लटः शानच् । अत्र शयनं लक्षणं चिन्हं यवनकर्तृकभोजनस्य न तु फलं नापि करणमिति हेत्वपेक्षया लक्षणस्य पृथङ्निर्देशः ॥—अर्जयन्निति । अर्ज प्रतियत्ने चुरादिः, अर्जनार्थो वास इत्यर्थः ॥—हरिमिति । हरिदर्शनं मुक्तौ कारणमित्यर्थः ॥—विदेः–॥ स्थानिवत्त्वादेव सिद्धे वसोरुगित्करणं

।३।२।१२७। तौ शतृशानचौ सत्संज्ञौ स्तः। **लृटः सद्वा** ।३।३।१४। व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य । करिष्यतोऽपत्यं कारिष्यतः। करिष्यद्भक्तिः । हे करिष्यन् । अर्जयिष्यन्वसति । प्रथमासामानाधिकरण्येऽपि क्वचित् । करिष्यतीति करिष्यन् । **पूङ्यजोः शानन्** ।३।२।१२८। वर्तमाने । पवमानः । यजमानः । **ताच्छील्यवयोवचनशक्तिषु चानश्** ।३।२।१२९। एषु द्योत्येषु कर्तरि चानश् । भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रून्निघ्नानः । **इङ्धार्योः शत्रकृच्छ्रिणि** ।३।२।१३०। आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि । अधीयन् । धारयन् । अकृच्छ्रिणि किम् । कृच्छ्रेणाधीते । धारयति । **द्विषोऽमित्रे** ।३।२।१३१। द्विषन् शत्रुः । **सुञो यज्ञसंयोगे** ।३।२।१३२। सर्वे सुन्वन्तः सर्वे यजमानाः सत्त्रिणः । **अर्हः प्रशंसायाम्** ।३।२।१३३। अर्हन् । **आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ।३।२।१३४। क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु बोध्याः । **तृन्** ।३।२।१३५। कर्ता कटान् । **अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्** ।३।२।१३६। अलंकरिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः। रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः । **णेश्छन्दसि** ।३।२।१३७। वीरुधः पारयिष्णवः । **भुवश्च** ।३।२।१३८। छन्दसीत्येव । भविष्णुः । कथं तर्हि जगत्प्रभोरप्रभविष्णुवैष्णवमिति । निरङ्कुशाः कवयः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुरिति वृत्तिः । एवं क्षयिष्णुः । नैतद्भाष्ये दृष्टम् । **ग्लाजिस्थश्च ग्स्नुः** ।३।२।१३९। छन्दसीति निवृत्तम् । गिदयं न तु कित् । तेन स्थ ईत्वं न । ग्लास्नुः । गित्वान्न गुणः । जिष्णुः ।

'वसोः संप्रसारणम्' इत्यत्र क्वसोरपि सामान्यग्रहणार्थम् । तत्सामर्थ्याच्च 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' इत्येतदपि न प्रवर्तते ॥—**पूङ्यजोः**—॥ शाननः शकारः सार्वधातुकत्वार्थः, नकारः स्वरार्थः । ण्वुलादिवत्स्वतन्त्रोऽय न तु शत्रादिवल्लादेशस्तथाहि सति वेति वाच्यं स्यात्पवते यजते इति तिङोपि यथा स्युरिति । न च वासरूपन्यायेन निर्वाहः । लादेशेषु वासरूपविधिर्नास्तीत्याकरे स्थितत्वात् । किंच लादेशत्वे 'लः कर्मणि च' इति भावकर्मणोर्विहित स्यादिति भावकर्मणोरपि प्रयुज्येत इष्यते तु कर्तर्येव । एवं चानशः इङ्धार्योरिति शतुश्च स्वातन्त्र्य बोध्यम् । अत्र केचित् । शाननो लादेशत्वे लसार्वधातुकानुदात्तत्व स्यादित्याहुस्तच्चिन्त्यम् । परत्वान्नित्स्वरप्रवृत्त्या पवमान इत्यादेराद्युदात्तत्वे शाननोऽनुदात्तत्वस्येष्टत्वात् । नन्वेषां लादेशत्वानङ्गीकारे सोम पवमान इत्यादौ कर्मणि षष्ठी स्यादिति चेन्मैवम् । 'न लोका-' इति सूत्रे तृन्निति प्रत्याहारनिर्देश इत्युक्तत्वात् ॥—**ताच्छील्य**—॥ वचनग्रहणं स्पष्टार्थम् । चानशो लादेशत्वाभावेनात्मनेपदत्वाभावात्परस्मैपदिभ्योऽपि विधानमिति ध्वनयन्नुदाहरति—**निघ्नान** इति । 'गमहन-' इत्युपधालोपः ॥—**इङ्धार्योः**—॥ इङ आत्मनेपदित्वात् शता न सिध्यति धारयतेरपि कर्तृगामिनि क्रियाफले न सिध्यति लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः ॥—**सुञो यज्ञसंयोगे** ॥ सुनोतेः शतृप्रत्ययः स्यात् यज्ञेन सयुज्यमाने त्वृत्तिश्चेत् । नन्विह सुञो यज्ञे इत्येवास्तु यज्ञविषयकश्चेत्सुनोत्यर्थ इति व्याख्यायां सुरा सुनोतीत्यादेर्व्यावर्तयितु शक्यत्वात् । अत्राहुः। सयोगग्रहण प्रधानकर्तृसंप्रत्ययार्थ तेन यजमानादन्यत्र न भवतीति । एवं चाप्रधाने कर्तरि 'लटः शतृशानचौ' इत्यनेनापि न भवति संयोगग्रहणसामर्थ्यादिति हरदत्तः । यः सुन्वन्तमवतीत्यादीनामेकवचनान्तानां यजमानपरत्वसभवेऽपि बहुवचनान्तानां तु न संभवति । एकस्मिन्यागे एकस्यैव यजमानत्वादित्याशङ्क्य योगविशेषे तु सभवतीति दर्शयितुमुदाहरति—**सर्वे सुन्वन्त** इत्यादि । सत्रयागे हि बहवो यजमानास्त एव ऋत्विजां कर्म सोमाभिषवनं कुर्वन्तीति सुन्वन्त इत्यादि बहुवचनान्तस्यापि यजमानपरत्वं संभवतीति भावः ॥—**अर्हः**—॥ प्रशसायां किम् । अर्हति चौरो वधम् ॥—**आ क्वेः**—॥ शीलादीनां त्रयाणां विशेषणं समर्थयितुं निर्दिष्टैस्त्रिभिस्तच्छब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यते ॥—**क्विपमभिव्याप्येति** । 'भ्राजभासधुर्विद्युतोर्जि-' इति वक्ष्यमाणमिति शेषः ॥—**कर्ता कटानिति**। 'न लोकाव्यय-' इति षष्ठीनिषेधः॥—**अलंकृञ्**—॥ कृञिति डुकृञ् करण इत्यस्यैव न तु कृञ् हिसायामित्यस्य 'प्रसिद्धाप्रसिद्धयोः प्रसिद्धस्यैव ग्रहणम्' इति न्यायात् । निराङ्पूर्वोऽपि कृञ् स एव प्रपूर्वो जनी प्रादुर्भावे इह डुपचष् पाके, पतॢ गतौ, मदी हर्षे, त्रयोऽपि उत्पूर्वाः पठ्यन्ते । तत्र उदः पचपतमद इत्येव वक्तव्ये प्रत्येकमुत्पूर्वस्य पाठ उपसर्गान्तरनिवृत्त्यर्थस्तेन समुत्पतिष्णुरित्यादि न भवतीत्याहुः । रुच दीप्तौ अपपूर्वः, त्रपूष् लज्जायाम्, वृतु वर्तने, वृधु वृद्धौ, षह मर्षणे, चर गतावित्यादीति । आदिशब्दग्राह्यास्तु निराकरिष्णुः, प्रजनिष्णुः,उत्पचिष्णुः,उत्पतिष्णु इति । उत्पतिष्णुः 'उत्पतिष्णू च चेरतुः खरदूषणौ' इति भट्टिः । कालिदासोप्याह'एलानामुत्पतिष्णवः'इति । केचित्तु पत इति स्थाने दान्तं सूत्रे पठित्वा पद गतावित्यस्मात्प्रत्ययमाहुः । उन्मदिष्णुः रोचिष्णुः अपत्रपिष्णुः वर्तिष्णुः वर्धिष्णुः सहिष्णुः चरिष्णुः ॥—**पारयिष्णव** इति । 'अयामन्ता-'इतिणेरय् ॥—**भुवश्चेति** । चकारस्यानुक्तसमुच्चयार्थत्वमित्यर्थः ॥—**ईत्वं नेति** । 'घुमास्था-' इत्यादिनोगित्त्वादिति 'क्ङिति च' इत्यत्र

स्थास्नुः । जिष्णुः । श्र्युकः क्ङितीत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः । दंशेश्छन्दस्युपसंख्यानम् । दङ्क्ष्णवः पशवः । **त्रसिगृधिधृषिक्षिपेः क्नुः** ।३।२।१४०। त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः । **शमित्यष्टाभ्यो घिनुण्** ।३।२।१४१। उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिमितरा शमिनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पः । न चैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः । झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । नोदात्तोपदेशस्येति वृद्धिनिषेधः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उत्पूर्वान्मदेः अलंकृञादिसूत्रेणेष्णुचो वासरूपविधिना घिनुणपि । उन्मादी । ताच्छीलिकेषु वासरूपविधिर्नास्तीति तु प्रायिकम् । **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** ।३।२।१४२। घिनुण् स्यात् । संपर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती । **वौ कषलसकत्थस्रम्भः** ।३।२।१४३। विकाषी । विलासी । विकत्थी । विस्रम्भी । **अपे च लषः** ।३।२।१४४। चाद्वौ । अपलाषी । विलाषी । **प्रे लपसृद्रुमथवदवसः** ।३।२।१४५। प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी । **निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्** ।३।२।१४६। पञ्चम्यर्थे प्रथमा । एभ्यो वुञ् स्यात् । निन्दकः । हिंसक इत्यादि । ण्वुला सिद्धे वुञ्वचनं ज्ञापकं तच्छीलादिषु वासरूपन्यायेन तृजादयो नेति । **देविक्रुशोश्चोपसर्गे** ।३।२।१४७। आदेवकः । आक्रोशकः । उपसर्गे किम् । देवयिता । क्रोष्टा । **चलनशब्दार्थादकर्मकाद्युच्** ।३।२।१४८। चलनार्थाच्छब्दार्थाच्च युच् स्यात् । चलनः । चोपनः । कम्पनः । शब्दनः । रवणः । अकर्मकात्किम् । पठिता विद्याम् । **अनुदात्तेतश्च हलादेः** ।३।२।१४९। अकर्मकाद्युच् स्यात् । वर्तनः । वर्धनः । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । अकर्मकात्किम् । वसिता वस्त्रम् । **जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः** ।३।२।१५०। जु इति सौत्रो धातुर्गतौ वेगे च । जवनः । चङ्क्रमणः । दन्द्रमणः ।

गकारं प्रश्लिष्य गिति किति ङितीति व्याख्यानादिति भावः ॥—**गकारप्रश्लेषादिति** । नन्वेव गकारे चर्त्वस्यासिद्धत्वात् 'हशि च' इत्युत्वं स्यादिति चेत् । सत्यम् । सौत्रोऽयं निर्देशः तथा च वार्तिकम् । 'ग्स्नोगित्त्वान्न स्थ ईकारः क्ङितोरीत्त्वशासनात् । गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरिति' ॥—**दङ्क्ष्णव** इति । दंश दशने 'व्रश्च–' इत्यादिना षत्वे 'षढोः कः सि' इति कत्वम् 'आदेशप्रत्यययोः' इति षत्वम् । अनिदिता नलोपो न, ग्स्नोगित्त्वेन प्राप्त्यभावात् ॥—**त्रस्नुरिति** । 'नेड्वशि–' इति नेट् ॥—**शमित्यष्टाभ्यो**—॥ इतिशब्द आद्यर्थः ॥—**शमिनीतरेत्यत्रेति** । अत्र नव्याः । विद्वत्तरेतिवत्तसिलादिष्विति पुवद्भावेन शमितरेति भाव्यम् । न च उगित्त्वाभ्युपगमस्य फलाभावाद्ध्रस्वविकल्प एव भवतीति वाच्यम् । पाक्षिकह्रस्वेन उगित्करणस्य चरितार्थत्वाद्ध्रस्वाभावपक्षे तु पुवद्भावस्य दुर्वारत्वादित्याहुः ॥—**सम्पृचा**–॥—**सम्पर्कीति** । पृची संपर्के 'चजोः–' इति कुत्वं गुणः ॥—**परिदेवीति** । देवृ देवने भ्वादिः, ण्यन्तस्य दीव्यतेस्तु नेह ग्रहणं लाक्षणिकत्वात् । अण्यन्तैः साहचर्याच्च ॥—**अभ्याघातीति** । अभ्याङ्पूर्वाद्धन्तेर्हस्य कुत्वेन घः । 'हनस्तोऽचिण्णलोः' इति नस्य तः 'अत उपधायाः' इति वृद्धिः ॥—**वौ कष**—॥ कष हिंसार्थः । लस श्लेषणक्रीडनयोः कत्थ श्लाघायाम्, स्रम्भु विश्वासे ॥—**अपे च लषः** ॥ लष कान्तौ ॥—**प्रे लप**—॥ लप व्यक्तायां वाचि ॥—**प्रमाथीति** । मथे विलोडने ॥—**निन्दहिंस**—॥ इह सूत्रे विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः, अकारस्त्वागन्तुकः । केचित्तु विनाशीति ण्यन्तमेव पठन्ति, परिवादीति तु वदेर्ण्यन्तस्य पाठो निर्विवाद एव । असूयतिः कण्ड्वादिर्यगन्तः, निन्दादीनामसूयान्तानां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । स्यादेतत् । असूयतेरेव वुञ् विधेयं नेतरेभ्यः, निन्दादीनां ण्वुलैव सिद्धेः । न हि तत्र लित्स्वरनित्स्वरयोर्विशेषोऽस्ति उभयथाप्याद्युदात्तत्वात् । असूयतेस्तु ण्वुलि 'लिति' इति प्रत्ययात्पूर्वमुदात्तं वुञि तु 'ञ्नित्यादिर्नित्यम्–' इत्यादिरुदात्त इति विशेषस्तदाह—**ण्वुलेति** ॥—**तृजादयो नेति** । नेदं ण्वुल्विषयकमेव ज्ञापकं किंतु सामान्यतः प्रत्ययमात्रविषयकमित्यर्थः ॥—**देविक्रुशोः**–। दीव्यतेर्हेतुमण्ण्यन्तस्य दिवु कूजने इति चुरादिण्यन्तस्य च ग्रहणम् ॥—**चलनशब्दार्था**–॥ चल कम्पने, चुप मन्दायां गतौ, कपि चलने, शब्द शब्दने चुरादिः, रु शब्दे चलन इत्यादि 'युवोः' इत्यनादेशः ॥—**अनुदात्तेतश्च हलादेः** नन्वनुदात्तेत् हलन्त एवेति तदन्तविधिं बाधित्वा सामर्थ्याद्धलादिरेव ग्रहीष्यते तत्किमादिग्रहणेनेति चेत्, अत्राहुः । आदिग्रहणाभावे हलन्तादित्यर्थः स्यात्तथाहि एधितेत्यत्राप्यतिप्रसङ्गः स्यात्, जुगुप्सत इत्यादि च न सिध्यत् । अस्ति चेहानुदात्तेत्त्वं गुपादिष्ववयवेष्वचरितार्थत्वात्समुदायस्य अनुदात्तेत्त्वविशेषकत्वादिति दिक् ॥—**जुचङ्क्रम्य**–

सरणः । पूर्वेण सिद्धे पदिग्रहणं लषपतपदेत्युकञा बाधा माभूदिति । तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्ना-स्तीति । तेनालंकृञस्तृन् । **क्रुधमण्डार्थेभ्यश्च** ।३।२।१५१। क्रोधनः । रोषणः । मण्डनः । भूषणः । **न यः** ३।२।१५२। यकारान्ताद्युच् न स्यात् । क्नूयिता । क्ष्मायिता । **सूददीपदीक्षश्च** ।३।२।१५३। युच् न स्यात् । सूदिता । दीपिता । दीक्षिता । नमिकम्पीति रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति ताच्छीलिकेषु वासरूपविधि-र्नास्तीति प्रायिकमिति । तेन कम्रा कमना युवतिः । कम्प्रा कम्पना शाखा । यदि सूदेर्युज् न । कथं मधुसूदनः । नन्द्यादिः । **लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्** ।३।२।१५४। लाषुकः । पातुक इत्यादि । **ज-ल्पभिक्षकुट्टलुण्टवृङः षाकन्** ।३।२।१५५ । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी । **प्रजोरिनिः** ।३।२।१५६। प्रजवी । प्रजविनौ । प्रजविनः । **जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च**। ३।२।१५७। जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी । **स्पृहि-गृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्** ।३।२।१५८। आद्यास्त्रयश्चुरादावदन्ताः । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तत्पूर्वो द्रा । तदो नान्तत्वं निपात्यते । तन्द्रालुः ॥ * **शीङो वाच्यः** । शयालुः । **दाधेट्सिशदसदो रुः** ।३।२।१५९। दारुः । धारुः । सेरुः । शद्रुः । सद्रुः । **सृघस्यदः क्मरच्** ।३।२। १६०। सृमरः । घस्मरः । अद्मरः । **भञ्जभासमिदो घुरच्** ।३।२।१६१। भङ्गुरः । भासुरः । मेदुरः । **वि-दिभिदिच्छिदेः कुरच्** ।३।२।१६२। विदुरः । भिदुरम् । छिदुरम् । **इण्नशजिसर्तिभ्यः क्वरप्** ।३।२।१६३। इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः । **गत्वरश्च** ।३।२।१६४। गमेरनुनासिकलोपोऽपि निपात्यते । गत्वरी । **जागुरूकः** ।३।२।१६५। जागर्तेरूकः स्यात् । जागरूकः । **यजजपदशां यङः** ।३।२।१६६।

---

क्रमिभ्रमी यङन्तौ, क्रमु पादविक्षेपे, द्रमहम्ममीमृगतौ ॥—**पूर्वेणे**ति । 'अनुदात्तेतश्च' इत्यनेन । इह पदिग्रहण सकर्म-कार्थमिति वृत्तिकृतोक्तम् । भाष्ये तु अनभिधानादेव सकर्मकान्न भविष्यतीत्युक्तत्वात् ज्ञापनार्थमेव तदित्याशयेनाह—**बाधा माभूदित्या**दि ॥—**परस्परमि**ति । निन्दादिसूत्रे हि तच्छीलादिषु वासरूपविधानात् तृन्नादयो नेति ज्ञापित-मिह तु ताच्छीलिकेषु परस्परं नेति ज्ञापितमिति विवेक इति भावः ॥—**क्रुध**—॥ क्रुध क्रोधे, रुष रोषे, मडि भूषायाम्, भूष अलंकारे ॥—**न यः** ॥ अय पय नय तय जय गताविति पठितस्य नयतेर्नाय निर्देशः अनुदात्तेत्वादेव युचः सिद्ध-त्वात्किंतु नेति पृथक् पदमिति मत्वाह—**यकारान्ता**दिति ॥—**क्नूयिता क्ष्मायिते**ति । क्नूयी शब्दे उन्दे च, क्ष्मायी विधूनने ॥—**सूददीप**—॥ सूद क्षरणे, दीपी दीप्तौ, दीक्ष मौण्ड्येज्यादौ ॥—**ताच्छीलिकेष्वि**ति । परस्परमिति शेषः ॥—**प्रायिकमि**ति । न केवल यथाश्रुतभाष्यमवलम्ब्य युज्रयोरेव समावेश इति मन्तव्य किंतु प्रायिकत्व एव भाष्यस्य तात्पर्य तेन गमेः 'लषपतपद–' इत्युकञ्विषये तृन्नपि । गन्ता गामुकः । तथा 'वौ कषलस–' इति घिनुण्विषये युजपि । विकत्थी विकत्थन इत्यादि सिध्यतीति भावः ॥—**जल्प**—॥ जप जल्प व्यक्तायां वाचि, भिक्ष भिक्षायां लाभेऽलाभे च, कुट्ट छेदने, लुण्ठ स्तेये, चौरादिकाविमौ । अत्र व्याचख्युः । जल्पेः चलनशब्दार्थादिति भिक्षेः 'अनुदात्तश्च–' इति युचि प्राप्ते कुट्टलुण्ठयोः 'णेश्छन्दसि' इति इष्णुचि प्राप्ते वृङस्तु 'आदृगमहनजन–' इति किकिनोः प्राप्तयोरयं विधिरिति । षो ङीषर्थ इत्याह—**वराकी**ति ॥—**प्रजवी** ॥ जु इति सौत्रो गत्यर्थः ॥—**जिदृक्षि**—॥ जि जये, जि अभिभवे, दृङ् आदरे, क्षि क्षये, क्षि निवासगत्योः, श्रिञ् सेवायाम् विपूर्वः, व्यथ भयसचलनयोर्नञ्पूर्वः । निपातनान्नञो धातुना समासे नलोपे ततः प्रत्ययः । अम गत्यादिषु अभिपूर्वः ॥—**प्रसवी**ति । षू प्रेरणे । अस्मादिति षूङ् प्राणिगर्भविमोचने, षूङ् प्राणिप्रसवे, इमौ न गृह्येते सानुबन्धत्वात् । जिदृक्षीत्यत्रैव प्रजु पठित्वा पूर्वसूत्र त्यक्तुमुचितम् । एवं हि पृथग्विभक्तिश्चकारश्च मास्त्विति सुवचम् ॥—**स्पृहि**—॥ स्पृह ईप्सायाम्, गृह ग्रहणे, पत गतौ, त्रयश्चुरादाविति । तेन णेरयादेशेन रूपसिद्धिरिति भावः । यद्येव णिचि उपधागुणवृद्धी स्यातामत आह—**अदन्ता** इति । ततश्चालोपस्य स्थानिवत्त्वात्तदभावः ॥—**तत्पूर्व** इति । तच्छब्दस्य समासोऽपि निपातनादिति बोध्यम् । डुधाञ् श्रत्पूर्वः श्रद्धालुः । धे-टस्तु नेदं रूपम् । श्रत्पूर्वस्य तस्य प्रयोगाभावादिति व्याचख्युः । कथं कृपालुः स्पर्धालुः । कृपा स्पर्धां च लातीति विग्रहे मृगय्वादित्वात्कुः ॥—**दाधेट्**—॥ डुदाञ्दोदेङां त्रयाणामेव ग्रहण न तु दाण्दापोरित्याहुः ॥—**भङ्गुर** इति । 'चजोः–' इति कुत्वम् । अभिधानस्वभावाद्भञ्जेः कर्मकर्तर्येवेत्याहुः ॥—**विदिभिदि**—॥ विदेर्ज्ञानार्थस्यैव ग्रहणं न तु ला-भार्थस्य व्याख्यानात् ॥—**छिदुरमि**ति । कर्मकर्तरि प्रत्यय इति वृत्तिः नेति तद्भाष्ये दृष्टम् । तथा च माघः मुख्ये कर्तरि प्रायुङ्क्त—'प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गना' इति । इह अदुरिति च्छेदः ॥—**इत्वरः इत्वरी**-ति । इण् गतौ 'ह्रस्वस्य पिति–' इति तुक् कित्त्वाद्गुणाभावः 'टिड्ढा–' इत्यादिना स्त्रियां ङीप् ॥—**जागुरूकः** ॥ जागु-रिति पञ्चम्यन्तं तद्व्याचष्टे जागर्तेरिति । जागरूक इति सिद्धरूपमेव न तु निपातितम् । उत्तरसूत्रे ऊकस्यानुवृत्तिप्रस-ङ्गात् ॥—**यजजप**—॥—**यायजूक** इति । यजेर्यङि द्वित्वादि 'दीर्घोऽकितः' इत्यभ्यासदीर्घः अतो लोपे 'यस्य हलः'

पुम्वौ यङन्तेभ्य ऊकः स्यात् । दशामिति भाविना नलोपेन निर्देशः । पायजूकः । जञ्जपूकः । दन्दशूकः । ॥ नमिकम्पिस्म्यजसकमहिंसदीपो रः ।३।२।१६७। नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते । अजस्रम् । सन्ततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः । ॥ सनाशंसभिक्ष उः ।३।२।१६८। चिकीर्षुः । आशंसुः । भिक्षुः । ॥ विन्दुरिच्छुः ।३।२।१६९। वेत्तेर्नुम् इषेश्छत्वं च निपात्यते । वेत्ति तच्छीलो विन्दुः । इच्छति इच्छुः ॥ क्याच्छन्दसि ।३।२।१७०। देवाञ्जिगाति सुम्नयुः । ॥ आदृगमहनजनः किकिनौ लिट् च ।३।२।१७१। आदन्तादृदन्तादृमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत् । पपिः सोमं ददिर्गाः । बभ्रिर्वज्रम् । जग्मिर्युवा । जघ्निर्वृत्रममित्रियम् । जज्ञिः ॥ * भाषायां धाञ्कृसृगमिजनिनमिभ्यः । दधिः । चक्रिः । सस्रिः । जग्मिः । जज्ञिः । नेमिः ॥ * सासहिवावहिचाचलिपापतीनामुपसंख्यानम् । यङन्तेभ्यः सहेत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते । ॥ स्वपितृषोर्नजिङ् ।३।२।१७२। स्वप्नक् । तृष्णक् । तृष्णजौ । तृष्णजः । धृषेश्चेति वाच्यमिति काशिकादौ । धृष्णक् । ॥ शृवन्द्योरारुः ।३।२।१७३। शरारुः । वन्दारुः । ॥ भियः क्रुक्लुकनौ ।३।२।१७४। भीरुः । भीलुकः ॥ * क्रुकन्नपि वाच्यः । भीरुकः । ॥ स्थेशभासपिसकसो वरच् ।३।२।१७५। स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः । ॥ यश्च यङः ।३।२।१७६। यातेर्यङन्ताद्वरच् स्यात् । अतो लोपः । तस्य यलोपं प्रति स्थानिवद्भावनिषेधाल्लोपो व्योरिति यलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतो लोपे प्राप्ते । वरे लुप्तं न स्थानिवत् । यायावरः । ॥ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।३।२।१७७। विभ्राट् । भाः । भासौ । धूः । धुरौ । विद्युत् । ऊर्क् । पूः । पुरौ । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । जुवौ । जुवः । ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते । ततः क्विप् । ग्रावस्तुत् । ॥ अन्येभ्योऽपि दृश्यते ।३।२।१७८। क्विप् । छित् । भिद् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः क्वचिदसंप्रसारणं क्वचिद्द्वे क्वचिद्ध्रस्वः । तथा

---

इति यलोपः ॥—जञ्जपूक इत्यादि । 'जपजभदहदश–' इत्यादिना नुक् । वावदूकशब्दस्तु 'उलूकादयश्च' इत्यत्र वक्ष्यते । माधवस्त्वाह कुर्वादिगणे वावदूक इति पाठादेव यङन्ताद्वदेरूकप्रत्यय इति ॥—सनाशंस—॥ सनिति प्रत्ययग्रहणात्तदन्तग्रहणम् । षणु दाने, षण सम्भक्ताविति धात्वोस्तु नेह ग्रहणम् । गर्गादिषु विजिगीषुशब्दस्य पाठात् । आशंसेत्याङः शंसु इच्छायामित्ययं गृह्यते न शंसु स्तुताविति आङा सह निर्देशात् ॥—विन्दुरिच्छुः ॥ विद ज्ञाने इत्यस्यैव ग्रहण नेतरेषाम् । एवमिषेरपि इच्छार्थकस्यैव ग्रहण नलिष गतौ, इष आभीक्ष्ण्य इत्यनयोः, अनभिधानान्निपातनाद्वेति भावः । बिन्दुशब्दस्तु पवर्गीयादिः विदि अवयवेऽस्मान्मृगय्वादित्वात्कुप्रत्यये बोध्यः ॥—क्याच्छन्दसि ॥ क्य इति क्यच्क्यङ्क्यषां सामान्यग्रहणम् । क्यान्ताद्धातोश्छन्दसि विषये तच्छीलादिषु उप्रत्ययो भवतीति काशिका । क्य इति व्याख्यानात्कण्ड्वादेरपि गृह्यते तेन तुरण्यवोऽङ्गिरसो न क्षन्त समर्थे सपर्यवः यमस्य योनौ शकुनं भुरण्यमित्यादि सिद्धम् । तुरण त्वरायाम्, सपर पूजायाम्, भुरण धारणपोषणयोरित्येते कण्ड्वादिषु पठिताः । अथ कथ 'सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः' इति भट्टपादाः । मृगय्वादिषु असूयशब्दो द्रष्टव्य इति हरदत्तः ॥—सुम्नयुरिति । सुम्नशब्दात्क्यचि तदन्तादुः । 'न च्छन्दस्यपुत्रस्य' इति निषेधात् 'क्यचि च' इति ईत्वम् 'अकृत्सार्व–' इति दीर्घश्च न भवति ॥—आदृ—॥ 'ऋदोरप्' इतिवदादिति दकारो मुखसुखार्थो न त्वयं तकारस्तेन तात्परत्वाभावाद् इत्यनेन दीर्घोऽपि गृह्यते ततुरिर्जगुरिः । तॄ प्लवनतरणयोरित्यस्य गॄ निगरण इत्यस्य च बहुल छन्दसीत्युत्वे रूपमिति प्राञ्चः । वस्तुतस्तु आदित्यादिप्रकृतिविशेषणमुदाहरणं प्रपञ्चमात्रम् । किकिनौ लिट्चेत्येतावन्मात्रमेव विवक्षितम् । तथाच वार्तिकम् । किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनादिति । उदाहृत्तं च भाष्ये सेदिर्नेमिरित्यादि । एवं स्थिते आदिति तपरकरणेऽपि न क्षतिरिति ध्वनयन्नाह—आदन्तादृदन्तादिति ॥—बभ्रिर्वज्रमिति । 'न लोका–' इति षष्ठीनिषेधाद्द्वितीया । किकिनोः स्थाने तिबादयो न लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् । छान्दससूत्रद्वयोपन्यसन भाषायां धाञित्यादिवार्तिकविषयबोधनार्थम् । इह च वार्तिके गमिर्यद्यपि न दृश्यते तथापि धातुवृत्तौ क्वचिद्वृत्तिपुस्तके च दर्शनादुपन्यस्तः ॥—जग्मिरिति । 'गमहनजन–' इत्युपधालोपः ॥—जघ्निरिति । 'अभ्यासाच्च' इति कुत्वम् ॥—दधिरिति । आतो लोपः ॥—नेमिरिति । एत्वाभ्यासलोपौ ॥—सासहीत्यादि । यङोऽतो लोपे यलोपः अभ्यासदीर्घः ॥—नीगभावश्चेति । 'नीग्वञ्चु–' इत्यादिना प्राप्तस्य नीगागमस्याभाव इत्यर्थः ॥—तृष्णगिति । ङित्वान्न गुणः । नजिङ इकार उच्चारणार्थः ।—क्रुकन्नपीति । अत एव 'भीरुभीलुकभीरुकाः' इत्यमरः ॥—ईश्वर इति । 'नेड्वशि–' इतीडभावः ॥—पेस्वर इति । पिसृ पेसृ गतौ ॥—कस्वर इति । कस गतौ ॥—भ्राज—॥ आ केरित्युक्तत्वात्तच्छीलादिष्वयं क्विप् । भ्राजृ दीप्तौ, धुर्वी हिंसायाम्, द्युत दीप्तौ, ऊर्ज बलप्राणनयोः, पॄ पालनपूरणयोः, जु गतौ सौत्रः । ग्रावपूर्वः ष्टुञ् स्तुतौ ॥—विभ्राडिति । 'व्रश्च–' इति षत्वम् । जश्त्वचर्त्वे ॥—धूरिति । 'राल्लोपः' इति वलोपः 'र्वोः–' इति दीर्घः ॥—ऊर्गिति । चोः कुः । 'रात्सस्य' इति नियमान्न संयोगान्तलोपः । —पूरिति । उदोष्ठ्यपूर्वस्येत्युत्वम् । 'र्वोः' इति दीर्घः ॥—वाक् । प्राडिति । इह दीर्घः संप्रसारणाभावश्च । संप्रसारण-

च वार्तिकम् ॥ * क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च । क्विब्वचीत्यादिना उणादिसूत्रेण केषांचित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम् । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं सा श्रीः ॥ * द्युतिगमिजुहोतीनां द्वे च । दृशिग्रहणादभ्याससंज्ञा । दिद्युत् । जगत् ॥ * जुहोतेर्दीर्घश्च । जुहूः । दॄ भये । अस्य ह्रस्वश्च । दीर्घेति दृदत् ॥ * ध्यायतेः संप्रसारणं च । धीः । ॾ भुवः संज्ञान्तरयोः ।३।२।१७९। मित्रभूर्नाम कश्चित् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः । ॾ विप्रसंभ्यो ड्वसंज्ञायाम् ।३।२।१८०। एभ्यो भुवो डुः स्यान्न तु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । संभुर्जनिता । संज्ञायां तु विभूर्नाम कश्चित् ॥ * मितद्र्वादिभ्य उपसंख्यानम् । मितं द्रवतीति मितद्रुः । शतद्रुः । शंभुः । अन्तर्भावितण्यर्थोऽत्र भवतिः । ॾ धः कर्मणि ष्ट्रन् ।३।२।१८१। धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । धात्री जनन्यामलकीवसुमत्युपमातृषु । ॾ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।३।२।१८२। दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दान्त्यनेन दात्रम् । नेत्रम् । ॾ तितुत्रतथसिसुसरकसेषु च ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण्न स्यात् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा । न स्त्री । ॾ हलसूकरयोः पुवः ।३।२।१८३। पूङ्पूञोः करणे ष्ट्रन् स्यात् तच्चेत्करण हलसूकरयोरवयवः । हलस्य सूकरस्य वा पोत्रम् । मुखमित्यर्थः । ॾ अर्तिलूधूसूखनसहचर इत्रः ।३।२।१८४। अरित्रम् । लवित्रम् । धुवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् । ॾ पुवः संज्ञायाम् ।३।२।१८५। पवित्रम् । येनाज्यमुत्पूयते यच्चानामिकावेष्टनम् । ॾ कर्तरि चर्षिदेवतयोः ।३।२।१८६। पुव इत्रः स्यात् ऋषौ करणे देवतायां कर्तरि । ऋषिर्वेदमन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेऽनेनेति पवित्रम् ॥ देवतायां त्वग्निः पवित्रं समा पुनातु ॥ इति पूर्वकृदन्तं समाप्तम् ॥

---

प्राप्तिस्तु 'वचिस्वपि–' 'ग्रहिज्यावयि–' इत्यादिना । श्रयति हरिं श्रीरिति । प्राचा तु श्रयन्त्येतामिति कर्मणि क्विबुदाहृतस्तत्र 'कर्तरि कृत्' इति सूत्रविरोधः स्पष्ट एव । बाहुलकं तु अगतिकगतिः ॥—द्युति । 'द्वे च' इति कृतेऽपि द्वित्वे अभ्याससंज्ञेह दुर्लभा प्रत्यासत्त्या षाष्ठद्वित्व एव प्रवृत्तेरत एव आष्टमिके सा नेत्याशङ्कायामाह—दृशिग्रहणादिति ॥—दिद्युदिति । 'द्युतिस्वाप्योः–' इत्यभ्यासस्य संप्रसारणम् ॥—जगदिति । 'गमः क्वौ' इति मलोपे तुक् । अत्र 'द्वे च' इति चकारेण दीर्घः समुच्चीयमानो द्युतिगम्योर्न भवति दीर्घश्रुत्या अचश्चेति परिभाषोपस्थानादजन्तजुहोतेरेव संभवतीत्याशयेनाह ॥—जुहोतेर्दीर्घश्चेति । जुहोतीति जुहूः । ह्रस्वश्चेति चकारेण द्वित्वं समुच्चीयते ॥—धीरिति । ध्यायतीति धीः । 'हलः' इति दीर्घः । ननु ध्यायति पुरुषो न तु धीः, एवं जुहोत्यनया पुरुष इति सर्वसमतत्वात्कथं तर्हि भवदुक्तार्थः संगच्छत इति चेद् । अत्राह हरदत्तः । करणस्य कर्तृत्वविवक्षाया क्विप् भवति ॥—भुवः संज्ञा–॥-धनिकेत्यादि । तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र नेति भावः । एतच्च दृशिग्रहणानुवृत्त्या लभ्यते । नन्वेवं प्रतिभूशब्दः संज्ञेति फलितं तत्र संज्ञायामित्येव सिद्धे किमन्तरग्रहणेन । अत्राहुः । यावद्द्रव्यभाविन्यः संज्ञाः । प्रतिभूशब्दस्तु सत्येव तस्मिन् ऋणप्रदानेन निवर्तत इत्युभयोर्भेद इति ॥ शं सुखं भावयतीति शंभुरित्यर्थाभ्युपगमनायाह—अन्तर्भावितेति । शंभवति सुखस्वरूपो भवतीति शंभुरित्यन्ये । शंभवत्यस्मादिति व्युत्पत्तिस्तु अपादाने डुप्रत्ययाभावाच्चिन्त्येति माधवः ॥—धः कर्मणि—॥ कर्मणीति नोपपदम् । 'ग्लाम्लास्थ' इत्यनन्तरमेव धः ष्ट्रनिति वक्तव्ये पृथक्कर्मग्रहणात्व्याख्यानाद्वेत्याशयेनाह—कर्मण्यर्थे इति । अत एव धीयते पीयत इति धात्री स्तनदायिनीत्यादि व्याचक्षते ॥—दाम्नी-॥-मेढ्रमिति । हो ढः धत्वष्टुत्वढलोपाः ॥—दंष्ट्रेति । षित्वेऽपि ङीष् इह न भवति अनित्यः षिता ङीषित्युक्तत्वात् । अन्ये त्वजादिपाठाट्टापमाहुः ॥—नद्ध्रीति । 'नहो धः' इति धत्वम् । 'झषस्तथोर्धोऽधः' इति जश्त्वम् । सूत्रे दशेति नलोपिनो निर्देशो ज्ञापकः क्वचिदकित्यपि दंशेर्नलोपो भवतीति तेन दंश दशन इत्यस्माल्ल्युटि दशना दन्ता इति सिद्धम् । न च सन्निधानात् ष्ट्रन्येव नलोपः स्यादिति वाच्यम् । 'शुनीदन्तदंष्ट्रा–' इति निर्देशात् ॥—तच्चेत्करणमित्यादि ॥ एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्तम् ॥—मुखमित्यर्थ इति । तत्रैव रूढिरिति भावः ॥—अर्तिलूधूसू—॥ धू विधूनने इति कुटादिरेव गृह्यते निरनुबन्धकत्वात् । अत एव गाङ्कुटेति ङित्त्वाद्गुणनिषेधे उवङ् तदाह—धुवित्रमिति ॥—पुवः ॥ पूङ्पूञोरुभयोर्ग्रहणमविशेषात् । करण इत्यनुवृत्तेराह—येनाज्यमिति ॥—कर्तरिचर्षि-॥-इत्रः स्यादिति । करणे कर्तरि चेत्यर्थः । काशिकानुसारेण यथासंख्यं व्याचष्टे—ऋषौ करणे इति । 'कर्तरि कृत्' इति सूत्रस्थभाष्यकैयटयोस्तु यथासंख्यं नेति गम्यत इति शब्दकौस्तुभे स्थितम् ॥ ॥ इति पूर्वकृदन्तम् ॥

## ॥ अथोणादयः ॥

कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ १ ॥ करोतीति कारुः शिल्पी कारकश्च। आतो युक् ।३।३।१२८। वातीति वायुः। पायुर्गुदम्। जयत्यभिभवति रोगान् जायुरौषधम्। मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम्। स्वादुः। साध्नोति परकार्यं साधुः। अश्नुते आशु शीघ्रम्। आशुर्व्रीहिः पाटलः स्यात्। छन्दसीणः ॥ २ ॥ मान आयौ। दृसनिजनिचरिचटिभ्यो ञुण् ॥ ३ ॥ दीर्यत इति दारु। सनुः प्रस्थः सानुरस्त्रियाम्। जानु। जानुनी। इह जनिवध्योश्चेति न निषेधः। अनुबन्धद्वयसामर्थ्यात्। चारु रम्यम्। चाटु प्रियं वाक्यम्। मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि। किंजरयोः श्रिणः ॥ ४ ॥ किं शृणोतीति किंशारुः सस्यशूकं बाणश्च। जरामेति जरायुर्गर्भाशयः। गर्भाशयो जरायुः स्यात्। त्रो रश्च लः ॥ ५ ॥ तरन्त्यनेन वर्णा इति तालुः। कृके वचः कश्च ॥६॥ कृकेन गलेन वक्तीति कृकवाकुः। कृकवाकुर्मयूरे च सरटे चरणायुधे इति विश्वः। भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ॥७॥ भरति बिभर्ति वा भरुः। स्वामी हरश्च। म्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः। शेते शयुरजगरः। तरुर्वृक्षः। चरन्ति भक्षयन्ति देवता इममिति चरुः। त्सरुः खड्गादि-

---

अथोणादयः ॥—कृवापा—॥ डुकृञ् करणे, वा गतिगन्धनयोः, पा पाने, पा रक्षणे, जि अभिभवे, डुमिञ् प्रक्षेपणे, स्वद आस्वादने, साध ससिद्धौ, अशू व्याप्तौ। 'विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः' इति मेदिनीकोशः। 'कारुः शिल्पिनि कारके' इति धरणिकोशस्तदेतदभिप्रेत्याह—कारुरित्यादि। आद्ये योगरूढिर्द्वितीये तु योगमात्रमिति विवेकः। अत एव द्वितीये धात्वर्थं प्रति कारकान्वयो भवत्येव। तथा च भट्टिः 'राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः। सर्ववानरसेनानामाश्वागमनमादिशत्' इति। पिबत्यनेन तैलादिकमिति पायुर्गुदस्थानम्। 'गुदं त्वपानं पायुः' इत्यमरः। पाति रक्षतीति विग्रहे रक्षकोऽपि। तथा च मन्त्रः 'भुवस्तस्य स्वतवा पायुरग्ने' इति। 'स्वतवान् पायौ' इति नस्य रुत्वम्। 'अगदो जायुः' इत्यमरः। पुल्लिङ्गसाहचर्याज्जायुः पुंसि। 'मायुः पित्त कफः श्लेष्मा' इत्यमरः। गोपूर्वाद्वा वाच विकृतां मिनोति प्रक्षिपतीति गोमायुः शृगाल इत्युज्ज्वलदत्तः। वस्तुतस्तु मायुशब्दः यत्पशुर्मायुमकृतगोमायुरेक इत्यादौ वेदभाष्यकारादिभिस्तस्यैव व्याख्याततत्वात्। स्वदते रोचते इति स्वादुः विशेष्यनिघ्नोयम्। एवं साधुरपि। आशु शीघ्रमिति विलम्बाभावमात्रे क्लीबं, तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम्। 'अथ शीघ्रं त्वरितम्' इत्युपक्रम्य 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां भेद्यगामि यत्' इत्यमरः। व्रीहौ पुंस्येव। 'उणादयो बहुलम्' इति बहुलवचनादन्यस्मादप्युण्भवति। रह त्यागे। गृहीत्वा चन्द्रं रहति त्यजतीति राहुः। वस निवासे वसत्यस्मिन्सर्वमिति सर्वत्रासौ वसतीति वा वासुः वासुश्चासौ देवश्च वासुदेवः। वसुदेवस्यापत्यमित्यस्मिन्नर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि कृते वासुदेव इति व्युत्पत्त्यन्तरमिति दिक् ॥—छन्दसीणः ॥ उणनुवर्तते। एति गच्छतीत्यायुः ॥—मान आयौ इति। आयुशब्दो मनुष्यपर्यायेषु वैदिकनिघण्टौ पठितः। अत एव 'त्वामग्ने प्रथममायुमायवे' 'मानस्तोके तनये मान आयौ' इत्यादिमन्त्रेषु वेदभाष्ये तथैव व्याख्यातम्। अर्वाचीनास्तु 'छन्दसीणः' इति सूत्रं बहुलवचनाद्भाषायामपि प्रवर्तत इति स्वीकृत्य 'आयुर्जीवितकालो ना' इत्यमरग्रन्थे आयुशब्दमुकारान्तं व्याचख्युः। ननु 'एतेर्णिच्च' इत्युस्प्रत्यये सकारान्तो वक्ष्यमाण आयुःशब्दस्तु लोकवेदयोर्निर्विवाद एव। अत एव जटा आयुरस्येति विग्रहे 'गृध्रं हत्वा जटायुषम्' इति रामायणप्रयोगो 'यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्' इति श्रीहर्षप्रयोगश्च सगच्छते। तथा च 'आयुर्जीवितकालो ना' इत्यत्रायुःशब्दः सकारान्त इत्येव व्याख्यायतां किमुकारान्ताभ्युपगमेनेति चेदत्राहुः। सकारान्त आयुःशब्दो नपुंसक इति तस्य पुल्लिङ्गता नेत्याशयेन तथोक्तमिति। अन्ये तु 'छन्दसीणः' इति सूत्रस्य भाषायां प्रवृत्त्यभावे 'मा वधीष्ट जटायु माम्' इति भट्टिप्रयोगः 'तटीं विन्ध्यस्याद्रेरभजत जटायोः प्रथमजः' इति विन्ध्यवर्णने अभिनन्दोक्तप्रयोगश्च न सगच्छेतेत्याहुः। वस्तुतस्तु जटा याति प्राप्नोतीति जटायुः। मृगय्वादित्वात्कुः। आयातीत्यायुः। एवं च 'जटायुषा जटायु च विद्यादायुं तथायुषा' इति द्विरूपकोशः। वायुना जगदायुनेतिवर्णविवेकश्च सुसाध इति दिक् ॥—दृसनि ॥ दृ विदारणे, षणु दाने, जन जनने, चर गतौ, चट भेदने ॥—दार्विति। 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥—चाट्विति। 'चटु चाटु प्रिय वाक्यम्' इति हट्टचन्द्रः। 'चाटुर्नरि प्रियोक्तिः स्यात्' इति रत्नमालाकोशः। नरि पुंसि। 'चकर च किल चाटून् प्रौढयोषिद्वदस्य' इति माघः। माघे तु नपुंसकमपि दर्शितम्। 'चाटु चाकृतकसंभ्रममासाम्' इति ॥—किंजरयोः। शॄ हिंसायाम्, इण् गतौ, आभ्यामुण् स्यात् ॥—सस्येति। 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनीकोशः ॥—त्रोरश्चलः ॥ तॄ प्लवनतरणयोः। त्रः रश्चेति च्छेदः। केचित्तु ऋ इति प्रश्लिष्य द्वयोरपि सवर्णदीर्घं त्रॄ तयोस्त्रोरित्युक्त्वा ऋ ताविव्यस्मादपि अण् रस्य ल इति व्याख्याय इयर्ति अर्यते वा आलुः शाकविशेषो घटी चेत्याहुः। 'कर्कर्यालुर्गलन्तिका' ॥—भृमृशी—॥ भृञ् भरणे, मृङ् प्राणत्यागे, शीङ् स्वप्ने, तॄ प्लवनतरणयोः, चर गतौ, अयं भक्षणेऽपि, त्सर छद्मगतौ, तनु विस्तारे, धन धान्ये, डुमिञ् प्रक्षेपणे, टुमस्जो शुद्धौ ॥—भरुरिति। 'भरुः स्वर्णे हरे पुंसि' इति मेदिनी। 'भरुर्भर्तृकनकयोः' इति हेमचन्द्रः ॥—शयुरिति। 'अजगरे शयुर्वाहसः'

श्रुतिः। तनु स्वल्पम् । स्त्रियां मूर्तिस्तनुस्तनूः । धनुः शस्त्रविशेषः । धनुषा च धनुं विदुः । धनुरिवाजनि वक्र इति श्रीहर्षः । मयुः किंनरः । मद्गुः पानीयकाकिकेति रभसः । न्यङ्क्वादित्वात्कुत्वम् जश्त्वेन सस्य दः । अणश्च ॥८॥ लवलेशकणाणवः । चात्कटिवटिभ्याम् । कटुः । वटुः । धान्ये नित् ॥९॥ धान्ये वाच्येऽण उप्रत्ययः स्यात् । स च नित् । नित्त्वादाद्युदात्तः । प्रियङ्गवश्चमेऽणवश्च मे । व्रीहिभेदस्त्वणुः पुमान् । नित्ग्रहणं फलिपाटीत्यादि सूत्रमभिव्याप्य संबध्यते । शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च । ॥१०॥ शृणातीति शरुः । शरुरायुधकोपयोः । स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । पुंसि भूम्न्यसवः प्राणाः । वसुर्हदेऽग्नौ योक्त्रेंऽशौ वसु तोये धने मणौ । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् विदि अवयवे । बिन्दुः । स्यन्देः संप्रसारणं धश्च ॥११॥ देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः । उन्देरिच्चादेः ॥१२॥ उनत्ति इन्दुः । ईषेः किच्च ॥१३॥ ईषेरुः स्यात्स च कित् आदेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । इषुर्द्वयोः । स्कन्देः सलोपश्च ॥१४॥ कन्दुः । सृजेरसुम् च ॥१५॥ चात्सलोप उप्रत्ययश्च । रज्जुः । कृतेराद्यन्तविपर्ययश्च ॥१६॥ ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् । नावञ्चेः ॥१७॥ न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः । फलिपाटिनमिमनिजनां गुक्पटि-

---

इत्यमरः ॥—**तरुरिति** । तरन्ति नरकमनेन रोपकाः ॥—**चरुरिति** । अनवस्रावितान्तरूष्मपक्वओदन इति याज्ञिकाः । तृप्त्यर्थवधिकरणेऽप्येवमुक्तम् । 'उगवादिभ्यो यत्' इति सूत्रे कैयटस्त्वाह । स्थालीवाची चरुशब्दस्तात्स्थ्यादोदने भाक्त इति । 'तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी । 'धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने' इति नान्ते मेदिनीविश्वप्रकाशमुदाहरति ॥—**धनुषा चे**त्यादि । धनुषा सार्धं धनुं विदुरित्यर्थः । स्यात्तनुस्तनुषा सार्धमित्यतः सार्धमित्यनुषज्यते । 'शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्रः । क्षिप्तुरेनमृजुमाशु सपक्ष सायकम्' इति श्रीहर्षश्लोकशेषः । 'धनुर्वंशविशुद्धोपि निर्गुणः किं करिष्यति' इति धन्वन्तरिः । इह पूर्वत्र च धनुरिति उकारान्तः सकारान्तो वा बोध्यः । न च सकारान्तधनुःशब्दो नपुसक एवेति शङ्क्यम् । 'अथास्त्रियाम् । धनुश्चापौ' इत्यमरोक्त्या तस्यापि पुंस्त्वात् ॥—**किंनर** इति । 'तुरंगवदनो मयुः' इत्यमर । 'मीनातिमिनोति–' इत्यात्व तु नेह बाहुलकात् । 'मयुस्तुरगवदने मृगेऽपि मयुरिष्यते' इति विश्वः । मज्जति पानीये इति मद्गु ॥—**अणश्च** ॥ अण शब्दे अस्मादुप्रत्यय स्यात् ॥—**चादि**ति । कटे वर्षादौ, वट वेष्टने, कटति रसनामिति कटुः । 'कटुः स्त्री कटुरोहिण्या लताराजिकयोरपि । नपुसकमकार्ये स्यात्पुल्लिङ्गो रसमात्रके । त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च' इति । वटतीति वटु. 'वटुर्द्विजसुतः स्मृत.' इति संसारावर्तः । नटवटुरिति तूपचारात् ॥—**अभिव्याप्ये**ति । यद्यपि 'फलिपाटि' इति सूत्र यावदनुवर्तत इति न्यासग्रन्थेन मर्यादीकृत्येत्यपि प्रतीयते तथाप्यभिव्याप्येवोचितम् ॥ 'पिबत सौम्य मधु' इत्यादौ मधुशब्दस्याद्युदात्ततादर्शनात् । 'वोतो गुणवचनात्' इति सूत्रे हरदत्तेनाप्यभिव्याप्येति स्पष्टमभिधानाच्चेति भाव: ॥—**शॄस्वृस्निहि** ॥ शॄ हिंसायाम्, स्वृ शब्दोपतापयोः, ष्णिह उपतापे, त्रपूष् लज्जायाम्, असु क्षेपणे, वस निवासे, हन हिंसागत्योः, क्लिदू आर्द्रीभावे, बन्ध बन्धने, मन ज्ञाने ॥—**शरुरि**ति । 'शरुः कोपे शरे वज्रे' इति हेमचन्द्रः ॥—**स्वरुर्वज्रमि**ति 'शतकोटिः स्वरुः शवः' इत्यमरः ॥—**त्रपु सीसमि**ति । तद्धि अग्निं दृष्ट्वा त्रपते लज्जते इव । 'रङ्गसीसकयोस्त्रपु' इति मेदिनी । अस्यन्ति क्षिपन्ति शरीरमित्यसवः प्राणाः ॥—**हनुरि**ति । 'हनु पुमान्परो गण्डात्' इति वररुचिकोशः । स्त्रीलिङ्गोऽप्ययम् । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनीकोशः । अतिशायने मतुप् । हनुमान् । 'अन्येषामपि दृश्यते' इति दृशिग्रहणात्पाक्षिको दीर्घः । हनूमान् । स्नेहेन बध्नातीति बन्धुः । प्रज्ञादित्वाद्बान्धव । 'बन्धुर्बन्धूकपुष्पे स्याद्बन्धुर्भ्रातरि बान्धवे' इति विश्वः । मनुरादिराजो मन्त्रश्च । स्यन्दू प्रस्रवणे ।—**उन्देः**–। उन्दी क्लेदने ॥—**ईषेः** ॥ ईष गतिहिंसादानेषु ॥—**स्कन्देः**–॥ स्कन्दिर् गतिशोषणयोः ॥—**कन्दुरि**ति । स्कन्दत्यस्मिन्ननताप इति व्युत्पत्त्या भोगस्थानमिति केचित् । अन्ये तु स्कन्दति शोषयतीति कन्दुर्लोहादिपात्रमित्याहुः । अत एव 'क्लीबेऽम्बरीष भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम्' इत्यमरः । 'कन्दुर्वा ना' इति पूर्वेणान्वयाद्वा पुमानित्यर्थः ॥—**सृजेः**–॥ सृज विसर्गे सृजतीति रज्जुः स्त्रियाम् । आगमसकारस्य श्चुत्वेन शः जश्त्वेन जः । सृजेरम् चेति सुवचमिति नव्याः । 'रज्जुर्वेण्यां गुणे योषिति' इति मेदिनी ॥—**कृतेराद्यन्त**—॥ कृती छेदने ॥—**तर्कुरि**ति । कृत्यतेऽनेनेति तर्कुः सूत्रवेष्टनं यन्त्रविशेषः । 'तर्कुटी सूत्रला तर्कुः' इति हारावली ॥—**नावञ्चेः** ॥ अञ्चु गतौ । 'न्यङ्कुर्मुनौ मृगे पुसि' इति मेदिनी ॥—**फलिपाटि**—॥ फल निष्पत्तौ, पट गतौ, ण्यन्तः । णम प्रह्वत्वे शब्दे, मन ज्ञाने, जनी प्रादुर्भावे, एभ्यः उः स्यादेषां च यथाक्रमं गुगागमः पटि नाकि ध त इत्यादेशाश्च भवन्ति । इह एकापि षष्ठी विषयभेदाद्भिद्यते । गुगागमे हि फलेरवयवषष्ठी पट्याद्यादेशचतुष्टयविधौ तु पाट्यादिभ्यः स्थानषष्ठी सापि धतयोर्विधौ अन्तेऽप्युपसंह्रियत इति विवेकः । अनागमकानां सागमका आदेशा इति पक्षे तु

दित्वात्(४७१पृ०)सस्य तः। भवार्थे तु लुग्वाच्यः *। अश्वत्थामा। लोम्नोऽपत्येषु बहुष्वकारः (११) *। बाह्वादीञो(४९८पृ०)ऽपवादः। उडुलोमाः। उडुलोमान्। बहुषु किम् औडुलोमिः। गोरजादिप्रसङ्गे यत्(१२) *। गव्यम्। अजादिप्रसङ्गे किम् गोभ्यो हेतुभ्य आगतम् गोरूप्यम् गोमयम्।

## उत्सादिभ्यो (१३) ऽञ्। ४। १। ८६।

औत्सः। अग्निकलिभ्यां ढग्वक्तव्यः *। अग्नेरपत्यादि आग्नेयम्। कालेयम्। इत्यपत्यादि (१४) विकारान्तार्थसाधारणाः प्रत्ययाः।

(११) केवललोम्नोऽपत्येन योगाभावात् तदन्तेऽयं विधिः।

(१२) गोरिति न केवलमपत्यएव किन्तु प्राग्दीव्यतीयेषु सर्व्वेष्वपि तेन गोरिदं, गवि भवं, गौर्द्देवताऽस्येति सर्व्वत्र गव्यमित्येव।

(१३) उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन वष्कया (असे) पृथिवी धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण उदस्थान (देशे) पृषदंश भल्लकीय रथन्तर मध्यन्दिन बृहत् महत् सत्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह ककुभ् सुवर्ण देव ग्रीष्माद् छन्दसि। उत्सादिः।

अत्र वष्कया (असे) इति पठ्यते असे असमासे वष्कयस्यापत्यं वाष्कयः समासे तु गौवष्कयिरिति अत्रासे इति निषेधज्ञापकात् तदन्तविधिरत्रास्ति तेन धेनुशब्दस्यात्र पाठेन अधेनूनां समूह इत्यर्थे आधेनवमिति सिद्धम्। मनो०

(१४) अपत्यादीत्यादिना अग्नेरागतमग्नौ भवमग्निना दृष्टं साम अग्नेरिदमित्येतेषां सङ्ग्रहम्।

## स्त्रीपुंसाभ्यान्नञ्स्नञौ भवनात्। ४। १। ८७

धान्यानाम्भवन (६५८४०) इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमा न्नञ् स्नञौ स्तः। स्त्रैणः। पौंस्नः। वत्यर्थे न स्त्रीपुंवच्चेति (४४५४०)ज्ञापकात्। स्त्रीवत्। पुंवत्।

## द्विगोर्लुगनपत्ये। ४। १। ८८।

द्विगोर्न्निमित्तं यस्तद्धितोऽजादिः(१५)अनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात्। पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। द्विगुनिर्मित्तस्येति किम् पञ्चकपालस्येदम्पाञ्चकपालम्। अजादिः किम् पञ्चगर्गरूप्यम्। अनपत्ये किम् द्वयोर्म्मित्रयोरपत्यम् द्वैमितिः।

## गोत्रेऽलुगचि। ४। १। ८९।

अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्याऽलुक् स्यात्। गर्गाणाञ्छात्राः। इद्धाच्छः (५६०४०)।

## आपत्यस्य च तद्धितेऽनाति (१६)। ६। ४। १५१।

(१५) अजादिरिति एतच्चोत्तरसूत्रात् गोत्रेऽलुगचीत्यतोऽचीत्यस्यापकर्षा-
ल्लभ्यते इति बोध्यम्।
गर्गस्यापत्यादि यञि गार्ग्यशब्दस्य इद्धत्वात् ततश्छ-

(१६) आपत्यस्येति किं संकाशादिभ्योभवार्थे सांकाश्यक इत्यादौ मा भूत् तद्धिते किं गार्ग्य इति स्त्रियां ङसि मा भूत् अनातीति किं गार्ग्यायण इत्यादौ मा भूत्।

हलः(१७) परस्यापत्ययकारस्य लोपः स्यात्तद्धिते न त्वाकारे। गार्गीयाः। प्राग्दीव्यतीये किम् गर्गेभ्यो हितम् गर्गीयम्। अचि किम् गर्गेभ्य आगतम् गर्गरूप्यम्।

## यूनि लुक्। ४। १। ९०।

प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात्। ग्लुचुकस्य गोत्रापत्यम् ग्लुचुकायनिः। वक्ष्यमाणः फिन् ततो यूनयण्। ग्लौचुकायनः। तस्य छात्रोऽपि ग्लौचुकायनः। अणो लुकि वृद्धत्वाभावाच्छो न।

## पैलादिभ्यश्च (१८)। २। ४। ५९।

एभ्यो युवप्रत्ययस्य लुक्। पीलाया वे (५०६पृ०)त्यण्। तस्मात् अणोद्व्यच इति(५१८पृ०) फिञ् तस्य लुक्। पैलः पिता पुत्रश्च। तद्राजाच्चाणः*। द्व्यञ् मगधे(५१९पृ०)त्यणन्तादाङ्गशब्दादणो-द्व्यचइति (५१८पृ०) फिञोलुक्। आङ्गः पिता पुत्रश्च।

## इञः प्राचाम्। २। ४। ६०।

(१७) सूर्यतिष्ये त्यतो(२२८पृ०)यइति हलस्तद्धितस्ये त्यतो(२१८पृ०) हलइति चानुवर्त्त्याह हलइत्यादि। गर्गीयमिति प्राक्क्रीताच्छ (६२५पृ०)इति।

(१८) पैल शालङ्कि सात्यकि सात्यङ्कामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदमज्जि औदभृज्जि दैवस्थानि पैङ्गलोदायनि राहक्षति भौलिङ्गि राणि औदन्यि औद्गाहमानि औज्जिहानि औदशुद्धि (तद्राजाच्चाणः) आकृतिगणोऽयम्।

*तद्राजसंज्ञकात् परस्य युवप्रत्ययस्य लुगित्यर्थः।

गोत्रे य(१९)इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात्। तच्चेद्गोत्रं प्राचां भवति। पन्नागारस्यापत्यम्। अत इञ् (४९८सू०)। यञिञोश्चेति (५००सू०) फक्। पान्नागारिः पिता पुत्रश्च। प्राचां किम् दाक्षिः पिता। दाक्षायणः (२०) पुत्रः।

## न तौल्वलिभ्यः। २। ४। ६१।

तौल्वल्यादिभ्यः (२१) परस्य युवप्रत्ययस्य लुक् न स्यात्। पूर्वेण प्राप्तः। तुल्वलः ततइञि फक्। तौल्वलिः पिता। तौल्वलायनः पुत्रः।

## फक्फिञोरन्यतरस्याम्। ४। १। ९१।

यूनि लुगिति (४९२सू०) नित्ये लुकि प्राप्ते विकल्पार्थं सूत्रम्। कात्यायनस्य छात्राः कातीयाः कात्यायनीयाः। यस्कस्यापत्यम् यास्कः। शिवाद्यण् (५०४सू०)। तस्यापत्यं युवा यास्कायनिः। अणो द्व्यच इति (५०८सू०) फिञ्। तस्य छात्राः यास्कीयाः यास्कायनीयाः।

## तस्यापत्यम्। ४। १। ९२।

---

(१९) इञन्ताद्युवप्रत्ययस्य गोत्रार्थ एव सम्भवनात् गोत्रे यदिति प्राचामिति गोत्रविशेषणमित्याशयेन तच्चेत् गोत्रं प्राचामित्युक्तम्।

(२०) दक्षस्य गोत्रापत्यं पुमान् दाक्षिः युवापत्यं तु दाक्षायण इति।

(२१) तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवकि दैवमति दैवयज्ञि चाफट्टकि वैल्वकि वैहि आनुराहति पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरि नैमिषि आसिबन्धकि पौष्पि कारेणुपालि वैकर्णि वैरकि वैहति। तौल्वल्यादि।

षष्ठ्यन्तात् कृतसन्धेः समर्थादपत्येऽर्थ उक्ताः वक्ष्यमाणाश्च प्रत्यया वा स्युः । उपगोरपत्यम् औपगवः । आदिवृद्धि(२२)रन्त्योपधावृद्धी बाधते ।

तस्येदमित्यपत्येऽपि बाधनार्थं (२३) कृतम्भवेत् ।
उत्सर्गः शेषएवासौ वृद्धान्यस्य प्रयोजनम् ॥ १ ॥

योगविभागस्तु । भानोरपत्यम् भानवः । कृतसन्धेः किम्(२४) सौत्थितिः(२५) । अकृतव्यूहपरिभाषया सावुत्थितिर्मा भूत् ।

(२२) उपगु अण्इतिस्थिते ओर्गुणः(४१२पृ०)इति गुणं बाधित्वा परत्वादचोऽञ्णितीति(१११पृ०)वृद्ध्या भवितव्यं गुणस्य पिचव्यइत्यादौ सावकाशत्वात् किन्तु गुणे कृते अवादेशे च अतउपधायाः(७४०पृ०) इति वृद्ध्या भवितव्यमित्याशङ्क्याहादिवृद्धिरिति । परत्वादिति भावः । तथाच गौः गावावित्यादौ अन्त्यस्य, पाचक इत्यादावुपधायाः सौश्रुतइत्यादौ चादेर्वृद्धिरिति विषयविशेषसमावेशइति भावः ।

(२३) अपत्यसमूहविकारादीनां संबन्धत्वाविशेषात् इदमर्थेऽन्तर्भावेण तस्येद-(५८३पृ०) मित्यनेनैवास्य सूत्रस्य गतार्थत्वेऽपि तस्येदमित्यस्य बाधकभूतस्य वृद्धाच्छ५६०पृ०)इत्यस्य बाधनार्थमिदं सूत्रं कृतम् । वृद्धाच्छ इत्यस्य शेषविषयत्वेऽपि उत्सर्गतः शेषत्वस्यात्रापि सत्त्वादाह उत्सर्गशेषएवासाविति तथाचापत्यादिचातुरर्थीपर्य्यन्तप्रत्ययार्थभिन्नत्वं शेषत्वमित्यस्य तत्र विवक्षितत्वेऽपि अत्र सूत्रे तस्यापत्यमित्यनुक्त्या अदन्तवाह्वादिप्रकृतिकापत्यार्थकस्योक्तत्वेन तद्भिन्नतयैतस्य शेषपदार्थत्वप्रसङ्गादिति भावः । तथाच वृद्धानि वृद्धिर्यस्याचामादेरिति(५६०पृ०) परिभाषितानि प्रातिपदिकान्येवास्य सूत्रस्य प्रयोजनं विषय इत्यर्थः ।

(२४) कृतसन्धेः किमिति अन्तरङ्गत्वात् सन्धौ कृते एव तदुत्तरं प्रत्ययो भविष्यतीति कृतसन्धिकार्य्यार्थकसमर्थग्रहणं किमिति प्रश्नः ।

(२५) सावुत्थितिर्मा भूदित्येव समर्थग्रहणमित्युत्तरम् । तथाहि सु उत्थित

समर्थपरिभाषया नेह वस्त्रमुपगोः, अपत्यञ्चैतस्य। प्रथमात्किम् अपत्यवाचकात् (२६) षष्ठ्यर्थे मा भूत्। वाग्रहणाद्वाक्यमपि। दैवयज्ञीति(५२४४०)सूत्रादन्यतरस्यांग्रहणानुवृत्तेः समासोऽपि। उपग्वपत्यम्। जातित्वात् ङीष्। औपगवी। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः।

## अपत्यं पौत्रप्रभृति गोत्रम्(२७)।४।१।१६२

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्।

## जीवति तु वंश्ये युवा।४।१।१६३।

---

इति स्थिते अन्तरङ्गतया प्रथमतः सन्धौ कर्त्तव्ये अन्तरङ्गपरिभाषातोऽपि परया अकृतव्यूहपरिभाषया तस्या बाधात् न सन्धिकार्यप्रसङ्गः तु इत्यस्य हद्धिसम्भावनया निमित्तं विनाशोन्मुखं दृष्ट्वा कृतमपि सन्धिं नोद्भावयन्तीति तदर्थतया दृद्धेरेव प्रथमं भवितव्यमिति तदर्थं समर्थग्रहणमिति भावः।

(२६) समर्थानां प्रथमादित्यत्र प्रथमादित्यस्य प्रयोजनमनुयुञ्जानोत्तरयति अपत्यवाचकादिति इन्द्रो देवता यस्येति वाक्ये यथा इन्द्रशब्दादेव प्रत्ययस्तथा देवदत्तोऽपत्यं यस्येति वाक्ये उपगुरपत्यं यस्येति वाक्ये च देवदत्तादिरूपापत्यवाचकात् षष्ठ्यर्थे मा भूदित्यर्थं प्रथमादित्युक्तं तथाच प्रत्ययविधायकसूत्रे यत् पदं प्रथममुपात्तं तस्मादेव प्रत्ययो भवति तस्यापत्य-(४८३पृ०)मित्यादौ च तच्छब्दोपस्थाप्योपग्वादेरुपात्ततया तत एव प्रत्ययः साऽस्य देवता(५३०पृ०)इत्यादौ तु इन्द्रादेव, तस्य प्रथमोपात्तत्वादिति सर्व्वं सुस्थमिति

(२७) प्रवराध्यायप्रसिद्धं लोके गोत्रमिह तु तदप्रसिद्धस्यापि संज्ञार्थमिदम् पौत्रादेरप्यपत्यत्वाव्यभिचारादपत्यपदवाच्यत्वादाह्नापत्यत्वेन विवक्षितमिति तेन पौत्रादेस्तत्त्वेन विवक्षायामेव गोत्रत्वम्। पौत्रापत्यशब्दयोः समभिव्याहृततया यदीयपौत्रादि तं प्रत्येव तस्य गोत्रत्वम्।

वंश्ये(२८) पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यान्नतु गोत्रसंज्ञम्।

**भ्रातरि च ज्यायसि। ४। १। १६४।**

ज्येष्ठे भ्रातरि जीवति कनीयान् चतुर्थादिर्युवसंज्ञो वा स्यात्।

**वाऽन्यस्मिन् सपिण्डे स्थविरतरे जीवति। ४। १। १६५।**

भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यम् जीवदेव युवसंज्ञं वा स्यात्। एकज्जीवतिग्रहणमपत्यस्य विशेषणम् द्वितीयं सपिण्डस्य। तरपा निर्देश उभयो(२९) रुत्कर्षार्थः। स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहभ्रातरि(३०)वा जीवति। गर्गस्यापत्यम् गार्ग्यायणः गार्ग्यो वा। स्थविरेति किम्। स्थानवयोन्यूने (३१) गार्ग्य एव। जीवति किम् मृते मृतो वा गार्ग्य एव। वृद्धस्य च पूजायामिति वाच्यम् *। गोत्रस्यैव वृद्धसंज्ञा प्राचाम्। गोत्रस्य

---

(२८) पितृपितामहादिरुत्पादकप्रबन्धः वंशस्तत्र भवः वंश्यः। पौत्रप्रभृतीत्यनुवृत्तं षष्ठ्या विपरिणमय्याह पौत्रादेरिति। तुशब्द एवकारार्थः स च भिन्नक्रम इत्याशयेनाह युवसंज्ञमेवेति।

(२९) उभयोः स्थानवयसोरित्यर्थः स्थानञ्च पितृव्यत्वादिकं तद्रूपेणैव तेषां पूज्यत्वात्।

(३०) मातामहभ्रातरीति मातृसापिण्ड्यमपीह गृह्यते इति मतेनेदम् क्वचित्पितामहभ्रातरीत्येव पाठः। शब्देन्दु०

(३१) स्थानवयोन्यून इति स्वज्येष्ठो भ्रातृपुत्रादिः स्थानन्यूनः।

युवसंज्ञा पूजायाङ्गम्यमानायाम्। तत्रभवान् गार्ग्यायणः। पूजेति किम् गार्ग्यः। यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम्। गार्ग्यो जाल्मः। कुत्सेति किं गार्ग्यायणः।

एको गोत्रे। ४। १। ९३।

गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यम् औपगवः। गार्ग्यः। नाडायनः।

गोत्रे(३२) स्वैकोनसंख्यानां प्रत्ययानाम्परम्परा।
यद्वा स्वद्व्यूनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते॥ १॥
अपत्यम्पितुरेव स्यात्ततः प्राचामपीति च।
मतभेदेन तद्व्यन्ये सूत्रमेतत्तथोत्तरम्॥ २॥

पितुरेवापत्यमिति पक्षे हि उपगोस्तृतीये वाच्ये औपगवादिञ् स्यात्। चतुर्थे त्वजीवज्ज्येष्ठे मृतवंश्ये औपगवेः फक्। इत्यमिञ्फकोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतम्प्रत्ययाः स्युः। पितामहादीनामपीति (३३) मुख्यपक्षे तु तृतीये वाच्ये उपगोरणाद्दृष्टे सिद्धेऽपि अणन्तादिञपि स्यात् चतुर्थे फगिति ततः फगिञोः परम्परायां शततमे गोत्रेऽष्टनवतिरनिष्टप्रत्ययाः स्युः। अतो नियमार्थमिदं सूत्रम्। एवमुत्तरसूत्रेऽप्यूह्यम्।

---

(३२) एतत्सूत्रानारम्भे इति शेषः गोत्रेऽर्थे विहितानां प्रत्ययानां स्वस्य मूलपुरुषस्य यावन्तोऽधस्तनाः पुरुषाः एकोनतावत्संख्यकानां परम्परा स्यात् पौत्रादेरपत्यत्वपक्षे तु द्व्यूनतावत्संख्यकानामिति भेदः।

(३३) पितामहादीनामपीति अपत्यमित्यनुषज्यते स च मुख्यपक्षः अपत्यं पौत्रप्रभृतीति(४९५४०) सूत्रस्वरसात्।

## गोत्राद्यून्यस्त्रियाम् । ४ । १ । ९४ ।

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियान्तु न युवसंज्ञा । गर्गस्य युवाऽपत्यम् गार्ग्यायणः । स्त्रियां गोत्रत्वादेक एव प्रत्ययः ।

## अत इञ् । ४ । १ । ९५ ।

अदन्तं यत्प्रातिपदिकन्तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यात् । अपत्येऽर्थे । दाक्षिः ।

## बाह्वादिभ्यश्च (२४) । ४ । १ । ९६ ।

बाहविः । औडुलोमिः । आकृतिगणोऽयम् ।

## सुधातुरकङ् च । ४ । १ । ९७ ।

चादिञ् । सुधातुरपत्यं सौधातकिः । व्यासवरुड़निषादचाण्डालबिम्बानाञ्चेति वक्तव्यम् ॰ ।

---

(२४) बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उपविन्दु वृषली वृकला चूड़ा बलाका मूषिका कुशला छगला ध्रुवका धुवका सुमित्रा दुर्मित्रा पुष्करसद् अनुहरत् देवशर्म्मन् अग्निशर्म्मन् भद्रशर्म्मन् सुशर्म्मन् कुनामन् सुनामन् पञ्चन् सप्तन् अष्टन् (अमितौजसः सलोपश्च) सुधावत् उदञ्चु शिरस् माष शराविन् मरीची क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्द्दिन् प्राकारमर्द्दिन् लोमन् अजीगर्त्त, कृष्ण युधिष्ठिर अर्ज्जुन साम्ब गद प्रद्युम्न राम उदङ्क (उदकः संज्ञायाम्) (सम्भूयोऽम्भसोः सलोपश्च । ) बाह्वादिः आकृतिगणोऽयम् । तेन सात्वकिः जाङ्घिः ऐन्द्रशर्म्मिः आजधेनविः ।

## न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् । ७ । ३ । ३ ।

पदान्ताभ्यां यकारवकाराभ्यामारस्य न वृद्धिः किन्तु ताभ्यां पूर्वौ क्रमादैजागमौ स्तः । वैयासकिः । वारुड़किरित्यादि ।

## गोत्रे कुञ्जादिभ्यः(३५) च्फञ् । ४ । १ । ९८ ।

## व्रातच्फञोरस्त्रियाम् । ५ । ३ । ११३ ।

व्रातवाचिभ्यः च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यान्नतु स्त्रियाम् । कौञ्जायन्यः । बहुत्वे तद्राजत्वात्(५२०पृ०) लुग्वक्ष्यते । ब्राध्नायन्यः । स्त्रियां कौञ्जायनी गोत्रत्वेन जातित्वान्ङीप् । अनन्तरापत्ये । कौञ्जिः ।

## नडादिभ्यः(३६) फक् । ४ । १ । ९९ ।

गोत्र इत्येव । नाडायनः चारायणः । अनन्तरो नाडिः ।

---

(३५) कुञ्ज ब्रध्न शङ्ख भस्मन् गण लोमन् शठ शाक शुण्डा शुभ विपाश स्कन्द स्कम्भ । कुञ्जादिः ।

(३६) नड इत्येवमादिभ्यः षष्ठ्यन्तेभ्यो गोत्रेऽपत्ये फक् स्यात् नाडायनः । नड चर बक मुञ्ज इतिक इतिश उपक एक लमक शलङ्कु शलङ्कुञ्च सप्तल वाजप्य तिक अग्निशर्मन् वृष(गणे) प्राण नर सायक दास मित्र द्वीप पिङ्गर पिङ्गल किङ्कर किङ्कल कातर कातल काश्यप काश्य काव्य अज अमुष्य कृष्णरणौ (ब्राह्मणवाशिष्ठे) अमित्र लिगु चित्र कुमार क्रोष्ट क्रोष्टु लोह दुर्ग स्तम्भ शिंशपा अग्र तृण शकट सुमनस् सुमत मिमत ऋच् जलन्धर अध्वर

**हरितादिभ्यो (२७) ऽञः। ४। १। १००।**

एभ्योऽञन्तेभ्यो यूनि फक्। हारितायनः। इह गोत्राधिकारेऽपि सामर्थ्याद्युन्ययम्। नहि गोत्रादपरो गोत्रप्रत्ययः। विदा(५०१पृ०)द्यन्तर्गणो हरितादिः।

**यञिञोश्च। ४। १। १०१।**

गोत्रे यौ यञिञौ तदन्तात् फक् स्यात्। अनातीत्युक्तेरापत्यस्येति (४६१पृ०) यलोपो न। गार्ग्यायणः। दाक्षायणः।

**शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु। ४। १। १०२।**

गोत्रे फक्। अञिञोरपवादः। आद्यौ विदादी। शारद्वतायनो भार्गवश्चेत् शारद्वतोऽन्यः। शौनकायनो वात्स्यश्चेत् शौनकोऽन्यः। दार्भायणः आग्रायणश्चेत् दार्भिरन्यः।

**द्रोणपर्व्वतजीवन्तादन्यतरस्याम्। ४। १। १०३।**

---

युगन्धर हंसक दण्डिन् हस्तिन् पिण्ड पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक बदर अश्वल खरप लङ्क इन्ध अस्त्र कामुक ब्रह्मदत्त उदुम्बर शोण अलोह दण्डप। गर्गादिः।

(२७) हरित किन्दास वह्यस्क अर्कलूष वध्योग विष्णु वृद्ध प्रतिबोध रथीतर रथन्तर गविष्ठिर निषाद शबर अलस मठर सृड़ाकु सृपाकु मृदु पुनर्भू पुत्र दुहितृ ननन्दृ परस्त्री परशु च हरितादिः। अत्र परशुशब्दः पठ्यते स च परस्त्रीवाचकः तज्जातः पारशवः ब्राह्मणाच्छूद्रायामुत्पन्न इत्यर्थः।

एभ्यो गोत्रे फक् वा । द्रौणायनः द्रौणिः । पार्वतायनः पार्वतिः । जैवन्तायनः जैवन्तिः । अनादिरिह(३८)द्रोणः । अश्वत्थाम्न्यनन्तरे तूपचारात् ।

## अनृष्यानन्तर्य्ये विदादिभ्यो (३९) ऽञ् । ४ । १ । १०४ ।

एभ्योऽञ् स्यात् गोत्रे ये त्वत्राऽनृषयः पुत्रादयस्तेभ्य आनन्तर्य्ये । सूत्रे स्वार्थे ष्यञ् । विदस्य गोत्रम् वैदः । अनन्तरो वैदिः(बाह्वादे) राकृतिगणत्वादिञ् । पुत्रस्यापत्यम् पौत्रः । दौहित्रः ।

## गर्गादिभ्यो (४०) यञ् । ४ । १ । १०५ ।

गोत्र इत्येव । गार्ग्यः । वात्स्यः ।

---

(३८) अनादिरिति न तु भ्रातरप्रसिद्धस्तस्य ऋादित्वात् ।

(३९) विद उर्व कश्यप कुशिक भरद्वाज उपमन्यु किलात किन्दर्भ विश्वानर ऋटिषेण ऋतभाग हर्यश्व प्रियक आपस्तम्ब कूचवार शरद्वत् शुनक धेनु गोपवन शिग्रु बिन्दु भोगक भाजन शमिक अश्वावतान श्यामाक श्यामक श्यावलि श्यापर्ण (५००५०) उक्तो हरितादिश्च । इति विदादिः ।

(४०) गर्ग वत्स वाजासे संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग अगस्ति पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनञ्जय वृक्ष विश्वावसु जरमाण लोहित संशित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष वृक्ष तनु तरुक्ष तलुक्ष तण्ड वतण्ड कपि कत कुरुकत अनडुह् कण्व शकल गोकक्ष अगस्त्य कुण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृषगण रह-

## यञञोश्च। २। ४। ६४।

गोत्रे यद्यञन्तमञन्तञ्च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः। बिदाः। उर्व्वाः। तत्कृतेइति किम् प्रियगार्ग्याः। स्त्रियान्तु गार्ग्यः स्त्रियः। गोत्रे किम् द्वैप्याः। औत्साः। प्रवराध्यायप्रसिद्धमिह गोत्रम्। तेनेह न पौत्राः। दौहित्राः।

## मधुबभ्वोर्ब्राह्मणकौशिकयोः। ४। १। १०६।

गोत्रे यञ्। माधव्यो ब्राह्मणः। माधवोऽन्यः बाभ्रव्यः कौशिक ऋषिः। बाभ्रवोऽन्यः; बभ्रुशब्दस्य गर्गादि (५०१४०) पाठात्सिद्धेऽपि नियमार्थमिदम्। गर्गादिपाठफलन्तु लोहितादि(२१८४०)कार्य्यार्थम्। बाभ्रव्यायणी।

## कपिबोधादाङ्गिरसे। ४। १। १०७।

गोत्रे यञ् स्यात्। काप्यः। बोध्यः। आङ्गिरसे किम्। कापेयः। बौधिः।

## वतण्डाच्च। ४। १। १०८।

गर्ग शण्डिल चणक चुलुक मुद्गल मुसल जमदग्नि पराशर जातूकर्ण्य महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अररक एलाक पिङ्गल कृष्ण गोलन्द उलूक तितिक्ष भिषज् भिष्णज भड़ित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलू पिप्पलू बृहदग्नि सुलोहिन् सुलाभिन् उकथ कुटीगु। गर्गादिः।

आङ्गिरसइत्येव। वातण्ड्यः। अनाङ्गिरसे तु गर्गादौ(५०१पृ०) शिवादौ(५०४पृ०)च पाठाद्यञणौ। वातण्ड्यः। वातण्डः।

## लुक् स्त्रियाम्। ४। १। १०९।

वतण्डाच्चेति विहितस्य लुक् स्यात् स्त्रियाम्। शार्ङ्गरवादित्वात्(२४१पृ०)ङीन्। वतण्डी। अनाङ्गिरसे तु। वातण्ड्यायनी। लोहितादित्वात्(२१९पृ०)ष्फः। ऋषौ तु वातण्डी। ऋषित्वाद्वक्ष्यमाणः (५२१पृ) ष्यङ् न।

## अश्वादिभ्यः (४१) फञ्। ४। १। ११०।

गोत्रे। आश्वायनः। 'पुंसि जातेति' पुंसीति तु प्रकृतिविशेषणं जातस्य गोत्रं जातायनः। पुंसीति किं जाताया अपत्यं जातेयः।

## भर्गात्त्रैगर्त्ते। ४। १। १११।

गोत्रे फञ्। भार्गायणस्त्रैगर्त्तः भार्गिरन्यः।

(४१) अश्व अश्मन् शङ्ख शूद्रक विद पुट रोहिण खर्जूर खञ्जार वस्त पिञ्जूल भडिल भण्डिल भडित भण्डित प्रकृत रामोद चान्त काश तीक्ष्ण गोलाङ्क अर्क स्वर स्फुट चक्र श्रविष्ठ पविन्द पवित्र गोमिन् श्याम धूम धूम्र वाग्मिन् विश्वानर कुट शप (आत्रेये) जन जड़ खड़ ग्रीष्म अर्ह कित विशम्प विशाल गिरि चपल चुप दासक वैल्व प्राच्य धर्म्य आनडुह्य पुंसि (जात) अर्ज्जुन प्रहृत सुमनस् दुर्म्मनस् मनस् प्रान्त ध्वन आत्रेय (भरद्वाजे) भरद्वाज (आत्रेये) उत्स आतव कितव वद धन्य पाद शिव खदिर। अश्वादिः।

## शिवादिभ्यो (४२) ऽण्। ४। १। ११२।

गोत्र इति निवृत्तम्। शिवस्यापत्यं शैवः। गाङ्गः। पक्षे तिकादित्वात्(५१७४०)फिञ्। गाङ्गायनिः शुभ्रादित्वात्(५०६४०) ढक्। गाङ्गेयः।

## ऋष्यन्धकवृष्णिकुरुभ्यश्च। ४।

## अट्टङ्गेभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः। ४। १। ११३।

अट्टङ्गेभ्यो नदीमानुषीनामभ्योऽण् स्यात्। ढकोऽपवादः। यामुनः। नार्म्मदः। चिन्तिताया अपत्यम् चैन्तितः। अट्टङ्गेभ्यः किम् वासवदत्तेयः। नदीत्यादि किम् वैनतेयः। तन्नामिकाभ्यः किम् शोभनाया अपत्यम् शौभनेयः।

## ऋष्यन्धकवृष्णिकुरुभ्यश्च। ४। १। ११४।

---

(४२) शिव प्रोष्ठ प्रोष्ठिक चण्ड जम्भ भूरि दण्ड कुठार ककुभ् अनभिम्लान कोहित सुख सन्धि मुनि ककुत्स्थ कहोड़ कोहड़ कहूय कहय रोध कपिञ्जल खञ्जन वतण्ड तृणकर्ण क्षीरह्रद जलह्रद परिल पथिक पिष्ट हैहय पार्षिका गोपिका कपिलिका जटिलिका बधिरिका मञ्जीरक मजिरक वृष्णिक खञ्जार खञ्जाल कर्म्मार रेख लेख आलेखन विश्रवण रवण वर्त्तनाक्ष ग्रीवाक्ष विटप पिटक पिटाक तृक्षाक नभाक ऊर्णनाभ जरत्कारु पृथा उत्क्षेप पुरोहितिका सुरोहितिका सुरोहिका आर्य्यश्वेत सुपिष्ट मसुरकर्ण मयूरकर्ण खर्जूरकर्ण खडूरक तक्षन् ऋष्टिषेण गङ्गा विपाश् यस्क लह्य द्रुह्य अयःस्थूण तृण कर्ण पर्ण भलन्दन विरूपाक्ष भूमि इला सपत्नी (द्व्यचो नद्याः) त्रिवेणी त्रिवणं च शिवाद्याकृतिगणः।

गोत्रमिति निवृत्तमितः प्रभृति अपत्यसामान्ये प्रत्यया इति। मनो०

ऋषयो मन्त्रद्रष्टारः। वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः। श्वाफल्कः। वृष्णिभ्यः। वासुदेवः। आनिरुद्धः। शौरिरिति तु बाह्वादित्वात्(४८८पृ०)इञ्। कुरुभ्यः। नाकुलः। साहदेवः। इञ एवायमपवादो मध्येऽपवादन्यायात्। अत्रिशब्दात्तु परत्वाड्ढक्। आत्रेयः।

## मातुरुत्संख्यासम्भद्रपूर्व्वायाः। ४। १। ११५।

संख्यादिपूर्व्वस्य मातृशब्दस्योदादेशः स्यादण्प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। साम्मातुरः। भाद्रमातुरः। आदेशार्थं वचनम्। प्रत्ययस्तु उत्सर्गेण सिद्धः। स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः। तेन धान्यमातुर्न। संख्येति किम् सौमात्रः। शुभ्रादित्वात् (५०६पृ०) वैमात्रेयः।

## कन्यायाः कनीन च। ४। १। ११६।

ढकोऽपवादोऽण् तत्सन्नियोगेन कनीनादेशश्च। कानीनो-व्यासः कर्णश्च। अनूढाया एवापत्यमित्यर्थः।

## विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु। ४। १। ११७।

अपत्येऽण्। वैकर्णो वात्स्यः। वैकर्णिरन्यः। शौङ्गो भारद्वाजः। शौङ्गिरन्यः। छागल आत्रेयः। छागलिरन्यः। केचित्तु शुङ्गेत्याबन्तम्पठन्ति तेषां ढक प्रत्युदाहरणम्। शौङ्गेयः।

पीलाया वा। ४। १। ११८।

(५०४पृ०)तन्नामिकाणबाधित्वा द्व्यचइति ढकि प्राप्ते पक्षेऽण् विधीयते। पीलाया अपत्यम् पैलः पैलेयः।

ढक् च मण्डूकात्। ४। १। ११९।

चादण् पक्षे इञ्। माण्डूकेयः माण्डूकः माण्डूकिः।

स्त्रीभ्यो ढक्। ४। १। १२०।

स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात्। वैनतेयः। बाह्वादित्वात्(४९८पृ०)। सौमित्रिः। शिवादित्वात्(५०४पृ०)। सापत्नः।

द्व्यचः। ४। १। १२१।

द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक्। तन्नामिकाणो(५०४पृ०)ऽपवादः। दात्तेयः। पार्थ इत्यत्र तु तस्येदम्(५९३पृ०)इत्यण्।

इतश्चाऽनिञः। ४। १। १२२।

इकारान्ताद्व्यचोऽपत्ये ढक् स्यात् न त्विञन्तात्। दौलेयः। नैधेयः।

शुभ्रादिभ्यश्च (४३)। ४। १। १२३।

ढक् स्यात्। शुभ्रस्यापत्यम्। शौभ्रेयः।

---

(४३) शुभ्र विष्टपुर ब्रह्मकृत शतद्वार शलाथल शलाकाभ्रू लेखाभ्रू विकास रोहिणी रुक्मिणी धर्मिणी दिश् शालूक अजबस्ति शकन्धि विमातृ विधवा शुक्र विश देवतर शकुनि शुक्र उग्र शतल बन्धकी

विकर्णकुषीतकात्काश्यपे । ४ । १ । १२४ ।

अपत्ये ढक् । वैकर्णेयः । कौषीतकेयः । अन्यो वैकर्णिः । कौषीतकिः ।

भ्रुवो वुक् च । ४ । १ । १२५ ।

चात् ढक् । भ्रौवेयः ।

प्रवाहणस्य ढे । ७ । ३ । २८ ।

प्रवाहणशब्दस्योत्तरपदस्याऽचामादेरचो वृद्धिः पूर्व्वपदस्य तु वा ढे परे । प्रवाहणस्यापत्यम् प्रावाहणेयः प्रवाहणेयः ।

तत्प्रत्ययस्य च । ७ । ३ । २९ ।

ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः पूर्व्वपदस्य तु वा । प्रवाहणेयस्यापत्यम् प्रावाहणेयिः प्रवाहणेयिः । वाह्यतद्धितनिमित्ता वृद्धिः ढाश्रयेण विकल्पेन बाधितुन्न शक्यत इति सूत्रारम्भः ।

सृकण्डु विस्रि अतिथि गोदन्त कुशाम्ब मकष्टु शाताहर पवष्टु-रिक सुनामन् लक्षणश्यामयोः (वाशिष्ठे) गोधा कृकलास अणीव प्रवाहण भारम भरत मृकण्डु कर्पूर इतर अन्यतर आलीढ सुदन्त सुदक्ष सुवक्षस् सुदामन् कद्रु तुद अकशाय कुमारिका कुठारिका किशोरिका अम्बिका जिह्माशिन् परिधि वायुदत्त शकल शलाका खडूर कुबेरिका अशोका गन्धपिङ्गला खडोन्मत्ता अनुदृष्टि जर-तिन् बलीवर्दिन् विग्र बीज जीव श्वन् अश्मन् अश्व अजिर । शुभ्रादिराकृतिगणः ।

## कल्याण्यादीना(४४)मिनङ् च। ४। १। १२६।

एषामिनङादेशः स्यात् ढक् च। काल्याणिनेयः। बान्धुकिनेयः।

## कुलटाया वा। ४। १। १२७।

इनङ्मात्रं विकल्प्यते ढक् तु नित्यः पूर्व्वेणैव। कौलटिनेयः कौलटेयः। सती भिक्षुकयत्र कुलटा। या तु व्यभिचारार्थं कुलान्यटति तस्याः चुद्राभ्यो वेति (५०९७०)पच्चे ढ्रक्। कौलटेरः

## हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च। ७। ३। १९।

हृदाद्यन्ते पूर्व्वोत्तरपदयोरचामादेरचो वृद्धिः ञिति णिति किति च। सुहृदोऽपत्यम् सौहार्दः। सुभगाया अपत्यम् सौभागिनेयः सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः तेषु भवः साक्तुसैन्धवः।

## चटकाया ऐरक्। ४। १। १२८।

चटकस्येति वाच्यम् *। लिङ्गविशिष्टपरिभाषया स्त्रिया अपि। चटकस्य चटकाया वा अपत्यम् चाटकैरः। स्त्रियामपत्ये लुग्वक्तव्यः *। तयोरेव स्त्र्यपत्यम्। चटका। अजादित्वात् (२०७४०) टाप्।

(४४) कल्याणी सुभगा दुर्भगा बन्धकी अनुदृष्टि अनुसृष्टि जरती बली वर्द्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री कल्याण्यादिः।

अत्र परस्त्रीशब्दे षष्ठीतत्पुरुषः विदादौ तु कर्म्मधारय इति मनो०।

**गोधाया ढ्रक्। ४। १। १२९।**

गौधेरः। शुभ्रादित्वात् (५०९९०) पक्षे ढक्। गौधेयः।

**आरगुदीचाम्। ४। १। १३०।**

गौधारः। रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम्। जडस्यापत्यम् जाडारः। पण्डस्यापत्यम् पाण्डारः।

**क्षुद्राभ्यो वा। ४। १। १३१।**

अङ्गहीनाः शीलहीनाश्च क्षुद्राः ताभ्यो ढ्रक्। पक्षे ढक्। काणेरः-काणेयः। दासेरः-दासेयः।

**पितृष्वसुश्छण्। ४। १। १३२।**

अणोऽपवादः। पैतृष्वस्रीयः।

**ढकि लोपः। ४। १। १३३।**

पितृष्वसुरन्त्यलोपः स्याड्ढकि। अतएव ज्ञापकात् ढक्। पैतृष्वसेयः।

**मातृष्वसुश्च। ४। १। १३४।**

पितृष्वसुर्यदुक्तन्तदस्यापि स्यात्। मातृष्वस्रीयः मातृष्वसेयः।

**चतुष्पाद्भ्यो ढञ्। ४। १। १३५।**

**ढे लोपोऽकद्र्वाः। ६। ४। १४७।**

कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्यात् ढे परे। कामण्डलेयः। कमण्डलुशब्दश्चतुःपाज्जातिविशेषः।

**गृष्ट्यादिभ्यश्च (४५)। ४। १। १३६।**

एभ्यो ढञ् स्यात्। अण्ढकोरपवादः। गार्ष्टेयः। मित्रयोरपत्यम्। ऋष्यणि (१०४१०) प्राप्ते ढञ्।

**केकयमित्रयुप्रलयानां यादेरियः। ७। ३। २।**

एषां यकारादेरियादेशः ञिति णिति किति च तद्धिते परे। इति इयादेशे प्राप्ते।

**दाण्डिनायनहास्तिनायनाऽऽथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि। ६। ४। १७४।**

एतानि निपात्यन्ते। इति युलोपः। मैत्रेयः मैत्रेयौ।

**यस्कादिभ्यो (४६) गोत्रे। २। ४। ६३।**

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वेऽस्त्रियाम्। मित्रयवः

---

(४४) गृष्टि हृष्टि बलि हलि विश्रि कुद्रि अजवस्ति मित्रयु। गृष्ट्यादिः।

(४६) यस्क लह्य द्रुह्य अयःस्थूण तृणकर्ण सदामत्त कम्बलहार बहिर्योग कर्णाटक पर्णाढक पिण्डीजङ्घ बकसक्थ विश्रि कुद्रि अजवस्ति मित्रयु रक्षोमुख जङ्घारथ उत्कास कटुक मन्थक पुष्करसद् विषपुट उपरिमेखल क्रोष्टुमान क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय खरप पदक वर्भुक भलन्दन भडिल भण्डिल भडित भण्डित। एते यस्कादयः

**अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च । २ । ४ । ६५ ।**

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे। अत्रयः भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः।

**बह्वच इञः प्राच्यभरतेषु। २। ४। ६६।**

बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्त्तमानस्तस्य लुक् स्यात्। पन्नागाराः। युधिष्ठिराः।

**न गोपवनादिभ्यः (४७)। २। ४। ६७।**

एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात्। विदा(५०१४०)द्यन्तर्गणोऽयम्। गौपवनाः। शैग्रवाः।

**तिककितवादिभ्यो(४८) द्वन्द्वे। २। ४। ६८।**

एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् स्याद्द्वन्द्वे। तैकायनयश्च कैतवायनयश्च। तिकादिभ्यः(५१७४०)फिञ्। तस्य लुक्। तिककितवाः।

(४७) गोपवन शिग्रु बिन्दु भाजन अश्वावतान श्यामाक श्यामक श्यापर्ण विदाद्यन्तर्गणोऽयं गोपवनादि।

(४८) तिककितवाः वङ्खरभण्डीरथाः उपकलमकाः पफकनरकाः बकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः अष्टककपिष्ठलाः अग्निवेशदाशेरुकाः एते तिककितवादयः।

**उपकादिभ्यो (४६) ऽन्यतरस्यामद्वन्द्वे । २ । ४ । ६९ ।**

एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्याद्द्वन्द्वे अद्वन्द्वे च। औपकायनास्य लामकायनास्य नडादिभ्यः(४९९पृ०)फक्। तस्य लुक्। उपकलमकाः औपकायनलामकायनाः। भ्रष्टककपिष्ठलाः भ्राष्टकिकापिष्ठलयः। उपका औपकाः। लमकाः लामकाः।

**आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । २ । ४ । ७० ।**

एतयोरवयवस्य गोत्रप्रत्ययस्याऽणो यञश्च बहुषु लुक् स्यादवशिष्टस्य प्रकृतिभागस्य यथासंख्यमगस्तिकुण्डिनच् एतावादेशौ स्तः। अगस्तयः। कुण्डिनाः।

**राजश्वशुराद्यत् । ४ । १ । १३७ ।**

। राज्ञो जातावेवेति वाच्यम् * ।

**ये चाऽभावकर्म्मणोः । ६ । ४ । १६८ ।**

---

(४६) उपकक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ट सुपिष्ट मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक काशकृत्स्न निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिलक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वटारक लेखाभ्र कमन्दक पिञ्जूलक वर्णक मसूरकर्ण मदाघ कबन्तक कमन्तक कदामत्त दामकण्ठ। एते उपकादयः।

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्म्मणोः। राजन्यः। जातिग्रहणाच्छूद्रादावुत्पन्नः।

**अन्। ६। ४। १६७**

अणि अन् प्रकृत्या स्यादिति टिलोपो न। राजनः अभावकर्म्मणोः किम् राज्ञः कर्म्म भावो वा राज्यम्। युवणुर्व्वः।

**संयोगादिश्च। ६। ४। १६६।**

इन् प्रकृत्या अणि परे। चक्रिणोऽपत्यम् चाक्रिणः।

**न मपुर्व्वोऽपत्येऽवर्मणः। ६। ४। १७०।**

मपूर्व्वोऽन्प्रकृत्या न स्यादपत्येऽणि। भाद्रसामः। मपूर्व्वः किम्। सौत्वनः। अपत्ये किम्। चर्म्मणा परिहतः चार्म्मणो रथः। अवर्म्मणः किम्। चक्रवर्म्मणोऽपत्यम् चाक्रवर्म्मणः। वा हितनाम्न इति वाच्यम्*। हितनाम्नोऽपत्यम्। हैतनामः- हैतनामनः।

**ब्राह्मोऽजातौ। ६। ४। १७१।**

योगविभागोऽत्र कर्त्तव्यः। ब्राह्म इति निपात्यते अनपत्येऽणि। ब्राह्मं हविः। ततोऽजातौ। अपत्ये जातावणि ब्रह्मणष्टिलोपो न स्यात्। ब्रह्मणोऽपत्यम् ब्राह्मणः। अपत्ये किम्। ब्राह्मी औषधिः।

**औक्षमनपत्ये। ६। ४। १७२।**

अणि टिलोपो निपात्यते। औक्ष्णम्पदम्। अनपत्ये किम्। उक्ष्णोऽपत्यम् औक्ष्णः।

संयोगादिश्च। ६।४।१३७।

अपूर्वो योऽन् तस्य हनादेश्च मस्यातो लोपोऽणि। औक्ष्णः। ताक्ष्णः। भौणघ्नः। धृतराज्ञोऽपत्यम् धार्त्तराज्ञः। षपूर्व्वेति किम्। साम्नोऽपत्यम् सामनः। अणि किम्। ताक्षण्यः।

क्षत्राद्घः। ४।१।१३८।

क्षत्रियः। जाताविल्येव। क्षात्रिरन्यः।

कुलात् खः। ४।१।१३९।

कुलीनः। तदन्तादपि उत्तरसूत्रेऽपूर्व्वपदादितिलिङ्गात्। आढ्यकुलीनः।

अपूर्वपदादन्यतरस्यां यड्ढकञौ। ४।१।१४०।

कुलादित्येव। पक्षे खः। कुल्यः—कौलेयकः—कुलीनः। पद-ग्रहणं किम् बहुकुल्य—बाहुकुलेयकः—बहुकुलीनः।

महाकुलादञ्खञौ। ४।१।१४१।

अन्यतरस्यामित्यनुवर्त्तते। पक्षे खः। माहाकुलः—माहा-कुलीन—महाकुलीनः।

दुष्कुलाड्ढक्। ४।१।१४२।

पूर्ववत्पक्षे खः। दौष्कुलेयः दुष्कुलीनः।

**स्वसुश्छः। ४। १। १४३।**

स्वस्रीयः।

**भ्रातुर्व्यच्च। ४। १। १४४।**

चाच्छः। अणोऽपवादः। भ्रातृव्यः—भ्रात्रीयः।

**व्यन् सपत्ने। ४। १। १४५।**

भ्रातुर्व्यन् स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये। भ्रातृव्यः शत्रुः। पाप्मना भ्रातृव्येणेति तूपचारात्।

**रेवत्यादिभ्य(५०)ष्ठक्। ४। १। १४६।**

**ठस्येकः। ७। ३। ५०**

अङ्गात्परस्य ठस्येकादेशः स्यात्। रैवतिकः

**गोत्रस्त्रियाः कुत्सने ण च। ४। १। १४७।**

गोत्रं या स्त्री तद्वाचकाच्छब्दात्णठकौ स्तः कुत्सायाम्। गार्ग्या अपत्यम् गार्गो गार्गिको वा जाल्मः। भस्याढे तद्धिते इति (४०६सू०) पुंवद्भावाद्गार्ग्यशब्दात्णठकौ। यस्येति (१२८सू०) लोपः। आपत्यस्येति (४८१सू०) यलोपः।

**वृद्धात् ठक् सौवीरेषु बहुलम्। ४। १। १४८।**

---

(५०) रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकबन्ध वृकग्राह कर्णग्राह दण्डग्राह ककुदाक्ष चामरग्राह रेवत्यादिः।

सुवीरदेशोद्भवाः सौवीराः वृद्धात्सौवीरगोत्रादूञनि बहुलं ठक् स्यात् कुत्सायाम्। भागवित्तेः—भागवित्तिकः। पक्षे फक्। भागवित्तायनः।

## फेश्छ च।४।१।१४९।

फिञन्तात्सौवीरगोत्रापत्ये छ्ठक् च कुत्सने गम्ये। यमुन्दस्यापत्यं यामुन्दायनिः। तिकादित्वात्(५१७४सू०)फिञ्। तस्यापत्यं यामुन्दायनीयः—यामुन्दायनिकः। कुत्सने किम् यामुन्दायनिः। औत्सर्गिकस्याऽणो ण्यक्षत्रियेति (५४२सू०) लुक्। सौवीरेति किम् तैकायनिः।

## फाण्टाहृतिमिमताभ्यां णफिञौ।४।१।१५०।

सौवीरेषु। नेह यथासंख्यमल्पाच्तरस्य परनिपातात्लिङ्गादिति वृत्तिकारः। भाष्ये तु यथासंख्यमेवेति स्थितम्। फाण्टाहृतः—फाण्टाहृतायनिः। मैमतः—मैमतायनिः।

## कुर्वादिभ्यो (५१) ण्यः।४।१।१५१।

अपत्ये। कौरव्याः ब्राह्मणाः। वावदूक्याः। सम्राजः क्षत्रिये ग०। साम्राज्यः साम्राजोऽन्यः।

---

(५१) कुरु गर्गर मङ्गुष अजमार रथकार वावदूक सम्राजः (क्षत्रिये) कवि विमति कापिञ्जलादि वाच् वामरथ पितृमत् इन्द्रलाजी एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शलाका मुर पुर एरका शुभ्र अभ्र दर्भ केशिनी वेना (छन्दसि) शूर्पणाय श्यावनाय श्यावरथ

## सेनान्तलक्षणकारिभ्यश्च।४।१।१५२।

एभ्यो ण्यः। एति संज्ञायामिति (४७४१०) सस्य षः। हारिषेण्यः लाक्षण्यः। कारिः शिल्पी तस्मात्। तान्तुवाय्यः। कौम्भकार्य्यः। नापित्यः।

## उदीचामिञ्।४।१।१५३।

हारिषेणिः। लाक्षणिः। तान्तुवायिः। कौम्भकारिः। नापितात्तु (४१८१०) परत्वात् फिञेव। नापितायनिः। तक्ष्णोऽण उपसंख्यानम् *। षपूर्वेति (५१४१०) अनोऽकारलोपः ताक्ष्णः। पक्षे ताक्षण्यः।

## तिकादिभ्यः (५२) फिञ्।४।१५४।

तैकायनिः।

## कौशल्यकार्म्मार्य्याभ्याञ्च।४।१।१५५।

अपत्ये फिञ्। इञोऽपवादः। परमप्रकृतेरेवायमिष्यते।

---

श्यावपुत्र सत्यङ्कार वड़भीकार पथिकार मूढ शकन्धु शङ्कु शाक शाकिन् शालीन कर्त्तृ हर्त्तृ इन पिण्डी (वामरथस्य कण्वादिवत् स्वरवर्जम्) इञ्त्वात् उदीचां वृद्धा दिति (५१८१०) सूत्रेण फिञ् कुर्य्यादिः।

(५२) तिक इत्येवमादिभ्योऽपत्येऽर्थे फिञ् स्यात् तैकायनिः कैतवायनिः। तिक कितव संज्ञा वाला शिखा उरस् शाठ्य सैन्धव यमुन्द रूप्य याम्य नील अमित्र गौकक्ष्य कुरु देवरथ तैतल औरस कौरव्य भौरिकि भौलिकि चौपयत चैटयत शीकयत चैतयत ध्वाजवत चन्द्रमस् शुभ गङ्गा वरेण्य सुपामन् आरद्ध वह्यका खल्यका वृष लोमक उदग्र यज्ञ तिकादिः।

प्रत्ययसन्नियोगेन प्रकृतिरूपन्निपात्यते। कुशलस्याऽपत्यम् कौशल्यायनिः। कर्म्मारस्यापत्यम् कार्म्मार्य्यायनिः। छाग-वृषयोरपि *। छाग्यायनिः। वार्ष्यायणिः।

## अणो द्व्यचः। ४। १। १५६।

अपत्ये फिञ्। इञोऽपवादः। कार्त्रायणिः। अण इति किम् दाक्षायणः। द्व्यचः किम् औपगविः त्यदादीना-म्फिञ् वा वाच्यः *। त्यदायनिः त्यादः।

## उदीचां वृद्धादगोत्रात्। ४। १। १५७।

आम्रगुप्तायनिः। प्राचान्तु। आम्रगुप्तिः वृद्धात्किम् दाक्षिः। अगोत्रात्किम् औपगविः।

## वाकिनादीना (५३) कुक् च। ४। १ १५८।

अपत्ये फिञ् वा। वाकिनस्याऽपत्यम् वाकिनकायनिः वाकिनिः।

## पुत्रान्तादन्यतरस्याम्। ४। १। १५९।

अस्माद्वा फिञ् विद्धस्तस्मिन् परे पुत्रान्तस्य वा कुक् विधीयते। गार्गीपुत्रकायणिः—गार्गीपुत्रायणिः—गार्गीपुत्रिः।

## प्राचामवृद्धात् फिन् बहुलम्। ४। १। १६०।

---

(५३) वाकिन गौधेर कार्कश काक लङ्कावर्मिवर्मिणौ (गणोपत्र)। वाकिनादिः।

मनुष्यकार्यनिः।

मनोर्जातावञ्यतौ षुक् च। ४। १। १६१।

समुदायार्थो जातिः। मानुषः। मनुष्यः।

जनपदशब्दात् क्षत्रियादञ्। ४। १। १६८।

जनपदक्षत्रियवाचकादञ् स्यादपत्ये। दाण्डिनायनेति(५।१०४०) सूत्रे निपातनाट्टिलोपः। ऐक्ष्वाकः। ऐक्ष्वाकौ। क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् *। तद्राजमाचक्षाणस्तद्राजइत्यन्वर्थसंज्ञासामर्थ्यात्। पञ्चालानां राजा पाञ्चालः। पूरोरण् वक्तव्यः *। पौरवः। पाण्डोर्ड्यण्। पाण्ड्यः।

साल्वेयगान्धारिभ्याञ्च। ४। १। १६६।

आभ्यामपत्येऽञ्। वृद्धेदिति ञ्योऽपवादः। साल्वेयः। गान्धारः। तस्य राजन्यपेवम्।

द्व्यञ्मगधकलिङ्गसूरमसादण्। ४। १। १७०।

अञोऽपवादः। द्व्यचः। आङ्गः। वाङ्गः। सौह्मः। मागधः। कालिङ्गः। सौरमसः। तस्य राजन्यपेवम्।

वृद्धेत्कोसलाजादाञ्ञ्यङ्। ४। १। १७१।

वृद्धात्। आम्बष्ठ्यः। सौवीर्यः। इत्। आवन्त्यः। कौसल्यः। अजादस्यापत्यम् आजाद्यः।

कुरुनादिभ्यो ण्यः। ४। १। १७२।

कौरव्यः। नैषध्यः। स नैषधस्याऽर्थपतेरित्यादौ तु शैषिकोऽण्।

**साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्। ४ । १ । १७३ ।**

साल्वो जनपदस्तदवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ्। अञोऽपवादः। औदुम्बरिः। प्रात्यग्रथिः। कालकूटिः। आश्मकिः। राजन्यपेऽप्येवम्।

**ते तद्राजाः। ४ । १ । १७४ ।**

अञादय एतत्संज्ञाः स्युः।

**तद्राजस्य बहुषु तेनैवाऽस्त्रियाम्। २ । ४ । ६२**

बहुष्वर्थेषु तद्राजस्य लुक् स्यात्तदर्थकृते बहुत्वे न तु स्त्रियाम्। इक्ष्वाकवः। पञ्चाला इत्यादि। कथन्तर्हि "कौरव्याः पशव" इति "तस्यामेव रघोः पाण्ड्या इति च। कौरव्ये" पाण्ड्ये च साधवइति समाधेयम्" तु "रघूणामन्वयं वक्ष्ये" इति "निरुध्यमाना यदुभिः कथञ्चिदिति" तु रघुयदुशब्दयोस्तदपत्ये लक्षणया।

**कम्बोजाल्लुक्। ४ । १ । १७५ ।**

अस्मात्तद्राजस्य लुक्। कम्बोजः। कम्बोजौ। कम्बोजादिभ्यः इति वक्तव्यम्*। चोलः। शकः। द्व्यज्लक्षणस्याणो (५।१८४०) लुक्। केरलः। यवनः। अञो लुक्। कम्बोजाः समरे इति पाठः सुगमः। दीर्घपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः। सिन्धुतक्षशिलादिभ्योऽणञाविलण्(५८८४०)।

## स्त्रियामवन्तिकुन्तिकुरुभ्यश्च।४।१।१७६।

तद्राजस्य लुक् स्यात्। अवन्ती। कुन्ती। कुरूः।

## अतश्च।४।१।१७७।

तद्राजस्याकारस्य स्त्रियां लुक् स्यात्। शूरसेनी। मद्री। भर्गी कथम्माद्रीसुताविति ह्रस्व एव पाठ इति हरदत्तः। भर्गादित्वं वा कल्प्यम्।

## न प्राच्यभर्गादि (५४) यौधेयादि (५५)भ्यः। ४।१।१७८।

एभ्यस्तद्राजस्य न लुक्। पाञ्चाली। वैदर्भी। आङ्गी। वाङ्गी। मागधी। एते प्राच्याः। भार्गी। कारूषी। कैकेयी। केकयीत्यत्र तु जन्यजनकभावलक्षणे पुंयोगे ङीष्। युधा-शुभ्राभ्यां द्व्यच इति(५०६पृ०)ढक्। ततः स्वार्थे पर्श्वादियौधेया-दिभ्यामणञाविति(७१६पृ०)अञ्। शार्ङ्गरवादित्वात्(२४१पृ०) ङीन्। अतश्चेति(५२१पृ०)लुकि तु ढगन्तत्वात् ङीपुरदात्तनि-वृत्तिस्वरः स्यात्। यौधेयी। शौभ्रेयी।

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे। ४।१।७८।

---

(५४) भर्ग करूष केकय कश्मीर साल्व सुस्थाल उरस् कौरव्य भर्गादि।
(५५) यौधेय शौभ्रेय शौक्रेय ज्यावलेय धार्त्तेय त्रिगर्त्त भरत उशीनर यौधेयादि।

त्रयादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमं गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात्। निर्दिश्यमानस्यादेशा भवन्तीत्यणिञोरेव। षङावितौ। यङश्चाप्(२४२६०)। कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या। वाराह्या। अनार्षयोः किम् वासिष्ठी। वैश्वामित्री। गुरूपोत्तमयोः किम् औपगवी। जातिलक्षणो(२२७६०)ङीष्। गोत्रे किम् अहिच्छत्रे जाता आहिच्छत्री।

गोत्रावयवात्। ४। १। ७९।

गोत्रावयवा गोत्राभिमताः कुलाख्यास्ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशः स्यात्। अगुरूपोत्तमार्थ आरम्भः। पौणिक्या। भौणिक्या।

क्रौड्यादि (५६) भ्यश्च। ४। १। ८०।

स्त्रियां ष्यङ्प्रत्ययः स्यात्। अगुरूपोत्तमार्थोऽनणिञर्थश्चारम्भः। क्रौड्या। व्याड्या। सूत (युवत्याम्)। सूत्या। भोज (क्षत्रिये)। भोज्या।

(५६) क्रौडि लाडि व्याडि आपिशलि आपक्षिति चौपयत चैटयत सैकयत वैल्वयत सौधातकि सूत (युवत्याम्) भोज (क्षत्रिये) यौतकि कौटि भौरिकि भौलिकि शाल्मलि शालास्थलि कापिष्ठलि गौकक्ष्य क्रौड्यादिः।

दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्यो ऽन्यतरस्याम् । ४ । १ । ८१ ।

एभ्यश्चतुर्भ्यः ष्यङ् वा । अगोत्रार्थमिदम् । गोत्रेऽपि परत्वा-त्प्रवर्त्तते । पक्षे इतो मनुष्येति (२३८) ङीष् । दैवयज्ञ्या दैवयज्ञी ।

इत्यपत्याधिकारः ।

---

## तेन (१) रक्तं रागात्। ४। २। १।

रज्यतेऽनेनेति रागः। कषायेण रक्तं वस्त्रम् काषायम्। माञ्जिष्ठम्। रागात्किम् देवदत्तेन रक्तं वस्त्रम्।

## लाक्षारोचनाट्ठक्। ४। २। २।

लाक्षिकः। रौचनिकः। शकल(२)कर्द्दमाभ्यामुपसंख्यानम्*। शाकलिकः। कार्द्दमिकः। आभ्यामणपीति वृत्तिकारः। शाकलः। कार्द्दमः। नील्या अन्*। नील्या रक्तम् नीलम्। पीतात्कन्*। पीतकम्। हरिद्रामहारजनाभ्यामञ्*। हारिद्रम्। माहारजनम्।

## नक्षत्रेण (३) युक्तः कालः। ४। २। ३।

पुष्येण (४) युक्तम् पौषमहः। पौषी रात्रिः।

## लुबविशेषे। ४। २। ४।

---

(१) तेनेति। रागवाचकात् तत्करणकरञ्जनकर्म्मेत्यर्थे प्रत्ययः स्यादित्यर्थः शुक्लस्य वर्णान्तरापादनमिह रञ्जनम्। रागादित्यभावे कर्त्तृतृतीयान्तात् स्यात् तन्मा भूदित्यर्थं रागादितिग्रहणम्। एतच्च प्रत्युदाहरणे स्पष्टम्।

(२) "शकलं त्वचि खण्डे च रागवस्तुनि वल्कले" इति विश्वोक्तेः शकलमिह रागवस्तु।

(३) नक्षत्रेणेति नक्षत्रवाचकाःशब्दाः वृत्तिविषये तद्युक्तं चन्द्रमसमभिदधानाः प्रत्ययं लभन्ते इत्यर्थः।

(४) पुष्येणेत्यस्य पुष्यसमीपस्थेन चन्द्रमसेत्यर्थो वाच्यः एवञ्च पौषमहरित्यादि संगच्छते सर्व्वस्याह्नः पुष्ययोगाभावेऽपि तत्समीपस्थचन्द्रमसा योगस्य सार्व्वत्रिकत्वात्।

पूर्वेण विहितस्य लुम्ग्रहात् षष्टिदण्डात्मकस्य(५)कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः। कथन्तर्हि पुष्ययुक्ता पौर्णमासी पौषीति। विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य इति(५२०पृ०) निर्देशेन पौर्णमास्यामयं लुबिति ज्ञापितत्वात्। श्रवणशब्दात्तु अतएव (६) लुप् युक्तवद्भावाभावश्च। अबाधकान्यपि(७) निपातनानि। श्रावणी।

## संज्ञायां श्रवणाश्वत्थाभ्याम्।४।२।५।

विशेषार्थोऽयमारम्भः। श्रवणा रात्रिः अश्वत्थो मुहूर्त्तः। संज्ञायां किम् श्रावणी। आश्वत्थी।

## द्वन्द्वाच्छः।४।२।६।

नक्षत्रद्वन्द्वात् युक्ते काले छः स्यात् विशेषे सत्यसति च। तिष्यपुनर्वसवीयमहः। राधानुराधीया रात्रिः।

## दृष्टं साम।४।२।७।

(५) षष्टिदण्डात्मकस्येति। अद्यपुष्य इत्युक्तौ न ह्यो न वाश्व इति विशेषे गम्यमानेऽपि अहोरात्रात्मककालस्यावान्तरविशेषानवगमात् लुप् भवत्येवेति भावः।

(६) अतएव विभाषेत्यत्र (५२०पृ०) श्रवणेतिनिर्देशादेव। अनेन च पौर्णमास्यां लुबित्यस्यानित्यत्वं ज्ञाप्यते तेन श्रावणीति।

(७) अबाधकान्यपीति वृत्तिकारमतं भाष्ये तु बाधकान्येव निपातनानीति स्वीकृतम्। तथाच विभाषेत्यत्र श्रवणेत्युच्चारणज्ञापकादेवैतद्विषयेऽपि श्रवणाशब्दे युक्तवद्भावाभाव इत्यर्थः।

तेनेत्येव (८) । वसिष्ठेन दृष्टम् वासिष्ठं साम । अस्मिन्नर्थे(९) ऽण् डिद्वा वक्तव्यः * । उशनसा दृष्टम् औशनसम् औशनम् ।

**कलेर्ढक् । ४ । २ । ८ ।**

कलिना दृष्टं साम । कालेयं साम ।

**वामदेवाड्ड्यड्ड्यौ । ४ । २ । ९ ।**

वामदेवेन दृष्टं साम वामदेव्यम् ।

सिद्धे यस्येति(१२९पृ०)लोपेन किमर्थं ड्यड्ड्यौ डितौ ।
ग्रहणं माऽतदर्थे (७६०पृ०)भूद्वामदेव्यस्य नञ् स्वरे (१०)

**परिवृतो (११) रथः । ४ । २ । १० ।**

वस्त्रैः परिवृतो वास्त्रो रथः । रथः किम् वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते । तेनेह न छत्रैः परिवृतो रथः ।

**पाण्डुकम्बलादिनिः । ४ । २ । ११ ।**

---

(८) तृतीयान्ताद्दृष्टमित्यर्थेऽणादयः स्युर्यद्दृष्टं तच्चेत् साम ।

(९) अस्मिन्नर्थे इति तथाच श्लोकवार्त्तिकम् ।

दृष्टे सामनि जाते चाप्यण् डिद्वा द्विर्विधीयते । इति
दृष्टे साम्नि जाते चार्थे द्विरण् स च वा डिदित्यन्वयः ।

(१०) अतदर्थे इति ययतोश्चातदर्थे इति (७६०पृ०) विहिते नञ्स्वरे नञाश्रिते स्वरे ड्यतोऽपि ग्रहणं मा भूदित्येतदर्थम् डित्करणमिति भावः

(११) तृतीयान्तात् परिवृत इत्यर्थेऽणादयः स्युः यः परिवृतः स चेद्रथः।

पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली। पाण्डुकम्बलशब्दो राजास्तरणकम्बलस्य वाचकः। मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम्।

## द्वैपवैयाघ्रादञ्।४।२।१२।

द्वीपिनो विकारः द्वैपम्। तेन परिवृतः द्वैपो रथः। एवं वैयाघ्रः।

## कौमारापूर्व्व (१२) वचने।४।२।१३।

कौमारेत्यविभक्तिको निर्द्देशः। अपूर्व्वत्वे निपातनमिदम्। अपूर्व्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः। यद्वा अपूर्व्वपतिः (१३) कुमारी पतिमुपपन्ना कौमारी भार्य्या।

## तत्रो (१४) द्धृतममत्रेभ्यः।४।२।१४।

शरावे उद्धृतः शाराव ओदनः। उद्धरतिरिहोद्धरणपूर्व्वके निधाने वर्त्तते तेन (१५) सप्तमी, उद्धृत्य निहित इत्यर्थः।

---

(१२) अपूर्व्वेति अपूर्व्वं उच्यते येन प्रवृत्तिनिमित्तेन तदपूर्व्ववचनं तत्वेत्यस्यार्थः अपूर्व्वत्वात् पतिरेव रूढेर्योग्यतावशाद्वा। प्रथमान्तात् द्वितीयान्ताद्वा प्रत्ययः आद्ये उपयमनविशिष्टे स्वार्थे द्वितीये उपयन्तरीति बोध्यम् तस्येदमित्यथा सिद्धमिदम्।

(१३) अपूर्व्वपतिरिति बहुव्रीहिः।

(१४) तत्रेति पदं शाखिमित्यतः(५२८पृ०)प्रागनुवर्त्ति स्वरितत्वप्रतिज्ञानात् शब्देन्दु०।

(१५) तेन निधाननिरूपिताधिकरणत्वाभिधानेन। उद्धरणस्य च स्थाल्यवधित्वेऽपि तस्यानुक्तत्वान्न वृत्तौ प्रवेशः।

स्थण्डिलाच्छयितरि व्रते।४।२।१५।

तदेत्येव समुदायेन चेद्व्रतं गम्यते। स्थण्डिले शेते स्थाण्डिलो भिक्षुः।

संस्कृतं भक्षाः।४।२।१६।

सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रे संस्कृताः भ्राष्ट्राः। अष्टसु कपालेषु संस्कृतः अष्टाकपालः (१६) पुरोडाशः।

शूलोखाद्यत्।४।२।१७।

अणोऽपवादः। शूले संस्कृतम् (१७) शूल्यं मांसम्। उखा पात्रविशेषः तस्यां संस्कृतम् उख्यम्।

दध्नष्ठक्।४।२।१८।

दध्नि संस्कृतम् दाधिकम्।

उदश्वितोऽन्यतरस्याम्।४।२।१९।

ठक् स्यात्। पक्षेऽण्।

इसुसुक्तान्तात्कः।७।३।५१।

इस् उस् उक् त् एतदन्तात्परस्य ठस्य कः स्यात्। उदकेन

---

(१६) अष्टाकपाल इत्यत्र द्विगोर्लुगनपत्ये(४८१पृ०)इत्यनेनाणो लुक् तेन नादिवृद्धिः। अष्टनः कपाले हविषीति (३८८पृ०) आत्।

(१७) संस्कृतमिति भोजनादि क्रियोपयोगजनकक्रिया हीह संस्कारः न तु गुणाधानम्।

श्वयति वर्द्धते इत्युदश्वित् तत्र संस्कृतः औदश्वित्कः।
औदश्वितः। इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह। आशिषा
चरति आशिषिकः। उषा चरति औषिकः। दोषउप-
संख्यानम्। दोर्भ्याञ्चरति दोष्कः।

## क्षीराड्ढञ्।४।२।२०।

अत्र संस्कृतमित्येव संबध्यते ननु भक्षा इति तेन यवाग्वा-
मपि भवति। क्षैरेयी।

## साऽस्मिन् पौर्णमासीति।४।२।२१।

इति शब्दात्संज्ञायामिति लभ्यते। पौषी पौर्णमासी अस्मिन्
पौषो मासः।

## आग्रहायण्यश्वत्थाट्ठक्।४।२।२२।

अग्रे हायनमस्या इति आग्रहायणी। प्रज्ञादेराकृति(७२६४०)
गणत्वादण्। पूर्वपदात्संज्ञायामिति(४१५४०)णत्वम्। आग्र-
हायणी पौर्णमासी अस्मिन् आग्रहायणिको मासः। अश्व-
त्थेन युक्ता पौर्णमासी अश्वत्थः निपातनात्पौर्णमास्यामपि
लुप्। आश्वत्थिकः।

## विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः।
## ४।२।२३।

एभ्यष्ठग्वा। पक्षेऽण्। फाल्गुनिकः फाल्गुनो मासः। श्राव-
णिकः श्रावणः। कार्त्तिकिकः कार्त्तिकः। चैत्रिकः चैत्रः।

सास्य (१८) देवता। ४। २। २४।

इन्द्रो देवताऽस्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पतम्। त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या च (१९)। ऐन्द्रो मन्त्रः। आग्नेयो (२०) वै ब्राह्मणो देवतया इति तु शैषिकेऽर्थे सर्व्वत्र अग्नीति(४८०पृ०)ढक्।

कस्येत् (२१)। ४। २। २५।

कशब्दस्य इदादेशः स्यात्प्रत्ययसन्नियोगेन। यस्येति(१३८पृ०) लोपात्परत्वा (२२) दादिवृद्धिः। को ब्रह्मा देवताऽस्य कायं हविः। श्रीर्देवताऽस्य श्रायम् (२३)।

---

(१८) साऽस्येति देवता सम्बन्धित्वेन उद्देश्या स्तुत्या च प्रत्ययार्थः प्रकृत्यर्थं देवताया अभेदेनान्वयः सम्बन्धित्वेन देवताया बोधनेऽपि विशेषरूपबोधनाय इन्द्रादिशब्दप्रयोगः।

(१९) मन्त्रस्तुत्या चेति अत्रार्थे देवताशब्दो रूढस्तेन पितरोऽपि देवता देवात्तत् इति सूत्रे भाष्ये चेदं स्पष्टम्।

(२०) अग्न्युद्देशेन ब्राह्मणत्यागासंभवशङ्कायामाह आग्नेयइति शैषिके इति अग्नेरयं भक्त इत्यर्थः। अग्निकलिभ्यामिति वार्त्तिके सर्व्वत्रेति पदमनुवर्त्त्य योजयन् सर्व्वत्राग्नीत्युक्तम् क्वचित् तथैव पाठः।

(२१) कस्येदिति "कः प्रजापतिरुद्दिष्ट" इत्युक्तेः ब्रह्मवाचक एव कः प्रतिपदोक्तत्वात् न तु सर्व्वनाम तस्य लाक्षणिकत्वात्।

(२२) परत्वादिति उत्कृष्टत्वादित्यर्थः उत्कृष्टत्वञ्च प्रकृते इकारविकाररूपविधानसामर्थ्येन बलवत्त्वम्।

(२३) श्रायमित्यत्र तु परत्वात् परयास्लोपत्वादेवेत्यर्थः तेन यो वक्तीति सूत्रभाष्ये इडेर्लोपो बलीयानित्युक्तावपि नात्र लोपस्य बलवत्त्वं तस्य सामान्यशास्त्रत्वेन परशास्त्रेण बाधादित्यवधेयम्।

घुक्राद्घन्। ४। २। २६।

घुक्रियम्।

अपोनप्त्रपान्नप्तृभ्याङ्घः। ४। २। २७।

अपोनप्त्रियम्। अपान्नप्त्रियम्। अपोनपात् अपान्नपाच्च देवता। प्रत्ययसन्नियोगेन तूक्तं रूपन्निपात्यते अतएवापोनपाते अपान्नप्त्रे ब्रूहीति प्रैषः।

छ च। ४। २। २८।

योगविभागो यथासंख्यनिवृत्त्यर्थः। अपोनप्त्रीयम्। शतरुद्रात् घश्च *। चाच्छः। शतं रुद्रा देवता अस्य शतरुद्रीयम् शतरुद्रियम्। घछयोर्विधानसामर्थ्याद्द्विगोर्लुगनपत्ये इति (४८।५०) न लुक्।

महेन्द्राद्घाणौ च। ४। २। २९।

चाच्छः। महेन्द्रियं हविः माहेन्द्रम् माहेन्द्रीयम्।

सोमाट्ट्यण्। ४। २। ३०।

सौम्यम्। टित्त्वात् ङीप्। सौमी ऋक्।

वाय्वृतुपित्रुषसो यत् (२४)। ४। २। ३१।

वायव्यम्। ऋतव्यम्।

(२४) उभम् स्त्रीलिङ्गोदिवोदुहिद्दरूपदेवतां वक्तीति। मनो०।

**रीङृतः। ७। ४। २७।**

अकृद्यकारेसार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात्। यस्येति च (१२८४०)। पित्रयम्। उपस्यम्।

**द्यावापृथिवीशुनासीर(२५)मरुत्वदग्नीषोमवास्तोष्पति (२६) गृहमेधाच्छ च। ४। २। ३२।**

चाद्यत्। द्यावापृथिवीयम्। द्यावापृथिव्यम्। शुनासीरीयम् शुनासीर्य्यम्।

**अग्नेर्ढक्। ४। २। ३३।**

आग्नेयः।

**कालेभ्यो भववत्। ४। २। ३४।**

मासिकम्। प्रावृषेण्यम्।

**महाराज (२७) प्रोष्ठपदाट्ठञ्। ४। २। ३५।**

माहाराजिकम्। प्रौष्ठपदिकम्।

**देवताद्वन्द्वे च। ७। ३। २१।**

अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात् ञिति णिति किति च परे। आग्निमारुतम्।

---

(२५) शुनासीरौ्यमिति। शुनो वायुः सीर आदित्य इति मनो०।

(२६) वास्तोष्पतीत्यत्रानेनैव निपातनात् षष्ठ्या अलुक् षत्वञ्च।

(२७)महाराजो वैश्रवणः। प्रोष्ठपदादपि प्राप्ते वचनम्।

नेन्द्रस्य परस्य। ७। ३। २२।

परस्येन्द्रस्य वृद्धिर्न स्यात्। सोमेन्द्रः। परस्य किम् ऐन्द्राग्नः।

दीर्घाच्च वरुणस्य। ७। ३। २३।

दीर्घात्परस्य वरुणस्य न वृद्धिः ऐन्द्रावरुणम्। दीर्घात्किम् 'आग्निवारुणीमनड्वाहीमालभेत'। तदस्मिन्वर्त्ततइति नवयज्ञादिभ्य उपसंख्यानम्*। नावयज्ञिकः कालः। पाकयज्ञिकः। पूर्णमासादण् वक्तव्यः*। पूर्णः (२८) मासोऽस्यां वर्त्तते इति पौर्णमासी तिथिः।

पितृव्यमातुलमातामहपितामहाः। ४। २। ३६।

एते निपात्यन्ते। पितुर्भ्रातरि व्यत्*। पितुर्भ्राता पितृव्यः। मातुर्डुलच्*। मातुर्भ्राता मातुलः। मातृपितृभ्यां पितरि डामहच्*। मातुः पिता मातामहः। पितुः पिता पितामहः। मातरि षिच्च*। मातामही। पितामही। अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः*। सकारपाठसामर्थ्यान्न षः। अविसोढम्। अविदूसम्। अविमरीसम्। तिलान्निष्फलात् पिञ्जपेजौ*। तिलपिञ्जः। तिलपेजः। वन्ध्यस्तिल इत्यर्थः। पिञ्जश्छन्दसि डिच्च*। तिल्पिञ्जः।

(२८) पूर्णो मासश्चन्द्रस्तस्येयमिति पौर्णमासीति सिद्धेऽपि एतादृशार्थ एवास्य साधुत्वं तज्ज्ञानादेवाभ्युदय इति दर्शनार्थं स्वरभेदार्थं च सूत्रम्।

तस्य समूहः। ४। २। ३७।

काकानां समूहः काकम्।

भिक्षादि (२९) भ्योऽण्। ४। २। ३८।

भिक्षाणां समूहो भैक्षम्। गर्भिणीनां समूहः गार्भिणम। इह भस्याढ इति(४०६पृ०) पुंवद्भावे कृते।

इनण्यनपत्ये। ६। ४। १६४।

अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात्। तेन नस्तद्धितइति (३२४पृ०) टिलोपो न। युवतीनां समूहः यौवनम्। शतन्तादनुदात्तादेरञि। यौवतम्।

गोत्रोक्षोष्ट्रोरभ्रराजन्राजन्यराजपुत्रवत्समनुष्याजाद्वुञ्। ४। २। ३९।

एभ्यः समूहे वुञ् स्यात्। लौकिकमिह गोत्रम्। तच्चापत्यमात्रम्।

युवोरनाकौ। ७। १। १।

यु वु एतयोरननुनासिकयोः क्रमादन अक एतावादेशौ स्तः। ग्लुचुकायनीनां समूहः ग्लौचुकायनकम्। औपगवकमित्यादि। आपत्यस्य चेति(४११)यलोपे प्राप्ते। प्रकृत्या अके राजन्यमनुष्ययु-

(२९) भिक्षा गर्भिणी क्षेत्र करीष अङ्गार चर्मिन् वर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा भूत विषय श्रोत्र। भिक्षादिः।

पान: *। राजन्यकम्। मानुष्यकम्। वृद्धाच्चेति वक्तव्यम्*। वार्द्धकम्।

केदाराद्यञ्च। ४। २। ४०।

चाद्वुञ्। कैदार्य्यम्। कैदारकम्। गणिकाया यञिति वक्तव्यम्*। गाणिक्यम्।

ठञ् कवचिनश्च। ४। २। ४१।

चात्केदारादपि। कवचिनां समूहः कावचिकम्। कैदारिकम्।

ब्राह्मणमाणववाड़वाद्यन्। ४। २। ४२।

ब्राह्मण्यम्। माणव्यम्। वाड़व्यम्। पृष्ठादुपसंख्यानम्*। पृष्ठ्यम्।

ग्रामजनबन्धुभ्यस्तल्। ४। २। ४३।

ग्रामता। जनता। बन्धुता। गजसहायाभ्याञ्चेति वक्तव्यम्*। गजता। सहायता। अह्नः खः क्रतौ*। अहीनः अहर्गणसाध्यः सत्याकः क्रतुरित्यर्थः। क्रतौ किम् आह्नः। खण्डिकादित्वात् (१२६४०) अञ्। अह्नष्टखोरेवेति (२८२४०) नियमाट्टिलोपो न। पर्श्वा णस् वक्तव्यः*।

सिति च। १। ४। १६।

सिति परे पूर्व्वम्पदसंज्ञं स्यात्। अभत्वादोर्गुणो (४१२४०) न। पर्शूनां समूहः पार्श्वम्।

**अनुदात्तादेरञ् । ४ । २ । ४४ ।**

कापोतम् (३०) । मायूरम् ।

**खण्डिकादि (३१) भ्यश्च । ४ । २ । ४५ ।**

अञ् स्यात् । खण्डिकानां समूहः खाण्डिकम् ।

**चरणेभ्यो धर्म्मवत् (३२) । ४ । २ । ४६ ।**

काठकम् । छान्दोग्यम् ।

**अचित्तहस्तिधेनोष्ठक् । ४ । २ । ४७ ।**

साक्तुकम् । हास्तिकम् । धैनुकम् ।

**केशाश्वाभ्यां यञ्छावन्यतरस्याम् । ४ । २ । ४८ ।**

पक्षे ठगणौ । कैश्यम् कैशिकम् । अश्वीयम् आश्वम् ।

**पाशादिभ्यो (३३) यः । ४ । २ । ४९ ।**

---

(३०) कापोतमित्यादि कपोतमयूरशब्दौ मध्योदात्तौ लघावन्ते इति (७५५५पृ० १९प० स्थ) फिट्सूत्रात् ।

(३१) खण्डिकादिभ्य इति आद्युदात्तार्थं वचनम् । खण्डिक वडवा क्षुद्रक (मालवात्) सेना (संज्ञायाम्) भिक्षुक शुक उलूक श्वन् अहन् युगवरत्र हलबन्ध । खण्डिकादिः ।

(३२) चरणेभ्य इति यस्याः प्रकृतेर्यः प्रत्ययो धर्म्मे 'चरणाद्धर्म्माम्नाययो'रिति वार्त्तिके ५९५ पृष्ठादौ वक्ष्यते स तस्याः समूहे-ऽर्थेऽपि स्यादित्यर्थः ।

(३३) पाश तृण धूम वात अङ्गार पाटल पोत गल पिटक पिटाक शकट हल नट वन । पाशादिः ।

पाश्या। तृण्या। धूम्या। वात्या। वन्या।

## खलगोरथात्।४।२।५०।

खल्या। गव्या। रथ्या।

## इनित्रकट्यचश्च।४।२।५१।

खलादिभ्यः क्रमात् स्युः। खलिनी। गोत्रा। रथकट्या। खलादिभ्य (३४) इनिर्वक्तव्यः *। डाकिनी। कुटुम्बिनी। आकृतिगणोऽयम्।

## विषयो देशे।४।२।५२।

षष्ठ्यन्ताद (३५) णादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः। शिवीनां विषयो देशः शैवः। देशे किम् देवदत्तस्य विषयोऽनुवाकः।

## राजन्यादि (३६) भ्यो वुञ्।४।२।५३।

राजन्यकः।

(३४) खलिनी डाकिनी कुटुम्बिनी द्रुमिणी अङ्किनी गविनी रथिनी कुण्डलिनी खलादिः।

(३५) तस्य समूह(५।२।४०)इत्यतस्तस्येत्यनुवर्त्तते इत्याशयेनाह षष्ठ्यन्तादिति।

(३६) राजन्य आनृत बाभ्रव्य शालङ्कायन देवयात अब्रीड वरत्रा जालन्धरायण राजायन तेलु आत्मकामेय अम्बरीषपुत्र वसाति वैल्ववन शैलूष उदुम्बर तीव्र वैल्वज आर्जुनायन संप्रिय दाक्षि ऊर्णनाभ। राजन्यादिराकृतिगणः।

भौरिक्या(३७) ऐषुकार्य्यादि (३८) भ्यो विध लभक्तलौ। ४। २। ५४।

भौरिकीणां विषयो देशः भौरिकिविधम्। भौलिकिविधम्। ऐषुकारिभक्तम्। सारसायनभक्तम्।

सोऽस्यादिरिति छन्दसः (३९) प्रगाथेषु। ४। २। ५५।

अण्। पङ्क्तिरादिरस्येति पाङ्क्तः प्रगाथः। स्वार्थे उपसंख्यानम् *। त्रिष्टुबेव त्रैष्टुभम् (४०)।

संग्रामे प्रयोजनयोद्धृभ्यः (४१)। ४। २। ५६।

(३७ भौरिकि भौलिकि चौपयत चैटयत काणेय वाणिजक वालिकाज्य सैकयत वैकयत। भौरिक्यादिः।

(३८) ऐषुकारि सारसायन चान्द्रायण द्व्याक्षायण त्र्याक्षायण औड़ायन जौलायन खाड़ायन दासमित्रि दासमित्रायण शौद्रायण दाक्षायण शायण्डायन तार्क्ष्यायण शौभ्रायण सौवीर सौवीरायण शयण्ड शौण्ड शयाण्ड वैश्वमानव वैश्वधेनव नड़ तुण्डदेव विश्वदेव सापिण्डि। ऐषुकार्य्यादिः।

(३९) अपौरुषेयत्वानिबन्धनः पङ्क्त्यादिर्वाल छन्दो न तु वेदो व्याख्यानात् तथाच तद्वाचकात् प्रथमान्तादस्यादिरित्यर्थे प्रत्ययः स्यात् यः प्रथमान्तः स प्रगाथश्चेदित्यर्थः। यत्र द्वयोः ऋचोस्तिस्रः क्रियन्ते तत्रायं प्रगाथशब्दो रूढः। मनो०।

(४०) त्रैष्टुभमित्यत्र "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इत्युक्तेर्लिङ्गान्तरत्वम्।

(४१) प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्येति षष्ठ्यर्थे संग्रामेऽभिधेयेऽण् स्यादित्यर्थः।

सोऽस्येत्यनुवर्त्तते। सुभद्रा प्रयोजनमस्य संग्रामस्येति सौभद्रः। भरता योद्धारोऽस्य संग्रामस्य भारतः।

**तदस्यां प्रहरणमिति क्रीड़ायां णः (४२)।४।२।५७।**

दण्डः प्रहरणमस्यां क्रीड़ायां दाण्डा। मौष्टा।

**घञः साऽस्यां क्रियेति ञः।४।२।५८।**

घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्री-लिङ्गे ञप्रत्ययः स्यात्। घञ इति कृदग्रहणाद्गतिकारकपूर्व्व-स्यापि ग्रहणम्।

**श्येनतिलस्य पाते ञे।६।३।७१।**

श्येन, तिल, एतयोर्मुमागमः स्यात् ञप्रत्यये परे पातशब्दे उत्तरपदे। श्येनपातोऽस्यां वर्त्तते श्यैनम्पाता मृगया। तिलपातोऽस्यां वर्त्तते तैलम्पाता स्वधा। श्येनतिलस्य किम् दण्डपातोऽस्यान्तिथौ वर्त्तते दाण्डपाता तिथिः।

**तदधीते तद्वेद (४३)।४।२।५९।**

व्याकरणमधीते वेद वा वैयाकरणः।

---

(४२) प्रथमान्तात् प्रहरणोपाधिकात् सप्तम्यर्थे णः स्यात् स चेत् सप्तम्यर्थः क्रीड़ा भवतीत्यर्थः।

(४३) द्वितीयान्तात् अधीते इत्यर्थे वेदेत्यर्थे च अणादयो वक्ष्यमाणाः स्यु-रित्यर्थः तत्पदं द्विर्ग्रहणमधीयाने, विदुषि च पृथग्विधानार्थमन्यथा अधीयाने-विदुष्येव स्यात्।

## क्रतूक्थादि(४४) सूत्रान्ताट्ठक्। ४। २। ६०।

क्रतुविशेषवाचिनामेवेह ग्रहणम्। तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि। आग्निष्टोमिकः। वाजपेयिकः। उक्थं सामविशेषस्तल्लक्षणपरो ग्रन्थविशेषो लक्षणया। उक्थम् तदधीते वेद वा औक्थिकः। मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते। न्यायम्—नैयायिकः। वृत्तिम्—वार्त्तिकः। लोकायतम्—लौकायतिक इत्यादि। सूत्रान्तात्तु अकल्पादेरेवेष्यते। सांग्रहसूत्रिकः। अकल्पादेः किम्। काल्पसूत्रः। विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्*। वायसविद्यिकः। गौलक्षणिकः। आश्वलक्षणिकः। पाराशरकल्पिकः। अङ्गक्षत्रधर्म्मत्रिपूर्व्वाद्विद्यान्तान्नेति वक्तव्यम्*। आङ्गविद्यः। क्षात्रविद्यः। धार्म्मविद्यः। त्रिविधा विद्या त्रिविद्या तामधीते वेद वा त्रैविद्यः। आख्यानाख्यायिकेतिहासपुराणेभ्यश्च*। यवक्रीतमधिकृत्य कृतमाख्यानमुपचारात् यवक्रीतन्तदधीते वेद वा यावक्रीतिकः। वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता। अधिकृत्य कृते ग्रन्थे(५८६४०)इत्यर्थे वृद्धाच्छः (५६४०)। तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्। ततोऽनेन ठक्। वासवदत्तिकः। ऐति-

(४४) उक्थ लोकायत न्याय न्यास पुनरुक्त निरुक्त निमित्त द्विपद ज्योतिष अनुपद अनुकल्प यज्ञ धर्म्म चर्च्चा क्रमेतर श्लक्ष्ण संहिता पदक्रम संघट्ट वृत्ति परिषद् संग्रह गण गुण आयुर्व्वेद उक्थादिः।

हासिकः। पौराणिकः। सर्व्वादेः सादेश्च लुग्वक्तव्यः*। सर्व्ववेदानधीते सर्व्ववेदः। सर्व्वतन्त्रः। सवार्त्तिकः। द्विगोर्लुगिति (४८११०)लुक्। द्वितन्त्रः। इकन् पदोत्तरपदात् शतषष्टेः षिकन् पथः* (४५)। पूर्व्वपदिकः। उत्तरपदिकः। शतपथिकः। शतपथिकी। षष्टिपथिकः। षष्टिपथिकी।

## क्रमादिभ्यो वुन्। ४। २। ६१।

क्रमकः। क्रम पद शिक्षा मीमांसा क्रमादिः।

## अनुब्राह्मणादिनिः। ४। २। ६२।

तदधीते तद्वेदेत्यर्थे। ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणम् तदधीते अनुब्राह्मणी। मत्वर्थीयेनैव सिद्धे अण्बाधनार्थमिदम्।

## वसन्तादिभ्य (४६) ष्ठक्। ४। २। ६३।

वासन्तिकः। अथर्व्वाणमधीते आथर्व्वणिकः। दाण्डिनायनसूत्रे (५१०८०) निपातनाट्टिलोपो न।

## प्रोक्ताल्लुक्। ४। २। ६४।

प्रोक्तार्थकप्रत्ययात्परस्याऽध्येत्वेदितृप्रत्ययस्य लुक् स्यात्

---

(४५) पदशब्दोत्तरपदात् इकन् शतशब्दात् षष्टिशब्दाच्चोत्तरवर्त्तिपथिन्शब्दात् षिकन् वाच्य इत्यर्थः।

(४६) वसन्त इत्येवमादिभ्यः ठक् स्यात् वसन्तमधीते वेद वा वासन्तिकः। वसन्त ग्रीष्म वर्षा शरत् हेमन्त शिशिर प्रथम गुण चरम अनुगुण अथर्व्वन् आथर्व्वण। वसन्तादिः। लक्षणया तद्बोधको ग्रन्थः।

प्रयानस्यथा: प्रजने कविधानमिति (७४४२सू०) कः। सोऽस्या-ऽस्तीति पणी तस्य गोत्रापत्यम्।

**गाथिविदथिकेशिगणिपणिनश्च ।६।४।१६५।**

एतेऽपि प्रकृत्या स्युः। इति टिलोपो न। पाणिनः। ततो यूनि इञ्। पाणिनिः।

**ण्यक्षत्रियार्षञितो यूनि लुगणिञोः।२।४।५८।**

ण्यप्रत्ययान्तात् क्षत्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्र-प्रत्ययान्तात् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात्। कौरव्यः पिता। कौरव्यः पुत्रः। श्वाफल्कः पिता। श्वाफल्कः पुत्रः। वासिष्ठः पिता। वासिष्ठः पुत्रः। तैकायनिः पिता। तैकायनिः पुत्रः। एभ्यः किम् शिवाद्यण् (५०४सू०) कौहडः पिता। ततइञ्(४६८सू०) कौहडिः पुत्रः। यूनि किम् वामरथस्य छात्राः वामरथाइति। अणोलुक् तु न भवति आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यणएव ग्रहणात्। पाणिनिना प्रोक्तम् पाणिनीयम्। वृद्धाच्छः (५६०सू०)। इञश्चेत्यण् तु (५६०सू०) न, गोत्रे य इञ् तदन्तादिति वक्ष्य-माणत्वात्। ततोऽध्येत्रवेदित्रणोलुक् स्यात्। स्वरे स्त्रियाञ्च विशेषः। पाणिनीयः। पाणिनीया।

**सूत्राच्च कोपधात्। ४। २। ६५।**

सूत्रवाचिनः ककारोपधादध्येत्रवेदित्रप्रत्ययस्य लुक् स्यात्। अप्रोक्तार्थआरम्भः। अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनेः सूत्रम्। तदधीयते विदन्ति वा अष्टकाः।

## छन्दो (४७) ब्राह्मणानि च तद्विषयाणि। ४।२।६६।

छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः। अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः। कठेन प्रोक्तमधीयते कठाः। वैशम्पायनान्तेवासित्वाण्णिनिः। (५८०४०) तस्य कठचरकादिति (५८१४०) लुक्। ततोऽण्। तस्य प्रोक्ताल्लुक्। (५४१४०)

## तदस्मिन्नस्तीति (४८) देशे तन्नाम्नि। ४।२।६७।

उदुम्बराः सन्त्यस्मिन् देशे औदुम्बरः।

## तेन निर्वृत्तम् (४९)। ४।२।६८।

कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी।

## तस्य निवासः। ४।२।६९।

शिवीनान्निवासो देशः शैवः।

---

(४७) छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं मन्त्रेतरवेदभागब्राह्मणप्रतिपत्त्यर्थं तेन पुराणप्रोक्तानां ब्राह्मणानां न तद्धितविषयता।

(४८) तदस्मिन्नित्यारभ्य अदूरभवश्चेति सूत्रचतुष्केणाभिहिताः अर्थाश्चत्वारो। देशे इति सकललोकसिद्धनिरूढे न त्वाधुनिकसंकेतलब्धेऽप्यो-त्यर्थद्योतनाय इतिशब्दः देशे तन्नाम्नीत्युत्तरसूत्रत्रयेऽप्यन्वेति। अस्ती-त्युपाधिकात् प्रथमान्तात् सप्तम्यर्थे वक्ष्यमाणाः प्रत्ययाः स्युः स चेत् सप्तम्यर्थः प्रसिद्धदेशनामा।

(४९) तेन निर्वृत्तमिति अन्तर्भावितण्यर्थात् वृत्तेः कर्मणि क्तः निष्पादित-मित्यर्थः।

अदूरभवश्च। ४। २। ७०।

विदिशाया अदूरभवन्नगरं वैदिशम्। चकारेण प्रागुक्ता-स्त्रयोऽर्थाः सन्निधाप्यन्ते तेन वक्ष्यमाणप्रत्ययानाञ्चातुरर्थि-कत्वं (५०) सिद्ध्यति।

ओरञ्। ४। २। ७१।

अणोऽपवादः। कक्षतु—काक्षतवम्। नद्यान्तु (५५२४०) पर-त्वान्मतुप्। इक्षुमती।

मतोश्च बह्वजङ्गात्। ४। २। ७२।

बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ् नाऽण्। सैध्रकावतम्। बह्वजिति किम् आहिमतम्। अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं मा भूत।

बह्वचः कूपेषु। ४। २। ७३।

अणोऽपवादः। दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः।

उदक् च विपाशः। ४। २। ७४।

विपाश उत्तरे कूले ये कूपास्तेष्वञ्। अबह्वजर्थ आरम्भः। दत्तेन निर्वृत्तः कूपो दात्तः। उदक् किम् दक्षिणतः कूपेष्वणेव

(५०) चातुरर्थिकत्वमिति चतुर्णामर्थानां समाहारश्चतुरर्थी तत्र भवाश्चातु-रर्थिकास्तेषां भावः।

सङ्कलादिभ्यश्च (५१)। ४। २। ७५।

कूपेष्विति निवृत्तम्। सङ्कलेन निर्वृत्तम् साङ्कलम्। पौष्कलम्।

स्त्रीषु सौवीरसाल्वप्राक्षु। ४। २। ७६।

स्त्रीलिङ्गेषु एषु देशेषु वाच्येष्वञ्। सौवीरे दत्तामित्रेण निर्वृत्ता दात्तामित्री नगरी। साल्वे वैधूमाग्नी। प्राचि माकन्दी।

सुवास्त्वादिभ्योऽण् (५२)। ४। २। ७७।

अञोऽपवादः। सुवास्तोरदूरभवं सौवास्तवम्। वर्णु। वार्णवम्। अण्ग्रहणमञ्द्वाभ्यां मतुपो(५५२९०) बाधनार्थम् सौवास्तवी

रोणी। ४। २। ७८।

रोणीशब्दात्तदन्ताच्च अण्। कूपाञोऽपवादः। रौणः। आजकरौणः।

(५१) सङ्कल पुष्कल उत्तम उडुप उद्वेप उत्पुट कुम्भ निधान सुदक्ष सुदत्त सुभूत सुपूत सुनेत्र सुमङ्गल सुपिङ्गल मूत सिकत पूतिक पूलास कूलास पलाश निवेश गवेश गम्भीर इतर शर्मन् अहन् लोमन् वेमन् वरुण बहुल सद्योज अभिषिक्त गोभृत् राजभृत् भल्ल मल्ल माल सङ्कलादिः।

(५२) सुवास्तु वर्णु भण्डु खण्डु सेवालिन् कर्पूरिन् शिखण्डिन् गर्त्त कर्कश शकटीकर्ण कृष्णकर्ण कर्क कर्कन्धुमती गोह अहिसक्थ। सुवास्त्वादिः।

कोपधाच्च। ४। २। ७९।

अण्। अग्नोऽपवादः। कार्श्चिच्छिद्रकः कूपः। कार्क्रवाकवम्। तैत्तिरकवम्।

**वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः। ४। २। ८०।**

सप्तदशभ्यः सप्तदश क्रमात् स्युः। चतुरर्थीम्। अरीहणादिभ्यो(५३) वुञ्। अरीहणेन निर्वृत्तम् आरीहणकम्। कृशाश्वादिभ्य(५४)श्छण्। कार्शाश्वीयम्। ऋश्यादिभ्य(५५)

---

(५३) अरीहण द्रुघण द्रुहण भगल उलन्द किरण साम्परायण क्रौष्ट्रायण औष्ट्रायण त्रैगर्तायन मैत्रायण भास्त्रायण वैमतायन गौमतायन सौमतायन सौसायन धौमतायन सौमायन ऐन्द्रायण कौन्द्रायण खाडायन शाण्डिल्यायन रायस्पोष विपथ विपाश उद्दण्ड उदञ्चन खाण्डवीरण वीरण काशकृत्स्न जाम्बवत शिंशपा रैवत बिल्व सुयज्ञ शिरीष बधिर जम्बु खदिर सुशर्मन् दलत भलन्दन खण्डु कनल यज्ञदत्त अरीहणादिः।

(५४) कृशाश्व अरिष्ट अरिश्म वेश्मन् विशाल लोमश रोमश रोमक लोमक शबल कूट वर्चल सुवर्चल सुकर सूकर प्रतर सदृश पुरग पुराग सुख धूम अजिन विनत अवनत विकुट्यास परायर अरस् अयस् मौद्गल्य सूकर कृशाश्वादि।

(५५) ऋश्य न्यग्रोध शर निलीन निवास निवात निधान निबन्ध विबद्ध परिगूढ उपगूढ असनि सित मत वेश्मन् उत्तराश्मन् अश्मन् स्थूल

कः। ऋश्यकम्। कुमुदादिभ्य (५६) ष्ठच्। कुमुदिकम्। काशादिभ्यः (५७) इलः। काशिलः। तृणादिभ्यः (५८) सः। तृणसम्। प्रेक्षादिभ्य (५९) इनिः। प्रेक्षी। अश्मादिभ्यो (६०) रः। अश्मरः। सख्यादिभ्यो (६१) ढञ्। साखेयम्। सङ्काशादिभ्यो (६२) ण्यः। साङ्काश्यम्।

---

वाङ्क खदिर शर्करा अनडुह् अरडु परिवंश वेणु वीरण खण्ड दण्ड परिवृत्त कर्द्दम अंशु ऋश्यादिः।

(५६) कुमुद शर्करा न्यग्रोध इक्कट सङ्कट कङ्कट गर्त्त बीज परिवाप निर्यास शकट कच मधु शिरीष अश्व अश्वत्थ बल्वज यवाष कूप विकङ्कट दशग्राम। कुमुदादिः।

(५७) काश पाश अश्वत्थ पलाश पीयूक्षा चरण वास नड़ वन कर्द्दम कच्छूल कङ्कट गुहा विस तृण कर्पूर बर्व्वर मधुर ग्रह कपित्थ जतु सीपाल काशादिः।

(५८) तृण नड़ मूल वन पर्ण वर्ण वराण विल पुल फल अर्ज्जुन अर्ण सुवर्ण बल चरण बुस। तृणादिः।

(५९) प्रेक्षा हलका बन्धुका ध्रुवका क्षिपका न्यग्रोध इक्कट कङ्कट सङ्कट कट कूप बुक पुक पुट मह परिवाप यवाष ध्रुवका गर्त्त कूपक हिरण्य प्रेक्षादिः।

(६०). अश्मन् यूथ ऊष मीन नद दर्भ वृन्द गुद खण्ड नग शिखा कोट पाम कन्द कान्द कुल गह्व गुड़ कुण्डल पीन गुह अश्मादिः।

(६१) सखि अग्निदत्त वायुदत्त सखिदत्त गोपिल भल्ल पाल चक्र चक्रवाक छगल अशोक करवीर वासव वीर पूर वज्र कुशीरक सीहर सरक सरस समर समन सुरस रोह तमाल कदल सप्तल सख्यादिः।

(६२) संकाश कपिल कश्मीर समीर सूरसेन सरक सूर सुपन्थिन् (पन्थ) च यूथ अंश अङ्ग नासा पलित अनुनाश अश्मन् कूट मलिन दश कुम्भ

बलादिभ्यो (६३) यः। बल्यम्। पक्षादिभ्य (६४) फक्। पाक्षायणः। पथः पन्थ च (गं)। पान्थायनः। कर्णादिभ्यः (६५) फिञ्। कार्णायनिः। सुतङ्गमादिभ्य (६६) इञ्। सौतङ्गमिः। प्रगद्यादिभ्यो (६७) ञ्यः। प्रागद्यः। वराहादिभ्यः (६८) कक्। वाराहकः। कुमुदादिभ्य (६९) ठक्। कौमुदिकः।

## जनपदे लुप्।४।२।८१।

शीर्ष विरत समल सीर पञ्जर मन्थ नल रोमन् लोमन् पुलिन सुपरि कटिप सकर्णक वृष्टि तीर्थ अगस्ति विकर नासिका। सङ्काशादिः।

(६३) बल चुल नल दल वट लकुल उरल पुल (पुव) मूल उल डुल (डुलडुल) वन कुल बलादिः।

(६४) पक्ष तुक्ष तुष कुण्ड अण्ड कम्बलिका वलिक चित्र अस्ति पथिन् (पन्थ च) कुम्भ सीरक सरक सकल सरस समल अतिश्वन् रोमन् लोमन् हस्तिन् मकर लोमक शीर्ष निवात पाक सिंहक अङ्कुश सुवर्णक हंसक हिंसक कुत्स विल खिल यमल हस्त कला सकर्णक। पक्षादिः।

(६५) कर्ण वसिष्ठ अर्क अर्कलूष द्रुपद आनडुह्य पाञ्चजन्य स्फिज् कुम्भी कुन्ती जित्वन् जीवन्त कुलिश आण्डीवत जव जैत्र आनक कर्णादिः।

(६६) सुतङ्गम मुनिचित विप्रचित महाचित्त महापुत्र स्वन श्वेत खड़िक शुक्र विग्र बीजवापिन् अर्जुन श्वन् अजिर जीव खण्डित कर्ण विग्रह सुतङ्गमादिः।

(६७) प्रगदिन् मगदिन् मददिन् कविल खण्डित गदित चूड़ार मड़ार मन्दार कोविदार प्रगद्यादिः।

(६८) वराह पलाश शिरीष पिनद्ध निबद्ध बलाह स्थूल विदग्ध विजग्ध विभग्न निमग्न बाहु खदिर शर्करा। वराहादिः।

(६९) कुमुद गोमथ रथकार दशग्राम अश्वत्थ शाल्मलि शिरीष मुनि

जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यात् ।

**लुपि युक्तवद्व्यक्तिवचने।१।२।५१।**

लुपि(७०) सति प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालानान्निवासो जनपदः पञ्चालाः कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः।

**तदशिष्यं(७१) संज्ञाप्रमाणत्वात् ।१।२।५३।**

युक्तवद्वचनन्न कर्त्तव्यम् संज्ञानां प्रमाणत्वात् ।

**लुब् (७२) योगाऽप्रख्यानात्।१।२।५४।**

लुबपि न कर्त्तव्यो (७३) ऽवयवार्थस्येहाप्रतीतेः।

स्थल कुण्डल कूट मधुकर्ण घासकुन्द शुचिकर्ण कुमुदादिः। यथासंख्या ऽनुरोधात् कुमुदशब्दयोरेकशेषो न कृतः ।

(७०) विशेष्यानुसारेण लिङ्गवचने प्राप्तव्ये आह लुपीति प्रत्ययार्थेन नित्य-संबद्धार्थकतया युक्तमत्र प्रकृतिरित्याशयेन व्याचष्टे प्रकृतिवदिति लुपि लुबन्तार्थप्रकृतेरिव लिङ्गवचने भवत इत्यर्थः ।

(७१) पूर्व्वाचार्य्यानुरोधेन कृतमपि पूर्व्वसूत्रं निरर्थकतया संप्रति प्रत्याचष्टे तदशिष्यमिति सज्ञानां लौकिकव्यवहाराणामेवात्र प्रमाणत्वं नतु तदर्थे शास्त्रव्यापार इत्यर्थः पञ्चाला वङ्गाइत्यादयो यथायथं जन-पदस्य संज्ञा बहुवचनाद्यन्ता आपो दाराइत्यादिवत् तत्र लिङ्गसंख्या-विधाने यत्नेन.लम् तथाच दारादिष्विव लिङ्गसंख्याविधानाभावेऽपि यथा तथात्वं तथाऽत्रापीति भावः ।

(७२) उपजीवकं प्रत्याख्यायोपजीव्यं लुब्विधानं प्रत्याचष्टे लुब् योगेति जनपदे लुब्, वरणादिभ्यश्चेति (५५१पृ०) द्विसूत्री लुप्शब्दे न विवक्षिता।

(७३) अशिष्यमित्यनुवृत्त्यात्रापि संबध्यते तदाह न कर्त्तव्य इति प्रकृति-प्रत्ययार्थयोः सम्बन्धो योग इत्याशयेन फलितमाह अवयवार्थस्येति

**योगप्रमाणे (७४) च तदभावेऽदर्शनं स्यात्।१।२।५५।**

यदि हि योगस्यावयवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत (७५)।

**प्रधान (७६) प्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्।१।२।५६।**

प्रत्ययार्थः प्रधानमित्येवं रूपं वचनमप्यशिष्यम् कुतः अर्थस्य लोकतएव सिद्धेः।

**कालोपसर्ज्जने च तुल्यम्।१।२।५७।**

अतीताया रात्रेः पश्चार्द्धेनागामिन्याः पूर्व्वार्द्धेन च सहितो

---

अप्रख्यानादिति व्याचष्टेऽप्रतीतेरिति महाङ्गसम्बन्धिनिवासत्वेनाङ्गा इत्यादिरीत्या बोधः किन्तु रूढ्येति भावः। पञ्चालादयः शब्दाः यथा क्षत्रियेषु रूढास्तथा जनपदेऽपीति तथाच तस्य निवासः (५।४।२।८०) अदूरभवश्चेति (५।४।४।८०) तद्धितएव नोत्पद्यते किं लुब्विधानेनेति तु हृदयम्।

(७४) प्रत्ययस्वीकारे बाधकमप्याह योगप्रमाणे चेति पञ्चालादौ योगस्यावयवार्थस्यैव प्रमाजनकत्वे इत्यर्थः तदभावे क्षत्रियसम्बन्धाभावे पञ्चालादीनां जनपदे प्रयोगो न स्यादित्यतिप्रसङ्ग इति भावः।

(७५) न दृश्येतेति विनापि क्षत्रियसंबन्धं पञ्चालादिशब्दो जनपदेषु प्रयुज्यते इति सूत्रप्रणयनं निरर्थकमित्यर्थः।

(७६) प्रसङ्गात् प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः प्रकृतिप्रत्ययौ तु प्रत्ययार्थमिति पूर्व्वाचार्य्यपरिभाषितमन्यदपि प्रत्याचष्टे प्रधानेत्यादिना अत्र अशिष्यमित्यनुषज्यते।

दिवसोऽद्यतनः। विशेषणमुपसर्ज्जनमित्यादि पूर्व्वाचार्य्यैः परिभाषितं तत्राप्यशिष्यत्वम् समानं लोकप्रसिद्धेः।

## विशेषणानाञ्चाऽजातेः। १। २। ५२।

लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्ज्जयित्वा। पञ्चालाः रमणीयाः। गोदौ रमणीयौ। अजातेः किम् पञ्चाला जनपदः। गोदौ ग्रामः। हरीतक्यादिषु (७७) व्यक्तिः। हरीतक्याः फलानि हरीतक्यः। खलतिकादिषु वचनम्। खलतिकस्य पर्व्वतस्यादूरभवाणि खलतिकं वनानि। मनुष्य-लुपि प्रतिषेधः *। मनुष्यलक्षणे लुबर्थे विशेषणानाम्न, लुबन्तस्य तु भवतीत्यर्थः। चञ्चा (७८) अभिरूपः।

## वरणादिभ्यश्च (७९)। ४। २। ८२।

अजनपदार्थ आरम्भः। वरणानामदूरभवन्नगरम् वरणाः।

(७७) लुपीति (५४६पृ०)सूत्रस्य विषयविवेकमाह हरीतक्यादीति व्यक्तिर्लिङ्गं प्रकृतिरूपा। हरीतकी कोशातकी नखरजनी शष्कण्डी दाड़ी दोड़ी श्वेतपाकी अर्ज्जुनपाकी द्राक्षा काला ध्वाक्षा शमीका कण्टकारिका पिप्पली चिञ्चा शेफालिका हरीतक्यादिः। ४।३।१६७।सूत्रेऽप्ययमेव।

(७८) चञ्चेति। संज्ञायाञ्चेति (७१२पृ०) कनो लुम् मनुष्ये इति (७१२पृ०) लुप् चञ्चा तृणमयः पुमान्।

(७९) वरणादिभ्यश्चेत्यत्र लुबित्यनुवर्त्तते। वरणा शृङ्गी शाल्मलि शुण्डी शयाण्डी पर्णी ताम्रपर्णी गोद आलिङ्गायन जानपदी जम्बु पुष्कर चम्पा पम्पा वल्गु उज्जयनी गया मथुरा तक्षशिला उरसा गोमती वलभी वरणादिः।

**शर्कराया वा। ४। २। ८३।**

अस्माच्चातुरर्थिकस्य वा लुप् स्यात्।

**ठक्छौ च। ४। २। ८४।**

शर्कराया एतौ स्तः। कुमुदादौ(५४७पृ०) वराहादौ च (५४८पृ०) पाठसामर्थ्यात् पक्षे ठच्ककौ। वाग्रहणसामर्थ्यात् पक्षे औत्सर्गिकोऽण् तस्य लुब्विकल्पः। षट् रूपाणि। शर्करा—शार्करम्—शार्करिकम्—शर्करीयम्—शर्करिकम्—शार्करकम्।

**नद्यां मतुप् (८०)। ४। २। ८५।**

चातुरर्थिकः। इक्षुमती।

**मध्वादिभ्यश्च (८१) च। ४। २। ८६।**

मतुप् स्याच्चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्।

**कुमुदनड्वेतसेभ्यो ड्मतुप्। ४। २। ८७।**

कुमुद्वान्। नड्वान्। वेतस्वान्(८२)। आद्ययोर्झय(६७६पृ०)इति

(८०) मतुपा सिद्धेऽपि अर्थान्तरबोधार्थं नद्या अपि देशत्वेन तदर्थ्यान्निति प्राप्ताणो बाधार्थञ्चेदम्।

(८१) मधु विस स्थाणु वेणु कर्कन्धु शमी करीर हिम किशरा शर्याण मरुत् वार्दाली शर इष्टका आसुति शक्ति आसन्दी शकल शलाका- आमिषी इक्षु रोमन् रुष्टि रूष्य तक्षशिला खड वट वेट मध्वादिः।

(८२) वेतस्वानिति अल्लोपस्य स्थानिवत्त्वेन रुत्वं न, न पदान्तेति (३५पृ०) निषेधस्तु पदे परतश्चरमावयवे कर्त्तव्ये पदस्याजादेशस्यैवेति तन्निषेधा- प्रवृत्तेः।

अन्त्यमादुपधाया इति(६७८५०)वक्ष्यमाणेन वः। महिषाच्चेति वक्तव्यम्*। महिष्मान्नाम देशः।

## नडशादाड्ड्वलच्। ४। २। ८८।

नड्वलः। शादो जम्बालघासयोः। शाद्वलः।

## शिखाया वलच्। ४। २। ८९।

शिखावलम्।

## उत्करादिभ्य (८३) श्छः। ४। २। ९०।

उत्करीयः।

## नडादीनां (८४) कुक् च। ४। २। ९१।

नडकीयम्। (कुञ्चा ह्रस्वत्वञ्च ग०)। कुञ्चकीयः। (तक्षन्नलोपश्च ग०)। तक्षकीयः।

## बिल्वकादिभ्यश्छस्य लुक्। ६। ४। १५३।

(८३) उत्कर संफल शफर पिप्पल पिप्पलीमूल अश्मन् सुवर्ण खलाजिन तिक कितव अणक त्रैवण पिचुक अश्वत्थ काश क्षुद्र भस्त्रा शाल जन्या अजिर चर्मन् उत्क्रोश क्षान्त खदिर शूर्पणाय श्यावनाय नैवाकव तृण वृक्ष शाक पलाश विजिगीषा अनेक आतप फल सम्पर अर्क गर्त अग्नि वैराणक इडा अरण्य निशान्त पर्ण नीचायक शङ्कर अवरोहित क्षार विशाल वेत्र अरीहण खण्ड वातागर मन्त्रणार्ह इन्द्रवृक्ष नितान्तवृक्ष आर्द्रवृक्ष उत्करादिः।

(८४) नड प्लक्ष बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण (कुञ्चा-ह्रस्वत्वञ्च) (तक्षन् नलोपश्च)। नडादिः।

नड़ाद्यन्तर्गता बिल्वकादय(८५) स्तेभ्यश्छस्य लुक् तद्धिते परे। बिल्वा यस्यां सन्ति सा बिल्वकीया तस्याम्भवा बैल्वकाः। वेत्रकीया-वैत्रकाः। छस्य किम् छमात्रस्य लुग्यथा स्यात् कुको निवृत्तिर्म्मा भूत्। अन्यथा सन्नियोग (८६) शिष्टाना-मिति कुगपि निवर्त्तेत। ढे लोपोऽ (५०८४०) कद्र्वा इत्यनुवर्त्त-माने लुग्ग्रहणम् सर्व्वलोपार्थम् लोपोऽपि (८७) यमात्रस्य स्यात्।

इति चातुरर्थिकाः।

(८५) नड़ादीनां कुक् चेति (५५३४०) सूत्रीयनड़ाद्यन्तर्गणतासूचनाय कुक्सहितबिल्वशब्दस्य प्रयोगस्तेन तदन्तर्गतबिल्वादिषु सककारपाठा-भावेऽपि न क्षतिरिति बोध्यम्।

(८६) सन्नियोगे इति सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्ति-रिति न्यायेन अन्यतरापाये उभयोरप्यपायः स्यादिति भावः।

(८७) लोपस्यादेशतयाऽलोऽन्त्यस्येति (२६४०) आदेशस्य ईयोऽन्त्यस्य यमात्रस्य लोपः स्यादिति लुग्ग्रहणमित्यपि बोध्यम्।

शेषे।४।२।९२।

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः(१) शेषस्तत्राऽणादयः स्युः। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदि पिष्टा दार्षदाः सक्तवः। उलूखले क्षुण्ण औलूखलो यावकः। अश्वैरुह्यते आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः। शेष इति लक्षणञ्चाधिकारश्च (२)। तस्य विकार(१५७०) इत्यतः प्राक् शेषाधिकारः।

राष्ट्राऽवारपाराद्घखौ।४।२।९३।

आभ्यां क्रमाद्घखौ स्तः शेषे। राष्ट्रियः। अवारपारीणः। अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् *। अवारीणः। पारीणः। पारावारीणः। इह प्रकृतिविशेषाद्घाद-यः ट्युट्युलन्ताः प्रत्यया उच्यन्ते। तेषाञ्जातादयोऽर्थविशेषाः समर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते।

ग्रामाद्यखञौ।४।२।९४।

ग्राम्यः। ग्रामीणः।

(१) अन्योऽर्थ इति विशेष्यतया भासमान इत्यर्थः एवञ्चेदन्तया भासमानमपि अपत्यादि न शेष इति ध्येयम्।

(२) 'शैषिकान्मतुबर्थीयात् शैषिको मतुबर्थिकः। सरूपः प्रत्ययो नेष्टो न सनन्तात् सनिष्यते, इत्यस्य विषयलाभार्थमिदं लक्षणपरम्, तस्येद (१५३४०) मित्यादावपत्याद्यर्थस्याग्रहणार्थोऽधिकारोऽप्यावश्यक इति भावः।

**कत्र्यादिभ्यो (३) ढकञ्। ४। २। ९५।**

कुत्सितास्त्रयः कत्त्रयः। तत्र जातादिः कात्त्रेयकः। नागरेयकः। ग्रामादित्यनुवृत्तेः ग्रामेयकः।

**कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलङ्कारेषु। ४। २। ९६।**

कौलेयकः श्वा। कौलोऽन्यः। कौक्षेयकोऽसिः। कौक्षोऽन्यः। ग्रैवेयकोऽलङ्कारः। ग्रैवोऽन्यः।

**नद्यादिभ्यो (४) ढक्। ४। २। ९७।**

नादेयम्। माहेयम्। वाराणसेयम्।

**दक्षिणापश्चात्पुरसस्त्यक्। ४। २। ९८।**

दक्षिणेत्याजन्त (५) मव्ययम्। दाक्षिणात्यः पाश्चात्त्यः। पौरस्त्यः।

**कापिश्याः ष्फक्। ४। २। ९९।**

(३) कत्त्रि इत्येवमादिभ्यो ढकञ् स्यात्। कत्त्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी कुण्डिन नगरी माहिष्मती वर्म्मती उख्या ग्राम (कुद्याया यलोपश्च)। कत्त्र्यादिः।

(४) नदी मही वराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्व्वनगरी पाठा माया शाल्वा दार्वा सेतकी (वड़वाया वृषे) नद्यादिः।

(५) आजन्तमित्यादि अव्ययसाहचर्य्यादितिशेषः न तु टाबन्तोदक्षिणाशब्दः तथात्वे सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भावापत्तेर्ह्रस्वः स्यात्।

कापिश्याञ्जातादि कापिशायनं मधु कापिशायनी द्राक्षा।

रङ्कोः (६) रमनुष्येऽण् च। ४। २। १००।

चात् ष्फक्। राङ्कवो गौः राङ्कवायणः। अमनुष्ये इति किम् राङ्कवको * मनुष्यः।

द्युप्रागपागुदक्प्रतीचो यत्। ४। २। १०१।

दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्।

कन्थायाष्ठक्। ४। २। १०२।

कान्थिकः।

वर्णौ वुक्। ४। २। १०३।

वर्णुर्नदस्तस्य समीपदेशो वर्णुः तद्विषयार्थवाचिकन्थाशब्दाद्वुक् स्यात्। यथाहि जातं हिमवत्सु कान्थकम्।

अव्ययात्त्यप्। ४। २। १०४।

अमेहक्वतसित्रेभ्य एव (७)। अमान्तिकसहायार्थयोः। अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। परिगणनं किम्। उपरिष्टाद्भव औपरिष्टः। अव्ययानाम्भमात्रे टिलोपः।

(६) रङ्कोरमनुष्यग्रहणानर्थक्यं (मनुष्य तत्स्थयोर्वुञिति (५६५पृ०) परेणास्य बाधात्,।

* मनुष्यतत्स्थयोरिति (५६५पृ०) वुञ्।

(७) "अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः। निनिर्भ्यां ध्रुवगत्योश्च प्राविशो निगमे तथे,त्युक्तेराह अमेहेति।

अनित्योऽयम् बहिर्षष्टिलोपविधानात् तेनेह न। आरातीयः। शाश्वतीयः। त्यब्नेर्ध्रुव इति वक्तव्यम् ॰। नित्यः। निसोगते ।

## ह्रस्वात्तादौ तद्धिते। ८।३।१०१।

ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते। निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः। अरण्याषः। आरण्याः सुमनसः। दूरादेत्यः। दूरेत्यः। उत्तरादाहञ् ॰। औत्तराहः।

## ऐषमोह्यःश्वसोऽन्यतरस्याम्। ४।२।१०५।

एभ्यस्त्यप्। पक्षे वक्ष्यमाणौ (५७१पृ०) ट्युट्युलौ। ऐषमस्त्यम् ऐषमस्तनम्। ह्यस्त्यम्-ह्यस्तनम्। श्वस्त्यम्-श्वस्तनम्। पक्षे शौवस्तिकं (५७०पृ०) वक्ष्यते।

## तीररूप्योत्तरपदादञ्ञौ। ४।२।१०६।

यथासंख्येन। काकतीरम्। पाल्वलतीरम्। शैवरूप्यम्। तीररूप्यान्तादिति नोक्तम् वहुच्पूर्व्वात् मा भूत्। वाहुरूप्यम्।

## दिक्पूर्व्वपदादसंज्ञायां ञः। ४।२।।१०७।

अणोऽपवादः। पौर्व्वशालः। असंज्ञायां किम् संज्ञाभू (८)

(८) दिक्पूर्व्वेति सूत्रे असंज्ञायामिति सौनत्वात् पञ्चम्यर्थे षष्ठीत्याश्रयेन व्याचष्टे संज्ञाभूताया इति।

तायाः प्रकृतेर्म्मा भूत्। पूर्व्वेषुकामशम्याम्भवः पूर्व्वेषुकामशमः। प्राचां ग्रामनगराणामिति (५७४सू०) उत्तरपदवृद्धिः।

मद्रेभ्योऽञ्। ४। २। १०८।

दिक्पूर्व्वपदादित्येव। दिशोऽमद्राणामिति(५७१सू०)(९)मद्रपर्य्युदासादादिवृद्धिः। पौर्व्वमद्रः (१०)। आपरमद्रः।

उदीच्य(११) ग्रामाच्च बह्वचोऽन्तोदात्तात्। ४। २। १०९।

अञ् स्यात्। शैवपुरम्।

प्रस्थोत्तरपदपलद्यादि (१२) कोपधादण्। ४। २। ११०।

(९) दिशोऽमद्राणामिति दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याचामादेर्वृद्धिरिति तत् सूत्रार्थः।

(१०) पौर्व्वेति मद्रैकदेशे मद्रशब्दस्य वृत्त्या दिक्शब्देन सामानाधिकरण्यात्तद्धितार्थोत्तरेत्यादिना (३५५सू०) समासः।

(११) उदीच्येति दिग्ग्रहणं निवृत्तम्। उदीच्यग्रामात् किं माथुरः। बह्वचः किं घ्राजः गौरादेः(२२७सू०)आकृतिगणत्वात् ङीषन्तः घ्राजीशब्दः। अन्तोदात्तात् किं शर्कराधानम् शर्कराधानशब्दे धाशब्दाकार उदात्तः कदुत्तरप्रकृतिस्वरेण-कित्स्वरस्यावस्थानात्। तत्त्व०

(१२) पलदी परिषद् रोमक वाह्लीक कलकीट बहुकीट जालकीट कमलकीट कमलकीकर कमलभिदा गौष्ठी नैकती परिखा शूरसेन गोमती पटच्चर उदपान यकृल्लोम पलद्यादिः।

माहकिप्रस्थः । पालदः । नैलीनकः ।

कण्वादिभ्यो गोत्रे । ४ । २ । १११ ।

एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्यात् । कण्वो गर्गादिः(५०१पृ०) । काण्वस्य छात्राः काण्वाः ।

इञश्च । ४ । २ । ११२ ।

गोत्रे य इञ् तदन्तादण् स्यात् । दाक्षाः । गोत्रे किम् सौतङ्गमेरिदं सौतङ्गमीयम् । गोत्रमिह शास्त्रीयन्नतु लौकिकं तेनेह न । पाणिनीयम् ।

न द्व्यचः प्राच्यभरतेषु । ४ । २ । ११३ ।

इञश्चेत्यणोऽपवादः । प्राच्ये काशीयाः भरतानां प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य (१२) लिङ्गम् ।

वृद्धिर्य्यस्याचामादिस्तद्वृद्धम् । १ । १ । ७३ ।

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ।

त्यदादीनि च । १ । १ । ७४ ।

वृद्धसंज्ञानि स्युः ।

ः । ४ । २ । ११४ ।

(१२) अग्रहणस्येति तेन इञः प्राचामिति (४८२पृ०) भरतेभ्यो युवप्रत्ययस्य लुक् न भवति । उद्दालकिः पिता उद्दालकायनः पुत्रः ।

शालीयः। मालीयः। तदीयः।

## एङ् प्राचान्देशे। १। १। ७५।

एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने। एणीपचनीयः। गोनर्दीयः। भोजकटीयः। पक्षे अणि। ऐणीपचनः। गौनर्दः। भौजकटः। एङि किम् आहिच्छत्रः। कान्यकुब्जः। वा नामधेयस्य वृद्धसंज्ञा वक्तव्या*। देवदत्तीयः (१४)। दैवदत्तः।

## भवतष्ठक्छसौ। ४। २। ११५।

वृद्धाद्भवत एतौ स्तः। भावत्कः। जश्त्वम्(१५)। भवदीयः। वृद्धादित्यनुवृत्तेः शतन्तादणेव। भावतः।

## काश्यादिभ्यः(१६)ठञ्ञिठौ। ४। २। ११६।

इकार उच्चारणार्थः। काशिकी-काशिका। वैदिकी-वैदिका।

(१४) अत्र देवदत्त इति मनुष्यनाम काश्यादिगणे तु प्राग्देशवाचिदेवदत्तस्यैव ग्रहणमत्र नामशब्देनाधुनिकसङ्केतितमेव ग्राह्यम्।

(१५) छादिरयं प्रत्ययो न तु शादिः। सित्वात् सिति चेति (५३५ पृ०) पदसंज्ञासिद्धिरित्याशयेनाह जश्त्वमिति।

(१६) काशि वेदि (चेदि पाठान्तरम्) सांयाति संवाह अच्युत मोदमान शकुलाद हस्तिकर्षू कुनामन् हिरण्य करण गोवासन भारङ्गी अरिन्दम अरित्र देवदत्त दशग्राम शौवावतान युवराज उपराज देवराज मोदन सिन्धुमित्र दासमित्र सुधामित्र सोममित्र छागमित्र मधमित्र (आपदादिपूर्व्वपदात्कालान्तात्) आपद् ऊर्द्ध तत् काश्यादिः।

(आपदादिपूर्व्वपदात्कालान्तात्) आपदादिराकृतिगणः। आपत्कालिकी-आपत्कालिका।

वाहीकग्रामेभ्यश्च। ४। २। ११७।

वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः। छस्यापवादः। कास्तीरन्नाम वाहीकग्रामः कास्तीरिकी-कास्तीरिका।

विभाषोशीनरेषु। ४। २। ११८।

एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः। सौद-र्शनिकी-सौदर्शनिका-सौदर्शनीया।

ओर्देशे ठञ्। ४। २। ११९।

उवर्णान्ताद्देशवाचिनष्ठञ्। निषादकर्षू नैषादकर्षुकः (१७)। केऽणइति (७०४७०) ह्रस्वः। देशे किम् पटोश्छात्राः पाटवाः। ञिठं व्यावर्त्तयितुं ठञ्ग्रहणम्। वृद्धाच्छं परत्वादयं बाधते। दाक्षिकर्षुकः।

वृद्धात्प्राचाम्। ४। २। १२०।

प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम्। आढक-जम्बुकः। आकजम्बुकः। नेह मल्लवास्तु-माल्लवास्तवः।

धन्वयोपधाद्वुञ्। ४। २। १२१।

धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ्

---

(१७) इसुसुक्तान्तात्क (५२८४०) इत्यनेनोक्प्रत्याहारपरतया ठस्य कः।

स्यात्। ऐरावतं धन्व (१८) ऐरावतकम्। साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण (४।२।८०) ण्यान्तौ। साङ्काश्यकः। काम्पिल्यकः।

## प्रस्थपुरवहान्ताच्च। ४। २। १२२।

एतदन्ताद्वृद्धाद्देशवाचिनो वुञ् स्यात्। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः। पैलुवहकः। पुरान्तग्रहणम-प्रागर्थं प्राग्देशे तूत्तरेण (१९) सिद्धम्।

## रोपधेतोः प्राचाम्। ४। २। १२३।

रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ् स्यात्। पाटलिपुत्रकः। ऐतः। काकन्दकः।

## जनपदतदवध्योश्च। ४। २।। १२४।

जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद्वुञ् स्यात् आदर्शकः। त्रैगर्त्तकः।

## अवृद्धादपि बहुवचनविषयात्। ४। २। १२५।

अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद्वुञ् स्यात्। अवृद्धादणो वृद्धाच्छस्यापवादः। अवृद्धाज्जनपदात् आङ्गकः। अवृद्धात् जनपदावधेः। आजमीढकः वृद्धाज्जनपदात्। दार्व्वकः। वृद्धाज्जनपदावधेः। कालञ्जरकः

(१८) आटकं नाम धन्वेति भाष्योक्तेः धन्वशब्दस्य क्लीवत्वस्यापीष्टतया धन्वेत्युक्तम्।

(१९) उत्तरेण रोपधेतोरिति सूत्रेण।

विषयग्रहणं किम् एकशेषेण बहुत्वे मा भूत्। वर्त्तनी च वर्त्तनी च वर्त्तनी च वर्त्तन्यस्तासु भवोवार्त्तनः।

## कच्छाग्निवक्त्रवर्त्तोत्तरपदात्। ४।२।१२६।

देशवाचिनो द्वन्द्वादद्वन्द्वाच्च वुञ्। स्यात् दारुकच्छकः। काण्डाग्नकः। सैन्धुवक्त्रकः। बाहुवर्त्तकः।

## धूमादिभ्य (२०) श्च। ४। २। १२७।

देशवाचिभ्यो वुञ्। धौमकः तैर्थकः।

## नगरात्कुत्सनप्रावीण्ययोः। ४। २। १२८।

नगरशब्दाद्वुञ् स्यात्कुत्सने प्रावीण्ये च गम्ये। नागरकः चौरः शिल्पी वा। कुत्सनेति किम् नागरा ब्राह्मणाः।

## अरण्यान्मनुष्ये। ४। २। १२९।

वुञ्। अरण्याण्ण (५५८४०) इत्यस्यापवादः। पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्*। आरण्यकः पन्थाः अध्यायोन्यायो विहारो मनुष्यो हस्ती वा। वा गोमयेषु*। आरण्यकाः-आरण्याः गोमयाः।

(२०) धूम षड़ण्ड शशादन अर्ज्जुनाव माहकस्थली आनकस्थली माहिषस्थली मानस्थली अट्टस्थली मद्रकस्थली समुद्रस्थली दाण्डायनस्थली राजस्थली विदेह राजगृह सात्रासाह शष्प मित्रवर्द्ध भक्षाली मद्रकूल आजीकूल द्व्याहाव त्र्याहाव संस्फीय वर्व्वर वर्ज्य गर्त्त आनर्त्त माठर पाथेय घोषमित्र आराज्ञी धार्त्तराज्ञी आवय तीर्थ

**विभाषा कुरुयुगन्धराभ्यां वुञ्। ४। २। १३०।**

कौरवकः- कौरवः। यौगन्धरकः-यौगन्धरः।

**मद्रवृज्योः कन्। ४। २। १३१।**

जनपदवुञोऽपवादः। मद्रेषु जातो मद्रकः वृजिकः।

**कोपधादण्। ४। २। १३२।**

माहिषिकः।

**कच्छादिभ्य (२१) श्च। ४। २। १३३।**

देशवाचिभ्योऽण् वुञादेरपवादः। काच्छः। सैन्धवः।

**मनुष्यतत्स्थयोर्वुञ्। ४। २। १३४।**

कच्छादिभ्योऽणोऽपवादः। कच्छे जातादिः काच्छको मनुष्यः। काच्छकं हसितम्। मनुष्येति किम् काच्छो गौः।

**अपदातौ साल्वात्। ४। २। १३५।**

साल्वशब्दस्य कच्छादित्वाद्वुञि सिद्धौ नियमार्थमिदम् अपदातावेवेति। साल्वको ब्राह्मणः। अपदातौ किम् साल्वः पदातिर्व्रजति।

(कूलात्सौवीरेषु) (समुद्रान्नावि मनुष्ये च) कुक्षि अन्तरी द्वीप अरण्य उज्जयनी पट्टार दक्षिणापथ साकेत। धूमादिः।

(२१) कच्छ सिन्धु वर्णु गन्धार मधुमत् कम्बोज कश्मीर साल्व कुरु अनुषण्ड द्वीप अनूप अजवाह विजापक कलूतर रङ्कु कच्छादिः।

गोयवाग्वोश्च। ४। २। १३६।

साल्वाद्वुञ्। कच्छाद्यणोऽपवादः। साल्वको गौः। साल्विका यवागूः। साल्वमन्यत्।

गर्त्तोत्तरपदाच्छः। ४। २। १३७।

देशे। अणोऽपवादः। वृकगर्त्तीयम्। उत्तरपदग्रहणं वञ्च्पूर्व्वनिरासार्थम्।

गहादिभ्य (२२) श्च। ४। २। १३८।

छः स्यात्। गहीयः। (मुखपार्श्वतसोर्लोपश्च ग॰)। मुखतीयम्। पार्श्वतीयम्। अव्ययानाम्भमात्रे टिलोपस्यानित्यतां ज्ञापयितुमिदम्। (कुक् जनस्य परस्य च ग॰) जनकीयम्। परकीयम्। (देवस्य च ग॰) देवकीयम्। (स्वस्य च ग॰)। स्वकीयम्। (वेणुकादिभ्यः छण् वाच्यः ग॰) वैणुकीयम्। औत्तरपदकीयम्।

---

(२२) गह अन्तस्थ सम विषम (मध्य मध्यं दिनं चरणे) उत्तम अङ्ग वङ्ग मगध पूर्व्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ खाड़ायन काठेरणि लावेरणि सौमित्रि शैशिरि आसुत् देवशर्म्मि श्रौति आहिंसि आमित्रि व्याड़ि वैजि आध्यश्वि आन्टशंसि शौङ्गि आग्निशर्म्मि भौजि वाराटकि वाल्मीकि क्षेमवृद्धि आश्वत्थि औद्गाहमानि ऐक बिन्दवि दन्ताग्र हंस तन्वग्र उत्तर अनन्तर (मुखपार्श्वतसोर्लोपश्च) (जनपरयोः कुक्च) (स्वस्य च) देवस्य च) (वेणुकादिभ्यश्छण्)। गहादिराकृतिगणः।

प्राचां कटादेः। ४। २। १३९।

प्राग्देशवाचिनः कटादेः छः स्यात्। अणोऽपवादः। कटनगरीयम्। कटघोषीयम्। कटपल्वीयम्।

राज्ञः क च। ४। २। १४०।

वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्रं विधीयते। राजकीयम्।

वृद्धादकेकान्तखोपधात्। ४। ३। १४१।

अक इक एतदन्तात् खोपधाच्च वृद्धाद्देशवाचिनः छः स्यात्। ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनस्तत्र जातो ब्राह्मणकीयः। शाल्मलिकीयः। अयोमुखीयः।

कन्थापलदनगरग्रामह्रदोत्तरपदात्। ४। २। १४२।

कन्थादिपञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्याद्। ठञ्ञिठादेरपवादः। दाक्षिकन्थीयम्। दाक्षिपलदीयम्। दाक्षिनगरीयम्। दाक्षिग्रामीयम्। दाक्षिह्रदीयम्।

पर्व्वताच्च। ४। २। १४३।

पर्व्वतीयः।

विभाषाऽमनुष्ये। ४। २। १४४।

मनुष्यभिन्नेऽर्थे पर्व्वताच्छो वा स्यात्। पक्षेऽण्। पर्व्वतीयानि पार्व्वतानि वा फलानि। अमनुष्ये किम् पर्व्वतीयो मनुष्यः।

छकणपर्णाद्भरद्वाजे। ४। २। १४५।

भारद्वाजदेशवाचिभ्यामाभ्यां छः। छकणीयम्। पर्णीयम्। भरद्वाजे किम् काकर्णम्। पार्णम्।

युष्मदस्मदोरन्यतरस्यां खञ्च। ४। ३। १।

चाच्छः। पक्षेऽण्। युवयोर्युष्माकं वा अयं युष्मदीयः अस्मदीयः।

तस्मिन्नणि च युष्माकास्माकौ। ४। ३। २।

युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः।

तवकममकावेकवचने। ४। ३। ३।

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञ्यणि च। तावकीनः-तावकः। मामकीनः-मामकः। छे तु।

प्रत्ययोत्तरपदयोश्च। ७। २। ९८।

मपर्य्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च। त्वदीयः। मदीयः। उत्तरपदे तु। त्वत्पुत्रः। मत्पुत्रः।

अर्द्धाद्यत्। ४। ३। ४।

अर्द्ध्यः।

परावराधमोत्तमपूर्व्वाच्च। ४। ३। ५।

परार्द्ध्यम्। अवरार्द्ध्यम्। अधमार्द्ध्यम्। उत्तमार्द्ध्यम्।

दिक्पूर्वपदाट्ठञ्च। ४। ३। ६।

चाद्यत्। पौर्व्वाह्णिकम्-पूर्व्वाह्णम्।

ग्रामजनपदैकदेशादञ्ठञौ। ४। ३। ७।

ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्व्वपदाद्ह्ना-न्तादञ्ठञौ स्तः। इमेऽस्माकं ग्रामस्य जनपदस्य वा पौर्वा-ह्णाः पौर्वाह्णिकाः। ग्रामस्य पूर्व्वस्मिन्नह्नि भवा इति तद्धितार्थे (२५५४०) समासः। ठञ्ग्रहणं स्पष्टार्थम्। अञ्चेत्युक्तेर्व्य-तोऽप्यनकर्षः सम्भाव्येत।

मध्यान्मः। ४। ३। ८।

मध्यमः।

अ साम्प्रतिके। ४। ३। ९।

मध्यशब्दादकारप्रत्ययः स्यात्सांप्रतिकेऽर्थे। उत्कर्षापकर्ष-हीनो मध्यो वैयाकरणः। मध्यन्दारु नातिह्रस्वम्नाति-दीर्घमित्यर्थः।

द्वीपादनुसमुद्रं यञ्। ४। ३। १०।

समुद्रस्य समीपे यो द्वीपस्तद्विषयाद्द्वीपशब्दाद्यञ् स्यात् द्वैप्यम् द्वैप्या।

कालाट्ठञ्(२२)। ४। ३। ११।

---

(२२) कालाट्ठञिति कालग्रहणे कर्त्तव्ये यथाकथञ्चित्कालबोधकानां ग्रहणं

कालवाचिभ्यष्ठञ् स्यात्। मासिकम्। सांवत्सरिकम्। सायंप्रातिकः। पौनःपुनिकः। कथन्तर्हि "शार्व्वरस्य तमसो निषिद्धये" इति कालिदासः। "अनुदितौषसरागेति" भारविः। समानकालीनम्। प्राक्कालीनमित्यादि च। अप-भ्रंशा एवैते इति प्रामाणिकाः। तत्र जात (५७२५०) इति यावत् कालाधिकारः।

श्राद्धे शरदः। ४। ३। १२।

ठञ् स्यात्। (५७१४०) ऋत्वणोऽपवादः। शारदिकं श्राद्धम्।

विभाषा रोगातपयोः। ४। ३। १३।

शारदिकः-शारदो वा रोगः आतपो वा। एतयोः किम् शारदन्दधि।

निशाप्रदोषाभ्याञ्च। ४। ३। १४।

वा ठञ् स्यात्। नैशिकं नैशम्। प्रादोषिकम्-प्रादोषम्।

श्वसस्तुट् च। ४। ३। १५।

श्वस्शब्दाद्वा ठञ् स्यात्तस्य तुडागमश्च।

द्वारादीनाञ्च। ७। ३। ४।

द्वार स्वर स्वाध्याय व्यल्कश स्वस्ति स्वर् स्फ्यकृत स्वादुमृदु श्वस् श्वन् स्व एषां न वृद्धिरैजागमश्च। शौवस्तिकम्।

---

न तु कालस्वरूपपरत्वं यो यः काले वर्त्तते स स काल इति भाष्योक्ते-रित्याशयेनोदाहरति मासिकमित्यादि।

**सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्। ४। ३। १६।**

सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात्। सन्धिवेलायाम्भवं सान्धिवेलम्। ग्रैष्मम्। तैषम्। सन्धिवेला सन्ध्या अमावस्या त्रयोदशी चतुर्द्दशी पञ्चदशी पौर्णमासी प्रतिपत्। (सम्वत्सरात् फलपर्व्वणोः ग॰)। साम्वत्सरं फलम् पर्व वा। साम्वत्सरिकमन्यत्।

**प्रावृष एण्यः। ४। ३। १७।**

प्रावृषेण्यः।

**वर्षाभ्यष्ठक्। ४। ३। १८।**

वर्षासु साधु वार्षिकं वासः। कालात्साधुपुष्प्यत्पच्यमानेष्विति (५७७पृ॰) साध्वर्थे।

**सर्वत्राण् च तलोपश्च। ४। ३। २२।**

हेमन्तादण् स्यात्तलोपश्च (२४) वेदलोकयोः। चकारात्पक्षे ऋत्वण्। हैमनं हैमन्तम्।

**सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च। ४। ३। २३।**

(२४) हेमन्ताच्च (७४६७पृ॰) इत्यतो हेमन्तादित्यनुवर्त्तते पूर्व्वं छन्दसःप्रकान्तत्वेनेह सर्व्वत्र ग्रहणमुभयविषयार्थमित्याह लोकवेदयोरिति तलोपश्च अकारसहिततकारलोपस्ततश्च हैमनमित्यत्राकारसहिततकारलोपे सति चाविति (५१२पृ॰) प्रकृतिभावे नस्तद्धित इति (२२४पृ॰) टिलोपो नेति बोध्यम्।

सायमित्यादिभ्यः (२५)चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च। तुटः प्रागनादेशः अनद्यतन (७।२।८०) इत्यादि निर्देशात्। सायन्तनम्। चिरन्तनम्। प्राह्णप्रगयोरेदन्तत्वन्निपात्यते प्राह्णेतनम्। प्रगेतनम्। दोषातनम्। दिवातनम्। चिरपरुत्परारिभ्यस्त्नो वक्तव्यः *। चिरत्नम्। परुत्नम्। परारित्नम्। अग्रादिपश्चाड्डिमच् *। अग्रिमम्। आदिमम्। पश्चिमम्। अन्ताच्च *। अन्तिमम्।

**विभाषा पूर्वाह्णापराह्णाभ्याम्। ४। ३। २४।**

आभ्यां ट्यु ट्युलौ वा स्तस्तयोस्तुट् च। पक्षे ठञ्। पूर्वाह्णेतनम्। अपराह्णेतनम्। घकालतने (६।३।१७) इत्यलुक्। पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनम्। अपराह्णतनम्। पौर्वाह्णिकम्। आपराह्णिकम्।

**तत्र जातः। ४। ३। २५।**

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः। स्रुघ्ने जातः स्रौघ्नः। औत्सः। राष्ट्रियः। अवारपारीणइत्यादि।

**प्रावृषष्ठप्। ४। ३। २६।**

एण्यस्यापवादः। प्रावृषि जातः प्रावृषिकः।

**संज्ञायां शरदो वुञ्। ४। ३। २७।**

---

(२५) अव्ययेभ्यः इत्युक्तावपि सायंचिरंशब्दयोः पृथग्ग्रहणम् अकारान्तानव्ययमायचिरशब्दयोर्मान्तत्वनिपातनं द्योतयति।

ऋत्वणोऽपवादः। शारदकाः दर्भविशेषा मुद्गविशेषाश्च।

**उत्तरपदस्य। ७। ३। १०।**

अधिकारोऽयम्। हनस्त (१८६४०) इत्यस्मात् प्राक्।

**अवयवादृतोः। ७। ३। ११।**

अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे। पूर्व्ववार्षिकः। अपरहैमनः। अवयवात्किम् पूर्वासु वर्षासु भवः पौर्ववर्षिकः। ऋतोर्वृद्धिमद्विधाववयवानामिति(२६) तदन्तविधिः।पूर्वत्र(२७) इह तु न अवयवत्वाभावात्।

**सुसर्व्वार्द्धाज्जनपदस्य। ७। ३। १२।**

उत्तरपदस्य वृद्धिः। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्द्धपाञ्चालकः। जनपदतदवध्योरिति (५६२४०) वुञ्। सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्येति (२८) तदन्तविधिः।

**दिशोऽमद्राणाम्। ७। ३। १३।**

---

(२६) ऋतोर्वृद्धीति ऋतुवाचिनः शब्दात् वृद्धिनिमित्तप्रत्ययविधौ तदन्तविधिर्वाच्यः स चेदृतुवाचिशब्दोऽवयवेभ्यः परोभवतीत्यर्थः।

(२७) पूर्व्वत्र पूर्व्ववार्षिक इत्यादौ तत्र च तद्धितार्थे द्विगुः। पौर्व्ववर्षिक इत्यत्र तु कालाट्ठञिति (५६६४०) सामान्यतः ठञेवेति विवेकः। अवयवत्वाभावादिति अवयवत्वे पूर्व्वासु वर्षास्विति सामानाधिकरण्यं न स्यात्।

(२८) सुसर्व्वार्द्धेति जनपदवाचिनः शब्दस्यानन्तरे प्रत्यये विधीयमाने तदन्तविधिर्यो भवति स सुसर्व्वादिभ्यः पर एव भवतीत्यर्थः।

दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्व्वपाञ्चालकः । दिशः किम् पूर्व्वपञ्चालानामयं पौर्वपञ्चालः । अमद्रस्येति किम् पौर्वमद्रः । योगविभाग उत्तरार्थः ।

**प्राचां (२९) ग्रामनगराणाम् । ७ । ३ । १४ ।**

दिशः परेषां ग्रामवाचिनान्नगरवाचिनाञ्चाङ्गानामवयवस्य वृद्धिः । पूर्व्वेषुकामशम्यामभवः पूर्व्वेषुकामशमः । नगरे पूर्व्वपाटलिपुत्रकः ।

**पूर्व्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् । ४ । ३ । २८ ।**

पूर्व्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ।

**पथः पन्थ च । ४ । ३ । २९ ।**

पथि जातः पन्थकः ।

**अमावास्याया वा । ४ । ३ । ३० ।**

अमावास्यकः-आमावास्यः ।

**अ च । ४ । ३ । ३१ ।**

अमावास्यः ।

---

(२९) प्राचामिति देशनिर्द्देशः नगरस्य ग्रामत्वेऽपि नगराणामित्युत्तरपदविशेषणम् ग्रामाणामित्यङ्गविशेषणमिति द्योतनायोभय ग्रहणम् ।

सिन्ध्वपकराभ्यां कन्। ४। ३। ३२।

सिन्धुकः। कच्छाद्यणि (५६५पृ०) मनुष्यवुञि (५६५पृ०) च प्राप्ते। अपकरकः। औत्सर्गिकेऽणि प्राप्ते।

अणञौ च। ४। ३। ३३।

क्रमात् स्तः। सैन्धवः। आपकरः।

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्। ४। ३। ३४।

एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात्।

लुक् तद्धितलुकि। १। २। ४९।

तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात् श्रविष्ठासु जातः श्रविष्ठः। फल्गुन इत्यादि। चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्*। चित्रायाञ्जाता चित्रा। रेवती। रोहिणी। आभ्यां लुक् तद्धितलुकि कृते पिप्पलादे(२२८पृ०)(३०)राकृतिगणत्वात्पुनर्ङीष्। फल्गुन्याषाढाभ्याण्टानौ वक्तव्यौ*। स्त्रियामित्येव। फल्गुनी। आषाढा। श्रविष्ठाषाढाभ्याञ्छण् वक्तव्यः*। अस्त्रियामपि। श्राविष्ठीयः। आषाढीयः।

जे प्रोष्ठपदानाम्। ७। ३। १८।

प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः स्याज्जातार्थे ञिति णिति किति च। प्रोष्ठपदासु जातः प्रोष्ठपादो माण-

(३०) पिप्पल्यादेरिति "अन्यथा गौरादिषु रेवती रोहिणी नक्षत्र इति

वकः। जे इति किम् प्रोष्ठपदासु भवः प्रौष्ठपदः। बहुवचन-निर्देशात्पर्य्यायोऽपि गृह्यते। भद्रपादः।

स्थानान्तगोशालखरशालाच्च। ४। ३। । ३५।

एभ्यो जातार्थप्रत्ययस्य लुक् स्यात्। गोस्थाने जातः गोस्थानः। गोशालः। खरशालः। विभाषा (२१) सेनेति (१८८४०) नपुंसकत्वे ह्रस्वत्वम्।

वत्सशालाभिजिदश्वयुक्शतभिषजो वा। ४। ३। ३६।

एभ्यो जातार्थस्य लुग्वा स्यात्। वत्सशाले जातः वत्सशालः वात्सशाल इत्यादि। जातार्थे प्रतिप्रसूतोऽण् वा डिद्वक्तव्यः*। शातभिषः-शातभिषजः-शतभिषक्।

नक्षत्रेभ्यो बहुलम्। ४। ३। ३७।

जातार्थप्रत्ययस्य बहुलं लुक् स्यात्। रोहिणः रौहिणः।

कृतलब्धक्रीतकुशलाः। ४। ३। ३८।

तत्रेत्येव। स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः।

प्रायभवः।। ४। ३। ३९।

तत्रेत्येव।। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः।

---

नक्षत्रवाचिनोरेव पाठादनयोश्च नक्षत्रवाचित्वाभावेन ङीषन्तता न स्यादिति भावः।

(२१) स्थले गोशालखरशालेति सूत्रपाठसमर्थनायाह विभाषेति।

उपजानूपकर्णोपनीवेष्ठक्।४।३।४०।

औपजानुकः। औपकर्णिकः। औपनीविकः।

सम्भूते।४।३।४१।

स्रुघ्ने सम्भवति स्रौघ्नः।

कोशाड्ढञ्।४।३।४२।

कौशेयं वस्त्रम्।

कालात्साधुपुष्प्यत्पच्यमानेषु।४।३।४३।

हेमन्ते साधुः हैमन्तः प्राकारः। वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। शरदि पच्यन्ते शारदाः शालयः।

उप्ते च।४।३।४४।

हेमन्ते उप्यन्ते हैमन्ताः यवाः।

आश्वयुज्या वुञ्।४।३।४५।

ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः ‡।

ग्रीष्मवसन्तादन्यतरस्याम्।४।३।४६।

पक्षे ऋतवण्। ग्रैष्मकं-ग्रैष्मम्। वासन्तकं-वासन्तम्।

देयमृणे।४।३।४७।

कालादित्येव मासे देयमृणं मासिकम्।

कलाप्यश्वत्थयवबुसाद्वुन्।४।३।४८।

---

‡ कालाट्ठञिति (५६८५०) सामान्यतः प्राप्तस्य ठञोऽपवादः।

यस्मिन् (३२) काले मयूराः कलापिनो भवन्ति स उपचारात्कलापी तत्र देयमृणं कलापकम् । अश्वत्थस्य फलमश्वत्थस्तद्युक्तः कालोऽप्यश्वत्थः । यस्मिन् कालेऽश्वत्थाः फलन्ति तत्र देयमृणमश्वत्थकम् । यस्मिन् यवबुसमुत्पद्यते तत्र देयमृणं यवबुसकम् ।

**ग्रीष्मावरसमाद्वुञ् । ४ । ३ । ४९ ।**

ग्रीष्मे देयमृणं ग्रैष्मकम् । आवरसमकम् (३३) ।

**संवत्सराग्रहायणीभ्यां ठञ्च । ४ । ३ । ५० ।**

चाद्वुञ् । सांवत्सरिकम्-सांवत्सरकम् । आग्रहायणिकम्-आग्रहायणकम् ।

**व्याहरति मृगः । ४ । ३ । ५१ ।**

कालवाचिनः सप्तम्यन्ताच्छब्दायतइत्यर्थे अणादयः स्युः यो व्याहरति स मृगश्चेत् । निशायां व्याहरति नैशो मृगः । नैशिकः ‡ ।

**तदस्य सोढम् (३४) । ४ । ३ । ५२ ।**

---

(३२) अत्र सूत्रे देयमृणमित्यर्थोन्वयाय कालादित्यनुवृत्तस्य संबन्धाय च कलाप्यादिशब्दास्तत्काले लाक्षणिका इत्याह यस्मिन्नित्यादि ।

(३३) आवरसमकमिति आगामिवर्षे देयमित्यर्थः अवरशब्दस्य समाशब्देन समासान्तधार्यत्वम् ।

‡ निशाप्रदोषाभ्यां चेति (५७०पृ०) पक्षे ठञ् ।

(३४) प्रथमान्तात् सोढोपाधिकात् षष्ठ्यर्थेऽणादयः स्युरित्यर्थः । क्रियाकारकसम्बन्धस्यैव विवक्षणादस्येति कर्तुः शेषत्वविवक्षया षष्ठी कालस्य

कालादित्येव । निशासहचरितमध्ययनन्निशा तत्सोढमस्य नैशः । नैशिकः ।

तत्र भवः । ४ । ३ । ५३ ।

स्रुघ्ने भवः स्रौघ्नः । राष्ट्रियः ।

दिगादिभ्यो (२५) यत् । ४ । ३ । ५४ ।

दिश्यम् । वर्ग्यम् ।

शरीरावयवाच्च । ४ । ३ । ५५ ।

दन्त्यम् । कर्ण्यम् ।

प्राचान्नगरान्ते । ७ । ३ । २४ ।

प्राचान्देशे नगरान्ते पूर्व्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिः ञिति णिति किति च । सुह्मनगरे भवः सौह्मनागरः । पौर्व्वनागरः । प्राचाङ्किम् मद्रनगरमुदक्षु तत्र भवः माद्रनगरः ।

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् (२६) । ७ । ३ । २५ ।

---

स्वरूपेण सहनक्रियाऽयोगात् सहनयोग्यक्रियासहचरितक्रियायां लक्षणया तयेति सूचयति निशासहचरितमिति ।

(२५) दिक् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जघन मेघ यूथ (उदकात्संज्ञायाम्) न्याय वंश वेश काल आकाश दिगादिः ।

(२६) उत्तरमुत्तरपदं विभाषितं विभाषितवृद्धिकमित्यर्थः ।

जङ्गलाद्यन्तस्याङ्गस्य पूर्व्वपदस्याचामादेरचो वृद्धिरुत्तरपदस्य वा ञिति णिति किति च। कुरुजङ्गले भवं कौरुजङ्गलम्-कौरुजाङ्गलम्। वैश्वधेनवम्-वैश्वधैनवम्-सौवर्णवलजम्-सौवर्णवालजम्।

**दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्। ४।३।५६।**

दार्त्तेयम्। कौक्षेयम् कलशिर्घटः तत्र भवं कालशेयम्।

**ग्रीवाभ्योऽण् च। ४। ३। ५७।**

चात् ढञ्। ग्रैवेयम्-ग्रैवम्।

**गम्भीराञ्ञ्यः। ४। ३। ५८।**

गम्भीरे भवं गाम्भीर्य्यम्। पञ्चजनादुपसंख्यानम् *। पाञ्चजन्यः।

**अव्ययीभावाच्च। ४। ३। ५९।**

परिमुखम्भवं पारिमुख्यम्। परिमुखादिभ्य (२७) एवेष्यते नेह। औपकूलः।

**अन्तःपूर्व्वपदाट्ठञ्। ४। ३। ६०।**

अव्ययीभावादित्येव। वेश्मनीति अन्तर्व्वेश्मम् तत्र भवम्

(२७) परिमुख परिहनु पर्य्योष्ठ पर्य्युलूखल परिसीर उपसीर उपस्थूण उपकलाप अनुपथ अनुपद अनुगङ्ग अनुतिल अनुशीत अनुसाय अनुसीर अनुमाष अनुयव अनुयूप अनुवंश प्रतिशाख परिमुखादिः।

आन्तर्वेश्मिकम्। आन्तर्गणिकम्। अध्यात्मादेष्ठञिष्यते॰।
आध्यात्मं भवमाध्यात्मिकम्।

## अनुशतिकादीनाञ्च(३८)। ७। ३। २०।

एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च। आधिदैविकम्। आधिभौतिकम् ऐहलौकिकम्। पारलौकिकम्। अध्यात्मादिराकृतिगणः (३९)।

## देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्। ७।३।१।

एषां पञ्चानां वृद्धिप्राप्तावादेरच आत् ञिति णिति किति च। दाविकम्। देविकाकूले भवा दाविकाकूलाः शालयः। शिंशपाया विकारः शांशपश्चमसः पलाशादिभ्यो (५९८४०) वेत्यञ्। दित्यौहइदं दात्यौहम्। दीर्घसत्रे भवं दार्घसत्रम्। श्रेयसि भवं श्रायसम्।

## ग्रामात्पर्य्यनुपूर्वात्। ४। ३। ६१।

---

(३८) अनुशतिक अनुहोड़ अनुसंवरण अनुसंवत्सर अङ्गारवेणु असिहत्य अस्यहत्य अस्यहेति वध्योग पुष्करसद् अनुहरत् कुरुकत कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्व्वलोक सर्व्वपुरुष सर्व्वभूमि प्रयोग परस्त्री (राजपुरुषात्ष्यञि) सूत्रनड़ आकृतिगणोयम्। तेनाभिगम अधिभूत अधिदेव चतुर्विद्या इत्यादयोऽन्येऽपि ज्ञेयाः।

(३९) समानाच्च तदादेश्च अध्यात्मादेष्ठञिष्यते।
ऊर्द्धं दमाच्च देहाच्च लोकोत्तरपदात्तथा।

ठञ् स्यात्। अव्ययीभावादित्येव। पारिग्रामिकः। आनु-ग्रामिकः।

**जिह्वामूलाङ्गुलेश्छः। ४। ३। ६२।**

जिह्वामूलीयम्। अङ्गुलीयम्।

**वर्गान्ताच्च। ४। ३। ६३।**

कवर्गीयम्।

**अशब्दे यत्खावन्यतरस्याम्। ४। ३। ६४।**

पक्षे पूर्व्वेण छः। भद्वर्ग्यः-भद्वर्गीणः-भद्वर्गीयः। अशब्दे किम् कवर्गीयो वर्णः।

**कर्णललाटात्कनलङ्कारे। ४। ३। ६५।**

कर्णिका। ललाटिका।

**तस्य व्याख्यानइति च (४०) व्याख्यातव्यनाम्नः। ४। ३। ६६।**

सुपां व्याख्यानः सौपो ग्रन्थः। तैङः। कार्त्तः। सुप्सु भवं सौपम्।

**बह्वचोऽन्तोदात्ताट्ठञ्। ४। ३। ६७।**

(४०) षष्ठ्यन्तात् व्याख्यानकरणार्थे सप्तम्यन्तात्तु भवार्थे व्याख्यातव्यग्रन्थवाचिनः शब्दात् प्रत्ययाः स्युरित्यर्थः। व्याख्यायतेऽनेनेति व्याख्यानोग्रन्थः।

षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वम् तस्य व्याख्यानस्तत्र भवो वा षात्वणात्विकः।

## क्रतुयज्ञेभ्यश्च। ४। ३। ६८।

सोमसाध्येषु यागेष्वेतौ प्रसिद्धौ तत्रान्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते। अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः। वाजपेयिकः। पाकयज्ञिकः (४१)। नावयज्ञिकः। बहुवचनं स्वरूपविधिनिरासार्थम्। अनन्तोदात्तार्थं (४२) आरम्भः।

## अध्यायेष्वेवर्षेः। ४। ३। ६९।

ऋषिशब्देभ्यो लक्षणया आर्षेयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाध्याये ठञ् स्यात्। वशिष्ठेन दृष्टो मन्त्रो वाशिष्ठस्तस्य व्याख्यानस्तत्र भवो वा वाशिष्ठिकोऽध्यायः। अध्यायेषु किम् वासिष्ठी ऋक्।

## पौरोडाशपुरोडाशात् ष्ठन्। ४। ३। ७०।

पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः ततः ष्ठन्। पौरोडाशिकः। पुरोडाशिकः।

## छन्दसो यदणौ। ४। ३। ७१।

---

(४१) पाकयज्ञोऽष्टकयज्ञो वैश्वदेवहोमो वा। नवयज्ञो नवशस्येष्टिराग्रहायणेष्टिः।

(४२) अनन्तोदात्तार्थं इति तद्धुत्तरप्रकृतिस्वरेण मध्योदात्तवाजपेयाद्यर्थः।

छन्दसः छान्दसः ।

ह्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् । ४ । ३ । ७२ ।

ह्यचः । ऐष्टिकः । पाशुकः । ऋतः । चातुर्होतृकः । ब्राह्मणिकः । आर्चिक इत्यादि ।

ऋगयनादि (४३) भ्यः । ४ । ३ । ७३ ।

ठञादेरपवादः । आर्गयनः । औपनिषदः । वैयाकरणः

तत आगतः । ४ । ३ । ७४ ।

स्रुघ्नादागतः स्रौघ्नः ।

ठगायस्थानेभ्यः । ४ ।। ३ । ७५ ।

शुल्कशालाया आगतः शौल्कशालिकः ।

शुण्डिकादि (४४) भ्योऽण् । ४ । ३ । ७६ ।

आयस्थाने ठकश्छादीनाञ्चापवादः । शुण्डिकादागतः शौण्डिकः । कार्कणः । तैर्थः ।

---

(४३) ऋगयन पदव्याख्यान छन्दोमान छन्दोभाषा छन्दोविचिति न्या पुनरुक्त निरुक्त व्याकरण निगम वास्तुविद्या क्षत्रविद्या अङ्गवि विद्या उत्पात उत्पाद उद्याव संवत्सर मुहूर्त्त उपनिषद् निमित्त शि भिक्षा ऋगयनादिः । एभ्यो भवे व्याख्याने चार्थेऽणित्यर्थः ।

(४४) शुण्डिक कृकण (कृपण) स्थण्डिल उदपान उपल तीर्थ भूमि तृ पर्ण शुण्डिकादिः ।

**विद्यायोनिसम्बन्धेभ्यो वुञ्।४।३।७७।**

औपाध्यायकः। पैतामहकः।

**ऋतष्ठञ्।४।३।७८।**

वुञोऽपवादः। हौतृकम्। भ्रातृकम्।

**पितुर्यच्च।४।३।७९।**

चाट्ठञ्। रीङृतः (५२२पृ०) यस्येति (१२९पृ०) लोपः। पित्र्यम् पैतृकम्।

**गोत्रादङ्कवत् (४५)।४।३।८०।**

विदेभ्यः आगतं वैदम्। गार्गम्। दाक्षम्। औपगवकम्।

**नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्।७।३।३०।**

नञः परेषां शुच्यादिपञ्चानामादेरचो वृद्धिः पूर्वपदस्य तु वा ञिदादौ परे। आशौचम् (४६) अशौचम्। आनैश्वर्य्यम् अनैश्वर्य्यम्। आक्षैत्रज्ञम् अक्षैत्रज्ञम्। आकौशलम् अकौशलम्। आनैपुणम् अनैपुणम्।

**हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः।४।३।८१।**

---

(४५) अङ्कार्थे यस्याः प्रकृतेर्यः प्रत्ययः (५९५पृ०) वक्ष्यते स सर्वोऽपि तत आगत इत्यर्थे स्यात् अङ्कवदिति अङ्कलक्षणभेदः। अङ्कशब्देनेदमर्थसामान्यं लक्ष्यते तस्मात् वुञप्यतिदिश्यते न त्वणेवेति बोध्यम्।

(४६) अशुचेरागतमित्यणि आशौचमित्युभयपदवृद्ध्यर्थमिह नञ इत्यादिसूत्रग्रहणम्। अन्ये तु भावप्रत्ययान्ताः प्रपञ्चादुदाहृता इत्याहुः।

समादागतं समरूप्यम्। विषमरूप्यम्। पक्षे गहादित्वाच्छः (५६६४०)। समीयम्। विषमीयम्। देवदत्तरूप्यम्-दैवदत्तम् ‡ देवदत्तीयम्।

**मयट् च।४।३।८२।**

सममयम्। विषममयम्। देवदत्तमयम्।

**प्रभवति।४।३।८३।**

तत इत्येव। हिमवतः (४७) प्रभवति हैमवती गङ्गा।

**विदूरात् ञ्यः।४।३।८४।**

विदूरात्प्रभवति वैदूर्य्यो मणिः।

**तद्गच्छति पथिदूतयोः।४।३।८५।**

स्रुघ्नङ्गच्छति स्रौघ्नः पन्था दूतो वा।

**अभिनिष्क्रामति द्वारम्।४।३।८६।**

तदित्येव। स्रुघ्नमभिनिष्क्रामति स्रौघ्नम् कान्यकुब्जद्वारम्।

**अधिकृत्य कृते ग्रन्थे।४।३।८७।**

तदित्येव। शारीरक (४८) मधिकृत्य कृतो ग्रन्थः शारीरकीयः। शारीरकं भाष्यमिति त्वभेदोपचारात् ‡।

---

§ वा नामधेयस्येति (५६१४०) वा वृद्धत्वात् छाणौ।

(४७) प्रभवः प्रथमः प्रकाशो न तूत्पत्तिर्जाताद्भेदेन निर्हयादित्युदाहरणेन स्फुटयति हिमवत इति।

(४८) शरीर इदमर्थेऽपि स्वार्थे कः शारीरकं जीवमित्यर्थः।।

‡ वृद्धाच्छायिकाभ्यो बहुलमिति(५४०५०)दर्शितं वार्त्तिकमत्र उदाहर्त्तव्यम्

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः। ४। ३। ८८।

शिशूनां क्रन्दनं शिशुक्रन्दः तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमस्य सभा यमसभम् क्लीवत्वनिपातनात्। यमसभीयः। किरातार्ज्जुनीयम्। इन्द्रजननादिराकृतिगणः। इन्द्रजननीयम् विरुद्धभोजनीयम्।

सोऽस्य निवासः। ४। ३। ८९।

स्रुघ्नो निवासोऽस्य स्रौघ्नः।

अभिजनश्च। ४। ३। ९०।

स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः। यत्र स्वयं वसति स निवासः। यत्र पूर्व्वैरुषितं सोऽभिजन इति विवेकः।

आयुधजीविभ्य(४९)श्छः पर्व्वते। ४। ३। ९१।

पर्व्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येत्यर्थे छः स्यात्। हृद्गोलः पर्वतोऽभिजनो येषामायुधजीविनां ते हृद्गोलीयाः। आयुधेति किम्। ऋक्षोदः पर्वतोऽभिजनो येषां ते आर्क्षोदाः द्विजाः।

शण्डिकादिभ्यो(५०)ञ्यः। ४। ३। ९२।

---

(४९) आयुधजीविभ्य इति क्रियार्थोपपदस्येति (२८०४०) चतुर्थी तानभिधातुमित्यर्थः पर्व्वते इति पञ्चम्यर्थे सप्तमी क्वचित् पर्व्वतादित्येव पाठः। शब्देन्दु०

(५०) शण्डिक सर्व्वसेन सर्व्वकेश शक शट रक शङ्ख बोध शण्डिकादिः।

शण्डिकोऽभिजनोऽस्य शाण्डिक्यः।

**सिन्धुतक्षशिलादिभ्योऽणञौ। ४। ३। ९३।**

सिन्ध्वादिभ्यो(५१)ऽण् तक्षशिलादिभ्यो(५२)ऽञ् स्यादुक्तेऽर्थे। सैन्धवः। तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः।

**तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः। ४। ३। ९४।**

तूदी अभिजनोऽस्य तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः।

**भक्तिः। ४। ३। ९५।**

सोऽस्येत्यनुवर्तते। भज्यते सेव्यते इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः।

**अचित्ताददेशकालाट्ठक्। ४। ३। ९६।**

अपूपा भक्तिरस्य आपूपिकः। पायसिकः। अचित्तात्किम् दैवदत्तः। अदेशात्किम् स्रौघ्नः। अकालात्किम् ग्रैष्मः।

**महाराजाट्ठञ्। ४। ३। ९७।**

(५१) सिन्धु वर्णु मधुमत् कम्बोज साल्व काश्मीर गन्धार किष्किन्धा उरसा दरद् गन्दिका सिन्ध्वादिः।

(५२) तक्षशिला वत्सोद्धरण कैर्मेदुर ग्रामणी छगल क्रोष्टुकर्ण सिंहकर्ण संकुचित किन्नर काण्डधार पर्वत अवसान बर्बर कंस तक्षशिलादिः।

माद्रराजकः।

वासुदेवार्ज्जुनाभ्यां वुन्।४।३।९८।

वासुदेवकः। अर्ज्जुनकः।

गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्।४।३।९९

अणोऽपवादः। परत्वाद्वृद्धाच्छं बाधते। ग्लुचकायनिर्भक्तिरस्य ग्लौचुकायनकः। नाकुलकः। बहुलग्रहणान्नेह। पाणिनो भक्तिरस्य पाणिनीयः।

जनपदिनां जनपदवत्सर्व्वं जनपदेन समानशब्दानां बहुवचने।४।३।१००।

जनपदस्वामिवाचिनां बहुवचने जनपदवाचिना समानश्रुतीनाञ्जनपदवत्सर्व्वं स्यात्प्रत्ययः प्रकृतिश्च। जनपदतदवध्यो श्चेति (५६२४०) प्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते। अङ्गा जनपदो भक्तिरस्य आङ्गकः। अङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः। जनपदिनाङ्किम् पञ्चाला ब्राह्मणा भक्तिरस्यपाञ्चालः। जनपदेनेति किम् पौरवो राजा भक्तिरस्य पौरवीयः।

तेन प्रोक्तम्।४।३।१०१।

पाणिनिना प्रोक्तम्पाणिनीयम्।

तित्तिरिवरतन्तुखण्डिकोखाच्छण्।४।३।१०२।

छन्दोब्राह्मणानीति (५३) (५३३पृ०)तद्विषयता। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः।

**काश्यपकौशिकाभ्यामृषिभ्यां णिनिः। ४। ३। १०३।**

काश्यपेन प्रोक्तमधीयते काश्यपिनः।

**कलापिवैशम्पायनान्तेवासिभ्य (५४) श्च। ४। ३। १०४।**

कलाप्यन्तेवासिभ्यः-हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः। वैशम्पायनान्तेवासिभ्यः-आलम्बिनः।

**पुराणप्रोक्तेषु ब्राह्मणकल्पेषु। ४। ३। १०५।**

तृतीयान्तात् प्रोक्तार्थे णिनिः स्यात्। यत्प्रोक्तम्पुराणप्रोक्ताः* चेद्ब्राह्मणकल्पास्ते भवन्ति। ब्राह्मणेषु-भल्लु भाल्लविनः। शाट्यायनः-शाट्यायनिनः। कल्पे। पिङ्गेन प्रोक्तः पैङ्गी

---

(५१) तित्तिरीत्यारभ्य तेनैकदिगित्यन्तं(५८२पृ०)वक्ष्यमाणाः प्रत्ययाश्छन्दस्येव वाच्ये दृष्यन्ते शौनकादिभ्यश्छन्दसीत्यतः (५९१पृ०) पूर्व्वत्र छन्दसो-ऽपकर्षादुत्तरत्र चानुवृत्तेरित्याशयेनाह छन्दोब्राह्मणेति तेन तित्तिरिणा प्रोक्तः श्लोक इत्यादौ न तित्तिर्य्यादिभ्यश्छणेव स च छन्दस्येवेति नियमद्वयाश्रयणात्। छन्दःशब्देन तु कल्पसूत्रादयोऽपि गृह्यन्ते। शब्देन्दु०।

(५४) हरिद्रुश्छगलो तुम्बुरुरुलपश्चत्वारः कलाप्यन्तेवासिनः। वैशम्पायनस्य तु आलम्ब लङ्ग कमन ऋचःमटहर्णि ताण्ड्य श्यामायन कठ कलापिनो नवेति बोध्यम्।

* पुराणेन मुनिना प्रोक्ताः।

कल्पः। पुराणेति किम् याज्ञवल्क्यानि ब्राह्मणानि। आश्मरथः कल्पः। अणि आपत्यस्येति (५९१४०) यलोपः

## शौनकादिभ्य(५५)श्छन्दसि। ४। ३। १०६।

छन्दस्यभिधेये एभ्योणिनिः। शौनकेन प्रोक्तमधीयते शौनकिनः।

## कठचरकाल्लुक्। ४। ३। १०७।

आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात्। कठेन प्रोक्तमधीयते कठाः। चरकाः।

## कलापिनोऽण्। ४। ३। १०८।

कलापिना प्रोक्तमधीयते कालापाः। नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलि-शिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् *। इत्यु पसंख्यानाट्टिलोपः।

## छगलिनो ढिनुक्। ४। ३। १०९।

छगलिना प्रोक्तमधीयते छागलेयिनः।

## पाराशर्य्यशिलालिभ्याम्भिक्षुनटसूत्रयोः। ४। ३। ११०।

(५५) शौनक वाजसनेय शार्ङ्गरव शापेय शाष्पेय खाडायन स्तम्भ स्कन्ध देवदर्शन रज्जुभार रज्जुकण्ठ कठशाठ कषाय तल दण्ड पुरुषासक अश्वपेज शौनकादिः।

पाराशर्येण (५६) प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः।

**कर्मन्दकृशाश्वादिनिः। ४। ३। १११।**

भिक्षुनटसूत्रयोरित्येव। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः।

**तेनैकदिक् (५७)। ४। ३। ११२।**

सुदाम्ना अद्रिणा एकदिक् सौदामनी।

**तसिश्च। ४। ३। ११३।**

स्वरादिपाठादव्ययत्वम्। पीलुमूलेन एकदिक् पीलुमूलतः।

**उरसो यच्च। ४। ३। ११४।**

चात्तसिः। अणोऽपवादः। उरसा एकदिक् उरस्यः। उरस्तः।

**उपज्ञाते। ४। ३। ११५।**

---

(५६) भिक्षुसूत्रं भिक्षुत्वसंपादकं सूत्रं तथा नटसूत्रम्। नटसूत्रज्ञाने हि यथा नटत्वसम्पत्तिरेवं भिक्षुसूत्रज्ञाने ब्रह्मस्वरूपत्वेन सर्वज्ञानात् कर्मत्यागादेव भिक्षुत्वसम्पत्तिः तत्र वेदान्तरूपं "वेदान्तान् विधिवत् श्रुत्वा संन्यसेदनृणो द्विज" इति मानवे वेदान्तज्ञानस्यैव संन्यासहेतुत्वोक्तेः। पाराशर्यो व्याससत्प्रोक्तं शारीरकसूत्रम् इह भिक्षुसूत्रतया णिनिरनुवर्त्तते।

(५७) तेनैकेति तेनेति सहार्थे तृतीया तेन सहैकदिगुपाधिकरणस्येत्यर्थे तृतीयान्तात् अण् प्रत्यय इत्यर्थः।

तेनेत्येव। पाणिनिना उपज्ञातम्पाणिनीयम्।

कृते ग्रन्थे। ४। ३। ११६।

वररुचिना कृतो वाररुचो ग्रन्थः।

संज्ञायाम्। ४। ३। ११७।

तेनेत्येव। अग्रन्थार्थमिदम्। मक्षिकाभिः कृतम् माक्षिकम् मधु।

कुलालादिभ्यो (५८) वुञ्। ४। ३। ११८।

तेन कृते संज्ञायाम्। कुलालेन कृतम् कौलालकम्। वारुडकम्।

क्षुद्राभ्रमरवटरपादपादञ्। ४। ३। ११९।

तेन कृते संज्ञायाम्। क्षुद्राभिः कृतम् क्षौद्रम्। भ्रामरम्। वाटरम्। पादपम्।

तस्येदम् (५९)। ४। ३। १२०।

(५८) कुलाल वरुड़ चण्डाल निषाद कर्म्मार सेना सिरिध्र सैरिन्ध्र देवराज परिषत् वधू मधु रुरु रुद्र अनडुह् ब्रह्मन् कुम्भकार श्वपाक कुलालादिः।

(५९) तस्येदमिति अतेदमित्यनेन शेषभूतसर्व्वविशेषाणां सामान्यरूपेण प्रत्ययार्थत्वं बोधयति तेन प्रकृत्यर्थसम्बन्धिमात्ररूपेऽर्थेऽनेन प्रत्ययविधानम्। अपत्यादीनां तु विशेषरूपेण सम्बन्धित्वेन शेषत्वाभावेन च नेदमर्थता।

उपगोरिदम् औपगवम्। वहेस्तुरण् इट् (६०)च *। संवोढुः स्वम् सांवहित्रम्। अग्नीधः शरणे रण् भञ्च (६१) *। अग्निमिन्धे अग्नीत् तस्य स्थानमाग्नीध्रम्। तात्स्थ्या-त्सोऽपि आग्नीध्रः। समिधामाधाने षेण्यण् *। सामिधेन्यो मन्त्रः। सामिधेनी ऋक्।

रथाद्यत्। ४। ३। १२१।

रथ्यश्चक्रम्।

पत्रपूर्वादञ्। ४। ३। १२२।

पत्रं वाहनम्। अश्वरथस्येदम् आश्वरथम्।

पत्राध्वर्युपरिषदश्च। ४। ३। १२३।

अञ्। पत्राद्वाह्ये। अश्वस्येदं वहनीयमाश्वम्। आध्वर्य-वम्। पारिषदम्।

हलसीराट्ठक्। ४।। ३ १२४।

हालिकम्। सैरिकम्।

द्वन्द्वाद्वुन्वैरमैथुनिकयोः। ४। ३। १२५।

(६०) तृच्प्रत्ययान्ताद्वहधातोरण् तस्य इट् च। तुरिति तृन्तृचोः सामान्य-ग्रहणम्। इत्वस्यासिद्धत्वात् पूर्वमिट् ततो निमित्ताभावात् इत्व-मित्याशयेनोदाहरति सांवहित्रमिति।

(६१) भत्त्वेति तेनैकसंज्ञाधिकारतया पदत्वसंज्ञाबाधेन न जश्त्वम्।

काकोलूकिका। कुत्सकुशिकिका। वैरे देवासुरादिभ्यः प्रतिषेधः । दैवासुरम्।

## गोत्रचरणाद्वुञ्।४।३।१२६।

औपगवकम्। चरणाद्धर्माम्नाययोरिति वक्तव्यम् *। काठकम्।

## सङ्घाङ्कलक्षणेष्वञ्यञिञामण् (६२)।४।३।१२७।

घोषग्रहणमपि कर्त्तव्यम् *। अञः। बैदः सङ्घोऽङ्को घोषो वा। बैदं लक्षणम्। यञः। गार्गः। गार्गम्। इञः। दाक्षः। दाक्षम्। परम्परासम्बन्धोऽङ्कः (६३) साक्षात्तु लक्षणम्।

## शाकलाद्वा।४।३।१२८।

अण् वोक्तेऽर्थे (६४)। पक्षे (६५) चरणाद्वुञ्। शाकलेन प्रोक्तमधीयते शाकलास्तेषां सङ्घोऽङ्को घोषो वा-शाकलः—शाकलकः। लक्षणे क्लीवता।

---

(६२) संघादय इदमर्थविशेषाः गोत्रग्रहणानुवृत्तिरत्राञादीनां प्रत्ययतया तदन्तानां ग्रहणम्। गोत्रञ्चेह लौकिकं न तु शास्त्रीयमपत्यरूपम्।

(६३) परम्परेति गवादिनिष्ठं चिह्नं गोद्वारा स्वामिनां संबन्धबोधकोऽङ्कः।

(६४) अण् वोक्त इति अणसंबन्धितया संघादीनामप्यनुवृत्तिरिति भावः।

(६५) पक्षे इति गोत्रचरणाद्वुञित्यस्योत्तरसूत्रेऽप्यनुवृत्त्या वाक्यभेदेन व्याख्यानसामर्थ्यात् चरणाद्धर्माम्नाययोरित्युक्तावपि संघादिषु तत्प्राप्तिरिति भावः।

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः। ४। ३। १२९।

छन्दोगानान्धर्म्म आम्नायो वा छान्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम्। बाह्वृच्यम्। नाट्यम् चरणाद्धर्म्माम्नाययोरित्युक्तम् तत्साहचर्य्यान्नटशब्दादपि तयोरेव।

न दण्डमान(ण)वान्तेवासिषु। ४। ३। १३०।

दण्डप्रधाना मान(ण)वाः दण्डमान(ण)वास्तेषु शिष्येषु च वुञ् न स्यात्। दाक्षा दण्डमान(ण)वाः शिष्या वा।

रैवतिकादि(६६) भ्यश्छः। ४। ३। १३१।

तस्येदमित्यर्थे। वुञोऽपवादः। रैवतिकीयः। वैजवापीयः।

कौपिञ्जलहास्तिपदादण्। ४। ३। १३२।

कुपिञ्जलस्यापत्यम् इहैव निपातनादण् तदन्तात्पुनरण्। कौपिञ्जलः। गोत्रवुञोऽपवादः। हस्तिपदस्यापत्यं हास्तिपदस्तस्यायं हास्तिपदः।

आथर्व्वणिकस्येकलोपश्च। ४। ३। १३३।

अण् स्यात्। चरणाद्वुञोऽपवाद इति। आथर्व्वणिकस्यायमाथर्व्वणो धर्म्म आम्नायो वा।

समाप्ताः शैषिकाः।

---

(६६) रैवतिक स्वापिशि चैमवृद्धि गौरग्रीवि (गौरग्रीव) औदमेघि औदवापि वैजवापि रैवतिकादिः।

## तस्य विकारः (१)।४।३।१३४।

अश्मनोविकारे टिलोपो वक्तव्यः ॰। अश्मनो विकारः आश्मः। भास्मनः। मार्त्तिकः।

## अवयवे च(२)प्राण्यौषधिवृक्षेभ्यः।४।३।१३५।

चाद्विकारे। मयूरस्यावयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्।

## बिल्वादि (३) भ्योऽण्।४।३।१३६।

बैल्वः।

## कोपधाच्च।४।३।१३७।

अण्। अञोपवादः (४)। तर्कुं तार्कवम्। तैन्तिड़ीकम्।

## त्रपुजतुनोः षुक्।४।३।१३८।

(१) षष्ठ्यन्ताद्विकारेऽणादयः स्युः। तस्येदमित्यतः (५८२पृ०) तस्येति लब्धे पुनस्तस्येति ग्रहणं शैषिकाधिकारनिवृत्त्यर्थम् अणादयस्तु न निवर्त्तन्ते प्राग्दीव्यतः (४८८पृ०) इत्यधिकारात्।

(२) अवयवे चेति अयमधिकारः। चाद्विकारइति। तेन वक्ष्यमाणाः प्रत्ययाः प्राण्यादिभ्यस्त्रिभ्योऽर्थद्वये, अन्येभ्यस्तु विकार एवेति बोध्यम्।

(३) बिल्व व्रीहि काण्ड मुद्ग मसूर गोधूम इक्षु वेणु गवेधुका कर्पासी पाटली कर्कन्धु कुटीर बिल्वादिः।

अत्र गणे कोपधग्रहणं (५८८पृ०) मयड्बाधनार्थम्।

(४) अञोऽपवाद इति उवर्णान्तादिप्रयुक्तस्य ओरञित्यनेन (५८८पृ०) प्राप्ता ञः।

आथ्यामण् स्याद्विकारे एतयोः षुगागमश्च। तापुषम्। जातुषम्।

**ओरञ्।४।३।१३९।**

दैवदारवम्। भाद्रदारवम्।

**अनुदात्तादेश्च।४।३।१४०।**

दाधित्थम् (५)। कापित्थम्।

**पलाशादिभ्यो (६) वा।४।३।१४१।**

अञ् स्यात् तयोः। पालाशम्। खादिरम्। कारीरम्।

**शम्याः ष्लञ्।४।३।१४२।**

शामीलम् भस्म। षित्त्वात् ङीष्। शामीली स्रुक्।

**मयड्वैतयो (७) र्भाषायामभक्ष्याच्छादनयोः।४।३।१४३।**

प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः। अश्ममयम् आश्म-

---

(५) दाधित्थमिति दधि तिष्ठतीति सुपि स्थ (३।२।४) इति कः उपपद-समासे पृषोदरादित्वात् थस्य तः। तदुत्तरप्रकृतिस्वरेणान्तोदात्तोऽयम्।

(६) पलाश खदिर शिंशपा स्यन्दन पूलाक करीर शिरीष यवास विकङ्कत पलाशादिः।

(७) अधिकारादेव तयोरित्यर्थलाभे पुनस्तयोरिति षष्ठ्यामपवादविषयेऽपि प्रवृत्त्यर्थं तेन वैल्वं वैल्वमयमित्यादि।

नम् (८)। अभक्ष्येत्यादि किम्। मौद्गः सूपः। कार्पासमाच्छादनम्।

नित्यं वृद्धशरादिभ्यः (९)। ४। ३। १४४।

आम्रमयम्। शरमयम्। एकाचो (१०) नित्यम्। त्वङ्मयम्। वाङ्मयम्। कथन्तर्हि 'आप्यमन्मयमिति (५९२४०) तस्येदम् इत्यणन्तात् स्वार्थे ष्यञ्।

गोश्च पुरीषे (११)। ४। ३। १४५।

गोः पुरीषम् गोमयम्।

पिष्टाच्च। ४। ३। १४६।

मयट् स्याद्विकारे। पिष्टमयम्भस्म। कथम्पैष्टी सुरेति सामान्यविवक्षायान्तस्येदम् (५९२४०) इत्यण्।

संज्ञायाङ्कन्। ४। ३। १४७।

पिष्टादित्येव। पिष्टस्य विकारविशेषः पिष्टकः। 'पूपोऽपूपः पिष्टकः स्यात्'।

---

(८) आच्छादनमिति अच्छादनोऽवयव इत्यर्थः विकारे तु टिलोपः स्यात्।

(९) शर दर्भ मृत् कुटी तृण सोम बल्वज शरादिः।

(१०) आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे पुनर्नित्यपदग्रहणं क्वचिदन्यत्र नित्यविधानार्थमित्याशयेनाह एकाच इति शरादिषु मृच्छब्दपाठस्तु अस्यानित्यताबोधनार्थः। तेनाप्यमिति सिद्धमिति प्राञ्चन्त्याः।

(११) गोभक्ष्याहारे गोविकारत्वमारोप्य पुरीषे इत्युक्तं तेन नाधिकारविरोधः।

## व्रीहेः पुरोडाशे। ४। ३। १४८।

मयट् स्यात्। बिल्वाद्यणोऽपवादः। व्रीहिमयः पुरोडाशः। व्रैहमन्यत्।

## असंज्ञायान्तिलयवाभ्याम्। ४। ३। १४९।

तिलमयम्। यवमयम्। संज्ञायान्तु। तैलम्। यावकः।

## तालादिभ्यो (१२) ऽण्। ४। ३। १५२।

अञ्मयटोरपवादः। (तालाद्धनुषि ग०)। तालन्धनुः। अन्यत्तालमयम्। ऐन्द्रायुधम्।

## जातरूपेभ्यः परिमाणे। ४। ३। १५३।

अण्। बहुवचनात्पर्यायग्रहणम्। हाटकः तापनीयः सौवर्णो वा निष्कः। परिमाणे किम् हाटकमयी यष्टिः।

## प्राणिरजतादि(१३)भ्योऽञ्। ४। ३। १५४।

शौकम्। बाकम्। राजतम्।

## ञितश्च तत्प्रत्ययात्। ४। ३। १५५।

ञित् यो विकारावयवप्रत्ययस्तदन्तादञ् स्यात्तयोरेवार्थयोः।

---

(१२) (तालाद्धनुषि) बार्हिण इन्द्रालिश इन्द्राडश इन्द्रायुध चय श्यामाक पीयूक्षा तालादिः।

(१३) रजत सीस लोह उदुम्बर नीप दारु रोहीतक विभीतक पीतदारु तीव्रदारु त्रिकण्टक कण्टकार रजतादिः।

मयटोऽपवादः। शामीलस्य शामीलम्। दाधित्थस्य दाधित्थम्। कापित्थम्। ञितः किम्। वैल्वमयम्।

क्रीतवत्परिमाणात्। ४। ३। १५६।

प्राग्वहतेष्ठञ् (६०४पृ०) इत्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते। अणादीनामपवादः। निष्केण क्रीतम् नैष्किकम्। एवन्निष्कस्य विकारोऽपि नैष्किकः। शतस्य विकारः शत्यः—शतिकः।

उष्ट्राद्वुञ्। ४। ३। १५७।

प्राग्व्यञोऽपवादः। औष्ट्रकः।

उमोर्णयोर्वा। ४। ३। १५८।

औमम्—औमकम्। और्णम्—और्णकम्। वुञभावे यथाक्रममणञौ (१४)।

एण्या ढञ्। ४। ५।। १५९।

ऐणेयम्। एणस्य तु ऐणम्।

गोपयसोर्यत्। ४। ३। १६०।

गव्यम्। पयस्यम्।

द्रोश्च। ४। ३। १६१।

(१४) अणञाविति ह्रस्वाद्याचामादित्यनेन (७५५४पृ०) उमेत्याद्युदात्तं तेन, अनुदात्तादित्वाभावात् तत्र मामा चतोऽण्येव। ऊर्णेत्यन्तोदात्तं तेन शेषनिघातादादेरनुदात्ततया तस्मादनुदात्तादेश्च (५८८पृ०) इत्यञिति भावः।

द्रुः अस्य विकारोऽवयवो वा द्रव्यम् ।

**माने वयः । ४ । ३ । १६२ ।**

द्रोरित्येव । द्रुवयम् । "पौतवं द्रुवयं पाय्यमिति मानार्थकम् त्रयम् ।

**फले लुक् । ४ । ३ । १६३ ।**

विकारावयवप्रत्ययस्य लुक् स्यात् फले । आमलक्याः फलम् आमलकम् (१५) ।

**प्लक्षादि (१६) भ्योऽण् । ४ । ३ । १६४ ।**

विधानसामर्थ्यात् न लुक् । प्लाक्षम् ।

**न्यग्रोधस्य च केवलस्य । ७ । ३ । ५ ।**

अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् ।

**जम्ब्वा वा । ४ । ३ । १६५ ।**

जम्बूशब्दात् फलेऽण् वा स्यात् । जाम्बवम् । पक्षे ओरञ् (५४४पृ०) । तस्य लुक् । जम्बु ।

**लुप् च । ४ । ३ । १६६ ।**

जम्ब्वाः फलप्रत्ययस्य लुप् वा स्यात् । लुपि युक्तवत् (५४८पृ० ) ।

(१५) आमलकमिति मयटोलुकि लुक् तद्धितलुकीति (५७५पृ०) ङीपो लुक् लुका लुप्तत्वात् स्थानिवत्त्वाऽभावेन न यस्येति (१२८पृ०) लोपः ।

(१६) प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु रुरु कक्षतु बृहती प्लक्षादिः ।

## तद्धितठगधिकारप्रकरणम् ।

जम्ब्वाः फलं जम्बूः । फलपाकशुषां (१७) मुपसंख्यानम् । व्रीहयः । मुद्गाः । पुष्पमूलेषु बहुलम् * । मल्लिकायाः पुष्पं मल्लिका । जात्याः पुष्पं जातिः । विदार्या मूलं विदारी । बहुलग्रहणान्नेह । पाटलानि पुष्पाणि । साल्वानि मूलानि । क्वचिल्लुक् । अशोकम् । करवीरम्

### हरीतक्यादि (१८) भ्यश्च । ४ । ३ । १६७ ।

एभ्यः फलप्रत्ययस्य लुप् स्यात् । हरीतक्यादीनाम् लिङ्गमेव प्रकृतिवत् (५५१९०) । हरीतक्याः फलानि हरीतक्यः ।

### कंसीयपरशव्ययोर्यञञौ लुक् च । ४ । ३ । १६८

कंसीयपरशव्यशब्दाभ्यां यञञौ स्तः छयतोश्च (१९) कंसाय हितं कंसीयम् तस्य विकारः कांस्यम् । हितं परशव्यम् तस्य विकारः पारशवः ।

इति प्राग्दीव्यतीयाः समाप्ताः ।

(१७) फलपाकेति फलपाकेन ये शुष्यन्ति व्रीह्यादयस्तद्वाचिनामित्यर्थः । लुपइति शेषः ।

(१८) हरितक्यादिः (५५१९०) द्रष्टव्यः ।

(१९) यथासंख्यं यञञोर्विधानेन न प्रकृतेर्लुक् नापि विधीयमानयोः प्रत्यययोर्विधानवैयर्थ्यापत्तेरपि तु प्रातिपदिकावयवयोश्छयतोरेवेत्याह छयतोरिति ।

प्राग्वहतेष्ठक्। ४। ४। १।

तद्वहतीत्यतः प्राक् ठगधिक्रियते। तदाहेति माशब्दादिभ्य(१) उपसंख्यानम् *। माशब्दः कारीति य आह स माशब्दिकः।

स्वागतादीनाञ्च। ७। ३। ७।

ऐच् न स्यात्। स्वागतमित्याह स्वागतिकः। स्वाध्वरिकः। स्वङ्गस्याऽपत्यं स्वाङ्गिः। व्यङ्गस्याऽपत्यं व्याङ्गिः। व्यडस्याऽपत्यं व्याडिः। व्यवहारेण चरति व्यावहारिकः। स्वपतौ साधुः स्वापतेयम्। आहौ(२)प्रभूतमादिभ्यः *। प्रभूतमाह प्राभूतिकः। पार्य्याप्तिकः। पृच्छतौ सुस्नातादिभ्यः (३) *। सुस्नातं पृच्छति सौस्नातिकः सौखशायनिकः। आनुशतिकादि। गच्छतौ परदारादिभ्यः *। पारदारिकः। गौरुतल्पिकः।

तेन (४) दीव्यति खनति जयति जितम्। ४। ४। २।

अक्षैर्दीव्यति आक्षिकः। अभ्र्या खनति आभ्रिकः। अक्षैर्ज्जयति आक्षिकः। अक्षैर्ज्जितमाक्षिकम्।

(१) माशब्द नित्यशब्द कार्य्यशब्द स्वागतादि (अनुपदयुक्तः) माशब्दादिः।

(२) आहाविति धात्वर्थनिर्द्देशे इक्।

(३) सुस्नात सुखरात्रि सुप्रभात सुखशयन अनुशतादि सुस्नातादि अनुशत अनुसहस्रादि।

(४) तेनेति करने तृतीया दीव्यतीत्यादौ तिङा कर्त्तुरुक्तत्वात्तज्ज्जितमित्यत्रापि करणे एव तृतीया। अत्र तिङन्ते क्रियाप्राधान्येऽपि वृत्तौ न तत्प्राधान्यमित्युक्तमाकरे।

संस्कृतम् (५)।४।४।३।

दध्ना संस्कृतं दाधिकम्। मारिचिकम्।

कुलत्थकोपधादण्।४।४।४।

ठकोऽपवादः। कुलत्थैः संस्कृतं कौलत्थम्। तैन्तिड़ीकम्।

तरति।४।४।५।

तेनेत्येव। उडुपेन तरति औडुपिकः।

गोपुच्छाट्ठञ्।४।४।६।

गौपुच्छिकः।

नौद्व्यचष्ठन्।४।४।७।

नाविकः। घटिकः। बाहुभ्यान्तरति बाहुका स्त्री।

चरति।४।४।८।

तृतीयान्ताद्गच्छतिभक्षयतीत्यर्थयोष्ठक् स्यात्। हस्तिना चरति हास्तिकः। शाकटिकः। दध्ना भक्षयति दाधिकः।

आकर्षात् ष्ठल्।४।४।९।

आकर्षो निकषोपलः। आकषादिति पाठान्तरम्। तेन चरति आकर्षिकः। षित्त्वात् ङीष्। आकर्षिकी।

---

(५) संस्कृतमिति विद्यमानस्य उत्कर्षाधानं संस्कारः।

### पर्प्पादिभ्यः (६) ष्ठन्। ४। ४। १०।

पर्पेण चरति पर्पिकः। पर्पिकी। येन पीठेन पङ्गवश्चरन्ति स पर्पः। अश्विकः। रथिकः।

### श्वगणाट्ठञ्च। ४। ४। ११।

चात् ष्ठन्।

### श्वादेरिञि। ७। ३। ८।

ऐच् न। श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। श्वादंष्ट्रिः। तदादिविधौ चेदमेव ज्ञापकम्। इकारादाविति वाच्यम्*। श्वगणेन चरति श्वागणिकः-श्वागणिका श्वगणिकः-श्वगणिकी।

### पदान्तस्यान्यतरस्याम्। ७। ३। ९।

श्वादेरङ्गस्य पदशब्दान्तस्यैच्वा। श्वापदस्येदं श्वापदम्-शौवापदम्।

### वेतनादिभ्यो (७) जीवति। ४। ४। १२।

वेतनेन जीवति वैतनिकः। धानुष्कः।

### वस्नक्रयविक्रयाट्ठन्। ४। ४। १३।

---

(६) पर्प्प अश्व अश्वत्थ रथ जाल न्यास व्याल (पादःपञ्च) पर्प्पादिः।

(७) वेतन वाहन अर्द्धवाहन धनुस् दण्ड जाल वेश उपवेश प्रेषण उपवस्ति सुख शय्या शक्ति उपनिषद् उपदेश स्फिज् पाद उपस्थ उपस्थान उपहस्त वेतनादिः।

वस्नेण मूल्येन जीवति वास्निकः। क्रयविक्रयग्रहणं सङ्घात-विगृहीतार्थम्। क्रयविक्रयिकः। क्रयिकः। विक्रयिकः।

आयुधाच्छ च। ४। ४। १४।

चाट्ठन्। आयुधेन जीवति आयुधीयः-आयुधिकः।

हरत्युत्सङ्गादि(८) भ्यः। ४। ४। १५।

उत्सङ्गेन हरति औत्सङ्गिकः।

भस्त्रादिभ्यः (९) ष्ठन्। ४। ४। १६।

भस्त्रया हरति भस्त्रिकः। षित्त्वान्ङीष्। भस्त्रिकी।

विभाषा विवधात्। ४। ४। १७।

विवधेन हरति विवधिकः। पक्षे ठक्। वैवधिकः। एक-देशविकृतस्याऽनन्यत्वात् वीवधादपि ष्ठन्। वीवधिकः। वीवधिकी। विवधवीवधशब्दौ उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्त्तेते।

अण् कुटिलिकायाः। ४। ४। १८।

कुटिलिका व्याधानाङ्गतिविशेषः कर्म्मारोपकरणभूतं लौह-ञ्च। कुटिलिकया हरति मृगान् अङ्गारान्वा कौटिलिको व्याधः कर्म्मारश्च।

(८) उत्सङ्ग उडुप उत्पुत उत्पत्र उत्पुट पिटक पिटाक उत्सङ्गादि।

(९) भस्त्रा भरट भरण शीर्षभार शीर्षेभार अंसभार अंसेभार अंसादिः।

निर्वृत्तेऽक्षद्यूतादि (१०) भ्यः। ४। ४। १९।

अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरम्।

त्रेर्मम्नित्यम् (११। ४। ४। २०।

त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप् स्यान्नित्यम्। कृत्या निर्वृत्तं कृत्रिमम्। पक्त्रिमम्। भावप्रत्ययान्तादिमप् वक्तव्यः *। पाकेन निर्वृत्तम्पाकिमम्। त्यागिमम्।

अपमित्ययाचिताभ्यां कक्कनौ। ४। ४। २१।

अपमित्येति ल्यबन्तम् (१२)। अपमित्य निर्वृत्तं आपमित्यकम्। याचितेन निर्वृत्तं याचितकम्।

संसृष्टे। ४। ४। २२।

दध्ना संसृष्टन्दाधिकम्।

चूर्णादिनिः। ४। ४। २३।

---

(१०) अक्षद्यूत जानुप्रहृत जङ्घाप्रहृत जङ्घाप्रहृत पादस्वेदन कण्टकमर्दन गतानुगत गतागत यातोपयात अनुगत अक्षद्यूतादिः।

(११) त्रेरिति त्रिप्रत्ययान्तादित्यर्थं निर्वृत्ते मप् योऽयं निर्वृत्ते मप् स त्रप्रत्ययान्तादेवेत्यर्थः। तेन 'तेन निर्वृत्त' मित्यस्वपदविग्रहः न तु त्रान्तस्य प्रयोगोऽतएवात्र सूत्रेऽधिकारलब्धोऽपि वाशब्दो न संबध्यते। वृत्तौ तृतीयान्तादित्युक्तिस्तु अलौकिकवाक्याभिप्रायेणेति बोध्यम्। शब्देन्दु०

(१२) ल्यबन्तमिति तेन नात्र तृतीयान्तात् प्रत्ययः किन्तु वचनसामर्थ्यात् प्रथमान्तादेवेति भावः।

चूर्णैः संसृष्टाः चूर्णिनोऽपूपाः।

**लवणाल्लुक्। ४। ४। २४।**

लवणेन संसृष्टो लवणः सूपः। लवणं शाकम्।

**मुद्गादण्। ४। ४। २५।**

मौद्ग ओदनः।

**व्यञ्जनैरुपसिक्ते (१३)। ४। ४। २६।**

ठक्। दध्ना उपसिक्तं दाधिकम्।

**ओजःसहोऽम्भसा वर्त्तते। ४। ४। २७।**

ओजसा वर्त्तते औजसिकः शूरः। साहसिकश्चौरः। आम्भसिको मत्स्यः।

**तत्प्रत्यनुपूर्व्वमीपलोमकूलम्(१४)। ४। ४। २८।**

द्वितीयान्तादस्माद्वर्त्तत इत्यस्मिन्नर्थे ठक् स्यात्। क्रियाविशेषणत्वात् द्वितीया (१५)। प्रतीपं वर्त्तते प्रातीपिकः। आन्वीपिकः। प्रातिलोमिकः। आनुलोमिकः। प्रातिकूलिकः। आनुकूलिकः।

---

(१३) व्यञ्जनैरुपसेचनेन मृदूकरणमुपसेकः व्यञ्जनादिवाचिभ्यस्तृतीयान्तादुपसिक्तेऽर्थे ठक् प्रत्ययः।

(१४) प्रतीपादयः प्रतिकूलानुकूलपर्य्यायास्तदृटका ईपलोमनुकूलशब्दा अविवक्षितार्थाः।

(१५) क्रियेति अकर्म्मकधातुस्थलेऽपि फलव्यापारयोर्धात्वर्थतया फलसामानाधिकरण्याद् द्वितीयेति भावः।

परिमुखञ्च। ४। ४। २९।

परिमुखं वर्त्तते पारिमुखिकः (१६)। चात्पारिपार्श्विकः (१७)।

प्रयच्छति गर्ह्यम्। ४। ४। ३०।

द्विगुणार्थं (१८) द्विगुणं तत्प्रयच्छति द्वैगुणिकः। त्रैगुणिकः। वृद्धेर्वृधुषिभावो वक्तव्यः *। वार्द्धुषिकः (१९)।

कुसीददशैकादशात् ष्ठन्ष्ठचौ। ४। ४। ३१।

गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे। कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं तत्प्रयच्छतीति कुसीदिकः। कुसीदिकी। एकादशार्थत्वादेकादशः ते च ते दश चेति विग्रहेऽकारः समासान्तश्चैव सूत्रे निपात्यते। दशैकादशिकः। दशैकादशिकी। दशैकादशान् प्रयच्छति इत्युक्तमर्थ एवेहापि तद्धितार्थः।

उञ्छति (२०)। ४। ४। ३२।

(१६) परेर्वर्ज्जनार्थतया स्वामिनो मुखं वर्जयित्वा स्थितस्य सेवकस्य वाचकः।

(१७) पारिपार्श्विकशब्दः प्रादिसमासात् पार्श्वपरिगतस्य सेवकादेर्वाची

(१८) द्विगुणार्थमिति औपचारिकादेवायं प्रत्ययः शब्दस्वाभाव्यात् वृद्ध्युद्देश्यकदानकर्म्मतया च तस्य गर्ह्यत्वम्।

(१९) वृद्ध्यर्थां वृद्धिस्तां प्रयच्छतीति वाक्ये वार्द्धुषिक इति।

(२०) भूमौ पतितानामेकैकस्योपादानमुञ्छः।

वदराण्युञ्छति वादरिकः।

## रक्षति। ४। ४। ३३।

समाजं रक्षति सामाजिकः।

## शब्ददर्दुरङ्करोति। ४। ४। ३४।

शब्दङ्करोति (२१) शाब्दिकः। दार्दुरिकः (२२)।

## पक्षिमत्स्यमृगान् हन्ति। ४। ४। ३५।

स्वरूपस्य पर्य्यायाणां विशेषाणाञ्च ग्रहणं मत्स्यपर्य्यायेषु मीनस्यैव। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। मात्स्यिकः। मैनिकः। शाकुलिकः। मार्गिकः। हारिणिकः। सारङ्गिकः।

## परिपन्थञ्च(२३) तिष्ठति। ४। ४। ३६।

अस्माद्द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक् स्यात्। पन्थानं वर्ज्जयित्वा व्याप्य वा तिष्ठति पारिपन्थिकश्चौरः। परिपन्थं हन्ति पारिपन्थिकः।

(२१) शब्दं प्रकृतिप्रत्ययादिविभागेन व्युत्पादयतीत्यर्थः। अत्रैवार्थेऽयं प्रत्ययः साधुः शब्दस्वाभाव्यात् नतु शब्दमात्रोत्पादने तेन शब्दं करोति वर्वर इत्यादौ न प्रत्ययः।

(२२) दर्दुरोभाण्डं "दर्दुरस्तोयदे भेके वाद्ये भाण्डाद्रिभेदयो"रित्युक्तेः।

(२३) परिपन्थमित्यव्ययीभावो मयूरव्यंसकादित्वात् ततपुरुषोवा निपन्थभावः।

**माथोत्तरपदपदव्यनुपदन्धावति। ४। ४। ३७।**

दण्डाकारो माथः पन्था दण्डमाथः दण्डमाथन्धावति दाण्डमाथिकः। पादविकः। आनुपदिकः।

**आक्रन्दाट्ठञ्च। ४। ४। ३८।**

अस्माट्ठञ् स्यात् चाट्ठक् धावतीत्यर्थे। आक्रन्दं दुःखिनां रोदनस्थानं धावति आक्रन्दिकः (२४)।

**पदोत्तरपदं (२५) गृह्णाति। ४। ४ ३९।**

पौर्व्वपदिकः। औत्तरपदिकः।

**प्रतिकण्ठार्थललामञ्च। ४। ४। ४०।**

एभ्यो गृह्णात्यर्थे ठक् स्यात्। प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः। आर्थिकः। लालामिकः।

**धर्म्मञ्चरति (२६)। ४। ४। ४१।**

धार्म्मिकः। अधर्म्माच्चेति वक्तव्यम् *। आधर्म्मिकः।

**प्रतिपथमेति ठंश्च। ४। ४। ४२।**

प्रतिपथमेति प्रातिपथिकः।

---

(२४) आक्रन्दिकः आर्त्तत्राता।

(२५) बह्वच्पूर्व्वान्मा भूदित्येतदर्थं पदान्तमित्यनभिधाय पदोत्तरमित्युक्तम्।

(२६) चरतिरिहासेवायां नत्वनुष्ठानमात्रे तेन दैववशाद्धर्म्मे प्रवृत्तोऽपि दुर्वृत्तो न धार्म्मिक इत्युच्यते आसेवा च स्वारसिकी प्रवृत्तिः। मनो०

**समवायान् समवैति (२७)। ४। ४। ४३।**

सामवायिकः। सामूहिकः।

**परिषदो ण्यः। ४। ४। ४४।**

परिषदं समवैति पारिषद्यः।

**सेनाया वा। ४। ४। ४५।**

ण्यः स्यात्। पक्षे ठक् (२८)। सैन्याः सैनिकाः।

**संज्ञायां ललाटकुक्कुट्यौ पश्यति। ४। ४। ४६।**

ललाटं पश्यति लालाटिकः (२९) सेवकः। कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते कौक्कुटिको भिक्षुः (३०)।

**तस्य धर्म्यम्। ४। ४। ४७।**

आपणस्य धर्म्यमापणिकम्।

(२७) समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् समवैतीत्यर्थे। बहुवचनादर्थनिर्देशोऽयम् समवपूर्वेणधातोः प्रवेशपूर्व्वकैकीभवनमर्थस्तत्र गुणभूतप्रवेशक्रिया सकर्म्मिका। विशेष्यानुरोधेन तु प्रायेण सप्तमी प्रयुज्यते "धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता" इत्यादि। मनो०

(२८) ण्यठकोरनुवृत्त्या द्वितीयान्तादेव समवैतीत्यर्थे तौ स्त इत्यर्थः। "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते,, इत्यमरोक्तिस्तु फलितार्थपरा।

(२९) 'लालाटिकः प्रभोर्भालदर्शी कार्य्याक्षमश्च यः' इत्युक्तसंज्ञको लालाटिकः।

(३०) भिक्षुरत्र सन्न्यासी स हि पादन्यासपर्य्याप्तदेशपर्य्यन्तमेव पश्यन् दूरात् चक्षुः संयम्य याति।

अण् महिष्यादि (३१) भ्यः। ४। ४। ४८।

महिष्या धर्म्यं माहिषम्। याजमानम्।

ऋतोऽञ्। ४। ४। ४९।

यातुर्धर्म्यं यात्रम्। नराच्चेति वक्तव्यम् *। नरस्य धर्म्या नारी। विशसितुरिड्लोपश्चाञ् वक्तव्यः *। विशसितुर्धर्म्यं वैशस्त्रम्। विभाजयितुर्णिलोपश्चाञ् वक्तव्यः *। विभाजयितुर्धर्म्यं वैभाजित्रम्।

अवक्रयः। ४। ४। ५०।

षष्ठ्यन्ताट्ठक् स्यादवक्रयेऽर्थे। आपणस्यावक्रय आपणिकः। राजग्राह्यं द्रव्यमवक्रयः।

तदस्य पण्यम्। ४। ४। ५१।

अपूपाः पण्यमस्य आपूपिकः।

लवणाट्ठञ्। ४। ४। ५२।

लावणिकः।

किश(स)रादिभ्य(३२)ष्ठन्। ४। ४। ५३।

(३१) महिषी प्रजापति प्रजावती प्रलेपिका विलेपिका अनुलेपिका पुरोहित मणिपालि अनुचारक होतृ यजमान महिष्यादिः॥

(३२) किश(स)र नरद नलद स्थागल तगर गुग्गुल उशीर हरिद्रा हरिद्रु पर्णी किश(स)रादिः। शब्देन्दु०

किशरं पण्यमस्य किशरिकः। षित्त्वान्ङीष्। किशरिकी। किशर उशीर नलद इत्यादि किशरादयः सर्व्वे सुगन्धिद्रव्यवाचिनः।

## शलालुनोऽन्यतरस्याम्। ४। ४। ५४।

ष्ठन् स्यात्। पक्षे ठक्। शलालुकः (३३)। शलालुकी। शालालुकः। शालालुका। शलालु सुगन्धिद्रव्यविशेषः।

## शिल्पम्। ४। ४। ५५।

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः (३४)।

## मड्डुकझर्झरादन्यतरस्याम्। ४। ४। ५६।

मड्डुकवादनं शिल्पमस्य माड्डुकिकः—माड्डुकः। झार्झरिकः—झार्झरः।

## प्रहरणम्। ४। ४। ५७।

तदस्येत्येव। असिः प्रहरणमस्य आसिकः। धानुष्कः।

## परश्वधाट्ठञ्च। ४। ४। ५८।

पारश्वधिकः।

(३३) शलालुकोऽत्र इसुसुक्तान्तात्कः (५।२।८७०) इत्यनेन ठस्य कादेशः।

(३४) मृदङ्गवादने मृदङ्गशब्दो लाक्षणिकः मुख्यार्थे तु न प्रत्ययोऽनभिधानात् शिल्पञ्च अभ्यासपूर्व्वकक्रियाकौशलं तच्च वादनएव सम्भवतीति मृदङ्गादिशब्दानां लाक्षणिकत्वे एव प्रत्ययः।

शक्तियष्ट्योरीकक् । ४ । ४ । ५९ ।

शाक्तीकः । याष्टीकः ।

अस्तिनास्तिदिष्टं (३५) मतिः । ४ । ४ । ६० ।

तदस्येत्येव । अस्ति परलोकः (३६) इत्येवं मतिर्यस्य स आस्तिकः । नास्तीति मतिर्यस्य स नास्तिकः । दिष्टमिति मतिर्यस्य स दैष्टिकः ।

शीलम् (३७) । ४ । ४ । ६१ ।

अपूपभक्षणं शीलमस्य आपूपिकः । ।

छत्रादि (३८) भ्यो णः । ४ । ४ । ६२ ।

गुरोर्दोषाणामावरणं छत्रं तच्छीलमस्य छात्रः ।

कर्मस्ताच्छील्ये । ६ । ४ । १७२ ।

---

(३५) अस्तिनास्तिशब्दौ तिङन्तप्रतिरूपकावव्यये दिष्टशब्दस्य क्लीवतया भाग्यवाचकस्य ग्रहणम् । स्वविषयबुद्धिलाक्षणिकेभ्योऽस्त्यादिभ्यः प्रथमासमर्थेभ्यः प्रत्यय इत्यर्थः ।

(३६) परलोक इत्यभिधानस्वभावलभ्यम् न तु तस्य वृत्तौ प्रवेशः ।

(३७) शीलं स्वभावः । अपूपादिशब्दानां तत्तद्भक्षणादिलाक्षणिकत्वे एव शीलतासम्भवेन तत्रैव प्रत्ययो न तु मुख्यार्थे शब्दस्वाभाव्यात् ।

(३८) छत्र शिक्षा प्ररोह स्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस् सत्य अनृत विशिखा विशिका भक्षा उदस्थान पुरोडा विक्षा चुक्षा मन्द्र छत्रादिः ।

कार्म्म इति ताच्छीलिके णे टिलोपो निपात्यते। कर्म्मशीलः कार्म्मः। नस्तद्धित (२२४६७) इत्येव सिद्धे अण्कार्थं ताच्छीलिके णोऽपि। तेन चौरी तापसीत्यादि † सिद्धम्। ताच्छीलिके किम् कार्म्मणः।

## कर्म्माध्ययने वृत्तम्। ४। ४। ६३।

प्रथमान्तात् षष्ठ्यर्थे ठक् स्यादध्ययने वृत्ता या क्रिया सा चेत्प्रथमान्तस्यार्थः। एकमन्यत्कर्म्म वृत्तमध्ययनेऽस्य स ऐकान्यिकः। यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातं सः।

## बह्वच्पूर्व्वपदाट्ठच्। ४। ४। ६४।

प्राग्विषये। द्वादशान्यानि कर्म्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः द्वादशाऽपपाठा यस्य जाता इत्यर्थः।

## हितम्भक्षाः। ४। ४। ६५।

अपूपभक्षणं हितमस्मै (३९) आपूपिकः।

## तदस्मै दीयते नियुक्तम्। ४। ४। ६६।

अग्रभोजनन्नियतन्दीयते अस्मै आग्रभोजनिकः।

## श्राणामांसौदनाट्टिठन्। ४। ४। ६७।

श्राणा(४०) नियुक्तन्दीयतेऽस्मै श्राणिकः श्राणिकी। मांसौ-

---

† टिड्ढाणञित्यादिना (२२५६०) अणन्तत्वात् ङीप्।

(३९) प्रकृतामपि षष्ठीं हितमन्द्योगानुशिष्टया चतुर्थ्या विपरिणमय्याहास्मै इति। यद्वा परसूत्रादस्मैइति पदमपकृष्यते।

(४०) उष्णा यवागूः श्राणा।

दनग्रहणं सङ्घातविगृहीतार्थम्। मांसौदनिकः। मांसिकः। औदनिकः।

**भक्तादणन्यतरस्याम्। ४। ४। ६८।**

पक्षे ठक्। भक्तमस्मै नियुक्तन्दीयते भाक्तः-भाक्तिकः।

**तत्र नियुक्तः। ४। ४। ६९।**

आकरे नियुक्तः आकरिकः (४१)।

**अगारान्ताट्ठन्। ४। ४। ७०।**

देवागारे नियुक्तो देवागारिकः।

**अध्यायिन्यदेशकालात्। ४। ४। ७१।**

निषिद्धदेशकालवाचकाट्ठक् स्यात् अध्येतरि। श्मशानेऽधीते श्माशानिकः। चतुर्द्दश्यामधीते चातुर्द्दशिकः।

**कठिनान्तप्रस्तारसंस्थानेषु(४२)व्यवहरति। ४। ४। ७२।**

तत्रेत्येव। वंशकठिने व्यवहरति वांशकठिनिकः। वंशाः वेणवः कठिना यस्मिन्देशे स वंशकठिनः तस्मिन् देशे या क्रिया यथानुष्ठेया तान्तथैवानुतिष्ठतीत्यर्थः। प्रास्तारिकः सांस्थानिकः।

(४१) आकरः खनिर्मण्याद्युत्पत्तिस्थानं तत्र नियुक्तोऽधिकृतः।

(४२) प्रस्तारसंस्थानशब्दौ सन्निवेशपर्य्यायौ।

## निकटे वसति। ४। ४। ७३।

नैकटिको (४३) भिक्षुः।

## आवसथात् ष्ठल्। ४। ४। ७४।

आवसथे वसति आवसथिकः। षित्त्वान्ङीष्। आवसथिकी।

आकर्षात्पर्पादेः भस्त्रादिभ्यः कुसीदसूत्राच्च।

आवसथात्किशरादेः षितः षडेते ठगधिकारे * (४४)।

षडिति सूत्रषट्केन विहितादित्यर्थः प्रत्ययास्तु सप्त। इति

ठकोऽवधिः समाप्तः।

(४३) भिक्षुणा ग्रामात्क्रोशान्ते वस्तव्यमिति शास्त्रमनादृत्य निकटे वसतीत्यर्थः।

(४४) ठगधिकारे पर्पादिभ्यः ष्ठनिति (६०६पृ०) भस्त्रादिभ्यः ष्ठनिति (६०७पृ०) किशरादिभ्यः ष्ठनिति (६१४पृ०) सूत्रत्रयएव संहितया पत्वसन्देहसम्भवेन तस्यैव परिगणने इतरसूत्रत्रयस्य षित्त्वमनार्षं स्यादिति भ्रमनिरासाय षित्त्वसंग्राहकवार्त्तिकारम्भः। कुसीदसूत्राच्चेति (६११०पृ०) कुसीदसूत्रोपात्तप्रकृतिद्वयात् प्रत्ययद्वयं गृह्यते तेन ष्ठन्ष्ठचावित्युभयग्रहणम् तदभिप्रायेण (६१०पृ०) दशैकादशकीत्युदाहृतम्। एवञ्च सूत्रषट्केन, पूर्व्वोक्तत्रयेण आकर्षात् ष्ठलिति (६०५पृ०) कुसीददशैकादशात् ष्ठन्ष्ठचाविति (६१०पृ०) आवसथात् ष्ठलिति च सूत्रत्रयेणेत्येवं सूत्रषट्केन सप्तप्रकृतिकाः सप्त प्रत्यया एव ठगधिकारे षित इत्यर्थः। तेन गौडादिचष्ठनित्यत्र (६०५पृ०) षकारः सांहितिक इति बोध्यम्।

---

प्राग्घिताद्यत्। ४। ४। ७५।

तस्मै हितमित्यतः (१२६७०) प्राक् यदधिक्रियते।

तद्वहति रथयुगप्रासङ्गम्। ४। ४। ७६।

रथं वहति रथ्यः। युग्यः। वत्सानान्दमनकाले स्कन्धे यत् काष्ठमासज्यते स प्रासङ्गः। तं वहति प्रासङ्ग्यः।

धुरोयड्ढकौ। ४। ४। ७७।

हलि चेति (१५७७०) दीर्घे प्राप्ते।

न भकुर्छुराम्। ८। २। ७६।

भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात्। धुर्य्यः। धौरेयः।

खः सर्व्वधुरात्। ४। ४। ७८।

सर्व्वधुरं वहतीति सर्व्वधुरीणः।

एकधुराल्लुक् च। ४। ४। ७६।

एकधुरं वहति एकधुरीणः --एकधुरः।

शकटादण्। ४। ४। ८०।

शकटं वहति शाकटो गौः।

हलसीराट्ठक्। ४। ४। ८१।

हलं वहतीति हालिकः। सैरिकः।

संज्ञायाञ्जन्या। ४। ४। ८२।

जनी वधूः तां वहति प्रापयति जन्या।

विध्यत्यधनुषा। ४। ४। ८३।

द्वितीयान्ताद्विध्यतीत्यर्थे यत् स्यान्न चेत्तत धनुःकरणम्।
पादौ विध्यन्ति पथ्याः शर्कराः।

धनगणं लब्धा। ४। ४। ८४।

तदन्तमेतत्। धनं लब्धा धन्यः। गणं लब्धा गण्यः।

अन्नाण्णः। ४। ४। ८५।

अन्नं लब्धा आन्नः।

वशङ्गतः। ४। ४। ८६।

वश्यः परेच्छानुचारी।

पदमस्मिन् दृश्यम्। ४। ४। ८७।

पद्यः कर्द्दमः नातिशुष्क इत्यर्थः।

मूलमस्यावर्हि। ४। ४। ८८।

आवर्हणमावर्हः उत्पाटनन्तदस्यास्तीति आवर्हि मूलम्
आवर्हि येषान्ते मूल्या मुद्गाः।

संज्ञायान्धेनुष्या। ४। ४। ८९।

धेनुशब्दस्य षुगागमो यत्प्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम्।
धेनुष्या बन्धके स्थिता।

गृहपतिना (१) संयुक्ते ञ्यः। ४। ४ ९०।

---

(१) संज्ञायामित्यधिकारात् दक्षिणाग्निपरत्वे नास्य प्रत्ययस्य प्रवृत्तिः।

गृहपतिर्यजमानस्तेन संयुक्तो गार्हपत्योऽग्निः।

**नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यबध्यानाम्यसमसमितसम्मितेषु (२)। ४। ४। ९१।**

नावा तार्य्यं नाव्यम्। वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं धर्म्यम्। विषेण बध्यो विष्यः। मूलेन आनाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया समितं सीत्यं क्षेत्रम्। तुलया सम्मितं तुल्यम्।

**धर्मपथ्यर्थन्यायादनपेते। ४। ४। ९२।**

धर्मादनपेतं धर्म्यम्। पथ्यम्। अर्थ्यम्। न्याय्यम्।

**छन्दसो निर्मिते। ४। ४। ९३।**

छन्दसा निर्मितं छन्दस्यम् इच्छया कृतमित्यर्थः।

**उरसोऽण् च। ४। ४। ९४।**

चाद्यत्। उरसा निर्मितः पुत्रः औरसः-उरस्यः।

**हृदयस्य प्रियः। ४। ४। ९५।**

(२) मूलं नाम वृक्षादीनां पादः वणिजां लाभार्थविनियुक्तं द्रव्यञ्च अर्थद्वयार्थं मूलशब्दयोर्नैकशेषः। इह सूत्रे वृत्तौ च वयसो मित्रम्। धर्मप्राप्यं धर्मफलं सुखादि। बध्यो बधार्हः। कृष्टभूमीसमीकरणार्थः काष्ठविशेषः (मइ) इति वङ्गे प्रसिद्धनामा सीता। समितः संगतः। इत्येवमर्थो यथायथं बोध्यः। तार्यादियोगे यथासम्भवं करणे कर्तरि। हेतौ तुल्यार्थे च तृतीयाऽतः सैवेह समर्थविभक्तिरर्थात् लभ्यते।

हृद्यो देशः हृदयस्य हृल्लेखयदण्लासेष्विति (४६५ पृ०) हृदादेशः।

**बन्धने चर्षौ। ४। ४। ९६।**

हृदयशब्दात् षष्ठ्यन्ताद्बन्धने यत्स्याद्वेदेऽभिधेये। हृदयस्य बन्धनं हृद्यः वशीकरणमन्त्रः।

**मतजनहलात्करणजल्पकर्षेषु। ४। ४। ९७।**

मतं ज्ञानन्तस्य करणम्भावः साधनं वा मत्यम्। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः।

**तत्र साधुः। ४। ४। ९८।**

अग्रे साधुः अग्र्यः। सामसु साधुः सामन्यः। ये चाभावकर्म्मणोरिति (५११ पृ०) प्रकृतिभावः। कर्म्मण्यः। शरण्यः।

**प्रतिजनादि (३) भ्यः खञ्। ४। ४। ९९।**

प्रतिजनं साधुः प्रातिजनीनः। सांयुगीनः। सार्व्वजनीनः।

**भक्ताण्णः। ४। ४। १००।**

भक्ते साधवो भाक्ताः शालयः।

**परिषदो ण्यः। ४। ४। १०१।**

पारिषद्यः। परिषद इति योगविभागात् णोऽपि। पारिषदः।

**कथादि (४) भ्यष्ठक्। ४। ४। १०२।**

---

(३) प्रतिजन इदंयुग संयुग समयुग परयुग परकुल परस्यकुल अमुष्यकुल सर्व्वजन विश्वजन महाजन पञ्चजन प्रतिजनादिः।

(४) कथा विकथा विश्वकथा सङ्कथा वितण्डा कुष्टविद् जनवाद जनेवाद जनोवाद वृत्ति संग्रह गुण गण आयुर्व्वेद कथादिः।

कथायां साधुः काथिकः।

**गुडादि (५) भ्यष्ठञ्। ४। ४। १०३।**

गुडे साधुः गौडिक इक्षुः। साक्तुको यवः।

**पथ्यतिथिवसतिस्वपतेर्ढञ्। ४। ४। १०४।**

पथि साधुः पाथेयम्। आतिथेयम्। वसनं वसतिस्तत्र साधुः वासतेयी रात्रिः। स्वापतेयन्धनम्।

**सभाया यः। ४। ४। १०५।**

सभ्यः।

**समानतीर्थे वासी। ४। ४। १०७।**

साधुरिति निवृत्तम्। वसतीति वासी समाने तीर्थे गुरौ वसतीति सतीर्थ्यः (६)।

**समानोदरे शयित ओ चोदात्तः। ४। ४। १०८।**

समाने उदरे शयितः स्थितः समानोदर्यो भ्राता।

**सोदराद्यः। ४। ४। १०९।**

सोदर्यः। अर्थः प्राग्वत्। इति

प्राग्घितीयाः समाप्ताः।

(५) गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु संग्राम सङ्घात संक्राम संवाह प्रवास निवास उपवास गुडादिः।

(६) "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु,, इत्युक्तेरुपाध्यायस्तीर्थम्।

**प्राक् क्रीताच्छः। ५। १। १।**

तेन क्रीतमित्यत :(१४६०) प्राक्(१)छोऽधिक्रियते।

**उगवादिभ्यो (२) यत्। ५। १। २।**

प्राक् क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत्स्यात् छस्याऽपवादः। शङ्कवे हितम् शङ्कव्यम्। (नाभेर्नभञ्च ग०) (३)। नभ्योऽक्षः (४)। नभ्यमञ्जनं रथनाभावेवेदम्। (शुनः सम्प्रसारणं वा च (५) दीर्घत्वम ग०)। शून्यम्। शुन्यम्। (ऊधसो ग०) नङ् च। ऊधन्यः।

**कम्बलाच्च संज्ञायाम्। ५। १। ३।**

यत्स्यात्। कम्बल्यमूर्णापलशतं संज्ञायां किं कम्बलीया ऊर्णा।

**विभाषा हविरपूपादि (६) भ्यः। ५। १। ४।**

---

(१) प्रागिति तेन क्रीतमित्यतः प्रागर्थेषु छो विधीयते इत्यर्थस्तेनार्थ एवेष्वाऽवधित्वेन गृह्यते न तु प्रत्ययः प्रकृतिश्चेति फलितम्। अतः प्राक्क्रीतात् येऽर्थास्तेष्वेवाधिकारः। एवञ्च समानेऽर्थे प्रकृतिविशेषे विहितो यदादिश्छं बाधते अन्यथा यत्तव्यानीयरामिव पर्य्यायेणोत्पत्तिः स्यात्।

(२) गो हविस् अक्षर विष वर्हिस् अष्टका स्वदा युग मेधा स्रुच् (नाभेर्नभञ्च) (शुनःसंप्रसारणं वा च दीर्घत्वम् तत्सन्नियोगेन चान्तोदात्तत्वम्) (ऊधसोऽनङ् च) कूप खद दर खर असुर अध्वन् क्षर वेद वीज दीप्त गवादिः।

(३) गणसूत्रमाह नाभेर्नभञ्चेति नाभिशब्दात् यत्प्रत्ययः नाभेर्नभादेशश्च।

(४) नभ्योऽक्ष इति सच्छिद्रो रथाङ्गावयवो नाभिस्तदनुप्रविष्टः काष्ठविशेषोऽक्षः स च तदनुगुणत्वात् नाभये हितः। अञ्जनं तैलाभ्यङ्गः तदपि स्नेहमयत्वात् नाभये हितम्।

(५) वा चेति चकारेण दीर्घतदभावपक्षयोः प्रकृतिभावस्तेन टिलोपो न।

(६) अपूप तण्डुल अभ्यूष अभ्योष अवोष अभ्येष पृथुक ओदन सूप पूप

आमिक्षन्दधि आमिक्षीयम् । पुरोडाशस्तण्डुलाः-पुरोडाशीयाः । अपूपम्-अपूपीयम् ।

### तस्मै हितम् । ५ । १ । ५ ।

वत्सेभ्यो हितो वत्सीयो गोधुक् । शङ्कव्यं दारु । गव्यम् । हविष्यम् ।

### शरीरावयवाद्यत् । ५ । १ । ६ ।

दन्त्यम् । कण्ठ्यम् । नस्नासिकाया यत्तस्क्षुद्रेषु * । नस्यं नाभ्यम् ।

### ये च तद्धिते । ६ । १ । ६१ ।

यादौ तद्धिते परे शिरःशब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः । तद्धिते किं शिर इच्छति शिरस्यति । वा केशेषु * । शीर्षण्याः शिरस्याः केशाः । अचि शीर्ष इति वाच्यम् * । अजादौ तद्धिते शिरसः शीर्षादेशः । स्थूलशिरस इदं स्थौलशीर्षम् ।

### खलयवमाषतिलवृषब्रह्मणश्च । ५ । १ । ७ ।

खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । चात् रथ्या (७) ।

### अजाविभ्यां थ्यन् । ५ । १ । ८ ।

अजथ्या यूथिः । अविथ्या ।

### आत्मन्विश्वजनभोगोत्तरपदात् खः । ५ । १ । ९ ।

---

किण्व प्रदीप मुसल कटक कर्णवेष्टक इर्गल अर्गल (अन्नविकारेभ्यश्च) यूप स्थूणा दीप अश्व पत्र अपूपादिः । हविर्विशेषेभ्य एभ्यश्च वा यत् ।

(७) यत्प्रकरणे रथाच्च इति वार्त्तिकोक्तेरत्र चात् रथ्येति ।

आत्माध्वानौ खे। ६। ४। १६९।

एतौ खे प्रकृत्या स्तः। आत्मने हितमात्मनीनम्। विश्वजनीनम्। कर्म्मधारयादेवेष्यते। षष्ठीतत्पुरुषाद्बहुव्रीहेश्च एत्र। विश्वजनीयम्। पञ्चजनादुपसंख्यानम्*। पञ्चजनीनम्। सर्व्वजनाट्ठञ् खश्च*। सार्व्वजनिकः-सर्व्वजनीनः। महाजनाट्ठञ्*। माहाजनिकः। मातृभोगीणः। पितृभोगीणः। राजभोगीनः। आचार्य्यादणत्वञ्च*। आचार्य्यभोगीनः।

सर्व्वपुरुषाभ्यां णढञौ। ५। १। १०।

सर्व्वाणो वेति वक्तव्यम्*। सर्व्वस्मै हितं सार्व्वम्-सर्व्वीयम्। पुरुषाद्वधविकारसमूहतेनकृतेषु भाष्यकारप्रयोगात्तेनेत्यस्य द्वन्द्वमध्ये निवेशः। पुरुषस्य बधः पौरुषेयः। तस्येद-(५९३पृ०) मित्यणि प्राप्ते। पुरुषस्य विकारः पौरुषेयः। प्राणिरजतादिभ्योऽञ् (६००पृ०) इत्यञि प्राप्ते समूहेऽप्यणि (५२४पृ०) प्राप्ते। "एकाकिनोऽपि परितः पौरुषेयवृताविवे"ति माघः। तेन कृते (५९३पृ०) ग्रन्थेऽणि प्राप्ते। अग्रन्थे तु प्राग्वादाराव प्राप्तएवेति विवेकः।

मान(ण)वचरकाभ्याङ्खञ्। ५। १। ११।

मान(ण)वाय हितं मान(ण)वीनम्। चारकीणम्।

तदर्थं विकृतेः प्रकृतौ। ५। १। १२।

विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां प्रत्ययः स्यात्। अङ्गारेभ्य एतानि अङ्गारीयाणि काष्ठानि। प्राकारीया इष्टकाः। शङ्कव्यन्दारु।

छदिरुपधिबलेर्ढञ्। ५। १। १३।

छादिषेयाणि तृणानि। बालेयास्तण्डुलाः। उपधिशब्दात् स्वार्थे दृश्यते। उपधीयत इत्युपधिः रथाङ्गं तदेव औपधेयम्।

ऋषभोपानहोर्ञ्यः। ५। १। १४।

छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। चर्म्मण्यप्ययमेव पूर्व्वविप्रतिषेधेन। औपानह्यञ्चर्म्म।

चर्म्मणोऽञ्। ५। १। १५।

चर्म्मणो या विकृतिस्तद्वाचकादञ् स्यात्। बर्ध्रे इदम् बार्ध्रं चर्म्म। वारत्रञ्चर्म्म।

तदस्य तस्मिन् स्यादिति (८)। ५। १। १६।

प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः। प्रासादीयं दारु। प्राकारोऽस्मिन् स्यात् प्राकारीयो देशः। इति शब्दो लौकिकीं विवक्षामनुसारयति। तेनेह न प्रासादो देवदत्तस्य स्यादिति।

परिखायाः ढञ्। ५। १। १७।

पारिखेयी भूमिः।

छयतोः पूर्व्वोऽवधिः।

---

(८) स्यादित्यर्थद्योतनाय शक्यार्थे लिङिति वक्तव्यमिति भाष्योक्तेस्तदस्य-शक्यार्थे एवास्य प्रयोगः।

**प्राग्वतेष्ठञ्। ५। १। १८।**

तेन तुल्यमिति (६५०पृ०) वतिं (१) वक्ष्यति ततः प्राक् ठञधिक्रियते।

**आऽर्हादगोपुच्छसंख्या(२)परिमाणाट्ठक्। ५। १। १९।**

तदर्हती (६४०पृ०) त्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादः ठगधिक्रियते गोपुच्छादीन् वर्ज्जयित्वा।

**असमासे निष्कादि (३) भ्यः। ५। १। २०।**

आऽर्हादित्येतत् तेन क्रीतमिति (६२४पृ०) यावत् सप्तदशसूत्री मनुवर्त्तते। निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु। नैष्किकम्। समासे तु ठञ्।

---

(१) वतिशब्देन तदर्थो लक्ष्यते तेन वत्यर्थेष्वेवास्योपस्थानादपवादविषये नास्य प्रवृत्तिः।

(२) संख्यापरिमाणशब्दौ 'ऊर्द्धमानं किलोन्मानं परिमाणन्तु सर्व्वतः। आयामस्तु प्रमाणं स्यात् संख्या वाह्या तु सर्व्वत इति' वार्त्तिकोक्तेः पारिभाषिकौ ग्राह्यौ। तुलादावारोपितस्य स्वर्णादेर्गुरुत्वमितरतुलाकोटिदेशे आरोपादुन्मीयते येन पलादिना ऊर्द्ध्वारोपात् तदुन्मानं। येन प्रस्थादिना स्वगताभ्यामारोहपरिणाहाभ्यां व्रीह्यादेः सर्व्वतः परिमाणं तत् सर्व्वतो मानात् परिमाणम्। आयामो दैर्घ्यं वस्त्रादेर्जलादेश्च येन हस्तदण्डादिना मीयते तत् प्रमाणम्। सर्व्वत उक्तप्रकारमानत्रयाद्वाह्या वहिर्भूता संख्या द्वित्वादिरित्यर्थः।

(३) निष्क पण पाद माष वाह द्रोण षष्टि निष्कादिः। अत्र द्रोणशब्दः

## परिमाणान्तस्यासंज्ञाशाणयोः । ७ । ३ । १७ ।

उत्तरपदवृद्धिः स्यात् ञिदादौ । परमनैष्किकः । असंज्ञेति किं पञ्च कलापाः परिमाणमस्य पाञ्चकलापिकम् । तदस्य-परिमाणमिति (६२८पृ०) ठञ् । असमासग्रहणं ज्ञापकम्भवति इत्यतः (४) प्राक् तदन्तविधिरिति तेन सुगव्यम् यवापूप्यादि । इत (५) ऊर्द्धन्तु संख्यापूर्व्वपदानान्तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि । पारायणिकः । द्वैपारायणिकः । अलुकीति किम् द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् (६) । द्विशूर्पेण क्रीतं शूर्पा-दञ् (६२२पृ०) इत्यञ् स्यात्तन्मा भूत् । किं तु ठञ् । द्विशौ-र्पिकम् (७) ।

## अर्द्धात्परिमाणस्य पूर्व्वस्य तु वा । ७ । ३ । २६ ।

अर्द्धात्परिमाणवाचकस्योत्तरपदस्यादेरचो वृद्धिः पूर्व्वपदस्य तु वा ञिति णिति किति च । अर्द्धद्रोणेन क्रीतम् अर्द्धद्रौ-णिकम् आर्द्धद्रौणिकम् ।

---

परिमाणवाची षष्टिशब्दः संख्यावाची ताभ्यां ठञि प्राप्ते समासे निषेधार्थं इतरेषामप्राप्ते चायमारम्भः ।

(४) इत्यतः एतत्सूत्रात् प्रत्यासत्त्या पञ्चमाध्यायोक्तेष्वेव । अन्यथा समास-प्रत्ययविधौ तदन्तग्रहणनिषेधस्य (२२पृ०)उक्तस्य विरलविषयत्वापत्तेः ।

(५) इतः असमासे इति सूत्रादूर्द्धमार्हीयेटनार्हीये चेत्यर्थस्तदाह प्राग्वते-रिति । तच्चालुकीति लुगन्तायाः प्रकृतेर्नेत्यर्थः ।

(६) द्विशूर्पमिति एषा न लुगन्तप्रकृतिः शूर्पादञन्यतरस्यामिति (६२२पृ०) प्राप्तयोः ठञञोरध्यर्द्धपूर्व्वेत्यादिना (६२२पृ०) लुक्करणात् ।

(७) द्विशौर्पिकमिति ठञो द्विगुं प्रति निमित्तत्वाभावात् लुगभावः । परि-माणान्तस्येत्युत्तरपदवृद्धिः ।

नातः परस्य। ७। ३। २७।

अर्द्धात्परस्य परिमाणाकारस्य वृद्धिर्न, पूर्वपदस्य तु वा ञ्नि-दादौ। अर्द्धप्रस्थिकम् आर्द्धप्रस्थिकम्। अतः किम् आर्द्धकौ-डविकम्। तपरः किम् अर्द्धखार्य्यांभवा अर्द्धखारी। अर्द्धखारीभार्य्य इत्यत्र वृद्धिनिमित्तस्येति (४०८४०) पुंवद्भावनि षेधो न स्यात्।

शताच्च ठन्यतावशते। ५। १। २१।

शतेन क्रीतं शतिकम्-शत्यम्। अशते किम्। शतं परिमाणमस्य शतकः सङ्घः। इह प्रत्ययार्थौ वस्तुतः प्रकृत्यर्थान्न भिद्यते तेन ठन्यतौ न, किन्तु कनेव। असमासइत्येव। द्विश-तेन क्रीतं द्विशतकम्।

संख्यायाः अतिशदन्तायाः कन्। ५। १। २२।

संख्यायाः कन् स्यादार्हीयेऽर्थे न तु त्यन्तशदन्तायाः। पञ्चभिः क्रीतः पञ्चकः बहुकः। त्यन्तायास्तु (८)। साप्ततिकः। शद-न्तायाः, चात्वारिंशत्कः।

वतोरिड्वा। ५। १। २३।

वत्वन्तात्कन इड्वा स्यात्। तावतिकः। तावत्कः।

विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्। ५। १। २४।

(८) अथवतस्तिशब्दस्य पहणात् इत्यवयवतिशब्दस्य न प्रतिषेधस्तेन कतिक इत्यादि दर्षिद्भिः।

योगविभागः कर्त्तव्यः ताभ्यां कन् स्यात् असंज्ञायान्तु ठ्वुन् स्यात्। कनोऽपवादः। विंशकः। त्रिंशकः। संज्ञायान्तु विंशतिकः। त्रिंशत्कः।

कंसाट्टिठन्। ५। १। २५।

टो ङीबर्थः इकार उच्चारणार्थः। कंसिकः कंसिकी। अर्द्धाच्चेति वक्तव्यम् *। अर्द्धिकः (९) अर्द्धिकी। कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा *। कार्षापणिकः कार्षापणिकी प्रतिकः प्रतिकी।

शूर्पादञन्यतरस्याम्। ५। १। २६।

शौर्पम्-शौर्पिकम्।

शतमानविंशतिकसहस्रवसनादण्। ५। १। २७

एभ्योऽण् स्यात्। ठञ्ठकनामपवादः। शतमानेन क्रीतम् शातमानम्। वैंशतिकम्। साहस्रम्। वासनम्।

अध्यर्द्धपूर्व्वद्विगोर्लुगसंज्ञायाम्। ५। १। २८।

अध्यर्द्ध (१०) पूर्व्वाद्द्विगोश्च परस्यार्हीयस्य लुक् स्यात् अध्यर्द्धकंसम्। द्विकंसम्। संज्ञायान्तु पाञ्चकलापिकम्

विभाषा कार्षापणसहस्राभ्याम्। ५। १। २९।

(९) अर्द्धशब्दः रूपकार्द्धे रूढ़स्तेनावयव्यपेक्षितयाऽसामर्थ्यं न शङ्क्यम्।

(१०) अध्यारूढमर्द्धं यस्मिन् तदध्यर्द्धं सार्द्धमित्यर्थः। प्रादिभ्यो धातुजस्य (वा०। ४०) इत्यनेनास्य साधुत्वम्।

लुग् वा स्यात्। अध्यर्द्धकार्षापणम्-अध्यर्द्धकार्षापणिकम्। द्विकार्षापणम्-द्विकार्षापणिकम्। औपसंख्यानिकस्य (६१२४०) टिठनो लुक्। पक्षे अध्यर्द्धप्रतिकम्। द्विप्रतिकम्। अध्यर्द्धसहस्रम्-अध्यर्द्धसाहस्रम्। द्विसहस्रम्-द्विसाहस्रम्।

द्वित्रिपूर्व्वान्निष्कात्। ५। १। ३०।

लुग्वा स्यात्। द्विनिष्कम् द्विनैष्किकम्। त्रिनिष्कम्-त्रिनैष्किकम्। बहुपूर्व्वाच्चेति वक्तव्यम्*। बहुनिष्कम्-बहुनैष्किकम्।

बिस्ताच्च। ५। १। ३१।

द्वित्रिबहुपूर्व्वात् बिस्तादार्हीयस्य लुग् वा स्यात्। द्विबिस्तम्-द्विबैस्तिकमित्यादि।

विंशतिकात् खः। ५। १। ३२।

अध्यर्द्धपूर्व्वाद्द्विगोरित्येव। अध्यर्द्धविंशतिकीनम्। द्विविंशतिकीनम्।

खार्य्या ईकन्। ५। १। ३३।

अध्यर्द्धखारीकम्। द्विखारीकम्। केवलायाश्चेति वक्तव्यम्*। खारीकम्।

पणपादमाषशताद्यत्। ५। १। ३४।

अध्यर्द्धपण्यम्। द्विपण्यम्। अध्यर्द्धपाद्यम्। द्विपाद्यम्। इह

पादः पदिति (१७८५०) न, यस्येति (१२०५०) लोपस्य स्थानि वद्भावात् पद्यत्यतदर्थे (४६६५०) इत्यपि न प्राण्यङ्गार्थस्यैव तत्र ग्रहणात् ।

शाणाद्वा । ५ । १ । ३५ ।

यत् स्यात् । पक्षे ठञ् तस्य लुक् । अध्यर्द्धशाण्यम् अध्यर्द्धशाणम् ।

द्वित्रिपूर्वादण् च । ५ । १ । ३६ ।

शाणादित्येव । चाद्यत् । तेन त्रैरूप्यम् । परिमाणान्तस्यासंज्ञाशाणयोरिति(१२०५०)पर्युदासादादिवृद्धिरेव । द्वैशाणम्-द्विशाण्यम्-द्विशाणम् । इह ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषाम् समर्थविभक्तयोऽर्थाश्चाकाङ्क्षितास्ते इदानीमुच्यन्ते ।

तेन क्रीतम् (११) । ५ । १ । ३७ ।

ठञ् । गोपुच्छेन क्रीतम् गौपुच्छिकम् । साप्ततिकम् । प्रास्थिकम् । ठक् । नैष्किकम् ।

इङ्गोण्याः । १ । २ । ५० ।

गोण्या इत् स्यात्तद्धितलुकि । लुक् तद्धितलुकीति (५७५५०) लुकोऽपवादः । पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः ।

---

(११) तेनेति करणे तृतीया द्रव्यदानपूर्व्वकं वस्त्वन्तरग्रहणं क्रयस्तेनेतिकरणस्य धात्वर्थघटके द्रव्यएवान्वयः तदस्य पण्यम् (६१४५०) इत्यनेन तु नास्य गतार्थता मूलममधनस्य मूल्यपदार्थतया यस्य यतं मूल्यं न भवति तस्य कार्य्यवशात् यतदानेन क्रयेऽस्य प्रवृत्तिरिति विशेषः ।

तस्य निमित्तं संयोगोत्पातौ । ५ । १ । ३८ ।

संयोगः (१२) सम्बन्ध उत्पातः शुभाशुभसूचकः। शतिकः-शत्यो † धनपतिसंयोगः। शतिकम्—शत्यम्—दक्षिणाक्षि-स्पन्दनम् शतस्य निमित्तमित्यर्थः। वातपित्तश्लेष्मभ्यः शमन-कोपनयोरुपसंख्यानम् *। वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्। सन्निपाताच्चेति वक्तव्यम् *। सान्निपातिकम्।

गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् । ५ । १ । ३९ ।

गोर्निमित्तं संयोगउत्पातो वा। गव्यः। द्व्यचः। धन्यः। यशस्यः। स्वर्ग्यः। गोद्व्यचः किम् विजयस्य वैजयिकः। असंख्येत्यादि किम् पञ्चानाम् पञ्चकम्। सप्तकम्। प्रास्थिकम्। खारीकम्। अश्वादि (१३) आश्विकम्। आश्मिकम्। ब्रह्मवर्चसादुपसंख्यानम् *। ब्रह्मवर्चस्यम्।

पुत्राच्छ च । ५ । १ । ४० ।

चाद्यत्। पुत्रीयः—पुत्र्यः।

सर्वभूमिपृथिवीभ्यामणञौ । ५ । १ । ४१ ।

(१२) संयोग इति संयुज्यन्ते पुरुषाः येन फलेन स संयोगः 'संयोगोनामेदं कृत्वेदमवाप्यते' इति भाष्योक्तेः यागादिरेव संयोगइति कैयटः।

† शताच्च ठन् यताविव्यनेन (६।१।२१) ठन् यतौ।

(१३) अश्व अश्मन् गण ऊर्णा उमा गङ्गा वर्षा वसु अश्वादिः।

सर्व्वभूमेर्न्निमित्तं संयोग उत्पातो वा सार्व्वभौमः। सर्व्वभूमिशब्दोऽनुशतिकादिषु (५८१४०) पठ्यते। पार्थिवः।

तस्येश्वरः। ५। १। ४२।

तत्र विदित इति च। ५। १। ४३।

सर्व्वभूमेरीश्वरः सर्व्वभूमौ विदितो वा सार्व्वभौमः। पार्थिवः।

लोकसर्वलोकाट्ठञ्। ५। १। ४४।

तत्र विदित इत्यर्थे। लौकिकः। अनुशतिकादि (५८१४०) त्वादुभयपदवृद्धिः। सार्व्वलौकिकः।

तस्य वापः। ५। १। ४५।

उप्यते यस्मिन्निति वापः क्षेत्रम्। प्रस्थस्य वापः प्रास्थिकम्। द्रौणिकम्। खारीकम्।

पात्रात् ष्ठन्। ५। १। ४६।

पात्रस्य वापः क्षेत्रम्पात्रिकम्। पात्रिकी क्षेत्रभक्तिः।

तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते। ५। १। ४७।

वृद्धिर्दीयतइत्यादिक्रमेण प्रत्येकं सम्बन्धादेकवचनम्। पञ्चास्मिन् वृद्धिः आयः लाभः शुल्कमुपदा वा दीयते पञ्चकः। शतिकः-शत्यः। साहस्रः। उत्तमर्णेन मूलातिरिक्तम् ग्राह्यं वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भाग आयः। विक्रेता मूल्यादधिकं ग्राह्यम् लाभः। रक्षानिर्वेशो राजभागः

शुल्कः। उत्कोचउपदा। चतुर्थ्यर्थे उपसंख्यानम् *। पञ्चास्मै वृद्ध्यादिर्दीयते पञ्चको देवदत्तः। समसमब्राह्मणे ‡ दानमितिवदधिकरणविवक्षया वा।

## पूरणार्द्धाट्ठन्। ५। १। ४८।

यथाक्रमं ठक्टिठनोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः। तृतीयिकः। अर्द्धिकः। अर्द्धशब्दो रूपकस्यार्द्धे रूढः।

## भागाद्यच्च। ५। १। ४९।

चाट्ठन्। भागशब्दोऽपि रूपकस्यार्द्धे रूढः। भागो वृद्ध्यादिरस्मिन् भाग्यम्-भागिकम् शतम्। भाग्या-भागिका विंशतिः।

## तद्धरति वहत्यावहति भाराद्वंशादिभ्यः। ५। १। ५०।

वंशादिभ्यः परो यो भारशब्दस्तदन्तं यत्प्रातिपदिकम् तत्प्रकृतिकाद् द्वितीयान्तादित्यर्थः। वंशभारं हरति वहत्यावहति वा वांशभारिकः। ऐक्षुभारिकः। भाराद्वंशादिभ्य इत्यस्य व्याख्यान्तरम् भारभूतेभ्यो (१४) वंशादि(१५)भ्य इति। भारभूतान् वंशान् हरति वांशिकः। ऐक्षुकः।

‡ सूत्रेऽस्मिन्निति सप्तमीसमर्थनायाह समभित्यादि।

(१४) अत्र पक्षे भारभूतार्थाभिधायित्वात् वंशादयो भारशब्देनोच्यन्ते प्रत्येकं संबन्धविवक्षया सूत्रे भारादित्येकवचनम्।

(१५) वंश कुटज बल्वज मूल स्थूण (स्थूणा) अक्ष अश्मन् अश्व श्लक्ष्ण इक्षु खट्वा वंशादिः।

वस्नद्रव्याभ्यां ठन्कनौ। ५। १। ५१।

यथासंख्यं स्तः। वस्नं हरति वहत्यावहति वा वस्निकः। द्रव्यकः।

सम्भवत्यवहरति पचति। ५। १। ५२।

प्रस्थं सम्भवति प्रास्थिकः कटाहः प्रस्थं स्वस्मिन् (१६) समावेशयतीत्यर्थः। प्रास्थिकी ब्राह्मणी प्रस्थमवहरति (१७) उपसंहरति पचति वेत्यर्थः। तत्पचतीति द्रोणादण् च *। चाट्ठन्। द्रोणम्पचतीति द्रौणी द्रौणिका।

आढकाचितपात्रात् खोऽन्यतरस्याम्। ५। १। ५३।

पक्षे ठञ्। आढकं सम्भवति अवहरति पचति वा आढकीना आढकिकी। आचितीना आचितिकी। पात्रीणा पात्रिकी।

द्विगोःष्ठंश्च। ५। १। ५४।

आढकाचितपात्रादित्येव। आढकाद्यन्ताद् द्विगोःसम्भवत्यादिष्वर्थेषु ष्ठन्खौ वा स्तः। पक्षे ठञ्। तस्याध्यर्द्धेति(६२२पृ०)लुक् षित्वान्ङीष्। द्व्याढकिकी द्व्याढकीना। द्विगोरिति(२२०पृ०)ङीप् द्व्याढकी। द्व्याचितिकी द्व्याचितीना। अपरिमाणेति (१८)।

(१६) आधारप्रमाणादाधेयप्रमाणस्य यदनाधिक्यं तदुपसर्ज्जनधारणं सम्भवतेरर्थः अतः सकर्म्मकतया तदित्यनुवृत्त्या लब्धा द्वितीयाऽत्र सप्तम्यर्थविभक्तिर्न विरुध्यते इतिद्योतयन्नाह स्वस्मिन्निति।

(१७) अवस्यवहरतीत्यस्य व्याख्यानमाह उपसंहरतीति।

(१८) अपरिमाणबिस्ताचितकम्बलेभ्यो न तद्धितलुकीति (२२०पृ०) सूत्रे आचितशब्दस्य साक्षादुपादानादिति नङीबिति भावः।

ङीब्निषेधात्। द्व्याचिता। द्विपाय्यिकी द्विपाय्यीणा द्विपाय्यी।

## कुलिजाल्लुक्खौ च।५।१।५५।

कुलिजान्ताद्द्विगोः सम्भवत्यादिष्वर्थेषु लुक्खौ वा स्तः। चात् ष्ठंश्च। लुगभावे ठञः श्रवणम्। द्विकुलिजी द्वैकुलिजिकी द्विकुलिजीना द्विकुलिजिकी।

## सोऽस्यांशवस्नभृतयः।५।१।५६।

अंशोभागः। वस्नं मूल्यम्। भृतिर्वेतनम्। पञ्च अंशो वस्नो भृतिर्वाऽस्य पञ्चकः।

## तदस्य परिमाणम् (१९)।५।१।५७।

प्रस्थम्परिमाणमस्य प्रास्थिकोराशिः।

## संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु।५।१।५८।

पूर्व्वसूत्रमनुवर्त्तते। तत्र संज्ञायाम् स्वार्थे प्रत्ययो वाच्यः। यद्वा द्वेकयोरितिवत् (८७४०) संख्यामात्रवृत्तेः परिमाणिनि प्रत्ययः। पञ्चैव पञ्चकाः शकुनयः पञ्च परिमाणमेषामिति वा। सङ्घे-पञ्चकः। सूत्रे-अष्टकं पाणिनीयम्। सङ्घशब्दस्य प्राणिसमूहे रूढत्वात् सूत्रं पृथगुपात्तम्। पञ्चकमध्ययनम् (२०)। स्तोमे डविधिः *। पञ्चदश मन्त्राः

(१९) तदस्येति इह परिमाणशब्देन परिच्छेदकमात्रं गृह्यते नतु विशेषपरिमाणं परस्त्रे सङ्ख्यायाः परिमाणेन विशेषणात्।

(२०) पञ्चकमध्ययनमिति पञ्चावृत्तयः परिमाणमस्येत्यर्थः।

परिमाणमस्य पञ्चदशः। सप्तदशः। एकविंशः। सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोमः (२१)।

**पङ्क्ति (२२) विंशति त्रिंशच्चत्वारिंशत् पञ्चाशत् षष्टि सप्तत्यशीति नवति शतम्। ५। १। ५९।**

एते रूढिशब्दा निपात्यन्ते।

**पञ्चद्दशतौ वर्गे वा। ५। १। ६०।**

पञ्च परिमाणमस्य पञ्चत् वर्गः। दशत्। पक्षे पञ्चकः। दशकः।

**त्रिंशच्चत्वारिंशतो ब्राह्मणे संज्ञायां डण्। ५। १। ६२।**

त्रिंशदध्यायाः परिमाणं येषाम् ब्राह्मणानाम् त्रैंशानि। चात्वारिंशानि।

**तदर्हति। ५। १। ६३।**

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः।

**छेदादि(२३)भ्यो नित्यम्। ५। १। ६४।**

---

(२१) मन्त्रसमूहे स्तोमशब्दो रूढः समूहमात्रे लाक्षणिकः। मन्त्रसमूहः प्रत्ययार्थः। स्तोमःस्तुतिरित्यत्र स्तुतिपदं स्तुतिकरणमन्त्रसमुदायपरम्।

(२२) पङ्क्तिशब्दोनानार्थः पञ्चाक्षरदशाक्षरपादकच्छन्दसि, क्रमसन्निवेशरूपश्रेण्यां, दशसङ्ख्यायाञ्च वर्त्तते। द्वौ दशतौ परिमाणमस्येति विंशतिरित्येवं विग्रहः।

(२३) छेद भेद द्रोह दोह नर्त कर्ष तीर्थ सम्प्रयोग विप्रयोग प्रयोग विप्रकर्ष प्रेषण सम्प्रश्न विकर्ष प्रकर्ष (विराग विरङ्ग च) छेदादि।

नित्यमाभीक्ष्ण्यम्। छेदन्नित्यमर्हति छैदिको वेतसः छिन्न-प्ररूढत्वात्। (विराग विरङ्ग वा ग०)। विरागन्नित्यमर्हति वैरागिकः-वैरङ्गिकः।

**शीर्षच्छेदाद्यच्च। ५। १। ६५।**

शिरश्छेदन्नित्यमर्हति शीर्षच्छेद्यः शैर्षच्छेदिकः। यद्ठञोः सन्नियोगेन शिरसः शीर्षभावो निपात्यते।

**दण्डादि (३४) भ्यो यत्। ५। १। ६६।**

एभ्यो यत् स्यात्। दण्डमर्हति दण्ड्यः। अर्घ्यः। वध्यः।

**पात्राद्घंश्च। ५। १। ६८।**

चाद्यत्। तदर्हतीत्यर्थे। पात्रियः-पात्र्यः।

**कडङ्कर † दक्षिणाच्छ च। ५। १। ६९।**

चाद्यत्। कड़ङ्करोतीति विग्रहे अतएव निपातनात् खच्। कड़ङ्करं माषमुद्गादिकाष्ठमर्हतीति कड़ङ्करीयो गौः। कड़-ङ्कर्य्यः। दक्षिणामर्हतीति दक्षिणीयः। दक्षिण्यः।

**स्थालीविलात्। ५। १। ७०।**

स्थालीविलमर्हन्ति स्थालीविलीयास्तण्डुलाः-स्थालीविल्याः पाकयोग्या इत्यर्थः।

---

(३४) दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भग इभ भङ्ग दण्डादिः।

† कड़ङ्कर इति केचित् पठन्ति कड़ंगिरतीति खच् नि०। "नीवारपाकादि कड़ङ्करीयैरित्युदाहरन्ति च।

**यज्ञर्त्विग्भ्यां घखञौ। ५। १। ७१।**

यथासंख्यम् स्तः। यज्ञं, ऋत्विजञ्चार्हति यज्ञियः, आर्त्वि-जीनोयजमानः। यज्ञर्त्विग्भ्यान्तत्कर्माहंतीत्युपसंख्यानम्* यज्ञियोदेशः। आर्त्विजीनः ऋत्विक्।

आर्हीयाणाण्ठगादीनां (२५) द्वादशानां गतोऽवधिः।

---

अतःपरष्ठञेव।

**पारायणतुरायणचान्द्रायणं वर्त्तयति। ५। १। ७२।**

पारायणं वर्त्तयति पारायणिकश्छात्रः। तुरायणम् यज्ञ विशेषः तं वर्त्तयति तौरायणिको यजमानः। चान्द्रायणिकः

**संशयमापन्नः (१)। ५। १। ७३।**

संशयविषयीभूतोऽर्थः सांशयिकः।

**योजनङ्गच्छति। ५। १। ७४।**

यौजनिकः। क्रोशशतयोजनशतयोरुपसंख्यानम्*। क्रोश-शतङ्गच्छति क्रौशशतिकः। यौजनशतिकः। ततोऽभिगमन-

---

(२५) द्वादशानामिति ठक्, यत्, ख, यण्, अञ्, ठन्, ठञ्, कन्,ख, इण्, घ, खञ्, य, इत्येषामेतत्प्रकरणस्थानां तत्तत्प्रकृतिभ्योऽर्थविशेषविधि-तानामित्यर्थः अत्रार्घाधिकारस्थः ठञनपवादविषये प्रवर्त्तत एव।

(१) संशयशब्दः संशयविषयत्वे लाक्षणिकोऽतः संदिह्यमाने एवास्य प्रवृत्तिर्न तु संदिहाने। अतः प्रामाण्यं न स्वतोग्राह्यं सांशयिकत्वादिति प्राचीनोक्तिः।

मर्हतीति च वक्तव्यम् *। क्रोशशतादभिगमनमर्हतीति क्रौशशतिको भिक्षुः। यौजनशतिक आचार्य्यः।

पथः ष्कन्। ५।१।७५।

षोऽडीषर्थः। पन्थानं गच्छति पथिकः। पथिकी।

पथो ण नित्यम्। ५।१।७६।

पन्थानम् नित्यम् गच्छति। पथः पन्थ च (५७४सू०) इत्यनेन पन्थादेशे कृते णः। पान्थः। पान्था।

उत्तरपथेनाहृतञ्च। ५।१।७७।

उत्तरपथेनाहृतम् औत्तरपथिकम्। उत्तरपथेन गच्छति औत्तरपथिकः। आहृतप्रकरणे वारिजङ्गलकान्तारपूर्व्वादुपसंख्यानम् *। वारिपथिकम्।

कालात्। ५।१।७८।

व्युष्टादिभ्योऽणित्यतः (६४८सू०) प्रागधिक्रियते।

तेन (२) निर्वृत्तम्। ५।१।७९।

अह्ना निर्वृत्तमाह्निकम्।

तमधीष्टो(३)भृतो भूतो भावी। ५।१।८०।

(२) तेनेति करणे तृतीया चाद्वरय्यन्तर्गते तेन निर्वृत्तमित्यत्र तु(५४२सू०) कर्त्तरीत्यनयोर्विशेषः।

(३) तमित्यत्यन्तसंयोगे द्वितीया। मुहूर्त्ताध्येषणेऽपि तत्फलीभूताध्ययनक्रियाव्याप्ते व्याप्तत्वोपचारात्, प्रतियोगिवैयधिकरण्यघटित

अधीष्टःसत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवानागतकालः । मासमधीष्टः मासिकोऽध्यापकः । मासं भृतो मासिकः कर्म्मकरः । मासं(४)भूतो । मासिकोव्याधिः । मासं भावी मासिकउत्सवः ।

## मासाद्वयसि यत्खञौ (५) । ५ । १ । ८१ ।

मासम् भूतो मास्यः-मासीनः ।

## द्विगोर्य्यप् । ५ । १ । ८२ ।

मासाद्वयसि इत्यनुवर्त्तते । द्वौ मासौ भूतो द्विमास्यः ।

## षण्मासाण्ण्यच्च । ५ । १ । ८३ ।

वयसीत्येव यबप्यनुवर्त्तते । चाट्ठञ् । षण्मास्यः-षाण्मास्यः षाण्मासिकः ।

## अवयसि ठंश्च । ५ । १ । ८४ ।

चात् ण्यत् । षण्मासिकोव्याधिः-षाण्मास्यः ।

## समायाः खः । ५ । १ । ८५ ।

समामधीष्टो भृतोभूतोभावी वा समीनः ।

---

व्याप्तेर्या प्रवेशात् यावत्कालाध्येयणाभावेऽपि प्रयोगः । यावत्कालमध्ययनाध्येषणे क्रियेते तावत्कालकालवाचकात्तु नायं प्रत्ययः ।

(४) निर्वृत्तादीनां पञ्चानामधिकारेऽपि भूतइत्येव संबध्यते नार्थान्तरमित्युदाहरति मासं भूतइति ।

(५) खञो ञित्करणं वृद्धिनिमित्तस्येत्यादिना(४०८पृ०)पुंवद्भावप्रतिषेधार्थम् ।

द्विगोर्वा। ५। १। ८६।

समायाः खइत्येव। तेन परिजय्येत्यतः (६५६४०५०) प्राङ्निर्दिष्टादिषु पञ्चस्वर्थेषु प्रत्ययाः। द्विसमीनः-द्वैसमिकः।

रात्र्यहःसंवत्सराच्च। ५। १। ८७।

द्विगोरित्येव। द्विरात्रीणः। द्वैरात्रिकः। द्व्यह्नीनः (६)। द्वैयह्निकः। समासान्तविधेरनित्यत्वान्न टच्। द्विसंवत्सरीणः।

संख्यायाः संवत्सरसंख्यस्य(७)च।७।३।१५।

संख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ। द्विसांवत्सरिकः। द्वे षष्टी भृतो द्विषाष्टिकः। संख्यायाः 'परिमाणान्तस्येत्येव (६३०४०) सिद्धे संवत्सरग्रहणम्परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् तेन द्वैसमिक इत्युत्तरपदवृद्धिर्न।

वर्षाल्लुक् च। ५। १। ८८।

वर्षशब्दान्ताद्द्विगोर्वा खः। पक्षे ठञ् वा लुक्। त्रीणि च रूपाणि। द्विवर्षीणो (८) व्याधिः द्विवार्षिकः द्विवर्षः।

वर्षस्याभविष्यति। ७। ३। १६।

उत्तरपदस्य वृद्धिः स्यात्। द्विवार्षिकः। भविष्यति तु द्वैव-

---

(६) द्व्यह्नीन इति तद्धितार्थद्विगोरूपं समाहारद्विगौ तु न खः तत्र समासान्तस्य जायमानतयाऽहनृशब्दान्तद्विगोरभावात्।

(७) संख्याया उत्तरवर्त्तिसंवत्सरसंख्याशब्दस्य वृद्धिरित्यर्थः।

(८) द्विवर्षीणो व्याधिरिति अचेतनत्वात् न लुक्, चित्तवति हि (६४६४०) नित्यलुकोवक्ष्यमाणत्वात्।

षिकः। अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न, गम्यते (९) हि तत्र भविष्यत्ता नतु तद्धितार्थः। द्वे वर्षे अधीष्टो भृतो वा कर्म्म करिष्यतीति द्विवार्षिको मनुष्यः(१०)। परिमाणान्तस्याऽसंज्ञाशाणयोः (६२०४०)। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। द्विनैष्किकम्। असंज्ञेति किम्। पञ्चकलापाः परिमाणमस्य पाञ्चकलापिकम्। तद्धितान्तः ‡ संज्ञा। द्वैशाणम्। कुलिजशब्दमपि केचित् पठन्ति द्वैकुलिजिकः।

## चित्तवति नित्यम्। ५। १। ८९।

वर्षशब्दान्ताद्द्विगोः प्रत्ययस्य नित्यं लुक् स्यात् चेतने प्रत्यार्थे। द्विवर्षो दारकः।

## षष्टिकाः षष्टिरात्रेण पच्यन्ते। ५। १। ९०।

बहुवचनमतन्त्रम्। षष्टिको धान्यविशेषः। तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते।

## तेन परिजय्यलभ्यकार्य्यसुकरम्। ५। १। ९३

मासेन परिजय्यो जेतुं शक्यो मासिको व्याधिः। मासेन लभ्यङ्कार्य्यम् सुकरं वा मासिकम्।

---

(९) गम्यते इति कर्म्म करिष्यतीत्यादिपदान्तरसमभिव्याहारेणेत्यर्थस्तेन न प्रत्ययार्थो भविष्यत्तेति भावः।

(१०) द्विवार्षिकोमनुष्य इत्यत्र चित्तवतीत्यनेन लुको नित्यत्वे सिद्धे तत्र नित्यपदोपादानं भूतकृपेऽर्थे एव नित्यं लुकोविभाषार्थं तेनात्र भविष्यत्त्वस्य गम्यमानतया न लुक्।

‡ तद्धितान्तशब्द एव संज्ञा संज्ञाभूत इति मोत्तरपदवृद्धिः।

## तदस्य ब्रह्मचर्यम्। ५। १। ९४।

द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे (११) प्रत्ययः स्यात् अत्यन्तसंयोगे द्वितीया। मासं ब्रह्मचर्य्यमस्य स मासिको ब्रह्मचारी। आर्द्धमासिकः। यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः। मासोऽस्येति मासिकं ब्रह्मचर्य्यम्। महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् ॰। महानाम्न्यो नाम विद्या मघवन्नित्याद्याऋचः तासां ब्रह्मचर्य्यमस्य महानाम्निकः (१२)। हरदत्तस्तु भस्याढ इति (४०६सू०) पुंवद्भावान्माहानामिक इत्याह। चतुर्म्मासाण्ण्यो यज्ञे ॰। तत्रभव इत्यर्थे। चतुर्षु मासेषु भवन्ति चातुर्म्मास्यानि यज्ञकर्म्माणि। अण् संज्ञायाम् *। चतुर्म्मासेषु भवति चातुर्म्मासी अणन्तत्वान्ङीप् (२१५सू०) पौर्णमासी आषाढी।

## तस्य दक्षिणा यज्ञाख्येभ्यः। ५। १। ९५।

द्वादशाहस्य दक्षिणा द्वादशाहिकी। आख्याग्रहणात्कालादपि। आग्निष्टोमिकी। वाजपेयिकी।

## तत्र च दीयते कार्य्यम्भववत् (१३)। ५। १। ९६।

प्रावृषि दीयते कार्य्यं वा प्रावृषेण्यम्। शारदम्।

कालाधिकारस्य सम्पूर्णोऽवधिः।

(११) अस्येत्यर्थे इति ब्रह्मचर्य्यं चेत् तत्कालपरिच्छेद्यमित्यर्थे इत्यर्थः।

(१२) महानाम्निक इति संज्ञात्वादभाषितपुंस्कत्वाच्च न पुंवद्भावः।

(१३) भवार्थे ये प्रत्ययाः यकाङ्काः तेऽत्रातिदिश्यन्ते। ते च कालाट्ठञित्यादौ (५६९सू०) उक्ताः।

व्युष्टादि (१) भ्योऽण् । ५ । १ । ९७ ।

व्युष्टे दीयते कार्य्यं वा वैयुष्टम् । व्युष्ट तीर्थ संग्राम प्रवास इत्यादि ।

तेन यथाकथाचहस्ताभ्यां णयतौ ।५।१।९८।

यथाकथाचेत्यव्ययस्य (२) संघातात्तृतीयान्ताद्धस्तशब्दाच्च यथासंख्यं णयतौ स्तः । अर्थाभ्यान्तु यथासंख्यं नेष्यते । यथाकथाच दीयते कार्य्यं वा याथाकथाचम् । अनादरेण देयं कार्य्यं वेत्यर्थः । हस्तेन दीयते कार्य्यं वा हस्त्यम् ।

सम्पादिनि । ५ । १ । ९९ ।

तेनेत्येव । कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकं मुखं कर्णालङ्काराभ्यामवश्यं शोभत इत्यर्थः ।

कर्म्मवेषाद्यत् । ५ । १ । १०० ।

कर्म्मणा सम्पादि कर्मण्यम् शौर्य्यम् । वेषेण सम्पादि वेष्यो नटः । वेषः कृत्रिम आकारः ।

तस्मै प्रभवति सन्तापादि (३) भ्यः ।५।१।१०१।

---

(१) व्युष्ट नित्य निष्क्रमण प्रवेशन उपसंक्रमण तीर्थ आस्तरण संग्राम संघात अग्निपद पीलुमूल प्रवास उपवास व्युष्टादिः ।

(२) अव्ययस्येति वचनसामर्थ्याद्वाक्यादपि प्रत्ययइति भावः ।

(३) सन्ताप सन्नाह संग्राम संयोग संपराय संवेशन संपेष निष्पेष सर्ग निसर्ग उपसर्ग प्रवास उपवास संघात संवेष संवास संमोदन सक्तु (मांसौदनाद्विग्रहीतादपि) सन्तापादिः ।

सन्तापाय प्रभवति सान्तापिकः। सांग्रामिकः।

**योगाद्यच्च। ५। १। १०२।**

चाट्ठञ्। योगाय प्रभवति योग्यः—यौगिकः।

**कर्म्मण उकञ्। ५। १। १०३।**

कर्मणे प्रभवति कार्मुकम्।

**समयस्तदस्य प्राप्तम्। ५। १। १०४।**

समयः प्राप्तोऽस्य सामयिकम्।

**ऋतोरण्। ५। १। १०५।**

ऋतुः प्राप्तोऽस्य आर्त्तवम्।

**कालाद्यत्।। ५। १। १०७।**

कालः प्राप्तोऽस्य काल्यं शीतम्।

**प्रकृष्टे ठञ्। ५। १। १०८।**

कालादित्येव तदस्येति च। प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरम्।

**प्रयोजनम् (४)। ५। १। १०९।**

तदस्येत्येव। इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्। प्रयोजनं फलं कारणञ्च।

---

(४) स्वर्गादिभ्योयदिति भाष्योक्तेः स्वर्गं प्रयोजनमस्येति स्वर्ग्यमित्यादि। स्वर्ग यशस् आयुस् काम धन स्वर्गादिः।

विशाखाषाढादण् मन्थदण्डयोः। ५। १। ११०।

आभ्यामण् स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः। विशाखा प्रयोजनमस्य वैशाखो मन्थः(५)। आषाढो दण्डः। चूड़ादिभ्य उपसंख्यानम् *। चूड़ा-चौडम्। श्रद्धा-श्राद्धम्।

अनुप्रवचनादि(६)भ्यश्छः। ५। १। १११।

अनुप्रवचनम्प्रयोजनमस्य अनुप्रवचनीयम्।

समापनात्सपूर्वपदात्। ५। १। ११२।

व्याकरणसमापनम्प्रयोजनमस्य व्याकरणसमापनीयम्।

ऐकागारिकट् चौरे। ५। १। ११३।

एकमसहायमगारम्प्रयोजनमस्य मुमुषिषोः स ऐकागारिकश्चौरः।

आकालिकडाद्यन्तवचने। ५। १। ११४।

समानकालावाद्यन्तौ यस्येत्याकालिकः। समानकालस्याकाल आदेशः। आशुविनाशीत्यर्थः पूर्व्वदिने मध्याह्नादावुत्पद्य दिनान्तरे तत्रैव नश्वर इति वा। आकालाट्ठंश्च *। आकालिका विद्युत्। ठञः पूर्वोऽवधिः *।

(५) मन्थोदधिविलोड़नदण्डधरः काष्ठविशेषः। मन्थदण्डयोरेतौ रूढ़ौ।

(६) अनुप्रवचन उत्थापन उपस्थापन संवेशन प्रवेशन अनुप्रवेशन अनुवासन अनुवचन अनुवाचन अन्वारोहण प्रारम्भण आरम्भण आरोहण अनुप्रवचनादिः।

## तेन तुल्यं (१) क्रिया चेद्वतिः। ५।१।११५।

ब्राह्मणेन तुल्यं ब्राह्मणवदधीते। क्रिया चेदिति किम् गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः।

## तत्र (२) तस्येव। ५।१।११६।

मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। चैत्रस्येव चैत्रवन्मैत्रस्य गावः।

## तदर्हम् (३)। ५।१।११७।

---

(१) तुल्यमिति सामान्ये नपुंसकं यत्तुल्यं सा चेत् क्रियेत्यर्थः। वतिप्रत्ययप्रकृतेस्तत्कर्तृकक्रियायां लक्षणा तथाच ब्राह्मणवदधीते इत्यत्र ब्राह्मणशब्दस्य तदध्ययनपरत्वेन ब्राह्मणकर्तृकाध्ययनतुल्याध्ययनं वाक्यार्थः। अतएव भाष्ये ब्राह्मणशब्दः समुदाये प्रवृत्तोऽप्यवयवेष्वपि वर्त्तते इत्युक्तम्। समुदायश्च

'तपः श्रुतञ्च जातिश्च त्रयं ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः'॥

इत्युक्ततपोऽध्ययनजातिलक्षणसंघातः ब्राह्मणकारकं ब्राह्मणशब्दप्रवृत्तिनिमित्तं त्रयमुक्तं त्रिकमित्यर्थः तदेकदेशाध्ययनस्य संघातैकदेशतया तत्परत्वेऽप्यवयवपरत्वमिति तदाशयः। अस्य च क्रियायोगे एव साधुत्वं तेन पर्व्वतोवह्निमान् भवितुमर्हति महानसवदित्येव प्रतिज्ञावाक्यं प्राचीनैरुदाह्रियतेऽर्व्वाचीनानां क्रियारहितप्रतिज्ञावाक्यप्रयोगस्तु महानसवदितिवतिप्रयोगानुपपत्त्या असाधुरेव।

(२) तत्र तस्येति। द्रव्यगुणादितुल्यार्थताबोधनायायमारम्भस्तेन क्रियेति नानुवर्त्तते।

(३) तदर्हमित्यत्र क्रद्योगे षष्ठ्या अनिर्द्देशेन क्रद्योगषष्ठ्या अनित्यत्वं ज्ञापितं तेन 'भार्य्यैरामोदमुत्तममिति' भट्टिः संगच्छते।

विधिमर्हति विधिवत्पूज्यते। क्रियाग्रहणं मण्डूकप्लुत्याऽनुवर्त्तते। तेनेह न राजानमर्हति छत्रम्।

**तस्य भावस्त्वतलौ। ५।१।११९।**

प्रकृतिजन्यबोधे (४) प्रकारो भावः। गोर्भावः गोत्वम्। गोता। त्वान्तं क्लीवन्तलन्तं स्त्रियाम्।

**आ च त्वात्। ५।१।१२०।**

ब्रह्मणस्त्व(६५८पृ०)इत्यतः प्राक् त्वतलावधिक्रियेते। अपवादैस्सह समावेशार्थम् गुणवचनादिभ्यः कर्म्मणि विधानार्थं चेदम्। चकारो नञ्स्नञ्भ्यामपि (५८१पृ०) समावेशार्थः। स्त्रियाभावः स्त्रैणम्-स्त्रीत्वम्-स्त्रीता। पौंस्नम्-पुंस्त्वम्-पुंस्ता।

**न नञ्पूर्व्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः। ५।१।१२१।**

इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युः। चतुरादीन्

---

(४) भवन्ति अर्थबोधनाय प्रकृतयो प्रवर्त्तन्तेऽनेनेति व्युत्पत्त्या भावशब्दः करणार्थकघञन्त इत्याशयेनाह प्रकृतिजन्येति प्रकारइति मुख्यविशेष्यांशे विशेषणमित्यर्थस्तेन विशेषणतावच्छेदके न प्रसङ्गः। स च तत्तच्छब्दप्रवृत्तिनिमित्तरूपएव प्रवृत्तिनिमित्तञ्च यस्मिन् बुद्धिस्थे सति विशेष्यभूतार्थबोधनार्था शब्दस्य प्रवृत्तिः प्रयोगस्तत्त्वम्। तच्च कचित्प्रकारस्य यथा घटादिशब्दप्रवृत्तौ घटत्वादेः कचिच्च संसर्गस्य यथा राजपुरुषपाचकादौ सम्बन्धपाककर्त्तृत्वसंसर्गादेः। अतएव कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेति प्राचोक्तम् एवञ्च इत्तौ प्रकारशब्दःसम्बन्धस्याप्युपलक्षणम्।

वर्ज्जयित्वा। अपतित्वम्। अपटुत्वम्। नञ्पूर्व्वात् किम् बार्हस्पत्यम्। तत्पुरुषात् किम् नास्य पटवः सन्तीत्यपटुस्तस्य भावः आपटवम्। अचतुरेति किम् आचतुर्य्यम्। आसङ्गत्यम्। आलवणम्। आवच्यम्। आयुध्यम्। आकत्यम्। आरस्यम्। आलस्यम्।

पृथ्वादिभ्य (५) इमनिज्वा। ५। १। १२२।

वावचनमणादिसमावेशार्थम्।

र ऋतो हलादेर्लघोः। ६। ४। १६१।

हलादेर्लघोः ऋकारस्य रः स्यात् इष्ठेमेयस्सु परतः।

टेः। ६। ४। १५५।

भस्य टेर्लोपः स्यादिष्ठेमेयस्सु। पृथोर्भावः प्रथिमा-पार्थवम्। म्रदिमा-मार्द्दवम्।

वर्णदृढादि (६) भ्यः ष्यञ्च। ५। १। १२३।

चादिमनिच्। शौक्ल्यम् शुक्लिमा। दार्ढ्यम्। पृथुमृदु

---

(५) पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिञ्चन बाल होड़ पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु पृथ्वादिः। अत्र ये इगन्ता लघुपूर्व्वा-मृदुप्रभृतयस्तेभ्यणः, बहुलादिषु गुणवचनेषु ष्यञः, बालवत्सादिषु वयोवचनेष्वणस्च समावेशार्थं वाकार इत्यर्थः।

(६) दृढ़ दृढ परिवृढ भृश कृश वक्र शुक्र चुक्र आम्र कृष्ट लवण ताम्र शीत उष्ण जड़ बधिर पण्डित मधुर मुर्ख मूक (वेर्यातलाभमतिमनः शारदानाम्) (समो मतिमनसो:) जवन दृढादिः। गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम्।

भृशकृशदृढपरिवृढानामेव रत्वम् । द्रढिमा। षो ङीषर्थः। औचिती। याथाकामी।

**गुणवचनब्राह्मणादि(७)भ्यः कर्म्मणि च ।५।१।१२४।**

चाद्भावे। जडस्य कर्म्म भावो वा जाड्यम्। मूढस्य भावः कर्म्म वा मौढ्यम्। ब्राह्मण्यम्। अर्हतोनुम् च( ग०)। अर्हतोभावः कर्म वा आर्हन्त्यम्। आर्हन्ती ⁑। ब्राह्मणादिराकृतिगणः।

**यथातथयथापुरयोः पर्य्यायेण ।७।३।३१।**

नञःपरयोरेतयोः पूर्व्वोत्तरपदयोः पर्य्यायेणादेरचो वृद्धिर्ञिदादौ। अयथातथा भावः आयथातथ्यम्-अयाथातथ्यम्। आयथापुर्य्यम् अयाथापुर्य्यम्। आ पादसमाप्तेर्भावकर्माधिकारः। चतुर्व्वर्णादीनां (८) स्वार्थउपसंख्यानम् *। चत्वारो वर्णाः चातुर्वर्ण्यम् चातुराश्रम्यम्। त्रैस्वर्य्यम्। षाड्गु-

(७) ब्राह्मण वाडव माणव (अर्हतोनुम् च) चोर धूर्त्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ मिश्र बालिश अलस दुःपुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात (सर्व्ववेदादिभ्यः स्वार्थे) (चतुर्व्वेदस्योभयपदवृद्धिश्च) शौटीर ब्राह्मणादिराकृतिगणः। तेन औचित्यादि सिद्धम्।

⁑ ष्यञः षित्त्वात् ङीषि यलोपे नुमि रूपसिद्धम्।

(८) चतुर्वर्ण चतुराश्रम सर्व्वविद्य त्रिलोक त्रिस्वर षड्गुण सेना अनन्तर सन्निधि समीप उपमा सुख तदर्थ इतिह मणिक चतुर्व्वर्णादिः।

ण्यम्। सैन्यम् साम्निध्यम्। सामीप्यम्। औपम्यम्। त्रैलोक्यमित्यादि। सर्व्वे वेदाः सर्व्ववेदास्तानधीते सर्व्ववेदः। सर्व्वादेरिति(५४।४०)लुक्। स एव सार्व्ववेद्यः। (चतुर्वेदस्योभयपदवृद्धिः ग०)। चतुरोवेदानधीते चतुर्व्वेदः स एव चातुर्वैद्यः। चतुर्व्विद्यस्येति पाठान्तरम्। चतुर्व्विद्य एव चातुर्व्वैद्यः।

स्तेनाद्यन्नलोपश्च। ५।१।१२५।

नेतिसङ्घातग्रहणम्। स्तेन चौर्य्ये पचाद्यच्। स्तेनस्य भावः कर्म्म वा स्तेयम्। स्तेनादिति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति।

सख्युर्य्यः। ५।१।१२६।

सख्युर्भावः कर्म्म वा सख्यम्। दूतवणिग्भ्याञ्च *। दूतस्य भावः कर्म्म वा दूत्यम्। वणिज्यमिति काशिका। माधवस्तु वाणिज्याशब्दः स्वभावात् स्त्रीलिङ्गः भावएव चात्र प्रत्ययो न तु कर्म्मणीत्याह। भाष्ये तु दूतवणिग्भ्याञ्चेति नास्त्येव। ब्राह्मणादित्वात् (६५४४०) वाणिज्यमपि।

कपिज्ञात्योर्ढक्। ५।१।१२७।

कापेयम्। ज्ञातेयम्।

पत्यन्तपुरोहितादि (६) भ्यो यक्।५।१।१२८।

सैनापत्यम्। पौरोहित्यम्। (राजाऽसे ग०)। राजशब्दोऽसमासे यकं लभत इत्यर्थः। राज्ञो भावः कर्म्म वा

(६) पुरोहित (राजाऽसे) ग्रामिक पिण्डिक सुहित बाल मन्द खण्डिक दण्डिक वर्म्मिक कर्म्मिक धर्म्मिक शिलिक सूतिक मूलिक तिलक

राज्यम्। समासे तु ब्राह्मणादित्वात् (६५४पृ०) ष्यञ्। आधिराज्यम्।

**प्राणभृज्जातिवयोवचनोद्गात्रादि(१०)भ्योऽञ्। ५। १। १२९।**

प्राणभृज्जातिः। आश्वम्। औष्ट्रम्। वयोवचनम्। कौमारम्। कैशोरम्। औद्गात्रम्। औन्नेत्रम्। सौष्ठवम्। दौष्ठवम्।

**हायनान्तयुवादि (११)भ्योऽण्। ५। १। १३०।**

द्वैहायनम्। त्रैहायनम्। यौवनम्। स्थाविरम्। (श्रोत्रियस्य लोपश्च ग०)। श्रौत्रम्। कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञाः युवादिषु ब्राह्मणादिषु (६५४पृ०) च पठ्यन्ते। कौशलम् कौशल्यमित्यादि।

**इगन्ताच्च लघुपूर्वात्। ५। १। १३१।**

शुचेर्भावः कर्म वा शौचम्। मौनम्। कथं काव्यम् कविशब्दस्य ब्राह्मणादित्वात् (६५४पृ०) ष्यञ्।

---

अङ्गुलिक अञ्जनिक ऋषिक पुलिक अविक ऋत्विक पर्षिक पथिक चर्मिक प्रतिक सारथि आस्तिक सूचिक संरक्ष सूचक नास्तिक अजानिक शाकर नागर चूडिक पुरोहितादिः।

(१०) उद्गातृ उन्नेतृ प्रतिहर्तृ प्रशास्तृ होतृ पोतृ हर्तृ रथगणक पत्तिगणक सुष्ठु दुष्ठु अध्वर्यु वधू (सुभग मन्त्रे) उद्गात्रादिः।

(११) युवन् स्थविर होतृ यजमान (पुरुषाऽसे) भ्रातृ कुतुक श्रमण कटुक कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय दुहृद् सुहृद् सुभ्रातृ दुर्भ्रातृ वृषल परिव्राजक सब्रह्मचारिन् अनृशंस (हृदयाऽसे) कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ (श्रोत्रियस्य लोपश्च) युवादिः।

योपधाद्गुरूपोत्तमाद्वुञ्। ५। १। १३२।

रामणीयकम्। आभिधानीयकम्। सहायाद्वा *। साहा-
य्यम्-साहायकम्।

द्वन्द्वमनोज्ञादि (१२) भ्यश्च। ५। १। १३३।

शैष्योपाध्यायिका। मानोज्ञकम्।

गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु। ५। १। १३४।

अत्याकारोऽधिक्षेपस्तदवेतः ते गोत्रचरणयोर्भावकर्म्मणी
प्राप्तः अवगतवान् वा। गार्गिकया श्लाघते गार्ग्यत्वेन विकत्थते
इत्यर्थः। गार्गिकयात्याकुरुते गार्गिकामवेतः।

होत्राभ्यश्छः। ५। १। १३५।

होत्राशब्दः ऋत्विग्वाची स्त्रीलिङ्गः। बहुवचनाद्विशेषग्रह-
णम्। अच्छावाकस्य भावः कर्म्म वा अच्छावाकीयम्। मैत्रा-
वरुणीयम्।

ब्रह्मणस्त्वः। ५। १। १३६।

होत्रावाचिनो ब्रह्मशब्दात्त्वः स्यात्। छस्यापवादः। ब्रह्म-
त्वम्। नेतिवाच्ये त्वचनन्तलो बाधनार्थम्। ब्राह्मणपर्य्या-
याद्ब्रह्मन्शब्दात्तु त्वतलौ। ब्रह्मत्वम्। ब्रह्मता।

नञ्स्नञोरधिकारः(१३) समाप्तः।

---

(१२) मनोज्ञ प्रियरूप अभिरूप कल्याण मेधाविन् आढ्य कुलपुत्र छान्दस छात्र श्रोत्रिय चोर धूर्त्त विश्वदेव युवन् कुपुत्र ग्रामपुत्र ग्रामकुलाल ग्रामषण्ड ग्रामकुमार सुकुमार बहुल अवश्यपुत्र अमुष्यपुत्र अमुष्यकुल सारपुत्र शतपुत्र मनोज्ञादिः।

(१३) (४।१।८०) स्त्रीपुंस्यां नञ्स्नञौ भवनादित्यधिकारः।

धान्यानाम्भवने (१) क्षेत्रे खञ्। ५। २। १।

भवन्त्यस्मिन्निति भवनम्। मुद्गानाम्भवनं क्षेत्रं मौद्गीनम्।

व्रीहिशाल्योर्ढक्। ५। २। २।

व्रैहेयम्। शालेयम्।

यवयवकषष्टिकाद्यत्। ५। २। ३।

यवानाम्भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम्।

विभाषा तिलमाषोमाभङ्गाणुभ्यः। ५। २। ४।

यद् वा स्यात्। पक्षे खञ्। तिल्यम्-तैलीनम्। माष्यम्-माषीणम्। उम्यम्-औमीनम्। भङ्ग्यम्-भाङ्गीनम्। अणव्यम्-आणवीनम्।

सर्व्वचर्म्मणः कृतः (२) खखञौ। ५। २। ५।

असामर्थ्येऽपि (३) निपातनात्समासः। सर्व्वश्चर्म्मणा कृतः। सर्व्वचर्म्मीणः-सार्व्वचर्म्मीणः।

यथामुखसम्मुखस्य दर्शनः(४)खः। ५। २। ६।

---

(१) धान्यानामिति भवनापेक्षया कर्त्तरि षष्ठी सैव समर्थविभक्तिः। भवतिरिहोत्पत्तिपरः।

(२) करणार्थतृतीयैव समर्थविभक्तिः कृत इति तद्धितार्थः।

(३) सर्व्व इत्यस्य कृतेनैवान्वयो नतूत्तरपदेन चर्म्मणेत्यसामर्थ्यादेव कथं वृत्तिरित्याशङ्क्याहासामर्थ्येऽपीति एवञ्च सर्व्वेण चर्मणा कृत इत्यर्थे न प्रत्ययइति भावः।

(४) दृश्यतेऽस्मिन् दर्शन आदर्शादिरिति वृत्तिकारः। वस्तुतो दृश्यतेऽसा

मुखस्य सदृशं यथा मुखम्प्रतिबिम्बन्निपातनात्साहश्ये (५) अव्ययीभावः। समं सर्व्वं मुखं सम्मुखं समशब्दस्य (६) अन्त-लोपो निपात्यते। यथामुखन्दर्शनः यथामुखीनः सर्व्वस्य मुखस्य दर्शनः सम्मुखीनः।

**तत्सर्व्वादेः पथ्यङ्गकर्म्मपत्रपात्रं व्याप्नोति। ५।२।७।**

सर्व्वादेः पथ्याद्यन्ताद् (७) द्वितीयान्तात् खः स्यात्। सर्व्व-पथान् व्याप्नोति सर्व्वपथीनः। सर्व्वाङ्गीणः। सर्व्वकर्म्मीणः। सर्व्वपत्रीणः। सर्व्वपात्रीणः।

**आप्रपदं प्राप्नोति। ५।२।८।**

पादस्याग्रम्प्रपदन्तन्मर्य्यादीकृत्य आप्रपदम्। आप्रपदीनः पटः।

**अनुपदसर्व्वान्नायानयं बद्धाभक्षयतिनेयेषु। ५।२।९।**

अनुरायामे साहश्ये वा। अनुपदम् बद्धा अनुपदीना (८)

---

विति दर्शनइत्येव न्याय्यम् तेन "यथामुखीनः सीताया" इति संयुगे "सम्मुखीनं त"मिति च भट्टिप्रयोगः सङ्गच्छते।

(५) यथाऽसादृश्येइति निषेधात् निपातनादित्युक्तम्।

(६) समशब्दस्येति आभिमुख्यार्थकसमुपसर्गपूर्व्वकात्तु प्रत्ययोनेष्यते।

(७) सर्व्वादेरित्यस्य सामानाधिकरण्याय पञ्चम्यर्थे प्रातान्तात् प्रथमेत्याशयेनाह पथ्याद्यन्तादिति। व्याप्तिकर्म्मतया लभ्यमाह द्वितोयान्तादिति।

(८) अनुशब्दस्यायामार्थत्वे पदसंबन्धिदैर्घ्योपलक्षिता, साहश्यार्थकत्वे पदसह-शीत्यर्थः साहश्यञ्च तुल्यपरिमाणत्वेन।

उपानत्। सर्व्वान्नानि भक्षयति सर्व्वान्नीनो भिक्षुः। अयानयः (९) स्थलविशेषः तं नेयः। अयानयीनः शारः।

**परोवरपरम्परपुत्रपौत्रमनुभवति। ५। २। १०।**

परांश्चावरांश्चानुभवतीति परोवरीणः। अवरस्योत्वं § निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। प्रकृतेः परम्परभावो निपात्यते। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। परम्पराशब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गन्तस्मादेव स्वार्थे ष्यञि पारम्पर्य्यम्। कथम्पारोवर्य्यवदिति असाधुरेव खप्रत्ययसन्नियोगेनैव परोवरेति निपातनात्।

**अवारपारात्यन्तानुकामङ्गामी। ५। २। ११।**

अवारपारङ्गामी अवारपारीणः। अवारीणः (१०)। पा-

---

(९) आनीयन्ते शरा अस्मिन् इत्यानयः अयेन दक्षिणावर्त्तेनापसव्यगमनेनानयः अयानयः शीर्षस्थानम्। द्यूतविशेषे हि चतस्रोवीथयः प्रत्येकं द्वादशकोष्ठोपेताः शारास्तु त्रिंशत् ते च एकैककितवेन पञ्चदशशो ग्राह्याः स्ववामपार्श्वस्थप्रथमकोष्ठपर्य्यन्तमारभ्यान्तिमकोष्ठरूपं शीर्षस्थानरूपमयानयं दक्षिणावर्त्तेनापसव्यगत्या सर्व्वेऽपि शारा नेया अतस्ते अयानयीना इत्युच्यन्ते। तत्रायं विशेषः 'ससहायस्य शारस्य परैर्नाक्रम्यते पदम्। असहायस्तु शारेण परकीयेण बाध्यते,, इत्युक्तदिशाऽवसेयः। परैः परकीयैः नाक्रम्यते द्वयादिशाराश्रितकोष्ठं नाक्रम्यते परकीयशारेण तत्स्थानाक्रमणेन प्रतिरोधात्। असहायस्तु हन्यते इत्यतः प्रतिरोधाजनकइत्यर्थः। घ्नन्ति हिंसन्ति परस्परं द्यूतकारा एभिरिति शाराः द्यूतसाधनविशेषाः गुटिकादयः।

§ अवरस्यादेरिति शेषः।

(१०) अवारपारेति विगृहीतादपि स्यादित्याशयेनाह अवारीणइति।

रीणः। पारावारीणः। अत्यन्तं गामी अत्यन्तीनः भृशङ्गन्तेत्यर्थः। अनुकामङ्गामी अनुकामीनः यथेष्टङ्गन्ता।

**समांसमां विजायते। ५। २। १२।**

यलोपो (११) ऽवशिष्टविभक्तेरलुक् च पूर्वपदे निपात्यते। समांसमीना गौः। 'समांसमीना सा यैव प्रतिवर्षं प्रसूयते'। प्रत्ययानुत्पत्तौ यलोपो (१२) वा वक्तव्यः*। समांसमां विजायते समायांसमायां वा।

**अद्यश्वीना (१३) ऽवष्टब्धे। ५। २। १३।**

अद्य श्वो वा विजायते अद्यश्वीना वड़वा। आसन्नप्रसवेत्यर्थः। केचित्तु विजायत इति नानुवर्त्तयन्ति। अद्यश्वीनं मरणम् आसन्नमित्यर्थः।

**आगवीनः। ५। २। १४।**

आङ्पूर्वाद्गोः कर्म्मकरे खप्रत्ययो निपात्यते। गोः प्रत्यर्पणपर्य्यन्तं यः कर्म्म करोति स आगवीनः।

(११) विपूर्व्वकजनिर्गर्भविमोचने तस्य समुदायसमाव्यापकत्वाभावेनात्यन्तसंयोगे द्वितीयाप्राप्त्यभावात् सप्तम्येव समर्थविभक्तिरित्याशयेनाह यलोप इति तथाच समायां समायामिति स्थिते पूर्वपदस्य यमात्नलोपे समांसमामितिस्थितमुत्तरपदस्य सुपोधातुप्रातिपदिकयोरिति (२२०पृ०) विभक्तिलुक्।

(१२) वार्त्तिके यलोपउभयपदे बोध्यस्तेन सूत्रे समांसमाञ्चिति निर्द्देशः सङ्गच्छते इति भावः।

(१३) अद्यश्वीनेति निर्विभक्तिकोऽयं निर्द्देशो न तु स्त्रीलिङ्गपरः अद्यश्वीनो गोसमूह इति प्रयोगात्। अवष्टब्धमासन्नमित्यर्थः।

अनुग्वलङ्गामी। ५। २। १५।

अनुगु गोः पश्चात् पर्य्याप्तंयथा गच्छति सोऽनुगवीनोगोपालः

अध्वनोयत्खौ। ५। २। १६।

अध्वानमलङ्गच्छति अध्वन्यः-अध्वनीनः। ये चाभावकर्म्मणोः (५।१२४०) आत्माध्वानौ खे (६।२७४०)इतिसूत्राभ्याम् प्रकृतिभावः।

अभ्यमित्राच्छ च। ५। २। १७।

चाद्यत्खौ। अभ्यमित्रीयः--अभ्यमित्र्यः--अभ्यमित्रीणः। अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः।

गोष्ठात् खञ् भूतपूर्व्वे। ५। २। १८।

गोष्ठो भूतपूर्व्वः गौष्ठीनो देशः।

अश्वस्यैकाहगमः। ५। २। १९।

एकाह्नेन गम्यते इत्येकाहगमः आश्वीनोऽध्वा।

शालीनकौपीने (१४) अधृष्टाकार्य्ययोः। ५। २। २०।

शालाप्रवेशमर्हति शालीनः अधृष्टः। कूपपतनमर्हति कौपीनं पापम् तत्साधनत्वात्तद्दङ्गोप्यत्वात् पुरुषलिङ्गमपि तत्सम्बन्धात्तदाच्छादनमपि।

(१४) शालाकूपशब्दौ तत्प्रवेशपतनयोर्लाक्षणिकौ एतत्प्रत्ययान्तौ चानयोः रूढाविति बोध्यम्।

**व्रातेन जीवति। ५। २। २१।**

व्रातेन शरीरायासेन (१५) जीवति न तु बुद्धिवैभवेन स व्रातीनः।

**साप्तपदीनं सख्यम्। ५। २। २२।**

सप्तभिः पदैरवाप्यते साप्तपदीनम्।

**हैयङ्गवीनं संज्ञायाम्। ५। २। २३।**

ह्योगोदोहस्य हियङ्गुरादेशः विकारार्थे खञ् च निपात्यते। दुह्यत इति दोहः क्षीरं ह्योगोदोहस्य विकारः हैयङ्गवीनं नवनीतम्।

**तस्य पाकमूले पील्वादि (१६)कर्णादि(१७)भ्यः कुणब्जाहचौ। ५। २। २४।**

पीलूनाम्पाकः पीलुकुणः। कर्णस्य मूलं कर्णजाहम्।

**पक्षात्तिः। ५। २। २५।**

मूलग्रहणमात्रमनुवर्त्तते। पक्षस्य मूलम्पक्षतिः।

**तेन वित्तश्चुञ्चुप्च(न)णपौ। ५। २। २६।**

---

(१५) नानाजातीयानामनियतवृत्तीनां शरीरायासजीविनां समूहो व्रातस्तत्कर्म्मैवेह व्रातमित्याशयेन शरीरायासेनेत्युक्तम्।

(१६) पीलु कर्कन्धु शमी करीर कुवल बदर अश्वत्थ खदिर पील्वादिः।

(१७) कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ कर्णादिः।

यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः तेन चस्य नेत्संज्ञा। विद्यया वित्तो विद्याचुञ्चुः विद्याच(नः)णः।

## विनञ्भ्यां नानाञौ न सह(१८)। ५।२।२७।

असहार्थे पृथग्भावे वर्त्तमानाभ्यां स्वार्थे प्रत्ययौ। विना। नाना।

## वेः शालच्छङ्कटचौ। ५। २। २८।

क्रियाविशिष्ट (१९) साधनवाचकात् स्वार्थे एतौ स्तः। विस्तृतम् विशालम्। विशङ्कटम्।

## सम्प्रोदश्च कटच्। ५। २। २९।

सङ्कटम्। प्रकटम्। उत्कटम्। चाद्विकटम्। अलाबूतिलोमाभङ्गाभ्योरजस्युपसंख्यानम् *। अलाबूनां रजः अलाबूकटम्। गोष्ठजादयः स्थानादिषु पशुनामभ्यः *। गवां स्थानं गोगोष्ठम्। सङ्घाते (२०) कटच् *। अवीनां सङ्घातः अविकटः। विस्तारे पटच् *। अविपटः। द्वित्वे गोयुगच् *।

---

(१८) न सहेति प्रकृत्यर्थविशेषणमित्याशयेनाहासहार्थे इति तदेव व्याचष्टे पृथग्भावे इति। तेन क्रियासहयोगे विगत इत्यादौ नास्य प्रवृत्तिः।

(१९) उपसर्गाणां क्रियाविशिष्टबोधकतया तद्बोधनयोग्यादेव प्रत्यय इत्याशयेनाह क्रियाविशिष्टेति तेन पक्षिवाचकात् विशब्दात् न प्रसङ्गः।

(२०) गोष्ठजादीत्यादिशब्दस्याद्यबोधकवार्त्तिकान्याह संघात इति अप्रसृतावयवः समूहः संघातः, प्रसृतावयवस्तु विस्तार इत्यनयोर्भेदः। एतौ च प्रत्ययौ सामञ्जिकप्रत्ययमात्राणामपवादकौ।

द्वावुष्ट्रौ उष्ट्रगोयुगम् (२१)। षट्त्वे षड्गवच् *। अश्वषड्गवम्। स्नेहे तैलच् *। तिलतैलम्। सर्षपतैलम्। भवने क्षेत्रे शाकटशाकिनौ *। इक्षुशाकटम्। इक्षुशाकिनम्।

अवात्कुटारच्च। ५। २। ३०।

चात्कटच्। अवाचीनः (२२) अवकुटारः। अवकटः।

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः। ५। २। ३१।

अवादित्येव। नतन्नमनम्। नासिकाया नतम् अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिकाऽपि अवटीटा। पुरुषोऽवटीटः।

नेर्विड़ज्विरीसचौ (२३)। ५। २। ३२।

निविड़म्। निविरीसम्।

इनच् पिटच्चिक चि च। ५। २। ३३।

नेरित्येव। नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेश्चिकचि इत्यादेशौ च। कप्रत्ययचिकादेशौ च वक्तव्यौ*।

(२१) उष्ट्रगोयुगमिति अत्र द्वित्वबोधकत्वेऽपि द्वयं युग्ममित्यादिवत् संघातप्राधान्यादेकवचनत्वम्।

(२२) अवाचीनः प्रसिद्धः।

(२३) नेर्विड़जित्यत्र नासिकाया इत्याद्यर्थस्य न सम्बन्धः निविड़ाः केशा इत्यादिप्रयोगात् अन्ये तु मण्डूकप्लुत्या संभंत्स्यते।

चिकिनम्। चिपिटम्। चिक्कम्। क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषी *। क्लिन्ने चक्षुषी अस्य चिल्लः। पिल्लः। चुलच् *। चुल्लः।

### उपाधिभ्यान्त्यकन्नासन्नारूढयोः ।५।२।३४।

संज्ञायामित्यनुवर्त्तते। पर्व्वतस्यासन्नं (२४) स्थलमुपत्यका। आरूढस्थलमधित्यका।

### कर्म्मणि घटोऽठच् (२५)। ५। २। ३५।

घटतइति घटः पचाद्यच्। कर्म्मणि घटते कर्म्मठः पुरुषः।

### तदस्य सञ्जातन्तारकादि (२६) भ्य इतच्। ५ । २। ३६।

(२४) आसन्नं समीपमारूढमुच्चम् संज्ञायामित्यनुवृत्तस्य फलमाह पर्व्वतस्येति तेन 'समुद्रोपत्यका हैमीति, प्रयोगः लक्षणयैवेति बोध्यम्।

(२५) अठजित्यकारादिकरणात् अङ्गसंज्ञानिमित्तत्वाभावान्न ठस्येकादेशः।

(२६) तारका पुष्प कर्णक मञ्जरी ऋजीष क्षण सूत्र मूत्र निष्क्रमण पुरीष उच्चार प्रचार विचार कुड्मल कण्टक मुसल मुकुल कुसुम कुतूहल स्तवक किसलय पल्लव खण्ड वेग निद्रा मुद्रा बुभुक्षा धेनुष्या पिपासा श्रद्धा अभ्र पुलक अङ्गारक वर्णक द्रोह दोह सुख दुःख उत्कण्ठा भर व्याधि वर्म्मन् व्रण गौरव शास्त्र तरङ्ग तिलक चन्द्रक अन्धकार गर्व्व मुकुर हर्ष उत्कर्ष रण कुवलय गर्ध क्षुध् सीमन्त ज्वर गर रोग रोमाञ्च पण्डा कज्जल तृष् कोरक कल्लोल स्थपुट फल कञ्चुक शृङ्गार अङ्कुर शैवल बकुल श्वभ्र आराल कलङ्क कर्दम कन्दल मूर्च्छा अङ्गार हस्तक प्रतिबिम्ब विघ्न तन्त्र प्रत्यय दीक्षा गर्ज (गर्भादप्राणिनि) तारकादिराकृतिगणः।

तारकाः सञ्जाता अस्य तारकितन्नभः। आकृतिगणोऽयम्।

**प्रमाणे(२७)द्वयसज्दघ्नञ्मात्रचः ।५।२।३७।**

तदस्येत्यनुवर्त्तते। ऊरु प्रमाणमस्य ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्। प्रमाणे लः(२८)। शमः (२९)। दिष्टिः। वितस्तिः। द्विगोर्न्नित्यम् (३०) द्वौ शमौ प्रमाणमस्य द्विशमम्। प्रमाणपरिमाणाभ्यां (३१) संख्यायाश्चापि संशये मात्रज्वक्तव्यः॰। शममात्रम्। प्रस्थमात्रम्। पञ्चमात्राः। वत्वन्तात् स्वार्थे द्वयसज्मात्रचौ॰। तावदेव तावद्द्वयसम् तावन्मात्रम्।

**पुरुषहस्तिभ्यामण् च।५।२।३८।**

(२७) प्रमाणे इति प्रमाणमिह परिच्छेदमात्रम् तत्रायं विशेषः आद्यौ प्रत्ययौ उन्मानादेव "प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम"त्युक्तेः मात्रच् तु परिमाणसामान्यात् तेनोरुमात्रं प्रस्थमात्रमित्यादि सिद्धम्।

(२८) प्रमाणे ल इत्यत्र प्रमाणम् "आयामस्तु प्रमाणं स्या"दित्युक्तं गृह्यते। प्रमाणे वर्त्तमानात् विहितस्य प्रत्ययस्य लः लुगित्यर्थस्तेन द्वयसचो न लुक् तस्योर्द्ध्वमानोत्तरविहितत्वात्।

(२९) शमः परिमाणमस्येति वाक्ये शमशब्दादुत्पन्नमात्रचो लुकि शम इति शमादीनां ऊर्द्ध्वाधोदिगवस्थितवस्तुपरिच्छेदकत्वे तेभ्यो द्वयसज्दघ्नञोरेवोत्पत्स्यमानतया न तयोर्लुगिति विशेषो बोध्यः। शब्दे न्दुः॰

(३०) द्विगोरिति प्रमाणे इत्यनुवर्त्तते तेन एतत्सामर्थ्यादेव प्रमाणान्न द्विगोरायामरूपप्रमाणत्वाभावेऽपि मात्रजिति गम्यते। शब्दे न्दुः॰।

(३१) प्रमाणेति तेनोन्मानात्संशयेऽपि न मात्रच्। शमः स्यान्नवेति संशयः।

पुरुषः प्रमाणमस्य पौरुषम्-पुरुषद्वयसम्। हास्तिनम्-हस्ति-द्वयसम्।

**यत्तदेतेभ्यः परिमाणे वतुप्। ५। २। ३९।**

यत्परिमाणमस्य यावान्। तावान्। एतावान्।

**किमिदंभ्यां वो घः। ५। २। ४०।**

आभ्यां वतुप् स्याद्वस्य च घः। कियान्। इयान्।

**किमः संख्यापरिमाणे डति च। ५। २। ४१।**

चाद्वतुप्। तस्य च वस्य घः स्यात्। काः (३२) संख्या येषान्ते कति। कियन्तः।

**संख्याया अवयवे (३३) तयप्। ५। २। ४२।**

पञ्च अवयवा अस्य पञ्चतयन्दारु।

**द्वित्रिभ्यान्तयस्यायज्वा। ५। २। ४३।**

द्वयम्-द्वितयम्। त्रयम्-त्रितयम्।

**उभादुदात्तो नित्यम्। ५। २। ४४।**

(३२) द्व्येकयोर्व्याप्यसंख्याभावेन संशयाऽभावात् न प्रश्नः बहुत्वव्याप्यसंख्या-नान्त्वनेकतया संशयात् प्रश्नो युक्त इत्याशयेनाह काः इति।

(३३) अवयवे वर्त्तमानसंख्यावाचकात् अवयविरूपेऽर्थेत्यर्थे तयबित्यर्थः। अवयवस्यावान्तरावयवभेदोऽपि समुदायस्तेन सुमितयं बहुतयमि-त्यादि सिद्धम्।

उभशब्दात्तयपोऽयच् स्यात्। स चाद्युदात्तः (३४)। उभयम्।

## तदस्मिन्नधिकमिति दशान्ताड्डः।५।२।४५।

एकादश अधिका अस्मिन्नेकादशम्। शतसहस्रयोरेवेष्यते नेह। एकादश अधिका अस्यां विंशतौ। प्रकृतिप्रत्ययार्थयोः समानजातीयत्वमेवेष्यते नेह। एकादश माषा अधिका अस्मिन् सुवर्णशते।

## शदन्तविंशतेश्च (३५)। ५। २। ४६।

डः स्यादुक्तेऽर्थे। त्रिंशदधिका अस्मिन् त्रिंशं शतम्। विंशम्।

## संख्याया गुणस्य निमाने मयट्। ५। २। ४७।

भागस्य मूल्ये वर्त्तमानात् प्रथमान्तात् (३६) सङ्ख्यावाचिनः षष्ठ्यर्थे मयट् स्यात्। यवानान्द्वौ भागौ निमानमस्योदश्वि द्भागस्य द्विमयमुदश्विद्यवानाम्। गुणस्येति किम् द्वौ व्रीहि-यवौ निमानमस्योदश्वितः। निमाने किम् द्वौ गुणौ क्षीरस्य एकस्तैलस्य द्विगुणं क्षीरम्पच्यते तैलेन।

---

(३४) उदात्तपहणसामर्थ्यादाद्युदात्तत्वम् अन्त्यस्य तु चित्त्येनैव सिद्धेः सर्व्वो-दात्तत्वन्तु अनुदात्तं पदमित्यादिना (७५२८पृ०) निषिद्धमिति भावः।

(३५) अन्तशब्दः काकाक्षिगोलकन्यायेनोभयत्र संबध्यते तेन एकत्रिंशं शतम् एकविंशं शतमित्यादि सिद्धम्।

(३६) गुणोऽत्र समानभागः निमीयते विक्रीयतेऽनेनेति निमानं 'मूल्यम्' तद-स्येति च(६६६पृ०) मयड्कस्त्यादनुवर्त्तते तदाह प्रथमान्तादिति गुणकर्म्म-कनिमाने वर्त्तमानाद्गुणगतसंख्यावाचकात् मयडित्यर्थः निमाननिमेय-

तस्य (३७) पूरणे डट् । ५ । २ । ४८ ।

एकादशानाम् पूरण एकादशः ।

नान्तादसंख्यादेर्मट् । ५ । २ । ४९ ।

डटो मडागमः स्यात् पञ्चानाम् पूरणः पञ्चमः । नान्तात् किम् विंशः । असंख्यादेः किम् एकादशः ।

षट्कतिकतिपयचतुरां थुक् । ५ । २ । ५१ ।

एषां थुगागमः स्याड्डटि । षषाम् पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽप्यतएव ज्ञापकाड्डट् । कतिपयथः चतुर्थः । चतुरश्छयतावाद्यक्षरलोपश्च * । तुरीयः । तुर्य्यः ।

बहुपूगगणसङ्घस्य तिथुक् । ५ । २ । ५२ ।

डटीत्येव । पूगसङ्घयोरसंख्यात्वेऽप्यतएव डट् । बहुतिथ इत्यादि ।

वतोरिथुक् । ५ । २ । ५३ ।

डटीत्येव । यावतिथः ।

द्वेस्तीयः । ५ । २ । ५४ ।

डटोऽपवादः । द्वयोः पूरणो द्वितीयः (३८) ।

योर्भागहृपत्वे निमेयसंख्यापेक्षया निमानसंख्यायाआधिक्ये निमेयस्यैकत्वे चायं प्रत्यय इति भाष्ये स्पष्टम् । शब्देन्दु० ।

(३७) संख्याया इत्यनुवर्त्तते अत्र संख्येयार्थकसंख्यावाचिनोग्रहणम् प्रवृत्तिनिमित्तस्यैव संख्यायाः पूरणेऽयं प्रत्ययः ।

(३८) सहायवाची द्वितीयशब्दस्त्वव्युत्पन्नं प्रातिपदिकमनेन सूत्रेण न तस्य साधुत्वं पूरणार्थत्वाभावात् ।

वेः सम्प्रसारणञ्च। ५। २। ५५।

त्रितीयः।

विंशत्यादिभ्यस्तमडन्यतरस्याम्। ५। २। ५६।

एभ्यो डटस्तमडागमो वा स्यात्। विंशतितमः-विंशः। एकविंशतितमः-एकविंशः।

नित्यं शतादिमासार्द्धमाससंवत्सराच्च।५।२।५७।

शतस्य पूरणः शततमः। एकशततमः। मासादेरतएव डट्। मासतमः।

षष्ट्यादेश्चाऽसंख्यादेः। ५। २। ५८।

षष्टितमः। संख्यादेस्तु विंशत्यादिभ्यइति विकल्पएव। एकषष्टः। एकषष्टितमः।

मतौ छः सूक्तसाम्नोः। ५। २। ५९।

मत्वर्थे छः स्यात्। अच्छावाकशब्दोऽस्मिन्नस्ति अच्छावाकीयं सूक्तम् +। वारवन्तीयं साम।

अध्यायानुवाकयो ‡ र्लुक्। ५। २। ६०।

मत्वर्थस्य छस्य। अतएव ज्ञापकात्तत्र छः। विधानसामर्थ्याच्च विकल्पो न लुक्। गर्द्दभाण्डः-गर्द्दभाण्डीयः।

विमुक्तादिभ्यो(३९)ऽण्। ५। २। ६१।

---

+ एकदेवताक ऋक्समुदायः सूक्तम्।

‡ वेदभागभेदः अनुवाकः।

(३९) विमुक्त देवासुर रक्षोऽसुर उपसद् सुवर्ण परिसारक सदसद् वसु

मत्वर्थेऽण् स्यादध्यायानुवाकयोः। विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तः। दैवासुरः।

गोषदादि(४०)भ्यो वुन्। ५। २। ६२।

मत्वर्थेऽध्यायानुवाकयोः। गोषदकः। इषेत्वकः।

तत्र कुशलः पथः। ५। २। ६३।

वुन् स्यात्। पथि कुशलः पथिकः।

आकर्षादि (४१) भ्यः कन्। ५। २। ६४।

आकर्षे कुशलः आकर्षकः। आकषादिभ्य इति रेफरहितो मुख्यः पाठः। आकषो निकषः।

धनहिरण्यात् कामे। ५। २। ६५।

कामइच्छा। धने कामो धनको देवदत्तस्य। हिरण्यकः।

स्वाङ्गेभ्यः प्रसिते। ५। २। ६६।

---

मरुत् पत्नीवत् वसुमत् महीयत्व सत्वत् बर्हवत् दशार्ण दशार्ह वयस् हविर्द्धान पतत्रिन् महित्री अस्यहत्य सोमापूषन् इडा अग्नाविष्णु उर्वशी वृत्रहन् विमुक्तादिः। विमुक्तादयः शब्दपराः।

(४०) गोषद् इषेत्वा मातरिश्वन् देवस्यत्वा देवीरापः कृष्णोस्य स्वरेठ देवीधियः रक्षोहण युञ्जान अञ्जन प्रभूत प्रतूर्त कृशाकु गोषद इत्यादि। गोषच्छब्दोऽस्मिन्नस्तीत्यादि वाक्यम्। गोषदादयश्च शब्दपराः।

(४१) आकर्ष (आकष) त्सरु पिशाच पिचण्ड अशनि अश्मन् निचय चय विजय जय आचय नय पाद दीप ह्रद ह्राद ह्लाद गद्गद शकुनि आकर्षादिः।

केशेषु प्रसितः केशकः तद्रचनायान्तत्पर इत्यर्थः।

## उदराट्ठगाद्यूने। ५। २। ६७

अविजिगीषौ ठक् स्यात्। कनोऽपवादः। उदरे प्रसितः औदरिकः बुभुक्षयाऽत्यन्तपीडितः। आद्यूने किम् उदरकः उदरपरिमार्ज्जनादौ प्रसक्त इत्यर्थः।

## सस्येन परिजातः। ५। २। ६८।

कन् स्यर्य्यते न तु ठक्। सस्यशब्दोगुणवाची न तु धान्यवाची शस्येनेति पाठान्तरम्। सस्येन गुणेन परिजातः सस्यङ्गः सस्यकः साधुः।

## अंशं हारी। ५। २। ६९।

हारीत्यावश्यके णिनिः अतएव तद्योगे षष्ठी न। अंशको दायादः।

## तन्त्रादचिरापहृते। ५। २। ७०।

तन्त्रकः पटः प्रत्यग्र इत्यर्थः।

## ब्राह्मणकोष्णिके संज्ञायाम्। ५। २। ७१।

आयुधजीविनो ब्राह्मणा यस्मिन्देशे स ब्राह्मणकः। अल्पमन्नं यस्यां सा उष्णिका यवागूः। अन्नशब्दस्य उष्णादेशो निपात्यते।

## शीतोष्णाभ्याङ्कारिणि। ५। २। ७२।

शीतङ्करोतीति शीतकः अलसः (४२)। उष्णं करोतीति उष्णकः शीघ्रकारी

अधिकम्। ५। २। ७३।

अध्यारूढशब्दात्कन् उत्तरपदलोपश्च।

अनुकाभिकाभीकः कमिता। ५। २। ७४।

अन्वभिभ्यां कन् अभेः पाक्षिको दीर्घश्च। अनुकामयते अनुकः। अभिकामयते अभिकः-अभीकः।

पार्श्वेनान्विच्छति। ५। २। ७५।

अनृजुरुपायः पार्श्वं तेनान्विच्छति पार्श्वकः।

अयःशूलदण्डाजिनाभ्यां ठक्ठञौ। ५। २। ७६।

तीक्ष्णउपायोऽयःशूलं तेनान्विच्छति आयःशूलिकः साहसिकः। दण्डाजिनन्दम्भः (४३) तेनान्विच्छति दाण्डाजिनिकः।

तावतिथं ग्रहणमिति लुग्वा। ५। २। ७७।

कन् स्यात् पूरणप्रत्ययस्य च लुग् वा। द्वितीयकम्-द्विकं वा ग्रहणं देवदत्तस्य द्वितीयेन रूपेण ग्रहणमित्यर्थः। तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यञ्च लुक् *। षष्ठेन रूपेण (४४) गृह्णाति षट्को देवदत्तः। पञ्चकः।

---

(४२) संज्ञायामित्यनुवर्त्तनादुत्वात्र्ययेनाहालसइत्यादि। अलसोहि कार्य्यकरणकाले शीतबाधामिव सूचयन् तत्र न प्रवर्त्तते। शीघ्रकारी दक्षस्तु तत्यपि शीते बद्गणयित्वैव उष्णमिव सूचयन् कार्य्ये प्रवर्त्तते।

(४३) दम्भसाधनत्वाद्दम्भः दाम्भिका हि प्रायेण दण्डाजिनं धारयन्ति।

(४४) षष्ठेनेति पञ्चभिःरूपैः न गृह्णाति किन्तु षष्ठेन, रूपञ्च शब्दाद्वन्तिः।

स एषां ग्रामणीः। ५। २। ७८।

देवदत्तो मुख्य एषां देवदत्तकाः। त्वत्काः। मत्काः।

शृङ्खलमस्य बन्धनङ्करभे। ५। २। ७९।

शृङ्खलकः करभः।

उत्क उन्मनाः। ५। २। ८०।

उद्गतमनस्कात्स्वेरुच्छब्दात् स्वार्थे कन्। उत्कः उत्कण्ठितः।

कालप्रयोजनाद्रोगे। ५। २। ८१।

कालवचनात्(४५) प्रयोजनवचनाच्च कन् स्याद्रोगे। द्वितीयेऽहनि भवो द्वितीयको ज्वरः। प्रयोजनं कारणं रोगस्य फलं वा। विषपुष्पैर्जनितो विषपुष्पकः। उष्णकार्य्यमस्य उष्णकः। रोगे किम्। द्वितीयो दिवसोऽस्य।

तदस्मिन्नन्नं प्रायेण संज्ञायाम्। ५। २। ८२।

प्रथमान्तात्सप्तम्यर्थे कन् स्यात्। यत् प्रथमान्तमन्नं चेत् प्रायविषयन्तत्। गुडापूपाः प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी। वटकेभ्य इनिर्वाच्यः*। वटकिनी।

कुल्माषादञ्। ५। २। ८३।

(४५) कालवचनादिति कालबोधकपूरणप्रत्ययान्तएवेह गृह्यते सप्तम्यन्ताद्भवेऽर्थे फलकारणान्यतरबोधकात् प्रथमान्तादस्य कारणं कार्य्यं वेत्यर्थे प्रत्यय इत्यर्थस्तदाशयेनोदाहरति प्रयोजनमिति।

कुल्माषाः प्रायेणान्नमस्यां कौल्माषी।

**श्रोत्रियंश्छन्दोऽधीते। ५। २। ८४।**

श्रोत्रियः। वेत्त्यनुवृत्तेश्छान्दसः।

**श्राद्धमनेन(४६)भुक्तमिनिठनौ। ५। २। ८५।**

श्राद्धी-श्राद्धिकः।

**पूर्व्वादिनिः। ५। २। ८६।**

पूर्व्वं कृतमनेन पूर्व्वी।

**सपूर्व्वाच्च। ५। २। ८७।**

कृतपूर्व्वी।

**इष्टादि (४७) भ्यश्च। ५। २। ८८।**

इष्टमनेन इष्टी। अधीती।

**छन्दसि † परिपन्थिपरिपरिणौ पर्य्यवस्थातरि। ५। २। ८९।**

---

(४६) श्राद्धशब्देन तत्साधनद्रव्यमभिधीयते न तु पितृगुद्देश्यकत्यागस्तस्य भोजनासम्भवात्।

(४७) इष्ट पूर्त्त उपासादित निगदित परिगदित परिवादित निकथित निपादित निपठित सङ्कलित परिकलित संरक्षित परिरक्षित अर्च्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत अवधान आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित इष्टादिः।

† लोकेऽपि परिपन्थिनुशब्दस्य रिपौ भूरिप्रयोगात्तस्यासाधुत्वबोधनाय वैदिकप्रक्रियोपयुक्तमपीदं सूत्रमत्र प्रसङ्गात् दर्शितम्।

लोके तु परिपन्थिशब्दो न न्याय्यः।

**अनुपद्यन्वेष्टा। ५। २। ९०।**

अनुपदमन्वेष्टा गवाम् अनुपदी।

**साक्षाद्द्रष्टरि संज्ञायाम्। ५। २। ९१।**

साक्षाद् द्रष्टा साक्षी।

**क्षेत्रियच् परक्षेत्रे चिकित्स्यः। ५। २। ९२।**

क्षेत्रियो व्याधिः शरीरान्तरे चिकित्स्योऽप्रतीकार्य्य इत्यर्थः।

**इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा। ५। २। ९३।**

इन्द्र आत्मा तस्य लिङ्गं (४८) करणेन कर्त्तुरनुमानात्। इतिशब्दः प्रकारार्थः। इन्द्रेण दुर्ज्जयमिन्द्रियम्।

**तदस्यास्त्यस्मिन्निति मतुप् (४९)। ५। २। ९४।**

गावोऽस्यास्मिन्वा सन्ति गोमान्।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गे(५०)ऽस्तिविवक्षायाम्भवन्ति मतुबादयः॥

**रसादिभ्यश्च। ५। २। ९५।**

(४८) कर्त्रधिष्ठितमेवेन्द्रियं व्याप्रियतेऽतत् तस्य लिङ्गमनुमापकम्।

(४९) 'शैषिको मतुवर्थीयः शैषिको मतुवर्थिकः। सरूपः प्रत्ययो नेष्टः सनन्ताक्ष सनिष्यते,, इत्युक्तेः षष्ठ्यर्थमत्वर्थीयान्तात् षष्ठ्यर्थमत्वर्थीयो न, एवं सप्तम्यर्थमत्वर्थीयात् सप्तम्यर्थो न, 'सरूपो नेष्ट इत्युक्तेर्भिन्नरूपस्तु स्यादेवेत्यर्थः।

(५०) संसर्गः संयोगएवातः दण्डीत्यादिः संयुक्तदण्डएव प्रयोगो न तु गृह

मतुप् । रसवान् । रूपवान् । अन्यमत्वर्थीयनिवृत्त्यर्थं वच-नम् (५१) । रस रूप वर्ण गन्ध स्पर्श शब्द स्नेह भाव गुणाद् एकाचः । स्ववान् । गुणग्रहणं रसादीनां विशेषणम् ।

**तसौ मत्वर्थे । १ । ४ । १९ ।**

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । वसोः सम्प्र-सारणम् (१८७५०) । विदुष्मान् । गुणवचनेभ्यो (५२) मतुपो लुगिष्टः । शुक्लोगुणोऽस्यास्ति शुक्लः पटः । कृष्णः ।

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः । ८ । २ । ९ ।**

मवर्णाऽवर्णान्तान्मवर्णावर्णोपधाच्च यवादि(५३)वर्ज्जात्परस्य

---

इत्तिदचस्ताभिन्यमीति । अस्तिविवक्षायां ये मतुबादयो विहितास्ते भमादिष्वर्थेषु भवन्तीत्यर्थः । तत्र भूम्नि यवमान् प्रचुरयवविशिष्टः । निन्दायां ककुदावर्त्तिनी कन्या कुलक्षणवती । प्रशंसायां रूपवान् सुरूपः । नित्ययोगे क्षीरिणोवृक्षा नित्यनिर्यासयुक्ताः । अतिशायने उदरिणी कन्या अतिशयितोदरेत्यर्थः ।

(५१) भाष्ये "इष्यन्ते ह्यन्ये रसादिभ्यो मत्वर्थीयाः रसिको नटः उर्वशी वै रूपिण्युत्क्रत्वादत्राचपदं ठनिनिभिन्नपरमिति कल्प्यम् । वस्तुतः गुणादित्युक्तेः मधुरादिरसादिरूपगुणवाचकादेव मतुपोनियमात् रसिको नट इत्यादौ रसशब्दस्य शृङ्गारोक्तश्रृङ्गारादिरसपरत्वात्, रूपिणी-त्यत्र रूपस्य सौन्दर्य्यपरत्वाच्च न तत्र नियमबाधः । किन्तु रूपी घटो-ऽनित्य इत्यादिप्रयोगसाधुत्वायैव तथा सङ्कोचः ।

(५२) गुणवचनेभ्य इति गुणगुणिवाचकेभ्य एव शुक्लादिशब्देभ्यो न तु गुण-मात्रवाचिभ्यो रूपरसादिभ्य इत्यर्थः ।

(५३) यव दल्मि ऊर्म्मि भूमि कमि क्रुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि (ध्वजि) ध्वजि निजि सिजि सञ्जि हरित् ककुत् मरुत् गरुत् इक्षु द्रु मधु आकृतिगणोऽयम् यवादिः ।

मतोर्म्मस्य वः स्यात्। किंवान्। ज्ञानवान्। विद्यावान्। लक्ष्मीवान्। यशस्वान्। भास्वान्। यवादेस्तु यवमान्। भूमिमान्।

झयः। ८। २।१०।

झयन्तान्मतोर्म्मस्य वः स्यात्। अपदान्तत्वान्न जश्त्वम्। विद्युत्वान्।

संज्ञायाम्। ८। २। ११।

मतोर्म्मस्य वः स्यात्। अहीवती। मुनीवती। शरादीनां चेति (६।३।१२०) दीर्घः।

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्म्मण्वती। ८। २। १२।

एते षट् संज्ञायां निपात्यन्ते। आसन्नशब्दस्यासन्दीभावः। आसन्दीवान् ग्रामः। अन्यत्रासन्नवान्। अस्थिशब्दस्याष्ठीभावः। अष्ठीवान्। अस्थिमानन्यत्र। चक्रशब्दस्य चक्रीभावः। चक्रीवान्नाम राजा। चक्रवानन्यत्र। कक्ष्यायाः सम्प्रसारणम्। कक्षीवान्नाम ऋषिः। कक्ष्यावानन्यत्र। लवणशब्दस्य रुमण्भावः। रुमण्वान्नाम पर्व्वतः। लवणवानन्यत्र। चर्म्मणो नलोपाभावो णत्वञ्च। चर्म्मण्वती नाम नदी। चर्म्मवत्यन्यत्र।

उदन्वानुदधौ च। ८। २। १३।

उदकस्य उदन्भावो मतौ उदधौ संज्ञायाञ्च। उदन्वान् समुद्रः ऋषिश्च।

## राजन्वान् सौराज्ये। ८ । २ । १४ ।

राजन्वती भूः । राजवानन्यत्र ।

## प्राणिस्थादातो लजन्यतरस्याम् ।५।२।९६।

चूडालः-चूडावान् । प्राणिस्थात् किम् शिखावान्दीपः । आतः किम् हस्तवान् । प्राण्यङ्गादेव नेह । मेधावान् । प्रत्ययस्वरेणैव सिद्धे अन्तोदात्तत्वे चूडालोऽसीत्यादौ 'स्वरितो वाऽनुदात्ते पदादाविति' (७५४१७०) स्वरितबाधनार्थश्चकारः ।

## सिध्मादि (५४) भ्यश्च । ५ । २ । ९७ ।

लज्वा स्यात् । सिध्मलः-सिध्मवान् । अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं न तु प्रत्ययविकल्पार्थम् तेन अकारान्तेभ्य इनिठनौ न । (वातदन्तबलललाटानामूङ् च ग०) । वातूलः ।

## वत्सांसाभ्यां कामबले । ५ । २ । ९८ ।

आभ्यां लज्वा स्याद्यथासंख्यं कामवति बलवति चार्थे । वत्सलः । अंसलः ।

## फेनादिलच्च । ५ । । २ । ९९ ।

चाल्लच् । अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमनुवर्त्तते । फेनिलः-फेनलः-फेनवान् ।

(५४) सिध्म गडु मणि नाभि बीज वीणा कृष्ण निष्पाव पांसु पार्श्व पर्शु हनु सक्तु मांस (पार्ष्णिधमन्योर्दीर्घश्च) (वातदन्तबलललाटानामूङ् च) (जटाघटाकटाकालाः क्षेपे) पर्ण उदक प्रज्ञा सक्थि कर्ण स्नेह शीत श्याम पिङ्ग पित्त पुष्क पृथु मृदु मञ्जु मण्ड पत्र चटु कपि गण्डु

## लोमादिपामादिपिच्छादिभ्यः शनेलचः । ५ । २ । १०० ।

लोमादि(५५)भ्यः शः । लोमशः-लोमवान् । रोमशः-रोमवान् । पामादि(५६)भ्यो नः । पामनः । (अङ्गात् कल्याणेग०)। अङ्गना । (लक्ष्म्या अच्च ग०) । लक्ष्मणः । (विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ग०) । विषुणः । पिच्छादि(५७) भ्य इलच् । पिच्छिल-पिच्छावान् । उरसिलः-उरस्वान् ।

## प्रज्ञाश्रद्धार्च्चाभ्यो णः । ५ । २ । १०१ ।

प्राज्ञो व्याकरण (५८) प्राज्ञा । श्राद्धः । आर्च्चः । वृत्तेश्च * । वार्त्तः ।

## तपःसहस्राभ्यां विनीनी । ५ । २ । १०२ ।

विनीन्योरिकारो नकारपरित्राणार्थः । तपस्वी । सहस्री ।

---

पन्थि श्री कुश धारा वर्ष्मन् पच्मन् श्लेष्मन् पेश निष्पाद् कुण्ड (क्षुद्र जन्तूपतापयोश्च) सिध्मादिः ।

(५५) लोमन् रोमन् बभ्रु हरि गिरि कर्क कपि मुनि तरु लोमादिः ।

(५६) पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रु बलि सामन् ऊष्मन् कृमि (अङ्गात्कल्याणे) (शाकोपलालीदद्रूणां ह्रस्वत्वञ्च) (विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः) (लक्ष्म्या अच्च) पामादिः ।

(५७) पिच्छा उरस् ध्रुवक भ्रुवक (जटाघटाकालाः क्षेपे) वर्ण उदक पङ्क प्रज्ञा पिच्छादिः ।

(५८) व्याकरणमिति गुणभूतक्रियायां कर्मतया सम्बन्धः कर्त्तृकर्म्मणोः कृतीति (३००पृ०) षष्ठी तु नेह प्रवर्त्तते कृतोत्युक्त्या कृतपूर्व्वी कटमित्यादिवत् तद्धितयोगे (३००पृ०) तन्निरासस्योक्तत्वात् ।

असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा मा भूदिति। सहस्वात्तु ठञोऽपि बाधनार्थम्।

अण् च। ५। २। १०३।

योगविभाग उत्तरार्थः। तापसः। साहस्रः। ज्योत्स्नादि(५८)भ्य उपसंख्यानम् *। ज्यौत्स्नः। तामिस्रः।

सिकताशर्कराभ्याञ्च। ५। २। १०४।

सैकतो घटः। शार्करः।

देशे लुबिलचौ च। ५। २। १०५।

चादण् मतुप् च। सिकताः सन्त्यस्मिन् देशे सिकता-सिकतिलः-सैकतः-सिकतावान्। एवं शर्करेत्यादि।

दन्त उन्नत उरच्। ५। २। १०६।

उन्नता दन्ताः सन्त्यस्य दन्तुरः।

ऊषसुषिमुष्कमधो रः। ५। २। १०७।

ऊषरः। सुषिरः। मुष्कोऽण्डः मुष्करः। मधु माधुर्य्यं मधुरः। रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् *। खरः। मुखरः। कुञ्जो हस्तिहनुः कुञ्जरः। नगपांसुपाण्डुभ्यश्च *। नगरम्। पांसुरः। पाण्डुरः। पाण्डरशब्दस्तु अव्युत्पन्न एव। कच्छ्वा ह्रस्वत्वञ्च *। कच्छुरः।

---

(५८) ज्योत्स्ना तमिस्रा कुण्डल कुतप विसर्प विपादिका ज्योत्स्नादिः।

द्युद्रुभ्यां मः। ५। २। १०८।

द्युमः। द्रुमः।

केशाद्वोऽन्यतरस्याम्। ५। २। १०९।

प्रकृतेनान्यतरस्यांग्रहणेन मतुपि सिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थम्। केशवः-केशी-केशिकः-केशवान्। अन्येभ्यो ऽपि दृश्यते *। मणिवो नागविशेषः। हिरण्यवो निधिविशेषः। अर्णसो लोपश्च *। अर्णवः।

गाण्ड्यजगात्संज्ञायाम्। ५। २। ११०।

ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः। गाण्डिवम्-गाण्डीवम् अर्जुनस्य धनुः। अजगवम्पिनाकः।

काण्डाण्डादीरन्नीरचौ। ५। २। १११।

काण्डीरः। आण्डीरः।

रजःकृष्यासुतिपरिषदो वलच्।५।२।११२।

रजस्वला स्त्री। कृषीवलः। वले इति (४७९पृ०) दीर्घः। आसुतीवलः शौण्डिकः। परिषद्वलः। पर्षदिति पाठान्तरम्। पर्षद्वलम्। अन्येभ्योऽपि दृश्यते *। भ्रातृवलः। पुत्रवलः। शत्रुवलः। वले इत्यत्र(४६९पृ०)संज्ञायामित्यनुवृत्तेर्नेह दीर्घः।

दन्तशिखात्संज्ञायाम्। ५। २। ११३।

दन्तावलो हस्ती। शिखावलः केकी।

ज्योत्स्नातमिस्राशृङ्गिणोर्ज्जस्विन्नूर्ज्जस्वलगोमिन्मलिनमलीमसाः। ५। २। ११४।

मत्वर्थे निपात्यन्ते। ज्योतिषउपधालोपो नश्च प्रत्ययः। ज्योत्स्ना। तमसउपधायाइत्त्वं रश्च। तमिस्रा। स्त्रीत्वमतन्त्रम्। तमिस्रम्। शृङ्गादिनच्। शृङ्गिणः। ऊर्ज्जसो वलच्। अनेन बाधा मा भूदिति विनिरपि। ऊर्ज्जस्वी-ऊर्ज्जस्वलः। ऊर्ज्जोऽसुगागमइति वृत्तिस्तु चिन्त्या ऊर्ज्जस्वतीति वदसुनन्तेनैवोपपत्तेः। गोशब्दाम्मिनिः। गोमी। मलशब्दादिनच्। मलिनः। ईमसश्च। मलीमसः।

अत इनिठनौ (६०)। ५। २। ११५।

दण्डी-दण्डिकः।

व्रीह्यादि (६१) भ्यश्च। ५। २। ११६।

व्रीही व्रीहिकः। न च सर्व्वेभ्यो व्रीह्यादिभ्यइनिठनाविष्येते किन्तर्हि शिखामालासंज्ञादिभ्यइनिः यवखदादिभ्यइकः। अन्येभ्यउभयम्।

तुन्दादिभ्य इलच्च। ५। २। ११७।

(६०) 'एकाक्षरात् कृतोजातेः सप्तम्याञ्च न तौ स्मृ तावित्युक्तेः नयी घटीत्यादि न

(६१) व्रीहि माया शाला शिखा माला मेखला केका अष्टका पताका चर्म्मन् कर्म्मन् वर्म्मन् दंष्ट्रा संज्ञा वड़वा कुमारी नौ वीणा वलाका यवखद नौ कुमारी (शीर्षान्नञः) व्रीह्यादिः। नौकुमार्य्योरिकार्था गणे द्विधा पाठः।

श्वादिनिठनौ मतुप् च। तुन्दिलः-तुन्दी-तुन्दिकः-तुन्दवान्। उदर पिचण्ड यव व्रीहि (स्वाङ्गाद्विवृद्धौ)। विवृद्ध्युपाधिकात् स्वाङ्गवाचिनइलजादयः स्युः। विवृद्धौ कर्णौ यस्य स कर्णिलः-कर्णी-कर्णिकः-कर्णवान्।

## एकगोपूर्व्वाट्ठञ् नित्यम्। ५। २। ११८।

एकशतमस्यास्ति ऐकशतिकः। ऐकसहस्रिकः। गौशतिकः। गौसहस्रिकः।

## शतसहस्रान्ताच्च निष्कात्। ५। २। ११९।

निष्कात् परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिकाट्ठञ् स्यान्मत्वर्थे। नैष्कशतिकः। नैष्कसहस्रिकः।

## रूपादाहतप्रशंसयोर्य्यप्। ५। २। १२०।

आहतं रूपमस्यास्तीति रूप्यः कार्षापणः। प्रशस्तं रूपमस्यास्ति रूप्यो गौः। आहतेति किम् रूपवान् अन्येभ्योऽपि दृश्यते। हिम्याः पर्व्वताः। गुण्याः ब्राह्मणाः।

## अस्मायामेधास्रजो विनिः। ५। २। १२१।

यशस्वी-यशस्वान्। मायावी। व्रीह्यादि (६८४पृ०) पाठादिनिठनौ। मायी-मायिकः। विन्नन्तत्वात् (१६५पृ०)कुः। स्रग्वी। आमयस्योपसंख्यानन्दीर्घश्च *। आमयावी शृङ्गवृन्दाभ्यामारकन् *। शृङ्गारकः। वृन्दारकः। फलवर्हाभ्यामिनच् *। फलिनः। वर्हिणः। हृदयाच्चालुरन्यतरस्याम् *। इनिठनौ मतुप् च। हृदयालुः-हृदयी-हृदयिकः-हृदयवान्।

शीतोष्णतृप्रेभ्यस्तद्सहने *। शीतन्न सहते शीतालुः। उष्णालुः। स्पर्यितस्वीति (७।१८।४।पृ०) रक्। तृप्रः पुरोडाशः तन्न सहते तृप्रालुः। तृप्रं दुःखमिति माधवः। हिमाच्चेलुः*। हिमं न सहते हिमेलुः। बलाद्वूलः*। बलन्न सहते बलूलः। वातात्समूहे च*। वातन्न सहते वातस्य समूहो वा वातूलः। तप् पर्व्वमरुद्भ्याम् *। पर्वतः। मरुत्तः।

## ऊर्णाया युस्।५।२।१२३।

सित्त्वात्पदत्वम् ऊर्णायुः। अत्र छन्दसीति ‡ केचिदनुवर्त्त-यन्ति युक्तञ्चैतत् अन्यथा हि अहंशुभमोरि(६८८पृ०)त्यत्रैवोर्णा-ग्रहणं कुर्य्यात्।

## वाचो ग्मिनिः।५।२।१२४।

वाग्मी।

## आलजाटचौ बहुभाषिणि।५।२।१२५।

कुत्सितइति वक्तव्यम्*। कुत्सितम्बहु भाषते वाचालः। वाचाटः। यस्तु सम्यग्बहु भाषते स वाग्मी।

## (स्वामि)स्वाद्दामिन्नैश्वर्य्ये।५।२।१२६।

ऐश्वर्य्यवाचकात् स्वशब्दात् मत्वर्थे आमिन्। स्वामी।

## अर्शआदि(६२)भ्योऽच्।५।२।१२७।

‡ बहुलं छन्दसीत्यतः (७५०५पृ०)सूत्रादितिशेषः।

(६२) अर्शस् उरस् तुन्द चतुर पलित जटा घटा घाटा अभ्र कर्दम अम्ल लवण (स्वाङ्गाद्धीनात्) (वर्णात्) अर्शआदिराकृतिगणः।

मर्थोऽस्य विद्यते मर्मधः। आकृतिगणोऽयम्।

## द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः।५।२।१२८।

द्वन्द्वः कटकवलयिनी। शङ्खनूपुरिणी। उपतापो रोगः। कुष्ठी। किलासी। गर्ह्यन्निन्द्यम् ककुदावर्त्ती। काकतालुकी। प्राणिस्थात्किम् पुष्पफलवान् घटः। प्राण्यङ्गान्न। पाणिपादवती। अतद्धत्येव। चित्रकललाटिकावती। सिद्धे प्रत्यये पुनर्व्वचनं ठनादिबाधनार्थम्।

## वातातीसाराभ्यां कुक् च।५।२।१२९।

चादिनिः। वातकी। अतिसारकी। रोगे चायमिष्यते। नेह। वातवती गुहा। पिशाचाच्च*। पिशाचकी।

## वयसि पूरणात्।५।२।१३०।

पूरणप्रत्ययान्तान्मत्वर्थे इनिः स्याद्वयसि द्योत्ये। मासः संवत्सरो वा पञ्चमोऽस्यास्तीति पञ्चमी उष्ट्रः। ठन्बाधनार्थमिदम्। वयसि किम्। पञ्चमवान् ग्रामः।

## सुखादि (६३) भ्यश्च।५।२।१३१।

इनिर्म्मत्वर्थे। सुखी। दुःखी। (माला क्षेपे ग०)। माली।

## धर्म्मशीलवर्णान्ताच्च।५।२।१३२।

धर्म्माद्यन्तादिनिर्म्मत्वर्थे। ब्राह्मणधर्म्मी। ब्राह्मणशीली। ब्राह्मणवर्णी।

---

(६३) सुख दुःख तृप्र कृच्छ्र आस्र अलीक करुणा सोढ़ प्रतीप शील हल (माला क्षेपे) क्रपण प्रणय दल कक्ष सुखादिः।

**हस्ताज्जातौ। ५। २। १३३।**

हस्ती। जातौ किम् हस्तवान् पुरुषः।

**वर्णाद्ब्रह्मचारिणि। ५। २। १३४।**

वर्णी।

**पुष्करादि (६४) भ्यो देशे। ५। २। १३५।**

पुष्करिणी। पद्मिनी। देशे किम्। पुष्करवान् करी। बाहूरुपूर्व्वपदाद्बलात् *। बाहुबली। ऊरुबली। सर्व्वादेश्च *। सर्व्वधनी। सर्व्ववीजी। अर्थाच्चासन्निहिते (६५) *। अर्थी। सन्निहिते तु अर्थवान्(६६)। तदन्ताच्च *। धान्यार्थी। हिरण्यार्थी।

**बलादि(६७)भ्यो मतुबन्यतरस्याम्।५।२।१३६।**

बलवान्-बली। उत्साहवान्-उत्साही।

---

(६४) पुष्कर पद्म उत्पल तमाल कुमुद नड कपित्थ बिस मृणाल कर्दम शालूक विगर्ह करीष शिरीष यवास प्रवाह हिरण्य कैरव कल्लोल तट तरङ्ग पङ्कज सरोज राजीव नालीक सरोरुह पुटक अरविन्द अम्भोज अब्ज कमल पयस् पुष्करादिः।

(६५) अर्थशब्दो धनवाची। कालतोऽत्रासन्निधिर्नतु देशतस्तत्र विरोधात्-स्त्रीत्यस्यासम्बन्धइत्यप्राप्ते विधानम्।

(६६) अर्थवानिति "अर्थे समर्थो विद्वान् यः शास्त्रानुपहतश्च यः" इत्युक्तेरर्थे समर्थः समर्थनं तत्र समर्थ इत्यर्थः।

(६७) बल उत्साह उद्भास उद्वास उद्भास शिखा कुल चूडा सुल कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह युद्ध बलादिः।

संज्ञायां मन्माभ्याम्। ५।२।१३७।

मन्नन्तान्मान्ताच्च निर्मत्वर्थे। प्रथिमिनी। दामिनी। होमिनी। सोमिनी। संज्ञायाङ्किम्। सोमवान्।

कंशंभ्यां वभयुस्तितुतयसः। ५।२।१३८।

कंशमिति मान्तौ कमित्युदकसुखयोः शमिति सुखे। आभ्यांसप्त प्रत्ययाः स्युः। यस्यसोः सकारः पदत्वार्थः (६८)। कँव्वः। कम्भः। कँय्युः। कन्तिः। कन्तुः। कन्तः। कँय्यः। शँव्वः। शम्भः। शँय्युः। शन्तिः। शन्तुः। शन्तः। शँय्यः। अनुस्वारस्य वैकल्पिकः परसवर्णः (६९) वकारयकारपरस्यानुनासिकौ वयौ।

तुन्दिवलिवटेर्भः। ५।२।१३९।

वृद्धा नाभिस्तुन्दिः। मूर्द्धन्योपधोऽयमिति माधवः। तुन्दिभः। वलिभः। वटिभः। पामादित्वात्(६८१पृ०)वलिनोऽपि।

अहंशुभमोर्युस्। ५।२।१४०।

अहमिति मान्तमव्ययमहङ्कारे। शुभमिति शुभे। अहंयुः अहङ्कारवान् शुभंयुः शुभान्वितः *।

इति मत्वर्थीयाः।

(६८) तेन सिति चेति (५२५पृ०) पदत्वेन मस्यानुस्वारकार्य्यमिति भावः।

(६९) वा पदान्तस्येति (६१पृ०) सूत्रेणेति शेषः।

प्राग्दिशो विभक्तिः (१)। ५। ३। १।

दिक्शब्देभ्य (६८५सू०) इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः। अथ स्वार्थिकाः (२) प्रत्ययाः। समर्थानामिति प्रथमादिति च (४८८सू०) निवृत्तम्। वेति त्वनुवर्त्तत एव।

किं † सर्वनामबहुभ्योऽद्व्यादिभ्यः। ५। ३। २।

किमः सर्वनाम्नो बहुशब्दाच्च प्राग्दिशोऽधिक्रियते।

इदम इश्। ५। ३। ३।

प्राग्दिशीये परे।

एतेतौ रथोः। ५। ३। ४।

इदम्शब्दस्य एत, इत् इत्यादेशौ स्तो रेफादौ, थकारादौ च प्राग्दिशीये परे। इशोऽपवादः।

एतदोऽन्। ५। ३। ५।

योगविभागः कर्त्तव्यः। एतदः एतेतौ स्तो रथोः। अन् एतद इत्येव। अनेकाल्त्वात्सर्वादेशः। नलोपः प्रातिपदिकान्तस्य (१०६सू०)।

सर्वस्य सोऽन्यतरस्यां दि। ५। ३। ६।

(१) विभक्तिसंज्ञकत्वात्तसिलादौ त्यदाद्यत्वमेतदन्तानां विभक्त्यन्तत्वमिति च।

(२) स्वार्थिका इति प्रायेणेति शेषः स्वकीयप्रकृतेरर्थे भवा इत्यर्थः तसिलादीनामर्थनिर्देशाभावादिति प्रायशे इत्यादीनां प्रकृत्यर्थविशेषणत्वादिति भावः।

† सर्वनामत्वेनैव प्राप्तौ बह्वादिपाठात् पर्युदासे किमः पृथगुपादानम्।

प्राग्दिशीये हकारादौ प्रत्यये परे सर्व्वस्य सो वा स्यात्।

पञ्चम्यास्तसिल्। ५। ३। ७।

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् स्याद्वा।

कु तिहोः। ७। २। १०४।

किमः कु स्यात्तादौ हादौ च विभक्तौ परतः। कुतः। कस्मात्। यतः। ततः। अतः। इतः। अमुतः। बहुतः। द्व्यादेस्तु द्वाभ्याम्।

तसेश्च। ५। ३। ८।

किंसर्व्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात्। स्वरार्थं विभक्त्यर्थस्य वचनम्।

पर्य्यभिभ्याञ्च। ५। ३। ९।

आभ्यान्तसिल् स्यात्। सर्व्वोभयार्थाभ्यामेव। परितः सर्व्वत इत्यर्थः। अभित उभयत इत्यर्थः।

सप्तम्यास्त्रल्। ५। ३। १०।

कुत्र। यत्र। तत्र। बहुत्र।

इदमो हः। ५। ३। ११।

त्रलोऽपवादः। इशादेशः †। इह।

किमोऽत्। ५। ३। १२।

---

† इदम इशिति (१६४०) सूत्रेणेति शेषः।

वाग्रहणमपकृष्यते। सप्तम्यन्तात्किमोऽद्वा स्यात्। पक्षे त्रल्।

क्वाति। ७। २। १०५।

किमः क्वादेशः स्यादति। क्व। कुत्र।

वा ह च छन्दसि। ५। ३। १३।

कुहस्थः कुह जग्मथुः।

एतदोऽश् त्रतसोस्त्रतसौ चानुदात्तौ।२।४।३३।

अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः। तौ चानुदात्तौ स्तः। एतस्मिन् ग्रामे सुखं वसामः। अथो अत्राधीमहे। अतो न गन्तारः स्मः।

इतराभ्योऽपि दृश्यन्ते। ५। ३। १४।

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद्भवदादियोगएव। सभवान् ततोभवान् तत्रभवान्। तम्भवन्तम् ततोभवन्तम् तत्रभवन्तम् एवन्दीर्घायुः (२)। देवानाम्प्रियः। आयुष्मान्।

सर्व्वैकान्यकिंयत्तदः काले दा। ५। ३। १५।

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्। सर्व्वस्मिन् काले। सदा ✝ सर्व्वदा। एकदा। अन्यदा। कदा। यदा। तदा। काले किम् सर्व्वत्र देशे।

(२) ततोदीर्घायुस्तत्रदीर्घायुः। ततोदेवानांप्रियः तत्रदेवानां प्रियः।

✝ सर्व्वस्य सोऽन्यतरस्यामिति (६९०५) सादेशः।

## इदमो र्हिल्। ५। ३। १६।

सप्तम्यन्तात्काले इत्येव। हस्यापवादः। अस्मिन् काले एतर्हि। काले किम् इह देशे।

## अधुना। ५। ३। १७।

इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थेऽधुनाप्रत्ययः स्यात्। इश् (६९१पृ०) यस्येतिलोपः (१२८पृ०)। अधुना।

## दानीञ्च। ५। ३। १८।

इदानीम्।

## तदो दा च। ५। ३। १९।

तदा तदानीम्। तदो दावचनमनर्थकं विहितत्वात्।

## अनद्यतने र्हिलन्यतरस्याम्। ५। ३। २१।

कर्हि कदा यर्हि यदा। तर्हि तदा। एतस्मिन् काले एतर्हि

## सद्यः परुत्परार्य्यैषमः परेद्यव्यद्यपूर्व्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः। ५। ३। २२।

एते निपात्यन्ते। समानस्य सभावो द्यस्चाहनि। समानेऽहनि सद्यः। पूर्व्वपूर्व्वतरयोः परः उदारी च वत्सरे। पूर्व्वस्मिन् वत्सरे परुत्। पूर्व्वतरे वत्सरे परारि। इदमइश् (६९०पृ०) समसण् प्रत्ययश्च संवत्सरे। अस्मिन् संवत्सरे ऐषमः। परस्मादेद्यव्यहनि। परस्मिन्नहनि परेद्यवि।

इदमोऽश् (६५९७०) द्यच। अस्मिन्नहनि अद्य। पूर्व्वादिभ्योऽह्न्ये द्युस्। पूर्व्वस्मिन्नहनि पूर्व्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। उभयोरह्नोरुभयेद्युः। द्युश्चोभयाद्वक्तव्यः *। उभयद्युः।

प्रकारवचने थाल्। ५। ३। २३।

प्रकारवृत्तिभ्यः(४)किमादिभ्यस्थाल् स्यात् स्वार्थे। तेन प्रकारेण तथा। यथा।

इदमस्थमुः। ५। ३। २४।

थालोऽपवादः। एतदोऽपि वाच्यः *। अनेन एतेन वा प्रकारेण इत्थम्।

किमश्च। ५। ३। २५।

केन प्रकारेण कथम्।

प्राग्दिशीयानां विभक्तिसंज्ञानां पूर्णोऽवधिः।

---

(४) प्रकारवृत्तिभ्य इति प्रकारवद्वृत्तिभ्य इत्यर्थः तेन सूत्रे प्रकारेतिपदं तद्विशिष्टपरम्। सामान्यस्य भेदको विशेषः प्रकारः बहुभिः प्रकारैर्युक्तामित्युक्ते बहुभिर्विशेषैरित्यवगमात्।

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः। ५। ३। २७।

सप्तम्याद्यन्तेभ्यो दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिप्रत्ययः स्यात्।

पूर्वाधरावराणामसि पुरधवश्चैषाम्।५।३।३९।

एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात्तद्योगे चैषां क्रमात्पुर् अध् अव इत्यादेशाः स्युः।

अस्ताति च। ५। ३। ४०।

अस्तातौ परे पूर्वादीनाम्पुरादयः स्युः। पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः-पुरस्तात्। अधः-अधस्तात्। अवः-अवस्तात्।

विभाषाऽवरस्य। ५। ३। ४१।

अवरस्यास्तातौ परेऽव् स्याद्वा। अवस्तात् अवरस्तात्। एवन्देशे काले च। दिशि रूढेभ्यः किम् ऐन्द्र्यां वसति। सप्तम्याद्यन्तेभ्यः किम्। पूर्वं ग्रामङ्गतः। दिगादिवृत्तिभ्यः किम् पूर्वस्मिन् गुरौ वसति। अस्ताति चेति † ज्ञापकादसिरस्तातिं न बाधते।

दक्षिणोत्तराभ्यामतसुच्। ५। ३। २८।

अस्तातेरपवादः। दक्षिणतः। उत्तरतः।

---

† परत्वादपवादत्वाच्च असेरस्तातिबाधकत्वमाशङ्क्य ज्ञापकमिदं न बाधकत्वमित्याह अस्ताति चेति।

विभाषा पराऽवराभ्याम्। ५। ३। २९।

परतः। अवरतः। परस्तात्। अवरस्तात्।

अञ्चेर्लुक्। ५। ३। ३०।

अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात्। लुक् तद्धितलुकि (२१५४०)। प्राच्यां प्राच्याः प्राची वा दिक् प्राक्। उदक्। एवन्देशे काले च।

उपर्य्युपरिष्टात्। ५। ३। ३१।

अस्तातेर्व्विषये। ऊर्द्ध्वशब्दस्योपादेशःस्याद्रिल्रिष्टातिलौ च प्रत्ययौ। उपरि-उपरिष्टाद्वा वसति आगतो रमणीयं वा।

पश्चात्। ५। ३। ३२।

अपरस्य पश्चभावः आतिश्च प्रत्ययोऽस्तातेर्व्विषये।

उत्तराधरदक्षिणादातिः। ५। ३। ३४।

उत्तरात्। अधरात्। दक्षिणात्।

एनबन्यतरस्यामदूरेऽपञ्चम्याः। ५। ३। ३५।

उत्तरादिभ्य एनब् वा स्यादवध्यवधिमतोःसामीप्ये। पञ्चम्यन्तं विना। उत्तरेण। अधरेण। दक्षिणेन। पक्षे यथास्वं प्रत्ययाः।

दक्षिणादाच्। ५। ३। ३६।

असातेर्विषये। दक्षिणा वसति। अपञ्चम्या इत्येव। दक्षिणादागतः।

## आहि च दूरे। ५। ३। ३७।

दक्षिणाद्दूरे (१) आहि च स्यात्। चादाच्। दक्षिणाहि-दक्षिणा।

## उत्तराच्च। ५। ३। ३८।

उत्तराहि। उत्तरा।

## संख्याया विधार्थे धा। ५। ३। ४२।

क्रियाप्रकारार्थे(२)वर्त्तमानात संख्याशब्दात् स्वार्थे धा स्यात्। चतुर्द्धा। पञ्चधा।

## अधिकरणविचाले च। ५। ३। ४३।

द्रव्यस्य (३) संख्यान्तरापादने संख्याया धा स्यात्। एकं राशिं पञ्चधा कुरु।

## एकाद्धो ध्यमुञन्यतरस्याम्। ५। ३। ४४।

(१) दूरे अवधेरवधिमतश्चेत् दूरे इत्यर्थः उत्तराच्चेत्यत्रापि अनुवर्त्तिष्यमाणस्याप्यस्य तथैवार्थः।

(२) सामान्यस्य भेदकविशेषरूपःप्रकारः विधाशब्दार्थः सच शब्दस्वाभाव्यात् क्रियाविषयकएवेत्याह क्रियेति।

(३) विचलनं विचालोऽन्यथाकरणं तच्चेह सङ्ख्यासन्निधानात् सङ्ख्याविषयकमित्याह द्रव्यस्येति तदवगमश्च पदान्तरसमभिव्याहारात्तद्योतयन्नाह एकं राशिमिति पञ्चधेति पञ्चत्वसङ्ख्याविशिष्टमित्यर्थः।

ऐकध्यम् एकधा (४)।

**द्वित्र्योश्च धमुञ्। ५। ३। ४५।**

आभ्यां धा इत्यस्य धमुञ् स्याद्वा। द्वैधम्-द्विधा। त्रैधम्-त्रिधा। धमुञन्तात् स्वार्थे डदर्शनम् *। द्वैधानि त्रैधानि।

**एधाच्च। ५। ३। ४६।**

द्वेधा। त्रेधा।

**याप्ये (५) पाशप्। ५। ३। ४७।**

कुत्सितो भिषक् भिषक्पाशः।

**पूरणाद्भागे (६) तीयादन्। ५। ३। ४८।**

द्वितीयो भागो द्वितीयः। तृतीयः। स्वरे विशेषः। तीयादीकक् स्वार्थे वाच्यः *। द्वैतीयीकः-द्वितीयः। तार्तीयीकः-तृतीयः। न विद्यायाः *। द्वितीया तृतीया वा विद्येत्येव।

**प्रागेकादशभ्योऽच्छन्दसि। ५। ३। ४९।**

पूरणप्रत्ययान्ताद्भागेऽन्। चतुर्थः। पञ्चमः।

---

(४) अधिकरणविचाले इत्यनुवर्त्तते यद्यप्यनेकमेकं क्रियते सोऽप्यधिकरणविचाल इति भाष्योक्तेः द्विधादिभूतं स्थितं राशिमेकधा कुरु इत्यादिस्थलेऽप्यस्य साधुत्वम्।

(५) याप्यं कुत्सितम् यस्मादयं पाशप् तत्प्रवृत्तिनिमित्तस्यैव निन्दायामयं साधुत्वेन वैद्य आचारेण दुःशीलत्वात् कुत्सित इत्यभिप्राये न। तन्निकायः प्राक्‌पाशप इति (२०३पृष्ठे) प्रागुक्तेरव्ययत्वं ज्ञेयाम्।

(६) पूरणार्थकतीयप्रत्ययान्ताद्भागे वर्त्तमानादन् स्यादित्यर्थः।

**षष्ठाष्टमाभ्यां ञ च। ५। ३। ५०।**

षाद्न्। षष्ठोभागः षाष्ठः-षष्ठः। आष्टमः-अष्टमः।

**मानपश्वङ्गयोः कन्लुकौ च। ५। ३। ५१।**

षष्ठाष्टमशब्दाभ्यां क्रमेण कन्लुकौ स्तो माने पश्वङ्गे च वाच्ये। षष्ठको भागः मानश्चेत्। अष्टमोभागः पश्वङ्गश्चेत्। अस्य अनो वा लुक्। चकाराद्यथाप्राप्तम् षष्ठः-षाष्ठः। अष्टमः-आष्टमः। महाविभाषया सिद्धे लुग्वचनं पूर्व्वत्र ञानौ नित्याविति ज्ञापयति।

**एकादाकिनिच्चासहाये (७)। ५। ३। ५२।**

चात्कन्लुकौ। एकः-एकाकी-एककः।

**भूतपूर्व्वे (८) चरट्। ५। ३। ५३।**

आढ्यो भूतपूर्व्वः आढ्यचरः।

**षष्ठ्या (९) रूप्य च। ५। ३। ५४।**

षष्ठ्यन्तात् भूतपूर्व्वेऽर्थे रूप्यः स्यात्। चात् चरट्। कृष्णस्य भूत-

---

(७) असहायवाचकादेकशब्दादित्यर्थः असहाये किं प्रसिद्धत्वात् सङ्ख्यावाचकाच्चैव मा भूत् अतएव 'एकाकिनोऽपि परितः पौरुषेयवृता इवेति' माघे बहुवचनसम्भवः।

(८) भूतपूर्व्वेऽर्थे वर्त्तमानात् प्रातिपदिकाच्चरडित्यर्थः।

(९) षष्ठ्या इति भूतपूर्व्वे संबन्धेऽर्थे या षष्ठी तदन्तात् स्वार्थे प्रत्ययः। अतएव न स्वार्थिकप्रकरणविरोधः।

पूर्व्वो गौः कृष्णरूप्यः-कृष्णचरः । तसिलादिषु (१२५पृ०) रूप्यस्यापरिगणितत्वान्न पुंवत् । शुभ्राया भूतपूर्व्वः शुभ्रारूप्यः ।

**अतिशायने तमबिष्ठनौ । ५ । ३ । ५५ ।**

अतिशय (१०) विशिष्टार्थवृत्तेःस्वार्थे एतौ स्तः । अयमेषामतिशयेन आढ्यः आढ्यतमः । लघुतमो लघिष्ठः ।

**तिङश्च (११) । ५ । ३ । ५६ ।**

तिङन्तादतिशये द्योत्ये तमप् स्यात् ।

**तरप्तमपौ घः । १ । १ । २२**

एतौ घसंज्ञौ स्तः ।

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ५ । ४ ।११।**

किमएदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामु स्याद्द्रव्य

(१०) अतिशयः प्रकर्षः इतरस्य न्यूनताकरणरूपोऽभिभवोऽतिशेतेरर्थः तत्र वर्त्तमानात् स्वार्थे प्रत्ययइत्यर्थः । अतिशयविशिष्टेति अतिशयकर्तृरूपेऽर्थे इत्यर्थः । तत्र प्रकृत्यर्थद्रव्यस्य स्वरूपतइतराभिभावकत्वाभावेऽपि तत्प्रवृत्तिनिमित्तगुणादिनिष्ठाभिभावकत्वेनैव तस्यापि तथात्वमिति बोध्यम् गोतमइत्यादौ प्रवृत्तिनिमित्तजातेःस्वतस्तथात्वाभावेऽपि तत्सहचरितवाहदोहनादिगतेनापराभिभावकत्वेन तस्य तथात्वम् । एवञ्च तमबादिप्रकृतेरितराभिभावकत्वविशिष्टस्वार्थपरत्वे लक्षणा प्रत्ययस्तु तस्य द्योतकः ।

(११) ङ्याप्प्रातिपदिकादित्यधिकारेण (८५पृ०) तिङस्याप्रातिपदिकत्वादप्राप्ते तिङ इति वचनम् ।

प्रकर्षे। किन्तमाम्। प्राह्णेतमाम् (१२)। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु। उच्चैस्तम (१३) स्तरुः।

## द्विवचनविभज्योपपदे तरबीयसुनौ ।५।३।५७।

द्वयोरेकस्यातिशये, विभक्तव्ये (१४) चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्व्वयोरपवादः। अयमनयोरतिशयेन लघुर्लघुतरः-लघीयान्। उदीच्याः प्राच्येभ्यः पटुतराः-पटीयांसः।

## अजादी गुणवचनादेव। ५। ३। ५८।

इष्ठन्नीयसुनौ गुणवचनादेव स्तः। प्रथिष्ठः-प्रथीयान्। नेह पाचकतरः। पाचकतमः।

(१२) प्राह्णेतमामित्यादौ तत्तत्क्रियाविशिष्टस्य तत्तत्कालव्यवहारनियामकत्वान्न तत्र द्रव्यप्रकर्षः।

(१३) उच्चस्तम इति अतोऽत्रत्वगुणवत्परउच्चैःशब्दः। द्रव्यस्य स्वतः प्रकर्षाभावेऽपि द्रव्यनिष्ठगुणादिप्रकर्षएव द्रव्यप्रकर्षइति बोध्यम्। अतएवाद्रव्यप्रकर्षइति निषेधः उपचरितगुणक्रियागतप्रकर्षो द्रव्यविषय इति कैयटः। उच्चैस्तरामित्यत्र तु अधिकरणशक्तिप्रधान उच्चैःशब्दस्तत्रोच्चत्वप्रकर्षेण तदाश्रयस्य प्रकर्षेऽपि क्रियाकारकभावसम्बन्धविशेषणत्वेनैव तस्य भानात् 'सर्व्वनामपरामर्शयोग्यं द्रव्यमिहोच्यते' इत्युक्तेः सर्व्वनामपरामर्शयोग्यत्वाच्च न तस्य द्रव्यत्वम्। सर्व्वनाम्ना तदादिना इदं तदिति परामर्शयोग्यं वस्तु द्रव्यमितितदर्थः।

(१४) द्वयर्थप्रातिपादके, विभजनीये चोपपदे, द्वयोर्मध्ये इतरापेक्षयातिशयविशिष्टस्वार्थवृत्तेर्विभागप्रयोजकीभूतधर्म्मवाचकाच्च स्वार्थे प्रत्ययः स्यादित्यर्थः। नतरामित्यादौ नञर्थाभावगतस्य प्रतियोग्यसामानाधिकरण्यरूपात्यन्तिकत्वरूपप्रकर्षस्य, नितरामित्यादौ च निशब्दद्योत्यार्थप्रकर्षस्यैव द्योतनात्, तरबिति विवेचनीयम्।

**तुश्छन्दसि । ५ । ३ । ५९ ।**

तृन्तृजन्तादिष्ठन्नीयसुनौ स्तः ।

**तुरिष्ठेमेयस्सु । ६ । ४ । १५४ ।**

तृशब्दस्य लोपः स्यादिष्ठेमेयस्सु परेषु । अतिशयेन कर्त्ता करिष्ठः । दोहीयसी धेनुः ।

**प्रशस्यस्य श्रः । ५ । ३ । ६० ।**

अस्य श्रादेशः स्यादजाद्योः ।

**प्रकृत्यैकाच् । ६ । ४ । १६३ ।**

इष्ठादिष्वेकाच् प्रकृत्या (१५) स्यात् । श्रेष्ठः । श्रेयान् ।

**ज्य च । ५ । ३ । ६१ ।**

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः ।

**ज्यादादीयसः । ६ । ४ । १६० ।**

आदेः परस्य (२९ पृ०) । ज्यायान् ।

**वृद्धस्य च । ५ । ३ । ६२ ।**

ज्यादेशः स्यादजाद्योः । ज्येष्ठः । ज्यायान् ।

---

(१५) अयञ्च प्रकृतिभावोऽल्लोपोऽनस्येति (१०५ पृ०) नस्तद्धिते इति (२२४ पृ०) यस्येति चेतीति (१२९ पृ०) टे, (१४० पृ०) रित्येतत्प्रकरणस्य लोपमात्रस्य च बोध्यः तेन नेदिष्ठ इत्यादौ टिलोपस्य, कनिष्ठ इत्यादौ नलोपस्य, प्रकृतिभावः ।

**अन्तिकबाढयोर्नेदसाधौ। ५। ३। ६३।**

अनयोः। नेदिष्ठः। नेदीयान्। साधिष्ठः। साधीयान्।

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्व्वस्य च गुणः। ६। ४। १५६।**

एषां यणादिपरं लुप्यते पूर्व्वस्य च गुणः इष्ठादिषु। स्थविष्ठः। दविष्ठः। यविष्ठः। ह्रसिष्ठः। क्षेपिष्ठः। क्षोदिष्ठः। एवमीयसुनि। ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वात् (६५४४०)। ह्रसिमा। क्षेपिमा।

**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणाम्प्रस्थस्फवर्ब्बंहिगर्वर्षित्रपद्राघवृन्दाः। ६। ४। १५७।**

प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु। प्रेष्ठः। स्थेष्ठः। स्फेष्ठः। वरिष्ठः। बंहिष्ठः। गरिष्ठः। वर्षिष्ठः। त्रपिष्ठः। द्राघिष्ठः। वृन्दिष्ठः। एवमीयसुनि। प्रेयान्। प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वादिमनिचि (६५४४०) प्रेमेत्यादि।

**बहोर्लोपो भू च बहोः। ६। ४। १५८।**

बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः *। भूमा। भूयान्।

**इष्ठस्य यिट् च। ६। ४। १५९।**

---

* आदेः परस्य (२८४०) इत्युक्तेरादिलोपः।

बह्वोः परस्य इष्ठस्य लोपः स्यात् यिडागमश्च । भूयिष्ठः ।

**युवाल्पयोःकनन्यतरस्याम् । ५ । ३ । ६४ ।**

एतयोः कनादेशो वा स्यादिष्ठेयसोः । कनिष्ठः । कनीयान् । पक्षे यविष्ठः अल्पिष्ठइत्यादि ।

**विन्मतोर्लुक् । ५ । ३ । ६५ ।**

विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान् । त्वचिष्ठः । त्वचीयान् ।

**प्रशंसायां (१६) रूपप् । ५ । ३ । ६६ ।**

सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः पटुरूपः । प्रशस्तम्पचति पचतिरूपम् ।

**ईषदसमाप्तौ (१७) कल्पब्देश्यदेशीयरः । ५ । ३ । ६७ ।**

(१६) प्रशंसाविशिष्टेऽर्थे वर्त्तमानात् स्वार्थे रूपबित्यर्थः । प्रशंसा चात्र परिपूर्णतैव सा च प्रकृत्यर्थतावच्छेदकनिष्ठा प्रकृत्यर्थसमानाधिकरणधर्म्मनिष्ठा वा प्रकृत्यर्थे आरोप्यते । एवञ्च प्राशस्त्यं प्रतियोगिनिरपेक्षमतिशाय, नन्तु तत्सापेक्षमिति तद्धितेहाद्भुवर्त्तनेन न गतार्थता शङ्क्या ।

(१७) ईषदसमाप्तिविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् कल्पबादाय इत्यर्थः । गुड़कल्पा द्राक्षेत्यादौ गुड़शब्दस्य सादृश्यलक्षणया द्राक्षायां वृत्तिः सादृश्यप्रयोजकधर्म्मस्य च माधुर्य्यादेरीषदसमाप्तत्वेनैव बोधः । यन्निरूपितसादृश्यप्रयोजकस्येषदसमाप्तिर्व्विवक्ष्यते तद्वाचकात् प्रत्यय इति निष्कर्षः । कल्पबादेः स्वार्थिकत्वेऽपि विशेष्यलिङ्गत्वमग्रे वक्ष्यते ।

ईषदूनो विद्वान् विद्वत्कल्पः। यशस्कल्पम्। यजुष्कल्पम्। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम् (१८)।

**विभाषा सुपो बहुच् पुरस्तात्तु। ५। ३। ६८।**

ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव(१६) नतु परतः। ईषदूनः पटुः। बहुपटुः। पटुकल्पः। सुपः किम्। यजतिकल्पम्।

**प्रकारवचने जातीयर् (२०)। ५। ३। ६९।**

प्रकारवति चायम्। थाल् तु प्रकारमात्रे। पटुप्रकारः पटुजातीयः।

(१८) पचतिकल्पमिति क्रियाप्रधानमाख्यातमित्युक्तेराख्याते क्रियाप्राधान्येऽपि तस्या असत्त्वरूपतया लिङ्गसंख्यान्वयानुपगमेऽपि पदसाधुत्वार्थमौत्सर्गिकमेकवचनं, क्लीवत्वञ्च अतः पचतीरूपं पचन्तिरूपमित्येव प्रयोगः प्रथमान्तोपस्थाप्यकर्त्तृप्राधान्यवादिनां लिङ्गसंख्यान्वयसम्भवेन पचतीरूपावित्याद्यनिष्टप्रयोगापत्तिरिति बोध्यम्।

(१९) पुरस्तात्त्वित्यत्र तुशब्दस्यावधारणार्थत्वं द्योतयन्नाह प्रागेवेति अत्र पुरस्तादित्यावर्त्त्यते तेन पुरस्तात् बहुच उत्पत्तेः प्राक्, प्रकृतेर्ये लिङ्गसंख्ये प्रकृत्यवस्थायां ते एव बहुच उत्पत्तौ स्तः बहुचश्च प्रकृतेः प्रागेव प्रयोग इति सूत्रार्थस्तेन ईषदसमाप्तौ विहितानामन्येषां प्रत्ययानामभिधेयलिङ्गवचनत्वं ज्ञापितं तथाच बहुचि बहुगुडो द्राक्षा बहुलवणं नर इत्येव प्रकृत्यनुसारिलिङ्गत्वम् गुडकल्पा द्राक्षेत्यादौ तु स्वार्थिकत्वाविशेषेऽपि अभिधेयलिङ्गत्वमिति भेदः। अतएव क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति सामान्यतोऽभिहितम्।

(२०) प्रकारश्चात्र सादृश्यं भेदश्चेत्युभयमपि ग्राह्यम्।

**प्रागिवात्कः। ५। ३। ७०।**

इवे प्रतिकृताविव्यतः (१५४८०) प्राक् काधिकारः।

**अव्ययसर्व्वनाम्नामकच् प्राक् टेः।५।३।७१।**

तिङश्चे (७००) त्यनुवर्त्तते।

**कस्य च दः। ५। ३। ७२।**

कान्ताव्ययस्य दकारोऽन्तादेशः स्यादकच्च।

**अज्ञाते। ५। ३। ७३।**

कस्यायमश्वोऽश्वकः (२१)। उच्चकैः। नीचकैः। सर्व्वके। विश्वके। ओकारसकारभकारादौ सुपि सर्व्वनाम्नष्टेः प्रागकच्*(२२)। युवकयोः। आवकयोः। युष्मकासु। अस्मकासु। युष्मकाभिः। अस्मकाभिः। ओकारेत्यादि किम् त्वयका। मयका। अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः*। मित्त्वादन्त्यादचः (२६६०) परः। तूष्णीकामास्ते। शीले को मलोपश्च *। तूष्णींशीलः। तूष्णीकः। पचतकि। जल्पतकि। धकित्। हिरकुत्।

**कुत्सिते। ५। ३। ७४।**

कुत्सितोऽश्वोऽश्वकः (२३)।

---

(२१) कस्यायमिति प्रश्नेनाज्ञातत्वमाविष्क्रियते। अज्ञातोऽश्व इत्यपि विग्रहः।

(२२) ओकारेति इदञ्च युष्मदस्मच्छब्दमात्रविषयमन्येषां सर्व्वनाम्नां प्रातिपदिकटेरेव प्रागकजिति भाष्ये स्थितं तदाशयेनाह युवकयोरिति।

(२२) कुत्सित इति येन धर्म्मेण वस्तु कुत्स्यते तद्धर्म्मयुक्तार्थवाचकात् क इत्यर्थः। पचतक इत्यादौ भावनादेः सम्यगनवगाहनात् कुत्सेति बोध्यम्

## संज्ञायां कन्। ५। ३। ७५।

कुत्सिते कन् स्यात्तदन्तेन चेत्संज्ञा गम्यते। शूद्रकः। राधकः। स्वरार्थम् वचनम्।

## अनुकम्पायाम्। ५। ३। ७६।

पुत्रकः। अनुकम्पितः पुत्र इत्यर्थः।

## नीतौ च तद्युक्तात्। ५। ३। ७७।

सामदानादिरुपायो नीतिस्तस्यां गम्यमानायामनुकम्पायुक्तात्कन्प्रत्ययः स्यात्। हन्त ते धानकाः गुड़काः एहकि। पूर्व्वेणानुकम्प्यमानात्प्रत्ययः अनेन तु परम्परासम्बन्धे(२४)ऽपीति विशेषः।

## बह्वचो मनुष्यनाम्नष्ठज्वा। ५। ४। ७८।

पूर्व्वसूत्रद्वयविषये (२५)।

## घनिलचौ च। ५। ३। ७९।

तत्रैव।

## ठाजादावूर्द्धं द्वितीयादचः। ५। ३। ८३।

अस्मिन् प्रकरणे(२६) यः ठोऽजादिप्रत्ययस्च तस्मिन् प्रत्यये परे

---

(२४) परम्परेति अनुकम्प्यमानपुत्रादेर्धानादिदानेन परितोषणात् धानादेरपि अनुकम्प्यमानपुत्रादिसम्बन्धात् अनुकम्पायुक्तत्वम्।

(२५) पूर्व्वसूत्रद्वयेति अनुकम्पायां नीतौ चेत्यनन्तरोक्तसूत्रद्वयविषय इत्यर्थः।

(२६) अस्मिन्निति पूर्व्वोक्तसूत्रद्वयस्यैव प्रत्यासत्त्या प्रथमं बुद्धौ सन्निधापिततया तदर्थ एवेति ग्राह्यम्।

प्रकृतेर्द्वितीयादचऊर्ध्वं सर्व्वं लुप्यते । अनुकम्पितो देवदत्तो देविकः-देवियः-देविलः-देवदत्तकः । अनुकम्पितो वायुदत्तो वायुकः । ठग्रहणमुकोद्वितीयत्वे § कविधानार्थम् । वायुदत्तः वायकः । पितृकः । चतुर्थादच ऊर्ध्वस्य लोपोवाच्यः * । अनुकम्पितो वृहस्पतिदत्तो वृहस्पतिकः। अनजादौ च विभाषा लोपो वक्तव्यः । देवदत्तकः देवकः । लोपः पूर्व्वपदस्य च * । दत्तिकः-दत्तियः-दत्तिलः-दत्तकः । विनापि प्रत्ययम्पूर्व्वोत्तरपदयोर्व्वा लोपो वाच्यः * । देवदत्तः दत्तः देवः । सत्यभामा भामा सत्या । उवर्णाल्ल इलस्य च * । भानुदत्तः भानुलः । ऋवर्णादपि * । सवितियः । सवितृलः ।

चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।
अप्रत्यये तथैवेष्टउवर्णाल्ल इलस्य च ।

ल इति लोपसंज्ञा प्राचाम् ।

## प्राचामुपादेरडज्वुचौ च । ५ । ३ । ८० ।

उपशब्दपूर्व्वात् प्रातिपदिकात्पूर्वविषये अडच् वुच् एतौ स्तः । चाद्यथाप्राप्तम् । प्राचांग्रहणं पूजार्थम् । अनुकम्पित उपेन्द्रदत्तः उपडः—उपकः-उपिकः-उपियः-उपिलः-उपेन्द्रदत्तः । षड्रूपाणि ।

## जातिनाम्नः कन् । ५ । ३ । ८१ ।

मनुष्यनाम्न इत्येव । जातिशब्दो यो मनुष्यनामधेयस्तस्मात् कन् स्यादनुकम्पायाम् नीतौ च । सिंहकः । शरभकः । रासभकः । द्वितीयं सन्ध्यक्षरञ्चेत्तदादेर्लोपो वक्तव्यः * ।

§ इससुक्तादित्यनेन (५।२।८४०) इति शेषः ।

कहोड़-कहिक: ‡। एकाक्षर (२७)पूर्व्वपदानामुत्तरपदलोपो वक्तव्य: *। वाचा आशीर्य्यस्य वागाशीर्दत्त:। वाचिक:। कथंषड़ङ्गुलीदत्त: षड़िकइति षषष्ठ आदिवचनात् सिद्धम्।

## शेवल सुपरि विशाल वरुणार्य्यमादीनां तृतीयात्। ५। ३। ८४।

एषां (२८) मनुष्यनाम्नां ठाजादौ परे तृतीतादच ऊर्द्ध लोप: स्यात्। पुर्वस्यापवाद:। अनुकम्पित: शेवलदत्त: शेवलिक: शेवलिय: शेवलिल:। सुपरिक:। विशालिक:। वरुणिक:। अर्य्यमिक:।

## अजिनान्तस्योत्तरपदलोपश्च। ५। ३। ८२।

अजिनान्तान्मनुष्यनाम्नोऽनुकम्पायां कन् तस्य चोत्तरपदलोप:। अनुकम्पितो व्याघ्राजिनो व्याघ्रक:। सिंहक:।

## अल्पे। ५। ३। ८५।

अल्पन्तैलं तैलकम्।

---

‡ सन्ध्यक्षरावधेर्लोपे बह्वच इत्यादिना (७०७पृ०) ठचि रूपसिद्धि:।

(२७) एकाच्सहितव्यञ्जनमेकाक्षरम् वागाशिषा दत्तो यागाशोर्दत्त: वाक्करणकशुभाशंसनेन दत्त इत्यर्थ:। वाचिक इत्यत्रेव षड़िक इत्यत्रापि षषिक इतिरूपापत्तिमाशङ्क्य समाधत्ते षष इति भसंज्ञायामुत्तरपदलोपे षष: ठजादौ प्रतिषेध इति (१।४।१८सू०)स्य वार्त्तिकेन भत्वनिषेधात्पदत्वात् जश्त्वमिति भाव:।

(२८) एषामिति शेवलादिपूर्वपदानामक्तसम्बन्धीनां तृतीयादच इति वक्तव्यं तेन सुपर्य्याशीर्दत्तशब्दस्य सुपरिक इत्यादि सिद्धि:। शब्देन्दु०।

ह्रस्वे (२९) । ५ । ३ । ८६ ।

ह्रस्वो वृक्षो वृक्षकः ।

संज्ञायां कन् । ५ । ३ । ८७ ।

ह्रस्वत्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् । पूर्वस्यापवादः । वंशकः । वेणुकः ।

कुटीशमीशुण्डाभ्यो रः । ५ । ३ । ८८ ।

ह्रस्वा कुटी कुटीरः (३०) । शमीरः । शुण्डारः ।

कुत्वा डुपच् । ५ । ३ । ८९ ।

ह्रस्वा कुतूः कुतुपः । 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' ।

कासूगोणीभ्यां ष्टरच् । ५ । ३ । ९० ।

आयुधविशेषः कासूः ह्रस्वा सा कासूतरी । गोणीतरी ।

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे । ५ । ३ । ९१ ।

वत्सतरः द्वितीयं वयः प्राप्तः (३१) । उक्षतरः अश्वतरः । ऋषभतरः । प्रवृत्तिनिमित्ततनुत्वे एवायम् ।

---

(२९) अल्पत्वह्रस्वत्वे महत्त्वदीर्घत्वप्रतिद्वन्द्विनी परिमाणविशेषौ ।

(३०) प्रकृतिलिङ्गातिक्रमस्यापि काचित्कत्वादाह कुटीर इति ।

(३१) वत्सः प्रथमवयास्तस्य तनुत्वं वयोऽन्तरप्राप्तिः । उक्षा द्वितीयवयास्तस्य तनुत्वं तृतीयवयःप्राप्तिः । अश्वो जातिस्तस्य तनुत्वमपकर्षोऽन्यपितृकता गर्दभेनाश्वायामुत्पादितत्वादस्य जात्यपकर्षः । ऋषभो भारवोढा तस्य वहने मन्दशक्तिरपकर्ष इत्येवमुदाहरणेषु बोध्यम् ।

**किंयत्तदोर्निर्द्धारणे द्वयोरेकस्य (३२) डतरच्। ५। ३। ९२।**

अनयोः कतरो वैष्णवः। यतरः। ततरः। महाविभाषया कः। यः। सः।

**वा बहूनां जातिपरिप्रश्ने डतमच्। ५।३।९३।**

बहूनां मध्ये एकस्य निर्द्धारणे डतमच् वा स्यात्। जातिपरिप्रश्नइति प्रत्याख्यातमाकरे (३३)। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणमकजर्थम्। यकः। सकः। महाविभाषया। यः। सः (३४)। किमोऽस्मिन्विषये डतरजपि। कतरः।

**एकाच्च प्राचाम्। ५। ३। ९४।**

डतरच्डतमच्च स्यात्। अनयोरेकतरो मैत्रः। एषामेकतमः।

**अवक्षेपणे (३५) कन्। ५। ३। ९५।**

व्याकरणेन गर्वितः व्याकरणकः। येनेतरः कुत्स्यते तद्विहोदाहरणम्। स्वतः कुत्सितस्तु कुत्सित (७०६१०) इत्यस्य।

प्रागिवीयानां पूर्णोऽवधिः।

(३२) द्वयोरेकस्य निर्द्धारणे निर्द्धार्य्यमाणवाचिभ्यः किमादिभ्यो डतरजित्यर्थः। अत्र निर्द्धारणं न प्रत्ययार्थः विग्रहे तद्धितं विनापि षष्ठ्यैव प्रतीयमानतयाऽन्यलभ्यत्वात् किन्तु विषयनिर्देश इति बोध्यम्।

(३३) प्रत्याख्यातमिति तेन कतमो भवताम्, अध्यापकः, शूरो, देवदत्तो वेति प्रयोगः सङ्गच्छते।

(३४) यः स इति अतएव क एतयोरर्थविशेष इति भाष्ये न डतरप्रयोगः।

(३५) अवक्षिप्यते येन धर्म्मेण तदवक्षेपणन्तेन कुत्सित इत्यनेन न गतार्थता।

## इवे प्रतिकृतौ (१)। ५। ३। ९६।

कन् स्यात्। अश्व इव प्रतिकृतिः अश्वकः। प्रतिकृतौ किम् गौरिव गवयः।

## संज्ञायां च। ५। ३। ९७।

इवार्थे कन् स्यात् समुदायश्चेत् संज्ञा। अप्रतिकृत्यर्थमारम्भः। अश्वसदृशस्य संज्ञा अश्वकः। उष्ट्रकः।

## लुम्मनुष्ये। ५। ३। ९८।

संज्ञायां विहितस्य कनो लुप् स्यान्मनुष्ये वाच्ये। चञ्चा तृणमयः पुमान्। चञ्चेव मनुष्यश्चञ्चा(२)वध्रिका।

## जीविकार्थे चापण्ये। ५। ३। ९९।

जीविकार्थं यद् अविक्रीयमाणं तस्मिन्वाच्ये कनो लुप् स्यात्। वासुदेवः। शिवः। स्कन्दः। देवलकानां (३) जीविकार्थासु देवप्रतिकृतिष्विदम्। अपण्ये किम्। हस्तिकान्विक्रीणीते।

---

(१) इवार्थोपमानत्ववति वर्त्तमानात् प्रातिपदिकात् कन् स्यात् यदुपमेयं तत् प्रतिकृतिश्चेदित्यर्थः। प्रतिकृतिश्च मृदादिनिर्मिता प्रतिमा। अश्वक इत्यादौ उपमानाश्वाभिन्न प्रतिकृतियुक्तः इत्यादिरीत्या बोधः।

(२) चञ्चेति अत्र लुप्तत्वात् प्रकृतिवल्लिङ्गमात्रं (५.४८५०) न तु वचनमपि तत्तु विशेष्यवदेव तेन चञ्चे मनुष्यावित्यादिप्रयोगः।

(३) देवलकानामिति प्रतिमां गृहीत्वा भिक्षार्थं प्रतिगृहमटतामित्यर्थः तत्तदायतनेषु प्रतिष्ठापिततत्पूजार्थप्रतिमादिषु तु ब्रह्मात्मिका शिवाद्यभेदबुद्धिरेव न तु काष्ठत्वबुद्धिरिति न तत्र प्रत्यय इति बोध्यम्।

## देवपथादि(४)भ्यश्च। ५। ३। १००।

कनो लुप् स्यात्। देवपथः। हंसपथः। आकृतिगणोऽयम्।

## वस्तेर्ढञ्। ५। ३। १०१।

इवेत्यनुवर्त्तत एव। प्रतिकृताविति निवृत्तम्। वस्तिरिव-वास्तेयम्। वास्तेयी।

## शिलाया ढः। ५। ३। १०२।

शिलेव शिलेयम्। शिलाया इति योगविभागात् ढञपीत्येके। शैलेयम्।

## शाखादि(५)भ्यो (यः) यत् (६)। ५। ३। १०३।

शाखेव शाख्यः। मुख्यः। जघनमिव जघन्यः। अग्र्यः। शरण्यः।

## द्रव्यञ्च भव्ये (७)। ५। ३। १०४।

द्रव्यमयं ब्राह्मणः।

---

(४) देवपथ हंसपथ वारिपथ रथपथ स्थलपथ करिपथ अजपथ राजपथ शतपथ शङ्कुपथ सिन्धुपथ सिद्धगति उष्ट्रग्रीव वामरज्जु हस्त इन्द्र दण्ड पुष्प मत्स्य देवपथादिराकृतिगणः।

(५) शाखा मुख जघन शृङ्ग मेघ अभ्र चरण स्कन्ध स्कन्द उरस् शिरस् अग्र शरण शाखादिः।

(६) शाखादिभ्यो यदित्येव प ठस्तेन तित्स्वरेणाद्युदात्तत्वमिति। शब्देन्दुः।

(७) भव्ये आत्मवति अभिप्रेतार्थपात्रभूत इति यावत् तद्विषयात् द्रुशब्दादिवार्थे यः (यत्) स्यादित्यर्थः।

कुशाग्राच्छः। ५। ३। १०५।

कुशाग्रमिव कुशाग्रीया बुद्धिः।

समासाच्च तद्विषयात्। ५। ३। १०६।

इवार्थविषयात् समासाच्छः स्यात्। काकतालीयो(८)देवदत्तस्य बधः। इह काकतालसमागमसदृशश्चौरसमागम इति समासार्थः तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः। अजाकृपाणीयः अतर्कितोपनत इति फलितोऽर्थः।

शर्करादि(९)भ्योऽण्। ५। ३। १०७।

शर्करेव शार्करम्।

अङ्गुल्यादि(१०)भ्यष्ठक्। ५। ३। १०८।

अङ्गुलीव आङ्गुलिकः। भरुजेव भारुजिकः।

एकशालायाष्ठजन्यतरस्याम्। ५। ३। १०९।

---

(८) काकतालीयमिति काक इव ताल इवेति वाक्ये सह सुपेति (२।१।४०) समासः वृत्तिविषये काकतालशब्दौ तत्समवेतक्रियावाचिनौ तत्र काकगमनं देवदत्तगमनस्योपमानं तालपतनं दस्युपनिपातस्य, तालेन तु यः काकस्य बधः स देवदत्तस्य दस्युना बधस्योपमानमिति बधादिरेव काकतालीयादिशब्दवाच्यः संपद्यते इति कैयटः।

(९) शर्करा कपालिका कपाटिका कनिष्ठिका पुण्डरीक शतपत्र गोलोमन् लोमन् गोपुच्छ नराची नकुल सिकता शर्करादिः।

(१०) अङ्गुली भरुज बभ्रु वल्गु मण्डर मण्डल शष्कुली हरि कपि मुनि रुह खल उदश्वित् गोणी उरस् कुलिश अङ्गुल्यादिः।

एकशालाशब्दादिवार्थे ठञ् वा। पक्षे ठक्। एकशालेव एकशालिकः-ऐकशालिकः।

## कर्कलोहितादीकक्। ५। ३। ११०।

कर्कः शुक्लोऽश्वः सइव कार्कीकः। लौहितीकः स्फटिकः।

## पूगाञ्ञोऽग्रामणीपूर्व्वात्। ५। ३। ११२।

इवार्थो निवृत्तः। नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगस्तद्वाचकात् स्वार्थे ञ्यः स्यात्। लौहितध्वज्यः

## व्रातच्फञोरस्त्रियाम्। ५। ३। ११३।

व्रातः, कापोतपाक्यः। च्फञ्, कौञ्जायन्यः। व्राध्रायन्यः।

## आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्। ५। ३। ११४।

वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट्। चौद्रक्यः। मालव्यः। टित्त्वान्ङीप्। चौद्रकी। आयुधेति किम्। मल्लाः। सङ्घेति किम् सम्राट्। वाहीकेषु किम् शवराः। अब्राह्मणेति किम् गोपालवाः। शालङ्कायनाः। ब्राह्मणे तद्विशेषग्रहणम् राजन्ये स्वरूपग्रहणम्।

## वृकाट्टेण्यण्। ५। ३। ११५।

आयुधजीविसङ्घवाचकात् स्वार्थे। वार्केण्यः। आयुधेति किम्। जातिशब्दान्मा भूत्।

**दामन्यादि(११)त्रिगर्त्तषष्ठाच्छः । ५ । ३ । ११६ ।**

दामन्यादिभ्यस्त्रिगर्त्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात् । त्रिगर्त्तः षष्ठो वर्गो येषान्ते त्रिगर्त्तषष्ठाः ।

आहुस्त्रिगर्त्तषष्ठांस्तु कौण्डोपरथदाण्डकी ।
क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः ॥

दामनीयः दामनीयौ दामनयः । औलपीयः औलपीयौ उलुपयः । त्रिगर्त्तषष्ठः । कौण्डोपरथीयः । दाण्डकीयः ।

**पर्श्वादि-यौधेयादि-(१२)-भ्योऽणञौ । ५ । ३ । ११७ ।**

आयुधजीविसङ्घवाचिभ्य एभ्यः क्रमादणञौ स्तः स्वार्थे । पार्शवः पार्शवौ पर्शवः । यौधेयः यौधेयौ यौधेयाः ।

**अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् । ५ । ३ । ११८ ।**

अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात् । अभिजितो-

---

(११) दामनि औलपि वैजवापि औदकि औदङ्कि आच्युतन्ति आच्युतदन्ति शाकुन्तकि छाकिदन्ति औडवि काकदन्तकि शातुन्तपि सार्व्वसेनि विन्दु वैन्दवि तुलभ मौञ्जायन काकन्दि सावित्रीपुत्र दामन्यादिः । दामनय इत्यत्र बहुत्वे (७१७८०) तद्राजसंज्ञत्वात् प्रत्यय लुक् । एवमन्यत्रापि ।

(१२) पर्शु असुर रक्षस् बाह्लीक वयस् वसु मरुत् सत्वत् दशार्ह पिशाच अशनि कार्षापण पर्श्वादिः । यौधेय कौशेय शौक्रेय शौभ्रेय धौर्त्तेय धार्त्तेय ज्यावाणेय त्रिगर्त्त भरत उशीनर यौधेयादिः ।

प्रत्यम् आभिजित्यः। वैदभृत्यः। शालावत्यः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः।

## ञ्यादयस्तद्राजाः। ५। ३। ११९।

पूगाञ्ञ्य (७१५सू०) इत्यारभ्य उक्ता एतत्संज्ञाः स्युः। तेनास्त्रियामङ्गेषु(५२०सू०)लुक्। लौहितध्वजाः। कपोतपाकाः। कौञ्जायनाः। ब्राध्नायना इत्यादि।

## पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च। ५। ४। १।

लोपवचनमनैमित्तिकत्वार्थम्। अतो न स्थानिवत्। पादः पत् (१७८सू०) तद्धितार्थे इति (२५५सू०) समासे कृते प्रत्ययः। वुन्नन्तं स्त्रियामेव। द्वौद्वौ पादौ ददाति द्विपदिकाम्। द्विशतिकाम्। पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात्। द्विमोदकिकाम्।

## दण्डव्यवसर्गयोश्च। ५। ४। २।

वुन् स्यात्। अवीप्सार्थमिदम्। द्वौ पादौ दण्डितः द्विपदिकां (१३) व्यवसृजति वा ददातीत्यर्थः।

## स्थूलादिभ्यः (१४) प्रकारवचने कन्।५।४।३।

---

(१३) द्विपदिकामित्यत्र दण्डित इत्यनुषज्यते दण्डेर्द्विकर्म्मकत्वात् गौणे कर्म्मणि निष्ठा।

(१४) स्थूल अणु माष इषु (कृष्ण तिलेषु) (यव व्रीहिषु) इक्षु तिल पाद्य (कालावदात सुरायाम्) (गोमूत्र आच्छादने) (सुरा अहौ) (जीर्ण

जातीयरोऽपवादः। स्थूलकः। अणुकः। चञ्चद्बृहतोरुपसंख्यानम् *। चञ्चत्कः। बृहत्कः। (सुरा अहौ ग०)। सुरावर्णोऽहिः सुरकः।

## अनत्यन्तगतौ (१५) क्तात्। ५। ४। ४।

छिन्नकम्। भिन्नकम्।

## न सामिवचने। ५। ४। ५।

सामिपर्य्याये उपपदे क्तान्तान्न कन्। सामिकृतम् अर्द्धकृतम्। अनत्यन्तगतेरिह प्रकृत्यैवाभिधानात्(१६)पूर्व्वेण कन्न प्राप्तः। इदमेव निषेधसूत्रमत्यन्तस्वार्थिकमपि कनं ज्ञापयति। बहुतरकम्।

## बृहत्या आच्छादने। ५। ४। ६।

कन् स्यात्। द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। आच्छादने किम्। बृहती छन्दः।

## अषड्क्षाशितंग्वलङ्कर्म्मालम्पुरुषाध्युत्तरपदात् खः। ५। ४। ७।

शालिषु) (पतमूल ममलो व्यस्य) कुमारीपुत्र कुमारीश्वशुरमपि, स्थूलादिः। प्रकारोऽभेदः साद्दृश्यञ्चोभयत्रैव प्रत्ययः।

(१५) अनत्यन्तगतिः साकल्येन सम्बन्धाभावः। छिन्नकमित्यस्य ईषच्छिन्नमित्यर्थः। प्रकृतिवाच्यया क्रियया क्तार्थस्य कर्म्मण एकदेशप्रतीत्याऽत्यन्तगतिर्नास्तीति प्रत्ययः।

(१६) प्रकृत्यैवेति समस्तत्वेन तदेकदेशसामिशब्देनैवेत्यर्थः।

स्वार्थे। अषडक्षीणो (१७) मन्त्रः द्वाभ्यामेव कृतइत्यर्थः। अशि-ता गावोऽस्मिन्निति अशितङ्गवीनमरण्यम्। निपातनात्पूर्व्वस्य मम्। अलं कर्मणे अलङ्कर्म्मीणः। अलम्पुरुषीणः (१८)। ईश्वराधीनः। नित्योऽयं खः उत्तरसूत्रे विभाषाग्रहणात्। अन्येऽपि केचित् स्वार्थिकाः प्रत्ययाः नित्यमिष्यन्ते। तमबा-दयः (१९) प्राक्कनः, अादयः प्राग्वृत्तः, अामादयः प्राङ्म-यटः, वृहतीजात्यन्ताः, समासान्ताश्चेति।

## विभाषाञ्चेरदिक्स्त्रियाम्। ५। ४। ८।

अदिक्स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदिकात् खः स्याद्वा स्वार्थे। प्राक् (२०) प्राचीनं प्रत्यक्-प्रतीचीनम्। अवाक्-अवाचीनम्। 'निकृष्टप्रतिकृष्टार्व्वरेफयाप्यावमाधमा' इति कोषात् अर्वा निकृष्टः। अर्वन्तमञ्चतीति अर्व्वाक्-अर्व्वाचीनम्। अदिक्-स्त्रियां किम् प्राची दिक्। उदीची दिक्। दिग्ग्रहणं किम्

(१७) न सन्ति षडक्षीणि श्रोत्रचक्षुःप्राणेन्द्रियाणि यस्मिन्निति "बहुव्रीहौ सक्थ्यक्ष्णोरिति (४१४पृ०) समासान्ते अनेन खः। मन्त्रा मन्त्रणम्।

(१८) अलम्पुरुषीणः प्रतिमल्लादिपुरुषः।

(१९) तमबादय इति अतिशायने तमबिष्ठादयः (७००पृ०) प्राक् कन इति अवक्षेपणे कनित्यतः (७११पृ०) प्राग्वर्त्तिनः। अादयः पूगाञ्ञ्य इत्यादयः (७१५पृ०) पादशतस्येत्यादिना (७१७पृ०) विहितात् वुनः प्राग्वर्त्तिनः। अामादय इति किमेत्तिङव्ययेत्यादिना (७००पृ०) विहिता अामादयः प्राङ्मयट इति तत्प्रकृतवचने मयडित्यतः (७२२पृ०) प्राग्-वर्त्तिनः। वृहतीजात्यन्ता इति वृहत्या आच्छादन इति (७१८पृ०) कनादयः जात्यन्ताच्छ इति (७२०पृ० विहितच्छान्ता इत्यर्थः।

(२०) प्रागिति लुप्तास्त्यन्तम् प्राचि देशे काले वेत्यर्थ. तद्धितश्चासर्व्वविभक्ति-

प्राचीना (२१) ब्राह्मणी । स्त्रीग्रहणं किम् प्राचीनं (२२) ग्रामादाम्राः ।

## जात्यन्ताच्छ बन्धुनि (२३) । ५ । ४ । ६ ।

ब्राह्मणजातीयः । बन्धुनि किम् ब्राह्मणजातिः शोभना । जातेर्व्यञ्जकन्द्रव्यम्बन्धु ।

## स्थानान्ताद्विभाषा सस्थानेनेति चेत् ।५।४।१०।

सस्थानेन(२४)तुल्येन चेत् स्थानान्तमर्थवदित्यर्थः । पितृस्थानीयः (२५) । पितृस्थानः । सस्थानेन किम् गोस्थानम् ।

---

(२०३पृ०) रित्यनेनाव्ययत्वात् निर्लिङ्गत्वम् तदुत्तरस्वप्रत्यये तु सामान्ये नपुंसकमेकवचनञ्च । स्वप्रत्ययप्रकृतेस्तदाधेयद्रव्यपरत्वे विशिष्यनिघ्नतेति भेदः ।

(२१) प्राचीना ब्राह्मणीति कालरूपक्रियानिमित्तो देशनिमित्तो वायं शब्दः तथाचास्याः स्त्रीत्वेऽपि दिक्त्वाभावः ।

(२२) प्राचीनमित्यत्र प्रागिति लुप्तास्तात्यन्तमव्ययं देशकालवाचकं प्रकृतिस्तस्य चाव्ययतया निर्लिङ्गत्वात् सामान्ये नपुंसकता तथाच ग्रामावधिकप्राग्देशवृत्तय आम्रा इति बोधः । यदा तु प्रागादिशब्दास्तत्तद्देशकालस्य बोधकास्तदा विशिष्यनिघ्नतया प्राचीना आम्रा इत्येव ।

(२३) बध्यतेऽस्मिन् जातिरिति बन्धु व्यञ्जकद्रव्यं तत्र वर्त्तमानात् तदाश्रयव्यक्तौ गम्यमानायां जात्यन्तात् छ इत्यर्थः । अत्र प्रकृतितोलिङ्गवचनातिक्रम इष्ट एव ।

(२४) सस्थानशब्दस्तुल्यवाची तुल्यार्थेन चेत् स्थानान्तमर्थवत् तदा प्रत्यय इत्यर्थ इतिशब्दादर्थवदिति लभ्यम् ।

(२५) पितृस्थानीय इति स्थानं सम्बन्धविशेषः पितुरिव स्थानमस्येति बहुव्रीहिस्ततोऽनेन छः ।

## अनुगादिनष्ठक्।५।४।१३।

अनुगदतीत्यनुगादी स एवानुगादिकः।

## विसारिणो मत्स्ये।५।४।१६।

अण् स्यात्। वैसारिणः। मत्स्ये इति किम् विसारी देवदत्त।

## संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्।५।४।१७।

अभ्यावृत्ति (२६) र्जन्म क्रियाजन्मगणनवृत्तेः संख्याशब्दात्

---

(२६) अभिमुखी आवृत्तिरभ्यावृत्तिः सा च जन्मरूपैवेह ग्राह्येत्याहाभ्यावृत्तिर्जन्मेति। गणनञ्च एकत्वाद्यवान्तरसंख्योत्पादनं तद्ग्रहणेनैव संख्यावाचकत्वलाभे पुनः संख्याग्रहणं संख्यासंज्ञकानामपि ग्रहणार्थम् तेन बहुकृत्वो गणकृत्व इत्यादि सिद्धम्। एतेन भूरिप्रभृतीनां संख्याबोधकत्वेऽपि तत्संज्ञकत्वाभावात् न ग्रहणम्। अत्र क्रियेतिविशेषणेन द्रव्यादिगणनायां नास्य प्रवृत्तिः। अस्य च क्रियायामेवान्वयः „संबोधनान्तं कृत्वोऽर्थाः कारकं प्रथमोमति„रित्यादीन्युपक्रम्य 'सम्बन्धश्चाष्टकस्यास्य क्रिययैवावधार्य्यतामिति' हर्य्युक्तेः। क्रिया च धातुवाच्या साध्यरूपैव ग्राह्या घञादिवाच्यसिद्धक्रियायान्तु नास्य साधुत्वमतएव द्वौ पाकावित्येव तत्र प्रयोगस्तद्गुणीभूतधात्वर्थक्रियायामन्वये तु द्विःपाकः इत्येव प्रयोगः। अतएव च "साध्यरूपा क्रिया तत्र धातुरूपनिबन्धना। सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धन इति हरिणा कारकाद्यन्वयार्थं घञाद्यन्ते क्रियाया द्विधा भानमुक्तम्। तेन द्विर्वचनेऽचीति सूत्रनिर्देशः मङ्गच्छते मङ्गच्छते च द्विर्वद्धं सुबद्धं भवतीति भाष्यप्रयोगः। विस्तरोऽस्मत्कृतशब्दार्थरत्ने द्रष्टव्य।

स्वार्थे कृत्वसुच् स्यात्। पञ्चकृत्वो(२७)भुङ्क्ते। संख्यायाः किम्(२८)भूरिवारान्(२९)भुङ्क्ते।

**द्वित्रिचतुर्भ्यः सुच्। ५। ४। १८।**

कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिः। रात्सस्य(१२२४०)चतुः।

**एकस्य सकृच्च। ५। ४। १९।**

सकृदित्यादेशः स्यात्। चात्सुच्। सकृद्भुङ्क्ते। संयोगान्तस्येति (२६४०) सुचो लोपः न तु हल्ङ्याबिति (११९७) अभैत्सी-दित्यत्र सिचइव सुचोपि,, तद्योगात् ‡।

**विभाषा बहोर्धाऽविप्रकृष्टकाले। ५। ४। २०।**

अविप्रकृष्टआसन्नः। बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते। आसन्नकाले किम् बहुकृत्वो मासस्य भुङ्क्ते।

**तत्प्रकृतवचने मयट्। ५। ४। २१।**

प्राचुर्य्येण प्रस्तुतम् प्रकृतन्तस्य वचनम् प्रतिपादनम् भावेऽ-

---

(२७) पञ्चकृत्व इति पञ्चादिशब्दास्तत्तत्संख्योत्पत्तिपराः कृत्वसुजादयस्तु तद्द्योतकाः तथाच पञ्चादिसंख्योत्पत्तिकं भोजनमिति बोधः। क्रिया-समुदायस्यासमाप्तत्वात् वर्त्तमानप्रयोगः।

(२८) किमिति गणनइत्युक्तेर संख्यालाभे संख्याग्रहणं किमर्थमिति प्रश्नः।

(२९) उत्तरमाह भूरीति अनियतसंख्यासु संख्यासंज्ञकबहुगणशब्दग्रह-णात्तदितरेषां संख्याकार्य्यं नाप्नोति ज्ञापितं तेन भूर्य्यादेर्न प्रसङ्गः। वारशब्दः कालपरः स च यावता कालेन भोजन पर्य्याप्तं भवति तावान् ग्राह्यः कालाध्वनोरिति (२६८४०) अत्यन्तसंयोगे द्वितीया।

‡ तेन सह इतिसोत्यनेन योगात् सहचारित्वात् तथाच सिचस्तिपेव सुचः सुपा साहचर्य्यात्र तेन सूत्रेण लोप इति भावः।

धिकरणे वा ल्युट्। आद्ये(३०)। प्रकृतमन्नं अन्नमयम्। अपूपमयम्। यवागूमयम्। द्वितीये। अन्नमयो यज्ञः। अपूपमयं पर्व।

**समूहवच्च बहुषु।५।४।२२।**

सामूहिकाः प्रत्यया अतिदिश्यन्ते। चान्मयट्। मोदकाः प्रकृताः मौदकिकम् मोदकमयम्। शाष्कुलिकम् शष्कुलीमयम्। द्वितीयेऽर्थे। मौदकिको यज्ञः मोदकमयः।

**अनन्तावसथेतिहभेषजाञ्ञ्यः।५।४।२३।**

अनन्तएवानन्त्यम्। आवसथएवावसथ्यम्। इतिहेति निपातसमुदायः (३१)। ऐतिह्यम्। भेषजमेव (३२) भैषज्यम्।

**देवतान्तात्तादर्थ्ये(३३) यत्।५।४।२४।**

तदर्थएव तादर्थ्यम् स्वार्थे ष्यञ्। अग्निदेवतायै इदमग्निदेवत्यम्। पितृदेवत्यम्।

**पादार्घाभ्याञ्च।५।४।२५।**

पादार्थमुदकम्पाद्यम्। अर्घ्यम्। नवस्य नआदेशः त्नप्तनप्-

---

(३०) आद्ये भावल्युडन्तपक्षे। द्वितीये उच्यमानप्रकृताधिकरणमेव तद्धितार्थस्तेन तयोरेकत्र क्लीवलिङ्गताऽपरत्र विशेष्यनिघ्नता चेति भेदः।

३१) निपातसमुदायइति उपदेशपारम्पर्ये वर्त्तते इति शेषः तस्य चाप्रातिपदिकत्वेऽपि वचनसामर्थ्यात् प्रत्ययः।

(३१) भिषजा कृतं भेषजमतएव ज्ञापकादेकारादेशः।

(३२) तादर्थ्ये इति तदर्थकवस्तुनि द्योत्ये इत्यर्थः वैधकर्म्मणि त्यज्यमानद्रव्योद्देश्यकत्वं मन्त्रस्तुत्यत्वं वा देवतात्वमतः पितृदेवत्यमित्युदाहृतम्।

खाश्च प्रत्यया वक्तव्याः* । नूत्नम् । नूतनम् । नवीनम् । नश्च पुराणे प्रात् *। पुराणार्थे वर्त्तमानात्प्रशब्दान्नो वक्तव्यः । चात्पूर्व्वोक्ताः । प्रणम् । प्रत्नम्। प्रतनम् । प्रीणम् । भागरूपनामभ्यो धेयः *। भागधेयः । रूपधेयम् । नामधेयम् । अग्नीध्रसाधारणादञ्*। आग्नीध्रम् । साधारणम् । स्त्रियां ङीप्। आग्नीध्री । साधारणी (२४) ।

### अतिथेर्ञ्यः । ५ । ४ । २६ ।

तादर्थ्ये इत्येव । अतिथये इदमातिथ्यम् ।

### देवात्तल् । ५ । ४ । २७ ।

देव एव देवता ।

### अवेः कः । ५ । ४ । २८ ।

अविरेवाविकः ।

### यावादि(३५)भ्यः कन् । ५ । ४ । २९ ।

याव एव यावकः । मणिकः ।

### लोहितान्मणौ । ५ । ४ । ३० ।

---

(२४) समानं धारणमस्येति साधारणं अनेकं प्रत्यविशिष्टसंबन्धमित्यर्थः पृषोदरादित्वात् साधुः ।

(२५) याव मणि अस्थि तालु जानु सा(सा)न्द्र पीत स्तम्ब (ऋतावुष्णशीते) (पशौ लूनविपाते) (अणु निपुणे) (पुत्र कृत्रिमे) (स्नात वेदसमाप्तौ) (शून्य रिक्ते) (दान कुत्सिते) (तनु सत्वे) ईयसश्च ज्ञात अज्ञात कुमारी क्रीड़नानि च यावादिः ।

लोहितएव मणिर्लोहितको मणिः।

## वर्णे चानित्ये (३६)। ५। ४। ३१।

लोहितकः कोपेन। लोहितात्लिङ्गबाधनं वा । लोहितिका लोहिनिका कोपेन।

## रक्ते। ५। ४। ३२।

लाक्षादिना रक्ते (३७) यो लोहितशब्दस्तस्मात्कन् स्यात्। लिङ्गबाधनं वेत्येव। लोहितिका लोहिनिका शाटी।

## कालाच्च। ५। ४। ३३।

वर्णे चानित्ये रक्ते इति द्वयमनुवर्त्तते। कालकं मुखं वैलक्षण्येन। कालकः पटः। कालिका शाटी।

## विनयादि(३८) भ्यष्ठक्। ५। ४। ३४।

विनयएव वैनयिकः। सामयिकः। (उपायाद्ध्रस्वत्वञ्च ग०)। औपयिकः।

## वाचो व्याहृतार्थायाम् (३९)। ५। ४। ३५।

---

(३६) यावदाश्रयमवस्थानयोग्यत्वाभावोऽनित्यत्वं स्वसमानाधिकरणध्वंसप्रतियोगित्वमिति यावत्।

(३८) लाक्षादिना रक्ते लोहित्यस्य यावदाश्रयमवस्थानादप्राप्तेऽयमारम्भः।

(३८) विनय समय (उपायाद्ध्रस्वत्वं च) सम्प्रति संगति कथञ्चित् अकस्मात् समाचार उपचार समयाचार व्यवहार सम्प्रदान समुत्कर्ष समूह विशेष अत्यय विनयादिः।

(३९) व्याहृतोऽन्येनोक्तोऽर्थो यस्याः सा व्याहृतार्था तस्यामित्यर्थः।

सन्दिष्टार्थायां वाचि विद्यमानाद्वाक्शब्दात् स्वार्थे ठक् स्यात्। "सन्देशवाग्वाचिकं स्यात्"।

**तद्युक्तात् (४०) कर्म्मणोऽण्। ५। ४। ३६।**

कर्म्मैव कार्म्मणम्। वाचिकम् श्रुत्वा क्रियमाणं(४१)कर्म्मेत्यर्थः।

**ओषधेरजातौ। ५। ४। ३७।**

स्वार्थेऽण्। औषधम्पिबति। अजातौ किम् ओषधयः क्षेत्रे रूढ़ाः।

**प्रज्ञादि(४) भ्यश्च। ५। ४। ३८।**

प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः।

**मृदस्तिकन्। ५। ४। ३९।**

मृदेव मृत्तिका।

**सस्नौ प्रशंसायाम्। ५। ४। ४०।**

रूपपोऽपवादः। प्रशस्ता मृत् मृत्स्ना मृत्स्ना। उत्तरसूत्रेऽन्यतरस्यांग्रहणान्नित्योऽयम्।

---

(४०) वाग्व्याहृतार्थप्रतिपादककर्म्मशब्दादित्यर्थः। वाचा कथनपूर्व्वकं यत् क्रियते तस्मिन्नेवायं प्रत्ययः।

(४१) इदं त्वया कर्त्तव्यमिति सन्देशवाचं श्रुत्वा क्रियमाणं कर्म्म कार्म्मणमिति कैयटोक्तिमनुसृत्याह वाचं श्रुत्वेति।

(४२) प्रज्ञ वणिज् उशिज् उष्णिज् प्रत्यक्ष विद्वस् विदन् षोड़न् विद्या मनस् (श्रोत्र शरीरे) (जुह्वत् कृष्णमृगे) चिकीर्षत् चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् व्याकृत असुर रक्षस् पिशाच अशनि कर्षापण देवता बन्धु प्रज्ञादिः।

### बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।५।४।४२।

बहूनि ददाति बहुशः । अल्पानि अल्पशः । बह्वल्पार्थान्मङ्गलामङ्गलवचनम् * । नेह बहूनि ददात्यनिष्टेषु अल्पन्ददात्याभ्युयिदकेषु ।

### संख्यैकवचनाच्च वीप्सायाम् । ५ । ४ । ४३ ।

द्वौ द्वौ ददाति द्विशः । माषंमाषं माषशः । प्रस्थशः । परिमाणशब्दा वृत्तावेकार्थो(४३)एव । संख्यैकवचनात्किम् घटं घटं ददाति । वीप्सायां किम् द्वौ ददाति । कारकादित्येव । द्वयोर्द्वयोः स्वामी ।

### प्रतियोगे पञ्चम्यास्तसिः । ५ । ४ । ४४ ।

प्रतिना कर्म्मप्रवचनीयेन योगे या पञ्चमी (२८१पृ०) विहिता तदन्तात्तसिः स्यात् । प्रद्युम्नः कृष्णतः प्रति । आद्यादिभ्य उपसंख्यानम्* । आदौ (४४) आदितः । मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण स्वरतः वर्णतः ।

### अपादाने चाहीय‡रुहोः । ५ । ४ । ४५ ।

अपादाने या (२८४पृ०) पञ्चमी तदन्तात्तसिः स्यात् ।

(४३) सूत्रे एकवचनपदं व्याख्यानात् परिमाणार्थकपरमित्याह परिमाणशब्दा इति एतच्च पदशः स्वरश इत्यादिप्रयोगात्तयोरप्युपलक्षणम् ।

(४४) आद्यादिभ्य इति अयमेव सार्वविभक्तिकस्तसिरिति सूचयन्नाह आदाविति

‡ अनेनैव ज्ञापकात् कर्त्तर्य्यपि पञ्चमीत्युक्तं (४२५पृ०) प्राक् ।

ग्रामादागच्छति ग्रामतः। अहीयरुहोः किम् स्वर्गाद्धीयते। पर्व्वतादवरोहति।

### अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः। ५। ४। ४६।

अकर्त्तरि तृतीयान्ताद्वा तसिः स्यात्। अतिक्रम्य ग्रहोऽतिग्रहः। चारित्रेणातिगृह्यते चारित्रतोऽतिगृह्यते चारित्रेण अन्यानतिक्रम्य वर्त्तत इत्यर्थः। अव्यथनमचलने। वृत्तेन न व्यथते वृत्ततो न व्यथते वृत्तेन न चलतीत्यर्थः। क्षेपे। वृत्तेन क्षिप्तः वृत्ततः क्षिप्तः वृत्तेन निन्दित इत्यर्थः। अकर्त्तरीति किम्। देवदत्तेन क्षिप्तः।

### हीयमानपापयोगाच्च। ५। ४। ४७

हीयमानपापयुक्तादकर्त्तरि तृतीयान्ताद्वा तसिः। वृत्तेन हीयते वृत्ततोहीयते। वृत्तेन पापः वृत्ततः पापः क्षेपस्याऽविवक्षायामिदम्। क्षेपे तु पूर्व्वेण सिद्धम्। अकर्त्तरि किम् देवदत्तेन हीयते।

### षष्ठ्या व्याश्रये। ५। ४। ४८।

षष्ठ्यन्ताद्वा तसिः स्यान्नानापक्षसमाश्रये। देवा अर्जुनतोऽभवन् आदित्याः कर्णतोऽभवन्। अर्जुनस्य पक्षे इत्यर्थः। व्याश्रये किम् वृक्षस्य शाखा।

### रोगाच्चापनयने। ५। ४। ४९।

रोगवाचिनः षष्ठ्यन्ताद्वा तसिश्चिकित्सायाम्। प्रवाहिकातः कुरु-प्रतीकारमस्याः कुर्व्वित्यर्थः। अपनयने किम् प्रवाहिकायाः प्रकोपणं करोति।

## अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्त्तरि च्विः। ५। ४। ५०।

अभूततद्भाव (४५) इति वक्तव्यम्   विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्त्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे।

## अस्य च्वौ। ७। ४। ३२।

अवर्णस्य ईः स्यात् च्वौ वेर्लोपः (१६४पृ०) च्व्यन्तत्वात् ‡ अव्ययत्वम्। अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति। ब्रह्मीभवति(४६)। गङ्गीस्यात्। अव्ययस्य च्वावीत्वं नेति

---

(४५) अभूततद्भावे इत्यस्य गम्यमाने इति शेषः। तद्भावे इति कारकतृतीयासमासे अभूतपदेन कर्त्तृषष्ठ्यन्तेन पुनः समासः। अभूतत्वञ्च तद्भावघटकतच्छब्दार्थ तादात्म्येन प्रागनुत्पन्नत्वम् एवञ्च यः पदार्थः येन रूपेण प्रागभूतस्तेन रूपेण तस्य भावः अभूततद्भाव इति फलितम् तथाच प्रकृतिस्वरूपमेव विकारस्वरूपतामापद्यमानं यत्र विवक्ष्यते तत्रायं प्रत्ययः एवञ्च सम्पत्तिकर्त्तृवाचकात् विकारबोधकात् शब्दात् अभूततद्भावे गम्ये प्रत्यय इति विशिष्टसूत्रार्थः। अत्र विकृतेः प्रकृतिबोधकता गौण्या वृत्त्येति च्विप्रत्ययान्तस्य गौणता। अतएव महद्भूता रात्रिरित्यादौ न महतआत्त्वं (२५५पृ०) न वा पुंवद्भावः। अत्र अनारोपिततद्भावे आरोपिततद्भावसम्पत्तावेवायं च्विस्तेनेश्वरप्रसादादिनाऽमहति यथार्थमहत्त्वोत्पत्तौ नायम् प्रत्ययस्तेन कारणीभूतो दण्ड इत्य साधुरेव केचित्।

‡ तद्धितश्चाविभक्तिरित्यत्र (२०३पृ०) सम्प्रक्तय इत्युक्तेरिति शेषः।

(४६) ब्रह्मीभवतीति अत्र प्रकृतिभूतस्य ब्रह्मणः विकाराभेदेन भवनकर्त्तृत्वम् तेन संघीभवन्ति ब्राह्मणाः, त्वद्भवति चैत्र इत्यादौ वचनपुरुषव्यवस्थाऽन्यथा प्रकृतिविकृतिस्थलद्वय प्रकृतिवचनपुरुषानुसारिप्रयोगापत्तेः।

वाच्यम्। दोषाभूतमहः। दिवाभूता रात्रिः। एतच्चाव्ययीभावस्येति सूत्रे भाष्ये उक्तम्।

**क्यच्व्योश्च। ६। ४। १५२।**

हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये, च्वौ च परतः। गार्गीभवति।

**च्वौ च। ७। ४। २६।**

च्वौ च परे पूर्व्वस्य दीर्घः स्यात्। शुचीभवति। पटू स्यात्। अव्ययस्य दीर्घत्वं नेति केचित्। तन्निर्मूलम् स्वस्ति स्यादिति तु महाविभाषया च्वेरभावात्सिद्धम्। स्वस्तीस्यादित्यपि पक्षे स्यादिति चेदस्तु। यदि नेष्यते तर्ह्यनभिधानात् च्विरेव नोत्पद्यते इत्यस्तु। रीङृतः (१८४१०)। मात्रीकरोति।

**अरुर्म्मनश्चक्षुश्चेतोरहोरजसां लोपश्च।५।४।५१।**

एषां लोपः स्याच् च्विश्च। अरूकरोति। उन्मनीस्यात् उच्चक्षूकरोति। विचेतीकरोति। विरहीकरोति। विरजीकरोति।

**विभाषा साति: कार्त्स्न्ये। ५। ४। ५२।**

च्विविषये सातिर्व्वा स्यात्साकल्ये (४७)।

**सात्पदाद्योः। ८। ३। १११।**

सस्य षत्वन्न स्यात्। दधि सिञ्चति। कृत्स्नं शस्त्रमग्निः सम्पद्यतेऽग्निसाद्भवति अग्नीभवति। महाविभाषया वाक्यमपि। कार्त्स्न्ये किम् एकदेशेन शुक्लीभवति पटः।

---

(४७) साकल्यं सर्व्वावयवोपेतत्वम्। अभूततद्भावे इत्यप्यनुवर्त्तत एव।

अभिविधौ सम्पदा च।५।४।५३।

सम्पदा कृभ्वस्तिभिश्च योगे सातिर्वा स्यादभिव्याप्तौ। पक्षे कृभ्वस्तियोगे च्विः। सम्पदा तु वाक्यमेव। अग्निसात्सम्पद्यते अग्निसाद्भवति शस्त्रम् अग्नीभवति। जलसात्सम्पद्यते जलीभवति लवणम्। एकस्या व्यक्तेः सर्व्वावयवावच्छेदेनान्यथाभावः कार्त्स्न्यम्। बहूनां व्यक्तीनाङ्किञ्चिदवयवावच्छेदेनान्यथात्वं त्वभिविधिः।

तदधीनवचने।५।४।५४।

सातिःस्यात्कृभ्वस्तिभिःसम्पदा च योगे। राजसात् करोति। राजसात्सम्पद्यते राजाधीनमित्यर्थः।

देये त्रा च।५।४।५५।

तदधीने देये त्रा स्यात्सातिश्च कृञादियोगे। विप्राधीनन्देयं करोति विप्रत्राकरोति। विप्रत्रासम्पद्यते। पक्षे विप्रसात्करोति। देये किम् राजसाद्भवति राष्ट्रम्।

देवमनुष्यपुरुषपुरुमर्त्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्।५।४।५६।

एभ्यो द्वितीयान्तेभ्योः सप्तम्यन्तेभ्यश्च त्रा स्यात्। देवत्रावन्दे रमे वा। बहुलोक्तेरन्यत्रापि। बहुत्राजीवतो मनः।

अव्यक्तानुकरणाद्द्व्यजवरार्द्धादनितौ डाच्।५।४।५७।

द्व्यचो ऽवरं न्यूनं न तु ततो न्यूनमनेकाजिति । यावत्याद्द्व्यमर्द्धं यस्य तस्माड्डाच् स्यात्कृभ्वस्तिभिर्योगे । डाचि (४८) विवक्षिते द्वे बहुलम्*। नित्यमाम्रेडिते डाचीति वक्तव्यम्* । डाच्परं यदाम्रेडितन्तस्मिन् परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तकारपकारयोः पकारः । पटपटाकरोति । अव्यक्तानुकरणात्किम् ईषत्करोति । द्व्यजवरार्द्धात्किं श्रत्करोति अवरेति किम् खरटखरटाकरोति । नपटनपटाकरोति । अनेकाचइत्येव सूत्रयितुमुचितम् एवं हि डाचीति परसप्तम्येव द्वित्वे सुवचेत्यवधेयम् । अनितौ किम् पटितिकरोति ।

## कृञो द्वितीयतृतीयशम्बबीजात्कृषौ । ५ । ४ । ५८ ।

द्वितीयादिभ्यो डाच् स्यात्कृञएव योगे कर्षणेऽर्थे । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । द्वितीयं तृतीयं कर्षणं करोति द्वितीयाकरोति । तृतीयाकरोति । शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति शम्बाकरोति । बीजेन सह (४९) कर्षति । बीजाकरोति ।

## संख्यायाश्च गुणान्तायाः । ५ । ४ । ५९ ।

(४८) डाचि विवक्षित इति अन्यथा परसप्तम्याश्रयणे पटपटाकरोतीत्यादौ पटशब्दस्यानेकाजर्द्धत्वाभावात् डाचोऽप्रसक्तः विवक्षिते इत्युक्तौ च प्रथमं द्वित्वं ततोऽनेकाजर्द्धत्वात् डाजिति भावः ।

(४९) बीजेनेति बीजवपनेन सहेत्यर्थः ।

कृञो योगे कृषौ डाच् स्यात्। द्विगुणाकरोति। चेत्रम् चे-त्रकर्म्मकन्द्विगुणाकर्षणं करोतीत्यर्थः।

## समयाच्च यापनायाम्। ५। ४। ६०।

कृषाविति निवृत्तम्। कृञो योगे डाच् स्यात्। समयाकरोति कालं यापयतीत्यर्थः।

## सपत्त्रनिष्पत्त्रादतिव्यथने। ५। ४। ६१।

सपत्त्राकरोति मृगं सपुङ्खशरप्रवेशनेन सपत्त्रं करोतीत्यर्थः। निष्पत्त्राकरोति सपुङ्खस्य शरस्याऽपरपार्श्वे निर्गमनान्निष्पत्त्रं करोतीत्यर्थः। अतिव्यथने किम् सपत्त्रन्निष्पत्त्रं वा करोति भूतलम्।

## निष्कुलान्निष्कोषणे। ५। ४। ६२।

निष्कुलाकरोति दाडिमम् निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच्।

## सुखप्रियादानुलोम्ये (५०)। ५। ४। ६३।

सुखाकरोति। प्रियाकरोति गुरुम् अनुकूलाचरणेनानन्दयतीत्यर्थः।

## दुःखात्प्रातिलोम्ये (५१)। ५। ४। ६४।

दुःखाकरोति स्वामिनम्पीडयतीत्यर्थः।

(५०) आराध्यचित्तानुवर्त्तनमानुलोम्यम्।

(५१) चित्तप्रतिकूलाचरणं प्रातिलोम्यम्।

**शूलात्पाके। ५। ४। ६५।**

शूलाकरोति मांसम् शूलेन (५२) पचतीत्यर्थः।

**सत्यादशपथे। ५। ४। ६६।**

सत्याकरोति भाण्डं वणिक् क्रेतव्यमिति तथ्यं करोतीत्यर्थः। शपथे तु सत्यं करोति विप्रः।

**मद्रात्परिवापणे। ५। ४। ६७।**

मद्रशब्दो मङ्गलार्थः। परिवापणं मुण्डनम् मद्राकरोति माङ्गल्यं मुण्डनेन संस्करोतीत्यर्थः। भद्राच्चेति वक्तव्यम्। भद्राकरोति। अर्थः प्राग्वत्। परिवापणे किम् मद्रङ्करोति *।

इति तद्धितप्रक्रिया समाप्ता।

(५२) करोतिरिह पचत्यर्थकः तदाह पचतीति।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यसङ्कलितायां सरलाख्यायां सिद्धान्तकौमुदीव्याख्यायां तद्धितप्रक्रियाव्याख्या समाप्ता।

सर्व्वस्य द्वे (१)। ८। १। १।

इत्यधिकृत्य।

नित्यवीप्सयोः। ८। १। ४।

आभीक्ष्ण्ये(२)वीप्सायाञ्च द्योत्ये पदस्य द्विर्व्वचनं स्यात्। आभीक्ष्ण्यन्तिङन्तेष्वव्ययसंज्ञकक्वदन्तेषु च। पचतिपचति। भुक्त्वाभुक्त्वा। वीप्सायाम्। वृक्षंवृक्षं सिञ्चति। ग्रामोग्रामो रमणीयः।

परेर्व्वर्ज्जने। ८। १। ५।

---

(१) सर्व्वस्येति सर्व्वावयवात्मकस्य पदस्य न तु कस्यचिदवयवस्येत्यर्थः।

(२) अविच्छेदेनैकरूपक्रियोत्पादनमाभीक्ष्ण्यं पौनःपुन्यमिति यावत् व्याप्तुमिच्छा वीप्सा व्याप्तिबोधयिषेति यावत् तस्याश्च प्रयोक्तृनिष्ठत्वेऽपि द्रव्यमाणव्याप्तावेव सम्भवादार्थेनैव द्रव्यमाणव्याप्तिलाभः तथाच वृक्षंवृक्षं सिञ्चतीत्युक्ते इदं वाक्यं व्याप्तिबोधनेच्छया प्रयुक्तमित्यवगमात् द्विर्वचनस्य व्याप्त्यर्थकताऽवसीयते। व्याप्तिश्च साकल्येनाभिसम्बन्धइति साकल्यमप्यर्थाविप्तं तस्य द्विर्वचनसमुदयप्रतिपाद्यतया वहिरङ्गत्वात् तदपेक्षयाऽन्तरङ्गपदकार्य्यत्वेन एकवचनादिकमेव प्रथममुत्पद्यतेऽतो द्विर्वचने साकल्यबोधेऽपि न बहुवचनप्रसङ्गः। एवञ्च द्विर्वचनैकशेषयोर्बहुत्वप्रतिपादनेऽपि द्विर्वचने विवक्षयैकत्वद्वित्वबहुत्वानि व्यवस्थितानि एकशेषे तु नियतद्वित्वादिप्रयोगः। अतएव द्विर्वचने प्रत्येकमेव विधेयसम्बन्धः एकशेषे तु समुदितस्येति भेदः भवति च ब्राह्मणायब्राह्मणाय शतं देयमित्यादितः प्रत्येकदानसम्बन्धित्वं ब्राह्मणानाम्, एकशेषे तु ब्राह्मणाभ्यां शतं देयमित्यादौ मिलितयोस्तत्सम्बन्धः। अतएव "एकशेषे यथा येषामर्थः शिष्टेन गम्यते। तद्वदत्र द्विशेषेऽपि शिष्टाभ्यामितरार्थधी"रिति सामान्यतो बहूनां बोधकता द्विर्वचनस्याभिहिता।

परिपरि वङ्गेभ्यो वृष्टो देवः वङ्गान् परिहृत्येत्यर्थः। परेर्व्वर्ज्जने वावचनम् *। परि वङ्गेभ्यः।

## उपर्य्यध्यधसः सामीप्ये। ८। १। ७।

उपर्य्युपरि ग्रामम्। ग्रामस्योपरिष्टात्समीपे देशे इत्यर्थः। अध्यधि सुखम् सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः। अधोऽधो लोकम् लोकस्याधस्तात्समीपे देशे इत्यर्थः।

## वाक्यादेरामन्त्रितस्याऽसूयासम्मतिकोपकुत्सनभर्त्सनेषु। ८। १। ८।

असूयायाम्। सुन्दर! सुन्दर! वृथा ते सौन्दर्य्यम्। सम्मतौ। देव! देव! वन्द्योऽसि। कोपे। दुर्विनीत! दुर्व्विनीत! इदानीं ज्ञास्यसि। कुत्सने। धानुष्क! धानुष्क! वृथा ते धनुः। भर्त्सने। चोर! चोर! घातयिष्यामि त्वाम्।

## एकं बहुव्रीहिवत्। ८। १। ९।

द्विरुक्तएकशब्दो बहुव्रीहिवत्स्यात् तेन सुब्लोपपुंवद्भावौ। एकैकमक्षरम्। इह द्वयोरपि सुपो लुकि कृते सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप्। एकैकयाहुत्या। इह पूर्व्वभागे (२) पुंवद्भावाद्विग्रहे विशेषः। न बहु-

---

(२) पूर्व्वभागे इति नतूत्तरभागे इत्यभिमानः। द्वेधा हि पुंवद्भावः सर्व्वनाम्नो वृत्तिमात्रे इत्येकः, स्त्रियाः पुंवदित्यपरः, (४८१पृ०) तत्राद्यः पूर्व्वभागस्यैव भस्यैवेति शापकादित्युक्तम् (४०७पृ०) अन्यस्तु उत्तरवर्त्तिसमानाधिकरणपदान्तराभावान्न प्रवर्त्तत इत्यशेषम्।

व्रीहावित्यत्र(१००पृ०)पुनः बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम् तेनातिदिष्टबहुव्रीहौ सर्व्वनामताप्यस्त्येवेति प्राञ्चः। वस्तुतस्तु भाष्यमते प्रत्याख्यातमेतत्† । सूत्रमतेऽपि । बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकं न तु बहुव्रीहावितीहातिदेशे शङ्कैव नास्ति। एकैकस्मै देहि।

## आबाधे च।८।१।१०।

पीड़ायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च। गतगतः। विरहात्पीड्यमानस्येयमुक्तिः बहुव्रीहिवद्भावात्सुपो लुक्। गतगता। इह पुंवद्भावः।

## कर्म्मधारयवदुत्तरेषु।८।१।११।

इत उत्तरेषु द्विर्व्वचनेषु कर्म्मधारयवत्कार्य्यम्। प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि।

## प्रकारे गुणवचनस्य।८।१।१२।

सादृश्ये (४) द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्म्मधारयवत् कार्य्यम् कर्म्मधारयवदुत्तरेष्वित्यधिकारात्। तेन पूर्व्वभागस्य पुंवद्भावः समासस्य (७५६५पृ०) इत्यन्तोदात्तत्वञ्च। पटुपट्वी। पटुपटुः। पटुसदृशः ईषत्पटुरिति यावत्। गुणोपसर्ज्जनद्रव्यवाचिनः*। केवलगुणवाचिनश्चेह गृह्यन्ते। शुक्लशुक्लं रूपम्। शुक्लशुक्लः पटः। आनुपूर्व्ये द्वे वाच्ये*। मूलेमूले

† एतत् न व्रीहावितिसूत्रं प्रत्याख्यातमित्युक्तं (१०१पृ०) प्राक्।

(४) सादृश्ये इति सप्तम्याः प्रतियोगित्वमर्थः तत्प्रतियोगित्वमुपमानत्वं तेन प्रकृते उपमानपटुभिन्नः पटुरिति बोधः।

स्थूलः। संभ्रमेण (५) प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः। सर्पः सर्पः बुध्यस्व २। सर्पः ३ बुध्यस्व ३। क्रियासमभिव्याहारे (६) च। लुनीहि लुनीहीत्येवायं लुनाति। नित्यवीप्सयोरिति सिद्धे भृशार्थे द्वित्वार्थमिदम् पौनःपुन्येऽपि (७)लोटा सह समुच्चित्य द्योतकतां लब्धुं वा। कर्म्मव्यतिहारे (८)सर्व्वनाम्नो द्वे वाच्ये * समासवच्च बहुलम्। (९)बहुलग्रहणादन्यपरयोर्न्न समासवत्। इतरशब्दस्य तु नित्यम्। असमासवद्भावे पूर्व्वपदस्य सुपः सुर्व्वक्तव्यः *। अन्योऽन्यं विप्रा नमन्ति। अन्योन्यौ। अन्योन्यान्। अन्योन्येन कृतम्। अन्योन्यस्मै दत्तमित्यादि। अन्योन्येषां पुष्करैरामृशन्त इति

(५) संभ्रमो भयकृतो त्वरा वा। न्यायसिद्ध इति यावद्भिः शब्दैः संबोध्यार्थावगमस्तावतां प्रयोग इत्यर्थः।

(६) प्राधान्यमाभीक्ष्ण्यं भृशता च क्रियासमभिव्याहारः। एवञ्च भृशार्थे यङि ततः पौनःपुन्ये द्वित्वं भवत्येव तस्योक्तत्वाभावात् तेन पापच्यतेपापच्यते इत्यादि प्रयोगः भृशं पाकमभीक्ष्णं करोतीति तत्रार्थबोधः।

(७) क्रियासमभिव्याहारस्य भृशमात्रार्थकत्वे भृशार्थे इत्येवाभिदध्यादतस्तदभिधानफलमाह पौनःपुन्येऽपीति।

(८) कर्म्मव्यतिहारः क्रियाविनिमयः एकजातीयक्रियया परस्परमेकरूपेण सम्बन्ध इति यावत् तेन यस्य यादृशक्रियायां यद्रूपेण यस्य यत्कारकत्वम् तादृश्यामेव तत्क्रियायामितरस्य तत्कारकत्वे क्रियाव्यतिहारः यथाऽन्योऽन्यस्मै धनं ददातीत्यादावेकस्य धनदाने यथाऽन्यस्य सम्प्रदानत्वं तथा सकर्तृकतद्दानेऽपि इतरस्य तथात्वमित्येवंरीत्या सर्वत्र बोध्यम्।

(९) अन्यपरेतरव्यतिरिक्तेषु सर्व्वनामसु नास्य प्रवृत्तिस्तेषां कर्म्मव्यतिहाराबोधकत्वादिति। शब्देन्दु ०।

माघः। एवम्परस्परम्। अत्र कस्कादित्वात् (६१८०) विसर्गस्य सः। इतरेतरम्। इतरेतरेणेत्यादि। स्त्रीनपुंसकयोरुत्तरपदस्याया विभक्तेराम्भावो वा वक्तव्यः *। अन्योन्याम्-अन्योन्यम्। परस्पराम्-परस्परम्। इतरेतराम्-इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः। अत्र केचित् आमादेशो द्वितीयाया एव भाष्यादौ तथैवोदाहृतत्वात्। तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः। अन्ये तूदाहरणस्य दिङ्मात्रत्वात्सर्वविभक्तीनामादेशमाहुः।

दलद्वये टाबभावः क्लीबे चादड्विरहः स्वमोः।

समासे सोरलुक् चेति सिद्धम्बाहुलकात्त्रयम्॥

तथाहि। अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि टाप् प्राप्तः न च सर्वनाम्नो वृत्तिमात्रे इति पुंवद्भावः अन्यपरयोरसमासवद्भावात्। न च द्विर्वचनमेव वृत्तिः यायाम्प्रियां प्रैक्षत-कातराक्षीं सायेत्यादावतिप्रसङ्गात्। अन्योन्यमितरेतरमित्यत्र च अड्डुतरादिभ्य(१४०१०)इत्यदड्प्राप्तः। अन्योन्यसंसक्तमहस्त्रियामम्, अन्योन्याश्रयः, परस्पराक्षिसादृश्यम्, अदृष्टपरस्परै,रित्यादौ सोर्लुक् च प्राप्तः सर्वं बाहुलकबलेन समाधेयम्। प्रकृतवार्त्तिकभाष्योदाहरणम्, स्त्रियामिति सूत्रेऽन्योन्यसंश्रयत्वे तदिति भाष्यश्चात प्रमाणमिति।

## अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्।८।१।१३।

प्रियप्रियेण ददाति प्रियेण वा। सुखसुखेन ददाति सुखेन वा। द्विर्वचने कर्मधारयवद्भावात्सुपि लुकि तदेव व[...]नम्। अतिप्रियमपि वस्तु अनायासेन ददातीत्यर्थः।

**यथास्वे यथायथम् । ८ । १ । १४ ।**

यथास्वमिति वीप्सायामव्ययीभावः । योय आत्मा यच्चात्मीयन्तद्यथास्वम् तस्मिन्यथाशब्दस्य द्वे क्लीवत्वञ्च निपात्यते । यथायथं ज्ञाता, यथास्वभावमित्यर्थः । यथात्मीयमिति वा ।

**द्वन्द्वं रहस्यमर्य्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । ८ । १ । १५ ।**

द्विशब्दस्य द्विर्व्वचनं पूर्वपदस्याम्भावोऽत्वञ्चोत्तरपदस्य नपुंसकत्वञ्च (१०) निपात्यते एष्वर्थेषु । तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् इतरे विषयभूताः । द्वन्द्वम्मन्त्रयते रहस्यमित्यर्थः । मर्य्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण मिथुनङ्गच्छति पौत्रेण प्रपौत्रेणापीति मर्य्यादार्थः । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः द्विवर्गसम्बन्धेन पृथगवस्थिताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वन्द्वं संकर्षणवासुदेवौ । अभिव्यक्तौ (११) साहचर्य्येणेत्यर्थः । योगविभागादन्यत्रापि (१२) द्वन्द्व इष्यते ।

इति द्विरुक्तप्रक्रिया ।

(१०) नपुंसकत्वञ्चेति चेन कृतद्वित्वान्नियतद्विवचनोत्पत्त्यभावस्य संग्रहः ।

(११) अत्यन्तसहचरितत्वेन लोकज्ञात इहाभिव्यक्तिः ।

(१२) अन्यत्रापीति तेन द्वन्द्वयुद्धान्यवर्त्तन्तेत्यादि सिद्धं द्वयोर्द्वयोर्युद्धान्यवर्त्तन्तेत्यर्थः वीप्सायां द्विर्वचनेऽप्यनेन तस्य रूपनिष्पत्तिः । द्वन्द्वसमाहारादौ तु द्वन्द्वशब्दप्रयोगः रूढ्या इत्था अवयवार्थराहित्येनाव्युत्पन्नत्वादिति बोध्यम् । शब्देन्दु० ।

इतिश्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां
पूर्व्वार्द्धं समाप्तम् ।

---

वाणीगुरुप्रसादेन कौमुदीपूर्व्वभागतः ।
मनोरमाद्यर्द्धदेहा सरला पूर्णतां गता ॥

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण मनोरमाशब्देन्दुशेखर
तत्वबोधिनीसारसङ्कलनेन समाहृतायां सरलाख्यायां
सिद्धान्तकौमुदीव्याख्यायां पूर्व्वार्द्धं समाप्तम् ।

ओँ तत् सत् ।

शाके बाणद्विरदनगभूसम्मिते टीकया श्री
तारानाथद्विजरचितयोद्भासितः संस्कृताख्ये ।
यन्त्रे पूर्व्वं बुधसहृयजा संस्कृतस्यात्मनैव
मुद्रां नीतः कृतिवरमुदे कौमुदीपूर्व्वभागः ॥
वर्षे विक्रमभूपतेः क्षितिधरद्वन्द्वाङ्कचन्द्रप्रमे
खीष्टाब्दे गगनाद्रिदन्तिधरणीमाने प्रचाराशया ।
प्राचीणां सरलां विधाय बहुनां क्वापि स्फुटार्थां तथा
यन्त्रे नूतनसंस्कृते पुनरसौ यत्नादयं मुद्रितः ॥

## THE FOLLOWING IS THE LIST OF PROFESSOR TARKAVACHASPATI'S WORKS & PUBLICATIONS.

| | | | |
|---|---|---|---|
| 1. | Asubodham Vyakaranam | 3 | ,, |
| 2. | Dhaturupadarsha | 2 | ,, |
| 3. | Sabda stoma Mahanidhi | 10 | ,, |
| 4. | Sidhantakoumudi with Sarala | 11 | ,, |
| 5 | Sidhantavindusara | ,, | 8 |
| 6 | Tuladanadipadhati | 4 | ,, |
| 7. | Gaya Shradhadipadhati | 5 | ,, |
| 8. | Sabdartharatna | ,, | 12 |
| 9. | Vakyamanjari | ,, | 4 |
| 10. | Vrittaratnakara and Chhandomanjari with notes | ,, | 10 |
| 11 | Venisanhara with Commentary | 2 | ,, |
| 12. | Mudrarakshasa Ditto | 2 | ,, |
| 13. | Ratnavali Ditto | 1 | 8 |
| 14. | Malavikagnimitra Ditto | 2 | ,, |
| 15. | Dhananjayavijaya Ditto | ,, | 4 |
| 16 | Mahaviracharita Ditto | 1 | 8 |
| 17. | Sankhyatatwakoumudi Ditto | 2 | 8 |
| 18 | Veiyakarana Bhusanasara | 2 | ,, |
| 19 | Lilavati | 1 | ,, |
| 20 | Vijaganita | 2 | ,, |
| 21. | Sishupalabadha with Mallinatha | 10 | ,, |
| 22. | Kiratarjuniya Ditto | 4 | ,, |
| 23. | Kumarasambhava Uttarakhandam | ,, | 8 |
| 24. | A comprehensive Sanscrit Dictionary (In the Press) | 60 | |

Apply to

Pundit Jibananda Vidyasagara, B A.

The 10th April 1870 } Calcutta Sanskrit College.

नाकिश्चतश्च ॥१८॥ फलेर्गुक् । फल्गुः । पाटेः पटिः । पाटयतीति पटुः । मन्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु । **वलेर्गुक्च** ॥१९॥ वल संवरणे । वल्गुः । **शः कित्सन्वच्च** ॥२०॥ श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालकः । **यो द्वे च** ॥२१॥ ययुरश्वोऽश्वमेधीयः । सन्वदिति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम् । **कुर्भ्रश्च** ॥२२॥ बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ । स्यादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः । **पृभिदिव्यधिगृधिधृषिभ्यः** ॥२३॥ कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । ग्रहिज्येति संप्रसारणम् । विरहिणं विध्यति विधुः । विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे । गृधुः कामः । धृषुर्दक्षः । **कृग्रोरुच्च** ॥२४॥ करोतीति कुरुः । गृणाति गुरुः । **अपदुस्सुषु स्थः** ॥२५॥ सुषामादिषु चेति षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु । **रपेरिच्चोपधायाः** ॥२६॥ अनिष्टं रपतीति रिपुः । **अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च** ॥२७॥ अर्जयति गुणान् ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः । अन्धुः कूपः । पांशुर्ना न द्वयो रजः । तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः । बाधते इति बाहुः । बाहुः स्त्रीपुंसयोर्भुजः । **प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च** ॥२८॥ त्रयाणां कुः संप्रसारणं भ्रस्जेः सलोपश्च । पृथुः मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः । **लङ्घिबंह्योर्नलोपश्च** ॥२९॥ लघुः । **वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते** ॥३०॥ रघुर्नृपभेदः । बहुः । **ऊर्णोतेर्नुलोपश्च** ॥३१॥ ऊरु सक्थि । **महति ह्रस्वश्च** ॥३२॥ उरु महत् ।

---

स्थानषष्ठ्येवेति बोध्यम् । 'फल्गवसारेऽभिधेयवत् । नदीभेदे ऽमलद्या स्त्री' इति मेदिनी ॥—**नाकुर्वल्मीकमिति** । 'वामलूरश्च नाकुश्च वल्मीक पुन्नपुंसकम्' इत्यमरः ॥—**मध्विति** । 'मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मधु' इति हट्टचन्द्रः । 'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुनपुंसकयोर्मधु' इति शाश्वतः । वल सवरण इति दन्त्योष्ठ्यादिः । 'वल्गुः स्याच्छगले पुंसि सुन्दरे चाभिधेयवत्' इति मेदिनी । यत्तु उज्ज्वलदत्तेन 'वलेर्गुकूच' इति ओष्ठ्यादित्वात् बल प्राणने इत्युपन्यस्त तल्लक्ष्यविरोधादुपेक्ष्यम् । 'अयं नाभावदति वल्गुवो गृहे' इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात् ॥—**शः कित्–**॥ शो तनूकरणे अस्मादुप्रत्ययः 'आदेच उपदेशे' इत्यात्व द्वित्व सन्यत इत्यभ्यासस्येत्वम । 'आतो लोप इटि च' इत्याकारलोपः । शिशुः ॥—**यो द्वे च** । या प्रापणे ॥—**कुर्भ्रश्च** । भृञ् भरणे अस्मात्कुप्रत्ययो धातोर्द्वित्व च । भरतीति बभ्रुः । धरणिकोशस्थमाह बभ्रुरित्यादि 'बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्' इति मेदिनीकोशः ॥—**चादन्यतोपी**ति । भ्र. कुश्चेति वक्तव्ये प्राक् प्रत्ययनिर्देशादित्येके । भ्रश्चेति प्रकृतिसंस्पृष्टेन चकारेण प्रकृत्यन्तरसमुच्चयादित्यन्ये ॥ पृ पालनपूरणयोः, भिदिर् विदारणे, व्यध ताडने, गृधु अभिकाङ्क्षायाम्, ञिधृषा प्रागल्भ्ये ॥—**पुरुरि**ति । कुप्रत्यये परत 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वम् । 'पुरुः प्राज्येऽभिधेयवत् । पुंसि स्याद्देवलोके च नृपभेदपरागयोः' इति मेदिनी । 'विधुः शशाङ्के' इत्यादि तु विश्वकोशः । इह सूत्रे धृषिहृषिभ्यश्चेति पठित्वा हृषुर्हर्षः । 'सूर्याग्निशनिराहवोऽपि हृषवः' इति केचित् ॥—**कृग्रोरुच्च** ॥ डुकृञ् करणे, गॄ शब्दे, आभ्यां कुः स्यादुकारोन्तादेशश्च । 'उरण्रपरः' । 'कुरुर्नृपान्तरे भुक्ते पुमान् पुभूम्नि नीवृति' इति मेदिनी ॥—**अपदुःसु–**॥ ष्ठा गतिनिवृत्तौ ॥—**सुषामेत्यादि** । एतच्च न्यासाद्यनुरोधेनोक्तम् । वार्तिककृता तु स्थास्थिन्स्थृनामित्युपसङ्ख्यातम् । 'अपष्ठुः पुंसि बाले च वामे स्यादन्यलिङ्गके' इति मेदिनी । वामे प्रतिकूले । एषा त्रयाणा मृगय्वादिपाठेन सिद्धत्वात्सूत्रमिद न्यासकारस्य न समतमिति रक्षितः ॥—**अर्जिदृशि–**॥ अर्ज अर्जने अस्य ऋजिरादेशः दृशेः पशिरादेशः कमेस्तुगागमः । अम् रोगे गत्यादौ वा अस्य धुगागमः । पशि नाशने सौत्रो धातुरस्य दीर्घः । बाधृ लोडने अस्य हादेशः । षड्भ्योऽपि कुप्रत्ययः स्यादित्यर्थः ॥—**अविशेषेणे**ति । चादिगणे पश्विति पठितम् 'पशु दृश्यर्थमव्ययम्' इति धरणिः । 'कन्तुः कन्दर्पः कन्तुर्मकराङ्क.' इति त्रिकाण्डशेषः ॥—**पांशुरि**ति । पडि पसि नाशने चुरादिण्यन्तः ॥—**स्त्रीपुंसयोरि**ति । उक्तं ह्यमरेण 'द्वौ परौ द्वयोः । भुजबाहू' इति । परौ द्वौ भुजबाहुशब्दौ द्वयोः स्त्रीपुंसयोरिति तदर्थः । अकारान्तोऽप्ययम् । अत एव 'बाहौ श्वभुजयोः पुमान्' इति दामोदरः । 'बाहा भुजे पुमान्मानभेदाश्वगृषवायुषु' इति मेदिन्यां टाबन्तोऽप्ययम् ॥—**प्रथिम्रदि–**॥ प्रथ प्रख्याने, म्रद मर्दने, भ्रस्ज पाके ॥—**प्रथते** इति । 'पृथुः स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे' इति मेदिनी । म्रदितु शक्यतेऽकठिनत्वादिति मृदुः कोमलः । 'भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि' इति विश्वः ॥—**लङ्घि–**॥ लघि लाघि गतौ, बहि महि वृद्धौ ॥—**लघुरि**ति । 'पृक्कायां स्त्री लघु क्लीब शीघ्रे कृष्णागुरुण्यपि' इति त्रिकाण्डशेषः । 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ स्त्रियाम्' इति मेदिनी ॥—**नृपभेद** इति । एतेन 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम्' इति कालिदासवचनं व्याख्यातम् ॥—**बहुरि**ति । 'बहुस्तुल्यादिसंख्यासु विपुले त्वभिधेयवत्' इतिमेदिनी ॥—**ऊरुरि**ति । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । ऊर्णूयते आच्छाद्यते इत्यूरुः कर्मणि प्रत्ययः ॥—**उरु महदि**ति

**॥ श्लिषेः कश्च ॥ ३३ ॥** श्लिष्यतीति श्लिकुर्भृत्यः। ज्योतिश्च। **॥ आङ्परयोः खनिशृभ्यां डिच्च ॥ ॥३४॥** आखनतीत्याखुः। परं शृणातीति परशुः। पृषोदरादित्वादकारलोपात्पर्शुरपि। **॥ हरिमितयोर्द्रुवः ॥३५॥** द्रु गतौ अस्मात् हरिमितयोरुपपदयोः कुः स च डित्। हरिभिर्द्रूयते हरिद्रुर्वृक्षः। मितं द्रवति मितद्रुः समुद्रः। **॥ शते च ॥३६॥** शतधा द्रवति शतद्रुः। बाहुलकात्केवलादपि। द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च। तद्वान् द्रुमः। **॥ खरु शङ्कु पीयु नीलङ्कु लिगु ॥३७॥** पञ्चैते कुप्रत्ययान्ता निपात्यन्ते। खनते रेफश्चान्तादेशः। खरुः कामः क्रूरो मूर्खः अश्वश्च। शङ्कुर्ना कीलशल्ययोः। **॥ पिबतेरित्वं युगागमश्च॥३८॥** पीयुर्वायसः कालः सुवर्णं च। निपूर्वाल्लगि गतावस्मात्कुत्वं नेर्दीर्घश्च। नीलङ्कुः क्रिमिविशेषः शृगालश्च। नीलाङ्कुरिति पाठान्तरं। तत्र धातोरपि दीर्घः। लगे सङ्गे अस्य अत इत्वं च। लगतीति लिगु चित्तम्। लिगुर्मूर्खः। **॥ मृगय्वादयश्च ॥३९॥** एते कुप्रत्ययान्ता निपात्यन्ते। मृगं यातीति मृगयुर्व्याधः। देवयुर्धार्मिकः। मित्रयुर्लोकयात्राभिज्ञः। आकृतिगणोऽयम्। **॥ मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥४०॥** मन्दुरा। वाजिशाला। वाशुरा रात्रिः। मथुरा। चतुरः। चङ्कुरो रथः। अङ्कुरः। खर्जूरादित्वादङ्कूरोऽपि। **॥ व्यथेः संप्रसारणं किच्च ॥४१॥** विथुरश्चोररक्षसोः। **॥ मुकुरदर्दुरौ ॥४२॥** मुकुरो दर्पणः। बाहुलकान्मकुरोऽपि। दॄ विदारणे धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च। दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः। दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरमिति विश्वः। **॥ मद्गुरादयश्च ॥४३॥** उरजन्ता निपात्यन्ते। माद्यतेर्गुक्। मद्गुरो मत्स्यभेदः। कबृवर्णे। रुगागमः। कर्बुरः श्वेतरक्षसोः। वध्नातेः खर्जूरा-

---

कर्तरि प्रत्ययः ॥—**श्लिषेः**—॥ श्लिष आलिङ्गने अस्मात्कुप्रत्ययः कश्चान्तादेशः ॥—**उद्यत** इति। स हि यावत्कार्यं श्लिष्यति लगति व्याप्रियत इति यावत् ॥—**आङ्पर**। खनु अवदारणे, शॄ हिंसायाम् ॥—**पर्शुरपी**ति। 'पर्शुः परशुना सह' इति विश्वः ॥—**हरिमिते**ति—। द्रुगतौ अस्माद्धरिमितयोरुपपदयोः कुः स्यात्स च डित्। हरिद्रुर्वृक्ष इति दारुहरिद्रा इत्येके। शतद्रुर्नदीभेदः। 'शतद्रुस्तु शितद्रुः स्यात्' इत्यमरः ॥—**तद्वानि**ति। द्युद्रुभ्यां मः ॥—**खरुशङ्कु**—॥ खनु अवदारणे, शकि शङ्कायाम् ॥—**काम** इत्यादि। खरुः पतिंवरा कन्येत्यपि बोध्यम्। 'खरुर्दर्पहरे दैत्ये हये श्वेते तु वाच्यवत्' इति विश्वत्रिकाण्डशेषौ। शङ्कते अस्मादिति शङ्कुः। 'शङ्कुः कीले गरे शङ्के सख्यापादपभेदयोः। यादोभेदे च पापे च स्थाणावपि च दृश्यते' इति विश्वः ॥—**पीयुरि**ति। 'पीयुः काले रवौ घोरे' इति मेदिनी ॥—**क्रिमिविशेष** इति। 'नीलङ्कुः क्रिमिजातौ स्याद्भ्रमरालीप्रसूनयोः' इति विश्वः। 'नीलङ्गुः स्यात्कृमौ पुंसि भम्भराल्यां तु योषिति' इति मेदिनीकारः ॥—**पाठान्तरमि**ति। 'नीलङ्गुरपि नीलाङ्गुः' इति विश्वः। धातोरपीति केचित्। नीलशब्दे उपपदे गमेष्टिलोपः उपपदस्य मुम् दीर्घश्च पाक्षिको निपात्यते इत्याहुः। 'लिगु चित्ते नपुंसकम्' इति वररुचिः ॥—**मृगय्वादयश्च** ॥ 'मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि' इति 'मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपि' इति विश्वः। देवयुर्वाच्यलिङ्गे स्याद्धार्मिके लोकयात्रिके' इति मेदिनी ॥—**आकृतिगण** इति। तेन पील प्रतिष्टम्भे अस्मात्कुः। 'पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोः' इति विश्वः। भाट्टास्तु शब्दस्य वृक्षे आर्यप्रसिद्धिर्गजे तु म्लेच्छप्रसिद्धिरित्याश्रित्य व्यवजह्रुः। पडि गतौ अस्मात्कुः धातोर्वृद्धिश्च पाण्डुः। कडि मदे कण्डुरित्यादि बोध्यम् ॥—**मन्दिवाशि**—॥ मदि स्तुत्यादौ, वाशृ शब्दे, मन्थ विलोडने, चते याचने, चङ्क इति सौत्रो धातुः। अकि लक्षणे ॥—**वाशुरा रात्रिरि**ति। वाश्यन्ते अस्यामिति विग्रहः। दाशुरो गर्दभ इत्यन्ये। 'वाशुरा वाशिताराव्योः' इति मेदिनीहेमचन्द्रौ ॥—**चङ्कुर** इति। 'चङ्कुरः स्यन्दने वृक्षे' इति मेदिनी। 'अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि' इति ॥—**खर्जूरादित्वादि**ति। ऊरप्रत्ययोऽपीति भावः। 'अङ्कूरोऽङ्कुर एव च' इति विश्वप्रकाशः ॥—**व्यथेः**—॥ व्यथ भयसचलनयोरस्मादुरच् कित्स्याद्धातोः सम्प्रसारणं च। दशपाद्यां तु व्यथेः सम्प्रसारणं धः किच्चेति सूत्रं पठित्वा धकारमन्तादेशं विधाय विधुरोऽनग्निक इत्युदाहृतम्। माधवप्रसादकारादिभिरपि तदेवानुसृतं नत्वेतद्युक्तम्। 'त्वमेषां विथुरा शवांसि' 'अथ विद्वा विथुरेणाचिदस्ता' इत्यादिमन्त्रेषु थकारपाठस्य निर्विवादत्वात्। यदपि माधवेनोक्तं विदिभिदिच्छिदिरित्यत्र व्यथेः संप्रसारणं चेति वचनात्कुरच्चि धान्तरूपमिति। तदपि स्वीयः कुरज्विधायके सूत्रे व्यथेरुपसंख्यानस्याप्रसिद्धत्वात्। तस्मादिह धः किच्चेति दशपादीपाठ उपेक्ष्य एव। कथं तर्हि विधुर इति प्रयोगस्य निर्वाह इति चेत्। धुरो विगत इति प्रादिसमासेनेत्यवधेहि। समासान्ता इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात्। इह व्यथेः किच्चेत्येवास्तु 'ग्रहिज्या–' इत्यनेन संप्रसारणं स्यादेवेति न भ्रमितव्यम्। ग्रहिज्यादिषु व्यधिर्वर्गचतुर्थो न त्वयमिति निष्कर्षात् ॥—**मकुर** इति। मकि मण्डने अस्मादुरच् नलोपश्च बाहुलकादिति धातोरुपधाया: पक्षे उकार इति भावः। 'मकुरो मुकुरोऽपि च' इति विश्वः। 'मकुरः स्यान्मकुरवद्दर्पणे च कुलदुमे। कुलालदण्डे' इति मेदिनी ॥—**धातोर्द्विर्वचनमि**ति। केचित्तु गुणो दुगागमश्च निपात्यत इत्याहुः। दामजाले चेति ग्रामजालेति पाठान्तरम् ॥—**मद्गुरादयश्च** ॥ मदी हर्षे। 'कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः। कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत्'

त्रिष्वादूरोऽपि। बन्धूरबन्धुरौ ख्यातौ नम्रसुन्दरयोस्त्रिषु इति रन्तिदेवः। ॥ कोकतेर्वा कुक् ॥४४॥ कुक्कुरः। कुकुरः। ॥ असेरुरन् ॥४५॥ असुरः। प्रज्ञाद्यण्। आसुरः। ॥ मसेश्च ॥४६॥ पञ्चमे पादे मसेरूरन्निति वक्ष्यते। मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति। मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः। मसूरी पापरोगे स्यादुपधाने पुनः पुमान्। मसूरमसुरौ च द्वाविति विश्वः। ॥ शावशेराप्तौ ॥४७॥ शु इति आश्चर्ये। श्वशुरः। पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोरित्यमरः। ॥ अविमह्योष्टिषच् ॥४८॥ अविषः महिषः। ॥ अमेर्दीर्घश्च ॥४९॥ आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि। ॥ रुहेर्वृद्धिश्च ॥५०॥ रुकुशम्बररौहिषाः। रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतमिति संसारावर्तः। ॥ तवेर्णिद्वा ॥५१॥ तवेति सौत्रो धातुः। तविषताविषावब्धौ स्वर्गे च। स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च। तविषी बलमिति वेदभाष्यम्। ॥ नञि व्यथेः ॥५२॥ अव्यथिषोऽब्धिसूर्ययोः। अव्यथिषी धरारात्र्योः। ॥ किलेर्बुक् च ॥५३॥ किल्बिषम्। ॥ इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ॥५४॥ इषिरोऽग्निः। मदिरा सुरा। मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ। खिदिरश्चन्द्रः। छिदिरोऽसिकुठारयोः। भिदिरं वज्रम्। मन्दिरं गृहम्। स्त्रियामपि। मन्दिरं मन्दिरापि स्यादिति विश्वः। चन्दिरौ चन्द्रहस्तिनौ। तिमिरं तमोऽक्षिरोगश्च। मिहिरः सूर्यः। मुहिरः काम्यसभ्ययोः। मुचिरो दाता। रुचिरम्। रुधिरम्। बधिरः। शुष शोषणे शुषिरं छिद्रम्। शुष्कमित्यन्ये। ॥ अशेर्णित् ॥५५॥ आशिरो वह्निरक्षसोः। ॥ अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥५६॥ अजेर्वीभावाभावः। अजिरमङ्गणम्। शशेरुपधाया इत्वम्। शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्। श्रथ मोचने उपधाया इत्वं रेफलोपः। प्रत्ययरेफस्य लत्वम्। शिथिलम्। स्यात्स्फाय्योष्टिलोपः। स्थिरं निश्चलम्। स्फिरं प्रभूतम्। तिष्ठतेर्वुक् ह्रस्वत्वं च। स्थविरः। खदिरः। बाहुलकात् शीङो वुक् ह्रस्वत्वं च। शिबिरम्। ॥ सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ॥५७॥ सलति गच्छति निम्नमिति सलिलम्।

---

इति मेदिनी ॥—बन्धूरबन्धुराविति। बन्ध बन्धने ॥—'कुक्कुर इति। कुक आदाने 'कुकुरः कुकुरो मतः' इति हट्टचन्द्रः; कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसक' इति मेदिनी। अत सातत्यगमने। आदिदीर्घः आतुरः। वा गतिगन्धनयोः। गुगागमः। 'वागुरा मृगबन्धिनी' इत्यादिरपि ज्ञेयम्। असु क्षेपणे ॥—मसेश्च॥ मसी परिणामे। 'मसुरा मसूरा वा ना वेश्याव्रीहिप्रभेदयोः। 'मसूरी पापरोगे स्यादुपधाने पुनः पुमान्' इति मेदिनी ॥—शावशेः—॥ शु इति कृताकारलोप आशुशब्दस्तस्मिन्नुपपदे आप्तौ गम्यमानायाम् अशू व्याप्तावित्यस्माद्धातोरुरन्स्यात्। श्वशुरो दम्पत्योः पिता। 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता-तयोः' इत्यमरः ॥—अवि—॥ अव रक्षणादौ। मह पूजायाम् ॥—अविष इति। राजा समुद्रश्च। महिषो महान्। 'तुरीयं धाम महिषो विवक्ति'। 'उत माता महिषमन्ववेनत्'। टित्वान्ङीप्। महिषी राजपत्नी। रुह बीजजन्मनि प्रादुर्भावे च। रौहिषो मृगभेदः। स्याद्रौहिषं च तृण मतम्' इति ससारावर्तः ॥—वेदभाष्यमिति। 'इन्द्रो वृत्रस्य तविषीम्'। 'इन्द्रस्यात्र तविषीभ्यो विरप्शिन्' इत्यादिमन्त्रेष्विति भावः। वैदिकनिघण्टौ ओजः पाजः इत्यादिषु बलनामसु तविषीशब्दस्य पाठश्चेह मूलमिति बोध्यम्। 'तविषः शोभनाकारे बलेऽब्धिव्यवसाययोः। तविषी देवकन्यायां पुंसि स्वर्गे महोदधौ। तविषी चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने' इति मेदिनी ॥—नञि व्यथेः ॥ व्यथ भयसंचलनयोः ॥—किलेः ॥ किल श्वैत्यक्रीडनयोः अस्मादिषन् धातोर्वुगागमश्च। 'किल्बिषं पापरोगयोः। अपराधेऽपि' इति मेदिनी ॥—इषिमदि—॥ इषु इच्छायाम्, मदी हर्षे, खिद दैन्ये, छिदिर द्वैधीकरणे, भिदिर विदारणे, मदि स्तुत्यादौ चदि आल्हादने, तिम आर्द्रीभावे, मिह सेचने, मुह वैचित्ये, मुच्लृ मोक्षणे, रुच दीप्तौ, रुधिर आवरणे, बन्ध बन्धने, शुष शोषणे ॥—इषिरोऽग्निरिति। आहार इत्यन्ये। 'छिदिरः पावके रज्जौ करवाले परश्वधे' इति मेदिनी। 'मन्दिरं नगरेऽगारे क्लीब ना मकरालये' इति मेदिनी। 'चन्दिरोऽनेकपे चन्द्रे' इति च। 'तिमिर ध्वान्तं नेत्रामयान्तरे' इति। 'मिहिरः सूर्यवृद्धयोः' इति मेदिनी। 'मिहिरः कामिमूर्खयोः' इति च। 'सुन्दरं रुचिरं चारु' इत्यमरः। 'रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमास्रजोः' इति मेदिनी। बधिरः श्रोत्रेन्द्रियरहितः। 'शुषिर विवर बिलम्' इत्यमरः ॥—अशेः—॥ अश भोजने ॥—अजिर—॥ अज गतौ, शश प्लुतगतौ, ष्ठा गतिनिवृत्तौ, स्फायी वृद्धौ, खद हिंसायाम् ॥—अजिरमिति। दशपादीवृत्तौ तु नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो निपात्यते इत्युक्तं तदपि प्राग्वम्। आशु द्रुतमजिरं प्रजमीक्ष्यमित्यादौ न जीर्यतीत्यजिर इत्यस्यानुगुणत्वात् ॥—अङ्गणमिति। अङ्गेर्ल्युटि अनादेशः। नकारस्य बाहुलकात् णत्वमित्येके। अन्ये तु दन्त्यमेवेच्छन्ति। 'अजिरं प्राङ्गणे काये विषये दर्दुरेऽनिले' इति मेदिनी। 'शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु' इति च विश्वकोशस्थमाह—शिशिरं स्यादिति। खदिरो वृक्षभेदः। 'खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने' इति मेदिनी ॥—शिबिरमिति। शेरतेऽस्मिन् राजबलानि, 'निवेशः शिबिरं षण्डे' इत्यमरः ॥—सलिकलि—॥ षल गतौ, कल संख्याने, अन प्राणने, मह पूजायाम्, भडि परिभाषणे, भडि कल्याणे, शडि रुजायाम्,

कलिलः। अनिलः। महिला। पृषोदरादित्वान्महेलापि। मह इति सौत्रो धातुः। मडिलौ शूरसेवकौ। मण्डिलो मूलः कल्याणं च। शाण्डिलो मुनिः। पिण्डिलो गणकः। तुण्डिलो मुखरः। कोकिलः। भविलो भव्यः। बाहुलकात् कुटिलः। **कमेः पश्च ॥५८॥** कपिलः। **गुपादिभ्यः कित् ॥५९॥** गुपिलो राजा। तिजिलो निशाकरः। गुहिलं वनम्। **मिथिलादयश्च ॥६०॥** मथ्यन्तेऽत्र रिपवो मिथिला नगरी। पथिलः पथिकः। **पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥६१॥** पतेरः पक्षी गन्ता च। कठेरः कृच्छ्रजीवी। कुठेरः पर्णाशः। बाहुलकात् कुठेरोऽपि। गडेरो मेघः। गुडेरो गुडकः। दंशेरो हिंस्रः। **कुम्बेर्नलोपश्च ॥६२॥** कुबेरः। **शादेस्त च ॥६३॥** शतेरः शत्रुः। **मूलेरादयः ॥६४॥** एरगन्ता निपात्यन्ते। मूलेरो जटा। गुधेरो गोप्ता। गुहेरो लोहघातकः। मुहेरो मूर्खः। **कबेरोतच् पश्च ॥६५॥** कपोतः पक्षी। **भातेर्डवतुः ॥६६॥** भातीति भवान्। **कठिचकिभ्यामोरन् ॥६७॥** कठोरः। चकोरः। **किशोरादयश्च ॥६८॥** किम्पूर्वस्य शृणातेष्टिलोपः किमोऽन्त्यलोपः। किशोरोऽश्वशावः। सहोरः साधुः। **कपिगडिगण्डिकटिपटिभ्य ओलच् ॥६९॥** कपीति निर्देशान्नलोपः। कपोलः गडोलगण्डोलौ गुडकपर्यायौ। कटोलः कटुः। पटोलः। **मीनातेरूरन् ॥७०॥** मयूरः। **स्यन्देः संप्रसारणं च ॥७१॥** सिन्दूरम्। **सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥७२॥** सिनोतीति सेतुः। विसुश्रेति नेट्। तन्तुः। गन्तुः। मस्तु दधिमण्डम्। सच्यत इति सक्तुः। अर्धर्चादिः। ज्वरत्वरेत्यूठ्। तत्र क्वितीत्यनुवर्तत इति मते तु बाहुलकात्। ओतुर्बिडालः। धातुः क्रोष्टा। **पः किच्च ॥७३॥** पिबतीति पितुर्वह्नौ दिवाकरे। **अर्तेश्च तुः ॥७४॥** अर्तेस्तुः स्यात्स च कित्। ऋतुः स्त्रीपुष्पकालयोः। **कमिमनिजनिगाभायाहिभ्यश्च ॥७५॥** एभ्यस्तुः स्यात्। कन्तुः कन्दर्पचित्तयोः। मन्तुरपराधः। जन्तुः प्राणी। गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गा-

---

पिडि सघाते, तुडि तोडने, कुक आदाने, भू सत्तायाम्, कुट कौटिल्ये ॥—**कलिल** इति। मिश्रो गहनश्च। 'कलिलं गहनं समे' इत्यमरः ॥—**महिलेति**। 'महिला फलिनीस्त्रियोः' इति मेदिनी। 'प्रियङ्गुः फलिनी फली' इत्यमरः ॥—**पृषोदरेति**। तथा च दमयन्तीकाव्ये प्रयोगः 'परमहेलारतोऽप्यपरदारिकः' इति। परस्य महेला स्त्री अथ च परमा उत्कृष्टा हेला क्रीडा तत्र रत इत्यर्थः ॥—**कमेः**—॥ कमु कान्तौ। अस्मादिलच् पश्चान्तादेशः। 'कपिला रेणुकायां च शिंशपागोविशेषयोः। पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम्। नानले वासुदेवे च मुनिभेदे च कुक्कुरे' इति मेदिनी। रेणुकेह लताविशेषः। 'हरेणू रेणुका कुन्ती कपिला भस्मगन्धिनी' इत्यमरात् ॥—**गुपादिभ्यः**—॥ गुपू रक्षणे, तिज निशाने, गुहू संवरणे ॥—**मिथिलादयश्च** ॥ मथे विलोडने। अकारस्येल निपातनात्। पथे गतौ ॥—**पति**—॥ पत्लृ गतौ, कठ कृच्छ्रजीवने, कुठि च, गड सेचने, गुड रक्षायाम्, दंश दशने, कुटिधातोरिदित्वात् नुमि प्राप्ते आह—**बाहुलकादिति** ॥—**कुम्बेः**—॥ कुबि आच्छादने। अन्येषामैश्वर्यं कुवतीति कुबेरस्त्र्यम्बकसखः ॥—**शदेः**—॥ शद्लृ शातने ॥—**मूलेरा**—॥ मूल प्रतिष्ठायाम्, गुध परिवेष्टने, गुहू सवरणे, मुह वैचित्ये ॥—**कबे** ॥ कबृ वर्णे। 'कापोतः स्याच्चित्रकण्ठे पारावतविहङ्गयोः' इति मेदिनो। 'कपोतः पक्षिमात्रेऽपि' इति त्रिकाण्डशेषः। अत्र ओतचश्चित्त्व प्रामादिकं। 'यत्कपोतः पदमग्नौ कृणोति,' 'देवाः कपोत इषितो यदिच्छन्' इत्यादौ सर्वत्र प्रत्ययस्वरेण मध्योदात्तस्यैव पठ्यमानत्वादित्याहुः ॥—**भातेः** ॥ भा दीप्तौ। भवानिति सर्वनामशब्दोऽयम् ॥ कठि कृच्छ्रजीवने, चक तृप्तौ। कठोरः कठिनः पूर्णश्च। 'कठोरताराधिपलाञ्छनच्छविः' इति माघः। चकोरः पक्षिभेदः। किशोरः। शॄ हिंसायाम्। षह मर्षणे। 'किशोरोऽश्वस्य शावके। तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः' इति मेदिनी ॥—**कपिगडि**—॥ कपि चलने, गड सेचने, गडि वदनैकदेशे, कटे वर्षावरणयोः, पट गतौ ॥—**कपोल** इति। केचित्तु सूत्रे कडिं पठन्ति। कडि मदे। कण्डोलश्चण्डालः। 'चण्डालिका तु कण्डोलवीणा चण्डालवल्लकी' इत्यमरः ॥—**पटोल** इति। पटोल वस्त्रभेदे नौषधौ ज्योत्स्न्या तु योषिति' इति मेदिनी। कल्ल शब्दे। बाहुलकादतोप्योलच्। 'कल्लोलः पुंसि हर्षे स्यान्महत्सूर्मिषु वारिणः' इति मेदिनी ॥—**स्यन्देः**—॥ स्यन्दू प्रस्रवणे। 'सिन्दूरस्तरुभेदे स्यात्सिन्दूर रक्तचूर्णके' इति मेदिनीविश्वप्रकाशौ ॥—**सितनि**—॥—षिञ् वन्धने, तनु विस्तारे, गम्लृ गतौ, मसी परिणामे, षच सेचने, अव रक्षणादौ, डुधाञ् धारणपोषयोः, क्रुश आक्रोशे,। 'सेतुर्नालौ कुमारके' इति मेदिनी। 'सेतुरालौ स्त्रियां पुमान्' इत्यमरः। 'सूत्राणि कटितन्तवः' इत्यमरः। 'मण्डं दधिभव मस्तु' इति च। 'धातुर्ना नेन्द्रिये त्रिषु। शब्दयोनिमहाभूततद्गुणेषु रसादिषु। मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्थि च' इति मेदिनी। 'श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणः। इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः ॥—**पः किच्च** ॥ पा पाने अस्मात्तुन् स च कित् कित्वात् 'घुमास्था—' इतीत्वम् ॥—**अर्तेश्च तुः** ॥ ऋ गतौ। तुनि प्रकृते अन्तोदात्तार्थं तुः क्रियते। 'ऋतुना यज्ञं च ऋतुर्जनीनाम्' इत्यादि। 'ऋतुर्वर्षादिषट्सु च। आर्तवे मासि च पुमान्' इति मेदिनी। 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः ॥—**कमिमनि**—॥ कमु कान्तौ, मन ज्ञाने, जनी प्रादुर्भावे, गै शब्दे, भा दीप्तौ, या प्रापणे, हि गतौ। कमिग्रहणं प्रपञ्चार्थम्। 'अर्जिदशि—' इत्यादिना कुप्रत्यये तुकि सिद्धत्वात् ॥—**मन्तुरिति**। 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि

यमेऽपि च । भानुरादित्यः । वातुरध्वगकालयोः । रक्षसि क्लीबे । हेतुः कारणम् । **चायः किः** ॥७६॥ केतुर्ग्रह-पताकयोः । **आप्नोतेर्ह्रस्वश्च** ॥७७॥ अप्तुः शरीरम् । **वसेस्तुन्** ॥७८॥ वस्तु । **अगारे णिच्च** ॥७९॥ वेश्मभूर्वास्तुरस्त्रियाम् । **कृञः क्तुः** ॥८०॥ क्रतुर्यज्ञः । **एधिवह्योश्च तुः** ॥८१॥ एधतुः पुरुषः । वह-तुरनड्वान् । **जीवेरातुः** ॥८२॥ जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे । **आतृकन् वृद्धिश्च** ॥८३॥ जीवे-रित्येव । जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले । **कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः** ॥८४॥ कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता । चमूः । तनूः । धनूः । शस्त्रम् । सर्ज सर्जने । सर्जूर्वणिक् । खर्ज व्यथने । खर्जूः पामा । **मृजेर्गुणश्च** ॥८५॥ मर्जूः शुद्धिकृत् । **वहो धश्च** ॥८६॥ वधूर्जायास्नुषास्त्रीषु । **कषेश्छश्च** ॥ ॥८७॥ कच्छूः पामा । **णित्कसिपद्यर्तेः** ॥८८॥ कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः । **अणो डश्च** ॥८९॥ आडूर्जलप्लवद्रव्यम् । **नञि लम्बेर्नलोपश्च** ॥९०॥ तुम्ब्यलाबूरुभे समे इत्यमरः । **के श्र एरक् चास्य** ॥९१॥ कशब्दे उपपदे शृणातेरूः स्यादेरक आदेशः । कशेरूस्तृणकन्दे स्त्री । बाहुलकादुप्रत्यये कशेरुः क्लीबे पुंसि च । **त्रो दुट् च** ॥९२॥ तरतेरूः स्यात्तस्य दुट् । तर्दूः स्याद्दारुहस्तकः । **दरिद्रातेर्यालोपश्च** । ॥९३॥ इश्च आश्च यौ तयोर्लोपः । दर्द्रूः कुष्ठप्रभेदः । **नृतिशृध्योः कूः** ॥९४॥ नृतूर्नर्तकः । शृधूरपानम् । **ऋतेरम् च** ॥९५॥ ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी सत्यवाक् च । **अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः** ॥९६॥ एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्बन्धनम् । दृभी ग्रन्थे । निपातनान्नुम् । दृम्भूः । अनुस्वाराभावोऽपि निपातनादित्येके । दृन्भूः । **जनेर्बुक्** ॥९७॥ जम्बूः । जम्बदनेऽस्येत्येके । बाहुल-

---

प्रजापतौ' इति मेदिनी । 'गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे' इति मेदिनी । 'भातुर्ना किरणे सूर्ये' इति ॥—**चायः किः** ॥ चायृ पूजानिशामनयोः । अस्मात्तुर्धातोः किरादेशश्च । 'केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि' इति मेदिनी ॥—**आप्नोतेः**–॥ आप्लृ व्याप्तौ ॥—**अप्तुः शरीरमिति** । अभिलषितार्थश्चाप्तव्यत्वात् । अत एव यागविशेषवाचकस्याप्तोर्यामशब्दस्याभिलषितार्थप्रापक इत्यवयवार्थमाहुः ॥—**वसेः**–॥ वस निवासे ॥—**कृञः**–॥ डुकृञ् करणे । क्रतोः कित्त्वाद्गुणाभावे यणादेशः । 'क्रतुर्यज्ञेमुनौ पुसि' इति मेदिनी ॥—**एधिवह्योश्च तुः** ॥ एध वृद्धौ, वह प्रापणे, चित्त्वादन्तोदात्तः । 'स्योनं पत्ये वहतुं कृणुष्व' । 'वहतुः पथिके वृषभे पुमान्' इति मेदिनी ॥—**जीवेः** ॥ जीव प्राणधारणे ॥—**आतृकन्** ॥ 'जैवातृकः पुमान् सोमे कृषकायुष्मतोस्त्रिषु' इति मेदिनी ॥—**कृषिचमि** ॥ कृष विलेखने, चमु अदने, तनु विस्तारे, धन धान्ये, रभसकोशस्थमाह—**कर्षूः पुंसी**त्यादि ॥ 'कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्याल्पघातयोः' इति मेदिनी । 'चमूः सेनाविशेषे च सेनामात्रे च योषिति' इति मेदिनी । 'स्त्रिया मूर्तिस्तनुस्तनूः' इत्यमरः । 'सर्जूर्वणिजि विद्युति । स्त्रियां स्वर्गे विधौ रुद्रे' इति मेदिनी ॥ 'खर्जूः कीटान्तरे वृत्तौ', 'खर्जूरीपादपे कण्ड्वाम्' इति च ॥—**मृजेः**–॥ मृजू शुद्धौ । अस्मादूः स्याद्वृद्ध्यपवादो गुणश्च । 'मर्जूः स्त्री शुद्धौ धावकेऽति च' इति मेदिनी ॥—**वहो धश्च** ॥ वह प्रापणे । 'वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च' इति विश्व. । 'पृक्का महिला च वधूः' इति त्रिकाण्डशेषः ॥—**कषेश्छश्च** ॥ कषशिषेति दण्डके हिंसार्थेऽस्मादूः स्याच्छश्चान्तादेशः । 'कच्छ्वां तु पाम पामा विचर्चिका' इत्यमरः ॥—**णित्कसि**–॥ कस गतौ, पद गतौ, ऋ गतौ, 'कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियाम्' इति मेदिनी । 'कासूः शक्त्यायुधे रुजि । बुद्धौ विकलवाचि स्यात्' इति हेमचन्द्रः ॥—**अणो डश्च** ॥ अण दण्डके शब्दार्थः । अस्मादू स्यात्स च णित् । डश्चान्तादेशः ॥—**नञि लम्बेः**–॥ लबि अवस्रंसने । न लम्बते जले इत्यलाबूः ॥—**केश्र**—॥ शॄ हिंसायाम् ॥—**त्रो दुट् च** ॥ तॄ प्लवनतरणयोः ॥—**तर्दूरिति** । 'नेड्वशि' इति नेट् । वरमनादाविति परिगणन तु बाहुलकादाश्रीयते इत्याहुः । केचित्तु इडभावाय त्रो दुक् चेति पठित्वा धातोर्दुगागममाहुः । तेषां तु धातोर्गुणो दुर्लभः । दुगागमात्पूर्वं यत्प्राप्तं तदपि भवतीत्येव चकारबलेन व्याख्याय वा गुणः साधनीयः ॥—**दरिद्रातेः**–॥ दरिद्रा दुर्गतौ ॥—**इश्च आश्चेति** । भोजदेवस्तु यालोप इति रेफादिकं पद छित्वा द्वेधा व्याख्यतवान् । रिश्च आश्चेति व्याख्याने दद्रुः रश्च इश्च आश्चेति व्याख्याने तु 'अन्त्यबाधे अन्त्यसदेशस्येति' द्वितीयस्यैव रेफस्य लोपाद्दर्द्रूरिति मृगय्वादित्वात्कुप्रत्यये दर्द्रुरित्यन्ये । 'दर्द्रुणो दद्रुरोगी स्यात्' इत्यमरः । इत्थं चत्वारि रूपाणि ॥—**नृति**–॥ नृती गात्रविक्षेपे, शृधु शब्दकुत्सायाम् ॥—**अन्दूदृम्भूः**–॥ अदि बन्धने । नृतिशृध्योः कुरित्यत्रादिग्रहणं न कृतं वैचित्र्यार्थमित्याहुः । ला आदने कफपूर्वः । डुधाञ् धारणादौ कर्कपूर्वः । षोऽन्तकर्मणि दिधिपूर्वः षत्वं च ॥—**अन्दूर्बन्धनमिति** । 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च' इति मेदिनी । 'अन्दुको हस्तिनिगडे' इत्यमरः । संज्ञायां कन् । 'केणः' इति ह्रस्वः । केचित्तु अम गतौ अस्य वुक् । अन्दुर्बुद्धिरिति व्याचख्युः ॥—**दृभी ग्रन्थ इति** । तुदादिरयम् । दृमतीति दृम्भूः संदर्भकर्तेत्यर्थः । कथक इत्यन्ये । कैयटमतानुरोधेनास्य रूपाणि हूहूवदित्युक्तम् । माधवादयस्तु दृशब्दे उपपदे भुवः कूप्रत्ययः । उपपदस्य दृमादेशो निपात्यते । यद्वा दृणार्थक दृभिति नान्तमव्ययमुपपदम् । दृन्भूस्तु सर्पः कर्मैवेति व्याख्याय 'दृन्कर–' इति यणि यणीत्यमुपमत्याहुः ॥—

जम्बूस्त्वोऽपि । अम्बुः । कफं लाति कफेलुः श्लेष्मातकः । निपातनादेत्वम् । कर्कं दधाति कर्कन्धूर्बदरी । निपातनान्नुम् । दिधिं धैर्यं स्यति त्यजतीति दिधिषूः पुनर्भूः । केचित्तु अम्बूरम्फूजम्बूकम्बू इति पठन्ति । रम्फ उत्क्लेशे रम्फूः सर्पजातिः । कमेर्बुक् ॥९८॥ कम्बूः परद्रव्यापहारी । मृग्रोरुतिः ॥९९॥ मरुत् । गरुत्पक्षः । ग्रो मुट् च ॥१००॥ गिरतेरुतिस्तस्य च मुट् । गर्मुत्सुवर्णं तृणविशेषश्च । हृषेरुलच् ॥१०१॥ हर्षुलो मृगकामिनोः । बाहुलकाच्चटतेः । चटुलं शोभनम् । हसृरुहियुषिभ्य इतिः ॥१०२॥ हरित्ककुभि वर्णे च तृणवाजिविशेषयोः । सरित्नदी । रोहित् मृगविशेषस्य स्त्री । युष इति सौत्रो धातुः । ऋश्यस्य रोहित् । पुरुषस्य योषित् इति भाष्यम् । ताडेर्णिलुक् च ॥१०३॥ ताडयतीति तडित् । शमेर्ढः ॥१०४॥ बाहुलकादित्संज्ञा एयादेश इट् च न । षण्ढः स्यात्पुंसि गोपतौ । शण्ढः क्लीबः । कमेरठः ॥१०५॥ कमठः । कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकमिति मेदिनी । बाहुलकाज्जरठः । रमेर्वृद्धिश्च ॥१०६॥ रामठं हिंगु । शमेः खः ॥१०७॥ शङ्खः । कणेष्ठः ॥१०८॥ कण्ठः । कलस्तृपश्च ॥१०९॥ तृपतेः कलप्रत्ययः चात्तृफतेः । तृपला लता । त्रिफला तु फलत्रिके । शपेर्वश्च ॥११०॥ शवलः । वृषादिभ्यश्चित् ॥१११॥ वृषलः । पललम् । बाहुलकाद्गुणः । सरलः । तरलः । कमेर्बुक् ॥११२॥ कम्बलः । मुस खण्डने मुसलम् । लङ्गेर्वृद्धिश्च ॥११३॥ लाङ्गलम् । कुटिकशि-

---

ह्रस्वोऽपीति । अत एव विक्रमादित्येनोक्त 'तस्य जम्बोः फलरसो नदीभूय प्रवर्तते' इति । केचित्तु 'परिणतजम्बुफलोपभोगहृष्टा' इति भारविप्रयोगं ह्रस्वान्तत्वे साधकत्वेनोदाजह्रुस्तन्न । 'इको ह्रस्वोऽङ्य–' इत्युत्तरपदाधिकारस्थह्रस्वविधायकसूत्रेण गतार्थत्वात् ॥—दिधिमिति । केचित्तु दधातेरिलं द्विल पुक् च निपात्यते दधात्यसौ दिधिषूरित्याहुः ॥—पुनर्भूरिति । 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः । द्विरूढा द्विवारं विवाहितेत्यर्थः । उज्ज्वलदत्तोक्त पाठमाह—केचित्त्विति । एतच्च कैयटमाधवादिग्रन्थविरुद्धम् । अत इव रम्फूः स्त्री सर्पचक्रयोः' इति भान्ते मेदिनी ॥—मृग्रो–॥ मृङ् प्राणत्यागे, गॄ निगरणे, आभ्यामुरितीकारस्तकारस्येत्संज्ञापरित्राणार्थः ॥—मरुदिति । प्रज्ञादित्वादणि मारुतोऽपि । मरुतशब्दोऽप्यव्युत्पन्नोऽस्ति । तथा च विक्रमादित्यकोशः । 'मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत्' इति । 'कोयं वाति स दाक्षिणात्यमरुतम्' इति कविराजश्लोकेऽनुपपत्तिं मत्वा दाक्षिणात्यपवन इति पाठं केचित्कल्पयन्त्यल्पदृश्वान इति वर्णविवेकः ॥—गरुदिति ॥ यवादिरयं तेनास्मात्परस्य मतुपो मस्य 'झयः' इत्यनेन वत्वं न । गरुत्मान् ॥—गर्मुदिति । 'गर्मुत्स्त्री स्वर्णलतयोः' इति मेदिनी ॥—हृषे–॥ हृष तुष्टौ ॥—चटतेरिति । चटे वर्षावरणयोः ॥—हसृ–॥ हृञ् हरणे, सृ गतौ, रुह बीजजन्मनि । विश्वकोशस्थमाह—हरिदिति । 'हरिद्दिशि स्त्रिया पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे च' इति मेदिनी ॥—ऋश्यस्येति । एतेन 'गतं रोहिद्भूता रिरमयिषुमृश्यस्य वपुषा–' इति पुष्पदन्तप्रयोगो व्याख्यातः । 'रोहिन्मृग्यां लताभेदे स्त्री नार्के' इति मेदिनी ॥—ताडेः–॥—तड आघाते ण्यन्तः । 'तडित्सौदामिनी विद्युत्' इत्यमरः ॥—शमेः–॥ शम उपशमने । —बाहुलकादिति । यद्यपि 'नेड्वशि कृति' इत्यनेनैव इडभावस्य सिद्धत्वादिट्च नेत्येतदयुक्त तथापि नेड्वरमनादाविति परिगणनाद्बहुलग्रहणमाश्रित्यैव इडभावोऽपि साधितः । 'शण्ढः स्यात्पुंसि गोपतौ । आ(मु)ष्काण्डे वर्षवरे तृतीयप्रकृतावपि' इति मेदिनी ॥—कमेः ॥ कमु कान्तौ । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसके' इति मेदिनी ॥—जरठ इति । जॄ वयोहानौ । 'जरठः कठिने पाण्डौ कर्कशेऽप्यभिधेयवत्' इति विश्वमेदिन्यौ । 'जरठः कठिने जीर्णे' इति वैजयन्ती ॥—रमेः ॥ रम क्रीडायाम् ॥—शमेः ॥ शम उपशमे । 'शङ्खो निधौ ललाटास्थि कम्बौ न स्त्री' इत्यमरः । 'शङ्खः कम्बौ न योषिन्ना भालास्थि निधिभिन्नखे' इति मेदिनी ॥—कणेः–॥ 'कण्ठो गले सन्निधाने ध्वनौ मदनपादपे' इति विश्वमेदिन्यौ ॥—कल–॥ तृप प्रीणने ॥—फलत्रिक इति । 'त्रिपला त्रिफला च सा' इति विश्वः । त्रिफला शब्दसमानार्थस्तृफलाशब्द इति 'द्विगोः' इति सूत्रे रक्षितः ॥ —शपेः–॥ शप आक्रोशे ॥—वृषादिभ्यः ॥ वृषु सेचने, पल गतौ, सृ गतौ, तॄ प्लवनतरणयोः । 'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः' इत्यमरः । 'वृषलस्तुरगे शूद्रे' इति हेमचन्द्रः । 'पलल तिलचूर्णे च पिङ्के मांसे नपुंसकम् । ना राक्षसे' इति मेदिनी । कलप्रत्ययस्य कित्त्वादाह—बाहुलकादिति ॥ 'सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु' इति मेदिनी । 'सरला विरलायन्ते घनायन्ते कलिद्रुमाः । न शमी न च पुन्नागा अस्मिन्संसारकानने' इत्यभियुक्तप्रयोगः ॥—कमेः–॥ कमु कान्तौ । अस्माद् वृषादित्वेन कलप्रत्यये बाहुलकादित्यनुषज्यत इति बुक् । 'कम्बलो नागराजे स्यात्सास्नाप्रावारयोरपि । कृमावप्युत्तरासङ्गे सलिले तु नपुसकम्' इति मेदिनी । 'मुसल स्यादयोऽग्रे च पुन्नपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णी गृहगोधिकयोरपि' इति मेदिनी । मूर्धन्यमध्योऽप्ययमिति वर्णदेशना । मुस खण्डन इति धातोर्दन्त्यान्तेषु मूर्धन्यान्तेषु च बोपदेवादिभिः पठितत्वात् । उज्ज्वलदत्तादयस्तु तालव्यमध्यमप्याहुः । अत एव 'मुसलो मुषलोपि च' इति विश्वकोशे मुशलोऽपि चेति पाठान्तरम् ॥—लङ्गेः ॥ लगि गतावस्मात्कलप्रत्यये बाहुलकादित्यनुषङ्गाद्वृद्धिश्च, सम्प्रसारणाभावः । एवमग्रेऽपि । मुडागमो बाहुलकादेव ॥—कुटिकशि–॥ कुट कौटिल्ये, कश गतिशासनयोः,

**कौतिभ्यः प्रत्ययस्य मुट्** ॥११४॥ कुट्मलः। कुडेरपि। कुड्मलः। कश्मलम्। बाहुलकाद्गुणः। कोमलम्। **मृजेष्टिलोपश्च** ॥११५॥ मलम्। **चुपेरच्चोपधायाः** ॥११६॥ चपलम्। **शकिशम्योर्नित्** ॥११७॥ शकलम्। शमलम्। **छो गुक् ह्रस्वश्च** ॥११८॥ छगलः। प्रज्ञादित्वाच्छागलः। **अमन्ताड्डः** ॥११९॥ दण्डः। रण्डा। खण्डः। मण्डः। वण्डश्छिन्नहस्तः। अण्डः। बाहुलकात्सत्वाभावः। षण्डः सङ्घातः। तालव्यादिरित्यपरे। शण्डः। गण्डः। चण्डः। पण्डः क्लीबः। पण्डा बुद्धिः। **कादिभ्यः कित्** ॥१२०॥ कवर्गादिभ्यो डः कित्स्यात् कुण्डम् काण्डम्। गुड्। गुडः। घुण भ्रमणे। घुण्डो भ्रमरः। **स्थाचतिमृजेरालज्वालजालीयचः** ॥१२१॥ तिष्ठतेरालच्। स्थालम् स्थाली। चतेर्वालंच्। चत्वालः। मृजेरालीयच्। मार्जालीयो बिडालः। **पतिचण्डिभ्यामालञ्** ॥१२२॥ पातालम्। चण्डालः। प्रज्ञादित्वादणि चाण्डालोऽपीत्येके। **तमिविशि-**

---

कु शब्दे, अस्मात्कल प्रत्यये गुणो नेत्याशङ्क्याह—**बाहुलकादिति**। 'कोमल मृदुल मृदु'। बाहुलकादन्यत्रापि बोध्यः। तद्यथा कुस श्लेषणे। दन्त्यान्तोऽयम्। बोपदेवमते तु तालव्यान्तोऽपि गुणः। कोशलः कोसलो वा देशविशेषः। 'वृद्धेत्कोसला–' इति सूत्रे तु दन्त्यान्त एव साम्प्रदायिकः। सव सबन्धे, शव च। सवल शवल। 'शंबलोऽस्त्री संवलवत् कूलपाथे च मत्सरे' इति मेदिनी। कदि आह्वाने नलोपः। गारादित्वान्ङीषि कदली। 'मन्दान्दोलितकर्पूरकदलीदलसंज्ञया। विश्रमाय श्रमापन्नानाह्वयन्तीमिवाध्वगान्' इति काशीखण्डम्। अजादेराकृतिगणत्वाट्टाबपि 'कदलाकदली पृश्यां कदली कदलौ पुनः। रम्भावृक्षेऽथ कदली पताकामृगभेदयोः। कदली बिम्बिकाया च' इति मेदिनी। कुश इति सौत्रो धातुः। 'कुशलः शिक्षिते त्रिषु। क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसके' इति मेदिनी। कमु कान्तौ। 'कमल सलिले ताम्रे जलजे व्योम्नि भेषजे। मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः' इति विश्वमेदिन्यौ। मडि भूषायाम्। 'मण्डलं परिधौ कोठे देशे द्वादशराजके' इति मेदिनी। 'कोठो मण्डलकम्' इत्यमरः। 'बिम्बोऽस्त्री मण्डल त्रिपु' इति च ॥—**मृजेः–**॥ मृजू शुद्धौ। 'मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्' इति मेदिनी ॥—**चुपेः–**॥ चुप मन्दायां गतौ। 'चपलः पारदे मीने चोरके प्रस्तरान्तरे। चपला कमला विद्युत्पुंश्चली पिप्पलीषु च। नपुंसके तु शीघ्रं स्याद्वाच्यवत्तरले चले' इति मेदिनी ॥—**शकिशम्योः–**॥ शकॢ शक्तौ, शम उपशमने शकल खण्डे रोहितादीना त्वचि च तद्योगात्। शकली मत्स्यः मत्स्यान् शकलानिति भाष्यम्, 'शकल त्वचि खण्डे स्याद्रागवस्तुनि वल्कले' इति मेदिनी ॥—**छो गुक्** ॥ छो छेदने। 'छगल नीलवस्त्रे ना छागे स्त्री वृद्धदारके' इति मेदिनी ॥—**अमन्ताड्डः** ॥ अमिति प्रत्याहारः। दमु उपशमे, रमु क्रीडायाम्, खनु अवदारणे, मन ज्ञाने, वन सभक्तौ, अम गत्यादिषु, षणु दाने, गम्लृ गतौ, चण दाने, पण व्यवहारे स्तुतौ च। काशिकाया तु त्रिभ्य एव कणमाः स्युरित्युक्तम्। जम् प्रत्याहारस्तु न स्वीकृतः। अष्टाध्याय्यां तस्य विषयाभावात् ॥—**दण्ड** इति। बाहुलकात् 'चुटू' इति नेत्संज्ञा। 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः। 'रण्डा मूषकपर्ण्यां च विधवायां च योषिति। खण्डोऽस्त्री शकले नेक्षुविकारमणिभेदयोः। मण्डः पञ्चाङ्गुले शाकभेदे क्लीब तु मस्तुनि। चण्डा तु पाशुलाया स्त्री त्रिपु हस्तादिवर्जिते'। अमन्ति सम्प्रयोग यान्ति अनेनेति अण्डः प्राण्यवयवः। 'षण्डः पद्मादिसङ्घाते न स्त्री स्यात् गोपतौ पुमान्'। शडि रुजायाम् अस्मात् घञि शण्डशब्दः तालव्यादिरपि संघाते वर्तते इत्याशयेन मतान्तरमाह ॥—**तालव्यादिरित्यपरे** इति। 'गण्डः स्यात्पुंसि खड्गिनि। चिह्नवीरकपालेषु हयभूषणबुद्बुदे। चण्डो ना तिन्तिणीवृक्षे यमकिंकरदैत्ययोः। चण्डी कात्यायनी देव्यां हिंस्रा कोपनयोषितोः। पण्डः षण्डे विधि स्त्री स्यात्' इति मेदिनी ॥—**फण्ड** इति। फण गता फण्डः। प्रज्ञादित्वादण् फाण्डमुदरम् ॥—**कादिभ्यः कित्** ॥ कुण शब्दोपकरणयोः ॥—**कुण्डमिति**। दह कुण्टमित्यत्र प्रायेणानुस्वारमेव लिखन्ति तत्तु प्रमादकृतम्। एवमन्यत्रापि बोध्यम्। डस्य कित्वात्र गुणः। 'अनुनासिकस्य क्विझलोः–' इति दीर्घस्तु न भवति बाहुलकात्सञ्ज्ञापूर्वकविधेरनित्यत्वाद्वेत्याहुः। 'कुण्डमग्न्यालये मानभेदे देवजलाशये। कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्। पिठरे तु न ना' इति मेदिनी। 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इत्यमरः ॥—**काण्डमिति**। कमु कान्तौ। 'अनुनासिकस्य–' इति दीर्घः। 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः। अर्वाङ् कुत्सितः। अत एव काण्डं स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम्' इति मेदिनी। गुड् अव्यक्ते शब्दे। 'गुडो गोलेक्षुपाकयोः' इत्यमरः। गुडा सुही तद्वत्केशा यस्य स गुडाकेशः शिवः जटाधारित्वात्। 'गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः। गुडा स्नुह्या च कथिता गुडिकायां च योषिति' इति मेदिनी। गुडाका निद्रा तस्या ईशः इति वा जितेन्द्रियत्वादिति भावः॥—**स्थाचति–**॥ष्ठा गतिनिवृत्तौ, चते याचने, मृजू शुद्धौ, लवा सिद्धे आलच् आकारविन्यस्यप्रयोजनः। चित्स्वरं बाधित्वा पक्षे आद्युदात्तार्थमित्येके। 'स्थालं भाजनभेदेऽपि स्थाली स्यात् पाटलोखयोः' इति मेदिनी। 'चत्वाली यज्ञकुण्डे स्याद्दर्भे च' इति विश्वः। 'मार्जालीयः स्मृतः शूद्र बिडाले कायशोधने' इति मेदिनी ॥—**पतिचण्डि** ॥ पत्लृ गतौ, चडि कोपे। पतन्त्यस्मिन्नधर्मेणेति पातालम्। उपधावृद्धिः। 'अधोभुवनपातालं बलिसद्म रसातलम्' इत्यमरः।

विशिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् ॥१२३॥ तमालः । विशालः । बिडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चालाः । ॥ पतेरङ्गच् पक्षिणि ॥१२४॥ पतङ्गः । ॥ तरत्यादिभ्यश्च ॥१२५॥ तरङ्गः । लवङ्गम् । ॥ विडादिभ्यः कित् ॥१२६॥ विडङ्गः । मृदङ्गः । कुरङ्गः । बाहुलकादुत्वं च । ॥ सृवृभ्यां णिच्च ॥ ॥१२७॥ सारङ्गः। वारङ्गः खड्गादिमुष्टिः । ॥ गन् गम्यद्योः ॥१२८॥ गङ्गा । अङ्गः पुरोडाशः । ॥ छापूखडिभ्यः कित् ॥१२९॥ छागः । पूगः । खड्गः । बाहुलकात् पिट अनादरे गन्सत्वाभावश्च । पिङ्गः तरलः । पिङ्गरमसमसंभ्रममेवमेकेति माघः । ॥ भृञः किद्धुट् च ॥१३०॥ भृञो कन् किस्यात्तस्य नुट् च । भृङ्गाः पिङ्गालिधूम्याटाः ॥ शृणातेर्ह्रस्वश्च ॥१३१॥ शृङ्गम् । ॥ गण् शकुनौ ॥१३२॥ नुट् चेत्यनुवर्तते । शार्ङ्गः । ॥ मुदिग्रोर्गग्गौ ॥ ॥१३३॥ मुद्गः । गर्गः । ॥ अण्डन् कृसृभृवृञः ॥१३४॥ करण्डः । सरण्डः पक्षी । भरण्डः स्वामी । वरण्डो मुखरोगः । ॥ शॄदॄभसोऽदिः ॥१३५॥ शरत् । दरत्हृदयकूलयोः । भसज्जघनम् । ॥ दृणातेः षुग् ह्रस्वश्च ॥

---

'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी ॥—चण्डाल इति । इदित्वान्नुमि अदुपधत्वाभावान्न वृद्धिः । माधवेन तु पतिचण्डिभ्यामालञिति नितं पठित्वा पातालशब्दे बाहुलकाद्वृद्धिमुक्त्वा वृद्ध्यर्थमालञिति केषांचित्पाठे तु चण्डालशब्देऽपि वृद्धिः स्यादित्युक्तं तदतिरभसात् ॥—पञ्चेति । उज्ज्वलदत्तादयः । एतच्च कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यश्छन्दसीति चण्डालात्स्वार्थे ण विदधता वार्तिकेन तद्भाष्येण च सह विरुद्धमिति बोध्यम् ॥—तमिविशि—॥ तमु काङ्क्षायाम् । विश प्रवेशने, विड आक्रोशे, मृण हिंसायाम्, कुल संस्त्याने, कपि चलने, निर्देशान्नलोपः । पल गतौ, पचि विस्तारे । 'तमालस्तिलके खड्गे ना पिच्छं वरुणद्रुमे' इति मेदिनी । 'विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति । नृपशृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्' इति मेदिनी । 'विडालो नेत्रपिण्डे स्यात्पृषदशकके पुमान्' इति मेदिनी । 'ओतुर्विडालो मार्जारो वृषदंशक आखुभुग्' इत्यमरः । 'मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे' इति मेदिनी । 'कुलालः ककुभे कुम्भकारे स्त्री लजनान्तरे' इति च मेदिनी । 'कुलालो घूकपक्षिणि । कुकुभे कुम्भकारे च' इति हेमचन्द्रः । 'कपालोऽस्त्री शिरोस्थिनि स्यात् । घटादेः शकले व्रजे' इति मेदिनीविश्वप्रकाशौ । 'पञ्चाली पुत्रिकागीत्योः स्त्रिया पुंभूम्नि नीवृति' इति मेदिनी । बाहुलकात् श्यतेरपि कालन् । 'आदेच उपदेशे–' इत्यात्व शाला । शल चलने अस्मात् घञि शाला । 'सेनासुराच्छायाशालानिशानाम्' इति निपातनात्स्त्रीत्वमिति न्यासः । 'शाला द्रुस्कन्धशाखायां गृहगेहैकदेशयोः । ना झषे' इति मेदिनी ॥—पतेरङ्गच् ॥ पत्लृ गतौ । पक्षिणीत्युपलक्षणम् । 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीब सूते' इति मेदिनी । सूते पारद इत्यर्थः ॥—तरत्या—॥ तॄ प्लवनतरणयोः । लूञ् छेदने । तरङ्ग ऊर्मि॰ । 'तरङ्गस्तुरगादीनामुत्फाले वस्त्रभङ्गयो.' इति विश्वः । 'लवङ्गं देवकुसुमे'आकृतिगणोऽयम् ॥—विडादिभ्यः ॥ विड आक्रोशे, मृद क्षोदे, कॄ विक्षेपे, एभ्योऽङ्गच् कित्स्यात् । विडङ्ग ओषधिविशेष इति उज्ज्वलदत्तः । 'विडङ्गः कृमिसघ्ने विडङ्गो नागरेऽन्यवत्' इति विश्वः । 'विडङ्गस्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुनपुंसकम्' इति मेदिनी । 'मृदङ्गः पटहे घोषे' इति च । कुरङ्गो मृगविशेषः ॥—बाहुलकादुत्वं चेति । कुर शब्दे इत्यस्मादङ्गच् तस्य कित्वेन गुणाभाव इत्यन्ये ॥—सृवृभ्यां—॥ सृ गतौ । वृञ् वरणे । 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु' इति मेदिनी । बाहुलकात् नॄ नये । 'अथ नारङ्गः पिप्पलीरसे । यमप्राणिनि विटे नागरङ्गद्रुमेऽपि च' इति मेदिनी ॥—गन् गम्—॥ गम्लृ गतौ, अद भक्षणे, बाहुलकादम गत्यादिषु । अस्मादपि गन् । 'अङ्ग गात्रे उपाये च प्रतीके चाप्रधानके' । 'अङ्गो देशविशेषः स्यादङ्ग सबोधनेऽव्ययम्' इति विश्वः । 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके' इति मेदिनी ॥—छापू—॥ छो छेदने, पूङ् पवने, खड भेदने । छायते छिद्यते यज्ञार्थमिति छाग. । पूयते मुखमनेनेति पूगः । 'पूगस्तु क्रमुके वृन्दे' इति मेदिनी । 'खड्गो गण्डकशृङ्गे स्यात् निस्त्रिंशे गण्डकेऽपि च' इति शब्दतरङ्गिणी । 'खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके' इति मेदिनी ॥—भृञः—॥ डुभृञ् धारणपोषणयोः । किदित्यनुवर्तनात्किद्ग्रहणमिह स्पष्टार्थम् । 'भृङ्गो धूम्याटषिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्ग गुडत्वचि' इति मेदिनी ॥—शृणातेः—॥ शॄ हिंसायामस्माद्गन् धातोर्ह्रस्वत्वं प्रत्ययस्य तु कित्वं नुट् च । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके । स्त्रीविषाया स्वर्णमीनभेदयोर्ऋषभौषधौ' इति मेदिनी । 'शृङ्ग विषाणमाख्यातं शैलाग्रे जलयन्त्रके । मीनौषधिसुवर्णाना भेदे शृङ्गी प्रयुज्यते' इत्युत्पलिनीकोशः ॥—गण् शकुनौ ॥ शृणातेः शकुनौ वाच्ये गण् स्यात्तस्य नुट् 'अचो ञ्णिति' इति धातोर्वृद्धिः । शार्ङ्गः पक्षी । शार्ङ्गं धनुरिति तु शृङ्गस्य विकार इति बोध्यम् ॥—मुदिग्रोः॥ मुद हर्षे, गॄ निगरणे, आभ्या यथासंख्य गक्गिम् इत्येतौ स्तः । मुद्गः सस्यभेदः । गर्गो मुनिविशेषः ॥—अण्डन् ॥ डुकृञ् करणे, सृ गतौ, भृञ् भरणे, वृञ् वरणे । 'करण्डो मधुकोशासिकारण्डेषु दलाटके' इति मेदिनी । 'वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः' इति विश्वमेदिन्यौ । बाहुलकात् तॄ प्लवनतरणयोरपि । 'तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवे' इति मेदिनी ॥—शॄदॄ ॥ शॄ हिंसायाम्, दॄ विदारणे, भस भर्त्सनदीप्त्योः । 'शरत् स्त्री वत्सरे ऋतौ । दरत्स्त्रियां प्रपाते च भयपर्वतयोरपि । भसत् स्त्री भास्वरे योनौ' इति मेदिनी । उवे

॥१३६॥ दृषत् । **त्यजितनियजिभ्यो डित्** ॥१३७॥ त्यद् । तद् । यद् । सर्वादयः । **एतेस्तुट् च** ॥१३८॥ एतद् । **सर्तेरटिः** ॥१३९॥ सरट् स्याद्वातमे घयोः । वेदभाष्ये तु याभिः कृशानुमिति मन्त्रे सरडभ्यो मधुमक्षिकाभ्य इति व्याख्यातम् । **लङ्घेर्नलोपश्च** ॥१४०॥ लघट् वायुः । **पारयतेरजिः** ॥१४१॥ पारज् सुवर्णम् । **प्रथेः कित्संप्रसारणं च** ॥१४२॥ पृथक् । स्वरादिपाठादव्ययत्वम् । **भियः षुक् ह्रस्वश्च** ॥ १४३ ॥ भिषक् । **युष्यसिभ्यां मदिक्** ॥ १४४ ॥ युष् सौत्रो धातुः । युष्मद् । अस्मद् । त्वम् । अहम् । **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** ॥ १४५ ॥ एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः सङ्घातः । सोमः । होमः । सर्मो गमनम् । धर्मः । क्षेमं कुशलम् । क्षोमम् । अट्टालकेऽपि क्षौमं च । भाम आदित्यः । यामः । वामः शोभनदुष्टयोः । पद्मम् । यक्ष पूजायाम् । यक्ष्मो रोगराजः । नेमः । **जहातेः सन्वदालोपश्च** ॥१४६॥ जिह्मः कुटिलमन्दयोः । **अवतेष्टिलोपश्च** ॥१४७॥ मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा विट्टिल्येव ब्रूयात् । ज्वरत्वरेति ऊठौ । तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न । तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीति ओम् । **ग्रसेरा च** ॥१४८॥ ग्रामः । **अविसिविसिशुषिभ्यः कित्** ॥१४९॥ ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः । शुष्ममग्निसमीपयोः । **इषियुधीन्धिदसिश्याधूसूभ्यो मक्** ॥१५०॥ इष्मः कामवसन्तयोः । ईषीति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मः समित् ।

---

अम्बसुलाभिक इति मन्त्रव्याख्यायां भसद्भग इति वेदभाष्य, जाघन्या पत्नीः सयाजयन्ति भसद्वीर्यो हि स्त्रिय इत्यत्र भसज्जघनमिति व्याख्यातारः ॥—**दृणातेः**—॥ दृ विदारणे । 'दृषन्निष्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम्' इति मेदिनी ॥ —**त्यजि**—॥ त्यज हानौ, तनु विस्तारे, यज देवपूजादौ ॥—**त्यदि**त्यादि । अदेर्डित्वाट्टिलोपः ॥—**एतेः**—॥ इण् गतौ अस्मादटिस्तस्य तुटि गुणः । एतद् ॥—**सर्तेः**—॥ सृ गतौ ॥—**लङ्घेः**—॥ लघि शोषणे ॥—**पारयतेः**—॥ पार तीर कर्मसमाप्तौ चुरादिः ॥—**पारगिति** । णिलोपः । कुलम् ॥—**प्रथेः**—॥ प्रथ प्रख्याने ॥—**भियः**—॥ ञिभी भये ॥ —**युष्यसि**—॥ असु क्षेपणे ॥—**अर्तिस्तु**—॥ ऋ गतौ, ष्टुञ् स्तुतौ, षुञ् अभिषवे, हु दानादनयोः, सृ गतौ, धृञ् धारणे, क्षि क्षये, टुक्षु शब्दे, भा दीप्तौ, या प्रापणे, वा गतिगन्धनयोः, पद गतौ, णीञ् प्रापणे, 'सोमस्तुहिनदीधितौ । वानरे च कुबेरे च पितृदेवे समीरणे । वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ' इति मेदिनी ॥—**होम** इति । देवतोद्देशेन हविःप्रक्षेपः । 'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे' इति च । 'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इति विश्वः । 'क्षौम मन्देऽनुकूलेऽस्त्री क्षौमं वल्कलजांशुके । शणजेऽतसिजे' इति मेदिनी । 'भामः क्रोधे रवौ दीप्तौ' इति च । 'यामस्तु पु संप्रहरे सयमेऽपि प्रकीर्तितः' इति च । 'वामं धने पुंसि हरे कामदेवे पयोधरे । लघुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ । वामी शृगाली वडवा रासभी करभीषु च' इति । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे । ना नागे' इति च मेदिनी ॥—**यक्ष पूजायामिति** । अयमन्तस्थादिः । मनिन्प्रत्यये तु नकारान्तः शब्दः । 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । 'राजयक्ष्मेव रोगाणाम्' इति माघः । 'यक्ष्मणापि परिहाणिराययौ' इति रघुः । अत्र जकारयकारयोर्भेदाग्रहेण जक्षभक्षहसनयोरित्युज्ज्वलदत्तेनोपन्यस्तम् । तन्न । तस्य चवर्गतृतीयादित्वात् । अत एव 'अक्षीभ्यां ते नासिकाभ्या कर्णाभ्या चुबुकादधि । यक्ष्मं सर्वस्मात्' इति मन्त्रे यक्ष्मशब्दस्यान्तस्थादित्वम् । जक्षत् क्रीडन् रममाण इत्यादिमन्त्रे तु जक्षच्छब्दस्य चवर्गतृतीयादित्वं वेदभाष्यकृतो व्याचख्युः । 'नेमः कालेऽवधौ गर्ते प्राकारे कैतवेऽपि च' इति मेदिनी । 'नेमस्त्वर्धे प्राकारगर्तयोः । अवधौ कैतवे च' इति हेमचन्द्रः ॥—**जहातेः**—॥ ओहाक् त्यागे ॥—**जिह्म** इति । मन्प्रत्ययस्य सन्वत्त्वाद् द्वित्वे । 'सन्यतः' इतीत्वम् । 'जिह्मस्तु कुटिले मन्दे क्लीबं तगरपादपे' इति मेदिनी ॥—**अवतेः**—॥ अव रक्षणादौ । 'ओं प्रश्ने स्वीकृतौ रोषे' इति विश्वः ॥—**ग्रसेरा च** ॥ ग्रसु अदने । अतो मन्धातोराकारश्च । 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वके इति विश्वः । शब्दादिपूर्वको ग्रामशब्दो वृन्दे शब्दग्रामो गुणग्राम इति यथा । 'शब्दादिपूर्वो वृन्देऽपि ग्रामः' इत्यमरः । संपूर्वोऽयं युद्धे । तदुक्तं 'संपूर्वः संयुगे स्मृतः' इति ॥—**अविसिवि**—॥ अव रक्षणादौ, षिवु तन्तुसन्ताने, षिञ् बन्धने, शुष शोषणे, एभ्यो मन्स्यात्स च कित् । ऊठादिकं पूर्ववत् । ऊम नगरमितित्वे ऋतुमिति मन्त्रे ऊमास्तर्यका यजमाना इति वेदभाष्यम् । ट्टापि बाहुलकाद्ध्रस्वत्वे 'उमातसी हैमवती हरिद्राकान्तिकीर्तिषु' इति मेदिनी । स्यूमो रश्मिरिति सूत्रम् । तन्तुरित्यन्ये । सिमः सर्वनामगणे पठितः । 'शुष्मं तेजसि सूर्ये ना' इति मेदिनी । शुष्म बलमिति वेदभाष्यम् ॥—**इषियुधि**—॥ इष गतिहिंसादानेषु । ईष गताविति केचित् । ईष्मः । युध संप्रहारे, ञिइन्धी दीप्तौ, दसु उपक्षये, श्यैङ् गतौ, धूञ् कम्पने, षूङ् प्राणिगर्भविमोचने ॥—**युध्म** इति । 'युध्मो धनुषि संयुगे' इति मेदिनी । 'दस्मस्तु यजमाने स्यादपि चौरे हुताशने' इति च । 'त्रिषु श्यामौ हरितकृष्णौ श्यामा स्याच्छारिवा निशा' इत्यमरः । 'श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरीचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ' । अम्बसुला-

रुक्मो यवमानः । श्यामः । धूमः । धूमोऽन्तरिक्षम् । बाहुलकादीर्मं व्रणः । युजिरुचितिजां कुश्च ॥१५१॥ युग्मम् । रुक्मम् । तिग्मम् । हन्तेर्हि च ॥१५२॥ हिमम् । भियः षुग्वा ॥१५३॥ भीमः । भीष्मः । घर्मः ॥१५४॥ घृधातोर्मग्गुणश्च निपात्यते । ग्रीष्मः ॥१५५॥ ग्रसतेर्निपातोऽयम् । प्रथेः षिवन् संप्रसारणं च ॥१५६॥ पृथिवी । षवन्नित्येके । पृथवी पृथिवी पृथ्वी इति शब्दार्णवः । अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ॥१५७॥ अश्वः । प्रुष स्नेहनादौ । प्रुष्वः स्यादृतुसूर्ययोः । प्रुष्वा जलकणिका । लट्वा पक्षिभेदः फलं च । कण्वं पापम् । बाहुलकादित्वे किण्वमपि । खट्वा । विश्वम् । इणशीभ्यां वन् ॥१५८॥ एवो गन्ता ये च एवा मरुतः । असत्त्वे निपातोऽयम् । शेवं मित्राय वरुणाय । सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे ॥१५९॥ अकर्तर्येते निपात्यन्ते । सृतमनेन विश्वमिति सर्वम् । निपूर्वाद्घृषेर्गुणाभावोऽपि । निघृष्यतेऽनेन निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । लिष्व इत्यन्ये । तत्रोपधाया इत्वमपि । शेतेऽस्मिन् सर्वमिति शिवः शम्भुः । शीङो ह्रस्वत्वम् । पट्वो रथो भूलोकश्च । प्रह्वयते इति प्रह्वः । ह्वेञ आकारवकारलोपः । जहातेराल्लोपो वा । ईषेर्वन् ॥ ईष्व आचार्यः । इष्व इत्यन्ये । अतन्त्रे किम् । सर्ता सारकः । बाहुलकाद् ह्रसतेः ह्रस्वः । शेवयह्वजिह्वाग्रीवाप्वामीवाः ॥१६०॥ शेव इत्यन्तोदात्तार्थम् । यान्त्यनेन यह्वः । ह्रस्वो हुगागमश्च । लिहन्त्यनया जिह्वा । लकारस्य जः गुणाभावश्च । गिरन्त्यनया ग्रीवा । ईडागमश्च । आप्नोतीत्याप्वा वायुः । मीवा उदरकृमिः । वायुरित्यन्ये । कृगृशृदृभ्यो वः ॥१६१॥ कर्वः काम आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः । कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥१६२॥ यौतीति युवा । वृषा इन्द्रः । तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः । सप्यशूभ्यां तुट् च ॥१६३॥ सप्त । अष्ट । नञि जहा-

---

ङ्गनायां च प्रियङ्गावपि गुग्गुलौ । यमुनाया त्रियामायां कृष्णत्रिवृतिकौषधे । नीलिकायाम्' इति मेदिनी ॥—**ईर्ममिति** । ईर गतौ । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । बाहुलकाज्जन जनन इत्यस्मादपि । जन्मम् । रुह बीजजन्मनीति निर्देशान्मनिनन्तोऽप्यस्ति स तु नान्तः । 'जनुर्जननजन्मानि' इत्यमरस्तु अकारान्तनकारान्तोभयसाधारणः ॥—**युजि**—॥ युजिर् योगे, रुच दीप्तौ, तिज निशाने, एभ्यो मक् कवर्गश्चान्तादेशः । 'रुक्म तु काञ्चने लोहे' इति विश्वमेदिन्यौ । तिग्म तीक्ष्णम् ॥—**हन्तेः**—॥ हन हिंसागत्योरस्मान्मक् धातोर्हिरादेशश्च । 'हिम तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गं' इति मेदिनी ॥—**भियः**—॥ जिभी भये । बिभेत्यस्मादिति विग्रहः । 'भीष्मो गाङ्गेयधीरयोः । भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे' इति मेदिनी ॥—**घर्मः** ॥ घृ क्षरणदीप्त्योः ॥ —**ग्रीष्मः** ॥ ग्रसु अदने । 'घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि' । 'ग्रीष्म ऊष्मर्तुभेदयोः' इति च मेदिनी ॥ —**प्रथेः** ॥ प्रथ प्रख्याने । षित्त्वान्ङीप् । 'पृथिवी पृथवी पृथ्वी धरा सर्वमहा रमा' इति शब्दार्णवः ॥—**अशूप्रुषि**—॥ अशू व्याप्तौ, लट बाल्ये, कण निमीलने, खटि काङ्क्षायाम्, विश प्रवेशने, 'अश्वः पुंजातिभेदे च तुरगे च पुमानयम्' इति मेदिनी । 'अश्वः पुंभेदवाजिनोः' इति विश्वः । 'लट्वा करञ्जभेदे स्यात्फले वाद्ये खगान्तरे' इति विश्वमेदिन्यौ । 'कण्व पापे मुनौ पुंसि' इति मेदिनी । 'किण्व बीजाघसीधुषु' इति च पठ्यते । शयनार्थिभिः काङ्क्ष्यते इति खट्वा । 'विश्वा द्युतिविषाया स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठ्या पुंसि देवप्रभेदेष्वखिले त्रिषु' इति मेदिनी ॥—**इण्**—॥ इण् गतौ । शीङ् स्वप्ने । शेव सुखमिति वेदभाष्यम् । शेवं मेढमित्युज्ज्वलदत्तः ॥—**सर्वनिघृष्व**—॥ सृ गतौ, घृषु सङ्घर्षे, रिष हिंसायाम्, लष कान्तौ, शीङ् स्वप्ने, पट गतौ, ह्वेञ् स्पर्धायां शब्दे च, ओहाक् त्यागे, इति वा । ईषु शब्दे । तन्त्रशब्दोऽत्र कर्तृवाचीत्याह—**अकर्तरी**ति ॥—**निपात्यन्त** इति । वन्प्रत्ययान्ततयेति शेषः ॥—**ह्रस्व** इति । 'ह्रस्वो न्यक्खर्वयोस्त्रिषु' इति मेदिनी ॥—**शेवयह्व**—॥ एते वन्प्रत्ययान्ता निपात्यन्ते ॥—**अन्तोदात्तार्थमिति** । इणशीभ्यामित्यनेन आद्युदात्तत्वात्सिद्धेरिति भावः । शीङ् स्वप्ने । शेवा लिङ्गाकृतिः दशपादीवृत्तिरित्याह ॥—**यान्त्यनेने**ति । उज्ज्वलदत्तस्तु यज देवपूजादौ जकारस्य हकारो यह्वो यजमान इत्याह । वैदिकनिघण्टौ महन्नामसु यह्वशब्दः पठितः । प्रवो यह्वो पुरूणा यह्व महान्तमिति वेदभाष्यम् । लिह आस्वादने । लिहन्त्यनयेति जिह्वा । जि जये हुगागमः । जिह्वा रसनेत्युज्ज्वलदत्तः ॥—**ग्रीवे**ति । गॄ निगरणे, आप्लृ व्याप्तौ, मीङ् हिंसायाम् ॥—**मीवे**ति । वेदे तु अमीवेति छित्वा अम रोग इत्यस्माद्वः । इट् चेत्युक्तम् । 'अमीवहा वास्तोष्पते' इत्यादिमन्त्रास्तत्रानुकूलाः ॥—**कॄ गॄ** ॥ कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम्, दॄ विदारणे । गर्व अहंकारः । शर्वो रुद्रः ॥—**कनिन्यु**—॥ यु मिश्रणे, वृषु सेचने, तक्षू तनूकरणे, राजृ दीप्तौ, धन्वि गत्यर्थः, द्यु अभिगमने, दिवु क्रीडादौ । 'युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि' इति मेदिनी । 'वृषा कर्णे महेन्द्रे ना' इति च । 'तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट्' इत्यमरः । 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' इति च । 'समानौ मरुधन्वानौ' इति च । 'अर्धर्चादिषु धन्व' इति च । 'अर्थोस्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति चामरः । 'धन्वा तु मरुदेशे ना क्लीबे चापे स्थलेऽपि च' इति मेदिनी ॥—**सप्यशूभ्याम्**—॥ षप समवाये, अशू

त्तेः ॥१६४॥ अहः । श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति ॥१६५॥ एते त्रयोदश कनिन्प्रत्ययान्ता निपात्यन्ते । श्वयतीति श्वा । उक्षा । पूषा । प्लिह गतौ । इकारस्य दीर्घत्वम् । प्लेहतीति प्लीहा कुक्षिव्याधिः । क्लिदू आर्द्रीभावे । क्लिद्यति क्लेदा चन्द्रः । ष्णिह्यतेर्गुणः ष्णिह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा । मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु । मज्जा अस्थिसारः । अर्यपूर्वो माङ् । अर्यमा । विश्वं प्साति विश्वप्साग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च । जनेरुपधालोपो मश्चान्तादेशः । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा । धातोरिकारलोपः । मह पूजायाम् । हस्य घो वुगागमश्च । मघवा इन्द्रः ॥ इत्युणादिषु प्रथमः पादः ॥

---

## द्वितीयः पादः ॥

**कृहृभ्यामेणुः** ॥१६६॥ करेणुः । हरेणुर्गन्धद्रव्यम् । **हनिकुषिनीरमिकाशिभ्यः क्थन्** ॥१६७॥ हथो विषण्णः । कुष्ठः । नीथो नेता । रथः । काष्ठम् । **अवे भृञः** ॥१६८॥ अवभृथः । **उषिकुषिगार्तिभ्यस्थन्** ॥१६९॥ ओष्ठः । कोष्ठम् । गाथा । अर्थः । बाहुलकान्न शोथः । **सर्तेर्णित्** ॥१७०॥ सार्थः समूहः । **जॄवृञ्भ्यामूथन्** ॥१७१॥ जरूथं मांसम् । वरूथो रथगुप्तौ ना । **पातॄतुदिवचिरिचिसिचिभ्यस्थक्** ॥ ॥१७२॥ पीथो रविर्घृतं पीथम् । तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रु-

---

व्याप्तौ ॥—**नञि**—॥ ओहाक् त्यागे, कनिनि आतो लोपः ॥—**श्वन्नुक्षन्** ॥ टुओश्वि गतिवृद्ध्योः, उक्ष सेचने, पूष वृद्धौ, ष्णिह प्रीतौ, मुह वैचित्त्ये, मुर्वी बन्धने । उकारस्य दीर्घत्वं वकारस्य धकार इत्युज्ज्वलदत्तः । टुमस्जो शुद्धौ । मस्जेः सकारस्य शकारस्तस्य जश्त्वेन जः । माङ् माने शब्दे च, प्सा भक्षणे, जनी प्रादुर्भावे, टुओश्वि गतिवृद्ध्योः ॥—**कनिन्प्रत्ययान्ता** इति । नाय निदिति भावः । केचित्तु नित्त्वं स्वीकृत्य उक्षन्नादीनां सूत्रेऽन्तोदात्तनिपातनमाहुस्तच्च गौरवग्रस्तमित्युपेक्ष्यम् ॥—**श्वेति** । इकारलोपो निपात्यते ॥—**पूषेति** । 'सौ च' इत्युपधादीर्घः । 'इन्हन्–' इति नियमात्पूषणौ पूषण इत्यादौ न दीर्घः । 'क्लिदौंपधिशशाङ्कयोः' इति यादवः ॥—**मूर्धेति** । 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः ॥—**मज्जति** । नकारान्तोऽयं टाबन्तोऽप्यभ्युपगम्यते । 'ऊष्मया सार्धमूष्मापि मज्जोक्ता मज्जया सह' इति द्विरूपकोशात् । 'अर्यमा तु पुमान्सूर्ये पितृदेवान्तरेऽपि च' इति मेदिनी ॥—**परिजायत** इत्यादि । एतच्च दशपादीवृत्त्यनुरोधेनोक्तम् । 'परिज्मान सुख रथम्' इति मन्त्रस्य वेदभाष्ये तु परिज्मा परिगन्ता । अजेः परिपूर्वस्य 'श्वन्नुक्षन्–' इत्यादिना मन्प्रत्ययः, अकारलोपः, आद्युदात्तत्वं च निपात्यत इत्युक्तम् । उज्ज्वलदत्तस्तु परिज्वेति पठित्वा जु इति सौत्रो धातुः, परिपूर्वः, यणादेशः परिज्वा चन्द्र इत्याह तल्लक्ष्यविरोधादुपेक्ष्यम् ॥—**मातरिश्वेति** । सप्तम्या अलुक् । इह भत्वविषये संप्रसारणं न भवति । 'श्वयुव–' इति सूत्रे अभिव्यक्ततरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य तदन्तस्य च ग्रहणात् । तेन मातरिश्वनः मातरिश्वनेत्येव । इह सूत्रे इतिशब्द आद्यर्थस्तेनान्येभ्योऽपि यथादर्शनं कनिः प्रयोक्तव्यः । दशपाद्यां तु इति शब्दोऽत्र न पठ्यते ॥ **इत्युणादिषु प्रथमः पादः** ॥

**कृहृभ्याम्**–॥ डुकृञ् करणे, हृञ् हरणे । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । 'करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी ॥—**गन्धद्रव्यमिति** । कलायश्चेति बोध्यम् । 'कलायस्तु सतीनकः' इत्यमरः । 'हरेणु खण्डिके चास्मिन्' इत्यमरः । 'हरेणुर्ना सतीने स्त्री रेणुकाकुलयोषितोः' इति मेदिनीविश्वप्रकाशौ ॥—**हनिकुषि**–॥ हन हिंसागत्योः, कुष निष्कर्षे, णीञ् प्रापणे, रमु क्रीडायाम्, काशृ दीप्तौ । 'कुष्ठं रोगे पुष्करे स्त्री' इति मेदिनी । 'कुष्ठ रोगे सुगन्धे च' इति विश्वः । 'नीथे नीथे मघवानं सुतास' इति मन्त्रे नीथशब्दस्यान्तोदात्तत्वं बाहुलकात् । नीथे नीथे स्तोत्रे स्तोत्रे इति वेदभाष्यम् । 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' इति मेदिनी । 'रथः स्यात्स्यन्दने काये चरणे वेतसेऽपि च' इति विश्वः । 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्' इति मेदिनी ॥—**अवे**–॥ डुभृञ् धारणपोषणयोः । अवभृथो यज्ञावसानम् ॥—**उषिकुषि**–॥ उष दाहे, कुष निष्कर्षे, गै शब्दे, ऋ गतौ, 'कोष्ठं कुक्षिकुसूलयोः । गाथा श्लोके संस्कृतान्यभाषायां शेषवृत्तयोः' इति मेदिनी । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । शोथः श्वयथुः । शु गतौ ॥—**सर्तेः**–॥ सृ गतौ । 'सार्थो वणिक्समूहे स्यादपि सपातमात्रके' इति मेदिनीविश्वप्रकाशौ ॥—**जॄवृञ्** ॥ ज्या वयोहानौ क्र्यादिः, जॄष् दिवादौ । वृञ् वरणे । वरूथोऽङ्गुरविशेष इति वेदभाष्यम् । 'वरूथः स्यात्तनुत्राणे रथगोपनवेश्मनोः' इति हेमचन्द्रः ॥—**पातॄ**–॥ पा पाने, तॄ प्लवनतरणयोः, तुद व्यथने, वच परिभाषणे, रिचिर् विरेचने, षिचिर् क्षरणे, ष्टुच स्तुतौ । 'तुल्योऽमावस्याने तुल्या नीलीसूक्ष्मैलयोरपि' इति विश्वः । 'तुल्यमजमभेदे स्वातीकीसूक्ष्मैलयोः' त्रि-

तमिति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकादघेरपि । रिक्थमृक्थं धनं वसु । सिक्थम् ।
॥ अर्तेर्निरि ॥१७३॥ निर्ऋथं साम । ॥ निशीथगोपीथावगथाः ॥१७४॥ निशीथोऽर्धरात्रः रात्रिमात्रं च । गोपीथं तीर्थम् । अवगथः प्रातः स्नातः । ॥ गश्चोदि ॥१७५॥ उद्गीथः साम्नो भागविशेषः । ॥ समीणः ॥१७६॥ समिथो वह्निः संग्रामश्च । ॥ तिथपृष्ठगूथयूथप्रोथाः ॥१७७॥ तिजेर्जलोपः । तिथोऽनलः कामश्च । पृष्ठम् । गूथं विष्ठा । यूथं समूहः । प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते । ॥ स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥१७८॥ द्वात्रिंशभ्यो रक् स्यात् । वलि यलोपः । स्फारम् । न्यङ्क्वादित्वात्कुत्वम् । तक्रम् । वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः पुरोडाशः । दृप्रो बलवान् । वन्द्रः पूजकः । उन्द्री, उद्रो जलचरः । श्वित्रं कुष्ठम् । वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे । अजेर्वी, वीरः । नीरम् । पद्रो ग्रामः । मद्रो हर्षो देशभेदश्च । मुद्रा प्रत्ययकारिणी । खिद्रो रोगो दरिद्रश्च । छिद्रम् । भिद्रं वज्रम् । मन्द्रः । चन्द्रः । पचाद्यचि चन्दोऽपि । हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः । दह्रोऽग्निः । दस्रः स्ववैद्यः । दम्भ्रः समुद्रः स्वल्पं च । वसेः संप्रसारणे । ॥ न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।८।३।११० ॥१७९॥ रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात् । पूर्वपदादिति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया । तेन शासिवसीति प्राप्तमपि न । उस्रो रश्मिः । उस्रा गौः । वाश्रो दिवसः । वाश्रं मन्दिरम् । शीरोऽजगरः । हस्रो मूर्खः । सिध्रः साधुः । शुभ्रम् । ॥ मुसेरक् ॥१८०॥ मुस्तम् । बाहुलकाद् अश्रुः । ॥ चकिरम्योरुच्चो-

---

याम् । सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्' इति मेदिनी ॥—अर्तेः—॥ ऋ गतौ । 'द्रोघवाचस्ते निर्ऋथं सचन्ताम्' इति मन्त्रे निर्ऋथो हिंसेति वेदभाष्यम् ॥—निशीथ—॥ शीङ् स्वप्ने निपूर्वः, पा पाने गोपूर्वः, 'घुमास्था—' इतीत्वम् । गाङ् गतौ । अवपूर्वस्य धातोः ह्रस्वत्वम् । 'निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी । 'प्रतित्य चारुमध्वरम्' इति मन्त्रे गोपीथः सोमपानमिति वेदभाष्यम् । तीर्थमिति तु वृत्तिकारः ॥—गश्चोदि ॥ उदि उपपदे गै शब्दे इत्यस्मात् थक् ॥ —समि—॥ इण् गतावस्मात्समि उपपदे थक् । समिथशब्दः संग्रामपर्यायेषु वैदिकनिघण्टौ पठितः । 'श्रिये जातः' इति मन्त्रे समिथाः युद्धानीति वेदभाष्यम् । तच्च युक्तमेव । सम्यगेति जयार्थमत्रेति व्युत्पत्तेः । सपूर्वस्येणः क्विबाद्यन्तस्य लोकेऽपि युद्धार्थत्वदर्शनाच्च । उक्तं ह्यमरेण 'समित्याजिसमिद्युधः' इति ॥—तिथपृष्ठ—॥ तिज निशाने, पृषु सेचने, गु पुरीषोत्सर्गे, यु मिश्रणे, प्रुङ् गतौ । एते थक्प्रत्ययान्ता निपात्यन्ते । 'पृष्ठं तु चरमं तनोः' इत्यमरः । 'पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे' इति मेदिनी । स्तोत्रविशेषेऽपि पृष्ठम् । पृष्ठैः स्तुवत इत्यादौ तथा निर्णयात् ॥ —गूथमिति । निपातनाद्दीर्घः । एवं यूथेऽपि । 'यूथं तिर्यक्समूहेऽपि वृन्दमात्रेऽपि भाषितम्' इति विश्वः । 'यूथं तदग्रसरगर्वितकृष्णसारम्' इति रघुः ॥—प्रोथमिति । निपातनाद्गुणः । 'प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु' इति मेदिनी ॥—स्फायितञ्चि—॥ स्फायी वृद्धौ, तञ्चु सङ्कोचने, वञ्चु प्रलम्भने, शकॢ शक्तौ, क्षिप प्रेरणे, क्षुदिर् संपेषणे, सृप्लृ गतौ, तृप प्रीणने, दृप हर्षमोचनयोः, वदि अभिवादनस्तुत्योः, उन्दी क्लेदने, श्विता वर्णे, वृतु वर्तने, अज गतिक्षेपणयोः, णीञ् प्रापणे, पद गतौ, मदी हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे, भिदिर विदारणे, मदि स्तुतौ, चदि आह्लादने, दह भस्मीकरणे, दसु उपक्षेपे, दम्भु दम्भने, वस निवासे, वाशृ शब्दे, शीङ् स्वप्ने, हसे हसने, षिध गत्याम्, शुभ दीप्तौ द्वात्रिंशत् । इति । दशपाद्यां तु त्रयस्त्रिंशत् उक्ताः । दम्भिवहिवसीति पठित्वा वह प्रापणे ऊढोऽनड्वानित्युदाहरणात् । माधवोऽप्येवम् ॥ —स्फारमिति । 'नेड्वशि कृति' इति नेट् । वलि यलोपः । 'स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे' इति मेदिनी । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः । 'वक्रः स्याज्जटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः । 'शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः' इति मेदिनी । 'क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत्' इति मेदिनी ॥—तृप्रः पुरोडाश इति । 'न तृप्रा उरुव्यचसम्' इति मन्त्रे वेदभाष्यकारैरित्थं व्याख्यातं प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्च । दशपादीवृत्तौ तु तृप्रमाज्यं काष्ठं चेत्युक्तम् । तृप्रं दुःखमिति सुब्धातुवृत्तौ माधवः । हिमांशुरित्यादि हिमद्युतिरित्यन्तं शब्दार्णवः । दस्यति रोगान् क्षिपतीति । 'दस्रः खरेऽश्विनीसुते' इति मेदिनी । 'दस्रः खरे चाश्विनयोः' इति विश्वः ॥—शासिवसीति प्राप्तमपि नेति । एवं च 'अविन्द उस्रियाः' इति मन्त्रे षत्वाभावः सिद्धः । माधवस्तु वृत्तिग्रन्थानुरोधेन बाहुलकादिह षत्वं नेति व्याचष्टे । 'उस्रो ना च किरणे उस्रार्जुन्युपचित्रयोः' इति मेदिनी । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' इत्यमरः । 'वाश्रो ना दिवसे क्लीबं मन्दिरे च चतुष्पथे' इति मेदिनी । 'वाश्रो रासभपक्षिणोः' इति केचित् । माधवेन तु 'वाश्रेव विद्युन्मिमाति' इति मन्त्रे शब्दयुक्ता प्रस्तुतस्तना धेनुर्वाश्रेति व्याख्यातम् । 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु' इति मेदिनी ॥—मुस्तमिति । मुस खण्डने ॥—चकि—॥ चक तृप्तौ, रमु क्रीडा-

पधायाः ॥ १८१ ॥ चुक्रमम्लद्रव्यम् । रुक्रोऽरुणः । चौ कसेः ॥१८२॥ विकुसुमन्द्रः । अमितम्योर्दीर्घश्च ॥१८३॥ आम्रम् । ताम्रम् । निन्देर्नलोपश्च ॥ १८४ ॥ निद्रा । अर्देर्दीर्घश्च ॥ १८५॥ आर्द्रम् । शुचेर्दश्च॥१८६॥ शूद्रः । दुरीणो लोपश्च ॥१८७॥ दुःखेनेयते प्राप्यत इति दूरम् । कृतेश्छः क्रू च ॥१८८॥ कृच्छ्रम् । क्रूरः । रोदेर्णिलुक् च ॥१८९॥ रोदयतीति रुद्रः । बहुलमन्यत्रापि संज्ञाछन्दसोः ॥१९०॥ णिलुगित्येव । वान्ति पर्णशुपो वातास्ततः पर्णमुचोऽपरे । जोरी च ॥१९१॥ जीरोऽणुः । ज्यश्चेत्येके । सुसूधागृधिभ्यः क्रन् ॥१९२॥ सुरः । सूरः । धीरः । गृध्रः । शुसिचिमीनां दीर्घश्च ॥१९३॥ शूः

---

याम्, 'चुक्रस्त्वम्लेऽम्लवेतसे । चुक्री चाङ्गेरिकायां स्याद्वृक्षाम्ले चुक्रमिष्यते' इति विश्वः ॥—चौ कसेः ॥ कस गतौ । विपूर्वादस्माद्रक् स्यादुलं चोपधायाः ॥—अमि–॥ अम गत्यादिषु, तमु काङ्क्षायाम् । आभ्यां रक् स्यादुपधाया दीर्घश्च ॥—निन्देः–॥ णिदि कुत्सायाम् ॥—अर्देः ॥ अर्द गतौ । 'आर्द्रा नक्षत्रभेदे स्यात्स्त्रियां क्लिन्नेऽभिधेयवत्' इति मेदिनी ॥—शुचेः–॥ शुच शोके, अस्माद्रक् दश्चान्तादेशः धातोर्दीर्घश्च । शूद्रो वृषलः । अहहरे त्वा शूद्रेति श्रुतौ रूढेर्बाधाद् योग एव पुरस्कृतः । तथा चोत्तरतन्त्रे भगवता व्यासेन सूत्रितम् । शुगस्य तदनादरश्रवणादिति ॥—दुरीणो—॥ इण् गतावित्यस्मादुरुपपदे रक् स्याद्धातोर्लोपश्च 'रोरि' इति रेफस्य लोपे 'ढ्रलोपे–' इति दीर्घ. ॥—कृतेः–। कृती च्छेदन इत्यस्माद्रक् स्याच्छक्रू इत्येतावादेशौ च स्तः । छस्त्वन्त्यस्यादेशः क्रू त्वनेकाल्त्वात्सर्वस्यादेशः । 'कृच्छ्रमाख्यातमाभीले पापसंतापनादिनोः' इति विश्वमेदिन्यौ । 'स्यात्कष्ट कृच्छ्रमाभीलम्' इत्यमरः । 'क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवत्' इति विश्वः । 'नृशंसो घातुकः क्रूर. पापो धूर्तस्तु वञ्चकः' इत्यमरः ॥—रोदेः–॥ रुदिर् अश्रुविमोचने, ण्यन्तादस्माद्रक् णेश्च लुक् । 'णेरनिटि' इति लोपे तु 'पुगन्त–' इति गुणः स्यादिति णिल्कु चेत्युक्तम् ॥—रोदयतीति रुद्र इति । नन्वेवं 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति श्रुत्या सह विरोधोऽत्र स्यादिति चेद् । अत्राहुः । 'कर्तरि कृत्' इति सूत्रानुरोधेन शम्भुरित्यत्र शभावयतीत्यन्तर्भावितण्यर्थता यथा स्वीक्रियते तथा अरोदीदित्यत्राप्यन्तर्भावितण्यर्थतायां स्वीकृतायां रोदनं कारितवानित्यर्थलाभान्नास्ति श्रुतिविरोध. । नच देवैरग्नौ वाम वसु स्थापित तच्च धने । देवैर्याचितं चेदग्निस्तु रोदन कृतवानिति सोऽरोदीदित्यादिश्रुत्यर्थादिहान्तर्भावितण्यर्थकल्पन न संभवतीति श्रुतिविरोधस्त्वपरिहार्य एवेति वाच्यम् । देवैः स्थापित वामं वसु देवेभ्योऽग्निना न दत्तं चेद्देवा एव रोदन कृतवन्तः । अग्निस्तु तदिममदत्वा रोदनं कारितवानित्यर्थकल्पनायाः सभवान् । अथवा अग्नौ प्रयुज्यमानरुद्रशब्दस्य रोदितीति रुद्र इत्येवार्थोस्तु परन्तु ब्रह्मविष्णुरुद्रा इति व्यवह्रीयमाणो यो रुद्रस्तद्वाचकरुद्रशब्दस्य रोदेर्णिरित्युणादिसूत्रानुरोधेन रोदयतीति रुद्र इत्येवार्थकल्पनाया वाधकाभावात् श्रुतिविरोधोऽत्र नास्त्येवेति ॥—अन्यत्रापीति । धात्वन्तरात्प्रत्ययान्तरेऽपि णेर्लुगित्यर्थः । सञ्ज्ञायामुदाहरणं वृहयति वर्धयति प्रजाः ब्रह्मा । श सुख भावयति शम्भुरित्यादि । छन्दसि तु वृधु वृद्धौ 'वर्धन्तु त्वा सुष्टुतयः' वर्धयन्तीत्यर्थः । 'य इमा जजान' । जनी प्रादुर्भावे लिटि रूपम् । जनयामासेत्यर्थः । इह णलि परतः 'अत उपधायाः' इति वृद्धिर्भवत्येव 'जनिवध्योश्च' इति निषेधस्य चिणि ञिति णिति किति च स्वीकारात् । न च णिलोपे सति प्रत्ययान्तत्वात् कास्प्रत्ययादित्वाम् स्यादिति वाच्यम् । अमन्त्र इति पर्युदासादामोऽप्रसक्तेः । कास्यनेकाच इति वार्तिकेन तु आमृशङ्का दूरापास्तैव, लिटि णिलोपे सत्यनेकाच्त्वाभावात् । ननु णलि 'णेरनिटि' इत्यनिडादावार्धधातुके णिलोपे जजानेति रूप सिद्धमिति किमनेन लुक्युदाहरणेनेति चेन्मैवम् । णिलोपे सति 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति णौ मित्त्वे 'मिता ह्रस्व.' स्यात् प्रत्ययलक्षणन्यायेन णिपरत्वसंभवात् ततश्च जजनेति स्याल्लुकि सति तु प्रत्ययलक्षणन्यायो न प्रवर्तत इति मित्त्वाभावादिष्टं सिध्यति । बाहुलकादसंज्ञाछन्दसोरपि क्वचिद्भवतीत्याशयनोदाहरति ॥—वान्तीत्यादि । पर्णानि शोषयन्तीति पर्णशुषः । पर्णानि मोचयन्तीति पर्णमुचः ॥—जोरी च ॥ जु गतौ सौत्रोऽस्माद्रक् ईकारश्चान्तादेशः । 'जीरः खड्गे वणिग्द्रव्ये' इति विश्वः । 'जीरस्तु जरणे खड्गे' इति मेदिनी ॥—ज्यश्चेति । ज्या वयोहानौ । अस्माद्रक् 'ग्रहिज्या–' इति संप्रसारणं पूर्वरूपम् । 'हलः' इति दीर्घः ॥—एके इति । मुख्या इत्यर्थः । तथा च 'न धातुलोप–' इति सूत्रे जीवेरदानुरित्यस्य प्रत्याख्यानार्थे नैतज्जीवे रूपं किं तु रकि ज्यः सम्प्रसारणमिति भाष्ये उक्तम् ॥—सुसूधा–॥ षुञ् अभिषवे, षूङ् प्राणिगर्भविमोचने, डुधाञ् धारणादौ, गृधु अभिकाङ्क्षायाम् । 'सुरा चषकमद्ययोः । पुलिङ्गस्त्रिदिवेशे स्यात्' इति मेदिनी । 'सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित्' इति विश्वः । सुवति प्रेरयति कर्मणि लोकमिति सूरः सूर्यः । 'सूरसूर्यार्यमादित्यः' इत्यमरः । 'धीरो धैर्यान्विते स्वैरे बुधं क्लीबं तु कुङ्कुमे । धियां श्रवणतुल्यायाम्' इति मेदिनी । 'गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके' इति च ॥—शुसिचि–॥ शु गतौ, षिञ् बन्धने, चिञ् चयने, डुमिञ् प्रक्षेपणे, एभ्यः क्रन् एषां दीर्घत्वं च । 'शूरः स्याद्यादवे भटे' इति मेदिनी । 'शूरश्चारुभटे सूर्ये' इति विश्वहेमचन्द्रौ । 'सीरोऽर्कहलयोः पुंसि चीरी झिल्ल्यां नपुंसके । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः' इति मेदिनी । 'चीरं तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च । चीरी

सौत्रः । घूरः । सीरम् । चीरम् । मीरः समुद्रः । **वाविन्धेः ॥ १९४ ॥** वीध्रं विमलम् । **वृधिवपिभ्यां रन् ॥१९५॥** वर्ध्रं चर्म । वप्रः प्राकारः । **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवप्रेरामालाः ॥१९६॥** रप्रान्ता ऊनविंशतिः । निपातनाद्गुणाभावः । ऋज्रो नायकः । इदि इन्द्रः । अङ्गेर्नलोपः । अग्रम् । वज्रोऽस्त्री हीरके पवौ । डुवप् उपधाया इत्वम् । विप्रः । कुम्बिचुम्ब्योर्नलोपः । कुब्रमरण्यम् । चुब्रं मुखम् । क्षुर विलेखने रेफलोपः । अगुणः । क्षुरः । खुर छेदने रलोपो गुणाभावश्च । खुरः । भन्देर्नलोपः । भद्रम् । उच समवाये । चस्य गः । उग्रः । ञिभी भेरी । पक्षे लः । भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः । शुक्रः । पक्षे लः । शुक्लः । गुङ वृद्धिः । गौरोऽरुणे सिते पीते । वन संभक्तौ । वप्रो विभागी । इणो गुणाभावः । इरा मद्ये च वारिणि । मा माने । माला । **समि कस उकन् ॥१९७॥** कस गतौ । सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनः अस्थिरश्च । **पचिनशोर्णुकन् कनुमौ च ॥१९८॥** पचेः कः । पाकुकः सूपकारः । नशेर्नुम् । नंशुकः । **भियः क्रुकन् ॥१९९॥** भीरुकः । **क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥२००॥** रजकः । इक्षुकुट्टकः । चरकः । चष भक्षणे चषकः । शुनकः । भषकः । **रमे रश्च लो वा ॥२०१॥** रमको विलासी । लमकः । **जहातेर्द्वे च ॥२०२॥** जहकस्त्यागी कालश्च । **ध्मो धम च ॥२०३॥** धमकः कर्मकारः । **हनो वध च ॥२०४॥** वधकः । बहुलमन्यत्रापि । कुह विस्मापने । कुहकः । कृतकम् । **कृषेर्वृद्धिश्चोदीचाम् ॥२०५॥** कार्षकः । कृषकः । **उदकं च ॥२०६॥** प्रपञ्चार्थम् । **वृश्चिकृष्योः किकन् ॥२०७॥** वृश्चिकः । कृषिकः । **प्राडि**

---

कृच्छ्राटिकाश्लिष्ट्योः' इति विश्वः ॥—**वाविन्धेः** ॥ ञिइन्धी दीप्तौ । विपूर्वादस्मात् क्रन 'अनिदिताम्–' इति नलोपः । 'वीध्रं तु विमलात्मकम्' इति विशेष्यनिघ्नेऽमरः ॥—**वृधि–**॥ वृधु वृद्धौ, डुवप् बीजसन्ताने । 'वप्र पितरि केदारे वप्रः प्राकाररोधसोः' इति धरणिरन्तिदेवौ । 'वप्र स्नाते पुमानस्त्री वेणुक्षेत्रचये तटे' इति मेदिनी ॥—**ऋज्रेन्द्राग्र–**॥ ऋजु गतिस्थानादिषु, इदि परमैश्वर्ये, अगि गतौ, वज गतौ, डुवप् बीजसन्ताने, कुबि आच्छादने, चुबि वक्त्रसंयोगे, भदि कल्याणे, शुच शोके, गुङ् अव्यक्ते शब्दे, इण् गतौ ॥—**नायक** इति । 'ऋज्राश्वः पृष्टिभिरम्बरीष' इति मन्त्रे ऋज्रा गतिमन्तोऽश्वा यस्य स ऋज्राश्व इति वेदभाष्यम् । 'इन्द्र शचीपतावन्तरात्मन्यादित्ययोगयोः' इति विश्वः । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते स्यात्पुनपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' इति मेदिनी । क्षुरो लोमच्छेदकः । 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वमेदिन्यौ । 'खुरः कोलदले शफे' इति मेदिनी । 'भद्रः शिवे खञ्जरीटे वृषमेरुकदम्बके । करिजातिविशेषे ना क्लीब मङ्गलमुस्तयोः' इति च । 'उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिपूत्कटे । क्लीबवत्साक्षुद्रयोः' इति मेदिनी ॥—**भेरी**ति । गौरादित्वान्ङीष् । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । 'भेलः प्लवे भीलुके च निर्बुद्धिमुनिभेदयोः' इति विश्वः । 'भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यवत्' इति । शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीब शुक्लो योगान्तरे सिते । नपुंसकं तु रजते, इति च । 'गौरः पीतेऽरुणे श्वेते विशुद्धेऽप्यभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे । गौरी त्वसजातरजःकन्याशंकरभार्ययोः । रोचने रजनी पिङ्गाप्रियगुवसुधासु च । आपगाया विशेषेऽपि यादसां पतियोषिति' इति च मेदिनी । 'नदीभेदे च गौरी स्याद् वरुणस्य च योषिति' इति विश्वः । 'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते । सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः' इति ब्रह्माण्डपुराणे । एतेन गौरः शुच्याचारः इत्यादि भाष्य व्याख्यातम् । 'इराभूवाक्सुराप्सु स्यात्' इत्यमरः ॥—**मालेति** । प्रत्ययरेफस्य लत्वम् । 'माल क्षेत्रे स्त्रिया पृक्काम्रजोर्जोत्यन्तरे पुमान्' इति मेदिनी । 'मालं क्षेत्रे जिने मालो माला पुष्पादिदामनि' इति विश्वः । 'मालमुन्नतभूतलम्' इत्युत्पलः । 'क्षेत्रमारुह्य मालम्' इति मेघदूतः । मणिपूर्वोऽयमर्थान्तरे रूढः । 'मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे' इति विश्वः ॥—**समि कस–**॥ 'संकसुकोऽस्थिरः' इति विशेष्यनिघ्नेऽमरः ॥—**पचिनशोः**—॥ डुपचष् पाके, णश अदर्शने । आभ्यां णुकन् प्रत्ययः स्यात् । णकारो वृद्ध्यर्थः । अनयोर्यथाक्रमं कादेशनुमागमौ च भवतः ॥—**भियः**–॥ ञिभी भये । 'अधीरे कातरस्त्रस्तो भीरुभीरुकभीलुकाः' इत्यमरः ॥—**क्वुन्** ॥ शिल्पिन्यभिधेये संज्ञायां गम्यमानायां च क्वुन् स्यादपूर्वस्य निरुपपदस्य च अपिशब्दात्सोपपदस्य, पञ्चम्यर्थे षष्ठी । यद्वा अर्थद्वारकसंबन्धे षष्ठी, प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात् । एवं च निरुपपदप्रकृत्यर्थनिरूपितकर्तृकारके क्वुनित्यर्थः फलितः । शिल्पिनि तावत् । रञ्ज रागे । 'रजको धावके शुके' इति विश्वः । 'रजकौ धावकशुकौ' इति हेमचन्द्रः । कुट्ट च्छेदने इक्षून् कुट्टयति गाण्डिकः । चर गतिभक्षणयोः । संज्ञायां तु 'चषकोऽस्त्री पानपात्रम्' । शुन गतौ, भष भर्त्सने, शुनकः भषकः श्वा ॥—**लमक** इति । ऋषिविशेषः ॥—**जहातेः**—॥ ओहाक् त्यागे ॥—**ध्मो धम च** ॥ ध्मा शब्दाग्निसंयोगयोः । कुहको दाम्भिकः ॥—**कृतकमिति** । कृती छेदने ॥—**कृषेः**—॥ कृष विलेखने । अस्मात्क्वुन् कर्षकः । कृषीवलः कृषकः स एव । 'कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत्' इति मेदिनी ॥—**उदकं च** ॥ उन्दी क्लेदने अस्मात्क्वुन् । ननु 'क्वुन् शिल्पि–' इत्यादिना गतार्थमित्याशङ्क्याह ॥—**प्रपञ्चार्थमिति** ॥—**वृश्चिकृष्योः** ॥ ओव्रश्चू छेदने, कृष विलेखने ॥—**प्राडि–**॥ पण व्यवहारे

पणिकवधः ॥२०८॥ प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी । ॥ मुषेर्दीर्घश्च ॥२०९॥ मूषिक आखुः । ॥ स्यमेः संप्रसारणं च ॥२१०॥ चाद्दीर्घः । सीमिको वृक्षभेदः । ॥ क्रिय इकन् ॥२११॥ क्रयिकः क्रेता । ॥ आङि पणिपनिपतिखनिभ्यः ॥२१२॥ आपणिकः । आपनिकः इन्द्रनीलः किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषिको वराहश्च । ॥ श्यास्त्याहृञविभ्य इनच् ॥२१३॥ श्येनः स्त्येनः । हरिणः अविनोऽध्वर्युः । ॥ वृजेः किच्च ॥२१४॥ वृजिनम् । ॥ अजेरज च ॥२१५॥ वीभावबाधनार्थम् । अजिनम् । ॥ बहुलमन्यत्रापि ॥२१६॥ कठिनम् । नलिनम् । मलिनम् । कुण्डिनम् । ॥ द्यतेः ॥२१७॥ यत्परुषि दिनम् । दिवसोऽपि दिनम् । ॥ द्रुदक्षिभ्यामिनन् ॥२१८॥ द्रविणम् । दक्षिणः । दक्षिणा । ॥ अर्तेः किदिच्च ॥२१९॥ इरिणं शून्यम् । ॥ वेपितुह्योर्ह्रस्वश्च ॥२२०॥ विपिनम् । तुहिनम् । ॥ तलिपुलिभ्यां च ॥२२१॥ तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु । पुलिनम् । ॥ गर्वेरत उच्च ॥२२२॥ गौरादित्वात् ङीष् । गुर्विणी । गर्भिणी । ॥ रुहेश्च ॥२२३॥ रोहिणः । ॥ महेरिनण् च ॥२२४॥ चादिनन् । माहिनम् । महिनं राज्यम् । ॥ क्विब्वचि-प्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च ॥२२५॥ वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति स्रुर्यज्ञोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः कामरूपी कीटश्च । जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम् । ॥ आप्नोतेर्ह्रस्वश्च ॥२२६॥ आपः । अपः । अद्भिः । अद्भ्यः । ॥ परौ व्रजेः षश्च पदान्ते ॥२२७॥ व्रजेः क्विप्दीर्घौ स्तः पदान्ते तु

कष शिषेति दण्डके हिंसार्थकः ॥ मुष स्तेये अस्मात्किकन् धातोर्दीर्घश्च ॥—**स्यमेः** ॥ स्यमु शब्दे ॥—**क्रियः** ॥ डुक्रीञ् द्रव्यविनिमये ॥—**आङि पणि-**॥ पण व्यवहारे स्तुतौ च, पन च, पतॢ गतौ, खनु अवदारणे, एभ्य आङि उपपदे इकन् स्यात् ॥—**आपणिक** इति । नन्वत्रैव प्रपूर्वे आङि प्रापणिक इति सिद्धौ आङि पणीत्यत्र पणिग्रहणं प्रपञ्चार्थमित्युज्ज्वलदत्तः । उपसर्गान्तरनिवृत्त्यर्थमिति तु मनोरमायाम् । आपणिकशब्दोऽयं नित्स्वरेणाद्युदात्तः । आपणेन व्यवहरतीत्यर्थे ठकि तु कित इत्यन्तोदात्तः ॥—**श्यास्त्या-**॥ श्यैङ् गतौ, स्त्यैष्ट्यै शब्दसघातयोः, हृञ् हरणे, अव रक्षणादौ । 'श्येनः पत्रिणि पाण्डुरे' इति मेदिनी । स्त्येनश्चौरः । स्तेन चौर्ये इति चौरादिकात्पचाद्यचि तु स्तेन इति निर्यकारोऽपि । केचित्तु 'स्तायूनां पतये नमः' इत्यादि प्रयोगोपष्टम्भेन निर्यकारस्यापि ष्टैधातोर्माधवादिभिर्भ्वादिषु स्वीकृतत्वात्प्रकृतसूत्रेऽपि ष्टैधातुमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः । 'हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत् । हरिणी हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च' इति मेदिनी ॥—**वृजेः-**॥ वृजी वर्जने । वृजिन पापम् । 'वृजिन कल्मषे क्लीबं क्लेशे ना कुटिलेऽन्यवत्' इति मेदिनी ॥—**अजेः**—॥ अज गतिक्षेपणयोरस्मादिनच् । अजेरजादेशविधान व्यर्थमित्यत आह ॥—**वीभावबाधनार्थमि**ति । 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः ॥—**बहुलमन्यत्रापि** ॥ अन्यस्मादपीत्यर्थः । कठ कृच्छ्रजीवने, नल गहने, मल मल्ल धारणे, कुडि दाहे, दो अवखण्डने । 'कठिनमपि निष्ठुरे स्यात् स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम् । कठिनी घटिकायामपि कठिना गुडशर्करायां च' इति मेदिनी । 'मलिन दूषिते कृष्णे ऋतुमत्यां तु योषिति' इति मेदिनी ॥ —**कुण्डिनमि**ति । 'नगरं कुण्डिनमण्डजो ययौ' इति श्रीहर्षः । कुण्डिन ऋषिः । तस्यापत्य कौण्डिन्यः ॥—**यत्परुषि** ॥ पर्वणि दिन खण्डित तद्देवानामिति तैत्तिरीयश्रुत्यर्थः ॥—**द्रुदक्षि-**॥ द्रु गतौ, दक्ष वृद्धौ । 'द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे' इति मेदिनी । 'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवृत्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्' इति च । 'दक्षिणः सरलोदारपरच्छन्दानुवृत्तिषु । वाच्यवद्दक्षिणा वाचि यज्ञदानप्रतिष्ठयोः' इति विश्वः ॥—**अर्तेः**—॥ ऋ गतौ, अस्मादिनन् कित्स्याद् इकारश्च धातोः रपरत्वम् । 'इरिणं शून्यमूषरम्' इत्यमरः । 'इरिणं तूषरे शून्येऽपि' इति मेदिनी ॥ —**वेपि-**॥ टुवेपृ कम्पने, तुहिर् अर्दने, आभ्यामिनन् ह्रस्वश्च धातोः । 'अटव्यरण्य विपिनम्' इत्यमरः ॥—**तुहिनमि**ति । लघूपधगुणे कृते ह्रस्वः ॥—**तलि**—॥ तल प्रतिष्ठायाम् । पुल महत्त्वे ॥—**गर्वेः**-॥ गर्व मोचने, अस्मादिनन् । अकारस्य उत् ॥ —**रुहेश्च** ॥ रुह बीजजन्मनि प्रादुर्भावे ॥—**रोहिण** इति । प्रज्ञादित्वादणि रौहिणश्चन्दनतरुः ॥—**महेः**—॥ मह पूजायाम् । 'कुतस्त्वमिन्द्रमाहिनः सन्' इति मन्त्रे माहिनो महनीयः पूजनीय इति वेदभाष्यम् ॥—**क्विब्वचि**—॥ वच परिभाषणे, प्रच्छ ज्ञीप्सायाम्, श्रिञ् सेवायाम्, स्रु गतौ, द्रुइ गतौ, प्रुङ् गतौ, जु गतौ सौत्रः ॥—**वागि**ति । 'वचिस्वपि-' इति संप्रसारणाभावः । पृच्छन्तीति प्राट् । 'ग्रहिज्या-' इति संप्रसारणाभावः । 'च्छ्वोः शूट्' इति शः । 'व्रश्च' इति षत्वं जश्त्वचर्त्वे, प्राशौ प्राशः ॥—**श्रीरि**ति । 'कृदिकारात्-' इति ङीष् न भवति कृत्प्रत्ययस्य य इकार इति व्याख्यानात् । कृदन्तं यदिकारान्तमिति पक्षे तु यद्यपि ङीष्प्राप्तिरस्ति तथापि वारग्रहणसामर्थ्येन केवलस्येकारस्य ग्रहणादिकारान्तपक्षो दुर्बल इत्याहुः । दुर्घटस्तु ङीषि श्रीमित्यपि रक्षितं इच्छतीत्याह 'श्री वेषरचना शोभा भारती सरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तिविधोपकरणेषु च । विभूतौ च मतौ च स्त्री' इति मेदिनी । जूराकाशे इत्यादिमूलोदाहृतमिति मेदिनी ॥—**आप्नोतेः**—॥ आपॢ व्याप्तौ, अस्मात्क्विप् धातोर्ह्रस्वश्च । 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः ॥—**परौ**—॥ व्रज गतौ ॥—**हुवः** ॥ हु दानादनयोः

**च्च । परिव्राट् । परिव्राजौ । हुवः श्लुवच्च ॥२२८॥ जुहूः । स्रुवः कः ॥२२९॥ स्रुवः । चिक्च ॥२३०॥ इकार उच्चारणार्थः । क इत्कृत्यम् । स्रुक् । स्रुचं च स्रुचश्च संमृड्ढि । तनोतेरनश्च वः ॥२३१॥ तनोतेर्डिक् प्रत्ययः । अनो वकारादेशश्च । त्वक् । ग्लानुदिभ्यां डौः ॥२३२॥ ग्लौः । नौः । च्विरव्ययम् ॥२३३॥ डौरित्येव । ग्लौकरोति । कृन्मेजन्त इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति । रातेर्डैः ॥२३४॥ राः । रायौ । रायः । गमेर्डोः ॥२३५॥ गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभ्यामपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु । बाहुलकाद् द्युतेरपि डोः । द्यौः स्त्री स्वर्गान्तरिक्षयोः । भ्रमेश्च डूः ॥२३६॥ भ्रूः । चाद्गमेः । अग्रेगूः । दमेर्डोसिः ॥२३७॥ दोः । दोषौ । पणेरिज्यादेश्च वः ॥२३८॥ वणिक् । स्वार्थेऽण् । नैगमो वाणिजो वणिक् । वशेः कित् ॥२३९॥ उशिगग्नौ घृतेऽपि च । भृञ ऊच्च ॥२४०॥ भूरिक् भूमिः । जसिसहोरुरिन् ॥२४१॥ जसुरिर्वज्रम् । सहुरिरादित्यः पृथिवी च । सुयुरुवृञो युच् ॥२४२॥ सवनश्चन्द्रमाः । यवनः । रवणः । कोकिलः । वरणः । अशो रश च ॥२४३॥ अश्नोतेर्युच् स्यात् रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् । उन्देर्नलोपश्च ॥२४४॥ ओदनः । गमेर्गश्च ॥२४५॥ गमेर्युच् स्याद्गश्चादेशः । गगनम् । बहुलमन्यत्रापि युच् स्यात् । स्यन्दनः । रोचना ।**

रस्मात्क्विप् धातोश्च दीर्घः श्लुवद्भावाद्द्विर्वचनम् ॥—**स्रुवः कः** ॥ स्रु गतौ । स्रुवो यज्ञपात्रविशेषः । 'अय स्रुवो अभिजिघर्ति' 'स्रुवेण पर्वणौ जुहोति' इत्यादौ प्रसिद्धः ॥—**चिक्च** ॥ स्रुव इत्येव ॥ योगविभाग उत्तरार्थः ॥—**क इदिति** । तेन स्रुक् स्रुचौ स्रुच इत्यादौ गुणो न ॥ तनु विस्तारे, व इति सघातग्रहणं तदाह—**शब्दादेश** इति । 'स्त्रियां तु त्वगसृग्धरा' इत्यमरः ॥—**ग्लानुदि**–॥ ग्लै हर्षक्षये, णुद प्रेरणे । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । 'स्त्रियां नौस्तरणिस्तरिः' इति च ॥—**ग्लौकरोती**ति । अग्लौः ग्लौः सपद्यते तथा करोतीत्यर्थः । अव्ययत्वात्सुपो लुक् ॥—**च्व्यन्त एवे**ति । तेन ग्लौर्नौर्गौरित्यादीनां नाव्ययत्वमिति भावः ॥—**रातेः**–॥ रा दाने ॥—**रा** इति । 'रायो हलि' इत्यात्वम् । 'रा स्मृतः पावके तीक्ष्णे राः पुंसि स्वर्णवित्तयोः' इति मेदिनी । 'रास्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने' इति हेमचन्द्रः ॥ —**गमेः**–। गम्लृ गतौ । 'गोतो णित्' गौः । केशवोक्तमाह—**गौर्नादित्य** इत्यादि । 'गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रे पुमान् भवेत् । अर्जुने नेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इत्यमरः ॥—**द्युतेरपी**ति । द्युत दीप्तौ, द्योतन्ते देवा अस्यामिति द्यौः ॥—**भ्रमेश्च**–॥ भ्रमु अनवस्थाने, गम्लृ गतौ । अग्रेगूः सेवकः ॥—**दमेः**–॥ दमु उपशमे डित्वाट्टिलोपः ॥ —**दोः** । दोषन्तस्येति श्रीहर्षप्रयोगात्पुंस्त्वम् । ककुद्दोषणी इति भाष्यप्रयोगान्नपुंसकत्वम् । 'दोर्दोषा च भुजो बाहुः' इति धनंजयकोशात्स्त्रीलिङ्गोऽप्ययमित्यादि प्रागेव प्रपञ्चितम् ॥—**पणेः**–॥ पण व्यवहारे स्तुतौ च । अमरकोशमाह ॥—**नैगम** इत्यादि ॥—**वशेः**–॥ वश कान्तौ, अस्मादिजिः कित्स्यात् । 'ग्रहिज्या–' इति संप्रसारणम् ॥—**भृञः**–॥ भृञ् भरणे, अस्मादिजिः कित्स्यात् धातोरूकारान्तादेशश्च ॥—**जसि**—॥ जसु मोक्षणे । षह मर्षणे । 'जसुरये स्तये पिप्यतुर्गाम्' इति मन्त्रे जसुरये श्रान्तायेति 'नीचायमानं जसुरिं न श्येनम्' इत्यत्र जसुरिं क्षुधित श्येन न श्येनपक्षिणमिवेति । 'उतस्य वाजी सहुरिर्ऋतौ' इति मन्त्रे सहुरिः सहनशील इति च वेदभाष्यम् ॥—**सुयु**–॥ षुञ् अभिषवे, यु मिश्रणे, रु शब्दे, वृञ् वरणे, 'सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति मेदिनी । यवनो म्लेच्छविशेषः । 'रवणः शब्दने खरे' इति च मेदिनी । रवणः कोकिल इत्येके । वरणो वृक्षभेदः । टापि तु वरणा नदी । 'वरणस्तिक्तशाकेऽपि प्राकारे वरण वृतौ' इति विश्वः । 'वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः' इत्यमरः ॥—**अशेः**–॥ अशू व्याप्तौ ॥—**जिह्वावाची त्वि**ति । रस आस्वादने चौरादिकः । ततो नन्द्यादित्वात् ल्युः । 'ण्यासश्रन्थ–' इति युज्वा । रसत्यास्वादयतीति रसना । 'रसन स्वदने ध्वनौ । जिह्वायां तु न पुंसि स्याद्रास्नाया रसना स्त्रियाम्' इति मेदिनी । काञ्चीवाची तालव्यशकारवान् जिह्वावाची तु दन्त्यसकारवानित्येषा व्यवस्था भूरिप्रयोगाभिप्रायेणोक्ता । वस्तुतस्तु तालव्यशकारवान् रशनाशब्दोऽपि काञ्च्या जिह्वायां च । तथा दन्त्यसकारवान् रसनाशब्दोऽप्यर्थद्वये बोध्यः । तथा हि 'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः' । 'रशनापि च जिह्वायाम्' इति विश्वकोशाज्जिह्वायामुभयं साधु । 'रसनं निःस्वने स्वादे रसना काञ्चिजिह्वयोः' इत्यजयधरणिकोशाभ्या काञ्च्यामप्युभयं साधु । एवं च 'अशेरश च' इति सूत्रे अशू व्याप्तौ, अश भोजने, इति धातुद्वयमपि ग्राह्यम् । रस आस्वादने, रस शब्दे, इति धातुभ्यां तु 'बहुलमन्यत्रापि' इत्यनुपदमेव वक्ष्यमाणेन युच् । तेन सर्वत्रावयवार्थानुगमोऽपि सूपपाद इत्याहुः ॥—**उन्देः**–॥ उन्दी क्लेदने अस्माद्युच् । 'ओदन न स्त्रियां भुक्तेऽबलायामोदने स्त्रियाम्' इति मेदिनी ॥—**गमेः**–॥ गम्लृ गतौ । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः ॥—**बहुलम्** ॥ स्यन्दू प्रस्रवणे, रुच दीप्तौ । 'स्यन्दनं तु श्रुतौ नीरे तिनिशे ना रथे स्त्रियाम्' इति मेदिनी । 'रोचना रक्तकह्लारे गोपित्तवरयोषितोः । रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु' इति च । चदि आह्लादे । 'चन्दनं मलयोद्भवे । चन्दनः कपिभेदे स्यान्नदीभेदे तु चन्दनी' इति विश्वः । 'चन्दनी तु नदीभिदि । चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम्' इति मेदिनी । भद्रकाली ओषधिविशेषः । 'भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रियाम्' इति मेदिनी । असु क्षेपणे । 'असनं क्षेपणे क्लीबे पुंसि स्याज्जीवकद्रुमे' इति मेदिनी । अत सातत्यगमने राजपूर्वः ।

**रञ्जेः क्युन् ॥२४६॥** रजनम् । **भूसूधूभ्रस्जिभ्यश्छन्दसि ॥२४७॥** भुवनम् । सुवन आदित्यः । धुवनो वह्निः । निधुवनं सुरतम् । भृज्जनमम्बरीषम् । **कृपृवृजिमन्दिनिधाञः क्युः ॥२४८॥** किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् । **धृषेर्धिष् च संज्ञायाम् ॥२४९॥** धिषणो गुरुः धिषणा धीः । **वर्तमाने पृषद्बृहन्महज्जगच्छतृवत् ॥२५०॥** अतिप्रत्ययान्ताः । पृषु सेचने गुणाभावः पृषन्ति । बृहत् महान् । गमेर्जगादेशः । जगत् । **संश्चत्तृपद्वेहत् ॥२५१॥** एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेः सुट् इकारलोपः । संश्चत् कुहकः । तृपच्छत्रम् । विपूर्वाद्धन्तेष्टिलोपः । इत ए च । वेहद्गर्भोपघातिनी । **छन्दस्यसानच् शुजृभ्याम् ॥२५२॥** शवसानः पन्थाः । जरसानः पुरुषः । **ऋञ्जिवृधिमन्दिसहिभ्यः कित् ॥२५३॥** ऋञ्जसानो मेघः । वृधसानः पुरुषः । मन्दसानोऽग्निर्जीवश्च । सहसानो यज्ञो मयूरश्च । **अर्तेर्गुणः शुट् च ॥२५४॥** अर्शसानोऽग्निः । **सम्यानच् स्तुवः ॥२५५॥** संस्तवानो वाग्मी । **युधिबुधिदृशिभ्यः किच्च ॥२५६॥** युधानः । बुधानः । दृशानो लोकपालकः । **हुर्छेः सनो लुक् छलोपश्च ॥२५७॥** जुहुराणश्चन्द्रमाः । **श्वि-**

---

'राजातनः क्षीरिकायां प्रियाले किंशुकेऽपि च' इति विश्वमेदिन्यौ ॥ एवमन्येऽपि द्रष्टव्याः ॥—**रञ्जेः**–॥ रञ्ज रागे ल्युटि तु रञ्जनम् । 'रञ्जनो रागजनने रञ्जनं रक्तचन्दने' इति मेदिनी । बाहुलकात्कृपेरपि क्युन् । 'कृपो रो लः' इति प्राप्तलत्वाभावश्च । कृपणः ॥—**भूसू**—॥ भू सत्तायां, षूङ् प्राणिप्रसवे, धूञ् कम्पने, भ्रस्ज पाके, बहुलवचनाद्भाषायामपि क्वचित् । 'भुवनं विष्टपेऽपि स्यात्सलिले गगने जने' इति मेदिनी । 'विष्टपं भुवनं जगत्' इत्यमरः ॥—**भृज्जनमिति** । 'ग्रहिज्या–' इति संप्रसारणम् । सस्य जश्त्वेन दः दस्य श्चुत्वेन जः । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः ॥—**कृपृ**–॥ कॄ विक्षेपे, पॄ पालनादौ, वृजी वर्जने, मदि स्तुत्यादौ, डुधाञ् धारणपोषणयोः । 'निधनं स्यात्कुले नाशे' इति मेदिनी । 'निधनं कुलनाशयोः' इति हेमचन्द्रः ॥—**धृषेः**–॥ ञिधृषा प्रागल्भ्ये अस्मात्कुः धिषादेशश्च धातोः । 'धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति' इति मेदिनी । 'गीष्पतिर्धिषणो गुरुः' इत्यमरः ॥—**वर्तमाने**–॥—**शतृवच्चेति** । तथा च 'उगिदचाम्–' इति नुमि महान् । स्त्रियां तु 'उगितश्च' इति ङीपि महतीत्यादि सिध्यतीति भावः । ननु पृषन्महदादयः 'लटः शतृशानचौ–' इति शतृप्रत्ययान्ता एव भवन्तु ततश्च वर्तमान इति शतृवच्चेति न कर्तव्यमिति महदेव लाघवमिति चेदत्राहुः । शतृप्रत्ययान्तत्वे तु 'कर्तरि शप्' इति शप्प्रत्यये महतीत्यादौ 'आच्छीनद्योः–' इति नुम् स्यान्महानित्यादौ तु 'तास्यनुदात्तेन्ङिददुपदेशात्' इति लसार्वधातुकस्वरः स्यादतिप्रत्ययान्तत्वे तु तस्यातिप्रत्ययस्यार्धधातुकत्वाभ्युपगमेन शबभावान्नोक्तदोष इत्याशयेनातिप्रत्ययान्तत्वेन निपातनं स्वीकृतमिति । बृह वृद्धौ, मह पूजायाम्, गम्लृ गतौ ॥—**पृषन्तीति** । बिन्दुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनमुदाहृतम् । 'पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी । 'बृहती क्षुद्रवार्ताक्या कण्टकार्यां च वाचि च । वारिधान्यां महत्या च छन्दोवसनभेदयोः' इति विश्वः । शतृवद्भावात् 'उगिदचाम्–' इति नुम् । बृहन् विपुलः । 'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवत्' इति मेदिनी । महती नारदवीणा । 'विश्वावसोस्तु बृहती तुम्बरोस्तु कलावती । महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी' इति वैजयन्ती । 'अवेक्षमाणं महतीं मुहुर्मुहुः' इति माघः । 'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च' इति मेदिनी । तत्र वायुवाचिनः पुलिङ्गस्य शतृवद्भावादुगित्त्वेन नुम् । जगन् जगन्तौ जगन्त इत्यादि । 'द्युतिगमिजुहोतीनां द्वे च' इति व्युत्पादितस्य तु नुमभावाज्जगत् जगतौ जगत इत्यादीति बोध्यम् ॥—**संश्चत्तृ**–॥ चिञ् चयने, तृप प्रीणने, हन हिंसागत्योः ॥—**निपात्यन्त** इति । अतिप्रत्ययान्ता इति शेषः ॥—**निवृत्त्यर्थमिति** । एवं च सश्चदित्यत्र 'उगिदचाम्–' इति नुमः शङ्कैव नास्ति । वेहदित्यत्र 'उगितश्च' इति ङीप् नेति भावः ॥—**संचिनोतेरिति** । सुभूतिचन्द्रस्तु सपूर्वाच्छ्यतेः सश्चदित्याह ॥—**तृपच्छत्रमिति** । चन्द्रमा इत्यन्ये । विहन्ति गर्भमिति वेहत् ॥—**इत ए चेति** । विशब्दसबन्धिन इकारस्य एकार इत्यर्थः । गौरित्यनुवृत्तौ 'वेहद् गर्भोपघातिनी' इत्यमरः ॥—**छन्दसि**–॥ शु गतौ, जॄष् वयोहानौ ॥—**पन्था** इति । 'प्रमन्महे' इत्यादिमन्त्रद्वये शवसानशब्दो गन्तृपरतया व्याख्यातः ॥—**ऋञ्जि**–॥ ऋजि भर्जने, वृधु वृद्धौ, मदि स्तुत्यादौ, षह मर्षणे, एभ्यो असानच् कित्स्यात् ॥—**ऋञ्जसानो मेघ** इति । ऋजेरिदित्त्वान्नुम् । इदित्त्वादेव नलोपाभावः । एवं चायं मदिसही च त्रयोऽपि पूर्वसूत्र एव पठितुं शक्याः कित्त्वं तु वृधुधातावेवोपयुज्यते । उत्तरसूत्रेऽपि गुणग्रहणं सुत्यजम् । अर्तेः सुट् च वृधेः किदित्युक्तौ सर्वसामञ्जस्यादित्याहुः । 'ऋञ्जसानः पुरुवार उक्थैः' 'अस्मिन् यज्ञे मन्दसानो वृषण्वसू–' इत्यादिमन्त्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः ॥—**अर्तेः**–॥ ऋ गतौ धातोर्गुणः प्रत्ययस्य सुडागमः । 'आसाविषदर्शसानाय' इति मन्त्रस्य भाष्ये तु अर्शसानाय शत्रूणां हिंसित्रे इति व्याख्यातम् ॥—**समि**–॥ ष्टुञ् स्तुतौ आस्मात्सम्युपपदे आनच् ॥—**युधि**–॥ युध संप्रहारे । युधानो रिपुः । बुधिर् बोधने । बुधान आचार्यः । दृशिर् प्रेक्षणे । बाहुलकात्कृपेरप्यानच् । कृपाणः खड्गः । 'कृपाणेन कथंकारं कृपणः सह गण्यते । परेषां दानसमये यः स्वकोशं विमुञ्चति' ॥—**हुर्छेः**–॥ हुर्छा कौटिल्ये, अस्मात्सन्नन्तात्

तेर्दश्च ॥२५८॥ शिश्विदानः पुण्यकर्मा । **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥२५९॥** शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः । तौ चानिटौ । शंस्ता स्तोता । शंस्तारौ । शंस्तारः । क्षदिः सौत्रो धातुः खण्डीकरणे भक्षणे च । अनुदात्तेत् । वृक्ये चक्षदानमिति मन्त्रात् । उक्षाणं वा वेहतं वा क्षदन्ते इति ब्राह्मणाच्च । क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे । बहुलमन्यत्रापि । मन् । मन्ता । हन् । हन्ता । इत्यादि । **नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ ॥२६०॥** न पतन्त्यनेन नप्ता पौत्रो दौहित्रश्च । नयतेः षुग्गुणश्च । नेष्टा । त्विषेरितोऽत्वम् । त्वष्टा । होता । पोता ऋत्विग्भेदः । भ्राजतेर्जलोपः । भ्राता । जायां माति जामाता । मान पूजायां नलोपः । माता । पातेराकारस्य इत्वम् । पिता । दुहेस्तृच इट् गुणाभावश्च । दुहिता । **सावसेर्ऋन् ॥२६१॥** स्वसा । **यतेर्वृद्धिश्च ॥२६२॥** याता । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् । **नञि च नन्देः ॥२६३॥** न नन्दति ननान्दा । इह वृद्धिर्नानुवर्तत इत्येके । ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सेति शब्दार्णवः । **दिवेर्ऋः ॥२६४॥** देवा देवरः । स्वामिनो देवृदेवरौ । **नयतेर्डिच्च ॥२६५॥** ना । नरौ । नरः । **सव्ये स्थश्छन्दसि ॥२६६॥** अम्बाम्बेत्यत्र स्थास्थिन्स्थूणामुपसंख्यानम् । सव्येष्ठा सारथिः । सव्येष्ठरौ । सव्येष्ठरः । **अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ॥२६७॥** अष्टभ्योऽनिप्रत्ययः स्यात् । अरणिरग्नेर्योनिः । सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकात् रजनिः । **आङि शुषेः सनश्छन्दसि ॥२६८॥** आशुशुक्षणिरग्निर्वातश्च । **कृषेरादेश्च चः ॥२६९॥** चर्षणिर्जनः । **अदेर्मुट् च ॥२७०॥** अद्मनिरग्निः ।

---

आनच्स्यात्सनो लुक् छलोपश्च । 'युयोध्यस्मज्जुहुराणमेनः' इति मन्त्रे जुहुराणं कौटिल्यकारि एनः पापं युयोधि पृथक् कुरु इति भाष्यम् ॥—**श्वितेः**—॥ श्विता वर्णे अस्मात्सन्नन्तादानच् 'सन्यङोः' इति द्वित्वम् । सनो लुक् तकारस्य च दकारः । किदित्यनुवृत्तेर्न गुणः ॥—**पुण्यकर्मे**ति । 'शिश्विदानोऽकृष्णकर्मा' इति विशेष्यनिघ्ने अमरः । अकृष्ण शुक्लं निष्पापत्वात् शुद्धं कर्म यस्येत्यर्थः । क्षीरस्वामिना तु प्रकृतसूत्रं विस्मृत्य श्विदि श्वैत्ये अस्माल्लिटः कानजिति व्याख्यातं, तदसंगतं कानचश्छान्दसत्वात् । इदित्त्वेन नलोपानुपपत्तेश्चेति दिक् ॥—**तृन् तृचौ**—॥—**शंस्ते**ति । शसु, स्तुतावस्मात्तृन् । 'अप्तृन्–' इति सूत्रे नप्त्रादिग्रहणं नियमार्थमौणादिकतृन्तृजन्तानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेवेत्युक्तम् । तेनात्र दीर्घो नेत्युदाहरति ॥—**शंस्तरौ शंस्तर** इति । नित्त्वादाद्युदात्तः । तथा च मन्त्रः 'प्रावग्राम उतशस्तासु विप्रः' । आदिशब्दाच्छासु अनुशिष्टौ । शास्ति विनयति सत्वान् शास्ता बुद्धः शास्तारौ शास्तारः । 'शास्ता समन्तभद्रे ना शासके पुनरन्यवत्' इति । प्रपूर्वस्य तु नप्त्रादिषु पाठात् 'अप्तृन्–' इति दीर्घः । प्रशास्तारौ प्रशास्तारः । 'क्षत्ता शूद्रा च वैश्यादौ प्रतीहारे च सारथौ' इति मेदिनीकोशानुसारेणाह—**वैश्यायामि**ति । अमरस्तु 'क्षत्रियाया च शूद्रजे' इत्याह । णीञ् प्रापणे उत्पूर्वः । उन्नेता ऋत्विग्भेदः ॥—**बहुलमन्यत्रा**पि । अन्यत्रापि धातोर्बहुलं तृन्तृचौ भवतः । पूर्वसूत्रस्थादिशब्देनैव मन्ताहन्तेत्यादेः सिद्धत्वात्प्रपञ्चार्थमिदं सूत्रम् ॥—**नप्तृनेष्टृ**–॥ नप्त्रादयो दश तृन्तृजन्ता निपात्यन्ते ॥—**नप्ते**ति । नञः प्रकृतिभावः पत्लृ गतावित्यस्मात्तृच् टिलोपः । णीञ् प्रापणे, त्विष दीप्तौ, हु दानादनयोः, पूञ पवने, भ्राजृ दीप्तौ, मा माने, पा रक्षणे, दुह प्रपूरणे । 'त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि' इति मेदिनी । जाया मातीत्यन्तर्भावितण्यर्थः ॥—**सुव्यसेः**—॥ सुञि उपपदे असु क्षेपणे इत्यस्मात् ऋन् यणादेशः । स्वसा भगिनी । सावसेरिति तु क्वाचित्कः पाठः ॥—**यतेः**—॥ यती प्रयत्ने ॥—**नञि च**—॥ टुनदि समृद्धौ अस्मान्नञ्युपपदे ऋन् ॥—**न नन्दती**ति । कृतायामपि सेवायां न तुष्यतीत्यर्थः । 'उपाप्यूषा ननान्दा च ननन्दा च प्रकीर्तिता' इति द्विरूपकोशः ॥—**दिवेः**—॥ दिवु क्रीडाविजिगीषादौ ॥—**देवे**ति । भ्रातर इत्यनुवृत्तौ 'स्वामिनो देवृदेवरौ' इत्यमरः ॥—**नयतेः** ॥ णीञ प्रापणे । अस्माद् ऋप्रत्ययः स च डित् डित्वाट्टिलोपः । 'स्युः पुमासः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः ॥—**सव्ये**—॥ ष्ठा गतिनिवृत्तौ अस्मात्सव्यशब्दे उपपदे ऋ स्यात्स च डित् 'तत्पुरुषे कृति–' इति सप्तम्या अलुक् ॥—**उपसंख्यानमि**ति । पत्वस्येति शेषः ॥—**अर्ति**–॥ ऋ गतौ, सृ गतौ, धृञ् धारणे, धमिः सौत्रः, अम गतौ, अश भोजने, अव रक्षणादौ, तॄ प्लवनतरणयोः । 'अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि' इति मेदिनी । 'सरणिः श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः । 'सरणिः पङ्क्तौ मार्गे स्त्री' इति मेदिनी । शॄ हिंसायां ततोऽतिप्रत्ययः । शरणिरित्येके 'शरणिः पथि चापलौ' इति तालव्यादावजयः । 'इमामग्ने शरणिम्' इति मन्त्रे शरणिं हिंसाव्रतलोपरूपा मीमृषः क्षमस्वेति वेदभाष्यम् । धरणिर्भूमिः । 'धमनी तु शिराहट्टविलासिन्यां तु योषिति' इति मेदिनी । अमनिर्गतिः । अश्यते भुज्यते राज्यमिन्द्रेणानयेति अशनिर्वज्रम् । 'अशनिः स्त्रीपुंसयोः स्यात्चञ्चलायां रवावपि' इति मेदिनी । अवनिः पृथिवी । 'तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्' इति मेदिनी । कुमारी लताविशेषः । 'तरणीका चारुकेसरा, सहाकुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः ॥—**रजनिरि**ति । रञ्ज रागे अस्मादप्यनिर्नलोपोऽपि बाहुलकात् । 'कृदिकारात्–' इति ङीष् रजनी । 'रजनी नीलिनी रात्रिर्हरिद्राजतुकासु च' इति मेदिनी ॥—**आङि**—॥ शुष शोषणे अस्मात्सन्नन्तादाङि उपपदे अनिः स्यात् ॥—**कृषेरादेः**—॥ कृष विलेखने, चर्षणिर्जन इति वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात् । 'ओमासश्चर्षणीधृतः' इत्यादिमन्त्रेषु

**⧗ वृतेश्च ॥२७१॥** वर्तनिः । गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह । **⧗ क्षिपेः किच्च ॥२७२॥** क्षिपणिरायुधम् । **⧗ अर्चिशुचिहुसृपिछादिछर्दिभ्यं इसिः ॥२७३॥** अर्चिर्ज्वाला । इदन्तोऽप्ययम् । अग्नेर्भ्राजन्ते अर्चयः । शोचिर्दीप्तिः । हविः सर्पिः । इस्मन्निति इस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि । छर्दतीसारशूल-वान् । **⧗ बृंहेर्नलोपश्च ॥२७४॥** बर्हिर्ना कुशशुष्मणोः । **⧗ द्युतेरिसिन्नादेश्च जः ॥२७५॥** ज्योतिः । **⧗ वसौ रुचेः संज्ञायाम् ॥२७६॥** वसुरोचिर्यज्ञः । **⧗ भुवः कित् ॥२७७॥** भुविः समुद्रः । **⧗ सहो धश्च ॥२७८॥** सिधिरनड्वान् । **⧗ पिबतेस्थुक् ॥२७९॥** पाथिश्चक्षुःसमुद्रयोः । **⧗ जनेरुसिः ॥२८०॥** जनुर्जन-नम् । **⧗ मनेर्धश्छन्दसि ॥२८१॥** मधुः । **⧗ अर्तिपॄवपियजितनिधनितपिभ्यो नित् ॥२८२॥** अरुः । पर्ल्भग्न्थिः । वपुः । यजुः । तनुः । तनुषी । तनूंषि । धनुरस्त्रियाम् । धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति । सान्तस्य उदन्तस्य वा रूपम् । तपुः सूर्योग्निशत्रुषु । **⧗ एतेर्णिच्च ॥२८३॥** आयुः । आयुषी । **⧗ चक्षेः शिच्च ॥२८४॥** चक्षुः । **⧗ मुहेः किच्च ॥२८५॥** मुहुरव्ययम् । बहुलमन्यत्रापि । आचक्षुः । परिचक्षुः । **⧗ कॄगॄशॄवृञ्चति-भ्यः ष्वरच् ॥२८६॥** कर्वरो व्याघ्ररक्षसोः । गर्वरोऽहंकारी । शर्वरी रात्रिः । वर्वरः प्राकृतो जनः । चत्वरम् । **⧗ नौ सदेः ॥२८७॥** निषद्वरस्तु जंबालः । निषद्वरी रात्रिः ॥ इत्युणादिषु द्वितीयः पादः ॥

वेदभाष्यकारैस्तथैव व्याख्यातत्वाच्च । उज्ज्वलदत्तेन तु आदेश्च ध इति पठित्वा धर्षणिर्बन्धकीति व्याख्यातम् । तदयु-क्तम् । तथा सति धृषेरित्येव सूत्रयेत् । प्रागल्भ्यरूपावयवार्थानुगमात् । आदेश्च ध इत्यंशस्य त्यागेन लाघवाच्च, तस्मादा-देश्च च: इति दशपादीपाठ एव युक्त इत्याहुः ॥—**अदेः**—॥ अद भक्षणे अस्मादनिस्तस्य मुडागमश्च ॥—**वृतेश्च** ॥ वृतु वर्तने अस्मादप्यनिः ॥—**वर्तनिरिति** । कृदिकारादिति ङीषि तु वर्तनी । 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः ॥—**क्षिपेः**—॥ क्षिप प्रेरणे ॥—**क्षिपणिरायुधमिति** । 'उतस्य वाजी क्षिपणिं तुरण्यति' इति मन्त्रस्य वेदभाष्ये तु क्षिपणि क्षेपणमनु तुरण्यति त्वरयति गन्तुमिति व्याख्यातम् ॥—**अर्चि**—॥ अर्च पूजायाम्, शुच शोके, हु दाने, सृप्लृ गतौ, छद अपवारणे, ण्यन्तः । छर्द वमने, आर्चिरिति सान्तम् । 'तमर्चिषा स्फूर्जयन्' इति मन्त्रः 'नयनमिव सनिद्रं घूर्णते दैवमर्चिः' इति माघः । 'ज्वालाभासोर्नपुंस्यर्चिः' इति नानार्थे सान्तेष्वमरः ॥—**इदन्तोऽपीति** । णिजन्ताद्वेरच इरिति भावः ।'अर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । 'रोचिः शोचिरुभे क्लीबे' इति । सर्पिर्घृतम् । छद्यतेऽनया छदिः । छदिः स्त्रियामेवेति लिङ्गानुशासनसूत्रम् । एवं च पटलं छदिरित्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबतां वदन्त उपेक्ष्याः ॥ —**छर्दतीति** । छर्दिश्चातिसारश्च शूलं च तानि यस्य सन्तीति विग्रहः ॥—**वृंहेः**—॥ वृहि वृद्धौ अस्मादिसिः ॥—**कुश-शुष्मणोरिति** । शुष्मा नाम अग्निः । 'अग्निर्वैश्वानरो वह्निः' इत्युपक्रम्य वर्हिः शुष्मेत्यमरेणोक्तत्वात् ॥—**द्युतेः**—॥ द्युत दीप्तौ । 'ज्योतिरग्नौ दिवाकरे । पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी ॥—**वसौ**—॥ रुच दीप्तावस्माद्वसुशब्दे उपपद इसिन्स्यात्सञ्ज्ञायाम् । बाहुलकात्केवलादपि 'रोचिः शोचिरुभे क्लीबे' इत्यमरः ॥—**भुवः**—॥ भवतेरिसिन्स्यात्स च कित् ॥—**सहो**—॥ षह मर्षणेऽस्मादिसिन् धश्चान्तादेशः ॥—**पिबतेः**—॥ पा पाने अस्मादिसिन्धातोश्च थुगागमः ॥ —**जनेः**—॥ जनी प्रादुर्भावे ॥—**मनेः**—॥ मनु अवबोधनेऽस्मादुचिः स्याच्छन्दसि धकारश्चान्तादेशः । मधु पवित्रद्रव्यम् ॥ —**अर्तिपॄ** ॥ ऋ गतौ, पॄ पालनपूरणयोः, डुवप् बीजसन्ताने, यज देवपूजादौ, तनु विस्तारे, धन धान्ये, तप सन्तापे, एभ्य उसिर्नित्स्यात् । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । 'ग्रन्थिर्ना पर्वपरुषी' इति च । 'वपुः क्लीबं तनौ शस्ताकृता-वपि' इति मेदिनी । शस्ताकृतिः प्रशस्ताकृतिरित्यर्थः । यजुरिति यजुर्वेदः । तनुः शरीरम् । तनुषेऽनङ्गमिति सुबन्धुः । 'स्यात्तनुस्तनुषा सार्धं धनुषा च धनुं विदुः' इति द्विरूपेषु विश्वः । 'अथास्त्रियाम् । धनुश्चापौ' इत्यमरः । 'धनुः प्रियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिषु' इति सान्ते मेदिनी ॥—**एतेः**—॥ इण् गतावित्यस्मादुसिः, णित्वाद् वृद्धौ कृतायामायादेशः ॥—**चक्षेः**—॥ चक्षिङ् व्यक्तायां वाचि अस्मादुसिः शिद्भवति । शित्वात्ख्याञादेशाभावः । चक्षते रूपमनु-भवन्त्यनेनेति चक्षुः ॥—**मुहेः**—॥ मुह वैचित्ये । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यव्ययेष्वमरः ॥—**कॄ गॄ**—॥ कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम्, वृञ् वरणे, चते याचने । 'नैर्ऋतः कर्वरः क्रव्यात्कर्बुरो यातुरक्षसोः' इति शब्दा-र्णवः । 'शर्वरी यामिनीस्त्रियोः' इति मेदिनी । 'वर्वरः पामरे केशविन्यासे नीवृदन्तरे । वर्वरः फञ्जिकायां तु वर्वरा शाक-पुष्पयोः' इति विश्वः । 'वर्वरः पामरे केशचक्कले नीवृदन्तरे । फञ्जिकायां पुमान् शाकपुष्पभेदभिदोः स्त्रियाम्' इति मेदिनी ॥ 'चत्वरं स्थण्डिले गणे' इति च ॥—**नौ सदेः**—॥ षद्लृ विशरणादौ । निपूर्वादस्मात्ष्वरच् स्यात् । 'सदिरप्रतेः' इति षत्वम् । 'निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी' इति मेदिनी ॥ **इत्युणादिषु द्वितीयः पादः** ॥

## तृतीयः पादः ।

छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरगह्वरकट्वरसंयद्वराः ॥ २८८ ॥ एकादश ष्वरचप्रत्ययान्ता निपात्यन्ते । छिदिर् छद् अनयोस्तकारोऽन्तादेशः छिदेर्गुणाभावश्च । छित्वरो धूर्तः । छत्वरो गृहकुञ्जयोः । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणम् । तीवरो जातिविशेषः । धीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यजनम् । यमेर्दकारः । संयद्वरो नृपः । पदेः संपद्वर इ-त्येके । इण्सिञ्जिदीङुष्यविभ्यो नक् ॥२८९॥ इनः सूर्ये नृपे पत्यौ । सिनः काणः । जिनोऽर्हन् । दीनः । उष्णः । ऊनः । फेनमीनौ ॥२९०॥ एतौ निपात्येते । स्फायतेः फेनः । मीनः । कृषेर्वर्णे ॥२९१॥ कृष्णः । बन्धेर्ब्रधिबुधी च ॥२९२॥ ब्रध्नः । बुध्नः । धापॄवस्यज्यतिभ्यो नः ॥२९३॥ धाना भ्रष्टयवे स्त्रियः । पर्णं पत्रम् । पर्णः किंशुकः । वस्नो मूल्ये वेतने च । अजेर्वी । वेनः । अत्न आदित्यः । बाहुलकात् शृणोतेः श्रोणः पङ्गुः । लक्षेरट् च ॥२९४॥ लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च । चान्मुडित्येके । लक्षणं लक्ष्मणं नाम्नि चिह्ने च । लक्षणो लक्ष्मणश्च रामभ्राता । लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा । वनेरिच्चोपधायाः ॥२९५॥ वेन्ना नदी । सिवेष्टेर्यू च ॥ २९६ ॥ दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात् केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः । स्योनः । कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् ॥ २९७॥ कर्णः । वर्णः । जर्ण-श्चन्द्रे च वृक्षे च । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा । धेट इच्च ॥ २९८ ॥ धेनः

---

**छित्वर-॥—अनयोरि**ति । छिदिर् द्वैधीकरणे, छद अपवारणे, 'छित्वरश्छदने द्रव्ये धूर्ते वैरिणि च त्रिषु' इति मेदिनी । डुधाञ् धारणपोषणयोः, पा पाने, मा माने, एषां त्रयाणामीत्वमन्तस्य निपात्यत इत्येके । अन्ये तु पीवमीवतीवनी-वस्थौल्ये एभ्यः ष्वरचि 'लोपो व्योः-' इति लोपमाहुः । 'पीवरः कच्छपे स्थूले' इति मेदिनी ॥—**मीवर** इति । हिंसक इत्यर्थानुगुण्येन मीञ् हिंसायामित्यस्मात्ष्वरजिति केचिदाहुः । 'तीवरो नाम्बुधौ व्याधे' इति मेदिनी । 'स्यात्तीवरो वाणि-तिके वास्तवेऽपि च दृश्यते' इति मेदनीविश्वप्रकाशौ ॥—**गाहतेरि**ति । गाहू विलोडने । 'कट्वरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम्' इति मेदिनी । बाहुलकादुपपूर्वकहु दानादनयोरित्यस्मात्ष्वरच्युकारलोपः । 'उपह्वर समीपे स्यादेकान्तेऽपि नपुंसकम्' इति मेदिनी । उपह्वरो रथ इति केचित् ॥—**इण्-**॥ इण् गतौ, षिञ् बन्धने, जि जये, दीङ् क्षये, उष दाहे, अव रक्षणे । 'इनः पत्यौ नृपार्कयोः' इति मेदिनी । 'जिनोऽर्हति च बुद्धे च पुंसि स्यात्त्रिषु जित्वरे' इति च । 'दीना मूषि-कयोषायां दुर्गते कातरेऽन्यवत्' इति विश्वः । 'उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गके' इति मेदिनी । 'ज्वरत्वर-'त्यूठि ऊनमसंपूर्णम् ॥—**फेन-**॥ स्फायी वृद्धौ अस्य फे इत्यादेशः । मीञ् हिंसायाम् । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । 'मीनो राश्यन्तरे मत्स्ये' इति विश्वः ॥—**कृषेः-**॥ कृष विलेखनेऽस्माद्वर्णे वा नक् स्यात् । 'कृष्णः सत्यवतीपुत्रे केशवे वायसेऽर्जुने । कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात्क्लीबे मरिचलोहयोः' इति मेदिनी ॥ —**बन्धेः** ॥ बन्ध बन्धने अस्मान्नक् । 'भास्करोऽहस्करो ब्रध्नः प्रभाकरदिवाकरौ' इत्यमरः । 'बुध्नो ना मूलरुद्रयोः' इति मेदिनी ॥—**धापॄ-**॥ डुधाञ् धारणादौ, पॄ पालनादौ, वस निवासे, अज गतौ, अत सातत्यगमने, एभ्यो नः स्यात् । नक् प्रत्यये सति तु वस्न इत्यत्र सम्प्रसारण स्यात् । वेन इत्यत्र तु गुणो न स्यादिति भावः । 'धाना भ्रष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि' इति विश्वः । 'पर्ण पत्रं किंशुके ना' इति मेदिनी । 'वस्नस्त्वक्रये पुंसि चेतने स्यान्नपुंसकम्' इति च । वेन इति लुण्टाकः प्रजापतिश्च ॥—**लक्षेः-**॥ लक्ष दर्शनाङ्कनयोः ॥—**लक्षणमित्यादि** । लक्षणलक्ष्मणशब्दौ द्वावपि नामचिह्नयोः क्लीबौ । रामभ्रातरि तु पुंलिङ्गौ । हंसयोषायां लक्षणा । सारसस्य योषाया तु लक्ष्मणेति व्यवस्थेत्यर्थः । 'लक्षणं नाम्नि चिह्ने च सौमित्रिरपि लक्ष्मणः' । 'लक्ष्मण लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः' इति विश्वः । 'लक्षणो लक्ष्म-णोऽपि च' इति द्विरूपेषु च विश्वः । 'लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्' इति मेदिनी । कोशे तु 'सारस्यामपि लक्षणा' इति निर्मकारः स्वीकृतः ॥—**वनेः-**॥ वन संभक्तावस्मान्नः । उपधाया इत्वं च । वेन्नेति लघूपधगुणः ॥—**सिवेः-**॥ षिवु तन्तुसन्ताने ॥ —**बाहुलकादि**ति । एतच्च 'छ्वोः शूड्-' इति सूत्रे वृत्तौ 'येन विधिः-' इति सूत्रे कैयटग्रन्थे च स्पष्टम् ॥—**यणि**ति । लघूपध-गुणे कृते लेकारस्यायादेशे ऊठोपि 'सार्वधातुक-' इत्यादिना गुणे कृते सयोन इति स्यादिति भावः । 'स्योनः किरणसूर्ययोः' इति मेदिनी ॥—**कॄ वृ-**॥ कॄ विक्षेपे, वृञ् वरणे, दीर्घपाठे तु वॄ वरणे, जॄष् वयोहानौ, दिवादिः । जॄ इति क्र्यादौ चुरादौ च । षिञ् बन्धने, द्रु गतौ, पन स्तुतौ, अन प्राणने, ञिष्वप् शये, एभ्यो नप्रत्ययो णित्स्यात् । 'कर्णः पृथाज्येष्ठसुते सुव-र्णाली श्रुतावपि' इति विश्वमेदिन्यौ । 'वर्णो द्विजादिशुक्लादियज्ञोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेपने' इति मेदिनी । विश्वमेदिनीस्थमाह—**जर्णश्चन्द्र** इति । 'जर्णो जीर्णद्रुमेन्दुषु' इति हेमचन्द्रः । 'ध्वजिनी वाहिनी सेना'

जिग्युर्धयी धेना । तृषिशुषिरसिभ्यः कित् ॥२९९॥ तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं प्रव्यम् । सुञो दीर्घश्च ॥३००॥ सूना वधस्थानम् । रमेस्त च ॥३०१॥ रमयतीति रत्नम् । राखासाखास्थूणावीणाः ॥३०२॥ रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी । गादाभ्यामिष्णुच् ॥३०३॥ गेष्णुर्गायनः । देष्णुर्दाता । कृत्यशूभ्यां क्स्नः ॥३०४॥ कृत्स्नम् । अक्ष्णमखण्डम् । तिजेर्दीर्घश्च ॥३०५॥ तीक्ष्णम् । श्लिषेरच्चोपधायाः ॥३०६॥ श्लक्ष्णम् । यजिमनिशुन्धिदसिजनिभ्यो युच् ॥३०७॥ यज्युरध्वर्युः । मन्युर्दैन्ये क्रतौ क्रुधि । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी । भुजिमृङ्भ्यां युक्त्युकौ ॥३०८॥ भुज्युर्भाजनम् । मृत्युः । सर्तेरयुः ॥३०९॥ सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः । पानीविषिभ्यः पः ॥३१०॥ पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् । च्युवः किच्च ॥ ३११ ॥ च्युपो वक्त्रम् । स्तुवो दीर्घश्च ॥३१२॥ स्तूपः समुच्छ्रायः । सुशृभ्यां निच्च ॥३१३॥ चात्कित् । सूपः । बाहुलकादूत्वम् । शूर्पम् । कुयुभ्यां च ॥३१४॥ कुवन्ति मण्डूका अस्मिन् कूप. । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः । खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ॥३१५॥ सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । खष्पौ क्रोधबलात्कारौ । शीलतेर्ह्रस्वः । शिल्पं कौशलम् । शसु हिंसायाम् निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः । बाष्पो नेत्रजलोष्मणोः । बाष्पं च । रौतेर्दीर्घः । रूप स्वभावे सौन्दर्ये । पृ । पर्पं गृहं बालतृणं पङ्गुपीठं च । तल प्रतिष्ठाकरणे चुरादिणिचो लुक् । तल्पं शय्याट्टदारेषु । स्नानिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ॥ ३१६॥

---

इत्यमरः । 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान्कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादीनामपीष्यते । अन्न भक्ते च भुक्ते स्यात्' इति मेदिनी । 'स्वप्न. स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्' इति मेदिनी । धेट् पाने अस्मान्नः स्यादित्वान्तादेशः । 'धेना नद्यां नदे पुमान्' इति मेदिनी । 'धेनः समुद्रे नद्यां च धेना' इति विश्वः । श्लोके धानेत्यादिषु बाहूनामसु धेनेति वैदिकनिघण्टौ पठितम् । अत एव 'धेना जिगाति दाशुषे' इत्यादिमन्त्रेषु धेना वागिति व्याख्यातं भाष्ये ॥—तृषि—॥ ञितृषा पिपासायाम्, शुष शोषणे, रस शब्दे । 'तृष्णा लिप्सापिपासयोः' इति विश्वः ॥—सुञः—॥ षुञ् अभिषवे अस्मान्नः स्याद्धातोर्दीर्घश्च । 'सूनाधोजिह्विकापि च' इति नान्तेऽमरः । 'सूनं प्रसवपुष्पयोः । सूना पुत्र्यां वधस्थानगलकुण्डिकयोः स्त्रियाम्' इति मेदिनी ॥—रमेः—॥ रमेर्न्यन्तान्नः । 'रत्न स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी । रस आस्वादने उपधादीर्घः । 'रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम्' इति मेदिनी । षस स्वप्ने उपधादीर्घः । 'सास्ना तु गलकम्बलः' इत्यमरः । 'सास्ना गोगलकम्बल.' इति पाठान्तरम् । ष्ठा गतिनिवृत्ताविलस्य ऊत्वं प्रत्ययस्यात्वं च । 'अथ स्थूणा स्यात्सूर्म्यां स्तम्भे गृहस्य च' इति मेदिनी । सूर्मी लोहप्रतिमा । वी गत्यादिषु गुणाभावो णत्वं च । 'वीणा विद्युति वल्लक्याम्' इति मेदिनी ॥—गादाभ्याम्—॥ गै शब्दे, डुदाञ् दाने । 'गेष्णुर्नटे गायके च देष्णुर्दातरि दुर्दमे' इति विश्वः ॥—कृत्यशू—॥ कृती वेष्टने, । अशू व्याप्तौ । 'कृत्स्न सर्वाम्बुकुक्षिषु' इति मेदिनी ॥—तिजेः—॥ तिज निशाने अस्मात्क्स्नः धातोर्दीर्घश्च 'तीक्ष्ण सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रके पुंसि तिग्मात्यागिनोस्त्रिषु' इति मेदिनी ॥—यजि—॥ यज देवपूजादौ, मन ज्ञाने, शुंध शुद्धौ, दसु उपक्षये, जनी प्रादुर्भावे । 'दस्युश्चौरे रिपौ पुंसि' इति मेदिनी । 'अथ जन्युः स्यात्पुंसि प्राण्यग्निधातृषु' इति च ॥—भुजि—॥ भुज पालनादौ, मृङ् प्राणत्यागे, आभ्यां यथासंख्य युक्त्युकौ स्तः । 'मृत्युर्ना मरणे यमे' इति मेदिनी ॥—सर्तेः—॥ सृ गतौ ॥—पानी—॥ पा रक्षणे, णीञ् प्रापणे, विष्लृ व्याप्तौ । 'नीपः कदम्बबन्धूकनीलाशोकद्रुमेऽपि च' इति मेदिनी ॥—च्युवः—॥ च्युङ् गतौ । धातूनामनेकार्थत्वादिह भाषणे । च्यवन्ते भाषन्तेऽनेनेति विग्रहः । दशपाद्यां तु 'चुपः किच्च' इति पठ्यते । चुप मन्दायां गतौ चोपतीति चुप्पः मन्दगमनकर्ता ॥—स्तुव—॥ ष्टुञ् स्तुतौ । अस्मात्पः स्याद्धातोर्दीर्घश्च ॥—सुशृ—॥ षुञ् अभिषवे, शॄ हिंसायाम् । आभ्यां पः स्यात्स च निद्वत्ति । निच्च तु स्वरार्थम् । 'सूपो व्यञ्जनसूदयोः' इति मेदिनी ॥—शूर्पमिति । बाहुलकादुत्वं रपरत्वं 'हलि च' इति दीर्घः । 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः ॥—कुयु—॥ कु शब्दे, यु मिश्रणे । आभ्यां पः स च निद्धातोर्दीर्घत्वं च ॥—खष्पशिल्प—॥ खनु अवदारणे, शील समाधौ, बाधृ लोडने, रु शब्दे, पृ पालनादौ । 'खष्पः क्रोधे बलात्कृतौ' इति विश्व. । 'शष्प बालतृणेऽपि च । पुंसि स्यात्प्रतिभाहानौ' इति मेदिनी ॥ विश्वोक्तिमाह—बाष्प इति । 'बाष्पमूष्मणि चाश्रुणि' इति कोशान्तरमभिप्रेत्याह—बाष्पं चेति । 'तल्पं मदे कलत्रे च शयनीये च न द्वयोः' इति मेदिनी । अमरोक्तिमाह—तल्पं शय्येति ॥—स्नानिहृषि—॥ ष्णमदौ देवशब्दे, चुरादिण्यन्तौ, हृष तुष्टौ, पुष पुष्टौ, मदी हर्षग्लेपनयोः, घटादिः । एभ्यो ण्यन्तेभ्यः इत्नुच् स्यात् । 'स्तनयित्नुः पुमान्वारिधरेऽपि स्तनितेऽपि च' इति मेदिनी । 'स्तनयित्नुः पयोवाहे तद्ध्वनौ मृगरोगयोः' इति विश्वः । 'हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे' इति च । मदयित्नुः पुमान्कामे जल्पाके कार्मुकेऽपि च' इति विश्वमेदिन्यौ । 'गदयित्नुः कामदेवे

कत्रापत्नोतीति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुर्वावदूकः । मदयित्नुर्मदिरा । ⧗ कृहनिभ्यां क्त्नुः ॥३१७॥ कृत्नुः शिल्पी । हत्नुर्व्याधिः शस्त्रं च । ⧗ गमेः सन्वच्च ॥३१८॥ जिगत्नुः । ⧗ दाभाभ्यां नुः ॥३१९॥ दानुर्दाता । भानुः । ⧗ वचेर्गश्च ॥३२०॥ वग्नुः । ⧗ धेट इच्च ॥३२१॥ धयति सुतानिति धेनुः । ⧗ सुवः कित् ॥३२२॥ सूनुः पुत्रेऽनुजे रवौ । ⧗ जहातेर्द्वे अन्तलोपश्च ॥३२३॥ जह्नुः । ⧗ स्थो णुः ॥३२४॥ स्थाणुः कीले स्थिरे हरे । ⧗ अजिवृरीभ्यो निच्च ॥३२५॥ अजेर्वी वेणुः । वर्णुर्नददेशभेदयोः । रेणुर्द्वयोः स्त्रियां धूलिः । ⧗ विषेः किच्च ॥३२६॥ विष्णुः । ⧗ कृदाधाराचिकलिभ्यः कः ॥३२७॥ बाहुलकान्न कस्येत्संज्ञा । कर्को घटकः । दाको दाता । धाकोऽनड्वानाधारश्च । राका पौर्णमासी । अर्कः । कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि । ⧗ सृवृभूशुषिमुषिभ्यः कक् ॥३२८॥ सृक उत्पलवातयोः । वृकः श्वापदकाकयोः । भूकं छिद्रम् । शुष्कः । मुष्कोऽण्डम् । ⧗ शुकवल्कोल्काः ॥३२९॥ शुभेरन्त्यलोपः । शुकः । वल्कं वल्कलमस्त्रियाम् । उष दाहे । षत्वं कः । उल्का । ⧗ इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥३३०॥ एके मुख्यान्यकेवलाः । भेको मण्डूकमेघयोरिति विश्वमेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः शरीरावयवश्च । मर्कः शरीरवायुः । ⧗ नौ हः ॥

---

पुमान्मद्ये नपुंसकम्' इति मेदिनी ॥—**कृहनि**–॥ डुकृञ् करणे, हन हिंसागत्योः ॥—**कृत्नुरिति** । कर्तेत्यर्थः । कित्त्वान्न गुणः ॥—**हत्नुरिति** । 'अनुदात्तोपदेश–' इत्यादिनानुनासिकलोपः । एवमुत्तरत्र । गमेः क्त्नुप्रत्यये जिगत्नुरित्यपि बोध्यः ॥—**शस्त्रं चेति** । चाद्धन्ता । दशपादीवृत्तौ तु क्नुरिति तकाररहितं पठित्वा कृष्णुः कर्ता । हनुः वैकैकदेशः । बाहुलकान्नलोपः । गमेस्तु जिगन्तुरित्युदाहृत तत्सर्वं प्रामादिकम् । लक्ष्यविसंवादात् । तथा च श्रूयते । 'क्षुरुपकृत्नुमूतये' 'ज्येष्ठराजं भरे कृत्नु' 'मानो वधाय हत्नवे' 'मृगं न भीममुपहत्नुमुग्रम्' 'यो नः सत्यस्त उतवा जिघत्नुः' इत्यादि । अत एव हन्तिधातुं विवृण्वता माधवेन उपहत्नुरित्युदाहृत्य क्नोः कित्त्वादनुनासिकलोप इत्युक्तम् ॥—**दाभाभ्याम्**–॥ डुदाञ् दाने, भा दीप्तौ । 'दानुर्दातरि विक्रान्ते' इति मेदिनी । 'भानू रश्मिदिवाकरौ' इत्यमरः ॥—**वचेः**–॥ वच परिभाषणे । वग्नुर्वाचालः ॥—**धेटः**–॥ धेट् पाने अस्माद्नुः स्यादिकारश्चान्तादेशः । 'धेनुः स्यान्नवसूतिका' इत्यमरः ॥—**सुवः**–॥ षूङ् प्राणिप्रसवे अस्मान्नुः स्यात्स च कित् ॥ विश्वोक्तिमाह—**सूनुः पुत्रे** इति ॥—**जहातेः**–॥ ओहाक् त्यागे । 'जह्नुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने' इति मेदिनी ॥—**स्थो णुः** ॥ ष्ठा गतिनिवृत्तौ । अस्माण्णुः स्यात् । विश्वोक्तिमाह—**स्थाणुरिति** । 'स्थाणुः कीले हरे पुमान । अस्त्री ध्रुवे' इति मेदिनी ॥—**अजिवृ**–॥ अज गतौ, वृङ् संभक्तौ, री गतिरेषणयोः, एभ्यो णुर्नित्स्यात् । 'वेणुर्नृपान्तरे वंशे' इति विश्वः । 'रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः' इति मेदिनी॥—**विषेः**–॥ विषॢ व्याप्तौ । अस्माण्णुः स्यात्स च किच्चान्नित् । नित्त्वादाद्युदात्तत्वम् । विष्णुरिद्धा । 'विष्णुर्नारायणः कृष्णः' इत्यमरः ॥—**कृदा**–॥ डुकृञ् करणे, डुदाञ् दाने, डुधाञ् धारणपोषणयोः, रा दाने, अर्च पूजायाम्, कल गतौ । 'कर्कः कर्के तले वह्नौ शुक्लाश्वे दर्पणे घटे' इति विश्वमेदिन्यौ । 'राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियोः । संपूर्णेन्दुतिथौ' इति मेदिनी । 'राका तु सरिदन्तरे । राका नवरजःकन्या पूर्णेन्दुः पूर्णिमापि च' इति विश्वः ॥ कृञ् दाधारा एषां 'केणः' इति ह्रस्वो बाहुलकात्संज्ञापूर्वकविधेरनित्यत्वाद्वा नेति बोध्यम् । 'अर्कोऽर्के पर्णे स्फटिके रवौ । ताम्रे दिवस्पतौ' इति विश्वमेदिन्यौ । 'कल्कोऽस्त्री घृततैलादिशेषे दम्भे बिभीतके । विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः' इति मेदिनी । बाहुलकाद्रमेरपि कः । 'रङ्कः कृपणमन्दयोः' इति मेदिनी । कपिलकादित्वाल्लत्वे टाप् । 'लङ्का रक्षःपुरीशाखाशाकिनी-कुलटासु च' इति विश्वमेदिन्यौ ॥—**सृवृ**–॥ सृ गतौ, वृञ् वरणे, भू सत्तायाम्, शुष शोषणे, मुष स्तेये ॥—**सृक इति** । 'सृकं संशाय पविमिन्द्रतिग्मम्' इति मन्त्रस्य वेदभाष्ये तु सृक सरणशील पविं वज्रं सशाय सम्यक् तीक्ष्णीकृत्येति व्याख्यातम् । 'भूकं छिद्रे च काले च' इति मेदिनी । 'मुष्को मोक्षकवृक्षे स्यात्सघाते वृषणेऽपि च' इति स एव । 'शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् । वल्कं वल्कलशल्कयोः' इति च । 'उल्का ज्वालाविभावसोः' इति सुभूतिचन्द्रः ॥—**इण्भी**–॥ इण् गतौ, ञिभी भये, कै शब्दे, पा पाने, शल गतौ, अत सातत्यगमने । 'एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' इति मेदिनी । 'काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः । काका स्यात्काकनासायां काकोली काकजङ्घयोः । रक्तिकायां मलव्यां च काकमाच्यां च योषिति । काकं सुरतबन्धे स्यात्काकानामपि संहतौ' इति मेदिनीविश्वप्रकाशौ । 'पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी । 'शल्कं तु शकले वल्के' इति च । मर्च इति सौत्रो धातुरिति बहवः । मर्च शब्दे चौरादिक इति 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटः । 'मर्तो मर्तमर्चयति द्वयेन' इति मन्त्रे मर्चयति विधेयीकरोति भर्त्सयतीति वेदभाष्यम् । न चैवं णिलोपस्य स्थानिवद्भावेन कुत्वाभावान्मर्क इति न सिध्येदिति वाच्यम् । पूर्वत्रासिद्धे तदभावात् । शो तनूकरणे अस्मादपि बाहुलकात्कन् । 'शाको द्वीपान्तरेपि च । शक्तौ द्रुमविशेषे च पुमान् हारीतके स्त्रियाम्' इति मेदिनी ॥—**नौ हः** ॥ ओहाक् त्यागे । अस्मान्निशब्दे उपपदे कन्स्यात् । 'निहाका गोधिका समे' इत्यमरः ॥—**नौ सदेः**–॥ षद्लृ

॥३३१॥ जहातेः कन् स्याद्वौ । जिहाका । गोधिका । नौ सदेर्डिच ॥३३२॥ निष्कोऽस्त्री हेम्नि सलके । स्यम-मेरीट् च ॥३३३॥ स्यमीको वल्मीकः वृक्षभेदश्च । ईट्टस्य इति केचित् । स्यमिकः । अजियुधुनीभ्यो दीर्घ-श्च ॥३३४॥ वीकः स्याद्वातपक्षिणोः । यूका । धूको वायुः । नीको वृक्षविशेषः । ह्रियो रश्च लो वा ॥३३५॥ ह्रीका ह्लीका त्रपा मता । शकेरुनोन्तोन्त्युनयः॥३३६॥ उन उन्त उन्ति उनि एते चत्वारः स्युः । शकुनः । शकुन्तः । शकुन्तिः । शकुनिः । भुवो झिच् ॥३३७॥ भवन्तिर्वर्तमानकालः । बाहुलकादवेश्च । अवन्तिः । वदेर्वदन्तिः । किंवदन्ती जनश्रुतिः । कन्युच्क्षिपेश्च ॥३३८॥ चाद्भुवः । क्षिपण्युर्वसन्त इत्युज्ज्वलदत्तः । भुवन्युः स्वामिसू-र्ययोः । अनुङ्नदेश्च ॥३३९॥ चात्क्षिपेः । नदनुर्मेघः । क्षिपणुर्वातः । कृवृदारिभ्य उनन् ॥३४०॥ करुणो वृक्षभेदः स्यात्करुणा च कृपा मता । वरुणः । दारुणम् । त्रो रश्च लो वा ॥३४१॥ तरुणस्तलुनो युवा । क्षुधिपिशिमिथिभ्यः कित् ॥३४२॥ क्षुधुनो म्लेच्छजातिः । पिशुनः । मिथुनम् । फलेर्गुक् च ॥३४३॥ फल्गुनः पार्थः । प्रज्ञाद्यण् । फाल्गुनः । अशेर्लशश्च ॥३४४॥ लशुनम् । अर्जेर्णिलुक् च ॥३४५॥ अर्जुनः । तृणाख्यायां चित् ॥३४६॥ चित्त्वादन्तोदात्तः । अर्जुनं तृणम् । अर्तेश्च ॥३४७॥ अरुणः । अजियमिशीङ्भ्यश्च ॥३४८॥ वयुनं देवमन्दिरम् । यमुना । शयुनोऽजगरः । वृतृवदिहनिकमिकषिभ्यः सः ॥ ॥३४९॥ वर्सम् । तर्सः प्लवसमुद्रयोः । वत्सः । वत्सम् । वक्षः । हंसः । कंसोऽस्त्री पानभाजनम् । कक्षं नक्षत्रम् ।

---

विशरणे अस्मान्निशब्दे उपपदे कन् स्यात्स च डिद्डित्त्वाट्टिलोपः । 'सदिरप्रतेः' इति षत्वम् । 'निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः । वक्षोऽलङ्करणे हेममात्रे हेमपलेऽपि च' इति मेदिनी ॥—स्यमेः—॥ स्यमु शब्दे अस्मात्कन्स्यात्तस्य च ईडा-गमः । 'स्यमीका नीलिकायां स्त्री स्यमीको नाकवृक्षयोः' इति मेदिनी ॥—अजि—॥ अज गतिक्षेपणयोः, यु मिश्रणे, धूञ् कम्पने, णीञ् प्रापणे, एभ्यः कन् स्यादेषां दीर्घश्च । तत्सामर्थ्याद्गुणाभावः । अजेर्वीभावः ॥—ह्रियः—॥ ह्री लज्जायाम-स्मात्कन्धातोर्दीर्घत्वं च तत्सामर्थ्याद्गुणाभावः ॥—शके—॥ शकॢ शक्तौ । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । 'शकुनस्तु पुमान्पक्षिमात्रप्रश्नशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्' इति मेदिनी । 'शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः' इति । 'शकुनिः पुंसि विहगे सौबले करणान्तरे' इति च ॥—भुवः—॥ भू सत्तायाम् । अस्मात् झिच् स्यात् 'झोऽन्तः' 'कृदिकारात्—' इति ङीष् । भवन्ती लटः सञ्ज्ञा । तथा च 'अस्तिर्भवन्तीपरः प्रयोक्तव्यः' इति भाष्यम् । बाहुलकात्कमेरपि प्रत्ययादिलोपे धातोः कुशब्दादेशः । कुन्तिः । 'इतो मनुष्यजातेः' इति ङीष् । 'कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलद्रुमे' इति मेदिनी ॥—अवन्तिरित्यादि । अव रक्षणे, वद व्यक्तायां वाचि, आभ्या-मपि झिच् ॥—वदन्तीति । 'कृदिकारात्' इति वा ङीष् ॥—कन्युच्—॥ क्षिप प्रेरणे, भू सत्तायाम् । 'क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गक' इति मेदिनी । 'भुवन्युः स्यात्पुमान्भानौ ज्वलने शशलाञ्छने' इति विश्वमेदिन्यौ ॥—अनुङ्—॥ णद अव्यक्ते शब्दे । अस्मादनुङ्प्रत्ययः स्यात् ॥—क्षिपणुरिति । ङित्त्वाद्गुणाभावः ॥—कृ वृ—॥ कॄ विक्षेपे वृञ् वरणे, दृ विदारणे ण्यन्तः । 'करुणस्तु रसे वृक्षे कृपायां करुणा मता' इति विश्वमेदिन्यौ । 'वरुणस्तरुभेदेऽप्सु प्रती-चीपतिसूर्ययोः' इति विश्वः । 'दारुणं भीष्मम्' इत्यमरः । 'दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे' इति मेदिनी ॥ —त्रो—॥ तॄ प्लवनतरणयोरस्मादुनन्स्यात् । 'तरुणं कुब्जपुष्पे ना रुचके यूनि तु त्रिषु' इति मेदिनी ॥ गौरादि-त्वान् ङीष् । 'तरुणी तलुनीति च' द्विरूपेषु विश्वः ॥—क्षुधि—॥ क्षुध बुभुक्षायाम् । पिश अवयवे । अयं दीपनायामपि । मिथिः सौत्रो धातुः । 'पिशुनो दुर्जनः खलः' इत्यमरः । 'पिशुनं कुङ्कुमे स्मृतम् । कपिवक्त्रे च काके ना सूचकक्रूरयो-स्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्' इति मेदिनी । 'मिथुनं न द्वयो राशिभेदे स्त्रीपुंसयुग्मके' इति च ॥—फलेः—॥ फल निष्पत्तौ, अस्माद्गुगागमश्च धातोः । 'फल्गुनस्तु गुडाकेशे नदीनार्जुनभूरुहे । तपस्यसंज्ञमासे तत्पूर्णिमायां च फाल्गुनी' इति मेदिनी । 'फल्गुनः फाल्गुनोऽर्जुने' इति द्विरूपकोशः ॥—अशेः—॥ अश भोजनेऽस्मादुनन् धातोर्लशादेशश्च । लशुनं महाकन्दः । 'लशुना लशुन वेश्म कश्मलं विश्वमश्ववत्' इति मध्यतालव्येषु विश्वः । लसचेति दन्त्यमध्यपाठस्तु प्रामा-दिकः ॥—अर्जेः—॥ ऋज गतिस्थानार्जनोपार्जनेषु, अस्मादुनन् स्यात् णेश्च लुक् । इह 'णेरनिटि' इति णिलोपेनैव सिद्धे णिलुक् चेत्युक्तेः फलं चिन्त्यम् । 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत् । नपुं-सकं तृणे नेत्रे रोगे वाप्यर्जुनी गवि । उषायां बाहुदानद्यां कुट्टन्यां चापि च क्वचित्' इति विश्वमेदिन्यौ ॥—अर्तेश्च ॥ ऋ गतावस्मादुनन्स्यात्स च चित् । 'अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु । अरुणातिविषाश्यामामाञ्जिष्ठात्रिवृतासु च' इति मेदिनी ॥—अजि—॥ अज गतिक्षेपणयोः, यमु उपरमे, शीङ् स्वप्ने, एभ्य उनन् स्यात्स च चित् । अजेर्वीभावः । वीयते गम्यतेऽत्रेति वयुनम् । 'विश्वानि देव वयुनानि विद्वान्' इतिमन्त्रे वयुनानि प्रज्ञानानीति वेदभाष्यम् । वैदिकनिघण्टौ प्रज्ञापर्याये प्रशस्यपर्याये च वयुनशब्दः पठितः । 'यमुना शमनस्वसा' इत्यमरः ॥ —वृतृ ॥ वृ वरणे, तृ प्लवनतरणयोः, वद व्यक्तायां वाचि, हन हिंसागत्योः, कमु कान्तौ, कष हिंसायाम् ॥—वर्सं तर्सं

प्लुषेरच्चोपधायाः ॥३५०॥ प्लक्षः । मनेर्दीर्घश्च ॥३५१॥ मांसम् । अशेर्देवने ॥३५२॥ अक्षः । स्नुव्रश्चिकृत्यृषिभ्यः कित् ॥३५३॥ स्नुषा । वृक्षः । कृत्समुदकम् । ऋक्षं नक्षत्रम् । ऋषेर्जातौ ॥३५४॥ ऋक्षोऽद्रिभेदे भल्लूके इति च । उन्दिगुधिकुषिभ्यश्च ॥३५५॥ उत्सः प्रस्रवणम् । गुत्सः स्तबकः । कुक्षो जठरम् । गृधिपण्योर्दकौ च ॥३५६॥ गृत्सः कामदेवः । पक्षः । अशेः सरः ॥३५७॥ अक्षरम् । वसेश्च ॥३५८॥ वत्सरः । सपूर्वाच्चित् ॥३५९॥ संवत्सरः । कृधूमधिभ्यः कित् ॥३६०॥ बाहुलकात्र षत्वम् । कृसरः स्यात्तिलौदनम् । धूसरः । मत्सरः । मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता । पतेरश्च लः ॥३६१॥ पत्सलः पन्था: । तन्यृषिभ्यां क्सरन् ॥३६२॥ तसरः सूत्रवेष्टने । ऋक्षरः ऋत्विक् ।

---

इति । 'तितुत्र' इति नेट् । षत्वं तु न भवति बाहुलकेन षत्वे कर्तव्ये प्रत्ययसंज्ञाया अप्रवृत्तेः । कक्षशब्दे तु षत्वं भवत्येव एतच्च भाष्यकैयटादिपर्यालोचनयोक्तम् । कथं तर्हि सर्वैरप्युणादिवृत्तिकारैरिह षत्वमुदाहृतमिति चेद् । अत्राहुः । अस्तु भाष्यप्रामाण्यात् वर्स तर्समिति दन्त्यपाठोऽपि साधुः । पक्षे तु षत्वमस्तु । बाहुलकलभ्यषत्वाभावस्य पाक्षिकत्वेऽपि बाधकाभावाद् वृषितृषिभ्यां घञि कृते ण्यन्तादेरचि 'घञर्थे कविधानम्' इति ण्यतात्कप्रत्यये वा कृते वर्षतर्षशब्दयोर्दुर्वारत्वाद् अज्विधौ भयादीनामुपसंख्यानान्नपुंसके क्तादिनिवृत्त्यर्थमित्यत्र वर्षमित्याकरे उदाहृतत्वाच्च । तस्मादिह द्विरूपता फलितेति । 'वर्षोऽस्त्री भारतादौ स्याज्जम्बूद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि' इति मेदिनी । 'तर्षो लिप्सोदन्ययोरः' इति च । 'पुत्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसि' इति त्रिकाण्डशेषः । सद्यो जातस्तर्णकः । 'हंसः स्यान्मानसौकसि । निर्लोभनृपविष्ण्वर्कपरमात्मसु मत्सरे । योगभेदे मन्त्रभेदे शारीरमरुदन्तरे । तुरङ्गमप्रभेदे च' इति मेदिनी । 'कंसो दैत्यान्तरे स्मृतः । कांस्ये च कांस्यपात्रे च मानभेदे च कीर्तितः' इति विश्वः । 'कक्षा स्यादन्तरीयस्य पश्चादपि च पल्लवे । स्पर्धायां ना तु दोर्मूले कक्षीवीरुत्तृणेषु च' इति मेदिनी ॥—प्लुषेः—॥ प्लुष दाहे अस्मात्सः स्यादुपधाया अकारश्च । 'प्लक्षो जटी गर्दभाण्डद्वीपभित्कुञ्जराशने' इति मेदिनी । 'प्लक्षो द्वीपविशेषे स्यात्पर्कटागर्दभाण्डयोः । पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तितः' इति विश्वः ॥—मनेः—॥ मन ज्ञाने । 'मांस स्यादामिषं क्लीबे कक्कोलीजटयोः स्त्रियाम्' इति मेदिनी ॥—अशेः—॥ अशू व्याप्तौ अस्माद्देवने वाच्ये सः स्यात् । 'व्रश्चभ्रस्ज—' इत्यादिना षत्वादिकार्यम् । 'अथाक्षमिन्द्रिये । ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे' इत्यमरः । 'अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे बिभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थसौवर्चलेन्द्रिये' इति मेदिनी ॥—स्नुव्रश्चि—॥ ष्णु प्रस्रवणे, ओव्रश्चू छेदने, कृती छेदने, ऋषी गतौ, एभ्यः सः कित्स्यात् । स्नुषा पुत्रवधूः ॥—वृक्ष इति । सस्य कित्त्वाद् 'ग्रहिज्या—' इति संप्रसारणम् । 'ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गं नक्षत्रे पुंनपुंसकम्' इति मेदिनी ॥—ऋषेर्जातौ ॥ पूर्वसूत्रेणैव सिद्धे ऋषेर्जातावेवेति नियमार्थं सूत्रम् । तेनान्येभ्यस्त्रिभ्यः केवलयौगिकत्वेऽपि सप्रत्ययो भवति ॥—उन्दिगुधि—॥ उन्दी क्लेदने, गुध रोषे, कुष निष्कर्षे, एभ्यः सः कित्स्यात् 'अनिदिताम्' इति नलोपः । 'उत्सः प्रस्रवणं वारि' इत्यमरः । 'गुत्सः स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः' इति मेदिनी । 'गुच्छश्च गुत्सो गुच्छो गुलुच्छवत्' इति द्विरूपकोशात् । 'स्याद् गुच्छः स्तबके स्तम्बे हारभेदकलापयोः' इति च वर्गद्वितीयान्ते मेदिनीकोशाच्च ॥—गृधि—॥ गृधु अभिकाङ्क्षायाम्, पण व्यवहारे स्तुतौ च । ननु गृधेश्चर्त्वेन गृत्स इति सिद्धे दकारविधानं व्यर्थमिति चेत् । मैवम् । चर्त्वस्यासिद्धत्वेन 'एकाचो बशः—' इति भष्भावप्रसङ्गात् । न चैवमपि प्रक्रियालाघवाय तकार एव विधीयतामिति शङ्क्यम् । 'चयो द्वितीया' इति पक्षे तकारस्य थकारापत्तेः । 'पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्ली रन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः' इति विश्वमेदिन्यौ ॥—अशेः ॥ अशू व्याप्तौ 'व्रश्च—' इत्यादिना षत्वादिकार्यम् । 'अक्षर स्यादपवर्गे परमब्रह्मवर्णयोः' इति हेमचन्द्रः । 'अशेः सरन्' इत्युज्ज्वलदत्तादिपाठस्तु प्रामादिकः नित्स्वरापत्तेः । इष्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम् । 'ऋचो अक्षरे परमे व्योमन्' इत्यादिऋङ्मन्त्रेषु त्रीणि च शतानि षष्टिश्चाक्षराणीति यजुषि च तथैव पाठात् । अत एवाश्नोतेर्वासरोऽक्षरमिति द्वितीयाह्निकान्ते भाष्यकृतोक्तम् ॥—वसेश्च ॥ वस निवासे, अस्मादपि सरः स्यात् । 'सः स्यार्धधातुके' इति तत्त्वम् ॥—सपूर्वाच्चित् ॥ पूर्वसहिताद्वसतेः सरः, स्यात्स च चित् । चित्त्वादन्तोदात्तः । 'इदुवत्सराय परिवत्सराय' । सपूर्वादिति पाठान्तरम् । तच्च लक्ष्यविरोधादुपेक्ष्यम् ॥—कृधू—॥ डुकृञ् करणे, धूञ् कम्पने, मदी हर्षे, एभ्यः सरः कित्स्यात् ॥ कृसर इत्यादि हारावलीस्थम् । 'धूसरी किन्नरीभेदे ना खरे त्रिषु पाण्डुरे' इति मेदिनी । मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसम्पत्तौ कृपणे चाभिधेयवत्' इति च । 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमरः । 'अथ मत्सरः । असह्यपरसम्पत्तौ मात्सर्ये कृपणे क्रुधि' इति विश्वः । वेदे तु मदी हर्षे इति योगार्थं पुरस्कृत्य प्रयुज्यते । 'इन्दुमिन्द्राय मत्सरम्' । 'तं सिन्धवो मत्सरमिन्द्रियानाम्' इत्यादि । मत्सरं हर्षहेतुमिति तद्भाष्यम्—पतेः—॥ पत्लृ गतावस्मात्सरः स्याद्रेफस्य लश्च ॥—तन्यृषि—॥ तनु विस्तारे, ऋषी गतौ । अमरोक्तिमाह ॥—तसर इति । कित्त्वाद्

**पीयुकणिभ्यां कालन् ह्रस्वः संप्रसारणं च ॥३६३॥** पीयुः सौरः । पियालो वृक्षभेदः । कुणालो देशभेदः । **कटिकुषिभ्यां काकुः ॥३६४॥** कटाकुः पक्षी । कुषाकुरग्निः सूर्यश्च । **सर्तेर्दुक् च ॥३६५॥** सृदाकुर्वातसरितोः । **वृतेर्वृद्धिश्च ॥३६६॥** वार्ताकुः । बाहुलकादुकारस्य अत्वम् । वार्ताकम् । **पर्देर्नित्संप्रसारणमल्लोपश्च ॥३६७॥** पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे । **सृयुवचिभ्योऽन्युजागूजक्नुचः ॥३६८॥** अन्युच् आगूच् अक्नुच् एते क्रमात्स्युः । सरण्युर्मेघवातयोः । यवागूः । वचक्नुर्विप्रवाग्मिनोः । **आनकः शीङ्भियः ॥३६९॥** शयानकोऽजगरः । भयानकः । **आणको लूधूशिङ्घिधाञ्भ्यः ॥३७०॥** लवाणकं दात्रम् । धवाणको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वात्पक्षे कलोपः । शिङ्घाणं नासिकामले । धाणको दीनारभागः । **उल्मुकदर्विहोमिनः ॥३७१॥** उष दाहे । षस्य लः मुकप्रत्ययश्च । उल्मुकं ज्वलदङ्गारम् । दृणातेर्विः । दर्विः । जुहोतेर्मिनिः । होमी । **ह्रियः कुक् रश्च लो वा ॥३७२॥** ह्लाकुः । ह्रीकुर्लज्जावान् । **हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ॥३७३॥** दशभ्यस्तन् स्यात् । तितुत्रेति नेट् । हस्तः । मर्तः । गर्तः । एतः कर्बुरः । वातः । दन्तः । अन्तः । लोतः स्यादश्रुचिह्नयोः । पोतो बालवहित्रयोः । धूर्तः । बाहुलकात्तु सेर्दीर्घश्च । तूस्तं पापं धूलिर्जटा च । **नञ्याप इट् च ॥३७४॥** नापितः । **तनिमृङ्भ्यां किच्च ॥३७५॥** ततम् । मृतम् । **अञ्जिघृसिभ्यः क्तः ॥३७६॥** अक्तम् । घृतम् । सितम् । **दुतनिभ्यां दीर्घश्च ॥३७७॥**

---

'अनुदात्तोपदेश–' इत्यादिनानुनासिकलोपः ॥—**ऋक्षरः ऋत्विगिति** । 'ऋक्षरं वारिधारायामृक्षरस्त्वृत्विजिस्मृतः' इति मेदिनी । 'अनृक्षरा ऋजवः सन्तु पन्थाः' इति मन्त्रस्य वेदभाष्ये तु ऋक्षरः कण्टक इति व्याख्यातम् ॥—**पीयुकणिभ्याम्–**। अजरण इति दण्डके कणिः पठ्यते सच शब्दार्थकः आभ्यां कालन् स्यात् यथाक्रम ह्रस्वः संप्रसारणं च । 'राजादनः प्रियालः स्यात्' इत्यमरः । 'प्रियालः स्यात्प्रियालवत्' इति द्विरूपकोशः । बाहुलकाद्भङ्गेरपि कालन् । कित्त्वान्नलोपः । न्यङ्क्वादित्वात्कुत्वम् । भगालं नरमस्तकम् मत्वर्थे इनिः । 'चण्डीकान्तो भगाली च लेलिहानो वृषध्वजे' इति राजशेखरः ॥—**कटिकुषि–**॥ कठ कृच्छ्रजीवने, कुष निष्कर्षे । 'कुषाकुः कपिवह्न्यर्के ना परोत्तापिनि त्रिषु' इति मेदिनी । उज्ज्वलदत्तस्तु कठिकषिभ्यामिति पठित्वा कषशिषेति दण्डके धातुमुपन्यस्य कषाकुरित्युदाजहार तत्कोशविरुद्धम् । मेदिनीकोशे कुकारप्रक्रमे पाठात् ॥—**सर्तेः–**॥ सृ गतावस्मात्काकुः स्याद्धातोर्दुगागमश्च । 'सृदाकुर्नानिले चक्रे ज्वलने प्रतिसूर्यके' इति मेदिनी ॥—**वृतेः–**॥ वृतु वर्तने 'वार्ताकुः प्रियवार्ताकी वृन्ताकोऽपि च दृश्यते' इति द्विरूपे विश्वः । 'वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षणी' इत्यमरः । 'वार्ताक पित्तल किञ्चिदङ्गारपरिपाचितम्' इति वैद्यशास्त्रम् ॥—**पर्देः–**॥ पर्द कुत्सिते शब्देऽस्मात्काकुः स्यात्स च नित् । धातोः रेफस्य संप्रसारणमकारलोपश्च । विश्वकोशस्थमाह—**पृदाकुरिति** । 'पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान्' इति मेदिनी ॥—**सृयु–**॥ सृ गतौ, यु मिश्रणे, वच परिभाषणे । 'सरण्युस्तु पुमान् वारिवाहे स्यान्मातरिश्वनि' इति मेदिनी । 'सरण्युरस्य सूनुरश्वः' इति मन्त्रस्य भाष्ये सरण्युः शीघ्रगामीति व्याख्यातम् । 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । 'वचक्नुस्तु पुमान् विप्रे वावदूकेऽभिधेयवत्' इति मेदिनी ॥—**आनकः–**॥ शीङ् स्वप्ने, ञिभी भये, बिभेत्यस्मादिति भयानको भयकरः । 'भयानकः स्मृतो व्याघ्रे रसे राहौ भयंकरे' इति मेदिनी ॥—**आणको–**॥ लूञ् छेदने, शिघि आघ्राणे, डुधाञ् धारणपोषणयोः । हारावलीस्थमाह 'शिङ्घाणः फेनडिण्डीरे नकरेतश्च पिच्छिले' इति विक्रमादित्यकोशः ॥—**उल्मुक–**॥ एते निपात्यन्ते । निपातनप्रकारमेवाह—**उष दाहे** इत्यादिना ॥ हारावलीस्थमाह—**उल्मुकमिति** । 'दर्विः कम्बिः खजाका च' इत्यमरः ॥—**ह्रियः–**॥ ह्री लज्जायामस्मात्कुक्प्रत्ययः स्यात् ककारो गुणनिषेधार्थः ॥—**हसि–**॥ हसे हसने, मृङ् प्राणत्यागे, गॄ निगरणे, वा गतिगन्धनयोः, अम गत्यादिषु, दमु उपशमे, लूञ् छेदने, पूञ् पवने, धुर्वी हिंसायाम् । 'हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते' इति मेदिनी ॥ अत्रायमर्थः । केशवाचकात्परो यो हस्तशब्दः स समूहवाची । तथा च केशहस्तशब्दाः केशसमूहशब्दपर्याया इति । मर्तो भूलोकस्तत्र भवो मर्त्यः । दिगादेराकृतिगणत्वाद्यत् । 'गर्तस्त्रिगर्तभेदे स्यादवटे च कुकुन्दरे' इति मेदिनी ॥—**एत** इति । 'एतः कर्बुर आगते । अन्तःस्वरूपे नाशे ना न स्त्रीशेषेऽन्तिके त्रिषु' इति च । 'दन्तोऽद्रिकटके कुञ्जे दशने चौषधौ स्त्रियाम्' इति च मेदिनी । 'लोतमश्रुणि चोरिते' इति विश्वः । 'क्तक्तवतू निष्ठा' इति सूत्रे लोतो मेष इति कैयटः । 'सोतः शिशौ वहित्रे च' इति विश्वमेदिन्यौ ॥—**धूर्त** इति । 'लोपो व्योर्वलि' इति वलोपः । 'राल्लोपः' इत्यनेन लोपस्तु क्ङितीत्यननुवृत्तिपक्षे बोध्यः । 'हलि च' इति दीर्घः । 'धूर्ते तु खण्डलवणे धत्तूरे ना शठे त्रिषु' इति मेदिनी ॥—**तुस्तमिति** । तुस खण्डन इत्यस्मात्तन् ॥—**नञ्या–**॥ व्यापॢ आप्तौ अस्मान्नञ्युपपदे तन्स्यादिडागमश्च बाहुलकान्नञो नलोपाभावः ॥—**तनि–**॥ तनु विस्तारे, मृङ् प्राणत्यागे, आभ्यां तप्रत्ययः स्यात्स च कित् कित्त्वादनुनासिकलोपः । 'ततं वीणादिकं वाद्यम्' इत्यमरः । 'अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुंल्लिङ्गस्तु समीरणे' इति मेदिनी । 'मृतं तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु' इति च ॥—**अञ्जि–**॥ अञ्जू व्यक्तिम्रक्षणादौ, घृ क्षरणदी-

दूतः । तातः । जेर्मूट् चोदात्तः ॥३७८॥ जीमूतः । लोष्टपलितौ ॥३७९॥ लुनातेः क्तः तस्य सुट् धातोर्गुणः । लोष्टम् । पलितम् । हृश्याभ्यामितन् ॥३८०॥ हरितश्येतौ वर्णभेदौ । रुहे रश्च लो वा ॥३८१॥ रोहितो मृगमत्स्ययोः । लोहितं रक्तम् । पिशेः किच्च ॥३८२॥ पिशितं मांसम् । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥३८३॥ श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी । दिधिषाय्यः ॥३८४॥ दधातेर्द्वित्वमित्वं षुक् च । मित्र इव यो दिधिषाय्यः । वृञ एण्यः ॥३८५॥ वरेण्यः । स्तुवः क्सेय्यश्छन्दसि ॥३८६॥ स्तुषेय्यं पुरुवर्पसम् । राजेरन्यः ॥३८७॥ राजन्यो वह्निः । शॄरम्योश्च ॥३८८॥ शरण्यम् । रमण्यम् । अर्तेर्निच्च ॥३८९॥ अरण्यम् । पर्जन्यः ॥३९०॥ पृषु सेचने । षस्य जः । पर्जन्यः शक्रमेघयोः । वदेरान्यः ॥३९१॥ वदान्यस्त्यागिवाग्मिनोः । अमिनक्षिय-

प्सोः, षिञ् बन्धने, एभ्यः क्तः स्यात् । निष्ठासंज्ञत्वे तस्य नः ॥ परिमाणवाचक इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात् । 'अक्तं व्याघ्रे नँ सकुले' इति विश्व इत्युज्ज्वलदत्तेनोक्तम् । तच्च लिपिभ्रमप्रयुक्तम् । विश्वकोशे हि 'व्यस्तं व्याप्ते च संकुले' इति स्थितत्वात् । तथा च मेदिन्या चकारादिप्रक्रमे 'व्यस्त तु व्याकुले व्याप्ते' इत्युक्तम् । 'घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्' । 'सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री' इति मेदिनी । बाहुलकात् ऋ गताविस्-स्मात् क्तः । 'ऋतमुञ्छशिले जले । सत्ये दीप्ते पूजिते स्यात्' इति मेदिनी ॥—दुतनि-॥ दु गतौ, तनु विस्तारे, आभ्यां क्तः स्याद्धातोर्दीर्घश्च । दूतः प्रेष्यः । गौरादित्वान्ङीष् । दूती । कथ तर्हि तेन दूतिविदितं निषेदुषा' इति रघुरिति चेद् । अत्राहुः । दूङ् परितापे इत्यस्मात् क्तिचि दूतिरिति । 'दूत्यां दूतिरपि स्मृता' इति द्विरूपकोशः । 'तातोऽनुकम्प्ये जनके' इति विश्वमेदिन्यौ । बाहुलकात् शीङ् स्वप्ने इत्यस्मादपि क्तः । शीता लाङ्गलपद्धतिः । रामपत्नी च शीता । 'शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च । शीत स्मृत हिमगुणे च तदन्विते च शीतोऽलसे च बहु-वारतरौ च दृष्टः' इति तालव्यादौ धरणिः । शीता दन्त्यादिरप्यस्ति । 'शीता लाङ्गलपद्धतिः । वैदेहीस्वर्गगङ्गासु' इति द-न्त्यादौ मेदिनी । 'शीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी' इति दन्त्यादौ रभसकोशाच्च ॥—जेः-॥ जि जये' अस्मात् क्तप्रत्ययस्तस्योदात्तमूडागमः स्याद्दीर्घ इत्यनुवृत्त्या धातोर्दीर्घश्च स्यात् । इद सूत्रमनार्षमिति केचित् । अत एव वृत्त्यादि-ग्रन्थे पृषोदरादिषु जीमूतशब्द उदाहृतः । 'जीमूतोऽद्रौ भूतिकरे देवतादौ पयोधरे' इति मेदिनी । 'वेणी खरा गरी देव-ताडो जीमूतः' इत्यमरः । 'जीमूतः स्याद्वृत्तिकरे शक्रेऽद्रौ घोषके घने' इति विश्वः ॥—लोष्ट-॥ लूञ् छेदने, पल गतौ, एतौ क्तान्तौ निपात्येते । 'लोष्टानि लेष्टव' पुंसि' इत्यमरः । अत्र पुंसीत्युभयान्वयि । तेन पुनपुंसकलिङ्गो लोष्टशब्दः । तथाच 'स्थानेऽन्तरमः' इति भाष्यम् । लोष्टः क्षिप्तो बाहुवेगङ्गलेत्यादि । अत एव 'लोष्टः शण्डेऽपि लोष्टः स्यात्' इति पुंलिङ्गकाण्डे बोपालितः । 'पलित शैलजे तापे केशपाके च कर्दमे' इति मेदिनी ॥—हृश्या-॥ हृञ् हरणे, श्यैङ् गतौ । 'हरिता स्त्री च दूर्वाया हरिद्वर्णयुतेऽन्यवत्' इति मेदिनी । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरः ॥—रुहेः-॥ रुह बीजज-न्मनि प्रादुर्भावे च । अस्मादितन् । 'रोहित कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे' इति मेदिनी । 'लोहित रक्तगोशीर्षकुङ्कुमाजिकुचन्दने । पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति' इति च ॥—पिशेः-॥ पिश अवयवे अयं दीपनायामपि । अस्मादितन्स्यात्स च कित् । 'पिशित मांसं मांस्या स्त्री' इति मेदिनी । मांस्या जटा-मांस्याम् । तथा च 'जटा च पिशिता पेशी' इति धन्वन्तरिः ॥—श्रुदक्षि-॥ श्रु श्रवणे, दक्ष वृद्धौ, स्पृह ईप्सा-याम्, गृह ग्रहणे, चुरादावदन्तौ । 'उद्यतः स्रुचे भवति श्रवाय्यः' इति मन्त्रे श्रवाय्यो मन्त्रे श्रवणीय इति वेद-भाष्यम् । 'दक्षाय्यो यो दम आस नित्य.' इत्यादिष्वपि यौगिकार्थ एव भाष्ये पुरस्कृतः ॥—स्पृहयाय्य इति । एवं गृहयाय्य इति ॥—दिधिषाय्य इति । डुधाञ् धारणपोषणयोः । 'अयामन्ता–' इति णेरयादेशः । उज्ज्व-लदत्तस्तु दधिषाय्य इति सूत्र पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वं च दधिषाय्यो घृतमिति व्याख्यत् । दशपादीवृ-त्तिकारस्तु धिषु शब्दे अस्य द्वित्व गुणाभावः अत्व चाभ्यासस्य निपात्यत इत्याह प्रसादकारादयोऽप्येवमेवाहुस्तदेतत्सर्वं प्रा-मादिकम् । 'मित्र इव यो दिधिषाय्योऽभूत्' इति वैदिकप्रयोगाद्दिधिषाय्य इत्येव सूत्र युक्तमिति प्रामाणिकाः ॥—वृञः-॥ वृञ्वरणे । वरेण्यः श्रेष्ठः ॥—स्तुवः-॥ ष्टुञ् स्तुतौ । स्तुषेय्यं स्तोतव्यम् । पुरुवर्पसं बहुरूपमिति वेदभाष्यम् । स्तुवः केय्य इति पठित्वा कित्वाद्गुणाभावे उवङि सति स्तुवेय्यः पुरन्दर इत्युदाहरन् उज्ज्वलदत्तस्तु उदाहृतश्रुतितद्भाष्यादिविरोधादुपे-क्ष्यः । तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव ज्यायानित्याहुः ॥—राजेः-॥ राजृ दीप्तौ । क्षत्रियजातौ तु 'राज-श्वशुरात्–' इति यत्प्रत्यये राजन्य इत्यन्तस्वरितः ॥—शॄरम्योः-॥ शॄ हिंसायाम्, रम क्रीडायाम् । आभ्यामन्यः स्यात् ॥ —अर्तेः-॥ ऋ गतौ । अस्मादन्यः स च नित् । 'अटव्यरण्यं विपिनम्' इत्यमरः ॥—पर्जन्यः ॥ पृषु सेचने षस्य जः । 'पर्जन्यो मेघशब्दोऽपि ध्वनदम्बुदशक्रयोः' इति मेदिनी ॥—वदेः-॥ वद व्यक्तायां वाचि । अजयकोशस्थमाह—वदान्य

जिवधिपतिभ्योऽत्रन् ॥३९२॥ अमत्रं भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । पतत्रं च तनूरुहम् । गडेरादेश्च कः ॥३९३॥ कलत्रम् । डलयोरेकत्वस्मरणात् कडत्रम् । वृञश्चित् ॥३९४॥ वरत्रा चर्ममयी रज्जुः । सुविदेः कत्रः ॥३९५॥ सुविदत्रं कुटुम्बकम् । कृतेर्नुम् च ॥३९६॥ कृन्तत्रं लाङ्गलम् । भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् ॥३९७॥ दशभ्योऽतच् स्यात् । भरतः । मरतो मृत्युः । दर्शतः सोमसूर्ययोः । यजतः ऋत्विक् । पर्वतः । पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतोऽश्वः । पृषिरञ्जिभ्यां कित् ॥३९८॥ पृषतो मृगो बिन्दुश्च । रजतम् । खलतिः ॥३९९॥ स्खलतेः सकोपः अतच्प्रत्ययान्तस्य इत्वं च । खलतिर्निष्केशशिराः । शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ॥४००॥ सप्तभ्योऽथः स्यात् । शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्तः । वन्दीति पाठे वन्द्यते वा वन्दथः स्तोता स्तुत्यश्च । जीवथ आयुष्मान् । प्राणथो बलवान् । बाहुलकाच्छमिदमिभ्याम् । शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः । भृञश्चित् ॥४०१॥ भरथो लोकपालः । रुदिविदिभ्यां ङित् ॥४०२॥ रोदितीति रुदथः शिशुः । वेत्तीति विदथः । उपसर्गे वसेः ॥४०३॥ आवसथो गृहम् । संवसथो ग्रामः । अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपर्णिमहिभ्योऽसच् ॥४०४॥ त्रयोदशभ्योऽसच् स्यात् । अततीत्यतसो वायुरात्मा च । अवतीत्यवसो राजा भानुश्च । चमत्यस्मिन् चमसः सोमपानपात्रम् । ताम्यत्यस्मिन्

---

इति ॥—अमिनक्षि-॥ अम गत्यादिषु, नक्ष गतौ, यज देवपूजादौ, वध हिंसायाम्, पत्लृ गतौ ॥—नक्षत्रमिति । 'नभ्राण्नपात्-' इति सूत्रे नञः प्रकृतिभावेन नक्षत्रमिति साधितं तत्तु व्युत्पत्त्यन्तरमिति बोध्यम् । यजत्रमग्निहोत्रमिति प्राञ्चः । वस्तुतस्तु यजत्रो यष्टव्यदेवता । 'सन्ते वायुर्वातेन गच्छतां सयजत्रैरङ्गति' इति मन्त्रे तथैव व्याख्यातत्वात् । अमरकोशस्थमाह—पतत्रं चेति ॥—गडेः-॥ गड सेचने, अस्मादत्रन्स्याद्गकारस्य ककारादेशश्च । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः ॥—वृञः-॥ वृञ् वरणे अस्मादत्रन् चित्स्यात् चित्त्वादन्तोदात्तः । 'नध्री वध्री वरत्रा स्यात्' इत्यमरः । 'वरत्रायां दार्वानह्यमान' इत्यादौ चित्स्वरः स्पष्टः ॥—सुविदेः कत्रः ॥ विद ज्ञाने । इह कत्रन्निति नितं केचित्पठन्ति तत्प्रामादिकम् । 'बृहस्पते सुविदत्राणि राध्या' इत्यादौ नित्स्वरादर्शनात् । कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्चेत्याहुः ॥—कृतेः-॥ कृती छेदने' अस्मात्कत्रः स्याद्धातोर्नुमागमश्च । 'धन्व च यत्कृन्तत्रं च' इति मन्त्रे कृन्तत्रं कर्तनीयमरण्यमिति वेदभाष्यम् ॥—भृ-॥ भृञ् भरणे, मृङ् प्राणत्यागे, दृशिर् प्रेक्षणे, यज देवपूजादौ, पर्व पूरणे, डुपचष् पाके, अम गतौ, तमु काङ्क्षायाम्, णम प्रह्वत्वे शब्दे, हर्य गतिकान्त्योः । दशपाद्यां तु भृदृशीङिति पठित्वा दृङ् आदरे द्रियते दरतः शेते शयत इत्युदाहृतम् । तन्न । 'दृशन्तमभि दर्शतं बृहतम्' 'तरणिर्विश्वदर्शतः' 'दैव्यो दर्शतो रथः' इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात् । 'भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे च दौष्यन्तौ' इति मेदिनी ॥—यजतः ऋत्विगिति । उज्ज्वलदत्ताद्यनुरोधेनैवमुक्तम् । वेदभाष्ये तु 'निरण्यशम्यं यजतो बृहन्तम्' इत्यादिषु यजतशब्दो यष्टव्यपरतया व्याख्यातः 'पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले' इति मेदिनी ॥—हर्यतोऽश्व इति । 'परित्य हर्यतं हरिम्' इत्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम् ॥—पृषि-॥ पृषु सेचने, रञ्ज रागे, आभ्यामतच् कित्स्यात् । 'पृषन् मृगे पुमान् बिन्दौ, न द्वयो पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी । 'रजत त्रिषु शुक्लं स्यात् क्लीबे हारे च दुर्वर्णे' इति इति च ॥—खलतिः-॥ स्खल सञ्चलने ॥—शीङ्शपि-॥ शीङ् स्वप्ने, शप आक्रोशे, रु शब्दे, गम्लृ गतौ, वञ्चु गतौ भ्वादिः । वञ्चु प्रलम्भने चुरादिः । जीव प्राणधारणे, अन प्राणने प्रपूर्वः । उज्ज्वलदत्तेन वञ्चिजीवीति पठ्यते । अन्यैस्तु वञ्चिस्थाने वन्दिः पठ्यते । वञ्चथवन्दथयोरन्यतरं वेदादुपलभ्य बहुश्रुतैः पाठो निर्णेयः ॥—वन्दथ इति । कर्मणि कर्तरि वा प्रत्ययः ॥—प्राणथ इति ॥ 'अनितेः' इति णत्वम् ॥—शमिदमिभ्यामिति । शम उपशमे, दमु उपशमे । 'शमथः शान्तिमन्त्रिणोः' इति मेदिनी । 'दमथस्तु पुमान् दण्डे दमे च परिकीर्तितः' इति च ॥—भृञः-॥ डुभृञ् धारणपोषणयोः । अस्मादथः स्यात्स च चित् ॥—रुदि-॥ रुदिर् अश्रुविमोचने, विद ज्ञाने, आभ्यामथः स्यात्स च ङित् । 'विदथो योगिकृत्तिनोः' इति मेदिनी । अत्रोज्ज्वलदत्तः रुविदिभ्यां किदिति पठित्वा रौतीति रुवथः श्वेत्युदाजहार । दशपादीवृत्तिकारस्तु रुदिविदिभ्यां किदिति पपाठ । इह तु भाष्यानुरोधेन ङिदिति पठितं । तथाहि 'गाङ् कुटादि-' सूत्रे के पुनश्चडादयः चङ्अङ्नजिङ्अथङ्नङ् इति भाष्यम् । किदिति पठतां तु अथ ङितिभाष्यं न सङ्गच्छेतेति दिक् ॥—उप-॥ वस निवासे, अस्मादुपसर्गे उपपदे अथः स्यात् । उज्ज्वलदत्तेन तु सोपसर्गाद्वसेरिति पठितमन्यैस्तु आङि वसेरिति पठितम् ॥—अत्यवि-॥ अत सातत्यगमने, अव रक्षणादौ, चमु अदने, तमु काङ्क्षायाम्, णमु प्रह्वत्वे शब्दे, रभ राभस्ये, डुलभष् प्राप्तौ, णभतुभ हिंसायाम्, भ्वादौ क्र्यादौ चायम् । तप सन्तापे, पत्लृ गतौ, पण व्यवहारे स्तुतौ च, पन च, मह

तमसोऽन्धकारः। मसः अनुकूकः। रभसो वेगहर्षयोः। कंसलो धवं वाचकश्च। नभति नभ्यति वा नभस आकाशः। तपसः पक्षी चन्द्रश्च। पतसः पक्षी। पनसः कण्टकिफलः। पणसः पण्यद्रव्यम्। महसं ज्ञानम्। **वेञस्तुट् च ॥४०५॥** बाहुलकादात्वाभावः। वेतसः। **वहियुभ्यां णित् ॥४०६॥** वाहसोऽजगरः। यावसस्तृणसङ्घातः। **वयश्च ॥४०७॥** वय गतौ। वायसः काकः। **दिवः कित् ॥४०८॥** दिवसम्। दिवसः। **कृशृशलि-कलिगर्दिभ्योऽभच् ॥ ४०९ ॥** करभः। शरभः। शलभः। कलभः। गर्दभः। **ऋषिवृषिभ्यां कित् ॥४१०॥** ऋषभः। वृषभः। **रुषेर्नित्लुष् च ॥४११॥** रुष हिंसायाम्। अस्मादभच् नित्किस्यात् लुषादेशश्च। लुषभो मत्तदन्तिनि। **रासिवल्लिभ्यां च ॥४१२॥** रासभः। वल्लभः। **जृविशिभ्यां झच् ॥४१३॥** जरन्तो महिषः। वेशन्तः पल्वलम्। **रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥४१४॥** रोहन्तो वृक्षभेदः। नन्दन्तः पुत्रः। जीवन्त औषधम्। प्राणन्तो वायुः। षित्वान्ङीष्। रोहन्ती। **तॄभूवहिवसिभासिसाधिग-डिमण्डिजिनन्दिभ्यश्च ॥४१५॥** दशभ्यो झच् स्यात्स च षित्। तरन्तः समुद्रः। तरन्ती नौका। भवन्तः कालः। वहन्तो वायुः। वसन्त ऋतुः। भासन्तः सूर्यः। साधन्तो भिक्षुः। गडेर्घटादित्वान्मित्वं। ह्रस्वः। अयामन्तेति णेरयः। गण्डयन्तो जलदः। मण्डयन्तो भूषणम्। जयन्तः शक्रपुत्रः। नन्दयन्तो नन्दकः। **हन्तेर्मुट् हि च ॥४१६॥** हेमन्तः। **भन्देर्नलोपश्च ॥४१७॥** भदन्तः प्रव्रजितः। **ऋच्छेररः ॥४१८॥** ऋच्छरा वेश्या। बाहुलकाज्जर्जरझर्झरादयः। **अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ॥४१९॥** षड्भ्योऽरश्चित् स्यात्। अररं कपाटम्। कमरः कामुकः। भ्रमरः। चमरः। देवरः। वासरः। **कुवः क्ररन् ॥४२०॥** कुररः पक्षिभेदः। **अङ्गिमदिमन्दिभ्य आरन् ॥४२१॥** अङ्गारः। मदारो वराहः। मन्दारः। **गडेः कड च ॥४२२॥** क-

---

पूजायाम्। गौरादित्वात् ङीष्। 'अतसी स्यादुमा क्षुमा' इत्यमरः। 'चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम्' इति मेदिनी। 'पनसः कण्टकिफले कन्दके वानरान्तरे । स्त्रियां रोगप्रभेदे स्यात्' इति च ॥—**वेञः** ॥ वेञ् तन्तुसन्ताने, अस्मादसच् स्यात्तस्य तुट्। दशपादीवृत्तौ तु वियस्तुट् चेति पठित्वा वी गतिप्रजनकान्त्यादिष्विति धातुरुदाहृतः ॥—**वहि**–॥ वह प्रापणे, यु मिश्रणादौ, अज गतौ। 'शयुर्वाहस इत्युभौ' इत्यमरः। 'वा तु क्लीबे दिवसवासरौ' इति च ॥—**वायस** इति। असचो णित्त्वाद्वृद्धिः ॥—**दिवः** ॥ दिवु क्रीडादौ ॥—**कॄ शॄ**–॥ कॄ विक्षेपे, शॄ हिंसायाम्, शल गतौ, कल गर्द शब्दे। करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' इति मेदिनी। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। 'शरभस्तु पशोर्भिदि। करभो वानरभिदि' इति मेदिनी। 'समौ पतङ्गशलभौ' इत्यमरः। 'कलभः करिपोतकः' इति च। 'गर्दभः श्वेतकुमुदे गर्दभो गन्धभिद्यपि । रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः' इति मेदिनी ॥—**ऋषि**–॥ ऋषी गतौ, वृषु सेचने, आभ्या अभच् स्यात्स च कित्। 'ऋषभस्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः। उत्तरस्थः स्मृतः श्रेष्ठे स्त्री नराकारयोषिति। शूकशिम्ब्यां शिरालाया विधवाया क्वचिन्मता' इति मेदिनी। 'वृषभः श्रेष्ठवृषयोः' इति च ॥—**रासिवल्लि**–॥ रासृ शब्दे, वल संवरणे। 'वल्लभो दयितेऽध्यक्षे सुलक्षणतुरङ्गमे' इति मेदिनी ॥ जॄ वयोहानौ। विश प्रवेशने। 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। बाहुलकादर्हतेरपि झच्। 'अर्हन्तः क्षपणको जिनः' इति विक्रमादित्यकोशः ॥—**रुहि**–॥ रुह बीजजन्मनि, टुनदि समृद्धौ, जीव प्राणधारणे, अन प्राणने, प्रपूर्वः। एभ्य आशिषि झच् स च षिद्भवति ॥—**प्राणन्त** इति। 'अनितेः' इति णत्वम् ॥—**तॄ भू**–॥ तॄ प्लवनतरणयोः। भू सत्तायाम्, वह प्रापणे, वस निवासे, भासृ दीप्तौ, साध संसिद्धौ, गड सेचने, मडि भूषायाम्, उभौ ण्यन्तौ। जि जये, टुनदि समृद्धौ ण्यन्तः ॥—**नन्दयन्त** इति। उज्ज्वलदत्तस्तु नन्दन्त इत्युदाहृत्य पूर्वसूत्रेण गतार्थमाशङ्क्य अनाशीरर्थे नन्दिग्रहणमित्याह तच्चिन्त्यम्। इहाप्याशिषीत्यस्य स्वयमेवानुवर्तितत्वात् ॥—**हन्तेः**–॥ हन हिंसागत्योरस्मात् झच् प्रत्ययः स्यात्तस्य मुडागमः धातोर्हिंशब्दादेशश्च ॥—**भन्देः**–॥ भदि कल्याणे सुखे च। अस्मात् झच् स्याद्धातोर्नकारलोपश्च ॥—**ऋच्छेः**–॥ ऋच्छ गतौ ॥—**बाहुलकादि**ति। जर्ज चर्च झर्झ परिभाषणहिंसातर्जनेषु। परिभाषणभर्त्सनयोरिति तुदादौ। 'जर्जरं शैवले शक्रध्वजे त्रिषु जरत्तरे। झर्झरः स्यात्कलियुगे वाद्यभेदे नदान्तरे' इति च मेदिनी। बाहुलकादेव झस्य जादेशे जर्झर इत्युज्ज्वलदत्तः ॥—**अर्तिकमि**–॥ ऋ गतौ, कमु कान्तौ, भ्रमु अनवस्थाने, चमु अदने, दिवु क्रीडादौ, वस निवासे, उभावपि ण्यन्तौ। 'अररं छदकपाटयोः' इति मेदिनी। 'कपाटमररं तुल्ये' इत्यमरः। 'भ्रमरः कामुके भृङ्गे' इति मेदिनी। 'चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः' इति च। चमरो मृगभेदः। देवरः पत्युः कनिष्ठभ्राता ॥—**वासर** इति। केचित्तु सूत्रे वाशिभ्य इति तालव्यं पठित्वा वाशृ शब्द इत्यस्मादरप्रत्ययो वाश्यत इति वाशरः कोकिल इत्याहुः ॥—**कुवः**–॥ कुशब्दे ॥—**अङ्गि**–॥ अगिर्गत्यर्थः, मदी हर्षे, मदि स्तुत्यादौ। 'अङ्गार उल्मुके न स्त्री पुंलिङ्गस्तु महीसुते' इति मेदिनी। मन्दारः स्यात्सुरद्रुमे। पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः' इति च। मदिस्तुत्यादावित्यस्माद्बाहुलकादारुरपि। 'पारिभद्रे तु मन्दारुर्मन्दारः पारिजातकः' इति शब्दार्णवः ॥—**गडे**–॥ गडि वदनैकदेशे, गड सेचने,

कडारः । **शृङ्गारभृङ्गारौ** ॥४२३॥ शृभृञ्भ्यामारन्नुम् गुक् ह्रस्वश्च । शृङ्गारो रसः । भृङ्गारः कनकालुका । **कञ्जिमृजिभ्यां चित्** ॥४२४॥ कञ्जिः सौत्रो धातुः । कञ्जारो मयूरः । मार्जारः । **कमेः किदुच्चोपधायाः** ॥४२५॥ चिदित्यनुवृत्तेरन्तोदात्तः । कुमारः । **तुषारादयश्च** ॥४२६॥ तुषारः । कासारः । सहार आम्रभेदः । **दीङो नुट् च** ॥४२७॥ दीनारः सुवर्णाभरणम् । **सर्तेरपः षुक् च** ॥४२८॥ सर्षपः । **उषिकुटिदलिकचिखजिभ्यः कपन्** ॥४२९॥ उषपो वह्निसूर्ययोः । कुटपो मानभाण्डम् । दलपः प्रहरणम् । कचपं शाकपत्रम् । खजपं घृतम् । **क्वणेः संप्रसारणं च** ॥४३०॥ कुणपम् । **कपश्चाक्रवर्मणस्य** ॥४३१॥ स्वरे भेदः । **विटपपिष्टपविशिपोलपाः** ॥४३२॥ चत्वारोऽमी कपन् प्रत्ययान्ताः । विट शब्दे । विटपः विशतेरादेः पः । प्रत्ययस्य तुट् । षत्वम् । पिष्टपं भुवनम् । विशतेः प्रत्ययादेरित्वम् । विशिपं मन्दिरम् । **वलतेः संप्रसारणम्** ॥४३३॥ उलपं कोमलं तृणम् । **वृतेस्तिकन्** ॥४३४॥ वर्त्तिका । **कृतिभिदिलतिभ्यः कित्** ॥४३५॥ कृत्तिका । भित्तिका भित्तिः । लत्तिका गोधा । **इष्यशिभ्यां तकन्** ॥४३६॥ इष्टका । अष्टका । **इणस्तशन्तशसुनौ** ॥४३७॥ एतशो ब्राह्मणः । स एव एतशाः । **वीपतिभ्यां तनन्** ॥४३८॥ वी गत्यादौ । वेतनम् । पत्तनम् । **दृदलिभ्यां भः** ॥४३९॥ दर्भः । दल्भः स्यादृषिचक्रयोः । **अर्तिगृभ्यां भन्** ॥४४०॥ अर्भः । गर्भः । **इणः कित्** ॥४४१॥ इभः । **असिसञ्जिभ्यां क्थिन्** ॥४४२॥ अस्थि । सक्थि । **प्लुषिकुषिशुषिभ्यः क्सिः** ॥४४३॥ प्लुक्षिर्वह्निः । कुक्षिः । शुक्षिर्वातः । **अशेर्नित्** ॥४४४॥ अक्षि । **इषेः क्सुः** ॥४४५॥ इक्षुः । **अवितृस्तृतन्त्रिभ्य ईः** ॥४४६॥ अवीर्नारी रजस्वला । तरीर्नौः । स्तरी-

---

अस्मादारन्प्रत्ययः स्यात्कडादेशश्च । 'कडारः कपिले दासे' इति मेदिनी । 'कडारः कपिलः पिङ्गः' इत्यमरः ॥—**शृङ्गार-**॥ शॄ हिंसायाम्, डुभृञ् धारणपोषणयोः, एतौ निपात्येते । आभ्यामारन्नुम् गुग् ह्रस्वश्च । 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने । नपुंसकं च वङ्गेऽपि नामसभवचूर्णयोः' इति मेदिनी । शृङ्गारी झिल्लिकायां स्यात्कनकाली पुनः पुमान्' इति च ॥—**कञ्जि-**॥ मृजू शुद्धौ चित्त्वादारन्प्रत्यय अन्तोदात्तः । 'कञ्जारो जठरे सूर्ये विरञ्चौ वारणे मुनौ' इति विश्वमेदिन्यौ । 'मार्जार ओतौ खट्वाङ्गे' इति च । 'ओतुर्बिडालो मार्जारः' इत्यमरः ॥—**कमेः-**॥ कमु कान्तौ, अस्मादारन्कित्स्यात् । 'कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणाद्रौ ना न द्वयोर्जात्यकावने । कुमारी शैलतनयावनकाल्योर्नदीभिदि । सहायराजिताकन्याजम्बुद्वीपेषु च स्त्रियाम्' इति मेदिनी । विश्वप्रकाशे तु 'कुमारी रामतरणी' इति पाठः । रामतरणी लताविशेषः । सहेति प्रसिद्ध । 'तरणी रामतरणी कर्णिकाचारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः । 'जम्बूद्वीपसहा कन्या कुमार्योऽथाश्ववारके । बालके कार्तिकेये च कुमारी भर्तृदारके' इति त्रिकाण्डशेषः ॥—**तुषारा-**॥ एते निपात्यन्ते । तुष तुष्टौ आरन् । 'तुषारस्तुहिन हिमम्' इत्यमरः । कास शब्दकुत्सायाम् । 'कासारः सरसी सरः' इत्यमरः ॥—**सहार** इति । षह मर्षणे ॥—**दीङो-**॥ दीङ् क्षये, अस्मादारन तस्य नुडागमश्च ॥—**सर्तेः-**॥ सृ गतौ अस्मादपः स्याद्धातोः षुगागमश्च ॥—**उषि-**॥ उष दाहे, कुट कौटिल्ये, दल विदारणे, कच बन्धने, खज मन्थे ॥—**क्वणेः-**॥ क्वण शब्दे । अस्मात्कपन् धातुवकारस्य संप्रसारणं च । 'कुणपः पूतिगन्धे शवेऽपि च' इति मेदिनी । 'कुणपः शवमस्त्रियाम्' इत्यमरः ॥—**विटपः** । 'विटपो न स्त्रिया स्तम्बशाखाविस्तारपल्लवे । विटाधिपे ना' इति मेदिनी ॥—**विशतेरिति** ॥ विश प्रवेशने ॥—**आदेः प** इति । एतच्च उज्ज्वलदत्तरीत्योक्तम् । अन्ये तु सूत्रे विष्टपेति दन्त्यौष्ठ्यादिमेव पठन्ति । युक्तं चैतत् । 'यत्र ब्रध्नस्य विष्टपम्' इत्यादौ तथा दर्शनात् । अमरकोशेऽपि 'विष्टप भुवन जगत्' इति प्रचुरपाठाच्च ॥—**वलतेरिति** ॥ वल वल्ल संवरणे संचरणे च, 'उलपो न स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी ॥—**वृतेः-**॥ वृतु वर्तने ॥—**कृतिभिदि-**॥ कृती छेदने, भिदिर् विदारणे,' लतिः सौत्रो धातुः ॥—**इष्यशि-**॥ इष इच्छायाम्, अशू व्याप्तौ, आभ्यां तकन् कित्स्यात् ॥—**इष्टकेति** ।'इष्टकेषीकामालानाम्' इति निर्देशात्प्रत्ययस्थादिति नेत्वम् । केचित्तु प्रत्ययस्थादितीत्वमिह न भवत्यनित्यत्वात् तज्ज्ञापकं तु 'मृदस्तिकन्' इति इकारोच्चारणमित्याहुः ॥—**इणस्तश-**॥—**एतशा** इति । 'अत्वसन्तस्य' इति दीर्घः । एतशसौ । एतशसः ॥—**वीपति-**॥ पत्लृ गतौ । 'पत्तनं पुटभेदनम्' इति पुरीपर्यायेष्वमरः ॥—**दृदलि-**॥ दॄ विदारणे, दल विकसने ॥—**अर्तिगॄ-**॥ ऋ गतौ, इयर्तीति अर्भः शिशुः । संज्ञाया कनि अर्भकः । 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति मेदिनी ॥—**इण-**॥ इण् गतौ, अस्माद्भन् कित्स्यात् । 'इभः स्तम्बेरमः पद्मी' इत्यमरः ॥—**असि-**॥ असु क्षेपणे, षञ्ज सङ्गे । 'कीकसं कुल्यमस्थि च' इत्यमरः । 'सक्थि क्लीबे पुमानूरुः' इति च ॥—**प्लुषि-**॥ प्लुष दाहे, कुष निष्कर्षे, शुष शोषणे ॥—**अशेः-**॥ अशू व्याप्तौ, अस्मात् क्सिर्नित्स्यात् । अक्षि नयनम् ॥—**इषेः-**॥ इष इच्छायाम् । 'रसाल इक्षुः' इत्यमरः ॥—**अवि-**॥ अव रक्षणादौ, तॄ प्लवनतरणयोः, स्तृञ् आच्छादने, तत्रि कुटुम्बधारणे, चुरादिण्यन्तः ॥—

र्त्रेन्तः । तन्त्रीर्वीणादेर्गुणः । यापोः किद्द्वे च ॥४४७॥ ययीरश्वः । पपीः स्यात्सोमसूर्ययोः । लक्षेर्मुट् च ॥४४८॥ लक्ष्मीः ॥ इत्युणादिषु तृतीयः पादः ॥

## चतुर्थः पादः ।

**वातप्रमीः ॥४४९॥** वातशब्दे उपपदे माधातोरीप्रत्ययः स च कित् । वातप्रमीः ॥ अयं स्त्रीपुंसयोः । **ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः ॥४५०॥** द्वादशभ्यः क्रमात्स्युः । अर्तेः कत्निच् यण् । बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः । तनोतेर्यतुच् । तन्यतुर्वायू रात्रिश्च । अञ्जेरलिच् । अञ्जलिः । वनेरिष्णुच् । वनिष्णुः स्थविरान्त्रम् । अञ्जेरिष्ठच् । अञ्जिष्ठो भानुः । अर्पयतेरिसन् । अर्पिसोऽग्रमांसम् । मदेः स्यन् । मत्स्यः । अतेरिथिन् । अतिथिः । अङ्गेरुलिः । अङ्गुलिः । कौतेरसः । कवसः । अच इत्येके । कवचम् । यौतेरासः । यवासो दुरालभा । कृशेरानुक् । कृशानुः । **शॄः करन् ॥४५१॥** उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्वम् । शर्करा । **पुषः कित् ॥४५२॥** पुष्करम् । **कलश्च ॥४५३॥** पुष्कलम् । **गमेरिनिः ॥४५४॥** गमिष्यतीति गमी । **आङि णित् ॥४५५॥** आगामी । **भुवश्च ॥४५६॥** भावी ।

---

**तरीरिति** । 'स्त्रियां नौस्तरणिस्तरी:' इत्यमरः ॥—**यापोः**–॥ या प्रापणे, पा पाने, आभ्यामीः कित्स्यात् द्वित्वं च धातोः ॥—**लक्षेः**–॥ लक्ष दर्शनाङ्कनयोश्चुरादिर्ण्यन्तः । अस्मादीप्रत्ययः स्यात्तस्य मुडागमो णिलोपश्च । लक्ष्मीः पद्मा विभूतिश्च । 'कृदिकारात्–' इति ङीषि लक्ष्मी इत्यपि भवतीति रक्षितः । 'लक्ष्मीः सम्पत्तिशोभनयोः । ऋद्ध्यौषधौ च पद्मायाम्' इति मेदिनी ॥ **इत्युणादिषु तृतीयः पादः** ॥

**माधातोरिति** । मा माने, कित्त्वात् 'आतो धातोः' इत्यालोपः । 'वातप्रमीर्वातमृगः' इत्यमरः ॥—**अयमिति** । 'द्विचतुःषट्पदोरगाः' इत्यमरेण चतुष्पाद्वाचिनामुभयलिङ्गतोक्तेः । सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः । तत्र 'कृदिकारात्–' इति पाक्षिको ङीप् कैश्चिदिष्यते । न च ह्रस्वादेव 'कृदिकारात्' इति ङीप् भवति न तु दीर्घादिति शङ्क्यम् । वर्णनिर्देशे कारप्रत्ययस्य विधानेन दीर्घादपि कृदिकारेति ङीषसंभवात् । अत एव वातप्रमीश्रीलक्ष्मीति पक्षे ङ्यन्ताः सुसाधव इति रक्षितः । एतच्च दुर्घटग्रन्थे स्पष्टम् । 'आशीराश्यहिदंष्ट्राया लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशः । अत एव 'आशीविषो विषधरः' इत्यमरकोशः सगच्छते । अश भोजन इत्यस्मात् 'इणजादिभ्यः' इति इण्प्रत्यये उपधावृद्धौ 'कृदिकारात्–' इति ङीषः स्वीकारात् आशीति च कलामिन्दोरिति राजशेखर. । 'आशीर्हिताशंसाहिदंष्ट्रयोः' इति सान्तेऽमरात्सान्तोऽप्याशीःशब्दोऽस्तीत्यन्यदेतत् ॥—**ऋतनि**–॥ ऋ गतौ, तनु विस्तारे, अञ्जू व्यक्त्यादौ, वनु याचने, अञ्जू स एव, ऋ गतौ ण्यन्तः, मदी हर्षे, अत सातत्यगमने, अगि गत्यर्थः, कु शब्दे, यु मिश्रणे, कृश तनूकरणे । प्रसङ्गादाह—**अरत्निरिति** । न रत्निः अरत्निरिति नञ्समासः । प्रसृताङ्गुलिः सहस्तः अरत्निरित्यर्थः । दशपादीवृत्तौ तु कत्निजित्यत्र ककारमपठित्वा अर्तेरत्निचमकितं विधाय अरत्निः साधितः । उज्ज्वलदत्तानुसारेणाह—**वायू रात्रिश्चेति** । तन्यतुः शब्दो मेघः अशनिश्चेत्यपि बोध्यम् । 'आविष्कृणोमि तन्यतुर्न वृष्टिम्' इति मन्त्रे तन्यतुर्गर्जितमिति 'सजावृष्टिर्नतन्यतुः' इति मन्त्रे तन्यतुर्मेघ इति 'उतस्मात्स्यतन्यतीरिव द्यौः' इति मन्त्रे 'दिवश्चित्रं न तन्यतुम्' इति मन्त्रे च तन्यतुरशनिरिति वेदभाष्ये व्याख्यातत्वात् । 'अञ्जलिस्तु पुमान् हस्तसपुटे कुडवेऽपि च' इति मेदिनी ॥—**स्थविरान्त्रमिति** । 'वनिष्ठोर्हृदयादधि' इति मन्त्रस्य भाष्ये तथोक्तत्वात् ॥—**अञ्जिष्ठ** इति । केचिदञ्जेरिष्णुचमिच्छन्ति तेषामञ्जिष्णुरुदाहरणम् ॥—**अर्पिस** इति । 'अर्तिह्री–' इत्यादिना पुक् 'णेरनिटि' इति णिलोपः ॥—**मदेरिति** । 'मत्स्यो मीनेऽथ पुभूम्नि देशे' इति मेदिनी । 'अतिथिः कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु' इति च । 'अङ्गुलिः करशाखायां कर्णिकायां गजस्य च' इति च । कवसः सन्नाहः कङ्कटजातिश्च ॥—**अच** इति । 'कवचो गर्दभाण्डे च संनाहे पर्पटेपि च' इति मेदिनी ॥—**यौतेरिति** । 'दुरालभा कटुस्पर्शायासो धन्वयवासकः' इति धन्वन्तरिनिघण्टुः । 'कृशानुः पावकोऽनलः' इत्यमरः ॥—**शॄः** ॥ शॄ हिंसायाम् । 'शर्करा खण्डविकृतौ उपलाशर्कराशयोः । शर्करान्वितदेशे रुग्भेदे शकलेऽपि च' इति मेदिनी ॥—**पुषः**–॥ पुष पुष्टौ, अस्मात्करन्स्यात्स च कित् । 'पुष्करं खेऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधिद्वीपतीर्थभेदयोश्च नपुंसकम् । ना रागनागविहगनृपभेदेषु वारुणौ' इति मेदिनी ॥—**कलश्च** ॥ पुष्यतेः कलन् स च कित् । 'पुष्कलस्तु पूर्णे श्रेष्ठे' इति हेमचन्द्रः ॥—**गमेः**–॥ गम्लृ गतौ । 'भविष्यति गम्यादयः' इत्याशयेनाह—**गमिष्यतीति** ॥—**आगामीति** । इनिप्रत्ययस्य णित्वादुपधावृद्धिः । आगमिष्यतीत्यर्थः ॥—**भुवः**–॥ भू सत्तायामस्मादिनिः स च णित्स्यात् । भविष्यतीति भावी ॥—**प्रेस्थः** ॥ ष्ठा गतिनिवृत्तौ, प्रपूर्वोऽस्मा-

प्रेस्थः ॥४५७॥ प्रस्थायी । परमे कित् ॥४५८॥ परमेष्ठी । मन्थः ॥४५९॥ मन्थतेरिनिः किच्चाद् । किस्वादकारलोपः । मन्थाः । मन्थानौ । मन्थानः । पतस्थ च ॥४६०॥ पन्थाः । पन्थानौ । खजेराकः ॥४६१॥ खजाकः पक्षी । बलाकादयश्च ॥४६२॥ बलाका । शलाका । पताका । पिनाकादयश्च ॥४६३॥ पातेरित्वं नुम् च । क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः । तड आघाते । तडाकः । कषिदूषिभ्यामीकन् ॥४६४॥ कषीका पक्षिजातिः । दूषिका नेत्रयोर्मलम् । अनिहृषिभ्यां किच्च ॥४६५॥ अनीकम् । हृषीकम् । चङ्कणः कङ्कणश्च ॥४६६॥ कण शब्दे अस्माद्यङ्लुगन्तादीकन् धातोः कङ्कणादेशश्च । घण्टिकायां कङ्कणीका सैव प्रतिसरापि च । शॄपॄवृञां द्वेरुक्चाभ्यासस्य ॥४६७॥ शर्शरीको हिंस्रः । पर्परीको दिवाकरः । वर्वरीकः कुटिलकेशः । पर्फरीकादयश्च ॥४६८॥ स्फुर स्फुरणे अस्मादीकन् धातोः पर्फरादेशः । पर्फरीकं किसलयम् । दर्दरीकं वादित्रम् । झर्झरीकं शरीरम् । तित्तिडीको वृक्षभेदः । चरेर्नुम् च । चञ्चरीको भ्रमरः । मर्मरीको हीनजनः ।

---

दिनिः स च णित् । णित्वात् 'आतो युक्' इति युक् । प्रस्थायी गन्तुकामः ॥—परमे-॥ परमशब्दे उपपदे तिष्ठतेरिनिः किस्स्यात् । कित्त्वादातो लोपः । हलदन्तादित्यलुक् । 'परमेष्ठी पितामहः' इत्यमरः ॥—मन्थः॥ मन्थ विलोडने ॥—मन्था इति । पथिमथीत्यात्वम् । 'इतोऽत्सर्वनामस्थाने' । 'मन्था मन्थनदण्डे च वज्रे चापेऽपि च स्मृतः ॥—पतः-॥ पतॢ गतावित्यस्मादिनिस्थश्चान्तादेशः । पथे गतावित्यस्मात्पचाद्यचि अकारान्तोऽप्यस्ति । 'वाटः पथश्च मार्गश्च' इति शुभूतिचन्द्रः । 'त्वचि त्वचः किरोपि स्यात्किरौ प्रोक्तः पथः पथि' इति द्विरूपेषु विश्वः । इह ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे 'अन्येभ्योऽपि दृश्यते' इति डः । 'ऋभुक्षः स्वर्गवज्रयोः' इति विश्वः । ततो मत्वर्थीयेनिः ऋभुक्षिन्निति नान्तं प्रातिपदिकम् । 'पथिमथि-' इत्यात्वे 'इतोऽत्' इत्यत्वे च ऋभुक्षा इन्द्रः ऋभुक्षाणौ ऋभुक्षाण इत्युज्ज्वलदत्तः । दशपाद्यां तु अर्तेः भुक्षिनगिति सूत्रमुपन्यस्य तस्य ऋभुक्षिन्नित्युदाहृतम् । 'ऋभुक्षिणमिन्द्रमाहुव ऊतये' इति मन्त्रस्य वेदभाष्ये तत्सूत्रमुदाहृतम् । अत्रायं विवेकः । इनिप्रत्ययान्ता इति मते अन्तोदात्तत्वं न्याय्य प्रत्ययस्वरेण इनेरिकारस्योदात्तत्वात् । अवग्रहाभावो बाहुलकात् द्वितीयमते त्ववग्रहाभावो न्याय्यः । परन्तु प्रत्ययस्वरेणाकारस्योदात्ततया भुक्षिनक्प्रत्ययान्तस्य मध्योदात्तत्वे प्रसक्ते बाहुलकादन्तोदात्तः स्वीकर्तव्य इति ॥—खजेः-॥ खज मन्थे ॥—बलाका-॥ बल प्राणने, शल गतौ, पतॢ गतौ, एते आकप्रत्ययान्ता निपात्यन्ते । 'बलाका बकपङ्क्तिः स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः' इति विश्वशाश्वतौ । 'शलाकाञ्जनयष्टिका । पताका वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च' इति विश्वः । 'पताका वैजयन्त्यां च सौभाग्ये नाटकाङ्कयोः' इति मेदिनी ॥—पिनाका-॥ एते आकप्रत्ययान्ता निपात्यन्ते । पा रक्षणे, 'पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः' इति मेदिनी । अमरोक्तिमाह—क्लीबपुंसोरिति । किंच पिष्लृ सचूर्णने षकारस्य णत्वं धातोर्यगागमः । 'पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाल्हीकसिह्लके' इति मेदिनी ॥—कषि-॥ कषखषेति दण्डके हिंसार्थकः । दुष वैकृत्ये ण्यन्तः । 'दोषो णौ' इत्युपधाया ऊकारः । अमरोक्तिमाह—दूषिकेति । किंच अकृतेऽपि ईकनि दूषयतेः 'अच इः' इति इप्रत्यये दूषिः । 'कृदिकारात्' इति ङीपि दूषी । उभाभ्यामपि स्वार्थे कनि दूषिका ह्रस्वमध्यैव । 'केऽणः' इति ङीषोऽपि ह्रस्वादेशात् । 'पिचण्डी दूषिका दूषी पिचाट च दृशोर्मलम्' इति विक्रमादित्यकोश. । 'दूषिका तूलिकायां च मले स्याल्लोचनस्य च' इति मेदिनी ॥—अनिहृषि-॥ अन प्राणने, हृष तुष्टौ, आभ्यामीकन्स्यात् स च कित् । 'अनीको स्त्री रणे सैन्येऽपि' इति मेदिनी । 'हृषीक विषयेन्द्रियम्' इत्यमरः ॥—चङ्कणः-॥ कणधातोर्यङ्लुकि प्रत्ययलक्षणन्यायेन 'सन्यङोः' इति द्वित्वे 'कुहोश्चुः' इत्यभ्यासस्य चुत्वे 'नुगतोऽनुनासिकान्तस्य' इति नुकि चकण् । डसिङसोस्तु चंकणः ॥—धातोरिति । चंकणित्यस्य ॥—शॄ पॄ-॥ शॄ हिंसायाम्, पॄ पालनादौ, वृञ् वरणे, एभ्य ईकन् एषां द्विर्वचनमभ्यासस्य रुगागमश्च ॥—शर्शरीकाइत्यादि । उरदत्वे रपरत्वम् ॥—पर्फरीकाद-॥ ईकन्नन्ता एते निपात्यन्ते ॥—पर्फरादेश इति । एतच्चोज्ज्वलदत्तरीत्योक्तं वस्तुतस्तु धातोर्द्वित्वमुकारस्याकारः सलोपः रुक् चाभ्यासस्येति दशपाद्यां यदुक्तं तदेव न्याय्यम् । चरेर्नुम् चेत्युत्तरग्रन्थानुरोधेन द्वे रुक् चेत्याद्यनुवृत्तेर्न्याय्यत्वात् ॥—किसलयमिति । 'नैतोशेव तुर्फरीपर्फरीका' इति मन्त्रस्य वेदभाष्ये तु ञिफला विशरणे, पॄ पालनपूरणयोः, पर्व पुर्व पूरणे, एषामन्यतमस्य निपातनमिदमित्याश्रित्य शत्रूणां विदारयितारौ स्तोतॄणां पालकौ इष्टार्थस्य पूरयितारा चेति व्याख्यातम् ॥—दर्दरीकमिति । दॄ विदारणे, अस्मादीकन्धातोर्दर्दरादेशः ॥—झर्झरीकमिति । झॄष् वयोहानौ अस्मादीकन्धातोर्झर्झरादेशः । वस्तुतस्तु दर्दरीकझर्झरीकावपि पर्फरीकवद्धातोर्द्विः रुक् चाभ्यासस्येति व्याख्येयौ उत्तरखण्डे ऋकारस्य गुणे रपरत्वम् ॥—तित्तिडीक इति । तिमष्टीम आर्द्रीभावे मकारस्योकारः अभ्यासस्य तुक् च । 'तित्तिडी चिञ्चाम्लिका' इत्यमरे तु शब्दान्तर । तथा च 'तित्तिडी त्वम्लिका चिञ्चा तित्तिडीका कपिप्रिया, इति वाचस्पतिः । 'अम्लीका चाम्लिका चिञ्चा तित्तिडीका च तित्तिडा' इति चन्द्रः । 'अम्लीका चुक्रिका चुक्रा साम्ला शुक्राथ शुक्रका । अम्लिका चिञ्चिका चिञ्चा तिन्तिडीका सुतितिडा' इति धन्वन्तरिनिघण्टुः ॥—चरेः-॥ चर गतिभक्षणयोरस्मादीकन् द्विर्वचनमभ्यासस्य नुमागमश्च । 'भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो मधुके शठः' इति त्रिकाण्डशेषः ॥—मर्मरीक इत्यादि । मृङ् प्राणत्यागे, डुकृञ् करणे, आभ्या-

**कर्करीका गलन्तिका । पुणतेः । पुण्डरीकं वादित्रम् । पुण्डरीको व्याघ्रोऽग्निर्दिग्गजश्च । ईषेः किद्ध्रस्वश्च ॥४६९॥ इषीका शलाका । ऋजेश्च ॥४७०॥ ऋजीकः उपहतः । सर्तेर्नुम् च ॥४७१॥ सृणीका लाला । मृडः कीकच्कङ्कणौ ॥४७२॥ मृडीको मृगः । मृडङ्कणः शिशुः । अलीकादयश्च ॥४७३॥ कीकजन्ता निपात्यन्ते । अल भूषणादौ । अलीकं मिथ्या । विपूर्वाद्व्यलीकं विप्रियं खेदश्च । वलीकं पटलप्रान्ते इत्यादि । कॄतॄभ्यामीषन् ॥४७४॥ करीषोऽस्त्री शुष्कगोमये । तरीषः तरीता । शॄपॄभ्यां किच्च ॥४७५॥ शिरीषः । पुरीषम् । अर्जेर्ऋज च ॥४७६॥ ऋजीषं पिष्टपचनम् । अम्बरीषः ॥४७७॥ अयं निपात्यते । अबि शब्दे । अम्बरीषः पुमान् भ्राष्ट्रम् । कॄशॄपॄकटिपटिशौटिभ्य ईरन् ॥४७८॥ करीरो वंशाङ्कुरः । शरीरम् । परीरम् फलम् । कटीरः कन्दरो जघनप्रदेशश्च । पटीरश्चन्दनः कण्टकः कामश्च । शौटीरस्त्यागिवीरयोः । ब्राह्मणादित्वात् ष्यञ् । शौटीर्यम् । वशेः कित् ॥४७९॥ उशीरम् । कशेर्मुट् च ॥४८०॥ काश्मीरो देशः । कुञ उच्च ॥४८१॥ कुरीरं मैथुनम् । घसेः किच्च ॥४८२॥ क्षीरम् । गभीरगम्भीरौ ॥४८३॥ गमेर्भः पक्षे नुम् च । विषा विहा ॥४८४॥ स्यतेर्जहातेश्च विपूर्वाभ्यामाप्रत्ययः । विषा बुद्धिः । विहा स्वर्गः । अव्यये इमे । पच एलिमच् ॥४८५॥ पचेलिमो वह्निरव्योः । शीङो धुक्-**

मीकन् धातोर्द्वित्वम् अभ्यासस्य रुक् 'कर्कर्यालुर्गलन्तिका' इत्यमरः । पुण कर्मणि शुभे, णस्य डः प्रत्ययस्य रुडागमश्च । 'पुण्डरीक सिताम्भोजे सितच्छत्रे च भेषजे । पुसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च' इति मेदिनी ॥—**ईषेः**–॥ ईष गतावस्मादीकन् ह्रस्वश्च कित्त्वाद्गुणाभावः । ह्रस्वविधानसामर्थ्यादेव गुणाभावे सिद्धेऽप्युत्तरार्थं कित्त्वमित्याहुः । 'इषीका स्यादीषिकापि वानायुजवनायुजौ' इति द्विरूपकोशः ॥—**ऋजेः**–॥ ऋज गतौ ॥—**सर्तेः**–॥ सृ गतावस्मादीकन्कित्स्याद्धातोर्नुमागमश्च । 'सृणिका स्यन्दिनी लाला' इत्यमरः ॥—**मृडः कीकच्** ॥ मृड सुखने मृडः । कीकमित्युज्ज्वलदत्तादिपाठः प्रामादिकः । मृडीकशब्दस्य चित्स्वरेणान्तोदात्तत्वात् । 'मृडीके अस्य सुमतौ स्याम' इत्यादौ चित्स्वरस्यैव दर्शनात् ॥—**अलीकाद्**–॥ 'अलीकमप्रियेऽपि स्याद्दिव्यसत्ये नपुंसकम्' इति मेदिनी । अलीकमप्रिये प्रोक्तमलीकमनृते दिवि' इति विश्वः । 'अलीकमप्रिये भाले वितथे' इति हेमचन्द्रः । तथा चाभियुक्तैः प्रयुज्यते । 'ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतां च न संत्यजन्ति' इति । इहालीकलग्नाः भाललग्नाः अप्रिये लग्ना इत्याद्यर्थे यथायोग्य बोध्यम् । 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने । ना नागरे' इति मेदिनी । वल संवरणे, 'वलीकनीध्रे पटलप्रान्ते' इत्यमरः । वलतेर्नुमागमे वल्मीकम् । 'वामलूरश्च नाकुश्च वल्मीकं पुनपुंसकम्' इत्यमरः । वहतेर्वृद्धिश्च वाहीको गौरश्वश्च । सुप्रपूर्वादिणस्तुट् च । सुप्रतीकः । शाम्यतेः शमीकः ऋषिः । एवमन्येऽप्यूह्या इत्याशयेनाह—**इत्यादी**ति ॥—**कॄतॄ**–॥ कॄ विक्षेपे, तॄ प्लवनतरणयोः ॥—**शॄ पॄ**–॥ शॄ हिंसायाम् । पॄ पालनादौ, आभ्यामीषन् कित्स्यात् । 'ऋत इद्धातोः' इति इत्त्वं रपरत्वम् । शिरीषो वृक्षभेदः । 'उदोष्ठ्यपूर्वस्य' इत्युत्वे 'गूथ पुरीष वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्' इत्यमरः ॥—**अर्जेः**–॥ अर्ज षर्ज अर्जने, अस्मादीषन् कित्स्यात् धातोर्ऋजादेशश्च । अमरोक्तिमाह—**ऋजीषमि**ति । किंच उद्धृतरसः सोमलतायाः शेषोऽपि ऋजीषम् । एतच्च 'ऋजीषिण वृषणसश्चतश्रिये' 'असत्योपातुमघवान् ऋजीषी' इत्यादिमन्त्रे भाष्ये स्पष्टम् ॥—**अयमि**ति ॥ ईषन्प्रत्ययस्तस्य अरुडागमश्चेत्यर्थः । बोपालितोक्तिमाह—**अम्बरीषमि**ति । 'क्लीबेऽम्बरीष भ्राष्ट्रः' इत्यमरः । 'अम्बरीषं रणे भ्राष्ट्रे क्लीब पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातकेऽनुतापे च' इति मेदिनी ॥—**कॄशॄपॄ**–॥ कॄ विक्षेपे, शॄ हिंसायाम्, पॄ पालनपूरणयोः, कटे वर्षावरणयोः, इट किट कटी गतौ, चुरादौ पट पुटेति दण्डके भाषार्थः, शौट गर्वे । 'वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्धटयोः पुमान् । करीरा चीरिकायां च दन्तमूले च दन्तिनाम्' इति मेदिनी ॥ शीर्यत इति शरीरम् । 'शरीर वर्ष्म विग्रहः' इत्यमरः । अर्धर्चादित्वाच्छरीर इति पुंलिङ्गोऽपि ॥—**परीरमि**ति । पूर्यतेऽनेनेति विग्रहः । बाहुलकात् हिडि गत्यनादरयोः, हिण्डते इतस्ततो गच्छतीति हिण्डीरः । 'हिण्डीरोऽब्धिकफः फेनः' इत्यमरः । 'डिण्डीरोऽपि च हिण्डीरः' इति द्विरूपकोशः । किर्मीरजम्बीरतूणीरादयोऽपि बाहुलकादेव बोध्याः । 'किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे' इति मेदिनी । 'जम्बीरः प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे' इति च ॥—**वशेः**–॥ वश कान्तौ, अस्मादीरन्कित्स्यात् । कित्वात्संप्रसारणादि । उशीरं वीरणमूलमुशीरोऽपि । 'मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यम्' इत्यमरः ॥—**कशेः**–॥ कश इति सौत्रो धातुः अस्मादीरन् तस्य मुडागमश्च । पृषोदरादित्वात्काश्मीरः ॥—**कुञः**–॥ डुकृञ् करणे अस्मादीरन् धातोरन्त्यस्य उदादेशो रपरः ॥—**घसेः**–॥ घस्लृ अदने अस्मादीरन् कित्स्यात् । 'गमहन–' इत्युपधालोपे कत्वं षत्वं च । 'क्षीरं दुग्धे च नीरे च' इति विश्वः ॥—**गभीरः**–॥ गम्लृ गतौ अस्मादीरन् भकारोऽन्तादेशः । पक्षे नुमागमश्च निपात्यते । 'निम्नं गभीरं गम्भीरम्' इत्यमरः ॥—**विषा**–॥ षोऽन्तकर्मणि, ओहाक् त्यागे, आभ्यां विपूर्वाभ्यामाप्रत्ययः निपात्यते ॥—**पचः**–॥ डुपचष् पाके, अस्मादेलिमच् स्यात् । कर्तरि अयम् । कृत्यप्रत्ययेषु तु केलिमर् उपसं-

**क्लुक्वलञ्वालनः ॥४८६॥** चत्वारः प्रत्ययाः स्युः । शीधु मद्यम् । शीलं स्वभावः । शैवलः शेवालम् । बाहुलकाद्ध्रस्व पक्षेऽपि । शेवालं शैवलो न स्त्री शेपालो जलनीलिका । **मृकणिभ्यामूकोकणौ ॥४८७॥** मरूको मृगः । काणूकः काकः । **वलेरूकः ॥४८८॥** वलूकः पक्षी उत्पलमूलं च । **उलूकादयश्च ॥४८९॥** वलेः संप्रसारणमूकश्च । उलूकाविन्द्रपेचकौ । वावदूको वक्ता । भल्लूकः । **शमेर्बुक्च ॥४९०॥** शम्बूको जलशुक्तिः । **शलिमण्डिभ्यामूकण् ॥४९१॥** शालूकं कन्दविशेषः । मण्डूकः । **नियो मिः ॥४९२॥** नेमिः । **अर्तेरूच ॥४९३॥** ऊर्मिः । **भुवः कित् ॥४९४॥** भूमिः । **अश्नोते रशूच ॥४९५॥** रश्मिः किरणो रज्जुश्च । **दल्मिः ॥४९६॥** दल विशरणे । दल्मिरिन्द्रायुधम् । **वीज्याज्वरिभ्यो निः ॥४९७॥** बाहुलकाण्णत्वम् । वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे । ज्यानि. जूर्णिः । **सृवृषिभ्यां कित् ॥४९८॥** सृणिरङ्कुशः । वृष्णिः क्षत्रियमेषयोः । **अङ्गेर्नलोपश्च ॥४९९॥** अग्निः । **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ॥५००॥** वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । बाहुलकान्म्लानिः । **घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ॥५०१॥** एते पञ्च निपात्यन्ते । घृणिः किरणः । स्पृशतेः सलोपः । पृश्निरल्पशरीरः । पृषेर्वृद्धिश्च ।

---

स्यातः ॥—**शीङः**–॥ शीङ् स्वप्ने, शेरतेऽनेनेति शीधुर्मद्यविशेषः 'मैरेयमासवः शीधुः' इत्यमरः । अर्धर्चादिपाठात् क्लीबं च । 'पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवः' इति त्रिकाण्डशेषः । 'शीलं स्वभावे सद्वृत्ते' इति मेदिनी । 'जलनीली तु शैवालम्' इत्यमरः । 'शैवलं पद्मकाष्ठे स्यात् शैवाले तु पुमानयम्' इति मेदिनी । शब्दार्णवोक्तिमाह—**शैवालं शैवाल** इति ॥—**मृकणि**–॥ मृङ् प्राणत्यागे, कण शब्दार्थः । ऊकश्च ऊकण् च ऊकोकणौ एतौ प्रत्ययौ यथाक्रमं भवतः ॥—**वलेः** । वल संवरणे । 'उलूकः पुंसि काकादाविन्द्रे भारतयोधिनि' इति मेदिनी । वदेर्यङ्लुगन्तादूकः । 'वाचोयुक्तिपटुर्वाग्मी वावदूकश्च वक्तरि' इत्यमरः ॥—**भल्लूक** इति । भल परिभाषण इत्यस्मादूकः ॥—**शमेः**–॥ शम उपशमे अस्मादूकः धातोर्बुगागमश्च । 'शम्बूको गजकुम्भान्ते घोषे च शूद्रतापसे' इति मेदिनी । बाहुलकादुकप्रत्यये ह्रस्वमध्योऽपि । 'जम्बूक जम्बुकं प्राहुः शम्बूकमपि शम्बुकम्' इति द्विरूपकोशः । जम्बूकवधूकादयोऽप्यत्रैव द्रष्टव्याः । 'जम्बूकः फेरवे नीचे पश्चिमाशापतावपि' इति मेदिनी–विश्वप्रकाशौ । 'बन्धुक बन्धुजीवे स्याद्बन्धूकः पीतसारके' इति च ॥—**शलिमण्डि**–॥ शल गतौ, मडि भूषायां हर्षे च । 'सौगन्धिक तु कल्हारम्' इत्याद्युपक्रम्य 'शालूकमेषां कन्दः स्यात्' इत्यमरः । एषां च सौगन्धिकादीनां कुमुदकैरवान्तानां कन्दो मूलं शालूकमित्यर्थः । मण्डते वर्षासमयमिति मण्डूको भेकः ॥—**नियो मिः**–॥ णीञ् प्रापणे । नयति चक्रमिति नेमिश्चक्रावयवः । नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्' इति मेदिनी । बाहुलकादन्यतोऽपि । या प्रापणे, 'यामिः स्वसृकुलस्त्रियोः' इत्यन्तस्थादौ रभसः । 'जामिः स्वसृकुलस्त्रियोः' इति चवर्गतृतीयादावजयकोशः । 'चवर्गादिरपि प्रोक्तो यामिः स्वसृकुलस्त्रियोः' इति द्विरूपेषु विश्वः ॥—**अर्तेरूच** ॥ ऋ गतावित्यस्मान्मिः धातोरूकारादेशश्च । उश्चेति वक्तुमुचितम् । रपरत्वे 'हलि च' इति दीर्घसंभवात् । 'ऊर्मिः स्त्रीपुंसयोर्वीच्या प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखाया वेदनापीडयोरपि' इति मेदिनी ॥—**भुवः**–॥ भवतेर्मिः कित्स्यात् । भवन्ति भूतान्यस्यामिति भूमिः । 'भूमिर्वसुन्धरायां स्यात्स्थानमात्रेऽपि च स्त्रियाम्' इति मेदिनी । 'भूर्भूमिरचलानन्ता' इत्यादि त्वमरः ॥—**अश्नोतेः**–॥ अशू व्याप्तौ, अस्मान्मिः धातो रशादेशश्च । 'रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि' इति मेदिनी ॥—**वीज्या**–॥ वी गतौ, ज्या वयोहानौ, ज्वर रोगे । अमरोक्तमाह—**वेणिः स्यादि**त्यादि । 'कृदिकारात्' इति ङीष् । 'वेणी केशस्य बन्धने नद्यादेरन्तरे देवताडे' इति मेदिनी । 'वेणी खरागरी देवताडो जीमूत इत्यपि' इत्यमरः । 'ज्यानिर्हानौ स्रवन्त्यां च' इति विश्वः । 'ज्वरत्वर–' इत्युपधाया वकारस्य ऊठ् । जूर्णिः स्त्रीरोगः ॥—**सृवृषि**–॥ सृ गतौ, वृषु सेचने, आभ्यां निः कित्स्यात् । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः । 'सृणिः स्यादङ्कुशे पुमान्' इति कोशान्तरम् । अत एव 'आरक्षमग्नमवमत्य सृणिं शिताग्रम्' इति माघे पुंलिङ्गप्रयोगः । 'वृष्णिस्तु यादवे मेषे वृष्णिः पाखण्डयोः' इति विश्वः । 'ऐन्द्रं वृष्णि षोडशिनि तृतीयम्' इति श्रुतौ वृष्णि मेषमित्यर्थः ॥—**अङ्गेः**–॥ अगिर्गत्यर्थः । 'अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी ॥—**वह्नि**–॥ वह प्रापणे, श्रिञ् सेवायाम्, श्रु श्रवणे, यु मिश्रणे, द्रु गतौ, ग्लै म्लै हर्षक्षये, ओहाक् त्यागे, ञित्वरा संभ्रमे, एभ्यो निः प्रत्ययः स्यात्स च नित् । 'वह्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी । 'पङ्क्तिः निःश्रेणिस्त्वधिरोहिणी । श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहतौ' इति मेदिनी । श्रोणिः कटिप्रदेशः । 'कटिः श्रोणिः ककुद्मती' इत्यमरः । योनिर्भगम् । 'योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिरे' इति मेदिनी । द्रोणिः सेचनी । 'कृदिकारात्–' इति ङीषि द्रोणी । 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे' इति मेदिनी । ग्लानिर्दौर्बल्यम् । हानिरपचयः ॥—**घृणि**–॥ घृ सेचने स्पृश संस्पर्शने, पृषु सेचने, चर गतौ, डुभृञ् धारणपोषणयोः । निप्रत्ययो गुणाभावश्च निपात्यते । 'घृणिः पुनः । अंशुज्वालातरङ्गेषु' इति हेमचन्द्रः । 'पृश्निरल्पतनौ'

पार्ष्णिः पादतलम् । घरेरप्याद्या उत्वम् । घूर्णिः कपर्दकशतम् । भिमर्तेरुत्वम् । भूर्णिर्धरणी । वृदृभ्यां विन् ॥५०२॥ वर्विर्बस्मरः । दर्विः । जृशॄस्तृजागृभ्यः क्विन् ॥५०३॥ जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युः । जागृविर्नृपः । दिवो द्वे दीर्घश्चाभ्यासस्य ॥५०४॥ दीदिविः स्वर्गमोक्षयोः । कृविघृष्विछविस्थाविकिकीदिवि ॥५०५॥ कृविस्तन्तुवायद्रव्यम् । घृष्विर्वराहः । छास्थोर्ह्रस्वत्वं च । छविर्दीप्तिः । स्थविस्तन्तुवायः । दीव्यतेः किकीपूर्वात् किकीदिविश्चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः । चाषेण किकिदीविना । पातेर्डतिः ॥५०६॥ पतिः । शकेर्ऋतिन् ॥५०७॥ शकृत् । अमेरतिः ॥५०८॥ अमतिः कालः । वहिवस्यर्तिभ्यश्चित् ॥५०९॥ वहतिः पवनः । वसतिर्गृहयामिन्योः । अरतिः । क्रोधः । अञ्चेः को वा ॥५१०॥ अङ्कतिः । अञ्चतिर्वातः । हन्तेरंह च ॥५११॥ हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अंहतिर्दानम् । प्रादेशनं निर्वपणमपवर्जनमंहतिः । रमेर्नित् ॥५१२॥ रमतिः कालकामयोः । सूङः क्रिः ॥५१३॥ सूरिः । अदिशदिभूशुभिभ्यः क्रिन् ॥५१४॥ अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा । वङ्क्र्यादयश्च ॥५१५॥ क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च । वप्रिः क्षेत्रम् । अंहिरङ्घ्रिश्च चरणः । तदिः सौत्रो धातुः । तन्द्रिर्मोहः । बाहुलकाद्गुणः । भेरिः । राशदिभ्यां त्रिप् ॥५१६॥ रात्रिः । शत्रिः कुञ्जरः । अदेस्त्रिनिश्च ॥५१७॥ चात्त्रिप् । अत्री । अत्रिणौ । अत्रिणः । अत्रिः । अत्री । अत्रयः ।

---

इत्यमरः । 'पार्ष्णिः स्यादुन्मदः । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति मेदिनी ॥—भूर्णिरिति । तत्रान भूर्णिरिति मन्त्रभाष्ये तु भूर्णिर्धारकः पोषको वेति व्याख्यातम् ॥—वृदृ–॥ वृञ् वरणे, दृङ् आदरे, स्त्रियां 'कृदिकारात्' इति ङीष् । दर्वी ॥—जृशॄ–॥ जॄ वयोहानौ, शॄ हिंसायाम्, स्तॄञ् आच्छादने, जागृ निद्राक्षये, क्विनः कित्वात् 'ॠत इद्धातोः' इति इत्वे रपरत्वे जीर्विरित्यादि ॥—दिवो–॥ दिवु क्रीडादौ अस्मात्क्विन् कित्वाद्गुणाभावः 'दीदिविर्धिषणान्नयोः' इति विश्वः । 'दीदिविर्ना धिषणोऽन्नं तदस्त्रियाम्' इति मेदिनी । धिषणो बृहस्पतिः । 'दीदिविर्धी दशकरश्चक्षुः सुरगुरुर्गुरुः' इति त्रिकाण्डशेषः । 'दीदिविर्द्वादशार्चिः स्याज्जीवः प्राग्फल्गुनीसुतः' इति हारावली । 'ओदनोऽस्त्री सदीदिविः' इत्यमरः । अत्र सदीदिविर्दीदिविसहित इति व्याख्यानं न्याय्यम् । अत्र स इति विशेषणाद्दीदिविः पुलिङ्ग इति केषांचिद्व्याख्यानं नादर्तव्यम् । स इति छेदने तु अस्त्रियामिति न लभ्येत ततश्चात्रं तदस्त्रियामिति पूर्वोक्तमेदिनीग्रन्थो विरुध्यतेति ध्येयम् । 'गोपामृतस्य दीदिविम्' इति मन्त्रे तु द्योतमानमित्यर्थः ॥—कृवि–॥ डुकृञ् करणे, घृषु सेचने, छो छेदने, ष्ठा गतिनिवृत्तौ, दिवु क्रीडादौ, एते क्विन्नन्ताः ॥—घृष्विर्वराह इति । 'उग्रस्य यूनः स्थविरस्य घृष्वेः' कामानां वर्षकस्येत्यर्थ इति व्याख्यातम् । घृषु सेचने, इति धात्वर्थानुगमात् । 'छविः शोभारुचोर्योषित्' इति मेदिनी । 'अथ चाषः किकीदिविः' इत्यमरः ॥—विनिमय इति । किकीदिवाविति द्विरूपकोशः ॥—पातेः–॥ पा रक्षणे डित्वाट्टिलोपः 'पतिर्धवे ना त्रिष्वीशे' इति मेदिनी ॥—शकेः–॥ शकॢ शक्तौ । 'उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्रियाम्' इत्यमरः ॥—अमेः–॥ अम गतौ, 'अथामतिः पुंसि हिमदीधितिकालयोः' इति मेदिनी ॥—वहि–॥ वह प्रापणे, वस निवासे, ऋ गतौ । 'वसति' सचिवे गवि' इति विश्वः । वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने' इति मेदिनी ॥—अञ्चेः॥ अञ्चु गतौ, अस्मादतिः स्यात्ककारश्चान्तादेशो विकल्पेन ॥ हन्तेः–॥ हन हिंसागत्योः, अमरोक्तिमाह—प्रादेशनमित्यादि ॥—रमेः–॥ रमतेरतिः स्यात्स च नित् । 'रमतिर्नायके नाके पुंसि स्यात्' इति मेदिनी । नित्त्वमाद्युदात्तार्थम् । रन्तिरसिरमतिरसि ॥—सूङः–॥ षूङ् प्राणिप्रसवे कित्वाद्गुणाभावः । 'पुमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः । दशपाद्या तु सुजोरिन् दीर्घश्चेति पाठस्तत्र रिनो नकारो नानुबन्धः उत्तरसूत्रे क्रिन्प्रत्ययारम्भात् अनुबन्धत्वे हि लाघवादिहैव क्रिन्नुच्येत । तथा च सूरी सूरिणौ सूरिण इत्यादि रूपम् । अत एवाभिधानमालाया सूरीति नान्तमुदाहृतमित्यभिधेयम् । दशपादीवृत्तिकारैस्तु नित्त्व स्वीकृत्य सूरिरित्युदाहृतं तदेतेन प्रत्युक्तम् । स्वरनिरुद्धमपि 'सदा पश्यन्ति सूरयः' 'विसूरयो दधातो विश्वमायुः' इत्यादौ सूरिशब्दस्यान्तोदात्तत्वदर्शनात् ॥ —अदि–॥ अद भक्षणे, शद्लृ शातने, भू सत्तायाम्, शुभ शुम्भ शोभार्थे । 'अद्रयो द्रुमशैलार्काः' इत्यमरः । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकम्' इति मेदिनी ॥—वङ्क्र्यादयः॥ वकि कौटिल्ये, डुवप् बीजसन्ताने । निपातनात्संप्रसारणाभावः । अहिर्भाषार्थश्चुरादिण्यन्तः । अघि गतौ गत्यारम्भे च । ञिभी भये ॥—तन्द्रिरिति । 'कृदिकारात्–' इति ङीष् 'तन्द्री निद्राप्रमीलयोः' इति मेदिनी । 'तन्द्री तन्द्रिश्च तन्द्रायाम्' इति । 'विभज्य नक्तं दिवमस्ततन्द्रिणा' इति भारविः । प्रत्ययस्य कित्वाद्गुणाभावमाशङ्क्याह—बाहुलकादिति ॥—राशदि–॥ रा दाने, शद्लृ शातने । 'शत्रिर्नाम्भोधरे विष्णौ' इति मेदिनी । 'शत्रिमग्न उपमाकेतुमर्यः' इति मन्त्रस्य वेदभाष्ये केतुं मानभूतं प्रख्यातं सत्रिम् एतन्नामकं राजर्षिमिति व्याख्यातम् ॥—अदेः–॥ अद भक्षणे, अत्रिर्मुनिभेदः । उज्ज्वलदत्तादयस्तु अदेस्त्रिनिति पठित्वा अत्रिरित्युदाजह्रुस्तन्न । त्रिपैवेष्टसिद्धौ प्रत्ययान्तरवैयर्थ्यात् । गोवर्धनस्तु अदेस्त्रिनिति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा अत्री अत्रिणौ अत्रिण इत्याह । तदपि नित्त्वे सत्याद्युदात्तत्ववत् । न चेष्टापत्तिः

**पतेरत्रिन्** ॥५१८॥ पतत्रिः पक्षी । **मृकणिभ्यामीचिः** ॥५१९॥ मरीचिः । कणीचिः पल्लवो मिनादः । **श्वयतेश्चित्** ॥५२०॥ श्वयीचिर्व्याधिः । **वेञो डिच्च** ॥५२१॥ वीचिस्तरङ्गः । नञ्समासे अवीचिर्नरकभेदः । **ऋहनिभ्यामूषन्** ॥५२२॥ अरूषः सूर्यः । हनूषो राक्षसः । **पुरः कुषन्** ॥५२३॥ पुर अग्रगमने । पुरुषः । अन्येषामपीति दीर्घः । पूरुषः । **पृनहिकलिभ्य उषच्** ॥५२४॥ परुषम् । नहुषः । कलुषम् । **पीयेरूषन्** ॥५२५॥ पीय इति सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणे पेयूषोऽभिनवं पयः । **मस्जेर्नुम् च** ॥५२६॥ मञ्जूषा । **गडेश्च** ॥५२७॥ गण्डूषः । गण्डूषा । **अर्तेररुः** ॥५२८॥ अररुः शत्रुः । अररू । अररवः । **कुटः किच्च** ॥५२९॥ कुटरुर्वस्त्रगृहम् । किग्वप्रयोजनं चिन्त्यम् । **शकादिभ्योऽटन्** ॥५३०॥ शकटोऽस्त्रियाम् । शकिर्गत्यर्थः । कक्कटः सम्बाहः । देवटः शिल्पी । करट इत्यादि । **कृकदिकडिकटिभ्योऽम्बच्** ॥५३१॥ करम्बं व्यामिश्रम् । कदीकडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् । **कदेर्णित्पक्षिणि** ॥५३२॥ कादम्बः कलहंसः । **कालिकर्द्योरमः** ॥५३३॥ कलमः । कर्दमः । **कुणिपुल्योः किन्दच्** ॥५३४॥ कुण शब्दोपकरणयोः । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः । **कुपेर्वा वश्च** ॥५३५॥ कुपिन्दकुविन्दौ तन्तुवाये । **नौ षञ्जेर्घथिन्** ॥५३६॥ निषङ्गथिरालिङ्गकः । **उदृतेश्चित्** ॥५३७॥ उदरथिः समुद्रः । **सर्तेर्णिच्च** ॥५३८॥ सारथिः । **खर्जिपिञ्जादिभ्य ऊरोलचौ** ॥५३९॥

---

'जहीन्या अत्रिणं पणि' 'अग्ने हसिन्या अत्रिणम्' इत्यादावन्तोदात्तस्य निर्विवादत्वात् । अत एव 'न लुमताङ्गस्य' इति सूत्रे अदेशिनिश्चेत्येव कैयटोऽप्याहेति दिक् ॥—**पतेः**–॥ पत्लृ गतौ ॥—**पतत्रिरिति**। पक्षवाचकात्पतत्रशब्दान्मत्वर्थे इनि तु नान्तः पतत्री पतत्रिण इत्यादि ॥—**मृकणि**–॥ मृङ् प्रणत्यागे 'कणशब्दार्थ ' 'मरीचिः कृपणे दीप्तौ ऋषिभेदे च दृश्यते' इति विश्वः । 'मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्' इति मेदिनी । 'कणीचिः पुष्पितलतागन्त्र्योः शकटे स्त्रियाम्' इति च ॥—**श्वयतेः**–॥ टुओश्वि गतिवृद्ध्योः, अस्मादीचिप्रत्ययश्चित्स्यात् ॥—**वेञः**–॥ वेञ् तन्तुसन्तानेऽस्मादीचिर्डित्स्यात् । 'वीचिः स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः' इति विश्वमेदिन्यौ ॥—**ऋहनि**–॥ ऋ गतौ, हन हिंसागत्योः, कुष निष्कर्षे । कित्त्वाद्गुणाभावः । 'पुरुषः पुरुषे सांख्यज्ञे च पुनागपादपे' इति विश्वमेदिन्यौ ॥—**पृनहि**–॥ पृ पालनपूरणयोः, णह बन्धने, कल शब्दसंख्यानयोः, 'परुष कर्बुरे रुक्षे निष्ठुरोक्तौ च वाच्यवत्' इति मेदिनी । 'नहुषो राजविशेषे नागभिद्यपि' इति हेमचन्द्रः । उषचश्चित्त्वान्नहुषशब्दस्यान्तोदात्तत्वे प्राप्ते ग्रामादित्वाद्वृषादित्वादाद्युदात्तत्वमित्याहुः । एतच्च 'देवा अकृण्वन्नहुषस्य विश्पतिम्' इति मन्त्रस्य भाष्ये स्पष्टम् । 'कलुष त्वाविलैनसोः' इति विश्वः ॥—**पीयेः**–॥ 'पीयूषममृत सुधा' इत्यमरः । 'पीयूषं सप्तदिवसावधि क्षीरे तथा मृते' इति मेदिनी । अमरोक्तिमाह—**पेयूष** इत्यादि ॥—**मस्जेः**–॥ टुमस्जो शुद्धौ, अस्मादूषन्स्यान्नुमागमश्च धातोः । 'मिदचोऽन्त्यात्परः' सस्य श्चुत्वेन शस्तस्य जश्त्वेन जस्तस्य 'झरो झरि' इति वा लोपः । लोपाभावपक्षे जकारद्वयम् । मञ्जूषा काष्ठमय द्रव्यम् । पेटक इति यावत् । 'पिटकः पेटकः पेटा मञ्जूषा' इत्यमरः ॥—**गडेः**–॥ गडि वदनैकदेशे । 'गण्डूषो मुखपूरणः' ॥—**अर्तेः**–॥ ऋ गतौ । उकारान्तोऽय प्रत्ययो न तु सकारान्त इति स्फोरयति अररू अररवः इत्यनेन । न चोकारान्तत्वे विवदितव्यम् । 'कच्चियाविरररु शूरमर्त्यम्' । 'आपाररुमदेवयजनो जहि' इत्यादिमन्त्रेषु तथादर्शनात् । अत्र व्याचक्षते । 'मानशसाररुष' इति मन्त्रस्य भाष्ये सान्तोऽयमिति माधवेनोक्तं यत्तत्प्रौढिवादमात्रं न तु वास्तवम् । अररुष इति पदस्य आद्युदात्तत्वानुपपत्तिप्रसङ्गात् तस्माद्रातेः लिटः क्वसुश्चेति क्वसोररिवानित्यनेन नञ्समासे ह्स्यररुष इति व्याख्येयम । ततश्च तत्पुरुषे तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरे सत्याद्युदात्तत्वं सिद्ध्यति । गुरुद्वेषोऽररुषे दन्तीत्यत्र स्वयमेव रातेः क्वसन्तस्य नञ्समास इत्यादि व्याख्यानात् । 'यो नो अग्ने अररिवां अघायुः' इत्यादिमन्त्रान्तरसंभवाच्चेति ॥—**कुटः**–॥ कुट कौटिल्येऽस्मादरुः स्यात्स च किन ॥—**चिन्त्यमिति** । 'गाङ्कुटादिभ्यः' इति ङित्त्वेनैव गुणाभावसिद्धेरिति भावः ॥—**शकिर्गत्यर्थ** इति । शकॢ शक्तावित्यस्मादटन्नित्येके । 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः । देवृ देवने ॥—**करट** इति । डुकृञ् करणे । कॄ विक्षेपे इत्यस्माद्वा अटन् 'काकेभगण्डौ करटौ' इत्यमरः 'करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीविनि । एकादशाहादि श्राद्धे दुर्दुरूढेऽपि वायसे' इति मेदिनी ॥—**कृकदि**–॥ डुकृञ् करणे, कटे वर्षावरणयोः । 'करम्बो मिश्रिते वान्तो भान्तस्तु दधिसक्तुषु' इति विश्वः । 'कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्' इति विश्वः ॥—**कलि**–॥ कल संख्याने, कर्द कुत्सिते शब्दे । 'कलमः पुंसि लेखिन्यां शालौ पाटच्चरेऽपि च' इति मेदिनी ॥—**कुणिपुल्योः**–॥ पुल महत्वे ॥—**कुपेः**–॥ कुप क्रोधेऽस्मात्किन्दच् स्यात् वकारश्चान्तादेशो विकल्पेन । 'तन्तुवायः कुविन्दः स्यात्' इत्यमरः । बाहुलकादल भूषणादौ अलिन्दम् । 'अस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गनागोमयगोमुखानि' इति माघः ।—**नौ षञ्जेः**–॥ षञ्ज सङ्गे । निपूर्वादस्मात् घथिन्स्यात् । 'उपसर्गात्सुनोति–' इत्यादिना षत्वम् । 'चजोः–' इति कुत्वम् । 'आभुरस्य निषङ्गथिः' । रथकूबर इत्यर्थः ॥—**उदि**–॥ ऋ गतावुत्पूर्वादस्मात् थथिन् स्यात् स च चित् ॥—**सर्तेः**–॥ सृ गतावस्मात् घथिन् णित्स्यात् । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः ॥—**खर्जि**–॥ खर्ज मार्जने, पिञ्ज हिंसायाम् ॥

खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः ॥ कसेरूर्वृद्धिश्च ॥ काञ्जूलम् । कुसूलः । तमेर्नुग्वृद्धिश्च । तांबूलम् । शृणातेर्दुग्वृद्धिश्च । शार्दूलः । दुकोः कुक्च । दुकूलम् । कुकूलम् । कुवश्चट् दीर्घश्च ॥५४०॥ कूची चित्रलेखनिका । समीणः ॥५४१॥ समीचः समुद्रः । समीची हरिणी । सिवेष्टेरू च ॥५४२॥ सूचो दर्भाङ्कुरः । सूची । शमेर्बन् ॥५४३॥ शम्बो मुसलम् । उल्बादयश्च ॥५४४॥ बन्नन्ता निपात्यन्ते । उच समवाये । चस्य लत्वं गुणाभावश्च । उल्बो गर्भाशयः । शुल्बं ताम्रम् । बिम्बम् । स्थः स्तोऽम्बजबकौ ॥५४५॥ तिष्ठतेरम्बच् अबक एतौ स्तस्तादेशश्च । स्तम्बो गुच्छस्तृणादिनः । स्तबकः पुष्पगुच्छः । शाशपिभ्यां ददनौ ॥५४६॥ शादो जम्बालशष्पयोः । शब्दादयश्च ॥५४७॥ शब्दः । अवतीत्यब्दः । कौतेर्नुम् ॥५४८॥ कुन्दः । वलिमलितनिभ्यः कयन् ॥५४९॥ वलयम् । मलयः । तनयः । वृह्रोः षुग्दुकौ च ॥५५०॥ वृषय आश्रयः । हृदयम् । मिपीभ्यां रुः ॥५५१॥ मेरुः । पेरुः सूर्यः । बाहुलकात् पिबतेरपि । संवत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः । जत्वादयश्च ॥५५२॥ जत्रु । जत्रुणी । अश्रु । अश्रुणी । रुशातिभ्यां क्रुन् ॥५५३॥ रुरुर्मृगभेदः । शातयतीति शत्रुः । प्रज्ञादौ पाठाद्रूस्वत्वम् । जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्व-

---

खर्जादिभ्यः पिञ्जादिभ्यश्च यथाक्रमम् ऊरउलचो स्तः । 'खर्जूरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः' इति मेदिनी-हेमचन्द्रौ । कृपू सामर्थ्ये । बाहुलकात् 'कृपो रो लः' इति लत्वाभावः । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' इत्यमरः । वल्ल संवरणे । वल्लूरम् । 'उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं तु त्रिलिङ्गकम्' इत्यमरः । एवं शाल्लूरादयो द्रष्टव्याः । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः ॥—लङ्गेः–॥ लगिर्गत्यर्थः । 'लाङ्गूलं पुच्छशेफसोः' इति मेदिनी ॥—कुसूल इति । कुस श्लेषणे दन्त्यसकारवान् । 'कुसूलं च कुसीदं च मध्यदन्त्यमुदाहृतम्' इति विश्वः । ताम्बूलादयोऽप्यत्र द्रष्टव्याः । तमु ग्लानौ, वुग् दीर्घत्वं च । 'ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्' इति मेदिनी । शॄ हिंसायाम्, धातोर्वृद्धिर्दुगागमश्च । 'शार्दूलो राक्षसान्तरे । व्याघ्रे च पशुभेदे च पत्तने तूत्तरस्थिते' इति मेदिनीविश्वप्रकाशौ । उत्तरस्थित उत्तरपदभूतः शार्दूलशब्दस्तु श्रेष्ठवाची राजशार्दूल इति यथा । दु गतौ, कुङ शब्दे, अनयोः कुक्च । 'दुकूलं श्लक्ष्णवस्त्रे स्यात् क्षौमे च' इति मेदिनी । 'कुकूलं शङ्कुसङ्कीर्णश्वभ्रे ना तु तुषानले' इति विश्वमेदिन्यौ । 'शिरीषादपि मृद्वङ्गी केयमायतलोचना । अयं क्व च कुकूलोऽग्निकर्कशो मदनानलः' इति प्रयोगश्च ॥—कुवः–॥ कु शब्दे । 'कुचः स्तनः' । 'कुचकूचौ स्तनौ मतौ' इति विश्वः ॥—कूचीति । टित्वान्ङीप् ॥—समीणः ॥ इण् गतावस्मात्सम्युपपदे चट् स्याद्दीर्घश्च धातोः ॥—सिवेः–॥ षिवु तन्तुसन्तानेऽस्माच्चट् प्रत्ययः स्यादादेरूत्वं च । टित्वान्ङीप् 'सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी ॥—शमेः–॥ शम उपशमे । 'शम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु' इति विश्वमेदिन्यौ ॥—उल्बमिति ॥ 'गर्भाशये जरायुः स्यादुल्बं तु कलले स्त्रियाम्' इत्यमरः । शुच शोके चस्य लत्वं गुणाभावश्च प्राग्वत् । 'शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ' इति मेदिनीहेमचन्द्रौ । वी गतिप्रजनकान्त्यसनखादनेषु । अस्य नुमागमो ह्रस्वत्वं च । बवयोरभेदाद्बिम्बम् । 'बिम्बस्तु प्रतिबिम्बे स्यान्मण्डले पुंनपुंसकम् । बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्' इति मेदिनी ॥—स्थस्तः–॥ ष्ठा गतिनिवृत्तौ । 'स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' इति विश्वः । 'स्तम्बो प्रकाण्डद्रुमगुच्छयो.' इति मेदिनी । 'स्याद्गुच्छकस्तु स्तबक.' इत्यमरः ॥—शाशपि–॥ शो तनूकरणे, शप आक्रोशे । 'शादो जम्बालशष्पयोः' इत्यमरः । 'शष्पं बालतृणं घासः' इति च । 'शादः स्यात्कर्दमे शष्पे' इति मेदिनी । शब्दो निनादः ॥—शब्दादयः ॥ एते ददनन्ता निपात्यन्ते । अव रक्षणे वस्य व 'अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान्' इति मेदिनी ॥—कौतेः–॥ कु शब्दे 'कुन्दो माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' इति च मेदिनी ॥—वलिमलि–॥ वल संवरणे संचरणे च, मल मल्ल धारणे' तनु विस्तारे । 'वलयः कण्ठरोगे ना कङ्कणे पुनपुंसकम्' इति मेदिनी । 'मलयः पर्वतान्तरे । शैलांशे देश आरामे त्रिवृतायां तु योषिति' इति च । 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियाम्' इत्यमरः ॥ —वृह्रोः–॥ वृञ् वरणे, हृञ् हरणे, आभ्यां कयन् स्यात् । यथाक्रमं षुक्दुकावागमौ च भवतः । कयनः कित्वं किह गुणाभावार्थम् । ह्रियते विषयैरिति हृदयं मनः ॥—मिपीभ्याम्–॥ डुमिञ् प्रक्षेपणे, पीङ् पाने । 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः । पीयते रसानिति पेरुः ॥—पिबतेरिति । पा पाने ॥ हट्टचन्द्रोक्तिमाह—संवत्सरवपुरीत्यादि॥—जत्वादयः॥ रुप्रत्ययान्ता निपात्यन्ते । जनी प्रादुर्भावे नकारस्य तकारः । 'जत्रुः स्कन्धसन्धिः स्कन्धी तस्यैव जत्रुणी' इत्यमरः । तस्य पूर्वोक्तस्य स्कन्धस्य सन्धी इत्यर्थः । असु क्षेपणे, अशू व्याप्तौ संघाते च । असु अश्रु च नयनजलम् । शीडो ह्रस्वत्वं गुणागमश्च । 'शिग्रुर्ना शाकमात्रेऽपि शोभाञ्जनमहीरुहे' इति मेदिनी ॥—रुशाति–॥ रु शब्दे, शद्लृ शातने ण्यन्तः । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः' इत्यमरः । 'रुरुर्दैत्ये मृगेऽपि च' इति मेदिनी ॥—जनिदा–॥ जनी प्रादुर्भावे, डुदाञ् दाने, च्युङ् गतौ, सृ गतौ, वृञ् वरणे, मदी हर्षे, षम ष्टम अवैक्लव्ये, णम प्रह्वत्वे शब्दे च, डुभृञ् धारणपोषणयोः । एभ्यो नवभ्यो

त्नण्क्निन्शक्स्यडडटाटचः ॥५५४॥ जनित्वौ मातापितरौ। दात्वो दाता। च्यौत्नो गन्ता बन्धकः शीलमुष-श्च। सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च। वृशः आर्द्रकं मूलकं च। मत्स्यः। षण्ढः। टित्वाट्टिलोपः। नमतीति नटः शैलूषः। बिभर्ति भरटः कुलालो भृतकश्च। ❖ अन्येभ्योऽपि दृश्यन्ते ॥५५५॥ पेत्वममृतम्। भृशम्। ❖ कुसे-रुम्भोमेदेताः ॥५५६॥ कुसुम्भम्। कुसुमम्। कुसीदम्। कुसितो जनपदः। ❖ सानसिवर्णसिपर्णसितण्डुला-ङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ॥५५७॥ सनोतेरसिप्रत्यय उपधावृद्धिः। सानसिर्हिरण्यम्। वृञो नुक् च। वर्णसिर्जलम्। पॄ पर्णसिर्जलगृहम्। तड आघाते। तण्डुलाः। अकि लक्षणे उशच्। अङ्कुशः। चषेरालच्। चषालो यूपकटकः। इल्वलो दैत्यभेदः। पल्वलम्। ञिधृषा। ऋकारस्य इकारः। धिष्ण्यम्। शलेर्यः। शल्यं वा पुंसि शङ्कुर्ना। ❖ मूशक्यविभ्यः क्लः ॥५५८॥ मूलम्। शक्लः प्रियंवदे। अम्क्लो रसः। बाहुलकादमेः। अम्लः। ❖ माछास-सिभ्यो यः ॥५५९॥ माया। छाया। सस्यम्। बाहुलकात्सुनोतेः। सव्यं दक्षिणवामयोः। ❖ जनेर्यक् ॥५६०॥ ये विभाषा। जन्यं युद्धम्। जाया भार्या। ❖ अघ्न्यादयश्च ॥५६१॥ यगन्ता निपात्यन्ते। हन्तेर्यक् अडागम उपधालोपश्च। अघ्न्या माहेयी। अघ्न्यः। प्रजापतिः। कनी दीप्तौ। कन्या। बवयोरैक्यम्। वन्ध्या। ❖ स्नामदिपद्यर्तिपॄशकिभ्यो

---

यथासंख्यं नव स्युः। जनेरित्वन्। जनेरिडागमेनापि जनित्वेति प्रसिद्धाविकारोच्चारणमुत्तरार्थम् ॥—च्यौत्न इति। त्नणो णित्त्वाद्वृद्धिः ॥—सृणिरिति। क्निनः कित्वान्न गुणः नित्त्वं तु आद्युदात्तार्थम्। 'सृवृषिभ्यां कित्' इति। निप्रत्यये त्वन्तोदात्तः साधितः ॥—वृश इति। शकः कित्वान्न गुणः ॥—मत्स्य इति। स्यप्रत्यये चर्त्वेन दस्य तः। अन्तोदात्तोऽयम्। 'ऋतन्यञ्जि–' इति सूत्रे तु आद्युदात्तः साधितः ॥—षण्ढ इति। बाहुलकाद्धात्वादेः षस्य सकारो न प्रत्ययादेः। ढस्य तु प्रयोजनाभावान्नेत्संज्ञा। 'शमेर्ढः' इति सूत्रे तु तालव्यादिः साधितः। 'साय सायो भवेत्कोशः कोषं षण्ढश्च शण्ढवत्' इति द्विरूपकोशः। 'षण्ढो वर्षवरः' इत्यमरः। 'नटी नल्यौषधी स्त्री स्याच्छैलूषाशोकयोः पुमान्' इति मेदिनी ॥—नट इति। नमतेर्डट् ॥—भरट इति। बिभर्तेरटच् ॥—अन्येभ्योऽपि–॥ इत्वन्नादयोऽनुवर्तन्ते ॥—पेत्वमिति। पा पानेऽस्मादित्वन् ॥—भृशमिति। भृञः शक् ॥—कुसेः–॥ कुस श्लेषणेऽस्मादुम्भ उम ईद इत एते प्रत्ययाः स्युः। 'कुसुम्भं हेमनि महारजने ना कमण्डलौ' इति मेदिनी। 'कुसुम स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति च। 'कुसीद जीवने वृद्ध्या क्लीब त्रिषु कुसीदके' इति च। इह सूत्रे तृतीयो ह्रस्वादिदीर्घादिश्च तन्त्रेणोपात्तः। 'वृषाकप्यग्नि–' इति सूत्रे ह्रस्वादिरेवेति वृत्तिकारहरदत्तादिग्रन्थोपष्टम्भेन निर्णीतम्। पारलौकिककुसीदमदिति श्रीहर्षप्रयोगात्तु दीर्घादिरपि ॥—सानसि–॥—सनोतेरिति। षणु दाने ॥—वृञो नुक्च इति। वृञ वरणेऽस्मादसिः। दशपाद्यां तु सानसिधर्णसीति पठित्वा धृञो नुक् च धर्णसिर्लोकपाल इति व्याख्यातम्। युक्तचैतत्। 'धर्णसि भूरिधायसम्' इत्यादिमन्त्रानुगुणत्वात् ॥—पर्णसिरिति। पॄ पालनपूरणयोरस्मादसिप्रत्ययो नुक् च ॥—तण्डुला इति। उलच्प्रत्ययो नुमागमश्च धातोः। त्रेधा तण्डुलान्विभजेत्। इह चित्स्वरः। 'तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान्' इति मेदिनी ॥—अङ्कुश इति। अयमपि चित्स्वरेणान्तोदात्तः। तथा मन्त्रः। दीर्घं ह्यङ्कुशं यथेति। 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥—चषेराल इति। चष भक्षणे प्रत्ययस्वरेणाद्युदात्तः। उज्ज्वलदत्तस्तु आलजिति चितमाह। तन्न। 'चषालये अश्वयूपाय प्रतक्षति'। 'चषालवन्तः स्वरवः पृथिव्याम्' इत्यादौ चित्स्वरादर्शनात्। अमरोक्तिमाह—चषाल इति।—इल्वल इति। इल स्वप्नप्रेरणयोः। वलच् गुणाभावः। 'इल्वला तारका राजभेदे ना दैत्यमत्स्ययोः' इति मेदिनी। 'इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः' इत्यमरः। पा पानेऽस्माद्वलच् लुगागमः ह्रस्वत्वं च। पिबन्त्यस्मिन्निति पल्वलमल्पसरः ॥—इकारः इति। रपरत्वाभावो ण्यप्रत्ययश्चेति बोध्यम्। 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः। 'धिष्ण्य स्थानाग्निसद्मसु। ऋक्षे शक्तौ च' इति मेदिनी ॥—शलेः–॥ शल गतौ। 'शल्यतु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे। मदनद्रुश्वाविधोर्ना' इति मेदिनी ॥—मूशकि–॥ मूङ् बन्धने, शकॢ शक्तौ, अवि शब्दे। 'मूलं शिफाद्ययोः। मूलं वित्तेऽन्तिके' इति मेदिनी। 'शक्लः प्रियंवदे' इति विशेष्यनिघ्नेऽमरः। अम रोगे चुरादिण्यन्तः। बाहुलकादेवोपधाह्रस्वः। 'अम्लो रसविशेषे स्यादम्ला चाङ्गेरिकौषधौ' इति मेदिनी ॥—माछा–॥ मा माने, छो छेदने, षस स्वप्ने। 'माया स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे' इति मेदिनी ॥ 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति विश्वमेदिन्यौ। 'वृक्षादीनां फलं सस्यम्' इत्यमरः ॥—सुनोतेरिति। षुञ् अभिषवे, 'सव्यं वामे प्रतीपे' इति मेदिनी ॥—जनेः ॥ जन जनने। यकः कित्त्वमुत्तरार्थम्। 'जन्यं हट्टपरीवादे सङ्ग्रामे च नपुंसकम्। जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्। त्रिषूत्पाद्यजनित्रोश्चैन्नवोढाज्ञातिभृत्ययोः। स्निग्धे' इति मेदिनी ॥ आत्वपक्षे रूपमाह—जायेति ॥—अघ्न्यादयश्च। अघ्न्य इति। यकः कित्त्वात् 'गमहन–' इत्युपधालोपे 'हो हन्तेः–' इति कुत्वेन हस्य घः। अडागममनुक्त्वा नञ्पूर्वाद्धन्तेर्यगित्यन्ये ॥—अघ्न्येति। स्त्रियां टाप्। 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी स्यात्' इत्यमरः। संपूर्वाद्ध्यो यक् आतो लोपश्च। संध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु' इति मेदिनी ॥ 'कन्या

क्वनिप् ॥५६२॥ काशा रसिकः । मद्वा शिवः । पद्वा पन्थाः । अर्वा तुरङ्गगर्ह्ययोः । पर्वा ग्रन्थिः प्रस्तावश्च । शक्वा हस्ती । कीर्णौ । शक्वरी अङ्गुलिः । ॥ शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥५६३॥ शीवा अजगरः । क्रुश्वा शृगालः । रुह्वा वृक्षः । जित्वा जेता । क्षित्वा वायुः । सृत्वा प्रजापतिः । धृत्वा विष्णुः । ॥ ध्याप्योः संप्रसारणं च ॥५६४॥ धीवा कर्मकरः । पीवा स्थूलः । ॥ अदेर्ध च ॥५६५॥ अध्वा । ॥ प्र ईरशदोस्तुट् च ॥५६६॥ प्रेत्वा प्रशत्वा च सागरः । प्रेत्वरी प्रशत्वरी च नदी । ॥ सर्वधातुभ्य इन् ॥५६७॥ पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । देवयजिः । काशत इति काशिः । यतिः । मल्लिः । केलिः । मसी परिणामे । मसिः । बाहुलकाद्गुणः । कोटिः । हेलिः । बोधिः । नन्दिः । कलिः । ॥ हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ॥५६८॥ हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः । पेषिर्वज्रम् । रोहिर्व्रती । वर्तिः । वेदिः । छदिश्छेत्ता । कीर्तिः । ॥ इगुपधात्कित् ॥५६९॥ कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्रत्वे लिबिः । तूल निष्कर्षे । तूलिः । तूली कूर्चिका । ॥ भ्रमेः संप्रसारणं च ॥५७०॥ भृमिर्वातः । बाहुलकाद्भ्रमिः । ॥ क्रमितमिशतिस्तम्भामत इच्च ॥५७१॥ क्रिमिः । संप्रसारणानुवृत्तेः कृमिरपि । तिमिर्म-

---

कुमारिकागौर्योरोषधीराशिभेदयोः' इति विश्वमेदिन्यौ ॥—बन्ध्येति । बन्ध बन्धने । 'बन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रियाम्' इति मेदिनी । कौतेर्यतिङ्कुः । कुब्यमित्युज्ज्वलदत्तः । 'यतोनावः' इत्याद्युदात्तः । यक्प्रत्ययान्तोऽयमन्तोदात्त इत्यन्ये इति । निवाते वातत्राणे इति सूत्रे वृत्तिः । ङित्त्वाट्टिलोपे सति कित्करणं व्यर्थं स्यादिति गुणप्रतिषेधार्थात्ककाराङ्कारस्येत्त्वं नेति तत्रैव हरदत्तः । एवं स्थितेऽघ्न्यादयो यगन्ता इति प्रायोवादः ॥—स्नामदि-॥ ष्णा शौचे, मदी हर्षे, पद गतौ, ऋ गतौ, पॄ पालनपूरणयोः, शक्लृ शक्तौ, 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गक.' इति मेदिनी । 'पर्व क्लीबं सहे ग्रन्थे प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि' इति च ॥—ङीब्राविति । 'वनोर च' इत्यनेन ॥—अङ्गुलिरिति । एते 'आरोहत दशतं शक्वरीर्मम' इत्यादिमन्त्रव्याख्यायां स्पष्टम् । 'शक्वरी छन्दसो भेदे नदीमेखलयोरपि' इति मेदिनी ॥—शीङ्-॥ शीङ् स्वप्ने, क्रुश आह्वाने रोदने च, रुह बीजजन्मनि प्रादुर्भावे च, जि जये, क्षि निवासगत्योः, सृ गतौ, धृ धारणे ॥—ध्याप्योः-॥ ध्यै चिन्तायाम्, प्यैङ् वृद्धौ, आभ्यां क्वनिप्स्यात्संप्रसारणं च । धातोर्हल इति दीर्घः ॥—अदेः-॥ अद भक्षणेऽस्मात्क्वनिप् धकारश्चान्तादेशः । अध्वा मार्गः ॥—प्र ईरः-॥ ईर गतौ, शद्लृ शातने, आभ्यां प्रपूर्वाभ्यां क्वनिप्स्यात्तस्य तुडागमश्च॥—प्रेत्वरीति । स्त्रियाम् 'वनो र च' इति ङीब्रः ॥—सर्वधातुभ्य इन् ॥ डुपचष् पाके, तुडि तोडने, तोडन दारण हिंसनं च, वल संवरणे, वट वेष्टने, यज देवपूजादौ, काशृ दीप्तौ, यती प्रयत्ने । 'यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्' इति मेदिनी ॥ मल मल्ल धारणे, केलृ चलने भ्वादिः, केला विलासे कण्ड्वादिः, किल श्वैत्यक्रीडनयोस्तुदादिः, कुट कौटिल्ये, हिल भावकरणे, बुध अवगमने, टुनदि समृद्धौ, कल शब्दसंख्यानयोः । 'गाङ् कुटादिभ्यः' इति ङित्त्वाद्गुणाभावमाशङ्क्याह—बाहुलकादिति । 'कोटिः स्त्री धनुषोऽग्रेऽश्रीसंख्याभेदप्रकर्षयोः' इति मेदिनी । 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' इति च । 'नन्दिर्धताङ्ग आनन्देऽस्त्री नन्दिकेश्वरे पुमान्' इति च । इह इन्नित्येव सूत्रं सर्वधातुभ्य इति तु प्रक्षिप्तं व्यर्थं च एव सर्वधातुभ्यग्रहणमित्यादावपि बोध्यमित्याहुः ॥—हृपिषि-॥ हृञ् हरणे, पिष्लृ सचूर्णने, रुह बीजजन्मनि प्रादुर्भावे च, वृतु वर्तने । वर्तिर्दीपापकरणम् । विद सत्तायाम् । विद्यते पुण्यमस्यामिति वेदिः परिष्कृता भूमिः । छिदिर् द्वैधीकरणे, कॄत संशब्दने, हरतेः कीर्तयतेश्च 'अच इः' इति प्राप्ते इतरेषां तु 'इगुपधात्-' इति कप्रत्यये प्राप्ते वचनमिदम् । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनी दीपदशादीपेषु योषिति' इति मेदिनी ॥ 'वेदिः स्यान्मण्डले पुमान् । स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले' इति च । 'कीर्तिः प्रसादयशसोर्विकारे कर्दमेऽपि च' इति विश्वः ॥—इगुपधात्-॥ कृष विलेखने, ऋषी गतौ, शुच शोके, लिप उपदेहे, इत्यादेरिगुपधाद्धातोरिन्स्यात्स च कित् । केचित्तु इगुपधात्किरिति पठित्वा इणोऽपवादः किप्रत्यय इति व्याचख्युः । तन्न । प्रत्ययस्वरेण कृष्यादीनामन्तोदात्ततापत्तेः । न चेष्टापत्तिः । 'अग्निः पूर्वेभिर्ऋषिभिः' 'शुचिर्विप्रः शुचिः कविः' इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात् । न चैवम् 'अक्षैर्मादीव्यः कृषिमित् कृषस्व' इत्यादौ कृषिशब्दस्यान्तोदात्तता न सिद्ध्येदिति वाच्यम् । 'इकृष्यादिभ्यः' इतीक्प्रत्यये सत्यन्तोदात्तत्वसिद्धेः । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' इति मेदिनी । शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि' इति च ॥—भ्रमेः ॥ भ्रमु अनवस्थानेऽस्मादिन्स्यात्स च कित् संप्रसारणं च । भृमिं विद्यथावसवो पुषन्तीति मन्त्रे भृमिं भ्रमणशील दरिद्रं जनमिति वेदभाष्यम् ॥—क्रमि-॥ क्रमु पादविक्षेपे, तमु काङ्क्षायाम्, शतिस्तम्भौ सौत्रौ, एभ्य इन्स्यात्स च कित् । एषामत इकारादेशश्च । क्रिमिः क्षुद्रजन्तुः 'कृमिर्ना क्रिमिवत्कीटे लाक्षायां क्रिमिले खरे' इति विश्वमेदिन्यौ । 'पारतं पारदं वाल्मी वासरः क्रिमिवत्कृमिः' इति द्विरूपकोशः ॥—तिमिरिति । 'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिंगिलः । तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति

लक्ष्मणः। शितिर्मेचकशुक्लयोः। स्तिभिः समुद्रः। मनेरुच्च ॥५७२॥ मुनिः। वर्णेर्वलिश्चाहिरण्ये ॥५७३॥ वर्णिः सौत्रः। अस्य बलिरादेशः। करोपहारयोः पुंसि बलिः प्राण्यङ्गके स्त्रियाम्। हिरण्ये तु वर्णिः सुवर्णम्। वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् ॥५७४॥ वासिस्तक्षणवस्तुनि। वापिः। वापी। याजिर्यष्टा। राजिः। राजी। व्राजिर्वातालिः। सादिः सारथिः। निघातिर्लोहघातिनी। वाशिरग्निः। वादिर्विद्वान्। वारिर्गजबन्धनी। जले तु क्लीबम्। बाहुलकाद्धारिः पथिकसंहतौ। नहो भश्च ॥५७५॥ नाभिः स्यात्क्षत्रिये पुंसि। प्राण्यङ्गे तु स्त्रियाम्। पुंस्यपीति केचित्। कृषेर्वृद्धिश्छन्दसि ॥५७६॥ कार्षिः। शॄः शकुनौ ॥५७७॥ शारिः। शारिका। कृञ उदीचां कारुषु ॥५७८॥ कारिः शिल्पी। जनिघसिभ्यामिण् ॥५७९॥ जनिर्जननम्। घासिर्भक्ष्यमग्निश्च। अज्यतिभ्यां च ॥५८०॥ आजिः संग्रामः। आतिः पक्षी। पादे च ॥५८१॥ पदाजिः। पदातिः। अशिपणाय्यो रुडायलुकौ च ॥५८२॥ अशे रुट्। राशिः पुञ्जः। पणायतेरायलुक्। पाणिः करः। वातेर्डिच्च ॥५८३॥ विः पक्षी। स्त्रियां वीत्यपि। प्रे हरतेः कूपे ॥५८४॥ प्रहिः कूपः। नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥५८५॥ व्येञ इण् स्याद् यलोपश्च नेर्दीर्घः। नीविः नीवी। वस्त्रग्रन्थौ मूलधने च। समाने ख्यः स चोदात्तः ॥५८६॥ समानशब्दे उपपदे ख्या इत्य-

---

लक्ष्मण' इति रामायणे सप्तमे काण्डे रामवाक्यम्। केचित्तु 'तद्गि॰ऽप्यस्ति राघव' इति पठित्वा राघवं प्रति लक्ष्मणवाक्यमित्याहुः। 'शितिः कृष्णे सिते भूर्जे' इति विश्वः। 'शितिर्भूर्जे ना सितासितयोस्त्रिषु' इति मेदिनी ॥—**मनेः**—॥ मन ज्ञानेऽस्मादिन्स्यात्स च किद् अकारस्योकारादेशश्च स्यात्। मन्यते जानातीति मुनिः। 'मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी ॥—**वर्णेः**—॥ अस्मादिन्स्यात्स च किन् ॥—**वसि**—॥ वस निवासे, डुवप् बीजसन्ताने, यज देवपूजादौ, राजृ दीप्तौ, व्रज गतौ, षद्लृ विशरणादौ, हन हिंसागत्योः, वाशृ शब्दे, वद व्यक्तायां वाचि ण्यन्तः, वृञ् वरणे ण्यन्तः। वासिरिति दन्त्यसकारवान्। सूत्रेऽष्टमस्तु तालव्यशकारवान्। वास्यादीनामिव करणानां कर्तृव्यापार्यत्वनियमादिति वैशेषिकाः। वास्यर्थमित्यत्र 'स्कोः' इति सलोपः प्राप्नोतीति भाष्यम्। वापिरुदकाधारः। वापी प्रसिद्धा। 'राजिः स्त्री पङ्क्तिरेखयोः' इति मेदिनी। इह वादीति ण्यन्तनिर्देशेऽपि बाहुलकादण्यन्तादपि इञ्। तथा च भूवादिसूत्रे वदन्तीति वादयो वाचका इति न्यासकारादयः। 'वारिः स्मृता सरस्वत्यां वारि ह्रीबेरनीरयोः। वारी घटीभबन्धन्योः' इति विश्वः। हृञ् हरणेऽस्मादिञ्। 'हारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्' इति मेदिनी ॥—**नहः**—॥ णह बन्धनेऽस्मादिञ् स्यात् भश्चान्तादेशः ॥—**स्त्रियामि**ति। लिङ्गानुशासने स्त्रियामित्यधिकारे नाभिरक्षत्रिये इति सूत्रितत्वादिति भावः ॥—**पुंस्यपी**ति। तथा च मेदिनी 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात्त्रिषु कस्तूरिकामदे' इति। भारविश्च पुंसि प्रायुङ्क्त, 'समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीविनाभिभिरिति[1]' ॥—**कृषेः**—॥ कृष विलेखनेऽस्मादिञ् वृद्धिश्च 'इको गुणवृद्धी' इतीकः स्थाने एव वृद्धिरित्युदाहरति ॥—**कार्षिरि**ति। भाषाया तु कृषिरित्येव ॥—**शॄः**—॥ शॄ हिंसायामस्माच्छकुनौ वाच्ये इञ्स्यात्। 'शारिर्नाक्षोपकरणे स्त्रिया शकुनिकान्तरे। युद्धार्थगजपर्याणे व्यवहारान्तरेपि च' इति मेदिनी ॥ कपिलकादित्वाल्लत्वम्। 'शालिस्तु कलमादौ च गन्धमार्जारके पुमान्' इति मेदिनी ॥—**जनि**—॥ जनी प्रादुर्भावे, घस्लृ अदने, आभ्यामिण् 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः। जनिरिति स्त्रीलिङ्गम्। 'कृदिकारात्—' इति पक्षे ङीष्। 'जनी सीमन्तिनीवध्वोरुत्पत्तावोषधीभिदि' इति मेदिनी ॥—**अजि**—॥ अज गतिक्षेपणयोः, अत सातत्यगमने। बाहुलकादजेर्वीभावो न ॥ पादे चोपपदे 'अज्यतिभ्यामिण्'। 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः। पदाजिः पादचारी। 'पदातिपत्तिपदगपादातिकपदाजयः। पद्गश्च पथिकश्च' इत्यमरः ॥—**अशिपणाय्योः**—॥ अशिश्च पणायिश्चाशिपणाय्यौ तयोरिति विग्रहः। अशू व्याप्तौ, पण व्यवहारे आयप्रत्ययान्तः, आभ्यामिण् स्यादनयोर्यथाक्रम रुडायप्रत्ययलुकौ च भवतः। 'राशिर्मेषादिपुञ्जयोः' इति मेदिनी। वा गतिगन्धनयोरस्मादिण् स्यात् डित्वाट्टिलोपः ॥—**प्रे**—॥ प्रपूर्वाद्धरतेः कूपे वाच्ये इण् 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमर. ॥—**नौ**—॥ व्येञ् संवरणे। 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः। परिपणं मूलधन ॥—**समाने**—॥ ख्या प्रकथने ॥—**इण् स्यादि**ति। यत्तूज्ज्वलदत्तेनोक्तमिञ् स्यात्स चोदात्त इति। तन्न। सन्निहितेन 'जनिघसिभ्यामिण्' इत्यनेन वपियजीत्यादिना विहितस्येञो विच्छिन्नत्वात्। यदपि तेनैव 'नौ व्यः' इति पूर्वसूत्रे उक्तमिञत्रानुवर्तते न त्विण्। उत्तरसूत्रे उदात्तवचनाज्ज्ञापकादिति। तदपि न। स चोदात्त इति हि नायं धातोः परत्र विहित प्रत्ययं निर्देष्टुं तच्छब्दः किंतु समानशब्दस्य स्थाने विधीयमानमादेशं निर्देष्टुं शब्दस्वरूपपरः। तथा च कथं ज्ञापकता स्यात्। यदपि स इञ् उदात्त इति व्याख्याय समानस्य

---

१. यद्वा भारविप्रयोगे सामान्ये नपुंसकत्वं पदसंस्कारता ह्यभ्युपगम्यते। तथा च लिङ्गानुशासनवृत्तौ नाभिरक्षत्रिये इति सूत्रे मूले एव वक्ष्यते। इत्यधिकः क्वचित्पाठः ॥

स्यादिण् सात्त्व च डित् चकोपश्च समासस्य तूदात्तः स इत्यादेशश्च । समानं ख्यायते जनैरिति सखा । आङि श्रिहनिभ्यां ह्रस्वश्च ॥५८७॥ इण् स्यात्स च डित् आङो ह्रस्वश्च । अश्रयः पाल्यश्रिकोटयः । सर्वे वृत्रासुरोऽप्यहिः । अच इः ॥५८८॥ रविः । पविः । तरिः । कविः । अरिः । अलिः । खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च ॥५८९॥ खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चरिः पशुः । वृतेश्छन्दसि ॥५९०॥ वर्तिः । भुजेः किच्च ॥५९१॥ भुजिः । कृगॄशॄपॄकुटिभिदिछिदिभ्यश्च ॥५९२॥ इः कित्स्यात् । किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः । कुडिकम्प्योर्नलोपश्च ॥५९३॥ कुडि दाहे । कुडिर्देहः । कपिः । सर्वधातुभ्यो मनिन् ॥५९४॥ क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । छद्मिमन्निति ह्रस्वः । छद्म । सुत्रामा । बृंहेर्नोऽच्च ॥५९५॥ नकारस्याकारः । ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः । अशिशकिभ्यां छन्दसि ॥५९६॥ अश्मा । शक्मा । हृभृधृसृस्तृशृभ्य इमनिच् ॥५९७॥ हरिमा कालः । भरिमा कुटुम्बम् । धरिमा

---

सभाव इति प्रक्रियास्मरणमात्रं कृत तदपि न । सभावविधायकस्याभावात् । यदपि स्वरमञ्जरीकारादिभिरुक्तं 'समानस्य च्छन्दसि' इति सूत्रेण सभाव इति तदपि न । लोके सखिशब्दस्यासाधुत्वापत्तेः । अपि च 'सखायमब्रवीत्' 'सखायस्त्वा ववृमहे' । 'सखा सखिभ्य ईड्यः' इत्यादिमन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम् । एव च इत्युदात्त इत्युज्ज्वलदत्तादिव्याख्यानं वेदवार्तानभिज्ञत्वप्रयुक्तमेवेति दिक् ॥—आङि—॥ श्रिञ् सेवायाम्, हन हिंसागत्योः । अमरोक्तिमाह—अश्रय इति । इव च 'सुप्रातसुश्व—' इति सूत्रे चतुरश्रेति तालव्यपाठः सङ्गच्छत एव । तत्सूत्रे दन्त्यपाठस्तु तत्सूत्रपर्यालोचनामूलक एवेत्यवधेयम् । नन्वेवं चतुरस्रमिति दन्त्यप्रयोगस्य कथं निर्वाह इति चेदत्राहुः । अकारान्तेन दन्त्यगर्भिणास्रशब्देन विग्रहे तत्प्रयोगः । न च तादृशे शब्दे विप्रतिपत्तव्यम् । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनीकोशादिति । 'अहिर्वृत्रासुरे सर्पे' इति मेदिनी ॥—अच इः॥ अजन्ताद्धातोरिः स्यात् । रु शब्दे, पूञ् पवने, पविर्वज्रम् । तॄ प्लवनतरणयोः । तरिर्वस्त्रादिस्थापनभाण्डम् । 'स्त्रिया नौस्तरणिस्तरिः' इत्यमरः । कु शब्दे । 'कविर्वाल्मीककशुक्रयोः । सूरौ काव्यकरे पुंसि स्याद्वलीने तु योषिति' इति मेदिनी । ऋ गतौ । अरिः शत्रुः । कपिलकादित्वाद्वैकल्पिकं लत्वम् । अलिर्भ्रमरः ॥—खनिः—॥ खनु अवदारणे । कष खषेति दण्डकः हिंसार्थकः । अज गतिक्षेपणयोः, असु क्षेपणे, वस आच्छादने, वन षण संभक्तौ, वनु याचने, षणु दाने, ध्वन शब्दे, ग्रन्थ बन्धने उभौ चुरादी, चल कम्पने, एभ्य इः स्यात् । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । ण्यन्तात् 'अच इः' इति इप्रत्यये खानिरपि । 'खनिरेव मता खानिः' इति द्विरूपकोशः । 'ग्रन्थिपर्णे नागबन्धे रुग्भेदपर्वणोः' इति मेदिनी । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः ॥—वनिरग्निरिति । वनु याचने इत्यस्मादिप्रत्यये वनिर्याच्ञा इत्याहुः ॥—चरिः पशुरिति । चरिभ्यश्चेति पाठान्तरम् । चर गतौ, चरतिर्भक्षणेऽपि । चरिः पशुः ॥—वृतेः—॥ वृतु वर्तनेऽस्मादिः स्यात् । बाहुलकाल्लोकेऽपि 'साज्यं त्रिवर्तिसंयुक्तम्' इति प्रयोगः । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीपेषु योषिति' इति मेदिनी ॥—भुजेः—॥ भुज पालनाभ्यवहारयोरस्मादिः स्यात्स कित् । भुजिरग्निः ॥—कृगॄशॄ—॥ कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम्, पॄ पालनपूरणयोः, कुट कौटिल्ये, भिदिर् विदारणे, छिदिर् द्वैधीकरणे । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । 'इगुपधज्ञाप्रीकिरः' इति कप्रत्यये किर इत्यकारान्तोऽपि । 'लचि लचः किरो प्रोक्तः पथः पथिः' इति द्विरूपकोशः । 'गिरिर्ना नेत्ररुग्भिदि । अद्रौ गिरिजके वोषिद्वीर्णौ पूज्ये पुनस्त्रिषु' इति मेदिनी ॥—कुटिरिति । ङीषि तु कुटी । 'कुटीशमीशुण्डाभ्यो रः' कुटीरः । 'कुटिः कीटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे । कुटी स्यात्कुम्भदास्यां च सुरायां चित्रगुच्छके' इति मेदिनी ॥—कुण्डि—॥ कुडि दाहे, कपि चलने, आभ्यामिः कित्स्याद्धातोर्नलोपश्च । 'कपिर्ना सिंहके शाखामृगे च मधुसूदने' इति च ॥—सर्वधातुभ्यः—॥ डुकृञ् करणे, चर गतौ, चरतिर्भक्षणेऽपि । जन जनने, भस भर्त्सनदीप्त्योः, शॄ हिंसायाम्, शर्म सुखे, ष्ठा गतिनिवृत्तौ, छद अपवारणे, चुरादिः । त्रैङ् पालने । सुष्ठु त्रायते इति सुत्रामा इन्द्रः । 'कर्म व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्' इति रुद्रः । 'चर्म वृत्तौ च फलके' इति मेदिनी ॥—बृंहेः—॥ बृह वृद्धावस्मान्मनिप्रत्ययो नस्याकारे ऋकारस्य यणादेशः । 'ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रः' इति मेदिनी ॥—अशि—॥ अशू व्याप्तौ संघाते च, शक्लृ शक्तौ, शक्मा इन्द्रः । छन्दसीत्यस्य शकिना संबन्धो न त्वशिना । अत एव 'अश्मानमारोपयतः स्मरारेः' इति प्रयोगः । हृञ् हरणे, डुभृञ् धारणपोषणयोः, धृ धारणे, सृ गतौ, स्तृञ् आच्छादने, शॄ हिंसायाम् ॥—वरिमेति । एतच्चोज्ज्वलदत्तरीत्योक्तम् । दशपाद्यां तु वृणातिर्न पठ्यते तत्स्थाने धधातुं प्रक्षिप्य प्रत्ययं च दीर्घादिं नित्तं च कृत्वा स्तृदृभ्यामीमनिति पठ्यते छन्दोप्र-

रूपम् । सरिमा वायुः । स्तरिमा तल्पम् । चरिमा प्रसवः । **जनिमृङ्भ्यामिमनिन्** ॥५९८॥ जनिमा जन्म । मरिमा मृत्युः । **वेञः सर्वत्र** ॥५९९॥ छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः । **नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्** ॥६००॥ सप्त अमी निपात्यन्ते । ज्ञायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा । सीमानौ । सीमानः । पक्षे डाप् । सीमे । सीमाः । व्येञोऽन्त्यलोपत्वं गुणः । व्योम । रौतेः । रोम । लोम । पाप्मा पापम् । ध्याम परिमाणं तेजश्च । **मिथुने मनिः** ॥६०१॥ उपसर्गक्रियासंबन्धो मिथुनम् । स्वरार्थमिदम् सुशर्मा । **सातिभ्यां मनिन्मनिणौ** ॥६०२॥ स्यति साम । सामनी । आत्मा । **हनिमशिभ्यां सिकन्** ॥६०३॥ हंसिका हंसयोषिति । मक्षिका । **कोररन्** ॥६०४॥ कवरः । **गिर उडच्** ॥६०५॥ गरुडः । **इन्देः कमिन्नलोपश्च** ॥६०६॥ इदम् । **कायतेर्डिमिः** ॥६०७॥ किम् । **सर्वधातुभ्यः ष्ट्रन्** ॥६०८॥ वस्त्रम् । अस्त्रम् । शस्त्रम् । इस्मन्त्रिति ह्रस्वत्वम् । छादनाच्छत्रम् । **भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च** ॥६०९॥ भ्राष्ट्रः । गात्रं शकटम् । नात्रं स्तोत्रम् । हात्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् । **दिवेर्द्युश्च** ॥६१०॥ द्यौत्रं ज्योतिः । **उषिखनिभ्यां कित्** ॥६११॥ उष्ट्रः । खात्रं खनित्रं जलाधारश्च । **सिविमुच्योष्टेरू च** ॥६१२॥ सूत्रम् । मूत्रम् । **अमिचिमिदिशसिभ्यः क्त्रः** ॥६१३॥ आन्त्रम् । चित्रम् । मित्रम् । शस्त्रम् । **पुवो ह्रस्वश्च** ॥६१४॥ पुत्रः । **स्त्या-**

---

हणं चानुवर्तितम् । युक्तं चैतत् । 'पिपृतां नो भरीमभि.' । 'वातस्य सर्गोऽभवत्सरीमणि स्तीर्णे बर्हिस्सुष्टरीमा जुषाणा । यस्या मतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिः' इत्यादिमन्त्राणां तद्भाष्यस्य चानुगुणत्वात् । उक्तप्रयोगाणां भाषायामदर्शनेन च्छन्दोऽनुवृत्तेर्न्याय्यत्वाच्च । अत एव वेञः सर्वत्रेति सूत्रे सर्वत्रग्रहणं करिष्यति ॥—**जनि-**॥ जन जनने, मृङ् प्राणत्यागे ॥—**वेञः-**॥ वेञ् तन्तुसन्ताने ॥—**निपात्यन्त** इति । मनिनन्ता इति शेषः । म्ना अभ्यासे मलोपो नाभावो वा । नाम संज्ञा । षिञ् बन्धने, 'सीमसीमे स्त्रियामुभे' इत्यमरः । व्येञ् संवरणे, रु शब्दे, रोम गात्रकेशः । लूञ् छेदने । लोम स एव । पा पाने पुगागमः । ध्यै चिन्तायां बाहुलकादन्येभ्योऽपि । यक्ष पूजायाम् । 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । षू प्रेरणे, सोमा चन्द्रः । डुधाञ् धारणपोषयोः । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति मेदिनी ॥—**मिथुने-**॥ शॄ हिंसायाम्, सुष्ठु शृणाति इति सुशर्मा राजविशेषः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदम् । मनिनि तु मध्योदात्त स्यात् ॥—**साति-**। षोऽन्तकर्मणि । अत सातत्यगमने आभ्यां यथासङ्ख्यमेतौ स्तः । स्यति दुःखयति दुरध्येयत्वात्साम । 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी । 'आत्मा पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि' इति च ॥—**हनि-**॥ हन हिंसागत्योः । मश शब्दे रोषकृते च 'मक्षिका भम्भराली स्यात्' इति हारावली ॥—**कोररन्** ॥ कु शब्दे । कवरः पाठकः । वबयोरैक्यात्कबरी केशविन्यासः । 'जानपद-' इति ङीष् । अन्यत्र कबरा ॥—**गिरः-**॥ गॄ निगरणे । केचित्तु सूत्रमिदं परित्यज्य गरुता डयत इति विगृह्य डीङो डप्रत्यये पृषोदरादित्वाद्गरुतस्तकारलोपं गरुडशब्दं क्लेशेन व्युत्पादयन्ति ॥—**इन्देः-**॥ इदि परमैश्वर्ये । उज्ज्वलदत्तस्तु कमिन्निति नितं पपाठ तच्चिन्त्यम् । 'इद तत्पात्रमिन्द्रपानम्' । 'इदन्ते सोम्य मधु' इत्यादौ नित्स्वराभावात् । दशपाद्यां तु 'इणो दमक्' इति सूत्रितम् । इदमिति सर्वनामशब्दोऽय सन्निहितपरामर्शी ॥—**कायतेः-**॥ कै गै शब्दे प्रयोजनाभावादेव मकारस्येत्संज्ञाविरहे सिद्धे डिमेरिकार उच्चारणार्थः । डकारस्तु टिलोपार्थः । दशपाद्या तु मान्तमेव डिमिति सूत्रितम् । किमिति सर्वनाम ॥—**सर्वधातुभ्यः-**॥ दशपाद्यां तु अर्थात्सर्वधातुभ्यो भविष्यतीत्याशयेन ष्ट्रन्नित्येव सूत्रितम् । अत एवाधिकं प्रक्षिप्तमित्याहुः । वस निवासे, असु क्षेपणे, शसु हिंसायाम्, छद अपवारणे ण्यन्तः । 'अस्त्र प्रहरणे पापे करवाले नपुंसकम्' इति मेदिनी । पतॢ गतौ, 'पत्र तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' इति मेदिनी । पा पाने । पात्रम् । षित्त्वान् ङीष् 'पात्र्यमत्रे त्रिषु क्लीब स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति मेदिनी । दंश दशने 'व्रश्च-' आदिना षत्वे ष्टुत्वे षितां ङीषोऽनित्यत्वाट्टाप् । दंष्ट्रा ॥—**भ्रस्जि** ॥ भ्रस्ज पाके, गम्लृ गतौ, णम प्रह्वत्वे शब्दे च, हन हिंसागत्योः, विश प्रवेशने, अशू व्याप्तौ, एभ्यः ष्ट्रन् स्यादेषां वृद्धिश्च ॥—**भ्राष्ट्र** इति । सयोगादिलोपः । व्रश्चेति षत्वे ष्टुत्वम् । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः । वैष्ट्रं विष्टपम् ॥—**दिवेः-**॥ दिवु क्रीडादावस्मात् ष्ट्रन् स्यात् द्युादेशः वृद्धिश्च धातोः ॥—**उषि-**॥ उष दाहे, खनु अवदारणे, आभ्यां ष्ट्रन् कित्स्यात् । उष्ट्रः क्रमेलकः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः ॥—**सिवि-**॥ षिवु तन्तुसंताने, मुच्लृ मोक्षणे, आभ्यां ष्ट्रन्कित्स्यात् टेरूकारादेशश्च । सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा रूपसिद्धेराद्युदात्तार्थमिदं सूत्रम् । न च घञा तत्सिद्धिः 'एरच्' इत्यस्य घञो बाधकत्वात् । 'सूत्रं तु सूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः ॥—**अमि-**॥ अम गतिशब्दसंभक्तिषु, चिञ् चयने, ञिमिदा स्नेहने, शसु हिंसायाम् ॥—**आन्त्रमिति** । 'अनुनासिकस्य' इति दीर्घः । 'श्रोणिलम्बिपुरुषान्त्रमेखलाम्' इति कालिदासः । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । 'मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी । 'शस्त्रं लोहास्त्रयोः क्लीबं छुरिकायां तु योषिति'

यतेर्वृद्ध ॥६१५॥ वी । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥६१६॥ गोत्रं स्यान्नामवंशयोः । गोत्रा पृथिवी । धर्त्रं गृहम् । वेत्रम् । पक्त्रम् । वक्त्रम् । यन्त्रम् । सत्त्रम् । क्षत्त्रम् । हुयामाश्रुभसिभ्यस्त्रन् ॥६१७॥ होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा । गमेरा च ॥६१८॥ गात्रम् । दादिभ्यश्छन्दसि ॥६१९॥ दात्रम् । पात्रम् । भूवादिगृभ्यो णित्रन् ॥६२०॥ भावित्रम् । वादित्रम् । गारित्रमोदनम् । चरेर्वृत्ते ॥६२१॥ चारित्रम् । अशित्रादिभ्य इत्रोत्रौ ॥६२२॥ अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ् एवमादिभ्य उत्रः । त्रोत्रं प्रहरणम् । वृञ् वरुत्रं प्रावरणम् । अमेर्द्विषति चित् ॥६२३॥ अमित्रः शत्रुः । आःसमिण्निकषिभ्याम् ॥६२४॥ संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात् । स्वरादित्वादव्ययत्वम् । समया । निकषा । चितेः कणः कश्च ॥६२५॥ बाहुलकादगुणः । चिक्कणं मसृणं स्निग्धम् । सूचेः स्मन् ॥६२६॥ सूक्ष्मम् । पातेर्डुम्सुन् ॥६२७॥ पुमान् । रुचिभुजिभ्यां किष्यन् ॥६२८॥ रुचिष्यमिष्टम् । भुजिष्यो दासः । वसेस्तिः ॥६२९॥ वस्तिर्नाभेरधो द्वयोः । वस्तयः स्युर्दशासूत्रे । बाहुलकात् शासः शास्तिः राजदण्डः । विन्ध्याख्यमगमस्यतीत्यगस्तिः । शकन्ध्वादिः । सावसेः ॥६३०॥ स्वस्ति । स्वरादिपाठादव्ययत्वम् । वौ तसेः ॥६३१॥ वितस्तिः । पदिप्रथिभ्यां नित् ॥६३२॥ पत्तिः । प्रथितिः । तितुत्रेष्वग्रहादीनामितीट् । दृणा-

---

इति च प्रत्ययस्वरेणैतेऽन्तोदात्ताः । 'शुन आन्त्राणि पेचे' । 'चित्र देवानाम्' । 'मित्रं नयम्' । 'शत्रस्य शत्रमसि' इत्यादि ॥—पुवः । पूञ् पवनेऽस्मात्कः स्यात् धातोर्ह्रस्वत्व च । पुनाति स्ववंशानिति पुत्रः । पुनामा नरकस्तस्मात् त्रायते इत्यर्थे 'आतोनुपसर्गे कः' इति कप्रत्यये पुत्र इति व्युत्पत्यन्तरम् ॥—स्त्यायतेः–॥ स्त्यैष्ट्यै शब्दसंघातयोः ।—स्त्रीति । डित्वाट्टिलोपः । 'लोपो व्योः–'इति यलोपः । टित्वान्ङीप् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः॥—गुधृ–॥ गुङ् अव्यक्ते शब्दे, धृञ् धारणे, वी गतिप्रजनादौ, डुपचष् पाके, वच परिभाषणे, यम उपरमे, षद्लृ विशरणगत्यादौ, क्षद इति सौत्रः । 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्र कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु' इति मेदिनी ॥ 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इत्यमरः । 'मन्त्र यज्ञसदादानच्छादनारण्यकैतवे' इति मेदिनी । क्षत्र ब्राह्मणानन्तरजातिः ॥—हुयामा–॥ हु दानादनयोः, या प्रापणे, मा माने, श्रु श्रवणे, भस भर्त्सनदीप्त्योः । होत्राशब्दः ऋत्विक्ष्वपि स्त्रीलिङ्ग इति 'होत्राभ्यश्छः' इति सूत्रे हरदत्तादयः । 'यात्रा तु यातनेपि स्याद्गमनोत्सवयोः स्त्रियाम्' इति मेदिनी । 'मात्रा कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीव कार्त्स्न्येऽवधारणे' इति च । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । 'भस्त्रा चर्मप्रसेविका' इति च ॥—गमेः–॥ गम्लृ गतावस्मात् त्रन्स्याद्धातोराकारान्तादेशश्च । 'गात्रमङ्गे कलेवरे । स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरितम्' इति विश्वः ॥—दादिभ्यः–॥ दाप् लवने एवमादिभ्यस्त्रन् । दात्र धान्यादिच्छेदनसाधनम् । पा पाने, 'योग्यभाजनयोः पात्रम्' इत्यमरः । क्षि निवासगत्योः । क्षेत्रमित्यादि योज्यम् ॥—भूवादि–॥ भू सत्तायाम् । भावित्रं त्रैलोक्यम् । वद व्यक्तायां वाचि ण्यन्तः । वादित्र तूर्यादि । गॄ निगरणे ॥ चर गतौ, अस्माण्णित्रन्स्यात् वृत्ते वाच्ये । 'वृत्त पद्ये चरित्रे च' इत्यमरः । ननु इत्रप्रत्यये चरित्रमित्युक्त ततश्च प्रज्ञादिणि चारित्रमिति सिद्धौ किमनेनेति चेत् । मैवम् । स्वरे विशेषात् ॥—अशि–॥ अशू व्याप्तावेवमादिभ्य इत्रः । त्रैङ् पालने, एवमादिभ्य उत्रश्च स्यात् ॥—वहित्रमिति । वह प्रापणे ॥—धरित्रीति । धृञ् धारणे । गौरादित्वात् ङीष् ॥—अमेः–॥ अम गतौ अस्मादित्रः स्यात्स च चित् । उत्रस्तु नानुवर्तते अस्वरितत्वात् । मित्रं नेति विग्रहे त्वमित्रमिति नपुसकम् ॥—आः–॥ इण् गतौ । अस्मादाप्रत्यये गुणे समयादेशः ॥—कषेरिति । कष खषेति दण्डकः । समयानिकषाशब्दौ समीपवाचकौ । बाहुलकात् दुषेः दोषा । दिवेराप्रत्यये बाहुलकादेवास्य गुणाभावे दिवा ॥ स्वदेराप्रत्यये बाहुलकादेव धातोर्धान्तादेशश्च । स्वधेत्यादि ॥—चितेः–॥ चिती सज्ञानेऽस्मात्कणः प्रत्ययः स्यात्कश्चान्तादेशः । अमरोक्तमाह—चिक्कणमिति ॥ सूच पैशून्ये चुरादिरस्मात्स्मन् णिलोपः । कुत्वषत्वे । 'सूक्ष्मं स्यात्कण्ठकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी ॥—पातेः–॥ पा रक्षणेऽस्मात् डुम्सुन्स्यात् । डित्वाट्टिलोपः । उकार उच्चारणार्थ इत्युज्ज्वलदत्तः । वस्तुतस्तूगित्कार्यार्थः । सुपुंसीति 'उगितश्च' इति ङीप् 'पुंसोऽसुङ्' इति सूत्रे न्यासरक्षिताभ्यां पुनातेर्मक्सुन् ह्रस्वश्चेति पठितम् । पूञो डुम्सुनित्यन्ये । भाष्ये तु सूतेः, सप्रत्यये पुमानित्युक्तम् । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' तत्त्वम् ॥—रुचि–॥ रुच दीप्तावभिप्रीतौ च, भुज पालनादौ । 'भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकयोः स्त्रियाम्' इति मेदिनी ॥—वसेः–॥ वस निवासे । वस आच्छदने 'वस्तिर्द्वयोर्निरूढे नाभ्यधोभूमिदशासु च' इति मेदिनी ॥—शास इति । शासु अनुशिष्टौ ॥—अस्यतीति । असु क्षेपणे । 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति मेदिनी ॥—सावसेः ॥ अस् भुवि अस्मात्सावुपपदे तिः स्यात् । बहुलवचनान्न भूभावः ॥ —वौ–। तसु उपक्षयेऽस्माद्विपूर्वात्तिः स्यात् । 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' इत्यमरः । 'स्त्रीपुंसयोर्वितस्तिः स्यात्' इत्यमरमाला ॥—पदि–॥ पद गतौ, प्रथ प्रख्याने आभ्यां तिः स्यात्स च नित् ॥—पत्तिरिति । पदातिः ॥—प्रथितिरिति । प्रख्यातिः ॥—तितुत्रेष्विति । ग्रहादित्वादिडागमनिषेधो नेति भावः ॥—दृणातेः ॥ दॄ विदारणे-

**तेर्ह्रस्वश्च ॥६३३॥ दतिः । कृतॄकृपिभ्यः कीटन् ॥६३४॥ किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः । रुचिवचिकुचिकुटिभ्यः कितच् ॥६३५॥ रुचितमिष्टम् । उचितम् । कुचित परिमितम् । कुटितं कुटिलम् । कुटिकुषिभ्यां क्मलन् ॥६३६॥ कुड्मलम् । कुष्मलम् । कुषेर्लश्च ॥६३७॥ कुष्मलं पापम् । सर्वधातुभ्योऽसुन् ॥६३८॥ चेतः । सरः । पयः । सदः । रपेरत एश्च ॥६३९॥ रेपोऽवद्यम् । अशोर्देवने युट् च ॥६४०॥ देवने स्तुतौ । यशः । उब्जेर्बले बलोपश्च ॥६४१॥ ओजः । श्वेः संप्रसारणं च ॥६४२॥ शवः । शवसी । बलपर्यायोऽयम् । श्रयतेः स्वाङ्गे शिरः किच्च ॥६४३॥ श्रयतेः शिर आदेशोऽसुन् किच्च । शिरः । शिरसी । अर्तेरुच्च ॥६४४॥ उरः । व्याधौ शुट् च ॥६४५॥ अर्शो गुदव्याधिः । उदके नुट् च ॥६४६॥ अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः । अर्णसी । इण आगसि ॥६४७॥ एनः । रिचेर्धने घिच्च ॥६४८॥ चात्प्रत्ययस्य । नुट् । घित्त्वात्कुत्वम् । रेक्णः सुवर्णम् । चायतेरन्ने ह्रस्वश्च**

---

ऽस्मात्तिः स्याद्धातोर्ह्रस्वत्वं च । 'दतिः श्रमपुटे मत्स्ये ना' इति मेदिनी ॥—**कृतॄ**॥ कृ विक्षेपे, तॄ प्लवनतरणयोः, कृपू सामर्थ्ये । किरीटं मुकुटे न स्त्री' इति हेमचन्द्रः । 'गोमी कृपीटमुदरे नीरं' इति विश्वः । दशपाद्यां तु कृगृकृपिकपिभ्य इति पठित्वा कम्पीट इति चतुर्थमुदाहृतम् ॥—**रुचिवचि**—॥ रुच दीप्तावभिप्रीतौ च वच परिभाषणे, कुच शब्दे तारे, अथ वा कुच कौटिल्याल्पीभावयोः । इकः कित्त्वात्सूत्रे नलोपेन निर्देशः । कुट कौटिल्ये ॥—**उचितमिति** । 'वचिस्वपि–' इत्यादिना संप्रसारणम् ॥—**कुटिकुषि**—॥ 'कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मेदिनी ॥ कुष निष्कर्षे । कुष्मलं छर्दनम् । विकुसितमित्यन्ये ॥—**सर्वधातुभ्योऽसुन्** ॥ दशपाद्यां तु असुनित्येव सूत्रम् । चिती संज्ञाने, चित सचेतने चुरादिः, सृ गतौ गौरादित्वान्ङीष् । 'सरसी तु महासरः' इति शब्दार्णवः । महान्ति सरांसि सरस्य इति भाष्यम् । पय गतौ, पीङ् पाने । 'पयः स्यात् क्षीरनीरयोः' इति मेदिनी । षद्लृ विशरणादौ । सदः सभा । वर्च दीप्तौ । 'वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये' इति मेदिनी । रुदिर् अश्रुविमोचने 'रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयोरोदस्यावपि रोदसी' इति विश्वः । वी गत्यादिषु । 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी । अन प्राणने । अनो भक्तम् । 'अनोऽश्माय:सरसां जातिसंज्ञयोः' इति टचि तु अदन्तम् । 'पाकऽस्थान महानसम्' इत्यमरः । तमु ग्लानौ । 'तमः क्लीबं गुणे शोके सैंहिकेयान्धकारयोः' इति रभसः । 'तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे' इति मेदिनी । षह मर्षणे, 'सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोः' इति मेदिनी । तप सन्तापे 'तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः' इति । मह पूजायाम् । 'मह उत्सवतेजसोः' इति मेदिनी ॥ नभ हिंसायां भौवादिकः क्रैयादिकश्च । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । 'नभ तु नभसा सार्धं तपं तु तपसा सह । सहं च सहसा सार्धं मह च महसा सह । तमेन च तमः प्रोक्त रजेनापि रजः समम्' इति द्विरूपकोशः । नन्वसुन्प्रत्यये नभः सहस्तम इत्यादिसान्तशब्दाः सिध्यन्ति पचाद्यचि नभसहन्तममित्याद्यजन्ता अपि सिध्यन्ति परन्तु रज इति अकारान्तसकारान्तौ रलोपवच्छब्दौ न सिध्यत इति 'रजेनापि रजः समम्' इति कोशश्चिन्त्य एवेति चेदत्राहुः । रञ्ज रागेऽस्मादसुनि भूरञ्जिभ्यां कित्' इति वक्ष्यमाणेनासुनः कित्त्वान्नलोपे रज इति सिद्ध्यति 'घनर्थे कविधानम्' इति कप्रत्यये तु रज इत्यदन्तोऽपि सिध्यतीति ॥—**रपेः**—॥ रप व्यक्तायां वाचि अस्मादसुन् स्यादत एकारश्च ॥—**रेपोऽवद्यमिति** । 'अरेपमातन्वा' इति मन्त्रे भाष्ये उक्त नञ्पूर्वकरेपश्शब्दस्यानवद्यवाचकत्वात् ॥—**अशेः**—॥ अशू व्याप्तावस्मादसुन्स्याद्धातोर्युडागमश्च । यशः कीर्तिः ॥—**उब्जेः**—॥ उब्ज आर्जवे अस्मादसुन् स्याद्बले वाच्ये बकारस्य लोपश्च । 'ओजो दीप्तावष्टम्भे प्रकाशबलयोरपि' इति मेदिनी ॥—**श्वेः**—॥ टुओश्वि गतिवृद्ध्योः अस्मादसुन्स्यात्संप्रसारणं च ॥—**श्रयतेः**—॥ श्रिञ् सेवायामस्मात्स्वाङ्गे वाच्येऽसुन्स्यात्स च किद्धातोः शिरादेशश्च । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । घनर्थे कप्रत्यये तु शिर इत्यदन्तोऽपि शिरोवाची । 'शिरोऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम् । 'पिण्डं दद्याद्गयाशिरे' इति वायुपुराणे । 'कुण्डलोद्दष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान् द्रौणिर्नालेभ्य इव पङ्कजान्' इति महाभारतम् ॥—**अर्तेः**—॥ ऋ गतावस्मादसुन् कित्स्याद्धातोरुत्वं च । रपरत्वम् । 'उरो वत्सं च वक्षश्च' इत्यमरः ॥—**व्याधौ**—॥ अर्तेरेव व्याधौ वाच्येऽसुन् तस्य शुडागमश्च स्यात् ॥—**अर्ण** इति ॥ पानीयमित्यर्थः ॥—**इणः**—॥ इण् गतावस्मात्पापे वाच्येऽसुन् स्यात्तस्य नुडागमश्च । एनः पापम् ॥—**रिचेः**—॥ रिचिर् विरेचने, रिच वियोजनसंपर्चनयोरित्यस्माद्वा धने वाच्येऽसुन् ॥—**रेक्ण** इति । 'चजोः' इति कुत्वे 'अट्कुप्वाङ्–' इति णत्वम् । इह दशपादीवृत्तौ नुटं नानुवर्त्य रेकः रेकसा इत्युदाहृतम् । तन्न । उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात् मण्डूकप्लुतौ मानाभावाल्लक्ष्यविसंवादाच्च । उज्ज्वलदत्तेन तु रिचेर्धने चित्किच्चेति पठित्वा नुटं चानुवर्त्य कित्त्वाद्गुणाभावे नुट्श्रुत्वेन णकारे रिक्ण इति साधितम् तल्लोकवेदयोरप्रसिद्धत्वादुपेक्ष्यम् । नित्यं रेक्णो मर्त्याः परिषद्यं ह्यरणस्य रेक्ण इत्यस्य प्रसिद्धत्वात् । वैदिकनिघण्टौ च सुवर्णपर्यायेषु तथापाठात् वेदभाष्ये तु प्रकृतसूत्रेणैव तस्य साधितत्वाच्च रेक्ण

॥६४९॥ चनो भक्तम् । वृञ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च ॥६५०॥ वर्पो रूपम् । शेपो गुह्यम् । स्रु-रीभ्यां तुट् च ॥६५१॥ स्रोतः । रेतः । पातेर्बले जुट् च ॥६५२॥ पाजः । पाजसी । उदके थुट् च ॥६५३॥ पाथः । अन्ने च ॥६५४॥ पाथो भक्तम् । अदेर्नुम्धौ च ॥६५५॥ अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च । अन्धोऽन्नम् । स्कन्देश्च स्वाङ्गे ॥६५६॥ स्कन्दः । स्कन्दसी । आपः कर्माख्यायाम् ॥६५७॥ कर्माख्यायां ह्रस्वो नुट् च वा । अप्नः । अपः । बाहुलकात् । आपः । आपसी । रूपे जुट् च ॥६५८॥ अब्जो रूपम् । उदके नुम्भौ च ॥६५९॥ अम्भः । नहेर्दिवि भश्च ॥६६०॥ नभः । इण आग अपराधे च ॥६६१॥ आगः पापापराधयोः । अमेर्हुक्च ॥६६२॥ अंहः । रमेश्च ॥६६३॥ रंहः । देशे ह च ॥६६४॥ रमन्तेऽस्मिन् रहः । अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ॥६६५॥ एभ्योऽसुन् कवर्गश्चान्तादेशः । अङ्कश्चि-ह्नशरीरयोः । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः । भूरञ्जिभ्यां कित् ॥६६६॥ भुवः । रजः । वसे-र्णित् ॥६६७॥ वासो वस्त्रम् । चन्देरादेश्च छः ॥६६८॥ छन्दः । पचिवचिभ्यां सुट् च ॥६६९॥

---

इति प्रयोग एव साधीयानिति दिक् ॥—**चायतेः**–॥ चायृ पूजानिशामनयोरस्मादन्ने वाच्येऽसुन्स्यात्तस्य नुट् च धातोर्ह्रस्वत्वं च यलोपः । 'चनो दधिष्व पवतः' 'सुते दधिष्व नश्चनः' इत्यादिमन्त्रेषु प्रसिद्धोऽयं चनशब्दः । एतेन च-णोऽन्नमित्युदाहृत्य बाहुलकाण्णत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुसारिणः प्रसादकारादयश्च परास्ताः ॥—**वृञ्**–॥ वृञ् संभक्तौ, शीङ् स्वप्ने, आभ्यां यथाक्रमं रूपे स्वाङ्गे च वाच्येऽसुन्स्यात्तस्य पुडागमश्च ॥—**वर्पो रूपमिति** । 'भ्रन् छि-श्नदेवा अभिवर्पसाभूत्' इत्यादिमन्त्रेषु प्रसिद्धमिदम् । 'शेप. स्याद्वृषण पेलम्' इति सुभूतिचन्द्र. । अकारान्तोऽप्ययम् । 'शे-पपुच्छलाङ्गूलेषु शुनः' इति वार्तिके शेप इति निर्देशात् 'यस्यामुशन्तः प्रहराम शेपम्' वैदिकप्रयोगाच्च ॥—**स्रुरीभ्याम्** ॥ स्रु गतौ, रीङ् श्रवणे, आभ्यामसुन् तस्य तुट् च स्यात् । 'स्रोतोऽम्बुवेगेन्द्रिययोः' इति विश्वः । 'रेतः शुक्रे पारदे च' इति मेदिनी ॥—**पातेः**–॥ पा रक्षणेऽस्माद्बले वाच्येऽसुन् जुडागमश्च । युट् चेत्यन्तस्थादिपाठस्तूज्ज्वलदत्तस्य प्रामादिकः । 'पृथुपाजा अमर्त्यः' इत्यादिमन्त्रतद्भाष्यविरोधात् ॥—**उदके**–॥ पातेरुदके वाच्येऽसुन्स्यात्तस्य थुडागमश्च 'कबन्धमुदकं पाथः' इत्यमरः ॥—**अदेः**–॥ अद भक्षणे । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । 'द्विजातिशेषेण यदेतदन्धसा' इति भारविः ॥—**स्कन्देः**–॥ स्कन्दिर् गतिशोषणयोरस्मात्स्वाङ्गे वाच्येऽसुन्धश्चान्तादेशः ॥—**आपः**–॥ आप्लृ व्याप्तौ । अस्मात्कर्माख्यायामसुन् ह्रस्वश्च धातो । प्रत्ययस्य नुडागमस्तु वा स्यात् । 'अप्नस्वतीमश्विना अपांसि यस्मिन्नधिसंदधुः' ॥ —**बाहुलकादिति** । उपलक्षण ह्रस्वनुटौ वा स्त इति व्याख्यानस्यापि संभवात् । तथा च ब्रुवते 'कतमोऽपि नपुंसकमपि' इति कोशमुदाहृत्य 'सर्वमापोमय जगत्' इति प्रयोगो दुर्घटवृत्तौ समर्थितः ॥—**रूपे**–॥ रूपे वाच्ये आप्नोतेरसुन् ह्रस्वत्व च धातोः प्रत्ययस्य जुडागमश्च स्यात् ॥—**अब्ज** इति । 'झलां जश् झशि' इति पकारस्य बकारः ॥—**उदके**–॥ उदके वाच्ये आप्नोतेरसुन् ह्रस्वत्व च नुमागमो भश्चान्तादेशः ॥—**नहेः**–॥ णह बन्धनेऽस्माद्गगने वाच्येऽसुन्भश्चान्तादेशः स्यात् । 'नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृतम्' इति विश्वः । 'नभः खं श्रावणे नभाः' इत्यमरः । 'नभ तु नभसा सार्धम्' इति द्विरूपकोशादकारान्तोऽपि ॥—**इणः**–॥ इणोऽसुन् स्यादपराधे वाच्ये धातोरागादेशश्च । विश्वोक्तिमाह— **आग** इति ॥—**अमेः**–॥ अम गत्यादौ अस्मादसुन् हुगागमश्च धातोः स्यात् । अमन्ति गच्छन्त्यनेनाधस्तादित्यंहो दुरितम् ॥—**रमेश्च**–॥ रमेरसुन्स्यात् । हुगागमश्च धातोः । रहो भोगः । अहिरहिभ्यामसुना सिद्धे अघिरघिभ्यामसुनि अघो रघ इति माभूदिति सूत्रद्वयमिति गोवर्धनः । तथा च 'स्यान्मध्यो-ष्मचतुर्थत्वमंहसो रंहसस्तथा' इति द्विरूपकोशः । एवं च 'दत्तार्घास्सिद्धसंघैर्विदधतु घृणयः शीघ्रमङ्घोविघातम्' इति 'रङ्घस्स-ह्स्सुराणां जगदुदयकृते नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः' इत्यत्र अङ्घो रङ्घ इति घकारपाठोऽनुप्राससरसिकानां प्रामादिक इति वदन्ति ॥—**देशे**–॥ देशे वाच्ये रमेरसुन् हकारश्चान्तादेशः स्यात् । 'रहस्तत्त्वरते गुह्ये' इति मेदिनी ॥—**अञ्चि**–॥ अञ्चु गतिपूजनयोः, अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, युजिर् योगे, युज समाधौ, भृज भर्जने, अङ्कः अङ्कसी अङ्कांसि । अङ्ग अङ्गसी अङ्गांसि । योगः योगसी योगांसि ॥—**भर्गस्तेज** इति । 'हरः स्मर-हरो भर्गः' इत्यत्र भर्गशब्दो घञन्तः पुंलिङ्ग इति बोध्यः । उच समवायेऽस्मादसुनि बाहुलकात्कुत्वम् । न्यङ्क्वादित्वाद्वा । 'ओक आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसकम्' इति मेदिनी ॥—**भूरञ्जि**–॥ भू सत्तायाम्, रञ्ज रागे, आभ्यामसुन्कित्स्यात् । भुवः अन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम् । रजो रेणुः 'रजः क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी । घञर्थे कप्रत्यये तु अकारान्तोऽप्ययम् । 'रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोशः ॥ —**वसेः**–॥ वस निवासेऽस्मादसुन् स्यात्स च णित् । णित्वाद्वृद्धिः ॥—**चन्देः**–॥ चदि आह्लादने अस्मादसुन् आदेः छका-रश्च । 'छन्दः पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी । अकारान्तोऽप्ययम् । 'छन्दावभिप्रायवशौ' इत्यमरद्वि-रूपकोशौ ॥—**पचि**–॥ डुपचष् पाके, वच परिभाषणे, आभ्यामसुन् स्यात्तस्य सुडागमश्च । चस्य कुत्वे पक्ष पक्षम् ।

पक्षसी तु स्मृतौ पक्षौ। वक्षो हवयम्। ⧗ वहिहाधाञ्भ्यश्छन्दसि ॥६७०॥ वक्षाः अनड्वान्। हासाश्चन्द्रः। धासाः पर्वत इति प्राञ्चः। वस्तुतस्तु णिदित्यनुवर्तते न तु सुट्। तेन वहेरुपधावृद्धिः। इतरयोरातो युगिति युक्। स्तोणा इण्णू नृवाहसा श्रोता हवं गृणतः स्तोमवाहाः। विश्वो विहायाः। वाजम्भरो विहायाः। देवो नयः पृथिवीं विश्वधायाः। अधारयत् पृथिवीं विश्वधायसम्। धर्णसं भूरिधायसमित्यादि। ⧗ इण आसिः ॥६७१॥ अयाः वह्निः। स्वरादिपाठादव्ययत्वम्। ⧗ मिथुनेऽसिः पूर्ववच्च सर्वम् ॥६७२॥ उपसर्गविशिष्टो धातुर्मिथुनं तत्रा-सुनोऽपवादोऽसिः स्वरार्थः। ⧗ नञि हन एह च ॥६७३॥ अनेहाः। अनेहसौ। ⧗ विधाञो वेध च ॥६७४॥ विदधातीति वेधाः। ⧗ नुवो धुट् च ॥६७५॥ नोधाः। ⧗ गतिकारकोपपदयोः पूर्वपदप्रकृति-स्वरत्वं च ॥६७६॥ असिः स्यात्। सुतपाः। जातवेदाः। गतिकारकोपपदात् कृदित्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम्। ⧗ चन्द्रे मो डित् ॥६७७॥ चन्द्रोपपदान्माङोऽसिः स्यात्स च डित्। चन्द्रमाः। ⧗ वयसि धाञः ॥६७८॥ वयोधास्तरुणः। ⧗ पयसि च ॥६७९॥ पयोधाः समुद्रो मेघश्च। ⧗ पुरसि च ॥६८०॥ पुरोधाः। ⧗ पुरूरवाः ॥६८१॥ पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते। ⧗ चक्षेर्बहु-लं शिच्च ॥६८२॥ नृचक्षाः। ⧗ उषः कित् ॥६८३॥ उषः। ⧗ दमेरुनसिः ॥ ६८४ ॥ सप्तार्चिर्दमुनाः। ⧗ अङ्गतेरसिरिरुडागमश्च ॥६८५॥ अङ्गिराः। ⧗ सर्तेरप्पूर्वादसिः ॥६८६॥ अप्सराः। प्रायेणायं भूम्नि। अप्सरसः। ⧗ विदिभुजिभ्यां विश्वे ॥६८७॥ विश्ववेदाः। विश्वभोजाः। ⧗ वशेः कनसिः ॥६८८॥ संप्रसा-रणम्। उशनाः ॥ ॥ इत्युणादिषु चतुर्थः पादः ॥

पक्षः पक्षसी पक्षांसि। 'यथा शालायै पक्षसी' इति श्रुतिः। 'पूर्वोत्तरं द्वे पक्षसी' इति श्रुतिः। पूर्वोत्तरे द्वे पक्षसी इति अनीकाधिकरणे शाबरभाष्यम्। माधवस्तु पक्षपरिग्रह इत्यस्मादसुन् इत्याह ॥—**वहि**–॥ वह प्रापणे, ओहाक् त्यागे, डुधाञ् धारणादौ, एभ्योऽसुन् स्यात्। अत्र पूर्वसूत्रात्सुटमनुवर्तयतामुज्ज्वलदत्तादीना मतेनोदाहरणमाह। वक्षाः हासाः धासा इति ॥—**प्राञ्च** इति। सकलवृत्तिकृतः प्रमादकारादयश्चेत्यर्थः। एतच्चायुक्तम्। उक्तोदाहरणानि हि लोके तु न दृश्यन्ते न वा संभवन्ति सूत्रेऽस्मिन् छन्दसीत्युक्तत्वात्। वेदे तु विपरीतान्येवोदाहणानि दृश्यन्त इत्याह—**वस्तुत-स्त्विति**। वेदभाष्यकारादयश्चेहानुकूला इत्यवधेयम् ॥—**इणः** ॥ इण् गतौ अस्मादासिः स्यात् ॥—**मिथुने**–॥ सुयशा इति। अशेर्वेदने युट् चेत्यादि पूर्ववत् सुपयाः सुस्रोता इत्याद्युदाहार्यम् ॥—**नञि**–॥ हन्तेर्नञ्युपप-देऽसिः स्यात् धातोरेहादेशश्च 'ऋदुशनस्पुरुदश–' इत्यादिना सावनङ् ॥—**विधाञः**–॥ डुधाञ् धारणादौ विपूर्वादस्मादसिः स्याद्वेधादेशश्च सोपसर्गधातोः। 'वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि' इति मेदिनी ॥ —**नुवः**–॥ णु स्तुतौ अस्मादसिः स्यात्तस्य धुडागमश्च ॥—**नोधा** इति। 'सद्यो भवद्वीर्याय नोधाः' इति मन्त्रे नोधा ऋषिर्भव-तीति निरुक्तम्। नवं दधातीति तु नैरुक्त व्युत्पत्त्यन्तर बोध्यम् ॥—**गति**–॥ गतौ कारके चोपपदेऽसिः स्यात्। तप सं-न्तापे, विद ज्ञाने, विदॢ लाभे ॥—**चन्द्रे** ॥ चन्द्र रजतममृत च तदिव मीयते असौ चन्द्रमा इति हरदत्तः। स च डिदिति डित्वाट्टिलोपे चन्द्रमसौ चन्द्रमस इत्यादि सिध्यति ॥—**वयसि**–॥ डुधाञ् धारणे अस्माद्वयस्युपपदेऽसिः स्यात्स च डित् ॥—**पयोधा** इति। पयःशब्द उपपदे डुधाञः पूर्ववत् ॥—**पुरसि च** ॥ पुरःशब्द उपपदे पूर्ववत्। 'पुरो-धास्तु पुरोहितः' इत्यमरः ॥—**रौतेरिति**–॥ रु शब्दे। 'पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः' इत्यमरः ॥—**चक्षेः**–॥ चक्षिङ् व्यक्तायां वाचि अस्मादसिः स्यात्स च बहुल शित्। शित्वात्सार्वधातुकसंज्ञायां ख्याञ् न। नृचक्षाः राक्षसः। शि-त्वाभावपक्षे तु ख्याञादेशः। प्रख्याः प्रजापतिः ॥—**उषः**–॥ उष दाहेऽस्मादसिःस्यात्स च कित्। उषः प्रभातम्। द-शपाद्यां तु वसः किदिति पाठः। वसति सूर्येण सहेति उषा देवताविशेषः। 'अपो भि' इति सूत्रे उषसश्चेष्यते इति वा-र्तिकस्य समुषद्भिरित्युदाहरण विप्रुण्वद्भिरय पाठः पुरस्कृतः ॥—**दमेः**–॥ दमु उपशमे 'सप्तार्चिर्दमुनाः शुक्रः' इत्यमरः ॥ पक्षे 'अन्येषामपि दृश्यते' इति दीर्घ.। 'जुष्टो दमूनाः' 'दमूनस गृहपतिं वरेण्यम्'। दशपाद्यां तु दमेरूनसिरिति सूत्र एव दीर्घः पठ्यते तन्मते बाहुलकाद्ध्रस्वो बोध्यः ॥–**अङ्गिराः**। ऋषिभेदः ॥—**सर्तेः**–॥ सृ गतौ ॥—**प्रायेणेति**। 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा' इति शब्दार्णवः ॥ 'अप्सरस्त्वप्सराः प्रोक्ताः सुमनस्सु च' इति द्विरूपकोशः। 'एकाप्सरः-प्रार्थितयोर्विवादः' इति रघुः ॥—**विदि**–॥ विद ज्ञाने, भुज पालनाभ्यवहारयोः, आभ्यां विश्वशब्दे उपपदेऽसिः स्यात् ॥ शब्दस्वरूपपरत्वाद्विश्वे इत्यत्र स्मिन्नादेशो न कृतः। उदाहरणे विश्व वेत्ति भुङ्क्ते इति विग्रहः। यत्तु 'तत्पुरुषे कृति–' इति सप्तम्या अलुक् विश्वेवेदाः अग्निः विश्वेभोजाः इन्द्र इत्युज्ज्वलदत्तेनोक्तं तन्न। तथा सति स्मिन्नादेशस्य दुर्वारत्वापत्तेः। 'सुमृळीको भवतु विश्ववेदाः' 'पूषामगः प्रभृडे विश्वभोजा' इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात् वृत्तौ तथैवोदाहरणाच्च ॥ —**वशेः**–॥ वश कान्तौ 'उशना भार्गवः कविः' इत्यमरः ॥ ॥ इत्युणादिषु चतुर्थः पादः ॥

## पञ्चमः पादः ॥

अदि भुवो डुतच् ॥६८९॥ अद्भुतम् । गुधेरूमः ॥६९०॥ गोधूमः । मसेरूरन् ॥६९१॥ मसूरः । प्रथमे पादे असेरूरन्मसेश्चेत्यत्र व्याख्यातः । स्थः किच्च ॥६९२॥ स्थूरो मनुष्यः । पातेरतिः ॥६९३॥ पातिः स्वामी । संपातिः पक्षिराजः । वातेर्नित् ॥६९४॥ वातिरादित्यसोमयोः । अर्तेश्च ॥६९५॥ अरतिरुद्वेगः । तृहेः क्नो हलोपश्च ॥६९६॥ तृणम् । वृञ्लुटितनिताडिभ्य उलच् तण्डश्च ॥६९७॥ व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः । दंसेष्टटनौ न आ च ॥६९८॥ दासः सेवकशूद्रयोः । दंशेश्च ॥६९९॥ दाशो धीवरः । उदि चेर्डैसिः ॥७००॥ स्वरादिपाठादव्ययत्वम् । उच्चैः । नौदीर्घश्च ॥७०१॥ नीचैः । सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ॥७०२॥ रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात् । कित्वादनुनासिकलोपः । सूरत उपशान्तो दयालुश्च । पूञो यण्णुक् ह्रस्वश्च ॥७०३॥ यत्प्रत्ययः । पुण्यम् । स्रंसेः शिः कुट् किच्च ॥७०४॥ स्रंसतेः शिरादेशः यत्प्रयः कित्तस्य कुडागमश्च । शिक्यं । अर्तेः क्युरुच्च ॥७०५॥ उरणो मेषः । हिंसेरीरन्नीरचौ ॥७०६॥ हिंसीरो व्याघ्रदुष्टयोः । उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ॥७०७॥ उदरम् । डित् खनेर्मुट् स चोदात्तः ॥७०८॥ अच् अल् च डित्स्याद्धातोर्मुट् स चोदात्तः । मुखम् । अमेः सन् ॥७०९॥ अंसः । मुहेः खो मूर्च ॥७१०॥ मूर्खः । नहेर्हलोपश्च ॥७११॥ नखः । शीङो ह्रस्वश्च ॥७१२॥ शिखा । माङ ऊखो मय्च ॥७१३॥ मयूखः । कलिगलिभ्यां फगस्योच्च ॥७१४॥ कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः । स्पृशेः श्वण्शुनौ पृ च ॥७१५॥ श्वण्शुनौ प्रत्ययौ पृ इत्यादेशः । पार्श्वोऽस्त्री कक्षयोरधः । पर्शुरायुधम् । श्मनि श्रयतेर्डुन् ॥७१६॥ श्मन्शब्दो मुखवाची । मुखमाश्रयत इति श्मश्रु । अश्र्वादयश्च ॥७१७॥ अश्रु नयनजलम् । जनेष्टन्

**अदि भुवो** ॥ अत् इत्यव्ययम् आकस्मिकार्थेऽस्मिन्नुपपदे भूधातोर्डुतच्स्यात् डित्वाट्टिलोपः । अद्भुतमाश्चर्यम् ॥—**गुधेः**—॥ गुध परिवेष्टने गुध्यते परवेष्ट्यते प्राणिभिरिति । 'गोधूमो नागरङ्गे स्यादोषधीव्रीहिभेदयोः' इति मेदिनी ॥—**मसेः**—॥ मसी परिणामे ॥—**स्थः**—॥ ष्ठा गतिनिवृत्तावस्मादूरन् कित्वादालोपः ॥—**स्थूरो मनुष्य** इति । 'स्थूरस्य रयो बृहतो य ईशे' इति मन्त्रे तु योगपुरस्कारात्स्थिरस्येत्यर्थ इति व्याख्यातम् ॥—**पातेः**—॥ पा रक्षणे ॥—**वातेः**—॥ वा गतिगन्धनयोः । रभसकोशस्थमाह—**वातिरिति** ॥—**अर्त्तेः**—॥ ऋ गतौ अस्मादर्तिः स्यात्स च नित् ॥—**तृहेः**—॥ तृह हिंसायाम्, क्नस्य कित्वाद्गुणाभावः ॥—**वृञ**—॥ वृञ् वरणे, लुठ विलोडने, तनु विस्तारे, तड आघाते, चुरादिः । एभ्य उलट् स्यात् तण्डादेशश्च धातोः । यद्यपि सानसिपर्णसीति सूत्रे तण्डुलशब्दो निपातितस्तथापि प्रत्ययस्वरेण मध्योदात्त सः । अयं तु चित्स्वरेणान्तोदात्त इति विवेकः ॥—**दंसेः**—॥ दंस सेवने अस्माट्टटनौ स्यातां नकारस्याकारश्च टनो नकार आद्युदात्तार्थः । 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्व ॥—**दंशेः**—॥ दश दशनेऽस्मादपि टटनौ नकारस्य चात्वं स्यात् । 'कैवर्ते दाशधीवरौ' इत्यमरः ॥—**उदि**—॥ चिञ् चयने डैसो डित्वाट्टिलोपः ॥—**सौ**—॥ रमु क्रीडायाम् ॥ पञ् पवने, 'पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः ॥—**स्रंसेः**—॥ स्रंसु अधःपतने कित्वं तु गुणाभावार्थम् ॥ ऋ गतावस्मात्क्युप्रत्ययः स्याद्धातोरुत्वं च रपरत्वम् 'धुवोरनाकौ' । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः ॥—**हिंसेः**—॥ हिसि हिंसायाम् ॥—**उदि**—॥ दॄ विदारणे ॥—**डित्खनेः**—॥ खनु अवदारणे, अस्मादजलौ स्तः ॥ 'मुखं निःसरणे वक्त्रमा । रम्भोपाययोरपि । सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्' इति मेदिनी ॥—**अमेः**—॥ अम गतौ, 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । 'असः स्कन्धे विभागे च' इति दन्त्ये विश्वः ॥—**मुहेः**—॥ मुह वैचित्त्येऽस्मात्खप्रत्ययो धातोर्मुरादेशश्च । मुह्यतीति मूर्खः 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः ॥—**नहेः**—॥ नह बन्धने, 'नखं कररुहे षण्ढे गन्धद्रव्ये नखं नखी' इति विश्वः । 'नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्' इति मेदिनी ॥—**शीङः**—॥ शीङ् स्वप्नेऽस्मात्खः धातोर्ह्रस्वश्च । ह्रस्वविधानसामर्थ्याद्गुणाभावः । 'शिखा शाखा बर्हिचूडालाङ्गलिक्यप्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' इति मेदिनी । माङ् माने । 'मयूखस्त्विट्करज्वालासु' इत्यमरः ॥—**कलि**—॥ कल शब्दसंख्यानयोः, गल अदने, आभ्यां फक् स्यात् धातोरकारस्योत्वं च ॥—**गुल्फ** इति । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । तयोः पदयोर्ग्रन्थी इत्यर्थः ॥ स्पृश संस्पर्शे, 'पार्श्वं कक्षधरे चक्रोपान्तपशुगणेऽपि च' इति विश्वमेदिन्यौ ॥—**श्मनि**—॥ श्रिञ् सेवायामस्मात् श्मन्नुपपदे डुन्स्यात् डित्वाट्टिलोपः 'तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः । पुरुषस्य मुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तत इत्यर्थः ॥—**अश्र्वादयः**—॥ अशू व्याप्तावस्मात् रुन् प्रत्ययो नम्पूर्वात् श्रयतेर्डुन् च । यत्तूज्ज्वलदत्तेनोक्तम् अश्नोतेर्डुन् रुट् चेति तदयुक्तम्, डित्वाट्टिलोपे सति धातोरश्रवणप्रसङ्गात् । न च टिलोपाभावो निपात्यते इति वाच्यम् । तथा सति डित्वोत्प्रेक्षणस्यानिष्फलत्वापत्तेरिति दिक् ॥—**जनेः**—॥ जनी प्रादुर्भावे अस्मादन्प्र-

लोपश्च ॥७१८॥ जटा । **अच् तस्य जङ्ग च** ॥७१९॥ तस्य जनेः जङ्गादेशः स्याच्च । जङ्घा । **हन्तेः शरीरावयवे द्वे च** ॥७२०॥ जघनम् । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः । **क्लिशेरन् लो लोपश्च** ॥७२१॥ लकारस्य लोपः । केशः । **फलेरितजादेश्च पः** ॥७२२॥ पलितम् । **कृञादिभ्यः संज्ञायां वुन्** ॥७२३॥ करकः । करका । कटकः । नरकम् । नरकः । नरको नारकोऽपि चेति द्विरूपकोशः । सरकं गगनम् । कोरकः कोरकं च । **चीकयतेराद्यन्तविपर्ययश्च** ॥७२४॥ कीचको वंशभेदः । **पचिमच्योरिच्चोपधायाः** ॥७२५॥ पेचकः । मेचकः । **जनेररष्ठ च** ॥७२६॥ जठरम् । **वचिमनिभ्यां चिच्च** ॥७२७॥ वठरो मूर्खः मठरो मुनिशौण्डयोः । बिदादित्वान्माठरः । गर्गादित्वान्माठर्यः । **ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च** ॥७२८॥ ऊर्दरः शूररक्षसोः । **कृदरादयश्च** ॥७२९॥ कृदरः । कुसूलः । मृदरं बिलसत् । सृदरः सर्पः । **हन्तेर्युक्चाद्यन्तयोर्घत्वतत्वे** ॥७३०॥ घातनो मारकः । **क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च** ॥७३१॥ क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः । **हर्यतेः कन्यन् हिरच्** ॥७३२॥ कन्यन् प्रत्ययः । हिरण्यम् । **कृञः पासः** ॥७३३॥ कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् । **जनेस्तु रश्च** ॥७३४॥ जर्तुर्हस्ती योनिश्च । **ऊर्णोतेर्डः** ॥७३५॥ ऊर्णा । **दधातेर्यत् नुट् च** ॥७३६॥ धान्यम् । **जीर्यतेः क्रिन् रश्च वः** ॥७३७॥ जिव्रिः स्यात्कालपक्षिणोः । बाहुलकाद्गुणः क्विति चेति दीर्घो न । **मव्यतेर्यलोपो मश्चापतुडालः** ॥७३८॥ मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये । **ऋजेः कीकन्** ॥७३९॥ ऋजीक इन्द्रो

स्यात् स्यादातोरन्त्यलोपश्च । 'जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी' इति मेदिनी ॥—**जङ्गेति** ॥ जनेरच् प्रत्यये सति 'अजाद्यतः' इति टाप् ॥—**हन्तेः**—॥ देहावयवे वाच्ये हन्तेरच्प्रत्ययः स्यात् द्वित्वं च धातोः, अभ्यासकार्यमभ्यासाच्चेति कुत्वम् । अमरोक्तिमाह—**पश्चान्नितम्ब** इति । 'जघनं च स्त्रियाः श्रोणिपुरभागे कटावपि' इति मेदिनी ॥—**क्लिशेः**—॥ क्लिशू विबाधनेऽस्मादन्स्यात् । 'केशः स्यात्पुंसि वरुणे कुबेरे कुण्डलेऽपि च' इति मेदिनी ॥—**फलेः**—॥ फल निष्पत्तौ । 'पलितं जरसा शौक्ल्यम्' इत्यमरः । 'पलितं शैलजे तापे केशपाशे च कर्दमे' इति मेदिनी ॥—**कृञादिभ्यः**—॥ कृञ् करणे । करकः कमण्डलुः । करका वृष्टिपाषाणः । कटे वर्षावरणयोः, 'कटको वलये सानौ' । क्वुन् शिल्पिसंज्ञयोरिति क्वुन्यप्ययं सिद्धस्तथा च गुणभाज इहैव वुनि उदाहार्याः, निषेधभाजस्तु क्वुनि । उदासीनास्तु यत्र कुत्रचिदिति भावः । नॄ नये । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । 'नरकः पुंसि निरये देवारातिप्रदेशयोः' इति मेदिनी । उदयनाचार्यास्तु न नरकाण्येव सन्तीति क्लीबं प्रयुञ्जते तन्निर्मूलमित्याहुः । सृ गतौ । 'सरकोऽस्त्री शीधुपात्रे शीधुपानेक्षुशीधुनोः' इति मेदिनी । कुर् शब्दे । कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः' इति मेदिनी । 'विचकार कोरकानि' इति माघः । 'कोरकः पुमान्' इत्यमरोक्तिस्तु नादर्तव्येत्याहुः । अपचरकादयोऽपि इहैव बोध्याः ॥—**चीकयतेः**—॥ चिक आमन्त्रणे, चीक च चुरादिः । अस्याद्यन्तविपर्ययः । पचिमच्योरित्वं चानुपदं वक्ष्यमाणं बाहुलकबललभ्यं बोध्यम् । 'कीचको दैत्यभिद्वाताहतसस्वनवंशयोः' इति मेदिनी ॥ डुपचष् पाके । 'उलूके करिणः पुच्छमूलोपान्ते च पेचकः' इत्यमरः । पेचको गजलाङ्गूलमूलोपान्ते च कौशिके' इति मेदिनी । मच मुचि कल्कने । 'मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान् । तद्युक्ते वाच्यवत्क्लीबं स्रोतोऽञ्जनान्धकारयोः' इति मेदिनी ॥ —**जनेः**—॥ जन जनने, जनी प्रादुर्भावे वा । 'जठरः कठिनेऽपि स्यात्' इत्यमरः । 'जठरो न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु' इति मेदिनी ॥—**वचि**—॥ वच परिभाषणे, मन ज्ञाने, आभ्यामरप्रत्ययः स्यात्स च चित् ठश्चान्तादेशः । 'वठरः कुक्कुटे वष्टे शठे च' इति मेदिनी ॥—**ऊर्जि**—॥ दृ विदारणेऽस्मादूर्ज्युपपदे अलचौ प्रत्ययौ स्तः ॥—**कृदरादयश्च** ॥ कृ मृ सृ एतदव्ययपूर्वकदृणातिप्रकृतिकालजन्ता निपात्यन्ते ॥—**हन्ते**—॥ हन हिंसागत्योः ॥—**क्रमि**—॥ क्रमु पादविक्षेपे, गम्लृ गतौ, क्षमूष् सहने, एभ्यस्तुन्स्यादेषां वृद्धिश्च ॥—**हर्यतेः**—॥ हर्य गतिकान्त्योः । 'हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः । अक्षयं मानभेदे स्यादकुप्यं च नपुंसकम्' इति मेदिनी ॥—**कृञः**—॥ डुकृञ् करणे ॥—**जनेः**—॥ तु इत्यविभक्तिकम् । जनेस्तुप्रत्ययो रेफश्चान्तादेशः स्यात् ॥—**ऊर्णोतेः**—॥ ऊर्णुञ् आच्छादनेऽस्मात् डः स्यात् डित्त्वाट्टिलोपः टाप् । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ' भ्रुवोर्मध्ये य आवर्तस्तत्रेत्यर्थः । 'अन्तरान्तरेण—' इति द्वितीया ॥ —**दधातेः**—॥ डुधाञ् धारणादौ अस्माद्यत् प्रत्ययः स्यात्तस्य नुडागमश्च । 'धान्यं व्रीहिषु धान्याके' इति मेदिनी ॥ —**जीर्यतेः**—॥ जॄ वयोहानावस्मात् क्रिन्स्यात् । 'ॠत इद्धातोः' । रपरत्वम् । रेफस्य वकारादेशः ॥—**मव्यतेः**—॥ मव्य बन्धने ॥—**अन्त्यस्येति** । वकारस्येत्यर्थः ॥—**ऋजेः**—॥ ऋज गतौ ॥—**तनोतेः** ॥ तनु विस्तारेऽस्माद् डडः प्रत्ययस्तस्य सन्वद्भावात् द्वित्वमभ्यासस्येत्वं च डित्त्वाट्टिलोपः । पृथगुच्चारणसामर्थ्याद्गुणो न । तितउः चालिनी । 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत' । तितउः परिपवनं भवतीति यस्कभाष्यम् । 'चालिनी तितउः पुमान्' इत्यमरः । 'चालनं तितउन्युक्तम्' इति कोशान्तरम् ॥ 'स्याद्वास्तु हित्र तितउ' इति पुन्नपुंसकवर्गे त्रिका-

धूमश्च । ⧗ तनोतेर्डउः सन्वच्च ॥७४०॥ तितउः । पुंसि क्लीबे च । ⧗ अर्भकपृथुकपाका वयसि ॥७४१॥ ऋधु वृद्धौ । अतो वुन् । भकारश्चान्त्यादेशः । प्रथेः कुकन्संप्रसारणं च । पिबतेः कन् । ⧗ अवद्यावमाधमार्वरेफाः ॥७४२॥ कुत्सिते वदेर्नञि यत् । अवद्यम् । अवतेरमः । वस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । ⧗ रिफतेस्तौदादिकादेः ॥७४३॥ रेफः । ⧗ लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः ॥७४४॥ तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् । ⧗ क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ॥७४५॥ क्लिशेः कन् स्यात् उपधाया ईत्वं लस्य लोपो नामागमश्च । कीनाशो यमः । कित्त्वफलं चिन्त्यम् । ⧗ अश्नोतेराशुकर्मणि वरट् च ॥७४६॥ चकारादुपधाया ईत्वम् । ईश्वरः । ⧗ चतेरुरन् ॥७४७॥ चत्वारः । ⧗ प्रादतेररन् ॥७४८॥ प्रातः । ⧗ अमेस्तुट् च ॥७४९॥ अन्तर्मध्यम् । ⧗ दहेर्गो लोपो दश्च नः ॥७५०॥ गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः । नगः । ⧗ सिचेः संज्ञायां हनुमौ कश्च ॥७५१॥ सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् । सिंहः । ⧗ व्याङि घ्रातेश्च जातौ ॥७५२॥ कप्रत्ययः स्यात् । व्याघ्रः । ⧗ हन्तेरच् घुरच ॥७५३॥ घोरम् । ⧗ क्षमेरुपधालोपश्च ॥७५४॥ चादच् । क्ष्मा । ⧗ तरतेर्ड्रिः ॥७५५॥ त्रयः । त्रीन् । ⧗ ग्रहेरनिः ॥७५६॥ ग्रहणिः ङीष् । ग्रहणी व्याधिभेदः । ⧗ प्रथेरमच् ॥७५७॥ प्रथमः । ⧗ चरेश्च ॥७५८॥ चरमः । ⧗ मङ्गेरलच् ॥७५९॥ मङ्गलम् ॥ इत्युणादिषु पञ्चमः पादः ।

---

ण्डशेषः ॥—अर्भक—॥ एते निपात्यन्ते । निपातनप्रकारमेवाह—ऋधु वृद्धावित्यादि ॥—प्रथेरिति । प्रथ प्रख्याने, पा पाने, पिबति स्तनादिकमिति पाकः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः, इत्यमरः । 'अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च । पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्' । 'पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी ॥—अवद्य—॥ एते कुत्सिते निपात्यन्ते । वद व्यक्तायां वाचि, अव रक्षणादौ, ऋ गतौ, रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः' इत्यमरः । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इति च । 'अधमः स्याद्गर्ह्ये ऊनेऽपि' इति मेदिनी ॥ 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः । रेफो रवर्णे पुंसि स्यात्कुत्सिते पुनरन्यवत्' इति च मेदिनी ॥—लीरीङोः—॥ लीङ् श्लेषणे, रीङ् श्रवणे ।—क्रमादिति । श्लेषणे वाच्ये तप्रत्ययः कुत्सिते वाच्ये रप्रत्यय इत्यर्थः । 'लिप्त विषाक्ते भुक्ते च वाच्यवत्स्याद्विलेपिते' इति विश्वः ॥—क्लिशेः—॥ क्लिशू विबाधने, ॥—नामागमश्च । प्रत्ययस्येति ॥—चिन्त्यमिति । ईत्वविधानसामर्थ्यादेव गुणाभावसिद्धेरिति भावः । 'कीनाशः कर्षकः क्षुद्रो पांशुधूलिषु वाच्यवत् । यमे ना' इति मेदिनी ॥—अश्नोतेः—॥ अशू व्याप्तौ अस्माद्वरट् स्यात् । आशुकर्म वरदानादिक्रिया यस्य तस्मिन्वाच्ये शीघ्रदातरीत्यर्थः ॥—ईश्वर इति । स्त्रियां तु टित्त्वान्ङीप् ईश्वरी । प्रत्ययस्वरेण मध्योदात्ता । ईशेः वनिपि 'वनो र च' इति ङीब्रयोस्तु धातुस्वरेणाद्युदात्ता पुंयोगलक्षणे ङीषि अन्तोदात्ता । 'स्थेशभासपिसकसः—' इति वरचि तदन्ताट्टापि ईश्वरेति विवेकः । 'ईश्वरो मन्मथे शम्भौ नाढ्ये स्वामिनि वाच्यवत् । ईश्वरी चेश्वरोमायाम्' इति मेदिनी ॥ ईश्वरा उमायामिति छेदः । 'ईश्वरः शङ्करेऽधीशे तत्पत्न्यामीश्वरीश्वरा' इति बोपालितः । 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः । दशपाद्या तु सूत्रान्तरमपि 'हन्ते रन् घश्च' । हन हिंसागत्योरस्माद्रन्प्रत्ययः स्यात् घश्चान्तादेशः । हन्यते गम्यतेऽतिथिभिरिति घरः गृहम् ॥—चतेः ॥ चत याचनेऽस्मादुरन्स्यादकार उच्चारणार्थः 'चतुरनडुहोरामुदात्तः' इत्याम् ॥—प्रादतेः—॥ अत सातत्यगमने प्रपूर्वादस्मादन्स्यात् रेफादकार उच्चारणार्थः । स्वरादिपाठादव्ययत्वम् ।—अमेः—॥ अम गतिशब्दसभक्तिषु, अस्मादरन्स्यात्तस्य तुडागमश्च अन्तःशब्दोऽपि प्रातःशब्दवत् अव्ययम् ॥—दहेः—॥ दह भस्मीकरणे । 'नगो महीरुहे शैले भास्करे पवनाशने' इति मेदिनी ॥—सिचेः—॥ षिच क्षरणे ॥—हकारादेशः इति । धातोरन्त्यस्येत्यर्थः । 'सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः । सिंही क्षुद्रबृहत्योः स्याद्वासके राहुमातरि' इति विश्वः ॥—व्याङि—॥ घ्रा गन्धोपादानेऽस्माज्जातौ वाच्यायां कः स्यात् कित्त्वादातो लोपः । 'व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठे नरादुत्तरस्थकण्टकार्यां च योषिति' इति मेदिनी ॥ हन्तेः—॥ हन्तेरच् स्याद्धातोर्घुरादेशश्च । 'घोरं भीमे हरे' इति विश्वः ॥—क्षमेः—॥ क्षमूष् सहने 'क्ष्मावनिर्मेदिनी मही' इत्यमरः ॥ —तरतेः—॥ तॄ प्लवनतरणयोरस्मात् ड्रिः स्यात् । डित्त्वाट्टिलोपः ॥—ग्रहेः—॥ ग्रह उपादाने ॥—ङीषिति । 'कृदिकारात्—' इत्यनेन । 'ग्रहणी रुक् प्रवाहिका' इत्यमरः ॥—प्रथेः—॥ प्रथ प्रख्याने 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी ॥ 'प्रथमचरम—' इति वैकल्पिकसर्वनामत्वात्पक्षे जसः शीभावः । प्रथमे प्रथमाः ॥—चरेश्च— ॥ चर गतिभक्षणयोरस्मादमच्स्यात् । चरमे चरमाः । योगविभागश्चिन्त्यप्रयोजनः । प्रथिचरिभ्यामित्येव सुवचम् ॥—मङ्गेः—॥ उख उखीत्यादिदण्डके गत्यर्थको मगिः पठ्यते । 'कल्याणं मङ्गलं शुभम्' । मङ्गलो ग्रहभेदः । मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थे रक्षणेऽपि च' इति मेदिनी । भावे ष्यञि माङ्गल्यम् । 'तत्र साधुः' इति यत् । 'मङ्गल्यः स्यात्त्रायमाणाश्वत्थबिल्वमसूरके । स्त्रियां शम्यामधःपुष्प्यामितिशुक्लवचासु च । रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु' इति मेदिनी ॥ ॥ इत्युणादिषु पञ्चमः पादः ॥

उणादिप्रत्ययाः सन्ति पादोत्तरशतत्रयम् । तेषां विवेचनं तत्र ज्ञानेन्द्रस्वामिभिः कृतम् ॥

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतो न तु सर्वेषां सोऽप्युपन्यासोऽनेकप्रघट्टकतया कृतः किन्तु विच्छिद्येति स्पष्टम् । तत्रापि केचित्प्रमादा मनोरमायां प्रदर्शितास्तेष्वेव कांश्चित्प्रमादान्दर्शयामः । 'भजो ण्विः' इति ण्विप्रकरणे 'छन्दसि सहः' 'वहश्च' इत्युपन्यस्य 'परौ व्रजेः षः पदान्ते' इति ण्विस्तेनैव षः परिव्राडित्ययं हि प्राचो ग्रन्थस्तद्व्याख्यायां तत्पौत्रेण पञ्चपाद्युणादिसूत्रे इदं पठ्यते इत्युक्तं तदुभयमपि प्रामादिकम् । 'क्विब्वचि–' इति क्विब्दीर्घौ हि प्रक्रम्य 'परौ व्रजेः' इति सूत्रस्य पाठात् । अस्मिन्नंशे पञ्चपादीदशपाद्योरेकवाक्यत्वात् । यदपि धर्नातिचक्षिङ्वपितपिजनिजेरुस इसु इति पठितं तदप्यनाकरम् । तथा हि जनेरुसिः । अर्तिपृवपियजितनिधनितपिभ्यो नित् एर्णिच्च । चक्षेः शिच्चेति सर्वसंमतः पाठः । 'तपूंषि तस्मै वपुष्टरम्' इत्यादिमन्त्रेषु आद्युदात्ततयानुकूलश्च ॥ वेदभाष्ये एवमेव स्थितम् । इत्यादयो द्वितीयपादे प्रमादाः ॥ तृतीयपादेऽपि स्तनिदूषिपूषिगदिहृदिभ्यो णेरित्नुचिति प्राचा पठितं तत्र दूषिहृदौ केषामपि वृत्तिकृतां ग्रन्थे न पठितौ । दूषयित्नुः हृदयित्नुरिति प्रयोगोऽप्याकरे न दृष्टः । स्तनिहृषिपुषिमुदिगदिमदिभ्य इति हि पञ्चपादीपाठः । 'शुषिगन्धिमण्डिजनिगमिभ्यः' इति दशपाद्यामधिकं पठितमित्यन्यदेतत् । यदपि 'श्रुदक्षिस्पृहिगृहिदृशृजृभ्य आप्यः' इति पठित्वा दराप्यः जराप्य इति प्राचोक्तं तदपि न । दृजॄग्रहणस्याकरानारूढत्वात् । इत्यादयस्तृतीयपादे प्रमादाः ॥ यदपि कॄगॄस्तॄभ्यः क्विन् कीर्विः गीर्विः स्तीर्विरिति प्राचोक्तं तदपि लिपिभ्रमप्रयुक्तमेव । कॄ विक्षेपे, गॄ निगरणे, स्तॄञ् आच्छादने, इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाशुद्ध्यैवाशुद्धा । जॄस्तॄजागृभ्यः क्विनिति हि पाठः उणादिवृत्तिकृतां माधवादीनां च सम्मतः । जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युरिति तद्ग्रन्थेषूपपादितम् । स्तॄ इत्यस्य दीर्घान्तत्व एव 'ॠत इद्धातोः' इतीत्वं लभ्यते न तु ह्रस्वान्तत्वेऽपि तस्माद्यथाकरमेव हि गृहीतुमुचितमिति दिक् ॥ यदपि प्राचोक्तं 'ग्लाज्याहात्वरिभ्यो निः' इति तदप्यनाकरम् । आकरे हि 'वीज्याज्वरिभ्यो निः' इति पठित्वा सूत्रद्वयानन्तर 'वहि श्रीः' इति सूत्रे 'ग्लाहात्वरिभ्यो नित्' इति सूत्रितत्वात् । तूर्णिः रथः सदानव इत्यादावाद्युदात्तदर्शनाच्च ॥ नच स्त्रियां क्तिन्नित्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं न तूणादिसूत्रस्थमिति वाच्यमेवमपि त्वरतेः पाठस्यानुचितत्वात् ॥ न ह्यसौ वार्तिकेऽस्तीति दिक् ॥ वम संस्त्याने स्त्यायतेर्ड्रट् इत्यपि प्राचोदाहरणमनाकरम् । स्त्यातेर्ड्रडित्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां चोपलम्भात् । 'संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप्रसवे पुमान्' इति भाष्ये श्लोकपाठो न तु सूत्रपाठस्य तथात्वं दृश्यते एवं तद्ग्रन्थव्याख्यातृणामपि प्रमादा ऊह्याः । तद्यथा पाणिन्यादिमुनीनिति व्याचक्षाणैरुक्तम् 'अनेरुच्चोपधायाः' इति न ह्येवंविधं सूत्रं पञ्चपाद्यां दशपाद्यां वास्ति अत इत्यनुवर्तमाने मनेरुच्चेत्येव सूत्रितत्वादिति दिक् ॥ इतिचतुर्थपादे प्राचः प्रमादाः ॥

॥ इत्युणादयः समाप्ताः ॥ शिवम् ॥

## ॥ अथ उत्तरकृदन्तम् ॥

**उणादयो बहुलम्** ।३।३।१। एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु । **भूतेऽपि दृश्यन्ते** ।३।३।२। **भविष्यति गम्यादयः** ।३।३।३। **दाशगोघ्नौ संप्रदाने** ।३।४।७३। एतौ संप्रदाने कारके निपात्येते । दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः । **भीमादयोऽपादाने** ।३।४।७४। भीमः । भीष्मः । प्रस्कन्दनः । प्ररक्षः । मूर्खः । खलतिः । **ताभ्यामन्यत्रोणादयः** ।३।४।७५। संप्रदानपरामर्शार्थं ताभ्यामिति । ततोऽसौ भवति तन्तुः । वृत्तं तदिति वर्त्म । चरितं तदिति चर्म । **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** ।३।३।१०। क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र वासरूपेण तृजादयो न । पुनर्ण्वुलुक्तेः । **समानकर्तृकेषु तुमुन्** ।३।३।१५८। अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् । इच्छति भोक्तुम् । वष्टि वाञ्छति वा । **शकधृषज्ञा-**

---

उणादयो बहुलम् ॥ 'वर्तमाने लट्' इत्यतो वर्तमानग्रहण 'पुवः सञ्ज्ञायाम्' इत्यतः संज्ञाग्रहण चानुवर्तते तदाह—**एते** इति । अत्र हि सूत्रे 'धातोः' 'प्रत्ययः' 'कृदतिङ्' इति चानुवर्तते तेन 'कृवापाजिमि–' इत्यादिना विहितानामष्टाध्यायीबहिर्भूतानामप्युणादीनां प्रत्ययसंज्ञा कृत्सञ्ज्ञा च सिध्यति । तथा चोणादिप्रत्ययाः सर्वे धातोः परत्र 'कर्तरि कृत्' इति कर्त्रर्थे भवन्ति । उणादिप्रत्ययान्तस्य 'कृत्तद्धित–' इति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिरित्यादिसर्वमपीष्ट सिध्यति । अपरिपूर्णानामुणादीनां परिपूर्णार्थं बहुलग्रहण । तस्य फलमाह—**केचिदविहिता अपीति** । हृतेरुलज्विहितः स तु शङ्करपि भवति शङ्कुलेति प्रयोगदर्शनात् । किंच फिडफिड्डप्रत्ययौ कुत्रापि न विहितौ अर्तेरूह्येते ऋफिड ऋफिड्डः इति तयोः कित्त्वं च कल्प्यते । तथा षण्ढ इत्यत्र सत्वाभावश्चेत्यादि ॥—**संज्ञास्विति** । अनादिसञ्ज्ञास्वेव न तु सर्वास्वित्याहुः । हृषेरुलजिति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरुह्यते तेन शङ्कुलेति सिद्धम् । ऋ गतावित्यादिभ्यः फिडफिड्डादिप्रत्यया गृह्यन्ते ॥—**कार्याद्विद्यादिति** । ऋफिड इत्यादौ गुणप्रतिषेधादिकार्यानुरोधादनुबन्ध ककारादिकं विद्यात् । अनूबन्धमित्यत्र 'उपसर्गस्य घञि–' इति दीर्घः । एतदुणादिषु शास्त्र शासितव्यमित्यर्थः ॥—**भूतेऽपि दृश्यन्ते** ॥ नन्वेव वर्तमानग्रहणं चोणादयो बहुलमित्यत्र नानुवर्त्यताम् । एतच्चोत्तरसूत्र च त्यज्यताम् अविशेषेण कालत्रयेऽपि प्रत्ययलाभादिति चेदत्राहुः । बाहुल्येन वर्तमाने भवन्ति भूतभविष्यतोस्तु क्वाचित्कवेति विवेकप्रदर्शनार्थमिति ॥—**भविष्यति गम्यादयः** ॥ गमिष्यतीति गमी ग्रामम् आगमिष्यतीति आगामी । गमेरिनिः 'आङि णित्' इत्याङ्पूर्वस्य तु णित्त्वादुपधावृद्धिः ॥—**भीमो भीष्म** इति ॥ 'भियो हेतुभये षुक्' इति मप्रत्ययसन्नियोगेन वैकल्पिकः षुक् । प्रस्कन्दत्यस्मादिति प्रस्कन्दनः अपादाने ल्युट् । प्ररक्षत्यस्मादिति प्ररक्षः पचाद्यच् । मुह्यत्यस्मादिति मूर्खः । मुहेः खो मूर्च । स्खलत्यस्मादिति खलतिर्निष्केशशिरा इति प्रागुक्तम् ॥—**ताभ्यामितीति** । ताभ्यामित्यनुक्तौ तु सन्निहितापादानस्यैव परामर्शादपादानादन्यत्रेत्यर्थः स्यादिति भावः ॥—**ततोऽसाविति** । तनोतेः कर्तरि क्तः । 'अनुदात्तोपदेश–' इत्यनुनासिकलोपः । असौ ततो भवति विस्तृतो भवतीत्यर्थः तनोतेस्तुन् ॥—**वृत्तमिति** । गमनादिना निष्पन्नं यत्तद्वर्त्म । वृतेः कर्मणि मनिन् । 'अयनं वर्त्म मार्गे' इत्यमरः ॥—**तुमुन्ण्वुलौ**–॥ क्रिया अर्थः प्रयोजन यस्याः सा क्रियार्था तस्याम् ॥ अत्रेदं बोध्यम् । तुमुन्ण्वुलोः कृत्त्वाविशेषेऽपि अव्ययकृतो भाव इति वचनाद्भावे तुमुन् । ण्वुल् तु कर्तरि क्रियायामिति निर्देशात्तद्वाचकस्य यातीत्यादेः 'तत्रोपपदं सप्तमीस्थम्' इत्युपपदत्वमिति ॥—**कृष्णं द्रष्टुमिति** । कृष्णकर्मकं भविष्यद्दर्शनं तत्प्रयोजकं यानमित्यर्थः ॥—**कृष्णं दर्शक** इति । कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृक दर्शनप्रयोजनक च यानमित्यर्थः । क्रियायां किम् । भिक्षिष्ये इत्यस्य जटाः । इह भिक्षार्था जटाः ताश्च द्रव्य न तु क्रिया भिक्षितु जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण समर्थनीयः ॥ क्रियार्थायां किम् । धावतस्ते पतिष्यति दण्डः । अस्त्यत्र धावत इति क्रिया न त्वसौ दण्डपतनार्था । धावनं तु दण्डपतने हेतुर्भवति न तूद्देश्यमिति दिक् ॥—**समानकर्तृकेषु**–॥—**अक्रियार्थेति** । भोक्तुमिच्छतीत्यत्र भोजनविषयिणीच्छेति प्रतीयते न तु भोजनार्थेच्छेति । अतः पूर्वेणात्राप्राप्तिरिति भावः । सूत्रस्थसमानशब्द एकतावचन इत्याह—**एककर्तृकेष्विति** । एकेति किम् । पुत्रस्य पठनमिच्छति । पुत्रस्येति कर्तरि षष्ठी । पुत्रकर्तृकं पठनमित्यर्थः । इह सूत्रे समानकर्तृकेति पदाभावे पुत्रस्य पठितुमिच्छतीति प्रयोगः स्यात् । देवदत्तं भुञ्जानमिच्छतीति काशिका । अत्र काशिकायामुक्तम् । इच्छन् करोतीत्यत्रानभिधानान्नेति । अत्र निष्कर्षमाहुः । उक्तविषये इच्छन्कर्तुमिति प्रयोगाभावेऽपि इच्छन्कर्तुं गच्छतीत्यादौ तु 'तुमुन्ण्वुलौ' इति सूत्रेण स्यादिति । तच्चिन्त्यम् । करोतीत्यर्थे तुमुनः प्राप्तेरेवाभावात् । तस्य भावार्थकत्वात् । इह च लटा कर्तृप्रतीतेः । किंचेच्छन्कर्तुमिति प्रयोगो नेष्यते इति रिक्तं वचः कर्तुमिच्छन्निति प्रयोगस्य सकलसंमतत्वात् । पदानुपूर्व्याश्चाहर पात्रं पात्रमाहरेत्यादाविव स्वेच्छायत्तत्वात् । विस्तरस्त्विह मनोरमादावनुसन्धेयः ॥—**वष्टीति** । वश कान्तौ कान्तिरिच्छेति वशधातुरपीच्छार्थकः ॥—**शकधृष**–॥ अयमप्यक्रियार्थोपपदार्थ आरम्भः ।

**ग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्** ।३।४।६५। एषूपपदेषु धातोस्तुमुन् स्यात् । शक्नोति भोक्तुम् । एवं धृष्णोतीत्यादौ । अर्थग्रहणमस्तिनैव संबध्यते । अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् । **पर्याप्तिवचनेष्वलमर्थेषु** ।३।४।६६। पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात् । पर्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् । अलं भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् । **कालसमयवेलासु तुमुन्** ।३।३।१६७। पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन् स्यात् । कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते । तेनेह न । भूतानि कालः पचतीति वार्ता । **भाववचनाश्च** ।३।३।११। भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । यागाय याति । **अण् कर्मणि च** ।३।३।१२। कर्मण्युपपदे क्रियार्थायां क्रियायां चाण् स्यात् । ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन् बाधते । कम्बलदायो व्रजति । **पदरुजविशस्पृशो घञ्** ।३।३।१६। भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः । **सृ स्थिरे** ।३।३।१७। सृ इति लुप्तविभक्तिकं । सर्तेः स्थिरे कर्तरि घञ् स्यात् । सरति कालान्तरमिति सारः ॥ * **व्याधिमत्स्यबलेषु चेति वाच्यम्** । अतीसारो व्याधिः । अन्तर्भावितण्यर्थोऽत्र सरतिः रुधिरादिकमतिशयेन सारयतीत्यर्थः । विसारो मत्स्यः । सारो बले दृढांशे च । **भावे** ।३।३।१८। सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः । पाकौ । **स्फुरतिस्फुलत्योर्घञि** ।६।१।४७। अनयोरेच आत्वं स्याद्घञि । स्फारः । स्फालः । उपसर्गस्य घञीति दीर्घः । परीहारः **इकः काशे** ।६।३।१२३। काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः । नीकाशः । अनूकाशः । इकः किम् । प्रकाशः । नोदात्तोपदेशेति न वृद्धिः । शमः । आचमादेस्तु । आचामः । कामः । वामः । विश्राम इति त्वपाणिनीयम् । **स्यदो जवे** ।६।४।२८। स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः । **अवोदैधौद्मप्रश्रथहिमश्रथाः** ।६।४।२९। अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो वृद्ध्यभावश्च । **अकर्तरि च कारके संज्ञायाम्** ।३।३।१९। कर्तृभिन्ने कारके घञ् स्यात् । **घञि च भावकरणयोः** ।६।४।२७। रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् । रज्यत्यस्मिन् रङ्गः । प्रास्यते इति प्रासः । संज्ञायामिति प्रायिकम् । को भवता लाभो लब्धः । इत उत्तरं भावे अकर्तरि कारक इति कृत्यल्युटो बहुलमिति यावत् द्वयमप्यनुव-

भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र हि भुज्यर्थो विषयतया सबध्यते नैपुण्यं च गम्यते ग्लायति भोजनविषयिण्यशक्तिर्गम्यते भक्तुं घटते इत्यत्र तु भोक्तुमर्हतीति योग्यता । आरभते भोक्तुमित्यत्र भोक्तु प्रक्रमते उत्सहते इति भुजेराद्यावस्था । लभते इत्यत्राप्रत्याख्यानमस्ति भोक्तुमित्यादौ तु भवमात्रम् ॥—**पर्याप्तो भोक्तुमि**ति । भोक्तु समर्थ इत्यर्थः॥ —**उपलक्षणार्थमि**ति ॥ तस्य फलमाह—**अनेहा** इति । 'कालो दिष्टोऽप्यनेहापि' इत्यमरः ॥—**तेनेह ने**ति । अनुवादे न भवतीत्यर्थः ॥—**यागाये**ति ॥ यष्टुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥—**ण्वुलोऽपवाद** इति । अव्ययकृतो भाव इति भावे विहितत्वात्तुमुनः प्राप्तिरेव नास्तीति भावः ॥—**पदरुज**–॥—**पद्यतेऽसावि**ति । करणस्य कर्तृविवक्षाऽत्र बोध्या । पद्यते गच्छति येनेति फलितोऽर्थः ॥—**सृ स्थिरे** ॥ सर्तेरिति भ्वादेर्जुहोत्यादेश्च ग्रहणं स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषण न तूपपदमिति ध्वनयन्नाह—**स्थिरेकर्तरी**ति । अर्धर्चादिषु सारशब्दपाठोऽत्र मानम् ॥ —**व्याधीत्यादि** । अस्थिरार्थमिद वचन तेन विसारो मत्स्य इत्यत्र विविधं सरतीत्यर्थः सगच्छते ॥—**अतीसार** इति । 'उपसर्गस्य घञि' इति दीर्घः ॥—**सारो बले** इति । अत्रापि सृधातुरन्तर्भावितण्यर्थः । सारयति चेष्टयतीत्यर्थानुरोधात् । बलवानेव हि चेष्टते ॥—**सिद्धावस्थापन्न** इति । पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थ इति भावः ॥ —**आचमे**ति । 'नोदात्त–' इति सूत्रे अनाचमेरित्युक्तत्वादिति भावः । तत्रैव सूत्रेऽनाचमिकमिवमीनामिति वार्तिकाद्वृद्धिनिषेधो नेत्याहुः ॥—**कामो वाम** इति ॥—**अपाणिनीयमि**ति । श्रमेरुदात्तोपदेशत्वात् घञि वृद्धेर्दुर्लभत्वात् । यदि तु 'धुर्यान्विश्रामय' इत्यादिवण्णिचि वृद्धिमाश्रित्य णिजन्तादेरच् क्रियते तदा रूपं सिध्यति । न च णिच्यपि वृद्धिनिषेधः शङ्क्यः । 'नोदात्त–' इत्यत्र कृतीत्यनुवृत्त्या णिचि निषेधाभावात् । न चैवमपि मितां ह्रस्वः स्यादिति शङ्क्यम् । वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणेन ह्रस्वाभावसिद्धेः । परन्तु णिजन्तकल्पनायामर्थो भिद्यत इति भावः । वस्तुतस्तु निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायां तु न दोष इत्यवधेयम् । एवं च 'रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः' इत्यादिकविप्रयोगाः साधव एवेति बोध्यम् ॥—**अवोदै**–॥—**अवोद** इति । उन्दी क्लेदनेऽवपूर्वः । घञि नलोपो निपात्यते ॥—**एध** इति । इन्धेर्घञि नलोपो गुणश्च निपात्यते 'न धातुलोप' इति निषेधादप्राप्ते गुणस्य निपातनमिति ज्ञेयम् ॥—**ओद्म** इति । उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्चात्रापि निपात्यते ॥—**श्रन्थेरि**ति । प्रपूर्वस्य हिमपूर्वस्य च घञि निपात्यते इति बोध्यम् ॥—**प्रायिकमि**ति । सर्वात्मना संज्ञाग्रहणत्यागे कृतः

र्यते । परिमाणाख्यायां सर्वेभ्यः ।३।३।२०। घञ् । अजपोर्बाधनार्थमिदम् । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ । * दारजारौ कर्तरि णिलुक्च । दारयन्तीति दाराः । जारयन्तीति जाराः । इङश्च ।३।३।२१। घञ् । अचोऽपवादः । उपेत्य अस्मादधीयते । उपाध्यायः ॥ * अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् । उपाध्याया । उपाध्यायी ॥ * शॄ वायुवर्णनिवृतेषु । शॄ इत्यविभक्तिको निर्देशः । शारो वायुः । करणे घञ् । शारो वर्णः । चित्रीकरणमिह धात्वर्थः । निव्रियते आव्रियतेऽनेनेति निवृतमावरणम् । बाहुलकात्करणे क्तः । गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । अकृतप्रावरण इत्यर्थः । उपसर्गे रुवः ।३।३।२२। घञ् । संरावः । उपसर्गे किम् । रवः । अभिनिसः स्तनः शब्दसंज्ञायाम् ।८।३।८६। अस्मात् स्तनेः सस्य मूर्धन्यः । अभिनिष्टानो वर्णः । शब्दसंज्ञायां किम् । अभिनिःस्तनति मृदङ्गः । समि युद्रुदुवः ।३।३।२३। संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । संद्रावः । संदावः । श्रिणीभुवोऽनुपसर्गे ।३।३।२४। श्रायः । नायः । भावः । अनुपसर्गे किम् । प्रश्रयः । प्रणयः । प्रभवः । कथं प्रभावो राज्ञ इति । प्रकृष्टो भाव इति प्रादिसमासः । कथं राज्ञो नय इति । बाहुलकात् । वौ क्षुश्रुवः ।३।३।२५। विक्षावः । विश्रावः । वौ किम् । क्षवः । श्रवः । अवोदोर्नियः ।३।३।२६। अवनायः अधो नयनम् । उन्नायः ऊर्ध्वनयनम् । कथमुन्नयः उत्प्रेक्षेति । बाहुलकात् । प्रे द्रुस्तुस्रुवः ।३।३।२७। प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किम् । द्रवः । स्तवः । स्रवः । निरभ्योः पूल्वोः ।३।३।२८। निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् । पवः । लवः । उन्न्योर्ग्रः ।३।३।२९। उद्गारः । निगारः । उन्न्योः किम् । गरः । कॄ धान्ये ।३।३।३०। कॄ इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् । उत्कारो निकारो धान्यस्य । विक्षेप इत्यर्थः । धान्ये किम् । भिक्षोत्करः । पुष्पनिकरः । यज्ञे समि स्तुवः ।३।३।३१। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः । यज्ञे किम् । संस्तवः परिचयः । प्रे स्त्रोऽयज्ञे ।३।३।३२। अयज्ञे इति छेदः । यज्ञे इति प्रकृतत्वात् । प्रस्तारः । अव-

---

कट इत्यत्र कारः कट इति स्यादिति भावः । भाष्ये त्वनभिधानमाश्रित्य प्रत्याख्यातम् ॥—**परिमाणाख्यायाम्**–॥ सर्वेभ्यो धातुभ्यः । परिमाणं परिच्छित्तिः । आख्यानमाख्या उक्तिः । परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिरिति चेत्प्रत्ययार्थस्येत्युच्यते । आख्याग्रहणं रूढिनिरासार्थं तेन परिमाणग्रहणेन संख्या च गृह्यते । सर्वेभ्यः किम् । अन्यथा पुरस्तादपवादन्यायेनाचमेव घञ् बाधेत न त्वपम् ॥—**तण्डुलनिचाय** इति । निचीयते राशीक्रियते इति निचायः । अत्र राश्येकत्वे च समुदायिना परिच्छित्तिरर्थाद्गम्यते । 'एरच्' इत्यचि प्राप्ते घञ् । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पावः । 'ॠदोरप्' इत्यपि प्राप्ते घञ् । शूर्पेणेति करणे तृतीयान्तस्य 'कर्तृकरणे कृता बहुलम्' इति समासः । अत्र शूर्पसंख्यया तण्डुलादेरपि परिच्छित्तिः । शूर्पद्वित्वं तु आर्थिकं न तु शाब्दं निष्पावगतद्वित्वं तु शाब्दम् । यद्यप्यत्र 'निरभ्योः पूल्वोः' इति घञ् लभ्यते तथापि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः । सप्रत्ययस्य मुख्योदाहरणमाह—**द्वौ काराविति** ॥ कॄ विक्षेपे । कर्मणि घञ् । शूर्पादिना विक्षिप्तो धान्यादिराशिः कारः । इह प्रकृत्याश्रय एवापवादो नत्वर्थाश्रयः । सर्वेभ्य इति पञ्चमीनिर्देशेन तथैवावगमात् । तेनायं प्रकृत्याश्रयो घञ् क्तिनोऽपवादो न भवति । एका तिलोच्छ्रितिः । उत्पूर्वकाच्छ्रयतेः कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशीकृत इत्यर्थः । तदेतत्सूचयितुमुक्तम् अजपोरपवाद इति । तयोरपि प्रकृत्याश्रयत्वादपवादयोः समानविषयत्वौचित्यात् । स्त्रियां क्तिन् त्वर्थाश्रय इति दिक् ॥—**दारजाराविति** । अकर्तरि कारके इत्यधिकारात् 'ॠदोरप्' इत्यस्य घञपवादत्वाच्च कर्तरि घञर्थमिदं वचनम् ॥—**णिलुक् चेति** । चात् घञ् । लोपे हि सति घञाश्रया वृद्धिर्न स्याण्णिलोपस्य स्थानिवद्भावेन व्यवधानात् । न च णिञ्जिमित्तैव वृद्धिरस्त्विति वाच्यम् । जारशब्दे 'मितां ह्रस्वः' इति ह्रस्वापत्तेः । जनीजॄष्षिति जॄधातोर्णौ मित्त्वात् । लुकि सति तस्य परनिमित्तत्वाभावेन क्लिलुगुपधेति क्नौ लुप्तस्य निषेधेन वा स्थानिवत्त्वाभावाज्जार इति रूपं सिध्यतीति भावः । एतेन दीर्यते यैस्ते दाराः जीर्यतेऽनेनेति जारा इत्यण्यन्ताभ्यामेव करणे घञस्तु किमनेन वचनेनेति केषाञ्चिदुक्तिः परास्ता । 'ॠदोरप्' इत्यपवादविषये उत्सर्गस्य घञो दुर्लभत्वात् । रुय्यधिकारादूर्ध्वं वासरूपविधेरनङ्गीकारादपवादोऽप्यच् करणाधिकरणयोरिति ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत् ॥—**उपेत्येति** ॥ गुरुसमीपमेत्येत्यर्थः ॥—**अपादाने** इति । पुरस्तादपवादन्यायेन इङश्चेत्यस्याच एवापवादत्वात्स्त्रियां तु क्तिन् स्यादिति तद्बाधनायायमारम्भः । घञनुक्रमणमजपोर्विषय इति वचनात्स्त्रियां घञ् न स्यादिति स्त्रियांग्रहणम् ॥—**उपाध्यायेति** । या स्वयमध्यापयति तस्यामिदं रूपद्वयम् । पुंयोगे तु ङीषेवाऽनुगागमश्च पाक्षिक इत्युक्तम् ॥—**करणे क्त** इति । वृञ् वरण इत्यस्मादित्यर्थः ॥—**नीशार** इति । 'उपसर्गस्य घञि'–इति दीर्घः । ननु प्रदक्षिणप्रसव्यगामिनां शाराणामिति कथं प्रयोगः । वायुवर्णेत्यर्थपरिगणनादिति चेदत्राहुः । अत एव वार्तिकप्रयोगादक्षेष्वपि शृणातेर्घञ् ॥—**रव** इति । 'ॠदोरप्' इत्यप् ॥—**राज्ञो नय** इति । णीञ् प्रापणे इत्यस्मादचो यत् ॥—**यज्ञे समि**–॥ अधिकरणे ल्युटोऽपवादोऽयं घञ् ॥—**छन्दो**–॥ शब्दविषयत्वात्पूर्वेणाप्राप्ते वचनम् । केचित्तु

शे किम् । बर्हिषः प्रस्तरो मुष्टिविशेषः । प्रथने वावशब्दे ।३।३।३३। विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम् । तृणविस्तरः । अशब्दे किम् । ग्रन्थविस्तरः । छन्दोनाम्नि च ।३।३।३४। वा इत्यनुवर्तते । विष्टारपङ्क्तिश्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः । छन्दोनाम्नि च ।८।३।९४। विपूर्वात् स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । इति षत्वम् । उदि ग्रहः ।३।३।३५। उद्ग्राहः । समि मुष्टौ ।३।३।३६। मल्लस्य संग्राहः । मुष्टौ किम् । द्रव्यस्य संग्रहः । परिन्योर्नीणोर्द्यूताभ्रेषयोः ।३।३।३७। परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूतेऽभ्रेषे च विषये । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताभ्रेषयोः किम् । परिणयो विवाहः । न्ययो नाशः । परावनुपात्यय इणः ।३।३।३८। क्रमप्राप्तस्य अनतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् । कालस्य पर्ययः । अतिपात इत्यर्थः । व्युपयोः शेतेः पर्याये ।३।३।३९। तव विशायः । तव राजोपशायः । पर्याये किम् । विशयः संशयः । उपशयः समीपशयनम् । हस्तादाने चेरस्तेये ।३।३।४०। हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम् । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् । पुष्पप्रचयश्चौर्येण । निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।३।३।४१। एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशीकरणं तच्च धात्वर्थः । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । निवासे । काशीनिकायः । चितौ । आकायमग्निं चिन्वीत । शरीरे । चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । समूहे गोमयनिकायः । एषु किम् । चयः । चः क इति वक्तव्ये आदेरित्युक्तेर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनः पुना राशीकरणमित्यर्थः । सङ्घे चानौत्तराधर्ये ।३।३।४२। चेर्घञ् आदेश्च कः । भिक्षुनिकायः । प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये किम् । सूकरनिचयः । संघे किम् । ज्ञानकर्मसमुच्चयः । कर्मव्यतिहारे णच् स्त्रियाम् ।३।३।४३। स्त्रीलिङ्गे भावे णच् । णचः स्त्रियामञ् । न कर्मव्यतिहारे ।७।३।६। अत्र ऐच् न स्यात् । व्यावक्रोशी । व्यावहासी । अभिविधौ भाव इनुण् ।३।३।४४। अणिनुणः । इनण्यनपत्ये । सांराविणं वर्तते । आक्रोशेऽवन्योर्ग्रहः ।३।३।४५। अव नि एतयोर्ग्रहेर्घञ् स्यात् शापे । अवग्राहस्ते भूयात् । अभिभव इत्यर्थः ।

---

प्रस्तारं पङ्क्तिरित्यादिप्रयोगानुरोधेनात्र वावित्ति नानुवर्तयन्ति ॥—उदि ग्रहः—॥ भावादौ घञ् स्यात् । 'ग्रह वृ दृ'—इति प्राप्तस्यापोऽपवादः ॥—परिन्योः—॥ अक्षादिभिः क्रीडनं द्यूतम् । यथाप्राप्तकरणमभ्रेषः ॥—परावनु—॥ अत्र व्याचख्युः । द्विःपरिग्रहणमिह व्यर्थं सकृदेव कर्तुं शक्यम् । तथा हि । परौ नियो द्यूते, इणोनुपात्यये, नावभ्रेषे । इह इण इत्यनुवर्तनादिणोऽनुपात्यय इत्यत्र तु परावित्यनुवर्तनाच्चेष्टं सिध्यतीति भावः । ननु पूर्वसूत्रेऽनुपात्ययः पर्यायार्थकत्वेन व्याख्यातः । तथा च तदनुवृत्त्यैव सिद्धे पर्यायग्रहणमिह व्यर्थमिति चेदत्राहुः । पर्यायग्रहणं पुनर्विधानार्थं तेनात्राभिविधिविवक्षायां परमपि 'अभिविधौ भाव इनुण्' इति इनुणं बाधित्वाऽयमेव घञ् भवतीति ॥—आकायमिति । आचीयन्तेऽस्मिन्निष्टका इत्याकायम् । अधिकरणे घञ् । अग्निस्थलविशेषं चिन्वीत चयनेन निष्पादयेदिति श्रुत्यर्थः ॥—सङ्घे चानौत्तराधर्ये ॥ उत्तरे चाधरे चोत्तराधरास्तेषां भाव औत्तराधर्यम् ॥—सूकरेति । स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते तदैतत्प्रत्युदाहरणम् । यदा तु भिक्षुवत्पृथक्पृथगेवावतिष्ठन्ते तदा भवत्येव घञिहापि ॥—कर्मव्यतिहारे णच्—॥ कर्मव्यतिहारः क्रियाव्यतिहारः । परस्परकरणमिति यावत् । तत्र वर्तमानाद्धातोरित्यर्थः ॥—भावे णजिति । कर्तृवर्जिते कारके न भवत्यनभिधानादित्याहुः । भावादाविति प्राचोक्तं यत्तदुपेक्ष्यमाकरविरोधात् ॥—णचः स्त्रि—॥ अनेन णजिति चकारोऽत्र विशेषणार्थ इति ध्वनितम् । व्यतिपाको वर्तते ॥—ऐच् नेति । 'न य्वाभ्याम्'—इति प्राप्तस्य निषेधेनादिवृद्धिरेव । णचस्तद्धितत्वाभावेऽप्यञस्तद्धितत्वादिति भावः । कृद्ग्रहणपरिभाषया सोपसर्गधातोर्णजन्तत्वात्ततोऽञि तत्प्रयुक्तादिवृद्धिरुपसर्गस्येत्याशयेनोदाहरति—व्यावक्रोशीति । क्रुश आह्वाने, हसे हसने । स्यादेतत् । स्त्रियां क्तिन्निति प्रकरण एवायं णज्विधेयः । एवं च स्त्रियामिति न कर्तव्यमिति लाघवमिति चेन्मैवम् । स्त्रियामित्यधिकारे वासरूपविधिनिषेधापत्तेः । इष्यते तु व्यावकुष्टिरिति स्त्रियां क्तिन्नपि अपवादविषये क्वचिदिष्यते व्यावचोरी । इह 'ण्यासश्रन्थ—' इति युच्प्राप्तः । व्यात्युक्षी । अत्र 'गुरोश्च हलः' इत्यकारप्रत्ययः प्राप्तः । क्वचिदकार एवेष्यते न तु णच् । व्यतीक्षा, व्यतीहा । सैषा व्यवस्था न्यायतो दुर्लभापि बाहुलकात्स्वीकार्या ॥—अभिविधौ—॥ अभिविधौ किम् । संरावः । वासरूपेण घञ् क्तश्च न भवति पुनर्भावग्रहणात् । न च कर्तृभिन्नकारकनिवृत्तये भावग्रहणमिति वाच्यम् । पूर्वसूत्र इव शक्तिस्वाभाव्यादेवेनुणोऽप्रवृत्तेः । ल्युटा तु समावेश इष्यते । तच्च बाहुलकाल्लभ्यत इत्याकरः ॥—अणिनुणः अत एवेनुणो णानुबन्धो विशेषणार्थ इति ध्वनितम् ॥—सांराविणमिति । समन्ताच्छब्द इत्यर्थः । संशब्दोऽभिविधिद्योतकः । पूर्ववत्सगतिकादण् अणस्तद्धितत्वादादिवृद्धिः । 'इनण्यनपत्ये' इत्यनपत्याणि इनः प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपेन न निवृत्तिः । स्वभावतश्चेदमणिनुणन्तं नपुंसकम् ॥—आक्रोशे—॥ 'ग्रहवृदृ—' इत्यपि प्राप्तेऽयमारम्भः ॥

निग्राहस्ते भूयात् । बाध इत्यर्थः । आक्रोशे किम् । अवग्रहः पदस्य । निग्रहश्चोरस्य । ⧗ प्रे लिप्सायाम् ।३।३।४६। पात्रप्रग्राहेण चरति भिक्षुः । ⧗ परौ यज्ञे ।३।३।४७। उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् । ⧗ नौ वृ धान्ये ।३।३।४८। वृ इति लुप्तपञ्चमीकम् । नीवाराः। धान्य किम् । निवरा कन्या । क्तिन्विषयेऽपि बाहुलकादप् । प्रवरा सेतिवत् । ⧗ उदि श्रयतियौतिपूद्रुवः ।३।३।४९। उच्छ्रायः ।उद्यावः। उत्पावः । उद्द्रावः । कथं पतनान्ताः समुच्छ्रया इति । बाहुलकात् । ⧗ विभाषाङि रुप्लुवोः ।३।३।५०। आरावः । आरवः । आप्लावः । आप्लवः । ⧗ अवे ग्रहो वर्षप्रतिबन्धे ।३।३।५१। विभाषेति वर्तते । अवग्रहः । अवग्राहः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य । ⧗ प्रे वणिजाम् ।३।३।५२। प्रे ग्रहेर्घञ् वा वणिजां संबन्धी चेत्प्रत्ययार्थः । तुलासूत्रमिति यावत् । तुलाप्रग्राहेण चरति । तुलाप्रग्रहेण । ⧗ रश्मौ च ।३।३।५३। प्रग्रहः । प्रग्राहः । ⧗ वृणोतेराच्छादने ।३।३।५४। विभाषा प्र इत्येव । प्रावारः । प्रवरः । ⧗ परौ भुवोऽवज्ञाने ।३।३।५५। परिभावः । परिभवः । अवज्ञाने किम् । सर्वतो भवनं परिभवः । ⧗ एरच् ।३।३।५६। चयः । जयः ॥ * भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् । भयम् । वर्षम् । ⧗ ऋदोरप् ।३।३।५७। ऋवर्णान्तादुवर्णान्तादप् । करः । गरः । शरः । यवः । लवः । स्तवः । पवः । ⧗ वृक्षासनयोर्विष्टरः ।८।३।९३। अनयोर्विपूर्वस्य स्तृः षत्वं निपात्यते । विष्टरो वृक्ष आसनं च । वृक्षे किम् । वाक्यस्य विस्तरः । ⧗ ग्रहवृदृनिश्चिगमश्च ।३।३।५८। अप् स्यात् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः ॥ * वशिरण्योरुपसंख्यानम् । वशः । रणः ॥ * घञर्थे कविधानम् । प्रस्थः । विघ्नः ॥ * द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् । चक्रम् । चिक्लिदम् । चक्नसः । ⧗ उपसर्गेऽदः ।३।३।५९। अप् स्यात् । ⧗ घञपोश्च ।२।४।३८। अदेर्घस्लृ स्यात् घञि अपि च । प्रघसः । विघसः । उपसर्गे किम् । घासः । ⧗ नौ ण च ।३।३।६०। नौ उपपदे अदेर्णः स्यादप् च । न्यादः । निघसः । ⧗ व्यधजपोरनुपसर्गे ।३।३।६१। अप् स्यात् । व्यधः । जपः । उपसर्गे तु आव्याधः । उपजापः । ⧗ स्वनहसोर्वा ।३।३।६२। अप् । पक्षे घञ् । स्वनः । स्वानः । हसः । हासः । अनुपसर्ग इत्येव । प्रस्वानः । प्रहासः । ⧗ यमः समुपनिविषु च ।३।३।६३। एषु अनुपसर्गे च यमेरप् वा । संयमः । संयामः । उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । यमः । यामः । ⧗ नौ गदनदपठस्वनः ।३।३।६४। अप् वा स्यात् । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः । ⧗ क्वणो वीणायां च ।३।३।६५। नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् । वीणाग्रहणं प्राद्यर्थम् । निक्वणः । निक्वाणः । क्वणः । क्वाणः । वीणायां तु । प्रक्वणः । प्रक्वाणः । ⧗ नित्यं पणः परिमाणे ।३।३।६६। अप् स्यात् । मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् । पाणः । ⧗ मदोऽनुपसर्गे ।३।३।६७। धनमदः । उपसर्गे तु । उन्मादः । ⧗ प्रमदसंमदौ हर्षे ।३।३।६८। हर्षे किम् । प्रमादः । संमादः । ⧗ स-

---

—अवग्रहः पदस्येति । छेदविशेष इत्यर्थः । निग्रहो निरोधः ॥—प्रे लिप्सायाम् ॥ लिप्साया किम् । देवदत्तस्य प्रग्रहः । प्रकृष्टो विनिवेश इत्यर्थ ॥—पात्रप्रग्राहेणेति । भिक्षापात्रोपादानेन, पात्र गृहीत्वेति यावत् ॥—नौ वृ-॥ नौ उपपदे वृञो भावादौ घञ् स्यात् ॥—निवरा कन्येति । 'ग्रहवृदृ-' इत्यादिना कर्मण्यप् । ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात् क्तिना भाव्यम् । 'अजब्भ्यां स्त्रीखलनाः' इत्युक्तेरत आह—क्तिन्विषयेऽपीति । एवं च प्रायेण भावार्थ एव घञजबन्ताः पुंसीति द्रष्टव्यम् ॥—रश्मौ च ॥ रथादियुक्तानामश्वानां संयमनार्था रज्जुः रश्मिः । तस्यामभिधेयायां प्रे उपपदे ग्रहेर्घञ्वा स्याद्भावादौ । इह द्विः कृत्वो ग्रहिरुपात्तः सकृदेव तु वक्तुं शक्यः । तथाहि उदि ग्रहः, समि मुष्टौ, आक्रोशे वन्योः, प्रे लिप्सायाम्, परौ यज्ञे, अवे वर्षप्रतिबन्धे, विभाषा प्रवणिजाम्, इत्यादि 'परौ भुवोऽवज्ञाने' इत्यस्यानन्तरम् 'आङि रुप्लुवोः' इत्यस्तु तथा तु न कृतमित्येव ॥—वृणोते-॥—प्रावार इति । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घः । आच्छादने किम् प्रवरो गौः । प्रशस्त इत्यर्थः ।—परिभावः । 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः ॥ परत्वाद्धि क्तल्युटौ प्राप्तौ । तथा च पूर्वविप्रतिषेधोऽयं फलितः । एवं च वासरूपन्यायोऽत्र न प्रवर्तते । अनपवादत्वादिति भावः ॥—वर्षमिति । वृषभो वर्षणादिति भाष्यप्रयोगात्तु ल्युडपि वर्षणम् ॥—ऋदोरप् ॥ ऋच्च उच्च तयोः समाहारे सोत्र पुंस्त्वम् । ऋदोरित्यत्र न तकारः किं तर्हि दकारः । 'निरभ्योः पूल्वोः' इत्यपवादतया घञ्विधानाज्ज्ञापकाद्दीर्घान्तादप्युदाहरति ।—लवः । पव इति ॥—घञचोरपवाद इति । निश्चय इत्यत्राचः प्राप्तिरन्यत्र घञ इति विवेकः । हस्तादाने तु प्रपूर्वकाच्चिनोतेर्घञुदाहृतः ॥—वशिरण्योरिति । घञि प्राप्ते वचनम् । वशनं वशः । रणन्ति शब्दं कुर्वन्त्यस्मिन्निति रणः संग्रामः ॥—व्यद्यते विशेषेण भक्ष्यते इति विघसः । वैश्वदेवशिष्टमन्नम् । 'शष्पं बालतृणं घासः' इत्यमरः । उपजापो मन्त्रभेदः ॥ 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । स्वानः' इत्यमरः ॥—क्वणो-॥ 'निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि । वीणायाः क्वणिते प्रादेः प्रक्वणप्रक्वाणादयः' इत्यमरः ॥—मदो-॥

समुदोरजः पशुषु ।३।३।६९। संपूर्वोऽजिः समुदाये उत्पूर्वश्च प्रेरणे तस्मात्पशुविषयकादप् स्यात् । अजपोरित्युक्ते-र्वीभावो न । समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । पशुषु किम् । समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् । अक्षेषु ग्लहः ।३।३।७०। अक्षशब्देन देवनं लक्ष्यते । तत्र यत्पणरूपेण ग्राह्यं तत्र ग्लह इति निपात्यते। अक्षस्य ग्लहः । व्यात्युक्षीमभिसरणग्लहामदीव्यन् । अक्षेषु किम् । पादस्य ग्रहः । प्रजने सर्तेः ।३।३।७१। प्रजनं प्रथमगर्भग्रहणम् । गवामुपसरः । कथमवसरः प्रसर इति अधिकरणे पुंसि संज्ञायामिति घः । ह्वः संप्रसारणं च न्यभ्युपविषु ।३।३।७२। निहवः । अभिहवः । उपहवः । विहवः । एषु किम् । प्रह्वायः । आङि युद्धे ।३।३।७३। आहूयन्तेऽस्मिन्नित्याहवः । युद्धे किम् । आह्वायः । निपानमाहावः ।३।३।७४। आङ्पूर्वस्य ह्वयतेः संप्रसारणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः । आहावस्तु निपानं स्यादुपकूपजलाशये । भावेऽनुपसर्गस्य । ।३।३।७५। अनुपसर्गस्य ह्वयतेः संप्रसारणमप् च स्यात् भावे । हवः । हनश्च वधः ।३।३।७६। अनुपसर्गाद्धन्तेर्भावे अप् स्यात् वधादेशश्चान्तोदात्तः । वधेन दस्युम् । चाद्घञ् । घातः । मूर्तौ घनः ।३।३।७७। मूर्तिः काठिन्यं तस्मिन्नभिधेये हन्तेरप् स्यात् घनश्चादेशः । अभ्रघनः । कथं सैन्धवघनमानयेति । धर्मशब्देन धर्मी लक्ष्यते । अन्तर्घनो देशे ।३।३।७८। वाहीकग्रामविशेषस्य संज्ञेयम् । अन्तर्घण इति पाठान्तरम् । अगारैकदेशे प्रघणः प्रघाणश्च ।३।३।७९। द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च । तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः । प्रघाणः । कर्मण्यप् । पक्षे वृद्धिः । उद्घनोऽत्याधानम् ।३।३।८०। अत्याधानमुपरि स्थापनम् । यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः । अधिकरणेऽप् । अपघनोऽङ्गम् ।३।३।८१। अङ्गं शरीरावयवः । स चेह न सर्वः किंतु पाणिः पादश्चेत्याहुः । करणेऽप् अपघातोऽन्यः । करणेऽयोविद्रुषु ।३।३।८२। एषु हन्तेः करणेऽप् स्याद्घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । पूर्वपदात्संज्ञायामिति णत्वम् । संज्ञैषा कुठारस्य । द्रुर्वृक्षः । स्तम्बे क च ।३।३।८३। स्तम्बे उपपदे हन्तेः करणे कः स्यादप् च पक्षे घनादेशश्च । स्तम्बघ्नः । स्तम्बघनः । करण इत्येव । स्तम्बघातः । परौ घः ।३।३।८४। परौ हन्तेरप् स्यात्करणे घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः । परेश्च घाङ्कयोः ।८।२।२२। परे रेफस्य लो वा स्याद्घशब्दे अङ्कशब्दे च । पलिघः । परिघः । पर्यङ्कः । पल्यङ्कः । इह तरसमपौ घ इति कृत्रिमस्य न ग्रहणं व्याख्यानात् । उपघ्न आश्रये । ।३।३।८५। उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च । आश्रयशब्देन सामीप्यं लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यते-इति पर्वतोपघ्नः । संघोद्घौ गणप्रशंसयोः ।३।३।८६। संहननं सङ्घः । भावेऽप् । उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घः । कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने । निघो निमितम् ।३।३।८७। समन्तान्मितं निमितम् । निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघा वृक्षाः । समारोहपरिणाहा इत्यर्थः । ड्वितः क्त्रिः ।३।३।८८। अयं भाव एव स्वभावात् । क्त्रेर्मम्नित्यम् । नित्यग्रहणात् क्त्रिर्मब्विषयः । अत एव त्र्यन्तेन न विग्रहः । डुपचष् । पाकेन निवृत्तं पक्त्रिमम् । डुवप् । उप्त्रिमम् । ट्वितोऽथुच् ।३।३।८९। अयमपि स्वभावाद् भाव एव । टुवेपृ । वेपथुः । श्वयथुः । यजयाचयतविच्छप्रच्छरक्षो नङ् ।३।३।९०। यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । प्रश्ने चासन्नेति ज्ञापकान्न संप्रसारणम्। क्त्वं तु विश्न इत्यत्र गुणनिषेधाय । रक्ष्णः । स्वपो नन् ।३।३।९१। स्वप्नः । उपसर्गे घोः किः ।३।३।९२। प्रधिः । अन्तर्धिः । उपाधीयतेऽनेनेत्युपाधिः । कर्मण्यधिकरणे च ।३।३।९३। कर्मण्युपपदे घोः किः

---

अनुपसर्गे सुप्युपपदे नित्यमप् स्याद्भावादौ ॥—प्रमद–॥ प्रसम्भ्यां हर्षे इति नोक्तम् । प्रसमदः । सप्रमद इति हर्षे माभूदिति ॥—प्रजने सर्तेः ॥ प्रजनन प्रजनः भावे घञ्, 'जनिवध्योः' इति वृद्धिनिषेधः । प्रशब्दबलादत्र जनेरर्थान्तरत्वम् । प्रतिष्ठते इत्यत्र प्रादुर्भावो यथा । तदेतदाह—प्रथमगर्भग्रहणमिति । काशिकानुरोधेनेदमुक्तम् । प्रथमं द्वितीयं वेत्यनाग्रहः किन्तु गर्भग्रहणमित्यन्ये ॥—हनश्च वधः ॥—अन्तोदात्त इति । सूत्रे वधशब्दोऽन्तोदात्ततयोच्चारित इति भावः ॥—अगारैक–॥ 'प्रघाणः प्रघणा लिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः ॥—संघोद्घौ–॥ 'मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः ॥—ड्वितः–॥–अयमिति । अत एव पाकेन निर्वृत्तमिति विगृह्यते न तु पक्त्रेनेति । यत्तु प्राचोक्त भावादाविति तन्नेति भावः ।—क्त्रेर्मप्–। तद्धितेषु व्याख्यातमिदम् ॥—नित्यग्रहणादिति । तत्र हि नित्यमिति योगो विभज्यते तत्सामर्थ्यादर्थविशेषानादरेणैव मब्विषयत्वं निर्णीयते । एकयोगत्वे तु निर्वृत्त इत्यधिकारान्निर्वृत्तार्थस्याविवक्षायाः स्वातन्त्र्यं प्रसज्येत, ततश्च मपं विनापि पक्त्रिरिति प्रयोगः स्यादिति भावः ॥—उप्त्रिममिति । वपेर्यजादित्वात्किति संप्रसारणे वापेन निर्वृत्तमित्यर्थः ॥—यजयाच–॥ भावेऽकर्तरि कारके चेति वर्तते । अत एव 'यज्ञेन यज्ञमयजन्त देवाः' इत्यत्र इज्यते यज्ञ इति व्याचक्षते ॥—विश्न इति । 'च्छ्वोः शूडनुनासिके च' इति शः ॥—उपसर्गे–॥–प्रधिरित्यादि । कित्त्वादातो लोपः ॥—अन्तर्धिरिति । अन्तःशब्दस्याङ्किविधीति वार्ति-

स्यादधिकरणेऽर्थे । जलानि धीयन्तेऽस्मिन्निति जलधिः । **स्त्रियां क्तिन्** ।३।३।९४। स्त्रीलिङ्गे भावादौ क्तिन् स्याद्घञोऽपवादः । अजपौ तु परत्वाद्बाधेते । कृतिः । चितिः । स्तुतिः । स्फायी । स्फातिः । स्फीतिकाम इति तु प्रामादिकम् । क्तान्ताद्गात्वर्थे णिचि अच इरिति वा समाधेयम् ॥ * **श्रुयजीषिस्तुभ्यः करणे** । श्रूयतेऽनया श्रुतिः । यजेरिषेश्च । इष्टिः । स्तुतिः ॥ * **ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः** । तेन नत्वम् । कीर्णिः । गीर्णिः । लूनिः । धूनिः । पूनिः । ह्लाद इति योगविभागात् क्तिनि ह्रस्वः । प्रह्लत्तिः । ति च । चूर्तिः फुल्तिः ॥ * **चायतेः क्तिनि चिभावो वाच्यः** । अपचितिः ॥ * **सम्पदादिभ्यः क्विप्** । सम्पत् । विपत् ॥ * **क्तिन्नपीष्यते** । सम्पत्तिः । विपत्तिः । **स्थागापापचो भावे** ।३।३।९५। क्तिन् स्यादङोऽपवादः।प्रस्थितिः । उपस्थितिः । सङ्गीतिः । संपीतिः । पक्तिः । कथमवस्था संस्थेति । व्यवस्थायामिति ज्ञापकात् । **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** ।३।३।९७। अवतेर्ज्वरत्वरेत्यूठ् । ऊतिः । स्वरार्थं वचनम् । उदात्त इति हि वर्तते । यूतिः । जूतिः । अनयोर्दीर्घत्वं च निपात्यते । स्यतेः । सातिः । द्यतिस्यतिमास्थेतीत्वे प्राप्ते इत्वाभावो निपात्यते । सनोतेर्वा जनसनेत्यात्वे कृते स्वरार्थं निपातनम् । हन्तेर्हिनोतेर्वा हेतिः । कीर्तिः । **व्रजयजोर्भावे क्यप्** ।३।३।९८। व्रज्या इज्या । **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** ।३।३।९९। समजादिभ्यः स्त्रियां भावादौ क्यप्स्यात्स चोदात्तः संज्ञायाम् । **अजेः क्यपि वीभावो नेति वाच्यम्** । समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपणः । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः । मन्यतेऽनयेति मन्या गलपार्श्वशिरा । विदन्त्यनया विद्या । सुत्या अभिषवः । शय्या । भृत्या । ईयतेऽनया इत्या शिबिका । **कृञः श च** ।३।३।१००। कृञ इति योगविभागः । कृञः क्यप्स्यात् । कृत्या । श च । चात् क्तिन् । क्रिया । कृतिः । **इच्छा** ।३।३।१०१। इषेर्भावे शो यगभावश्च निपात्यते । इच्छा ॥ * **परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्** । शो यक् च निपात्यते । परिचर्या पूजा ।

---

कादुपसर्गत्वम् ॥—**उपाधीयतेऽनेने**ति । एतेन उप समीपे स्वधर्ममादधातीत्युपाधिः । बाहुलकात्कर्तरि किरिति माधवादिग्रन्थो नादर्तव्य इति ध्वनितम् । 'विधाता विश्वसृड्विधिः' इत्यत्रापि कर्तरि माभूत् किः, किंतु विध विधाने इत्यस्मादिगुपधात्किदितीनि रूपसिद्धेः ॥—**स्त्रियां क्तिन्** ॥—**घञोऽपवाद** इति । यत्तु प्रक्रियाग्रन्थ व्याचक्षाणा आहुः । भाष्ये त्वधिकः कारोऽधिकार इति घञप्युदाहृत इति तद्भ्रमसात् । न हि तत्र स्त्रीत्वविशिष्टो भावोऽर्थः किन्तु पुंस्त्वविशिष्ट इति ध्येयम् ॥—**अजपौ त्वि**ति । तयोरवकाशः चयः लवः । क्तिनोऽवकाशः कृतिः दतिः । चिनोतिस्तौतिभ्यां तु स्त्रियामुभयप्रसङ्गे परत्वान् क्तिन्नित्यर्थः ॥—**प्रामादिकमि**ति । स्फायः स्फी निष्ठायामिति निष्ठायामेव स्फीभावविधानादिति भावः ॥—**श्रुयजी**ति । परत्वात् 'करणाधिकरणयोश्च' इति ल्युटि प्राप्ते वचनम् । श्रुतिः श्रोत्रम् ॥—**यजेरि**ति । यजेः क्तिनि 'वचिस्वपि–' इति सम्प्रसारण 'व्रश्चभ्रस्ज–' इति षत्वे इष्टिरिति रूपम् । इज्यतेऽनयेति विग्रहः । एवमिष्यतेऽनया इष्टिः स्तूयतेऽनया स्तुतिः ॥—**तेन नत्वमि**ति । कीर्णिरित्यादौ 'रदाभ्याम्–' इत्यनेन नत्वम् । लूनिरित्यादौ तु 'ल्वादिभ्यः' इत्यनेनेति विवेक. ॥—**ह्लाद** इति । ह्लादो निष्ठायामित्यत्रेत्यर्थः ॥—**चूर्तिरि**ति । 'ति च' इति चरफलोरुत्वे 'र्वोरुपधाया दीर्घः' इति दीर्घः ॥—**चायतेः** । चायृ पूजानिशामनयोः ॥—**क्तिन्नपी**ति । अस्त्रियामिति प्रतिषेधेन स्त्रियां वासरूपविधेरबाधादिदमुक्तम् ॥—**अङोऽपवाद** इति । पुरस्तादपवादन्यायेन स्थादिभ्य- 'आतश्चोपसर्गे' इति पचेस्तु 'षिद्भिदादिभ्य –' इति प्राप्तस्याङोऽपवादो न तु ण्वुलिञोरिति भावः । ण्वुलिञौ तु परत्वाद्भवत एव । का त्वं स्थायिकां त्व स्थायिमिति भाष्यकारप्रयोगात् ॥—**प्रस्थितिरि**ति । 'द्यतिस्यतिमास्थाम्–' इत्यात इत्वम् ॥—**सङ्गीतिरि**ति । 'घुमास्था–' इत्यादिना ईत्वम् ॥—**उदात्त इती**ति ॥ 'मन्त्रे वृष–' इति सूत्रादनुवर्तते इत्यर्थः । एवं च क्तिनन्तस्याद्युदात्तत्वे प्राप्ते 'ऊतियूति–' इत्यादयोऽन्तोदात्ता इति पर्यवसन्नोऽर्थः ॥—**इत्वाभाव** इति । 'द्यतिस्यति–' इति प्राप्तस्याभाव इत्यर्थः ॥—**हन्तेरि**ति । नकारस्येत्व, हिनोतेस्तु गुण इति बोध्यम् ॥—**कीर्तिरि**ति । कीर्तयतेः 'ण्यासश्रन्थ–' इति युचि प्राप्ते क्तिन्निपात्यते उदात्तत्व च । 'ता मुते कीर्तिम्' ॥—**व्रजयजोः**–॥ उदात्त इत्येव । पित्करण तूत्तरत्र तुगर्थम् ॥—**गलपार्श्वे**ति । तया हि क्रुद्धो ज्ञायत इति भावः । शेरतेऽस्यामिति शय्या । भरण भृत्या जीविका । 'कुमारभृत्याकुशलैरधिष्ठितः' इति रघुः । सज्ञाया किम् । मतिः । स्मृतिः । आसुतिः । तथा च व्यवहृतम् । 'मतिबुद्धिपूजार्थेभ्यश्च' 'कर्मणि भृतौ' 'रजः कृष्यासुति–' इत्यादि । एतेन 'मतिबुद्धि–' इत्यादिसूत्रप्रयोगादेव मतिभृतीत्यादीनां साधुत्वमिति दुर्घटाद्युक्तिः प्रत्युक्ता ॥—**क्रिये**ति । यदा भावकर्मणोः शः तदा 'सार्वधातुके यक्' 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः । अन्यत्र तु यगभावेऽपि शे परतो रिङादेशे कृते इयङि सति रूपं तुल्यम् ॥—**इच्छा** ॥—**इषेर्भाव** इति । न त्वकर्तरि कारकेऽपीत्यर्थः । अत एव करणेऽर्थे इष्यतेऽनया इष्टिरिति प्रागुक्तम् ॥—**यकारनिवृत्तिरि**ति । हलादिशेषस्तु नास्ति । षाष्ठद्वित्वे धातुद्वित्वे वाभ्याससंज्ञास्वीकारात् । इह च तदुभयाभावादिति भावः ॥—**अटाट्ये**ति । यदा तु अटतेर्यङन्तादप्रत्ययादित्यकारस्तदाऽलोपे 'यस्य हलः' इति यलोपेऽटाटेति रूपं बोध्यम् ।

परिसर्या परिसरणम् । अत्र गुणोऽपि । मृग अन्वेषणे चुरादावदन्तः । अतो लोपाभावोऽपि । शे यकि णिलोपः । मृगया । अटतेः शे यकि अटशब्दस्य द्वित्वं पूर्वभागे यकारनिवृत्तिर्दीर्घश्च । अटाट्या ॥ * जागर्तेरकारो वा । पक्षे शः । जागरा । जागर्या । अ प्रत्ययात् ।३।३।१०२। प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या । गुरोश्च हलः ।३।३।१०३। गुरुमतो हलन्तात् स्त्रियामकारः स्यात् । ईहा । ऊहा । गुरोः किम् । भक्तिः । हलः किम् । नीतिः ॥ * निष्ठायां सेट इति वक्तव्यम् । नेह । आप्तिः । तितुत्रेति नेट् । दीप्तिः । * तितुत्रेष्वग्रहादीनामिति वाच्यम् । निगृहीतिः । निपठितिः । षिद्भिदादिभ्योऽङ् ।३।३।१०४। षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् । जॄष् । ऋदृशोऽङि गुणः । जरा । त्रपूष् । त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा । कृपेः संप्रसारणं च । कृपा । चिन्तिपूजिकथिकुम्बिचर्चश्च ।३।३।१०५। अङ् स्याद्युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । आतश्चोपसर्गे ।३।३।१०६। अङ् स्यात् । क्तिनोऽपवादः । प्रदा । उपदा । श्रदन्तरोरुपसर्गवद्वृत्तिः । श्रद्धा । अन्तर्धा । उपसर्गे घोः किरित्यनेन किः । अन्तर्धिः । ण्यासश्रन्थो युच् ।३।३।१०७। अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना ॥ * घट्टिवन्दिविदिभ्यश्चेति वाच्यम् । घट्टना । वन्दना । वेदना ॥ * इषेरनिच्छार्थस्य । अन्वेषणा ॥ * परेर्वा । पर्येषणा । परीष्टिः । रोगाख्यायां ण्वुल्बहुलम् ।३।३।१०८। प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न । शिरोर्तिः ॥ * धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । आसिका । शायिका ॥ * इक्श्तिपौ धातुनिर्देशे । पचिः । पचतिः ॥ * वर्णा-

---

द्वित्वे हलादिशेषे सति 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घप्रवृत्तेः ॥—**जागर्तेरि**ति । शे परतः सार्वधातुके यक् । 'जाग्रोऽविचिण्ण–' इति गुणः ॥—**गुरोश्च** ॥ धातोरित्यनुवृत्त्या हल इति धातोर्विशेषणात्तदन्तविधौ हलन्तो धातुर्लभ्यते । न चायं गुरुरिति सम्भवति । अज्विषयो हि गुरुः अतो मत्वर्थो लक्ष्यते तदाह—**गुरुमत** इति । ननु विपरीतमस्तु गुर्वन्ताद्धल इति तादृशस्यापि धातोर्डुक्रीञित्यादेः सत्त्वादिति चेन्मैवम् । 'चेष्टायामनध्वनि' 'आशसायां भूतवच्च' इति निर्देशेन विपरीतशङ्काया अप्रवृत्तेः ॥—**षिद्भिदा**–॥ कथं तर्हि 'मुखाब्जगन्धलब्धे.' इति माघः । 'प्रेक्षोपलब्धि.' इत्यमरश्च । षित्त्वादङि लभेत्येव युचितम् । सत्यम् । अनर्थकास्तु प्रतिवर्णमनुपलब्धेरिति भाष्यप्रयोगाद्बाहुलकाद्वा क्तिन्नपि बोध्यः । विस्तरस्त्विह मनोरमायां बोध्यः ॥—**भिदे**ति । एवमादयोऽदन्ता समुदाया एव गणे पठ्यन्ते तत्र ये प्रकृतिभागा भिदछिद इत्यादयस्ते आदिशब्देन सूत्रे निर्दिष्टाः गणे विशिष्टपाठस्तु लोकप्रसिद्धार्थविशेषस्य क्वचिदलाक्षणिककार्यस्य सग्रहार्थः ॥—**भित्तिरन्ये**ति । भिद्यत इति भित्तिः कुड्यम् ॥—**छिदे**ति । द्वैधीकरण एवायम् । अन्यत्र तु छित्तिश्छिद्रम् ॥—**मृजे**ति । मृजू शुद्धौ अस्यापित्त्वाद्भिदादौ पाठः ॥—**चिन्तिपूजि**–॥ चकारोऽनुक्तसमुच्चयार्थः । तेन तोलयतेस्तुलेति हरदत्तः । अत एव 'तुला यदारोहति दन्तवाससा' इति नैषधकृदाह ॥—**युचोऽपवाद** इति ॥ 'ण्यासश्रन्थ–' इति वक्ष्यमाणस्येत्यर्थः ॥—**आसने**ति ॥ आस्यतेऽस्यामिति विग्रहः । 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्यये त्वास्या । न च स्त्रीप्रत्यये वासरूपविधिर्नेति शङ्क्यम् । अपवादस्य युचः स्त्रीप्रकरणस्थत्वेऽपि उत्सर्गस्य ण्यतस्तदभावात् ॥—**घट्टिवन्दि**–॥ विदिर्लाभार्थो गृह्यते ज्ञानार्थस्य तु संवित्तिः ॥—**इषेरि**ति । अनिच्छार्थस्य युच इच्छार्थस्य त्विषेरिच्छेत्येव ॥—**रोगाख्या**–॥ धातोर्बहुलं ण्वुल् स्यात्प्रत्ययान्तं चेद्रोगस्य संज्ञा । क्तिन्नादीनामपवादः ॥—**प्रच्छर्दिके**ति । छर्द वमने ॥—**प्रवाहिके**ति । प्रवाहयति मुहुर्मुहुः प्रवर्तयतीति प्रवाहिका ग्रहणी ॥—**विचर्चिके**ति । चर्च अध्ययने प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः । 'पाम पामा विचर्चिका' इत्यमरः ॥—**शिरोर्तिरि**ति । शिरःपीडा । अर्द हिंसायाम् । 'तितुत्र–' इति नेट् ॥—**धात्वर्थनिर्देश** इति । क्रियानिर्देश इत्यर्थः ॥—**आसिका । शायिके**ति । आसनं शयनमित्यर्थः ॥—**इक्श्तिपौ**–॥ धातोर्निर्देशोऽनुकरणम् । बहुलमित्यनुवृत्तेः क्वचिन्न । 'गुप्तिज्किद्भ्यः सन्' 'भुवो वुक् लुङ्लिटोः' ॥—**पचतिरि**ति । 'उपसर्गात्सुनोतिसुवतिस्यति–' 'ध्यायतेः संप्रसारणं च' इत्यादिनिर्देशादकर्तृवाचिन्यपि सार्वधातुके परे शबादयः । एवं भावकर्मवाचिन्यपि सर्वधातुके क्वचिद्यक्, 'विभाषा लीयतेः' इति यथा । तत्र हि लीलीङोर्यका निर्देशो न तु श्यनेत्युक्तम् । यत्तु प्राचा श्तिपः शित्करणसामर्थ्याच्छबादय इत्युक्तम् । तन्न । पिबतिर्ग्लायतिरित्यादौ पिबादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् ॥—**वर्णादि**ति । वर्णानुकरणादित्यर्थः । न तु वर्णादुच्चार्यमाणादिति । तथा हि सत्वंकार इत्यादावेव स्यान्न तु ककार इत्यादौ । अत्र हि सघातस्योच्चारणात् । अनुकार्यं त्विह वर्णमात्रम् । अकारस्योच्चारणार्थत्वात् । कथं तर्हि समुच्चयार्थश्चकारः । एवकारोऽन्यनिवृत्त्यर्थं इत्यादिप्रयोगा इति चेदत्राहुः । क्वचित्सङ्घातादपि भवति 'उच्चैस्तरां वा वषट्कारः' इति सूत्रनिर्देशात् सर्वे चकाराः प्रत्याख्यायन्ते भाष्यप्रयोगाद्बहुलवचनाच्चेति । इह कारप्रत्ययस्य धातोरविहितत्वेऽपि धात्वधिकारस्थत्वात्कृत्संज्ञा तेन कृदन्तत्वात्प्रातिपदिकत्वम् । प्रयोजनाभावाच्च ककारस्येत्संज्ञा आर्धधातुकत्वाभावादिडागमो न 'अस्य च्वौ' इत्यादौ तु कारप्रत्ययाभावो बाहुलकादेव ॥—

त्कारः । निर्देश इत्येव । अकारः । ककारः ॥ * रादिफः । रेफः ॥ * मत्वर्थाच्छः । बहुलवचनादकारलोपः । मत्वर्थीयः ॥ * इणजादिभ्यः । आजिः । आतिः ॥ * इञ्वपादिभ्यः । वापिः । वासिः । स्वरे भेदः ॥ * इक् कृष्यादिभ्यः । कृषिः ॥ गिरिः । **संज्ञायाम्** ।३।३।१०९। अत्र धातोर्ण्वुल् । उद्दालकपुष्पभञ्जिका । **विभाषाख्यानपरिप्रश्नयोरिञ्च** ।३।३।११०। परिप्रश्ने आख्याने च गम्ये इञ् स्याच्चात् ण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाकार्षीः । सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम् । एवं गणिं गणिकां गणनाम् । पाचिं पाचिकां पचां पक्तिम् । **पर्यायार्हर्णोत्पत्तिषु ण्वुच्** ।३।३।१११। पर्यायः परिपाटीक्रमः । अर्हणमर्हः योग्यता । पर्यायादिषु द्योत्येषु ण्वुच् वा स्यात् । भवत आसिका । शायिका । अग्रगामिका । भवानिक्षुभक्षिकामर्हति । ऋणे । इक्षुभक्षिकां मे धारयति । उत्पत्तौ । इक्षुभक्षिका उदपादि । **आक्रोशे नञ्यनिः** ।३।३।११२। विभाषेति निवृत्तम् । नञि उपपदेऽनिः स्यादाक्रोशे । अजीवनिस्ते शठ भूयात् । अप्रयाणिः । **कृत्यल्युटो बहुलम्** ।३।३।११३। भावेऽकर्तरि च कारके संज्ञायामिति च निवृत्तम् । राज्ञा भुज्यन्ते राजभोजनाः शालयः । **नपुंसके भावे क्तः** ।३।३।११४। **ल्युट् च** ।३।३।११५। हसितम् । हसनम् । योगविभाग उत्तरार्थः । **कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्** ।३।३।११६। येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे ल्युट् स्यात् । पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । पयःपानं सुखम् । कर्तरीति किम् । गुरोः स्नापनं सुखम् । नेह गुरुः कर्ता किं तु कर्म । **वा यौ** ।२।४।५७। अजेर्वी वा स्याद् यौ । प्रवयणम् । प्राजनम् । **करणाधिकरणयोश्च** ।३।३।११७। ल्युट् स्यात् । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक्करणाधिकरणयोरित्यधिकारः । **अन्तरदेशे** ।८।४।२४। अन्तःशब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । देशे तु अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरः किम् । अन्तरघानि । **अयनं च** ।८।४।२५। अयनस्य णोऽन्तःशब्दात्परस्य । अन्तरयणम् । अदेश इत्येव । अन्तरयनो देशः । **पुंसि संज्ञायां घः प्रायेण** ।३।३।११८। **छादेर्घेऽद्व्युपसर्गस्य** ।६।४।९६। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छ-

**रादिफः** ॥ वासरूपविधिना कारोऽपि । तेन 'रकारादीनि नामानि शृण्वतो मम पार्वति' इत्यादिप्रयोगः साधुरेव ॥—**अकारलोप** इति । अतद्धितपरत्वादभत्वाच्च यस्येति लोपस्याप्राप्तिरिति भावः । कृदन्तत्वात्प्रातिपदिकत्वमिह पूर्ववद्बोध्यम् । 'तसौ मत्वर्थे' इत्यत्र बाहुलकाच्छो न । 'शैषिकान्मतुबर्थीयात्' इत्यत्र तु बाहुलकादेव मतुबर्थशब्दाच्छः । अन्ये तु नैतत्कृदन्तं मत्वर्थे भव इति विगृह्य गहादित्वाच्छप्रत्यये तद्धितान्तमेवेत्याहु ॥—**इणजा**–॥ धात्वर्थनिर्देशे प्राप्तस्य ण्वुलोऽपवादोऽयम् । एवमग्रेऽपि ॥—**आजिरि**ति । बाहुलकादजेर्वीभावो न ॥—**संज्ञायाम्** ॥ अधिकरणे ण्वुलर्थोऽयमारम्भः । उद्दालकः श्लेष्मातकः तस्य पुष्पाणि भज्यन्ते यस्यां क्रियाया सा । तथा भञ्जन भञ्जिका । भावे ण्वुल् । उद्दालकपुष्पाणां भञ्जिकेत्यन्ये ॥ सूत्रे आख्यानशब्दस्याल्पाच्तरत्वेन पूर्वनिपाते व्याख्यानस्य प्रश्नपूर्वकतयाऽर्थप्राप्तक्रममनुसृत्य व्याचष्टे—**परिप्रश्ने आख्याने चे**ति ॥—**परिपाटी**ति । पट गतौ परिपूर्वः । 'इणजादिभ्यः' इतीण् । 'कृदिकारात्–' इति ङीप् ॥—**आक्रोशे** ॥ आक्रोशः शापः । नपुसके भावे क्तः । ननु 'तयोरेव कृत्यक्तखलर्थाः' इति लिङ्गत्रयसाधारण्येन भावकर्मणोः कृत्यादिविधानात्तेनैव नपुसके भावे क्त. सिध्यति किमनेन पुनर्विधानेनेति चेदत्राहुः । भूते इत्यधिकृत्य 'निष्ठा' इति सूत्रेण विहितस्य क्तस्य भावोऽर्थः 'तयोरेव–' इति सूत्रेण विहितः अनेन तु कालसामान्ये नपुंसके भावे क्तो विधीयते । एव च स्वविषये परत्वात् घञजपा वाधक इति परिशेषादेवैषां पुविषयत्वं सिध्यति । किंच इह भावे चाकर्मकेभ्य इत्यस्यासभिधानात्सकर्मकेभ्योऽप्यय भवति घजादिवत् । 'गत तिरश्चीनमनूरुसारथेः' इत्यादिदर्शनात् । तथा च नास्त्येव शङ्केति । नन्वेव तद्योगे कर्मणि द्वितीया स्यात् कृद्योगलक्षणषष्ठ्या 'न लोका–' इति निषेधात् । एव च घट कृतं त्वक्षं भिन्नमित्यादि प्रसज्येत । अनूरुसारथेरित्यत्र तु कर्तरि तृतीया नापाद्यते, कारकषष्ठ्या निषेधेऽपि शेषत्वविवक्षया षष्ठीति समाधानसंभवात् इति चेन्मैवम् । नपुसके भावे क्तस्य योगे षष्ठ्या उपसंख्यातत्वात्कर्मणि द्वितीयाया अभावात् । शेषत्वविवक्षामाश्रित्य वार्तिकमिदं प्रत्याख्यातमाकरे इति चेत्तर्हि तत्प्रामाण्यात्प्रायेण शेषत्वविवक्षैवेत्यस्तु । तथा च घट कृतमित्यादि तु न प्रसज्यत एव । क्वचित्तु द्वितीयापि दृश्यते 'श्रान्त देशमनेकदुर्गविषमम्' इति दिक् ॥—**कर्मणि च** ॥ कर्तुरिति कर्मणि षष्ठी 'उभयप्राप्तौ कर्मणि' इति नियमाद्येनेति तृतीया तदाह—**येन स्पृश्यमानस्य कर्तुरि**ति ॥—**ल्युट् स्यादि**ति । नपुंसके भावे इति बोध्यम् । अत एवाह—**पूर्वेणे**ति । ल्युट् चेत्यनेनेत्यर्थः ॥—**नेहे**ति । स्नानकर्तृत्वेऽपि स्नापने न गुरुः कर्ता किन्तु शिष्य इत्यर्थः । शरीरग्रहणं किं । पुत्रस्य परिष्वञ्जने सुखम् । मानसी प्रीतिरत्र ॥—**करणाधिकरणयोः** ॥ येन नाप्राप्तिन्यायेन घञोऽपवादोऽयम् । अजपौ स्त्रीप्रत्ययांश्च परत्वाद् बाधते । उक्तं हि 'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन' इति ॥—**इध्मे**ति । इध्मानि प्रवृश्च्यन्ते

दः । आकुर्वन्त्यस्मिन् आकरः । **गोचरसंचरवहव्रजव्यजापणनिगमाश्च** ।३।३।११९। घान्ता निपात्यन्ते । हलश्चेति वक्ष्यमाणस्य घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । संचरन्तेऽनेन संचरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजः । व्यजस्तालवृन्तम् । निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः । चात्कषः । निकषः । **अवे तृस्त्रोर्घञ्** ।३।३।१२०। अवतारः कूपादेः । अवस्तारो जवनिका । **हलश्च** ।३।३।१२१। हलन्ताद्घञ् स्यात् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः । विमार्गः समूहनी । **अध्यायन्यायोद्यावसंहाराश्च** ।३।३।१२२। अधीयतेऽस्मिन् अध्यायः । नियन्ति उद्युवन्ति संहरन्त्यनेनेति विग्रहः ॥ * **अवहाराधारावायानामुपसंख्यानम्** । **उदङ्कोऽनुदके** ।३।३।१२३। उत्पूर्वादञ्चतेर्घञ् स्यात् न तूदके । घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कश्चर्ममयं भाण्डम् । अनुदके किम् । उदकोदञ्चनः । **जालमानायः** ।३।३।१२४। आनीयन्ते मत्स्यादयोऽनेनेत्यानायः । जालमिति किम् । आनयनः । **खनो घ च** ।३।३।१२५। चाद्घञ् । आखनः । आखानः । घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम् । तेन भगः पदमित्यादि ॥ * **खनेर्डडरेकेकवका वाच्याः** । आखः । आखरः । आखनिकः । आखनिकवकः । एते खनित्रवचनाः । **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** ।३।३।१२६। करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् स्यात् । तयोरेवेति भावे कर्मणि च । कृच्छ्रे । दुष्करः कटो भवता । अकृच्छ्रे । ईषत्करः । सुकरः । * **निमिमीलियां खलचोरात्वं नेति वाच्यम्** । ईषन्निमयः । दुष्प्रमयः । सुविलयः । निमयः । मयः । लयः । **उपसर्गात् खल्घञोः** ।७।१।६७। उपसर्गादेव लभेर्नुम् स्यात् । ईषत्प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । उपालम्भः । उपसर्गात्किम् । लाभः । **न सुदुर्भ्यां केवलाभ्याम्** ।७।१।६८। उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खल्घञोः । सुलभम् । दुर्लभम् । केवलाभ्यां किम् । सुप्रलम्भः । अतिदुर्लम्भः । कथं तर्हि अतिसुलभमतिदुर्लभमिति । यदा स्वती कर्मप्रवचनीयौ तदा भविष्यति । **कर्तृकर्मणोश्च भूकृञोः** ।३।३।१२७। कर्तृकर्मणोरीषदादिषु च उपपदेषु भूकृञोः खल् स्यात् । यथासंख्यं नेष्यते । कर्तृकर्मणी च धातोरव्यवधानेन प्रयोज्ये ईषदादयस्तु ततः प्राक् ॥ * **कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्** । खित्त्वान्मुम् । अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम् । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । ईषदाढ्यङ्करः । दुराढ्यङ्करः । स्वाढ्यङ्करः । च्व्यर्थयोः किम् । आढ्येन सुभूयते । **आतो युच्** ।३।३।१२८। खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥ * **भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः** । दुःशासनः । दुर्योधन इत्यादि । **पात्पदान्तात्** ।८।४।३५। नस्य णो

---

येन, गौर्दुह्यते यस्यामिति विग्रहः ॥—**आकुर्वन्तीति** । एत्य कुर्वन्त्यस्मिन्व्यवहारमित्याकर उत्पत्तिस्थानम् ॥—**अवे-**॥ अवे उपपदे तृस्तृभ्यां करणाधिकरणयो' पुंसि सज्ञायां घञ् स्यात् । घस्यापवादः ॥—**अवहारेत्यादि** ॥ वृत्तिकारस्त्वाधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्द संजग्राह तदसवद्धमिति स्पष्टमेव ॥—**उदङ्को-**॥ 'हलश्च' इत्येव सिद्धे उदकप्रतिषेधार्थमिदम् ॥—**उदकोदञ्चन** इति । पुसि सज्ञायामिति घे प्राप्ते घञ्विहितः । उदके तु घञि प्रतिषिद्धे घ एव स्यान्न तु ल्युडिति चेन्मैवम् । प्रतिषेधसामर्थ्यात् घस्याप्यप्रवृत्तेः । न हि इह घे घञि वा रूपे विशेषोऽस्ति । न च स्वरे विशेषः । घे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तता घञ्यपि थाथादिस्वरेण तथैवेति ॥—**जालमा-**॥ जल धान्ये । 'ज्वलितिकसन्तेभ्यो ण.' इति णप्रत्यये जालशब्दः सिद्धः । तेन जालशब्दोऽत्र निपात्यत इति न भ्रमितव्यम् ॥—**खनो-**॥-**घित्करणमि**ति । आखन इत्यादौ 'चजोः-' इति कुत्वस्य प्रसत्त्यभावादिति भावः ॥—**भगः पदमि**ति । ननु पदमित्यत्र घस्य कि प्रयोजनमिति चेदत्राहुः । 'करणाधिकरणयोः' 'पुंसि सज्ञायाम्-' इति यदि घः स्यात्तदा पदमिति नपुसक न स्यादनेन चेत् घो भवति तदा त्विष्टसिद्धिरिति ॥—**एते** इति । आखनादयः षडित्यर्थः ॥—**ईषद्दुःसुषु-**॥ इह सामान्योक्तावपि योग्यताबलाद्विशेषणस्य विषयविभागो लभ्यते दुरिति कृच्छ्रार्थे इतरौ त्वकृच्छ्रार्थे । तदेतद्दर्शयति—**कृच्छ्रो दुष्कर** इत्यादिना ॥—**भवते**ति । 'न लोका-' इति षष्ठीनिषेधात्कर्तरि तृतीया । कृच्छ्रेत्यादि किम् । ईषत्कार्यम्, स्वल्प कार्यमित्यर्थः ॥—**खलि**ति । लकारः स्वरार्थः । खित्करण तूत्तरत्र मुमर्थम् ॥—**निमिमी**ति । 'मीनातिमिनोतिदीङां ल्यपि च' 'विभाषा लीयतेः' इति प्राप्तं निषिध्यते ॥—**निमय** इत्यादि । एरच् ॥—**उपसर्गात्खल्घञोः** । 'लभेश्च' इत्यनेनैव सिद्धे नियमार्थमिदमित्याह **उपसर्गादेवे**ति ॥—**यदा स्वती** इति ॥ सुः पूजायाम्, अतिरतिक्रमणे चेति तयोः कर्मप्रवचनीयत्वम् ॥—**कर्तृकर्मणोः-**॥ चकारः संनियोगार्थः । यदा कर्तृकर्मणोरीषदादीनां च युगपत्प्रयोगस्तदैव प्रत्ययो यथा स्यात् । न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवास्तु न तूपपदत्वमिति वाच्यम् । ईषदादीनामेवोपपदत्वे तु खलः खित्त्वस्य वैयर्थ्यापत्तेः । मुमर्थं हि तत् । मुम् चानव्ययस्य विधीयते तस्मात्कर्तृकर्मणोरिति उपपदत्वमेव । तदेतदाह—**ईषदादिषु चे**ति । कर्तृकर्मणी द्वे भूकृञौ च द्वौ तयोर्यथासंख्यं प्राप्तम् । स्वीकृत च काशिकाकृता न्यासकारहरदत्तादिभिश्च, प्राचापि तथैवोक्तं तद्व्याख्यातृभिश्चानुमोदितं तत्सर्वं नादर्तव्यम् । यथासंख्यसूत्रस्थभाष्यविरोधादिति ध्वनयन्नाह—**यथासंख्यं नेष्यत** इति । ननूपपदयोर्मध्ये पूर्वापरौ भाव्य-

न । निष्पानम् । सर्पिष्पानम् । चात्विकम् । निर्णयः । पदान्तात्किम् । पुष्णाति । पदे अन्तः पदान्तोऽवमिति सप्तमीसमासोऽयम् । तेनेह न । सुसर्पिष्केण । **आवश्यकाधमर्ण्ययोर्णिनिः** ।३।३।१७०। अवश्यङ्कारी । शतन्दायी । **कृत्याश्च** ।३।३।१७१। आवश्यकाधमर्ण्ययोरित्येव । अवश्यं हरिः सेव्यः । शतं देयम् । **क्तिच्क्तौ च संज्ञायाम्** ।३।३।१७४। धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम् । तितुत्रेति नेट् । भवतात् । भूतिः । **न क्तिचि दीर्घश्च** ।६।४।३९। अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे । यन्तिः । रन्तिः । वन्तिः । तन्तिः । **सनः क्तिचि लोपश्चास्यान्यतरस्याम्** ।६।४।४५। सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा । सनुतात् । सातिः । सतिः । सन्तिः । देवा एनं देयासुर्देवदत्तः । **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ।३।४।१८। प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचांग्रहणं पूजार्थम् । अमैवाव्ययेनेति नियमान्नोपपदसमासः । दो दद्घोः । अलं दत्त्वा । घुमास्था । पीत्वा खलु । अलंखल्वोः किम् । मा कार्षीत् । प्रतिषेधयोः किम् । अलंकारः । **उदीचां माङो व्यतीहारे** ।३।४।१९। व्यतीहारेऽर्थे माङः क्त्वा स्यात् । अपूर्वकालार्थमिदम् । **मयतेरिदन्यतरस्याम्** ।६।४।७०। मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि । अपमित्य याचते । अपमाय । उदीचांग्रहणाद्यथाप्राप्तमपि । याचित्वा अपमयते । **परावरयोगे च** ।३।४।२०। परेण पूर्वस्यावरेण परस्य योगे गम्ये धातोः क्त्वा स्यात् । अप्राप्य नदीं पर्वतः । परनदीयोगोऽत्र पर्वतस्य । अतिक्रम्य पर्वतं स्थिता नदी । अवरपर्वतयोगोऽत्र नद्याः । **समानकर्तृकयोः पूर्वकाले** ।३।४।२१। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । क्त्वा तु अव्ययकृतो भावे । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति । अनु-

---

वस्था न सिध्यति भूकृञोरव्यवहितत्वं कर्तृकर्मणोरेवेष्यते न त्वीषदादीनाम् । एवं च कथमत्रेष्टव्यवस्था सिध्यतीति चेदत्राहुः । बहुलग्रहणानुवृत्त्या दुराढ्यंभव इति भाष्योदाहरणाच्चेष्टव्यवस्था सिध्यतीति तदेतदभिप्रेत्याह—**कर्तृकर्मणी** चेति ॥ भवतेः कर्तर्युदाहरति—**अनाढ्येनाढ्येने**ति । कर्मणि त्वनाढ्य आढ्यीभूयते इति विग्रहः । भाव्यते इति तदर्थः । एवमग्रेऽपि विग्रहद्वयमुन्नेयम् । अनाढ्येनाढ्येन स्वयमेव क्रियते अनाढ्यः आढ्यः क्रियत इति ॥—**इत्यादी**ति ॥ आदिशब्देन दुर्दर्शनः दुर्धर्षणः दुर्मर्षणः ॥—**क्तिच्क्तौ**–॥ क्तिचश्चकारो न क्तिचीति विशेषणार्थः । न क्तावित्युक्ते हि क्तिनोऽपि ग्रहणं स्यादिति प्राञ्चः । तन्न । एकानुबन्धपरिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति हरदत्तः । यत्तु वदन्ति । 'तितुत्र–' इत्यत्र सामान्यग्रहणार्थश्चकारः । अन्यथा एकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु क्तिन इति तद्भ्रमात् । 'तितुत्र–' इति सूत्रेऽनुबन्धविशिष्टरूपानुच्चारणेनैकानुबन्धपरिभाषाया उक्तिसंभवस्यैवाभावात् । एतेन 'तितुत्र–' इति सूत्रे एकानुबन्धत्वात्क्तिनेव गृह्येत न त्वयं क्तिच् । ततश्च रोदितीति रूपं न स्यादिति शङ्काप्यपास्ता ॥—**भूतिरि**ति । यद्यपीह परत्वात् 'श्र्युकः किति' इत्येवेट्निषेधो न्याय्यस्तथापि वन्तितन्त्योरिण्निषेधार्थमावश्यकत्वात्फले विशेषाभावाच्च 'तितुत्र–' इत्युपन्यस्तम् ॥—**दीर्घानुनासिके**ति । 'अनुनासिकस्य क्विझलोः–' इति दीर्घस्य 'अनुदात्तोपदेश–' इत्यादिनानुनासिकलोपस्य च प्राप्तिरिति बोध्यम् ॥—**यन्तिरि**त्यादि । यम उपरमे, रम क्रीडायाम्, वनु याचने, तनु विस्तारे ॥—**अलंखल्वोः**–॥–**पूजार्थमि**ति । ननु विकल्पार्थमेवास्तु अलं रुदित्वा अलं रोदनेनेति रूपद्वयसिद्ध्यर्थमिति चेन्मैवम् । वासरूपन्यायेनैतत्सिद्धेः । न च 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्न' इति सिद्धान्तात् ल्युटि वासरूपन्यायो नास्तीति वाच्यम् । क्तल्युडादयोऽपवादभूताः स्वबाध्य नित्यं बाधन्त इति हि तस्य निष्कृष्टोऽर्थः । इह तु ल्युटोऽपवादः क्त्वा चेति वैषम्यात् । ननु 'प्रैषादिषु कृत्याश्च' इति वचनेन स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत्किं ततः । 'ज्ञापकसिद्धं न सर्वत्र' इतीष्टानुरोधेन तदभ्युपगमे बाधकाभावात् ॥—**अलं दत्त्वे**ति । अपात्रे न देयमिति फलितोऽर्थः ॥—**उदीचाम्**–॥ व्यतीहारो व्यतिक्रमः । मेङः कृतात्वस्य माङ इति निर्देशो 'नानुबन्धकृतमनेजन्तत्वम्' इति परिभाषां ज्ञापयति तेन घुसंज्ञायां दैपोऽप्यदाबिति पर्युदासः सिध्यति ॥—**अपमित्ये**ति । 'समासेऽनञ्पूर्वे–' इति वक्ष्यमाणेन क्त्वो ल्यपि तुक् । याचित्वा प्रणिददातीत्यर्थः ॥—**परावर**–॥—**अप्राप्ये**ति । दक्षिणदेशस्थानां गङ्गामप्राप्य विन्ध्यः । गङ्गाप्राप्तिविरहविशिष्टदेशस्थो विन्ध्य इत्यर्थः । अत्र विन्ध्यात्परा गङ्गेति गम्यते ॥—**अतिक्रम्ये**ति । दक्षिणदेशस्थानामेवायमपि प्रयोगः । अत्र हि गङ्गायाः पूर्वो विन्ध्य इति गम्यते । इह त्रिसूत्र्यां क्त्वाप्रत्ययस्य भावमात्रार्थत्वेऽपि विशेषणविशेष्यसंसर्गा भिद्यन्त इति नास्ति वैयर्थ्यमिति दिक् ॥—**समानक**–॥ इह धात्वधिकारेऽपि समानकर्तृत्वं क्रिययोरेव संभवतीत्याशयेनाह—**धात्वर्थयोरि**ति ॥ निर्धारणे षष्ठी सप्तमी वा । धात्वर्थयोर्मध्ये पूर्वकाले यस्य धात्वर्थस्य तस्मिन्विद्यमानादित्यर्थः । एवं च निर्धारणे विभक्तिरेव पूर्वकाल इत्यस्य बहुव्रीहित्वद्योतिकेति फलितम् ॥—**क्त्वा स्यादि**ति । स च भावे, अव्ययकृत इति वचनात् । भावोऽपि घञादाविव नेह सिद्धावस्थः किंतु साध्यावस्थः । स च धातुनैव लभ्यः । क्त्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं धातुसंबन्धाधिकारात् । संसर्गश्चेह सामानाधिकरण्यं पूर्वोत्तरकालत्वं च । तत्र संसर्गविशेषतात्पर्यग्राहकाः क्त्वाणमुलादयः । अत्र च 'समानकर्तृकयोः–' इति

वृत्तेरनुनासिकलोपः। विष्णुं नत्वा स्तौति। स्वरत्यादेः श्र्युकः कितीति नित्यमिडभावः पूर्वविप्रतिषेधेन। स्मृत्वा। सूत्वा। धूत्वा। **क्त्वि स्कन्दिस्यन्दोः** ।६।४।३१। एतयोर्नलोपो न स्यात् क्त्वि परे। स्कन्त्वा। ऊदित्वादिड्वा। स्यन्त्वा। स्यन्दित्वा । **न क्त्वा सेट्** ।१।२।१८। सेट् क्त्वा किन्न स्यात्। शयित्वा । सेट् किम् । कृत्वा। **मृडमृदगुधकुषक्लिशवदवसः क्त्वा** ।१।२।७। एभ्यः सेट् क्त्वा कित् । मृडित्वा । क्लिशः क्त्वेति वेट् । क्लिशित्वा। क्लिष्ट्वा। उदित्वा । उषित्वा । रुदविदेति कित्त्वम् । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा । **नोपधात्थफान्ताद्वा** ।१।२।२३। सेट् क्त्वा कित्स्याद्वा। श्रथित्वा। श्रन्थित्वा। गुफित्वा। गुम्फित्वा। नोपधात्किम्। कोथित्वा। रेफित्वा। **वञ्चिलुञ्च्यृतश्च** ।१।२।२४। सेट् क्त्वा किद्वा। वचित्वा। वञ्चित्वा। लुचित्वा। लुञ्चित्वा। ऋतित्वा। अर्तित्वा। **तृषिमृषिकृशेः काश्यपस्य** ।१।२।२५। एभ्यः सेट् क्त्वा किद्वा। तृषित्वा। तर्षित्वा। मृषित्वा। मर्षित्वा। कृशित्वा। कर्शित्वा। रलो व्युपधादिति वा कित्त्वम्। द्युतित्वा। द्योतित्वा। क्लिशित्वा। क्लेशित्वा। रलः किम्। सेवित्वा। व्युपधात्किम्। वर्तित्वा। हलादेः किम्। एषित्वा। सेट् किम्। भुक्त्वा। वसतिक्षुधोरिट्। उषित्वा। क्षुधित्वा। क्षोधित्वा। अञ्चेः पूजायामिति नित्यमिट्। अञ्चित्वा। गतौ तु। अक्त्वेत्यपि। लुभित्वा। लोभित्वा। लुभोऽविमोहन इतीट्। विमोहने तु लुब्ध्वा। **जॄव्रश्च्योः क्त्वि** ।७।२।५५। आभ्यां परस्य क्त्व इट् स्यात्। जरीत्वा। जरित्वा। व्रश्चित्वा। **उदितो वा** ।७।२।५६। उदितः परस्य क्त्व इड्वा। शमित्वा। अनुनासिकस्य क्वीति दीर्घः। शान्त्वा। मूत्वा। देवित्वा। **क्रमश्च क्त्वि** ।६।४।१८। क्रम उपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे। क्रान्त्वा। क्रन्त्वा। झलि किम्। क्रमित्वा। पूङश्चेति वेट्। पवित्वा। पूत्वा। **जान्तनशां विभाषा** ।६।४।३२। जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे। भक्त्वा। भङ्क्त्वा। रक्त्वा। रङ्क्त्वा। मस्जिनशोरिति नुम्। तस्य पक्षे लोपः। नष्ट्वा। नंष्ट्वा। रधादिभ्यश्चेतीट्। पक्षे नशित्वा॥ * **झलादाविति वाच्यम्**। नेह। अञ्जित्वा। ऊदित्वाद्वेट्पक्षे अक्त्वा। अङ्क्त्वा । जनसनखनां सञ्झलोरित्यात्वम्। खात्वा । खनित्वा। द्यतिस्यतीतीट्। दित्वा। सित्वा। मित्वा। स्थित्वा। दधातेर्हिः। हित्वा। **जहातेश्च क्त्वि** ।७।४।४३। हित्वा। हाङस्तु। हात्वा। अदो जग्धिः। जग्ध्वा। **समासेऽनञ्पूर्वे क्त्वो ल्यप्** ।७।१।३७। अव्ययपूर्वपदे अनञ्समासे क्त्वो ल्यबा-

---

सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम्। धातूपात्तव्यापाराश्रयस्य कर्तृतया तथा पर्यवसानादिति दिक् ॥—**छित्त्वमिति** ॥ नन्वमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते मध्यमो नानीयते, तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् क्त्वाप्रत्ययो न स्यादिति चेदत्राहुः । इहाप्याख्यातवाच्या क्रिया प्रधान तां प्रति क्त्वान्तोपस्थिताः क्रियाः सर्वा एव विशेषणं न तु तासां परस्परसंबन्धः 'गुणानां च परार्थत्वात्' इति न्यायात्। अत एव स्नात्वा पीत्वा भुक्त्वा व्रजतीत्याद्यनियमेन प्रयुज्यत इति। 'स्वरतिसूति–' इत्यादिना विकल्पे प्राप्ते नित्यार्थमाह—**स्वरत्यादेरिति** ॥—**क्त्वि स्कन्दि–**॥ स्कन्दिर्गतिशोषणयोः। 'इर इत्संज्ञा–' इति वार्तिकादिकारमात्रस्येत्संज्ञा नेति 'अनिदिताम्–' इति पर्युदासोऽत्र न प्रवर्तत इति स्कन्दिग्रहणम् ॥—**स्कन्त्वेति**। 'एकाचः–' इति नेट् ॥—**मृडमृद–**॥मृड सुखने, मृद क्षोदे, गुध परिवेष्टने, गुध रोषे च, कुष निष्कर्षे, क्लिशू हिंसायां दिवादिः, क्लिशू विबाधने क्र्यादिः, वद व्यक्तायां वाचि, वस निवासे ॥—**किदिति**। 'असंयोगाल्लिट् कित्' इत्यतः किदित्यनुवर्तत इति भावः ॥—**उदित्वेति**। यजादित्वात्संप्रसारणम् ॥—**उषित्वेति**। 'वसतिक्षुधोः' इतीट्। यजादित्वात्संप्रसारणम्। 'शासिवसि–' इति षः ॥—**गृहीत्वेति**। 'ग्रहिज्या–' इति संप्रसारणम्। 'ग्रहोऽलिटि' इति इटो दीर्घः ॥—**नोपधात्थ–**॥ अन्तग्रहणं स्पष्टार्थम्। थफादित्युक्तेऽपि धातोरेव क्त्वाप्रत्ययविधानाद्विशेष्यसन्निधानेन तदन्तविधिना थफान्तादिति लाभात् ॥—**कोथित्वा। रेफित्वेति**। कुथ पूतीभावे, रिफ कत्थनयुद्धनिन्दाहिंसादानेषु, इह 'रलो व्युपधात्–' इति विकल्पोऽपि न भवति नोपधग्रहणसामर्थ्यात् ॥—**वचित्वेति** । वञ्चु प्रलम्भने ॥—**लुचित्वेति**। लुञ्चु अपनयने ॥—**ऋतित्वेति** । ऋतिः सौत्रो धातुर्घृणार्थकः, तस्यार्धधातुकविषये 'ऋतेरीयङ्' इत्यस्य वैकल्पिकत्वात्तदभावे कित्त्वमनेन विकल्प्यते ॥—**तृषिमृषि–**॥ ञितृषा पिपासायाम्, मृष तितिक्षायाम्, कृश तनूकरणे। 'नोपधा–' इत्यतो वेत्यनुवर्तनात्काश्यपग्रहणं पूजार्थम् ॥—**अञ्चेरिति**। 'उदितो वा' इति विकल्पप्राप्तावयमारम्भः ॥—**अञ्चित्वेति**। 'न क्त्वा सेट्' इति कित्त्वाभावान्नलोपो न । एवं चेह 'नाञ्चेः पूजायाम्' इति नलोपो नेति प्रसादकारोक्तिर्व्यर्थेत्याहुः ॥—**जॄव्रश्च्योः–**॥ जॄ इत्यस्मात् 'श्र्युकः किति' इति निषेधे प्राप्ते व्रश्चेरूदित्वाद्विकल्पे प्राप्ते वचनमिदम् ॥—**जरीत्वेति** । 'वॄतो वा' इति इटो वा दीर्घः ॥—**व्रश्चित्वेति**। इह 'न क्त्वा सेट्' इति कित्त्वनिषेधाद् 'ग्रहिज्या–' इति सम्प्रसारणं न ॥—**मूत्वेति** ॥ इडभावपक्षे 'च्छ्वोः–' इत्यूठ् ॥—**झलादाविति**। 'जान्तनशाम्–' इति सूत्रे वक्तव्यमित्यर्थः ॥—**खात्वा। खनित्वेति**। ऊदितो वेट् ॥—**जग्ध्वेति**। 'झरो झरि–' इति पाक्षिको धलोपः ॥—**समासेऽनञ्–**॥ नञ्भिन्नं नञ्सदृशमव्ययमिति यावत्। तत्पूर्वपदं यस्य समासस्येति व्याचष्टे—**अव्ययेति** ॥—**प्रकृत्येति** । प्रशब्दः क्त्वाप्रत्ययार्थगतप्रकर्षस्य द्योतकः स तु 'कुगतिप्रादयः'

देशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् । अकृत्वा । पर्युदासाश्रयणादेह । परमकृत्वा । **षत्वतुकोरसिद्धः । ६।१।८६।** षत्वे तुकि च कर्तव्ये एकादेशशास्त्रमसिद्धं स्यात् । कोऽसिचत् । इह षत्वं न । अधीत्य । प्रेत्य । ह्रस्वस्येति तुक् । **वा ल्यपि ।६।४।३८।** अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि । व्यवस्थितविभाषेयम् । तेन मान्तानिटां वा नान्तानिटां वनादीनां च नित्यम् । आगत्य । आगम्य । प्रणत्य । प्रणम्य । प्रहत्य । प्रमत्य । प्रवत्य । वितत्य । अदो जग्धिः । अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते । जग्धिविधौ ल्यब्ग्रहणात् । तेन । हित्वदत्त्वात्वेत्वदीर्घत्वशूठिटो ल्यपि न । विधाय । प्रधाय । प्रखन्य । प्रस्थाय । प्रक्रम्य । आपृच्छ्य । प्रदीव्य । **न ल्यपि ।६।४।६९।** ल्यपि परे घुमास्थादेरीत्वं न । धेट् । प्रधाय । प्रमाय । प्रगाय । प्रपाय । प्रहाय । प्रसाय । मीनातिमिनोतीत्यात्वम् । प्रमाय । निमाय । उपदाय । विभाषा लीयतेः । विलाय । विलीय । णिलोपः । उत्तार्य । विचार्य । **ल्यपि लघुपूर्वात् ।६।४।५६।** लघुपूर्वात्परस्य णेरयादेशः स्यात् ल्यपि । विगणय्य । प्रणमय्य । प्रबेभिदय्य । लघुपूर्वात्किम् । संप्रधार्य । **विभाषापः ।६।४।५७।** आप्नोतेर्णेरयादेशो वा स्यात् ल्यपि । प्रापय्य । प्राप्य । **क्षियः ।६।४।५९।** क्षियो ल्यपि दीर्घः स्यात् । प्रक्षीय । **ल्यपि च ।६।१।४१।** वेञो ल्यपि संप्रसारणं न स्यात् । प्रवाय । **ज्यश्च ।६।१।४२।** प्रज्याय । **व्यश्च ।६।१।४३।** उपव्याय । **विभाषा परेः ।६।१।४४।** परेर्व्येञो वा संप्रसारणं स्यात् ल्यपि । तुकं बाधित्वा परत्वाद्धल इति दीर्घः । परिवीय । परिव्याय । कथं मुखं व्यादाय स्वपिति । नेत्रे निमील्य हसतीति । व्यादानसंमीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेऽस्तदंशविवक्षया भविष्यति । **आभीक्ष्ण्ये णमुल् च ।३।४।२२।** पौनःपुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा

---

इति क्त्वान्तेन नित्यं समस्यते ॥—**पर्युदासेति** । प्रसज्यप्रतिषेधाश्रयणे तु स्यादेवात्र ल्यबिति भावः ॥—**षत्वतुको**—॥ प्रासङ्गिकषत्वविषयमुदाहरति—**कोऽसिचदिति** । को असिचदिति स्थिते 'एङः पदान्तादति' इति पूर्वरूपमेकादेशः । तस्य 'अन्तादिवच्च' इति परादिवत्त्वेन 'सात्पदाद्योः' इति निषेधाभावादिणः परत्वेन षत्वं प्राप्तम् । एकादेशस्यासिद्धत्वे सति अकारेण व्यवधानादिणः परत्वाभावान्न भवति ॥ प्रकृतं ल्यपि कार्यमुदाहरति—**अधीत्येति** ॥—**विधायेति** । दधातेर्हिर्न ॥—**प्रदायेति** ॥ 'दो दद्घोः' इति न ॥—**प्रखन्य** । 'जनसनखन—' इत्यात्वं न ॥—**प्रस्थाय** । 'द्यतिस्यति—' इतीत्वं न ॥—**प्रक्रम्य** ॥ 'क्रमश्च क्त्वि—' इति दीर्घो न ॥—**आपृच्छ्य** । **प्रदीव्य** । छकारवकारयोश्शूरिति शूठौ न । इडभावस्योदाहरण तु प्रखन्य प्रदीव्येत्यादेव ॥—**न ल्यपि** ॥ कथं तर्हि 'निपीय यस्य' इति श्रीहर्षप्रयोग इति चेदत्राहुः ॥ पीङ् पाने इति दिवादिगणस्थात् ल्यपि न दोष इति । इह प्रशाय प्रच्छायेत्यत्र 'शाच्छोरन्यतरस्याम्' इति प्राप्तस्येत्वस्याप्यभावो बोध्यः ॥—**लघुपूर्वादिति** ॥ लघुः पूर्वो यस्माद्वर्णात् । लघुपूर्ववर्णात्परस्येत्यर्थः ॥—**विगणय्येति** । नन्विह णौ कृतस्याल्लोपस्य पूर्वस्माद्विधौ स्थानिवद्भावाल्लघुपूर्वकवर्णात्परत्वं नास्ति । न चारम्भसामर्थ्यम् । अनुगमय्येत्यादौ मित्सु चरितार्थत्वात् । अत्रोच्यते । पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यम् । 'निष्ठायां सेटि' इति लिङ्गात् । तथा चात्र स्थानिवत्त्वाभावाण्णेरयादेशो भवत्येव । 'निष्ठायां सेटि' इत्यस्यानित्यत्वज्ञापकं तु 'अचः परस्मिन्—' इतिसूत्र एवास्माभिरुपपादितमिति नात्रोपपाद्यते ॥—**प्रणमय्येति** । अमन्तत्वान्मित्त्वे मितां ह्रस्वः ॥—**प्रबेभिदय्येति** । भिदेर्यङन्ताद्बेभिदेत्यस्माण्णिच्यल्लोपे 'यस्य हलः' इति यलोपः । ननु ह्रस्वयलोपाल्लोपानामाभीयत्वेनासिद्धत्वाल्लघुपूर्वकवर्णात्परो णिर्नास्तीति कथमिह णेरयादेशः स्यादिति चेन्मैवम् । 'असिद्धवदत्राभात्' इत्यत्र 'समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात्' इति हि व्याख्यातम् । तेनात्राशङ्कैव नास्ति । ह्रस्वादयो हि णौ, णेरयादेशस्तु ल्यपि परत इति व्याश्रयत्वात् ॥—**विभाषापः** ॥ अप्राप्तविभाषेयम् ॥—**आप्नोतेरिति** ॥ यद्यपीडो णिचि परतः 'क्रीङ्जीनां णौ' इत्यात्वे 'अर्तिह्री—' इत्यादिना पुकि आपिति शब्दोऽस्ति, तथापि तस्य नेह ग्रहण लाक्षणिकत्वादिति भावः ॥—**प्राप्येति** । एतेन 'अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते' इति श्रीहर्षप्रयोगो व्याख्यातः । अवाप्येत्यस्यावापय्येत्यर्थसंभवात् । एतेन तत्रान्तर्भावितण्यर्थतेति क्लेशमनुभवन्तः परास्ताः ॥ ल्यप्स्थानिनां कित्त्वात् 'वचिस्वपि—' इति प्राप्तसंप्रसारणं निषेधयितुमाह—**ल्यपि चेति** ॥—**ज्यश्च**—॥ संप्रसारणं न स्यात् । एवं व्यश्चेत्यत्रापि व्याख्येयम् ॥—**कथमिति** । ल्यबादेशस्य स्थानिभूतः क्त्वाप्रत्ययो दुर्लभः तद्विधौ पूर्वकाल इत्युक्तेः । न चेह तदस्ति पूर्व ह्यसौ स्वपिति पश्चान्मुखं व्यादत्ते यदैव हसति तदैव नेत्रे संमीलयति । तथा च क्त्वाप्रत्ययस्य दुर्लभत्वाल्ल्यपः प्रसक्तिरेव नास्तीति प्रश्नः ॥ समाधत्ते—**व्यादानेत्यादिना** ॥ एतेनेश्वरः सर्वं व्याप्य वर्तते ज्ञात्वा तिष्ठतीत्यादि व्याख्यातम् । 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यादौ तु समानकर्तृकतानिर्वाहाय स्थितस्येत्यादि यथासंभवमध्याहार्यम् ॥—**आभीक्ष्ण्ये णमुल् च** ॥ ननु वासरूपन्यायेन क्त्वाप्रत्ययो भविष्यतीति चग्रहणमिह व्यर्थमिति चेन्मैवम् । उक्तन्यायस्वीकारे तु लडादिरपीह प्रवर्तेत । न चेष्टापत्तिः, 'विभाषाग्रे—' इति वक्ष्यमाणसूत्रस्थविभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात् । तत्र हि क्त्वाणमुलौ विभाषाग्रहणेन लडादिसमावेशार्थं विकल्प्येते । यद्यपि वासरूपन्यायेनैव लडादिः सिध्यति, तथापि णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वासरूपविधिर्न प्रवर्तत

च। द्वित्वम्। स्मारं स्मारं नमति शिवम्। स्मृत्वा स्मृत्वा। पायं पायम्। भोजं भोजम्। श्रावं श्रावम्। चिण्णमुलो-रिति णमुल्परे णौ वा दीर्घः। गामं गामम्। गमं गमम्। विभाषाचिण्णमुलोरिति नुम् वा। लंभं लंभम्। लाभं लाभम्। व्यवस्थितविभाषया उपसृष्टस्य नित्यं नुम्। प्रलम्भं प्रलम्भम्। जाग्रोऽविचिण्णल्ङित्स्विति गुणः। जागरं जागरम्। ण्यन्तस्याप्येवम्। न यद्यनाकाङ्क्षे ।३।४।२३। यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरं नाकाङ्क्षते चेत्। यदयं भुङ्क्ते ततः पठति। इह क्त्वाणमुलौ न। अनाकाङ्क्षे किम्। यदयं भुक्त्वा व्रजति ततोऽधीते। विभाषाग्रेप्रथमपूर्वेषु ।३।४।२४। आभीक्ष्ण्ये इति नानुवर्तते। एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः। अग्रेभोजं व्रजति। अग्रे भुक्त्वा। प्रथमम्भोजम्। प्रथमं भुक्त्वा। पूर्वम्भोजम्। पूर्वम्भुक्त्वा। पक्षे लडादयः। अग्रे भुङ्क्ते ततो व्रजति। आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः। अग्रेभोजम्भोजं व्रजति। भुक्त्वा भुक्त्वा। कर्मण्याक्रोशे कृञः खमुञ् ।३।४।२५। कर्मण्युपपदे आक्रोशे गम्ये। चौरङ्कारमाक्रोशति। करोतिरुच्चारणे। चोरशब्दमुच्चार्येत्यर्थः। स्वादुमि णमुल् ।३।४।२६। स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले पूर्वपदस्य मान्तत्वं निपात्यते। अस्वादुं स्वादु कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते। संपन्नङ्कारम्। लवणङ्कारम्। सपन्न-लवणशब्दौ स्वादुपर्यायौ। वासरूपेण क्त्वापि। स्वादुं कृत्वा भुङ्क्ते। अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ।३।४।२७। एषु कृञो णमुल् स्यात् सिद्धः अप्रयोगोऽस्य एवंभूतश्चेत् कृञ्। व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम्। एवङ्कारम्। कथङ्कारम्। इत्थङ्कारं भुङ्क्ते। इत्थं भुङ्क्त इत्यर्थः। सिद्धेति किम्। शिरोऽन्यथा कृत्वा भुङ्क्ते। यथातथयो-रसूयाप्रतिवचने ।३।४।२८। कृञः सिद्धाप्रयोग इत्येव असूयया प्रतिवचने। यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये किं

---

इति ज्ञापनार्थं विभाषाग्रहणम्। तत्फल तु 'आभीक्ष्ण्ये णमुल् च' इत्यत्र लडाद्यप्रवृत्तिः। ततश्च चकारेणैव क्त्वाप्रत्ययो लभ्यत इति नास्त्येव तस्य वैयर्थ्यम्। किं च वासरूपं विनैव क्त्वालडाद्योः स्वीकारे 'न यद्यनाकाङ्क्षे' इत्यत्र क्त्वाप्रत्यय-वत् लडादिरपि निषिध्येत्। तथा च यदयं भुङ्क्ते ततः पठतीत्युदाहरणं न स्यात्। सिद्धान्ते तु 'आभीक्ष्ण्ये णमुल् च' इति विशेषविहितयोः क्त्वाणमुलोरेव निषेधात्सामान्यविहितलडादिर्भवत्येवेति नास्त्येवानुपपत्तिरिति दिक् ॥—**पूर्वविषय** इति ॥ 'समानकर्तृकयोः पूर्वकाले' इत्यर्थे ॥—**पायंपायमि**ति। आतो युक् ॥—**वा दीर्घ** इति। गमेर्ण्यन्ताण्णमुलि मितां ह्रस्वे च कृते वा दीर्घ इत्यर्थः ॥—**ण्यन्तस्यापी**ति। यत्तु प्राचा ण्यन्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति मतमुपन्य-स्तं तदपाणिनीयमिति भावः ॥—**न यदि** ॥—**अनाकाङ्क्ष** इति। पचाद्यजन्तेन नञ्समासस्तद्दर्शयति—**नाकाङ्क्षते चेदि**ति ॥—**इहे**ति। नन्वेवमनन्तरस्येति न्यायात् णमुल् मा भूत् क्त्वा तु 'समानकर्तृकयोः' इति सूत्रान्तरेण स्यादेवेति चेदत्राहुः। पूर्वकाले यत्प्राप्नोति तन्नेति व्याख्यानात् क्त्वाप्रत्ययोऽपि न भवतीति ॥—**विभाषाग्रे**-॥ यद्यप्यग्रेशब्दो देशविशेषवचनोऽप्यस्ति, प्रभोरग्रे भुङ्क्ते इत्यादिप्रयोगात्तथापीह कालविशेषवाच्येव गृह्यते प्रथमशब्दसाहचर्यात्प्रथमं भुङ्क्ते इत्यादौ तु काल एव प्रतीयते। अग्रे इति सप्तम्यन्तस्यानुकरणम्। 'प्रकृतिवदनुकरणम्' इत्यस्य वैकल्पिकत्वाद्विभक्तेर्लुङ् न कृतः अस्यवामीयमिति वत् ॥—**अग्रेभोजमि**ति। 'अमैवाव्ययेन' इति नियमाद्यस्तमेवेदं न त्वत्रोपपदसमासः। नन्वग्रे-प्रथमपूर्वशब्दैः पूर्वकालत्वमुच्यत इति कथमिह क्त्वाणमुलौ स्यातामिति चेदत्राहुः। अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीति हि वाक्यार्थस्तत्राग्रेप्रभृतिभिर्भोक्त्रपेक्षया पूर्वत्वमुच्यते चेदत्रापि अन्येभ्यो भोक्तृभ्यः पूर्वं व्रजतीति व्रजनापे-क्षया पूर्वत्वं तु क्त्वाणमुल्भ्यां द्योत्यत इत्याशङ्कैवात्र नास्तीति ॥—**नित्यमेव विधिरि**ति। अग्रे भुङ्क्ते इत्येवं लडादिर्न प्रयुज्यत इति भावः ॥—**स्वादुमि**-॥ स्वादुमीत्यर्थग्रहणं व्याख्यानात्तदाह—**स्वाद्वर्थेष्वि**ति ॥—**मान्तत्वमि**ति ॥ ननु स्वादौ इत्येव सूत्रमस्तु मास्त्वत्र णमुल्। खमुञेवानुवर्त्यताम्। 'अरुर्द्विषत्–' इति मुम्भविष्यति। एवं च निपातन विनापि मान्तत्वं सिध्यतीति महल्लाघवमिति चेन्मैवम्। च्व्यन्तस्य मुम् न स्यादनव्ययस्येति वचनात्ततश्च स्वादुंकारमित्यत्र 'च्वौ च' इति दीर्घः स्यात् सपन्नंकारमित्यादिषु 'अस्य च्वौ' इतीत्वं स्यात्। कि च स्त्रिया 'वोतो गुणवचनात्' इति ङीषि स्वाद्वीकारमिति स्यात्। अतोऽत्र स्वादुमीति रूप निपात्यते ततश्चानजन्तत्वान्नेत्वदीर्घौ न वा ङीष्। निपातनमिह भावप्र-त्ययमात्रविषयकम्। तेन स्वादुंकृत्वेत्यपि सिध्यति। स्यादेतत्। उक्तदोषपरिहाराय स्वादुमीत्येव सूत्रमङ्गीक्रियतां, णमुल् तु त्यज्यतां कृञः खमुञि कृतेऽपि स्वादुङ्कारमित्यादिरूपसिद्धिरिति चेन्मैवम्। तथा सत्युत्तरसूत्रेषु संनिहितत्वात् खमुञे-वानुवर्तेत इति कन्यादर्शं ब्राह्मणवेदमित्यादिषु पूर्वपदस्य मुमागमः स्यादिति दिक् ॥—**व्यर्थत्वादि**ति ॥ निष्प्रयोजनत्वा-दित्यर्थः। तदेतद्दर्शयति—**इत्थं भुङ्क्त इत्यर्थ** इति ॥ इह शाब्दबोधे विशेषसत्त्वेऽपि फलितार्थकथनपरतया कारमिति णमुलन्तस्य निष्फलत्वमुक्तमनतिप्रयोजनत्वात्। विस्तरस्तु मनोरमादावनुसन्धेयः ॥—**शिरोऽन्यथे**ति ॥ इह शिरोऽन्यथा कृत्वौदनादिकं भुङ्क्त इत्यर्थलाभाय करोतेः प्रयोग आवश्यकः। तदभावे तु भुक्तिक्रियागत एव प्रकारो गम्येत न तु शिर-सोऽन्यथाकरणम्। अतः करोतेः प्रयोगार्हत्वमस्तीति णमुलन्तः करोतिरिह न प्रयुज्यत इति भावः ॥—**यथाकारमि**-ति ॥ प्रष्टुमनर्हः सन्यदि पृच्छति तदेदमुत्तरम्। अत्रापि वासरूपन्यायेन पक्षे क्त्वाप्रत्ययो बोध्यः ॥—

यत्नेनेव। कर्मणि दृशिविदोः साकल्ये ।३।४।२९। कर्मण्युपपदे णमुल् स्यात् । कन्यादर्शं वरयति । सर्वाः कन्या इत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः । यावति विन्दजीवोः ।३।४।३०। यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीते । चर्मोदरयोः पूरेः ।३।४।३१। कर्मणीत्येव । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ।३।४।३२। कर्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा समुदायेन वर्षप्रमाणे गम्ये । गोष्पदपूरं वृष्टो देवः । गोष्पदप्रं वृष्टो देवः । अस्येति किम् । उपपदस्य मा भूत् । मूषिकाबिलप्रम् । चेले क्नोपेः ।३।४।३३। चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल् स्याद्वर्षप्रमाणे । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् । निमूलसमूलयोः कषः ।३।४।३४। कर्मणीत्येव । कषादिष्वनुप्रयोगं वक्ष्यति । अत्र प्रकरणे पूर्वकाल इति न संबध्यते । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः । एकस्यापि धात्वर्थस्य निमूलादिविशेषणसंबन्धाद्भेदः । तेन सामान्यविशेषभावेन विशेषणविशेष्यभावः । शुष्कचूर्णरूक्षेषु पिषः ।३।४।३५। एषु कर्मसु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् । समूलाकृतजीवेषु हन्कृञ्ग्रहः ।३।४।३६। कर्मणीत्येव । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवति इति जीवः । इगुपधलक्षणः कः । जीवन्तं गृह्णातीत्यर्थः । करणे हनः ।३।४।३७। पादघातं हन्ति । पादेन हन्तीत्यर्थः । यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थोऽयं योगः । भिन्नधातुसंबन्धे तु हिंसार्थानां चेति वक्ष्यते । स्नेहने पिषः ।३।४।३८। स्निह्यते येन तस्मिन् करणे पिषेर्णमुल् । उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः । हस्ते वर्तिग्रहोः ।३।४।३९। हस्तार्थे करणे हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् । स्वे पुषः ।३।४।४०। करण इत्येव । स्व इत्यर्थग्रहणम् । तेन स्वरूपे पर्याये विशेषे च णमुल् । स्वपोषं पुष्णाति । धनपोषम् । गोपोषम् । अधिकरणे बन्धः ।३।४।४१। चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः । संज्ञायाम् ।३।४।४२। बध्नातेर्णमुल् संज्ञायाम् । क्रौञ्चबन्धं बद्धः । मयूरिकाबन्धम् । अट्टालिकाबन्धम् । बन्धविशेषाणां संज्ञा एताः । कर्त्रोर्जीवपुरुषयोर्नशिवहोः ।३।४।४३। जीवनाशं नश्यति। जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः । ऊर्ध्वे शुषिपूरोः ।३।४।४४। ऊर्ध्वे कर्तरि । ऊर्ध्वशोषं शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः । उपमाने कर्मणि च ।३।४।४५। चात्कर्तरि । घृतनिधायं निहितं जलम् । घृतमिव सुरक्षितमित्यर्थः । अजकनाशं नष्टः । अजक इव नष्ट इत्यर्थः । कषादिषु यथाविध्यनुप्रयोगः ।३।४।४६। यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्य इत्यर्थः । तथैवोदाहृतम् । उपदंशस्तृतीयायाम् ।३।४।४७। इतः प्रभृति पूर्वकाल इति संबध्यते । तृतीयाप्रभृतीन्यन्यतरस्यामिति वा समासः । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशम् । दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वा-

---

कन्यादर्शमिति ॥ अत्र दर्शनविषयीभूतानां सर्वासां कन्यानां वाक्यार्थे अन्वयात्साकल्यं बोध्यम् ॥—**सर्वा** इति । दर्शनविषयीभूताः सर्वा इत्यर्थः । अतिशयप्रतिपादनपरमेतत् ॥—**ब्राह्मणवेदमिति** । विद ज्ञाने, विद्लृ लाभे, विद विचारणे, इति धात्वर्थान् पर्यालोच्य व्याचष्टे—**जानातीत्यादि** ॥ सत्तार्थस्य विदेरनेकार्थत्वान्नेह ग्रहणमिति भावः ॥—**यावति विन्द**—॥ विदेर्लाभार्थस्यानुकरणम् । तस्य हि विन्दतीत्यादौ 'शे मुचादीनाम्' इति नुमस्ति ॥—**यावल्लभत** इति ॥ असाकल्यमनेन दर्शयति । साकल्ये हि 'कर्मणि दृशिविदोः' इत्यनेनैव सिद्धम् ॥—**चर्मोद**—॥—**कर्मणीत्येवेति** ॥ एवं च पूरेरिति ण्यन्तस्य निर्देशो न तु केवलस्य । 'इक्श्तिपौ–' इति इका निर्देशः । तस्याकर्मकत्वादिति भावः ॥—**चर्मपूरमित्यादि** । चर्म पूरयित्वा । उदरं पूरयित्वा । उदरपूरणविशिष्टा भुजिक्रियेत्यर्थः । इह पूर्वकाले इति न संबध्यतेऽसंभवादप्रतीतेश्च । एवमन्यत्रापि यथासंभवं बोध्यम् ॥—**चेले**—॥ व्याख्यानादर्थग्रहणमित्याहुः ॥—**चेलार्थेष्विति** ॥—**चेलक्नोपमित्यादि** ॥ यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट इत्यर्थः । अन्ये तु क्नूयी शब्दे उन्दे च, उन्दी क्लेदने, क्लिदू आर्द्रीभावे, इत्येवं क्नोपमिति णमुलन्तस्य प्रकृत्यर्थं पर्यालोच्य यथा वर्षणेन चेलान्यार्द्रीभवन्ति तावद् वृष्ट इति व्याचख्युः ॥—**निमूलमिति** ॥ निर्गतं मूलमस्य निमूलम् । सह मूलेन समूलम् । निमूलसमूलकषणाभिन्नं कषणमिति शाब्दबोधः ॥—**तेनेति** ॥ अत्रेदं बोध्यम् । सामान्यं विशेष्यं, विशेषस्तु विशेषणम् । आम्रो वृक्ष इत्यादौ आम्रो विशेषणं वृक्षस्तु विशेष्यमिति सर्वजनानुभवात् । यतश्चात्र निमूलकषणादिकं विशेषणं केवलकषणं तु विशेष्यमिति ॥—**स्नेहने**—॥ 'शुष्कचूर्ण–' इति सूत्रे एव स्नेहनग्रहणं न कृतम् । तत्र हि 'कर्मणि दृशिविदोः' इति सूत्रात्कर्मणीत्यनुवर्तते इह तु पूर्वसूत्रात्करण इत्यनुवर्तनीयमिति ॥—**हस्ते**—॥ हस्त इत्यर्थग्रहणं तदाह—**हस्तार्थे** इति ॥—**संज्ञायाम्** ॥ अनधिकरणार्थ आरम्भः ॥—**तथैवेति** ॥ निमूलकाषं कषतीत्याद्युदाहृतमित्यर्थः ॥—**मूलकोपदंशमिति** ॥ अय-

तृतीया। यद्यप्युपदंशिना सह न शाब्दः संबन्धस्तथाप्यार्थोऽस्त्येव कर्मत्वात्। एतावतैव सामर्थ्येन प्रत्ययः समासश्च। तृतीयायामिति वचनसामर्थ्यात्। **हिंसार्थानां च समानकर्मकाणाम् ।३।४।४८।** तृतीयान्ते उपपदेऽनुप्रयोगधातुना समानकर्मकाद्धिंसार्थात् णमुल् स्यात्। दण्डोपघातं गाः कालयति। दण्डेनोपघातम्। दण्डताडम्। समानकर्मकाणामिति किम्। दण्डेन चोरमाहत्य गाः कालयति। **सप्तम्यां चोपपीडरुधकर्षः ।३।४।४९।** उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् स्यात्। पार्श्वोपपीडं शेते। पार्श्वयोरुपपीडम्। पार्श्वाभ्यामुपपीडम्। व्रजोपरोधं गाः स्थापयति। व्रजेन व्रजे वा उपरोधम्। पाण्युपकर्षं धानाः संगृह्णाति। पाणावुपकर्षम्। पाणिनोपकर्षम्। **समासत्तौ ।३।४।५०।** तृतीयासप्तम्योर्धातोर्णमुल् स्यात्सन्निकर्षे गम्यमाने। केशग्राहं युध्यन्ते। केशेषु गृहीत्वा। हस्तग्राहम्। हस्तेन गृहीत्वा। **प्रमाणे च ।३।४।५१।** तृतीयासप्तम्योरित्येव। द्व्यङ्गुलेन द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति। द्व्यङ्गुले द्व्यङ्गुलेन वोत्कर्षम्। **अपादाने परीप्सायाम् ।३।४।५२।** परीप्सा त्वरा। शय्योत्थायं धावति। **द्वितीयायां च ।३।४।५३।** परीप्सायामित्येव। यष्टिग्राहं युध्यन्ते। लोष्टग्राहम्। **अपगुरो णमुलि ।६।१।५६।** गुरी उद्यमने इत्यस्यैचो वा आत्स्याण्णमुलि। अस्यपगारं

---

मर्थः। मूलकेन भुङ्क्ते। किं कृत्वा, उपदश्य, किमुपदश्य अर्थान्मूलकमिति संबध्यते॥—**एतावतैवेति**। शाब्दान्वयाभावेऽपि आर्थिकान्वयमात्रेणेत्यर्थः॥—**वचनसामर्थ्यादि**ति। यदि हि तृतीयान्तेन शाब्दान्वये सत्येव प्रत्ययो भवेत्तर्हि 'करणे हन' इतिवत् 'उपदंशः करणे' इत्येव ब्रूयात्। ततश्च क्रियान्तरं प्रति करणत्वं मूलकेनेत्यस्येष्टमिति भावः। एतच्च मनोरमाग्रन्थानुसारेणोक्तम्। अत्र केचित्। नन्वेवम् 'उपदशः कर्मणि' इत्येव सूत्रमस्तु। अत्रोपदंश इत्येवास्तु। उपमाने कर्मणीत्यतः कर्मणीत्यनुवर्त्य कर्मण्युपपदे उपपूर्वकाद्देशेर्णमुलिति व्याख्यायतां किमनया कुसृष्ट्येति। न चैवं कर्मण्युपपदे नित्यसमासः स्यादिति वाच्यम्। करणे इत्युक्तेऽप्युक्तदोषस्य तुल्यत्वात्। न च 'तृतीयाप्रभृतीनि–' इति सूत्रे करणप्रभृतीनीत्युक्ते नास्त्येव दोषः। 'करणे हनः' इत्यारभ्य विकल्प इति संदेहवारणाय 'व्याख्यानतो विशेषप्रतिपत्तिः न हि संदेहादलक्षणम्' इति परिभाषास्वीकारादिति वाच्यम्। 'तृतीयाप्रभृति–' इति सूत्रे कर्मणिप्रभृतीत्युक्तेऽपि दोषाभावात्। 'कर्मण्याक्रोशे कृञः खमुञ्' 'कर्मणि दृशिविदोः–' इत्यारभ्य विकल्प इति संदेहस्य 'व्याख्यानतो विशेषप्रतिपत्तिः' इति परिभाषया वारयितुं शक्यत्वात्। तस्मात् 'उपदंशः करणे' इत्येव ब्रूयात् इति मनोरमा चिन्त्येत्याहुः। वस्तुतस्तु कर्मणि प्रभृतीत्यन्यतरस्यामित्युक्ते 'उपमाने कर्मणि च' इत्यतः कर्मणीत्यनुवर्त्य उपदंश इत्येव सूत्रमिति स्वीकारपक्षे कषादिषु यथाविध्यनुप्रयोगोऽपि विकल्पेन स्यात्। मण्डूकप्लुत्याश्रयणं त्वगतिकगतिः। उपदंशः कर्मणीति सूत्रस्वीकारपक्षेऽपि मूलकोपदंशमिति समासस्य वैकल्पिकत्वात्समासाभावपक्षे मूलकमुपदशमिति वाक्यं स्यादिष्यते तु मूलकेनोपदंशमिति। करणे प्रभृतीनीति मनोरमोक्तौ तु समासाभावपक्षे मूलकेनोपदंशमिति सिध्यत्येव, करणतृतीयायाः प्रवृत्तेरिति दिक्॥—**कालयतीति**॥ कल विक्षेपे चुरादिः। प्रेरयतीत्यर्थः॥—**दण्डताडमिति**। तड आघाते अयमपि चुरादिरेव॥—**सप्तम्यां चो**—॥—**उपपूर्वेभ्य** इति॥ सूत्रे पीडादीनां समाहारद्वन्द्वं कृत्वा उपपूर्वः पीडरुधकर्ष इति उत्तरपदलोपी समास इति भावः। इह सौत्रं पुंस्त्वं पञ्चम्यर्थे प्रथमेति ज्ञेयम्। कर्षेति शपा निर्देशः। कृष विलेखने इत्यस्य गुणसहितस्योच्चारणात्तत्फलं तुदादेर्व्युदासः। यद्यपि विलेखन एव सोऽपि पठ्यते तथापि क्षेत्रविषयकविलेखन एव स प्रयुज्यते पश्चभिर्हलैः कर्षतीति दर्शनात्। एवं च तौदादिकात् कृषेः क्त्वाप्रत्यय एव भवति क्षेत्रे उपकृष्य हलेनोपकृष्येति, न लिङ् णमुलिति स्थितमाकरे॥—**समासत्तौ**॥—**केशग्राहमिति**॥ केशेषु ग्रहणं भवतु वा मा भूत् संनिकर्षप्रतिपादनपरमेतत्॥—**द्व्यङ्गुलोत्कर्षमिति**॥ द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्। 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यच् समासान्तः। द्व्यङ्गुलेनोत्कृष्य। परिच्छिद्येत्यर्थः। स्वल्पः खण्डः खण्डिका ह्रस्वः खण्ड. खण्डिकेति मनोरमायामुक्तम्। यद्यपि ह्रस्वशब्दो वामनपर्यायतया चेतनेष्वेव प्रायेण प्रयुज्यते। अल्पे ह्रस्वे इति पृथक् सूत्रस्वारस्यात्। तथापि ह्रस्वदीर्घ इत्यादिनिर्देशादचेतनेष्वपि क्वचिद्भवतीत्याहुः॥—**द्विती**—॥—**परीप्सायामित्येवेति**॥ कथं तर्हि 'अनुदात्तं पदमेकवर्जम्' इति नात्र त्वरा गम्यते। अत्राहुः। अस्यां हि परिभाषायां त्वरा विवक्षिता तेनायमर्थः। उदात्तः स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्तव्यं न विलम्बितव्यमिति॥—**यष्टिग्राहमित्यादि**। एवं खलु युद्धाय त्वरन्ते यदासन्नं यष्ट्यादिकमपि गृहीत्वा धावन्ति नायुधं प्रतीक्षन्ते इति भावः॥—**अस्यपगोरमिति**॥ असिमुद्यम्येत्यर्थः॥—**उपपदसंज्ञार्थमिति**॥ 'विशिपति–' इति सूत्रे द्वितीयायामित्यनुवर्तनात्तदन्तस्योपपदसंज्ञार्थमित्यर्थः॥—**अव्यये**—॥—**अयथेति**॥ न यथाभिप्रेतं तथाख्यान इत्यर्थः। प्रियस्योच्चैः अप्रियस्य नीचैः कथनं यथाभिप्रेताख्यानम्। तद्विपरीताख्यान इति यावत्। नन्वप्रियाख्याने इत्येव कुतो नोक्तमिति चेदत्राहुः। प्रियस्य नीचैः कथनमपि प्रियाख्यानमेव न त्वप्रियाख्यानमिति नीचैःकृत्य नीचैःकारं प्रियं ब्रूते इति प्रयोगो न स्यात्। अप्रियस्य नीचैः कथनमप्यप्रियाख्यानमिति। नीचैःकृत्य नीचैःकारमप्रियं ब्रूत इति प्रयोगोऽपि स्यादित्ययथाभिप्रेताख्याने इत्युक्तमिति॥—**तिर्यक्कृत्वेति**॥ अनृजुत्वावगतः

पुष्णाते। अस्यपगोरम्। स्वाङ्गेऽध्रुवे ।३।४।५४। द्वितीयायामित्येव। अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल्। भ्रूविक्षेपं कथयति। भ्रुवं विक्षेपम्। अध्रुवे किम्। शिर उत्क्षिप्य। येन विना न जीवनं तद्ध्रुवम्। परिक्लिश्यमाने च ।३।४।५५। सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल् स्यात्। उरःप्रतिपेषं युध्यन्ते। कृत्स्नमुरः पीडयन्त इत्यर्थः। उरोविदारं प्रतिचस्करे नखैः। ध्रुवार्थमिदम्। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।३।४।५६। द्वितीयायामित्येव। द्वितीयान्ते उपपदे विश्यादिभ्यो णमुल् स्याद्व्याप्यमाने आसेव्यमाने चार्थे गम्ये। गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः। क्रियायाः पौनःपुन्यमासेवा। नित्यवीप्सयोरिति द्वित्वं तु न भवति। समासेनैव स्वभावतस्तयोरुक्तत्वात्। यद्यप्याभीक्ष्ण्ये णमुलुक्त एव तथापि उपपदसंज्ञार्थमासेवायामिह पुनर्विधिः। गेहानुप्रवेशमास्ते। गेहंगेहमनुप्रवेशम्। गेहमनुप्रवेशमनुप्रवेशम्। एवं गेहानुप्रपातम्। गेहानुप्रपादम्। गेहानुस्कन्दम्। असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वम्। अस्यतितृषोः क्रियान्तरे कालेषु ।३।४।५७। क्रियामन्तरयति व्यवधत्त इति क्रियान्तरः तस्मिन्धात्वर्थे वर्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषु उपपदेषु णमुल् स्यात्। द्व्यहात्यासं गाः पाययति। द्व्यहमत्यासम्। द्व्यहतर्षम्। द्व्यहंतर्षम्। अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः। नाम्न्यादिशिग्रहोः ।३।४।५८। द्वितीयायामित्येव। नामादेशमाचष्टे। नामग्राहमाह्वयति। अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ।३।४।५९। अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य नीचैः कथनम्। उच्चैःकृत्य। उच्चैः कृत्वा। उच्चैःकारमप्रियमाचष्टे। नीचैःकृत्य। नीचैः कृत्वा। नीचैःकारं प्रियं ब्रूते। तिर्यच्यपवर्गे ।३।४।६०। तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्यायाम्। तिर्यक्कृत्य तिर्यक्कृत्वा गतः। तिर्यक्कारं समाप्य गत इत्यर्थः। अपवर्गे किम्। तिर्यक्कृत्वा काष्ठं गतः। स्वाङ्गे तस्प्रत्यये कृभ्वोः ।३।४।६१। मुखतःकृत्य गतः। मुखतःकृत्वा। मुखतः कारम्। मुखतोभूय। मुखतो भूत्वा। मुखतो भावम्। नाधार्थप्रत्यये च्व्यर्थे ।३।४।६२। नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ स्तः। अनाना नानाकृत्वा नानाकृत्य। नाना कृत्वा। नानाकारम्। विनाकृत्य। विनाकृत्वा। विनाकारम्। नानाभूय। नानाभूत्वा। नानाभावम्। अनेकं द्रव्यमेकं भूत्वा एकधाभूय। एकधा भूत्वा। एकधाभावम्। एकधाकृत्य। एकधा कृत्वा। एकधाकारम्। प्रत्ययग्रहणं किम्। हिरुक्कृत्वा पृथग्भूत्वा। तूष्णीमि भुवः ।३।४।६३। तूष्णींशब्दे उपपदे भुवः क्त्वाणमुलौ स्तः। तूष्णींभूय। तूष्णीं भूत्वा। तूष्णीं भावम्। अन्वच्यानुलोम्ये ।३।४।६४। अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्तः आनुकूल्ये गम्यमाने। अन्वग्भूय आस्ते। अन्वग्भूत्वा। अन्व-

---

स्थितं पार्श्वतः कृत्वा गत इत्यर्थः ॥—**स्वाङ्गे**—॥ तस्प्रत्ययो यस्मात्तस्प्रत्ययस्तस्मिन्स्वाङ्गे उपपदे इत्येके। प्रत्ययग्रहणपरिभाषया तस्प्रत्ययान्ते स्वाङ्गे इत्यन्ये। तस् चासौ प्रत्ययश्चेति कर्मधारयः। तस्प्रत्यये परतो यत्स्वाङ्गं तस्मिन्नुपपद इति तु प्राञ्चः। तत्र यद्यपि स्वाङ्गमात्रं नोपपदं तथापि तस्मिन्नित्येतत्प्रकृतिप्रत्ययसमुदायपरमिति बोध्यम् ॥—**मुखतः कारं मुखतो भूयेति** ॥ क्त्वाणमुलोः कृभुवोश्च यथासंख्यं नेष्यत इति भावः। मुखत इत्यत्राद्यादित्वात्सप्तम्यर्थे तसिः। प्रत्ययग्रहणं किम्। मुखे तस्यति मुखतः। तसु उपक्षये क्विप्। धातुत्वादिह 'अत्वसन्तस्य—' इति दीर्घो न। मुखतः कृत्वा गत इति काशिकादौ स्थितम्। वस्तुतस्तु प्रत्ययाप्रत्ययपरिभाषयैवेष्टसिद्धेः प्रत्ययग्रहणं सुत्यजम् ॥—**नाधार्थ**—॥ नाथौ 'विनञ्भ्याम्' इति विहितौ नानाञौ। धार्था 'द्वित्र्योश्च धमुञ्' इति धमुञादयः। 'संख्याया विधार्थे धा' इति धाप्रत्ययो धार्थको भवतीत्याशयेनोदाहरति—**एकधाभूयेत्यादि** ॥ एव द्वैधं कृत्य त्रैधंभूय द्वैधं भावमित्याद्युदाहर्तव्यम् ॥ ननु नानाञौ प्रत्ययौ धा च प्रत्ययः धमुञादिविधौ तु 'एकाद्धो ध्यमुञन्यतरस्याम्' इत्यतो ध इत्यनुवर्त्य तेषामादेशत्वाश्रयणेपि स्थानिवद्भावेन धमुञादिर्धाप्रत्ययो भवतीति किमर्थं प्रत्ययग्रहणमित्याक्षिपति—**प्रत्ययग्रहणमिति**। यद्यप्युक्तरीत्या धाग्रहणेन धमुञादेर्ग्रहणं संभवतीत्यर्थग्रहणमिह व्यर्थम्। तथापि धमुञन्तात्स्वार्थे डदर्शनमिति डप्रत्ययान्तसंग्रहार्थमर्थग्रहणं तत्फलं तु द्वैधीकृत्येत्यादिप्रयोगः ॥—**तूष्णीमी**ति ॥ कृञो निवृत्त्यर्थं भूग्रहणम् ॥—**अन्वच्या**—॥ नन्विह 'अचः' इत्यकारलोपे 'चौ' इति पूर्वस्याणो दीर्घेऽनूचीति निर्देष्टुमुचितम्। 'द्युप्रागपाग्—' इति सूत्रे प्रतीचो यदितिवत् एवं 'तिर्यच्यपवर्गे' इति सूत्रेऽपि तिरश्चीत्येव निर्देष्टुमुचितमिति चेदत्र केचित्। शास्त्रोक्तं कार्यमर्थवदेव भवति। अर्थश्च लोके प्रसिद्ध एव गृह्यते। 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्त्तव्यः' इति न्यायात्। अतोऽनुकरणे न भविष्यतीत्यन्वचीति सम्यगेवेति। तच्चिन्त्यम्। एवं तर्हि 'क्षियो दीर्घात्' इत्यादावियङादिक न स्यात्। 'प्रतीचो यत्' इत्यपि न सिध्येदिति। वस्तुतस्तु प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वादन्वचीत्यादिनिर्देशे न दोषः। वैकल्पिकत्वं च 'त्यदादीनि सर्वैर्नित्यम्'... 'यत्तदेतेभ्यः—' इति सूत्रे त्यदाद्यत्वस्य वारणादेकशेषाभावदर्शनाच्च निर्णीयत इति प्रागेव प्रपञ्चितम् ॥—**अग्रत** इत्यादि ॥ अन्वक्शब्दस्यानुकूल्यमात्रे विश्रान्तेर्देशविशेषवाचित्वे नियमो नेति ध्वनयितुमिदम् ॥—**पृष्ठतो भूत्वेत्यर्थ** इति।

गमयति । अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वा आस्ते इत्यर्थः । आनुकूल्ये किम् । अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ।

इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम् ।
विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥ १ ॥
भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी ।
प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः ॥ २ ॥

॥ इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्धं समाप्तम् ॥

---

इहान्वक्शब्देनानुकूलो वेति न स्पृश्यते, तस्य देशविशेषमात्रे पर्यवसानात् । प्रमाणान्तरेण क्वचिदनुकूलालाभेऽपि अन्वक्शब्दस्य तत्समर्पणे व्यापाराभावाण्णमुल् न । किंतु क्त्वैव भवतीति व्यवस्था बोध्या ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणसेवकज्ञानेन्द्रसरस्वतीकृतायां सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां कृदन्तं समाप्तम् ॥

# सुबोधिनीसंवलिता

# वैदिकी प्रक्रिया।

## प्रथमोऽध्यायः।

**छन्दसि पुनर्वस्वोरेकवचनम्** ।१।२।६१। द्वयोरेकवचनं वा स्यात्। पुनर्वसु नक्षत्रं पुनर्वसू वा। लोके तु द्विवचनमेव। **विशाखयोश्च** ।१।२।६२। प्राग्वत्। विशाखा नक्षत्रम्। विशाखे वा। **षष्ठीयुक्तश्छन्दसि वा** ।१।४।९। षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात्। क्षेत्रस्य पतिना वयम्। इह वेति योगं विभज्य छन्दसीत्यनुवर्तते। तेन सर्वे विधयश्छन्दसि वैकल्पिकाः। बहुलं छन्दसीत्यादिरस्यैव प्रपञ्चः। यचि भम्॥ * **नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्**॥ नभसा तुल्यं नभस्वत्। भत्वाद्रुत्वाभावः। अङ्गिरस्वदङ्गिरः। मनुष्वदग्ने। जने-

सिन्दूरेण विराजित त्रिनयनं दिक्संख्यदोर्भिर्युत भक्तानुग्रहकारकं प्रमदयाश्लिष्ट सदानन्दनम्॥
अष्टाविंशतिवर्णकैश्च सततं य चिन्तयन्ते जनास्त देवं गणपं स्मरामि सततं चन्द्रार्धचूडं विभुम्॥ १॥
यस्तर्कादिसमस्ततन्त्रकमलव्रातप्रसादेष्विव प्रत्यक्षप्रमितः परः किरणवानन्वर्थगोवर्धनः॥
सोऽय पण्डितमण्डलोद्भटरटद्वादीन्द्रवृन्दाग्रणीः श्रीरामाङ्घ्रिनिषेवकः समजनि श्रीमौनिगोवर्धनः॥ २॥
रघुनाथपदारविन्दसेवावशतस्तस्य बभूव नन्दनः॥
रघुनाथ इतीड्यनामगम्यो रघुनाथाङ्घ्रिनिषेवकः सुधीः॥ ३॥
बभूवुस्तस्य चत्वारस्तनयाः सुनया बुधाः॥
महादेवाभिधः श्रेष्ठो महाभाष्यसुभाषितः॥ ४॥
रामकृष्णो द्वितीयोऽसौ रामकृष्णाङ्घ्रिसेवक॥
तृतीयो जयकृष्णोऽस्मि श्रीकृष्णायास्तु सूद्भवः॥ ५॥
श्रीमत्सिद्धान्तकौमुद्याः स्वरवैदिकखण्डयोः॥
नत्वा मुनित्रय हृद्या टीकां कुर्वे सुबोधिनीम्॥ ६॥
सुशब्दव्रातश्रीकुमुदवनविद्योतनकरी सदा सद्व्युत्पत्तिप्रसरणपरानन्दनकरी॥
कुशब्दध्वान्तस्य प्रसभमभिविध्वंसनकरी कृतिर्भूयादेषा बुधजनमनःप्राङ्गणचरी॥ ७॥

इयता प्रबन्धेन लौकिकेषु शब्देष्वन्वाख्यातेष्वपि वैदिकान्वाख्यानमवशिष्यते। न चेदमप्रयोजनम्। 'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्' इति वदता भाष्यकारेण वेदरक्षाया व्याकरणारम्भस्य प्रयोजनत्वेन मुख्यतयाभिधानात्। ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति वेदार्थज्ञानोपायतया वेदाङ्गत्वेनैव व्याकरणाध्ययनविधानाच्च। नन्वेवमपि वैदिकशब्दानां लौकिकशब्दाभिन्नत्वात्तदनुशासनेनैव सिद्धे किमर्थमेषामनुशासनमिति चेन्न। लौकिकशब्देभ्यो भिन्ना अपि वैदिकशब्दाः सन्ति। तद्यथा 'आत्मना देवेषु मध्वाजभार' 'गृभ्णामि ते' इत्यादयो वेदे दृश्यन्ते। लोके तु आत्मना जहार गृह्णामीत्यादयः। अत एव भाष्यकारो लौकिकेभ्यो वैदिकान्भेदेन व्यपदिशति। 'अथ शब्दानुशासन केषा शब्दानां लौकिकाना वैदिकानां चेति' इति तेषामाख्यानमावश्यकमिति मनसि विभाव्याह—**छन्दसीत्यादि**॥ पुनर्वसुशब्देनोद्भूतावयवस्य ज्योतिःसमुदायस्याभिधानाद्द्वयोर्द्विवचने प्राप्ते एकवचनं विधीयते तदाह—**द्वयोरित्यादि**॥—**वा स्यादिति**। द्वयोरेकवचन वा स्यादिति 'जात्याख्यायाम्–' इत्यतोऽन्यतरस्यामित्यनुवर्तनात्॥—**लोके त्विति**। 'गां गताविव दिवः पुनर्वसू' इत्यादौ॥—**विशाख—**॥—**प्राग्वदिति**। द्वयोरेकवचन वा स्यादित्यर्थ.॥—**विशाखेति**। अमरस्तु विशाखेति प्रयुञ्जानो द्विवचननियमं नेच्छति सूत्रं तूदासीनम्॥—**षष्ठीयुक्तश्छन्दसि वा**॥ 'पतिः समास एव' इत्यतः पतिरिति वर्तते। पतिः समास एवेति नियमादसमासे न प्राप्नोतीति वचनमारभ्यते—**पतिनेति**। घित्वात् 'आङो ना–' इति नाभावः। षष्ठीति किम्। 'मया पत्या जरदष्टिर्यथासः'। छन्दसीति किम्। ग्रामस्य पत्ये॥—**योगं विभज्येति**॥ 'षष्ठीयुक्तश्छन्दसि–' इति उक्त एवार्थः। ततो 'वा छन्दसि' इति वर्तते। यावदिह शास्त्रे कार्य तच्छन्दसि वा भवति। तदाह—**तेनेत्यादिना**॥—**—नभोङ्गिरो-**। नमस् अङ्गिरस् मनुष् एषां वति परे भत्वं वक्तव्यमित्यर्थः॥—**नभस्वदिति**। 'तेन तुल्यम्–' इति वतिः। भत्वफलमाह—**रुत्वाभाव**, इति। 'ससजुषोः–' इति प्राप्तस्य। तत्र हि पदस्येत्यनुवर्तते। अङ्गिरसा तुल्यमङ्गिरस्वत्। अत्रापि देहलीदीपकन्यायेन रुत्वाभाव इति संबध्यते॥—**मनुष्वदिति**। मनुषा तुल्यम्। अत्र भत्वात् 'आ-

स्यतीति विहित उसिप्रत्ययो वनेरपि बाहुलकात् ॥ * वृषण्वस्वश्वयोः । वृषन् वर्षुकं वसु यस्य स वृषण्वसुः । वृषा अश्वो यस्यासौ वृषणश्वः । इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद्वार्यते । अत एव पदान्तस्येति णत्वनिषेधोऽपि न । अल्लोपोऽन इति तु न । अनङ्गत्वात् । अयस्मयादीनि च्छन्दसि ।१।४।२०। एतानि छन्दसि साधूनि । भपदसंज्ञाधिकाराद्यथायोग्यं संज्ञाद्वयं बोध्यम् । तथा च वार्तिकम् ॥ * उभयसंज्ञान्यपीति वक्तव्यमिति ॥ स सुष्टुभा स ऋक्वता गणेन । पदत्वात्कुत्वम् । भत्वाज्जश्त्वाभावः । जश्त्वविधानार्थाया: पदसंज्ञाया भत्वसामर्थ्येन बाधात् । नैनं हिन्वन्त्यपि वाजिनेषु । अत्र पदत्वाज्जश्त्वम् । भत्वात्कुत्वाभावः । ते प्राग्धातोः । छन्दसि परेऽपि ।१।४।८१। व्यवहिताश्च ।१।४।८२। हरिभ्यां याह्योक आ । आ मन्द्रैरिन्द्र हरिभिर्याहि । इन्धिभवतिभ्यां च ।१।२।६। आभ्यां परोऽपित्लिट् कित् स्यात् । समीधे दस्युहन्तमम् । पुत्र ईधे अथर्वणः । बभूव । इदं प्रत्याख्यातम् । इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति ॥ इति प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ।

तृतीया च होश्छन्दसि ।२।३।३। जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च । यवाग्वाऽग्निहोत्रं जुहोति । अग्निहोत्रशब्दोऽत्र हविषि वर्तते । यस्याग्निहोत्रमधिश्रितममेध्यमापद्येतेत्यादिप्रयोगदर्शनात् । अग्नये हूयत इति व्युत्प-

---

देशप्रत्यययोः' इति षः । पदसंज्ञाया तु रुत्वं स्यात् न षत्वम् । अपदान्तस्येति वचनात् ॥—बाहुलकादिति । बहूनर्थाल्लातीति बहुलम् । ला आदाने अस्मात् 'आतोऽनुपसर्गे' इति कः । बहुलस्य भावो बाहुलकम् । मनोज्ञादित्वाद्वुञ् । वृषणित्येतद्वसु, अश्व, एतयोश्च परतो भ स्यात् । निपातनान्येतानि छन्दोविषयाणीति कैयटः ॥—वृषण्वसुरिति । लोके वृषवसुः । वृषाश्वः ॥—नलोपः प्राप्त इति । 'नलोपः प्रातिपदिकान्तस्य' इत्यनेन ॥—अत एवेति । भत्वादेवेत्यर्थः ॥—अनङ्गत्वादिति । 'अल्लोपोऽनः' इत्यत्राङ्गस्येत्यधिकारात् ॥—अयस्मयादीनि—॥ आनन्तर्याद्भसञ्ज्ञाद्वारेणैव निपातनं प्राप्तमित्याह—संज्ञाद्वयमिति । नन्वनन्तरस्येति न्याय बाधित्वोभयसञ्ज्ञाविधाने किं प्रमाणमित्याशङ्क्याह—तथा च वार्तिकमिति ॥—कुत्वमिति । 'चोः कुः' इत्यनेन ॥—जश्त्वाभाव इति । 'झलां जशोऽन्ते' इति प्राप्तस्य ॥—ऋक्वतेति । अयस्मयादिषु ऋक्वतेत्यादयः समुदाया एव बोध्याः । तेन जश्त्वमस्तु कुत्व मा भूदिति वैपरीत्येन प्रसज्येतेति बोध्यम् ॥—नैनमिति । वाचामिनाः प्रभवस्तेष्वप्येन विद्वांसं न हिन्वन्ति । विवदितुं न गच्छन्तीत्यर्थः ॥—ते प्राक् । व्याख्यातम् ॥—अस्यापवादमाह—छन्दसीत्यादि । गत्युपसर्गसंज्ञकाश्छन्दसि परे प्रयोक्तव्याः । अपिशब्दात्पूर्वे ॥ व्यवहिता अपि गत्युपसर्गसञ्ज्ञकाः प्रयोक्तव्याः । सूत्रद्वयस्योदाहरणे आह—हरिभ्यामित्यादि । आयाहीति प्राप्तम् । ते प्रागित्यत्र सञ्ज्ञानियमपक्षो भाष्ये उक्तः । ते इत्यनेन प्रादीनुपेत्येतत्पर्यन्तान्स्वरूपेण परामृश्य धातोः प्राक् प्रयुक्तानामेषा पूर्वसूत्रैकवाक्यतया सञ्ज्ञाविधानात् । अस्मिश्च पक्षे 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति सूत्रद्वयं न कर्तव्यम् ॥—इन्धि—॥ इन्धीत्युच्चारणार्थेनेकारेण निर्देशः । 'सुट्तिथोः' इतिवत् न तु 'इक्श्तिपौ—' इति इका नलोपापत्तेः । 'असंयोगादित्—' इत्यतः लिट् किदित्यनुवर्तते । तदाह—लिट् किदिति । ञि इन्धी दीप्तौ । लिटः कित्त्वाद् 'अनिदिताम्—' इति नलोपः । सयोगात्परत्वात्पूर्वेणाप्राप्तौ वचनम् ॥—बभूवेति । कित्त्वाद्वृद्ध्यभावे 'भुवो वुक्—' इति वुक् । अत्र पित्त्वात्पूर्वेणाप्राप्तौ वचनम् ॥—इदमिति । इन्धीति सूत्रम् ॥—छन्दोविषयत्वादिति । अयमभिप्रायः । इन्धेर्भाषायामिजादेश्चेत्यमा भाव्यं छन्दसि तु अमन्त्रे इति प्रतिषेधाद् यद्यप्याम् नास्ति तथापि 'छन्दस्युभयथा' इति लिटः सार्वधातुकत्वे ङित्त्वात्समीधे इति नलोपः । श्नमभावस्त्वार्धधातुकत्वाच्छन्दसि दृष्टानुविधानात् ॥—वुको नित्यत्वादिति । परनित्येति परिभाषया परान्नित्यस्य बलीयस्त्वात् । कृताकृतप्रसङ्गित्वेन नित्यत्वात् ॥ इति प्रथमोऽध्यायः ॥

तृतीया—॥ 'कर्मणि द्वितीया' इत्यतः कर्मणीति वर्तते । द्वितीयायां प्राप्तायां तृतीया विधीयते चशब्दात्सापि भवति । तदाह—कर्मणीति ॥—यवाग्वेति । अत्र यवागूशब्दात्तृतीया । अग्निहोत्रशब्दाच्च द्वितीया । अग्निहोत्रशब्दो हविर्वाचकः । जुहोतिश्च प्रक्षेपणार्थः । यवाग्वभिन्नं हविरग्नौ प्रक्षिपतीत्यर्थस्तदाह—यवाग्वाख्यमित्यादि । भिन्नविभक्त्यवरुद्धत्वेऽपि भिन्नार्थकविभक्त्यनवरुद्धत्वाभावामार्थयोरभेदान्वयः । भाष्ये चैतत्सूत्रं प्रत्याख्यातम् । अग्निहोत्रशब्दो ह्यग्नावपि वर्तते । यस्य अग्निहोत्रं प्रज्वलितमिति दर्शनात् । हूयतेऽस्मिन्निति व्युत्पत्तेश्च । तथा च यदा यवागूशब्दात्तृतीया तदाग्निहोत्रशब्दो ऽग्नौ वर्तते । जुहोतिश्च प्रीणने । यवाग्वा अग्निं प्रीणयतीत्यर्थः । यदा यवागूशब्दाद् द्वितीया तदा-

सेश्च । यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः । ⧗ **द्वितीया ब्राह्मणे** ।२।३।६०। ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात् । षष्ठ्यपवादः । गामस्य तदहः सभायां दीव्येयुः । ⧗ **चतुर्थ्यर्थे बहुलं छन्दसि** ।२।३।६२। षष्ठी स्यात् । पुरुषमृगश्चन्द्रमसे । गोधाकालकादार्वाघाटस्ते वनस्पतीनां वनस्पतिभ्य इत्यर्थः ॥ *षष्ठ्यर्थे चतुर्थीति वाच्यम् । या खर्वेण पिबति तस्यै खर्वः । ⧗ **यजेश्च करणे** ।२।३।६३। इह छन्दसि बहुलं षष्ठी । घृतस्य घृतेन वा यजते । ⧗ **बहुलं छन्दसि** ।२।४।३९। अदो घस्लादेशः स्यात् । घस्तान्नूनम् । लुङि मन्त्रे घसेति च्लेर्लुक् । अडभावः । सग्धिश्च मे । ⧗ **हेमन्तशिशिरावहोरात्रे च छन्दसि** ।२।४।२८। द्वन्द्वः पूर्ववल्लिङ्गः । हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ । अहोरात्रे । अदिप्रभृतिभ्यः शपः । ⧗ **बहुलं छन्दसि** ।२।४।७३। वृत्रं हनति वृत्रहा । अहिः शयत उपपृक् । अत्र लुङ् न । अदादिभिन्नेऽपि क्वचिल्लुक् । त्राध्वं नो देवाः । जुहोत्यादिभ्यः श्लुः । ⧗ **बहुलं छन्दसि** ।२।४।७६। दाति प्रियाणि चिद्वसु । अन्यत्रापि । पूर्णां विवष्टि । ⧗ **मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः** ।२।४।८०। एभ्यो लेर्लुक् स्यान्मन्त्रे । अक्षन्नमीमदन्त हि । घस्लादेशस्य गमहनेत्युपधालोपे शासिवसीति षः । माह्वर्मित्रस्य । धूर्तिः प्रणङ्मर्त्यस्य । नशेर्वेति कुत्वम् । सुरुचो वेन आवः । मा न आ धक् । आदित्याकारान्तग्रहणम् । आ प्रा द्यावापृथिवी । परावर्ग्भारभृद्यथा । अक्रन्नुषासः । त्वे रयिं जागृवांसो अनुग्मन् । मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम् । अज्ञत वा अस्य दन्ताः । विभाषानुवृत्तेर्नेह । न ता अगृभ्णन्नजनिष्ट हि षः ॥ इति द्वितीयोऽध्यायः ॥

ग्निहोत्रशब्दो हविषि वर्तते । जुहोतिश्च प्रक्षेपणे । यवाग्वाख्य हविर्द्रव्यं प्रक्षिपतीत्यर्थः ॥—**द्वितीया**–॥ 'दिवस्तदर्थस्य' इति वर्तते तदाह—**ब्राह्मणे**त्यादि । सोपसर्गस्य च्छन्दसि 'विभाषोपसर्गे' इत्यनेन व्यवस्थितविभाषयापि सिद्धे निरुपसर्गार्थ आरम्भः ॥—**षष्ठ्यपवाद** इति । 'दिवस्तदर्थस्य' इति प्राप्तायाः ॥—**चतुर्थ्यर्थे**–॥ बहुलग्रहणात् चन्द्रमसे-रुदमी रात्र्यै इत्यादौ षष्ठ्यभावः ॥—**यजेः**–॥ यजेर्धातोः करणे कारके छन्दसि विषये बहुलं षष्ठी स्यात् ॥—**बहुलम्** ॥ 'अदो जग्धिः–' इत्यतः अद इति 'लुङ्सनोः–' इत्यतः घस्लृ इति च । अदो बहुलं घस्लादेशः स्यात् छन्दसि ॥—**घस्तामि**ति । अदेर्लुङि रूपम् ॥—**अडभाव** इति । 'बहुलं छन्दसि' 'न माङ्योगे' इत्यनेन । नन्विदं 'लुङ्सनोः–' इत्यनेन सिद्धमित्याशङ्क्योदाहरणान्तरमाह—**सग्धिरि**ति । अदनं ग्धिः अदेः क्तिनि घस्लादेशे 'घसिभसोर्हलि च' इत्युपधालोपे 'झलो झलि' इति सलोपः । 'झषस्तथोः–' इति धत्वम् । घस्य जश्त्वम् । न च जश्त्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वम् । 'न पदान्त–' इति सूत्रेण जश्त्वे तन्निषेधात् । ततः समानशब्देन समासे कृते 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सूत्रेण समानस्य सः ॥—**हेमन्तशिशिरा**—॥ 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति प्राप्तम् ॥—**अहोरात्रे** इति । अहश्च रात्रिश्चेति द्वन्द्वे कृते 'अहः सर्वैकदेश–' इत्यनेन समासान्तोऽच् । 'यस्येति च' इतीकारलोपः । 'रात्राह्नाहाः पुंसि' इति प्राप्तम् । द्वित्वमतन्त्रम् । अहोरात्राणि विदधत् । छन्दसि किम् । हेमन्तशिशिरे । अहोरात्रौ । यद्यपि पाठक्रमेणेद 'बहुलं छन्दसि' इति घस्लादेशविधायकसूत्रात्पूर्वं व्याख्यातु युक्तं तथापि 'व्यत्ययो बहुलम्' इति वक्ष्यमाणेन लिङ्गव्यत्ययविधायकेन गतार्थमिति ध्वनयितुं तथा न व्याख्यातम् ॥—**बहुलं छन्दसि** ॥ बहुल शपो लुक् स्यात् । अदिप्रभृतिभ्य इत्युक्त ततो न भवति । तथैवोदाहरति—**वृत्रं हनती**त्यादि । हन्ति शेते इति लोके ॥—**त्राध्वमि**ति । त्रैङ् पालने 'आदेच उपदेशेऽशिति' इत्यात्वम् । त्रायध्वमिति लोके ॥—**दाती**ति । ददातीति लोके ॥—**अन्यत्रापी**ति । जुहोत्यादिभिन्नेऽपि श्लुर्भवतीति शेषः ॥—**विवष्टी**ति । वश कान्तौ अदादिः 'श्लौ' इति द्वित्वम् । 'भृञामित्' 'बहुल छन्दसि' इति सूत्रेणाभ्यासस्येकारः । 'व्रश्च–' इति षत्वं ष्टुत्वम् ॥—**मन्त्रे घस**–॥ घस अत्तेरादेशः । ह्वर ह्वृञ् कौटिल्ये । अस्य कृतगुणानुकरण ह्वरेति । अकारस्तूच्चारणार्थः । णश अदर्शने । वृञ् वरणे । वृङ् सम्भक्तौ । दह भस्मीकरणे । आत् । आकारान्ताः प्रा पूरणे इत्यादयः । वृजी वर्जने । डु कृञ् करणे । गम्लृ गतौ । जनी प्रादुर्भावे ॥—**अक्षन्नि**ति । अत्तेर्लुङि झिः ॥—**घस्लादेशस्ये**ति । 'लुङ्सनोः–' इति विहितस्य ॥—**माह्वरि**ति । माङि उपपदे ह्वरतेर्लुङि तिप् । 'इतश्च' इतीकारलोपः । च्लेर्लुकि कृते सार्वधातुकेति गुणे कृते रपरत्वे 'हल्ङ्याप्–' इति लोपः ॥—**प्रणगि**ति । प्रपूर्वान्नशेर्लुङ् । 'हल्ङ्याप्–' इति लोपः । 'उपसर्गादसमासेऽपि–' इति णत्वम् ॥—**मर्त्यस्ये**ति । मकारेऽनुनासिके परे 'यरोऽनुनासिके–' इति ङः ॥—**कुत्वमि**ति । पक्षे 'व्रश्च–' इति षत्वेन नडिति रूपं बोध्यम् ॥—**आव** इति । वृणो रूपम् ॥—**आधगि**ति । आङ्पूर्वाद्दहेर्लुङ् । 'दादेर्धातोः–' इति घः । 'एकाचो बश–' इति भष्भावः ॥—**आप्रा** इति । आङ्पूर्वात्प्राधातोः सिप् । रुत्वे यत्वे च यलोपः ॥—**परावर्गि**ति । परापूर्वाद्वृजेस्तिप् । उपधागुणे 'चोः कुः' इति कुत्वम् ॥—**अक्रन्नि**ति । क्ङित्त्वाद्गुणाभावे यण् ॥—**अनुग्मन्नि**ति । अनुपूर्वाद्गच्छतेर्झिः । 'गमहन–' इत्युपधालोपः । ननु मन्त्रशब्दः संहितायां रूढ इति अज्ञतेत्यादौ ब्राह्मणप्रयोगे लुक् न प्राप्नोतीत्याशङ्क्याह—**मन्त्रग्रहणमि**त्यादि ॥—**अज्ञते**ति । 'गमहन–' इत्युपधालोपः । ब्राह्मणप्रयोगोऽयम् । मन्त्रेति किम् । अप-

## तृतीयोऽध्यायः ।

**अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद्विदामक्रन्निति च्छन्दसि ।३।१।४२।** आ-द्येषु चतुर्षु लुङि आम् अक इत्यनुप्रयोगश्च । अभ्युत्सादयामकः । अभ्युदसीषददिति लोके । प्रजनयामकः । प्राजीजन-दित्यर्थः । चिकयामकः । अचैषीदित्यर्थे चिनोतेराम् । द्विर्वचनं कुत्वं च । रमयामकः । अरीरमत् । पावयांक्रियात् । पाव्यादिति लोके । विदामक्रन् । अवेदिषुः । **गुपेश्छन्दसि ।३।१।५०।** च्लेश्चङ् । गृहानजूगुपतं युवम् । अगोप्त-मित्यर्थः । **नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।३।१।५१।** च्लेश्चङ् न । मा त्वायतो जरितुः काममूनयीः । मा त्वाग्निर्ध्वनयीत् । **कृमृदृरुहिभ्यश्छन्दसि ।३।१।५९।** च्लेरङ् वा । इदं तेभ्योकरं नमः । अमरत् । अदरत् । यत्सानोः सानुमारुहत् । **छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवय-ज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ।३।१।१२३।** कृन्ततेर्निस्पूर्वात् क्यपि प्राप्ते ण्यत् । आद्यन्तयोर्विपर्यासः निसः षत्वं च । निष्टर्क्यं चिन्वीत पशुकामः । देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घश्च । स्पर्धन्ते वा उ देवहूये । प्र उत् आभ्यां नयतेः क्यप् । प्रणीयः । उन्नीयः । उत्पूर्वाच्छिषेः क्यप् । उच्छिष्यः । मृङ्स्तृध्वृ-भ्यो यत् । मर्यः । स्तर्या । स्त्रियामेवायम् । ध्वर्यः । खनेर्यण्ण्यतौ । खन्यः । खान्यः । यजेर्यः । शुन्धध्वं दैव्याय कर्मणे देवयज्यायै । आङ्पूर्वात्पृच्छेः क्यप् । आपृच्छ्यं धरुणं वाज्यर्षति । सीव्यतेः क्यप् षत्वं च । प्रतिषीव्यः । ब्रह्म-णि वदेर्ण्यत् । ब्रह्मवाद्यम् । लोके तु वदः सुपि क्यप् चेति क्यप्ण्यतौ । भवतेः स्तौतेश्च ण्यत् । भाव्यः । स्ताव्यः । उपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरपदे । उपचाय्यपृडम् ॥ * हिरण्य इति वक्तव्यम् । उपचेयपृडमन्यत् । मृड सुखने पृड चेत्यस्मादिगुपधलक्षणः कः । **छन्दसि वनसनरक्षिमथाम् ।३।२।२७।** एभ्यः कर्मण्युपपदे इन्

---

सत् । अह्वार्षीत् । अनशत् । अवारीत् । अधाक्षीत् । अप्रासीः । अवर्जीत् । अकार्षीत् । अगमत् । अजनि । अजनिष्ट ॥ इति द्वितीयोऽध्यायः ॥

**अभ्युत्सादयाम्–॥** अभ्युत्सादयामित्यादयश्छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते । षद्लृ विशरणगत्यवसादनेषु । जनी प्रादुर्भावे । रम क्रीडायाम् । ण्यन्तेभ्य एभ्यो लुङि आम् प्रत्ययो निपात्यते । चिञ् चयने । शुद्धादस्मादाम्प्रत्यये द्विर्वचन कुत्वं च । अक इति प्रत्येकं संबध्यते तदाह—**आद्येष्विति** ॥–**अक** इति । कृञो लुङि तिपि च्लेः 'मन्त्रे घस–' इत्यादिना लुक् तिपो हल्ङ्यादिलोपः ॥—**सादयामक** इति । 'आमः' इति लुडो लुक् ॥—**अभ्युदसीषददिति** । सदेर्ण्यन्ताल्लुङि चङि 'णौ चङ्युपधायाः–' इति ह्रस्वः । 'चङि' इति द्विर्वचनम् । हलादिः शेषः । 'सन्वल्लघुनि–' इति सन्वद्भावे 'सन्यतः' इतीत्वम् । लघोर्दीर्घः ॥—**लोक** इति । वेदेऽपि पाक्षिकमिद बोध्यम् । 'विदांकुर्वन्तु–' इति सूत्रादन्यतरस्यांग्रहणानु-वृत्तेः ॥—**पावयामिति** । पवतेः पुनातेर्वा ण्यन्तादाशीर्लिङ्याम् । क्रियादित्यनुप्रयोगश्च ॥—**क्रियादिति** । करोतेराशी-र्लिङि रूपम् । 'लिङाशिषि' इत्यार्धधातुकत्वाद्विकरणाभावः । 'रिङ्शयग्–' इति रिङ् ॥—**विदामक्रन्निति** । विदेर्लुङि आम् गुणाभावः लुङन्तकरोत्यनुप्रयोगश्च ॥—**गुपेः** ॥ आयप्रत्ययाभावस्थल एवेद सूत्रे केवलस्योच्चारणात् ॥—**अजूगु-पतमिति** । गुपू रक्षणे 'तस्थस्थमिपाम्–' इति थसस्तम् । 'तुजादीना दीर्घोऽभ्यासस्य' इत्यभ्यासस्य दीर्घः ॥—**अगो-प्तमिति** । ऊदित्वादिड्भावे 'वदव्रज–' इति वृद्धिः । 'झलो झलि' इति सिचो लोपः । इट्पक्षे अगोपिष्टम् । आयप्रत्यये अगोपयिष्टम् । इत्थ चत्वारि च्छन्दसि । लोके तु चङ वर्जयित्वा त्रीण्येवेति विवेकः ॥—**नोनयति–॥** ऊन परिहाणे । ध्वन शब्दे । इल प्रेरणे । अर्द गतौ याचने च । एभ्यो ण्यन्तेभ्यश्च्लेः 'णिश्रि–' इति प्राप्तश्चङादेशो नेत्यर्थः । तत्रोनय-त्येलयती चुरादी ण्यन्तौ । ध्वनयतिरपि चुरादिरदन्तो घटादिर्नान्तश्च । अर्दयतिस्तु हेतुमण्ण्यन्तः ।—**ऊनयीरिति** । मध्यमपुरुषैकवचनम् । 'न माङ्योगे' इति आट्प्रतिषेधः । इदमिन्द्रं प्रति सव्यस्य ऋषेर्वचनम् । त्वायतस्त्वामिच्छतः जरितुः स्तोतुः मम काममभिलाष मा ऊनयीः । ऊनं मा कार्षीरित्यर्थः । औननदिति भाषायाम् ॥—**ध्वनयीदिति** । तिप् 'न माङ्योगे' इत्यट्प्रतिषेधः । भाषायां घटादेरदिध्वनत् । चुरादेरदध्वनत् । ऐलयीत् । आर्दयीत् । आर्दिदत् । ऐलिलदिति लोके ॥—**कृमृदृ–॥** 'च्लि लुङि' इत्यतः च्लिरिति 'अस्यतिवक्ति–' इत्यतोऽङिति 'इरितो वा' इत्यतो वेत्य-नुवर्तते तदाह—**च्लेरित्यादि** ॥—**अकरमिति** । डु कृञ्करणे मिप् अङि कृते 'ऋदृशोऽङि–' इति गुणः ॥—**अमरदिति** । मृङ् प्राणत्यागे व्यत्ययेन परस्मैपदम् ॥—**अदरदिति** । दृ विदारणे ॥—**अरुहदिति** । रुह बीजजन्मनि प्रादुर्भावे च । लोके तु अकार्षीत् । अमृत । अदारीत् । अरुक्षत् ॥—**छन्दसि–॥** निष्टर्क्यादयः शब्दाश्छन्दसि निपात्यन्त इति सूत्रार्थः ॥ —**क्यपि प्राप्त** इति । 'ऋदुपधाच्च–' इति सूत्रेण ॥—**आपृच्छ्यमिति** । प्रच्छ ज्ञीप्सायाम् । 'ग्रहिज्या–' इति सम्प्रसार-णम् ॥—**प्रतिषीव्येति** । षिवु तन्तुसंताने । 'हलि च' इति दीर्घः ॥—**उपचाय्यपृडमिति** । उपचाय्यं च तत्पृडं चेति कर्मधारयः ॥—**हिरण्य** इति । हिरण्येऽभिधेये इत्यर्थः ॥—**छन्दसि–॥—एभ्य** इति । वन षण संभक्तौ । रक्ष पा-

स्यात् । ब्रह्मवर्निं त्वा क्षत्रवनिम् । उत नो गोषणिं धियम् । ये पथां पथि रक्षयः । चतुरक्षौ पथिरक्षी । हविर्मथीनामभि । ⧗ छन्दसि सहः ।३।२।६३। सुप्युपपदे सहेर्ण्विः स्यात् । पृतनाषाट् । ⧗ वहश्च ।३।२।६४। प्राग्वत् । दित्यवाट् । योगविभाग उत्तरार्थः । ⧗ कव्यपुरीषपुरीष्येषु ञ्युट् ।३।२।६५। एषु वहेर्ञ्युट् स्याच्छन्दसि । कव्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः । ⧗ हव्येऽनन्तःपादम् ।३।२।६६। अग्निश्च हव्यवाहनः । पादमध्ये तु वहश्चेति ण्विरेव । हव्यवाळग्निरजरः पिता नः । ⧗ जनसनखनक्रमगमो विट् ।३।२।६७। विड्वनोरित्यात्वम् । अब्जाः । गोजाः । गोषा इन्दो नृषा असि । सनोतेरन इति षत्वम् । इयं शुष्मेभिर्बिसखा इवारुजत् । आ दधिक्राः शवसा पञ्च कृष्टीः । अग्रेगाः । ⧗ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।३।२।७१॥ * श्वेतवहादीनां डस्पदस्येति वक्तव्यम् । यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस्वक्तव्य इत्यर्थः । श्वेतवाः । श्वेतवाहौ । श्वेतवाहः । उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः । उक्थशासौ । उक्थशासः । पुरो दाश्यते दीयते पुरोडाः । ⧗ अवे यजः ।३।२।७२। अवयाः । अवयाजौ । अवयाजः । ⧗ अवयाः श्वेतवाः पुरोडाश्च ।८।२।६७। एते सम्बुद्धौ कृतदीर्घा निपात्यन्ते । चादुक्थशाः । ⧗ विजुपे छन्दसि ।३।२।७३। उपे उपपदे यजेर्विच् । उपयट् । ⧗ आतो मनिन्क्वनिब्वनिपश्च ।३।२।७४। सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः । चाद्विच् । सुदामा । सुधीवा । सुपीवा । भूरिदावा । घृतपावा । विच् । कीलालपाः । ब्रह्मभ्रूणवृत्रेषु क्विप् । ⧗ बहुलं छन्दसि ।३।२।८८। उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात् । यो मातृहा पितृहा । ⧗ छन्दसि लिट् ।३।२।१०५। भूतसामान्ये । अहं द्यावापृथिवी आ ततान । ⧗ लिटः कानज्वा ।३।२।१०६। ⧗ क्वसुश्च ।३।२।१०७। छन्दसि लिटः कानच्क्वसू वा स्तः । चक्राणा वृष्णिम् । यो नो अग्ने अररिवां अघायुः । ⧗ णेश्छन्दसि ।३।२।१३७। ण्यन्ताद्धातोश्छन्दसि इष्णुच् स्यात्तच्छीलादौ । वीरुधः पारयिष्णवः । ⧗ भुवश्च ।३।२।१३८। अस्मात् केवलात्प्राग्वत् । भविष्णुः ॥ * छन्दसि परेच्छायां क्यच उपसंख्यानम् । ⧗ क्याच्छ-

लने । मन्थ विलोडने । एभ्य इत्यर्थः ॥ 'स्तम्बशकृतोरिन्' इत्यतः इन्निति वर्तते, तदाह—**इन्स्यादिति** । वन षण संभक्ताविति भ्वादिगणेन सह निर्दिष्टयोरेव ग्रहणं न तु वनु याचने षणु दाने इति तानादिकयो' सानुबन्धकत्वात् ॥—**ब्रह्मवनिमिति** । ब्रह्म वनति क्षत्र वनति गां सनतीति विवक्षायामिन् । तदन्ताद्द्वितीयैकवचनम् । सुषामादित्वात्षत्वम् ॥—**पथिरक्षय** इति । पन्थान रक्षयन्तीति विग्रहः ॥—**पथिरक्षीति** । पन्थान रक्षतीति विग्रह. । हविर्मन्थतीति विग्रहः ॥—**छन्दसि**–॥ षह मर्षणे ॥ 'भजो ण्वि.' इति वर्तते, तदाह—**ण्विः स्यादिति** । ननु 'तुरासाह पुरोधाय' इति लोके प्रयोगा दृश्यन्ते तेषा का गतिरिति चेत् णिजन्ताद्विच् बोध्यः ॥—**पृतनाषाडिति** । 'सहेः साडः स.' इति षत्वम् ॥—**वहः** ॥—**प्राग्वदिति** । ण्विः स्यादित्यर्थः ॥—**हव्ये**–॥ अन्तःशब्दो मध्यमवाची । हव्यशब्दे उपपदे वहेर्ञ्युट् स्यात् पादमध्ये चेन्न पदान्ते इति फलितोऽर्थः ॥—**हव्यवाळग्निरिति** । अत्र डस्य ळः, द्वयोश्चास्य स्वरयोर्मध्यमेत्य सपद्यते स डकारो ळकार इति प्रातिशाख्ये विहितः ॥—**जनसन**—॥ जनादिभ्यो धातुभ्यश्छन्दसि विट् स्यात् ॥—**अग्रेगा** इति । 'हलदन्तात्–' इति सप्तम्यलुक् ॥—**मन्त्रे श्वेतवहो**—॥ श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन्स्यात् । अलाक्षणिककार्यार्थं निपातनम् । श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि कारके ण्विन्प्रत्ययः । उक्थे कर्मणि करणे चोपपदे शसतेः प्रत्ययः नलोपश्च । पुरःपूर्वस्य दाशृ दाने इत्यादेर्डत्वं कर्मणि च प्रत्ययः । डस्य दस्येति प्रत्येकमभिसबध्यते । भाविपदत्वाश्रयणेन चेदमुच्यते तदाह—**यत्र पदत्वं भावीति** । डसन्तस्येत्यर्थः ॥—**श्वेतवा** इति । श्वेता एव तं वहन्ति श्वेतवा इन्द्रः । 'अत्वसन्तस्य–' इति दीर्घः । उक्थशासाविति नलोपे कृते 'अत उपधायाः' इति वृद्धिः ॥—**अवे**–॥ योगविभाग उत्तरार्थः । पुरोडाशावयजोर्ण्विन् इत्येकयोगे श्वेतवहादीनामप्युत्तरत्रानुवृत्तिः स्यात् । यजेश्चावपूर्वस्यैवानुवृत्तिः स्यात्केवलस्यैवेष्यत इति ॥—**अवयाः श्वेतवाः**–॥ ननु मन्त्रे श्वेतवहेत्यादिना डसि कृते सौ 'अत्वसन्तस्य–' इति दीर्घे रुत्वे च श्वेतवा इत्यादिसिद्धे नार्थोऽनेन योगेनेत्याशङ्क्याह—**एते संबुद्धाविति** । संबुद्धौ हि 'अत्वसन्तस्य–' इति न प्राप्नोति तत्रासंबुद्धावित्यनुवर्तनात् ॥—**विजुपे**–॥ ननु छन्दसीति व्यर्थं मन्त्रे इत्यनुवृत्तेरेव भाषायां न भविष्यतीति चेत् । सत्यम् । ब्राह्मणसंग्रहार्थं छन्दोग्रहणम् । मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम् । तदुक्तम् । तच्चोदकेषु मन्त्राख्या शेषे ब्राह्मणशब्दः ॥—**सुधीवा सुपीवेति** । 'घुमास्था–' इतीत्वम् ॥—**कीलालपा** इति । कीलालं जलम् । 'पयः कीलालममृत जीवन भुवन वनम्' इत्यमरः । तत् पिबतीति । पा पाने विच् ॥—**उपपदान्तरेऽपीति** । ब्रह्मभ्रूणवृत्रभिन्नेष्वपीत्यर्थः ॥—**आततानेति** । 'णलुत्तमो वा' इति णित्त्वपक्षे वृद्धिः ॥—**अररिवानिति** । रा दाने । लिटः क्वसुः । 'वस्वेकाजाद्घसाम्' इत्यादन्तत्वादिट् । ततो नञ्समासः । दीर्घादटीति वक्ष्यमाणेन नस्य रुत्वम् । 'आतोऽटि नित्यम्' इति रोः पूर्वस्यातो नित्यमनुनासिकः ॥ प्रसङ्गादघायुशब्दं व्युत्पादयितुमाह—**छन्दसीति** । 'सुप आत्मनः–' इत्यत्र आत्म इति विशेषणात्परेच्छायां न प्राप्नोतीति वचनम् ॥—**क्याच्छ-**

न्दसि ।३।२।१७०। उप्रत्ययः स्यात् । अघायुः ॥ * पुरजधिकारे जवसवौ छन्दसि वाच्यौ ॥ जवे यामिर्यूनः । जर्वोर्मे जवः । देवस्य त्वा सवितुः प्रसवे । **मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः** ।३।३।९६। वृषादिभ्यः क्तिन् स्यात्स चोदात्तः । वृष्टिं दिवः । सुम्नमिष्टये । पचात्पक्तीरुत । इयं ते नव्यसी मतिः । वित्तिः । भूतिः । अग्न आ याहि वीतये । रातौ स्यामोभयासः । **छन्दसि गत्यर्थेभ्यः** ।३।३।१२९। ईषदादिषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि युच् स्यात् । खलोऽपवादः । सूपसदनोऽग्निः । **अन्येभ्योऽपि दृश्यते** ।३।३।१३०। गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्योऽपि छन्दसि युच् स्यात् । सुवेदनामकृणोर्ब्रह्मणे गाम् । **छन्दसि लुङ्लङ्लिटः** ।३।४।६। धात्वर्थानां संबन्धे सर्वकालेष्वेते वा स्युः । पक्षे यथास्वं प्रत्ययाः । देवो देवेभिरागमत् । अत्र लोडर्थे लुङ् । इदं तेभ्योऽकरं नमः । लङ् । अग्निमद्य होतारमवृणीतायं यजमानः । लिट्, अद्य ममार । अद्य म्रियत इत्यर्थः । **लिङर्थे लेट्** ।३।४।७। विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि । **सिब्बहुलं लेटि** ।३।१।३४। **इतश्च लोपः परस्मैपदेषु** ।३।४।९७। लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु । **लेटोऽडाटौ** ।३।४।९४। लेटः अट् आट् एतावागमौ स्तस्तौ च पितौ ॥ * **सिब्बहुलं णिद्वक्तव्यः** । वृद्धिः । प्र ण आयूंषि तारिषत् । सुपेशसस्करति जोषिषद्धि । आ साविषदर्शसानाय । सिप इलोपस्य चाभावे । पताति दिद्युत् । प्रियः सूर्ये प्रियो अग्ना भवाति । **स उत्तमस्य** ।३।४।९८। लेडुत्तमसकारस्य वा लोपः स्यात् । करवाव । करवावः । टेरेत्वम् । **आत ऐ** ।३।४।९५। लेट आकारस्य ऐ स्यात् । सुतेभिः सुप्रयसा मादयैते । आतामित्याकारस्य ऐकारः । विधिसामर्थ्यादाट ऐत्वं न । अन्यथा हि ऐटमेव विदध्यात् । यो यजाति यजात इत् । **वैतोऽन्यत्र** ।३।४।९६। लेट एकारस्य ऐ स्याद्वा आत ऐ इत्यस्य विषयं विना । पशूनामीशै । ग्रहा गृह्णान्तै । अन्यत्र किम् । सुप्रयसा मादयैते । **उपसंवादाशङ्कयोश्च** ।३।४।८। पणबन्धे आशङ्कायां च लेट् स्यात् । अहमेव पशूनामीशै । नेज्जिह्मायन्तो नरकं पताम । हलः श्नः

**न्दसि** ॥ 'सनाशसभिक्ष उः' इत्यत. उरिति वर्तते क्यान्ताद्धातोरुः स्याच्छन्दसि ॥—**अघायुरिति** । परस्याघमिच्छतीत्यर्थे क्यच् । 'अश्वाघस्यात्' इति वक्ष्यमाणेनाकारादेशः । तदन्तादुप्रत्ययः ॥—**जवसवाविति** । जु इति सौत्रो धातुः । षूङ् प्राणिगर्भविमोचने । षु प्रसवैश्वर्ययोरिति । आभ्या 'ऋदोरप्' इति अपि प्राप्तेऽज्विधीयते । स्वरे भेदः ॥—**मन्त्रे वृषेष-**॥ 'स्त्रियां क्तिन्' इत्यतः क्तिन्निति वर्तते । वीरा इति पञ्चम्यर्थे प्रथमा तदाह—**वृषादिभ्य** इति ॥—**वृष्टिमिति** । वृषु सेचने ॥—**इष्टये** इति । इषु इच्छायाम् । चतुर्थ्येकवचनम् ॥—**मतिरिति** । मन ज्ञाने क्तिन् । 'अनुदात्तोपदेश–' इत्यनुनासिकलोपः ॥—**वित्तिरिति** । विद सत्तायाम् । क्त्वािन्न लघूपधगुणः ॥—**वीतये** इति । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु ॥—**राताविति** । रा दाने ॥—**छन्दसि लुङ्लङ्लिटः** ॥ उदाहरणेषु धातुसबन्धो मृग्यः । —**आगमदिति** । गम्लृ गतौ 'पुषादि–' इति लृदित्त्वादङ् ॥—**अकरमिति** । 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ् । 'ऋदृशोऽङि–' इति गुणः ॥—**अवृणीतेति** । वृञ् वरणे । लङ् । 'क्र्यादिभ्यः श्ना' । 'ई हल्यघो.' इतीत्वम् ॥—**इतश्च** ॥ 'लेटोऽडाटौ' इत्यतः लेट इति 'वैतोऽन्यत्र' इत्यतो वेति चानुवर्तते तदाह—**लेट** इत्यादि ॥—**लेटो-**॥—**आगमौ स्त** इति । तौ च पर्यायेण न तु यौगपद्येन अड्विधिसामर्थ्यात् । अन्यथा सवर्णदीर्घे कृते विशेषाभावात् ॥ 'आडुत्तमस्य–' इति सूत्रान्मण्डूकप्लुत्या पिच्चेत्यनुवर्तत इत्याशयेनाह—**तौ च पिताविति** । तत्फलं तु 'विक्रन्दसी उर्वरासु ब्रवैते' इत्यादिषु गुणः ॥—**वृद्धिरिति** । 'अचोञ्णिति' इत्यनेन ॥—**तारिषदिति** । तॄ प्लवनतरणयोः । तिप इकारलोपः । सिप् इट् ॥—**जोषिषदिति** । जुषी प्रीतिसेवनयोः । अनुदात्तेत् । व्यत्ययेन परस्मैपदम् ॥—**असाविषदिति** । आङ्पूर्वात्षु प्रसवैश्वर्ययोरित्यस्माल्लेट् ॥—**पतातीति** । पतॢ पतने तिप् । आडागमः ॥—**करवावेति** । कृञो लेटो वस् 'तनादिकृञ्भ्यः–' इति उः । गुणः रपरः । 'लेटोऽडाटौ' इत्याट् । तस्य पित्त्वेनाङित्त्वाद्विकरणस्य गुणः । 'अत उत्सार्वधातुके' इत्युत्वाभावश्च । मदी हर्षे । णिच् तदन्ताल्लेट् । आतामि कृते आह—**टेरेत्वमिति** । 'टित आत्मनेपदानाम्–' इत्यनेन ॥—**आकारस्येति** । प्रथमस्येत्यर्थः । द्वितीयस्य 'टित आत्मनेपदानाम्–' इत्यनेनैत्वमेव नित्यत्वात् । न च शब्दान्तरप्राप्त्याऽनित्यत्वं कृताकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताश्रयणात् । उत्तरसूत्रेऽन्यत्रेति लिङ्गाच्च । आट ऐत्वं नेत्युक्तं तस्य फलमाह—**यजाति यजात** इति । यज देवपूजादौ । लिट आडागमः ॥—**वैतो**—॥ अन्यत्र किमपेक्षयेत्याकाङ्क्षायां पूर्वसूत्रविषयादिति लभ्यते सन्निधानात् । तदाह—**आत** ,इत्यादि ॥—**ईशै** इति । ईश् ऐश्वर्ये । उत्तमैकवचनमिट् । इतश्च लोपो नास्ति परस्मैपदेषु इत्युक्तेः । टेरेत्वे तस्य ऐ ॥—**गृह्णान्ता** इति । ग्रहेः कर्मणि लेट् झिः । तस्याडागमः । यक् 'ग्रहिज्या–' इति संप्रसारणं टेरेत्वं पूर्ववदैत्वम् ॥—**पणबन्ध** इति । यदि मे भवानिदं कुर्यात्तर्हीदमहं दास्यामीति समयकरणं पणबन्धः । आशङ्का संभावना ॥—**अहमेवेति** । त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचनम् । पशवः संसारिणः ॥—**नेदिति** । इच्छब्द आशङ्कां द्योतयति । जिह्माचरणेन नरकपातः स माभूदित्यर्थः ॥—**पतामेति** । स उत्तम-

शानज्झौ । छन्दसि शायजपि ।३।१।८४। अपिशब्दाच्छानच् । हृग्रहोर्भश्छन्दसीति हस्य भः । गृभाय जिह्वया मधु । बधान देव सवितः । अनिदितामिति बध्नातेर्नलोपः । गृभ्णामि ते । मध्वा जभार । व्यत्ययो बहुलम् ।३।१।८५। विकरणानां बहुलं व्यत्ययः स्यात् छन्दसि । आण्डा शुष्मस्य भेदति । भिनत्तीति प्राप्ते । जरसा मरते पतिः । म्रियत इति प्राप्ते । इन्द्रो वस्तेन नेषतु । नयतेर्लोट् शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम् । तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ् । उः सिप् शप् चेति त्रयो विकरणाः। सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥ १ ॥ धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । उपग्रहः परस्मैपदात्मनेपदे । ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते । मधोस्तृप्ता इवासते । मधुन इति प्राप्ते । नरः पुरुषः । अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । कालः कालवाची प्रत्ययः । श्वोऽग्नीनाधास्यमानेन । लुटो विषये लृट् । तमसो गा अदुक्षत् । अधुक्षदिति प्राप्ते । मित्र वयं च सूरयः । मित्रा वयमिति प्राप्ते । स्वरव्यत्ययस्तु वक्ष्यते। कर्तृशब्दः कारकमात्रपरः । तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः। अन्नादाय । अण्विषये अच्। अवग्रह विशेषः। यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण प्रत्याहारः । तेषां व्यत्ययो भेदतीत्यादिरुक्त एव । लिङ्याशिष्यङ् ।३।१।८६। आशीर्लिङि परे धातोरङ् स्याच्छन्दसि। वच उम् । मन्त्रं वोचेमाग्नये ॥ * दृशेरग्वक्तव्यः । पितरं च दृशेयं मातरं च । अङि तु ऋदृशोऽङीति गुणः स्यात् । छन्दस्युभयथा ।३।४।११७। धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात् । वर्धन्तु त्वा सुष्टुतयः । वर्धयन्त्वित्यर्थः। आर्धधातुकत्वाण्णिलोपः । विशृण्विरे। सार्वधातुकत्वात् श्नुः शृभावश्च । हुश्नुवोरिति यण् । आदृगमहनजनः किकिनौ लिट् च ।३।२।१७१। आदृन्तादृवर्णान्ताद्गमादेश्च किकिनौ स्तस्तौ च लिड्वत्। बभ्रिर्वज्रम् । पपिः सोमम् । ददिर्गाः । जग्मिर्युवा । जघ्निर्वृत्रममित्रियम् । जज्ञिः। लिड्वद्भावादेव सिद्धे ऋच्छत्यृतामिति गुणबाधनार्थं कित्वम् । बहुलं छन्दसीत्युत्वम् । ततुरिः । जगु-

---

स्येति सलोपः ॥—छन्दसि शाय–॥ छन्दसि श्नः शायजप्यादेशः स्याद्धौ परे ॥—गृभायेति । ग्रह उपादाने । लोटः सेर्हिः 'क्रादिभ्यः श्ना' । 'ग्रहिज्या–' इति संप्रसारणम् ॥—बधानेति । बन्ध बन्धने । 'अतो हेः' इति लुक् । प्रसङ्गात् 'हृग्रहोर्भश्छन्दसि' इत्यस्योदाहरणमाह ॥—गृभ्णामि इति ॥—जभारेति । हृञ् हरणे। लिटो णलि वृद्धौ हस्य भः । गृह्णामि जहारेत्यर्थः ॥—भेदतीति ॥ भिदिर् विदारणे रौधादिकः । श्नमि प्राप्ते शप् ॥—म्रियत इति । मृङ् प्राणत्यागे । 'तुदादिभ्यः–' इति शे कृते 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः इयङ् ॥—नेषत्विति । नयत्वित्यर्थः ॥ —द्वौ विकरणाविति । तत्र शप् न्याय्यः सिप् बाहुलकात् । एतेन 'सेमामविड्ढि' इत्यादि व्याख्यातम् । अव रक्षणे । अस्माल्लोटि शपि प्राप्ते बाहुलकात्सिप् । 'हुझल्भ्यो हेर्धिः' षत्व ष्टुत्वम् । जश्त्वम् ॥—तरुषेमेति । तरुषमसिति जाते यासुट् 'लिङः सलोपोऽनन्त्यस्य' । 'नित्य ङितः' । 'अतो येयः' । 'लोपो व्योर्वलि' । 'आद्गुणः' अत्रोप्रत्ययान्तस्य सिप प्रत्यङ्गत्वात्सार्वधातुकेति गुणः प्राप्तः । सिबन्तस्य शपि लघूपधगुणश्च प्राप्तो बाहुलकान्न भवति ॥—सुप्तिङिति । शास्त्रकृत्पाणिनिराचार्य एषां सुप्रभृतीनां व्यत्ययमिच्छति । सोऽपि तथाविधो व्यत्ययो बाहुलकेन सिध्यति । बहुलस्य भावो बाहुलकम् । मनोज्ञादित्वाद्वुञ् । तत्पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्त बह्वर्थादानत्व, चशब्दो हेतौ । यस्मादेवमुक्तप्रकारो व्यत्ययो बहुलग्रहणेनैव सिध्यति तस्माद्बहुलग्रहण कृतमित्यर्थः ॥—वियूया इति । यु मिश्रणे विपूर्वः । आशिषि लिङ् ॥—आधास्यमानेनेति । आङ्पूर्वाद्धधातेः 'लृटः सद्वा' इत्यनेन शानजादेशः। 'स्यतासी–' इति स्यः । 'आने मुक्' इति मुक् ॥—मित्र वयमिति । दीर्घस्य ह्रस्वव्यत्ययः ॥—स्वरव्यत्ययस्त्विति । गवामिव श्रियसे इत्यत्र 'तुमर्थे–' इत्यनेन क्सेनि कृते 'ञ्नित्यादिः–' इत्याद्युदात्ते प्राप्ते व्यत्ययेन मध्योदात्तता ॥—कृत्तद्धितानामिति । 'तेन दीव्यति–' इत्यादौ विधीयमानानां ठगादीनां देवनादिकर्तृत्वादेवमुक्तम् । न त्विह कारकवाचित्वेऽप्याग्रहः कृत्तद्धितमात्रे तात्पर्यात् । तथा च किमो विहितोऽतिर्यच्छब्दादपि भवति । 'त्वं वेत्थ यति ते जातवेदः'। 'विश्वेदेवासो मरुतोपतिष्ठत' ॥—अन्नादायेति। अन्नमत्तीत्यन्नादस्तस्मै अन्ने कर्मण्युपपदेऽदेः कर्मण्यणि प्राप्तेऽच् ॥—अवग्रह इति । अणि कृते अन्न आदायेति अचि तु अन्न अदायेति भावः ॥—वोचेमेति ॥ वचेराशीर्लिङो मस् अङ् । वच उम् यासुट् ॥—छन्दस्युभयथेति । लिङः सार्वधातुकसंज्ञाप्यस्ति तेन यासुट इयादेशः वलिलोपः ॥—आदृ–॥ परार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति गौर्वाहीक इतिवदित्याशयेनाह—लिड्वदिति । किकिनौ भवतः लिट् प्रत्ययस्य भवतीत्ययमर्थस्तु न भवति । तथा हि सति लिट् किकिन इत्येव ब्रूयात् ॥—बभ्रिरिति । भृञ् अस्मात् किः लिड्वद्भावाद्द्वित्वम् । किकिनोः स्थाने तिबादयस्तु न । लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् । 'न लोकाव्यय–' इति षष्ठीनिषेधे वज्रशब्दाद्द्वितीया ॥ —जग्मिरिति । 'गमहन–' इत्युपधालोपः ॥—जघ्निरिति । 'हो हन्तेः–' इति कुत्वम् ॥—जज्ञिरिति । श्चुत्वम् । जनोर्ज्ञः । ननु लिड्वद्भावे सति 'असंयोगाल्लिट् कित्' इत्येव सिद्धे कित्वकरणमनर्थकमित्याशयेनाह—लिड्वद्भावादिति ।

रिः । तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ।३।४।९। से। वक्षे रायः । सेन् । ता वामेषे । असे । शरदो जीवसे धाः । असेन्नित्त्वादाद्युदात्तः । क्से । प्रेषे । कसेन् । गवामिव श्रियसे । अध्यै । अध्यैन् । जठरं पृणध्यै । पक्षे आद्युदात्तम् । कध्यै । कध्यैन् । आहुवध्यै । पक्षे नित्स्वरः । शध्यै । राधसः सह मादयध्यै । शध्यैन् । वायवे पिबध्यै । तवै । दातवा उ । तवेङ् । सूतवे । तवेन् । कर्तवे । प्रयै रोहिष्यै अव्यथिष्यै ।३।४।१०। एते तुमर्थे निपात्यन्ते । प्रयातुं रोढुमव्यथितुमित्यर्थः । दृशे विख्ये च ।३।४।११। द्रष्टुं विख्यातुमित्यर्थः । शकि णमुल्कमुलौ ।३।४।१२। शक्नोतावुपपदे तुमर्थे एतौ स्तः । विभाजं नाशकत् । अपलुपं नाशकत् । विभक्तुमपलोप्तुमित्यर्थः । ईश्वरे तोसुन्कसुनौ ।३।४।१३। ईश्वरो विचरितोः । ईश्वरो विलिखः । विचरितुं विलेखितुमित्यर्थः । कृत्यार्थे तवैकेन्केन्यत्वनः ।३।४।१४। न म्लेच्छितवै । अवगाहे । दिदृक्षेण्यः । भूर्यस्पष्ट कर्त्वम् । अवचक्षे च ।३।४।१५। रिपुणा नावचक्षे । अवख्यातव्यमित्यर्थः । भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ।३।४।१६। आसंस्थातोः सीदन्ति । आसमाप्तेः सीदन्तीत्यर्थः । उदेतोः । अपकर्तोः । प्रवदितोः । प्रचरितोः । होतोः । आतमितोः । काममाविजनितोः संभवामः । सृपितृदोः कसुन् ।३।४।१७। भावलक्षणे इत्येव । पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जर्तृभ्य आतृदः ॥

॥ इति तृतीयोऽध्यायः ॥

'असंयोगाल्लिट् कित्' इति कित्त्व सिद्धमिति भावः । आदिति मुखसुखार्थो दकारो न तु तकारः । तेन तात्परत्वाभावाद्दीर्घस्यापि ऋकारस्य ग्रहण तदाह—ततुरिर्जगुरिरिति । तॄ प्लवनतरणयोः । गॄ निगरणे । आभ्या किः । द्वित्वात्परत्वात् 'बहुल छन्दसि' इत्युत्वे प्राप्ते 'द्विर्वचनेऽचि' इति निषेधादुत्वाभावे द्वित्वम् । उरदत्वम् । उत्तरस्योत्वम् ॥—**तुमर्थे**—॥ तुमुनोऽर्थस्तुमर्थो भावः । ननु 'कर्तरि कृत्' इति वचनात्कर्तरि तुमुनो विधानात्कथ भावोऽर्थ इति चेच्छृणु । अव्ययकृतो भावे इति वचनात्तुमुनो भावे विधानात् । तुमर्थे पञ्चदश प्रत्यया भवन्ति ॥—**वक्षे** इति । वचः से कुत्व षत्वम् । कषसंयोगे क्षः ॥—**एषे** इति । इणो गुणः । नकारो 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तार्थः ॥—**प्रेषे** इति । इणः से कित्त्वादगुणे आद्गुणः ॥—**श्रियसे** इति । इयङ् नित्त्वादाद्युदात्तः । इह मन्त्रे मध्योदात्तः पठ्यते । तत्र बाहुलकात्प्रत्ययस्वरो बोध्यः ॥—**आहुवध्यै** इति । जुहोतेरुवङ् ॥—**मादयध्यै** इति । मदी हर्षे ण्यन्ताच्छध्यैप्रत्ययः । तस्य भाववाचिसार्वधातुकत्वात्सार्वधातुके यकि प्राप्ते व्यत्ययेन शप् गुणायादेशौ ॥—**पिबध्यै** इति । अत्रापि यक्प्रसङ्गे व्यत्ययेन शप् । 'पाघ्रा–' इति पिबादेशः ॥—**दातवाउ** इति । ददातेस्तवै आयादेशे 'लोपः शाकल्यस्य' इति यलोपः ॥—**सूतवे** इति । ङित्त्वान्न गुणः ॥—**कर्तव** इति । कृञो गुणः । कर्तुमित्यर्थः ॥—**प्रयै** ॥ प्रपूर्वाद्यातेः कैप्रत्ययः । रुहेरिष्यै । नञ्पूर्वाद्व्यथेश्च ॥—**दृशे**—॥ योगविभागश्चिन्त्यप्रयोजनः । दृशेः ख्यातेश्च के प्रत्ययः । कित्त्वाद्दृशेर्न गुणः । ख्यातेरालोपश्च ॥—**विभाजमिति** । विपूर्वाद्भजतेर्णमुल् णित्त्वाद् 'अत उपधायाः' इति वृद्धिः ॥—**अपलुपम्**इति । लुप्लृ छेदने कित्त्वाद्गुणाभावः ॥—**ईश्वरे**—॥ ईश्वरशब्दे उपपदे धातोस्तोसुन्कसुनौ स्तश्छन्दसि ॥—**विचरितोरि**ति । चर गताविट् ॥—**विलिख** इति । लिख विलेखने कित्त्वान्न गुणः । 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति विभक्तेर्लुक् 'न लुमता–' इति निषेधाद् 'अत्वसन्तस्य–' इति दीर्घो न ॥—**कृत्यार्थे**—॥ कृत्यानामर्थौ भावकर्मणी तयोरेवेति कृत्यानां भावकर्मणोर्विधानात् तत्र एते प्रत्ययाः स्युः । यद्यपि कृत्यानामर्थौ 'भव्यगेय–' इत्यादौ कर्तापि वह्य स्नानीयमित्यादौ करणादिरपि, तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधानं किं तर्हि स्वरूपेण । कृत्यतया विधान तु भावकर्मणोरेवेति भावः ॥—**न म्लेच्छितवै** इति । न म्लेच्छितव्यमित्यर्थः ॥—**अवगाहे** इति । गाहू विलोडने ॥—**दिदृक्षेण्य** इति । दृशेः सन्नन्तात्केन्यः । अतो लोपः ॥—**कर्त्वमिति** । कृञः त्वन् । कृत्यमित्यर्थः । यद्यपि 'तुमर्थे सेसेन्–' इत्यनेन तुमर्थे तवै विहितस्तथापि भावभिन्नेऽपि कर्मकारके तवै यथा स्यादित्येवमर्थम् ॥—**अवचक्षे** ॥ अवपूर्वाच्चक्षिङ एश् प्रत्ययो निपात्यते । शित्त्वात्सार्वधातुकत्वं तेन ख्याञादेशो न ॥—**भावलक्षणे**—॥ कृत्यार्थे इति निवृत्तम् । तुमर्थ इति वर्तते प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम् । भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यस्तुमर्थे तोसुन् स्याच्छन्दसि । संस्थानादीनामवधित्वेन लक्षणं भावः ॥—**आ समाप्तेरिति** । संपूर्वो हि तिष्ठतिः समाप्तौ रूढः । संतिष्ठते पिण्डपितृयज्ञ इत्यादौ तथा दर्शनात् ॥—**आतमितोरिति** । तमु ग्लानौ ॥—**सृपितृदोः**—॥ सृप्लृ गतौ । उतृदिर् हिंसानादरयोः । भावलक्षणेऽर्थे वर्तमानयोः सृपितृदोस्तुमर्थे कसुन् ॥—**विसृप** इति । गमनादित्यर्थः ॥ इति तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ।

**राज्ञेश्चाजसौ** ।४।१।३१। रात्रिशब्दान्ङीप्स्यात् अजस्विषये छन्दसि । रात्री व्यख्यदायती । लोके तु कृदिकारादिति ङीष्यन्तोदात्तः । **नित्यं छन्दसि** ।४।१।४६। बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष् । बह्वीषु हित्वा । नित्यग्रहणमुत्तरार्थम् । **भुवश्च** ।४।१।४७। ङीष् स्यात् छन्दसि । विभ्वी । प्रभ्वी । विप्रसंभ्य इति डुप्रत्ययान्तं सूत्रेऽनुकियते । उत इत्यनुवृत्तेः । उवङादेशस्तु सौत्रः ॥ * **मुद्गलाच्छन्दसि लिच्च** । ङीषो लित्वमानुक् चागमः । लित्स्वरः । रथीरभून्मुद्गलानी । **दीर्घजिह्वी च छन्दसि** ।४।१।५९। संयोगोपधत्वादप्राप्तो ङीष् विधीयते । आसुरी वै दीर्घजिह्वी देवानां यज्ञवाट् । **कद्रुकमण्डल्वोश्छन्दसि** ।४।१।७१। ऊङ् स्यात् । कद्रूश्च वै कमण्डलूः ॥ * **गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्** । गुग्गुलूः । मधूः । जतूः । पतयालूः । अव्ययात्त्यप् ॥ * **आविष्ट्यस्योपसंख्यानं छन्दसि** । आविष्ट्यो वर्धते । **छन्दसि ठञ्** ।४।३।१९। वर्षाभ्यष्ठकोऽपवादः । स्वरे भेदः । वार्षिकम् । **वसन्ताच्च** ।४।३।२०। ठञ् स्यात् छन्दसि । वासन्तिकम् । **हेमन्ताच्च** ।४।३।२१। छन्दसि ठञ् । हैमन्तिकम् । योगविभाग उत्तरार्थः । **शौनकादिभ्यश्छन्दसि** ।४।३।१०६। णिनिः प्रोक्तेऽर्थे । छाणोरपवादः । शौनकेन प्रोक्तमधीयते शौनकिनः । वाजसनेयिनः । छन्दसि किम् । शौनकीया शिक्षा । **द्व्यचश्छन्दसि** ।४।३।१५०। विकारे मयट् स्यात् । शरमयं बर्हिः । यस्य पर्णमयी जुहूः । **नोत्वद्वर्ध्रबिल्वात्** ।४।३।१५१। उत्वान् उकारवान् । मौञ्जं शिक्यम् । वर्ध्रं चर्म तस्य विकारो वार्ध्री रज्जुः । बैल्वो यूपः । सभाया यः । **ढश्छन्दसि** ।४।४।१०६। सभेयो युवा । **भवे छन्दसि** ।४।४।११०। सप्तम्यन्ताद्भवार्थे यत् । मेध्याय च विद्युत्याय च । यथायथं शैषिकाणामणादीनां घादीनां चापवादोऽयं यत् । पक्षे तेऽपि भवन्ति । सर्वविधीनां छन्दसि वैकल्पिकत्वात् । तद्यथा मुञ्जवान्नाम पर्वतः । तत्र भवो मौञ्जवतः । सोमस्येव मौञ्जवतस्य भक्षः । आ चतुर्थसमाप्तेश्छन्दोऽधिकारः । **पाथोनदीभ्यां ड्यण्** ।४।४।१११। तमु त्वा पाथ्यो वृषा । चनो दधीत नाद्यो गिरो मे । पाथसि भवः पाथ्यः ।

---

**राज्ञेश्चाजसौ** ॥ न जसि अजसिस्तस्मिन् । इकार उच्चारणार्थः । 'आह्नौ प्रभूतादिभ्यः' इतिवत् ॥—**छन्दसीति** । ननु 'तिमिरपटैरवगुण्ठिता रात्र्यः' इति प्रयोगो न स्यात् छन्दसीत्युच्यते । न चेदं छन्दः अजसाविति निषेधाच्च । किं च वेदेऽपि रात्र्य इति प्रयोगो न स्याद् इत्याशङ्क्याह—**लोके त्विति** । तुशब्दोऽनुक्तसमुच्चयार्थः । लोके जसि वेदे चेत्यर्थः ॥ ॥—**कृदिकारादि**ति । राशदिभ्या त्रिरिति व्युत्पत्तिपक्षे कृदिकारान्तः । अव्युत्पत्तिपक्षे तु 'सर्वतोऽक्तिन्नर्थात्' इति ङीष् बोध्यः ॥—**नित्यम्** ॥ 'बह्वादिभ्यश्च' इति वर्तते 'अन्यतो ङीष्' इत्यतो ङीषिति च तदाह—**बह्वादिभ्य** इति । नन्वारम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं व्यर्थमित्याशङ्क्याह—**नित्यग्रहणमुत्तरार्थमि**ति ॥—**भुवः**—॥ —**विभ्वीति** । 'विप्रसंभ्यो ड्वसंज्ञायाम्' इत्यतो डुप्रत्ययान्तात् ङीष् । ननु स्वयम्भूरत्रापि स्यादित्याशङ्क्याह—**डुप्रत्ययान्तमि**ति । ननु डुप्रत्ययान्तानुकरणे प्रमाणं किमत आह—**उत इत्यनुवृत्तेरि**ति । 'वोतो गुणवचनात्' इति सूत्रात् । ननु तर्हि डुप्रत्ययान्तस्य 'घेर्ङिति' इति गुणे कृते भोः इति निर्देशः प्राप्नोति तदाह—**उवङादेशस्तु सौत्र** इति ॥—**मुद्गला**—॥ 'इन्द्रवरुण–' इति सूत्रस्थं वार्तिकमिदम् ॥—**लित्स्वर** इति । लितीत्यानुगाकारस्योदात्तत्वम् ॥—**दीर्घजिह्वी**—॥ दीर्घजिह्वीति निपात्यते छन्दसि ॥—**अप्राप्तो ङीषि**ति । 'स्वाङ्गाच्चोपसर्जनात्–' इति न प्राप्नोति तत्र ह्यसंयोगोपधादिति प्रतिषेधात् ॥—**कद्रू**—॥ 'ऊङुतः' इत्यत ऊङिति वर्तते कद्रुशब्दात्कमण्डलुशब्दाच्च स्त्रियामूङ् स्याच्छन्दसि ॥—**गुग्गुलुमधु**—॥ एषा व्यत्ययेन छन्दसि स्त्रीत्वम् । पतयालुशब्दः 'स्पृहिगृहि–' इत्यादिना आलुजन्तः ॥—**अव्यया**—॥ व्याख्यातमपि त्यबनुवृत्तिप्रदर्शनार्थं स्मारितम् ॥ —**आविष्ट्यस्येति** ॥ 'अव्ययात्त्यप्' इत्यत्र 'अमेहक्वतसित्रेभ्यः' इति नियमादप्राप्तः शैषिकस्त्यब् विधीयते । —**आविष्ट्य** इति । आविर्भूतमाविष्ट्यम् । 'ह्रस्वात्तादौ–' इति षत्वम् तकारस्य ष्टुत्वम् ॥—**ठकोऽपवाद** इति ॥ 'वर्षाभ्यष्ठक्' इति प्राप्तस्य ॥ ननु ठक्ठञोः को विशेषस्तत्राह—**स्वरे भेद** इति । ठञि कृते 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वं ठकि तु सति 'कितः' इत्यनेनान्तोदात्तत्वं स्यादिति भावः ॥—**वार्षिकमि**ति । ठस्येकः ॥—**उत्तरार्थ** इति । 'सर्वत्राण् च तलोपश्च' इत्येतदर्थः । तत्र ह्यस्यैवानुवृत्तिर्यथा स्यात् वसन्तस्य माभूत् ॥—**शौनक**—॥ 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' इति वर्तते तदाह—**णिनिरि**ति ॥—**प्रोक्ते** इति । 'तेन प्रोक्तम्' इत्येतस्मिन्नर्थे ॥—**शौनकीयेति** । वृद्धाच्छः ॥—**द्व्यचः** ॥ 'मयड्वैतयोर्भाषायाम्' इत्युक्तेर्वेदेऽप्राप्तो विधीयते ॥—**नोत्वत्** ॥ उकारवतः प्रातिपदिकाद्वर्ध्रबिल्वशब्दाभ्यां च मयण् न स्यात् 'द्व्यचश्छन्दसि' इति प्राप्तः प्रतिषिध्यते ॥—**मौञ्जमि**ति । मुञ्जशब्दादौत्सर्गिकोऽण् ॥—**वार्ध्रीति** । वर्ध्रशब्दादौत्सर्गिकोऽण् 'टिड्ढाणञ्–' इति ङीप् ॥—**ढश्छन्दसि** । सप्तम्यन्तात्सभाशब्दात् ढः साध्वर्थे ॥—**अणादीनां चेति** * 'तत्र भवः' इति प्राप्तानाम् ॥—**पाथोनदीभ्याम्** ॥ सप्तम्यन्ताभ्यामाभ्यां भवार्थे ड्यण् स्यात् ॥—**पाथसीति** । पाथो जलम् । 'कबन्धमुदकं पाथः' इत्यमरात् । 'पाथो-

नद्यां भवो नाद्यः । **वेशन्तहिमवद्भ्यामण्** ।४।४।११२। भवे । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा । **स्रोतसो विभाषा ड्यड्ड्यौ** ।४।४।११३। पक्षे यत् । ड्यड्ड्ययोस्तु स्वरे भेदः । स्रोतसि भवः स्रोत्यः । स्रोतस्यः । **सगर्भसयूथसनुताद्यन्** ।४।४।११४। अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्य उत वा जिघत्नु । नुतिर्नुतम् । नपुंसके भावे क्तः । सगर्भादयस्त्रयोऽपि कर्मधारयाः । समानस्य छन्दसीति सः । ततो भवार्थे यन् । यतोऽपवादः । **तुग्राद्घन्** ।४।४।११५। भवेऽर्थे । पक्षे यदपि । आ वः शमं वृषभं तुग्र्यासिवति बह्वृचाः । तुग्रियासिवति शाखान्तरे । धनाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति वृत्तिः । **अग्राद्यत्** ।४।४।११६। **घच्छौ च** ।४।४।११७। चाद्यत् । अग्रे भवोऽग्र्यः । अग्रियः । अग्रीयः । **समुद्राभ्राद्घः** ।४।४।११८। समुद्रिया अप्सरसो मनीषिणम् । नानदतो अभ्रियस्येव घोषाः । **बर्हिषि दत्तम्** ।४।४।११९। प्राग्घिताद्यदित्येव । बर्हिष्येषु निधिषु प्रियेषु । **दूतस्य भागकर्मणी** ।४।४।१२०। भागोंऽशः । दूत्यम् । **रक्षोयातूनां हननी** ।४।४।१२१। या ते अग्ने रक्षस्या तनूः । **रेवतीजगतीहविष्याभ्यः प्रशस्ये** ।४।४।१२२। प्रशंसने यत्स्यात् । रेवत्यादीनां प्रशंसनं रेवत्यम् । जगत्यम् । हविष्यम् । **असुरस्य स्वम्** ।४।४।१२३। असुर्यं देवेभिर्धायि विश्वम् । **मायायामण्** ।४।४।१२४। आसुरी माया । **तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः** ।४।४।१२५। वर्चस्वानुपधानो मन्त्र आसामिष्टकानां वर्चस्याः । ऋतव्याः । **अश्विमानण्** ।

---

ऽन्तरिक्ष' इति वृत्तिः ॥—**वैशन्तीभ्य** इति । विशेर्झच् । वेशन्तः पल्वलम् । तत्र भवा आपः वैशन्त्यः ॥—**सगर्भसयूथस—**॥ अतिगृभ्यां भन् । गिरति धीयंते वा गर्भः । युता भवन्त्यस्मिन्निति यूथम् । 'तीर्थपृष्ठयूथगूथप्रोथाः' इति थक्प्रत्ययान्तो निपातितः । दीर्घोऽपि निपातनादेव ॥—**कर्मधारया** इति । समानश्चासौ गर्भश्च । तत्र भवः सगर्भ्य इति विग्रहः ॥—**यतोऽपवाद** इति । 'भवे छन्दसि' इति प्राप्तस्य ॥—**अग्राद्यत्** ॥ 'भवे छन्दसि' इत्येव सिद्धे घादिभिर्बाधा माभूदिति यद्विधीयते ॥—**समुद्रा—**॥ समुन्दतीति समुद्रः । 'स्फायितञ्चि-' इति रक् । अपो बिभर्ति इत्यभ्रम् । मूलविभुजादित्वात्कः । अभ्रसमुद्रादिति वक्तव्ये समुद्राभ्रादित्युक्तिः पूर्वनिपातस्यानित्यत्वज्ञापनार्था ॥—**बर्हिषि—**॥ तत्र भव इति निवृत्तम् । बर्हिःशब्दाद्दत्तमित्यर्थे यत्प्रत्ययो भवति ॥—**बर्हिष्ये**ति । बृंहतेर्नलोपश्चेतीस्प्रत्ययान्तो बर्हिस्तस्माद्यत् ॥—**दूतस्य** ॥ दूतशब्दात्षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत्प्रत्ययः स्यात् । भागे 'तस्येदम्' इत्यणि प्राप्ते वचनम् । कर्मणि तु 'दूतवणिग्भ्या च' इत्यौपसङ्ख्यानिके ये दूत्यमित्यादि । दूतस्य भागो दूत्यः कर्म दूत्यम् ॥—**रक्षोयातूनाम्—**॥ षष्ठीबहुवचनान्ताभ्यां रक्षस्यातुशब्दाभ्यां हननीत्यस्मिन्नर्थे यत्स्यात् । रक्षेरसुनि रक्षः । 'कमितनिमनि-' इत्यादिना यातेस्तुन । यातुशब्दो रक्षःशब्दपर्यायः । न च 'विरूपाणामपि समानार्थानाम्' इत्येकशेषः स्यादिति वाच्यम् । बह्वर्थाभिधायिस्वरूपवचनेन सूत्रे भिन्नार्थत्वात् ॥—**रक्षस्ये**ति । हन्यतेऽनया सा हननी रक्षसाम् । एवं यातव्या । बहुवचनं स्तुतिवैशिष्ट्यज्ञापनाय । बहूनां रक्षसां हनने हि स्तुतिः प्रतीयते ॥—**रेवतीजगती—**॥ प्रशसनं प्रशस्यम् । प्रपूर्वाच्छसु स्तुतावित्यस्माद्भावे क्यप् तदाह—**प्रशंसने** इति । रयिरस्यास्तीति रेवती । रयिशब्दान्मतुप् 'छन्दसीरः' इति वत्वम् । रयेः 'मतौ बहुलम्' इति संप्रसारणम् । उगित्वान्ङीप् । नक्षत्रे गौरादित्वान्ङीष् जगच्छब्दात् 'वर्तमाने-' इत्यनेन शतृवद्भावात् 'उगितश्च' इति ङीप् । हविषे हिता हविष्या । उगवादित्वाद्यत् तासां प्रशंसनं हविष्यं यस्येति लोपे कृते 'हलो यमां यमि-' इति यलोपः ॥—**असुरस्य स्वम्** ॥ असुरशब्दात्षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्स्यात् ॥—**असुर्यमि**ति । न सुरोऽसुरः सुरप्रतिपक्षी । अथ वा असेरुरच् अस्यति अस्यते वा असुरः । तस्य स्वमसुर्यम् ॥—**मायायामण्** ॥ मीयतेऽनयेति माया असदर्थप्रकाशनशक्तिः । माङ औणादिको यः । तस्यां वाच्यायामसुरशब्दादण् स्यात्पूर्वसूत्रापवादः ॥—**आसुरी**ति । 'टिड्ढाणञ्-' इति ङीप् ॥—**तद्वानासा—**॥ मत्वन्तात्प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्स्यात् तत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ताः भवन्ति । मतोश्च लुक् ॥—**वर्चस्वानि**ति । वर्चःशब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान् कुम्भेष्टकोपधानमन्त्रः 'भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवे' इत्यादिकः । उपधीयतेऽनेनेत्युपधानम् । चयनं रचनमित्यर्थः ॥—**ऋतव्या** इति । ऋतुशब्दो यस्मिन्मन्त्रेऽस्ति स ऋतुमान् स च मधुश्च माधवश्चेत्यादिकः । ऋतुमानुपधानो मन्त्र आसामिष्टकानामृतव्याः । तद्वानिति किम् । मन्त्रादेव समुदायान्माभूदिति काशिका । अत्र हरदत्तः । ननु तद्वानित्यस्मिन्नसति 'समर्थानां प्रथमाद्वा' इति वचनादासामिति प्रथमानिर्दिष्टत्वात्षष्ठ्यन्तादिष्टकाभिधायिनः उपधानमन्त्रे प्रत्ययः स्यादिति वाक्यार्थः स्यात् । तथा च समुदायान्न प्राप्नोतीति चेत्सत्यम् । आसामिति प्रथम न करिष्यत इति मत्वा प्रश्नप्रतिवचने ततश्चोपधानो मन्त्र आसामिष्टकासु लुक् च मतोरिति योगः करिष्यते । तथा च तद्वानित्यस्याभावे भूतं च स्थ भव्यं च स्थेत्ययमुपधानो मन्त्र आसामिष्टकानामिति वाक्यं स्यात् । तथा चेतिना परामृष्टान्मन्त्रसमुदायादेव प्रत्ययः प्राप्नोतीति भावः । उपधान इति किम् । वर्चस्वदभिमन्त्रणमासामित्यत्र माभूत् । 'शिवेन मा चक्षुषा' इत्यनुवाकः । कुम्भेष्टकाभिमन्त्रणे विनि-

।४।४।१२६। आश्विनीरुपदधाति। **वयस्यासु मूर्ध्नो मतुप्** ।४।४।१२७। तद्वानासामिति सूत्रं सर्वमनुवर्तते। मतोरिति पदमावर्त्य पञ्चम्यन्तं बोध्यम्। मतुबन्तो यो मूर्धशब्दस्ततो मतुप्स्यात्प्रथमस्य मतोर्लुक्च वयःशब्दवन्म-न्त्रोपधेयास्विष्टकासु। यस्मिन्मन्त्रे मूर्धवयःशब्दौ स्तस्तेनोपधेयासु। मूर्धन्वतीरुपदधातीति प्रयोगः। **मत्वर्थे मासतन्वोः** ।४।४।१२८। नभोऽम्बम् तदस्मिन्नस्तीति नभस्यो मासः। ओजस्या तनूः। **मधोर्ञ्च** ।४।४।१२९। माधवः। मधव्यः। **ओजसोऽहनि यत्खौ** ।४।४।१३०। ओजस्यमहः। ओजसीनं वा। **वेशोयशआदे-र्भगाद्यल्खौ** ।४।४।१३१।१३२। यथासंख्यं नेष्यते। वेशो बलं तदेव भग इति कर्मधारयः। वेशोभग्यः। वेशोभ-गीनः। यशोभग्यः। यशोभगीनः। **पूर्वैः कृतमिनयौ च** ।४।४।१३३। गम्भीरेभिः पथिभिः पूर्विणेभिः। ये ते पन्थाः सवितः पूर्व्यासः। **अद्भिः संस्कृतम्** ।४।४।१३४। यस्येदमप्यं हविः। **सहस्रेण सम्मितौ घः**। ४।४।१३५। सहस्रियासो अपां नोर्मयः। सहस्रेण तुल्या इत्यर्थः। **मतौ च** ।४।४।१३६। सहस्रशब्दान्मत्वर्थे घः स्यात्। सहस्रमस्यास्तीति सहस्रियः। **सोममर्हति यः** ।४।४।१३७। सोम्यो ब्राह्मणः। यज्ञार्ह इत्यर्थः। **मये च** ।४।४।१३८। सोमशब्दाद्यः स्यान्मयडर्थे। सोम्यं मधु। सोममयमित्यर्थः। **मधोः** ।४।४।१३९। मधुशब्दान्मयडर्थे यत्स्यात्। मधव्यः। मधुमय इत्यर्थः। **वसोः समूहे च** ।४।४।१४०। चान्मयडर्थे यत्। वसव्यः॥ * **अक्षरसमूहे छन्दस उपसंख्यानम्**। छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यदित्यर्थः। आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तद-शाक्षरश्छन्दस्यः। **नक्षत्राद्घः** ।४।४।१४१। स्वार्थे। नक्षत्रियेभ्यः स्वाहा। **सर्वदेवात्तातिल्** ।४।४।१४२।

युक्तः। मन्त्र इति किम्। अङ्गुलिमानुपधानो हस्त आसामित्यत्र माभूत्। इष्टकास्विति किम्। वर्चस्वानुपधान आसां शर्कराणामित्यत्र माभूत्। इतिकरणं नियमार्थम्। अनेकपदसंभवे केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते न सर्वेण। मतु-ब्ग्रहणमुत्तरार्थम्। अश्विमानित्यत्र मतुप एव लुक् यथा स्यात् इनेर्माभूत्। इह तु मत्वन्तात्प्रत्ययविधानात्तस्यैव लुक् भविष्यति॥—**अश्विमान्**॥ अश्विशब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान्मन्त्रः स च ध्रुवक्षितिरित्यादिकः। प्रथमान्ताद-श्विमच्छब्दादासामिति षष्ठ्यर्थे अण् स्यात् यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति। यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति मतोश्च लुक्॥—**आश्विनीरुपदधाती**ति। अश्वशब्दात् 'अत इनिठनौ' इत्यस्त्यर्थे इनिः। तदन्तान्मतुप् अश्विमान्स उपधानो मन्त्र आसामिष्टकानामिति विगृह्याणि विहिते मतोश्च लुकि कृते 'इनण्यनपत्ये' इति प्रकृतिभावः॥ —**वयस्यासु**—॥ वयस्वानुपधानो मन्त्र आसामिष्टकानां ता वयस्यास्तास्वभिधेयासु प्रथमासमर्थान्मतुबन्तमूर्धशब्दा-दासामिति षष्ठ्यर्थे मतुप्स्यात्। यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति यदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति। यस्मिन्मन्त्रे मूर्धशब्दो वयःशब्दश्च विद्यते स मूर्धवान् वयस्वान् यथा मूर्धा वयः प्रजापतिश्छन्द इति तत्र वयस्वच्छब्दा-दिव मूर्धवच्छब्दादपि पूर्वेण यति प्राप्ते मतुब्विधीयते इत्याशयेनाह—**यस्मिन्मन्त्रे** इति॥—**मूर्धन्वतीरि**ति। 'अनो नुट्' इति नुडागमः। मूर्धवत इति वक्तव्ये भाविनं मतुब्लुकं चेतसि कृत्वा मूर्ध इत्युक्तम्॥—**मत्वर्थे**—॥ यस्मि-न्नर्थे मतुब्विहितस्तस्मिन्नर्थे प्रथमान्ताद्यत्स्यात् मासतन्वोरभिधेययोः। ननु प्रथमासमर्थमिति कस्मादागतमिति चेन्मत्वर्थ-ग्रहणादित्यवेहि। 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति ऊकारान्तस्तनूशब्दः सूत्रे निर्दिष्टः। न तु 'भृमृशीङ्तृच-रित्सरितनिधनिमिमस्जिभ्य उः' इत्युकारान्तः 'द्वन्द्वे घि' इति पूर्वनिपातप्रसङ्गात्॥—**ओजस्या** इति। ओजो यस्या यस्यां वा अस्तीत्योजस्या॥—**मधोः**—॥ मधुशब्दान्मत्वर्थे ञः स्याच्चाद्यत्॥—**मधव्या** इति। ओर्गुणः। 'वान्तो यि-' इति अवादेशः॥—**ओजसोऽह**—॥ ओजःशब्दान्मत्वर्थे यत्खौ स्तोऽहन्यभिधेये। ननु यद्ग्रहणं व्यर्थं खश्चेत्येवा-स्त्विति चेन्मैवम्। खश्चेत्युच्यमानेऽनन्तरसूत्रविहितस्य ञमात्रस्य समुच्चयो विज्ञायेत तस्माद्यद्ग्रहणम्॥—**वेशोयश**—॥ वेशश्च यशश्च वेशोयशसी ते आदौ यस्य तस्माद्वेशोयशआदेर्भगात्प्रातिपदिकाद्यल्खौ स्तो मत्वर्थे। लकारः स्वरार्थः॥ —**पूर्विणेभिरि**ति। पूर्वैः कृताः पूर्विणाः तैः। एवं पूर्व्यासः पूर्विणाः॥—**अद्भिः**—॥ तृतीयान्तादप्शब्दा-त्संस्कृतमित्यर्थे यत्स्यात्॥—**सहस्रेण**—॥ तृतीयान्तात्सहस्रशब्दात्संमितमित्येतस्मिन्नर्थे घः स्यात्। संमितः सदृश-स्तुल्य इत्यर्थः॥—**सहस्रिया** इति। सहस्रेण संमिताः सहस्रियाः 'यस्येति च' इत्यकारलोपः। समिताविति पाठा-न्तरम्॥—**मतौ**—॥ 'तपःसहस्राभ्यां विनीनी' इत्यस्यापवादः॥—**सोममर्हति**—॥ द्वितीयान्तात्सोमशब्दादर्हती-त्यस्मिन्नर्थे यत्स्यात्॥—**सोम्य** इति। सोममर्हतीति सोम्यः॥—**मये च**॥ आगतविकारावयवप्रकृता मयडर्थाः। तत्रागते पञ्चमी समर्थविभक्तिः। विकारावयवयोः षष्ठी प्रकृतवचने प्रथमा॥—**मधोर्यः स्यादि**ति। वृत्तिकारस्तु यतमेवानुवर्तयति न तु यम्॥—**नक्षत्रात्**॥—**स्वार्थ** इति। समूह इति नानुवर्तते। तेनाऽनिर्दिष्टार्थत्वात्स्वार्थे प्रत्यय

स्वार्थे । सविता नः सुवतु सर्वतातिम् । प्रदक्षिणिद्देवतातिमुराणः । ※ शिवशमरिष्टस्य करे ।४।४।१४३। करोतीति करः । पचाद्यच् । शिवं करोतीति शिवतातिः । याभिः शन्ताती भवथो ददाशुषे । अथो अरिष्टतातये । ※ भावे च ।४।४।१४४। शिवादिभ्यो भावे तातिः स्याच्छन्दसि । शिवस्य भावः शिवतातिः । शन्तातिः । अरिष्टतातिः ॥ इति चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः ।

**सप्तनोऽञ्छन्दसि** ।५।१।६१। तदस्य परिमाणमिति वर्गे इति च । सप्त साप्तानि असृजत् ॥ * **शन्शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः** । पञ्चदशिनोऽर्धमासाः । त्रिंशिनो मासाः ॥ * **विंशतेश्चेति वाच्यम्** । विंशिनोऽङ्गिरसः ॥ * **युष्मदस्मदोः सादृश्ये वतुब्वाच्यः** । त्वावतः पुरूवसो । न त्वावां अन्यः । यज्ञं विप्रस्य मावतः । ※ **छन्दसि च** ।५।१।६७। प्रातिपदिकमात्रात्तदर्हतीति यत् । सादन्यं विदथ्यम् । ※ **वत्सरान्ताच्छश्छन्दसि** ।५।१।९१। निर्वृत्तादिष्वर्थेषु । इद्वत्सरीयः । ※ **संपरिपूर्वात्ख च** ।५।१।९२। चाच्छः । संवत्सरीणः । संवत्सरीयः । परिवत्सरीणः । परिवत्सरीयः । ※ **छन्दसि घस्** ।५।१।१०६। ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे । भाग ऋत्वियः । ※ **उपसर्गाच्छन्दसि धात्वर्थे** ।५।१।११८। धात्वर्थविशिष्टे साधने वर्तमानात्स्वार्थे वतिः स्यात् । यदुद्वतो निवतः । उद्गतान्निर्गतादित्यर्थः । ※ **थट् च छन्दसि** ।५।२।५०। नान्तादसंख्यादेः परस्य डटस्थट् स्यान्मट् च । पञ्चथम् । पञ्चमम् । ※ **छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि** ।५।२।८९। अपत्यं परिपन्थिनम् । मात्वा परिपरिणो विदन् । ※ **बहुलं छन्दसि** ।५।२।१२२। मत्वर्थे विनिः स्यात् । * **छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्** । इति दीर्घः । मंहिष्ठमुभयाविनम् । शुनमष्ट्राव्यचरत् ॥ * **छन्दसीवनिपौ च वक्तव्यौ** । ई । रथीरभूत् । सुमङ्गलीरियं वधूः । मघवानमी-

---

उत्पद्यत इत्यर्थः ॥—**सर्वदेवात्**—॥ सर्वशब्दाद्देवशब्दाच्च तातिल् स्यात् ॥—**शिवशम**—॥ करशब्दसामानाधिकरण्यात् 'शिवशमरिष्टस्य' इति 'उभयप्राप्तौ कर्मणि' इति षष्ठी ॥ इति वैदिकसुबोधिन्यां चतुर्थोऽध्यायः ॥

**सप्तनोऽञ्** ॥ सप्तन्शब्दादञ् स्याच्छन्दसि ॥—**साप्तानी**ति । सप्तन्शब्दादञि 'नस्तद्धिते' इति टिलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां जस् । 'जश्शसोः शिः' । 'नपुंसकस्य—' इति नुम् । उपधादीर्घः । शन्शतोः डित्करण शदन्तस्य टिलोपार्थम् ॥—**पञ्चदशिन** इति । पञ्चदशाहानि परिमाणमेषामिति डिनिः । टिलोपः । एतेन त्रिंशिनो व्याख्याताः ॥ —**विंशिनोऽङ्गिरस** इति । विंशतिर्गोत्राणि परिमाणमेषामिति विग्रहे डिनि कृते 'तिर्विंशतेर्डिति' इति तिशब्दलोपे कृते यस्येति लोपः । अङ्गिरसः अयास्यगार्ग्यगौतम इत्यादिप्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः ॥—**त्वावत** इति । त्वमिव त्वावान् । तस्य त्वावतः । अहमिवेति मावान् । तस्य मावतः 'प्रत्ययोत्तरपदयोश्च' इति त्वमादेशौ । 'आ सर्वनाम्नः' इत्यात्वम् ॥—**सादन्यमि**ति ॥ सदन गृहमर्हतीति सादन्यः । 'अन्येषामपि—' इति दीर्घः ॥—**विदथ्यमि**ति । विदथो यज्ञस्तमर्हतीत्यर्थः ॥—**इद्वत्सरीय** इति । इद्वत्सरेण निर्वृत्तः इद्वत्सरमधीष्टो भृतो भूतो भावी वा इद्वत्सरीयः । इद्वत्सरेदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः सञ्ज्ञे । एव सवत्सरपरिवत्सरशब्दावपि ॥ —**सम्परिपूर्वात्** ॥ सम्परिपूर्वाद्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः स्याच्चाच्छः ॥—**छन्दसि घस्** ॥ 'समयस्तदस्य प्राप्तम्' इत्यतस्तदस्य प्राप्तमिति 'ऋतोरण्' इत्यतः ऋतोरिति चानुवर्तते तदाह—**ऋतुशब्दादित्यादि** ॥—**ऋत्विय** इति । 'सिति च' इति पदत्वेन भत्वे निरस्ते 'ओर्गुणः' इति गुणाभावे यण् ॥—**उपसर्गात्**—॥ इह धातुशब्देन धातुवाच्या क्रिया लक्ष्यते । सार्थः प्रयोजनं यस्य साधनस्य तस्मिन्वर्तमानादित्यर्थस्तदाह—**धात्वर्थविशिष्ट** इति । उपसर्गाश्च पुनरेवमात्मकाः । यदुत श्रुतायां क्रियायां तामेव विशिषन्ति । यथा आगच्छति । यत्र तु न श्रूयते तत्र क्रियाविशिष्टसाधनमाहुः । यथा निष्कौशाम्बिः । तथा च यत्र क्रियापद न श्रूयते तत्रैव यथा स्यादित्येवमर्थं धात्वर्थ इत्युक्तम् ॥—**थट् च** ॥ 'तस्य पूरणे—' इत्यतः डडिति 'नान्तादसंख्यादेः—' इति च तदाह—**नान्तादित्यादि** ॥ —**पञ्चथमि**ति । पञ्चाना पूरणमित्यस्मिन्नर्थे डटि कृते तस्य थडागमः ॥—**छन्दसि**—॥ परिपन्थिन् परिपरिन् एतौ निपात्येते छन्दसि पर्यवस्थातरि वाच्ये । पर्यवस्थाता प्रतिपक्षः । सपत्न इत्युच्यते । निपातनं चात्र । पर्यवस्थातृशब्दात्स्वार्थे इनिप्रत्ययोऽवस्थातृशब्दस्य पन्थि परि एतावादेशौ च निपात्येते ॥—**बहुलम्**—॥ 'अस्मायामेधास्रजो विनिः' इति वर्तते तदाह—**विनिः स्यादि**ति ॥—**अष्ट्रावी**ति । अशेः ष्ट्रन् । अष्ट्रा दंष्ट्रापर्यायोऽयम् । मेखलावी द्वयावी रुजावी हृदयावी । अत्र द्वयोभयहृदयान्येव दीर्घत्वं प्रयोजयन्ति । अन्येषां स्वत एव दीर्घत्वात् ॥—**छन्दसी**—॥ ईश्च वनिप् च ईवनिपौ ॥—**ई** इति । ईप्रत्ययोदाहरणमुच्यते ॥—**रथीरि**ति । रथोऽस्यास्तीति रथी: ॥—**सुमङ्गलीरि**ति । सुष्ठु मङ्ग-

मदे। **तयोर्दाहिलौ च छन्दसि** ।५।३।२०। इदन्तदोर्यथासंख्यं स्तः। इदा हि व उपस्तुतिम्। तर्हि। **था हेतौ च छन्दसि** ।५।३।२६। किमस्था स्याद्धेतौ प्रकारे च। कथा ग्रामं न पृच्छसि। कथा दाशेम। **पश्च पश्चा च छन्दसि** ।५।३।३३। अवरस्य अस्तात्यर्थे निपातौ। पश्च हि सः। नो ते पश्चा। **तुश्छन्दसि** ।५।३।५९। तृजन्तात्तृन्नन्ताच्च इष्ठनीयसुनौ स्तः। आसुतिं करिष्ठः। दोहीयसी धेनुः। **प्रत्नपूर्वविश्वेमात्थाल् छन्दसि** ।५।३।१११। इवार्थे। तं प्रत्नथा पूर्वथा विश्वथेमथा। **अमु च छन्दसि** ।५।४।१२। किमेत्तिङव्ययघादित्येव। प्र तं नय प्रतरम्। **वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि** ।५।४।४१। स्वार्थे। यो नो दुरेवो वृकतिः। ज्येष्ठतातिं बर्हिषदम्। **अनसन्तान्नपुंसकाच्छन्दसि** ।५।४।१०३। तत्पुरुषाट्टच् स्यात्समासान्तः। ब्रह्मसामं भवति। देवच्छन्दसानि। **बहुप्रजाश्छन्दसि** ।५।४।१२३। बहुप्रजा निर्ऋतिमाविवेश। **छन्दसि च** । ५।४।१४२। दन्तस्य दतृशब्दः स्याद्बहुव्रीहौ। उभयतोदतः प्रतिगृह्णाति। **ऋतश्छन्दसि** ।५।४।१५८। ऋदन्ताद्बहुव्रीहेर्न कप्। हता माता यस्य हतमाता ॥ इति पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ।

एकाचो द्वे प्रथमस्य ॥ * **छन्दसि वेति वक्तव्यम्** ॥ यो जागार। दाति प्रियाणि। **तुजादीनां दीर्घोऽभ्यासस्य** ।६।१।७। तुजादिराकृतिगणः। प्र भरा तूतुजानः। सूर्ये मामहानम्। दाधार यः पृथिवीम्। स तूताव। **बहुलं छन्दसि** ।६।१।३४। ह्वः संप्रसारणं स्यात्। इन्द्रमाहुव ऊतये ॥ * **ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि।** ऋच्शब्दे परे त्रेः संप्रसारणमुत्तरपदादेर्लोपश्चेति वक्तव्यम्। तृचं सूक्तम्। छन्दसि किम्। त्र्यृचा-

मिति 'सुः पूजायाम्' इति समासः। ततोऽनेन मत्वर्थीय ईकारप्रत्ययः ॥—**मघवानिति** । मघं धन तदस्यास्तीति वनिपि, मतुपि तु मघवच्छब्दः ॥—**तयोः** ॥ तच्छब्देन 'इदमोर्हिल्' 'तदो दा च' इति सन्निहिताविदन्तदौ परामृश्येते तदाह—**इदन्तदोरिति**। सूत्रे व्यत्ययेन पञ्चम्याः स्थाने षष्ठी ॥—**यथासंख्यं स्त** इति । इदशब्दाद्दा तच्छब्दात् र्हिल् ॥—**इदा** । इदम्शब्दाद्दा 'इदम इश्' इत्यनेनेशादेशः ॥—**था हेतौ**-॥ 'प्रकारवचने थाल्' इत्यतः प्रकारवचन इति किमर्थेति तदाह—**किमस्था स्यादित्यादि** ॥—**कथा ग्रामं न पृच्छसी**ति। केन हेतुना न पृच्छसीत्यर्थः । तस्य 'प्राग्दिशो विभक्तिः' इत्यधिकाराद्विभक्तिसञ्ज्ञायां 'किमः कः' इति कादेशः । प्रकारवचने उदाहरणमाह—**कथा दाशेमे**ति। केन प्रकारेणेत्यर्थः ॥—**पश्च पश्चा**-॥ अवरस्य पश्चभावः अकाराकारौ च प्रत्ययौ निपात्येते ॥—**अस्तात्यर्थे** इति । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥—**करिष्ठ** इति । कर्तृशब्दादिष्ठन् 'तुरिष्ठेमेयःसु' इति तृलोपः ॥—**दोहीयसी**ति। अतिशयेन दोग्ध्रीत्यर्थः। लिङ्गविशिष्टपरिभाषया दोग्ध्रीशब्दात्प्रत्ययः 'भस्याढे' इति पुंवद्भावेन ङीपो निवृत्तिः। ततः 'तुरिष्ठेमेयःसु' इति तृचि निवृत्ते निमित्ताभावाद्धत्वकुत्वयोरपि निवृत्तिः ॥—**प्रत्नपूर्व**-॥ प्रत्न पूर्व विश्व इम एभ्यस्थाल् स्यात् ॥—**अमु च** ॥ किमेत्तिङव्ययघाद् द्रव्यप्रकर्षे वर्तमानादमुप्रत्ययो भवति ॥—**प्रतरमि**ति। प्रकर्षार्थस्य प्रकर्षे तरप्। प्रकृष्टतर इतिवत् तदन्तादमुः । स्वरादिषु अम् इति पठ्यते तेन तदन्तस्याव्ययत्वे सुपो लुक्। अत्रोदित्करणम् 'इच एकाचोऽम्प्रत्ययवच्च' इत्यत्रास्य ग्रहणं माभूत्। यदि स्यात्तर्हि अत्रापि यद्दृष्टं कार्यं तदप्यतिदिश्येत। तत्र को दोषः। इह श्रियमन्यमानः यस्येति लोपः प्राप्नोति ॥—**अनसन्तात्** ॥ अन्नन्तस्योदाहरणमाह—**ब्रह्मसाममि**ति । असन्तस्याह—**देवच्छन्दसानी**ति ॥—**बहुप्रजाः** ॥ बहुप्रजा इति निपात्यते छन्दसि ॥—**बहुप्रजा** इति। बह्व्यः प्रजा यस्येति बहुव्रीहिः। असिच् प्रत्ययः। 'यस्येति च' इत्यकारलोपः। 'अत्वसन्तस्य-' इति दीर्घं रुत्वविसर्गौ ॥—**छन्दसि च** ॥ 'वयसि दन्तस्य दतृ' इत्यतो दन्तस्य दतृ इत्यनुवर्तते तदाह—**दन्तस्य दतृ स्यादि**ति ॥—**उभयतोदत** इति। उभयतो दन्ता यस्येति विग्रहः ॥—**हतमाता** इति । 'नद्यृतश्च' इति नित्यं कप् प्राप्तः ॥ इति सुबोधिन्या पञ्चमोऽध्यायः ॥

**जागारे**ति। जागृ निद्राक्षये । लिटि प्रथमपुरुषैकवचनम् ॥—**दाती**ति ॥ डुदाञ् दाने लट्। शपः श्लुः। 'श्लौ' इति नित्यं द्वित्वे प्राप्ते विकल्पः ॥—**तूतुजान** इति। तुजेर्लिट् तस्य कानजादेशः ॥—**मामहानमि**ति। मह पूजायां कानच् ॥—**तूतावे**ति। तुः सौत्रो धातुः तस्माल्लिट् ॥—**बहुलं छन्दसि** ॥ 'ह्वः सम्प्रसारणं' इति वर्तते तदाह—**ह्वः संप्रसारणं स्यादि**ति ॥—**आहुवे** इति। आङ्पूर्वात् ह्वेञो लडात्मनेपदोत्तमैकवचनम्। 'बहुलं छन्दसि' इति शपो लुकि कृते संप्रसारणमुवङादेशश्च ॥—**तृचं सूक्तमि**ति। तिस्रः ऋचो यस्मिन्तत् तृचम्। 'ऋक्पूरब्धूःपथामानक्षे' इति

ति ॥ * **रयेर्मतौ बहुलम्** । रेवान् । रयिमान् पुष्टिवर्धनः । **चायः की** ।६।१।३५। न्यश्न्यं चिक्युर्न निचि-क्युरन्यम् । लिटि उसि रूपम् । बहुलग्रहणादनुवृत्तेर्नेह । अग्निं ज्योतिर्निचाय्य । **अपस्पृधेथामानृचुरानृहुश्चि-च्युषेतित्याजश्राताश्रितमाशीराशीर्ताः** ।६।१।३६। एते छन्दसि निपात्यन्ते । इन्द्रश्च विष्णो यदपस्पृधेथाम् । स्पर्धेर्लङि आथाम् । अर्कमानृचुः । वसून्यानृहुः । अर्चेरर्हेश्च लिटथुसि । चिच्युषे । च्युङो लिटि थासि । यत्तित्याज । त्यजेर्णलि । श्रातास्त इन्द्र सोमाः । श्रिता नो ग्रहाः । श्रीञ् पाके निष्ठायाम् । आशीरं दुहे । मध्यत आशीर्तः । श्रीञ एव क्विपि निष्ठायां च । **खिदेश्छन्दसि** ।६।१।५२। खिद दैन्ये । अस्यैच आत्वा स्यात् । चिखाद । चिखे-देत्यर्थः **शीर्षश्छन्दसि** ।६।१।६०। शिरःशब्दस्य शीर्षन् स्यात् । शीर्ष्णः शीर्ष्णो जगतः । **वा छन्दसि** ।६।१।१०६। दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात् । वाराही । वाराह्यौ । मानुषीरीळते विशः । उत्तरसूत्रद्व-येऽपीदं वाक्यभेदेन संबध्यते । तेनामि पूर्वत्वं वा स्यात् । शमीं च शम्यं च । सूर्म्यं सुषिरामिव । संप्रसारणाच्चेति पूर्वरूपमपि वा । इज्यमानः । यज्यमानः । **शेश्छन्दसि बहुलम्** ।६।१।७०। लोपः स्यात् । या ते गात्राणाम् । ता ता पिण्डानाम् ॥ * **एमन्नादिषु छन्दसि पररूपं वक्तव्यम्** । अपां त्वेमन् । अपां त्वोद्मन् । **भय्यप्रवय्ये च छन्दसि** ।६।१।८३। बिभेत्यस्मादिति भय्यः । वेतेः प्रवय्या इति स्त्रियामेव निपातनम् । प्रवेयमित्यन्यत्र । छन्दसि किम् । भेयम् । प्रवेयम् ॥ * **ह्रदय्या उपसंख्यानम्** । ह्रदे भवा ह्रदय्या आपः । भवे छन्दसि यत् । **प्रकृ-त्यान्तःपादमव्यपरे** ।६।१।११५। ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात् अति परे न तु वकारयकारपरेऽति ।

---

समासान्तः अः ॥—**रयेर्मतौ** ॥ रयिशब्दस्य मतौ परतः सम्प्रसारणं स्याच्छन्दसि । **रेवानिति** । 'छन्दसीरः' इति वत्वम् ॥—**रयिमानिति** । बहुलग्रहणात्संप्रसारणवत्वयोरभावः ॥—**चायः की** ॥ चायतेर्बहुलं कीत्यय-मादेशः स्याच्छन्दसि ॥—**चिक्युरिति** । 'कुहोश्चुः' इति चुः ॥—**निचाय्येति** । चायृ पूजानिशामनयोः अस्मात्क्त्वा । गतिसमासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेशः ॥—**स्पर्धेर्लङ्याथामिति** । द्विर्वचनं रेफस्य संप्रसारणमकारलोपश्च निपातनात् ॥ अपस्पर्धेथामिति भाषायाम् । अपरे तु अपपूर्वस्य स्पर्धेर्लङ्यामि संप्रसारणमलोपश्च निपातनात् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाभावः । तन्मते प्रत्युदाहरणमपास्पर्धेथामिति भाषायाम् ॥—**अर्चेरर्हेश्चेति** । संप्रसारणमलोपश्च निपातनात् ततो द्विर्वचनमुरदत्वम् 'अत आदेः' इति दीर्घत्वम् । 'तस्मान्नुड् द्विहलः' इति नुडागमः । आनर्चुरानर्हुरिति भाषायाम् ॥—**च्युङो लिटीति** । अभ्यासस्य संप्रसारणमनित्वं च निपातनात् । चुच्युविषेति भाषायाम् ॥—**त्यजेर्णलीति** । त्यज वयोहानौ । अभ्यासस्य संप्रसारणं निपात्यते । तत्या-जेति भाषायाम् ॥—**श्राता इति** । श्रीञ् पाके इत्यस्य निष्ठायां श्राभावः ॥—**श्रिता इति** । तस्यैव श्रीणातेर्ह्रस्वत्वं च ॥ —**आशिरमिति** । आङ्पूर्वस्य श्रीणातेः क्विप् धातोः शिर आदेशः । तस्माद्द्वितीयैकवचनम् ॥—**आशीर्त इति** । श्रीञः आङ्पूर्वस्य शिर इत्यादेशः । निष्ठायाश्च नत्वाभावो निपातनात् । 'हलि च' इति दीर्घः ॥—**खिदेश्छन्दसि** ॥ 'आदेच उपदेशे—' इत्यतः आदिति एच इति च वर्तते 'विभाषा लीयतेः' इत्यतो विभाषेति च तदाह—**आत्वा स्यादिति** ॥ —**चिखादेति** । व्यत्ययेन परस्मैपदम् ॥—**शीर्ष्ण इति** । 'अल्लोपोऽनः' इत्यल्लोपः । 'रषाभ्याम्—' इति णत्वम् । 'पूर्वस्मा-दपि विधौ स्थानिवद्भावः' इति पक्षे तु 'अट्कुप्वाङ्—' इत्यनेन ॥—**वा छन्दसि** ॥ 'नादिचि' 'दीर्घाज्जसि च' इति वर्तते तदाह—**दीर्घादित्यादि** ॥—**वाराही इति** । वराहस्य विकार इति 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति प्राणि-रजतादिभ्योऽञ् । ङीप् । द्विवचने पूर्वसवर्णदीर्घः । पूर्वसवर्णाभावे यणादेशः ॥—**मानुषीरिति** । प्रथमाबहुवचनम् । 'मनोर्जातावञ्यतौ षुक् च' इति अञ् मनोः षुगागमः ॥—**सूत्रद्वये इति** । 'अमि पूर्वः' 'सम्प्रसारणाच्च' इत्यत्र॥—**वाक्य-भेदेनेति** । अकः अमि पूर्वरूपं वा स्याच्छन्दसि । तथा 'सम्प्रसारणाच्च' इति पूर्वरूपं वा स्याच्छन्दसि । तदाह—**तेनेति** ॥ —**शम्यं चेति** । विकल्पविधानसामर्थ्यात्पूर्वरूपत्वाभावे पूर्वसवर्णदीर्घोऽपि न भवति । तयोरत्र विशेषाभावादिति यणादेश एव भवति ॥—**यज्यमान इति** । यजेर्लटः शानच् । 'सार्वधातुके—' इति यक् 'आने मुक्' इति मुक् । 'ग्रहिज्या—' इति संप्रसारणं पूर्वरूपस्य वैकल्पिकत्वादभावे यण् ॥—**या ते इति** । यानीत्यर्थः । यच्छब्दात्परस्य शेर्लोपे कृते प्रत्ययलक्षणेन 'त्यदादीनामः' इति अत्वे 'नपुंसकस्य झलचः' इति नुम् । 'सर्वनामस्थाने च' इति दीर्घः । नलोपः ॥—**ता ता इति** । तानि तानीत्यर्थः पूर्ववत् ॥—**भय्यप्रवय्ये** ॥ बिभेतेः प्रपूर्वस्य वी इत्येतस्य च यति प्रत्यये परतश्छन्दसि विषये यादेशो निपात्यते ॥—**भय्य इति** । 'कृत्यल्युटः—' इति अपादाने यत् ॥—**ह्रदय्या इति** ॥ अकारस्यायादेशः ॥—**प्रकृत्या—**॥ पादस्य मध्ये इत्यन्तःपादमित्यव्ययीभावः । अन्तरित्यव्ययमधिकरणशक्तिप्रधानं म-ध्यमाचष्टे । पादश्चेह ऋक्पाद एव गृह्यते न श्लोकस्य ॥ 'वा छन्दसि' इत्यतो मण्डूकप्लुत्या छन्दसीति वर्तते तेनास्य वैदि-कत्वं संपद्यत इत्याशयेनाह—**ऋक्पादमध्यस्थ इति** । 'एङः पदान्तात्—' इति सूत्रादेङ इति पञ्चम्यन्तमनुवृत्तं प्रथ-मया विपरिणम्यतेऽन्यस्य कार्यिणोऽसम्भवाद् इत्यभिप्रेत्याह—**एङ् प्रकृत्येति** । सन्धिरूपं विकारं न यातीत्यर्थः ॥—

उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अन्तःपादं किम् । एतास एतेऽर्चन्ति । अव्यपरे किम् । तेऽवदन् । **अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।६।१।११६।** एङ् व्यपरेऽप्यति एङ् प्रकृत्या। वसुभिर्नो अव्यात्। मित्रमहो अवद्यात्। मा शिवासो अवक्रमुः। ते नो अव्रत। शतधारो अयं मणिः। ते नो अवन्तु। कुशिकासो अवस्यवः। यद्यपि बह्वृचैस्तेनोऽवन्तु रथतूः सोऽयमागात् तेऽरुणेभिरित्यादौ प्रकृतिभावो न क्रियते तथापि बाहुलकात्समाधेयम्। प्रातिशाख्ये तु वाचनिक एवायमर्थः। **यजुष्युरः ।६।१।११७।** उरःशब्द एङन्तोऽति प्रकृत्या यजुषि। उरो अन्तरिक्षम्। यजुषि पादाभावादनन्तःपादार्थं वचनम्। **आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे ।६।१।११८।** यजुषि अति प्रकृत्या। आपो अस्मान्मातरः। जुषाणो अग्निराज्यस्य। वृष्णो अंशुभ्याम्। वर्षिष्ठे अधि नाके। अम्बे अम्बाले अम्बिके। अस्मादेव वचनादम्बार्थेति ह्रस्वो न। **अङ्ग इत्यादौ च। ६।१।११९।** अङ्गशब्दे य एङ् तदादौ च अकारे य एङ् पूर्वः सोऽति प्रकृत्या यजुषि। प्राणो अङ्गे अङ्गे अदीध्यत्। **अनुदात्ते च कुधपरे ।६।१।१२०।** कवर्गधकारपरे अनुदात्तेऽति परे एङ् प्रकृत्या यजुषि। अयं सो अग्निः। अयं सो अध्वरः। अनुदात्ते किम्। अथोऽग्ने रुद्रे। अग्रशब्द आद्युदात्तः। कुधपरे किम्। सोऽयमग्निमतः। **अवपथासि च ।६।१।१२१।** अनुदात्ते अकारादौ अवपथाःशब्दे परे यजुषि एङ् प्रकृत्या। त्रीरुद्रेभ्यो अवपथाः। वपेस्थासि लङि तिङ्ङतिङ इत्यनुदात्तत्वम्। अनुदात्ते किम्। यद्रुद्रेभ्योऽवपथाः। निपातैर्यद्यदीति निघातो न। **आङोऽनुनासिकश्छन्दसि ।६।१।१२६।** आङोऽचि परेऽनुनासिकः स्यात् स च प्रकृत्या। अभ्र आँ अपः। गभीर आँ उग्रपुत्रे॥ * ईषाअक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः। ईषाअक्षो हिरण्ययः। ज्या इयम्। पूषा अविष्टु। **स्यश्छन्दसि बहुलम् ।६।१।१३३।** स्य इत्यस्य सोर्लोपः स्याद्धलि। एष स्य भानुः। **ह्रस्वाच्चन्द्रोत्तर-**

---

उपप्रयन्तो अध्वरमिति। 'एङः पदान्तादति' इति प्राप्तम् ॥—**अन्तःपादं किमिति।** ऋचीत्येव किं नोक्तमित्यर्थः॥—**एतेऽर्चन्तीति।** 'कया मती कुत एतासः' 'एतेर्चन्ति शुष्मं वृषणो वसूया' इति। अत्र एते इति पादस्यान्ते एङस्ति अकश्च परस्य पादस्यादाविति तन्निमित्तिनिमित्तयोः पादमध्यस्थत्वमिति सत्यपि ऋक्त्वे प्रकृतिभावः॥—**अव्यात्—**॥ एषामनुकरणत्वात्सुबन्तेन समासः। अव रक्षणे। आशीर्लिङ्। अवद्यादिति पञ्चम्येकवचनान्तम्। अवक्रमुरित्यत्वपूर्वस्य क्रमेर्लिट्युसि द्विर्वचनप्रकरणे 'छन्दसि वा वचनम्' इति द्विर्वचनाभावे रूपम्। केचित्तु अवचक्रमुरिति सूत्रे कृतद्विर्वचनं ये पठन्ति तेषामुदाहरणं मृग्यम्। बह्वृचास्तावदवक्रमुरित्यधीयते॥—**अव्रतेति।** वृङ्वृञोः 'मन्त्रे घस—' इति च्लेर्लुक्। 'आत्मनेपदेषु' इति झस्यादादेशः॥—**अयमिति।** इदमः सौ 'इदोऽय् पुंसि'॥ अवतेर्लोट्—**अवन्तुः। अवस्युरिति।** अवेरसुन् औणादिकः। ततः क्यच् 'क्याच्छन्दसि' इत्युः॥—**यजुष्युरः॥—उरो अन्तरिक्षमिति।** नन्वत्र 'प्रकृत्यान्तःपादम्—' इत्यनेनैव सिद्धे व्यर्थोऽयं योग इत्याशङ्क्याह—**यजुषि पादाभावादित्यादि॥—आपो जुषाणो—॥** आपो इत्यादीनि पृथक्पदान्यनुकरणानि विभक्तिस्तु अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वान्न भवति 'सुपां सुलुक्—' इति विभक्तेर्लुग्वा। अम्बिके पूर्वे इत्येतदप्यनुकरणमेव तत्र प्रथमं जसन्तमनुकरणम्। द्वितीय स्वन्तं तृतीयं शसन्तम्। चतुर्थं ङ्यन्तमितरे संबुध्यन्ते। आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दात्पूर्वौ यौ अम्बेअम्बालेशब्दौ तौ च ते अति परतः प्रकृत्या स्युः॥—**अङ्ग इत्यादौ च ॥—अङ्गशब्दे य एङिति।** प्रकृत्या भवतीति वक्ष्यमाणेन संबन्धः॥—**तदादौ अकारे य एङ्पूर्व** इति। अत्रापि पूर्ववत्सबन्धः। अतिक्रान्तपरामर्शिना तच्छब्देन इतिशब्दार्थमाचष्टे। तस्याङ्गशब्दस्य आदिस्तदादिस्तद्रूपो य अकारस्तस्मिन्परे पूर्वो य एङ् स इत्यर्थः। नन्वत्र चकारः किमर्थ इति चेच्छृणु। असति चकारेऽङ्गशब्दस्यैवेङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः स्यात्ततश्चाङ्गे अङ्गे इत्यत्रैव स्यात्। अङ्गे अदीव्यदित्यत्र न स्यात्। सति तु तस्मिन्नङ्गशब्दस्य य एङ् यत्र कुत्रचिदति प्रकृत्या भवति तदादौ चाति परतो यः कश्चिदेङ् स प्रकृत्या भवतीत्ययमर्थो भवति तेन अङ्गे अङ्गे अदीव्यत् प्राणो अङ्गे इत्युभयत्रापि भवति॥—**अनुदात्ते च कुधपरे॥** कुधौ परौ यस्मात्स तथोक्तः॥—**कवर्गधकारेति।** धकारे अकार उच्चारणार्थः॥—**अग्निरिति।** अग्निशब्दो 'अङ्गेर्नलोपश्च' इति निप्रत्ययान्तोऽन्तोदात्तः। अध्वरशब्दः प्रातिपदिकस्वरेणान्तोदात्तः॥—**आद्युदात्त** इति। 'ऋज्रेन्द्रा—' इत्यादिना सूत्रेण निपातितः॥—**आङो—॥** आङिति ङिद्विशिष्ट आकारो गृह्यते य 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' इत्यनेन लक्षितः। यद्यपि अभ्र आँ अप इत्यत्र आकारो न ईषदर्थादिचतुष्टयवृत्तिः सप्तम्यर्थद्योतकत्वात्। तथापि वाक्यस्मरणयोरङिदित्यत्रैव तात्पर्यम्। अन्यत्र सर्वत्राङ् ङिद्वेदितव्यः। एवं तावद्भाष्ये स्थितम्॥—**अभ्र आँ अप** इति। सप्तम्यर्थद्योतकोऽत्राङ्। 'उपदेशेऽजनुनासिकः—' इतीत्संज्ञा तु न उपदेशग्रहणात्॥—**स्यश्छन्दसि—॥** स्य इति त्यदित्येतस्य प्रथमान्तस्यानुकरणम्। 'सुपां सुलुक्' इति लुप्तषष्ठीकम्॥—**एषस्येति।** एतदस्त्यदश्च त्यदाद्यत्वं 'तदोः सः सौ' इति सः। एतदस्त्यदश्च परस्य सोः 'एतत्तदोः सुलोप—' इति 'स्यश्छन्दसि—' इति च लोपः॥—**ह्रस्वात्—॥** चन्द्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति। स भवन् चन्द्रशब्दस्यै-

पदे मन्त्रे ।६।१।१५१। ह्रस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे। हरिश्चन्द्रो मरुद्गणः। सुश्चन्द्र दस्म। **पितरामातरा च छन्दसि** ।६।३।३३। द्वन्द्वे निपातः। आ मा गन्तां पितरामातरा च। व्युत्क्रमेणापि। आ न मातरापितरा नू चिदिष्टौ। **समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु** ।६।३।८४। समानस्य सः स्यान्मूर्धादिभिन्ने उत्तरपदे। सगर्भ्यः॥ * **छन्दसि स्त्रियां बहुलम्**। विष्वग्देवयोरद्र्यादेशः। विश्वाची च घृताची च। देवद्रीचीं नयत देवयन्तः। कद्रीची। **सध मादस्थयोश्छन्दसि** ।६।३।९६। सहस्य सधादेशः स्यात्। इन्द्र त्वास्मिन्त्सधमादे। सोमः सधस्थम्। **पथि च छन्दसि** ।६।३।१०८। पथिशब्दे उत्तरपदे कोः कवं कादेशश्च। कवपथः। कापथः। कुपथः। **साढ्यै साढ्वा साढेति निगमे** ।६।३।११३। सहेः क्त्वाप्रत्यये आद्यं द्वयं तृनि तृतीयं निपात्यते। मरुद्भिरुग्रः पृतनासु साळ्हा। अचोर्मध्यस्थस्य डस्य ळः ढस्य ळ्हश्च प्रातिशाख्ये विहितः। आषाळ्हि। द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्त इति। **छन्दसि च** ।६।३।१२६। अष्टन आत्वं स्यादुत्तरपदे। अष्टापदी। **मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ** ।६।३।१३१। दीर्घः स्यान्मन्त्रे। अश्वावतीं सोमावतीम्। इन्द्रियावान्मदिन्तमः। विश्वकर्मणा विश्वदेव्यावता। **ओषधेश्च विभक्तावप्रथमायाम्** ।६।३।१३२। दीर्घः स्यान्मन्त्रे। यदोषधीभ्यः। अदधात्योषधीषु। **ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्** ।६।३।१३३। दीर्घः स्यात्। आ तू न इन्द्र। नू मर्तः। उत वा घा स्यालात्। मक्षू गोमन्तमीमहे। भरता जातवेदसम्। तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम्। तेनेह न। शृणोत ग्रावाणः। कूमनाः। अत्रा ते भद्रा। यत्रा नश्चक्रा। उरुष्याणः। **इकः सुञि** ।६।३।१३४। ऋचि दीर्घ इत्येव। अभीषुणः सखीनाम्। सुञ इति षः। नश्च धातुस्थोरुषुभ्य इति णः। **द्व्यचोऽतस्तिङः** ।६।३।१३५। मन्त्रे दीर्घः। विद्मा हि चक्रा जरसम्। **निपातस्य च** ।६।३।१३६। एवा हि ते। **छन्दस्युभयथा** ।६।४।५। नामि दीर्घो वा।

---

योभयनिर्देशे पञ्चमीनिर्देशो बलीयानित्याशयेनाह—**चन्द्रशब्दस्योत्तरपदस्येति** ॥—**सुडागमः स्यादिति**। 'ह्रस्वात्' 'चुट्' कात्पूर्वः' इत्यतः सुडित्यनुवर्तनात् ॥—**पितरा**–॥ पूर्वपदस्याराडादेशो निपात्यते। उत्तरपदे तु 'सुपां सुलुक्–' इत्यादिना विभक्तेराकारादेशः। 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः ॥—**समानस्य**—॥ **सः स्यादिति**। 'सहस्य सः' इत्यतः स इत्यनुवर्तते ॥—**सगर्भ्य** इति। समानो गर्भः सगर्भः तत्र भवः सगर्भ्यः। 'सगर्भसयूथसनुताद्यन्' इति यन् प्रत्ययः। अमूर्धेत्यादि किम्। समानमूर्धा समानप्रभृतयः समानोदर्काः ॥—**छन्दसि स्त्रियाम्**—॥ 'विष्वग्देवयोः–' इति सर्वनाम्नोऽप्युपलक्षणम्। बहुलग्रहणात्क्वचिन्न भवति ॥—**विश्वाची देवद्रीचीति**। विश्वमञ्चतीति देवानञ्चतीति क्विन्। 'उगितश्च' इति ङीप्। 'अचः' इत्यकारलोपः। 'चौ' इति दीर्घत्वम्। अत्र विष्वग्देवयोरद्र्यादेशः प्राप्तो बाहुलकान्न। क्वचिच्च भवतीत्याह—**कद्रीचीति**। कुत्सितमञ्चतीति कद्रीची। किंशब्दस्य टेरद्र्यादेशः ङीब्लोपदीर्घाः पूर्ववत् ॥—**सधमाद**–॥ 'सहस्य सध्रिः' इत्यतः सहस्येति वर्तते मादस्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशः स्यात्। सधेत्यविभक्तिको निर्देशः ॥—**सधमादे** इति। सह माद्यन्ति देवा अस्मिन्निति सधमादो यज्ञ इति। 'मदोऽनुपसर्गे' इत्यपि प्राप्ते 'अजब्भ्यां स्त्रीखलनाः–' इति तद्बाधकेन ल्युटि 'हलश्च' इति घञ्। सूत्रे मादेत्यकार उच्चारणार्थः तेन मादयतेः क्विबन्तस्य मादिति यद्रूप तत्रापि भवति। 'आत्वा वृहन्तो हरयो युज्यमाना अर्वागिन्द्रसधमादो वहन्तु' ॥—**सधस्थ** इति। सह तिष्ठतीति सधस्थः। 'आतोऽनुपसर्गे–' इति कः ॥—**साढ्यै** ॥ एते त्रयो निपात्यन्ते निगमे सहेः क्त्वाप्रत्यय इति पक्षे क्त्वाप्रत्ययस्य ध्यै आदेशश्च निपात्यते। साढ्यै सहेः क्त्वाप्रत्ययस्य ध्यै 'हो ढः' ष्टुत्वं 'ढो ढे लोपः'। 'ढ्रलोपे–' इति दीर्घः ॥—**साढा** इति। ढत्वादि पूर्ववत् ॥—**तृनि तृतीयमिति**। तृचि त्वन्तोदात्तः स्यात्तथा भूरि चक्रेति मन्त्रे साढेत्याद्युदात्तं पठ्यते तत्र सगच्छेतेति भावः। सूत्रे इतिशब्दः प्रकारार्थः। तेन निष्ठायामपि निपातनं बोध्यम्। अषाळ्हो अग्ने वृषभः ॥—**द्वयोरिति**। अस्य आचार्यस्य द्वयोः स्वरयोर्मध्यमेत्य डकारो ळकारतां सपद्यते ऊष्मणा संप्रयुक्तः ढकारः ळ्हकारतामेतीत्यन्वयः ॥—**अष्टापदीति** ॥—**अष्टौ पादा अस्या** इति। बहुव्रीहौ 'संख्यासुपूर्वस्य' इति पादस्य लोपे कृते 'पादोऽन्यतरस्याम्' इति ङीप् ॥—**मन्त्रे** ॥ सोम, अश्व, इन्द्रिय, विश्व, देव्य, एषामतुप्प्रत्यये परे दीर्घः स्यान्मन्त्रे ॥—**ओषधेश्च**—॥ न च 'कृदिकारादक्तिनः' इति ङीषा गतार्थता अन्तोदात्ततापत्तेः। इष्यते त्वाद्युदात्तो 'लघावन्ते–' इति फिट्सूत्रात् ॥—**ऋचि तुनु**–॥ घ इति स्वरूपग्रहणं न तरप्तमपोश्छन्दसि घशब्दस्यैव दीर्घदर्शनात् ॥—**उतवेति**। भार्यायाः भ्राता श्यालस्ततः पञ्चमी ॥—**भरतेति**। लोण्मध्यमपुरुषबहुवचनस्य थस्य 'लोटो लङ्वत्' इत्यतिदेशात्तस्य स्थाने तादेशः 'तस्थस्थमिपाम्–' इत्यनेन ॥—**शृणोतेति**। 'तप्तनप्तनथनाश्च' इति तबादेशः। अत्र पित्त्वान्ङित्त्वं नास्ति ॥—**उरुष्याण** इति। उरुष्येति कण्ड्वादियगन्तो रक्षणार्थः। लोटः सेर्हिः। 'अतो हेः' इति लुक्। न इत्यस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् ॥—**इकः**—॥ इगन्तस्य सुञि परतो दीर्घः स्यादृचि ॥—**द्व्यचो**–॥ द्व्यचस्तिङन्तस्यातो दीर्घः स्यादृचि ॥—**विद्मेति**। विद ज्ञाने लट्। 'विदो लटो वा' इति मस्य स्थाने मः। चक्रेति लिटो मध्यमपुरुषबहुवचनम् ॥—**निपातस्य च** ॥ दीर्घः स्यान्मन्त्रे। एवशब्दश्चादिषु पाठान्निपातः ॥—**छन्दस्यु**–॥ नामीति

भस्त्रा धामृणामिति बह्वृचाः । तैत्तिरीयास्तु ह्रस्वमेव पठन्ति । वा षपूर्वस्य निगमे ।६।४।९। षपूर्वस्यान उपधाया वा दीर्घोऽसंबुद्धौ सर्वनामस्थाने परे । ऋभुक्षाणम् । ऋभुक्षणम् । निगमे किम् । तक्षा तक्षाणौ । जनिता मन्त्रे ।६।४।५३। इडादौ तृचि णिलोपो निपात्यते । यो नः पिता जनिता । शमिता यज्ञे ।६।४।५४। शमयितेत्यर्थः । युप्लुवोर्दीर्घश्छन्दसि ।६।४।५८। ल्यपीत्यनुवर्तते । वियूय । विप्लूय । आङजादीनाम् । छन्दस्यपि दृश्यते ।६।४।७३। अनजादीनामित्यर्थः । आनट् । आवः । न माङ्योगे । बहुलं छन्दस्यमाङ्योगेऽपि ।६।४।७५। अडाटौ न स्तः माङ्योगेऽपि स्तः । जनिष्ठा उग्रः सहसे तुराय । मा वः क्षेत्रे परबीजान्यवाप्सुः । इरयो रे ।६।४।७६। प्रथमं दध्रे आपः । रेभावस्याभीयत्वेनासिद्धत्वादाल्लोपः । अत्र रेशब्दस्येटि कृते पुनरपि रेभावः । तदर्थं च सूत्रे द्विवचनान्तं निर्दिष्टमिरयोरिति । छन्दस्युभयथा ।६।४।८६। भूसुधियोर्यण् स्यादियङुवङौ च । वनेषु चित्रं विभ्वम् । विभुवं वा । सुध्यो नव्यमग्ने । सुधियो वा ॥ * तन्वादीनां छन्दसि बहुलम् । तन्वं पुषेम । तनुवं वा । त्र्यम्बकम् । त्रियम्बकम् । तनिपत्योश्छन्दसि ।६।४।९९। एतयोरुपधालोपः क्ङिति प्रत्यये । वितत्निरे कवयः । शकुना इव पप्तिम । घसिभसोर्हलि च ।६।४।१००। सग्धिश्च मे । बब्धां ते हरी धानाः । हुझल्भ्यो हेर्धिः । श्रुशृणु-पृकृवृभ्यश्छन्दसि ।६।४।१०२। श्रुधी हवम् । शृणुधी गिरः । रायस्पूर्धि । उरुणस्कृधि । अपावृधि । वा छन्दसि ।३।४।८८। हिरपिच्च । अङितश्च ।६।४।१०३। हेर्धिः स्यात् । रारन्धि । रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घश्च । अस्मे प्रयन्धि । युयोधि जातवेदः । यमेः शपो लुक् । यौतेः शपः श्लुः । मन्त्रेष्वाङ्यादेरात्मनः ।६।४।१४१। आत्मन्शब्दस्यादेर्लोपः स्यादाङि । त्मना देवेषु । विभाषर्जोश्छन्दसि ।६।४।१६२। ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठेमेयस्सु । त्वं रजिष्ठमनुनेषि । ऋजिष्ठं वा । ऋत्व्यवास्त्व्यवा-

---

वर्तते । 'ढ्रलोपे–' इत्यतो दीर्घ इति च । तदाह—**नामीत्यादि** ॥—**ऋभुक्षाणमिति** । ऋभुक्षिन्शब्द उणादिषु निपातितः । 'इतोऽत्सर्वनामस्थाने' इतीकारस्याकारादेशः ॥—**जनितेति** । जनयितेत्यर्थः ॥—**शमिता** ॥ निपातनं पूर्ववत् ॥—**आनडिति** । नशेर्लुङि 'मन्त्रे घस–' इति लेर्लुक् । 'नशेर्वा' इत्यस्याभावे 'व्रश्च–' इति षः । जश्त्वेन डः । तस्य चर्त्वेन टः ॥—**आवरिति** । वृणो लुङि लेर्लुक् । गुणः रेफस्य विसर्गः ॥—**बहुलं छन्दसि** ॥ माङ्योगेऽप्यमाङ्योगेऽपि बहुलमडाटौ भवतः । अमाङ्योगेऽपि न भवतः । माङ्योगेऽपि च भवतः ॥—**जनिष्ठा** इति । जनेर्लुङ् थास् अडागमाभावः । माङ्योगेऽप्यडागममुदाहरति—**मा व** इति । वो युष्माकं क्षेत्रे भार्यायां परबीजानि परेषां बीजानि वीर्याणि मा अवाप्सुः उप्तानि माभूवन् । वपेः कर्मणि लुङ् । व्यत्ययेन परस्मैपदम् । 'च्लेः सिच्' 'वदव्रज–' इति वृद्धिः । इदं काशिकानुरोधेनोदाहृतम् । अध्ययनं तु वाप्सुरित्येव दृश्यते । माङ्यटस्तूदाहरणान्तरमन्वेषणीयम् ॥—**इरयो** ॥ इर इत्येतस्य रे आदेशः स्याच्छन्दसि ॥—**दध्रे** इति । धाञो लिटि झस्य 'लिटस्तझयोः–' इतीरेचि कृते रेभावः । ननु चात्र परत्वाद्रेभावे कृतेऽनजादित्वादाल्लोपो न प्राप्त इत्यत आह—**रेभावस्येति** । नन्वेवमपि रेभावस्यैव क्रादिनियमादिडागमः प्राप्नोति । न च रेभावस्य वैयर्थ्यम् । कृसृप्रभृतिषु चरितार्थत्वादत आह—**अत्रेति** । कथ पुनर्लाक्षणिकस्य रेशब्दस्य रेभावो भवति तत्राह—**तदर्थं चेति** । द्विवचननिर्देशाल्लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तत इति भावः ॥—**तन्वादीनाम्** ॥ बहुलमियङुवङादेशः स्याच्छन्दसि ॥—**तनुव**.**मिति** । अधातुत्वादप्राप्त उवङ् विधीयते ॥—**तन्वमिति** । 'वा छन्दसि' इत्यमि पूर्वत्वाभावे यण् ॥—**त्र्यम्बकमिति** । त्रीणि अम्बकानि नेत्राणि यस्यासौ त्र्यम्बको रुद्रः ॥—**वितत्निरे** इति । तनु विस्तारे । लिटः प्रथमपुरुषबहुवचनम् । अत्राल्लोपस्यासिद्धत्वेऽपि 'अत एकहल्मध्ये–' इति एत्वाभ्यासलोपौ न लोपविधानसामर्थ्यात् ॥—**पप्तिमेति** । पत्लृ पतने लिटो मसो मस्य इद् । वितेनिरे पेतिमेति भाषायाम् ॥—**घसिभसो**–॥ अनयोरुपधालोपः स्याद्धलादावजादौ च क्ङिति ॥—**सग्धिरिति** । अदेः क्तिन् 'बहुलं छन्दसि' इति घस्लादेशे उपधालोपे च कृते 'झलो झलि' इति सलोपस्तकारस्य धत्वं घस्य जश्त्वम् । ततः समाना ग्धिः सग्धिरिति समासे कृते 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सूत्रेण समानस्य सः ॥—**बब्धामिति** । भसेर्लोटि ताम् श्लुः । परं नित्यमप्युपधालोपं बाधित्वा बाहुलकात्प्रथमं 'श्लौ' इति द्वित्वम् । तत उपधालोपसलोपधत्वजश्त्वानि कर्तव्यानि ॥—**श्रुशृणु** ॥ एभ्यो हेर्धिः स्यात् ॥—**श्रुधीति** । 'बहुलं छन्दसि' इति शपो लुक् । 'अन्येषामपि–' इति दीर्घत्वम् ॥—**शृणुधीति** । श्नुवः श्नभावश्च विधानसामर्थ्यात् 'उतश्च प्रत्ययात्–' इति न हेर्लुक् । दीर्घः पूर्ववत् ॥—**पूर्धीति** । पॄ पालने । शपो लुक् 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । 'हलि च' इति दीर्घः ॥—**उरुणस्कृधीति** । 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । 'कः करत्' इत्यादिना विसर्जनीयस्य सत्वम् ॥—**अपावृधीति** । दीर्घः पूर्ववत् ॥—**अभ्यासस्य दीर्घश्चेति** । तुजादित्वादिति भावः ॥—रारन्धीत्यत्र 'अनुदात्तोपदेश–' इत्यादिना मलोपो न हेरङित्त्वात् ॥—**यमेः शपो लुगिति** । 'बहुलं छन्दसि' इत्यनेन । एवमुत्तरत्रापि ॥—**विभाषर्जो**–। 'र ऋतो हलादेर्लघोः' इत्यतः र ऋत इति 'तुरिष्ठेमेयःसु' इति च तदाह—**ऋतः स्थाने इत्यादि** ॥—**ऋत्व्य**–॥ ऋतुशब्दाद्यति वास्तुशब्दादणि यति च यणादेशो निपात्यते ॥

ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ।६।४।१७५। ऋतौ भवमृत्व्यम्। वास्तुनि भवं वास्तव्यम्। वास्त्वं च। मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते। माध्वीर्नः सन्त्वोषधीः। हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते। हिरण्ययेन सविता रथेन॥ इति षष्ठोऽध्यायः॥

## सप्तमोऽध्यायः।

शीङो रुट्। बहुलं छन्दसि ।७।१।८। रुडागमः स्यात्। लोपस्त आत्मनेपदेष्विति पक्षे तलोपः। धेनवो दुदुह्रे। लोपाभावे घृतं दुह्रते। अदृश्रमस्य। अतो भिस ऐस्। बहुलं छन्दसि ।७।१।१०। अग्निर्देवेभिः। नेतराच्छन्दसि ।७।१।२६। स्वमोरद्ड् न। वार्त्रघ्नमितरम्। छन्दसि किम्। इतरत्काष्ठम्। समासेऽनञ्पूर्वे क्त्वो ल्यप्। क्त्वापि छन्दसि ।७।१।३८। यजमानं परिधापयित्वा। सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ।७।१।३९। ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते सुः। परमे व्योमन्। व्योमनि इति प्राप्ते ङेर्लुक्। धीती मती सुष्टुती। धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णदीर्घः। या सुरथा रथीतमोभा देवा दिविस्पृशा। अश्विना। यौ सुरथौ दिविस्पृशावित्यादौ प्राप्ते आ। नताद्ब्राह्मणम्। नतमिति प्राप्ते आत्। या देव विप्र ता त्वा। यमिति प्राप्ते। न युष्मे वाजबन्धवः। अस्मे इन्द्राबृहस्पती। युष्मासु अस्मभ्यमिति प्राप्ते शे। उरुया धृष्णुया। उरुणा धृष्णुनेति प्राप्ते या। नाभा पृथिव्याः। नाभाविति प्राप्ते डा। ता अनुष्ठयोच्यावयतात्। अनुष्ठानमनुष्ठा। व्यवस्थावद्। साधुया। साध्विति प्राप्ते याच्। वसन्ता यजेत। वसन्ते इति प्राप्ते आल्॥ * इयाडियाजीकाराणामुपसंख्यानम्। उर्विया। दार्विया। उरुणा दारुणेति प्राप्ते इया। सुक्षेत्रिया। सुक्षेत्रिणेति प्राप्ते डियाच्। दृतिं न शुष्कं सरसी शयानम्। ङेरीकार इत्याहुः। तत्राद्युदात्ते पदे प्राप्ते व्यत्ययेनान्तोदात्तता। वस्तुतस्तु ङीषन्तात् ङेर्लुक्। ईकारादेशस्य तूदाहरणान्तरं मृग्यम्॥ * आङ्याजयारामुपसंख्यानम्। प्र बाहवा सिसृतम्। बाहु-

—मशब्दस्येति। तस्यासिद्धत्वाद्यस्येति लोपो न। 'अकृत्सार्व–' इति दीर्घस्त्वकृतपरिभाषया वारणीयः। यद्वा। मकारमात्रस्य लोपः। ततो 'यस्य–' इति लोपे कृते प्रत्ययाकारस्य श्रवणम्॥ इति षष्ठोऽध्यायः॥

बहुलं छन्दसि॥ छन्दसि विषये बहुल रुडागमः स्यात्॥—दुह्रे इति। दुहेर्लट् टेरेत्वे झस्यादेशे रुट् तलोपः॥—लोपाभावे इति। 'लोपस्त आत्मनेपदेषु' इत्यस्य वैकल्पिकत्वादित्यर्थः॥—अदृश्रमिति। दृशिर् प्रेक्षणे लुङ् व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनं मिप्। तस्य रुडागमः॥—नेतरा–॥ इतरशब्दात्परयोः स्वमोरद्डादेशो न स्याच्छन्दसि॥—इतरमिति। अद्ड् डतरादिभ्य इत्यद्डभावे 'अतोऽम्' इत्यम्॥—क्त्वो ल्यबिति। समासेऽनञ्पूर्वे क्त्वो ल्यपि प्राप्ते छन्दसि क्त्वापि विधीयते तदाह—क्त्वापि। अनञ्पूर्वे समासे क्त्वा इत्ययमादेशः स्याद अपिशब्दाल्ल्यबपि समासेऽसमासे च भवति। अप्राप्तिविषये ल्यपः प्रापणार्थत्वादपिशब्दस्य। अन्यथा 'वा छन्दसि' इत्येव ब्रूयात्। तथा च छन्दोविधिमनुविदधानाः कल्पसूत्रकारा अपि प्रयुञ्जते॥ आज्येनाक्षीणि अज्य्येति॥—परिधापयित्वेति। णिजन्तात्परिपूर्वाद्धातेः क्त्वा तस्य ल्यबादेशे प्राप्ते क्त्वादेशः॥—सुपाम्–॥ सुपा स्थाने सुलुक्पूर्वसवर्णआआत्शेयाडाड्यायाच्आल्एते आदेशाः स्युश्छन्दसि॥—पन्था इति। 'व्यत्ययो बहुलम्' इत्येव सिद्धमिदम्। उक्तं हि तत्र सुप्तिङुपग्रहेत्यादि। तस्यैवायं प्रपञ्चः॥—धीतीत्यादि। धीतीमतीसुष्टुतीशब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्ण ईकारः प्रमाणत आन्तर्यात्सवर्णदीर्घत्वम्॥—दिविस्पृशाविति प्राप्ते आ इति। अनेनादित्यत्राकारोऽपि प्रश्लिष्यत इति दर्शितम्॥—नतादिति। नतशब्दादम्। तस्यादादेशः। 'न विभक्तौ तु–' इतीत्संज्ञाप्रतिषेधः॥—या देवेत्यादि। यत्तच्छब्दादम्॥—न युष्मे इति। युष्मदः सप्तमीबहुवचनस्य शे आदेशः। शेषे लोपः॥—अस्मे इन्द्रेति। शे इति प्रगृह्यत्वादयादेशाभावः॥—नाभा इति। डित्त्वाट्टिलोपः॥—ता अनुष्ठ्येति। षड्विंशतिरस्य वङ्क्रय इति प्रक्रम्य इदमध्वर्युप्रैषे पठितं ताः वङ्क्रीः अनुष्ठानेन अनुक्रमेण गणनया गणयित्वा उच्यावयतात् भवान् विशसनं करोतु पृथक् करोतु भवानित्यर्थः॥—अनुष्ठानमनुष्ठेति। अनुपूर्वात्तिष्ठतेरङ् तृतीयैकवचनस्य ड्यादेशे डित्त्वाट्टिलोपः। नन्वनुपूर्वात्तिष्ठतेः 'आतश्चोपसर्गे–' इत्यङं बाधित्वा 'स्थागापापचो भावे' इति क्तिना भाव्यमिति चेत्सत्यम्। 'पूर्वपरावरदक्षिणोत्तर–' इति सूत्रे व्यवस्थायामिति निर्देशादङपि सामान्यापेक्षज्ञापकाश्रयणात्। तदेतद् ध्वनयति—व्यवस्थावदिति॥—साधु इति प्राप्त इति। सोर्लुकि प्राप्त इत्यर्थः॥—वसन्ते इति प्राप्ते आल् इति। पूर्वसवर्णे तु 'अतो गुणे' इति स्यात्॥—उर्वियेति। उरुदारुशब्दात्तृतीयैकवचनस्येयादेशः॥—सुक्षेत्रियेति। सुक्षेत्रिन्शब्दात्तृतीयैकवचनस्य डियाजादेशः। डित्त्वाट्टिलोपः॥—बाहुनेति प्राप्ते इति। काशिकायां तु प्रबाहुनेति प्राप्त इत्युक्तं तत्समासप्रमादविलसितमेवम्।

येति प्राप्ते आकारादेशः । येकितीति गुणः । त्वप्रया । त्वप्रयेति प्राप्ते अयाच् । स नः सिन्धुमिव नावया । नावेति प्राप्ते अयार् । रित्स्वरः । ⧗ अमो मश् ।७।१।४०। मिबादेशस्यामो मश् स्यात् । अकार उच्चारणार्थः । शित्त्वात्सर्वादेशः । अस्तिसिच इति ईट् । वधीं वृत्रम् । अवधिषमिति प्राप्ते । ⧗ लोपस्त आत्मनेपदेषु ।७।१।४१। छन्दसि । देवा अदुह्र । अदुह्रतेति प्राप्ते । दक्षिणतः शये । शेते इति प्राप्ते । आत्मेति किम् । उत्सं दुहन्ति । ⧗ ध्वमो ध्वात् ।७।१।४२। अन्तरेवोष्माणं वारयध्वात् । वारयध्वमिति प्राप्ते । ⧗ यजध्वैनमिति च ।७।१।४३। एनमित्यस्मिन्परे ध्वमोऽन्तलोपो निपात्यते यजध्वैनं प्रियमेधाः । वकारस्य यकारो निपात्यत इति वृत्तिकारोक्तिः प्रामादिकी । ⧗ तस्य तात् ।७।१।४४। मध्यमपुरुषबहुवचनस्य स्थाने तात्स्यात् । गात्रमस्यानूनं कृणुतात् । कृणुतेति प्राप्ते । सूर्यं चक्षुर्गमयतात् । गमयतेति प्राप्ते । ⧗ तप्तनप्तनथनाश्च ।७।१।४५। तस्येत्येव । शृणोत ग्रावाणः । शृणुतेति प्राप्ते तप् । सुनोतन पचत ब्रह्मवाहसे । दधातन द्रविणं चित्रमस्मै । तनप् । मरुतस्तज्जुजुष्टन । जुषध्वमिति प्राप्ते । व्यत्ययेन परस्मैपदं श्लुश्च । विश्वेदेवासो मरुतो यतिष्ठन । यत्संख्याकाः स्थेत्यर्थः । यच्छब्दाच्छान्दसो डतिः । अस्तेस्तस्य थनादेशः । ⧗ इदन्तो मसि ।७।१।४६। मसीत्यविभक्तिको निर्देशः । इकार उच्चारणार्थः । मस् इत्ययमिकाररूपचरमावयवविशिष्टः स्यात् । मस इगागमः स्यादिति यावत् । नमो भरन्त एमसि । त्वमस्माकं तव स्मसि । इमः स्मः इति प्राप्ते । ⧗ क्त्वो यक् ।७।१।४७। दिवं सुपर्णो गत्वाय । ⧗ इष्ट्वीनमिति च ।७।१।४८। क्त्वाप्रत्ययस्य ईनम् अन्तादेशो निपात्यते । इष्ट्वीनं देवान् । इष्ट्वा इति प्राप्ते । ⧗ स्नात्व्यादयश्च ।७।१।४९। आदिशब्दः प्रकारार्थः । आकारस्य ईकारो निपात्यते । स्विन्नः स्नात्वी मलादिव । पीत्वी सोमस्य वावृधे । स्नात्वा पीत्वे-

---

प्रेति न समस्तं पृथक् स्वरदर्शनात् पदकारैर्विच्छिद्य पाठाच्च । अत आख्यातान्वयीति ध्येयम् ॥—**त्वप्रयेति** । अयाचोऽकारः 'सुपि च' इति दीर्घनिवृत्त्यर्थः । 'अतो गुणे' इति पररूपम् ॥—**नावयेति** । नौशब्दाट्टा इत्यस्याऽयार् ॥—**रित्स्वर** इति । 'रिति' इति सूत्रेण ॥—**अमो**–॥ अम इति मिबादेशो गृह्यते न द्वितीयैकवचनं छन्दसि दृष्टानुविधानात् । तदेतदाह—**मिबादेशस्येति** ॥—**शित्त्वात्सर्वादेश** इति । शित्करणाभावे तु 'अलोऽन्त्यस्य' इति मकारस्य स्यात् । 'आदेः परस्य' इति तु न पञ्चमीनिर्देशाभावात् । न च मकारस्य मकारवचने प्रयोजनाभावात् सर्वादेशो भविष्यतीति वाच्यम् । मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात् 'मो राजि समः क्वौ' इत्यत्र यथा ॥—**वधीमिति** । हन्तेर्लुङ् 'हनो वध लिङि' 'लुङि च' इति वधादेशः । 'च्लेः सिच्' इट् 'तस्थस्थ–' इति मिपोऽम्भावः । तस्य मश् । 'अस्तिसिचः–' इति मस्यापृक्तस्येट् 'इट ईटि' इति सिचो लोपः । सवर्णदीर्घत्वं 'बहुलं छन्दसि' इत्यडभावः ॥—**लोपस्त**—॥ आत्मनेपदेषु यस्तकारस्तस्य च्छन्दसि विषये लोपः स्यात् ॥—**अदुह्रेति** । दुहेर्लङ् । 'आत्मनेपदेष्वनतः' इति झस्यादादेशः 'बहुलं छन्दसि' इति रुट् । तकारस्य लोपे द्वयोरकारयोः 'अतो गुणे' इति पररूपम् ॥ —**शये** इति । शेते इत्यत्र तलोपे कृतेऽयादेशः ॥—**ध्वमो**–॥ ध्वमो ध्वादित्यादेशः स्याच्छन्दसि ॥—**वारयध्वादिति** । वृञो णिचि लोट् ॥—**यज**–॥ वृत्तिकारस्तु यजध्यैनमिति पाठं ज्ञात्वा वकारस्य यकारश्च निपात्यत इत्याह तद्दूषयति—**वकारस्येत्यादि** ॥—**प्रामादिकीति** । लक्ष्ये वकारपाठस्य निर्विवादत्वात् वेदभाष्येऽपि प्रकृतसूत्रस्य मलोपमात्रपरतोक्तेश्चेति भावः ॥—**तस्य**–॥—**मध्यमपुरुषबहुवचनस्येति** । प्रथमपुरुषैकवचनस्य तु न ग्रहणम् । छन्दसि दृष्टानुविधानात् पूर्वोत्तराभ्यां बहुवचनाभ्यां साहचर्याच्च ॥—**कृणुतादिति** । कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च' इत्युप्रत्ययः । वकारस्य चाकारः । अतो लोपः ॥—**गमयतादिति** । गमेर्णिच् । 'जनीजॄष्–' इति अमन्तत्वान्मित्संज्ञायां मितां ह्रस्वः । लोण्मध्यमपुरुषबहुवचनस्य तादादेशः ॥—**तप्तनप्त**–॥ तस्य स्थाने एते आदेशाः स्युः ॥ —**शृणोतेति** । श्रु श्रवणे । 'श्रुवः शृ च' इति श्नुप्रत्ययः शृभावश्च । पित्त्वेनाङित्त्वाद्गुणः ॥—**सुनोतनेति** । षुञ् अभिषवे 'स्वादिभ्यः श्नुः' त इत्यस्य तनप् ॥—**दधातनेति** । अत्राप्यङित्त्वात् 'श्नाभ्यस्तयोः–' इत्याकारलोपाभावः ॥ —**इदन्तो**—॥ अन्तशब्दोऽवयववचनः । इत् अन्तो यस्य स इदन्तः । तपरकरणमसंदेहार्थम् । तथा चायमर्थः । मस् इत्ययं शब्द इकारान्तो भवति । मसः सकारान्तस्य इमागमो भवति स च तस्यान्तो भवतीत्यर्थस्तदेतदाह—**मस् इत्ययमिति** । तत्र यदि सकारोपमर्देन इकारान्तत्वमभिप्रेतं स्यात्तर्हि मस् इदिति वाच्यं स्यात् । तस्मादवस्थित एव सकारे इकार उपसञ्जनीयः । अन्तग्रहणाच्च तद्ग्रहणेन गृह्यते । ततश्च टित्त्वकित्त्वादेरागमलिङ्गस्याभावेऽप्ययमागमोऽयं संपद्यते तदेतद्ध्वनयन्नाह—**मस इगागमः स्यादिति** । एवं च मस इगिति वक्तव्यं प्रत्याहारसंदेहप्रसङ्गात्तथा नोक्तम् । —**एमसीति** । इण् गतौ मस् तस्य इकारः अन्तावयवः ॥—**स्मसीति** । अस्तेर्मस् 'श्नसोरल्लोपः' ॥—**क्त्वो**–॥ क्त्वा इत्यस्य यगागमः स्याच्छन्दसि ॥—**गत्वायेति** । गमेः क्त्वा । 'अनुदात्तोपदेश–' इत्यनुनासिकलोपः । क्त्वा इत्यस्य यगागमः ॥— **इष्ट्वीन**–॥—**क्त्वाप्रत्ययस्येति** । यजेः परस्येति शेषः ॥—**इष्ट्वीनमिति** । यजेः क्त्वा । 'वचिस्वपि–' इति संप्रसारणम् ।

सि आसे । ⧗ आज्जसेरसुक् ।७।१।५०। अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात् । देवासः । ब्राह्मणासः । ⧗ श्री-ग्रामण्योश्छन्दसि ।७।१।५६। आमो नुट् । श्रीणामुदारो धरुणो रयीणाम् । सूत ग्रामणीनाम् । ⧗ गोः पादान्ते ।७।१।५७। विद्मा हि त्वा गोपतिं शूर गोनाम् । पादान्ते किम् । गवां शता पृक्षयामेषु । पादान्तेऽपि क्वचिन्न । छन्दसि सर्वेषां वैकल्पिकत्वात् । विराजं गोपतिं गवाम् । ⧗ छन्दस्यपि दृश्यते ।७।१।७६। अस्थ्यादीनामनङ् । इन्द्रो दधीचो अस्थभिः । ⧗ ई च द्विवचने ।७।१।७७। अस्थ्यादीनामित्येव । अक्षीभ्यां ते नासिकाभ्याम् । ⧗ दृक्स्ववस्स्वतवसां छन्दसि ।७।१।८३। एषां नुम् स्यात्सौ । कीदृङ्ङिन्द्रः । स्ववान् । स्वतवान् । ⧗ उदो-ष्ठ्यपूर्वस्य । ⧗ बहुलं छन्दसि ।७।१।१०३। ततुरिः । जगुरिः । पपुरिः । ⧗ हु ह्वरेश्छन्दसि ।७।२।३१। ह्वरेर्निष्ठायां हु आदेशः स्यात् । अहुतमसि हविर्धानम् । ⧗ अपरिह्वृताश्च ।७।२।३२। पूर्वेण प्राप्तस्यादेशस्या-भावो निपात्यते । अपरिह्वृताः सनुयाम वाजम् । ⧗ सोमे ह्वरितः ।७।२।३३। इड्गुणौ निपात्येते । मा नः सोमो ह्वरितः । ⧗ ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरू-त्रीरुज्ज्वलितिक्षरितिक्षमित्यमितीति च ।७।२।३४। अष्टादश निपात्यन्ते । तत्र ग्रसु स्कम्भु स्तम्भु एषामुदि-त्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इण्निपात्यते । युवं शचीभिर्ग्रसितामसुञ्चतम् । विष्कभिते अजरे । येन स्वः स्तभितम् । सत्येनोत्तभिता भूमिः । स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति । चते याचने । कस गतौ । आभ्यां क्तस्येडभावः । चत्ता इतश्चत्तामुतः । त्रिधा ह श्यावमश्विना विकस्तम् । उत्तानाया हृदयं यद्विक-स्तम् । निपातनं बहुत्वापेक्षं सूत्रे बहुवचनं विकस्ता इति तेनैकवचनान्तोऽपि प्रयोगः साधुरेव । शसु शंसु शासु एभ्यस्तृच इडभावः । एकस्त्वष्टुरश्वस्याविशस्ता । ग्रावग्राभ उत शंस्ता । प्रशास्ता पोता । तरतेर्वृङ्वृञोश्च तृच उट् ऊट् एतावागमौ निपात्येते । तरुतारं रथानाम् । तरूतारत् । वरुतारम् । वरूतारम् । वरूत्रीभिः सुशरणो नो अस्तु । अत्र ङीबन्तनिपातनं प्रपञ्चार्थम् । वरूतृशब्दो हि निपातितः । ततो ङीपा गतार्थत्वात् । उज्ज्वलादिभ्यश्चतुर्भ्यः शप

---

'ब्रश्च–' इति षत्वम् । ष्टुत्वम् । आकारस्येनमादेशः ॥—पीत्वेति । पिबतेः क्त्वा । 'घुमास्था–' इतीत्वम् ॥—आज्जसेः–॥ जसेरिति पूर्वाचार्यानुरोधेन निर्देशः ॥—देवास इति । असुकि कृते जसः सकारस्य श्रवणम् । असुकः सकारस्य वि-सर्गः ॥—श्रीणामिति । अत्र 'वामि' इति नदीत्वविकल्पान्नदीत्वाभावे उदाहरणमिदं बोध्यम् । नदीत्वपक्षे तु 'ह्रस्वन-द्यापो नुट्' इत्यनेनैव सिद्धम् ॥—सूतग्रामणीनामिति । सूताश्च ग्रामण्यश्चेतीतरेतरयोगः ॥—गोः पा–॥ गो इत्ये-तस्मादुत्तरस्यामो नुडागमः स्यात्पादान्ते । पादश्चेह ऋक्पादो गृह्यते छन्दसीत्यधिकारात् ॥—छन्दस्य–॥ 'छन्दसि च' इत्येव सिद्धे अपि दृश्यत इत्येतत्सर्वोपाधिव्यभिचारार्थम् । अन्यथा आरम्भसामर्थ्यात्कस्यचिदेव व्यभिचारः संभाव्येत । टादावचीत्युक्तं हलादावपि भवति ॥—अस्थभिः । विभक्तावित्युक्तमविभक्तावपि भवति । अस्थन्वन्ते पदनस्थावि-भक्ति । अस्थन्वन्तमित्यत्रास्थिशब्दान्मतुप् । अनङि कृतेऽनो नुडिति मतुपो नुट् । अनङो नकारलोपः ॥—दृक्–॥ 'आच्छीनद्योर्नुम्' 'सावनडुहः' इत्यतो नुम् सावित्यनुवर्तते तदाह—नुम् स्यादिति ॥—कीदृङ्ङिन्द्र इति । किम्-शब्दे उपपदे 'त्यदादिषु दृशोनालोचने कञ्च' इति दृशेः क्विन् । 'इदंकिमोरीश् की' इति किमः की आदेशः । नुम् 'संयो-गान्तस्य लोपः' । 'क्विन्प्रत्ययस्य–' इति कुत्वेन नस्य ङः 'ङमो ह्रस्वादचि–' इति ङमुट् ॥—स्ववानिति । अवतेरसुन् । सुष्ठु अवो यस्येति विग्रहः । स्ववःशब्दान्नुमि कृते 'सान्तमहतः–' इति दीर्घः । सयोगान्तलोपः । तस्यासिद्धत्वान्नलोपो न ॥—स्वतवानिति । तुधातुः सौत्रो वृद्ध्यर्थः । ततोऽसुन् स्वं तवो वृद्धिर्यस्येति विग्रहः ॥—ततुरिरिति । तरतेः 'आदृगम–' इति किन्प्रत्ययः । उत्वं तस्य 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् इत्येतस्य द्विर्वचनम् । उरदत्त्वम् ॥—हु ह्वरे ॥ 'श्वी-दितो निष्ठायाम्' इत्यतो निष्ठायामिति वर्तते । तदाह—निष्ठायामिति ॥—अहुतमिति । न हुतमहुतम् ॥—अप-रिह्वृताः–॥ छन्दसि बहुवचनान्तस्यैव प्रयोगदर्शनाद्बहुवचनान्तस्य निर्देशः ॥—सोमे ॥—इड्गुणाविति । हृ इत्या-देशस्याभावोऽपि बोध्यः ॥—ग्रसित–॥ ग्रसु अदने । स्कम्भु स्तम्भु रोधनार्थौ सौत्रौ । चते याचने । कस गतौ । शसु हिंसायाम् । शंसु स्तुतौ । शासु अनुशिष्टौ । तॄ प्लवनतरणयोः । वृङ् संभक्तौ । वृञ् वरणे । ज्वल दीप्तौ । क्षर संचलने । क्षमूष् सहने । टुवम् उद्गिरणे । अम गत्यादिषु ॥—अष्टादशेति । क्षमितेः पाठपक्षे तु एकोनविंशतिः ॥—उदित्त्वा-न्निष्ठायामिट्प्रतिषेधे प्राप्ते इति । 'उदितो वा' इति क्त्वायां वेट्त्वात् 'यस्य विभाषा' इति निषेधे प्राप्ते इत्यर्थः ॥—विष्कभित इति । 'अनिदिताम्–' इति नलोपः । 'वेः स्कभ्नातेर्नित्यम्' इति षत्वम् ॥—उत्तभितेति । 'उदः स्थास्तम्भोः–' इति पूर्वसवर्णः । सकारस्य थकारः । तस्य 'झरो झरि सवर्णे' इति लोपः ॥—अन्योपसर्गपूर्वस्य माभूदिति । यदि स्यात् उत्तभिग्रहणं व्यर्थं स्यात् ॥—चत्ता इति । चतशब्दात्टापि उभा सह 'आहुतः' निपातेन सह एकीकृत्य छेदस्तु पदकाराणां संप्रदायसिद्धः । भूयामो इति मध्ये भूयामो इति यथा ॥—अश्वस्याविशस्तेति । 'अन्येषामपि–' इति पूर्वपदस्य दीर्घः । निपातनं बहुत्वापेक्षमिति तेन छान्दसः प्रयोग एकवचनान्तोऽप्युदाहृत इति भावः ॥—ततो ङीपा

इकारादेशो निपात्यते । श्वक दीप्तौ । क्षर संचलने । टुवम उद्गिरणे । अम गत्यादिषु । इह क्षरितीत्यस्यानन्तरं क्षमितीत्यपि केचित्पठन्ति । तत्र क्षमूष् सहने इति धातुर्बोध्यः । भाषायां तु प्रस्तस्कम्भस्तभ्रोतभ्रचमितविकसिताः । विशसिता । शंसिता । शासिता । तरीता । तरिता । वरीता । वरिता । उज्ज्वलति । क्षरति । पाठान्तरे, क्षमति । वमति । अमति । बभूथाऽऽततन्थजगृभ्मववर्थेति निगमे ।७।२।६४। विद्मा तमुत्सं यत आबभूथ । येनान्तरिक्षमुर्वाततन्थ । जगृभ्मा ते दक्षिणमिन्द्र हस्तम् । त्वं ज्योतिषा वितमो ववर्थ । भाषायां तु बभूविथ । आतेनिथ । जगृहिम । ववरिथेति । सनिंससनिवांसम् ।७।२।६९। सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिट् । एत्वाभ्यासलोपाभावश्च निपात्यते ॥ * पावकादीनां छन्दसि प्रत्ययस्थात्कादित्वं नेति वाच्यम् । हिरण्यवर्णाः शुचयः पावकाः । घोर्लोपो लेटि वा ।७।३।७०। दधद्रत्नानि दाशुषे । सोमो ददद्गन्धर्वाय । यदग्निरग्नये ददात् । मीनातेर्निगमे ।७।३।८१। शिति ह्रस्वः । प्रमिणन्ति व्रतानि । लोके प्रमीणन्ति । अस्तिसिचोऽपृक्ते । बहुलं छन्दसि ।७।३।९७। सर्वमा इदम् । आसीदिति प्राप्ते । ह्रस्वस्य गुणः । जसि च ॥ * जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः । अधा शतक्रत्वो यूयम् । शतक्रतवः । पश्वे नृभ्यो यथा गवे । पशवे ॥ * नाभ्यस्तस्याचीति निषेधे बहुलं छन्दसीति वक्तव्यम् । अनुषग्जुजोषत् । नित्यं छन्दसि ।७।४।८। छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम् । अवीवृधत् । न छन्दस्यपुत्रस्य ।७।४।३५। पुत्रभिन्नस्यादन्तस्य क्यचि ईत्वदीर्घौ न । मित्रयुः । क्याच्छन्दसीति उः । अपुत्रस्य किम् । पुत्रीयन्तः सुदानवः ॥ * अपुत्रादीनामिति वाच्यम् । जनीयन्तोन्वग्रव । जनमिच्छन्त इत्यर्थः । दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति ।७।४।३६। एते क्यचि निपात्यन्ते । भाषायां तु उप्रत्ययाभावात् । दुष्टीयति । द्रविणीयति । वृषीयति । रिष्टीयति । अश्वाघस्यात् ।७।४।३७। अश्व अघ एतयोः क्यचि आत्स्याच्छन्दसि । अश्वायन्तो मघवन् । मात्वा वृका अघायवः । न छन्दसीति निषेधो न ईत्वमात्रस्य किंतु दीर्घस्यापीति । अत्रेदमेव सूत्रं ज्ञापकम् । देवसुम्नयोर्यजुषि काठके ।७।४।३८। अनयोः क्यचि आत्स्याद्यजुषि कठशाखायाम् । देवायन्तो यजमानाः । सुम्नायन्तो हवामहे । इह यजुःशब्दो न मन्त्रमात्रपरः किंतु वेदोपलक्षकः । तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति । किं च ऋग्वेदेऽपि भवति । स चेन्मन्त्रो यजुपि कठशाखायां दृष्टः । यजुषीति किम् । देवाञ्जिगाति सुम्नयुः । बह्वृचानामप्यस्ति कठशाखा ततो भवति प्रत्युदाहरणमिति हरदत्तः । कव्यध्वरपृतनस्यर्चि लोपः ।७।४।३९। एषाम-

---

इति । 'ऋन्नेभ्यः–' इति विहितेन ॥ **बभूथा**—॥ निगमो वेदः । एषां वेद इडभावो निपात्यते । वृञः क्रादिसूत्रेणेडभावे सिद्धे निगम एवेति नियमार्थं निपातन तदेतदाह—**भाषायां तु ववरिथेति** ॥—**सनिंस**—॥ सनिपूर्वात्सनतेः सनोतेर्वा सनिंस सनिवासमिति निपात्यते ॥—**क्वसोरिडिति** । 'नेड्वशि कृति' इति निषेधे प्राप्ते निपातनम् ॥—**पावका इति** । पुनन्ति पावयन्ति वा पावकाः । पुनातेः पावयतेर्वा ण्वुल् टाप् ॥—**दधदिति** । दधातेर्लेट् तिप् 'श्लौ' इति द्वित्वम् । दधाति इति स्थिते आकारलोपः 'लेटोऽडाटौ' इत्यडागमः । 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः । दाशुषे यजमानाय रत्नानि दधत् । दधादित्यर्थः । ददिति ददाते रूपम् ॥ लोपाभावे उदाहरणमाह—**ददादिति** ॥—**मीनातेः** ॥ 'प्वादीनां ह्रस्वः' इत्यतो ह्रस्व इति वर्तते तदाह—**शिति ह्रस्व इति** ॥—**प्रमिणन्तीति** । 'हिनुमीना' इति णत्वम् ॥—**आइवमिति** । अस्तेर्लङ् तिप् 'आडजादीनाम्' इत्याट् शपो लुक् । 'अस्तिसिचः–' इतीडभावे अपृक्तत्वाद्धल्ङ्यादिलोपः रुत्वविसर्गौ । संहितायां तु 'भोभगो' इति रोर्यत्वम् । 'लोपः शाकल्यस्य' इति यलोपः ॥—**जसादिष्विति** । आदिशब्दः प्रकारे तेन पूर्वयोगनिर्दिष्टानामपि ग्रहणम् ॥—**शतक्रत्व** इति । 'जसि च' इति गुणाभावपक्षे प्रथमयोः पूर्वसवर्णदीर्घोऽपि 'वा छन्दसि' इति वचनादत्र न भवतीति यणादेशः प्रवर्त्तते ॥—**पश्वे** इति । 'घेर्ङिति' इत्यस्याभावे यण् ॥—**जुजोषदिति** । जुषी प्रीतिसेवनयोः । लेट् व्यत्ययेन परस्मैपदम् तिप् । 'इतश्च लोपः परस्मैपदेषु' 'लेटोडाटौ' इत्यट् व्यत्ययेन शपः श्लुः । द्विर्वचनम् ॥—**न छन्दसि**–॥ इह यथानन्तर्यादीत्वमात्र प्रतिषिध्येत तर्हि 'अकृत्सार्व–' इति दीर्घः स्यात् । अपवादे पुनरुत्सर्गस्थितेः अत आह—**ईत्वदीर्घौ नेति** । क्यचि यदुक्त तन्नेति व्याख्यानादिति भावः । अत्र च ज्ञापकमनुपदमेव वक्ष्यति—**पुत्रीयन्त** इति । पुत्रमिच्छन्तः पुत्रीयन्तः । जनमिच्छन्तो जनीयन्तः । लटः शत्रादेशः । 'उगिदचाम्–' इति नुम् ॥—**दुरस्यु**—॥ दुष्टशब्दस्य दुरस्भावो द्रविणशब्दस्य द्रविणस्भावः वृषस्य वृषण्भावः रिष्टस्य रिषण्भावश्च निपात्यते ॥—**दुष्टीयतीति** । प्रकृतिमात्रे तात्पर्यम् । उप्रत्ययस्य समानार्थेन तृना दुष्टीयितेत्यादि बोध्यम् ॥—**अश्वायन्त इति** । अश्वशब्दात् क्यच् । लटः शत्रादेशः ॥—**अघायव** इति । छन्दसि परेच्छायां क्यच् । 'क्याच्छन्दसि' इत्युप्रत्ययः ॥—**इदमेव सूत्रं ज्ञापकमिति** । अन्यथा दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यात् ॥—**देवान् जिगातीति** । नन्विदं प्रत्युदाहरणमङ्गद्वयविकलम् । यजुषि काठक इत्यंशद्वयस्यापि तत्राभावादित्याशङ्क्याह—**बह्वृचानामप्यस्तीति** । तत्रेदं दृष्टमिति भावः । काठक इति किम् । यजुर्वेदे शाखान्तरे माभूत् । अन्यत्र सुम्नयुरिदमस्ति ॥—**कव्यध्वर**—॥

न्यस्य लोपः स्यात् क्यचि ऋग्विषये । स पूर्वया निविदा कव्यतायोः । अध्वर्युं वा मधुपाणिम् । दमयन्तं पृतन्युम् । दधातेर्हिः । जहातेश्च क्त्वि । **विभाषा छन्दसि** ।७।४।४४। हित्वा शरीरम् । हीत्वा वा । **सुधित वसुधित नेमधित धिष्व धिषीय च** ।७।४।४५। सु वसु नेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते । गर्भं माता सुधितं वक्षणासु । वसुधितमग्नौ । नेमधिता न पौंस्या । क्तिन्नपि दृश्यते । उत श्वेतं वसुधितिं निरेके । धिष्व वज्रं दक्षिण इन्द्र हस्ते । धत्स्वेति प्राप्ते । सुरेता रेतो धिषीय । आशीर्लिङि इट् । इटोऽत् । धासीयेति प्राप्ते । अपो भि ॥ * **मासश्छन्दसीति वक्तव्यम्** । माद्भिः शरद्भिः ॥ * **स्ववःस्वतवसोरुषसश्चेष्यते** । स्ववद्भिः । अवते-रसुन्, शोभनमवो येषां ते स्ववसस्तैः । तु इति सौत्रो धातुस्तस्मादसुन् । स्वं तवो येषां तैः स्वतवद्भिः । समुषद्भि-रजायथाः । मिथुनेऽसिः । वसेः किदित्यसिप्रत्यय इति हरदत्तः । पद्मपादीरीत्या तु उषः किदिति प्राग्व्याख्यातम् । न कवतेर्यङि । **कृपेश्छन्दसि** ।७।४।६४। यङि अभ्यासस्य चुत्वं न । करीकृप्यते । **दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च** ।७।४।६५। एतेऽष्टादश निपात्यन्ते । आद्यास्त्रयो धृङो धारयतेर्वा । भवतेर्यङ्लुगन्तस्य गुणाभावः । तेन भाषायां गुणो लभ्यते । तिजेर्यङ्लुगन्तात्तङ् । इयर्तेर्लेटि हलादिः-शेषापवादो रेफस्य लत्वमित्वाभावश्च निपात्यते । अलर्षि युध्म खजकृत्पुरन्दर । श्तिपा निर्देशो न तन्त्रम् । अलर्ति दक्ष उत । फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते । अन्वापनीफणत् । स्यन्देः संपूर्व-स्य यङ्लुकि शतरि अभ्यासस्य निक् । धातुसकारस्य षत्वम् । करोतेर्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः क्रन्देर्लुङि च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च । कनिक्रदज्जनुषम् । अक्रन्दीदित्यर्थः । बिभर्तेरभ्यासस्य जश्त्वाभा-वः । वि यो भरिभ्रदोषधीषु । ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो धातोर्ऋकारलोपश्च । दविध्वतो रश्मयः सूर्यस्य । द्युतेरभ्यासस्य संप्रसारणाभावोऽत्वं विगागमश्च । दविद्युतद्दीद्यच्छोशुचानः । तरतेः शतरि श्लौ अ-भ्यासस्य रिगागमः । सहोजा तरित्रतः । सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य । वृजेः शतरि श्लाव-भ्यासस्य रीक् । मृजेर्लिटि णल् अभ्यासस्य रुक् धातोश्च युक् । गमेराङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगा-गमश्च । वक्ष्यन्ती वेदागनीगन्ति कर्णम् । **ससूवेति निगमे** ।७।४।७४। सूतेर्लिटि परस्मैपदं वुगागमोऽभ्या-

कवि अध्वर पृतना एषामन्त्यस्य लोपः स्यात् क्यचि परे ऋचि विषये । मृगय्वादिगणेऽध्वर्युशब्दः पठ्यते तद्व्युत्पत्त्यन्तरं बोध्यम् ॥—**विभाषा**—॥ जहातेरङ्गस्य विभाषा हि आदेशः स्यात् ॥—**हीत्वेति** । हिआदेशाभावे 'घुमास्था–' इतीत्वम् । क्वचित्तु हात्वेति पाठस्तत्र छान्दसत्वाद् 'घुमास्था' इतीत्वाभावः ॥—**वसुधितमिति** । कर्मधारय इति हरदत्तः । वसूनां धातारं प्रदातारमित्यर्थ इति वेदभाष्यम् ॥—**नेमधितमिति** । सामिपर्यायो नेमशब्दः । अय कर्मधारयः ॥—**धत्स्वेति** । 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । 'दधस्तथोश्च' इति भष्भावः ॥—**धिषीयेति** । आशीर्लिङात्मनेपदोत्तमपुरुषैकवचने दधातेरित्वं निपात्यते तदाह—**आशीर्लिङीति** ॥—**माद्भिरिति** । 'पद्दन्नोमास्–' इति मासशब्दस्य मास्आदेशः ॥—**न कवतेरिति** । अनुवृत्त्यर्थ उपन्यासः ॥—**करीकृप्यत** इति । 'रुग्रिकौ च लुकि' इति रीगागमः । लोके तु चरीकृप्यते कृषीवलः ॥—**धृङ** इति । धृङ अवस्थाने ॥—**धारयतेर्वेति** । स एव ण्यन्तः । तत्र दाधर्तीत्यत्र धारयतेः शपः श्लौ णिलुक् अभ्यासस्य दीर्घत्व च निपात्यते । धृङो वा शे प्राप्ते व्यत्ययेन शप् तत्र श्लावभ्यासस्य दीर्घत्वं च । अत्र परस्मैपदमपि निपात्य तस्यैव यङ्लुक्यभ्यासस्य रुगाद्यपवादकं दीर्घत्वं निपात्यत इति । दर्धर्ती-त्यत्र यङ्लुक्पक्षे दाधर्तीति निपातनेन प्राप्तस्य दीर्घस्याभावो निपात्यते । 'रुग्रिकौ च लुकि' 'ऋतश्च' इत्येव रुक् सिद्धः । श्लुपक्षे तु रुगपि निपात्यः । दर्धर्षीत्यत्र यङ्लुक्पक्षे न किंचिन्निपातनं किं तु श्लावेव । भवतेर्यङ्लुगन्ता-ल्लोट् गुणाभाव इति । ननु 'भूसुवोस्तिङि' इत्येव गुणनिषेधे सिद्धे निपातनमनर्थकमिति चेत्सत्यम् । ज्ञापकार्थं तर्हि निपातनम् । एतज्ज्ञापयति अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति । तेन बोभवीत्यत्र भाषायां गुणः सिद्धस्तदेतदाह—**तेन भाषायामिति** । तिजेर्यङ्लुक्यात्मनेपदं निपात्यते तदाह—**तिजेरिति** । ऋ गतौ लटि सिपि 'श्लौ' इति द्वित्वम् । अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्य प्राप्तस्येत्वस्या-भावो निपात्यते तदाह—**इयर्तेरिति** । करोतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य चुत्वाभावो निपात्यते 'ऋतश्च' इति रिगा-गमस्तदाह—**करोतेरिति** ॥—**चुत्वाभाव** इति । 'कुहोश्चुः' इति प्राप्तस्य । बिभर्तेर्यङ्लुगन्तस्य शतरि अभ्यासस्य जश्त्वाभावो निपात्यते तदाह—**बिभर्तेरिति** ॥—**जश्त्वाभाव** इति । 'अभ्यासे चर्च' इति प्राप्तस्य ॥—**दविध्वत** इति । ध्वरतेर्यङ्लुगन्तस्य शतरि रूपम् । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्र-सारणाभावोऽत्वं च निपात्यते तदाह—**द्युतेरिति** ॥—**संप्रसारणाभाव** इति । 'द्युतिस्वाप्योः संप्रसारणम्' इति प्रा-

सस्य प्रात्वं निपात्यते । सुष्टिः ससूव स्थविरम् । सुषुवे इति भाषायाम् । ⧗ बहुलं छन्दसि ।७।४।७८। अभ्यासस्य इकारः स्याच्छन्दसि । पूर्णां विवष्टि । वशेरेतद्रूपम् ॥ इति सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः ।

⧗ **प्रसमुपोदः पादपूरणे** ।८।१।६। एषां द्वे स्तः पादपूरणे । प्रप्रायमग्निः । संसमिद्युवसे । उपोप मे परामृश । किं नोदुदु हर्षसे । ⧗ **छन्दसीरः** ।८।२।१५। इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात् । हरिवते हर्यश्वाय । गीर्वान् । ⧗ **अनो नुट्** ।८।२।१६। अन्नन्तान्मतोर्नुट् स्यात् । अक्षण्वन्तः कर्णवन्तः । अस्थन्वन्तं यदनस्था । ⧗ **नाद्घस्य** ।८।२।१७। नान्तात्परस्य घस्य नुट् । सुपथिन्तरः ॥ * **भूरिदाव्नस्तुड्वाच्यः** । भूरिदावत्तरो जनः । ॥ * **ईद्रथिनः** । रथीतरः । रथीतमं रथीनाम् । ⧗ **नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि** ।८।२।६१। सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठाया नत्वाभावो निपात्यते । नसत्तमञ्जसा । निषत्तमस्य चरतः । असन्नं निषण्णमिति प्राप्ते । उन्देर्नञ्पूर्वस्यानुत्तम् । प्रतूर्तमिति त्वरतेः तुर्वीत्यस्य वा । सूर्तमिति सृ इत्यस्य । गूर्तमिति गुरी इत्यस्य । ⧗ **अम्नरूधरवरित्युभयथा छन्दसि** ।८।२।७०। रुर्वा रेफो वा । अम्न एव । अम्नरेव । ऊधएव । ऊधरेव । अवएव । अवरेव । ⧗ **भुवश्च महाव्याहृतेः** ।८।२।७१। भुवइति । भुवरिति । ⧗ **ओमभ्यादाने** ।८।२।८७। ओम्शब्दस्य

---

सस्य ॥—**ससूवेति निगमे** ॥ दाधर्त्यादिष्वेतत्पठितव्यम् ॥—**विवष्टीति** । वश कान्तौ । लटि तिपि शपः श्लौ द्वित्वम् अभ्यासस्येत्व 'व्रश्च–' इति षत्वम् । ष्टुत्वम् ॥ इति सुबोधिन्या सप्तमोऽध्यायः ॥

**प्रसमुपोदः पादपूरणे** ॥ समाहारद्वन्द्वः । समासान्तविधेरनित्यत्वाद् 'द्वन्द्वाच्चुदषहान्तात्' इति न टच् ॥—**प्रप्रायमग्निरिति** । नात्र द्विर्वचनस्य किंचिद्द्योत्यं केवलं पादपूरणमेव कार्यम् । नचैवंविधस्य भाषाया प्रयोगोऽस्तीति सामर्थ्याच्छन्दस्येवेदं विधानमित्याहुः ॥—**छन्दसीरः** ॥—**हरिवते** इति । हरयो विद्यन्ते यस्येति हरिवान् तस्मै । हरिशब्दान्मतुप् मकारस्य वकारः ॥—**गीर्वानिति** । 'र्वोरुपधाया दीर्घ इकः' इति दीर्घः ॥—**अक्षण्वन्त** इति । अक्षिशब्दान्मतुप् । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' । 'छन्दस्यपि दृश्यते' इत्यनङ् । नुटोऽसिद्धत्वात्पूर्वं नलोपे भूतपूर्वगत्या नुट् णत्वम् । ननु यदि परादिर्नुट् क्रियते तस्य मतुप्ग्रहणेन ग्रहणात् 'मादुपधायाः–' इति वत्वं मतुपस्तु न स्यात् नुटा व्यवधानात् । यदि तु पूर्वान्तो नुट् क्रियते तर्हि णत्व न स्यात् । 'पदान्तस्य' इति निषेधादिति चेत्सत्यम् । नुटोऽसिद्धत्वान्नोक्तदोषः । नन्वेवमवग्रहे दोषः स्यात् अक्षणिति णान्तं ह्यवगृह्णाति अक्षेत्यकारान्तमवग्रहीतुमुचितमिति चेत्सत्यम् । न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नामलक्षणमनुवर्तनीयं तस्माद्यथालक्षणं पद कर्तव्यमिति महाभाष्ये स्थितम् । किंच ईयिवासमित्यादौ पदत्वं विनापि अवग्रहः क्रियते । पूर्वेभिरग्निनेत्यादौ सत्यपि पदत्वे न क्रियते इति ॥—**घस्येति** । तरप्तमपोरित्यर्थः । 'तरप्तमपौ घः' इति तरप्तमपोर्घसंज्ञाविधानात् ॥—**सुपथिन्तर** इति । सुपथिन्शब्दात् 'द्विवचनविभज्योपपदे–' इति तरप् नलोपः । तरपो नुट् तस्यानुस्वारः परसवर्णः ॥—**भूरिदाव** इति । भूरिदाव्नः परस्य घस्य तुट् वाच्य इत्यर्थः ॥—**भूरिदावत्तर** इति । 'आतो मनिन्–' इत्यादिना दाधातोर्वनिप् तदन्तात्तरप् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः तुडागमः ॥—**ईद्रथिन** इति । रथिन ईकारोऽन्तादेशो घेपरे ॥—**रथीतर** इति । रथशब्दात् 'अत इनिठनौ' इति मत्वर्थीय इनिः । तदन्तात्तरप् नकारलोपे कृते इकारस्य ईकारादेशः । यदि तु नकारलोपापवादो नकारस्थाने ईकारो विधीयते तदा तस्यासिद्धत्वादेकादेशो न स्यात् ॥—**रथीतममिति** । इह पदकारा ह्रस्वान्तमवगृह्णन्ति अन्येषामपीति संहितायां दीर्घ इति तदाशयः ॥—**नसत्त**—॥ एतानि छन्दसि विषये निपात्यन्ते ॥—**नत्वाभाव** इति । 'रदाभ्याम्–' इति प्राप्तस्य ॥—**निषत्तमिति** । 'सदिरप्रतेः' इति षत्वम् ॥—**अनुत्तमिति** । अनुन्नमिति भाषायाम् । एतन्निपातनारम्भसामर्थ्याद्भाषायां 'नुदविदोन्दत्र–' इति विकल्पो नेत्याहुः ॥—**प्रतूर्तमिति** । यदा त्वरतेस्तदा 'ज्वरत्वर–' इत्यादिना ऊठ् । यदा तुर्वी हिंसायामित्यस्य तदा 'राल्लोपः' ॥—**सृ इत्यस्येति** । निपातनादुत्वम् । रपरत्वं तु 'उरण् रपरः' इत्येव सिद्धम् कार्यकालपक्षाश्रयणेन परिभाषाणामसिद्धत्वप्रकरणेऽपि प्रवृत्तेः ॥—**गूर्तमिति** । गूर्णमिति भाषायाम् ॥—**अम्न**—॥ उभयथेति व्याचष्टे—**रुर्वा रेफो वेति** । 'ससजुषो रुः' इति नित्यं रुत्वे प्राप्ते पक्षे रेफादेशार्थमिदम् । अम्नस्शब्द ईषदर्थे । अम्नरस्तमितमिति यथा । अवो रक्षणम् ॥—**अम्न एवेति** । यदा रुत्वं तदा 'भोभगो–' इति गेर्यत्वं 'लोपः शाकल्यस्य' इति लोपः ॥—**भुवश्च**—॥ महाव्याहृतेर्भुवस् इत्येतस्य छन्दसि विषये रुर्वा रेफो वा । तिस्रो महाव्याहृतयः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः । इह तु मध्यमाया ग्रहणम् । महाव्याहृतेरिति किं । भुवो विश्वेषु भुवनेषु । तिङन्तमेतद्भवतेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् सिप् शपि गुणाभावश्छान्दसो बहुलं

प्लुतः स्यादारम्भे । ओ ३ म् अग्निमीळे पुरोहितम् । अभ्यादाने किम् । ओमित्येकाक्षरम् । ये यज्ञकर्मणि ।८।२।८८। ये ३ यजामहे । यज्ञेति किम् । ये यजामहे । प्रणवष्टेः ।८।२।८९। यज्ञकर्मणि टेरोमित्यादेशः स्यात् । अपां रेतांसि जिन्वतो ३ म् । टेः किम् । हलन्ते अन्त्यस्य माभूत् । याज्यान्तः ।८।२।९०। ये याज्या मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि । जिह्वामग्ने चकृषे हव्यवाहा ३ म् । अन्तः किम् । याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः स्यात् । सर्वान्त्यस्य चेष्यते । ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ।८।२।९१। एषामादेः प्लुतो यज्ञकर्मणि । अग्नयेनुब्रू ३ हि । अग्नये गोमयानि प्रे ३ ष्य । अस्तु श्रौ ३ षट् । सोमस्याग्ने वीही वौ ३ षट् । अग्निमा ३ वह । अग्नीत्प्रेषणे परस्य च ।८।२।९२। अग्नीधः प्रेषणे आदेः प्लुतस्ततः परस्य च । ओ ३ श्रा ३ वय । विभाषा पृष्टप्रतिवचने हेः ।८।२।९३। प्लुतः । अकार्षीः कटम् । अकार्षं हि ३ । अकार्षं हि । पृष्टेति किम् । कटं करिष्यति हि । हेः किम् । कटं करोति ननु । निगृह्यानुयोगे च ।८।२।९४। अत्र यद्वाक्यं तस्य टेः प्लुतो वा । अद्यामावास्येत्यात्थ ३ । अमावास्येत्येवंवादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते । आम्रेडितं भर्त्सने ।८।२।९५। दस्यो ३ दस्यो ३ घातयिष्यामि त्वाम् । आम्रेडितग्रहणं द्विरुक्तोपलक्षणम् । चौर ३ चौर ३ । अङ्गयुक्तं तिङाकाङ्क्षम् ।८।२।९६। अङ्गेत्यनेन युक्तं तिङन्तं प्लवते । अङ्ग कूज ३ इदानीं ज्ञास्यसि जाल्म । तिङ् किम् । अङ्ग देवदत्त मिथ्या वदसि । आकाङ्क्षं किम् । अङ्ग पच । नैतदपरमाकाङ्क्षति । भर्त्सन इत्येव । अङ्गाधीष्व भक्तं तव दास्यामि । विचार्यमाणानाम् ।८।२।९७। वाक्यानां टेः प्लुतः । होतव्यं दीक्षितस्य गृहा ३ इ । न होतव्य ३ मिति । होतव्यं न होतव्यमिति विचार्यते । प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः । पूर्वं तु भाषायाम् ।८।२।९८। विचार्यमाणानां पूर्वमेव प्लवते । अहिर्नु ३ रज्जुर्नु । प्रयोगापेक्षं पूर्वत्वम् ।

---

'छन्दस्यमाङ्योगेऽपि' इत्यडभावः । लाक्षणिकत्वादेवास्याग्रहणे सिद्धे महाव्याहृतिग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं, तेन क्ष्मापयतीत्यादौ युक् सिध्यति ॥—**भुव** इति । भुव इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ॥—**ओम**—॥ अभ्यादानमारम्भस्तदाह—**आरम्भे** इति । अत्र प्लुतश्रुत्याच्परिभाषोपस्थानादच एव प्लुतः । मकारस्त्वर्धमात्र । समुदायोऽध्यर्धतुर्यमात्रः संपद्यते ॥—**ये यज्ञ**—॥ ये इत्येतस्य यज्ञकर्मणि प्लुतो भवति ॥—**प्रणवः**-॥ यज्ञकर्मणीति वर्तते । यज्ञकर्मणि टेः प्रणवादेशः स्यात्तदाह—**यज्ञकर्मणी**त्यादि ॥—**जिन्वतो ३ मि**ति । जिविः प्रीणनार्थः । लट् तिप् टेः प्रणवादेशः ॥—**टेः किमि**ति । 'वाक्यस्य टेः-' इत्यतः टेरित्यनुवर्तमाने पुनष्टेर्ग्रहणं किमर्थमिति प्रश्नः । असति हि टिग्रहणे 'अलोऽन्त्यस्य' इतिवचनाट्टेर्योऽन्त्योऽल् तस्यौकारः स्यात् तस्मात्सर्वादेशार्थं टिग्रहणमित्याह—**हलन्तेन्त्यस्य माभूदि**ति । अजन्ते विशेषाभावाद्धलन्ते इत्युक्तम् ॥—**याज्यान्तः**-॥—**ये याज्यानाममन्त्रा** इति । याज्याकाण्डे पठ्यन्ते ये मन्त्रा याज्यानुवाक्याकाण्डमिति समाख्याने प्रकरणे ये मन्त्रा इत्यर्थः ॥—**तेषामि**ति । मन्त्राणामित्यर्थः । तासामिति पाठे तासां याज्यानाम् । इहेदमन्तग्रहणं टेरित्यस्य निवर्तकं वा स्याद्विशेषणं वा । आद्ये चान्ते विशेषिते अजन्ताया एव याज्यायाः प्लुतः स्यात् । पक्षान्तरे त्वन्तग्रहणमनर्थकं टेरन्तत्वाव्यभिचारादित्यभिप्रायेणाह—**अन्तः किमि**ति । इतरोऽपि विदिताभिप्राय आह—**याज्यानामृचामि**ति । याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपाः तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति स चान्तस्यैवेष्यते तदर्थमन्तग्रहणमिति भावः ॥—**अग्नीत्प्रेषणे परस्य च** ॥ अग्नीधः प्रेषणमग्नीत्प्रेषणं तस्मिन्तदाह—**अग्नीधः प्रेषण** इति ॥—**विभाषा पृष्टप्रतिवचने** ॥ विभाषा हेः प्लुतो भवति ॥—**निगृह्य**-॥ निगृह्येति ल्यबन्तम् । स्वमतात्प्रच्यवनं निग्रहः तस्यैव स्वमतस्य एव किल त्वं निरुपपत्तिकमात्थेति शब्देन प्रतिपादनमनुप्रयोगः तत्र यद्वाक्यं तदाह—**अत्र यद्वाक्यमि**ति । निगृह्यानुयोगे यद्वाक्यमित्यर्थः । अद्यामावास्येत्येवं केनचित्प्रतिज्ञातं तमुपपत्तिभिर्निगृह्य साभ्यसूयमनुयुङ्क्ते—**अद्यामावास्येति** ॥—**आत्थे**ति । तदेव विवृणोति—**अमावास्येत्येवमि**त्यादि ॥—**दस्यो३दस्यो ३** इति । 'वाक्यादेरामन्त्रितस्य' इत्यादिना द्विर्वचनम् । ननु द्विरुक्तसमुदाये परभागस्यैव प्लुतः प्राप्नोति न तु पूर्वस्य 'तस्य परमाम्रेडितम्' इति परभागस्यैवाम्रेडितसंज्ञाविधानात् इष्यते द्वयोरपीत्याह—**आम्रेडितग्रहणमि**त्यादि ॥—**द्विरुक्तोपलक्षणार्थमि**ति । द्विरुक्तसमुदाये भागद्वयोपलक्षणार्थमित्यर्थः । एतच्चाम्रेडितस्य भर्त्सने वृत्त्यसंभवाल्लभ्यते ॥—**अङ्गयुक्तम्**—॥ आकाङ्क्षतीत्याकाङ्क्षं पचाद्यच् ॥—**तिङन्तमि**ति । आकाङ्क्ष तिङन्तमित्यर्थः ॥—**अङ्ग कूज ३** इति । अङ्गशब्दोऽमर्षे कूज अव्यक्ते लोण्मध्यमपुरुषैकवचनम् ॥—**ज्ञास्यसि जाल्मे**ति । कूजनफलमस्मिन्नेव क्षणे ज्ञास्यसीत्यर्थः ॥—**अङ्ग देवदत्ते**ति । अङ्गशब्दोऽत्रानुनये । अङ्ग देवदत्तेत्येकं वाक्यम् । एतच्च मिथ्या वदस्येतदपेक्षते ॥—**विचार्यमाणानाम्** ॥ कोटिद्वयस्पृग्विज्ञानं विचार इति कथ्यते । विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते । इह तु विचार्यमाणविषयत्वाद्वाक्यानि विचार्यमाणानि ॥—**गृहा ३ इ** इति । सप्तम्येकवचनान्तस्य गृहे इत्यस्य एचोऽप्रगृह्यस्येति प्लुतविकारः ॥—**पूर्वं तु**-॥ पूर्वं

भाषाग्रहणात्पूर्वयोगश्छन्दसीति ज्ञायते । ⧗ प्रतिश्रवणे च ।८।२।९९। वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च । गां मे देहि भोः । हन्त ते ददामि ३ । नित्यः शब्दो भवितुमर्हति ३ । दत्त किमात्थ ३ । ⧗ अनुदात्तं प्रश्नान्ताभिपूजितयोः ।८।२।१००। अनुदात्तः प्लुतः स्यात् । दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते । अग्निभूत ३ इ । पट ३ उ । अग्निभूते पटो एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः । शोभनः खल्वसि माणवक ३ । ⧗ चिदिति चोपमार्थे प्रयुज्यमाने ।८।२।१०१। वाक्यस्य टेरनुदात्तः प्लुतः । अग्निचिद्भाया ३-त् । अग्निरिव भायात् । उपमार्थे किम् । कथंचिदाहुः । प्रयुज्यमाने किम् । अग्निर्माणवको भायात् । ⧗ उपरिस्विदासीदिति च ।८।२।१०२। टेः प्लुतोऽनुदात्तः स्यात् । उपरिस्विदासी ३ त् । अधः स्विदासी ३ दित्यत्र तु विचार्यमाणानामित्युदात्तः प्लुतः । ⧗ स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ।८।२।१०३। स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये । असूयायाम् । अभिरूपक ३ अभिरूपक रिक्तं ते आभिरूप्यम् । संमतौ । अभिरूपक ३ अभिरूपक शोभनोऽसि । कोपे । अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सने । शाक्तीक ३ शाक्तीक रिक्ता ते शक्तिः । ⧗ क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ।८।२।१०४। आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात् । आचारभेदे । स्वयं ह रथेन याति ३ उपाध्यायं पदातिं गमयति । प्रार्थनायाम् । पुत्रांश्च लप्सीष्ट ३ धनं च तात । व्यापारणे । कटं कुरु ३ ग्रामं गच्छ । आकाङ्क्षं किम् । दीर्घायुरसि । अग्नीदग्नीन्विहर । ⧗ अनन्त्यस्यापि प्रश्नाख्यानयोः ।८।२।१०५। अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः । अगमः ३ पूर्वा ३ न् ग्रामा ३ न् । सर्वपदानामयम् । आख्याने । अगम ३ म् पूर्वा ३ न् ग्रामा ३ न् । ⧗ प्लुतावैच इदुतौ ।८।२।१०६। दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते । ऐ ३ तिकायन । औ ३ पगव । चतुर्मात्रावत्र ऐचौ सम्पद्येते । ⧗ एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्याऽऽदुत्तरस्येदुतौ ।८।२।१०७। अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्धस्य इदुतौ स्तः ॥ ✱ प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभि-

---

णैव सिद्धे नियमार्थमिदं तुशब्दस्त्विष्टार्थतोऽवधारणार्थः । यथैवं विज्ञायेत पूर्वमेव प्लुत इति मैवं विज्ञायि पूर्वं भाषायामेवेति । उदाहरणे तुशब्दो वितर्के ॥—**प्रतिश्रव**—॥ प्रतिश्रवणार्थमाह—**अभ्युपगमे**त्यादि । अङ्गीकारे इत्यर्थः ॥—**प्रतिज्ञाने** इति । अत्रोभयत्रापि गतिसमासः । अर्थद्वयेऽपि प्रतिपूर्वः शृणोतिः प्रसिद्धः ॥—**आभिमुख्ये चे**ति । अत्र 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः ॥—**दत्त किमात्थ ३** इति । किं ब्रूषे इत्येव पृच्छयते । अत्र श्रवणाभिमुख्यं गम्यते ॥—**अनुदात्तं प्रश्नान्त**—॥ प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः । नानेन प्लुतो विधीयते किं तु दूराद्धूतादिषु विहितस्य प्लुतस्योदात्तत्वे प्राप्ते प्रश्नान्ताभिपूजितयोरनुदात्तत्वगुणमात्र विधीयते तदाह—**दूराद्धूतादिष्वि**ति । तत्रैषा वचनव्यक्तिः । अभिपूजिते च यः प्लुतः सोऽनुदात्तो भवतीति । तत्राभिपूजिते 'दूराद्धूते च' इति प्लुत इति । इतरत्र तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति ॥—**अग्निभूत ३ इ** इति ।—**पट ३ उ** इति । अगमाः पूर्वान् ग्रामान् इत्येतद्वाक्यम् अग्निभूते पटो इत्यनन्तरेण समास तत्र अगमा इत्येवमादीनाम् 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति स्वरितः प्लुतः । अग्निभूते पटो अनयोरनुदात्तः । अभिपूजिते उदाहरणमाह—**शोभनः खल्वसी**त्यादि ॥—**चिदिति चोप**—॥ चिदित्येतन्निपात्यते उपमानेऽर्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवतीत्यर्थः । प्लुतोऽप्यत्राज्विधीयते न गुणमात्रम् । इतीति किम् । अक्रियमाणे तस्मिन्नुपमानेऽर्थे कस्मिंश्चिच्छब्दे प्रयुज्यमाने चिच्छब्दः प्लुत इति विज्ञायेत । इतिशब्दे तु सति प्रयुज्यमान इत्येतच्चिच्छब्दस्य विशेषणं प्लुतस्तु 'वाक्यस्य टेः–' इत्यधिकारात्तस्यैव भवतीति मनसि विभाव्योदाहरणमुखेनाह—**अग्निचिदिव भायादि**ति । अत्र न चिच्छब्दस्य प्लुतः किं तु भायादित्यस्यैव । अक्रियमाणे तु इति शब्दे चिच्छब्दस्यैव प्लुतः स्याद् अग्निचिद्भाया ३ दित्यत्र न स्यादिति भावः ॥—**कथंचिदि**ति । अत्र कष्टे चिच्छब्दः ॥—**अग्निर्माणवको भायादि**ति । अग्निरिव माणवको दीप्यत इत्यर्थः । अत्रोपमानार्थस्य गम्यमानत्वादस्ति चिच्छब्दस्य प्रतीतिः । प्रयोगस्तु नास्ति । यद्यन्येषामप्युपमानार्थानामिवादीनामस्ति प्रतीतिस्तथापि चिच्छब्दस्यापि तावदस्तीति भावः ॥—**उपरिस्विदासीदि**ति । अत्रापि विचार्यमाणानामिति विहितस्य प्लुतस्य गुणमात्र विधीयते ॥—**स्वरितमाम्रेडिते**—॥ उदाहरणे सर्वत्र वाक्यादेरामन्त्रितस्येति द्विर्वचनम् ॥—**क्षियाशीः**—॥ क्षिया आचारोल्लङ्घनम् । इष्टाशंसनमाशीः ॥—**दीर्घायुरसि अग्नीदग्नीन् विहरे**ति । क्षियायां तु न प्रत्युदाहृतं नित्यसाकाङ्क्षत्वात् । न हि स्वयं ह रथेन यातीत्युक्ते आचारभेदो गम्यते किं तु तर्हि उपाध्यायं पदातिंगमयतीत्युक्ते ॥—**प्लुतो वै**—॥ उदाहरणे 'गुरोरनृतः–' इति प्लुतः ॥—**चतुर्मात्रावि**ति । एचौ समाहारवर्णौ तत्र मात्रा अवर्णस्य मात्रेवर्णोवर्णयोः । तत्र इदुतोः प्लुते कृते तयोस्तिस्रो मात्राऽवर्णस्य चैका मात्रेति समुदायश्चतुर्मात्र इत्यर्थः । नन्वत्रार्धमात्राऽवर्णस्याध्यर्धमात्रेवर्णोवर्णयोरिति मतेऽर्धचतुर्थमात्रावप्येचौ प्राप्नुतः । सत्यं, 'चतुर्मात्रः प्लुत इष्यते' इति भाष्यात् समविभाग एवात्राश्रीयते इति भावः ॥ परिगणनमाह—**प्रश्नान्ते** इत्यादि । 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति चानुदात्तः स्वरितो

वाक्याज्यान्तेष्वेव। प्रश्नान्ते। अगमः३ पूर्वा३न् ग्रामा३न् अग्निभूत३इ। अभिपूजिते। करोषि पट३उ। विचार्यमाणे। होतव्यं दीक्षितस्य गृह३इ। न होतव्य३मिति। प्रत्यभिवादे। आयुष्मानेधि अग्निभूत३इ। याज्यान्ते। स्तोमैर्विधेमाग्नया३इ। परिगणनं किम्। विष्णुभूते घातयिष्यामि त्वाम्। अदूराद्धूत इति न वक्तव्यम्। पदान्तग्रहणं तु कर्तव्यम्। इह मा भूत्— भद्रं करोषि गौरिति। अप्रगृह्यस्य किम्। शोभने माले। * आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः। अग्न३इ पत्नीवः। ॥ तयोर्य्वावचि संहितायाम् ।८।२।१०८। इदुतोर्यकारवकारौ स्तोऽचि संहितायाम्। अग्न३याशा। पट३वाशा। अग्न३यिन्द्रम्। पट३वुदकम्। अचि किम्। अग्ना३इ वरुणौ। संहितायां किम्। अग्न३इ इन्द्रः। संहितायामित्यध्यायसमाप्तेरधिकारः। इदुतोरसिद्धत्वादयमारम्भः सवर्णदीर्घत्वस्य शाकल्यस्य च निवृत्त्यर्थम्। यवयोरसिद्धत्वादुदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यस्य बाधनार्थो वा। ॥ मतुवसो रु सम्बुद्धौ छन्दसि ।८।३।१। रु इत्यविभक्तिको निर्देशः। मत्वन्तस्य वस्वन्तस्य च रुः स्यात्। अलोऽन्त्यस्येति परिभाषया नकारस्य। इन्द्र मरुत्व इह पाहि सोमम्। हरिवो मेदिनं त्वा। छन्दसीर इति वत्वम्। ॥ दाश्वान्साह्वान्मीढ्वांश्च ।६।१।१२। एते क्वस्वन्ता निपात्यन्ते। मीढुष्टोकाय तनयाय॥ * वन उपसंख्यानम्। क्वनिब्वनिपोः सामान्यग्रहणम्। अनुबन्धपरिभाषा तु नोपतिष्ठते। अनुबन्धस्येहानिर्देशात्। यस्त्वायन्तं वसुना प्रातरित्वः। इणः क्वनिप्। ॥ उभयथर्क्षु ।८।३।८। अम्परे छवि नकारस्य

---

वा प्लुतः। अभिपूजिते 'अनुदात्त प्रश्नान्ताभिपूजितयोः' इति प्लुतः। विचार्यमाणे 'विचार्यमाणानाम्' इति प्लुतः। 'प्रत्यभिवादेऽशूद्रे' इति प्लुतः। याज्यान्ते 'याज्यान्ते' इति प्लुतः ॥—**विष्णुभूते** इति। नन्विदं परिगणनस्योदाहरणमयुक्तं यावता सूत्रे एवादूराद्धूत इत्युच्यते अत आह—**अदूराद्धूत इति न वक्तव्यमिति**। अन्यार्थमवश्यं कर्तव्ये परिगणने तेनैव सिद्धत्वान्न अदूराद्धूत इति न वक्तव्यम् ॥—**भद्रं करोषि गौरिति**। अत्रासर्वनामस्थान इति प्रतिषेधात्सौ परतः पूर्वपदं न भवति ॥—**शोभने माले** इति। 'ईदूदेद्—' इति प्रगृह्यसंज्ञा ॥—**आमन्त्रितेति**। अप्राप्ते एव प्लुते वचनम् ॥—**अग्न३इ** इति। अग्निशब्दस्य संबुद्धौ रूपं 'सामन्त्रितम्' इति आमन्त्रितसंज्ञा ॥—**तयोर्य्वा**—॥ नन्विदं व्यर्थम् 'इको यणचि' इत्यनेनैव सिद्धमत आह—**इदुतोरसिद्धत्वादिति**। ननु सिद्धः प्लुतः स्वरसन्धिषु कथं ज्ञायते। 'प्लुतप्रगृह्या अचि—' इति प्रकृतिभावविधानात्। यस्य हि विकारः प्राप्तः तस्य प्रकृतिभावो विधेयः, प्लुतस्यासिद्धत्वेन तस्य स्वरसन्ध्याख्यो विकारः प्राप्नोति। अस्तु प्लुतः सिद्धः किमायातमिदुतोः। उच्यते। प्लुतप्रकरणे यत्कार्यं तत्स्वरसन्धिषु सिद्धमिति सामान्येन ज्ञापकमाश्रयिष्यते, ततश्चेदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशोऽत आह—**सवर्णदीर्घत्वस्येति**। यदीदं नोच्येत अग्न३इ इन्द्र पट३उ उदकमित्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घः स्यात्। अग्न३याशेत्यादौ च 'इकोऽसवर्णे शाकल्यस्य—' इति प्रकृतिभावः स्यात्तद्बाधनार्थमिदं वक्तव्यमेव। ननु च तन्निवृत्तये यत्नान्तरमस्ति किं पुनस्तत्प्लुतपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घनिवृत्त्यर्थः शाकलनिवृत्त्यर्थश्च। तत्रावश्यं वक्तव्यं य इक् प्लुतपूर्वः न च प्लुतविकारः भो ३ इन्द्र भो यिन्द्र गायतीति भोशब्दस्य च्छान्दसः प्लुतः, ततः परस्येकारस्य निपातत्वात् प्रकृतिभावे प्राप्ते तं बाधित्वा यणादेशः। तदेव तस्यावश्यं कर्तव्यत्वेनैव यणा सिद्धेऽत आह—**यवयोरिति**। तथाचोक्तं वृत्तिकृता। 'किं तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति। तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ। इक् च यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्। तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः' ॥ अयमर्थः। 'इको यणचि' इति यणादेशेन किं रूपं प्रसिध्यति यतोऽयमाचार्यः इदुतोर्य्वौ विदधाति तौ चेदुतौ स्वरसन्धिषु सिद्धौ ममेति सूत्रकारेणैकीभूतस्य वचनम्। एवं चोदिते परिहरति शाकलदीर्घविधौ तु निवर्त्याविति। शाकलस्येदं शाकलं 'कण्वादिभ्यो गोत्रे' इत्यण्। पुनश्चोदयति इक् च यदेति। वार्तिककारोऽपि इकः प्लुतपूर्वस्य यणं विदधाति। स च प्रकृतिभावस्येव शाकलदीर्घविध्योरप्यपवादः। ततश्च तेनैव यणा एतयोरपि इदुतोः शाकलदीर्घौ न भविष्यति इति नार्थ एतेन। परिहरति यण्स्वरेति। यण्स्वरबाधनार्थमेव हेतुः सूत्रारम्भस्येति ॥—**मतु**—॥ अनुबन्धपरित्यागेन सकारान्तस्य वस् इत्यस्य मतुपा सह द्वन्द्वः। अल्पाच्तरस्यापि सौत्रः परनिपातः ॥—**मरुत्व** इति। मरुतो यस्य सन्तीति मतुप् 'झयः' इति वत्वं 'तसौ मत्वर्थे' इति भत्वाज्जश्त्वं न ॥—**हरिवो मेदिनमिति**। हरयो विद्यन्ते यस्येति मतुप्। हरिवच्छब्दात्संबुद्ध्येकवचने 'उगिदचाम्—' इति नुम्। हल्ङ्याब्भ्यो दीर्घादिलोपे संयोगान्तलोपे च कृते नकारस्य रुः 'संयोगान्तलोपो रुत्वे सिद्धो वक्तव्यः' इति वचनात् 'हशि च' इत्युत्वम् ॥ प्रसङ्गादाह—**दाश्वानिति** ॥—**क्वनिप्वनिपोः सामान्यग्रहणमिति**। अनुबन्धनिर्देशाभावात्तदनुबन्धकपरिभाषाया अनुपस्थानात् क्वनिपोऽपि ग्रहणम् ॥—**प्रातरित्व** इति। प्रातरेतीति 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप्। 'ह्रस्वस्य पिति कृति तुक्'। तदाह—**इणः क्वनिबिति** ॥—**उभयथा**—॥ 'नश्छव्यप्रशान्' इति वर्तते। तेनैव नित्ये प्राप्ते विकल्पार्थं वचनम् ॥—**पर्यूंस्तां**-

रुर्वा। पशूंरभ्रके। **दीर्घादटि समानपादे** ।८।३।९। दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाटौ एकपादस्थौ स्याताम्। देवाँ अच्छा सुमती। महाँ इन्द्रो य ओजसा। उभयथेत्यनुवृत्तेर्नेह। आदित्यान्याचिषामहे। **आतोऽटि नित्यम्** ।८।३।३। अटि परतो रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः। महाँ इन्द्रः। तैत्तिरीयास्तु अनुस्वारमधीयते। तत्र छान्दसो व्यत्यय इति प्राञ्चः। एवं च सूत्रस्य फलं चिन्त्यम्। **स्वतवान्पायौ** ।८।३।११। रुर्वा। भुवस्तस्य स्वतवाँः पायुरग्ने। **छन्दसि वाऽप्राम्रेडितयोः** ।८।३।४९। विसर्गस्य सो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा। अग्ने त्रातर्ऋतस्कविः। गिरिर्न विश्वतस्पृथुः। नेह। वसुनः पूर्व्यः पतिः। अप्रेत्यादि किम्। अग्निः प्र विद्वान्। परुषःपरुषः। **कःकरत्करतिकृधिकृतेष्वनदितेः** ।८।३।५०। विसर्गस्य सः स्यात्। अदितेरपत्कः। यथा नो वस्यसस्करत्। सुपेशसस्करति। उरुणस्कृधि। सोमं न चारुं मघवत्सु नस्कृतम्। अनदितेरिति किम्। यथा नो अदितिः करत्। **पञ्चम्याः परावध्यर्थे** ।८।३।५१। पञ्चमीविसर्गस्य सः स्यादुपरिभावार्थे परिशब्दे परतः। दिवस्परि प्रथमं जज्ञे। अध्यर्थे किम्। दिवस्पृथिव्याः पर्योजः। **पातौ च बहुलम्** ।८।३।५२। पञ्चम्या इत्येव। सूर्यो नो दिवस्पातु। **षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु** ।८।३।५३। वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठं भन्दमानः। तमसस्पारमस्य। परिवीत इळस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु। **इडाया वा** ।८।३।५४। पतिपुत्रादिषु परेषु। इळायास्पुत्रः। इळायाः पुत्रः। इळायास्पदे। इळायाः पदे। **निसस्तपतावनासेवने** ।८।३।१०२। निसः सकारस्य मूर्धन्यः स्यात्। निष्टपं रक्षो निष्टप्ता अरातयः। अनासेवने किम्। निस्तपति। पुनःपुनस्तपतीत्यर्थः। **युष्मत्तत्ततक्षुष्वन्तःपादम्** ।८।३।१०३। पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकारादिष्वेषु परेषु। युष्मदादेशाः त्वंत्वातेतवाः। त्रिभिष्ट्वं देव सवितः। तेभिष्ट्वा। आभिष्टे। अप्स्वग्ने सधिष्टव। अग्निष्टद्विश्वम्। द्यावापृथिवी निष्टतक्षुः। अन्तःपादं किम्। तदग्निस्तदर्यमा। यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः। अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः। **यजुष्येकेषाम्** ।८।३।१०४। युष्मत्तत्ततक्षुषु परतः सस्य मूर्धन्यो वा। अर्चिभिष्ट्वम्। अग्निष्टे अग्रम्। अर्चिभिष्टतक्षुः। पक्षे अर्चिभिस्त्वमित्यादि। **स्तुतस्तोमयोश्छन्दसि** ।८।३।१०५। नृभिष्टुतस्य। नृभिः स्तुतस्य। गोष्टोमम्। गोस्तोमम्। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम्। **पूर्वपदात्** ।८।३।१०६। पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा। यदिन्द्राग्नी दिविष्ठः। युवं हि स्थः स्वर्पती। **सुञः** ।८।३।१०७। पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य सस्य षः। ऊर्ध्व ऊषुणः। अभीषुणः। **सनोतेरनः** ।८।३।१०८। गोषा इन्दो नृषा असि। अनः

---

भ्रक इति। पशून् तानिति स्थिते नस्य रुः। पूर्वत्र 'अत्रानुनासिकः–' इति वानुनासिकः। उत्तरत्र तु 'आतोऽटि नित्यम्' इत्यनुनासिकः। रेफस्य विसर्गः। तस्य 'विसर्जनीयस्य सः' इति सः॥—**दीर्घादटि समानपादे**॥ एकपर्यायः समानशब्दस्तदाह—**तौ चेन्नाटावेकपादस्थाविति**। नाटौ नकाराटौ॥—**देवाँ अच्छा**॥—**महाँ इन्द्रो** इति। देवान् महानिति नस्य रुः 'आतोऽटि नित्यम्' इति नित्यमनुनासिकः॥—**नेहेति**। एतेन महान् हि स इति बह्वृचानां पाठोऽपि व्याख्यातः। आकरे तु महा हीत्युदाहृतं तच्छाखान्तरे अन्वेषणीयम्॥—**एवं चेति**। विकल्पस्यैव व्यवस्थिततया प्रकृतसूत्रत्यागेन महल्लाघवं सूत्रारम्भे तु व्यत्ययोऽपि शरणीकरणीय इति महान् क्लेश इति भावः॥—**स्वत—**॥ स्वतवानित्येतस्य नकारस्य रुर्वा पायुशब्दे परे॥—**स्वतवा** इति। तु वृद्धौ सौत्रो धातुः ततोऽसुन् स्वं तवो यस्यासौ स्वतवान्। 'हकुस्वतवः स्वतवसां छन्दसि' इति नुम्॥—**परुषः परुष** इति। वीप्सायां द्विर्वचनम्॥—**कः करत्—**॥ करिति कृञो लुङ्। 'मन्त्रे घस–' इत्यादिना च्लेर्लुक् तिपि गुणः। हल्ङ्यादिलोपः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। करदिति कृञ एव लुङ्। 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ्। 'ऋदृशोऽङि–' इति गुणः। करतीति लट् व्यत्ययेन शप्। कृधीति लोट् सेर्हिः 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः। कृत इति कृञ एव क्तः॥—**पर्योज** इति। अत्र परिः सर्वतोभावे॥—**पातौ च—**॥ क्वचित्पठ्यते पताविति॥—**धातुनिर्देश** इति। अन्ये तूदाहरणपर्यालोचनया लोडन्तानुकरणं मन्यन्ते॥—**षष्ठ्याः**॥—**वाचस्पतिमिति**। 'तत्पुरुषे कृति बहुलम्' इति षष्ठ्यलुक्॥—**निसस्तपता—**॥ आसेवनं पौनःपुन्यं ततोऽन्यस्मिन्नित्यर्थः॥—**युष्मत्तत्ततक्षुष्विति—**॥ सकारान्तानुकरणात् परस्य सुप्सकारस्य 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति षत्वम्॥ 'ह्रस्वात्तादौ–' इत्यतः तादाविति वर्तते। तदाह—**तकारादिष्विति**। एतद्युष्मद एव विशेषणं नेतरयोरव्यभिचारात्॥—**त्वं त्वा ते तवा** इति। एतेषामेव संभव इत्यर्थः॥—**स्तुतस्तोमयोः—**॥ एतयोः परतः सस्य षत्वं स्यात्॥—**पूर्वपदादित्येव सिद्ध** इति। पूर्वं पदं पूर्वपदमिति सामान्यत आश्रीयते न तु समासावयव एवेति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः। ततश्च स्तुतस्तोमग्रहणं प्रपञ्चार्थं छन्दोग्रहणं तूत्तरार्थं कर्तव्यमेव॥—**ऊषुण इत्यादि**। 'इकः सुञि' इति पूर्वपदस्य दीर्घत्वं नस् इत्यादेशस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्॥—**सनोतेरनः**॥ अनन्तस्य सनोतेः सस्य षः स्यात्॥—**गोषा इति**। 'जनसनखनक्रमगमो विट्'।

किम् । गोसनिः । ⧗ सहेः पृतनर्ताभ्यां च ।८।३।१०९। पृतनाषाहम् । ऋताषाहम् । चात् ऋतीषाहम् । ⧗ निव्यभिभ्योऽड्व्यवाये वा छन्दसि ।८।३।११९। सस्य मूर्धन्यः । न्यषीदत् । न्यसीदत् । व्यषीदत् । व्यसीदत् । अभ्यष्टौत् । अभ्यस्तौत् । ⧗ छन्दस्यृदवग्रहात् ।८।४।२६। ऋकारान्तादवग्रहात्परस्य नस्य णः । नृमणाः । पितृयाणम् । ⧗ नश्च धातुस्थोरुषुभ्यः ।८।४।२७। धातुस्थात् । अग्ने रक्षा णः । शिक्षा णो अस्मिन् । उरु णस्कृधि । अभीषु णः । मो षु णः ॥ इत्यष्टमोऽध्यायः ॥

इति वैदिकी प्रक्रिया ॥

---

'विड्वनोः–' इत्यात्वम् ॥—**गोसनिरिति** । 'छन्दसि वनिसनिरक्षिमथाम्' इतीन्प्रत्ययः ॥—**निव्यभिभ्यो**—॥ 'न रपर–' इत्यतो नेति वर्तते । तत्र निषेधविकल्पे विधिविकल्प एव फलतीत्याह—**मूर्द्धन्यो वा स्यादिति** ॥—**अभ्यष्टौदिति** । 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः ॥—**छन्दस्यृदव**—॥ अवगृह्यते विच्छिद्य पठ्यते इत्यवग्रहः । ऋचासाववग्रहश्च ऋदवग्रहस्तस्मात् ॥—**नृमणा** इति । अत्र संहिताधिकारात्संहिताकाल एव एतेषां णत्वं पदकाले त्ववग्रहः क्रियते । तेनावग्रहयोग्यत्वादृकारोऽवग्रह इत्युक्तः न तु तद्दशापन्नः । अत्र हि नृमना इति पदकालेऽवगृह्यते ॥—**नश्च**—॥ धातुस्थनिमित्तादुत्तरस्य उरुशब्दात् षुशब्दाच्च परस्य नस् इत्येतस्य ण स्यात् । धातौ तिष्ठतीति धातुस्थो रेफः षकारश्च । उरु इति स्वरूपग्रहणं षु इति कृतषत्वस्य सुनो ग्रहणं न सप्तमीबहुवचनस्य । तेनेन्द्रो धर्ता गृहेषु न इत्यादौ न । नसिति नासिकादेशस्य नसादेशस्य च सामान्येन ग्रहणम् ॥—**रक्षा ण इति** । रक्षेति लोटो मध्यमपुरुषैकवचनान्तं 'द्व्यचोतस्तिङः' इति दीर्घः ॥—**उरुणस्कृधीति** । कृञो लोट् सेर्हिः 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिः । 'कःकरत्' इत्यादिना विसर्जनीयस्य सत्वम् ॥—**अभीषुण** इति । 'इकः सुञि' इति दीर्घः । एवं मोषुण इत्यत्रापि । सर्वत्रोदाहरणे अस्मदादेशो नस् ॥

इति श्रीमन्मौनिकुलतिलकायमानगोवर्धनभट्टात्मजरघुनाथभट्टात्मजेन जयकृष्णेन कृतायां सिद्धान्तकौमुदीव्याख्यायां वैदिकखण्डं समाप्तिमगमत् ॥

## ॥ अथ स्वरप्रक्रिया ॥

**अनुदात्तं पदमेकवर्जम्** ।६।१।१५८। परिभाषेयं स्वरविधिविषया । यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात् । गोपायतं नः । अत्र सनाद्यन्ता इति धातुत्वे धातुस्वरेण यकाराकार उदात्तः शिष्टमनुदात्तम् ॥ * **सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम्** । तेनोक्तोदाहरणे गुपेर्धातुस्वर आयस्य प्रत्ययस्वरश्च न शिष्यते । अन्यत्रेति किम् । यज्ञं यज्ञमभिवृधे गृणीतः । अत्र सति शिष्टोऽपि श्ना इत्यस्य स्वरो न शिष्यते किं तु तस एव । **अनुदात्तस्य च यत्रोदात्तलोपः** ।६।१।१६१। यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । देवीं वाचम् । अत्र ङीबुदात्तः । **चौ** ।६।१।२२२। लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तः स्यात् । उदात्तनिवृत्तिस्वरापवादः । देवद्रीचीं नयत देवयन्तः ॥ * **अतद्धित इति**

---

**अनुदात्तं पदम्**-॥—**परिभाषेयमिति** । नाधिकारोऽस्वरितत्वात् । 'आद्युदात्तश्च' 'समानोदरे शयित ओ चोदात्तः' इत्यादीनामसंग्रहश्च स्यात् ॥ परिभाषाया लिङ्गापेक्षायामाह—**स्वरविधीति** । सूत्रे अनुदात्तशब्दोऽर्शआद्यजन्तः पदसामानाधिकरण्यात् ॥ अत्रानुदात्तस्य क्रियमाणत्वात् तद्भिन्न उदात्तः स्वरितो वा वर्ज्यत इत्याह—**तमेकमिति** । यत्तदोर्नित्यसम्बन्धाद्यस्योदात्तस्वरितविधानं तस्यैव वर्जनम् । एकग्रहणं विधीयमानस्योपलक्षणम् । तेन 'तवै चान्तश्च युगपत्' इति द्वयोर्वर्जनम् । इन्द्राबृहस्पती इत्यत्र 'देवताद्वन्द्वे च' इति सूत्रेण पदद्वयस्यापि प्रकृतिस्वरे विधेये त्रयाणां वर्जनम् । बृहस्पतिशब्दो हि वनस्पत्यादित्वादाद्युदात्त इति स्थितम् ॥—**गोपायतमिति** । गुप इत्यस्य 'धातोः' इत्यन्त उदात्तः । तत आयः प्रत्ययः 'आद्युदात्तश्च' इति प्रत्ययस्वरेणाद्युदात्तः । ततः 'सनाद्यन्ताः-' इति धातुसंज्ञायां 'धातोः' इति यकाराकार उदात्तः । स च प्रागुक्तयोरुदात्तयोः सतोः पश्चात्प्रवृत्तत्वात्सति शिष्टः अतो बलवान् । तस्य 'अनुदात्तौ सुप्पितौ' इत्यनेनानुदात्तेन शबकारेण सह 'अतो गुणे' इति पररूपे कृते 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । थसस्तमादेशः । तस्य 'तास्यनुदात्तेन्ङिद्दुपदेशात्-' इत्यनेनाद्‌पदेशात्परत्वादनुदात्तत्वम् । तस्य 'उदात्तादनुदात्तस्य' इति स्वरितः । नन्वत्र तमिति स्वरितमाश्रित्य 'अनुदात्तं पदम्-' इति परिभाषया शेषनिघातः स्यादिति चेन्नैवम् । यथोद्देशपक्षाश्रयणेनेयं परिभाषा त्रिपाद्यां न प्रवर्तत इत्यत्र ज्ञापक त॰यतस्तित्त्व 'यतोऽनावः' इति च ॥—**सति शिष्टेति** । यो हि यस्मिन् सति शिष्यते स शिष्टः तस्य बाधको भवतीत्यर्थः । एतच्च सति शिष्टस्य बाधकत्वं न्यायसिद्धम् । तथा हि उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनया शेषनिघातः क्रियते तत्रोत्सर्गस्यापवादस्य वा चरमा या प्राप्तिस्तत्रास्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते । तद्यथा औपगवत्वमित्यत्राण्प्रत्यये त्वप्रत्यये च 'आद्युदात्तश्च' इति प्रवर्तमानं स्वस्यैव प्रथमप्रवृत्तिं बाधते द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयतीति दिक् । ननु यदि सति शिष्टः स्वरो बलीयाँस्तर्हि सति शिष्टत्वाद्विकरणस्वरोऽपि बलीयान् स्यात् । तथा च गृणीत इत्यादि मध्योदात्तं पदं स्यादत आह—**अन्यत्रेति** । सति शिष्टोऽपि विकरणस्वरः प्रत्ययस्वरं न बाधत इत्यर्थः । अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्यानुदात्तविधानम् । तथाहि यद्यपि लावस्थायां तासिर्विधीयते तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु परेषु च लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सति शिष्टत्वात् शेषनिघातेनैव सिद्धेरनर्थकं तत्स्यात् ॥—**गृणीत** इति । अन्तोदात्त पदम् । अत्र 'तास्यनुदात्त-' इति लसार्वधातुकनिघातो न, अदुपदेशेति तकारकरणात् श्नाप्रत्ययस्यादन्तत्वाभावात् । 'तिङ्ङतिङः' इति निघातस्तु न भवति 'यद्वृत्तान्नित्यम्' इति निषेधात् । स हि व्यवहितेऽपि प्रवर्त्तते ॥—**तस एवेति** । तस 'आद्युदात्तश्च' इत्याद्युदात्तः स्वरः शिष्यत इत्यर्थः ॥—**अनुदात्तस्य**-॥ देवशब्दोऽच्प्रत्ययान्तत्वात् 'चितः' इत्यन्तोदात्तः पचादिषु देवडिति पाठात् 'टिड्ढा-' इति ङीप् तस्य 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वे 'यस्येति च' इत्यकारलोपः । नन्वनुदात्तस्येति व्यर्थं न ह्याद्युदात्ते स्वरिते वा परे उदात्तलोपोऽस्ति । न च प्रसज्यत इति प्रासङ्गः कर्मणि घञ् 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यन्तोदात्तः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घः 'तं वहति' इति प्राग्घिताद्यत् तित्त्वात्स्वरितः तस्मिन् परे यस्येति लोपः । अत्र स्वरिते परे उदात्तलोपोऽस्त्येवेति वाच्यम् । स्वरिते हि विधीयमाने परिशिष्टम् 'अनुदात्त पदमेकवर्जम्' इत्यनुदात्तं तत्कृत उदात्तलोप इति चेत्सत्यम् । मा हि धुक्षातामित्यत्र दुहेर्लुङात्मनेपदमातां 'शल इगुपधा-' इति च्लेः क्सः आतामित्यस्य 'तास्यनुदात्तेन्ङिददुपदेशात्-' इति लसार्वधातुकमनुदात्तत्वम् । क्सः प्रत्ययस्वरेणोदात्तः 'क्सस्याचि' इत्याकारलोपः । अत्र 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यतः अन्त इत्यधिकारादन्त्यस्योदात्तत्वं स्यात् सति त्वस्मिन्नादेर्भवति । ननु यत्रोदात्तलोप इत्युच्यमाने कथमन्त्यस्य प्रसङ्गः । न हि तदुदात्तलोपस्य निमित्तमिति चेत्तर्हि आदेरपि न प्राप्नोति । तस्याप्युदात्तलोपं प्रत्यनिमित्तत्वात् । 'क्सस्याचि' इत्यजादौ प्रत्यये विधानात् । तस्माद्यत्र प्रत्यय उदात्तलोपस्तत्सबन्धिनोऽनुदात्तस्योदात्तो भवतीति सूत्रार्थेनात्राधिकारादन्त्यस्य प्रसङ्गः । यदि तु निमित्तत्वानादरेण यत्रानुदात्ते परत उदात्तलोपस्तस्योदात्तो भवतीति सूत्रार्थस्तदानुदात्तस्येति न वक्तव्यम् । अन्त्यस्य प्रसङ्गाभावात् । न च मा हि धुक्षातामित्यत्र 'तिङ्ङतिङः' इति निघातः स्यादिति वाच्यम् । 'हिच' इति निषेधात् ॥—**उदात्तनिवृत्तीति** । ऋदुत्तरपदप्रकृतिस्वरेणोदात्तस्याञ्चत्यकारस्य 'अच' इति लोपे

वाच्यम् । दाधीचः । माधूचः । प्रत्ययस्वर एवात्र । **आमन्त्रितस्य च** ।६।१।१९८। आमन्त्रितस्याद्युदात्तः स्यात् । अग्न इन्द्र वरुण मित्र देवाः । **आमन्त्रितस्य च** ।८।१।१९। पदात्परस्यापादादिस्थितस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात् । प्रागुक्तषाष्ठस्यापवादोऽयमाष्टमिकः । इमं मे गङ्गे यमुने सरस्वति । अपादादौ किम् । शुतुद्रि स्तोमम् । **आमन्त्रितं पूर्वमविद्यमानवत्** । अग्न इन्द्र । अत्रेन्द्रादीनां निघातो न । पूर्वस्याविद्यमानत्वेन पदात्परत्वाभावात् । **नामन्त्रिते समानाधिकरणे सामान्यवचनम्** । समानाधिकरण आमन्त्रिते परे विशेष्यं पूर्वमविद्यमानवन्न । अग्ने तेजस्विन् । अग्ने त्रातः । सामान्यवचनं किम् । पर्यायेषु मा भूत् । अघ्न्ये देवि सरस्वति । **विभाषितं विशेषवचने** । अत्र भाष्यकृता बहुवचनमिति पूरितम् । सामान्यवचनमिति च पूर्वसूत्रे योजितम् । आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा । देवीः षडुर्वीरुरु नः कृणोत । अत्र देवीनां विशेषणं षडिति । देवाः शरण्याः । इह द्वितीयस्य निघातो वैकल्पिकः । **सुबामन्त्रिते पराङ्गवत्स्वरे** ।२।१।२। सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्वरे कर्तव्ये । द्रवत्पाणी शुभस्पती । शुभ इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य परशरीरानुप्रवेशे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । न चाष्टमिको निघातः शङ्क्यः । पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात् । यस्ते दिवो दुहितर्मर्तभोजनम् । इह दिवःशब्दस्याष्टमिको निघातः । परशुना वृश्चन् ॥ * **षष्ठ्यामन्त्रितकारकवचनम्** । षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकं तद्वाचकं चेति परिगणनं कर्तव्यमित्यर्थः । तेनेह न । अयमग्ने जरिता । एतेनाग्ने ब्रह्मणा । समर्थानुवृत्त्या वा सिद्धम् ॥ * **पूर्वाङ्गवच्चेति वक्तव्यम्** । आ ते पितर्मरुताम् । प्रति त्वा दुहितर्दिवः ॥ * **अव्ययानां न** । उच्चैरधीयान ॥ * **अव्ययीभावस्य त्विष्यते** । उपाग्न्यधीयान ॥ **उदात्तस्वरितयोर्यणः स्वरि-**

---

सति 'अनुदात्तस्य च-' इति सूत्रेणोदात्तः प्राप्तस्तस्यायमपवाद इत्यर्थः ॥—**देवद्रीचीमिति** । देव अञ्च् इति स्थिते 'विष्वग्देवयोः-' इति देवशब्दस्याद्रिः आदेशः । 'उगितश्च' इति ङीप् । 'अचः' इत्यञ्चतेरकारलोपः । 'चौ' इति दीर्घत्वम् । द्रीतीकार उदात्तः ततः परस्योदात्तादनुदात्तस्य स्वरित इति स्वरितत्वम् ॥—**अतद्धित** इति । चौ यः स्वरः स तद्धिते परतो न भवतीत्यर्थः । अन्यथा देवद्रीचीमित्यादौ यथोदात्तनिवृत्तिस्वरं बाधते तथा दाधीच इत्यादौ प्रत्ययस्वरमपि सति शिष्टस्वरो बाधेत । तस्मादतद्धित इति वक्तव्यम् । अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्यायमपवाद इति फलितम् ॥—**दाधीच** इति । दधि अञ्च् अण् इति स्थितेऽण्स्वर उदात्तत्वे कृते 'अचः' इत्यकारलोपः । ततः सति शिष्टत्वात् 'चौ' इति स्वरः प्राप्तो निषिध्यते तथा चाण्प्रत्ययस्वरेणैव व्यवस्था । तदाह—**प्रत्ययस्वर एवात्रेति** ॥—**अग्न** इत्यादि ॥ 'सामन्त्रितम्' इत्यनेनामन्त्रितत्वम् ॥—**प्रागुक्तषाष्ठस्येति** ॥ आमन्त्रितस्य चेत्यस्य ॥—**इमं म** इति । मेशब्दात्परत्वमाश्रित्य गङ्गेप्रभृतीनां त्रयाणामनुदात्तः । स च पदपाठे स्पष्ट एव । संहितायां तु 'स्वरितात्संहितायामनुदात्तानाम्' इति वक्ष्यमाणा प्रचयापरपर्याया एकश्रुतिः प्रवर्तते ॥—**शुतुद्रीति** । षाष्ठेन 'आमन्त्रितस्य च' इत्यनेनाद्युदात्तः ॥—**आमन्त्रितं पूर्वम्** ॥—**अग्न इन्द्रेति** । सर्वाणि षाष्ठेनाद्युदात्तानि ॥—**निघातो नेति** । आष्टमिकेनेति भावः ॥—**नामन्त्रिते**—॥ अत्रोत्तरसूत्रस्थं सामान्यवचनमत्र संबन्धनीयमिति भाष्यं तद्व्याचष्टे—**विशेष्यमिति** । विशेष्यसमर्पकमित्यर्थः । क्वचित्तु 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति पाठः । स वृत्त्यनुरोधेनेति ज्ञेयम् ॥—**तेजस्विन्नित्यादि** । अग्ने इत्यस्याविद्यमानत्वात्तेजस्विन्नित्यस्य त्रातरित्यस्य चाष्टमिकनिघातः ॥—**अघ्न्ये देवि सरस्वतीति** । तैत्तिरीयके ब्राह्मणे सहस्रमतीं प्रकृत्य 'इडेरन्ते दिते सरस्वति प्रिये प्रेयसि महिविश्रुति एतानि ते अघ्निये नामानि' । वृत्तौ तु इडे काव्ये विहव्ये इति पाठः । स तु शाखान्तरे द्रष्टव्यः । समानाधिकरणग्रहणं पाणिनिमतेऽग्न इन्द्र वरुण इत्यादौ व्यधिकरणनिवृत्त्यर्थम् । भाष्यकृन्मते विस्पष्टार्थं सामान्यवचनापेक्षत्वात्तत्र सामानाधिकरण्यस्यावश्यस्थितत्वात् ॥—**सामान्य**—॥ बहुवचनमिति पूर्वनिषेधस्यास्य विकल्पस्य च विषयविभागार्थम् ॥—**देवीः षडिति** । अत्र देवीरित्यामन्त्रित नाविद्यमानवत् । तेन षडित्यस्य निघातः ॥—**शरण्या** इति । शरण रक्षितृत्वं तत्र साधवः शरण्याः । 'तत्र साधुः' इति यत् ॥—**द्वितीयस्येति** । षष्शब्दस्य शरण्यशब्दस्य चेत्यर्थः ॥—**सुबामन्त्रिते**—॥—**परस्याङ्गवदिति** । तस्यैव परस्यामन्त्रितस्याङ्गवदेकदेशवद्भवति । तद्ग्रहणेन गृह्यत इत्यर्थः ॥—**षष्ठ्यामन्त्रित**—॥ अत्र षष्ठीशब्देन षष्ठ्यर्था विभक्तिरुच्यते । तेन गोषु स्वामिन्नित्यत्रापि पराङ्गवद्भावः सिध्यति ॥—**परशुनावृश्चन्निति** । आङ्परयोः 'खनिशृभ्यां डिच्च' इति कुप्रत्ययान्तोऽन्तोदात्तः ॥—**षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकमिति** । यद्यप्यामन्त्रितस्य द्रव्यवचनत्वान्न कारकापेक्षा तथापि आमन्त्रिततया धातुवाच्या या क्रिया तस्यास्तदपेक्षास्तीति तत्कारकमित्यर्थः ॥—**पितर्मरुतामिति** । अत्र मरुतामिति परं पदं पूर्वस्य पितरित्यस्याङ्गवद्भवति । पितरित्यामन्त्रितनिघातेनानुदात्तं ततः परं मरुतामित्येतदप्यनुदात्तमेव भवतीत्यर्थः ॥—**अव्ययानां नेति** । तेनोच्चैरधीयानेत्यत्र 'आमन्त्रितस्य च' इत्याद्युदात्तत्वं न । न च निषेधवैयर्थ्यम् । 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वस्यानिवारणादिति वाच्यम् । स्वरादिष्वन्तोदात्तयोरुच्चैर्नीचैःशब्दयोः पाठात् ॥—**अव्ययीभावस्य त्विति** । 'अव्ययीभावश्च' इति अव्ययीभावस्याव्ययसंज्ञा । सूत्रे छत्रमुखस्वरोपचारा इति गणनादव्य-

तोऽनुदात्तस्य ।८।२।४। उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात् । अभ्यभि हि । स्वरितस्य यणः । खलप्व्याशा । अस्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न । * एकादेश उदात्तेनोदात्तः ।८।२।५। उदात्तेन सहैकादेश उदात्तः स्यात् । वोऽश्वाः । क्वावरं मरुतः । * स्वरितो वानुदात्ते पदादौ ।८।२।६। अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् । पक्षे पूर्वसूत्रेणोदात्तः । वीदं ज्योतिर्हृदये । अस्य श्लोको दिवीयते । व्यवस्थितविभाषात्वादिकारयोः स्वरितः । दीर्घप्रवेशे तूदात्तः । किं च एकः पदान्तादिति पूर्वरूपे स्वरित एव । तेऽवदन् । सो३ यमागात् । उक्तं च प्रातिशाख्ये । इकारयोश्च प्रश्लेषे क्षैप्राभिनिहतेषु चेति । * उदात्तादनुदात्तस्य स्वरितः ।८।४।६६। उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात् । अग्निमीळे।

---

त्राव्ययसंज्ञाभावेनाव्ययानां नेति निषेधो न प्रवर्तेत इति भावः ॥—**उपाग्न्यधीयानेति** । पराङ्गवद्भावेनामन्त्रितस्येत्याद्युदात्तत्वम् ॥—**अभ्यभीति**—॥ अभिशब्द 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तनिषेधात् फिट्स्वरेणान्तोदात्तः । तस्य 'नित्यवीप्सयोः' इति द्वित्वं तस्य परमाम्रेडितम् अनुदात्त चेति परस्यानुदात्तत्वं तस्मिन्नेव परे इकारस्योदात्तस्य यणि कृते उदात्तयणः परत्वाद्यकारात्स्वरितः । खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । तस्य 'ओः सुपि' इति यण् । स उदात्तयण् । ततः परो ङिप्रत्ययः सुप्त्वादनुदात्तः । तस्यानेन स्वरितः । 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वं तु न । 'नोङ्धात्वोः' इति निषेधात् । तस्य च स्वरितेकारस्य यणि ततः परस्याशाशब्दाकारस्यानेनैव स्वरितः । आशाशब्दो हि 'आशा या अदिगाख्या चेत्' इत्यन्तोदात्तत्वादनुदात्तादिः ॥—**अस्येति** । आशाशब्दप्रथमाकारस्थानिकस्येत्यर्थः ॥—**शेषेति** । आशाशब्दस्य निघातो नेत्यर्थः । ननु यणादेशं प्रति स्वरितस्यासिद्धत्वात्स्थानिन्येव यण् प्रवृत्तः औजढदित्यत्र हतशब्दे द्वित्व प्रवर्तते न तु ढशब्दे । न च स्वरितयणः परस्येत्याश्रयणात्सिद्धत्वं शङ्क्यम् । तथा सति 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन यत्र स्वरितः क्रियते तत्रापि ह्यसिद्धत्वं न स्यात् । न चेष्टापत्तिः, लक्ष्यविरोधात् । 'प्रत्यग्निरुषसामग्रमख्यत्' इत्यादौ स्वरितादर्शनात् । न च नोदात्तस्वरितोऽयमिति निषेधः शङ्क्यः । अनन्तरस्येति न्यायेनोदात्तादनुदात्तस्येति यत्र प्राप्तिस्तन्मात्रस्य निषेधात् । अन्यथा खलप्व्याशान्या अग्निर्माद्या असानित्यादावपि निषेधापत्तिरिति चेत् । अत्राहुर्भाष्यकाराः । 'योगविभागः करिष्यते उदात्तयणः परस्यानुदात्तस्य स्वरितो भवति । ततः स्वरितयणः, उदात्तयण इत्यनुवर्तते ।' उदात्तयण इत्येवं योऽभिनिर्वृत्तः स्वरितस्तद्यणः परस्यानुदात्तस्य स्वरितः स्यादित्यर्थः । एवं चास्यैवाश्रयात्सिद्धत्वं नान्यस्य ॥—**एकादेश** इति । उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम् । अन्यतरस्यानुदात्तत्वे स्वरितत्वे वा आन्तरतम्यात् स्वरिते प्राप्ते विधिरयमिति ध्वनयन्नुदाहरणद्वयमाह—**वोऽश्वा** इत्यादि 'बहुवचनस्य वस्नसौ' इत्यत्र 'अनुदात्तं सर्वमपादादौ' इत्यधिकाराद्वस् अनुदात्तः । अश्नोः क्वनिति व्युत्पादनादश्वशब्द आद्युदात्त' ।वसोरुत्वम् । उत्वम् । 'एङः पदान्तादति' इति पूर्वरूपम् ॥—**क्वेति** । किमोत् 'क्वाति' इति किमः क्वादेशः । 'तित् स्वरितम्' । अवरशब्दः 'स्वाङ्गशितामदन्तानाम्' इत्युदात्तः । तयोर्दीर्घ उदात्तः ॥—**स्वरितो**—॥—**वीदमित्यादि** । विशब्दो निपातत्वादाद्युदात्तः । इदंशब्दः फिट्स्वरेणान्तोदात्तः । तयोरेकादेशः स्वरितः । दिविशब्दे 'ऊडिदंपदात्–' इति विभक्तिरुदात्ता । ईयते ईङ् गतौ दिवादिः । 'तिङ्ङतिङः' इति निहतम् । अत्रैकादेश उदात्तः ॥—**इकारयोः स्वरित** इति । ह्रस्वेकारयोरेवेत्यर्थः ॥—**दीर्घप्रवेशे त्विति** । दिवीयत इत्यत्र ॥—**उदात्त** इति । एकादेश उदात्त इत्यनेन । इय च बह्वृचानां व्यवस्थोक्ता अन्येषामपि तदीयप्रातिशाख्यानुसारेण ज्ञेया ॥—**पूर्वरूपे** इति । तेवदन्नित्यादौ । ते इति तच्छब्दः फिट्स्वरेणान्तोदात्तः जसः सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तः । तयोरेकादेश उदात्तः ॥—**अवदन्निति** । वदेर्लङि प्रथमपुरुषबहुवचनम् । ते इत्यतिङन्तात्परस्य तस्य 'तिङ्ङतिङः' इति निघातः ॥—**सोऽयमिति** । स इति तच्छब्दस्य प्रथमैकवचनम् । तच्छब्दः फिट्स्वरेणान्तोदात्तः । सुइति सुप्त्वादनुदात्तः । तस्य रुत्वे उत्वे गुणे च कृते एकादेशेनौकार उदात्तः । अयमितीदमः प्रथमैकवचन फिट्स्वरेणान्तोदात्तम् । तयोः 'एङः पदान्तात्–' इति पूर्वरूपे ओकारः स्वरितः ॥—**इकारयोश्च प्रश्लेष** इति । ह्रस्वयोरिकारयोः सवर्णदीर्घे ह्रस्वयोर्यत्र सवर्णदीर्घः स प्रश्लेष इत्युच्यते । उदात्तस्वरितस्थाने यो यण् स क्षैप्रः सन्धिः । यत्र 'एङः पदान्तात्–' इति स अभिनिहतसन्धिरुच्यते । तेषु स्वरितः स्वीक्रियत इत्यर्थः । 'वीदं ज्योतिः' 'अभ्यभि हि' 'तेऽवदन्' इति क्रमेणोदाहरणानि ॥—**उदात्तादनुदात्तस्य**–॥ यत्र तयोर्व्यावचीत्यतः संहितायामित्यनुवर्तते तेन पदकालेऽनुदात्तमेव ॥—**अग्निमीळे** इति । अग्निशब्दः फिट्स्वरेण वान्तोदात्तः अम् सुप्त्वादनुदात्तः । 'अमि पूर्वः' इति एकादेश उदात्तः । ईळे इति तु ईड स्तुतौ लटि उत्तमपुरुषैकवचनम् । 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः' इति वक्ष्यमाणेन प्रातिशाख्येन डस्य ळः । 'तिङ्ङतिङः' इति निहतम् । ईकारस्य स्वरितः । न च मकारेण व्यवधानम् । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषणात् । एवं सर्वत्र ज्ञेयम् । ननु 'तित् स्वरितम्' इत्यस्यानन्तरमिदं वक्तव्यम् । एवं च स्वरितग्रहणं न कर्तव्यं भवतीत्याशङ्क्याह—**अस्येति** । यदि तत्र क्रियेत 'अनुदात्तं पदमेकवर्जम्' इत्येतत्प्रवर्तेत इह प्रकरणे

अस्याप्यसिद्धत्वाच्छेषनिघातो न । तमीशानासः । नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् । ८।४।६७। उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात् । गार्ग्यादिमते तु स्यादेव । प्र य आरवः । क्वो३भीशवः । एकश्रुति दूरात्सम्बुद्धौ ।१।२।३३। दूरात्सम्बोधने वाक्यमेकश्रुति स्यात् । त्रैस्वर्यापवादः । आगच्छ भो माणवक । यज्ञकर्मण्यजपन्यूङ्खसामसु ।१।२।३४। यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन्वर्जयित्वा । अग्निर्मूर्धा दिवः ककुत् । यज्ञेति किम् । स्वाध्यायकाले त्रैस्वर्यमेव । अजपेति किम् । ममाग्ने वर्चो विहवेष्वस्तु । जपो नाम उपांशुप्रयोगः । यथा जले निमग्नस्य । न्यूङ्खा नाम षोडश ओंकाराः । गीतिषु सामाख्या । उच्चैस्तरां वा वषट्कारः ।१।२।३५। यज्ञकर्मणि वौषट्शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा । विभाषा छन्दसि ।१।२।३६। छन्दसि विभाषा एकश्रुतिः स्यात् व्यवस्थितविभाषेयम् । संहितायां त्रैस्वर्यम् । ब्राह्मणे एकश्रुतिर्व-

---

न प्रवर्तते स्वरितस्यासिद्धत्वात् । तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं सिद्धम् ॥—**तमीशानास** इति । तमिति तच्छब्दस्य द्वितीयैकवचनमन्तोदात्तम् । ईशानशब्दाज्जसि 'आज्जसेरसुक्' इत्यसुगागमे कृते रूपम् । ईश ऐश्वर्येऽस्माच्छानच् चित्त्वादन्तोदात्तः जसः सुप्त्वादनुदात्तत्वम् । ईकारस्य सकाराकारस्य च स्वरितत्वम् ॥—**नोदात्त**—॥ उदात्तस्वरितौ उदयौ यस्मादिति बहुव्रीहिः । उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः । लाघवार्थं परशब्दे प्रयोक्तव्ये मङ्गलार्थमुदयशब्दः प्रयुक्तः । तथा चोक्तं भाष्ये 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च' । इहादौ वृद्धिशब्दो, मध्ये शिवशब्द 'शिवशमरिष्टस्य करे' इति, अन्ते चायमुदयशब्द इति पाणिनीये मङ्गलं कृतम् ॥—**प्र य आरुरिति** । ये इति यच्छब्दस्य प्रथमाबहुवचनं फिट्स्वरेणान्तोदात्तम् ॥ आरुरिति अर्तेर्लिटि प्रथमपुरुषबहुवचनं झिः तस्य 'परस्मैपदानाम्–' इत्युस् प्रत्ययस्वरेणोदात्तः । न च 'तिङ्ङतिङः' इति निघातः शङ्क्यः । 'यद्वृत्तान्नित्यम्' इति निषेधात् । आकारस्योदात्तस्वरितपरस्येति वक्ष्यमाणेन सन्नतरादेशः ॥—**क्वोऽश्वाः क्वेति** । अत्रापि श्वेत्याकारस्य सन्नतरः ॥ क्वेति । किमोत् तित्स्वरितम् ॥—**एकश्रुति**—॥ सम्बोधनं संबुद्धिरित्यनेनान्वर्थस्य संबुद्धिशब्दस्य ग्रहणं न 'एकवचनं संबुद्धिः' इति पारिभाषिकस्य । सति तु तस्य ग्रहणे आगच्छत देवा ब्राह्मणा इत्यत्र न स्यात्तदाह—**दूरात्संबोधने** इति । अन्वर्थग्रहणं च दूरादित्यनेन संबन्धाल्लभ्यते । न ह्यामन्त्रितविभक्तेः दूरत्वमदूरत्वं च संभवति । सम्बोधनस्य तु क्रियारूपत्वादपादानत्वाद्दूरादिति विशेषणसंभवः, दूरत्वं न देशस्वरूपमाश्रीयते अनवस्थितत्वात् किं तर्हि सम्बोधनक्रियापेक्षया दूरत्व यावति देशे प्रकृतिप्रयत्नोच्चारितं सम्बोध्यमानेन न श्रूयते किं त्वधिकं प्रयत्नमपेक्षते तत्संबुद्धौ दूरं भवति ॥—**एकश्रुतिरिति** । उदात्तादीनां स्वराणामविभागेनावस्थानमेकश्रुतिः ॥—**आगच्छेत्यादि** । 'दूराद्धूते च' इति 'वाक्यस्य टेः प्लुत उदात्तः' प्रत्युदाहरणे त्रैस्वर्यमेव भवति । तत्राङुपसर्गश्चाभिवर्जमित्याद्युदात्तः । गच्छेति तिङन्तस्य निघातः । भोशब्दो 'निपाता आद्युदात्ताः' इत्याद्युदात्त । शेषस्यामन्त्रितनिघातः ॥—**यज्ञ**—॥ त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते ॥—**मन्त्र** इति । एतच्चाजपेति पर्युदासाल्लभ्यते तेनोहादिषु न । अत एव स्वाहेन्द्रशत्रुर्वर्द्धस्वेति समासान्तोदात्तत्वे कर्तव्ये आद्युदात्तं प्रयुक्तमिति प्रसिद्धिः ॥—**जपादीनिति** । जपन्यूङ्खसामानीत्यर्थः ॥—**अग्निर्मूर्द्धेति** । 'अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतोम्३' । 'अङ्गेर्निर्नलोपश्च' इति अग्निशब्दः प्रत्ययस्वरेण फिट्स्वरेण वान्तोदात्तः । मुर्वी बन्धने 'कनिन्युवृषितक्षिराजिधन्वि–' इत्यतः कनिनि वर्तमाने 'श्वन्नुक्षन् पूषन्' इत्यत्र मूर्द्धन्शब्दः कनिन्प्रत्ययान्तोऽन्तोदात्तो निपातितः दिव्शब्दात्परस्य षष्ठ्येकवचनस्य 'ऊडिदम्पदात्–' इत्युदात्तत्वम् । ककुच्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः । पातेर्डतिः । पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः । प्रथेः षिवन् संप्रसारण च षित्वान्ङीष् षष्ठ्येकवचनस्य 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वम् । इदम्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः । आप्नोतेः क्विप् ह्रस्वश्च । 'ऊडिदम्–' इति विभक्तेरुदात्तत्वम् । रीङ्च्युजिभ्यां तुड्वेत्यसुन्प्रत्ययः नित्स्वरेणाद्युदात्तो रेतःशब्दः ॥—**जिन्वतीति** । जिन्वतेः प्रीणनार्थस्य तिपि 'तिङ्ङतिङः' इति निघातः । प्रणवष्टेरिति प्रयोगकाले प्रणवः ॥—**ममेत्यादि** । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् । अग्नेःशब्दस्यामन्त्रितनिघातः । वर्चःशब्दोऽसुन्प्रत्ययान्तः । विपूर्वात् ह्वयतेः 'ह्वः संप्रसारणं च' इत्यप्प्रत्ययः । थाथादिसूत्रेणान्तोदात्तत्वम् ॥—**उच्चैस्तराम्** ॥ वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते समानार्थत्वात् । द्वावपि हि तौ देवतासंप्रदानकस्य दानस्य द्योतकौ । नन्वेवं प्रतिपत्तिलाघवार्थं वौषट्शब्द एव कुतो नोक्त इति चेद् विचित्रा हि सूत्रस्य कृतिः पाणिनेः क्वचिदक्षरलाघवमाश्रीयते क्वचित्प्रतिपत्तिलाघवमिति । ननु वषट्कार इत्यत्र कारप्रत्ययो न स्यात् वर्णनिर्देशे हि स विहित इति चेत्सत्यम् । एतदेव ज्ञापयति समुदायादपि कारप्रत्ययो भवतीति । तेन एवकार इत्यादि सिद्धम् । उच्चैःशब्दोऽधिकरणप्रधानोऽपि तद्विशिष्टवचनक्रियायां वर्तते तेन क्रियाप्रकर्षादाम्प्रत्यय उदात्ततरो भवतीति फलितोऽर्थः । 'ब्रूहि प्रेष्य' इति सूत्रेण वौषट्शब्दस्यादेः प्लुत उदात्तो विहितः तदपेक्षयायमुदात्ततरोऽन्त्यस्य विधीयते । अन्ये तु स्वार्थिकस्तरबित्याहुः ॥—**विभाषा**—॥ वाग्रहणेऽनुवर्तमाने विभाषाग्रहणम् अच्छन्दसीति पदच्छेदेन तन्त्रादिना भाषायामपि विभा-

कृचानाम् । अन्येषामपि यथासंप्रदायं व्यवस्था । **न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ।१।२।३७।** सुब्रह्मण्याख्ये निगदे यज्ञकर्मणीति विभाषा छन्दसीति च प्राप्ता एकश्रुतिर्न स्यात्स्वरितस्योदात्तश्च स्यात् । सुब्रह्मण्यो ३ म् ॥ * **असावित्यन्तः** । तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात् । गार्ग्यो यजते । ञित्वात्प्राप्त आद्युदात्तोऽनेन बाध्यते ॥ * **अमुष्येत्यन्तः** । षष्ठ्यन्तस्यापि प्राग्वत् । दाक्षेः पिता यजते ॥ * **स्यान्तस्योपोत्तमं च** । चादन्तस्येन द्वावुदात्तौ । गार्ग्यस्य पिता यजते ॥ * **वा नामधेयस्य** । स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात् । देवदत्तस्य पिता यजते । **देवब्रह्मणोरनुदात्तः ।१।२।३८।** अनयोः स्वरितस्यानुदात्तः स्यात्सुब्रह्मण्यायाम् । देवा ब्रह्माण आगच्छत । **स्वरितात्संहितायामनुदात्तानाम् ।१।२।३९।** स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् । इमं मे गङ्गे यमुने सरस्वति । **उदात्तस्वरितपरस्य सन्नतरः ।१।२।४०।** उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात् । सरस्वति शुतुद्रि । व्यचक्षयत्स्वः । **तस्य परमाम्रेडितम्** । **अनुदात्तं च ।८।१।३।** द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । दिवे दिवे ॥ **इति साधारणस्वराः ॥**

नार्थम् । अत एव श्वेतो धावति अलंबुसानां यातेति व्यर्थं वाक्यमिति पस्पशान्ते भाष्यम् । तत्र श्वेतेति प्रातिपदिकस्वरेणान्तोदात्तम् । इत इति इदंशब्दात्तसिल् ।'ऊडिदम्–'इत्यनेन श्वेत इति 'वर्णानां तण–'इत्याद्युदात्ते प्राप्ते घृतादित्वादन्तोदात्तम् । अलंशब्दो निपातत्वादाद्युदात्तः बुसशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । अलबुसशब्दः फिट्स्वरेणान्तोदात्तः तत्र विभाषायां यद्येकश्रुतिर्न स्यात्तर्हि स्वरभेदे कथमेकवाक्यं व्यर्थं स्यात् ॥—**न सु–**॥—**सुब्रह्मण्याख्ये निगदे** इति । अपादबन्धे गदिर्वर्तते यथा गद्यामिति । नि शब्दः प्रकर्षे । उच्चैरपादबन्धं यजुरात्मकं यन्मन्त्रवाक्यं पठ्यते स निगदः । नितरां गद्यत इति कर्मणि 'नौ गदनद–' इत्यप् । तस्य च सुब्रह्मण्यशब्दोपलक्षकत्वात् सुब्रह्मण्यशब्दोऽपरित्यक्तस्त्रीलिङ्ग एव निगदविशेषस्य नाम ॥—**सुब्रह्मण्योमिति** । 'तत्र साधुः' इति यत् । 'तित्स्वरित' 'यतोऽनावः' इति तु न तत्र द्व्यच इत्यनुवृत्तेः टापा सहैकादेशः 'स्थानेऽन्तरतमः' इति स्वरितः । ततो निपातत्वादाद्युदात्तेन ओम्शब्देन 'ओमाङोश्च' इत्युदात्तस्वरितयोरेकादेशः स्वरित एवेति हरदत्तादयः ॥ असाविति प्रथमान्तस्योपलक्षणं तदाह—**प्रथमान्तस्येति** ॥—**गार्ग्य** इति । गर्गादिभ्यो यञ ॥—**अमुष्येति** । षष्ठ्यन्तस्योपलक्षणम् ॥—**दाक्षेरिति** । दक्षशब्दादपत्येऽत इञ् । अत्रापि ञित्स्वरः प्राप्तः ॥—**स्यान्तस्येति** । स्येति रूपं विवक्षितं पूर्ववार्तिकारम्भात् । स्यशब्दान्तस्योपोत्तममन्त्यश्चोभयमुदात्तं भवति ॥—**देवब्रह्मणो**—॥ सुब्रह्मण्यायामेव देवा ब्रह्माण इति पठ्यते तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते ॥—**देवा ब्रह्माण** इति । देवब्रह्मणोर्वैयधिकरण्ये द्वयोरप्याद्युदात्तत्वं ततः परस्यानुदात्तस्य स्वरितः । तस्यानेनानुदात्तः । आमन्त्रितनिघातस्तूत्तरस्य न । पूर्वामन्त्रिताविद्यमानत्वेन पदात्परत्वाभावात् । यदा तु सामानाधिकरण्यं तदा 'विभाषितं विशेषवचने' इति पूर्वस्य पक्षे विद्यमानत्वात् पदात्परत्वाद् ब्रह्माण इत्यस्य निघातोऽपि भवति । अस्मिन् पक्षे देवशब्दे वशब्दस्यैवानेनानुदात्तत्वं विधेयम् । ब्रह्मग्रहणं तु न कर्तव्यम् ॥—**स्वरित**—॥—**अनुदात्तानामिति** । जातौ बहुवचनम् । तेनैकस्य द्वयोर्बहूनां च भवति । एकस्य पचति । द्वयोः । अग्निमीळे पुरोहितम् । बहूनां तु मूल एव दर्शितम् ॥—**इमं मे** इति । इदम्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः । विभक्तिरनुदात्ता । त्यदाद्यत्वेऽमि पूर्वः एकादेश उदात्तः । मे इत्यनुदात्तम् । 'अनुदात्तं सर्वमपादादौ' इत्यधिकारात्तस्य उदात्तादनुदात्तस्य स्वरितः । तस्मात्परेषां गङ्गेप्रभृतीनामुदात्तानामेकश्रुतिः । सर्व एते आमन्त्रितनिघातानुदात्ताः । ननु मे इत्यस्य स्वरितस्य उदात्तविधायकं प्रति त्रिपादीस्थत्वादसिद्धत्वं स्यात् । न च स्वरितादित्याश्रयात्सिद्धम् । क्व च सुप्तेत्यादौ चरितार्थत्वादिति चेन्मैवम् । 'तस्यादितः' इत्यारभ्य नवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भाष्यवार्तिकयोर्निवेशात् । 'न सुब्रह्मण्यायाम्' इति सूत्रे स्वरितस्य तूदात्त इति वदता एव काण्डोत्कर्षस्य ज्ञापितत्वाच्च । न च सुब्रह्मण्योमिति सिद्धः स्वरितोऽस्तीति वाच्यम् । तत्र 'एकादेश उदात्तेन–' इति सूत्रप्रवृत्तेरावश्यकत्वात् । तत्र ह्यनुदात्तग्रहणं नानुवर्तते ॥—**उदात्त**—॥ सन्नशब्देन नीचैरर्थ उच्यते । तेन त्वनुदात्तत्वं लक्ष्यते इत्याह—**अनुदात्ततर** इति । प्रकर्षस्त्वन्यानुदात्तापेक्षः ॥—**सरस्वती**त्यादि । अत्र मेशब्दमाश्रित्य सरस्वतीत्यस्यामन्त्रितनिघातः । शुतुद्रिशब्दस्य तु न पादादित्वात् । आमन्त्रितस्येति षाष्ठेन शुतुद्रीत्यस्योदात्तं प्रथममक्षरं तस्मिन्परे पूर्वस्य सरस्वतीकारस्य सन्नतरः ॥—**व्यचक्षयत्स्व** इति । वीति उपसर्गत्वादाद्युदात्तः । ततः परस्याचक्षयदिति तिङन्तस्य तिङ् इति निघातः । स्वरिति न्यङ्स्वरौ स्वरिताविति स्वरितः । तस्मिन् परे यकारस्य सन्नतरः ॥—**साधारणस्वरा** इति । एकस्मिन् पदे पदद्वयेऽपि च वर्तमानत्वात्साधारण्यम् । 'आद्युदात्तश्च' 'ञ्नित्यादिर्नित्यम्' इत्यादयस्तु एकस्मिन्नेव पदे वर्तमानत्वान्न साधारणाः ॥

## धातुस्वराः।

**धातोः** ।६।१।१६२। अन्त उदात्तः स्यात्। गोपायतं नः। असि सत्यः। **स्वपादिर्हिंसामच्यनिटि** ।६।१।१८८। स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात्। स्वपादिरदाद्यन्तर्गणः। स्वपन्ति। श्वसन्ति। हिंसन्ति। पक्षे प्रत्ययस्वरेण मध्योदात्तता। ङित्येवेष्यते। नेह। स्वपानि। हिनसानि। **अभ्यस्तानामादिः** ।६।१।१८९। अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः। ये ददति प्रिया वसु। परत्वाच्चित्स्वरमयं बाधते। दधाना इन्द्रे। **अनुदात्ते च** ।६।१।१९०। अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः। दधासि रत्नं द्रविणं च दाशुषे। **भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति** ।६।१।१९२। भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वमुदात्तं स्यात्। योऽग्निहोत्रं जुहोति। ममत्तु नः परिज्मा। माता यद्वीरं दधनत्। जागर्षि त्वम्। **लिति** ।६।१।१९३। प्रत्ययात्पूर्वमुदात्तम्। चिकीर्षकः। **आदिर्णमुल्यन्यतरस्याम्** ।६।१।१९४। अभ्यस्तानामादिरुदात्तो वा णमुलि परे। लोलूयंलोलूयम्। पक्षे लित्स्वरः।

---

प्रकृतिर्द्विधा धातुः प्रातिपदिकं च। तत्र धातुस्वरमाह—**धातोरि**ति॥ 'कर्षात्वतः–' इत्यतः अन्त उदात्त इत्यनुवर्तते तदाह—**अन्त उदात्त** इति॥—**गोपायत**मिति। यकाराकारस्योदात्तत्वे तमित्यस्य 'तास्यनुदात्तेत्–' इत्यनुदात्तत्वे 'उदात्तादनुदात्तस्य–' इति स्वरितः। 'बहुवचनस्य वस्नसौ' इति नसादेशस्य 'स्वरितात्संहितायाम्–' इति प्रचयापरपर्याया एकश्रुतिः॥—**असी**ति। अस्तेः सिप् 'तासस्त्योः–' इति सलोपः। अकारस्योदात्तत्वम्। ततः परस्य स्वरितः सत्यशब्दे सकारात्परस्य उदात्तस्वरितपरस्य 'उदात्तस्वरितपरस्य' इत्यनुदात्ततरादेशः॥—**स्वपादि**—॥ 'तास्यनुदात्तेत्–' इत्यतः लसार्वधातुकमित्यनुवर्तते तदच्यनिटीति सम्बन्धादिद सप्तम्यन्त सम्पद्यते तदाह—**अनिट्यजादावित्यादि**॥—**अदाद्यन्तर्गण** इति। आ गणान्तादिति भावः॥—**हिंसन्ती**ति। हिसि हिंसायां रुधादिः। 'श्नान्नलोपः'। 'श्नसोरल्लोपः'॥—**ङित्येवेष्यत** इति। वृत्त्यनुरोधादेतदुक्तम्। भाष्ये तु प्रायेणेद न दृश्यते। एवं च हिनसानीत्यत्राद्युदात्तत्वमपि पक्षे भवति। यदि तु आद्युदात्तत्व पक्षे नेष्यते तर्हि व्यवस्थितविभाषाश्रयणान्न। केचित्तु स्वपानीत्यत्रैतदभावे धातुस्वरेणाद्युदात्तत्वमेवेति विशेषाभावादय विधिर्न प्रवर्तते तत्साहचर्याद्धिनसानीत्यत्राप्ययं न प्रवर्तत इति वृत्तिकाराशय कल्पयन्ति॥—**हिनसानी**ति। अत्र श्नमः 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायाद् धातुग्रहणे नकाराकार उदात्तः। ततः परस्य स्वरितत्वम्। अनिटि किम्। स्वपितः। 'रुधादिभ्यः सार्वधातुके' इतीट्॥—**अभ्यस्तानाम्**—॥ 'आदिः सिचोऽन्यतरस्याम्' इत्यत आदिरिति वर्तमाने पुनरादिग्रहणं नित्यार्थम्। अन्यथाऽऽदिग्रहणसबद्धमन्यतरस्याग्रहणमनुवर्तेत। अचि किम्। दद्यात्। अनिटि किम्। जक्षिथ॥—**ये ददती**ति। डुदाञ् दाने लटि झिः तस्य 'अदभ्यस्तात्' इत्यदादेशः। 'श्नाभ्यस्तयोः–' इत्यालोपः॥—**चित्स्वरमि**ति। 'चितः' इत्यनेन विहितमन्तोदात्तस्वरमित्यर्थः॥—**दधाने**ति। लटः शानजादेशः॥—**अनुदात्ते च**॥ न विद्यते उदात्तो यस्मिन्निति बहुव्रीहिस्तदाह—**अविद्यमाने**त्यादि। अन्यथा हि शार्ङ्गीयेऽनुदात्ते गृह्यमाणे मा हि स्म दधादित्यत्र नित्यत्वादन्तरङ्गत्वाद्वा इकारलोपे कृते आद्युदात्तत्व न स्यात्। बहुव्रीहौ विज्ञाने तु भवति। हिशब्दो 'हि च' इति निघातनिषेधार्थः॥—**भीह्री**—॥ आद्युदात्तस्यापवादोऽयम्। तत्र मदिर्दिवादिः। दरिद्राजागरावदादी। अन्ये तु जुहोत्यादयः। उदाहरणानि बिभेति जिह्रेति बिभर्ति। 'भृञामित्' इत्यभ्यासस्येत्वम्॥—**ममत्त्वि**ति। मदेर्लोटि 'बहुलं छन्दसि' इति शपः श्लुः॥—**जजनत्। दधनदि**ति। जन जनने धन धान्ये। आभ्यां लेट् तिप् 'इतश्च' इतीकारलोपः। 'लेटोऽडाटौ' इत्यट्। दरिद्राति जागर्ति। पिति किम्। दरिद्रति। अत्र परत्वादाकारलोपे कृते इकारस्योदात्तत्व मा भूत्। ननु पूर्वग्रहणं व्यर्थं प्रत्यये पितीत्येवोक्ते 'तस्मिन्निति निर्दिष्टे–' इति पूर्वस्यैव भविष्यति। न च पितः पूर्वमेव कार्यभाग्यथा स्यात् पिदन्तं मा भूदित्येवमर्थं तदिति वाच्यम्। कथं पुनः सप्तमीनिर्देशे तदन्तस्य प्रसङ्गः। एतदेव ज्ञापयति सौवर्यः सप्तम्यस्तदन्तसप्तम्या इति। तेन 'उपोत्तम रिति' रित्प्रत्ययान्ते उपोत्तममुदात्त भवति चङ्यन्यतरस्यां चङन्तस्येत्यर्थो न तु रिति परतश्चाद्भि परत इति। नन्वेव 'चतुरः शसि' इत्यत्रापि शसन्तस्य प्राप्नोति शस्ग्रहणसामर्थ्यान्न भविष्यति। यदि हि 'चतुरः शसि' इत्यनेन शस उदात्तत्वमिष्ट स्यात्तत 'ऊडिदपदान–' इत्यस्यानन्तर चतुरश्चेत्येव ब्रूयात्। तत्रासर्वनामस्थानग्रहणानुवृत्त्या 'षट्त्रिचतुर्भ्यो हलादिः' इति हलादेरुदात्तविधानाच्च शस एव भविष्यति॥—**लिति**॥ पूर्वसूत्रात्प्रत्ययात्पूर्वमिति वर्तते तदाह—**प्रत्ययात्पूर्वमि**ति। तेन स्वरविधौ समभ्यास्तदन्तत्वज्ञापनात लिदन्तस्य स्वरो न शङ्कनीयः॥—**चिकीर्षके**ति। सन्नन्ताण्वुल् तस्याकादेशः। सनोऽतो लोपः। ककारेकार उदात्तः। नचाल्लोपस्य स्थानिवत्त्वम्। स्वरविधौ तन्निषेधात्। क्वचित्पुस्तके भौरिकिविधम्। ऐषुकारिभक्तमिति दृश्यते। तत्र 'भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ' इति 'विषयो देशे' इत्यस्मिन्नर्थे यथाक्रमं भौरिकिशब्दादैषुकारिशब्दाच्च विधल्भक्तलौ ज्ञेयौ॥—**आदिर्णमुलि**—॥—**अभ्यस्तानामि**ति। यद्यपि लोलूयमिति प्रतीकमुपादाय एकाच्सु धातुषु लित्स्वरस्यास्य च विशेषाभावादनेकाजु-

**अचः कर्तृयकि** ।६।१।१९५। उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा । लूयते केदारः स्वयमेव । **चङ्यन्यतरस्याम्** ।६।१।२१८। चङन्ते धातावुपोत्तममुदात्तं वा । मा हि चीकरताम् । धात्वकार उदात्तः । पक्षान्तरे चङुदात्तः ॥ ॥ इति धातुस्वराः ॥

## प्रत्ययस्वराः ।

**कर्षात्वतो घञोन्त उदात्तः** ।६।१।१५९। कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः स्यात् । कर्षः । शपा निर्देशात्तुदादेराद्युदात्त एव । कर्षः । पाकः । **उञ्छादीनां च** ।६।१।१६०। अन्त उदात्तः स्यात् । उञ्छादिषु युगशब्दो घञन्तोऽगुणो निपात्यते कालविशेषे रथाद्यवयवे च । वैश्वानरः कुशिकेभिर्युगे युगे । अन्यत्र । योगे योगे तवस्तरम् । भक्षशब्दो घञन्तः । गावः सोमस्य प्रथमस्य भक्षः । उत्तमशश्वत्तमावपि । उदुत्तमं वरुण । शश्वत्तममीळते । **चतुरः शसि** ।६।१।१६७। चतुरोऽन्त उदात्तः शसि परे । चतुरः कल्पयन्तः । अचि र इति रादेशस्य पूर्वविधौ स्थानिवत्त्वान्नेह । चतस्रः पश्य । चतेरुरन् । नित्त्वादाद्युदात्तता । **झल्युपोत्तमम्** ।६।१।१८०। षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् । अध्वर्युभिः पञ्चभिः । नवभिर्वाजैर्नवती च । सप्तभ्यो जायमानः । आदशभिर्विवस्वतः । उपोत्तमं किम् । आ षड्भिर्हूयमानः । विश्वेदेवैस्त्रिभिः । झलि किम् । नवानां नवतीनाम् । **विभाषा भाषायाम्** ।६।१।१८१। उक्तविषये । **सर्वस्य सुपि** ।६।१।१९१। सुपि परे सर्वशब्दस्यादिरुदात्तः स्यात् सर्वे नन्दन्ति यशसा । **ञ्नित्यादिर्नित्यम्** ।६।१।१९७। ञिदन्तस्य निदन्तस्य चादिरु-

---

दाहृत इति हरदत्तग्रन्थादभ्यस्तेति निवृत्तमिति प्रतीयते तथाप्यार्थिकार्थकथनपरतया नेयम् ॥—**णमुलि पर** इति । यद्यपि सौवर्यः सप्तम्यस्तदन्तसप्तम्या इति 'भीह्री-' इति सूत्रे व्यवस्थापितत्वात् णमुलन्तस्यादिरुदात्तो भवतीति सूत्रार्थेन भाव्यं तथापि फले विशेषाभावादेवमुक्तमिति प्रतिभाति ॥—**लोलूयं लोलूयमिति** । यङन्ताण्णमुल् । 'नित्यवीप्सयोः' इति द्वित्वम् । अत्र प्रथमः लोलूयशब्द आद्युदात्तः । लू इति स्वरितः । ततश्चत्वारः प्रचयाः ॥—**अचः**-॥ इह कीर्यत इत्यादौ इत्वे रपरत्वे च सति अय स्वर इष्टमनिर्वाहार्थं 'तास्यनुदात्तेत्-' इति सूत्रे समासैकदेशोप्युपदेशशब्द इहानुवर्तते सप्तम्या च विपरिणम्यते तदाह—**उपदेशेऽजन्तानामिति** । नन्वेवम् 'एक द्वादशधा जज्ञे' इत्यादाविवान्तर्भूतण्यन्तात्कर्मकर्तृविषयात् जनेर्लटि जायते स्वयमेवेत्यत्रैष स्वरो न स्यात् । 'ये विभाषा-' इत्यात्वे सति उत्तरकालमजन्तत्वेऽपि उपदेशेऽनजन्तत्वादिति चेन्नैवम् । ये इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेवात्वप्रवृत्तेरित्याहुः ॥—**कर्तृयकीति** । कर्तृवाचिनि सार्वधातुके विहितो यो यक् तस्मिन् परे ॥—**लूयत** इति । आदिमध्यौ पर्यायेणोदात्तौ 'तास्यनुदात्तेत्-' इति ते इत्यस्यानुदात्तत्वम् ॥—**चङ्यन्यतरस्याम्** ॥ 'उपोत्तम रिति' इत्यतः उपोत्तममिति वर्तते तदाह—**उपोत्तममिति** । त्र्यादीनामन्त्यमुत्तम तस्य समीपमुपोत्तमम् ॥—**मा हि चीकरतामिति** । अदुपदेशात्परत्वेन लसार्वधातुकानुदात्तत्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः । उपोत्तमग्रहणानुवृत्त्या द्वयोर्न । मा हि दधत् । अत्र 'विभाषा धेट्श्व्योः' इति चङ् ॥ इति धातुस्वराः ॥

**कर्षात्वतः**-॥ 'ञ्नित्यादिर्नित्यम्' इत्यस्यापवादः । आदस्यास्तीति आत्वान् 'तसौ मत्वर्थे' इति भत्वाज्जश्त्वाभावः । कर्षश्चात्वांश्चेति समाहारद्वन्द्वः । कर्ष इति शबन्तस्यानुकरण न घञन्तस्य तदाह—**शपा निर्देशादिति** ॥—**पाक** इति । पचेर्घञ् । 'चजोः-' इति कुत्वम् ॥—**कालविशेष** इति । कृतद्वापरादौ ॥—**भक्षशब्द** इति । भक्ष अदने चुरादिः । 'अनित्यण्यन्ताश्चुरादयः' इति यदा णिच् नास्ति तदा घञ् । ण्यन्तात्तु 'एरच्' इत्यचि सिद्धम् । एरजण्यन्तानामिति तु नास्तीत्याहुः ॥—**उत्तमशश्वत्तमाविति** । तमबन्तावेतौ । तेन द्रव्यप्रकर्षविवक्षायामामभावः । पित्त्वादनुदात्तत्वे प्राप्ते पाठः ॥—**चतुरः** ॥ 'चतेरुरन्' नित्त्वादाद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थमिदम् । ननु चतस्रः पश्येत्यत्र चतसृ अस् इति स्थिते परत्वात् 'अचि र ऋतः' इति रेफादेशे तकाराकारस्योदात्तत्वं प्राप्नोति अत आह—**अचि र** इति ॥—**स्थानिवत्त्वादिति** । न च स्वरविधौ स्थानिवत्त्वनिषेधः । 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति नियमात् ॥—**झल्युपोत्तमम्**॥ 'षट्त्रिचतुर्भ्यो हलादिः' इत्यस्यापवादः ॥—**पञ्चभिरित्यादि** । पञ्चनवसप्तदशशब्दाः कनिनन्ताः ॥—**आषड्भिरिति** । षष्शब्दः फिट्स्वरेणान्तोदात्तः । तनोतेर्ड्रिः त्रिः । अयमपि फिट्स्वरेण प्रत्ययस्वरेण वान्तोदात्तः । उभयत्रापि 'षट्त्रिचतुर्भ्यो हलादिः' इति विभक्तेरुदात्तत्वम् ॥—**नवानामिति** । अत्रापि विभक्तिरुदात्ता ॥—**विभाषा**—॥—**उक्तविषय** इति । षट्त्रिचतुर्भ्यः परा या झलादिर्विभक्तिस्तदन्तस्योपोत्तम भाषायामुदात्त वा स्यात् । पञ्चभिः सप्तभिः तिसृभिः चतुर्भिः पक्षे 'षट्त्रिचतुर्भ्यो हलादिः' इत्यन्तोदात्तानि ॥—**सर्वस्य**-॥ सर्वशब्द उञ्छादिष्वन्तोदात्तो निपातितः । सर्वस्य विकारः सार्व इत्यत्रानुदात्तादेरित्यनुदात्तलक्षणोऽञ् यथा स्यात् । श्रवणं तु सर्वत्राद्युदात्तस्यैव प्रत्ययलक्षणेनापि सर्वस्वरस्येष्यमाणत्वात् ॥—**ञ्नित्यादि**-॥ भीह्रीति सूत्रे पूर्वग्रहणेन सौवर्यः सप्तम्यस्तदन्त-

दात्तः स्यात् । यस्मिन्विश्वानि पौंस्या । पुंसः कर्मणि ब्राह्मणादित्वात् ष्यञ् । सुते दधिष्व नश्चनः । चायतेरसुन् । चायेरन्ने ह्रस्वश्चेति चकारादसुनो नुडागमश्च । **पथिमथोः सर्वनामस्थाने** ।६।१।१९९। आदिरुदात्तः स्यात् । अयं पन्थाः । सर्वनामस्थाने किम् । ज्योतिष्मतः पथो रक्ष । उदात्तनिवृत्तिस्वरेणान्तोदात्तं पदम् । **अन्तश्च तवै युगपत्** ।६।१।२००। तवैप्रत्ययान्तस्याद्यन्तौ युगपदाद्युदात्तौ स्तः । हर्षसे दातवा उ । **क्षयो निवासे** ।६।१।२०१। आद्युदात्तः स्यात् । स्वे क्षये शुचिव्रत । **जयः करणम्** ।६।१।२०२। करणवाची जयशब्द आद्युदात्तः स्यात् । जयत्यनेन जयोऽश्वः । **वृषादीनां च** ।६।१।२०३। आदिरुदात्तः । आकृतिगणोऽयम् । वाजेभिर्वाजिनीवती । इन्द्रं वाणीः । **संज्ञायामुपमानम्** ।६।१।२०४। उपमानशब्दः संज्ञायामाद्युदात्तः । चञ्चेव चञ्चा । कनोऽत्र लुप् । एतदेव ज्ञापयति क्वचित्स्वरविधौ प्रत्ययलक्षणं नेति । संज्ञायां किम् । अग्निर्माणवकः । उपमानं किम् । चैत्रः । **निष्ठा च द्व्यजनात्** ।६।१।२०५। निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो न त्वाकारः । दत्तः । द्व्यच् किम् । चिन्तितः । अनात्किम् । त्रातः । संज्ञायामित्यनुवृत्तेर्नेह । कृतम् । हृतम् । **शुष्कधृष्टौ** ।६।१।२०६। एतावाद्युदात्तौ स्तः । असंज्ञार्थमिदम् । अतसं न शुष्कम । **आशितः कर्ता** ।६।१।२०७। कर्तृवाची आशितशब्द आद्युदात्तः । कृपन्नित्फाल आशितम् । **रिक्ते विभाषा** ।६।१।२०८। रिक्तशब्दे वाऽऽदिरुदात्तः । रिक्तः । संज्ञायां तु निष्ठा च द्व्यजनादिति नित्यमाद्युदात्तत्वं पूर्वविप्रतिषेधेन । **जुष्टार्पिते च छन्दसि** ।६।१।२०९। आद्युदात्ते वा स्तः । **नित्यं मन्त्रे** ।६।१।२१०। एतत्सूत्रं शक्यमकर्तुम् । जुष्टो दमूनाः । षळर आहुरर्पितमित्यादेः पूर्वेणैव सिद्धेः । छन्दसि पाठस्य व्यवस्थिततया विपरीतापादनायोगात् । अर्पिताः षष्टिर्न चलाचलास इत्यत्रान्तोदात्तदर्शनाच्च । **युष्मदस्मदोर्ङसि** ।६।१।२११। आदिरुदात्तः स्यात् । नहिषस्तव नो मम । **ङयि च** ।६।१।२१२। तुभ्यं हिन्वानः । मह्यं वातः पवताम् । **यतोऽनावः** ।६।१।२१३। यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो

---

सप्तम्या इति ज्ञापितत्वात् तदन्तसप्तमीयमित्याह—**ञिदन्तस्ये**ति ॥—**पथिमथोः**–॥ गमेरिनिः । उप. कित् । मन्थः । पतेः स्थ चेतीनिप्रत्ययान्तावेनावन्तोदात्तौ । मन्थ. कित्वादुपधालोपः ॥—**पन्था** इति । 'पथिमथ्यृभुक्षामात्' । 'थो न्थः' ॥—**पथ** इति । भस्य टेर्लोपः ॥—**उदात्तनिवृत्तिस्वरेणे**ति । 'अनुदात्तस्य च यत्रोदात्तलोप.' इति विभक्तिरुदात्ता ॥ **दातवा उ** इति । ददातेः 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति तवैप्रत्ययः । ऐकारस्यायादेशः । 'लोपः शाकल्यस्य' इति यलोपः । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । अन्यथा एकवर्जमिति वचनाद्यौगपद्यं न स्यात् ॥—**क्षयो**–॥ निवासेऽभिधेये क्षयशब्द आद्युदात्त. ॥—**स्वे क्षये** इति । क्षि निवासगत्योः । क्षयन्ति यस्मिन्नित्यधिकरणे 'पुंसि संज्ञायाम्–' इति घः । निवासे किम् । व्याधे· क्षयः । क्षि क्षये 'एरच्' । कर्तरि षष्ठी ॥—**जयः**–॥—**जयोऽश्व** इति । पुंसीति करणे घः । करणे किम् । जयो ब्राह्मणानाम् । भावे एरच् ॥—**वृषादीनाम्**–॥ वृषु सेचने इगुपधलक्षणः कः ॥—**वाजेभिरि**ति । वजेर्घञ् । 'कर्षात्वत'–' इत्यन्तोदात्ते प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तः ॥—**संज्ञायाम्**–॥—**चञ्चे**ति । उपमानशब्दोऽयमुपमेयस्य संज्ञा ॥—**कनो लुबि**ति । 'इवे प्रतिकृतौ' इति कनो 'लुम्मनुष्ये' इति लुप् ॥ ननु प्रत्ययलक्षणेन नित्त्वात् 'ञ्नित्यादिर्नित्यम्' इत्येव सिद्धमत आह—**एतदेवे**ति ॥—**निष्ठा** ॥—**दत्त** इति । ददातेः क्तः 'दो दद्घोः' इति दतादेशः ॥—**चिन्तित** इति । चिति स्मृत्याम् । चुरादिः ॥—**कृतं हृतमि**ति । प्रत्ययस्वरेणान्तोदात्तावेतौ ॥—**असंज्ञार्थमि**ति । संज्ञाया तु 'निष्ठा च द्व्यजनात्–' इत्येव सिद्धम् ॥—**शुष्कमि**ति । शुषे· क्त. । तस्य 'शुषः कः' इति कादेशः ॥ **आशितः**–॥—**कर्तृवाची**ति । आङ्पूर्वादश भोजनेऽस्मात्कर्तरि क्तो निपात्यते । अपर आह । कर्तृत्वेन भूतपूर्वगत्या अणौ कर्ता णौ कर्मीभूत एव विवक्षितः । तथा चाशेर्ण्यन्तस्य प्रयोज्यकर्तरि 'गतिबुद्धिप्रत्यवसानार्थ–' इति कर्मसंज्ञके निष्ठायामाशित इति रूपमिति ॥—**रिक्त** इति । रिचिर् विरेचने ॥—**संज्ञायामि**त्यादि । 'निष्ठा च द्व्यजनात्' इत्यस्यावकाशः गुप्तः । अस्य त्ववकाशः असंज्ञाया रिक्तो घट इति । संज्ञायामुभयप्रसङ्गे पूर्वविप्रतिषेधः । रिक्तो नाम कश्चित् ॥—**जुष्टार्पिते**–॥ जुष्टः अर्पित. इत्येते शब्दरूपे छन्दसि विषये आद्युदात्ते वा स्त· । जुषी प्रीतिसेवनयोः क्तः । 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः । जुष्टः । अर्त्तेर्णिच् । 'अर्ति–'इत्यादिना पुक् । अर्पितः ॥—**नित्यं**–॥ जुष्टार्पिते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते स्त. ॥—**पूर्वेणैव सिद्धेरि**ति । ननु पक्षेऽन्तोदात्तत्वमपि प्राप्नोतीत्याशङ्क्याह—**छन्दसी**त्यादि । न केवलं गतार्थत्वमात्रं किं त्वारभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह—**अर्पिताः षष्टिरि**त्यादिना ॥—**युष्मदस्मदोः**–॥ 'युष्मसिभ्यां मदिक्' इति मदिक्प्रत्ययान्तावन्तोदात्तौ ॥—**ममे**ति । 'युष्मदस्मद्भ्यां ङसोऽश्' 'तवममौ ङसि' इति मपर्यन्तस्य ममादेशः । शेषे लोपः । 'अतो गुणे' इति पररूपत्वम् । 'एकादेश उदात्तेनोदात्तः' इति विभक्तेरुदात्तत्वे प्राप्ते इदमुच्यते ॥—**ङयि च** । योगविभागो यथासंख्यनिवृत्त्यर्थः ॥—**तुभ्यं मह्यमि**ति । 'ङे प्रथमयोरम्' । 'तुभ्यमह्यौ ङयि' ॥—**यतः**–॥ 'तित्स्वरितम्' इत्यस्यापवादः । 'निष्ठा च द्व्यजनात्' इत्यतो द्व्यजनुवर्तते तदाह—**द्व्यच** इति । अत्र 'अनावः' इति निषेधो ज्ञापयति 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति । अन्यथा य आदिर्नकारो

नावं विना । शुअन्तस्य काम्या । कर्मेणिङन्तादचो यत् । ईडवन्दवृशंसदुहां ण्यतः ।६।१।२१४। एषां ण्यदन्तानामादिरुदात्तः । ईड्यो नूतनैरुत । आजुह्वान ईड्यो वन्द्यश्च । श्रेष्ठं नो धेहि वार्यम् । उक्थमिन्द्राय शंस्यम् । विभाषा वेण्विन्धानयोः ।६।१।२१५। आदिरुदात्तो वा । इन्धानो अग्निम् । त्यागरागहासकुहश्वठक्रथानाम् ।६।१।२१६। आदिरुदात्तो वा । आद्यास्त्रयो घञन्ताः । त्रयः पचाद्यजन्ताः । मतोः पूर्वमात्संज्ञायां स्त्रियाम् ।६।१।२१९। मतोः पूर्वमाकार उदात्तः स्त्रीनाम्नि । उदुम्बरावती । शरावती । अन्तोऽवत्याः । ६।१।२२०। अवतीशब्दस्यान्त उदात्तः । वेत्रवती । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् । ईवत्याः ।६।१।२२१। ईवत्यन्तस्यापि प्राग्वत् । अहीवती । मुनीवती ॥

## ॥ अथ फिट्सूत्राणि ॥

फिषोऽन्त उदात्तः ॥१॥ प्रातिपदिकं फिट् तस्यान्त उदात्तः स्यात् । उच्चैः । पाटलापालङ्काम्बासागरार्थानाम् ॥२॥ एतदर्थानामन्त उदात्तः । पाटला, फलेरुहा, सुरूपा, पाकलेति पर्यायाः । लघावन्त इति प्राप्ते । अपालङ्क, व्याधिघात, आरेवत, आरग्वधेति पर्यायाः । अम्बार्थः माता । उनर्वन्नन्तानामित्याद्युदात्तत्वे प्राप्ते । सागरः । समुद्रः । गेहार्थानामस्त्रियाम् ॥३॥ गेहम् । नब्विषयस्येति प्राप्ते । अस्त्रियां किम् । शाला । आद्युदात्तोऽयम् । इहैव पर्युदासाज्ज्ञापकात् । गुदस्य च ॥४॥ अन्त उदात्तः स्यान्न तु स्त्रियाम् । गुदम् । अस्त्रियां किम् । आन्त्रेभ्यस्ते गुदाभ्यः । स्वाङ्गशिटामदन्तानामित्यन्तरङ्गमाद्युदात्तत्वम् । ततष्टाप् । ध्यपूर्वस्य स्त्रीविषयस्य ॥५॥ धकारयकारपूर्वो योऽन्त्योऽच् स उदात्तः । अन्तर्धा । स्त्रीविषयवर्णनाम्नामिति प्राप्ते । छाया । माया । जाया । यान्तस्यान्त्यात्पूर्वमित्याद्युत्तत्वे प्राप्ते । स्त्रीति किम् । बाह्यम् । यञन्तत्वादाद्युदात्तत्वम् । विषयग्रहणं किम् । इभ्या । क्षत्रिया ।

नासौ स्वरयोग्यः यश्च स्वरयोग्य आकारो नासावादिरिति प्रतिषेधोऽनर्थकः स्यात् । अनावः किम् । नावा तार्यं नाव्यम् । 'नौवयोधर्म–' इति यत् । ह्यच् किं, चिकीर्ष्यम् । उभयत्रापि तित्स्वरः ॥—**ईडवन्द**—॥ ईड स्तुतौ, वदि अभिवादनस्तुत्योः, वृङ् सम्भक्तौ, शसु स्तुतौ, दुह प्रपूरणे । ण्यतो ह्यनुबन्धकत्वाद्ग्रहणेन ग्रहण न प्राप्नोतीति वचनम् ॥—**ईड्य** इत्यादि । 'ऋहलोः–' इति ण्यत् ॥—**वार्यमिति** । नन्वत्र 'एतिस्तुशासु–' इत्यादिना विशेषविहितेन क्यपा भाव्यमिति चेत्सत्यम् । क्यब्विधौ वृञ एव ग्रहण नाम्येति मूल एव स्पष्टम् ॥—**विभाषा**–॥ वेणुशब्दो नित्स्वरेण नित्यमाद्युदात्तः प्राप्तः । स्थो णुरित्यनुवर्तमाने 'अजिवृरीभ्यो निच्च' इति व्युत्पादनात् । इन्धानशब्दो यदि चानशन्तस्तदा चित्त्वादन्तोदात्तः । यदा शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्त । 'श्नसोरल्लोप.' इति उदात्तस्य श्नमोऽकारस्य लोपात् सर्वथाप्यप्राप्तमाद्युदात्तत्व पक्षे विधीयते ॥—**त्यागराग**—॥ त्यज हानौ । 'चजोः–' इति कुत्वम् । रञ्ज रागे 'घञि च भाव–' इति नलोपः । हसे हसने एषा पक्षे 'कर्षात्वतो घञोऽन्त उदात्तः' इति भवति ॥—**त्रयः पचाद्यजन्ता** इति । कुह विस्मापने, श्वठ असम्यग्भाषणे, चौरादिकावदन्तौ । क्रथ हिंसायाम् । अत्र प्रत्ययस्वरेणान्तोदात्तत्व पक्षे भवति ॥—**मतोः**–॥—**मतोः पूर्व आकार** इति । आर्थव्याख्यानमेतत् । सूत्रे तु शब्दस्वरूपापेक्षया नपुंसकनिर्देशः । केचित्तु सूत्रे पूर्वशब्द पुल्लिङ्गमेव पठन्ति ॥—**शरावती**ति । चातुरर्थिको नद्या मतुप् 'मादुपधायाः' इति वत्वम् 'मतौ बह्वचोऽनजिरादीनां' 'शरादीनां च' इति दीर्घत्वम् ॥—**वेत्रवती**ति । मतुप् वत्वम् । न चात्र वत्वस्यासिद्धत्वादवतीशब्दोऽयं न भवतीति शङ्कयम् । तस्याश्रयात्सिद्धत्वेनासिद्धत्वाभावात् । अवत्या इति निर्देशादिह न भवति । राजवतीति । स्वरविधौ व्यञ्जनस्याविद्यमानत्वान्नायमवतीशब्दः ॥—**अहीवती**ति । पूर्ववद्दीर्घः । सञ्ज्ञायामिति वत्वम् ॥

**अथ फिट्सूत्राणि ॥—फिषोऽन्त उदात्तः** ॥ फिडिति पूर्वाचार्यप्रसिद्धा प्रातिपदिकमुच्यते तदाह—**प्रातिपदिकं फिडिति** । ननु कथमपाणिनीयानि सूत्राण्युपन्यस्यन्ते पाणिनीयसूत्रैर्यः स्वर आयाति स एव प्रमाण तथा च 'शताच्च ठन्यतावशते' इति सूत्रे कैयटः । 'नियतकालाश्च स्मृतयो व्यवस्थाहेतव इति मुनित्रयमतेनायत्वे साध्वसाधुप्रविभागः' इति । नैतत् । अपाणिनीयान्यपि फिट्सूत्राणि पाणिनीयैराश्रीयन्ते भाष्यात् ज्ञापकात् । तथाच 'आद्युदात्तश्च' इति सूत्रे भाष्यं 'प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्व शास्ति'इति । तथा तस्मिन्नेव सूत्रे प्रत्ययाद्युदात्तत्वस्यावकाशः । यत्रानुदात्ता प्रकृतिः समत्व सिमत्वमिति । नहि फिषोऽन्त उदात्तः लतत्वसमसिमेत्यादिफिट्सूत्राश्रयण विना प्रकृतेरन्तोदात्तत्वं सर्वानुदात्तत्वं च सम्भवतीति दिक् ॥—**पाट**—॥ पाटलेत्यादय ओषधिविशेषस्य वाचकाः ॥—**लघावन्त इति प्राप्त** इति । इदं पूर्वेण परेण च संबध्यते ॥—**पर्याया** इति । वृक्षविशेषस्य वाचकाः । सागरसमुद्रयोः 'लघावन्ते–' इति प्राप्ते ॥—**गेहा**—॥ गेहार्थानामन्त उदात्तः स्यात्स्त्रियां न ॥—**गुद**–॥ अगेहार्थमिदम् ॥—**ध्यपूर्व**—॥—**धकारे**ति । नित्यस्त्रीलिङ्गस्येति शेषः ॥—**प्राप्ते** इति । आद्युदात्तत्वे प्राप्ते इत्यर्थः ॥—**यञन्तत्वादि**ति । 'बह्विषष्ठिलोपो यञ्च' इति

यतो नाव इत्याद्युदात्त इभ्यशब्दः । क्षत्रियशब्दस्तु यान्तस्यान्त्यात्पूर्वमिति मध्योदात्तः । **खान्तस्याश्मादेः ॥६॥** नखम् । उखा । सुखम् । दुःखम् । नखस्य स्वाङ्गशिटामित्याद्युदात्तत्वे प्राप्ते । उखा नाम भाण्डविशेषः । तस्य कृत्रिमत्वात्खय्युवर्णं कृत्रिमाख्या चेदित्युवर्णस्योदात्तत्वं प्राप्ते । सुखदुःखयोर्नब्विषयस्येति प्राप्ते । अश्मादेः किम् । शिखा । मुखम् । मुखस्य स्वाङ्गशिटामिति नब्विषयस्येति वा आद्युदात्तत्वम् । शिखायास्तु शीङः खो निद्ध्रस्वश्चेति उणादिषु नित्वोक्तेरन्तरङ्गत्वाट्टापः प्रागेव स्वाङ्गशिटामिति वा बोध्यम् । **हिष्ठवत्सरतिशत्थान्तानाम् ॥७॥** एषामन्त उदात्तः स्यात् । अतिशयेन बहुलो बंहिष्ठः । नित्वादाद्युदात्तत्वे प्राप्ते । बंहिष्ठैरश्वैः सुवृता रथेन । यद्बंहिष्ठं नातिविधे इत्यादौ व्यत्ययादाद्युदात्तः । परिवत्सरः । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यते इत्याहुः । सप्ततिः । अशीतिः । लघावन्त इति प्राप्ते । चत्वारिंशत् । इहापि प्राग्वत् । अग्रेगूर्वाणा प्रभृथस्यायोः । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः । थाथादिसूत्रेण गतार्थमेतत् । **दक्षिणस्य साधौ ॥८॥** अन्त उदात्तः स्यात् । साधुवाचित्वाभावे तु व्यवस्थायां सर्वनामतया स्वाङ्गशिटामित्याद्युदात्तः । अर्थान्तरे तु लघावन्त इति गुरुरुदात्तः । दक्षिणः सरलोदारपरच्छन्दानुवर्तिष्विति कोशः । **स्वाङ्गाख्यायामादिर्वा ॥९॥** इह दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्तः । दक्षिणो बाहुः । आख्याग्रहणं किम् । प्रत्यङ्मुखस्यासीनस्य वामपाणिर्दक्षिणो भवति । **छन्दसि च ॥ १० ॥** अस्वाङ्गार्थमिदम् । दक्षिणः । इह पर्यायेणाद्यन्तावुदात्तौ । **कृष्णस्यामृगाख्या चेत् ॥११॥** अन्त उदात्तः । वर्णानां तणेत्याद्युदात्तत्वे प्राप्ते अन्तोदात्तो विधीयते । कृष्णानां व्रीहीणाम् । कृष्णो नोनाव वृषभः । मृगाख्यायां तु कृष्णो रात्र्यै । **वा नामधेयस्य ॥१२॥** कृष्णस्येत्येव । अयं वां कृष्णो अश्विना । कृष्ण ऋषिः । **शुक्लगौरयोरादिः ॥१३॥** नित्यमुदात्तः स्यादित्येके । वेत्यनुवर्तत इति तु युक्तम् । सरो गौरो यथा पिबेत्यत्रान्तोदात्तदर्शनात् । **अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः ॥१४॥** अङ्गुष्ठस्य स्वाङ्गानामकुर्वादीनामिति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थ आरम्भः । वशाग्रहणं नियमार्थं छन्दस्येवेति । तेन लोके आद्युदात्ततेत्याहुः । **पृष्ठस्य च ॥१५॥** छन्दस्यन्त उदात्तः स्याद्वा भाषायाम् । पृष्ठम् । **अर्जुनस्य तृणाख्या चेत् ॥१६॥** उनर्वन्नन्तानामित्याद्युदात्तस्यापवादः । **अर्यस्य स्वाम्याख्या चेत् ॥१७॥** यान्तस्यान्त्यात्पूर्वमिति यतो नाव इति वाद्युदात्ते प्राप्ते वचनम् । **आशाया अदिगाख्या चेत् ॥१८॥** दिगाख्याव्यावृत्त्यर्थमिदम् । अत एव ज्ञापकाद्दिक्पर्यायस्याद्युदात्तता । इन्द्र आशाभ्यस्परि । **नक्षत्राणामब्विषयाणाम् ॥१९॥** अन्त उदात्तः स्यात् । आश्लेषाऽनुराधादीनां लघावन्त इति प्राप्ते । ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम् । **न कुपूर्वस्य कृत्तिकाख्या चेत् ॥२०॥** अन्त उदात्तो न । कृत्तिका नक्षत्रम् । केचित्तु कुपूर्वो य आप् तद्विषयाणामिति व्याख्याय आर्यिका बहुलिका इत्यत्राप्यन्तोदात्तो नेत्याहुः । **घृतादीनां च ॥२१॥** अन्त उदात्तः ।

---

वचनात् ॥—**यतो नाव** इति । इभमर्हतीति दण्डादित्वाद्यत् ॥—**यान्तस्यान्त्यादि**ति । 'क्षत्राद् घः' इति प्रत्ययस्वरेणापीति वा बोध्यम् ॥—**खान्तस्या—**॥ श च म् च श्मौ तौ आदी यस्य स श्मादिर्न श्मादिरश्मादिः । तस्य शकारमकारादिभिन्नस्य खान्तस्यान्तोदात्तः स्यात् ॥—**शीङः खो निद्ध्रस्वश्चे**त्यादि । ननु बहुषूणादिपुस्तकेषु शीङो ह्रस्वश्चेत्येव पठ्यते 'मुहेः खो मूर्च' इत्यतः खोऽनुवर्तते । ह्रस्वविधानसामर्थ्याद्गुणाभाव इति स्वयमप्युणादिष्वेवमेवोक्तम् । तस्मात्पूर्वापरविरुद्धोऽयं ग्रन्थ इत्यस्वरसादाह—**अन्तरङ्गत्वादि**त्यादि ॥—**हिष्ठ—**॥—**एषामि**ति । हिष्ठ वत्सर ति शत् थ एतदन्तानामित्यर्थः ॥—**बंहिष्ठ** इति । बहुलशब्दात् 'अतिशायने तमबिष्ठनौ' इतीष्ठन् 'प्रियस्थिरस्फिर—' इत्यनेन बहुलस्य बंहिरादेशः ॥—**परिवत्सर** इति । क्वचित्तु संवत्सर इति पाठस्तत्र 'वसेश्च सपूर्वाच्चित्' इति सरप्रत्ययस्य चित्त्वादपि सिद्धे ॥—**सप्ततिरि**त्यादि । 'पङ्क्तिविंशतित्रिंशत्—' इत्यत्र व्युत्पादिता एते ॥—**प्राग्वदि**ति । 'लघावन्ते—' इति प्राप्त इत्यर्थः ॥—**दक्षिणस्य—**॥ अस्यान्त उदात्तः स्यात्प्रावीण्येऽर्थे । वीणाया दक्षिणः । प्रवीण इत्यर्थः ॥—**छन्दसि** ॥ दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्यातां वेदे ॥—**कृष्णस्य—**॥ अस्यान्त उदात्तश्छन्दसि न तु मृगाख्यायाम् ॥—**एके** इति । तन्मतेऽस्मिन्सूत्रे नामधेयस्येत्यनुवर्तते वचनविपरिणामेनान्वयः नामधेययोः । शुक्लगौरयोरादिरुदात्त इत्यर्थः । तेन सरो गौरो यथा पिबेत्यत्रान्तोदात्तत्वमेव नामधेयत्वाभावात् ॥—**अङ्गुष्ठो—**॥ एषामन्तोदात्तश्छन्दसि ॥—**अङ्गुष्ठस्ये**ति । उपलक्षणमिदम् । बकशब्देऽपि प्राणिना कुपूर्वमित्याद्युदात्ते प्राप्ते इति बोध्यम् ॥—**वा भाषायाम्** । **पृष्ठमि**ति । पक्षे 'स्वाङ्गशिटाम—' इत्याद्युदात्तत्वम् ॥—**अर्जुनस्य—**॥ अन्त उदात्तस्तृणाख्यायाम् । तृणाख्यायां किम् । अर्जुनो वृक्षः । उनर्वन्नन्तानामित्याद्युदात्त. ॥—**अर्यस्य—**॥ अन्त उदात्तः स्वाम्याख्यायाम् । 'अर्यः स्वामिवैश्ययोः' इति निपातितोऽयमर्यशब्दः ॥—**आशाया—**॥ अदिगाख्यायामाशाशब्द आद्युदात्तः स्यात् ॥—**ज्येष्ठे**त्यादि ॥ 'प्रशस्यस्य श्रः' 'ज्य च' इति प्रशस्यशब्दादिष्ठनि ज्यादेशः । श्रवण श्रवः सोऽस्त्यस्याः सा श्रववती धनं विद्यते अस्याः सा धनवती अतिशयिता श्रववती श्रविष्ठा धनिष्ठा इष्ठनि 'विन्मतोर्लुक्' इति मतुपो लुक् ॥—**आद्युदात्ते प्राप्त** इति । 'ञ्नित्यादिः—'इत्यनेन ॥—**कृत्तिके**ति । 'लघावन्ते—' इति आद्युदात्तत्वम् ॥—**घृतमि**ति । नब्विषयस्येति प्राप्ते ॥—**ज्येष्ठ** इति । उदाहरणे वृद्ध-

घृतं मिमिक्षे । आकृतिगणोऽयम् । ❋ ज्येष्ठकनिष्ठयोर्वयसि ॥ २२ ॥ अन्त उदात्तः स्यात् । ज्येष्ठ आह चमसा । कनिष्ठ आह चतुरः । वयसि किम् । ज्येष्ठः श्रेष्ठः । कनिष्ठोऽल्पिकः । इह नित्त्वादाद्युदात्त एव । ❋ बिल्वतिष्ययोः स्वरितो वा ॥२३॥ अनयोरन्तः स्वरितो वा स्यात् । पक्षे उदात्तः ॥ इति फिट्सूत्रेषु प्रथमः पादः ॥

## द्वितीयः पादः ।

❋ अथादिः प्राक् शकटेः ॥२४॥ अधिकारोऽयम् । शकटिशकव्योरिति यावत् । ❋ ह्रस्वान्तस्य स्त्रीविषयस्य ॥२५॥ आदिरुदात्तः स्यात् । बलिः । तनुः । ❋ नब्विषयस्यानिसन्तस्य ॥२६॥ वने न वायः । इसन्तस्य तु सर्पिः । नप् नपुंसकम् । ❋ तृणधान्यानां च द्व्यषाम् ॥२७॥ द्व्यचामित्यर्थः । कुशाः । काशाः । माषाः । तिलाः । बह्वचां तु गोधूमाः । ❋ त्रः संख्यायाः ॥२८॥ पञ्च । चत्वारः । ❋ स्वाङ्गशिटामदन्तानाम् ॥२९॥ शिट् सर्वनाम । कर्णाभ्यां चुबुकादधि । ओष्ठाविव मधु । विश्वो विहायाः । ❋ प्राणिनां कुपूर्वम् ॥३०॥ कवर्गात्पूर्व आदिरुदात्तः । काकः । वृकः । शुकेषु मे । प्राणिनां किम् । क्षीरं सर्पिर्मधूदकम् । ❋ खय्युवर्णं कृत्रिमाख्या चेत् ॥३१॥ खयि परे उवर्णमुदात्तं स्यात् । कन्दुकः । ❋ उनर्वन्नन्तानाम् ॥३२॥ उन । वरुणं वो रिशादसम् । ऋ । स्वसारं त्वा कृणवै । वन् । पीवानं मेषम् । ❋ वर्णानां तणतिनितान्तानाम् ॥३३॥ आदिरुदात्तः । एतः । हरिणः । शितिः । पृश्निः । हरित् । ❋ ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ॥३४॥ ऋद्वर्ज्यं ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात् । मुनिः । ❋ अक्षस्यादेवनस्य ॥३५॥ आदिरुदात्तः । तस्य नाक्षः । देवने तु । अक्षैर्मा दीव्यः । ❋ अर्धस्यासमद्योतने ॥३६॥ अर्धो ग्रामस्य । समेंऽशके तु अर्धं पिप्पल्याः । ❋ पीतद्र्वर्थानाम् ॥३७॥ आदिरुदात्तः । पीतद्रुः । सरलः । ❋ ग्रामादीनां च ॥३८॥ ग्रामः । सोमः । यामः । लुबन्तस्योपमेयनामधेयस्य ॥३९॥ चञ्चेव चञ्चा । स्फिगन्तस्येति पाठान्तरम् । स्फिगिति लुपः प्राचां संज्ञा । ❋ न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् ॥४०॥ एषामुपमेयनाम्नामादिरुदात्तो न । ताल इव तालः । मेरुरिव मेरुः । व्याघ्रः । सिंहः । महिषः । ❋ राजविशेषस्य यमन्वा चेत् ॥४१॥ यमन्वा वृद्धः । आङ्ग उदाहरणम् । अङ्गाः प्रत्युदाहरणम् । ❋ लघावन्ते द्वयोश्च बह्वषो गुरुः ॥४२॥ अन्ते लघौ द्वयोश्च लघ्वोः सतोर्बह्वचकस्य गुरुरुदात्तः । कल्याणः । कोलाहलः । ❋ स्त्रीविषयवर्णाक्षुपूर्वाणाम् ॥४३॥ एषां त्रयाणामाद्युदात्तः । स्त्रीविषये । मल्लिका । वर्ण । श्येनी ।

---

शब्दस्य 'वृद्धस्य च' इतीष्ठनि ज्यादेशः । 'युवाल्पयोः कनन्यतरस्याम्' इति युवन्शब्दस्य कनादेशः । प्रत्युदाहरणे 'प्रशस्यस्य श्रः' 'ज्य च' इति प्रशस्यशब्दस्य ज्यादेशः । अल्पस्य कन् ॥—नित्त्वादिति । तथा च नित्स्वरापवादोऽय योगः ॥ —पक्षे उदात्त इति । उदात्त इत्यनुवृत्तेः ॥ इति प्रथमः पादः ॥

नब्विषयस्य ॥ इसन्तवर्जितस्य नित्यनपुंसकस्यादिरुदात्तः स्यात् ॥—सर्पिरिति । 'अर्चिशुचि–' इत्यादिना इसिः ॥ —तृण—॥ तृणवाचिनां धान्यवाचिनां च द्व्यचामादिरुदात्तः स्यात् ॥ अषिति अच प्राचां सज्ञा तदाह—द्व्यचामित्यर्थ इति ॥—गोधूमा इति । 'लघावन्ते–' इति मध्योदात्तता ॥ —त्रः सम्—॥ नकाररेफान्तायाः संख्याया आदिरुदात्तः स्यात् ॥—चतुष्कपाल इति । चत्वार इत्यत्राम्स्वरेण भाव्यम् । चतुर इत्यत्र 'चतुर शसि' इति चतुर्भिरित्यत्र 'झल्युपोत्तमम्' इति चतुर्णामित्यत्र 'षट्त्रिचतुर्भ्यः' इत्यनेनेति समारा उदाहृतः । 'इगन्तकालकपालभगाल–' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तोऽयम् ॥—स्वाङ्गशिटाम्–॥ स्वाङ्गवाचिनामदन्तानां सर्वनाम्नामादिरुदात्तः स्यात् ॥—उदकमिति । छन्दसि अङ्गुष्ठोदकबकवशानामित्यन्तोदात्त । भाषाया तु कर्दमादित्वादादिर्द्वितीयं चोदात्तम् ॥—उनर्व—॥ उन ऋ वन् एतदन्तानामादिरुदात्तः स्यात् ॥—ह्रस्वान्तस्य–॥ अनृत्किम् । नृशसः ॥—अक्षस्य–॥ अदेवनस्याक्षस्यादिरुदात्तः ॥—अर्द्धस्य–॥ असमद्योतनेऽर्द्धशब्दस्यादिरुदात्तः ॥—ग्रामादीनां च ॥ आदिरुदात्त ॥—लुबन्तस्य ॥ उपमेयवाचिनो लुबन्तस्यादिरुदात्तः ॥—चञ्चेवेति । 'इवे प्रतिकृतौ' इति विहितस्य 'लुम्मनुष्ये–' इति कनो लुप् । लुबन्तस्य किम् । अग्निर्माणवकः ॥—न वृक्ष–॥ पूर्वेण प्राप्तमाद्युदात्तत्वं निषिध्यते । अत्र वृक्षपर्वतविशेषग्रहणात् वृक्ष इवाय वृक्षः पर्वतः । अत्र पूर्वेणाद्युदात्तत्व भवत्येव ॥—राजविशेषस्य–॥ लुबन्तस्योपमेयनामधेयस्य राजविशेषस्याद्युदात्तः यमन्वा चेन्नामधेय भवति । पूर्वेणैव सिद्धे नियमार्थमिदम् । राजविशेषस्य चेद्वृद्धस्यैवेत्याहुः । फिड्वृत्तौ तु वृद्धस्य चेद्राजविशेषस्यैवेति नियमो दर्शितः ॥—आङ्ग इति । आङ्ग इवायमाङ्गः । अङ्ग इवायमङ्गः ॥—लघावन्ते–॥ इह आदिरिति न संबध्यते तेन नादेरपि गुरोरुदात्तः । अत एव वृषाकपिशब्दस्य गुरुरुदात्त इति 'वृषाकप्यग्नि–' इति सूत्रे वृत्त्यादिग्रन्थेषु विभावितम् । न च गुरूणां मध्ये य आदिरित्यर्थोऽस्त्विति वाच्यम् । 'अन्यतो ङीष्' इति सूत्रे सारङ्गकल्माषशब्दौ 'लघावन्ते–' इत्यादिना मध्योदात्ताविति हरदत्तग्रन्थविरोधादित्याहुः ॥

**हरिणी । अक्षुशब्दात्पूर्वोऽस्त्येषां ते अक्षुपूर्वाः । तरक्षुः । शकुनीनां च लघुपूर्वम् ॥४४॥ पूर्वं लघु उदात्तं स्यात् । कुक्कुटः । तित्तिरिः । खंजरीटः । नर्तुप्राण्याख्यायाम् ॥४५॥ यथालक्षणं प्राप्तमुदात्तत्वं न । वसन्तः । कृकलासः । धान्यानां च वृद्धक्षान्तानाम् ॥ ४६ ॥ आदिरुदात्तः । कान्तानाम् । श्यामाकाः । षान्तानाम् । माषाः । जनपदशब्दानामषान्तानाम् ॥४७॥ आदिरुदात्तः । केकयः । हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा ॥४८॥ हयिति हल्संज्ञा । पललम् । शललम् । हयादीनां किम् । एकलः । असंयुक्तेति किम् । मल्लः । इगन्तानां च द्व्यषाम् ॥४९॥ आदिरुदात्तः । कृषिः ॥ ॥ इति फिट्सूत्रेषु द्वितीयः पादः ॥**

## तृतीयः पादः ।

**अथ द्वितीयं प्रागीषात् ॥५०॥ ईषान्तस्य हयादेरित्यतः प्राग् द्वितीयाधिकारः । त्र्यचां प्राङ्मकरात् ॥५१॥ मकरवरूढेत्यतः प्राक् त्र्यचामित्यधिकारः । स्वाङ्गानामकुर्वादीनाम् ॥५२॥ कवर्गरेफवकारादीनि वर्जयित्वा त्र्यचां स्वाङ्गानां द्वितीयमुदात्तम् । ललाटम् । कुर्वादीनां तु । कपोलः । रसना । वदनम् । मादीनां च ॥५३॥ मलयः । मकरः । शादीनां शाकानाम् ॥५४॥ शीतन्या । शतपुष्पा । पान्तानां गुर्वादीनाम् ॥५५॥ पादपः । आतपः । लघ्वादीनां तु । अनूपम् । द्व्यचां तु । नीपम् । युतान्यण्यन्तानाम् ॥५६॥ युते । अयुतम् । अनि । धमनिः । अणि । विपणिः । मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा ॥५७॥ एषामादिर्द्वितीयो वोदात्तः । मकरः । वरूढ इत्यादि । छन्दसि च ॥५८॥ अमकराद्यर्थ आरम्भः । लक्ष्यानुसारादादिर्द्वितीयं चोदात्तं ज्ञेयम् । कर्दमादीनां च ॥५९॥ आदिर्द्वितीयं वोदात्तम् । सुगन्धितेजनस्य ते वा ॥६०॥ आदिर्द्वितीयं तेशब्दश्चेति त्रयः पर्यायेणोदात्ताः । सुगन्धितेजनाः । नपः फलान्तानाम् ॥६१॥ आदिर्द्वितीयं वोदात्तम् । राजादनफलम् । यान्तस्यान्त्यात्पूर्वम् ॥६२॥ कुलायः । थान्तस्य च नालघुनी ॥६३॥ नाशब्दो लघु च उदात्ते स्तः । सनाथा सभा । शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च ॥६४॥ अन्त्यात्पूर्वमुदात्तं द्वितीयं वा । साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ॥६५॥ द्वितीयमुदात्तं वा । ईषान्तस्य हयादेरादिर्वा ॥६६॥ हलीषा ।**

—**कल्याण** इति । पर्यायेणादिमध्यावुदात्तौ ॥—**शकुनीनाम्**–॥ पक्षिवाचिनाम् ॥—**पूर्वमिति** । अन्त्यात्पूर्वमित्यर्थः । अत्राप्यादिरिति न सबध्यते पूर्वग्रहणात् ॥—**कुक्कुटेत्यादि** । मध्योदात्तावेतौ ॥—**नर्तु**–॥ ऋतुवाचिनां प्राणिवाचिनां च यथालक्षणप्राप्तमुदात्तत्व न ॥—**धान्यानाम्**–॥ धान्यवाचिना वृद्धकशब्दान्ताना षशब्दान्तानां चादिरुदात्त. ॥—**श्यामाका माषा** इति । अत्रोशीनरेत्यनेन तृणधान्यानामित्यनेन चाद्युदात्तत्वस्य सिद्धत्वात् नैषादका राजमाषा इत्युदाहर्तव्यम् । फिड्वृत्तौ तु सूत्रे चशब्दो न पठितः । वृत्तौ गुरुरुदात्त इति व्याख्यात न त्वादिरुदात्त इति । नैषादका· कालाक्षा इत्युदाहृत च । यत्तु धान्यानामिति किं श्यामाका इत्युदाहृतं तन्न । श्यामाके धान्यत्वाभावश्चिन्त्यः ॥—**जनपदा**—॥ जनपदवाचिनामजन्तानामादिरुदात्त· स्यान् ॥—**केकय** इति । अत्र परत्वाद्यान्तस्यान्त्यात्पूर्वमिति, स्वरेण भाव्यमत अङ्गा वङ्गा इत्युदाहर्तव्यमिति वदन्ति ॥—**हयादीनाम्** ॥ हयादीनामसंयोगपूर्वो यो लशब्दस्तदन्तानामादिरुदात्तः । अन्त्यात्पूर्व वा । केचित्तु अत्र जनपदानामित्यनुवर्तयन्ति । पञ्चाला कोशला इत्युदाहृत्य पललमिति प्रत्युदाहरन्ति च ॥—**इग**—॥ अत्रापि जनपदानामित्यनुवर्त्य कुरवश्चेदय इत्युदाहृत्य कृषिरिति प्रत्युदाहृतम् । 'अक्षैर्मा दीव्यः कृषिमित् कृषस्व' इत्यत्र कृषिशब्दस्यान्तोदात्तत्वात् ॥ इति द्वितीयः पाद· ॥

**कपोल** इति । 'लघावन्ते' इति मध्योदात्तत्वम् ॥—**रसना वदनमिति** । 'स्वाङ्गशिटाम्' इत्याद्युदात्तत्वम् ॥—**मादी** ॥–**मलयः मकर** इति । अनयोर्मकरवरूढेति यान्तस्यान्त्यात्पूर्वमिति विशिष्यस्वरविधानान्महेन्द्र इत्युदाहर्तव्यम् ॥—**शादीनां शा**–॥ शकारादीना शाकवाचिना त्र्यचा द्वितीयमुदात्तं स्यात् । केचित्तु गादीनामिति पठित्वा सर्षपा इत्युदाहरन्ति ॥—**पान्तानाम्**–॥ पशब्दान्ताना गुर्वादीनां त्र्यचा द्वितीयमुदात्त स्यात् । अनूपे अनोरप्रधानकनीयसीत्यनेनोदात्तत्वं नीपे नेरंनिधाने इत्यनेनेत्याहुः ॥—**युत**–॥ युत अनि अणि एतदन्ताना त्र्यचां द्वितीयमुदात्त स्यात् ॥—**इत्यादी**ति ॥ आदिशब्देन पारावत वितस्ता इक्षु आर्जि द्राक्षा कला उमा काष्ठा पेष्ठा काशीनानामिति वक्तव्ये नुडभाव आर्षः ॥—**छन्दसि**–॥ छन्दसि मकारादीनामन्येषा चादिर्द्वितीयं वोदात्तम् । काश्यपः । कर्दमा कुलटा उदक गान्धारिः ॥—**सुगन्धि**–॥—**आदिरिति** ॥ सुगन्धितेजनशब्दस्य ॥—**नपः फलान्तानाम्**–॥ नप् नपुंसकम् । नपः किम् । दासीफलो वृक्षः ॥—**यान्तस्य** ॥ यशब्दान्तस्यान्त्यात्पूर्वमुदात्त स्यात् ॥—**थान्तस्य** ॥ केचित्तु, आन्तस्य च नालघुनी इति पठित्वा आकारान्तस्य नाशब्दस्य च लघुनी अन्त्यात्पूर्वे उदात्ते स्त इति व्याख्याय नाना दिवा मुधा इत्युदाजह्रुः ॥—**शिशुमारो**–॥ शिशुमार इति पाठान्तरम् ॥—**उष्ट्रार**–॥ उष्टार इति पाठान्तरम् ॥—**सांकाश्य**–॥ सांकाश्यकांपिल्यशब्दौ 'वुञ्छण्–' इति ण्यान्तौ । दार्वाघाटशब्दो 'दारावाहनोणन्तस्य च टः संज्ञायाम्' इत्यण्प्रत्ययान्तः ॥—**ईषान्तस्य**–॥ ईषान्तस्य

काश्मीर्याः । ⌛ उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् ॥ ६७ ॥ एषामादिरुदात्तः स्यात् । ⌛ महिष्यषाढयोर्जायेष्टकाख्या चेत् ॥६८॥ आदिरुदात्तः । महिषी जाया । अषाढा उपदधाति ॥ ॥ इति फिट्सूत्रेषु तृतीयः पादः ॥

---

## चतुर्थः पादः ।

⌛ शकटिशकट्योरक्षरमक्षरं पर्यायेण ॥ ६९ ॥ उदात्तम् । शकटिः । शकटी । ⌛ गोष्ठजस्य ब्राह्मणनामधेयस्य ॥७०॥ अक्षरमक्षरं पर्यायेणोदात्तम् । गोष्ठजो ब्राह्मणः । अन्यत्र गोष्ठजः पशुः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । ⌛ पारावतस्योपोत्तमवर्जम् ॥७१॥ शेषं क्रमेणोदात्तम् । पारावतः । ⌛ धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम् ॥ ७२ ॥ एषां चतुर्णां धूप्रभृतींश्चतुरो वर्जयित्वा शिष्टानि क्रमेणोदात्तानि । धूम्रजानुः । मुञ्जकेशः । कालवालः । स्थालीपाकः । ⌛ कपिकेशहरिकेशयोश्छन्दसि ॥ ७३ ॥ कपिकेशः । हरिकेशः । ⌛ न्यङ्स्वरौ स्वरितौ ॥७४॥ स्पष्टम् । न्यङ्ङुत्तानः । व्यचक्षयत्स्वः । ⌛ न्यर्बुदव्यल्कशयोरादिः ॥७५॥ स्वरितः स्यात् । ⌛ तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः ॥ ७६ ॥ स्वरितः स्यात् । तिलानां भवनं क्षेत्रं तिल्यम् । यतो नाव इति प्राप्ते । ⌛ बिल्वभक्ष्यवीर्याणि छन्दसि ॥७७॥ अन्तस्वरितानि । ततो बिल्व उदतिष्ठत् । ⌛ त्वत्त्वसमसिमेत्यनुच्चानि ॥ ७८ ॥ स्तरीरुत्वत् । उतत्वः पश्यन् । नभन्तामन्यके समे । सिमस्मै । ⌛ सिमस्याथर्वणेऽन्त उदात्तः ॥ ७९ ॥ अथर्वण इति प्रायिकम् । तत्र दृष्टस्येत्येवंपरं वा । तेन वासस्तनुते सिमस्मै इत्यृग्वेदेऽपि भवत्येव । ⌛ निपाता आद्युदात्ताः ॥ ८० ॥ स्वाहा । ⌛ उपसर्गाश्चाभिवर्जम् ॥८१॥ ⌛ एवादीनामन्तः ॥८२॥ एवमादीनामिति पाठान्तरम् । एव । एवम् । नूनम् । सह । ते मित्र सूरिभिः सह । षष्ठस्य तृतीये सहस्य स इति प्रकरणे सहशब्द आद्युदात्त इति प्रामाः । तच्चिन्त्यम् । ⌛ वाचादीनामुभावुदात्तौ ॥ ८३ ॥ उभौग्रहणमनुदात्तं पदमेकवर्जमित्यस्य बाधाय । ⌛ चादयोऽनुदात्ताः ॥ ८४ ॥ स्पष्टम् । ⌛ यथेति पादान्ते ॥ ८५ ॥ तन्नेमिमृभवो यथा । पादान्ते किम् । यथा नो अदितिः करत् । ⌛ प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः ॥८६॥ पटुपटुः । ⌛ शेषं सर्वमनुदात्तम् ॥८७॥ शेषं नित्यादिद्विरुक्तस्य परमित्यर्थः । प्रप्रायम् । दिवेदिवे ॥ ॥ इति शान्तनवाचार्यप्रणीतेषु फिट्सूत्रेषु तुरीयः पादः ॥

---

## अथ प्रत्ययस्वराः ।

आद्युदात्तश्च ।३।१।३। प्रत्यय आद्युदात्तः स्यात् । अग्निः । कर्तव्यम् । ⌛ अनुदात्तौ सुप्पितौ ।३।१।४। पूर्वस्यापवादः । यज्ञस्य । न यो युच्छति । शसिपोरनुदात्तत्वे स्वरितप्रचयौ । ⌛ चितः ।६।१।१६३। अन्त उदात्तः स्यात् ॥ * चितः सप्रकृतेर्बह्वकजर्थम् । चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थः ।

---

हलादेरादिरुदात्तो वा स्यात् ॥—**उशीर**–॥ अत्र श्यामाकग्रहण चिन्त्यम् । 'धान्यानां च वृद्धक्षान्तानाम्' इत्यनेनैव सिद्धत्वात् । इदमेव ज्ञापयितुं मूले धान्यानामित्यत्र श्यामाक इत्युदाहृतम् । देवरग्रहणमपि चिन्त्यम् । 'लघावन्ते–' इत्यनेनैव सिद्धत्वात् हृदयग्रहणं 'स्वाङ्गानामकुर्वादीनाम्' इति द्वितीयस्योदात्तत्वं बाधितुमन्येषां 'लघावन्ते–' इति प्राप्ते वचनम् ॥—**महिष्य**–॥ एतयोरादिरुदात्तः स्यात् । यथासंख्य जायाख्यायामिष्टकाख्यायां च ॥ इति तृतीयः पादः ॥

**त्वत्त्व**–॥ एतानि सर्वानुदात्तानि ॥—**सिमस्य**–॥ सिमशब्दस्याथर्वणे वेदे उदात्तः ॥—**उपसर्गाश्चाभि**–॥ अभिशब्दं वर्जयित्वा उपसर्गा आद्युदात्ताः स्युः ॥—**यथेति** ॥ यथाशब्दः पादान्तेऽनुदात्तः स्यात् ॥—**प्रकारादि**–॥ 'प्रकारे गुणवचनस्य' इत्यादिद्वित्वे पदस्यान्तोदात्तः स्यात् ॥—**पटुपटुरिति** । ननु 'कर्मधारयवदुत्तरेषु' इति कर्मधारयवद्भावादेव 'समासस्य' इत्यन्तोदात्तत्वे सिद्धे व्यर्थमिदमिति वाच्यम् । तस्य पाणिनीयात्पूर्वप्रवृत्तत्वेनादोषात् ॥ शेषं प्रकारादिद्वित्वादन्यस्मिन्द्वित्वे परं सर्वमनुदात्तं स्यात् ॥ इति चतुर्थः पादः ॥

**अग्निरिति** । 'अङ्गेर्नलोपश्च' इति निप्रत्ययः ॥—**कर्तव्यमिति** । तव्यप्रत्ययः तव्यतस्तु तित्त्वात्स्वरितो वक्ष्यते । न च तव्यस्याप्याद्युदात्तत्वे 'उदात्तादनुदात्तस्य–' इति स्वरितो भवत्येवेति चेत्सत्यम् । किं त्वयमसिद्धः तित्स्वरस्तु सिद्ध इति प्रवृत्त्यप्रवृत्तिभ्यां महान् विशेषः । तव्यतस्तित्त्वमेव शेषनिघातपरिभाषाया यथोद्देशप्रवृत्तौ ज्ञापकमिति ध्येयम् ॥—**युच्छतीति** ॥ युच्छ प्रमादे । 'धातोः' इत्यन्तोदात्तः । ततः परः शप् 'उदात्तादनुदात्तस्य' इति स्वरितः । 'स्वरितात्संहितायामनुदात्तानां' इति तिपः प्रचयः ॥—**चितः** ॥—**सप्रकृतेरिति** ॥ नन्विदं कथं लभ्यमिति चेच्छृणु ।

नभन्तामन्यके समे । यके सरस्वतीमनु । तकत्सुते । **तद्धितस्य** ।६।१।१६४। चितस्तद्धितस्यान्त उदात्तः । पूर्वेण सिद्धे ञित्स्वरबाधनार्थमिदम् । कौञ्जायनाः । **कितः** ।६।१।१६५। कितस्तद्धितस्यान्त उदात्तः । यदाग्नेयः । **तिसृभ्यो जसः** ।६।१।१६६। अन्त उदात्तः । तिस्रो द्यावः सवितुः । **सावेकाचस्तृतीयादिर्विभक्तिः** ।६।१।१६८। साविति सप्तमीबहुवचनम् । तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता । वाचा विरूपः । सौ किम् । राजेत्यादौ एकाचोऽपि राजशब्दात्परस्य मा भूत् । राज्ञो नु ते । एकाचः किम् । विदधते राजनि त्वे । तृतीयादिः किम् । न ददर्श वाचम् । **अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे** ।६।१।१६९। नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता वा स्यात् । परमवाचा । **अञ्चेश्छन्दस्यसर्वनामस्थानम्** ।६।१।१७०। अञ्चेः परा विभक्तिरुदात्ता । इन्द्रो दधीचः । चाविति पूर्वपदान्तोदात्तत्वं प्राप्तम् । तृतीयादिरित्यनुवर्तमाने असर्वनामस्थानग्रहणं शस्परिग्रहार्थम् । प्रतीचो बाहून् । **ऊडिदंपदाद्यप्पुम्रैद्युभ्यः** ।६।१।१७१। एभ्योऽसर्वनामस्थानविभक्तिरुदात्ता । प्रष्ठौहः । प्रष्ठौहा ॥ * **ऊठ्युपधाग्रहणं कर्तव्यम्** । इह मा भूत् । अक्षद्युवा । अक्षद्युवे । इदम् । एभिर्नृभिर्नृतमः । अन्वादेशे न । अन्तोदात्तादित्यनुवृत्तेः । न च तत्रान्तोदात्तताप्यस्तीति वाच्यम् । 'इदमोन्वादेशेऽशनुदात्तस्तृतीयादौ' इति सूत्रेणानुदात्तस्य अशो विधानात् । प्र ते बभ्रू । माभ्यां गा अनु । पद्भ्योमासहृन्निश् इति षट् पदादयः । पद्भ्यां भूमिः । दद्भिर्न जिह्वा । अहरहर्जायते

---

चित इत्यवयवावेषा षष्ठी न कार्यिणः । चितोऽवयवस्तस्य सबन्धी यः समुदायः स कार्यी अथवा चिदस्यास्ति स चितः । अर्शआदेराकृतिगणत्वादच् प्रत्ययः । षष्ठ्यर्थे प्रथमा तेन चिद्वतः समुदायस्येत्यर्थः । अत्र च लिङ्गमकचश्चित्करणमन्यथा तस्यैकाच्त्वादनर्थक तत्स्यात् ॥—**अन्यके** इति । 'अव्ययसर्वनाम्नाम्–' इत्यकच् ततः परा टिरुदात्ता । एवं यके तकदित्यत्रापि यच्छब्दादकच् । बहुच उदाहरणं तु बहुपटव इत्यादि ज्ञेयम् ॥—**ञित्स्वरबाधनार्थमिति** ॥ च्फञश्चकारो 'व्रातच्फञोरस्त्रियाम्' इति विशेषणे चरितार्थः । ञकारो वृद्धौ । तत्रासत्यस्मिन् परत्वात् ञित्स्वरः स्यात् इति भावः ॥—**कौञ्जायना** इति ॥ कुञ्जस्यापत्यानि बहूनि । 'गोत्रे कुञ्जादिभ्यश्च्फञ्' 'व्रातच्फञोरस्त्रियाम्' इति ञ्यः । 'ञ्यादयस्तद्राजाः' । तद्राजस्य बहुषु लुक् ॥—**आग्नेय** इति ॥ अग्नेर्ढक् ॥—**तिसृ–**। अर्थगत बहुत्वं शब्द आरोप्य बहुवचननिर्देश. । तिसृभ्यः परस्य जसोऽन्त उदात्तः स्यात् ॥—**तिस्र** इति । अन्तोदात्तत्रिशब्दस्य स्थाने तिस्रादेशः स्थानिवद्भावादन्तोदात्तः । 'अनुदात्तौ सुप्पितौ' इति जसनुदात्तः । अत्र 'अचि र ऋत' इति रेफादेशे कृते 'उदात्तस्वरितयोर्यणः' इति जसः स्वरितत्व प्राप्तमनेन बाध्यते ॥—**सप्तमीबहुवचनमिति** । न प्रथमैकवचनम् व्याख्यानात् ॥—**राज्ञे**ति । सावित्येतस्मिन्नसति एकाचः परा तृतीयादिर्विभक्तिरुदात्ता भवतीत्यर्थो भवति । भवति चायमल्लोपे कृते एकाच् ॥—**राज** इति । राजशब्दः आद्युदात्तः 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिनन्तत्वात् ॥—**अन्तोदात्ता–**। एकाच इति वर्तते तृतीयादिविभक्तिरिति च नित्यशब्दः स्वर्यते तेन नित्याधिकारगतिर्भवतीत्याहुः ॥—**नित्याधिकारे**त्यादि । अनित्यसमासे किम् । अग्निचित् । 'अग्नौ च' इति क्विप्प्रत्ययः । उपपदसमासः । 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः । अधिकारग्रहण किम् । विग्रहाभावमात्रेण यो नित्यसमासस्तत्र पर्युदासो माभूत् । अवाचा ब्राह्मणेन । 'बहुव्रीहौ नञ्सुभ्याम्' इत्यन्तोदात्तत्वम् । अत्र विभक्तेर्वैकल्पिक उदात्तो भवत्येव । अन्तोदात्तात्किम् । अवाचा । नञ्समासोऽयं न तु बहुव्रीहिः । तेन 'नञ्सुभ्याम्' इत्यन्तोदात्तत्व न भवति किं त्वव्ययपूर्वपदप्रकृतिस्वर एव भवतीत्यर्थः । उत्तरपदग्रहण तु एकाच्त्वेनोत्तरपदं विशेषयितुम् । अन्यथा समासविशेषण स्यात् । तथा च शुनः ऊर्क्चश्च श्वोर्क इत्यादावेवायं विधिः स्यात् । एकाच् किम् । राजदृषदा षष्ठीसमासात् टाप् ॥—**दधीच** इति । दध्यञ्चतीति 'ऋत्विग्–'आदिना क्विन् । 'अनिदिताम्–' इति नलोपः । 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घत्वम् । अत्र 'चौ' इति पूर्वपदान्तोदात्तत्व प्राप्तम् ॥—**शस्परिग्रहार्थमिति** । शसादिग्रहण तु न कृत नपुसके शसि मा भूत् सुटि यथा स्यादिति ॥—**ऊडिदं–**। अत्रैकाच् इति वर्तते अन्तोदात्तादिति च । एकाजन्तोदात्तेभ्यः परा सर्वनामस्थानविभक्तिरुदात्ता स्यात् ॥—**प्रष्ठौह** इति । 'छन्दसि सहः' । 'वहश्च' इति ण्विः । 'वाह ऊठ्' । उपपदसमासे प्रष्ठवाहूशब्दो 'गतिकारकोपपदात्कृत्' इत्यन्तोदात्तः । अत्र प्रष्ठौहूशब्दस्यानेकाच्त्वेपि ऊठ्शब्दस्यैकाच्त्वमेव ॥—**ऊठ्युपधाग्रहणमिति** । उपधाभूत ऊठ् गृह्यते न त्वन्त्य इत्यर्थः । पञ्चमीनिर्देशात्परस्यैव ग्रहणे प्राप्ते वचनम् । तेनाक्षद्यूरित्यादौ विभक्तेराद्युदात्तत्वं न । अत्र हि अक्षैर्दीव्यतीति क्विप् । अन्तरङ्गत्वादूठ् यण् उपपदसमासत्वात् कृत्स्वरेणान्तोदात्तोऽयम् ॥—**अन्वादेशेने**ति । अत एव 'सावेकाचः' इत्यपि स्वरो न । यदि स्यात्तर्हीहान्तोदात्ताधिकारो व्यर्थः स्यात् ॥—**प्र ते बभ्रू इति** । मिश्रा ऋक् । अन्वादेशप्रदर्शनार्थं माभ्यामित्यत्रोक्ता ॥—**माभ्यामिति** । अत्र पूर्वार्द्धर्चे बभ्रूशब्देनोक्तयोरिहेदमा परामर्शेप्यन्वादेशोऽस्त्येव । अन्वादेशश्च कथितानुकथितमात्रं न त्विदमा कथितस्येदमैवानुकथनमिति भाष्योक्तेः ॥—**षट् पदादय** इति । न तु ततः परे

मासिमासि । मनश्चिन्मे हृद आ । अप् । अपां फेनेन । पुम् । अभ्रातेव पुंसः । रै । राया वयम् । रायो धर्ता विवस्वतः । दिव् । उपत्वाग्ने दिवेदिवे । **अष्टनो दीर्घात्** ।६।१।१७२। शसादिर्विभक्तिरुदात्ता । अष्टाभिर्दशभिः । **शतुरनुमो नद्यजादी** ।६।१।१७३। अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात् । अच्छा रवं प्रथमा जानती । कृण्वते । अन्तोदात्तात्किम् । दधती । अभ्यस्तानामादिरित्याद्युदात्तः । अनुमः किम् । तुदन्ती । एकादेशोऽत्र उदात्तः । अदुपदेशात्परत्वाच्छतुर्लसार्वधातुक इति निघातः । **उदात्तयणो हल्पूर्वात्** ।६।१।१७४। उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात् । चोदयित्री सूनृतानाम् । एषा नेत्री । ऋतं देवाय कृण्वते सवित्रे । **नोङ्धात्वोः** ।६।१।१७५। अनयोर्यणः परे शसादय उदात्ता न स्युः । ब्रह्मबन्ध्वा । सेत्पृश्निः सुभ्वे । **ह्रस्वनुड्भ्यां मतुप्** ।६।१।१७६। ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः । यो अब्दिमाँउदनिमाँइयर्ति । नुटः । अक्षण्वन्तः कर्णवन्तः सखायः । अन्तोदात्तात्किम् । मात्वा विदद्दिषुमान् । स्वरविधौ व्यञ्जनमविद्यमानवदित्येतदत्र न । मरुत्वानिन्द्र । नियुत्वान्वा यवागहि ॥ * रेशब्दाच्च । रेवाँइद्रेवतः । **नामन्यतरस्याम्** ।६।१।१७७। मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नामुदात्तो वा । चेतन्ती सुमतीनाम् । **ङ्याश्छन्दसि बहुलम्** ।६।१।१७८। ङ्याः परो नामुदात्तो वा । देवसेनानामभिभञ्जती-

---

एकाच इत्यनुवृत्तेः ॥—**अष्टनो**—॥ दीर्घान्तादष्टनः परा सर्वनामस्थानविभक्तिरुदात्ता । 'झल्युपोत्तमम्' इत्यस्यापवादः । अष्टन्शब्दो घृतादित्वादन्तोदात्तः । तेन उत्तरार्थमनुवर्तमानस्यान्तोदात्तादित्यस्येहापि नान्वयः । दीर्घात्किम् । अष्टभिः । इह 'झल्युपोत्तमम्' इति स्वरः । ननु चात्रापि 'अष्टन आ विभक्तौ' इत्यनेन भवितव्यं तद्विधौ विकल्पस्याभावादिति चेत्सत्यम् । इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति । नित्ये त्वात्वे व्यावर्त्याभावाद्दीर्घग्रहणमनर्थकं स्यात् । कृतात्वस्य षट्संज्ञां च ज्ञापयति । अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यते इति किं दीर्घग्रहणेन ॥—**जानती**ति । 'ज्ञाजनोर्जा' इति जादेशः । 'श्नाभ्यस्तयोरातः' इति श्नाकारलोपः । अत्र प्रत्ययस्वरेण शत्रन्तोदात्तम् ॥—**कृण्वत** इति । 'धिन्विकृण्व्योर च' ॥—**तुदन्ती**ति । तुदादित्वाच्छः । 'आच्छीनद्योः' इति नुम् ॥ प्रत्युदाहरणे व्यङ्गविकलतां परिहरति—**एकादेशोऽत्रोदात्त** इति । तुदन्तीत्यत्र शे कृते तस्मात्परस्य शतुरदुपदेशात्परत्वात्तास्यनुदात्तेति निघाते 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम् । अस्मिन्कर्तव्ये तस्यासिद्धत्व नास्ति अनुम इति प्रतिषेधाज्ज्ञापकात् । न ह्येकादेशस्वरेण विना शत्रन्तं सनुम्कमन्तोदात्तं भवति ॥—**उदात्तयणो**—॥ 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति प्राप्ते वचनम् । चोदयित्री नेत्री सवित्रे इति तृजन्ता एते 'चितः' इत्यन्तोदात्ताः ॥—**हल्पूर्वा**दिति किम् । बहुतितवा ब्राह्मण्या । स्त्रीलिङ्गोपादानं नाभावनिवृत्त्यर्थम् । 'तनोतेर्डउः सन्वच्च' इति उः । 'चालनी तितउः पुमान्' ॥ 'बहोर्नञ्वदुत्तरपदभूम्नि' इति बहुव्रीहिरन्तोदात्तः । तत्र 'उदात्तस्वरितयोः' इति विभक्तेः स्वरितत्वम् । अस्मिन्सूत्रे नकारग्रहणं च कर्तव्यम् । उदात्तस्थाने यो नकारस्ततोपि परस्या नद्या उदात्तत्वं वक्तव्यमित्यर्थः । तेन वाचां पतिः वाक्पत्नीति सिद्धम् । अत्र हि 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरस्य 'न भूवाक्चिद्दिधिषु' इति प्रतिषेधात्समासान्तोदात्तत्वे 'विभाषा सपूर्वस्य' इति नकारे नान्तत्वान्ङीप् अनेनोदात्तः ॥—**नोङ्**—॥—**शसादय** इति । यद्यपि पूर्वसूत्रे नद्यजादीत्यनुवर्तते तथापि ऊङ्धात्वोर्यणः परा नदी न सभवतीति नानुवर्तिता ॥—**ब्रह्मबन्ध्वे**ति । ऊङ् प्रत्ययस्वरेणोदात्तः । तेन सह य एकादेशः सोप्युदात्तः । तस्मात्परस्योदात्तत्वे प्रतिषिद्धे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति विभक्तिः स्वरिता ॥—**सुभ्वे** इति । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य 'ओः सुपि' इति यण् ॥—**अब्दिमा**निति । आपो दीयन्तेऽस्मिन्निति 'कर्मण्यधिकरणे च' इति किः । उदनिशब्दोऽव्युत्पन्नः । अस्य घृतादित्वादन्तोदात्तत्वं बोध्यम् । अन्यथा युतान्यण्यन्तानामिति द्वितीयस्योदात्तत्वं प्रसज्येत । 'मतुवसोरुः सम्बुद्धौ छन्दसि' इति रुः 'आतोटि नित्यम्' इत्यनुनासिकः ॥—**अक्षण्वन्त** इति । अक्षिशब्दान्मतुप् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति 'छन्दस्यपि दृश्यते' इत्यनङ् । 'आनो नुट्' इत्यस्यासिद्धत्वात्पूर्वं नलोपः । ततो भूतपूर्वगत्या मतुपो नुट् । 'मादुपधायाः' इति वत्वम् ॥—**इषुरि**ति । 'धान्ये नित्' इत्यधिकारे 'इषेः किच्च' इति उप्रत्ययान्त आद्युदात्त इषुशब्दः तस्मात्परो मतुबनुदात्त एव । ननु मरुतोऽस्य सन्तीति मरुत्वान् अत्र मतुबुदात्तत्वं प्राप्नोति 'मृग्रोरुतिः' इत्युतिप्रत्यये प्रत्ययस्वरेण मरुच्छब्दस्यान्तोदात्तत्वात् । न च तकारेण व्यवधानं स्वरविधौ व्यञ्जनस्याविद्यमानत्वात् अत आह—**स्वरविधावि**ति ॥—**नेष्यत** इति । समासस्येति सूत्रे मरुत्वानित्यत्र 'ह्रस्वनुड्भ्यां मतुप्' इति स्वरः प्राप्नोतीति दोषमुद्भाव्य हल्स्वरप्राप्ताविति भाष्योक्तेरिति भावः ॥—**रेवा**निति । रयिरस्यास्तीति मतुप् 'रयेर्मतौ बहुलम्' इति संप्रसारणं पूर्वरूपत्वम् । 'आद्गुणः' ततो ह्रस्वाभावाद्वचनम् ॥—**नामन्य**—॥ ह्रस्वग्रहणमनुवर्तते मतुब्ग्रहणं च । तद्धि सप्तम्या विपरिणम्यते तेन ह्रस्वो विशेष्यते तदाह—**मतुपि यो ह्रस्व** इति ॥—**सुमतीना**मिति । सुमतिशब्दो बहुव्रीहिः । 'नञ्सुभ्याम्—'इत्यन्तोदात्तः । मतुपा ह्रस्वविशेषणं किम् ।

नाम्। वेत्युक्तेर्नेह। जयन्तीनां मरुतो यन्तु। **षट्त्रिचतुर्भ्यो हलादिः। ६।१।१७९।** एभ्यो हलादिर्विभक्तिरुदात्ता। आपञ्चिर्हूयमानः। त्रिभिष्ट्वं देव। **न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः। ६।१।१८२।** एभ्यः प्रागुक्तं न। गवां शता। गोभ्यो गातुम्। शुनश्चिच्छेपम्। सौ प्रथमैकवचने अवर्णान्तात्। तेभ्यो द्युम्नम्। तेषां पाहि श्रुधी हवम्। **दिवो झल्। ६।१।१८३।** दिवः परा झलादिर्विभक्तिर्नोदात्ता। द्युभिरक्तुभिः। झलिति किम्। उप त्वाग्ने दिवेदिवे। **नृ चान्यतरस्याम्। ६।१।१८४।** नुः परा झलादिर्विभक्तिर्वोदात्ता। नृभिर्येमानः। **तित्स्वरितम्। ६।१।१८५।** निगदव्याख्यातम्। क्व नूनम्। **तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः। ६।१।१८६।** अस्मात्परं लसार्वधातुकमनुदात्तं स्यात्। तासि। कर्ता। कर्तारौ। कर्तारः। प्रत्ययस्वरापवादोऽयम्। अनुदात्तेत्। य आस्ते। ङितः। अभिचष्टे अनृतेभिः। अदुपदेशात्। पुरुभुजा चनस्यतम्। चित्स्वरोऽप्यनेन बाध्यते। वर्धमानं स्वे दमे। तास्यादिभ्यः किम्। अभि वृधे गृणीतः। उपदेशग्रहणान्नेह।

भूतपूर्वेऽपि ह्रस्वे यथा स्वरः स्यात् अग्नीनामित्यादौ। अन्यथा परत्वान्नित्यत्वाच्च दीर्घत्वे कृते ह्रस्वाभावान्न स्यात् तिसृणामित्यत्र सांप्रतिके ह्रस्वे स्यात्। सांप्रतिकाभावे हि भूतपूर्वगतिर्भवति न तु सत्यपि तस्मिन्। नन्वेवं तिसृणामित्यत्र न स्यात् मतुपि तिसृभावस्यैवाभावात्। इष्टमेवैतत्संगृहीतम्। अत्र हि 'षट्त्रिचतुर्भ्यो हलादिः' इति नित्यमेव विभक्तेरुदात्तत्वमिष्यते ॥—**षट्त्रि**—॥ अन्तोदात्तादित्येतन्निवृत्तम्। यद्येतदनुवर्तेत पञ्चानां नवानां चतुर्णामित्यत्र न स्यात्। 'त्रः संख्यायाः' इत्याद्युदात्तत्वात्क तर्हि स्यात् सप्तानामष्टानाम्। सप्ताष्टशब्दौ घृतादित्वादन्तोदात्तौ। हलादिः किम्। चतस्रः पश्य। यथैतदिह हलादिग्रहणस्य व्यावर्त्यं तथा 'चतुर शसि' इत्यत्रैवावोचाम ॥—**न गो**—॥ साविति यदि सप्तमीबहुवचनग्रहणं स्यात् तेभ्यः केभ्यः इत्यत्र न स्यात्। तत्किंशब्दयोः सप्तमीबहुवचने परतः त्यदाद्यत्वे कृते 'बहुवचने झल्येत्' इत्येत्वविधानात् तेषु केषु इत्यत्रावर्णान्तत्वाभावात्। ताभिर्याभिरित्यादावेव स्यात् तासु यास्वित्यत्रावर्णान्तत्वात्तस्मात्प्रथमैकवचनमित्याह—**सौ प्रथमैकवचन** इति। अनन्तरप्रतिषेधस्यासंभवात् पाष्ठिकस्वरस्य प्रतिषेधो विज्ञायते इत्याह—**प्रागुक्तं नेति** ॥ एव च वीरवत्तममित्यत्र 'ह्रस्वनुड्भ्यां मतुप्' इति न भवति। 'स्फायितञ्चि—'इत्यादिना रकि अन्तोदात्तो वीरशब्दः ॥—**गोभ्य** इति। 'सावेकाचः' इति प्राप्तम् ॥—**शुनश्चिच्छेपमिति**। अत्र चिदिति पदं संहितापाठे बाहुलकात् शुनःशेपशब्दस्य मध्ये प्रक्षिप्यते पदकाले तु शुनः शेपं चिदिति पठ्यते 'शेपपुच्छलाङ्गूलेषु शुनः' इत्यलुक् वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः। श्वन्शब्दे तेभ्यः तेषामित्यत्र च 'सावेकाचः' इति प्राप्तं प्रतिषिध्यते। राडिति क्विबन्तः। राजा ॥—**अङ्किति**। अञ्चतिः क्विबन्तः। तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्। यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथा स्यात्। प्राञ्चा। प्राङ्भ्याम्। 'नाञ्चेः पूजायाम्' इति प्रतिषिध्यते नलोपः। 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' इति प्राप्तं निषिध्यते। गतौ तु विभक्त्युदात्तः स्यादेव। प्राचा प्राचे। क्रुडिति क्विबन्तः। क्रुञ्चा। क्रुञ्च कौटिल्याल्पीभावयोः। 'ऋत्विक्—' इत्यादिना क्विन्। तत्रैव सूत्रे क्रुञ्चेति निपातनान्नलोपाभावः। कृत् करोतिः कृन्ततिर्वा क्विबन्तः। कृता कृते ॥—**दिवो** ॥—**झलादिरिति**। नन्वसति सप्तमीनिर्देशे कथं पुनरत्र तदादिविधिः। केवलझलात्मिकाया विभक्तेरभावादेव तदादिविधिः। ननु तर्हि तदन्तविधिरस्तु का पुनर्झलन्ता विभक्तिः। शसादिः सकारान्ता इति चेत्सत्यम्। 'षट्त्रिचतुर्भ्यो हलादिः' इत्यतः आदिरिति वर्तते दिवः परा विभक्तिर्नोदात्ता भवति कीदृशी या स्याज्झलादिरिति ॥—**द्युभिरिति**। सावेकाच इति वा ऊडिदमिति वा प्राप्तः स्वरः प्रतिषिध्यते ॥—**दिवे दिवे** इति। 'ऊडिदपदात्—'इति विभक्तिरुदात्ता ॥—**तित्स्वरितम्** ॥—**निगदव्याख्यातमिति**। उच्चारणेनैव व्याख्यातमित्यर्थः ॥—**क्वेति**। 'किमोत्' 'तित्स्वरितम्' 'क्वाति' इति किमः क्वादेशः ॥—**तास्यनु**—॥ तास्यादीनां समाहारद्वन्द्वः। उपदेशग्रहणं संभवव्यभिचाराभ्यां ङिदद्भ्यां संबध्यते न तु तास्यनुदात्तेद्भ्याम्। ङिदिति कर्मधारयः। उपदिश्यत इत्युपदेशः। तस्याकारेण ङिता च विशेषणात्तदन्तविधिः। तथा च सूत्रार्थः। तासेरनुदात्तेतो ङिददुपदेशादकारान्तोपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात् न्हिङौ वर्जयित्वा ॥—**कर्तेत्यादि**। लुटः प्रथमपुरुषस्य डारौरसः एकवचने डित्वाट्टिलोपः। इतरत्र 'रि च' इति सलोपः। आस्त इत्यत्रादादित्वाच्छपो लुक् ॥—**ङित** इति। अस्याप्युपदेशविशेषणान्नेह। शृणुते जरितुर्हवम्। अत्र श्नुरतिदेशेन ङित् ॥—**चनस्यतमिति**। चनोऽन्तादात्मन इच्छतमित्यर्थः। क्यच्। लोट् थसस्तं शप् स चानुबन्धस्यानेकान्तत्वाददुपदेशः ॥—**चित्स्वरोपीति** ॥—चित्स्वरस्यावकाशः। चलनः चलनशब्दार्थादकर्मकाद्युच्। अस्यावकाश आस्ते इत्यादौ। वर्द्धमानमित्यत्र लयं निघातश्चित्स्वरं बाधते परत्वादिति भावः ॥—**वर्धमानमिति**। वृधु वृद्धौ। लटः शानच्। शप् 'आने मुक्' इति मुक्। न चात्र मुका व्यवधानम्। यदकारस्यागमो मुक् तदाकारोपदेशात् परं लसार्वधातुकमिति सिद्धो निघातः। स्वावयवेन व्यवधानाभावात्। यद्यकारान्तस्याङ्गस्य भक्तो मुक् तदादुपदेशाल्लसार्वधातुकमात्रापेक्षत्वादन्तरङ्गस्वरं प्रत्य-

हतो वृत्राण्यार्या । लग्रहणं किम् । कतीह पचमानाः । सार्वधातुकं किम् । शिश्ये । अन्विङ्कोः किम् । हुते । यदधीते ॥ * विन्दीन्धिखिदिभ्यो नेति वक्तव्यम् । इन्धे राजा । एतद्धात्वनुदात्तस्य च यत्रेति सूत्रे भाष्ये स्थितम् ।
॥ आदिः सिचोऽन्यतरस्याम् ।६।१।१८७। सिजन्तस्यादिरुदात्तो वा । यासिष्टं वर्तिरश्विनौ । ॥ थलि च सेटीडन्तो वा ।६।१।१९६। सेटि थलन्ते पदे इडुदात्तः अन्तो वा आदिर्वा स्यात् । यदा नैते त्रयस्तदा लितीति प्रत्ययात्पूर्वमुदात्तं स्यात् । लुलविथ । अत्र चत्वारोऽपि पर्यायेणोदात्ताः । ॥ उपोत्तमं रिति ।६।१।२१७। रित्प्रत्ययान्तस्योपोत्तममुदात्तं स्यात् । यदाहवनीये ॥ इति प्रत्ययस्वराः ॥

## समासस्वराः ।

॥ समासस्य ।६।१।२२३। अन्त उदात्तः स्यात् । यज्ञश्रियम् । ॥ बहुव्रीहौ प्रकृत्या पूर्वपदम् ।६।२।१। उदात्तस्वरितयोगि पूर्वपदं प्रकृत्या स्यात् । सत्यश्चित्रश्रवस्तमः । उदात्तेत्यादि किम् । सर्वानुदात्ते पूर्वपदे समासान्तोदात्तत्वमेव यथा स्यात् । समपादः । ॥ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः । ।६।२।२। सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या । तुल्यश्वेतः । कृत्यतुल्याख्या अजात्येति तत्पुरुषः । किरिणा काणः किरिकाणः । पतयन्मन्दयत्सखम् । मन्दयति मादके इन्द्रे सखेति सप्तमीतत्पुरुषः । शस्त्रीश्यामा ॥ * अव्यये

कारान्तविशिष्टाङ्गप्रत्ययापेक्षस्य बहिरङ्गस्य मुकोऽसिद्धत्वात्सिद्धो निघातः ॥—**हत** इति । 'अनुदात्तोपदेश–'इत्यनुनासिकलोपे कृते सत्यकारान्तात्पर लसार्वधातुकं भवति तथाप्युपदेशग्रहणान्न भवति न हि हन्तिरदन्त उपदिश्यते ॥—**कतीह पचमाना** इति । ताच्छील्यवयोवचनशक्तिषु चानश् । क्वचित्तु कतीह निघ्नाना इति दृश्यते तत्र निघ्नशब्दादाचारक्विबन्ताच्छान्दसो मुगभावः । तत्तु तास्यादिभ्यः परत्वाभावाच्चिन्त्यम् ॥—**शिश्ये** इति । 'एरनेकाचः–' इति यणादेशः । 'लिट् च' इत्यार्धधातुकमेतत् ॥—**यदधीत** इति । यच्छब्दप्रयोगो निपातैर्यद्यदिहन्तेति निघातप्रतिषेधार्थः । अत्र प्रत्ययाद्युदात्तत्वमेव । विद विचारणे इन्धी दीप्तौ खिद दैन्ये इति त्रयोऽनुदात्तेतः । तेभ्यः परस्य सार्वधातुकस्यानुदात्तत्वे प्राप्ते आह ॥—**विन्दी**त्यादि । एभ्यः परस्य लसार्वधातुकस्यानुदात्तत्वं नेति वक्तव्यमित्यर्थः ॥—**यासिष्ट**मिति । या प्रापणे । लुङ् थसस्तम् । च्लि लुङि । च्लेः सिच् 'यमरमनमाताम्–' इतीट्सकौ 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । इदमाद्युदात्तत्वाभावे उदाहरणम् । आद्युदात्तत्वे तूदाहरणाऽन्तरं मृग्यम् ॥—**थलि**–॥ 'णमुल्यन्यतरस्याम्' इत्यतोऽन्यतरस्यामित्यनुवर्तमाने वाग्रहणं कार्यिविकल्पार्थम् । अन्यतरस्याग्रहणेन कार्यविकल्पस्य सिद्धत्वात् । तेनेडादयः पर्यायेण कार्यं प्रतिपद्यन्ते । ननु 'तवैचान्तश्च युगपत्' इत्यादौ युगपद्ग्रहणादेवाऽन्यत्र पर्यायः सिद्धः । सत्यम् । आदेरपि प्राप्त्यर्थं वाग्रहणम् । अन्यथा श्रुतयोरिडन्तयोरेव कार्यित्वं विकल्पेत । सेटीति किम् । यथा थलि स्वरः । नन्विड्ग्रहणात्सेडेव थल् ग्रहीष्यत इति चेत्सत्यम् । इड्ग्रहणं तु यदेडागमः क्रियते तदा तस्योदात्तार्थं स्यात् । यथा 'कर्तुः क्यङ् सलोपश्च' इत्यत्र सः । ततश्च यथा लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तविधाने ययिथेत्यादौ चतुर्थाभावेऽपि पर्यायेणोदात्तत्रयं भवति एवमिडभावेऽपि स्यादित्यर्थः ॥—**आहवनीय** इति । बाहुलकादधिकरणेऽनीयर् । प्रीणनार्थात्कर्मणि वा । ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः ॥ इति प्रत्ययस्वराः ॥

**समासस्य** ॥—**यज्ञश्रिय**मिति । षष्ठीतत्पुरुषः । श्रीशब्दस्योदात्तत्वे कृते आन्तरतम्यादियङुदात्तः ॥—**बहुव्रीहौ**–॥ इहोदात्तस्वरितग्रहणमनुवर्तमानं तद्वति वर्तते । पूर्वपदसामानाधिकरण्यात्सूत्रे प्रकृत्येतावदुक्तेऽपि स्वरप्रकरणात्प्रकृतिस्वरेणैव प्रकृतिभावो विज्ञायते । पूर्वपदस्य प्रकृतिभावस्तत्स्थयोरुदात्तस्वरितयोः प्रकृतिभावद्वारेणेत्याशयेनाह—**उदात्तस्वरितयोगी**ति ॥—**चित्रे**ति । श्रूयते इति श्रवः कीर्तिः । चित्रं श्रवो यस्य स चित्रश्रवाः । ततस्तमप् चित्रशब्दः फिट्स्वरेणान्तोदात्तः । ततः परस्य 'उदात्तादनुदात्तस्य' इति स्वरितः । ततः परस्य 'स्वरितात्संहितायामनुदात्तानाम्' इति प्रचयः ॥—**समपाद** इति । त्वत्समसिमेत्यनुच्चानीति सर्वानुदात्तः समशब्दः । पादशब्दो 'वृषादीनां च' इत्याद्युदात्तः । अत्र समासान्तोदात्तत्वमेव ॥—**तुल्यश्वेत** इति । 'नौवयोधर्मविष–' इति यति 'यतोऽनावः' इत्याद्युदात्तस्तुल्यशब्दः । सदृक्श्वेतः । सदृशश्वेत इति 'समानान्ययोश्च' इति क्विन्नन्तः सदृक्शब्दः 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । एवं सदृशशब्दः कञन्तो मध्योदात्तः ॥—**किरिणे**ति । 'कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च' इत्यौणादिक इः स च कित् । 'भुजेः किच्च' इत्यतः किदित्यनुवर्तनात् । तेन किरिगिरिशब्दौ प्रत्ययस्वरेणान्तोदात्तौ ॥—**मन्दयत्सख**मिति । मदि स्तुत्यादिषु । ण्यन्ताल्लटः शत्रादेशः । तस्य 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन शबभावात् 'तास्यनुदात्तेन्ङिददुपदेशात्–' इति निघातो न । अतः प्रत्ययाद्युदात्तत्वमेव । 'णेरनिटि' इति णिलो-

नञ्कुनिपातानाम् ॥ अवज्ञो वा एषः । परिगणनं किम् । स्नात्वाकालकः । मुहूर्तसुखम् । भोज्योष्णम् । **वर्णो वर्णेष्वनेते ।६।२।३।** वर्णवाचिन्युत्तरपदे एतवर्जिते वर्णवाचि पूर्वपदं प्रकृत्या तत्पुरुषे । कृष्णसारङ्गः । लोहितकल्माषः । कृष्णशब्दो नक्प्रत्ययान्तः । लोहितशब्द इतन्नन्तः । वर्णः किम् । परमकृष्णः । वर्णेषु किम् । कृष्णतिलाः । अनेते किम् । कृष्णैतः । **गाधलवणयोः प्रमाणे ।६।२।४।** एतयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् । अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः । गोलवणम् । यावद्गवे दीयते तावदित्यर्थः । अरित्रशब्द इत्रान्तो मध्योदात्तः । प्रमाणमियत्ता परिच्छेदमात्रं न पुनरायाम एव । प्रमाणे किम् । परमगाधम् । **दायाद्यं दायादे ।६।२।५।** तत्पुरुषे प्रकृत्या । धनदायादः । धनशब्दः क्युप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः । दायाद्यं किम् । परमदायादः । **प्रतिबन्धि चिरकृच्छ्रयोः ।६।२।६।** प्रतिबन्धवाचि पूर्वपदं प्रकृत्या एतयोः परतस्तत्पुरुषे । गमनचिरम् । व्याहरणकृच्छ्रम् । गमनं कारणविकलतया चिरकालभावि कृच्छ्रयोगि च प्रतिबन्धि जायते । प्रतिबन्धि किम् । मूत्रकृच्छ्रम् । **पदेऽपदेशे ।६।२।७।** व्याजवाचिनि पदशब्द उत्तरपदे पूर्वपदं प्रकृत्या तत्पुरुषे । मूत्रपदेन प्रस्थितः । उच्चारपदेन । मूत्रशब्दो घञन्तः । उच्चारशब्दो घञन्तस्थाथादिस्वरेणान्तोदात्तः । अपदेशे किम् । विष्णुपदम् । **निवाते वातत्राणे ।६।२।८।** निवातशब्दे परे वातत्राणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या ।

पत्तु न । तं प्रति सार्वधातुकत्वाश्रयणात् । न च वैपरीत्यमापादनीयम् । छन्दसि दृष्टानुविधानात् । इत्थं मन्दयच्छब्दोऽन्तोदात्तः ॥—**शस्त्रीश्यामे**ति । 'उपमानानि सामान्यवचनैः' इति समासः । शस्त्रीशब्दो गौरादिङीषन्तोदात्तः ॥—**अव्यये** । निपातत्वादेव सिद्धे नञ्ग्रहणमकरणिरित्यादौ परस्यापि कृत्स्वरबाधनार्थम् । अकरणिरित्यादौ 'आक्रोशे नञ्यनिः' इत्यनिः । किञ्च तिस्र इत्यत्र 'तिसृभ्यो जसः' इति सति शिष्टोपि विभक्तिस्वरो नञ्स्वरेण बाध्यते । अपि च चत्वारः अनड्वाह इत्यत्र सति शिष्टोप्यामुस्वरो बाध्यते । अव्यथीत्यत्र 'जिदक्षि–' इत्यादिना धातुना समासं निपात्य इनिः क्रियते । तस्यापि स्वरस्य बाधनार्थं कुग्रहणं चादिषु पाठाभावात् ॥—**स्नात्वे**ति । मयूरव्यंसकादिरयम् । नन्वयं तत्रैवान्तोदात्तो निपात्यतामिति चेन्न । सामिकृत स्वयधौतमित्यादिवारणाय परिगणनस्यावश्यकत्वात् । अन्यथा तत्रापि पूर्वपदप्रकृतिस्वरः स्यात् । इष्यते तु समासस्येत्यन्तोदात्तः । सामिकृतमित्यादौ 'सामि' 'स्वय क्तेन' इति समासः ॥—**मुहूर्तसुखमि**ति । 'कालाध्वनोः–' इति द्वितीया । 'अत्यन्तसयोगे च' इति समासः । मुहूर्तशब्दः पृषोदरादिरन्तोदात्तः ॥—**भोज्योष्णमि**ति । 'कृत्यतुल्याख्या.–' इति समासः । भोज्यशब्दो ण्यदन्तः 'तित्स्वरितम्' इति स्वरितान्तः ॥—**वर्णो वर्णे** –॥ अत्र एत इति प्रतिषेधाद्बहुवचननिर्देशाच्च उत्तरपदे स्वरूपग्रहण न तत्साहचर्यात्पूर्वपदेपि स्वरूपग्रहणं न तदाह—**वर्णवाचिनी**त्यादि–॥—**कृष्णशब्दो नक्प्रत्ययान्त** इति । कृषेर्वर्णे इति विहितो यो नक् तदन्त इत्यर्थः । कृष्णशब्दः 'कृष्णस्यामृगाख्या चेत्' इत्यन्तोदात्तो वेदे । भाषायां तु 'वर्णाना तणतिनितान्तानाम्' इत्याद्युदात्तः ॥—**इतन्नन्त** इति । 'रुहे रश्च लो वा' इति इतन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः ॥—**कृष्णतिला** इति । 'वर्णो वर्णेन' इति प्रतिपदोक्तः समास इह गृह्यते तेनैव सिद्धे वर्णग्रहण चिन्त्यप्रयोजनम् ॥—**गाध**–॥—**अरित्रगाधमि**ति । अरित्रं नौकाष्ठं तस्य गाधं स्पृश्यमान तलम् । गाध्यत इति गाधः । गाधृ प्रतिष्ठाया कर्मणि घञ् । अर्धर्चादित्वात् क्लीबत्वम् ॥—**गोलवणमि**ति । षष्ठीसमास. । गोशब्दो 'गमेर्डोः' इति डोप्रत्ययान्तोऽन्तोदात्तः ॥—**इत्रान्त** इति । 'अर्तिलूधूसूखनसहचर इत्रः' इति विहितः ॥—**मध्योदात्त** इति । प्रत्ययस्वरेण ॥—**इयत्तापरिच्छेदमात्रमि**ति । इयत्तायाः परिच्छित्तिरियत्तापरिच्छेदः । क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते न पुनरायाममात्रे रूढ इत्यर्थः ॥—**दायाद्यम्** । दातव्यो दायोंशः । दायमादत्ते दायादः । मूलविभुजादित्वात्कः । दायादस्य भावो दायाद्यम् । दायस्य दानं तत्संबन्धो वा । इह तु लक्षणया आदीयमाने दाय एव दायाद्यशब्दो वर्तते दायादशब्दे परे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं स्यात् ॥—**क्युप्रत्ययान्त** इति । 'कृपॄवृजिमन्दिनिधाञः क्युः' इति विहितः ॥—**परमदायाद** इति । अत्र समासान्तोदात्तत्वमेव ॥—**प्रतिबन्धि**–॥ कार्यसिद्धिं प्रतिबध्नातीति प्रतिबन्धि । आवश्यके णिनिः ॥—**गमनचिरं । व्याहरणकृच्छ्रमि**ति । गमनव्याहरणशब्दौ ल्युडन्तौ । तयोर्लित्स्वरः । अत्र विशेषणसमासः । ननु सामानाधिकरण्ये सति विशेषणसमासो भवति । न चेह तदस्ति गमनशब्दस्य गतिवाचित्वाच्चिरशब्दस्य कालवाचित्वात् । नैष दोषः । चिरकालवाचिनि गमनेऽत्र चिरशब्दो वर्तते गमनमत्र विशेष्यं तद्विशेषणे तु चिरकृच्छ्रे तत्र विशेष्यस्य पूर्वनिपातनार्थं मयूरव्यंसकादित्वमप्येष्टव्यम् । पूर्वपदस्य प्रतिबन्धिवाचित्वमुपपादयति ॥—**गमनमि**त्यादि । कारणवैकल्याद्धि चिरकालभावि गमनं कार्यसिद्धेः प्रतिबन्धि जायते । कृच्छ्रयोगि वा कृच्छ्रं दुःखं तद्योगि वा कार्यसिद्धेः प्रतिबन्धि जायते ॥—**मूत्रकृच्छ्रमि**ति । षष्ठीसमासः ॥—**पदेऽपदेशे**–॥ अपदेशो व्याजः । 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरस्तदाह—**व्याजवाचिनी**ति ॥—**उच्चारपदे**नेति । उच्चारः पौरुषक्रिया ॥—**विष्णुपदमि**ति । षष्ठीसमासः ॥—**निवाते**–॥—**निवातशब्दे परे**

कुटीनिवातम् । कुड्यनिवातम् । कुटीशब्दो गौरादिङीषन्तः । कुड्यशब्दो ड्यगन्तः । यगन्त इत्यन्ये । वातत्राणे किम् । राजनिवाते वसति । निवातशब्दोऽयं रूढः पार्श्वे । **शारदेऽनार्तवे** ।६।२।९। ऋतौ भवमार्तवम् । तदन्यवाचिनि शारदशब्दे परे तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात् । रज्जुशारदमुदकम् । शारदशब्दो नूतनार्थः । तस्यास्वपदविग्रहः । रज्जोः सद्य उद्धृतम् । रज्जुशब्दः सृजेरसुम्चेत्याद्युदात्तो व्युत्पादितः । अनार्तवे किम् । उत्तमशारदम् । **अध्वर्युकषाययोर्जातौ** ।६।२।१०। एतयोः परतो जातिवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम् । कठाध्वर्युः । दौवारिककषायम् । कठशब्दः पचाद्यजन्तः । तस्माद्वैशम्पायनाऽन्तेवासिभ्यश्चेति णिनेः कठचरकाल्लुगिति लुक् । द्वारि नियुक्त इति ठक्यन्तोदात्तो दौवारिकशब्दः । जातौ किम् । परमाध्वर्युः । **सदृशप्रतिरूपयोः सादृश्ये** ।६।२।११। अनयोः पूर्वं प्रकृत्या । पितृसदृशः । सादृश्ये किम् । परमसदृशः । समासार्थोऽत्र पूज्यमानता न सादृश्यम् । **द्विगौ प्रमाणे** ।६।२।१२। द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम् । प्राच्यसप्तसमः । सप्त समाः प्रमाणमस्य । प्रमाणे लो द्विगोर्नित्यमिति मात्रचो लुक् । प्राच्यशब्द आद्युदात्तः । प्राच्यश्चासौ सप्तसमश्च प्राच्यसप्तसमः । द्विगौ किम् । व्रीहिप्रस्थः । प्रमाणे किम् । परमसप्तसमम् । **गन्तव्यपण्यं वाणिजे** ।६।२।१३। वाणिजशब्दे परे तत्पुरुषे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरम् । मद्रवाणिजः । गोवाणिजः । सप्तमीसमासः । मद्रशब्दो रक्प्रत्ययान्तः । गन्तव्येति किम् । परमवाणिजः । **मात्रोपज्ञोपक्रमच्छाये नपुंसके** ।६।२।१४। मात्रादिषु परतो नपुंसकवाचिनि तत्पुरुषे तथा । भिक्षायास्तुल्यप्रमाणं भिक्षामात्रम् । भिक्षाशब्दो गुरोश्च हल इत्यप्रत्ययान्तः । पाणिन्युपज्ञम् । पाणिनिशब्द आद्युदात्तः । नन्दोपक्रमम् । नन्दशब्दः पचाद्यजन्तः ।

**वातत्राणवाचिनी**ति । वातत्राणार्थे निवातशब्दे परे इत्यर्थः । वातस्याभावो निवातमित्यव्ययीभावः । निरुद्धो वातोऽस्मिन्निति बहुव्रीहिर्वा । तत्र कुड्यादयो वर्तमानाः समानाधिकरणा निवातशब्देन समस्यन्ते । कुटी एव निवात कुटीनिवातम् । कुड्य एव निवातं कुड्यनिवातम् ॥—**ड्यगन्त** इति । कवतेर्ड्यक् डकारस्येत्संज्ञा न भवति । गुणप्रतिषेधार्थात्ककारानुबन्धात् ॥—**यगन्त इत्यन्ये** इति । ते तु कवतेर्ड्यन्निति सूत्रमधीयते ॥—**शारदे**–॥—**नूतनार्थ** इति । अव्युत्पन्न इत्यर्थः ॥—**रज्जोः सद्य उद्धृतमि**ति । रज्जुबद्धपात्रभृते रज्जुशब्दः । इदानीमेव कूपादुद्धृत नूतनं जलमित्यर्थः ॥—**सृजेरसुम्चे**ति । 'स्कन्देः सलोपश्च' इत्यतः मलोप इति वर्तते 'भृमृशीङी' इत्यतः उरिति 'धान्ये नित्' इत्यतो निदिति । सृजेरुः स्यात्स च नित् । धातोरसुगागम. सलोपश्चेत्यर्थः । तत्र मृजेरन्त्यादचः परेऽसुमि सलोपयणादेशेऽसुम्सकारस्य जश्त्वे च रज्जुरिति भवति ॥—**आद्युदात्त** इति । प्रत्ययस्य नित्त्वान्नित्स्वरेण ॥—**उत्तमशारदमि**ति । शरदि ऋतौ भवं शारदम् ॥—**अध्व**–॥—**कठाध्वर्युरि**ति । अध्वरं यज्ञ यातीत्यध्वर्युः ऋत्विग्विशेषः । कठेन प्रोक्त छन्दोऽधीते कठः । कठशब्दात् णिनिप्रत्ययः तस्य लुक् । अध्येत्रणस्तु 'प्रोक्ताल्लुक्' इति लुक् विशेषणसमासोऽयम् ॥—**दौवारिककषाय** इति । षष्ठीसमासः ॥—**सदृश**–॥ सादृश्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या एतयोरुत्तरपदयोः ॥—**पितृसदृश** इति । पितृमातृशब्दावुणादितृजन्तौ चित्स्वरेणान्तोदात्तौ । नन्वत्र 'पूर्वसदृशसमोनार्थ–' इति तृतीयासमासे कृते 'तत्पुरुषे तुल्यार्थ–' इत्येव सिद्धम् । न च तुल्यार्थयोगे षष्ठ्या अपि विहितत्वेन षष्ठीसमासार्थमिदमिति वाच्यम् । तत्रानभिधानात्षष्ठीसमासो नेत्यपि सुवचत्वादिति चेन्मैवम् । अलुक्समासानुरोधेन षष्ठीसमासस्वीकारस्यावश्यकत्वात् । तद्यथा । दास्याः सदृशो वृषल्याः सदृश इति । 'षष्ठ्या आक्रोशे' इत्यलुक् । दासीशब्दो दसेष्टो न आचेति दसेष्टः प्रत्ययः नकारस्य चाकारः । प्रत्ययस्वरेण दासशब्द उदात्तः । टित्त्वान्ङीप् । यस्येति लोपः । 'अनुदात्तस्य च यत्र–' इति ङीप उदात्तत्वम् । वृषलशब्दाज्जातिलक्षणो ङीष् । उभयत्रापि 'उदात्तयणो हल्पूर्वात्' इति विभक्तिरुदात्ता । नन्वेवं तृतीयासमासविधायके 'पूर्वसदृश–' इति सूत्रे सदृशग्रहणं मास्तु । सर्वत्र षष्ठीसमासोऽस्तु इति चेन्मैवम् । यत्र षष्ठ्यर्थो नास्ति तदर्थं सदृशग्रहणम् । विद्यया सदृशो विद्यासदृश इति अन्यो देवदत्तादिरत्र प्रतियोगी ॥—**प्राच्यशब्द आद्युदात्त** इति । 'द्युप्रागपागुदक्प्रतीचो यत्' इति यदन्तत्वात् 'यतोऽनावः' इत्याद्युदात्तः ॥—**परमसप्तसममि**ति । सप्ताना समानां समाहारः सप्तसमं समाहारद्विगुः । पात्रादित्वात् स्त्रीत्वाभावः ॥—**गन्तव्यपण्यम्**–॥ वणिगेव वाणिजः । प्रज्ञादित्वादण् ॥—**मद्रवाणिज** इति । मद्रेषु गत्वा व्यवहरतीत्यर्थः ॥—**गोवाणिज** इति । गमेर्डोः । अन्तोदात्तोयम् ॥—**सप्तमीसमास** इति । सप्तमीति योगविभागात् मद्रवाणिजेत्यत्र षष्ठीसमासः ॥—**रक्प्रत्ययान्त** इति । 'स्फायितञ्चि–' इति विहितो रक् तदन्तादित्यर्थः । प्रत्ययस्वरेणान्तोदात्तोऽयम् ॥—**मात्रो**–॥—**तथेति** । पूर्वपदं प्रकृतिस्वरं स्यादित्यर्थः । भिक्षाशब्दोऽप्रत्ययान्तोदात्तः । मात्रशब्दस्तु तुल्यपर्यायो वृत्तिविषये तुल्यप्रमाणे वर्तते भिक्षायास्तुल्यप्रमाणमित्यस्वपदविग्रहः । षष्ठीतत्पुरुषः तदाह—**भिक्षाया** इति ॥—**पाणिन्युपज्ञमि**ति । उपज्ञायत इति उपज्ञः । 'आतश्चोपसर्गे' कर्मण्यङ् पाणिनिशब्द इञन्तत्वादाद्युदात्तः तस्य उपज्ञा इति षष्ठीसमासः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति नपुंसकता ॥—**नन्दोपक्रममि**ति । षष्ठीसमासः । अत्रापि पूर्ववन्नपुंसकता । उपक्रम्यते इति कर्मणि

इषुच्छायम् । इषुशब्द आद्युदात्तो नित्वात् । नपुंसके किम् । कुड्यच्छाया । **सुखप्रिययोर्हिते ।६।२।१५।** एतयोः परयोर्हितवाचिनि तत्पुरुषे तथा । गमनप्रियम् गमनसुखम् । गमनशब्दे लित्स्वरः । हिते किम् । परमसुखम् । **प्रीतौ च ।६।२।१६।** प्रीतौ गम्यायां प्रागुक्तम् । ब्राह्मणसुखं पायसम् । छात्रप्रियोऽनध्यायः । ब्राह्मणच्छात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ । प्रीतौ किम् । राजसुखम् । **स्वं स्वामिनि ।६।२।१७।** स्वामिशब्दे परे स्ववाचि पूर्वपदं तथा । गोस्वामी । स्वं किम् । परमस्वामी । **पत्यावैश्वर्ये ।६।२।१८।** दमूना गृहपतिर्दमे । **न भूवाक्चिद्दिधिषु ।६।२।१९।** पतिशब्दे परे ऐश्वर्यवाचिनि तत्पुरुषे नैतानि प्रकृत्या । भुवः पतिर्भूपतिः । वाक्पतिः । चित्पतिः । दिधिषूपतिः । **वा भुवनम् ।६।२।२०।** उक्तविषये । भुवनपतिः । भूसूधूभ्रस्जिभ्य इति क्युनन्तो भुवनशब्दः । **आशङ्काऽऽबाधनेदीयस्सु सम्भावने ।६।२।२१।** अस्तित्वाध्यवसायः सम्भावनम् । गमनाशङ्कमस्ति । गमनाबाधम् । गमननेदीयः । गमनमाशङ्क्यते आबाध्यते निकटतरमिति वा सम्भाव्यते । सम्भावने किम् । परमनेदीयः । **पूर्वे भूतपूर्वे ।६।२।२२।** आढ्यो भूतपूर्वः आढ्यपूर्वः । पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्तते । भूतपूर्वे किम् । परमपूर्वः । **सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ।६।२।२३।** एषु पूर्वं प्रकृत्या । मद्रसविधम् । गान्धारसनीडम् । काश्मीरसमर्यादम् । मद्रसवेशम् । मद्रसदेशम् । सामीप्ये किम् । सह मर्यादया समर्यादं क्षेत्रम् । चैत्रसमर्यादम् । **विस्पष्टादीनि गुणवचनेषु ।६।२।२४।** विस्पष्टकटुकम् । विस्पष्टशब्दो गतिरनन्तर इत्याद्युदात्तः । विस्पष्टेति किम् । परमलवणम् । गुणेति किम् । विस्पष्टब्राह्मणः ।

---

घञ् । 'नोदात्तोपदेशस्य–' इति वृद्धिप्रतिषेधः ॥—**इषुच्छायमिति** । इषूणां छायेति तत्पुरुषः । 'छाया बाहुल्ये' इति नपुंसकता ।। 'इषेः किच्च' इत्युप्रत्ययान्त इषुः । तत्र निदधिकारादाद्युदात्तस्तदाह—**इषुशब्द** इति ॥—**गमनसुखमिति** । समानाधिकरणसमासो मयूरव्यंसकादिर्वा ॥—**लित्स्वर** इति । गमनशब्दो ल्युडन्तः 'लिति' इति सूत्रेणाद्युदात्तः ॥—**प्रागुक्तमिति** । सुखप्रिययोः परयोस्तत्पुरुषे पूर्वपद प्रकृतिस्वर स्यादित्यर्थः । योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । ननु 'सुखप्रिययोः' इत्येतावत्पूर्वसूत्रं कृत्वा 'हिते च' इति वक्तव्य तत्राद्ये सूत्रे सुखप्रिययोः प्रीत्यव्यभिचारादेव प्रीतौ गम्यमानायां भविष्यतीति चेत्सत्यम् । प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थम् ॥—**ब्राह्मणच्छात्रशब्दाविति** । ब्रह्मणोऽपत्यमित्यण् । 'ब्राह्मो जातौ' इति जातौ टिलोपाभावेऽन्निति प्रकृतिभावः । छात्रशब्दः 'छत्रादिभ्यो णः' इति णप्रत्ययान्तः॥ —**पत्या–**॥ ऐश्वर्यार्थे पतिशब्दे परे पूर्वपदं प्रकृतिस्वर स्यात् तत्पुरुषे । गृहपतिरिति षष्ठीसमासः । 'गेहे कः' इति कप्रत्ययान्तो गृहशब्दः प्रत्ययस्वरेणान्तोदात्तः ॥—**नभू–**॥ भ्वादीनां समाहारद्वन्द्वे नपुंसकत्वं ह्रस्वत्वम् ॥—**एतानीति** । भूवाक्चिद्दिधिषू एतानीत्यर्थः ॥—**न प्रकृत्येति** । पूर्वेण प्राप्तः प्रतिषिध्यते ॥—**भूपतिरित्यादि** । षष्ठीसमासा एते । तत्र भ्वादयस्त्रयः क्विबन्ताः दिधिषूशब्दो 'अन्दूदृम्भूजम्बूकफेलूककर्कन्धूदिधिषू' इत्यूप्रत्ययान्तो निपातितः । सर्वेऽप्यन्तोदात्ताः ॥—**वा भु–**॥—**उक्तविषये** इति । ऐश्वर्यवाचिनि पतिशब्दे परे भुवनशब्दः पूर्वपदप्रकृतिस्वर स्यात् । 'पत्यावैश्वर्ये' इति प्राप्ते विकल्पोयम् ॥—**भुवनपतिरिति** । भुवनशब्दः क्युन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः ॥—**आशङ्काबाध–**॥ आशङ्काबाधेनेदीयस्सूत्तरपदेषु सम्भावनवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वर स्यात् । शकि शङ्कायाम् । बाधृ लोडने । आङ्पूर्वाभ्यां कर्मणि घञ् । अतिशयेनान्तिकं नेदीयः । द्वयोरन्तिकयोर्मध्ये एकस्यातिशयविवक्षायामीयसुनि 'अन्तिकबाढयोः' इति नेदादेशः । गमनाशङ्कादयो विशेषणसमासाः मयूरव्यंसकादयो वा ॥—**अस्तित्वाध्यवसाय** इति । अस्तित्वनिश्चयः ॥—**गमनाशङ्कमिति** । पूर्वपदानि ल्युडन्तानि । तत्र लित्स्वरः ॥—**गमनं शङ्क्यत** इत्यादि । संभाव्यत इत्यस्य प्रत्येकमन्वयः । गमनमाशङ्क्यते इति संभाव्यते । गमनमाबाध्यत इति सभाव्यते । गमन निकटतरमिति वा संभाव्यते ॥—**पूर्वे भूतपूर्वे** ॥ भूतपूर्वार्थे पूर्वशब्दे परे पूर्वपद प्रकृतिस्वर स्यात् ॥—**आढ्यो भूतपूर्व** इति । यः पूर्वमाढ्य आसीत्स एवमुच्यते ॥—**आढ्यपूर्व** इति । अत्र विशेषणसमासो मयूरव्यंसकादिर्वा । आढ्यशब्दः आङ्पूर्वाद्ध्यायतेर्घञर्थे कविधानमिति कर्मणि कः । आतो लोपः । पृषोदरादित्वाद्धस्य ढः । थाथादिस्वरेणान्तोदात्तः ॥—**परमपूर्व** इति । परमश्चासौ पूर्वश्चेति योयं वाक्यार्थः पूज्यमानतालक्षणस्तस्मिन्निह प्रत्युदाहरणे समासः । परमश्चासौ भूतपूर्वश्चेति विग्रहे तूदाहरणमेव ॥—**सविध–**॥ सामीप्यार्थेषु सविधादिषूत्तरपदेषु पूर्वपदं प्रकृत्या तत्पुरुषे ॥—**मद्रसविधमिति** । सर्वत्रोदाहरणे षष्ठीसमासः । मद्रः रगन्तेनोदात्तः । गान्धारिः 'कर्दमादीना च' इत्याद्युदात्तो वा । कश्मीरो 'लघावन्ते' इति मध्योदात्तः । सविधादीनां सह विधया इत्येवमादिका व्युत्पत्तिरेव केवल समीपवाचिनस्त्वेते समुदायाः । मद्रादीनां सविधं समीपमित्यर्थः ॥—**समर्यादमिति** । 'वोपसर्जनस्य' इति सहस्य सादेशः । चैत्रसमर्यादमिति षष्ठीसमासः । सविधादिषु किम् । मद्रसमीपम् ॥—**विस्पष्टा–**॥ गुणवचनेषु परेषु विस्पष्टादीनि पूर्वपदानि प्रकृत्या स्युः ॥—**विस्पष्टकटुकमिति** । स्पश बाधनस्पर्शनयोरित्यस्य ण्यन्तस्य निष्ठायां 'वा दान्तशान्त' इति स्पष्टशब्दो निपातितः । तस्य विशब्देन गतिसमासः । विस्पष्टं कटुकमिति विग्रहः । विस्पष्टादीनि शब्दप्रवृत्तिनिमित्तस्य विशेषणानि न द्रव्यस्य । कटुकादिशब्दैर्गुणव-

विस्पष्ट । विचित्र । व्यक्त । सम्पन्न । पण्डित । कुशल । चपल । निपुण । **अज्याऽवमकन्पापवत्सु भावे कर्मधारये ।६।२।२५।** अ ज्य कन् इत्यादेशवति अवमशब्दे पापशब्दवति चोत्तरपदे भाववाचि पूर्वपदं प्रकृत्या । गमनश्रेष्ठम् । गमनज्यायः । गमनावमम् । गमनकनिष्ठम् । गमनपापिष्ठम् । श्रेत्यादि किम् । गमनशोभनम् । भावे किम् । गम्यतेऽनेनेति गमनम् । गमनं श्रेयो गमनश्रेयः । केति किम् । षष्ठीसमासे मा भूत् । **कुमारश्च ।६।२।२६।** कर्मधारये । कुमारश्रमणा । कुमारशब्दोऽन्तोदात्तः । **आदिः प्रत्येनसि ।६।२।२७।** कुमारस्यादिरुदात्तः प्रत्येनसि परे कर्मधारये । प्रतिगतमेनोऽस्य प्रत्येनाः । कुमारप्रत्येनाः । **पूगेष्वन्यतरस्याम् ।६।२।२८।** पूगा गणास्तेषूक्तं वा । कुमारचातकाः । कुमारजीमूताः । आद्युदात्तत्वाभावे कुमारश्चेत्येव भवति । **इगन्तकालकपालभगालशरावेषु द्विगौ ।६।२।२९।** एषु परेषु पूर्वं प्रकृत्या । पञ्चारत्नयः प्रमाणमस्य पञ्चारत्निः । दश मासान् भूतो दशमास्यः । पञ्चमासान् भूतः पञ्चमास्यः । तमधीष्ट इत्यधिकारे द्विगोर्यप् । पञ्चकपालः । पञ्चभगालः । पञ्चशरावः । ष्णः संख्याया इति पञ्चन्शब्द आद्युदात्तः । इगन्तादिषु किम् । पञ्चाश्वः । द्विगौ किम् । परमाऽरत्निः । **बह्वन्यतरस्याम् ।६।२।३०।** बहुशब्दस्तथा वा । बह्वरत्निः । बहुमास्यः । बहुकपालः । बहुशब्दोऽन्तोदात्तः । तस्य यणि सत्युदात्तस्वरितयोरिति भवति । **दिष्टिवितस्त्योश्च ।६।२।३१।** एतयोः परतः पूर्वपदं प्रकृत्या वा द्विगौ । पञ्चदिष्टिः । पञ्चवितस्तिः । **सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ।६।२।३२।** अकालवाचि सप्तम्यन्तं प्रकृत्या सिद्धादिषु । साङ्काश्यसिद्धः । साङ्काश्येति ण्यान्तः । आतपशुष्कः । भ्राष्ट्रपक्वः । भ्राष्ट्रेति ष्ट्रन्नन्तः । चक्रबन्धः ।

---

द्रव्यमभिधीयते इति सामानाधिकरण्याभावात्कर्मधारयाभावे सुप्सुपेति समासः ॥—**विचित्रे**त्यादि । चित्र चित्रीकरणे चुरादिण्यन्तादेरच् । विशेषेण चित्र विचित्र प्रादिसमासः । 'तत्पुरुषे तुल्यार्थ–' इत्यव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः । चिती संज्ञाने निष्ठा । विगत चित्रमस्य इति विचित्रः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्याद्युदात्तः । अञ्जू व्यक्त्यादिषु तस्य विपूर्वस्य निष्ठायां गतिस्वरे 'उदात्तस्वरितयोः–' इति स्वरितादिः । पदेः कर्तरि क्तः । थाथादिस्वरेणान्तोदात्तः । गतिस्वरस्तु न । कर्मणीति तत्र वर्तते । अथ कर्तरि क्त' 'फलिपाटिनमिमनिजना कुक्पटिनाकिधतश्च' इत्युप्रत्ययान्तः पटुशब्दः । तत्र नित्दित्यधिकारादाद्युदात्तः । पडि गतौ क्तः प्रत्ययस्वर. । उणादिवृत्तौ तु पण व्यवहारे स्तुतौ च अमन्ताड्ड्ः पण्डा बुद्धिः सा सजाताऽस्येति तारकादित्वादितच् एवमुक्तम् । कुशान् लातीति कुशलः । 'आतोऽनुपसर्गे' इति कः । कृत्स्वरेणान्तोदात्तः । चुप मन्दाया गतौ अस्मात् 'चुपेरच्चोपधायाः' इति कलप्रत्ययः । तत्र 'वृषादिभ्यश्चित्' इत्यतश्चिदिति वर्तनादन्तोदात्तः । पुण कर्मणि शुभे 'इगुपधज्ञाप्रीकिरः कः' । थाथादिस्वरेणान्तोदात्तः ॥—**अज्या–**॥ अज्यकनामादेशानामुत्तरपदत्वासम्भवात्सामर्थ्यात्तद्वदुत्तरपदं गृह्यत इत्याह—**इत्यादेशवती**ति । इष्ठेयसुनोः 'प्रशस्यस्य श्रः' 'ज्य च' 'युवाल्पयोः कनन्यतरस्याम्' ॥—**गमनश्रेष्ठमि**त्यादि । मयूरव्यंसकादित्वाद्राजदन्तादित्वाद्वा विशेषणस्य परनिपातः ॥—**पापिष्ठमि**ति । विन्मतोर्लुक् । उदाहरणे नपुंसके भावे क्तः 'ल्युट् च' इति भावे ल्युट् तदन्तान्येतानि पूर्वपदानि लित्स्वरेणाद्युदात्तानि ॥—**गम्यतेऽनेने**ति । 'करणाधिकरणयोश्च' इति करणे ल्युट् ॥—**केति किमि**ति । कर्मधारय इति किमर्थमित्यर्थः ॥—**कुमारश्च** ॥ कुमारशब्दः पूर्वपदं प्रकृतिस्वरं स्यात् ॥—**कुमारश्रमणे**ति । कुमारी श्रमणा कुमारश्रमणा 'कुमारः श्रमणादिभिः' इति समासः । लिङ्गविशिष्टपरिभाषया कुमारीशब्दस्य समासे पुंवद्भावः ॥—**अन्तोदात्त** इति । कुमार क्रीडायाम् । पचाद्यच् चित्स्वरः । अत्र 'कुमारः श्रमणादिभिः' इत्यस्यैव ग्रहणं प्रतिपदोक्तत्वात् । केचित्तु सर्वस्यैव कर्मधारयस्य ग्रहणमिच्छन्ति । तथा च कुमारब्राह्मण इत्यत्र पूर्वपदप्रकृतिस्वरत्वं मतभेदेन भवति ॥—**आदिः–**॥ आदिरिति षष्ठ्यर्थे प्रथमा पूर्वत्र कुमारशब्दस्य प्रकृतिभावेन यः स्वरः प्राप्तः सोऽत्रादेर्भवतीति सूत्रार्थः । एवं स्थिते फलितमाह—**कुमारस्यादिरुदात्तः स्या**दिति ॥—**पूगेषु–**॥ गणवाचिन्युत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो वा स्यात् ॥—**कुमारचातका** इति । चातकादयः पूगशब्दास्तेभ्यः 'पूगाञ्ज्यो प्रामणीपूर्वात्' इति ञ्यः । तस्य 'तद्राजस्य बहुषु–' इति लुक् ॥—**कुमारश्चेत्येव भवती**ति । तत्र प्रतिपदोक्तग्रहणपक्षे समासान्तोदात्तत्वम् ॥—**पञ्चारत्नि**रिति । पञ्चारत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः । 'प्रमाणे लो द्विगोर्नित्यम्' इति मात्रचो लुक् । पञ्चसु कपालेषु संस्कृतः पञ्चसु भगालेषु सस्कृतः पञ्चसु शरावेषु उद्धृतः पञ्चकपालः पञ्चभगालः पञ्चशरावः । तद्धितार्थे द्विगुः । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् ॥—**पञ्चाश्व** इति । पञ्चभिरश्वैः क्रीतः पञ्चाश्वः । आर्हीयष्ठक् तस्य 'अध्यर्ध–' इति लुक् ॥—**बहु–**॥ बहुशब्दः पूर्वपद प्रकृतिस्वरं वा इगन्तादिषूत्तरपदेषु द्विगौ । पूर्वेण नित्ये प्राप्ते विकल्पः ॥—**बहुशब्दोऽन्तोदात्त** इति । बहि वृद्धौ अस्मात् 'लङ्घिबंह्योर्नलोपश्च' इति कुप्रत्ययः प्रत्ययस्वरेणान्तोदात्तः । पक्षे समासान्तोदात्तत्वम् । पूर्ववद्विग्रहप्रत्ययलुक्प्रत्युदाहरणानि योजनीयानि ॥—**दिष्टि–**॥ दिष्टिवितस्ती प्रमाणे तेनात्र मात्रचो लुक् । अत्रापि पक्षेऽन्तोदात्तत्वं बोध्यम् ॥—**सप्तमी–**॥—**ण्यन्त** इति । वुञ्छणादिषु सकाशादिभ्यो ण्यः ॥—**ष्ट्रन्नन्त** इति । 'भ्रस्जिगमिनमिहनिविश्यशा वृद्धिश्च' इति ष्ट्रन् संयोगादिलोपः । 'व्रश्च–' इति षत्वं निरवा-

चक्रशब्दोऽन्तोदात्तः। अकालात्किम्। पूर्वाह्णविदः। थाथादिस्वरेण बाधितः सप्तमीस्वरः प्रतिप्रसूयते। **परिप्रत्युपापा वर्ज्यमानाऽहोरात्रावयवेषु ।६।२।३३।** एते प्रकृत्या वर्ज्यमानवाचिनि अहोरात्रावयववाचिनि चोत्तरपदे। परित्रिगर्तं वृष्टो देवः। प्रतिपूर्वाह्णम्। अपपूर्वाह्णम्। उपपूर्वरात्रम्। अपत्रिगर्तम्। उपसर्गा आद्युदात्ताः। बहुव्रीहितत्पुरुषयोः सिद्धत्वादव्ययीभावार्थमिदम्. अपपर्योरेव वर्ज्यमानमुत्तरपदम्। तयोरेव वर्ज्यमानार्थत्वात्। अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्ति। वर्ज्येति किम्। अग्निं प्रति। प्रत्यग्नि। **राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ।६।२।३४।** राजन्यवाचिनां बहुवचनान्तानामन्धकवृष्णिषु वर्तमाने द्वन्द्वे पूर्वपदं प्रकृत्या। श्वाफल्कचैत्रकाः। शिनिवासुदेवाः। शिनिराद्युदात्तो लक्षणया तदपत्ये वर्तते। राजन्येति किम्। द्वैप्यभैमायनाः। द्वीपे भवा द्वैप्याः। भैमेरपत्यं युवा भैमायनः। अन्धकवृष्णय एते न तु राजन्याः। राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम्। नैते तथा। बहुवचनं किम्। संकर्षणवासुदेवौ। द्वन्द्वे किम्। वृष्णीनां कुमाराः वृष्णिकुमाराः। अन्धकवृष्णिषु किम्। कुरुपञ्चालाः। **संख्या ।६।२।३५।** संख्यावाचि पूर्वपदं प्रकृत्या द्वन्द्वे। द्वादश। त्रयोदश। त्रेस्त्रयसादेश आद्युदात्तो निपात्यते। **आचार्योपसर्जनश्चान्तेवासी। ६।२।३६।** आचार्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्या। पाणिनीयरौढीयाः। छस्वरेण मध्योदात्तावेतौ। आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणम्। सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत। तेनेह न। पाणिनीयदेवदत्तौ। आचार्येति किम्। छान्दसवैयाकरणाः। अन्तेवासीति किम्। आपिशलपाणिनीये शास्त्रे। **कार्तकौजपादयश्च**

---

दाद्युदात्तः॥—**अन्तोदात्त** इति। 'कृञः को द्वे च' इति कप्रत्ययान्तः प्रत्ययस्वरेण॥—**थाथादिस्वरेण बाधितः सप्तमीस्वर** इति। सिद्धशुष्कपक्वानां क्तान्तत्वाद् बन्धस्य घञन्तत्वात् थाथादिस्वरेण तत्पुरुषे 'तुल्यार्थ-' इत्यादिना सप्तम्यन्तस्य यः प्रकृतिभावः स परत्वाद्बाधितस्तेन पुनर्विधीयते। क्वचित्तु कृत्स्वरेण बाधित इति पाठः। तत्र कृदन्तस्य यः स्वरस्थाथादिलक्षणस्तेनेत्यर्थः॥—**परिप्रत्यु-**॥ परिप्रत्युप एते प्रकृत्या स्युः॥—**परित्रिगर्तमिति**। त्रिगर्तं वर्जयित्वेत्यर्थः। 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा। 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी। 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः॥—**प्रतिपूर्वाह्णमिति**। अह्नः पूर्वो भागः पूर्वाह्णः 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः। 'अह्नोऽदन्तात्' इति णत्वम्। पूर्वाह्णं प्रति 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः॥—**उपपूर्वाह्णमिति**। पूर्वाह्णस्य समीपम्। 'अव्यय विभक्ति-' इत्यादिना सामीप्येऽव्ययीभावः॥—**उपपूर्वरात्रमिति**। रात्रेः पूर्वो भागः पूर्वरात्रः। 'अहः सर्वैकदेश-' इत्यत्र 'रात्राह्नाहाः-' इति पुंस्त्वम्। पूर्वरात्रस्य समीपमुपपूर्वरात्रम्॥—**उपसर्गा-**॥ आद्युदात्तानि पूर्वपदानि॥—**सिद्धत्वादिति**। 'बहुव्रीहौ प्रकृत्या पूर्वपदं' 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इत्यनेन। ननु किं पुनः कारणम्। अपपर्योरेव वर्ज्यमान उदाहृतो नेतरयोस्तत्राह—**अपपर्योरिति**। तेन त्रिगर्तं वर्जयित्वेत्यर्थे उपत्रिगर्तं प्रतित्रिगर्तमिति न भवति। ननु पूर्वाह्णं पूर्वरात्रं वर्जयित्वेत्यर्थे अपपूर्वाह्णं परिपूर्वाह्णं अपपूर्वरात्रं परिपूर्वरात्रमिति अहोरात्रावयवा अपपर्योः कस्मान्नोदाहियन्ते इत्याशङ्क्याह—**अहोरात्रावयवा** इति॥—**वर्ज्यमाना** इति। वर्ज्यमानग्रहणेनैव सिद्धत्वान्न पृथगुदाहृता इत्यर्थः॥—**वर्ज्येति किमिति**। वर्ज्यमानाहोरात्रावयवेषु किम्॥—**अग्निं प्रतीति**। 'लक्षणेनाभिप्रती-' इत्यव्ययीभावः॥—**श्वाफल्कचैत्रका** इति। श्वफल्कचैत्रकाभ्यामपत्येऽण्॥—**शिनिराद्युदात्त** इति। 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति सूत्रेण बाहुलकाच्छिञोऽपि निः। तस्य नित्त्व ह्रस्वत्व चेति॥—**द्वैप्या** इति। 'द्वीपादनुसमुद्रं यञ्'॥—**भैमेरपत्यमिति**। भीमस्यापत्यम् 'अत इञ्' तदन्ताद्वृद्धाच्छः। ननु चन्द्राशोऽपत्ये जातिग्रहणमिति वचनाद्राजन्यशब्दः क्षत्रियजातिवचनः। ततश्च द्वैप्यभैमायना इत्ययुक्तं प्रत्युदाहरणं तेषामपि क्षत्रियत्वादत आह—**राजन्यग्रहणमित्यादि**। अन्धकवृष्णीनां क्षत्रियत्वाव्यभिचाराद्राजन्यग्रहणमुक्तविशेषपरिग्रहार्थमिति भावः॥—**एकादशेति**। 'संख्याया अल्पीयस्याः-' इत्येकशब्दस्य पूर्वनिपातः। 'आन्महतः-' इत्यत्र आदिति योगविभागात्प्रागेकादशभ्य इति निर्देशाद्वा आत्वम्। 'इणभीकायाशल्यतिमर्चिभ्यः कन्' इति नित्त्वादेकशब्द आद्युदात्तः॥—**द्वादशेति**॥ 'द्व्यष्टनः संख्यायाः' इत्यात्वम्॥—**त्रयोदशेति**। 'त्रेस्त्रयः' इति त्रयआदेशः॥—**अन्तोदात्तो निपात्यत** इति। इदं काशिकानुरोधेनोक्तम्। वस्तुतस्तु त्रयोदश च मे इति लक्ष्यानुरोधादाद्युदात्तो निपात्यत इति बोध्यम्॥—**आचार्योपसर्जन-**॥ आचार्यः उपसर्जनं यस्य आचार्योपसर्जनः॥—**अन्तेवासीति**। अन्ते वसतीत्यन्तेवासी 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक्। सूत्रे षष्ठीबहुवचनस्य स्थाने प्रथमैकवचनं तदाह—**आचार्योपसर्जनान्तेवासिनां द्वन्द्वे** इति॥—**पाणिनीयरौढीया** इति। वृद्धाच्छः। रौढिशब्दात् 'इतश्च' इत्यण् 'न द्व्यचः प्राच्यभरतेषु' इति निषेधात्॥—**द्वन्द्वविशेषणार्थमिति**। न त्वन्तेवासिविशेषणार्थं, तस्य आचार्योपसर्जनत्वाव्यभिचारात्। किमर्थं पुनर्द्वन्द्वविशेषणं विज्ञायत इत्याह—**सकलो द्वन्द्व इत्यादि**॥—**छान्दसेति**। 'छन्दोधीते' इत्यण्। 'श्रोत्रियश्छन्दोऽधीते' इति तु न तत्र वाग्रहणानुवृत्तेः॥—**आपिशलपाणिनीये**

।६।२।३७। एषां द्वन्द्वे पूर्वपदं प्रकृत्या । कार्तकौजपौ । कृतस्येदं कुजपस्येदमित्यण्णन्तावेतौ । सावर्णिमाण्डूकेयौ । **महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु** ।६।२।३८। महच्छब्दः प्रकृत्या व्रीह्यादिषु दशसु । महाव्रीहिः । महापराह्णः । महागृष्टिः । महेष्वासः । महाहैलिहिलः । महच्छब्दोऽन्तोदात्तः । सन्महदिति प्रतिपदोक्तसमास एवायं स्वरः । नेह । महतो व्रीहिर्महद्व्रीहिः । **क्षुल्लकश्च वैश्वदेवे** ।६।२।३९। चान्महान् । क्षुल्लकवैश्वदेवम् । महावैश्वदेवम् । क्षुधं लातीति क्षुल्लः । तस्मादज्ञातादिषु केऽन्तोदात्तः । **उष्ट्रः सादिवाम्योः** । ६।२।४०। उष्ट्रसादी । उष्ट्रवामी । उषेः ष्ट्रनि उष्ट्रशब्द आद्युदात्तः । **गौः सादसादिसारथिषु** ।६।२।४१। गोसादः । गोसादिः । गोसारथिः । **कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूपण्यकम्बलो दासीभाराणां च** ।६।२।४२। एषां सप्तानां समासानां दासीभारादेश्च पूर्वपदं प्रकृत्या । कुरूणां गार्हपतं कुरुगार्हपतम् । उप्रत्ययान्तः कुरुः ॥ * **वृजेरिति वाच्यम्** ॥ वृजिगार्हपतम् । वृजिराद्युदात्तः । रिक्तो गुरुः रिक्तगुरुः । रिक्ते विभाषेति रिक्तशब्द आद्युदात्तः । असूता जरती असूतजरती । अश्लीला दृढरूपा अश्लीलदृढरूपा । अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः । श्रीर्यस्यास्ति तत् श्लीलम् । सिध्मादित्वाल्लच् । कपिलकादित्वाल्लत्वम् । पारे वडवेव पारेवडवा । निपातनादिवार्थे समासो विभक्त्यलोपश्च । पारशब्दो घृतादित्वादन्तोदात्तः । तैतिलानां कद्रूः तैतिलकद्रूः । तितिलिनोऽपत्यं छात्रो वा इत्यण्णन्तः । पण्यशब्दो यदन्तत्वादाद्युदात्तः । पण्यकम्बलः । * **संज्ञायामिति वक्तव्यम्** ॥ अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव । प्रतिपदोक्ते समासे कृत्या इत्येष

---

इति । आपिशलस्यापत्यमापिशलिराचार्यः । तेन प्रोक्तमापिशलम् 'इञश्च' इत्यण् । पाणिनिना प्रोक्तं पाणिनीयम् । वृद्धाच्छः । आपिशलं च पाणिनीयं च आपिशलपाणिनीये ॥—**कार्त-**॥ कुर्भूमिः तत्र जाताः कुजाः तान् पातीति कुजपः । कृतकुजपाभ्यामपत्ये ऋष्यण् । सावर्णिरिञन्तः माण्डूकेयशब्दो 'ढक् च मण्डूकात्' इति ढगन्तः ॥—**महाव्रीहिरि**ति । 'आन्महतः–' इत्यात्वम् ॥—**महेष्वास** इति । अत्रेकारः 'स्वरितो वानुदात्ते पदादौ' इति स्वरितो वा । आदिपदेन महाजाबालः महाभारः महाभारतः महाहैलिहिलः महारौरवः महाप्रवृद्धः । महच्छब्दोन्तोदात्त इति 'वर्तमाने पृषन्महत्–' इत्यत्र तथा निपातनात् ॥—**सन्महदि**ति । एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । ननु प्रवृद्धग्रहणमनर्थकं कर्मधारये निष्ठेति वक्ष्यमाणेनैव सिद्धत्वात् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति प्रवृद्धशब्दस्य क्तान्तत्वादिति चेन्न । कर्मधारये निष्ठेत्यत्रापि लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः समासः श्रेण्यादिस्तस्यैव ग्रहणमित्यर्थः ॥—**क्षुल्लक-**॥ क्षुल्लकमहच्छब्दौ पूर्वपदे प्रकृतिस्वरौ स्तः वैश्वदेवशब्दे परे ॥—**क्षुल्लके**ति । 'आतोऽनुपसर्गे कः' । 'तोर्लि' इति परसवर्णः ॥—**उष्ट्रः-**॥ उष्ट्रः पूर्वपदं प्रकृतिस्वरं स्यात्सादिवाम्योः परतः ॥—**उषेः ष्ट्रनी**ति । उष दाहे अस्मात् ष्ट्रन्निति वर्तमाने 'उषिखनिभ्यां कित्' इति व्युत्पादितत्वात् ॥—**गौः साद-**॥ गोशब्दः पूर्वपदं प्रकृत्या सादादिषूत्तरपदेषु ॥—**गोसाद** इत्यादि । सदेर्घञ् । तदन्तेन षष्ठीसमासः । अथ वा गाः सादयतीति गोसादः । सदेर्ण्यन्तात्कर्मण्यण् तस्मादेव णिनिः गोसादी । तत्र सादसादिनोः कृत्स्वरस्यापवाद इत्यर्थः । सारथौ समासस्वरस्य ॥—**कुरु-**॥ इह पण्यकम्बलान्ताः सप्त समासाः । तत्रादिनोर्द्वयोः षष्ठ्याः सौत्रो लुक् इतरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैकवचनं तदाह—**एषामि**ति । दासीभाराणामिति बहुवचननिर्देशादाद्यर्थोऽवगम्यते तदाह—**दासीभारादेरि**ति ॥—**उप्रत्ययान्त** इति । 'कृग्रोरुच्' इति व्युत्पादितत्वात्प्रत्ययस्वरेणान्तोदात्तोऽयम् ॥—**आद्युदात्त** इति । वृजी वर्जने 'इगुपधात्कित्' इतीन्नन्तत्वात् फिषस्तु 'इगन्तानां च द्व्यषाम्' इत्यादिर्द्वितीयो वोदात्तः । एवं कुरुरपि । रिक्तगुर्वादयस्त्रयः कर्मधारयाः ॥—**असूतजरती** । **अश्लीलदृढरूपे**ति । असूताऽश्लीलशब्दौ नञ्समासत्वादाद्युदात्तौ ॥—**श्रीर्यस्यास्ती**ति । श्रीशब्दो लावण्यवचनः ॥—**कपिलकादित्वाल्लत्वमि**ति । 'कृपो रो लः' इत्यत्र कपिलकादीनामुपसंख्यानाल्लत्वम् । लावण्यरहितापि कुब्जत्वादीनामभावात्सस्थानमात्रेण दृढेत्यर्थः ॥—**पारेवडवे**ति । 'पारे मध्ये–' इत्यव्ययीभावस्तु न । तथा सति सूत्रे दीर्घनिर्देशोऽयुक्तः स्याद् वडवायाः पारस्यासंभवाच्च ॥—**तितिलिनोऽपत्यमि**ति । तिलाः सन्त्यस्मिन्निति तिली । तिलशब्दान्मत्वर्थीय इनिः । टिलोपः । पृषोदरादित्वात्तिशब्दस्य द्वित्वम् । अत्र यदाऽपत्येण् तदा 'नस्तद्धिते' इति टिलोपः । यदा तु छात्रे तदानीम् 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारीत्यनेन टिलोपः ॥—**पण्यशब्दे** इति । 'अवद्यपण्य–' इति यदन्तो 'यतोऽनावः' इत्याद्युदात्तः ॥—**संज्ञायामि**ति । नियतप्रमाणकस्य नियतमूल्यस्य कम्बलस्यैषा संज्ञा ॥—**समासान्तोदात्तत्वमेवे**ति । ननु पण्यशब्दस्य कृत्यप्रत्ययान्तत्वात् 'तत्पुरुषे तुल्यार्थ–' इत्यादिना पूर्वपदप्रकृतिस्वरेण भाव्यमत आह—**प्रतिपदोक्ते ही**ति । 'कृत्यतुल्याख्या अजात्या' इति यः कृत्यसमासः प्रतिपदोक्तस्तत्रैव सः । अयं तु 'विशेषणं विशेष्येण–' इति सामान्यलक्षणविहितः कम्बलशब्दस्य जातिवचनत्वात् । न च 'कृत्यतुल्याख्या अजात्या' इत्यस्य वैयर्थ्यं

स्वरो विहितः । दास्या भारो दासीभारः । देवहूतिः । यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते न विशिष्य वचनं विहितं स सर्वोऽपि दासीभारादिषु द्रष्टव्यः ॥ स राये स पुरंध्याम् । पुरं शरीरं धीयतेऽस्यामिति कर्मण्यधिकरणे चेति किप्रत्ययः अलुक् छान्दसः । नविषयस्येत्याद्युदात्तः पुरशब्दः । **चतुर्थी तदर्थे** ।६।२।४३। चतुर्थ्यन्तार्थाय यत्तद्वाचिन्युत्तरपदे चतुर्थ्यन्तं प्रकृत्या । यूपाय दारु यूपदारु । **अर्थे** ।६।२।४४। अर्थे परे चतुर्थ्यन्तं प्रकृत्या । देवार्थम् । **क्ते च** ।६।२।४५। क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या । गोहितम् । **कर्मधारयेऽनिष्ठा** । ६।२।४६ । क्तान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या । श्रेणिकृताः । श्रेणिशब्द आद्युदात्तः । पूगकृताः । पूगशब्दोऽन्तोदात्तः । कर्मधारये किम् । श्रेण्या कृतं श्रेणिकृतम् । अनिष्ठा किम् । कृताऽकृतम् । **अहीने द्वितीया** ।६।२।४७। अहीनवाचिनि समासे क्तान्ते परे द्वितीयान्तं प्रकृत्या । कष्टश्रितः । ग्रामगतः । कष्टशब्दोऽन्तोदात्तः । ग्रामशब्दो नित्स्वरेण । अहीने किम् । कान्तारातीतः ॥ * अनुपसर्ग इति वक्तव्यम् ॥ नेह । सुखप्राप्तः । थाथेत्यस्यापवादोऽयम् । **तृतीया कर्मणि** ।६।२।४८। कर्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या । त्वोतासः । रुद्रहतः । महाराजहतः । रुद्रो रगन्तः । कर्मणि किम् । रथेन यातो रथयातः । **गतिरनन्तरः** ।६।२।४९। कर्मार्थे क्तान्ते परेऽव्यवहितो गतिः प्रकृत्या । थाथेत्यस्यापवादः । पुरोहितम् । अनन्तरः किम् । अभ्युद्धृतः । कारकपूर्वपदस्य तु

---

शङ्कयम् । तद्धि गुणक्रियावाचिनोरनियमेन पूर्वनिपातप्रसङ्गे क्तान्तस्य पूर्वनिपातार्थं वचनं न तु जातिनिषेधार्थमजात्येति वचनं न्यायसिद्धार्थानुवाद एवेति स्थितम् ॥—**दासीभार** इति । 'दसेष्टो न आ च' इति टित्वान्ङीप् । उदात्तनिवृत्तिस्वरेण दासीशब्द अन्तोदात्त ॥—**देवहूतिरिति** । देवः पचाद्यजन्तः ॥—**यस्य तत्पुरुषस्येत्यादि** । एतेन दासीभारादेराकृतिगणत्वं दर्शितम् ॥—**चतुर्थी**—॥ तस्मै इदं तदर्थं तच्छब्देन चतुर्थ्यन्तस्यार्थ उच्यते तदाह—**चतुर्थ्यन्तार्थाय यदिति** ॥—**यूपदार्विति** । निदिति दीर्घश्चेत्यनुवर्तमाने 'कुयुभ्यां च' इति पः । नित्त्वादाद्युदात्तो यूपशब्दः ॥—**देवार्थमिति** । देव पचाद्यजन्त ॥—**गोहितमिति** । 'चतुर्थी चाशिष्य—' इत्यादिना चतुर्थी ॥—**आद्युदात्त** इति । श्रिञ् सेवायाम् । 'वहिश्रियुदुग्लाहात्वरिभ्यो निन्' इति निप्रत्ययस्य नित्त्वादाद्युदात्तः ॥—**पूगशब्द** इति । मुदिग्रोर्गग्गौ बाहुलकात्पूञोपि गक् ॥—**कृताकृतमिति** । 'क्तेन नञ्विशिष्टे नानञ्' इति समासः । अनिष्ठेत्युच्यमाने इहैव स्यात् । श्रेण्यादिसमासापेक्षया 'क्तेन नञ्विशिष्टेन—' इति समासस्य प्रतिपदोक्तत्वादिति हरदत्तः ॥—**अहीने**—॥ हीनं त्यक्तं न हीनमहीनम् ॥—**अहीनवाचिनि समास** इति । पूर्वपदद्वारेण समासस्याहीनवाचित्वम् ॥—**कष्टश्रित** इति । 'द्वितीयाश्रिता—' इति समासः ॥—**कष्टशब्द** इति । क्तान्तत्वात् ॥—**ग्रामशब्द** इति । 'ग्रसेरा च' इति मन्प्रत्ययान्त आद्युदात्तः ॥—**अनुपसर्ग इति वक्तव्यमिति** । सूत्रेऽहीनग्रहणमपनीयानुपसर्गग्रहणं कर्तव्यं व्यापकत्वादित्यर्थः ॥—**थाथेत्यस्यापवाद** इति । तथा च प्रत्युदाहरणे थाथादिस्वर इति भावः ॥—**तृतीया**—॥ **त्वोतास** इति । त्वया ऊताः रक्षिताः त्वोतासः । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः । अवतेः क्त 'ज्वरत्वर—' इत्यूठ् । 'एत्येधत्यूठ्सु' इति वृद्धिरिडागमस्य चाभावश्छान्दसः । अदन्ताज्जसः 'आज्जसेरसुक्' इत्यसुगागमः । पूर्वपदप्रकृतिस्वरे कृते एकादेश उदात्तेनोदात्तः । ततः स्वरितप्रचयः ॥—**रगन्त** इति । रोदेर्णिलुक् चेति विहितः ॥—**महाराजहत** इति । 'राजाहःसखिभ्यष्टच्' इति टजन्तो महाराजशब्दोऽन्तोदात्तः ॥—**रथेन यात** इति । गत्यर्थत्वात्कर्तरि क्तः ॥—**पुरोहितमिति** । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इत्यसिप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः पुरःशब्दः । अत्र समासान्तोदात्तत्वम् अव्ययपूर्वपदप्रकृतिस्वरः कृत्स्वरः थाथादिस्वर इत्येतेषु प्राप्तेषु पूर्वपदप्रकृतिस्वरो भवति ॥—**अभ्युद्धृत** इति । इह हृतशब्दस्योच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाद्युदात्तोद्धृतशब्दस्तस्य पुनरभिशब्देन समासः । तस्य 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया उद्धृतशब्दः क्तान्त उत्तरपदम् । एवं समासान्तोदात्तत्वे प्राप्ते तद्बाधकाव्ययपूर्वपदप्रकृतिस्वरत्वे तदपवादे कृत्स्वरे तदपवादस्थाथादिस्वरः प्राप्तस्तमपोह्याभेरयं स्वरः स्यात्सोऽनन्तरग्रहणेन वार्यते । नन्वनन्तरग्रहणेनाप्यसौ दुर्वारः कृद्ग्रहणपरिभाषया उद्धृतशब्दस्य क्तान्तत्वेऽभेस्तदानन्तर्यसत्त्वादिति चेन्मैवम् । अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरो गतिराश्रीयते । अभिश्च न तथा । नन्वेवं मा भूदभेः स्वर इष्टसिद्धिस्तु कथम् । अभ्युद्धृतशब्दे हि उच्छब्दस्य स्वर इष्यते 'संसृष्टं धनमुभयं समाकृतम्' इति मन्त्रे समाकृतशब्दे आङः स्वरदर्शनात् । न चासौ प्रकृतसूत्रेण सिध्यति । प्रथमसमासे तत्प्रवृत्तावपि द्वितीयसमासे थाथादिस्वरस्य प्राप्तेरुक्तत्वात् । न च तं बाधित्वा गतिस्वरः प्रवर्तत इति वाच्यम् । द्वितीयसमासे उदः पूर्वपदत्वाभावात् । अत्रोच्यते । धातोरनन्तर इति व्याख्यानादेव पूर्वपदत्वं विनापि स्वरोऽयं प्रवर्तते । न हि क्तप्रकृतिभूतं धातुं प्रति पूर्वपदत्वं गतेः संभवति । तस्मादभ्युद्धृतं समाकृतमिति तावत्सुस्थम् । ननु दूरादागत इत्यादौ कारकपूर्वेऽपि गतिस्वरः स्यात् इष्यते तु थाथादिस्वरः अत आह—**कारकपूर्वेति** । अयं भावः ।

सतिशिष्टस्याथादिस्वर एव। दूरादागतः। तादौ च निति कृत्यतौ ।६।२।५०। तकारादौ निति तुशब्दवर्जिते कृति परेऽनन्तरो गतिः प्रकृत्या। अग्ने रायो नृतमस्य प्रभूतौ। सङ्गतिं गोः। कृत्स्वरापवादः। तादौ किम्। प्रजल्पाकः। निति किम्। प्रकर्ता। तृजन्तः। अतौ किम्। आगन्तुः। तवै चान्तश्च युगपत् ।६।२।५१। तवैप्रत्ययान्तस्यान्त उदात्तो गतिश्चानन्तरः प्रकृत्या युगपच्चैतदुभयं स्यात्। अन्वेतवा उ। कृत्स्वरापवादः। अनिगन्तोऽञ्चतौ वप्रत्यये ।६।२।५२। अनिगन्तो गतिर्वप्रत्ययान्तेऽञ्चतौ परे प्रकृत्या। ये पराञ्चस्तान्। अनिगन्त इति किम्। प्रत्यञ्चो यन्तु। कृत्स्वरात्परत्वादयमेव। जहि वृष्ण्यानि कृणुही पराचः। वप्रत्यये किम्। उदञ्चनम्। न्यधी च ।६।२।५३। वप्रत्ययान्तेऽञ्चताविगन्तावपि न्यधी प्रकृत्या। न्यङ्ङुत्तानः। उदात्तस्वरितयोर्यण इति अञ्चतेरकारः स्वरितः। अध्यङ्। ईषदन्यतरस्याम् ।६।२।५४। ईषत्कडारः। ईषदित्ययमन्तोदात्तः। ईषद्भेद इत्यादौ कृत्स्वर एव। हिरण्यपरिमाणं धने।६।२।५५। सुवर्णपरिमाणवाचि पूर्वपदं वा प्रकृत्या धने। द्वे सुवर्णे परिमाणमस्येति द्विसुवर्णं तदेव धनं द्विसुवर्णधनम्। बहुव्रीहावपि परत्वाद्विकल्प एव। हिरण्यं किम्। प्रस्थधनम्। परिमाणं किम्। काञ्चनधनम्। धने किम्। निष्कमाला। प्रथमोऽचिरोपसम्पत्तौ ।६।२।५६। प्रथमशब्दो वा प्रकृत्याऽभिनवत्वे। प्रथमवैयाकरणः। सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः। प्रथमशब्दः प्रथेरमजन्तः। अचिरेति किम्। प्रथमो वैयाकरणः। कतरकतमौ कर्मधारये ।६।२।५७। वा प्रकृत्या। कतरकठः कर्मधारयग्रहणमुत्तरार्थम्। इह तु प्रतिपदोक्तत्वादेव सिद्धम्। आर्यो ब्राह्मणकुमारयोः ।६।२।५८। आर्यकु-

---

अनन्तरशब्दोऽयमनन्तरमपेक्ष्य प्रवर्तते तत्र चानन्तरो गतिरित्युक्ते अनन्तरोपि सन्निधानाद्गतिरेव प्रतीयते। ततश्चापूर्वपदार्थमप्यनन्तरग्रहणं गतिद्वयसमवधाने एवानन्तरस्य प्रकृतिस्वरत्व प्रापयतीति दूरादागतादौ न दोष इति। अथ वा 'कारकाद्दत्तश्रुतयोः' इति सूत्रे कारकादिति योगो विभज्यते क्तग्रहण गतिग्रहण चानुवर्तते। कारकात्पर क्तान्तं सगतिकमुत्तरपदमन्तोदात्त स्यादित्यर्थः। तत्र दूराद्गत इत्यादौ थाथादिसूत्रेणैव सिद्धत्वात् दूरादागत इत्यादौ 'गतिरनन्तरः' इत्यस्य बाधनार्थमेवेद सूत्रमिति दिक् ॥—**दूरादागत** इति। 'स्तोकान्तिक–' इति समास.। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् ॥—**प्रभूतावि**ति। क्तिन्नथम् ॥—**प्रजल्पाक** इति। 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' ॥—**आगन्तुरि**ति। 'सितनिगमिमव्यविधाञ्स्तुकुशिभ्यस्तुन्'। ननु कृतीति व्यर्थम्। तथा हि। गतेरय स्वरो विधीयते गतिसंज्ञा च धातुमाक्षिपति स च प्रत्ययविशिष्ट एव प्रयोगार्हः। धातोश्च द्वये प्रत्ययाः। तिङ. कृतश्च। तत्र तिङन्ते पूर्वपदत्वासम्भवाद् न भविष्यतीति चेत्सत्यम्। कृद्ग्रहण कृत्सञ्ज्ञाप्रवृत्तिकालोपलक्षणार्थ तेन कृदुपदेशे तादित्वलाभात्प्रलपितेत्यादि सिद्ध्यति। स्वरप्रवृत्तिवेलायां तादित्वाभावेपि पूर्वं तत्सत्त्वात्। आदिग्रहण शक्यमकर्तुं यस्मिन्विधिरित्येव सिद्धेः ॥—**तवै चा**—॥—**अन्त उदात्त** इति। कथ पुनरन्तरेणोदात्तग्रहणमुदात्तो भवतीत्ययमर्थो लभ्यते। शृणु। प्रकृत्येति वर्तते तत्रैवमभिसबन्धः क्रियते। तवैप्रत्ययान्तस्य यः प्रकृत्याश्रयः स्वरः प्राप्तः सोऽन्तस्य भवतीति स चोदात्त एवेति युगपद्ग्रहण पर्यायनिवृत्त्यर्थम् ॥—**अन्वेतवा उ** इति। 'उपसर्गाश्चाभिवर्जम्' इत्यनुराद्युदात्तः ॥—**अनिगन्तोऽञ्चतौ**–॥—**पराञ्च** इति। 'ऋत्विक्–' इत्यादिना क्विन्। स च वकारमात्र ककारादीनामनुबन्धत्वात्। 'उगिदचाम्–' इति नुम् पराशब्द आद्युदात्त ॥—**प्रत्यञ्च** इति। कृदुत्तरपदप्रकृतिस्वरः ॥—**परत्वादि**ति। चुस्वरस्यावकाशः दधीचा यत्र गतिर्नास्ति। अनिगन्तस्वरस्यावकाशः पराञ्चः इत्यादौ। उभयप्रसङ्गे परत्वादनिगन्तस्वर एव भवति। न चाय युक्तो विप्रतिषेधः। चुस्वरः सति शिष्टः भसञ्ज्ञायामल्लोपे च कृते प्राप्तत्वात्। सत्यम्। नायं विप्रतिषेधः। किं तर्हि इष्टिरेव। चोः 'अनिगन्तोऽञ्चतावप्रत्यये' इत्येव स्वर इष्यत इति हरदत्तः। इहापि मूले परत्वादित्यस्येष्टत्वादित्यर्थः ॥—**न्यधी च** ॥ अत्रापि चुस्वरादयमेव। कृत्स्वरापवादौ योगौ ॥—**ईषदन्य**–॥ ईषच्छब्दः पूर्वपद प्रकृतिस्वर वा स्यात् ॥—**अन्तोदात्त** इति। फिट्स्वरेण। एतदभावे समासान्तोदात्तत्वम् ॥—**ईषद्भेद** इति। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' ॥—**कृत्स्वर एव भवती**ति। परत्वात्। अथ वा ईषद्गुणवचनेनेति प्रतिपदोक्तसमासग्रहणादुपपदसमासेऽस्याप्रवृत्तिरिति ॥—**द्वे सुवर्णे** इति। 'पञ्चकृष्णलको माषस्ते सुवर्णास्तु षोडश। पल सुवर्णाश्चत्वारः' इति ॥—**द्विसुवर्णमि**ति। पक्षे समासस्वरः ॥—**बहुव्रीहावपी**ति। अत्र तत्पुरुषाधिकाराभावात् ॥—**प्रथमो**–॥ अचिरोपसपत्तिरचिरोपसंश्लेषः अभिनवत्वमित्यर्थः तदाह—**अभिनवत्व** इति ॥—**अचीति किमि**ति। अचिरोपसंपत्ताविति किमर्थमित्यर्थः ॥—**प्रथमवैयाकरण** इति। वैयाकरणानामाद्यः मुख्यो वा यः प्रथमवैयाकरणशब्दः स नित्यमन्तोदात्त एव ॥—**कतर**–॥ एतौ पूर्वपदभूतौ कर्मधारये प्रकृतिस्वरौ वा स्यातां कतरकतमौ डतरडतमयोश्चित्त्वादन्तोदात्तौ ॥—**इह त्वित्यादि**। 'कतरकतमौ जातिपरिप्रश्ने' इति प्रतिपदोक्तो यः समासस्तस्यैव ग्रहणम्। स च कर्मधारय एव तस्यापेहार्थः कर्मधारयग्रहणेनेति भावः ॥—**आर्यो ब्राह्मण**–॥ ब्राह्मणकुमारयोरुत्तरप-

मारः । आर्यब्राह्मणः । आर्यो ण्यदन्तत्वादन्तस्वरितः । आर्यः किम् । परमब्राह्मणः । ब्राह्मणादीति किम् । आर्यक्षत्रियः । कर्मधारय इत्येव । **राजा च** ।६।२।५९। ब्राह्मणकुमारयोः परतो वा प्रकृत्या कर्मधारये । राजब्राह्मणः । राजकुमारः । योगविभाग उत्तरार्थः । **षष्ठी प्रत्येनसि** ।६।२।६०। षष्ठ्यन्तो राजा प्रत्येनसि परे वा प्रकृत्या । राजप्रत्येनाः । षष्ठी किम् । अन्यत्र न । **क्ते नित्यार्थे** ।६।२।६१। क्तान्ते परे नित्यार्थे समासे पूर्वं वा प्रकृत्या । नित्यप्रहसितः । कालाः इति द्वितीयासमासोऽयम् । नित्यशब्दस्त्यबन्त आद्युदात्तः । हसित इति थाथादिस्वरेणान्तोदात्तः । नित्यार्थे किम् । मुहूर्तप्रहसितः । **ग्रामः शिल्पिनि** ।६।२।६२। वा प्रकृत्या । ग्रामनापितः । ग्रामशब्द आद्युदात्तः । ग्रामः किम् । परमनापितः । शिल्पिनि किम् । ग्रामरथ्या । **राजा च प्रशंसायाम्** ।६।२।६३। शिल्पिवाचिनि परे प्रशंसार्थं राजपदं वा प्रकृत्या । राजनापितः । राजकुलालः । प्रशंसायां किम् । राजनापितः । शिल्पिनि किम् । राजहस्ती । **आदिरुदात्तः** ।६।२।६४। अधिकारोऽयम् । **सप्तमीहारिणौ धर्म्येऽहरणे** ।६।२।६५। सप्तम्यन्तं हारिवाचि च आद्युदात्तं धर्म्ये परे । देयं यः स्वीकरोति स हारीत्युच्यते । धर्म्यमित्याचारनियतं देयम् । मुकुटेकार्षापणम् । हलेद्विपदिका । संज्ञायामिति सप्तमीसमासः । कारनाशिचेत्यलुक् । याज्ञिकाश्वः । वैयाकरणहस्ती । क्वचिदयमाचारो मुकुटादिषु कार्षापणादि दातव्यं याज्ञिकादीनां त्वश्वादिरिति । धर्म्ये इति किम् । स्तम्बेरमः । कर्मकरवर्द्धितक. । अहरणे किम् । वाडवहरणम् । वडवाया अयं वाडवः । तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणमित्युच्यते । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यत इत्यहरण इति निषेधेन ज्ञाप्यते । तेन वाडवहार्यमिति हारिस्वरः सिध्यति । **युक्ते च** ।६।२।६६। युक्तवाचिनि समासे पूर्वमाद्युदात्तम् । गोबल्लवः । कर्तव्ये तत्परो युक्तः । **विभाषाऽध्यक्षे** ।६।२।६७। गवाध्यक्षः । **पापं च शिल्पिनि** ।६।२।६८। पापनापितः । पापाणके इति प्रतिपदोक्तस्यैव ग्रहणात् षष्ठीसमासे न । **गोत्राऽन्तेवासिमाणवब्राह्मणेषु क्षेपे** ।६।२।६९। भार्यासौश्रुतः । सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः । अन्तेवासी । कु-

दयोरार्यः पूर्वपदं प्रकृतिस्वर वा स्यात्कर्मधारये ॥—**अन्तस्वरित** इति । तित्स्वरितमित्यनेन ॥—**ब्राह्मणादीति किमिति** । ब्राह्मणकुमारयोरिति किमर्थमित्यर्थः ॥—**राजब्राह्मण** इति । राजशब्दो ब्राह्मणे ताद्धर्म्याद्वर्तत इति सामानाधिकरण्यात्कर्मधारयः । राजशब्द. कनिन्प्रत्ययान्तत्वादाद्युदात्तः ॥—**उत्तरार्थ** इति । उत्तरो विधिः राजशब्दस्यैव यथा स्यादार्यशब्दस्य मा भून् । यथासंख्याभावोऽपि पृथग्योगकरणस्य प्रयोजन ज्ञेयम् ॥—**राजप्रत्येना** इति । प्रतिगतमेनः पापं यस्य प्रत्येनाः । राज्ञः प्रत्येनाः ॥—**अन्यत्र नेति** । राजा चासौ प्रत्येनाश्च राजप्रत्येना इत्यत्र ॥—**द्वितीयासमासोऽयमिति** । द्वितीया पुनरत्यन्तसयोगे । अथ वा 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' ॥—**त्यबन्त** इति । 'त्यब्नेर्ध्रुवे' इति त्यप् ॥—**मुहूर्तप्रहसित** इति । थाथादिस्वरः । समासस्वरस्य द्वितीयापूर्वपदप्रकृतिस्वरो बाधकस्तस्य थाथादिस्वर' तस्यापि पाक्षिकोऽपवादोऽयम् ॥—**ग्रामः**—। ग्राम इति स्वरूपग्रहणम् । शिल्पिनीत्यर्थग्रहणम् । ग्रामशब्दः पूर्वपदप्रकृतिस्वरं वा स्याच्छिल्पिवाचिन्युत्तरपदे ॥—**ग्रामनापित** इति । षष्ठीसमासः ॥—**आद्युदात्त** इति । 'ग्रसं रा च' इति मनिन् नित्वादाद्युदात्तः ॥—**राजनापित** इति । कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशसा । षष्ठीसमासे च राजयोग्यतया तस्य प्रशसा । स हि कर्मणि प्रवीणत्वाद्राजानं प्रति योग्यो भवति । राजार्थमित्युक्ते प्रशसा गम्यते ॥—**आदिरुदात्तः** ॥ पूर्वपदमित्यस्येहार्थात्षष्ठ्या विपरिणामः । सर्वत्र चात्र प्रकरणे पूर्वपदविषये षष्ठ्यर्थे प्रथमा ॥—**सप्तमी**—॥ हारीत्यावश्यके णिनिः । जनपदे ग्रामे कुले वा परपरयायातः सदाचारो धर्मस्तस्मादनपेतं धर्म्यम । 'धर्मपथ्यर्थ-' इति यन् । तेन च प्राप्यमित्यर्थे 'नौवयोधर्म-' इत्यादिना यत् । आचारवशादवश्य कर्तव्यमित्यर्थः । हारिण्युदाहरणान्याह—**याज्ञिकाश्वेति** । षष्ठीसमासः ॥—**कर्मकरवर्द्धितक** इति । वर्द्धितको नाम मूले स्थूलोऽग्रे सूक्ष्मः ओदनपिण्डः स कर्मकराय दीयते । अन्यथा कर्म न कुर्यादिति । न त्वयं धर्मः ॥—**वाडवहरणमिति** । क्वचिदयमाचारः बीजनिषेकानन्तर वाडवाय शरीरपुष्ट्यर्थं योग्यमसुरादि दातव्यं यद्दीयते तद्वाडवहरणमित्युच्यते । अत्रास्मिन् स्वरे निषिद्धे कृत्स्वरे प्राप्तेऽनोभावकर्मवचन इत्युत्तरपदान्तोदात्तत्वम् । ननु परत्वादेवायं स्वरो भविष्यति किं प्रतिषेधेनेत्यत आह—**परोऽपीति** ॥—**युक्तवाचिनीति** । युक्तः कर्तव्ये तत्परः । तद्वाचिनीत्यर्थः । गोबल्लवः । बल्लवादयः शब्दा गवादीनां पालकवचनाः ॥—**विभाषा**—॥ अध्यक्षशब्दे परे पूर्वपदमाद्युदात्तं वा स्यात् । अध्यक्षशब्दोऽपि समासे युक्तवाच्ये वेति पूर्वेण नित्ये प्राप्ते विकल्पः ॥—**पापं**—॥ पापमिति स्वरूपग्रहणं शिल्पिनीत्यर्थग्रहणं व्याख्यानात् । शिल्पिवाचिनि परे पापशब्दः पूर्वपदमाद्युदात्तं वा स्यात् ॥—**गोत्रान्तेवासि**—॥ गोत्रवाचिनि अन्तेवासिवाचिनि चोत्तरपदे माणवब्राह्मणयोश्च परतः क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् ॥—**भार्यासौश्रुत** इति । सुशृणोतीति सुश्रुत् तस्यापत्यं सौश्रुतः ॥—**भार्याप्रधानतयेति** ।

मारीदाक्षाः । ओदनपाणिनीयाः । कुमार्यादिलाभकामा ये दाक्ष्यादिभिः प्रोक्तानि शास्त्राण्यधीयन्ते ते एवं क्षिप्यन्ते भिक्षामाणवः । भिक्षां लप्स्येऽहमिति माणवः । भयब्राह्मणः । भयेन ब्राह्मणः सम्पद्यते । गोत्रादिषु किम् । दासीश्रोत्रियः । क्षेपे किम् । परमब्राह्मणः । **अङ्गानि मैरेये** ।६।२।७०। मद्यविशेषो मैरेयः । मधुमैरेयः । मधुविकारस्य तस्य मध्वङ्गम् । अङ्गानि किम् । परममैरेयः । मैरेये किम् । पुष्पासवः । **भक्ताख्यास्तदर्थेषु** ।६।२।७१। भक्तमन्नम् । भिक्षाकंसः । भाजीकंसः । भिक्षादयोऽन्नविशेषाः । भक्ताख्याः किम् । समाशशालयः । समशनं समाश इति क्रियामात्रमुच्यते । तदर्थेषु किम् । भिक्षाप्रियः । बहुव्रीहिरयम् । अत्र पूर्वपदमन्तोदात्तम् । **गोबिडालसिंहसैन्धवेषूपमाने** ।६।२।७२। धान्यगवः । गोबिडालः । तृणसिंहः । सक्तुसैन्धवः । धान्यं गौरिवेति विग्रहः । व्याघ्रादिः । गवाकृत्या सन्निवेशितं धान्यं धान्यगवशब्देनोच्यते । उपमाने किम् । परमसिंहः । **अके जीविकार्थे** ।६।२।७३। दन्तलेखकः । यस्य दन्तलेखनेन जीविका । नित्यं क्रीडेति समासः । अके किम् । रमणीयकर्ता । जीविकार्थे किम् । इक्षुभक्षिकां मे धारयसि । **प्राचां क्रीडायाम्** ।६।२।७४। प्राग्देशवाचिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते परे पूर्वमाद्युदात्त स्यात् । उद्दालकपुष्पभञ्जिका । संज्ञायामिति ण्वुल् । प्राचां किम् । जीवपुत्रप्रचायिका । इयमुदीचां क्रीडा । क्रीडायां किम् । तव पुष्पप्रचायिका । पर्याये ण्वुल् । **अणि नियुक्ते** ।६।२।७५। अण्णन्ते परे नियुक्तवाचिनि समासे पूर्वमाद्युदात्तम् । छत्रधारः । नियुक्ते किम् । काण्डलावः । **शिल्पिनि चाऽकृञः** ।६।२।७६। शिल्पिवाचिनि समासे अण्णन्ते परे पूर्वमाद्युदात्तं स चेदण् कृञः परो न भवति । तन्तुवायः । शिल्पिनि किम् । काण्डलावः । अकृञः किम् । कुम्भकारः । **संज्ञायां च** ।६।२।७७। अण्णन्ते परे । तन्तुवायो नाम कृमिः । अकृञ इत्येव । रथकारो नाम ब्राह्मणः । **गोतन्तियवं पाले** ।६।२।७८। गोपालः । तन्तिपालः । यवपालः । अनियुक्तार्थो योगः । गो इति किम् । वत्सपालः । पाले इति किम् । गोरक्षः । **णिनि** ।६।२।७९। पुष्पहारी । **उपमानं शब्दार्थप्रकृतावेव** । ६।२।८०। उपमानवाचि पूर्वपदं णिन्यन्ते परे आद्युदात्तम् । उष्ट्रक्रोशी । ध्वाङ्क्षरावी । उपमानग्रहणमस्य पूर्वयोगस्य च विषयविभागार्थम् । शब्दार्थप्रकृतौ

---

भार्याप्रधानः सांश्रुत इति शाकपार्थिवादित्वादुत्तरपदलोपिसमास इति दर्शयति । दक्षेण प्रोक्तं दाक्ष तदधीते दाक्षः ॥—**कुमार्यादिलाभकाम** इति । तत्प्रोक्ते ग्रन्थे श्रद्धायामसत्यामपि कुमार्यादिलाभकामः सस्तत्र प्रवर्तते तत एवं क्षिप्यते पूर्ववत्समासः ॥—**भयब्राह्मण** इति । तृतीयेति योगविभागात्समासः । योऽब्राह्मणः सन् राजदण्डादिभयेन ब्राह्मणाचार करोति स एवमुच्यते ॥—**अङ्गानि**—॥ अङ्गमारम्भकम् । बहुवचन स्वरूपविधिनिरासार्थम् । मैरेयशब्दे उत्तरपदे तदर्थारम्भकवाचीनि पूर्वपदान्याद्युदात्तानि स्युः ॥—**मद्यविशेष** इति । सुराव्यतिरिक्तं मद्य मैरेयमित्यर्थः ॥—**भक्ताख्या**—॥ अन्नवाचि पूर्वपदमाद्युदात्त स्यात्तदर्थेषूत्तरपदेषु । अत्र बहुवचननिर्देशादेव स्वरूपविधिनिरासे सिद्धे आख्याग्रहणं भक्ष्यविशेषवाचिना भिक्षादीना ग्रहणार्थम् । अन्यथा पर्यायाणामेवान्नादीना ग्रहण स्यात् । भिक्षाकंसादयः षष्ठीसमासाः । तादर्थ्ये चतुर्थीसमासस्तु न भवति प्रकृतिविकार एव तस्येष्टत्वात् ॥—**बहुव्रीहिरिति** । तत्पुरुषश्चेदन्तोदात्तः ॥—**गोबिडाल**—॥ उपमानशब्दे प्रत्येक सबन्धादेकवचनम् । गवादिषूपमानवाचिपूत्तरपदेषु पूर्वपदमाद्युदात्त स्यात् ॥—**धान्यगव** इति । अत्रोपमितसमासे 'गोरतद्धितलुकि' इति टच् । अत्र पूर्वपदाद्युदात्तविधानसामर्थ्याट्टचश्चित्स्वरो बाध्यते । उपमानार्थो यो यत्रोदाहरणे यथा सभवति स तथा योजयितव्यः । तत्र दिङ्मात्र दर्शयति ॥—**गवाकृत्येत्यादि** । आकृतिः सस्थानम् । सनिवेशित व्यवस्थापितम् । एवमन्यत्रापि यत्किंचित्सादृश्य योजयितव्यम् ॥—**अके**—॥ जीविकार्थवाचिनि समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्त स्यात् ॥—**दन्तलेखक** इति । 'ण्वुल्तृचौ' इति ण्वुल् ॥—**प्राचाम्**—॥ प्राचा क्रीडायामिति श्रुतयोरेवान्वयसभवान्मतेनेत्यध्याहारो न युज्यते इति तत्राह—**प्राग्देशवर्तिनां या क्रीडेति** । अजीविकार्थमिदम् ॥—**उद्दालकपुष्पभञ्जिकेति** । 'नित्य क्रीडा—' इति समासः ॥—**अणि नियुक्ते**—॥ युजिर् योगे इत्यस्य नियुक्त इति रूपम् । नियुक्तः अधिकृत. स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति नियुक्त इत्यनेन सिद्ध्यति । युक्त इति सूत्रे हि युज समाधौ दिवादिरात्मनेपदी गृह्यते समाधिस्तत्परता । अत्र रौधादिकस्य स्वरितेतो ग्रहण, योगः सबन्धमात्रम् ॥—**छत्रधार** इति । कर्मण्यण् ॥—**शिल्पि**—॥ नियुक्ते चेत्येव सिद्धे कृञः प्रतिषेधार्थ वचनम् ॥—**तन्तुवाय** इति । 'ह्वावामश्च' इत्यण् । आतो युक् ॥—**संज्ञायाम्**—॥ सज्ञायां विषयेऽणन्ते उत्तरपदे पूर्वपदमाद्युदात्तं स्यात् स चेदण् कृञो न भवति ॥—**गोतन्ति**—॥ गोतन्तियवशब्दा आद्युदात्ताः स्युः पालशब्दे परे ॥—**गोपाल** इति । गाः पालयतीति विग्रहः ॥—**तन्तिपाल** इति । तनु विस्तारे क्तिन् । तन्तिर्वत्सानां बन्धनरज्जुः ॥—**णिनि** । णिनन्ते उत्तरपदे पूर्वपदमाद्युदात्तम् ॥—**उपमानम्**—॥—**उष्ट्रक्रोशीत्यादि** । 'कर्तर्युपमाने' इति णिनिः ॥—**शब्दार्थप्रकृतौ किमिति** । सूत्र किमर्थमित्यर्थः ॥—**वृकवञ्चीति** ।

किम् । वृकवञ्ची । प्रकृतिग्रहणं किम् । प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्थो तत्रैव यथा स्यात् । इह मा भूत् । गर्दभोच्चारी । **युक्तारोह्यादयश्च** ।६।२।८१। आद्युदात्ताः । युक्तारोही । आगतयोधी । क्षीरहोता । **दीर्घकाशतुषभ्राष्ट्रवटं जे** ।६।२।८२। कुटीजः । काशजः । तुषजः । भ्राष्ट्रजः । वटजः । **अन्त्यात्पूर्वं बह्वचः** ।६।२।८३। बह्वचः पूर्वस्यान्त्यात्पूर्वपदमुदात्तं जे उत्तरपदे । उपसरजः । आमलकीजः । बह्वचः किम् । दग्धजानि तृणानि । **ग्रामेऽनिवसन्तः** ।६।२।८४। ग्रामे परे पूर्वपदमुदात्तम् । तच्चेन्निवसद्वाचि न । मल्लग्रामः । ग्रामशब्दोऽत्र समूहवाची । देवग्रामः । देवस्वामिकः । अनिवसन्तः किम् । दाक्षिग्रामः । दाक्षिनिवासः । **घोषादिषु च** ।६।२।८५। दाक्षिघोषः । दाक्षिकटः । दाक्षिह्रदः । **छात्र्यादयः शालायाम्** ।६।२।८६। छात्रिशाला । व्याडिशाला । यदापि शालान्तः समासो नपुंसकलिङ्गो भवति तदापि तत्पुरुषे शालायां नपुंसक इत्येतस्मात्पूर्वविप्रतिषेधेनायमेव स्वरः । छात्रिशालम् । **प्रस्थेऽवृद्धमकर्क्यादीनाम्** ।६।२।८७। प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं स्यात् । इन्द्रप्रस्थः । अवृद्धं किम् । दाक्षिप्रस्थः । अकेति किम् । कर्कीप्रस्थः । मकरीप्रस्थः । **मालादीनां च** ।६।२।८८। वृद्धार्थमिदम् । मालाप्रस्थः । शोणाप्रस्थः । **अमहन्नवन्नगरेऽनुदीचाम्** ।६।२।८९। नगरे परे महन्नवन्वर्जितं पूर्वमाद्युदात्तं स्यात् तच्चेदुदीचां न । ब्रह्मनगरम् । अमेति किम् । महानगरम् । नवनगरम् । अनुदीचां किम् । कार्तिकनगरम् । **अर्मे चाऽवर्णं द्व्यच् त्र्यच्** ।६।२।९०। अर्मे परे द्व्यच् त्र्यच् पूर्वमवर्णान्तमाद्युदात्तम् । गुप्तार्मम् । कुक्कुटार्मम् । अवर्णं किम् । बृहदर्मम् । द्व्यच् त्र्यच् किम् । कपिञ्जलार्मम् । अमहन्नवमित्येव । महार्मम् । नवार्मम् । **न भूताधिकसञ्जीवमद्राश्मकज्जलम्** ।६।२।९१। अर्मे परे नैतान्याद्युदात्तानि । भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् । मद्राश्मग्रहणं संघातविगृहीतार्थम् । मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । कज्जलार्मम् ॥ * **आद्युदात्तप्रकरणे दिवोदासादीनां**

---

कृत्स्वर एव भवति ॥—**प्रकृतिरेवेत्यादि** । असति प्रकृतिग्रहणे शब्दार्थात्परो णिनिस्तदन्ते उत्तरपदे इत्यर्थो विज्ञायेत तथा च यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात्परो णिनिस्तत्रापि स्यात् । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया णिन्नन्तोत्तरपदत्वानपायात् । प्रकृतिग्रहणे तु न भवति । योऽत्र धातुर्नासौ शब्दार्थः । यश्च शब्दार्थो धातूपसर्गसमुदायो न ततो णिनिर्विहित इति भावः । एवं किं शब्दार्थप्रकृतौ उपमानमेवेत्येव नियमो मा भूत् ॥—**युक्तारोह्या**—॥ युक्तारोह्यादयः समासा आद्युदात्ताः स्युः ॥—**युक्तारोहीत्यादि** । अत्र णिनीत्येव सिद्धे पूर्वोत्तरपदनियमार्थं सूत्रम् । यत्र युक्तादीन्येव पूर्वपदानि आरोह्यादीन्येवोत्तरपदानि तत्रैव यथा स्यादित्यर्थः ॥—**क्षीरहोतेति** । याजकादित्वात्षष्ठीसमासोऽयम् । समासस्वरापवादे कृत्स्वरे प्राप्ते तदपवादे मन्क्तिन्निति तदपवादोऽयम् ॥—**दीर्घकाश**—। दीर्घान्तं पूर्वपदं काशादीनि च पूर्वपदानि आद्युदात्तानि स्युर्जे उत्तरपदे ॥ —**कुटीज** इति । 'सप्तम्यां जनेर्डः' ॥—**उपसरज** इति । स्त्रीगवादिषु पुंसां गर्भाधानाय प्रथममुपसरणमुपसरः 'प्रजने सर्तेः' इत्यप् तत्र जातः उपसरजः ॥—**आमलकीज** इति । दीर्घकाशेति बाधित्वा परत्वादयं स्वरः ॥—**ग्रामे**—। सूत्रे निवसन्त्यस्मिन्निति निपूर्वाद्वसेः 'वृवसिवहिभासिसाधिगडिमण्डिनिनन्दिभ्यश्च' इति झच् ॥—**मल्लग्राम** इति । षष्ठीसमासः ॥—**दाक्षिग्राम** इति । दाक्षयो निवसन्त्यस्मिन्स उच्यते ॥—**घोषा**—॥ घोषादिषूत्तरपदेषु पूर्वपदमाद्युदात्तम् । अत्र निवसन्न इति केचिदनुवर्तयन्ति । अपरे नानुवर्तयन्ति । तथा च दाक्षीणां घोषो निवासस्थानमित्यर्थे दाक्षिघोषशब्दे आद्युदात्तत्वं न भवति । मतान्तरे भवति ॥—**छात्र्यादयः**—॥ शालाशब्दे परे छात्र्यादय आद्युदात्ताः स्युः ॥—**यदा शालान्त** इत्यादि । 'विभाषा सेनासुरा—' इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम् । तत्रास्यावकाशो यो नपुंसकलिङ्गो न भवति छात्रिशाला । तत्पुरुषे शालायामित्यस्यावकाशो यश्छात्र्यादिपूर्वो न भवति । प्रभुशालम् । क्षत्रियशालम् । यस्तु छात्र्यादिपूर्वपदो नपुंसकलिङ्गश्च तत्र एकदेशविकृतस्यानन्यत्वादयमपि प्राप्नोति तत्पुरुषे शालायामित्ययं च । तत्र पूर्वविप्रतिषेधादयमेव भवतीति वामनहरदत्तौ ॥—**प्रस्थे**—॥ मालादीनां वचनादवृद्धमिति च्छेदः । कर्क्यादिप्रतिषेधस्तु नामधेयार्थः स्यात् । वा नामधेयस्य वृद्धसंज्ञा वक्तव्येति ॥—**अकेति किमिति** । अकर्क्यादीनां किमित्यर्थः ॥—**माला**—॥ प्रस्थे परे मालादीनामादिरुदात्तः स्यात् ॥—**शोणप्रस्थ** इति । 'एङ् प्राचां देशे' इति शोणशब्दस्य वृद्धत्वम् ॥—**अम**—॥ **महन्नववर्जितं पूर्वपदमिति** । महद्वर्जितं नववर्जितं चेति प्रत्येकं संबन्धः ॥—**महानगरमिति** । 'आन्महतः समानाधिकरण—' इति महत आत्वे कृतेऽवर्णान्तत्वादस्ति प्राप्तिः ॥—**नवार्ममिति** । नवशब्दः प्रत्ययप्रवचनोऽकारान्तः ॥—**संघातविगृहीतार्थमिति** । मद्रशब्दस्य केवलस्य मद्राश्मशब्दस्य संघातस्य च तस्य प्रतिषेधार्थः ॥—**मद्राश्मार्ममिति** । 'अनोश्मायःसरसां जातिसंज्ञयोः' इति समासान्ते कृते अवर्णान्तमेतत् । तदेवं मद्रार्मम् । मद्राश्मार्ममिति द्वे एवोदाहरणे । प्रायेण अश्मार्ममिति तृतीयमप्युदाहरणं पठ्यते तद्वृत्त्यनुरोधादुक्तम् । अश्मशब्दस्याऽनकारान्तत्वम् । न च नलोपे कृतेऽवर्णान्तत्वम् । स्वरविधौ नलोपस्यासिद्धत्वात् । अपरे तु मद्राश्मग्रहणं संघातविगृहीतार्थमित्यस्य भाष्येऽदर्शनादसंगतमेतदित्याहुः ॥—**दिवोदासादीति** । 'दिवश्च दासे' इति

छन्दस्युपसंख्यानम् ॥ दिवोदासाय दाशुषे । ▮ अन्तः ।६।२।९२। अधिकारोऽयम् । प्रागुत्तरपदादिग्रहणात् । ▮ सर्वं गुणकार्त्स्न्ये ।६।२।९३। सर्वशब्दः पूर्वपदमन्तोदात्तम् । सर्वश्वेतः । सर्वमहान् । सर्वं किम् । परमश्वेतः । आश्रयव्याप्त्या परमत्वं श्वेतस्येति गुणकार्त्स्न्यं वर्तते । गुणेति किम् । सर्वसौवर्णः । कार्त्स्न्ये किम् । सर्वेषां श्वेततरः सर्वश्वेतः । ▮ संज्ञायां गिरिनिकाययोः ।६।२।९४। एतयोः परतः पूर्वमन्तोदात्तम् । अञ्जनागिरिः । मौण्डिनिकायः । संज्ञायां किम् । परमगिरिः । ब्राह्मणनिकायः । ▮ कुमार्यां वयसि ।६।२।९५। पूर्वपदमन्तोदात्तम् । वृद्धकुमारी । कुमारीशब्दः पुंसा सहासंप्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिः समानाधिकरणः । तत्र वय इह गृह्यते न कुमारत्वमेव । वयसि किम् । परमकुमारी । ▮ उदकेऽकेवले ।६।२।९६। अकेवलं मिश्रं तद्वाचिनि समासे उदके परे पूर्वमन्तोदात्तम् । गुडोदकम् । स्वरे कृतेऽत्र एकादेशः स्वरितो वानुदात्ते पदादाविति पक्षे स्वरितः । अकेवले किम् । शीतोदकम् । ▮ द्विगौ क्रतौ ।६।२।९७। द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वमन्तोदात्तम् । गर्गत्रिरात्रः । द्विगौ किम् । अतिरात्रः । क्रतौ किम् । बिल्वहोमस्य सप्तरात्रो बिल्वसप्तरात्रः । ▮ सभायां नपुंसके ।६।२।९८। सभायां परतो नपुंसकलिङ्गे समासे पूर्वमन्तोदात्तम् । गोपालसभम् । स्त्रीसभम् । सभायां किम् । ब्राह्मणसेनम् । नपुंसके किम् । राजसभा । प्रतिपदोक्तनपुंसकग्रहणान्नेह । रमणीयसभम् ब्राह्मणकुलम् । ▮ पुरे प्राचाम् ।६।२।९९। देवदत्तपुरम् । नान्दीपुरम् । प्राचां किम् । शिवपुरम् । ▮ अरिष्टगौडपूर्वे च ।६।२।१००। पुरे परे अरिष्टगौडपूर्वसमासे पूर्वमन्तोदात्तम् । अरिष्टपुरम् । गौडपुरम् । पूर्वग्रहणं किम् । इहापि यथा स्यात् । अरिष्टाश्रितपुरम् । गौडभृत्यपुरम् । ▮ न हास्तिनफलकमार्देयाः ।६।२।१०१। पुरे परे नैतान्यन्तोदात्तानि । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् । मृदेरपत्यमिति शुभ्रादित्वाड्ढक् । ▮ कुसूलकूपकुम्भशालं बिले ।६।२।१०२।

---

षष्ठ्या अलुक् ॥—**अन्तः** ॥ अत्रापि प्रकरणे पूर्वपदविषया प्रथमा षष्ठ्यर्थे वेदितव्या ॥—**सर्वं गुण–**॥ गुणकार्त्स्न्ये वर्तमानः सर्वः अन्तोदात्तः, यत्र गुणान्तरस्याभावस्तत्र गुणकार्त्स्न्यं भवति ॥—**सर्वश्वेत** इति । 'पूर्वकालैक–' इत्यादिना कर्मधारयः । अत्र शौक्ल्येन गुणेन सर्वावयवानां व्याप्तिर्गम्यते ॥—**आश्रयव्याप्त्येति** । नतूज्ज्वलत्वेन ॥—**सर्वसौवर्ण** इति । विकारविषयमात्रं कार्त्स्न्यम् ॥—**सर्वश्वेत** इति । 'गुणात्तरेण तरलोपश्च' इति समासः तरप्रत्ययलोपश्च ॥—**कार्त्स्न्ये किमिति** । गुणवाचिन्युत्तरपदे सर्वशब्दस्तत्कार्त्स्न्यं न व्यभिचरतीति प्रश्नः । अयं नियमः कर्मधारये न षष्ठीसमास इत्याह—**सर्वेषामिति** । गुणिकार्त्स्न्ये वर्तमानो न गुणकार्त्स्न्ये । सर्वेषामिति गुणसंबन्धे षष्ठी । पटस्य शौक्ल्यमितिवद् गुणवाचिन एव प्रत्ययः । सर्वेषां पटानां द्रव्यान्तराधारश्वेतगुणापेक्षया सातिशयः श्वेतो गुण इत्यर्थः । यदा तु प्रतिपदोक्तत्वात् 'पूर्वकालैक–' इति समासो गृह्यते तदा कार्त्स्न्यग्रहणं मास्तु ॥—**अञ्जनागिरिरिति** । 'वनगिर्योः संज्ञायाम्' इति दीर्घः ॥—**कुमार्याम्–**॥ कुमारीशब्दे परे पूर्वपदमन्तोदात्तं स्याद्वयसि द्योत्ये ॥—**वृद्धकुमारीति** । विशेषणसमासः । 'पुंवत्कर्मधारय–' इति पुंवद्भावः ॥ ननु कुमारीशब्दः प्रथमे वयसि वर्तते तथा 'वयसि प्रथमे' इत्यनेन ङीबत्र विहितः तस्य कथ चरमवयोवाचिना वृद्धेन सामानाधिकरण्यमत आह—**कुमारीत्यादि** । कुमारीशब्दे द्वयं प्रवृत्तिनिमित्तं प्रथमं वयः पुंसा सहासंप्रयोगश्च तत्राद्यमर्थं त्यक्त्वा द्वितीयमात्रे वर्तते तदा वृद्धादिसामानाधिकरण्यं भवति तदाह—**तत्रेति** । शब्दान्तराभिधेयमित्यर्थः ॥—**न कुमारत्वमेवेति** । यदेतत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं तद्वयो न गृह्यत इत्यर्थः । एतच्च वयोग्रहणसामर्थ्याल्लभ्यते । अन्यथा कुमारीशब्दप्रयोगे नियोगतः प्रथमवयो गम्यत इत्यनर्थकं स्यात् । ननु तर्हि ङीबपि न स्यादिति चेच्छृणु । पूर्वं हि प्रथमं वयः प्रवृत्तिनिमित्तं कृत्वा ङीप् कृतः सोऽनन्तर गोवृद्धादिसामानाधिकरण्येपि न निवर्तते ॥—**परमकुमारीति** । अत्र कुमारत्वमेव गम्यते न वयोन्तरमिति भवति प्रत्युदाहरणम् ॥—**उदके–**॥ अकेवल इति पदच्छेदः । अन्यथाऽसंदेहार्थं केवल उदक इत्येव ब्रूयात्तदाह—**अकेवलं मिश्रमिति** । द्रव्यान्तरसंपृक्तं मिश्रम् ॥—**गुडोदकमिति** । गुडमिश्रमुदकं गुडोदकम् । शीतोदकमिति कर्मधारयः ॥—**गर्गत्रिरात्रमिति** । षष्ठीसमासः । तिसृणां रात्रीणां समाहारस्त्रिरात्रम् । 'अहःसर्वैकदेश–' इत्यादिनाच् समासान्तः । 'संख्यापूर्वं रात्रं क्लीबम्' इति क्लीबत्वम् । एवं सप्तरात्र इति । रात्रिमतिक्रान्त इति प्रादिसमासः । बिल्वसप्तरात्रमित्यत्र बिल्वशब्दो बिल्वहोमे वर्तते तेन सह षष्ठीसमासः ॥—**गोपालसभमिति** । 'अशाला च' इति क्लीबत्वम् ॥—**प्रतिपदोक्तेति** । 'सभाराजा–' इत्यादिविहितम् ॥—**रमणीयसभमिति** । रमणीया सभा यस्येति बहुव्रीहिः । अत्राभिधेयवशान्नपुंसकत्वं न प्रतिपदोक्तम् ॥—**पुरे प्रा–**॥ पुरशब्दे परे प्राचां देशे पूर्वपदमन्तोदात्तं स्यात् ॥—**अरिष्ट—**॥—**पूर्वग्रहणं किमिति** । अरिष्टगौडयोरिति वक्तव्यमिति प्रश्नः ॥—**इहापि यथा स्यादिति** । पूर्वग्रहणे हि सति बहुव्रीहिर्लभ्यते । अरिष्टगौडौ पूर्वौ यस्मिन्समास इति तेनारिष्टश्रितपुरं गौडभृत्यपुरमित्यत्रापि पूर्वपदमन्तोदात्तं भवति । असति तु पूर्वग्रहणे श्रितभृत्यशब्दाभ्यां व्यवहितत्वादरिष्टगौडयोस्तावन्न स्यात् समुदाययोश्च सूत्रेऽनुपात्तत्वात् ॥—**न हास्ति—**॥ पुरे प्राचामिति प्राप्तः प्रतिषिध्यते ॥—**मार्देयपुरमिति** । 'ढे लोपोऽकद्र्वाः'* इत्युकारलोपः ॥—**दिक्शब्दा—**॥ दिक्शब्दाः पूर्व-

कुसूलादीन्यन्तोदात्तानि बिले परे । कुसूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालबिलम् । कुसूलादि किम् । सर्पबिलम् । बिल इति किम् । कुसूलस्वामी । ▣ दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ।६।२।१०३। दिक्शब्दा अन्तोदात्ता भवन्त्येषु । पूर्वेषुकामशमी । अपरकृष्णमृत्तिका । जनपदे । पूर्वपञ्चालाः । आख्याने । पूर्वयायातम् । पूर्वचानराटम् । शब्दग्रहणं कालवाचिदिक्शब्दस्य परिग्रहार्थम् । ▣ आचार्योपसर्जनश्चाऽन्तेवासिनि ।६।२।१०४। आचार्योपसर्जनान्तेवासिनि परे दिक्शब्दा अन्तोदात्ता भवन्ति । पूर्वपाणिनीयाः । आचार्येति किम् । पूर्वान्तेवासी । अन्तेवासिनि किम् । पूर्वपाणिनीयं शास्त्रम् । ▣ उत्तरपदवृद्धौ सर्वं च ।६।२।१०५। उत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता तद्वत्युत्तरपदे परे सर्वशब्दो दिक्शब्दाश्चान्तोदात्ता भवन्ति । सर्वपाञ्चालकः । अपरपाञ्चालकः । अधिकारग्रहणं किम् । सर्वभासः । सर्वकारकः । ▣ बहुव्रीहौ विश्वं संज्ञायाम् ।६।२।१०६। बहुव्रीहौ विश्वशब्दः पूर्वपदभूतः संज्ञायामन्तोदात्तः स्यात् । पूर्वपदप्रकृतिस्वरेण प्राप्तस्याद्युदात्तस्यापवादः । विश्वकर्मा । विश्वदेवः । आविश्वदेवं सत्पतिम् । बहुव्रीहौ किम् । विश्वे च ते देवाश्च विश्वदेवाः । संज्ञायां किम् । विश्वदेवः । प्रागव्ययीभावाद्बहुव्रीह्यधिकारः । ▣ उदराश्वेषुषु ।६।२।१०७। संज्ञायामिति वर्तते । वृकोदरः । हर्यश्वः । महेषुः । ▣ क्षेपे ।६।२।१०८। उदराश्वेषुषु पूर्वमन्तोदात्तं बहुव्रीहौ निन्दायाम् । घटोदरः । कटुकाश्वः । चलाचलेषुः । अनुदर इत्यत्र नञ्सुभ्यामिति भवति विप्रतिषेधेन । ▣ नदी बन्धुनि ।६।२।१०९। बन्धुशब्दे परे नद्यन्तं पूर्वमन्तोदात्तं बहुव्रीहौ । गार्गीबन्धुः । नदी किम् । ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्तः । बन्धुनि किम् । गार्गीप्रियः । ▣ निष्ठोपसर्गपूर्वमन्यतरस्याम् ।६।२।११०। निष्ठान्तं पूर्वपदमन्तोदात्तं वा । प्रधौतपादः । निष्ठा किम् । प्रसेवकमुखः । उपसर्ग-

---

पदानि अन्तोदात्तानि स्युर्ग्रामादिषूत्तरपदेषु । चानराटे स्वरूपग्रहणमितरेष्वर्थग्रहणम् ॥—**पूर्वेषुकामशमी । अपरकृष्णमृत्तिकेति** । 'दिक्संख्ये संज्ञायाम्' इति समासः ॥—**पूर्वपञ्चाला** इति । समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति पञ्चालैकदेशे पञ्चालशब्दः । ततः पूर्वशब्देन सामानाधिकरण्यात् 'पूर्वापरप्रथम-' इत्यादिना कर्मधारयः ॥—**पूर्वयायातमिति** । ययातिमधिकृत्य कृतो ग्रन्थ इत्यणि यायातशब्दः सिद्धः ॥—**शब्दग्रहणमित्यादि** । दिशि दृष्टः शब्द इत्युत्तरपदलोपी समासस्तेन कालवाचिनोपि ग्रहणात्पूर्वयायातमित्यादावपि भवति ॥—**आचार्योपसर्जन—**॥ आचार्योपसर्जनग्रहणमन्तेवासिनो विशेषणं सप्तम्यर्थे प्रथमा तदाह—**आचार्योपसर्जनान्तेवासिनीति** । आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः स चासावन्तेवासी च तद्वाचिनि ॥—**पूर्वपाणिनीया** इति । 'पूर्वापरप्रथम-' इति समासः । पाणिनेश्छात्राः पाणिनीयाः । अत्रान्तेवासिनः प्रधानमाचार्यस्तूपसर्जनम् ॥—**पूर्वपाणिनीयं शास्त्रमिति** । पूर्वं चिरतनमित्यर्थः ॥—**उत्तरपदवृद्धौ—**॥ अत्र वृद्धावित्येतावतैव वृद्धिमदुत्तरपदपरिग्रहे सिद्धे उत्तरपदग्रहणात्तदधिकारो लक्ष्यते । उत्तरपदशब्दस्य स्वरितत्वादिहाधिकारप्रतिपत्तिरित्याशयेनाह—**उत्तरस्य पदस्येत्यादि** ॥—**सर्वपाञ्चालक** इत्यादि । 'सुसर्वार्धदिक्शब्दस्य' इति तदन्तविधौ 'अवृद्धादपि बहुवचनविषयात्' इति वुञ् । सुसर्वार्धाज्जनपदस्य 'दिशोऽमद्राणाम्' इत्युत्तरपदवृद्धिः ॥ वृद्धिशब्देन या वृद्धिर्विहिता तद्वत्युत्तरपद इत्युच्यमानेपि न निर्वाह इत्याह—**सर्वकारक** इति ॥—**बहुव्रीहौ—**॥ संज्ञायामिति बहुव्रीहेर्विशेषण न विश्वशब्दस्येति । विशेः क्वन् नित्वादाद्युदात्तो विश्वशब्दः ॥—**उदरा—**॥ एषूत्तरपदेषु बहुव्रीहौ संज्ञायां पूर्वपदमन्तोदात्तं स्यात् । अयमपि पूर्वपदप्रकृतिस्वरस्यापवादः । वृकशब्दः 'प्राणिनां कुपूर्वाणाम्' इत्याद्युदात्तः । वृकस्येवोदरमस्य वृकोदरः ॥—**हर्यश्व** इति । हरतेः 'सर्वधातुभ्यः' इति इन् आद्युदात्तो हरिशब्दः । 'हरिरश्वोऽस्य हर्यश्वः । यणि कृते 'उदात्तस्वरितयोः-' इति स्वरितः ॥—**महेषुरिति** । महच्छब्दोऽन्तोदात्तः 'वर्तमाने पृषन्महत्-' इत्यत्र तथा निपातनात् । तथा च पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति त्वन्यार्थ आरम्भोऽपवादत्वादनेनैवान्तोदात्तत्वम् । उदाहरण तु सुवर्णपुङ्खेषुरिति ज्ञेयम् । सुष्ठु वर्णो येषां ते सुवर्णाः । 'नञ्दुःसुभ्याम्-' इत्यन्तोदात्तत्वम् । सुवर्णाः पुङ्खा येषां ते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वं पुनरिषुशब्देन बहुव्रीहौ पूर्वपदमन्तोदात्तम् । एकादेशस्तु 'स्वरितो वानुदात्ते पदादौ' इति पक्षे स्वरितः ॥—**घटोदर** इति । घटशब्दः पचाद्यजन्तः । कटुशब्दात्संज्ञायां कन् । 'चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्य' इति पचाद्यजन्तो चलाचलशब्दः ॥—**अनुदर** इत्यादि । अस्यावकाशः घटोदरः । 'नञ्सुभ्याम्-' इत्यस्यावकाशः । अयशाः सुयशाः । एवं स्थिते विप्रतिषेधः ॥—**नदी—**॥ बन्धुनीति शब्दस्वरूपापेक्षया नपुंसकनिर्देशः ॥ 'गर्गादिभ्यो यञ्' इति यञन्ताद्गर्गशब्दात् 'यञश्च' इति ङीप् ॥—**गार्गी—**। ञित्स्वरेणाद्युदात्तः ॥—**ब्रह्मबन्धुरिति** । 'बृंहेर्नोच्च' इति नकारस्याकारादेशो मनिन्प्रत्ययश्चेति मनिनन्तो ब्रह्मशब्दो नित्स्वरेणाद्युदात्तः तदाह—**ब्रह्मेत्यादि** ॥—**गार्गीप्रिय** इति । अत्र पूर्वपदप्रकृतिस्वर एव ॥—**निष्ठोपसर्ग—**॥ उपसर्गपूर्वं निष्ठान्तं पूर्वपदमन्तोदात्तम् ॥—**प्रधौतपाद** इति । धावु गतिशुद्ध्योः क्तः 'च्छ्वोः शूड्-' इत्यूठ् 'एत्येधत्यूठ्सु' इति वृद्धिः । प्रधौतशब्दो थाथादिस्वरेणान्तोदात्तः ॥ —**प्रसेवकमुख** इति । ण्वुलन्तः प्रसेवकशब्दः कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरेण मध्योदात्तः ॥—**शुष्कमुख** इति । 'शुष्क-

पृष्ठे शिवः । शुष्कपृष्ठः । **उत्तरपदाऽऽदिः** ।६।२।१११। उत्तरपदाधिकार आपादान्तम् । आद्यधिकारस्तु प्रकृत्या भगालमित्यवधिकः । **कर्णो वर्णलक्षणात्** ।६।२।११२। वर्णवाचिनो लक्षणवाचिनश्च परः कर्णशब्द आद्युदात्तो बहुव्रीहौ । शुक्लकर्णः । शङ्कुकर्णः । कर्णः किम् । श्वेतपादः । वर्णलक्षणात्किम् । शोभनकर्णः । **संज्ञौपम्ययोश्च** ।६।२।११३। कर्ण आद्युदात्तः । मणिकर्णः । औपम्ये । गोकर्णः । **कण्ठपृष्ठग्रीवाजङ्घं च** ।६।२।११४। संज्ञौपम्ययोर्बहुव्रीहौ । शितिकण्ठः । काण्डपृष्ठः । सुग्रीवः । नाडीजङ्घः । औपम्ये । खरकण्ठः । गोपृष्ठः । अश्वग्रीवः । गोजङ्घः । **शृङ्गमवस्थायां च** ।६।२।११५। शृङ्गशब्दोऽवस्थायां संज्ञौपम्ययोश्चाद्युदात्तो बहुव्रीहौ । उद्गतशृङ्गः । द्व्यङ्गुलशृङ्गः । अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषोऽवस्था । संज्ञायाम् । ऋष्यशृङ्गः । उपमायाम् । मेषशृङ्गः । अवस्थेति किम् । स्थूलशृङ्गः । **नञो जरमरमित्रमृताः** ।६।२।११६। नञः परा एते आद्युदात्ता बहुव्रीहौ । न मे जरा अजरम् । अमरम् । अमित्रमर्दय । श्रवो देवेष्वमृतम् । नञः किम् । ब्राह्मणमित्रः । जेति किम् । अशत्रुः । **सोर्मनसी अलोमोषसी** ।६।२।११७। सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाद्युदात्तं स्यात् । नञ्सुभ्यामित्यस्यापवादः । सुकर्माणः सुयुजः । स नो वक्षदनिमानः सुवत्मा । शिवा पशुभ्यः सुमनाः सुवर्चाः । सुपेशसस्करति । सोः किम् । कृतकर्मा । मनसी किम् । सुराजा । अलोमोषसी किम् । सुलोमा । सूषाः । कपि तु परत्वात्कपि पूर्वमिति भवति । सुकर्मकः । सुस्रोतस्कः । **क्रत्वादयश्च** ।६।२।११८। सोः परे आद्युदात्ताः स्युः । सा-ग्राव्याय सुक्रतुः । सुप्रतीका । सुहव्यः । सुप्रतूर्तिमनेहसम् । **आद्युदात्तं द्व्यच् छन्दसि** ।६।२।११९। यदाद्युदात्तं द्व्यच् तत्सोरुत्तरं बहुव्रीहावाद्युदात्तम् । अधा स्वश्वाः । सुरथाँ आतिथिग्वे । नित्स्वरेणाश्वरथावाद्युदात्तौ । आद्युदात्तं किम् । या सुबाहुः । द्व्यच् किम् । सुगुरसत्सुहिरण्यः । हिरण्यशब्दस्त्र्यच् । **वीरवीर्यौ च** ।६।२।१२०। सोः परौ बहुव्रीहौ छन्दस्याद्युदात्तौ । सुवीरेण रयिणा । सुवीर्यस्य गोमतः । वीर्यशब्दो यत्प्रत्ययान्तः । तत्र यतोऽनाव इत्याद्युदात्तत्वं नेति वीर्यग्रहणं ज्ञापकम् । तत्र हि सति पूर्वेणैव सिद्धं स्यात् । **कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे** ।६।२।१२१। उपकूलम् । उपतीरम् । उपतूलम् । उपमूलम् । उपशालम् । उपाक्षम् । सुषमम् । निःषमम् ।

---

घृष्टौ' इति शुष्कशब्द आद्युदात्तः ॥—**उत्तरपदाऽऽदिः** ॥ उत्तरपदेति पृथक्पदं लुप्तषष्ठीकम् ॥—**कर्णो**—॥—**आद्युदात्त** इति । सिद्धार्थकथनमेतत् । उत्तरपदस्य कर्णशब्दस्यादिरुदात्त इत्यक्षरार्थः । एवं चास्मिन्प्रकरणे कर्ण इत्यादौ षष्ठ्यर्थे प्रथमेति ज्ञेयम् ॥—**शङ्कुकर्ण** इति । शङ्कुः कर्णे यस्येति विग्रहः 'सप्तमीविशेषणे' इति सप्तम्यन्तस्य पूर्वनिपाते प्राप्ते 'गड्वादेः परा सप्तमी' इति परनिपातः । 'कर्णे लक्षणस्य' इति दीर्घः । पशूनां विभागज्ञानार्थं शङ्कुप्रतिरूपकं कर्णादिषु यच्चिह्नं क्रियते तदिह लक्षणं गृह्यते पृथग्वर्णग्रहणात् । अन्यथा वर्णेनापि लक्ष्यमाणत्वादनर्थकं तत्स्यात् ॥—**श्वेतपाद** इति । श्विता वर्णे पचाद्यच् ॥—**शोभनकर्ण** इति । शुभ शोभार्थे 'अनुदात्तेतश्च हलादेः' इति युच् । प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वर एव भवति ॥—**संज्ञौपम्य**—॥ संज्ञायामौपम्ये च यो बहुव्रीहिस्तत्र कर्णशब्द उत्तरपदमाद्युदात्तं स्यात् ॥—**कण्ठपृष्ठ**—॥ कण्ठादीना समाहारद्वन्द्वे नपुंसकह्रस्वत्वम् । कण्ठादीन्युत्तरपदानि संज्ञौपम्ययोराद्युदात्तानि स्युर्बहुव्रीहौ । कण्ठपृष्ठौ 'स्वाङ्गशिटाम्' इत्याद्युदात्तौ । ग्रीवाजङ्घयोः स्वाङ्गत्वेऽप्यदन्तत्वाभावादन्तोदात्तत्वम् । सुग्रीव इत्यत्र परत्वात् 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वेन भाव्यम् । अस्य तु दशग्रीवादिरवकाशः । यदि तु नेष्यते तर्हि चकारोऽस्यैव विधेः समुच्चयार्थ इति व्याख्येयम् ॥—**नाडीजङ्घ** इति । नाड्याकारे जङ्घे यस्य स नाडीजङ्घः ॥—**नञो जर**—॥ 'नञ्सुभ्याम्' इत्यस्यापवादः । जरणं जरः 'ऋदोरप्' । मरणं मरः अमरम् । अस्मादेव निपातनादप् । ञिमिदा स्नेहने 'अमिचिमिदिशसिभ्यः क्त्रः' । मृङो नपुंसके भावे क्तः । सूत्रे तु शब्दपरत्वात्पुंस्त्वम् ॥—**जेति किमिति** । जरमरमित्रमृतग्रहणं किमर्थमित्यर्थः ॥—**अशत्रुरिति** । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥—**सोर्मन**—॥ मन् च अस् च मनसी ॥—**सुकर्माण** इत्यादि । यद्यपि आद्युदात्त 'द्व्यच्छन्दसि' इत्यनेन सिद्धमिदं तथापि सुप्रथिमेत्यादि बह्वजर्थमच्छन्दोर्थं च सूत्रमिति बोध्यम् । सुप्रथिमेत्यत्र पृथोर्भाव इति पृथ्वादिभ्य इमनिच् । 'र ऋतो हलादेर्लघोः' इति रादेशः ॥—**सुराजेति** । राजशब्दः 'कनिन्युवृषि' इति कनिन्प्रत्ययान्तः । लुनातेर्मनिन् लोम । उष दाहे । मिथुनेऽसिरिति वर्तमाने उषः कित् । उषः ॥—**कपि त्विति** । अस्यावकाशः सुकर्मा । कपि पूर्वमित्यस्यावकाशः । अपवकः । एवं स्थिते विप्रतिषेधः ॥—**आद्युदात्तम्**—॥ 'नञ्सुभ्याम्' इत्यस्यापवादः । 'अशूप्रुषिलटिकणिखटि' इति क्वन्नन्तोऽश्वशब्दः । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति क्थनन्तो रथशब्दस्तदाह—नित्स्वरेणेति ॥—**सुबाहुरिति** । 'अर्जिदृशिकम्यमिपशिबाध—' इति कुप्रत्ययान्तो बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः ॥—**सुहिरण्य** इति । 'हर्यतेः कन्यन् हिर च' इति कन्यन्नन्तो हिरण्यशब्द आद्युदात्तस्त्र्यच् ॥—**वीरवीर्यौ** ॥ वीर विक्रान्तौ चुरादिस्तत्र पचाद्यचि वीरः । अचो यत् । वीरेषु साधुरिति प्राग्दीव्यतीयो वा यत् । वीर्यः ॥—**तत्रेत्यादि** । कथं पुनरेतज्ज्ञापकमित्यत आह—तत्र हि सतीति ॥—**कूलतीर**—॥ एतान्युत्तरपदान्याद्युदात्तानि स्युरव्ययीभावे । कूल-

तिष्ठद्गुप्रभृतिष्वेते । कूलादिग्रहणं किम् । उपकुम्भम् । अव्ययीभावे किम् । परमकूलम् । ॥ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ।६।२।१२२। द्विकंसः । द्विमन्थः । द्विशूर्पः । द्विपाय्यम् । द्विकाण्डम् । द्विगौ किम् । परमकंसः । ॥ तत्पुरुषे शालायां नपुंसके ।६।२।१२३। शालाशब्दान्ते तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तम् । ब्राह्मणशालम् । तत्पुरुषे किम् । दृढशालं ब्राह्मणकुलम् । शालायां किम् । ब्राह्मणसेनम् । नपुंसके किम् । ब्राह्मणशाला । ॥ कन्था च ।६।२।१२४। तत्पुरुषे नपुंसकलिङ्गे कन्थाशब्द उत्तरपदमाद्युदात्तम् । सौशमिकन्थम् । आह्वरकन्थम् । नपुंसके किम् । दाक्षिकन्था । ॥ आदिश्चिहणादीनाम् ।६।२।१२५। कन्थान्ते तत्पुरुषे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तः । चिहणकन्थम् । मदुरकन्थम् । आदिरिति वर्तमाने पुनर्ग्रहणं पूर्वपदस्याद्युदात्तार्थम् । ॥ चेलखेटकटुककाण्डं गर्हायाम् ।६।२।१२६। चेलादीन्युत्तरपदान्याद्युदात्तानि । पुत्रचेलम् । नगरखेटम् । दधिकटुकम् । प्रजाकाण्डम् । चेलादिसादृश्येन पुत्रादीनां गर्हा । व्याघ्रादित्वात्समासः । गर्हायां किम् । परमचेलम् । ॥ चीरमुपमानम् ।६।२।१२७। वस्त्रं चीरमिव वस्त्रचीरम् । कम्बलचीरम् । उपमानं किम् । परमचीरम् । ॥ पललसूपशाकं मिश्रे ।६।२।१२८। घृतपललम् । घृतसूपः । घृतशाकम् । भक्ष्येण मिश्रीकरणमिति समासः । मिश्रे किम् । परमपललम् । ॥ कूलसूदस्थलकर्षाः संज्ञायाम् ।६।२।१२९। आद्युदात्तास्तत्पुरुषे । दाक्षिकूलम् । शाण्डिसूदम् । दाण्डायनस्थलम् । दाक्षिकर्षः । ग्रामसंज्ञा एताः । संज्ञायां किम् । परमकूलम् । ॥ अकर्मधारये राज्यम् ।६।२।१३०। कर्मधारयवर्जिते तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् । ब्राह्मणराज्यम् । अकेति किम् । परमराज्यम् ॥ * चेलराज्यादिस्वरादव्ययस्वरः पूर्वविप्रतिषेधेन । कुचेलम् । कुराज्यम् । ॥ वर्ग्यादयश्च ।६।२।१३१। अर्जुनवर्ग्यः । वासुदेवपक्ष्यः । अकर्मधारय इत्येव । परमवर्ग्यः । वर्गादिर्दिगाद्यन्तर्गणः । ॥ पुत्रः पुम्भ्यः ।६।२।१३२। पुम्शब्देभ्यः परः पुत्रशब्द आद्युदात्तस्तत्पुरुषे । दाशकिपुत्रः । माहिषपुत्रः । पुत्रः किम् । कौनटिमातुलः । पुम्भ्यः किम् । दाक्षीपुत्रः । ॥ नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।६।२।१३३। एभ्यः पुत्रो नाद्युदात्तः । आख्याग्रहणात्पर्यायाणां तद्विशेषाणां च ग्रहणम् । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वर-

---

ममित्यादौ 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इति षत्वम् । तस्यासिद्धत्वात्समशब्द एवायम् ॥—**तिष्ठद्गुप्रभृतिष्वेत** इति । तेनाव्ययीभावसंज्ञा ॥—**कंसमन्थ**–॥ एतान्युत्तरपदानि द्विगावाद्युदात्तानि स्युः ॥—**द्विकंस** इति । द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः 'कंसाट्टिठन्' इति टिठन् । तस्य 'अध्यर्धपूर्व–' इति लुक् ॥—**द्विमन्था** इति । 'आर्हादगोपुच्छ–' इत्यादिना ठक् । शेषं पूर्ववत् ॥—**द्विशूर्प** इति । 'शूर्पादञन्यतरस्याम्' ॥—**द्विपाय्यमिति** । 'पाय्यसान्नाय्य–' इत्यादिना पाय्यशब्दः परिमाणवाची निपातितः । तत्र 'प्राग्वहतेष्ठक्' ॥—**द्विकाण्डमिति** । द्वे काण्डे प्रमाणमस्य 'प्रमाणे द्वयसच्' इत्यादिना मात्रच् 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक् ॥—**ब्राह्मणशालमिति** । 'विभाषा सेनासुराच्छाया–' इति नपुंसकता ॥—**दृढशालमिति** । बहुव्रीहिरयं तत्र पूर्वपदप्रकृतिस्वर एव भवति पूर्वपदं च निष्ठान्तत्वादन्तोदात्तम् । ननु चात्र लक्षणप्रतिपदोक्तपरिभाषयैव न भविष्यति । सत्यम् । उत्तरार्थमावश्यकं तत्पुरुषग्रहणमिहैव क्रियते परिभाषा नाश्रयणीया ॥—**सौशमिकन्थमिति** । शोभनः शमोऽस्य सुशमस्तस्यापत्यं सौशमिस्तस्य कन्था सौशमिकन्थम् । 'संज्ञायां कन्थोशीनरेषु' इति नपुंसकत्वम् ॥—**आह्वरकन्थमिति** । आङ्पूर्वात् ह्वयतेः 'आतश्चोपसर्गे' इति कः ॥—**आदिश्चिहणादीनाम्**॥ चिनोतेः क्विप् । चित् । हन्तेः पचाद्यच् । हन इति चिहण इति निपातनात्तलोपो णत्वं च । मल मल्ल धारणे आभ्यां रः । निपातनाल्लस्य दत्वं मन्दरः । आदिरिति वर्तमान इति पूर्वत्र त्यादिग्रहणमुत्तरपदाभिसंबद्धम् । इह तु चिहणादीनां पूर्वपदानामाद्युदात्तत्वमिष्यते तदर्थं पुनरादिग्रहणं कर्तव्यम् ॥—**पुत्रचेलमिति** । चेलं वस्त्रं तद्वत्तुच्छमित्यर्थः ॥—**नगरखेटमिति** । खेटमिति तृणनाम तद्वद्दुर्बलः ॥—**दधिकटुकमिति** । कटु गतस्वादु तद्वत् गतस्वादु ॥ **प्रजाकाण्डमिति** । काण्डमिति शरनाम स यथा सत्वरपीडाकरः एवभूतम् । व्याघ्रादिभिरिति समासः ॥—**चीर**–॥ उपमानवाचिचीरशब्द उत्तरपदमाद्युदात्तं स्यात्तत्पुरुषे ॥—**वस्त्रचीरमिति** । पूर्ववद्व्याघ्रादिसमासः ॥—**पललसूप**–॥ पललादीन्युत्तरपदान्याद्युदात्तानि स्युर्मिश्रे तत्पुरुषे ॥—**घृतपललमित्यादि** । घृतेन मिश्रं पललमिति विग्रहः । पललं मांसम् । 'पललं क्रव्यमामिषम्' इत्यमरः ॥—**कूलसूद**–॥ एतान्युत्तरपदान्याद्युदात्तानि स्युः संज्ञायाम् ॥—**दाण्डायनस्थलीति** । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति स्थलीशब्दो गृह्यते । 'जानपदकुण्ड–' इत्यनेन ङीष् ॥—**चेलराज्यादिस्वरादिति** । आदिशब्देन वर्ग्यादिस्वरपरिग्रहः । चेलराज्यादिस्वरस्यावकाशो भार्याचेलं ब्राह्मणराज्यम् । 'तत्पुरुषे तुल्यार्थ–' इत्यादिना विहितस्याव्ययस्वरस्यावकाशो निष्कौशाम्बिः । कुचेलं कुराज्यमित्यत्रोभयप्रसङ्गे पूर्वप्रतिषेधः ॥—**वर्ग्या**–॥ वर्ग्यादीन्युत्तरपदान्याद्युदात्तानि स्युः । कर्मधारये तत्पुरुषे ये दिगादिषु वर्गादयः पठ्यन्ते त एवेह यत्प्रत्ययान्ता वर्ग्यादयो गृह्यन्ते वर्गादिपाठाभावात्तदाह—**वर्गादिर्दिगाद्यन्तर्गण** इति ॥—**कौनटिमातुल** इति । कुनटस्यापत्यं कौनटिः तस्य मातुलः ॥—**आख्याग्रहणादिति** । आख्याग्रहणमाचार्यादिभिः प्रत्येकं संबध्यते ॥—

पुत्रः । नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतुः पुत्रः । संयुक्ताः सम्बन्धिनः । श्यालपुत्रः । ज्ञातयो मातापितृसम्बन्धेन बान्धवाः । ज्ञातिपुत्रः । भ्रातुष्पुत्रः । **चूर्णादीन्यप्राणिषष्ठ्याः** ।६।२।१३४। एतानि प्राणिभिन्नषष्ठ्यन्तात्पराण्याद्युदात्तानि तत्पुरुषे । मुद्गचूर्णम् । अप्रेति किम् । मत्स्यचूर्णम् । **षट् च काण्डादीनि** ।६।२।१३५। अप्राणिषष्ठ्या आद्युदात्तानि । दर्भकाण्डम् । दर्भचीरम् । तिलपललम् । मुद्गसूपः । मूलकशाकम् । नदीकूलम् । षट् किम् । राजसूदः । अप्रेति किम् । दत्तकाण्डम् । **कुण्डं वनम्** ।६।२।१३६। कुण्डमाद्युदात्तं वनवाचिनि तत्पुरुषे । दर्भकुण्डम् । कुण्डशब्दोऽत्र सादृश्ये । वनं किम् । मृत्कुण्डम् । **प्रकृत्या भगालम्** ।६।२।१३७। भगालवाच्युत्तरपदं तत्पुरुषे प्रकृत्या । कुम्भीभगालम् । कुम्भीनदालम् । कुम्भीपालम् । मध्योदात्ता एते । प्रकृत्येत्यधिकृतमन्त इति यावत् । **शितेर्नित्याऽबह्वज्बहुव्रीहावभसत्** ।६।२।१३८। शितेः परं नित्याबह्वच्कं प्रकृत्या । शितिपादः । शित्यंसः । पादशब्दो वृषादित्वादाद्युदात्तः । अंसशब्दः प्रत्ययस्य नित्त्वात् । शितेः किम् । दर्शनीयपादः । अभसत्किम् । शितिभसत् । शितिराद्युदात्तः । पूर्वपदप्रकृतिस्वरापवादोऽयं योग. । **गतिकारकोपपदात्कृत्** ।६।२।१३९। एभ्यः कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे । प्रकारकः । प्रहरणम् । शोणाधृष्णू नृवाहसा । इध्मप्रव्रश्चनः । उपपदात् । उच्चैःकारम् । ईषत्करः । गतीति किम् । देवस्य कारकः । शेषलक्षणा षष्ठी । कृद्ग्रहणं स्पष्टार्थम् । प्रपचतितरामित्यत्र तरबाद्यन्तेन समासे कृते आम् । तत्र सतिशिष्टत्वादाम्स्वरो भवतीत्येके । प्रपचतिदेश्यार्थं तु

---

**होतुः पुत्र** इति । 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इति षष्ठ्या अलुक् ॥—**भ्रातुष्पुत्र** इति । कस्कादिपाठात्षत्वम् ॥—**वर्णेति** ॥ वर्ण चूर्ण संकोचे पचाद्यच् ॥—**षट् च** ॥ अप्राणिभ्य. परा या षष्ठी तदन्तात्पराणि षट् काण्डादीन्याद्युदात्तानि स्युः । चेल खेट कटुक काण्डमिति काण्डशब्दादारभ्य कूल सूद स्थल कर्षा सञ्ज्ञायामिति कूलान्तानि काण्ड चीर पलल सूप शाककूल एतानि काण्डादीनि तत्र काण्ड गर्हायामित्युक्तमगर्हायामपि भवतीति । 'चीरमुपमानम्' इत्युक्तमनुपमानेऽपि भवति 'पललसूपशाक मिश्रे' इत्युक्तममिश्रेऽपि भवति कूल सञ्ज्ञायामित्युक्तमसञ्ज्ञायामपि भवति ॥—**अप्रेति किमिति** । अप्राणिषष्ठ्या इति किमर्थमित्यर्थः ॥—**मृत्कुण्डमि**ति । मृद्भाजनविशेष इत्यर्थं ॥—**प्रकृत्या**—॥ भगालमित्यर्थग्रहण तदाह—**भगालवाची**ति । अत्र व्याख्यानमेव शरणम् ॥—**मध्योदात्ता एते** इति । 'लघावन्ते द्वयोश्च' इति सूत्रात् ॥—**शितेः**—॥ शितेः पर नित्याबह्वच्क भसन्शब्दवर्जितं बहुव्रीहौ प्रकृतिस्वर स्यात् ॥—**अंसशब्द** इति । अमेः सन् असः ॥—**दर्शनीयपाद** इति । 'बहुव्रीहौ प्रकृत्या—' इति पूर्वपदप्रकृतिस्वरः । दर्शनीयशब्दोऽनीयर्प्रत्ययान्तः । 'उपोत्तम रिति' इत्युपात्तमादात्त ॥—**शितिराद्युदात्त** इति । 'वर्णाना तणतिनितान्तानाम्' इति सूत्रेण ॥—**गतिका**—॥ 'शितेर्नित्याबह्वच्—' इत्यतो बहुव्रीहिग्रहण नानुवर्ततेऽस्वरितत्वात् किं तु 'तत्पुरुषे शालायाम्' इत्यतो व्यवहितमपि तत्पुरुषग्रहणमनुवर्तते तदाह—**तत्पुरुषे** इति ॥—**प्रकारक** इति । 'कुगति—' इति समासः । लित्स्वरेण पूर्वप्रत्ययाद्युदात्तम् ॥—**नृवाहसे**ति । नॄन्वहतीति विग्रह' । 'वसेर्णित्' इत्यतो णिदित्यनुवृत्तेरसुनो णित्त्वादुपधावृद्धिः । नित्स्वरेणोत्तरपदमाद्युदात्तम् ॥—**इध्मप्रव्रश्चन** इति । प्रवृश्च्यते येनेति करणे ल्युट् । कर्मषष्ठ्यन्तेन इध्मशब्देन समासः । अत्र गतिप्रयुक्ते कृत्स्वरे कृते कारकप्रयुक्तः कृत्स्वरः ॥—**उच्चैःकारमि**ति । 'अव्यये यथाभिप्रेते' इति णमुल् । तत्र हि उच्चैरित्युपपदम् ॥—**ईषत्कर** इति । 'ईषद्दुःसुषु कृच्छ्रा—' इति खल् । उभयथापि लित्स्वरः ॥—**शेषलक्षणा षष्ठी**ति । न कर्मलक्षणा । तथा सति कारकमेव देवदत्तः स्यात् । 'तृजकाभ्या कर्तरि' इति समासप्रतिषेधश्च स्यात् । अत्र कृद्ग्रहण किमर्थम् । निर्गतः कौशाम्ब्याः निष्कौशाम्बिरित्यत्र मा भूत् । नैतदस्ति । यत्क्रियायुक्ता. प्रादयस्त प्रत्येव गत्युपसर्गसञ्ज्ञा भवन्ति । न तत्र कौशाम्बीशब्द प्रति क्रियायोगः कारक च क्रियायामेव संभवति । उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते । तदेव गत्यादिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते धातोश्च क्रियावाचित्व तस्माच्च द्वये प्रत्ययाः कृतस्तिङश्च । तत्र तिङन्तेन समासाभावात्कृदन्तमेव संभवति । अनुव्यचलदित्यत्र तु न गतित्वनिबन्धनः समासः किं तर्हि सुबन्तेन योगविभागात्समासः । तस्मान्नार्थः कृद्ग्रहणेनेत्यत आह—**कृद्ग्रहणं स्पष्टार्थमि**ति । य एवं प्रतिवक्तुमसमर्थस्त प्रति विस्पष्टार्थ क्रियते इत्यर्थः । ननु विस्पष्टार्थमपि क्रियमाणे कृद्ग्रहणे आमन्ते न प्राप्नोति । प्रपचतितरामिति । ततश्च समासस्वर बाधित्वाऽव्ययस्वर एव स्यादत आह—**प्रपचतितरामि**त्यादि । इत्येक इत्यस्य कृद्ग्रहणं विस्पष्टार्थमित्यादिना कृत्स्नेन सबन्धः । तदयमर्थः । कृद्ग्रहणं विस्पष्टार्थम् । आमन्ते च दोषाभाव इति केचिदाचार्या व्याचक्षते इति ॥—**प्रपचतिदेश्यार्थं त्वि**ति । आदिशब्देन प्रपचतिकल्पं प्रपचतिदेशीयः प्रपचतिरूपमित्येतेषां त्रयाणां ग्रहणम् । प्रपचतिदेश्यादौ अर्थः प्रयोजन यस्य तत्तथोक्तम् । अयमभिप्राय. । न विस्पष्टार्थ कृद्ग्रहणम्, अपि तु प्रपचतिदेश्यादौ यत्र सति शिष्टं स्वरान्तरं नास्ति तत्रापि स्वरो मा भूदव्ययपूर्वपदप्रकृतिस्वर एव यथा स्यादित्येवं सप्रयोजनमाहुः । अत्र हरदत्तः । इदं तु वक्तव्यम् । प्रपचतितरामित्यादौ तरबन्तेन समासे पश्चादाम् भवन्प्रत्ययग्रहणपरिभाषया पचतितरस्यैव धान्तत्वात्तत एव स्यात् । तत्र को दोषः ? सोपसर्गस्य धान्तस्यैकपद्याभावादाम् । प्रपचतितरां देव-

कृद्ग्रहणमित्यन्ये । **उभे वनस्पत्यादिषु युगपत्** ।६।२।१४०। एषु पूर्वोत्तरपदे युगपत्प्रकृत्या । वनस्पतिं वन आ । बृहस्पतिं यः । बृहच्छब्दोऽत्राद्युदात्तो निपात्यते । इयेषा शचीपतिम् । शार्ङ्गरवादित्वादाद्युदात्तः शचीशब्दः । शचीभिर्न इति दर्शनात् । तनूनपादुच्यते । नराशंसं वाजिनम् । निपातनाद्दीर्घः । शुनःशेपम् । **देवताद्वन्द्वे च** ।६।२।१४१। उभे युगपत्प्रकृत्या स्तः । आ न इन्द्रावरुणौ । इन्द्राबृहस्पती वयम् । देवता किम् । प्लक्षन्यग्रोधौ । द्वन्द्वे किम् । अग्निष्टोमः । **नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु** ।६।२।१४२। पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तं न । इन्द्राग्निभ्यां कंवृषणः । अपृथिव्यादौ किम् । द्यावापृथिवी जनयन् । आद्युदात्तो द्यावा निपात्यते । पृथिवीत्यन्तोदात्तः । सोमारुद्रौ । रोदेर्णिलुक्चेति रगन्तो रुद्रशब्दः । इन्द्रापूषणौ । श्वन्नुक्षन्पूषन्निति पूषा अन्तोदात्तो निपात्यते । शुक्रामन्थिनौ । मन्थिन्शब्द इन्नन्तत्वादन्तोदात्तः । उत्तरपदग्रहणमनुदात्तादावित्युत्तरपदविशेषणं यथा स्यात् द्वन्द्वविशेषणं मा भूत् । अनुदात्तादाविति विधिप्रतिषेधयोर्विषयविभागार्थम् । **अन्तः** ।६।२।१४३। अधिकारोऽयम् । **थाऽथघञ्क्ताऽजऽबित्रकाणाम्** ।६।२।१४४। थ अथ घञ् क्त अच् अप् इत्र क एतदन्तानां गतिकारकोपपदात्परेषामन्त उदात्तः । प्रभृथस्यायोः । आवसथः । घञ् । प्रभेदः । क्तः । धर्ता वज्री पुरुष्टुतः । पुरुषु बहुप्रदेशेषु स्तुत इति विग्रहः । अच् । प्रक्षयः । अप् । प्रलवः । इत्र । प्रलवित्रम् । क । गोवृषः । मूलविभुजादित्वात्कः । गतिकारकोपपदादित्येव । सुस्तुतं भवता । **सूपमानात् क्तः** ।६।२।१४५। सोरुपमानाच्च परं क्तान्तमन्तोदात्तम् । ऋतस्य योनौ सुकृतस्य । शशप्लुतम् । **संज्ञायामनाचितादीनाम्** ।६।२।१४६। गतिकारकोपपदात्

---

दत्तेत्यादावाम एकान्तरमामन्त्रितमनन्तिक इत्येष विधिर्न स्यात् शेषनिघातश्च प्रशब्दस्य न स्याद्भिन्नपदत्वात्तस्मात्प्रशब्दस्यामन्तेन समासोऽङ्गीकर्तव्यो न तरबन्तेन । तत्र समासत्वात्समुदायस्य प्रातिपदिकत्वे विभक्त्यावेकपद्य भवति स्वरे तु दोषप्रसङ्गात्कृद्ग्रहणमपि त्यक्तव्यमिति भाष्ये स्थितम् । प्रपचतिदेश्यादौ का गतिरिति न विद्मः ॥—**उभे**–॥—**वनस्पतिमिति** । वनशब्दो 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । पतिशब्दोऽपि पातेर्डतिरिति डतिप्रत्ययान्तः प्रत्ययस्वरेण । पारस्करादित्वात्सुट् ॥—**बृहस्पतिमिति** । 'वर्तमाने पृषन्महत्–' इति अतिप्रत्ययान्तत्वादन्तोदात्तोऽप्यत्राद्युदात्तो निपात्यते 'तद्बृहतोः करपत्योः' इति सुट्तलोपौ ॥—**शार्ङ्गरवादित्वादाद्युदात्त** इति । शार्ङ्गरवादित्वात् ङीनि कृते नित्वादाद्युदात्तत्वमित्यर्थः ॥—**शचीपतिरिति** । एते षष्ठीसमासाः ॥—**तनूनपादिति** । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति ऊप्रत्ययान्तत्वादन्तोदात्तोऽपि तनूशब्दोऽत्राद्युदात्तो निपात्यते । न पातयतीति नपात् । 'नभ्राण्णपान्नवेदाः–' इति सूत्रे आद्युदात्तो नपाच्छब्दो निपात्यते । तन्वा नपादिति विग्रहः ॥—**नराशंसमिति** । नरा एनं शंसन्तीत्यर्थः । नॄनये 'ऋदोरप्' शंसेः कर्मणि घञ् द्वावप्याद्युदात्तौ 'अन्येषामपि' इति दीर्घः ॥—**शुनःशेपमिति** । शुन इव शेपोऽस्येति बहुव्रीहिः । 'शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्' इत्यलुक् षष्ठ्याः । श्वन्शब्दः प्रातिपदिकस्वरेण शेपशब्दः 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तौ ॥—**इन्द्रावरुणाविति** । इन्द्रशब्दः 'ऋज्रेन्द्राग्र–' इति रनन्तः वरुणशब्दः 'कॄवृदारिभ्य उनन्' इत्युननन्तः । उभौ आद्युदात्तौ । 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ् ॥—**इन्द्राबृहस्पती** इति । बृहस्पतिशब्दो वाचस्पत्यादित्वात् द्वावाद्युदात्तौ । तेनेन्द्राबृहस्पती इत्यत्र त्रय आद्युदात्ताः ॥—**अग्निष्टोम** इति । 'अग्नेस्तुत्स्तोमसोमाः' इति षत्वम् ॥—**इन्द्राग्निभ्यामिति** । अग्निशब्दः 'अङ्गेर्नलोपश्च' इति निप्रत्ययान्तत्वादन्तोदात्तः ॥—**पृथिवीत्यन्तोदात्त** इति । ङीप्प्रत्ययान्तत्वात् ॥—**सोमारुद्राविति** । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्निति मन्नन्तत्वादाद्युदात्तः सोमशब्दः ॥—**उत्तरपदग्रहणमित्यादि** । अन्यथास्मिन् प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः नोत्तरपदे तत्रानुदात्तादाविति सप्तम्यन्तं द्वन्द्वस्य विशेषणं स्यात् ततश्चेन्द्रासूर्यावित्यादौ प्रतिषेधः स्यात् । चन्द्रशब्दो रगन्तत्वादन्तोदात्तः । सूर्यशब्दः 'राजसूयसूर्य–' इति यदन्तत्वात् 'यतोऽनावः' इत्याद्युदात्तः । उत्तरपदग्रहणे तस्यैव श्रुतस्यानुदात्तादावित्येतद्विशेषणं भवति ॥—**अनुदात्तादाविति** ॥—**विधिप्रतिषेधयोरित्यादि** । अन्यथा प्रतिषेधयोः समानविषयत्वाद्विकल्पः प्रसज्येत । इह पृथिव्यादिप्रतिषेधो ज्ञापयति स्वरविधौ व्यञ्जनमविद्यमानवदिति । तेनाग्निमीळ इत्यादौ स्वरितः सिद्ध्यति ॥—**थाऽथ**–॥—**प्रभृथस्येति** । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' अवे भृञ इति क्थन् नित्स्वरेणाद्युदात्तत्वे प्राप्ते—**आवसथ इति** । 'उपसर्गे वसेः' इत्यथप्रत्ययान्तः ॥—**पुरुष्टुत** इति । कर्मणि क्तः । पुरुष्विति तृतीयातत्पुरुषे तु 'तृतीया कर्मणि' इति सूत्रेण कर्मणि क्तान्ते उत्तरपदे तृतीयान्तस्य पूर्वपदस्य प्रकृतिस्वरः स्यादिति भावः ॥—**प्रक्षय** इति । 'एरच्' । न च क्षयशब्दस्याच्प्रत्ययान्तत्वात्कृदुत्तरपदप्रकृतिस्वरेणैवान्तोदात्तत्वं सिद्धमिति वाच्यम् । 'क्षयो निवासे' इति क्षयशब्दस्याद्युदात्तत्वात् ॥—**प्रलव** इति । 'ऋदोरप्' ॥—**प्रलवित्रमिति** । 'अर्तिलूधूसूखनसहचर इत्रः' ॥—**गोवृष** इति । गां वर्षते इति विग्रहः । वृषु सेचने 'वृषादीनां च' इत्याद्युदात्तोऽयम् ॥—**सुस्तुतमिति** । 'सुः पूजायाम्' इति कर्मप्रवचनीयः । अव्ययपूर्वपदप्रकृतिस्वर एव ॥—**सूप**–॥—**सुकृतस्येति** । 'गतिरनन्तरः' इति प्राप्ते ॥—**शशप्लुतमिति** ।

क्तान्तमन्तोदात्तमाचितादीन्वर्जयित्वा । उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः । अनेति किम् । आचितम् । आस्थापितम् । प्रवृद्धादीनां च ।६।२।१४७। एषां क्तान्तमुत्तरपदमन्तोदात्तम् । प्रवृद्धः । प्रयुतः । असंज्ञार्थोऽयमारम्भः । आकृतिगणोऽयम् । कारकाद्दत्तश्रुतयोरेवाशिषि ।६।२।१४८। संज्ञायामन्त उदात्तः । देवदत्तः । विष्णुश्रुतः । कारकात्किम् । संभूतो रामायणः । दत्तश्रुतयोः किम् । देवपालितः । अस्मान्नियमादत्र संज्ञायामनेति न । तृतीया कर्मणीति तु भवति । एव किम् । कारकावधारणं यथा स्यात् दत्तश्रुतावधारणं मा भूत् । अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति । संश्रुतः । आशिषि किम् । देवैः खाता देवखाता । आशिष्येवेत्येवमत्रेष्टो नियमः । तेनानाहतो नदति देवदत्त इत्यत्र न । शङ्खविशेषस्य संज्ञेयम् । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वमेव भवति । इत्थम्भूतेन कृतमिति च ।६।२।१४९। इत्थम्भूतेन कृतमित्येतस्मिन्नर्थे यः समासस्तत्र क्तान्तमुत्तरपदमन्तोदात्तं स्यात् । सुप्तप्रलपितम् । प्रमत्तगीतम् । कृतमिति क्रियासामान्ये करोतिर्नाभूतप्रादुर्भाव एव । तेन प्रलपितादपि कृतं भवति । तृतीया कर्मणीत्यस्यापवादः । अनो भावकर्मवचनः ।६।२।१५०। कारकात्परमनप्रत्ययान्तं भाववचनं कर्मवचनं चान्तोदात्तम् । पयःपानं सुखम् । राजभोजनाः शालयः । अनः किम् । हस्तादायः । भेति किम् । दन्तधावनम् । करणे ल्युट् । कारकात्किम् । निदर्शनम् । मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ।६।२।१५१। कारकात्पराणि एतान्युत्तरपदान्यन्तोदात्तानि तत्पुरुषे । कृत्स्वरापवादः । रथवर्त्म । पाणिनिकृतिः । छन्दोव्याख्यानम् । राजशयनम् । राजासनम् । अश्वस्थानम् । ब्राह्मणयाजकः । गोक्रीतः । कारकात्किम् । प्रभूतौ सङ्गतिम् । अत्र तादौ च नितीति स्वरः । सप्तम्याः पुण्यम् ।६।२।१५२। अन्तोदात्तम् । अध्ययनपुण्यम् । तत्पुरुषे तुल्यार्थेति प्राप्तम् । सप्तम्याः किम् । वेदेन पुण्यं वेदपुण्यम् । ऊनार्थकलहं तृतीयायाः ।६।२।१५३।

---

शश इव प्लुतमिति विग्रहः । 'तृतीया क॰ ण' इति प्राप्तम् ॥—**उपहूत** इति । ह्वेञो निष्ठायाम् यजादित्वात्संप्रसारणम् ॥—**परिजग्ध** इति । अदो जग्धादेशः । उभयत्र 'गतिरनन्तरः' इति प्राप्तम् ॥—**अनेति किमिति** । अनाचितादीनामिति किमर्थमित्यर्थः ॥—**आचितमि**त्यादि । चिञ् चयने । ष्ठा गतिनिवृत्तौ णिजन्तः । आभ्यां कर्तरि क्तः ॥—**प्रवृद्धः प्रयुत** इति । वृधु वृद्धौ । यु मिश्रणे ॥—**असंज्ञार्थोऽयमारम्भ** इति । सञ्ज्ञाया तु 'सञ्ज्ञायामनाचितादीनाम्' इत्येव सिद्धम् ॥—**कारकाद्दत्त**–॥ तत्पुरुषे संज्ञायामाशिषि कारकात्परयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः स्यात् । 'संज्ञायामनाचितादीनाम्' इत्यनेन विहितमन्तोदात्तत्वमनेन नियम्यते ॥—**देवदत्त** इत्यादि । देवा एनं देयासुरित्येवं प्रार्थितैर्देवैर्दत्तो देवदत्तः । 'आशिषि लिङ्लोटौ' इति वर्तमाने 'क्तिच्क्तौ च सञ्ज्ञायाम्' इति क्तः । 'दो दद्घोः' इति ददादेशः । विष्णुरेनं श्रूयादित्येव प्रार्थितं विष्णुना श्रुतो विष्णुश्रुतः । क्तप्रत्ययः पूर्ववत् ॥—**संभूतो रामायण** इति । कारकादित्यनुच्यमाने गतिकारकोपपदादिति त्रितयाधिकाराद्यथैव कारकान्नियमो भवति तथा गतेरपि स्यात् ॥—**एव किमिति** । सिद्धेऽधिकारे आरभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति प्रश्नः ॥—**कारकावधारणमित्यादि** । असति ह्येवकारे विपरीतनियमोऽपि स्यात् कारकादेव दत्तश्रुतयोरिति । एवं च कारकाद्दत्तश्रुतयोर्न स्यात् इष्यते च तथा कारकस्यानियतत्वाद्देवपालित इत्यादावन्तोदात्तः । अतः कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं मा भूदित्येवमर्थमेवकारग्रहणमित्यर्थः ॥—**देवखाते**ति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः ॥—**इत्थम्**–॥—**इत्थंभूतेन कृतमित्येतस्मिन्नर्थे** इति । इत्थं प्रकारमापन्न इत्थभूतस्तेन कृतमित्यर्थः ॥—**सुप्तप्रलपितमित्यादि** । कथमेतान्युदाहरणानि यावता कृतमित्युच्यते । न च प्रलपितानीति कृतानि अभूतप्रादुर्भाव एव करोतिर्वर्तते ततश्च सुप्तकृतं सुप्तभावितम् उन्मत्तभावितमित्यादिकमेवोदाहर्तव्यमित्यत आह—**कृतमिती**ति । कृतिसामान्ये करोतिर्वर्तते ततश्च यथा क्रियावचनो धातुः क्रियाया क्रियार्थायामित्यादौ विशेषाणामपि ग्रहण भवति तद्वदत्रापि । ननु सुप्तप्रलपितमित्यादौ कारकादिति योगविभागेनैव सिद्धमित्याशङ्क्याह—**तृतीये**ति । तस्य तु योगविभागो न बाधकः तस्य निर्विषयत्व स्यात् । अभूतप्रादुर्भावो निष्पादनमभूतप्रादुर्भाव इति ॥—**अनो**–॥ 'गतिकारकोपपदात्कृत्' इत्यस्यापवाद ॥—**पयःपानमि**ति । 'कर्मणि च येन' इति कर्मण्युपपदे भावे ल्युट् । उपपदसमास. ॥—**राजभोजना** इति । 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् कर्तरि षष्ठीसमासः ॥—**मन्क्तिन्**–॥ कृत्स्वरापवादः । क्रीते तु तृतीयाकर्मणीत्यस्य ॥—**रथवर्त्मे**ति । वृतेरधिकरणे मनिन् कर्तरि षष्ठ्याः समासः ॥—**पाणिनिकृतिरि**ति । कर्मणि क्तिन् । पूर्ववत्समासः ॥—**छन्दोव्याख्यानमि**ति । व्याख्यानमिति करणे ल्युट् । शयनासनस्थानेष्वधिकरणे ल्युट ॥—**ब्राह्मणयाजक** इति । 'याजकादिभिश्च' इति सूत्रे षष्ठीसमासार्थं ये याजकादयस्त एव गृह्यन्ते ॥—**प्रभूतौ संगतिमि**ति ॥ 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वर एवात्र भवति ॥—**सप्तम्या**–॥ सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं स्यात्तत्पुरुषे ॥—**अध्ययनपुण्यमि**ति । अध्ययने पुण्यमिति विग्रहः । सप्तमीति योगविभागात्समासः ॥—**ऊनार्थ**–॥ तृतीयान्तात्पराणि ऊनार्थानि कलहश्च एतान्युत्तरप-

माषोनम् । माषविककम् । वाक्कलहः । तृतीयापूर्वपदप्रकृतिस्वरापवादोऽयम् । अत्र केचिदर्थेति स्वरूपग्रहणमिच्छन्ति । धान्यार्थः । ऊनशब्देन त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव सिद्धे तृतीयाग्रहणं स्पष्टार्थम् । **मिश्रं चानुपसर्गमसन्धौ** ।६।२।१५४। पणबन्धेनैकार्थ्यं सन्धिः । तिलमिश्राः । सर्पिर्मिश्राः । मिश्रं किम् । गुडधानाः । अनुपसर्गं किम् । तिलसंमिश्राः । मिश्रग्रहणे सोपसर्गग्रहणस्येदमेव ज्ञापकम् । असन्धौ किम् । ब्राह्मणमिश्रो राजा । ब्राह्मणैः सह संहित ऐकार्थ्यमापन्नः । **नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः** ।६।२।१५५। सम्पाद्याद्यर्थतद्धितान्ता नञो गुणप्रतिषेधे वर्तमानात्परेऽन्तोदात्ताः । कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकम् । न कार्णवेष्टकिकमकार्णवेष्टकिकम् । छेदमर्हति छैदिकः । न छैदिकोऽच्छैदिकः । न वत्सेभ्यो हितोऽवत्सीयः । न सन्तापाय प्रभवति असान्तापिकः । नञः किम् । गार्दभरथमर्हति गार्दभरथिकः । द्विगार्दभरथिकः । गुणप्रतिषेधे किम् । गार्दभरथिकादन्योऽगार्दभरथिकः । गुणो हि तद्धितार्थे प्रवृत्तिनिमित्तं सम्पादित्वाद्युच्यते । तत्प्रतिषेधो यत्रोच्यते तत्रायं विधिः । कर्णवेष्टकाभ्यां न सम्पादि मुखमिति । संपेति किम् । पाणिनीयमधीते पाणिनीयः । न पाणिनीयः अपाणिनीयः । तद्धिताः किम् । वोढुमर्हति वोढा । न वोढाऽवोढा । **ययतोश्चातदर्थे** ।६।२।१५६। ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात्परस्यान्त उदात्तः स्यात् । पाशानां समूहः पाश्या न पाश्या अपाश्या । अदन्त्यम् । अतदर्थे किम् । अपाद्यम् । तद्धितः किम् । अदेयम् । गुणप्रतिषेधे किम् । दन्त्यादन्यददन्त्यम् । तदनुबन्धग्रहणे नातदनुबन्धकस्येति । नेह । अवामदेव्यम् । **अच्कावशक्तौ** ।६।२।१५७। अजन्तं कान्तं च नञः परमन्तोदात्तमशक्तौ गम्यायाम् । अपचः । पक्तुं न शक्तः । अविलिखः । अशक्तौ किम् । अपचो दीक्षितः । गुणप्रतिषेधे इत्येव । अन्योऽयं पचादपचः । **आक्रोशे च** ।६।२।१५८। नञः परावच्कावन्तोदात्तावाक्रोशे । अपचो जाल्मः । पक्तुं न शक्नोतीत्येवमाक्रोश्यते । अविक्षिपः । **संज्ञायाम्** ।६।२।१५९। नञः परमन्तोदात्तं संज्ञायामाक्रोशे । अदेवदत्तः । **कृत्योकेष्णुच्चार्वादयश्च** ।६।२।१६०। नञः परेऽन्तोदात्ताः स्युः । अकर्तव्यः । उकञ् । अनागामुकः । इष्णुच् । अनलङ्करिष्णुः । इष्णुज्ग्रहणे खिष्णुचो ह्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसाम-

---

दान्यन्तोदात्तानि स्युः । उदाहरणेषु 'पूर्वसदृश–' इत्यादिना तृतीयासमास. ॥—**केचित्त्वि**त्यादि । नन्वेवमूनशब्दस्यापि स्वरूपस्य ग्रहणं प्रसज्येत । ततश्च तदर्थानामन्येषां ग्रहणं न स्यादत आह—**ऊनशब्देन त्वि**ति । अर्थनिर्देशार्थत्वं तु व्याख्यानादवसेयम् ॥—**मिश्रं च**–॥ तृतीयान्तात्परमनुपसर्गं मिश्रमन्तोदात्तं स्यादसन्धौ । अयमपि 'तत्पुरुषे तुल्यार्थ–' इत्यस्यापवादः ॥—**पणबन्धेनैकार्थ्यमि**ति । पणबन्धः परिभाषणम् । यदि मे भवानिदं कुर्यादहमपि भवतः करिष्यामीत्येवंरूपम् ॥—**तिलमिश्रा** इति । 'पूर्वसदृशसमोनार्थ–' इति समासः ॥—**गुडधाना** इति । 'भक्ष्येण मिश्री–' इति समासः ॥—**तिलसंमिश्रा** इति । कथं पुनर्मिश्रशब्दस्य विधीयमानः सोपसर्गेण लभ्यतेऽत आह—**मिश्रग्रहणे**त्यादि । तेन मिश्रश्लक्ष्णैरिति विधीयमानः समासः सोपसर्गेणापि सिद्धः ॥—**ब्राह्मणमिश्र** इति । यदि मे भवन्तः कार्यं कुर्युस्तदाहं भवतामुपकारं करिष्यामीत्येवंरूपेण पणबन्धेन कृत्वा ब्राह्मणैः सह मिलित इत्यर्थः । अपरे तु स्वरूपभेदग्रहणं सन्धिः । ब्राह्मणमिश्र इत्यत्र ब्राह्मणैरेकीभावेऽपि राजा स्वरूपेण गृह्यते । गुडमिश्र इत्यत्र गुडेनैकीभूतस्य स्वरूपभेदो न गृह्यते इत्याहुः ॥—**नञो गुण**–॥—**कार्णवेष्टकिकमि**ति । सपादिनीति प्राग्वतेष्ठञ् ॥—**छैदिक** इति । 'छेदादिभ्यो नित्यम्' इति ठक् ॥—**वत्सीय** इति । 'तस्मै हितम्' इति छः ॥—**सान्तापिक** इति । 'तस्मै प्रभवति सन्तापादिभ्यः' इति ठञ् ॥—**नञः किमि**ति । प्रतिषेधे प्रायेण नञ एव वृत्तिदर्शनात्प्रश्नः ॥—**विगार्दभरथिक** इति । अव्ययपूर्वपदप्रकृतिस्वर एवात्र भवति ॥—**गार्दभरथिकादन्य** इति । उदाहरणादस्य विशेषं दर्शयितुं गुणप्रतिषेध इति सूत्रावयवं व्याचष्टे—**गुण** इति ॥—**तद्धितार्थे प्रवृत्तिनिमित्तमि**ति । तद्धितार्थः संपाद्यादि तस्य यत् प्रवृत्तिनिमित्तं सपादित्वादिनि । आदिशब्देन तदर्हत्वादेर्ग्रहणं स गुण इत्युच्यते । उक्तं हि—'संसर्गभेदकं यद्यत्सव्यापारं प्रतीयते । गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम्' इति ॥—**वोढे**ति । 'अर्हे कृत्यतृचश्च' इति तृच् । धत्वढत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्य' इत्योत्वम् ॥—**पाश्ये**ति ॥ समूहे 'पाशादिभ्यो यः' ॥—**अदन्त्यमि**ति । 'शरीरावयवाच्च' इति यत् ॥—**अपाद्यमि**ति । 'पादार्घाभ्यां च' इति यत् ॥—**अदेयमि**ति । डुदाञ् दाने । अर्हार्थे अचो यत् । 'ईद्यति' इतीत्वे गुणः ॥—**अवामदेव्यमि**ति । वामदेवेन दृष्टमित्यर्थे 'वामदेवाड्ड्यड्ड्यौ' इति ड्यः ॥—**अपच** इति ॥ पचाद्यच् ॥—**अविलिख** इति । 'इगुपध–' इति कः । 'कृत्योकेष्णुच्चार्वादयश्च' इति वक्ष्यमाणैः कृत्योकेष्णुभिः साहचर्यादच्कयोः कृतोरिह ग्रहणं तेन कृद्ग्रहणपरिभाषया विलिखशब्दस्य कान्तत्वम् ॥—**अपचो दीक्षित** इति । दीक्षितः शास्त्रविरोधान्न पचति न त्वशक्तत्वेन ॥—**अपचो जाल्म** इति ॥ पक्तुं शक्तोऽपि पक्तुमयं न शक्नोतीत्यनेन प्रकारेण क्षिप्यते तदाह—**पक्तुमित्यादि** ॥—**अदेवदत्त** इति ॥ देवदत्तः संन्यस्तकर्म न करोति स एवमाक्षिप्यते ॥—**अनागामुक** इति ॥ 'लषपतपद–' इत्युकञ् ॥—**अनलङ्करिष्णुरि**ति । 'अलंकृञ्–' इतीष्णुच् ॥—**इकारादेर्विधानसामर्थ्यादि**ति । भवतेरुदात्तत्वात्ततः परस्य खिष्णुच इटैवेकारादित्वे सिद्धे इकारा-

ध्यांत् । अनाढ्यंभविष्णुः । चार्वादिः । अचारुः । असाधुः । राजाह्नोश्छन्दसि । अराजा । अनहः । भाषायां नञ्स्वर एव । **विभाषा तृन्नन्नतीक्ष्णशुचिषु ।६।२।१६१।** तृन् । अकर्ता । अन्न । अनन्नम् । अतीक्ष्णम् । अशुचि । पक्षे अव्ययस्वरः । **बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ।६।२।१६२।** एभ्योऽनयोरन्त उदात्तः । इदं प्रथमं यस्य स इदंप्रथमः । एतद्द्वितीयः । तत्पञ्चमः । बहुव्रीहौ किम् । अनेन प्रथम इदंप्रथमः । तृतीयेति योगविभागात्समासः । इदमेतत्तद्भ्यः किम् । यत्प्रथमः । प्रथमपूरणयोः किम् । तानि बहून्यस्य तद्बहुः । क्रियागणने किम् । अयं प्रथमः प्रधानं येषां ते इदंप्रथमाः । द्रव्यगणनमिदम् । गणने किम् । अयं प्रथमो येषां ते इदंप्रथमाः । इदंप्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात्कपि पूर्वमन्तोदात्तम् । इदंप्रथमकः । बहुव्रीहावित्यधिकारो वनं समास इत्यतः प्राग्बोध्यः । **संख्यायाः स्तनः ।६।२।१६३।** बहुव्रीहावन्तोदात्तः । द्विस्तनी । चतुःस्तना । संख्यायाः किम् । दर्शनीयस्तना । स्तनः किम् । द्विशिराः । **विभाषा छन्दसि ।६।२।१६४।** द्विस्तनां करोति । **संज्ञायां मित्राजिनयोः ।६।२।१६५।** देवमित्रः । कृष्णाजिनम् । संज्ञायां किम् । प्रियमित्रः ॥ * **ऋषिप्रतिषेधो मित्रे ।** विश्वामित्र ऋषिः । **व्यवायिनोऽन्तरम् ।६।२।१६६।** व्यवधानवाचकात्परमन्तोदात्तम् । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । व्यवायिनः किम् । आत्मान्तरः । अन्यस्वभाव इत्यर्थः । **मुखं स्वाङ्गम् ।६।२।१६७।** गौरमुखः । स्वाङ्गं किम् । दीर्घमुखा शाला । **नाऽव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ।६।२।१६८।** उच्चैर्मुखः । प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः । पूर्वपदप्रकृतिस्वरोऽत्र । गोमुष्टिवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन बाध्यते । **निष्ठोपमानादन्यतरस्याम् ।६।२।१६९।** निष्ठान्तादुपमानवाचिनश्च परं मुखं स्वाङ्गं वान्तोदात्तं बहुव्रीहौ । प्रक्षालित-

---

देर्विधानमिह सामान्यग्रहणार्थमेवेति भावः ॥—**अनाढ्यंभविष्णुरि**ति । 'भुवः खिष्णुच्खुकञौ' इति खिष्णुच् ॥—**अचारुरि**ति । इसनीति चरेरुण् ॥—**असाधुरि**ति । साध्नोतेः 'कृवापाजि–' इत्युण् ॥—**राजाह्नोः** । चार्वाद्यन्तर्गणसूत्रम् । नञः परयोरेतयोश्छन्दसि अन्तोदात्तः स्यात् ॥—**अराजे**ति । 'नञस्तत्पुरुषात्' इति समासान्तनिषेधः ॥—**विभाषा तृन्–**॥ नञ उत्तरपदान्येतान्यन्तोदात्तानि स्युस्तत्पुरुषे ॥—**बहुव्रीहाविदम्–**॥—**एभ्य** इत्यादि । इदमेतत्तद्भ्यः अनयोः प्रथमपूरणयोः ॥—**इदं प्रथमं यस्ये**ति । निगमनं भोजनं वा ॥—**अनेन प्रथम** इति । तृतीयापूर्वपदप्रकृतिस्वर एव भवति ॥—**यत्प्रथम** इति । यत्प्रथमं गमनं यस्य स यत्प्रथमः ॥—**इदंप्रधाना इत्यर्थ** इति । अनेन प्रधानवचनः प्रथमशब्दो न त्वेकसंख्यावचन इति दर्शितम् । तेनात्र गणनाभाव उक्तः ॥—**उत्तरपदस्ये**त्यादि । इह समासस्येति प्रकृतम् । उत्तरपदादिरित्यतः प्रभृति उत्तरपदस्येति च तन्त्रम् । इहोत्तरपदं कार्यित्वेनाश्रीयते तेन यदा कबुत्पद्यते तदा कपि परतो यत्पूर्वं प्रथमेति तदन्तोदात्तं भवति न तु कबन्तम् । कप्प्रत्ययो हि समासस्यैवान्तो नोत्तरपदस्य । उत्तरपदावयवाः समासान्ता इति पक्षेऽपि प्रथमपूरणयोरिति विशिष्टरूपग्रहणात् कपस्तत्राऽनन्तर्भावादुपात्तयोरेव स्वरः ॥—**संख्यायाः** ॥ संख्यायाः परः स्तनशब्दोऽन्तोदात्तः स्यात् ॥—**दर्शनीयस्तने**ति । पूर्वपदप्रकृतिस्वरः । दर्शनीयशब्दोऽनीयर्प्रत्ययान्तः रित्स्वरः ॥—**विभाषा–**॥ पूर्वसूत्रोक्तं छन्दसि वा स्यात् ॥—**द्विस्तनी**मिति । अन्तोदात्तत्व 'स्वाङ्गाच्चोपसर्जनात्–' इति ङीष् ॥—**चतुस्तने**ति । पूर्वपदप्रकृतिस्वरेण 'चतेरुरन्' इति चतुःशब्दस्य नित्त्वादाद्युदात्तत्वम् । अत्रान्तोदात्तत्वाभावात् 'स्वाङ्गात्–' इति ङीष् न ॥—**संज्ञायां मित्रा–**॥ एतयोरुत्तरपदयोरन्त उदात्तः स्याद् बहुव्रीहौ संज्ञायाम् ॥—**विश्वामित्र** इति । 'मित्रे चर्षौ' इति दीर्घः । अत्र 'बहुव्रीहौ विश्वं संज्ञायाम्' इति बाधित्वा परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यतेऽतो 'बहुव्रीहौ विश्वं संज्ञायाम्' इत्यन्तोदात्तत्वं भवति ॥—**व्यवायि–**॥ उदाहरणे व्यवधानवाचिनोऽन्तरशब्दात् 'तत्करोति–' इति णिचि पचाद्यच् । प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः ॥—**मुखं–**॥ स्वाङ्गमुखमुत्तरपदमन्तोदात्तं बहुव्रीहौ ॥—**दीर्घमुखा शाले**ति । मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते । स्वाङ्गमद्रव्यवाचिलक्षणमिह गृह्यते न तु स्वमङ्गं स्वाङ्गमिति व्युत्पत्तिलभ्यम् । अन्यथाऽत्रापि स्यादिति भावः ॥—**नाऽव्यय–**॥ एभ्यः परो मुखशब्दोऽन्तोदात्तो न स्यात् ॥—**पूर्वपदप्रकृतिस्वरोऽत्रे**ति । एषूदाहरणेषु बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरेणान्तोदात्तं पूर्वपदम् । तथाहि । 'उदि चेर्डैसि' उच्चैः । 'अनिगन्तोऽञ्चतावप्रत्यये' इति प्रशब्द उदात्तः । तत एकादेशस्वरेण प्राङ्शब्द उदात्तः । गमेर्डोसिः । गौः । 'वर्तमाने पृषत्–' इत्यादिना महच्छब्दः उदात्तो निपातितः । स्थूलशब्दः 'ऋज्रेन्द्र–' इत्यादावन्तोदात्तो निपातितः । मुषेः क्तिच् मुष्टिः । 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' इति कुः पृथुः । 'वृतृवदि–' इत्यादिना सः वत्सः ॥—**उपमानलक्षणो विकल्प** इति । निष्ठोपमानादिति प्राप्तः ॥—**बाध्यत** इति । अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न भवति गौर्मुखमिव यस्य सः । वत्सो मुखमिव यस्येति । सर्वत्रात्र गवाद्युपमेयं नोपमानम् । उत्तरस्य विकल्पस्यावकाशः यत्र

मुखः। पक्षे निष्ठोपसर्गेति पूर्वपदान्तोदात्तत्वम्। पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति। उपमानम्। सिंहमुखः। **जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ।६।२।१७०।** सारङ्गजग्धः। मासजातः। सुखजातः। दुःखजातः। जातिकालेति किम्। पुत्रजातः। अनाच्छादनात्किम्। वस्त्रच्छन्नः। अकृतेति किम्। कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः। **वा जाते ।६।२।१७१।** जातिकालसुखादिभ्यः परो जातशब्दो वान्तोदात्तः। दन्तजातः। मासजातः। **नञ्सुभ्याम् ।६।२।१७२।** बहुव्रीहावुत्तरपदमन्तोदात्तम्। अव्रीहिः। सुमाषः। **कपि पूर्वम् ।६।२।१७३।** नञ्सुभ्यां परं यदुत्तरपदं तदन्तस्य समासस्य पूर्वमुदात्तं कपि परे। अब्रह्मबन्धुकः। सुकुमारीकः। **ह्रस्वान्तेऽन्त्यात्पूर्वम् ।६।२।१७४।** ह्रस्वान्त उत्तरपदे समासे वान्त्यात्पूर्वमुदात्तं कपि नञ्सुभ्यां परं बहुव्रीहौ। अव्रीहिकः। सुमाषकः। पूर्वमित्यनुवर्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमार्थम्। ह्रस्वान्तेऽन्त्यादेव पूर्वपदमुदात्तं न कपि पूर्वमिति। अज्ञकः। कवन्तस्यैवान्तोदात्तत्वम्। **बहोर्नञ्वदुत्तरपदभूम्नि ।६।२।१७५।** उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात्। बहुव्रीहिकः। बहुमित्रकः। उत्तरपदेति किम्। बहुषु मानोऽस्य स बहुमानः। **न गुणादयोऽवयवाः ।६।२।१७६।** अवयववाचिनो बहोः परे गुणादयो नान्तोदात्ता बहुव्रीहौ। बहुगुणा रज्जुः। बह्वक्षरं पदम्। बह्वध्यायः। गुणादिराकृतिगणः। अवयवाः किम्। बहुगुणो द्विजः। अध्ययनश्रुतसदाचारादयो गुणाः। **उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ।६।२।१७७।** प्रपृष्ठः। प्रललाटः। ध्रुवमेकरूपम्। उपसर्गात्किम्। दर्शनीयपृष्ठः। स्वाङ्गं किम्। प्रशाखो वृक्षः। ध्रुव किम्। उद्बाहुः। अपर्शु किम्। विपर्शुः। **वनं समासे ।६।२।१७८।** समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तम्। तस्येदिमे प्रवणे। **अन्तः ।६।२।१७९।** अस्मात्परं वनमन्तोदात्तम्। अन्तर्वणो देशः।

गवादिपूर्वपदं न भवति। सिंहमुखः। गवादावुपमाने उभयप्राप्तावयमेव भवति पूर्वविप्रतिषेधेन ॥—**सिंहमुख** इति। पक्षे पूर्वपदप्रकृतिस्वरः। हिंसेः पचाद्यचि सिंहः। पृषोदरादित्वादाद्यन्तविपर्ययः ॥—**जातिकाल**—॥ जात्यादिभ्यः परं क्तान्तमन्तोदात्तं स्याद् बहुव्रीहौ कृतादीन्वर्जयित्वा आच्छादनवाचकात्परं चेन्न ॥—**सारङ्गजग्ध** इति। सारङ्गः पक्षिविशेषः स जग्धो भक्षितो येनेति विग्रहः। प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वरः तत्र पुत्रशब्दोऽन्तोदात्तः। वसेष्ट्रन्। वस्त्रशब्द आद्युदात्तः। कुण्डशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः। तनुदाहरणेषु प्रत्युदाहरणेषु च 'निष्ठा' इति निष्ठान्तस्य पूर्वनिपातः प्राप्नोति तत्रास्माज्ज्ञापकादिति इदमेव मनसि निधायोक्तं 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति ॥—**दन्तजात** इति ॥ पक्षे पूर्वपदप्रकृतिस्वरः। दन्तशब्दः 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तः। मासशब्दो 'ग्रामादीनां च' इत्याद्युदात्तः ॥—**नञ्सु**—॥ नञ्सुभ्यां परमुत्तरपदमन्तोदात्तं स्यात्। समासान्ता उत्तरपदावयवाः। तेनानृच इत्यत्र ऋक्पूरित्यप्प्रत्ययकारस्योदात्तत्वं भवति। समासावयवा समासान्ता इति पक्षे तु अस्मिन् सूत्रे समासस्यैव कार्यित्वमाश्रीयते नोत्तरपदस्य कपि पूर्वमिति ज्ञापकात्। यद्यनेनोत्तरपदस्यान्तोदात्तः स्यात् तदाऽकुमारीक इत्यादावनेनैव सिद्धत्वात्कपि पूर्वमित्यवाच्यं स्यात्। कपि पूर्वं परेण कप एवोदात्तत्वे प्राप्ते तत्र पूर्वस्योदात्तत्वं विधीयते। ह्रस्वान्तेऽन्त्यात्पूर्वमिति वचनादिह दीर्घान्ता एवोदाहृताः। उदाहरणे 'नद्यृतश्च' इति कप् ॥—**ह्रस्वान्ते**—॥ ह्रस्वः अन्तो यस्य तदिदं ह्रस्वान्तमिति बहुव्रीहिरन्यपदार्थमुत्तरपदं समासो वा गृह्यत इत्याशयेनाह—**उत्तरपदे समासे** चेति। अत्र कपि पर इति सामान्यवचनात्तद्रहितमुत्तरपदं समासो वा गृह्यते। ननु पूर्वग्रहणमनर्थकं कपि पूर्वमित्यनुवर्तमान इति प्रवृत्तिभेदेन वाक्यभेदेन तत्रैकेन वाक्येन ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते। द्वितीयेन तु नियम्यते। ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति ॥—**न कपि पूर्वमि**ति। तेन किं सिद्धमत आह—**कवन्तस्यैवान्तोदात्तत्वमि**ति। नास्ति ज्ञा यस्य अज्ञकः। अत्र यद्यपि नियमो न स्यात्तर्हि एतस्याभावे कपि पूर्वमित्ययमेव स्वरः स्यात्। अस्मिंस्तु नियमे सति न भवति 'नञ्सुभ्याम्' इति कवन्तस्यैव भवति ॥—**बहोर्नञ्**—॥ नञ इव नञ्वत्। अस्मादेव निपातनात्पञ्चमीसमर्थाद्वतिः। बहूनां भावो भूमा 'बहोर्लोपो भू च बहोः' उत्तरपदशब्देन तदर्थो गृह्यते स्वरूपेणोत्तरपदस्य बहुत्वासंभवात् तदाह—**उत्तरपदार्थबहुत्वे**ति ॥—**बहुव्रीहिक** इत्यादि। ह्रस्वान्तेऽन्त्यात्पूर्वमिति स्वरः ॥—**बहुमान** इति। पूर्वपदप्रकृतिस्वरः। बहुशब्दस्तु 'लङ्घिबंह्योर्नलोपश्च' इति कुप्रत्ययान्तोऽन्तोदात्तः ॥—**न गुणा**—॥ **अवयववाचिनो बहोः परे** इति। अवयववाचिन इति गुणादीनां विशेषणम् ॥—**उपस**—॥ स्वाङ्गं प्रति क्रियायोगाभावादुपसर्गग्रहणं प्राद्युपलक्षणम्। प्रादेरुत्तरं ध्रुवं स्वाङ्गवाचि पर्शुवर्जितमन्तोदात्तं स्यात्। बहुव्रीहौ प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः। दर्शनीयशब्दोऽनीयरप्रत्ययान्तः रित्स्वरः ॥—**उद्बाहुरि**ति। क्रोशतीति शेषः। अत्र क्रोशनसमय एवोद्बाहुत्वं न सर्वदेत्यध्रुवम् ॥—**वनं समासे** ॥ बहुव्रीहावित्यस्य निवृत्त्यर्थं समासग्रहणम् ॥—**प्रवण** इति। बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते। 'प्रनिरन्तः' इति णत्वम् ॥—**अन्तः** ॥ अन्तःशब्दात्पञ्चम्याश्छान्दसो लुक् तदाह—**अस्मात्प**-

अनुपसर्गार्थमिदम् । **अन्तश्च** ।६।२।१८०। उपसर्गादन्तःशब्दोऽन्तोदात्तः । पर्यन्तः । समन्तः । **न निविभ्याम्** ।६।२।१८१। न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरे यणि च कृते उदात्तस्वरितयोर्यण इति स्वरितः । **परेरभितोभावि मण्डलम्** ।६।२।१८२। परेः परमभित उभयतो भावो यस्यास्ति तत्कूलादि मण्डलं चान्तोदात्तम् । परिकूलम् । परिमण्डलम् । **प्रादस्वाङ्गं संज्ञायाम्** ।६।२।१८३। प्रगृहम् । अस्वाङ्गं किम् । प्रपदम् । **निरुदकादीनि च** ।६।२।१८४। अन्तोदात्तानि । निरुदकम् । निरुपलम् । **अभेर्मुखम्** ।६।२।१८५। अभिमुखम् । उपसर्गात्स्वाङ्गमिति सिद्धे बहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च । अभिमुखा शाला । **अपाच्च** ।६।२।१८६। अपमुखम् । योगविभाग उत्तरार्थः । **स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनामनाम च** ।६।२।१८७। अपादिमान्यन्तोदात्तानि । अपस्फिगम् । अपपूतम् । अपवीणम् । अञ्जस् । अपाञ्जः । अध्वन् । अपाध्वा । उपसर्गादध्वन इत्यस्याभावे इदम् । एतदेव च ज्ञापकं समासान्तानित्यत्वे । अपकुक्षिः । सीरनाम । अपसीरम् । अपहलम् । नाम । अपनाम । स्फिगपूतकुक्षिग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च । **अधेरुपरिस्थम्** ।६।२।१८८। अध्यारूढो दन्तोऽधिदन्तः । दन्तस्योपरि जातो दन्तः । उपरिस्थं किम् । अधिकरणम् । **अनोरप्रधानकनीयसी** ।६।२।१८९। अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् । अनुगतो ज्येष्ठमनुज्येष्ठः । पूर्वपदार्थप्रधानः प्रादिसमासः । अनुगतः कनीयाननुकनीयान् । उत्तरपदार्थप्रधानः । प्रधानार्थं च कनीयोग्रहणम् । अप्रेति किम् । अनुगतो ज्येष्ठोऽनुज्येष्ठः । **पुरुषश्चाऽन्वादिष्टः** ।६।२।१९०। अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः । अन्वादिष्टः पुरुषोऽनुपुरुषः । अन्वादिष्टः किम् । अनुगतः पुरुषोऽनुपुरुषः । **अतेरकृत्पदे** ।६।२।१९१। अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः । अत्यङ्कुशो नागः । अतिपदा गायत्री । अकृत्पदे किम् । अतिकारः ॥ * **अतेर्धातुलोप**

---

रमिति । अन्त शब्दात्परमित्यर्थः ॥—**अन्तर्वण** इति । अत्रापि तेनैव णत्वम् ॥—**अनुपसर्गार्थमिति** । उपसर्गे तु पूर्वेणैव सिद्धम् ॥—**न निविभ्याम्** ॥ निविभ्यामुत्तरोऽन्तःशब्दो नान्तोदात्तः स्यात् ॥—**पूर्वपदप्रकृतिस्वर** इति । बहुव्रीहिसमासे 'बहुव्रीहौ प्रकृत्या' इति । तत्पुरुषे तु 'तत्पुरुषे तुल्यार्थ' इत्यनेन ॥—**परेरभितः**—॥ परेरुत्तरोऽभिशब्दो भाववाचि मण्डल चान्तोदात्त स्यात् । अभितोभावीत्यस्यार्थमाह । अभितो भावोऽस्यास्तीति । अथवा अभितः उभयतो भवति नद्यादौ कूलादिकमित्यभितोभावि । 'सुप्यजातौ–' इति णिनिः ॥—**परिकूलमि**ति । बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा । तत्र बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते अव्ययीभावे तु परिप्रत्युपापेति 'कूलतीर–' इति च प्राप्ते । परितः कूलमस्य परिगत कूलमिति वा कूलात्कूल वर्जयित्वेत्यर्थ इति । उदकस्याभाव इव विग्रह ॥—**प्राद्**—॥ प्रादुत्तरमस्वाङ्गवाचि सज्ञायामन्तोदात्तं स्यात् ॥—**प्रगृहमि**ति । प्रादिसमासः । बहुव्रीहिर्वा ॥—**प्रपदमि**ति । पूर्वपदप्रकृतिस्वर' ॥—**निरुदकमि**त्यादि । निर्गतमुदक यस्मादिति बहुव्रीहि. । निर्गतमुदकमिति प्रादिसमासो वा । उदकस्याभाव इत्यव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ॥—**अभे**–॥ अभेरुत्तरपद मुखमन्तोदात्त स्यात्॥—**उपसर्गात्स्वाङ्गमि**ति । मुखं स्वाङ्गमिति तु न भवति 'नाव्ययदिक्छब्द' इति निषेधात् ॥—**अपाच्च** ॥ अपादुत्तर मुखमन्तोदात्तं स्यात्समासे ॥—**अपमुखमि**ति । प्रादिसमासे बहुव्रीहौ च पूर्वपदप्रकृतिस्वरे प्राप्ते मुख वर्जयित्वेत्यव्ययीभावेऽपि परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेष्विति प्राप्तेऽयमारम्भ. ॥—**उत्तरार्थ** इति । उत्तरत्र अपादित्यस्यैवानुवृत्तिर्यथा स्यात् अभेर्मा भूत् ॥—**स्फिगपूत**–॥ नामग्रहण सीरेणैव सम्बध्यते न स्फिगादिभिः । स्फिगपूतकुक्षीणा पृथग्ग्रहणादिति हरदत्तः । तेन स्फिगपूतकुक्षयः पर्याया इति निश्चीयते ॥—**उपसर्गादध्वन इत्यस्याभाव** इति । 'उपसर्गादध्वन.' इदं समासान्ताच्प्रत्ययविधायक तदभावे । तस्मिन् सति अच्प्रत्ययस्य चित्त्वादेव सिद्धम् । ननु 'उपसर्गादध्वनः' इत्यनेन नित्योऽज् विधीयते तत्कथमुक्तमित्यस्याभाव इतीत्यत आह—**एतदेव च ज्ञापकमि**ति । यदि हि नित्य. समासान्तः स्यात् अध्वग्रहणमिहानर्थक स्यात् अच्प्रत्ययस्य चित्त्वादन्तोदात्तस्य सिद्धत्वात् । कृतं तु अध्वग्रहण ज्ञापयति । समासान्ता अनित्या इति ॥— **स्फिगपूतकुक्षिग्रहणमि**ति । यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति बहुव्रीहिश्च समासस्तदोपसर्गात् स्वाङ्गमित्येव सिद्धम् ॥—**अधेः**—॥ अधेरुत्तरमुपरिस्थवाचि अन्तोदात्त स्यात् । उपरि तिष्ठतीत्युपरिस्थम् । 'सुपि स्थः' इति कः । तदेतद्दर्शयति—**दन्तस्योपरी**ति ॥—**अधिकरणमि**ति । अधिक्रियतेऽस्मिन्नित्यधिकरण नैतदुपरिस्थवाचि किं त्वधःस्थवाचि । अत्र कृदुत्तरपदप्रकृतिस्वरेणाकार उदात्तः ॥—**अनुज्येष्ठ** इति । उत्तरपदार्थस्याप्राधान्य दर्शयति—**पूर्वपदार्थप्रधानः प्रादिसमासोऽयमि**ति ॥—**प्रधानार्थं च कनीयोग्रहणमि**ति । अन्यत्राप्रधानग्रहणेनैव सिद्धत्वात् । अनुगतो ज्येष्ठ इति विग्रहविशेषेण प्रधानवाचित्व ज्येष्ठशब्दस्य दर्शयति—**पुरुष**–॥ —**अन्वादिष्ट** इति । अनु पश्चादादिष्टः कथितः कस्मिंश्चित्कथिते योऽन्यः कथ्यते स अन्वादिष्ट इत्यर्थः ॥—**अतेरकृत्पदे** ॥ अकृच्च पद च अकृत्पदे तदाह—**अकृदन्तं पदशब्दश्चे**ति ॥—**अत्यङ्कुश** इति । अङ्कुशमतिक्रान्त इति विग्रहः ॥—**अतिकारक** इति । शोभनः कारकः । पूजार्थोऽयमतिः ॥—**अतेर्धातुलोप** इति । अत्यङ्कुशादौ वृत्तिविषये-

इति वाच्यम् ॥ इह मा भूत् । शोभनो गार्ग्योऽतिगार्ग्यः । इह च स्यात् । अतिक्रान्तः कारकमतिकारकः । नेरनिधाने ।६।२।१९२। निधानमप्रकाशता तदन्यदनिधानं प्रकाशनमित्यर्थः । निमूलम् । न्यक्षम् । अनिधाने किम् । निहितो दण्डो निदण्डः । प्रतेरंश्वादयस्तत्पुरुषे ।६।२।१९३। प्रतेः परेंऽश्वादयोऽन्तोदात्ताः । प्रतिगतोंऽशुः प्रत्यंशुः । प्रतिजनः । प्रतिराजा । समासान्तस्यानित्यत्वान्न टच् । उपाद् द्व्यजजिनमगौरादयः ।६।२।१९४। उपात्परं यद् द्व्यच्कमजिनं चान्तोदात्तं तत्पुरुषे गौरादीन्वर्जयित्वा । उपदेवः । उपेन्द्रः । उपाजिनम् । अगौरादयः किम् । उपगौरः । उपतैषः । तत्पुरुषे किम् । उपगतः सोमोऽस्य स उपसोमः । सोरवक्षेपणे ।६।२।१९५। सुप्रत्यवसितः । सुरत्र पूजायामेव । वाक्यार्थस्त्वत्र निन्दा असूयया तथाभिधानात् । सोः किम् । कुब्राह्मणः । अवक्षेपणे किम् । सुतृणम् । विभाषोत्पुच्छे ।६।२।१९६। तत्पुरुषे । उत्क्रान्तः पुच्छादुत्पुच्छः । यदा तु पुच्छमुदस्यति उत्पुच्छयते एरच् उत्पुच्छस्तदा थाथादिस्वरेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् । सेयमुभयत्र विभाषा । तत्पुरुषे किम् । उदस्तं पुच्छं येन स उत्पुच्छः । द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ।६।२।१९७। आभ्यां परेष्वेष्वन्तोदात्तो वा । द्विपाच्चतुष्पाच्च रथाय । त्रिपादूर्ध्वः । द्विदन् । त्रिमूर्धानं सप्तरश्मिम् । मूर्धन्नित्यकृतसमासान्त एव मूर्धशब्दः । तस्यैतत्प्रयोजनमसत्यपि समासान्ते अन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकमनित्यः समासान्तो भवतीति । यद्यपि च समासान्तः क्रियते तथापि बहुव्रीहिकार्यत्वात्तदेकदेशत्वाच्च समासान्तोदात्तत्वं पक्षे भवत्येव । द्विमूर्धः । त्रिमूर्धः । द्वित्रिभ्यां किम् । कल्याणमूर्धा । बहुव्रीहौ किम् । द्वयोर्मूर्धा द्विमूर्धा । सक्थं चाऽक्रान्तात् ।६।२।१९८। गौरसक्थः । श्लक्ष्णसक्थः । अक्रान्तात्किम् । चक्रसक्थः । समासान्तस्य षचश्चित्त्वान्नित्यमेवान्तोदात्तत्वं भवति । परादिश्छन्दसि बहुलम् ।६।२।१९९। छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो वा । अञ्जिसक्थमा-

---

ऽतिशब्दोऽतिक्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एव धातुलोपः ॥—**अतिगार्ग्य** इति । यथान्यासे त्वत्रापि प्राप्नोति गार्ग्यशब्दस्याकृदन्तत्वात् । तस्मादव्याप्त्यतिव्याप्तिपरिहारार्थमकृत्पद इत्येतदपनीय धातुलोप इति वक्तव्यमित्यर्थः ॥—**नेरनि**—॥ निशब्दादुत्तरपदमन्तोदात्तं स्यादनिधानेऽर्थे ॥—**निमूलमिति** । निर्गतं मूलमस्य निर्गतं वा मूलं निर्मूलम् ॥—**निदण्ड** इति । निशब्दो निधानार्थे वर्तते कथं पुनर्निशब्दस्यायमर्थ इति चेच्छृणु । प्रादयो हि वृत्तिविषये सक्रियं साधनमाहुः ॥—**समासान्तस्यानित्यत्वादिति** ॥ इह राजन्शब्दस्य पाठ एव ज्ञापयति । समासान्ता अनित्या इति । अन्यथा 'राजाहःसखिभ्यष्टच्' इति टचश्चित्त्वादेव सिद्धं स्यात् ॥—**सोरव**—॥ सोरुत्तरपदं निन्दायामन्तोदात्तं स्यात्तत्पुरुषे ॥—**सुप्रत्यवसित** इति । 'सुः पूजायाम्' इति कर्मप्रवचनीयस्य सोः स्वती पूजायामिति समासः । तेन सुप्रत्यवसिते थाथादिविधिर्न शङ्कनीयः । ननु यदि सुशब्दोऽत्र पूजायां वर्तते कथं तर्हि क्षेपो गम्यत इत्याह—**वाक्यार्थस्त्विति** । कथमित्याह—**असूययेति** । यः खल्वनर्थे उपस्थिते सुखायमान आस्ते तं प्रत्येवमुक्ते क्षेपो गम्यते ॥—**विभाषोत्**—॥ उच्छब्दात्परः पुच्छशब्दः अन्तोदात्तो वा स्यात्तत्पुरुषे ॥—**सेयमुभयत्र विभाषेति** । आद्यायां तु व्युत्पत्तौ अव्ययपूर्वपदप्रकृतिस्वरेण बाधितत्वात्समासस्यान्तोदात्तत्वमप्राप्तम् । द्वितीयायां तु व्युत्पत्तौ थाथादिस्वरेण नित्यमन्तोदात्तत्वं प्राप्तमिति कृत्वोभयत्र विभाषा ॥—**द्वित्रिभ्याम्** । पादिति कृताकारलोपो गृह्यते ददिति कृतदत्रादेशो दन्तशब्दः ॥—**आभ्यामिति** । द्वित्रिभ्याम् ॥—**द्विपादिति** । द्वौ पादौ यस्येति द्विपात् 'सङ्ख्यासुपूर्वस्य' इति पादशब्दस्याकारलोपः ॥—**द्विदन्निति** । 'वयसि दन्तस्य दतृ' ॥—**मूर्धन्नित्यकृतसमासान्त एव मूर्धशब्द** इति । एतच्च मूर्धस्विति निर्देशादेवावसीयते । अन्यथा मूर्धंष्विति निर्देश्यं स्यात् । किमर्थं पुनरकृतसमासान्त एव निर्दिष्ट इत्यत आह—**तस्येति** । यद्यकृतसमासान्तस्योपादानं तर्हि यदा समासान्तः क्रियते तदा न प्राप्नोति तस्य शब्दान्तरत्वादित्यत आह—**यद्यपीति** । इह हि बहुव्रीहिः कार्यित्वेनोपात्तो न मूर्धन्शब्दः ॥—**तदेकदेशत्वाच्चेति** । तस्य बहुव्रीहेरेकदेशः समासान्तस्तस्य भावस्तत्त्वं तस्मादिति स एवार्थः । तदेकदेशित्वादिति पाठे तु स बहुव्रीहिरेकदेशी अवयवो यस्य स तदेकदेशी समासान्तस्तद्भावस्तत्त्वं तस्मादिति स एवार्थः । तदेवं बहुव्रीहेः कार्यत्वात्तदेकदेशत्वाच्च समासान्तस्येति । यदा समासान्तः क्रियते तदाप्ययं विधिर्भवत्येव ॥—**द्विमूर्ध** इति । द्वित्रिभ्यां षः ॥—**कल्याणमूर्धेति** । पूर्वपदप्रकृतिस्वर एवात्र भवति । कल्याणशब्दो 'लघावन्ते' इत्यादिना मध्योदात्तः ॥—**सक्थं च** ॥ 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षजन्तः सक्थशब्दः उत्तरपदमन्तोदात्तं वा स्यात् स चेत् क्रशब्दान्तात्परो न भवति । चित्त्वान्नित्यमन्तोदात्तत्वे प्राप्तेऽयं विकल्पः ॥—**गौरसक्थ** इति । पक्षे पूर्वपदप्रकृतिस्वरः । 'शुक्लगौरयोरादिः' इति गौरस्याद्यन्तावुदात्तौ । तेनात्र त्रैस्वर्यम् ॥—**श्लक्ष्णसक्थ** इति । 'कृत्यशूभ्यां क्स्नः' 'श्लिषेरच्चोपधायाः' इति श्लक्ष्णशब्दोऽन्तोदात्तः ॥—**षचश्चित्त्वादिति** । एतेन चित्स्वरस्यापवादः । प्राप्तविभाषेयमिति दर्शयति—**परादिश्छन्दसि** । परशब्देनात्र सक्थशब्द एव तस्यैव पूर्वसूत्रे सन्निहितत्वात्तदाह—**परस्य सक्थशब्दस्येति** । ननु तर्हि परग्रहणमनर्थकं प्रकृतो हि सक्थशब्दोऽनुवर्तते । नैतदस्ति । बहुव्रीहेरपि प्रकृतत्वात्तस्याद्युदात्तत्वं शङ्क्येत । 'विभाषोत्पुच्छ—' इत्यतो विभाषेति वर्तमाने बहुलग्रहणं बह्वर्थप्रदर्शनार्थम् । बहुलग्रहणस्यार्थं

समेत । अत्र वार्तिकम् ॥ * परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥ इति । परादिः । सुविजाता उरुक्षया । परान्तः । नि येन मुष्टिहत्यया । त्रिचक्रः । पूर्वान्तः । विश्वायुर्धेहि ॥ इति समासस्वराः ॥

---

## तिङन्तस्वराः ।

**तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ।८।१।२७।** तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतयोः । पचति गोत्रम् । पचतिपचति गोत्रम् । एवं प्रवचनप्रहसनप्रकथनप्रत्यायनादयः । कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम् तेनान्यत्रापि गोत्रादिग्रहणे कुत्सनादावेव कार्यं ज्ञेयम् । गोत्रादीनि किम् । पचति पापम् । कुत्सेति किम् । खनति गोत्रं समेत्य कूपम् । **तिङ्ङतिङः ।८।१।२८।** अतिङन्तात्पदात्परं तिङन्तं निहन्यते । अग्निमीळे । **न लुट् ।८।१।२९।** लुडन्तं न निहन्यते । श्वःकर्ता । श्वःकर्तारौ । **निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ।८।१।३०।** एतैर्निपातैर्युक्तं न निहन्यते । यदग्ने स्यामहं त्वम् । युवा यदीकृथः । कुविदङ्ग आसन् । अचित्तिभिश्चकृमा कच्चित् ।

---

श्लोकेन दर्शयति—**परादिश्चेति**। उरूणां क्षयो निवास इति विग्रहः । 'क्षयो निवासे' इति क्षयशब्द आद्युदात्तः 'समासस्य' इत्यन्तोदात्तं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तत्थाथादिस्वरेण बाधितम् । अतो बाहुलकेनोत्तरपदाद्युदात्तत्वम् । एतच्च क्षि निवासगत्योरिति धातोर्बाहुलकादधिकरणे 'एरच्' इति माधवेनोक्तम् । वस्तुतस्तु घप्रत्ययान्तः क्षयशब्द इति हरदत्तोक्तरीत्या थाथादिस्वरस्येहाप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैव सिद्धम् । परादिश्चेत्यस्योदाहरणं तु चोदयित्री सूनृतानामिति बोध्यम् । ऊन परिहाणे चुरादिष्वदन्तः । णिच् क्विप् । सुतरामूनयत्यप्रियमिति सून् तदृतं सूनृतम् । 'अयस्मयादीनि' इति भत्वान्नलोपो न ॥—**मुष्टिहत्ययेति** । मुष्ट्या हननं मुष्टिहत्या 'हनस्त च' इति सुबन्ते उपपदे क्यप् कृदुत्तरपदप्रकृतिस्वरोऽत्र प्राप्तः ॥—**त्रिचक्र** इति । बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्राप्तः ॥—**विश्वायुरिति** । विश्वमायुर्यस्मिन्निति बहुव्रीहिः । विश्वशब्दः कन्प्रत्ययान्तः पूर्वपदप्रकृतिस्वरेणाद्युदात्तः प्राप्तः ॥ इति स्वरसुबोधिन्यां समासस्वरप्रकरणम् ॥

**तिङो**—॥—**पचति गोत्रमिति** । गोत्रं स्वकुलं पीडयतीत्यर्थः । एवं हि कुत्सा भवति । आभीक्ष्ण्ये उदाहरणमाह—**पचतिपचति गोत्रमिति** । अनेकार्थत्वात्पचिः करोत्यर्थे वर्तते विवाहादौ गोत्रं पुनः पुनः सुखीकरोतीत्यर्थः । 'नित्यवीप्सयोः' इति द्वित्वम् । ननु किं कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणमेतयोरर्थयोर्गोत्रादीनि भवन्ति तानि च तिङः पराण्यनुदात्तानि भवन्ति । आहोस्विदनुदात्तविशेषणं तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्त्येतयोरर्थयोरिति । अस्मिन्विचारे निर्णयमाह—**कुत्सनाभीक्ष्ण्यग्रहणमिति** । अयं चार्थो योगविभागाल्लभ्यते । तिङो गोत्रादीनीत्येको योगोऽनुदात्तविधानार्थः । कुत्सनाभीक्ष्ण्ययोरिति द्वितीयो योगः गोत्रादीनीत्येव । परिभाषेयम् । इह शास्त्रे गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येव ग्राह्याणि । तेन किं सिद्धं भवतीत्यत आह—**तेनेति** ॥—**अन्यत्रापीति** । चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरित्यत्र ॥—**पचति पापमिति** । पापमिति क्रियाविशेषणम् ॥—**खनति गोत्रं समेत्य कूपमिति** । गोत्रं कुलं समुदितं भूत्वा कूपं खनतीत्यर्थः ॥—**तिङः**—॥ अनुदात्तं सर्वमिति वर्तते तदाह—**निहन्यत इति** । सर्वानुदात्तो निघात इति वैयाकरणानां व्यवहारः । अतिङ इति किम् । पचति भवति । एककर्तृका पचिक्रिया भवतीत्यर्थः । नन्वतिङ्ग्रहणं व्यर्थं 'समानवाक्ये निघातयुष्मदस्मदादेशाः' इत्युक्तत्वात् । एकस्मिंश्च वाक्ये तिङन्तद्वयाभावादिति चेत्सत्यम् । सूत्रकारेण समानवाक्याधिकारो न कृत इत्यतिङ्ग्रहणमकारि । भाष्ये तु अतिङ्ग्रहणं प्रत्याख्यातम् ॥—**न लुट्** ॥ इत आरभ्य निषेधसूत्राणि ॥—**श्वःकर्ता** । **श्वःकर्ताराविति** । तासेः परस्य लसार्वधातुकस्यानुदात्तत्वे कृते तासिरुदात्तः । एकवचने डिलोपे कृते उदात्तनिवृत्तिस्वरेण डा उदात्तः ॥—**निपातैः**—॥ यदित्यादीनां यत्रेत्यन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक्, न तु युक्तशब्देन समासः । निपातैरिति विशेषणस्यानन्वयापत्तेस्तदाह—**एतैर्निपातैरिति** । यद् यदि हन्त कुवित् नेत् चण् कच्चित् यत्र एतैरित्यर्थः । 'यद्यदार्थे च हेतौ च विचारे यदि चेच्चणः । हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः । कच्चित्प्रश्ने नेत् निषेधे प्रशंसायां कुवित्स्मृतम्' । यत्रेत्याधारे तत्र मूले कुविदुदाहृतः । अन्येप्यूह्याः । तत्र ग्रहणं साक्षात्संबन्धप्रतिपादनार्थम् ॥—**यदग्ने स्यामिति** । अस्तेर्लिङि अम् ॥—**चकृमा कच्चिदिति** । चकृमेति लिट् । प्रत्ययस्वरेणान्तोदात्तम् । कच्चिदयं निपातसमुदायः । पदकाले कत् चिदिति विच्छिद्य पाठात् । निपातैः किम् । यत्कूजति शकटम् । एतीति यत् इणः शतरि रूपम् 'इणो यण्' इति यण् । ननु प्रतिपदोक्तत्वात् यदादिभिः साहचर्याच्च निपातस्यैव यच्छब्दस्य ग्रहणं स्यादिति चेत्सत्यम् । एतदेव ज्ञापयति अस्मिन्प्रकरणे नेदमुभयं व्यवस्थापकमिति । तेन यावद्यथाभ्यामित्यत्र 'यत्तदेतेभ्यः परिमाणे वतुप्' इति व्युत्पादितस्य लाक्षणिकनिपातस्यापि

१४२ दशि दर्शनदंशनयोः ॥ दस इत्यप्येके ॥ १४३ डप १४४ डिप संघाते । १४५ तत्रि कुटुम्बधारणे । १४६ मत्रि
गुप्तपरिभाषणे । १४७ स्पश ग्रहणसंश्लेषणयोः । १४८ तर्ज १४९ भर्त्स तर्जने । १५० बस्त १५१ गन्ध अर्दने । १५२
विष्क हिंसायाम् । हिष्क इत्येके ॥ १५३ निष्क परिमाणे । १५४ लल ईप्सायाम् । १५५ कूण संकोचने । १५६ तूण
पूरणे । १५७ भ्रूण आशाविशङ्कयोः । १५८ शठ श्लाघायाम् । १५९ यक्ष पूजायाम् । १६० स्यम वितर्के ।
१६१ गूर उद्यमने । १६२ शम १६३ लक्ष आलोचने । १६४ कुत्स अवक्षेपणे । १६५ त्रुट छेदने ॥ कुट
इत्येके ॥ १६६ गल स्रवणे । १६७ भल आभण्डने । १६८ कूट आप्रदाने ॥ अवसादने इत्येके ॥ १६९ कुट्ट
प्रतापने । १७० वञ्चु प्रलम्भने । १७१ वृष शक्तिबन्धने । १७२ मद तृप्तियोगे । १७३ दिवु परिकूजने ।
१७४ गृ विज्ञाने । १७५ विद चेतनाख्याननिवासेषु । १७६ मान स्तम्भे । १७७ यु जुगुप्सायाम् । १७८ कुस्म
नाम्नो वा कुत्सितस्मयने ॥ इत्याकुस्मीयाः ॥ १७९ चर्च अध्ययने । १८० बुक्क भाषणे ।
१८१ शब्द उपसर्गादाविष्कारे च । १८२ कण निमीलने । १८३ जभि नाशने । १८४ षूद क्षरणे । १८५ जसु ताडने । १८६ पश बन्धने । १८७ अम रोगे । १८८ चट १८९ स्फुट भेदने । १९० घट संघाते । हन्त्यर्थाश्च । १९१
दिवु मर्दने । १९२ अर्ज प्रतियत्ने । १९३ घुषिर् विशब्दने । १९४ आङः क्रन्द सातत्ये । १९५ लस शिल्पयोगे । १९६
तसि १९७ भूष अलंकरणे । १९८ अर्ह पूजायाम् । १९९ ज्ञा नियोगे । २०० भज विश्राणने । २०१ शृधु प्रसहने ।
२०२ यत निकारोपस्कारयोः । २०३ रक २०४ लग आस्वादने ॥ रघ इत्येके । रग इत्यन्ये ॥ २०५ अञ्चु विशेषणे ।
२०६ लिगि चित्रीकरणे । २०७ मुद संसर्गे । २०८ त्रस धारणे ॥ ग्रहणे इत्येके । वारणे इत्यन्ये ॥ २०९ उध्रस उञ्छे ॥
उकारो धात्ववयव इत्येके । न इत्यन्ये ॥ २१० मुच प्रमोचने मोदने च । २११ वस स्नेहच्छेदापहरणेषु । २१२ चर संशये ।
२१३ च्यु सहने ॥ हसने चेत्येके । च्युस इत्येके ॥ २१४ भुवोऽवकल्कने । २१५ कृपेश्च ॥ आस्वदः सकर्मकात् ॥ २१६
ग्रस ग्रहणे । २१७ पुष धारणे । २१८ दल विदारणे । २१९ पट २२० पुट २२१ लुट २२२ तुजि २२३ मिजि २२४
पिजि २२५ लिजि २२६ लुजि २२७ भजि २२८ लघि २२९ त्रसि २३० पिसि २३१ कुसि २३२ दशि २३३ कुशि २३४
घट २३५ घटि २३६ बृहि २३७ बर्ह २३८ बल्ह २३९ गुप २४० धूप २४१ विच्छ २४२ चीव २४३ पुथ २४४ लोकृ
२४५ लोचृ २४६ णद २४७ कुप २४८ तर्क २४९ वृतु २५० वृधु भाषार्थाः । २५१ रुट २५२ लजि २५३ अजि २५४
दसि २५५ भृशि २५६ रुशि २५७ शीक २५८ रुसि २५९ नट २६० पुटि २६१ जि २६२ चि २६३ रघि २६४ लघि
२६५ अहि २६६ रहि २६७ महि च । २६८ लडि २६९ तड २७० नल च । २७१ पूरी आप्यायने । २७२ रुज
हिंसायाम् । २७३ ष्वद आस्वादने ॥ स्वाद इत्येके ॥ आधृषाद्वा ॥ २७४ युज २७५ पृच संयमने । २७६ अर्च पूजायाम् । २७७ षह मर्षणे । २७८ ईर क्षेपे । २७९ ली द्रवीकरणे । २८० वृजी वर्जने । २८१ वृञ् आवरणे । २८२ जॄ
वयोहानौ । २८३ ज्रि च । २८४ रिच वियोजनसंपर्चनयोः । २८५ शिष असर्वोपयोगे । २८६ तप दाहे । २८७ तृप
तृप्तौ ॥ संदीपने इत्येके ॥ २८८ छृदी संदीपने ॥ चृप छृप दृप संदीपने इत्येके ॥ २८९ दृभी भये । २९० दृभ
संदर्भे । २९१ श्रथ मोक्षणे । हिंसायाम् इत्यन्ये ॥ २९२ मी गतौ ॥ २९३ ग्रन्थ बन्धने । २९४ शीक आमर्षणे ।
२९५ चीक च । २९६ ॥ अर्द हिंसायाम् ॥ स्वरितेत् ॥ २९७ हिसि हिंसायाम् । २९८ अर्ह पूजायाम् ।
२९९ आङः षद पद्यर्थे । ३०० शुन्ध शौचकर्मणि । ३०१ छद अपवारणे ॥ स्वरितेत् । ३०२ जुष परितर्कणे ॥ परितर्पणे इत्यन्ये ॥ ३०३ धूञ् कम्पने । ३०४ प्रीञ् तर्पणे । ३०५ श्रन्थ ३०६ ग्रन्थ संदर्भे । ३०७ आप्लृ लम्भने ॥ स्वरितेदयमित्येके ॥ ३०८ तनु श्रद्धोपकरणयोः ॥ उपसर्गाच्च दैर्घ्ये ॥ चन श्रद्धोपहननयोः इत्येके ॥ ३०९
वद संदेशवचने ॥ स्वरितेत् । अनुदात्तेदित्येके ॥ ३१० वच परिभाषणे । ३११ मान पूजायाम् । ३१२ भू प्राप्तावात्मनेपदी ॥ ३१३ गर्ह विनिन्दने । ३१४ मार्ग अन्वेषणे । ३१५ कठि शोके । ३१६ मृजू शौचालंकारयोः । ३१७ मृष
तितिक्षायाम् ॥ स्वरितेत् ॥ ३१८ धृष प्रहसने ॥ इत्याधृषीयाः ॥ अथादन्ताः ॥ ३१९ कथ वाक्यप्रबन्धने । ३२०
वर ईप्सायाम् । ३२१ गण संख्याने । ३२२ शठ ३२३ श्वठ सम्यगवभाषणे । ३२४ पट ३२५ वट ग्रन्थे । ३२६ रह
त्यागे । ३२७ स्तन ३२८ गदी देवशब्दे । ३२९ पत गतौ वा ॥ अदन्त इत्येके ॥ ३३० पष अनुपसर्गात् । ३३१ स्वर
आक्षेपे । ३३२ रच प्रतियत्ने । ३३३ कल गतौ संख्याने च । ३३४ चह परिकल्कने । ३३५ मह पूजायाम् । ३३६ सार
३३७ कृप ३३८ श्रथ दौर्बल्ये । ३३९ स्पृह ईप्सायाम् । ३४० भाम क्रोधे । ३४१ सूच पैशून्ये । ३४२ खेट भक्षणे ॥
तृतीयान्त इत्येके । खोट इत्यन्ये ॥ ३४३ क्षोट क्षेपे । ३४४ गोम उपलेपने । ३४५ कुमार क्रीडायाम् । ३४६
शील उपधारणे । ३४७ साम सान्त्वप्रयोगे । ३४८ वेल कालोपदेशे ॥ काल इति पृथग्धातुरित्येके ॥ ३४९ पल्यूल
लवनपवनयोः । ३५० वात सुखसेवनयोः ॥ गतिसुखसेवनयोः इत्येके ॥ ३५१ गवेष मार्गणे । ३५२ वास
उपसेवायाम् । ३५३ निवास आच्छादने । ३५४ भाज पृथक्कर्मणि । ३५५ सभाज प्रीतिदर्शनयोः ॥ प्रीतिसेवनयोः

इत्येके ॥ ३५६ क्षम परिहाणे । ३५७ ध्वन शब्दे । ३५८ कूट परितापे ॥ परिदाहे इत्यन्ये ॥ ३५९ सङ्केत ३६० ग्राम ३६१ कुण ३६२ गुण चामन्त्रणे । ३६३ केत श्रावणे निमन्त्रणे च । ३६४ कुण संकोचनेऽपि । ३६५ स्तेन चौर्ये ॥ आगर्वादात्मनेपदिनः ॥ ३६६ पद गतौ । ३६७ गृह ग्रहणे । ३६८ मृग अन्वेषणे । ३६९ कुह विस्मापने । ३७० शूर ३७१ वीर विक्रान्तौ । ३७२ स्थूल परिबृंहणे । ३७३ अर्थ उपयाच्ञायाम् । ३७४ सत्र संतानक्रियायाम् । ३७५ गर्व माने ॥ इत्यागर्वीयाः ॥ ३७६ सूत्र वेष्टने । ३७७ मूत्र प्रस्रवणे । ३७८ रूक्ष पारुष्ये । ३७९ पार ३८० तीर कर्मसमाप्तौ । ३८१ पुट संसर्गे । ३८२ धेक दर्शने इत्येके । ३८३ कत्र शैथिल्ये ॥ कर्त इत्यप्येके ॥ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । तत्करोति तदाचष्टे । तेनातिक्रामति धातुरूपं च । * आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् * । कर्तृकरणाद्धात्वर्थे । ३८४ वल्क दर्शने । ३८५ चित्र चित्रीकरणे ॥ कदाचिद्दर्शने ॥ ३८६ अंस समाघाते । ३८७ वट विभाजने । ३८८ लज प्रकाशने ॥ वटि लजि इत्येके ॥ ३८९ मिश्र संपर्के । ३९० सङ्ग्राम युद्धे ॥ अनुदात्तेत् ॥ ३९१ स्तोम श्लाघायाम् । ३९२ छिद्र कर्णभेदने । करणभेदने इत्येके । कर्ण इति धात्वन्तरमित्यपरे ॥ ३९३ अन्ध दृष्ट्युपघाते ॥ उपसंहारे इत्यन्ये ॥ ३९४ दण्ड दण्डनिपातने । ३९५ अङ्क पदे लक्षणे च । ३९६ अङ्ग च । ३९७ सुख ३९८ दुःख तत्क्रियायाम् । ३९९ रस आस्वादनस्नेहनयोः । ४०० व्यय वित्तसमुत्सर्गे । ४०१ रूप रूपक्रियायाम् । ४०२ छेद द्वैधीकरणे । ४०३ छद अपवारणे । ४०४ लाभ प्रेरणे । ४०५ व्रण गात्रविचूर्णने । ४०६ वर्ण वर्णक्रियाविस्तारगुणवचनेषु ॥ बहुलमेतन्निदर्शनम् ॥ ४०७ पर्ण हरितभावे । ४०८ विष्क दर्शने । ४०९ क्षप प्रेरणे । ४१० वस निवासे । ४११ तुत्थ आवरणे ॥ णिङ्ङङ्गनिरसने । श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । पुच्छादिषु धात्वर्थ इत्येव सिद्धम् ॥

इति स्वार्थणिजन्ताश्चुरादयः ॥ १० ॥

इति श्रीपाणिनिमुनिप्रणीतो धातुपाठः समाप्तः ॥

---

## अथ लिङ्गानुशासनम् ।

१ लिङ्गम् । २ स्त्री । ३ ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः । ४ अन्यूप्रत्ययान्तो धातुः । ५ अशनिभरण्यरणयः पुंसि च । ६ मिन्यन्तः । ७ वह्निवृष्ण्यग्नयः पुंसि । ८ श्रोणियोन्यूर्मयः पुंसि च । ९ क्तिन्नन्तः । १० ईकारान्तश्च । ११ ऊङाबन्तश्च । १२ य्वन्तमेकाक्षरम् । १३ विंशत्यादिरानवतेः । १४ दुन्दुभिरक्षेषु । १५ नाभिरक्षत्रिये । १६ उभावन्यत्र पुंसि । १७ तलन्तः । १८ भूमिविद्युत्सरिल्लतावनिताभिधानानि । १९ यादो नपुंसकम् । २० भास्स्रुक्स्रग्दिगुष्णिगुपानहः । २१ स्थूणोर्णे नपुंसके च । २२ गृहशशाभ्यां क्लीबे । २३ प्रावृड्विप्रुड्रुट्तृड्विट्त्विषः । २४ दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः । २५ तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविराज्यादयः । २६ शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः । २७ प्रतिपदापद्विपत्संपच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः । २८ आशीर्धूःपूर्गीर्द्वारः । २९ अप्सुमनस्समासिकतावर्षाणां बहुत्वं च । ३० स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिचः । ३१ तृटिसीमासंबध्याः । ३२ चुल्लिवेणिखार्यश्च । ३३ ताराधाराज्योत्स्नादयश्च । ३४ शलाका स्त्रियां नित्यम् ॥

१ पुमान् । २ घञबन्तः । ३ घाजन्तश्च । ४ भयलिङ्गभगपदानि नपुंसके । ५ नङन्तः ६ याच्ञा स्त्रियाम् । ७ क्यन्तो घुः । ८ इषुधिः स्त्री च । ९ देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि । १० त्रिविष्टपत्रिभुवने नपुंसके । ११ द्यौः स्त्रियाम् । १२ इषुबाहू स्त्रियां च । १३ बाणकाण्डौ नपुंसके च । १४ नान्तः । १५ क्रतुपुरुषकपोलगुल्फमेघाभिधानानि । १६ अभ्रं नपुंसकम् । १७ उकारान्तः । १८ धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् । १९ समासे रज्जुः पुंसि च । २० श्मश्रुजानुस्वादुस्रुजतुत्रपुतालूनि नपुंसके । २१ वसु चार्थवाची । २२ मद्गुमधुशीधुसानुकमण्डलूनि नपुंसके च । २३ रुत्वन्तः । २४ दारुकसेरुजतुवस्तुमस्तूनि नपुंसके । २५ सक्तुर्नपुंसके च । २६ प्राग्रश्मेरकारान्तः । २७ कोपधः । २८ चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके । २९ कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडागनिष्कशुष्कवर्चस्कपिनाकभाण्डकटकशण्डकपिटकतालकफलककल्कपुलाकानि नपुंसके च । ३० टोपधः । ३१ किरीटमुकुटललाटवटवीटशृङ्गाटकरटलोष्टानि नपुंसके । ३२ कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च । ३३ णोपधः । ३४ ऋणलवणपर्णतोरणरणोष्णानि नपुंसके । ३५ कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च । ३६ थोपधः । ३७ काष्ठपृष्ठसिक्थोक्थानि नपुंसके । ३८ काष्ठा दिगर्था स्त्रियाम् । ३९ तीर्थप्रोथयूथगाथानि नपुंसके च । ४० नोपधः । ४१ जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि

नपुंसके । ४२ मानयानाभिधानवलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसंभावनविभावनविमानानि नपुंसके च । ४३ पोपधः । ४४ पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके । ४५ शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च । ४६ भोपधः । ४७ तलभं नपुंसकम् । ४८ जृम्भं नपुंसके च । ४९ मोपधः । ५० रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके । ५१ संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च । ५२ योपधः । ५३ किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके । ५४ गोमयकषायमलयान्वयाव्ययानि नपुंसके च । ५५ रोपधः । ५६ द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रच्छिद्रनारतीरदूरकृच्छ्ररन्ध्राश्वश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदरशरीरकन्दरमन्दरपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रच्छत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रनक्षत्राणि नपुंसके । ५७ शुक्रमदेवतायाम् । ५८ चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च । ५९ षोपधः । ६० शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके । ६१ यूषकरीषमिषविषवर्षाणि नपुंसके च । ६२ सोपधः । ६३ पनसबिसबुससाहसानि नपुंसके । ६४ चमसांसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च । ६५ कंसं चाप्राणिनि । ६६ रश्मिदिवसाभिधानानि । ६७ दीधितिः स्त्रियाम् । ६८ दिनाहनी नपुंसके । ६९ मानाभिधानानि । ७० द्रोणाढकौ नपुंसके च । ७१ खारीमानिके स्त्रियाम् । ७२ दाराक्षतलाजासूनां बहुत्वं च । ७३ नाड्यपजनोपपदानि व्रणाङ्गपदानि । ७४ मरुद्गरुत्तरदृत्विजः । ७५ ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः । ७६ ध्वजगजमुञ्जपुञ्जाः । ७७ हस्तकुन्तान्तवातव्रातदूतधूर्तसूतचूतमुहूर्ताः । ७८ षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः । ७९ वंशांशपुरोडाशाः । ८० ह्रदकन्दकुन्दबुद्बुदशब्दाः । ८१ अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः । ८२ पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः । सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः ॥

१ नपुंसकम् । २ भावे ल्युडन्तः । ३ निष्ठा च । ४ त्वष्यञौ तद्धितौ । ५ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः । ६ यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि । ७ अव्ययीभावः । ८ द्वन्द्वैकत्वम् । ९ अभाषायां हेमन्तशिशिरावहोरात्रे च । १० अनञ्कर्मधारयस्तत्पुरुषः । ११ अनल्पे छाया । १२ राजामनुष्यपूर्वा सभा । १३ सुरासेनाच्छायाशालानिशाः स्त्रियां च । १४ शिष्टः परवत् । १५ रात्राह्नाहाः पुंसि । १६ अपथपुण्याहे नपुंसके । १७ संख्यापूर्वा रात्रिः । १८ द्विगुः स्त्रियां च । १९ इसुसन्तः । २० अर्चिः स्त्रियां च । २१ छदिः स्त्रियामेव । २२ मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि । २३ सीरार्थौदनाः पुंसि । २४ वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च । २५ अटवी स्त्रियाम् । २६ लोपधः । २७ तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि । २८ शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च । २९ शतादिः संख्या । ३० शतायुतप्रयुताः पुंसि च । ३१ लक्षाकोटी स्त्रियाम् । ३२ शङ्कुः पुंसि । ३३ सहस्रः क्वचित् । ३४ मन्व्यच्कोऽकर्तरि । ३५ ब्रह्मन्पुंसि च । ३६ नामरोमणी नपुंसके । ३७ असन्तो द्व्यच्कः । ३८ अप्सराः स्त्रियाम् । ३९ त्रान्तः । ४० यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव । ४१ भृत्रामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि । ४२ पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च । ४३ बलकुसुमशुल्बपत्तनरणाभिधानानि । ४४ पद्मकमलोत्पलानि पुंसि च । ४५ आहवसंग्रामौ पुंसि । ४६ आजिः स्त्रियामेव । ४७ फलजातिः । ४८ वृक्षजातिः स्त्रियामेव । ४९ वियज्जगत्सकृच्छकन्पृषच्छकृद्यकृदुदश्वितः । ५० नवनीतावतानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि । ५१ श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यस्थ्यास्पदाकाशकण्वबीजानि । ५२ दैवं पुंसि च । ५३ धान्याज्यसस्यरूप्यपण्यवर्ण्यधिष्ण्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि । ५४ द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचकवरवृन्दारकाणि । ५५ अक्षमिन्द्रिये ॥

१ स्त्रीपुंसयोः । २ गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः । ३ मन्युसीधुकर्कन्धुसिन्धुकण्डुरेणवः । ४ गुणवचनमुकारान्तं नपुंसकं च । ५ अपत्यार्थस्तद्धिते ॥

१ पुंनपुंसकयोः । २ घृतभूतमुस्तक्ष्वेलितैरावतपुस्तबुस्तलोहिताः । ३ शृङ्गार्घनिदाघोद्यमशल्यदृढाः । ४ व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चपुच्छाः । ५ कबन्धौषधायुधान्ताः । ६ दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः । ७ गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च ॥

१ अवशिष्टलिङ्गम् । २ अव्ययं कतियुष्मदस्मदः । ३ ष्णान्ता संख्या । ४ गुणवचनं च । ५ कृत्याश्च । ६ करणाधिकरणयोर्ल्युट् । ७ सर्वादीनि सर्वनामानि ॥

॥ इति श्रीपाणिनिमुनिप्रणीतं लिङ्गानुशासनं समाप्तम् ॥

पृष्ठम् सूत्रम्



पृष्ठम् सूत्रम्



पृष्ठम् सूत्रम्

# अष्टाध्यायीसूत्राणां सूची १।



# अष्टाध्यायीसूत्राणां सूची १।

पृष्ठम् सूत्रम्

४८३ दो दद्घोः ७ । ४ । ४६
४१२ दोषो णौ ६ । ४ । ९०
४८३ द्यतिस्यतिमास्था० ७ । ४ । ४०
२३३ द्यावापृथिवीशुना० ४ । २ । ३२
३५७ द्युतिस्वाप्योः सं० ७ । ४ । ६७
३५७ द्युद्भ्यो लुङि १ । ३ । ९१
२९२ द्युद्रुभ्यां मः ५ । २ । १०८
२४१ द्युप्रागपागुदक्प्र० ४ । २ । १०१
४७९ द्रवमूर्तिस्पर्शयोः० ६ । १ । २४
३०३ द्रव्यं च भव्ये ५ । ३ । १०४
२२१ द्रोणपर्वतजीवं० ४ । १ । १०३
२५७ द्रोश्च ४ । ३ । १६१
३१४ द्वन्द्वं रहस्यमर्यादाव० ८ । १ । १५
२७९ द्वन्द्वमनोज्ञादिभ्य० ५ । १ । १३३
१९६ द्वन्द्वश्च प्राणितूर्य० २ । ४ । २
१९९ द्वन्द्वाच्चुदषहा० ५ । ४ । १०६
२३१ द्वन्द्वाच्छः ४ । २ । ६
२५४ द्वन्द्वाद्वुन् वैरमैथु० ४ । ३ । १२५
१९५ द्वन्द्वे घि २ । २ । ३२
५० द्वन्द्वे च १ । १ । ३१
२९४ द्वन्द्वोपतापगर्ह्यात्० ५ । २ । १२८
२४५ द्वारादीनां च ७ । ३ । ४
१७० द्विगुरेकवचनम् २ । ४ । १
१६१ द्विगुश्च २ । १ । २३
११५ द्विगोः ४ । १ । २१
२७२ द्विगोः ष्ठंश्च ५ । १ । ५४
२७५ द्विगोर्यप् ५ । १ । ८२
२१५ द्विगोर्लुगनपत्ये ४ । १ । ८८
२७५ द्विगोर्वा ५ । १ । ८६
६१७ द्विगौ क्रतौ ६ । २ । ९७
६०७ द्विगौ प्रमाणे ६ । २ । १२
१६८ द्वितीयतृतीयच० २ । २ । ३
७९ द्वितीयाटौस्स्वेनः २ । ४ । ३४
५६३ द्वितीया ब्राह्मणे २ । ३ । ६०
५५८ द्वितीयायां च ३ । ४ । ५३
८८ द्वितीयायां च ७ । २ । ८७
१६१ द्वितीयाश्रितातीत० २ । १ । २४
२०८ द्वितीये चानुपाख्ये ६ । ३ । ८०
३०६ द्वित्रिचतुर्भ्यः सुच् ५ । ४ । १८
२७० द्वित्रिपूर्वादण् च ५ । १ । ३६
२७० द्वित्रिपूर्वान्निष्कात् ५ । १ । ३०
१९० द्वित्रिभ्यां ष मूर्ध्नः ५ । ४ । ११५
२८५ द्वित्रिभ्यां तयस्याय० ५।२।४३

पृष्ठम् सूत्रम्

१८० द्वित्रिभ्यामञ्जलेः ५ । ४ । १०२
६२८ द्वित्रिभ्यां पाद्दन्मू० ६ । २ । १९७
२९७ द्वित्र्योश्च धमुञ् ५ । ३ । ४५
१९२ द्विदण्ड्यादिभ्यश्च ५ । ४ । १२८
३३२ द्विर्वचनेऽचि १ । १ । ५९
२९८ द्विवचनविभज्यो० ५ । ३ । ५७
४७२ द्विषत्परयोस्तापेः ३ । २ । ३९
३७३ द्विषश्च ३ । ४ । ११२
४८७ द्विषोऽमित्रे ३ । २ । १३१
२०३ द्विस्तावात्रिस्तावा० ५ । ४ । ८४
३३ द्विस्त्रिश्चतुरिति० ८ । ३ । ४३
२४४ द्वीपादनुसमुद्रं यञ् ४ । ३ । १०
२८६ द्वेस्तीयः ५ । २ । ५४
२३२ द्वैपवैयाघ्रादञ् ४ । २ । १२
२२३ द्व्यचः ४ । १ । १२१
५६९ द्व्यचश्छन्दसि ४ । ३ । १५०
५७६ द्व्यचोऽतस्तिङः ६ । ३ । १३५
२५० द्व्यजृद्ब्राह्मणर्क्प्रथमा० ४ । ३ । ७२
२२८ द्व्यञ्मगधकलिं० ४ । १ । १७०
२०२ द्व्यन्तरुपसर्गेभ्योऽप० ६ । ३ । ९७
१८० द्व्यष्टनः संख्यायाम० ६ । ३ । ४७
४१ द्व्येकयोर्द्विवचनैक० १ । ४ । २२
४५१ धः कर्मणि ष्ट्रन् ३ । २ । १८१
२६३ धनगणं लब्धा ४ । ४ । ८४
२८७ धनहिरण्यात्कामे ५ । २ । ६५
१९२ धनुषश्च ५ । ४ । १३२
२४२ धन्वयोपधाद्वुञ् ४ । २ । १२१
२६० धर्मं चरति ४ । ४ । ४१
२६३ धर्मपथ्यर्थन्यायात्० ४ । ४ । ९२
२९४ धर्मशीलवर्णान्ता० ५ । २ । १३२
१९१ धर्मादनिच्केवलात् ५ । ४ । १२४
६५४ धातुसम्बन्धे प्रत्ययाः ३ । ४ । १
४५७ धातोः ३ । १ । ९१
५९४ धातोः ६ । १ । १६२
४१३ धातोः कर्मणः स० ३ । १ । ७
४१६ धातोरेकाचो हला० ३ । १ । २२
१७ धातोस्तन्निमि० ६ । १ । ८०
३३७ धात्वादेः षः सः ६ । १ । ६४
२८० धान्यानां भवने क्षे० ५ । २ । १
१४० धारेरुत्तमर्णः १ । ४ । ३५
३३४ धि च ८ । २ । २५
३५४ धिन्विकृण्व्योर च ३ । १ । ८०
२६२ धुरो यड्ढकौ ४ । ४ । ७७

पृष्ठम् सूत्रम्

२४३ धूमादिभ्यश्च ४ । २ । १२७
४८२ धृषिशसी वैयात्ये ७ । २ । १९
१४३ ध्रुवमपायेऽपादानम् १ । ४ । २४
५७९ ध्वमो ध्वात् ७ । १ । ४२
१६८ ध्वाङ्क्षेण क्षेपे २ । १ । ४२
४२४ नः क्ये १ । ४ । १५
१८६ न कपि ७ । ४ । १४
५४६ न कर्मव्यतिहारे ७ । ३ । ६
४१८ न कवतेर्यङि ७ । ४ । ६३
१८७ न कोपधायाः ६ । ३ । ३७
५५३ न क्तिचि दीर्घश्च ६ । ४ । ३९
५५४ न क्त्वा सेट्० १ । २ । १८
१२२ न क्रोडादिबह्वचः ४ । १ । ५६
४६३ न क्वादेः ७ । ३ । ५९
५७१ नक्षत्राद्घः ४ । ४ । १४१
२०९ नक्षत्राद्वा ८ । ३ । १००
१५३ नक्षत्रे च लुपि २ । ३ । ४५
२३१ नक्षत्रेण युक्तः कालः ४ । २ । ३
२४७ नक्षत्रेभ्यो बहुलम् ४ । ३ । ३७
१२३ नखमुखात्सं० ४ । १ । ५८
४३४ न गतिहिंसार्थेभ्यः १ । ३ । १५
२४३ नगरात्कुत्सनप्रावी० ४।२।१२८
६२६ न गुणादयोऽवयवाः ६।२।१७६
२२५ न गोपवनादिभ्यः २ । ४ । ६७
१७४ न गोपूर्वाणिच्य० ६ । ३ । ७७
६०४ न गोश्वन्साववर्ण० ६ । १ । १८२
७९ न ङिसंबुद्ध्योः ८ । २ । ८
९१ न चवाहाहैवयुक्ते ८ । १ । २४
५८१ न च्छन्दस्यपुत्रस्य ७ । ४ । ३५
१७४ नञ् २ । २ । ६
२५० नञः शुचीश्वरक्षेत्र० ७ । ३ । ३०
२०४ नञस्तत्पुरुषात् ५ । ४ । ७१
६२४ नञो गुणप्रतिषेधे० ६ । २ । १५५
६१९ नञो जरमरमित्र० ६ । २ । ११६
१९१ नञ्दुःसुभ्यो हलि० ५ । ४ । १२१
६२६ नञ्सुभ्याम् ६ । २ । १७२
२३९ नडशादाड्ड्वलच् ४ । २ । ८८
२२१ नडादिभ्यः फक् ४ । १ । ९९
२३९ नडादीनां कुक् च ४ । २ । ९१
६९ न तिसृचतसृ ६ । ४ । ४
२८३ नते नासिकायाः सं० ५।२।३१
२१६ न तौल्वलिभ्यः २ । ४ । ६१
२५५ न दण्डमाणवान्ते० ४।३।१३०

पृष्ठम् सूत्रम्

पृष्ठम् सूत्रम्

# वार्तिक-गणसूत्र-परिभाषाणां सूची २।

इति वार्तिक-गणसूत्र-परिभाषासूची ।

# अथ कौमुदीस्थधातूनां सूची ३।

इति कौमुदीस्थधातूनां सूची समाप्ता ।

# अथोणादिसूत्राणां सूची ४।

इति कौमुदीस्थोणादिसूत्रसूची समाप्ता ।

# अथ फिट्सूत्रसूची ५।



इति कौमुदीस्थफिट्सूत्रसूची संपूर्णा ॥